


॥ ॐ ॥

॥ शिवाभ्यां नमः ॥


॥ भारतीमन्दिरसंस्कृतग्रन्थावलिः ॥

ग्रन्थाङ्कः १


श्रीमच्छ्रीकण्ठाचार्यकृतं

# ब्रह्मसूत्रभाष्यम् ॥

C. M. V. Sharma Nalagunda

श्रीमदप्पयदीक्षितकृतशिवार्कमणिदीपिकाख्यव्याख्यासहितम्।

तैरेव प्रणीतया तत्तदधिकरणपूर्वपक्षसिद्धान्तसंग्राहकपद्यरूपया

नयमणिमालया सनाथीकृतं च

( प्रथमाध्यायात्मकं प्रथमसंपुटम् )

कुम्भघोणनगरविराजमान ( नेटीव् हैस्कूल्नामक ) स्वदेशीयहूणवाणीमहापाठशाला-

गीर्वाणवाण्युपाध्यायपदमधितिष्ठता भारतीमन्दिराख्यलुप्यमान-

प्राचीनग्रन्थप्रथनालयप्रतिष्ठापकेन कुम्भघोणवासिना

## रा० हालास्यनाथशास्त्रिणा संशोधितम्।

स्वप्रणीतया चतुर्मतसंग्रहरूपया सूत्रार्थचन्द्रिकया संयोजितं च

तनैव सहृदयानां सत्प्रभूणां साहाय्येन


मुम्बानगरस्थनिर्णयसागरमुद्रणालये सम्मुद्र्य

प्रचारितं विजयते।

१९०८.

प्रथमसंपुटस्य

तनुपत्रस्य मूल्यं रूप्यदशकम्।

...स्य तु रूप्याणि षोडश।


...यसाहा...
दृढप...

...प्रति
...यताम्
...नुगतव्या
कृतधि...
...सत्प्रबन्धप्रकट...
...मनःप्रत्ययतया
निरन्तरायपरिपू...
...तया च नयनपथद...
...रङ्गराजाध्वरीन्द्र...

॥ श्रीः ॥

॥ शिवाभ्यां नमः ॥

# ॥ भारतीमन्दिरसंस्कृतग्रन्थावली ॥

## श्रीमदप्पयदीक्षितेन्द्रविरचितश्रीशिवार्कमणिदीपिकाव्याख्यासहितश्रीकण्ठभाष्यप्रकटनस्य भूमिका ॥

आर्याः, अभिज्ञशिखामणयः सद्व्यवसायसाह्यशीलाः प्रभवः पण्डिताश्च ? वितरतेह, करुणया किञ्चिदवधानम् ?

(१) विज्ञातमेव हि भवतां यत्किल पुरा परमकारुणिको भगवान् बादरायणो लोकाननुजिघृक्षुर्मोक्षाख्यस्य तुरीयस्य परमस्य पुरुषार्थस्य प्राप्तावुपायभूतं ब्रह्मज्ञानमस्मानधिगमयितुमौपनिषदतत्त्वार्थविचाररूपं पादचतुष्टयपरिकर्मितैश्चतुर्भिरध्यायैः परिमितम् "अथातो ब्रह्मजिज्ञासे"त्युपक्रान्तं शारीरकमीमांसाभिधानं सूत्रवृन्दं निर्ममे इति ।

(२) मूलभूतस्य यस्य सूत्रनिकुरुम्बस्य तात्त्विकमर्थं व्याचिख्यासुभिर्महर्षिभिः प्रणीतासु वृत्तिषु कालवशादासेदुषीषु प्रचारलोपरूपां दुरवस्थाम् अज्ञानान्ध्यमासेदुषां जनानां चक्षुरुन्मीलयितुमेव तत्तत्कालेषु क्रमेण कृतावतारैर्भगवदंशभूतैः श्रीकण्ठशंकररामानुजानन्दतीर्थाद्यैर्महात्मभिरनुसृत्यैव प्रांचि मतान्यार्षाणि व्यरचिषत तत्तन्नामांकितानि बहूनि भाष्याणि भिन्नभिन्नमतानुसारीणि ।

(३) तेषु साम्प्रतमतिप्रसिद्ध्या लब्धप्रचाराणि श्रीकण्ठीयभगवत्पादीयरामानुजीयानन्दतीर्थीयसंज्ञानि चत्वार्येव भाष्याणि बह्वीभिर्व्याख्याभिरुपबृंहितानि सर्वतः प्रचरन्ति । येषामेव न्यरूपि विषयसङ्ग्रहः श्रीमद्भिरप्पयदीक्षितेन्द्रैः स्वकृते चतुर्मतलेशसङ्ग्रहे सम्यक्पृथक्पृथक् ।

(४) एतेषु भगवत्पादीयादीनि त्रीणि भाष्याणि अद्वैतविशिष्टाद्वैतद्वैतपराणि सम्प्रतिपन्नाभिर्व्याख्याभिस्सहैव संमुद्र्य प्रकटीकृतानि सम्मोदमावहन्ति सर्वतस्सुधियाम् ।

(५) परं त्वादिममप्यन्येषां त्रयाणामिदं श्रीकण्ठीयं शैवाद्वैतपरं भाष्यमननुगतव्याख्यमेव ग्रन्थलिप्यामेव सकृन्निर्वृत्तमुद्रणमित्यतो विमनीभावमासेदुषां कृतधियां प्रेरणया तदीयव्याख्यान्वेषणे प्रवृत्तश्चिरात्प्राचीनलुप्यमानलोकोत्तरसत्प्रबन्धप्रकटने धृतव्यवसायतया प्रबन्धयुगलीप्रकटनेन सम्पादितसहृदयमण्डलीमनःप्रत्ययतया च सहृदयसाह्यं सुलभं निश्चिन्वन्नाशासानश्च प्रारिप्सितस्य कर्मणो निरन्तरायपरिपूर्त्या जन्मसाफल्यं नाम [illegible]श्चिरादुपलब्धामपि विस्तततया विलुप्तप्रचारतया च नयनपथदवीयसीं श्रवणाध्वनीन[illegible] श्रीमद्भरद्वाजकुलजलधिकौस्तुभायितश्रीरङ्गराजाध्वरीन्द्रसु-

कृतपरिपाकैश्चतुरधिकशतप्रबन्धनिर्माणालंकर्मीणधिषणैर्विश्रुतकीर्तिभिः श्रीमदप्पय्य-यज्वावतंसैश्चिन्नबोम्मभूपालप्रेरणया विरचितामद्भुतशैलीं ग्रन्थषट्त्रिंशत्साहस्रीपरिमि-ततयाऽतिविस्तृतां दीक्षितेन्द्रयशःपताकायमानां तद्व्याख्यां शिवार्कमणिदीपिका-मंशतः क्वचित्क्वचिद्वर्तमानामतिशिथिलरूपामन्विष्यन्महता प्रयासेन नानादेशस्थिते-भ्यो दाक्षिणात्यकोशेभ्यो माधुकर्या वृत्त्या तामासादयन्सद्व्यवसायसाह्यशीलेषु महाश-येषु सत्प्रभुषु प्रस्तुततदीयमुद्रणप्रवृत्तिः प्रोत्साहितश्च कैश्चिन्महाशयैरग्रिमसमूल्यप्रदा-नादिभिः श्रीमता श्रीकण्ठभाष्येण सहैव तत्रतत्र प्रत्यधिकरणं चतुर्मतलेशस-ङ्ग्रहान्तर्गतयानयमणिमालया मतचतुष्टयानुसारेण तत्तदधिकरणविषयवाक्यपूर्व-पक्षसिद्धान्तसूत्राक्षरार्थप्रकाशिन्या मन्निबद्धया सूत्रार्थचन्द्रिकया च सनाथीकृत्य नागरलिप्यां सम्मुद्र्य प्रकटयितुं प्रावृतम् ।

(६) विपुलद्रव्यसाध्यं महदिदं कर्म दुस्साधं मादृशानामिति बाढमवबुध्यमानोऽप्यहं विलु-प्यमानस्य प्रबन्धस्यास्य पुनरुज्जीवनकुतूहलवशादनाकलितभाविपरिश्रमः प्रोत्साहित-श्चेदंव्यवसायजीवातुभ्यां मदाश्रयभूताभ्यां महाशयाभ्यां श्रीमदप्पुशास्त्रिश्रीनि-वासपिल्लैनामभ्यां प्रभुमणिभ्यां प्राविशमस्मिन्महति साहसे ।

(७) उभयोरनयोर्मदीयप्रवृत्त्युपपन्नयोरुत्साहमवलंब्य तयोस्साह्येनात्र व्यवसाये प्रथमतः प्रवृत्तं मामन्येऽपि महाशया महामहिमानो मठाधिपाः सहृदयाः प्रभवश्च प्रोत्साहयितुं व्यदधुर्विविधानुपकारान्मदुद्यमायेत्यतो धृतकार्तज्ञ्यस्तेषामव्याजसौहार्दाय, समर्पयामि तेभ्यो यथार्हं बह्वीर्विनतीराशिषश्च ।

(८) अनन्तरमिदंप्रबन्धमातृकासमन्वेषिणा मया काचन तालपत्रलिखिता शिवार्कमणि-दीपिकाप्रतिकृतिराद्याधिकरणसमाप्तिपर्यन्ता श्रीकुम्भघोणस्थाप्पास्वामिशा-स्त्रिणां गृहकोशगता प्रथमं समासादिता । सा चात्र क. चिह्निता ।

(९) अनन्तरं श्रीमन्मधुरानगरश्रीमन्मीनाक्षीदेवालयस्थागमशास्त्रपाठशाला-ध्यापकस्य इदानीं लोकान्तरमुपगतस्य शांभवकुलशिखामणेर्गुरुमुखाभ्यस्तशिवाद्वैतमत-प्रस्थानस्य शिवरामसुब्रह्मण्यशास्त्रिणस्सकाशादधिगता शिथिलशिथिला प्रथमा-ध्यायप्रथमपादसमाप्तिपर्यन्ता द्वितीयपादस्य गुहाधिकरणावसानेन कियतांशेन तथा आ-द्याध्यायतृतीयपादस्थदेवताधिकरणकतिपयसूत्रावधिकेनापूर्णेनातिशिथिलेनाल्पीयसा ग्रन्थेन च संयुताततिचिरत्वा काकिदरूपा नागराक्षरमयी काचन प्रतिकृतिरत्र च ख. चिह्नसंसूचिता अन्याच ग्रंथाक्षरलिखिता द्वितीयाध्यायोपक्रमप्रभृति तुरीयाध्यायसमा-प्तिपर्यंता नवीनापि मध्ये मध्ये त्रुटितत्रिचतुरपदप्राचीनमातृकालब्धजननतया तत्प्र-तिबिंबाकाराऽनतिशुद्धा काकितरूपा बृहती प्रतिकृतिश्चात्र सहादरमुररीकृता ।

(१०) अपरा च प्रतिकृतिरादिमाध्यायसमारंभप्रभृति गुहाधिकरणसमाप्तिपर्यन्ता काकिदरूपा नागराक्षरा नातिप्रतनान्या च तालपत्ररूपा तावती चेति मातृकाद्वितयं तृतीयाध्याय-तृतीयपादशेषप्रभृति तुरीयाध्यायसमाप्तिपर्यंतं तालपत्रात्मकं मातृकान्तरं चेत्येतत्त्रितयं श्रीमन्मध्यार्जुनक्षेत्रविराजमानश्रीमन्महालिंगेशदिव्यालयस्थापितपुस्तकालय-स्थं तदध्यक्षेण इदमुद्यमप्रोत्साहकाग्रेसरपदवीमधिरूढेन तज्ज्ञासंस्थानमध्यविराज-

मान ( निरुवावडुतुरैनामक ) श्रीमद्गोमुक्तिक्षेत्रस्थितसुप्रसिद्धश्रीकैलासपरंपरागतनन्दिकेशाधिष्ठितशैवमठाधिपतिना श्रीमदंबलवाणदेशिकेन इदमुद्यमप्रोत्साहकरूप्यत्रिशतीरूपाग्रिममूल्यप्रदानपुरस्सरं मह्यं वितीर्णं ग. घ. चिह्नितं सादरमङ्गीकृतमत्रोद्यमे महोपकारकमभूत् ।

(११) अन्या च तालपत्ररूपा वटारण्यक्षेत्रा ( तिरुवालङ्गाडु ) भिजनश्रीमदप्पयदीक्षितेन्द्रवंश्यविद्वत्प्रकांडकुरूहशिक्षादिशांभवोत्कर्षप्रतिपादकमहाप्रबन्धप्रणेतृविश्वविख्यातविश्वनाथवाजपेयिगृहकोशगता तत्करांबुजपरिशीलिता आनन्दमयाधिकरणप्रभृतितृतीयाध्यायतृतीयपादकतिपयाधिकरणावसाना संपुटत्रितयात्मिका प्रायोऽनत्यबद्धतया महोपकारिणी प्रतिकृतिः विश्वनाथवाजपेयितनूजेन नीलकण्ठवाजपेयिना वितीर्णा ङ चिह्निता सहकार्तज्ञ्यमिदमुपयोगितया समादृता ।

(१२) नयमणिमालायाः प्रतिकृतिः काचित् श्रीमच्चंपकारण्य ( मन्नार्गुडी ) स्थश्रीमदप्पयदीक्षितेन्द्रवंशकमलाकरकलहंसमहामहोपाध्याय ( स्वर्गवासि ) त्यागराजमखिराजगृहकोशगता तालपत्ररूपा तत्पौत्रश्रीयज्ञस्वामिशास्त्रिसकाशादुपलब्धा ।

(१३) अन्या च पूर्वोक्त ( तिरुवालङ्गाडु ) श्रीमद्विश्वनाथवाजपेयिगृहकोशगता तत्पुत्रेण नीलकंठवाजपेयिना पूर्वनिर्दिष्टशिवार्कमणिदीपिकाप्रतिकृतिसंपुटैस्सह सादरं वितीर्णा ।

(१४) एताः प्रतिकृतीस्समासाद्य कांचित्प्रतिकृतिं विलेख्य परिशोध्य परिष्कृत्य च सहृदयानां सत्प्रभूणां साहाय्येन समासाद्य चादिमोपकरणभूतामर्थसंपत्तिमिदंमुद्रणोपक्रमपर्याप्तां मया संगृहीतां मतचतुष्टयार्थबोधिनीं सूत्रार्थचन्द्रिकां च तत्तदधिकरणसमाप्तौ संनिवेश्य संमुद्रय प्रकटयितुं प्रावृतम् ।

(१५) अस्य महतः प्रबंधस्य श्रद्धाजडशास्त्रानभिज्ञलेखककुलप्रमादकलुषिततया परिशीलनार्हपण्डितकुलगुरुशिष्यपरंपरापरामर्शहीनतया कालवशापतितात्यबद्धसंपातसमासादितरूपान्तरतया च शोचनीयावस्थामुपगतस्य परिशोधने धृतक्षणतामवलंब्य मामकसंशयनिराकरणेन तत्तत्समयेषु विहितोपकारेभ्यः सुगृहीतनामधेयमामकब्रह्मविद्यागुरुविश्वजित्सर्वतोमुखमहाव्रतयाजि श्रीमद्बालकृष्णमखिराजचरणेभ्यस्तथासेतुहिमाचलप्रसिद्धनामधेयश्रीमद्दीक्षितेन्द्रमहावंशपरंपरानवमपूरुषविशिष्टविद्वन्मण्डलचक्रवर्तिसर्वतंत्रस्वतंत्र ( भूत पूर्व ) श्रीमन्महामहोपाध्याय राजुशास्त्रिशब्दितत्यागराजमखिराजचरणांबुजसेवासमासादितनिरंकुशपाण्डित्याभ्यां हरिहरशास्त्रिगणपतिशास्त्रिभ्यां च धृतकार्तज्ञ्यस्सहादरमर्पयामि बहून्प्रणामान् ।

(१६) तथा मातृकापुस्तकप्रदानेन अग्रिममूल्यप्रदानादिप्रोत्साहनकर्मणा च मह्यमाहितमहोपकारेभ्यो नानादेशनिवासिभ्यस्सहृदयेभ्यस्सुहृन्मणिभ्यस्तेषामव्याजमैत्र्या आनृण्यमिदंजनुष्यनासाद्यमन्तरवधारयन्नर्पयामि चात्मविशुद्धये निष्क्रयतयासंख्येयान्प्रणामान् ॥

(१७) 'श्रेयांसि बहुविघ्नानी' तिप्राचीनाभाणकानुसारेण मध्येमध्ये समापतिताशारीरास्वास्थ्यादिद्रव्यकार्श्यान्ता विपदस्समुत्सार्येदमुद्यमनिर्वोढाखिलान्तर्यामीदंभाष्यप्रतिपाद्यः प्रपन्नार्तिभञ्जकः परमेश्वर एव विदध्यात्परिपूर्तिमवशिष्टस्येति दृढविश्वासस्सभ-

क्तिप्रकर्षमर्पयामि मन्निबद्धं वैद्येशशतकरूपं स्तुतिकुसुमाञ्जलिं मामककुलदैवताय प्रतिदिनम् ।

(१८) अन्यच्च किंचिदिदमुद्यमशिवंकरमिदंप्रथममितिवृत्तमस्ति विज्ञाप्यं सहृदयेषु, यत्किल तृतीयसंचिकासंमुद्रणसमयसमापतितमामकशारीरास्वास्थ्यरूपप्रत्यूहनिरसनाय सभक्तिकं स्तुतिकुसुमैरभ्यर्चितस्य भगवतो भक्तार्तिहन्तुर्वैद्येश्वरस्य करुणाबलेन समधिगतोल्लाघभावस्य द्रव्यसाह्यप्रतीक्षिणो मम प्रणार्थिकामवलोक्य संप्रसन्ना आस्माककरुणार्णवभारतखण्डचक्रवर्तिप्रतिनिधिमहासंस्थानप्रभृतिराजकीयसंस्थाननवकाधिपतयो व्यदधुः पुस्तकक्रयणेन विपुलं द्रव्यसाहाय्यमिति । तथा तामेव रीतिमनुसृत्य व्यतन्वन्महत्साह्यं बरोडामहासंस्थानमहाराजप्रभृतयो महापुरुषा इति च ।

(१९) अन्यच्चेदमविस्मरणीयं कदापि मया पारितोषिकतया रूप्यद्विशतीप्रदानरूपं तञ्जासंस्थानमध्यविलसत्तालवनक्षेत्र ( तिरुप्पनन्दाळ् ) स्थित शैवमठाधिपतिना काशिवासिसोमसुन्दरतम्बिरान्प्रभुणा विहितं कालिकं साहाय्यम् ।

(२०) यद्यपि केचित्प्रभव आश्रुत्यापि हस्तलेखेनाग्रिममूल्यप्रदानमगणयन्तः प्रतिज्ञाभङ्गं मध्येऽसकृदभ्यर्थिता अपि जोषंभावमुपगम्य न प्रासीदन्नात्मनः प्रतिज्ञां निर्वोढुम् । तथाप्यहमवलंब्याहार्यं धैर्यमशिथिलोत्साह एव निर्वहन्नस्मि समारब्धां मुद्रणधुराम् । दिष्ट्या चेयता कालविलंबेनापि 'प्रारब्धमुत्तमगुणा न परित्यजन्ति' इति न्यायानुरोधेनोत्तमगुणताधिगमलोभेनाविरतोद्यमो निरवीवृतमादिमाध्यायस्य संपूर्णग्रन्थत्रिभागात्मकस्य मुद्रणसमाप्तिम् । इतः परमवशिष्टस्याध्यायत्रितयात्मकस्याप्यणीयसो भागस्य संमुद्रणमचिरान्निर्वाह्यमनतिप्रयासेनेति संधुक्षितोत्साहोस्मि सांप्रतम् । इतः परमपि वा ते मयि जातप्रत्यया वितनुयुः साहाय्यमवशिष्टमुद्रणोपयोगितया प्रसीदन्तः प्रतिज्ञानिर्वहण इति विश्वसिमि ।

(२१) इदं भाष्यप्रथमाध्यायात्मकप्रथमसंपुटेन सहैव दिष्ट्या समाप्तमुद्रणा श्रीमच्छ्रीकण्ठभाष्यप्रस्थानानुरोधिनी अधिकरणकतिपयसिद्धांतनिर्णयरूपा श्रीमदप्पयदीक्षितकृतिश्चन्द्रिकाख्यव्याख्यासहिता आनन्दलहर्यपि समाह्लादयति नयनपदवीं सहृदयानामिति मोमोत्ति मे मानसम् ।

(२२) एवमेवेदंभाष्यद्वितीयसंपुटेन सह संमुद्र्य प्रकटीचिकीर्षिते श्रीमदप्पयदीक्षितकृतिशिवाद्वैतविनिर्णयाख्या रत्नत्रयपरीक्षा चेति कृतिरत्ने अपि विधास्यतः सहृदयमनःप्रमोदमिति निवेदये सहृदयान् ।

(२३) चिराय मया संगृहीतं श्रीमदप्पयदीक्षितेन्द्रचरितमपि प्रथमसंपुटोपोद्घात एव निवेशनीयमित्युद्दिष्टं तथापि तत्परिष्कृतेः कालविलंबसापेक्षतया सांप्रतमप्राप्तावसरतया च मम ग्रन्थसमाप्तेः परं द्वितीयसंपुटभूमिकायां प्रकटीकरिष्यामीति निवेदये सुहृदः ।

(२४) यद्यपि सावधानेन मयायं प्रबन्धो मुद्रणकालेऽसकृत्संशोधित एव, तथापि नात्र स्यादशुद्धिः कियत्यपीति वक्तुं न प्रभवति मे जिह्वा । यतः प्रौढस्यास्य प्रबन्धस्य प्रतिकृतीनामत्यवद्धकदर्थितत्वादुररीकृतबहुव्यवसायतयानवाप्तचित्तैकाग्र्यस्य मम व्युत्पत्तिमांद्यादिदोषवशाच्चाक्षरच्युतिमात्राच्युतिवर्णविपर्ययादयो दोषाः क्वचित्क-

चिदपरिहार्या एव समापतन्निति जानन्नपि ते दोषा इदंग्रन्थपरिशीलनालंकर्मीण-धिषणानां विदुषां सुबोधा इत्यतो नायूयुजं शुद्धाशुद्धपत्रीमिति विज्ञेयं विद्वद्भिः।

(२५) यदीऽतोऽपि ये केचिन्मदीयव्युत्पत्त्यगोचरा वाक्यार्थविपर्यासका पदवाक्यपङ्क्तिपातादयो महान्तो दोषा दृश्येरन्नसंशोधितास्तानन्विष्य करुणया मां निवेदयितुमाहिताञ्जलिरभ्यर्थये विद्वन्मणीन्कारुणिकानावेदये च तान्दोषान्ग्रन्थावसाने प्रकटीचिकीर्षुरस्मीति।

जीर्णालयोद्धरणधर्मतोऽपि गरीयस्यत्र विलुप्तप्रबन्धपुनरुज्जीवनरूपे महति व्यवसाये प्रवृत्तमविरतोद्यमं मामनुगृह्णन्त्वाशीर्भिरविरहितफलाभिरार्यमिश्रास्सहृदया अकामोपनतं कालविलंबादिदोषं च मामकं मर्षयन्तु चेति पुनः पुनरभ्यर्थये।

इदमारंभकालादारभ्येयन्तं कालं समारब्धस्य विपुलद्रव्यव्ययसाधनीयस्य समुद्यमस्य विलंबसाध्यतां, मुद्रणशालाऽस्वातन्त्र्यं, दवीयसो मुद्रणस्थानात्परिशोधनाय द्विस्त्रिर्यथासंभवं मुद्रितप्रतिकृतिपत्रिकागतागतप्रयासं, तन्मूलकमपरिहार्यं समयातिपातम्, अतिशिथिलमातृकात्रुटितवर्णराजिशुद्धीकरक्लेशं कालिकद्रव्यसंपत्तिराहित्यं पुरोभागिजनसर्वतोमुखवचनवागुरायास्सर्वपथीनतां चोत्साहसंतक्षणपटीयसीं,ध्यायंध्यायमन्तस्संतप्यमानहृदयोऽपि 'न सुखाल्लभ्यते सुख' मितिन्यायेन श्रेयसः क्लेशसाध्यतामवधारयन्ननुज्झितधैर्यस्संप्रति दिष्ट्या चिरात्प्रतीक्षितमाश्रितजनकामधेनुं श्रीमत्परमहंसपरिव्राजकेत्यादिबिरुदालंकृतवैदिकधर्मपरिपालकमहामहिमशालिशृंगगिरिस्थश्रीमज्जगद्गुरुसच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिसानुग्रहकरुणापांगनिक्षेपसंप्रसादमधिगम्य शिशिरितान्तःकरणस्समर्प्य च महामहिम्नि सद्गुरुसंनिधाने सकलं कर्मभरं तत्करुणया समुदञ्चितधैर्यो द्विगुणीकृतोत्साहश्चास्मीत्यमुमिदमुद्यमकुशलाङ्कुरं भव्योदन्तमात्तप्रमोद आवेदये श्रद्धालूनव्याजसुहृदस्सहृदयानिति शिवम्॥

इत्थं सहृदयचरणांबुजदासः

रा॰ हालास्यनाथशास्त्री.

भारतीमन्दिरसंस्कृतग्रन्थावलीप्रकाशकः

---

# EDITOR'S PREFACE.

This work forms the first of the two volumes of *Sivârkamanidipika*, *Appayya Dikshita's* famous commentary on *Srikanta's Bhasya* on the *Brahma Sutra*. *Shrikanta's Bhasya*, it may be mentioned, constitutes the interpretation of the ancient Brahma Sutras from the Saiva stand-point.

The publication of this work was undertaken with a special object and the immensity of the task had been too much for the unaided labour and resources of any one individual in the position of the editor but for the eagerness with which the publication was greeted by the public at large, and the active encouragement extended by private munificence and State Assistance. *Srikanta Bhasya*, with the lucid commentary

of *Appayya Dikshita*, has not been printed before, and the danger was apprehended th[illegible] in a few years the available Mss. may completely wither away. Though the existi[illegible] Mss. were mostly motheaten and scattered in isolation and oblivion all over India, the ed[illegible] tor resolved to spare no pains in collecting the available Mss. and by printing it has sought to give a permanent form to a work which threatened to disappear from the Literary and Religious world which could ill afford to lose it. In this stupendous undertaking th[illegible] editor was encouraged by substantial assistance from such patriotic gentleman like Ra[illegible] Bahadur *S. Appu Sastriar* of Kumbakonam, himself a descendant of Appayya Dikshit, and Mr. *K. S. Sriniwas Pillay* of the *Tanjore* Bar. And with gratitude the editor acknowledges the kind help extended by the Government of *India*. The Colonial Govenment of *Ceylon*, the Local Governments of *Madras, Bombay, Bengal, The Punjab, Eastern Bengal & Assam, the Central Provinces* and *the United Provinces, H. H. The Maharajah* of *Mysore, H. H. The Maharajah Gaekwar, H. H. The Maharajah* of *Benares, H. H. The Maharajah of Durbanga, His Holiness Jagadguru Mahaswami* of *Sringeri* Mutt. The Editor's thanks are also due to the late *Shivarama Subramanya Sastriyar* o[illegible] Madura, *Nilakanta Vajapeyar* of Thiruvalangadu and *Rao Bahadur Ayyasami Sastriar* of Kumbakonam who were so kind as to lend their Mss. and also to *Srila Sri Ambalavana Desikar*, Pandara Sannadhi of *Thiruvavaduthurai* Adhinam who assisted the Editor with his well-known munificence and rare Mss.

The second and last volume is now in print and the Editor entertains the hope that it will be successfully carried through with greater expedition than was possible wit[illegible] the first volume, now that its publication is vouchsafed by the holy auspices of *His Holiness Mahaswami* of Sringeri Mutt.

---

## श्रीकण्ठीयब्रह्ममीमांसासूत्रभाष्यप्रथमाध्यायपादाधिकरणानां संग्रहेण विषयसूचिनी ॥

तत्र प्रथमाध्याये निखिलवेदान्तवाक्यानां तदनुगुणस्मृतीतिहासानां च तात्पर्येण ब्रह्मणि समन्वयः प्रमेयस्वरूपम् पतिपाद्यते ॥

प्रथमाध्यायस्य तुरीयपादे.



इत्थं समन्वयाध्यायगताधिकरणाश्रयाः ।
श्रीमच्छ्रीकण्ठभाष्यस्य प्रमेयार्थाः प्रदर्शिताः ॥

ओम् ।

शिवाभ्यां नमः ।

# श्रीमच्छ्रीकण्ठाचार्यकृतं

# ब्रह्मसूत्रभाष्यम् ।

## श्रीमदप्पयदीक्षितकृतशिवार्कमणिदीपिकासहितम् ।

## श्रीकण्ठभाष्यप्रारम्भः ।

ॐ [1]नमोऽहंपदार्थाय लोकानां सिद्धिहेतवे ।
सच्चिदानन्दरूपाय शिवाय परमात्मने ॥ १ ॥

## शिवार्कमणिदीपिकाप्रारम्भः ।

यस्याहुरागमविदः परिपूर्णशक्तेरंशे कियत्यपि निविष्टममुं प्रपञ्चम् । तस्मै तमालरुचिभासुरकन्धराय नारायणीसहचराय नमश्शिवाय ॥ १ ॥ आकर्णकृष्टधनुराहितमोहनास्त्रमारान्निरीक्ष्य मदनं कुपितस्य किञ्चित् । शम्भोः समाधिसमये वि[2]कसत्कृशानुज्वालाकलापजटिलं नि[3]टिलं स्मरामि ॥ २ ॥ महापाशुपतज्ञानसम्प्रदायप्रवर्तकान् । अंशावतारानीशस्य यो[4]गाचार्याननुपास्महे ॥ ३ ॥ आसेतुबन्धतटमा च तुषारशैलादाचार्यदीक्षित इति प्रथिताभिधानम् । अद्वैतचित्सुखमहाम्बुधिमग्नभावमस्मत्पितामहमशेषगुरुं प्रपद्ये ॥ ४ ॥ यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात्तद्दर्शनादखिलदर्शनपारभाजः । तं सर्ववेदसमशेषबुधाधिराजं श्रीरङ्गराजमखिनं पितरं नतोऽस्मि ॥ ५ ॥ यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानां च निष्ठा साकं सर्वैः पुराणस्मृतिनिकरमहाभारतादिप्रबन्धैः । तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्कराद्यैस्तदेव ॥ ६ ॥ तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः । अद्वैतवासना पुंसामाविर्भवति नान्यथा ॥ ७ ॥ अनुग्रहश्च देवस्य शक्त्या चिद्रूपया सह । यथावत्तं परिज्ञाय ध्यायद्भिस्समवाप्यते ॥ ८ ॥ इति भगवता वेदव्यासेन सूत्रयता परं सगुणमपि तत्साम्बं ब्रह्म न्यरूपि शिवाभिधम् । यदनुकरणादर्थानन्येऽपि सञ्जगृहुर्बहून्प[5]णिनजमुखाः सूत्रैर्विष्वङ्मुखत्वविभूषणैः ॥ ९ ॥ तदिदं ब्रह्मसूत्राणां तात्पर्यं सगुणे शिवे । प्रकटीकर्तुमाचार्यः प्रणिन्ये भाष्यमुत्तमम् ॥ १० ॥ श्रीकण्ठाचार्यकृतं भाष्यं यद्ब्रह्मसूत्राणाम् । प्रतिपदमतिगम्भीरं न शक्यते मादृशैर्बोद्धुम् ॥ ११ ॥ भाष्यमेतदनघं विवृण्विति स्वप्नजागरणयोस्समं प्रभुः । चिन्नबोम्मनृपरूपभृत्स्वयं मां न्ययुङ्क्त महिलार्धविग्रहः ॥ १२ ॥ (श्रीचि[6]न्नबोम्मनृपतिः श्रितपारिजातः सर्वात्मना पशुपतिं

---

(१) 'नमो ब्रह्मपदार्थाये'ति पाठान्तरम् । (२) 'विलस'दिति ग. पाठः । (३) 'नयनं' इति ख. पाठः । (४) योगाचार्या इति श्रीकण्ठाचार्याणामेव नामान्तरम् । (५) पणिनजः पाणिनिः । 'फणिपतिमुखाः' इति पाठे फणिपतिः पतञ्जलिरित्यर्थः । (६) इदं पद्यं केषुचित्पुस्तकेषु नास्ति ।

शरणं प्रपन्नः । यः सार्वभौमपदवीमधिगम्य धीरस्तत्पूजयैव मनुते सफलत्वमस्याः ॥ १३ ॥)
अस्य क्षितीशितुरपारगुणाम्बुराशेरष्टासु दिक्षु विततोर्जितशासनस्य । अन्तस्सदैव वसता विभुना नियुक्तो भाष्यं यथामतिबलं विशदीकरोमि ॥ १४ ॥ यावन्तो निविशन्ते विदुषां व्याख्यानभारतीगुम्भाः । सर्वेषामपि तेषां ददाति पुष्पकमिवैतदवकाशम् ॥ १५ ॥ तस्मादत्र यथामति कियदाशयवर्णनं मया क्रियते । तुष्यन्तु ततो विबुधाः कतिपयरत्नग्रहादिवाम्बुनिधेः ॥ १६ ॥

भगवद्बादरायणप्रणीतब्रह्मसूत्रनिकुरुम्बरूपस्य वेदान्तमीमांसाशास्त्रस्य लोकानुजिघृक्षया भाष्यं निर्मित्सुराचार्यो निरन्तरशिवध्याननिर्धूतनिखिलान्तरायोऽपि शिष्टाचारपरिपालनार्थं व्याचिख्यासितशास्त्रप्रतिपाद्यां परां देवतां नमस्करोति–ॐ नमइति । दहरविद्यानिष्ठोऽयमाचार्यः । अत एव तस्यां रूपसमर्थकं 'ऋतं सत्यं परं ब्रह्मे'ति मन्त्रमिह भाष्ये पुनः पुनरादरातिशयाद्व्याख्यास्यति । कामाद्यधिकरणे च स्वयं दहरविद्याप्रियत्वात् सर्वासु परविद्यासु दहरविद्योत्कृष्टेति वक्ष्यति । अतः स्वशाखाम्नातदहरविद्यायां विशेष्यनिर्देशकेन पदेन स्वोपास्यं नमस्कार्यं निर्दिशति–परमात्मन इति । श्रूयते हि तैत्तिरीयोपनिषदि–'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' । इति । केचन स परमात्मा शिवादन्य इति कथयन्तः परान्भ्रमयन्ति तदनुवर्तनेन साधवो मा भ्रमिषुरित्यभिप्रेत्य विशिनष्टि–शिवायेति । दहरविद्योपास्यः परमात्मा शिव एवेत्याचार्यः शारीराधिकरणे निपुणतरमुपपादयिष्यति । यद्यपि तैत्तिरीयोपनिषद्गतस्य परमात्मशब्दस्य विशेषोपसंहारार्थं 'धातुः प्रसादान्महिमानमीशं' 'विश्वाधिको रुद्रो महर्षिः' 'यः परः स महेश्वरः' इति तदुपक्रमगतानामीशरुद्रमहेश्वरनाम्नामन्यतमस्य विरूपाक्ष' मिति तदुपसंहारगतस्य विरूपाक्षनाम्नो वात्र सङ्कीर्तनं युक्तं, तथापि 'समेधयति यन्नित्यं सर्वार्थानामुपक्रमम्। शिवमिच्छन्मनुष्याणां तस्माद्देवः शिवः स्मृतः ॥' इति महाभारते शिवशब्दस्य मनुष्यादिहितैषित्वतत्प्रारिप्सितपुरुषार्थोपयोगिसकलव्यापारसमेधयितृत्वप्रवृत्तिनिमित्तकत्वेन व्याख्याततया शिष्याणां तत्सङ्कीर्तनतदर्थानुसन्धानपूर्वकमेतद्भाष्यपाठारम्भे सति शिवप्रसादान्निरन्तरायपाठपरिसमाप्तिस्तदभिलषितसकलपुरुषार्थसिद्धिश्च भवतीति तत्सिद्ध्यर्थं शिवशब्देन विशेषणनिर्देशः कृतः । तदुदाहृते महाभारतवचने 'हृद्यपेक्षया तु मनुष्याधिकारत्वा'दिति(ब्र० १.३.२५ सू०)सूत्र इव मनुष्यग्रहणं देवादीनामप्युपलक्षणम् । यतो महाभारत एव शिववचनं–'समा भवन्ति मे सर्वे दानवाश्चामराश्च ये। शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः ॥' इति। 'वश कान्ता' विति धातोर्वर्णव्यत्ययेन सिद्धश्शिवशब्दः पृषोदरादिः । तदाहुः–'हिंसिधातोस्सिंहशब्दो वशकान्तौ शिवः स्मृतः। वर्णव्यत्ययतः सिद्धौ पश्यकः कश्यपो यथा ॥' इति । तेन शिवशब्दस्य इच्छावानित्यर्थलाभे कस्मिन्निति तद्विषयाकाङ्क्षायां देवासुरमनुष्यादीनां शिवे विषय इत्ययमर्थः 'शिवमिच्छन्मनुष्याणा'मित्यार्षवचनप्रामाण्याल्लभ्यते। 'समेधयतीति' व्युत्पत्त्यन्तरं तु शिवशब्दात् शुभवाचिनस्तत्करोतिण्यन्तात्पचाद्यच्प्रत्ययेन लभ्यते । व्युत्पत्तिद्वयनिष्पन्नस्यापि शिवशब्दद्वयस्य परमेश्वरवाचकस्य तन्त्रेणोच्चारणादुक्तार्थसिद्धिः । अपि च शिवशब्दस्सकृदुच्चारणमात्रेण सकलदुरितहरः ।

(१) 'यस्य' इति पाठान्तरम् । (२) 'रूपसमर्पक'मिति ख. पाठः । (३) 'योग' इति ख. पाठः । (४) विशेषनिर्देश इति ख. पाठः । (५) 'शिव इत्यस्य' इति ख. पाठः । (६) 'मित्यादिवचन' इति ख. पाठः । (७) 'दुक्तार्थत्वसिद्धि'रिति ख. पाठः ।

'अपि वा यश्चण्डालश्शिव इति वाचं वदेत्तेन सह संवदेत्तेन सह संवसेत्तेन सह भुञ्जीत ।' 'यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् ।' इत्यादिश्रुतिपुराणप्रामाण्यात् । अत एव चाष्टादशविद्यास्थानमध्ये सर्वतस्सारतरत्वमस्य पौराणिका वर्णयन्ति–'विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ । तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् ॥' इति । एवं सकलदुरितहरस्य शिवनाम्नः प्रथमं सङ्कीर्तनेन श्रोतृणां श्रवणादिप्रतिबन्धकसकलदुरितनिवृत्तिर्भवतीत्येतदपि प्रयोजनमिह शिवनामसङ्कीर्तनस्य । एवं परमात्मशब्देन तैत्तिरीयोपनिषदाम्नातदहरविद्योपास्यतया शिवशब्देन तत्रत्यमहेश्वरादिशब्दप्रदर्शितपरमेश्वररूपतया चावगमितस्य नमस्कार्यस्योपनिषदन्तराम्नातदहरविद्यागुणोपसंहारेण क्रियमाणानुसन्धानसूचनाय उपनिषदन्तराम्नातदहरविद्याप्रकरणगतैरर्थैर्विशिनष्टि–ओमित्यादिभिश्चतुर्भिर्विशेषणैः । ॐमिति शब्दो ब्रह्मवाचकः। 'ॐमिति ब्रह्मे' त्यादिश्रुतेः। '(१)हरस्सर्वस्य हरणाद्विभुत्वाद्विष्णुरुच्यते । सर्वज्ञस्सर्वविज्ञानादवनादोमिति स्मृतः॥' इति कूर्मवचनाच्च । '(२)अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्नि' ति सूत्रान्मन्प्रत्ययानुवृत्तौ 'अवतेष्टिलोपश्चे'ति सूत्रेणावतिधातोर्मन्प्रत्यये प्रत्ययस्य टिलोपे 'ज्वरत्वरस्रिव्यविमवामुपधायाश्चे' ति (पा० ६.४.२०) सूत्रेण वकाराकारयोरूठि सवर्णदीर्घे 'सार्वधातुकार्धधातुकयो'रिति ( पा० ७.३.८४ सू० ) गुणे च सति निष्पन्नस्य तस्य '(३)कृन्मेजन्त' ( पा० १.१.३९ ) इति सूत्रेणे(४) मान्तत्वेनाव्ययत्वात् 'अव्ययादाप्सुप' ( पा० २.४.८२ सू० ) इति ततश्चतुर्थ्या लोपः । अनेन 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीते' त्याथर्वणोपनिषदि दहरोपासना परब्रह्मवाचकेन त्रिमात्रेण प्रणवेन तदनुसन्धानपूर्वकं कर्तव्येति विधानात् तदाम्नातगुणविशेषोपसंहारेणानुसन्धानं सूचितम् । 'अहंपदार्थाये' त्यस्य जीवे प्रयुज्यमानस्याहंपदस्य अन्तरात्मत्वेना(५)परिच्छिन्नोपासकाहंभावपर्यवसानास्पदत्वेन वा मुख्यार्थभूतायेत्यर्थः । अनेन 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत' इति बृहदारण्यकोपनिषदाम्नातदहरविद्याप्रकरणगते 'अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक'इति वाक्ये श्रुतस्याहंपदस्य तथा मन्यमानजीवान्तरात्मनि तदीयापरिच्छिन्नाहंभावपर्यवसानास्पदे वा शिवे पर्यवसानात् तदाम्नातगुणविशेषोपसंहारेणानुसन्धानं सूचितम् । 'लोकानां सिद्धिहेतव' इत्यस्य दहरोपासकाभिलषितसकललोकप्राप्तिहेतव इत्यर्थः । एतेन 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवती'ति छान्दोग्योपनिषदि दहरोपासकस्य सर्वलोकावाप्तिफलसङ्कीर्तनात्तदाम्नातगुणविशेषोपसंहारेणानुसन्धानं सूचितम् । 'सच्चिदानन्दरूपाये' त्यनेन 'तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुत' मिति कैवल्योपनिषदि सच्चिदानन्दरूपत्वकीर्तनात्तदाम्नातगुणविशेषोपसंहारेणानुसन्धानं सूचितम् । कैवल्योपनिषदि 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्ता' दिति तदनन्तरमन्त्रे भूतयोनिशब्देन शिवस्य सकलकार्योपादानत्वमुक्तम् । तथा सति दधिभावापन्नस्य क्षीरस्येव कार्यप्रपञ्चभा-

---

(१) 'भगवान्स्सर्वविज्ञाना'दिति ख. पाठः। (२) इदं सूत्रमौणादिकं वेदितव्यम् । (३) अत्रेदं बोध्यम्. भट्टोजिदीक्षितास्तु 'चादिपाठादव्ययत्वमिति उज्ज्वलदत्तः। तन्न। तेषामसत्वार्थत्वात्। वस्तुतस्तु, स्वरादिपाठादव्ययत्व'-मित्याहुः। (४) "सूत्रतो निपातत्वाद्वाव्ययत्वेना 'व्ययादाप्सुप" इति ख. पाठः । (५) 'बोधना'दिति ख. पाठः। (६) 'अवच्छिन्न' इति ख. पाठः।

वापन्नस्य शिवस्य चिदानन्दात्मकपूर्वरूपपरित्यागः स्यादित्याशङ्कावारणार्थमेव 'आदिमध्यान्तविहीन'मिति विशेषितम्। स एवार्थोऽत्रापि 'सदिति' विशेषणेन प्रदर्श्यते। सदैवायं चिदानन्दरूपेण सन्न कदाचिदपि सद्रूपं परित्यजतीति तदर्थः। अपि च एतैरोमित्यादिभिश्चतुर्भिर्विशेषणैरस्मिन् शास्त्रे चतुरध्यायीप्रतिपाद्यैरर्थैः परमात्मा विशेष्यते। तथा हि—ॐमिति पदप्रयोगेण तद्वाच्ये परब्रह्मणि शिवे सर्वेषां वेदान्तानां समन्वय आक्षिप्यते। कठवल्लीषु 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमी'ति प्रतिज्ञाय तदनन्तर'मोमित्येतत् एतद्ध्येवाक्षरं ब्रह्मे'त्यादिना सर्ववेदप्रतिपाद्यत्वेनोपक्रान्तस्य परब्रह्मणः प्रतिपादकतया ॐमिति पदमुपक्षिप्य तत्प्रशंसादर्शनात्। अपि चास्य मात्रात्रयमृग्यजुस्सामरूपत्वेनाथर्वणोपनिषदादिषु प्रसिद्धम्। प्रपञ्चसारादिषु च "अग्निमीळे पुरोहित'मित्याद्यवेदाद्यवर्णस्य 'योनिस्समुद्रो बन्धु'रिति मध्यवेदमध्यवर्णस्य 'समानं वरमि'त्यन्तिमवेदान्तिमवर्णस्य च समाहृतिरोमिति पद"मिति प्रसिद्धम्। अतोऽपि तत्प्रयोगेण सर्ववेदप्रतिपाद्यत्वमाक्षिप्यते। तेन सर्वेषां वेदान्तानां ब्रह्मणि समन्वयः शतेपञ्चाशन्न्यायेन लभ्यते। यद्वा 'तपांसि सर्वाणि च यद्वदन्ती'त्यत्र तपश्शब्दो ज्ञानवाची। 'तप आलोचन' इति धातोर्निष्पत्तेः। तेन ज्ञानप्रधाना वेदान्ता लक्ष्यन्ते। तेन सर्ववेदान्तप्रतिपाद्यत्वस्य साक्षादप्योमिति पदप्रयोगेणाक्षेपो लभ्यते। यद्यपि वेदान्तानां ब्रह्मणि समन्वयः केनचिद्विशेषणेन साक्षाद्दर्शयितुं शक्यते, तथापि प्रथमपादगताभ्या'मों नम' इति पदाभ्यां चतुर्थपादगतेन 'शिवाये'ति पदेन च श्रीषडक्षरमहामन्त्रस्मरणमपि श्रोतॄणां लभ्यतामित्यभिप्रायेणादावोमिति पदं प्रयुञ्जानस्तेनैवाक्षेपतः प्रथमाध्यायार्थलाभमाचार्योऽनुमेने। परब्रह्मणश्शिवस्याद्वितीयत्वाभ्युपगमे द्वैतश्रुतीनां विरोधः सद्वितीयत्वाभ्युपगमे त्वद्वैतश्रुतीनामिति विरोधशङ्कायां निखिलप्रपञ्चाकारशक्तिविशिष्टस्य शिवस्याद्वितीयत्वादान्तर्गणिकभेदाप्रतिक्षेपाच्च न कोऽपि विरोध इत्यविरोधरूपद्वितीयाध्यायार्थोऽहंपदार्थाये'ति विशेषणेन दर्शितः। "अह'मिति पदं सकलप्रपञ्चाकारशक्तिविशिष्टशिवाद्वैतवाचक"मित्याचार्य एव चतुर्थाध्याये वक्ष्यति। लोकयन्ते स्वात्मानमिति लोकाश्शिवसाक्षात्कारवन्तः तेषां सिद्धिर्मुक्तिफललाभः तस्य हेतव इति तृतीयविशेषणार्थः। तेन श्रवणमननोपासनानन्तरं साक्षात्कृतश्शिव एव पञ्चकृत्यकारी मुक्तिं प्रयच्छति। अतस्स एव मुक्तेस्साक्षात्साधनतया तृतीयाध्यायेन विवक्षित इति तस्यार्थो दर्शितः। 'सच्चिदानन्दरूपाये'त्यत्र'नन्दरूपाये'त्यनेन निरतिशयानन्दरूपं ब्रह्मैवानुभूयमानं मुक्तानां फलतया फलाध्यायेन विवक्षितमिति तदर्थो दर्शितः। ब्रह्मानन्दो यद्यनुभूयमानतया ब्रह्मणः फलं स्यात्तदा मुक्तानामपि फलं भवेत्। 'निरञ्जनः परमं साम्यमुपैती'ति मुक्तिफलस्य ब्रह्मसाम्यरूपत्वश्रवणादिति। ब्रह्मणोऽनुभूयमानत्वेन तत्फलत्वसिद्ध्यर्थं चिद्रूपतयानन्दो विशेषितः। आनन्दवल्ल्यां निरतिशयानन्दतया श्रुतस्य ब्रह्मण एव 'तदात्मानं स्वयमकुरुते'ति रूपान्तरापत्तिश्रवणात्। कदाचिच्चिदानन्दरूपपरित्यागेन मुक्तानामपि भोग्यं फलं क्षयिष्णु स्यादित्याशङ्कापरिहाराय सद्रूपतया चिदानन्दो विशेषितः। जगदुपादानत्वेऽप्यविकारित्वं शिवस्य प्रकृत्यधिकरणादिषु व्यवस्थापयिष्यते॥ १॥

---

(१) पञ्चाशदर्थिनः पुरुषस्य शतस्य लाभे यथा वा पञ्चाशतोऽपि लाभस्सिद्धस्तद्वत्सकलवेदप्रतिपाद्यस्य ब्रह्मणस्सिद्धमेव सर्वोपनिषत्प्रतिपाद्यत्वम् इति शतेपञ्चाशन्न्यायस्यात्र समन्वयो वेद्यः।

निजशक्तिभित्तिनिर्मितनिखिलजगज्जालचित्रनिकुरुम्बः ।
स जयति शिवः परात्मा निखिलागमसारसर्वस्वम् ॥ २ ॥
भवतु स भवतां सिद्ध्यै परमात्मा सर्वमंगलोपेतः ।
चिदचिन्मयः प्रपञ्चः शेषोऽशेषोऽपि यस्यैषः ॥ ३ ॥
नमश्श्वेताभिधानाय नानागमविधायिने ।
कैवल्यकल्पतरवे कल्याणगुरवे नमः ॥ ४ ॥

---

एवं नमस्काररूपं प्रबन्धमुखमारचय्य वस्तुनिर्देशरूपं तदारचयति–निजशक्तीति । परात्मा संसारिव्यतिरिक्तात्मा । शिवः नित्यनिर्धूतनिखिलदोषः सकलमङ्गल्यगुणनिधिश्च । स इत्यनेन 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। अनादिमलसंश्लेषप्रागभावात्स्वभावतः। अत्यन्तपरिशुद्धात्मा शिव इत्यभिधीयते । अथवाऽनन्तकल्याणगुणैकघन ईश्वरः । शिव इत्युच्यते सद्भिश्शिवतत्त्वार्थवेदिभिः ॥' इतिवचनसिद्धामुक्तविशेषणार्थप्रसिद्धिं द्योतयति । जयति सर्वोत्कर्षेण वर्तते । 'जि जय' इति धातुरकर्मक उत्कर्षार्थः। नित्यनिर्धूतनिखिलदोषस्य सकलमङ्गल्यगुणरत्नाकरस्य च सर्वस्माच्चेतनाचेतनप्रपञ्चादुत्कर्षो युक्त इति भावः। तत्र लक्षणप्रमाणे दर्शयत्यवशिष्टविशेषणद्वयेन । निजा आत्मीया शक्तिरेव भित्तिः तस्यामाश्रयभूतायां निर्मितं निखिलं जगज्जालं सकलावान्तरभेदयुक्तं जगद्वृन्दमेव चित्रनिकुरुम्बमालेख्यबृन्दं येन स तथोक्तः । अनेन जगत्कारणत्वं लक्षणं दर्शितम् । सकलानामागमसाराणामुपनिषदां सर्वस्वं सर्वस्वमिवादरणीयः । तन्महातात्पर्यविषय इति यावत् । अनेनोपनिषदस्तत्र प्रमाणमिति दर्शितम् ॥ २ ॥

अथाशीर्वचनरूपं प्रबन्धमुखमारचयति–भवत्विति । सर्वमङ्गलया श्रीगौर्या सर्वैः कल्याणगुणैश्चोपेतः । सः 'पुरुषं कृष्णपिङ्गल' मित्यादिश्रुतिषु तथा प्रसिद्धः। परमात्मा परा उत्कृष्टा मा लक्ष्मीर्यस्य तथाभूत आत्मा शिवः। भवतामनुग्राह्यत्वेन सन्निहितानां श्रोतॄणां सिद्ध्यै अभिलषितसकलफलावाप्तये भवतु। सर्वोत्कृष्टलक्ष्मीशालिनस्सर्वाभिलषितफलप्रदानसामर्थ्यं युक्तमिति भावः । सर्वोत्कृष्टलक्ष्मीशालित्वमुपपादयत्युत्तरार्धेन–चिदचिन्मयश्चेतनाचेतनरूपः । स्वरूपार्थे मयट्प्रत्ययः । अशेषः कृत्स्नोऽपि प्रपञ्चो यस्य शेषः तदाराधनोपयोगितया तदर्थः । स भवत्विति पूर्वेण सम्बन्धः । अपिशब्दो निरवशेषग्रहणदार्ढ्यार्थः विरोधाभासार्थश्च । शिवाराधनोपयोगित्वं चेतनवर्गस्य तत्तदधिकारानुसारेण शिवाराधनरूपज्ञानकर्मानुष्ठातृत्वम् अचेतनवर्गस्य तदाराधनस्थानतदुपकरणादिभावेन तदाराधनोपकारकत्वम् । इदं पशुपाशपतेश्शिवस्य[1] चेतनाचेतनसर्वशेषित्वं 'ब्रह्मादिस्तम्बपर्यन्तान्पशून्बद्ध्वा महेश्वरः । पाशैरेतैः पतिर्देवः कार्यं कारयति स्वक' मित्यादिपुराणवचनेषु प्रसिद्धम् । एवं च परमेश्वरस्य लक्ष्मीर्नान्येषामिव गजतुरगधनाभरणादिकतिपयचेतनाचेतनरूपेति तस्य लक्ष्मीस्सर्वोत्कृष्टेति भावः ॥ ३ ॥

अथैतद्भाष्यनिर्माणोपयुक्तनिखिलोपनिषदर्थबोधप्रदातारमात्मीयं विद्यागुरुं नमस्करोति–नम इति। नानाविधान् नानाप्रकारान् परस्परविरुद्धार्थत्वेनावभासमानान् आगमान् वेदा-

---

(१) 'पशुपते' रिति ख. पाठः ।

**व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने ।**
**पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाद्यते ॥ ५ ॥**

न्तान् विधातुं अविरुद्धार्थोपदेशेन प्रसाधयितुं शीलमस्येति नानागमविधायी । 'सुप्यजातौ णिनिस्ताच्छील्ये'(पा० ३.२.७८) इति णिनिप्रत्ययः । सुपीत्यनुवृत्तौ पुनस्सुब्ग्रहणेन केवलस्यैवोपसर्गस्य व्यावृत्तिः। एवं ताच्छील्यप्रतिपादनात् सर्वेषां वेदान्तानामविरोधेन शिवे तात्पर्यमुपदिश्य लोकाननुग्रहीतुमवतीर्ण इति व्यज्यते । कैवल्यस्य मुक्तेः कल्पतरुरिव कल्पतरुः । यथा कल्पतरुरर्थिनाममोघाभिगमनस्तथा कैवल्यार्थिनामयमिति तत्साम्यम् । प्रसिद्धकल्पतरुर्भोग्यवस्त्वादिरूपक्षुद्रफलार्थिनामेवामोघाभिगमनः । अयं तु कैवल्यरूपमहाफलार्थिनामिति तत उत्कर्षश्चेति रूपकविशेषस्तदुत्थापित[1]व्यतिरेकालङ्कारो वा । नन्वयं स्वयं केवलकैवल्यप्रदः न तु भोग्यवस्त्वर्थिनां तत्प्रद इति न प्रसिद्धकल्पतरोरस्योत्कर्ष इत्याशङ्क्य तत्प्रदत्वमपि दर्शयति–**कल्याणगुरवे** इति । कल्याणमर्थिनामैहिकामुष्मिकभोगादिरूपमभ्युदयफलं कुर्वन्तीति कल्याणाः । कल्याणशब्दात् तत्करोतिण्यन्तात् पचाद्यच् । तेषां गुरव इत्यर्थः । 'यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम' इति श्रुतेरस्य शिष्या अपि परमेश्वरसाक्षात्कारवत्तया स्वपूजकेभ्यः सर्वाण्यभ्युदयफलानि प्रयच्छन्ति । अस्य तत्प्रदत्वे किं वक्तव्यमिति भावः । कल्याणाय गुरव इति समानाधिकरणसमासो वा । यद्वा । कैवल्यप्रदत्वोपयोगिज्ञानभक्तिवैराग्यादिकल्याणगुणसमृद्धिप्रतिपादनार्थो वायं कल्याणशब्दो मत्वर्थीयाच्प्रत्ययान्तः।अथवा । यस्य गुरोरभिगमनमात्रेण शिष्याणामानन्दाद्युपलब्धिर्ज्ञानोदयश्च भवति स कल्याणगुरुः । तथा ।अनेन श्लोकेन शिवशास्त्रप्रचारणार्थशिवावताररूपाणामष्टाविंशतेर्योगाचार्याणामाद्यस्य श्वेताचार्यस्यापि नमस्कारः क्रियते। अस्मिन्पक्षे 'नानागमविधायिन' इत्यस्य नानाविधपाशुपताद्यागमनिर्मात्र इत्यर्थः । अन्यत्समानम् । द्वितीयो नमश्शब्द आदरार्थः । 'नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नम'इत्यादिवत् । अथवोत्तरार्धेन आश्रमगुरोर्नमस्कारः क्रियते ॥ ४ ॥

अथाचार्यः स्वचिकीर्षितस्य भाष्यस्य भाष्यान्तरेभ्योऽतिशयमाविष्कुर्वन्नेव चिकीर्षितं प्रतिजानीते—**व्यासेति** । इदं व्याख्यास्यमानतया बुद्धिसन्निहितं व्याससूत्रम् । जातावेकवचनम् । व्यासप्रणीतं सूत्रजातम् । विदुषां साङ्गसशिरस्कवेदाध्ययनेनापाततोऽधिगतब्रह्मस्वरूपाणाम्। ब्रह्मदर्शने ब्रह्मणो दर्शने इदमित्थं[2]भूतमिति परिच्छेदात्मके निर्णये । नेत्रं घटादिपरिच्छेदे नेत्रमिव निरपेक्षकारणमिति पूर्वार्धस्यार्थः । अत्र नेत्रत्वारोपरूपेण रूपकालङ्कारेण व्याख्यानसाध्यात्यन्ताप्रतीताध्याहारगौणलक्षणा विपरिणामव्यवधारणविकल्पनादिक्लेशयुक्तेभ्यो जैमिनिसूत्रादिभ्य उत्कर्षरूपो व्यतिरेकालङ्कारो व्यज्यते । तथाभूतानि जैमिन्यादिसूत्राणि। तत्र स्थालीपुलाकन्यायेन जैमिनिसूत्रेषु क्लिष्टाध्याहारादिस्थलान्युदाह्रियन्ते । प्राशित्रभक्षणार्थं गृहीतस्य हविश्शेषस्य दैवान्नाशे तदर्थं पुनरपि हविश्शेषात् ग्राह्यमिति प्राप्ते स्थितस्य शेषस्य इडाभक्षणादिप्रतिपत्त्यन्तरावरुद्धत्वात्प्रतिपत्तिकर्मणां यज्ञोपयुक्तशेषै-

(१) 'तदुत्थापितविशेषालङ्कारो वा' इति ख. पाठः । (२) 'मित्थंमतमिती' ति ख. पाठः ।

राकीर्णस्य यज्ञदेशस्य विविक्ततापादनरूपविशिष्टप्रयोजनकारणत्वात्तस्य च प्रयोजनस्य प्रतिपाद्यनाशेनापि सिद्धत्वात्प्रतिपाद्यशेषनाशे तदाश्रयाणां प्राशित्रभक्षणादिकर्मणां लोप एवेति निर्णयार्थं प्रवृत्तस्याधिकरणस्येदं सूत्रम्—'अपिवा शेषभाजां स्याद्विशिष्टकारणत्वा'दिति (जै० ६. ४.३)अत्र शेषभाजां लोप इत्यध्याहारः। अयमतिक्लिष्टः। न ह्ययं पदान्तरसमभिव्याहारवत् सूत्रतात्पर्यनिर्णयाल्लभ्यते। सूत्रोक्तपूर्वपक्षनिराकरणार्थतयाधिकरणान्तरेषु दृष्टस्यापि वाशब्दस्य दर्शनेन पूर्वपक्षसूत्रस्य चादर्शनेन 'विशिष्टकारणत्वा'दिति हेतोश्चानभिव्यक्तार्थत्वेन ततस्तत्तात्पर्यस्य निर्णेतुमशक्यत्वात्। नापि पूर्वाधिकरणसूत्रपर्यालोचनात्तल्लभ्यते। पूर्वाधिकरणे हि प्रधानार्थावत्तहविरपचारे शेषादवदेयमिति 'शेषाद्व्यवदाननाशे स्यात्तदर्थत्वा'दिति (जै० ६.अ.४.पा.१) सूत्रेण पूर्वपक्षं परिगृह्य 'निर्देशाद्वान्यदागमये' दिति ( जै० ६.४.२ ) सूत्रेण मध्यात्पूर्वार्धादवदेयमिति निर्देशात्प्रधानार्थं मध्यपूर्वार्धाभ्यामवत्तस्य हविषस्तस्य नष्टत्वात्तदर्थं हविरन्तरं सम्पादनीयमिति सिद्धान्तितम्। तत्र सिद्धान्तानुसरणे शेषभाजामर्थेन हविरन्तरमागमयितव्यमिति पूर्वपक्षानुसरणे तेषामर्थेन शेषादवदेयमिति चाध्याहारो लभ्यते। न तु लोप इति। 'शेषभाजा' मित्यस्य सम्बन्धाकाङ्क्षायामपि पूर्वाधिकरणपूर्वपक्षसिद्धान्तसाध्ययोरन्यतरस्यैवाध्याहारो लभ्यते । 'निर्देशाच्छेषभक्षोऽन्यै' रित्याद्युत्तर- ( जै० ६.४.४ ) सूत्राणां हविश्शेषभक्षणकर्तृविचारार्थत्वेन ततोऽध्याहार्यविशेषलाभासम्भवात् । तस्माच्चतुर्थाध्याये निर्णीतं प्रतिपत्तिकर्मणामप्रयोजकत्वं विद्यमानशेषस्य प्रतिपत्त्यन्तरावरुद्धत्वं चालोच्यैव कर्तव्योऽयमध्याहारोऽतिक्लिष्टः। आदित्यादीनामयनादिषु संवत्सरसत्रेष्वहर्गणत्वसामान्यात् द्वादशाहविध्यन्तप्राप्तौ संवत्सरसत्रत्वाद्यन्तरङ्गसादृश्यात् गवामयनविध्यन्त इति निर्णयार्थं प्रवृत्तस्याधिकरणस्य सूत्रं 'गव्यस्य च तदादिष्वि' ति। (जै०८.१.१८ सू०) अत्र गव्यशब्दो न गवामयनस्य वाचकः। 'गोपयसोर्य'दिति (पा० ४.३.१६०सू०)गोशब्दाद्विकारावयवयोरेव यत्प्रत्ययस्मरणात्। अतो गोविकारादिवाचिनो गव्यशब्दस्यात्र 'गावो वा एतत्सत्रमासते' त्यर्थवादकल्पितगोसम्बन्धित्वसादृश्यात् गवामयने गौणी वृत्तिः। 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये' त्यादिसामिधेनीविवृद्धिश्रुतावागमयितव्यानां सर्वासामृचामन्ते निवेशः। 'अन्ते तु बादरायण' इति (जै० ५.२.१९ सू० ) न्यायात्। यदि 'त्वियं वै समिध्यमानवती[1] असौ समिद्धवती[2], यदन्तरा, तद्धाय्या' इति श्रुत्या द्यावापृथिवीसंस्तुतयोस्समिध्यमानवतीसमिद्धवत्योर्मध्ये धाय्यानां विधानमनुमीयते। तदा सर्वासामप्यागमयितव्यानामृचां तयोर्मध्ये निवेशः। 'पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीष्वि'ति (पा०३.१.२९सू०) व्याकरणस्मृत्या सर्वासां सामिधेनीनां धाय्याशब्दवाच्यत्वावगमेन धाय्याशब्दस्य सामिधेन्यन्तर्गतकतिपयऋग्विशेषवाचित्वाभावादिति प्राप्तौ सामिधेन्यन्तर्गतास्वपि 'पृथुपाजवत्यौ धाय्ये भवतः' 'मानवी ऋचौ धाय्ये कुर्या' दित्यादिषु कासुचिदेव ऋक्षु धाय्याशब्दप्रयोगदर्शनात् प्रयोगमूले व्याकरणे लाघवार्थं सान्नाय्यार्थनिर्देशकहविश्शब्दरीत्या सामान्यशब्देनार्थनिर्देश इत्युपपत्तेः धाय्याशब्दितानां मध्ये निवेशः अन्यासामन्ते निवेश इति निर्णयार्थं प्रवृत्तस्य "समिध्यमानवतीं समिद्धवतीं चान्त-

---

(१) 'समिध्यमानोऽध्वर'इत्यसौ ऋक्समिध्यमानवती।(२) 'समिद्धो अग्न आहुत' इत्यसौ ऋक्समिद्धवती'इति माधवः।

रेण धाय्याः स्युः द्यावापृथिव्योरन्तरालसमर्हणा" दित्य (जै०५.३.४सू०) धिकरणस्येदं गुणसूत्रम् 'उष्णिक्ककुभोश्चान्ते दर्शना' दिति (जै०५.३.६ सू०)। इदं सूत्रं केचिदेवं व्याचक्षते। सर्वासामागमयितव्यानामृचामन्ते निवेश इति प्रथमपूर्वपक्षनिराकरणेऽभ्युच्चययुक्तिरनेनोच्यते। यत्र सामिधेनीविवृद्ध्या धाय्याशब्दितान्यूनाक्षरगायत्र्यागमः तथाभूत एव क्वचिदुदाहरणे 'त्रिष्टुभा परिदधाती'ति श्रूयते। तत्र यदि यथा प्रकृत्याजु[1]होतैव परिधानीया, तदा त्रिष्टुभेत्यनेन धाय्यानन्तरं समिद्धवत्याजुहोतेति द्वयोर्न्यूनाक्षरगायत्र्योश्चतुश्चत्वारिंशदेवाक्षराणीति तद्द्वयाभिप्रायेण त्रिष्टुभा परिदधातीत्युपपद्यते। अक्षरसङ्ख्यासाम्यात्। यदि तत्रान्ते धाय्यानिवेशः, तदायमर्थवादोऽनुपपन्नस्स्यादिति। अन्ये त्वन्यथा व्याचक्षते। अधाय्याशब्दितानामपि मध्ये निवेश इति द्वितीयपूर्वपक्षनिराकरणेऽभ्युच्चययुक्तिरनेनोच्यते। त्रैधातवीयायां 'अग्ने त्रीते वाजिना त्रीषधस्थे'त्यधाय्याशब्दिताधिका सामिधेन्याम्नाता। तत्र 'त्रिष्टुभा परिदधाती'ति श्रूयते। यद्यधाय्याशब्दितानामपि मध्ये निवेशस्तदा 'अग्ने त्रीते' इति त्रिष्टुभोऽपि मध्ये निवेशा 'त्रिष्टुभा परिदधाती' ति श्रवणमनुपपन्नं स्यादिति। उभयथापि 'त्रिष्टुभश्चान्ते दर्शना'दिति सूत्रणीयम्। 'उष्णिक्ककुभो'रित्ययुक्तमेव। तस्मादुष्णिक्ककुभावित्यस्य त्रिष्टुभि लक्षणा "त्रिष्टुभो वा एतद्वीर्यं यदुष्णिक्ककुभा" वित्यर्थवादकल्पितकार्यकारणभावसम्बन्धमूला। ज्योतिष्टोमे सौत्येऽहन्यस्ति सवनीयः पशुस्सन्ति च सवनीयाः पुरोडाशाः। तत्र तन्त्रिणो धर्माः प्रसङ्गिण उपकुर्वन्तीति मर्यादा। एवं सति, पशुस्तन्त्री। पुरोडाशाः प्रसङ्गिणः। न तु वैपरीत्यं पशुप्रयोगस्य व्यापित्वात् पुरोडाशप्रयोगाणां छिद्राभिधानीयतन्मध्यपातित्वादिति प्रतिपादयितुं सूत्रम्–'पशोश्च विप्रकर्षस्तन्त्र[3]मध्ये विधाना' दिति (जै० १२.२.३२सू०) तद्यथाश्रुतं न विवक्षितार्थसमर्पणक्षमम्। विप्रकर्षो ह्यत्र प्रथमान्तनिर्दिष्टः साध्यत्वेनावगम्यते। तन्त्रमध्ये विधानं पञ्चम्यन्तनिर्दिष्टं हेतुतया। एवमन्वयो न सङ्गच्छते। विप्रकर्षो ह्यत्र पशोः प्रातरादिकालत्रयसम्बन्धः। स तु 'वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीयसवन' इति प्रत्यक्षवचनसिद्धो न साधनीयः। पुरोडाशानां पशुतन्त्रमध्ये विधानं तु साधनीयम्। न हेतुतया निर्देशार्हम्। अतः प्रथमापञ्चम्योर्व्यत्यासेन विभक्तिविपरिणामः कार्यः। पशोर्विप्रकर्षात् प्रातरादिकालत्रयव्यापित्वात् पुरोडाशानां पशुतन्त्रमध्ये विधानमिति। ज्योतिष्टोमे अग्नीषोमीयसवनीयानुबन्ध्यास्त्रयः पशवः तत्रोपाकरणादयः पशुधर्माः किमविशेषेण सर्वपश्वर्था उत सवनीयार्था उताग्नीषोमीयसवनीयार्था अथवाग्नीषोमीयार्था एवेति सन्देहे ज्योतिष्टोमप्रकरणाम्नाताः पशुधर्मास्तद्गृहीतास्सन्तस्तत्रानर्थक्यात्तदङ्गेषु पशुष्ववतरन्तस्तत्प्रकरणाविशेषात्तदङ्गसर्वपश्वर्था इति प्राप्ते सवनीयावान्तरप्रकरणात्तदर्था इति पक्षान्तरपरिग्रहार्थमिदं सूत्रं 'तुल्यस्सर्वेषां पशुविधिः प्रकरणाविशेषा'दिति (जै०३.६.१८ सू०) इदं यथाश्रुतिगृहीतं न तस्य पक्षस्य साधकम्। प्रत्युत प्रथमपक्षसाधकमेव प्रतिभाति।

---

(१) 'आजुहोते' ति कस्याश्चिदृचः प्रतीकः इति वेद्यम्। (२) एतत्सूत्रस्थं प्रथमापञ्चम्योर्व्यत्यासं निर्दिश्यैव दीक्षितेन्द्रा वरदराजस्तवे भगवतो नाभिवर्णनप्रस्तावे कांचिच्चमत्कृतिमकल्पयन्। तथाहि—नाभेरभूत्तव चतुर्भुज नान्तरिक्षं यन्नाभिरेव यदुनेतरियं ततोऽभूत्। नाभ्या इति श्रुति विपर्ययगे विभक्ती तां जैमिनेरनुससार पशोश्च सूत्रम्॥ अत्र श्रुति श्रुतावित्यर्थः।'अन्तरिक्षान्नाभिरासी' दिति वक्तव्ये 'नाभ्या आसी'दिति प्रवृत्तां श्रुतिं जैमिनीयमिदं 'पशोश्च विप्रकर्षस्तन्त्रमध्ये विधाना'दिति सूत्रमप्यन्वसरदित्युत्प्रेक्षा चमत्कृतिमती इत्यवधेयम्। (३) 'तन्मध्ये' इति ख, पाठः। (४) 'अत एवमन्वयो' इति ख, पाठः। (५) 'तदङ्गेष्ववतरन्त' इति ख, पाठः।

अतोऽन्यथाकरणीयमिदं सूत्रं 'प्रकरणाविशेषात् खलु सर्वेषां तुल्यः पशुधर्मः स्यात्।' असिद्धः प्रकरणाविशेषः। 'आग्नेयः पशुरग्निष्टोम आलभ्यत' इत्यौपवसथ्येऽहनि सवनीयविधानेन तदवान्तरप्रकरणसत्त्वात्। अतस्तदर्था एवेति। इयमेव व्यवधारणकल्पना। अन्यथा वाक्यार्थप्रतिभासेऽपि[1] प्रमाणान्तरबलेन यदन्यथा वाक्यार्थवर्णनम्। व्याकरणे त्वत्यन्ताप्रतीतपारिभाषिकपदार्थग्रहणदूरस्थानुवृत्तिविपरिणामयोगविभागादिक्लेशः प्रसिद्ध एव। नैवं वैयासिकेषु सूत्रेषु क्लेशोऽस्ति। किंतु प्रसन्नानि सन्त्येव तानि गम्भीराणीति स्पष्टो जैमिनिसूत्रादित उत्कर्ष इति। एवंभूतमेवेदं व्याससूत्रजातं प्राचीनैर्व्याख्यातृभिः क्लिष्टाध्याहारादिना कलुषीकृतम् अभिभूतस्वाभाविकप्रसादतां नीतम्। तदिदानीमाचार्यप्रवरेण श्रीकण्ठयोगिना प्रसाद्यते सूत्रकाराशयस्थितऋजुयोजनाप्रदर्शनेन सम्यग्व्याख्यानेनाविर्भूतस्वाभाविकप्रसादं क्रियते। यथा स्फुटावलोकनक्षममेव नयनं प्राक्कैश्चन पुराणाचार्यपदव्यपदेशकैर्भिषग्भिरहिताञ्जनदानादिना कलुषीकृतं भिषग्वरेण हिताञ्जनदानादिना प्रसाद्यते तद्वदित्युत्तरार्धस्यार्थः। अत्र 'पूर्वाचार्यै'रिति स्थाने 'वृद्धवैद्यै'रिति पाठः क्वचिद्दृष्टः। 'कलुषित'मित्यनेन[2] प्राचीनभाष्यादिग्रन्थानां सामान्येनोद्घाटितमपि सूत्राक्षराननुसारित्वं तत्तत्सूत्रव्याख्यानावसरे विशिष्य भाष्यकृता नोद्घाटयिष्यते। तथा सति केषाञ्चिदाग्रहप्रवृत्तानां भाष्यादिग्रन्थवदिदमपि भाष्यं पौरोभाग्यमात्रवलम्बनं स्यात्, न च तदस्मत्कृतेर्युक्तमिति स्वशैलीख्यापनाय श्रीकण्ठेनेति स्वनामकीर्तनम्। श्रीः ग्रस्तस्य कालकूटस्य कण्ठे नियमनप्रयुक्ता[3] धवलस्य कण्ठस्य नैल्यकृतपरभागशोभा। तयोपलक्षितः कण्ठोऽस्येति व्युत्पत्त्या श्रीकण्ठशब्दः शिवे प्रवृत्तः। इहापि तद्व्युत्पत्तिस्मारणेन[4] विषसदृशस्य गृहीतस्य परदोषजालस्य कण्ठे नियमयितृत्वमात्मनश्शैली, या "गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेलाविवेश्वरः। शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छती" ति सत्पुरुषधर्मत्वेन प्रसिद्धेति तेन नाम्ना ख्याप्यते। एवं परदोषानुद्घाटयितृस्वभावेनाप्याचार्येण 'पूर्वाचार्यैः कलुषित'मित्येतावन्मात्रं सामान्येनोद्घाटितं श्रोतॄणां तत्र तत्र स्वपरभाष्यकृतव्याख्यानयोर्विशेषालोचने दृष्टिनिधानेन स्वभाष्यस्य प्रामाणिकैरादरणीयत्वं यथा स्यादिति। एवं भाष्यकारेण परभाष्येष्वनुचिताध्याहारादिक्लेशं विशिष्यानुद्घाटितमपि श्रोतॄणां दिक्प्रदर्शनाय तत्रतत्र वयं किञ्चित्प्रदर्शयामः। ब्रह्मणस्सर्वशक्तिमत्त्वप्रतिपादनार्थं सूत्रं "सर्वोपेता च तद्दर्शना" दिति। (ब्र०२.१.३० सू०)तत्र भाष्यान्तरेषु 'सर्वोपेते'त्यस्य सर्वशक्त्युपेतेत्यर्थं परिगृह्य स्त्रीलिङ्गनिर्देशोपपादनाय देवतेति विशेष्यमध्याहृतम्। तदध्याहारो न पूर्वापरसूत्रानुसारी। पूर्व'मधिकं तु भेदनिर्देशा' दिति (ब्र०२. १. २२) सूत्रे ब्रह्मणो नपुंसकलिङ्गनिर्देशात् क्वचिदपि सूत्रे स्त्रीलिङ्गपदेन ब्रह्मनिर्देशाभावाच्च। नापि विषयवाक्यानुसारी। 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिषु भाष्यान्तरोदाहृतेषु प्रसिद्धेषु विषयवाक्येषु[5] स्त्रीलिङ्गपदेन तन्निर्देशाभावात्। अतस्तत्र देवतेति विशेष्याध्याहारः क्लिष्टः। इह तु भाष्ये सर्वापि शक्तिर्ब्रह्माश्रितेति द्वितीयान्तपदाध्याहारेण योजना कृता। परव्याख्याने सर्वोपेतेत्येकं पदमिह पदद्वयमिति विशेषः। ऐकपद्यमाश्रित्य क्लृप्तोऽपि देवतापदाध्याहारः शाङ्करभाष्ये सूत्रस्यार्थान्तरमप्यैकपद्यलभ्यमस्ति, 'मायां तु प्रकृतिं विद्या'दिति

(१) 'प्रतिभानेऽपि' इति ख. पाठः। (२) 'नेनेतरभाष्यादि' इति ख. ग. पाठः। (३) 'प्रयुक्त' इति ख. ग. पाठः। (४) 'स्मरणेन' इति ख. ग. पाठः। (५) 'विषयवाक्यादिषु' इति ग. पाठः।

श्रुतिसिद्धमायाशब्दितानिर्वचनीयाविद्यैव तथाभूतप्रपञ्चप्रकृतितया सर्वप्रपञ्चोपेता । ब्रह्म तु तथातथाप्रतिभासमानप्रपञ्चविवर्तस्याधिष्ठानमेव केवलम् । तथा च मायावशात् सेनासमुद्रादिरूपेण प्रतिभासमानस्यैन्द्रजालिकस्येव ब्रह्मणो न कृत्स्नैकदेशपरिणामप्रसक्तिरस्तीत्येवंरूपमिति ज्ञापयितुमाश्रितः । स त्वर्थः "श्रुतेस्तु शब्दमूलत्वा" दिति ( ब्र० २.१.२७ सू०) सूत्र एवाकाङ्क्षावशादुपन्यस्त इति तस्मिन्सूत्रे नाविष्कृतः। अन्यदीयभाष्यादिग्रन्थेषु तु क्लिष्टो देवतापदाध्याहारः केवलं गतानुगतिकतया समाश्रितः । न च प्रकृतिविशिष्टब्रह्मोपादानवादेऽपि प्रकृतिरेव सर्वकार्योपेतेति न ब्रह्मणि कृत्स्नैकदेशविकल्पावसर इति परिहारान्तरमप्यनेन सूत्रेण विवक्षितमस्तीति द्योतनार्थतयैकपद्याश्रयणं स्यादिति वाच्यम् । सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्म कारणं स्थूलचिदचिद्वस्तुशरीरकं ब्रह्म कार्यमिति वादे ब्रह्मरूपकार्यस्य ज्ञानेच्छादीनां च प्रकृत्युपादानकत्वाभावेनाद्वैतवाद इव प्रकृतिस्सर्वकार्योपेतेति वक्तुमशक्यत्वात् ब्रह्मरूपकार्ये ब्रह्मणस्तत्तच्छरीरावच्छेदे च कृत्स्नैकदेशविकल्पप्रसराप्रतिक्षेपाच्च। तथा 'विप्रतिषेधाच्चे'ति ( ब्र० २.२.४५ सू०) पाञ्चरात्राधिकरणसूत्रे 'विप्रतिषेधा'दिति पदस्य पाञ्चरात्रप्रामाण्यसमर्थनार्थत्वोपपादयिषया पाञ्चरात्रेऽपि जीवोत्पत्तिप्रतिषेधादित्यर्थो दर्शितः। विस्मरणशब्दस्य स्मरण इव विरोधवाचिनो विप्रतिषेधशब्दस्य न प्रतिषेधे शक्तिरस्तीति गौणी लक्षणा वा क्लिष्टा जघन्यवृत्तिरेव तत्र गतिः। पाञ्चरात्रगतैरेव जीवोत्पत्तिप्रतिषेधवचनैस्तत्रत्यतदुत्पत्तिप्रतिपादकवचनानां विरोधात्तद्विरोधसमाधानार्थं तदुत्पत्तिवचनानां गौणोऽर्थः कल्पनीय इत्येवं विप्रतिषेधादिति पदस्य 'विप्रतिषेधाच्चासमञ्जस'(ब्र०२.२.१० सू०) मित्यत्रेव परस्परविरोधादप्रामाण्यसमर्थनार्थत्वेन प्रतीयमानस्य प्रामाण्यसमर्थने तात्पर्याङ्गीकारे 'तुल्यस्सर्वेषा' मिति ( ३.६.१८ ) जैमिनिसूत्र इव व्यवधारणकल्पना समाश्रयणीया । तथा- 'नुकृतेस्तस्य चे'ति (ब्र० १.३.२२ सू०) दहराधिकरणगुणसूत्रस्य दहराकाशो जीवो न भवति जीवानुकार्यत्वात् अनुकर्त्रनुकार्ययोर्भेदावश्यम्भावादिति स्वरसतोऽर्थः प्रतीयते। कथम्। 'दहर उत्तरेभ्य' (ब्र० १.३.१४ सू०) इति सूत्रमारभ्य दहरः परमेश्वरोऽन्यो वेति विचारे दहरो धर्मित्वेनानुवर्तते। स एव 'अल्पश्रुतेरिति चेत्तदुक्त'(ब्र० १.३.२१ सू०) मित्यव्यवहितसूत्रेऽप्यल्पपरिमाणश्रुतेर्दहरो जीव इति शङ्कानिराकरणार्थे धर्मीत्यत्रापि धर्मिणस्तस्यानुवृत्तिः स्वरसतो लभ्यते । 'इतरपरामर्शात्स इति चेन्नासम्भवा'दिति (ब्र०१.३.१८ सू०) सूत्रमारभ्य दहरप्रकरणे 'य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाये'त्यादिवाक्ये जीवपरामर्शात् दहरो जीव इति पूर्वपक्षनिराकरणस्य प्रवृत्तत्वान्न जीव इति साध्यं लभ्यते । 'तस्ये'त्यस्य जीवपरामर्शित्वमपि तस्मिन्सूत्रे 'स' इति तस्य प्रस्तुतत्वादेव लभ्यते। 'दहर उत्तरेभ्य' इति (ब्र० १.३.१४ सू०) सूत्रे दहरस्य प्रस्तुतत्वेऽपि तत्रैव तदनुकृतेरसम्भवेन तत्परामर्शानौचित्यात्तस्यानुकृतेरिति हेतोस्तत्कर्मकानुकृतिकर्तृत्वमर्थ इति यद्यपि झटिति प्रतीयते । तथापि 'एतं सेतुं तीर्त्वा अपि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येष ब्रह्मलोक' इति दहरवाक्यशेषे दहराकाशं प्राप्तस्य सततोदितप्रकाशत्वे दहराकाशस्य सततोदितप्रकाशतायाः हेतुत्वाभिधानात् तदर्थविषयस्यापि सौत्रहेतोस्तत्कर्तृकानुकृतिकर्मत्वरूपं तदनुकार्यत्वमर्थ इति लभ्यते।

(१) 'तत्कर्मकानुकृतित्व' मिति ख. पाठः ।

एवमेवार्थस्सङ्क्षिप्य भाष्ये प्रदर्शयिष्यते । परभाष्ये त्विदं सूत्रं प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा दहराकाशो न भवति दहराकाशानुकर्तृत्वादित्यर्थपरत्वेन व्याख्यातम् । तस्य तदनुकर्तृत्वं 'निरञ्जनः परमं साम्यमुपैती'त्यत्र श्रूयत इति चोदाहृतम् । तत्र 'दहर उत्तरेभ्यः' इति (ब्र० १.३.१४ सू०) सूत्रमारभ्य धर्मित्वेनानुवृत्तं दहरं 'इतरपरामर्शा'दिति (ब्र० १.३.१८ सू०) सूत्रतस्साध्यत्वेनानुवृत्तं जीवत्वाभावं च परित्यज्य तथात्वेनाननुवृत्ततयात्यन्ताप्रतीतधर्मिसाध्यापेक्षणेन सूत्रयोजनायामतिक्लेशः स्पष्ट एव । व्यर्थश्चायं क्लेशः । अनुवृत्तधर्मिसाध्यापेक्षणेनैवेष्टसिद्धेः । न च तदपेक्षणे 'तस्यानुकृते'रित्यनेन निर्दिष्टस्य दहराकाशानुकर्तृत्वस्य हेतोरन्वयो न स्यादिति वाच्यम् । तस्य जीवानुकार्यत्वार्थताया[1] दर्शितत्वात् अनुकृतेरनुकर्तर्येव सम्बन्धस्वारस्ये तस्येत्यस्य जीवपरतया जीवस्य दहराकाशानुकर्तृत्वादित्यर्थपरत्वसम्भवाच्च । तथा सति हेतुः पक्षवृत्तिर्न स्यादिति चेत् सत्यम् । तथापि पक्षवृत्तिहेतोर्जीवानुकार्यत्वस्य समानसंवित्संवेद्यतयोपनायको भवत्येव । न हि साक्षात्पक्षवृत्तिहेतुरेव सूत्रेषु व्यपदिश्यते । किं तु यथाकथञ्चित्पक्षवृत्तिहेतोरुपनायकोऽपि प्रायेण सर्वैरपि सूत्रकारैः 'तदशिष्यं संज्ञाप्रमाणत्वात्' ( पा० १. २. ५३ सू० ) 'लुब्योगाप्रख्यानात्'[2] ( पा० १. २. ५४ सू० ) 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' ( जै० १. २. १ सू० ) 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्' ( जै० १. ३. १ सू० ) 'मन्त्रायुर्वेदप्रामाण्यमाप्तप्रामाण्यात्' 'न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्' 'ज्योतिश्चरणाभिधानात्' ( ब्र० १. १. २४ सू० ) 'न प्रयोजनवत्त्वात्' ( ब्र० २. १. ३२ सू० ) इत्यादिसूत्रेषु हेतुतया निर्दिष्टो दृश्यते । किं च परकल्पितधर्मिसाध्यापेक्षण एव हेतोरन्वयः । न हि प्रजापतिवाक्यनिर्दिष्टदहराकाशानुकर्तृत्वं 'निरञ्जनः परमं साम्यमुपैती'ति मुण्डकश्रुतिः प्रतिपादयतीति भ्रान्तोऽपि भणति । न वात्र प्रजापतिविद्यायां तथाभूतं वाक्यमस्ति । 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति तत्र श्रूयत इति चेत्, किं ततः । तद्धि जीवस्य मुक्तिदशायामपहतपाप्मत्वाद्यभिव्यक्तिमात्रं प्रतिपादयति न तु तदभिव्यक्त्या दहराकाशमनुकरोतीति प्रतिपादयति । ततोऽर्थतस्सिद्ध्येदिति चेत् सिद्ध्येद्यदि जीवस्यापहतपाप्मत्वादिप्राप्तौ दहराकाशस्यापहतपाप्मत्वादिकं हेतुत्वेन निर्दिशेत् । न तु निर्देशोऽस्ति । ननु, दहरस्यापहतपाप्मत्वादिकमुक्त्वा तदुपासनाफलत्वेन जीवस्य तदभिव्यक्त्युक्त्या तस्य दहरानुकरणमर्थतस्सिद्ध्येदिति चेन्न । प्रजापतिविद्योदितो जीव एव दहरः । तदुदितमुक्तिदशाभिव्यङ्ग्यजीवगतापहतपाप्मत्वादिव्यतिरेकेण दहराकाशगतनित्याभिव्यक्तापहतपाप्मत्वादिसद्भावे[3] नास्ति प्रमाणम् । जीवगतं स्वोपासनाभिव्यङ्ग्यमेव तद्दहरवाक्येऽपि कीर्त्यते इत्याशङ्कानिराकरणाय हि परमतेऽस्य सूत्रस्य प्रवृत्तिः । तथाशङ्कमानं प्रति जीवगतापहतपाप्मत्वाद्यनुकार्यं दहराकाशेऽन्यदपहतपाप्मत्वादिकं सिद्धं कृत्वा जीवे दहराकाशानुकर्तृत्वहेतुः कथमुपादीयेत । ननु, जीवगतापहतपाप्मत्वाद्यभिव्यक्तिरवश्यमन्यानुकरणरूपा वाच्या 'परमं साम्यमुपैती'ति श्रुत्यन्तरात् । तथा च जीवादन्यत्र क्वचिदपहतपाप्मत्वादिसिद्धिरन्वेषणीया । न च दहरवाक्यं विना

(१) 'जीवानुकार्यार्थतया' 'जीवानुकार्यत्वार्थतया' इति च क्रमेण ख. ग. पुस्तकयोः पाठौ । (२) 'लुबाप्रख्याना' दिति ख. ग. पाठः । (३) 'दहराकाशनित्याभिव्यक्त्यापहत' इति ख. पाठः ।

श्रुत्यन्तरे तदुक्तमस्ति । अतो दहरवाक्यमेवानुकार्यसमर्पकं पर्यवस्येदिति दहराकाशानुकर्तृत्वहेतुसिद्धिरिति चेत्। तर्हि हेतुस्सिध्यन् जीवदहराकाशयोर्भेदमादायैव सिध्यतीति तेन हेतुना किं साधनीयम् । अपि च न केवलं भेदमात्रमपेक्ष्य हेतुस्सिध्यति। किं तु दहराकाशस्य ब्रह्मत्वं चापेक्ष्य । 'परमं साम्यमुपैती'ति श्रुतौ ब्रह्मानुकरणस्य श्रुतत्वात्। अतः प्रयाससाध्यस्यापि[1] प्रागेव सिद्धिमपेक्ष्य प्रवृत्तोऽयं हेतुरिति सुतरां व्यर्थस्स्यादित्यलं प्रपञ्चेन। तथा 'शास्त्रयोनित्वा' दिति सौत्रहेतौ पूर्वसूत्रे एव प्रतिज्ञात्वेन[2] योजयितुं शक्ये परभाष्ये ब्रह्म शास्त्रप्रतिपाद्यमिति प्रतिज्ञामध्याहृत्य हेतोस्साध्यावैशिष्ट्यपरिहारार्थमब्भक्षादिवदवधारणगर्भतया शास्त्रेतराप्रमाणकत्वादित्यर्थे पर्यवसानमुक्तम्। तदप्यतिक्लिष्टमिति स्पष्टमेव । एवमन्यान्यप्युदाहरणान्यूहनीयानि । अप्रसिद्धश्रुतिस्मृत्यादिकल्पनावलम्बनभाष्यकारादिभिस्तु, कृत्स्नमपि शास्त्रं कलुषितमिति स्पष्टमेव। एवमर्वाचीनभाष्यादिप्रणेतृणां ये पूर्वपूर्वोपदेष्टार आसंस्तानुद्दिश्य 'पूर्वाचार्यैः कलुषित' मित्युक्तिः। नन्वत्र श्लोके 'विदुषां ब्रह्मदर्शन' इत्यत्र विदुषामिति षष्ठी न युक्ता। 'उभयप्राप्तौ कर्मणी'ति सूत्रेण (पा० २. ३. ६६ सू० ) कर्तृकर्मोभयप्राप्तिमतः कृतो योगे कर्तरि षष्ठ्याः प्रतिषिद्धत्वात्। किं तु 'अन्तर्धौ येनादर्शनमिच्छती'ति ( पा० १. ४. २४ सू० ) सूत्रगते यत्पद इव दर्शनकर्तृपरे विद्वत्पदे तृतीयया भाव्यम् । उच्यते। यत्र कर्तृकर्मणोरुभयोर्विशिष्य विवक्षाविषयतया प्राप्तिः स एवो 'भयप्राप्ता'विति सूत्रस्य विषयः यथा 'आश्चर्यो गवां दोहोऽशिक्षितेनागोपालकेने'ति। गावः किलाजादिवत्सुदोहा न भवन्ति। अयं चाशिक्षितो नापि गोपालः। तथाप्यनेनैतासां दोहोऽयमाश्चर्यः इति प्रतिपिपादयिषिताश्चर्योपपादनार्थतयात्र कर्तृकर्मणोरुभयोरपि विशिष्य विवक्षाया विषयतया प्राप्तिरस्ति। 'अन्तर्धा'विति सूत्रे शब्दानुपात्तत्वेऽप्यन्तरङ्गप्रत्यासत्त्या लब्धस्यात्मनः कर्मणोऽपि 'येने'ति निर्दिष्टस्य कर्तुरिव साऽस्ति। अन्यकर्मकोपाध्यायादर्शनेच्छायामुपाध्यायस्यापादानसंज्ञा माभूदित्येवमर्थम्। इह तु व्याससूत्रमिदमत्यन्तमपरिच्छेद्यस्य ब्रह्मणोऽपि परिच्छेदे निरपेक्षंकारणमित्येव[3] सूत्रोत्कर्षप्रतिपादनपरे वाक्ये कर्मविशेषवत्कर्तृविशेषस्य विदुषामित्युपात्तस्यापि[4] न विशिष्य विवक्षाविषयतया प्राप्तिरस्ति। तस्मात् 'उभयप्राप्तौ कर्मणी' त्यस्य नायं विषयः। तद्विषयत्वेऽपि वा 'शेषे विभाषे'ति वार्तिकेन तस्य विकल्पितत्वात्। शब्दानामनुशासनमाचार्येणाचार्यस्य वेति पक्षे षष्ठ्यपि युज्यत एव। ननु, तथापि ब्रह्मदर्शनमिति समासो न युज्यते। 'प्रतिपदविधाना षष्ठी न समस्यत' इत्यपोदितस्य षष्ठीसमासस्य 'कृद्योगलक्षणा षष्ठी समस्यत' इति वार्तिकान्तरेण प्रतिप्रसूतत्वेऽपि 'कर्मणि चेति' (पा० २. २. १४ सू०) सूत्रेण कर्मणि षष्ठ्यास्समासप्रतिषेधादिति चेत्। अत्रेयं शाब्दिकमर्यादा । 'कर्मणी'ति शब्दमुच्चार्य या षष्ठी विहिता तस्यास्समासनिषेधः । न कर्मणिषष्ठीमात्रस्य । तथा सति 'पुरां भेत्ते' त्यादौ षष्ठीसमासनिषेधस्येत एव सिद्धतया कर्तरि विहिताभ्यां तृजकाभ्यां योगे षष्ठीसमासनिषेधकस्य 'तृजकाभ्यां कर्तरी'ति ( पा० २. २. १५ सू० ) सूत्रस्यानारम्भणीयतापत्तेः । तथा चात्रो'भयप्राप्ता'विति सूत्राप्रवृत्तेर्न कर्मणिशब्दमुच्चार्य षष्ठी विहिता किं तु 'कर्तृकर्मणोः कृती' ( पा० २.३.६५ सू० ) ति सूत्रगतं 'कर्तृकर्मणो' रिति शब्दमुच्चार्येति नात्र समास-

(१) 'प्रधानसाध्यस्यापि' इति बहुपुस्तकपाठः। (२) 'सूत्रत एव प्रतिज्ञानत्वेन' इति पाठान्तरम् । (३) 'निरपेक्षं करण' मिति ख. पाठः। (४) 'विदुषामित्युपात्तत्वेऽपि' इति ख. पाठः।

**श्रीमतां व्याससूत्राणां श्रीकण्ठीयः प्रकाशते ।**
**मधुरो भाष्यसन्दर्भो महार्थो नातिविस्तरः ॥ ६ ॥**

निषेधप्रसङ्ग इति । अत्र चिन्त्यते 'उभयप्राप्ता'विति सूत्रं कर्मणि षष्ठ्याः प्राप्त्यर्थं नियमार्थं वा न भवति । 'कर्तृकर्मणोः कृती'ति पूर्वसूत्रतस्तस्या नित्यमेव प्राप्तत्वात् । किं तु कृद्योगे सर्वत्र कर्तरि षष्ठी प्राप्ता उभयप्राप्तिमिति तत्प्रतिषेधार्थम् । अत एवो- 'भयप्राप्तौ कर्मणी'ति प्रतिषेधे अकादिप्रयोगे अप्रतिषेधः 'शेषे विभाषे'ति तत्सूत्रवार्तिके षष्ठीप्रतिषेधमेव तस्य सूत्रस्यार्थं कृत्वा तस्य प्रतिषेधस्य 'भेदिका रुद्रस्य जगतो बिभित्सा रुद्रस्य जगत' इत्यादिप्रयोगेऽपवादः शेषे प्रतिषेधस्य विकल्पश्च दर्शितः । एवं च कर्मणीति विहिता षष्ठ्येव नास्तीति कथं तद्विषयत्वं 'कर्मणि चे'ति सूत्रस्य स्यादिति । अत्रेदं विवक्षितम् । कर्मणीति शब्दोच्चारणपूर्वकं कर्तरिषष्ठ्याः प्रतिषेधेन या षष्ठी परिशेषिता तस्यास्समासनिषेध इति । अत एव महाभाष्ये कर्मणीति शब्दमुच्चार्य या षष्ठीत्येतावदेवोक्तं न तु विहितेति । तस्मात्सर्वथापि ब्रह्मदर्शनमिति समासो युक्तः ॥ ५ ॥

एवं चिकीर्षितप्रतिज्ञायामेव स्वचिकीर्षितस्य भाष्यस्य परभाष्यादिभ्योऽतिशयस्सूत्राक्षरस्यानुसारित्वप्रदर्शनेनाविष्कृतः । अथ गुणान्तरप्रदर्शनेनाप्याविष्क्रियते—**श्रीमतामिति** । श्रीस्त्रिवेदी 'ऋचस्सामानि यजूंषि । सा हि श्रीरमृता सता' मिति श्रुतेः । तद्वतां तत्प्रचुराणामित्यर्थः । भूम्नि मतुप्प्रत्ययः । यद्यपि तत्तदधिकरणसूत्राण्येकैकं विषयवाक्यमधिकृत्य प्रवृत्तानीव भान्ति, तथापि व्यस्तसमस्तवेदतया सकलवेदतदर्थाभिज्ञेन भगवता बादरायणेन प्रणीतानि तानि सूत्राणि तत्तत्समानन्यायानि बहूनि विषयवाक्यान्यवगाहन्त इति भावः । एवंभूतानां व्याससूत्राणां श्रीकण्ठप्रणीतो भाष्यसन्दर्भः प्रकाशते प्रकर्षेण भासते । श्रीकण्ठनाम्ना हि श्रीस्त्रिवेदी तदलङ्कृतः कण्ठोऽस्येति व्युत्पत्त्या सकलवेदतदर्थाभिज्ञत्वमाचार्यस्य प्रतीयते । अतस्सकलवेदतदर्थाभिज्ञेन कृतानां तथाभूतेन कृतमेव भाष्यं शोभावहमिति भावः । मधुरो रसवद्वागर्थयुक्तः । 'मधुरं रसवद्वाचि वस्तुन्यपि रसः स्थितः । येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥' इति हि काव्यलक्षणविदः । तत्र ललितवर्णपदविन्यासादिकृतं सन्दर्भरामणीयकं वाचो माधुर्यम् । अर्थस्य तु काव्येषु सहृदयास्वादनीयमहानन्दप्रतिबिम्बनोपयोगिरीत्यादिवृत्तिवासनाभिव्यञ्जनक्षमविभावानुभावादिरूपत्वम् । इह तु 'रसो वै स' इत्यादिश्रुतिवर्णितनिरतिशयानन्दरूपपरशक्तिविशिष्टपरब्रह्मरूपत्वमेव । न च तथात्वेऽपि काव्यवद्यथासिद्धपरब्रह्मगुणवर्णनमात्रविश्रान्तोऽयं सन्दर्भः । किं तु तन्निर्णयोपयोगिन्यायसहस्रभरित इत्याह—**महार्थ इति** । तथाप्यत्र भूयान्नास्ति शब्दप्रपञ्चस्साभिप्रायविशेषणविन्यासेनैव प्रायस्तत्रतत्र दर्शनीयन्यायानामाविष्करणा'द्व्याख्यानतो विशेषप्रतिपत्ति'रिति न्यायेन तेषां व्याख्यानतस्सुगमत्वादित्यभिप्रेत्याह—**नातिविस्तर इति** । महाविभाषया नञस्समासाभावो 'वृत्तानुपूर्वे च न चातिदीर्घे' इतिवत् । नसमासो वा 'गमिकर्मीकृतनैकनीवृते' तिवत् ॥६॥

सर्ववेदान्तसारस्य सौरभास्वादमोदिनाम् ।
आर्याणां शिवनिष्ठानां भाष्यमेतन्महानिधिः ॥ ७ ॥

एवंगुणवदप्येतद्भाष्यमेतदभिमतां शास्त्रार्थमर्यादामनङ्गीकुर्वतामनादरणीयमिति सर्वोपादेयत्वाभावं दोषमाशङ्क्य नायं दोषः किं तु गुण एवेत्यभिप्रेत्याह—सर्वेति । सर्वेषां वेदान्तानां यत्सारस्यं निरतिशयास्वादनीयरसरूपे परब्रह्मणि तात्पर्यम् । तत्सौरभमिव । यदेकदेशस्थितस्यापि दिव्यपुष्पस्य सौरभमनेकदेशविसृमरं भवति एवं परब्रह्मणि निविष्टमपि वेदान्तबृन्दतात्पर्यं तत्तद्विद्योपक्रमगतोपाख्यानादिप्रदर्शितार्थद्वारा गुरुशिष्यक्रमाद्यनेकार्थपर्यवसायीति तत्साम्यम् । यद्यपि सारस्यमेव सौरभमिति मयूरव्यंसकादिसमासोऽपि सम्भवति । तथाप्यास्वादः सारस्यशब्देन रसरूपतयाध्यवसिते तात्पर्य एव प्रथमान्वयदशायां मुख्यतयान्वेतीति पूर्वपदार्थप्राधान्यसिद्ध्यर्थमुपमितिसमासोऽत्र ग्राह्यः। एवं च तात्पर्यं सौरभमिवेत्युपमया तात्पर्यवतो वेदान्तबृन्दस्य दिव्यसौरभवत्पारिजातस्तबकोपमा व्यज्यत इत्येकदेशविवर्तिरूपकवदेकदेशविवर्तिन्युपमेयम् । प्रसिद्धं हि पारिजातस्तबकस्य सङ्कल्पितसकलार्थप्रदायित्वं हरिवंशे पारिजातसंहितायाम् । तथा वेदान्तबृन्दमपि स्वसेविनां मोक्षप्रापणेन 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ती' त्यादिश्रुत्युक्तरीत्या सङ्कल्पितसकलार्थप्रदायीति तत्साम्यम् । एवं पारिजातस्तबकसौरभवद्व्यापिनो वेदान्तबृन्दतात्पर्यस्यास्वादः आ समन्तात् साकल्येनानुभवः तेन मोदितुं शीलमेषामिति ताच्छील्यार्थे णिनिप्रत्ययः । स्वभावसिद्धवेदान्तार्थतात्पर्यश्रद्धावतामित्यर्थः । अवश्यं मोदन्त इत्यर्थे वा 'आवश्यकाधमर्ण्ययोर्णिनि' रिति (पा०. ३. ३. १७०. सू०) सूत्रेण णिनिप्रत्ययः । भक्तिपारवश्यात्तदाकर्णनमात्रेणावश्यमाकस्मिकमानन्दं प्राप्नुवतामित्यर्थः । एवंभूतानां शिवनिष्ठानां सर्वात्मना शिवं प्रपद्य तमेव सर्वदा ध्यायतामार्याणां पूज्यानां सत्पुरुषाणामेतद्भाष्यं महानिधिः । यथा रतिदरिद्रैरकस्माल्लब्धो दर्शनमात्रेण महानन्दकरः तदभिमतसकलार्थप्रदश्च तथेदमपि भाष्यमुक्तरूपैस्सत्पुरुषैर्दृष्टं दर्शनमात्रेण सद्यः परनिर्वृतिकरं सकलवेदान्तार्थनिर्णयेन निरन्तरशिवध्यानोपयुक्ततदीयनिखिलमङ्गल्यगुणविग्रहादियाथार्थ्यबोधसमर्पकं चेति तत्साम्यम् । एवं च यानुद्दिश्येदं भाष्यं विरच्यते तदादरणीयत्वस्यावैकल्ये किमन्येषामनादरेण । 'मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः किमस्या नाम स्यादलसपुरुषानादरभरैः' रिति न्यायात् । प्रत्युत दधीचादिशापदग्धेभ्यस्तेभ्यस्तेभ्यश्चोरेभ्यो महानिधिवद्यत्नात् गोपनीयमेतदिति तदनादरणमनुगुणमेवेति भावः ॥ ७ ॥

## अथ जिज्ञासाधिकरणम् ॥ १ ॥

ननु, इदं शास्त्रं नारम्भणीयम् । अत्र चिकीर्षितस्य वेदान्तविचारस्य सकलवेदविचारार्थं प्रवृत्तेन धर्ममीमांसाशास्त्रेण सिद्धत्वात् । न च तत्र धर्मपरस्यैव वेदभागस्य विचारो वृत्तो न कृत्स्नस्य, 'अथातो धर्मजिज्ञासे'ति तदुपक्रमादिति वाच्यम् । तत्रत्याथातश्शब्दार्थपर्यालोचनया तत्र कृत्स्नस्य वेदस्य विचारश्चिकीर्षित इत्यवधारणात् । तत्र ह्यथशब्देन कृत्स्नस्वाध्यायाध्ययनानन्तर्यं कर्तव्यस्य विचारस्योच्यते । अतश्शब्देन कृत्स्नस्य स्वाध्यायस्य विवक्षितार्थत्वं तत्र हेतुत्वेनोच्यते । यदि तत्र कृत्स्नस्य वेदस्य विचारस्तदैव कृत्स्नस्य स्वाध्यायस्याध्ययनं पूर्ववृत्तमपेक्ष्यत इति तदानन्तर्यवचनमुपपद्यते। कृत्स्नस्य स्वाध्यायस्य विवक्षितार्थता-

(१) 'संकल्पसकलार्थ' इति ख. ग. पाठः । (२) 'नन्तरं कर्तव्यता' इति ख. पाठः । (३) 'मपेक्ष्यत' इति ख. पाठः ।

## अथ जिज्ञासाधिकरणम् ॥ १ ॥

## इहौपनिषदी मीमांसा समारभ्यते ।

यास्तस्मिन्साध्ये हेतुत्वं च तदैवोपपद्यते। अतो यथा 'चतुर्गृहीतान्याज्यानि भवन्ति, न ह्यत्रानूयाजा इज्यन्ते' इत्यातिथ्याप्रकरणगतेन वाक्येनातिथ्यायामेवौपभृताष्टगृहीतव्यवच्छेदे क्रियमाणेऽप्यनूयाजाभावरूपहेतुसाधारण्यादन्यत्रापि यत्रेष्ट्यन्तरेऽनूयाजानामभावः प्रमितस्तत्र सर्वत्रापि स सिध्यति । यथा वा क्षितिमात्रं निर्दिश्य सकर्तृकत्वे साध्यमानेऽपि कार्यत्वहेतुसाधारण्यादन्यत्रापि यत्राङ्कुरादौ कार्यत्वमनुसंहितमस्ति तत्र सर्वत्रापि तत्सिध्यति । तथात्र 'धर्मजिज्ञासे'ति विशिष्य प्रतिज्ञानेऽपि हेतुसाधारण्याद्धर्मपरादन्यत्रापि वेदभागे विचारः कर्तव्यः सिद्ध्यति । किं च धर्मशब्दः धर्मब्रह्मसाधारण्येनालौकिकश्रेयस्साधनमात्रवाचीति प्रतिज्ञापि साधारण्येव । तस्य कार्यमात्रवाचित्वेऽपि कृतसाङ्गवेदाध्ययनस्य वेदार्थ एव जिज्ञासौचित्यादत्रत्यं धर्मपदं वेदार्थमात्रोपलक्षणं पर्यवस्यति । तस्य वेदार्थमात्रपरत्वेऽपि 'स्याच्चैकस्य ब्रह्मशब्दव'दिति न्यायेन चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रगतधर्मशब्दस्यालौकिकश्रेयस्साधनकार्यपरत्वोपपत्तेः चोदनाशब्दस्य लिङादियुक्ततद्रहितवाक्यसाधारण्येन प्राप्तिबाधरहितार्थकवेदमात्रपरत्वे द्वितीयसूत्रगतस्यापि धर्मशब्दस्यालौकिकश्रेयस्साधनमात्रपरत्वस्य वेदार्थमात्रपरत्वस्य वोपपत्तेश्च । तस्मान्निर्विषयमिदं शास्त्रं नारम्भणीयमित्याशङ्कां निराकुर्वन्नेव प्रथमसूत्रव्यावर्तनीयप्रयोजनाद्यभावप्रयुक्तशास्त्रानारम्भशङ्कोत्थापनाय भूमिकामारचयति–इहेति । इह सूत्रसन्दर्भरूपे शास्त्रे । औपनिषदी उप समीपे परब्रह्मणो निषीदन्ति वतन्ते इत्युपनिषदो वेदान्ताः। ते हि साक्षात्परे ब्रह्मणि तात्पर्येण वर्तन्ते न तु कर्मभागवत्तदाराधनरूपयज्ञादिविधानद्वारा तत्सम्बन्धिनि । तद्विषया मीमांसा तदर्थाभिधानोपयोगिन्यायग्रथनात्मिका समारभ्यते भगवता वादरायणेन प्रस्तूयते । उपनिषदीति सप्तम्यन्तपाठेऽप्येवमेवार्थः । यद्वा । इह कर्मब्रह्मपरभागद्वयसमुदायात्मके वेदे य उपनिषद्भागस्तत्र मीमांसा तदर्थनिर्णयोपयोगिन्यायग्रथनपरसूत्रसन्दर्भात्मिका समारभ्यत इत्यर्थः । पूजितविचारवाची मीमांसाशब्दोऽत्र तदुपयोगिन्यायग्रथने तदर्थसूत्रसन्दर्भरूपे शास्त्रे वा लक्षणया वर्तते । केचित् उपनिपूर्वात् 'षद्लृ विशरणगत्यवसादने'ष्विति धातोरवसादनार्थविषयात् क्विपि निष्पन्न उपनिषच्छब्दः साक्षात्संसारमूलस्य नितरामवसादनीषु ब्रह्मविद्यास्वेव प्रसिद्ध इति सोऽपि तत्साधनेषु वेदान्तेषु लक्षणया वर्तत इति वदन्ति । यदाहुः–'प्रवृत्तिहेतून्निश्शेषांस्तन्मूलोच्छेदकत्वतः । यतोऽवसादयेद्विद्या तस्मादुपनिषद्भवेत् ॥ यथोक्तविद्याबोधित्वाद्ग्रन्थोऽपि तदभेदतः । भवेदुपनिषन्नामा लाङ्गलं जीवनं यथा' ॥ इति । तस्मिन्पक्षे मोक्षसाधनविद्यावाचकस्योपनिषच्छब्दस्य तत्साधनेषु वेदान्तेष्विव तद्विषये ब्रह्मण्यपि लक्षणोपपत्तेः 'श्रुतोपनिषत्कगत्यभिधानाच्चेति ( ब्र०१.२.१६) सूत्रगतोपनिषत्पदस्य भाष्ये ब्रह्मपरतया व्याख्यास्यमानत्वात्'उपनिषदं भो ब्रूहि य एतामेवं ब्रह्मोपनिषदं वेदे'त्यादिश्रुतिषूपदेश्ये वेद्ये चार्थ एवो-

(१) 'कार्यत्वहेतु' इति. क. पाठः । (२) 'धर्मपदं' इति ख. पाठः । (३) 'कर्ममात्र' इति ख. पाठः । (४) 'तन्मात्रपरत्वेऽपि' इति ख. पाठः । (५) वेदवाक्यमात्र' इति ख. पाठः । (६) 'वेदार्थपरत्वस्य' इति ख. पाठः । (७) 'तदर्थविधानोपयोगि' इति ख. ग. पाठः । (८) 'न्नाम' इति पाठान्तरम् ।

पनिषच्छब्दप्रयोगदर्शनाच्चोपनिषदीत्यस्य ब्रह्मणीति वार्थो ग्राह्यः। विचारशास्त्रस्य ह्यव्यवधानेन वेदान्तवत्त्र्यवधानेन ब्रह्मापि विषय इति भाष्यकारः प्रथमसूत्रव्याख्यानसमये क्वचि 'दुपनिषच्छास्त्रं विचारणीय'मित्यन्यत्र 'ब्रह्मापि निरतिशयनिश्रेयसकरं विचारणीय' मित्युभयथापि सूत्रतात्पर्यं वक्ष्यति। एवं च इह कर्मब्रह्मरूपवेदार्थसमुदाये ब्रह्मणि मीमांसा समारभ्यत इति वाक्यस्यार्थः। अत्रायमाशयः। धर्ममीमांसाशास्त्रे कार्यपरवेदभागविचार एव वृत्तः न ब्रह्मपरवेदान्तभागविचारः। न[१] ह्यन्यस्मिन् शास्त्रे जन्मादिसूत्रमारभ्य प्रवर्तयिष्यमाणं वेदान्तभागविचारं तत्र क्वचिदाहत्य कृतमुपलभामहे। न च न्यायसाम्यात्तत्सिद्धिः। तत्र वर्णितेभ्यः कार्यपरवाक्यार्थनिर्णायकन्यायेभ्योऽत्र वर्णयिष्यमाणानां सिद्धब्रह्मपरवाक्यार्थनिर्णायकन्यायानां भिन्नत्वात्। ननु, कृत्स्नवेदार्थविवक्षारूपहेतुसाधारण्याद्वेदान्तार्थनिर्णयोपयोगिन्यायग्रथनमपि तत्र कृतमेवेति यथाकथञ्चिदुपपादनीयमिति चेन्न। वेदाध्ययनानन्तरं तदध्ययनादेव कारकहेतोर्वेदस्य विवक्षितार्थत्वात् ज्ञापकहेतोर्वा सर्वैरप्यधीतवेदैर्धर्मविचारः[२] कर्तव्य इति हि धर्मजिज्ञासासूत्रेण प्रतिज्ञायते। न तु तच्छास्त्रप्रणेत्रैव[३] सकलवेदार्थविचारोपयोगिन्यायग्रथनं कर्तव्यमित्यपि। ततश्च यदि नाम हेतुसाधारण्यात् सर्वैरप्यधीतवेदैः कर्मभागविचारवद्ब्रह्मभागविचारोपि कर्तव्य इति सिद्ध्येत्। तथापि तावता कार्यपरवेदमात्रविचारोपयोगिन्यायग्रथनपरशास्त्रचिकीर्षया तत्र प्रेक्षावतां प्रवृत्त्यर्थं तत्प्रमेयधर्मविचारकर्तव्यतां प्रतिजानानेनैव ब्रह्मपरभागविचारोपयोगिन्यायग्रथनमपि कर्तव्यमिति न सिद्ध्यति। न[४] खलु वैद्यशास्त्रं चिकीर्षता तत्र प्रेक्षावत्प्रवृत्त्यर्थं तत्प्रमेयौषधसेवनं रोगिभिरवश्यं कर्तव्यमिति प्रतिजानानेनैव 'जन्मान्तरकृतं पापं व्याधिरूपेण बाधते। तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभि'रित्यौषधदानजपादीनां रोगशान्तिकरत्वं हेतुतयोपन्यस्तमिति हेतुसाधारण्याद्रोगिभिरौषधसेवनवद्दानादिकमपि कर्तव्यमिति सिद्धावपि तेनैव वैद्यशास्त्रकृता कर्मविपाकशास्त्रनिरूपणीयरोगनिवृत्त्यर्थदानादिनिरूपणमपि कर्तव्यमिति सिद्ध्यति। न वा पर्वते वह्न्यर्थं प्रविवत्सता तत्र वह्निसत्त्वपरिज्ञानार्थं परामृष्टं धूमलिङ्गमन्यत्रापि क्वचिद्दृष्टमासीदित्येतावता तत्रापि वह्न्यनुमित्युदयेऽपि प्रवर्तितव्यमिति सिद्ध्यति। किं च हेतुसाधारण्यमात्रेणावश्यकर्तव्याग्निहोत्राद्यनुष्ठानोपयोगिसौत्रप्रतिज्ञाविषयधर्मविचारवदतथाभूतब्रह्मविचारेऽपि प्रवर्तितव्यमित्येतदेव न सिद्ध्यति। कुतो धर्ममीमांसासूत्रकृतैव ब्रह्मविचारोपयोगिन्यायग्रथनमपि कर्तव्यमिति सिद्धिप्रत्याशा। वस्तुतस्तु, धर्मजिज्ञासासूत्रगतस्यातश्शब्दस्य ज्ञापकहेतुपरत्वे धर्मस्य[५] विचार्यत्वं साध्यं प्रति वेदस्य विवक्षितार्थत्वं साधकहेतुत्वेन[६] नोपन्यस्यते। यो विवक्षितार्थस्सोऽधीतवेदकर्तव्यार्थविचार इति सामान्यव्याप्तावसच्छास्त्रादिषु व्यभिचारात् यो वेदो विवक्षितार्थ इति विशेषणे व्याप्तिग्रहस्थानाभावात्[७]। किं तु साङ्गवेदाध्ययनवतामापातप्रतिपन्नधर्मनिर्णयार्थमग्निहोत्रादिवाक्यार्थविचारं चिकीर्षतां विषनिर्हरणादिमन्त्रवत्तत्राप्यविवक्षितार्थत्वशङ्कया विचारप्रवृत्तिप्रतिबन्धकप्रसक्तौ तन्निरासार्थत्वेनोच्यते। बाधकनिरासार्थं च विवक्षितार्थत्वं ब्रह्मपरभागसाधारण्येनोपपादनीयम्। अन्यथा हि तद्वत् कर्मपरभागोऽप्य-

(१) 'न ह्येकस्मिन्' इति क. पाठः। (२) 'वेदैर्विचारः' इति ख. ग. पाठः। (३) 'तत्सूत्र' इति क. पाठः। (४) 'न खलु' इत्यस्य 'कर्तव्यमिति सिद्ध्यति' इति वाक्यान्तस्थतिङन्तेनान्वयः। (५) 'धर्मविचारकर्तव्यं साध्यं' इति ख. ग. पाठः। (६) 'साधकत्वं हेतुत्वेन' इति ख. ग. पाठः। (७) 'व्याप्तिग्रहणे मानाभावात्' इति ख. पाठः।

विवक्षितार्थोऽस्त्विति शङ्का स्यात्। कृत्स्नस्वाध्यायाध्ययनानन्तर्यं च वक्तव्यम्। स्वचिकीर्षितशास्त्रे प्रेक्षावतां प्रवृत्त्यर्थं कर्तव्यत्वेन प्रतिज्ञायमाने धर्मविचारे प्रयोजकतया कार्यपरवेदाध्ययनमात्रस्यापेक्षितत्वेऽप्यध्ययनविधेः कृत्स्नस्वाध्यायविषयत्वेन तदेकदेशमधीत्योपरन्तुमशक्यत्वात्। ननु, मा भूदथातःशब्दार्थपर्यालोचनया धर्ममीमांसाशास्त्रे ब्रह्मपरवाक्यविचारोऽपि वृत्त इत्यवगमः। धर्मजिज्ञासा कर्तव्येति प्रतिज्ञयैव तदवगमः स्यात्। धर्मशब्दस्य कर्मब्रह्मोभयसाधारणत्वात्। तथा हि—धर्मशब्दो न यागादिजन्यापूर्ववाची। किंतु यागादिकमेवाची। अपूर्वमजानतामपि महात्मायमुपसर्पणीयो धर्मं चरतीति यागादिकमनुतिष्ठन्तं दृष्ट्वा व्यवहारदर्शनात्। 'लोके धर्मिष्ठं प्रजा उपसर्पन्तीति' श्रुतावपि तथैव लोकव्यवहारस्यानुवाददर्शनाच्च। 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यास'न्निति श्रुतौ यज्ञे धर्मशब्दप्रयोगाच्च। यागादिषु च न धर्मत्वजातिरेकानुगतास्ति। या तस्य प्रवृत्तिनिमित्तं स्यात्। किं तु धृञः प्रीतिवाचिनो धातोः'अर्त्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो-म'न्निति सूत्रेण साधनार्थे मन्प्रत्यये सति निष्पन्नो धर्मशब्दः श्रेयस्साधनत्वं योगेन समर्पयन् भोजनादिषु प्रयोगाभावादलौकिकश्रेयस्साधनवाचको योगरूढ्या पर्यवस्यति। न तु कार्यत्वं विधेयत्वं वा तत्प्रवृत्तिनिमित्ते विशेषणान्तरमपि निवेशनीयम्। गौरवात्। एवं प्रवृत्तिनिमित्तानुरोधेन धर्मशब्दस्य ब्रह्मसाधारण्ये सति धर्मजिज्ञासा कर्तव्येति प्रतिज्ञा अधीतवेदेन ब्रह्मविचारस्यापि कर्तव्यतामवगाहत इति साधारणप्रतिज्ञासामर्थ्येन ब्रह्मविचारोपयोगिन्यायग्रथनमपि चिकीर्षितमिति धर्ममीमांसासूत्रकृदाशयपरिज्ञानात्तद्विचारोऽपि तत्र वृत्त इत्यवगम्यते,न हि सर्वज्ञानां महर्षीणां ग्रन्थचिकीर्षार्वाचीनानामिव मध्ये विहतेति वक्तुं शक्यत इति चेन्मैवम्। धर्मशब्दस्यालौकिकश्रेयःसाधनमात्रवाचित्वे श्येनयागादीनामपि धर्मत्वापत्तेः। बलवदनिष्टाननुबन्धित्वं विशेषणान्तरं क्रियत इति चेत्। किं तदनुबन्धित्वं तदविनाभूतत्वं तज्जननयोग्यत्वं वा। आद्ये श्येनादीनां धर्मत्वापत्तिस्तदवस्था। तज्जन्यदुरितस्य प्रायश्चित्तेन ब्रह्मज्ञानेन वा क्षपणे सत्यनिष्टानुत्पत्त्या तत्रापि भाव्यनिष्टाविनाभावाभावात्। (१न कर्मजनकतया) द्वितीये तज्जननायोग्यत्वं श्रेयसो विशेषणं तत्साधनस्य वा। आद्ये स दोषस्तदवस्थः। वैरिविपत्त्युद्देश्यकतदनुकूलव्यापाररूपाणां श्येनादीनामेव हिंसात्वेन दुरितोत्पादनद्वारा नरकजनकतया वैरिविपत्तेस्तज्जन्यप्रीतेर्वा श्रेयसस्तदजनकत्वात्। द्वितीये धर्मशब्दप्रवृत्तिनिमित्तस्य न ब्रह्मसाधारण्यम्। सर्वकर्मफलप्रदस्य ब्रह्मणः श्रेयसीवानिष्टफलेऽपि जनकत्वात्। ननु, बलवदनिष्टाननुबन्धित्वमित्यस्य बलवदनिष्टजननायोग्यत्वं नार्थः। तथा सति नित्यबुद्ध्या स्वर्गोद्देशेन वानुष्ठितस्य ज्योतिष्टोमस्य धर्मत्वाभावापत्तेः। 'एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोम' इति श्रुत्या सर्वफलसाधनत्वेनावगतस्य तस्य वैरिविपत्तिं प्रत्यपि साधनतया श्येनयागादिवत् बलवदनिष्टजननयोग्यत्वात्। किंतु श्रेयोऽर्थमनुष्ठिते यस्मिन्बलवदनिष्टजननार्थं तस्य प्रयोगान्तरं नापेक्ष्यते तद्बलवदनिष्टानुबन्धीति तद्भिन्नत्वमर्थः। तथा च स्वर्गाद्यर्थमनुष्ठितेऽपि ज्योतिष्टोमे बलवदनिष्टजननार्थं योगसिद्ध्यधिकरणन्यायेन वैरिविपत्तिफलोद्देश्यकं प्रयोगान्तरमपेक्ष्यत इति प्रयोगान्तरानपेक्षभिन्नत्वाद्धर्मः,वैरिविपत्त्यर्थमनुष्ठिते तदर्थं प्रयोगान्तरं नापेक्ष्यत इति तद्भिन्नत्वाभावादधर्म इति व्यवस्था सङ्गच्छते। एवं चाननुष्ठिते ब्रह्मण्यनुष्ठितमनुष्ठा-

(१) एतत्. घ. पुस्तक एव दृश्यते। (२) 'श्रेयसस्तजनकत्वाभावात्' इति ख. ग. पाठः।

नान्तरं नापेक्षत इति विशेषणयोरनन्वयात्तथाभूतं तद्भिन्नत्वमस्तीति प्रवृत्तिनिमित्तस्य ब्रह्मसाधारण्यं लभ्यते। यद्युद्गात्रपच्छेदवतः श्येनयागस्याङ्गविकलतया वैरिविपत्तिफलापर्यवसाने तत्पर्यवसानपूर्वकबलवदनिष्टजननार्थमपच्छेदप्रायश्चित्तरूपप्रयोगान्तरापेक्षत्वेन तदनपेक्षभिन्नतया धर्मत्वप्रसङ्गो दोषः स्यात्। तदा यस्मिन्साङ्गेऽनुष्ठित इति विशेषणीयम्। यद्येवमपि क्रत्वाश्रितो यो गुणो वैरिविपत्तिफलकस्तस्य साङ्गत्वेऽपि तदाश्रयस्याङ्गवैकल्ये 'गुणाच्च न फलं सिद्ध्येद्विगुणः क्रत्वपाश्रया'दिति न्यायतः फलपर्यवसानाभावेन तत्पर्यवसानपूर्वकबलवदनिष्टजननार्थं प्रयोगान्तरापेक्षतया तदनपेक्षभिन्नत्वेन धर्मत्वप्रसङ्गो दोषः स्यात्। तदा साङ्गमित्यस्य फलजननार्थमपेक्षितेन सर्वेण सहितत्वमर्थोऽस्तु। एवमपि श्येनजन्यदुरितस्य प्रायश्चित्तादिना क्षपणे सति बलवदनिष्टजननार्थं प्रयोगान्तरापेक्षासत्त्वात् तस्य धर्मत्वप्रसङ्गो दोष इति चेन्न। फलान्यतज्जन्यापूर्वनाशकाभावे सतीत्यपि विशेषणोपादानात्। एवं च फलजननापेक्षितसर्वसहिते यस्मिन्ननुष्ठिते फलान्यतज्जन्यापूर्वनाशकाभावे च सति बलवदनिष्टजननार्थं प्रयोगान्तरं नापेक्ष्यते तद्बलवदनिष्टानुबन्धि, न तु फलजननापेक्षितसर्वसहिते यस्मिन्ननुष्ठिते फलान्यतज्जन्यापूर्वनाशकाभावे च सत्यपि बलवदनिष्टजननार्थं प्रयोगान्तरमपेक्ष्यते तद्भिन्नं बलवदनिष्टानुबन्धि। येन ब्रह्मापि बलवदनिष्टानुबन्धीति प्रवृत्तिनिमित्तस्य तत्साधारण्यं न स्यात्। यद्वा बलवदनिष्टाननुबन्धित्वं श्रेयसो विशेषणं न तु तत्साधनस्य। तच्च यत्फलोद्देशोऽनुष्ठाने बलवदनिष्टप्रयोजको न भवति तत्त्वं तथाभूतश्रेयोऽलौकिकसाधनत्वम्। ब्रह्मसाधारणमिदं धर्मशब्दस्य सिद्धसाध्यसाधारण्यं कर्ममीमांसकानामपि सम्मतमेव। यदाहुः—'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मते'ति। तस्माद्ब्रह्मसाधारणो धर्मशब्द इति चेन्मैवम्। 'अथातो धर्मजिज्ञासे'ति (जै० १.१.१.)धर्मविचारप्रतिज्ञानन्तरं को धर्म इति विचार्यपरधर्मशब्दार्थजिज्ञासायां प्रवृत्ते'चोदनालक्षणोऽर्थो धर्म'इति (जै० १.१.२)सूत्रे यः'चुद प्रेरण'इति धातुनिष्पन्नचोदनाशब्दोक्तप्रवर्तकवाक्यप्रमेयोऽर्थः स धर्म इति तदर्थकथनेन यस्य श्रेयस्साधनत्वं विध्येकगम्यं तस्यैव धर्मशब्दार्थत्वावगमात्। न च शब्दतदुपजीविप्रमाणेतरप्रमाणजन्यप्रमित्यविषयकार्थकत्वरूपालौकिकत्वापेक्षया प्रवर्तकत्वरूपशब्दविशेषणाधिकस्य विध्येकगम्यत्वस्य गुरुत्वादलौकिकत्वमेव लघु धर्मशब्दप्रवृत्तिनिमित्ते निवेशनीयमिति वाच्यम्। वृद्धव्यवहारेण हि शब्दार्थौ निश्चेयो न तमनादृत्य लाघवमनुसर्तुं युक्तम्। 'न ह्यधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वा'दित्यनादिवृद्धव्यवहारप्रसिद्धस्तोभशब्दार्थकथने लाघवादृगक्षराधिकत्वमेव तत्प्रवृत्तिनिमित्तं न तु विवर्णत्वमपि निवेश्यमिति वक्तुं शक्यम्। न च 'कृष्णं धर्मं सनातन'मिति विध्यस्पृष्टे सिद्धरूपे वासुदेवेऽपि धर्मशब्दस्य व्यवहारो दृष्ट इति वाच्यम्। 'प्रणम्रेषु महीपेषु प्रसादो मूर्तिमानय'मित्यस्य मूर्तिमत्त्वरूपप्रसिद्धप्रसादवैलक्षण्यविशिष्टप्रसादत्वारोप इव 'धर्मो विग्रहवान्नाम' इत्यस्य विग्रहवत्त्वरूपप्रसिद्धधर्मवैलक्षण्यविशिष्टधर्मत्वारोप इव च सनातनत्वरूपप्रसिद्धधर्मवैलक्षण्यविशिष्टधर्मत्वारोपे तात्पर्येणोपपन्नस्यार्थवादरूपपौराणिकवचनस्य 'चोदनालक्षणोऽर्थो धर्मः'(जै० १.१.२.)इति विचार्यपरधर्मशब्दार्थनिर्णयैकप्रयोजनकसूत्रवच्छब्दशक्तिनियामकत्वाभावात्। अस्तु वा यथाकथञ्चिद्धर्मशब्दस्यालौकिकश्रेयःसाधनमात्रवाचित्वेन ब्रह्मसाधारण्यं, तथापि प्रत्यक्षौत्पत्तिकसूत्राभ्यां विचार्यस्य धर्मस्य प्रत्यक्षादिविषयत्वनिराकरणपूर्वकमुपदेशैकगम्यत्वव्य-

**तदारम्भो ह्यत्र किंपुरुषार्थः। पुरुषार्थो हि निरुपाधिकप्रेमद्वेषास्पदयोः सुखदुःखयोः प्राप्तिरत्यन्तनिवृत्तिर्वा । कश्चेहाधिकारी। यस्यार्थित्वादयो धर्माः।**

---

वस्थापनात् । 'दध्ना जुहोत्यरुणया क्रीणाती'त्यादिभिर्विधिभिर्होमकरणादिभावेन विहितानां दध्यारुण्यादीनां विधिगम्यधर्मत्वेनैव रूपेण यथा विचार्यता न लोकसिद्धेन दधित्वादिना रूपेण, नापि वैशेषिकादिविचारितेनावयव्यारब्धत्वतत्सङ्घाततत्वधर्मिभिन्नत्वतदभिन्नत्वादिना, तथा ब्रह्मणोऽपि 'ब्रह्मणेऽभिजिते चरु'मित्यादौ देवताभावेन विधिस्पर्शोऽस्तीति विधिगम्येन वा 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषत'इत्याद्युपनिषद्गम्येन वा अलौकिकश्रेयस्साधनत्वात्मना धर्मत्वेनैव रूपेण धर्मविचारशास्त्रे विचार्यता सिद्ध्येत् । न तु 'अथातो ब्रह्मजिज्ञासे'ति प्रतिज्ञापूर्वकमेतच्छास्त्रविचार्येणोपनिषन्निकुरुम्बगम्येन त्रिविधपरिच्छेदराहित्यानन्तमङ्गल्यगुणाकरत्वनिरतिशयानन्दात्मकश्रेयोरूपत्वादिना । तस्मात्प्रतिज्ञासाधारण्याद्ब्रह्मविचारो वृत्तोऽवगम्यत इत्येतन्न सङ्गच्छते । स्यादेतत् । धर्मत्वेन धर्मे विचार्यत्वप्रतिज्ञा न भवति किं तु वेदार्थत्वेन । अथातःशब्दोक्तयोः वेदाध्ययनानन्तर्यतदर्थविवक्षाहेत्वोर्वेदार्थ एवान्वयसामञ्जस्यात् । वेदार्थत्वं च दध्यादिगते होमकरणत्वादाविव ब्रह्मगते देवतात्व इव च तद्गते त्रिविधपरिच्छेदराहित्यादावप्यविशिष्टम् । एवं चोपक्रमानुसारेण द्वितीयसूत्रगतं चोदनापदं मानान्तरप्राप्तिबाधरहितार्थकवाक्यपरं स्यादिति चेन्मैवम् । धर्मशब्दस्य वेदार्थमात्रपरत्वे श्येनयागादेरपि वेदार्थतया लक्ष्यत्वेन सङ्ग्राह्यत्वमस्तीति तद्व्यावृत्त्यर्थस्य बलवदनिष्टाननुबन्धित्वपरस्यार्थपदस्य वैयर्थ्यापत्तेः। वस्तुतो धर्मस्य वेदार्थत्वेन तद्विचारे वेदाध्ययनानन्तर्यतदर्थविवक्षाहेत्वोरन्वयानुपपत्त्यभावाच्चेति दिक् । तस्माद्धर्मविचारशास्त्रेण ब्रह्मविचारस्य सिद्ध्यभावात् तदर्थमिदं शास्त्रमारम्भणीयमिति। ननु,तर्हि ब्रह्मणः स्वरूपप्रमाणसाधनफलैर्विचारार्थं'जन्माद्यस्य यत'इत्याद्येव शास्त्रमारभ्यतां किमाद्यसूत्रेणेत्याशङ्क्य तद्व्यावर्त्यं शङ्काचतुष्टयं प्रदर्शयति—तदारम्भ इत्यादिना । शास्त्रस्यैवानुबन्धचतुष्टयं तदारम्भस्योपक्रमापरपर्यायस्य प्रथमप्रवृत्तिरूपस्योपचारेण व्यपदिश्य 'तदारम्भ' इति विशेष्यनिर्देशः कृतः । किंपुरुषार्थ इति । किंप्रयोजनक इत्यर्थः। ननु, विचारशास्त्रस्य विचार्यनिर्णयः प्रयोजनमिति प्रसिद्धमेव । किमत्र प्रष्टव्यमित्याशङ्क्याह—पुरुषार्थो हीति । मुख्यपुरुषार्थभूतसुखदुःखनिवृत्त्यन्यतरपर्यवसायित्वेनैव विचार्यनिर्णयस्य प्रयोजनत्वमुपपादनीयमिति भावः । समासोपात्तयोरपि सुखदुःखयोर्बुद्ध्या निष्कृष्टयोर्यथासङ्ख्यं प्राप्तेरत्यन्तनिवृत्तेश्चान्वयः। दुःखनिवृत्तेरात्यन्तिकत्वमिह स्वसमानाधिकरणदुःखासमानकालत्वरूपं न विवक्षितम् । भेषजादिना व्याध्यादिदुःखनिवृत्तेः कालान्तरे दुःखासमानकालत्वात् । किंतु किञ्चिज्जातीयदुःखनिवृत्तेः कतिपयकालावच्छेदेन यत्तज्जातीयदुःखासामानाधिकरण्यं तात्कालिकोपशमरूपं तत्साधारण्यं विवक्षितम् । ततश्च सांसारिकं सुखदुःखनिवृत्त्योरन्यतरदस्य प्रयोजनमुत संसारनिवृत्तिरूपापवर्गकालभावित्वेनाभिमतम् । नाद्यः । तत्र प्रमाणाभावात्। न द्वितीयः। अनादेः संसारस्य निवर्तयितुमशक्यत्वादिति भावः । कश्चेति । 'अर्थी समर्थो विद्वान् शास्त्रैरपर्युदस्तो वैदिककर्मण्यधिकारी'त्यर्थित्वादयो गुणास्तावद्वाच्याः। न तावदेवात्राधिकारिविशेषणं किंतु नित्यानित्यवस्तुविवेकादिकमपीत्यभिमतम्। तन्न सङ्गच्छते। अक्षय्यादिवाक्यैः कर्मफलानामपि नित्यत्वावगत्या

**किमस्य विषयः, यत्प्रसिद्धमनतिप्रसिद्धं च सन्देहजालसमारूढं वर्तते । कस्यानन्तरमस्यारम्भः, यस्य नियतप्रयोजकतया पूर्वभावित्वमवगम्यते ।**

तद्विवेकासम्भवादिति भावः । किमस्येति । यत्सामान्यतः प्रसिद्धं विशिष्याप्रसिद्धं च सन्देहयोग्यं भवति स एव विषयः । ततश्च यदि 'अयमात्मा ब्रह्मे'त्यादिश्रुत्यनुसारेणाहमित्यनुभूयमानो जीव एव ब्रह्मेति मतं तदातिप्रसिद्धत्वान्न तस्य विषयत्वम् । यदि 'यन्मनसा न मनुत' इत्यादिश्रुत्यनुसारेण वाङ्मनसातीतं ब्रह्मेति मतं तदा अत्यन्ताप्रसिद्धत्वान्न तस्य विषयत्वमिति भावः । कस्यानन्तरमिति । न वेदाध्ययनानन्तरमस्यैतच्छास्त्रकर्तव्यविचारस्यारम्भः । तदनन्तरकालस्य कर्मविचारावरुद्धत्वात् । नापि कर्मविचारस्यानन्तरं, तस्यात्रोपयोगानिरूपणादिति भावः । ननु, अनुबन्धचतुष्टयाक्षेपप्रस्तावे प्रयोजनाधिकारिविषयेष्वनुपपन्नत्वाभिप्रायगर्भतया पृष्टेष्वनेन प्रयोजनेन विषयेण वास्य शास्त्रस्य कस्सम्बन्ध इति सम्बन्धे प्रष्टव्ये पूर्ववृत्तविशेषप्रश्नोऽत्र न सङ्गच्छते । किं च पूर्ववृत्तमधिकारिविशेषणमित्यग्रे भाष्यकार एव वक्ष्यति 'यस्य सम्पत्तिरिहाधिकारिविशेषणतया ब्रह्मविचारस्य साधनं तत्पूर्वभावीति विज्ञायत'इति । इहापि स एवार्थः सङ्गृह्य दर्शितः 'यस्य नियतप्रयोजकतया पूर्वभावित्वमवगम्यत' इति । ततश्चाधिकारिविशेषणविशेषप्रश्नोऽयमधिकारिप्रश्न एवान्तर्गत इति न पृथक्कर्तव्यः । अपि च विषयप्रयोजनादिमच्छास्त्रारम्भे पूर्ववृत्तविशेषो नापेक्षितः । अत एव 'अथ योगानुशासनम्' 'अथ शब्दानुशासनं' 'प्रमाणप्रमेये' त्यादिशास्त्रारम्भेषु पूर्ववृत्तप्रदर्शनं न दृश्यते । यत्रापि'अथातो धर्मं व्याख्यास्याम'इति कणादसूत्रे शिष्यप्रश्नः पूर्ववृत्तोऽथशब्देन प्रदर्श्यत इति व्याख्यातं तत्रापि तन्निरर्थकमेव । शिष्यप्रश्नेन प्रवृत्तेऽपि शास्त्रे विषयप्रयोजनाद्यभावे श्रोतॄणां प्रवृत्त्यसम्भवात् । तत्सद्भावे तमन्तरेण प्रवृत्तेऽपि शास्त्रे तेषां प्रवृत्तिसम्भवाच्च । धर्मविचारशास्त्रे वेदाध्ययनं पूर्ववृत्तं प्रदर्शितमपेक्षितं दृष्टमिति चेत्किं ततः । न हि क्वचित्पूर्ववृत्तमपेक्षितं दृष्टमित्येतावन्मात्रेण सार्वत्रिकनियतापेक्षारहितस्य तस्याभावेनात्र शास्त्रानारम्भशङ्का प्रवर्तते । तस्मात्पूर्ववृत्तप्रश्नोऽयमसङ्गत इति चेत् । उच्यते । शास्त्रस्य विषयप्रयोजनाभ्यां सम्बन्धो न पृथग्व्युत्पाद्यः । अस्यायं विषय इत्युक्ते तेन प्रतिपाद्यप्रतिपादकभावस्सम्बन्ध इति, अस्येदं प्रयोजनमित्युक्ते तेन कार्यकारणभावस्सम्बन्ध इति च तत एवावगन्तुं शक्यत्वात् । तत्तत्सम्बन्धानुपपत्तिशङ्का तु विषयत्वप्रयोजनत्वानुपपत्तिशङ्कारूपैव पर्यवस्यति । न च विषय एवानन्यलभ्यत्वाकारो विषयत्वरूप आरिप्सितशास्त्रेण शक्यप्रतिपादनत्वं सम्बन्ध इत्यवान्तरभेदः कल्पनीयः । शक्यप्रतिपादनत्वविशिष्टस्यैवानन्यलभ्यत्वस्य विषयत्वरूपत्वात् । अत एव'यत्प्रसिद्धमनतिप्रसिद्धं च सन्देहयोग्यं तद्विषय'इति प्रागुक्तम् । अत्र हि सामान्यतः प्रसिद्ध्या शक्यप्रतिपादनत्वं विशिष्याप्रसिद्ध्यानन्यलभ्यत्वं चोपनीयते । अत एव च'अनन्यत्रभावो विषयशब्दार्थ'इति वदन्तो 'यथा मत्स्यानामुदकं विषय'इति च तत्रोदाहरन्तश्शाब्दिका अपि'छन्दोब्राह्मणानि च तद्विषयाणी' त्यादि (पा० ४.२.६६.) सूत्रगतविषयशब्दस्य'गुरौ वसती'त्यादिविषयसप्तम्याश्च तमेवार्थं मन्यन्ते । व्युपसर्गात् 'षिञ् बन्धन' इति धातोः 'एरच्' (पा०. ३.३.५८. सू.) इत्यजन्तो विषयशब्दः । सामान्यतः प्रसिद्धोऽर्थो विशेषेणावसीयते प्रतिपाद्यतया बध्यत इति कर्मणि

(१) 'अपि यस्तत्र भवति अन्यत्र च न भवति तमेव छन्दोब्राह्मणानि' इति च. पाठः । (२) 'सप्तम्याश्चार्थं मन्यन्ते' इति च. पाठः ।

इति श्रोतृजनमनश्शङ्काशूकसमुन्मूलनाय सर्वज्ञशिखामणिना भगवता व्यासेन समवतारितमिदं सूत्रम् ॥

॥ * ॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥ इति ।

इदमेकमधिकरणम् । विषयसंशयपूर्वपक्षसिद्धान्तनिर्णयसङ्गतीनामाधारत्वमिहा- .

---

व्युत्पत्त्या यस्तत्र भवत्यन्यत्र न भवति तथाभूते शास्त्रप्रतिपाद्ये निविशते उदकादिषु तु विशेषेणावसीयते स्वयमेवान्येन वा वध्यते तस्मिन्नित्यधिकरणव्युत्पत्त्या यत्र किञ्चिद्भवत्यन्यत्र न भवति तथाभूतेऽधिकरणे निविशत इति विशेषः। सोपसर्गस्य धातोरनन्यत्रभावोऽर्थ इत्युभयत्रापि समानमेव । तथा च पूर्ववृत्तेन कारणेन सह शास्त्रसम्पादनीयस्य विचारस्य यः कार्यतया सम्बन्धः स एवानुबन्धचतुष्टयान्तर्गतः संबन्धः। पूर्ववृत्तस्याधिकारिविशेषणत्वेऽपि यत्तदानींतनानुष्ठानसम्पाद्यमधिकारिविशेषणं तस्य गोबलीवर्दन्यायेन पृथक्करणं युक्तम् । यद्यपि तत्पूर्ववृत्तं सार्वत्रिकं न भवति। तथापि यत्रास्ति तत्रैव शास्त्रेऽनुबन्धचतुष्टयमन्यत्रानुबन्धत्रयमस्तु, किं हीयते। तर्हि पूर्ववृत्ताभावेन शास्त्रारम्भाक्षेपः कथमिति चेत् इत्थम्—कर्मविचारं पूर्ववृत्तमपेक्ष्यास्य शास्त्रस्यारम्भ इति सिद्धान्तिनोऽभिमतम्। तन्नोपपद्यते। कर्मविचारस्यात्रोपयोगानिरूपणात्। न तावच्चित्तशुद्धावुपयोगः। जन्मान्तरानुष्ठितकर्मभिरपि तत्सम्भवेन तदर्थमैहिककर्मविचारानपेक्षणात् । नापि नित्यानित्यवस्तुविवेके । तन्नित्यत्वप्रतिपादकवाक्येभ्यः तदनित्यत्वप्रतिपादकवाक्यानां बलवत्त्वनिर्णयोपयोगिन्यायस्य तत्रानिरूपणात् । अतस्सिद्धान्त्यभिमतब्रह्मविषयत्वाद्याक्षेपवत्तदभिमतपूर्ववृत्तसम्बन्धाक्षेप इति न काचिदसङ्गतिः। एतच्छङ्काचतुष्टयपरिहारार्थमाद्यसूत्रं प्रवृत्तमित्यवतारयति—श्रोतृजनेत्यादिना । यद्यपि जैमिनीयेन धर्मविचारेण गतार्थशङ्काप्यव्यवहितविषयासम्भवशङ्कैव तथापि सा सूत्रकृता न निराकर्तव्येति प्रागेव भाष्यकृता निराकृता॥*॥ अथातो ब्रह्मजिज्ञासा ॥१॥ अत्रैकैकशङ्कावलम्बनपूर्वपक्षनिराकरणार्थं किमधिकरणचतुष्टयं विवक्षितमित्याकाङ्क्षायामाह—इदमेकमिति । इदं शास्त्रं नारम्भणीयमित्यनारम्भपूर्वपक्षस्यैकार्थावलम्बनत्वादनारम्भहेतूनां बाहुल्येऽप्यैकाधिकरण्यं युक्तम् । यथा शाखान्तराम्नातकर्मभेदपूर्वपक्षस्यैकार्थावलम्बनत्वात् पूर्वपक्षहेतूनां 'नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरे कर्मभेदः स्या' दिति(जै०) सूत्रदर्शितानां नामरूपादीनां भिन्नत्वेऽप्यैकाधिकरण्यमिति भावः। यद्यपि विषयप्रयोजनाभावहेतुभ्यामेवात्राधिकरणं भाष्ये प्रदर्शयिष्यते। तथाप्यथशब्दसूचितस्य पूर्ववृत्तविशेषस्यातःशब्दसूचितस्य नित्यानित्यविवेकादिसम्भवस्य च तदुभयव्याख्यानेनोपपादितत्वात् 'ब्रह्मजिज्ञासे'त्यत्र कर्मणिषष्ठ्या सङ्गृहीतयोर्ब्रह्मणो विषयत्वप्रयोजनत्वयोर्बहूपपादनीयसद्भावाच्च तयोरेव हेत्वोस्तत्र पूर्वपक्षदशायामुपन्यासेऽपि सम्बन्धाधिकार्यसम्भवहेत्वोरपि पूर्वपक्षे निवेशनेन पूर्णमधिकरणशरीरमूहनीयम्। ननु 'आधारोऽधिकरण' (पा०१.४.४५. सू०) मिति प्रसिद्धम् । इदं केषामाधार इत्यधिकरणशब्देनोच्यत इत्याकाङ्क्षायां तत्प्रवृत्तिनिमित्तोपन्यासेनाधिकरणापेक्षितानवयवान् दर्शयति—विषयेति । अनवधारणेनापि क्वचित्पूर्वपक्षस्सम्भवति । सिद्धान्तस्तु निर्णयावसान एवेति विशेषमभिप्रेत्य 'सिद्धान्तनिर्णये'त्युक्तम्। केचित्प्रयोजनेन सहाधिकरणस्य पञ्चावयवान्वदन्ति । केचित्सङ्गत्या सह । तदुभ-

**धिकरणत्वम् । अत्राथशब्दोऽयमानन्तर्यार्थः । न तु 'अथ योगानुशासन'मित्यादाविवाधिकारार्थः । अधिकारो हि प्रारम्भः । न खलु ब्रह्मज्ञानेच्छा कर्तव्यत्वेन प्रारम्भयोग्या भवति । सा किल विषयरामणीयकमात्रसम्भाव्या । "ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥" इति स्मृतेरयमथशब्दो मङ्गलार्थो न वर्णनीयः । जिज्ञासायां मङ्गलार्थस्यान्वयासम्भवात् ।**

यसङ्ग्रहार्थं वा निर्णीयते नितरां प्राप्यत इति व्युत्पत्त्या निर्णयशब्देन प्रयोजनं विवक्षितम् । सङ्गतिः शास्त्रद्विकाध्यायपादपेटिकापूर्वाधिकरणरूपप्रतियोगिभेदात् षोढा भिद्यते । पूर्वाधिकरणसङ्गतिराक्षेपापवादद्दष्टान्तप्रत्युदाहरणादिभेदेन बहुधा भिद्यते । सा तत्रतत्राधिकरणे स्फुटीभविष्यति । प्रथममिह सूत्रपदानि व्याख्यायन्ते । यद्यप्यथशब्दस्यानेकार्थस्याप्यानन्तर्यार्थत्वं प्रसिद्धतरम् । प्रसिद्धतरार्थग्रहणे च न व्याख्यानापेक्षा । न हि गोपदं किरणाद्यर्थग्रहण इव सास्नावदर्थग्रहणेऽपि व्याख्यानमपेक्षते । तथाप्यत्रानन्तर्यप्रतियोग्यलाभात्तदर्थत्वं न सम्भवतीति शङ्कामुद्भाव्य विवक्षितप्रतियोगिविशेषप्रदर्शनेन तन्निराकरणार्थम् । शङ्कावकाशप्रदानाय 'अथातो धर्मजिज्ञासे'त्यादिसूत्रेषु 'अथात' इति निपातसमुदायस्य आनन्तर्यार्थकत्वं भवदासादिभिरुक्तं पश्यतामत्रापि तथेति शङ्का स्यादिति तद्वारणाय चाथशब्दं व्याचष्टे—अत्रेति । प्रसिद्धतरार्थग्रहणे सम्भवत्यप्रसिद्धार्थग्रहणं न कार्यमिति न्यायतः सिद्धमर्थान्तरग्रहणायोगं तत्र तत्रानुपपत्त्युपन्यासेन दृढीकरोति—न त्वित्यादिना । ननु, जिज्ञासाशब्दस्य 'धर्मं ज्ञातुमिच्छेत्' 'तद्विजिज्ञासस्व सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इत्यादिलौकिकवैदिकप्रयोगप्राचुर्यात् शक्त्या निरूढलक्षणया वा विचारपरत्वं सम्भवतीति तस्यात्र विचारार्थस्य ग्रहणे विचारस्य प्रारम्भयोग्यतास्ति । शास्त्रे चोत्तरत्र स्वरूपप्रमाणसाधनफलान्यतममुखेन प्रत्यधिकरणं विचारः क्रियत इति 'योगानुशासनं शास्त्रमधिकृत'मित्यादिव्याख्यानवत् 'ब्रह्मविचारात्मकं शास्त्रमधिकृतं वेदितव्य'मिति व्याख्यायां नार्थबाधः। न च वाच्यं, प्रारभ्यत इत्यनुक्त्वापि प्रारम्भादेवावगन्तुं शक्यं प्रारभ्यमाणत्वं न शब्देन प्रतिपादनीयम् । न ह्युच्यमानं वचनं 'ब्रवीमी' त्युक्तिमन्तरेणाप्युच्यत इत्यवगन्तुं शक्यं 'ब्रवीमी'ति शब्देनापि प्रतिपादयन्तीति । प्रतिपादयन्त्येव । 'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति । आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥' इत्यादयो हि श्लोकाः पठ्यन्ते । तथा च तादृशेषु श्लोकेषु 'वच्मी'त्येवमादिवाक्यमानर्थक्यपरिहारायोपदेशरूपतया परिणमदुच्यमानार्थस्यावश्यकर्तव्यत्वमभिव्यनक्तीत्यालङ्कारिकोक्तरीत्या अत्र प्रारम्भप्रतिपादनं प्रारम्भोपयुक्ताधिकार्यादिसद्भावमभिव्यनक्तीति तदलाभप्रयुक्तानारम्भणीयत्वशङ्कानिराकरणेनार्थवद्भवेदिति चेत् । सत्यम् । आनन्तर्याभिधानमुखेन विशिष्याधिकार्यादिलाभे सम्भवति सामान्यतः साधिकारत्वादिमात्रद्योतनप्रयोजनमधिकारार्थत्वं नाङ्गीकर्तव्यमिति भावः । अन्वयासम्भवादिति । जिज्ञासां प्रति मङ्गलस्य कर्तृकरणादिकारकभावेनान्वयासम्भवात् । न्यायव्युत्पादनार्थे प्रवृत्ते सूत्रे ब्रह्मजिज्ञासा मङ्गलमिति स्तावकत्वेनाप्यन्वयासम्भवादिति भावः । स्यादेतत् । सूत्रकारेण शास्त्रारम्भे मङ्गलमाचरितमित्यवश्यं कल्पनीयम् । यद्यपि भगवान्सूत्रकारो बादरायणः त्रैकालिकार्थतत्वदर्शित्वात्प्रारिप्सिते शास्त्रे नास्ति समाप्तिपरिपन्थी वर्तमानो भविष्यन्वा विघ्नः, प्रचयगमनं चास्य स्वानुग्रहादेव भवि-

(१) 'वागाद्यर्थं' इति ग. पाठः। (२) 'शङ्कावकाशेऽपि' ख. ङ. पाठः। (३) 'तद्वारणायाथशब्दं' इति ख. ङ. पाठः।

**शास्त्रारम्भे शिष्टाचारपरिपालनार्थं मङ्गलाचरणं तु वर्णध्वनिमात्रेण कल्प्यते। न चायं पक्षान्तरपरिग्रहार्थः। पूर्वमेकस्यानुक्ततया तत्प्रसङ्गासम्भवात्। न च भोजनगमनादिवदनियतं यत्किञ्चित्पूर्ववृत्तमपेक्ष्यायमथशब्दप्रयोगः। नियतसामग्रीभूतस्य कस्यचिदत्र विवक्षितत्वात्। यस्य सम्पत्तिरिहाधिकारिविशेषणतया ब्रह्मविचारस्य साधनं तत्पूर्वभावीति विज्ञायते। अथाष्टवर्षत्वादियुक्तब्राह्मणा-**

---

ष्यतीति निश्चिन्वन्निर्विघ्नपरिसमाप्तिप्रचयगमनार्थं मङ्गलमनपेक्ष्य शास्त्रारम्भे प्रवृत्त इत्यपि कल्पयितुं शक्यम्। तथाप्यनादिसम्प्रदायसिद्धाविगीतशिष्टाचारपरिपालनार्थं मङ्गलं चकारेत्येव कल्पनीयम्। अतस्तदनुसारेणाथशब्दस्य मङ्गलार्थत्वमभ्युपगन्तुं युक्तम्। जिज्ञासायां मङ्गलस्यान्वयो न सम्भवतीति चेन्माभूत्। तदन्वयस्याविवक्षितत्वात् शास्त्रारम्भसमयकर्तव्यमङ्गलाचरणार्थस्याथशब्दस्य ततः पार्थक्यस्यैवोचितत्वादित्याशङ्क्याह–शास्त्रारम्भ इति। अथशब्दो मङ्गलप्रयोजन इ'त्योङ्कारश्चे'त्यादिश्लोकेनोच्यते। न तु मङ्गलाभिधायक इति। 'माङ्गलिका'वित्यस्य 'तदस्य''प्रयोजन' (पा०.५.१.१०९.) मिति सूत्रविहितठक्प्रत्ययान्तत्वात् 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथे'त्यभिधानकोशानुसारेणाथब्दस्य मङ्गलाभिधायकत्वस्यापि सत्त्वेऽपि नात्र मङ्गलाभिधानेन समीहितसिद्धिः। किं तु मङ्गलानुष्ठानेन। न खल्वारम्भे मङ्गलमभिधातव्यमिति शिष्टानां समयः। किं तु मङ्गलं कर्तव्यमिति। अतः सूत्रकृदानन्तर्याभिधानमुखेन विवक्षितार्थसिद्ध्यौपयिकतया जिज्ञासासूत्रेणैकवाक्यतापन्नमेवाथशब्दमुच्चारयन् तदुच्चारणरूपं तदाकर्णनरूपं वा मङ्गलं कृतवानिति कल्पयितुं युक्तमिति भावः।'अथैवं मन्यस' इत्यादौ पक्षान्तरपरिग्रहोऽप्यथशब्दस्यार्थो दृष्टः। सोऽत्र न सम्भवति। पूर्वं कस्यचित्पक्षस्यानुपन्यस्तत्वादित्याह—न चेति। एवमथशब्दस्यानन्तर्यार्थे स्थिते तस्य स्वाभिमतं पूर्ववृत्तं प्रतियोगि निर्दिधारयिषुः पक्षान्तरं प्रतिक्षिपति--न चेति। यस्य सम्पत्तिरधिकारिविशेषणतया ब्रह्मविचारस्योपयोगिनी भवितुमर्हति तदेव विचारे नियतसामग्रीभूतं किञ्चिदत्र पूर्ववृत्तं सूत्रकृता विवक्षितमिति वक्तव्यम्। न तु भोजनाद्यनियतं किञ्चित्। निष्प्रयोजनस्य तस्य प्रतिपादने सूत्रकारस्यानवधेयवचनत्वप्रसङ्गादिति भावः। अध्ययनं तर्हि पूर्ववृत्तमस्त्वित्याशङ्कते—अथेति। अध्यापनविधिरध्ययनस्यानुष्ठापकः,न स्वविधिः निर्नियोज्यत्वादिति प्राभाकरा वदन्ति।तथाभ्युपगमेऽध्यापनविधिना लब्धानुष्ठानस्याध्ययनस्याधिकार्यपेक्षाभावात्।अर्थज्ञानकामोऽधिकारी न कल्पनीय इत्यर्थज्ञानस्याध्ययनविध्यङ्गीकृतफलत्वाभावेन विचारस्याध्ययनं प्रति फलोपकार्यङ्गत्वाभावात्। विचारे वेदाध्ययनस्य नियतसामग्रीत्वेन पूर्ववृत्तत्वं न सिद्ध्येदिति मत्वाध्ययनं स्वविधिप्रयुक्तमिति दर्शयितुं विशिनष्टि--अष्टवर्षत्वादीत्यादिना विशेषणचतुष्टयेन। एवमध्यापनविधिप्रयुक्तत्वमध्ययनस्य कल्पयन्ति। अध्ययनविधिर्न स्वविषयानुष्ठापकः निर्नियोज्यत्वात्। न च विश्वजिन्न्यायेन नियोज्यः कल्पनीयः। स्वर्गकामादिनियोज्यैर्दर्शपूर्णमासादिभिः प्रयाजादीनामिवाचार्यककामनियोज्येनाध्यापनविधिनाध्ययनस्य प्रयुक्तिः सम्भवेत्। कल्पनानपेक्षणात्। तथा हि–उपनयनपूर्वकादध्यापनादाचार्यकं निष्पद्यते। 'उपनीय तु यः शिष्य'मित्यादिस्मरणात्। तदनुसारेणाष्टवर्षादिश्रुतावात्मनेपदबलादुपनयने प्रतीयमानस्याचार्यकहेतुत्वस्य तन्निर्वर्त्याध्यापनद्वारकत्वकल्पनौचित्यात्। तदाचार्यकं यद्यप्याधाननिष्पा-

ग्रमाहवनीयत्वादिकमिवालौकिकातिशयरूपं न स्वतः पुरुषार्थः। तथापि 'आचार्याय दक्षिणा देये'त्यादिस्मरणात् दक्षिणादानादिहेतुत्वेन गौणपुरुषार्थो भवतीत्यतस्तत्कामोऽध्यापनविधौ नियोज्य इति सनियोज्यकेन तेन विधिनाध्यापनं तावत्प्रयुज्यते। तद्यद्यपि लौकिकेनाप्यध्ययनेन निर्वहति। तथाप्युपनयनद्वारा विहितस्यैवाध्ययनस्य तेन प्रयुक्तिः। कथम्। उपनयनं तावदध्यापनाङ्गम्। 'उपनीय तु यः शिष्य' मिति स्मृतावुपनयनाध्यापनयोः समानकर्तृकत्वप्रतिपादनात्। 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते' ति श्रुतौ तच्छब्दपरामृष्टोपनीतस्याध्यापनान्वयावगमात् 'उपनयीते' त्यात्मनेपदश्रुत्याध्यापनफलस्याचार्यकस्योपनयनफलत्वप्रतिपादनाच्च[1]। उपनयनस्य चोपनेयासक्तिः प्रयोजनं दृश्यत इति तद्द्वारेणैव तदङ्गम्। दृष्टद्वारे सम्भवत्यदृष्टद्वारकल्पनायोगात्। न चाध्यापनं प्रत्यनुपयोगिन उपनेयस्यासक्तिरध्यापनोपकारिणीत्युपनेयस्याध्यापनापेक्षितव्यापाराकाङ्क्षायामुपनयनं प्रक्रम्य विधीयमानमध्ययनं तद्व्यापारतया कल्प्यत इति तत्रोपनयनद्वारा विहिताध्ययनस्याध्यापनविधिना प्रयुक्तिरिति। एतद्विघटनायोपनयनमध्ययनस्याङ्गं नाध्यापनस्येति दर्शयितुमाद्यविशेषणम्। उपनयनमुपनेयब्राह्मणाद्यर्थम्। 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्य'मिति द्वितीयाश्रुतिभिस्तथावगमात्। तादर्थ्ये च तस्य तदीयकार्याध्ययनाङ्गत्वेन तदुपयुक्तत्वे निर्वहति न त्वन्यदीयकार्याध्यापनाङ्गत्वेनान्योपयुक्तत्व इति। तत्र युक्तिं सूचयितुं 'ब्राह्मणाद्युपयुक्ते'त्युपनयनविशेषणम्। यद्यपि यागेन स्वर्गं भावयेदित्यादिद्वितीयाश्रुत्यवगतं निर्वर्त्यकर्मत्वं कार्यान्तराङ्गत्वं विनापि सम्भवति। तथापि संस्काररूपक्रियायाः कर्मार्थत्वं कार्यान्तराङ्गत्वेनैव निर्वाह्यम्। 'भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हती'ति न्यायात्। ततश्च उपनयनसंस्कृतस्य भूतोपयोगाभावात् भाव्युपयोगे वक्तव्ये तस्याध्यापनाङ्गत्ववादिनापि अध्ययनं कुर्वन्माणवकस्तद्द्वारा तस्याङ्गं भवतीति वक्तव्यत्वात् उपनयने पूर्ववृत्ते सति प्रथमोपनिपतितं उपनेयगतत्वेनान्तरङ्गं चाध्ययनं प्रत्येवाङ्गत्वं युक्तं न त्वध्यापनं प्रतीति शङ्कान्तरनिराकरणं तत्पूर्वकं युक्त्यन्तरं च सूचयितुमुपनयनाङ्गकस्येत्यनुक्त्वोपनयनसंस्कारपूर्वकस्येत्युक्तम्। अनेनोपनयनाध्ययनयोराम्नानपौर्वापर्यमप्यत्र विवक्षितम्। 'स्वाध्यायोऽध्येतव्य' इत्युत्तरवाक्यान्वयिनोऽध्ययनविधिग्रहणस्य काकाक्षिन्यायेन पूर्ववाक्येऽप्यन्वयात्[2]। तथा चोपनयनस्य द्वितीयाश्रुत्योपनेयार्थत्वे प्रतीते किमर्थमहमुपनयनसंस्कारेणाचार्यसमीपं प्रापित इति कार्याकाङ्क्षयोपनयनविध्यनन्तरमकर्तृकतया[3] विहितस्याध्ययनस्य कर्त्राकाङ्क्षया चोपनयनाध्ययनयोरेकवाक्यता भवतीति वाक्यप्रमाणेनापि तस्याध्ययनाङ्गत्वमिति तेन सूच्यते। ननु, च 'उपनयीते'त्यात्मनेपदश्रुतिर्वाक्यप्रमाणाद्बलवतीति चेन्न। तस्या वाक्येन विरोधाभावात्। तथा हि—आचार्यकहेतुत्ववैशिष्ट्यं समीपप्रापणरूपे धात्वर्थेन प्रत्याय्यते न त्वाहत्य धात्वर्थस्याध्यापनाङ्गत्वं बोध्यते। 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः'(पा० १-३-३६, सू०)इत्याचार्यकरणविशिष्टे धात्वर्थे नयतेरात्मनेपदविधानात्। तत्त्वाचार्यकहेतुत्वं साक्षादुपनयनस्य न सम्भवति। 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥' इति तस्योपनयनपूर्वकाध्यापनफलकत्वस्मरणात्। किं त्वध्यापन-

---

(१) 'पनेयान्वयप्रतिपादनाच्च' इति. ख. ग. पाठः। (२) 'पत्ति' इति ङ. पाठः। (३) कर्तृरहिततया' इति ख. ग. पाठः।

निर्वर्तनद्वारेत्यनया प्रणाडिकया तयाध्यापनाङ्गत्वं प्रत्याय्यत इत्युपपादनीयम्।एवं च द्वारविचारे तस्याध्ययनाङ्गत्वमेव सिद्ध्यति। कथम्। उपनयनस्याध्यापननिर्वर्तकत्वमपि न साक्षात्। किंतूपनयनेन विना नोपनेयस्याचार्यसमीपप्राप्तिः तां विना नाध्ययनं अध्ययनं विना नाध्यापनमिति तदपि परम्परयोपपादनीयम्। एवं चास्यां परम्परायामध्ययनस्य प्रथमनिविष्टत्वात् उपनेयगतत्वेनान्तरङ्गत्वादुपनेयसंस्कारत्वप्रतिपादकद्वितीयाश्रुत्यनुग्रहात् 'उपनयनं विद्यार्थस्य श्रुतितः संस्कारः' (आ० ध० प्र०१. प०१. ख. १. सू. ९) इति स्मृत्यनुग्रहाच्च तस्याध्ययनाङ्गत्वमेव सिध्यति। अध्ययनाङ्गत्वेऽपि तस्याद्यङ्गत्वेऽप्याधानस्य क्रतुफलोपकारकत्ववदध्यापनफलोपकारकत्वस्योपपत्त्याऽऽत्मनेपदश्रुतेस्तदवलम्बनत्वोपपत्तेः। किंचात्मनेपदश्रुत्यैवाध्ययनाङ्गत्वमुपनयनस्य सिध्यति। 'संमानना'दि( पा. १-३-३६. ) सूत्रेण आत्मनेपदविधानस्याकर्त्रभिप्रायार्थत्वात्। क्रियाफलस्य कर्तृगामितायां नयतेरात्मनेपदस्य 'स्वरितञित' ( पा० १-३-७२. ) इत्यादिसूत्रेणैव सिद्धत्वात्। ननूपनयनं प्रत्यङ्गित्वेनोद्देश्यस्याध्यापनस्य तत्फलस्याचार्यकस्य च कर्तृगतत्वेऽपि तस्याध्यापनाङ्गतायां द्वारभूतोपनयनजन्यसंस्कारस्याकर्तृगतत्वादात्मनेपदमुपपद्यत इति चेन्न। यत्प्रधानं फलमुद्दिश्य क्रियारम्भस्तस्य कर्तृगतत्वाकर्तृगतत्वयोरेव पदव्यवस्थाप्रकरणविषयत्वात्। अत एव वृत्तिकारेण 'स्वरितञित'(पा० १-३-७२) इत्यादिसूत्रे यस्य कस्यचित्फलस्य कर्तृगामित्वमात्रेण आत्मनेपदविधाने 'यजन्ति याजकाः' 'पचन्ति पाचका' इत्यत्रात्मनेपदं स्यात् तत्रापि दक्षिणादेः कर्तृगामित्वा[1]दित्याशङ्कानिराकरणायोक्तं "क्रियायाः फलं प्रधानभूतं यदर्थमसौ क्रिया आरभ्यत" इति। हरिणा चोक्तम्—'यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः। तत्प्रधानं फलं तेषां न लाभादि प्रयोजन'मिति। अत एव च भट्टपादैः'तथाकामोऽर्थसंयोगा'दिति (जै०.३-८-१३.) तार्तीया[2]धिकरणे 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुया'दित्युपन्यस्तम्। सदोमानगुणफलमध्वर्युगामि सदोमानस्याध्वर्यवत्वात्। 'यदि कामयेत नीचैः सदो मिनुया'दिति सामानाधिकरण्येन कामस्य सदोमानकर्तृगतत्वावगमादिति पूर्वपक्षं कृत्वा क्रियाफलस्याध्वर्युगतत्वे 'डुमिञ् प्रक्षेपण'इति धातोर्ञित्त्वेनात्मनेपदं स्यादिति परस्मैपदश्रुत्या अध्वर्युव्यापारस्य पारार्थ्यप्रतीतेर्यजमानगतमेव फलम्। श्रुतिबला'द्यदि कामयेत यजमान' इत्यध्याहारेण वाक्यबा[3]धोपपत्तेरिति सिद्धान्तितम्। यद्यत्रोद्देश्यफलस्य कर्तृगामित्वेऽपि द्वारभूतस्य संस्कारस्याकर्तृगामित्वमात्रेण आत्मनेपदं समर्थ्येत तदात्रापि वृष्टिफलस्याध्वर्युगामित्वेऽपि नीचैस्त्वस्य सदोगतत्वमात्रेण परस्मैपदश्रुतिः समर्थिता स्यादिति तया वाक्यबाधो न स्यात्। तस्मात्संस्कारमात्रस्योद्देश्यफलत्वासम्भवात्किमर्थं वयमुपनयनेन संस्कृता इति संस्कारस्य कैमर्थक्याकाङ्क्षायामर्थज्ञानफलकमध्ययनमेव तस्योद्देश्यं फलमिति युक्तं, न त्वाचार्यकफलकमध्यापनम्। अकर्त्रभिप्रायार्थात्मनेपदश्रुतिविरोधात्। एतेन 'तमध्यापयीते'त्यादितच्छब्दपरामृष्टस्योपनीतस्य "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे"त्यत्र

---

(१) 'यजतिकर्तृगामित्वा'इति. घ पाठः। (२) 'तृतीयाध्यायसम्बन्धिन्यधिकरणे' इत्यर्थः। (३) 'श्रुतिलिङ्गे'तिसूत्रेण वाक्यप्रमाणबाधोपपत्तेरिति यावत्।

ह्युपयुक्तोपनयनसंस्कारपूर्वकस्य 'स्वाध्यायोऽध्येतव्य इति स्वविधिप्रयुक्ततया नित्य-

तच्छब्दपरामृष्टस्य दध्यानयनसंस्कृतस्य पयसो दधिसंसर्गाद्घनीभावं प्राप्य आमिक्षापदवाच्यतामुपगतस्य वैश्वदेवयागेनेवाध्यापनेन सम्बन्धावगमादुपनयनस्य तदङ्गत्वमिति निरस्तम्। 'कुशलेन तक्ष्णा रथं निर्मापयती'त्यत्र तक्षकौशलस्य रथनिर्माण इवाध्ययने प्रयोज्यव्यापार एवोपनयनसंस्कारस्य विनियोग इत्युपपत्तेः। एतेन 'उपनीय तु यः शिष्य'मिति (मनु. अ. २-श्लो. १४०) स्मृतिगतक्त्वाश्रुत्योपनयनाध्यापनयोः समानकर्तृकत्वमवगम्यते। तच्च नैकप्रयोगतां विनेति प्रयोगैक्येनोपनयनस्याध्यापनाङ्गत्वसिद्धिः। यद्यपि प्रयोगैक्यं तयोः समप्राधान्ये वैपरीत्येनाङ्गाङ्गिभावे च सम्भवति, तथाप्युपनयनमुपनेयासक्तिं सम्पाद्य तदीयेनाध्ययनेनाध्यापनं निर्वर्तयितुं क्षममिति दृष्टद्वारसत्त्वादुपनयनस्याध्यापनाङ्गत्वेनैव प्रयोगैक्यनिर्वाहो युक्त इत्यपि निरस्तम्। न हि श्रुत्यवगतमुपनयनस्याध्ययनाङ्गत्वं यच्छब्दयोगादनुवादसरूपया स्मृत्या बाधितुं शक्यते। अतः स्मृतिगतक्त्वाप्रत्ययो 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यत्र क्त्वाप्रत्यय इव पौर्वापर्यमात्रविषयतया नेतव्यः। तस्मात्स्थितमेतदुपनेयार्थत्वेन श्रुतमुपनयनमध्ययनाङ्गं नाध्यापनाङ्गमिति। इतोऽप्युपनयनमध्ययनाङ्गमित्यभिप्रेत्य विशेषयति-अष्टवर्षत्वादियुक्तेति। अत्राष्टवर्षत्वादीत्यादिशब्देन काम्यकल्परूपाण्यष्टवर्षत्वादीनि गृह्यन्ते। काम्यकल्पा हि स्मर्यन्ते-'गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्य'मि(आ०.ध०.१.प्र.१.प.१.ख.१९.सू.)ति प्रकृत्य 'अथ काम्यानि(२०.सू.)सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकाम'(आ०.ध०.१.प्र.१.प.१.ख.२१.सू.)मिति। अत्रोपनयनाश्रिता ये वयोविशेषलक्षणा गुणास्तेषामुपनेयार्थत्वात्तदाश्रयप्रधानभूतोपनयनफलस्यापि फलत्वेन तादर्थ्यं वक्तव्यमित्युपनेयार्थस्याध्ययनस्यैवोपनयनमङ्गमिति सिद्ध्यति। 'तथाकामोऽर्थसंयोगा'दि(जै० ३.८.१२)त्यधिकरणे हि प्रधानगुणफलयोरेकाश्रयत्वनियममौत्सर्गिकमवलम्ब्य परैः सिद्धान्तितम्। उक्तं हि नयविवेके तदधिकरणसिद्धान्ते 'साङ्गकर्मण्यधिकृतस्य सर्वत्र प्राधान्यमुत्सर्ग इति गुणफलमपि तस्यैवे'ति। तस्मात्काम्योपनयनकल्पपर्यालोचनयाप्युपनयनमध्ययनाङ्गं सिद्ध्यतीति भावः। किं चाष्टवर्षत्वादीत्यादिशब्देन त्रैवर्णिकानां नित्यकल्परूपाण्यष्टत्वैकादशवर्षत्वद्वादशवर्षत्वानि गृह्यन्ते। तत्कीर्तनमुपनयनस्य नित्यत्वख्यापनेन तत्प्रधानभूतस्याध्ययनस्य नित्यत्वप्रदर्शनाय। तत्प्रदर्शनं चाध्ययनस्याध्यापनविधिप्रयुक्तत्वे नित्यानित्यसंयोगविरोधस्याग्रिमविशेषणेन स्फोरयिष्यमाणस्योपपादनाय। एवमुपनयनस्याध्ययनाङ्गत्वे सति विहिताध्ययनस्याध्यापनविधिप्रयुक्तत्वासम्भवात्स्वविधिप्रयुक्तमेवाध्ययनमिति सिद्धम्। अपि चाध्ययनस्य स्वविधिप्रयुक्तत्व एव नित्यवदनुष्ठानं सिद्ध्येत्, नाध्यापनविधिप्रयुक्तत्व इति दर्शयितुं स्वविधिप्रयुक्ततया नित्यप्राप्तस्येति विशेषणम्। अध्ययनं हि नित्यं तदङ्गस्योपनयनस्य नित्यत्वात्। 'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥ योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' इति तदभावे दोषवर्णनात्। अध्यापनविधिस्तु काम्य इत्यङ्गीक्रियते।

(१) 'परीत्यैव' इति ख. ग. पाठः। (२) 'सर्वप्राधान्य'मिति ङ. पाठः।

प्राप्तस्य नियमोपासिताचार्यमुखलब्धाक्षरग्रहणरूपस्यार्थज्ञानफलस्य

एवं च यत्र ग्रामे जनपदे वा धनवत्त्वादिहेतुभिराचार्यककामो न स्यात् सन्वा कश्चिदुपनीयाध्यापयितुं प्रवृत्तः प्रव्रजनादिहेतुभिर्निवृत्ताध्यापनविधिसंबन्धः स्यात्, तदा तद्ग्रामजनपदवासिनामध्ययनस्य तेनतेनाचार्येणोपनीतानामेकदेशमध्यापितानामेकदेशान्तराध्ययनस्य च कथं निर्वृत्तिः स्यात्। तस्मात्स्वविधिप्रयुक्तत्वमेवाध्ययनस्याङ्गीकरणीयमिति भावः। नन्वध्ययनविधेः सर्वशाखाविषयत्वे स्वविधिनाप्यध्ययनस्य प्रयुक्तिर्न संभवति अशक्यानुष्ठानत्वादित्याशङ्क्य स्वशाखामात्रविषयोऽध्ययनविधिः न तु सर्वशाखाविषय इति दर्शयितुं स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिरुदाहृतः। इतोऽपि तस्य स्वविधिप्रयुक्तत्वमङ्गीकरणीयमित्यभिप्रेत्य विशेषयति—नियमोपासितेति। अयमाशयः। अध्ययनं तावद्यावद्वेदसमाप्त्याचार्याधीनेन स्मृत्युक्तशुश्रूषादिनियमैस्तदुपासनापरेण च सता यथा तदुच्चारणं स्वरवर्णादिभ्रंशराहित्येन कर्तव्यमतिक्लेशसाध्यम्। अस्मिन्कथमन्यपुरुषगाम्याचार्यकसिद्ध्यर्थमन्यः प्रवर्तेत। कथं च तस्मै दक्षिणां दद्यात्। यद्युच्येत अध्यापयितैव स्वस्याचार्यकसिद्ध्यर्थमध्ययनेन माणवकस्यार्थज्ञानादिफलं प्रदर्श्य तं प्रवर्तयेदिति। तथा सति तस्य स्वाधिकार एव प्रवर्तकः स्यात् नाध्यापनविधिः। न चाध्यापकेन[1] स्वस्याध्यापनफलसिद्ध्यर्थं माणवकस्त[2]दीयाधिकारप्रदर्शनेनाध्ययने प्रवर्त्यत[3] इत्येतावता तस्याध्यापनविधिप्रयुक्तत्वसिद्धिः। द्रव्यार्जनप्रवृत्तैर्याजकैर्निषादः स्वाधिकारं प्रदर्श्य स्थपतीष्टौ प्रवर्त्यत इति स्थपतीष्टेरपि द्रव्यार्जनविधिप्रयुक्तत्वप्रसङ्गात्। तस्मात्स्थपतीष्टेरिवाध्ययनस्यापि स्वविधिप्रयुक्तैवाङ्गीकरणीयेति। ननु, स्वमते फलरहितोऽध्ययनविधिर्न प्रवर्तक इत्याशङ्कानिवारणार्थमाह—अर्थज्ञानफलस्येति। अयमाशयः। दृश्यते तावदध्ययनानन्तरमक्षरग्रहणपदावधारणपदार्थज्ञानप्रणाडिकयोपजायमानं वाक्यार्थज्ञानं तदध्ययनस्य फलम्। तत्कामोऽधिकारी सोऽध्ययनविधौ न श्रूयत इति चेत् किमध्यापनविधावाचार्यककामः श्रूयते। उपनयनस्यात्मनेपदबलादाचार्यकहेतुत्वं प्रतीयमानमध्यापनद्वारा[4] वाच्यमिति तत्कामस्तत्राधिकारी कल्प्यत इत्येतादृशी कल्पनासरणिस्तु प्रकृते न दण्डवारिता। ननु, बालस्यार्थज्ञानकामना न संभवतीति चेन्मा भूत्। बालहितकारिषु पित्रादिषु सा सम्भवति। न चैवं सति बालस्य स्वाधिकारः प्रवर्तको न स्यादिति शङ्कनीयम्। आमयाविनं बालं भिषग्भिः पित्रादिभिस्तदपेक्षितफलान्तरप्रतिपादनेन सामदानाद्युपायेन वाऽनुष्ठाप्यमानायामौषधसेवायामिवाध्ययनेऽपि तथानुष्ठाप्यमाने बालस्यैव विध्युक्तं फलं भवत्विति पित्राद्यभिसन्धिसत्त्वेन तदधिकारस्यैव प्रवर्तकत्वसिद्धेः। अन्यथा पित्रादिभिरनुष्ठाप्यमाने सन्ध्यावन्दनादावपि बालस्याधिकारः प्रयोजको न स्यात्। यदि च प्रवर्तककामनयानुष्ठातृगतयैव भाव्यमिति नियमः तदानीमाचार्यककामनयाप्यध्यापकगतयाध्ययनानुष्ठानं न सिध्येत्। अपि चार्थज्ञाने पित्रादिभिरनुष्ठानद्वारा धनपशुपुत्रस्वर्गादिसाधनत्वेन बोध्यमाने बालस्यापि कामना सम्भवति। ननु, कामनाविषयज्ञानावच्छेदकत्वेनार्थस्य ज्ञातताया वक्तव्यत्वात् पुनस्तज्ज्ञाने कामना न सम्भवतीति चेन्न। सामान्यज्ञाने सत्यपि विशेषज्ञाने कामनोदयसम्भवात्सर्वत्र सामान्यज्ञानस्यैव विशेषजिज्ञासाहेतु-

(१) 'न चाध्यापकः'। (२) 'माणवकं। (३)'प्रवर्तयती' ति च. ङ. पाठः। (४) 'द्वारं वाच्य' मिति क. ख. पाठः।

त्वात् । अन्यथा शास्त्रार्थजिज्ञासया शास्त्रश्रवणादिप्रवृत्त्युच्छेदप्रसङ्गात् । सर्वथार्थज्ञानेऽध्ययनप्रवृत्त्युपयोगिनि कामना सम्भवत्येव । प्रत्युताचार्यके[1] एव कामना न सम्भवति । अलौकिकातिशयत्वेनाभ्युपगतस्य तस्य पुमर्थत्वानवगमात् । 'ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थानमित्यादावृत्विक्श्वशुरपितृव्यादिपदानां यथा स्रौव[2]यौनसम्बन्धमात्रं प्रवृत्तिनिमित्तं पूजाविशेषहेतुश्च तथैवाचार्याय दक्षिणां दद्यादित्यादावाचार्यपदस्याप्युपनयनपूर्वकाध्यापनकर्तृत्वरूपमौखसम्बन्धमात्रं प्रवृत्तिनिमित्तं तदेव च तदर्थपूजाविशेषहेतुरित्युपपत्त्या तदन्यस्य कस्यचिदलौकिकातिशयस्य दक्षिणादानहेतुत्वकल्पनायां प्रमाणाभावात् । 'उपनीय तु यः शिष्य' मित्यादिस्मृतेरपि 'त्रिशुक्लः क्षीणवृत्तिश्च घृणालुः सकलेन्द्रियः । वियुक्तो यो[3] निषेधेभ्यो ब्राह्मणः पात्रमुच्यत' इत्यादिस्मृतेरिव शब्दप्रवृत्तिनिमित्तमात्रप्रदर्शनपरत्वात् । ननु, तथाप्यध्ययने अर्थज्ञानहेतुत्वस्य प्राप्तत्वान्न विधिः सम्भवतीति चेन्न । अपूर्वविध्यसम्भवेऽपि नियमविधिसम्भवात् । पुस्तकनिरीक्षणादिनापि पदावधारणादिपूर्वकमर्थज्ञानसम्भवेनाध्ययनस्यावहननादिवत्पक्षे प्राप्तत्वात् । अवहननादिनियमवदध्ययननियमस्य क्रत्वर्थत्वं न सम्भवति अध्ययनस्य क्रत्वङ्गत्वाभावादिति चेत् माभूत् द्रव्यार्जननियमवत् पुरुषार्थोऽस्तु 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेत्' इति द्रव्यार्जनोपायनियमो हि न क्रत्वर्थः । याजनादीनां क्रत्वङ्गत्वाभावात् । किंतूपायान्तरेण धनमार्जयन्प्रत्यवैतीत्येवं पुरुषार्थः । एवं द्रव्यार्जनोपाय इव विद्यार्जनोपायेऽपि नियमः पुरुषार्थ इति युक्तम् । ननु, सर्वशाखाम्नाताङ्गोपसंहारापेक्षक्रत्वनुष्ठानोपयुक्तायां विद्यायामध्ययनमेवोपाय इति नियन्तुं न शक्यते सर्वशाखाध्ययनासम्भवात् । स्वाध्यायोऽध्येतव्य इति स्वशाखामात्र एवाध्ययनविधानाच्चेति चेत्सत्यम् । स्वशाखार्थज्ञानरूपविद्यांश एवाध्ययननियमः । परशाखार्थज्ञानरूपविद्यांशस्तु, कल्पसूत्रोपदृष्टवचनाद्युपायान्तरेण भवन्न निवार्यते । एवं तर्ह्यध्ययनरहितस्य शूद्रस्याप्युपायान्तरेण विद्यार्जनसम्भवात् क्रत्वधिकारः स्यात् । नित्यवदनुष्ठेयाध्ययनलब्धविद्येषु त्रैवर्णिकेषु चरितार्थाः क्रतुविधयो न शूद्रस्योपायान्तरेण विद्यामाक्षिपन्तीति हि मीमांसकप्रवादः । उक्तं चाधिकारलक्षणे सूत्रकृता 'अवैद्यत्वादभावः कर्मणि स्या' दिति (जै०.६,१,३७ सू०) यदि त्रैवर्णिकानां परशाखार्थज्ञानमुपायान्तरेणाभ्युपगम्यते तदा शूद्रस्याप्यनिवार्यः क्रत्वधिकारः । शूद्रस्य सर्वापि शाखा परशाखेत्युपायान्तरेण तस्य तदर्थज्ञानोपपत्तेः । न च तस्य विद्यासम्भवेऽपि वसन्तादिवाक्यविहिताधानसाध्याग्न्यभावात् क्रत्वनधिकारः सिद्ध्येदिति वाच्यम् । तथापि रथकारस्य तदधिकारा[4]निवारणात् । 'वर्षासु रथकार आदधीते'ति तस्याधानविधानादिति चेन्मैवम् । 'स्वाध्यायोऽध्येतव्य' इति विधेः स्वस्वशाखामात्राध्ययननियमविधिरूपत्वेऽप्यपशूद्राधिकरणे शूद्राणां क्रत्वनधिकारसिद्धेरुपपादयिष्यमाणत्वात् । तस्मादर्थज्ञानार्थत्वेऽप्यध्ययने विधिरुपपद्यत एव । प्रत्युताध्यापन एव पराभ्युपगतोऽपूर्वविधिर्नोपपद्यते । याजनप्रतिग्रहवत्तस्य वृत्त्यर्थत्वेन प्राप्तत्वात् । न-

---

(१) 'प्रत्युताचार्यकरण एव' इति. ङ. पाठः । (२) स्रौवः स्रुवासम्बन्धी । ऋत्विक्त्वकृतस्सम्बन्ध इति यावत् । उक्तं हि महाभाष्ये 'षष्ठी स्थानेयोगे'ति सूत्रे आर्था यौना मौखा स्रौवाश्चेत्यादिना चातुर्विध्यं सम्बन्धस्य । (३) 'योनिदोषेभ्यः' इति घ. पाठः । (४) 'तदधिकारानिराकरणात्' इति ङ. पाठः ।

वेदाध्ययनस्य ब्रह्मविचारात्पूर्वभावित्वं युक्तम् ।

चाचार्यकार्थत्वेन तद्विधिः । तस्यापुमर्थत्वस्याप्रामाणिकत्वस्य चोक्तत्वादिति । अध्ययन-स्यार्थज्ञानफलकत्वे हेत्वन्तरगर्भविशेषणपूर्वकं विशेष्यं निर्दिशति—वेदाध्ययनस्येति । 'अय-स्मयादीनि छन्दसी'ति(पा०१.४.२०.) व्याकरणसूत्रगतच्छन्दश्शब्दवदत्रत्यवेदशब्दस्साङ्गवे-दपरः । अन्यथा वेदविशेषणवैयर्थ्यात् । 'स्वाध्यायोऽध्येतव्य'इति विधिविषयत्वोक्त्यैवा-ध्ययनस्य वेदविषयकत्वसिद्धेः । सविशेषणनिर्देशस्य चायमभिप्रायः 'षडङ्गो वेदोऽध्येयः' । 'वेदाङ्गानि समस्तानि कृष्णपक्षेषु सम्पठे'दित्यादिस्मृतिभिः साङ्गवेदाध्ययनं विधीयत इति व्याकरणादिरूपाङ्गाध्ययनविधानान्यथानुपपत्त्या वेदाध्ययनस्यार्थज्ञानं फलमिति सिद्ध्यति । अकिञ्चित्करस्याङ्गत्वायोगात् स्वरवर्णादिनिर्णायकशीक्षादिवत्प्रकृतिप्रत्ययविभागादिभिरर्था-वधारणोपायभूतस्य व्याकरणादेर्वेदाध्ययनस्वरूपोपकारकत्वासम्भवेन फलोपकारकत्वस्य वक्त-व्यत्वादर्थज्ञानादन्यत्र फले तस्य प्रकृतिप्रत्ययविभागादिदृष्टद्वारेणोपकारकत्वासम्भवात् दृ-ष्टस्य व्याकरणादिफलस्य द्वारत्वसम्भवे अदृष्टद्वारकल्पनायोगाच्च । ननु, 'षडङ्गो वेदोऽध्येय' इत्यादिस्मृतिषु व्याकरणादेरध्ययनमात्रं विधीयते न तु तदर्थावगमपर्यन्तमध्ययनम् । अतो न दृष्टद्वारलाभ इति चेन्न । प्रकृतिप्रत्ययविभागादिज्ञानफलकस्य व्याकरणादेरङ्गत्वान्यथा-नुपपत्त्यैव तदध्ययनस्यार्थज्ञानपर्यन्तत्वसिद्धेः । अन्यथा तस्यादृष्टार्थाङ्गत्वप्रसङ्गात् । एवं चाङ्गाध्ययनस्यार्थज्ञानपर्यन्तत्वात्तन्न्यायेनापि वेदाध्ययनस्यार्थज्ञानपर्यन्तत्वसिद्धिरिति । एव-मर्थज्ञानफलकतया स्वाधिकारेण स्वविधिनैवाध्ययनस्य प्रयुक्तिर्नाध्यापनविधिनेति तस्य पूर्ववृत्तत्वमुपपद्यत इत्याह—ब्रह्मविचारात्पूर्वभावित्वं युक्तमिति । कथमध्यापनविधि-प्रयुक्तत्वे तस्य पूर्ववृत्तत्वानुपपत्तिरिति चेदुच्यते । अध्यापनविधिप्रयुक्तत्वेऽन्यतो लब्धानुष्ठा-ने तस्मिन्नर्थज्ञानकामोऽधिकारी न कल्पनीयः । विश्वजिदादिष्वनुष्ठानार्थमेवाधिकारिकल्प-नात् विधीनामधिकारिपर्यवसायित्वनियमस्याप्रामाणिकत्वात् । अन्यथा काम्यविधीनां फ-लपर्यन्तत्वदर्शनमात्रेण निषेधनैमित्तिकविध्योरपि तत्कल्पनाप्रसङ्गात् । एवं चाध्ययनविधेरर्थ-ज्ञानपर्यन्तत्वाभावेन विचाराभावे वितुषीभावपर्यन्तस्यावहननविधेरावृत्त्यभाव इवानुपपत्त्य-भावाद्विचारोऽपि न विध्याक्षिप्तः स्यात् । नन्वध्ययनविध्यनाक्षिप्तोऽपि विचारः क्रतुविधि-भिरनुष्ठेयार्थज्ञानमपेक्षमाणैराक्षिप्तः स्यादिति चेन्मैवम् । तत्तत्क्रतुविधयो हि तत्तत्क्रत्वनुष्ठा-नकाले व्रीहियवपश्वाज्यादिकमिवानुष्ठेयार्थज्ञानमपि तत्तत्क्रतुमात्रोपयुक्तमपेक्षन्ते न तु स्वा-ध्यायग्रहणानन्तरमेव कृत्स्नस्वाध्यायार्थज्ञानमपेक्षन्ते । तत्तत्क्रत्वनुष्ठानकाले तत्तन्मात्रोपयो-ग्यर्थज्ञानं तूपदेष्टृवचनादिभिरपि सम्भवतीति न नियमेन विचाराक्षेपः सिद्ध्येत् । नन्वध्यय-नविधेरर्थज्ञानपर्यन्तत्वाङ्गीकारेऽपि वेदव्याख्यानेन पित्रादिवचनेन वा न्यायविचारं विना-प्यस्य वाक्यस्यायमर्थ इति न्यायसिद्धार्थकथनरूपेण स्वाध्यायार्थज्ञानं सिद्ध्यतीति नियमेन विचाराक्षेपो न सिद्ध्यतीति तुल्यमिति चेन्न । शब्दानामानन्त्याद्व्याकरणं विना सिद्धरूपप्र-दर्शनेन सकलसाधुशब्दज्ञानस्येव वेदवाक्यानामानन्त्येन न्यायविचारं विना प्रतिवाक्यमर्थ-प्रदर्शनेन सकलवेदार्थज्ञानस्य सम्पादयितुमशक्यत्वात् । तुल्यरूपेषु हि वाक्येषु न्यायसि-द्धा परस्परभिन्नार्थव्यवस्था तुल्यरूपेषु शब्देषु षत्वणत्वतदभावादिव्यवस्था षत्वणत्वादिज्ञा-

पकं विनेव न्यायविचारं विना समनःप्रत्ययं ग्रहीतुमसङ्करेण धारयितुं चाशक्या। तथाहि-कथमुद्भिदादिशब्दवैलक्षण्येनार्थान्तररूढत्वाविशेषेऽपि 'श्येनेनाभिचरन्यजेत' 'पञ्चदशान्याज्यानी'त्यादिषु श्येनाज्यादिशब्दानां कर्मनामत्वं 'दध्ना जुहोति' 'पयसा जुहोती'त्यादिषु दध्यादिशब्दानां न कर्मनामत्वम्। कथं च कर्मनामत्वेऽपि राजसूयेन स्वाराज्यकामो यजेत 'अग्निहोत्रं जुहुयात् स्वर्गकाम'इत्यादिषु राजसूयाग्निहोत्रादिशब्दानां सन्निहितसकलयागहोमनामत्वं 'ज्योतिष्टोमेन स्वर्गकामो यजेत''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिश्रुतिषु ज्योतिष्टोमदर्शपूर्णमासादिशब्दानां सन्निहितयागेषु कतिपययागनामत्वम्। कथं च 'मासमग्निहोत्रं जुहोति''वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती'त्यादिषु अग्निहोत्रावभृथादिशब्दानामन्यत्र किञ्चित्कर्मनामत्वेन सिद्धानां कुण्डपायिनामयनवरुणप्रघासादिप्रकरणान्तर्गतानां कर्मान्तरनामत्वम्। 'आज्यभागौ यजति''यज्ञायैव स्रुवेणाघारमाघारयती' त्यादिष्वाघाराज्यभागादिशब्दानामन्यत्र किञ्चित्कर्मनामत्वेन सिद्धानां गृहमेधीयोपसदादिप्रकरणान्तरगतत्वेऽपि प्रसिद्धकर्मपरामर्शित्वम्। कथं च कर्म (कर्तृ)बहुत्वश्रवणाविशेषेऽपि 'द्वादशाहमृद्धिकामा उपेयुः सत्रमासीर'न्नित्यादिषु विहितानां सत्राणामनेककर्तृकत्वं 'सत्रादुदवसाय पृष्ठशमनीयेन सहस्रदक्षिणेन यजेर'न्निति विहितस्य पृष्ठशमनीयस्यैककर्तृकत्वम्। कथं च मन्त्रार्थवादयोः पारार्थ्याविशेषेऽपि मन्त्रोक्तं फलमङ्गेष्वन्वेति नार्थवादोक्तम्। कथं च मन्त्रोक्तत्वाविशेषेऽपि सूक्तवाकादिमन्त्रोक्तमायुरादिफलं विवक्षितं न त्विडोपाह्वानादिमन्त्रोक्तं यज्ञपतिवृद्ध्यादिकम्। कथं च 'व्रीहीन्प्रोक्षति''व्रीहीनवहन्ती'त्यादिषु विहितानां व्रीहिधर्माणां पुरोडाशसाधनत्वाविशेषाद्यवसाधारण्यं 'रथन्तरे प्रस्तूयमाने सम्मीलये'दित्यादिषु विहितानां रथन्तरधर्माणां पृष्ठस्तोत्रसाधनत्वाविशेषेऽपि न बृहत्साधारण्यम्। कथं च 'तान्पर्यग्निकृतानुत्सृजति''ब्रह्मसाम्न्याऽऽलभत'इत्यत्र वाजपेयगतप्राजापत्यपशूना'मीशानाय परस्वत आलभते तान्पर्यग्निकृतानुत्सृजती'त्यत्रैव तदन्ताङ्गरीतिविधानं न भवति किंत्वालम्भोत्कर्षविधानार्थप्राप्ततात्कालिकपाशुकव्यापारोपरमानुवादमात्रमुत्सृजति। पञ्चशारदीये तु चतुर्षु संवत्सरेषु सप्तदशानामुक्ष्णामुत्सृजति तदन्ताङ्गिरीतिविधानमेव न तु पञ्चमसंवत्सरकर्तव्यालम्भोत्कर्षार्थप्राप्ततात्कालिकतद्व्यापारोपरम इति। कथं च 'विज्ञानमानन्दं ब्रह्मे' त्यादिश्रुत्युक्ताभेदः[1] तात्विकस्वरूपाभेदः'न तु सर्वं खल्विदं ब्रह्मे'त्यादिश्रुत्युक्त इत्यादिसन्देहपरम्परामुत्तीर्य उपदेशमात्रलब्धमेतादृशमर्थं कश्श्रद्दधीत। श्रद्दधानो वा हृद्यसंकरेण को धारयेत्। अपि च केषां चिद्वाक्यानां तात्पर्याविषय एवार्थः स्वारस्येन प्रतीयते। तात्पर्यविषयस्त्वर्थः उपदिष्टोऽपि न हृदयमधिरोहति। यथा 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय श्रिते चरु'मित्यत्र 'त्रेधा तण्डुलान्विभजे'दिति वाक्यस्य करिष्यमाणपुरोडाशचरुद्वयसौकर्याय दार्शिकाग्नेययागार्थतण्डुलानां मध्यमस्थविष्ठाणिष्ठभावेन त्रेधा विभागोऽर्थ इति स्वारस्येन प्रतीयते। मध्यमादिवाक्यानां[2] च 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा

---

(१) 'कथं चन 'विज्ञानमानन्दं ब्रह्मे'त्यादि श्रुत्युक्ताभेदः न तु 'सर्वं खल्विद' मिति ख. ग. पाठः। (२) 'दधिश्रितवाक्ययोश्च' 'यः पशुकामः' इति घ. पाठः।

वत्सानपाकुर्याद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय श्रिते चरु'मिति काम्येष्टिविशेषविधानान्तर्गतवाक्यानामिव तत्तद्द्रव्यदेवताविशेषविशिष्टयागविधिरर्थः प्रतीयते। 'त्रेधा तण्डुला'निति वाक्यस्य दार्शिकहविषां सर्वेषामग्न्यादिभ्यः पूर्वदेवताभ्योऽपनयोऽर्थः। अपनीतपूर्वदेवतानां तण्डुलदधिश्रितरूपाणां दार्शिकहविषां देवतान्तरसंयोजनेन प्रक्रान्तस्य दर्शस्यैव कालापराधनिमित्तकप्रयोगान्तरविधिरर्थः न तु तन्निमित्तकर्मान्तरविधिरर्थ इति न्यायसिद्धार्थस्तु शतवारमुपदिष्टोऽपि न्यायोपन्यासं विना न हृदयमधिरोहति। तथा 'त्वाष्ट्रं पात्नीवतमालभेते,ति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजत्याज्येन शेषं संस्थापयती'ति श्रवणस्य पशोः पर्यग्निकरणान्तमङ्गकलापं कृत्वा पशुं विसृज्य पशुद्रव्यकतयोपक्रान्तस्य यागस्याज्येन समापनं कर्तव्यमित्यर्थः स्वारस्येन प्रतीयते। अमुमेवार्थमवलम्ब्य कल्पसूत्रप्रवृत्तिरपि दृश्यते। 'पर्यग्निकृतमुत्सृज्याज्येन शेषं संस्थापयति यावन्ति पशोरवदानानि स्युस्तावन्त्याज्यस्यावद्येत्पशुधर्माज्यं भवती'ति। वस्तुतस्तु कल्पसूत्रकारगृहीतोऽपि नायमस्य वाक्यस्यार्थः। यदि हि 'पर्यग्निकृतं पत्नीवतमुत्सृजती' त्यनेन पर्यग्निकरणानन्तरं पशोर्देवतोद्देशेन त्यागो विधीयते तदा मुख्येन पशुनैव यागस्य निर्वृत्तत्वात् न तत्प्रतिनिधिनाज्येन शेषसमापनापेक्षा। यदि तु तेन पर्यग्निकरणानन्तरं पशोस्तूष्णीमेव विसर्जनं विधीयते तदा पशोर्देवतासम्बन्धो न कृत इति' त्वाष्ट्रं पात्नीवतमालभेते'त्यत्राश्रुतस्य यागस्यानुमापकं द्रव्यदेवतासम्बन्धरूपं लिङ्गं प्रामाणिकमिति याग एव तेनानुमितः स्यात् कस्य शेषसमापनापेक्षा। तस्मात्पर्यग्निकृतवाक्यस्य पर्यग्निकरणान्ताङ्गरीत्या पशुयागस्य समापनमर्थः। 'आज्येन शेषं संस्थापयती'ति वाक्यस्याज्यद्रव्यकयागान्तरविधिरर्थः। पूर्ववाक्यस्थितपात्नीवतपदानुवृत्त्या तस्य तृतीयाविभक्तिपरिग्रहेण च देवतालाभः। पत्नीवद्देवत्यं पशुं प्रक्षेपेण विनोत्सृज्य तद्दैवत्याज्ययागस्तदनन्तरमेव प्रक्षेपपर्यन्तं क्रियमाणः प्रक्रान्तस्य पशुयागस्य शेषसमापनमिव भवतीति शेषसंस्थाशब्दौ गौणौ। एवमयमस्य न्यायसिद्धोऽर्थः 'सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां दूरादेव विवर्जितास्सुरभयः स्रग्गन्धधूपादयः। कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना सत्यं त्वद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दिशः'॥ इति श्लोकस्य सुभ्रूदयितापदप्रसिद्धस्वारस्यात्कोपप्रसादविरहपदमुख्यार्थलाभस्वारस्याच्च कामिकृतकामिनीप्रसादनव्यापारार्थतया प्रतीयमानस्य नयनरोगार्तकृतनयनोद्देश्यकाक्रोशार्थो वक्तृविवक्षाधिगमं विनेव न्यायानुसन्धानं विना न हृदयमधिरोहति। परब्रह्मपरवेदान्तभागार्थस्तु नानाविधार्थप्रतीतेस्तत्तदनुसारिवादिविप्रतिपत्तिबाहुल्याच्च न्यायविचारं विना कथमपि हृदयं नाधिरोहत्येव। एवमध्ययनविधेः स्वविषयानुष्ठापकत्वेनार्थज्ञानपर्यन्तत्वाङ्गीकारे तस्य विचाराक्षेपकत्वं सिद्ध्यतीति न तदसिद्धिशङ्कावकाशः। नन्वध्ययनस्याध्यापनविधिप्रयुक्तत्वाङ्गीकारे तत्रार्थज्ञानकामस्याधिकारिणोऽ कल्पनीयत्वेनाध्ययनानन्तरमेव कृत्स्नस्वाध्यायार्थज्ञानार्थं न्यायविचारप्राप्तावपि क्रत्वनुष्ठानप्रकाराणामुपदेष्टृवचनादिभिरवगमसम्भवेऽपि मन्त्रवत्स्वनुष्ठेयेषु मन्त्रैरेवानुष्ठेयार्थज्ञानस्यापेक्षितत्वात् तदर्थं मन्त्राणामर्थज्ञानाय विचारापेक्षा स्यात्। न्यायनिर्णेयार्थानां मन्त्राणां विचारं विनार्थनिर्णयासम्भवादिति

(१) विधानान्तर्गतदधिश्रयवाक्ययोरिव दधिश्रिताधारकचरुद्रव्यकदेवताविशेष इति घ. पाठः।

धर्मवद्ब्रह्मणोऽपि वेदैकसिद्धत्वादनधीतवेदस्य

चेदुच्यते । मान्त्रवर्णिकद्रव्यदेवताफलाद्यूहानूहनिर्णयादिभिरनुष्ठानप्रकारावगत्यर्थं मन्त्रार्थनिर्णायकन्यायविचारापेक्षायामपि मन्त्रैरनुष्ठेयार्थस्मरणसिद्ध्यर्थं न तदपेक्षास्ति । निरुक्तव्याकरणादिभिः यथाश्रुतमन्त्रार्थावगमे सति यत्रानुष्ठेयप्रकाशकं पदमस्ति तत्र तेन तत्स्मरणं[1] कार्यम् । तद्विशेषणानां 'दर्भैस्तृणीत हरितै'रित्यादाविव समवेतार्थत्वे तद्विशिष्टस्मरणं दृष्टार्थम् । 'अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या'मित्यादाविवासमवेतार्थत्वे तद्विशिष्टस्मरणमदृष्टार्थम् । यत्र त्वनुष्ठेयार्थवाचकं पदं नास्ति तत्र श्रुतपदस्यैव वृत्त्यन्तरं कल्पनीयम् । यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इतिगार्हपत्योपस्थाने विनियुक्ते 'निवेशनस्सङ्गमनो वसूना'मिति मन्त्रे श्रुतस्येन्द्रपदस्य गार्हपत्ये । यत्र त्वनुष्ठेयार्थे वृत्त्यन्तरस्यापि योग्यं पदं नास्ति तत्र तद्वाचकस्य पदस्याध्याहारः । यथा 'इषे त्वे'ति मन्त्रे'छिनद्मी'ति पदस्येत्याद्युपदेष्टृवचनेनैव मन्त्रैरनुष्ठेयार्थस्मरणसिद्धेः तत्र अनाश्वसनीयस्य विचारनिवर्तनीयशङ्कास्पदस्य कस्यचिदर्थस्याभावात् । तस्मादध्ययनस्याध्यापनविधिप्रयुक्तत्वे तस्य विचारात्पूर्ववृत्तत्वं नोपपद्यत इति तदुपपत्त्यर्थं तस्य स्वविधिप्रयुक्तत्वसमर्थनं युक्तमेव । ननु 'कार्यलिङ्गानुमानेनाप्यवगन्तुं शक्यस्य ब्रह्मणो वेदैकगम्यत्वाभावात्तद्विचारे[2] वेदाध्ययनं नियमेन पूर्ववृत्तं वक्तुमयुक्तमित्याशङ्क्याह-धर्मवदिति । कार्यलिङ्गेन कर्तृमात्रसिद्धिसम्भवेऽपि विवक्षितानन्तमङ्गल्यगुणशालिनो नीलकण्ठत्वादियुक्तविग्रहविशिष्टस्य ब्रह्मणः सिद्धिस्ततो न सम्भवतीति वेदैकगम्यमेव तथाभूतं ब्रह्म यथा प्राणिनां भोगवैचित्र्येण विचित्रकारणानुमानसम्भवेऽपि यागदानादिरूपो धर्मो वेदैकगम्यः । इत्याशयः । ब्रह्मणो वेदैकगम्यत्वस्य शास्त्रयोनित्वाधिकरणे व्यवस्थापयिष्यमाणत्वेऽपि धर्मदृष्टान्तेनापि तद्व्यवस्थापनार्थमिहानुवादः । ननु, धर्मवद्ब्रह्म वेदैकगम्यमिति वदता धर्मस्यापि वेदैकगम्यत्वमभ्युपगतमिति धर्मब्रह्मविचारसाधारणकारणं वेदाध्ययनं न ब्रह्मविचारे नियमेन पूर्ववृत्तं भवेदित्याशङ्क्याह—अनधीतेति । अयमाशयः । बहुकालसाध्याध्ययनकाले निर्विचिकित्सं सन्ध्यावन्दनाद्यनुष्ठानसिद्धये प्रागेवाध्ययनात् धर्मविचारः कर्तव्यः । अवश्यं ह्यध्ययनफलस्यार्थज्ञानस्य सिद्धयेऽध्ययनात्प्रागूर्ध्वं वा धर्मविचारः कर्तव्यः । अर्थज्ञानं चानुष्ठानौपयिकतयैव पुरुषार्थो न स्वतः । तच्चेदनुष्ठानमध्ययनकालेऽप्यस्ति कुतस्तदुपयोग्यर्थज्ञानार्थं ततः प्रागेव विचारो न क्रियेत । यद्यप्यध्ययनेनैव वेदाक्षरराशिर्ग्राह्यः । तेनैव तदर्थज्ञानं भावनीयमित्यस्ति नियमः । तथापि सन्ध्यावन्दनाद्यपेक्षितमन्त्रग्रहणमिव तदनुष्ठानोपयुक्तविचारसाध्यमर्थज्ञानं विचारापेक्षितविषयवाक्यग्रहणं च विनाप्यध्ययनं भविष्यति । वेदपाठक्रमवताऽध्ययनेनैव वेदाक्षरराशिर्ग्राह्य इति नियमस्तूपनयनसन्ध्यावन्दनाद्युपयुक्तमन्त्रेभ्य इव विचारापेक्षितविषयवाक्येभ्योऽन्यत्र व्यवतिष्ठते । अध्ययनेनैवार्थज्ञानं भावनीयमिति नियमोऽपि न्यायविचारार्थमधिकरणेषु लिखितेभ्यो विषयवाक्येभ्यस्सन्ध्यावन्दनाद्युपयुक्तवाक्येभ्यश्चान्यानि यानि तत्तदधिकरणव्युत्पादितन्यायसाम्येन ज्ञातव्यार्थानि क्रमाध्ययनेन ग्राह्याणि गृहस्थकर्तव्याग्निहोत्राद्युपयुक्तानि तदर्थज्ञानविषयतया व्यवतिष्ठते । तदेवं धर्मविचारोऽध्ययनात्प्रागेव कर्तव्यः । ब्रह्मविचारस्त्वनधीतवेदेन न कर्तव्यः । तस्याध्ययनकाले अवश्यकर्तव्येष्वनपेक्षितत्वेन नियमविध्युल्लङ्घने कारणाभावादिति ।

(१) 'तत्स्मरणमपि' इति ङ. पाठः । (२) 'त्तद्विचारेण' इति घ. पाठः ।

**तद्विचारानुपपत्तेः । ततः केवलाध्ययनानन्तरं ब्रह्मविचार इति चेत् । भवतु नाम तादृशमध्ययनम् । तदनन्तरं तु धर्मविचारः । तस्य तदसिद्धौ सिद्ध्यभावात् । तथा**

---

तस्मादध्ययनानन्तर्यं ब्रह्मविचारस्य युक्तमित्युपसंहरति—तत इति । कर्मावबोधशिरस्का-ध्ययनानन्तर्यं सिद्धान्तयिष्यत इति ततो वैलक्षण्याय केवलाध्ययनानन्तरमिति विशेषितम् । यदुक्तमध्ययनमुपनयनाङ्गकमर्थज्ञानफलकं स्वविधिप्रयुक्तमिति तत्तथैव । तदनन्तरं ब्रह्मविचार इति तु न सम्भवति तदानीं धर्मविचारस्यैव प्राप्तेरिति परिहरति—भवतु नामेति । नन्वध्ययनात्प्रागपि धर्मविचारः सम्भवतीत्याशङ्क्याह—तस्य तदसिद्धौ सिद्ध्यभावादिति । अत्रायमाशयः । विचारकाले सन्ध्यावन्दनाद्यनुष्ठानं हितैषिवचनादेवोपपादनीयमित्यध्ययनकालेऽपि तथैव तदनुष्ठानस्योपपादयितुं शक्यत्वान्न नियमविध्युल्लङ्घने कारणमस्ति । किंच वसन्तोपनीतेन ब्राह्मणेन श्रावण्यां प्रोष्ठपद्यां वोपाकृत्याध्ययनं कर्तव्यम् । न चैतावन्मध्य एव विध्यन्तरसाध्यपदपदार्थावधारणवाक्ययोजनाभेदव्युत्पत्तिपूर्वकः कृत्स्नस्वाध्यायार्थनिर्णयोपयोगिन्यायविचारो धीशक्तियुक्तेनापि कर्तुं शक्यते । किं च वैदिकपदपदार्थावधारणं व्याकरणादिनैव कर्तव्यम् । अन्यथा तस्य तदङ्गत्वानिर्वाहात् । दृष्टद्वारे सम्भवति द्वारान्तरकल्पनाऽयोगात् । तदध्ययनं तु वेदाध्ययनोपक्रमानन्तरं कृष्णपक्षेषु कर्तव्यमिति कथं ततः प्राग्वैदिकपदपदार्थाद्यवधारणाद्यपेक्षस्य[1] न्यायविचारस्य सम्भवः । तस्मादुपनीतस्य धर्माधर्मौ महाफलौ ज्ञातव्याविति हितैषितः श्रुत्वा तज्ज्ञानमिच्छतः स्वाध्यायविधिना तादर्थ्येन[2] विहितमध्ययनं तेभ्य एवावगत्य वैधे साङ्गवेदाध्ययने प्रवृत्तस्य वेदाध्ययनेन तद्ग्रहणे तदङ्गाध्ययनेन पदपदार्थाद्यवधारणे च सति किमेवमस्य वाक्यस्यार्थः किंवान्यथेति सम्भावितयोजनाविशेषेषु सन्दिहानस्य तत्तद्वाक्यार्थविशेषजिज्ञासयाध्ययनानन्तरमेव धर्मविचारेऽपि प्रवृत्तिरिति । अनेनैवाभिप्रायेण भगवता जैमिनिना सूत्रितमित्याह—तथा चेति । तत्राथशब्दस्य वेदाध्ययनानन्तर्यमर्थ इति वक्तुं न शक्यते । धर्मब्रह्मविचारसाधारणकारणस्य तस्य प्रथमं धर्मविचारप्रवर्तने विशेषपक्षपातप्रवृत्त्यभावात् । प्रयुक्तस्याथशब्दस्यार्थेन भाव्यमिति चेत् शिष्यप्रश्नानन्तर्यमर्थोऽस्तु । 'अथातो धर्मं व्याख्यास्याम' इति कणादसूत्रगताथशब्दवत् । स हि तदर्थतयैव तद्भाष्यकारादिभिर्व्याख्यातः । इहापि मीमांसाशास्त्रे गुरुशिष्यपरम्परामविच्छेदेनानुवर्तमानामाहुः साम्प्रदायिकाः । महेश्वरः प्रजापतये मीमांसां प्रोवाच प्रजापतिरिन्द्रायेन्द्र आदित्यायेत्यादिनेत्याशङ्क्याथशब्दस्य सूत्रकृद्विवक्षितमर्थं प्रदर्शयन् ब्रह्मविचारप्राथम्यशङ्कां प्रतिक्षिपति—प्रथमत इति । अयमाशयः । सूत्रकारव्यवहारसामर्थ्याद्यत्[3] पूर्ववृत्तमवगन्तुं शक्यं तदानन्तर्यमथशब्देन विवक्षितमिति व्याख्यातुमुचितम् । निर्युक्तिकोपदेशमात्रगम्यव्यापारानन्तर्यं विवक्षितमिति व्याख्यानं तु सूत्रकारस्यैव कौशलाविष्करणम् । न चात्र शिष्यप्रश्नः पूर्ववृत्तोऽस्तीत्यत्र ज्ञापकः कश्चिदुत्तरत्र सूत्रकारव्यवहारोऽस्ति । अस्ति तु वेदाध्ययनं पूर्ववृत्तमित्यत्र ज्ञापकस्तद्व्यवहारः । स हि धर्मविचारं प्रतिज्ञाय विचार्ये धर्मे वेदमेव प्रमाणमाह—चोदनालक्षणोऽर्थो धर्म इति । ( जै०—१—१—२— ) अत्र प्र-

---

(१) 'पदपदार्थावधारणाद्यपेक्षस्य' इति ङ. पाठः । (२) 'तदर्थेन' इति ख. ग. पाठः । (३) 'यत्पूर्वं' इति ङ. पाठः ।

**चाचार्यैः प्रतिपादितम् 'अथातो धर्मजिज्ञासे'ति। प्रथमत उपाध्यायादध्ययनानन्तरं धर्मविचारप्राप्तिरिति। तर्हि किमनन्तरमस्यारम्भः। धर्मविचारानन्तरम्। कथम्। न वयं धर्मब्रह्मविचाररूपयोश्शास्त्रयोरत्यन्तभेदवादिनः। किं त्वेकत्ववादिनः। धर्मब्रह्मणोराराधनाराध्यभूतयोःप्रतिपादकम् 'अथातो धर्मजिज्ञासे'त्यारभ्य 'अनावृत्तिश्शब्दा' दित्येतावत्पर्यन्तमेकमेव शास्त्रम्। तत्र 'अथातश्शेषलक्षण'-मित्या-**

---

तिज्ञायमानो धर्मविचारो वेदार्थविचारात्मक इति स एव स्वकारणत्वेनाध्ययनस्य पूर्ववृत्तस्य ज्ञापकः। यद्यपि ब्रह्मविचारसाधारणमिदं कारणं तथापि विरक्ताविरक्तसाधारण्येन सर्वेषामप्यावश्यकं कर्मानुष्ठानमिति तदपेक्षितो धर्मविचार एव प्रथमं प्राप्नोति। न हि वेदाध्ययनात्पूर्वं धर्मविचारे नियमविध्युल्लङ्घनदोष इव तदनन्तरमपि धर्मविचारे कश्चित्प्रतिबन्धकोऽस्तीति। ननु, ब्रह्मविचारे नियतसामग्रीरूपं किञ्चित्पूर्ववृत्तमपेक्ष्य तदानन्तर्यमथशब्दार्थतया परिग्राह्यमित्युक्तम्। अध्ययनं तावन्न तथाभूतं पूर्ववृत्तमित्युक्तम्। किं तर्हि तद्यदनन्तरमस्यारम्भः। तन्नोच्यते चेत्प्रतिज्ञातं तदानन्तर्यार्थत्वमथशब्दस्य हीयेत। अगत्या तस्य शिष्यप्रश्नानन्तर्यार्थत्वमधिकाराद्यर्थत्वं वा परिग्राह्यं स्यादिति पृच्छति—**तर्हीति**। उत्तरमाह—**धर्मविचारानन्तरमिति**। ननु, धर्मविचारानन्तरं ब्रह्मविचार इत्ययुक्तं धर्मब्रह्मविचारयोः पौर्वापर्यहेतुसम्बन्धाभावादिति पृच्छति—**कथमिति**। धर्मब्रह्मविचारयोर्वेदरूपैकग्रन्थव्याख्यानत्वेनैकशास्त्रत्वात् व्याख्येये वेदे धर्मब्रह्मभागयोः पौर्वापर्यमेव तत्पौर्वापर्यहेतुसम्बन्ध इत्यभिप्रेत्योत्तरमाह—**न वयमिति**। विचारशास्त्रयोर्धर्मविचारशास्त्रे पूर्वापरषट्कयोरिवावान्तरविषयभेदेन किञ्चिद्भेदानुमित्यर्थमत्यन्तग्रहणम्। नन्वर्थैक्येनैकशास्त्र्यं वक्तव्यं तदत्र न सम्भवति। धर्मब्रह्मणोर्भेदादित्याशङ्क्याह—**धर्मब्रह्मणोरिति**। धर्मप्रतिपादकस्यापि वेदभागस्य तत्समाराध्ये ब्रह्मण्येव महातात्पर्यम्। अत एव 'सर्वे वेदा यत्पदमामनन्ती'ति ब्रह्मणः सर्ववेदप्रतिपाद्यत्वं श्रूयते। ततश्च तद्व्याख्यानरूपयोर्विचारशास्त्रयोरपि व्याख्येयमहातात्पर्यविषयैकार्थपर्यवसायित्वाद्युक्तमैकशास्त्र्यं कर्तृभेदेऽपि वामनजयादित्यवृत्त्योस्तद्दर्शनाद्ब्रह्मविचारशास्त्रे 'परं जैमिनिर्मुख्यत्वा'( ब्र०-४-३-१२-सू. )दित्यादिषु जैमिनेः पूर्वपक्षित्वेऽपि तत्र पूर्वपक्षितार्थानां तत्प्रणीते धर्मविचारशास्त्रे निवेशनाभावेन तदेकग्रन्थतया ब्रह्मविचारशास्त्रविरचनोपपत्तेः। मतान्तरस्थकृतत्वेऽप्युपादानस्यापि वामनजयादित्यवृत्त्योरिव दर्शनादिति भावः। ननु, धर्मब्रह्मविचारयोर्ब्रह्मैकपर्यवसायित्वेनैकशास्त्र्ये मध्ये कोऽय 'मथातो ब्रह्मजिज्ञासे'त्यारम्भः। न च वाच्यं विचारद्वयसाधारणीयं प्रतिज्ञा। धर्मविचारस्तु ब्रह्मज्ञानसाधनविशेषविषयतया ब्रह्मविचारमध्य एव साधनाध्याये कर्तव्योऽपि बहुवक्तव्यसद्भावात् पृथक्कृत्य प्रपञ्चित इति। तथा सत्यथशब्दस्य धर्मावबोधानन्तर्यार्थत्वानुपपत्तेः। न हि धर्मविचारेण धर्ममवबुध्य तदनन्तरं धर्मब्रह्मविचारानुगतो ब्रह्मविचारः कर्तव्य इति प्रतिज्ञा सङ्गच्छत इत्याशङ्क्याह—**तत्राथात इति**। यथा धर्मविचारशास्त्र एव प्रथमाध्यायद्वयेन कृतं वेदप्रामाण्यकर्मभेदप्रामाण्यसाधनमुपजीव्य 'अथातः शेषलक्षण'मिति तृतीयाध्यायारम्भगतसूत्रेणावशिष्टदशाध्यायीकर्तव्यविचारारम्भप्रतिज्ञा क्रियते। 'द्विलक्षिण्याः परं शिष्टं यावत्किञ्चन

---

(१) 'वेदप्रामाण्यं कर्मभेदप्रसाधन' मिति क. ख. ग. ङ. पाठः। (२) 'कृता' इति घ. पाठः।

लक्षणम्। तत्सर्वं वक्तुमारब्धमथातश्शेषलक्षणम्॥' इति वार्तिकोक्तेः। तथा पूर्वतन्त्रेण कृतं धर्मविचारमुपजीव्य 'अथातो ब्रह्मजिज्ञासे'ति(ब्र०-१-१-१-)सूत्रेणोत्तरचतुरध्यायीकर्तव्यविचारप्रतिज्ञा क्रियत इत्यर्थः। अत्रायमाशयः। ब्रह्मजिज्ञासासूत्रे धर्मब्रह्मविचारानुगतो ब्रह्मविचारो न प्रतिज्ञायते। किं त्वविदितब्रह्मणामपि यदनुष्ठानाच्छास्त्रोक्तं किञ्चित्फलं सिध्यति तद्धर्माख्यं विषयमग्निहोत्रादिकं 'यो वा एतदक्षरं गार्ग्य विदित्वा अस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवती'त्यन्तवत्स्वर्गादिफलसाधनत्वेन श्रुतं परित्यज्य ज्ञानवैराग्यादिसाधनेन मोक्षफलेन च सहितस्य ब्रह्मणो विचारः प्रतिज्ञायते। अतोऽल्पास्थिरफलाग्निहोत्रादिधर्मावबोधानन्तरं विवेकवैराग्यादिसम्पन्नेनानन्तस्थिरफलब्रह्मावबोधसिद्धये तद्विचारः कर्तव्यइति प्रतिज्ञा युज्यत एव। यद्यपि पूर्वतन्त्रारम्भे द्विलक्षणीदशलक्षणीसाधारणधर्मविचारप्रतिज्ञावत् धर्मब्रह्मविचारोभयानुगतब्रह्मविचारप्रतिज्ञा न दृश्यते। न च 'अथातो धर्मजिज्ञासे'त्यनेनैव सूत्रेण सापि प्रतिज्ञा लभ्यते। धर्मशब्दस्यालौकिकश्रेयःसाधनसामान्यवाचिनः सिद्धसाध्यसाधारणस्य साध्यरूपाग्निहोत्रादिपरत्ववत्सिद्धरूपब्रह्मपरत्वस्याप्युपपत्तेरिति वाच्यम्। साध्यधर्मविचारमात्रे प्रवृत्तेन जैमिनिना प्रणीतस्य सूत्रस्य तथा व्याख्यानाऽयोगात्। न हि जैमिनेर्ब्रह्मविचारोऽपि कर्तव्य इत्यभिसन्धिरस्ति। तथात्वे ब्रह्मसूत्राणामपि तेनैव प्रणेतव्यत्वापत्तेः। यः खलु जैमिनिस्साध्यधर्मविचारार्थं द्वादशाध्यायीं प्रणीय तत्राविचारितोऽपि कियानंशोऽस्तीत्यालोच्य तद्विचारार्थं पुनस्सङ्कर्षणाख्यां चतुरध्यायीं प्रणिनाय। स कथं ब्रह्मविचारोऽपि कर्तव्य इत्यभिसन्धिसद्भावे तदर्थान्यपि सूत्राणि न प्रणयेत्। भगवान्बादरायणस्तु जैमिनिना कृतं साध्यधर्ममात्रविचारात्मकं शास्त्रं दृष्ट्वा तद्ब्रह्मपर्यन्तं वक्तृतात्पर्याभावेऽपि वस्तुतः सर्वकर्माराध्ये तस्मिन्नविरोधात्पर्यवसातुमर्हतीत्यालोच्य तदैकशास्त्र्येण तत्संहितमेवा'थातो ब्रह्मजिज्ञासे'त्यादिसूत्रसन्दर्भं प्रणिनायेति युज्यते। अतो जैमिनीयमाद्यसूत्रं विचारद्वयानुगतब्रह्मविचारप्रतिज्ञार्थं न भवत्येव तथापि विचारद्वयासाधारणप्रतिज्ञाद्वये कृते तदुभयानुगतसाधारणार्थकप्रतिज्ञार्थोलभ्यत इति जैमिनिसूत्रारम्भे तदर्थस्य सूत्रस्याभावेन न किञ्चिद्वैकल्यम्। ननु, जैमिनिबादरायणप्रणीतयोर्धर्मब्रह्मविचारशास्त्रयोरैकशास्त्र्यं न संभवति परस्परविरुद्धार्थत्वात्। तथा हि—जैमिनिना तावत् 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इति (जै०-१-२-१) सूत्रेणार्थवादादीनामक्रियार्थत्वेनानर्थक्यं पूर्वपक्षीकृत्य 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु'रिति (जै०-१-२-७) सूत्रेण विध्येकवाक्यतया क्रियार्थत्वोपपादनेनैव तेषामानर्थक्यं परिहृतम्। भगवता बादरायणेन तु 'शास्त्रयोनित्वा'दिति (ब्र०-१-१-३) सूत्रेण ब्रह्मणि वेदान्तानां प्रामाण्यं प्रतिज्ञाय 'तत्तु समन्वया'दिति (ब्र०-१-१-४) सूत्रेणाक्रियारूपे ब्रह्मणि कथं तेषां प्रामाण्यमित्याशङ्कायामाम्नायस्य क्रियार्थत्वनियमं तिरस्कृत्य सर्वत्र यत्किञ्चिदुपासनाविध्यन्वितानामपि ब्रह्मप्रतिपादकवेदान्तशब्दानां ब्रह्मणि प्रामाण्यं समर्थितम्। न च वाच्यं स्वयं पुरुषार्थविरहिणां सिद्धपरवाक्या-

---

(१) 'द्वादशलक्षणी' इति घ. पाठः। (२) 'पर्यन्तं तत्र वक्तृ' इति घ. पाठः। (३) 'भावेऽपि' इति क. पाठः

नां क्रियाविशेषत्वाभिप्रायं विधिशेषतया प्रामाण्यसमर्थनम् । अतस्स्वयं पुरुषार्थपर्यवसायिनां वेदान्तानां ब्रह्मणि स्वातन्त्र्येण प्रामाण्यसमर्थनेऽपि न तद्विरुध्यत इति 'यन्न दुःखेन सम्भिन्न'मित्यादीनामिव स्वयं पुरुषार्थरूपब्रह्मबोधकानामपि वेदान्तानां धनार्थिनं प्रति महामेरुगतयथेष्टग्रहणार्हजाम्बूनदोपदेशतुल्यन्यायतापत्त्या पुरुषार्थपर्यवसायकत्वासम्भवात्।तथा जैमिनिना 'देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वा' दिति(जै०-९-१-६) सूत्रेण यथाऽतिथिपूजात्मकमातिथ्यमतिथिप्रीत्यर्थं सदतिथिप्रधानम्, एवं देवपूजात्मकं यजनमपि देवताप्रीत्यर्थं सद्देवताप्रधानं तेनैवं च प्रीता देवता फलदात्रीति पूर्वपक्षं कृत्वा 'अपि वा शब्दपूर्वत्वाद्यज्ञकर्मप्रधानं स्याद्गुणत्वेन देवताश्रुति' रिति(जै० ९-१-९) सूत्रेण न देवताप्रधानं यजनं तदेवापूर्वद्वारा फलजनकं न तु हविषा प्रीता देवता तस्यास्तु द्रव्योद्देश्यतया यागोपसर्जनत्वेनैव श्रुतिरिति सिद्धान्तमभिधाय 'अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिविधानत्वा' दिति (जै०९-१-१०) सूत्रेणातिथ्यवैषम्यं यजने दर्शितम् । आतिथ्यमतिथिप्रीतिविधानम् । यथाऽतिथिः प्रीयते तथा कर्तव्यतया विहितमिति तदतिथिप्रधानं युज्यते । कर्मणि तु नास्ति प्रीतिविधानं यथा देवता प्रीयते तथा कर्म कर्तव्यमिति । अतो न देवताप्रधानं यजनमिति । तथा 'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वा' दिति (जै०८-१-३२) सूत्रेणेन्द्रपुरोडाशेषु पुरोडाशरूपहविस्सामान्यादाग्नेययागविध्यन्तः न त्विन्द्ररूपदेवतासामान्यात् सान्नाय्ययागविध्यन्तः । हविस्त्यागरूपस्य यागकर्मणो हविष्युपलभ्यमानत्वात् । हविर्हि त्यज्यमानं दृश्यते । देवतात्वप्रत्यक्षैव परं यागोद्देश्येति प्रतिपाद्ययागस्य देवतासाधनरूपत्वात् देवतैव प्रसन्ना फलदात्री प्रधानभूतेति तत्सामान्यं हविस्सामान्यात् बलीय इति शङ्कानिराकरणार्थं सूत्रितं 'गुणत्वेन देवताश्रुति'रिति (जै०-८-१-३४ सू०) । बादरायणेन तु 'फलमत उपपत्ते'रिति (ब्र०.३.२.३८) सूत्रेण परमेश्वराराधनरूपतया सर्वं कर्म परमेश्वरप्रधानं तत्तत्कर्माराधितात्परमेश्वरादेव फलं नापूर्वव्यापारात्कर्मण इति स्वमतमुक्त्वा 'धर्मं जैमिनिरत एवे'ति (ब्र०.३.२.४०.) सूत्रेण कर्मैवापूर्वद्वारा फलदायकमिति जैमिनिमतं पूर्वपक्षं निर्दिश्य 'पूर्वं तु बादरायणो हेतुव्यपदेशा'दिति (ब्र०.३.२.४१.) सूत्रेण परमेश्वर एव सर्वकर्मफलदाता'स एवैनं भूतिं गमयती'त्यादिकर्मविधिवाक्यशेषेषु वाय्वादिरूपस्य परमेश्वरस्यैव फलहेतुत्वव्यपदेशात् क्षणविनाशिनः कर्मणः फलजनने द्वाराकाङ्क्षायां वाक्यशेषार्पितां देवताप्रीतिमपहाय द्वारान्तरकल्पनायोगादिति जैमिनिमतप्रतिक्षेपकयुक्तिप्रदर्शनेन स्वमतं निर्धारितम् । एवं परस्परविरुद्धार्थयोः कथमैकशास्त्र्यमुपपद्यते । उपपद्यतां वा कथञ्चिदैकशास्त्र्यं किमत्र तदुपपादनस्य फलम् । न हि तावता ब्रह्मविचारस्य धर्मविचारो नियतसामग्रीरूपतया पूर्ववृत्तो लभ्यते । किं तु वेदे पूर्वापरभागव्याख्यानतया तयोः पौर्वापर्यनियममात्रं लभ्यते । तावत्यर्थज्ञानपर्यन्तेनाध्ययनविधिना कृत्स्नस्वाध्यायार्थज्ञानार्थतयाक्षिप्तयोस्तयोरवश्यकर्तव्यकर्मानुष्ठानोपयोगित्वेन प्रथमं धर्मविचारः तदनन्तरं ब्रह्मविचार इत्येवमपि लभ्यते । वस्तुतस्तु, व्याख्येयपौर्वापर्येण विचार-

(१) 'पर्यवसायित्वा' इति क. घ. पाठः । (२) 'सैव च प्रीता' इति ख. ग. पाठः । (३) 'तदुपादानस्य' इति ग. घ. पाठः । (४) 'व्याख्यानभागतया' इति ख. ग. पाठः ।

दिवदवान्तरपरिच्छेदार्थोऽयम् 'अथातो ब्रह्मजिज्ञासे' त्यारम्भः । अथवा धर्मस्य ब्रह्मबोधहेतुत्वात्तद्विचारोपयुक्तानां श्रुतिलिङ्गादीनां वेदचोदनार्थवादस्मृत्यादि-

---

शास्त्रयोः पौर्वापर्यनियममात्रमपि न लभ्यते । लोके काव्यालङ्कारवैद्यकादिष्वैच्छिकक्रमेण व्याख्यानतदर्थविचारदर्शनात् आदौ मध्येऽवसाने वाऽभिमतप्रदेशमात्रे तददर्शनाच्च । नन्वध्ययनविध्याक्षिप्ततया वैधयोर्वेदार्थविचारयोः काव्याद्यर्थविचारेष्विव नैच्छिकः क्रमः प्रवर्तते । किं तु पाञ्चमिकप्रमाणलभ्य एव प्रवर्तते । 'समिधो यजति' 'तनूनपातं यजती' त्यादिषु हि पाठक्रमोऽनुष्ठानक्रमनियामकतया क्लृप्तः "क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वा" (जै० ५-१-४-सू०)दित्यधिकरणे तत्र पाठक्रमो न केवलमनुष्ठानक्रममात्रनियामकत्वेनाभिसंहितः किं त्वाकाङ्क्षितसर्वदृष्टप्रयोजनार्थत्वेन । अत एव पाठक्रम एवाध्ययनक्रमेऽपि नियामकतयाभ्युपगम्यते । एवं कर्मब्रह्मभागयोः पाठक्रमस्तद्विचारयोः क्रमेऽपि नियामक इति पाठक्रमस्तावदनयोः क्रमयोर्लभ्यते । तथा मुख्यप्रवृत्तिक्रमतोऽपि यद्यध्ययनेनार्थज्ञानं भावयेदित्यध्ययनविधिवाक्यार्थमङ्गीकृत्याध्ययनं स्वाध्यायसंस्कारद्वारा अर्थज्ञानकरणमिष्यते । यदि वा 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यती'ति वार्तिकोक्तरित्याध्ययनसंस्कृतेन स्वाध्यायेनार्थज्ञानं भावयेदिति तदर्थमङ्गीकृत्य स्वाध्यायस्तत्करणमिष्यते । उभयथापि यथा दर्शे पुरोडाशस्य दध्नश्च मुख्ययागक्रमेण प्रयाजशेषाभिघारणादिक्रमः तथा क्रमकृताध्ययनरूपस्य क्रमपठितकर्मब्रह्मभागद्वयस्वाध्यायरूपस्य वा मुख्यस्य क्रमेण द्वितीयपक्षे यथा वाजपेये प्राजापत्यानां पशूनामुपाकरणप्रवृत्तिक्रमेण नियोजनक्रमः तथाध्ययनप्रवृत्तिक्रमेण च विचारद्वयस्यापि क्रम इति चेत् स्यादेवमध्ययनविधेरर्थज्ञानपर्यन्तत्वपक्षे विचारयोर्वैधत्वान्न्यायलभ्यः क्रमादरः । भाष्यकृताग्रे दर्शयिष्यमाणे तस्याक्षरावाप्तिफलकत्वपक्षे रागप्राप्तयोस्तयोः काम्येष्टिपाठक्रमन्यायेन पाठक्रमादीनां क्रमप्रयोजकत्वाभावादैच्छिक एव क्रमः प्राप्नोति न त्वेकप्रयोगविधिपरिगृहीतप्रयाजादिन्यायलभ्यः क्रमः । तस्माद्विचारयोः पौर्वापर्यनियममात्रमपि धर्मविचारस्यावश्यककर्मानुष्ठानौपाधिकत्वेनैव समर्थनीयमिति दूरे ततो धर्मविचारस्य ब्रह्मविचारापेक्षितत्वेन तन्नियतसामग्रीत्वसिद्धिः । अथ तत्सिद्धावुपायान्तरमस्ति तर्हि तदेव प्रदर्शनीयं किमेकशास्त्र्योपपादनव्यसनेनेत्यरुचिं मनसि निधायाह—अथवेति । धर्मविचारस्य ब्रह्मविचारापेक्षितत्वे अर्थज्ञानानुष्ठानद्वारा विचारसाध्यस्य धर्मस्य ब्रह्मावबोधहेतुत्वं तावदेको हेतुः । धर्मविचारशास्त्रे धर्मनिर्णयोपयुक्ततया व्युत्पादितानां श्रुत्यादीनां तत्र कृतानां वेदप्रामाण्यादिप्रतिपादनानां च ब्रह्मविचारोपयुक्तत्वमपरो हेतुः । अत्र श्रुतिलिङ्गादीनामित्यादिशब्देन श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां शेषशेषिभावादिप्रमाणानां श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिक्रमाणां क्रमप्रमाणानां वचननामधेयचोदनालिङ्गानामतिदेशप्रमाणानामन्येषां चैवंरूपाणामेषां बलाबलव्यवस्थायाश्च ग्रहणम् । स्मृत्यादीत्यादिशब्देनाचारात्मतुष्टिप्रमाणयोः श्रुतिस्मृत्याचारतुष्टीनां बलाबलव्यवस्थायाश्च ग्रहणम् । प्रतिपादनादीनामित्यादिशब्देन द्वितीयगतकर्मभेदप्रतिपादनस्य तत्र प्रमाणभूतानां शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानां व्युत्पादनस्य भेदापवादत्वेनाभेदप्रतिपादनस्य च ग्रह-

(१) 'क्रमो लभ्यते' इति पाठान्तरम् ।

णम् । तत्र कर्मभेदप्रतिपादनादीनां गुणोपसंहारपादे विचारणीयेष्वर्थेषूपयोगः । वेदप्रामाण्यादिप्रतिपादनस्य सर्वस्मिन्नपि शास्त्रे अतिदेशप्रमाणानां 'तस्यैतस्य तदेव रूपं यदमुष्य रूप' मित्याद्यर्थविचारेषूपयोगः । क्रमप्रमाणानां वियदादिसृष्टिक्रमविचारे अर्चिरादिपर्वक्रमविचारे चोपयोगः । श्रुतिलिङ्गादीनां तु सर्वेषां वेदान्तानां ब्रह्मणि प्रामाण्यव्यवस्थापने प्रथमाध्यायकर्तव्येऽध्यायान्तरकर्तव्येष्वपि श्रुत्यर्थविचारेषु सर्वेषूपयोगः । ननु, समन्वयसूत्रे वेदान्तानामुपक्रमोपसंहारादितात्पर्यलिङ्गैर्ब्रह्मणि प्रामाण्यं प्रतिज्ञास्यते । ततश्च तदनन्तरोऽध्यायशेषः प्रपञ्चेन तत्प्रामाण्यं व्यवस्थापयन्नुपक्रमादिभिरेव तद्व्यवस्थापयतीति वक्तव्यम् । अन्यथोपक्रमादिभिः प्रामाण्यं प्रतिज्ञाय श्रुतिलिङ्गादिभिस्तत्प्रतिष्ठापने पूर्वापरविरोधापत्तेः । अतोऽस्मिञ्शास्त्रे उपक्रमादीनि तात्पर्यलिङ्गान्येव ज्ञातव्यानि न श्रुतिलिङ्गानीति चेन्न । उपक्रमाद्युन्मेषार्थमेव श्रुतिलिङ्गाद्यपेक्षणात् । न हि ब्रह्माभिधानश्रुत्यादिकमनुपलभ्य अयमुपक्रमो ब्रह्मविषय इत्याद्यवधारयितुं शक्यते । एवं तर्ह्यवश्यापेक्षितैः श्रुतिलिङ्गादिभिरेव वेदान्तानां ब्रह्मणि प्रामाण्यं प्रतिज्ञातव्यं स्यादिति चेन्न । श्रुत्यादिष्वपि प्रकरणस्योपक्रमादितात्पर्यलिङ्गाधीनात्मलाभत्वात् । साकाङ्क्षप्रधानवचनं हि प्रकरणम् । बहूनामेकसन्दर्भप्रतिपन्नानामर्थानां मध्ये कस्यचित्प्राधान्यमन्यस्याप्राधान्यं च तात्पर्यलिङ्गसदसद्भावादवसेयम् । किंच येषु वेदान्तवाक्येषु ब्रह्मतदन्यश्रुतिलिङ्गादिसमावेशः तेषां खल्वन्यपरत्वाशङ्कानिराकरणपूर्वकं ब्रह्मणि प्रामाण्यमुपपादनीयम् । तच्चान्यविषयश्रुतिलिङ्गादिजातात् ब्रह्मविषयश्रुतिलिङ्गादिकस्य बलवत्त्वेनोपपादनीयम् । बलवत्त्वं च प्रायः तात्पर्यलिङ्गैरेवोपपादयिष्यते । अतस्तात्पर्यलिङ्गान्यत्रापेक्षितान्येव । न चैवमुपक्रमादीनां श्रुतिलिङ्गादीनां च परस्परापेक्षणादन्योन्याश्रयः शङ्कनीयः । उपक्रमादीनां स्वरूपलाभार्थं श्रुतिलिङ्गाद्यपेक्षा श्रुतिलिङ्गादीनामन्यविषयश्रुतिलिङ्गादिभ्यो बलावधारणार्थमुपक्रमाद्यपेक्षेति विषयभेदेन परस्परापेक्षायां धूमवह्न्योरुत्पत्तिज्ञप्तिविषयपरस्परापेक्षायामिवान्योन्याश्रयाप्रसक्तेः । प्रकरणस्य स्वरूपलाभार्थमुपक्रमाद्यपेक्षायामप्युपक्रमादीनां स्वरूपलाभार्थं प्रकरणापेक्षत्वाभावेन तत्रापि परस्पराश्रयाप्रसक्तेश्च । यद्युपक्रमादयः श्रुतिलिङ्गादयश्च परस्परापेक्षा एव ब्रह्मणि वेदान्तानां प्रामाण्यप्रतिष्ठायां हेतवः कथं तर्हि समन्वयसूत्रे तात्पर्यलिङ्गान्येव तद्धेतुत्वेन प्रदर्शयिष्यन्ते । उच्यते । अधीतवेदानामधिगतधर्माणां ब्रह्ममीमांसायामधिकार इत्यथशब्देनात्र प्रदर्श्यते । ततश्चाध्ययनबलान्मनसि परिवर्तमानेषु वेदान्तेषु धर्ममीमांसाशास्त्रव्युत्पादितैः श्रुतिलिङ्गादिभिर्ब्रह्मपरत्वस्फुरणं स्वत एव भवतीति न तदर्थमत्र व्युत्पादनीयमस्ति किंतु ब्रह्मान्यविषयश्रुतिलिङ्गादिभिस्तत्परत्वस्फुरणमपि कोट्यन्तरत्वेन भवत् श्रुत्यादीनां परदौर्बल्यन्यायेनापि निवर्तयितुमशक्यम् । ब्रह्मविषयश्रुतिलिङ्गादीनामन्यविषयश्रुतिलिङ्गादिभ्यस्तात्पर्यलिङ्गवत्तया बलवत्त्वप्रदर्शनेन निवर्तनीयमिति तत्प्रदर्शनार्थमिदं शास्त्रं प्रवृत्तम् । न च तात्पर्यलिङ्गकृतं श्रुतिलिङ्गादीनां विपरीतं बलाबलं धर्ममीमांसाशास्त्रे चिन्तितम् । किंतु श्रुतिलिङ्गादिभिस्तत्तदर्थनिर्णयानन्तरं तेषां विरोधे सति परदौर्बल्यं बलाबलाधिकरणे व्युत्पाद्य तदनन्तरं द्वादशोपसत्ता-

(१) 'अधीतवेदांतानामधिगतधर्ममीमांसाशास्त्राणामिह ब्रह्मणि' इति घ. पाठः । (२) 'मधिगतधर्ममीमांसाशास्त्राणामिह ब्रह्म'- इति ख. ग. पाठः ।

प्रामाण्यप्रतिपादनादीनां च ब्रह्मविचारोपयुक्तत्वाच धर्मविचारानन्तरं ब्रह्मविचारः ['साधनं विना साध्यानिष्पत्तेः। ब्रह्मबोधं प्रति धर्मस्य साधनत्वे 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतिरेव भगवती प्रमाणम् । न च कर्मणो ब्रह्मबोधसाधनत्वे तदेव विचार्यमनुष्ठेयं च किमनेन वेदान्तवाक्यविचारप्रयासेनेति वाच्यम् । तस्य फलाभिसन्धिरहितस्य पापापनयनरूपचित्तशुद्धिसम्पादनद्वारा बोधहेतुत्वात् । तथा चाभियुक्तस्मृतिः 'यस्यैते चत्वारिंशत्संस्कारा' इत्यादिना 'स ब्रह्मणस्सायुज्यं

धिकरणमारभ्य तत्रतत्र विरोधसदसद्भावचिन्तामात्रं कृतम् । यथोक्तं द्वादशोपसत्ताधिकरणारम्भवार्तिके—' बलाबलविविक्तानां श्रुत्यादीनामतः परम् । विरोधः क्वास्ति नास्तीति विषयः परिशोध्यते ॥' इति । तस्मात्तात्पर्यलिङ्गप्रदर्शनेन वेदान्तानां ब्रह्मणि प्रामाण्यप्रतिष्ठापनप्रधानमिदं शास्त्रमिति ज्ञापनायोपक्रमादिकमेव समन्वयसूत्रे सङ्कीर्तितम् । यद्यप्युपक्रमादिस्वरूपं वेदोपक्रमाधिकरणादिषु श्रुत्यादिभ्यो लिङ्गादीनां विपरीतं बलाबलमनन्यथासिद्धत्वादिकृतं स्रुवाधिकरणादिषु च किञ्चित्प्रदर्शितम् । तथापि तात्पर्यलिङ्गसद्भावव्यवस्थापनपूर्वकं तत्कृतं श्रुत्यादीनां विपरीतं बलाबलं धर्ममीमांसायां न चिन्तितम् । इह तु तदेव प्रायशश्चिन्त्यते । वेदान्तानां ब्रह्मपरत्वनिर्णये तदुपयोगात् । यथा चैतत्तथा तत्रतत्राधिकरणे स्फुटीकरिष्यामः । ननु,धर्मस्य ब्रह्मबोधहेतुत्वोक्तिरयुक्ता । मेयसिद्धिर्हि मानाधीना । न तु यज्ञाद्यनुष्ठानाधीना । ततश्च यज्ञाद्यनुष्ठानं विनापि ब्रह्मबोधः प्रमाणप्रवृत्तौ सत्यां स्वयमेव निष्पद्येतेति न तदर्थं धर्मविचारापेक्षेत्याशङ्क्याह—साधनं विनेति । प्रमाणत्वाभिमतस्यापि प्रमेयसिद्धौ साधनत्वं साधनत्वग्राहकप्रमाणाधीनम् । तद्यज्ञाद्यनुष्ठानेऽप्यविशिष्टमिति ब्रह्मबोधे तस्यापि साधनत्वात्तद्विना ब्रह्मबोधस्य निष्पत्तिर्न सम्भवतीत्यर्थः । किं तद्धर्मस्य ब्रह्मबोधे साधनत्वग्राहकं प्रमाणमित्याकाङ्क्षायामाह—धर्मस्येति । तर्हि श्रुतिप्रामाण्यात्तपश्चर्ययेव यज्ञाद्यनुष्ठानेनैव परमेश्वरसन्निधानपूर्वकं तत्वदर्शनं तत एव मोक्षश्च भविष्यतीति माभूद्वेदान्तविचार इत्याशङ्क्य निराकरोति—नचेति। तस्येति। स्यादेतदेवं यद्यैहिकामुष्मिकवरदानार्थशिवसन्निधानपूर्वके तद्दर्शने[1] तपश्चर्याया इव मोक्षप्रदानार्थशिवसन्निधानपूर्वके तद्दर्शने[2] यज्ञाद्यनुष्ठानस्य कारणत्वमुदाहृतश्रुत्योच्येत नत्वेवम् । किंतु पापापनयनरूपचित्तशुद्धिद्वारा वेदान्तविचारादिप्रामाण्यसम्पादनेन तद्वेदनहेतुत्वमेव तयोच्यत इत्याशयः। उदाहृतश्रुतावप्रतीतद्वारविशेषावगतिः कुत इत्याकाङ्क्षायामाह—तथाभियुक्तेति । 'यस्यैते' इत्यादिका गौतमस्मृतिः। तत्र गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि चत्वारि वेदव्रतानि समावर्तनं विवाहः पञ्चमहायज्ञाख्याः देवपितृमनुष्यभूतब्रह्मयज्ञाः अष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञाः अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञाः अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इत्येवं चत्वारिंशतं कर्माण्यनुक्रम्य तेषु संस्कारशब्दः प्रयुक्तः। तेनैतेषां कर्मणां

(१)-(२) 'तत्त्वदर्शने' इत्युभयत्र पाठान्तरं दृश्यते ।

सालोक्यं च गच्छती'त्यन्तेन गर्भाधानादिसकलकर्मणां पापमलापकर्षसंस्कारहेतुतां प्रकाशयति। अथ व्रीहिप्रोक्षणवत् सर्वकर्मणां संस्कारकत्वे 'सर्वे एते पुण्यलोका भवन्ती'तिश्रुत्युक्ताश्रमफलस्वातंत्र्यं न स्यादिति चेन्न। पुण्यलोकफलाभिसन्धिपूर्वककर्मणां स्वातंत्र्येऽपि तदभिसन्धिरहितेन पुंसानुष्ठितकर्मणां चित्तशुद्ध्यादिसंस्कारजनकत्वोपपत्तेः। तथा च तस्य पुंसो यदेव ज्ञानफलं तदेव कर्मफलं च। यथा व्रीहिप्रोक्षणं दर्शपूर्णमासोत्पत्त्यपूर्वहेतुतया स्वर्गे समुच्चीयते तथा कर्माणि ज्ञानप्रयोजकतया मोक्षे समुच्चीयन्ते। अतो गुणकर्मत्वादङ्गत्वमेतेषाम्। ननु, नित्यविधिप्राप्तस्य ज्योतिष्टोमादेरितिकर्तव्यतात्वविरोधान्न संस्कारकतासिद्धिरिति चेन्न। कारणतया स्वतन्त्रविध्यन्तरविहितस्य सौत्रामणिबृहस्पति-

---

व्रीहिप्रोक्षणादिवत्कार्यान्तरोपयुक्तकिञ्चिद्द्रव्यगतातिशयाधानार्थतावसीयते तत्किमतिशयवद्द्रव्यसाध्यं कार्यं किञ्च तदतिशयवद्द्रव्यं कश्च तत्रातिशय इत्याकाङ्क्षायां 'स ब्रह्मणः सायुज्यं सालोक्यं च गच्छती' त्युपसंहारवाक्येन मोक्षः कार्यत्वेनावसीयते। तत एव शिवसाक्षात्कारैकसाध्ये मोक्षे द्रव्यस्य साक्षाज्जनकत्वाभावेन साक्षात्कारजनकं चित्तमेव साक्षात्कारद्वारा तदुपयोगि द्रव्यं तदैकाग्र्यप्रतिबन्धनिवृत्तेरपेक्षितत्वात्तद्गतपापापनयनमेव परिगणितकर्मजन्यो मलापकर्षरूपोऽतिशय इत्यवसीयते। 'धर्मेण पापमपनुदति' 'ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमान' इत्यादिश्रुतिसंवादात्। ततश्चोदाहृतश्रुतौ स्मृत्यनुसारेण द्वारविशेषावगतिरित्याशयः। ननु, यज्ञादीनां प्रोक्षणादिवद्गुणकर्मत्वे अर्थकर्मत्वं न स्यात्। तथा च द्रव्योपसर्जनत्वं न स्यात्। तथा च द्रव्योपसर्जनत्वं विना स्वातन्त्र्येण पुण्यलोकप्राप्तिफलकत्वं श्रूयमाणं विरुध्येतेत्याशङ्कते—अथेति। दृष्टादृष्टोभयार्थाङ्गानां स्विष्टकृदादीनां त्यागांशेनार्थकर्मत्वमग्न्याद्युद्देशेन त्यक्तस्य पुरोडाशादिद्रव्यस्य प्रक्षेपांशेन प्रतिपत्तिरूपतया गुणकर्मत्वं च दृष्टम्। तथेह यज्ञादीनामभिसन्धिविशेषप्रवृत्तप्रयोगभेदेनार्थकर्मत्वगुणकर्मत्वयोर्नास्ति विरोध इत्याशयेन परिहरति—नेति। ननु, 'विद्यां चाविद्यां चे'त्यादिश्रुतिदर्शनात् कर्मणामपि ज्ञानवत्साक्षान्मोक्षफलत्वेनार्थकर्मत्वमेवाङ्गीकर्तुं युक्तमिति ज्ञानकर्मसमुच्चयवादिशङ्कां समुच्चयश्रुतीनां कर्मसमुच्चयरूपविषयप्रदर्शनेन निराकरोति—तथा चेति। ननु, गुणकर्मत्वस्वीकारे यज्ञादीनामङ्गत्वं स्यात् गुणकर्मणामङ्गत्वनियमात् आधानादीनामप्यग्न्यादीन्प्रत्यङ्गत्वेन तदव्यभिचारादित्याशङ्क्य इष्टापत्त्या परिहरति—अत इति। ननु गुणकर्मत्वेनाङ्गत्वे पुण्यलोकसाधनत्वेन प्राधान्यं न सम्भवति स्विष्टकृदादिष्वङ्गेषु गुणकर्मत्वार्थकर्मत्वयोरिवाङ्गत्वस्य फलसाधनत्वरूपप्रधानत्वस्य च क्वचिदप्येकस्मिन्कर्मणि समावेशादर्शनात् स्वर्गसाधनतया प्रधानस्य कुण्डपायिनामयनमध्यगततथा तदङ्गस्य चाग्निहोत्रस्य प्रकरणभेदेन भेदादित्याशयेन शङ्कते—नन्विति। फलसाधनत्वस्याङ्गत्वेन तावद्वस्तुविरोधः। फलसाधनत्वस्य फलाङ्गत्वरूपत्वात् अन्याङ्गस्याप्यन्यशब्दोक्तफलसाधनरूपत्वात् एकस्य कर्मणः प्रयोगभेदेनानेकफलसाधनत्वस्य योगसिद्ध्यधिकरणादिसिद्धत्वात्। नापि शब्दविरोधः विनियोजकविधिभेदसत्त्वात्। अथाप्यन्यंत्रादर्शनेन यदि विरोध आपाद्यते तत्राह—कारणतयेति। 'यथा यजेत्सौत्रामण्या

सवादेरग्निचयनवाजपेयाद्यङ्गत्ववदुभयविधिबलादुभयसिद्धेः । अतो यावदुत्प-

अपत्नीकोऽप्यसोमपः' 'मातापितृभ्यामृणार्थाद्यजेते'तिवचनात्'ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेते'त्यादिभिः श्रुतिभिः स्वातन्त्र्येण फलकारणतया विहितस्यापि सौत्रामणिबृहस्पतिसवादेः 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' 'तेनेष्ट्वा राजा राजसूयेन यजेते' त्यादिवचनैरग्निचयनवाजपेयाङ्गत्वेनापि विधानं दृश्यत इत्यर्थः। ननु, फलार्थात्सौत्राम-णिबृहस्पतिसवादेरङ्गभूतं तत्सौत्रामणिबृहस्पतिसवाधिकं कौण्डपायिनामयनाग्निहोत्रं न्यायेन प्रकरणभेदात् भिन्नमिति चेत्। उच्यते। 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती'ति वाक्ये 'अ-ग्निहोत्रं जुहोती' तिवाक्यसन्निधिपठिते 'दध्ना जुहोती'ति वाक्य इव न जुहोतिपदश्रवणमात्रेण नित्याग्निहोत्रप्रत्यभिज्ञा भवति। प्रकरणान्तरत्वात्। अग्निहोत्रनाम्ना तत्प्रत्यभिज्ञानेन तत्रैव जु-होतिपदस्य वर्तनमित्यपि न घटते। विहितस्य तस्य पुनर्विधानानपेक्षणात्। मासगुणविधानार्थं तदनुवाद इत्यपि न युज्यते।तस्मिन्नुपसदानन्तर्यगुणस्यापि विधेयत्वेनानेकगुणविधानरूपवाक्य-भेदापत्तेः। तस्मान्नामप्रत्यभिज्ञापिते कर्मण्याख्यातं वर्तत इत्येवं न नामपरतन्त्रमाख्यातम् । किं त्वाख्यातेन विधीयमाने नित्याग्निहोत्राद्भिन्ने कर्मणि नाम वर्तत इति नामैवाख्यातपरतन्त्रम् । अतस्तत्र नाम्ना प्रत्यभिज्ञानमकिञ्चित्करमिति युज्यते कर्मभेदः । सौत्रामण्यादिवाक्येषु तु यजतिपदेन प्रत्यभिज्ञाभावेऽपि सौत्रामण्यादिनामतः प्रत्यभिज्ञाने जाग्रति तदुपेक्षणे किं कारणम् । शक्यते ह्यत्र प्रसिद्धसौत्रामण्याद्यनुवादेनाग्निचयनादिकं प्रत्यङ्गत्वमात्रविधानम् । नन्वत्राप्येकस्मिन्नेव वाक्ये नाम्ना दूरस्थस्य प्रत्यभिज्ञापनं तस्याङ्गत्वेन विधानं चेति व्यापारद्वयावेशात् वाक्यभेदः स्यादिति चेन्न। प्रत्यभिज्ञापनस्य पदार्थस्मृतिवत् पदमात्रकृ-त्यतया तत्प्रसङ्गानवतारात्। अन्यथा गृहमेधीयप्रकरणवर्ति'न्याज्यभागौ यजती'ति वाक्येऽ-प्याज्यभागनाम्ना दार्शपूर्णमासिकावाज्यभागौ प्रत्यभिज्ञाप्य तयोर्गृहमेधीयाङ्गत्वेन विधाने वाक्यभेदः स्यादिति तत्रापि प्रसिद्धाज्यभागधर्मकर्मान्तरविध्यङ्गीकारप्रसङ्गात् । न च वाच्यं गृहमेधीये चोदकादाज्यभागयोर्विपरिवृत्तेस्तत्प्रत्यभिज्ञापनार्थं न वाक्यव्यापारापेक्षेति । तत्र चोदककल्पनात्प्रागेवोपदिष्टयोराज्यभागयोरन्वये सति क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षस्य गृ-हमेधीयप्रयोगविधेश्चोदकेनाङ्गप्राप्त्यनपेक्षितया चोदकलोपादपूर्वो गृहमेधीयो न तु दर्शपूर्ण-मासप्रकृतिक इति गृहमेधीयाधिकरणे सिद्धान्तितत्वात् । तस्माद्युक्तं स्वतन्त्रस्यैव सौत्राम-ण्यादेर्विनियोगभेदेनाङ्गत्वमपीति भावः । यत्तु पूर्वमीमांसकैः 'समवाये चोदनासंयोगस्यार्थव-त्त्वात्' (जै० ४-३-२९ सू०) इति चतुर्थाध्यायाधिकरणे मासाग्निहोत्रवत्तस्य कर्मान्तरत्व-मुक्तं तत्'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यत्र इष्टिसोमयोरिव'अग्निं चित्वे'त्यादावपि स्वतन्त्रयोरेव कालार्थः संयोगः न त्वङ्गाङ्गिभाव इति पूर्वपक्ष्याशङ्काया निरवकाशीकरणार्थं प्रौढिवादमात्रम् । अत एव गुरुणा विवरणे स्वतन्त्रस्यैव सौत्रामण्यादेरग्निचयनादिकं प्रत्य-ङ्गत्वमुक्तमित्यलं विस्तरेण। एवं च संस्कारस्मृतिबलाच्चित्तसंस्कारत्वेनावगतानामपि कर्मणा-माधानस्याग्निसंस्कार इव तावन्मात्रे विश्रान्त्यभावात्तद्वारा ज्ञानसाधनत्वस्य यज्ञादिश्रुत्याव-गतेः यावद्ज्ञानोदयमनुष्ठेयानि तदर्थानि कर्माणि । न तु विविदिषोदयरूपप्रत्यक्प्रावण्येन चित्तशुद्ध्यवगमे सति त्यक्तव्यानीत्याशयेनाह-अत इति । यज्ञादिश्रुत्या ज्ञानफलसंयुक्ता-

(१) 'याङ्गत्वविधाने' इति क. ख. घ. पाठः । (२) 'भाष्याभिप्रायः' इति क.घ. पाठः ।

यते ज्ञानं तावदनुष्ठेयानि कर्माणि । ननु, 'विविदिषन्ती'ति श्रवणात्कर्मणां ज्ञानेच्छासमुदयपर्यन्तमनुष्ठानमिति चेन्न सारमेतत् । इच्छाया अपुरुषार्थत्वात् ।

---

नां कर्मणां संस्कारस्मृतिः तज्जन्यत्वेन क्लृप्तं चित्तगतपापमलापकर्षद्वारं दर्शयति । तस्यास्तावन्मात्रविषयत्वोपपत्तौ पृथक्चित्तशुद्ध्यर्थकर्मविधायकश्रुत्यन्तरानुमापकत्वकल्पनायोगात् । अतो यावद्ज्ञानमनुष्ठेयानि तानि कर्माणि । न च तथापि व्रीहिगततुषविमोकद्वारा क्रत्वपूर्वसंयुक्तस्याप्यवहननस्य यथा यावत्तुषविमोकमेवानुष्ठानं न तु यावत्क्रत्वपूर्वोदयं तथा कर्मणां द्वारभूतचित्तशुद्ध्युदयपर्यन्तमेवानुष्ठानं स्यादिति वाच्यम् । निर्मुक्ततुषेषु व्रीहिषु पुनः तुषाणामिव चित्ते शुद्धे पुनर्ज्ञानोदयप्रतिबन्धकदुरितानां प्रसक्त्यभावेन शुद्धचित्तस्य ज्ञानार्थं श्रवणादिषु प्रयतमानस्यापि यावद्ज्ञानोदयं सम्भावितप्रतिबन्धकदुरितनिवृत्तेरपेक्षितत्वात् । एवं च संस्कारस्मृतिबलात् कर्मणां चित्तशुद्धिमात्रार्थत्वाभ्युपगमेऽपि यावद्ज्ञानोदयं तदपेक्षितचित्तशुद्ध्यनुवृत्तये तदर्थकर्मानुष्ठानापेक्षा भवत्येवेति भावः । ननु, यज्ञादिश्रुतिः कर्मणां विविदिषार्थत्वमाह । अतस्तदनुवर्तनेऽपि विविदिषोदयपर्यन्तमेव कर्मानुष्ठानं स्यात् । संस्कारस्मृत्यवगतचित्तशुद्धिद्वारस्यापि विविदिषोत्पत्तिप्रतिबन्धकदुरितनिवृत्तिरूपत्वपर्यवसानादित्यभिप्रेत्य शङ्कते—नन्विति । अपुरुषार्थत्वादिति । पुरुषेणार्थनीयत्वासम्भवादित्यर्थः । स्वतः पुरुषार्थत्वरहिताया इच्छायास्तत्फलेच्छयार्थनीयत्वं वक्तव्यम् । न तु तत्सम्भवति । श्रवणादिप्रवृत्तिद्वारा विविदिषाफलभूतायां विद्यायामिच्छासत्त्वे विविदिषायास्सिद्धत्वात् । तदसत्त्वे फलेच्छाविरहादिति भावः । कथं तर्हि बुभुक्षाप्रतिबन्धकधातुवैषम्यतन्मूलदुरितनिवृत्तिद्वारा तत्सिद्ध्यर्थानि वैद्यककर्मविपाकशास्त्रोक्तान्यनुष्ठीयन्ते न भोजनेच्छासिद्ध्यर्थानि तानि । तामन्तरेण भोजनसिद्ध्यर्थयत्नासम्भवात् । किं तु भोजने सत्येव देहस्थितबलपुष्ट्यादिकं भवेदिति तदर्थतया सत्यामपि भोजनेच्छायां धातुवैषम्यकृतरोगविशेषेण भोजनप्रवृत्तिः प्रतिबध्यत इति प्रतिबन्धकनिवारणार्थानि तानि । यथा यागे कृते स्वर्गो भवेदिति स्वर्गार्थतया यागेच्छायां सत्यामप्यायाससाध्यानुसन्धानप्रयुक्तेनालस्येन यागप्रवृत्तिः प्रतिबध्यत इति प्रतिबन्धकनिरासार्थान्यर्थवादश्रवणानि । कथमेवं सत्यौषधसेवादितः पूर्वं बुभुक्षैव नासीत् इदानीं तु बुभुक्षा जायत इति व्यवहार उपपद्यते । पूर्वं भोजनाभावे देहस्थित्यादिकं न भवेदिति केवलं तदर्थतयैव भोजनेच्छा । औषधसेवाद्यनन्तरं रोगनिवृत्त्या जाठराग्निप्राबल्यादिसद्भावात् क्षुद्रूपं दुःखमसह्यं ज्ञायत इति तन्निवृत्त्यर्थतयापि भोजनेच्छेत्येतावता तथा व्यवहारः । यद्वा अपुरुषार्थत्वादित्यस्य विविदिषायाः पुरुषार्थत्वेन पुरुषेच्छाविषयत्वेन विविदिषन्तीति शब्दतः प्रतीत्यभावादित्यर्थः । यत्तु खल्विच्छाविषयत्वेन फलवाक्येषु निबद्धं तदेव कर्मणां फलत्वेनान्वेति । लिङादिभिर्विधिशब्दैः कर्मणामिष्टसाधनत्वे प्रतीते तत्कर्मसाध्यमिष्टं किमितीष्टविशेषाकाङ्क्षायां यदिच्छाविषयत्वेन निबद्धं विशिष्योपात्तं च तस्यैव तथात्वेनान्वेतुमुचितत्वात् । अत एव स्वर्गकामादिवाक्येषु स्वर्गादिकमेव फलम् ।

---

(१) 'स्तत्पुरुषफलेच्छया' इति. ग. घ. पाठः । (२) 'भवश्यं' इति पाठान्तरम् ।

**अतः कर्मणां ब्रह्मबोधसाधनानां विचारस्यानन्तरं ब्रह्मबोधकशास्त्रारम्भः समुचितः। ननु, कर्मब्रह्मविचारयोः क्रमनियमः कथमुपपद्यते कर्त्रैक्यादिति चेन्न कर्त्रैक्यमिहाघारदर्शपूर्णमासवदङ्गाङ्गित्वेन वा पञ्चप्रयाजवदेकाङ्गिप्रयुक्तानेकाङ्ग-**

अत एव च 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ती' त्यार्थवादिकफलान्वयस्थले प्रतिष्ठादीनां फलत्वप्रतीतये सनर्थाध्याहारोऽभ्युपेयते। तत्र हि 'ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयु'रिति यत्तदोर्व्यत्यासेन सनर्थाध्याहारेण पूर्वमीमांसकैर्वाक्यार्थो दर्शितः। इह त्विच्छाविषयत्वेन प्रतीताया विद्यायाः फलत्वोपपत्तेर्यज्ञेन विविदिषन्तीत्येतत्समानाकारे 'अश्वेन जिगमिषति' 'असिना जिघांसती'त्यादिलौकिकवाक्ये सन्प्रत्ययवाच्येच्छाविषयस्यैव फलत्वेनान्वयदृष्टेश्च नेच्छायाः फलत्वप्रतीत्यर्थं तद्विषयेच्छार्थोऽध्याहर्तव्य इत्याशयः। तस्मात्कर्मणां यावद्ज्ञानोदयमनुष्ठेयत्वात् प्रथमं धर्मविचारस्तदनन्तरं ब्रह्मविचार इति युक्तमित्याह—अत इति। नन्वयमुक्तः क्रमनियमो नोपपद्यते। एककर्तृकाणां हि बहूनां कर्मणामेकेन कर्त्रा युगपदनुष्ठातुमशक्यानामनुष्ठानार्थं क्रमापेक्षायां सत्यां श्रुत्यर्थादिभिः क्रमविशेषो नियम्येत। नात्र विचारयोः कर्त्रैक्यमस्ति। तत्प्रयोजकानामङ्गाङ्गिभावादीनामभावात्। किं तु यागस्वर्गवत् कर्मज्ञानयोर्यज्ञादिश्रुत्यवगतं करणफलभावमात्रमस्ति चित्तशुद्धिद्वारकम्। ततश्च जन्मान्तरानुष्ठितकर्मभिः शुद्धचित्तस्य विरक्तस्य मुमुक्षोर्विचारे प्रवृत्तिः कर्मानुष्ठानापेक्षा न भवत्येव। न हि द्वारसिद्धौ सत्यामपि फलसंयुक्तं कर्म यावत्फलोदयमनुष्ठेयम्। क्रत्वपूर्वसंयुक्तस्याप्यवहननस्य यावत्तुषविमोकरूपद्वारसिद्धिपर्यन्तमेवानुष्ठानादित्याशयेनाक्षिपति—नन्विति। ननु, फलकरणभावेऽपि कर्त्रैक्यमस्ति येन चित्तशुद्ध्यर्थकर्मानुष्ठानार्थं धर्मविचारः कृतः तेनैव पुरुषेणोपासनारूपज्ञानलाभार्थं ब्रह्मविचारस्यापि कर्तव्यत्वादिति शङ्कते—कर्त्रैक्यादिति। 'उत्तरां देवयज्यामाशास्त'इत्यादिमन्त्रवर्णावगतफलकरणकर्मयोरिव[1] ज्ञानकर्मणोः कर्तृत्वाधिष्ठानपुरुषैक्यमात्रं न कर्तृकारकैक्यम्। तत्प्रयोजकरूपाभावात्। प्रयोगाङ्गकर्त्रैक्यं हि प्रयोगैक्ये सति तदन्तर्गतपदार्थानां भवति। एकप्रयोगान्तर्गतिश्चाङ्गप्रधानत्वेन वा एकप्रधानसिद्ध्यर्थानेकाङ्गत्वेन वा अधिकृताधिकारेण वा एकफलसाधनत्वेन वानुष्ठेयानां भवति। न चैषामन्यतममिह रूपं श्रुत्यादिप्रमाणैर्लभ्यते। अतो न युक्तोऽयं क्रमनियम इति परिहरति—न कर्त्रैक्यमिति। ननु, क्रमाकाङ्क्षाजनककर्त्रैक्यप्रयोजकैकप्रयोगान्तर्गतिरङ्गाङ्गित्वादिनैवैकफलसाधनानेकप्रधानान्वय्यनेकाङ्गत्वेन प्रधानतदङ्गाङ्गत्वेन च भवति। अत एव 'मुख्यक्रमेण वाङ्गानां तदर्थत्वा'दित्यधिकरणे (जै० ५-१-१४सू.) दार्शिकयोः पुरोडाशसान्नाय्ययोः प्रयाजशेषाभिघारणे (क्रमश्चिन्तितः।)[2] 'प्रकृत्या कृतकालाना' (जै० ५-१-२५सू.) मित्यधिकरणे सोमाङ्गभूतसवनीयेष्ट्यङ्गानां प्रोक्षणादीनां साक्षात्सोमाङ्गानां प्रचरणीहोमादीनां च क्रमश्चिन्तितः। सत्यम्। तयोरप्युपलक्षणमङ्गाङ्गित्वाद्युपन्यासः। यद्वा 'एकाङ्गिप्रयुक्तानेकाङ्गत्वेन वे'त्यनेनैव तयोरपि सङ्ग्रहः। तत्रैकशब्देनैकफलसाधनत्वं विवक्षितमित्याद्योदाहरणसङ्ग्रहः। अङ्गाङ्गानामप्यङ्गिप्रयुक्तत्वमस्तीति द्वितीयोदाहरणसङ्ग्रहः। अङ्गिप्रयुक्तत्वमिह साक्षात्परम्परया वा प्रधानभूतयागादिगतफलसाधनत्वरूपापादनात्मकं तदनुग्राहकत्वं विव-

(१) 'फलकर्मणोरिव' क. ग. पाठः। (२) इदं क. पुस्तके नास्ति।

त्वेन वा गोदोहनादिवदधिकारान्तरप्रयुक्त्युपजीवित्वेन वा षड्याग(१)वत्फलैक्येन वा भवति । तथात्वे विचारयोश्श्रुत्यादिप्रमाणं नोपलभ्यते । ततः कर्मब्रह्मविचारयोः क्रमनियमो न युक्त इति । यदि श्रुत्यादिप्रमाणं न सम्भवति तदा खलु

---

क्षितम् । अतोऽपूर्वप्रयुक्ता धर्माः न यजिप्रयुक्ता इति सप्तमाद्ये व्यवस्थापितत्वादसम्भवः । अङ्गिशब्देन प्रधानजन्यापूर्वविवक्षायामाग्नेयादियागाङ्गस्य व्रीह्यादेरङ्गमवहननादिकमाग्नेयाद्यपूर्वप्रयुक्तमिति तत्सङ्ग्रहेऽपि ' यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् ' ' मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्याया' मित्यादिना विहितं दीक्षणीयावाङ्नियमादिकं दीक्षणीयाद्यवान्तरापूर्वप्रयुक्तं न सोमापूर्वप्रयुक्तमिति नवमे व्यवस्थापितत्वात् तदसङ्ग्रह इति शङ्काया नावकाशः । नन्वङ्गाङ्गित्वं न प्रयोगैक्येन कर्त्रैक्ये प्रयोजकम् । वैमृधपौर्णमास्योरसत्यप्यङ्गाङ्गित्वे प्रयोगभेदेन कर्तृभेदात् । अत एव द्वितीयमपि न प्रयोजकम् । वैमृधस्य पौर्णमासिकप्रयाजानां च वैमृधस्य सान्नाय्ययागाङ्गानां च वैमृधस्य पौर्णमासिकप्रयाजाङ्गाङ्गिक्रमणादीनां च सत्यप्येकाङ्गिप्रयुक्तानेकाङ्गत्वे प्रयोगभेदेन कर्तृभेदात् । तृतीयमपि न प्रयोजकम् । इष्टिसोमयोः प्रयोगभेदेन कर्तृभेदात् । यथा हि दार्शपौर्णमासिकमपां प्रणयनमाश्रित्य 'गोदोहनेन पशुकामस्ये'ति पशुफलाय विधीयमानं गोदोहनं जीवनस्वर्गकामनारूपाधिकारान्तरेण दर्शपूर्णमासप्रयुक्तिमुपजीवति । दर्शपूर्णमासानुष्ठानाभावे तदीयस्यापां प्रणयनस्याश्रयस्याभावेन प्रणीयमानानामपामाधारतया चमसस्थाने गोदोहननिवेशनासम्भवात् । तथा सोमोऽपि तत्प्रयुक्तिमुपजीवति । ' दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति दर्शपूर्णमासानन्तरकर्तव्यतया विहितस्य सोमयागस्य तदनुष्ठानाभावेऽनुष्ठानासम्भवात् । चतुर्थमपि न प्रयोजकम् । दर्शत्रिक(२)पौर्णमासीत्रिकयोश्चातुर्मास्यपर्वणां राजसूयान्तर्गतेष्टिपशुसोमानां च सत्यप्येकफलसाधनत्वे प्रयोगभेदेन कर्तृभेदात् इति चेदुच्यते । अङ्गाङ्गित्वाद्यन्यतमरूपसद्भाव एव कर्त्रैक्यं भवति नान्यथेत्येवमङ्गाङ्गित्वादीनामिह कर्त्रैक्यप्रयोजकत्वं विवक्षितम् । अङ्गाङ्गित्वाद्यन्यतमरूपाभावेन विचारयोः कर्त्रैक्याभावोपपादने तस्यैवोपयोगात् । तादृशं तु प्रयोजकत्वमङ्गाङ्गित्वादावस्त्येव । यत्तु नास्त्यङ्गाङ्गित्वादावसति कर्त्रैक्यं भवत्येवेत्येवंरूपं प्रयोजकत्वं तदिह न विवक्षितम् । अनुपयोगात् । अतो नोक्तदोषावकाशः । नन्वङ्गाङ्गित्वाद्यन्यतमरूपसत्त्व एव कर्त्रैक्यं भवतीति । सत्यम् । इहापि तदन्यतमरूपमस्ति । उक्तं हि प्राक् कर्मज्ञानयोरङ्गाङ्गितया मोक्षोपयोगित्वं 'यथा व्रीहिप्रोक्षण'मित्यादिभाष्येण । तथा च कर्मब्रह्मज्ञानसिद्ध्यर्थयोः कर्मब्रह्मविचारयोरपि प्रधानतदङ्गाङ्गित्वरूप'मेकाङ्गिप्रयुक्तानेकाङ्गत्वेन वे'त्यनेन सङ्गृहीतं कर्त्रैक्यप्रयोजकमस्तीत्याशङ्क्याह-तथात्व इति। कर्मज्ञानयोरङ्गाङ्गित्वेऽपि न विचारयोरङ्गाङ्गित्वाद्यन्यतमरूपसत्त्वे प्रमाणमस्ति । अध्ययनविधेरर्थज्ञानफलकत्वपक्षे प्रागदर्शिते विचारयोरध्ययनाङ्गत्वेन(३) तस्याक्षरावाप्तिफलकत्वपक्षे प्रदर्शयिष्यमाणे तयोः स्वतन्त्रत्वेन च कर्मज्ञानाङ्गत्वाभावादिति भावः। आक्षेपमुपसंहरति—तत इति। समाधत्ते—यदीति । ननु, विचारयोः क्रमाकाङ्क्षाजनककर्त्रैक्यप्रयोजके अङ्गाङ्गित्वादौ प्रमाणं नास्तीत्याक्षेपसमाधानार्थं तत्र प्रमाणास्तित्वं प्रतिज्ञाय ज्ञानकर्मणोस्समुच्चये प्रमाणमुपन्य-

---

(१) 'पशुयागवत्' इति पाठान्तरम् । (२) 'पौर्णमासत्रिके' ति पाठान्तरम् । (३) 'ङ्गत्वेऽपि' इति ख. ग. पाठः ।

तथा(त्वं) स्यात् 'विद्यां चाविद्यां च यस्तद्वेदोभय^(१)सह तेनैति ब्रह्मवित्पुण्यकृच्च सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्य' मित्यादिका ज्ञानकर्मसमुच्चयवादिनी श्रुतिरुपलभ्यते। ततः कर्मज्ञानयोर्मोक्षैकफलत्वात्तद्विचा-

स्यते। कथमेतत्सङ्गच्छते। कथं च ज्ञानकर्मसमुच्चयोपपादनं कृताक्षेपसमाधानाय कल्पते। प्रागपि व्रीहिप्रोक्षणदर्शपूर्णमासन्यायेन तयोस्समुच्चयो दर्शितः। स तु जन्मान्तरानुष्ठितचित्तशुद्ध्यर्थकर्माश्रयतयापि सङ्गच्छत इति ज्ञानानुष्ठानात्पूर्वं ब्रह्मविचारवद्धर्मविचारस्य नियतकर्तव्यत्वाभावात् तयोः क्रमनियमो न युक्त इत्याक्षिप्ते सति प्राक्समर्थित एव ज्ञानकर्मसमुच्चये पुनरपि प्रमाणोपन्यासेन किं लभ्यत इति शङ्कानिराकरणार्थमाह—ततः कर्मज्ञानयोरिति। अयमाशयः। प्राग्विविदिषन्तिवाक्यलब्धो जन्मान्तरानुष्ठितकर्मसाधारणः चित्तशुद्धिविविदिषावेदान्तशुश्रूषासद्गुरुलाभः श्रवणमननसम्पादनद्वारोपासनारूपज्ञानानुष्ठाने प्रवर्तकस्तस्य क्रमसमुच्चयो दर्शितः। इह तु ज्ञानानुष्ठानकाल एवानुष्ठेयैः कर्मभिस्तस्य समुच्चये श्रुतिरुपन्यस्यते। 'विद्यां चे'ति मन्त्रे हि सहश्रुतिः कर्मज्ञानवेदनयोर्यौगपद्यं प्रतिपादयन्ती ज्ञानानुष्ठानकाले कर्मानुष्ठानं बोधयति। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत'इति तदुत्तरार्धं च तदुपयोगं ब्रवीति। प्राचीनकर्मभिरुपासनानुष्ठानप्रवृत्तिप्रतिबन्धकदुरितनिवृत्तावपि तत्र प्रवृत्तस्याप्रायणमहरहरनुवर्तनीयायामुत्तरोत्तरं विशदीकरणीयायां च तस्यां तदनुवृत्तौ तद्विशदीकरणे च प्रतिबन्धकतया स्थितं तत्काल एव प्रामादिकतया जातं वा दुरितजातं सम्भवति। तत्सर्वमुपासनाकालानुष्ठितेन कर्मजातेन तीर्त्वा ततो निर्विघ्नमविच्छिन्नानुवृत्तया प्रतिदिनोपचीयमानया^(२) विद्यया मुक्तिं प्राप्नोतीति तस्यार्थः। समनन्तरोदाहृतमन्त्रयोरप्युक्तरूप एव ज्ञानकर्मसमुच्चये तात्पर्यम्। इदं विद्यानुष्ठानप्रवृत्तिप्रतिबन्धकतया समारब्धविद्यस्य विद्यानुष्ठानानुवृत्त्यादिप्रतिबन्धकदुरितनिवर्तकतया च विद्योपकारककर्मद्वैविध्यं 'विहितत्वाच्चाश्रमकर्मापी' (ब्र० ३–४–३२–सू०)ति तृतीयाध्यायाधिकरणे भाष्य एव स्पष्टीभविष्यति। एवं चाद्यप्रकारकर्मणां जन्मान्तरीयसाधारणत्वेऽपि द्वितीयप्रकारकर्मणां विद्यानुष्ठानदिवसेष्वनुष्ठेयत्वात्तदर्थं धर्मब्रह्मविचारयोः कर्तव्ययोर्विद्यानुष्ठानारम्भात्प्रागपि श्रवणादिकालेष्ववश्यानुष्ठेयानां कर्मणामनुष्ठानसिद्धये धर्मविचारप्राथम्यमर्थादापततीति विचारयोः क्रमनियमसिद्ध्युपयोगित्वात् विद्यानुष्ठानकालानुष्ठेयकर्मसमुच्चये प्रमाणप्रदर्शनं कृताक्षेपसमाधानाय कल्पत एवेति। ननु, न तेन विचारयोः कर्त्रैक्यसिद्धिरस्ति ततः प्रयोगैक्यासिद्धिरिति चेन्माभूत्। विनापि कर्त्रैक्यं क्रमनियमसिद्धौ किं तेन। ननु, कर्त्रैक्यसिद्धावेवैकेन कर्त्रानेककर्मणां युगपदनुष्ठातुमशक्यत्वेन क्रमाकाङ्क्षायां क्रमविशेषनियामकानि प्रवर्तन्ते। नायं नियमः। प्रयोगभेदेन कर्तृत्वाकारभेदेऽपि कर्तृत्वाधिष्ठानपुरुषैक्ये सत्येकस्मिन्पुरुषे भिन्नप्रयोगतयापि युगपदुपनिपतितयोः कर्मणोः क्रमापेक्षा भवत्येव। कर्तृत्वाकारैक्येऽपि हि क्रमाकाङ्क्षायां तदधिष्ठानपुरुषैक्यमेव प्रयोजकम्। साङ्गप्रधानकर्तुर्यजमानस्यैकत्वेऽपि याजमानातिरिक्तेषु पदार्थेषु साक्षात्कर्तृणामध्वर्या-

(१) 'उभयं सहेति श्रुतिः' इति ग. पाठः। (२) 'चीयमानवैशद्यया' इति क. घ. ङ. पाठः।

दीनां सत्त्वेन तत्रानेकपुरुषद्वारकानेकपदार्थकर्तृत्वस्य युगपद्दर्शनात् । पूर्वतन्त्रेऽपि 'सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनद्वैगुण्या' दित्यधिकरणे (जै०५-१-३० सू.) चातुर्मास्येषु साकमेधे पर्वणि ' मरुद्भ्यस्सान्तपनेभ्यो मध्यन्दिने चरु'मिति विहितायाः सान्तपनीयाया दैवमानुष्यप्रतिबन्धवशेन सायङ्कालेऽप्यनुवृत्तौ युगपदुपनिपतितयोरग्निहोत्रसान्तपनीयाशेषयोः प्रयोगभेदेन भिन्नकर्तृकयोरपि क्रमश्चिन्तितः । नन्वेवमुक्तरीत्या सहानुष्ठेयत्वेन ज्ञानकर्मसमुच्चये श्रुत्युपन्यासस्य विचारयोरर्थात्क्रमनियमसिद्धावुपयोगित्वेन कृताक्षेपसमाधानार्थतया सङ्गतत्वेऽपि तयोरङ्गाङ्गित्वाद्यन्यतमरूपवत्त्वे श्रुत्यादिसद्भावप्रतिज्ञा न सङ्गच्छत इति । स्यादयं दोषो यदि ' श्रुत्यादिप्रमाण' मित्यादिवाक्यं तत्र श्रुतिलिङ्गादिप्रमाणप्रतिज्ञापरं स्यात् । न त्वेवम् । किं तु विचारयोः क्रमनियमे श्रुत्यर्थादिप्रमाणप्रतिज्ञापरम् । तस्यैवात्र साक्षादुपपादनीयत्वात् तद्विषयतयैवाग्रिमग्रन्थप्रवृत्तेश्चेति सर्वं समञ्जसम् । स्यादेतत् । विचारयोः कर्तव्यत्वे सति क्रमनियमचिन्ताऽवकाशं लभते । तत्रैव प्रमाणं न पश्यामः । अर्थज्ञानफलकोऽध्ययनविधिः विचारमन्तरेण स्वफलनिष्पत्त्यसम्भवात् काण्डद्वयस्यापि विचारमाक्षिपतीति चेत् स्यादेतदेवम् । यद्यध्ययनविधिरर्थज्ञानफलकः स्यात् । स त्वक्षरावाप्तिफलकः । ' स्वाध्यायोऽध्येतव्य ' इति तव्यप्रत्ययेन स्वाध्यायस्याध्ययनप्राप्यत्वप्रतीतेः । ननु, अक्षरावाप्तिर्न पुरुषार्थः । अतोऽध्ययनेन स्वाध्यायस्यावाप्तिरूपस्संस्कारः अवाप्तेन स्वाध्यायेनार्थावबोध इति प्रणाड्या भवदर्थज्ञानमध्ययनविधिः फलत्वेन गृह्णातीत्यभ्युपगन्तव्यमिति चेत् । किमर्थज्ञानं पुरुषार्थः । पशुपुत्रादिवत् पुरुषार्थोपयोगितया गौणपुरुषार्थत्वं त्वक्षरावाप्तेरपि तुल्यम् । अवश्यं चार्थज्ञानं फलमभ्युपगच्छतापि क्वचित्क्वचिदक्षरावाप्तिरपि फलत्वेनाभ्युपगन्तव्या । न खलु हुंफडादीनां स्तोभाक्षराणामर्थोऽस्ति । न वा निषेधवाक्यानामर्थवत्त्वेऽपि तदध्ययनस्यार्थज्ञानं फलमभ्युपगन्तुं शक्यम् । तत्रार्थज्ञाने दृष्टफले नियमविधेरवकाशाभावात् । यदि तावदध्ययनजन्यविधिवाक्यार्थज्ञानवतामेव विहितानुष्ठानमभ्युदयकरमितिवदध्ययनजन्यनिषेधवाक्यार्थज्ञानवतामेव निषिद्धानुष्ठानं प्रत्यवायकरमिति नियमफलमाश्रीयते तदा तदध्ययनरहितानां तच्छाखिनां हिंसानृतादिभिः प्रत्यवायो न स्यात् । वेदाध्ययने सत्येतानि निषिद्धानि प्रत्यवायकराणीति विशिष्य तद्‌ज्ञानावश्यंभावात् तदनुष्ठाने प्रत्यवायो भवेदित्यनिष्टफलत्वप्रतिसन्धानेन तत्र प्रवृत्तिरपि न स्यात् । अथोच्येत निषेधवाक्येषु प्रत्यवायफलकं निषिद्धानुष्ठानं न शास्त्रार्थः किं तु प्रत्यवायपरिहारफलकं तदनुष्ठानमिति तद्विषयो नियमः । अध्ययनपूर्वकनिषेधवाक्यार्थज्ञानवत एव निषिद्धाननुष्ठानं प्रत्यवायपरिहाराय भवतीति । तथा च निषिद्धानुष्ठानेन प्रत्यवायजनने निषेधवाक्यार्थज्ञानं नापेक्षितमिति । तदध्ययनरहितानां तदनुष्ठाने प्रत्यवायाभावो न प्रसज्यते । प्रत्यवायपरिहारोपयोगिज्ञानफलकमध्ययनं नानिष्टफलकमिति तेषामध्ययने प्रवृत्त्यभावोऽपि न प्रसज्यत इति । एवमप्यनधीतवेदानां निषिद्धाननुष्ठानेऽपि प्रत्यवायापरिहारादवश्यंभावी प्रत्यवायः तदनुष्ठानेनैवास्त्विति प्रतिसन्धानेन तेषां निषिद्धानुष्ठानप्रसङ्गो दुर्वारः । अध्ययनं विनोपायान्तरेण निषेधवाक्यार्थजननात्प्रत्यवेयादिति नियमफलमाश्रीयत इति चेत् एवं सत्यध्ययनरहितानां निषिद्धवर्जनार्थमुपायान्तरे-

( १ ) ' युगपदपि दर्शनात् ' इति घ. पाठः ।

ण न तद्ज्ञाने तत्कृतः प्रत्यवायः तदज्ञाने निषिद्धानुष्ठानकृत इत्युभयथाप्यवर्जनीयः प्रत्यवायो भवेत्। एवमध्ययनसन्ध्यावन्दनादिविध्यर्थानामध्ययनात्प्रागुपायान्तरेण ज्ञानेऽध्ययन(नियमं) विध्यतिक्रमेण तदज्ञानेऽध्ययनादिष्वप्रवृत्त्या च प्रत्यवायप्रसङ्गो द्रष्टव्यः । तस्मात्स्तोभाक्षरेष्वध्ययनात्प्रागप्यत्रश्यावगन्तव्यार्थेषु विधिनिषेधवाक्येषु चाक्षरावाप्तिरेवाध्ययनफलमित्यवश्याभ्युपगन्तव्यत्वादवैरूप्याय सर्वत्रापि सैव फलमित्यभ्युपगन्तुं युक्तम् । एवं सत्येवाध्ययनं प्रति स्वाध्यायस्य प्राधान्यसमर्पकस्तव्यप्रत्ययोऽर्थवान्भवति । अन्यथा 'स्वाध्यायाध्ययनेनार्थज्ञानं भावये'दिति विधिविपरिणामे स्वाध्यायस्योपादेयाध्ययनगुणत्वेन प्राधान्यभङ्गात्तव्यप्रत्ययः कर्मत्वाभिधाय्यनर्थकः स्यात् । ननु, तथाप्यर्थज्ञानमपि सम्भवस्थलेष्वध्ययनविधिफलत्वेनावश्यमभ्युपगन्तव्यम् । अन्यथा वेदवाक्यानां तत्रतत्रार्थे तात्पर्यासिद्ध्या तन्निर्वाहार्थलक्षणादिकल्पनोच्छेदप्रसङ्गात् । अर्थावबोधमुद्दिश्य शब्दोच्चारणेन हि लोके वाक्यानां तात्पर्यमवगम्य तन्निर्वाहार्थं मुख्यार्थासम्भवे लक्षणादिकं कल्प्यते । न तूच्चारणमात्रेण । अत एव 'गौरश्वः पुरुषो हस्ती'त्युच्चारणमात्रेणाश्वादिपदानां गवि लक्षणा न कल्प्यते । यदा विशिष्टार्थबोधमुद्दिश्य तेषामुच्चारणमिति तात्पर्यमवगम्यते तदैव तन्निर्वाहार्थं 'मयं गौः पुङ्गवः' 'अश्वो वेगवान्' 'पुरुषो नियतचेष्टः' 'हस्ती महाबल' इति तेषां तत्र लक्षणा कल्प्यते । एवं च वेदवाक्यानामर्थावबोधमुद्दिश्योच्चारणाभावे तात्पर्यासिद्ध्या तन्निर्वाहार्थलक्षणागौण्यनुवृत्त्यनुषङ्गाध्याहारव्यवधारणकल्पनोच्छेदप्रसङ्गादवश्यं वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणं वक्तव्यम् । वेदे तु लोक इव तमुद्दिश्य रागप्रयुक्तमुच्चारणं न सम्भवतीति विधिप्रयुक्तमेव तदाश्रयणीयम् । विधिश्चाध्ययनविधेरन्यो न दृश्यत इति तेनैवार्थावबोधमुद्दिश्य गुरुमुखोच्चारणानूच्चाणरूपमध्ययनं विधीयत इत्यकामेनापि स्वीकर्तव्यम्।एवं च दृष्टफलेऽप्यर्थावबोधे विधिरन्यतोऽसिद्धतस्तात्पर्यस्य सिद्ध्यर्थो न तु स्वाध्यायाध्ययनजन्यार्थज्ञानवत एव तत्तद्वाक्योक्तं फलं भवतीति नियमार्थो नाप्युपायान्तरेणार्थज्ञाने प्रत्यवायप्रदर्शनार्थ इति निषेधवाक्यादिषु न प्रागुक्तो दोषः । स्तोभाक्षरेषु परमर्थशून्येष्वर्थावबोधफलासम्भवादक्षरावाप्तिमात्रं फलम् । न चैवं विधिवैरूप्यदोषः । यदेव किञ्चन विध्यन्तरोपयोगिस्वाध्यायसंस्काररूपेणाध्ययनेन शक्यं भावयितुं तत्सर्वमनेन भावयेदित्येकैव वचनभङ्ग्योभयार्थत्वलाभात् । एवं च क्रमफलमपि सङ्गृहीतं भवति । क्रमविशेषविशिष्टवर्णपदवाक्यसङ्घातो हि स्वाध्यायशब्दार्थः । अतोऽध्ययनविधिः क्रमविशेषविशिष्टतयैव स्वाध्यायस्याध्ययनं विधत्ते । क्रमविशेषस्य चैतत्प्रयोजनं यत्समिदादिविधिवाक्यपाठक्रमेण प्रयाजाद्यनुष्ठानोपयोग्याग्नेयाग्नीषोमीयादिमन्त्रपाठक्रमेण तदनुष्ठानोपयोगि च । स्मृतिक्रमः काम्येष्टिकाण्डसमाम्नातानामैन्द्राग्न्यादीनां याज्यानुवाक्याकाण्डसमाम्नातानाम् 'उभा वामिन्द्राग्नी आहुवध्या' इत्यादिमन्त्राणां च यथासङ्ख्यं पाठक्रमेणाङ्गाङ्गिभावः । उच्चैष्ट्वादिस्वरविधिषु वेदोपक्रमणे ऋगादिपदानामृग्वेदादिषु लक्षणेत्यादि । यत्र तु नैतादृशं फलमस्ति तत्र क्रमस्य जपयज्ञादिमात्रोपयोग इति । न चैवमध्ययनस्यार्थज्ञानादिफलान्वये तव्यप्रत्ययोक्तस्वाध्यायप्राधान्यभङ्गो दोषः । स्वाध्यायस्योपादेयाध्ययनगुणत्वेऽपि तस्यार्थसि-

(१) एतत् ङ. पुस्तके नास्ति ।

द्धमध्ययनसंस्कार्यत्वमप्यस्ति । अध्ययनस्य तत्संस्कृतस्वाध्यायं द्वारमनपेक्ष्य तदर्थज्ञानादिनिष्पादकत्वासंभवादिति । तव्यप्रत्ययेन 'चरुमुपदधाती' त्यत्र द्वितीयया चरोरुपधानसंस्कार्यत्वस्येव तस्यानुवाद इत्युपपत्तेः अग्निप्रकरणाम्नातेन 'चरुमुपदधाती'ति विधिना चरूपधाने स्थलाङ्गतया विनियुज्यमाने तस्य साक्षात्स्थलनिर्वर्तकत्वायोगात् उपहितेन चरुणा तन्निवृत्तिदर्शनाच्चोपधानस्य स्थलाङ्गत्वं चरुसंस्कारद्वारकमित्यर्थसिद्धमेव हि चरोरुपधानसंस्कार्यत्वं द्वितीययानूद्यते । एवमिहाप्यध्ययनस्य तत्समाध्यनन्तरारम्भणीयमीमांसापरिचयोत्तरकालभाविन्यर्थज्ञाने साक्षात्कारणत्वायोगादध्ययनगृहीतस्वाध्यायेन कालान्तरे स्मृतिसमारूढेन द्वारेणार्थज्ञानदर्शनाच्चार्थसिद्धं स्वाध्यायस्याध्ययनसंस्कार्यत्वं तव्यप्रत्ययेनानूद्यत इत्युपपद्यते । यदि 'अधीतेन स्वाध्यायेनार्थज्ञानं भावये'दिति विधिविपरिणाम इष्यते तदा स्वाध्यायस्योपादेयत्वेऽप्यध्ययनस्य तद्विशेषणत्वादध्ययनं प्रति स्वाध्यायस्य न प्राधान्यप्रतीतिभङ्गशङ्कावकाशः । एवं स्वाध्यायस्योपादेयत्वे सत्येव 'स्वाध्यायोऽध्येतव्य' इति स्वशाखामात्राध्ययनविधिरिति सिद्धान्तमर्यादा सङ्गच्छते । अध्यायशब्दोक्तायां शाखायामेकवचनोक्तस्यैकत्वस्य स्वशब्दोक्तस्य पितृपितामहादिपरंपरागतत्वरूपस्यात्मीयत्वस्य वा विवक्षितुं शक्यत्वात् । स्वाध्यायस्योद्देश्यत्वे तु तद्विशेषणविवक्षाया असम्भवात् सा न सङ्गच्छते । तस्मात्तात्पर्यसिद्ध्यर्थमर्थज्ञानमपि सम्भवस्थलेष्वध्ययनविधिफलत्वेनाभ्युपगन्तव्यम् इति चेन्मैवम् । लोकव्युत्पत्तिसिद्धस्य शब्दानामर्थपरत्वस्यौत्सर्गिकस्य क्वचित्क्वचिल्लौकिकवाक्ये वक्तृदोषादपवादेऽप्यपौरुषेये वेदे तदभावान्निरपवादस्य स्वत एव सतस्तस्यार्थज्ञानोद्देश्यकशब्दोच्चारणविधिनिरपेक्षतया तत्सिद्ध्यर्थं तव्यप्रत्ययोपात्तत्वेन श्रुतमक्षरावाप्तिफलमुल्लङ्घ्य तत्फलभूतस्यार्थज्ञानस्यापि वैधफलत्वकल्पनायोगात् । ननु, शब्दानामर्थपरत्वमात्रं व्युत्पत्तिसिद्धं न त्वग्निहोत्रादिवाक्यं तत्तदर्थविशेषपरमित्यपि । तत्तु तत्तदर्थविशेषबोधमुद्दिश्योच्चारणमपेक्षत इति तदर्थमर्थज्ञानस्य वैधाध्ययनफलत्वं कल्पनीयमिति चेन्न । अध्ययनविधिनापि तदलाभात् । न ह्यध्ययनविधिः प्रतिवाक्यं तत्तदर्थज्ञानमुद्दिश्य तत्तद्वाक्योच्चारणविधाने व्याप्रियते । स्वाध्यायाध्ययनेन यद्भावयितुं शक्यं तद्भावयेदिति विधाने सत्यग्निहोत्रादिवाक्याध्ययनेन न्यायलभ्यतत्तदर्थविशेषज्ञानमेव भावयितुं शक्यमिति तत्र तत्रार्थविशेषतात्पर्यमर्थतः सिद्ध्येदिति चेत् तर्ह्यग्निहोत्रादिवाक्यानामौत्सर्गिकमर्थपरत्वमेव न्यायपर्यालोचनया तत्तदर्थविशेषतात्पर्यरूपतया पर्यवस्यतीत्येवास्तु किमर्थावबोधमुद्दिश्योच्चारणविधिना । यदि च लोके दृष्टमित्येतावता वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणमाद्रियेत तदा स्वतन्त्रवक्तृविवक्षितेतरार्थावबोधमुद्दिश्य श्रोतृभिरुच्चारणे कृतेऽपि तस्य वाक्यस्य तत्र तात्पर्यं न दृष्टम् । किं तु स्वतन्त्रवक्त्रा यस्यार्थस्यावबोधमुद्दिश्योच्चारणं कृतं तत्रैव तात्पर्यं दृष्टमिति वेदस्य तात्पर्यसिद्ध्यर्थं पौरुषेयत्वमपि कल्प्येत । वस्तुतस्तु लोकेऽपि नोच्चारणाधीनं तात्पर्यम् । एकाकिना मौनिना लिखित्वा दत्ते परेणाप्येकेनैव लिखितं दृष्ट्वा मनसाऽनुसंहिते श्लोकादावुच्चारणाभावात् । किं त्वस्मद्वाक्यादेतदर्थप्रतीतिर्भवत्विति वक्तृविवक्षाधीनं तत् । अतस्तात्पर्यसिद्ध्यर्थमध्ययनविधेरर्थावबोधफलकत्वकल्पनायाः क-

(१) 'तत्तदर्थविशेषज्ञान' मिति ङ. च. पाठः । (२) 'रूपं तदा' इति ग. पाठः ।

थञ्चिदपि नावकाशः । वक्तृविवक्षा त्वपौरुषेये वेदे न सम्भवतीति व्युत्पत्तिसिद्धमर्थपरत्वं लोके वक्तृविवक्षिते विशेषे पर्यवस्यति। वेदे न्यायलभ्ये विशेषे तदनुसारेण लक्षणादिकल्पनमित्येवाभ्युपगन्तुं युक्तम् । अत एव वाक्यानां तात्पर्यसिद्धिमेवाध्ययनविधेर्व्यवधारणकल्पकन्यायं मन्वानेन भवदेवेनापि स्वाभिमतन्यायबलेनैव स्वाध्यायावाप्तिमात्रस्य फलताप्रत्यायकं तव्यप्रत्ययस्वारस्यमुल्लङ्घ्य स्वाध्यायाध्ययनेनार्थाववोधं भावयेदिति व्यवधारणकल्पनाङ्गीकृता । न ह्यध्ययनविधेरुक्तार्थतात्पर्यनिश्चयोऽयमर्थाववोधमुद्दिश्य तदुच्चारणविध्यधीनः । तथाश्रुतविध्यन्तराभावात् । अस्यैव विधेरपेक्षायामात्माश्रयापत्तेः । किं तु केवलन्यायाधीन एव वक्तव्यः । अतस्तात्पर्यसिद्ध्यर्थमध्ययनविधेरर्थाववोधफलकत्वकल्पनमित्येतत्तावदयुक्तम् । क्रमफलसङ्ग्रहार्थं यदनेन शक्यं भावयितुं तद्भावयेदित्यध्ययनविध्यर्थपर्यवसानादध्ययनेन भावयितुं शक्यमर्थज्ञानमपि तद्भाव्यकोटावनुप्रविशेदित्येतदप्ययुक्तम् । अनुष्ठानकालापेक्षितस्य समिद्यागादिस्मृतिक्रमस्याध्ययनगृहीतस्वाध्यायपाठक्रमेणाध्ययनविधिफलाक्षरावाप्त्यनुनिष्पादितया स्वत एव सम्भवतोऽध्ययनविधिफलत्वेन सङ्ग्राह्यत्वाभावात् तत्सङ्ग्रहार्थं यदनेन भावयितुं शक्यं तत्सर्वमनेन भावयेदित्यध्ययनविध्यर्थाङ्गीकारे अर्थज्ञानवत्ख्यातिलाभादीनां चार्वाकापादितफलानामपि तद्भाव्यकोट्यनुप्रवेशप्रसङ्गाच्च। तेषामपि लोकतः 'शोभतेऽस्य मुखं य एवं वेद आस्य प्रजायां वाजी जायत'इत्यादिश्रौतलिङ्गतश्चाध्ययनेन भावयितुं शक्यत्वावगमात् । 'शोभतेऽस्य मुखं य एवं वेदे'ति हि गर्भत्रिरात्रब्राह्मणज्ञस्य तद्ज्ञानफलानुवादः। शिष्यैरुद्वीक्ष्यमाणत्वात् तस्य मुखं शोभत' इति तदुपपादनं कृतमर्थवादाधिकरणे। अनेन ख्यातेरध्ययनावाप्यत्वं लब्धम्।'आस्य प्रजायां वाजी जायत'इति वेदानुमन्त्रणमन्त्रस्य तद्ज्ञानफलानुवादः । कुले सन्तताध्ययनश्रवणात्तद्ज्ञस्य प्रजासु मेधावी वेदविज्जायते स प्रतिग्रहादन्नमाप्नोतीति तदुपपादनं कृतम् । अनेन कैमुतिकन्यायेन साक्षादध्येतुर्धनलाभस्याध्ययनावाप्यत्वं लब्धं विध्यन्तरापेक्षितं यद्भावयितुं शक्यमिति विशेषितमिति चेत् धनलाभोऽपि न त्वर्थज्ञानवत् क्रतुविधिभिरपेक्षित एव। ख्यातिरपि धनलंभनद्वारा क्रतुषूपयुज्यते । तस्मादध्ययनविधेस्तव्यप्रत्ययोपात्ताक्षरावाप्तिफलकत्वमेव युक्तम्।न चैवं सति स्वाध्यायस्योद्देश्यत्वात् स्वीयत्वविशेषेणाविवक्षाप्रसङ्गात्सर्वशाखानामध्येतुमशक्यतया सङ्कोचापेक्षासत्त्वेन उद्देश्यस्यापि विशेषणसहिष्णुत्वात्'यस्योभावग्नी अनुगतौ अभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रित्यत्र निमित्तान्तर्गततयोद्देश्यविशेषभूतस्याप्यग्न्युभयत्वस्याधानेनाग्निद्वयोत्पादकस्वाभाव्येन एकस्याग्नेरुत्पादयितुमशक्यतया विवक्षितत्वस्य 'पुनराधेयमोदनव'दित्यधिकरणे ( जै०६-४-२६-सू.)निर्णीतत्वात्।तस्मात्'अध्ययनमात्रवत'इति पुरुषार्थाधिकरण (ब्र०३-४-१२.) सूत्रस्वारस्याच्च।अक्षरावाप्तिफलोऽध्ययनविधिर्न त्वर्थज्ञानफलः।अर्थज्ञानफलत्वस्याभावे तदुपयोगिनां व्याकरणादीनामङ्गत्वं न स्यादिति चेन्न।वेदाङ्गत्वं हि तेषां स्मृतं नाध्ययनाङ्गत्वम्।वेदाङ्गत्वं तु तेषामध्ययनस्यार्थज्ञानफलत्वाभावेऽपि युज्यते।आधानसंस्कृतस्याग्नेः क्रतुष्विवाध्ययनसंस्कृतस्य वेदस्यार्थज्ञानादुपयोगादक्षरावाप्तिफलोऽध्ययनविधिर्नार्थज्ञानफलः। अतोऽध्ययनविधिना ता-

(१) 'तस्मा' दिति. ङ.पाठः । (२) 'तद्ज्ञस्य' इति. घ. पाठः । (३) 'सर्ववेदान्तप्रत्ययाधिकरणसूत्र' इति घ. ङ. पुस्तकपाठो दृश्यते । ख. ग. पुस्तकयोस्तु अध्ययनेत्यादि स्वारस्याच्चेत्यन्तं न दृश्यते । तस्य सूत्रस्य पुरुषार्थाधिकरणगतत्वात्तथा निवर्तितमिति वेद्यम् ।

**रयोरपि क्रमनियमो युक्तः । यद्यप्यक्षरग्रहणमात्रपर्यवसायित्वमध्ययनविधेस्तथापि विचारयोर्न प्रवृत्त्यसम्भवः । साङ्गाध्ययनेनापाततः पदार्थमात्रप्रतीतेः । तदनु ब्रह्मस्थूलोपासनज्योतिष्टोमादिविधायकानां वाक्यानां सूक्ष्मोपासनभूतदहरादिविद्याविधायकानां च परस्परविरोधाभासं पश्यंस्तद्विचारे पुरुषार्थाकाङ्क्षी**

वद्विचारः कर्तव्यतया नाक्षिप्यते।नापि क्रतुविधिभिः।तत्तदनुष्ठानकालापेक्षितस्य तत्तद्ज्ञानस्य कल्पसूत्रोपदृष्टवचनादिभिरपि सम्भवात् । तस्माद्वेदार्थविचारकर्तव्यतायामेव न मानं दूरे कर्मब्रह्मविचारयोः क्रमनियम इत्याशङ्क्याह—यदीति । स्थूलोपासनानि बाह्यत्वात् मुक्तौ ज्ञानद्वारकत्वाच्च बहिरङ्गसाधनानि सूक्ष्मोपासनानि आन्तरत्वात् मुक्तौ कर्मवद्व्यवहितसाधनत्वाभावाच्चान्तरङ्गसाधनानि । परस्परेति । 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति' । 'तद्यथेह कर्मचितो लोकः क्षीयते' किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः पुत्रं ब्रह्माणमिच्छध्वं स वै लोको वदावदः' 'किं प्रजया करिष्यामो येषां नोऽयमात्मे'त्यादीनां कर्मब्रह्मकाण्डगतवाक्यानां वस्तुतो विरोधरहितानामप्यापाततः प्रतीयमानो विरोधः परस्परविरोधाभासः। इदमुपलक्षणम् । एकैकस्मिन्नपि काण्डे उदितानुदितहोमादिवाक्यानामेकैकस्मिन्नपि वाक्ये तत्तदधिकरणप्रदर्शनीयपूर्वपक्षसिद्धान्तयुक्तिलेशावलम्बनेन प्रतीयमानानामर्थानां च विरोधाभासोऽपि द्रष्टव्यः । नन्वेवंभूतविरोधाभासनिरासार्थे विचारे कृते कः पुरुषार्थो लभ्यते क्रतुविद्यानुष्ठानसिद्धिरिति चेन्न । सकलवेदार्थनिर्णायकन्यायाभिज्ञैर्महर्षिभिः प्रणीतानि कल्पसूत्राणि विद्यानिर्णायकानि वासिष्ठादीनि कल्पानि चाधीतवतां विचारितसकलमीमांसाद्वयनिरूपितन्यायनिकुरुम्बैरुपद्रष्टृभिरधिष्ठितानां वा तदुक्तार्थेष्वाप्तोक्तत्वविश्वासादेव प्रतीयमानविरोधानां केचन परिहारास्सन्तीति निश्चयेन क्रतुषु विद्यासु च प्रवृत्त्युपपत्तेरिति चेदुच्यते । अध्ययनसंस्कृतः स्वाध्यायो 'भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीति' न्यायेनाधानसंस्कृतोऽग्निरिव भूतोपयोगराहित्यात् क्वचिद्भाव्युपयोगमपेक्षमाणः फलान्तरोपयोगिनि भृतकाध्यापनादिवत् प्रतिषेधरहिते यत्रयत्र कार्ये समर्थत्वेनावधार्यते तत्र सर्वत्रापि वस्तुसामर्थ्यलक्षणेन लिङ्गेन विनियुज्यते । न ह्याधानसंस्कृतस्याग्नेर्यदाहवनीये जुहोती'त्यादिवाचनिकविनियोगवदस्य क्वचिद्वाचनिकविनियोगोऽस्ति । येन तन्निराकाङ्क्षीकृतस्सन्नयं लिङ्गादन्यत्र न विनियुज्येत । तथा चाध्ययनसंस्कृते स्वाध्याये सत्यसम्भवदुपायान्तरे 'धन्यं यशस्यमायुष्यं पुण्यं स्वर्गापवर्गदम् । धारणं धर्मशास्त्रस्य वेदानां धारणं तथा ॥ 'त्रिभिरनश्नत्पारायणैः पूतो भवती'त्यादिवचनावगतफलान्तरोपयोगे धारणपारायणादिकार्य इव कर्मज्ञानानुष्ठानद्वाराभ्युदयनिश्रेयसोपयोगिन्यर्थज्ञाने सम्भवद्वेदार्थसङ्ग्रहकपौरुषेयग्रन्थाद्युपायान्तरेऽप्ययं विनियुज्यत एव । सामर्थ्याविशेषात् । अत एव 'विहारो लौकिकानामर्थं साधयेत्प्रभुत्वा'दिति( जै० १२-२-१-सू ) द्वादशाध्यायाधिकरणे आधानसंस्कृतानामग्नीनां विनियोगापेक्षायां लौकिकाग्निसाध्यतया सम्भवदुपायान्तरेषु लौकिकेषु पचनदहनप्रकाशनादिष्वपि विनियोगः पूर्वपक्षितः । तन्निरासार्थमेव हि तदधिकरणं न तु स्थालीपाकादिस्मार्तसाधारण्यशङ्कानिरासार्थम् । तेष्वौपासनाग्निकर्तव्यतयोत्पन्नेषु पदहोमादिष्विव विनियोगशङ्कानवकाशात् । आधानसंस्कृतस्याग्नेर्वाचनिकविनियोगैर्निराकाङ्क्षीकरणात्तत्र पूर्वपक्षन्यायनिरासेऽप्यत्र तदभावात्पूर्वपक्षन्याय एवावतिष्ठते । अपि च पदतदर्थावधारणादिद्वारार्थज्ञानैकोपायानां वेदाध्ययनका-

ऽध्येतव्यानां व्याकरणादीनां वेदाङ्गत्वान्यथानुपपत्त्याप्यधीतस्वाध्यायस्यार्थ्यर्थज्ञाने विनियोगस्सिध्यति । अकिञ्चित्करस्याङ्गत्वायोगात् नित्ये वेदस्वरूपेऽनुपकारकाणां तेषां फलोपकारकत्वस्यैव वक्तव्यत्वाच्च । एवं चाङ्गाध्ययनं स्वाध्यायादापाततो ज्ञानस्य तन्निर्णय एव पुरुषार्थावगतेश्चोत्पादनेन तन्निर्णिनीषामुत्पादयति । सा च न्यायविचारमन्तरेण वेदात्तदर्थनिर्णयासम्भवात् तन्निर्णयार्थं विचिचारयिषामुत्पाद्य विचारे प्रवर्तयतीत्यध्ययनविधेरक्षरग्रहणपर्यन्तत्वेऽपि नियमेन विचारे प्रवृत्तिस्सिध्यति । एतत्सर्वं 'स्वाध्यायसंस्कारोऽध्ययन'मिति पक्षमनुवदतोऽङ्गाध्ययनादापातप्रतीत्यादिकं वदतश्च भाष्यकारस्य हृदयस्थितमुन्नीयते । एतेन व्याकरणादीनामङ्गत्वान्यथानुपपत्त्याध्ययनस्यार्थज्ञानफलकत्वमङ्गीकर्तव्यमिति शङ्कापि निरस्ता । वेदाङ्गत्वं हि तेषामुच्यते न त्वध्ययनाङ्गत्वम् । वेदाङ्गत्वं तु तेषामध्ययनस्याक्षरग्रहणमात्रपर्यन्तत्वेऽप्यध्ययनसंस्कृतस्य वेदस्यार्थज्ञानोपयोगित्वात् युज्यत एव । नन्वङ्गाध्ययनस्यार्थज्ञानपर्यन्तत्वमवश्यमङ्गीकरणीयम् । अन्यथाध्ययनसंस्कृतवेदजन्यार्थज्ञानोपयोगित्वासम्भवेन वेदाङ्गत्वानिर्वाहात् । ततश्चाङ्गाध्ययनवद्वेदाध्ययनमप्यर्थज्ञानपर्यन्तं स्यात् । 'स्वाध्यायोऽध्येतव्य'इत्यत्र तव्यप्रत्ययस्वारस्यातिलङ्घनमपि 'वेदाङ्गानि समस्तानि कृष्णपक्षेषु सम्पठे'दित्यत्र द्वितीयाविभक्तिस्वारस्यातिलङ्घनवदेव स्यादिति चेन्न । 'प्रयाजशेषेण हवींष्यभिघारयती'त्यत्र प्रयाजशेषप्रातिपदिकानुसारेण तृतीयाविभक्त्यवगतगुणभावस्येव 'वेदाङ्गानी'ति स्मृतावङ्गप्रातिपदिकानुसारेण द्वितीयाविभक्त्यवगतप्राधान्यस्य त्यागेऽपि स्वाध्यायविधिवाक्यगततव्यप्रत्ययस्वारस्यत्यागे कारणाभावात् नित्यस्याध्ययनस्यार्थज्ञानपर्यन्तत्वे नियतकर्तव्याग्निहोत्राद्यनुष्ठानोपयोगिकर्मभागज्ञानार्थस्य धर्मविचारस्येव ब्रह्मविचारस्यापि विरक्ताविरक्तसाधारण्येन सर्वैरपि कर्तव्यतापत्त्या 'परीक्ष्य लोका'नित्यादिश्रुतिविरोधापत्तेश्च । न चाध्ययनसंस्कृतस्य वेदस्य लिङ्गादर्थज्ञाने विनियोगेऽप्येष दोषः । यथाऽऽधानविधिरग्निसंस्कारमात्रपर्यवसायीत्याधानेनार्जितस्याग्नेर्यदा यदग्निसाध्यं कर्म नित्यं काम्यं वा कर्तव्यतयोपस्थितं तदा तत्र विनियोगः, यथा वा धनार्जनविधिरर्थप्राप्तिपर्यवसायीति प्रतिग्रहादिनार्जितस्य धनस्य यदा यद्धनसाध्यं लौकिकं वैदिकं वा कर्म कर्तव्यतयोपस्थितं तदा तत्र विनियोगः तथाध्ययनविधेरक्षरग्रहणपर्यवसायित्वे यदा स्वाध्यायसाध्यं जपपारायणार्थज्ञानादि कर्तव्यतयोपस्थितं तदा तत्र विनियोग इत्युपपत्तेः । नन्वध्ययनविधेरक्षरग्रहणमात्रपर्यवसायित्वेनार्थज्ञानपर्यन्तत्वाभावे'अधीत्य स्नाया'दिति विधेरप्यक्षरग्रहणानन्तरमेव स्नानकर्तव्यताविधायितया स्नानात्पूर्वं कर्मविचारो न स्यात् । न च स्नानानन्तरमेव दारपरिग्रहं कृत्वाऽग्नीनाधायावश्यकर्तव्यानामग्निहोत्रादिकर्मणामनुष्ठानसिद्ध्यर्थमर्थज्ञानस्यापेक्षितत्वात्तदर्थं स ततः पूर्वं स्यादिति वाच्यम् । तथा स 'त्वधीत्य स्नाया' दिति श्रौतक्रमविरोधप्रसङ्गात् । अग्निहोत्रानुष्ठानाद्यपेक्षितज्ञानस्याध्ययनतदङ्गानुष्ठानाद्यपेक्षितज्ञानस्येव उपद्रष्टृवचनादिभिरपि सम्भवात् । न च वाच्यमध्ययनसंस्कृतस्य स्वाध्यायस्य विनियोगाकाङ्क्षायां लिङ्गादर्थज्ञाने विनियोगो 'वेदेनैव वेदार्थो ज्ञातव्य' इत्युपायनियमपर्यवसायी । अतस्तस्य नियतोपायस्या-

(१) 'ध्यायस्यार्थज्ञाने' इति घ. पाठः । (२) 'सायित्वे सत्यर्थज्ञान' इति क. पाठः ।

**पुरुषस्स्वयमेव प्रवर्तते। ततो नानिबन्धनो विचारः। ननु 'श्रोतव्य' इति वाक्येन वेदान्तश्रवणं साक्षाद्विधीयत इति चेन्न। विधित्वप्रयोजकरूपसम्पत्त्यभावात्।**

---

ध्ययनाद्यनुष्ठानोपयोगिज्ञानात् पवमानेष्टेराहवनीयाग्निहोत्रहवणीवदसम्भवाच्चावृत्तावप्यग्निहोत्राद्युपयोगिनि ज्ञाने सम्भवतस्तस्य त्यागो न युक्त इति। अर्थज्ञानोपायनियमप्रापकालिङ्गा'दधीत्य स्नाया'दिति क्त्वाश्रुतेः प्रबलत्वात्। न च स्मृतिगतक्त्वाश्रुतितः श्रुतितदर्थगतं लिङ्गं प्रबलम्। स्मृतेर्भ्रान्त्यादिमूलान्तरस्यापि सम्भवादिति वाच्यम्। आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणापि समावृत्येति श्रुतावप्यधीत्येति क्त्वाश्रुतेः श्रवणादिति चेन्नैवम्। नियततोपायरूपपदार्थविषयस्य लिङ्गस्य पदार्थधर्मरूपक्रमविषयक्त्वाश्रुतितो "दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा। तदापि विपरीतत्वं शिष्टाकोपे यथोदित"मिति न्यायेन 'क्षुत आचामेत्' इत्याचमनपदार्थविषयस्मृते'र्वेदं कृत्वा वेदिं करोतीति'क्रमविषयश्रुतित इव प्रबलतया तद्बलेन स्नानात्पूर्वं कर्मविचारसिद्धेः। तदेतत्सर्वमभिप्रेत्य विचारे प्रवर्तकाभावशङ्कानिरासमुपसंहरति—ततइति। एवं स्वाभिमतविचारे प्रवर्तकमुपपाद्य श्रवणविधिस्तत्र प्रवर्तक इति मतं निरसितुमाशङ्कते—नन्विति। वेदान्तश्रवणमिति। यद्यपि श्रवणविधिवाक्ये वेदान्तग्रहणं नास्ति। तथा 'प्यात्मा श्रोतव्य' इति विधीयमानं ब्रह्मणि तात्पर्यावधारणरूपं श्रवणं ब्रह्मणो वेदान्तैकप्रमाणकत्वात्तत्तात्पर्यावधारणरूपं पर्यवस्यतीति भावः। श्रवणे विधिरेव न सम्भवतीति कुतस्तस्य प्रवर्तकत्वमित्यभिप्रेत्य तत्र विध्यसम्भवे हेतुमाह—नेति। विधित्वेति। विधित्वे प्रयोजकानि रूपाणि त्रैकालिकाप्राप्तिपाक्षिकप्राप्तिसमुच्चितप्राप्तयः। यथा—'व्रीहीन्प्रोक्षती'ऽत्यत्र दार्शपूर्णमासिकेषु व्रीहिषु विधेयस्य प्रोक्षणस्यैतद्विध्यभावे कालत्रयेऽप्यन्यतः प्राप्तिर्न सम्भवति अतस्तत्र तत्प्राप्तिफलकोऽपूर्वविधिः। 'व्रीहीनवहन्ती'त्यत्र पुरोडाशप्रकृतिभूतानामेव व्रीहीणां पुरोडाशनिर्वर्तनार्थमपेक्षिते तण्डुलीभावे लोकावगतसाधनत्वेनैतद्विध्यभावेप्यवहननस्याक्षेपतः प्राप्तिस्सम्भवति। किं तु तत्र लोकावगतसाधनत्वाविशेषात् कदाचिन्नखविदलनादिकमपि प्राप्नुयादिति पाक्षिक्यवहननस्य प्राप्तिः। अतोऽवहनने तदप्राप्तांशपरिपूरणफलो नियमविधिः। 'इमामगृभ्णन्रशनामृतस्ये' त्यग्निचयनप्रकरणाम्नातस्य मन्त्रस्य तंत्रानुष्ठेयेऽश्वरशनाग्रहणे रशनाग्रहणप्रकाशनसामर्थ्यरूपलिङ्गात्प्राप्तिः 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त' इति विध्यभावेऽपि सम्भवत्येव। किंतु लिङ्गाविशेषात्तत्रत्ये गर्दभरशनाग्रहणेऽपि प्राप्तिस्स्यादिति तन्निवृत्त्यर्थः परिसङ्ख्याविधिः। यद्यपि नियमपरिसङ्ख्योदाहरणयोः पाक्षिकी नियता च प्राप्तिर्वस्तुतो नास्त्येव। तुषविमोकेन कार्येणाक्षिप्ततया ह्यवघातस्य पाक्षिकी प्राप्तिर्वक्तव्या। आक्षेपात्प्रागेव 'व्रीहीनवहन्ती'ति प्रत्यक्षशास्त्रं झटिति प्रवर्तते। तदनन्तरं प्रत्यक्षशास्त्रसिद्धेनैकेनोपायेन नैराकाङ्क्ष्यादनियततोपायाक्षेप एव न प्रवर्तते। एवं प्रत्यक्षशास्त्रेणाश्वरशनाग्रहणे झटिति विनियुक्तस्य तेनैव नैराकाङ्क्ष्यात् रशनाद्वयसाधारण्येन लैङ्गिकविनियोगकल्पनं न प्रवर्तते। एवं च नियमपरिसङ्ख्ययोरप्यपूर्वविधिवद्वस्तुतोऽत्यन्ता-

---

(१) 'पयोगित्वस्य' इति च. पाठः। (२) तदर्थज्ञानोपाय' इति घ. पाठः। (३)'सम्भवतीति अतस्तत्र' इति क. घ. पाठः। (४) 'तन्त्रानुष्ठेये' इति क. घ. पाठः।

तथाहि वेदान्तश्रवणं नापूर्वविधिगोचरः । प्राप्तत्वात् । प्राप्तिश्च वेदान्तश्रवणं स्व-

प्राप्त एव विषयः । तथापि नियमपरिसङ्ख्याशास्त्रयोरप्रवृत्तावर्थाक्षेपेण नखविदलनस्यापि क-दाचित्प्राप्त्याऽवघातस्य पाक्षिक्येव प्राप्तिः स्यात् । मन्त्रस्य च लिङ्गाविशेषेण गर्दभरशना-ग्रहणेऽपि विनियोगः स्यात् । तयोः प्रवृत्तौ त्वाक्षेपमन्त्रलिङ्गावतारप्रतिबन्धादवघातस्य नि-यतता मन्त्रस्य गर्दभरशनातो निवृत्तिश्च लभ्यत इति नियमपरिसङ्ख्याविध्योः प्रवृत्तावपूर्व-विध्यविशेषेऽप्याक्षेपमन्त्रलिङ्गावतारप्रतिबन्धद्वाराऽवघातनियमेन गर्दभरशनायां मन्त्रवर्जनेन फलवत्त्वात् फलतो नियमपरिसङ्ख्याव्यपदेश इत्यपूर्वविधितस्तयोर्भेदः । यद्यपि नियमे विद-लनादिनिवृत्तिः परिसङ्ख्यायां गर्दभरशनादिनिवृत्तिरितीतरनिवृत्तिलाभ उभयत्राप्यविशिष्टः । अवघातेनैव तुषविमोकः कार्यः अश्वरशनायामेव मन्त्रः कार्य इत्येवकारेण फलविवरणमप्य-विशिष्टम् । तथाप्यवघातशास्त्रेणावघातनियमस्याक्षेपतोवघातप्राप्यव्रीह्यंशेषु अवघातप्रापण-रूपस्याकरणे उपायान्तरेण साधारणेनाक्षेपेणापातत उपायान्तरस्य निराकर्तुमशक्यतया त-न्निवृत्त्यसम्भवेन नियमस्य प्रथमोपस्थितत्वात् विधेयगतत्वेन प्रत्यासन्नत्वाच्चाप्राप्तांशपरिपूर-णरूपो नियम एव फलम् । उपायान्तरनिवृत्तिश्चरमोपस्थितत्वादविधेयगतत्वेन विप्रकृष्टत्वाच्च तदनुनिष्पादिनी न फलम् । परिसङ्ख्योदाहरणे तु द्वयोरपि नित्यप्राप्तिसम्भवेन स्वरूपप्राप्तेर्नि-यमस्य वा फलत्वायोगादितरनिवृत्तिरेव फलम् । एवं नियमपरिसङ्ख्याविध्योः फलभेदे[1] सति एवकारेण फलविवरणमेकत्रायोगव्यवच्छेदार्थमन्यत्रान्ययोगव्यवच्छेदार्थमिति विशेषः । एव-मपूर्वविधित्वादि प्रयोजकरूपाणां मध्ये अन्यतमस्य सम्पत्त्यभावादित्यर्थः । ननु, प्राप्तत्वादिति हेतुरसिद्धः । वेदान्तश्रवणकर्तव्यताबोधकप्रमाणानुपलम्भादित्यत आह—प्राप्तिश्चेति । वेदा-न्तश्रवणं तदर्थावगतिसाधनत्वेन विधीयत इति हि प्रतीयते । तन्न सम्भवति । सामान्यतः श्रव-णमात्रं श्रवणविषयशब्दोपात्तार्थावगतिसाधनमिति नियमस्य वैद्यशास्त्रश्रवणादिषु दृष्टतया तद्वद्वेदान्तशास्त्रश्रवणेऽपि स्वविषयोपात्तावगतिसाधनत्वस्यानुमानेन प्राप्तेरित्यर्थः । स्यादेतत् वेदान्तश्रवणस्यार्थावगतिसाधनत्वेन[2] विधेः प्रतीतौ खलु तत्प्राप्तेः समर्थनेन तत्र विधिर्नि-रसनीयः । तत्प्रतीतिरेव कुतः । न ख'ल्वात्मा श्रोतव्य' इत्यत्रावगतिकामेनेति विशेषणमस्ति, प्रकरणाल्लभ्यत इति चेन्न । 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि' त्युपक्रमगतमैत्रेयीप्रश्नस्यामृतत्वसाधनविषयतया प्रकरणालोचनायाममृतत्वस्यैव फलत्वेनान्वयलाभात् तत्फलकत्वे चापूर्वविधित्वस्य प्रत्याख्यातुमशक्यत्वात् । ननु, श्रवणवि-धिसन्निधौ द्रष्टव्य इत्यनुवादः तस्यैव फलसमर्पकः । अतस्तत्र दृशिधातुना[3] ज्ञानमात्रं विवक्षित-मिति वक्तव्यम् । साक्षात्कारस्य शब्दप्रमाणफलत्वायोगादिति चेन्न । साक्षात्कारस्य साक्षात्त-त्फलत्वासम्भवेऽपि श्रवणजन्य[4]वेदान्तार्थनिर्णयसापेक्षनिदिध्यासनसाध्यस्य तस्य[5] तद्द्वारा प-रम्परया तत्फलत्वसम्भवात् । ननु, वेदान्तश्रवणजन्यार्थ[6]ज्ञानस्य निदिध्यासनानुष्ठान एवोपक्षी-णत्वात्कर्मानुष्ठानोपयोग्यर्थज्ञानस्य कर्मफले स्वर्गादाविव निदिध्यासनफले साक्षात्कारे कार-णत्वं नास्तीति तस्यापि कारणभूतस्य वेदान्तश्रवणस्य सुतरां तत्र कारणत्वं न सम्भवतीति

(१) 'फलभेदे स्थिते सति इति क. पाठः । (२) 'श्रवणस्यावगति' इति घ. पाठः । (३) 'धातुना श्रवण-जन्यत्वयोग्यं ज्ञानमात्रं' इति घ. पाठः । (४) 'विधिश्रवण' इति ङ. पाठः । (५) 'तस्य परंपरया' इति घ. पाठः । 'तस्य तद्द्वारा तत्फलत्व' इति क. पाठश्च । (६) 'जन्यज्ञानस्य' इति घ. पाठः ।

चेत् दृष्टान्ते कारणताग्राहकप्रमाणाभावात्तथैव । इह तु 'द्रष्टव्यः श्रोतव्य' इति तद्ग्राहकप्रमाणसत्त्वे कथं कारणत्वं न स्यात्। न चाकारणेनार्थनिर्णये न व्यवधानं बाधकम् । चाक्षुषसाक्षात्कारे चक्षुषस्संयोगजनककर्मणोऽकारणत्वेऽपि सन्निकर्षद्वारा चक्षुषः कारणत्वदर्शनेनाकारणव्यवधानस्य तद्बाधकत्वाभावात् तद्बाधकत्वे वा श्रुतश्रवणकारणत्वोपपत्त्यर्थं तज्जन्यस्यार्थज्ञानस्यापि निदिध्यासनद्वारा साक्षात्कारकारणत्वोपपत्तेश्च । ननु, 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमान' इति श्रुत्यन्तरे साक्षात्कारस्य निदिध्यासनफलत्वावगमादिह सन्निहितश्रवणफलसमर्पकस्य द्रष्टव्यपदस्य तदन्यज्ञानपरत्वं वक्तव्यमिति चेन्न । श्रवणनिर्वर्त्यनिदिध्यासनजन्ये साक्षात्कारे श्रवणस्यापि श्रुतिबलात्कारणत्वोपपत्तेः । पुरोडाशनिर्वर्त्ये यागे पुरोडाशनिर्वर्तकानां व्रीहीणामपि 'व्रीहिभिर्यजेतेति' श्रुतिबलेनैव कारणत्वाभ्युपगमात् । सामशब्दोक्तगीत्यभिव्यक्त ऋक्साध्ये गुणाभिधानरूपे स्तोत्रे 'साम्ना स्तुवीते'ति श्रुतिबलात् साम्नोऽपि कारणत्वाभ्युपगमाच्च । ननु, द्रष्टव्यपदेन श्रवणविधिवाक्यबहिर्भूतेन श्रवणस्यावगतिसाधनत्वेन विधिप्रतीतिर्माभूत् तदन्तर्भूतेन तव्यप्रत्ययेनैव सा लभ्यते (तें[3])न हि वेदान्तश्रवणं प्रत्यप्यात्मनो विषयत्वरूपं कर्मत्वं प्रतीयते। न चात्मा वेदान्तशब्दश्रवणस्य साक्षाद्विषयो भवति। भवति तु 'प्रत्यक्षप्रमाणविषयो घटः' 'अनुमानप्रमाणविषयो वह्नि'रित्यत्र घटवह्निवत् तत्साध्यावगतिविषयतया व्यवहितविषयः। तथा च तथाभूतं व्यवहितविषयत्वमेवात्र तव्यप्रत्ययेन बोध्यत इत्युपपादनीयम्। एवं च तत्समानसंवित्संवेद्यतया आत्मविषयावगतिसाधनत्वमपि श्रवणस्य प्रतीयत इति तेन रूपेण श्रवणे विधिरुपपद्यत इति चेत् । स्यादेतदेवम् । यदि वेदान्तशब्दमात्रगोचरज्ञानमिह श्रवणं भवेत् । किं तु वेदान्तानां ब्रह्मणि तात्पर्यावधारणमत्र श्रवणं विवक्षणीयम् । तथैव भाष्यकृता समन्वयसूत्रे 'श्रवणं नाम सर्वेषां वेदान्तानां परात्परे। उपक्रमादिभिर्लिङ्गैश्शिवे तात्पर्यनिर्णयः।'इति वृद्धप्रसिद्धिमुदाहृत्य वक्ष्यमाणत्वेन तत्रैवावगतिसाधनत्वेन विधिशङ्कायाः प्राप्तिसमर्थनेन तन्निरासस्य च कर्तव्यत्वात् । न च तात्पर्यावधारणस्यात्मा विषयो न भवति । येन तत्साध्यावगतिविषयत्वलक्षणं व्यवहितविषयत्वं तव्यप्रत्ययार्थ इत्याश्रीयेत । अस्ति हि ब्रह्मणि तात्पर्यावधारणे ब्रह्मणोऽपि विषयत्वम् । अतो वेदान्ततात्पर्यावधारणस्यात्मा विषयीकर्तव्य इत्यर्थाश्रयणे नास्त्यनुपपत्तिरिति न व्यवहितविषयत्वार्थाश्रयणेनात्मावगतिसाधनत्वस्य प्रतीतिरुपपादयितुं शक्या । एवं तर्हि ग्रहणस्यावगतिसाधनत्वप्रतीतिरर्थस्वभावेनैवास्तु 'व्रीहीनवहन्ती'त्यत्रावहननस्य तुषविमोकसाधनत्वप्रतीतिरिवेति चेन्न । तथा सति लोकसिद्धकार्यकारणभावालोचनयैवार्थावगतेः फलत्वेन प्राप्तिमभ्युपगम्य तत्फलकश्रवणविधिरिति शङ्कावतरणे प्राप्तविषये विधिरुन्मज्जन्नियमविधित्वादिरूपेणैवोन्मज्जतीति तत्रापूर्वविधित्वशङ्कावकाशाभावप्रसङ्गात् । तस्मादवगतिसाधनत्वेनापूर्वविधिरिति शङ्कानिराकरणार्थमनुमानेन प्राप्तिप्रदर्शनमिदमकाण्डताण्डवमिति चेदुच्यते । श्रोतव्य इत्यत्र श्रवणे विधिप्रतीत्या तस्य फलाकाङ्क्षायां सन्निहितं द्रष्टव्यपदं फलसमर्पकं युक्तम् । तत्र दृशिधात्वर्थस्साक्षात्कारस्तस्य साक्षा-

---

( १ ) 'दर्शनेन व्यवधानस्य' इति क. घ. पाठः ( २ ) 'श्रुत्यन्तरेण' इति ङ. पाठः । (३) इदं ङ. पाठ एव दृश्यते । ( ४ ) 'वाक्यानां वैदिकानां' इति पाठान्तरम् ।

त्फलं भवितुं नार्हति। क्वचिदपि शब्दप्रमाणतः साक्षात्कारादर्शनेन शब्दप्रमाणमात्रस्य तं प्रत्ययोग्यत्वावधारणात् (तत्फलकस्य[1] निदिध्यासनविधेस्सत्त्वाच्च ।) निदिध्यासनद्वारा तस्य फलत्वसम्भवेऽपि तत्फलकत्वबोधकश्रवणविधेर्नास्ति प्रयोजनम् । तद्धि न तावत् निदिध्यासने प्रवृत्त्यर्थम् । निदिध्यासनेऽप्यत्र विधेः श्रूयमाणतया तस्य 'ततस्तु तं पश्यत' इत्यादि श्रुत्यन्तरानुसारात् साक्षात्कारफलत्वेन तदर्थिनस्तत्र स्वविधित एव प्रवृत्त्युपपत्तेः । नापि श्रवणे प्रवृत्त्यर्थम् । श्रवणस्य परम्परया निदिध्यासनसाध्यसाक्षात्कारजनकत्वज्ञानेऽपि परम्पराघटकार्थावगतिजनकत्वाज्ञानेन तदर्थितया तत्र प्रवृत्तेरनुपपत्तेः । अन्यतस्तज्जनकत्वज्ञाने तत एव तत्र प्रवृत्त्युपपत्तेः व्रीहिसामादिन्यायेनैतद्विधिसामर्थ्यादेव श्रवणस्य पार्ष्ठिकान्वयकल्पनया श्रवणे प्रवृत्तिरुपपद्यत इति चेन्न । तत्कल्पनस्य वस्तुसामर्थ्यावगत्यधीनत्वात् इह च बहुशः कृतश्रवणानामपि प्रायशस्तत्त्वनिर्णयादर्शनेनाकृतश्रवणस्यापि गर्भस्थस्य वामदेवस्य तद्दर्शनेन चोभयतस्तद्व्यभिचारेण[2] वस्तुसामर्थ्यासिद्धेः । ननु, वामदेवस्य निदिध्यासनं विना साक्षात्कारो दृष्ट इति निदिध्यासनस्यैव व्यतिरेकव्यभिचारः न श्रवणस्येति चेन्न। गर्भे साक्षात्कारवतो वामदेवस्य गर्भ एव निदिध्यासनस्य तदनुष्ठानोपयोग्यर्थावगतेरपि कल्पयितुं शक्यत्वेन गुरुमुखाधीनन्यायविचारलब्धतात्पर्यनिर्णयात्मकेऽर्थावगतिकारणे श्रवण एव व्यभिचारपर्यवसानात् । तस्माद्द्रष्टव्य इत्यत्र दृशिधातोश्चाक्षुषसाक्षात्कारवाचकस्य मानससाक्षात्कारेऽपि लक्षणायाः कल्पनीयत्वात् तं विहाय स्वसन्निहितश्रवणविध्याकाङ्क्षानुसारेणावगतिसामान्ये लक्षणाकल्पनं युक्तम् । तथा चागममूलेऽर्थे पुत्रेष्टिकारीर्यादिन्यायेनोभयतोव्यभिचारदर्शनं न दोष इति व्यभिचारदर्शने सत्यप्यपूर्वविधिरभ्युपगन्तुं शक्य इति । एवमपूर्वविध्याशङ्कायां सत्यामनुमानेन प्राप्तिसमर्थनं सङ्गच्छत एव । नन्वस्त्वेतदेवं तथाप्यनुमानमनुपपन्नम् । तथाहि—अत्र वेदान्तशब्दमात्रगोचरज्ञानं पक्षः उत तत्तात्पर्यावधारणम् । नाद्यः । तत्रार्थावगतिसाधनत्वस्यानुमानतः प्राप्तावपि श्रोतव्य इत्यत्र श्रवणशब्दार्थत्वेनाभिमते तात्पर्यावधारणे तदप्राप्त्या तद्विधिनिरासासिद्धिप्रसङ्गात्। न द्वितीयः। तात्पर्यज्ञानस्य वाक्यार्थावगतिकारणत्वे मानाभावेन दृष्टान्तस्य साध्यवैकल्यात् । ननु, 'अहो विमलं जलं नद्याः कच्छे महिषश्चरती'त्यत्र नद्याः कच्छेनान्वये तात्पर्यं जलेन वेति तात्पर्यसंशये जलेनान्वये तात्पर्यं नास्तीति तद्व्यतिरेकनिश्चये च जलनदीसंसर्गगोचरवाक्यार्थावगत्यभावात् यत्संशयव्यतिरेकनिश्चयौ यत्प्रतिबन्धकौ तन्निश्चयस्तद्धेतुः । यथा व्याप्तिनिश्चयोऽनुमितिहेतुरिति नियमप्रसूतमनुमानं तत्र मानम् । न चाप्रयोजकत्वात् । तात्पर्यसंशयव्यतिरेकनिश्चययोर्वाक्यार्थज्ञानप्रतिबन्धकत्वनिर्वाहार्थं तदुभयाभावद्वयस्य तदुभयविरोधिनस्तात्पर्यनिश्चयस्य वाक्यार्थज्ञानकारणत्वे अवश्याभ्युपगन्तव्ये लाघवात्तात्पर्यनिश्चय एव कारणत्वेनाभ्युपगन्तुं युक्त इति लाघवतर्कसत्त्वात् । न च वाच्यं तात्पर्यज्ञानं वाक्यार्थावगतौ कारणमङ्गीकुर्वतापि समभिव्याहृतपदानामेकप्रतीतिजनकत्वलक्षणैकप्रयोजनकत्वज्ञानमपि तत्र कारणमङ्गीकरणीयम् । अन्यथा 'रक्तः पटो भवती'त्यत्र रक्तगुणस्य विषयाकाङ्क्षोत्थापनाभावप्रसङ्गात् रक्तगुणस्य पटान्वये तात्पर्यावगतावपि रक्तपदस्य केनचित् पदेनान्विताभिधाननियमेऽप्ययं

(१) एतद्रेखान्तर्गतं वाक्यं क. ख. ग. ङ. पुस्तकेषु न दृश्यते । (२) 'भयतो व्यभिचारेण' इति क. घ. ङ. पाठः ।

रक्तो भवति' 'पटो भवती' त्यनुषङ्गाध्याहाराभ्यां तात्पर्यान्विताभिधानयोरुपपन्नत्वेन रक्ताकाङ्क्षोत्थापनस्य रक्तादिपदत्रयविषयैकप्रयोजनकत्वज्ञानेनैव निर्वाह्यत्वात् । तथा च नदीपदस्य जलपदेन सहैकप्रयोजनकत्वज्ञाने सति तात्पर्यसंशयादिना तदन्वयावगतिप्रतिबन्धो न सम्प्रतिपन्न इति । एकप्रयोजनकत्वाज्ञाने सत्यपि लोके 'हस्तेन दीर्घेण कुठारेण वृक्षं छिनत्ती'त्यत्र दीर्घगुणस्य हस्तान्वये तात्पर्यं कुठारान्वये वेति सन्देहे कुठारान्वये न तात्पर्यमिति व्यतिरेकनिश्चये च दैर्घ्यकुठारसंसर्गावगत्यनुदयेन वेदेऽपि 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती'त्यत्र मासगुणस्योपसदन्वये तात्पर्यमग्निहोत्रान्वये वेति तात्पर्यसंशये अग्निहोत्रहोमान्वये न तात्पर्यमिति तद्व्यतिरेकनिश्चये च मासाग्निहोत्रहोमसंसर्गावगत्यनुदयेन च तात्पर्यसंशयव्यतिरेकनिश्चययोः प्रतिबन्धकत्वसिद्धेरिति चेन्मैवम् । अनुमानमूलतयोपन्यस्तस्य नियमस्यासिद्धेः । अत्र प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वमिति विवक्षायां व्याप्तिसंशये तद्व्यतिरेकनिश्चये चानुमित्यनुदयस्य व्याप्तिनिश्चयरूपहेतुत्वाभावप्रयुक्ततया तदभावयोरनुमितिहेतुत्वे प्रमाणाभावेन दृष्टान्ते साधनवैकल्यादन्यस्यापि व्याप्तिग्रहस्थानस्याभावात् कार्यानुत्पादनियतत्वं प्रतिबन्धकत्वमिति विवक्षायां व्याप्तिनिश्चये प्रामाण्यसंशयव्यतिरेकनिश्चययोरनुमितिप्रतिबन्धकत्वेऽपि तत्प्रामाण्यनिश्चयस्यानुमितिहेतुत्वाभावेन तत्र व्यभिचारात् प्रवर्तकज्ञानप्रामाण्यसंशयव्यतिरेकनिश्चययोः प्रवृत्तिप्रतिबन्धकत्वेऽपि तत्प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वाभावेन तत्रापि व्यभिचाराच्च। न च वाच्यं यत्र कृष्यादिप्रवृत्तौ प्रामाण्यनिश्चयस्य हेतुता नास्ति तत्र तत्संशयस्य प्रतिबन्धकत्वमपि नास्ति । यत्र तदस्ति बहुवित्तव्ययायाससाध्यप्रवृत्तौ तत्र प्रामाण्यनिश्चयस्य हेतुतेष्यत एव । अतो न क्वापि व्यभिचार इति । प्रामाण्यनिश्चयतत्प्रामाण्यनिश्चयादिपरम्परान्तर्गतयत्किञ्चिन्निश्चयगोचरप्रामाण्यसंशये तद्व्यतिरेकनिश्चये वा सति तथाभूतप्रवृत्त्यनुदयेन तयोस्तत्प्रतिबन्धकत्वेऽपि तत्प्रामाण्यनिश्चयपरम्परायास्तद्धेतुत्वाभावेन व्यभिचारात् तस्यास्तद्धेतुत्वेऽनवस्थानात् उक्तनियमसूलानुमानबलेन कर्मब्रह्मभागतात्पर्यनिश्चययोः स्वर्गमोक्षपर्यन्तहेतुत्वापत्तेश्च । अपि च तात्पर्यसंशयस्य वाक्यार्थावगतिप्रतिबन्धकत्वमङ्गीकुर्वतापि तात्पर्यसंशयात्प्रागेव नद्यादिपदस्योभयतो योजनास्फुरणात् उभयथापि वाक्यार्थावगतिर्निष्पन्नेत्यभ्युपगन्तव्यम् । अन्यथा कोटिद्वयोपस्थित्यभावेन किं नदीजलसंसर्गे तात्पर्यमुत नदीकच्छसंसर्ग इत्यादिसंशयायोगात् । न च जलनदीकच्छेषु पदस्मारितेषु नद्याः कच्छजलसंसर्गावगमो मनसैव स्यादिति वाच्यम् । उभयथा वाक्यार्थः स्फुरति क्व तात्पर्यमिति न निश्चीयत इति सकललोकसिद्धव्यवहारानुसारेण वाक्यजन्यसंसर्गावगमयोरेव संशये कोटिद्वयसमर्पकत्वस्याङ्गीकर्तव्यत्वात् । अन्यथा 'विमलं नद्या जलं कच्छे महिषश्चरती'त्यत्रापि नद्यादिपदार्थस्मृतिरूपकारणवशान्मानसं नदीजलयोरिव नदीकच्छयोरपि संसर्गज्ञानं जायेत । न चात्र नदीपदस्य कच्छपदसन्निधानाभावात् न नदीकच्छसंसर्गज्ञानं जायत इति वाच्यम् । आसत्तेर्वाक्यार्थज्ञान एवोपयुक्तत्वेन मानससंसर्गज्ञाने तदुपयोगाभावात् पदजन्यपदार्थस्मृत्यनन्तरभाविमानससंसर्गज्ञाने तदुपयोगकल्पने सर्वत्रापि तत्तत्सहकारिविशेषयुक्तेन तु मनसैव संसर्गज्ञानमिति वक्तुं शक्यत्वेन प्रमाणा-

(१) 'युक्तेन मनसैव' इति घ. ङ. पाठः ।

न्तरविलोपापत्तेः । वेदवाक्यार्थानां प्रमाणान्तरतः प्राप्तिरहितत्वेनाभ्युपगतानां वेदवाक्येभ्य एव प्रथममुपस्थितेस्सर्वत्र वक्तव्यत्वेन तेषु दृश्यमानस्य तात्पर्यसंशयस्य निर्वाहार्थमपेक्षितयोः कल्पिताकल्पितवेदवाक्यार्थज्ञानयोः पूर्वपक्षसिद्धान्तावलम्बिन्यायोपष्टब्धवाक्यजन्यत्वस्यैवावश्यमङ्गीकर्तव्यत्वाच्च । तथा च तात्पर्यसंशयकारणीभूतवाक्यार्थज्ञाने व्यभिचारेण तात्पर्यनिश्चयस्याकारणत्वनिश्चयाद्बाधितविषयमनुमानमिति न तेन तात्पर्यनिश्चयस्य वाक्यार्थज्ञानकारणत्वसिद्धिः । यथा व्याप्यकोट्यन्तर्गततात्पर्यसंशयकारणे वाक्यार्थज्ञाने व्यभिचारः । एवं पक्षीकर्तव्यतात्पर्यनिश्चयकारणेऽपि तस्मिन्व्यभिचारः । अस्मिन्नर्थे वाक्यस्य तात्पर्यमिति ज्ञानं हि वाक्यार्थावच्छिन्नतात्पर्यविषयं वाक्यार्थज्ञानमपेक्षते । तद्यद्यपि लोके क्वचित्क्वचिद्वाक्यादन्यतोऽपि सम्भवति । तथाप्यप्राप्तविषये वेदे वाक्यादेव तदेष्टव्यम् । सामान्यतो वाक्यार्थावच्छिन्नतात्पर्यज्ञानं कारणं न तु विशेषत इति चेत्तर्हि वाक्यार्थविशेषावच्छिन्नतात्पर्यसंशयव्यतिरेकनिश्चययोर्वाक्यार्थावगतौ प्रतिबन्धकत्वेऽपि तन्निश्चयस्य तत्र हेतुत्वं नास्तीति तत्रैवोपन्यस्तनियमस्य व्यभिचारः स्यात् । तस्मादुक्तनियममभ्युपगच्छता तद्व्यभिचारपरिहारार्थं वाक्यार्थविशेषावच्छिन्नतात्पर्यनिश्चय एव वाक्यार्थज्ञानकारणत्वेन समर्थनीय इति तत्कारणत्वपरिपन्थी सुस्थो व्यभिचारः । यथा तात्पर्यज्ञानकारणे वाक्यार्थज्ञाने व्यभिचारः तथा तात्पर्यानुमापकोपक्रमादिलिङ्गज्ञानकारणेऽपि तस्मिन्व्यभिचारः । वेदेऽप्युपक्रमादिलिङ्गाधीनं तात्पर्यज्ञानमिष्यते । तानि च षडपि लिङ्गानि वाक्यार्थज्ञानाधीनोन्मेषाणि । तथा हि— येनार्थेनोपक्रम्यते तेनैवोपसंहार उपक्रमोपसंहारैकरूप्यम् । उक्तस्यैवार्थस्य पुनः कथनमभ्यासः । उक्तार्थस्य मानान्तरेणाप्राप्तिरपूर्वता । उक्तार्थानुगुणतया वर्ण्यमानः पुरुषार्थः फलम् । उक्तार्थस्तुतिपर्यवसायी शब्दनिकरोऽर्थवादः। उक्तार्थोपपादकतया वेदेन निबध्यमाना न्यायविद्भिरूह्यमाना वा युक्तिरुपपत्तिः । सर्वाण्येतानि लिङ्गानि वाक्यार्थावगत्यधीनज्ञानानीति स्पष्टमेव । तत्रापि वाक्यार्थज्ञाने तात्पर्यज्ञानस्य कारणत्वाभ्युपगमे तदर्थमप्युपक्रमाद्यन्यतमलिङ्गान्वेषणावश्यंभावात् अनवस्था स्यात् । तस्मादनुमानमूलव्याप्यसिद्धेरनुमानस्य बाधितविषयत्वाच्च न तेन तात्पर्यनिर्णयस्य वाक्यार्थज्ञानकारणत्वसिद्धिः । अतो दृष्टान्तस्य साध्यवैकल्येन व्याप्त्यसिद्ध्या विषयबाधाच्च मूलानुमानमप्ययुक्तम् । हेतुविशेषणवैयर्थ्याच्च तात्पर्यावधारणमर्थावगतिसाधनमभ्युपगच्छतो लौकिकवाक्यार्थावगतावपि तत्साधनमेवेति किं शास्त्रविशेषणेनेति । अत्रोच्यते । तात्पर्यज्ञानस्य वाक्यार्थज्ञाने कारणत्वाभावेऽप्ययमेव वाक्यार्थ इत्यवधारणे तात्पर्यसंशयानन्तरभाविनि कारणत्वमस्ति । अनेकविधयोजनास्फुरणादिना अनेकधा वाक्यार्थस्फुरणेनानेकधा वाक्यार्थज्ञानोदये सति लोके वक्त्रभिप्रायान्वेषणेन वेदे न्यायान्वेषणेन च क्वचिदर्थे तात्पर्यनिर्णयानन्तरमयमेव वाक्यार्थ इत्यवधारणोत्पत्तेरनुभवसिद्धत्वात् । अत्र यद्यपि वाक्यार्थत्वं न वाक्यजन्यप्रतीतिविषयत्वम् । तात्पर्याविषयेऽपि प्रतीतिसत्त्वेन अयमेव वाक्यजन्यप्रतीतिविषय इत्यवधारणायोगात् । नापि तज्जन्यप्रमितिविषयत्वम् । 'श्वेतो धावती'ति वाक्यात्समीपे धावति शुनके श्वा इतो धावतीति ज्ञानस्य तत्रैव धावति श्वेताश्वे 'श्वेतो धावती'ति ज्ञानस्य चोदये सति उभयोरपि ज्ञानयोः प्रमात्वेन क्वचिदर्थे तात्पर्यनिर्णयेऽप्ययमेव वाक्यजन्यप्रमितिविषय इत्यवधारणायोगात् । किं तु वाक्यो-

द्देश्यप्रतीतिविषयत्वं तत् । उद्देश्यत्वं तच्छेषित्वम् अध्ययनसंस्कृतस्वाध्यायस्य क्वचन शेषिणि विनियोगाकाङ्क्षायां लिङ्गात्सामान्यतोऽर्थज्ञाने विनियोगावगमे सत्युपक्रमादिलिङ्गैर्विशिष्य यस्य वाक्यस्य यत्रार्थे तात्पर्यमवसितं तदर्थज्ञाने तस्य विनियोगो विशिष्यावगम्यते । लोकेऽपि वक्त्रभिप्रायतः क्वचिदर्थे वाक्यस्य तात्पर्यावगमे सति तद्ज्ञानमेव तस्योद्देश्यं शेषीत्यवसीयते । अर्थान्तरज्ञानं तेन जातमपि न तदुद्देश्यम् । यथा जामातृभोजनमुद्दिश्य कृतेन सूपेन कदाचित्सूपपाकाप्रयोजकस्यातिथेर्भोजनमपि निर्वर्तत इत्येतावता तद्भोजनं सूपपाकस्य नोद्देश्यम् । एवं च स्वविषयोपात्तावगतिसाधनमिति साध्यनिर्देशस्य श्रवणविषयेण शास्त्रेण यदुपात्तं प्रतिपादितं तज्जनितज्ञानविषयीकृतमिति यावत् तद्विषया याऽवगतिः अयमेव वाक्यार्थ इत्यवधारणरूपा तात्पर्यसंशये सति तन्निर्णयानन्तरभावि द्वितीयज्ञानं तत्साधनमित्यर्थः । अतो न दृष्टान्ते साध्यवैकल्यं नापि पक्षे साध्यस्य बाधः । आत्मावगतिसाधनत्वेन श्रवणे विधिमङ्गीकुर्वताऽपि वेदान्तवाक्यानामात्मैवार्थ इत्यवधारणरूपावगतिसाधनत्वेनैव तत्र विधिरङ्गीकर्तव्यः । तात्पर्यसंशयात्प्रागपि वेदान्तवाक्येभ्योऽङ्गाध्ययनबलादात्मावगतिसद्भावेन तन्मात्रे इच्छोदयासम्भवात् । ततश्च विधिविषय[1]त्वाभिमतस्यैवानुमानतः प्राप्तेर्न तस्मिन्नपूर्वविधेरवकाश इति सङ्गच्छत एव । अत्र साध्ये श्रवणत्वादित्येतावान्हेतुर्न भवति । यल्लौकिकं वाक्यं केनचिदेव श्रुतं वक्तुरेवोपदेशेन तत्तात्पर्यनिश्चयोऽपि जातः न तु तात्पर्यनिश्चयात्पूर्वं तत्संशयः तदनन्तरं वाक्यार्थावधारणं वा तत्र तात्पर्यनिश्चये व्यभिचारात् । न च तत्रापि स्वविषयोपात्तावगतिं प्रति साधनत्वयोग्यतास्तीति शङ्क्यम् । तत्र तात्[3]पर्यनिश्चयविषयेण तेन वाक्येन प्रतिपादितेऽर्थे कस्यापि पुरुषस्यायमेवास्य वाक्यस्यार्थ इत्यवधारणानुदयेन अत्यन्ताप्रसिद्धकार्यं प्रति योग्यत्वस्याप्यसम्भवात् । अतस्तत्र व्यभिचारवारणार्थं तात्पर्यसंशयतदनन्तरभाव्यर्थावधारणविषयवाक्यश्रवणत्वादिति हेतुर्विशेषणीयः । तथाभूतवाक्योपलक्षणतया भाष्ये शास्त्रग्रहणं कृतम् । प्रायेण गहनेषु शास्त्रेष्वेव तात्पर्यसंशयस्तन्निश्चायकप्रमाणान्वेषणेनायमेवास्य वाक्यस्यार्थ इत्यवधारणं च भवतीति । तस्माद्युक्तमिदमनुमानम् । स्यादेतत् । वेदान्तश्रवणे लोकावगतफलार्थिनः काव्यालोकनादिष्विव प्रवृत्तौ 'आचान्तेन कर्तव्यं यज्ञोपवीतिना कर्तव्यम्' इति वैदिककर्माङ्गत्वेन विहितमाचमनादिकमङ्गं न प्राप्नुयात् किं तु विध्यवगतफलार्थिनः प्रवृत्तावेव प्राप्नुयात् । तथा च तत्प्राप्त्यर्थश्रवणविधिरपूर्वविधिः स्यात् । न हि विधिविषयप्राप्त्यर्थ एवापूर्वविधिः किंतु विधिविषयादन्यस्यापि विना तद्विधिमसम्भवत्प्राप्तिकस्य प्राप्त्यर्थोऽपि विधिरपूर्वविधिः । अत एव 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेणे' त्यादिवाक्यगणे त्रिरात्रा[6]दिष्वग्निविधिरपूर्वविधिः । न हि तत्र द्विरात्रादिषु विधेयस्याग्नेः प्राप्त्यर्थो विधिः । 'अग्निष्टोमेनानुयजन्ती'ति सर्वसोमयागप्रकृतिभूतेऽग्निष्टोमे विहितस्य तस्य तेष्वतिदेशतः प्राप्तिसम्भवात् । किं त्वग्निप्रकरणे 'श्येनचितं चिन्वीत स्वर्गकाम'

(१) 'श्रवणविधि' इति ङ. पाठः । (२) 'श्रवणविषयत्व' ख. ग. पाठः । (३) 'तत्रत्ये तात्पर्यनिश्चये' इति. क. घ. ङ. पाठः । (४) 'वाक्यार्थोपलक्षणतया' इति घ. पाठः । (५) ' विधिरेव' इति क. घ. ङ. पाठः । (६) 'द्विरात्रादिषु' इति ङ पाठः ।

**विषयोपात्तावगतिसाधनं शास्त्रश्रवणत्वाद्वैद्यशास्त्रश्रवणवदित्यादिभिः ।**

इत्यादिवाक्यैस्स्वर्गादिफलार्थतया विहितानामग्निशब्दोक्तस्थण्डिलविशेषाश्रितानां श्येनाकृत्यादिगुणानां प्राप्त्यर्थः । न खलु तेषामप्यतिदेशतः प्राप्तिस्सम्भवति । विकृतीनामितिकर्तव्यतापेक्षानुरोधेन प्राकृतानामङ्गानामेवातिदेशः । न तु फलान्तरार्थानां तदाश्रितगुणानामित्यष्टमाध्याये 'गुणकामेष्वाश्रितत्वात्प्रवृत्तिस्स्यात्' (जै० ८-१-२३) 'निवृत्तिर्वा कर्मभेदात्' (जै०-८-१-२४) इति पूर्वोत्तरपक्षसूत्राभ्यां निर्णीतत्वात् । तस्मात्तत्तत्प्राप्तिरनुमानेनेत्येतदयुक्तम् । श्रवणविधिप्रापणीयस्य कृत्स्नस्याप्युक्तानुमानेन प्राप्त्यसम्भवादिति शङ्कानिराकरणार्थमित्यादिभिरित्युक्तम् । श्रवणविधिरवगत्यर्थतया श्रवणे प्रवृत्त्यर्थश्चेत्सा प्रवृत्तिरुक्तानुमानबलात्सिध्यति । तदङ्गनियमप्रवृत्त्यर्थश्चेत्सापि श्रुत्यन्तरादिभिः सिध्यतीत्यादिग्रहणाभिप्रायः । तथा हि यद्यपि लोकसिद्धफलार्थितया रागत एव वेदान्तश्रवणे प्रवृत्तिस्तथापि तदनुबन्धिनो नियमाश्श्रूयन्ते । 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्या'मिति॥ अत्र हि कर्मसम्पाद्या लोकास्सर्वेऽप्यनित्या इति श्रुतिन्यायैर्निरूप्य अकृतो नित्यः परमशिवलोकः कृतेन कर्मणा न लभ्यत इति च निश्चित्य यस्तुच्छेषु कर्मफलेषु वैतृष्ण्यं प्राप्नुयात्तस्य परमशिवलोकप्राप्तिहेतुभूततदुपासनासिद्ध्यर्थमुपासनीयपरब्र[1]ह्मपरमशिवस्वरूपनिर्णयाय तदुपासनातदङ्गजातावधारणाय च वेदान्तानां तात्पर्यं निर्णिनीषोस्तन्निर्णयोपायो वेदान्तानामुपक्रमादिविचारः स्वबुद्ध्यैव न कर्तव्यः किं तु गुरुमुखादेव लब्धव्यः । गुरुरपि न यः कश्चन किंतु श्रुतनिखिलवेदान्तः परब्रह्मोपासनापरश्च । तस्य च स्वसमीपं प्रत्याकारणं न कार्यं किं तु स्वयमेव तदुपसदनं कर्तव्यम् । तच्च समित्पाणित्वनियमयुक्तेन कर्तव्यम् । तेन नियमेनान्यैश्च श्रुत्यन्तरावगतैर्नियमैरुपसन्नं बाह्यान्तरेन्द्रियजययुक्तं शिष्यं परीक्ष्य स यया (पर[2]मेशिवसाक्षात्कारोपायभूतया) निर्विचिकित्सं परं ब्रह्म वेद तामुपक्रमादिलिङ्गावगमिततात्पर्यभरितां परब्रह्मविषयिणीं वेदान्तविद्यां प्रब्रूयादित्युच्यते । स्मृतिपुराणेषु च वेदान्तश्रवणे गुरुशिष्यक्रमकथने बहवो नियमाः प्रतिपाद्यन्ते । वेदान्तार्थचिन्तनं च वेदान्तचिन्तनाधीनम् । वेदसामान्यचिन्तनमेव शुचित्वादिनियमयुक्तेन कर्तव्यम् । 'नाधीयीत वायौ दिवा पांसुहरे कर्णाश्राविणि नक्त'मित्यादिना वेदानध्ययननिमित्तजातमुपक्रम्य 'मानसमप्यशुचिरि'ति शुचित्वाभावे मनसाऽपि वेदचिन्तनं न कार्यमिति प्रतिषिद्धत्वात् सामान्यतश्च सच्छास्त्रार्थचिन्तनं यथावदर्थस्फूर्तये शुचित्वादिनियमयुक्तेन कार्यम् । 'पुण्ये हिमवतः पादे मध्ये गिरिगुहालये । संशोध्य देहं धर्मात्मा दर्भसंस्तरमाश्रितः॥ शुचिस्सन्नियमो व्या[3]सः शान्तात्मा तपसि स्थितः।' भारतस्येतिहासस्य धर्मेणान्वीक्ष्य तां गतिम्॥ प्रविश्य योगं ध्यानेन सोऽपश्यत्सर्वमन्ततः॥ इति भारतलिङ्गात् 'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुद्धेऽवकाशे प्राङ्मुख उपविश्य महता यत्नेन सूत्राणि प्रणयति स्म तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेणे'ति महाभाष्यलिङ्गाच्च । तस्मात् बहुभिः प्रकारैर्वेदान्तश्रवणे शुचित्वादिनियमानां प्राप्तिसत्त्वात् तत्प्रा-

(१) ब्रह्मरूपपरम' इति. घ. पाठः । (२) एतद्रेखाङ्कितं पदं घ. पुस्तकमात्रे वर्तते नान्येषु । (३) 'मौनी शान्तात्माचलवत्स्थितः ।' इति पाठान्तरम् ।

**न चास्य नियमविधिगोचरत्वम्। अवघातादिवत्कस्य चिद्दृष्टफलस्योपायान्तरस्या-**

दृयर्थमपि न तत्रापूर्वविधिरङ्गीकर्तव्यः।एवं तावदपूर्वविधिः श्रवणे न सम्भवतीत्युक्तं तथा नियमविधिरपि तत्र न सम्भवतीत्याह—न चास्येति। नियमः क्वचिदुपायविषयो दृश्यते। यथा व्रीहीनवहन्तीति। अत्र पुरोडाशप्रकृतिभूतानां व्रीहीणामपेक्षिते तण्डुलभावे नखविदलनस्याप्युपायान्तरस्य पक्षे प्राप्तावववहननमेवोपाय इति नियम्यते। क्वचित्कार्यविषयो दृश्यते। यथा 'यद्योन्यां तदुत्तरयोर्गायती'ति ऋतुषु स्तोत्रसाधनानां साम्नां यथाध्ययनमेकस्यामृचि गानप्राप्तौ 'एकं साम त्र्यृचे क्रियते स्तोत्रीय'मिति वचनात् त्र्यृचे तानि गातव्यानि। ततश्च वामदेव्यादिसाम्नां क्रतुष्वन्ययोरपि संशरविलेशपरिहारार्थं योनिसमच्छन्दस्कयोरुत्तरयोस्तदन्ययोर्वा कयोश्चिदृचोस्संस्कार्यत्वप्राप्तावुत्तरयोरेव संस्कार्यत्वमिति नियम्यते। क्वचिदुभयनियमः। यथा 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्त'दिति। अत्र 'समिधो यजती'त्यादिवाक्यैर्द्रव्यविशेषासंयुक्तत्वेनोत्पन्नानां प्रयाजानां साधनत्वेनानियतानेकद्रव्यप्राप्तौ जौहवाज्येनैव प्रयाजाः कर्तव्या इत्युपायनियमः। 'चतुर्जुह्वां गृह्णाती'ति कार्यविशेषासंयुक्ततयोत्पन्नस्य जौहवाज्यस्य कार्याकाङ्क्षायां पाक्षिकानेककार्यप्राप्तौ जौहवाज्येन प्रयाजा एव कर्तव्या इति कार्यनियमश्च। अत्र वेदान्तार्थावधारणस्य वेदान्ततात्पर्यनिर्णयस्य च कार्योपायभावबोधकविध्यङ्गीकारे न तावदुपायनियमस्सम्भवेन्नापि कार्यनियमः। न चोभयनियमः। तात्पर्यनिर्णयैकोपायत्वाद्वाक्यार्थावधारणस्य तात्पर्यनिर्णयस्य च वाक्यार्थावधारणैककार्यत्वादित्यभिप्रेत्याह—अवघातादिवदिति। उपायनियमव्युदासे दृष्टफलस्येति बहुव्रीहिः। कार्यनियमव्युदासे समानाधिकरणसमासः। समासद्वयमपेक्ष्योभयनियमव्युदासः। नन्वस्य वाक्यस्यायमर्थइति प्रतिवाक्यमाप्तोपदेशेनाप्यापाततोऽनेकधा वाक्यार्थप्रतीतिमतामयमेव वाक्यार्थ इत्यवधारणं लभ्यत इत्युपदेशरूपोपायान्तरस्य पक्षप्राप्तावुपायनियमः किं न स्यात्। न स्यात्। सर्वेषां वेदान्तवाक्यानां न्यायैस्तात्पर्यावधारणं हि श्रवणम्। तत्र विधिरभ्युपगम्यते चेत् सर्वेषामपि वेदान्तवाक्यानां प्रतिवाक्यमयमेवास्य वाक्यस्यार्थ इत्यवधारणं फलं पर्यवस्यति। न चेत् फलमुपदेशेन लभ्यते। वाक्यानामानन्त्येन प्रतिवाक्यमुपदेशासम्भवात् एकरूपवाक्येषु न्यायप्राप्तस्यार्थभेदस्य तदुपपादकन्यायानुसन्धानं विना मनस्यसंकरेण धारणासम्भवाच्च। यद्यपि प्रतिवाक्यं तात्पर्यावधारणमपि न सम्भवति दूरे ततस्तदर्थावधारणम्। तथापि न्यायविचारतस्सामर्थ्यरूपेण तदुभयावधारणसम्पादनं सम्भवति। न च सर्ववेदान्ततात्पर्यनिर्णयानुकूलन्यायैतावत्त्वाज्ञानात्सामर्थ्यरूपेणापि तदुभयसम्पादनं न सम्भवतीति वाच्यम्। अस्मदादिभिः खलु तन्न ज्ञायते। भगवता सूत्रकारेण ज्ञायत एव। यस्तान्सर्वान्न्यायान्निबध्य तत्तन्न्यायविषयतया सूत्रगृहीतेभ्योऽन्येषाममि सर्वेषां वेदान्तवाक्यानां यथायथं तैरेव न्यायैस्तात्पर्यावधारणमित्यतिदिदेश 'एतेन सर्वे व्याख्याताः' ( ब्र० १-४-२८ ) इति। तस्माद्गुरुमुखलब्धकृत्स्नन्यायविचाराधीनसर्ववेदान्ततात्पर्यावधारणसामर्थ्यसम्पादनेन तेषां परमात्मा शिव एवार्थ इत्यर्थावधारणसामर्थ्यं सम्पादयेदित्येवं पर्यवसिते विधौ नोपायान्तरप्रसक्तिरस्ति। स्वरूपतः कतिपयवाक्यार्थोपदेशस्य सर्ववेदान्तार्थावधारणसामर्थ्यसम्पादकत्वाभावात्। ननु,वेदान्तवाक्यार्थावधारणं नादृष्टार्थमिष्यते। किं तु मोक्षसाधनसाक्षात्कारहेतुभूतविद्यानुष्ठानार्थम्। तत्तु वेदान्तसमाना-

र्थस्मृतीतिहासपुराणपौरुषेयग्रन्थाद्यर्थावधारणेनापि सम्भवतीत्येवं विद्यानुष्ठानोपयोगिज्ञाने उपायान्तरप्राप्तौ वेदान्तोपायनियमः किं न स्यात्। धीमतः स्वमनीषिकया विचारेणापि तात्पर्यनिर्णयप्राप्तौ गुरुमुखोपायनियमो वा किं न स्यात्। न तावद्वेदान्तोपायनियमापेक्षास्ति। अध्ययनसंस्कृतानां वेदान्तानां विनियोगाकाङ्क्षया विद्यानुष्ठानोपयोगिविद्यातद्वेद्यतत्फलज्ञानस्य साधनापेक्षया चान्योन्यान्वये सति तत एव वेदान्तनियमसिद्धेः। न हि ब्राह्मणानां स्वकीयो धनार्जनोपाय इति याजनाकाङ्क्षया क्रतूनामृत्विगाकाङ्क्षया च अन्योन्यान्वये सति ब्राह्मणानामेवार्त्विज्यमिति नियमो न सिद्ध्यति। एवं स्वस्वशाखान्तर्गतवेदान्तवाक्येष्वध्ययनसंस्कृतैस्तैरेव तदर्थावधारणं सम्पादनीयमिति नियमसिद्धौ तदर्थं तत्तात्पर्यनिर्णयाय वेदान्तमीमांसाश्रवणे क्रियमाणे विद्यातद्वेद्यादिनिर्णयोपयोगिशाखान्तरगतवेदान्तवाक्यार्थावधारणापेक्षिततत्तात्पर्यावधारणमपि ततः सिद्ध्यतीति न शाखान्तरगतवेदान्तवाक्यार्थावधारणेऽपि पुराणाद्युपायान्तरप्रसक्तिः। सोऽयं नियमानुनिष्पादिनियमः। यथा नाराशंसतनूनपान्मन्त्रयोर्द्वितीयप्रयाजस्थानपठितयोरव्यवस्थितविकल्पे प्राप्ते 'राजन्यवसिष्ठादीनां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषा' मिति विधिना तद्व्यवस्थारूपनियमसिद्धौ तदनुनिष्पादितुल्यकल्पा एव सत्रेष्वधिकारिण इति नियमः। नाराशंसकल्पानां तनूनपात्कल्पानां च सत्रे सम्भूय प्रवृत्तौ तदन्तर्गतप्रयाजेष्वन्यतरकल्पस्यैवाश्रयणीयतया केषांचिद्यजमानानां क्रतुवैगुण्यप्रसङ्गात्। तस्मान्न वेदान्तोपायनियमापेक्षा। अन्यथा कर्मानुष्ठानोपयोगिनि कर्मकाण्डार्थनिर्णये तत्समानार्थस्य कल्पसूत्राद्युपायान्तरस्य पक्षे प्राप्त्या तत्रापि कर्मकाण्डोपायनियमापेक्षायां कश्चिन्नियमविधिरन्वेषणीयः स्यात्। ननु, तथापि गुरुमुखोपायनियमापेक्षाऽस्ति। कर्मकाण्डविचारे ह्यध्ययनार्थाद्गुरुकुलवासान्निवृत्तेः प्राग्भाविन्यनुवर्तमानं स्वप्रयत्नानपेक्षं गुरुमुखोपायं परित्यज्य न स्वमनीषिकामात्रव्यापारक्लेशे प्रवृत्तिः प्रसज्यते। इह तु मुमुक्षादिसाधनसम्पत्तिमपेक्ष्य पश्चादपि प्राप्तिमति वेदान्तविचारे यत्नान्तरसाध्यत्वाविशेषात् गुर्वन्वेषणमिव कदाचित्स्वमनीषिकाव्यापारेऽपि प्रवृत्तिः स्यादिति। सत्यमस्ति गुरुमुखोपायनियमापेक्षा। तदर्थमपि न श्रवणविधिरङ्गीकार्यः। 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छे'दिति गुरूपसदनविधिनैव तत्सिद्धेः। विज्ञानार्थतया विधीयमानं गुरूपसदनं हि दृष्टद्वारसम्भवे अदृष्टकल्पनायोगात् गुरुमुखाधीनवेदान्तविचारद्वारैव विज्ञानार्थं पर्यवस्यति। ननु, माभूदत्रोपायनियमः उपेयनियमोऽस्तु 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति न्यायसूत्रोक्तरीत्या देहात्मभ्रमनिवर्तकं देहविविक्तजीवात्मज्ञानमेव मोक्षसाधनमिति भ्रमात् तदनुकूलवेदान्तयोजनापरशास्त्रान्तरश्रवणेऽपि प्रवृत्तिः स्यादित्यात्मैव श्रोतव्य इति नियम्यते। आत्मशब्दोऽत्र वाक्यान्वयाधिकरणोक्तरीत्या चेतनाचेतनात्मकसकलप्रपञ्चविशिष्टाद्वितीयपरमात्मपर इत्यभिमतनियमसिद्धिः। न च वाच्यं यथाऽवहनननियमे वस्तुतो लोके वैतुष्यसाधनस्य कोट्यन्तरस्य प्राप्तिः नैवमिह वस्तुसत्कोट्यन्तरप्राप्तिरस्तीति तदभावेऽपि भ्रमोपनीतकोट्यन्तरस्य पक्षे प्राप्तिमात्रेण विधित्सितस्य पाक्षिक्यप्राप्तिरस्तीति तावता तदप्राप्तांशपरिपूरणार्थनियमविध्युपपत्तेः। न ह्यवहन-

(१) 'वेदान्तेऽप्युपायनियमः' इति-ख. ग. पाठः। (२) 'पेक्षा सम्भवति' इति च. पाठः।

प्राप्तेः । न च परिसङ्ख्याविधिविषयत्वम् । एवं हि वेदान्ताश्श्रोतव्या एव नाध्येतव्या इति पर्यवस्येत् । तथा सत्यनधीतवेदान्तानां विचारायोगात् पुरुषा-

---

ननियमविधौ यादृशी कोटयन्तरस्य प्राप्तिस्तादृश्या सर्वत्र भाव्यमिति नियमः । 'व्रीहिभिर्यजेते'ति विधेः 'यवैर्यजेते'ति विध्यसिद्धिमपेक्ष्य व्रीहीणां नीवारादीनां च पक्षप्राप्त्या नीवारादिपक्षेऽपि व्रीहीणां संयोजनेन नियमविधेः समर्थनीयत्वात् 'व्रीहीनवहन्ती'त्यत्र कस्यचिद्विध्यन्तरस्यासिद्धवद्भावमनपेक्ष्यैव नियमसद्भावादिति चेन्मैवम् । ईश्वरानुग्रहलब्धतात्विकार्थश्रद्धारहितस्य श्रवणविधिवाक्येऽपि पराभिमतयोजनया जीवात्मविचारविधिपरत्वभ्रमसम्भवेन भ्रमप्रयुक्ताया अन्यत्र प्रवृत्तेर्विधिशतेनाप्यपरिहार्यतयोक्तरूपनियमविध्ययोगात् । तस्मान्नियमविधिपक्षोऽपि न सङ्गच्छते । तर्हि परिसङ्ख्याऽस्त्विति शङ्कां निराकरोति—न चेति । द्विविधा परिसङ्ख्या सम्भवति । एकस्मिन् शेषिणि शेषद्वयस्य समुच्चित्य प्राप्तौ तयोरेकस्य परिसङ्ख्यैका । यथा 'आज्यभागौ यजति यज्ञताया' इत्यत्रैकस्मिन्गृहमेधीये शेषिण्याज्यभागतदितराङ्गकलापरूपशेषद्वयप्राप्तौ तदितराङ्गकलापपरिसङ्ख्या । एकस्य शेषस्य समुच्चित्य शेषिद्वयप्राप्तौ तयोरेकस्य परिसङ्ख्या द्वितीया । यथा 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त' इत्यत्राश्वरशनाग्रहणे गर्दभरशनाग्रहणे चैकस्य मन्त्रस्य 'इमामगृभ्ण'न्नित्यस्य रशनाग्रहणप्रकाशनसामर्थ्यरूपलिङ्गाविशेषात्प्राप्तौ गर्दभरशनाग्रहणपरिसङ्ख्या । तत्र 'आत्मा श्रोतव्य' इत्यस्य परमात्मा वेदान्तगोचरतात्पर्यावधारणरूपश्रवणविषयीकर्तव्य इत्यर्थपर्यवसाने सत्येकस्मिन्वेदान्तरूपे शेषिणि द्वयोश्श्रवणाध्ययनरूपयोः शेषयोः प्राप्तावेकस्याध्ययनस्य परिसङ्ख्येति शेषपरिसङ्ख्या वा स्यात् । द्वयोर्वेदान्तकर्मकाण्डरूपयोश्शेषिणोरेकस्य श्रवणरूपशेपस्य प्राप्तौ कर्मकाण्डपरिसङ्ख्येति शेषिपरिसङ्ख्या वा स्यात् उभयथापि न सम्भवतीत्याह—एवं हीत्यादिना तस्मात्पूर्वोक्तमेव समीचीनमित्यतः प्राक्तनेन ग्रन्थेन ।अत्रेदं चिन्त्यते । उदाहृतशेषशेषिपरिसङ्ख्यान्यायेन वेदान्ताध्ययननिवृत्त्यर्थः परिसङ्ख्याविधिः कर्मकाण्डश्रवणनिवृत्त्यर्थो वेति विकल्प एव नोत्तिष्ठति । उभयत्रापि दोषत्रयापत्तेः । आद्यपक्षे श्रोतव्यवाक्यस्य वेदान्तश्रवणविधिरूपस्वार्थत्यागः वेदान्ताध्ययननिषेधरूपपरार्थग्रहणमध्ययनविधिप्राप्तस्य वेदान्तभागाध्ययनस्य बाध इति त्रैदोष्यं प्रादुःष्यात् । द्वितीयपक्षेऽपि पूर्ववत्स्वार्थत्यागः कर्मकाण्डश्रवणनिषेधरूपपदार्थग्रहणमध्ययनविधेरर्थज्ञानपर्यन्तत्वपक्षेऽध्ययनविधिप्राप्तस्य अक्षरावाप्तिफलकत्वपक्षेऽध्ययनसंस्कृतस्वाध्यायविनियोगाकाङ्क्षाकल्पितलैंगिकविधिप्राप्तस्य च कर्मकाण्डश्रवणस्य बाध इति त्रैदोष्यं प्रादुःष्यात् । उदाहृतशेषशेषिपरिसङ्ख्ययोस्तु न तत्प्रसक्तिः । तथा हि—गृहमेधीयस्योपकारकाकाङ्क्षायां दार्शपूर्णमासिकाङ्गकलापजन्योपकारप्रापकं चोदकवाक्यं यावत्कल्प्यते तावदेव शीघ्रप्रवृत्तेन प्रत्यक्षविधिनाऽऽज्यभागान्वये कृते क्लृप्तोपकारप्रकृताङ्गसम्बन्धनिराकाङ्क्षो गृहमेधीयविधिश्चोदकवाक्यकल्पनं नापेक्षत इत्याज्यभागविधिः गृहमेधीयविधेरुपकाराकाङ्क्षाशान्तिसम्पादनद्वारा दार्शपूर्णमासिककृत्स्नाङ्गप्रापकचोदककल्पनाप्रतिबन्धमुखेनाज्यभागव्यतिरिक्ताङ्गानां फलतो निवर्तको न शब्दवृत्त्या । तथा 'इमामगृभ्ण' न्निति

मन्त्रस्य विनियोगाकाङ्क्षायां यावदश्वगर्दभरशनाग्रहणयोर्लिङ्गेन विनियोगः कल्प्यते तावदेव 'इत्यश्वाभिधानीमादत्त' इति विधिना मन्त्रस्याश्वरशनाग्रहणान्वये कृते तत्सम्बन्धनिराकाङ्क्षो मन्त्रो लैङ्गिकविनियोगकल्पनां नापेक्षत इत्युदाहृतो विधिर्मन्त्रस्य विनियोगाकाङ्क्षाशान्तिसम्पादनद्वारा लैङ्गिकविनियोगकल्पनाप्रतिबन्धमुखेन मन्त्रस्य गर्दभरशनाग्रहणसम्बन्धनिवर्तको न शब्दवृत्त्या । एवं चोभयत्रापि विधिरूपस्वार्थत्यागेन निषेधरूपार्थान्तरपरत्वानङ्गीकारान्नाद्यदोषद्वयप्रसक्तिः । प्रापकप्रमाणप्रवृत्तिप्रतिबन्धमुखेन फलतो निवर्तकत्वमिति प्राक्प्रवृत्तेन प्रमाणेन प्राप्तस्य कस्य चिन्निवृत्त्यनङ्गीकारान्न तृतीयदोषस्यापि प्रसक्तिः । इह तु वेदान्तश्रवणविधिना तदध्ययनप्रापकप्रमाणस्य 'स्वाध्यायोऽध्येतव्य' इति प्रत्यक्षश्रुतिरूपस्य प्रवृत्तिः प्रतिबन्द्धुं न शक्यते । उपनयनसंस्कृतस्याध्ययनसंयोगहेतुभूतविनियोगाकाङ्क्षाशान्तिश्चोपनयनप्रक्रमानधीतेन श्रवणविधिना कर्तुं न शक्यते । तथा वेदान्तश्रवणविधिना कर्मकाण्डश्रवणप्रापकप्रमाणप्रवृत्तिरपि प्रतिबन्द्धुं न शक्यते । तस्याध्ययनविध्याक्षेपरूपतयाऽध्ययनसंस्कृतस्वाध्यायविनियोगाकाङ्क्षाप्रसूतलैङ्गिककल्पनारूपतया वा प्रत्यक्षश्रुतित्वाभावेऽपि कर्मकाण्डार्थज्ञानार्थं कर्मविचाराकाङ्क्षाया वेदान्तश्रवणविधिना शान्त्यसम्भवात् । तस्माद्वेदान्ताध्ययनस्य कर्मकाण्डश्रवणस्य वा साक्षान्निषेधमन्तरेण वेदान्तश्रवणविधानतो निवर्तयितुमशक्यतया तन्निवृत्तिमिच्छता श्रोतव्य इत्यस्य स्वार्थं परित्यज्य निषेधरूपेऽर्थान्तरे वृत्तिरवश्यमभ्युपगन्तव्येति स्वार्थत्यागः पदार्थग्रहणं प्राप्तबाधश्चेति दोषत्रयं भवेदेव । प्राप्तिं विना शब्देन प्रतिषेधायोगात् । ननु, त्रिदोषदुष्टाऽपि परिसङ्ख्या गत्यन्तराभावादङ्गीकर्तव्या अन्यथा श्रोतव्यवाक्यस्यात्यन्तवैयर्थ्यप्रसङ्गादिति चेन्न । निदिध्यासनविधिसन्निधौ पठितस्य तस्य श्रवणादिपूर्वकत्वेन प्रशस्तमिदं निदिध्यासनमित्येवंरूपेण स्तावकत्वोपपत्तेः । वरं हि नातिप्रयोजनमपि स्तावकत्वं त्रिदोषदुष्टायाः परिसङ्ख्यायाः । अत एव बाधलक्षणे 'वैखानसं पूर्वेऽहन्साम भवति षोडश्युत्तर' इत्यङ्गिरसां द्विरात्रस्योत्तरेऽहनि षोडशिग्रहकीर्तनस्य परिसङ्ख्यार्थत्वं परित्यज्य स्तावकत्वं समर्थितम् । तथा हि—तद्वाक्यं न षोडशिग्रहप्राप्त्यर्थम् । द्विरात्राणामुत्तरस्याह्नोऽतिरात्रसंस्थत्वेन प्रकृत्यतिरात्रतश्चोदकादेव तत्प्राप्तिसम्भवात् । न च प्रकृत्यतिरात्रे विकल्पितः षोडश्यत्रापि विकल्पेन प्राप्नुयादिति तन्नियमार्थम् । षोडशिनं प्रकृत्याम्नातेन 'उत्तरेऽहन्द्विरात्रस्य गृह्यत' इति वाक्येन सामान्यतः सर्वद्विरात्राणामुत्तरेऽहनि षोडशिग्रहनियमं बोधयता तस्यापि तत्र प्राप्तेः । अतो द्विरात्रान्तरेभ्यः परिसङ्ख्यार्थमिदं वचनमिति प्राप्ते सिद्धान्तितम्—सामान्यतः प्रत्यक्षवचनेन सर्वद्विरात्राणामुत्तरेऽहनि प्राप्तः षोडशिग्रहनियमः कस्य चिद्द्विरात्रस्योत्तरेऽहनि विशिष्य सम्बन्धबोधनमात्रेण द्विरात्रान्तरेभ्यो न निवर्तते । अतः 'षोडश्युत्तर' इत्यनेन स्वार्थं त्यक्त्वा क्वचिद्द्विरात्रान्तरेषु षोडशिग्रहनियमप्रतिषेधरूपः परार्थो ग्राह्यः । तेषु प्रत्यक्षवचनप्राप्तः षोडशिग्रहनियमश्च बाधितव्य इति दोषत्रयमनिवार्यम् । अतस्सन्निहितविधिशेषार्थवादोऽयं पूर्वस्याह्नो वैखानसरूपवैशेषिकगुणविधिर्युक्तः । यदुत्तरस्याप्यह्नः षोडशिग्रहनियमरूपो वैशेषिको गुणो वर्तत इत्यौचित्यमवलम्ब्य यथाकथञ्चन स्तावकत्वोपपत्तेरिति । तस्माद्द्विविधाप्यत्र परिसङ्ख्याशङ्का नोन्मिषति । अस्तु वा यथाकथञ्चिदगत्या त्रिदोषदुष्टापि परिसङ्ख्या परिगृह्यत इत्याशङ्का तथा-

पि सा प्रस्तुतार्थानुपयोगिनी प्रस्तुतार्थपरिपन्थिनी च । वेदान्तविचारे साक्षाद्विधिश्रवणात्तत्र स्वविधेरेव प्रवर्तकत्वोपपत्तौ किं प्रवर्तकान्तरान्वेषणेनेति हि शङ्का प्रस्तुता । तथाहि—तत्रापूर्वविध्याशङ्का तावदप्रवृत्तप्रवर्तकत्वोपपादने उपयुज्यते । नियमविध्याशङ्कापि पाक्षिक्यां प्रवृत्तौ प्रसक्तायां नियतप्रवर्तकत्वोपपादन उपयुज्यते । परिसङ्ख्याशङ्का तु न क्वाप्युपयुज्यते । प्रत्युत श्रोतव्यवाक्यस्य श्रवणविधायकत्वरूपस्वार्थपरित्यागाभ्युपगमात् स्वविधित एव श्रवणे प्रवृत्त्युपपत्तिरिति शङ्कायाः प्रस्तुतायाः परिपन्थिनी च भवति । अपि चाध्ययनपरिसङ्ख्याङ्गीकारे दोषान्तरमपि प्रसज्यते । कथम् । अध्ययनविध्याकाङ्क्षाया अध्ययनसंस्कृतस्वाध्यायविनियोगाकाङ्क्षाया वा अर्थज्ञानफलान्वये सति तत्सिद्ध्यर्थं कर्मविचाररूपवेदान्तश्रवणेऽप्याक्षेपतः प्राप्तिरस्तीति खलु वेदान्तश्रवणविधिं परित्यज्य तदध्ययनपरिसङ्ख्याविधिरङ्गीक्रियते । कथमिदमुपपद्यते । यतो वेदान्तानामध्ययनप्रतिषेधे द्विविधस्यापि वेदान्तश्रवणाक्षेपस्याध्ययनविधिमूलस्याप्रवृत्त्या वेदान्तश्रवणस्य कुतोऽपि प्राप्तिर्न भवेदिति स्वोपजीव्यवेदान्तश्रवणप्राप्तिविघातकत्वमप्यपरो दोषः स्यात् । यदि स्वोपजीव्यविरोधित्वं विधीनां न दोषः तदा परिसङ्ख्यामुपजीव्य लब्धोन्मेषया वेदान्तश्रवणाप्राप्त्या परिसङ्ख्यामुपमृद्य तत्रापूर्वविधिः पुनरुन्मज्जेत् । तस्मादुपजीव्यविरोधोऽप्यस्यास्त्रिदोषदुष्टायाश्चतुर्थो दोषः स्यादेव । नन्वयमेव दोषः परिहारग्रन्थेनोच्यते । अनधीतस्वाध्यायानां विचारायोगादिति । नेति ब्रूमः । न हि तत्र परिसङ्ख्योपजीव्यविचारप्राप्तेस्तया विघातो दोषत्वेनोच्यते किं तु विचाराप्राप्तावर्थनिर्णयाभावेन विद्यानुष्ठानासम्भवात्[1] पुरुषार्थालाभः । वस्तुतस्सोऽपि न दोषः । विचारं विना पुरुषार्थलाभासंभवे तदाक्षिप्त एव विचारे प्रवृत्त्या तल्लाभोपपत्तेः । विचाराभावेऽपि परमेश्वरप्रसादलब्धसकलवेदान्तार्थज्ञानं हिरण्यगर्भादिप्रणीतविद्यातद्वेद्यपरब्रह्मरूपनिर्णायकग्रन्थोपदेशादिना विद्यानुष्ठानोपयोग्यर्थज्ञानमासाद्य विद्यानुष्ठानेन पुरुषार्थलाभोपपत्तेः । न ह्येकेन मुमुक्षुणा सकलवेदान्तप्रतिपादिता सर्वापि विद्याऽनुष्ठेया येन सकलवेदान्तार्थज्ञानं तेन लब्धुं न शक्यमिति विचारोऽन्विष्येत । एकैनैकैव परविद्याऽनुष्ठेया 'विकल्पो विशिष्टफलत्वात्' ( ब्र०३-३-५९. ) इत्यधिकरणन्यायात् । तदुपयोग्यर्थज्ञानं तूपदेशपरहैरण्यगर्भकल्पादिना सुलभमेव । 'नावेदविन्मनुते तं बृहन्त'मिति श्रुतिः अवेदेन परमेश्वरज्ञानं न सम्भवतीत्येतत्परा न भवति । वेदानुसार्यागमादिनापि तद्ज्ञानदर्शनात् । किं तु वेदोक्तप्रकारेणैव स ज्ञातुं शक्यः। न तु शुष्कयुक्तिसमर्थितप्रकारेणेत्येतत्परा । 'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठे'तिश्रुत्यन्तरैकार्थ्यात् । नन्वेवं तर्हि पुरुषार्थासम्भव इत्यस्य वेदान्ताध्ययनस्य प्रतिषिद्धत्वे तदर्थविचारे कस्यापि प्रवृत्त्यसम्भवात् विचारशास्त्रारम्भो निष्फलः स्यादित्यत्र तात्पर्यमस्तु । स्यादेतत् । अध्ययननियमपरिसङ्ख्यया केषां चिद्वेदान्ताध्ययनाभावेन तद्विचारे प्रवृत्त्यभावेऽप्यन्येषां प्रवृत्त्या विचारशास्त्रारम्भसाफल्यान्न तन्नैष्फल्यदोषप्रसक्तिः । अध्ययनपरिसङ्ख्येति पक्षे[2] ह्यध्ययननियमपरिसङ्ख्यैव भवति । नाध्ययनस्वरूपपरिसङ्ख्या । तथा हि—नियमविधितः प्राप्तस्य तर्कितस्य वा परिसङ्ख्या नियमपरिसङ्ख्या । अन्यतः प्राप्तस्य तर्कितस्य वा परिसङ्ख्या स्वरूपपरिसङ्ख्येति व्य-

( १ ) 'विध्यनुष्ठानासम्भवात्'. इति ङ. पाठः । ( २ ) 'पूर्वपक्षेऽपि' इति घ. पाठः ।

वस्था। अत एव'वैखानसं पूर्वेऽहन्साम भवति षोडश्युत्तर'इत्यत्र परिसङ्ख्येति पूर्वपक्षदशाया'मुत्तरेऽहन्द्विरात्रस्य गृह्यत' इति द्विरात्रसामान्यस्योत्तरेऽहनि यः षोडशिग्रहनियमविधिश्चोदकाधीनपाक्षिकषोडशिग्रहप्राप्त्यपेक्षः तल्लभ्यामङ्गिरसां द्विरात्रस्य द्विरात्रान्तराणां चोत्तरेऽहनि समुच्चित्य षोडशिग्रहनियमप्राप्तिमपेक्ष्येयं परिसङ्ख्येति द्विरात्रान्तराणामुत्तरादह्नो नियमविध्यधीनः षोडशिग्रहनियम एव व्यावर्तते न तु चोदकलभ्यः पाक्षिकः षोडशिग्रहोऽपीत्युपपादितं न्यायविद्भिः। अत एव दर्शपूर्णमासप्रकरणाम्नातं 'कपालेषु श्रपयतीति' वाक्यमाग्नेयादिपुरोडाशयागोत्पत्तिवाक्यव्रीहिशास्त्रोभयसामर्थ्यलभ्यमपि प्रयोगमध्ये कपालेषु पुरोडाशश्रपणं विदधानं सत्प्रयोगमध्य एव प्रकृतिद्रव्योपादानेन पुरोडाशस्य स्वयंकर्तृकतां तद्द्वारा व्रीहिशास्त्रस्योपादेयतत्प्रकृतिद्रव्यगतजात्यवस्थानियममात्रपर्यवसायितां चापाद्य तद्वशात् 'दधि मधु घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्य'मिति चित्रायागद्रव्यत्वेन विहितेभ्यः तण्डुलेभ्यः प्रयोजनाभावेन श्रपणनिवृत्त्या तन्मुखप्रवृत्तस्य व्रीहिशास्त्रस्यापि तेभ्यो निवृत्तिर्भवतीत्येवं प्रणाडिकया चित्रातण्डुलेषु व्रीहिनियमप्राप्तिमपेक्ष्य तत्परिसङ्ख्यार्थम्। 'कपालेषु श्रपयतीति वाक्याभावे व्रीहिशास्त्रमेव जात्यवस्थाविशेषविशिष्टप्रकृतिद्रव्योपादानपर्यन्तं व्याप्रियेतेति तण्डुलयागादर्थलोपेन श्रपणनिवृत्तावपि व्रीहिशास्त्रस्य श्रपणमुखप्रवृत्तिकत्वाभावेन निवृत्त्यभावात् चोदकतोऽङ्गान्तरैस्सह व्रीहीणां प्रकृतिद्रव्यतयोपादानमपि प्राप्नुयादित्यमुं न्यायं 'तण्डुलेभ्योऽर्थलोपेन श्रपणं विनिवर्तते । श्रपणस्य निवृत्तस्य स्वयं कर्तृकता कथम्। तदधीनमुपादानं प्रकृते स्यात्कथन्तराम् । तद्वशाद्व्रीहिनियमस्तदभावे कथन्तमाम्।' इतिसङ्गृह्य प्रदर्शयद्भिस्तैश्चित्रातण्डुलेभ्यो व्रीहिनियम एव व्यावर्तते न तु व्रीहीणां लोकतः पाक्षिकी प्राप्तिरपीति चित्रायागे व्रैहा अव्रैहा वा यथा सिद्धास्तण्डुला ग्रहीतव्या इति निरूपितम् । एवं चात्राध्ययनपरिसङ्ख्यापक्षेऽध्ययनविधितोऽध्ययननियमप्राप्तिमपेक्ष्य परिसङ्ख्येति वेदान्तेभ्योऽध्ययननियम एव व्यावर्तेत नाध्ययनस्वरूपमिति येषामनियमप्राप्ते वेदान्ताध्ययने प्रवृत्तिः तदर्थतया विचारशास्त्रारम्भस्साफल्यमश्नुवीतेति चेन्मैवम् । अध्ययननियमपरिसङ्ख्यायां 'स्वाध्यायोऽध्येतव्य' इति शास्त्रव्यावृत्तेर्लौकिकमेव वेदान्तानामध्ययनं पक्षे प्राप्नोति यथा चित्रायागतण्डुलेषु व्रीहिनियमपरिसङ्ख्यायां लौकिका एव व्रैहास्तण्डुलाः पक्षे प्राप्नुवन्ति। न त्वङ्गिरसां द्विरात्रे षोडशिग्रहनियमव्यावृत्तौ वैधः षोडशिग्रह इव वैधमध्ययनं पक्षे प्राप्नोति। अनियते षोडशिग्रह इवानियतेऽध्ययने विध्यभावाल्लोकत एवास्य प्राप्तेः। एवं च यथा 'कपालेषु श्रपयती' ति विधिसामर्थ्यात् चित्रातण्डुलेभ्यो वैधो व्रीहिनियम एव व्यावर्तते न तु तत्प्रकृतितया नीवारादिवल्लोकतः पक्षे प्राप्तं व्रीहिस्वरूपमपीति केषाञ्चिद्व्रैहतण्डुलोपादानसम्भवेऽपि व्रीहिनिर्वापप्रोक्षणावहननादिनियमं विहाय बहिःप्रयोगसिद्धानां लौकिकानामेव व्रैहतण्डुलानामुपादानम्। तथा श्रोतव्यवाक्यवशाद्वेदान्तेभ्योऽध्ययननियम एव व्यावर्तते न वेदान्तग्रहणोपायतया लिखितपाठवत् लोकतः पक्षे प्राप्तं व्रतनियमादिरहितं लौकिकमध्ययनस्वरूपमपीति केषाञ्चिद्वेदान्तजिघृक्षया लौकिकाध्ययनसम्भवेऽपि तावन्मात्रेणाध्ययनविध्युपज्ञस्य द्विविधस्यापि विचाराक्षेपस्यानुन्मेषात्

(१) 'एव तस्य प्राप्तेः' इति घ. क. ङ. च. पाठः।

तदधीना विचारे प्रवृत्तिर्न सम्भवत्येव । अपि च नियमविधिप्राप्तपरिसङ्ख्या सर्वापि नियमपरिसङ्ख्येति न नियमः । तथा नियमे सौर्यादीनामितिकर्तव्यताकाङ्क्षायामनियमेन यतः कुतश्चिदितिकर्तव्यताग्रहणप्रसक्तौ शब्दार्थगतसादृश्यलिङ्गकल्पितस्य कुतश्चिदेव तद्ग्रहणं नियच्छतः चोदकस्यापि नियमविधिरूपत्वेन आज्यभागविधिसामर्थ्यात् गृहमेधीये तर्कितचोदकाधीनप्राप्तिकाज्यभागव्यतिरिक्तैष्टिकाङ्गकलापपरिसङ्ख्यायाः नियमपरिसङ्ख्यात्वापत्त्या गृहमेधीयतद्व्यतिरिक्ताङ्गकलापस्यापि पक्षेऽनुष्ठानप्रसङ्गात् । किं तु यत्र परिसङ्ख्याया नियमशास्त्रनिवृत्तावपि नियमविध्यभावे प्रसक्तिमल्लौकिकं वैदिकं वा पक्षे प्रापकं प्रमाणमवश्यंभाविप्रवृत्तिकं तत्रैव नियममात्रपरिसङ्ख्या अन्यत्र स्वरूपपरिसङ्ख्येति नियमः । एवं च चित्रातण्डुलेभ्यो व्रीहिनियमव्यावृत्तावपि तण्डुलानां प्रकृतिद्रव्याकाङ्क्षानपायाद्व्रीहिनीवाराद्यनियतप्रकृतिद्रव्यप्रापकप्रमाणमवश्यम्भाविप्रवृत्तिकमिति तत्र नियममात्रपरिसङ्ख्या । द्विरात्रान्तरेभ्यः षोडशिग्रहनियमव्यावृत्तौ विकल्पेन षोडशिग्रहप्रापकश्चोदकः स्वबाधकस्य नियमशास्त्रस्य व्यावृत्तेरवश्यम्भाविप्रवृत्तिक इति तत्रापि नियममात्रपरिसङ्ख्या । गृहमेधीयादैष्टिकविध्यन्तनियमस्य चोदकसमर्पणीयस्य क्लृप्तोपकारप्राकृताज्यभागविधिना चोदककल्पनाप्रतिबन्धमुखेन निवर्तने सति नानियतविध्यन्तप्रापकं किञ्चित्प्रमाणं प्रवर्तते उपकाराकाङ्क्षाविरहात् अनियतषोडशिग्रहप्रापकस्येव नियतविध्यन्तप्रापकस्य कस्यचिच्छास्त्रस्याभावाच्चेति तत्राज्यभागव्यतिरिक्तैष्टिकाङ्गानां स्वरूपेणैव परिसङ्ख्येति व्यवस्था सङ्गच्छते । एवमुक्तनियमासिद्धावध्ययनपरिसङ्ख्याया नियमविधिप्राप्तपरिसङ्ख्यात्वेऽपि स्वरूपपरिसङ्ख्यात्वमेव पर्यवस्यति । पाक्षिकलौकिकाध्ययनप्रापकप्रमाणानुत्थानात् लौकिकाध्ययनगृहीतानामर्थज्ञानादिषु विनियोगासम्भवेन व्यर्थे तद्ग्रहणे पुंसामाकाङ्क्षानुदयात् । तस्मादध्ययनपरिसङ्ख्यायामनधीतस्वाध्यायानां विचारायोगात् विचारशास्त्रारम्भो निष्फलः स्यादिति दूषणं युक्तमेवेति चेन्नेदमपि दूषणं प्रसजति । इयं हि वेदान्ताध्ययनपरिसङ्ख्या न सर्वान्प्रति वक्तुं शक्यते । मुण्डकोपनिषदाद्यध्ययनाङ्गभूतशिरोव्रतादिविधानस्य निर्विषयत्वापत्तेः । किं तु प्रकरणानुरोधात् मुमुक्षूप्रतीति वक्तव्यम् । तथैव च भाष्यकाराभिप्रायः । अत एव द्वितीयपरिसङ्ख्यादूषणे कर्मविचाराभावे कर्मानुष्ठानासम्भवात् चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तिरेव दोषत्वेनोक्ता । अन्यथा सर्वविषयपरिसङ्ख्याशङ्कायां कर्मानुष्ठानासम्भवेन स्वार्गादिफलानुदयापत्तिरपि दोषत्वेनावक्ष्यत । तथा च ये मुमुक्षोदयात्पूर्वमेव कृतवेदान्ताध्ययनाः तेषु नाध्ययनपरिसङ्ख्या प्रवर्तते । योऽपि भुङ्क्तवन्तं प्रब्रूयान्मा भुंक्था इति किं तेन कृतं स्यादिति न्यायात् । ततस्तेष्वध्ययनविध्युपज्ञविचाराक्षेपोपपत्तेस्तानधिकृत्य विचारशास्त्रारम्भः साफल्यं प्राप्नुयादेवेति । एवमत्र परिसङ्ख्याशङ्कावत् प्रथमपरिसङ्ख्यादूषणमप्ययुक्तम् । तथैव द्वितीयपरिसङ्ख्यादूषणमपि । कर्मविचाराभावेऽपि चित्तशुद्ध्यर्थं यदा यत्कर्मानुष्ठेयं तदा तदभिज्ञोपद्रष्टृवचनादिना तदर्थज्ञानसम्पादनोपपत्तेः । तस्माच्छङ्कापरिहारमिदमसमञ्जसमिवाभातीति । अत्रैवं शङ्काग्रन्थस्याभिप्रायः । यद्यपि त्रिदोषा परिसङ्ख्या तथापि 'पञ्च पञ्चनखा भक्ष्या' इत्यत्रेवागत्या स्वीकरणीया । न च 'षोडश्युत्तर' इत्यत्रेव सन्निहितविध्यन्तरस्तावकत्वं गत्यन्तरमस्तीति वाच्यम् । तत्र विध्यर्थप्रत्ययपरक्रियाभेदश्रुत्यभावेन प्रतीतैकवाक्यतानुरोधाद्यथा-

कथञ्चित्स्तावकत्वाभ्युपगमेऽप्यत्र तव्यप्रत्ययपरक्रियाश्रुतिभेदेन स्पष्टे वाक्यभेदे प्रवृत्तिविशेषकरस्य यस्य कस्यचिद्विधेरेवाभ्युपगन्तव्यत्वेनाप्रतीतानर्थकप्रायस्तावकत्वाभ्युपगमस्यायुक्तत्वात्। न च प्रथमपरिसङ्ख्यायामुपजीव्यविरोधो दोषः। न हि वेदान्तानामध्ययनं न कर्तव्यमित्येवमत्र परिसङ्ख्या। किं तु तेषां श्रवणादन्यन्न कर्तव्यमिति। एवमपि वेदान्तानां श्रवणवच्छेषतयानुष्ठेयमध्ययनमेव तत्सजातीयं विवर्तितं भवति। एवं च वेदान्तानां श्रवणादन्यन्न कर्तव्यमिति विशेषनिषेधसामर्थ्यादध्ययननिषेधस्तद्विध्युपज्ञप्राप्तिमत्तया निवर्तमानमपि श्रवणं प्रतिप्रसूतं भवति। अत एव प्रथमपरिसङ्ख्याशङ्कायां प्रस्तुतार्थानुपयोगित्वादिदोषस्यापि नावकाशः। कृष्णलश्रपणस्येव वेदान्तश्रवणस्य प्रतिप्रसवाधीनत्वात् द्वितीयपरिसङ्ख्यायामप्युक्तरीत्यैवास्य दोषस्य नावकाशः। वेदान्तादन्यन्न श्रोतव्यमिति विशेषनिषेधसामर्थ्याद्वेदान्ताः श्रोतव्या इत्यर्थतो लाभात्। यद्वा। द्वितीयपरिसङ्ख्याशङ्का श्रवणविधिनिराकरणप्रसङ्गादुत्थापिता सर्वात्मना श्रोतव्यवाक्ये विधिप्रत्याशां निराकर्तुमिति तत्र प्रस्तुतार्थानुपयोगित्वादिसम्भवेऽपि न दोष इति। परिहारग्रन्थस्य त्वयमभिप्रायः। श्रवणादन्यन्न कर्तव्यमिति परिसङ्ख्याध्ययनाभावात् वेदान्तेभ्यो निवर्तमानस्य श्रवणस्य प्रयोजनाभावात् कृष्णलेभ्यो निवर्तमानस्य श्रपणस्य तद्विधानार्थमेव प्रवृत्तेन 'कृष्णलं श्रपये'दिति वाक्येनेव विधानं न लभ्यते। किं तु अध्ययनस्येव श्रवणस्य निषेधेन स्पर्शो नास्तीत्येतावल्लभ्यते। न हि 'शल्यकशशश्वाविद्कूर्मगोधाव्यतिरिक्तान्पञ्चनखान्न भक्षये' दिति निषेधेन शल्यकादिभक्षणे विधिर्लभ्यते। किं तु पुरुषेच्छानुसारेण यथाप्राप्ति कदाचित्तद्भक्षणं भवति कदाचिन्न भवति। एवं शल्यकादिभक्षणवन्निषेधास्पृष्टं श्रवणमध्ययनविध्युपज्ञाक्षेपानुसारेणाध्ययनवतां भवति तद्रहितानां न भवतीत्येव स्यात्। न केवलमयं प्रकारो विशेषनिषेधे। किं तु विशेषविधावप्ययमेव प्रकारः। अत एव 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदी'ति यूपमानादेशविधिवाक्ये प्रतीतैकवाक्यत्वभङ्गपरिहारार्थं'मन्तर्वेदि' 'बहिर्वेदीति' शब्दाभ्यामेकोऽन्तरालदेशो लक्ष्यत इति व्यवस्थापनार्थे 'तथा यूपस्य वेदि' (जै०३–७–१३-सू.)रित्यधिकरणे अर्धमन्तर्वेदीत्येव विधिरस्तु। तत्रार्धमिति विशेषणसामर्थ्यादर्धं बहिर्वेदीति लभ्यत इत्यर्थः। लब्धार्थानुवादो न तु तत्रापि विध्यन्तरमिति वाक्यभेदापत्तिरित्याशङ्क्य विधावर्धमिति विशेषणबलाद्विधानादेवार्धान्तरं व्यावर्तते। तदर्धान्तरमिच्छातो यत्र क्वचन भवत्कदाचिदन्तर्वेद्यपि भवेदित्यर्धं बहिर्वेदीति नित्यवदनुवादो न घटत इत्युक्तम्। एवमत्रापि निषेधे श्रवणान्यत्वविशेषणबलान्निषेधादेव श्रवणं व्यावर्तते न तु स्वयं तत्सामर्थ्यादेव नित्यवत्प्राप्नोति। एवंचाध्ययनविध्युपज्ञमेव श्रवणस्य प्राप्तिरिति यथाप्राप्ति ममुक्षोदयात्पूर्वं याज्ञवल्क्यसंन्यासप्रसक्तिमन्मैत्रेयीब्राह्मणगतोपाख्यानानुसारेण मुमुक्षया संन्यासात्पूर्वं वा अध्ययनवतामेव तत्स्यात्। मुमुक्षोदये ततः संन्यासे वा सत्यध्ययनप्रतिषेधेन तद्रहितानां न भवेदित्येतत्सर्वं हृदि निधायैवा 'नधीतवेदान्तानां विचारायोगा' दित्युक्तम्। मुमुक्षोदयात्पूर्वमधीतवेदान्तानां विचारसम्भवेऽपि तस्मिन् तत्पूर्वके सन्यासे वा वेदान्ताध्ययनात्प्रागेव सति तदनन्तरमध्ययनप्रतिषेधादनधीतवेदान्तानां विचारायोगादित्यर्थः। एवं कोषां चिन्मुमुक्षूणां वे-

(१) 'भक्षणीयं' इति घ पाठः।

र्थासम्भवः। यदि वेदान्तश्रवणस्य परिसङ्ख्यापरत्वं कर्मकाण्डश्रवणनिषेधपरत्वरूपमिति विचारस्तदा विचाराभावात् कर्मानुष्ठानासम्भवः। तदभावे चित्तशुद्ध्यभावात् ज्ञानानुत्पत्तिः स्यात्। तस्मात् पूर्वोक्तमेव समीचीनम्। ततस्सकलदान्तविचारायोगेऽपि परिसङ्ख्याया नोपजीव्यविघातकत्वम्। मुमुक्षोदयात्संन्यासाद्वा प्रागेवाध्ययनेन तद्विचाराविघातात्। अतः केषाञ्चित्परिसङ्ख्यया विचारान्निवृत्तावपि सर्वथोपजीव्यविघातो नास्तीति तद्दोषमुपेक्ष्य विद्यानुष्ठानासम्भवेन पुरुषार्थालाभो दोषत्वेनोक्तः। न चार्षग्रन्थादिना विद्यानुष्ठानोपयोग्यर्थज्ञानसम्पादनेन विद्यानुष्ठानं स्यादिति शङ्कनीयम्। अधीतस्वाध्यायस्यार्थज्ञानस्य चाकाङ्क्षालब्धेन परस्परान्वयेनाधीतस्वाध्यायजन्यमेव तदर्थज्ञानं फलोपयोगीति नियमस्य प्राक्समर्थितत्वात्। न च मुमुक्षोदयात्पूर्वमध्ययनवतां तथास्तु नाम नियमः तद्रहितानामध्ययनस्य निषिद्धत्वात्तेषां पुरुषार्थलाभार्थमुपायान्तराक्षेपः स्यादिति वाच्यम्। तेष्वेव चरितार्थस्य मोक्षशास्त्रस्य तदाक्षेपकत्वायोगात्। अन्यथा वसन्तादिकालविहिताधानप्राप्ताग्निमत्स्वध्ययनप्राप्तविद्यावत्सु च त्रैवर्णिकेषु चरितार्थस्यापि ज्योतिष्टोमादिशास्त्रस्य शूद्राणामपि ज्योतिष्टोमाद्यनुष्ठानेन पुरुषार्थसिद्ध्यर्थमग्निविद्योपायान्तराक्षेपकत्वप्रसङ्गात्। एवं तर्हि केषांचित्पुरुषार्थालाभो दोष एव न भवतीति कथमयं दोषत्वेनोक्तः। इत्थमध्ययनपरिसङ्ख्याप्रयुक्तोऽयं केषाञ्चित्पुरुषार्थालाभः तदा दोषो न स्यात्। यदीयं परिसङ्ख्यावश्यमभ्युपगन्तव्या स्यात्। नेयमभ्युपगन्तव्या। न हि 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुवत्र ह्येवावपद्यन्त एवोद्धपती'ति वाक्य इवाभिधावृत्तिप्राप्तेयं परिसङ्ख्या। येनेयमप्रत्याख्येया स्यात्। किं तु स्वार्थं परित्यज्य परार्थलक्षणयोपनेया। नैवं बलात्काञ्चन परिसङ्ख्यां त्रिदोषदुष्टां परिगृह्य विशेषवचनप्राप्तस्य केषाञ्चित्पुरुषार्थलाभस्य बाधनमयुक्तम्। तस्मात्तव्यप्रत्यययुक्तमपि श्रोतव्यवाक्यं 'विष्णुरुपांशु यष्टव्य' इत्यादिवत्स्तुत्यर्थमनुवादरूपमित्येवाभ्युपगन्तव्यमित्यभिप्रेत्यायं दोषत्वेनोक्तः। एवमेव द्वितीयपरिसङ्ख्यादूषणमपि सङ्घटनीयमिति सर्वं समञ्जसम्। एवं श्रवणविधौ निराकृते सति तद्विचारे 'पुरुषार्थाकाङ्क्षी पुरुषस्स्वयमेव प्रवर्तत' इति प्रागुक्तसरणिरेवानुसरणीयेत्याह—तस्मादिति। इयता प्रबन्धेनोपपादितमथशब्दस्य धर्मविचारानन्तर्यार्थत्वमुपसंहरन् 'ब्रह्मजिज्ञासे'ति सूत्रशेषलब्धस्यार्थस्याथशब्दोपात्तधर्मविचारानन्तरं कर्तव्यतयान्वयं दर्शयति—तत इत्यादिना 'अथ शब्दस्यार्थो दर्शित' इत्यन्तेन। ब्रह्मप्रतिपादकस्योपनिषच्छास्त्रस्य विचारः कर्तव्य इत्ययं 'ब्रह्मजिज्ञासे'तिसूत्रशेषलभ्योऽर्थः। तदेतदग्रे स्पष्टयिष्यते। तत्र विचारं प्रति व्यवहितविषयसमर्पकेण सौत्रेण ब्रह्मपदेन शिवोऽभिधीयत इत्येतदुपपादयितुं विशेषणचतुष्टयेन विशिनष्टि सकलेत्यादिना। बृंहतेर्धातोर्मन्प्रत्ययान्तस्य ब्रह्मशब्दस्यात्र त्रिविधपरिच्छेदरहितं वस्त्वर्थ इत्यभ्युपगन्तव्यम्। धात्वर्थानुगमात् प्रकरणोपपदादिसङ्कोचकाभावाच्च। तद्देशकालपरिच्छेदरहितस्यापि शिवस्य न सम्भवति। तस्य चेतनाचेतनप्रपञ्चविलक्षणत्वाभ्युपगमेन वस्तुपरिच्छिन्नत्वादित्याशङ्कां निरसितुमाद्यविशेषणम्। सकलचेतनाचेतनप्रपञ्चाकारया तद्रूपपरिणामिन्या परमशक्त्या जडशक्तेर्मायाया नियामकत्वेन तत उत्कृष्टया चिच्छक्त्या विशिष्टस्य अत एवाद्वितीयवैभवस्य द्वितीयाश्रयरहितबृहत्त्वस्य चेति 'निम्नोन्नतं भूतल'मित्यादाविव विशेषणद्वय-

स्यापि विशेषणविशेष्यभावविवक्षया समासः। वृक्षे पत्रपुष्पाद्यान्तर्गणिकभेदसत्त्वेऽप्येक एवात्र वृक्ष इत्यत्र तत्समानजातीयवृक्षान्तराभाववत् चेतनाचेतनप्रपञ्चविशिष्टस्य शिवस्य तद्विशेषणयोश्चेतनाचेतनयोस्तस्य ताभ्यां चान्तर्गणिकभेदसत्त्वेऽप्युक्तरूपेण तत्समानजातीयवस्त्वन्तराभावोऽस्तीति स एव वस्तुपरिच्छेदराहित्यम् । न तु सर्वथा तद्व्यतिरिक्तवस्तुराहित्यमिति भावः। ननु, स्वरूपतो बृहत्त्वमात्रं न ब्रह्मशब्दप्रवृत्तिनिमित्तं किं तु गुणतो बृहत्त्वमपि। सङ्कोचे कारणाभावात् नैयायिकादिमते स्वरूपतो बृहत्त्वेनाभ्युपगतेष्वप्याकाशादिषु ब्रह्मशब्दस्याप्रयुज्यमानत्वाच्च । मा भूद्वा गुणतो बृहत्त्वं ब्रह्मशब्दप्रवृत्तिनिमित्तं तथापि प्रवृत्तिनिमित्तोपपादकत्वेन तदवश्यं ब्रह्मशब्दार्थे वक्तव्यम्। न हि तस्य बृहत्त्वमात्रं प्रवृत्तिनिमित्तम्। किं तु बृंहणविशेषितं बृहत्त्वम्। 'बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयत' इति स्मृतेः। बृंहणत्वं च सर्गकालोन्मिषत्सकलप्रपञ्चविस्तारयितृत्वमुक्तिकालविकसन्मुच्यमानजीवगतधर्मज्ञानविकासकत्वादिसर्वविधबृंहयितृत्वरूपं वाच्यम्। सङ्कोचकाभावात्। अपि च यत्प्रपञ्चसृष्ट्यादिकारणं तद्ब्रह्मशब्दार्थ इत्यभ्युपगन्तव्यम्। 'यतो वा इमानि भूतानि जायन्त' इत्यादितल्लक्षणानुसारात्। जगत्कारणस्य वस्तुनः सर्वनियन्तृत्वमभ्युपगन्तव्यम्। 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'अन्तः प्रविष्टश्शास्ता जनाना'मित्यादिश्रुत्यन्तरानुसारात्। तस्यानन्दात्मकत्वमभ्युपगन्तव्यम्। 'आनन्दाद्ध्येव खल्विमानि' इति स्वरूपलक्षणवाक्यानुसारात्। तदानन्दस्य निरतिशयत्वमभ्युपगन्तव्यम्। 'स एको ब्रह्मण आनन्द' इत्यादिश्रवणात्। तत्सर्वं शिवे न सम्भवति। येनायमत्र ब्रह्मशब्दाभिधेयस्स्यात् इत्याशङ्कानिराकरणाय तत्सर्वं सकललोकवेदप्रसिद्धतन्नामप्रवृत्तिनिमित्ततयैव तस्मिन्सम्भावयितुं 'भवशिवे'त्यादिविशेषणम्। भवत्यस्माज्जगदिति भवः। शिवं जगतः क्षेमं करोतीति शिवाः सर्वे कल्याणगुणा अस्य सन्तीति च शिवः। शृणाति हिनस्ति जगदिति शर्वः। पशून् जीवान् गवाश्वादिवत्पाशैर्बध्वा स्वकार्यं कारयतीति पशुपतिः। सकलजगदीशनशील ईश्वरः। तत्र पूजार्थस्य परमपदस्य समासः। महति सर्ववैषयिकानन्दातिशायिनि स्वात्मानन्दे दीव्यति रमत इति महादेवः। भक्तानां संसाररुजं द्रावयतीति रुद्रः। शं सुखं भवतीति शम्भुः। अत्र शिवनाम्ना गुणतो बृहत्त्वं भवशिवशर्वपशुपतिरुद्रनामभिर्ब्रह्मणस्तटस्थलक्षणं पञ्चकृत्यकारणत्वं परमेश्वरनाम्ना तदाक्षेपकमन्तर्यामित्वं शम्भुनाम्ना तस्य स्वरूपलक्षणमानन्दात्मकत्वं महादेवनाम्ना तदानन्दस्य निरतिशयत्वं च प्रवृत्तिनिमित्ततयोपनीयते । इदं च तत्रतत्रोपपादितैरुपपादयिष्यमाणैश्च नामनिर्वचनैस्स्पष्टम्। ननु, 'ब्रह्मणः प्रतिपादकमुपनिषच्छास्त्रं विचारणीय'मिति प्रतिज्ञायां स एव ब्रह्मशब्दार्थः स्वीकरणीयः यस्योपनिषच्छास्त्रं प्रतिपादकम्। न च शिवस्य तत् प्रतिपादकम्। 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमी'त्युपक्रम्य प्रवृत्तया 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति कठवल्लीश्रुत्या 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्या'मिति मुण्डकश्रुत्या च विष्णुपुरुषादिशब्दाभिधेयस्य नारायणस्य तत्प्रतिपादकमित्यवगमादित्याशङ्कां निरसितुं सकलनिगमेतिविशेषणम्। 'विष्णोः परमं पद'मित्यत्र पदशब्दो न स्थानवाची । पूर्वं 'मव्यक्तात्पुरुषः पर' इति निर्दिष्टस्य पुरुषस्यैव स्थानप्रमाणतोऽत्र पदशब्दनिर्देश्यत्वावगमात् । तेदतदानुमानिकाधिकरणे व्यक्तीभविष्यति। एवं च पद्यते प्राप्यत इति व्युत्पत्त्या तत्र पद-

शब्दः प्राप्यपुरुषपर इति स्थिते प्राप्यपुरुषो न विष्णुः । विष्णोः परमं पदं प्राप्यमिति तत्प्राप्यत्वश्रवणात् । किं तु शक्त्यवस्थाविशेषोन्मेषरूपस्य विष्णोः पुरुषावस्थाविलये साक्षात्प्राप्या स्वस्वरूपात्मिका शैवी शक्तिः तद्द्वारा प्राप्यत्वपर्यवसानभूमिः शिवः इति स एव विष्णोः परमं पदमिति युक्तम् । अतः'सर्वे वेदा यत्पदमामनन्ती'त्युपक्रमोऽपि तद्विषय एव। यद्वा पदशब्द एव शिववाची । 'शिवो रुद्रो महादेवः शङ्करो ब्रह्म सत्पदम् । एवमादीनि नामानि विशिष्टानि परस्य त्वि'ति स्कान्दवचनात् । एवं च 'तत्ते पदं सङ्ग्रहेण ब्रवीमी'त्युपक्रमः पदश्रुत्यैव शिवविषयः । 'तद्विष्णोः परमं पद'मित्यत्र विष्णोरिति पञ्चम्यन्तं पदं परमशब्दोक्तोत्कर्षप्रतियोगिसमर्पकम् । 'येनाक्षरं पुरुषं वेद सत्य' मित्यत्राक्षरपुरुषपदाभ्यां शिव एवोच्यते । न क्षरतीति योगेन चेतनमात्ररूढ्या च साधारणयोस्तयोः पूर्वं 'यः सर्वज्ञः सर्ववि'दिति मन्त्रे सर्वज्ञपदेन रूढ्या समर्पिते तत्रैव पर्यवसानौचित्यात् । तस्मिन्मन्त्रे सर्वज्ञपदं प्राकरणिकानामाक्षरादिपदानां देवताविशेषपर्यवसानाकाङ्क्षायां[1] रूढ्याकृष्टतात्पर्यं यत्तत्रैवोपक्षीणं स्यादिति कृत्वा खलु तदीययौगिकार्थप्रत्यायनार्थं 'सर्ववि'दिति पदान्तरमुपात्तम्। यथा 'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा । कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्य' इति श्लोकेऽपि पिनाकपाणिपदं सारतरायुधत्वद्योतनोपयोगितया यौगिकार्थवशीकृतं सत्तत्रैवोपक्षीणं स्यादिति कृत्वा तदीयरूढ्यर्थप्रत्यायनार्थं हरशब्दः प्रयुक्तः । तथापि सर्वमुपनिषच्छास्त्रं कथं शिवस्य प्रतिपादकम् । येन सकलवेदान्ततात्पर्यावधारणरूपं श्रवणं शिवविषयं भवेत् । 'हिरण्यगर्भः समवर्तताग्रे' 'एको ह वै नारायण आसी' दित्यादिना ह्यन्यपरत्वं प्रतीयत इत्याशङ्कानिराकरणार्थं'सामरस्यनिधानस्ये'त्युक्तम्। यद्यपि तथाभूतानि वाक्यान्यापाततोऽन्यपराणि भान्ति । तथापि तान्यपि विचार्यमाणानि तात्पर्यरहस्यं शिव एव समर्पयन्ति । अत एव वेदेषु वेदान्तेषु पुराणादिषु चान्यविषयत्वेन प्रतीयमानमपि पञ्चकृत्यान्तर्गतचरितवर्णनमशेषं तत्तदन्तर्यामिणि शिवे पर्यवस्यतीति ज्ञापतलवकारिणामुपनिषदि 'ब्रह्म हि देवेभ्यो विजिग्य' इत्यारभ्य देवानामसुराणां च देवानामन्तर्यामिबलेन जये सति तं जयं स्वकीयं मन्यमानानां देवानां दर्पमपनेतुं तेषां पुरतो यक्षरूपेण शिव एव प्रादुर्भूय स्वस्वरूपजिज्ञासया समीपमागतयोस्सकलजगद्दहनोन्मूलनशक्तिमत्त्वसम्भावनया दृप्तयोरनलपवनयोस्तृणमात्रस्यापि दहनचलनयोरशक्ततापादनेन दर्पमपनीय शक्रे स्वसमीपमागते स्वयं तिरोदधे । तस्मिन्नेव काले सर्वान्तर्यामिशिवस्वरूपोपदिदिक्षया तत्राविर्भूतायाः परब्रह्मविद्याधिदेवतायाः भगवत्या हैमवत्या उमायाः प्रसादादिह यक्षरूपेण शिव एवाविर्भूतः यस्यास्मदन्तर्यामिणो जय एवास्माकं जय इति भ्रान्तिरासीदिति देवा बुबुधिरे इत्युपाख्यानं निबद्धम् । अनेनैवाभिप्रायेण कृत्स्नस्यापि शब्दराशेर्वेदवेदान्तादिरूपस्य शिव एव तात्पर्यमित्यमुमर्थं 'इमा रुद्राय स्थिरधन्वने गिर' इति मन्त्रभागो दर्शयति । भगवान्पराशरोऽप्याह—'स्मृतयश्च पुराणानि भारतादीनि सत्तम। शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति ही'ति । अयमर्थः स्कान्दे स्पष्टीकृतः 'कानिचिद्वेदवाक्यानि ब्राह्मणा वेदवित्तमाः । रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे ॥ पर्यवस्यन्ति वि-

१ 'काङ्क्षाया'इति पाठान्तरम् ।

**चिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टाद्वितीयवैभवस्य सकलनिगमसारसामरस्यनिधानस्य भवशिवशर्वपशुपतिपरमेश्वरमहादेवरुद्रशम्भुप्रभृतिपर्यायवाचकशब्दसारप्रकाशितपरममहिमविलासस्य स्वशेषभूतनिखिलचेतनसमुपासनानुगुणसमुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य परब्रह्मणः प्रतिपादकमुपनिषच्छास्त्रं**

प्रेन्द्रास्तथा वाक्यानि कानिचित् । विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानि चित् ॥ आग्नेयीं मूर्तिमाश्रित्य श्रुतिवाक्यानि कानिचित् । सूर्यमूर्तिं मुनिश्रेष्ठास्तथैवान्यानि कानि चित् ॥ एकमूर्त्यभिधानेन द्वारेणैव मुनीश्वराः । प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिषु ॥' इति । तस्मात्साधूक्तं सकलनिगमसारसामरस्यनिधानस्येति ॥ सामरस्यं सर्वेषां वेदान्तानां तात्पर्येणैककण्ठ्यम् । ननु, तथापि शिवः सूत्रगतब्रह्मशब्दविषयो भवितुं नार्हति । स एव हि तद्विषयः स्यात् यः श्रवणमननिदिध्यासनसाक्षात्कारैः प्रसन्नो मोक्षं दद्यात् । विचारारम्भस्य मोक्षफलत्वाभ्युपगमात् । न च शिवस्तथा । 'मोक्षमिच्छेज्जनार्दना'दिति स्मरणादित्याशङ्कां निराकर्तुं विशिनष्टि—स्वशेषभूतेति । यद्यपि मोक्षप्रदत्वमात्रं प्रकृते प्रदर्शनीयम् । तथापि विशेषे प्रस्तुते सामान्याभिधानरूपेणाप्रस्तुतप्रशंसालङ्कारेण तत्रैव विवक्षा । फलान्तरप्रदातृत्ववर्णनं तु तत्र दृष्टान्ततया पर्यवस्यति । ननु, प्रसादेन चेत्पुरुषार्थसिद्धिः तर्हि सर्वेषामयत्नेन सर्वपुरुषार्थसिद्धिः स्यात् । निर्व्याजदयासमुद्रस्य सर्वानुग्राहकस्य शिवस्य चेतनमात्रे सर्वदा प्रसादसम्भवादित्याशङ्क्य समुपासनानुगुणसमुदितेति प्रसादो विशेषितः । सर्वानुग्राहकस्य शिवस्य सदा सर्वत्र सत्यपि दया तत्तदनाद्यपचारवशादनभिव्यक्तेति कर्मज्ञानरूपतत्तदाराधनानुगुण्येन तत्रतत्रदयाभिव्यक्तौ सत्यां तदनुगुणपुरुषार्थदित्सारूपः प्रसादः समुल्लसतीति भावः । यद्यपि तिर्यगादीनां न कर्मज्ञानाधिकारः तथापि सर्वेषां चेतनानां पर्यायेण मनुष्यदेहादिग्रहणे सति तदधिकारोऽस्तीत्यभिप्रेत्य वा 'महादेवे महानन्दे महाकारुणिकोत्तमे । प्रसन्ने सति कीटो वा पतङ्गो वा विमुच्यत'इत्यादिपौराणिकप्रवादमनुसृत्य वा निखिलविशेषणं कृतम् । ननु पत्रपुष्पादिसमर्पणरूपसमाराधनमयत्नसाध्यमल्पीयः । तावता प्रसन्नः कथं महतः पुरुषार्थान् दद्यादित्याशङ्क्य स्वशेषभूतेत्यपि चेतनविशेषणं कृतम् । पुत्रदारादीनामिव सर्वेषां चेतनानां शिवस्य चानादिसिद्धः शेषशेषिभावः । तेन सम्बन्धेन स्वल्पमपि भक्तिपूर्वकमाराधनं दृष्ट्वा तथातथा प्रसीदतीति भावः । शिवस्य सामान्यतः सकलपुरुषार्थप्रदत्वं 'फलमत उपपत्ते'(ब्र०३–२–३४) रित्यधिकरणे विशिष्य मोक्षप्रदत्वं 'तन्निष्ठस्य मोक्षोपदेशात्' (ब्र०१–१–७)'नेतरोऽनुपपत्ते'रित्यादि (ब्र०१–१–१६)सूत्रेषु च समर्थयिष्यत इति नात्र प्रस्तूयते । यद्य'प्युषिकुषिगार्तिभ्यः स्थ'न्निति सूत्रात्स्थन्प्रत्ययानुवृत्तौ 'सर्तेर्णिच्चे'ति सूत्रेण 'सृ गता' विति धातोः स्थन्प्रत्यये तस्य णिद्वद्भावे च सति निष्पन्नस्सार्थशब्दो गच्छतां समूहमाचष्टे । तथाप्यत्र समूहमात्रपरो द्रष्टव्यः । ननु, यदि त्रिविधपरिच्छेदराहित्यात् गुणपौष्कल्यात् जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणयोगाच्च शिव एव ब्रह्म कथं तर्हि 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत'इत्यादिष्वन्यत्रापि ब्रह्मशब्दप्रयोग इत्याशङ्कां निवर्तयितुं परब्रह्मण इति परत्वविशेषणम् । सत्यं कार्यभूतो हिरण्यगर्भोऽपि श्रुतिप्रयोगात् ब्रह्म । स त्वपरं ब्रह्म ।

(१) 'एवं मूर्त्यभिधानेन'इति पाठान्तरम् । (२) इदं सूत्रमौणादिकं वेद्यम् ।

विचारणीयम् । तन्नियोगरूपचोदनालक्षणस्य तदाराधनविशेषसाधनरूपस्य ब्रह्मशब्दप्रवृत्तिनिमित्तपौष्कल्याभावात् । शिवस्तु परं ब्रह्म तत्पौष्कल्यस्य तत्रैव विश्रान्तेः । अत एव श्रूयते–'ऋतं सत्यं परं ब्रह्मे'ति । अथर्वशिरसि च श्रूयते–'अथ कस्मादुच्यते परं ब्रह्म यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परं ब्रह्मे'ति । न चैतन्नामनिर्वचनं प्रणवविषयमेव न तु शिवविषयमिति शङ्कनीयम् । 'य ओङ्कारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म स एकः स एको रुद्रः स ईशानस्स भगवान्स महेश्वरः स महादेव' इत्योङ्कारादिमहादेवान्तानि नामान्येकविषयत्वेन तत्रानुक्रम्य तेषां प्रत्येकमेकैक-निर्वचनस्य प्रदर्शनेन'शिवो वा प्रणवो ह्येष प्रणवो वा शिवस्तथा । वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचिदि'ति शिवपुराणोक्तरीत्या प्रणवनाम्नां निर्वचनस्यापि प्राक्प्रकृते शिव एव पर्यवसानात् । अत एवाथर्वशिखायामपि 'ओंकारः प्रलयः प्रणवः सर्वदेववेदयोनिः सर्ववाच्यं समुद्धर्ता तारो विष्णुर्ब्रह्म प्रकाशो विद्युद्व्यापी'ति नाम्नां महादेवो वाच्यत्वेन दर्शितः 'सकृदुच्चारितमात्र ऊर्ध्वमुन्नामयति तस्मादोङ्कार'इत्यादिना 'व्यापनाद्व्यापी महादेव' इत्यन्तेन। यथा 'तदेव ब्रह्म परमं कवीना'मित्यन्तेन प्रजापतेः परब्रह्मभावः यथा च 'नारायणपरं ब्रह्मे' त्यन्तेन नारायणस्य तथा हिरण्यगर्भशारिकाधिकरण........स्थास्यति । एवं ब्रह्मप्रतिपादकस्य वेदान्तभागस्य यद्विचारणीयत्वं 'ब्रह्मजिज्ञासे'ति सूत्रशेषलब्धं दर्शितं तद्गतं धर्मविचारानन्तर्यमथशब्दार्थं दर्शयन् धर्मं द्वादशलक्षणीप्रतिपाद्यैः प्रमेयविशेषैर्विशिनष्टि–तन्नियोगरूपेत्यादिभिः सप्तभिर्विशेषणैः । तथाहि-कर्ममीमांसाया'मथातो धर्मजिज्ञासे'ति सूत्रेण प्रमाणस्वरूपसाधनफलैर्धर्मस्य विचारं प्रतिज्ञाय प्रथमाध्याये तस्मिन्प्रमाणं निरूपितम् । तत्र प्रथमपादे साक्षाद्धर्मे प्रमाणभूतायाश्चोदनायाः पौरुषेयत्वाद्यप्रामाण्यहेतुशङ्कानिराकरणपूर्वकं तत्र प्रामाण्यमुपपादितम् । द्वितीयपादे अर्थवादमन्त्रयोः विध्यपेक्षितद्रव्यदेवतादिस्तुत्यनुष्ठेयार्थस्मृतिसमर्पकतया तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्यादीनां मूलवेदानुमापकतया चतुर्थपादे 'त्वग्निहोत्रं जुहोति' 'श्येनेनाभिचरन्यजेते'त्यादिविधिवाक्यगतानामग्निहोत्रादिपदानां नाम्ना कर्मभेदः नाम्ना धर्मातिदेशः नाम्ना दूरस्थस्यानुवाद इत्यादिप्रयोजनवत्या कर्मनामतया च तत्र प्रामाण्यमुपपादितम् । *एवं प्रमाणसिद्धस्य धर्मस्य परस्परभिन्नं स्वरूपं द्वितीयाध्याये निरूपितम् । तत्र 'यजति ददाति जुहोती'ति चोदनासु यज्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदः 'समिधो यजति''तनूनपातं यजती'त्यादिविधिषु 'यजती'ति पञ्चकृत्वोऽभ्यासेनाविशेषपुनश्श्रुतिरूपेण प्रयाजानांभेदः'सप्तदश प्राजापत्यान्पशूनालभेते'त्यत्र द्रव्यदेवतासम्बन्धभेदिन्या सप्तदशसङ्ख्यया तदनुमेययागानां भेदः 'अथैष ज्योति'रित्यादिवाक्येषु ज्योतिरादिनामधेयैस्तन्नामकयागानां प्रकृतज्योतिष्टोमाद्भेदः 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'मित्यत्र आमिक्षारूपगुणान्तरावरुद्धे यागे निवेशमलभमानेन वाजिनगुणेन वाजिनयागस्यामिक्षायागाद्भेदः प्रकरणान्तरेण नित्याग्निहोत्रान्मासाग्निहोत्रस्य भेद इत्येवं द्वितीयाध्याये कर्मभेदः सापवादः प्रपञ्चितः*।

(१) 'तारम्' इति पाठान्तरम् ।

तृतीयाध्याये भिन्नानां कर्मणां श्रुतिलिङ्गादिभिः प्रमाणैश्शेषशेषिभावो निरूपितः । तत्र निरपेक्षः शब्दः श्रुतिः । सा त्रिविधा विधात्री अभिधात्री विनियोक्त्रीति । लिङादिश्रुतिर्विधात्री । इन्द्रादिश्रुतिरभिधात्री । विनियोक्त्री त्वेकप्रत्ययरूपा एकपदरूपा विभक्तिरूपेति त्रिविधा । तत्राद्या 'पशुना यजेते'ति तृतीया(१) । सा हि स्वोक्तकरणकारकं प्रति स्वोक्तैकत्वसङ्ख्यायाश्शेषत्वमुपगमयति(२) । द्वितीया यजेतेति पदम् । तेन प्रत्ययोक्तभावनां प्रति प्रकृत्युक्तयागस्य शेषतोपनीयते । तृतीया शेषित्वबोधिका शेषत्वबोधिकेति द्विविधा । 'व्रीहीन्प्रोक्षती'त्यादिषु द्वितीया व्रीह्यादीनां प्रोक्षणादिक्रियां प्रति ईप्सिततमत्वरूपशेषित्वबोधिका । 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती'त्यत्र चतुर्थीश्रुतिर्मैत्रावरुणस्य प्रदानक्रियेप्सिततमेन कर्मणाऽभिप्रेयमाणत्वरूपशेषित्वबोधिका । 'अरुणया क्रीणाती'त्यत्र क्रयभावनां प्रत्यारुण्यस्य 'चात्वालान्मृदमाहरती'त्यत्र मृदाहरणक्रियां प्रति चात्वालस्य 'वेद्यां हवींष्यासादयती'त्यत्र हविरासादनक्रियां प्रति वेद्याश्च तृतीयापञ्चमीसप्तम्यः शेषत्वबोधिकाः । षष्ठी तु क्वचि'द्दध्नेन्द्रियकामस्य जुहुया' दित्यादौ शेषित्वबोधिका 'यजमानस्य याज्ये'त्यादौ शेषत्वबोधिका च । सम्बन्धमात्रेऽनुशिष्टायाः षष्ठ्या योग्यतानुसारेणोभयथापि पर्यवसानसम्भवात् । वस्तुसामर्थ्यं लिङ्गम् । तद्द्विविधं शब्दसामर्थ्यमर्थसामर्थ्यं च । तत्र 'बर्हिर्देवसदनं दामी'ति मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपाल्लिंगाल्लवनशेषता । 'स्वधितिनावद्यति' 'स्रुवेणावद्यति' 'हस्तेनावद्यती'त्यवदानसामान्ये साधनत्वेन श्रुतानां स्वधित्यादीनां तत्तत्सामर्थ्यादिरूपलिङ्गाद्विशिष्य मांसद्रवद्रव्यपुरोडाशाद्यवदानेषु शेषता । शेषित्वस्य शेषत्वस्य वा बोधिकया श्रुत्या रहितः पदसमभिव्याहारो वाक्यम् । यथा 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इति । यथा वा 'मैत्रावरुणः प्रैष्यति चान्वाह चे'ति । न हि यागभावनां प्रति स्वर्गकामस्य भाव्यत्वेन शेषित्वबोधिका द्वितीयादिश्रुतिः प्रैषानुवचनं प्रति मैत्रावरुणस्य कर्तृत्वेन शेषित्वबोधिका तृतीयाश्रुतिर्वास्ति । प्रथमा तु प्रातिपदिकार्थमात्रेऽनुशिष्टा । अतः पदसमभिव्याहाररूपेण वाक्येनात्र शेषशेषिभावबोधः । विधिवाक्यतः कर्तव्यत्वेनावगतस्य केन प्रकारेण कर्तव्यमिति विशिष्याज्ञायमानस्येतिकर्तव्यताकाङ्क्षा प्रकरणम् । तद्द्विविधम् । महाप्रकरणमवान्तरप्रकरणं चेति । तत्राद्येन दर्शपूर्णमासादिकं प्रति प्रयाजादीनां द्वितीयेन प्रयाजादिकं प्रत्यभिक्रमणादीनां च तत्सन्निधिसमाम्नातानां शेषता । स्थानं द्विविधम् । यथासङ्ख्यं सन्निधिश्च । तत्राद्येन 'दब्धिरस्यदब्धो भूयास'मिति मन्त्रस्याग्नेयाग्नीषोमीयमन्त्रद्वयमध्याम्नातस्याग्नेयाग्नीषोमीययागद्वयमध्यानुष्ठेयोपांशुयागशेषता । सन्निधिस्त्वाम्नानसन्निधिरनुष्ठानसन्निधिरिति द्विविधः । आद्येन 'शुन्धध्वं दैव्याय कर्मणे देवयज्याया'इति मन्त्रस्य महाप्रकरणावान्तरप्रकरणरहितसान्नाय्यपात्रप्रोक्षणशेषता । द्वितीयेन पशुधर्माणामग्नीषोमीयपशुशेषता । समाख्या यौगिकी संज्ञा । सा वैदिकी लौकिकीति द्विविधा । 'होतृचमस'इति वैदिकसमाख्यया होतुश्चमसभक्षणं प्रत्या'ध्वर्यव'मिति याज्ञिकप्रसिद्धलौकिकसमाख्ययाध्वर्योरवघातादिकं प्रति च कर्तृत्वेन शेषतेत्येवं शेषशेषिभावः सापवादस्तृतीयाध्याये प्रपञ्चितः । *एवं सिद्धशेषशेषिभावानां कर्मणामनुष्ठापनशक्तिरूपा प्रयुक्तिश्चतुर्थे निरूपिता । शेष्येव शेषं प्रयुङ्क्ते स्वविध्यर्थमनुष्ठापयति । न त्वनुनिष्पाद्यपि । नापि शेषः शेषिणं प्रयुङ्क्ते । अनेकशेषिसद्भावेऽपि यत्रान्यप्रयुक्तस्यैवान्यत्र वि-

(१) तृतीयाविभक्तिरित्यर्थः । (२) 'मर्पयति' इति ख. ग. पाठः ।

नियोगः तत्र यत्प्रयुक्तस्यान्यत्र विनियोगः स एव शेषं प्रयुङ्क्ते न तु शेष्यपि सन्नन्योऽपि। एवं च 'तप्ते पयसि दध्यानयती'त्यादिवाक्ये विधीयमानस्य दध्यानयनस्य द्विकर्मकस्य कर्मान्तराकाङ्क्षायां समभिव्याहृतं पयः कर्मान्तरत्वेनाविधीयमानं सप्तम्या अधिकरणत्वेन निर्देशात्प्रधानकर्मतया पर्यवस्यतीति प्रकृतप्रधानभूतपयःपरामर्शिना तत्पदेन सामानाधिकरण्येन निर्दिष्टतया पयोरूपत्वेनावगतामिक्षैव शेषित्वात्स्वशेषभूतं दध्यानयनमनुष्ठापयति न तु तदनुनिष्पादिवाजिनमपीत्यामिक्षापचार एव पयोऽन्तरे दध्यानयनस्य प्रयुक्तिः न वाजिनापचारे। 'कृष्णविषाणया कण्डूयते' 'चात्वाले कृष्णविषाणां प्रास्यती'ति कृष्णविषाणायाः कण्डूयनप्रासनरूपक्रियाद्वयान्वये सत्यपि कृष्णविषाणा तृतीयया कण्डूयनं प्रति शेषः प्रासनं प्रति तु द्वितीयया शेषिणीति निवृत्तकण्डूयनप्रयोजनायास्तस्याः प्रासनात्पूर्वमपचारे प्रासनार्थं पुनः कृष्णविषाणान्तरोपादानप्रयुक्तिः। 'पुरोडाशकपालेन तुषानुपवपती'त्यत्र पुरोडाशप्रयुक्तस्यैव कपालस्य तुषोपवापं प्रत्यपि शेषत्वेन विनियोगात् यत्र पुरोडाशो नास्ति न तत्र तुषोपवापार्थं कपालप्रयुक्तिरित्येवं सापवादा प्रयुक्तिश्चतुर्थाध्याये प्रपञ्चिता। *एकप्रयोगान्तर्गतानामङ्गप्रधानानामनुष्ठानक्रमः पञ्चमाध्याये श्रुत्यादिभिर्निरूपितः। तत्र 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'त्यादिश्रुत्या गृहपत्यादीनामुन्नेत्रन्तानां सप्तदशानां सत्रयजमानानां दीक्षाक्रमः 'अग्निहोत्रं जुहोति' 'यवागूं पचती'त्यत्र होमद्रव्यनिष्पत्त्यर्थयवागूपाकप्रयोजनरूपेणार्थेन पाकहोमयोः क्रमः 'समिधो यजती'त्यादिविधिविहितानां प्रयाजानां विधिवाक्यपाठक्रमेण क्रमः वाजपेये प्राजापत्यानां पशूनां प्रति पश्वावर्तनीयेषूपाकरणनियोजनादिषूपाकरणे यतः कुतश्चित्पशोरारभ्य यत्र क्वचित्पशौ समापिते तेनैव प्रवृत्तिक्रमेण नियोजनादिक्रमः। 'साद्यस्के क्रतौ सह पशूनालभत' इति श्रुत्या सवनीयस्थान एवाग्नीषोमीयसवनीयानुबन्ध्यपशुत्रयस्यापि सहकर्तव्यतया प्राप्तौ सवनीयस्थानेन प्रथमं सवनीयपशोरुपाकरणमनन्तरमग्नीषोमीयानुबन्ध्ययोरिति क्रमः दर्शे पुरोडाशसान्नाय्ययोर्मुख्यक्रमेण प्रयाजशेषाभिघारणक्रमः इत्येवं श्रुत्यर्थादिभिः क्रमः सापवादः प्रपञ्चितः। *एवं द्वितीये उत्पत्तिविधिप्रमेयस्य कर्मभेदस्य तृतीये विनियोगविधिप्रमेयस्य शेषशेषिभावस्य चतुर्थपञ्चमयोः प्रयोगविधिप्रमेययोः प्रयुक्तिक्रमयोश्च निरूपणानन्तरं षष्ठेऽधिकारविधिप्रमेयः फलसम्बन्धो निरूपितः। तत्र स्वर्गकामादिपदं विधिप्रयोजनभूतपुरुषप्रवृत्त्यपेक्षितफलविशेषान्वयपरम्। न तु चन्दनादिरूपयागादिद्रव्यसमर्पकम्। तच्च फलं स्वर्गकाम इत्याद्युद्देश्यगतलिङ्गविशेषस्याविवक्षितत्वात् स्त्रीणामप्यविशिष्टम्। 'वृद्धिकामास्सत्रमासीर'न्नित्यादावेकैकस्य कृत्स्नं फलं न तु परिषद्गतं फलमित्येकैकस्य फलावयव इत्येवमादिरूपेणाधिकारः सापवादः षष्ठे प्रपञ्चितः। *एवं विधिचतुष्टयप्रमेयात्मकोपदेशविचारे पूर्वषट्केन कृते ततः परमध्यायचतुष्टयेनातिदेशविचारः। इत्थं कर्तव्यमित्युपदेशः तद्वत्कर्तव्यमित्यतिदेशः। तत्र सप्तमाष्टमयोर्वचननामधेयचोदकैरतिदेशो निरूपितः। इषुनामके क्रतौ कांश्चिद्वैशेषिकान्धर्मान्विधायाम्नातेन 'समानमितरच्छ्येनेने'ति प्रत्यक्षवचनेन श्येनवैशेषिकाङ्गानामिषावतिदेशः। 'मासमग्निहोत्रं जुहोती' त्यत्र नित्याग्निहोत्रेऽग्निदेवतासद्भावात् क्लृप्तशक्तिकेन तत्सादृश्यविधित्सया कौण्डपायिनामयने कर्मणि प्रयुक्तेनाग्निहोत्रनामधेयेन तस्मिन्नित्यग्निहोत्रधर्माणामतिदेशश्च सापवादः सप्तमे

पादत्रयेण निरूपितः। चतुर्थपादेन 'सौर्यं चरुं निर्वपे'दित्यादिष्वनुपदिष्टधर्मेषु प्रत्यक्षवचनस्य नाम्नश्चातिदेशिकस्याभावेऽपि कुतश्चिद्वैदिकात्कर्मणो धर्मप्रापकं वचनमस्तीत्यानुमानिकवचनरूपेण चोदकेनातिदेशस्सामान्यतो निरूपितः। *अष्टमे तु कस्य कुतो धर्मप्राप्तिरि(१)त्याकाङ्क्षायां शब्दार्थगतसादृश्यविशेषलिङ्गादिष्टीनां दर्शपूर्णमासतो धर्मप्राप्तिः। अग्नीषोमीयपशुतः पशूनां सवनीयादैकादशिनीनां ज्योतिष्टोमात्सोमानां द्वादशाहादहर्गणानां गवामयनात्संवत्सरसत्राणामित्येवंरूपेण विशिष्य चोदकातिदेशः सापवादः प्रपञ्चितः। *अतिदिष्टानां मन्त्रसामसंस्काराणां प्राकृतपदार्थकार्यापन्नवैकृतपदार्थान्तरसम्बन्धेनान्यथाभावरूप ऊहो नवमे चिन्तितः। प्राकृतपदार्थकार्यापत्तिः प्रत्यक्षेणानुमानेन प्रत्यक्षवचनावगतप्राकृतनिवृत्त्यनुमितशब्देन प्रत्यक्षवचनावगतलिङ्गोन्नीतनिवृत्त्यनुमितशब्देन वावसीयते। 'नैवारश्चरु'रित्यत्र प्राकृतव्रीहिकार्यहविर्निष्पादकत्वं प्रत्यक्षेणावसीयते न तु नैवार इति तद्धितेन। 'तस्येद'मिति सम्बन्धसामान्ये अण्प्रत्ययविधानात् तस्येह प्रकृतिविकृतिभावरूपसम्बन्धविशेषपर्यवसायित्वकल्पनायाः प्रत्यक्षाधीनत्वात्। 'नैर्ऋतं चरुं परिवृत्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्न'मित्यत्र श्रुतस्य नखस्य प्राकृतोलूखलमुसलकार्यापत्तिः न प्रत्यक्षेणावसीयते। उलूखलमुसलाभ्यां व्रीहीणामवहननं निष्पद्यते नखेन तेषां निर्भेदनमिति प्रत्यक्षेण कार्यभेदस्यैव दर्शनात्। किं त्ववहननेनेव निर्भेदनेनापि तुषविमोकात्तण्डुलनिष्पत्तिदर्शनेन प्राकृतावघातस्योलूखलमुसलकार्यतायां यद्रूपं विवक्षितं तण्डुलनिष्पत्तिद्वारेणापूर्वोपयोगिक्रियात्वं तन्निर्भेदनेऽपि समानमिति तेन रूपेणावहननिर्भेदनयोरैक्यस्योन्नेयत्वात्तत्कार्यापत्तिरनुमानेनावसीयते। 'परिधौ पशुं नियुञ्जीते'त्यत्र प्राकृतयूपकार्ये पशुनियोजने परिधेर्विनियोगः प्रत्यक्षवचनेनाभिधीयते। 'न गिरा गिरेति ब्रूयादैरंकृत्वोद्गेय'मित्यत्र गिरागिरोक्तिप्रतिषेधावगतया गिरापदनिवृत्त्या तत्कार्यस्य साधनापेक्षत्वावगमात् तत्कार्यवाचिपदमनुमाय गिरापदकार्यार्थमैरं कृत्वोद्गेयमित्येवंरूपेण श्रुतानुमितैकदेशनिष्पादितेन वाक्येन गिरापदकार्यापत्तिरिरापदस्यावसीयते। 'यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपे'दित्यत्र पञ्चशरावद्रव्यकस्य यागस्य दर्शकार्यापत्तौ दर्शनिवृत्तिर्न प्रत्यक्षवचनादवगम्यते किं तु द्रव्यविनाशादवगम्यते। तन्निवृत्तौ तत्कार्यस्य साधनापेक्षायां तद्वाचिपदमनुमाय दर्शकार्यार्थ'मैन्द्रं पञ्चशरावमोदनं निर्वपे'दिति श्रुतानुमितैकदेशनिष्पाद्येन वाक्येन पञ्चशरावयागस्य दर्शकार्यापत्तिरवसीयते। 'स प्रत्यामनेत्स्थाना'दिति(जै० ६-४-३०)षष्ठाध्यायाधिकरणपूर्वपक्षरीत्येदमुदाहरणम्। सिद्धान्ते तु द्रव्यापचारे द्रव्यान्तरानयनेन दर्शनिष्पत्तेर्न त(३)न्निवृत्त्युन्नयनमस्तीत्युदाहरणान्तरमन्वेषणीयम्। एवं कार्यापत्त्या व्रीहिधर्माणामवघातादीनां नीवारेषूलूखलमुसलधर्माणां प्रोक्षणादीनां नखे यूपधर्माणां परिव्याणादीनां परिधौ चोहः संस्कारोहः। गिरापदगतगीतिक्रियाया इरापदे तूहः सामोहः। दर्शधर्माणां तु सिद्धान्ते नास्त्यूहः। पञ्चशरावयागे मन्त्रोहस्त्वष्टविधः। क्वचित्प्रकृतिमात्रमूह्यते। यथा 'अग्नये जुष्टं निर्वपामी'त्यत्र अग्निपदस्थाने सौर्यचरौ 'सूर्याये'ति। क्वचिल्लिङ्गमात्रमूह्यते। यथा 'वस्व्यसि रुद्रासी'त्येकहायनी-

(१) 'धर्माणामतिदेशस्य कथं प्राप्तिरित्याकाङ्क्षायाम्'इति घ. ङ. पाठः। (२) 'गिरापदोक्ति' इति. घ. पाठः।
(३) 'न तन्निवृत्तिरस्तीत्युदाहरणान्तरमुन्नेयम्'इति घ. पाठः।

मन्त्रे विकृतिविशेषविहितं सोमक्रयणं वत्सतरं प्राप्ते 'वसुरसि रुद्रोऽसी'ति । क्वचिद्वचनमात्रमूह्यते। यथा 'छागस्य वपाया मेदस'इति मन्त्रे प्राजापत्यपशून्प्राप्ते 'छागाना'मिति । क्वचित्प्रकृतिर्लिङ्गं चोह्यते । यथा 'अग्नये जुष्ट'मित्यादित्यचरुं प्राप्ते मन्त्रे 'अदित्यै जुष्ट'मिति । क्वचित्प्रकृतिर्वचनं चोह्यते। यथा तस्मिन्नेव मन्त्रे वैश्वदेवचरुं प्राप्ते 'विश्वेभ्यो देवेभ्य' इति । क्वचिल्लिङ्गं वचनं चोह्यते । यथा 'प्रास्मा अग्निं भरते'ति मन्त्रे 'मह्या आलभेते'ति विहितान्पशून्प्राप्ते 'प्राभ्योऽग्नि'मिति। क्वचित्त्रीण्यप्यूह्यन्ते। यथा 'आपो देवी'रिति मन्त्रे आज्यप्रोक्षणमिति सोमारौद्रचरौ विहितं घृतं प्राप्ते 'घृत देवे'ति। क्वचित्सकलस्य पदस्याभ्यासरूप ऊहः। यथा 'एकधास्य त्वचमाच्छेता'दितिमन्त्रे पशुगणं प्राप्ते एकधैकधेति । एवमूहस्सापवादो नवमे प्रपञ्चितः । *एवमातिदेशिकपदार्थगतरूपान्तरात्मकोहनिरूपणानन्तरं तन्निवृत्त्यात्मको बाधो दशमे निरूपितः । निवृत्तिश्च कस्यचित्क्वचिदतिदेशवाक्यप्रवृत्तिकाले प्रकृतावविज्ञातत्वेन तद्ग्राह्यत्वासम्भवात् । यथा दर्शपूर्णमासाङ्गभूतायामारम्भणीयायामारम्भणीयायाः । न ह्यारम्भणीयाविधानसमये दर्शपूर्णमासयोरारम्भणीया अङ्गमिति विज्ञाता । येन सापि प्रयाजादिवदतिदेशवाक्येन गृह्येत । कस्य चिदतिदेशवाक्यप्रवृत्तिकाले प्रकृतौ विज्ञातस्याप्यसम्भवान्निवृत्तिः । यथा पवमानेष्टावग्निहोत्रहवण्याः । 'ययाग्निहोत्रं हुतं साग्निहोत्रहवणी प्रकृतावग्निहोत्रहवण्या हवींषि निर्वपती'ति निर्वापकरणत्वेन ग्राह्येति स्थितम् । न च पवमानेष्टिसमये अग्निहोत्रं हुतम् । क्वचिद्द्वारलोपान्निवृत्तिः । तत्र द्वारलोपः । क्वचिद्द्वारत्वाभिमतस्य स्वतस्सिद्धतया । यथा कृष्णलेष्ववघातद्वारस्य वैतुष्यस्य स्वतस्सिद्धतयावघातस्य निवृत्तिः । क्वचित्पूर्वसिद्धतया । यथा 'खलेवाली यूपो भवती'त्यत्र खलेवाल्याः प्रागेव छित्वा तक्षणेन श्लक्ष्णीकृत्य निखातायाः छेदनतक्षणोच्छ्रयणानां निवृत्तिः । क्वचिद्द्वारसम्पादनाशक्त्या । यथा प्राशित्रेडाभक्षणार्थेषु कृष्णलेष्वभिघारणजन्योपकारस्य स्वादिम्नस्सम्पादयितुमशक्यत्वादभिघारणनिवृत्तिः । क्वचित्सिद्धशेषिविरोधान्निवृत्तिः । यथाग्रयणदक्षिणादिरूपे वत्से अन्वाहार्यधर्मस्य पाकस्य । पाके हि कृते वत्सो नश्येत्तन्मांसमेव दक्षिणा स्यात् । क्वचित्साध्यशेषिविरोधान्निवृत्तिः । यथा 'बार्हस्पत्यो नैवारस्सप्तदशशरावश्चरुर्भवती'त्यत्र निर्वाप्येषु व्रीहिषु 'चतुरो मुष्टी'न्निर्वपतीत्यतिदेशप्राप्तस्य चतुर्मुष्टिपरिमाणस्य व्रीहिसाध्यस्य सप्तदशशरावपरिमाणचरुरूपसाध्यशेषिविरोधित्वात् संख्यामुष्ट्योरन्यतरस्य बाधावश्यम्भावे जघन्यत्वात् मुष्टेर्निवृत्तिः । क्वचिद्विरोधाभावेऽपि प्रयोजनाभावान्निवृत्तिः । यथाग्रयणदक्षिणारूपे वाससि पाकस्य । प्रकृतौ ह्यन्वाहार्यरूपदक्षिणाद्रव्यनिष्पत्त्यर्थं 'दक्षिणाग्नावपरिमितं महान्तमोदनं पचती'ति पाको विहितः । इह दक्षिणाद्रव्ये वाससि प्रागेव निष्पन्ने स्थिते तन्निष्पत्त्यनुपयोगिना किं पाकेन । 'द्वारलोपान्निवृत्ति'रित्यत्र द्वारशब्देन यद्द्वारतया फलतया वा प्रयोजनं तत्सर्वं विवक्षितम् । तेन मृते यजमाने क्रियमाणायामिष्टा'वायुराशास्त'इत्यादिमन्त्राणां विवक्षितफलानां मृतस्य यजमानस्यायुरादिफललोपान्निवृत्तिरप्युदाहरणमित्यादि द्रष्टव्यम् । क्वचित्प्रत्याम्नानात् प्राकृतपदार्थनिवृत्तिः । साप्यनेकविधा । क्वचिदुपदिष्टपदार्थविरोधात्तन्निवृत्तिः। यथा 'औदुम्बरो यूपो भवती'ति वैकृतपशावतिदेशप्राप्तयूपोद्देशेनौदुम्बररूपप्रकृतिद्रव्यविधानादुदुम्बरप्रकृतिके यूपे प्राकृतस्य बिल्वपलाशादेर्विरोधेन प्रकृतित्वासम्भवान्निवृ-

त्तिः । क्वचिदुपदिष्टपदार्थगतश्रुतनैरपेक्ष्यश्रुतौ विरोधान्निवृत्तिः । यथा 'नैवारश्चरुर्भवती'त्यत्र नीवारप्रकृतिके चरौ त्रैहतण्डुलानामपि मिश्रणेन प्रकृतित्वसम्भवेऽपि नीवारशब्दपरतद्धितोत्पत्त्यवगतनैरपेक्ष्यविरोधात् व्रीहीणां निवृत्तिः । नैवाराणां व्रीहिसापेक्षाणां चरुप्रकृतित्वे हि 'सापेक्षमसमर्थ'मित्यसामर्थ्यात्तद्धितोत्पत्तिर्न स्यात् । क्वचिदविरोधेऽपि नैरपेक्ष्यान्निवृत्तिः । यथाग्रयणे 'वासो दक्षिणा' 'वत्सः प्रथमजो दक्षिणे'ति श्रुताभ्यां वासोवत्साभ्यामृत्विजामानतौ तयोरन्वाहार्यनिरपेक्षकारणत्वात्प्राकृतान्वाहार्यदक्षिणाया निवृत्तिः । क्वचिन्नैरपेक्ष्याभावेऽपि नियमवशान्निवृत्तिः । यथा ऋतपेये 'औदुम्बरस्सोमचमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देया' इतिश्रुतेन सोमचमसेन केवलं ब्रह्मणे दत्तेन लौकिकोपायान्तरमनपेक्ष्य ऋत्विजामानतेरसम्भवेऽपि श्रुतनियमविधिवशात्प्राकृत्या द्वादशशतदक्षिणाया निवृत्तिरित्याद्युदाहरणीयम् । क्वचित्प्रतिषेधात्प्राकृतपदार्थनिवृत्तिः । प्रतिषेधशब्देनात्र यः कश्चित्प्राकृतपदार्थनिवृत्तिफलको विधिः स सर्वोऽपि विवक्षितः । तेन महापितृयज्ञे 'नार्षेयं वृणीत' इत्यनेन आर्षेयवरणवर्जं प्रकृतिवत्कुर्यादिति पर्युदासेन या तस्मिन्नार्षेयवरणनिवृत्तिः यां च 'न तौ[१] पशौ करोती' त्याज्यभागनिषेधाद्या पशावाज्यभागनिवृत्तिः 'आज्यभागौ[२] यजती' त्यपूर्वतापरविधिनाऽऽज्यभागव्यतिरिक्तांगानां निवृत्तिः सा सर्वाप्यत्रोदाहरणम् । एवं च दर्शपूर्णमासयोः 'कपालेषु श्रपयती'ति वाक्यस्य तण्डुलहविष्केषु चित्रा[३]दिषु व्रीह्युपादाननिवृत्तेरेव फलत्वात् । साप्यत्रोदाहरणम् । यथा च 'कपालेषु श्रपयती'ति विधेस्तण्डुलहविष्कासु विकृतिषु प्रकृतिद्रव्योपादाननिवृत्तिरेव फलं तथा प्रपञ्चेन प्रसाधितमस्माभिर्विधिरसायने ।*एवमुपदेशविषयेऽतिदेशविषये च पृथङ्निरूपणीयेषु निरूपितेषु तदुभयसाधारणयोस्तन्त्रप्रसङ्गयोर्निरूपणीययोरेकादशे तन्त्रं निरूपितम् । तत्त्रिविधम् । फलतन्त्रं पदार्थतन्त्रमनुष्ठानतन्त्रमिति । तत्र दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' त्यत्र फलमुद्दिश्योपादीयमानानामाग्नेयादीनां षण्णां द्वन्द्वावगतं 'राजसूयेन स्वाराज्यकामो यजेते'त्यत्र बहूनामिष्टिपशुसोमानामेकेन नाम्ना तन्त्राभिधानावगतं च साहित्यं विवक्षितमिति सहितानां फलान्वयादाग्नेयादीनां षण्णां फलं राजसूयनामगृहीतयागानां च फलं साधारणं तदेतत्फलतन्त्रम् । 'समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेत दर्शपूर्णमासयोश्चत्वार ऋत्विज' इति विहिता देशकालकर्तारः एकफलसाधनानां कर्मणां यथायोगं साधारणा इत्येतत्पदार्थतन्त्रम् । एकफलानामेकदेशकालकर्तृकाणां यदङ्गभूतप्रयाजाद्यनुष्ठानं साधारणं तदनुष्ठानतन्त्रम् । यत्र तु फलैक्येऽपि देशकालकर्तृणामन्यतमस्यापि भेदस्तत्र प्रतिप्रधानमङ्गानुष्ठानावृत्तिलक्षण आवापः । तत्र द्वादशाहे द्वादशानां सोमयागानां द्वादशस्वहस्सु कर्तव्यानां कालभेदात्सुत्याकालकर्तव्यसवनीयपशुप्रभृत्यङ्गानुष्ठानावृत्तिः । वरुणप्रघासेषु नवहविष्कायामिष्टौ विहारद्वयं विधाय 'ष्टावध्वर्युर्विहारे[४] हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मि'न्निति देशभेदविधानात्तत्रतत्र देशेऽष्टानां हविषां मारुत्याश्चाङ्गानुष्ठानं भिद्यत इति देशभेदेन तदावृत्तिः । तत्रैव 'गार्हपत्ये पत्नीसंयाजान् जुहोती'ति विहितानामापराग्निकहोमानां देशकालैक्येऽप्यध्वर्युप्र-

(१) 'तया' इति घ. पाठः । (२) 'आज्यभागयोर्या गृहमेधीये निवृत्तिः' इति क. ख. ग. पाठः ।
(३) 'चित्रायागादिषु' इति घ. पाठः । (४) 'वध्वर्युरुत्तरे विहारे' इति क. पाठः ।

तिप्रस्थातृरूपकर्तृभेदाद्भेदः। यत्र कर्तृत्वाधिष्ठानाभेदेऽपि कर्तृकारकभेदः तत्रापि प्रयोगभेदेनाङ्गानुष्ठानावृत्तिरेव। यथा 'आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणे'त्यादिवाक्यविहितेषु राजसूयान्तर्गतयागेषु देशकालफलभेदाप्रतीतावपि वामनानतैराग्नावैष्णवयागः कर्तव्यः श्यामानतैस्सोमापौष्णश्चरुः कर्तव्य इत्येवं दक्षिणाव्यवस्थाया तद्भेदात्कर्तृरूपं भिद्यत इति ततः प्रतियागं प्रयोगभेदादङ्गानुष्ठानावृत्तिः। यानि कालभेदेन कर्तव्यानामपि प्रधानानामेककपालान्यङ्गानि तान्यगृह्यमाणविशेषत्वात्सर्वेषां तन्त्रं भवन्ति[1]। यथा ज्योतिष्टोमेऽग्नीषोमीयसवनीयानुबन्ध्यपशूनां दीक्षासु 'यूपं छिनत्ती'ति दीक्षाकालकर्तव्यत्वेन विहितो यूपः। यथा वा द्वादशाहे द्वादशानां सोमयागानामहर्भेदेन कर्तव्यानां दीक्षोपसदादय इत्येवंरूपेण सापवादं तन्त्रमेकादशे निरूपितम्। *द्वादशे प्रसङ्गो निरूपितः। अन्यार्थेनान्यस्य तत्प्रयुक्तिशक्तस्योपकारः प्रसङ्गः। यथा भोजनार्थं प्रथमागतस्याचार्यस्य कृते कृतेन सूपापूपादिना पश्चादागतस्य स्वयमाचार्यैनैरपेक्ष्येणापि सूपापूपादिप्रयुक्तिशक्तस्य जामातुरुपकारः। यत्त्वन्यार्थेन स्वयं तत्प्रयुक्तिशक्तिरहितमुपक्रियते, तन्न प्रासङ्गिकम्। किंत्वाचार्यार्थकृतसूपाद्युपक्रियमाणपरिचारकादिवत्तदुपजीव्यप्रयोजकम्। यथा दध्यानयनेनोपक्रियमाणं वाजिनं पुरोडाशकपालं प्रति तुषोपवापस्य शेषित्वे सत्यपि न तत्प्रयुक्तिशक्तिः। 'पुरोडाशकपालेने'ति सविशेषणोपादानेनान्यप्रयुक्त्युपजीव्यत्वाविष्करणात्। स च प्रसङ्गस्त्रिविधः। अनुष्ठानप्रसङ्गः पदार्थप्रसङ्गः शास्त्रप्रसङ्गश्चेति। तत्र पश्वर्थप्रयाजाद्यनुष्ठानेन पशुपुरोडाशाद्युपकारोऽनुष्ठानप्रसङ्गः। सौमित्या वेद्या सोमान्तर्गतेष्टिपशूनामुपकारः पदार्थप्रसङ्गः। 'याजनादिभिर्ब्राह्मणो धनमार्जये'दिति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विगपेक्षस्याविशेषेण त्रैवर्णिकानामार्त्विज्यमाक्षेप्तुं प्रवृत्तस्योपकारः शास्त्रप्रसङ्गः। इत्येवमादिरूपेण द्वादशे सापवादः प्रसङ्गो निरूपितः। *तत्र द्वादशलक्षणीप्रतिपाद्यमध्ये धर्मे चोदनायाः प्रामाण्यं 'तन्नियोगरूपे' त्यादिविशेषणेन मन्त्रार्थवादयोस्तत्र प्रामाण्यं तत्तदर्थवादेत्यादिविशेषणेन स्मृत्यादीनां तत्र प्रामाण्यं स्वप्रमाणानुगुणेत्यादिविशेषणेन च दर्शितम्। 'तदाराधने' त्यादिविशेषणेन द्वितीयाध्यायार्थः कर्मभेदो दर्शितः। ततो नामधेयस्य कर्मभेदकत्वेन धर्मप्रमोपयोगसिद्ध्या तत्र नामधेयपदार्थस्याप्यन्तर्भावः। वेदचोदनानां 'श्रुतिस्मृती ममैवाज्ञे'इति स्मृत्युक्तरीत्या परमेश्वराज्ञारूपत्वं 'भोक्तारं सर्वयज्ञाना'मित्याद्युक्तरीत्या सर्वकर्मणां परमेश्वराराधनरूपत्वं च प्रतिपाद्यम्। अनेन कृत एव धर्मविचारः कर्माण्यनुष्ठाप्य परमेश्वरप्रसादद्वारा चित्तशुद्धिसम्पादनेन ज्ञानहेतुरिति तथाभूतस्यैव धर्मविचारस्य ब्रह्मविचारापेक्षिततत्पूर्ववृत्तत्वं युक्तं न त्वर्वाचीनव्याख्यानादभिमतं निरीश्वरवादमवलम्ब्य कृतस्य धर्मविचारस्येत्यभिप्रेत्य 'तन्नियोगरूपे'ति 'तदाराधने'ति च विशेषितम्। सार्थशब्दस्समूहवाची। अर्थवादशब्देन मन्त्रस्यापि ग्रहणम्। तत्रापि देवतादिगुणकीर्तनसत्त्वेन स्तावकत्वसद्भावात्, इतिहासाः उपाख्यानप्रधाना महाभारतादयः। अभियुक्तसूक्तयो हैरण्यगर्भाद्यागमाः। 'श्रुत्यादी'तिविशेषणेन तृतीयपञ्चमसप्तमाष्टमनवमाध्यायप्रमेयजातं दर्शितम्। तत्रादिशब्देन श्रुतिलिङ्गादीनां वचननामधेयादीनां प्रत्य-

(१) 'भवति' इति. पाठान्तरम्।

तत्तदर्थवादप्रकाशितप्राशस्त्यविलासस्य श्रुत्यादिसम्पादितसकलाङ्गपुङ्खितस्य स्वप्रमाणानुगुणस्मृतीतिहासपुराणाभियुक्तसूक्तिसन्दर्भकृतोपबृंहणस्य विधिनिषेधविकल्पसमुच्चयोत्सर्गापवादबाधाभ्युच्चयादिमतो निखिलपुरुषार्थरत्नाकरस्य परमप्रबोधसाधनस्य भगवतो धर्मस्य विचारानन्तरमित्यथशब्दार्थो निर्णीतः। अतश्शब्दोऽयं वृत्तस्य हेतुभावे वर्तते। यतोऽधीतवेदेन धर्मो विचारितोऽतस्तदनु-

क्षादिकार्यापत्तिप्रमाणानां च सङ्ग्रहः। विधिनिषेधेत्यादिविशेषणेन दशमाद्यवशिष्टाध्यायचतुष्टयप्रमेयजातं दर्शितम्। दर्शपूर्णमासयोरार्षेयवरणस्य होतृवरणस्य च विधिः। तत्प्रकृतिके महापितृयज्ञे तयोर्निषेधः। बृहद्रथन्तरपृष्ठयोर्ज्योतिष्टोमे विकल्पः। तद्विकृतिविशेषेषु 'संसव उभे कुर्याद्गोसव उभे कुर्या'दिति विधिभिः समुच्चयः। विकृतीष्टिविशेषेषु 'शरमयं बर्हि'रित्युपदेशतः प्रत्यामनद्भिश्शरैः प्राकृतानां कुशानां बाधः। साङ्ग्रहिण्यामिष्टा 'वामनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोती'त्युपदिष्टैरामनहोमैः प्राकृतानां तत्समसङ्ख्यानामनूयाजानां बाधेन समुच्चयरूपोऽभ्युच्चयः। सर्वमिदं दशमाध्यायप्रमेयजातं बाधस्यैव प्रपञ्चेन प्रदर्शनार्थमुपन्यस्तम्। आदिशब्देन प्रयोजकाप्रयोजकतन्त्रावापप्रसङ्गाप्रसङ्गग्रहणम्। 'निखिलपुरुषार्थरत्नाकरस्ये'त्यनेन षष्ठाध्यायप्रमेयं दर्शितम्। एवमनुष्ठानोपयोगिना सर्वेणापि रूपेण द्वादशलक्षण्या विचारितस्य धर्मस्यानुष्ठानद्वारा ज्ञानसाधनत्वं युक्तमिति प्रकृतोपयोगमाह—परमेति। यदि धर्मानुष्ठानं द्वादशलक्षण्या कृतं धर्मविचारमिव शास्त्रान्तरविचारमप्यपेक्षेत तदा धर्मविचारः करिष्यमाणे ब्रह्मविचारे निरपेक्षं पुष्कलं कारणं न स्यात् न त्वेतदस्तीति दर्शयितुमेतावन्ति विशेषणानि। भगवतइति। ज्ञानोपदेष्टृत्ववद्ज्ञानप्रदत्वकृतमौपचारिकं विशेषणम्। सौत्रमतश्शब्दं व्याचष्टे—अतश्शब्दइति। ननु, पूर्ववृत्तस्य धर्मविचारस्य हेतुत्वमथशब्देनैव द्योतितं, तस्य नियतसामग्रीरूपत्वाभावे पूर्ववृत्तत्वेन ग्रहणानुपपत्तेः अतोऽयमतश्शब्दो निरर्थक इत्याशङ्कान्तरनिराकरणार्थत्वेन तत्साफल्यमभिप्रेत्य व्याचष्टे—यत इति। अयमाशयः। धर्मविचारस्य ब्रह्मविचारं प्रति पूर्ववृत्तत्वेन ग्रहणमयुक्तम्। तस्य तद्धेतुत्वासम्भवात्। तद्धेतुत्वं हि नादृष्टद्वारा। तथा विधानाभावात्। नापि दृष्टद्वारा। तदनुपलम्भात्। न च ब्रह्मविचारापेक्षितानां वेदचोदनार्थवादमन्त्रस्मृत्यादीनां प्रामाण्यसिद्धिर्द्वारमिति वाच्यम्। इहापि शास्त्रे देवताधिकरणसूत्रैस्तत्सिद्धेः। तत्र 'अत एव च नित्यत्व' मिति (ब्र०१–३–२)सूत्रेण वेदचोदनाप्रामाण्यस्य 'तदुपर्यपि बादरायणस्सम्भवा'दिति(ब्र०१–३–२६)सूत्रेण मन्त्रार्थवादे देवतानां विग्रहवत्त्वसिद्ध्या विद्याधिकारहेतुसामर्थ्यसम्भवसाधनत्वेन मन्त्रार्थवादप्रामाण्यस्य 'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्या' मिति (ब्र०१–३–२८)सूत्रेण स्मृत्यादिषु श्रुत्यनुमापकत्वप्रवृत्तिनिमित्तकानुमानशब्दप्रयोगवता स्मृत्यादिप्रामाण्यस्य च सिद्धेस्तत्र पूर्वपक्षसिद्धान्ताभ्यां स्फुटं वेदादिप्रामाण्यसाधनमस्तीति चेत् किं ततः। तदपि सूत्रकृतं व्याख्यानसापेक्षम्। व्याख्यानतोऽपेक्षितयावद्विशेषप्रतिपत्तिरिहापि सुलभा। एतेन ब्रह्मविचारापेक्षितश्रुत्यादिस्वरूपबलाबलनिर्णयस्तत्र द्वारमित्यपि निरस्तम्। इहापि 'द्युभ्वाद्यायतनं स्वशब्दात्' (ब्र०१–३–१)'आकाशस्त-

(१) 'मित्यथशब्दस्यार्थो दर्शितः' 'मित्यथशब्दार्थो निस्सृतः' इति च पाठावपि स्तः।

लिङ्गात्।(ब्र०१-१-२२)तथा चैकवाक्यतोपबन्धात्।(ब्र०३-४-२४)प्रकरणा'(ब्र०१-३-६) दित्यादिसूत्रैः श्रुत्यादिस्वरूपावगमस्य, 'श्रुत्यादिबलीयस्त्वाच्च न बाध'(ब्र०३-३-४७) इत्यादिसूत्रैः श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वावगमस्य च सम्भवात् लक्षणमुखेन परस्परासङ्कीर्णश्रुत्यादिस्वरूपनिर्णयस्य तत्राप्यसम्भवात्। न हि तत्र श्रुत्यादीनां लक्षणमस्ति। क्वचित्वाक्यैक्यमात्रस्य लक्षणमुक्तम् 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'दिति (जै० २-१-४६) यानि तु व्याख्यातृभिरुक्तानि लक्षणानि तान्युपयुज्यन्ते[1]। तथा हि 'निरपेक्षः शब्दः श्रुति'रिति श्रुतिलक्षणमुक्तम्। तत्सर्वत्राप्यसिद्धम्। शक्तिस्मरणादिसापेक्षत्वात्पदान्तरसमभिव्याहारनिरपेक्षत्वं विवक्षितमिति चेन्न। धूमवति पर्वते प्रकृते प्रयुक्तस्य स इति शब्दस्य वह्निज्ञापने अनुमानव्यवधानसापेक्षत्वेऽपि पदान्तरसमभिव्याहारनिरपेक्षत्वेन लिङ्गसमर्पकशब्दस्यापि लिङ्गिनि श्रुतित्वप्रसङ्गात् 'शब्दादेव प्रमितः' (ब्र०१-३-२४) इत्यधिकरणविषयवाक्ये 'अङ्गुष्ठमात्रः पुरुष'इत्यत्र ईशानश्रुतेरङ्गुष्ठप्रमितः परमेश्वर इति बोधने अङ्गुष्ठमात्रपदसमभिव्याहारसापेक्षत्वेन श्रुतित्वाभावप्रसङ्गाच्च। ननु, परमेश्वरवाचिन ईशानशब्दस्याङ्गुष्ठमात्रपदसामानाधिकरण्यात् वस्तुतोऽङ्गुष्ठप्रमितत्वेन पर्यवसास्यतो[2] धर्मिमात्रस्य ज्ञापने नैरपेक्ष्यमस्ति। 'व्रीहीन्प्रोक्षती'त्यत्र क्रियेप्सिततमत्ववाचिन्याः द्वितीयाविभक्तेः प्रोक्षतिपदसामानाधिकरण्यात् प्रोक्षणत्वेन पर्यवसास्यतः क्रियामात्रस्य ज्ञापन इवेति चेत्त'द्याकाशस्तल्लिङ्गा' (ब्र० १-१-२२)दित्यधिकरणविषयवाक्ये 'आकाशो ह्येवैभ्यो ज्याया'नित्यत्र ज्यायश्शब्दस्याकाशपदसमभिव्याहाराद्वस्तुत आकाशत्वेन पर्यवसास्यद्धर्मिमात्रज्ञापने नैरपेक्ष्यमस्तीति तस्याप्याकाशस्य परमेश्वरत्वे विशिष्टसाध्ये श्रुतित्वप्रसङ्गात्। ननु, धर्ममात्रस्यापि प्रकृतविवक्षितसाध्यविशेषविशिष्टस्य ज्ञापने नैरपेक्ष्यमपेक्ष्यते। न च ज्यायश्शब्दस्य तत्र विवक्षितसाध्येन परमेश्वरत्वेन विशिष्टस्य धर्मिणो ज्ञापने नैरपेक्ष्यमस्तीति चेन्न। ज्यायस्त्वलिङ्गसमर्पकस्य तस्य परमेश्वरस्य लिङ्गत्वज्ञापने पदान्तरसमभिव्याहारनैरपेक्ष्यस्याविकलत्वात्। नैरपेक्ष्यशब्देन प्रकृतसाध्यविशेषविशिष्टधर्मिणि शक्तिर्विवक्षितेति चेन्न। 'द्युभ्वाद्यायतनं स्वशब्दा' दित्य(ब्र०१-३-१)धिकरणविषयवाक्ये 'तमेवैकं जानथ आत्मान'मित्यत्र आत्मशब्दस्य द्युभ्वाद्यायतनं परमेश्वर इति प्रतिज्ञायां विवक्षितसाध्येन परमेश्वरत्वेन विशिष्टधर्मिणि शक्त्यभावेन श्रुतित्वाभावप्रसङ्गात्। तत्र हि सूत्रे 'स्वशब्दा'दित्यनेनात्मशब्दस्य श्रुतित्वमेव विवक्षितम्। यथा 'स्वशब्दोन्मानाभ्या'मिति (ब्र०२-३-२२) सूत्रे स्वशब्देन जीवोऽणुरिति प्रतिज्ञायाम्। 'एषोऽणुरात्मा चेतसा वेदितव्य' इति श्रुतिगतस्याणुशब्दस्य श्रुतित्वसंचितं सच्छब्दोक्तं जगत्कारणं प्रधानं न भवतीति प्रतिज्ञायाम्। 'गौणश्चेन्नात्मशब्दा'दिति (ब्र०१-१-६) सूत्रोपात्तस्यात्मशब्दस्य श्रुतित्वाभावप्रसङ्गाच्च। नैरपेक्ष्यशब्देन पूर्वपक्ष्यभिमतसाध्यविरोधिधर्मावच्छिन्ने धर्मिणि शक्तिर्विवक्षितेति चेन्न। तथा सति पूर्वोदाहृतस्य 'ज्याया'निति लिङ्गसमर्पकशब्दस्य श्रुतित्वप्रसङ्गतादवस्थ्यात्। लिङ्गलक्षणमपि नोपयुज्यते। 'आनन्दमयोऽभ्यासा'दित्यादि(ब्र०१-१-१३)सूत्रमारभ्य वर्ण्यमानानां निरतिशयानन्दादिब्रह्मसाधारणधर्मरूपलिङ्गानां 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' (ब्र०३-३-४३) 'आतिवाहिकास्तल्लिङ्गा'दि(ब्र०४-३-४)

१ 'तानि प्रयुज्यन्ते' इति च. पाठः। (२) 'पर्यवस्यतः' ति च. पाठः।

त्याद्यधिकरणार्थनिर्णयोपयुक्तलिङ्गानां चासङ्ग्रहात्। न हि पूर्वतन्त्रे वस्तुसामर्थ्यमेव प्रमाणभूतं लिङ्गम्। अन्यत्तु 'चतुर्दश पौर्णमास्यामाहुतयो' हूयन्त इत्यादिभिरर्थवादादिभिरवगतं लिङ्गं केवलं प्रमाणानामनुग्राहकं स्वयं न प्रमाणम्। अत एव शाबरभाष्यादिषु तत्र तत्रान्यार्थदर्शनरूपलिङ्गोपन्यासेऽपि लिङ्गमात्रमसाधकमिति तदनुग्राह्यप्रमाणान्वेषणं दृश्यते। अतः प्रमाणभूतलिङ्गलक्षणेनान्यलिङ्गानामसङ्ग्रहो न दोषायेतिवदस्मिन् शास्त्रे वक्तुं न शक्यते। ब्रह्मासाधारणधर्मादिरूपलिङ्गानाम् 'आदरादलोप'इत्यादिसूत्रार्थ(ब्र०३-३-३९)पर्यालोचनया वेदान्तेष्वर्थवादादिगतानामपि लिङ्गानां विवक्षितत्वेन प्रामाण्यावसायात् तथाभूतलिङ्गानामेव वाक्यप्रकरणादिभ्यो बलवत्त्वेन तत्तदर्थनिर्णायकतया परिग्रहाच्च। 'अर्थवादाद्यवगतं लिङ्गमसाधक'मित्यभिमन्यमानाः पूर्वमीमांसका अव्यक्ताधिकरणाश्वप्रतिग्रहेष्ट्यधिकरणादिषु 'घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते' 'प्रजापतिर्वरुणायाश्वमनय'दित्यादिवाक्यसन्दर्भस्योपक्रमेऽश्वदातुः प्रजापतेर्वरुणग्रहनिर्मोचनहेतुत्वेनेष्टेः प्रशंसावशादश्वदातुरियमिष्टिर्विधास्यत इत्यवगम्यत इत्यर्थवादे विधिशक्त्यभावात्तावन्मात्रं ततोऽनवगतं विध्युद्देशाद्ग्राह्यम्। विधिविषयांशस्त्वर्थवादावगत एवेति प्रतिगृह्णातिर्दान एव योजनीय इत्यादि वदन्तः क्वचित्क्वचित्तदपि साधकमाद्रियन्ते। 'इतिकर्तव्यताकाङ्क्षा प्रकरण'मिति पूर्वतन्त्रोक्तं प्रकरणं न ब्रह्मविचारोपयोगि। सिद्धरूपस्य ब्रह्मण इतिकर्तव्यताकाङ्क्षाविरहादिति स्पष्टमेव। स्थानस्य तु सन्निधियथासङ्ख्यलक्षणस्य सङ्ग्राहकमनुगतं लक्षणं पूर्वतन्त्रोक्तं न दृश्यते। 'समाख्या यौगिकी संज्ञे'त्येतदपि न युक्तम्। पूर्वतन्त्रे होतृचमसादिसंज्ञाया इह शास्त्रे 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा'मित्यादिषु श्रुतायाः ब्रह्मविद्यादिसंज्ञायाश्च समाख्यात्वसम्भवेऽप्याध्वर्यवौद्गात्रादिसंज्ञायाः प्रकृतिप्रत्ययसमभिव्याहाररूपत्वेन तदभिमतैकपदश्रुतिरूपतया समाख्यात्वासम्भवात्। तस्मादनुष्ठितैर्धर्मैस्सम्पाद्या चित्तशुद्धिर्द्वारमित्येतावदवशिष्यते। तदपि नोपपद्यते। न हि विचारितधर्माणः सर्वे चित्तशुद्ध्यर्थं धर्माननुतिष्ठन्ति। अनुष्ठितधर्माणो वा न नियमेन ब्रह्मविचारोपयोगिनीं चित्तशुद्धिं लभन्ते। न चैतावता ब्रह्मविचारस्य धर्मविचारानन्तर्यनियमभङ्गेऽपि धर्मविचारस्य ब्रह्मविचारपूर्वभावित्वनियमस्य न क्षतिरिति शङ्कनीयम्। यदनन्तरं नियमेन ब्रह्मविचारो भवति तथाभूतस्य तत्पुष्कलकारणस्यैवाथशब्देन पूर्ववृत्ततया ग्राह्यत्वात्। अन्यथा किमपराद्धमुपनयादेः पूर्ववृत्तत्वग्रहणेन। तस्माद्धर्मविचारस्य पूर्ववृत्तत्वेन ग्रहणमयुक्तमित्याशङ्कानिवर्तनार्थोऽयमतःशब्दः। तन्निवृत्तिस्तु सत्यं धर्मानुष्ठानचित्तशुद्धिद्वारैव। धर्मविचारस्य ब्रह्मविचारोपयोगः तदर्थं धर्मविचारे क्रियमाणे वेदचोदनादिप्रामाण्यं श्रुत्यादिस्वरूपबलाबलं च पूर्वतन्त्रोक्तमर्यादया परिज्ञातमेतच्छास्त्राभ्याससम्पादनीयतत्परिज्ञानद्रढिमन्युपयुज्यत इति तदप्यानुषङ्गिकं प्रयोजनमित्यभिप्रेत्य धर्मविचारापेक्षायां तस्यापि प्रयोजनत्वोक्तिः न तु ब्रह्मविचारप्रयोजकतया। अत एव 'प्रागथवे'त्यादिभाष्ये धर्मविचारापेक्षायां धर्मस्य ब्रह्मबोधहेतुत्वमेव मुख्यहेतुत्वेनोपन्यस्य तत्र श्रुतिलिङ्गादिनिरूपणमन्वाचययुक्तित्वेनैवोपन्यस्तम्। तदनन्तरं च 'साधनं विना साध्यानिष्पत्ते'रित्यारभ्यैतावत्पर्यन्तं धर्मस्य ब्रह्मबोधहेतुत्वमेव तत्र हेतुतया प्रपञ्चितम्। अन्यत्र स्पष्टम्। एवं च धर्मविचारस्य तन्निर्णयप्रभवधर्मानुष्ठानचित्तशुद्ध्यादिकं द्वारमिति स्थिते

सर्वैरपि कृतस्य धर्मविचारस्य तद्द्वारा ब्रह्मविचारनिष्पादकत्वादर्शनेन तस्य पुष्कलकारणत्वाभावात् अथशब्देन पूर्ववृत्ततयाग्रहणमनुपपन्नमित्याशङ्कावारणायैव सूत्रकृता तत्प्रभवानां धर्मानुष्ठानादीनां ब्रह्मविचारं प्रति हेतुत्वमतश्शब्देन कीर्त्यते। तेन द्वारभूतेषु सर्वेषु कारणेषु सत्स्वयं धर्मविचारः पुष्कलकारणं भवति न तु तेषां मध्ये प्रतिबन्धकदुरितादिबलात् कस्यचिदनुत्पत्तावपीत्येतल्लभ्यते। न चाथशब्देन यत्पूर्ववृत्ततया गृहीतं तेनानपेक्ष्यैवान्यद्विचारपुष्कलकारणेन भाव्यमिति नियमः। अध्ययनानन्तरं माणवकबुद्धिभेदतन्मान्द्यादिना गुरोर्माणवकस्य वा विघ्नेन वा धर्मविचारानिष्पत्तिदर्शनेन 'अथातो धर्मजिज्ञासे'त्यत्राध्ययनस्यापि पूर्ववृत्तत्वाभावप्रसङ्गात्। न च वाच्यमध्ययनानन्तरं पुरुषेणानुष्ठेयं किमपि पूर्ववृत्तं नापेक्ष्यत इति। तत्राथशब्दस्याध्ययनानन्तर्यार्थत्वेऽप्यत्र धर्मविचारानन्तरमनुष्ठेयस्य चित्तशुद्ध्यर्थकर्मणस्सत्त्वात् तदानन्तर्यमथशब्दार्थ इति युक्तम्। अन्यथा किमपराद्धमध्ययनानन्तर्येणेति श्रवणमननोपासनाकालेष्वपि तत्कालसम्भावितचित्तमालिन्यपरिहारार्थं चित्तशुद्ध्यर्थकर्मणामनुवर्तनीयतया ब्रह्मविचारे ब्रह्मजिज्ञासायां वा तदानन्तर्योक्त्ययोगात्। तस्माद्धर्मविचारस्यैवात्र पूर्ववृत्तत्वं युक्तमिति। विवेको मोक्षफलं नित्यमभ्युदयफलमनित्यमिति नित्यानित्यवस्तुविवेकः। स यद्यपि साङ्गसशिरस्कवेदाध्ययनमात्रान्न सम्भवति। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इत्यादीनां कर्मफलानित्यत्वप्रतिपादकवाक्यानामिव 'अपाम सोमममृता अभूम' 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवती' त्यादीनां तन्नित्यत्वप्रतिपादकवाक्यानामपि सत्त्वात्। नापि पूर्ववृत्ताद्धर्मविचारात्तत्सम्भवति। तत्राहत्य कर्मज्ञानफलनित्यत्वानित्यत्वविचाराभावात्। न च तस्यावृत्तिविधानेन कर्मणामल्पास्थिरफलत्वावगमहेतुत्वं सम्भवतीति वाच्यम्। 'आवृत्तिरसकृदुपदेशा'दित्यधिकरणे (ब्र० ४-१-१) 'आप्रायणात्तत्रापि हि दृष्ट'मित्य(ब्र०४-१-१२)धिकरणे च ज्ञानस्याप्यावृत्तिप्रतिपादनेन तत्फलस्य मोक्षस्याप्यनित्यत्वप्रसङ्गात्। यद्याप्रायणमहरहरावृत्तिविशिष्टस्यैव ज्ञानस्य मोक्षः फलं तदात्रापि तथास्तु। यद्यत्रावृत्तिविधानं प्रतिवसन्तं सोमयागस्य पञ्चाब्दपर्यन्तं ( पञ्चमाब्दपर्यन्तं वा ) प्रत्यब्दं चातुर्मास्यानामिति तथाभूतावृत्तिवैशिष्ट्येन फलजनकत्वाभ्युपगमेन तत्तदावृत्तितारतम्यात् फलतारतम्यं स्यादित्युच्येत। तदा ज्ञानावृत्तेरप्याप्रायणमनुवर्तनीयायाः प्रायणकालस्याप्यव्यवस्थितत्वात्तत्तारतम्येन फलतारतम्यं स्यादिति तुल्यम्। यत्तु 'कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्यु'रित्ये (जै०११-१-२०)कादशाध्यायाधिकरणे कर्मणां कृषिन्यायेन प्रत्यारम्भं फलभेदव्युत्पादनं तदावृत्तिवैशिष्ट्येन येषां कर्मणां फलजनकत्वं तदतिरिक्तविषयं स्यात्। अवश्यं च तथाभ्युपगन्तव्यं दाक्षायणयज्ञादिसङ्ग्रहार्थम्। न च 'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतो विशेषः[3] स्या' दित्य(जै०-१-२-१७)र्थवादाधिकरणसूत्रे बह्वल्पाङ्गकर्मगुरुलघुभावानुसारेण फलतारतम्यस्योक्तत्वात् 'हिरण्यदा अमृतत्वं भजन्त' इत्यत्रामृतत्वसाधनतयोक्तस्य हिरण्यदानस्य सोमयागस्य चातुर्मास्यानां च ततस्तुल्यफलत्वाभावावगत्याल्पास्थिरफलत्वं सिद्ध्येदिति शङ्कनीयम्। 'विकल्पोऽविशिष्टफलत्वा'(ब्र० ३-३-५७ सू०)दित्यधिकरणे बह्वल्पगुणकविद्यानां गुरुलघुभावे सत्यप्येकरूपमुक्ति-

(१) एतत् घ. च. पुस्तकयोरेवास्ति। (२) 'ज्ञानावृत्तितारतम्यात्' इति घ, पाठः। (३) 'फलविशेष' इति पाठान्तरम्।

फलकतायाः वक्ष्यमाणत्वात् । यद्यप्युपासनानामाप्रायणमावृत्तिविशिष्टतया फलसाधनत्वं बह्वल्पगुणकोपासनानां मुक्तौ विकल्पेन साधनत्वं चास्मिन् शास्त्रे वक्ष्यमाणं धर्मविचारपूर्वकं ब्रह्मविचारारम्भदशायां न ज्ञायते तथापि वक्ष्यमाणयुक्तिविरोधादावृत्तिविधानादिकमल्पास्थिरफलवत्त्वे वस्तुतो न साधकमिति तत्कालाल्पास्थिरफलत्वबुद्धिराभासीभवेत् । न चाग्रे वक्ष्यमाणार्थानामारम्भदशायामज्ञाननियमः । श्रुतशास्त्रेभ्यस्तद्ज्ञानसम्भवात् । अवहननवद्विचारस्य दृष्टफलत्वेन यावदर्थनिर्णयरूपफलोदयमावर्तनीयतया पुनर्विचारारम्भदशायां तदज्ञानासम्भवाच्च । एतेन 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति स्वर्गार्थत्वेन विहितस्य सोमयागस्योत्तरवेद्या विकल्पितमग्न्याधारस्थण्डिलरूपमग्निमाश्रित्य 'श्येनचितं चिन्वीत स्वर्गकाम'इति स्वर्गार्थश्येनाकृतिरूपगुणविधानसामर्थ्येन तद्गुणफलसहितसोमयागजन्यस्वर्गात्केवलतज्जन्यस्वर्गस्य न्यूनतावश्यम्भावादल्पास्थिरफलत्वान्यतरभावापत्तिस्सिद्ध्यतीत्यपि शङ्का निरस्ता । 'एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोम'इति सर्वफलार्थतया विहितस्य सोमयागस्य फलान्तरार्थप्रयोगे नित्यप्रयोगे वा श्येनाकृतिगुणविधानस्य चारितार्थ्योपपत्तेः, 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामस्स सौभरेण स्तुवीते'ति फलत्रयसाधनतया विहितस्य सौभरस्य तत्तत्फलविशेषार्थप्रयोगे हाषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामायेति निधनविशेषव्यवस्थावत् स्वर्गार्थसोमयागप्रयोगे गुणविशेषव्यवस्थेत्युपपत्तेश्च । न च मन्त्रार्थवादवर्णितानां फलत्वाभावनियमः । सूक्तवाकमन्त्राम्नातानामायुरादीनां रात्रिसत्रार्थवादाम्नातायाः प्रतिष्ठायाश्च फलत्वदर्शनात् । न च सोमयागस्य विध्युद्देशे फलश्रवणात् मन्त्रोक्तं फलं न ग्राह्यमिति वाच्यम् । विध्युद्देशश्रुत एव स्वर्गे नित्यत्वरूपविशेषस्य 'सप्तऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेही'ति मन्त्रेण लोकविशेषभोग्यत्वरूपस्यैव समर्पणोपपत्तेः । न 'चेन्द्रस्य सख्यममृतत्वमश्या'मित्यैष्टिकमन्त्रेण कर्मप्राप्यममृतत्वं क्षुद्रमवगतमिति शङ्कनीयम् । कुबेरकुचेलादिपदवदिन्द्रपदस्य क्षुद्रत्वेऽपि शिववैकुण्ठपदवन्मुक्तपदस्याक्षुद्रत्वोपपत्तेः 'दिवि ज्योतिरजरमारभेता'मित्यैष्टिकमन्त्रान्तरे पत्नीयजमानाभ्यां प्राप्यस्य फलस्य नित्यत्वोक्तेश्च । 'फलवत्तां च दर्शयती'ति पत्न्यधिकरण(जै०-६-१-२१)सूत्रेण विशिष्यास्य मन्त्रस्य फलसमर्पकतया प्रदर्शितत्वाच्च। अतः पूर्ववृत्ताद्धर्मविचारतोऽपि नित्यानित्यविवेको न सम्भवतीति। तथापि धर्मविचारानन्तरं परमेश्वराराधनायानुष्ठितैः कर्मभिश्चित्तशुद्धिस्ससम्भवती'त्यभिप्रेत्य तत्कालसम्पन्नेति विशेषणं कृतम् । अयमाशयः । जन्मप्रभृति 'हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥' इतिस्मृत्युक्तरीत्या पूर्वजन्मवासनानुवृत्त्या ये सहजशिवभक्तिभावितास्त एवास्मिन् शास्त्रे वस्तुतोऽधिकारिणः । ते च धर्मविचारेण धर्मनिर्णयानन्तरं शिवाराधनधियैव कर्माण्यनुतिष्ठन्तश्चित्तशुद्धिं लभन्ते । शुद्धचित्ताश्च परब्रह्मणश्शिवस्य स्वरूपप्रमाणादिनिर्णयार्थं प्रवृत्तस्यास्य शास्त्रस्य विषयप्रयोजनसम्बन्धाधिकारिणां न्यायतो निर्णयार्थस्यास्याद्यसूत्रस्यार्थपरिज्ञाने प्रवृत्तास्सन्तोऽनेनैवातश्शब्देन विवक्षितं कर्मफलानित्यत्वनिर्णयोपपादकन्यायमित्थं परामृशन्ति । 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमाया'दिति श्रुतौ कर्मफलेभ्यो वैराग्यार्थं तेषामनित्यत्वं श्रुत्यर्थानुग्राहकयुक्तिपरामर्शरूपया

ष्ठानसम्पन्नचित्तशुद्धिना तत्कालसम्पन्नविवेकादिगुणसहकृतपरमभक्तिसंभावितेनानेन ब्रह्मापि निरतिशयनिःश्रेयसकरं विचारणीयमिति । ब्रह्मणो जिज्ञासा

परीक्षयावगन्तव्यमिति प्रतिपाद्यते । सा च युक्तिः'तद्यथेह कर्मचित'इत्यादिवाक्येनोपन्यस्यते । सा तु राजसेवादिन्यायेनामुष्मिककर्मणोऽपि फलं क्षीयत इत्युपपादयन्ती यद्यत्कर्मफलं तत्सर्वमनित्यमिति व्याप्तिमूलतया कस्यापि कर्मणः फलस्य नित्यत्वं न सहते । एवमुपपत्तिरूपतात्पर्यलिङ्गोपबृंहितया 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरन्यस्मै लोकाय कर्मण'इत्यादिसमानार्थकश्रुत्यन्तरसहकृतया देवताधिकरणे वक्ष्यमाणन्यायेन विवक्षितार्थैस्सर्गप्रलयाद्यर्थवादैस्सहितया तया कर्मफलनित्यत्ववर्णका मन्त्रार्थवादा बाधितास्सन्तः प्रशंसामात्रपराः पर्यवस्यन्तीति । नन्वाद्यसूत्रार्थपरिज्ञानाल्लभ्ये विषयप्रयोजनाधिकारिनिर्णये चित्तशुद्धिः क्वोपयुज्यते । न ह्य'थातो धर्मजिज्ञासे'ति सूत्रार्थपरिज्ञानसाध्ये धर्मविचारशास्त्रस्य विषयादिनिर्णये साऽपेक्ष्यते । उच्यते । अध्ययनेनाक्षरावाप्त्यनन्तरं परस्परविरुद्धं द्वयं युगपदुपतिष्ठते 'आचार्यकुलाद्वेदमधीत्याभिसमावृत्त्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदध'दित्यादिश्रुत्या समावर्तनं तदनन्तरमेव दारपरिग्रहं कृत्वा समारब्धव्यानामग्निहोत्रादीनामनुष्ठानार्थं वेदार्थनिर्णयाय धर्मविचारश्च । अनयोः क्व प्रवर्तितव्यमिति डोलायमानास्तन्निर्णयार्थं प्रवृत्तमिदं सूत्रमित्युपश्रुत्य धर्मजिज्ञासासूत्रार्थपरिज्ञाने स्वयमेव प्रवर्तन्त इति न तत्र चित्तशुद्ध्यपेक्षास्ति । इह तु चित्तशुद्धिरहिताः प्रथमं धर्मविचारशास्त्राभ्यासादक्षय्यादिवाक्यमपि रात्रिसत्रादिन्यायैः फलपरं मन्यमानास्तद्विरोधिन्यायं च तत्राव्युत्पादितं परामर्ष्टुमक्षमास्सन्तः 'अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ते बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते । इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ती'तिमन्त्रविषयतामनतिवर्तमानाः स्वयमेव ब्रह्मजिज्ञासासूत्रार्थे न प्रवर्तन्ते । ये तु प्राग्जन्मानुष्ठितैरेव तथाभूतैः कर्मभिः सम्पन्नचित्तशुद्धयस्तत एवैतत्सूत्रपरिज्ञाने प्रवर्तन्ते तेषां विद्यासाधनस्य विद्यासहकारिणश्च कर्मणोऽनुष्ठानार्थं धर्मविचारापेक्षेति सर्वथा धर्मानुष्ठानानन्तरं शुद्धचित्ता एवैतत्सूत्रपाठेन नित्यानित्यविवेकं लब्ध्वा तन्मूलमादिशब्दगृहीतमैहिकामुष्मिकफलेभ्यो वैराग्यं शमदमादिसाधनं मुमुक्षुत्वं च प्राप्य सहजसिद्धायाः शिवभक्तेरतिशयं च प्राप्य जन्मादिसूत्रमारभ्य प्रवर्तिष्यमाणे ब्रह्मविचारे प्रवर्तन्त इति युक्तमुक्तं तत्कालसम्पन्नविवेकादिगुणसहकृतपरमभक्तिसम्भावितेनेति । परमां भक्तिं सम्यग्दार्ढ्येन भावितः प्राप्तः परमभक्तिसम्भावितः । 'भू प्राप्तावात्मनेपदी'ति चौरादिकधातोः 'आ धृषाद्वे'तिविकल्पितण्यन्तात्कर्तरि क्तप्रत्ययः । सौत्रं ब्रह्मजिज्ञासापदं विगृह्य षष्ठ्यर्थमाह—ब्रह्मण इति । ब्रह्मजिज्ञासापदयोरसमासेऽन्वयासम्भवात्समासे वक्तव्ये ब्रह्मणो जिज्ञासां प्रति परम्परया प्रयोजनत्वमस्तीति तादर्थ्यचतुर्थीपरिग्रहे प्रकृतिविकारभावाभावेन कुण्डलहिरण्यादिवत् समासासम्भवात् विषयत्वमस्तीति सप्तमीपरिग्रहे अधिकरणसामान्यवाचिन्यास्सप्तम्या विषयरूपाधिकरणे विशिष्य शक्त्यभावात् सप्तम्यभिहिताधिकरणसामान्यमुखेनाभिमतविशेषपरिग्रहे प्रतिपत्तिगौरवात् अत एव शेषषष्ठीपरिग्रहस्याप्य-

ब्रह्मजिज्ञासेति कर्मणि षष्ठी । ' परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमा-

नुपपत्तेः तृतीयादिपरिग्रहे प्रथमाधिकरणेन समर्थयिष्यमाणयोर्ब्रह्मणो विषयत्वप्रयोजनत्व-योरन्यतरस्याप्यलाभात् कर्मणिषष्ठीपरिग्रहे तदुभयलाभात्कर्मणि षष्ठ्यास्समासोऽयमिति भावः। तत्र समासप्रतिषेधशङ्का 'विदुषां ब्रह्मदर्शन'इत्यत्र समाससमर्थनेनैव परिहृता । विशि-ष्यात्र जिज्ञासापदम्' अ प्रत्यया'दिति(पा०-३-३-१०२) सूत्रविहिताकाररूपकृदन्तमित्यतोऽपि नात्र समासप्रतिषेधशङ्कावकाशः । एवं सूत्रं व्याख्यायाधिकरणशरीरप्रदर्शनार्थं विषयवाक्यमु-दाहरति–परीक्ष्येति । आदिशब्देन 'तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमा-न्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्या'मिति तदनन्तरमन्त्रो गृ-ह्यते। ननु, विचारकर्तव्यतापर्यन्तस्सूत्रार्थः प्राग्दर्शितः । न चास्मिन्वाक्ये सोऽर्थो निबध्य-ते । अतो नेदं सूत्रानुगुणं विषयवाक्यमिति चेदुच्यते । धर्मविचारानन्तरं तदाराधनरूपध-र्मानुष्ठानविशुद्धचित्तस्य विवेकादिसम्पत्त्या ब्रह्मज्ञानेच्छा भवतीत्येतावान्सूत्रवाक्यस्य शब्दा-र्थः । तदिष्यमाणं ब्रह्मज्ञानं विचारमन्तरेण न भवतीति तत्स्वरूपप्रमाणादिविचारस्तदाक्षि-प्तोऽर्थः । स एव प्रागुपन्यस्तः । अत एव प्रागथशब्दव्याख्यानावसाने 'परब्रह्मणः प्रतिपा-दकमुपनिषच्छास्त्रं विचारणीय'मिति ब्रह्मप्रमाणविचारकर्तव्यतोपन्यस्ता । अतश्शब्दव्याख्या-नावसाने तु 'ब्रह्मापि निरतिशयनिश्श्रेयसकरं विचारणीय'मिति ब्रह्मविचारकर्तव्यतोपन्यस्ता । न ह्युभयं सूत्रवाक्यस्य शब्दार्थो भवितुमर्हति ।अत एव च ब्रह्मजिज्ञासापदव्याख्यानसमये विगृह्य षष्ठ्यर्थप्रदर्शनमात्रं कृतम् । न तु विचारलक्षणोक्ता कर्तव्यपदं वाध्याहृतम् । सौत्र-श्शब्दार्थस्तु सर्वोऽपि विषयवाक्येऽस्मिन्निबद्ध एव । तथा हि'परीक्ष्ये'त्यादेरयमर्थः । यो ब्राह्मणः वेदाध्ययनधर्मविचारपूर्वकं धर्मानुष्ठानेन विशुद्धचित्तः कर्मफलभूतान् लोकान् परीक्ष्य धर्मविचारशास्त्राभ्यासतो रात्रिसत्रादिन्यायतः प्रसक्तमक्षय्यादिवाक्यानां फलसम-र्पकत्वं क्षिपन्त्या 'तद्यथेहे'त्यादिश्रुतिप्रदर्शितयुक्त्या क्षयिष्णून्निर्धार्य अकृतो नित्यो लोकः कृतेन कर्मणा नास्तीति निर्वेदं कर्मफलेभ्यो वैराग्यं प्राप्नुयात् । सः समित्पाणित्वनियमयुक्तः सन् तद्विज्ञानार्थं तस्य प्रकृतस्य ब्रह्मणो विज्ञानं मे स्यादिति ब्रह्मज्ञानेच्छया श्रोत्रियत्वादि-गुणयुक्तं गुरुमभिगच्छेदेव न तु स्वसमीपं तमानयेत् । एवं विधिवदुपसन्नाय प्रशान्तचि-त्ताय शमान्विताय अतिसूक्ष्मब्रह्मविचारापेक्षितमनस्समाधानहेत्वान्तरबाह्येन्द्रियनियमनवते तस्मै स गुरुः येन प्रकारेण । अक्षरं ' अथ परा यया तदक्षरमधिगम्यत'इत्यारभ्य प्रकृतम-क्षरशब्दितम् । सत्यं पुरुषं 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गल'मित्यादिश्रुतिप्रसिद्धं पर-मेश्वरम्। वेद उपसन्नः सम्यग्जानाति । तेन प्रकारेण । तां 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम-थर्वाय ज्येष्ठपुत्राय प्राहे'ति प्रागुपक्षिप्ताम्। ब्रह्मविद्यां प्रोवाच ब्रूयादिति । अत्र ब्राह्मणशब्द-प्रदर्शितचित्तशुद्धिहेतुधर्मानुष्ठानार्थं परीक्ष्यशब्दोक्तकर्मफलनित्यत्वानित्यत्वप्रापकद्विविधवा-क्यबलाबलविचारपूर्वकतदनित्यत्वनिर्णयप्रतिक्षेप्यपूर्वपक्षप्रसञ्जकरात्रिसत्रादिन्यायपरिज्ञाना-र्थं चापेक्षितस्य धर्मविचारस्य पूर्वप्रवृत्ततयाऽऽक्षेपादथशब्दार्थो लब्धः । 'परीक्ष्ये'त्यनेनैव नित्यानित्यवस्तुविवेकोऽपि लब्धः । 'निर्वेदमाया'दित्यनेन विरागः । निर्विण्णस्याग्रे 'प्रशा-न्तचित्ताय शमान्विताये'त्यनुवादतः शमदमसम्पत्तिर्लब्धा । 'नास्त्यकृतः कृतेने'ति विशेष-

यान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठ'मित्यादि वाक्यं विषयः । {ब्रह्म विचारार्हं भवति न वेति सन्देहः ।

णात् अकृतलोकप्रेप्सारूपं मुमुक्षुत्वं लब्धम् । एतावता अतश्शब्दार्थो लब्धः । 'तद्विज्ञानार्थ'मित्यनेन तु ब्रह्मजिज्ञासाशब्दार्थः । तत्रार्थशब्दः स्यादर्थे वर्तते । 'तद्धितार्थोत्तरपदसमाहारेचे'ति व्याकरण(पा०-२-१-५०)सूत्रे अर्थशब्दं स्यादर्थं व्याकुर्वता भगवता पतञ्जलिना 'दाराः स्युरस्माकमिति भिक्षामहे' इत्यर्थे 'दारार्थं भिक्षामहे' इति प्रयोगमुदाहृत्य स्यादर्थेऽप्यर्थशब्दोऽस्तीति समर्थितम् । स्यादर्थश्च तत्रेच्छैव । इच्छायामपि लिङ्विधानात् । एवं च तत्र विषयवाक्ये गुरूपसदनमात्रेणेष्यमाणब्रह्मज्ञानालाभात् द्वारतयाविचार आक्षेप्यः । तथा सूत्रे विचार आक्षेप्य इति सूत्रानुगुण्यादिदमेव विषयवाक्यमिति युक्तम् । अतश्शब्दव्याख्यानभाष्ये 'परमभक्तिसम्भावितेने'ति विशेषणं तु 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन'इति श्वेताश्वतरोपनिषत्प्रसिद्धाधिकारिविशेषणान्तरपरिग्रहार्थं कृतम् । सापि श्रुतिः'इत्यादिवाक्यं विषय'इति भाष्यगतेनादिशब्देन ग्राह्येति सर्वमनवद्यम् । विचाराङ्गसंशयं दर्शयति—ब्रह्मेति । अयमिह संशयक्रमः । मुमुक्षूणां ब्रह्म विचारोपयोगीति सूत्रकृता समारभ्यमाणमिदं शास्त्रं प्रेक्षावत्कर्तृकारम्भविषयत्वयोग्यं न वेति प्रथमं संशयः । तदर्थमियं चिन्ता कृतधर्मविचारस्य धर्मानुष्ठानविशुद्धचित्तस्य धर्मविचाराधिगतमक्षय्यादिवाक्यानां यथाश्रुतफलसमर्पकत्वं प्रबलन्यायान्तरेण प्रतिक्षिप्य ततो विरक्तस्य शमादिसम्पन्नस्य नित्यफलप्रेप्सया तत्साधनं ब्रह्मज्ञानमिच्छतोऽधिकारिणो ब्रह्मविचारेण तद्ज्ञानसिद्ध्यर्थं विचाराङ्गं गुरूपसदनं 'परीक्ष्य लोका' नित्यादिवाक्यं विधातुं शक्नोति न वेति । तदर्थमियं भाष्यदर्शिता चिन्ता 'ब्रह्म विचारार्हं न वे'ति । तदर्थमियं चिन्ता ब्रह्म विषयत्वयोग्यं सप्रयोजनज्ञानं च न वेति । तदर्थमियं चिन्ता अहमित्यनुभूयमानो जीव एव ब्रह्म उत तस्यैव संसारदशायामप्रकाशमानं कर्तृत्वभोक्तृत्वादिप्रपञ्चरहितं निर्विशेषं रूपान्तरम् अथवा ततोऽन्यदिति । यदि जीवादन्यत्तदापि ब्रह्म परिच्छेद्यं न वेति । यदा जीव एव ब्रह्म तदा तस्याहमनुभवसिद्धत्वान्न विषयत्वयोग्यता । यदि तस्य निर्विशेषं रूपान्तरं ब्रह्म यदि वा जीवादन्यदप्यपरिच्छेद्यं तदा तस्याशक्यप्रतिपादनत्वान्न विषयत्वयोग्यता । पक्षत्रयेऽपि न तस्य सप्रयोजनज्ञानता । अहमनुभवे शब्दात्कथञ्चिन्निर्विशेषगोचरज्ञाने जीवान्यब्रह्मगोचरज्ञाने च सत्यपि संसारनिवृत्तिपूर्वकनित्यफलप्राप्तेरदर्शनात् अनादिसंसारस्य दुरपह्नवत्वाच्च यदा ब्रह्मणो न विषयतार्हत्वसप्रयोजनज्ञानत्वे तदा न तस्य विचारार्हता, यदा न तस्य विचारार्हता तदोदाहृतं वाक्यमुक्तमर्थं विधातुं न शक्नोति, यदा न शक्नोति तदा विचारस्याकर्तव्यत्वात्तदर्थमिदं शास्त्रं नारम्भणीयमिति पूर्वपक्षे फलफलिभावः । यदा जीवादन्यद्ब्रह्म परिच्छेद्यं च सप्रयोजनज्ञानं च तदा विषयप्रयोजनवत्त्वेन ब्रह्मविचारस्य कर्तव्यत्वात्तदर्थमिदं शास्त्रमारम्भणीयमिति सिद्धान्ते फलफलिभावः । एवं संशयपरम्परोपलक्षणत्वेन मध्यगतस्संशयो भाष्ये दर्शितः । अत एव सिद्धान्तोपक्रमभाष्ये सर्वथा समारम्भणीयमिदं शास्त्रमिति प्राथमिकसंशयैककोटिविषया सिद्धान्तप्रतिज्ञा दर्शयिष्यते । सकलशास्त्रोपोद्घातत्वाद-

(१) 'दारार्थं घटामहे धनार्थं भिक्षामहे' इति महाभाष्यपाठो वर्तते ।

**पूर्वपक्षस्तु, ब्रह्म विचारयोग्यं न भवति। तत्र सन्देहाभावात्। कथं सन्देहाभावः। 'अयमात्मा ब्रह्मे'ति श्रुतिरयमिति प्रत्ययेन प्रत्यक्षसिद्धमेवात्मानं ब्रह्मेत्युपदिशति। ततः कुतोऽत्र सन्देहकलङ्कप्रसङ्गः। किं च। विचारस्य फलं हि तद्विषयज्ञानम्। ज्ञानं च ज्ञेयपरिच्छेदः। वेदान्तविचारजन्यं ज्ञानं ब्रह्म परिच्छिनत्ति न वा। यदि परिच्छिनत्ति तदा तस्य परिच्छेदातीतत्वभङ्गप्रसङ्गः। यदि न परिच्छिनत्ति ब्रह्म तदा यथावन्न प्रकाशेत। अयमिति हि परिच्छिन्नो घटोऽवगम्य-**

स्याधिकरणस्य शास्त्रद्धिकाध्यायपादसङ्गतयः। ननूदाहृतविषयवाक्यसामर्थ्याद्ब्रह्मणो विचारार्हत्वमेव सिद्ध्यति कथं पूर्वपक्ष इत्याशङ्क्याह--पूर्वपक्षस्त्विति। सन्देहाभावादिति। 'अयमात्मा ब्रह्मे'ति श्रुत्या जीव एव ब्रह्मेत्यवगमात् तस्य चाहमनुभवसिद्धत्वादिति भावः। ननु, सा श्रुतिर्जीवस्याहमनुभवसिद्धेन कर्तृत्वभोक्तृत्वाद्यनेकानर्थव्रातकलुषितेन रूपेण ब्रह्मभावं न प्रतिपादयति। नित्यशुद्धत्वादिरूपब्रह्मशब्दार्थानुगमविरोधात्। किंतु कर्तृत्वादिकल्पिताकाररहितेन निर्विशेषचैतन्यरूपेण। तत्तु संसारदशायामावृतं न प्रकाशत इति तत्र सन्देहो घटत इत्याशयेन पृच्छति--कथमिति। उत्तरमाह--अयमात्मेति। अयमाशयः। 'अयमात्मा ब्रह्मे'ति श्रुतिः जीवस्य यावद्रूपमहमनुभवे प्रकाशते तावद्युक्तमेव तमिदंशब्देन परिगृह्य ब्रह्मेत्युपदिशति। तस्मिन्ब्रह्मशब्दस्यार्थस्साकल्येन न सम्भवति चेति यावान्सम्भवति तावन्तमेव देहे ब्राह्मणत्वादिरूपमर्थमभिदधत्तत्र वर्तिष्यते परमैश्वर्यवाचीन्द्रशब्द इव सङ्कुचितमैश्वर्यमभिदधदाखण्डले। न च ब्रह्मशब्दस्वारस्यानुरोधादिदंशब्दस्य प्रसिद्धार्थपरत्वं हातव्यम्। प्रथमचरमश्रुतयोः प्रथमश्रुतस्यैवानुरोध्यत्वात्। अत एव 'मुष्टिलोपात्तु सङ्ख्यालोपस्तद्गुणत्वात्स्या'दिति (जै०-१०-२-६३)दाशमिकाधिकरणे 'बार्हस्पत्यो नैवारस्सप्तदशशरावश्चरु'रिति विहितायामिष्टौ 'चतुरो मुष्टीन्निर्वपती'ति प्रकृतौ निर्वापाङ्गत्वेन विहितयोः चतुस्सङ्ख्यामुष्टिद्रव्ययोरतिदेशप्राप्तयोश्चतुर्मुष्टिभिः सप्तदशशरावपरिमाणस्य चरोः सम्पादयितुमशक्यत्वेनावश्यमन्यतरस्मिन्बाधितव्ये प्रथमश्रुतसङ्ख्यानुग्रहाय मुष्टिबाधोऽङ्गीकृतः। न च 'ध्यायतीव लेलायतीवे'त्यादिश्रुतिभिर्जीवे कर्तृत्वादेरपारमार्थिकत्वप्रतिपादनाद्वस्तुतो निर्विशेषमेव जीवस्वरूपं तदेव च ब्रह्म प्रतिपाद्यत इति वाच्यम्। 'करोमि भुञ्ज'इत्यादिप्रत्यक्षविरुद्धानां तासां श्रुतीनां जीवस्य कर्माद्यधीनकर्तृत्वादिमत्तया तत्पारतन्त्र्यमात्रपरत्वादिति। निर्विशेषं ब्रह्म स्वरूपं जीव इति पक्षमभ्युपेत्यापि तस्य विषयत्वासम्भवमाह--किं चेति। परिच्छिनत्ति न वेति। इदमित्थमिति प्रकारविशेषविशिष्टतया विषयीकरोति न वेत्यर्थः। परिच्छेदेति। परिच्छिद्यतेऽनेनेति परिच्छेदो विशेषणरूपो विशेषः। तथा च निर्विशेषत्वभङ्गप्रसङ्ग इत्यर्थः। यथावदिति। 'आकाशस्तल्लिङ्गा'दित्याद्य (ब्र०-१-१-२२)धिकरणेष्वाकाशो ब्रह्म जगत्कारणत्वादित्याद्यनुमानप्रभवनिर्णये ब्रह्मण आकाशादिपदोक्तस्य ब्रह्मत्वरूपसाध्यविशिष्टतया जगत्कारणत्वादिरूपहेतुविशिष्टतया च विषयता न स्यादित्यर्थः। किं बहुना शब्देनापि ब्रह्मविषयं ज्ञानं न स्यात्। घटादिज्ञानस्य सप्रकारकत्वनियमदर्शनादित्याह--अयमिति हीति। त्वत्पक्षेऽपि तस्य विषयत्वासम्भवपरोऽयं किंचेत्यादि। तस्माज्जीवस्य निर्विशेषत्वे तस्य शब्देनापि प्रतिपादनासम्भवात् 'अयमात्मा ब्रह्मे'ति श्रुत्या सविशेषमेव जीवस्वरूपं

**ते । ततो ब्रह्मविषयं ज्ञानमपि न सम्भवति । तथापि प्रयोजनं च न किञ्चित्पश्यामः । न मुक्तिः प्रयोजनम् । अनादिसिद्धसंसारस्य दुरपह्नवत्वादित्येवं प्राप्ते ब्रूमः ।**

ब्रह्मतया प्रतिपाद्यत इति तस्याहमनुभवसिद्धस्य न विचारशास्त्रविषयतेति प्रागुक्तमेव स्थितम् । न चैवमपि 'अन्नं ब्रह्मे'त्यादेरपि श्रवणात्किमन्नादिकं मुमुक्षुवेद्यत्वाभिमतं ब्रह्म जीवो वेति सन्देह एव स्यान्न निश्चयः । 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायत' इत्यादिश्रुतिषु ब्रह्मणोऽन्नादिभ्यो भेदश्रवणादन्नादिकं ब्रह्म न भवतीति चेत् 'य आत्मनि तिष्ठ'न्नित्यादिश्रुतिषु तस्य जीवादपि भेदश्रवणात् सोऽपि ब्रह्म न स्यादिति वाच्यम् । प्रतिवेदान्तं 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' 'प्रज्ञानं ब्रह्मे'त्यादिजीवब्रह्माभेदवाक्यानां षड्विधतात्पर्यलिङ्गोपेततया अन्नादिश्रुतिभ्यो जीवब्रह्मभेदश्रुतिभ्यश्च बलवत्त्वावधारणेन जीव एव ब्रह्मेति ततो निश्चयसम्भवादिति भावः । भेदश्रवणाविशेषादन्नादिभ्य इव जीवादपि भिन्नं ब्रह्माभ्युपगम्यते चेत्तस्य विषयत्वासम्भवोऽपि किंचेत्यादिग्रन्थेन दर्शनीयः । तस्मिन्पक्षे त्वित्थमर्थः । यदि भेदश्रवणात् ब्रह्मजीववर्गादन्यत्तत्कारणत्वतन्नियन्तृत्वादिगुणकमभ्युपगन्तव्यम् । तदा तदपरिच्छेद्यमित्यप्यभ्युपगन्तव्यम् । 'को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टि'रित्युपक्रम्य 'अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेदे'ति श्रवणात् 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत'इत्यादिश्रवणाच्च । एवं च विचारजन्यं ज्ञानं ब्रह्म यथावत्परिच्छिद्य गृह्णाति चेत्तस्यापरिच्छेद्यत्वभङ्गप्रसङ्गः । न चेदयमिति गृह्यमाणः स्वत आलोकमध्यवर्तिघटवद्यथावन्न प्रकाशेतेति मोक्षजनकत्वाभिमतं ब्रह्मज्ञानं न समर्थितं स्यात् । 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर'मिति यावद्ब्रह्मज्ञानस्यैव मोक्षजनकत्वाभ्युपगमादिति । एवं निर्विशेषजीवब्रह्मपक्षे जीवान्यब्रह्मपक्षे च तद्ज्ञानासम्भवो दोष उक्तः । तत्सम्भवमभ्युपेत्यापि पक्षत्रयेऽपि प्रयोजनासम्भवमाह--तथापीति । यदि ब्रह्मज्ञानात्किञ्चित्प्रयोजनमभविष्यत् तदाहमनुभवरूपाद्वेदान्तजन्याद्वा तद्ज्ञानाज्जायमानं तद्द्रक्ष्यामः न तदिदानीं पश्यामः । अतो ज्ञायते न प्रसिद्धजीवरूपस्य निर्विशेषजीवरूपस्य वा तदन्यस्य वा ब्रह्मणः परिज्ञानात्किञ्चित्प्रयोजनमस्तीति । तदेतदापस्तम्बेनाप्युक्तं 'बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेते'ति (आप०प्र.२प.ख.२१सू.१६) इदानीन्तनब्रह्मज्ञानमात्रान्न प्रयोजनं किं तु श्रवणमननानन्तरमुपासनाजन्यतत्साक्षात्कारादित्यभ्युपगमेऽपि प्रयोजनासम्भवमाह--अनादिसिद्धेति । संसारनिवृत्तिपूर्विका हि निरतिशयानन्दावाप्तिः प्रयोजनमिहाभ्युपगम्यते । संसारनिवृत्तिश्च सकलानर्थव्रातमूलसर्वजीवावारकैकद्रव्यरूपमलाख्यानादिसिद्धपाशनिवृत्तिरित्यभ्युपगम्यते । न चानादेर्निवृत्तिः द्रव्यस्य ज्ञानमात्रान्निवृत्तिः[1] सर्वजीवगतानर्थनिदानस्यैकपुरुषमोक्षकारणान्निवृत्तिश्च सम्भवतीति भावः । दुरपह्नवत्वादिति । दुश्शीलादिवद्बहुव्रीहिः । तत्र दुष्टवाचिना दुरुपसर्गेणाशक्यत्वमपह्नवशब्देन निवर्तनं च लक्ष्यत इत्याशक्यनिवर्तनत्वादित्यर्थः । अपह्नवशब्दस्यापलापार्थत्वे तु संसारस्यानादिसिद्धत्वं प्रामाणिकमपलपितुं न शक्यमित्यतस्तन्निवर्तनस्याशक्यत्वमर्थतस्सिद्ध्यति । निर्वि-

---

( १ ) नचानादेर्द्रव्यस्य ज्ञानमात्रान्निवृत्तिरिति च. पाठः ।

**सर्वथा समारम्भणीयं शास्त्रम्। ब्रह्मणस्सन्दिग्धतया विषयत्वसम्भवात्। तन्निर्णयस्य सप्रयोजनत्वाच्च। यत्'अयमात्मा ब्रह्मे'त्यादिश्रुतिरमुमेवाहङ्कारवद्धं संसारिणं ब्रह्मेत्यभिधत्ते तत एव सन्देहः। निरस्तसमस्तोपप्लवकलङ्कनिरतिशयज्ञानानन्दादिशक्तिमहिमातिशयवत्त्वं हि ब्रह्मत्वम्। अनाद्यज्ञानवासनावष्टम्भविजृम्भितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमव्यापारपरवशनि-**
शेषचिद्रूपापत्तेः प्रयोजनत्वनिराकरणार्थत्वे त्वनादिकालप्रवृत्तप्रमाणप्रवाहसिद्धस्य संसाररूपस्य प्रपञ्चस्याकालिकप्रतीतिकशुक्तिरजतादिवदपलपितुमशक्यत्वादिति वाक्यार्थः। तस्माद्विषयप्रयोजनासम्भवादिदं शास्त्रं नारम्भणीयम्। 'परीक्ष्य लोका' नित्यादिवाक्यं तु कर्मफलभूतान्पुत्रदारादीन् तत्तत्कालपरिपक्वकर्मानुसारेण कदाचित्प्रियान्कदाचिदप्रियांश्च हेयानवधार्य तेभ्यो विरक्तस्य सर्वदा परमप्रेमास्पदे स्वात्मन्येवाभिरतेरनुवादकम्। गुरूपसदनश्रुतिर्गुरूपसदनेनापि तद्ज्ञानं सम्पादयेदित्येवमादरातिशयप्रकटनार्थो विधिसरूपार्थवादः। 'अटेत पृथिवीं कृत्स्नां सशैलवनकाननाम्। यदि लभ्येत पित्र्येषु साम्नामक्षरचिन्तकः॥' इतिवत्। स हि 'यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत्। ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते॥' इति विधिपरिगृहीतच्छन्दोगप्रशंसार्थो विधिसरूपोऽर्थवादः। न तु गुरूपसदनश्रुतिर्विधिः। अयत्नलभ्ये तदनुभवे साधनविधानानपेक्षणात्। न च ब्रह्मानुभवार्थं साधनविधानान्यथानुपपत्त्यैव ब्रह्म जीवान्यदिति कल्पनीयम्। अवान्तरवाक्यार्थस्वारस्यानुरोधेन महातात्पर्यविषयार्थभङ्गायोगात्। अन्यथा 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वे' ति वाक्यार्थस्वारस्यानुरोधेन 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति प्रधानवाक्यार्थपरित्यागप्रसङ्गात् इत्याशयेन पूर्वपक्षमुपसंहृत्य सिद्धान्तं वक्तुं प्रतिजानीते—इति प्राप्त इति। यदि जीव एव ब्रह्म यदि वा ततोऽन्यत् सर्वथापि शास्त्रारम्भे न कश्चिदनुपपत्तिः। ब्रह्मणस्सन्दिग्धत्वेन सप्रयोजनज्ञानत्वेन च विचारार्हत्वादित्याह—सर्वथेति। सन्दिग्धत्वं तावदुपपादयति—यदयमिति। असन्देहापादिन्याः श्रुतेः कथं सन्देहहेतुत्वमिति चेत्तत्राह—निरस्तेति। निर्दोषमङ्गल्यगुणगणाकरत्वसर्वज्ञत्वसर्वशक्तिमत्त्वादिरूपमहिमातिशयवद्ब्रह्मेति ब्रह्मशब्दस्य तत्पर्यायाणां शिवादिशब्दानां चार्थानुगमेन[1] 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'। 'ज्ञः कालकालो गुणी सर्वविद्य' इत्यादिश्रुतिभिश्चावगतम्। अनादिकालप्रवृत्तदेहात्मभ्रमादिवासनामूलनानाविधकर्मफलभोगानुगुणमनुष्यपशुपक्षिसरीसृपतरुगुल्मलतादिशरीरप्रवेशनिर्गमव्यापारपरवशः तत्प्रयुक्तनिरवधिदुःखभोक्ता च जीव इति वैराग्यपादोदाहरिष्यमाणश्रुतिप्रत्यक्षानुभवैश्चावगतम्। अतो विरुद्धधर्माधिकरणत्वाद्भाव्यं ब्रह्मणा जीवादन्येन। ततश्च केनाभिप्रायेण जीवब्रह्मणोस्सामानाधिकरण्यनिर्देश इति तद्गतिर्वक्तव्या। अन्यथा गत्यन्तराभावे विरुद्धधर्माधिकरणत्वेऽपि श्रुतिबलाद्ब्रह्मणः प्रसिद्धजीवरूपतैव सिद्ध्येत्। असङ्गत्वादिश्रुतिसिद्धं जीवस्य शुद्धं रूपमस्ति तदेव तात्विकमिति तद्रूपता वा सिद्ध्येदिति तद्गतिविचारप्रयोजकं सन्देहमेव'अयमात्मा ब्रह्मे' त्यादिश्रुतयः प्रयोजयंति। न तु जीव एव ब्रह्मेति निश्चयं जनयन्तीत्यर्थः। 'एतयो' रित्यस्य ब्रह्मत्वजीवत्वपरत्वे एकभावः एकत्र ध-

(१) 'चानुगमेन' इति ङ. पाठः 'चार्थावगमेन' इति च. पाठः।

स्सीमतापसहिष्णुत्वं तु जीवत्वम् । कथमेतयोः परस्परविलक्षणयोरेकभावमाहु-श्श्रुतय इति संशयः किं न स्यात् । अपि चैवमपि सन्दिह्यते 'अन्नं ब्रह्म' 'प्राणो

र्मिणि सद्भावः जीवब्रह्मपरत्वे त्वैक्यम् । ननु, पूर्ववृत्तधर्ममीमांसाशास्त्रविचारलब्धसङ्ख्या-मुष्ट्यधिकरणादिन्यायानुसन्धानवतः चरमश्रुतब्रह्मशब्दार्थापरिग्रहेण जीवे ब्रह्मशब्दस्य मरु-त्वतीन्द्रशब्दस्येव सङ्कुचितवृत्त्या जीव एव वेदान्तेषु मुमुक्षुवेद्यत्वाभिमतस्य ब्रह्मशब्दस्यार्थ इति निश्चेतुं शक्यमित्याशङ्क्य विनिगमनाविरहेण तथानिश्चयासम्भवार्थं विधान्तरेणापि संशयप्रयोजकानि वाक्यान्युदाहरति—अपि चेति । ननु, षड्विधतात्पर्यलिङ्गोपेतत्वात् 'तत्त्वम-सि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' 'प्रज्ञानं ब्रह्मे' त्यादिश्रुतय एव तात्त्विकाभेदपराः न त्वन्नादिश्रुतयो न वा जीवब्रह्मभेदश्रुतय इति चेत्तर्हि प्रतिवेदान्तमुपक्रमोपसंहारादिभिस्ता-त्पर्यनिर्णयो महता विचारेण साध्य इति तदर्थं विचारशास्त्रमारम्भणीयमेव स्यात् । यदि षड्विधतात्पर्यलिङ्गोपेतानि ' तत्त्वमस्या'दिवाक्यानि जीवब्रह्मणोस्स्वरूपाभेदपराणीति सिद्धा-न्ती मन्येत तदा तं प्रति प्रत्यक्षसिद्धो जीव एव ब्रह्मेति तव मतं चेत्प्रत्यक्षसिद्धस्य तस्य न शास्त्रविषयता जीवस्य शुद्धं निर्विशेषमप्रसिद्धं रूपान्तरं ब्रह्मेति तव मतं चेत्तस्यात्यन्ता-प्रसिद्धस्य बुद्ध्यारोहानर्हस्य न शास्त्रविषयतेति पूर्वपक्षिणा ब्रह्मणो विषयत्वासम्भवे समर्थ्य-माने सिद्धान्तिनः कुतो हेतोर्जीव एव ब्रह्म येन तस्य विषयत्वं न सम्भवेदिति हेत्वाकाङ्क्षा न भवति सिद्धान्तिनोच्यमानस्यैव जीवो ब्रह्मेत्यर्थस्य पूर्वपक्षिणानूदितत्वादिति तत्र पूर्व-पक्षिणा स्वानूदितार्थोपपादनार्थं तदनुकूलन्यायविचाराय शास्त्रारम्भो नापेक्ष्येत । न त्विह सिद्धान्ती तथा मन्यते । अतः पूर्वपक्षिणा 'तत्त्वमस्या'दिवाक्यानां बलप्रदर्शनेन जीव एव ब्रह्मेत्यस्मिन्नर्थे तात्पर्योपपादनपूर्वकं ब्रह्मविषयकशास्त्रारम्भं चिकीर्षतः सिद्धान्तिनो मते जीवविषयशास्त्रारम्भ एव चिकीर्षितस्स्यादिति सिद्धान्त्यनभिमतमेव जीवस्य विषयत्वमापा-द्य तदसम्भवः समर्थनीय इति जीवब्रह्माभेदपरवाक्यानां बलवत्त्वनिर्णयार्थं तदुपयोगिन्याय-विचारशास्त्रारम्भोऽपेक्षणीय एव । अयमर्थोऽस्माभिर्मध्वविध्वंसने 'सिद्धेऽसिद्धे च सि-द्धान्त्यभिमतविषये दूषणं चेत्क्रियेत न्यायापेक्षा न तस्योन्मिषति निजमतप्रक्रियार्थानुवादे । सिद्धान्त्यस्वीकृतेऽर्थे यदि तु विषयतापादनं पूर्वपक्षे कर्तव्यं तर्ह्युपायः कथमिह सुधिया तत्र नापेक्षणीयः ॥ इतिसङ्ग्रहश्लोकेन तद्व्याख्यानेन च प्रपञ्चितः । ननु, सिद्धान्त्यनभिमत-मर्थं पुरस्कृत्य शास्त्रानारम्भपूर्वपक्षे तदुपपादनायैव शास्त्रारम्भोऽपेक्षित इत्यापादने पूर्वमी-मांसाद्याधिकरणपूर्वपक्षेऽप्येवमापादनं भवेत् । स खल्वेवं प्रवृत्तः अध्ययनविधिना विश्व-जिन्न्यायात् वेदाध्ययनस्य स्वर्गार्थतावबोधकेनार्थज्ञानेतरफलार्थनियमानां वेदानां विषनिर्ह-रणादिमन्त्राणामिवार्थविवक्षाग्राहकं प्रमाणं नास्तीति वेदवाक्यान्यापाततोऽपरिपूर्णानुपपन्ना-र्थानि लक्षणानुषङ्गाध्याहारव्यवधारणकल्पनार्थिकार्थकल्पनादिभिरवश्यमुपपादनीयानीत्यत्र नियामकाभावादनुपपत्तिशङ्काकलुषितवेदार्थविचारात्मकं शास्त्रं नारम्भणीयमिति तत्रापि स्वाध्यायाध्ययनस्य स्वर्गार्थत्वं सिद्धान्त्यनभिमतमेव पूर्वपक्षिणोपपाद्यमिति तदुपपादकविश्व-जिन्न्यायादिप्रतिपादकशास्त्रारम्भापेक्षा स्यादिति चेन्मैवम् । धर्मजिज्ञासासूत्रे ह्यध्ययनवाक्य-मेकमेव विचार्यम् । तस्य सिद्धान्त्यभिमतदृष्टफलरूपार्थज्ञानार्थत्वे वैयर्थ्यप्रसङ्गात्सर्वापेक्षित-

ब्रह्म' 'मनो ब्रह्म' 'विज्ञानं ब्रह्म' 'आदित्यो ब्रह्म' 'नारायणपरं ब्रह्म' इत्यादयोऽन्यमन्यमर्थं ब्रह्मेत्याहुः। तत्र किं वा ब्रह्मेति बहुधा सन्दिग्धं ब्रह्म विचारार्हं भवति। तत्र श्रवणमननादिनिश्चितस्य भक्तिज्ञानविशेषाभिमुखस्य परमकारुणिकस्य म-

स्वर्गार्थत्वं वाच्यमिति शंक्यम्। पूर्वपक्ष एव किञ्चिन्न्यायोपपादनमतस्तदर्थं न शास्त्रारम्भापेक्षा। अध्ययनविधिद्वारा तदुपात्तानां सर्वेषामपि वेदवाक्यानां विचार्यत्वेऽपि तेषामविवक्षितार्थत्वे पूर्वपक्षिणोपपादनीये विषनिर्हरणादिमन्त्रवदन्यार्थं नीयमानत्वमेक एव न्यायः। सोऽपि पूर्वपक्ष एव व्युत्पादयितुं शक्य इति तदर्थमपि न शास्त्रारम्भापेक्षा। न हि कियन्तमपि न्यायमप्रदर्श्य पूर्वपक्षः क्रियते। इह तु नैकमेव वेदान्तवाक्यमुदाहृत्य जीवस्य प्रसिद्धमप्रसिद्धं वा रूपं ब्रह्मेति तस्य पूर्वपक्षिणा शास्त्रविषयत्वमापादयितुं शक्यम्। तस्यैकस्य केन चिन्न्यायेन पूर्वपक्षव्युत्पादितेन जीवब्रह्माभेदपरत्वसिद्धावपि वाक्यान्तराणां तत्परिपन्थिजीवब्रह्मभेदादिपरत्वप्रतीत्यनिवारणात्। अतस्तद्विचारार्थं शास्त्रारम्भापेक्षा स्यादेव। न च सर्वेषां वेदान्तानां जीवब्रह्माभेदपरत्वे सार्वत्रिक एकोऽस्ति न्यायः। उपक्रमादीनां श्रुतिलिङ्गादीनां च परश्शतबाध्यबाधकभावप्रकारशालिनां तत्र तत्र व्यवस्थितत्वात्[1]। न च तेषां सर्वेषामेकस्मिन्नेवात्र पूर्वपक्षे व्युत्पादनं युक्तम्। तथा सति सर्वस्यापि शास्त्रस्यैकाधिकरण्यकल्पनाप्रसङ्गात्। तस्मात्तावतां न्यायानां व्युत्पादकमेकं शास्त्रमिहापेक्षितमित्यस्मिन्नेव शास्त्रे पूर्वपक्षिणो व्याघातदोष आपतितः। धर्ममीमांसारम्भपूर्वपक्षिणोऽपि। अयमप्यर्थोऽस्माभिर्मध्वविध्वंसन एव'एकं वाक्यं विचार्यं यदि भवति नयो वाऽपि सर्वत्र तुल्यस्तत्किञ्चिन्न्यायक्लृप्त्यानभिमतरचना युज्यते पूर्वपक्षे। सर्वेषामेव नानाविधनयनिकरानेयतात्पर्यसीम्नां वेदान्तानां विमर्शाद्विषयविरचना त्वेकमीहेत शास्त्र'मिति सङ्ग्रहश्लोकतद्व्याख्यानाभ्यां प्रपञ्चितः। तस्मादिह पूर्वपक्षिणा केवल'मयमात्मा ब्रह्मे'त्यादिश्रवणमात्रमवलम्ब्य जीवस्य शास्त्रविषयत्वापादनेन तदनारम्भः शङ्कनीयः। तत्रेदमुक्तं भाष्ये 'नैवं शङ्कावकाशं लभते जीवब्रह्मभेदश्रुतीना'मन्नं ब्रह्मे'त्यादिश्रुतीनां च सत्त्वेन तद्बलाबलविचारमनपेक्ष्य श्रुतिमात्रावलम्बने ब्रह्म किमन्नादीनामन्यतममन्यद्वेति विचारोपयुक्तस्य सन्देहस्यैव प्राप्ते'रिति। एवं विषयमुपपाद्य प्रयोजनमुपपादयति—तत्रेति। विषये सिद्धे सतीत्यर्थः—अयमिह क्रमः। विशिष्टाधिकारी मुमुक्षुणा ज्ञातव्यं ब्रह्म किमिति बहुविधवाक्यश्रवणवशात्सन्देहे सति तज्जिज्ञासया तन्निर्णायकस्यास्य शास्त्रस्य श्रवणे प्रवृत्तः तेन तदनुकूलयुक्त्यनुसन्धानात्मकेन मननेन च तन्निश्चित्य स्वरूपप्रमाणसाधनफलैस्तन्निश्चयतो लब्धेन भक्त्यतिशयेन चिरनिरन्तरासेवितेन तदुपासनेन तज्जन्यसाक्षात्कारेण चाराधिततया स्वमुमुक्षोन्मुखस्य नित्यसिद्धापारकरुणासागरतया सर्वानुग्रहैकरसिकस्य अतएव ब्रह्मविद्योपदेष्टृस्वमहादेशिकरूपेण स्वस्य श्रवणमननादिकं सम्पादितवतस्तस्यैव परब्रह्मणः प्रसादातिशयेन पाशपटलप्रध्वंसपूर्विकां निरतिशयप्रकाशमानानन्दरूपां तदत्यन्तसादृश्यात्मिकां मोक्षलक्ष्मीं प्रतिपद्यत इति। अतः शाब्दज्ञानमात्रेण परमप्रयोजनस्यानभ्युपगमात् 'प्रयोजनं च न किञ्चित्पश्याम' इति दूषणस्य नावकाशः। पाशनिवृत्तौ 'प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतु' रितिप्रमाणसिद्धस्य हेतोरुपन्यासादनादिर्न निव-

(१) 'व्यवस्थापितत्वात्' इति घ. पाठः।

हादेशिकस्य सर्वानुग्राहकस्य शिवस्य परब्रह्मणः प्रसादातिशयेनास्याधिकारिणः प्रध्वस्तपाशपटला प्रत्यक्षीभूतनिरतिशयज्ञानानन्दस्वरूपा तत्समानगुणसारा कै-

---

तेत इति दूषणस्य नावकाशः। निवृत्तौ प्रमाणसद्भावो हि निवृत्त्यभ्युपगमे तन्त्रम्। न तु सादित्वमनादित्वं वा। इदानीमुत्पन्नव्यक्तिविशेषानुभवेन तदज्ञानस्यानादेरपि निवृत्त्यभ्युपगमात्। न हि तदज्ञानं सादीति वक्तुं शक्यम्। इदानीन्तनव्यक्तिविशेषस्य पूर्वं कदाचिदपि दर्शनाभावेन तदनादित्वावश्यंभावात्। अज्ञानं ज्ञानप्रागभावरूपमित्यभावत्वात्तस्य निवृत्तिरभ्युपगम्यत इति चेत् किमत्यन्ताभावस्य तथाभूतस्यापि निवृत्तिरभ्युपगम्यते। निवृत्तौ प्रमाणाभावात्तस्य सा नाभ्युपगम्यत इति चेत्तर्ह्यावश्यकत्वात्प्रमाणसद्भाव एव तदभ्युपगमे तन्त्रमिति किमजागलस्तनायमानेन मानाभावत्वेन। किञ्च संसारिणां सर्वविषयत्वयोग्यचिच्छक्तिरूपनित्यसिद्धज्ञानावरणभूता मलद्रव्यशक्तिविशेषा एव तत्तद्विषयाज्ञानानीत्यज्ञानानामभावत्वकथापि वृथैव। तेषामभावत्वेऽपि भूतले घटाभाववत् समयविशेषसंसर्ग्यत्यन्ताभावतोपपत्तावप्रामाणिकप्रागभावत्वकल्पना न युक्ता। गौतमसूत्रेऽप्यनादेः संसारस्य निवृत्तौ 'प्रागुत्पत्तेरभावान्नित्यत्ववद्'दिति प्रागभावनिवृत्तिं दृष्टान्तीकृत्य प्रागभावासम्प्रतिपत्तावनादिभावनिवृत्तौ दृष्टान्तेन भाव्यमि'त्यनुशये चाणुश्यामता नित्यत्ववद्'ेति परमाणुश्यामतानिवृत्तिदृष्टान्तेनानादिभावनिवृत्तिरभ्युपगता। एतेन द्रव्यस्य ज्ञानमात्रान्निवृत्तिः सर्वजीवगतानर्थनिदानस्यैकपुरुषमोक्षकारणान्निवृत्तिश्च न सम्भवतीति दूषणान्तरमप्यनवकाशीकृतम्। तत्तन्मुच्यमानजीवावरणभूतानां मलशक्तीनामेव निवृत्त्यभ्युपगमात् श्रवणमननध्यानसाक्षात्कारैरुपचीयमानभक्त्युपबृंहितैः प्रसन्नस्य शिवस्यैव मोचकत्वाभ्युपगमेन तस्य द्रव्यनिवर्तकत्वसम्भवाच्च। तदभ्युपगमप्रदर्शनायैव सर्वानुग्राहकस्येति विशेषणम्। प्रसादातिशयस्तु,तद्व्यापारत्वेनोपन्यस्तः। न तु,प्रसादातिशयो मुक्तिसाधनं न परमेश्वर इत्यभिप्रायेण। 'फलमत उपपत्ते'रि(ब्र०३-२-३८.) परमेश्वरस्य फलसाधनत्वेन व्यवस्थापयिष्यमाणत्वात्। प्रसादेन परमेश्वरस्य सव्यापारीकरणे श्रवणमननादिपुरुषप्रयत्नस्योपयोगः। लोके हि साधनं द्विविधं सिद्धमसिद्धं च। तत्रासिद्धं कृष्यादि फलकामेनोत्पादनीयम्। सिद्धं कुठारादि सव्यापारीकरणीयम्। परमेश्वरश्च मोक्षे सिद्धरूपं साधनमिति मोक्षार्थिना निगलमोचनार्थिना राजेव स प्रसादेन सव्यापारीकरणीय इति। एवं शिवस्य मोचकत्वं दृढीकर्तुमेव ब्रह्मविद्योपदेष्टृगुरुमूर्तिमधिष्ठाय स एव श्रवणादीनामपि सम्पादक इति प्रदर्शनाय महादेशिकस्येति विशेषणम्। साक्षात्परम्परया च मोक्षप्रदानरसिकतायां हेतुगर्भं विशेषणं परमकारुणिकस्येति। पारम्यं करुणाया नित्यसिद्धत्वेन निरतिशयत्वेन च विवक्षितम्। एवं परमकारुणिकस्सर्वज्ञस्सर्वशक्तिकश्च सर्वानपि युगपत्किमिति न मोचयतीत्याशङ्कापरिहाराय 'प्रध्वस्तपाशपटले'त्यत्र पाशः पटलमिवेत्युपमितसमासेन मलाख्यस्य प्राथमिकसंसारपाशस्य नयनपटलसादृश्यं दर्शितम्। यथा नयनानां पटलावरणमतिकारुणिकेनापि भिषजा पक्वभावं प्रतीक्ष्यैवापास्यते एवं परमेश्वरेणापि पुंसां मलावरणमिति भावः। मलमायाकर्मरूपपाशसमूहार्थो वा पटलशब्दः। पाशपटलप्रध्वंसमात्रं नैयायिकमुक्तिवन्न स्वतः प्रयोजनमिति प्रयोजनरूपताप्रदर्शनाय प्रत्यक्षीभूतेत्यादि विशेषणम्। मुक्तौ ब्रह्मानन्दानुभवरूपपरमपुरुषार्थसद्भावप्रदर्शनार्थं सत्यसङ्कल्पत्वाद्युत्कृष्टब्रह्मगुणाविर्भावसद्भा-

वप्रदर्शनार्थं तत्समानगुणसारेति विशेषणम् । ननु श्रवणादिप्रणाडिकयेदं प्रयोजनं सिद्ध्यतु नाम । इदं प्रयोजनमित्थं सिद्ध्यतीति ज्ञानं प्रथमसूत्रार्थविचारमात्रेण कथं भविष्यति। अनेन हि सूत्रेण ब्रह्मणः शास्त्रविषयत्वसिद्ध्यर्थं जीवादीनामन्यतममन्यद्वेति सन्दिग्धत्वमेव तस्य जिज्ञासाकर्मत्वनिर्देशेन दर्शितम् । तथैव 'बहुधा सन्दिग्धं ब्रह्म विचारार्हं भवती'ति भाष्येणाप्युपपादितम् । विचाराधिकारिजीवादन्यदिति ब्रह्मणो निश्चयाभावे च श्रवणाद्याराधितस्य तस्य प्रसादात्पाशप्रध्वंसपूर्विका तत्समानसार्वज्ञादिमती मोक्षलक्ष्मीः प्रादुर्भवतीति निश्चेतुमशक्यम्।(१) न च वाच्यं प्रथमसूत्रार्थविचारमात्रेण तन्निश्चयासम्भवेऽपि स्वरूपप्रमाणसाधनफलैर्ब्रह्मनिर्णायकस्य जन्मादिसूत्रप्रभृतेरस्य(२) शास्त्रस्य श्रवणेन तदर्थमननेन च तन्निश्चयस्सम्भवति । कृत्स्नशास्त्रश्रवणतदर्थमननानन्तरमेव तन्निश्चयः । तत्र 'श्रवणमननाभ्यां निश्चितस्ये'ति भाष्येऽपि दर्शित इति । तथा सति प्रेक्षावत्प्रवृत्त्युपयोगिशास्त्रविषयप्रयोजननिर्णायकत्वाभिमतस्य प्रथमसूत्रस्य प्रयोजननिर्णायकत्वाभावप्रसङ्गात् । शास्त्रस्य सविषयत्वनिर्णयेऽपि सप्रयोजनत्वनिर्णयाभावे प्रेक्षावत्प्रवृत्त्यसम्भवेनं प्रथमसूत्रवैयर्थ्यप्रसङ्गाच्च । न च वाच्यं यथा धर्ममीमांसाशास्त्रारम्भे धर्मस्य जिज्ञासाकर्मत्वेन सन्दिग्धत्वप्रदर्शनेऽपि शास्त्रस्य सप्रयोजनत्वनिर्णयः तथाऽत्रापि स्यादिति । यदि बौद्धादियोगिप्रत्यक्षप्रमाणकतया चैत्यवन्दनादिलक्षणो धर्मः यदि वा चोदनाप्रमाणकतया यागादिलक्षणः उभयथापि धर्माभ्युदयोऽस्तीति निश्चयस्य यदि श्येनादिद्रव्यको यागः यदि वा श्येनादिनामकः उभयथाऽपि यागाभ्युदयोऽस्तीति निश्चयस्य च तत्राविरोधात् ।इहाहमनुभवसिद्धो जीव एव ब्रह्म तदन्यद्वेति सन्देहे जीवाराधितब्रह्मप्रसादात्पाशनिवृत्तिपूर्विका तत्समानगुणसारा मोक्षलक्ष्मीर्भवतीति निश्चयासम्भवात् । तस्मादिह ब्रह्मणो जीवादीनामन्यतममन्यद्वेति सन्दिग्धत्वेन विषयत्वोपपादनेनोक्तप्रयोजनवत्त्वोपपादनं ब्रह्म जीवादिभ्योऽन्यश्शिव एवेति निर्णयेन तत्प्रसादलभ्यतत्समानगुणप्रयोजनवत्त्वोपपादने च नोक्तरीत्या सविषयत्वोपपादनमित्युभयतस्पाशा(३) रज्जुरिति चेत् । अत्र ब्रूमः। ब्रह्मणो विचारविषयत्वं तत्प्रयोजनत्वं च सूत्रकृता तस्य जिज्ञासाकर्मत्वनिर्देशेन सूचितम् । तस्मिन्ब्रह्मशब्दनिर्देशेन तदुभयोपपादनं कृतम् । तन्निर्देशेन हि किं तद्ब्रह्म यत्सामान्यतोऽवगतं विशेषतोऽनवगतं जिज्ञास्यमित्याकाङ्क्षायामधीतसाङ्गसशिरस्कवेदस्य 'अयमात्मा ब्रह्म' 'अन्नं ब्रह्म' 'मनो ब्रह्म' 'आदित्यो ब्रह्म' 'तपसा चीयते ब्रह्म' 'तद्विजिज्ञासस्व' 'तद्ब्रह्म' 'नारायणपरं ब्रह्म' 'ऋतं सत्यं परंब्रह्मे'त्यादीनि सर्वाणि ब्रह्मनिर्देशवन्ति वाक्यान्युपतिष्ठन्ते न 'त्वयमात्मा ब्रह्मे' त्येकमेव वाक्यम् । विनिगमनाविरहात् । न च तेषु किञ्चिद्वाक्यं तात्विकब्रह्मभावबोधकं(४) नान्यदित्यत्र प्रथमसूत्रार्थविचारात्प्राङ्न्यायानुसन्धानमस्तीत्येवं ब्रह्मशब्दनिर्देशेन न्यायानुसन्धानरहितबहुविधवाक्यस्मारकेण सन्दिग्धत्वसूचनया विषयत्वमुपपादितं भवति । तस्य ब्रह्मशब्दस्यावयवशक्तिपर्यालोचनया श्रुतिप्रदर्शितनिरुक्त्यनुसन्धानेन तदर्थे निर्दोषत्वादिप्रतिपादकानेकवाक्यदर्शनेन च लभ्यस्य भाष्योक्तप्रवृत्तिनिमित्तस्य प्रदर्शकेन तेनैव ब्रह्मशब्दनिर्देशेन ब्रह्मणो जीवान्यत्व(५)सूचनया तत्प्र-

(१) 'न निश्चेतुं' शक्यम्' इति च- पाठः । (२) 'ब्रह्मादिसूत्र' इति ङ. पाठः । (३) उभयतस्पाशेत्यस्य उभयतः स्पाशः ग्रन्थिर्यस्यास्सेत्यर्थः । (४) 'ब्रह्मावबोधकं' इति च. पाठः (५) 'जीवाद्यन्यत्व' इति च. पाठः ।

सादलभ्यपाशनिवृत्तिपूर्वकमनुभाव्यस्य तस्य प्रयोजनत्वमप्युपपादितं भवति । भाष्यप्रदर्शितायां हि ब्रह्मशब्दप्रवृत्तिनिमित्तभूतब्रह्मत्वनिरुक्तौ निर्दोषमङ्गल्यगुणवत्त्वमज्ञानाननुविद्धनिरतिशयज्ञानदुःखाननुविद्धनिरतिशयसुखादिमत्त्वं च । नच सर्वदा तापत्रयातुरस्य जीवस्य तत्सम्भवति । नापि सर्वशक्तिमत्तया सकलतापप्रतिक्षेपसमर्थस्य ब्रह्मणः तापलेशसहिष्णुत्वमपि । एवं यस्य निरतिशयज्ञानानन्दादिगुणकस्य जीवरूपत्वमपि न सम्भवति दूरे तस्याचेतनान्नादिरूपत्वम् । न चेन्द्रशब्दस्य शक्र इव ब्रह्मशब्दस्य जीवादिषु क्वचिदर्थे व्यवस्थितिर्दृष्टा । येन तत्र सम्भावितगुणपरतया तद्वत्सङ्कोचं नीयेत । न चानेकप्रमाणावगतमिदं ब्रह्मशब्दप्रवृत्तिनिमित्तमवयवशक्तिपर्यालोचनामात्रलभ्येन्द्रशब्दप्रवृत्तिनिमित्तवत्सङ्कोचयितुमपि शक्यम् । एवं निर्दोषनिरतिशयज्ञानानन्दादिमति ब्रह्मणि जीवादन्नाद्यचेतनाच्चान्यत्वेन प्रथमसूत्रगतब्रह्मशब्ददर्शितन्यायतस्सिद्धे जीवादीनामन्यतममन्यद्वेति सन्देहनिवृत्तावपि 'नारायणपरं ब्रह्मे' त्यादिश्रुतिविप्रतिपत्तितस्तद्ब्रह्म नारायणश्शिवो वेत्यादिसन्देहस्य 'अयमात्मा ब्रह्मे' त्यादिवाक्यानां का गतिरिति सन्देहस्य चानुवृत्तेरेवंभूतसन्देहसन्दोहप्रतिक्षेपाय जन्मादिसूत्रप्रभृति शास्त्रं प्रवर्तते । धर्ममीमांसाशास्त्रेऽपि धर्मः किं योगिप्रत्यक्षलक्षणो वेदलक्षणो वेति संशये वेदाध्ययनानन्तर्यं धर्मविचारे प्रदर्शयता प्रथमसूत्रेण निरस्ते किं वेदार्थस्सर्वोऽपि धर्म उत तन्मध्ये चोदनालक्षणः अथवा तत्राप्यर्थरूपः इत्यादिसंशयान्तरनिरासाय चोदनासूत्रप्रभृति शास्त्रं प्रवृत्तम् । अन्यथा प्रथमसूत्रेण तत्रापि संशयस्यानिरासे धर्मस्य श्रेयस्साधनत्वसम्प्रतिपत्तावपि वेदार्थविचारात्मकस्यारिप्सितशास्त्रस्य सप्रयोजनत्वासिद्धेः । तस्मात्प्रथमसूत्रं ब्रह्मणो जीवादिरूपतया सन्दिग्धत्वप्रदर्शनेन विषयत्वोपपादकं चेन्न प्रथमसूत्रतः शास्त्रस्य प्रयोजनवत्त्वसिद्धिः । तस्य जीवादन्यत्वव्यवस्थापनेन तत्प्रसादलभ्यप्रयोजनोपपादकं चेत्ततो न विषयसिद्धिरिति दूषणस्य नावकाशः । भाष्यमप्यनेनैव प्रकारेण विषयप्रयोजनयोरुपपादकम् । तत्र हि विषयभाष्ये सूत्रगतजिज्ञास्यविषयब्रह्मशब्दप्रयोगस्मारितब्रह्मपदघटितनानाविधवाक्यप्रयोज्यसन्देहसन्दोहेन ब्रह्मणो विषयत्वोपपादनपूर्वकं तत्प्रयोगसूचिततदवयवशक्तिपर्यालोचनादिलभ्यतत्प्रवृत्तिनिमित्तभूतब्रह्मत्वनिर्वचनलब्धेन ब्रह्मणो जीवाद्यन्यत्वनिर्णयेन प्रयोजनोपपादनमप्याकूतितम् । प्रथमसूत्रेण ब्रह्मणो जीवाद्यन्यत्वनिश्चयेऽपि जन्मादिसूत्रप्रभृतिशास्त्रारम्भप्रयोजकसंशयो 'नारायणपरं ब्रह्मे' ति वाक्योदाहरणेन जीवब्रह्मैक्यनिर्देशकवाक्यजातगत्याकाङ्क्षाप्रदर्शनवाक्येन च दर्शितः । ननु, 'कथमेकभावमाहुः श्रुतय इति सन्देहः किं न स्या'दिति वाक्यस्योत्तरत्र 'अयमात्मा ब्रह्मे' त्यादिवाक्यानां विशिष्टशिवाद्वैतपरत्वव्युत्पादननिवर्तनीयसंशयप्रदर्शकत्वे तस्य प्रथमसूत्रनिवर्तनीयसंशयप्रदर्शकेन 'अपि चैवमपि सन्दिह्यत' इत्यादिसमनन्तरग्रन्थेन कथं सङ्गतिरिति चेत् ब्रह्मणो जीवान्यत्वनिर्णायकेन प्रथमसूत्रेण यस्संशयो निवर्तितः स एव 'अयमात्मा ब्रह्मे' त्यादिश्रुतीनां गत्यन्तरसत्त्वासत्त्वसंशयेनाग्रे पुनरुत्थितो निवर्तयिष्यत इति । वस्तुत उभयत्रापि संशयाभेदात् । अथवा 'अपि चे' त्यादिग्रन्थोऽपि न प्रथमसूत्रनिवर्तनीयसन्देहमात्रप्रदर्शकः । शारीराधिकरणनिवर्तनीयसन्देहप्रयोजकस्य 'नारायणपरं ब्रह्मे' ति वाक्यस्यादिशब्दगृहीतस्य

(१) 'संशयो वस्तुभेदात् । वस्तुतस्तु, अथवा' इति ख. ग. पाठः ।

वल्यलक्ष्मीः प्रयोजनं च भवति। ततस्सविषयं सप्रयोजनं वेदान्तश्रवणम्। यदुक्तं हिरण्यगर्भाधिकरणनिवर्तनीयसन्देहप्रयोजकस्य 'तदेव ब्रह्म परमं कवीना' मिति वाक्यस्य च तत्रानुक्रमणात्। तस्माद्विषयभाष्यं ब्रह्मणो विषयत्वव्यवस्थापनमात्रपरमिति। तेन संशयेषु तत्तत्सूत्रनिवर्तनीयत्वानादरेण ब्रह्मणि संशयसद्भावमात्रं प्रदर्शितम्। तावताऽपि प्रयोजनभाष्ये जीवाद्यन्यस्य ब्रह्मणस्सिद्धवदनुवादाद्विषयभाष्ये ब्रह्मत्वजीवत्वयोर्निर्वचनमुखेन प्रथमसूत्रगतब्रह्मपदसूचितस्य तयोर्विरोधस्याविष्करणाच्च जीवान्नादिरूपत्वसन्देहः प्रथमसूत्रनिवर्तनीय इति। शारीराधिकरणे नारायणस्य हिरण्यगर्भाधिकरणे हिरण्यगर्भस्य च स्वतन्त्रपरब्रह्मभावनिरसनदर्शनात् ब्रह्मणि नारायणत्वादिसन्देहः तदधिकरणद्वयनिवर्तनीय इति चावगन्तुं शक्यमिति स विशेषोऽत्र भाष्ये न स्पष्टीकृतः। यद्वा 'अपिचे'त्यादिग्रन्थोऽप्युत्तरत्र निवर्तनीयस्यैव 'अन्नं ब्रह्मे'त्यादिवाक्यानां का गतिरिति सन्देहजातस्य फलसन्देहद्वारा प्रदर्शक इति न किञ्चिदसामञ्जस्यम्। ननु, यदि नारायणहिरण्यगर्भयोः परब्रह्मभावसंशयोऽग्रे निरसनीयः कथं तर्ह्यत्र प्रयोजनभाष्ये 'परब्रह्मणः शिवस्य प्रसादातिशयेने' ति वाक्येन 'परं ब्रह्म शिव' इति सिद्धवदनूदितम्। उच्यते। मन्त्रार्थवादादिप्रसिद्धेषु देवताविशेषेष्वयमयं वा ब्रह्मेति संशयो नानाकारणकः। एकस्तावन्मन्त्रार्थवादगतोत्कर्षप्रतिपादनदर्शनमात्रसम्भवः शक्रसूर्याग्न्यादिसाधारणः 'न किरिन्द्रत्वदुत्तरः विश्वस्मादिन्द्र उत्तरः। इन्द्रो यातोऽवसितस्य राजा 'सूर्य आत्मा जगतस्तस्थुषश्च।' 'अग्निरग्रे प्रथमो देवतानाम्' 'अग्निर्मुखं प्रथमो देवतानां' 'राजानौ वा एतौ देवतानां यदग्नीषोमौ' इत्यादि मन्त्रार्थवादेषूत्कर्षवर्णनं हि शक्रादीनामपि दृश्यते। अयं प्रथमसूत्रगतब्रह्मशब्दस्मारितस्य तत्प्रवृत्तिनिमित्तस्य शिवे पौष्कल्यादथशब्दव्याख्यानोपसंहारभाष्यप्रपञ्चितात्स एव परं ब्रह्मेति निर्णयेन निवर्तनीयः सद्ज्ञानानन्दनारायणादिषु बहुषु जगत्कारणत्वरूपब्रह्मलक्षणश्रवणकृतोऽन्यः स जगत्कारणत्वोपयोगिगुणषट्कादेः शिवे प्रसिद्धतरत्वेन तत्र कारणवाक्यानां पर्यवसानात् स एव जगत्कारणं ब्रह्मेति निर्णयेन जन्माद्यधिकरणे प्रदर्शयिष्यमाणेन निवर्तनीयः। अनेकत्र ब्रह्मशब्दादिश्रवणकृतोऽपरः स शारीराद्यधिकरणे निवर्तनीयः। तत्र प्रथमसूत्रे द्वितीयादिसंशयानिवर्तनेऽपि प्रथमसंशयनिवर्तनादेवमेव संशयान्तरनिवर्तनमपि भविष्यतीति श्रोतॄणां विस्रम्भोत्पादनेन शिव एव ब्रह्मेति सिद्धवदनुवादः। यथा पूर्वतन्त्रे प्रथमाध्याये केषाञ्चिदप्रामाण्यहेतूनां निवर्तनमात्रेण विश्वजिदधिकरणादिनिवर्तनीयतत्संशयानुवृत्तावपि वृत्तं प्रमाणलक्षणमिति कार्त्स्न्येन वेदप्रामाण्यस्य सिद्धवदनुवाद इति न काचिदनुपपत्तिः। नन्वेवं ब्रह्मणो जीवान्यत्वनिश्चयेन प्रयोजनोपपादने तस्यापरिच्छेद्यत्वमापतति सोऽयं मयूरनृत्तन्यायः। यथा मयूरस्य नृत्यतः एक एव पादो भूमौ प्रतिष्ठितो भवति एवमिहापि यदि जीव एव ब्रह्माभ्युपगम्येत शक्यस्तस्य परिच्छेदः। तदपरिच्छेद्यत्वश्रुतीनामर्थवादमात्रत्वप्राप्तेः। प्रयोजनं तु नोपपद्यते। यदि ब्रह्म जीवादन्यत् अनन्तमङ्गल्यगुणशक्तियुक्तमिह प्रसाध्येत तदा प्रयोजनमुपपद्यते। अपरिच्छेद्यं तु ब्रह्म स्यात्। तदपरिच्छेद्यत्वश्रुतीनां तस्मिन्नर्थे (१) बाधाभावादित्यमुं दोषं परिहर्तुं पूर्वपक्षदर्शितामपरिच्छेद्यत्वशङ्कामनुवदति— यदुक्तमिति। द्विविधः परिच्छेदः करतलामलकवदीदृगि-

(१) 'अर्थबाधाभावात्' इति पाठान्तरम्.।

'ज्ञेयपरिच्छेदरूपत्वाज्ज्ञानस्य तदपरिच्छिन्नब्रह्मविषयं न सम्भवती'ति तदज्ञानविलसितम् । ईदृगिदमिति ब्रह्मणः परिच्छेदासम्भवेऽपि लक्षणमुखेनेतरव्यावृत्ततामात्रेण परिच्छेदसम्भवात् । लक्षणेन परिच्छेदो हि सर्वत्र लक्ष्यविषयमितरव्यावृत्ततया ज्ञानम् । उद्दिष्टस्य ब्रह्मणो लक्षणे वेदान्तवाक्यैर्निरूपिते परीक्षिते च तल्लक्षणशून्येभ्यस्सजातीयविजातीयेभ्यस्तादितरसकलपदार्थेभ्यो व्यावृत्तरूपं यत् तद्ब्रह्मेति विज्ञायते। अतस्समीचीनोऽयं ब्रह्मविषयश्शास्त्रारम्भः।

---

दमिति परिच्छेद एकः । तदभावेऽपि लक्षणमुखेनेतरव्यावृत्ततामात्रेण परिच्छेदो द्वितीयः । तत्राद्यस्य ब्रह्मण्यसम्भवेऽपि द्वितीयस्सम्भवति । यथा हि महासेनामध्ये रथगजतुरगभटवरविभूषणादियुक्तेषु बहुषु प्रभुषु दृश्यमानेषु सर्वत्रानिर्धारणेन राजबुद्धिप्रसक्तौ 'श्वेतच्छत्रं राजलक्षण'मित्युपदिष्टे यस्य श्वेतच्छत्रं पश्यति तदाकारविशेषादीनां दूरत्वादिदोषादनिश्चयेऽपि अयं राजेति विशिष्य निर्धारयति एवं वेदराशिमध्ये तत्तन्मन्त्रार्थवादादिप्रसिद्धमहिमातिशयेषु बहुषु विबुधेषु श्रूयमाणेषु सर्वत्रानिर्धारणेन परब्रह्मबुद्धिप्रसक्तौ यत् जगत्कारणं तत् ब्रह्मेत्युपदिष्टे यत्र जगत्कारणत्वं शृणोति स एव ब्रह्मेति निर्धारयति । अतो नापरिच्छेद्यत्वेनाविषयत्वप्रसङ्गः। लक्षणकृत्यानभिज्ञस्य त्वियं शङ्केति समाधत्ते— तदज्ञानविलसितमिति । ननु, ब्रह्मणः सर्वात्मना परिच्छेद्यत्वाभावे 'वेदान्तविज्ञानसुनिश्चितार्थाः' 'भक्त्या मामभिजानाती'तिश्रुतिस्मृतिभ्यां सर्वात्मना परिच्छेदरूपेण ज्ञानेन प्राप्यतया वर्णितं प्रयोजनं न सिध्येदिति स दोषस्तदवस्थ इति चेन्न । इतरव्यावृत्तत्वपरिच्छेदमात्रावलम्बनेन श्रवणमननयोरेकैकविद्योपसंहार्यगुणमात्रावगत्या निदिध्यासनस्य च निवृत्तौ साक्षात्कारकाले सर्वात्मना परिच्छेदसम्भवात् । न च तथा सत्यपरिच्छेद्यत्वभङ्गप्रसङ्गो दोषः । अपरिच्छेद्यत्वश्रुतीनां 'यतो वाचो निवर्तन्त'इत्यादिश्रुत्यन्तरानुसारेण मनोवागतीतत्वविषयत्वात् । न हि साक्षात्कारकाले ब्रह्म मनसा तद्गुणयत्तादिप्रतिपादकशब्देन वा परिच्छिद्यते । किं तु निवृत्तावरणेन सर्वतः प्रसृतेन स्वाभाविकज्ञानेनैव। यदाहुः—'शिवार्कशक्तिदीधित्या समर्थीकृतचिद्दृशा। शिवं शक्त्यादिभिस्सार्धं पश्यत्यात्मगतावृति'रिति । तस्माद्विषयप्रयोजनयोरविरोधेन सिद्धेरुपपन्नः शास्त्रारम्भ इत्यभिप्रेत्योपसंहरति—अत इति । एवमिह सूत्रगतब्रह्मशब्दशक्तिपर्यालोचनालभ्येन ब्रह्मणो जीवान्यत्वनिश्चयेन शास्त्रस्य प्रयोजनवत्तायाः विधान्तरेण ब्रह्मणः सन्दिग्धतया तेन सविषयतायाश्चोपपादने सिद्धान्तभाष्यस्य तात्पर्यं दर्शितम् । ब्रह्मणो जीवतदन्यत्वसन्देहेनैव शास्त्रस्य विषयप्रयोजनवत्त्वोपपादने वाक्यस्य तात्पर्यं द्रष्टव्यम् । तथा हि—यद्यपि ब्रह्मणश्चेतनत्वादिप्रतिपादकवेदान्तवाक्यबाहुल्यात् ' अन्नं ब्रह्मे ' त्यादिवाक्यान्युपासनार्थानीति निश्चयेनान्नादिरूपतया तत्सन्देहो निवर्तते । तस्य विशुद्धत्वप्रतिपादकवाक्यबाहुल्यात् अविशुद्धसंसारिजीवरूपत्वसंदेहोऽपि निवर्तते । तथापि संसारदशानभिव्यक्तविशुद्धजीवरूपत्वसन्देहो न निवर्तते । श्रुतिस्मृतीतिहासपुराणागमेषु जीवान्यत्वप्रतिपादकवाक्यानां तदनन्यत्वप्रतिपादकवाक्यानां च बाहुल्याविशेषाद्विविधवाक्यबलाबलानवधारणेन ब्रह्मशब्दप्रवृत्तिनिमित्ते वस्त्वपरिच्छेदे सजातीयविजातीयसकलवस्तुराहित्यरूपत्वसजातीयवस्तुमात्रराहित्यरूपत्वसन्देहसत्त्वाच्च । ततश्च ब्रह्मणो नारायणादिरूपत्वसन्देहादिवत् जीवत्वसन्देहादपि वि-

यदसन्दिग्धमप्रयोजनं च तत्खलु न प्रेक्षावतां विचारकक्ष्यामारोहति। अस्य तु वेदान्तशास्त्रविचारस्य प्रमाणयुक्त्याभासप्रतिभासवशात् सन्देहास्पदं ब्रह्म विषयो भवति। 'ब्रह्मविदाप्नोति परं' 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' 'ईशं तं ज्ञात्वा अमृता भवन्ति' 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमी-

---

षयत्वमुपपद्यते। तस्य निर्विशेषजीवरूपत्वेऽपि संसारदशायामावृतस्य निरतिशयानन्दरूपत्वस्य मुक्तावभिव्यक्त्या शास्त्रस्य प्रयोजनवत्त्वमप्युपपद्यते। अस्मिन्पक्षे'कथमेकभावमाहुः श्रुतय' इति भाष्यवाक्यं किं विरुद्धधर्मवत्त्वप्रतीतावपि विरुद्धांशप्रहाण्या शुद्धस्वरूपाभेदाभिप्रायेण श्रुतिषु जीवब्रह्मणोस्सामानाधिकरण्यनिर्देश उपपादनीयः, उत तदप्रहाण्यैव अपृथक्सिद्धप्रकारप्रकारिभावाद्यभिप्रायेणेति ब्रह्मणि जीवतदन्यत्वसन्देहापादितश्रुतिगतिविचारपरत्वेन योजनीयम्। 'अपि चैवमपि सन्दिह्यत'इत्यादिभाष्यं क्वचित्क्वचिद्वाक्ये श्रुतमज्ञादिरूपत्वमपि सन्दिह्येत किमुत बहुश्रुतिस्मृतिपुराणादिवाक्यजातप्रतीतं जीवरूपत्वमिति कैमुतिकन्यायपरत्वेन योजनीयम्। तत्र नारायणत्वादिसन्देहोपन्यासो दृष्टान्तार्थतया समर्थनीयः। तस्मात्'बहुधा सन्दिग्ध'मिति भाष्यं तु श्रुतिस्मृतिपुराणादिषु बहुभिर्जीवब्रह्माभेदसिद्ध्यनुकूलप्रकारैर्जीवतदन्यरूपतया सन्दिग्धमित्यर्थतया योजनीयम्। प्रयोजनभाष्यं प्रथमकोटौ प्रयोजनवत्त्वस्य अद्वैतव्यवस्थापके तन्त्रान्तरे प्रसिद्धत्वात् तामपहाय सिद्धान्तकोटिमात्रे प्रयोजनवत्त्वस्य पूर्वपक्षेऽनुपपन्नतया शङ्कितस्योपपादनार्थतया योजनीयम्। 'यदुक्त'मित्यादिभाष्यं कोटिद्वयेऽपि परिच्छेदातीतस्य परिच्छेदासम्भवशङ्कानिराकरणार्थतया योजनीयम्। तत्र प्रथमकोटौ लक्षणं व्यावहारिकधर्मरूपं विवक्षितमिति. तेनाग्रिमाधिकरणजातसाध्यनिर्णयोपयोगिहेतुजालस्यापि व्यावहारिकतयोपपत्तिस्सिद्ध्यति। यद्वा प्रथमकोटौ लक्षणादिसकलविचाराणां व्यावहारिकधर्मावलम्बनत्वस्य तन्त्रान्तरे प्रसिद्धत्वात् सिद्धान्तकोटावेवोक्तशङ्कानिराकरणार्थतया पूर्ववदेव योजनीयमिति सर्वमनवद्यम्। श्रोतृबुद्धिसौकर्यार्थमधिकरणार्थं सङ्कलय्य दर्शयति—यदसन्दिग्धमित्यादिना। प्रमाणयुक्त्याभासप्रतिभासवशादिति। प्रमाणाभासाः नैयायिकाद्युन्नीतान्यष्टगुणत्वादिनेश्वरादिसाधकान्यनुमानादीनि। युक्त्याभासाः तत्तदनुग्राहकलाघवतर्कादयः। पूर्वं श्रुतिविप्रतिपत्त्या ब्रह्मणि सन्देहो दर्शितः। इदानीं वादिविप्रतिपत्त्येति विशेषः। प्रयोजनस्यार्थप्राप्त्यनर्थनिवृत्तिरूपतया द्वैविध्यस्य प्रयोजनोपयुक्तानां ध्यानसाक्षात्कारपरमेश्वरप्रसादानां द्वारद्वारिभावस्य च प्रापकाणि श्रुतिवाक्यान्युदाहरति—ब्रह्मविदित्यादिना। ब्रह्मवित् हृदयगुहायां ब्रह्मोपासकः। परं निरतिशयब्रह्मानन्दरूपं प्रयोजनं प्राप्नोतीत्यर्थः। 'तदेषाभ्युक्ते'त्युदाहृतया ऋचा तथा विवृतत्वात्। अनेनार्थप्राप्तिरूपं प्रयोजनमुक्तम्। 'ज्ञात्वा शिव'मित्यनेनात्यन्तं शान्तिमात्यन्तिकीं दुःखनिवृत्तिं प्राप्नोतीत्यनर्थनिवृत्तिरूपं प्रयोजनमुक्तम्। 'ईशं तं ज्ञात्वे'त्यनेन अमृताः अमरणधर्माण इति पुनरावृत्तिराहित्योक्त्या ब्रह्मानन्दानुभवरूपस्य प्रयोजनस्य स्थायित्वमुक्तम्। 'तमक्रतुं पश्यती'त्यनेन 'अणोरणीयान्महतो महीया'नित्यल्पाधिकशरीरतत्तत्प्राणिहृदयगुहोपाध्यनुसारेणाणुमहत्तया अप्राकृतमहिमवन्तमीशं धातुर्जगद्धारकस्य तस्यैव प्रसादाद्वीतशोकस्सन् पश्यतीति ब्रह्मलोकप्राप्त्यनन्तरभाविनी स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुष-

शम्' । 'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनादेव पाशं दहति पण्डितः । '. 'ज्ञात्वा देवं मुच्यते सर्वपाशै'रित्यादिश्रुत्यनुसारेण तदुपासनयाऽस्याधिकारिणः पाशविच्छेदलक्षणा मुक्तिः प्रयोजनं चास्तीति प्रथमाधिकरणेऽत्र प्रतिपादितम् ॥] इति जिज्ञासाधिकरणम् ॥ १ ॥

---

मीक्षत'इतिश्रुत्यन्तरप्रसिद्धे निरतिशयानन्दात्मकब्रह्मदर्शनरूपे सकलदुःखनिवृत्तिपूर्वके परमप्रयोजने साक्षात्कारणं तस्यैव परब्रह्मणः प्रसाद इति दर्शितम् । 'आत्मानमरणिं कृत्वे'त्यनेन पण्डितः श्रवणमननसञ्जातपरमात्मनिश्चयः परमात्मानं हृदयगुहायामधरारणीस्थाने निधाय तस्य वाचकतया तदुपरि निधेयत्वेन यावदुपासनमावर्तनीयत्वेन चोत्तरारणिस्थाने प्रणवं निवेश्य ध्यानरूपनिर्मथनाद्धेतोः पाशं मलमायाकर्मरूपं दहतीति 'ब्रह्मविदाप्नोती'त्यादिश्रुत्यन्तरोक्तस्य वेदनस्य ध्यानरूपत्वं निर्मथनत्वेनाध्यवसितस्य ध्यानस्य दग्धृत्वे वह्निस्थानीयसाक्षात्काररूपद्वारसापेक्षत्वं च दर्शितम् । 'ज्ञात्वा देव'मित्यनेन मलमायाकर्मरूपतया पाशबहुत्वं दर्शितम् । आदिशब्देन 'भिद्यते हृदयग्रन्थि'रित्यादीनि श्रुत्यन्तराणि सङ्गृहीतानि । 'परीक्ष्य लोका'नित्यादेः पूर्वपक्ष्युत्प्रेक्षितार्थपरत्वकल्पनमप्ययुक्तम् । ततः'तद्यथेह कर्मचितो लोकः क्षीयत' इत्यादिश्रुतिप्रदर्शितकर्मप्राप्यस्वर्गादिसकललोकानित्यत्वप्रतिपादनपरतायां एवं तदर्थप्रत्यभिज्ञया अवधार्यमाणत्वादिति द्रष्टव्यम् । अत्रायमधिकरणार्थसङ्ग्रहः । "आत्मा ब्रह्मेत्यधीतः स्फुरति स तु सदा निर्विशेषः स चेत्स्यात्तस्यातीतस्य बुद्धेस्सरणिमिह नयैः का परिच्छेदवार्ता। तज्ज्ञानात्सर्वजीवावरणनिरवधिद्रव्यपाशानिवृत्तेः को वा मुक्तेः प्रसङ्गस्तदविषयफलं ग्राह्यमेतन्न शास्त्रम् ॥ १ ॥ ब्रह्म ह्यर्थानुगत्या निरतिशयगुणं तत्कथं जीव एवेत्युक्तं श्रुत्या तदन्नं मन इति च कथं चोक्तमित्यादि चिन्त्यम् । ध्यातस्यास्य प्रसादात्प्रतिपशुनियतानन्तशक्तेर्मलस्य क्षीयेतैकैकशक्तिस्तदिह न विषये नैव साध्येऽप्ययुक्तिः ॥ २ ॥" एवमुत्तराधिकरणेष्वपि पूर्वोत्तरपक्षसङ्ग्रहश्लोकाश्चतुर्मतसारेऽस्माभिर्निबद्धा द्रष्टव्याः ॥ ॥ इति जिज्ञासाधिकरणम् ॥ १ ॥ ॥ ॥ ॥ ॥

---

## ॥ शिवाभ्यां नमः ॥

श्रीमन्तोऽप्पयदीक्षितेन्द्राः स्वकृते चतुर्मतलेशसंग्रहे—

"सर्वेषामपि पूजनी सुमनसामव्याहताज्ञाञ्चिता श्लाघ्यश्लोकपरंपराधिकरणेष्वासादितप्रौढिमा ।
एषा मत्कृतिरेधतामनुकलं ब्रह्मप्रतिष्ठापिनी राज्यश्रीरिव चिन्नबोम्मनृपतेराचन्द्रसूर्यं क्षितौ ॥ १ ॥

यन्नानाभाष्यशाखोदितफलविततिः प्रौढनानारसाढ्या यस्मिन्मूले निरूढं फलमधिकतरं स्वाद्वनारुह्य लभ्यम् ।
यस्य प्रेक्षैव देहद्वयतदनुगतप्रत्यगर्थौ विविङ्क्ते सूत्रात्मा पारिजातस्सकलमभिमतं मह्यमर्थं स दद्यात् ॥ २ ॥

आनन्दतीर्थमुनिलक्ष्मणदेशिकेन्द्रश्रीकण्ठयोगिपदवीरदवीयसीर्नः ।
आचार्यपादसरणिं च विविच्य बोद्धुं संगृह्यते मतचतुष्टयसारलेशः ॥

आदावानन्दतीर्थीयामनुसृत्य मतस्थितिम् । न्यायमुक्तावली रम्या विशदार्था विरच्यते ॥" इत्यारभ्य प्रथमपरिच्छेदे श्रीमदानन्दतीर्थमतानुसारेण ब्रह्मसूत्राणि संक्षेपेण व्याचख्युः प्रत्यधिकरणं पूर्वपक्षसिद्धान्तसंग्राहकश्लोकविरचनपूर्वकम् ।

अथ द्वितीये परिच्छेदे "लक्ष्मणार्यहृदयानुसारिणी तन्यते नयमयूखमालिका ॥" इत्युपक्रम्य तथैव श्रीमद्रामानुजमतप्रक्रियां न्यरूपयन् ।

अथ तृतीये परिच्छेदे नयमणिमालाभिख्ये श्रीकण्ठमतानुसारेण पद्यरूपेण प्रत्यधिकरणं पूर्वपक्षसिद्धान्तौ संजगृहुः ॥

अथ तुरीये नयमञ्जर्याख्ये परिच्छेदे छन्दश्शास्त्रस्थसकलवृत्तोदाहरणरूपैः पद्यैः श्रीमद्भगवत्पादीयमतानुसारेण अधिकरणार्थान् संजगृहिरे ॥

परिच्छेदचतुष्टयपरिमितं चतुर्मतलेशसंग्रहाख्यं महान्तमखिलादरणीयं प्रबन्धमस्यां ग्रन्थावलौ यथाक्रमं संमुद्रय प्रकटीचिकीर्षुरधुना तमपि परिशोधयन्वर्ते। तुरीयपरिच्छेदमात्रमेतावतापि कालेन सर्वत्र समन्विष्यतो मम न नयनपदवीमुपगतम्।

नयमणिमालाख्यस्य तृतीयपरिच्छेदस्य प्रकृतभाष्यार्थसंग्रहरूपतया तत्रतत्र प्रत्यधिकरणपरिसमाप्ति तत्तत्पद्यविन्यसनमिदंभाष्यपठितॄणां प्रमोदमावहेदिति धिया यथाक्रमं प्रकटीक्रियते ।

## नयमणिमालाप्रारम्भः

सोपानपङ्क्तिकल्पा सोमाभरणपदमारुरुक्षूणाम् । क्रियते नयमणिमाला श्रीकण्ठाचार्यदृष्टमार्गेण ॥

## ॥ अथ जिज्ञासाधिकरणम् ॥

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

आत्मा ब्रह्मेत्यधीतः स्फुरति स तु सदा निर्विशेषस्स चेत्स्यात् तस्यातीतस्य बुद्धेस्सरणिमिह नयैः का परिच्छेदवार्ता ।
तज्ज्ञानात्सर्वजीवावरणनिरवधिद्रव्यपाशानिवृत्तेः को वा मुक्तेः प्रसङ्गस्तदविषयफलं ग्राह्यमेतन्न शास्त्रम् ॥ १ ॥
ब्रह्म ह्यर्थानुगत्या निरतिशयगुणं तत्कथं जीव एवेत्युक्तं श्रुत्या तदन्नं मन इति च कथं चोक्तमित्यादि चिन्त्यम् ।
ध्यातस्यास्य प्रसादात्प्रतिपशुनियतानन्तशक्तेर्मलस्य क्षीयेतैकैकशक्तिस्तदिह न विषये नैव साध्येऽप्ययुक्तिः ॥ २ ॥

इति जिज्ञासाधिकरणम् ॥ १ ॥

---

## ॥ सूत्रार्थचन्द्रिका ॥

सत्त्वात्सर्वादकत्वान्निरुपधिपरमैश्वर्यवत्त्वात्पशूनामस्माकं पालकत्वान्निरवधिभवरुग्द्रावणादन्यभासा ।
दुर्धर्षत्वात्सुराणामपि भयजननाद्देवनाच्च प्रकृष्टे स्वात्मानन्देऽभिधानैरनितरविषयैश्शब्द्यते यो भवाद्यैः ॥ १ ॥
देवस्त्र्यन्तभूषामणिरखिलजगज्जन्मरक्षाप्ययान्तर्धानानुग्राहकारी शुभगुणजलधिस्सांबमूर्तिस्त्रिणेत्रः ।
सर्वज्ञो नित्यतृप्तो निरवधिभवरुग्ध्वंसकानादिबोधः स्वच्छन्दोऽलुप्तशक्तिर्जयतु हृदि स मेऽनन्तशक्तिर्महेशः ॥ २ ॥
**श्रीमत्पञ्चनदस्थला**धिवसतिस्सौशील्यतश्श्रौत्रतश्चार्हन्त्या प्रथितो महाव्रतमखेनेष्टी विशिष्टाग्रणीः ।
श्रौतस्मार्तविधाननिश्चितमतिस्त्र्यन्तविद्यागुरुः मीमांसाद्वयपारगो विजयते **श्रीबालकृष्णाध्वरी** ॥ ३ ॥
श्रीम**द्दीक्षितशेखरा**न्वयपयःपाथोधिशीतद्युतिः शान्तस्सेव्यगुणाकरो दशदिशाविख्यातकीर्तिः प्रभुः ।
श्रीमानाश्रितरक्षणव्रतपरः ख्यातो**ऽप्पुशास्त्र्या**ख्यया दीर्घायुर्जयताद्यदाश्रयबलान्नैश्चिन्त्यमासादयम् ॥ ४ ॥
**वैयासिकब्रह्मसूत्रभाष्य**काराशयानुगाम् । **सूत्रार्थचन्द्रिकां** कुर्वे चतुर्मतनिरूपिणीम् ॥ ५ ॥
बह्वस्सन्ति सूत्रार्थबोधिन्य**स्सूत्रवृत्तयः** । तत्तद्भाष्यानुसारेण सूरिभिर्बहुभिः कृताः ॥ ६ ॥
तथाप्येकैकसूत्रस्य चतुर्धा भिन्नवर्त्मना । भाष्यकृत्कथितानर्थान्संग्रहीतुं ममोद्यमः ॥ ७ ॥
क्वाहं मन्दमतिः क्वेमा गभीरा भाष्यसूक्तयः । तथाप्याचार्यपादाब्जसंस्मृतिर्मां कृतार्थयेत् ॥ ८ ॥
अदौ **श्रीभगवत्पादभाष्य**भङ्गीसमाश्रयः । तत**श्श्रीकण्ठभाष्या**नुसारतोऽर्थनिरूपणम् ॥ ९ ॥
ततो **रामानुजाचार्यानन्दतीर्थमुनीन्द्रयोः** । भाष्यरीत्यार्थकथनमित्यत्र क्रममाद्रिये ॥ १० ॥
यद्यप्येषां प्राक्तनस्य **श्रीमच्छ्रीकण्ठयोगिनः** । मतमाश्रित्य सूत्रार्थवर्णनं युक्तमादितः ॥ ११ ॥
तथापि नातिभिन्नत्वात्साहचर्यं समाद्रिये । **श्रीकण्ठाचार्यरामानुजन्मस**न्मततत्त्वयोः ॥ १२ ॥
चत्वार्यिलोच्य भाष्याणि ललितां नातिविस्तराम् । **सूत्रार्थचन्द्रिका**मेतां विलिखामि यथामति ॥
गुणैकलोलुपास्सन्तः कृतिमेनां विलोक्य मे । तुष्येयुरनुगृह्णीयुश्चेति साञ्जलिरर्थये ॥

॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

**श्रीभगवत्पादमते,** इदमेकमधिकरणम् । **अथ**=साधनचतुष्टयसंपत्त्यनन्तरम् । **अतः**=यस्माद्वेद एव श्रेयस्साधनानामग्निहोत्रादीनां कर्मणां 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' 'अतोऽन्यदार्तम्' इत्यादिभिर्वाक्यैरनित्यफलतां 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' इत्यादिभिस्तु ब्रह्मज्ञानस्य मोक्षरूपपरमपुरुषार्थ-

---

(१) नित्यानित्यवस्तुविवेकः. (२) इहामुत्रार्थफलभोगविरागः. (३) शमदमोपरतितितिक्षाश्रद्धासमाधानाख्यशमादिषट्कसंपत्तिः. (४) मुमुक्षुत्वम् ॥ इति चत्वारि साधनानि.

लाभफलकतां च दर्शयति तस्मात्। ब्रह्मजिज्ञासेति कर्मणि षष्ठ्यास्समासः। **ब्रह्मणः**=‘जन्माद्यस्य यत’ इतिवक्ष्यमाणलक्षणस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य सर्वज्ञस्य सर्वशक्तिमतः भोक्तृस्वरूपभूतस्य वस्तुनः। **जिज्ञासा**=( ज्ञातुमिच्छा ) विचारः इत्यर्थः। अत्र प्रकृत्या ज्ञाधातुना फलीभूतं ब्रह्मापरोक्षज्ञानमजहल्लक्षणया कथ्यते। सन्प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणयोच्यते॥ एवं च ब्रह्मजिज्ञासापदस्य मोक्षसाधनब्रह्मापरोक्षज्ञानफलकों वेदान्तवाक्यविचार इति फलितोऽर्थः। **कर्तव्या** ( इतिशेषः ) अस्याधिकरणस्य वेदान्तवाक्यविचारो विषयः। स न कर्तव्यः कर्तव्यो वेति विषयप्रयोजनसंभवासंभवाभ्यां संदेहे यद्धि संदिग्धं सप्रयोजनं तस्य विचारविषयत्वं, ब्रह्मणस्तु स्फुटतराहंप्रत्ययालंबनत्वेनासंदिग्धत्वात् तज्ज्ञानान्मुक्तिलक्षणप्रयोजनाभावाच्च न विचारविषयत्वम्। अतोऽसंभावितविषयादिमान्वेदान्तवाक्यविचारो न कर्तव्य इति पूर्वपक्षः। सिद्धान्तस्तु, श्रुतिगम्यब्रह्मात्मतत्वस्याहंप्रत्ययानालंबनत्वेन संदिग्धत्वात्तत्साक्षात्कारादनर्थनिवृत्तिलक्षणमोक्षसंभवात्संभावितविषयादिमान्वेदान्तवाक्यविचारस्साधनचतुष्टयसंपन्नेनाधिकारिणा मोक्षसाधनब्रह्मापरोक्षज्ञानाय कर्तव्य इति।

**श्रीकण्ठमते. अथ**=निखिलपुरुषार्थरत्नाकरस्य परमप्रबोधसाधनस्य भगवतो धर्मस्य विचारानन्तरम्। **अतः**=यतोऽधीतवेदेन धर्मो विचारितोऽतस्तदनुष्ठानसंपन्नचित्तशुद्धिनानेन ब्रह्मापि निरतिशयनिःश्रेयसकरं विचारणीयमिति हेतोः। ब्रह्मजिज्ञासेति कर्मणिषष्ठ्यास्समासः। **ब्रह्मणः**=सकलचिदचित्प्रपञ्चाकारपरशक्तिविशिष्टाद्वितीयवैभवस्य सकलनिगमसाररहस्यनिधानस्य भवशिवशर्वपशुपतिपरमेश्वरमहादेवरुद्रशंभुप्रभृतिपर्यायवाचकशब्दसारप्रकाशितपरममहिमविलासस्य स्वशेषभूतनिखिलचेतनसमुपासनानुगुणसमुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य परब्रह्मणः। **जिज्ञासा**=प्रतिपादकस्योपनिषच्छास्त्रस्य विचारः। पूर्ववदत्रापि लक्षणैव। **कर्तव्या** ( इत्यध्याहारः ) ‘परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन’ ‘तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्’ इत्यादि वाक्यं विषयः। तत्र ब्रह्म विचारार्हं न वेति विषयप्रयोजनसंभवासंभवाभ्यां सन्देहे सन्दिग्धस्य सप्रयोजनस्यैव वस्तुनः विचारार्हत्वात् ‘अयमात्मा ब्रह्मे’ त्यादिश्रुत्या अयमिति प्रत्ययेन प्रत्यक्षसिद्धस्यैवात्मनः ब्रह्मत्वोपदेशात् असन्दिग्धत्वेन विषयत्वासंभवात् विचारफलभूतस्य तद्विषयज्ञानस्य ज्ञेयपरिच्छेदकत्वाङ्गीकारे ब्रह्मणोऽपरिच्छिन्नत्वभङ्गापत्त्या तदपरिच्छेदकत्वे ब्रह्मणः यथावदप्रकाशतापत्त्या च ज्ञानस्यैवासंभवात् संभवेऽपि तस्य अनादिसिद्धसंसारस्य दुरपह्नवत्वेन मुक्तेरप्रसक्ततया प्रयोजनाभावाच्च ब्रह्म विचारयोग्यं न भवतीति पूर्वः पक्षः। सिद्धान्तस्तु, ‘अयमात्मा ब्रह्मे’ त्यादिश्रुत्या अस्यैव अहंकारबद्धस्य संसारिणो जीवस्य ब्रह्मत्वोपदेशात् अन्वर्थस्य ब्रह्मशब्दस्य निरतिशयज्ञानानन्दादिशक्तिमहिमातिशयशालिवस्तुपरत्वात् परस्परविलक्षणयोः ब्रह्मत्वजीवत्वयोरेकभावबोधिनीनामन्नप्राणमनोविज्ञानादित्यादिभिन्नभिन्नार्थब्रह्मत्वबोधिनीनां च श्रुतीनां सत्वात्, किं वा ब्रह्मेति बहुधा सन्दिग्धस्य ब्रह्मणः विषयत्वसंभवात्, श्रवणमननादिनिश्चितस्य परमकारुणिकस्य सर्वानुग्राहकस्य महादेशिकस्य परब्रह्मणशिवस्य प्रसादातिशयेनास्याधिकारिणः प्रध्वस्तपाशपटलायाः कैवल्यलक्ष्म्याः प्राप्तेः प्रयोजनत्वेन श्रुतिभिरुपदिष्टत्वात् ब्रह्मणः इदमित्थमिति परिच्छेदासंभवेऽपि लक्षणमुखेनेतरव्यावृत्ततामात्रेण परिच्छेदसंभवाच्च वेदान्तश्रवणं सविषयं सप्रयोजनं चेति कृत्वा ब्रह्म विचारार्हं भवत्येवेति समीचीनोऽयं ब्रह्मविषयः शास्त्रारंभ इति।

**श्रीरामानुजमते** प्रायः सूत्रार्थः श्रीकंठमतानुसारी। ब्रह्मशब्दाभिधेयं वस्तु परं भिद्यते। पूर्वपक्षसिद्धान्तावन्यावेव। यथा–**अथ**=कर्मज्ञानानंतरम्। **अतः**=कर्मविचारस्य वृत्तत्वाद्धेतोः। ब्रह्मजिज्ञासेति कर्मणिषष्ठ्याः समासः। **ब्रह्मणः**=स्वरूपतो गुणैश्च निरतिशयबृहत्त्वशालितया अन्वर्थब्रह्मशब्दाभिधेयस्य निखिलहेयप्रत्यनीकानन्तकल्याणगुणरत्नाकरस्य सर्वेश्वरस्य पुरुषोत्तमस्य। **जिज्ञासा** (ज्ञातुमिच्छा) विचारः कर्त्तव्य इत्यर्थः। इच्छाया इष्यमाणप्रधानत्वात् इष्यमाणं ज्ञानमिह विधीयते।

अत्र वृद्धव्यवहारादन्यत्र आद्यव्युत्पत्त्यसंभवात् व्यवहारे च कार्यपरतयैव व्युत्पत्तेः सर्वशब्दानां कार्यार्थबोधकतया सिद्धवस्तुबोधनासंभवात् सिद्धरूपे ब्रह्मणि वेदान्तानां प्रामाण्यं नास्तीत्यप्रामाणिकमिदं ब्रह्मविचाररूपं शास्त्रमनारंभणीमिति पूर्वः पक्षः।

अम्बादिशब्दानामंगुलिनिर्देशपूर्वकबहुप्रयोगेण सिद्धव्युत्पत्तिस्संभवतीति वृद्धव्यवहारादन्यत्रापि शब्दानामाद्यव्युत्पत्तिसंभवात् ‘पिता ते सुखमास्ते’ इत्यादिवृद्धव्यवहारे च सिद्धव्युत्पत्तिसंभवात् शब्दानां सिद्धवस्तुबोधनसामर्थ्यात् वेदान्तवाक्यानां सिद्धरूपे ब्रह्मणि प्रामाण्यमस्तीति तद्विचाररूपं शास्त्रमारंभणीयमिति सिद्धान्तः॥ **श्रीकण्ठरामानुजयो**र्मते पूर्वोत्तरमीमांसयोः भिन्नकर्तृकत्वेऽपि ऐकशास्त्र्यमभिमतम्। **श्रीभगवत्पाद**मते तु भिन्नशास्त्रत्वमिति विवेकः॥

**श्रीमदानन्दतीर्थमते अथ**=अध्ययनशमदमादिरूपाधिकारसम्पत्त्यनन्तरम्। **अतः**=मोक्षाख्यप्रयोजनस्य सत्वात् विष्णोः प्रदासाद्वा। **ब्रह्मणः** गुणपूर्णस्य विष्णोः। **जिज्ञासा** श्रवणादिरूपा। **कर्त्तव्येत्यर्थः**॥ अत्र नित्यनिर्धूतनिखिलविशेषस्य स्वप्रकाशजीवचैतन्यस्वरूपस्यैव सर्वैर्वेदान्तैः उपक्रमादिलिंगोपेतैः ब्रह्मत्वेन प्रतिपादनात् तत्र विचारणीयांशस्य अभावेन निर्विषयत्वात् इदं शास्त्रमनारंभणीयमिति पूर्वः पक्षः।

ब्रह्मशब्देन गुणपूर्त्यभिधानात् जीवस्याल्पगुणताया अनुभवसिद्धत्वात् तद्व्यतिरिक्तस्य गुणपूर्णस्य ब्रह्मणः विचारार्हत्वेन सविषयत्वादिदं शास्त्रमारम्भणीयमिति सिद्धान्तः॥ अस्य ‘तद्विजिज्ञासस्वे’ति विषयवाक्यम्।

इति **हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायां** जिज्ञासाधिकरणम्।

## ॥ अथ जन्माद्यधिकरणम् ॥ २॥

**इहोद्दिष्टस्य ब्रह्मणो यन्निश्चायकं तल्लक्षणं किमित्याकाङ्क्षायां**

सङ्गतिं प्रदर्शयन्नुत्तराधिकरणमवतारयति--इहेति । पूर्वाधिकरणे ब्रह्मणस्सर्वात्मना परिच्छेद्यत्वासम्भवेऽपि लक्षणमुखेनेतरव्यावृत्ततया परिच्छेद्यत्वं सम्भवतीत्युक्तवतस्सिद्धान्तिनस्तत्परिच्छेदकत्वेनाभिमतं यल्लक्षणं तन्न सम्भवतीत्यर्थकेन 'ब्रह्मणो यन्निश्चायकं तल्लक्षणं कि' मित्यनेनाक्षेपिकी पूर्वाधिकरणसङ्गतिर्दर्शिता । उद्दिष्टस्येति ब्रह्मविशेषणेनोद्देशानन्तरं लक्षणकथनस्यावसरइत्यवसररूपा तत्सङ्गतिर्दर्शिता । ननु, उद्देशो नाममात्रेण वस्तुसङ्कीर्तनमिति नैयायिकाः । न चात्र प्रथमसूत्रे ब्रह्मणो नाममात्रेण सङ्कीर्तनम् । किं तु तस्य विषयत्वप्रयोजनत्वज्ञापनोपयोगि जिज्ञासाकर्मत्वं प्रतिपादयन्त्या षष्ठ्यापि परामर्शोऽस्ति । अतो न ब्रह्मण उद्दिष्टत्वोक्तिर्युक्तेति चेन्न । लुप्तषष्ठ्यर्थस्यापि नाम्नैव लक्षणीयतया नामातिरिक्तेनात्र ब्रह्मसङ्कीर्तनाभावेन 'नाममात्रेण सङ्कीर्तन'मित्युद्देशलक्षणस्याक्षतेः । नैयायिकानामेव तु 'प्रमाणप्रमेये'त्यादिसूत्रे प्रमाणादीनामुद्दिष्टत्वव्यवहारो न सङ्गच्छते । तेषां निःश्रेयसहेतुज्ञानकर्मत्वेन श्रूयमाणषष्ठ्या प्रतिपादनात् । यदि तु 'नाममात्रेणे'ति मात्रपदेन नञिवयुक्तन्यायसाम्यात् नामसदृशेन प्रातिपदिकान्तरेण सङ्कीर्तनं व्यवच्छिद्यते तावतापि 'प्रमाकरणं प्रमाण' मित्यादिलक्षणवाक्यान्तर्गतप्रामाणादिनाम्ना सङ्कीर्तने उद्देशलक्षणातिव्याप्तिनिवर्तनस्य फलस्य सिद्धेरित्युच्येत तदा 'ब्रह्मजिज्ञासे'त्यत्र लुप्तषष्ठ्येव स्मृता स्वार्थं प्रतिपादयतीति पक्षावलम्बनेऽपि ब्रह्मणो नोद्दिष्टत्वहानिः।अथ मात्रपदेन न नामातिरिक्तस्य शब्दमात्रस्य नापि प्रातिपदिकरूपस्य व्यवच्छेदो विवक्षितः । किं त्वर्थगत्या ज्ञानविषयत्वातिरिक्तधर्मवैशिष्ट्यसमर्पकशब्दस्येति प्रमाणादीनामेवोद्दिष्टत्वं सिद्ध्यति न ब्रह्मण इति चेन्न । विनिगमनाविरहेणेच्छाविषयत्वातिरिक्तधर्मवैशिष्ट्यसमर्पकशब्दव्यवच्छेदस्तेन विवक्षित इति ब्रह्मण एवोद्दिष्टत्वं लभ्यते न प्रमाणादीनामिति वैपरीत्यस्यापि वक्तुं शक्यत्वात् । लाघवानुसरणे तु ज्ञानेच्छासाधारण्येन विषयत्वातिरिक्तेत्येव निवेशयितुं युक्तम् । 'ब्रह्मजिज्ञासे'त्यत्रेष्यमाणज्ञानविषयत्वस्यैव ब्रह्मण्यन्वय इत्यङ्गीकारे तु ज्ञानविषयत्वनिवेशे[1]ऽपि ब्रह्मण उद्दिष्टत्वलाभस्य न क्षतिः। वस्तुतो विषयत्वस्य ज्ञानविषयत्वस्य वा निवेशने 'यदर्थ[2]मधिकृत्य प्रवर्तते तत्प्रयोजनं' 'लौकिकपरीक्षकानां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः' 'यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्त' इत्यादिलक्षणसूत्रगतस्य नाम्ना लक्ष्यनिर्देशस्योद्देशत्वापत्तेस्तदुभयमपि न निवेशयितुं युक्तम् । अथैवं कल्प्यते 'नाममात्रेणे'त्यत्र न करणे तृतीया किं त्वित्थंभावे । तथा च नाम्नैव प्रकारेण यद्वस्तुनः सङ्कीर्तनं न तु नामसमर्पितप्रवृत्तिनिमित्तेन प्रकारेण तदुद्देश इति लक्षणार्थः । प्रवृत्तिनिमित्तमपहाय नाममात्रविशेषितवस्तुप्रतिपत्त्यर्थस्योद्देशस्य प्रयोजनाकाङ्क्षायां तदर्थविशेषानभिज्ञतया तद्व्यवहाररहितस्य श्रोतुस्तद्व्यवहारसिद्ध्यर्थं लक्षणाभिधित्सया तज्जिज्ञासोत्पादनस्य प्रयोजनत्वावगत्या लक्षणजिज्ञासाजननोद्देश्यकं नामविशेषितपदार्थाभिधानमुद्देश इति लक्षणार्थः पर्यवस्यति । एवं च गौतमीयेषु 'सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः'

(१) 'शनेपि' इति. ङ. पाठः । (२) 'यमर्थे' मिति. ङ. पाठः ।

इत्यादिषूद्देशसूत्रेषु सर्वतन्त्रादिनामभिस्तत्तन्नामकाः केचित्सिद्धान्तविशेषादय इत्येव श्रोतुः प्रतिपत्तिः। 'सर्वतन्त्राविरुद्धः स्वतन्त्राधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः'। 'समानतन्त्रासिद्धः प्रतितन्त्रसिद्धः प्रतितन्त्रसिद्धान्त' इत्यादिलक्षणसूत्रश्रवणानन्तरमेवायमेवंलक्षणलक्षितः सिद्धान्तविशेषः सर्वतन्त्रसिद्धान्त इत्यादिव्युत्पत्तिग्रहपूर्वकं तेनतेन शब्देन व्यवहारः प्रवर्तते। 'प्रमाणप्रमेये'त्यादिसूत्रेऽपि प्रमाणादिशब्दैर्न प्रसिद्धार्थस्य ग्रहणमस्ति। प्रमाणशब्दे ल्युट्प्रत्ययस्य करणाधिकरणाद्यनेकार्थसाधारण्येन प्रसिद्धार्थस्यैवाव्यवस्थिततत्वात् करणार्थेऽप्यालोकादिसाधारण्येन चक्षुरादीनामेव प्रमाणतया ग्रहणालाभात् प्रमेयादिशब्दानामपि प्रमाविषयाद्यर्थकानामात्मशरीरादिषु द्वादशसु व्यवस्थित्यभावाच्च। अतो गौतमीयेषूद्देशेषु नामविशेषितैव सर्वत्र वस्तुनः प्रतिपत्तिरित्यस्ति लक्षणानुगतिः। 'ब्रह्मजिज्ञासे'त्यत्र तु ब्रह्मणो न नामविशेषिततया प्रतिपत्तिः किं तु स्वरूपतो गुणतश्च बृहत्त्वेन प्रवृत्तिनिमित्तेन। अन्यथा प्रथमसूत्रेण ब्रह्मणो जीवान्यत्वासिद्ध्या तदधीननिर्णयस्य प्रयोजनस्य ततो निर्णयालाभात्। न च ब्रह्मलक्षणवर्णनात्प्रागेव ब्रह्मशब्दार्थावधारणे व्यवहारस्तल्लक्षणस्य प्रयोजनं न स्यादिति वाच्यम्। स्वरूपतो गुणतश्च बृहत्त्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तस्य जगत्कारणत्वस्य ब्रह्मलक्षणस्य च मन्त्रार्थवादादिभिः प्रशस्यमानेषु बहुषु देवताविशेषेषु शङ्किततया तेषां मध्ये किं ब्रह्मेत्यनवधारणप्राप्तौ लक्षणसूत्रस्य देवतान्तरेभ्यो लक्षणव्यावर्तनेनेतरव्यावृत्तशिवैकान्तिकब्रह्मत्वव्यवस्थापनार्थत्वात् तदुपजीवनेन 'ब्रह्मविदाप्नोतिपर'मित्यादिषु ब्रह्मशब्देन शिव एव ग्राह्य इत्येवं प्रकारेण व्यवहारार्थत्वाच्च। अत एव चात्र व्यावृत्तिपूर्वकमेव व्यवहारप्रयोजनसिद्धिरित्यनुनिष्पादितया व्यवहारो न प्रयोजनमित्यभिप्रेत्य प्रथमसूत्रभाष्ये ब्रह्मलक्षणेनेतरव्यावृत्तिसिद्धिर्दर्शिता। न च वाच्यमुद्देशलक्षणे मा भूत् नामविशेषितत्वविशेषणमिति। तदभावे त्रिविधास्य शास्त्रस्य प्रवृत्तिः उद्देशो लक्षणं परीक्षा चेति शास्त्रप्रवृत्तेस्त्रैविध्यसङ्कीर्तनस्याप्युद्देशत्वापत्तेः। तज्जन्यायां विधात्रयजिज्ञासायां वस्तुतस्तदन्तर्गतलक्षणविषयत्वस्यापि सत्वात्। न च 'लक्षणमात्रविषये'ति विशेषणीयम्। एवमपि 'ब्रह्मजिज्ञासे'त्यत्र ब्रह्मसङ्कीर्तने उद्देशत्वासिद्धेः तत्र तृतीयाधिकरणप्रभृतिनिरूपयिष्यमाणप्रमाणजिज्ञासाजननार्थत्वस्यापि सत्त्वात्। अत एव 'अथातो धर्मजिज्ञासे'त्यत्र धर्मसङ्कीर्तने स्वरूपप्रमाणोभयजिज्ञासाजननार्थत्वमस्तीति को धर्मः कथंलक्षणक इति जिज्ञासाद्वयमपि दर्शितम्। न च लक्षणत्वप्रकारकत्वं जिज्ञासायां विशेषणमुपादेयम्। असाधारणधर्मत्वप्रकारकत्वापेक्षया नामप्रकारकत्वस्य लघुत्वात्। विशेषणयोर्घटितघटकभावाभावेन भिन्नविशेष्यविशेषणत्वेन चोपस्थितिलाघवाभावेऽपि वस्तुलाघवसत्त्वात् उद्देशपदप्रवृत्तिनिमित्तरूपलक्षणविचारे वस्तुलाघवस्याप्यादरणीयत्वात्। न चैवमतिलाघवान्नाम्ना वस्तुप्रतिपत्तिमुद्दिश्योच्चारणमुद्देश इत्येतावदेव लक्षणं स्यादिति वाच्यम्। विदितचैत्रपुत्रलक्षणं तन्नाममात्रजिज्ञासुं प्रति मैत्रनामा चैत्रपुत्र इति वाक्यस्याप्युद्देशत्वापत्तेः। न च नाममात्रेण न तु तदतिरिक्तप्रकारेणापीति विशेष-

---

(१) 'समानतन्त्रसिद्धः प्रतितन्त्रासिद्धः' इति च पाठः। (२) 'मेवेदं लक्षण' इति ङ पाठः। (३) 'करणार्थग्रहणेऽप्यालोकादि' इति घ पाठः। (४) 'तदनन्तर्गतलक्षणविषयत्वस्यापि न स्यात्' इति. घ ङ पाठः। (५) 'घटितघटकाभावादेवाभावेन' इति. ङ पाठः।

णीयम् । पदार्थमात्रोद्देशके प्रमाणादिसूत्रे तेषां तत्त्वज्ञानविषयत्वेनापि विशेषणात् । विदितसामान्यलक्षणं प्रति विशेषोद्देशकेषु 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी'त्यादिसूत्रेषु प्रमितिजनकत्वादिनापि विशेषणाच्चोद्देशमात्रे लक्षणस्यासम्भवापत्तेरिति एतदपि न युक्तम् । संशयप्रयोजनाद्युद्देशेष्वव्याप्तेः । प्रमाणादिसूत्रेऽपि संशयादिशब्दानां लोकप्रसिद्धार्थपरत्वेन तेषां प्रवृत्तिनिमित्तसमर्पकत्वसम्भवात् । न चाप्रसिद्धानामुद्देशे नाम[1]विशेषितप्रतिपत्तिरिति तत्सहपाठमात्रात्प्रसिद्धानामपि तथानियमः । अविदितविष्णुमित्रं प्रति देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति प्रयोगे व्यभिचारात् । न च तत्र देवदत्तयज्ञदत्तवदत्रापि संशयादिषु लक्षणाकाङ्क्षाकथने[2] न स्यातामिति वाच्यम् । परीक्षितव्यविशेषसद्भावेन परीक्षाधर्मितया लक्षणानुवादोपपत्तेः लक्षणविप्रतिपत्तिनिरासार्थत्वोपपत्तेश्च । तस्मान्नामविशेषितत्वमपहाय लक्षणत्वप्रकारत्वं जिज्ञासायां विशेषणं कार्यमिति न ब्रह्मण उद्दिष्टत्वनिर्देशे काचिदनुपपत्तिः । अथापि स्याल्लक्षणत्वप्रकारकजिज्ञासाजननोद्देश्यकवस्तुसङ्कीर्तनमुद्देश इति वक्तव्यम् । न तु लक्षणत्वप्रकारकजिज्ञासाजनकवस्तुसङ्कीर्तनमात्रमुद्देश इति । प्रमाकरणं प्रमाणमिन्द्रियजन्यं ज्ञानं प्रत्यक्षमित्यादिवाक्येषु प्रमाणादिलिलक्षयिषयोच्चरितेषु प्रमेन्द्रियादिसङ्कीर्तनस्याविदितप्रमादितत्त्वं प्रति तज्जिज्ञासाजनकत्वेन तदुद्देशत्वापत्तेः । न च ब्रह्मजिज्ञासासूत्रे ब्रह्मसङ्कीर्तनं लक्षणजिज्ञासाजननार्थं किं तर्हि विषयप्रयोजनप्रतिपादनार्थमित्येतदपि प्रमाणाद्युद्देशप्रतिबन्द्यैव निरस्तम् । तदपि हि विषयप्रयोजनप्रतिपादनार्थमेव । तद्यदि लक्षणजिज्ञासाजननार्थमपि इदमपि तथास्तु । अपि चात्र ब्रह्मसङ्कीर्तनस्य लक्षणानुसारेणानुद्देशरूपत्वेऽपि किं तद्ब्रह्म यज्जिज्ञास्यमित्युद्देशकार्यलक्षणजिज्ञासाजनकत्वं तावदस्ति इष्ट्यनङ्गस्यापि गोदोहनस्येव तदङ्गचमसकार्यजनकत्वम् । तथा च गुरुमतानुसारेण गोदोहनप्रयोगयुक्ताया इष्टेः किञ्चिदङ्गवैकल्येऽपि तत्कार्योपकारशालित्वात्समग्राङ्गत्वव्यवहारवदनुद्देशेऽपि ब्रह्मण उद्देशकार्यलक्षणाकाङ्क्षाशालित्वादुद्दिष्टत्वनिर्देशः । तदाकाङ्क्षानुसारेणावसरसङ्गतिश्चोपपद्यत इत्यास्तां विस्तरः । नन्वेवमप्यवसरसङ्गतिरित्येतन्नोपपद्यते जन्मादिसूत्रस्य लक्षणधर्मिकतत्सम्भवासम्भवपरीक्षार्थत्वेन लक्षणप्रदर्शनार्थत्वाभावात् । अत एव लक्षणाभिधाय्यधिकरणमिति पूर्वपक्षसिद्धान्तशाल्यधिकरणरूपत्वं भाष्ये प्रदर्शितम् । तदनुसारेण च किंशब्दः प्रागाक्षेपार्थतया व्याख्यातः । यदि च तस्याक्षेपार्थत्वं न स्यात्तदानीमवसरसङ्गतिरेव स्यान्नाक्षेपसङ्गतिरिति । उच्यते जन्मादिसूत्रं श्रुतिसिद्धं लक्षणं प्रदर्श्य तत्सम्भवासम्भवपरीक्षासूचनार्थं न तु तदप्रदर्श्य केवलं परीक्षार्थम् । तत्र कण्ठतो लक्षणस्यैव प्रदर्शनान्न्यायशास्त्रे द्वितीयाध्यायगतप्रमाणादिपरीक्षासूत्रजातव्यतिरेकेण प्रथमाध्यायगततल्लक्षणसूत्रजातवदिह ब्रह्मलक्षणप्रदर्शनार्थस्यान्यस्य सूत्रस्याभावाच्च । तथा च लक्षणप्रदर्शनांशेनावसरसङ्गतिः तदाक्षेपांशेनाक्षेपसङ्गतिश्चेत्युभयमुपपद्यते । न च वाच्यं लक्षणप्रदर्शनमात्रपरमिदं सूत्रं न तु तत्सम्भवासम्भवविचारपरमपि । जैमिनिना प्रत्यक्षसूत्रादिभिरिव बादरायणेनापि न विलक्षणत्व (ब्र०-२-१-४) सूत्रादिभिर्लक्षणपरीक्षायाः प्रवर्तयिष्यमाणत्वात् । तथा चावसरसङ्गतिरेवोपपद्यते नाक्षेपसङ्गतिरिति । श्रुत्यप्रदर्शितधर्मलक्षणप्रदर्शनमात्रे चोदनासूत्रस्य पर्यवसानसम्भवेऽपि 'यतोवे' त्या-

(१) 'नामविशेषतः प्रतिपत्ति' रिति. च. पाठः । (२) 'संशयादिलक्षणाकाङ्क्षा तत्कथने' इति घ. ङ. पाठः ।

**तल्लक्षणाभिधायकं द्वितीयाधिकरणमवतारयति भगवान्सूत्रकारः—**

***॥ जन्माद्यस्य यतः ॥ २ ॥**

**ज्ञाते लक्ष्ये लक्षणवैयर्थ्यादज्ञाते तदाकाङ्क्षानुपपत्तेः कथमत्र ब्रह्मणो लक्षणकथनप्रसङ्ग इति न शङ्कनीयम् । अध्यायनादापाततो ज्ञाते ब्रह्मणि तद्योगात् ।**

दिश्रुतिप्रदर्शितब्रह्मलक्षणानुवादमात्रे जन्मादिसूत्रस्य पर्यवसानासम्भवेन लक्षणोपपादकन्यायसूचनार्थत्वस्यावश्यवक्तव्यत्वात् । भाष्यकृताप्यधिकरणमवतारयतीति वाक्येनाधिकरणं प्रवर्तयतीत्यर्थकेन लक्षणसम्भवासम्भवविचारस्य सूत्रार्थत्वेनावतारितत्वाच्च । 'न विलक्षणत्वा'दि (ब्र०-२-१-४-)सूत्रैस्तु विधान्तरेण परीक्षा करिष्यते । अतो युक्तं पूर्वाधिकरणेन सङ्गतिद्वयम् । वेदान्तार्थविचाररूपतयाशास्त्रसङ्गतिः कारणवस्तुविषयतया द्विकसङ्गतिः कारणवस्तुविषयवाक्यसमन्वयार्थतयाऽध्यायसङ्गतिः स्पष्टब्रह्मलिङ्गवाक्यविषयतया पादसङ्गतिश्च स्फुटत्वाद्भाष्ये न प्रदर्शिता ॥ * ॥ जन्माद्यस्य यतः ॥ २ ॥ द्विविधो लक्षणदोषः लक्षणसामान्यदोषः तत्तल्लक्षणविशेषदोषश्च । तत्र लक्षणसामान्ये तद्दोषनिराकरणेन लब्धोन्मेषे विशिष्य ब्रह्मलक्षणमुदाहृत्य तस्य दुष्टत्वादुष्टत्वचिन्तनमवकाशं लभत इत्यभिप्रेत्य लक्षणसामान्यदोषं तावन्निराकर्तुमुद्भावयति—ज्ञात इत्यादिना । ननु लक्ष्यज्ञानार्थो न लक्षणप्रश्नः येन ज्ञाते लक्ष्ये लक्षणवैयर्थ्यमज्ञाते प्रश्नमूलतद्बुभुत्सानुपपत्तिः स्यात् किं तु लक्षणज्ञानार्थः. न हि व्याप्त्याकाङ्क्षादिलक्षणप्रश्नः तत्स्वरूपज्ञानार्थ इति वक्तुं शक्यम् । ततः प्राग्व्याप्त्याकाङ्क्षादिपरिज्ञानाभावे बालाङ्गनादिसाधारणस्य धूमाद्वह्न्यनुमानस्य शब्दादर्थप्रत्ययस्य चासम्भवप्रसङ्गात् । तस्माल्लोके कश्चन्द्र इत्यादिप्रश्नः किंलक्षणश्चन्द्र इत्येवमादिरूपेण लक्षणविषयः । प्रकृष्टप्रकाशश्चन्द्र इत्याद्युत्तरमपि लक्षणज्ञापनार्थं न तु लक्षणमुखेन लक्ष्यज्ञापनार्थमित्याशङ्कायामप्युक्तमेवापगमे दूषणमावर्तनीयम् । ज्ञाते लक्षणे लक्षणोक्तिवैयर्थ्यात् अज्ञाते तदाकाङ्क्षानुपपत्तेरिति । कथमत्रेति । लक्षणसामान्ये लब्धोन्मेषे हि विशिष्य कस्यचिल्लक्षणप्रस्तावो युज्यते नान्यथेति भावः । आपाततो ज्ञातस्य लक्ष्यस्य निश्चयो लक्षणस्य प्रयोजनमिति न तद्वैयर्थ्यम् । नापि लक्ष्यबुभुत्सानुपपत्तिरिति शङ्कितस्य लक्षणसामान्यदोषस्य परिहारं सूचयन्प्रकृतलक्ष्ये ब्रह्मण्यापातज्ञानमुपपादयति—अध्ययनादिति । अयमाशयः। लक्षणेन लक्ष्यज्ञानमेव सर्वत्र लक्षणकथनस्य मुख्यं प्रयोजनम् । लक्षणज्ञानं तु तदुपयोगितया लक्ष्यते ज्ञाप्यतेऽनेनेति करणार्थल्युडन्तस्य लक्षणशब्दस्य ज्ञापक एव प्रसिद्धिप्राचुर्यात् ज्ञाप्ये तथा प्रसिद्ध्यभावात् । 'अनुर्लक्षणे' (पा०-१-४-८४-) 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' (पा०-१-४-९०) 'इत्थंभूतलक्षणे'(पा०-२-३-२१-) इत्याद्यभियुक्तव्यवहारेषु हि ज्ञापक एव लक्षणशब्दः प्रसिद्धतरः। नन्वापातज्ञानस्यापि धर्मिणि निश्चयरूपत्वान्न तत्र स्वरूपेण निश्चयो लक्षणेन कर्तव्यः । रूपान्तरेण चेत्तत्किं रूपान्तरमिति चेदुच्यते । क्वचिच्छब्दविशेषवाच्यत्वं क्वचित्तत्तत्प्रवृत्तिनिमित्तासाधारणधर्मः । क्वचिदुभयं निर्धारणीयम् । तत्र 'प्रकृष्टप्रकाशश्चन्द्र'इति लक्षणेन चन्द्रे चन्द्रपदवाच्यत्वं निर्धारणीयम् । तथा हि । वियति ज्योतिर्मण्डलमुदीक्षमाणस्यास्ति कश्चिच्चन्द्रप्रातिपदिकस्यार्थः । स चास्मिन्ज्योतिर्मण्डले वर्तत इत्ये-

(१)'द्वितीयाधिकरणसूत्रमवतारयति'इति पाठान्तरम्।(२)'लक्षणाचेतनमात्रे ब्रह्मादिसूत्रपर्यवसानासम्भवेन'इतिद्वि.पाठः।

तावदवगतवतोऽस्मिञ्ज्योतिर्मण्डले कश्चन्द्र इति पृष्टवतस्तदभिज्ञोपदिष्टेन लक्षणवाक्येन चन्द्रस्वरूपं वा तत्र चन्द्रत्वं वा न ज्ञापनीयम्। नक्षत्रादिस्वरूपवच्चन्द्रस्वरूपस्य तत्समानवित्तिवेद्यायाः प्रकाशसंस्थानविशेषाभिव्यङ्ग्यायाश्चन्द्रत्वजातेश्च प्रत्यक्षत्वात्। यद्यपि चन्द्रे चन्द्रशब्दोल्लेखी चन्द्रत्वे चन्द्रत्वशब्दोल्लेखी वा प्रत्ययो न जायते। तयोः शक्तिग्रहाधीनत्वात्। तथापि वस्तुतश्चन्द्रत्वशब्दवाच्ययोर्व्यक्तिजात्योरनिवार्यं प्रत्यक्षम्। एवं चन्द्रस्य नक्षत्रादिभ्यो व्यावृत्तिरपि प्रत्यक्षैव। अचन्द्राद्व्यावृत्तोऽयमित्येवंरूपा तु व्यावृत्तिधीस्तदा न भवति। तस्याः प्रकृष्टप्रकाशविषयचन्द्रशब्दवाच्यत्वग्रहाधीनत्वात्। ननु वस्तुतो यश्चन्द्रत्वजातिविशिष्टः स चन्द्रशब्दवाच्य इति प्रागेवाप्तवाक्यादिनावगतवतश्चन्द्रत्वजातिं च व्यक्तिविशेषे पश्यतः प्रकृष्टप्रकाशवाक्यमनपेक्ष्य तत्र चन्द्रशब्दवाच्यत्वनिर्णयो भवितुमर्हतीति सोऽपि न लक्षणफलमिति चेन्न। प्रकृष्टप्रकाशाभिव्यङ्ग्यायां दृश्यमानजातौ चन्द्रत्वशब्दशक्तिग्रहवतस्तन्निर्णयसम्भवेऽपि तद्रहितस्य निर्णयासम्भवात्। न हि प्रकृष्टप्रकाशपदशक्तिग्रहरहितस्य वस्तुतः प्रकृष्टप्रकाशं चन्द्रं पश्यतोऽपि 'प्रकृष्टप्रकाशश्चन्द्र'इत्युपदिष्टलक्षणस्यापि तत्र चन्द्रशब्दवाच्यत्वधीर्जायते। तस्मात्प्रकृष्टप्रकाशवाक्येन चन्द्रे चन्द्रपदवाच्यत्वमेव निर्धारणीयम्। यथा 'गोसदृशो गवय' इत्यादिवाक्येन गवये गवयशब्दवाच्यत्वम्। अत एवाङ्गुलीनिर्देशेन 'अयं चन्द्रशब्दवाच्य' इति बोधितस्य प्रयोजनान्तरार्थं प्रकृष्टप्रकाशवाक्यापेक्षा न दृश्यते। चन्द्रे चन्द्रत्वजातिं चन्द्रशब्दवाच्यत्वं च जानन् द्वितीयायामेव तिरोहितस्य चन्द्रस्य नक्षत्रसमानाकारकोटिमात्रदर्शनेन घटे शरावादिसमानाकारैकदेशदर्शनेन घटत्वमिव तत्र चन्द्रत्वमनिर्धारयन्तं प्रति कथितेन 'शाखाग्रं चन्द्र' इति लक्षणेन तत्र चंन्द्रत्वरूपासाधारणधर्मो निर्धारणीयः। प्रकृतलक्ष्ये तूभयं निर्धारणीयम्। तथा हि 'ब्रह्मविदाप्नोति पर'मित्यादिवाक्याध्ययनादापाततस्तावदिदमवगम्यते। अस्ति किञ्चिद्ब्रह्मप्रातिपदिकस्य वाच्यं बृहत्त्वार्थानुगमात् स्वरूपतो गुणतो विभूतितश्च निरतिशयमहिमशालीति। तत्किं ब्रह्मेति श्रुतिष्वन्वेषणे मन्त्रार्थवादादिप्रसिद्धमहिमातिशयेषु हरिहरहिरण्यगर्भेन्द्रचन्द्रवह्निसूर्यादिष्वनिर्धारणेन ब्रह्मबुद्धिः प्रसजति पतिंवरायाः कन्याया इव स्वयंवरमण्टपसमागतेषु बहुषु राजकुमारेषु दूरे दृश्यमानेष्वाप्तमुखाकर्णितानेकगुणस्वाभिमतवरबुद्धिः। तत्राप्तदर्शितेन स्पृहणीयेन स्वाभिमतवरलक्षणेन पुरुषविशेषे स्वाभिमतवरबुद्धिरिव 'यतो वे'त्यादिब्रह्मलक्षणेन श्रीमति साम्बशिवे ब्रह्मबुद्धिर्व्यवतिष्ठते। अयमेव निरतिशयमहिमशालिब्रह्मशब्दवाच्यश्च न तु सृष्टिप्रलयविषयबहुवाक्यावगतसृज्यसंहार्यभावा इतरे देवताविशे[illegible] इति। यद्यप्येवं लक्षणवाक्यश्रवणमात्रेण 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' सं[illegible]अजात इत्येव कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मा पाहि नित्य'मित्याद्यौपनिषद[illegible] इति [illegible]क्यनिरुकुरुम्बप्रदर्शितलक्षणानुगमसम्भावनः शिव एव ब्रह्मेत्यवगतिः संभवति। तथैव प्[illegible]धर्म्यंशे [illegible]करणे अथशब्दव्याख्यानावसाने दर्शितम्। तथाप्यसाववगतिर्न स्थिरीभवति। 'स[illegible]र्थावगाहित्वम्येदमग्र आसीत्' "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते[illegible] जै० १-२-१९ [illegible]यगर्भः समवर्तताग्रे' 'एको ह वै नारायण आसीत्'इत्यादिवाक्यैर्लक्षणस्य बहुषु प्रतीय[illegible]र्थावगाहिनि ज्ञात्। अतो जगत्कारणं ब्रह्म सत् ज्ञानमानन्दो हिरण्यगर्भो हरो हरिर्वेत्या-

दिरूपे संशये सति सच्चिदानन्दरूपः शिव एव जगत्कारणं ब्रह्मेति लक्षणस्य शिवैकान्त्यव्यवस्थापनाय जन्मादिसूत्रसूचितन्यायावलम्बनमधिकरणं प्रवर्तयिष्यते । नन्वेकस्मिन्धर्मिणि विरुद्धनानाप्रकारकं ज्ञानं संशय इति नैयायिकानां घण्टाघोषः । कथमिह नानाधर्मिषु ब्रह्मत्वरूपैकधर्मप्रकारकः संशय उदाह्रियते । उच्यते । एकत्रानेकधर्मप्रकारकसंशयवदनेकत्रैकधर्मप्रकारकोऽप्यस्ति संशयस्सकलजनसिद्धः । यथास्मिन्समाजे मित्रायाः पतिर्वर्तत इत्यवगतवतस्तस्याः पतिरयमयं वेति संशयः । नैयायिकोक्तलक्षणासङ्गृहीतत्वात्तथाभूतः संशयो नाङ्गीकर्तुं युक्त इति चेन्न । तान्त्रिककल्पितलक्षणानुसारेण लोकप्रसिद्धलक्ष्यत्यागायोगात् । अन्यथा 'विरुद्धैकप्रकारकानेकविशेष्यकः संशय' इति लक्षणकल्पनेन तदसङ्गृहीतमयं स्थाणुः पुरुषो वेति ज्ञानं संशयो न भवतीत्यभ्युपगन्तारं को वारयेत् । नन्वनेकधर्मगतमेकधर्मिनिष्ठतानर्हत्वं विरुद्धत्वं तदेकत्र धर्मे न सम्भवतीति चेन्न । एकधर्मगतमनेकनिष्ठतानर्हत्वं विरुद्धत्वं तदनेकत्र धर्मे न सम्भवतीत्यपि वक्तुं शक्यत्वात् । एकत्र स्थाणुत्वपुरुषत्वे विरुद्धे इतिवदनेकत्रैकभार्यापतित्वं विरुद्धमित्यप्यनुभवस्य तुल्यत्वात् । यदि विरुद्धत्वमनेकगतं वक्तव्यमिति नियमः । अनेकत्रैकभार्यापतित्वं विरुद्धमिति व्यवहारस्यैकस्या भार्याया अनेकः पतिर्विरुद्ध इति धर्मिविरोधे पर्यवसानं स्थाणुत्वपुरुषत्वयोरेकवृत्तित्वं विरुद्धमिति व्यवहारस्येवेत्यङ्गीक्रियते । तथाप्येकप्रकारकविरुद्धानेकविशेष्यकं ज्ञानं संशय इति लक्षणकल्पनेन स्थाणुपुरुषादिसंशयोऽपलप्येत । तस्मादनुभवसिद्धद्विविधसंशयसङ्ग्रहाय विरुद्धानेकैकवैशिष्ट्यावगाहि ज्ञानं संशय इति लक्षणं कल्पनीयम् । विरोधोऽत्र न सहानवस्थानलक्षणः किं त्वेकसम्बन्धाभावः । एकाधिकरणसम्बन्धाभावरूपात्सहानवस्थानादस्य लघुत्वात् । अयं च विरोधो धर्मिणोरेकधर्मसम्बन्धाभावरूपो धर्मयोरेकाधिकरणसम्बन्धाभावरूप इति द्विविधेऽपि संशयेऽनुगत एव । न चैवमपि प्रतिनियतगुणकर्मादिधर्मानधिकरणतया विरुद्धयोर्घटयोर्घटत्ववैशिष्ट्यावगाहिनि समूहालम्बनेऽतिव्याप्तिः । लक्षणप्रविष्टैकसम्बन्धाभावरूपस्य विरोधस्य विवक्षितत्वात् । न चैवमप्यनेकस्यैकेन यत्सम्बन्धाभावस्तदन्यसम्बन्धावगाहिनि 'मित्रा पत्युर्भ्रातुश्च हितैषिणी'ति ज्ञानेऽतिव्याप्तिः । यत्सम्बन्धाभावो विरोधः तदवगाहित्वस्य विवक्षितत्वात् । वस्तुतस्तु सर्वमिदं लक्षणं न युक्तम् । अविरोधिनोर्विरोधभ्रमजन्ये 'वृक्षः पनसो वे'ति संशयेऽव्याप्तेः । विरोधिनोरविरोधिभ्रमजन्ये 'वृक्षोऽयं भल्लूकश्चे'ति विपर्ययेऽतिव्याप्तेश्च । न च लक्षणे वस्तुतो विरुद्धत्वं न विशेषणं किं तु भासमानविरोधत्वमिति वाच्यम् । पीतत्वशङ्खत्वे विरुद्धे इत्यवगच्छतो दोषवशाज्जायमाने पीतशङ्खविभ्रमे तथाप्यतिव्याप्तेः । ननु, तस्मिन्नेव ज्ञाने भासमानत्वं विरोधे विशेषणम् । पीतशङ्खविभ्रमे तयोर्विरोधो न भासते किं तु तटस्थज्ञानान्तर एव । वस्तुतः पीतत्वशङ्खत्वयोर्विरोधेऽपि दोषवशान्म[illegible] पीत भासत इति व्यवहारः तटस्थज्ञानविषयस्यैव विरोधस्यानुवाद इति चेन्न । पी[illegible] क्वचिच्छल्म शङ्खविभ्रमो यकाले विरोधाभानसत्त्वे तदुपनीततया पीतशङ्खविभ्रमेऽपि विरोधाभानस्[illegible]यम् । तत्र वारयितुम[illegible] क्यत्वात् । अन्यथा संशयस्थलेऽपि तटस्थज्ञान एव विरोधो भासते न संशय[illegible]हे । वियति ल्पनापर[illegible] लक्षणस्याऽसम्भवप्रसङ्गात् । किं च 'धूमवानयं पर्वतो यदि निर्वह्निस्स्यान्निर्धूम[illegible]तिर्मण्डले वर्तत ति तर्केऽ[illegible] तिव्याप्तिः । अपि च 'परस्परविरुद्धस्थाणुत्वपुरुषत्ववानय'मिति लौकिका[illegible]सानासम्भवेन' इति भ्रमे 'भा[illegible]

पभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता । अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तते'ति काव्यश्लोकजन्ये विरोधाभासतन्मूलोत्प्रेक्षालङ्कारोपयोगिनि विरुद्धधर्मैरिति विशेषणबललब्धविरुद्धत्वावगाहिनि मित्रजित्त्वतदभावविगतचारदृक्त्वचारदृक्त्ववानयमित्याहार्यज्ञाने च विरोधाभानस्य कथञ्चिदप्यपलपितुमशक्यत्वादतिव्याप्तिरनिवार्या । न चानाहार्यत्वमपि लक्षणे विशेषणम् । लौकिकानां स्थाणुत्वेनावगत एव स्थाणुः पुरुषो वेत्याहार्यसंशये 'जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः । किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जना' इति काव्यश्लोकजन्ये काव्यशोभोपयोगिन्याहार्यसंशये चाव्याप्तिः । परस्परविरुद्धस्थाणुत्वपुरुषत्ववानयमिति शब्दजन्यज्ञानेऽतिव्याप्तिश्च । किं च विरुद्धानेकविषयकज्ञानस्य संशयत्वे धर्म्यंशेऽपि तस्य ज्ञानस्य संशयत्वापत्तिः । विरुद्धानेकविषयत्वावच्छेदेन संशयत्वमित्यभ्युपगतावेकैककोट्यंशे संशयत्वाभावापत्तिः । ननु, तर्हि परस्परप्रतिक्षेपरूपवाकारार्थावगाहि ज्ञानं संशय इति लक्षणमस्तु । तथाहि अस्त्याहार्यानाहार्यसाधारण्येन संशयेष्वेतल्लक्षणं तेषु स्थाणुश्चेदयं न पुरुषः पुरुषश्चेदयं न स्थाणुरित्येवमादिरूपेण परस्परप्रतिक्षेपप्रतीतेः । न चैतल्लक्षणमुदाहृतेष्वाहार्यभ्रमेष्वस्ति । तेषु स्थाणुत्वपुरुषत्वादीनां समुच्चयावभासेन परस्परप्रतिक्षेपाप्रतीतेः । नन्वेवमपि परस्परप्रतिक्षेपकस्थाणुत्वपुरुषत्ववानित्याहार्यभ्रमेऽतिव्याप्तिः । व्रैहपुरोडाशा यवपुरोडाशा वेष्टिः कार्या बृहत्पृष्ठो रथन्तरपृष्ठो वा सोमयागः कार्य इति विकल्पितसाधनद्वयावच्छिन्नकर्मविषयशास्त्रार्थोपदेशवाक्यार्थजन्यज्ञाने चातिव्याप्तिरिति चेन्न । सर्वात्मना परस्परप्रतिक्षेपावगाहित्वस्य लक्षणे विवक्षितत्वात् । उदाहृताहार्यभ्रमे तस्मिन्नेव धर्मिणि स्थाणुत्वपुरुषत्वयोः समुच्चयस्यापि प्रतीतेः । अत एव तज्जन्यव्यवहारे नास्ति वाकारप्रयोगः । समुच्चयं विना प्रतिक्षेपमात्रमवगाहमानस्यैव ज्ञानस्य तत्प्रयोगहेतुत्वात् । यद्यपि विकल्पितसाधनद्वयावच्छिन्नकर्मव्यवहारे वाकारप्रयोगोऽस्ति । तथापि तस्मिन्नेवेष्ट्यादौ धर्मिणि प्रयोगान्तरे यवादिप्राप्तिमनिरुध्य व्रीह्यादिप्राप्तिमत्प्रयोगमात्रे यवादिप्रतिक्षेप इति न सर्वात्मना तत्तद्धर्मिणि परस्परप्रतिक्षेपः । न हि ' व्रीहिभिर्यवैर्वा यष्टव्य' मिति विकल्पोपदेशो व्रीहयो यवान्यवाश्च व्रीहीन्सर्वात्मना यागात्प्रतिक्षिपन्ति । तथासत्यस्य शास्त्रस्यानिर्णायकत्वेनाननुष्ठापकत्वेन वाऽप्रामाण्यप्रसङ्गात् । तस्माद्विकल्पवाक्येषु वाकारस्य तस्मिन्धर्मिणि सर्वात्मना प्रतिक्षेपो नार्थः । किंतु तस्मिन्धर्मिणि प्रयोगान्तरे तत्प्राप्तिमनिरुध्य तत्तत्प्रयोगे प्रतिक्षेपः । उभयमपि वाकारार्थः प्रयोगबलादवसीयते । अत एव व्रीहिभिर्यवैर्वा यष्टव्यमिति सन्देहेन पृष्टवन्तं प्रति व्रीहिभिर्यवैर्वा यष्टव्यमिति प्रश्नसमानाकारमेव वाक्यं निर्णायकं प्रश्नमूलसन्देहनिवर्तकमनुष्ठापकं च दृश्यते । प्रश्नवाक्ये वाकारस्तस्मिन्धर्मिणि सर्वात्मना पक्षान्तरप्रतिक्षेपार्थः । उत्तरवाक्ये तस्मिन्धर्मिणि प्रयोगविशेषावच्छिन्ने तत्प्रतिक्षेपार्थ इति विशेषसद्भावात् । यदंशे परप्रतिक्षेपरूपवाकारार्थावगाहित्वं तदंशे संशयत्वमिति न धर्म्यंशे संशयत्वस्य नाप्येकैककोटौ संशयत्वाभावस्य च प्रसङ्गः। परप्रतिक्षेपकत्वरूपवाकारार्थावगाहित्वमात्रं तु न संशयलक्षणम् । 'विधिर्वा स्यादपूर्वत्वाद्वादमात्रमनर्थक'मित्यादि(जै०१-२-१९)सूत्रवाक्यजन्ये 'औदुम्बरो यूपो भवती'त्यादीनामर्थवादत्वप्रतिक्षेपकवाकारार्थावगाहिनि ज्ञानेऽतिव्याप्तेः । किं त्वनेकगतं सर्वात्मना परस्परप्रतिक्षेपमवगाहमानं ज्ञानं

संशय इत्येव लक्षणम् । तथाभूतस्य ज्ञानस्य संशयत्वं तु परप्रतिक्षेपरूपवाकारार्थावगाहिन्येकैकांशेऽपीत्येतावान्विशेषः । परस्परप्रतिक्षेपस्त्वनेकधर्मिकसंशयेऽनेकस्य धर्मिणः एकधर्मवत्त्वेऽनेककोटिकसंशये त्वनेकस्य धर्मस्यैकधर्मनिष्ठत्व इति विशेष इति । इदमपि लक्षणं न युक्तम् । व्रीहिभिर्यवैर्वा इष्टिप्रयोगः कर्तव्य इति सन्देहेन पृष्टवन्तं प्रति पक्षद्वयेऽपि साद्गुण्यसम्भवमभिप्रेत्य प्रयुक्तेन 'व्रीहिभिर्यवैर्वायं प्रयोगः कर्तव्य'इति वाक्येन जनिते 'मयेदानीं गन्तव्यं स्थातव्यं वे'ति संशयेन पृष्टवन्तं प्रति पक्षद्वयेऽपि फलाविशेषमभिप्रेत्य प्रयुक्तेन 'गच्छ वा तिष्ठ वे'ति वाक्येन जनिते 'चैत्रः श्यामो गौरो वे'ति सन्देहेन पृष्टवन्तं प्रति तत्र श्यामत्वगौरत्वान्यतरनिर्धारणं मम नास्तीत्यभिप्रेत्य प्रयुक्तेन 'स श्यामो गौरो वेति नाहं वेदे'ति वाक्येन जनिते तादृशलोकरीत्यनुसारेण 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वे'त्याद्यर्थवादवाक्येन जनिते संशयत्वं निर्वक्तुं शक्यमित्यभिमानिनं प्रति तद्दूषयिषया प्रयुक्तेन 'संशयत्वं जातिर्वोपाधिर्वे'ति वाक्येन जनिते च ज्ञाने तथाप्यतिव्याप्तेः । किं च सर्वेषामेतेषां लक्षणानां तत्तल्लक्षणवाक्यजन्यज्ञानेष्वतिव्याप्तिः । ननु, चैकस्मिन्धर्मिणि विरोधिनानाप्रकारकमित्यादिलक्षणवाक्यजन्यज्ञानेषु ज्ञानगतं विरोधिनानाप्रकारकत्वादिकं प्रकारः न त्वर्थगतं तत्तद्विशेषणवैशिष्ट्यमिति नास्ति लक्षणवाक्यजन्यज्ञानानां विशेष्यगततत्तद्वैशिष्ट्यविषयत्वरूपं तत्तत्प्रकारकत्वमिति चेन्न । प्रकारत्वस्य वैशिष्ट्यघटिततया ज्ञानगततत्तत्प्रकारकत्वभानेऽर्थगततत्तद्वैशिष्ट्यभानस्यावर्जनीयत्वेन तत्तत्प्रकारकत्वस्यापि सत्त्वात् । तस्मा'दनवधारणज्ञानं संशय' इति वृद्धनैयायिकोक्तं लक्षणं युक्तम् । अनवधारणत्वं च ज्ञानस्य ज्ञेयेन विषयविषयिभावसम्बन्धावान्तरविशेषः । न तु विषयकृतः कश्चिद्विशेषः । यथा 'दण्डी पुरुष' इति ज्ञानस्य दण्डेन प्रकारप्रकारिभावः । पुरुषेण विशेष्यतद्वद्भावश्च । न हि तद्व्यतिरेकेण दण्डपुरुषसंयोगा इति समूहालम्बनात् 'दण्डी पुरुष' इति विशिष्टज्ञानस्य कश्चिद्विशेषो लभ्यते । दण्डगतवैशिष्ट्यप्रतियोगित्वस्य पुरुषगतवैशिष्ट्यानुयोगित्वस्य च विषयीकरणं विशिष्टज्ञाने ततो विशेष इति चेन्न । दण्डपुरुषदण्डप्रतियोगिकपुरुषानुयोगिकसंयोगा इति समूहालम्बने तस्यापि सत्त्वात् । सम्बन्धतावच्छेदकसंयोगत्वादिप्रकारेण सम्बन्धविषयत्वं समूहालम्बने तं विना स्वरूपेण सम्बन्धविषयत्वं विशिष्टज्ञान इति तस्य ततो विशेष इति चेन्न । 'दण्डसंयुक्तपुरुषस्कन्धसंयुक्तदण्डश्चैत्र' इति विशिष्टज्ञाने सम्बन्धावच्छेदकप्रकारेणापि सम्बन्धविषयत्वस्य सत्त्वात् । स्वरूपेण वैशिष्ट्यविषयत्वस्य 'दण्डी पुरुषः' 'पुरुषे दण्ड' इति ज्ञानयोरविशेषेण तावता तयोः परस्परवैलक्षण्यासिद्धेश्च । ननु, ज्ञेयज्ञानसम्बन्धविशेषकृतविशेषणविशेष्यव्यवस्थया विशिष्टज्ञानसमूहालम्बनयोरुदाहृतविशिष्टज्ञानयोश्च वैलक्षण्यसिद्धावपि दीर्घबाहुर्बाहुदैर्घ्यवानिति विशिष्टवैशिष्ट्यज्ञानयोर्वैलक्षण्यं न सिद्ध्येत् । ज्ञानद्वयस्यापि बाहौ दैर्घ्ये च प्रकारप्रकारिभावसम्बन्धाविशेषादिति चेन्न । येन ज्ञानेन प्रकारप्रकारिभावसम्बन्धेन विषयीक्रियमाणे यस्मिन्विशेषणत्वं भासते तत्र ज्ञाने तत्तस्य विशेषणमिति व्यवस्थाङ्गीकारात् । विशेषणत्वं तु विशेष्यगतवैशिष्ट्यप्रतियोगित्वं साक्षाद्विशेषणनिरूपितसम्बन्धविशेषो वेत्यन्यदेतत् । ननु, विशिष्टज्ञाने विशेषणगतविशेषणत्वस्यापि भानाङ्गीकारे तत एव समूहालम्बनव्यावृत्तेः किं विशेषणे ज्ञानसम्बन्धविशेषकल्पनयेति चेन्न ।

जन्मादि अस्य यतः इति सूत्रपदच्छेदः । जन्मादिकं जन्मस्थितिप्रलयतिरोभा-

दण्डपुरुषदण्डगतपुरुषविशेषणत्वानीति समूहालम्बनवैलक्षण्याय तस्याप्यावश्यकत्वात् । न च विशेषणतात्वावच्छेदेन विशेषणत्वविषयत्वं समूहालम्बने तदनवच्छेदेन तद्विषयत्वं विशिष्टज्ञान इति ततो विशेषो वाच्यः । दण्डविशेषणकश्चैत्र इत्यादिविशिष्टज्ञाने तदवच्छेदेनापि विशेषणत्वविषयत्वसत्त्वात् । तस्माद्दीर्घबाहुर्बाहुदैर्घ्यवानिति विशिष्टज्ञानयोर्वैलक्षण्यसिद्धये तत्तद्विशेषणत्वविषयताकृत इव विशिष्टज्ञानसमूहालम्बनयोर्वैलक्षण्यसिद्धये प्रकारप्रकारिभाव इव ज्ञानज्ञेयसम्बन्धकृतोऽपि विशेषोऽङ्गीकर्तव्य एव । यद्यपि न्यायमते ज्ञानस्य ज्ञेयेन स्वरूपमेव सम्बन्धः । तथापि स्वरूपसम्बन्ध एव विशेषस्तैरगत्याभ्युपगन्तव्यः । घटाभावस्य घटेन प्रतियोग्यनुयोगिभावरूपस्वरूपसम्बन्धः भूतलेनाधाराधेयभावरूप इतिवत् । एवं च ज्ञानस्यानवधारणत्वं 'स्थाणुः पुरुषो वे'त्यादिज्ञानेष्वनेकधर्मविषय इव 'अयमयं वा चन्द्र' इत्यादिज्ञानेष्वनेकधर्मविषयेऽप्यनुभूयत इति लक्षणानुगमादनेकधर्मिविषयोऽपि संशयो युक्त एव । अतो युक्तमुक्तम् 'अध्ययनादापाततो ज्ञाते ब्रह्मणि तद्योगादि-ति'।'ब्रह्मविदाप्नोति पर' मित्यादिवाक्याध्ययनात् सामान्यतो निरतिशयबृहत्त्वेनावगते ब्रह्मणि मन्त्रार्थवादादिप्रसिद्धहरिहरादिदेवताविशेषाणां मध्ये 'अयमयं वा ब्रह्मे'ति विशिष्य सन्दिग्धे सति सकलदेवतान्तरव्यवच्छेदेन शिव एव ब्रह्मेति निर्णयार्थस्य लक्षणस्य युक्तत्वादित्यर्थः। अत्र केचिदाद्यस्य सर्गादौ प्राथमिकस्य हिरण्यगर्भस्य जन्म यतो भवति 'यो ब्रह्माणं विदधाति पूर्व'मिति श्रुतेस्तद्ब्रह्मेति सूत्रार्थमाहुस्तन्निरासं हृदि निधाय सूत्रपदविभागं दर्शयति–जन्मादीति। तद्गुणसंविज्ञानबहुव्रीहिणा कृत्यपञ्चकं ग्राह्यमित्याह–जन्मादिकमिति। जन्मप्रलयावुत्पत्तिनाशौ प्रसिद्धौ । स्थितिर्जन्मप्रलययोर्मध्ये प्रपञ्चस्यावस्थानम् । तिरोभावः संसारिवर्गस्य नित्यसिद्धज्ञानक्रियाशक्त्याद्यावरणं सकलसांसारिकानर्थमूलभूतबन्धाख्यम्।अनुग्रहस्ततो मोक्ष इत्येतानि परमेश्वरस्य सृष्टिपालनसंहारतिरोधानानुग्रहरूपस्वव्यापारसाध्यानि प्रपञ्चधर्मरूपाणि पञ्चकार्याणि । यद्यप्यनुग्रहः परमेश्वरधर्मः तथाप्यत्रानुग्रहशब्देन तत्साध्या संसारिवर्गधर्मरूपा बन्धनिवृत्तिर्लक्षणीया । प्रपञ्चधर्मजन्मादिसाहचर्यात् । यद्वा 'मुच्यते वत्सः स्वयमेवे'त्यत्र वत्सस्येवानुग्रहशब्दितमोचनव्यापारकर्मणः संसारिणः पक्वमलतया तीव्रभक्तिवैराग्यादियुक्ततया च सौकर्यातिशयेन कर्तृत्वविवक्षया तत्कर्तृकैर्जन्मादिभिस्सहानुग्रहस्य पाठः । ननु, जन्मादिपञ्चकस्य प्रपञ्चकर्तृकत्वमात्रमिह न विवक्षितम् । किं तु प्रपञ्चधर्मत्वम्। अत एव प्रपञ्चधर्मेण जन्मादिना ब्रह्मणः सम्बन्धाभावात्तस्य ब्रह्मलक्षणत्वासम्भवमाशङ्क्यान्यनिष्ठस्यापि तटस्थलक्षणत्वं सम्भवतीति समाधास्यते । एवं च परमेश्वरधर्मानुग्रहणं प्रति कर्मणः कर्तृत्वविवक्षायामप्यनुग्रहस्य प्रपञ्चधर्मत्वालाभात् जन्मादिसहपाठो न युक्त इति चेत् । उच्यते । सर्वत्र कर्मकर्तुः स्वव्यापारं प्रत्येव कर्तृत्वविवक्षा न तु स्वव्यापारानुकूलं कर्तृव्यापारं प्रति । अत एवोक्तं कैयटेन-'लुनातिस्तावद्द्विधा भवनोपसर्जने द्विधा भावने वर्तते । लुनाति केदारं देवदत्तः द्विधाभावं, तद्द्विधा भावयतीत्यर्थः । यदा तु केदारस्य सौकर्यातिशयविवक्षायां देवदत्तव्यापारो न विवक्ष्यते तदा द्विधाभवनमात्रे लुनातिर्वर्तते । अनेकार्थत्वाद्धातूना-

(१) 'न तदवच्छेदेन तद्विषयत्वं' इति च. पाठः ।

म् । भिन्ना एव वा धातवो भिन्नार्थाः । सारूप्यात्तु तत्त्वाध्यवसायः । तत्र द्विधा भवने केदारस्य कर्तुः ' कर्मवत्कर्मणा तुल्यक्रिय' इति (पा०३-१-८७) कर्मकार्याण्यतिदिश्यन्ते । तेन 'लूयते केदारः स्वयमेवे'त्यादयः प्रयोगा उपपद्यन्त इति । एवमिहाप्यनुगृह्णातिः कृतार्थीभवनोपसर्जने कृतार्थीभावने वर्तते । अनुगृह्णाति भक्तं परमेश्वरः । कृतार्थीभवन्तं कृतार्थीभावयतीत्यर्थः । यदा तु भक्तस्य सौकर्यातिशयविवक्षायां परमेश्वरव्यापारो न विवक्ष्यते तदा कृतार्थीभवनमात्रेऽनुगृह्णातिर्वर्तते । एवं चात्रानुग्रहस्य प्रपञ्चधर्मत्वमप्युपपद्यत इति । मुक्तिमुमुक्षुत्वादीनां जीवधर्मत्वेन निरूढव्यवहारसिद्धानां जीवधर्मत्वमपि ह्येवमेवोपपादनीयम् । य 'द्यात्मनात्मानमुद्धरे'दिति स्मृतेः स्वबन्धनिवृत्त्यनुकूलस्वव्यापारः स्वकर्मकमोक्तृव्यापारत्वेन विवक्ष्यत इति कल्प्येत तर्हि स एवात्र प्रपञ्चधर्मोऽनुग्रहो विवक्षितोऽस्तु । बन्धनिवृत्तिवत्तस्यापि सर्वानुग्राहकपरमेश्वरप्रसादाधीनत्वेन परमेश्वरकार्यत्वात् । ननु, अनाद्यावरणरूपस्य तिरोभावस्य कथं परमेश्वरकर्तृकत्वम् । उच्यते । अनादित्वेऽपि तस्य तत्कर्तृकत्वं युक्तम् । तथाहि—सर्वज्ञत्वेन सर्वेषां संसारिणां दुःखं जानतः सर्वशक्तिकत्वेन सर्वानपि तान्युगपदेव मोक्तुं शक्तस्य परमेश्वरस्य शिवशङ्करादिनामख्यापिता सर्वभूतविषयिणी करुणा निरुपाधिः परदुःखप्रहाणेच्छारूपा तेषामनादिभवसञ्चितनानाविधदुःखजनककर्मवृन्दसामर्थ्यं परिभूय सर्वानर्थमूलावरणोच्छेदपूर्विकामात्यन्तिकदुःखनिवृत्तिं तेषां युगपदेव कथं न कुर्यात् । यदि तस्य तत्तत्कर्मानुवर्तनस्वभावतया तेषां सकलकर्मवृन्ददाहकस्वविषयसाक्षात्कारोदयपर्यन्तं तेषु सहजकरुणोन्मेषविरोधितत्तदावरणानुवृत्तिसङ्कल्पो न स्यात् । अतस्तथाभूतसङ्कल्पावश्यंभावे तदधीनानुवृत्तिकस्यावरणस्य यस्मिन्सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चासत्त्वं तत्तज्जन्यमिति लक्षणानुसारेण तस्य तज्जन्यत्वसिद्धौ परमेश्वरकर्तृकत्वमपि तस्य सिद्ध्यति । कार्यानुकूलसङ्कल्पवत्त्वस्यैव कर्तृलक्षणत्वात् । किंच ज्ञानक्रियाशक्त्यावरणं न स्वरूपतोऽनादि संसारदशायां मध्येमध्ये तत्तदर्थविषयतदाविर्भावशबलत्वात् । न हीदानीमपि जीवानां सर्वात्मना ज्ञानक्रियाशक्त्योरावरणमस्ति । न वा कदाचिदाविर्भूतयोः किञ्चिदर्थविषयज्ञानक्रियाशक्त्योरामोक्षमनावरणमस्ति । अनादौ जन्मप्रवाहे सुरनरपशुपक्षिसरीसृपादिजातिभेदोन्मिषज्ज्ञानक्रियाशक्तिव्यवस्थादर्शनात् । तस्मात्स्वरूपतः सादेस्तत्तिरोभावप्रवाहस्य परमेश्वरकार्यत्वं युक्तमेव । तथाप्यासंसारमावृतानां मुक्तिकाल एवाविर्भविष्यतां सत्यसङ्कल्पत्वादिगुणानामावरणमनादीति तेषां तत्कार्यत्वं न युक्तमिति चेत् । तेषामपि युक्तमेव । तेष्वेकैकस्य तपोविशेषसाध्यतया [1]संसारिफलत्वेनाविर्भावतिरोभावयोः सम्भवेन तेषामप्यासंसारमावृतत्वासिद्धेः । तथा हि—योगशास्त्रे 'स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमात् भूतजय'इति (पातं०४३-सू०) सूत्रेण पृथिव्यादिपञ्चभूतगतस्थूलाद्यर्थवत्त्वान्तधर्मपञ्चकविषयसंयमस्य तद्विषयधारणाध्यानसमाधिरूपस्य भूतजयः फलत्वेन वर्णितः । स च भूतजयोऽणिमाद्यष्टैश्वर्यरूपः स्वेच्छाधीनभौतिकसृष्टिसंहाराद्युपयोगिसत्यसङ्कल्पतासिद्धिपर्यन्तो वैयासिकभाष्ये व्याख्यातः । एवमापस्तम्बसूत्रेऽपि'अथापि सङ्कल्पसिद्धयो भवन्ति'(आ०घ २-९-२३-६ सू०) 'यथा वर्षे प्रजादानं दूरे दर्शनं मनोजवता यच्चान्यदेवं युक्त' (आ०घ०२-९-२३-७सू-) मिति ज्ञानप्रधानानामूर्ध्व-

( १ ) 'तयाविर्भाव' इति ङ. पाठः । ( २ ) 'सांसारिक' इति. ङ. पाठः ।

रेतसामाश्रमाणां ज्ञानफलसत्यसङ्कल्पशालित्वमुत्कर्षमाशङ्क्य 'स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोऽन्तवन्तं लोकं जयति सङ्कल्पसिद्धिश्च स्यात् न तु तज्ज्यैष्ठ्यमाश्रमाणा'मिति (आ०ध०२-९-२४-१४) सूत्रेण गृहस्थैरपि कर्मविशेषादिना सत्यसङ्कल्पत्वं सम्पादयितुं शक्यमिति ब्रह्मज्ञानप्रधानानामाश्रमाणां तत्प्रयुक्तोत्कर्षो निराकृतः । तथा योगशास्त्रे 'परिणामत्रयसंयमादतीतानागतज्ञानम्'(पातं०यो०-३विभूतिपा०१६सू०)'शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्'(१७सू०)'संस्कारसाक्षात्कारात्पूर्वजातिज्ञानम्' (१८सू०)'प्रत्ययस्य परचित्तज्ञानम्'(१९सू.)'प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्' (२४सू०)'भुवनज्ञानं सूर्ये संयमात्' (२५सू०)'चन्द्रे तारकाव्यूहज्ञानम्'। (२६सू०)'ध्रुवे तद्गतिज्ञानम्'। (२७सू०)'नाभिचक्रे कायव्यूहज्ञानम्'(२८सू०)'क्षणतत्क्रमयोस्सम्बन्धसंयमाद्विवेकजं ज्ञान'(५१सू०)मिति सूत्रैस्तत्तद्विषयसंयमफलत्वेनास्मदाद्यसम्भावितज्ञानशक्तिविलासाविर्भावो दर्शितः । तथाच योगशास्त्रे 'ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः' । (४६सू०) 'ततो मनोजवित्वं विकरणभावः प्रधानजयश्चे'ति(४७सू०) सूत्रैरिन्द्रियग्रहणाद्यर्थवत्त्वान्तधर्मपञ्चकसंयमादिन्द्रियजयमुक्त्वा ततः प्रधानजयान्ता सिद्धिरुक्ता । 'प्रधानजयश्च सर्वप्रकृतिविकारवशित्व' मिति वैयासिकभाष्ये व्याख्यातम् । तेन सर्वप्रकृतिकार्यवशित्वस्य पाप्मजरामरणशोकक्षुत्पिपासाहेतुभूतप्रकृतिकार्यविशेषवशित्वस्यापि सिद्ध्या तद्वश्यत्वाप्रसक्तेः 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो विपिपास'इति परिगणितानां मुक्तिकालभाव्याविर्भाववतामपहतपाप्मत्वादीनामपि संयमविशेषफलत्वं सिद्ध्यति । विशिष्य च 'कण्ठकूपे क्षुत्पिपासानिवृत्ति'(पातं०यो०पा०३-२९सू०)रित्यादिसूत्रैः कण्ठकूपादिसंयमफलत्वेन विजिघत्सत्वादयो दर्शिताः । आगमेषु च पिशाचरक्षोयक्षगन्धर्वेन्द्रचन्द्रप्रजापतिचतुर्मुखानां पार्थिवाप्यतैजसनाभसमानसाहङ्कारिकबौद्धैश्वर्याणि प्रत्येकमष्टगुणान्युत्तरोत्तरेषां पूर्वपूर्वैश्वर्याष्टकसहितानि तत्तज्जन्मप्रापकपुण्यफलानि प्रपञ्चितानि । किं बहुना । व्याघ्रादीनां क्रोधलोभादिना मनुष्यादिहनने पाप्मानुदयोऽप्युक्तरीत्या तत्तज्जातिप्रापककर्मविशेषकृतापहतपाप्मत्वाद्याविर्भावप्रयुक्त एव । तस्मात्सत्यसङ्कल्पत्वादितिरोधानस्यापि परमेश्वरकार्यत्वं युक्तम् । किं च सर्वमेतत्तिरोधानं न मलाख्येनाञ्जनेनानादिनापि सदैकरूपेण कृतं, किं तु नयनपटलवत कालक्रमेण परिणतिं प्राप्नुवता । तथा च तत्तत्कालभवपरिणतिविशेषविशिष्टेनाञ्जनेन क्रियमाणमावारकविशेषकृतविशेषवदनित्यमेव । अपि च तिरोधानं नाञ्जनेनैव कृतम् । किं तु सर्गकाले देहद्वयाकारपरिणतया प्रलये सूक्ष्मावस्थां प्राप्तया मायया तत्तज्जात्यायुर्भोगप्रापककर्मभिश्च कृतम् । तत्र कर्माणि स्वरूपत एवानित्यानि । मायापि स्थूलसूक्ष्मावस्थाविशेषवैशिष्ट्येन स्थूलावस्थायामपि तत्तद्देहविशेषवैशिष्ट्येन चानित्येति तत्तदावरकविशेषानित्यत्वकृतं तदाहितविशेषस्यावरणस्यानित्यत्वमनिवार्यमिति तस्य परमेश्वरकार्यतायां न काचिदनुपपत्तिः । अत एव तृतीयाध्याये 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'विति (ब्र०३-२-४) सूत्रेण जीवस्य सत्यसङ्कल्पादेः संसारदशायां परमेश्वरसङ्कल्पात्तिरोधाने प्रतिपादिते कथमनादेस्तिरोधानस्य परमेश्वराधीनत्वमित्याशङ्कानिवृत्तये 'देहयोगाद्वा सोऽपी'ति तदनन्तर(ब्र०३-२-५)सूत्रेण सर्गकाले तत्तद्देहाकारपरिणतमायाकृतस्य प्रलयकाले सूक्ष्माव-

स्थमायाकृतस्य च तिरोधानस्य तिरोधायकविशेषकृतविशेषणनवनवत्वावश्यंभावो दर्शितः। केचित्तु मलीमसेषु विषयेषु हेयत्वावरणं तिरोभाव इत्याहुः। तदपि वस्त्राच्छादितघटस्येव न विषयवर्गस्य तदाच्छादनकृतमावरणमिति युज्यते। द्रष्टृावारकमलमायाकर्मव्यतिरेकेण दृश्यावारककल्पनायां प्रमाणाभावात्। किं तु विषयगतहेयत्वप्रतीत्यभावनिर्वाहकं द्रष्ट्राच्छादनमेव तथा व्यवहृतमिति नार्थतो भेदः। अन्ये तु जीववर्गस्य स्वस्वानुगुणभोगादप्रच्युतिस्तिरोभावस्ततोऽप्रच्यावनं 'स्वसंस्कारोचिताद्भोगादप्रच्यावः शरीरिणाम्। प्रोक्तं संरक्षणं नाम न्यायेन परिपालन'मित्यादिग्रन्थेषु संरक्षणादिशब्देन प्रसिद्धं तिरोभावनमित्याहुः। एतस्मिन्पक्षे तिरोभावस्यानित्यत्वं सूपपादमेव। तिरोभावशब्दस्य तस्मिन्नर्थे वृत्तिः परं दुरुपपादा 'अन्तर्धाने तिर्यगर्थे तिर इत्यव्ययं भवे' दिति नैघण्टुकप्रसिद्धार्थमध्ये कस्यचिदर्थस्याग्रहणात्। अपरे तु प्रलये चेतनाचेतनप्रपञ्चस्य सूक्ष्मावस्थापत्तिस्तिरोभाव इत्याहुः। तस्मिन्पक्षे तिरोभावस्यानित्यत्वं तिरोभावशब्दस्य प्रसिद्धार्थपरत्वं च सूपपादमेव। सूत्रकारस्य तत्राभिप्रायस्तु दुरुपपादः। सूत्रकारो यान्प्रपञ्चधर्मान्परमेश्वराधीनानग्रे व्यवहरति ते जन्मादीत्यादिशब्देन विवक्षिता इत्युपपादनीयम्। अत एव भाष्यान्तरगृहीतजन्मस्थितिभङ्गव्यतिरेकेण तिरोभावानुग्रहावप्यत्र भाष्ये गृहीतौ। 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययावि'ति (ब्र०३-२-४) सूत्रे तिरोभावस्य तन्मूलबन्धसहितस्य बन्धविपर्ययरूपमोक्षस्य च परमेश्वरसङ्कल्पाधीनत्वेन व्यवहारदर्शनात्। न च तत्र तिरोभावः प्रलयकालभवसूक्ष्मावस्थापत्तिरूपः। किं त्वाजानसिद्धसत्यसङ्कल्पत्वाद्यावरणरूप एव। अयं दोषः पूर्वयोरपि पक्षयोस्तुल्यः। तस्मात्सूत्रकारविवक्षितस्य तिरोभावस्यानित्यत्वेन परमेश्वराधीनत्वं प्रागुक्तप्रकारेणैवोपपादनीयम्। ननु, स्थितिः कथं परमेश्वरकार्येषु परिगण्यते। सृष्टं यावन्न संहरति तावत्तस्य स्थितेः स्वत एव सिद्धेः। यदि हि संहर्तान्यः प्रसक्तः स्यात्तदा संहारे प्रवृत्तस्य तस्य निवारणं कार्यमिति राज्यस्थितौ राज्ञ इव प्रपञ्चस्थितावीश्वरस्यापेक्षा स्यात्। परमेश्वरः स्वयं यावन्न सञ्जिहीर्षति तावत्तस्य नान्यो नाशकः प्रसज्यते। सत्यम्। घटादिस्थितौ कुलालादिकर्त्रपेक्षाभावेऽपि मृदाद्युपादानापेक्षास्त्येव। परमेश्वरः प्रपञ्चस्योपादानमपीति प्रपञ्चस्थितौ तदपेक्षा केन वा वार्यते। तत्सङ्कल्पापेक्षामप्युपपादयामः। समानकालजन्मनोरल्पाधिककालावस्थायित्वलक्षणमस्ति स्थितिवैषम्यम्। तदिदं स्थितिहेत्वदृष्टवैषम्यकृतं वाच्यम्। तत्र चेतनयोः स्थितिवैषम्यं स्वस्वादृष्टवैषम्यकृतम्। अचेतनयोस्तु तद्भोक्त्रदृष्टवैषम्यकृतमिति विशेषः। तददृष्टद्वयं तज्जन्यकार्यगताल्पाधिककालावस्थानाभिसन्धिमत्परमेश्वरप्रेरणाधीनकर्मानुष्ठानप्रभवमिति सिद्धैव तयोरल्पाधिककालावस्थितेः परमेश्वरसङ्कल्पापेक्षा। किं च जन्मवतः प्रपञ्चस्य यावन्नाशं स्थितिरुह्यमानजलकुम्भस्य स्थितिर्देवदत्तस्येव परमेश्वरस्य धारणव्यापारमपेक्षते। स च व्यापारो जन्मवदिदं यावन्नाशमित्थं तिष्ठत्वित्याज्ञारूपस्तस्य सङ्कल्प एव। 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः द्यावापृथिव्यौ विधृते तिष्ठत' इत्यादिश्रुतेः। 'अक्षरमम्बरान्तधृतेः'(ब्र०१-३-१०) 'सा च प्रशासना'दिति (ब्र०१-३-११) सूत्रयोस्तथैव प्रतिपादयिष्यमाणत्वाच्च। केचित्तु प्रपञ्चान्तर्गतचेतनाचेतनपदार्थानां परमेश्वरनियुक्तस्वस्वकार्यकरणे मर्यादायामवस्थितिः स्थितिरित्याहुः। साप्यत्र स्थितिशब्देन

सङ्गाद्यैव । 'एतस्यैवाक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्याः यांयां च दिशमन्वेति । एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवाः दर्वीं पितरोऽन्वायत्ताः' 'भीषास्माद्वातः पवते' 'भीषोदेति सूर्य' इत्यादिश्रुतेः कूर्मपुराणवायुसंहितादिगतनियोगाध्यायवचनबृन्दाच्च 'परात्तु तच्छ्रुतेः' (ब्र० २-३-४०) अन्तर्याम्यधिदैवादि'(ब्र०१-२-१८)ष्वित्यधिकरणयोः सर्वस्यापि चेतनाचेतनव्यापारस्य परमेश्वरप्रेरणाधीनत्वस्य व्यवस्थापयिष्यमाणत्वाच्च । तस्मात्सौत्रेण जन्मादिशब्देन परमेश्वरकर्तृकं जन्मादि प्रपञ्चधर्मपञ्चकं ग्राह्यमिति युक्तमेव । एकवचनं जन्मादीनां समुदायोपलक्षणम् । न त्वेकैकमिति ज्ञापनार्थम् । यद्यप्येकैकमपि लक्षणं भवितुमर्हति । अनतिप्रसङ्गात् । जगद्वाचित्वा (ब्र०-१-४-१६) दित्यधिकरणे च श्रुतजन्ममात्रकारणत्वस्य 'अक्षरमम्बरान्तधृते'(ब्र०१-३-१८) रित्यधिकरणे स्थितिकारणत्वमात्रस्य 'अत्ता चराचरग्रहणा' (ब्र० १-२-९)दित्यधिकरणे प्रलयकारणत्वमात्रस्य 'तन्निष्ठस्य मोक्षोपदेशा'दिति (ब्र०१-१-७) सूत्रे मोक्षकारणत्वमात्रस्य च ब्रह्मलिङ्गतयोपन्यासाच्च । तथापि जन्मादीनामन्यतमकारणत्वस्य लक्षणतयोक्तौ तदितरकारणवस्त्वन्तरसत्त्वशङ्कया लक्षणीयस्य[1] ब्रह्मणो[2] निरतिशयं बृहत्त्वं न सिद्ध्येत् । अतस्तद्ब्रह्मेति शेषाध्याहारलब्धलक्ष्यपरब्रह्मशब्दसमर्पितनिरतिशयबृहत्त्व[3]रूपलक्ष्याकारविपरीताबृहत्त्व[4]शङ्काव्यवच्छेदेन सप्रयोजनं समुदायस्य लक्षणीकरणम् । एवं जन्मादिसमुदायस्य लक्षणत्वमभिप्रेत्यैव 'यतो वे'त्यादिलक्षणवाक्ये 'तद्ब्रह्मेति'सकललक्ष्यनिर्देशः कृतः। तत्प्रदर्शितं कारणत्वं ब्रह्मलक्षणं सिद्धं कृत्वा तेन प्रसिद्धसृज्यभावेन्द्रादिव्यावृत्त्या मन्त्रार्थवादादिप्रसिद्धमहिमसकलदेवतामध्ये किं देवतारूपं ब्रह्मेति संशयनिवृत्तावपि श्रुत्यन्तरश्रुतजगत्कारणभावहरिहरादिमध्ये किंदेवतारूपमिति संशयानिवृत्तेः। तथा संशयानानां ब्रह्मास्तित्वमात्रं जानतां केषाञ्चिद्विमर्शप्रदर्शके 'ब्रह्मवादिनो वदन्ती'त्युपक्रम्य प्रवृत्ते 'किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठा। अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थे'ति मन्त्रे 'किं कारणं ब्रह्मे'ति विमर्शवाक्येन सामान्यतः प्रदर्शितं कारणत्वं तत्प्रपञ्चनपरैः पञ्चभिर्वाक्यैः पञ्चकृत्यकारितारूपत्वेन विवृतम् । तत्र हि 'कुतस्स्म जाता'इत्यादिभिस्त्रिभिर्वाक्यैर्जन्मस्थितिप्रलयकारित्वमुच्यत इति स्पष्टमेव । 'केनाधिष्ठिताः सुखेतरेषु वर्तामह' इति वाक्येन बन्धकारित्वमुच्यते । 'सुखेतरे'ष्वित्यस्य द्वन्द्वसमासेन सुखदुःखात्मकेष्वित्यर्थपरतया पञ्चमीतत्पुरुषेण वैषयिकसुखस्यापि दुःखपक्षे निक्षेपात्केवलदुःखरूपेष्वित्यर्थपरतया वा तथाभूतेषु जन्मप्रवाहेष्वित्यत्र पर्यवसानम् । 'ब्रह्मविदो व्यवस्थे'त्यनेन 'केने'ति पदानुषङ्गवता बन्धनिवृत्तिकारित्वमुच्यते । ब्रह्मविदः ब्रह्मस्वरूपनिर्धारणपूर्वकतत्साक्षात्कारवतः पुरुषस्य व्यवस्था सकलदुःखनिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिलक्षणा विशिष्टावस्था तस्य केवलं सुखमेव न तु कदाचिदपि दुःखमिति व्यवस्था वा, ब्रह्मज्ञानफलात्कर्मफलादिव कदाचिदपि प्रच्युतिर्नास्तीत्येवंभूता मर्यादा वा केन कारणभूतेन पुरुषधौरेयेण कृतेति तदर्थः । ननु, लक्षणं लक्ष्यस्येतरभेदसाधने शब्दविशेषवाच्यत्वसाधने वा हेतुतयोपयुज्यते । हेतौ च व्यभिचारवारकमेव विशेषणं निवेश्यं नान्यदिति नैयायिकानां मर्यादा । कथ-

(१) 'तल्लक्षणीयस्य' इति घ.च. पाठः । (२) 'ब्रह्मत्वं' इति घ. ङ. च. पाठः । (३)(४)'ब्रह्मत्व'इति घ.च.पाठः।

मिह लक्ष्याकारविपरीताकारशङ्काव्यवच्छेदप्रयोजनकं विशेषणं लक्षणे निवेश्यते । उच्यते। हेतौ व्याप्तिग्रहौपयिकं विशेषणं निवेश्यमिति नियमः । हेतुविशेषणानां व्याप्यतावच्छेदकघटकतयोपयोगात् । न तु व्यभिचारवारकमेव विशेषणं निवेश्यमिति नियमः । तथा सति परिभाषामात्रत्वापत्तेः रूपादिषु पञ्चसु मध्ये रूपस्यैव व्यञ्जकद्रव्यत्वादिहेतौ मध्यान्तविशेषणस्य व्यभिचारावारकत्वेऽप्यप्रसिद्धिवारकतया तत्सम्पादितप्रसिद्धिकहेतुनिष्ठव्याप्तिग्रहौपयिकतामात्रेण सार्थकत्वाभ्युपगमाच्च । न च मनसि व्यभिचारवारणार्थस्यावधारणस्य मध्यान्तविशेषणं विना स्वरूपालाभेन व्यभिचारवारणाशक्त्या तदपि विशेषणं तल्लाभसम्पादनद्वारा व्यभिचारवारणप्रयोजनकमेवेति वाच्यम् । स्वरूपालाभो ह्यवधारणस्य हेत्वप्रसिद्ध्यापादकतयैव नान्यथा । तथात्वेऽपि तस्य व्यभिचारवारणशक्तिर्न हीयते। न हि हेत्वप्रसिद्ध्यापादकं विशेषणं साध्याभाववति स्वं विशिष्टहेत्वनुसन्धानं न निरुणद्धि । ननु, रूपादिष्वित्यादिहेतोरयमर्थः । रूपेतरविशेषगुणाव्यञ्जकत्वे सति रूपव्यञ्जकत्वादिति । तथा च सत्यन्तं मनसि व्यभिचारवारकं नात्र किञ्चिदप्रसिद्धिवारकमिति चेत् न । यथाश्रुतहेतावप्यप्रसिद्धिवारकतया व्याप्तिग्रहौपयिकत्वेन विशेषणसार्थकत्वसमर्थनसम्भवे परिभाषामात्रसमर्थनार्थमर्थान्तरकल्पनस्यायुक्तत्वात् तथार्थान्तरकल्पनेऽपि विशेषणगुणविशेषणस्य हेत्वप्रसिद्धिवारणं विना फलान्तराभावाच्च । यदि तु, विशेषगुणविशिष्टप्रतियोगिकाभावस्तदविशिष्टप्रतियोगिकाभावादन्य इति विशिष्टाभावघटितहेतुनिष्ठव्याप्तिग्रहौपयिकतया तद्विशेषणं सार्थकम्। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिभावस्तदविशिष्टज्ञानमन्तरेणाभावविशेषोपस्थितेरसम्भवादित्युच्येत तदा व्याप्तिग्रहौपयिकतयैव विशेषणसार्थकत्वमभ्युपगतमिति घट्टकुटिप्रभातवृत्तान्तः । एतेन रसाव्यञ्जकत्वे सति रूपव्यञ्जकत्वादिति तस्य हेतोरर्थ इत्यपि शङ्का निरस्ता। तत्रापि रसविशेषणस्य हेतुप्रसिद्धिसम्पादनेन हेतुशरीरविनिविष्टविशिष्टाभावोपस्थितिसम्पादनेन वा व्याप्तिग्रहोपयुक्ततयैव सार्थकत्वस्य समर्थनीयत्वात् । एवं शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वमिन्द्रियत्वमिति लक्षणे भागासिद्धिवारकं शब्देतरविशेषणं विशिष्टाभावघटितहेतुनिष्ठव्याप्तिग्रहौपयिकतया वा श्रोत्रवृत्तिमनस्संयोगरूपहेतुनिष्ठव्याप्तिग्रहौपयिकतया वा सार्थकं नैयायिकैरङ्गीकृतमित्यादिर्भूयानस्य विषयः। एवं हेतुविशेषणानां व्याप्तिग्रहौपयिकतया साफल्ये स्थिते सत्येतदधिकरणव्युत्पादयिष्यमाणन्यायतः शिवैकान्तिकेन ब्रह्मलक्षणेन हेतुना शिवस्य पूर्वोक्तरीत्या निरतिशयबृहत्त्वरूपे ब्रह्मत्वे तत्प्रवृत्तिनिमित्तकब्रह्मशब्दवाच्यत्वे वा साधनीये यदि जन्मकारणत्वमात्रं तत्र हेतूक्रियेत तदा जन्मकारणत्वस्य स्थित्याद्युपयोगिज्ञानक्रियाशक्तिप्रयोजकत्वाभावात् स्थित्यादिकारणभूतेश्वरान्तरसद्भावशङ्कानिवर्तकत्वाभावाच्च ततो निरतिशयबृहत्त्वादिकं न सिद्ध्येत्। अतस्तत्सिद्ध्यनुकूलव्याप्तिविरोध्यप्रयोजकत्वादिशङ्कानिरासेन तथाभूतव्याप्तिग्रहोपयोगितया जन्मादिसमुदायस्य लक्षणीकरणमिति न कस्यापि वैयर्थ्यशङ्कावकाशः । एवं जन्ममात्रस्य लक्षणीकरणे निरतिशयबृहत्त्वरूपलक्ष्याकारो न सिद्ध्येदित्यपरितोषादेवाद्यस्य हिरण्यगर्भस्य यतो जन्मेति सूत्रव्याख्यानमयुक्तमिति सूचयितुं प्राक्सूत्रपदविभागो दर्शितः । ननु, 'यतो वै' त्यादिलक्षणकथनं नानुमानविधया ब्रह्मत्वप्रतिपत्त्यर्थम् । किं तु यतो भूतानि जायन्ते तद्ब-

वानुग्रहरूपं कृत्यमस्य चेतनाचेतनसम्मेलनसमरसीभूतस्य प्रपञ्चविलासस्य यतो ह्येति शब्दविधयैव। ततश्च व्याप्तिग्रहविरोध्यप्रयोजकत्वशङ्कानिरसनस्यानपेक्षितत्वात् जन्मादिसमुदायस्य लक्षणीकरणं निष्फलम्। अनेकत्र सांशयिकस्य ब्रह्मत्वस्य जगज्जन्ममात्रेणापि शाखाग्रेण चन्द्रशब्दवाच्यत्वस्येव क्वचिद्विशेषे निर्धारयितुं शक्यत्वादिति चेदुच्यते। यदि मन्त्रार्थवादादिप्रसिद्धमहिम्नां देवानां मध्ये को देवो निरतिशयबृहत्त्वशाली यज्ज्ञानात् 'ब्रह्मविदाप्नोति पर'मित्यादिषु महाफलं श्रूयत इति जिज्ञासोर्देवविशेषे ब्रह्मत्वनिर्धारणं केवलं शब्दविधया चिकीर्षितमभविष्यत् तदानीमयं देवो ब्रह्मेति विशिष्यैव निरदेक्ष्यत। प्रतिपत्तिलाघवात्। जन्मादिरूपलक्षणमुखेन तन्निर्धारणे तल्लक्षणं शिवनारायणादिषु बहुषु श्रूयमाणं न निर्धारणक्षममिति शङ्कानिरासार्थमेतत्सूत्रनिरूपणीयदृढन्यायावगत्यपेक्षासत्त्वेन प्रतिपत्तिगौरवात्। तस्मा'द्यतोवे'त्यादिश्रुतौ गुरूपायेनापि लक्षणेन लक्ष्यनिर्धारणात्तत्र सकृदेव लक्ष्यनिर्देशात् तल्लक्षणानुवादके श्वेताश्वतरमन्त्रे कारणत्वस्य पञ्चकृत्यकारित्वरूपतया विवृतत्वाच्च शब्दविधया चिकीर्षितमपि ब्रह्मनिर्धारणमनुमानरूपयोपपत्त्या तात्पर्यविषयतापादनेन दृढीकर्तुं जन्मादिसमुदायस्यैव लक्षणीकरणे श्रुतेस्तात्पर्यमित्यवसीयते। अतो युक्तं सूत्रे 'जन्मादी'त्येकवचनेन समुदायस्य लक्षणत्वसूचनम्। तत्र नपुंसकनिर्वाहार्थं भाष्ये कृत्यमिति बहुव्रीहिलभ्यान्यपदार्थप्रदर्शनम्। एवं सौत्रं जन्मादिपदं व्याख्यातम्। अथास्येति पदं व्याख्येयम्। तज्जन्मादिर्धर्मिपरमिति स्पष्टमेव। तद्यदि चेतनवर्गमात्रपरं तदानीमचेतनवर्गजन्मादिकारणवस्त्वन्तरशङ्कानिराकरणाभावात् लक्षणतो निरतिशयबृहत्त्वं न सिद्ध्येत्। यदि चेतनाचेतनात्मकसर्वकार्यपरं तदा तिरोभावानुग्रहयोर्बन्धमोक्षरूपतया चेतनैकान्तिकयो'र्यतोवे' त्यादिविषयवाक्ये जीवनरूपतयोक्तायाः स्थितेश्च तत्रानन्वयः स्यात्। 'यतो वा इमानि भूतानी'ति भूतशब्दस्य 'न हिंस्यात्सर्वा भूतानी'त्यादिप्रयोगात् प्राणिनिकाये रूढत्वेन प्रपञ्चस्य भवनक्रियायोगिकार्यमात्रे योगस्य कल्पनीयत्वेनास्वारस्यादित्याशङ्क्य विशेषयति–चेतनेति। चेतनाचेतनयोः सम्मेलनं शरीरिशरीरभावेन सम्बन्धः तेन समरसीभूतस्य विशिष्टात्मनैकीभावं प्राप्तस्येत्यर्थः। अनेनैतदुक्तं भवति। सर्वमप्यचेतनं कार्यं द्रव्यं सुरनरतिर्यक्स्थावररूपस्य भूतग्रामकस्य शरीरमेव। न ततोऽतिरिक्तं किञ्चिदस्ति। शरीरस्य तद्धर्माणां गुणक्रियादीनां जन्मादीनि परम्परासम्बन्धेन शरीरिण्यपि व्यपदिश्यन्ते 'यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवती'त्यादिश्रुतिषु चैत्रस्य पुत्रो जातः स कृशो नीलः स्थूलो गौरो जातः सञ्चाराभिलापादिक्रियावान् जातः इत्यादिलौकिकव्यवहारेषु च। एवं च 'यतो वे'त्यादिवाक्ये भूतशब्दोदितेषु स्वस्वशरीरविशिष्टेषु चेतनेषु शरीरतत्तद्धर्मजन्मादयः शरीरादिद्वारकसम्बन्धेन सर्गाद्यकालभवतत्तद्भोगाद्यनुगुणचिच्छक्तिविकासादिरूपास्तदीयजन्मादयस्तद्द्वारकसम्बन्धेन च व्यपदिश्य लक्षणीक्रियन्ते। अतो न काचिदनुपपत्तिरिति। ननु, 'इमानि भूतानी'ति विषयवाक्ये बहुवचननिर्दिष्टानां जन्मादिधर्मिणां सूत्रे किमर्थमेकवचनेन निर्देश इति जिज्ञासायां तत्प्रयोजनं विशेषणमुखेन दर्शयति–प्रपञ्चविलासस्येति। प्रपञ्चो विलास इव प्रपञ्चविलासस्तस्य लीलाकृतमन्दस्मितादिवदयत्नपूर्वकस्य प्रपञ्चस्येत्यर्थः। एवं चास्येत्येकवचनमेककार्यवत्परमेश्वरं प्रत्ययत्नसा-

यस्मात्तद्ब्रह्मेति शेषः। "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीव-

ध्योऽयं विचित्रानन्तकार्ययुक्तः प्रपञ्च इत्येतत्सूचनार्थमित्ययत्नसाध्यत्वलक्षकेन विलासश-ब्देन दर्शितं भवति। तेनापि परमेश्वरस्यापरिच्छेद्यानन्तशक्तिमत्त्वरूपमहिमविशेषसिद्धिः। एवमस्येति पदं व्याख्यातम्। यत इति पदं व्याख्येयम्। तल्लक्षणीकृतजन्मादिप्रपञ्चसम्ब-न्धित्वेन लक्ष्यनिर्देशकमिति स्पष्टमेव। अत्रेयं शङ्कोन्मिषति। तसिल्प्रत्ययोऽत्र जनिकर्तृ-प्रकृतिरूपापादानपञ्चम्यन्तान्न भवति। जनिकर्तुः प्रपञ्चस्यात्र षष्ठ्यन्तपदेन जन्माद्युपसर्ज-नतया निर्दिष्टस्य 'यतो वा इमानि भूतानि जायन्त'इति मूलश्रुताविव यच्छब्दनिर्दिष्टकार-णसम्बन्धित्वेनान्वयाभावात्। 'जनिकर्तुः प्रकृति'रिति(पा०१-४-३०)सूत्रे जनिकर्तृविशेषण-स्य यत्र जनिकर्तुः कार्यतयान्वयो न तु जनेः तत्रैवापादानसंज्ञेत्येतदर्थताया वाच्यत्वात्। अन्यथा तद्वैयर्थ्यात्। प्रकृतिशब्दस्योपादानरूपकारणविशेषवाचितया तत एव तत्कार्यस्या-क्षेपतो लाभसम्भवात्। अथोच्येत प्रकृतिशब्दः स्वभावविषयैव शक्त्या मृत्स्वभावो घट इत्यादिव्यवहारात्कार्यस्वभावरूपेषूपादानेषु प्रयुज्यते। क्लृप्तशक्त्या प्रयोगनिर्वाहे शक्त्यन्त-रकल्पनानुपपत्तेः। तथा सति कार्यस्य प्रकृतिस्वरूपं कारणमित्येतावत्तत्र प्रयोक्तव्यं स्यादि-ति चेत्। सत्यम्। तथापि लोके वेदे च निरूढ्या प्रकृतिपदमात्रस्य तत्र प्रयोगः न्यायशा-स्त्रव्यवहारे कार्यं प्रति समवायिनि कारणे समवायिपदमात्रस्येव। पाणिनिना तु 'प्रकृति'रि-त्येतावति सूत्रे कृते विवक्षितार्थः स्पष्टो न भवतीति जायमानस्य स्वभावरूपं यत्कारणं तस्या-पादानसंज्ञा विधीयत इत्यर्थस्पष्टीकरणाय 'जनिकर्तु'रिति विशेषितम्। अत एव 'तदर्थं विकृतेः प्रकृता'विति (पा०५-१-१२) सूत्रे विकृतिपदसन्निधानेन प्रकृतिपदस्योपादानपरत्वं लभ्यतामि-त्येतदर्थमेव विकृतिग्रहणं कृतम्। एवं जनिकर्तृविशेषणमन्यथैवार्थवदिति नैतद्युक्तम्। अत्र कारक इत्यधिकारतः कारकाणां मध्ये यत्स्वभावरूपं कारकमित्यर्थलाभे सति कस्य स्वभा-वरूपमित्याकाङ्क्षायां प्रत्यासत्त्या कार्यस्य स्वभावरूपमित्यर्थपर्यवसानेन कारणावान्तरविशेष-भूतोपादानपरत्वाधिगतिसम्भवात् यथाकथञ्चिदत्र 'जनिकर्तुः' प्रकृतिरिति(पा०१-४-३०)सू-त्रेणापादानसंज्ञासमर्थनेऽपि जन्मकारण इव जगत्स्थितिप्रलयादिकारणेष्वपादानसंज्ञाविधा-नाभावेनापादानपञ्चम्यन्तस्य स्थित्यादिभिरन्वयाभावप्रसङ्गाच्च। 'यत'इत्यस्यापादानपञ्च-म्यन्तत्वाभ्युपगमे निमित्तान्तरशङ्कानिरासाभावेन ततो लक्ष्यस्य निरतिशयबृहत्त्वासिद्धेश्च। अथोच्येत हेतुपञ्चम्यन्तादिह तसिल्प्रत्ययोऽस्तु तद्धेतुत्वं सङ्कोचे कारणाभावान्निमित्ततयो-पादानतया च विवक्षितमिति ततो निरतिशयबृहत्त्वसिद्धिरप्युपपद्यत इति। नैतदपि युक्तम्। 'विभाषा गुणे स्त्रिया'(पा०२-३-२५सू.)मिति गुण एव हेतौ पञ्चमीविधानेन द्रव्ये ब्रह्मणि हेतौ पञ्चम्यसम्भवादितीमां शङ्कां निराकर्तुं व्याचष्टे—यतो यस्मादिति। 'पुत्रात्प्रमोदो जा-यत' इत्यादिप्रयोगदर्शनात् 'विभाषा गुणे स्त्रियामि' ति (पा०२-३-२५) सूत्रे विभाषेति योगविभागेनागुणवचनेभ्योऽपि हेतौ पञ्चमी समर्थनीयेति भावः। 'हेता' विति (पा० २-३-२३)सूत्रविहितहेतुतृतीयान्तादप्यत्र तसिल्प्रत्यय उपपद्यते। 'इतराभ्योऽपि दृश्यत' (पा०५-३-१४ सू.) इति तृतीयान्तादपि तद्विधानादित्यपि द्रष्टव्यम्। सूत्रस्यापेक्षितं पूरयति—तद्ब्रह्मेति शेष इति। यत्पदाक्षिप्ततत्पदाध्याहारेण पूर्वसूत्रगतब्रह्मपदानुषङ्गेण पूर्वसूत्रे

न्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मे"ति । "प्रधानक्षेत्रज्ञ-

प्रथमान्तब्रह्मपदाभावात् 'संयजत्रैरङ्गानी'त्यत्र 'गच्छन्ता'मिति पदस्येव प्रथमान्तब्रह्मपदस्याप्यध्याहारेण वेदं शेषपूरणम् । एवं प्रदर्शितस्य लक्षणस्य पूर्वपक्षसिद्धान्ताभ्यां शिवैकान्त्यव्यवस्थापनार्थम् अधिकरणशरीरप्रदर्शनाय विषयवाक्यमुदाहरति—यतो वेति । नन्वत्रापादानपञ्चमीतस्तसिल्प्रत्यय इत्यभ्युपगन्तव्यम् । न तु सूत्र इव हेतुपञ्चमीतः। उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात् । तद्वदिह 'जनिकर्तुः प्रकृति'रिति (पा०१-४-३०)सूत्राप्रवृत्तिशङ्कानवकाशात् । न च वाच्यं यत इत्यनुवादस्य प्रापकवाक्यसापेक्षत्वात् 'तदैक्षत बहु स्यां प्रजायेयेति' 'तत्तेजोऽसृजते'त्यादिप्रापकवाक्यानुसारेण निमित्तोपादानसाधारण्याय हेतुपञ्चम्यत्र वाच्येति । अनुवादो ह्यनूद्यमानार्थस्य प्रापकमपेक्षत इत्येव नियमः । न तु पुरोवादप्राप्तं सर्वं यथाकथञ्चिच्छन्दस्य सामर्थ्यमाश्रित्यानुवादनीयमिति नियमः । न चात्र सूत्र इव तृतीयान्तात्तसिलिति पक्षान्तरं वक्तुं शक्यम् । येनापादाने तृतीयाभावात्कारकविभक्तिबलीयस्त्वन्यायाप्रवृत्तेः हेतुतृतीयैव स्यादिति शङ्क्येत । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त'इति वाक्ये प्राचीनेष्वन्नादिवाक्येषु च यत इति स्थाने पञ्चमीदर्शनेनात्रापि पञ्चम्यन्ततावगमात् । तृतीयान्तत्वाभ्युपगतावुपपदविभक्त्याश्रयणं स्यादिति कारकविभक्तिबलीयस्त्वेनापि पञ्चम्यन्ततावगमाच्च । तथा च विषयवाक्ये निमित्तान्तरशङ्कानिरासाभावाल्लक्ष्यस्य निरतिशयबृहत्त्वं लक्षणतो न सिद्ध्यतीति चेन्न । लक्षणतो निरतिशयबृहत्त्वसिद्ध्यर्थमेव दुर्बलस्यापि हेतुपञ्चम्यन्तत्वस्याश्रयणोपपत्तेः । अन्यथा लक्षणकथनवैयर्थ्यप्रसङ्गात्तस्य लक्ष्यगतनिरतिशयबृहत्त्वसिद्ध्युपयोग्यनुमानरूपोपपत्तिप्रदर्शनैकफलकत्वस्य प्राक्समर्थितत्वात् वाक्यवैयर्थ्याच्च पदमात्रे क्लिष्टगत्याश्रयणस्य न्याय्यत्वात् । अत एव 'एकादश पशोरवदानानि तानि द्विरवद्यती'तिवाक्यवैयर्थ्याय 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्ये'त्यत्र वपाग्रहणस्य पाशुकहविर्मात्रोपलक्षकत्वमाश्रितम् । ननु लक्षणकथने तन्निर्णायकादिषु च जन्मवाक्ये पञ्चमी जीवनवाक्ये तृतीया च व्यवस्थया दृश्यते । सा व्यवस्थार्थव्यवस्थामन्तरेण नोपपद्यते । अतस्तेषु तृतीयानां हेत्वर्थत्वात्पञ्चमीनामपादानार्थत्वमभ्युपगन्तव्यमिति चेन्न । तृतीयानां करणार्थत्वोपपत्तेः। 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितावि'ति श्रुत्यन्तरे ब्रह्मणः प्राणिनां जीवने प्राणवाय्वाद्यपेक्षयातिशयितसाधकत्वरूपस्य साधकतमत्वस्य प्रतिपादनात् । ननु, तथापि विषयवाक्ये जन्मादिपञ्चकं नोपात्तमिति श्रुतिसूत्रयोर्नानुगुण्यमिति चेन्न । 'प्रयन्ती'त्यनेन लयप्रतिपादकेन दैनन्दिनप्रलयवदात्यन्तिकलयरूपस्य मोक्षस्यापि सङ्ग्रहात् 'अभिसंविशन्ती'त्यनेन अभितस्स्वपन्तीत्यर्थकेन तिरोभावस्य प्रतिपादनाच्च विषयवाक्यस्यापि कृत्यपञ्चकविषयत्वात् । प्रधानेति । 'स विश्वजिद्विश्वकृदात्मयोनिः कालकालो गुणी सर्वविद्यः' । इति मन्त्रस्य पूर्वभागः । आत्मयोनिः स्वयम्भूः आत्मनां योनिर्वा । कालकालः कालस्य क्षणादिनिचयस्य वैवस्वतस्य वा नियन्ता। गुणी सत्यसंकल्पत्वादिकल्याणगुणसंपन्नः । सर्वा विद्यास्येति सर्वविद्यः सर्वविद्याधिष्ठाता । ईशानस्सर्वविद्याना'मितिश्रुतेः । प्रधानक्षेत्रज्ञयोः प्रकृतिपुरुषयोः पतिः पालकः । गुणेशस्त्रै-

(१) 'द्वितीयाधिकरणमवतारयति' इति ख. पाठः ।

**पतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः।" "सत्यं ज्ञानमनन्तं ब्रह्म" "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः॥" इत्या-**

गुण्यनियन्ता। संसारस्सन्ततं सरणमिह परत्र च गतागतम्। तेन जन्मप्रलययोर्ग्रहणम्। बन्ध-स्तिरोभावः। सूत्रे कृत्यपञ्चकं गृहीतमित्यस्य यत इति पञ्चम्या हेत्वर्थकत्वस्य च स्पष्टीक-रणार्थं विषयवाक्यान्तरोदाहरणम्। अनपायगुणद्वारकं तथाभूतविग्रहद्वारकं च स्वरूपलक्ष-णमप्यनेन सूत्रेण विवक्षितमिति दर्शयितुं 'सत्यं ज्ञान''मृतं सत्य'मिति मन्त्रयोरुदाहरणम्। अत्र जन्मादिकं ब्रह्मणो लक्षणं भवितुमर्हति न वेति तत्प्रयोजनसम्भवासम्भवाभ्यां संशये पूर्वः पक्षः। नैतद्ब्रह्मणो लक्षणं भवितुमर्हति अतन्निष्ठत्वात्। लक्षणस्य हि लक्ष्यगतकिञ्चि-च्छेषसिद्धिः प्रयोजनम्। तत्र च प्रयोजनं लक्षणे हेतुतयोपयुज्यते इतीष्यते। न चातन्निष्ठं तन्निष्ठसाध्यसिद्धावुपयुज्यते। विशिष्य च ब्रह्मलक्षणस्येदं वस्तु ब्रह्मेति शृङ्गग्राहिकया वस्तु-विशेषब्रह्मत्वनिर्धारणं प्रयोजनमिष्यते। न चैतल्लक्षणं तन्निर्धारणं जनयितुमीष्टे। यतश्श्रुति-वाक्येषु क्वचिदानन्दः क्वचित्सत् क्वचिज्ज्ञानं क्वचिच्छिवः कारणत्वेन वर्ण्यते। तेषु किं ब्रह्मेति सर्वसाधारणकूटसाक्षिणानेन लक्षणेन निर्धारणीयम्। न च सर्वेषामेतेषामव्यवस्थितविकल्पेन व्यवस्थितविकल्पेन समुच्चयेन वा जगज्जन्मादिकारणत्वमिति तथैवैतेषां ब्रह्मत्वमपि स्यादि-ति वाच्यम्। अव्यवस्थितविकल्पे श्रुतहान्यादिदोषापत्तेः। तथाहि यदा तावदानन्दशास्त्र-स्य प्रामाण्यमभ्युपगम्यते तदा 'सदेव सोम्येद'मित्यादिशास्त्रश्रुतं सदादीनां कारणत्वं हात-व्यमिति सदादिशास्त्राणामपौरुषेयत्वेन प्राप्तस्य प्रामाण्यस्य परित्यागो दोषाभावादप्राप्तस्या-प्रामाण्यस्य स्वीकारश्चेति तेषु दोषद्वयमापतति। यदा पुनस्सदादिशास्त्राणामन्यतमं प्रमाण-मभ्युपगम्यते तदा तत्र प्राक्स्वीकृताप्रामाण्यपरित्यागः परित्यक्तप्रामाण्यस्वीकारश्चेति तत्र दोषद्वयमापततीत्येवं प्रतिशास्त्रं प्रतीतप्रामाण्यपरित्यागाप्रतीताप्रामाण्यकल्पनारूपदोषद्वयं पर्यायान्तरे कल्पिताप्रामाण्यपरित्यागपरित्यक्तप्रामाण्यस्वीकाररूपं दोषद्वयं चेति चत्वारश्च-त्वारो दोषाः प्रादुष्युः। तस्मादत्यन्तबाधादपि पापीयान्विकल्पः। अत्यन्तबाधे हि यद्वाक्यं दुर्बलत्वेनावधारितं तत्प्रबलविरुद्धत्वात्स्वार्थात्सर्वथैव प्रच्यावितं सदर्थसङ्कोचं वृत्त्यन्तरं वा स-मासाद्य निर्वृणुयादेव। न त्वव्यवस्थितजयपराजयपर्यायप्राप्तिमदसमाप्यमानसमरसमबलन-रपतिद्वयन्यायेन क्लेशानुवृत्तिमनुभवेत्। न वा श्रोतॄन्समबलयोर्नृपतिद्वयविषयवासिजना-निवान्यतरसमाश्रयणसन्देहसमुद्गतरङ्गपरम्परानिमज्जनेन क्लेशयेत्। नचैवंभूतयोरेव व्रीहि-यववाक्ययोर्विकल्पोऽङ्गीकृतः तथेहापि स्यादिति शङ्कनीयम्। अनुष्ठेयार्थेष्वैच्छिकप्रयोगभे-देनोभयानुग्रहात् कथञ्चिदव्यवस्थापरिहारसम्भवेऽप्यत्र सिद्धे वस्तुनि तत्परिहारासम्भवात्। तस्मादव्यवस्थितविकल्पस्तावदिह न सम्भवति। कल्पभेदादिना व्यवस्थितविकल्पाभ्युपग-मे तु 'एकमेवाद्वितीयं' 'द्यावाभूमी जनयन्देव एक' इत्यादिश्रुतिविरुद्धब्रह्मानेकत्वप्रसङ्गः। आनन्दादयः समुच्चिताः कारणमित्येवंरूपसमुच्चयपक्षेऽप्ययं दोषस्तुल्यः। अधिकश्च ब्रह्मनामै-कमत्यासम्भवो दोषः। तेषां धर्मसमुच्चयः कारणमित्यपि पक्षो न युज्यते। अचेतनस्य तस्ये-क्षापूर्वकस्रष्टृत्वाद्यसम्भवात्। एवमभिन्ननिमित्तोपादानत्वरूपतयाभिमते लक्षणे कर्तृत्वरूप-निमित्ततांशस्यानन्दादिष्विदंतया ब्रह्मनिर्धारणरूपप्रयोजनपर्यवसायित्वाभावाल्लक्षणानुप्रवेशो

न युज्यते। उपादानतांशस्य त्वसम्भवादेव स न युज्यते। 'मायां तु प्रकृति' मिति श्रुतौ मायाया जगदुपादानत्वश्रवणात्। न च 'आत्मन आकाशस्सम्भूत' इत्यादिष्वपादानविषयपञ्चमीश्रुत्यादिभिः ब्रह्मणोऽप्युपादानत्वं प्रतिपाद्यत इति वाच्यम्। ज्ञानादिरूपस्य ब्रह्मणः तद्विलक्षणप्रपञ्चोपादानत्वासम्भवेन निर्विकारत्वश्रुतिविरोधेन च पञ्चम्यादीनां हेतुत्वाद्यर्थान्तरपरत्वात्। तस्माद्यदि कर्तृत्वरूपनिमित्तत्वं लक्षणं यदि वा बहूनामानन्दादीनामैकमत्यासम्भवेन निमित्तत्वायोगात् तन्तूनामिव बहूनामुपादानत्वसम्भवाच्चोपादानत्वं लक्षणं यदि वा निरतिशयब्रह्मत्वसिद्ध्यर्थं मिलितमुभयं लक्षणं सर्वथापि जगत्कारणत्वं लक्षणं न सम्भवति। अत एवानन्दरूपत्वं सद्रूपत्वं ज्ञानरूपत्वमुमासहायत्वविरूपाक्षत्वादिविशिष्टविग्रहशालित्वमित्येवमाद्यपि लक्षणं भवितुं नार्हति। विकल्पसमुदायदोषानतिक्रमादेव। स्यादेतत्। सज्ज्ञानमानन्दः शिव इत्येतेषां नास्ति भेदः। 'सदेव सोम्ये'दमित्यादिश्रुतिप्रतिपन्नस्य सत एव जगत्कारणस्य तत्तच्छास्त्रान्तरानुसारेण छागपशुन्यायाच्चेतनतया प्रचुरानन्दतया शिवरूपदेवताविशेषतया च पर्यवसानात्। अतोऽत्र विरोधाभावान्न विकल्पसमुच्चयदूषणशङ्कावकाश इति चेत्। स्यादेतदेवं यद्यत्र विरोधो न स्यात्। अवधारणविरोधात्तु नात्र च्छागपशुन्यायोऽवतरति। तथा हि— 'सदेव सोम्येदमग्र आसीत्' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' 'न सन्न चासच्छिवएव केवल' इतिसदानन्दशिवकारणवाक्येषु तावदवधारणानि छागपशुन्यायेन परस्परस्मात्प्राप्तानां रूपान्तराणां व्यवच्छेदेनैव सप्रयोजनानि वाच्यानि। अन्यथा तद्वैयर्थ्याच्छ्रुतिशैलीमनुविदधानेषु कल्पसूत्रे 'ष्वाज्यहविरुपांशुयाजः पौर्णमास्यामेव भवती'-त्यादिवाक्येष्ववधारणस्य कल्पसूत्रान्तरस्थसमानप्रकरणप्राप्तामावास्याकालोपसंहारशङ्काव्यवच्छेदेनैवार्थवत्त्वस्य दृष्टत्वाच्च शिव एवेति वाक्ये सद्रूपताव्यवच्छेदः कण्ठतोऽपि कृतो दृश्यते। तथा बृहदारण्यकोपनिष 'द्यस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेद' इत्यादिना 'अयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानी' त्यन्तेन सर्वकारणं वस्तूपक्षिप्य 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघनः एवैवं वा अरे अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे' ति तस्य प्रज्ञानैकरूपत्वप्रतिपादनस्य कारणवाक्यान्तरप्राप्तरूपान्तरव्यवच्छेदपरत्वमवधार्यते। कारणवाक्यान्तरेषु तदन्यकारणवाक्यप्राप्तरूपान्तरव्यवच्छेदकावधारणदर्शनात्। तेनान्येषामपि ज्ञानकारणवाक्यानां कारणं ज्ञानैकरूपमित्यत्र तात्पर्यमवसीयते। न च शाखाभेदेनोदितानुदितहोमव्यवच्छेदेऽपि साध्यरूपस्याग्निहोत्रस्यैक्यवत्सद्ज्ञानानन्दशिवविषयकारणवाक्यभेदेन परस्परधर्मव्यवच्छेदे सिद्धरूपस्य कारणस्यैक्यमुपपद्यते। तस्मान्न कारणवाक्येषु छागपशुन्यायावतारः। अस्तु वा ज्ञानानन्दपर्यन्तस्तन्न्यायावतारः। शिवपर्यन्तस्तु न सम्भवति। 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।' 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इत्यादीनां विशेषान्तरविषयाणामपि कारणवाक्यानां सत्त्वेन तेषां सत्यज्ञानादिवाक्यानां च क्व विषये पर्यवसानं भवत्वित्यत्र विनिगमनाविरहात्। तस्माद्ब्रह्मणो लक्षणं न सम्भवतीति। इत्थं संशयप्रदर्शि-

---

(१) 'समुच्चय' इति ङ. पाठः। (२) 'साध्यरूपस्यैवाग्नि' इति ङ. पाठः। (३) 'विशेषे' इति घ. पाठः।

दिवाक्यं विषयः । (अत्र जगतो जन्मादिकं ब्रह्मणो लक्षणतया सम्भवति न वेति सन्देहः । न सम्भवति सम्बन्धाभावात् । किं च 'आनन्दो ब्रह्मेति व्यजानादि'त्यत्रानन्दस्य जगज्जन्मादि लक्षणं पर्यवस्यति । अन्यत्र 'सदेव सोम्येदमग्र आसीदि'ति सतो जगत्कारणत्वमवगम्यते । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ज्ञानमेवापरिच्छिन्नं जगत्कारणं ब्रह्मेत्येकत्र विज्ञायते । अपरत्र च 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवल'इति शिवशब्दवाच्यं वस्तु कारणत्वेन सकलपूर्वभावि ब्रह्मेति विज्ञायते। अत्रानन्दादीनां ब्रह्मत्वे विकल्पो वा समुच्चयो वा । विकल्पे श्रुतहान्यादिदोषप्रसङ्गोऽव्यवस्था च । व्यवस्थितविकल्पेऽपि ब्रह्मानेकत्वप्रसङ्गः । समुच्चयपक्षे तेषां धर्मरूपत्वान्निखिलजगन्निर्माणोपायज्ञानविशेषविशिष्टब्रह्मत्वासम्भवः । अपि च'मायां तु प्रकृतिं विद्या'दितिश्रुतिर्मायाया अचेतनाय जगत्कारणत्वमभिधत्ते तदेव युक्तम्। ब्रह्मणो ज्ञानरूपस्य जगत्कारणत्वे तस्य विकारापत्त्या 'निष्कलं निष्क्रियं शान्त' मित्यादिश्रुतिभङ्गप्रसङ्गः। अतस्सर्वथाऽपि ब्रह्मणो जगत्कारणत्वादि लक्षणमभिधातुमशक्यमित्येवमादौ पूर्वपक्षविक्षेपे प्राप्ते ब्रूमः । यद्यपि जन्मादेर्जगन्निष्ठत्वेन ब्रह्मण्यसम्बन्धः । तथापि ताटस्थ्येन

---

नपूर्वकं पूर्वपक्षं प्रापय्य सिद्धान्तयितुं प्रतिजानीते—अत्र जगतो जन्मादिकमित्यादिना एवमादौ पूर्वपक्षविक्षेपे प्राप्ते ब्रूम इत्यन्तेन । अतन्निष्ठत्वेन तल्लक्षणत्वासम्भवं तावत्परिहरति—यद्यपीति। असम्बन्धो धर्मधर्मिभावसम्बन्धाभावः । ताटस्थ्येनेति । यथा शाखाग्रस्य चन्द्रलक्षणत्वं तद्वदिति भावः । ननु, शाखाग्रं नानुमाने स्वयं हेतुभावेन तल्लक्ष्यगतकिञ्चिद्विशेषप्रतीतावुपयुज्यते । किं तु कस्मिन् गगनप्रदेशे चन्द्रो वर्तत इत्यजानतः तज्जिज्ञासयां पृष्टवतो गगने सर्वत्र चक्षुर्विक्षेपक्लेशो माभूदिति देशविशेषे चक्षुर्नियमनमात्रे तदुपयुज्यते । तत्र यदि प्रागवगतचन्द्रं तस्य प्रदेशविशेषवर्तित्वमात्रं जिज्ञासमानं प्रतीदं लक्षणकथनं तदा तस्य चक्षुर्नियमानन्तरं प्रत्यक्षेण जायमानं प्रदेशविशेषवर्तित्वज्ञानमेव फलम् । यदि प्रागनवगतचन्द्रमसि ज्योतिर्मण्डलेऽस्ति चन्द्रशब्दवाच्य इत्येतावदवगत्य तं विशिष्य जिज्ञासमानं प्रतीदं लक्षणकथनं तदा चक्षुर्नियमने सति शाखोर्ध्वदेशे चन्द्रसमीपस्थितनक्षत्रादिसाधारण्येन चन्द्रे दृश्यमानेऽप्ययं चन्द्रशब्दवाच्य इति निश्चयोदयासम्भवात्तत्र 'प्रकृष्टप्रकाशश्चन्द्र' इत्यादिस्वरूपलक्षणमपि वक्तव्यमिति तन्मुखेन जायमानं चन्द्रशब्दवाच्यत्वनिर्धारणं फलमिति विशेषः । उभयथापि शाखाग्रं चन्द्र इति तटस्थलक्षणकथनं चक्षुर्नियमनमात्रे व्याप्रियते । न तु साक्षाल्लक्ष्यविशेषज्ञापने । लोके तस्य तटस्थलक्षणत्वव्यपदेशो 'वृक्षं प्रति विद्योतते विद्यु'दित्यत्र वृक्षस्य व्याकरणे लक्षणत्वव्यपदेशश्च प्रमाणान्तरव्यवधानेनापि लक्ष्यविशेषज्ञाने फलपर्यवसानमस्तीत्येतावता । एवं च शाखाग्रस्य लक्ष्यगतविशेषसाधने हेतुत्वाभावात् ताद्धर्म्याभावेऽपि लक्षणत्वं भवतु नाम । जन्मादिसमुदायस्य लक्ष्यगतनिरतिशयबृहत्त्वसिद्धौ हेतुभावेनैवोपयोग इति तस्य कथं ताद्धर्म्याभावे लक्षणत्वमुपपद्यत

---

(१)'ब्रह्मणि'इति ख. ग. पाठः । (२) 'प्रसङ्गात्' इति ख. पाठः ।

**लक्षणत्वं युज्यते । यत् सर्वज्ञत्वादिविशिष्टमष्टाभिधानाधिकरणं शिवतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यते । आनन्दादीनामत्रैव धर्माणां पर्यवसानं भवति । सर्वज्ञत्वं नित्यतृप्तत्वमनादिबोधत्व स्वतन्त्रत्वमलुप्तशक्तिमत्त्वमनन्तशक्तिमत्त्वं चेत्येतानि सर्वज्ञत्वादीनि । नित्यापरोक्षानपेक्षितबाह्यकरणनिष्कलङ्कानुभवविषयनिखिलवस्तुत्वमिह सर्वज्ञत्वम् । 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तप' इत्यादिभिरिदं ब्रह्मणस्सिद्धम् । अनेन सकलचेतनबहुविधकर्मफलभोगानुकूलतत्तच्छरीरनिर्माणोपायसामग्रीविशेषज्ञं ब्रह्म निमित्तं भवति । निरस्तसमस्तोपप्लवकलङ्कनिरतिशयानन्दपरिपूर्णत्वमिह नित्यतृप्तत्वम् । अत एव**

इति चेदुपपद्यत एव । निमित्तोपादानसाधारणहेतुहेतुमद्भावसम्बन्धेन जन्मादिकस्य लक्षणीकरणात् । तेन सम्बन्धेन तस्य व्यभिचाराप्रसङ्गात् । धूमादीनामपि तेन तेन सम्बन्धविशेषेणैव व्याप्तेरुपपादनीयत्वात् । जन्मादिकारणत्वस्य लक्षणीकरणे ताद्धर्म्यमपि लभ्यते किमनेन प्रयासेनेति चेन्न । तस्य लक्षणीकरणेऽपि सम्बन्धान्तरेण तस्य ब्रह्मान्यवृत्तितया व्यभिचारवारणाय सम्बन्धविशेषविवक्षावश्यंभावे लाघवात् जन्मादिकस्यैव सम्बन्धविशेषेण लक्षणीकर्तुं युक्तत्वादित्यभिप्रायः । एवं लक्षणसामान्यप्रयोजनासम्भवशङ्का निराकृता । अथ विशिष्य ब्रह्मलक्षणस्य विवक्षितं प्रयोजनं न सम्भवतीत्युपन्यस्तां शङ्कां परिहर्तुमुपक्रमते-यदित्यादिना । शिवो निरतिशयबृहत्त्वशाली । जगज्जन्मादिसमुदायादिहेतुभावेन प्रकृतलक्षणस्य विशिष्य विवक्षितमपि प्रयोजनं सम्भवति । बहुषु कारणत्वप्रतिपादकवाक्यानां मुख्यार्थासम्भवेन किञ्चिद्विषयाणामेव तेषां मुख्यार्थपरत्वे वक्तव्ये किंविषयवाक्यानां तद्युक्तमिति तत्र न्यायगवेषणायां शिवस्य पञ्चकृत्यकारित्वोपपादकसर्वज्ञत्वादिरूपषडङ्गप्रसिद्ध्या जन्मादिकारणत्वतदुपपादकप्रवृत्तिनिमित्तकभवादिनामाष्टकाभिधेयत्वप्रसिद्ध्या च तद्विषयाणामेव कारणवाक्यानां यथाश्रुतार्थपरत्वस्य न्याय्यत्वावधारणात् जन्मादिकारणत्वोपपादकगुणजातस्य तत्र क्लृप्ततया तदाक्षेपानपेक्षणेन[१] बुद्धिलाघवात् जन्मादिकारणत्वादिप्रवृत्तिनिमित्तकनामाष्टकसंवादाच्चेत्याशयेन 'सर्वज्ञत्वादिविशिष्टमष्टाभिधानाधिकरण'मिति विशेषणद्वयमुपन्यस्तम् । शिवशब्दप्रवृत्तिनिमित्तपर्यालोचनयाप्युक्तार्थसिद्धिमभिप्रेत्य, तेन विशेष्यनिर्देशः कृतः । शिव एव तत्त्वं शिवतत्त्वम् । तत्त्वशब्देनात्र कालत्रयवर्ति शाश्वतं वस्तूच्यते । अत एव 'ब्रह्म वेदा ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वत'मिति प्राचीननानार्थकोशार्थसङ्ग्राहके 'वेदस्तत्त्वं तपो ब्रह्मे'त्यमरकोशे शाश्वतज्ञानशब्दस्थाने तत्त्वशब्दप्रयोगः । एवं चात्र तत्त्वशब्दप्रयोगेन शिवस्य 'न सन्न, चासच्छिव एव केवल'इति मन्त्रोक्तसर्गाद्यकालावस्थायित्वप्रदर्शनेन कारणवाक्यान्तरेभ्यः प्रबलेन तेनापि जगत्कारणत्वस्य शिवैकान्त्यसिद्धिरिति सूच्यते । एवं षडङ्गनामाष्टकशिवशब्दप्रवृत्तिनिमित्तयदातमोमन्त्रप्राबल्यपर्यालोचनया सच्चिदानन्दरूपतापि छागपशुन्यायेन शिव एवावतरतीत्याह—आनन्दादीनामिति । एवं 'यत्सर्वज्ञत्वादिविशिष्ट'मित्यादिना सङ्क्षिप्तमर्थजातं प्रपञ्चेनोपपादयति—सर्वज्ञत्वमित्यादिना 'अत आनन्दादीनां विकल्पादिचिन्ता निरर्थिके'त्यन्तेन ग्रन्थसन्दर्भेण ।

(१) 'तदाक्षेपानपेक्षणे' इति च. पाठः ।

'आनन्दो ब्रह्मे'ति श्रूयते । यः खलु'अन्योन्तर आत्माऽऽनन्दमय'इति प्रस्तुत्य 'सैषानन्दस्य मीमांसा भवती'त्यारभ्य अभ्यासान्निरतिशयानन्दशिरस्कत्वेन'स एको ब्रह्मण आनन्द'इति निरूपितः । परब्रह्मधर्मत्वेन च स एव'आनन्दो ब्रह्मे'-ति प्रचुरत्वाद्ब्रह्मत्वेनोपचर्यते । तादृशानन्दभोगरसिकं ब्रह्म नित्यतृप्तमित्युच्यते। ब्रह्मणो मनसैव महानन्दानुभवो, न बाह्यकरणद्वारा । तथा हि श्रुतिः'आकाश-शरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम्'इति। आकाशत इत्याकाशः प्रकाशश्चिदम्बरमुच्यते । न भूताकाशः । विशेषाभावात् ।)

तत्र सर्वज्ञत्वादिषट्कं प्राणिनिकायस्य तत्तदनुष्ठितकर्मज्ञानानुसारेण वैषम्यनैर्घृण्ये विनानादि-कालप्रवृत्तपञ्चकृत्यकर्तृतायामुपयुज्यते । यः खलु सृज्यपालनीयसंहार्यतिरोभावनीयानुग्रा-ह्यजातमशेषविशेषसंहितमनादिसिद्धेन बोधेन सदा प्रत्यक्षमनुभवति तदनुकूलानाद्यसङ्ख्येयश-क्तिशाली च भवति । सर्वं च प्रपञ्चमधितिष्ठति स्वयं निरतिशयानन्दनित्यतृप्ततया स्वतस्सिद्धत-त्त्वावबोधोपहतभक्ताभक्तविषयरागद्वेषोन्मेषतया च स्वार्थपरार्थप्रयुक्तसृष्ट्यादिवैषम्यनैर्घृण्य-रहितश्च भवति स एवास्य प्रपञ्चस्योक्तविधया पञ्चकृत्यानि कर्तुं शक्नोति । अलुप्तशक्तिक-त्वमनंतशक्तिकत्वं च प्रपञ्चोपादानभावेऽप्युपयुज्यते । भाष्ये सर्वज्ञतादिषु कस्यचित्क्वचिदुप-योगवर्णनं यथार्हमन्यत्राप्युपयोगस्योपलक्षणम् । एवं नामाष्टके शिवशब्दे च यथासम्भवं जन्मादिकारणत्वतदुपपादकप्रवृत्तिनिमित्तके भाष्यकृतं कस्यचित्कयाचिद्व्युत्पत्त्या प्रवृत्तिनि-मित्तप्रदर्शनं व्युत्पत्त्यन्तरेण सम्भवतां प्रवृत्तिनिमित्तान्तराणामप्युपलक्षणम् । अत्र व्याख्ये-यांशव्याख्यानपूर्वकमपेक्षितार्थानाविष्कुर्मः । ननु'आनन्दो ब्रह्मे'तिश्रुतिरानन्दस्य वैषयिकसुख-न्यायप्राप्तदुःखमिश्रणराहित्यरूपं निरस्तसमस्तोपप्लवकलङ्कत्वं निरतिशयत्वं च न प्रतिपाद-यति । नाप्यानन्दवत्त्वं ब्रह्मणः प्रतिपादयति । किं तु तस्यानन्दरूपत्वमेवेत्याशङ्क्य पूर्वसन्द-र्भानुसारेणोदाहृतश्रुतेस्तथाभूतानन्दवद्ब्रह्मेत्यर्थे पर्यवसानं दर्शयति–यः खल्वित्यादिना । प्र-स्तुत्येति । 'अन्योऽन्तर आत्मानन्दमयः । तस्य प्रियमेव शिर'इत्यादिप्रियमोदाद्यात्मकसुख-विशेषरूपशिरःपक्षाद्यवयवयुक्तत्वेनानन्दमयं प्रस्तुत्येत्यर्थः । तेन सैंधवखिल्ये लवणरसविरो-धिनो रसान्तरस्येवानन्दमये प्रियमोदादिरूपसर्वावयवयुक्ते सुखविरोधिनो दुःखस्यानुप्रवेशो ना-स्तीत्याद्यविशेषणार्थसद्भावस्सूचितः । 'निरतिशयशिरस्कत्वेनाभ्यासा' दित्यनेन द्वितीयविशेष-णार्थो दर्शितः । 'ब्रह्मण आनन्द'इति श्रुतिभागोदाहरणेन आनन्दस्य ब्रह्मधर्मत्वं दर्शितम् । ननु, ब्रह्मधर्मस्तथाभूतानन्दः कथमिह वाक्ये ब्रह्मेति व्यपदिश्यत इत्याशङ्क्य 'तद्गुणसा-रत्वा'दिति वक्ष्यमाणन्यायेनाभेदोपचारादित्याह–प्रचुरत्वाद्ब्रह्मत्वेनोपचर्यत इति । सर्व-ज्ञत्वनिरुक्ता'वनपेक्षितबाह्यकरणे'ति करणे बाह्यत्वविशेषणेन सूचितं ब्रह्मणो मनस्सद्भाव-मिहानन्दानुभवोपयोगितया निरूपयति–मनसैवेति । न बाह्येति । स्रक्चन्दनादिविषयसु-खानुभववद्बाह्यकरणं परम्परयापि नापेक्षत इत्यर्थः । नन्वाकाशशब्दः प्रसिद्धिप्राचुर्याद्भूता-काशपरस्स्यादित्याशङ्क्याह–विशेषाभावादिति । सर्वप्रपञ्चशरीरकस्य भूताकाशशरीरप्र-तिपादनमात्रेण न कश्चिदतिशयो वर्णितो भवतीत्यर्थः । प्रसिद्धभूताकाशरूपाम्बरव्यतिरेकेण

(१) 'प्रसज्य' इति ख. पाठः । (२) 'निरतिशयशिरस्कत्वेन' इति पाठान्तरम् ।

निखिलजगदण्डषण्डबुद्बुदनिकुरुम्बजलधिस्थानीया परप्रकृतिरूपा परमशक्तिर्हि चिदम्बरमुच्यते । तत्स्वरूपं ब्रह्म आकाशशरीरम् । परप्रकृतित्वं चिदाकाशस्य- 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह वै नामरूपयोर्निर्वहिता'इत्यादिश्रुतिसिद्धम् । सत्यात्म सत्तारूपम् । प्राणारामं प्राणस्सकलाधारभूता चिदम्बरप्रकृतिरुच्यते । स्वरूपभूतायां तस्यामारामो यस्य तत्प्राणारामम् । मनआनन्दं मनस्येवानन्दो यस्य न बाह्यकरणे तन्मनआनन्दम् । अत्राप्यानन्द इति चिदंबरप्रकृतिरुच्यते। तथा च श्रूयते- 'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्या'दिति । शान्तिसमृद्धं शिवतासम्पन्नम् । अमृतमनादिमुक्तम् । अत्र सच्चिदानन्दरूपपरमाकाशरूपं ब्रह्म स्वरूपानन्दं मनसैवानुभवति बाह्यकरणनिरपेक्षमिति सिद्धं 'मनआनन्द' मित्यनेन । इदमेव ज्ञापकं ब्रह्मभावमापन्नानां मुक्तानां निरतिशयस्वरूपानन्दानुभवसा-

किमिदं चिदम्बरं नामेत्याकाङ्क्षयामाह--निखिलेति । सकलप्रपञ्चपरिणामिनी परमेश्वरस्य चिच्छक्तिश्चिदम्बरमुच्यत इत्यर्थः । तत्स्वरूपमिति । स एवाकाशः स्वरूपं घटस्य घटत्ववत्स्वरूपनिरूपकधर्मोऽस्येति बहुव्रीहिः । चिच्छक्तिः परमेश्वरस्य जगद्व्यापारे छेदने कुठारवत्करणभूतैव केवलं न तु प्रपञ्चप्रकृतिरिति केचिदाहुः । तन्निरासार्थमाह--परप्रकृतित्वमिति। यस्य सा परमा देवी शक्तिराकाशसंज्ञिता । अनन्तैश्वर्ययोगात्मा महेशो दृश्यते हि स' इति कौर्मवचने चिच्छक्तेराकाशसंज्ञास्तित्ववर्णनादुदाहृतश्रुत्योराकाशशब्दः चिच्छक्तिपर इति भावः । सत्तारूपमिति । सर्वत्र प्रपञ्चे सत्सदित्यनुगतप्रत्ययविषयतया स्फुरन्ती सर्वप्रकृतिभूता सैव चिच्छक्तिस्सत्ता । सा रूपमस्येति बहुव्रीहिः । 'सत्यात्मे'ति श्रुतौ सत्यशब्देन 'सच्च त्यच्चाभव'दिति श्रुतेस्सत्त्यदात्मकसकलप्रपञ्चाकारपरिणामिनी तदनुगतसत्तारूपा चिच्छक्तिरुच्यते । सत्तारूपमित्यर्थतस्तद्व्याख्यानम् । सकलाधारभूतेति । प्राणशब्दस्य गौणप्रवृत्तिनिमित्तोक्तिः । प्राणवायुर्हि सर्वेषां भूतानां शरीरस्येन्द्रियाणां चाधारः । मा मोहमापद्यथ अहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य धारयामी'ति प्राणसंवादे वागादीन्प्राणान्प्रति मुख्यप्राणवचनाच्चिच्छक्तिः समुख्यप्राणस्य सर्वस्यापि प्रपञ्चस्याधारभूतेत्यस्यामतिशयितप्राणगुणवत्त्वेन ताच्छब्द्यमिति भावः । मनस्येवानन्दो न बाह्यकरण इति । शरीरे सुखमितिवदौपचारिकः सप्तम्याधिकरणत्वनिर्देशः । को ह्येवान्यादिति । अननं प्राणवायुव्यापारः प्राणनं चक्षुरादिव्यापारः । यद्वा अननं सांसारिकसुखानुभवः प्राणनमापवर्गिकसुखानुभवः तदुभयमपि परमाकाशरूपपरशक्त्यानन्दाधीनमेव । सांसारिकसुखानामुपाधितिरोधानकृताविर्भावतारतम्यशालितल्लेशविशेषरूपत्वात् तस्यैव परमानन्दस्य मुक्त्यनुभाव्यसुखत्वाच्च । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति 'स एको ब्रह्मण आनन्द' इति 'श्रोत्रियस्य चाकामहतस्ये'ति च श्रवणात् । शिवतासम्पन्नं नित्यनिर्धूतनिखिलदोषमनादिमुक्तं नित्याविर्भूतसत्यसङ्कल्पत्वादिमङ्गल्यगुणगणम् । 'आकाशशरीर'मित्यादिश्रुतिव्याख्यानं प्रकृते सङ्गमयति--अत्रेति । प्रसङ्गा'न्मनआनन्द'मितिलिङ्गानुगतं मुक्तानां मनस्सद्भावं दर्शयति--इदमेवेति । मुक्तेर्ब्रह्मसाम्यरूपत्वात् ब्रह्मणो मनस्यानन्दानुभवो मुक्ता-

(१) 'शक्ति' इति ख. पाठः ।

धनं बाह्यकरणनिरपेक्षमन्तःकरणमस्तीति । अतो बाह्यकरणनिरपेक्षेण शुद्धबोधशक्तिरूपेण मनसा स्वरूपानन्दमनन्तमनुभवद्ब्रह्म नित्यतृप्तम् । न तस्य कदापि बाह्यसांसारिकसुखलवापेक्षा भवतीत्यर्थः । स्वतस्सिद्धनिरतिशयज्ञानवत्त्वमनादिबोधत्वम् । यत्स्वरूपानन्दानुभवसाधनमन्तःकरणं ज्ञानं तदनादिसिद्धमेव । अतोऽनादिबोधं ब्रह्म संसारनिवर्तकस्य ज्ञानस्यानादिसिद्धत्वान्नित्यनिवृत्तसंसारदोषं'शान्तिसमृद्धममृत'मिति श्रूयते । अन्यप्रेष्यताकार्पण्यरहितत्वेन स्ववशीकृतस्वेतरसकलवस्तुत्वं स्वातन्त्र्यम् । 'ज्ञाज्ञौ द्वावजावीशानीशौ । भोक्ता भोज्यं प्रेरितारं च मत्वा ।' 'विद्याविद्ये ईशते यस्तु सोऽन्य'इत्यादिषु ब्रह्मणो जडाजडप्रपञ्चप्रेरकत्वेन स्वतन्त्रत्वं सिद्धम्।सर्वविषयस्वातन्त्र्येण ब्रह्मणस्सर्वकर्तृत्वसिद्धिः। स्वाभाविकशक्तिमत्त्वमलुप्तशक्तिमत्त्वम्। तथा हि श्रवणं'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'त्यादि। चिदचित्प्रपञ्चरूपशक्तिविशिष्टत्वं स्वाभाविकमेव ब्रह्मणः कदाचिदपि न निर्विशेषत्वमित्यनेन सिद्धम्। अपरिच्छिन्नशक्तिविशिष्टत्वमनन्तशक्तिमत्त्वम्। अनन्ताभिरेव शक्तिभिर्जगतो जनकं शासकं च ब्रह्म भवति । तथा हि श्रूयते'एक एव रुद्रो न द्वितीयाय तस्थुः।' 'तुरीयमिमं लोकमीशत ईशनीयुर्जननीयुर्यस्सर्वांल्लोकानीशत ईशनीभिर्जननीभिः परमशक्तिभि'रि-

---

नामपि तथाभावे लिङ्गमिति भावः। भट्टभास्करेणापि यजुर्वेदारण्यकभाष्ये 'मनआनन्दमिति' वाक्यमित्थमेव व्याख्यायोक्त'मिदमेव लिङ्गं मुक्तात्मनामीश्वरस्य च मनोविशेषोऽस्तीत्यत्रे'ति । नित्यतृप्तत्वस्य स्वार्थप्रयुक्तसृष्टिवैषम्यप्रसक्त्यभावसिद्धावुपयोगमाह—न तस्य कदापीति। अनादिबोधस्य परार्थप्रवृत्तिसृष्टिवैषम्यापादकरागादिदोषाभावसिद्धावुपयोगमाह—अतो मिति। 'ज्ञाज्ञौद्वा'विति 'भोक्ता भोज्य'मिति 'विद्याविद्ये'इति च श्वेताश्वतरोपनिषदि पशुपाशपतिनिर्णायकानां मन्त्राणामेकैकः पादः । ज्ञाज्ञौ सर्वज्ञकिञ्चिज्ज्ञौ द्वावजौ सनातनौ । ईशानीशौ नियन्तृनियम्यौ । भोक्ता भोज्यं पशुः पाशश्चेति द्वयं तयोः प्रेरकं परमेश्वरं च मत्वा ब्रह्मभावमेतीत्युत्तरत्रान्वयः । यस्तु विद्याविद्ये पशुपाशौ ईशते ईष्टे। विकरणव्यत्ययो वचनव्यत्ययो वा । स ताभ्यामन्यः। इत्यादिष्विति । आदिशब्देन 'क्षरं प्रधानममृताक्षरो हरः क्षरात्मनापीशते देव एकः ।' 'वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ।' 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इत्यादिमन्त्रभागसङ्ग्रहः । शक्तिविशिष्टत्वं स्वाभाविकमेवेति । उक्तं हि कूर्मपुराणे'किं तत्परतरं तत्वं का विभूतिर्जनार्दने'ति पृष्टवन्तमिन्द्रद्युम्नं प्रति भगवता 'परात्परतरं तत्त्वं परब्रह्मैकमव्ययम्। नित्यानन्दं स्वयंज्योतिरक्षरं तमसः परम् । ऐश्वर्यं तस्य तन्नित्यविभूतिरिति गीयत ॥' इति । एको रुद्र इति । एक एव रुद्रः द्वितीयाय द्वितीयस्तत्सदृशः । प्रातिपदिकार्थे छान्दसश्चतुर्थीप्रयोगः । न तस्थुः न तस्थौ । छान्दसं बहुवचनम् । इमं लोकं शुद्धमिश्राशुद्धाध्वरूपं लोकत्रयम् । तुरीयमुक्तलोकत्रयापेक्षया चतुर्थम् 'अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमशीये'ति सर्वाधिकारिप्रेप्सनीयत्वेन श्रुतिसिद्धमध्वनां मध्येऽतिश्रेष्ठस्य शुद्धाध्वनोऽप्युपरि स्थितं परमाकाशरूपं परमपदं च । ईशते इष्टे । ईशनीयुः ईशनानुकूलेच्छाशक्तिमान् । जननीयुः जननानुकूलेच्छाशक्तिमान् । ईशनमैश्वर्यम् । जननं

---

(१) 'स्वतोनिरतिशयज्ञानवत्त्व' इति पाठान्तरम् । (२) 'साधनं बाह्यकरणनिरपेक्षमन्तःकरणं' इति पाठान्तरम् ।

त्यादि । अनन्तशक्तिमत्त्वाद्ब्रह्मणोऽपरिच्छिन्नप्रपञ्चसमवायिकारणत्वं सिद्ध्यति । अष्टाभिधानाधिकरणमिति भवशर्वेशानपशुपतिरुद्रोग्रभीममहादेवाभिधानाष्टकस्याधिकरणं वाच्यं परं ब्रह्म । अस्य सकलशब्दवाच्यत्वेऽपि परभावबोधकत्वेन मुख्यतया भवादिशब्दाभिधेयत्वेन नान्यशब्दाभिधेयत्वाभावप्रसङ्गः । सर्वत्र सदा भवतीति भवशब्दवाच्यं ब्रह्म । भूधातोस्सत्तार्थकत्वात्सर्वत्रानुवर्तमानं सद्रूपं ब्रह्मेति विज्ञायते । तथा हि श्रुतिः'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं'

---

जनयितृत्वम् । जनेर्ण्यन्ताल्ल्युट् । ईशनमात्मन इच्छति जननमात्मन इच्छतीत्यर्थयोः 'सुप आत्मनः क्यजि'(पा०-३-१-८-सू०)ति क्यचि 'क्याच्छन्दसी'(पा०३-२-१७०-सू० ) त्युप्रत्यये च रूपद्वयसिद्धिः । 'न छन्दस्यपुत्रस्ये'ति (पा०-७-४-३५-)सूत्रेण 'क्यचि चे'ति(पा०-७-४-३३-सू० )प्राप्तस्य ईत्वस्य निषेधस्तु न भवति । सर्वविधीनां छन्दसि विकल्पितत्वात् । ईशनीभिः ईशनकारिणीभिः जननीभिः जननकारिणीभिः । पूर्वोदाहृतश्रुतावीशनजननानुकूलेच्छाशक्तिमत्त्वमुक्तम् । इह तदनुकूलक्रियाशक्तिमत्त्वमिति भेदः । नन्वष्टाभिधानाधिकरणमिति किमुच्यते । सन्ति हि शम्भुशङ्करादीन्यन्यान्यपि शिवस्य नामानि । किं बहुना । 'इमा रुद्राय स्थिरधन्वने गिर'इति श्रुतिः प्रत्यक्षादिसन्निधापितसकलशब्दवाच्यत्वं शिवस्य प्रतिपादयति । आश्वलायनोऽपि शिवं प्रस्तुत्याह'सर्वाणि ह वा एतस्य नामधेयानी'ति । तस्मादिदमनुपपन्नमित्याशङ्क्याह–अस्य सकलशब्देति । परभावबोधकत्वेनेति । विशिष्य जन्मादिकारणत्वतदुपपादकगुणबोधकत्वेनेत्यर्थः । इदमुपलक्षणम् । भवादिनामाष्टकस्य आपस्तम्बीयानां मन्त्रेष्वाम्नानेनापस्तम्बसूत्रे ईशानबलौ बोधायनाश्वलायनसूत्रयोः शूलगवहोमे बोधायनसूत्रे महादेवस्य प्रतिष्ठाविधौ नित्यपूजाविधौ प्रदोषपूजाविधौ च होमतर्पणार्चनेषु विनियोगवर्णनेन च मुख्यत्वं द्रष्टव्यम् । तथा च 'षट्त्रिंशदहो वा एष यज्ञो यद्द्वादशाह'इति श्रुतेः षट्त्रिंशताहोभिः साध्यस्यापि क्रतोर्द्वादश सौत्यान्यहानि मुख्यानीति यथा द्वादशाह इति व्यपदेशः तथैवात्राष्टाभिधानाधिकरणमित्युक्तिरिति भावः । सर्वत्र सदेति । यद्यपि भवशब्दस्य पचाद्यच्प्रत्ययान्तस्य भवनकर्तृमात्रे शक्तिः तथापि 'तत्र भव' (पा०-४-३-५३-सू०) इति व्याकरण इव पञ्चभवादिनामस्विव च भवनाधिकरणविशेषसमर्पकोपपदादिसङ्कोचकाभावात् सर्वत्र सदा भवनमर्थो लभ्यत इति भावः । अस्त्वेवं तथापि भवशब्दस्य परभावबोधकत्वं कथं सिद्ध्यतीत्याशङ्क्य 'सदेव सोम्येदमग्र आसी'दिति श्रुतजगत्कारणसमर्पकसच्छब्दपर्यायत्वप्राप्तेरित्युपपादयति–सर्वत्रानुवर्तमानमित्यादिना । भवशब्दस्तावद्भूधातोरस्तिधातोर्वा पचाद्यच्प्रत्ययान्त इत्युभयथापि सत्तार्थकत्वाविशेषात्तस्यास्तिधातोः शत्रन्तस्य सच्छब्दस्य चैकार्थ्यमस्तीति भावः । कारणवाक्यान्तरश्रुतसत्यशब्दस्य 'सत्ये साधौ च सच्छब्द' इति भारतोक्तेः सच्छब्दपर्यायत्वात्तदैकार्थ्यमपि लभ्यत इत्यभिप्रायेण 'सत्यं ज्ञानं''सत्यात्मे' तिश्रुत्योरुदाहरणम् । न केवलं सच्छब्दभवशब्दयोः शक्तिपर्यालोचनयैकार्थ्यम् । किं तु 'सदेव सोम्येदमग्र आसी' दितिवाक्यश्रुतसच्छब्दस्य 'पुरुषो वै रुद्रः' 'सन्मह' इति श्रुत्यन्तरे शिवपर्यवसायित्वस्य कण्ठतः प्रदर्शितत्वादपि शिवनाम्नो भवशब्दस्य तदैकार्थ्यमित्यभिप्रायेण 'सन्मह' इति श्रुत्युदाहरणम् । ननु, भवशब्दस्य त्रैकालिकसद्रूपवस्तुवाचित्वमुक्तम् ।

'सत्यं ज्ञानमनन्तं ब्रह्म' 'सत्यात्म प्राणारामं मन आनन्दं' 'सन्महद्'इत्यादि । 'सन्घटः' 'सन्पट' इति सर्ववस्तुष्वनुगतवृत्त्या सद्रूपस्य ब्रह्मणस्सर्वोपादानत्वं सिद्ध्यति । मृदुपरक्तं हि घटादिकं मृदुपादानकमिष्यते । ततस्सद्रूपं ब्रह्म भवशब्दवाच्यं भवति । शर्वशब्देन 'शॄ हिंसाया'मिति धात्वर्थवशात् सकलसंहर्तृ ब्रह्म प्रतिपाद्यते । 'तस्मादुपसंहर्त्रे महाग्रासाय वै नमः' 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः' इति सर्वसंहर्तृ ब्रह्म श्रूयते । निरुपाधिकपरमैश्वर्यविशिष्टत्वादीशानशब्दवाच्यं ब्रह्म । 'य इमाँल्लोकानीशत ईशनीभि'रिति श्रवणात् । ईश्वरस्येशि-

सच्छब्दस्तु सर्गाद्यकालमात्रावस्थायिसद्रूपवस्तुवाची । 'आसी'दिति लङाख्यातस्य भूतार्थवाचित्वात् । न च जगदुपादानस्य सतो यावज्जगदनुवृत्तेरपेक्षितत्वात्तस्य सर्गाद्यकालमात्रावस्थायित्वमयुक्तमिति वाच्यम् । घटशरावादिरूपापन्ने मृत्पिण्डे पिण्डरूपस्येव प्रपञ्चरूपापन्ने सति सद्रूपस्य निवृत्तिसम्भवात् । अत एव'इदं घटशरावादिकं पूर्वेद्युर्मृत्पिण्ड एवासी'दिति लोकव्यवहारसमानैव 'सदेव सोम्येदमग्र आसी'दिति वाक्यच्छाया दृश्यते । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय' मित्येकस्यैव सतः सर्गाद्यसमयेऽवस्थानोक्त्या तस्य भवशब्दोक्तस्य सतश्चैक्यं सिद्ध्यति । अन्यथा सर्गाद्यसमये सद्द्वयावस्थानप्रसङ्गादिति चेदेवं तर्हि भवशब्दस्यैव त्रैकालिकसद्रूपवस्तुवाचित्वं त्यक्तव्यमापद्यते । उपपत्तिसहस्रेणापि व्यावृत्तानुवृत्तसत्ताविशिष्टयोरैक्यसमर्थनायोगात् । 'एकमेवे'ति श्रुत्यनुसारेण भवशब्दस्य सङ्कोचन्यायमात्रप्राप्तरूपविशेषवाचित्वस्य त्यक्तुमशक्यत्वादित्यत आह—सन्घटइति । यथा मृद्घटो मृच्छराव इत्यादिव्यवहारान्मृद्रूपानुवृत्त्या मृदो घटशरावाद्युपादानत्वं तथा 'सन्घटस्सन्पट'इत्यादिव्यवहारात् सद्रूपानुवृत्त्यैव ब्रह्मणः सर्वोपादानत्वम् । न तु मृत्पिण्डरूपस्येव तस्मिन्सद्रूपस्य निवृत्तिरस्ति ।'आसी'दिति प्रयोगस्तु अविभक्तभूतभौतिकनामरूपकेवलसद्रूपाभिप्रायेण । यथा 'पूर्वेद्युरिदं घटशरावादिकं सर्वं मृदेवासी'दिति व्यवहारो घटशरावादिनामरूपविभागरहितकेवलमृद्रूपाभिप्रायेणेति भावः । 'भवत्यस्मात्सर्व'मिति भवशब्दव्युत्पादने तु जगत्कारणत्वं ततो वाच्यवृत्त्यैव लभ्यते । 'ऋदोरप्' (पा०-३-३-५७सू०) इत्यप्प्रत्ययस्य बहुलग्रहणादपादानार्थेऽपि वृत्तिसम्भवात्।यद्यपि'श्रिणीभुवोऽनुपसर्गे'(पा०-३-३-२४-सू०)इति विधानादनुपसर्गाद्भूधातोः घञ्प्रत्ययेन भाव्यम् । तथाप्यस्त्यादेशाद्भुवोऽय'मृदोर'(पा०-३-३-५७-सू० )बित्यप्प्रत्यय उपपद्यते । 'श्रिणीभुव'इति(पा०-३-३-२४-)सूत्रे श्रिणीसाहचर्येण भूधातोरेव ग्रहणमित्यवगमात् । किञ्च बहुलग्रहणादेव भूधातोरप्ययं प्रत्यय उपपद्यते । णीञ्धातोरेव यतो नय इति रूपसिद्धिः । उभयथापि भवशब्दस्य भवत्यस्मात्सर्वमित्यर्थग्रहणे न कदाचिदनुपपत्तिः । तथैव हरिवंशे कृष्णकृतशिवस्तोत्रे तस्यार्थवर्णनं कृतम् । 'भूतं यस्माज्जगदत्यन्तवीर त्वत्तोऽव्यक्तादक्षरादक्षरेश । तस्मादाहुर्भव इत्येव भूतं सर्वेश्वराणां महतामप्युदार'मिति । 'कॄगॄशॄदॄभ्यो व' इति शॄधातोर्वप्रत्ययान्तः शर्वशब्दः सङ्कोचकाभावन्यायेन 'तस्मादुपसंहर्त्रे'इत्यादिश्रुत्यन्तरसंवादेन च सकलसंहर्तृवाचक इत्यर्थः । निरुपाधिकेति । स्थेशभासपिसकसो वरच्' (पा०३-२-१७५ सू. ) इति ताच्छील्यार्थविहितवरच्प्रत्ययान्तेश्वरशब्दसमानार्थ ईशानशब्दः 'ताच्छील्यवयोवचनशक्तिषु चानश्' (पा०३-२-१२९सू.)इति सूत्रविहितचानश्प्रत्य-

( १ ) इदं सूत्रमौणादिकं वेदितव्यम् ।

तद्व्यापेक्षतया पशुपतिशब्दवाच्यं ब्रह्म । तथा हि श्रूयते 'एषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदा'मित्यादि । पाशसम्बन्धेन पशुत्वव्यवहारात् पशुग्रहणात्पशुपाशद्वयं च गृहीतं भवति । अनेन चिदचिन्नियामकं ब्रह्मेति विज्ञायते । संसाररुग्द्रावकत्वाद्रुद्रशब्दवाच्यं ब्रह्म । 'तरति शोकमात्मवि'दिति श्रवणात् । परतेजोभिरनभिभवनीयत्वादुग्रशब्दवाच्यत्वं ब्रह्मणः । 'न तत्र सूर्यो भाति न चन्द्रतारक' मिति श्रवणात् । नियामकत्वेन निखिलचेतनभयहेतुतया भीमशब्दाभिधेयं ब्रह्म । 'भीषास्माद्वातः पवत'इत्यादिश्रुतेः । महत्त्वेन दीव्यमा-

---

यान्तः स्वाभाविकमसङ्कुचितं शिवस्यैश्वर्यमाचष्ट इति भावः । तदैश्वर्यस्य सकलचेतनाचेतनविषयत्वं पशुपतिनाम्नापि सिद्ध्यतीत्याह—ईश्वरस्येति। ननु, तेन पशुशब्दोक्तचेतनविषयत्वमैश्वर्यस्य सिद्ध्यति न त्वचेतनविषयत्वमपीत्याशङ्क्याह—पशुग्रहणादिति। 'ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्यन्ते संसारवशवर्तिनः । तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः । मलमायादिभिः पाशैस्स बध्नाति पशून्पतिः । स एव मोचकस्तेषां भक्त्या सम्यगुपासितः । चतुर्विंशतितत्वानि मायाकर्मगुणा अमी । विषया इति कथ्यन्ते पाशा जीवनिबन्धनाः । ब्रह्मादिस्तम्बपर्यन्तान्पशून्बध्वा महेश्वरः । पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम् ॥ ' इति हि पुराणेषु श्रूयते । अनेनैतत्सिद्धं भवति । पशुपतिनामान्तर्गतः पशुशब्दो न गवाश्वादिप्रसिद्धपशुवाची । नापि 'प्रमथेऽपि पशुः पुमा'निति निखण्ट्वनुसारेण प्रमथवाची । किन्तु ब्रह्मादिस्थावरान्तसकलचेतनवाची । 'येषामीश' इति मन्त्रे द्विपाचतुष्पाद्ग्रहणमपि सकलचेतनोपलक्षणम् । तद्वाचित्वं च न शक्त्या । किंतु गवाश्वमहिषादयस्तत्स्वामिभिः पाशैराबध्य स्ववशीकृत्य वाहनदोहनादिकर्मस्विव सर्वेऽपि चेतनाश्शिवेन मलमायादिभिः पाशैराबध्य स्ववशीकृत्य स्वाराधकरूपतया यथाकथञ्चित्स्वाराधनोपयोगितया वा स्वकीयेषु तत्तद्वस्तुसामर्थ्याधीनेषु कार्येषु विनियुज्यन्त इत्यनेन सादृश्येन गौण्या वृत्त्येति । एवं च पश्वधिष्ठानं पाशाधिष्ठानाधीनमिति तदुक्त्यैव पाशाधिष्ठानमप्यर्थतो लभ्यत इति भावः । संसारेति । रुजं द्रावयतीत्यस्मिन्नर्थे रुद्रशब्दो 'रुग्दुःखं दुःखहेतुत्वात्तद्रावयति नः प्रभुः । रुद्र इत्युच्यते तस्माच्छिवः परमकारण'मिति पौराणिकैर्व्युत्पादितः पृषोदरादिः । उत्पूर्वाद्गमेरुद्गच्छति उत्तरो भवतीत्यस्मिन्नर्थे 'ऋज्रेन्द्राग्रवज्रे'त्यादिना रन्प्रत्ययान्ततया निपातितः उग्रशब्दः श्रेष्ठवाची । अत एव हि 'उग्रोऽस्युग्रोऽहं सजातेषु भूयास'मिति मन्त्रे जातिश्रैष्ठ्याशंसाविषये स्वस्मिन्नुग्रशब्दः प्रयुक्तः । इह तु सङ्कोचकाभावात् 'यस्मात्परं नापरमस्ति किञ्चित्' 'न तत्समश्चाभ्यधिकश्च दृश्यत' इत्यादिश्रुतिप्रतिपन्नपरभावबोधकसर्वोत्तरत्वपरः । यद्यप्यनेन नियामकान्तरानियम्यत्वं कारणान्तराकार्यत्वमभिभावकान्तरानभिभवनीयत्वमित्यादि सर्वं सिद्ध्यति । तथापि तस्य सर्वस्योपलक्षणतयैकमुदाहरति—परतेजोभिरिति । भीमादयोऽपादान इति(पा०-३-४-७४-सू.) निपातितो भीमशब्दोऽपि'भीषास्माद्वातः पवत'इत्यादिश्रुतिप्रतिपन्नपरभावबोधकनियन्तृत्वप्रयुक्तमहाभयहेतुत्वपर इत्याह—नियामकत्वेनेति । महत्त्वेनेति । मानुषानन्दादिहैरण्यगर्भानन्दपर्यन्तसांसारिकभावापेक्षयोत्कृष्टे

---

(१) 'ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवत्रेरामालाः'इत्येतदौणादिकं सूत्रं वेदितव्यम्।

नतया महादेव इत्युच्यते शिवः। तथाऽथर्वशिरसि । 'अथ कस्मादुच्यते महादेवः यस्सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेव' इति। निरस्तसमस्तसंसारकलङ्कतया निखिलमङ्गलाधारतया शिवतत्त्वं स्वात्मानन्दानुभवे विषये दीव्यति रमत इति देवः इति सप्तमीसमासोऽत्र महादेवशब्देन विवक्षितः। 'आन्महतस्समानाधिकरणजातीययोः' (पा०-६-३-४६)इति सूत्रस्य 'अष्टन आ विभक्तौ'(पा०-७-२-८४)इत्यात्वप्रकरणं विहायान्यत्र प्रणयना'न्महत आ'दिति सूत्रयितव्ये 'आन्महत'इति सूत्रणाच्च तत्र यथेष्टं योगविभाग इष्यते। तेनात्र महच्छब्दस्य देवशब्देन सामानाधिकरण्याभावेऽप्येकादशाष्टाकपालयोरिवात्वम्। एवं चानन्यत्र भावो विषयशब्दार्थ इति विषयसप्तमीमहिम्ना तुच्छान् सांसारिकान् सर्वान्भावान्परित्यज्य महति स्वात्मानन्दानुभव एव रमत इत्येतावानर्थो महादेवशब्दस्य लभ्यते। स्वात्मानन्दानुभवस्य महत्पदेन निर्देशश्च तन्महत्त्वस्येतरपरित्यागे हेतुत्वमभिप्रेत्येति द्योतयितुं महत्त्वेनेति तृतीयान्तनिर्देशः। देवनताच्छील्यं देवशब्दार्थमभिप्रेत्य दीव्यमानतयेति शानच् प्रत्ययान्तप्रयोगः। आत्मज्ञानयोगैश्वर्यइति। आत्मविषयं ज्ञानमात्मज्ञानं स्वात्मानन्दानुभवः तेन योगो नित्यसम्बन्धः तदेवैश्वर्यं महाविभूतिः तत्र महीयते रमत इत्यर्थः । धातूनामनेकार्थत्वा'न्मही पूजाया'मिति कण्ड्वादिधातोर्देवनमर्थमङ्गीकृत्य तेन देवशब्दार्थप्रदर्शनं कृतम्। यद्वा । महादेवशब्दान्तर्गतस्य महच्छब्दस्य शिवे वृत्तौ तत्प्रवृत्तिनिमित्तप्रदर्शनपरेयमाथर्वशिरसी श्रुतिः । 'पूज्यते यः सुरैर्नित्यं महांश्चैव प्रमाणतः। धातुर्महीति पूजायां महादेवस्ततस्स्मृत'इति साम्बपुराणोक्तिश्च। एवं 'भवाय देवाय स्वाहे'त्यादिमूर्त्यष्टकमन्त्राम्नाने 'महते देवाय स्वाहे'ति पाठेन तर्गतस्य महच्छब्दस्यापि शिववृत्तितावगत्या प्रकृतभाष्ये तद्गतप्रवृत्तिनिमित्तप्रदर्शनौचित्यात्। ततश्च श्रुतौ'महीयत' इत्येतावदेव महच्छब्दप्रवृत्तिनिमित्तप्रदर्शनपरम्। महीयते तदभिज्ञैः पूज्यत इत्यर्थः।'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्चे'ति सूत्रेण[1] पूज्यत इत्यर्थे महच्छब्दो निपातितः। किंभूत इत्ययमभिज्ञैः पूज्यत इत्याकाङ्क्षायां तुच्छान्विषयान्परित्यज्य स्वात्मानन्दानुभवे निविष्टोऽयमेवं स्वशैलीप्रकटनार्थमेव वस्त्रमाल्याभरणानुलेपनादिकं विहाय चर्मास्थिदामभुजगभस्मादिकं धारयतीति तच्चरितरहस्याभिज्ञैः पूज्यत इति दर्शयितुं श्रुतौ महतीत्यन्ते निविष्ट इत्यध्याहार्यम्। अयमर्थो भागवतेऽपि शिवं प्रस्तुत्य वर्णितः–'हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन्रतस्याविदुषः समीहितम् । यैर्वस्त्रमाल्याभरणानुलेपनैश्श्वभोजनं स्वात्मतयोपलालितम्॥ यस्यानवद्यं चरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः। यत्पादपद्मं महतां मनोऽलिभिर्निषेव्यते ब्रह्मरसासवार्थिभि'रिति। एवं च 'महत्त्वेन दीव्यमानतयेऽति भाष्यं महच्छब्ददेवशब्दयोः समानाधिकरणसमासस्थयोः परस्परनिरपेक्षप्रवृत्तिनिमित्तप्रदर्शनार्थं व्याख्येयम्॥ निरस्तेति । शाम्यन्त्यस्मिन्दोषा इत्यर्थे 'सर्वनीघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा'इति(औणा०)सूत्रे शमिधातोर्वन्प्रत्ययेन इत्वमलोपाभ्यां च शिवशब्दो निपातितः समस्तसांसारिकदोषराहित्यवाची। निखिलेति। निखिलानि शिवशब्दवाच्यानि मङ्गल्यान्यस्य सन्तीति मत्वर्थीयाच्प्रत्ययान्तः शिवशब्दः सकलमङ्गल्यगुणव-

(१) सूत्रेण वार्तिकेन इत्यर्थः। वार्तिकस्यापि प्रामाण्यविषये सूत्रसादृश्यात्तथानिर्देश इति वेदितव्यम्।

यदवगम्यते तदुक्तस्वभावतया सकलजगज्जन्मादिकारणं भवति (१) तत्र तादृशमहिम्नि जगदुभयकारणत्वसम्भवात् । तदेतादृशमहत्त्वाद्ब्रह्मेत्युच्यते ।

त्त्ववाची । तदुक्तस्वभावतयेति । तत्प्रकृतं शिवतत्त्वं जगत्कारणत्वोपपादकसर्वज्ञत्वसर्वशक्तिकत्वादिगुणस्वभावतया सृष्टिवैषम्यनैर्घृण्यापादकदोषरहितस्वभावतया च जगदुभयकारणं भवितुमर्हतीति कृत्वा परस्परविरुद्धानेककारणवाक्यसमवायेऽपि तदेव जगज्जन्मादिकारणमङ्गीकर्तुं युक्तमित्यर्थः। तदिति । तच्छिवतत्त्वमेतादृशमहत्त्वात्सर्वज्ञत्वादिकमङ्गषट्कमष्टाभिधानप्रवृत्तिनिमित्तजातमित्येवंप्रकारान्महत्त्वात्कारणत्वाक्षेपकलिङ्गात् जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणयोगीति तदेव 'ब्रह्मविदाप्नोति पर'मित्यादिश्रुतिषु ब्रह्मेत्युच्यत इत्यर्थः । अत्र पूर्वपक्षे 'यदा तमस्त'दिति मन्त्रोदाहरणात् सिद्धान्ते शिवतत्त्वमिति तत्रत्यशिवशब्देन व्यवहारात्तत्त्वशब्देन तदुक्ततमोमात्रावशिष्टकालविशेषावस्थायित्वप्रतिपादनात्, एतादृशशब्देनैवंप्रकारवाचिना 'तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी'ति तदुत्तरार्धप्रतिपादिताक्षरशब्दप्रवृत्तिनिमित्तसवितृवरेण्यत्वबहुभवनसङ्कल्परूपजगत्कारणत्वाक्षेपकलिङ्गान्तरसङ्ग्रहाच्च सर्वज्ञत्वादिषट्काष्टाभिधानप्रवृत्तिनिमित्तसद्भावरूपस्य सर्वकारणवाक्यानां शिवे पर्यवसानोपपादकस्य न्यायजातस्यानुग्राह्यं प्रमाणं सर्वेषां कारणवाक्यानां शिवे पर्यवसानमाहत्य प्रतिपादयितुमेव प्रवृत्तो 'यदा तमो'मन्त्र इति सूचितं भवति । तमिमं भाष्यसूचितमर्थं स्पष्टीकुर्मः । 'यदा तम' इति पूर्वार्धेन तमोऽवशेषाङ्कितं कालमनूद्य तत्कालवर्ती शिव इति विधीयते । तेन 'तमो वा इदमेकमास' 'तत्परेणेरितं विषमत्वं प्रयाति' 'प्रजापतिर्वा इदमेक आसीत्''नाहरासीन्न रात्रिरासीत्''सोऽस्मिन्नन्धे तमसि प्रासर्पत्''नासदासीन्नो सदासीत्तदानीं' 'तम आसीत्तमसा गूढमग्रे प्रकेतः'इत्यादिषु तत्पुरोवादेषु तथाभूतकालविशेषावस्थायिकारणवस्तुसमर्पकाणां परप्रजापत्यादिशब्दानां शिवे पर्यवसानं दर्शितं भवति । तृतीयपादेन मुण्डकादिश्रुतकारणवाक्येषु कारणवस्तुसमर्पकाणामक्षरादिपदानामादित्यमण्डलवर्तिनि पुरुषे कारणत्वाक्षेपकलिङ्गं सर्वान्तर्यामित्वमुपवर्णयन्त्याः गायत्र्याश्च तस्मिन्पर्यवसानं दर्शितम् । चतुर्थपादेन 'तदैक्षत बहु स्यां प्रजायेये'ति 'स ईक्षत लोकान्नु सृजा'इति'सोऽकामयत बहु स्यां प्रजायेये'ति 'तपसा चीयते ब्रह्मे'ति च स्रष्टुरादिसृष्टिपूर्वकालीनं स्रष्टव्यवस्तुजातालोचनं प्रतिपादयतां छान्दोग्यादिश्रुतकारणवाक्यानां तत्र पर्यवसानं दर्शितम् । एवं सर्वेषां कारणवाक्यानां शिवे पर्यवसानं प्रतिपादयितुं प्रवृत्तेनानेन मन्त्रेण शिव एव जगत्कारणं ब्रह्मेत्यवसीयते । एतेन 'यदा तम' इति मन्त्रो न स्वयं कारणस्य तमसः प्रापकः। 'यदे'ति कालविशेषप्राप्तानुवादात् । प्राप्तिश्च'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमःपरे देव एकीभवती'ति सुबालोपनिषद्वाक्येन । तत्र च परशब्दो नारायणपरः, 'एष आत्मापहतपाप्मा दिव्यो देव एको नारायण' इति तत्र श्रवणात् । ततश्च नारायणाधिष्ठितस्य तमसः प्रापकं श्रुत्यन्तरमिह पुरोवाद इति तदनुरोधादनुवादमन्त्रश्रुततमोऽधिष्ठातृपरः शिवशब्दो नारायण एव वर्तयितव्य इति निरस्तम् । भवत्येव 'यदा तम' इत्यनुवादः न तु सौबलवाक्यमेव पुरोवादः । अन्येषामप्यनूद्यमानार्थप्रापकवाक्यानां सत्त्वात् । नाप्यस्मिन्मन्त्रे 'तन्न दिवे' त्यादि-

(१) 'दृशमहिमत्वात्' इति ग. पाठः । (२) 'शिवशब्दं' इति घ. पाठः ।

रप्यनुवादः । तद्वृत्तयोगेन तत्काले कस्य चिद्विधेयताप्रतीतेः । विधेयश्च तत्र न दिननिशाविभागाभावः सदसदात्मकप्रपञ्चाभावो वा । 'नाहरासीन्न रात्रिरासी'दिति 'नासदासीन्नो सदासी'दिति च पुरोवादत एव तयोः प्राप्तेः । न हि किंचिदनूद्य किञ्चिद्विधातुं प्रवृत्तं वाक्यमनुवादायावश्यापेक्षितात्पुरोवादादेव प्राप्तेऽर्थे पर्यवस्यत्साफल्यमश्नुवीत । अतस्तत्रापि, 'न दिवे' त्यादिरनुवादः । एवं च शिवशब्दोऽपि यदि कथञ्चिदौत्सर्गिकार्थपरतां हित्वा पुरोवादविशेषप्राप्ते नारायणे पर्यवस्येत् तदा 'यदा तमस्त'दिति किञ्चिद्विधातुमुद्यम्यार्धपथे स्थितं वाक्यं किं विधेयमासाद्य विश्राम्यतु । न हि तस्य नारायणवृत्तित्वे पुरोवादादप्राप्तं कंचित् विधानार्हं तदर्थं पश्यामः । तस्मात्परमते वाक्यमेव तावद्वैयर्थ्यं प्राप्नुयात् । अतस्तत्तत्पुरोवादश्रुततमोऽधिष्ठातृपरब्रह्मप्रजापतिनारायणादिसकलशब्दार्थनिर्धारणैदम्पर्यतद्विधिबलात् सौवालश्रुत्याम्नातस्य नारायणनाम्न एव शिवे पर्यवसानं स्यात् । न तु वैपरीत्यम् । ननु, शिवशब्दस्य नारायणे क्षेमंकरत्वादियोगेन वृत्तिः सम्भवति। 'पन्थानः सन्तु ते शिवाः''पावको अस्मभ्यं शिवो भवे'त्यादिलौकिकवैदिकव्यवहारेष्वन्यत्रापि तस्य योगेन प्रयोगदर्शनात् । नारायणशब्दस्य तु नारमयनमस्येत्यादियोगेन शिवे वृत्तिर्न सम्भवति । केवलयोगे णत्वासिद्धेः । 'पूर्वपदात्संज्ञायामग' इति(पा०८-४-३)सूत्रतः संज्ञाशब्दतयैव तत्र णत्वस्योपपादनीयत्वात् तस्य शिवनामत्वाभावेन तत्र तत्संज्ञाशब्दत्वेन णत्वस्योपपादयितुमशक्यत्वादिति चेत्। यदि तस्य शिवनामत्वं नास्ति तदा विष्णुनाम्न एव तस्य भावितदवस्थोपलक्षिते सर्गाद्यसमयवर्तिनि शिवे लक्षणया वृत्तिः स्यात् घटं करोतीति वाक्य इव घटशब्दस्य भाविघटावस्थोपलक्षिते मृत्पिण्डे । न तु तस्य शिवे योगो न सम्भवतीत्येतावता शिवशब्दस्य नारायणपरत्वं स्यात् । [illegible]र्थापत्तेरुक्तत्वात् योगाद्रूढिपूर्वकलक्षणाया एवाभ्यर्हितत्वाच्च । यदि तु 'सर्वाणि ह वा एतस्य नामधेयानी'त्याश्वलायनस्मरणात्, 'नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणे'ति हरिवंशे शिववचनेन विष्णुनाम्नामन्येषां च प्रकृष्टप्रवृत्तिनिमित्तानां नाम्नां 'घनसारश्चन्द्रसंज्ञ'इति वचनेन चन्द्रनाम्नां कर्पूरनामत्ववत् शिवनामत्वस्य विधानात्, कूर्मपुराणे—"वशित्वादप्यवश्यत्वादीश्वरः परिभाषितः । ऋषिः सर्वगतत्वेन हरिः सर्वगुणायुतः । अनुत्पादाच्च पूर्वत्वात्स्वयंभूरिति स स्मृतः । नारा अप्ययनं यस्मात्तेन नारायणः स्मृतः । हरः संसारहरणाद्विभुत्वाद्विष्णुरुच्यते । भगवान्सर्वविज्ञानादवनादोमिति स्मृतः । सर्वज्ञः सर्वविज्ञानात्सर्वः सर्वमयो यतः । शिवः स निर्मलो यस्माद्विभुः सर्वगतो यतः" ॥ इति साक्षादेव नारायणशब्दस्य शिवनामसु निर्वचनाच्च, तन्नामत्वमपीष्यते तदा न कश्चिच्छङ्कावकाशः। न च नारायणशब्दस्य विष्ण्वैकान्तिकत्वमस्ति । 'एकार्णवे तदा तस्मिन्नष्टे स्थावरजङ्गमे । तदा समभवद्ब्रह्मा सहस्राक्षः सहस्रपात् । सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः । ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा । इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति । ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ता यस्मात्तेन नारायणः स्मृतः ।' इति कूर्मपुराणे विरिञ्चिनामत्वेनापि तन्निर्वचनदर्शनात् । न च तत्र क्वचित्कल्पविशेषे वैरि-

(१) 'पुरोवादविशिष्टे प्राप्ते' इति. ग. घ. पाठः ।

ह्ममप्यधिकारं निर्वर्तयन्विष्णुरेव ब्रह्मेत्युक्तः, अग्रे तस्य पृथिव्युद्धरणार्थवराहरूपपरिग्रहोक्ते-रिति वाच्यम् । पृथिव्युद्धरणानन्तरं वाराहरूपं परित्यज्य कौमारसर्गपर्यन्तं जगत्सृष्टिं कृतव-तस्तस्यैव 'मुमोह मायया सद्यो मायिनः परमेष्ठिन' इति मोहप्राप्तिमुक्त्वा 'तं बोधयामास सुतं जगन्मायो महामुनिः । नारायणो महायोगी योगिचित्तानुरञ्जनः ॥' इति तज्जनकस्य भग-वतो नारायणस्योपदेशात् तस्य मोहनिवृत्तिप्रतिपादनात्, अग्रे च तस्य नारायणनाभि-पद्मादाविर्भावं पुनरपि मोहप्राप्तिं तस्य नारायणोपदेशेन मोहनिवृत्तिं 'कथं स भगवाञ्जज्ञे ब्रह्मा लोकपितामहः । अब्जजो भगवानीशस्तन्नो वक्तुमिहार्हसी'ति प्रश्नोपक्रमेण 'अवाप्य संज्ञां गोविन्दात्पद्मयोनिः पितामह' इत्यन्तेन प्रबन्धेन प्रतिपाद्य तस्य प्रजासृष्टिसामर्थ्यसि-द्ध्यर्थं तपश्चर्यां ततो रुद्राविर्भावादिकं च रुद्रान्तर्धानपर्यन्तमुक्त्वा 'सोऽपि योगं समास्थाय ससर्ज विविधं जगत् । नारायणाख्यो भगवान्यथापूर्वं प्रजापति'रिति पुनः स्रष्टुं प्रवृत्ते तस्मिन् वि-रिञ्च एव नारायणनामत्वानुवाददर्शनाच्च विरिञ्चस्य वाराहरूपपरिग्रहोक्तिरपि न विरु-ध्यते । 'आपो वा इदमग्रे सलिलमासीत्तस्मिन्प्रजापतिर्वायुर्भूत्वाचरत्स इमामपश्यत्तां वराहो भूत्वाहरत्तां विश्वकर्मा भूत्वा न्यमार्ट् साप्रथत सा पृथिव्यभवत्तत्पृथिव्यै पृथिवित्वं तस्यामश्राम्य-त्प्रजापतिः स देवानसृजते' त्यादिश्रुतौ प्रजापतिशब्दोक्तस्य विरिञ्चस्य वाराहरूपपरिग्रहप्र-तिपादनात् । एवं "ब्रह्मा नारायणाख्योऽसौ ससर्ज भगवान्यथा । नारायणाख्यो भगवान्ब्रह्मा लोकपितामहः ।" इत्यादिविष्णुपुराणप्रदेशेषु 'तस्मादण्डादभूत्स्रष्टा शिवात्मा चतुराननः । सर्वलोकस्य निर्माता ब्रह्मा विश्वसृजां पतिः । स चाप्सु शयनादेव शिवात्मा स्वेच्छया चिरम् । नारायणाख्यामभजच्छक्तिरूपः प्रजापतिः ।' इत्याश्वलायनधर्मशास्त्रे स्मृतिपुराणान्तरेषु च विरिञ्चस्य नारायणनामत्ववर्णनं द्रष्टव्यम् । तस्मात् 'यदा तम' इति मन्त्रगते शिवपदे विष्णुवि-षयत्वशङ्कानवकाशात् सर्वेषां कारणवाक्यानां शिवे पर्यवसानं प्रतिपादयन्मन्त्रोऽयमिहानुग्रा-ह्यप्रमाणत्वेन विवक्षित इति युक्तमेव । एवं श्वेताश्वतरशाखिनां मन्त्रोपनिषदुपक्रमेऽपि 'ब्रह्मवादिनो वदन्ति । किं कारणं ब्रह्म कुतस्स्म जाता' इत्यादिना केषाञ्चिद्ब्रह्मवादिनामृषीणां जगतः पञ्चकृत्यकारणभूतं ब्रह्म किंदेवतात्मकमिति संशयमुपक्षिप्य जगतोऽकारणकत्वस्य कालाद्यन्यकारणकत्वस्य वोपपत्तेः ब्रह्म जगज्जन्मादिकारणमित्येतदेवासिद्धमिति संशयस्य नि-रालम्बनत्वप्रसङ्गपरिहाराय तैरेव कृतं जगदकारणकत्वान्यकारणकत्वपक्षद्वयनिरासं 'काल-स्स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां न त्वात्मभावादा-त्माप्यनीशः सुखदुःखहेतो'रिति मन्त्रेण प्रदर्श्य स्वतस्तन्निर्णयाशक्तानां ब्रह्मविद्याधिदेवतायाः परशक्तेरम्बिकायाः प्रसादादेतन्निर्णयो भविष्यतीत्यभिप्रायेण तां ध्यायतां तत्साक्षात्कारं 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढा'मित्यर्धेनोपन्यस्य 'यः कारणानि नि-खिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक'इत्यादिना तस्याः प्रसादात्कालादिसकलावान्तर-कारणाधिष्ठातारं परमकारणं महादेवमपश्यन्नित्येतदर्थप्रतिपादनात् सोऽपि सन्दर्भोऽत्रानुग्रा-ह्यप्रमाणतयानुसन्धेयः । तत्र यद्यपि 'यः कारणानी'त्यादिमन्त्रे 'तमपश्यन्नि'ति पूर्वक्रियानु-षङ्गवति सकलकारणाधिष्ठातारं कारणमपश्यन्नित्येतावदेव प्रतीयते न तु शिवं तथाभूतकार-णमपश्यन्निति । तत्र शिववाचकपदाभावात् । तत्रापि 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मना

विशते देव एकः । संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं हरते विश्वमीशः' 'विश्वाधिको रुद्रो महर्षिः,' 'तस्मात्सर्वगतः शिवः,' 'मायिनं तु महेश्वरं' 'तमीशानं वरदं देवमीड्य' मित्याद्यनन्तरसन्दर्भो यावदुपनिषत्समाप्ति हरेशरुद्रशिवमहेश्वरेशानादिशिवासाधारणनामभिरेव जगत्कारणस्य निर्देशदर्शनात् 'यः कारणानी'ति मन्त्रस्य शिवमेव जगत्कारणमपश्यन्नित्यस्मिन्नर्थे तात्पर्यमुन्नीयते । एवमेव सङ्क्षेपेणोपबृंहितं कूर्मपुराणे 'समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः । वितेनिरे बहून्वादानात्मविज्ञानसंश्रयान् । किमस्य जगतो मूलमात्मा वाऽस्माकमेव हि । कोऽपि स्यात्सर्वभूतानां हेतुरीश्वर एव च । इत्येवं मन्यमानानां ध्यानकर्मावलम्बिनाम् । आविरासीन्महादेवी गौरी गिरिवरात्मजा । निरीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम् । पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराण'मिति । अत्र 'किमस्य जगतो मूल'मित्यनेन 'कुतस्स्म जाता' इत्येतदर्थो दर्शितः । 'आत्मावास्माकमेव ही'त्यनेन 'जीवाम केने'त्यादिसकलसंशयार्थः सङ्गृहीतः । आत्मशब्दस्याधिष्ठातृपरत्वात् । 'कोऽपि स्या'दित्यर्धेन 'कालस्स्वभाव' इत्यादिमन्त्रप्रतिपादितकालकारणत्वादिवादनिराससामर्थ्यसिद्धसर्वकारणत्वसर्वेश्वरत्वविशिष्टब्रह्मरूपसंशयधर्मिसम्प्रतिपत्तिरुपन्यस्ता । शिवपुराणेऽप्यम्बिकामाहात्म्यं प्रस्तुत्य प्रपञ्चेनोपबृंहितम् । 'मुमुक्षया पुरा केचिन्मुनयो ब्रह्मवादिनः । संशयाविष्टमनसो विमृशन्ति यथातथम् । किं कारणं कुतो जाता जीवामः केन वा वयम् । क्व चास्माकं सम्प्रतिष्ठा केन वाधिष्ठिता वयम् । इह वर्तामहे शश्वत्सुखेष्वन्येषु वाऽनिशम् । अविलङ्घ्या च विश्वस्य व्यवस्था केन वा कृता । कालस्स्वभावो नियतिर्यदृच्छा नात्र युज्यते । भूतानि योनिः पुरुषो योगो वैषां परेऽथवा । अचेतनत्वात्कालादेश्चेतनत्वेऽपि चात्मनः । सुखदुःखाभिभूतत्वादनीशत्वाद्विचार्यते । ते ध्यानयोगानुगताः प्रापश्यंच्छक्तिमैश्वरीम् । पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् । तया विच्छिन्नपाशास्ते सर्वकारणकारणम् । शक्तिमन्तं महादेवमपश्यन्दिव्यचक्षुषा । यः कारणान्यशेषाणि कालात्मसहितान्यपि । अप्रमेयोऽनया शक्त्या साकमेकोऽधितिष्ठती'ति । एवं श्वेताश्वतरोपनिषदाम्नातस्य 'यदातमो'मन्त्रस्य तदुपक्रमस्य च तात्पर्यमस्माभिः शिवतत्त्वविवेके शैवकर्णामृते च प्रपञ्चेनोपपादितं तत्रैवानुसन्धेयम् । एतेनेदं निरस्तम् । जगत्कारणं वस्तु 'सदेव सोम्येदमग्र आसीत्' 'ब्रह्म वा इदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसी'दित्यादिकारणवाक्येषु सद्ब्रह्मात्मशब्दैरुत्तरोत्तरं विशेषपर्यवसायिभिः सद्रूपं बृहच्चेतनं चेत्येतावत्पर्यन्तबुद्धिगृहीतम् 'एको ह वै नारायण आसी'दित्यादिष्वनितरसाधारणेन नारायणशब्देन निर्देशात् छागपशुन्यायेन नारायण एवेति निश्चीयत इति सर्वेषां कारणवाक्यानां शिवे पर्यवसानं साक्षादेव प्रतिपादयति मन्त्रे अस्मदादीनामिव पूर्वमृषीणां सञ्जातं जगत्कारणं ब्रह्म किंदेवतात्मकमिति संशयं प्रदर्श्य स्वयं निर्णेतुमशक्नुवन्तस्ते ध्यानयोगप्रसादितपरमेश्वरीकटाक्षमहिम्ना शिव एवेति निश्चयं लेभिर इति प्रतिपादयति मन्त्रजाते च जाग्रति क्षुद्रबुद्धिकल्पितन्यायसञ्चारेणान्यत्र पर्यवसानासम्भवात् । 'यदातमो'मन्त्रादिगतशिवादिशब्दानां वृत्त्यन्तरेण शिवान्यपरत्वे तदविरोधेन सर्वेषां कारणवाक्यानां तत्र पर्यवसानं सम्भवतीति चेन्न । 'यदातमो' मन्त्रगतस्य शिवशब्दस्य नारायणवृत्तित्वे मन्त्रवाक्यवैयर्थ्यापत्तेरुक्तत्वात् 'क्षरं प्रधानममृ-

ताक्षरं हरः' इत्यादिमन्त्रेषु श्रुतानां हरादिशब्दानामपि जगत्कारणधर्मिकस्ववाच्यतदितरदेवताविशेषकोटिकसंशयप्रदर्शनानन्तरं निर्णयवाक्ये श्रुतानाम् 'अयं स्थाणुः पुरुषो वे'ति संशयानन्तरम्'अयं पुरुष एवे'ति निर्णयवाक्ये श्रुतस्य पुरुषशब्दस्येव व्यवच्छेदनीयायां प्रतिकोटौ वृत्त्ययोगात् । न च क्वचित्क्वचित्कारणवाक्ये नारायणशब्दस्याभ्यासदर्शनेन तात्पर्यवत्त्वावगमात् तस्यापि वृत्त्यन्तरं न युज्यत इति वाच्यम् । कारणे बहुशोऽभ्यस्तस्यापि तस्य तद्विषयप्राणाकाशशब्दवद्वृत्त्यन्तरकल्पनसहिष्णुत्वेनान्यथासिद्धत्वात् । किं च 'वेदार्थो यः स्वयंजातस्तत्राज्ञानं भवेदपि । ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्महात्मन' इति बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति । इतिहासपुराणाभ्यां वेदं समुपबृंहये'दिति च स्मरणात् । पुराणादिषु ऋषिभिर्निश्चित एव वेदार्थोऽभ्युपगन्तव्यः । तत्र श्वेताश्वतरोपनिषदुपक्रमार्थनिर्णायकानि कूर्मपुराणादिवचनानि प्रागुदाहृतानि। तदनन्तरस्यापि'संयुक्तमेतत्क्षरमक्षरं चे'त्यादेरुपनिषत्समाप्तिपर्यन्तस्य तत्सन्दर्भस्यार्थनिर्णायकः शिवपुराणे पशुपाशपतिनिर्णयाध्याये दृश्यते । एवं च यद्यपि विष्णुपुराणादिश्रुतसृष्टिवाक्येषु कारणस्य नारायणनामभिरपि निर्देशो दृश्यते । तथापि शब्दतोऽर्थतः क्रमतश्च तत्तदुपनिषत्सन्दर्भस्पर्शीन्युपबृंहणानि प्रबलानीति तैरेव तत्तदर्थनिर्णयो युक्तः । न चोपबृंहणानुसारेण शिवविषयकारणवाक्यानां तद्विरोधिकारणवाक्यान्तरेभ्यः प्राबल्यमुपबृंहणानामुपबृंहणीयशब्दार्थक्रमस्पर्शित्वेन तद्विरुद्धपुराणान्तरादिभ्यः प्राबल्यमिति प्राबल्यसिद्धौ परस्परापेक्षणादन्योन्याश्रयः शङ्कनीयः । वनसिंहन्यायेन प्राबल्यसिद्धौ परस्परापेक्षणस्यादोषत्वात् । एतेनेयमपि शङ्का निरस्ता । शिवविषयकारणवाक्यानां सर्वज्ञत्वादिषाड्गुण्याष्टाभिधानप्रवृत्तिनिमित्तरूपन्यायोपस्कृततया यत्प्राबल्यमुक्तं तन्न सङ्गच्छते । 'ज्ञानमप्रतिपन्नस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टय'मिति हिरण्यगर्भे 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणै'रिति । नारायणे च कारणत्वोपपादकसंज्ञासार्वज्ञ्यादेः[1] पुराणेषु प्रतिपादनोपलम्भात् हिरण्यगर्भादीनामपि जगज्जन्मादिकारणत्वतदाक्षेपकधर्मप्रवृत्तिनिमित्तकनामसद्भावाच्च । हिरण्यगर्भस्य हि स्रष्टा विधाता विश्वसृड्विधिः वेधा विरिञ्च इति नाम्नां जगन्निर्मातृत्वं प्रवृत्तिनिमित्तम् । आत्मभूः स्वयंभूरितिनाम्नोर्जगन्मूलकारणत्वोपपादकं स्वयं जनिराहित्यं विश्वात्मनाम्नोर्जगदुपादानत्वोपपादकं सार्वात्म्यं लोकेशप्रजापतिनाम्नोः स्थितिहेतुत्वोपपादकं सर्वैश्वर्यं 'द्रुहिदक्षिभ्यामिनजि'ति द्रुह्यति धातोरिनजन्तस्य द्रुहिणनाम्नः सर्वसंहर्तृत्वं परमेष्ठिनाम्नः परमपदावस्थायित्वं शम्भुनाम्नः आनन्दरूपत्वं सर्वानन्दयितृत्वं वा । किं बहुना । ब्रह्मनाम्नो निरतिशयबृंहत्त्वं प्रवृत्तिनिमित्तम् । विष्णोरपि वासुदेवनाम्नो वसत्यस्मिन्सर्वमिति वस्यति छिनत्ति सर्वमिति वासयति छादयति सर्वजीवानित्यर्थेषु 'वस निवासे' 'वसुछेदने' 'वस आच्छादन' इति धातुभ्यो बहुलग्रहणादुण्प्रत्यये सति निष्पन्नस्य वासुशब्दस्य देवशब्दस्य च समानाधिकरणसमासपदरूपस्य सर्वभूतस्थितिसंहृतितिरोधानकर्तृत्वं प्रवृत्तिनिमित्तम् । विष्णुनाम्नः सर्वत्र व्याप्तत्वं स्वभूनाम्नो जनिराहित्यमच्युतनाम्नः क्षरणराहित्यं प्रवृत्तिनिमित्तमित्यादि दृश्यते । तस्मात्पुराणप्रतिपन्नं सार्वज्ञ्यादिकं भवादिनामप्रवृत्ति-

(१) 'समग्रसार्वज्ञ्यादेः' इति घ. पाठः ।

तदेव शिवशब्दवाच्यमानन्दादिधर्माश्रयतया सिद्धम् । अत आनन्दादीनां विकल्पादिचिन्तानिरर्थिका । 'मायां तु प्रकृतिं विद्या'दिति मायायाः प्रकृतित्वमीनिमित्ततया लब्धमिन्द्रनामप्रवृत्तिनिमित्ततुल्यं लिङ्गजातं च न शम्भोः परभावनिर्णायकत्वेन श्रुत्यनुग्राहकमिति उपबृंहणीयोपबृंहणयोरिव मानतर्कयोरपि परस्परमनुग्राह्यानुग्राहकभावेन च वनसिंहन्यायविषयतया वनानुप्रविष्टसिंहस्य तदननुप्रविष्टसिंहादिव स्वतः प्रबलमुदाहृतमन्त्रोपनिषन्मन्त्रजातं प्रमाणमनुप्रविष्टस्य शिवे श्रुतस्य सार्वज्ञ्यादेस्तदननुप्रविष्टाद्देवतान्तरे श्रुतात्सार्वज्ञ्यादितः प्रबलत्वेन तत्साम्यापादनायोगात् । न च शिवस्य सार्वज्ञ्यादिकं पुराणमात्रप्रसिद्धं 'ज्ञः कालकालो गुणी सर्वविद्यः' तदादिमध्यान्तविहीनमेकम् । विभुं चिदानन्दमरूपमद्भुत'मित्यादिश्रुतिष्वपि विशिष्य शिवस्य सार्वज्ञ्यादिप्रसिद्धिसत्त्वात् । न चेन्द्रशब्द 'इदि परमैश्वर्ये' इति धातोर्निष्पन्नः । येन तत्साम्यं भवादिनाम्नामापद्येत । नामप्रवृत्तिनिमित्ततः परभावसिद्धावीश्वरमहेश्वरनाम्नः शिवादिन्द्रमहेन्द्रनामा शक्रोऽधिकः स्यादिति वाऽऽपद्येत । 'ऋज्रेन्द्राग्रवज्रे'त्यादिसूत्रेण हीन्द्रशब्दः 'ञिइन्धी दीप्ता' विति धातोरिध्यते ब्रह्मतेजोभिरित्यर्थे तत्पूर्वानुवृत्तरन्प्रत्ययान्तो निपातितः । न तु ' इदि परमैश्वर्ये'इति धातोरिन्दतीत्यर्थे । ततो रन्प्रत्ययविधानेनैव रूपसिद्धिसम्भवे निपातनप्रयोजनाभावात् । अत एवैतत्सूत्रवृत्ताविन्दतिधातोरिन्द्रशब्दनिपातनमुक्त्वा 'वृधिवपिभ्यां र'न्निति पूर्वसूत्रे इन्दतिधातोरपि ग्रहणेन रूपसिद्धिसम्भवे निपातनप्रयोजनं नास्तीत्यस्वारस्यादिध्यते तेजोभिरितीन्द्र इति इन्धिधातोर्निपातनमाश्रितम् । एवं 'ब्रह्म हि देवेभ्यो विजिग्य' इति तलवकारिणामुपनिषदुक्तेन प्रकारेणासुरविजयसमयेषु ब्रह्मतेजोभिरिध्यमानः शक्रो महासुरस्य वृत्रस्य वधे नितरां तैरिद्धो जात इति महेन्द्र इत्युच्यते । अत एव श्रूयते । 'महान्वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्व'मिति । तस्मादुक्तन्यायानुगृहीतस्वतःप्रबलमन्त्रोपनिषन्मन्त्रजातबलाच्छिव एव जगत्कारणमित्येतदुपपन्नमिति । अवधारणादिबलात् सदानन्दज्ञानानां भेदानापाद्य तेषां विकल्पेन समुच्चयेन वा कारणत्वमनुपपन्नमिति यच्छङ्कितं तदप्येवं सति नावकाशं लभत इत्याह—तदेवेति । यत्सर्वज्ञत्वनित्यतृप्तत्वाद्याश्रयतया प्रतिपन्नं तदेव सामान्यतः सकलमङ्गल्यगुणवत्त्वप्रतिपादकस्य शिवशब्दस्यापि वाच्यमिति तस्य सामान्यतो विशेषतश्च ज्ञानानन्दादिधर्माश्रयत्वसिद्धेस्तत्र कारणवाक्यश्रुतान्यवधारणानि न शाखान्तरगतकारणवाक्यश्रुतरूपान्तरव्यावर्तनार्थानि । किं 'त्वानन्दाद्ध्येवे'त्यवधारणं स्थूलारुन्धतिन्यायेन ब्रह्मणि क्रमेण पूर्वप्रतिपन्नानामन्नादिविज्ञानान्तरूपाणां व्यावर्तकं 'सदेवे' त्यवधारणमिदानीं पृथिव्यादिषु दृश्यमानस्य स्थूलरूपस्य सर्गाद्यसमये व्यावर्तकम् प्रज्ञानघनवाक्यं त्वत्युज्वलस्य रत्नस्यान्तर्बहिश्च प्रभयेव ब्रह्मणः प्रज्ञानगुणेन व्याप्तिप्रतिपादकं न कस्यापि ब्रह्मणि व्यावर्तकम् । अतो नावधारणादिविरोधोऽपीति भावः। मायैवोपादानमिति शङ्कां निरस्यति। मायाया इति। सत्यं मायोपादानमिति ब्रह्माप्युपादानमेव ।अपृथक्सिद्धकार्यावस्थाश्रयत्वरूपं हि मायाया उपादानत्वं समर्थनीयम् । तत्समर्थ्यमानमेव ब्रह्मपर्यन्तमायाति । नित्ययोगे खलु मायिनमिति मायाशब्दादिनिप्रत्ययः । ततश्च मायायाः ब्रह्मापृथक्सिद्धयैव तदपृथक्सिद्धायाः कार्यावस्थाया अपि ब्रह्मापृथक्सिद्धिस्सिद्ध्यति । एवं च यद्यपि ब्रह्माश्रया-

**श्वरात्मिकाया एव 'मायिनं तु महेश्वर'मिति वाक्यशेषात्। सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं स्थूलचिदचिद्विशिष्टं तत्कार्यं भवति। अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तः॥ इति जन्माद्यधिकरणम् ॥ २ ॥ ॥ ॥**

---

**माया वियदाद्यचेतनरूपेण परिणमति ब्रह्माश्रया तदाश्रयजीवाश्रया च चिच्छक्तिज्ञानादिरूपेण । न तु ब्रह्म केनाप्याकारेण परिणमति । तथापि तथातथा परिणममानानां मायादीनां ब्रह्मैवायुतसिद्धाश्रयत्वपर्यवसानभूमिरिति ब्रह्मपर्यन्तमुपादानत्वमायातीति भावः । ननु, यद्येवं कार्यावस्थाश्रयत्वरूपमुपादानत्वमिष्यते तदा यथा मृदो भाविघटावस्थाश्रयभूतायाः पिण्डावस्थाविशिष्टत्वेन कारणत्वेऽपि घटावस्थाविशिष्टत्वेन कार्यत्वमपि । एवं ब्रह्मणः सर्गाद्यसमये सूक्ष्मचेतनाचेतनविशिष्टत्वेन कारणत्वेऽपि स्थूलचेतनाचेतनविशिष्टत्वेन कार्यत्वमपि स्यादित्याशङ्क्याभ्युपगमेन परिहरति–सूक्ष्मेति । एवं व्यक्तिविशेषव्यवस्थितब्रह्मत्वनिर्धारणरूपप्रयोजनपर्यवसायित्वाज्जगज्जन्मादि ब्रह्मलक्षणमित्येतदुपपन्नमित्यधिकरणार्थमुपसंहरति–अत इति । एवं तटस्थलक्षणव्यवस्थितौ तदुपलक्षितस्य गुणविग्रहविशेषरूपं स्वरूपलक्षणमपि व्यवतिष्ठत इति भावः ॥ इति जन्माद्यधिकरणम् ॥ २ ॥**

---

## नयमणिमालायाम्

### अथ जन्माद्यधिकरणम् ॥ २ ॥

### सू० ॥ जन्माद्यस्य यतः ॥ २ ॥

जन्मादि ब्रह्मलक्ष्म श्रुत... गुणतस्तेन किं वो...... सद्ज्ञानानन्दमुख्यं खलु तदभिहितं तत्रतत्रान्यदन्यत् ।
तद्वाक्येष्वेव का...... विहता छागपश्वादिनीतिः नार्थस्सिद्धो विकल्पं भजति समुदये कर्तृता नोपपन्ना ॥ ४ ॥
सर्वज्ञत्वादिषट्कं भवति भवमुखं यस्य नामाष्टकं च स्पष्टं तं पार्वतीशं गमयति शिव एवेति मन्त्रो... तानि ।
तद्ज्ञानानन्दसारस्स इति तदुदितः पञ्चकृत्योपलक्ष्यः तत्र श्रौतं विहायेतरदवधृतयो रूपजातं क्षिपेयुः ॥ ५ ॥
एकं मन्त्रं वहूनां कथमिह कथयस्यर्थबोधे समर्थं को वा ब्रूते स एव स्वयमुपहरते बाधमेषामितीदम् ।
प्रत्येकं कारणोक्तिप्रकरणमखिलं स्वार्थसात्कर्तुकामास्तिष्ठन्तेऽन्योन्यरुद्धा विधिहरिगिरिशाद्याह्वया एव तस्मिन् ॥ ६ ॥

### इति जन्माद्यधिकरणम् ॥ २ ॥

---

## सूत्रार्थचन्द्रिकायाम्

### ॥ अथ जन्माद्याधिकरणम् ॥ २ ॥

### सू० ॥ जन्माद्यस्य यतः ॥ २ ॥

**श्रीभगवत्पादमते,** इदमेकमधिकरणम् । जन्मादि अस्य यतः इति सूत्रपदच्छेदः। पूर्वाधिकरणेन वेदान्तवाक्यैर्ब्रह्मणो विचार्यत्वे सिद्धे तस्य ब्रह्मणः किं लक्षणमित्याकाङ्क्षायामिदं सूत्रमारब्धम्। पूर्वाधिकरणेनास्याक्षेपिकी सङ्गतिः । **अस्य**=प्रत्यक्षाद्युपस्थापितस्य व्यवस्थितदेशकालनिमित्तक्रियाफलाश्रयस्य विचित्ररचनारूपस्य जगतः । **जन्मादि**=जन्मस्थितिभङ्गम् । जन्म उत्पत्तिरादिर्यस्य जन्मस्थितिभङ्गस्य तज्जन्मादि। तद्गुणसंविज्ञानो बहुव्रीहिः । अन्यथा जन्मादिशब्देन स्थितिलययोरेव ग्रहणं स्यात् न त्रयाणाम् । अतस्त्रितयलाभाय तद्गुणसंविज्ञानबहुव्रीह्याश्रयणमिति भावः । आदिपदेनात्र स्थितिप्रलययोरेव ग्रहणम्। नान्येषां वृद्धिपरिणामापक्षयरूपाणां विकाराणाम्। तेषां वृद्धिपरिणामयोर्जन्मन्यपक्षयस्य च नाशेऽन्तर्भावादिति भावः। **यतः**= सर्वज्ञात्सर्वशक्तेस्सत्यज्ञानानन्दरूपात् कारणात् । **'भवति तद्ब्रह्मे'ति** वाक्यशेषः । 'भृगुर्वै वारुणिः । पुनरेव वरुणं पितरमुपससार । अधीहि भगवतो ब्रह्मे'त्युपक्रम्य,'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व। तद्ब्रह्मेति' इत्यादिवाक्यं विषयः । तत्र श्रूयमाणं जगज्जन्मादिकारणत्वं यतश्शब्दसंगृहीतं सत्यज्ञानान-

न्दात्मत्वं चेत्युभयमपि ब्रह्मणो लक्षणं भवति वा न वेति विरोधाविरोधाभ्यां प्रसिद्ध्यप्रसिद्धिभ्यां च सन्देहे जन्मादेर्जगन्निष्ठत्वात् निर्विशेषस्य तस्य जगत्कारणत्वसम्भवस्य विरुद्धत्वाचाद्यं ब्रह्मणो लक्षणं न भवति । सत्यादिपदानां धर्मपरत्वविवक्षायां निर्विशेषस्य तत्संभवस्य विरुद्धत्वात् धर्मपरत्वविवक्षायां लोकप्रसिद्धभिन्नार्थकसत्यादिपदानां सकलधर्मविनिर्मुक्तधर्मिमात्रबोधकत्वासंभवेन तादृशस्य धर्मिणोऽप्रसिद्धत्वाच्च न द्वितीयमपि ब्रह्मणो लक्षणं भवितुमर्हतीति पूर्वः पक्षः। सिद्धान्तस्तु,तत्राद्यं तटस्थलक्षणमित्युच्यते । यो हि धर्मो राज्ञश्छत्रचामरादिकमिवासाधरणः सन्नेव कदाचिद्धर्मिणा सम्बध्यते स तटस्थलक्षणमित्युच्यते। मायिकस्य जगज्जन्मादिकारणत्वस्यानृततया परमार्थतो निर्धर्मस्वरूपेण विरोधानुपपत्तेः आरोपितेन रजतेन शुक्तिरिवारोपितेन जगत्कारणत्वेन ब्रह्मणो लक्ष्यत्वसंभवाचाद्यं ब्रह्मणो लक्षणं भवत्येव । द्वितीयमपि स्वरूपलक्षणं भवितुमर्हति । सत्यादिपदानां लक्षणया अखण्डैकब्रह्मबोधकत्वोपपत्त्या तादृशस्य धर्मिणः श्रुतिप्रसिद्धत्वात् । अतो जगज्जन्मादिकारणत्वं सत्याद्यात्मत्वं चेत्युभयमपि ब्रह्मणो लक्षणं भवत्येव । इति ।

**श्रीकण्ठमते, जन्मादि**=जन्मस्थितिप्रलयतिरोभावानुग्रहरूपं कृत्यपञ्चकम् । **अस्य**=चेतनाचेतनसम्मेलनसमरसीभूतस्य प्रपञ्चविलासस्य **यतः**=यस्मात् सर्वज्ञत्वादिविशिष्टादष्टाभिधानाधिकरणाच्छिवतत्त्वात् भवति । **तद्ब्रह्मेति** वाक्यशेषः । अस्य 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व। तद्ब्रह्मेति'। प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः'। इत्यादिवाक्यं विषयः । अत्र जगतो जन्मादिकं ब्रह्मणो लक्षणतया संभवति वा न वेति संदेहे जन्मादेः प्रपञ्चनिष्ठत्वेन संबन्धाभावात् ब्रह्मणो लक्षणं न संभवति । किं च श्रुत्यन्तरेषु तत्र तत्र क्वचिदानन्दस्य क्वचित्सतः क्वचिज्ज्ञानस्य क्वचिच्छिवशब्दवाच्यस्य वस्तुनः क्वचिदचेतनाया मायायाश्च ब्रह्मत्वजगत्कारणत्वाद्यभिधानात् जगज्जन्मादिकम् आनन्दादिसमुदायस्य वा तेषामन्यतरस्य वा लक्षणं पर्यवसितुमर्हति अतस्सर्वथापि ब्रह्मणो जगत्कारणत्वादि लक्षणमभिधातुमशक्यमेवेति पूर्वः पक्षः ।

जन्मादेर्जगन्निष्ठत्वेन ब्रह्मण्यसम्बन्धत्वेऽपि यत्सर्वज्ञत्वादिविशिष्टमष्टाभिधानाधिकरणं शिवतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यत इति ताटस्थ्येन ब्रह्मलक्षणत्वमभिधातुं शक्यमेव। आनन्दादिधर्माणामत्रैव पर्यवसानं भवति। सर्वज्ञत्वं नित्यतृप्तत्वमनादिबोधत्वं स्वतन्त्रत्वमलुप्तशक्तिमत्वमनन्तशक्तिमत्वं चेत्येतानि सर्वज्ञतादीनि। एतैरनितरसाधारणैर्धर्मैर्विशिष्टं भवशर्वेशानपशुपतिरुद्रोग्रभीमाष्टकस्य वाच्यं निरस्तसमस्तसंसारकलङ्कं निखिलमङ्गलाधारभूतं शिवतत्त्वं यदवगम्यते तदुक्तस्वभावतया सकलजगज्जन्मादिकारणं भवति। जगदुभयकारणे एतादृशमहिमवति शिवशब्दवाच्य आनन्दादिधर्माश्रये ब्रह्मणि जगत्कारणत्वं लक्षणं युज्यत एव । सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणम् । स्थूलचिदचिद्विशिष्टं ब्रह्म तत्कार्यं भवति । आनन्दादिविकल्पचिन्ता निरर्थिका । 'मायिनं तु महेश्वर'मिति वाक्यशेषात् मायाया ईश्वरात्मिकाया एव कारणत्वमभिमतम् । अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तः ।

**रामानुजमते, जन्मादि**=सृष्टिस्थितिप्रलयम् । **अस्य**=अचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः। **यतः**=यस्मात्सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात् सत्यसंकल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणात् सर्वज्ञात्सर्वशक्तेः परमकारुणिकात् परस्मात्पुंसः।'**भवति तद्ब्रह्म**' इति सूत्रार्थः । भृगुर्वै वारुणिः पुनरेव वरुणं पितरमुपससार ।'अधीहि भगवो ब्रह्मे'त्यारभ्य श्रूयमाणं 'यतो वा इमानी'त्यादिकं तद्ब्रह्मेत्यन्तं वाक्यं विषयः। यद्यपि शब्दानां परिनिष्पन्नवस्तुबोधनशक्तिरस्ति । तथापि लक्षणतः प्रतिपन्नस्यैव शब्दबोध्यत्वात् विशेषणानां विशेष्यभेदकत्वेन जगज्जन्मादीनां विशेषणतया ब्रह्मलक्षणत्वासंभवात् पूर्वप्रतिपन्नाकारान्तरासंभवेन तेषामुपलक्षणतया वा ब्रह्म न वेदान्तवेद्यम्। इति पूर्वः पक्षः। अविरुद्धविशेषणानां विशेष्याभेदकत्वेन सार्वज्ञ्यादेः पूर्वप्रतिपन्नाकारान्तरस्य संभवेन च जन्मादीनां विशेषणतया उपलक्षणतया च ब्रह्मलक्षणत्वसंभवेन ब्रह्म वेदान्तवेद्यमेवेति सिद्धान्तः।

**आनंदतीर्थमते, अस्य**=प्रमितजीवजडात्मकप्रपञ्चस्य। **जन्मादि**=जन्मस्थितिलयनियतिज्ञानाज्ञानबन्धमोक्षरूपं धर्माष्टकम्। **यस्मात्**=विष्णोः। भवतीति श्रुतं तदेव ब्रह्म नान्यदित्यर्थः। अस्य 'यतो वा इमानी'त्यादिकं 'तद्ब्रह्मे'त्यन्तं वाक्यं विषयः। अत्र उदाहृतश्रुतिस्थितं'बृह जातिजीवकमलासनशब्दराशि'ष्विति बह्वर्थकाद्धातोर्निष्पन्नं यौगिकत्वानुपपत्त्या जीवे रूढं गुणपूर्णे विष्णौ रूढ्यनुपपत्त्या यौगिकं ब्रह्मपदं रूढेर्योगतोब लीयस्त्वात् जीवपरमेव भवितुं युक्तम्।अतो जीवातिरिक्तं ब्रह्म विचार्यमितिपूर्वोक्तं न संगच्छत इति पूर्वः पक्षः।'यतो वा'इत्यादिपूर्ववाक्योक्तजगज्जन्मादिकारणत्वस्य विष्ण्वेकनिष्ठत्वेन श्रुतिस्मृतिपुराणादिभ्योऽवगमात् सति बाधके रूढेस्त्याज्यत्वात् जगज्जन्मादिकारणत्वाद्यनुसारेण योगतः परिपूर्णगुणविष्णुपर एवायं ब्रह्मशब्द इति पूर्वोक्तं जीवभिन्नस्य ब्रह्मणो विचार्यत्वमुपपद्यत एवेति सिद्धान्तः ॥

इति सूत्रार्थचन्द्रिकायां जन्माद्यधिकरणम् ॥ २ ॥

## अथ शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

लक्षणप्रमाणाधीना हि वस्तुसिद्धिः । जगत्कारणं ब्रह्म किंप्रमाणकमित्यतआह–

## सू० ॥ शास्त्रयोनित्वात् ॥ ३ ॥

यतः शास्त्रं योनिः प्रमाणम् अत एव जगज्जन्मादिलक्षणं ब्रह्म भवतीति शेषः । अत्र जगत्कारणं ब्रह्म शास्त्रैकगम्यमुत प्रमाणान्तरेणापि गम्यमिति सन्देहः ।

---

सङ्गतिं प्रदर्शयन्नुत्तराधिकरणमवतारयति–लक्षणेति । न केवलं लक्षणेनेदमित्थमिति लक्ष्यनिर्धारणसिद्धिः । किं तु लक्ष्यस्वरूपे तस्य लक्षणरूपधर्मवैशिष्ट्ये च प्रमाणे सत्येव । अतस्तत्र प्रमाणप्रदर्शनार्थमुत्तराधिकरणमित्यर्थः । यद्यपि तस्मिन्'यतो वे'त्यादिशास्त्रं प्रमाणमिति पूर्वाधिकरण एवोदाहृतं, तथाप्यानुमानिके जगज्जन्मादिकर्तरि तत्सिद्धार्थानुवादकं तद्वाक्यं न प्रमाणमिति तस्य पूर्वाधिकरणे तत्र प्रमाणतयोदाहरणमयुक्तमिति प्राप्ते शास्त्रप्रामाण्यादेव जगज्जन्मादिकारणं ब्रह्म न त्वनुमानप्रामाण्यादिति व्यवस्थापयितुमाक्षेपसङ्गत्येदमधिकरणमारभ्यत इति भावः ॥ सू० ॥ शास्त्रयोनित्वात् ॥३॥ सूत्रं व्याचष्टे–यत इति । 'यतश्शास्त्रं योनिः प्रमाणं अत' इत्यनेन शास्त्रस्य योनित्वं शास्त्रयोनित्वं तस्मादिति षष्ठीसमासाश्रयणेन शास्त्रस्य प्रामाण्यादित्यर्थे सूत्रं योजितम् । यतश्चैत्रः श्रुतशीलशाली अतस्तत्पुत्रोऽयं पूजनीय इत्युक्ते हि चैत्रस्य श्रुतशीलशालित्वादिति हेत्वर्थो लभ्यते । इह योनित्वशब्दस्य गुणवाचित्वेऽपि 'पूरणगुणे'त्यादि(पा०२-२-११)सूत्रेण षष्ठीसमासनिषेधो न भवति । 'तदशिष्यं संज्ञाप्रमाणत्वा'दिति (पा०-१-२-५३-) सौत्रनिर्देशदर्शनात् । 'अत एवे'त्येवकारेण शास्त्रप्रामाण्यादेवायमर्थः सिद्ध्यति न त्वनुमानप्रामाण्यादिति सौत्रहेतुनिर्देशसामर्थ्यलब्धार्थो दर्शितः । जगज्जन्मादिलक्षणं ब्रह्म भवतीति शेष इति । अनेन पूर्वसूत्रार्थस्य साधनत्वेनान्वयो दर्शितः । एवमत्र सूत्रद्वयस्य साध्यहेतुपरतयैकार्थ्येऽपि प्रत्येकं निराकरणीयपूर्वपक्षसत्त्वेनाधिकरण[1]भेदादस्य सूत्रस्य वर्णकान्तरे साध्यान्तराध्याहाराच्च योगभेदः समाश्रितः। अत्र 'यतो वे'त्यादि वाक्यं ब्रह्मणि प्रमाणं न वेत्यधिकरणाङ्गसंशयं मनसि निधाय तदर्थसंशयमाह—अत्रेति । यदि ब्रह्म शास्त्रैकगम्यं तदा तत्र तत्प्रमाणं यदि प्रमाणान्तरेणाधिगम्यं तदा न प्रमाण'मप्राप्ते शास्त्रमर्थव'दिति न्यायादिति संशययोः फलफलिभावः । तदर्थसंशयकोटिद्वयावलम्बनेन पूर्वपक्षसिद्धान्तप्रदर्शने कृते सत्यधिकरणाङ्गसंशयकोट्योस्तौ पर्यवसास्यत इति तु तयोरेव तौ प्रदर्शयिष्येते । ननु, कथमीश्वरः प्रमाणान्तरगम्य इति पूर्वपक्षस्यावकाशः । तत्र हि न प्रत्यक्षं प्रवर्तते । नाप्यनुमानम् । तद्व्याप्तलिङ्गाभावात् । नोपमानम् । तस्य शक्तिसादृश्यान्यतरपरिच्छेदफलत्वात् । न लौकिकः शब्दः । तस्य प्रत्यक्षादिमूलप्रमाणापेक्षत्वात् । क्षितिगिरिसमुद्रादिरूपं जगत्सकर्तृकं कार्यत्वादिति सामान्यतोदृष्टानुमानं तत्र मानमिति चेन्न । अस्मदाद्यनुपलभ्यमानप्राक्कोटिषु क्षित्यादिषु कार्यत्वासिद्धेः । 'एतस्माजायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी । अतः समुद्रा गिरयश्च सर्वे' इत्याद्यौपनिषदवाक्यप्रमाणकं यदि कार्यत्वं तेषां सम-

---

(१) 'भेदादप्यस्य' इति ङ. पाठः ।

जगदिदं सावयवं कार्यमेव । तच्च वैचित्र्यगर्भितत्वेन स्वोचितकर्तृकमिति कश्चि-

थ्येत तर्हि तत एवेश्वरस्यापि सिद्धिरिति न तदपेक्षमनुमानं तत्र प्रमाणीकर्तुमर्हमित्याशङ्क्य हेत्वन्तरेण तेषां कार्यत्वसिद्धिमाह–जगदिदमिति । ननु, सावयवत्वमवयवारब्धत्वं चेत्तस्याप्र्यसिद्धिः स्यात् । द्रव्यसमवेतद्रव्यं चेत् तद्द्रव्यसमवेतजात्यादेरिवाकार्यत्वेनाप्युपपन्नमप्रयोजकम् । अस्यायमवयव इति व्यवहारप्रयोजकेन स्वरूपसम्बन्धविशेषेणावयवत्वं चेत्तदप्यप्रयोजकम् । कालस्यावयवः क्षणलवादिरित्यादिव्यवहारप्रयोजकक्षणलवादिसम्बन्धवति कालादौ व्यभिचारि च तत् । तस्मात्सावयवत्वं न कार्यत्वसाधकमित्याशङ्क्य तस्य तत्साधकतां सूचयितुं सावयवं कार्यमेवेत्यवधारणम् । यदेकदेशाः पटैकदेशाः तन्तव इव परस्परवियोजनार्हाः तदिह सावयवं विवक्षितम् । भूभूधरसमुद्राद्येकदेशाः मृच्छिलासलिलादिरूपाः खननटङ्कनिर्भेदधरोद्धरणादिव्यापारैः परस्परवियोजनार्हा इति सम्प्रतिपन्नमेतत् । तथाभूतं चावश्यं कार्यं भवेदेव । वियोजनव्यापारेण तत्तदेकदेशरूपाणामवयवानां विभागजननस्य विभज्यमानानां प्राचीनसंयोगनाशस्य नश्यतां संयोगानां सादित्वस्य साद्यवयवसंयोगानन्तरभावित्वनियतस्यासमवायिकारणसंयोगनाशेन नश्यतश्च सावयवस्य सादितायाश्चानिवार्यत्वादिति भावः । नन्वेवं सति भूभूधरादिकं सकर्तृकं कार्यत्वादित्यनुमानतो नास्मदादिविलक्षणः तत्कर्ता सिद्ध्येत् । भूगोलकादिष्वस्मदादिकर्तृकस्य खननपूरणादिरूपस्य वियोजनसंयोजनसर्वदा सत्त्वात् । अवयववियोजने सति महापटध्वंसजन्यखण्डपटन्यायेन भूगोलकान्तराद्युत्पत्तेरवश्यम्भावात् । अवयवान्तरसंयोजने सति पूर्वसिद्धेऽवयविन्यागन्तुकानामवयवानां कारणत्वासम्भवेन पूर्वसिद्धावयविनागन्तुकावयवैश्चावयव्यन्तरोत्पादनस्यावश्यंभावाच्च[2] । ततश्च पूर्वतन्तुवियोजनतन्त्वन्तरसंयोजनकर्तारस्तदनन्तरभाविनः पटस्येव खननपूरणादिकर्तारस्तदनन्तरभाविनो भूगोलकादेः कर्तारः स्युरिति तैः सिद्धसाधनेन दुष्टमिदमनुमानं कथमस्मदादिविलक्षणं सर्वज्ञत्वादिलक्षणयुक्तं कर्तारं साधयेदित्याशङ्क्याह–तच्चेति । अतिविचित्रं महद्गोपुरप्रकारसौधादिकमेकदेशे किञ्चिच्छिलादिवियोजनसंयोजनाभ्यां कैश्चिन्नवीक्रियमाणं पश्यन्तस्तद्गतसकलविचित्रसन्निवेशनिर्माणोचितज्ञानशक्त्यादियुक्तं तदादिकर्तारमनुमिमाना दृश्यन्ते । न तेषामनुमानमेकदेशे संयोजनवियोजनकर्तृभिः सिद्धसाधनेन दुष्टं जायते । तद्वदिहापि विविधविचित्रसन्निवेशस्य क्षित्यादेस्तदुचितादिकर्त्रनुमानं नास्मदादिभिः सिद्धसाधनेन दुष्टं जायते घटादिकमिवास्मदादिकर्तृकत्वेन सम्प्रतिपन्नं क्षित्यादिकमपहाय आद्यक्षित्यादिमात्रस्याङ्कुरादेश्च पक्षीकरणसम्भवात् । ततस्तत्तदनन्तविविधविचित्रसन्निवेशरचनानुकूलज्ञानशक्तियुक्तस्यास्मदादिविलक्षणस्य तत्कर्तुः सिद्धिर्भवत्येवेति भावः । तच्चानुमानमेव नैयायिकाः कल्पयन्ति । अदृष्टद्वारकस्वोपादानगोचरजन्यकृतिजन्यभिन्नानि समवेतानि जन्यानि स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि भावकार्यत्वात् घटवदिति । अत्र जन्यमात्रपक्षीकरणे ध्वंसस्यापि पक्षत्वेन तस्मिन्नुपादानघटितसकर्तृकत्वरहिते साध्यस्य बाधस्स्यादिति तन्निवृत्त्यर्थं समवेतानीति विशेषणम् । एवमपि पक्षतावच्छेदकस्य घटादिसाधारण्येन तदंशे सिद्धसाधनं स्यात्तन्निवृत्त्यर्थं जन्यभिन्नानीति विशे-

(१) 'प्रसिद्धिः' इति ङ पाठः। (२) भावात् । अवयवान्तरसंयोजने सति कर्तारः' इति ङ. पाठः ।

षणम् । तावत्युक्ते क्षित्यादेरपि जन्यत्वेनाश्रयासिद्धिः स्यात् । तन्निवृत्त्यर्थं जन्यकृतीति । एवमपि शब्दफूत्कारादेः पक्षता न स्यात् । तस्य शब्दादिनिमित्तभूतमृदङ्गताल्वादिगोचरास्मदादिनिष्ठजन्यकृतिजन्यत्वात्तस्यापि पक्षत्वेन सङ्ग्रहः कार्य एव । अन्यथा पक्षातिरिक्ते हेतुमति तस्मिन्साध्यसन्देहेन सन्दिग्धानैकान्तिकतापत्तेः तत्सङ्ग्रहार्थं स्वोपादानगोचरेति । तस्य निमित्तभूतमृदङ्गादिगोचरजन्यकृतिजन्यत्वेऽपि स्वोपादानगोचरजन्यकृतिजन्येभ्यो घटादिभ्यो भिन्नत्वमस्त्येव । अस्मदादिनिष्ठजन्यकृतेस्तदुपादानातीन्द्रियाकाशादिगोचरत्वासम्भवात् । एवमपि क्षित्यङ्कुरादिषु पक्षतावच्छेदकं सन्दिग्धं स्यात् । यागदानाद्युपयुक्तहविर्देवादीनामपि दैवाद्यागदानादिप्रभवादृष्टजन्यक्षित्यङ्कुराद्युपादानानुप्रवेशसम्भवेन हविर्देयादिगोचरकृतीनामुपादानगोचरत्वसम्भवात् । काल्या तपश्चरणेन यन्नीलरूपं परित्यज्य गौररूपं प्राप्तं तस्य च पक्षता न स्यात् । तस्य स्वोपादानभूतशरीरगोचरतपश्चर्यानुकूलजन्यकृतिजन्यत्वेन तद्भिन्नत्वाभावात् । तत्सङ्ग्रहार्थम् अदृष्टद्वारकेति । हविर्देयादिगोचरकृतिः कालीकृततपश्चादृष्टद्वारैव तत्तज्जनिकेति तत्सङ्ग्रहः । साध्ये ज्ञानचिकीर्षाकृतीनां मध्ये एकैकनिर्देशमपहाय त्रितयनिर्देशो यावदभिमतविशेषणगुणवत्त्वेनेश्वरसिद्ध्यर्थः । केवलं कृतिमज्जन्यत्वे साध्ये चिकीर्षावज्जन्यत्वं ज्ञानवज्जन्यत्वं वा सन्दिग्धोपाधिः स्यात् । एवं केवलं चिकीर्षावज्जन्यत्वे ज्ञानवज्जन्यत्वे वा साध्ये कृतिमज्जन्यत्वादिकं यथायथं सन्दिग्धोपाधिः स्यादिति तद्व्यावृत्त्यर्थश्च । अपरोक्षपदमुपादानज्ञानस्यापरोक्षज्ञानत्वेनैव हेतुत्वाद्व्यापकत्वसिद्ध्यौपयिकम् । एवमपि सिद्धसाधनम् । क्षित्यादेरपि स्वजनकादृष्टजनकयत्किंचिदुपादानभूतयागीयहविरादिगोचरापरोक्षज्ञानचिकीर्षाकृतिमदस्मदादिजन्यत्वात् तद्वारणाय स्वजनकादृष्टोत्तरेति ज्ञानादिविशेषणम् । न च क्षित्यादिजनकादृष्टोत्तरयत्किञ्चिदुपादानगोचरेदानीन्तनज्ञानादिमतास्मदादिना सिद्धसाधनम् । ज्ञानादीनामपि जनकत्वस्य विवक्षितत्वात् । न्यायभाष्यादिषु सकर्तृकत्वनिरुक्तावुपादानवद्दर्शनात् ध्वंसव्यावृत्तं सकर्तृकत्वमभिमतमिति तदनुरोधेन पक्षसाध्यहेतुषु समवेतोपादानगोचरभावपदानीति । अत्रेदं विचारणीयम् । उपादानगोचरत्वप्रवेशेन कथं साध्यस्य ध्वंसाद्व्यावृत्तिः । ध्वंसस्यापि रूपाद्युपादानघटादिगोचरापरोक्षज्ञानचिकीर्षाकृतिभिर्मुद्गरपातादिहेतुभिर्जन्यत्वात् । न चात्र पक्षविशेषण इव स्वोपादानगोचरत्वं विवक्षितुं शक्यम् । स्वोपादानगोचरजन्यकृतिजन्यभिन्नत्वस्य पक्षविशेषणतया भिन्नपदोपात्तान्योन्याभावप्रतियोगिविशेषणत्वेन तस्य प्रसिद्धिसम्भवेऽप्यत्रान्यविशेषणत्वाभावेन क्षित्याद्युपादानगोचरत्वरूपतापर्यवसायितया तथाभूतापरोक्षज्ञानाद्यप्रसिद्ध्या साध्याप्रसिद्धिप्रसङ्गात् । न च वाच्यं मुद्गरपतनानुकूला कृतिरेव ध्वंसजनिका न तु ज्ञानं चिकीर्षा वा । ज्ञानादीनां त्रयाणां स्वविषयसमवेतकार्यं प्रत्येव जनकत्वनियमादिति । घटतद्ध्वंसजननयोः कुलालघटध्वंसगतापरोक्षज्ञानचिकीर्षाकृतीनामन्वयव्यतिरेकतौल्येनोक्तनियमस्याप्रामाणिकत्वात् । प्रामाणिकत्वे वा ज्ञानादित्रयजन्यत्वाभावादेव ध्वंसव्यावृत्तसकर्तृकत्वलाभेन तद्व्यावृत्त्यर्थोपादानगोचरत्वविशेषणवैयर्थ्यात् । न चोपादानगोचरत्वघटितधर्मावच्छिन्नज्ञानादिनिष्ठजनकताप्रतियोगिजन्यताश्रयत्वं विवक्षितमिति नोक्तदोषद्वयमिति वाच्यम् । घटादिषु लाघवान्मृदादिगोचरत्वेनैव ज्ञानादीनां जनकतयोपादानगोचरत्वस्य ज्ञानादिनिष्ठजनकतावच्छेदककोट्यप्रवेशात् । न च

ज्ञानादिनिष्ठविशेषकारणतावच्छेदके मृदादिगोचरत्वप्रवेशेऽपि सामान्यकारणतावच्छेदके उपादानगोचरत्वप्रवेशः स्यादिति वाच्यम् । ध्वंससाधारणकार्यसामान्यकारणतावच्छेदके तत्प्रवेशाभावात् । भावकार्यसामान्यकारणतावच्छेदके उपादानगोचरत्वप्रवेशः स्यादिति चेन्न । यत्किञ्चिदुपादानगोचरत्वस्य ध्वंसकारणज्ञानादिष्वतिप्रसक्तत्वेन तत्तदुपादानगोचरत्वस्याननुगमेन च तत्रापि तत्प्रवेशासम्भवात् । किं च तत्प्रवेशे स्वजनकादृष्टोत्तरेति विशेषणं व्यर्थं स्यात् । हविरादिगोचरज्ञानादीनामुपादानगोचरत्वेन क्षित्यादिजनकत्वाभावादेवार्थान्तरवारणासम्भवात् । तस्मादुपादानगोचरविशेषणं तावद्व्यर्थत्वादयुक्तम् । तथैव स्वजनकादृष्टोत्तरेति विशेषणमप्ययुक्तम् । अर्थान्तरवारणैकप्रयोजनकस्य तस्य व्याप्तिग्रहानौपयिकत्वात् बीजसामान्येन व्यापकेऽपि व्यर्थविशेषणत्वस्य दोषत्वात् । अपि च स्वजनकेत्यत्र स्वपदं पक्षीकृतक्षित्यादिपरं दृष्टान्तीकृतघटादिपरं वा वाच्यम् । समभिव्याहृतपरत्वे व्यापकतावच्छेदकस्यैकस्यालाभेनाननुगमप्रसङ्गात् । तत्र पक्षद्वयेऽपि यावत्स्वजनकादृष्टोत्तरत्वं विवक्षितमुत यत्किञ्चित्स्वजनकादृष्टोत्तरत्वं वा । आद्ये दृष्टान्तस्य साध्यवैकल्यं स्यात् । यावत्क्षित्यादिजनकादृष्टोत्तरत्वस्य यावद्घटादिजनकादृष्टोत्तरत्वस्य वा कस्याञ्चिदपि घटादिजनकज्ञानादिव्यक्तौ सम्प्रतिपत्त्यभावात् । द्वितीये क्षित्यादिजनकादृष्टजनकहविरादिगोचरज्ञानादिमतास्मदादिना सिद्धसाधनं स्यात् । सर्वस्या अपि क्षित्यादिजनकादृष्टजनकज्ञानादिव्यक्तेरनादिकार्यप्रवाहान्तःपातियत्किञ्चित्क्षित्यादिघटादिजनकादृष्टोत्तरत्वात् । न च वच्छिन्नक्षित्यादिमध्ये दृष्टान्तत्वाभिमतघटादिमध्ये वा यत्र व्यक्तौ यदा साध्यमुपसंह्रियते तदा तत्परत्वं स्वपदस्य वक्तुं शक्यम् । तथा सति स्वपदस्य पक्षदृष्टान्तान्यतरपरत्वेऽस्याप्यननुगमतादवस्थ्यप्रसङ्गेन तस्यादृष्टद्वारकस्वोपादानगोचरजन्यकृतिजन्यभिन्नसमवेतजन्यत्वरूपपक्षतावच्छेदकावच्छिन्नसामान्यपरत्वस्यादृष्टद्वारकस्वोपादानगोचरजन्यकृतिजन्यत्वरूपदृष्टान्तगतधर्मावच्छिन्नसामान्यपरत्वस्य वा वक्तव्यत्वात् । न च स्वपदं किञ्चिद्घटव्यक्तिपरमङ्गीक्रियते । तज्जनकादृष्टोत्तरकुलालज्ञानादिजन्यत्वं तत्र सम्प्रतिपन्नमिति स एव दृष्टान्तो भविष्यतीति वाच्यम् । तथा सति तत्पूर्वकालोत्पन्नेषु घटादिषु हेतुमत्सु साध्यस्य सन्दिग्धतया सन्दिग्धानैकान्तिकतापत्तेः । पक्षादन्यत्र हेतुमति साध्यस्य सन्देहस्य दोषत्वे च क्षितिमात्रपक्षीकरणेनाप्यनुमानप्रवृत्तिसम्भवेन यावदीश्वरमात्रकर्तृकत्वाभिमतसङ्ग्राहकपक्षतावच्छेदकनिर्वचनप्रयासवैयर्थ्यापत्तेः । एतेन दृष्टान्तीकृतघटव्यक्तिव्यतिरिक्तं सर्वं कार्यं पक्षीकृतमिति न सन्दिग्धानैकान्तिकत्वदोषापत्तिः । पक्षे साध्यसन्देहस्यादोषत्वादित्यपि शङ्का निरस्ता । तथा सत्येतद्घटव्यतिरिक्तसमवेतजन्यानीत्येव पक्षीकर्तव्यत्वेनादृष्टद्वारकेत्यादिपक्षतावच्छेदकनिर्वचनप्रयासवैयर्थ्यापत्तेः । तस्मात्स्वजनकादृष्टोत्तरेत्यपि विशेषणमयुक्तम् । ननु तर्हि स्वजनकादृष्टोत्तरेत्यस्य स्थाने अदृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिभिन्नेति विशेषणं क्रियते । हविरादिगोचरज्ञानादिन्यदृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिनि यत्र तेषां प्रागभावस्तत्र तत्कार्यादृष्टप्रागभावावश्यंभावादिति तद्व्यवच्छेदः । अतस्तज्जन्यत्वेन सिद्धसाधनम् । यद्यप्यदृष्टाजनकेति ऋजुविशेषणेनापि तद्व्यवच्छेदः कर्तुं शक्यः । तथाप्यत्र सिसाधयिषिता-

(१) 'तत्प्रवेशः स्यादिति' इति घ. ङ. पाठः । (२) 'परत्वेऽप्यननुगम' इति घ. पाठः ।

नामीश्वरज्ञानादीनामदृष्टजनकत्वाङ्गीकारात् बाधस्स्यात्स माभूदित्येवं विशेषणमिति चेन्न। कुलालादिगतघटादिजनकज्ञानादीनामपि तन्निष्ठविहितनिषिद्धक्रियाजन्यादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगित्वेन दृष्टान्तत्वाभावप्रसङ्गात् । अथोच्येत स्वजन्यत्वमदृष्टे विशेषणं क्रियते। एवं च यान्यदृष्टजनकानि जन्यानि च तेषामेव स्वजन्यादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगित्वं कुलालादिकृतीनां त्वन्यजन्यादृष्टप्रागभावाव्याप्यप्रागभावप्रतियोगित्वमिति न दृष्टान्तस्य साध्यवैकल्यम् । न चैवं सति तीर्थाभिगमनतीर्थस्नानादिजनकज्ञानादीनामदृष्टजनकानां स्वजन्यादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगितया तद्भिन्नत्वाभावेन तथाभूतज्ञानादिजन्यत्वसाध्यसम्प्रतिपत्तिस्तीर्थादिगमनादिषु नास्तीति तेषु सन्दिग्धानैकान्तिकत्वापत्तिः । तीर्थाभिगमनादिकारणज्ञानादीनां तेषु कार्येष्वदृष्टद्वारकत्वेऽपि स्वर्गादिकार्यान्तरेष्वदृष्टद्वारकत्वेन तेषामदृष्टद्वारकस्वोपादानगोचरजन्यकृतिजन्यभिन्नतया पक्षान्तर्भावेन पक्षे साध्यसन्देहस्यादोषत्वादिति चेन्न। स्वपदस्य यद्वस्त्वदृष्टजनकत्वेन गृह्यते तदा तत्परत्वेऽननुगमप्रसङ्गेन व्यवस्थितैकार्थपरत्वे वक्तव्ये पक्षीकृतक्षित्यादिजनकादृष्टजनकानन्तहविरादिगोचरज्ञानादिमध्ये यद्ज्ञानादित्रयं स्वशब्देन ग्राह्यं ततोऽन्येषां स्वजन्यादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिभिन्नत्वेन तज्जन्येषु क्षित्यादिषु सिद्धसाधनं प्रसज्यत इत्यत्रापि पक्षे स्वपदार्थानुप्रवेशप्रयुक्त दोषानतिक्रमणात्। एतेनादृष्टप्रागभावेत्यादौ स्वजनकत्वमदृष्टविशेषणं कुलालगतज्ञानादीनांतद्गतविहितनिषिद्धक्रियान्तरजन्यादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगित्वेऽपि घटजनकादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगित्वं नास्ति । यद्यपि घटकर्तुः कुलालस्यैव घटभोक्तृत्वे घटजनकादृष्टप्रागभावं प्रति तद्गतघटजनकज्ञानादिप्रागभावानां दैशिकव्याप्तिरस्ति । तथापि कालिकव्याप्तेरिह विवक्षितत्वान्न दोष इत्यपि शङ्का निरस्ता। स्वपदार्थाननुगमदोषानिस्तारात् सर्वनाम्नां समभिव्याहृतपरत्वस्य 'तेन रक्तं रागा'दित्यादिप्रयोगेषु व्युत्पत्तिसिद्धत्वात्तदर्थाननुगमो न दोष इति चेत्सत्यम् । शब्देन बोधने तथा इहानुमानेनेश्वरं सिषाधयिषसि तत्र व्यापकतावच्छेदकाननुगमो दोष एव । तस्मादिदमनुमानमयुक्तमिति । अत्र ब्रूमः । ध्वंससाधारणमेवात्र सकर्तृकत्वं साध्यम् । अन्यथा जगज्जन्मस्थितिलयकारणत्वश्रुतेरनुमानसिद्धार्थानुवादकत्वपूर्वपक्षानिर्वाहात् । ततश्च पक्षे समवेतपदं साध्ये उपादानगोचरपदं हेतौ भावपदं च नोपादेयम्। एवं च ध्वंसवच्छब्दफूत्कारादिकमप्यस्मदादिकर्तृकमिति तत्सङ्ग्रहाय पक्षे स्वोपादानगोचरपदमपि नोपादेयम् । अदृष्टप्रागभावेत्यादिविशेषणस्यादृष्टद्वारकत्वमर्थः । एवं च हविरादिगोचरज्ञानादीनां क्षित्यादिकार्येष्वदृष्टद्वारकत्वात् न तद्वतास्मदादिना सिद्धसाधनम् । नचैवं सति बाधः ईश्वरज्ञानादीनामप्यदृष्टद्वारकत्वात् तज्जन्यस्तज्जन्यजनको व्यापार इति तल्लक्षणाङ्गीकारादिति वाच्यम् । यद्धर्मावच्छिन्नं प्रति जनकीभूतो व्यापारी तज्जननाय तद्धर्मावच्छिन्नं यं व्यापारमपेक्षते तस्यात्र द्वारपदेन विवक्षितत्वात् । ईश्वरज्ञानादीनां कार्यत्वावच्छिन्नजननार्थं तत्तदृष्टापेक्षायामप्यदृष्टव्यापीश्वरज्ञानजन्यतावच्छेदककार्यत्वावच्छेदकत्वेन तदनवच्छिन्नत्वाभावात् । न चैवमर्थान्तरवारणैकप्रयोजनस्यादृष्टद्वारकत्वविशेषणस्य व्याप्तिग्रहानौपयिकत्वाद्वैयर्थ्यदोषः व्यापकविशेषणे वैयर्थ्यबीजाभावात् साध्यनिरू-

(१) 'तद्द्वारा' इति ङ. पाठः ।

**त्कल्पनीयस्सर्वज्ञत्वादिमान् । नासौ शास्त्रैकगम्य इति नास्मिन् शास्त्रस्य प्रामा-**

पिता हेतुनिष्ठा व्याप्तिर्हेतुगतलघुधर्मावच्छेदेन ग्राह्येति सा धूमत्वादिलघुधर्मावच्छेदेनैव गृह्यते न तु नीलधूमत्वादिगुरुधर्मावच्छेदेनेति हि व्याप्यविशेषणवैयर्थ्ये बीजम्। न चैवं व्यापकविशेषणे वैयर्थ्यमापादयितुं शक्यम्। यतस्तत्र साधनसमानाधिकरणात्यन्ताभावप्रतियोगितायामनवच्छेदत्वमेव ग्राह्यम्। न त्ववच्छेदकत्वम्। न चानवच्छेदकत्वग्रहे गौरवं विरोधि। तथा सति गुरुधर्मस्यावच्छेदकत्वप्रसङ्गाभावात्। न चात्यन्ताभावगर्भव्याप्तौ व्यापकतावच्छेदके अनवच्छेदकत्वस्य ग्राह्यत्वेऽप्यन्योन्याभावगर्भव्याप्तौ साधनसमानाधिकरणमन्योन्याभावप्रतियोगितानवच्छेदकतायां साध्यगतायामवच्छेदकत्वं ग्राह्यम्। तद्ग्रहे च गौरवं विरोधीति व्यापकेऽपि व्यर्थविशेषणता स्यादिति वाच्यम्। तत्रापि साधनसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकतायामनवच्छेदकत्वस्यैव व्यापकतावच्छेदके ग्राह्यत्वात्। गन्धपृथिवीत्वव्याप्तौ तत्तद्गन्धत्वाकारेण साधनसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकेषु गन्धेषु तद्भिन्नत्वस्याभावेन गन्धत्वेऽपि तदवच्छेदकत्वासम्भवात्[1]। न चान्योन्याभावस्य व्याप्यवृत्तित्वनियमात् तत्तद्गन्धत्वाकारेणावच्छेदकेषु गन्धेषु गन्धत्वाकारेणावच्छेदकभिन्नत्वासम्भवेऽप्यवच्छेदकत्वात्यन्ताभावस्सम्भवति। तस्याव्याप्यवृत्तित्वाभ्युपगमादिति तथाभूते साधनसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वे व्यापकतावच्छेदकस्यावच्छेदकत्वं ग्राह्यमिति वाच्यम्। अवच्छेदकत्वग्रहणसापेक्षत्वावच्छेदकत्वात्यन्ताभावापेक्षया

च्छेदकान्योन्याभावस्य लघूपस्थितिकतयावच्छेदकभिन्नत्वरूपस्यैवानवच्छेदकत्वस्य व्याप्तिशरीरे प्रवेशयितुमुचितत्वात्। तस्मात्पक्षद्वयेऽप्यनवच्छेदकत्वमेव व्यापकावच्छेदके ग्राह्यमिति न व्यापके व्यर्थविशेषणताबीजम्[2]। अत एव व्यापके व्याप्तिग्रहानौपयिकान्यर्थान्तरवारणेन स्वाभिमतसाध्यसिद्धिप्रयोजनानि विशेषणानि कथकसम्प्रदाये सर्वेऽपि वादिनो निवेशयन्ति। एतेनेदमपि निरस्तम्। ज्ञानेच्छाकृतिषु कारणतावच्छेदकेनादृष्टद्वारकत्वमपि[3] निवेशनीयम्। गौरवात्। न च तथा सत्यदृष्टद्वारकज्ञानादिसत्त्वात् कुलालज्ञानादिकं विनापि घटादिकार्योत्पत्तिप्रसङ्गः। घटादिकार्यविशेषे मृदादि तत्तदुपादानगोचरादृष्टद्वारकजन्यज्ञानादीनां विशेषकारणतया विशेषकारणरहितसामान्यकारणमात्रेण कार्यापादनायोगादिति अदृष्टद्वारकत्वस्य ज्ञानादिगतकारणतावच्छेदकत्वेऽप्यर्थान्तरवारणाय व्यापकशरीरे निवेशस्योपपादितत्वात्। तस्माददृष्टद्वारकजन्यकृत्यजन्यानि जन्यानि अदृष्टाद्वारकापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि जन्यत्वात्। यद्यजन्यं तत्तददृष्टद्वारकापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यं यथा घटादीत्यनुमानादीश्वरसिद्धिरप्रत्यूहा। नन्वनुमानादपि तत्सिद्धिः। तावता शास्त्रस्य प्रामाण्यं न हीयते। अनुमानवत्तस्यापि तत्प्रमाजननसामर्थ्यावैकल्यादित्याशङ्क्याह—नासाविति। शास्त्रैकगम्य एवार्थे शास्त्रस्य प्रामाण्यं न तु प्रमाणान्तरविषयेऽपि तत्र शास्त्रवैफल्यादिति भावः[4]। ननु, स्यादेतत्। प्रमाणान्तरविषयेऽपि शास्त्रस्य प्रामाण्यं दृश्यते। यथा व्रीहीनवहन्तीति शास्त्रस्यावहनने यथा वा 'इमामगृभ्णन्रशनामृतस्ये-

(१) 'तदवच्छेदकस्यासम्भवात्' इति घ. पाठः। (२) 'बीजमस्ति' इति घ. पाठः। (३) 'ज्ञानतावच्छेदकेन' इति ख. पाठः। (४) 'तत्स्यादिति भावः।' इति. ख. पाठः।

त्यश्वाभिधानीमादत्त' इति शास्त्रस्य मन्त्राश्वाभिधानीसम्बन्धे पुरोडाशसाधनतयोपात्तेषु व्रीहिषु तुषविमोकार्थं शास्त्रेण विधीयमानमवहननं हि तत्र लोकसिद्धकारणत्वादाक्षेपरूपस्यापि प्रमाणस्य विषयः। अश्वाभिधान्यादानानुष्ठानोपयोग्यनुष्ठेयार्थज्ञानसाधनतया शास्त्रेण विधीयमान 'इमामगृभ्णन्नि'ति मन्त्रश्च रशनाप्रकारकसामर्थ्यरूपलिङ्गाधीनविनियोगकल्पनस्यापि विषयः। ननूदाहृतविधिविधेययोरवहननमन्त्रसम्बन्धयोः प्रमाणान्तरविषयत्वं नास्त्येव । तथा हि—अवहनने तावदाक्षेपो हन्तिशास्त्रस्य प्रवृत्तेः पूर्वं न प्रवर्तते । 'व्रीहिभिर्यजेते'ति शास्त्रेण व्रीहीणां पुरोडाशनिर्वर्तकद्वारयागसाधनत्वावगत्यनन्तरं तेषां पुरोडाशनिर्वर्तकत्वं तुषविमोकं विनानुपपन्नमिति तत्र साधनाकाङ्क्षायां यावन्नखविदलनसाधारणलोकसिद्धकारणभावानुसन्धानेन पाक्षिकतत्साधनत्वेनावहननमाक्षिप्यते। ततः प्रागेव झटिति प्रत्यक्षशास्त्रेणावहननस्य तत्साधनतया समर्पणात् । नापि तदनन्तरं प्रवर्तते । प्रत्यक्षशास्त्रसिद्धेनावहननेनैव साधनाकाङ्क्षानिवृत्तेः। एव'मित्यश्वाभिधानीमादत्त' इति शास्त्रप्रवृत्तेः पूर्वं मन्त्रस्याश्वगर्दभरशनासाधारणलैङ्गिकविनियोगकल्पना न प्रवर्तते । आक्षेपतः प्रत्यक्षशास्त्रस्य शीघ्रप्रवृत्तिकत्वात्। नापि तदनन्तरं प्रवर्तते। प्रत्यक्षशास्त्रसमर्पितविनियोगेन मन्त्रस्य नैराकाङ्क्ष्यादिति चेत्सत्यम्। अत्र वास्तवी प्रमाणान्तरप्रवृत्तिर्नास्त्येव। तथापि यदीमे शास्त्रे न प्रवर्तेतां तदानीमाक्षेपलैङ्गिककल्पनयोः प्रवृत्तिः स्यादिति तर्किता तयोः प्रवृत्तिरस्ति। अत एव ह्यनयोः शास्त्रयोरप्रवृत्तावर्थाक्षेपेण नखविदलनस्यापि कदाचित्प्राप्त्यावघातस्य पाक्षिक्येव प्राप्तिः स्यात् । मन्त्रस्य च लिङ्गाविशेषेण गर्दभरशनाग्रहणेऽपि विनियोगस्यात् । अनयोः प्रवृत्तौ त्वाक्षेपलैङ्गिककल्पनयोराकाङ्क्षाभावेनानवतारादवघातस्य नियतता । मन्त्रस्य गर्दभरशनातो निवृत्तिश्च लभ्यत इति नियमपरिसङ्ख्याफलकत्वमनयोर्विध्योरभ्युपगम्यते । ननु, तर्किते प्रमाणविषये शास्त्रप्रवृत्तावपि वास्तवप्रमाणविषये शास्त्रप्रवृत्तिर्न सम्भवति । न चात्रापि तर्कितैवानुमानप्रवृत्तिः । न तु वास्तवी । झटिति प्रवृत्तेन प्रत्यक्षशास्त्रेणेश्वरसिद्धौ सिद्धसाधनेनानुमानानवतारादिति वाच्यम् । सिद्धेरप्यनुमित्सयानुमानावतारसम्भवादिति चेत्सत्यम् । तर्कितवास्तवसाधारण्येन प्रमाणान्तरविषयेऽपि शास्त्रप्रवृत्तिरस्तीत्येतावत्येतदुदाहरणद्वयं दर्शितम् । वास्तवप्रमाणान्तरविषयेऽपि तत्प्रवृत्तिः दृश्यत एव। यथा अथातोऽग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेण तं चतूरात्रेण तं पञ्चरात्रेणे'त्यादिसन्दर्भे । अत्र प्रथमवाक्येन प्रकृत्यग्निष्टोमाङ्गत्वेन सिद्धस्याग्नेस्सर्वासु तद्विकृतिष्वतिदेशतः प्राप्तिरस्तीति द्विरात्रादिष्वग्नेरङ्गत्वे चोदकवाक्यविषय एव 'तं द्विरात्रेणे'त्यादिशास्त्रप्रवृत्तिर्दृश्यते । न च द्विरात्रादिषु चोदकवाक्यमग्निव्यतिरिक्ताङ्गविषयं कल्पनीयम् । अखण्डोपकारकमुखेन सर्वाङ्गविषयतया प्रवर्तमानस्य चोदकवाक्यस्य किञ्चिद्व्यतिरिक्ताङ्गविषयत्वं कल्पयितुं न शक्यत इति तद्वर्जनातिदेशपक्षस्य गृहमेधीयाधिकरणे निराकृतत्वात्। यथो'पांशुयाजमन्तरा यजती'त्युपांशुयाजोत्पत्तिवाक्येन पौर्णमासीकर्तव्याग्नेयाग्नीषोमीययागद्वयान्तराले उपांशुयाजं विदधानेनार्थसिद्धतया सामर्थ्यरूपप्रमाणान्तरविषय एवोपांशुयाजस्य पौर्णमासीकालत्वे 'तावब्रूतामग्नीषोमावाज्यस्यैवानावुपांशु पौर्णमास्यां यजन्ती'ति शास्त्रप्रवृत्तिर्दृश्यते । तथा 'द्वे आहवनीये चतस्रो गार्हपत्ये चतस्रोऽन्वाहार्यपचने

दश सम्पद्यन्ते दशाक्षरा विराट् य एवं विद्वान् विराट्सम्पन्नमग्निहोत्रं जुहोती'त्यत्र विराट्सम्पत्तिवाक्यानुसारेण दशसङ्ख्यानामग्निहोत्राहुतीनां मध्ये द्वे एवाहवनीये न त्वष्टावितरा इति परिसङ्ख्यानामष्टानां गार्हपत्यान्वाहार्यपचनरूपाधिकरणान्तरविधानसामर्थ्यात्सिद्ध्यतीति सामर्थ्यरूपप्रमाणान्तरविषय एव परिसङ्ख्याने द्वे आहवनीय इति शास्त्रप्रवृत्तिर्दृश्यते। नन्वस्तु नाम प्रमाणान्तरविषयेऽपि शास्त्रप्रवृत्तिः। तथापि यत्प्रमाणान्तरविषयावलम्बनं शास्त्रान्तरस्य किञ्चित्फलं वाच्यम्। अन्यथा तस्य सर्वथैव वैयर्थ्यप्रसङ्गात्। अस्ति च प्रमाणान्तरविषयावलम्बनानामुदाहृतशास्त्राणां किंचित् किञ्चित्फलम्। तथाहि–द्विरात्रादिशास्त्राद्द्विरात्रादिष्वग्न्याश्रितगुणकामादिप्राप्तिः फलम्। अग्न्याश्रिता हि गुणकामाः श्रूयन्ते 'श्येनचितं चिन्वीत स्वर्गकाम'इत्यादयः। तेन[1] चोदकादग्नेः प्राप्तौ न प्राप्नुवन्ति। अंगस्य हि सतश्चोदकात् कथं भावाकाङ्क्षया कल्प्यात्प्राप्तिः न त्वङ्गाश्रितानां फलार्थगुणानाम्। तथाष्टमाध्याये निर्णीतत्वात्। उपदेशादग्नेः प्राप्तौ तु प्रकृताविव द्विरात्रादिष्वपि तदाश्रिताः काम्यगुणाः प्राप्नुवन्ति। 'तावब्रूता'मित्यादिशास्त्रस्योपांशुयाजे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यधिकारिवाक्योद्देश्यफलसम्बन्धसिद्धिः फलम्। तदभावे हि विद्वद्वाक्यस्थेन अधिकारवाक्यस्थेन च पौर्णमासपदेन 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ'दित्युत्पत्तिवाक्यावगतपौर्णमासीकालयोराग्नेयाग्नीषोमीययागयोरेव झटिति प्रवृत्तिनिमित्तावगत्या प्रथमगृहीतफलयोः[2] सम्बन्धकरणादर्थावगम्यपौर्णमासीसम्बन्धस्योपांशुयाजस्य विलम्बितप्रवृत्तिनिमित्तप्रतीतिकतया विद्वद्वाक्याधिकारवाक्यगतपौर्णमासपदागृहीतस्य फलसम्बन्धो न सिद्ध्येत्। तत्सम्भवे तु 'उपांशु पौर्णमास्यां यजन्ती'ति प्रकृत्य 'जामि वा एतदि'त्याद्याम्नानादुपांशुयाजोत्पत्तिवाक्यश्रुतोऽन्तरालकालः पौर्णमासीरूपतां प्रापितो भवतीत्याग्नेयाग्नीषोमीययोरिवोपांशुयाजस्याप्युत्पत्तिवाक्यावगतपौर्णमासीकालत्वेन विद्वद्वाक्याधिकारवाक्यगतपौर्णमासपदप्रवृत्तिनिमित्तप्रतीतौ विशेषाभावात्तस्यापि फलसम्बन्धस्सिद्ध्यति। 'द्वे आहवनीय' इति शास्त्रस्य 'दशानामप्याहुतीनामग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यधिकारवाक्योद्देश्यफलसम्बन्धसिद्धिः फलम्। तदभावे हि गार्हपत्यान्वाहार्यपचनवाक्ये सङ्ख्याधिकरणविशिष्टकर्मविधायके स्यातां न त्व'ग्निहोत्रं जुहोती'ति वाक्यविहितकर्मानुवादेन गुणमात्रविधायके प्राप्ते कर्मणि। सङ्ख्याधिकरणरूपानेकगुणविधाने वाक्यभेदापत्तेः। ततश्च गार्हपत्यान्वाहार्यपचनवाक्ययोः सङ्ख्याधिकरणविशिष्टहोमविध्यवश्यंभावेनेष्टावपि होमाः 'अग्निहोत्रं जुहोती'ति वाक्यविहिताद्धोमादन्य एव स्युः। विहितस्य विधानायोगादिति। न तेषामग्निहोत्रमिति नाम सिद्ध्यति। किं त्वग्निहोत्रवाक्यविधेयस्यैकस्यैव होमस्य तन्नामेति प्राप्नोति। तदुत्पत्तिवाक्यगतत्वात्। अग्निहोत्रवाक्यविहितस्य सायंप्रातःकालयोर्देवताभेदेन द्विर्द्विरभ्यसनीयस्य होमस्य गार्हपत्यान्वाहार्यपचनवाक्यविहितानामष्टानां होमानां चानुवादके विराट्सम्पत्तिवाक्ये तावत्साधारण्येनाग्निहोत्रशब्दप्रयोगसत्त्वेऽपि तस्य छत्रिन्यायेन लक्षणोपपत्तेः। अग्निहोत्रवाक्यविहिते कर्मणि प्रथमावगतशक्त्यवश्यंभावेन तत्सम्बन्धादितरेषु लक्षणोपपत्तावनेकत्र शक्तिकल्पनस्यान्याय्यत्वा-

---

(१) 'ते चोदकादग्नेः'इति घ. ङ. पाठः। (२) 'गृहीतयोः फलसंबन्धः।' इति. घ. पाठः।

त्। 'रथन्तरं पृष्ठं भवति' बृहत्पृष्ठं भवती' त्युत्पत्तिवाक्ययोर्माहेन्द्रस्तोत्रनामत्वेन प्रथमावगतस्य पृष्ठशब्दस्य 'सप्तदशानि पृष्ठानी'त्यनुवादवाक्ये माहेन्द्रादिषु चतुर्षु स्तोत्रेषु प्रयोगो लाक्षणिक इति सप्तमाध्याये निर्णीतत्वात् । एवं चाधिकारवाक्यस्थेनाग्निहोत्रनाम्नाग्निहोत्रवाक्यविहितस्यैव होमस्य समर्पणात्तस्यैव द्विरभ्यसनीयस्य फलसम्बन्धः सिद्ध्येत् । न तु गार्हपत्यान्वाहार्यपचनवाक्यविहितानां होमानाम्। 'द्वे आहवनीय' इति वाक्यसद्भावे तु विराट्सम्पत्तिवाक्य 'मग्निहोत्रं जुहोती'ति विहितस्यैव होमस्य दशधाभ्यासपरम्। अग्निहोत्रनामानुसारेणोपपादनसम्भवात्। तेषां दशानामभ्यासानां मध्ये 'द्वे आहवनीय' इत्यनेनाहवनीयपरिसङ्ख्यया तेषामपेक्षितमधिकरणमेव गार्हपत्यान्वाहार्यपचनवाक्याभ्यां विधीयते । तयोश्चतुस्सङ्ख्याश्रवणं तु 'समं स्यादश्रुतत्वा' दिति न्यायप्राप्तानुवादकमिति लभ्यते । एवमग्निहोत्रवाक्यविहितस्यैव होमस्य देवताभेदेनाधिकरणभेदेन च सायं प्रातश्च दशदशाभ्यासाः न तु तद्व्यतिरिक्ता होमास्सन्तीति पर्यवसाने अधिकारवाक्यगतमग्निहोत्रनाम सर्वविधाभ्याससहितस्याग्निहोत्रस्य समर्पकमिति सर्वसाधारण्येन फलसम्बन्धः सिद्ध्यति । एवं प्रमाणान्तरविषयावलम्बनेषु शास्त्रेषु किञ्चित्फलं न कल्प्यते चेत् द्विरात्रादिवाक्यानि स्तुत्याद्यर्थानुवादकान्येव स्युः । इह त्वनुमानविषये जगत्कर्तरि प्रवर्तमानस्य शास्त्रस्य न तथा किञ्चित्फलं दृश्यत इत्यनुवादकत्वकल्पनमेव न्याय्यमिति चेन्मैवम् । इहापि वेदान्तरूपेण शास्त्रेण जगत्कर्तृज्ञानमभ्युदयनिश्रेयसोपयोगि न त्वनुमानेन तज्ज्ञानमित्येवंफलकल्पनोपपत्तेः । एवंभूतफलकल्पनयापि केषाञ्चिच्छास्त्राणां साफल्यदर्शनात्। तथाहि—नानाशाखाग्निहोत्रादिवाक्यानि परस्परप्राप्तविषयाणि तत्तच्छाखाध्यायिनां तत्तच्छाखान्तर्गतवाक्यजन्यान्येवाग्निहोत्रादिज्ञानान्यभ्युदयाद्युपयोगीनि न तु शाखान्तरगतवाक्यजन्यज्ञानानीत्येवं कल्पनया सफलान्युपपादनीयानि । स्वर्गकामवाक्यप्राप्तार्थविषयस्वर्गकामवाक्यादीन्यप्येवमेव सफलानि वक्तव्यानि । आहत्य च मीमांसकैरनारभ्याधीतसाप्तदश्यवाक्यसाफल्यमित्थमेवोपपादितम्। तथा हि 'सप्तदश सामिधेनीरनुब्रूया'दित्यनारभ्य श्रूयते । अत्र विधीयमानस्य साप्तदश्यस्य न सामिधेनीद्वारा प्रकृतौ निवेशः । प्राकरणिकतत्पाञ्चदश्यविरुद्धत्वात् । किं तु विकृतिष्वेव । तत्रापि श्रुतसाप्तदश्यासु मित्रविन्दादिष्वेव निवेशो न सर्वासु विकृतिषु । अनारभ्य श्रुतं साप्तदश्यं हि यावत्सामिधेनीद्वारा सकलविकृत्यङ्गं कल्प्यते तावत्प्राकरणिकैर्वाक्यैर्मित्रविन्दादिसम्बन्धे कृते क्षीणार्थापत्तिः न क्रत्वन्तरसम्बन्धं कल्पयति । तेनानारभ्याधीतस्य साप्तदश्यस्योपसंहारार्थानि तत्तत्प्रकरणाम्नातानि साप्तदश्यवचनानि। ततश्च प्राकरणिकवचनैः साप्तदश्यस्य क्रतुसम्बन्धसिद्धिरनारभ्याधीतवाक्येन सामिधेनीसम्बन्धसिद्धिरिति मीमांसकमर्यादा। अत्रानारभ्य विधानाभावे साप्तदश्यस्य क्रतुसम्बन्धवत् सामिधेनीसम्बन्धोऽपि प्राकरणिकवचनैरेव सिद्ध्यतीत्यनारभ्यविधानस्य वैयर्थ्यशङ्का प्राप्नोति। अत्रोक्तं तन्त्ररत्ने 'यद्यपि प्राकरणिकेनैव क्रतुसम्बन्धः सामिधेनीसम्बन्धश्च सिद्ध्यति तथापि वाक्यद्वयाम्नानादेवंविज्ञानमभ्युदयकारीति विज्ञायते अर्थवादप्ररोचितव ' दिति । तस्मात्प्रमाणान्तरविषयेऽपि शास्त्रप्रामाण्यस्य बहुषु स्थलेषु द-

(१) 'सप्तदश' इति ग. च. पाठः ।

ण्यम् । शास्त्रस्य प्रमाणान्तराप्राप्तविषयत्वादिति पूर्वः पक्षः ।

र्शनात् अनुमानविषयेऽपि जगत्कर्तरि तत्प्रामाण्यमुपपद्यत इत्याशङ्क्याह—शास्त्रस्य प्रमाणान्तराप्राप्तविषयत्वादिति । अयं भावः । प्रागेव प्राप्तेऽर्थे शास्त्रस्य प्रामाण्यं क्वचिदपि न दृश्यते। तथाहि—द्विरात्रादिवाक्यान्यग्निबोधकपदयुक्तान्यखण्डोपकारमुखेन तज्जनकानि सर्वाण्यपि प्राकृताङ्गान्यविशेषेण प्रापयतो विशिष्य तत्तदङ्गेषु सामान्यमुखेन पर्यवस्यतश्च द्विरात्रादिचोदकवाक्यात्प्रागेव तेषु विशिष्याग्निसम्बन्धं बोधयंति। 'तावब्रूता' मिति वाक्यं पौर्णमासीपदयुक्तमन्तरालकालविधानसामर्थ्यपरामर्शात्प्रागेवोपांशुयाजे पौर्णमासीकालयोगं बोधयति। 'द्वे आहवनीय' इति वाक्यं गार्हपत्यान्वाहार्यपचनवाक्यद्वयसामर्थ्यपरामर्शात्प्रागेव 'द्वे आहवनीय' इत्याहुत्यन्तराणामाहवनीयाद्यावृत्तिं बोधयति । नानाशाखागताग्निहोत्रादिवाक्यानि च तत्तच्छाखाध्यायिनं प्रति स्वशाखाध्ययनप्राथम्यात् शाखान्तरवाक्येभ्यः प्रागेवाग्निहोत्रादिकर्तव्यतां बोधयंति । स्वर्गकामवाक्यं च सामान्यमुखप्रवृत्तात् स्वर्गकामवाक्यात् प्रागेव ज्योतिष्टोमस्य विशिष्य स्वर्गसम्बन्धं बोधयति। ([1]एवमेषां द्विरात्रादिवाक्यानां चोदकवाक्यादिभ्यः प्रागेव स्वस्वार्थबोधकत्वाभावे तेषामज्ञातज्ञापकत्वरूपं प्रामाण्यमेव न सिध्येत्। दूरे प्रामाण्यविशेषरूपं शास्त्रत्वम् )। न चैवमिहापि गृहीतव्युत्पत्तिकप्रसिद्धपदघटितं 'यतोवे'त्यादिशास्त्रं प्रसिद्धव्याप्यव्यापकतद्व्याप्तिग्रहादिसापेक्षादनुमानात्प्रागेव जगत्कर्तारं बोधयतीति[2] शङ्कनीयम् । 'यतोवे'त्यादिशास्त्रं हि यच्छब्दयोगात् जगज्जन्मादिकारणस्यानुवादकं न स्वयं तस्य प्रापकम् । तस्य शास्त्रप्रतिपन्नार्थानुवादकत्वाभ्युपगमेऽपि 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इति वाक्यं तस्य पुरोवादकमभ्युपगन्तव्यमर्थैकरूप्यात्। तच्चु 'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छे'ति कार्यलिङ्गेन जगत्कारणानुमानप्रदर्शनपूर्वकं प्रवृत्तत्वादनुमानसिद्धार्थानुवादकमिति स्वप्रकरण एव स्पष्टम् । अतस्तदुपजीवनेन प्रवृत्तस्य 'यतोवे'त्यादिवाक्यस्यानुमानमुखनिरीक्षणावश्यम्भावात् तदनन्तरप्रवृत्तिकस्यास्य जगज्जन्मादिकारणे कथमपि न प्रामाण्यशङ्कावकाशः । ननु, जगत्कर्तुरनुमानतः सिद्धिसम्भवेऽपि तस्य'यतोवे' त्यादिवाक्य एव 'तद्ब्रह्मे'ति विधीयमानं तस्य त्रिविधपरिच्छेदराहित्यं वाक्यान्तरेषु विधीयमानं च तस्य गुणचरितविग्रहविशेषादिवैशिष्ट्यं वेदान्तैकप्रमाणकमभ्युपगन्तव्यमिति चेदस्तु नाम । न तावता तस्यानुमानप्रमाणत्वं 'यतोवे'त्यादिलक्षणवाक्यस्य तदनुवादकत्वं च हीयते । न[3] हि प्रत्यक्षादिना स्वरूपतो लक्षणतश्च देवदत्तं जानानं प्रति लक्षणमुखेन तदनुवादपूर्वकं तस्य पुत्रेयत्तादिकथने क्रियमाणे पुत्रेयत्तादिकथनस्य श्रोतारं प्रत्यननुवादकत्वमस्तीत्येतावता लक्षणकथनस्य प्रत्यक्षादिसिद्धार्थानुवादकत्वमपैतीति । एवं पूर्ववृत्तानुमानरूपप्रमाणान्तरप्राप्तार्थविषयकत्वात् 'यतो वे' त्यादिशास्त्रस्य तत्पुरोवादकत्वाभिमतस्य 'सन्मूलाः सोम्येमाः सर्वाः प्रजा' इत्यादिशास्त्रस्य वा जगत्कर्तरि प्रामाण्यं नोपपद्यत इति पूर्वपक्षे प्राप्ते तस्य तत्र प्रामाण्यमु-

(१) एतद्रेखाङ्कितं वाक्यं ङ.पुस्तक एव दृश्यते । नान्येषु (२) 'बोधयतीति तथैवास्यापि प्रामाण्यमुपपद्यत इति' ङ. पाठः । (३) 'तत्र हि' इति ख. पाठः ।

**सिद्धान्तस्तु, जगत्कारणं ब्रह्म वेदान्तशास्त्रैकगम्यं 'नावेदविन्मनुते तं बृहन्त' मित्यादिषु वेदान्तशास्त्रमन्तरेण ब्रह्मणो बोधासम्भवश्रवणात्। यदुक्तं सावयवत्वात्कार्यत्वसिद्धौ प्रपञ्चस्य कर्ता समुचितः कल्प्य एक इति। तदसत्। विचित्ररचनस्य गोपुर-**

पपादयितुं जगत्कर्तुस्तथाभूतप्रमाणान्तरप्राप्तत्वं निराकुर्वन्सिद्धान्तयति—सिद्धान्तस्त्विति। इत्यादिष्वित्यादिशब्देन 'नैषा तर्केण मतिरापनेये' त्यादिवाक्यान्तरं गृह्यते। ननु, 'नावेदवि' दित्यादिवाक्यजातं मुमुक्षुज्ञेययावद्विशेषणविशिष्टतया ब्रह्मावगतिरन्यतो न सम्भवतीत्येतत्परं न तु जगज्जन्मादिकर्तृतामात्रेणाप्यन्यतस्तदवगतिर्न सम्भवतीत्येतत्परम्। तथा तदवगतिहेतोः श्रुत्यैव प्रदर्शितस्यानुमानस्य जागरूकत्वादित्याशङ्क्याह—यदुक्तमिति। विचित्रेति। अयमाशयः। महीमहीधरमहार्णवादीनामेकेन कर्त्रा युगपत्कृतत्वेनैव सकर्तृकत्वं निर्वाह्यमित्यत्र नास्ति प्रमाणम्। महतो देवालयस्य प्रासादमण्टपगोपुरप्राकारादीनामिव तेषां क्रमेण बहुभिः कृतत्वेनापि सकर्तृकत्वोपपत्तेः। प्रत्युत महीमहीधरादिकमनेककर्तृकं यावत्सम्प्रतिपन्नैककर्तृकघटाद्यपेक्षया महाकार्यत्वात् गोपुरप्राकारादिवदिति बहुकर्तृकत्वस्यैवानुमातुं शक्यत्वाच्च। न च लाघवात् कर्त्रैक्यसिद्धिः। न हि प्रसिद्धसंसारविलक्षणा बहवः कर्तारः कल्प्यन्ते किंतु संसारिष्वेव केचित् कर्मोपासनाविशेषैरुपचितपुण्यविशेषाः क्षित्यादिषु कस्यचित्कस्यचित्कालविशेषेषु कर्तारः कल्प्यन्ते। प्रसिद्धं ह्यगस्त्यविश्वामित्रादीनां विन्ध्यसंस्तम्भनमहार्णवचुलुकीकरणस्वर्गान्तरसृष्ट्यादिसामर्थ्यम्। अद्यतनेष्वङ्कुरादिष्वपि सूक्ष्मव्यवहितविप्रकृष्टार्थज्ञानादिमन्तस्तत्रतत्र सन्तो योगिनः कर्तारः सम्भवन्ति। अतः क्षित्यादिसकलोपादानगोचरापरोक्षज्ञानचिकीर्षादिमतः संसारिविलक्षणस्य कस्यचित्कर्तुः कल्पन एव धर्मिकल्पनागौरवम्। किं चादृष्टद्वारकेत्याद्यनुमानेन लाघवादेकस्य कर्तुः सिद्धिरिति कोऽर्थः। किं वस्तुत एकमेव कर्तारं विषयीकुर्वाणानुमितिर्भवति उतैकत्वविशेषितं कर्तारं विषयीकुर्वाणेति। नाद्यः। एकत्वाविषयत्वे वस्तुत एकः कर्ता विषय इति निर्णेतुमशक्यत्वात्। न द्वितीयः। एकत्वस्य सङ्ख्यारूपत्वे बहुष्वपि प्रत्येकं तद्वैशिष्ट्यसत्त्वेन तद्विषयत्वस्य बहुकर्तृकत्वाविरोधित्वात्। अनेककर्तृकत्वाभावविशिष्टं सकर्तृकत्वमेककर्तृकत्वमिति तद्विषयिण्यनुमितिरिति चेत्तर्हि लघुविषयोपनयेन प्रमाणानुग्राहकतया प्रसिद्धं लाघवं गुरुविषयोपनायकं कृतं स्यात्। नैतद्युक्तम्। न ह्येवंभूतं लाघवं सम्प्रतिपन्नमस्ति। यदग्रे वस्तुलाघवसिद्ध्यर्थं स्वानुग्राह्यप्रमाणस्य विषयगौरवमापादयेत्। तत्सम्प्रतिपत्तौ पक्षे लिङ्गज्ञानस्यानुमितिकारणतां गृह्णतः प्रमाणस्यानुग्राहको लाघवतर्को 'धूमो वह्निव्याप्यः' 'पर्वतश्च धूमवा' निति ज्ञानद्वयस्थले 'वह्निव्याप्यधूमवान्पर्वत' इति विशिष्टज्ञानस्याकल्पनया वस्तुलाघवसिद्ध्यर्थं व्याप्यतावच्छेदकप्रकारकत्वमेव कारणतावच्छेदकत्वेनोपनयेत् न तु व्याप्तिप्रकारकत्वं लघुधर्म इष्टम्। पुरोवर्तिज्ञानस्य प्रवृत्तिकारणतां गृह्णतः प्रमाणस्यानुग्राहको लाघवतर्कश्च विसंवादिप्रवृत्तिस्थलेऽपि अधिकरणप्रकारकज्ञानस्याकल्पनया वस्तुलाघवसिद्ध्यर्थं भेदाग्रहणमेव कारणतावच्छेदकत्वेनोपनयेत्। न तु ज्ञानविर्त्तिवे-

(१) 'ज्ञानप्रवृत्ति' इति. घ. पाठः।

घतयोपस्थितं वैशिष्ट्यम् । अतो लाघवात्कर्त्रैक्यसिद्धिरित्ययुक्तमेव । एतेन पक्षीकृतक्षित्यादिजनन[1]समर्थापरोक्षज्ञानचिकीर्षाकृतीनां लाघवात् प्रत्येकमेकैकत्वसिद्धौ तदाश्रयकर्त्रैक्यसिद्धिरित्यपि शङ्का निरस्ता । सम्प्रतिपन्नानामेव संसारिणां योगप्रभावादिसिद्धैः क्षित्यादिजननसमर्थापरोक्षज्ञानचिकीर्षाकृतिविशेषैस्तत्कर्तृकत्वसम्भवात् । न च संसारिण एव सम्प्रतिपन्नाः न तु तेषु क्षित्यादिजननसमर्थाः अपरोक्षज्ञानादय इति शङ्कनीयम् । तेषामपि योगशास्त्रादिप्रामाण्यसिद्धत्वात् । किं तु तेषां क्षित्यङ्कुरादिजननपूर्वक्षणे सद्भावमात्रं कल्पनीयम् । तत्कल्पना तु धर्मिकल्पनातो वरं धर्मकल्पनेति लाघवानुसारिण्येव । एकैकज्ञानादिजन्यत्वसाधने च नास्ति विषयलाघवम् । किं त्वनेकज्ञानाद्यजन्यत्वे सति ज्ञानादिजन्यत्वरूपस्य तस्य साधन एव गौरवमित्येतदपि दूषणमत्रापि तुल्यम् । अपि चेश्वरानुमाने लाघवतर्कमनुग्राहकमन्विच्छता पक्षतावच्छेदकशरीरानुप्रविष्टस्य कुलालादिकृतिषु जन्यत्वस्य ग्राहके प्रमाणे लाघवमनुग्राहकमादरणीयम् । तत्र कुलालादिकृतिषु कृतित्वमेव जन्यतावच्छेदकं युक्तम् । लाघवात् । न तु कुलालादिकृतित्वमीश्वरकृत्यन्यकृतित्वं वा । गौरवात् अननु[2]गमादप्रसिद्धिदोषाच्च । तथा चानुमानप्रवृत्तेः प्रागेव कृतिमात्रस्य जन्यत्वनिश्चयेऽनुमानतो लाघवसहस्रेणापि न नित्यसर्वविषयैककृतिसिद्धिर्भवेत् । अपि च नित्यसर्वविषयैकचिकीर्षासिद्धिरपि न भवेत् । अस्मदादिनार्थान्तरवारणार्थं ज्ञानचिकीर्षाकृतीनामपि जनकत्वं साध्ये विवक्षितमिति खलूक्तम् । ततश्च घटादीनां चिकीर्षाकृतिव्यवहितकुलालादिज्ञानजन्यत्वं चिकीर्षादिद्वारा ग्राह्यमिति चिकीर्षायाः द्वारत्वनिर्वाहाय ज्ञानजन्यत्वं ग्राह्यम् । तत्र लाघवाच्चिकीर्षात्वमेव जन्यतावच्छेदकं प्राप्नोति । ननु, तर्हि ज्ञानचिकीर्षे विहाय कृतिमज्जन्यत्वमात्रं साध्यते । कृतेर्जनकत्वविवक्षामात्रेणार्थान्तरवारणासम्भवात् । अनुमानतः कृत्याश्रयत्वेनेश्वरसिद्धौ तदनुवादेन सार्वज्ञ्यादेरपि श्रुत्या बोधनसम्भवाच्च । न च तथा सति ज्ञानवज्जन्यत्वं चिकीर्षावज्जन्यत्वं वा सन्दिग्धोपाधिः स्यादिति वाच्यम् । ज्ञानस्य चिकीर्षया चिकीर्षायाः कृत्या चान्यथासिद्धतया घटादिषूपाधेः साध्यव्यापकत्वभङ्गात् । न च ज्ञानोपलक्षितजन्यत्वं चिकीर्षोपलक्षितजन्यत्वं वा सन्दिग्धोपाधिः स्यादिति शङ्कनीयम् । ज्ञानचिकीर्षयोः कार्याप्रयोजकत्वे हेतुसाध्ययोरिव साध्योपाध्योर्व्याप्तिग्राहकस्य कार्यकारणभावमूलकस्यानुकूलतर्कस्याभावेन तथाप्युपाधेः साध्यव्यापकत्वभङ्गात् । अन्यथा ज्ञानादित्रयजन्यत्वेऽपि [3]साध्येष्वेकैकजन्यत्वस्य साध्यातिरिक्तस्योपाधितायाः वारयितुमशक्यत्वादिति चेत् । एवं तर्हि कृतेरपि चेष्टयान्यथासिद्धेर्वक्तुं शक्यत्वेन घटादिदृष्टांतः साध्यविकलः स्यात् । न हि ज्ञानचिकीर्षे चिकीर्षाकृतिभ्यामन्यथासिद्धे । कृतिस्तु चेष्टया नान्यथासिद्धा । किंतु तद्द्वारा घटादिजनिकेति कल्पने नियामकं कञ्चिद्विशेषमीक्षामहे । अतः कृतेर्घटादिजनकत्वमभ्युपगच्छता ज्ञानचिकीर्षयोरपि जन्यजनकत्वमभ्युपगम्य उपाधिसन्देहवारणार्थं तयोरपि साध्यानुप्रवेशः कल्पनीय एव । तदकल्पने च अस्मदादीनां जीवनयोनिकृत एव तत्तद्भोग्यक्षित्यङ्कुरादीनामपि जनिकाः कल्पयितुं शक्यन्त इति तद्[4]द्भिरस्मदादिभिस्सिद्धसाधनं च स्यात् । तस्मात्क्षित्यादिकर्त्रनुमानेनैव कर्त्रैक्यसिद्धये तदनुग्राहकं लाघवमाद्रियमाणस्य तत्प्राक्प्रवृत्तप्रमाणेषु ला-

(१) ' जनकापरोक्षज्ञान ' इति ग. घ. पाठः । ( २ ) ' अननुमाना' इति. ख. पाठः । ( ३ ) 'ज्ञानाद्ये' इति ख. पाठ. । ( ४ ) 'तद्वदस्मदादिना' इति ग. घ. पाठः ।

प्रासादादेर्बहुकर्तृकत्वदर्शनात् । तथाच नानुमानेनैककर्तृकत्वसिद्धिः व्याप्तिबलेन

धवानादरणे हेत्वभावेन लाघवानुगृहीतप्रथमप्रवृत्तप्रमाणविरोधात्कर्तृसिद्धिरेव प्रतिहन्यत इति वृद्धिमिच्छतो मूलमपि नष्टमिति न्यायः समापद्यत इति । ननु, तर्हि क्वचिदपि लाघवं नाद्रियते। अनुमानसिद्धक्षित्यादिकर्त्रैक्यं तु श्रुत्यावगंस्यते इत्यनुशयानं प्रति तथापि नानुमानतस्त्वदभिमतेश्वरसिद्धिरित्याह—व्याप्तिबलेनेति । यथा हि घटादिकर्तरि ज्ञानेच्छादिमत्त्वं दृष्टं तथा कर्मपारवश्यशरीरत्वादिकमपि । तथा च क्षित्यादिकर्तरि ज्ञानेच्छादिवत्तदपि सिद्धं निवारयितुं न शक्यत इत्यर्थः । ज्ञानादिसिद्धौ कार्यकारणभावमूलकानुकूलतर्कसाचिव्यनिष्कलङ्का व्याप्तिर्मूलमस्ति न कर्मपारवश्यादिसिद्धाविति चेन्न । सामान्यकार्यकारणभावानानुप्रविष्टादृष्टद्वारकत्वविशेषितज्ञानादिमत्त्वसिद्धिवत्तत्सिद्धेरप्यनिवार्यत्वात् । अभिमतसिद्ध्यर्थमदृष्टद्वारकत्वं साध्ये निवेशितम् । कर्मपारवश्यादिकं त्वनभिमतत्वान्न निवेश्यत इति चेन्न । यथादर्शनमात्रप्रवृत्तानुमानशरणस्य दृष्टान्तदृष्टविशेषणेषु क्वचिदभिमतेरन्यत्रानभिमतेश्च निर्मूलत्वात्। 'न कर्मणा वर्धते नो कनीया'नित्यादिश्रुतिबाधितं कर्मपारवश्यादिकं न त्वदृष्टद्वारकज्ञानादिकमिति चेन्न । जगत्कर्तरि धर्मिग्राहकमानसिद्धं ज्ञानादित्रयं द्रव्यत्वसामान्यप्राप्तं सङ्ख्यादिपञ्चकं च विहाय गुणान्तरं नास्ति । तदनुसारेणानन्दादिश्रुतयोऽन्यथा व्याख्येया इत्यभिमन्यमानस्यानुमानैकशरणस्य शुष्कतार्किकस्य दृष्टान्तदृष्टं कर्मपारवश्यादिकमपि साध्येऽन्तर्भाव्य 'न कर्मणा वर्धत' इत्यादिश्रुतेरन्यथाव्याख्याने विचिकित्साहेत्वभावात् कर्मतारतम्यप्रयुक्ततारतम्यवदानन्दादिसद्भावमात्रं जगत्कर्तर्यङ्गीकृत्य तत्र नित्यनिरतिशयानन्दश्रुतिमात्रस्यान्यथाव्याख्यानोपपत्तेश्च। न च जगत्कर्तुः कर्मवश्यत्वेऽस्मदादिसाम्यापत्तिर्बाधः। विहितानुष्ठाननिषिद्धपरिहारनियमेन तस्य विशेषोपपत्तेः यथाकथञ्चित्साम्यमात्रस्य दोषत्वे ज्ञानादिमत्त्वसाम्यस्यापि दोषत्वापत्तेश्च । ज्ञानादीनां नित्यत्वेन सर्वविषयत्वेन च विशेषोऽस्तीति चेत्तर्हि तत एव कर्मवश्यत्वेऽपि विशेषोऽस्ति । किं च ईश्वरज्ञानादेर्नित्यसर्वविषयत्व एव भूयान्युक्तिबाधः । कथं हि सदा सर्वविषयिण्येकैव तस्येच्छा कालविशेषेण सिसृक्षासञ्जिहीर्षात्वादिरूपविशेषं भजेत । स हि विशेषाविषयविशेषोपधानात्मैव क्लृप्तस्तत्तत्कार्यसामग्रीविशेषोपधानरूपतया समर्थयितुमयुक्तः । न च शिवसूर्यप्रभारूपा चिच्छक्तिरिव तार्किककल्पितेश्वरगुणभूतेच्छा समयभेदेन विविधरूपपरिणामिनी। सिसृक्षासञ्जिहीर्षात्वादिरूपाणां सार्वदिकत्वे च सदैव सृष्टिसंहारादिकं प्रसज्येत । न च सिसृक्षादिसद्भावेऽपि सहकारिसमवधानक्रमात्कार्यक्रम उपपादनीयः । तदिच्छायां सहकारिसमवधानेच्छारूपत्वस्यापि सदातनत्वेन तत्समवधानक्रमस्याप्यशक्यसमर्थनत्वात् । एवं सत्यपि यदि सिसृक्षादिप्रयुक्तं कार्यं कालान्तरेऽपि न स्यात् तदा तार्किकेश्वरो वितथसङ्कल्पत्वादनीश्वर एव स्यात् । तथा तार्किकैर्यन्नित्यमकारणमभ्युपगतं पारिमाण्डल्यादि तदपीश्वरचिकीर्षाकृत्योर्विषय इति वक्तव्यम् । विषयविशेषनियमनहेतोः कारणविशेषप्रभवत्वस्याभावेनापाततः सर्वविषयत्वस्य तदंशे सङ्कोचयितुमशक्यत्वात् पारिमाण्डल्यादिविषयाभ्यां चिकीर्षाकृतिभ्यां न पारिमाण्डल्यादिकमुत्पादयितुं ध्वंसयितुं वा शक्यं न वा तेन कार्यान्तरमुत्पादयितुं शक्यमिति तत्रापि स वि-

**तस्य कर्मपारवश्यादिप्रसङ्गश्च। हेतोः पक्षधर्मताबलादनुमानेन जगतो विलक्षणैकक-**

तथसङ्कल्पो वितथप्रयत्नश्च स्यात् । एवंविधानेकयुक्तिविरुद्धमपि नित्यसर्वविषयज्ञानादिकमङ्गीकुर्वतः किमपराद्धमीश्वरस्य कर्मवश्यत्वादिना । तस्माद्दृष्टान्तदृष्टतामात्रेणादृष्टद्वारकत्वं विशेषणं निवेशयतः कर्मवश्यत्वादिविशेषणं प्रतिक्षेप्यमित्यानुमानिकेश्वरवादे तस्य कर्मवश्यत्वादिप्रसङ्गो वारयितुमशक्यः । ननु, तर्ह्यदृष्टद्वारकत्वं त्यज्यते अपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वमात्रं सिद्धिमिष्यते । न चैवं सति हविरादिगोचरज्ञानादिमतास्मदादिनार्थान्तरप्रसङ्गः, क्षित्यादिजनकतया साध्यमानस्य ज्ञानादित्रयस्य तदुपादानस्य च परस्परमप्रत्यासन्नत्वे कार्यनिष्पादकत्वायोगेन प्रत्यासत्तावपेक्षितायां घटादिजनकज्ञानादित्रयोपादानयोर्विषयविषयिभावः प्रत्यासत्तिः क्लृप्त इत्यत्रापि तस्यैव प्रत्यासत्तितया सिद्धेरिति चेन्न । विशिष्य क्षित्यादिजनकादृष्टजनकहविरादिगोचरज्ञानत्रयेषु क्लृप्तस्य दृष्टद्वारकतत्तदुपादानसम्बन्धस्यैव तदुभयप्रत्यासत्तित्वसम्भवे अन्यत्र विषयविषयिभावः तत्प्रत्यासत्तित्वेन क्लृप्त इति तल्लोभेन क्लृप्तहविरादिगोचरज्ञानादिकं परित्यज्याक्लृप्तनित्यज्ञानादिकल्पनायोगात् । शब्दफूत्कारादिजनकज्ञानादिकस्याकाशादिविषयत्वाभावेनान्यत्रापि विषयविषयिभाव एव तदुभयप्रत्यासत्तिरिति नियमासिद्धेश्च । तस्माज्ज्ञानादिमज्जन्यत्वमात्रे साध्येऽर्थान्तरं स्यादिति तद्वारणेनाभिमतसिद्ध्येकप्रयोजनमदृष्टद्वारकत्वं विशेषणं निवेशयतस्तथैव कर्मवश्यत्वादिनिवेशनमपि स्यादित्यनिवार्यः कर्मवश्यत्वादिप्रसङ्गः । स्यादेतत्। भवत्वेवमष्टगुण ईश्वर इति स्वमनीषिकया कल्पयित्वा तदनुरोधेनानन्दादिश्रुतिमन्यथा कुर्वतः शुष्कतार्किकस्यानुमाने दूषणमिदम् । अनुमानसिद्धमीश्वरमनूद्य वेदान्तैस्तस्य विधीयमानं गुणचरितविग्रहादिकं प्रत्यक्षादिसिद्धं पृथिव्यादिकमनूद्य पृथिवी गन्धादिपञ्चगुणा सलिलं रसादिचतुर्गुणमित्यादिप्रकारेण तैर्विधीयमानं गुणव्यवस्थादिकमिव तथैवाभ्युपगम्यत इति मन्यमानस्य पूर्वपक्षिणोऽनुमाने नेदं दूषणं प्रसरति। अतश्चोक्तानुमानेन हेतोः पक्षधर्मबलात्क्षित्यादिजननानुकूलापरोक्षज्ञानचिकीर्षाकृतिमांस्तत्कर्ता सिध्यन्वस्तुतोऽस्मदादिविलक्षण एकश्च सिद्ध्यति । कर्मवश्यत्वादिनास्मदादिसालक्षण्ये गोपुरादिकर्तृन्यायेनानेकत्वे वा 'न कर्मणा वर्धते नो कनीयान्' 'एको रुद्रो न द्वितीयायतस्थु'रित्यादिश्रुतिविरोधप्रसङ्गादित्याशङ्क्याह—हेतोरिति । यद्यनुमानसिद्धमीश्वरमनूद्य वेदान्तैर्विशेषा विधेयाः तर्हि तमनूद्य तस्य जगदुपादानत्वं तैर्विधातुमशक्यं स्यात् । ईश्वरः पृथिव्युपादानं न भवति तत्कर्तृत्वात्कुलालवदित्याद्यनुमानविरोधात्। ईश्वरस्य श्रुतिसिद्धत्वाभ्युपगमे हि धर्मग्राहकमानविरोधादिदमनुमानं नोन्मिषेत् । अनुमानसिद्धत्वे तु तत्सिद्धेश्वरपक्षीकरणेनोन्मिषेदेव । उन्मिषितं चोपजीव्यजातीयत्वेन शुचि नरशिरःकपालं प्राण्यंगत्वात् शङ्खवदित्यनुमानान्नरशिरःकपालाशुचित्वप्रतिपादकवाक्यमिव ब्रह्मणो जगदुपादानत्वविधायकाद्वाक्यजातादिदमनुमानं प्रबलमित्यपि शङ्क्येत । एवं तर्ह्यनेककर्तृकत्वाद्यनुमानमपि वेदान्तेभ्यः प्रबलमाशङ्कितुं शक्यम् । कथं विलक्षणैककर्तृकत्वसिद्धावपीति तदभ्युपगमः। सत्यम् । अभ्युपेत्य वादोऽयमित्यपिशब्देनैव ध्वनितम् । तस्माच्छुष्कतार्किकरीतिमपहाय परमेश्वरे वेदान्तप्रतिपाद्ययावद्धर्मवैशिष्ट्यमुपादित्समानेन तन्निर्वाहाय

(१) 'प्रसङ्गाच' इति. ख. पाठः । (२) 'साध्य' इति. ग. घ. ङ. पाठः ।

र्तृकत्वसिद्धावपि निमित्तोपादानशक्तियुक्तैककर्तृकत्वसिद्धिर्नास्ति। ततो वेदान्तशास्त्रैकगम्यं तत्प्रमाणकं ब्रह्मेति सिद्धम् (१) अनेन सूत्रेण पूर्वाधिकरणप्रतिपादितजगत्कारणत्वसिद्ध्युपयोगि सर्वज्ञत्वं ब्रह्मणः शास्त्राणां वेदानां योनित्वात्कारणत्वात्सिद्ध्यतीत्यपि प्रतिपाद्यत इति केचिदाहुः। सूत्रस्य सूचनात्मकस्यार्थद्वयाभिधाने श्लेषकाव्यवद्वाक्यभेदादिदोषाभावात्पुनरधिकरणान्तरप्रस्तावः । 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेद' इत्यादिः श्रूयतेऽस्य विषयः। ब्रह्मणो वेदकर्तृत्वं युक्तं न वेति सन्देहः। न युक्तमिति पूर्वपक्षः। 'वाचा विरूप-

---

वेदान्तैरेतत्सिद्धिरेष्टव्येति शास्त्रप्रमाणकमेव ब्रह्म नानुमानप्रमाणकम्। 'अन्नेन सोम्य शुङ्गेने' त्यादिश्रुतिप्रदर्शितमनुमानं तु 'सदेव सोम्येदमग्र आसी' दित्यादिना प्रपञ्चेन प्रागुपदिष्टे जगत्कारणे ब्रह्मणि प्रकरणस्य तात्पर्यनिर्णायकम्। यथाकथंचित् युक्त्युपन्यासात्मकमुपपत्तिरूपं लिङ्गं न तु स्वतंत्रप्रमाणमित्यभिप्रेत्याधिकरणार्थमुपसंहरति—तत इति। अनेन पूर्वपक्षिणापि परमेश्वरस्य वेदान्तप्रतिपाद्ययावद्धर्मवैशिष्ट्यमभ्युपगम्यते चेत्पक्षद्वयेऽपि फलभेदाभावात् किमर्थमिदमधिकरणमित्यपि शङ्का निरस्ता। परमेश्वरस्यानुमानिकत्वे तदभ्युपगम एव न निर्वहतीति फलभेदसत्त्वेन तत्त्वबुबोधयिषयाधिकरणप्रवृत्तेरिति। अत्र सूत्रे भाष्यान्तरप्रदर्शितं वर्णकान्तरमप्यङ्गीकृत्य तदुपपादयितुमुपक्रमते—अनेनेति। जगत्कारणत्वोपयोगि सार्वज्ञ्यं श्रुतेन जगत्कारणत्वेनैवाक्षिप्यते। साक्षाच्च श्रूयते 'यस्सर्वज्ञस्सर्ववि' दित्यादिषु। किमत्र हेत्वन्तरगवेषणया। अथापि तद्गवेषणया जगत्कारणत्वोपयोगिनि सर्वशक्तिकत्वेऽपि हेत्वन्तरं किमिति नान्विष्यते। उच्यते। वेदनित्यत्वमूलकसर्वजगत्कारणत्वरूपलक्षणासम्भवशङ्कानिरासोऽप्यनुषङ्गतो लभ्यत इत्यन्यतः सिद्ध्यत्यपि सर्वज्ञत्व एव वेदकारणत्वरूपं हेत्वन्तरमुच्यते। अत एव वेदनित्यत्वव्यवस्थापनं वियत्पादे सङ्गतं नात्र कर्तुं युक्तमित्यपि शङ्का निरस्ता। अनुषङ्गलभ्येऽर्थे पृथक्सङ्गत्यनपेक्षणात्। श्लेषकाव्यवदिति। 'त्रातः काकोदरो येन द्रोग्धापि करुणात्मना। पूतनामारणाख्यातः श्रेयसेऽस्तु स मे विभुः॥' इति श्लिष्टकविपद्ये यथा श्लेषालङ्कारकृतविच्छित्तिविशेषसिद्धये वक्तुरनेकार्थविवक्षासत्त्वात् स्वतंत्रानेकार्थत्वकृतवाक्यभेदोऽनेकार्थप्रतीत्यर्था वाक्यावृत्तिश्च न दोषाय। एवमिहाप्यनेकार्थसूचनसिद्धये सूत्रकृतस्तदनुकूलानेकार्थविवक्षासत्त्वात्तत्कृतो वाक्यभेदो वाक्यावृत्तिश्च न दोषायेत्यर्थः। 'अस्य महतो भूतस्ये' ति वाक्ये ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वमाक्षेप्तुं प्रभवति न वेत्यधिकरणाङ्गसंशयं सिद्धं कृत्वा तदर्थसंशयं दर्शयति—ब्रह्मण इति। वेदनित्यत्वपौरुषेयत्वविरोधाविरोधौ संशयबीजमित्यभिप्रेत्य तद्विरोधं पूर्वपक्षहेतुं दर्शयति—वाचेति। ननु, वर्णानां नित्यत्वेन 'नित्यया वाचे'ति विशेषणमुपपद्यते। मैवम्। यदि वर्णा नित्याः तदा लौकिकवाक्यगता अपि ते नित्या इति विशिष्य वेदवाचि नित्यत्वं विशेषणं न स्यात्। अतो वेदाख्यग्रन्थरूपेण नित्यत्वमभिप्रेत्येदं विशेषणं कृतमिति ज्ञायते। नन्वानुपूर्वीविशेषणविशिष्टवर्णरूपस्य वेदस्य नित्यत्वं न सम्भवति आनुपूर्व्याः कृतकत्वादि-

(१) 'कारणत्वोपयोगि' इति-ख. पाठः 'कारणत्वोपाधियोगेन' इति ग. पाठश्च।

नित्यये'त्यादेर्वाचो नित्यत्वप्रतिपादिकायाश्श्रुतेर्विरोधात् । वेदानां ब्रह्मकार्यत्वे

ति चेत् सत्यम् । स्वरूपनित्यत्वं न वेदनित्यत्वश्रुतेरर्थ इष्यते । किं त्वविच्छिन्नप्रवाहत्वरूपं प्रवाहनित्यत्वम् । न च प्रवाहनित्यत्वे सति स्वरूपानित्यत्वमात्रेण स्वतंत्रपुरुषप्रणीतत्वरूपं सकर्तृकत्वं सम्भवति । येन ब्रह्मणस्सार्वज्ञ्याक्षेपकं वेदकर्तृत्वं युक्तं स्यात् । तथा सति कालिदासाद्युपज्ञस्य कुमारसम्भवादेरिव वेदस्य प्रवाहस्सादिरेव स्यात् । ननु, निश्वसनश्रुतितो वेदनित्यत्वश्रुतेः किं प्राबल्यकारणं येन तद्विरोधान्निश्वसितश्रुतिप्रतिपन्नं ब्रह्मणो वेदकर्तृत्वमयुक्तमिति वक्तव्यं स्यात् । उच्यते । निरवकाशत्वं तत्प्राबल्यकारणम् । असम्भवत्स्वरूपनित्यभावानां वेदानां प्रवाहतोऽपि नित्यत्वस्यानभ्युपगमे तन्नित्यत्वश्रुतेर्नास्ति कश्चिदवकाशः । वेदकर्तृत्वश्रुतेस्त्वस्त्यवकाशः । कथम् । ब्रह्मण इव प्रजापतेरग्न्यादीनां च वेदकर्तृत्वं श्रूयते । 'पड्ढोता भूत्वा प्रजापतिरिदं सर्वमसृजत । ऋचो यजूंषि सामानि ।' 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोस्सामवेद आदित्या'दित्यादिश्रुत्यन्तरेषु । न चैकस्मिन्ग्रन्थे बहूनां स्वतंत्रकर्तृत्वं सम्भवति । तस्माद्वेदाभिमानिदेवतानां प्रजापतेरग्न्यादिभ्यश्च जननविषयाणि वेदानामेव तत्तत्प्रवर्तितत्वविषयाणि वा तानि श्रुत्यन्तराणीति योजनीयम् । तथैव निश्वसितश्रुतेरपि योजनोपपद्यते । संति हि पृथिव्याद्यभिमानिदेवतावत्तद्वेदाभिमानिन्योऽपि देवताः । उक्तं च तन्त्रवार्तिकेऽपि ग्रहैकत्वाधिकरणे ' शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते । तदप्यधिष्ठितं सर्वमेकेन परमात्मना । तथर्ग्वेदादयो वेदाः प्रोक्ता येऽपि पृथक्पृथक् । भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगतास्सदे ' ति । तासां च देवतानां ब्रह्मणो जातानामपि समयान्तरे पुनरग्न्यादिभ्योऽपि जननमुपपद्यते । ब्रह्मणो मानसपुत्राणां दक्षनारदवसिष्ठभृग्वादीनामिव समयान्तरे पुनरन्यतोऽपि जननम् । एवमादौ ब्रह्मणा प्रवर्तितानामपि वेदानां कालक्रमेण लुप्तानां कालान्तरे पुनरग्न्यादिभिरपि प्रवर्तितत्वं सम्भवति । तस्माद्युक्तमुक्तं वेदनित्यत्वश्रुतिविरोधाद्ब्रह्मणो वेदकर्तृत्वमयुक्तमिति । बाधकान्तरमाह—वेदानामिति । यदि वेदाः स्वतंत्रपुरुषप्रणीताः स्युः तदा तत्प्रणेतरि भ्रमप्रमादविप्रलिप्साकरणापाटवशङ्कानामपरिहार्यत्वेन बुद्धाद्यागमवदेव तेषामप्रामाण्यं प्रसज्येत । न चेश्वरे सार्वज्ञ्यादिनिश्चयादुक्तशङ्कानवतारः वेदादन्यतस्तन्निश्चयासम्भवात् बुद्धादीनामपि सार्वज्ञ्यादेस्तदागमतो निश्चयसम्भवस्याविशिष्टत्वाच्च । न च वेदेषु महाजनपरिग्रहो बुद्धाद्यागमाद्विशेषः । महत्त्वस्य पूज्यत्वरूपत्वे वेदपरिगृहीतॄणां पूज्यत्वस्य तत्प्रामाण्यनिर्णयं विना निर्णेतुमशक्यत्वात् । सङ्ख्याधिक्यरूपत्वे सन्दिग्धासिद्धेः । न च सर्वसम्मतवैद्यकपरिग्रहः तथाभूतव्याकरणपरिग्रहो वा महाजनपरिग्रहः । बौद्धागमानुसारिवैद्यशास्त्रे रोगशांत्यर्थं तदागमोक्तकर्मविधानेन जैनव्याकरणदर्शनेन च तयोरतिप्रसक्तत्वात् । न च वेदोक्तस्य सत्यसम्भाषणादीनां धर्मत्वस्य सम्मतत्वं महाजनपरिग्रहः । बौद्धोक्ताहिंसाधर्मत्वस्यापि सर्वसम्मतत्वाच्च । न च वैदिकमंत्रजपादिषु फलसंवादो महाजनपरिग्रहः । एकदेशसंवादस्य सर्वसाधारण्यात् बुद्धोक्ताग्निस्तम्भनादिकर्मणां क्षपणकर्षिकमंत्राणां च केषाञ्चित्फलसंवाददर्शनात् । सार्वत्रिकसंवादस्य वैदिककर्मस्वप्यदर्शनात् । तस्माद्वेदस्य प्रामाण्ये सिद्ध एव तत्प्रतिपाद्यस्यापीश्वरस्य सार्वज्ञ्यादिकं तत्परिगृहीतॄणां पू-

**पौरुषेयत्वादप्रामाण्यप्रसङ्गाच्च। तस्माद्ब्रह्मणो वेदकर्तृता कथमिति प्राप्ते ब्रूमः। युक्तमेव ब्रह्मणो वेदकर्तृत्वम्। 'अस्य महतो भूतस्य निश्वासितमेतद्यदृग्वेदो यजुर्वेदस्सामवेद' इत्यादिश्रुतेर्निश्वसितवद्वेदराशेरप्रयत्नेन ब्रह्मणः प्रादुर्भावावगमात्। 'अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्। आदिकर्ता कविस्साक्षाच्छूलपा-**

ज्यत्वरूपं महत्त्वं च सिद्ध्यति। न तु तेन वेदप्रामाण्यमिति तस्य प्रामाण्यसिद्ध्यर्थमवश्यं पौरुषेयत्वमभ्युपगन्तव्यम्। न च वेदस्य स्वतन्त्रवक्तृप्रमितिपूर्वकत्वाभावे 'शुक्लः पट' इत्यन्धवाक्यस्य चक्षुष्मत्प्रमितिपूर्वकत्वाभाव इव न प्रामाण्यं निर्वहतीति वाच्यम्। अपौरुषेयत्वेन वक्तृदोषाभावसिद्धौ शुकबालादिप्रमाणवाक्यसाधारणेन योग्यवाक्यत्वेनैव तत्प्रामाण्यनिर्वाहात्। अन्धवाक्यन्यायेन मूलापेक्षा तु पौरुषेयवाक्य एव। अर्थमुपलभ्य रचितं हि वाक्यं पौरुषेयम्। तत्स्वप्रामाण्यनिर्वाहार्थं स्वमूलोपलम्भस्य नियमेन प्रामाण्यमपेक्षते 'शुक्लः पट' इत्यन्धवाक्यमिव तन्मूलभूतस्योपदेष्टुश्चक्षुष्मत्ताम्। अपौरुषेयं तु वाक्यमपौरुषेयवेदमूलप्रमाणनिरपेक्षम्। तदेव चक्षुष्मत्स्थानीयमिति न तत्र लौकिकवाक्यन्यायावतारः। न च लौकिकवाक्ये वक्तृज्ञानप्रामाण्याधीनं प्रामाण्यं दृष्टमिति वेदेऽपि तथात्वं शङ्कितुं शक्यम्। 'शुक्लः पट' इत्यन्धवाक्ये चक्षुष्मद्वाक्यमूलकत्वं दृष्टमिति चक्षुष्मद्वाक्येऽपि चक्षुष्मद्वाक्यान्तरापेक्षकत्वकल्पनाप्रसङ्गात्। तस्माद्वेदनित्यत्वश्रुतिविरोधाद्वक्तुर्भ्रमप्रमादादिसम्भवेन तत्प्रामाण्यसंशयप्रसङ्गात् स्वतन्त्रवक्तृप्रमितिपूर्वकत्वाभावेऽप्यपौरुषेयत्वेन प्रामाण्यनिर्वाहाच्च न ब्रह्मणो वेदकर्तृत्वम्। अतो न तेन तस्य सार्वज्ञ्यसिद्धिरिति पूर्वपक्षमुपसंहरति—तस्मादिति। सौत्रं सार्वज्ञ्ये हेतुमुपपादयितुं प्रतिजानीते—युक्तमेवेति। ननु, निश्वसितश्रुतिर्ब्रह्मणो वेदोपादानताविषयत्वेन आधुनिकाध्यापकरीत्या सर्गादौ सर्ववेदाध्यापकताविषयत्वेन वोपपन्ना। न तस्य ततोऽर्थमुपलभ्य रचयितृत्वरूपस्य वेदकर्तृत्वस्य सिद्धिः। येन तस्य सार्वज्ञ्यं सिद्ध्येदित्याशङ्क्योपबृंहणवशात्तदभिप्रेतश्रुत्यन्तरवशाच्चोक्तरूपं वेदकर्तृत्वं तदर्थोऽवसीयत इत्यभिप्रेत्योपबृंहणमुदाहरति—अष्टादशानामिति। चत्वारो वेदाः शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि। पुराणन्यायमीमांसाधर्मशास्त्राण्यायुर्वेदधनुर्वेदगान्धर्वार्थशास्त्ररूपाश्चत्वार ऋग्वेदाद्युपवेदाश्चेत्यष्टादश विद्यास्थानानि। तानि विद्योत्पत्तिस्थानत्वादिह विद्याशब्देन लक्ष्यन्ते। तानि प्रधानोपसर्जनभावेनैकफलपर्यवसायित्वेऽपि द्वारभेदेन भिन्नवर्त्मानि। तत्र ब्रह्माराधनभूतकर्मोपासनाद्वारेण साक्षाच्च ब्रह्मप्रतिपादकाश्चत्वारो वेदाः प्रधानभूताः। तदीयस्वरवर्णपदतदर्थावधारणोपायभूतानि शीक्षाव्याकरणनिरुक्तानि। तदुक्ताग्निहोत्रादिकर्मानुष्ठानप्रकारप्रतिपादकः कल्पः। कर्माङ्गमन्त्रेषु ज्ञातव्यानां गायत्र्यादिछन्दसां निर्णायकं छन्दः। कर्माङ्गकालविशेषनिर्णायकं ज्योतिषम्। सृष्टिवाक्याद्यर्थप्रपञ्चनेन पारमेश्वरमहाविभूत्युपबृंहणार्थानि पुराणानि। वेदान्ततात्पर्यनिर्णयानुकूलषड्विधलिङ्गान्तर्गतोपपत्तिरूपानुमानतत्परिकरशोधनार्थं न्यायशास्त्रम्। वेदार्थनिर्णयानुकूलन्यायविचारात्मिका मीमांसा। वर्णाश्रमानुगुणनिमित्तसाधारणधर्मप्रतिपादकं धर्मशास्त्रम्। सकलानुष्ठानसाधनदेहपाटवार्थ आयुर्वेदः। राज्यपालनोपयोग्यस्त्रजातज्ञानार्थो धनुर्वेदः। सकलदेवताप्रीणनगीतिज्ञानाद्यर्थं गान्धर्वम्। दृष्टादृष्टोपयोगिधनार्जनोपायज्ञानार्थमर्थशास्त्रम्। वैदिकहरिश्चन्द्राद्युपाख्यानार्थप्रपञ्चपराणामितिहासानां वैदिकदेवतातदाराधनप्रकारविशेषप्रतिपादका-

णिरिति श्रुति' रिति परमेश्वरस्य सकलविद्याकर्तृत्वप्रतिपादनाच्च। सृष्टेः प्राक् स्वात्मनि विलीनानां वेदानां पूर्वपूर्ववर्णानुपूर्व्यनुरूपरचनया पुनः कर्ता भवति

नामागमानां च पुराणशब्देनैव संग्रहः। सर्वेषामेषां विद्यास्थानानामादिकर्ता सर्गाद्यकालेषु प्राथमिकः कर्ता शूलपाणिः। अत्र श्रुतिः ' छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति। अस्मान्मायी सृजते विश्वमेत ' दिति। न चायमध्यापकरीत्या तत्तद्विद्यास्थानगतवर्णावलीमात्ररचयिता किं तु साक्षात्कविः। अर्थविशेषानुपलक्ष्य श्लोकादिनिर्मातारो हि कवयः। ते च परमेश्वरादन्ये पूर्वपूर्वकविच्छायापत्त्या कवयः। अयं तु साक्षात्कविः स्वयमेव तत्तदर्थमुपलभ्य सर्वेषां विद्यास्थानानां निर्माता। अत्रापि श्रुतिः—' तदेव ब्रह्म परमं कवीना ' मिति। तत्प्रकृतं ब्रह्मैव कवीनां मध्ये परममुत्कृष्टम्। तत्तद्विद्यास्थानैकदेशप्रबन्धारो ह्यन्ये कवयः देवर्षिमनुष्यादिरूपाः। अयं तु सकलविद्यास्थानप्रथमप्रवन्धृत्वात्सर्वोत्कृष्टः कविरिति तदर्थः। ' कविं कवीनामुपमश्रवस्तमम् ' ' उदीरयं कवितमं कवीनां ' 'कविं सम्राज' मित्यादिश्रुत्यन्तराणामप्युक्तरूपे परमेश्वरस्य सर्वोत्कृष्टकवित्व एव तात्पर्यमिति तादृशानि श्रुत्यन्तराण्यप्यत्र विवक्षितानि। ननु, यदि कविशब्देन निर्देशादर्थमुपलभ्य वेदादिरचयितृत्वमीश्वरस्य सिद्ध्येत्तर्हि तत एव स्वेच्छाधीनयानुपूर्व्या तद्रचयितृत्वमपि सिद्ध्येत्। न हि प्राक्सिद्धयानुपूर्व्या प्राचीनश्लोकादिकं कीर्तयन्कविरित्युच्यते। ततश्चानुपूर्व्यनन्यथात्वरूपस्यापि वेदनित्यत्वस्याभावात् तन्नित्यत्वश्रुतिः सर्वधा निर्विषया स्यादित्याशङ्कां परिहरति—सृष्टेरिति। सर्वज्ञः सर्वानुग्राहकः परमेश्वरः प्रलये स्वस्मिन्विलीनान्वेदान् सृज्यमानाः प्राणिन एतेभ्यो वेदवाक्येभ्यः कर्मोपासनादिकं ज्ञात्वा तदनुष्ठानेन कृतार्था भवन्त्वित्यभिप्रायेणैव हि विरचयति। एवमभिप्रायपूर्विका वाक्यविरचनार्थानभिज्ञाध्यापकोच्चरितवेदवाक्यवदर्थोपलम्भमनपेक्ष्य वर्णावलिज्ञानमात्रेण न सम्भवतीत्यर्थमुपलभ्य रचयितृत्वं तावत्कविशब्देन संग्राह्यम्। न त्वानुपूर्व्यन्तरेण रचयितृत्वमपि। कर्मोपासनादिप्रतीत्यर्थं प्राचीनानुपूर्व्यपेक्षणात्। अतस्तदन्यथात्वरूपमनित्यत्वं न प्रसज्यत इति न नित्यत्वश्रुतिविरोध इत्याशयः। ननु, कर्मोपासनादिप्रतीत्यर्थमानुपूर्व्यैक्यं नापेक्षते। आनुपूर्वीभेदेऽप्यर्थैक्यदर्शनात्। प्रतिदिनमहरादौ भृत्यान्यथापूर्वं तत्तत्कार्येषु नियुञ्जानो हि स्वाम्येकरूप एवार्थे भिन्नभिन्नानुपूर्वीकमपि वाक्यं रचयतीति दृष्टान्तविषम उपन्यासः। भृत्यनियोगवाक्येष्वानुपूर्वीभेदेऽप्यर्थो न भिद्यते। वेदे तु क्रमविशेषविशिष्टवाक्यसन्दर्भविषयेषु वेदपारायणादिविधिषु उपक्रमोपसंहारपाठक्रमादिपर्यालोचनया निर्णेतव्येषु कर्मसु चार्थो भिद्येतैव। तथा च कल्पभेदेन धर्माधर्मव्यवस्थाविप्लवापत्तिः। न च पूर्वानुपूर्व्यनुरोधमात्रेण वेदवक्तुस्तत्र स्वातन्त्र्यभङ्गप्रसङ्गः। तथा सति पूर्वकल्पेषु यानि भूतानि यद्गुणकानि येन रूपेण प्राणिनामुपकारकाणि येन क्रमेणोत्पत्तिमन्ति येन क्रमेण विलयवन्ति च तानि तथैव सृजतः संहरतश्च परमेश्वरस्य जगन्निर्माणमात्रे पारतन्त्र्यप्रसङ्गात्। यदि तु प्राणिनां प्राचीनमदृष्टनिचयं भोगेन क्षपयित्वाताननुजिघृक्षन्परमेश्वरः पूर्वं प्राणिभिर्यथाभूतेन भूतभौतिकवर्गेण भोगाननुभूय पुनरपि तादृग्भोगसिद्ध्यर्थं यान्यदृष्टान्यार्जितानि तानि तथाभूतेनैव तेन भोगं सम्पाद्य क्षपणीयानीति तत्क्षपणेच्छयैव

**सर्वज्ञः परमेश्वरः। अत एव वेदानामपौरुषेयत्वमीश्वरकार्यत्वं च । येषां रागद्वेषा-**

भूतं भूतभौतिकसर्गं सृजति न तु किञ्चित्पारतन्त्र्येणेत्युच्येत तदा पूर्वपूर्वकल्पेषु 'पुण्यः पुण्येन कर्मणा भवती'त्यादि वाक्यं दृष्ट्वा तत्कालप्रचरद्वेदसिद्धयज्ञदानतपोवेदपारायणादिपुण्यकर्मसि-द्ध्यर्थं यान्यदृष्टान्यार्जितानि तानि तथाभूतेनैव पुण्यकर्मवर्गानुष्ठानेन क्षपणीयानीति तथा भूतय-ज्ञादिप्रतिपादकं तथाभूतानुपूर्वीकमेव वेदं रचयतीति तुल्यम् । यद्येवं वस्तुतः स्वातन्त्र्ये सत्यपि पूर्वानुरोधमात्रेण जगन्निर्माणे वेदनिर्माणे वा पारतन्त्र्यं व्यपदिश्येत । न तावता वस्तुकृतस्वात-न्त्र्यस्य स्वेच्छया जगत्स्रष्टृत्वरूपस्यार्थमुपलभ्य वेदरचयितृत्वरूपस्य च न काचन हानिः प्रसज्यते। ननु, क्रमान्यथात्वाभावेन वेदनित्यत्वश्रुतिविरोधपरिहारेऽप्यर्थमुपलभ्य रचितत्वरूपस्य पौरुषे-यत्वस्याङ्गीकारान्न तन्मूलोपलम्भप्रामाण्याधीनं वेदप्रामाण्यमापद्यत इति तत्र भ्रममात्रादिश-ङ्कया वेदप्रामाण्येऽप्यनाश्वासः स्यादित्याशङ्कां निराकरोति—अत एवेति । यत एव वेदाना-मनादिसिद्धा एव वर्णपदवाक्यप्रकरणतदानुपूर्वीतदर्थाः न त्वेतेषु किञ्चिदपि पुरुषबुद्ध्यानीतं नूतनमभ्युपगम्यते। अर्थमुपलभ्य रचितत्वं तु तेषामस्माद्वाक्यादेतदर्थप्रतीतिरस्य भवत्वित्यभि-प्रायवतार्थाभिज्ञाध्यापकोच्चरितवेदवाक्यस्येवाभिप्रायनिर्वाहार्थमभ्युपगम्यते । तन्निर्वाहोपयो-ग्यर्थोपलम्भपूर्वकेणापि सकलवेदकर्तृत्वेन परमेश्वरस्य सार्वज्ञ्यसिद्धेः । न तु पौरुषेयवाक्य-वद्वेदानां प्रामाण्यनिर्वाहार्थं मूलप्रमाणवत्त्वसिद्धये तदभ्युपगम्यते येन तद्भ्रमत्वशङ्कया वेद-प्रामाण्येऽप्यनाश्वासः स्यात् । वेदानां प्रामाण्यं तु अनादिसिद्धवर्णपदवाक्यप्रकरणतदानु-पूर्वीतदर्थानामविपर्यासेनैव सिद्ध्यति । तदेव च तेषामपौरुषेयत्वम् । अत एव वेदानामु-क्तमपौरुषेयत्वमर्थमुपलभ्य परमेश्वरेण रचितत्वरूपं तत्सार्वज्ञ्यसाधकं तत्कार्यत्वं चाविरोधे-नोपपद्यत इत्यर्थः। एतेन तार्किकाणां वेदपौरुषेयत्वानुमानानि पूर्वमीमांसकानां तदकर्तृकत्वा-नुमानानि च निरस्तानि । तार्किकास्तावदेवमनुमानानि कल्पयन्ति । वेदः सजातीयोच्चार-णानपेक्षोच्चरितजातीयः, वाक्यत्वात् लौकिकवाक्यवत् । वेदत्वं सजातीयोच्चारणानपेक्षोच्च-रितवृत्ति महाजनपरिग्राह्यतावच्छेदकत्वे सति वाक्यवृत्तित्वात् भारतत्ववत् । वेदः शब्दाज-न्यवाक्यार्थगोचरयथार्थज्ञानजन्यः प्रमाणशब्दत्वात् प्रत्यक्षमूललौकिकवाक्यवत् । बुबोधयि-षुपठितो वेदः स्वानपेक्षस्वसमानविषयकज्ञानपूर्वकः बुबोधयिषुवाक्यत्वात् तथाभूतलौकिक-वाक्यव'दिति । अत्र प्रथमानुमानसाध्ये सजातीयपदं श्रुतिवाक्यान्याकर्ण्य रचितेषु तदर्थ-सङ्ग्राहकेषु स्मृतिवाक्येषु व्यभिचारवारणाय । जातीयपदम् आधुनिकोच्चरितवेदे अंशतो बाधवारणाय। तदुभयमपि समानानुपूर्वीकत्वपरम्। तथा च समानानुपूर्वीकोच्चारणापेक्षभि-न्नोच्चारणविषयसमानानुपूर्वीकत्वं प्रथमसाध्यार्थः । तत्र सजातीयेत्यनेन यत्किञ्चित्समानानुपू-र्वीकत्वे विवक्षिते स्मृतिमूलभूतश्रुतिवाक्यस्यापि अन्योच्चरितश्रुतिवाक्यसमानानुपूर्वीकत्वेन व्यभिचारतादवस्थ्यप्रसङ्गात् स्वसमानानुपूर्वीकत्वं विवक्षणीयमिति पक्षदृष्टान्तानुगतस्वत्वा-भावादननुगमस्तावदेको दोषः । अयमुत्तरानुमानेष्वपि समानः । सर्गादिष्वीश्वरोच्चारणं सजातीयोच्चारणानपेक्षमस्माभिरप्यभ्युपगम्यत इति तत्समानानुपूर्वीकत्वेन सिद्धसाधनमप-रो दोषः । मौनिना स्वयं निर्माय विलिख्यान्यस्मै मौनिने दत्ते तेनापि लिपिभिरनुमायावग-

(१) 'भ्रमत्वादिशङ्कया' इति घ. पाठः ।

तार्थे ततोऽन्येन केनाप्यनवगते श्लोके उच्चरितत्वाभावाद्व्यभिचारश्चान्यो दोषः। द्वितीयानुमानहेतौ तत्तद्वेदव्यक्तिवृत्तिमात्रव्यभिचारवारणाय सत्यन्तम्। वेदत्वमेव वेदे लाघवान्महाजनपरिग्राह्यतावच्छेदकं न तु तत्तद्वेदत्वमिति व्यभिचारनिरासः। तत्र सिद्धसाधनं पूर्ववदुन्नेयम्। हेतुरप्यसिद्धः। शब्दतदुपजीविप्रमाणेतरप्रमाणजन्यप्रमित्यविषयार्थकत्वविशेषितशब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वरूपतार्किकाभिमतवेदत्वापेक्षया लघुधर्मस्य तदेकदेशभूतस्य स्मृतिपुराणादिसाधारणस्य शब्दतदुपजीविप्रमाणेतरप्रमाणजन्यप्रमित्यविषयार्थकप्रमाणशब्दत्वस्य प्रमाणशब्दत्वमात्रस्यैव वा महाजनपरिग्राह्यत्वावच्छेदकत्वे सम्भवत्युक्तरूपस्य वेदत्वस्य तदनवच्छेदकत्वात्। न च नित्याध्ययनविषयत्वं वेदत्वमिह विवक्षितमिति वाच्यम्। अङ्गसाधारणस्य तस्य वेदत्वरूपत्वाभावात्। न चाङ्गव्यतिरिक्तत्वमपि विशेषणम्। तदविशेषितस्याङ्गसाधारणस्य लघुधर्मस्य तदवच्छेदकत्वे सम्भवति तस्यानवच्छेदकत्वात्। न चादृष्टजनकशब्दत्वं वेदत्वम्। पुराणादिसाधारण्यात्। तद्व्यावर्तकविशेषणदानेन तदविशिष्टस्यैव लाघवादवच्छेदकत्वे सम्भवति तद्विशिष्टस्यानवच्छेदकत्वात्। तृतीयानुमानसाध्ये अर्थाभिज्ञेनाध्यापकेनार्थविवक्षयोच्चरितवेदवाक्ये अंशतस्सिद्धसाधनवारणाय शब्दाजन्येतिं विशेषणम्। अर्थानभिज्ञाध्यापकोच्चरितवेदवाक्येष्वीश्वरज्ञानजन्यत्वमादाय साध्यसिद्धेर्नांशतो बाधः। शुकशारिकादिप्रमाणवाक्येष्वीश्वरज्ञानमादाय साध्यसिद्धिरिष्यत इति पक्षसमत्वान्न व्यभिचार इति तार्किकाणां मतम्। तत्रावश्यकवर्णावलीज्ञानादेव वाक्यरचनोपपत्तेः। साभिप्रायवाक्येषु दृष्टान्वयव्यतिरेकं वाक्यार्थज्ञानमभिप्रायोपक्षीणं क्वचिदपि वाक्यप्रयोगे न कारणम्। विसंवादिशुकशारिकादिवाक्ये व्यभिचारात्। अन्यथा तदर्थगोचरमीश्वरस्य भ्रान्तिज्ञानमस्तीत्यपि कल्पनाप्रसङ्गादिति दृष्टान्तः साध्यविकलः। साभिप्राय[2]वाक्यस्थले वाक्यार्थज्ञानस्याभिप्रायद्वारा वाक्यप्रयोगकारणत्वाभ्युपगमेऽपि सर्गादिषु वेदानां स्रष्टुरीश्वरस्याभिप्रायमूलभूतं ज्ञानं तद्रचितवेदवाक्येषु तद्द्वारा तन्मूलकेष्वन्योच्चरितवेदवाक्येषु च कारणं भविष्यतीति सिद्धसाधनम्। एवमभिप्रायमूलमीश्वरज्ञानमादाय सिद्धसाधनं चतुर्थानुमानसाध्येऽपि समानम्। वेदवक्तुरीश्वरस्याभिप्रायमूलभूतं ज्ञानमस्माभिरिव तार्किकैरभ्युपगन्तुं न शक्यत इति तन्म[3]तमर्यादया बाधोऽधिकः। तथा हि— असदर्थावलम्बनेनापि विधेयस्तुतिपराणि निषेध्यनिन्दापराणि च वाक्यानि दृश्यन्ते। यथा 'स आत्मनो वपामुदखिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरस्समभवत्तं स्वायै देवताया आलभते'ति वाक्यं स्वावयवोत्कर्तनेनापि विशिष्टप्रयोजनं कर्म क्रियते बाह्येन धनत्यागेनास्य कर्तव्यता किं वक्तव्येति तत्र प्रवृत्त्यर्थं प्रजापतिवपोत्खननरूपासदर्थावलम्बनेन विधेयस्तुतिपरम्। 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवशीयत तद्रजत[4] हिरण्यमभवत्तस्माद्रजतं हिरण्यमदक्षिण्य'मिति वाक्यमश्रुप्रभवं रजतममङ्गलमिति यज्ञे दक्षिणात्वेन तद्दानान्निवृत्त्यर्थमत्रै रोदनश्रुतावश्रुप्रभवत्वरूपासदर्थावलम्बनेन निषेध्यनिन्दापरम्। यद्यपि न्यायविचारेणासदर्थावलम्बनत्वमेवंभूतस्तुतिनिन्दयोर्जानीयुः श्रोतारः। तथापि यथात्यन्तहितैषिणः परमाप्तस्य पित्रादेर्वचने कस्य-

---

(१) 'व्यक्तिमात्रवृत्तिमात्रधर्मे व्यभिचार' इति घ. पाठः। (२) 'वाक्यप्रयोगस्थले' इति घ. पाठः।
(३) 'तर्कमर्यादया' इति घ. पाठः। (४) 'मग्निरोदनसन्दर्भावलंबनेन' इति ख. पाठः।

**षादयस्तेषां वचनं प्रमाणमप्रमाणमपि भवति। निरस्तसमस्तदोषकलङ्कस्य निरुपप्लवनिरतिशयज्ञानप्रत्यक्षानुभूयमानत्रैकालिकवस्तुविलासस्य स्वतःप्रमाणस्य परमे-**

---

चिद्दोषं गुणत्वेन गुणं वा दोषत्वेन प्रदर्शयत्यसदर्थावलम्बनत्वावगतावप्यन्यदेव किञ्चित्फलमभिप्रेत्य तत्र प्रवर्तयितुमन्यत्किञ्चिदनिष्टमाशङ्क्य ततो निवर्तयितुं वेदमारोपितार्थावलम्बनं स्तुतिनिन्दावचनमिति तद्विश्वासेन प्रवर्तन्ते निवर्तन्ते च। एवं मातापितृसहस्रेभ्योऽपि प्रत्ययिततरे वेदे स्तुतिनिन्दावचनमसदर्थावलम्बनमपि विध्यवगतफलार्थमवश्यं प्रवर्तितव्यं निवर्तितव्यं वेति तात्पर्येण प्रवर्तितमिति विश्वासेन प्रवर्तेरन्निवर्तेरंश्च विद्वांसः। एवं च वेदस्याभिप्रायमूलभूतवाक्यार्थज्ञानपूर्वकत्वनियमाभ्युपगतावसदर्थावलम्बनयानया स्तुत्या निन्दया चावश्यकर्तव्यतामवश्यपरिहरणीयतां च ज्ञात्वा विहितेषु प्रवर्तन्तां निषिद्धेभ्यो निवर्तन्तामित्यभिप्रायेण स्तुतिनिन्दावाक्यरचनार्थमभिप्रायपूर्वभावितदालम्बनासदर्थविषयमाहार्यज्ञानं वेदरचयितुरङ्गीकरणीयम्। कवेरिव काव्यरचनोपयोग्यौत्प्रेक्षिकार्थविज्ञानं तन्नित्यमेकं सन्मात्रविषयमीश्वरज्ञानमिति मन्यमानानां तार्किकाणां न सम्भवति। अस्माकं तु हिताहितप्रवर्तननिवर्तनाभ्यां लोकानुग्रहैकरसिकस्य परमेश्वरस्य तदुपयोगीनि चिच्छक्तिपरिणामविशेषरूपाणि स्तुतिनिन्दार्थान्याहार्यज्ञानानि काव्यमूलज्ञानवदेव सम्भवन्ति। सर्वाणि चैतान्यनुमानान्यप्रयोजकानि। न ह्यनुमानसाध्ययोस्सजातीयोच्चारणानपेक्षत्वस्य तृतीयानुमानसाध्ये शब्दाजन्यत्वस्य चतुर्थानुमानसाध्ये स्वानपेक्षत्वस्य च व्यापकविशेषणस्य वैशिष्ट्येन तत्तन्निरूपिततया व्याप्तिग्रहे कश्चिदनुकूलतर्कोऽस्ति। पूर्वपूर्वाध्यापकोच्चारणापेक्षोच्चारणादीनामपि वाक्यत्वादिहेतूपपत्तेः। एवमन्यान्यपि तार्किकाणां वेदपौरुषेयत्वानुमानानि सिद्धसाधनत्वाप्रयोजकत्वादिदुष्टानि वेदितव्यानि। मीमांसकास्तु कर्त्रस्मरणादिभिर्वेदस्याकर्तृकत्वं साधयन्ति। तान्यपि 'छन्दांसि यज्ञाः क्रतवो व्रतानी' त्यादिश्रुतिपुराणा[1]दिसत्त्वादसिद्ध्यादिदुष्टान्युपेक्षणीयानि। नन्वनादिवर्णपदानुपूर्व्यभङ्गादपौरुषेया वेदा इत्यङ्गीकृत्यापि यदि तेषां प्रलयेऽपि लयः पुनः सर्गादौ तयैव वर्णपदानुपूर्व्या समुद्धरणमित्येवं परमेश्वरकर्तृकत्वमित्यङ्गीक्रियते तदा समुद्धर्तु[2]स्तस्य भ्रमप्रमादकरणापाटवविप्रलिप्सासम्भवेनानाद्यानुपूर्वीभङ्गशङ्कया तेषां प्रामाण्ये अनाश्वासः स्यादित्याशङ्क्याह—येषामिति। येषां विप्रलिप्सादिहेतवो रागादिदोषास्सन्ति तेषामेव वचनं कदाचिदप्रमाणमपि भवेत् परमेश्वरस्य तु कदाचिदपि न ते सन्तीति तेनोद्ध्रियमाणेषु वेदेषु पूर्वानुपूर्वीभङ्गशङ्कानवतारेण तदप्रामाण्यशङ्का नावकाशं लभत इत्यर्थः। 'निरस्तसमस्तदोषकलङ्कस्ये' ति सामान्यतः प्रदर्शितो दोषाभावः उत्तरविशेषणैर्विशिष्य तत्तद्दोषाभावप्रदर्शनेन समर्थ्यते। तत्र 'निरुपप्लवे' त्यादिविशेषणेन भ्रमाभाव उक्तः। 'स्वतः प्रमाणस्ये' त्यनेन प्रमादाभावः। तात्त्विकार्थनिर्धारणशक्तस्यापि कदाचिदन्यथाज्ञानहेतुभूतमनवधानं हि प्रमादः। स तु नित्यमेव सर्वविषयप्रमाश्रयतया नित्यावहितस्य न सम्भवतीति भावः। 'स्वतः प्रमाणस्ये' त्यनेन हि नित्यप्रमाश्रयत्वमेवोच्यते। यतः प्रमाणशब्दः प्रमित्ययोगव्यवच्छेदवाची। स तु प्रमाकरणानां चक्षुरादीनां विषयसन्निधानाद्यन्याधीनो भवति। परमेश्वरस्य तु स नित्यप्रमाश्रयत्वरूपः स्वत एव भवतीति। पर-

---

(१) पुराणादिजन्यानुभवमूलकर्तृस्मरणादिसत्त्वा' इति ख. पाठः। (२) 'मुहुर्मुहुस्तस्य' इति घ. पाठः।

**श्वरस्य परमाप्तस्यावाप्तसमस्तकामस्य शिवस्य ब्रह्मणो वचनं तु प्रमाणमेव भवति। 'ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानाम्' 'स नो देवश्शुभया स्मृत्या संयुनक्तु' इति हि परमेश्वरस्य सर्वविद्याप्रवर्तकत्वं शुभस्मृतिहेतुत्वं च श्रूयते। अतस्सर्ववस्त्ववभासकानां वेदानां परमेश्वरकर्तृकतया परमेश्वरस्य सर्वज्ञता निश्चीयते। अज्ञातस्य वक्तुमशक्यत्वात्। यद्यपि सर्वगतस्य परमेश्वरस्य सर्ववस्तुसंयोगेन सर्वज्ञत्वं सिद्ध्यति तथापि सर्ववस्त्ववभासकानां वेदानां प्रणेतृता विशेषं दर्शयति यथा दीपस्वप्रभासंयुक्तेष्वपि रूपादिषु रूपमेव प्रकाशयति न रसादि तथा न परमेश्वरः किं तु स्वशक्तिसंयुक्तं सकलमपि प्रकाशयतीति। ननु, परमेश्वरस्य सर्वज्ञत्वं नाम वेदोक्तसकलपदार्थाभिज्ञत्वम्। तर्हि महर्षीणामपि वेदार्थवेदिनां सर्वज्ञत्वं सिद्धम्। किमत्र वैषम्यमिति चेन्न। तत्कर्तुरीश्वरस्याधिकं ज्ञानमस्ति।**

मेश्वरस्येत्यनेन स्ववशीकृतसकलप्रपञ्चत्ववाचकेन करणापाटवासम्भव उक्तः। 'परमाप्तस्ये' त्यनेन विप्रलिप्साभावः। तत्र हेतुभूतो रागाद्यसम्भवस्तु 'अवाप्तसमस्तकामस्ये' त्यनेन समर्थितः। उपन्यस्तं शिवस्य भ्रमाद्यभावं श्रुत्युदाहरणेन द्रढयति—ईशान इति। 'ईशानः सर्वविद्याना' मिति श्रुतिः शिवस्य सकलविद्यैश्वर्यं प्रतिपादयति। तस्य यथावद्विद्यासम्प्रदायप्रवर्तनविरोधिनां भ्रमादीनामभावं गमयति। अन्यथा तदैश्वर्यानुपपत्तेरिति भावः। ननु, यथावदुपदेष्टुं शक्तोऽपि विप्रलिप्सयान्यथोपदिशेदित्याशङ्क्य तदभावे श्रुत्यन्तरमुदाहरति—स नो देव इति। निरतिशयानन्दप्रापकतत्त्वबोधसंयोजकत्वं शिवस्य
ती 'स नो देव' इति श्रुतिः तस्मिन्विप्रलिप्सागन्धमपि न सहत इति भावः। एवं शास्त्रयोनित्वहेतुमुपपाद्य तस्याध्याहृतेन साध्येनान्वयं दर्शयति—अत इति। तत्रानुकूलतर्कमाह—अज्ञातस्येति। वक्तुं परबुबोधयिषया शब्दसन्दर्भं रचयितुम्। ननु, सर्वगतस्य परमेश्वरस्य यावदाश्रयव्यापिनी चैतन्यशक्तिः सर्ववस्तुसंयोगिनीति तत एव हेतोस्तस्यास्सर्वविषयत्वसिद्धेः परमेश्वरस्य सर्वज्ञत्वं सिद्ध्यति। किं शास्त्रयोनित्वहेतुप्रसाधनक्लेशेनेत्याशङ्क्य शास्त्रयोनित्वहेतुना सिद्ध्यन्विशेषः सर्ववस्तुसंयोगेन न सिद्ध्यतीत्याह—यद्यपीत्यादिना। ननु, वेदप्रणेतृतारूपं शास्त्रयोनित्वं कुतो विशेषं गमयति यदर्थं सर्ववस्तुसंयोगहेतुमुपेक्ष्य स हेतुरन्विष्यत इत्याकाङ्क्षायां तेन गमयितव्यं विशेषमाह—यथेति। 'सकलमपि प्रकाशयती'ति विशेषं वेदानां प्रणेतृता दर्शयति गमयतीति पूर्वेणान्वयः। यथा दीपप्रभा रूपरसादिसम्बन्धाविशेषेऽपि रूपमेव प्रकाशयति न रसादि तथा परमेश्वरप्रभारूपचैतन्यशक्तिरपि किं व्यवस्थितविषयेत्याशङ्का शास्त्रयोनित्वहेतुना सर्वविषयज्ञातृत्वसाधनेनैव निवर्तनीयेति तदर्थमपि तदन्वेषणमावश्यकमिति भावः। ननु, यथा सर्वसंयोगिचैतन्यशक्तिमत्त्वेन निरङ्कुशं सर्वज्ञत्वं न सिद्ध्यति तथैव वेदकर्तृत्वेनापि। तेनापि हि वेदाद्वेदार्थमवगच्छतां महर्षीणामिव वेदोक्तसकलपदार्थाभिज्ञत्वमात्रं सिद्ध्यति न तु वेदार्थबहिर्भूतगङ्गावालुकासङ्ख्यादिज्ञातृत्वमपीत्याशङ्कते—नन्विति। सर्वज्ञत्वं सिद्धमिति सकलवेदार्थवेदित्वरूपं सङ्कुचितं सर्वज्ञत्वं सिद्धमित्यर्थः। किमत्रेति। वेदादर्थमवगच्छतां सार्वज्ञ्याद्वेदकर्तृत्वेन

(१) 'इति परमेश्वरस्य' इति ख. पाठः। (२) 'करणविशेषं' इति ख. पाठः।

व्याकरणादेरधिकार्थविदां हि पाणिनिप्रभृतीनां तत्प्रणेतृत्वं दृश्यते। वेदश्च सर्वार्थावभासकोऽपि न सर्वं मुख्यतः प्रकाशयति किं तु किमपि लक्षणया किमपि सामान्येन किमपि विशेषेण। परमेश्वरस्सर्वसाक्षी सर्वं प्रत्यक्षयतीति वेदेश्वरयोरे-

---

सिद्ध्यतीश्वरसार्वज्ञ्ये वैषम्यं नास्ति, उभयस्यापि यावद्वेदार्थविषयतारूपत्वादित्यर्थः। यद्वा सर्वसंयोगित्वेन सिद्ध्यतः सार्वज्ञ्यात्तत्र नास्ति वैषम्यं विषयसङ्कोचस्योभयत्रापि सद्भावादित्यर्थः। वेदकर्तृत्वेन वेदार्थविषयमेव सार्वज्ञ्यं न सिद्ध्यति किंत्वधिकविषयमपि प्रबन्द्धृणां प्रवन्धमूलज्ञानस्य प्रबन्धाधिकविषयत्वदृष्टेरिति परिहरति—नेति। ननु, अपूर्वप्रबन्धरचयितुरेव प्रबन्धार्थाधीनस्य करणीयप्रबन्धोचितवर्णपदवाक्यविन्यासादिप्रकारस्य तत्परिहरणीयदोषजातस्य तत्तत्प्रदेशकर्तव्यार्थसङ्क्षेपविस्तरौचित्यस्य तत्रतत्र सम्भाविताक्षेपसमाधानव्यञ्जनसमर्थविशेषणविन्यासस्येत्येवमादेर्ज्ञानमपेक्षितम्। अनादिमपौरुषेयप्रबन्धं लोके खिलीभूतं प्रचारयितुं पूर्वसिद्धयैव वर्णपदानुपूर्व्योच्चारयतस्तु तन्नापेक्षितम्। अतोऽनपेक्षितत्वादप्रयोजकमधिकज्ञानं न वेदकर्तृत्वेन सिद्ध्येत्। अन्यत्र दर्शनमात्रेण तत्सिद्धावन्यत्र प्रबन्धान्तराभ्यासजनितमधिकज्ञानं दृष्टमितीश्वरस्यापि तथाभूतमेव तत्सिद्ध्येदित्याशङ्क्याह—व्याकरणादेरिति। पाणिनिप्रभृतयो हि परमेश्वरोपज्ञपूर्वपूर्वव्याकरणप्रसिद्धमर्थजातं सङ्कृह्णन्तोपि रचनीयसूत्रादिगतवर्णपदानुपूर्व्याद्यधिकार्थविषयज्ञानवन्तो भवन्ति। तथा वेदकर्तुरपि वैदिकवर्णपदानुपूर्व्यादिज्ञानमावश्यकमिति वेदकर्तृत्वेन वेदार्थाधिकविषयज्ञानसिद्धिर्भवत्येवेति भावः। यद्यपि महर्षीणामिव सकलवेदार्थाभिज्ञत्वरूपमेव सार्वज्ञ्यं सिद्ध्येत्। तथापि तेषां वेदश्रवणाधीनात्सार्वज्ञ्यात्परमेश्वरस्य वेदरचनामूलभूतं वेदकर्तृत्वेन सिद्ध्यत् सार्वज्ञ्यं विशिष्टं सिद्ध्येदित्याह—वेदश्चेति। सर्वार्थेति। स्वविषयीभूतसर्वार्थावभासकोऽपीत्यर्थः। वेदः स्वविषयं सर्वमर्थं न मुख्यया वृत्त्या प्रकाशयति किं त्विक्षुक्षीरमाधुर्यादिवदनुभवैकवेद्यमर्थजातं तत्तदसाधारणवाचकशब्दाभावान्मुख्यवृत्त्या प्रख्यापयितुमशक्नुवन्यथाकथञ्चिल्लक्षणया ख्यापयति। यथा—'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चने'ति। न हि ब्रह्मानन्दगतः सर्वोत्कर्षः केन चिदसाधारणेन शब्देनेत्थं भूतइति प्रख्यापयितुं शक्यते। अतो वाङ्मनसातीतत्ववचनेन लक्षणया ज्ञाप्यते। विशिष्य प्रख्यापयितुमशक्यं किञ्चिदर्थजातं तु सामान्यमुखेन ज्ञापयति। यथा 'अनन्ता वै वेदा' इति आनन्त्यमनन्तोत्कर्षापकर्षशालि। तद्यथा—अतीतक्षणानन्त्यमस्मिन्कल्प इव पूर्वकल्पेऽप्यस्ति। तत्र पूर्वकल्पगतात्तस्मादेतत्कल्पगतं भूयसोत्कृष्यते। एवमागाम्यनन्तकल्पगतानि तान्युत्तरोत्तरमुत्कृष्यन्ते। एवमनन्तविधानन्त्यमध्ये वेदानन्त्यमीदृशमिति विशिष्य प्रदर्शयितुं नास्ति तदसाधारणः शब्दः। अतः सामान्यमुखेन ज्ञाप्यते। एवं सामान्यमुखेन क्वचित्क्वचित्प्रवर्तमानस्य वेदस्य तत्तदर्थे प्रत्यक्षतः स्वयं विशिष्यानुभूय तत्तद्वेदवाक्यप्रणेतुरीश्वरस्य च महति वैषम्ये स्थिते तत्तद्वेदवाक्यश्रवणेन तत्तदर्थमवगच्छतां महर्षीणां तत्तदर्थे न तथा स्पष्टावभासः। यथा यथार्थतस्तदप्रत्यक्षतोऽनुभूय तत्तद्वाक्यप्रणेतुरीश्वरस्येति व्यक्तमेव। न हि क्षीरमाधुर्यविशेषं स्वयमनुभूय क्षीरं मधुरतरमिति प्रयुञ्जानस्येव तस्माद्वाक्यात्तन्माधुर्यमवगच्छतः तथा तत्र स्पष्टावभासोऽस्तीति भावः।

**तावद्वैषम्यमिष्यते। ननु, परमेश्वरस्यैव वेदकर्तृत्वमिति न नियमः। 'षड्ढोता वै भूत्वा प्रजापतिरिदं सर्वमसृजत ऋचो यजूंषि सामानी'त्यादिश्रवणाद्धिरण्यगर्भादेरपि तत्कर्तृत्वावगमादिन्नि चेन्न। हिरण्यगर्भोत्पत्तेः प्रागपि वेदानां सद्भावात्। श्रूयते हि 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति। यस्सर्वदेवानामादिमस्य हिरण्यगर्भस्यापि कर्ता तस्मै सर्वान्वेदानुपदिशति स एव सर्वाधिको वेदकर्ता परमदेशिकः। तथा हि श्रुत्याऽभिव्यज्यते।**

---

नन्वीश्वरस्य वेदरचनामूलत्वेन सिद्ध्यज्ज्ञानं विशिष्य सर्ववेदार्थविषयं तदधीनवर्णपदानुपूर्व्यादिविषयं च सिद्ध्यतु नाम। तथापि तस्य नदीवालुकासङ्ख्यादिविषयत्वासिद्धेर्न निरङ्कुशसार्वज्ञ्यसिद्धिरिति प्रश्नस्य किमुत्तरं निष्पन्नम्। वेदरचनामूलभूतं ज्ञानं यावद्वेदतदर्थविषयमिति सिद्धौ शिवशक्तिर्दीपप्रभान्यायेन व्यवस्थितविषयेति शङ्कायां निरस्तायां नदीवालुकासङ्ख्यादिविषयत्वमपि सिद्ध्यतीति चेत् तथाप्यतीतानागतवस्तुविषयज्ञानं न सिद्ध्यति। ज्ञानसंयोगस्य विद्यमानेष्वेव सम्भवात् सत्कार्यवादे सर्वेषामर्थानां सदा सत्त्वेऽपि तत्तदागन्तुकभूतभविष्यदवस्थाविशेषज्ञानं न सिद्ध्यतीति चेत्। उच्यते। वेदकर्तृत्वेन वेदरचनामूलभूतज्ञानसिद्धौ तद्रचनासमयेष्वसतां भूतभविष्यतामपि वेदार्थानां ज्ञानं सिद्ध्यतीति तद्वहिर्भूतानामपि भूतभविष्यतां ज्ञानं सिद्ध्येत्। शिवज्ञानस्य विद्यमानविषयेषु व्यवस्थितविषयत्वशङ्काया इव भूतभविष्यद्विषयत्वासम्भवशङ्काया अपि निरासे सति सङ्कोचकाभावेन सर्वविषयत्वसिद्धेः। यस्य प्रसादादतीतानागतविषयं ज्ञानं देवर्षिमनुष्यादीनां जायते तस्य परतानागतज्ञातृत्वकल्पने कानुपपत्तिः। कारणाधीनमतीतानागतविषयत्वमनित्यज्ञानानां सम्भवति। नित्यस्य तु परमेश्वरज्ञानस्य तत्तदर्थसम्बन्धाधीनमेव तत्तद्विषयत्वं वाच्यमित्यतीतानागतावस्थाविशेषविशिष्टैः सम्बन्धाभावे कथं तद्विषयत्वं स्यादिति चेन्न। जीवानामिवेश्वरस्यापि चिच्छक्तिः 'प्रज्ञा च तस्मात्प्रसृता पुराणी'ति वचनप्रामाण्येन नादृष्टादिकारणाधीननानापरिणामविशेषवतीत्यभ्युपगमात्। तदेतत्सर्वमभिप्रेत्योक्तं भाष्ये 'परमेश्वरस्सर्वसाक्षी सर्वं प्रत्यक्षयती'ति। 'न सर्वं मुख्यतः प्रकाशयती'त्येतन्न सर्वं विशिष्य प्रकाशयतीत्यस्याप्युपलक्षणम्। 'किमपि विशेषेणे'ति दृष्टान्ततयोपन्यस्तम्। ननु, ब्रह्मणो वेदकर्तृत्वे सति तेन महर्षीणां सार्वज्ञ्याद्विशिष्टमीश्वरस्य सार्वज्ञ्यं सिद्ध्येदपि तत्रैव न प्रमाणम्। निश्वसितादिश्रुतीनां षड्ढोतृवाक्यादीनामिव तत्तदभिमानिदेवतादृष्टत्वादिविषयत्वादित्यभिप्रायेण शङ्कते—**नन्विति**। प्रजापतेः परमेश्वराद्वेदावाप्तिश्रवणात्तस्य वेदप्रणेतृत्वमनुपपन्नं दूरे तत्सृष्टानामग्न्यादीनामिति तेषां वेदकर्तृत्वश्रुतेरन्यथा नेतव्यत्वेऽपि परमेश्वरस्य वेदकर्तृत्वश्रुतयो नान्यथा नेतव्याः। बाधकाभावात्। अतः सृज्यमानाय प्रजापतये वेदप्रदानश्रवणात् ततः प्रागेव परब्रह्मणा वेदाः प्रणीता इत्यभ्युपगन्तव्यमित्याशयेन परिहरति—**नेति**। 'सर्वदेवानामादिमस्ये'ति विशेषणमग्न्यादीनां वेदकर्तृत्वश्रवणस्यान्यथा नेतव्यतायाः कैमुतिकन्यायेन सिद्धिं दर्शयितुम्। यद्यप्युदाहृतमन्त्रे पूर्वमित्युक्त्यैवोपन्यस्तविशेषणार्थस्सिद्ध्यति तथापि तस्य स्पष्टीकरणार्थं मन्त्रान्तरमुदाहरति—**तथा हीति**। अस्मिन्मन्त्रे

---

(१) 'तदधिकवर्ण' इति घ. पाठः।

'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानं स नो देवश्शुभया स्मृत्या संयुनक्तु'। इति। महर्षिर्वेदकर्ता यस्सर्वज्ञत्वादिना विश्वस्माच्चिदचित्प्रपञ्चादधिको रुद्रः परब्रह्मभूतस्सर्वेषां देवानामिन्द्रादीनां प्रथममादिमं हिरण्यगर्भं ब्रह्माणं स्वसङ्कल्पेन प्रकृतेरुपादानात्मनो जायमानं सृष्टिकाले सर्वज्ञानोपायसकलवेदोपदेशरूपयाऽपश्यत् स परमदेशिको नः अस्मानपि सकलसंसारपाशमहानर्थनिवृत्तिहेतुभूतया परमामृतलक्ष्मीसमावेशपरानन्दप्राप्तिकारिण्या अत एव परममङ्गलरूपया वेदान्तसारसामरस्यसिद्धया स्मृत्या बोधकलया स्वविषयया संयोजयत्विति तात्पर्यम्। ततस्सकलवेदकर्तृत्वमीश्वरस्य सिद्धम्। वाचो नित्यत्वश्रुतिरीश्वरेण पूर्वसत्तानुवृत्त्या विहितत्वा-

---

देवानां प्रथममिति स्पष्टमुक्तम्। पुरस्तात् कल्पादौ। पश्यतेत्यडागमाभावः आत्मनेपदं चेत्युभयं छान्दसम्। 'जायमान'मित्यनेन जननावस्थायामेव चराचरसृष्ट्युपयोगिसकलवेदतदर्थस्फूर्तिसमर्थयानुग्रहदृष्ट्या दर्शनं व्यज्यते। अत एव 'यो ब्रह्माणं विदधाती'ति मन्त्रेऽपि लडाख्याताभ्यां सृष्टिवेदप्रदानयोस्समानकालत्वमुक्तम्। पुराणेषु च 'ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टय'मिति हिरण्यगर्भस्य ज्ञानादीनां सहजत्वमुक्तम्। 'स्मृत्ये'त्यनेन मोक्षार्थं दहराद्युपासनारूपा स्मृतिसन्ततिरुच्यते। तज्जन्यसाक्षात्कारो वा तद्वाचकेन लक्ष्यते। 'स्मृतिलाभे सति सर्वग्रन्थीनां विप्रमोक्ष'इति श्रुत्यन्तरेऽपि मोक्षजनकज्ञाने स्मृतिशब्दप्रयोगो दृश्यते। मन्त्रं व्याचष्टे—महर्षिरिति। तस्मिञ्जन्मनि कुतश्चिदध्ययनमनपेक्ष्य स्वयमेव सूक्तविशेषरूपवेदैकदेशद्रष्टारो हि वसिष्ठादय ऋषय उच्यन्ते। अतः परमेश्वरः कदाचिदप्यध्ययनमनपेक्ष्य सकलवेदप्रणेतृत्वान्महर्षिरिति निर्दिष्टः। इदं विशेषणं हिरण्यगर्भसृष्ट्यवस्थायां वेदप्रदानरूपानुग्रहदृष्ट्या दर्शनं समर्थयितुम्। ततः प्रागेव वेदप्रणेतृत्वप्रदर्शनार्थं सर्वज्ञत्वादिनेति। निरतिशयं सर्वज्ञत्वमत्रैव विश्रान्तमिति भावः। रुद्रशब्दोऽत्र संसाररुजां द्रावके परब्रह्मणि वर्तते न तु संहाररुद्रादाविति व्याचष्टे—रुद्र इति। स्वसङ्कल्पेनेति। निमित्तरूपस्य स्वस्य सङ्कल्पेन प्रकृत्यवस्थाविशेषात्मकोपादानरूपात् स्वात्मनो जायमानमित्यर्थः। 'हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु'इति श्वेताश्वतरोपनिषद्यस्य मन्त्रस्य पाठात्स्वसङ्कल्पेनेति विशेषितम्। 'पश्यते'ति दर्शनमात्रोक्तेः फलाभावात् 'यो वै वेदांश्च प्रहिणोति'इति मन्त्रान्तरदर्शनाच्च विशिष्टदर्शनमिह विवक्षितमित्यभिप्रेत्य विशेषयति—सर्वज्ञानेति। परमामृतेति। परमममृतं ब्रह्म तल्लक्ष्मीसमावेशः सत्यसङ्कल्पत्वादिना तत्सादृश्यप्राप्तिः परानंदप्राप्तिः। उक्तस्मृतिविशेषणार्थस्सर्वोऽपि 'शुभये'ति तद्विशेषणेन लब्ध इत्यभिप्रेत्याह—अत एवेति। सामरस्यमैककण्ठ्येन ब्रह्मणि तात्पर्यं तस्मान्निश्वसितादिश्रुतीनां षड्ढोतृवाक्यादिवैषम्यात् ततः सकलवेदकर्तृत्वमीश्वरस्य सिद्ध्यतीत्युपसंहरति—तत इति। तथापि वेदनित्यत्वश्रुतिविरोधः स्यादित्याशङ्क्य 'पूर्वं सृष्टेः प्रा'गित्यादिग्रन्थेन सूचिते तत्समाधाने स्थित एव समाधानान्तरमाह—वाच इति। पूर्वं प्रलयेषु घटादीनामिव वेदानामसत्त्वेऽपि प्रतिकल्पं प्रादुर्भावात् प्रवा-

(१) 'घरादीनामिव' इति. ख. पाठ.।

वेदानामविरुद्धा । ततो वेदानामीश्वरप्रणीतत्वं नित्यत्वं चाविरुद्धमेव ॥)

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

ह्यनित्यत्वमस्तीति तद्विषयतया वेदनित्यत्वश्रुतेरविरोध उक्तः । इदानीं तु क्रमविशेषविशिष्टवर्णरूपाणां वेदानां प्रलयेऽपि क्रमोपाधिभूतपरमेश्वरबुद्ध्यनुवृत्त्या सत्तानुवृत्तिरस्तीति तद्विषयतयेति भेदः । ननु, वेदानां प्रलयेऽपि सत्त्वे कथं तेषां सर्गादावीश्वरप्रणीतत्वमुपपद्यत इत्याशङ्क्याह—तत इति । प्रलये वेदानां परमेश्वरबुद्धिगोचरतयैवानुवृत्तिः सर्गादौ तु तेषां परश्रवणगोचरतया वैखरीवृत्तिविशिष्टत्वेन परमेश्वरप्रणीतत्वमित्युभयमप्यविरोधेनोपपद्यते । अत एव'अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी भूता यतः सर्वा प्रवृत्तयः॥' इति वेदानां नित्यत्वेऽपि शिवप्रणीतत्वं स्मर्यत इति भावः ॥ ३ ॥

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

## नयमणिमालायाम्

### अथ शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

### ॥ सू ॥ शास्त्रयोनित्वात् ॥ ३ ॥

कर्तुः कार्येण सिद्धेरनुमितिविषयो नैष शास्त्रैकगम्यस्साक्षाद्वेदे पुराणादिषु च तदनघं दर्शितं चानुमानम् ।
मैवं कर्त्रैकतादेस्तदविषयतया शास्त्रमेवात्र मानं शास्त्रानुग्राहकत्वात्तदनुमतमुपन्यस्तमग्रे विवेक्तुम् ॥ ७ ॥
सर्वज्ञत्वद्रढिम्ने निखिलजनयितुर्वेदकर्तृत्वमिच्छन्नित्यत्वं मानता चेत्युभयमपि गलन्नेक्षते वेदवाचाम् ।
मैवं तत्पूर्वपूर्वक्रममनुसरता शंभुना निर्मितास्तास्साक्षादेव प्रमाणं स हि भवति ततो नैव कस्यापि हानिः ॥ ८ ॥

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

### सू० ॥ शास्त्रयोनित्वात् ॥ ३ ॥

**भगवत्पादमते**,पूर्वसूत्रे ब्रह्मणो जगत्कारणत्वसमर्थनेनार्थादुपक्षिप्तं सर्वज्ञत्वं द्रढयितुमिदं सूत्रमारब्धम् । अत्र सर्वज्ञमिति पदाध्याहारेण ब्रह्मपदानुषंगेण च सूत्रं पूरणीयम् । शास्त्रस्य योनिः शास्त्रयोनिः तस्य भावस्तत्त्वं तस्मादिति विग्रहः । **शास्त्रस्य**=महत ऋग्वेदादेः सर्वज्ञकल्पस्य शास्त्रस्य । **योनित्वात्**=( कर्तृत्वेन ) कारणत्वात् । **ब्रह्म सर्वज्ञं भवति** इति सूत्रार्थः । "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकास्सूत्राण्यनुव्याख्यानानि व्याख्यानानि " इति वाक्यं विषयः । अत्र इदं वाक्यं वेदहेतुत्वेन ब्रह्मणः किं सर्वज्ञत्वं साधयति उत न साधयतीति निःश्वसितश्रुतिनित्यत्वश्रुत्योर्विरोधाऽविरोधाभ्यां सन्देहे " वाचा विरूपनित्यये " ति नित्यत्वश्रवणात् व्याकरणादिवद्वेदस्य पौरुषेयत्वे मूलप्रमाणसापेक्षत्वेनाप्रामाण्यापाताच्च नेदं वेदकर्तृत्वेन ब्रह्मणस्सर्वज्ञत्वं साधयतीति पूर्वः पक्षः । सिद्धान्तस्तु, आदिकर्तुरीश्वरस्याभ्युपगमात् तस्यापि पूर्वपूर्वकल्पानुसारेणैव वेदविरचनोपगमात् नित्यत्वश्रुतेः प्रवाहनित्यत्वबोधकत्वात् अनादितात्पर्योपगमात् वेदस्य योग्यवाक्यत्वेनैव असति बाधे प्रमाजनकत्वोपगमात् श्रुत्योः परस्परविरोधाभावेन ईश्वरस्य वेदकर्तृत्वे अनितरसापेक्षत्वेन वेदस्य निरुक्तपौरुषेयत्वाप्रसक्त्या अप्रामाण्याप्रसंगाच्च शास्त्रस्य ऋग्वेदादेस्सर्वज्ञकल्पस्य कर्तृत्वेन कारणत्वात् ब्रह्मणः इदं वाक्यं सर्वज्ञत्वं साधयत्येवेति । इति प्रथमवर्णकम् । अथवा, पूर्वसूत्रे लक्षणनिरूपणानन्तरं प्रमाणजिज्ञासायामिदमारभ्यते । शास्त्रम् ऋग्वेदादि प्रमाणं यस्य ( ब्रह्मणः ) तत् शास्त्रयोनि तस्य भावः तत्त्वं तस्मादिति विग्रहः । अत्र वर्णके ब्रह्मपदानुषंगेण शास्त्रप्रमाणमिति पदाध्याहारेण च सूत्रार्थो वर्णनीयः । **शास्त्रयोनित्वात्**=शास्त्रैकगम्यत्वात् । **ब्रह्म शास्त्रप्रमाणं** भवति इति सूत्रार्थः । अत्र " तं त्वौपनिषदं पृच्छामि " " नवेदविन्मनुते तं बृहन्तम् " इत्यादिवाक्यं विषयः । तत् किं वेदैकगम्यत्वमीश्वरस्य प्रतिपादयति उत नेति सन्देहे

ब्रह्मणस्सिद्धवस्तुत्वेन मानान्तरेणाप्यवगम्यत्वात् जगज्जन्मादिकारणत्वस्य अनुमानेन सिद्धत्वात् तेनैव लाघवाद्यनुगृहीतेन सर्वज्ञत्वादेरपि सिद्धत्वाच्च न शास्त्रेणाऽत्र किञ्चिदप्यस्ति कार्यमिति ' तं त्वौपनिषद ' मित्यादिवाक्यं वेदैकगम्यत्वमीश्वरस्य न प्रतिपादयतीति पूर्वः पक्षः । ब्रह्मणः रूपाद्यभावेन मानान्तरगम्यत्वासंभवात् मूलभूतस्य श्रुतिप्रमाणस्यैव परमात्मस्वरूपनिरूपणोपयोगित्वात् इदं वाक्यं वेदैकगम्यत्वमीश्वरस्य प्रतिपादयत्येवेति सिद्धान्तः ॥

**श्रीकण्ठमते,** वस्तुसिद्धेः लक्षणप्रमाणाधीनत्वात् जगत्कारणं ब्रह्म किंप्रमाणकमित्याकाङ्क्षायामिदमारभ्यते । **शास्त्रयोनित्वात्**=शास्त्रस्य प्रमाणत्वात् । शास्त्रस्य योनित्वं शास्त्रयोनित्वं तस्मात् इति षष्ठीतत्पुरुषः । **जगज्जन्मादिलक्षणं ब्रह्म भवतीति** शेषः । अस्य ' यतो वा इमानी ' त्यादिवाक्यद्वारा शास्त्रं विषयः । अत्र जगत्कारणं ब्रह्म शास्त्रैकगम्यमुत प्रमाणान्तरेणापि गम्यमिति सन्देहे शास्त्रस्य प्रमाणांतराप्राप्तिविषयत्वात् सावयवस्य विचित्रस्यास्य जगतः कर्ता कश्चित् सर्वज्ञत्वादिमान् स्यादिति अनुमानगम्यत्वाच्चेश्वरस्य, नात्र शास्त्रस्य प्रामाण्यम् इति पूर्वः पक्षः । सिद्धान्तस्तु ' नावेदविन्मनुते तं बृहन्त'मित्यादिषु वेदान्तशास्त्रमन्तरेण ब्रह्मणो बोधासम्भवश्रवणात् अनुमानतः यथाकथंचित् जगतो विलक्षणैककर्तृकत्वसिद्धावपि निमित्तोपादानशक्तियुक्तैककर्तृकत्वासिद्धेः ब्रह्म वेदान्तशास्त्रैकगम्यं तत्प्रमाणकं च भवत्येवेति । केचित्तु अन्यथापि व्याचक्षते यथा–**शास्त्रयोनित्वात्**=वेदानां कारणत्वात् पूर्वाधिकरणप्रतिपादितजगत्कारणत्वोपयोगिसर्वज्ञत्वविशिष्टं ब्रह्म भवति इति । " अस्य महतो भूतस्य " इत्यादिवाक्यं विषयः । अत्र ब्रह्मणो वेदकर्तृत्वं युक्तं न वेति सन्देहे ' वाचा विरूपनित्यये'त्यादेर्वाचो नित्यत्वप्रतिपादिकायाः श्रुतेर्विरोधात् वेदानां ब्रह्मकार्यत्वे पौरुषेयत्वादप्रामाण्यप्रसङ्गाच्च न युक्तमिति पूर्वः पक्षः । ' अस्य महतो भूतस्ये ' त्यादिश्रुतेर्निश्वसितवद्वेदराशेरप्रयत्नेन ब्रह्मणः प्रादुर्भावावगमात् " अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् । आदिकर्ता कविस्साक्षाच्छूलपाणिरिति श्रुतिः ॥" इति परमेश्वरस्य सर्वविद्याकर्तृत्वप्रतिपादनात् सृष्टेः प्राक्स्वात्मनि विलीनानां वेदानां पूर्वपूर्ववर्णानुपूर्व्यनुरूपरचनया पुनःकर्तृत्वस्य सर्वज्ञे परमेश्वरेऽभ्युपगमाच्च वेदानामपौरुषेयत्वमीश्वरकार्यत्वं चाविरुद्धमेवेत्यतस्सकलवस्त्ववभासकसर्ववेदकर्तृत्वमीश्वरस्य युक्तमेवेति सिद्धान्तः। इत्यादिना वर्णकान्तरमपि भाष्यान्तरस्थमुपन्यस्तम् ॥

**रामानुजमते, शास्त्रं** योनिः **प्रमाणं** यस्य तत् शास्त्रयोनि तस्य **भावस्तत्त्वं तस्मात् ।** ब्रह्मज्ञानकारणत्वात् शास्त्रस्य तद्योनित्वं ब्रह्मण इति यावत् । अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणश्शास्त्रैकप्रमाणकत्वात् **उक्तस्वरूपं** ब्रह्म ' यतो वा इमानि भूतानी ' त्यादिवाक्यं बोधयत्येवेत्यर्थः । अस्य ' यतो वा इमानी ' त्यादिवाक्यद्वारा शास्त्रं विषयः । अत्र श्रीकण्ठमतवदेव प्रायस्सूत्रार्थः पूर्वपक्षादिकं चेति नातीव प्रपंच्यते । अत्र अब्भक्षादिवदवधारणागर्भः शास्त्रयोनिशब्द इति भावः । अत्र यद्यपि ब्रह्म लक्षणतः प्रतिपत्तुं शक्यम् । तथापि कारणभूतस्य ब्रह्मणः अनुमानवेद्यत्वेन प्रमाणान्तरागोचरस्यैव शास्त्रवेद्यत्वेन ब्रह्म न वेदान्तवेद्यमिति पूर्वपक्षः । सामान्यतोदृष्टानुमानस्य जीवविलक्षणविषयत्वाभावेन ब्रह्मणः प्रमाणान्तरागोचरत्वेन ब्रह्म वेदान्तैकवेद्यमिति सिद्धान्तः । श्रीकण्ठमते 'केचिदाहु' रिति वर्णकान्तरमपि प्रपञ्चितम् । अत्र नेति विशेषः ॥

**आनन्दतीर्थमते, शास्त्रं** श्रुतिपुराणादि **योनिः** प्रमाणं यस्य ( जगत्कारणस्य विष्णोः ) तस्य भावः **तत्त्वं तस्मात** शास्त्रप्रमाणकत्वात् **जगज्जन्मादिकारणं ब्रह्म विष्णुरेवेत्यर्थः ।** अत्र ' यतो वा' इत्यादिवाक्योक्तं जगत्कारणत्वरूपं लक्षणं विष्णोर्वा देवतान्तरस्य रुद्रादेरपि वेति सन्देहे 'जगदनेककर्तृकं विचित्रकार्यत्वात्' 'हरो जगत्कारणं सर्वज्ञत्वात्' इत्याद्यनुमानैः पाशुपताद्यागमैश्च जगत्कारणत्वावधारणात् जिज्ञास्ये ब्रह्मणि श्रूयमाणजगत्कारणत्वलक्षणानुरोधेन विष्णुरेव जगत्कारणं गुणपरिपूर्णं ब्रह्मेति निर्धारणमयुक्तमिति पूर्वः पक्षः । जगत्कारणस्य जन्मादिवच्छास्त्रप्रमाणकत्वात् शास्त्रस्य श्रुतिपुराणभारतमूलरामायणपाञ्चरात्रतदनुसारिस्मृत्यादिरूपस्य विष्ण्वेकनिष्ठजगत्कारणत्वप्रतिपादकत्वात् अनुमानस्य प्रत्यनुमानादिना दूषयितुं शक्यस्य स्वातन्त्र्येणादृष्टार्थनिश्चायकत्वासम्भवात् पाशुपतादीनां च मोहशास्त्रत्वप्रसिद्धेश्च जगत्कारणत्वं विष्णोरेव लक्षणं नान्यस्य रुद्रादेर्देवतान्तरस्येति सिद्धान्तः ॥

---

## ॥ अथ समन्वयाधिकरणम् ॥ ४ ॥

**प्रथमाधिकरणे जिज्ञास्यतया प्रतिपादितस्य परब्रह्मणश्शिवस्य परिज्ञाने लक्षणापेक्षायां द्वितीयाधिकरणेन लक्षणं जगज्जन्मादिरूपमभिहितम् । तस्मिन् किं प्रमाणमित्याकाङ्क्षायां तृतीयाधिकरणेन वेदान्तशास्त्रस्य तद्विषये प्रामाण्यं तन्मू-**

प्रथमाधिकरणे शास्त्रानारम्भहेतुशङ्कानिरासेन तदारम्भमुपपाद्य जन्मादिसूत्रप्रभृति शास्त्रं प्रवर्तितम् । समन्वयाधिकरणे पुनः सिद्धरूपे ब्रह्मणि वेदान्तानां प्रामाण्यं न सम्भवतीति शङ्काहेतुनिरासेन तत्र तेषां प्रामाण्यमुपपाद्यते। अतः शास्त्रारम्भोपपादकतया जन्माद्यधिकरणात्प्रागेव समन्वयाधिकरणं निवेशमर्हति । वेदान्तानां ब्रह्मणि प्रामाण्ये हि तन्निर्णयफलकवेदान्तविचारोपयोगिन्यायग्रथनात्मकं शास्त्रमारम्भणीयं भवेत् । न तु तेषां तस्मिन्नप्रामाण्ये । तथा च समन्वयाधिकरणस्य शास्त्रयोनित्वाधिकरणानन्तर्यं न युक्तमित्याशङ्क्य सङ्गतिविशेषप्राप्तं तदानन्तर्यमिति वृत्तसङ्कीर्तनेनोपपादयति–प्रथमाधिकरण इति । प्रथमाधिकरणे ब्रह्म विचार्यं प्रतिज्ञातम् । तेनापरिच्छेद्यत्वात् ब्रह्म न विचार्यमिति शङ्कानिरासार्थम् इदमित्थमिति परिच्छेत्तुमशक्यत्वेऽपि लक्षणमुखेनेतरव्यावृत्ततया परिच्छेत्तुं शक्यं तदिति सूचितम् । ततस्तत्किं लक्षणं येन तत्तथा परिच्छेत्तुं शक्यमित्याकाङ्क्षायां जगज्जन्मादि तल्लक्षणमिति प्रदर्श्य तस्य तल्लक्षणत्वं तदनुपपत्तिशङ्कानिरासेनोपपादितम् । ततो जगज्जन्मादिकारणे ब्रह्मणि किं प्रमाणमित्याकाङ्क्षायां शास्त्रं प्रमाणमिति प्रदर्श्य अनुमानगम्ये ब्रह्मणि शास्त्रस्य प्रामाण्यं न सम्भवतीति शङ्कानिरासेन तस्य तत्र प्रामाण्यमुपपादितम् । तथापि शब्दानां कार्य एव व्युत्पत्तेस्सिद्धार्थबोधकत्वासम्भवात्तस्य तत्र प्रामाण्यं न सम्भवतीति शङ्का तदनन्तरमेवावतरति । न हि ततः पूर्वं ब्रह्मणि शास्त्रस्य प्रामाण्यं प्रसक्तम् । येनैतच्छङ्कानिरासार्थं समन्वयाधिकरणं ततः पूर्वं निवेशनीयं भवेत् । तस्मात्समन्वयाधिकरणनिरसनीयशङ्कोत्थानहेतुपर्यालोचनया तस्य शास्त्रयोनित्वाधिकरणानन्तर्यं प्राप्तमित्यर्थः । ननूक्तशङ्कानिरासाथ समन्वयाधिकरणं चेत्तदेवानारम्भणीयम् । सर्वविधशास्त्रानारम्भहेतुशङ्कानिरासेन तदारम्भोपपादनार्थं प्रवृत्ते प्रथमाधिकरण एव साऽपि निरसनीया। शास्त्रानारम्भहेतुशङ्कात्वाविशेषादित्याशङ्कानिरासो 'जिज्ञास्यतया प्रतिपादितस्य ब्रह्मण' इत्युक्त्या सूचितः। तत्रायमाशयः। 'अथातो ब्रह्मजिज्ञासे'ति(ब्र०-१-१-१) सूत्रसामर्थ्येन यासामनारम्भहेतुशङ्कानां निरसनस्य सूचनं लभ्यते तावन्निरसनेन शास्त्रारम्भोपपादनं प्रथमाधिकरणार्थः। तथा च यथा तत्राथातःशब्दसामर्थ्येन सम्बन्धाधिकार्यसम्भवशङ्कानिराससूचनं लभ्यते, यथा च 'ब्रह्मजिज्ञासे'ति समासान्तर्गतषष्ठीसामर्थ्येन ब्रह्मणो विषयत्वप्रयोजनत्वासम्भवशङ्कानिरसनसूचनं लभ्यते न तथा वेदान्तानां सिद्धरूपे ब्रह्मणि प्रामाण्यं न सम्भवतीति शङ्कानिरसनसूचनं तत्रत्यकिञ्चित्पदसामर्थ्येन लभ्यते। ब्रह्मविचारकर्तव्यता हि तस्य सूत्रस्यार्थः। न तु ब्रह्मज्ञानाय वेदान्तविचारकर्तव्यता। येन तच्छङ्कानिरसनसूचनमपि लभ्येत । 'इहौपनिषदी मीमांसे'ति प्रथमाधिकरणावतारिकाभाष्यमारभ्य प्राग्भाष्ये तत्रतत्रास्य शास्त्रस्य वेदान्तविचारशास्त्रत्वव्यवहारस्तु विचार्यत्वेन प्रतिज्ञाते ब्रह्मणि वेदान्तानां प्रामाण्यं शास्त्रयोनित्वाधिकरणेन समन्वयाधिकरणेन च समर्थयिष्यत इति तत्सामर्थ्यसिद्धमर्थं पर्यालोच्य । न च सूत्रसामर्थ्यलभ्यत्वाभावेऽपि सम्भावित-

**लत्वं च निरूपितम् । येन यदव्यभिचारेण सिद्ध्यति तद्धि तस्य प्रमाणमुच्यते ।**

सर्वविधानारम्भहेतुशङ्कानिरसनं शास्त्रारम्भसमर्थनार्थे तदुपोद्घाताधिकरण एव यथाकथञ्चिन्निवेशनीयमिति नियमः । पूर्वमीमांसायां बहुभिः प्रथमाध्यायाधिकरणैर्निवर्तनीयानां वेदाप्रामाण्यशङ्काविशेषाणां शास्त्रानारम्भहेतुत्वेन तेषां सर्वेषामपि तदारम्भसमर्थनार्थे तदीयप्रथमाधिकरणे निवेशनापत्तेः । तस्माद्यथा तत्र धर्मे चोदनायाः प्रामाण्ये प्रतिज्ञात एव तदप्रामाण्यशङ्कास्समुत्तिष्ठन्ति तन्निरसनार्थानामधिकरणानां चोदनासूत्रानन्तरमारम्भः । एवमिहापि ब्रह्मणि वेदान्तानां प्रामाण्ये प्रतिज्ञात एव तदप्रामाण्यशङ्कास्समुत्तिष्ठन्तीति शास्त्रयोनित्वसूत्रानन्तरं समन्वयाधिकरणारम्भो युक्तः इति । तन्मूलत्वं चेति । शास्त्रस्य ब्रह्मकर्तृकत्वं चेत्यर्थः । इदं तृतीयाधिकरणानुपक्तवर्णकान्तरप्रमेयत्वेन वस्तुतः पूर्ववृत्तान्तर्गतमिति पूर्ववृत्तमध्ये सङ्कीर्तितं न तु समन्वयाधिकरणसङ्गत्यपेक्षितत्वेन । एवं समन्वयाधिकरणस्य प्राङ्निवेश्यत्वशङ्कां निरस्य तस्य शास्त्रयोनित्वाधिकरणानन्तर्यमुपपादयितुं तेनाक्षेपिकीं सङ्गतिं दर्शयति—येनेत्यादिना । ननु 'येन यदव्यभिचारेण सिद्ध्यति तद्धि तस्य प्रमाणमुच्यत' इति भाष्येण किं प्रदर्श्यत इति पूर्वाधिकरणसमर्थितवेदान्तानां ब्रह्मणि प्रामाण्यं न सम्भवतीत्याक्षेपोपयोगितया तार्किकाभिमतं 'प्रमाकरणं प्रमाण'मिति प्रमाणलक्षणं प्रदर्श्यत इति चेत्कथमनेन वाक्येन तत्प्रदर्श्यते । अतिशयितं कारणं हि करणम् । अतिशयस्त्वत्रेन्द्रियलिङ्गशब्दादीनां प्रमाकरणानां प्रमाव्याप्तत्वरूपो विवक्षित इत्यव्यभिचारशब्देन ख्यापनात्तत्प्रदर्श्यत इति चेन्न । सकलसहकारिसमवधाने प्रमाव्याप्तत्वस्य सर्वप्रमाकरणसाधारण्येनाव्यावर्तकत्वात् तदसमवधाने इन्द्रियादीनामपि तदसम्भवात् । अथोच्येत अव्यभिचारशब्देनेन्द्रियादिगतः प्रमितव्यभिचारो न विवक्षितः किंतु प्रत्यक्षानुमित्यादिप्रमारूपकार्यगत इन्द्रियलिङ्गाद्यव्यभिचारः । ततश्च प्रत्यक्षानुमित्यादिगतेन्द्रियलिङ्गादिनिरूपितकार्यतावच्छेदकानामनुभवत्वव्याप्यत्वेन क्रोडीकारादनुभवत्वव्याप्यधर्मावच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वे सति प्रमाकरणं प्रमाणमिति लक्षणमिह विवक्षितं पर्यवस्यतीति चेन्न । चाक्षुषज्ञानादिवृत्त्यनुभवत्वव्याप्यधर्मविशेषावच्छिन्नकार्यताप्रतियोगिककारणताश्रयेषु आलोकादिष्वतिव्याप्तेः । 'अनुभवत्वव्याप्यधर्मे'त्यनेन अनुभवत्वसाक्षाद्व्याप्यजातिविवक्षायामनुभवत्वसाक्षाद्व्याप्यायाः प्रत्यक्षत्वजातेर्नित्यज्ञानसाधारण्यात् नेन्द्रियादिनिरूपितकार्यतावच्छेदकत्वं किंतु जन्यप्रत्यक्षत्वस्येति तार्किकाणामभ्युपगमेन लक्षणस्येन्द्रियेष्वव्याप्तेः । ननु, जन्यत्वातिरिक्तविशेषणघटितानुभवत्वसाक्षाद्व्याप्यजात्यवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं विवक्षितमिति चेन्न । ईश्वरज्ञानव्यावृत्त्यर्थमिन्द्रियनिरूपितज्ञाननिष्ठकार्यतावच्छेदकशरीरे विनाशित्वस्यापि निवेशयितुं शक्यत्वेनेन्द्रियेषु तेन विशेषणेनाव्याप्तिनिरासालाभात् । ननु, नित्यमात्रव्यावृत्तिप्रयोजकातिरिक्तविशेषणाघटितत्वं विवक्षितम् । यद्यपि जन्यत्वं विनाशित्वं वा नित्यमात्रव्यावृत्तं न भवति । अनित्यनित्याभ्यां प्रागभावध्वंसाभ्यामपि व्यावृत्तत्वात् । तथापि प्रकृतकार्यतावच्छेदके तद्विशेषणमीश्वरज्ञानव्यावर्तनैकप्रयोजनमिति नोक्तदोषानुवृत्तिः । मात्रपददानान्नित्यानित्योभयव्यावृत्तिप्रयोजनकलौकिकत्वविशेषणघटितप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणताश्रये विषये नातिव्याप्तिरिति चेन्न। एवमपि शाब्दत्वरूपोक्तविशेषणविशिष्टजात्यवच्छिन्न-

कार्यतानिरूपितकारणताश्रयेष्वाकाङ्क्षाज्ञानादिष्वतिव्याप्तेः। ननु,व्यापारवत्त्वमपि विशेषणं विवक्षितम्। न च पदज्ञानानां पदार्थस्मृतिवदाकाङ्क्षाज्ञानादीनां कश्चिद्व्यापारोऽस्तीति चेन्न । तथा सत्यनुमानप्रमाणत्वेनाभिमतस्य लिङ्गपरामर्शस्य व्यापाराभावेन तत्राव्याप्तेः। ननु,'यद्ययं निर्वह्निस्स्यान्निर्धूमस्स्या'दिति विषयपरिशोधकस्तर्कः तद्व्यापारः तस्य धूमाभावापादनरूपस्य स्वारसिकधूमवत्त्वज्ञानापेक्षत्वेन परामर्शजन्यत्वादिति चेन्न। विरोधिशङ्कानिवर्तनद्वारानुमित्युपयोगिनस्तस्य शङ्काया असार्वत्रिकत्वेनानावश्यकत्वात् । न च परामर्शद्वारा व्याप्तिज्ञानं कारणं तद्वारा लिङ्गज्ञानस्यापि कारणत्वसम्भवेन विनिगमनाविरहात् लिङ्गविशेष्यकपरामर्शस्थले लिङ्गज्ञानस्यैव व्याप्तिविशेष्यकपरामर्शस्थले विशकलितव्यभिचाराभावसहचारज्ञानजन्यपरामर्शस्थले च व्याप्तिज्ञानस्याभावेनासार्वत्रिकस्योभयत्रापि तुल्यत्वात्। ननु, तर्हि व्याप्तिव्यभिचाराभावसहचारलिङ्गज्ञानानि सर्वाण्यपि करणानि सन्तु। न च, क्वचित् किञ्चित्सम्भवति न सर्वं सर्वत्रेत्यनुगमः । परामर्शजनकज्ञानत्वेनानुगतेन रूपेण कारणत्वाभ्युपगमात् । न च स्मृतिरूपपरामर्शस्थले अनुमित्यजनकसंस्कारव्यवहितस्य पूर्वानुभवरूपपरामर्शजनकज्ञानस्यानुमितिजनकत्वासम्भवः । व्यापारेणेव व्यापारजनकेन व्यवधानस्यापि कार्यकारणभावाविरोधित्वात् स्वर्गजनकावान्तरापूर्वव्यवहितस्यापि यागस्य स्वर्गजनकत्वाभ्युपगमादिति चेन्न । प्रत्यक्षपरामर्शस्थले व्याप्तिज्ञानलिङ्गज्ञानेश्वरज्ञानानाम् अनुमितिरूपपरामर्शस्थले परामर्शतज्जनकज्ञानानां शब्दपरामर्शस्थले पदपदार्थाकाङ्क्षादिज्ञानानां च बहूनां परामर्शजनकज्ञानानां मेलने कस्यचिदेव प्रमाणत्वमित्यत्र विनिगमनाविरहेणैकानुमित्युत्पत्तावनेकानुमितिकरणरूपानुमानप्रमाणा[illegible]गमावश्यम्भावे लाघवान्मनःकालेश्वरादिसाधारणेन परामर्शजनकत्वेनैव तत्कारणता[illegible]त्यात् परामर्शाव्यवहितपूर्वक्षणोत्पत्तिकं तत्कारणं ज्ञानमनुमानमभ्युपगम्यत इति चेन्न । स्मृतिरूपपरामर्शस्थले तदभावात् । अस्तु तर्हि सर्वं परामर्शकारणमनुमानमिति चेत् तथा सति प्रत्यक्षादिप्रमोत्पत्तावप्यनेकप्रमाणाभ्युपगतौ नास्ति कश्चिद्दोष इति । येन यत्सिद्ध्यति तत्प्रमाणमित्येतावत एव लक्षणत्वसम्भवाद्व्यर्थमव्यभिचारेणेति विशेषणम् । एतेनानुभवत्वसाक्षाद्व्याप्यैकजात्याश्रययावज्जन्यवृत्तितदन्यावृत्तिधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वविशेषितं प्रमाकरणत्वं प्रमाणलक्षणमित्यपास्तम् । असम्भवश्चात्राधिकः । प्रत्यक्षादिप्रमाणजन्याश्चतुर्विधा अपि ह्यनुभवा अनुभवत्वसाक्षाद्व्याप्यैकजात्याश्रयाः । न ह्येतेषां मध्ये कश्चिदप्यनुभवोऽनुभवत्वसाक्षाद्व्याप्यजातिद्वयस्याश्रयः । तथा च चतुर्विधप्रमाणजन्यसकलानुभववृत्तिकार्यतानिरूपितकारणताश्रयत्वमिन्द्रियलिङ्गादिषु क्वचिदपि नास्तीति स्पष्टमेव। नन्वनुभवत्वसाक्षाद्व्याप्या एकजातिश्चतुर्विधेष्वनुभवेषु नानुवर्तत इति चेन्मानुवर्तिष्ट। तथापि प्रत्यक्षादिष्वनुभवत्वसाक्षाद्व्याप्यजातित्वमिव प्रत्येकमेकत्वमपि तावदस्ति । तथा च यथानुभवत्वसाक्षाद्व्याप्यजातीनां भेदेऽपि सर्वेऽप्यनुभवा अनुभवत्वसाक्षाद्व्याप्यजात्याश्रयाः । एवमेकत्वविशेषिततज्जात्याश्रया अपि भवन्तः केन वारयितुं शक्यन्ते । नन्वेकजातीत्यत्रैकशब्दः एकत्वाधिकरणत्वप्रतीत्यर्थो न भवति । सर्वासामपि जातीनां प्रत्येकमेकत्वेनाव्यावर्तकत्वात्। किं त्वनुभवत्वसाक्षाद्व्याप्यजातीनां मध्ये कस्याश्चिदेव ग्रहणार्थः। 'तदन्यावृत्ती'त्यस्य चोक्तरूपजात्याश्रययावज्जन्यवृत्त्यनित्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयशरीराद्यतिव्या-

प्तिवारणार्थमुपात्तस्यानुभवत्वसाक्षाद्व्याप्यजात्यन्तराश्रयावृत्तित्वमर्थः। न त्वनुभवत्वसाक्षाद्व्याप्यजात्याश्रयान्यावृत्तित्वमर्थः। अतोऽपि हेतोरेकशब्दोऽनुभवत्वसाक्षाद्व्याप्यजातीनां मध्ये कस्याश्चिदेव ग्रहणार्थ इति नासम्भवशङ्कावकाश इति चेत्। किमयमेकशब्दःउक्तरूपजातीनां मध्ये व्यवस्थितकिंचिज्जात्याश्रयग्रहणार्थः उत यदा यत्र प्रमाणे लक्षणमुपसंह्रियते तदा तत्प्रमाणजन्यज्ञानवृत्तिजातिग्रहणार्थः। आद्ये व्यवस्थितरूपा द्वितीयेऽननुगमरूपा चाव्याप्तिः। ननु,प्रमाया अननुगतत्वादननुगते लक्ष्ये लक्षणाननुगमो न दोषायेति तार्किका वदन्तीति चेत् सत्यम्। एकमेव ज्ञानं विषयविशेषेण प्रमा चाप्रमा चेति विषयविशेषेण प्रमात्वस्याननुगतत्वात्तद्वति तत्प्रकारकज्ञानं प्रमेत्यादिलक्षणेषु तत्तत्प्रमाविषयपरामर्शे सर्वनामार्थाननुगमो न दोषायेति ते वदन्ति। नैवमेकमेव ज्ञानं नानाकरणजन्यत्वेन तत्तत्करणांशे प्रत्यक्षमनुमितिश्चेत्यादिरूपेण प्रमात्वाप्रमात्वसङ्करवत् प्रत्यक्षत्वानुमितित्वादिसङ्करोऽपि तैरिष्यते। येनायमप्यननुगमो न दोषः स्यात्। तस्मादिहाव्यभिचारेणेति विशेषणं प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणप्रत्यायनार्थं प्रमाकरणगतप्रमाव्याप्तिपरं प्रमागतकरणविशेषव्याप्तिपरं वेत्येतदयुक्तम्। ननु, तर्हि प्रमासाधनं प्रमाणमित्येवंरूपस्यैव प्रमाणसामान्यलक्षणस्य प्रत्यायनार्थं सिद्ध्यतिशब्दोक्तस्य ज्ञानस्य भ्रमव्यावृत्तत्वलाभायाव्यभिचारेणेतिपद'मिन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्ष'मिति न्यायसूत्रगतमव्यभिचारिपदमर्थाव्यभिचारपरमस्तु। नैतदपि युक्तं, सिद्ध्यतिपदेनैव तल्लाभात्। भ्रमकरणेन दुष्टचक्षुरादिना तत्तदर्थज्ञानस्येव तत्तदर्थसिद्धेर्व्यवहाराभावेन सिद्ध्यतेरर्थाव्यभिचारिज्ञानपरत्वात्। तस्मात्किमपि वक्तव्यं यदुदाहृतेन भाष्येण प्रदर्श्यत इति। उच्यते। अनेन भाष्येण न्यायमतसिद्धं मतान्तरसिद्धं वा प्रमाणसामान्यलक्षणं न प्रदर्श्यते। किं तु 'अप्राप्ते शास्त्रमर्थवत्' 'यश्चार्थादर्थो न स चोदनार्थ' इति मीमांसकमर्यादाप्रसिद्धं शास्त्रप्रामाण्यप्रयोजकं प्रदर्श्यते। वेदान्तानां ब्रह्मणि प्रामाण्यस्य पूर्वसूत्रोक्तस्याक्षेपे समनन्तरवाक्येन करिष्यमाणे तत्प्रदर्शनस्योपयोगित्वात्। तथा च यच्छास्त्रार्थत्वाभिमतं वस्तु येन शास्त्रेणाव्यभिचारेण तच्छास्त्रावतारमात्रेण सिद्ध्यति न तु तच्छास्त्रावतारानन्तरमपि तदर्थसामर्थ्यस्य तदुपजीविवाक्यान्तरस्य वावतारमपेक्षते तच्छास्त्रं तत्र प्रमाणमिति न्यायविद्भिरुच्यत इत्यर्थः। यद्धि यच्छास्त्राधीनसिद्धिकमपि तदर्थसामर्थ्येन तदर्थोपजीविवाक्यान्तरेण वा लभ्यं तत्रोभयत्रापि न तच्छास्त्रं प्रमाणम्। तत्र सामर्थ्यवाक्यान्तररूपप्रमाणान्तरसद्भावात्। किं तु साक्षात्स्वप्रमेयार्थे प्रमाणं तत्र प्रमाणान्तराभावात् तत्प्रमितिं विना सामर्थ्यवाक्यान्तरप्रमाणयोरनुन्मेषाच्च। तत्र सामर्थ्यलभ्यं यथा–'दर्शपूर्णमासयोरितिहायेडोबर्हिःप्रतिसमानयेते जुह्वामौपभृत'–मिति शास्त्रस्य जुह्वौपभृदाज्यसमानयनकालविधिरर्थः। तत्सामर्थ्यात् जौहवमाज्यमादिमप्रयाजत्रयार्थमौपभृतमाज्यार्थं बर्हिरादिप्रयाजद्वयार्थमिति व्यवस्था लभ्यते। एतच्छास्त्रार्थसामर्थ्यापरामर्शे हि 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् यदुपभृति प्रयाजानूयाजेभ्यस्त'दिति जौहवाज्यस्यौपभृताज्यार्थस्य चाविशेषेण प्रयाजार्थत्वश्रवणात् उभयमपि विकल्पेन सर्वप्रयाजार्थं भवेत्। वाक्यान्तर लभ्यं यथा–'तं द्विरात्रेणे'ति शास्त्रस्य अग्नेर्द्विरात्राङ्गत्वविधिरर्थः। तेनाग्नेर्द्विरात्रेत्यौपदेशिकाङ्गत्वे सिद्धे औपदेशिकाङ्गत्वसिद्धिमुपजीव्य प्रकृताविव द्विरात्रेऽपि प्रवृत्तेन 'श्येनचितं चिन्वीत

वेदान्तवाक्यानां कथं वा ब्रह्मसाधकत्वमित्याकाङ्क्षायां चतुर्थाधिकरणमवतार्यते–

॥ सू० ॥ तत्तु समन्वयात् ॥ ४ ॥

तच्छब्देन प्रकृतं ब्रह्म परामृश्यते। तुशब्देन सर्वाणि वेदान्तवाक्यानि समाह्रियन्ते। समन्वयशब्देन तात्पर्येण संबन्ध उच्यते। तत् ब्रह्म वेदान्तवाक्यानि तात्पर्यलिङ्गसम्बन्धात् बोधयन्तीति सूत्रार्थः। अस्य सर्वाणि वेदान्तवाक्यानि

स्वर्गकाम' इत्यादिवाक्येन तत्र श्येनाकृत्यादिकाम्यगुणप्राप्तिर्लभ्यते। एवमन्यलभ्ययोरन्ययोरुदाहृतशास्त्रद्वयाधीनसिद्धिकत्वेऽपि न तयोरिदं शास्त्रद्वयं प्रमाणमिति व्यवच्छेदार्थमव्यभिचारेणेति विशेषणं तदर्थसामर्थ्यादिरूपप्रमाणान्तरावतारानपेक्षत्वार्थकमुपात्तम्। एवं शास्त्रप्रामाण्यप्रयोजकं प्रदर्श्य तदभावाद्वेदान्तानां ब्रह्मणि प्रामाण्यं न सम्भवतीत्याक्षेपं दर्शयति–वेदान्तवाक्यानामिति। करिष्यमाणाक्षेपाभिप्रायः कथंशब्दः। यदि वेदान्तैस्साक्षादेव ब्रह्म सिद्ध्यतीति मतं तन्न सङ्गच्छते। वक्ष्यमाणरीत्या सर्वशब्दानां कार्यपरत्वात्। अथ मतं कार्यपरत्ववादे तेषां रात्रिसत्रन्यायप्राप्तब्रह्मानन्दानुभवतत्साद्दश्यप्राप्तिफलकोपासनाविधिरूपकार्यपरत्वं वक्तव्यमिति तत्सामर्थ्यान्निरतिशयानन्दशालिसत्यसङ्कल्पत्वादिगुणकं ब्रह्म सिद्ध्यति तदभावे तदानन्दानुभवतत्साद्दश्यप्राप्त्यसम्भवादिति। तदपि न युक्तम्। तावता वेदान्तानां ब्रह्मणि प्रामाण्यानिर्वाहात्। ब्रह्मणो वेदान्ताधीनसिद्धिकत्वेऽपि तस्य तैरव्यभिचारेण सिद्ध्यभावादित्याक्षेपणीयस्य वेदान्तानां ब्रह्मणि प्रामाण्यसमर्थनस्य द्वैविध्यसूचनार्थो वाकारः। एवं द्विविधप्रामाण्यसमर्थनप्रकाराक्षेपोपयोगितयैव शास्त्रप्रामाण्यप्रयोजकमुपन्यस्तम्॥

* ॥ तत्तु समन्वयात्॥४॥ सूत्रे तदिति पदं प्रकृतब्रह्मपरामर्शि द्वितीयान्तम्। तुरवधारणार्थः। तस्य वेदान्ताः साधयन्तीत्यध्याहृतेन सम्बन्धः। ततश्च साधकत्वलक्षणविशेषणसङ्गतस्यावधारणस्यायोगव्यवच्छेदरूपतापर्यवसानात् 'कुमुदं श्वेतमेवे'ति वाक्ये विशेषणसङ्गतावधारणबलात् सर्वेषु कुमुदेषु श्वैत्यमिव सर्वेषु वेदान्तेषु ब्रह्मसाधकत्वं लक्ष्यते[1]। न च नीलं सरोजं भवत्येवेत्यत्रेव क्रियासङ्गतत्वादवधारणस्यात्यन्तायोगव्यवच्छेदतापर्यवसानात् केषुचिदेव वेदान्तेषु ब्रह्मसाधकत्वं लभ्येतेति शङ्कनीयम्। पृथक्पदोपात्तविशेषणान्वयापादकक्रियासङ्गतावधारणस्यैवात्यन्तायोगव्यवच्छेदरूपत्वादिह क्रियाया[2] एव विशेषणसमर्पकतयावधारणस्य विशेषणसङ्गतत्वेनायोगव्यवच्छेदरूपतौचित्यात्। सम्यगन्वयः समन्वयः उपक्रमादिलिङ्गावगमिततात्पर्यसम्बन्धः। पञ्चमी हेत्वर्था। तथा च सर्वे वेदान्ताः ब्रह्म साधयन्ति उपक्रमादिलिङ्गावगमितब्रह्मतात्पर्यकत्वादिति सूत्रार्थः। न च धूमोऽस्तीत्यादिवाक्यानां वह्न्यादितात्पर्यस्येव वेदान्तानां ब्रह्मणि तात्पर्यस्य तदुपजीविमानान्तरव्यवधानेन निर्वाहः। बाधकाभावेनौत्सर्गिकस्य साक्षात्साधकस्य सिद्धेः। उपक्रमादिलिङ्गानां साक्षाच्छब्दविषयेष्विव शब्दोपजीविमानान्तरेष्वसम्भवाच्च[3]। ब्रह्मणो वेदान्ताप्रतिपाद्यत्वे तत्साधनसमर्थस्य तदुपजीविमानान्तरस्यासम्भवाच्चेत्यभिप्रेत्य सूत्रं व्याचष्टे–तुशब्देनेति। एवं सूत्रार्थं प्रदर्श्य सूत्रार्थसूचितमधिकरणशरीरं दर्शयितुमुपक्रमते–अस्येति। यद्यपि पूर्वाधिकरणे जगत्कारणस्वरूपसाधकस्य वेदान्तभागस्य ब्रह्मणि प्रामाण्यं समर्थितमिति तत्प्रामाण्याक्षेपमात्रेणास्य

(१) 'लभ्यते' इति. घ. पाठः। (२) 'क्रियावाचिपदस्यैव' इति. घ. पाठः। (३) 'मानान्तरविषयेषु' इति. घ. पाठः।

विषयः । वेदान्तवाक्यानां ब्रह्मबोधकत्वं युक्तं न वेति संशयः । सर्वत्र सम्बन्धग्रहणसापेक्षं शब्दस्यार्थावबोधकत्वम् । शब्दार्थयोस्सम्बन्धज्ञानमन्तरेण हि पुरुषस्य शब्दार्थप्रत्ययो न भवति । सम्बन्धज्ञानं च वृद्धव्यवहारसापेक्षम् । व्यवहारश्च कार्यैकगोचरः । तथा हि–'गामानय''गां बधाने'ति वृद्धवाक्यश्रवणसमनन्तरं प्रवर्तमानं प्रयोज्यवृद्धमवगम्य पार्श्वस्थो व्युत्पित्सुरेवमवधारयति सर्वथाऽयं कार्यावगतिसमनन्तरमेव प्रवर्तते । सा च कार्यावगतिरेतस्मादेव वाक्यात्समुत्पन्ना । अन्यथा कथमस्यैतद्वाक्यश्रवणसमनन्तरं प्रवृत्तिरिति । पुनर्गवानयनबन्धनदर्शनात् कार्यविशेषं निश्चिनोति । तदेवं कार्यार्थत्वाद्व्युत्पत्तेर्न सिद्धे ब्रह्मणि

---

पूर्वाधिकरणेनाक्षेपिकी सङ्गतिर्लभ्यते । तथापि तदाक्षेपहेतुसाधारण्यात्सर्वेषां वेदान्तानां ब्रह्मणि प्रामाण्यमाक्षिप्तं भवतीत्यभिप्रेत्याह–सर्वाणि वेदान्तवाक्यानीति । व्युत्पत्तिग्रहस्य सिद्धार्थसाधारण्यकार्यविषयत्वाभ्यां संशयं दर्शयति–वेदान्तवाक्यानामिति । व्युत्पत्तिग्रहस्य कार्यविषयत्वमुपपादयन्पूर्वपक्षयति–सर्वत्रेति । ननु, शब्दादर्थप्रत्ययस्य शब्दार्थसम्बन्धरूपव्युत्पत्तिग्रहापेक्षानियमेऽपि व्युत्पत्तिग्रहस्य न कार्यविषयत्वनियमः व्याख्यानवाक्यशेषप्रसिद्धपदसामानाधिकरण्यव्याकरणकोशाप्तोपदेशैः सिद्धार्थेऽपि तद्ग्रहसम्भवादित्याशङ्क्याह–सम्बन्धज्ञानं चेति । आद्यव्युत्पत्तिग्रहाधीनव्याख्यानादिभिः शब्दार्थसम्बन्धविशेषग्रहणमाद्यव्युत्पत्तिग्रहः उत्तममध्यमवृद्धव्यवहारसापेक्षः तद्व्यवहारः कार्यैकविषय इत्याद्यव्युत्पत्तिग्रहस्य कार्यविषयत्वात्तदधीनस्सर्वोऽपि व्युत्पत्तिग्रहः तद्विषयस्सिद्ध्यतीत्यर्थः। उक्तमर्थमुपपादयितुमुपक्रमते–तथा हीति । ननु, 'गामानये'त्याद्युत्तमवृद्धवाक्यश्रवणसमनन्तरभाविन्यां प्रयोज्यवृद्धप्रवृत्तौ बालः स्वप्रवृत्ताविव कार्यताज्ञानजन्यत्वमनुमाय तत्र कार्यताज्ञानस्य उत्तमवृद्धवाक्यश्रवणसमनन्तरभावित्वेन तज्जन्यत्वं निश्चिनोतीति तद्वाक्यस्य कार्यसामान्यज्ञानजनने शक्तिः सिद्ध्यतु नाम । तथापि कथमानयनबन्धनादिकार्यविशेषे तत्तत्पदविशेषशक्तिसिद्धिरित्याकाङ्क्षायामाह–पुनरिति । 'गामानय' 'गां बधाने'त्यादिना वाक्यश्रवणानन्तरं तत्तत्कार्यविशेषे प्रवृत्तिमवलोक्य व्यावृत्तस्य पदस्य व्यावृत्तकार्यविशेषोऽर्थः अनुवर्तमानस्य पदस्यानुवर्तमानकार्यविशेषोऽर्थ इति निश्चिनोतीत्येवमावापोद्वापाभ्यां तत्तत्पदविशेषस्य तत्तत्कार्यविशेषे शक्तिः सिद्ध्यतीत्यर्थः । एवं च व्युत्पत्तिग्रहस्य कार्यैकविषयत्वात्तदनुरोधेन कार्यपदरहितानामपि वेदान्तवाक्यानां तदध्याहारादिना कार्यार्थ एव प्रामाण्यस्य समर्थनीयत्वात् सिद्धरूपे ब्रह्मणि तेषां प्रामाण्यं न सम्भवतीत्याह–तदेवमिति । स्यादेतत् । उक्तक्रमेणा'नय बधाने'त्यादिपदानामेव कार्ये शक्तिः सिद्धा । न तु घटादिपदानामपि । ततश्च यथैव 'गामानय''गां बधाने'त्यादिव्यवहारेषु क्रियापदानां तत्रतत्र कार्यविशेषे शक्तिस्सिद्ध्यति तथा 'घटमानय''पटमानये'त्यादिव्यवहारेषु घटादिपदानामप्यावापोद्वापाभ्यां तत्रतत्र सिद्धार्थविशेषे शक्तिः सिद्ध्यतीत्याद्यव्युत्पत्तिग्रहस्य विरोधादग्रे सिद्धार्थपदमात्रसमभिव्याहारादपि वाक्यार्थप्रतीतिर्भवन्ती न निवारयितुं शक्यते । अतः कार्यपदरहितेषु वेदान्तेषु न तदध्याहारादिप्रसक्तिः । ननु, आद्यव्युत्पत्तिग्रहस्य प्रयोज्यवृद्धप्रवृत्त्यनुमितकार्यविषयत्वात्तदनुरोधेन घटादिपदानामावापोद्वापाभ्यां भवन्नपि शक्तिग्रहस्तद्विषयस्स्यात् । न च

सर्वेषामपि क्रियाकारकपदानां कार्यमात्रे शक्तिरित्यभ्युपगमे पर्यायत्वापत्तिः। कार्यान्वितस्वार्थे शक्तिरित्यभ्युपगमे कार्यवाचिपदानां कार्यान्वितस्वार्थाभावात्तदसम्भवः । सर्वेषामपि पदानां कार्ये शक्तिरित्येव नियमाभ्युपगमात् तस्य नियमस्य कार्यवाचिपदानां तन्मात्रशक्त्या तदितरपदानां तदन्वितस्वस्वार्थशक्त्या च निर्वाहादिति चेत्। एवमपि कार्यवाचिपदरहितेषु वेदान्तेषु तदध्याहारादिकं न प्रसज्यते। कार्यान्वितस्वार्थवाचिनां तत्रत्यसिद्धार्थवाचिपदानां विशेषणीभूतकार्यसमर्पकतयैव तेषां कार्यविषयत्वनिर्वाहात्। ननु, प्रयोज्यप्रवृत्तिहेतुकार्यताज्ञानजननसामर्थ्यं शब्दस्याद्यव्युत्पत्तिग्रहकालेऽवधारितं तद्यतो भवति तदपेक्षा सर्वेष्वपि शब्देष्ववश्यंभाविनी। न च सिद्धार्थविशेषणकार्यसामान्यज्ञानेन क्वचित्प्रवृत्तिर्भवति। किं तु लिङादियुक्तक्रियापदात्कार्यविशेषज्ञानेनैव। अतस्तदर्थं क्रियापदाध्याहारादिकमपेक्षितमिति चेत् तर्हि सर्वेषां पदानां कार्यजनकशक्तिनियमो न सिद्ध्येत्। प्रवर्तकज्ञानजनकत्वनिर्वाहाय हि तत्कल्पनम् । तन्निर्वाहश्चेत्सिद्धार्थवाचिशब्दानां तद्विशेषणकार्यशक्त्या न सम्भवति । किं तु लिङादियुक्तक्रियापदशक्त्यैव। तदा किं तत्कल्पनया। किं चाद्यव्युत्पत्तिग्रहसमये 'गामानये'ति वृद्धवाक्यस्य ततः प्राक्सामान्यतोऽप्यर्थज्ञानजनकत्वेनाज्ञातस्य जृम्भितहसितादिसाधारण्येन तदीयमुखशब्दमात्रतया श्रुतस्य तदनन्तरप्रभवप्रयोज्यप्रवृत्तिहेतुज्ञानजनकत्वमनाकलितपदविभागस्यैवावधार्यत इति तस्मिन्समये 'गामानये'त्यस्य समुदायस्यैव गवानयनकार्यताज्ञानजननसामर्थ्यं गृह्यते। न तु तदनन्तर्गतपदानां स्वार्थमात्रेऽपि शक्तिः न तरां कार्यान्वितस्वार्थे। किं त्वावापोद्वापयुक्तप्रयोगान्तरेषु क्रियाकारकपदानां प्रत्येकशक्तिर्गृह्यते। तथा च कार्यवाचिपदसमभिव्याहारादेव कार्यताज्ञानजनकत्वं सम्भवतीत्यन्यलभ्यत्वप्रतिसन्धानान्न गवादिपदानां कार्यान्वितस्वार्थशक्तिकल्पनाप्रसक्तिः । अनुपपत्त्यभावात्। नन्वाद्यव्यवहारदर्शनसमये यद्यप्यनाकलितपदविभागस्य 'गामानये'ति समुदायरूपस्य शब्दस्य कार्यताज्ञानजननसामर्थ्यं गृह्यते। तथापि तद्गामानयेति शब्दविशेषत्वोपाधिना न गृह्यते। किं तु शब्दत्वसामान्योपाधिना। तथा च सत्यावापोद्वापयुक्तप्रयोगान्तरेषु गवादिपदरूपशब्दत्वसामान्यालिङ्गितावयवशक्तिग्रहोऽपि कार्यत्वापरित्यागेन कार्यान्विते तत्तदर्थे पर्यवस्येदिति चेत् किमाद्यव्यवहारदर्शनसमये शब्दसामान्यस्य प्रवृत्त्युपयोगिकार्यताज्ञाने सामर्थ्यं गृहीतम् उत कार्यताज्ञानमात्रे। आद्ये गवादिपदानां कार्यसामान्यशक्त्या न प्रवृत्त्युपयोगिकार्यताज्ञानलाभ इति व्यर्थं तेषां कार्यान्वितस्वार्थे शक्तिकल्पनम्। द्वितीये कार्यपदरहितेषु वाक्येषु सिद्धार्थविशेषणकार्यसामान्योपस्थित्यैवाद्यव्यवहारानुरोधसिद्धेस्तेषु प्रवर्तकज्ञानजननसमर्थक्रियापदाध्याहारो न सिद्ध्येत्। अथात्र प्रथमपक्ष एवाश्रीयते । तस्मिन्पक्षे गवादिपदानां कार्यान्वितस्वार्थे शक्तिर्न सिद्ध्यतीति चेन्मा सैत्सीत्। क्रियापदरहितेषु वाक्येष्वाद्यव्यवहारानुरोधेन प्रवर्तकज्ञानजननसमर्थकार्यवाचिपदाध्याहारः सिद्ध्येदेव । तावदेव वेदान्तानां सिद्धरूपे ब्रह्मणि प्रामाण्यं न सम्भवतीत्याक्षेप उपयुज्यत इति चेदियमपि दुराशैव। 'गामानये'ति वाक्यश्रवणानन्तरं प्रयोज्यस्य गवानयने प्रवृत्त्या हि गवानयनकार्यताज्ञानमनुमितं बालेन न कार्यताज्ञानमात्रम्। प्रवृत्तिविशेषे तस्यानुपयोगात्। आवापोद्वापयुक्त-

(१) 'गृह्येत' इति घ. पाठः। (२) 'बाध' इति ख. पाठः।

शब्दस्य प्रामाण्यम् । किं च कार्यविशेषत्वाज्जगतः कर्तृविशेषस्य ब्रह्मणोऽनुमा-

प्रयोगान्तरेषु गवादिपदशक्तिग्रहेऽनुपयोगाच्च । गवानयनकार्यताज्ञाने च 'गामानये'ति शब्द-विशेषस्यैव कारणत्वग्रहणं स्यात् । न शब्दसामान्यस्य । न च निरर्थकवर्णसमुदायसाधारणस्य शब्दत्वसामान्यस्य कार्यताज्ञानमात्रेऽपि कारणत्वग्रहो युक्तः। न वा तद्व्यावृत्तस्य पदसमुदाय-रूपवाक्यत्वस्याद्यव्यवहारसमयेऽवधारणमस्ति । तस्माद्यद्यपि प्रवृत्तिसामान्यानुमितकार्य-ताज्ञानसामान्ये कार्यताज्ञानत्वपुरस्कारेणापि गामानयेतिशब्दस्य कारणत्वं गृह्येत तथापि प्रत्यक्षेण कारणताग्रहे तत्सहकार्यन्वयव्यतिरेकपरिचायकतया कारणतावच्छेदकग्रहापेक्षाव-त्प्रमाणान्तरेण कारणताग्रहे तदपेक्षाया अभावात्कार्यताज्ञानत्वसामानाधिकरण्येन गामानयेति शब्दगतयत्किञ्चिद्धर्मसामानाधिकरण्येन च कार्यकारणभावग्रहो भवेत् । (न तु तत्तदवच्छि-न्नकार्यकारणभावग्रहः।) न ह्यागसेन स्वर्गे स्वर्गत्वपुरस्कारेण ज्योतिष्टोमकार्यत्वग्रहस्तदवच्छि-न्नकार्यत्वविषयः । दानादिजन्यस्वर्गे व्यभिचारेण स्वर्गत्वस्य ज्योतिष्टोमकार्यतानवच्छेदकत्वा-त् । किं तु तत्समानाधिकरणकार्यत्वविषयः। एवं चावापोद्वापयुक्तप्रयोगान्तरेष्वा'नय बधाने'-त्यादिपदानां कार्ये शक्तिग्रहे सति शब्दानां कार्यताज्ञानजनकत्वस्य गवादिज्ञानजनकत्वस्येव तद्वाचकपदसमभिव्याहारप्रयुक्तत्वावसायात् केवलसिद्धार्थपरवाक्यप्रयोगदर्शनाच्च कार्यवा-चिपदसमभिव्याहृतवाक्यत्वं प्रवृत्त्युपयोगिकार्यताज्ञानजनकतावच्छेदकमवधार्यत इति न कथञ्चिदपि सिद्धार्थपरवाक्येषु कार्यवाचिपदाध्याहारप्रसक्तिः । तस्माद्व्युत्पत्तिग्रहस्य कार्यवि-षयत्वासिद्धेर्वेदान्तानां ब्रह्मणि प्रामाण्यस्य न काचित्क्षतिरित्यस्वरसादाह–किंचेति । ननु, पूर्वाधिकरणे जगत्कर्तुरनुमानतः प्राप्तिर्निराकृता । सत्यम् । अयुक्तं तन्निराकरणम् । 'अन्नेन सोम्य शुङ्गेने'त्यादिवेदान्तवाक्यप्रदर्शितानुमानप्रामाण्यस्य वेदान्तप्रामाण्यवादिभिरप्यवश्यं समर्थनीयत्वात् । न च यथाकथंचिद्युक्त्युपन्यासात्मकं तद्वाक्यमिति वाच्यम् । शास्त्रदर्शि-तयुक्तेराभासत्वे शास्त्रस्यैवाप्रामाण्यप्रसङ्गात् । ईश्वरमनङ्गीकुर्वन्तं साङ्ख्यं प्रति 'रचनानुपप-त्तेश्च नानुमान'(ब्र० २-२-१ सू.) मित्यधिकरणे तस्मिन्ननुमानं प्रमाणमुपन्यस्यतः सूत्रकार-स्यानाप्तत्वप्रसङ्गाच्च । न चेश्वरानुमानस्य सद्युक्तित्वेऽपि वेदान्ततात्पर्यग्राहकषड्विधलिङ्गान्तर्ग-तत्वादीश्वरस्य तद्विषयत्वेन वेदान्तानां तत्र प्रामाण्यं न हीयत इति शङ्कनीयम् । येन केना-प्यन्येन प्राप्तेऽर्थे शास्त्रप्रामाण्यायोगात् । अन्यथा 'अग्निर्हिमस्य भेषज'मित्यादिश्रुत्यर्थविषयं प्रत्यक्षं तत्तात्पर्यग्राहकमिति प्रत्यक्षविषयेऽप्यर्थे शास्त्रप्रमाण्यप्रसङ्गादिति पूर्वपक्षी मन्यते । ननु, तर्कमार्गेणासद्युक्तेरपि युक्तित्वेनोपन्यासः श्रुतितात्पर्यनिर्णयार्थमुपपत्तिरूपलिङ्गं भवत्ये-व । यथा शास्त्रान्तरदृष्ट्या दोषस्य 'ब्रह्मवादिनो वदन्ति स त्वं यजेत यो यज्ञस्यार्त्या वसी-यान्त्स्या'दिति । 'आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः । तस्मात्प्रयत्नतः कुर्यात्स्नान-मुष्णेन वारिणा॥' इत्याद्यर्थवादेषु गुणत्वेन कीर्तनं विधेयप्रशंसार्थं गुणकथनं भवति। दृश्य-ते चाप्यन्यत्राप्ययुक्तेर्युक्तित्वेनोपन्यासः । 'तद्यद्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मन्येव ग-च्छती'ति । अत्र हि 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्यक्षिणि परमेश्वरस्य स्थितिमुक्त्वा अक्ष्णः परमेश्वरस्थानत्वादेव तस्यापि परमेश्वरवत् निर्लेपत्वं दृश्यत इति परमेश्वरस्थानत्वे निर्लेपत्वं

(१) एतद्रेखाङ्कितं वाक्यं क्वचिन्न दृश्यते ।

**नादपि सिद्धेः कथमस्मिन्नप्राप्तविषयाणां वेदान्तवाक्यानां प्रामाण्यम् । अथवा विधिपराण्येव वेदान्तवाक्यानि न ब्रह्मपराणि । उभयपरत्वे वाक्यभेदः स्यात् । अतो वेदान्तवाक्यानां न ब्रह्मबोधकत्वं युक्तमिति पूर्वः पक्षः । युक्तमिति सि-**

युक्तितयोच्यते । न च काचपटलादिभिः सलेपेऽक्षिण सर्पिरुदकानवस्थानमात्रेण सर्वथा निर्लेपत्वं सिद्ध्यति । किं त्वयुक्तेर्युक्तितयोपन्यासादक्षिण परमेश्वरावस्थानप्रतिपादने श्रुतेस्तात्पर्यातिशयमात्रं तेन सिद्ध्यति । एवं 'तस्मात्त्वेवोद्गातैतस्य हि गाता तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः' इत्यादीन्यत्र भूयांस्युदाहरणानि । एवं श्रुतावयुक्तेर्युक्तित्वोपन्यासदर्शनेन श्रुतिशैलीविदो महर्षयोऽपि तत्रतत्र तात्पर्याविष्करणार्थमयुक्तिमेव युक्तित्वेनोपन्यस्यन्ति । यथा तावदापस्तम्बः स्वसूत्रे-'अथाप्यस्य प्रजातिममृतमाम्नाय आह प्रजामनुप्रजायसे तदु ते मर्त्यामृत'मिति ( आप०ध०प्र०२-ख-२४सू० १ ) पुत्रोत्पादनविधिशेषं पितुः पुत्रपौत्रादिसन्तानरूपेणानुवृत्तिरेव नित्यत्वमित्यर्थवादं पितुः पुत्रादिभिरभेदरूपमसिद्धहेतुमवलम्ब्य प्रवृत्तं हेतूपपादनेन परिष्कर्तुमयुक्तिमेव युक्तित्वेनोदाजहार । 'अथापि स एवायं निरूढः पृथक् प्रत्यक्षेणोपलभ्यते । दृश्यते चापि सारूप्यं देहत्वमेवान्य'(आप०ध०प्र०२-ख०२४-सू०२ )दिति । इयांस्तु विशेषः । उदाहृता युक्तयस्सर्वथा युक्त्याभासा एव । 'सन्मूलमन्विच्छे'ति प्रकृतयुक्तिस्तु केवलतर्कमार्गेण दोषप्रसक्तिमत्यपि स्वानुग्राह्यप्रमाणभूतवेदान्तशरणत्वात् वनप्रविष्टसिंहन्यायेन बलवती न तद्दोषस्पृष्टा भवति । अनुमानेन जगत्कर्तृवत्तदनेकत्वादयोऽपि सिद्ध्येयुरिति हि दोषाः ते श्रुतिविरोधान्न प्रवर्तयिष्यन्ते । एवं च श्रुत्यनुग्राहकस्यानुमानस्य निर्दोषत्वात्तद्विषयं साङ्ख्याधिकरणे जगत्कर्तर्यनुमानप्रदर्शनम् । अतस्स्वतन्त्रानुमानस्य प्रामाण्याभावान्न तत्प्राप्तविषयतया वेदान्तानामप्रामाण्यं प्रसज्यते । न च कर्तृत्वानुकूलज्ञानचिकीर्षादिवत्सर्वेषां परमेश्वरगुणानामनुमानतः प्राप्तिरपि सम्भाव्यते येन तत्प्राप्तविषयतया सर्वेषां वेदान्तानां तस्मिन्नप्रामाण्यं प्रसज्यत इत्यस्वरसादाह--अथवेति । सर्वाणि वेदान्तवाक्यान्युपासनाविधिपराणि । न तेषां मध्ये किञ्चिदपि स्वरूपपरं वाक्यमस्ति । येषु वेदान्तवाक्येषु ब्रह्मगुणकीर्तनमात्रमस्ति नोपासनाविधिश्रवणं तेषामपि योग्योपासनाविधित्वस्य सम्भृत्यधिकरणे(ब्र०३-३-२३)वक्ष्यमाणत्वात् । अतः कस्यापि वेदान्तवाक्यस्य ब्रह्मणि तात्पर्यं न सम्भवति । उभयपरत्वे वाक्यभेदप्रसंगादित्यर्थः । ननु,परस्परापेक्षस्वतन्त्रार्थद्वयपरत्व एव वाक्यभेदः । इह तूपासनाविधीनामुपास्यत्वेन फलत्वेन चास्ति ब्रह्मस्वरूपसिद्ध्यपेक्षा । अतस्स्तावकतया यागविधिपरेणाप्यर्थवादेन तदपेक्षितस्वर्गस्येवोपासनाविध्येकवाक्यतापन्नेनाऽपि ब्रह्मस्वरूपसमर्पकावान्तरवाक्यजातेन तत्सिद्धिः स्यादित्याशङ्क्याह--अत इति । न तावदुपासनाविधीनामुपास्यत्वेन ब्रह्मस्वरूपसिद्ध्यपेक्षा । आरोपितविषयेणाप्युपासनोपपत्ते । नापि फलत्वेन । ततो निरतिशयानन्दरूपमात्रेण तत्सिद्धावपि स्वरूपतो गुणतो विभूतितश्च परिच्छेदराहित्यात्मना ब्रह्मत्वेन ब्रह्मलक्षणत्वाभिमतजगज्जन्मादिकारणत्वादिरूपेण च फलत्वाप्रयोजकेन तत्सिद्ध्यसम्भवात् । एतेन यावद्गुणविभूत्यादिकं मुक्तानामुपासनाफलत्वेनोपासनाविध्यन्वितैर्वाक्यैस्सिद्ध्यति तावता तेन युक्तं ब्रह्म 'निरञ्जनः परमं साम्यमुपैती'ति श्रुत्यन्य-

(१)'साधकत्वं' इति ख. पाठः । (२) 'देहत्वमिति स्वार्थिकस्त्व' इति हरदत्तः ।

**द्धान्तः। वेदान्तवाक्यानां तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधनसमर्थत्वात्। यदुक्तं 'कार्यार्थत्वाद्व्युत्पत्तेर्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्य'मिति तदसत्। 'पुत्रस्ते-**

थानुपपत्त्या सिद्ध्यति। तथाभूतब्रह्मभावे प्रजापतिविद्यायां मुक्तिफलत्वेनोक्तस्य सत्यसङ्कल्पत्वादेर्ब्रह्मसादृश्यरूपत्वानुपपत्तेरित्यपि शङ्का निरस्ता। एवमपि मुक्तेष्वसम्भावितेन जगद्व्यापारादिना रूपेण तत्सिद्ध्युपायालाभात् यत्किञ्चिच्छ्रुतिमूलार्थापत्तिसिद्धेऽर्थे कस्यापि श्रुतिवाक्यस्य प्रामाण्यासम्भवेन मुक्तगतसादृश्यप्रतियोगितोपयुक्तरूपविशिष्टेऽपि ब्रह्मणि वेदान्तानां प्रामाण्यासिद्धेश्च। न च फलभूतसादृश्यप्रतियोगित्वानुपयुक्ते रूपजाते ध्यानविध्यनपेक्षितत्वेनावान्तरतात्पर्यानास्पदेऽपि देवताधिकरणन्यायेन मानान्तरप्राप्तिविरोधराहित्याद्वेदान्ताः प्रमाणं भवेयुरिति वाच्यम्। 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्'। 'न सन्न चासच्छिव एव केवल'इत्यादिवाक्यानां 'नारायणपरं ब्रह्म''एको ह वै नारायण आसी'दित्यादिवाक्यान्तरविरोधसत्त्वेन विरोधराहित्यासिद्धेः। द्विविधवाक्यविरोधे सति तद्बलाबलावधारणस्य तात्पर्यलिङ्गाधीनत्वेन तात्पर्यराहित्ये तदवधारणासम्भवादिति भावः। सिद्धान्तप्रतिज्ञायां सौत्रहेतुं प्रदर्श्य प्रथमपूर्वपक्षमाद्यव्युत्पत्तिग्रहस्य कार्यवाचिपदयुक्तकार्य[1]श्रवणाधीनत्वनियमासिद्ध्या दूषयति--यदुक्तमित्यादिना। पुत्र इति। दृष्टचैत्रपुत्रजन्मा बालः तथाभूतेन वार्ताहारेण सह चैत्रसमीपं गतः 'चैत्र पुत्रस्ते जात'इति वाक्यमाकर्णितवतः चैत्रस्य मुखविकासेन हर्षमनुमाय हर्षकारणं पुत्रजन्मज्ञानं कल्पयित्वा तज्जननसामर्थ्यं वाक्यस्य कल्पयतीत्येवं सिद्धार्थेऽपि प्रथमव्युत्पत्तिग्रहो दृश्यते। प्रियान्तरज्ञानस्यापि हर्षकारणत्व[2]सम्भवात्पुत्रजन्मज्ञानमेव तत्कारणमिति निश्चेतुमशक्यमिति चेन्न। स्वोपलब्धपुत्रजन्मन इव प्रियान्तरस्यानुपस्थितत्वात्। सुखप्रसवसुलग्नजन्मादेः प्रियान्तरस्योपस्थितिसम्भवेऽपि तस्य पुत्रजन्मघटितशरीरतया लाघवेन पुत्रजन्मज्ञानस्यैव हर्षकारणत्वेन कल्पनौचित्यात्। तथापि हर्षमात्रं व्यभिचारि पुत्रजन्मज्ञानानुमितौ न लिङ्गमिति चेन्न। अनुपस्थितस्य गुरुशरीरस्य चात्र मुखविकासानुमितेश्च हर्षे व्यभिचारकारणत्वकल्पनायोगात्। प्रियान्तरज्ञानाजन्यत्वनिश्चयसम्भवेन तद्विशेषितस्य हर्षस्याव्यभिचारित्वात् लिङ्गाभासजन्यज्ञानस्यापि विषयाबाधेन प्रमात्वसम्भवाच्च। सूत्रसञ्चाराधिष्ठितदारुपुत्रकस्य 'घटमानये'ति सूत्रधारवाक्यप्रयोगानन्तरं घटानयनक्रियादर्शने सति या क्रिया कृतिजन्या सा कृतिज्ञानसाध्या तज्ज्ञानं वाक्यजन्यमित्यनुमितिप्रवाहस्य भ्रमत्वेऽपि तद्धेतुकशक्तिग्रहस्य विषयाबाधेन प्रमात्वदर्शनादिति भावः। स्यादेतत्। यथा कार्यव्युत्पत्तिपक्षे बालस्य स्तन्यपानादिप्रवृत्तौ कार्यताज्ञानं कारणमवगच्छन्प्रयोज्यप्रवृत्त्या तस्य कार्यताज्ञानं कल्पयति तथा पुत्रजन्मज्ञानं हर्षकारणमिति जातः शिशुश्चैत्रस्य पुत्र इत्यपि प्रागवगच्छन् चैत्रस्य हर्षेण पुत्रजन्मज्ञानं कल्पयति उत यथा प्रयोज्यप्रवृत्त्यनुमितकार्यताज्ञाने 'गामानये'तिवृद्धवाक्यस्य कारणत्वं प्रागनवगच्छन्नपि तस्य तत्कारणत्वं कल्पयति एवं पूर्वं तथानुपगच्छन्नपि मुखविकासानुमिते हर्षे पुत्रजन्मज्ञानस्य कारणत्वं कल्पयति। नाद्यः। स्तनन्धयस्य स्तनपानादिषु हर्षकारणत्वावगतिसम्भवेऽपि पुत्रजन्महर्षकारणमिदानीं जातः शिशुश्चैत्रस्य पुत्र इति कस्यचिदुपदेशमन्तरेण स्वयमेव तथावगतेरस-

(१) युक्तवाक्यश्रवणा' इति घ. पाठः। (२) 'हर्षकारणत्व' इति घ. पाठः।

जात'इत्यादिषु सिद्धार्थेष्वपि वाक्येषु सम्बन्धग्रहणदर्शनात् । वृद्धव्यवहारेऽपि व्युत्पित्सुः स्वस्य प्रवृत्तिहेतुभूतायाः कार्यावगतेः पदार्थज्ञानपूर्वकत्वावगमात्

म्भवात् । उपदेशेन तथावगतिसमर्थने 'पुत्रस्ते जात'इत्यत्र व्युत्पत्तिग्रहस्य प्राथमिकत्वासिद्धेः। न द्वितीयः । कार्यताज्ञाने गामानयेत्युत्तमवृद्धवाक्यस्येव हर्षे पुत्रजन्मज्ञानस्यान्वयव्यतिरेकवत्त्वानुपलम्भात् बालगतपुत्रजन्मज्ञानस्य चैत्रहर्षाकारणत्वात् चैत्रपुत्रजन्मज्ञानस्य प्रागक्लृप्तत्वात् । न च बालः स्वस्य मनस्यनुवर्तमानमेव शिशुजन्मज्ञानं चैत्रेऽपि हर्षकारणत्वेन कल्पयतीति वाच्यम् । शिशुजन्मज्ञानचैत्रहर्षानुमानयोर्मध्ये बालस्य वस्त्वन्तरविषयज्ञानानामपि सत्त्वेन तस्यैव तत्कारणत्वेन कल्पने विशेषहेत्वभावात् चैत्रे क्लृप्तस्य 'पुत्रस्ते जात'इति वर्णावलिविषयज्ञानस्य वार्ताहारदर्शनस्य च हर्षकारणत्वसम्भवे तत्कारणत्वेन ज्ञानान्तरकल्पनानवकाशाच्च । बालः स्वस्य ताभ्यां हर्षो न जात इति चैत्रे हि तयोस्तत्कारणत्वं न कल्पयतीति चेत्तर्हि बालस्य शिशुजन्मज्ञानेनापि हर्षो न जात इति तदपि तत्कारणत्वेन न कल्पयेत् । शिशुजन्मज्ञाने चैत्रस्य हर्षहेतुसम्बन्धविशेषकल्पने क्लृप्तयोस्तयोरेव तत्कल्प्यताम् । 'धर्मिकल्पनातो वरं धर्मकल्पने'ति न्यायात् । न च शिशुपदाङ्कितं पटं गृहीत्वागच्छन् वार्ताहारस्तज्जननज्ञापनाय गच्छतीत्यवगमात् शिशुजन्मज्ञानं भविष्यत्त्वेन प्रागेव क्लृप्तमिति वाच्यम् । शिशुपदाङ्कितपटनयनं शिशुजन्मज्ञापनार्थमिति प्राचीनमाप्तोपदेशमन्तरेणावगन्तुमशक्यतया प्राचीनतदुपदेशापेक्षावश्यम्भावेन 'पुत्रस्ते जात'इत्यत्र व्युत्पत्तिग्रहस्य प्राथमिकत्वासिद्धेः । तस्मादाद्यव्युत्पत्तिग्रहस्य वृद्धव्यवहारैकायत्तत्वात् तदपेक्षितप्रवृत्तिकैरुपदेशैः पुत्रजन्म हर्षकारणमिदानीं जातशिशुश्चैत्रस्य पुत्रः तत्पदाङ्कितपटनयनं तज्जन्मज्ञापनार्थमित्यवगच्छन्नेव 'पुत्रस्ते जात'इति वाक्यस्य स्वानभ्यस्तभाषान्तररूपस्य पुत्रजन्मज्ञाने सामर्थ्यं कल्पयति न तु प्राचीनैरुपदेशैस्तावदवगन्तुमसमर्थोऽत्यन्तबाल इति । कार्यविषयाद्यव्युत्पत्त्यनुरोधात् । तत्रापि पुत्रजन्मनिमित्तस्नानाभ्युदयजातकर्मादिकार्यतावाचिपदान्तराध्याहारो युक्तः । तद्वाक्यश्रवणसमनन्तरभाविस्नानादिप्रवृत्तिसंवादाच्चेति चेत् अत्राप्युक्तमेवोत्तरं लिङ्गाभासजन्यस्यापि ज्ञानस्य विषयाबाधेन प्रमात्वं सम्भवतीति । तथा हि—धर्मिकल्पनागौरवमनालोच्यैव कश्चिद्बालो वार्ताहारदर्शनतद्धस्तपदाङ्कितपटालोकनतदीयवर्णावलीश्रवणेभ्योऽन्यदेव किञ्चिज्ज्ञानं कारणमिति मन्यमानस्तदन्विच्छन्दैवात्स्वदृष्टशिशुजन्मज्ञानमेव तत्कारणं कल्पयित्वा वाक्यस्य तज्जननसामर्थ्यं कल्पयेत् । एवं कल्पनायां च काकतालीयसंवादेन ततस्सिद्धार्थे शब्दसामर्थ्यकल्पनारूपस्य ज्ञानस्य प्रमात्वमनिवार्यम् । ननु, 'चैत्र पुत्रस्ते जात' इति वाक्यस्य न विशिष्य चैत्रपुत्रजन्मज्ञानजनने सामर्थ्यम् । न च बालेन चैत्रस्य स्वदृष्टजन्मनः शिशोश्च प्रागनवगतजन्यजनकभावसम्बन्धेन चैत्रे विशिष्य तत्पुत्रत्वाकारेण तज्जन्यज्ञानं कल्पयितुं शक्यम् । येन वाक्येन तज्जननसामर्थ्यं कल्प्यत इति सा कल्पना प्रमा स्यात् । किं तु बालेन चैत्रपुत्रस्य यद्धर्मप्रकारेण गृहीतस्य जन्म दृष्टं तद्धर्मावच्छिन्नतज्जन्यज्ञानमेव कल्पयितुं शक्यम् । तथाभूतज्ञानजनने शब्दसामर्थ्यकल्पना त्वप्रमैव स्यादिति चेन्न । प्रकारविशेषौदासीन्येन यस्य जन्म मया दृष्टं तज्जन्मज्ञानं चैत्रस्य हर्षकारणमासीदिति कल्पयित्वा वाक्ये तज्जननसामर्थ्यकल्पनायाः प्रमात्वसम्भवात् । यद्वा । एतदस्वरसादाह—वृद्धेति । यथा

प्रयोज्यवृद्धस्य प्रयोजकवाक्यं पदार्थज्ञानमुत्पादयतीति निश्चिनोति । ततस्सिद्धार्थेष्वपि शब्दस्याभिधाननिश्चयः । अथवा किमिह वृद्धव्यवहारेण । व्युत्पत्तेः प्र-

प्रवृत्तिः कार्यावगतिपूर्विका तथा कार्यावगतिरपि प्रवृत्तिविषयशुद्धपदार्थगोचरज्ञानपूर्विकेति नियमस्य दृष्टत्वात्प्रयोज्यस्य प्रवृत्त्या कार्यावगतेरिव कार्यावगत्या तदन्वितशुद्धपदार्थ-ज्ञानस्याप्यनुमितिरनिवार्या । ततश्च तत्रोत्तमवृद्धवाक्यादृते नान्यत्कारणमस्तीत्याद्यव्युत्पत्ति-ग्रहसमय एव शुद्धे गवादिपदार्थे शब्दसामर्थ्यग्रहणसिद्धिः । ननु, प्रवृत्त्यनुमितकार्यताज्ञान-एव शब्दस्य सामर्थ्यं कल्पयितुं शक्यम्। अर्थापत्तेस्साक्षादुपपादकविषयत्वादिति चेत्तर्ह्युक्तहे-तुना प्रयोज्यचेष्टानुमितप्रवृत्तिजनन एव तस्य सामर्थ्यं कल्प्येत । ननु, कार्यताज्ञानरूपक्लृप्त-कारणाभावे प्रवृत्तिर्न सम्भवतीति प्रवृत्त्यनुमितकार्यताज्ञानजनने तस्य सामर्थ्यं कल्प्यमिति चेत्तर्हि कार्यताज्ञानमपि शुद्धपदार्थगोचरज्ञानरूपक्लृप्तकारणाभावे न संभवतीति तस्य शुद्धपदा-र्थगोचरज्ञानजननसामर्थ्यकल्पनमपि भवन्न निवारयितुं शक्यम् । किं च यदि साक्षात्प्रवृत्ति-जनकज्ञाने शब्दस्य सामर्थ्यं कल्पनीयं तर्हि ममेदं कार्यमिति ज्ञान एव तस्य सामर्थ्यं क-ल्प्येत । तस्यैव 'गामानये'ति वाक्यजन्यमिदमंशरहितगवानयनकार्यतामात्रविषयज्ञानानन्तर-भाविनः साक्षात्प्रवर्तकत्वात् । तस्माद्यद्यपि प्रथमं बालस्य कार्य एव व्युत्पत्तिग्रहो भवेत् तथापि पश्चादावापोद्वापाभ्यां पदविशेषाणां शक्तिग्रहसमये कार्यस्य तद्वाचिपदलभ्यत्वाप्रति-सन्धानात् कार्यांशपरित्यागेन गवादिपदानां स्वस्वार्थमात्रे शक्तिनिष्कर्षो भवेत् । प्रथमप्रवृ-त्तस्यापि शब्दानां कार्ये व्युत्पत्तिरिति ज्ञानस्य कार्यमन्यलभ्यमिति प्रतिसन्धानाभावेन जा-तस्य तत्प्रतिसन्धानानन्तरं बाधोपपत्तेः । न चोपजीव्यबाधो दोषः । 'गामानये'ति समुदाय-स्य गवानयनकार्यताज्ञाने सामर्थ्यग्रहणस्य पश्चादावापोद्वापकृतगवादिपदशक्तिग्रहोपजीव्य-त्वेऽपि सर्वशब्दानां कार्यताज्ञाने सामर्थ्यमिति ग्रहणस्य तदनुपजीव्यत्वात् । यथाकथञ्चि-त्स्वरूपेण तस्य तदुपजीव्यत्वेऽपि (तत्वज्ञानेन) तदनुपजीव्यस्य तत्प्रामाण्यस्य तेनोपमर्द-नसम्भवाच्च । देहात्मभ्रमस्य रागादिदोषसम्पादनेन सकलकर्मानुष्ठानहेतोरदृष्टशरीराद्यार्जन-द्वारा तत्वज्ञानोपजीव्यत्वेऽपि तत्वज्ञानेन तदनुपजीव्यस्य तत्प्रामाण्यस्योपमर्ददर्शनात् । एवं यदा प्रथमं सर्वशब्दानां कार्ये व्युत्पत्तिग्रहेऽपि पश्चादन्यलभ्यत्वप्रतिसन्धानेन कार्यांश-परित्यागात्सिद्धार्थेऽपि शब्दानां व्युत्पत्तिसिद्धिः । तदा किमु वक्तव्यं प्रथममेव सिद्धार्थेऽपि व्युत्पत्तिग्रहे सतीत्याशयः । इत्थं द्विविधवक्तृश्रोतृव्यवहारपर्यालोचनया व्युत्पत्तिग्रहस्य सि-द्धार्थविषयत्वमुपपादितम् । इदानीं मातापित्रादिकर्तृकशब्दार्थसम्बन्धव्युत्पादनपर्यालोचनया तस्य तद्विषयत्वमुपपादयितुमुपक्रमते—अथवेति । अन्यार्थप्रवृत्ताद्वक्तृश्रोतृव्यवहाराद्व्युत्पि-त्सोर्व्युत्पत्तिग्रहणमानुषङ्गिकं जायते । आनुषङ्गिकतया भवत्फलं नियमेन नात्यन्तं यथाव-द्भवतीति ततः कदाचित्कश्चिच्छब्दार्थसम्बन्धं कार्यविषयं सिद्धार्थसाधारणं वा प्रतिपद्यमानो विपर्यस्यतीत्यपि वक्तुं शक्यम् । मातापित्रादिकर्तृकाद्व्युत्पादनादनादिपरंपराप्रसिद्धाद्व्युत्पत्ति-ग्रहणं तदर्थादेव जायते। ततो भवत्फलं कदापि न यथावद्भवति। ततो व्युत्पाद्यमानो विपर्य-स्यतीति वक्तुमशक्यमित्यनन्यथासिद्धेन व्युत्पादनेन सिद्धार्थे व्युत्पत्तिस्सुदृढा भवतीत्यभिप्रेत्य

(१) एतद्रेखाङ्कितं पदं ख. पुस्तक एव दृश्यते ।

कारान्तरेणापि सिद्धत्वात् । तथा हि–बाला मात्रादिभिश्शिशुपशुप्रभृतीनर्थान-किमिह वृद्धव्यवहारेणे'ति वृद्धव्यवहारेऽनादरणमाविष्कृतम् । मातापित्रादिकर्तृकव्युत्पादनप्रकारं दर्शयति–तथा हीति । मातापित्रादयो हि बालान् शब्दार्थसम्बन्धं जिग्राहयिषवः शिशुपशुप्रभृतीनर्थानङ्गुल्यादिभिर्निर्दिश्य तत्तद्वाचकशब्दान्प्रयुञ्जते । ते बालास्तदर्थाभिमुखाङ्गुलिनिर्देशसहितैर्वाचकशब्दप्रयोगैर्बहुशश्शिक्षिताश्शब्दार्थसम्बन्धं निश्चिन्वन्तीत्येवं प्रायः सिद्धार्थ एव व्युत्पत्तिग्रहः सर्वेषामनुभवसिद्ध इत्यर्थः । अत्रेदं विचार्यते । अङ्गुलिनिर्देशसहितवाचकशब्दप्रयोगदर्शनमात्रेण कथं बालोऽस्य शब्दस्यायमर्थ इति निश्चिनुयात् । न ह्यर्थविशेषाभिमुखाङ्गुलिनिर्देशसहितशब्दविशेषप्रयोगस्तयोर्वाच्यवाचकभावप्रत्यायनार्थ इति बालस्य प्राग्व्युत्पत्तिग्रहोऽस्ति । न वा तथा नियमोऽस्ति । बहुजनसमाजे विशिष्य चैत्रमनवबुध्यमानं तमन्विच्छन्तं प्रति तदभिमुखाङ्गुलिनिर्देशसहितचैत्रशब्दप्रयोगस्य वाच्यवाचकभावप्रत्यायनार्थत्वाभावात् । स्यादेतत् । तत्तदर्थानङ्गुल्या निर्दिश्य तत्तद्वाचकशब्देषु बहुशः प्रयुक्तेषु बालानां तत्तदर्थाभिमुखाङ्गुलिनिर्देशशब्दविशेषप्रयोगसाहचर्यदर्शनजनितवासनाबाहुल्यात् तत्तच्छब्दश्रवणानन्तरं तत्तदर्थविषयस्वबुद्ध्युदयेन तत्रतत्रार्थे तस्यतस्य शब्दस्य वाचकत्वरूपसम्बन्धनिश्चयो भवेत् । सम्बन्धं विना शब्दार्थबोधासम्भवात् सम्बन्धान्तराभावाच्च । भाष्यमप्युक्तार्थपरम् । 'तदर्थं बहुशश्शिक्षिता'इत्यादिभाष्यमित्थं योजनीयम् । बहुशो यावदङ्गुलिनिर्देशशब्दप्रयोगसाहचर्यजनितवासनाभूयस्त्वात् शब्दश्रवणमात्रेणार्थं स्मर्तुं बालः क्षमो भवेत् तावत्पर्यन्तमङ्गुलिनिर्देशसहितशब्दप्रयोगावर्तनेन शिक्षितास्तैस्तैः शब्दैरुत्पादिततत्तत्ः तेषु तेष्वर्थेषु व्युत्पद्यन्ते । शब्दैरर्थबोधस्य सम्बन्धमूलत्वात् सम्बन्धान्तराभावाच्च अर्थेषु शब्दानां वाचकत्वमेव सम्बन्ध इति निश्चयं लभन्त इति । नैतद्युक्तम् । यदि तत्तदर्थविषयाङ्गुलिनिर्देशशब्दप्रयोगसाहचर्यरूपसम्बन्धान्तराधीनो बालस्य शब्दार्थप्रत्ययः। किमर्थं वाचकत्वरूपसम्बन्धान्तरकल्पना । न हि चैत्रमैत्रादिषु साहचर्यसम्बन्धादन्यतरदर्शनेनान्यतरस्मरणं जायमानं स्वोपपादकतया सम्बन्धान्तरकल्पनामपेक्षत इति । अत्रायं भाष्यकारस्याभिप्रायः । दृश्यते तावन्मात्रादिकृतार्थविशेषाभिमुखाङ्गुलिनिर्देशसहितशब्दविशेषप्रयोगभूयोदर्शनवन्तो बालाः तयोर्वाच्यवाचकभावं प्रतिपद्य शब्दश्रवणे तदर्थं स्मृत्वा तदनुसारेण चेष्टन्ते । अर्थदर्शने तद्वाचकशब्दं स्मृत्वा प्रयुञ्जते चेति । तेन तद्दर्शनादित्थमवधारणं जायते । शब्दार्थसम्बन्धानभिज्ञान्प्रत्यङ्गुलिनिर्देशादिचेष्टाविशेषसहितशब्दप्रयोगो वाच्यवाचकभावसम्बन्धप्रत्यायनार्थः । अत एव तेन बालाः प्रतिलब्धवाच्यवाचकभावज्ञानास्तदनुकूलं व्यवहरन्तीत्येवमवधारणवन्त एव जन्मान्तरे शैशवं प्रतिपद्य मात्रादिभिर्व्युत्पाद्यन्त इति तेषां पूर्वजन्मसंस्कारानुवृत्त्या मात्रादिकर्तृकार्थविशेषाभिमुखशब्दविशेषप्रयोगस्य शब्दार्थसम्बन्धप्रत्यायनार्थत्वस्मरणं भवति । ततो वाच्यवाचकभावरूपतत्सम्बन्धनिश्चयः । तदनन्तरमेव शब्दश्रवणादर्थप्रत्ययो न तु ततः पूर्वम् । जन्मान्तरसंस्काराणां स्तन्यपानप्रवृत्तेरन्यत्राप्यनेकत्रोपकारकत्वं देवताधिकरणे 'हिंस्राहिंस्रे मृदुक्रूरे'इत्यादिवचनोदाहरणेन स्फुटीकरिष्यते । एवं जन्मान्तरसंस्कारबलमभिप्रेत्यैवार्थविषयचेष्टाविशेषसहितशब्दप्रयोगस्य संज्ञासंज्ञिभावप्रत्यायकत्वमुक्तं महाभाष्ये । 'अगोज्ञाय कश्चिद्गां सक्थिनि कर्णे वा

ङ्गुल्यादिना निर्दिश्य तत्तच्छब्दांस्तेषु तेष्वर्थेषु प्रयुञ्जानैर्बहुशश्शिक्षितास्तेषु तेष्वर्थेषु व्युत्पद्यन्ते। काव्यनाटकानभिज्ञाः पुरुषास्तदभिज्ञपुरुषसमीपमेत्य पदविच्छेदं कृत्वा अस्य शब्दस्यायमर्थ इति सर्वशब्दानामर्थमवगच्छन्ति । अतः सिद्धार्थेऽपि व्युत्पत्तिसम्भवात् तत्र शब्दस्य प्रामाण्यमस्ति । ततो वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यम् । यदुक्तं 'जगतः कार्यविशेषत्वात् कर्तृविशेषस्य ब्रह्मणोऽनुमानादपि सिद्धि'रिति तन्न सम्भवति। विचित्ररचनस्य रथप्रासादादेरनेककर्तृकत्वदर्शनादनुमानेनास्य जगत एककर्तृकत्वसाधनायोगात् । व्याप्तिबलात् कर्मवश्य-

---

गृहीत्वोपदिशत्ययं गौरिति । न चास्मायाचष्टे गौरितीयमस्य संज्ञेति भवति चास्य सम्प्रत्यय इति । एवं च भाष्यस्यायमर्थः । बहुशः शिक्षिताः शिक्षां वाच्यवाचकभावसम्बन्धज्ञानरूपविद्योपादानं पौनःपुन्येन प्रापितास्तेषु तेष्वर्थेषु व्युत्पद्यन्ते व्युत्पत्तिं शब्दानां वाचकत्वनिश्चयं दृढसंस्काराधानेन शब्दश्रवणे सत्यर्थस्मरणस्य अर्थदर्शने सति शब्दस्मरणस्य चोपकारकं लभन्ते । यथा बहुभिरुपदेशैः शास्त्रार्थज्ञानपौनःपुन्यं प्रापिताः शास्त्रार्थनिश्चिताः शास्त्रार्थनिश्चयं दृढसंस्काराधानेन कालान्तरव्यवहारोपयोगिनं लभन्त इति । एवं क्रियाकारकपदानां मात्रादिकृतव्युत्पादनप्रक्रिययाऽर्थनिश्चये सति बालाः परप्रयुक्तैर्वाक्यैर्वाक्यार्थमवगच्छन्ति । स्वयं च क्रमेण परप्रत्यायनार्थं वाक्यं प्रयुञ्जते। एवं चानया प्रक्रियया व्युत्पत्तिग्रहणे पदार्थप्रतिपत्तिपूर्विका वाक्यार्थप्रतिपत्तिः । न तु वृद्धव्यवहाराद्व्युत्पत्तिग्रहण इव वाक्यार्थप्रतिपत्तिपूर्विका पदार्थप्रतिपत्तिः । अत्रेयं शङ्कोन्मिषति। अनया प्रक्रियया व्युत्पत्तिग्रहकाले शब्दानां पदार्थमात्रे सामर्थ्यग्रहणे सत्यन्वयांशे तेषां सामर्थ्यस्यागृहीतत्वाद्वाक्यान्तर्गतसर्वपदशक्तिग्रहेऽपि पदार्थानां परस्परान्वयविषयिणी वाक्यार्थप्रतिपत्तिर्न स्यात् । वाक्यस्यान्वये सामर्थ्यग्रहणेऽपि तत्प्रतिपादकत्वेन पदान्यप्यगृहीतपदार्थसामर्थ्यान्येव पदार्थान्प्रतिपादयेयुरितीमामाशङ्कामुदाहरणमुखेनापाकरोति—काव्येति । अयं भावः। कतिपयकाव्यश्लोकपाठेन क्रियाकारकतद्विशेषणपदयोजनाप्रकाराभिज्ञाः कङ्कटिकमुञ्जकेशाद्यप्रसिद्धपदप्रायाणां काव्यश्लोकानामर्थमजानानास्तदभिज्ञपुरुषोपदेशेन पदच्छेदपूर्वकं पदार्थानवगच्छन्ति । ततः स्वयमेव वाक्यार्थमवगच्छन्ति । न तत्र तेषां काव्यश्लोकानां तदन्तर्गतपदार्थान्वयरूपे वाक्यार्थे सामर्थ्यग्रहणमस्ति । वृद्धव्यवहाराधीनकार्यान्वितव्युत्पत्तिग्रहणाभ्युपगमेऽप्यन्वयसामान्य एव सामर्थ्यग्रहणं लभ्यते । नान्वयविशेषे। वृद्धव्यवहारात्कार्यान्विते गवादिपदानां शक्तिग्रहणेनान्वयसामान्ये शब्दसामर्थ्यग्रहणलाभे सत्याकाङ्क्षादिसहकृताद्वाक्याद्विशेषो लभ्यत इति चेत् । एवं तर्हि शब्दानां पदार्थमात्रे सामर्थ्यग्रहणे सत्युक्तसहकारिविशिष्टाद्वाक्यात्तदन्तर्गतपदार्थान्वयो लभ्यत इत्येवास्तु । कृतं वृद्धव्यवहाराधीनेनान्वयसामान्ये शक्तिग्रहणेनेति । एवं सिद्धार्थे व्युत्पत्तिग्रहव्युत्पादनेन सिद्धं प्रथमपूर्वपक्षनिराकरणमुपसंहरति—अत इत्यादिना । द्वितीयपूर्वपक्षमनूद्य पूर्वाधिकरणोक्तजगत्कर्त्रनुमानदूषणोद्घाटनेन निराकरोति—यदुक्तमित्यादिना । तर्हि पूर्वाधिकरण एव निराकृतस्य जगत्कर्त्रनुमानस्यात्रापि तेनैव दूषणेन निराक्रियमाणस्य पुनरुत्थाने किं बीजमित्याकाङ्क्षायां साङ्ख्याधिकरणपर्यालोचनया तदनुमा-

---

(१) 'कार्यस्यान्वये' इति ङ. पाठः ।

**त्वादीनां कर्तरि प्राप्तेश्च पूर्वमुक्तत्वात्। अतो नानुमानगम्यं ब्रह्म भवति। किं च श्रुत्यानुगुण्यादनुमानमपि ब्रह्मणि प्रमाणं भवतु नाम। यत्र वाक्यानां तात्पर्यं तत्र हि तेषां प्रामाण्यं नं प्रत्यक्षादीनामिव सर्वत्र। वेदान्तवाक्यानां ब्रह्मणि तात्पर्यनिर्णायकानि कानि लिङ्गानीति चेत् उपक्रमादीनि। तथा पठन्ति–'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय'**

---

नप्रामाण्यं सिद्धान्तेऽप्यवश्यमुपगन्तव्यमित्येतद्बीजमिति सूचयन्नेव तत्प्रामाण्याभ्युपगमस्तस्य वेदान्तानुगुण्यकृतः न स्वातन्त्र्यकृतः वेदान्तानुगुण्यकृततत्प्रामाण्याभ्युपगमश्च न वेदान्तप्रामाण्यविघातक इत्यभिप्रेत्याह–किं चेति। अथोपासनाविधिपराणां वेदान्तानां ब्रह्मण्यपि तात्पर्ये वाक्यभेदप्रसङ्ग इति तृतीयपूर्वपक्षो निराकरणार्थमुद्भावनीयः। तदुद्भावनोपयोगितया तेषामुभयत्रापि तात्पर्यं व्यवस्थापयति–यत्र वाक्यानामित्यादिना 'तज्ज्ञानविधिपरा अपि ज्ञायन्त' इत्यन्तेन। अत्रेयं शङ्का समुन्मिषति। नैवं पूर्वपक्ष उपपद्यते। वेदान्तानां वाक्यभेदप्रसङ्गेनोभयत्र तात्पर्यासम्भवेऽपि चक्षुषो वस्तुद्वयसन्निकर्षवन्मयूखवत्त्वेन तदुभयविषयप्रत्यक्षप्रमाजनकत्ववत् परामर्शस्य साध्यद्वयव्याप्यलिङ्गद्वयविषयत्वेन तदुभयानुमितिप्रमाजनकत्ववच्च वेदान्तवाक्यानां ब्रह्मतदुपासनाविधिशक्तपदद्वयवत्त्वे-[1]न तदुभयविषयशब्दप्रमाजनकत्वस्योपपन्नतया तेषां ब्रह्मण्यपि प्रामाण्यसम्भवात्। यदि तात्पर्याभावेऽप्युभयविषयप्रमाजनकत्वमात्रेण वाक्यभेदः स्यात् तदा शब्दशक्तिप्रयुक्तस्योभयविषयप्रमाजनकत्वस्यानिवार्यत्वाद्वाक्यभेदो दोष एव न भवेत्। सम्भवति ह्येकवाक्यत्वे तस्य दोषतेति। तत्र यथा प्रत्यक्षादिप्रामाण्यं यावत्सन्निकृष्टादिविषयं न तथा शब्दप्रामाण्यं यावद्व्यक्तिगोचरविषयम्। किं तु तात्पर्यनियन्त्रितं सत्तद्गोचरे व्यवस्थितम्। अत एव नाना- यत्र तात्पर्यं तत्रैव प्रमा जायते। श्लेषकाव्यादिष्वनेकत्र तात्पर्ये तावत्यर्थे प्रमा जायते। तथा चोपासनाविधिपराणां वेदान्तानां ब्रह्मणि तात्पर्याभावाभ्युपगमे तत्र प्रामाण्यं न प्रसज्यत इत्यवाक्यभेदोपपत्तौ वाक्यभेदावहमुभयत्र तात्पर्यं नाभ्युपगन्तव्यमिति परिहारप्रदर्शनेन पूर्वपक्षोपपादनार्थं सर्वत्रेत्यन्तम्। यद्यपि 'श्वेतो धावती'त्यादिलौकिकवाक्यात् तात्पर्याविषयेऽपि [2]तात्पर्यज्ञानस्याकारणत्वात्तात्पर्यभ्रमाद्वाक्यज्ञानं जायते। तज्ज्ञानं क्वचिद्विषयाबाधेन संवादेन च प्रमापि भवतीत्यनुभवसिद्धम्। तथापि लोके तात्पर्याधीनं प्रामाण्यमिति प्रायिकोऽर्थः। वेदे तु नियम एव। वेदवाक्यादनेकविधार्थप्रतीतावर्थान्तरे बाधकन्यायोपन्यासपुरस्सरं खलु क्वचिदर्थे तात्पर्यं सर्वत्र व्यवस्थाप्यते। तथा च वेदवाक्याश्यायपरामर्शदोषेण जातं ज्ञानं भ्रमरूपमेव पर्यवस्यति। मन्त्रेषु त्वनेकत्र विनियुक्तेषु विनियोजकप्रमाणावगतमनेकत्र तात्पर्यमस्तीति। तत्र क्वचिदप्यर्थे ज्ञानं भ्रमरूपं न भवति। मन्त्रप्रकाश्येषु द्रव्यदेवतादिषु यानि विशेषणानि बलवद्बाधकबलात् यत्र न समवयन्ति तत्र तेषामभिधानमदृष्टार्थमिति विशेषः। एवमुद्भावनीयपूर्वपक्षसम्भवं प्रदर्श्य तदुद्भावनाय वेदान्तानां ब्रह्मणि तात्पर्यं तत्प्रमाणप्रश्नमुखेनोपपादयितुमुपक्रमते–वेदान्तवाक्यानामिति। ननूपक्रमादिभिस्तात्पर्यनिर्णयो नास्मिन्नधिकरणे क्रियमाणो दृश्यते उपक्रमादि-

---

(१)'शक्तिद्वयवत्त्वेन' इति ख.पाठः। (२)'तात्पर्येऽपि ज्ञानस्याधिकरणत्वात्तात्पर्यभ्रमाद्वा ज्ञानं जायते।' इति च.ङ.पाठः।

इति । तदिह उपक्रमादिभिर्लिङ्गैर्वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निश्चीयते । य उपक्रमादिभिस्तात्पर्यनिर्णयस्तदेव वेदान्तवाक्यानां श्रवणमित्युच्यते । तथा ह्युच्यते–'अज्ञानप्रभवं दुःखं ज्ञानं तस्य निवर्तकम् । सर्ववेदान्तवाक्यानां श्रवणं तत्प्रवर्तकम् । श्रवणं नाम वाक्यानां वैदिकानां परात्परे । उपक्रमादिभिर्लिङ्गैश्शिवे तात्पर्यनिर्णयः ।' इति । उपक्रमोपसंहारावेकं लिङ्गं वेदान्तशब्दानां ब्रह्मणि शिवे

---

लिङ्गावगमिततात्पर्येणान्वयस्य सिद्धवद्धेतूकरणादित्याशङ्क्याह–तदिहेति । यस्मादस्मिन्नधिकरणे समन्वयस्य सिद्धवद्धेतूकरणं तत्प्रसाधनं विनानुपपन्नम् । तस्मादिह शास्त्रे ईक्षत्यधिकरणमारभ्य प्रत्यधिकरणं स्थालीपुलाकन्यायतः कस्यचिद्वाक्यस्योदाहरणे सर्वेषां वेदान्तानामुपक्रमादिलिङ्गैर्ब्रह्मणि तात्पर्यं निर्णीयत इत्यर्थः। प्रसङ्गादयमेव तात्पर्यनिर्णयः श्रवणं नाम यस्य रागतः प्राप्तिः प्राक्प्रसाधितेत्याह-य इति। तत्प्रवर्तकमिति । तस्य ज्ञानस्य जनकमित्यर्थः। ननूपक्रमादयः सम्मतिश्लोके सप्त परिगणिताः कथं षड्विधं तात्पर्यलिङ्गमिति प्रसिद्धिः तत्राह– उपक्रमेति । उपक्रमोपसंहारावेकरूपावेकं तात्पर्यलिङ्गम् । एकार्थपर्यवसायिन्यनेकावान्तरवाक्यघटिते महावाक्ये तद्विषयौ प्रथमचरमावान्तरवाक्यभागावुपक्रमोपसंहारौ । तयोरेकेन प्रकारेण तत्प्रतिपादकत्वमैकरूप्यम् । यत्र नैवंविधमैकरूप्यं तत्रासञ्जातविरोधित्वेनोपक्रमो बलीयानुपसंहारादिति यथोपक्रममुपसंहारो नेतव्यः । किं तत्तात्पर्यं यस्योपक्रमादिभिर्निर्णयः कार्य इत्याकाङ्क्षायामाह--तात्पर्यमिति । परशब्द इष्टवाची महाभाष्ये 'विप्रतिषेधे परं कार्य'मिति(पा० १-८-२-सू.)सूत्रे तस्य तद्वाचित्वोक्तेः'ततस्तदालोकनतत्पराणा'मित्यादिप्रयोगदर्शनाच्च तदर्थरूपं वस्तु परमिष्टमस्येति तत्परं वाक्यम् । वाक्यस्येच्छाभावेऽपि तद्वक्तुरर्थविवक्षारूपेच्छा तदीयत्वेनोपचर्यते । यद्यपि वेदे स्वतन्त्रवक्तुरिच्छा न सम्भवति । तथापि कल्पादौ सकलवेदप्रवर्तकस्य शब्दब्रह्माधिष्ठातुः परमेश्वरस्य प्रत्येकमृग्वेदाद्यभिमानिनां देवताविशेषाणां वेदव्याख्यातॄणां मीमांसकयाज्ञिकानां च तत्तदर्थविवक्षारूपेच्छा वेदेऽपि प्रवाहानादिन्यायसम्प्रदायसिद्धार्थविषयिणी सम्भवत्येव । यथोक्तं ग्रहैकत्वाधिकरणवार्तिके–'शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते । तदप्यधिष्ठितं सर्वमेकेन परमात्मना । तथर्ग्वेदादयो वेदाः प्रोक्ता येऽपि पृथक्पृथक् । भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगतास्सदा । तेषामन्तर्गतेच्छानां वाक्यार्थप्रतिपादने । विवक्षा चाविवक्षा च ज्ञायते शब्दशक्तितः । विधिशक्त्या गृहीतं यत्तत्तत्सर्वं विवक्षितम् । तयैव तु परित्यक्तं व्याख्येयमविवक्षितम् ।'इति । 'न्यायेन सम्प्रदायाद्वा ये मीमांसकयाज्ञिकाः । वेदं व्याचक्षते तेषामभिप्रायोऽयमुच्यते । तत्र यश्शक्त्युपारूढस्स तैर्व्याख्यातुमिष्यते। यस्तु शक्त्या परित्यक्तो नैव व्याख्यायते स तैः । तेन व्याख्यातुमिष्टार्थो यस्तेषां स विवक्षितः । अनिष्टो यस्त्वशक्तत्वादविवक्षित एव सः ।' इति । एवं च यद्वाक्यं वक्त्रा यदर्थविवक्षया प्रणीतं तद्वाक्यं तत्परमिति पर्यवस्यति । यद्वा परशब्देनेष्टवाचिना शेषी लक्ष्यते । यागादिविशेषे हि स्वर्गादिः यागादिना साधयितुमिष्टो भवति । उत्कृष्टवाची वा परशब्दोऽत्र प्रधाने शेषिणि पर्यवस्यति । प्रसिद्धं च वाक्यं प्रति वाक्यार्थस्य शेषित्वम् । 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत'इत्यादिश्रुतिषु शेषित्वं च वाक्यार्थस्य वाक्योद्देश्यप्र-

---

(१) 'वाक्यानाम्' इति. ख. पाठः ।

तात्पर्यनिर्णये । तत्र तात्पर्यं नाम तत्स्वरूपोपासनाविषयत्वम् । उपक्रमोपसंहारौ 'सदेव सोम्येदमग्र आसी'दित्युपक्रमः।'तत्वमसी'त्युपसंहारः।'धातुः प्रसादान्महि-

तीतिविषयता । इदं वाक्यमेतत्प्रतीत्युद्देश्यकमित्येतल्लोके वक्तृविवक्षयावगम्यते । वेदे न्या-येन । एवं च यद्वाक्यं यत्प्रतीत्युद्देशेन प्रवर्तते तद्वाक्यं तत्परमिति पर्यवस्यतीति वक्त्रभि-प्रायविषयतया न्यायविषयतया वा यत्प्रतीतिर्वाक्यस्योद्देश्या न भवति तस्य कदाचिद्वाक्य-जन्यप्रतीतिविषयत्वेऽपि न तत्र तस्य तात्पर्यप्रसङ्गः । एवं द्विविधं तात्पर्यपदार्थनिर्वचनं मनसि निधाय प्रकृते तदुभयं योजयति—तत्स्वरूपोपासनाविषयत्वमिति । तस्य ब्रह्मणः स्वरूपं चोपासना च तत्स्वरूपोपासने ते विषयावेषामिति तत्स्वरूपोपासनाविषया वेदान्ताः तेषां भावस्तत्त्वम् । अनन्यत्रभावोऽत्र विषयशब्दार्थः । एवं च वेदान्तानां ब्रह्मस्वरूपे तदु-पासनाविधाने च विश्रान्तिः । तयोरेव वक्तृविवक्षागोचरत्वात्तत्प्रतीत्योरेव वेदान्तोद्देश्यत्वा-च्चेति प्रदर्शिते तात्पर्यशब्दार्थनिर्वचनद्वयेऽस्य भाष्यस्य पर्यवसानं लभ्यते । यद्यपि वेदान्ता-नां ब्रह्मण्येव तात्पर्यमुपक्रमादिनिर्णयवत्त्वेनात्र प्रस्तुतं तथापि तदुपासनाविधानेऽपि तेषां तात्पर्यमग्रे प्रदर्शयिष्यत इति तदभिप्रायेणोपासनाग्रहणम् । परिगणितेषु तात्पर्यलिङ्गेष्वाद्येन तात्पर्यनिर्णयस्थलमुदाहरति-उपक्रमेति । सदेवेति । नन्वत्र ब्रह्मणस्सामान्येन सर्वप्रपञ्चा-त्मकतयोपक्रमः विशिष्य श्वेतकेत्वात्मतयोपसंहार इति तयोर्नैकरूप्यमिति चेन्न । सामान्ये-नोपक्रम्य विषयविशेषप्रदर्शनेनोपसंहारस्य स्थालीपुलाकन्यायेन सामान्यप्रतिज्ञादृढीकरणा-र्थतया तत्रैव पर्यवसानात् । दृश्यते ह्येतत् । ग्रामस्थास्सर्व एवात्यन्तं शिष्टा इति सामान्यतः प्रतिज्ञाय चैत्रस्तावदयमतिशिष्ट इति विशिष्य कस्यचित्प्रदर्शनस्य 'लोकोत्तरं चरितमर्पयति प्रतिष्ठां पुंसां कुलं न हि निमित्तमुदात्ततायाः । वातापितापनमुनेः कलशात्प्रसूतिः लीलायितं पुनरमुष्य समुद्रपान'मित्याद्यर्थान्तरन्यासोदाहरणश्लोकेषु सामान्यप्रतिज्ञापूर्वकविशेषोपन्या-सस्य सामान्यप्रतिज्ञादृढीकरणार्थतया तदर्थे पर्यवसानम् । ननु, 'तत्त्वमसी'त्यतः प्रा'गैतदा-त्म्यमिदं सर्व'मिति सामान्येनोपसंहारो दृश्यते । स किमर्थं नोदाहृतः । तदुदाहरणे ह्यत्यन्त-माञ्जस्यं लभ्यते । सत्यम् । तत्रैतत्प्रकृतं 'सदात्मा सोस्ये'त्येतावद्विवक्षायां तद्धितवैयर्थ्यप्रस-ङ्गादेतदात्मनि भवं विवक्षितमित्याद्यर्थान्तरशङ्काग्रस्तत्वेनास्फुटत्वात्तन्नोदाहृतम् । अत एव 'स्तब्धोऽस्युत तमादेशमप्राक्ष्यः' इत्यादिसर्वविज्ञानप्रतिज्ञाविषयः परमोपक्रमोऽत्र नोदाहृतः । सर्वविज्ञानप्रतिज्ञानप्रतिज्ञाया'स्सदेव सोम्यद'मिति समानाधिकरणनिर्देशस्यैव सर्वात्मविषय-ताया अस्फुटत्वात् । नन्वनेन ब्रह्मप्रपञ्चसामानाधिकरण्यनिर्देशात्मकब्रह्मसार्वात्म्यप्रतिपाद-कवाक्यप्रमाणवत्त्वरूपेणोपक्रमोपसंहारैकरूप्येण कस्य प्रपञ्चात्मनि ब्रह्मणि तात्पर्यं निर्णीयते । उच्यते । उपक्रमोपसंहारगतवाक्यप्रमाणयोरेव तावत्तत्र तात्पर्यमविचलं तेन निर्णीयते 'येनो-पक्रम्यते येन चोपसंह्रियते स वाक्यार्थ'इति न्यायात् । 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवती'ति वाक्यसन्दर्भस्य द्वादशकपालेष्टिरिव श्वेतकेतुसम्बो-

धकोद्दालककृतब्रह्मोपदेशरूपस्यास्य वाक्यसन्दर्भस्य सकलप्रपञ्चात्मभूतं ब्रह्मार्थ इत्यवगमात्तदुपक्रमोपसंहारमध्यवर्तिनि ब्रह्मसार्वात्म्ये विरोधिधर्मप्रतिपादकत्वेन प्रतीयमानान्यवान्तरवाक्यान्यष्टाकपालादिवाक्यानि द्वादशकपालेष्टिविधानपरतयेव सर्वप्रपञ्चात्मभूतब्रह्मपरतया नेतव्यानीति तेषामपि तत्र तात्पर्यं निर्णीयते। तथाहि—तत्र नवखण्डीमध्ये प्रथमखण्डे शकुनिबन्धनयोर्द्वितीयखण्डे नानावृक्षरसमधुनोः तृतीयखण्डे नदीसमुद्रयोः पञ्चमखण्डे वटतद्वीजयोः षष्ठखण्डे जललवणयोः सप्तमखण्डे पुरुषगन्धारदेशयोर्नवमखण्डे स्तेनापहार्ययोश्च शरीरात्मभावापन्नयोर्दृष्टान्तीकरणलिङ्गात् दार्ष्टान्तिकयोः प्रपञ्चब्रह्मणोस्तदभावोऽवसीयते। चतुर्थखण्डे दृष्टान्तीकृतयोर्महावृक्षबीजयोश्शरीरात्मभावसत्त्वेऽपि बहुलिङ्गविरुद्धमेकलिङ्गमसाधकम्। स्यादेतत्। उपक्रमोपसंहारैकरूप्यशरणीकरणे बहुविरुद्धमेकमसाधकमित्येतत्तुल्यम्। तेनापि हि वैश्वानराधिकरणन्यायतौल्यात् सद्विद्यावाक्यसन्दर्भः कृत्स्नोऽपि प्रपञ्चात्मनि ब्रह्मणि प्रमाणमेकं प्रकरणं वेति वाक्यप्रकरणयोरन्यतरदेकमेव प्रमाणमुत्थापनीयम्। न च वैश्वानरवाक्ये उपक्रमोपसंहारैकरूप्यावधृतेनैकेन वाक्यप्रमाणेन बहून्यष्टाकपालादिवाक्यानि जातेष्ट्याश्रितगुणफलविध्यर्थत्वेन प्रतीयमानानि बाधितानि दृष्टानीति वाच्यम्। अष्टाकपालादिवाक्येषु विध्यश्रवणाद्विधियोग्यपुरुषव्यापारमात्रस्याप्यश्रवणात् यच्छब्दोपबन्धेनानुवादकत्वस्यैव प्रत्यायनात्। अष्टाकपालादि(१)भवनपवनादिक्रियोरेककालत्वनिर्देशेन फलफलिभावाप्रतीते'र्यस्मिञ्जात'इति वाक्ये पूतत्वादीनां समुच्चयश्रवणेन तेषां व्यवस्थिताष्टाकपालादिफलत्वायोगाच्च तेषु गुणफलविधयस्त्यक्ताः। न त्वेकेनैव केन चित्प्रमाणेन बाधितत्वात्। अथापि स्यात्। 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति' 'विष्णुरुपांशु यष्टव्योऽजामित्वाय''प्रजापतिरुपांशु यष्टव्योऽजामित्वाय''अग्नीषोमावुपांशु यष्टव्यावजामित्वाये'त्यत्र पुरोडाशद्वयनैरन्तर्यप्रयुक्तजामितादोषोपक्रमतन्निर्हरणोपसंहारावधृतान्तरालसंयुक्तकिञ्चित्कर्मविधितात्पर्यैकवाक्यत्वानुरोधात् मध्ये श्रूयमाण एव विष्णुरुपांशु यष्टव्य इत्यादिविधयस्त्यक्ता इति। सत्यं त्यक्ताः। न त्वेकवाक्यत्वानुरोधात्। किं तु जामितापरिहारायावश्यमन्तरावाक्ये विधावभ्युपगन्तव्ये तत्रैव शाखाभेदेनाग्नेयाग्नीषोमीययाज्यानुवाक्यायुगलमध्ये पठितानां वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानां क्रमप्रमाणेनान्वये सति तत्तन्मन्त्रोदितानां विष्ण्वादीनां तत्र यागे विकल्पेन देवतात्वस्य प्राप्तत्वाद्विष्ण्वादिवाक्यस्थयजिना सन्निहिततद्यागानुवादकत्वस्वारस्याच्च। विधेयाभावेन विष्ण्वादिवाक्यानां मन्त्रवर्णेन प्राप्तविष्ण्वादिदेवतावत्तया तद्यागस्तावकप्रतीतेः। एतेन 'सदेव सोम्येदमग्र आसीत्तत्त्वमसी'त्युपक्रमोपसंहारगतवाक्यद्वयेन ब्रह्मसार्वात्म्यप्रतिपादकेन तद्विरोधिनामुदाहृतलिङ्गानां बाध इत्यपि शङ्का निरस्ता। अल्पेनाधिकबाधस्य वाक्येन लिङ्गबाधस्य चायुक्तत्वादिति चेत् उक्तप्रायमत्रोत्तरम्। श्रुत्यादिषूत्तरमप्यल्पमपि तात्पर्यलिङ्गवत्प्रबलं पूर्वमप्यधिकमपि तात्पर्यलिङ्गरहितं दुर्बलम्। तात्पर्याधीनत्वाद्वेदप्रामाण्यस्य। तदिहोपक्रमोपसंहारगतमुदाहृतवाक्यद्वयं सर्वात्मभूतब्रह्मप्रमाणभूततयावधृतं कृत्स्नमिदं प्रकरणं चोपक्रमोपसंहारैकरूप्यावधृतसर्वात्मभूतब्रह्मतात्पर्यशालितया बलवत्त्वात्तैरतथाभूतानामुदाहृतलिङ्गा-

(१) हवनपचनादिक्रियोः' इति ख. पाठः।

मानमीश'मित्युपक्रमः। 'यः परः स महेश्वर'इत्युपसंहारः। एवमन्यत्रापि द्रष्टव्यम्। 'तत्त्वमसि''सर्वो वै रुद्रः''अम्बिकापतय उमापतये''यो वै रुद्रस्स भगवान्भूर्भुवस्सुव'रित्यभ्यासः। अपूर्वता वेदेतरप्रमाणाप्राप्तता। फलं ब्रह्मज्ञानम्। अर्थवादो जगत्सृष्टिस्थितिप्रध्वंसादयः। उपपत्तिर्विरोधाभावस्सर्वज्ञतादिसम्पत्तिर्वा। एतैर्लिङ्गैर्ब्रह्मणि तात्पर्यमवगन्तव्यं वेदान्तवाक्यानाम्। न केवलं ब्रह्मपरा वेदान्ताः किं तु

---

नां बाधो युक्तः। शकुनिबन्धनादयो हि प्रपञ्चब्रह्मणोर्न शरीरात्मभावराहित्ये दृष्टान्तीकृताः। येन ते तत्तात्पर्या भवेयुः। किंत्वाश्रिताश्रयभावादिषु अन्यत्र दृष्टान्तीकृता अपि वस्तुतः शरीरात्मभावरहिता इत्येतावता प्रपञ्चब्रह्मणोरपि तदभावं गमयन्तीति वक्तव्यम्। नैतदुपपद्यते तात्पर्यवद्वाक्यविरोधादिति। 'एवमैतदात्म्यमिदं सर्व'मित्यत्राप्येतदात्मेति वक्तव्ये चातुर्वर्ण्यादिवत्स्वार्थे तद्धित इति योजनीयम्। एवमन्यदपि तत्र तत्र विरुद्धत्वेन प्रतीयमानं सर्वमनया दिशोपपादनीयम्। उपक्रमोपसंहारलिङ्गेन तात्पर्यनिर्णयस्योदाहरणं तैत्तिरीयाणा'मणोरणीया'नित्यनुवाके वक्तव्यम्। सर्वं शारीराधिकरणे प्रपञ्चयिष्यते। एवमन्यत्रापीति। तत्र आनन्दमयाधिकरणादिषूदाहरिष्यमाणे विषयवाक्य इत्यर्थः। 'तत्त्वमसीति नवकृत्वश्चिदात्मत्वाभ्यासः 'सर्वो वै रुद्रः''पुरुषो वै रुद्रः''सन्महस्सर्वो ह्येष रुद्र'इति सर्वात्मत्वाभ्यासः। 'अम्बिकापतय उमापतय' इति चिच्छक्तिशबलत्वाभ्यासः। 'यो वै रुद्रस्स भगवान्यश्च ब्रह्मे'त्यादिषु ब्रह्मविष्णुमहेश्वरादिपर्यायेषु प्रतिपर्यायं भगवच्छब्दोक्तकल्याणगुणवत्त्वाभ्यासः। 'वेदेतरे'ति वेदग्रहणं तदुपजीविनां स्मृतिपुराणादीनामप्युपलक्षणम्। अपूर्वता ब्रह्मप्रमाणभूतसर्ववेदान्तानुगतेति विशिष्योदाहरणं न दर्शितम्। फलं ब्रह्मज्ञानमिति। निरतिशयानन्दरूपब्रह्मसाक्षात्कार इत्यर्थः। अत्र 'धातुः प्रसादान्महिमानमीश'मित्युपक्रमो-
दाहरणं भविष्यतीति पृथगुदाहरणं दर्शितम्। 'अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीश'मिति मन्त्रस्य ह्ययमर्थः। अणोरणुत्वेन प्रसिद्धात् परमाण्वादेरप्यणीयान् अणुतरः। अव्यक्तत्वादतिसूक्ष्मत्वव्यपदेशः। महतो गगनादेरपि महीयान् महत्तरः। सर्वव्यापकत्वात्। यद्वा। अणोरल्पशरीरावच्छिन्नस्य जन्तोरणीयान् तदीयहृदयगुहावच्छिन्नत्वेन महाशरीरहृदयगुहावच्छिन्नात्स्वस्मादणुतरः। महतः महाशरीरावच्छिन्नस्य जन्तोः। महीयान् अल्पशरीरहृदयगुहावच्छिन्नात्स्वस्मान्महत्तरः। प्रतियोग्यनिर्देशेऽपि बौद्धप्रतियोग्यपेक्षायामप्यतिशायनिक इत्यणीयान्महीयानितीयसुन्प्रत्ययः। एवम्भूतः परमात्मा अस्य जन्तोः प्राणिवर्गस्य हृदयगुहायां निहितः सन्निहितः। तं परमात्मानम्। अक्रतुं सकलकर्मास्पृष्टम्। महिमानं महिमवन्तम्। महाविभूतियुक्तमीशं सर्वस्य नियन्तारम्। धातुर्जगतां धारकस्य तस्यैव प्रसादाद्वीतशोकः विगलितसांसारिकसकलक्लेशस्सन्। पश्यति निरतिशयानन्दरूपमनुभवतीति। अत्र शोकनिवृत्त्यनन्तरं वर्ण्यमानं दर्शनं फलरूपमेव विवक्षितमिति ज्ञायते। जगत्सृष्टीति। सृष्ट्यादीनां सङ्क्षेपेण जन्माद्यधिकरणे प्रपञ्चेनेक्षत्यधिकरणादिषु चोदाहरणाद्विरोधाभावस्य सर्ववेदान्तव्यापकत्वात् जगत्कारणत्वोपपत्तिरूपसर्वज्ञतादिसम्पत्तेर्जन्माधिकरणे प्रपञ्चितत्वाच्चानुदाहरणम्। एवं वेदान्ताना ब्रह्मणि तात्पर्यं प्रसाध्योपासनाविधिष्वपि तेषां तात्पर्यमावश्य-

'आत्मावा अरे द्रष्टव्य'इत्यादिषु तद्ज्ञानविधिपरा अपि ज्ञायन्ते।उभयपरत्वेवाक्यभेदप्रसङ्ग इति यदुक्तं तन्न । रूपप्रत्यायकेन चक्षुषा यथा द्रव्यस्यापि सिद्धिस्तथा विधिपरैरपि वेदान्तैर्ब्रह्मसिद्धिरिति नोभयपरत्वविरोधः।(१)शाब्दं हि ब्रह्मज्ञानम्। तद्ब्रह्मवाचिशब्दादेव प्राप्तम्।तद्विधिना किं प्रयोजनमिति चेत् प्राप्तावपि मन्त्रादिष्विव विधेरविरोधः । यथा द्रव्यदेवतादिप्रकाशकेषु मन्त्रेष्वधीयमानेषु द्रव्यादिज्ञाने जातेऽपि पुनरनुष्ठानकाले 'मन्त्रैरनुस्मर्तव्य'मिति प्रयोगविधिर्ज्ञानान्तरमनुष्ठापयति

कमित्याह—न केवलमिति । तज्ज्ञानविधिपरा अपि ज्ञायन्त इति । अन्यथोपासनानुष्ठानासम्भवेन ब्रह्मप्राप्तिफलानिष्पत्तिप्रसङ्गादिति भावः । एवमुभयत्र तात्पर्ये प्रसाधिते लब्धावकाशं तृतीयपूर्वपक्षमनुवदति—उभयपरत्व इति । यद्यप्युभयत्रापि तात्पर्यस्यावश्यम्भावे सति वाक्यभेद आपतति चेत्स न दोष इत्येव प्राप्नोति । तथापि वाक्यभेदाप्रसङ्गेन परिहर्तुमनुवादः । एकदेशमतेन तावत्परिहर्तुमुपक्रमते—तन्नेति । यथा रूपप्रत्यायकं चक्षुस्तत्समवायि द्रव्यमपि तत्संसृष्टतया प्रत्याययति । तथा ज्ञानविधिपरा वेदान्तास्तज्ज्ञेयं ब्रह्मापि तत्संसृष्टतया प्रत्याययेयुः । न चोभयपरत्वे वाक्यभेदो दोषः । स्वतन्त्रोभयपरत्वानङ्गीकारादित्याह—रूपेति । ननु, तर्हि यथा रूपज्ञानजनकेन चक्षुषा तदाश्रयद्रव्यज्ञानस्यापि सहजनितत्वात्तदाश्रयद्रव्यज्ञाने यत्नान्तरापेक्षा नास्ति । एवं ब्रह्मज्ञानविधिगोचरज्ञानजनकैर्वेदान्तैर्ब्रह्मज्ञानस्यापि जनितत्वान्न ब्रह्मज्ञाने विध्यपेक्षास्तीति शङ्कते—शाब्दं हीति । साङ्गाध्ययनबलाद्वेदान्तेभ्यः स्वतः प्राप्तं ब्रह्मज्ञानं विध्यनुष्ठाप्यं नाभ्युपगम्यते । किं तु मन्त्रादिष्विवान्यदेव ज्ञानमतो न विधिवैयर्थ्यमिति परिहरति—प्राप्तावपीति।'मन्त्रादिष्विवेति'दृष्टान्तं विशदयति—यथेति । यथा 'बर्हिर्देवसदनं दामि 'अग्निर्मूर्धा दिवः ककु'दित्यादिमन्त्रैः साङ्गाध्ययनानन्तरं द्रव्यदेवतादिज्ञाने जातेऽपि क्रतुप्रयोगमध्ये तत्तदनुष्ठानोपयोगि मन्त्रकरणकं तज्ज्ञानान्तरं प्रयोगविधिरनुष्ठापयति तथात्रापीत्यर्थः । ननु, मन्त्राः क्रतुषु व्रीह्यादिवदङ्गभावेन 'सूक्तवाकेन 'प्रस्तरं प्रहरती'त्यादिवाक्यगततृतीयाश्रुत्यादिभिर्नियुक्ताः केन द्वारेणोपकुर्वन्तीत्यपेक्षायां दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेः अनुष्ठानापेक्षितद्रव्यदेवतादिज्ञानोत्पादनद्वारोपकुर्वन्तीति कल्पनात् अध्ययनानन्तरं मन्त्रैर्जातस्य ज्ञानस्य क्रतुप्रयोगमध्यपात्यनुष्ठानोपयोगित्वासम्भवात् साङ्गं क्रतुमनुष्ठापयन्प्रयोगविधिस्तदानीं मन्त्रैर्मन्त्रार्थज्ञानमप्यनुष्ठापयतीति युक्तम् । इह तु नास्ति । वेदान्तैर्ब्रह्मज्ञानस्य पुनरनुष्ठापकः प्रयोगविधिः । न च वाच्यं ज्योतिष्टोमादिष्वपि कल्प्यः प्रयोगविधिः तद्वदिहापि कल्प्यतामिति । तत्र कल्पकानामुत्पत्तिविनियोगाधिकारविधीनां सत्त्वात् । 'ज्योतिष्टोमे महासोमेन यजेते'ति सोमद्रव्यरूपकरणविशिष्टयागस्वरूपविधिरुत्पत्तिविधिः । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति फलसम्बन्धबोधको विधिरधिकारविधिः। तत्प्रकरणे दीक्षणीयाद्याम्नानकल्पितो 'दीक्षणीयादिभिर्ज्योतिष्टोमस्योपकुर्या'दिति विधिर्नियोगविधिः । ततश्च दीक्षणीयादिभिरुपकृत्य 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति प्रयोगविधिकल्पनं युक्तम् । नेह तथा । वेदान्तैर्ब्रह्म ज्ञातव्यमित्यादिरूपेणोत्पत्तिविध्यादयः श्रूयन्त इत्याशङ्क्य निराकरोति—न चेति । 'आत्मा वा अरे द्रष्टव्य' इत्यात्मदर्शने

(१) 'न किमपि प्रयोजनमिति' इति ख. पाठः ।

तथात्रापि। न चोत्पत्तिविनियोगाधिकारविधीनामभावात्प्रयोगविध्यसम्भव इति शङ्कनीयम्। उत्पत्तिविधेरध्याहारेण सिद्धौ प्रकरणवशाच्छमादिकं विनियोजयन् 'आत्मानं पश्ये'दिति विनियोगविधिरुपपद्यते। ततश्च रात्रिसत्रन्यायेन 'ज्ञात्वा देवं मुच्यते सर्वपाशै'रित्याद्यर्थवादावगतमोक्षकामोऽधिकारी कल्पनीयो भवति। अतो मोक्षकामश्शमादियुक्तो ब्रह्मज्ञानं सम्पादयेदिति प्रयोगविधिलाभः। ननु, ब्रह्मज्ञानस्य विधेयत्वमनुपपन्नम्। 'आत्मा वा अरे द्रष्टव्य'इत्यादौ नित्ये

विधिः श्रूयते। तत्र दृशिधातुना चाक्षुषज्ञानवाचिना करतलामलकालोकनादिवदसन्दिग्धाविपर्यस्तमात्मज्ञानं विवक्षणीयम्। आत्मनि चाक्षुषज्ञानासम्भवादिति। न स्ताद्ब्रह्मज्ञानस्योत्पत्तिविधिः। तत्र करणाकाङ्क्षायां वेदान्ताः करणत्वेनाध्याहार्या इत्येवमपेक्षितांशाध्याहारेण वेदान्तकरणविशिष्टब्रह्मज्ञानोत्पत्तिविधिसिद्धावित्यर्थः। ननु, वेदान्तानामेव करणत्वेनाध्याहारो नान्यस्य कस्यचिदित्यत्र किं प्रमाणमित्याकाङ्क्षायामाह—प्रकरणवशादिति। श्रोतव्य इत्यनन्तरवाक्ये तात्पर्यावधारणरूपश्रवणसङ्कीर्तनयोग्यतया वेदान्ततात्पर्यविषयं पर्यवस्यति। तत्र वेदान्तानां सन्निहितत्वलाभे सति सन्निधिलक्षणप्रकरणवशात्तेषामेव करणत्वेनाध्याहारस्सिद्ध्यतीति भावः। यद्यप्यत्रापि योग्यतयैव वेदान्तानां करणत्वेनाध्याहारस्सिद्ध्यति। तथापि सन्निधिरप्यस्तीति दर्शयितुं प्रकरणवशादित्युक्तम्। शमादिकमिति। 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्ये'दिति विधिः श्रुत्युपात्तकर्त्रैक्यवशात्फलसाधनमात्मज्ञानं प्रति शमादीन्यङ्गत्वेन विनियोजयन्विनियोगविधिस्सम्पद्यत इत्यर्थः। यद्यपि 'शान्तो दान्त'इति वाक्यस्य शाखान्तरत्वात्तत्रापि शमादिविशिष्टस्यात्मदर्शनस्य विधानमङ्गीकर्तुं शक्यमिति तदुत्पत्तिविधिरेव[1] पर्यवस्यति। एवं प्राप्तकर्मानुवादेन शमाद्यनेकगुणविधानाभावाद्वाक्यभेदोऽपि न प्रसज्यते। तथापि शमादीनामङ्गत्वेन नियोगविधित्वमप्युपपद्यत इत्यभिप्रायेण तथोक्तम्। एवमेव 'ज्ञात्वा देव'मित्यत्रार्थवादप्रतीतमोक्षकामाधिकारिकज्ञानविधेरधिकारविधित्वमपि। एवं च 'पाशमोक्षकामश्शमादियुक्तो वेदान्तैर्ब्रह्म जानीया'दिति प्रयोगविधिकल्पनोपपत्तेः। तेन प्रयोगविधिना प्राग्वेदान्तैर्ब्रह्मज्ञाने स्वतो जातेऽपि पुनरपि वेदान्तकरणकं ब्रह्मज्ञानान्तरं फलायानुष्ठाप्यत इति युक्तमित्याह—अत इति। ज्ञाने विध्यसम्भवात् तत्र चतुर्विधविध्युपन्यासो न सङ्गच्छत इत्याशङ्कते—नन्विति। स्वतन्त्रफलाय[2] धात्वर्थे कर्मरूपज्ञानविधिरभ्युपगम्यते उत कर्मकारकगतफलाय[3] गुणकर्मरूपज्ञानविधिरिति विकल्पं मनसि निधायाद्यं विधायकत्वाभिमतवाक्योदाहरणेन निरस्यति—आत्मेति। 'आत्मा द्रष्टव्यः' 'आत्मानं पश्ये'दित्यादिवाक्येषु ज्ञानविधिमभ्युपगच्छता कर्माभिधायिप्रत्ययानुसारेण कर्मोपसर्जनक्रियाविधानमभ्युपगन्तव्यम्। न स्वतन्त्रक्रियाविधानमिति भावः। द्वितीयं निरस्यति—नित्य इति। कर्मोपसर्जनक्रियाविधानमपि नाभ्युपगन्तुं शक्यम्। आत्मन्युत्पत्त्यादीनां क्रियाजन्यफलानामसम्भवेन तस्य विधेयक्रियाकर्मत्वासम्भवादिति भावः। 'वेदिं करोती'त्यत्र वेद्या इवोत्पत्त्यसम्भवे हेतुर्नित्य' इति विशेषणम्। 'पयो दोग्धी'त्यत्र पयस इव प्राप्यत्वासम्भवे हेतुर्ब्रह्मणी'ति। बृहत्त्वाद्व्यापकत्वेन

(१)'सोऽप्युत्पत्तिविधिरेव'इति घ.पाठः। (२)'फलायार्थकर्मरूप'इति घ.ग.पाठः। (३)'फलायकर्मरूप'इति घ.पाठः।

त्ये ब्रह्मणि निर्विकारे विशुद्धे चात्मनि न कर्मकारक[1]भावो युज्यते। येन विधिस्सम्भवः। उत्पत्तिप्राप्तिविकारसंस्काराणामत्रासम्भवात्। न च स्वतन्त्रफलाय सक्तुन्यायेन कर्मकारकतां परित्यज्य करणत्वविपरिणामेन आत्मना पश्येदिति विधातुं शक्यम्। वैषम्यात्। तथा हि—क्रियाकृतातिशयस्य भस्मीभावलक्षणस्य सक्तुषु सम्भवात्तेषु[2] शब्दतः करणत्वेऽप्यर्थतः कर्मत्वमस्ति। न तस्यात्मनि सम्भवः। अतो वेदान्तानां न ब्रह्मज्ञानविधिपरत्वमिति चेन्न। आत्मनि कर्मत्वप्रयुक्तोत्पत्त्याद्यभावेऽपि कर्तृस्थमोक्षफलाय विध्युपपत्तेः। प्राप्ते कथं विधिरिति चेत्। प्राप्तिः पाक्षिकी नित्या वा। उभयथापि नियमादिविधिस्सम्भवति। ननु,

नित्यप्राप्तत्वात् प्राप्यत्वं न सम्भवतीति भावः। 'बर्हिर्लुनाती'त्यत्र बर्हिष इव विकार्यत्वासम्भवे 'व्रीहीन्प्रोक्षती'त्यत्र व्रीहीणामिव गुणाधानलक्षणसंस्कारासम्भवे च हेतु 'र्निर्विकार' इति। 'गृहं संमार्ष्टी'त्यत्रेव शुद्ध्याधानलक्षणसंस्कारासम्भवे हेतु'र्विशुद्ध'इति। यद्येवं सक्तुन्यायेन विपरीतो गुणप्रधानभावोऽस्तु।'सक्तूञ्जुहोती'त्यत्र हि होमेन भस्मीकृतानां सक्तूनां भाव्युपयोगासम्भवात् भूतोपयोगाभावाच्च अघटमानं गुणकर्मत्वं परित्यज्य सक्तुभिरिति तृतीयाश्रयणेन क्रियाप्राधान्यमुपादायार्थकर्मत्वमाश्रितम्। एवमिहाप्यस्त्वित्याशङ्क्याह—न चेति। होमकरणतया विवक्षितानामपि सक्तूनां प्रक्षेप्यत्वेनार्थिककर्मत्वापरित्यागात् अस्ति जुहोतेस्सकर्मकत्वनिर्वाहः। तथात्र न निर्वाहोऽस्ति। आत्मनि कर्मत्वनिर्वाहकानामुत्पत्त्यादीनामसम्भवादित्याह—वैषम्यादिति। होमेन सक्तूनां प्रक्षेप्यत्वेनेव ज्ञानेनात्मनोऽवभास्यत्वेन व्यवहार्यत्वेन चार्थतः कर्मत्वमिहापि सम्भवतीति [3]स्मृतिविनियोगादर्शनात् सक्तुहोमवदात्मज्ञानस्याप्यर्थकर्मत्वकल्पनं सम्भवतीति समाधत्ते—नेति। यद्यपि ज्ञानेन प्रसादितस्य परमेश्वरस्य मोक्षप्रदानेऽस्त्युपयोग इति सिद्धान्तदृष्ट्या गुणकर्मत्वमपि निर्वोढुं शक्यं तथाप्येकदेशिमतं यावदुक्तमिहानूदितम्। ननु, वेदान्तैरात्मज्ञानं कुर्यादिति विधिर्न सम्भवति। अधीतवेदान्तस्य पठितमीमांसाशास्त्रस्य वेदान्तानुसन्धानेन तदर्थज्ञानस्य स्वयमेव प्राप्तेरिति शङ्कते—प्राप्त इति। लौकिकी खल्वियमिह प्राप्तिः सा तु पाक्षिकी ऋतुगमन इव। तथा च 'ऋतावुपेयादेवे'तिवद्वेदान्तैरात्मज्ञानं कुर्यादेवेत्यस्ति नियमविधेरवकाशः। यदि ब्रह्मोज्झतापरिहाराय सदा वेदाभ्यासावश्यम्भावात् विचारितवेदान्तस्य वेदान्तैरात्मज्ञानप्राप्तिर्नित्येत्युच्यते तथापि वेदान्तानुसन्धानप्रयुक्तात्मज्ञानस्य लोकव्यवहारप्रयुक्तानात्मज्ञानस्य च समुच्चित्य प्राप्तावनावश्यकानात्मज्ञाननिवृत्त्यर्थस्य परिसङ्ख्याविधेरवकाशोऽस्ति। 'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तये'ति स्मृत्यानुगुण्यादित्यभिप्रेत्य परिहरति—प्राप्तिरिति। एवमेकदेशिमतमुपन्यस्तम्। तत्रानभिमतांशं तदुपमर्दकशङ्कासमाधानमुखेन निराकृत्य स्वमतेन वेदान्तानां विधौ ब्रह्मणि च तात्पर्यमुपपादयत्यग्रिमग्रन्थसन्दर्भेण। तत्र वेदान्तानां ब्रह्मणि विधौ च प्रामाण्यसम्भवे रूपतदाश्रयप्रमाणभूतचक्षुर्दृष्टान्तप्रदर्शनमयुक्तमित्याशङ्कते—नन्विति। चक्षुर्हि येन येन योग्येन सन्निकृष्टं तत्र सर्वत्रापि प्रमां जनयतीति युक्तं तस्योभयत्र प्रामाण्यम्। न तथा शब्दो यत्रयत्र शक्तिरस्ति तत्र सर्वत्र प्रमां जनयति। किं तु यत्र तात्पर्यं तत्रैव। तथा

(१) 'भाव उपपद्यते' इति ख. पाठः। (२) 'तेषां' इति ख. पाठः। (३) 'संस्कृतविनियोगादर्शनात्' इति घ. पाठः।

तथा सति वेदान्तानां विधिपरत्वेन ब्रह्मपरत्वमनुपपन्नम् । यदुक्तं 'रूपप्रत्यायकेन चक्षुषा द्रव्यसिद्धिवद्विधिपरैरपि वेदान्तैर्ब्रह्मसिद्धि'रिति । तदयुक्तम् । चक्षुर्हि सम्प्रयोगे सति निरपेक्षमेव प्रतिवस्तु प्रमापकम् । न तथा शब्दः । किं तु यत्र तात्पर्यं तत्र प्रमाणम्(१) । तस्माद्वेदान्तानां ब्रह्मप्रमापकत्वं ब्रह्मज्ञानविधायकत्वं च न सम्भवतीति चेन्न । 'समिधो यजती'त्यादीनां वाक्यानां पञ्चप्रयाजविधायकत्वं तदनुष्ठानक्रमविधायकत्वं चेत्युभयपरत्वदर्शनात् । वेदान्तवाक्यानामपि ब्रह्मप्रमापकत्वं ब्रह्मज्ञानं मोक्षोपकारकं प्रति विधायकत्वं च युक्तमेव(२) । ननु, ब्रह्मणि वेदवाक्यादेव ज्ञाते तज्ज्ञानविधिरप्रयोजनः तत्प्रयोजनस्य पूर्वज्ञानादेव स-

चोभयतात्पर्यवत्त्वेनोभयत्र प्रमाजनकशब्द एवात्र दृष्टान्तीकर्तव्यो न चक्षुरिति भावः । तथैव स्वयं दृष्टान्तमुदाहरन्समाधत्ते—नेति । ननु, समिदादिवाक्यानि केवलं प्रयाजानां विधायकानि न तदनुष्ठानक्रमेऽपि तात्पर्यवन्ति । किं तु तेषां पाठक्रमेण तदर्थानुष्ठानक्रम इति नैकस्योभयपरतायामिदमुदाहरणमिति चेन्न । यथा समिदादिवाक्यानि परमेश्वरेणाध्येतृणां तदर्थप्रतीतिर्भवत्विती च्छयोच्चरितानि तथा तत्पाठक्रमेण तदर्थानुष्ठानक्रमप्रतीतिर्भवत्वित्यपीच्छया क्रमविशेषे तान्युच्चरितानीति तेषां तत्रापि तात्पर्यानिवारणात् । तत्प्रमितिशेषत्वं तात्पर्यमित्यभ्युपगमेऽपि क्रमविशेषेण पठितानां विधिवाक्यानां तत्तदर्थानुष्ठानक्रमप्रमितिशेषत्वस्यापि सत्त्वेन तत्र तात्पर्यानिवारणात् । अत एव शिवं पूजयता गन्धा लेपनीयाः धूपो दातव्यः पुष्पाण्यवकिरितव्यानीति वदन्तं प्रति, नायं क्रमः किं तु गन्धो लेपनीयः पुष्पाण्यवकिरितव्यानि धूपो दातव्य इति प्रत्युक्तिर्दृश्यते । यदि क्रमेणोच्चरितानां विधिवाक्यानां तदर्थानुष्ठानक्रमे तात्पर्यं न स्यात् तदा तदभिमतक्रमनिषेधपूर्वकं क्रमान्तरोपदेशविषयतयैवं प्रत्युक्तिर्न सङ्गच्छते । ननु, विधिवाक्यसन्दर्भे विधेयपदार्था एव शब्दप्रमाणकाः न तु तेषां क्रमः । तस्यापदार्थत्वादवाक्यार्थत्वाच्च । किं त्वेकेन कर्त्रा बहूनां पदार्थानां युगपदनुष्ठातुमशक्यत्वात्क्रमाकाङ्क्षायां पाठक्रमसन्निधापितस्तत्क्रमो गृह्यत इत्येवमुपस्थितिलाघवसहकृतार्थापत्तिर्गम्यत इति चेन्न । क्रमस्य प्रत्येकविधिवाक्यार्थत्वाभावेऽपि क्रमपठितानेकवाक्यार्थत्वोपपत्तेः । पाठक्रमेण सन्निधापितः पदार्थक्रमो गृह्यत इति वदतापि पाठक्रमेण सन्निधानस्य क्रमपठितानेकवाक्यजन्यज्ञानविषयत्वादन्यस्य वक्तुमशक्यत्वात् । अन्यथा पाठक्रमस्य स्वातन्त्र्येण क्रमप्रमितिजनकत्वे तस्य प्रमाणान्तरतापत्तेः तस्मिन्नपि पक्षे वाक्यविशेषाणां पाठक्रमस्यैव तदर्थानुष्ठानक्रमप्रमितिजनकत्वेन विशेषणतया तेषामपि तज्जनकत्वावश्यंभावाच्च । क्रमस्य श्रुतिमूलार्थापत्तिगम्यत्वपक्षेऽपि धूमवह्न्युभयबोधनाय प्रवृत्तस्य 'पर्वते धूम'इति वाक्यस्य धूमवह्न्योरिवानुष्ठेयपदार्थतत्क्रमबोधनाय प्रवृत्तानां क्रमपठितविधिवाक्यानां शब्दतन्मूलप्रमाणान्तरगम्ययोरनुष्ठेयपदार्थजाततत्क्रमयोस्तात्पर्यानिवारणाच्चेति भावः । एवं वेदान्तानां ब्रह्मणि विधौ च तात्पर्यसम्भावनायामेकदेश्युक्तं दृष्टान्तं निरस्य स्वाभिमतो दृष्टान्तः समर्थितः । अथ तेषां वेदान्तकरणकज्ञानविधौ तात्पर्यमिति तन्मतं निरस्य तन्मूलकोपासनाविधौ तात्पर्यमिति स्वमतं समर्थयितुं तन्मतेऽनुपपत्तिमाशङ्कते—नन्विति । यदि वेदान्त-

(१)'प्रमाणम्' इति ख. पाठः । (२) 'युज्यते' इति ख. पाठः ।

म्भवादिति चेन्न । वाक्येन परोक्षत्वेन ज्ञाते ब्रह्मणि तत्साक्षात्काराय ज्ञानविधेरुपपत्तेः । कथं भेद इति चेत् यच्छब्दजन्यं न तत्साक्षात्कारहेतुः । किं तु उपासनारूपं ज्ञानमेव । तथा च श्रूयते । 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्''ज्ञाननिर्मथनादेव पाशं दहति पण्डितः'इत्यादिषु'ज्ञात्वा देवं मुच्यते सर्वपाशैः''ईशं तं ज्ञात्वा अमृता भवन्ती'त्यादिषु च। तथाहि–'श्रोतव्यश्श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः'इत्यत्र श्रवणमननसम्पन्नज्ञानाविनाभूतं निदिध्यासनं ब्रह्मणस्साक्षात्कारे निमित्तमिति स्मर्यते । अत उपासनारूपज्ञानं मोक्षफलं विधीयते । 'आत्मन्येवात्मानं पश्येत्''शम्भुराकाशमध्ये ध्येयः''तज्जलानिति शान्त उपासीते'ति ।

---

करणकं शाब्दं ब्रह्मज्ञानं मोक्षजनकं तदा तेभ्यः स्वतः प्राप्तस्यैव तस्य मोक्षजनकत्वोपपत्तेर्व्यर्थं तत्र विधिकल्पनम् । न हि स्वतोऽसमर्थं विधिसंस्पर्शेन सामर्थ्यं लभते । न च विहितं शमादिकमितिकर्तव्यतायोगात् मोक्षजनने समर्थं भवेत् नान्यदिति वाच्यम् । शमादिकं हि ज्ञानाङ्गभावं भजच्चित्तैकाग्र्यसम्पादनद्वारा ज्ञानस्वरूपनिष्पादकतया सन्निपत्योपकारकतां भजेत् । तच्चेज्ज्ञानं शमादिकं विनाप्युत्पद्यते किं तदभावेन तस्य वैकल्यमापद्यते । तस्माच्छाब्दज्ञानमूलकं यज्ज्ञानमत्यन्तचित्तैकाग्र्यसम्पादनयत्नसाध्यं[3] तदेव ज्ञानं मोक्षार्थं विधेयमभ्युपगन्तव्यम् । न तु शाब्दज्ञानमिति भावः । स्वयं तथाभूतज्ञानान्तरं विधेयं प्रदर्शयन् समाधत्ते–वाक्येनेति । किं तच्छाब्दज्ञानाद्विलक्षणं ज्ञानं यत्साक्षात्कारं जनयितुं शक्नुयादिति पृच्छति–कथमिति । ध्यानोपासनादिशब्दवाच्यं निरन्तरस्मृतिसन्तानरूपं ज्ञानं तदित्याह–यदिति । उपासनारूपमेव ज्ञानं वेदान्तेषु फलाय विधेयमित्युपासनावाचिपदविशेषघटितवाक्योदाहरणेन दर्शयति–तथा च श्रूयत इति ।'इत्यादि'ष्वित्यनेन ध्यानोपासनादिपदघटितानि फलयुक्तवाक्यानि गृह्यन्ते । एवं च फलयुक्तवाक्येषु श्रुतानां ज्ञानसामान्यवाचिपदानां छागपशुन्यायेनोपासनारूपज्ञाने पर्यवसानमित्यभिप्रेत्य तथाभूतानि वाक्यानि पृथगुदाहरति–ज्ञात्वेति । ननूदाहृतेषु वाक्येषु विधेयज्ञानस्य मोक्षजनकत्वमेव प्रतीयते न तु मोक्षजनकसाक्षात्कारजनकत्वमित्याशङ्क्योदाहृतश्रुतीनामुपबृंहणानुसारेण साक्षात्कारद्वारा मोक्षजनकत्वे तात्पर्यं न तु साक्षादिति दर्शयितुमुपबृंहणमुदाहरति–तथा हीति । श्रवणेति । श्रवणेन जातमुपपत्त्यनुचिन्तनरूपेण मननेन स्थिरीकृतं च ज्ञानं श्रवणमननसम्पन्नज्ञानं तेन कारणभूतेनाविनाभूतं निदिध्यासनं ध्यानम् । स्वार्थे सन्प्रत्ययः । अत इति । मोक्षजनकसाक्षात्कारसाधनत्वादेव उपासनारूपं ज्ञानं मोक्षफलं विधीयते न तु साक्षान्मोक्षसाधनत्वादिति भावः । पूर्वं फलयुक्तान्युपासनावाक्यान्युदाहृतानि । इदानीं गुणयुक्तवाक्यान्युदाहरति–आत्मनीति । शरीरे हृदयाकाशमध्य इत्यर्थः। तद्विवरणार्थं द्वितीयोदाहरणम्। 'शान्त उपासीते'ति शमगुणयुक्तोपासनाविधिः।'इति प्राचीनयोग्योपास्वे'ति व्याहृतिशरीरकत्वादिगुणयुक्तोपासनाविधिः । तत्र 'प्राचीनयोग्ये'ति शिष्यसम्बोधनम् । इतिशब्दः प्रागुक्तप्रकारपरामर्शी । चकारः पूर्वोदाहृतश्रुतिभिः समुच्चयार्थः । ब्रह्मस्वरूपं तदुपासनाप्रकारं

---

(१) 'ध्यान' इति ख. पाठः । (२) 'प्रतीयते' इति ख. पाठः । (३) 'सम्पादनं यत्नसाध्यं' इति ङ. पाठः ।

'प्राचीनयोग्योपास्वे'त्यादिषु च । तथा 'ब्रह्मविदाप्नोति पर'मित्यादिषु ब्रह्मस्वरूपोपासनातत्फलादिकमुपदिश्यते । अन्यथा सत्यत्वादिविशिष्टब्रह्मणा सह कथं सकलकामावाप्तिः फलं तादृशब्रह्मसाक्षात्करणं च सिद्ध्यति । तस्मात् 'सत्यं ज्ञानमनन्तं ब्रह्म''आनन्दो ब्रह्म''आकाशशरीरं ब्रह्म''सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्''ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्ष'मिति सत्यज्ञानानन्तरूपं स्वात्मारामसुपशान्तसकलोपद्रवकलङ्कं सकलमङ्गलात्मकं परमशक्त्यविनाभूततया शबलरूपत्वेन कृष्णपिङ्गलं विरूपाक्षं त्रिलोचनं ब्रह्म उपक्रमादितात्पर्यलिंङ्गैर्निरूप्यते । 'यो वेद निहितं गुहायाम्''इति प्राचीनयोग्योपास्वे'ति ज्ञानाविनाभूतं तदुपासनं च विधीयते । 'सर्वान्कामा'नित्यादिषु

---

तत्फलविशेषं च विवेचयन्तीं श्रुतिमुदाहरति–तथेति । 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य किं तद्ब्रह्म कथं तद्वेदनीयं तद्वेदनेन प्राप्यं फलं कीदृशमित्याकाङ्क्षायां तत्रितयविवेचनार्थमृक्सद्भावं 'तदेषाभ्युक्ते'ति प्रतिज्ञाय सा ऋगुदाहृता । 'सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह । ब्रह्मणा विपश्चितेति' । अत्र प्रथमपादेन ब्रह्मस्वरूपमुक्तम् । द्वितीयपादेनोपासनाप्रकारः। तृतीयपादेन निरतिशयब्रह्मानन्दरूपं फलमुक्तम् । मानुषादिहिरण्यगर्भान्तेषु यावन्तो भोगास्तेषां सर्वेषां सहत्वे यावानानन्दस्तावान्निरतिशयब्रह्मानन्दो हि तेन लक्षणया प्रकाश्यते । चतुर्थपादेन ब्रह्मविद्यया तत्साम्यप्राप्तिरुच्यते । तत्र 'ब्रह्मणा सहे'त्यनेन ब्रह्म यावन्तं स्वात्मानन्दमनुभवति तावन्तं तदीयमानन्दं मुक्तोऽप्यनुभवतीति मुक्तस्य ब्रह्मणा परमसाम्यं प्रकाश्यते । ननु, वेदान्तेषूपासनाविधयस्तत्रतत्र प्रतीयन्तां नाम तथापि तेषां तात्पर्यलिङ्गसद्भावात् ब्रह्मण्येव प्रामाण्यं नोपासनाविधिष्वित्याशङ्क्य तेष्वपि तात्पर्यलिङ्गसद्भावं दर्शयति–अन्यथेति । यद्युपासना विधीयेरन् तदोक्तफलावाप्तिस्तदुपयोगिब्रह्मसाक्षात्कारोदयश्च न स्यात् । तदभावे सर्वैर्वेदान्तैर्महातात्पर्येण ब्रह्मणः प्रतिपादनमपि विफलं स्यात् । तत्प्राप्त्युपायोपदेशेनैव तत्साफल्यस्योपपादनीयत्वात्। तस्मात्स्वाध्यायविध्यापादितं ब्रह्मपरवाक्यानां पुरुषार्थपर्यवसायित्वं तत्प्राप्त्युपायविधानं विना न सम्भवतीत्युपपत्तिरूपं तात्पर्यलिङ्गमुपासनाविधिष्वप्यस्तीति भावः । एवं च वेदान्तानां ब्रह्मणि विधौ च तात्पर्यसत्त्वादुभयत्रापि प्रामाण्यं सिद्धमित्युपसंहरन् ब्रह्मपरवाक्यान्युपासनापरवाक्यानि च विविच्योदाहरति–तस्मात्सत्यं ज्ञानमित्यादिना । उदाहृतेषु ब्रह्मपरवाक्येषु कैश्चित्पदैस्सिद्धं रूपं सङ्गृह्णाति–सत्यज्ञानेत्यादिना । इदं पदान्तरोपात्तधर्मविशेषणानामप्युपलक्षणम् । उपक्रमेति । उपक्रमादीनि तात्पर्यलिङ्गानि येषां तथाभूतैर्वेदान्तैर्वेदान्तवाक्यैर्निरूप्यते उक्तरूपं ब्रह्म प्रतिपाद्यत इत्यर्थः । ज्ञानाविनाभूतमिति । श्रवणमननसम्पन्नज्ञानाविनाभूतमित्यर्थः । 'सर्वान्कामा'नित्यादिना वेदान्तानामुदाहृतेषूपासनाविधिषु तात्पर्यलिङ्गसद्भावं पूर्वोक्तदृढीकरणाय स्मारयित्वा तात्पर्यलिङ्गसद्भावात् ब्रह्मपरेषु वेदान्तेषु उपासनाविधिरप्युपपन्न इत्युपसंहरन् उपासनाविधौ यावदुक्तविशेषणविशिष्टमधि-

---

(१) 'निश्चीयते' इति ख. पाठः । (२) 'ब्रह्मविद्यया मुक्तस्य तत्साम्य' इति घ. पाठः ।

सकलकामावाप्तिर्ब्रह्मणा सहोपासकानामवगम्यते । अतो निष्कामनिजधर्मोपेतो निषिद्धकाम्यकर्मरहितो यथाश्रुतिस्मृतिचोदितकर्मानुष्ठानसम्पन्नचित्तशुद्धिश्शमाद्यनुगृहीतपरमशिवभक्तिभावित एव मुमुक्षुश्श्रुतिसारेभ्यश्शिवाभिधेयं परं ब्रह्म विदित्वा तदुपासीतेति ज्ञानोपासनाविधिरुपपन्नः । अत्र शिवोपपदग्रहणं विरूपाक्षस्य ब्रह्मणः परमविशुद्धिमङ्गलभाजनत्वान्मुमुक्षूणामुपास्यैकविषयत्वद्योतनार्थम् । तथाऽथर्वशिखायां 'शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये'ति श्रूयते शिवशब्दवाच्यस्य वस्तुन एव ध्येयत्वमिति । अन्यथा कथं संसारनिवृत्तिः । निरस्तसमस्तदोषकलङ्कनिरतिशयमङ्गलाधारत्वं हि शिवत्वम् । यद्विज्ञानान्मोक्षरूपं फलमुच्यते । 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ।'इति । 'शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये'ति शिवव्यतिरिक्तस्य मुमुक्षूणां ध्येयत्वं परिसङ्ख्यायते। अतश्शिव एव परं ब्रह्म मोक्षकामैर्ध्यातव्यो ज्ञातव्यश्चेति । अतस्तात्पर्यलिङ्गसमन्वयेन ब्रह्मपरा वेदान्तास्तदुपासनापराश्चेत्यविरोधः ॥ इति समन्वयाधिकरणम् ॥ ४ ॥

---

कारिणं दर्शयति—अत इत्यादिना । ज्ञानोपासनाविधिरित्यस्य पूर्ववज्ज्ञानाविनाभूतोपासनाविधिरित्यर्थः । सर्वत्रोपासनस्य श्रवणमननसम्पन्नज्ञानाविनाभावोक्तिरुपासनाविध्यपेक्षितज्ञानोत्पत्त्यर्थे श्रवणे मनने च स्वतःप्राप्तिसम्भवेन तस्य विध्यनपेक्षासूचनार्था । 'शिवाभिधेयं परं ब्रह्मे'ति भाष्यकृता शिवोपपदग्रहणं कृतम् । एवमेव प्रायः पूर्वोत्तरग्रन्थेष्वपि क्रियते । तस्य तात्पर्यं 'स्वपदानि च वर्ण्यन्त' इति भाष्यलक्षणानुसारेण स्वयमेव दर्शयति—अत्रेति । संसारमूलमलोच्छेदरूपा परमविशुद्धिः सत्यसङ्कल्पत्वादिमङ्गल्यगुणवत्त्वं च मुमुक्षुणा प्रेप्सितं तदुभयमपि शिवशब्दार्थ इति प्राग्वायुसंहितावचनोदाहरणेन दर्शितम् । अतस्तत्क्रतुन्यायेन मुमुक्षोश्शिव एवोपास्य इति द्योतनार्थं सर्वत्र शिवोपपदग्रहणं क्रियत इत्यर्थः । मुमुक्षोस्सकलेतरदेवतापरित्यागेन शिव एवोपास्य इत्यत्र श्रुतिमुदाहरति—तथेति । तथाभूतस्य शिवस्योपासनां विना मुक्तिर्न सम्भवतीत्याह—अन्यथेति । अत्र श्रुतिमुदाहरति—यदेति । यदित्यर्थः । अतः शिवोपासनां विना मुक्त्यसम्भवात् अन्यत्र मुमुक्षुप्रेप्सितस्य शिवत्वस्य नित्यसिद्धस्याभावाच्च सकलेतरपरित्यागेन मुमुक्षुभिश्शिव एव ध्येय इति प्रतिपादयन्त्यथर्वशिखाश्रुतिरुपपन्नार्थेत्याह—शिव एक इति । अतो मोक्षकामैः शिव एव ध्यातव्यः साक्षात्कर्तव्यश्चेति युक्तमित्याह—अतश्शिव एवेति । परमप्रकृतमुपसंहरति—अत इति । ॥ ॥

॥ इति समन्वयाधिकरणम् ॥ ४ ॥

---

नयमणिमालायामथ समन्वयाधिकरणम् ।

## सू० ॥ तत्तु समन्वयात् ॥ ४ ॥

व्युत्पत्तिं सिद्धवस्तुष्वपि कलयसि चेदस्तु विद्याविधानैराश्रान्तत्वादशेषश्रुतिशिखरगिरां लैङ्गिकं ब्रह्म वाच्यम् ।
मैवं पञ्चप्रयाजक्रम इव विधिभिः काङ्क्षितत्वादवार्यं तात्पर्यं तत्र...विषयफलतदानेतृरूपे श्रुतीनाम् ॥ १ ॥
इति समन्वयाधिकरणम् ॥ ४ ॥

## ॥ सूत्रार्थचन्द्रिकायामथ समन्वयाधिकरणम् ॥ ४ ॥

## सू० ॥ तत्तु समन्वयात् ॥ ४ ॥

**भगवत्पादमते** पूर्वसूत्रेण ब्रह्मणः शास्त्रैकगम्यत्वमभ्यधायि । तदसाधु शास्त्रस्य अन्यपरत्वात् । इत्याक्षिप्य इदं सूत्रमवतारयति—**तत्तु समन्वयादिति** । तुशब्दः पूर्वपक्षं व्यावर्तयति । **तत्**=सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं ब्रह्म । **समन्वयात्**=( सर्ववेदान्तवाक्यानां ) तात्पर्येणैव ब्रह्मणः प्रतिपादकत्वेन समनुगमात् । **शास्त्रैकगम्यमेव भवति** इति सूत्रार्थः ॥ अत्र सर्वे वेदान्ता विषयः । ते किं कर्मशेषकर्त्रादिपराः उत नित्यसिद्धब्रह्मपरा वेति सन्देहे अहेयानुपादेयसिद्धब्रह्मपरत्वे निष्प्रयोजनत्वसापेक्षत्वप्रसङ्गात् कर्मशेषकर्त्रादिपरा एवेति पूर्वः पक्षः । सिद्धान्तस्तु, वेदान्तवाक्यानां भिन्नप्रकरणस्थानां विधिविधुराणां 'तत्वमस्या'दीनां बहुलमुपलब्धेः अनर्थनिवृत्तिरूपप्रयोजनस्य संभवात् रूपादिहीनस्य ब्रह्मणः प्रमाणान्तरागम्यत्वेन तत्प्रतिपादकवेदान्तानां सापेक्षत्वासंभवात् सम्यक् तात्पर्यवत्त्वेन वेदान्तानां ब्रह्मणि सम्बन्धाच्च उपक्रमादिषड्विधतात्पर्यलिङ्गैः सर्वे वेदान्ताः नित्यसिद्धब्रह्मपरा एव न कर्त्रादिपरा इति । इति प्रथमवर्णकम् ॥ अथवा पूर्वसूत्रेण ब्रह्मणो वेदान्तवेद्यत्वं समर्थितम् । विधिद्वारा अङ्गीकुर्वत एकदेशिनो मतं प्रसंगादाक्षिप्येदं सूत्रं प्रवृत्तम् । तत्र वेदान्ता उपासनाविधिविषयतया ब्रह्म समर्पयन्ति उत साक्षात् इति सन्देहे प्रवृत्त्यादिलिङ्गाभावेन सिद्धे वस्तुनि शक्तिग्रहासम्भवात् प्रवृत्तिनिवृत्तिपरस्यैव शास्त्रत्वेन सिद्धपरत्वे तत्त्वायोगाच्च उपासनाविधिशेषतयैव वेदान्ताः ब्रह्म समर्पयन्ति न साक्षात् इति पूर्वः पक्षः । सिद्धान्तस्तु, प्रवृत्तिनिवृत्ती एव लिङ्गमिति निर्बन्धाभावात् ' पुत्रस्ते जात ' इत्यादिलौकिकवाक्येषु हर्षादिलिङ्गेनापि शक्तिग्रहसंभवात् हितशासनात् वेदान्तानां शास्त्रत्वोपपत्तेः तात्पर्यवत्त्वेन तेषां ब्रह्मणि समन्वयाच्च साक्षादेव वेदान्ता ब्रह्म समर्पयन्तीति ॥

**श्रीकण्ठमते,** प्रथमाधिकरणे जिज्ञास्यतया प्रतिपादितस्य द्वितीयाधिकरणेन अभिहितजगज्जन्मादिरूपलक्षणस्य तृतीयाधिकरणेन निरूपितशास्त्रप्रमाणकत्वस्य परब्रह्मणः लक्षणविषये वेदान्तशास्त्रस्य कथं प्रमाणत्वं कथं वा तेषां ब्रह्मसाधकत्वमित्याकाङ्क्षायामिदमधिकरणमारभ्यते–**तत्तु समन्वयादिति** । तत् प्रकृतं ब्रह्म **समन्वयात्**=उपक्रमादिलिङ्गावगमिततात्पर्यलिङ्गसंबन्धात् । **वेदान्ताः बोधयन्ती**त्यध्याहारः । बोधयन्त्येव इत्यर्थः । अस्य सर्वाणि वेदान्तवाक्यानि विषयः । वेदान्तवाक्यानां ब्रह्मबोधकत्वं युक्तं वा न वा इति सन्देहे सर्वशब्दानां कार्यार्थबोधकतया सिद्धवस्तुबोधनासंभवात् जगतः कार्यविशेषत्वात् कर्तृविशेषस्य ब्रह्मणोऽनुमानादपि सिद्धेश्च अप्राप्तविषयाणां वेदान्तवाक्यानां ब्रह्मणि प्रामाण्याभावात् वेदान्तवाक्यानां विधिपरत्वेन ब्रह्मपरत्वासंभवात् उभयपरत्वे वाक्यभेदापत्तेश्च वेदान्तवाक्यानां न ब्रह्मबोधकत्वं युक्तमिति पूर्वपक्षः । " पुत्रस्ते जात " इत्यादिषु सिद्धार्थेष्वपि वाक्येषु सम्बन्धग्रहणदर्शनात् सिद्धार्थेऽपि व्युत्पत्तिसंभवात् तत्र शब्दस्य प्रामाण्यसत्त्वात् अनुमानेनास्य जगतः एककर्तृकत्वसाधनायोगात् व्याप्तिबलेन कर्मवश्यत्वादीनां कर्तरि प्राप्तेश्च ब्रह्मणः अनुमानागम्यत्वात् वेदान्तवाक्यानां तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधनसमर्थत्वाच्च ' समिधो यजती ' त्यादिवाक्यानां पञ्चप्रयाजविधायकत्वतदनुष्ठानक्रमविधायकत्वरूपोभयपरत्ववत् वेदान्तवाक्यानामपि उपासनारूपब्रह्मज्ञानबोधकत्वब्रह्मप्रमापकत्वयोरभ्युपगमस्य न्याय्यत्वाच्च वेदान्तवाक्यानां ब्रह्मबोधकत्वं युक्तमेवेति ॥

**रामानुजमते,** यद्यपि प्रमाणान्तरागोचरं ब्रह्म तथापि ब्रह्मणः प्रवृत्तिनिवृत्तिरूपत्वाभावेन प्रयोजनरूपत्वाभावात् शास्त्रप्रमाणकत्वं न सम्भवतीत्याशङ्कायामिदमारभ्यते–**तत्तु समन्वयादिति** । तुशब्दः प्रसक्तामाशङ्कां निवर्तयति । **तत्**=शास्त्रप्रमाणकत्वम् । **समन्वयात्**=( परमपुरुषार्थतयान्वयस्समन्वयः । ) परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयान्वयात् । **ब्रह्मणः संभवत्येव** । इत्यध्याहारः । अत्र सर्वाणि वेदान्तवाक्यानि विषयः । अत्र वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविधुरत्वात् ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्यवसानात् स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्यन्तताsसिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवतीति पूर्वः पक्षः । सिद्धान्तस्तु,अध्यापनाद्युपपत्तये पुरुषार्थपर्यवसानस्यापेक्षितत्वात् प्रेक्षावदधिकार्यस्य शास्त्रस्यार्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानानुपपत्तेः तदुपपत्त्यर्थं प्रवर्तकवाक्यानामिव वेदान्तवाक्यानामप्यर्थसद्भावे प्रामाण्यमङ्गीकार्यमेवेत्यतः 'यतो वा इमानि भूतानि जायन्त ' इत्यादि वाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञसत्यसंकल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम् । अतः ब्रह्मणः शास्त्रप्रमाणकत्वे न काप्यनुपपत्तिरिति ॥

**आनन्दतीर्थमते, तत्तु समन्वयात्** । तुशब्द एवार्थे । **तत्तु**=विष्णवाख्यं ब्रह्मैव । **समन्वयात्**=समीचीनोपक्रमादितात्पर्यलिङ्गात् । **शास्त्रयोनि** । न रुद्रादिः । इत्यर्थः । अत्र जगत्कारणत्वेन शास्त्रैकगम्यत्वं विष्णोरन्यस्य वेति संदेहे शास्त्रतोऽपि क्वचित्क्वचित्पशुपतिहिरण्यगर्भादीनां जगत्कारणत्वप्रतीतेः रुद्रादेरपि कारणत्वेन शास्त्रैकगम्यत्वमिति पूर्वः पक्षः । सम्यग्विचारितादुपक्रमादितात्पर्यलिङ्गरूपादन्वयात् ततोऽन्यथा प्रतीतेरज्ञानमूलत्वाच्च विष्णवाख्यं ब्रह्मैव कारणतया शास्त्रगम्यमिति सिद्धान्तः ॥

इति **हालास्यनाथकृतौ** सूत्रार्थचन्द्रिकायां समन्वयाधिकरणम् ॥ ४ ॥

## ॥ चतुस्सूत्री समाप्ता ॥

## अथ ईक्षत्यधिकरणम् ॥ ५ ॥

उक्तस्य ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशङ्क्याह—

॥ सू ॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेये' त्यादि। इह पूर्वभावितया सकलस्य प्रपञ्चस्य कारणत्वेन श्रूयमाणं सदिति वस्तु ब्रह्म प्रधानं वेति सन्देहः। प्रधानस्यैव जगत्कारणत्वं युक्तम्। 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपा'मिति श्रुत्यन्तरे श्रवणात्। अत्र हि बहुप्रजाजनकत्वं लोहितादिवर्णानुमितरजस्सत्त्वतमोरूपायास्साङ्ख्यप्रकृतेरवगम्यते। तदानुगुण्येनात्रापि सच्छब्दवाच्यं जगत्कारणं प्रधानमेव। रजस्सत्व-

---

पूर्वाधिकरणे सर्वेषां वेदान्तानां तात्पर्यलिङ्गवत्त्वेन ब्रह्मणि प्रामाण्यं सिद्धवदुपन्यस्तम्। तदनुपपन्नम्। सद्विद्यायाः प्रधानपरत्वादित्येवंरूपा समन्वयाधिकरणेनाक्षेपिकी सङ्गतिः प्रथमाध्यायगतसर्वाधिकरणसाधारणाग्रिमाधिकरणपूर्वपक्षोपन्यासेन स्फुटीभविष्यतीति तामपहाय तत्फलभूतां प्रमाणमुखेन लक्षणप्रदर्शनानन्तरं तत्परीक्षा कर्तव्येत्यवसरलक्षणामतिव्याप्तमिदं लक्षणमनुपपन्नमित्याक्षेपिकीं वा लक्षणनिरूपणेन सङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति—उक्तस्येति ॥ सू ॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥ सद्विद्यैवास्याधिकरणस्य विषयः। न सर्वाणि कारणवाक्यानि। आत्मपुरुषशिवशम्भ्वादिपदयुक्तकारणवाक्यानां सत्तासामान्यवाचिसत्पदयुक्तायाः सद्विद्याया इव पूर्वपक्षे प्रधानपरत्वकल्पकाभावात्। न च सद्विद्यायाः प्रधानपरत्वमेव तत्कल्पकम्। कल्पभेदेन प्रधानपरमेश्वरयोरुभयोरपि जगत्कारणत्वसम्भवेन कारणपरात्मपुरुषशिवशम्भ्वादिश्रुत्यन्यथाभावकल्पनायां बीजाभावादित्यभिप्रेत्य विशेषयति—छान्दोग्य इति। ईक्षणस्य मुख्यत्वासम्भवसम्भवौ संशयबीजमित्यभिप्रेत्य संशयं दर्शयति—इहेति। लोहितादिवर्णानुमितेति। अनुमितशब्दोऽत्र लक्षितवचनः। सुखदुःखमोहात्मकत्वोन्नेयसत्त्वरजस्तमोरूपस्य जगतस्तथाभूतेनैव कारणेन भाव्यमित्युदाहृतश्रुतेः प्रकृतिपरत्वसिद्ध्यनुकूलन्यायोऽप्यनेन विशेषणेन सूचितः। साङ्ख्यप्रकृतेरिति। साङ्ख्योक्तयुक्तिकल्पितप्रकारायाः प्रकृतेरित्यर्थः। तदानुगुण्येनेति। साङ्ख्याः खल्वचेतना प्रकृतिश्चेतनाधिष्ठिता जगत्सृष्ट्यादिव्यापारे स्वयमेव प्रवर्तते सैव च बन्धमोक्षयोर्हेतुरिति वदन्तः स्वानुमानसिद्धां प्रकृतिं कारणवाक्यान्यनुवदन्तीति कल्पयन्ति। तदानुगुण्यं सद्विद्यायां दृश्यते। तत्र मृत्पिण्डाद्यचेतनदृष्टान्तास्तावदचेतनकारणत्वकल्पनानुगुणाः। 'तत्तेजोऽसृजते'ति सृष्टौ स्वातन्त्र्यप्रतिपादनं चेतनाधिष्ठितं तदचेतनं कारणमिति कल्पनानुगुणम्। चेतनाचेतनशकुनिबन्धनदृष्टान्तोक्तिपूर्वकं 'प्राणबन्धनं हि सोम्य मन' इत्येतत् 'तावदेव चिरं यावन्न विमोक्ष्य' इत्येतच्च तदेवाचेतनं पुरुषस्य बन्धमोक्षयोर्हेतुरिति कल्पनानुगुणम्। 'अन्नेन सोम्य शुङ्गेने'त्यादिकमनुमानसिद्धकारणानुवादकत्वकल्पनानुगुणम्। ननु, चेतनानधिष्ठितस्याचेतनस्य स्वयमेव क्वचिदपि प्रवृत्तिर्न सम्भवति। अचेतनस्य पञ्चकृत्यानुगुणसङ्कल्पवत्त्वरूपं तत्कर्तृत्वमपि न सम्भवति। तथा च कुतो लक्षणस्यातिव्याप्तिरित्याशङ्क्याह—रजस्सत्वेति। अयं भावः। लघुस्सत्वगुणः प्रकाशकार्यः। चलो रजोगुणः प्रवर्तनकार्यः। गुरुस्तमोगुणः नियमनकार्यः।

**योगादस्य क्रियाज्ञानशक्तिसम्बन्धोऽपि युज्यते । येन जगत्कारणत्वसिद्धिः । अचेतनस्य प्रधानस्य जगदाकारपरिणामो युक्तो न चेतनस्य परमेश्वरस्य कूटस्थस्य। कारणविकृतिरूपत्वात्परिणामस्य । ततो न्यायतः श्रुतितश्च प्रधानमेव जगत्कारणं सत्पदवाच्यमिति प्राप्ते ब्रूमः । अशब्दमानुमानिकं प्रधानं न जगत्कारणं सच्छब्द-**

---

तत्र सत्त्वमक्रियत्वात्प्रकाशाख्यज्ञानवृत्तिरूपकार्यजनने स्वयमेवाप्रवर्तमानं चलो रजोगुणस्तत्र प्रवर्तयति ।तच्च गुरुणा तमसा नियम्यमानं भोजकादृष्टानुसारेण कस्यचिदेवार्थस्य प्रकाशे प्रवर्तयति।न सर्वत्र। स्वयं च रजोगुणश्चलस्वभावोऽपि तमसा नियम्यमानः क्वचिदेव व्याप्रियते ।एवं सत्वरजोवृत्तितया त्रिगुणात्मकप्रकृतिधर्मयोरेव ज्ञातृत्वकर्तृत्वयोर्विवेकाग्रहेण चेतनधर्मत्वव्यवहारः । तथा च स्वाभाविकज्ञातृत्वकर्तृत्वयुक्तायाः प्रकृतेः पञ्चकृत्यानुकूलसङ्कल्पवत्त्वरूपं निमित्तत्वं जगदाकारपरिणामक्रियावत्त्वरूपमुपादानत्वं चोपपद्यत इत्यस्त्येव तत्र लक्षणस्यातिव्याप्तिः । न चाचेतनं स्वयं क्रियाशक्तिमदपि चेतनाधिष्ठितमेव प्रवर्तत इति नियमः । वत्सविवृद्ध्यर्थमूधस्थपयसः स्वयमेव क्षरणदर्शनेन तद्वत्प्रकृतेरपि पुरुषस्य भोगापवर्गार्थं तत्र कार्ये प्रवृत्त्युपपत्तेः। यद्यपि गुणसाम्यावस्थारूपायां प्रकृतावन्तःकारणरूपे तद्विकार इव व्यक्ते ज्ञानक्रिये न स्तः । तथाप्यव्यक्तेन शक्त्यात्मना रूपेण तस्यामपि ते स्त एवेति।अचेतनस्येति । प्रकृतिविशिष्टस्य परमेश्वरस्योपादानत्वसमर्थने च स्वतःपरिणामिन्याः प्रकृतेरुपादानत्वं द्वारान्तरापेक्षतया शीघ्रं बुद्धिमारोहतीति जगदुपादानतया प्रतिपाद्यमानं सत्पदवाच्यं वस्तु प्रकृतिरेवेत्यङ्गीकर्तुं युक्तमिति भावः। ततो न्यायतः श्रुतितश्चेति । सुखदुःखमोहात्मकत्वेन प्रकृतेः कार्यानुरूप्यं मृत्पिण्डाद्यचेतनदृष्टान्तानुगुण्यं कार्यलिङ्गकानु- नुगुण्यं परमेश्वरस्य परिणामित्वासम्भवश्च न्यायः । श्रुति'रजामेका'मित्यादिः । ननु, 'चमसवदविशेषात्' (ब्र० १. ४. ८ सू०) रचनानुपपत्तेश्च नानुमानम् । (ब्र० २. २. १ सू० ) न विलक्षणत्वादस्य तथात्वं च शब्दात् । (ब्र० २. १. ४ सू० ) अदृश्यत्वादिगुणको धर्मोक्तेः ( ब्र० १. २. २१ सू० ) प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । ( ब्र० १. ४. २४ सू० ) इत्यधिकरणेषूदाहृतश्रुतिन्यायावलम्बपूर्वपक्षाः परिहरिष्यन्ते । श्रुतावनुमानोपन्यासस्य गतिः समन्वयाधिकरणे प्रदर्शितैव । किमालम्बनोऽत्र पूर्वः पक्षः । उच्यते। 'फलमत उपपत्तेः । ( ब्र० ३. २. ३८ सू० ) पुरुषार्थोऽतश्शब्दादिति बादरायण' ( ब्र० ३. ४. १ सू० ) इत्याद्यधिकरणवत्सिद्धान्तोपक्रमं पूर्वपक्षमध्यमिदमधिकरणं न तु समन्वयाधिकरणवत् उन्नीतपूर्वपक्षम् । अतोऽस्मिन्नधिकरणे सिद्धान्तयुक्तिव्याख्यानारम्भ एव कर्तव्ये शिष्यबुद्ध्यनुग्रहार्थमधिकरणान्तरपूर्वपक्षश्रुतिन्यायविशेषान् कंचित्प्रकृत्यधिकरणन्यायोपमर्दकशङ्काविशेषं चावलम्ब्य पूर्वपक्षोऽपि कश्चित्प्रदर्शितः । एतदधिकरणपूर्वपक्षस्तु द्वितीयसूत्रावतारिकायां प्रदर्शयिष्यते । सौत्रमशब्दपदं पक्षभूतप्रधाननिर्देशकं कुर्वन् सद्विद्यायाः तद्विषयत्वं वदतः पूर्वपक्षिणः कथं तदशब्दमित्याशङ्क्य व्याचष्टे—अशब्दमानुमानिकमिति । 'अशब्द'मित्यनेन शब्दरहितत्वं नोच्यते । किं तु शब्देतरानुमानप्रमाणवत्त्वम् । तत्र नञः पर्युदासार्थत्वस्य मत्वर्थीयाच्प्रत्ययान्तत्वस्य चाङ्गीकारादिति भावः । सौत्रस्य नञो निषेध्यमध्याहृत्य साध्यं दर्शयति—न जगत्कारणं सत्पदवाच्यं वस्त्विति । 'अपि तु

वाच्यं वस्तु। अपि तु ब्रह्मैव चेतनम्। ईक्षतिश्रवणात् 'तदैक्षत बहु स्यां प्रजायेये'ति। न ह्यचेतने प्रधाने चेतनधर्म ईक्षतिस्सम्भवति। यदुक्तं 'बह्वीं प्रजां जनयन्ती'मिति श्रवणात् साङ्ख्यप्रकृतेरत्र जगत्कारणत्व'मिति तदसङ्गतम्। 'चमसवदविशेषा'दिति (ब्र०. १. ४. ८) सूत्रे हि परमेश्वरकारणिकाया एव प्रकृतेर्बहुप्रजाजनकत्वमित्युपपादयिष्यामः। 'रजस्सत्वरूपतया क्रियाज्ञानशक्तिसम्बन्धः प्रधानस्ये'ति यदुक्तं तदयुक्तम्। त्रिगुणात्मिकायाः प्रकृतेस्तमःपार्थक्येन रजस्सत्वयोगाभावात्। न च तमस्यभिभूते रजस्सत्त्वयोरुद्रेके ज्ञानक्रियासम्बन्धः प्रधानस्येति वाच्यम्। सत्वरजस्तमसां साम्यावस्था प्रकृतिरित्यङ्गीकारात्। 'कूट-

---

ब्रह्मैव चेतन'मिति पर्यवसानलभ्यार्थप्रदर्शनम्। ईक्षतिपद'मिकृश्तिपौ धातुनिर्देश' इति विहितधातुनिर्देशकप्रत्ययान्तमीक्षिधातुपरमित्यभिप्रेत्य व्याचष्टे—ईक्षतिश्रवणादिति। ननु, ईक्षिधातूपात्तमीक्षणलिङ्गमेवात्र साध्यसाधकं कथमीक्षिधातौ तदसाधके पञ्चम्या हेतुत्वनिर्देशः। उच्यते। ईक्षणमपि न साक्षात्साध्यसाधकं विरुद्धत्वादपक्षनिष्ठत्वाच्च। किं तु सत्पदविषये श्रूयमाणं चेतनासाधारणं मुख्यमीक्षणमचेतनस्य प्रधानस्य तद्विषयतायां नोपपद्यत इत्येवमनुपपद्यमानतया। एवं तत्साधकत्वमीक्षतिधातोरप्यविशिष्टम्। न हि प्रधानस्योदाहृतसत्पदविषयत्वे[1] तद्विषये[2] श्रूयमाण ईक्षतिधातुः मुख्य उपपद्यते। एवमनुपपद्यमानतया[3] साधकत्वे द्वयोरप्यविशिष्टे। प्रथमोपस्थितशब्दानुपपत्तिलङ्घने कारणाभावादीक्षतिधातुरेव हेतूकृतः। यद्वा सूत्रभाष्ययोरीक्षतिशब्दाभ्यां तद्वाच्यमीक्षणं लक्षणीयम्। अत एवाग्रिमभाष्ये 'चेतनधर्म ईक्षति'रित्युक्तम्। पूर्वस्मिन्पक्षे तु तत्र चेतनधर्मशब्देन चेतनधर्मवाचित्वं लक्षणीयम्। ननु, सत्वगुणवृत्तिविशेषरूपमीक्षणं तत्प्रधान एव सम्भवतीत्याशङ्क्याह—न हीति। जडपरिणामरूपायाः सत्ववृत्तेः स्वयं चिद्रूपत्वं न सम्भवति। किं तु स्वच्छतया चित्प्रतिबिम्बोपाधित्वेन[4] ज्ञानव्यपदेशमात्रं तत्र भाक्तमिति भावः। पूर्वपक्ष्युदाहृतश्रुतिं वक्ष्यमाणपरिहारस्मारणेन सङ्गमयति—यदुक्तमित्यादिना। क्रियाज्ञानशक्तियोगात्प्रकृतेरुपादानत्वं पञ्चकृत्यकारित्वं चोपपद्यत इति यदुक्तं तदनूद्य दूषयति—रज इति। त्रिगुणात्मिकाया इति। शक्त्यात्मना क्रियाज्ञानयोगस्तावन्नोपादानकर्तृत्वनिर्वाहकः। मृत्पिण्डकुलालयोः क्रियाज्ञानव्यक्त्यभावे घटनिष्पत्त्यदर्शनादिति व्यक्त्यात्मना प्रकृतेस्तद्योगमुपपाद्यातिव्याप्तिस्समर्थनीया। न च तदुपपादनं शक्यम्। तमो विना केवलं रजस्सत्वयोः प्रकृतावुद्रेकानङ्गीकारादिति भावः। तदङ्गीकारमाशङ्क्य परिहरति—तमसीति। सत्वेति। सत्वरजस्तमसां साम्यावस्था प्रकृतिः वैषम्यावस्था महदहङ्कारादिविकृतिरिति हि साङ्ख्यानामभ्युपगमः। तथा च 'सदेव साम्येदमग्र आसीदेकमेवाद्वितीय'मिति श्रुतिप्रतिपादितमूलकारणत्वेन शङ्क्यमानायाः प्रकृतेर्गुणवैषम्यं न सम्भवतीति भावः। प्रा'ङ्ग ही'त्यादिभाष्येण प्रकृतेर्मुख्यज्ञानस्यासम्भव उक्तः। इदानीं तस्याः सत्ववृत्तिरूपगौणज्ञानस्याप्यसम्भव उक्त इति भेदः। परमेश्वरस्य परिणामित्वासम्भवदोषं प्रकृत्यधिकरणवक्ष्यमाणन्यायस्मरणेन परिहरति—कूट-

---

(१) 'तमसि न्यग्भूते' इति ख. ग. घ. पाठः। (२) 'विषयत्वेन तद्विषये' इति ख. पाठः। (३) 'मानतया एवं तत्साधकत्वे' इति ख. पाठः। (४) 'चित्प्रतिबिम्बग्राहित्वेन' इति ख. पाठः।

स्थस्य परमेश्वरस्य जगदाकारेण परिणामो विकरणे हेतु'रिति यदभाणि तदज्ञानविलसितम्। नामरूपविभागानर्हसूक्ष्मचिदचिच्छक्तिविशिष्टस्य परमेश्वरस्य कारणत्वं नामरूपविभागार्हस्थूलचिदचिच्छक्तिविशिष्टस्य कार्यत्वमिति वदतामस्माकं तत्प्रसङ्गभयाभावात्। ननु,'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मित्यादिना सद्रूपं वस्तु निर्विशेषमेवावधारणादवगम्यते कारणावस्थमेतत्कथं सूक्ष्मप्रपञ्चविशिष्टमित्युच्यत इति चेन्न । सदेवेत्यवधारणेन न विशेषनिषेधः किंत्वसत्कारणत्वनिषेधः'असद्वा इदमग्र आसीत् ततो वै सदजायते'ति श्रवणादसत्कारणत्वस्य भ्रान्तिप्रसक्तिसत्त्वात्[१] । किं च'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मित्यत्र कथं निर्विशेषत्वं ब्रह्मणः। 'आसीदिति हि क्रियाविशेषः । 'अग्र'इति हि कालविशेषः । 'एकमेवे'त्यवधारणमधिष्ठात्रन्तरनिषेधपरम् । 'अद्वितीय'मिति जगदुपादानत्वमुच्यते।अत एव सर्वज्ञमनन्तशक्तिविशिष्टं च। कथं सर्वज्ञ-

---

स्थस्येत्यादिना । द्वारान्तरापेक्षमपि पारमेश्वरमेवोपादानत्वं सद्विद्याप्रतिपाद्यमभ्युपगन्तव्यम् । ईक्षतिलिङ्गानुरोधादिति भवः । अपृथक्सिद्धकार्यावस्थाश्रयत्वं ह्युपादानत्वम् । तत्पारमेश्वरमाश्रयान्तरनैरपेक्ष्यात्प्रबलं प्राकृतं तत्सापेक्षत्वाद्दुर्बलमिति विपरीतन्यायोऽपि प्रकृत्यधिकरणे प्रदर्शयिष्यते । ननु, जगत्कारणस्य ब्रह्मणो विशिष्टरूपत्वे तदेव सद्विद्यागतसत्पदवाच्यमभ्युपगन्तव्यम् । तन्न युज्यते ।सकलभेदवस्तुप्रत्याख्यानार्थावधारणविरोधात्तदनुरोधेन तस्याखण्डविशेष्यमात्रपरताया वक्तव्यत्वादिति तटस्थश्शङ्कते—नन्विति । न तावदिह

रणविरोधः । तस्य श्रुत्यन्तरापातदर्शनजन्यभ्रान्तिप्रसक्तासत्कारणत्वनिषेधार्थत्वादित्याह—सदेवेति । ननु सदिति निर्देशेनैवासत्कारणत्वनिषेधो लभ्यते किमवधारणेनेत्याशङ्क्याह—किं चेति । तस्मिन्नेव वाक्ये अस्तिक्रियारूपायाः सत्तायाः कालविशेषस्य च निर्देशेन सकलविशेषनिषेधस्यानुपपन्नतया सदितिनिर्देशलभ्यासत्कारणत्वव्यावृत्त्यनुवादेन तद्दार्ढ्यार्थत्वमेवावधारणस्य वक्तव्यम् । तेन सदसद्विषयश्रुत्योर्बलाबलावधारणं लभ्यते । न च 'तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतस्सज्जातं कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेते'त्यग्रिमवाक्ये स्पष्टमसद्वादिनिराकरणात् तेनैव तयोर्बलाबलावधारणं लभ्यत इत्यवैयर्थ्यार्थमवधारणस्यान्यनिषेधकत्वं वक्तव्यमिति वाच्यम्। 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूया'दित्यत्रेवावधारणार्थस्यैव[२] स्पष्टीकरणमित्युपपत्तेः । अवाक्यभेदार्थं तत्र तथाभ्युपगम इत्येतदिहापि तुल्यमिति भावः । एवं चैकमेवेत्यत्राप्येकत्वोक्तिः सिद्धस्यैवाधिष्ठात्रन्तरनिषेधस्यावधारणेन स्थिरीकरणमित्याह—एकमेवेति। 'अद्वितीय'मित्यनेनोपादानान्तरनिषेधेन ब्रह्मण एव सकलजगदुपादानत्वमुच्यत इत्याह—अद्वितीयमिति । एवं च 'एकमेवाद्वितीय'मिति विशेषणद्वयं ब्रह्मणः सकलजगत्कर्त्रुपादानरूपत्वप्रतिपादनेन निर्वाहकतया[३] तस्य सर्वज्ञत्वं सर्वशक्तिकत्वं चाक्षिपत् विशेषान्तरस्यापि प्रापकं न तु कस्यचिदपि विशेषस्य निषेधकमित्याह—अत एवेति। सत्पदस्य सविशेषपरतायां पदान्तर-

---

( १ ) 'भ्रान्तिप्रसक्तत्वात्' इति ख. पाठः। ( २ ) 'दिति प्रकरणार्थस्यैव' इति. ख. पाठः।
( ३ ) 'तन्निर्वाहकतया' इति ख. पाठः।

त्वसर्वशक्तित्वविशेषमन्तरेण जगदुभयकारणत्वं ब्रह्मणो भवति । अथवा प्रकृतिप्रत्ययात्मकस्य सत्पदस्य नैकवस्तुपरत्वं युक्तम् । प्रकृत्या प्रत्ययेन च सत्पदस्य वस्तुद्वयप्रतिपादनपरत्वात् । तथा ह्यभियुक्तसूक्तिः—'शक्तिःशिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ । तौ ब्रह्मसामरस्येन समस्तजगदात्मकौ ॥' इति । स्थूलसूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्यकारणरूपस्सत्पदविषय इति निर्णयः॥

पुनराशङ्क्य परिहरति—

सू० ॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

ईक्षतेश्चेतनधर्मस्याचेतने प्रधाने योगाभावाचेतनमेव परं ब्रह्म सत्पदवाच्यं कारणमिति प्रतिपादितम् । तदसङ्गतमेव । 'तत्तेज ऐक्षत ता आप ऐक्षन्ते' त्यादिष्वचेतनेऽपीक्षतिर्यथा गौणः श्रूयते तथा प्रधानेऽपि गौण इति चेन्न । चेतनवाचिन आत्मशब्दात् 'सदेव सोम्येदमग्र आसी'दित्यारभ्य उपसंहारे'स

सामर्थ्यपर्यालोचनापर्यन्तं न गन्तव्यम् । तत्सामर्थ्यपर्यालोचनयैव सिद्ध्यतीत्याह—अथवेति । प्रकृत्यंशेन सत्ता प्रत्ययांशेन तदाश्रयश्चोच्यत इति सत्पदस्य विशिष्टपरत्वमवर्जनीयमित्यर्थः । तत्र विशेषणीभूता सत्ता चिच्छक्तिरेवेत्यभियुक्तसम्मत्या दर्शयति—तथेति । तौ शक्तिशिवौ विशेषणविशेष्यभूतौ विशिष्टरूपेण ब्रह्म न तु विशेषणमात्रं विशेष्यमात्रं वेत्यर्थः । अभियुक्तसम्मतिसिद्धमर्थं निष्कृष्य दर्शयति—स्थूलेति । पुनराशङ्क्येति । पूर्वसूत्रे वाचनिकशङ्कापरिहाराभावेऽपि किञ्चिदभिप्रायशङ्कापरिहारो विवक्षितोऽस्तीत्यभिप्रेत्य पुनश्शब्दः॥ सू॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥ तदसङ्गतमेवेति । न हि परमेश्वरस्य धर्म ईक्षणम् । तस्य निर्विकारत्वात् । किं तु परिणामिन्याश्चिच्छक्तेर्धर्मः । न च परमेश्वरे चिच्छक्तेरिव तद्धर्मस्यापि व्यपदेशो मुख्यः । तथा सति सकलचिदचिच्छरीरके तस्मिन् शक्तेरिव सुखी दुःखीत्यादिव्यपदेशस्यापि मुख्यत्वप्रसङ्गात् । तथा च परमेश्वरेऽपि मुख्यमीक्षणं न सम्भवतीत्येवकाराभिप्रायः । ननु, प्रधाने परमेश्वरे च मुख्येक्षणासम्भवे कुतः प्रधान एवेक्षतेरमुख्यवृत्तिः प्रायपाठादित्याह—तत्तेज इति । 'तत्तेज ऐक्षते'त्यादिषु अचेतनगते कार्यौन्मुख्ये खल्वीक्षणस्य गौणत्वम् । तथैवात्रापि गौणत्वमभ्युपगन्तुं युक्तं तत्प्रायपाठात् । चेतनधर्मस्याचेतनधर्मत्वोपचाराश्रयणे तत्प्रायपाठभङ्गप्रसङ्गादिति भावः । एवं च यद्यपि प्रायपाठमात्रं स्थानप्रमाणरूपमीक्षतिश्रुतेर्मुख्यत्वभञ्जकं न भवति । तथापि पक्षद्वयेऽपि मुख्यत्वभङ्गाविशेषे सति क्वचिदमुख्यवृत्त्याश्रयणे तन्नियामकं भवितुमर्हतीति तात्पर्यम् । एतेन सत्पदवाच्ये 'सेयं देवतैक्षते'ति चेतनवाचिनो देवतापदस्य 'तत्सत्यं स आत्मे'त्यात्मपदस्य च श्रवणात् न तदचेतनं प्रधानमिति शङ्का निरस्ता । देवताशब्दस्येंद्रादिषु देवेषु चेतनेष्विव सूक्तहविःप्रतियोगिषु ग्रावसोमलतादन्तहनूप्रभृतिष्वचेतनेष्वपि प्रयोगदर्शनेनात्मशब्दस्य चेतनेषु देवमनुष्यादिष्विवाचेतनेषु स्वभावशरीरादिष्वपि प्रयोगदर्शनेन चानिर्णायकतया तयोरप्यचेतनेक्षणप्रायपाठानुसारेण 'हन्ताहमिमास्तिस्रो देवता' इति तेजःप्रभृत्यचेतनपरदेवतापदप्रायपाठानुसारेण चाचेतनविषयत्वपर्यवसानात् । चेतनवाचिन इति । इहात्मशब्दस्य शरीरपरत्वकल्पनायां चेत-

(१) 'कार्ये मुख्ये खल्वीक्षणस्य' इति ख. पाठः ।

आत्मा तत्त्वमसी'ति श्रवणात् । तेजःप्रभृतिष्वपि न गौणमीक्षतिश्रवणंतत्तदात्मतया परमेश्वरस्य चेतनस्यानुवृत्तेः ॥

नन्वीक्षतिश्रवणं गौणमभ्युपेत्याप्यचेतनं प्रधानं सद्रूपं जगतः कारणमिति वक्तुं न शक्यम् । तस्य चेतनत्ववादिन आत्मशब्दादिति निरूपितम् । भवतु

नवर्गमात्रेण स्वभावपरत्वकल्पनायामचेतनवर्गमात्रेणान्वयस्य सर्वशब्दस्य चेतनाचेतनान्यतरपरत्वेन सङ्कोचस्य वा प्रसङ्गेनासङ्कुचितसर्वान्वयसिद्ध्यर्थं तस्य चेतनवाचितामाश्रित्य सकलचेतनाचेतनात्मभूतपरमेश्वरपरत्वमभ्युपगन्तुं युक्तमिति भावः । उपक्रमगतसामान्यशब्दस्य औपसंहारिकैर्विशेषपर्यवसानं युक्तमिति प्रकृतसाध्ये साक्षाद्धेतूभवनक्षमस्याप्यात्मशब्दादितिहेतोस्तद्धेतुभूतेक्षतिविषयगौणत्वशङ्कानिराकरणहेतुत्वेनोपन्यासस्यैव शङ्कात्र पूर्वपक्षावलम्बनत्वात् प्राधान्येन निराकरणीयेति द्योतनायाचेतनेक्षणप्रायपाठोऽप्यसिद्ध इत्याह—तेजःप्रभृतिष्विति । 'बहु स्या'मिति प्राग्वर्णितबहुभवनसङ्कल्पानुसारेण 'तदात्मानं स्वयमकुरुते'ति श्रुत्यन्तरानुसारेण च स्थूलप्रपञ्चविशिष्टतया कार्यत्वयोग्यस्य परमेश्वरस्य 'तत्तेजोऽसृजत' 'तदपोऽसृजते'तिवाक्यगतयोस्तत्तत्कार्यान्तर्यामिपर्यन्तयोरप्तेजश्शब्दयोर्वाच्यत्वेनानुवृत्तेस्तत्रैव 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्ते'ति वाक्यगतयोस्सर्वनाम्नोरप्तेजश्शब्दयोश्च वृत्तिरिति भावः । एवं च चिच्छक्तेर्धर्मस्येक्षणस्य यद्यपि तद्धर्मिण्युपचारस्स्यात् । तथापि स एवोपचारः प्रायपाठानुसारेण तदैक्षतेत्यत्रापि ग्राह्यः । वस्तुतस्तु तस्य तत्र मुख्य एव व्यपदेशः । परिणामिपरिणामयोश्चिच्छक्तीक्षणयोरनन्यत्वात् चिच्छक्तेश्च साक्षात्परमेश्वरधर्मत्वात् । यदि च तयोर्भेदः स्यात् तथापि जीवेष्विव परमेश्वरेऽपि मुख्य एवेक्षणव्यपदेशः । न हि 'चैत्र ईक्षत'इत्यादिव्यपदेशो न मुख्यः । न हि तावता तदीयच्छिक्तेर्धर्मस्येक्षणस्य साक्षाद्धर्मत्वम् । प्रत्युत चिच्छक्तिरूपं चैत्रस्य ज्ञानमीक्षत इत्यादिव्यपदेश एव मुख्यः । कुत एवमिति चेत् शब्दस्वाभाव्यात् । के चिच्छब्दास्साक्षात्प्रवृत्तिनिमित्तवन्तमपहाय सम्बन्धान्तरेण तद्वति मुख्या भवन्ति । यथा धनवच्छब्दो धनं बिभ्रतं भृत्यमपहाय तत्स्वामिनि मुख्यो भवति । ननु, जैवी चिच्छक्तिस्स्वयं चेतना न भवतीति तद्धर्मेणेक्षणेन तदाश्रय ईक्षणवान्भवतीति युज्यते । पारमेश्वरी तु स्वयमपि चेतनेति कथं तदीयेनेक्षणेन परमेश्वरस्येक्षणवत्त्वम् । तथा सति जीवचिच्छक्तेरिव तस्या अप्यचेतनत्वप्रसङ्गादिति चेन्न । स्वामिधनं बिभ्रतः कस्यचिद्भृत्यस्य स्वयमपि धनवत्त्ववत्पारमेश्वरेक्षणरूपपरिणामविशेषवत्या एव तदीयचिच्छक्तेः स्वेक्षणरूपपरिणामान्तरत्वसम्भवात् । एतेन चिच्छक्तिधर्मैरीक्षणैः परमेश्वरस्येक्षणवत्त्वे जीवधर्मैस्सुखदुःखादिभिस्तद्वत्त्वमपि स्यात् । जीवानां चिच्छक्तेश्चेतनानन्तरत्वाविशेषात् अयुतसिद्धत्वेन परमेश्वराश्रितत्वाविशेषाच्चेत्यपि शङ्का निरस्ता । समवायवादिनां घटादिषु कालादिषु च रूपसमवायसत्त्वाविशेषेऽपि रूपिनीरूपव्यवस्थावत् रूपिरूपयोरयुतसिद्धत्वाविशेषेऽप्याधारत्वाधेयत्वव्यवस्थावच्च पारमेश्वरचिच्छक्तिधर्माणामीक्षणविशेषाणां जीवधर्माणां सुखदुःखादीनां च तथातथानुभवव्यवहारप्रयोजकसम्बन्धविशेषसदसत्त्वाभ्यां पारमेश्वरत्वतदभावव्यवस्थोपपत्तेः । यद्यप्येवं सतीक्षणविषयस्याचेतनेक्षणप्रायपाठस्यासिद्धा-

( १ ) 'चेतनाचेतनप्रपञ्चभूत' इति च. पाठः । ( २ ) 'चिच्छक्तिवत्' इति घ. पाठः ।

नात्मशब्दस्याचेतनं प्रधानमर्थ इति। भवति तु चेतनस्य जीवस्यात्मशब्दवाच्यत्वं मुख्यम्। ततो जीव एव चेतनो जगत्कारणं सद्रूपमित्यत आह—

## सू॰ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

सत्पदवाच्यतत्त्वनिष्ठस्य मोक्ष उपदिश्यते'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य'इति। तस्मात्प्रधानं जीवश्च नात्र सत्पदविषयः। प्रधानकारणवादिनां सा-

---

वपि देवतापदविषयस्याचेतनपरदेवतापदप्रायपाठस्य नासिद्धिः। तथापि श्रुतिलिङ्गविरोधिप्रायपाठमात्रमसाधकमिति न दोषः। उत्तरसूत्रमवतारयितुमाशङ्कते—नन्विति। आत्मशब्दवाच्यत्वमिति। आत्मशब्दप्रतिपाद्यत्वं जीवस्य मुख्यं भवतीत्यर्थः। तथापि प्राकृतं सर्वं प्रत्यात्मत्वं जीवस्य न सम्भवतीति चेन्मा सम्भवात्। न हि तदत्र प्रतिपाद्यते। तथा हि—न ताव 'दैतदात्म्यमिदं सर्व'मित्यनेन तत्प्रतिपाद्यते। तस्य तद्धितयत्प्रत्ययार्थवत्त्वाय सर्वमिदं प्रकृतसद्रूपात्मसम्बन्धीत्येतदर्थपरत्वात्। नापि स आत्मेत्यनेन तत्प्रतिपाद्यते। तत्र 'सर्वस्ये'ति विशेषणाश्रवणात् प्राचीनवाक्यगतस्य सर्वपदस्यान्वयित्वात्। अन्यान्वयिनोऽप्यपेक्षायां सत्यां कथञ्चिदन्वयस्स्यात्। 'सहस्रं देयमपरिमितं देय'मित्यत्र सहस्रस्येवापरिमितवाक्येन चापरिमितशब्दोक्तबहुत्ववदात्मशब्दोक्तेः। चेतनः प्रतियोग्यपेक्षः चेतनाचेतनसाधारणेन सच्छब्देनोपक्रमस्य विशेषपर्यवसानाकाङ्क्षायां 'स आत्मे'त्युक्त्यैव चेतनरूपविशेषपर्यवसानलाभात्। नन्वेवं 'स आत्मे'त्युक्ते स जगत्कारणभूत आत्मा क इत्याकाङ्क्षायां 'तत्त्वमसी'त्युपसंहारात् संबोध्यश्वेतकेतुरेव स आत्मेति पर्यवस्येत्। तथा च बहुभवनसङ्कल्परूपमीक्षणं तेजस्स्रष्टृत्वादिकं च तदनुभवबाधितं तेन बोद्धुमशक्यमिति चेन्न। सर्गाद्यकालवृत्तान्तस्यानेकजन्मव्यवहितस्य विस्मरणयोग्यतया बाधावताराभावात्। 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतपे'ति गीतोक्तरीत्या शिष्यस्मृत्यगोचरस्यापि तद्वृत्तान्तस्य सर्वज्ञेन गुरुणा बुद्ध्योपदेष्टुं शक्यत्वात्॥ सू॥ तन्निष्ठस्य मोक्षोपदेशात्॥ ७॥ तस्मान्न प्रधानं जीवश्चेति प्रधानपरत्वशङ्कानिराकरणार्थयुक्त्यन्तरपरेणैवानेन सूत्रेण आत्मश्रुत्याद्यविरोधमूलजीवपरत्वशङ्कानिराकरणमपि लभ्यत इत्यभिप्रेत्य जीवपरत्वशङ्कासूत्रावतारिकायां दर्शिता। न तु सूत्रस्य तादर्थ्यमभिप्रेत्येति सूचयितुं जीवपरत्वशङ्कानिराकरणस्यान्वाचयसिद्धत्वं चकारेण प्रदर्शितम्। एतत्सूत्रनिवर्त्या प्रधानपरत्वशङ्का त्वेवं द्रष्टव्या। ईक्षतिवदात्मशब्दोऽपि गौणोऽस्तु। 'ममात्मा भद्रसेनोऽयं' 'मम प्राण इदं धनं' 'मम चक्षुरयं पुत्र'इत्यादिष्वात्मादिशब्दानां गौणप्रयोगदर्शनात्। जीवानां सकलपुरुषार्थनिर्वाहकस्य प्रधानस्य तान्प्रति तथा व्यपदेशयोग्यत्वा'त्सन्मूलास्सोम्येमाः सर्वाः प्रजा' इति तत्रत्यवाक्यानुसारे'णैतदात्म्यमिदं सर्व'मित्यत्र सर्वशब्दस्य जीवसामस्त्यपरत्वोपपत्तेरिति। ननु प्रकृतिज्ञानान्मोक्षं साङ्ख्या मन्यन्ते। यदाहुः—'रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात्। पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥ प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति। या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य।' इति। अत आह—साङ्ख्यानामपीति। अयमाशयः। सूत्रे'तन्निष्ठस्ये'त्यनेन तद्वेदनमात्रं नोच्यते किंतु स्वात्मतया तदुपासनम्। कुतः। श्रुतौ'तत्त्वमसी'ति श्वेतकेतुं प्रति

ङ्ग्यानामपि तन्निष्ठस्य मोक्षो नाभिमतः त्याज्यत्वात्। न च जीवनिष्ठस्य। निषेधात् 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्ये'ति ॥

पुनरपि स्पष्टयति हेतुं प्रधाननिराकरणे—

सू. ॥ हेयत्वावचनाच्च ॥ ८ ॥

यदि प्रधानमेवात्र विवक्षितं तदाऽस्य हेयत्वमेवोच्येत 'तत्त्वमसी'ति मोक्षहेतुतया ध्येयत्वमुच्यते। ततो न प्रधानमिति युक्तम्।

सत आत्मतामुपदिश्य'आचार्यवान्पुरुषो वेदे'ति तद्वेदनोपायमुक्त्वा 'तस्य तावदेव चिर' मित्यादिना तद्वेदनवतः पुरुषस्य तावानेव विलम्बः यावत्प्रारब्धकर्माधीनशरीरान्न विमोक्ष्यते। अथ तद्विमोक्षानन्तरं ब्रह्म सम्पद्यत इ'त्यस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्ये' ति वाक्यान्तरावगतशरीरविमोक्षपूर्वकब्रह्मसम्पत्तिरूपफलश्रवणात् तस्य च वेदनस्य 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं तद्धास्य विजज्ञा'वित्युपक्रमोपसंहारानुसारेण विज्ञातरूपत्वावगमात् श्रवणमननानन्तरं पठितस्य विज्ञानस्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित' मित्यादिश्रुत्यन्तरानुसारेणोपासनरूपत्वावगमात्। यद्यपि साङ्ख्यमते संसारिदशायां बुद्ध्याकारमापद्य संसरन्त्यां प्रकृतावसङ्गोदासीनसाक्षिरूपस्य पुरुषस्य स्वात्मतया वेदनं भ्रान्तिरूपमस्ति। 'पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तका' इति वचनोक्तं सावधिफलं तदुपासनमप्यस्ति। तथापि मोक्षफलं स्वात्मतया तदुपासनं नास्ति प्रत्युत संसारात्प्रकृतिविविक्तज्ञारिस्वभावस्वात्मदर्शनमेव तन्मते मोक्षजनकम्। यदाहुः—तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ रूपैस्सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः। सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ एवं तत्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्। अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम्। प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥' इति। तस्मात्साङ्ख्यमतेऽपि नास्ति प्रकृतिनिष्ठस्य मोक्ष इति। एतेन 'तत्त्वमसी'त्यादि'ममात्मा भद्रसेन'इत्यादिवदुपचारावलम्बनोऽर्थवादस्सांसारिकफलविशेषाय तादात्म्यदृष्टिविधिर्वेति शङ्कापि निरस्ता। तद्वेदनस्य मोक्षरूपफलसङ्कीर्तनात्। ननु तर्हि 'तत्त्वमसी' ति जगत्कारणस्य जीवस्योपासनं[1] मोक्षहेतुत्वेनोपदिश्यतामित्याशङ्क्याह—न चेति। निषेधात् मुक्त्यर्थं शिवातिरिक्तस्योपास्यत्वनिषेधादित्यर्थः। तन्निषेधपरमथर्वशिखावाक्यमुदाहरति—शिव एक इति। उत्तरसूत्रमवतारयति—पुनरपीति। 'तत्त्वमसी'ति न तत्त्वदृष्ट्या सत आत्मत्वोपदेशः। किं तु स्थूलारुन्धतीन्यायेन। ततश्च प्रधानस्य सत्पदवाच्यत्वेऽपि सत आत्मत्वोपदेशो न विरुध्यत इत्याशङ्कानिराकरणेन पूर्वहेतुस्पष्टीकरणार्थं हेतुमाहेत्यर्थः। स्पष्टयतीति। स्पष्टं तत्करोतिण्यन्तात्पचाद्यच्प्रत्ययः ॥ सू ॥ हेयत्वावचनाच्च ॥ ८ ॥ यदीति। यदीह गुरुः स्थूलारुन्धतीन्यायमन्वसरिष्यत्तदा मोक्षयितव्यः श्वेतकेतुस्तन्निष्ठो माभूदिति स्थूलताराया अरुन्धत्यात्मतामिव सतः स्वात्मतां हेयत्वेनावक्ष्यत्। न तु त-

(१) 'जीवस्योपादानं मोक्षरूपत्वेनोपदिश्यता' इति घ. पाठः।

किं च प्रधानपक्षे विरोध इत्याह—

सू· ॥ प्रतिज्ञाविरोधात् ॥ ९ ॥

इतश्च न प्रधानं सत्पदवाच्यम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् । सत्पदवाच्यतत्त्वज्ञानेन तत्कार्यतया सकलचेतनाचेतनवस्तुविज्ञानं भवतीति 'येनाश्रुतं श्रुतं भवती'त्यादिना प्रतिज्ञायते । प्रधानकारणत्वे विरुद्धमेतत् । चेतनस्य प्रधानकारणत्वायोगात् । प्रधाने कारणे ज्ञाते जाड्यविकारास्पदं तत्कार्यमिदं सर्वं ज्ञायते । यथा मृदि ज्ञातायां तत्कार्यं घटादिकम् ॥

द्वचनमस्ति । तदात्मत्व एवोपदेशपरिसमाप्तिदर्शनात् । तस्मान्नात्र स्थूलारुन्धतीन्यायानुसरणमस्तीति भावः । पूर्वसूत्रे तच्छब्दः समस्तोऽप्यपेक्षावशादिहानुषक्तष्षष्ठ्यन्तो विपरिणम्यते । ततश्च तस्य सदात्मत्वस्य हेयत्वावचनादिति सूत्रार्थः । चकारः पूर्वसूत्रेणैकीकरणार्थः । न केवलं तन्निष्ठस्य मोक्षोपदेशात्प्रधानं न सत्पदवाच्यम् । किं तु तद्धेयत्वावचनसमुच्चितादिति तदर्थः । उत्तरसूत्रमवतारयति—किंचेति । पूर्वसूत्रोक्तहेतुवत्सूत्रान्तरोक्तहेतुस्पष्टीकरणार्थो न भवत्ययं प्रतिज्ञाविरोधः । किं तु प्रधानपक्षनिराकरणे स्वतन्त्रहेतुरित्यभिप्रायः ॥ सू ॥ प्रतिज्ञाविरोधात् ॥ ९ ॥ सर्वविज्ञानेति । 'येनाश्रुतं श्रुतं भवती'त्यादिप्रतिज्ञा तावत्सर्वविज्ञानविषया । श्रुतादिपदानामर्थसङ्कोचे कारणाभावात् । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात'मित्यादिश्रुत्यन्तरैकार्थ्याच्चेति भावः । ननु, ब्रह्मपक्ष इव प्रधानपक्षेऽपि कार्यकारणाभेदात् प्रधानविज्ञानेन तत्कार्यमहदहङ्कारादिसर्वविज्ञानप्रतिज्ञोपपद्यते । मृद्घटादिदृष्टान्तानुरोधेन तस्यास्सत्कार्यविषयत्वादित्याशङ्क्याह—सत्पदवाच्येति । सकलेति । ननु, प्रतिज्ञायाः सकलचेतनाचेतनवस्तुविज्ञानविषयत्वं कुतोऽवसीयते । सत्कार्यसर्ववस्तुविज्ञानविषयत्वं खलु मृद्घटादिदृष्टान्तानुरोधात् अवसीयते । न च 'सन्मूलाः सोम्येमाः प्रजा' इति तत्रत्यवाक्ये प्रजाशब्दोदितानां चेतनानामपि सत्कार्यत्वमुक्तमिति सत्कार्यसर्वविज्ञानविषयैव प्रतिज्ञा सकलचेतनाचेतनवस्तुविज्ञानविषया पर्यवस्येदिति वाच्यम् । तत्र प्रजाशब्दस्य साङ्ख्यमते चेतनाधिष्ठितदेहादिकार्यविषयत्वोपपत्तेः । अन्यथा सन्मूलवाक्योक्तस्य जीवकारणत्वस्यैव हेतूकरणसम्भवे तत्तदवगमाधीनाधिगमस्य प्रतिज्ञाविरोधस्य हेतूकरणायोगादिति चेत् । उच्यते । सर्वविज्ञानप्रतिज्ञा तावदसङ्कोचन्यायानुरोधेन सकलवस्तुविज्ञानविषया प्रतीयते । सा दृष्टान्तबलात्तत्कार्यसर्वविज्ञानविषया भवन्त्यपि सूक्ष्मसकलचिदचिद्वस्तुविशिष्टब्रह्मरूपे श्रुत्यन्तरप्रतिपन्ने कारणे सत्पदवाच्येऽङ्गीक्रियमाणे सर्वमपि चिदचिदात्मकं वस्तु स्थूलरूपविशिष्टतया सत्कार्यकोटावन्तर्भवतीति असङ्कोचेन यथा प्रतीता तथैवोपपद्यते । साङ्ख्याभिमते स्वतन्त्रप्रधानरूपे कारणे तद्वाच्येऽङ्गीक्रियमाणे तु चेतनवर्गस्य तत्कार्यत्वाभावादसङ्कुचितसर्ववस्तुविषयत्वेन प्रतीता सा विरुध्यत इति भाष्याभिप्रायः । सूत्रान्तरमवतारयितुमाशङ्कते—प्रधाने कारण इति । यद्यपि जडमात्रविषयत्वेन प्रतिज्ञा सङ्कोच्यत इति

(१) शाङ्करभाष्ये तु इदं सूत्रं न दृश्यते । किंतु पूर्वसूत्रस्थचकारार्थत्वेनायमर्थस्संगृहीतः । रामानुजभाष्येऽपि पृथक्सूत्रत्वेन लेखनं दृश्यते ।

अतः कोऽत्र विरोध इत्याशङ्क्याह—

***सू· ॥ स्वाप्ययात् ॥ १० ॥**

इतश्च न प्रधानं सच्छब्दवाच्यम् । ‘स्वप्नान्तं मे सोम्य विजानीहि यत्रैतत्पुरुषस्स्वपितिनाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते’इति जीवस्य चेतनस्य सता सम्पन्नस्य स्वाप्ययवचनात् । अप्ययः

---

शङ्कासमकालमेव निर्निमित्तः सङ्कोचो न युक्त इति दोषः स्फुरति तथापि स एव दोषः सूत्रान्तरावतारिकाव्याजेन स्फोरितः । अत एव नैतस्याश्शङ्काया निवर्तनमग्रे क्रियते । ‘इतश्च न प्रधान’मिति पूर्वहेतुदार्ढ्यं सिद्धं कृत्वा स्वाप्ययो हेत्वन्तरत्वेन व्याख्यायते-॥ सू ॥ स्वाप्ययात् ॥ १० ॥ सद्विद्याप्रकरणे स्वपितिनामनिर्वचनं श्रूयते । तस्यार्थः । ‘स्वप्नान्तं सुषुप्तं मे मत्तः प्रतिपादयतो विजानीहीति शब्दस्य इत्युवाचेति पूर्वेण सम्बन्धः । इदं शिष्यावधानार्थमुद्दालकस्य वचनम् । तदीयसुषुप्तिप्रतिपादनप्रकारो ‘यत्रैत’दित्यादिः । यत्र यदा पुरुषः पुरुषस्य एतत्स्वपितिनाम स्वपितीत्येव तन्नाम भवति । यदवस्थापन्नं लोकः स्वपितीत्याचक्षत इति यावत् । तदा सता ‘सदेव सोम्ये’ति प्रकृतेन सम्पन्नस्सङ्गतो भवति । तस्या एव सम्पत्तेः सति लयरूपत्वबोधनार्थं स्वपितिनामनिर्वचनानुगुणं विवरणं ‘स्वमपीतो भवति । अपिपूर्व इतिर्लयार्थः । पुरुषः स्वशरीरके ब्रह्मणि लीनो भवतीत्यर्थः । अपीतेस्सकर्मकत्वाद्द्वितीया । तस्मादेव स्वाप्ययरूपप्रवृत्तिनिमित्तादेनं स्वपितीत्याचक्षते लौकिका इति । यद्यपि स्वपिधातोर्निष्पन्नः स्वपिति शब्दो न तु स्वशब्दोपपदादपीतेः तथाप्यशनायादिनिर्वचनवदर्थवादरूपमिदं निर्वचनम् । अत्र‘स्वमपीतो भवती’ति स्वाप्ययवचनात्प्रधानं सत्पदवाच्यं न भवतीति हेतुसाध्ययोजनां दर्शयति—इतश्चेत्यादिना । स्वाप्ययवचनादित्यन्ते न । ननु‘इण् गता’विति धातोरुत्पन्नोऽप्येतिशब्दः प्राप्तिमात्रमाचष्टे । न तु लयमित्याशङ्क्याह—अप्यय इति । अपिपूर्व इतिर्लयार्थः । ‘प्रभवाप्यया’वित्युत्पत्तिलययोः प्रयोगदर्शनादिति भावः । ननु, प्रधाने सत्पदवाच्येऽपि स्वाप्ययवचनमुपपद्यते । न च तस्य स्वशब्दवाच्यत्वायोगः । स्वशब्दस्यात्मीयपरत्वोपपत्तेः । न चाकारणे प्रधाने जीवस्य लयो न सम्भवतीति वाच्यम् । ब्रह्मण्यपि तदसम्भवतौल्यात् । न ह्यनादेर्जीवस्य ब्रह्म कारणं न वा जीवस्य घटादिवल्लयस्सम्भवति । तस्य हि लय उच्यमानो जीवत्वावस्थाप्रहाणेन कारणावस्थापत्तिरूपो वाच्यः । न च जीवस्सुषुप्तौ जीवत्वमपहाय ब्रह्मभावमापद्यत इति युज्यते । प्रबोधे जीवान्तरोत्पत्तेर्वक्तव्यत्वेन स एव तु ‘कर्मानुस्मृतिशब्दविधिभ्य’इत्यधिकरणविरोधप्रसङ्गात् । स्यादेतत् । ज्ञानादिवृत्तिप्रसरानुकूलचिच्छक्तिविकासावस्था जीवस्य कार्यावस्था । तदवस्थाप्रहाणेन चिच्छक्तिसङ्कोचावस्थापन्ने स्वस्वरूपेऽवस्थानं तस्य लयः । स तु सुषुप्तौ सम्भवतीति। एवं ‘तर्हि स्वमपीतो भवती’त्यत्र स्वशब्दः चिच्छक्तिसङ्कोचरूपसूक्ष्मावस्थापन्नजीवस्वरूपमात्रपर इति स्वशब्दसच्छब्दयोरैकार्थ्यत्यागात्स्वशब्दस्य ब्रह्मपरत्वमिव प्रधानपरत्वमपि नानुपपन्नम् । अथोच्येत स्वपदस्यावश्यं सत्पदेनैकार्थ्यं वक्तव्यम् । ‘सता सोम्य तदा सम्पन्नो भवति सति सम्पद्य न विदु’रित्युपक्रमोपसंहारमध्यगतस्य स्वाप्ययवाक्यस्य तदनपेक्षितार्था-

**प्रलयः। अचेतने प्रधाने चेतनस्य लयो न युक्तः। ततो न प्रधानं सदित्युच्यते ॥**

---

न्तरपरत्वायोगात्। स्वस्यात्मीयवाचित्वेन प्रधानपरत्वे जीवस्याकारणे तत्र लयोऽनुपपन्न इति तस्य जीवशरीरकब्रह्मवाचित्वं सत्पदस्य ब्रह्मविषयत्वं चाङ्गीकृत्य तस्य तदैकार्थ्यमुपपादनीयम्। न च कार्यकारणानन्यत्ववादिनां जीवादन्यद्ब्रह्म तस्य न कारणं किं तु सूक्ष्मं जीवस्वरूपमेवेति ब्रह्मण्यपि तस्य लयोऽनुपपन्न इति वाच्यम्। 'यत्रैतत्पुरुषः स्वपिति नामे' त्यत्र जीववाचितया प्रस्तुतस्य पुरुषशब्दस्यापि स्थूलरूपापन्नजीवशरीरकब्रह्मपरत्वाभ्युपगमात्। तथा च ज्ञानविकासरूपस्थूलावस्थाविशिष्टजीवशरीरकं ब्रह्म तद्राहित्यरूपसूक्ष्मावस्थाविशिष्टजीवशरीरकं सत्स्वात्मन्यन्तर्भवतीति स्वाप्ययवाक्यार्थो घटत इति। नैतद्युक्तम्। तत्सम्पत्तिविषयोपक्रमोपसंहारमध्यनिविष्टस्वाप्ययवाक्यगतस्वपदस्य तदनपेक्षितार्थान्तरपरत्वं हि वक्तुमनुचितम्। न त्वर्थान्तरपरत्वमात्रम्। तथा च सत्पदवाच्यप्रधानसम्पत्त्यनन्तरं जीवः सूक्ष्मावस्थं स्वस्वरूपमप्येतीति चिच्छक्तिसङ्कोचरूपसूक्ष्मावस्थापत्तिवर्णनस्य 'सति सम्पद्य न विदुः सति सम्पत्स्यामह' इति 'सत आगत्य न विदुः सत आगच्छामह' इति प्रतिपादयिष्यमाणवेदनाभावोपयोगितया 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इत्यत्र ब्रह्मसम्पत्त्यनन्तरं सत्यसङ्कल्पत्वाद्यभिनिष्पत्तिवर्णनस्य 'जक्षन्क्रीडन्रममाण' इत्याद्यग्रिमसन्दर्भप्रतिपादयिष्यमाणयथाकामभोगोपपादकतयैवापेक्षितत्वात् स्वपदसत्पदयोर्जीवप्रधानपरत्वेनार्थभेदेऽपि नान्वयवैकल्यम्। तस्मात्स्वपदसत्पदयोरैकार्थ्ये नियमनमयुक्तम्। अप्येतृपरस्य पुरुषपदस्य ब्रह्मपर्यन्तत्वकल्पनमप्ययुक्तमेव। 'यत्रैतत्पुरुषस्स्वपितिनाम तस्मादेनं स्वपितीत्याचक्षत' इत्युपक्रमोपसंहारयोर्लौकिकस्य स्वपितिव्यवहारस्यानुवादात्। तस्य च ब्रह्मपर्यन्तत्वव्युत्पत्त्यनभिज्ञजनसाधारणस्य ब्रह्मविषयत्वायोगात् तस्य ब्रह्मपर्यन्तत्वे 'स यथा शकुनि' रित्याद्यग्रिमवाक्येन वर्ण्यमानस्याप्येतुरत्यन्तपारतन्त्र्यस्य 'सति सम्पद्य न विदुस्सत आगम्य न विदु' रित्यग्रिमखण्डयोरुच्यमानस्याज्ञानस्य च तत्रानन्वयप्रसङ्गाच्च। तस्मात्सत्पदस्य प्रधानविषयत्वेऽपि स्वाप्ययवचनमुपपद्यत इत्याशङ्क्याह—अचेतने प्रधान इति। अयमाशयः। 'यत्रैतत्पुरुषः स्वपितिनामे'त्युपक्रमः 'स्वमपीतो भवती'तिपर्यन्तः सन्दर्भः स्वपितिनामनिर्वचनार्थवादोपस्कृतं स्वाप्ययं निरूपयितुं प्रवृत्त इत्युपक्रमोपसंहाराभ्यामवसीयते। तत्र यदि सत्सम्पत्तिवाक्यं स्वाप्ययवाक्यस्य स्वविवरणरूपतावगमनेन स्वपदस्य सद्विषयताज्ञापनार्थं न स्यात् तदा तत्प्रकृतानुपयुक्तं स्यात्। न च स्वाप्यय[1]कारणत्वेन तदुपयोगः। सुषुप्तिदशायां जीवस्य ज्ञानसङ्कोचो[2] भवतीत्युक्ते तत्र कारणाकाङ्क्षायास्सत्सम्पत्तिवचननिवर्तनीयाया अनुदयात्। न हि नित्यानपायिचिच्छक्तिमतस्स्वप्नजागरयोरिहास्म्यहमित आगत इति जानतः सुषुप्तिदशायां कुतस्तदवेदनमिति ज्ञानसङ्कोचोक्तिनिवर्तनीयसङ्कोचकारणाकाङ्क्षावदिह स्वारसिकतदाकाङ्क्षोदेति। सत्सम्पत्तिवाक्यसाफल्यार्थं कथञ्चित्तदाकाङ्क्षोत्थाप्यत इत्यपि न जीवमात्रपरत्वप्रसक्तिमतस्स्वपदस्य तद्विशेषितसद्विषयत्वज्ञापनार्थं तदित्यनन्यथासिद्धफलसम्भवे विफलकत्वापादनायोगात्। 'स्वान्तं मे सोम्य विजा-

---

(१) 'कारणविषयत्वेन' इति ग्र. पाठः। (२) 'संकोचोक्तिर्भवतीत्युक्ते' इति ग्र. पाठः।

**सच्छब्देन परमेश्वर एव प्रतिपाद्यते न प्रधानमित्याह—**

***सू· ॥ गतिसामान्यात् ॥ ११ ॥**

**यथास्यामुपनिषदि सत्पदस्य परमेश्वरवाचित्वेन गतिः तथा श्रुत्यन्तरेऽपि समाना 'पुरुषो वै रुद्रस्सन्महो नमो नम'इत्यादौ । अतः सत्पदवाच्यः परमेश्वर एव॥**

**व्यक्तमेवास्यामुपनिषद्यात्मनः सर्वोत्पत्तिः श्रूयत इत्याह—**

---

नीही'ति सुषुप्तिवृत्तान्तस्य सर्वस्यापि वक्तव्यत्वेन प्रतिज्ञातत्वात् तद्दशायां सति सत्सम्पत्तिरप्युक्तेति चेन्न । स्वाप्ययविषयोपक्रमोपसंहारमध्ये तदुक्तेरनुपयोगात् । अनन्तरमेव 'स यथा शकुनि'रित्यादिना तदुक्तेश्च । तस्मात्सत्सम्पत्तिवाक्यस्य स्वाप्ययविषयोपक्रमोपसंहारमध्यनिवेशनसामर्थ्येन स्वपदसत्पदयोरैकार्थ्यावश्यम्भावे सति जीवस्याकारणे प्रधाने लयानुपपत्तेस्तस्य सत्पदवाच्यत्वे स्वाप्ययवचनमनुपपन्नमिति युक्तमेव । न चैवं तस्य ब्रह्मण्यपि लयोऽनुपपन्नः । तदकारणत्वाविशेषात् । अतस्सूक्ष्मावस्थे स्वस्मिन्नेव तस्य लयो वक्तव्यस्स्यादिति वाच्यम् । जीवशरीरकस्य ब्रह्मणः तद्द्वारेणापृथक्सिद्धतदाश्रयतया स्थूलावस्थजीवं प्रति सूक्ष्मावस्थजीवस्येव ब्रह्मणोऽपि तदुपादानकारणत्वेन तत्र तस्य लयोपपत्तेः । न चैवमत्यन्तभिन्नयोः जीवब्रह्मणोः कार्यकारणभावे कार्यकारणानन्यत्वसिद्धान्तभङ्गप्रसङ्गः । न ह्यनन्यत्वं भेदाभावः । किंतु दण्डदेवदत्तवत्कदाचिदपि पृथगवस्थितेरभावः । स तु जीवब्रह्मणोर्भेदसत्त्वेऽपि नीलघटवदयुतसिद्धत्वान्न हीयते । नीलघटयोरयुतसिद्धिर्गुणगुणिभावेन । इह शरीरशति विशेषः । आरम्भणाधिकरणेऽप्येवमेव कार्यकारणानन्यत्वं भाष्यकृदुपपादयिष्यतीति तत्रैवायमर्थः प्रपञ्चयिष्यते । एवं जीवमात्रस्य ब्रह्मणि लयसमर्थन एव 'सता सम्पन्नः स्वमपीतः' 'प्राणबन्धनं हि सोम्य मनः' 'सति सम्पद्य सत आगम्ये'त्यत्राप्ययस्थानयोः भेदव्यपदेशाः सङ्गच्छन्ते । 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मित्यादिश्रुत्यन्तरैकार्थ्यमप्युपपद्यते । न हि तत्रापि सम्परिष्वक्तशब्दस्य ब्रह्मपर्यन्तत्वं वक्तुं शक्यम् । 'सुषुप्त्युत्क्रान्त्योर्भेदेने'ति (ब्र० १–३–४२) सूत्रेण प्राज्ञेनात्मना सम्परिष्वक्तयोर्भेदस्य समर्थयिष्यमाणत्वात् । ननु, यदि भिन्नेऽपि ब्रह्मणि जीवस्य लयः तर्हि प्रधानेऽप्यस्तु । तस्यापि ब्रह्मण इव जीवद्वारा तदवस्थाश्रयत्वकल्पनेन तदुपादानत्वोपपादनसम्भवादिति चेन्न । चेतनस्य ब्रह्मणः श्रुतिसिद्धेन जीवं प्रति शरीरित्वेन तदयुतसिद्धाश्रयतया 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति'इत्यादिश्रुतिसिद्धं तदुपादानत्वमुपपादयितुं शक्यम् । न त्वचेतनस्य प्रधानस्येति विशेषात् । तस्माद्युक्तस्स्वाप्ययादिति हेतुरिति । उत्तरसूत्रमवतारयति—सच्छब्देनेति ॥ सत्पदस्यास्य तत्प्रकरणपठितैरीक्षत्यादिहेतुभिरिव श्रुत्यन्तरगतेन व्याख्यानेनापि स एव तेन प्रतिपाद्योऽवसीयत इत्युत्तरसूत्रेण दर्शयतीत्यर्थः ॥ सू ॥ गतिसामान्यात् ॥११॥ अवगतिसाम्यादिति सूत्रार्थमभिप्रेत्य व्याचष्टे—यथेति । उत्तरसूत्रमवतारयति—व्यक्तमेवेति । ननु, श्रुत्यन्तरप्रसिद्धं ब्रह्मणः कारणत्वमप्रतिक्षिप्य सद्विद्यालम्बनेन प्रधानमपि कल्पभेदेन कारणमिति लक्षणातिव्याप्तिमात्रं खलु पूर्वपक्षेणाशङ्कितम् । तस्योपनिषदन्तरेष्विव अ-

## ॥ सू. ॥ श्रुतत्वाच्च ॥ १२ ॥

अत्रापि 'आत्मतः प्राण आत्मत आकाश' इत्यारभ्य 'आत्मत एवेदं सर्वे'मिति श्रूयते । ततो जगत्कारणत्वेन सत्पदवाच्यं ब्रह्मैव न प्रधानमिति सिद्धम् ॥

॥ इतीक्षत्यधिकरणम् ॥ ५ ॥

स्यामप्युपनिषदि प्रकरणान्तरे ब्रह्मकारणत्वश्रवणात् न कश्चित्परिहारो लभ्यते । उच्यते । छान्दोग्ये सद्विद्यानन्तरं भूमविद्या प्रवृत्ता । सा सद्विद्योक्तस्यैव सच्छब्दोक्तकारणवस्तुनो विशेषान्तरोपदेशाय प्रवृत्ता । कुत एतदवसीयते । सद्विद्याप्रकरणे 'तत्सत्यं स आत्मे' ति नवकृत्वोऽभ्यस्तस्य सत्यशब्दस्य 'तस्यामेष तु वा अतिवदति यस्सत्त्येनातिवदती'ति प्रस्तुतात्मनि प्रयोगात् । ततश्च विद्याद्वयस्यैकार्थ्यात्पूर्वपक्षशङ्कायाः परिहारो लभ्यत इत्यभिप्रायः ॥ सू. ॥ श्रुतत्वाच्च ॥ १२ ॥ भूमविद्यायां 'तरति शोकमात्मवि' दित्यात्मनिरूपणमुपक्रम्य तदुपसंहारे 'आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश' इत्यादिना प्रागुपास्यत्वेनानुक्रान्तस्य नामादिप्राणपर्यन्तस्य वस्तुजातस्य प्रकृतादात्मन उत्पत्तिमुक्त्वा सर्वस्यापि प्रपञ्चस्य तत उत्पत्त्युक्त्योपसंहृतम् । आत्मत एवेदं सर्वमिति । अतस्तदेकार्थायां सद्विद्यायामपि कारणत्वेन निर्दिष्टं सत्पदवाच्यं ब्रह्मैव । न प्रधानमित्यर्थः । सिद्धमित्यधिकरणार्थोपसंहारः ॥ ॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥

---

नयमणिमालायाम्

### अथेक्षत्यधिकरणम् ॥ ५ ॥

॥ सू ॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ हेयत्वावचनाच्च ॥ ८ ॥ प्रतिज्ञाविरोधात् ॥ ९ ॥ स्वाप्ययात् ॥ १० ॥ गतिसामान्यात् ॥ ११ ॥ श्रुतत्वाच्च ॥ १२ ॥

सच्छब्दं कारणं स्यात्परिणतिगुणकं सांख्यकॢप्तं प्रधानं मैवं तत्रेक्षणात्मश्रुतिमुखविहतेस्तर्हि जीवोऽस्तु तन्न ।

तन्निष्ठस्यामृतोक्तेर्न हि शिवमपहायान्यनिष्ठा विमुक्त्यै तस्मात्तद्ब्रह्म सूक्ष्माविभजनचिदचिद्रूपशक्त्या विशिष्टः ॥ १० ॥

इति ईक्षत्यधिकरणम् ॥ ५ ॥

---

## सूत्रार्थचन्द्रिकायाम्

### अथेक्षत्यधिकरणम् ॥ ५ ॥

सू० ॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ हेयत्वावचनाच्च ॥ ८ ॥ ( प्रतिज्ञाविरोधात् ॥ ९ ॥ ) स्वाप्ययात् ॥ १० ॥ गतिसामान्यात् ॥ ११ ॥ श्रुतत्वाच्च ॥ १२ ॥

**भगवत्पादमते,** इत्थं चतुर्भिस्सूत्रैस्सर्वजगत्कारणं सर्वज्ञं सर्ववेदान्तप्रतिपाद्यं ब्रह्मैवेति प्रत्यपादि । तत्र सत्त्वरजस्तमोगुणात्मकं प्रधानमेव जगत्कारणं न कश्चिदधिष्ठातापेक्षित इति वदन्तस्सांख्याः कूटस्थत्वेन क्रियाशक्त्ययोगात् ब्रह्म न जगत्कारणं भवितुमर्हति । अपि तर्हि त्रिगुणात्मकत्वात्क्रियाशक्तिमत्प्रधानमेव जगत्कारणमिति वदन्ति । छान्दोग्यगतां सद्विद्यामवलम्ब्य प्रवृत्तं तेषां मतं निराकर्तुमिदमधिकरणमवतार्यते—ईक्षतेः=ईक्षितृत्वश्रवणात् । जैमिनिसूत्रे यथा यजतिपदेन

---

‹यथादित्यस्यार्थान्तरत्मा सत्पदवाच्यं ब्रह्मैव न प्रधानमिति सिद्धम्' इति इति ख. पाठः ।

[illegible] अशब्दवाच्यं [illegible] (त्वोपसंहृतम् ।' इति घ. पाठः ।

[illegible]क्षते' इति श्रुतौ ब्रह्म[illegible] (ामानुजमतयोरेव पठ्यते । नान्ययोरिति वेदितव्यम् ।

लक्षणया धात्वर्थो याग उच्यते तद्वदिहापि धातुवाचकेक्षतिशब्दस्तदर्थलक्षक इति बोध्यम् । **अशब्दम्**=अवेदप्रमाणकं प्रधानम् । हेतुगर्भविशेषणमेतत् । **न**=जगत्कारणं न भवति इति सूत्रार्थः ।अस्य छान्दोग्ये श्रूयमाणं 'सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीय' मित्युपक्रान्तं 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजते' त्यादिकं सद्विद्यावाक्यं तथान्यत्र श्रुतं 'आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजा' इति । स 'इमाँल्लोकानसृजते' त्यादिकं वाक्यं च विषयः । अत्र सच्छब्दितं जगदुपादानं किं प्रधानमुत ब्रह्मेति संशये कूटस्थस्य ब्रह्मणो ज्ञानक्रियाशक्त्यभावात् त्रिगुणात्मकस्य प्रधानस्य तत्संभवोपपत्तेश्च आनुमानिकमचेतनं प्रधानमेव जगदुपादानमिति पूर्वः पक्षः । तत्र 'तदैक्षते'ति ईक्षितृत्वश्रवणात् अचेतनस्य प्रधानस्य चेतनधर्मभूतेक्षितृत्वासंभवात्कूटस्थस्यापि ब्रह्मणो मायामहिम्ना सर्वस्याप्युपपत्तेश्च न वेदान्तेषु सांख्य-कल्पितमचेतनं प्रधानं जगदुपादानमाश्रयितुं युक्तम् । किं तु सदीक्षितृ चेतनं मायामहिम्ना सर्वशक्तिमद्ब्रह्मैव जगदुपादानं भवतीत्येवाश्रयणीयमिति सिद्धान्तः ॥ ५ ॥

ननु 'तत्तेज ऐक्षत ता आप ऐक्षन्ते' त्यादावचेतनेऽपीक्षितृत्वश्रवणात्तत्प्रधानेऽपि गौणमस्त्वित्याशङ्कायामिदमाह-**गौण-श्चेत्**=अप्तेजसोरिव प्रधानेऽपीक्षतिशब्दो गौणोऽस्त्विति चेत् । **आत्मशब्दात्**='सदेव' 'तदैक्षत' इति प्रकृतं सदीक्षितृ 'सेयं देवतैक्षते'ति देवताशब्देन परामृश्य 'अनेन जीवेनात्मनानुप्रविश्ये'ति चेतनवाचकात्मशब्दश्रवणात् । **न**=ईक्षणशब्दो न गौणो भवति । इति ॥ ६ ॥

ननु तर्हि आत्मशब्दः नानार्थकत्वात्प्रधानपरोऽप्यस्तु इत्याशङ्कायामाह-**तन्निष्ठस्य**=तस्मिन्नात्मशब्दवाच्ये 'तत्त्वमसी' त्युपदिष्टे प्रकृते वस्तुनि निष्ठा यस्य तस्य चेतनस्य श्वेतकेतोः। **मोक्षोपदेशात्**='अथ संपत्स्य' इति । प्रारब्धक्षयानन्तरं मोक्षस्य उपदिष्टत्वात् । न प्रधानमात्मशब्दवाच्यं भवतीति । अतश्चेतनेऽचेतननिष्ठत्वानुपपत्तेः श्रद्धया तद्ध्यायतो मोक्षासं-भवादनर्थप्राप्तेश्चात्मशब्दश्चेतनवस्तुपर एवेति सिद्धम् ॥ ७ ॥

ननु नायं दोषः प्रसजति । यद्यप्यात्मनिष्ठैव साक्षान्मोक्षसाधनं न प्रधाननिष्ठा । तथापि स्थूलारुन्धतीन्यायेन प्रधानो-पदेशद्वारायमात्मोपदेशोऽस्त्वित्याशङ्क्याह—**हेयत्वावचनात्**=हेयत्वस्यानभिधानात् । यद्यनात्मैव प्रधानं सच्छब्दवाच्यं 'स आत्मा तत्त्वमसी' तीहोपदिष्टं स्यात् सः तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो माभूदिति मुख्यमात्मानमुपदिदिक्षु शास्त्रं तस्य हेयत्वं ब्रूयात्किल । न तथा ब्रूते । **चकारो** हेत्वन्तरसमुच्चयार्थः । हेयत्वस्यानभिधानात् एकविज्ञानेन सर्वविज्ञानोपक्रम-ाः ॥ ८ ॥

इत्थं प्रधानस्यात्मोपदेशद्वारत्वात्मत्वगौणेक्षितृत्वनिरासेन जगत्कारणत्वं निरस्य अधुना स्वतन्त्रैर्हेतुभिस्तदेव निरसितुं सूत्रत्रयमाह=**स्वाप्ययात्**-**स्वस्मिन्**प्रकृते सच्छब्दिते चिदात्मनि **अप्ययात्** 'सता सोम्य तदा संपन्नो भवती' ति लयश्रव-णात् । सर्वेषां जीवानां सुषुप्तावुपाधिकृतविशेषाभावात्सर्वजीवलयाधिष्ठानं चेतनं सच्छब्दवाच्यं ब्रह्मैव जगत्कारणं न प्रधानमि-त्यर्थः । अपिपूर्वक इतिर्लयार्थः ॥ ९ ॥

**गतिसामान्यात्**=**गतेः** 'आत्मन आकाशःसंभूत' इत्यादिषु सर्वेषु वेदान्तेषु चेतनकारणत्वावगतेः । **सामान्यात्** समानत्वात् । नाचेतनं प्रधानं जगत्कारणमित्यर्थः ॥ १० ॥

**श्रुतत्वाच्च**=श्रूयते हि श्वेताश्वतरोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य 'स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' । इति । तस्माच्च सर्वज्ञं ब्रह्म जगतः कारणं नाचेतनं प्रधानमन्यद्वेति सिद्धम् । इति ॥ ११ ॥

**श्रीकण्ठमते,** सूत्राक्षरार्थः पूर्ववदेव । यद्यपि नास्ति पूर्वपक्षेऽपि पूर्वस्माद्विशेषः । तथापि सिद्धान्ते परमस्ति किया-न्भेदः । विषयवाक्यमपि समानमेव । सकलस्यास्य प्रपञ्चस्य कारणतया श्रूयमाणं सदिति वस्तु ब्रह्म वा प्रधानं वेति सन्देहः। 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्' इति श्रुत्यन्तरे लोहितादिवर्णानुमितरजस्सत्त्वतमोरूपायाः सांख्य-प्रकृतेर्बहुप्रजाजनकत्वस्य श्रवणात् । रजस्सत्त्वयोगात्प्रधानस्यैव जगत्कारणत्वसिद्ध्युपयोगिक्रियाज्ञानशक्तिसंबन्धोपपत्तेः अचे-तनस्यास्य जगदाकारपरिणामस्य युक्तत्वात् चेतनस्य कूटस्थस्य कारणविकृतिरूपपरिणामासम्भवाच्च श्रुतिन्यायाभ्यां सत्पद-वाच्यं जगत्कारणं वस्तु प्रधानमेवेति प्रतिपत्तुं युक्तमिति पूर्वः पक्षः।'तदैक्षत बहु स्यां प्रजायेयेति' ईक्षतिश्रवणात् चेतनधर्मस्ये-क्षणस्याचेतनेऽसंभवाचाशब्दमानुमानिकं प्रधानं न सत्पदवाच्यं वस्तु अपि तु चेतनं ब्रह्मैव । 'चमसवदविशेषादिति' (ब्र० १-४-८ ) सूत्रे परमेश्वरकारणिकाया एव प्रकृतेर्बहुप्रजाजनकत्वमित्युपपादयिष्यमाणत्वात् सत्त्वरजस्तमस्साम्यावस्थारूपायास्त्रि-गुणात्मिकायाः प्रकृतेस्तमःपार्थक्येन रजस्सत्त्वयोगाभावेन क्रियाज्ञानशक्तिसंबन्धाप्रसक्तेः नामरूपविभागानर्हसूक्ष्मचिदचिच्छ-क्तिविशिष्टस्य कार्यत्वमिति वदतामस्माकं मते कूटस्थस्य परमेश्वरस्य जगदाकारेण परिणामो विकारदेदृ[illegible]ति भवदुदाहृत-दोषप्रसक्तिगन्धस्याप्यभावाच्च स्थूलसूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्यकारणरूपस्सत्पदवाच्य इति निर्णयः। ननु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय' मित्यादाववधारणेन सद्रूपं वस्तु निर्विशेषमवगम्यते । कारणावस्थमेतत्कथं सू-क्ष्मप्रपञ्चविशिष्टमित्युच्यते, इति चेत् उच्यते 'सदेवे' त्यवधारणं तु न विशेषनिषेधकं किंतु 'असद्वा इदमग्र आसीत्' । 'ततो

वै सदजायते'ति श्रवणजन्यभ्रान्तिप्रसक्तस्यासत्कारणत्वस्य निषेधकम् । किंच 'आसी' दिति क्रियाविशेषस्य 'अग्रे' इति काल-विशेषस्य च निर्दिष्टत्वात् अवधारणस्याधिष्ठात्रन्तरनिषेधपरत्वात् 'अद्वितीय' मित्यस्य जगदुपादानत्वबोधनपरत्वाच्च नात्र स-द्रूपस्य वस्तुनो निर्विशेषत्वं प्रतिपत्तुं युक्तम्। अथवा "शक्तिश्शिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ । तौ ब्रह्मसामरस्येन समस्तज-गदात्मका" वित्यभियुक्तोक्तरीत्या प्रकृत्या प्रत्ययेन च सत्पदस्य वस्तुद्वयप्रतिपादनपरत्वात्प्रकृतिप्रत्ययात्मकस्य सत्पदस्य नैक-वस्तुपरत्वं युक्तम् । अत एव सर्वज्ञमनन्तशक्तिविशेषं च सद्रूपं तदिति सिद्धम् । सर्वज्ञत्वसर्वशक्तित्वविशेषमन्तरेण ब्रह्मणो जगदुभयकारणत्वं न सिद्ध्येत् । अतोऽस्मदुन्नीत एव सिद्धान्तो निर्बाध इति सिद्धान्तः ॥ ५ ॥

'गौणेश्चन्नात्मशब्दात्' इति सूत्रस्यार्थः पूर्ववदेव प्रायशः । आत्मशब्दादित्यस्य 'सदेवे' त्युपक्रम्य उपसंहारे 'स आत्मा' 'तत्त्वमसि' इत्यात्मशब्दश्रवणादित्यर्थः । तेजःप्रभृतिष्वपि नेक्षणस्य गौणत्वमभ्युपगतम् । तत्तदात्मतया चेतनस्य परमे-श्वरस्यानुवृत्तेः इति ॥ ६ ॥

ननु मास्त्वचेतनं प्रधानमात्मशब्दस्यार्थः । चेतनस्य जीवस्यात्मशब्दवाच्यत्वे नास्ति विवादः । तर्हि चेतनो जीव एव ज-गत्कारणं सद्रूपमस्त्वित्याशङ्क्याह—**तन्निष्ठस्येति** । सत्पदवाच्यतत्त्वनिष्ठस्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति मोक्षस्योपदिश्यमानत्वात्प्रधाननिष्ठस्य तन्मतेऽपि मोक्षानभ्युपगमात् । 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्ये'ति जीवनिष्ठस्य च तन्निषेधाच्च नात्र प्रधानं जीवो वा सत्पदविषयः इति ॥ ७ ॥

**हेयत्वावचनाच्च** । पूर्वसूत्रे तच्छब्दस्समस्तोऽप्यपेक्षावशादिहानुषक्तष्षष्ठ्यन्ततया विपरिणम्यते । ततश्च तस्य=सदात्म-तत्त्वस्य हेयत्वावचनात् नात्र स्थूलारुन्धतीन्यायानुसरणेन प्रधानद्वारात्मोपदेश इति वक्तुं शक्यमिति भावः । चकारः पूर्वसूत्रेणैकीकरणार्थः । न केवलं तन्निष्ठस्य मोक्षोपदेशात्प्रधानं न सत्पदवाच्यं किं तु तद्धेयत्वावचनादपीति तत्तात्पर्यम् ॥८॥

**प्रतिज्ञाविरोधात्** ॥ भगवत्पादमते नेदं सूत्रमस्ति। अस्यार्थः परं पूर्वसूत्रस्थचकारेण संगृहीतः। श्रीकण्ठरामानुजभाष्य-योस्तु पृथक्सूत्रतया पाठोऽस्ति । 'येनाश्रुतं श्रुतं भवती' त्यादिना सत्पदवाच्यतत्त्वज्ञानेन सकलचेतनाचेतनवस्तुविज्ञानं भवतीति प्रतिज्ञायमानत्वात् चेतनस्य प्रधानकारणत्वायोगाच्च नात्र सत्पदवाच्यं प्रधानमिति तदर्थः ॥ ९ ॥

**स्वाप्ययात्** । 'सता सोम्य तदा संपन्नो भवती'ति सता संपन्नस्य चेतनस्य जीवस्य स्वाप्ययस्य लयस्य श्रवणात् अचे-तने प्रधाने चेतनजीवलयस्यायुक्तत्वाच्च न प्रधानं सत्पदवाच्यमित्यर्थः ॥ १० ॥

**गतिसामान्यात्** ॥ यथास्यामुपनिषदि सत्पदस्य परमेश्वरवाचित्वेन गतिः तथा 'पुरुषो वै रुद्रस्सन्महो नमो नम' इत्यादावपि सत्पदस्य गतिः समाना वर्तते । अतस्सत्पदवाच्यः परमेश्वर एव न प्रधानमित्यर्थः ॥ ११ ॥

**श्रुतत्वाच्च** ॥ 'आत्मतः प्राणः आत्मत आकाशः' इत्यारभ्य 'आत्मत एवेदं सर्वमिति' सत्पदवाच्यादात्मनः सर्वोत्पत्तेः श्रुतत्वाच्च जगत्कारणत्वेन सत्पदवाच्यं ब्रह्मैव न प्रधानमिति सिद्धम् ॥ १२ ॥

**रामानुजमते,** एतदधिकरणसूत्राणां सर्वेषामर्थवर्णनप्रक्रिया श्रीकण्ठमतानुसारिणी। विषयवाक्यमपि तथैव। पूर्वपक्षसिद्धां-तादिनिरूपणमपि पूर्ववदेव। 'गौणश्चे' दिति सूत्रे आत्मशब्दादित्यस्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे'ति सच्छब्दप्रतिपादि-तस्य आत्मशब्देन व्यपदेशात् इत्यर्थः । तेजोऽवन्नानामपि परमात्मैव आत्मेति तेजआदीनामपि परमात्मवाचकत्वात् गौणेक्षण-साहचर्याभावात् तत्रापि मुख्यमेव ईक्षणमिति तात्पर्यम् । नान्येषु गुणसूत्रेषु वैलक्षण्यमिति विस्तरभयाद्विरम्यते ।

**श्रुतत्वाच्च** ॥ १२ ॥ अस्यामुपनिषदि सच्छब्दवाच्यस्य आत्मत्वेन नामरूपव्याकर्तृत्वसर्वज्ञत्वसर्वशक्तित्वसर्वाधारत्वा-पहतपाप्मत्वसत्यकामत्वसत्यसंकल्पत्वादीनां गुणानां 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'तत्सत्यं स आत्मा' 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितं' तस्मिन् कामास्समाहिताः' एष आत्मा अपहतपाप्मा'......'सत्यकामस्सत्य-संकल्प' इत्यादिश्रुतिभिः 'न तस्य कश्चित्' 'स कारणं कारणाधिपाधिपः' 'सर्वाणि रूपाणि विचित्य' 'अन्तःप्रविष्टश्शास्ता जनानाम्' 'विश्वात्मानं परायणम्' 'पतिं विश्वस्यात्मेश्वरं' 'यच्च किंचिज्जगत्सर्वं'......'व्याप्य नारायणः स्थितः' 'एको नारा-यणः' इत्यादिश्रुत्यन्तरवचनैश्च प्रतिपाद्यमानत्वात् जगत्कारणादिवाक्यं न प्रधानादिप्रतिपादनयोग्यम् । अतः सर्वज्ञस्सर्वशक्तिः सर्वेश्वरेश्वरो निरस्तनिखिलदोषगन्धोऽनवधिकातिशयासंख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिल-जगदेककारणं सच्छब्दवाच्यं जिज्ञास्यं ब्रह्मेति सिद्धम् इति । सगुणेश्वरस्वरूपनिर्णये परं श्रीकण्ठमतात् सर्वत्रास्ति कियती भिदा । अन्यच्च । ईश्वरस्य ईक्षणवत्त्वादिगुणोपन्यासेन इदंप्रकरणस्य सविशेषपरत्वं युक्तमिति निर्विशेषपरताप्रक्रियायां दोषोपन्यासपुरस्सरं सविशेषपरत्वमपि राद्धान्तितम् ।

**आनन्दतीर्थमते,** ब्रह्मणः सर्वशास्त्रस्थशब्दप्रवृत्तिनिमित्तसकलगुणपूर्तिसिद्ध्यर्थं वाच्यवृत्त्या कृत्स्नशास्त्रविषयत्वं पूर्वसूत्रे समन्वयादित्यस्यार्थान्तरतया दर्शितम्। तत्र शब्दार्थभूतं वाच्यत्वं कार्त्स्न्येन चेहाक्षिप्य समर्थयति—**ईक्षतेरित्यादिना**। तत्=ब्रह्म अशब्दं अशब्दवाच्यं न भवति । कुतः ईक्षतेः=ज्ञानविषयत्वात् । इत्यर्थः । 'स एतस्मात् जीवघनात्परात्परं पुरिशयं पुरुषमी-क्षते' इति श्रुतौ ब्रह्मणः ईक्ष्यत्वश्रवणात् तत् ब्रह्म शब्दवाच्यमेव भवतीति तात्पर्यम् । **गौणश्चेत्**-'स एतस्मा' दिति ईक्षति-

## अथ आनन्दमयाधिकरणम् ॥ ६ ॥

इह ब्रह्मलक्षणस्य जगत्कारणत्वस्य शास्त्रैकसमधिगम्यस्य तान्त्रिके प्रधानेऽतिव्याप्तिमाशङ्क्य चेतनत्वादिहेतुना यथा तस्मिन्नतिव्याप्तिर्न भवति तथा निरूपितम्। अचेतने प्रधाने इव चेतनेऽपि जीवे तन्नातिव्याप्तमिति वक्तुमधिकरणान्तरमारभ्यते—

### ॥ सू० ॥ आनन्दमयोऽभ्यासात् ॥ १३ ॥

'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' (तै० २–१, ७.) इत्यारभ्य 'तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः' (२–१, ५.) इति कश्चिदाकाशादिसकलभूतकारणत्वेन अन्नमयादिकोशकञ्चुकान्तरनिगूढ आत्मा आनन्दमय

---

पूर्वाधिकरणे सद्विद्यावलम्बनप्रधानकारणत्वशङ्कानिराकरणेन प्रधाने ब्रह्मलक्षणस्यातिव्याप्तिर्निरस्ता। तथैवानन्दवल्ल्यवलम्बनजीवकारणत्वशङ्कानिराकरणेन जीवे तस्यातिव्याप्तिरिह निरस्यत इति दृष्टान्तसङ्गत्योत्तराधिकरणमवतारयति—इहेति ॥ सू॥ आनन्दमयोऽभ्यासात् ॥ १३ ॥ 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय' इत्यानन्दमय आम्नायते। तस्य जीवत्वेऽपि न तत्र ब्रह्मलक्षणस्यातिव्याप्तिः। तस्मिन्कारणत्वाश्रयणात् 'आत्मन आकाश' इत्यादिना प्राग्वर्णितस्य कारणत्वस्यान्नमयादिषु पर्यवसानासम्भवादुत्तरोत्तरमात्मान्तरप्रतिपादनात् तत्र तत्र तदपर्यवसाने आनन्दमयप्रतिपादनानन्तरमपि 'ब्रह्म

---

श्रुत्युक्तः गौणः सत्त्वादिगुणबद्धो जीव एवेति चेत्। न–तथा न भवति। कुतः। आत्मशब्दात् ईक्षणीयवस्तुनि 'आत्मन्येवात्मानं पश्ये'दिति आत्मशब्दश्रवणात् इत्यर्थः।

**तन्निष्ठस्य**–'यस्यानुवित्तः प्रतिबद्ध आत्मे'ति आत्मनिष्ठस्य पुरुषस्य मोक्षोपदेशात् आत्मशब्दः जीवे मुख्यो न भवति गुणबद्धात्मज्ञानात् गुणनिवृत्तिरूपमोक्षानुपपत्तेः।

**हेयत्वावचनात्**–ब्रह्मणः मोक्षार्थं प्राधान्येन अज्ञेयत्वरूपहेयत्वस्याप्रतिपादनात् प्रत्युत 'तमैवेकं जानथे'ति ज्ञेयत्ववचनाच्च न गौणो जीव आत्मशब्दवाच्यो भवति किं तु निर्गुणो विष्णुरेवेत्यर्थः।

स्वस्य **स्वस्मिन् अप्ययात्** लयवचनात् 'आत्मानं विलापयती' ति श्रुत्युक्तः निर्गुण एव आत्मशब्दवाच्यभूतः न तु गौणो जीव इत्यर्थः। अत एव चासौ निर्गुणो विष्णुरेव शब्दवाच्य इत्यर्थः।

**गतेः**–नानाशाखाजन्यज्ञानस्य **सामान्यात्** एकत्वरूपश्रवणात् न विष्णोरन्यः कारणत्वेन शाखान्तरप्रतिपाद्य इत्यर्थः। 'एको देव' इतिश्रुतावुक्तत्वाच्च न अशब्दवाच्यं ब्रह्मेत्यर्थः।

अस्मिन्मते परं ब्रह्म मुख्यतया सकलशास्त्रप्रतिपाद्यमिति समन्वयसूत्रोक्तं युक्तं वा न वेति संदेहः। 'अशब्दमस्पर्श' 'यतो वाचो निवर्तन्ते' इत्यादिषु वचनेषु अवाच्यत्वश्रवणात् ब्रह्म सकलशास्त्रवाच्यं न भवतीति पूर्वः पक्षः।
'स एतस्मा' दिति ईक्षतिश्रुतेः ईक्षणीये तस्मिन् आत्मशब्दश्रवणात् पूर्णत्वाभिधायिनश्चात्मशब्दस्य परिच्छिन्नत्वेनाभ्युपगते सगुणे वृत्त्ययोगात् सगुणनिष्ठस्य मोक्षोपदेशानुपपत्तेः प्रत्युत सगुणस्य मुमुक्षुभिर्हेयत्वात् सगुणे पूर्णत्वस्वाप्ययोरसंभवात् 'केवलो निर्गुण'श्चेति निर्गुणस्यैव च श्रुतत्वात् सर्ववेदोत्पाद्यज्ञानैकरूप्येण गतिसामान्येन श्रुतीतिहासादीनां विरोधाभावस्य पैङ्गिश्रुत्या प्रतिपादितत्वात् कासुचिच्छाखास्वन्यथोच्यत इति शङ्कानुदयाच्च परं ब्रह्म मुख्यतया सकलशास्त्रप्रतिपाद्यमिति समन्वयसूत्रोक्तं युक्तमेवेति सिद्धान्तः॥

इति सूत्रार्थचन्द्रिकायामीक्षत्यधिकरणम् ॥ ५ ॥

---

पुच्छं प्रतिष्ठे'ति ततोऽन्यस्य तत्प्रतिष्ठारूपस्य ब्रह्मणः प्रतिपादनेन तत्रापि तत्पर्यवसानायोगादित्याशङ्कानिराकरणार्थं पूर्वपक्षसिद्धान्तसाधारणमानन्दमये प्राग्वर्णितकारणत्वपर्यवसानं दर्शयितुं 'तस्माद्वा एतस्मादात्मन' इत्यादि 'निगूढ आत्मे' त्यन्तम् । तत्रायमाशयः । उपक्रमे तावदाकाशादिसर्वप्रपंचकारणत्वेनात्मोपन्यस्तः। तन्निर्धारणार्थं 'स वा एष पुरुषोऽन्नरसमय, इत्यादि । तत्र न तावत्स आत्मान्नमय इति युक्तम् । अन्नमयस्याकाशादिक्रमेण तत्सृष्टान्नविकारार्थत्वप्रतिपादनात् 'तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः' इति तदाभ्यन्तरात्मान्तरवर्णनाच्च । अत एव न प्राणमयो मनोमयो विज्ञानमयो वा । तत्तदाभ्यन्तरात्मान्तरवर्णनादेव । अतस्स्थूलारुन्धतीन्यायेनान्नमयादिषु तत्तद्बुद्ध्यवतारणक्रमेण आनन्दमये तद्बुद्धिं प्रतिष्ठापयितुमन्नमयादिविज्ञानमयान्तकोशचतुष्टयवर्णनमिति तन्निगूढः आनन्दमयस्सर्वप्रपञ्चकारणभूतः आत्मेति युक्तम् । न च तदनन्तरं 'ब्रह्म पुच्छं प्रतिष्ठे'ति ब्रह्मनिर्देशात् तस्याप्यतिलङ्घनमाशङ्कनीयम् । ब्रह्मण्यात्मशब्दश्रवणात् आत्मनिर्धारणपर्यवसानस्यात्मश्रुतिविषय एवोचितत्वात् । ननु, 'ब्रह्म पुच्छं प्रतिष्ठे' त्येतदनन्तरं, 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति वाक्येन पूर्वस्य विज्ञानमयस्य तस्य चानन्दमयस्य चैक आत्मा प्रतिपाद्यते । स आत्मा प्रकृतं ब्रह्मैव पर्यवस्यतीति तस्यात्मश्रुतिविषयत्वमसिद्धम् । न च तत्र षष्ठ्योस्सामानाधिकरण्येन तस्य पूर्वस्य विज्ञानमयस्यैष एवात्मा य एष आनन्दमय इति तदर्थोऽस्त्विति वाच्यम् । यच्छब्दयुक्तावान्तरवाक्यान्तरगतस्य पूर्वस्येति पदस्य वाक्यान्तरान्वयकल्पनाया व्युत्पत्तिनिरुद्धत्वात्। स्यादेतत् । पूर्वस्य विज्ञानमयस्य आनन्दमयातिरिक्तः कश्चिदात्मा न प्रसिद्धः। 'यः पूर्वस्ये'ति यमनूद्य तस्यानन्दमयं प्रत्यात्मत्वं विधीयेत । अतः प्रतीयमानार्थानुपपत्तेः व्यवहितान्वयः कल्प्यत इति चेन्न । 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति हि प्राणमयादिपर्यायचतुष्टयेऽपि श्रूयते । तत्र प्राणामयपर्याये 'यः पूर्वस्ये'त्यस्य योऽन्नमयस्यात्मेत्यर्थः । स चान्नमयस्यात्मा प्रसिद्ध एव । तथाहि-यद्यपि' स वा एष पुरुषोऽन्नरसमय' इति वाक्येन कारणवाक्यगततदेतच्छब्दोपादानवता अन्नरसमयः पुरुषः कारणवाक्यप्रतिपन्न आत्मैवेत्युक्तः । तथाप्याकाशादिक्रमेण तत्सृष्टान्नरसप्रभवस्य पुरुषस्य ताद्रूप्यमयुक्तम् । तच्छरीरत्वात् । स्थूलारुन्धतीन्यायेन स एवेति व्यपदिश्यते । वस्तुतोऽन्नमयस्यात्मैव स कारणभूतात्मेति प्रथममेवावगम्यते । अतस्तस्य प्राणमयपर्यायगतवाक्ये 'यः पूर्वस्ये'त्यनुवादः सङ्घटते। तेन वाक्येन तस्य प्राणमयं प्रत्यात्मत्वे विहिते मनोमयपर्याये तदनुवादस्सम्भवति । एवं पूर्वपूर्वपर्यायोपात्तं प्रत्यात्मत्वेन विहितं तमनूद्योत्तरोत्तरपर्यायोपात्तं प्रत्यात्मत्वविधौ न काचिंदयुक्तिरित्यानन्दमयपर्यायगततद्वाक्यपर्यालोचनया तस्यानन्दमयादपि व्यतिरेकसिद्धौ तत्प्रतिष्ठाभूतब्रह्मरूपतयैव पर्यवसानं स्यात् । एवमर्थवर्णन एव पञ्चानामप्यन्नमयादीनामेक एव सर्वान्तरस्सर्वप्रतिष्ठाभूत आत्मा न तु पूर्वपूर्वस्योत्तरोत्तर इति प्रतिपादनेन 'तस्यैष एवे'तिवाक्यानामर्थवत्ता भवेत् । पूर्वपूर्वस्योत्तरोत्तर आत्मेत्यर्थवर्णने तु तस्यार्थस्य 'तस्माद्वा एतस्मा'दिति तत्तत्पर्यायप्रारम्भवाक्यैरेवावगतेस्तेषां वैयर्थ्यमेव स्यादिति चेत् उच्यते । यद्यपि प्राणमयादिपर्यायत्रयेऽपि तस्य वाक्यस्यात्मान्तरविधौ तात्पर्यं तथाप्यानन्द-

---

(१) 'काचिदनुपपत्तिरिति' इति ख. पाठः ।

इति आनन्दवल्ल्यामाम्नायते ॥ अत्रानन्दमय आत्मा जीवो वा? परमेश्वरो वा?

मयपर्याये तस्यात्मेश्वरवचनस्येश्वरान्तरनिरास इव तन्निरासे तात्पर्यम् । कुत एवं कल्प्यत इति चेत् आत्मान्तरविवक्षायां 'तस्माद्वा एतस्मादन्योऽन्तर आत्मे'ति तत्प्रतिपादनप्रारम्भस्य प्राणमयादिपर्यायचतुष्टयेऽपि दर्शनात् । इह 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मे'त्येवंरूपप्रारम्भादर्शनाच्चानन्दमय एवाकाशादिकारणभूत आत्मेति श्रुतितात्पर्यावसायादेवं कल्प्यते । ननु,भूमविद्यायामात्मजिज्ञासयोपसेदुषे नारदाय नामादिषूत्तरोत्तरमर्थान्तरोपदेशो 'अस्ति भगवो नाम्नो भूय इति वाग्वाव नाम्नो भूयसी' त्यादिप्रश्नप्रतिवचनाभ्यामेवेति शैल्याः प्राणे समापनेऽपि विनैव तादृशे प्रश्नप्रतिवचने 'एष तु वा अतिवदति यस्सत्येनातिवदती' त्यादिना तदनन्तरं प्रतिपाद्यमाने सत्ये प्राणमुल्लङ्घ्यात्मोपदेशपर्यवसानमभ्युपगम्यते । इहापि तथा स्यादिति चेत् विषमो दृष्टान्तः । भूमविद्यायां प्राणोपदेशे नामादिष्वनुक्तस्यातिवादित्वस्योक्त्या तत्पर्यन्त एवात्मोपदेश इति भ्रान्त्या शिष्ये भूयः प्रश्नमकुर्वति स्वयमेवाचार्यः ततोऽर्थान्तरं सत्यमुपचिक्षेपेति श्लिष्यते । इह तूत्तरोत्तरात्मोपदेशे दृष्टायाः शिष्यप्रश्नं विना स्वयमेव प्रवर्तितायाः 'तस्माद्वा' इत्यादिशैल्या नास्ति ब्रह्मणि परित्यागे किञ्चित्कारणम् । न तु 'तस्यैष एवे' त्यादिवाक्यस्य पर्यायचतुष्टयेऽप्यर्थैकरूप्यलाभः तत्र कारणं स्यादिति चेन्न । चरमप्रवृत्तभङ्गीभङ्गभिया प्रथमप्रवृत्तभङ्गीभङ्गायोगात् । तस्मादानन्दमय एव सर्वकारणभूत आत्मेति तस्मिन्नानन्दमये श्रुतस्यात्मशब्दस्य जीवब्रह्मसाधारण्यात् संशयमाह—अत्रेति । नन्वात्मशब्दः साधारणोऽपि 'ब्रह्मविदाप्नोति पर'मिति ब्रह्मोपक्रमात्तद्विषयो भवति । न हि जीवस्य ब्रह्मशब्दार्हतास्ति । परिच्छिन्नत्वात् । न वा तद्विदः परप्राप्तिरस्ति । 'तन्निष्ठस्य मोक्षोपदेशा'दिति (ब्र०—१—१—७) सूत्रे तन्निषेधात् । न च 'सत्यं ज्ञानमनन्त' मिति लक्षणं तत्रान्वेति । उच्यते । ब्रह्मणः तद्विदो जीवस्य चोपक्रमोऽस्ति तयोरात्मशब्देन कस्य परामर्शो युक्त इत्यनवधारणात्संशयः। जीव इति पूर्वपक्ष इति । तत्रात्मशब्देन ब्रह्मविद एव परामर्शो युक्तः । विभक्त्यैकरूप्यात् । 'प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छे'दित्यत्र 'स' इत्यनेनेव प्रजापतेः । न च 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति मन्त्रे ब्रह्मापि प्रथमान्तनिर्दिष्टमिति वाच्यम् । 'यो वेदे'ति विदेः कर्मसमर्पकत्वेन ब्रह्मशब्दस्य द्वितीयान्तत्वात् । न चानन्दमयवाक्यगत आत्मशब्दः 'तस्माद्वा एतस्मादात्मन'इति कारणवाक्यगतात्मशब्दोपात्तविषयः तत्र नास्ति विभक्त्यैकरूप्यमिति वाच्यम् । तत्र 'तस्मा'दित्यनेन प्रकृतपरामर्शसिद्धा 'वेतस्मा'दित्यस्य प्रकृतयोर्ब्रह्मजीवयोर्मध्ये कस्य परामर्शः कार्य इत्याकाङ्क्षायां लोकप्रसिद्धस्य जीवस्येति ज्ञापनार्थतया तत्राप्यात्मशब्दस्य जीवपरत्वात् । एवं च सर्गाद्यकाले शरीररहितस्य जीवस्य सङ्कल्पासम्भवात् स्रष्टृत्वं न युज्यत इत्यपि शङ्का नावकाशं लभते । ब्रह्मविद्यया ब्रह्म प्राप्तस्य 'अभावं बादरि' (ब्र०. ४—४—१०—सू) रित्यधिकरणन्यायेन अशरीरस्यापि सङ्कल्पसम्भवादिति भावः । नन्वसिद्धोऽत्र जीवधर्मोपलम्भः । न चान्नमयादयस्तद्धर्माः तेषां पक्षित्वेनोत्तरोत्तरमभ्यन्तरत्वेन च वर्णितानामप्रसिद्धतया जीवधर्मत्वेन ब्रह्मधर्मत्वेन वा निर्धारणासम्भवादि-

( १ ) 'भविष्यति' इति ख. पाठः ।

इति सन्देहः ॥ जीव इति पूर्वः पक्षः, तद्धर्माणामत्रोपलम्भात् । तथाहि—'पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः' (तै० २–१.) इत्यादिना पञ्चावयवं शरीरादिकं निरूप्यते । अत्र 'अन्नमयः' इति शरीरमुच्यते। 'प्राणमयः' इति तदन्तवर्ती प्राणः । 'मनोमयः' इति तदन्तर्वर्ति मनः । 'विज्ञानमयः' इति तदन्तवर्तिनी बुद्धिः। 'आनन्दमयः' इति सर्वेषामन्नमयादीनामाश्रयो जीव एव । अन्नादीनां शिरःप्रभृतिकल्पना समुपासनार्था । अन्नादीनां ब्रह्मत्वेनोपासनात् तत्त-

---

त्याशङ्क्य तेषां जीवधर्मत्वमुपपादयति—तथा हीति । अन्नमयस्तावत् शरीरमेव । 'अन्नात्पुरुष'इत्यदनीयविकारत्वोक्तेः । न च छान्दोग्यसृष्टिप्रकरण इवात्रान्नशब्दः पृथ्वीवाचकः । इहान्नस्य पृथिवीनिष्पन्नौषधिप्रभवत्ववचनेनौदनादिरूपत्वावगमात् । एवं च प्राणमयः प्राणवायुरेव । शरीरान्तर्वर्तित्वलिङ्गात् । तथा मनोमयविज्ञानमयौ मनोबुद्धी । उत्तरोत्तरं सूक्ष्मत्वेन तयोस्तदभ्यन्तरत्वव्यपदेशार्हत्वात् । प्राणमयादिष्वपि मयटो विकारोऽर्थः[1] । व्यष्टिप्राणमनोबुद्धीनां समष्टिप्राणादिविकारत्वात् शरीरादीनां शिरःपक्षद्वयपुच्छमध्यावयवत्वं काल्पनिकं मुखचन्द्रादिवद्रूपकमात्रसिद्धम् । तत्कल्पना तूपासनार्थेति भावः॥ अत्र पञ्चावयवमिति शरीरादिविशेषणस्य प्रत्येकं शिरःपक्षद्वयमध्यभागपुच्छयुक्तमित्यर्थः। आत्मा देहस्य मध्यभागः। 'मध्यं ह्येषामङ्गानामात्मे'तिश्रुतेः । अनेनानन्दमयस्य जीवत्वे प्रियादियोगो हेत्वन्तरत्वेन सूचितः । तत्रेष्टवस्तुदर्शनतल्लाभतदुपयोगप्रयुक्ताः सुखविशेषाः प्रियमोदप्रमोदाः । यावत्तृप्तिविषयभोगानन्तरं निवृत्ते विषयसम्पर्के तृप्तिरूपतयाऽनुवर्तमानं सुखमानन्दः । तेषामानन्दमयं प्रति शिरस्त्वादिना निरूप्यमाणानां तत्सम्बद्धः[2] कश्चित्सम्बन्धो वक्तव्यः । तेषां च जीवेन भोक्तृभोक्तव्यसंबन्धः प्रसिद्धतरः । न च प्रसिद्धसम्बन्धग्रहणस्थलेऽप्यप्रसिद्धस्य तस्य ग्रहणं कार्यमिति । नन्वन्नमयाद्या न शरीरप्राणमनोबुद्धयः किंतु परब्रह्मण एव शरीरादिकोशान्तर्गताः स्थूलसूक्ष्मादिप्रकाराः रूपभेदाः । अन्नमयादिपर्यायेषु 'येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते' 'आनन्दं ब्रह्मणो विद्वान्' 'विज्ञानं ब्रह्म चेद्वेदे'ति ब्रह्मशब्दाम्नानात् । तस्मादानन्दमयस्य शरीरादिजीवधर्मसम्बन्धोऽसिद्ध[3] इत्याशङ्क्याह—अन्नादीनामिति । प्राणमयादिपर्यायेषु अन्योऽन्तर आत्मे'ति भेदव्यपदेशात् ब्रह्मानेकत्वाभावादन्नमयादयः शरीरादिकोशा एव । 'एतेषु ब्रह्मशब्दस्त्वन्नसमृद्ध्यादिफलकब्रह्मदृष्टिविधानार्थः। विध्युपास्तिक्रियान्वयादिति भावः। नन्वन्नमयाद्युपासनानामन्नसमृद्ध्यादिः फलमुक्तं नानन्दमयोपासनस्य । अतस्तदुपासनस्य 'ब्रह्मविदाप्नोति पर'मित्यनेनैव फलमुक्तमिति श्रुत्यभिप्रायावगमात् वेद्यत्वेनोपक्रान्तं ब्रह्म आनन्दमय एवेति अवसीयते । न च ब्रह्मण्यन्नमयादिशब्दोक्तशरीरादिसम्बन्धानुपपत्तिः । न ह्यत्र शरीरादीनामानन्दमयेनोपकरणोपकरणिभावसम्बन्ध उक्तः । किं तु बाह्याभ्यन्तरभावसम्बन्धः । स तु जीवेनेव हृदयस्थितेन ब्रह्मणापि सम्भवति । अत एव स्थूलारुन्धतीन्यायादन्नमयादिक्रमेण बुद्ध्यवतारणमपि ब्रह्मणि सम्भवति । अन्यथा भृगुवल्ल्यां का गतिः । तत्र हि 'यतो वा इमानि भूतानि जायन्त' इति जगज्जन्मादिकारणं ब्रह्म प्रस्तुत्य 'अन्नं

---

(१) मयटो विकारार्थाः इति ख. पाठः।(२)'तत्संबन्धः कश्चित्सिद्धो' इति ङ. पाठः। (३) 'निषिद्ध' इति ख. पाठः।

दन्नादिसमृद्धिः फलमुक्तम्। कथमस्य संसारसागरदुःखमग्नस्य जीवस्यानन्दमयत्वाभिधानमिति चेत्—न, अत्रानन्दशब्देन परं ब्रह्मोच्यते 'आनन्दो ब्रह्म'(तै० ३–६.) इति श्रवणात्। मयट्शब्दस्य विकारार्थत्वात् तत्कार्यभूतो जीव एव आनन्दमय इत्युच्यते। नित्यसंपन्नशिवत्वस्य ब्रह्मणः आनन्दमयत्वाङ्गीकारे 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' (महाना० ५७.) इति शुद्धिप्रार्थना

---

ब्रह्मेति व्यजाना'दित्यादिना अन्नप्राणमनोविज्ञानेषु ब्रह्मबुद्ध्यवतारणक्रमेण आनन्दे ब्रह्मबुद्धिः प्रतिष्ठापिता। न च तत्राप्यानन्दो जीव इति वक्तुं शक्यम्। 'अधीहि भगवो ब्रह्मेति'। 'तद्विजिज्ञासस्व'। 'तद्ब्रह्मेति'। 'आनन्दो ब्रह्मेतिव्यजाना'दित्यादिमध्यान्तपरामर्शेनान्नादिषु ब्रह्मबुद्ध्यवतारणेन तस्य ब्रह्मत्वावधारणात्। स्यादेतत्। भृगुवल्ल्यामन्नादिषु मयट्प्रत्ययाभावादाधिदैविकसमष्टिशरीरप्राणमनोविज्ञानेषु ब्रह्मशरीरत्वेन प्रसिद्धेषु ब्रह्मबुद्ध्यवतारणक्रमेणानन्दे ब्रह्मबुद्धिः प्रतिष्ठापितेति युक्तमानन्दस्य ब्रह्मत्वम्। इह तु मयट्प्रत्ययश्रवणात् आधिदैविकशरीरादिकार्येष्वाध्यात्मिकशरीरादिषु जीवशरीरत्वेन प्रसिद्धेषु जगत्कारणात्मबुद्ध्यवतारक्रमेण आनन्दमये तद्बुद्धिः प्रतिष्ठापिता। अतोऽयमानन्दमयो जीव एवेति युक्तम्। अन्नमयादीनां भृगुवल्ल्युक्तान्नादिविकारत्ववदानन्दमयस्यापि तदुक्तानन्दविकारस्य स्थानप्रमाणबलात्प्रतीतेरिति। नैतद्युक्तम्। यतो नानन्दमये मयड्विकारार्थः किं तु प्राचुर्यार्थः। अग्रे 'सैषानन्दस्य मीमांसे'त्यारभ्य प्रवृत्तया आनन्दमीमांसया 'यतो वाचो निवर्तन्त' इति श्लोकेन च निरतिशयत्वरूपतत्प्राचुर्याभिधानात्। इह मयटः प्राचुर्यार्थत्व एव तत्प्राचुर्यं कीदृशमित्याकाङ्क्षोत्थानसम्भवेन तदभिधानस्याकाङ्क्षिताभिधानत्वेन सङ्गतिलाभात् श्रुत्यन्तरनिरीक्षणसापेक्ष[1]स्थानप्रमाणलभ्यार्थग्रहणात्प्राकरणिकवचनविशेषैकमर्थक्याकाङ्क्षापूरकार्थग्रहणस्य युक्ततरत्वात्। एवं च मयट्प्रत्ययस्य प्राचुर्यार्थत्वादानन्दमयशब्दो ब्रह्मणि सङ्गच्छते। प्रत्युत जीव एव न सङ्गच्छते। दुःखसागरनिमग्नेन तेन आनन्दकणिकाया अपि दुस्सम्पादकत्वात्। अतः शरीरादिपञ्चमपर्यायस्थत्वादपि भृगुवल्ल्युक्तानन्दवदानन्दमयोऽपि ब्रह्मैवेत्यभिप्रायेण शङ्कते—कथमस्येति। 'अत्रे'त्यादिपरिहारग्रन्थस्यायमभिप्रायः। आनन्दमयो ब्रह्मेति न युक्तम्। 'ब्रह्म पुच्छं प्रतिष्ठे'ति ततो भेदेन ब्रह्मणः प्रदर्शनात्। न च तत्र ब्रह्मशब्दः आनन्दमयपर एव, अन्नमयादिषु 'तस्येदमेव शिरः, अयं दक्षिणः पक्ष' इत्यादिना तत्तदवच्छिन्ने[2]ष्ववयवादिषु शिरःपक्षपुच्छादिकल्पनाप्रायपाठेन ब्रह्मानन्दमययोरभेदप्रतीतेरिति वाच्यम्। मनोमये पक्षशिरःपुच्छानामृक्सामयजुरथर्वाङ्गिरसां तद्भिन्नत्वेन तथा प्रायपाठासिद्धेः। अन्नमयादीनां शिरःपक्षादिष्ववयवावयविभावादेस्तस्येदमिति व्यतिरेकनिर्देशावलम्बनस्य सत्त्वादिहानन्दमयस्य ब्रह्मत्वे तदेव तस्य पुच्छमिति व्यतिरेकनिर्देशस्य कथञ्चिदप्यालम्बनासम्भवात्। न चात्र ब्रह्मशब्दः प्रणवादिविषयः। 'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदु'रित्यनन्तरश्लोके ब्रह्मणि सदसत्त्वज्ञानयोरिष्टानिष्टफल[3]दर्शनेन तस्य परब्रह्मत्वावसायात्। लोकप्रसिद्धेषु प्रणवादिष्वसत्त्वज्ञानशङ्कानवकाशात्। न चायं श्लोक आनन्दमयविषयः अन्नमयादिपर्यायश्लोकानां पुच्छवद्विषयत्वदर्श-

---

(१) 'क्षणस्थानापेक्षस्थान' इति। (२) 'तदभिन्नेष्वेव' इति ख. पाठः। (३) 'फलवर्णनेन' इति ख. पाठः।

नेन तत्प्रायपाठादस्यापि पुच्छवद्विषयत्वावगमादिति वाच्यम् । ब्रह्मश्रुतिभ्यां पुच्छविषयत्वेनावधृतस्य श्लोकस्य प्रायपाठेन पुच्छवद्विषयत्वकल्पनायोगात् । 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहे'ति मनोमयपर्यायश्लोकस्य पुच्छवद्विषयत्वाभावेन प्रायपाठासिद्धेश्च । 'मनसा सहे'तिश्रवणात्तत्रापि यथाकथञ्चित्पुच्छवद्विषयत्वमस्तीति चेत् यद्येतावता तव सन्तोषस्तर्हि जितमस्माभिरानन्दमयो जीवस्तस्य पुच्छत्वेन कल्पितं परं ब्रह्म पुच्छविषयौ श्लोकस्थब्रह्मशब्दौ । तत्र स इति पदं ब्रह्मसत्त्वासत्त्वज्ञानवद्विविधजीवपरामर्शीति सर्वसामञ्जस्येनास्मदभिमतसिद्धेः । परं ब्रह्म तद्विकारलेशस्य जीवस्य कथं पुच्छमिति चेत् । यथा प्राणमयस्य पृथिवी पुच्छं तथेति सन्तुष्यतु भवान् । फलार्थदृष्टिविधानं यथाकथञ्चित्प्रवर्तते । एतेन पञ्चमपर्यायस्थत्वात् भृगुवल्ल्यानन्दवदानन्दमयो ब्रह्मेत्यनुमानं निरस्तम् । तस्य स्वप्रकरण एव स्पष्टं ब्रह्मभेदप्रतीतावप्रयोजकसामान्यतोदृष्टानुमानमात्रात्तस्य ब्रह्मत्वासिद्धेः । यथा विराट्सूत्रहिरण्यगर्भरूपब्रह्माहम्भावास्पदेषु समष्टिशरीरप्राणमनोबुद्धिषु बुद्ध्यवतारणक्रमेणोपदिष्ट आनन्दो ब्रह्म । एवं व्यष्टिजीवाहम्भावास्पदेषु व्यष्टिशरीरादिषु बुद्ध्यवतारणक्रमेणोपदिष्ट आनन्दमयो जीव इति दृष्टान्तेनैव सिद्धेश्च । अत एव व्यष्टिशरीरादीनां जीवधर्मत्वमपि तदहम्भावविषयत्वरूपसम्बन्धविशेषकृतमुपपद्यते । एवमानन्दमयस्य जीवत्वे तदुपासनाफलं प्रक्रान्तब्रह्मविद्याफलादन्यद्वक्तव्यं स्यादिति चेत् नायं नियमः । भूमविद्यायां 'तरति शोकमात्मवि'दिति प्रक्रान्तात्मविद्याफलादन्यानि फलानि नामाद्याशान्तोपासनेषूक्त्वा प्राणोपासने तदनुक्तिदर्शनात् तत्रानुक्तं फलमुपासनानुगुणं कल्प्यं चेत् इहापि तथास्तु । यत्त्वानन्दमये मयट्प्राचुर्यार्थ इति तन्न । अन्नमयादिषु मयटो विकारार्थप्रायपाठानुसारेण आनन्दमयशब्दस्य जीवपरत्वनिश्चायकप्रमाणानुसारेण चात्र मयटो विकारार्थत्वात् पाश्चात्यमानन्दमीमांसादिकं तु 'ब्रह्मविदाप्नोति पर'मित्युपक्रान्तब्रह्मविद्याफलरूपमुक्तानुभाव्यब्रह्मानन्दोत्कर्षविषयं भविष्यति । अत एव तत्र ब्रह्मानन्दस्य 'स एको ब्रह्मण आनन्दः' 'श्रोत्रियस्य चाकामहतस्ये'ति अकामहतश्रोत्रियसाधारण्यम् 'आनन्दं ब्रह्मणो विद्वा'निति मुक्तभोग्यत्वं च श्रूयते । नन्वानन्दमीमांसादेः प्राप्यब्रह्मानन्दोत्कर्षविषयत्वे तदुपपादकतया जगत्स्रष्टृत्ववर्णनस्यापि तद्विषयत्वं युक्तम् । आनन्दोत्कर्षस्यैश्वर्योत्कर्षप्रयुक्तत्वौचित्यात् ब्रह्मानन्दोत्कर्षवर्णने प्रथमावधिभूतस्य मानुषानन्दस्य 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्द'इत्यैश्वर्यविशेषप्रयुक्ततयोपक्रमेणोत्तरोत्तरमानन्दोत्कर्षस्याप्यैश्वर्योत्कर्षप्रयुक्तत्वावसायाच्च । सत्यं ब्रह्मणः स्रष्टृत्ववर्णनादपि उपासनाराधिततत्प्रसादलब्धसामर्थ्यस्य स्रष्टृत्ववर्णने ततोऽप्यधिकमैश्वर्यं सिद्ध्यति यथा प्रतर्दनविद्यायां 'त्रिशीर्षाणं त्वाष्ट्रमहन' मित्यादिना ब्रह्मविद इन्द्रस्य सामर्थ्यातिशयवर्णने तत्प्रदातुर्ब्रह्मणस्ततोऽधिकमैश्वर्यं सिध्यति । तस्मान्निरतिशयानन्दरूपपरब्रह्मविकारो जीवो जगत्कारणभूतः आनन्दमय इति युक्तम् । ननु, ज्ञानविकासरूपावस्थाविशेषविशिष्टस्य जीवस्येव जगत्सृष्टिसङ्कल्परूपावस्थाविशेषविशिष्टस्य ब्रह्मणोऽपि ब्रह्मविकारत्वं सम्भवतीति चेत् सत्यं तथाप्यत्र मयटो भृगुवल्ल्युक्तानन्दविकारार्थत्वसिद्धौ तस्यानन्दस्य 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इति वाक्येन कारणावस्थ-

(१) 'द्विषयजीव' इति ख. पाठः ।

व्यर्था स्यात् । अतोऽयमानन्दमय आत्मा जीव एव न परमेश्वरः ॥ इति प्राप्ते ब्र-

ब्रह्मरूपत्वावगमात् । कारणावस्थब्रह्मणश्च 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायत' इति श्रुत्यन्तरेण जगत्सृष्टिसङ्कल्परूपावस्थाविशिष्टत्वावगमात् तस्यैव तद्विकारत्वं न सम्भवतीति। इदं तु चिन्त्यते । आनन्दशब्दाद्विकारार्थे मयट् कुतो लभ्यते । विकारावयवयोरर्थयोस्तद्विधायका 'न्नित्यं वृद्धशरादिभ्य' इति (पा०-४-३-१४४) सूत्रत इति चेन्न । तत्र 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयो'रिति (पा०-४-३-१४३) पूर्वसूत्रान्मयडादीनामिव भाषायामित्यस्याप्यनुवृत्तेः। कुतस्तर्हि 'शरमयं बर्हिर्भवति' 'दर्भमयं वासो भवती'त्यादिश्रुतिषु मयट्प्रत्ययः । 'यस्य पर्णमयी जुहूर्भवती'त्यादिश्रुताविव 'द्व्यचश्छन्दसी'(४-३-१५०)ति सूत्रान्तरतः। तद्धि सूत्रं छन्दस्यप्राप्तमयटो विधानार्थम् । यथाह तस्मिन्सूत्रे वृत्तिकारः। 'भाषायां मयडुक्तः छन्दस्यप्राप्तो विधीयत' इति । अत्रैवं पूर्वपक्षिणोऽभिप्रायः । भाषायां विहितप्रत्ययः छन्दस्यपि क्वचिद्भवति यथा 'सख्यशिश्वीति भाषायामि'ति(पा०४-१-६२सू.)ङीषन्तौ सख्यशिश्वीशब्दौ भाषायां निपातितौ।'सखा सप्तपदा भवे'ति यजुश्शाखायामङीषन्तस्य सामशाखायां ङीषन्तपाठो दृश्यते 'सखी सप्तपदी भवे'ति । नन्वितिकरणस्तस्मिन्सूत्रे कृतः। स प्रकारे वर्तमानो भाषायामित्यनेनान्वितः ततोऽन्यत्र छन्दस्यपि क्वचित्तद्रूपं गमयेत् । भाषाग्रहणं तु भाषायां नित्यार्थं स्यात् ।एवं तर्ह्यत्र सूत्रे नित्यग्रहणं कृतम् । तदनर्थकम्। पूर्वसूत्रेण सर्वप्रातिपदिकेभ्यो भाषायां विकल्पेन विहितस्य मयटः पुनर्वृद्धशरादिष्वारम्भसामर्थ्यादेव तेभ्यो नित्यं प्राप्तेः । अतश्छन्दसि वृद्धशरादिभ्यो विकल्पेन तत्प्राप्त्यर्थं भविष्यति । ननु, वृत्तौ 'केचिदेकाचो नित्यं मयटमिच्छन्ति तद्विधानार्थं नित्यग्रहण'मित्युक्तम् । एवं तर्हि शरादिषु मृद्ग्रहणमनर्थकं स्यात् । 'शरदर्भमृत्कुटीतृणसोमबल्बजे'ति हि शरादिः । यदि मृद्ग्रहणमेकदेशोदाहरणमुखेन तत्प्रपञ्चनार्थं तर्हि ततोऽपि सिद्ध्यत् न तस्यैकान्तिकं प्रयोजनमिति छन्दसि विकल्पेन प्राप्तिस्तस्यैकान्तिकं प्रयोजनं भविष्यति । 'सर्वे विधयश्छन्दसि विकल्प्यन्त' इति वात्र विकारे मयट् भविष्यति । ननु, छन्दसि बह्वचो मयटि सम्प्रतिपन्ने हि विकारार्थे तन्निर्वाहाय कथञ्चिदेवं कल्पनीयम् । तदेव न सम्प्रतिपन्नमिति चेन्न । अन्नमयप्राणमयमनोमयप्रायपाठेन विज्ञानमयानन्दमययोर्मयटो भृगुवल्ल्युक्तविज्ञानानन्दविकारार्थस्य अङ्गीकर्तव्यत्वेन तदसम्प्रतिपत्त्ययोगात् । यद्वा 'तत आगत'इत्यधिकारे 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' (पा०-४-३-८१) इत्यनुवृत्तौ 'मयट्चे'ति (पा०-४-३-८२) सूत्रेण हेतुवाचिभ्यः शब्देभ्यः तत आगत इत्यर्थे मयड्विहितः सोऽत्र भविष्यति । तेनानन्दमय इत्यस्य आनन्दाद्धेतोरागत इत्यर्थे सति हेतोस्सकाशादागमनस्य तत उत्पत्तिरूपत्वादानन्दविकारत्वं लभ्यत इति नित्यसम्पन्नेति शुद्धिवाक्यस्यैतत्प्रकरणगतत्वाभावेऽप्यन्नमयादिक्रमेण कीर्तनात् शुद्धिप्रार्थनाविषयोऽप्ययमेवानन्दमयोऽवसीयत इति भावः । पूर्वपक्षमुपसंहरन् सिद्धान्तं प्रतिजानीते—अत इति । पूर्वाधिकरणे 'नाशब्द'मिति साध्यान्तरनिर्देशादनपेक्षितोऽपि प्रथमसूत्रादनुवृत्तो ब्रह्मशब्द इतःप्रभृति साध्यापेक्षावशान्मण्डूकप्लुत्याऽनुवर्तत इति तदनुवृत्तिलब्धसाध्यं दर्शयति—परमेश्वर इति । नन्वभ्यासः शतगुणत्वेनानन्दावृत्तिः सा गन्धर्वादिष्वपि सती नानन्दमयस्य

मः–आनन्दमयोऽयमात्मा परमेश्वर इति। कुतः?अस्यानन्दस्य निरतिशयत्वेनाभ्यासात्। कथमभ्यस्यते? 'सैषाऽऽनन्दस्य मीमांसा भवति' (तै० २–८) इत्यारभ्य मानुषविशेषादिप्रजापतिपर्यन्तं तत्तदानन्दस्योपर्युपरि शतगुणमतिशयमभिधाय 'स एको ब्रह्मण आनन्दः' (तै० २–८) इति ब्रह्मानन्दो निरतिशयशिरस्कत्वेनाभ्यस्यते। तदेतन्निरतिशयानन्दभाजनत्वमस्य संसारिणो न संभवति ॥ यदुक्तं आनन्दमयस्येश्वरत्वे नित्यशुद्धस्य तस्य कथं विशुद्धिप्रार्थनेति। तत्रेदमुत्तरम्–यथा प्रकृष्टप्रकाशस्य चन्द्रस्य तिरोधायकघनापगम एव प्रसादः तथा तस्य नित्यशुद्धस्य तिरोधानमलापनयनमेव शुद्धिः। तस्मादानन्दमयः परमेश्वर एव ॥ नन्वानन्द एव ब्रह्मेत्युच्यते, तद्विकार आनन्दमयः, मयटो विकारार्थत्वात्। आनन्दमयस्येश्वरत्वाभ्युपगमे ब्रह्मणोऽन्य ईश्वर इति प्राप्नोति। तथा सति तस्य विकाररूपत्वादनित्यत्वं चेत्याशङ्कायामाह–

॥ सू० ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१४॥

---

ब्रह्मत्वप्रसाधनीत्यत आह–निरतिशयत्वेनेति। 'स एको ब्रह्मण आनन्द' इत्याद्यनन्तरं 'तदप्येष श्लोको भवती'ति स्वोक्तार्थविषयत्वेनावतारिते 'यतो वाचो निवर्तन्त'इति श्लोके ब्रह्मानन्दस्य निरतिशयत्वप्रतिपादनात् 'ते ये शतं प्रजापतेरानन्दा' इत्यत्र शतशब्दः सङ्ख्याविशेषपरो न भवतीति किं त्वानन्त्यपर इति भावः। सूत्रे निरतिशयत्वविशेषणाद्यभावेऽप्यभ्यासस्यानन्दविषयत्वं तन्निरतिशयत्ववैशिष्ट्यमपि तस्य हेतूकरणसामर्थ्याल्लभ्यते। नन्वानन्दमयप्रतिष्ठात्वेन निर्दिष्टस्य ब्रह्मणोऽयमानन्दाभ्यासः न त्वानन्दमयस्येत्याशङ्क्याह–अस्येति। अस्यानन्दमयस्य य आनन्दः स तस्येति व्यधिकरणे षष्ठ्यौ। अयमाशयः। शिरःपक्षपुच्छादियुक्तानन्दमयनिरूपणानन्तरं 'सोऽकामयते'त्यादिना कामनापूर्वकस्रष्टृत्वादिकमुक्त्वा 'रसो वै सः। रसꣳह्येवायं लब्ध्वानन्दी भवती'ति यस्यानन्दरूपस्यानुभव एव जीवस्य पुरुषार्थत्वेनोक्तस्तस्य निरतिशयानन्दस्तदनन्तरप्रवृत्तेन 'सैषानन्दस्य मीमांसे'त्यादिना वर्ण्यत इत्याकाङ्क्षायोग्यतासन्निधिभिर्निर्विवादमवसीयते। स त्ववयव्यानन्दमय एव न पुच्छं ब्रह्म। पुलिङ्गनिर्देशात्। अतोऽयमानन्दाभ्यास आनन्दमयविषयोऽवसीयत इति। शुद्धिप्रार्थनालिङ्गमनूद्य परिहरति–यदुक्तमित्यादिना। ततश्च घनमलिनश्चन्द्रश्शुद्धो भवत्विति प्रार्थना स्वदृष्टितिरोधायकघनापगमविषयत्वेनेव आनन्दमयशुद्धिप्रार्थना स्वचिच्छक्तितिरोधायकमलापगमविषयत्वेन पर्यवस्यतीति भावः। उत्तरसूत्रमवतारयितुं मयटो विकारार्थत्वशङ्कामुद्भावयति–नन्विति। नन्वस्तु भृगुवल्ल्युक्तानन्दरूपब्रह्मविकारः परमेश्वर इत्याशङ्क्य तथा सति परमेश्वरस्याविकारनित्यसिद्धजगत्कारणत्वलक्षितब्रह्मरूपता त्वदभिमता न सिद्ध्येदित्याह–आनन्दमयस्येति॥सू॥विकारशब्दान्नेति चेन्न प्राचुर्यात्॥१४॥'अन्नमयादीना'मित्यादिना विकारप्रायपाठोऽपि पूर्वपक्षावलम्बनतया सौत्रशङ्काभिप्रायविषयत्वेन दर्शितः। प्राचु-

**अन्नमयादीनां यथाऽन्नादिविकाररूपत्वं तथाऽऽनन्दमयः इत्यानन्दविकारः। यथा मृद्विकारो हि मृण्मयो घटादिः। अतः परमेश्वरस्य विकारत्वासंभवात् अयं जीव एवेति चेत् न, मयट्शब्दस्यात्र प्राचुर्यार्थत्वात्। अन्नमयप्राणमयमनोमयपर्यन्तमेव मयट्**

र्यादिति सौत्रहेतोः प्राचुर्यार्थत्वादित्यर्थमभिप्रेत्य साध्याहारं व्याचष्टे—मयट्छब्दस्येति। ननु, भृगुवल्ल्युक्तानन्दरूपविकारतौचित्यं विकारार्थमयट्प्रायपाठं चातिलङ्घ्य कुतः प्राचुर्यार्थत्वमवसीयत इत्याशङ्क्याह—अन्नमयेति। अयमाशयः। अन्नमयस्तावदन्नविकारः 'अन्नात्पुरुष'इत्यनुपदमुक्तेः तत्प्रायपाठानुसारेण प्राणमयमनोमययोरेव मयड्विकारार्थः। न तु विज्ञानमये। तत्र 'द्व्यचच्छन्दसी'ति सूत्राप्रवृत्तेः। नच तत्रापि तेन सूत्रेण ज्ञानशब्दान्मयटि सत्युपसर्गस्य ज्ञानमयशब्देन प्रादिसमासः कल्पनीयः। अग्रे'विज्ञानं देवास्सर्वे। ब्रह्म ज्येष्ठमुपासत' इत्यादिदर्शनेन तत्रोपसर्गस्य ज्ञानान्वयावगमात् ज्ञाने ज्ञानस्वभावकृतस्पष्टास्पष्टत्वाल्पाधिकविषयत्वरूपविशेषवत् ज्ञानविकारे तत्स्वभावकृतविशेषस्याप्रसिद्धत्वेन विशेषार्थत्वेऽपि तस्य ज्ञानान्वयस्यैवोचितत्वाच्च। न च विज्ञानशब्दादेवं विकारार्थो मयट् सम्भवतीति शङ्कात्र प्रवर्तते। 'नित्यं वृद्धशरादिभ्य'इति (पा०–४–३–१४४.) सूत्रविहितस्य मयटो विकल्पेन छन्दसि प्राप्त्यङ्गीकारेऽपि वृद्धत्वशरादित्वरहिते विज्ञानशब्दे तदप्रवृत्तेः। 'सर्वे विधयश्छन्दसि विकल्प्यन्त' इति मयटोऽत्र विकारोऽर्थ इत्यपि न युक्तम्। बलवत्प्रमाणनिर्णीतार्थनिर्वाहप्रयोजनं विना स्वाभिमतार्थपरिग्रहलोभेन छान्दसतया व्याकरणप्रसिद्धनियमत्यागे व्याकरणादिना वेदार्थनिर्णयलोपप्रसङ्गात्। न च हेतोर्मयट्प्रत्ययेन विकारार्थनिर्वाहः। यः पूर्वोत्पन्न एव स्वहेतुभूतान्मातापितृजन्मभूम्यादेः सुन्नमधुरादेरिवापादानादागतस्तत्र'हेतुमनुष्येभ्य'इति(पा०–४–३–८१)सूत्रेण मयट्प्रत्ययविधानात् 'तत आगत'इति (पा०४–३–७४) सूत्रस्थागतशब्दस्य मुख्यागमनपरत्वसम्भवे मुख्यजन्मादिगौणसाधारणावगमनपरत्वकल्पनायोगात् क्वचिद्गौणागमनवत्यागताधिकारविहितप्रत्ययान्तप्रयोगदर्शनेऽपि तस्यौपचारिकत्वकल्पनासम्भवात्। ननु, मुख्यागमनमात्रविवक्षायां 'तत आगत'इत्यर्थनिर्देशकसूत्रे श्रुता पञ्चम्यत्रानुवृत्ताप्यपादापञ्चमी स्यात्। तथा च हेतुवाचिनो मनुष्यवाचिनश्च शब्दात्ततो हेतोर्मनुष्याच्चापादानादागतइत्यर्थे रूप्यमयटोर्विधानं भवेत्। तथा सत्यत्र हेतुवाचिशब्दात् पञ्चमीप्राप्त्यभावशङ्का निरवकाशा स्यात्। सा च शङ्कोद्भाव्य समाहिता न्यासपदमञ्जर्योः। तथाहि—न्यासे तावत्समादागतं समरूप्यमिति [1]प्रत्युदाहरणं समाद्धेतोरागतमित्यर्थ इति व्याख्याय केन पुनरिह पञ्चमीति पञ्चमी प्राप्त्यभावशङ्कामुद्भाव्य समाहितम्। अस्मादेव ज्ञापकात् यदयं पञ्चम्यन्ताद्धेतोः प्रत्ययमाह ततो ज्ञायते हेतोः पञ्चमी भवतीति। पदमञ्जर्यामपि तथैवोदाहरणं व्याख्यायात्र तृतीया प्राप्नोतीति तृतीयाप्राप्त्युपन्यासमुखेन हेतौ पञ्चमीप्राप्त्यभावमाशङ्क्य 'ज्ञापकात्सिद्ध'मित्यादिना न्यासोक्तं समाधानमुपन्यस्य 'नैतदस्ति ज्ञापकं यत्र 'विभाषा गुण'इति ( पा०–२–३–२५. सू ) पञ्चमी तदर्थमेतत्स्यात्। जाड्यादागत' इति तद्दूषयित्वा स्वयं समाहितम्। तस्मा'द्विभाषा गुण' इत्यत्र 'विभाषे'ति योगविभागात् अगुणवचनादपि क्वचित्पञ्चमी भवती'ति। अतो हेतुसमभिव्याहारादागत इत्यस्यानुवृत्तस्य जातइत्यर्थोऽङ्गीकृत इति शङ्कासमाधानाभ्यामुन्नीयत इति चेत्सत्यमस्थान

(१) 'वृत्त्युदाहरणं इति ङ. पाठः।

**विकारार्थः।विज्ञानमयो विज्ञानप्रचुरो जीवः।आनन्दमयोऽप्यानन्दप्रचुरः परमेश्वरः**

एव ते शङ्कासमाधाने । यतो वृत्तिकारेण 'तत आगत'इति (पा०-४-३-७४) सूत्रे तत इत्यस्यापादानपञ्चमीत्वं सिद्धं कृत्वा तत्रापि मुख्यं यदपादानं विवक्षितं तद्गृह्यते इत्युक्तम् । 'तत इति मुख्यं यदपादानं विवक्षितं तद्गृह्यते नतु नान्तरीयकं स्रुघ्नादागच्छन् वृक्षमूलादागत' इति । न्यासपदमञ्जर्योश्च तद्वाक्यं तथैव व्याख्यातम् । तस्य हेतुमनुष्यसूत्रेऽनुवृत्तस्य मनुष्यविषय इव हेतुविषयेऽप्यपादानपञ्चम्यन्तत्वमेव भवतीति क इह पञ्चमीविषयशङ्कासमाधानयोः प्रसङ्गः । तस्मादन्नमयप्राणमयमनोमयेष्वेव मयड्विकारार्थो न विज्ञानमय इति। तत्र तर्हि मयटः कोऽर्थः कश्च विज्ञानमय इत्याकाङ्क्षायामाह—विज्ञानमय इति । अत्रेदं चिन्त्यते । विज्ञानप्रचुर इत्यर्थः कुतो लभ्यते । 'तत्प्रकृतवचने मयडि'ति (पा०-५-४-२१) सूत्रत इति चेत् । इदं सूत्रमित्थं वृत्तिकारादिभिर्व्याख्यातम् । तदिति प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमानात् स्वार्थे मयट् प्रत्ययो भवतीत्येकोऽर्थः । अस्या'न्नमयं यवागूमयी'त्याद्युदाहरणम् । प्राचुर्येण प्रस्तुतमन्नं प्राचुर्येण प्रस्तुता यवागूरित्यादिस्तदर्थः । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रवाची न तु प्राचुर्यविशिष्टप्रस्तुतवाची। तथापि 'प्रकृत'इत्येतावति वक्तव्ये वचनग्रहणादयं विशेषो लभ्यते । वचनग्रहणं हि लोके यादृशस्य प्रकृतस्य मयटा वचनं प्रत्यायनं प्रसिद्धं तत्र यथा स्यादित्येवमर्थम् । लोके च मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं प्रसिद्धमिति ।अपरस्त्वर्थः। प्रकृतं प्रस्तुतमुच्यतेऽस्मिन्निति प्रकृतवचनं तदिति प्रथमासमर्थात्प्रकृतवचनेऽर्थे मयट् प्रत्ययो भवतीति । अस्यान्नमयो यज्ञ इत्याद्युदाहरणम् । प्रकृतमन्नमस्मिन्यज्ञ इत्यादिस्तदर्थः । अस्मिन्नर्थे प्रकृत्यर्थादर्थान्तरे प्रत्ययः । प्रकृतशब्देन च प्रस्तुतमात्रमुच्यते न तु प्राचुर्यविशिष्टमिति पूर्वस्मादर्थाद्विशेष इति । एवं सति 'विज्ञानमय'इत्यत्राद्यार्थे मयट्परिग्रहे प्रचुरविज्ञानस्वरूपत्वं जीवस्य लभ्यते न तु प्रचुरविज्ञानवत्त्वम्। न च तद्युक्तम् । ज्ञानरूपेऽप्येकस्मिन्परिच्छिन्ने स्वमात्रप्रकाशरूपे जीवे कथमपि प्राचुर्यस्योपपादयितुमशक्यत्वात् । प्रकृतं विज्ञानमस्मिन् जीव इति द्वितीयार्थपरिग्रहेऽपि विज्ञानवत्त्वमात्रं लभ्यते। प्रचुरविज्ञानवत्त्वं न लभ्यते । तस्माद्विज्ञानमयो विज्ञानप्रचुरो जीवइत्येतदनुपपन्नम्।एतेनानन्दमयोऽप्यानन्दप्रचुरः परमेश्वर इत्येतदपि व्याख्यातम्। अर्थद्वयेऽपि ह्या'नन्दं ब्रह्मणोविद्वा'निति वर्णयिष्यमाणप्रचुरानन्दमयत्वं न सिद्ध्यतीति। तत्रायमभिप्रायः। अर्थद्वयपरिग्रहेऽपि प्रचुरविज्ञानवत्त्वं प्रचुरानन्दवत्त्वं च पर्यवसानवृत्त्या सिद्ध्यत्येव। आद्यार्थपरिग्रहे 'तद्गुणसारत्वा'(ब्र०२।३।२९सू०)दिति न्यायेन 'विज्ञानं ब्रह्म' 'आनन्दो-ब्रह्मे'त्यादाविवाभेदोपचाराश्रयणात् द्वितीयार्थपरिग्रहे सूत्रार्थत्वेन प्राचुर्यालाभेऽपि'कारस्करो-वृक्ष'इति निपातेन वृक्षविशेषवत्प्राचुर्यरूपविशेषस्य लोकप्रयोगतो लाभात् । लोकाः ख'ल्वन्नमयो यज्ञो घृतमयं भोजन' मित्याद्यन्नादिप्राचुर्ये सत्येव प्रयुञ्जत इति न्यासकृता तु द्वितीयार्थे प्रकृतशब्देन च प्रस्तुतमात्रमुच्यते नतु प्राचुर्यविशिष्टं प्रकृतमित्येव विशेष इत्युक्तवतापि हि प्रथमार्थकथने लोके च मयट्प्रत्ययान्तैरन्नमयादिशब्दैः प्रकृतस्य प्राचुर्यमुच्यत इति मयडन्तस्य प्राचुर्यविशिष्टेऽर्थे लोकप्रसिद्धिरुदाहृता । न च तद्वाक्यमन्नमयं वर्तत इत्यादि प्रथमार्थे क्रोडीकृतप्रयोगमात्रविषयमिति शङ्कनीयम् । प्रसिद्धेः प्रयोगद्वयेऽप्यविशेषेण सङ्को-

चकल्पनायोगादिति। एवं विज्ञानमयशब्दस्य प्राचुर्यार्थमयडन्तत्वे विकारार्थप्रायपाठरूपपूर्वपक्षहेत्वसिद्धिः । तेन तस्य जीवपरत्वसिद्ध्या विज्ञानमया'दन्योऽन्तर आत्मे'ति निर्दिष्टस्यानन्दमयस्य परमेश्वरत्वसाधकजीवान्यात्मत्वरूपहेत्वन्तरसिद्धिश्च भवतीति प्रयोजनद्वयार्थत्वेन विज्ञानमयशब्दगतस्यापि मयटः प्राचुर्यार्थत्वं सूत्रेण विवक्षितमिति दर्शयितुं तस्यापि प्राचुर्यार्थत्वं तेन तस्य जीवपरत्वं च भाष्ये दर्शितम् । ननु, विज्ञानमयशब्दः स्वरूपार्थमयडन्ततया बुद्धिपर इति युक्तम् । अग्रे 'विज्ञानं देवास्सर्वे । ब्रह्म ज्येष्ठमुपासत' इत्यादिषु केवलविज्ञानपदप्रयोगदर्शनादिति चेन्न । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति'रिति श्रुत्यन्तरे जीवपरतया प्रसिद्धस्य तस्य प्रत्ययार्थवत्त्वाय प्राचुर्यार्थकल्पेननात्रापि विज्ञानवृत्तिप्रचुरत्वेन प्रवृत्तिनिमित्तेन जीवपरत्वस्यैवाङ्गीकर्तुमुचितत्वात् । तदनुसारेण 'विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपिचे'ति श्रुतयज्ञादिकर्तृत्वलिङ्गानुसारेण चाग्रिमविज्ञानपदानामपि जीवस्य स्वप्रकाशज्ञानरूपतया तद्गुणसारत्वन्यायेन वा 'यो विज्ञाने तिष्ठन्नि'ति श्रुत्यन्तर इव जीपपरत्वोपपत्तेः। स्यादेतत् । आनन्दमये मयटः प्राचुर्यार्थतया परमेश्वरपरत्वं न सम्भवति । आनन्दप्राचुर्यस्य प्रतियोगिदुःखाल्पत्वगर्भत्वात् प्राचुर्यस्य स्वधर्मिविशेषणत्वेन निर्देशे व्यधिकरणसमजातीयाल्पत्वस्य निरूपकत्वेऽपि तद्भिना निर्देशे समानाधिकरणविजातीयाल्पत्वमेव निरूपकमिति हि व्युत्पत्तिसिद्धम् । अत एव 'प्रचुरब्राह्मणो ग्राम'इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वापेक्षत्वेऽपि ब्राह्मणप्रचुरो ग्रामः ब्राह्मणानां प्राचुर्यमिह ग्राम इत्यत्र तद्ग्रामगतशूद्राल्पत्वापेक्षमेव प्राचुर्यं प्रतीयते । एवमेव 'प्रभूतैधोदकयवसकुशमाल्योपनिष्क्रमणमार्यजनभूयिष्ठमनलसमृद्धं धार्मिकाधिष्ठितं निकेतमावसितुं यतेते'ति स्मृतौ प्रयोगो दृश्यते । अत्र हि यस्मिन्देशे देशान्तरापेक्षया एधोदकादिकं प्रचुरं यत्र च देशे शूद्राद्यपेक्षया त्रैवर्णिकाः प्रचुराः स देशो विवक्षितः । न च प्रचुरप्रकाशः सवितेतिवत्प्रकाशप्रचुरः सवितेति प्रयोगेऽपि नक्षत्रादिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यं प्रतीयते न तु सवितृगततमोऽल्पत्वापेक्षं तत्र तमसो बाधितत्वादिति शङ्क्यम् । तत्रापि घनतुहिनसैंहिकेयाद्याच्छादनारोपिततमोऽल्पत्वमपेक्ष्य धनाद्यपसरणसमये तथा प्रयोगात् । तदभावे तथाव्युत्पन्नप्रयोगाभावात् । ननु, 'बलवत्तरश्चैत्र' इत्यादौ तरबाद्यर्थस्य प्राचुर्यस्य विशेष्यत्वेऽपि मैत्रादिगतबलाद्यल्पतापेक्षत्वं दृष्टमिति चेन्न तत्र 'द्विवचनविभज्योपपदे तरबीयसुनावि'ति (पा०५-३-५७.सू०) द्विवचनविभज्योपपदविशेषणवशादातिशायनिकप्रत्ययेषु व्युत्पत्त्यन्तरकल्पनेऽपि मयटि तत्कल्पकाभावेनौत्सर्गिकव्युत्पत्तिलंघनायोगात् । तल्लङ्घनेऽत्र विज्ञानमये मयटः प्राचुर्यार्थत्वं न सिध्येत् । जीवगतज्ञानानात्मकवृत्त्यन्तराल्पत्वापेक्षमेव हि तत्र ज्ञानप्राचुर्यं समर्थनीयम् । न तु जीवान्यगतज्ञानाल्पत्वापेक्षम् । जीवादन्यत्र परमेश्वरे ज्ञानाधिक्यात् अचेतने ज्ञानस्यैवाभावात् । तस्मादानन्दमयशब्दस्य परविषयत्वे जीवविषयत्वे वा तत्र मयटः प्राचुर्यार्थत्वस्योपपादयितुमशक्यत्वाद्विकारार्थ एव ग्राह्यः । विकारार्थमयटः प्रायपाठाद्विज्ञानमये क्वचिदसम्भवात्त्यागेऽपि मनोमयपर्यन्तमनुवृत्तस्य तस्य बुद्धिसन्निहितत्वात् । न च विज्ञानशब्दादिवानन्दशब्दाच्छन्दसि विकारे मयडसम्भवः । वृद्धत्वात् । 'नित्यं वृद्धशरादिभ्य' इति सूत्रे ( पा० ४-३-१४४ ) नि-

(१) 'स्वधर्मिकविशेषणत्वेन' इति ङ. च. पाठः ।

सर्वथा विकारप्रकरणपठितत्वात् विकारार्थ एव समुचितो मयट्छन्दस्येत्याशङ्क्याह—

तद्धेतुव्यपदेशाच्च ॥ १५ ॥

'एष ह्येवानन्दयाति' इति जीवान्प्रत्यानन्दहेतुतया आनन्दमयश्श्रूयते । स्वयं

त्यग्रहणस्य छन्दसि विकल्पार्थतोपपादनसम्भवादित्यभिप्रायेण शङ्कामुद्भाव्य तदुत्तरत्वेनोत्तरसूत्रमवतारयति—सर्वथेति । आनन्दमयशब्दः परविषयो जीवविषयोऽन्यविषयो वास्तु सर्वेष्वपि पक्षेषु प्राचुर्यार्थत्वं न सम्भवतीत्यनन्यगत्या विकारार्थ एव ग्राह्य इत्यभिप्रायः सर्वथाशब्दः ॥ सू० ॥ तद्धेतुव्यपदेशाच्च ॥१५॥ एष ह्येवेति । अयमाशयः । आनन्दमये विकारप्राचुर्ययोः साधारणस्य मयटो वाक्यशेषप्रतिपन्नार्थो ग्राह्यः । 'एष ह्येवानन्दयाती'ति वाक्यशेषे च 'सोऽकामयते' त्यानन्दमयं प्रकृत्याम्नाते आनन्दमय एव जीवानानन्दयतीति श्रूयते । तस्य च यथा स्वयं धनपरिग्रहरहितोऽपि ऋषिरनुग्रहेणान्यान्धनवतः करोति तद्वदनुग्रहमात्रेणानन्दवतः करोतीति नार्थः । किंतु स्वानन्दैकदेशैरानन्दवतः करोतीति । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुत्यन्तरात्प्रागत्रापि 'रसो वै सः । रसꣳह्येवायं लब्ध्वानन्दी भवती'ति श्रवणाच्च । ननु, विषयविशेषसम्पर्केण जायमानैरानन्दैरानन्दवत्त्वेनानुभूयमानानां जीवानां कथं नित्यसिद्धब्रह्मानन्दैकदेशैरानन्दवत्त्वोक्तिरुपपद्यते । उच्यते । विषयविशेषसंपर्कादिकारणवशात् तारतम्येन चाभिव्यक्तो ब्रह्मानन्द एव जीवैरास्वाद्यते । स एव च मानुषानन्दप्रभृति उत्तरोत्तरशतगुणत्वेनाम्नायत इति भाष्यकार एव चतुर्थाध्याये 'भावे जाग्रद्व' दिति ( ब्र०. ४–४–१४ ) सूत्रे वक्ष्यति । तथा च वाक्यशेषे सर्वजीवापेक्षया प्रचुरानन्दशालित्वमानन्दमयस्य प्रतिपन्नमिति स एव मयडर्थो युक्तः । एवं च सति तत्र प्राचुर्यस्य समानाधिकरणविजातीयाल्पतापेक्षत्वशङ्कापि निरवकाशा । व्यधिकरणसजातीयाल्पत्वापेक्षस्यैव प्राचुर्यस्य वाक्यशेषप्रतिपन्नत्वात् । न च व्युत्पत्तिविरोधः । मयट्प्रयोगे हि 'प्रचुरब्राह्मणो ग्राम' इत्यत्रेव प्राचुर्यं स्वधर्मिणो विशेषणम् । 'तत्प्रकृतवचने मय'डिति व्याकरण ( पा०. ५–४–२१ ) सूत्रानुसारात् । तथा चानन्दमयशब्दस्य प्राचुर्येण प्रस्तुतः आनन्दोऽयमिति वा प्राचुर्येण प्रस्तुत आनन्दोऽस्मिन्निति वार्थः । न तु 'ब्राह्मणप्रचुरो ग्राम' इतिवदानन्दप्रचुरोऽयमित्यर्थः । एवं सति विज्ञानमये मयटः प्राचुर्यार्थत्वं न निर्वहतीति शङ्कावशिष्यते । तत्रेदमुत्तरम् । प्राचुर्यस्य स्वधर्मिविशेषणत्वे व्यधिकरणसजातीयाल्पत्वं निरूपकमिति न नियमः । किंतु तात्पर्यानुसारेण क्वचित्तन्निरूपकं क्वचित्समानाधिकरणविजातीयाल्पत्वमिति नियमः । अत एवैषां ग्रामाणां कतमस्मिन्ग्रामे ब्राह्मणाः प्रचुरा इति प्रश्न इवा स्मिन् ग्रामे के वर्णाः प्रचुरा इति प्रश्नेऽप्यस्मिन्ग्रामे ब्राह्मणाः प्रचुरा इत्येवोत्तरं दृश्यते । न च समासादिरूपायां वृत्तौ तथा नियमः । समासेऽपि कतम एषां ग्रामाणां प्रचुरब्राह्मण इति प्रश्न इवायं ग्रामः प्रचुरकिंवर्णः इति प्रश्नेऽप्ययं ग्रामः प्रचुरब्राह्मण इत्युत्तरदर्शनात् । एवं चोभयथा सम्भवे सति आनन्दमये वाक्यशेषाद्यधिकरणसजातीयाल्पत्वं निरूपकं विज्ञानमये तस्य बाधितत्वात्समानाधिकरणविजातीयाल्पत्वं निरूपकमिति व्यवस्थोपपत्तेर्न सङ्कटं कि-

(१) 'अत्रैवैषां' इति ङ. च. पाठः ।

प्रचुरानन्दो हि परानानन्दयति । अतः परमेश्वर एवानन्दमयः ॥ आनन्दप्रचुरः परमेश्वरः आनन्दमय इत्युक्तेऽपि ब्रह्मणोऽन्य एवायमिति गम्यते, 'ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्माधारत्वेनास्यावगमात् । परमेश्वरादन्यत्वाङ्गीकारे ब्रह्मणोऽस्वातन्त्र्यात् जगत्कारणत्वाद्यसंभवः । अतो जीवपक्ष एव समीचीन इत्यत आह—

## मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

श्चिदिति। सूत्रे चकारः 'आनन्दमयोऽभ्यासा'दिति प्रधानसाध्यसाधकत्वेनोपन्यस्तस्याभ्यासहेतोर्मयटः प्राचुर्यार्थत्वेऽपि साधकत्वं सम्भवतीति तत्समुच्चयार्थः । 'एष ह्येवानन्दयाती'ति प्रकृतस्यानन्दमयस्यानन्दो मानुषादिप्रजापत्यन्तजीववर्गानन्दादुत्तरोत्तरशतगुणोत्कृष्टादत्युत्कृष्टत्वेन वर्णित इत्यभ्यासोऽपि प्राचुर्यस्य व्यधिकरणसजातीयाल्पत्वं निरूपकं समर्पयन्मयटः प्राचुर्यार्थत्वोपपादको भवति । यद्वा पूर्वोपन्यस्ताभ्याससमुच्चयस्य स्वयमेवोन्नेतुं शक्यत्वान्न तत्समुच्चयार्थश्चकारः किं तु 'सोऽकामयते'ति प्रकरणगतानुक्तहेत्वन्तरसमुच्चयार्थः । तस्मिन्प्रकरणे हि 'बहु स्यां प्रजायेये'ति बहुभवनसङ्कल्पः 'इदं सर्वमसृजत । यदिदं किंचे'ति जडजीवसाधारणसकलप्रपञ्चस्रष्टत्वं 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यन्तर्यामितया सकलप्रपञ्चानुप्रवेशः 'तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानंचे'ति सर्वान्तर्यामित्वेन सर्वशरीरकतया स्वसृष्टप्रत्यक्षपरोक्षसाधारणनामयुक्ततद्रहिताधाराधेयचेतनाचेतनात्मकसकलप्रपञ्चभावेन बहुभवनं 'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम' इति नियन्तृत्वेन प्रसिद्धदेवतोपलक्षितसकलाधिकारिकवर्गभयहेतुत्वं चेत्येतानि ब्रह्मलिङ्गानि प्रदर्श्यन्ते[1]। एतानि यद्यप्यानन्दमयस्य ब्रह्मत्वे साक्षात्साधकानि न तु तदुपपादकस्य मयटः प्राचुर्यार्थत्वस्य साधकानि । तथा-'प्येष ह्येवानन्दयाती'ति आनन्दहेतुत्वव्यपदेश'स्यैतस्यैवानन्दस्ये' त्यादिश्रुत्यन्तरानुसारेण तत्र साक्षात्साधकत्वमपि सम्भवतीति तेनैतेषां समुच्चयो नानुपपन्नः । अनेनैव सूत्रेण प्रियमोदादीनां ब्रह्मधर्मत्वानुपपत्तिरप्यर्थात्परिहृता । तेषामिह ब्रह्मानन्दाभिव्यक्तिविशेषरूपत्वसिद्धेः । एवं च सत्यानन्द आत्मेति निरूपणमपि प्रियमोदप्रमोदरूपवीचीतरङ्गपरम्परापरिवृतमहासमुद्रायमाणवक्ष्यमाणब्रह्मानन्दविषयतयोपपद्यत इति न तत्क्षुद्राव्यपदिष्टतृप्तिरूपानन्दविषयत्वेन योजनीयम् । प्रतिष्ठात्वेन निरूपिताद्ब्रह्मणोऽन्यत्वादानन्दमयो जीव इति शङ्कामनूद्य तदुत्तरत्वेनोत्तरसूत्रमवतारयति—आनन्दप्रचुर इति । ननु, नियन्तुः परमेश्वरादन्यदस्तु जगत्कारणं ब्रह्मेति मतान्तरमाशङ्क्य तथा सति स्वातन्त्र्यरहितस्य ब्रह्मणः केवलमुपादानत्वसम्भवेऽपि प्राग्व्यवस्थापितजगदुभयकारणत्वं न घटत इत्याह—परमेश्वरादिति ॥ सू० ॥ मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥ 'ब्रह्मविदाप्नोति पर'मिति ब्राह्मणस्य ब्रह्मविषयपरमोपक्रमत्वेऽपि तत्र ब्रह्मविदोऽप्युपक्रान्तत्वात् 'तस्माद्वा एतस्मादि'ति कारणवाक्यं तद्विषयमेव। लोकप्रसिद्धग्रहणार्थत्वादेतस्मादित्यधिकोपादानस्य । तथा च तत्समानविषयमानन्दमयवाक्यमपि तद्विषयमिति शङ्कासमाधानलाभार्थं सूत्रे ब्राह्मणमतिलङ्घ्य मन्त्रो गृहीतः । तत्र कथं ब्राह्मणोक्तमतिलङ्घ्य मन्त्रोक्तविषयत्वमानन्दमयवाक्यस्य कुतश्च मन्त्रो-

(१) 'दृश्यन्ते' इति ङ. पाठः ।

यत् 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णोदितं ब्रह्म तदेव 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति आनन्दप्रचुरतया आनन्दमय इति गीयते । 'ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्मशब्दः प्रणववाचकः, तस्य परमेश्वरवाचकत्वादाधारत्वम् ॥ अत्र केचिदाहुः–परमाकाशरूपः प्रकृत्यात्मा आनन्दमय इति श्रूयते न विश्वा-

---

क्तविषयत्वेऽपि ब्रह्मविषयत्वं न तु ब्रह्मविद्विषयत्वं मन्त्रेऽपि ह्युभयोरुपादानमविशिष्टमित्याकाङ्क्षायां सूत्रगतमान्त्रवर्णिकपदनपुंसकलिङ्गावधारणसूचितसमाधानाविष्करणाय मन्त्रोपन्यासपुरस्सरं सूत्रं व्याचष्टे—यत्सत्यं ज्ञानमिति । अयमाशयः । 'ब्रह्मविदाप्नोति परमि'त्यानन्दवल्ल्यां प्रतिपाद्यस्य कृत्स्नस्याप्यर्थस्य सङ्ग्राहकं सूत्रम् । तत्र किं तद्ब्रह्म कथं च तद्वेदनं किंच तद्वेदनप्राप्यं परमोत्कृष्टं परमित्याकाङ्क्षायां तत् त्रितयं स्पष्टीकर्तुं 'तदेषाभ्युक्ते'ति ब्राह्मणोक्तार्थप्रतिपादकत्वेनावतारणपुरस्सरं तदनुव्याख्यानरूप'स्सत्यं ज्ञान'मिति मन्त्र आम्नातः । तत्राप्येवमाकाङ्क्षोदेति । कथं ब्रह्मणस्त्रिविधपरिच्छेदराहित्यरूपमानन्त्यम्, अपरिच्छिन्नं ब्रह्म च कस्यां गुहायां निहितं वेद्यं, कथं च तद्वेदनेन युगपद्ब्रह्मादिस्तम्बपर्यन्तं प्राणिनिकायव्यवस्थितसकलकामरूपोत्कृष्टफलावाप्तिरिति । अतस्तदानन्त्याद्युपपादनार्थं मन्त्रव्याख्यानरूपोऽनुवाकशेषः । तत्र प्रथममौचित्यादानन्त्योपपादनार्थत्वं कारणवाक्यस्य युक्तमिति 'तस्मादेतस्मा'दिति पदद्वयं व्यवहिताव्यवहितब्राह्मणमन्त्रवाक्यप्रकृतपरामर्शितयोपपादनीयमानन्त्यं 'सोऽकामयते'त्यादिकारणवाक्येनोपपाद्यते । तत्र बहुभवनसङ्कल्पादेस्तदुपपादकस्य वर्णनादिति चेत् । तेनापि ह्यानन्दमयवाक्यं समानविषयमेव, स इति पुल्लिङ्गेन प्रकृतस्यानन्दमयस्य परामर्शात् । तथा च मान्त्रवर्णिकब्रह्मानन्त्यप्रतिपादनार्थकारणवाक्यसमानविषयत्वेनापि तदानन्दमयवाक्यस्य मान्त्रवर्णिकब्रह्मविषयत्वं तथाप्यनिवार्यम् । 'तस्माद्वा एतस्मा'दित्यादिवाक्यप्रतिपन्नस्य कारणस्यात्मनः सर्वान्तरत्वेन निर्दिधारयिषया प्रवृत्तस्य तस्य ब्रह्मविषयत्वे च 'तस्माद्वा एतस्मादि'त्यादेरपि तद्विषयत्वमापतदनिवार्यम् । तद्विषयत्वे च 'यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ । तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारये'त्याप्तोक्तरीत्या तदपि कारणवाक्यं ब्रह्मानन्त्योपपादनार्थमेव पर्यवस्यतीति दूरं गत्वापि तस्मादेतस्मादिति पदद्वयमुक्तविधयैवोपपादनीयमिति । नन्वेवमपि 'ब्रह्म पुच्छं प्रतिष्ठे'ति प्रतिष्ठारूपब्रह्मान्यत्वप्रतीतेर्गतिर्न सिद्ध्येत्याशङ्क्याह—ब्रह्म पुच्छमिति । उपक्रमगतब्रह्मपदानुसारेणानन्दमयस्य ब्रह्मत्वसिद्धावुपसंहारे ततोऽन्यत्र प्रयुक्तं ब्रह्मपदं ब्रह्मवाचकतया तत्प्रतिष्ठाप्यत्वनिर्देशयोग्ये प्रणवे वर्तनीयमिति भावः । अत्र केचिदिति । तेषामयमाशयः । यथा 'सत्यं ज्ञान'मिति मन्त्रे व्याख्यातव्येष्वानन्त्यं कारणवाक्यैरुपपाद्यते । तथा कोशचतुष्टयरूपा तदवच्छिन्नस्य ब्रह्मणो गुहान्नमयादिवाक्यैः प्रदर्श्यते । तदैव सर्वकामावाप्तिरूपं फलमानन्दमीमांसया स्फुटीक्रियते । एवं गुहामध्ये तदवस्थानस्थलतया निर्दिष्टं परमव्योमापि विशिष्येदन्तया प्रदर्शनीयम् । तत्प्रदर्शनपरमानन्दमयवाक्यम् । तत्रानन्दमयशब्दस्य वृत्तिः 'तत्प्रकृतवचने मयडि'ति सूत्रप्राथमिकार्थपरिग्रहेण सूपपादा । तत्र स्थितं ब्रह्म तु ब्रह्म-

---

(१) 'कारणत्वेन' इति ङ पाठः । (२) 'तद्विषयत्वेन' इति ङ. च. पाठः ।

धिकं निमित्तं परं ब्रह्म यत् 'सत्यं ज्ञानमनन्तं ब्रह्म इत्युच्यते। 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' इत्याकाशादिप्रपञ्चप्रकृतित्वेन श्रुत आनन्दमयः परमाकाशः। परमाकाशरूपत्वमस्य 'यदेष आकाश आनन्दो न स्यात्' इत्यतोऽवगम्यते। 'ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्म आनन्दाकाशस्याधारत्वेनावगम्यते। अत एव 'स एको ब्रह्मण आनन्दः' इति ब्रह्माश्रितत्वेनावगम्यते। पुनरेष एव 'आनन्दो ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिना सकलभूतप्रकृतित्वेन अभिधीयते। तत्र 'आनन्दो ब्रह्म' इत्यानन्दस्य ब्रह्मत्वव्यपदेशस्तु ब्रह्मधर्मत्वेन तदभेदात् 'सैषा भार्गवी वारुणी विद्या, परमे व्योमन् प्रतिष्ठिता' इति ब्रह्मधर्मस्वरूपे परमानन्दरूपे प्रपञ्चप्रकृतौ परमशक्तिपर्याये चिदात्मनि परमे व्योम्नि वारुणी विद्या समाप्तेत्युच्यते। ततो ब्रह्मधर्मस्वभावः प्रकृत्यात्मा परमाकाशरूपा परमशक्तिः आनन्दमय इत्युच्यते। तद्धर्मित्वेन प्रतिष्ठेत्युच्यते परं ब्रह्म। विज्ञा

---

पुच्छं प्रतिष्ठेत्यनेन निर्दिश्यते। न प्रणवः। ब्रह्मश्रुतेः 'असन्नेव स भवती'त्यनन्तरश्लोके ब्रह्मशब्दाभ्यासस्य च मुख्यार्थत्यागायोगात्। न च श्लोक आनन्दमयविषयः पूर्वपर्यायेषु श्लोकानामवयविविषयत्वदृष्टेरिति वाच्यम्। अन्नमयपर्यायश्लोकस्य 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादेरन्नविषयतया तन्नियमासिद्धेस्तद्वदवयविसम्बन्धियत्किञ्चिद्विषयतया तत्पर्यायश्लोकतोपपत्तेश्च। न च तत्र स्थितस्य तत्प्रतिष्ठात्वनिर्देशानुपपत्तिः। भुवि स्थितस्य पर्वतस्य भूधरत्ववत्स्वशक्तिरूपे परमासने स्थितस्य परब्रह्मणः तत्प्रतिष्ठात्वोपपत्तेः। न चैवं सति 'तस्माद्वा एतस्मादि'त्यादेः कारणवाक्यस्य ब्रह्मविषयत्वे तत्प्रतिपाद्यकारणभूतात्मनिर्धारणस्य आनन्दमये पर्यवसानं 'तस्माद्वा एतस्मादि'ति वाक्यशैलीसमाप्त्यवगमितं विरुद्ध्येत। आनन्दमयविषयत्वे तस्य ब्रह्मानन्त्योपपादनार्थत्वमेतस्मिन्मतेऽभ्युपगन्तव्यम्। सर्वान्तरात्मत्वस्यानन्दमयमतिलङ्घ्य प्रतिष्ठारूपे ब्रह्मणि पर्यवसानं च विरुद्ध्येतेत्युभयतःपाशा रज्जुरिति शङ्कनीयम्। उभयथाप्युपपत्तेः। ब्रह्मविषयत्वे कोशचतुष्टयात्मकगुहानिरतिशयानन्दात्मकपरमव्योमरूपयोः प्रकारचतुष्टयपर्यङ्करीत्या हार्दपरब्रह्मस्थानयोर्निरूपणार्थमेव 'तस्माद्वा एतस्मादि'ति श्रुतिशैली प्रवृत्ता। न तु कारणभूतस्यात्मनः सर्वान्तरत्वनिर्दिधारयिषया। अन्नमयकोशे 'स वा एष पुरुष' इति कारणभूतात्मवाचकतदेतच्छब्दसामानाधिकरण्यं प्राणमयादिषु तद्वाचकात्मशब्दसामानाधिकरण्यं च स्थाननिरूपणसमय एव तेषु तद्दृष्टिविधानार्थं न तु तेषु तद्बुद्ध्यवतारणक्रमेण तस्य सर्वान्तरत्वनिर्धारणार्थमित्युपपत्तेः। आनन्दमयविषयत्वेऽपि तदपृथक्सिद्धाश्रयस्य ब्रह्मण एवानन्त्यसिद्धेः। तस्मादिति मन्त्रब्राह्मणप्रकृतब्रह्मपरामर्शि। एतस्मादिति तदव्यवहितमन्त्रमात्रप्रकृतपरमव्योमपरामर्शि। उभयोस्सामानाधिकरण्यमभेदोपचारेण। अभेदोपचारश्च तन्मूलभूतापृथक्सिद्धाश्रयाश्रयिभावद्योतनेनानन्दमयविषयवाक्यकारणविषयवाक्यानां ब्रह्मानन्त्योपपादनपर्यवसायित्वज्ञापनार्थ इत्युपपत्तेः। ब्रह्मणो गुहापरमव्योमरूपसर्वान्तरत्वस्य 'गुहायां परमे व्योमन्नि'ति वाक्येन प्रागेव सिद्धेः। एतस्मिन्मते 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति वाक्यानां सर्वेषामपि ऐकरूप्येण प्रतिष्ठारूपब्रह्मविषयतया ततोऽपि तस्योक्तसर्वान्तरत्वसिद्धेश्च। तदतिरिक्तसर्वान्तरत्वस्य 'तस्माद्वा

**नमयश्च तदुपासको जीवः । प्रतिष्ठाभूताद्धर्मिणः ब्रह्मणः धर्मभूतस्यानन्दमयस्य शक्त्यात्मनः भेदादर्शनादानन्दमय आत्मा ब्रह्मेत्यभिप्रायेण 'आनन्दमयोऽभ्यासा'दिति सूत्रकारेण सूत्रितमिति ॥**

---

एतस्मादि'त्यादेः ब्रह्मविषयत्वाश्रयणेऽप्यसिद्धेः[1] । मतान्तराश्रयणेऽपि तदसिद्धेश्च । वस्तुतस्तु द्वितीयपक्षाश्रयणमेव युक्तम् । 'सोऽकामयते'त्यादिना जगदुभयकारणत्वेनानन्दमयं प्रकृत्य 'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्या'दित्यत्राकाशशब्देन तस्य प्राग्वर्णितपरमव्योमरूपत्वप्रतिपादनात् । यद्यप्याकाशशब्दस्य सप्तम्यन्तत्वाश्रयणेन तयोर्वाक्ययोर्ब्रह्मपरत्वमपि सम्भवति।'ब्रह्म पुच्छं प्रतिष्ठे'ति नपुंसकलिङ्गनिर्दिष्टस्य ब्रह्मणः 'तस्यैष एव शारीर आत्मे'ति पुलिङ्गेनापि निर्दिष्टतया तत्र 'स'इति'एष'इति च पुलिङ्गोपपत्तेः।तथापि 'यदेष आकाश आनन्दो न स्यादि'ति प्रकृतस्यानन्दस्य 'सैषानन्दस्य मीमांसे'ति विचारं प्रस्तुत्य तस्य निरतिशयोत्कर्षाभिधाने 'स एको ब्रह्मण आनन्द' 'इत्यानन्दं ब्रह्मणो विद्वानि'ति च ब्रह्मधर्मत्वप्रतिपादनात्तदनुसारेणाकाशशब्दस्य प्रथमान्तता सर्वनाम्नामानन्दमयपरता चावसीयते । न च भृगुवल्ल्युक्तानन्दवत् इहापि 'सोऽकामयते'त्यादिना जगत्कारणत्वेनोक्त आनन्दो ब्रह्मेति शङ्कनीयम् । दृष्टांतासिद्धेः । तत्राप्यानंदस्य 'सैषा भार्गवी'त्यादिवाक्यशेषानुसारेण परमव्योमरूपानन्दपरत्वात् । न च ब्रह्मजिज्ञासयोपसेदुषे भृगवे 'यतो वे'त्यादिजगत्कारणत्वलक्षणमुखेनोपदिष्टं ब्रह्म आनन्द इति निर्धारितमिति तत्र'आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतामि जायंत' इत्यादिना ततः पूर्ववाक्येन प्रतिपन्नत्वात्। तदनुसारेण गौडद्राविडयोरेव ब्रह्मविद्या प्रतिष्ठितेति तत्स्थेषु विद्वत्सु प्रतिष्ठिताया विद्यायास्तत्र प्रतिष्ठितत्वोक्तिवत्परमव्योमस्थे ब्रह्मणि प्रतिष्ठिताया विद्यायाः परमे व्योम्नि प्रतिष्ठितत्वोक्तिर्योजनीयेति वाच्यम् । तथा सति 'सैषा भार्गवी'त्यादिवाक्यवैयर्थ्यापत्तेः । ब्रह्मणः परमव्योमस्थत्वस्य 'यो वेद निहितं गुहायां परमे व्योमन्नि'ति पूर्वानुवाकमन्त्रेण प्रतिपन्नत्वात् । ब्रह्मणि भृगुवल्याः प्रतिष्ठितत्वस्य 'अधीहि भगवो ब्रह्मे'त्याद्युपक्रमतः प्रतीतेश्च । तस्माद्वाक्यवैयर्थ्यपरिहारायैवं योजनीयम्। अपृथक्सिद्धधर्मतया ब्रह्मानन्यत आनन्दाज्जगज्जन्मादिकमुच्यमानं ब्रह्मणः सम्बन्धविशेषेण तटस्थलक्षणमि'त्यधीहि भगवो ब्रह्मेति ' उपक्रमैकवाक्यतानिर्वाहमभिप्रेत्य पूर्वानुवाके ब्रह्मधर्मतयोक्त आनन्दोऽपि भृगुणा लक्षणमुखेन ब्रह्मतया ज्ञात इत्यभेदोपचारेण 'आनन्दो ब्रह्मे'ति व्यजानादिति वाक्यं प्रवृत्तमिति । एवं च प्रथमप्रवृत्तानन्दवल्लीस्वरसप्रतीतार्थानुरोधात् तदेकवाक्यतापि लभ्यते । एतेन भृगुवल्ल्युक्तानन्दवत् पञ्चमपर्यायस्थत्वादानन्दमयो ब्रह्मेत्यपि शङ्का निरस्ता । भृगुवल्ल्युक्तानन्दस्यापि धर्मानन्दत्वोपपादनादिति । एवं चास्मिन्पक्षे मध्यावयवत्वेन निरूपित आनन्दः प्रियमोदादिप्रायपाठात् सांसारिकसुखविशेष एवेति द्रष्टव्यम् । ननु, यद्यानन्दमयो ब्रह्मधर्म आनन्दः कथं तर्हि सूत्रकारेण 'आनन्दमयो ब्रह्मे'त्युक्तमित्याशङ्क्य श्रुतिवदभेदोपचारेणेत्याह—प्रतिष्ठाभूतादिति । प्रथमसूत्रादनुवृत्तं ब्रह्मपदमिह साध्यनिर्देशकमित्यभिप्रेत्यैवं सूत्रगतिरुक्ता । यदि त्वीक्षति सूत्रा'न्नाशब्द'मित्येतस्यानुवृत्तिरङ्गीक्रियते तदानीमानन्दमयः अशब्दं शब्देतरप्र-

---

(१) 'श्रयणेऽपि तदसिद्धेश्च'इति ङ. पाठः ।

माणकं जीवस्वरूपं न भवतीत्यभेदोपचारं विना साध्यनिर्देशो लभ्यते। किं तु ब्रह्मानन्द इति सिद्धान्तसाध्य(१)प्रदर्शनार्थं यत्नः कार्यः। अस्मिन्पक्षे त्वधिकरणस्यैवं संशयः। जगत्कारणमानन्दमयो जीवः उत ब्रह्मानन्दरूपा चिच्छक्तिरिति। कुतोऽयं संशय इति चेदुच्यते। आनन्दमयस्तावज्जगज्जन्मादिकारणत्वेन प्रतिपन्नः। तं प्रकृत्य 'सोऽकामयते'त्याद्याम्नानात्। न च तत्र 'स'इत्यनेन 'ब्रह्म पुच्छं प्रतिष्ठे'त्यादौ प्रकृतस्य ब्रह्मणः परामर्शः शङ्कनीयः। तस्य नपुंसकलिङ्गेनासाधारणशब्देन आनन्दमयावयवत्ववेदनावेदनविशेषणताभ्यामप्रधानत्वेन च निर्दिष्टत्वात्पुल्लिङ्गेन स्वासाधारणशब्देन स्वप्रधानतया निर्दिष्टे आनन्दमये प्रकृते विद्यमाने तत्परामर्शायोगात्। एवं च 'तस्माद्वा एतस्मा'दित्याद्युपक्रमगतकारणत्वप्रतिपादनमपि तद्विषयं पर्यवस्यति। स चानन्दमयो न ब्रह्म ब्रह्मणः तदवयवत्वेन निरूपितत्वात्। न ह्यस्यायमवयव इति भेदव्यवहारावलम्बनं कञ्चिद्विशेषं विना तस्यैव तदवयवत्वेन निरूपणं सङ्गच्छते। एवं सति 'तस्माद्वा एतस्मा'दित्यत्र प्रकृतपरामर्शिना सर्वनाम्ना 'यो वेद निहितं गुहायां परमे व्योमन्नि'ति मन्त्रे प्रकृतेषु परमव्योमतत्स्थब्रह्मतद्वेदितृषु ब्रह्मणः परामर्शायोगात्। द्वयोर्मध्ये यदि परमव्योमहृदयावच्छिन्नो भूताकाशः तदा तस्य 'सोऽकामयते' त्युक्तबहुभवनसङ्कल्पवत्त्वस्य 'आत्मन आकाशस्सम्भूत'इत्युक्तात्मश्रुत्याकाशकारणत्वयोश्चासम्भवात्तस्य परामर्शायोगे सति ब्रह्मविदेव तेन परामर्शनीय इति स एव जगज्जन्मादिकारणमानन्दमय इति तत्र मयड्विकारार्थप्रायपाठानुसारेण विकारार्थ इति च प्राप्नोति। यदि परमव्योमब्रह्मानन्दरूपा चिच्छक्तिः तदा परमव्योम्नः चिच्छक्तिरूपत्वेन प्रसिद्धस्यानन्त्यवद्गुहावच्च व्याख्यातव्यत्वेन(२) 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्यत्र पयस इव सप्तमीनिर्दिष्टत्वेऽपि प्राधान्यात्तस्य परामर्श इति सैव चिच्छक्तिरानन्दमयः तत्र मयट् प्राचुर्यार्थ इति च प्राप्नोति। एवं स्थिते पूर्वपक्षः—तस्मादित्यनेन ब्रह्मविदो जीवस्य परामर्श इति युक्तम्। तस्य प्रथमानिर्दिष्टतया प्राधान्यात्। न च परमव्योम्नोऽपि व्याख्यातव्यत्वेनार्थप्राधान्यमस्तीति वाच्यम्। व्योम्नो भूताकाशतया प्रसिद्धस्य व्याख्यातव्यत्वाभावात्। न च तत्परमत्वविशेषणेन प्रसिद्धाकाशादन्यदवसीयत इति वाच्यम्। प्रसिद्धस्यैव भूताकाशस्य हृदयावच्छिन्नावकाशरूपस्य ब्रह्माभिव्यक्तिस्थानत्वेनोत्कृष्टतया परमत्वविशेषणोपपत्तेः। न च 'यदेष आकाश आनन्दो न स्या'दित्यत्र प्रकृतानन्द(३)परामर्शिना सर्वनाम्ना आनन्दशब्देन च आकाशशब्दस्य सामानाधिकरण्यात् मन्त्रोक्तं परमव्योमैव 'तस्माद्वा एतस्मा'दित्यत्र तदेतच्छब्दाभ्यां परामर्शपूर्वकमानन्दमय इति निर्दिष्टमवसीयत इति वाच्यम्। तत्राकाशशब्दस्य परमे व्योमन्नित्यस्येव सप्तम्यन्तत्वोपपत्तेः। अस्ति हि हृदयाकाशे जीवस्याप्यवस्थानप्रसिद्धिः। अस्ति हि तस्य 'को ह्येवान्यात्कः प्राण्या'दित्युक्तचेष्टाश्वसनहेतुत्वम्। यद्यानन्दमयो जीवः न ब्रह्मानन्दरूपं परमव्योम किमर्थमिह तत्प्रतिपादनं न विज्ञानमयपर्यायवत् गुहारूपतया तस्य गुहान्तर्गतव्योमस्थितत्वाङ्गीकारात्। न च प्रसिद्धस्य तस्य स्वरूपतो व्याख्यातव्यतास्ति। आनन्दमयस्य ब्रह्मानन्दत्वे वा किमर्थं तस्य जगत्कारणत्वादिप्रतिपादनं शिरःपक्षपुच्छादिकल्पनं च।

---

(१) 'निर्देशार्थं'इति च. पाठः। (२) 'नन्त्यवच्च व्याख्यातत्वेन'इति च. पाठः। (३) 'परामर्शिनैतच्छब्देन च' इति क. ख. पाठः।

यद्युच्येत ब्रह्मण आनन्त्यप्रतिपादनार्थं तस्य जगत्कारणत्वादिप्रतिपादनं तत्प्रसङ्गादुपासनार्थं शिरः प्रभृतिकल्पनमिति । जीवस्यापि तर्हि तत्तथैवास्तु । अविशिष्टं हि ब्रह्मानन्दस्येव जीवस्याप्यपृथक्सिद्धब्रह्मधर्मत्वम् । तेन तद्गतजगत्कारणत्वप्रतिपादनस्यापि ब्रह्मानन्त्योपयोगित्वं समानमेव । परिच्छिन्नस्य जीवस्य कथं बहुभवनसङ्कल्पपूर्वकं जगदुभयकारणत्वमिति चेत् ब्रह्मविदस्तस्य चिच्छक्तिविकासेन चिच्छक्तिद्वारकमेव हि ब्रह्मणोऽपि जगदुपादानत्वम् । ननु, 'यदेष आकाश आनन्दो न स्या'दिति प्रकृतस्यानन्दस्य निरतिशयमुक्तभोग्यब्रह्मानन्दत्वमुक्तं कथमयं जीवस्स्यादिति चेन्न । 'सोऽकामयते'त्यादिना जीवस्य जगज्जन्मजीवनादिकारणत्वोक्त्या ब्रह्मानन्त्योपपादनानन्तरं 'सैषानन्दस्ये'त्यादेरपेक्षानुसारेण 'सोऽश्नुते सर्वान्कामा'निति मन्त्रसङ्क्षिप्तफलविवरणरूपतया तत्रानन्दशब्दस्य प्रकृतानन्दपरत्वाभावात् । तस्माज्जगत्कारणमानन्दमयो जीव एवेति तत्रातिव्याप्तं ब्रह्मलक्षणमिति । एवं प्राप्ते सिद्धान्तः—आनन्दमयो ब्रह्मानन्दरूपा चिच्छक्तिः मानुषादिब्रह्मान्तेषूत्तरोत्तरशतगुणत्वेनाभ्यस्तत्वात् जीवस्य तथाभूतानन्दत्वायोगात् । न चायमभ्यासो 'यदेष आकाश आनन्दो न स्या' दिति प्रकृतानन्दमयरूपानन्दविषयो न भवतीति वाच्यम् । आनन्दशब्दस्य प्रकृतानन्दपरत्वे प्रतीयमाने तत्त्यागायोगात् । तद्विषयत्वेऽपि मन्त्रवर्णसङ्क्षिप्तब्रह्मविद्याफलविवरणरूपत्वलाभात् । तथा हि—आनन्दमयशब्दरूपः[1] स एवानन्दो मानुषादिप्रजापत्यन्तजीववर्गे ब्रह्मणि च तारतम्येनाभिव्यज्यत इति सकलवैषयिकसुखकणिकामहासमुद्रायमाणत्वोक्त्या तस्य 'सर्वान्कामा'नित्यनेन सकलवैषयिकानन्दसमष्टिरूपतोक्त्यर्हतात्र[2] दर्शिता भवति । न च तत्र मानुषादिषु भिन्नभिन्ना एवानन्दा उत्तरोत्तरमुत्कृष्टतया वर्ण्यंते । विषयविशेषसम्पर्कादिप्रभवसुखरूपाणां मानुषाद्यानन्दानां तत्तत्क्षणापवर्गितया सर्वेषामैक्यायोगादिति वाच्यम् । एतच्छङ्कानिराकरणार्थमेव मानुषादिषु 'स एको मानुष आनन्द'इत्यादिना तत्तदानन्दैक्यस्यान्ते 'स यश्चायं पुरुषे यश्चासावादित्ये स एक'इति पुरुषादित्यशब्दोक्तयोर्मनुष्यदेववर्गयोर्जीववर्गयोर्जीववर्गपरब्रह्मणोर्वानन्दैक्यस्य प्रतिपादनात् । एवमानन्दमीमांसायाः पर्यायभेदेऽप्येकानन्दविषयत्व एव तस्यास्सर्वकामशब्दविवरणरूपता समञ्जसा भवति । अन्यथा 'सर्वतीर्थाधिका गङ्गे'ति वाक्यस्य युगपत्सर्वेषु तीर्थेषु स्नातमनेनेति वाक्यविवरणरूपतेवोपचारनिमित्तप्रदर्शनपरतया नेतव्या स्यात् । तथा सत्येव चा'भ्यासा'दिति सौत्रहेतुरपि स्वारस्यं प्रतिपद्यते अभ्यासो हि गुणनमावर्तनम् । न चात्रानन्दभेदपक्षे ब्रह्मानन्द आवर्त्यते । 'स एको ब्रह्मण आनन्द'इति सकृदेव तत्कीर्तनात् । न च सकृत्कीर्त्यमानोऽपि शतगुणत्वेनावर्त्यते इत्ययमेवाभ्यास इति वाच्यम् । 'ते ये शतं प्रजापतेरानन्दा' इति प्राजापत्यानन्दस्यैव शतगुणत्वेन कीर्तनात् बुद्धिकल्पनया शतधावर्तितेन प्रजापत्यानन्देन ब्रह्मानन्दस्याभेदमात्रं हि तदुत्कर्षज्ञापनार्थमौपचारिकं व्यपदिश्यते 'स एको ब्रह्मण आनन्द'इति । न तु ब्रह्मानन्दः शतगुणत्वेनावर्त्यते । न हि 'चिरकालगङ्गाप्रवाहक्षालितकलङ्कमिन्दुमण्डलमिदमेतस्या मुख'मिति वाक्ये क्षालितकलङ्कत्वेन मुखं विशेष्यते । किंतु तथा कल्पितेनेन्दुमण्डलेन मुखस्याभेदमात्रं तदुत्कर्षज्ञापनार्थमौपचारिकं व्यपदिश्यते । एवं च यद्यानन्दभेदः तदानी'मभ्यासा'दिति हेतुरसिद्धः स्यात् । अनैकान्तिकश्च । आनन्दाभ्यासमात्रस्य शतगुणत्वेन तदभ्यासस्य वा हेतु-

(१) 'आनन्दमयरूपः'इति च. पाठः । (२) 'र्हता प्रदर्शिता' इति च. पाठः ।

त्वे मनुष्यगंधर्वादिप्रजापत्यंतानंदवृत्तित्वा'त्ते ये शतं प्रजापतेरानंदा'इत्युक्तार्थविषयत्वेनावतारिते 'यतो वाचो निवर्तंत'इति श्लोके ब्रह्मानंदस्य निरतिशयत्वकीर्तनात्तस्मिन्पर्याये शतशब्दस्यानंत्यपरत्वेऽपि प्रजापत्यानन्दवृत्तित्वात् । विरुद्धश्चायम् विपक्षमात्रवृत्तित्वपर्यालोचनायां ब्रह्मानन्दगतनिरतिशयत्वस्यैव हेतूकरणसंभवे तत्प्रतिपत्त्यधीनप्रतिपत्तिकस्यानन्तगुणत्वेन तदभ्यासस्य हेतूकरणं चासमञ्जसं भवेत्। निरतिशयत्वेनाभ्यास एव हेत्वर्थो विवक्षित इत्युच्यते चे'दभ्यासा'दिति सूत्रपदं सर्वथा निरभिप्रायकं कृतं स्यात् । निरतिशयत्वोक्तेः 'पुरुषान्नापरं किञ्चि'दित्युक्तेरिवाभ्यासत्वाभावात् । यद्युक्तसर्वदोषपरिहारार्थं शतगुणिताभ्यस्तप्रजापत्यानन्दतुलितत्वादिति हेत्वर्थः कल्प्येत तदानीमपि सौत्रहेतुमुपसर्जनीकृत्य हेत्वन्तरकरणादसामञ्जस्यमविशिष्टम् । आनन्दमयस्य ब्रह्मत्वे साध्ये हेतोर्योजनायामप्यानन्दभेदवादिनां हेत्वसिद्ध्यादिदोषास्तुल्यास्तत्र मनुष्यगन्धर्वादिवृत्तितया न व्यभिचारविरोधाविति विशेषः। तस्मिन्पक्षे शतगुणिताभ्यस्तप्राजापत्यानन्दतुलितानन्दवत्त्वादित्यन्तिमविवक्षायां हेत्वर्थस्य कल्पनीयत्वाद्दविष्ठमुपसर्जनत्वमभ्यासो नेतव्य इत्यधिकतरमसामञ्जस्यम् । कथं च 'स एको ब्रह्मण आनन्द'इति शतगुणितप्राजापत्यानन्दतुलिततया श्रूयमाणोऽयमानन्दः आनन्दमयस्यानन्द इत्यवगन्तव्यम्। येन पक्षे हेतुस्सिद्ध्येत् । 'ब्रह्मण आनन्द' इति खलु श्रूयते। तेन प्रतिष्ठारूपस्य ब्रह्मणः स आनन्दस्सिद्ध्येत् न त्वानन्दमयस्य । यदि 'सोऽकामयते'त्यत्र तच्छब्दः पुलिङ्गसाधारणशब्दप्रकृतमानन्दमयं परामृशेत् न ब्रह्मेति तत्सामर्थ्यमालोच्येत तदा जगत्कारणत्वेन निरूपितं तर्हि 'रसो वै स'इति स्वादनीयानन्दपरेण रसशब्देन 'यदेष आकाश आनन्द'इति साक्षादानन्दशब्देन च प्रकृत्य'सैषानन्दस्य मीमांसे'ति तमेवानन्दशब्देन परामृश्य तद्विचारप्रस्तावात् प्राजापत्यानंदतुलितानन्दत्वेनानन्दविचारनिगमनं तद्विषयं पर्यवस्येदित्यानन्दमय एव स आनन्दो भवेत् न त्वानन्दमयस्यानन्दः । यदि च तत्रानन्दप्रतिसम्बन्धिवाचकस्य ब्रह्मशब्दस्य यथाकथञ्चिदानन्दमयपरत्वमवगम्येत तदा ब्रह्मश्रुत्यैवानन्दमयस्य ब्रह्मत्वं सुज्ञानमिति तज्ज्ञानाधीनज्ञानानन्दविशेषरूपलिङ्गोपन्यासो व्यर्थः स्यात् । न हि पूर्वपक्षिणा सा ब्रह्मश्रुतिर्जीवविषयास्त्विति शङ्कितुं शक्यते । 'श्रोत्रियस्य चाकामहतस्ये'ति ब्रह्मविज्जीवस्य पृथगुपादानेन तद्विषयत्वशङ्कानवकाशात्। अब्रह्मविज्जीवविषयत्वशङ्कायाः पूर्वपक्षविरुद्धत्वात् । जगत्कारणमानन्दमयो ब्रह्मविज्जीव इति हि पूर्वपक्षः । न त्वब्रह्मविज्जीव इति । परिच्छिन्ने प्रागाकाशादिसृष्टेः शरीररहिते च तस्मिन् बहुभवनतत्सङ्कल्पयोस्सङ्कल्पमात्रस्य वाऽसम्भवात् सर्वनियन्तृत्वाद्यसम्भवाच्च । नन्वानन्दमयो ब्रह्मानन्दरूपा चिच्छक्तिरिति वा न जीव इति वा साध्येऽपि 'स एको ब्रह्मण आनन्द' इति ब्रह्मानन्दत्वोक्तेः 'श्रोत्रियस्य चाकामहतस्ये'ति जीवव्यतिरेकनिर्देशस्य 'यतो वाचो निवर्तन्त'इति निरतिशयानन्दत्वकीर्तनस्य च स्पष्टस्य होतोस्सत्त्वे किमर्थं मानुषादिप्राजापत्यान्तानन्देषूत्तरोत्तरशतगुणत्वेन पुनःपुनः कीर्तनादित्येवंरूपहेत्वन्वेषणम् । उक्तहेत्वन्वेषणं विना ब्रह्मानन्दत्वोक्त्यादीनामानन्दमयविषयत्वं न सिद्ध्यतीति तदन्वेषणम् । कथमेवमत्र-शङ्का भवेत् । सर्वकामावाप्तिरूपफलविवरणार्थेयमानन्दमीमांसा । तत्र यद्युत्तरोत्तरं शतगुणितत्वेन निरूपिता आनन्दास्तत्तल्लोकसम्भावितवैषयिकसुखसन्तानविशेषाः स्युस्तदा प्रतिप-

र्यायं 'श्रोत्रियस्य चाकामहतस्ये'त्युक्तत्वात्सकललोकगतयावद्वैषयिकसुखप्राप्तिरूपत्वेन सर्वकामावाप्तिर्विवृता भवेत् नान्यथा। अतः प्रकृतस्यानन्दमयरूपस्यैकस्यानन्दस्य जीवरूपत्वे ब्रह्मचिच्छक्तिरूपत्वे वानन्दमीमांसायास्तद्विषयत्वं वक्तुं युक्तमिति चेदत्रेदमुत्तरं वक्तव्यम्। सत्यं सर्वकामावाप्तिविवरणरूपत्वमानन्दमीमांसायास्तद्विवरणत्वं तत्र तत्तल्लोकगतभिन्नभिन्नवैषयिकानन्दसाकल्यप्राप्तिरूपतया न क्रियते। किं तु मानुषादिब्रह्मान्तगताभिव्यक्तितारतम्यभिन्नैकानन्दप्राप्तिरूपतया। प्रतिपर्यायं स एक आनन्द इत्यवसाने 'स यश्चायं पुरुषे, यश्चासावादित्य' इति च तदैक्यप्रतिपादनात्। तथा चानन्दमीमांसायाः प्रकृतैकानन्दविषयत्वेऽपि सर्वकामावाप्तिविवरणरूपत्वोपपत्तेर्न प्रकृतहानं युक्तमिति। एवमुक्तहेतुसिद्ध्यधीनत्वात् हेत्वन्तराणां पक्षधर्मतया निश्चयस्यास्मिन्हेतौ प्रदर्शिते तानि स्वयमेव ज्ञास्यन्त इत्ययमेव हेतुः सूत्रकृतोपन्यस्त इत्यलं प्रसक्तानुप्रसक्त्या। एवं तावद्ब्रह्मानन्दस्यैवाभिव्यक्तितारतम्येन सकलवैषयिकसुखात्मना विद्यमानत्वोक्त्या 'सर्वान्कामा'नित्यनेन सर्वकामात्मना विद्यमानस्स एवोच्यत इति विवृतं भवति। युगपत्तदवाप्तेर्ब्रह्मविद्याफलत्वं तु 'श्रोत्रियस्य चाकामहतस्ये'त्यंशेन प्रदर्श्यते। तेन हि 'स एको ब्रह्मण आनन्द'इति पर्यायस्थितेन मुक्तौ ब्रह्मविदनुभाव्यत्वं ब्रह्मानन्दस्योच्यते। यद्यपि वैषयिकसुखानां सर्वेषां मिलितानामप्यखण्डब्रह्मानन्दलेशरूपत्वादखण्डब्रह्मानन्दानुभवो युगपत्सर्ववैषयिकसुखावाप्तेरतिरिच्यते। तथापि मुक्तं प्रति सर्वात्मनाभिव्यक्ते ब्रह्मानन्देऽनुभूयमाने वैषयिकसुखात्मना विद्यमानास्तदंशास्सर्वेऽप्यनुभूयन्त एवेति तस्य युगपत्सर्वकामावाप्तिविवरणरूपतोपपत्तिः। एवं च 'सोऽश्नुते सर्वान्कामान्सहे'ति मन्त्रो विवरणानुसारेण युगपत्सर्वकामावाप्त्यन्यूनतापरः। यथा 'आकाशवत्सर्वगतश्च नित्य' इति वाक्यमाकाशान्यूनपरिमाणतापरमिति योजनीयम्। एवं मनुष्यगन्धर्वादिपर्यायस्थितान्यकामहतश्रोत्रियवाक्यान्यपि मुक्तानुभाव्यस्य ब्रह्मानन्दस्य मनुष्यगन्धर्वानन्दाद्यन्यूनतापराणीति योजनीयम्। यद्वा। मनुष्यगन्धर्वादिपर्यायस्थितैः 'श्रोत्रियस्य चाकामहतस्ये'ति वाक्यैर्मुक्तेः प्राग्योगभूमिभेदानधिरूढस्य पूर्ववदेव द्वितीयसूत्रं योजनीयम्। कामहतश्रोत्रियस्य तत्तद्भूमिभेदेष्वाविर्भवन्नानन्दविशेषः कथ्यत इति भेदः। प्रायपाठानीतविकारार्थत्वप्रयुक्तजीवत्वशङ्कानिराकरणार्थं पूर्ववदेव तत्र हेत्वन्तरप्रतिपादनार्थं तृतीयसूत्रम्। तत्रायमर्थयोजनायां विशेषः।'रसो वै सः'।'यदेष आकाश आनन्द' इत्यानन्दमयस्यानन्दरूपतामुक्त्वोच्यते 'एष ह्येवानन्दयाती'ति। अतो यथा प्रचुरो जलराशिः स्वैकदेशैः केदारान् जलवतः करोति। एवं प्रचुर एवानन्दः स्वैकदेशैर्जीवानानन्दवतः कुर्यात् न त्वप्रचुर इति वाक्यशेषश्रुतानन्दवत्त्वकरणान्यथानुपपत्त्या प्रतीयमानं प्राचुर्यं[२] मयडर्थो युक्त इति चकारोऽपि पूर्ववदभ्यासहेतुसमुच्चयार्थः। हेतुद्वयस्यापि फलत ऐक्येऽपि मुखभेदाद्भेदः। मान्त्रवर्णिकसूत्रं तु ब्रह्मवित्परामर्शशङ्कानिराकरणार्थम्। मान्त्रवर्णिकपरमव्योमैव 'तस्माद्वा'इत्यादिषु गीयते न तु ब्रह्मविदिति सौत्रेण नपुंसकलिंगेन द्योत्यते। तत्रायमभिप्रायः। परमत्वं व्योम्नि न परमेश्वराभिव्यक्तिस्थानत्वप्रयुक्तमिहानुवाद्यम्। परमे व्योम्नि निहितमिति व्योम्नि तत्सन्निधानस्यात्र वेद्यत्वेन प्रतिपाद्यतया ततोऽन्यस्य व्योम्नि परमत्वस्य परमेश्वरस्थानार्हताप्रयोजकस्यानु-

(१) 'नित्यादिना' इति. च. पाठः। (२) 'प्राचुर्यमेव' इति च. पाठः।

बाध्यताप्रतीतेः । ततश्च यथाक्षरब्राह्मणे सकलजगदाधारत्वविशेषणेन भूताकाशादन्यत्वेनावसित आकाशः तत्रानतिप्रष्टव्यदेवतारूपत्वेन ब्रह्माश्रितत्वेन च व्याख्यातः । अत एव स चिदम्बरशक्तिरि'त्यक्षरमम्बरान्तधृते'रिति (ब्र० १–३–६ ) सूत्रेण सूत्रकार एव स्फुटीकरिष्यति । तथाऽत्रापि परमत्वविशेषणेन प्रसिद्धाकाशादन्यत्वेनावधृतं व्योम परमत्वप्रयोजकातिशयविशेषप्रदर्शनेन व्याख्यातमिति जगत्कारणत्वनिरतिशयब्रह्मानंदरूपत्वादिप्रदर्शनेन तद्व्याख्यानरूपः 'तस्माद्वा एतस्मा'दित्याद्युत्तरसंदर्भः इति तेन सैव चिदंवरशक्तिरुदाहृतश्रुतिबलादुक्तविशेषणविशिष्टतयापि सिद्ध्यतीति । तदेवं जगत्कारणमानन्दमयो न जीवः । किंतु ब्रह्मानन्दरूपा चिच्छक्तिः । अतो न जीवे ब्रह्मलक्षणस्यातिव्याप्तिरित्यधिकरणशरीरमिति स्थितं मतान्तरम् । इदं तु चिन्त्यते । जीवे ब्रह्मलक्षणस्यातिव्याप्तिनिराकरणार्थं प्रवृत्तेनानेनाधिकरणेन तत्रातिव्याप्तिं निरस्य चिच्छक्तावतिव्याप्तिरुपपादिता स्यात् । नन्वपृथक्सिद्धब्रह्मधर्मत्वात्तस्यास्तत्र तल्लक्षणसत्त्वान्नातिव्याप्तिरिति चेन्न । जातौ व्यक्तिलक्षणसत्त्वस्येव तस्याप्यतिव्याप्तित्वात् । अन्यथा जीवे तल्लक्षणसत्त्वमप्यतिव्याप्तिर्न स्यात् । तस्याप्ययुतसिद्धतद्विशेषणत्वादिति । अत्रेदमुत्तरम् । शिववत्तदीया चिच्छक्तिरपि पञ्चकृत्यकारिणी भवत्येव । किं तु यथा शिवः शक्तिविशिष्ट एव परं ब्रह्म 'तौ ब्रह्मसामरस्येने'ति भाष्ये प्रागुदाहृतत्वात् । एवं स शक्तिविशिष्ट एव शुद्धाशुद्धात्मकस्य सर्वस्य प्रपञ्चस्य पञ्चकृत्यकारी । यतस्तयोः परस्परापेक्षं पञ्चकृत्यकारित्वम् । तथा हि श्रीशिवपुराणवचनानि 'शक्तिस्साक्षान्महादेवी महादेवस्तु शक्तिमान् । तयोर्विभूतिलेशो वै सर्वमेतच्चराचरम् ॥ वस्तु किञ्चिदचिद्रूपं किञ्चिद्वस्तु चिदात्मकम् । इदं शुद्धमशुद्धं च परं चापरमेव च ॥ यत्संसरति चिच्चक्रमचिच्चक्रसमन्वितम् । तदेवाशुद्धमपरमितरत्तु परं शुभम् ॥ अपरं च परं चैव द्वयं चिदचिदात्मकम् । शिवस्य च शिवायाश्च स्वाम्यं चैतत्स्वभावतः ॥ यथा शिवस्तथा देवी यथा देवी तथा शिवः । नानयोरन्तरं विद्याच्चन्द्रचन्द्रिकयोरिव ॥ चन्द्रो न खलु भात्येव यथा चन्द्रिकया विना । न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः ॥ एवं परस्परापेक्षा शक्तिशक्तिमतोस्स्थितिः । न शिवेन विना शक्तिर्न शक्त्या च विना शिवः ॥ शक्तो यया शिवो नित्यं भुक्तौ मुक्तौ च देहिनाम् । यामाहुरखिलेशस्य तैस्तैरनुगुणैर्गुणैः ॥ समानधर्मिणीमेव शिवस्य परमात्मनः । यथा न जायते पुत्रः पितरं मातरं विना ॥ तथा भवं भवानीं च विना नैतच्चराचरम् । स्त्रीपुंसप्रभवं विश्वं स्त्रीपुंसात्मकमेव च ॥ स्त्रीपुंसयोर्विभूतिश्च स्त्रीपुंसाभ्यामधिष्ठितम् । तस्मात्सह तया शक्त्या हृदि पश्यन्ति ये शिवम् ॥ तेषां शाश्वतिकी मुक्तिर्नेतरेषामिति श्रुतिः ।' इत्यादीनि । एवं च यानि श्रुतिस्मृतिपुराणेषु शिवस्य पञ्चकृत्यकारित्वादिप्रतिपादकानि वचनानि यानि च चिच्छक्तेः 'वधूर्जजान नवगजनित्री । एका सती बहुधोषो व्युच्छस्यजीर्णात्वं जरयसि सर्वमन्यत्' इत्यादीनि श्रुतिवचनानि । 'सा शक्तिस्सर्वदा सूक्ष्मा प्रबोधानन्दरूपिणी । शक्तिमानुच्यते देवः शिवः शीतांशुभूषणः । महदादिविशेषान्तास्त्वजाद्याश्चापि मूर्तयः ॥ यच्चान्यदस्ति तत्सर्वं तस्याः कार्यं न संशयः । सा देवी मायया सर्वं ब्रह्माद्यं सचराचरम् ॥ मोहयत्यप्रयत्नेन मोचयत्यपि लीलया । या सा माहेश्वरी शक्तिर्ज्ञानरूपातिलालसा ॥ व्योमसंज्ञा परा काष्ठा सेयं हैमवती तथा ॥ सेयं करोति सकलं तस्याः

(१) 'प्रयोजकेन व्याख्यातव्यमिति ' च. पाठः । (२) 'अपृथक्सिद्ध' इति ख. पाठः ।

कार्यमिदं जगत् ॥ न कार्यं नापि करणमीश्वरस्येति सूरयः ॥ सैषा माहेश्वरी गौरी मम श-क्तिर्निरञ्जना । शान्ता सत्या परानन्दः परं पदमिति श्रुतिः । अस्यास्सर्वमिदं जातमत्रैव ल-यमेष्यति । एषैव सर्वभूतानां गतीनामुत्तमा गति' रित्यादीनि शैवलैङ्गकौर्मादिवचनानि च प-ञ्चकृत्यकारित्वप्रतिपादकानि । तानि सर्वाणि विशेषवचनानुसारेण तयोः परस्परापेक्षया पञ्चकृत्यकारित्वादिविषयाणि । शिवस्य शक्तेर्वा तन्निषेधवचनानि च नैरपेक्ष्येण तन्निषेधपराणी-ति व्यवस्थापनीयम् । एवं सत्यपि शिवस्य सर्वात्मना स्वातन्त्र्यं शक्तेः शिवमात्रे पारतन्त्र्य-मित्येतावानस्ति विशेषः । 'सैका परा च चिद्रूपा शक्तिः प्रसवधर्मिणी । विभज्य बहुधा विश्वं विदधाति शिवेच्छया । एवमेषा परा शक्तिरीश्वरेच्छानुवर्तिनी । स्थिरं चरं च यद्विश्वं सृजतीति विनिश्चयः ॥' इत्यादिवचनप्रामाण्यात् । अत एव 'शक्तिशिवयोर्ब्रह्मभावे विशेष-णविशेष्यता । अत एव च तयोः पूजायां विशेषाभावेऽपि पौर्वापर्यं शिवपुराणे विधीयते । 'यथा देवस्य देव्याश्च कुर्यात्स्नानादिकं तथा । न तु कश्चिद्विशेषोऽस्ति तत्र तौ सदृशौ यतः । प्रथमं देवमुद्दिश्य कुर्यात्स्नानादिकां क्रियाम् । पश्चाद्देव्यै प्रकुर्वीत देवदेवस्य शास-नात् ।' इति शिवशक्त्योर्ब्रह्मभावे शिवस्य विशेष्यतया प्राधान्यम् । 'युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोका यन्ति पथ्येव सूरेः । शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दि-व्यानि तस्थुः'॥ इति श्वेताश्वतरमन्त्रे पूर्वविशेषणबलादवसीयते । अस्य ह्ययमर्थः । वां युवयोः शिवशक्त्योर्मध्ये । पूर्व्यं पूर्वम् स्वार्थे यत्प्रत्ययः । विशेष्यतया प्रधानभूतम् । ब्रह्म शिवरूपम् । नमोभिः । युजे युनज्मि । छान्दसो विकरणव्यत्ययः । शिवस्य सर्वनमस्कारपर्यवसानभूमि-त्वात्तन्नमस्काराङ्कितैः श्लोकैः भजामीत्यर्थः । नमस्कारश्लोका विशेष्यन्ते । सूरेर्विदुषः शिव-स्वरूपाभिज्ञस्य तज्ज्ञानान्मुक्तिं प्राप्तस्य मम । श्लोकाः वाचिकशिवनमस्कारसन्दर्भरूपाः 'अहं श्लोककृ'दिति मुक्तकृत्यत्वेन श्रुतिप्रसिद्धाः । पथ्येव पथि हिताः त्वरितनिर्विकारमार्गगमनाः सदश्वा इव । वियन्ति निरर्गलप्रवाहतया निर्गच्छन्ति । पथ्यशब्दा'त्सुपांसुलु'गिति सूत्रेण जस आकारादेशः । विश्वे सर्वेऽपि । अमृतस्य शिवस्य 'एतानि वा अमृतस्य नामधेयानी'ति श्रुतिप्र-सिद्धामृतनामधेयस्य । पुत्राः 'दिव्या बहुरूपाः पुराणा' इत्यादिश्रुतिप्रसिद्धाः स्कन्दनन्दिके-श्वरादयः । शृण्वन्ति मम श्लोकानादरेणाकर्णयन्ति । अमृतपुत्रा विशेष्यन्ते । ये दिव्यानि दिवि भवानि चिदाकाशरूपे नित्यकैलासे स्थितानि धामानि भवनान्यातस्थुः आस्थितवन्त इति । यद्यप्यत्र द्वयोर्मध्ये पूर्वं ब्रह्मेत्युक्त्या द्वयोरपि प्रत्येकं ब्रह्मता प्रतीयते । भृगुवल्यु-क्तानन्दवल्लीगताभ्यां जगत्कारणस्यानन्दस्य ब्रह्मत्वब्रह्मधर्मत्वोक्तिभ्यां च तथा प्रतीयते । तथापि विशेषणविशेष्यात्मकविशिष्टब्रह्मत्वावलम्बन एव तदेकदेशस्य ब्रह्मत्वव्यवहारः । यथा 'अग्निः पथिकृदग्निर्वैश्वानर' इत्यादिविशिष्टदेवतात्वावलम्बनः पाथिकृती वैश्वानरे-ष्टिरित्यादिः तदेकदेशस्य देवतात्वव्यवहारादौपचारिक इत्युपपादनीयम् । 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गल'मिति परब्रह्मणः कृष्णपिङ्गलताश्रवणेन शबलस्य ब्रह्मतावगमात् । एवं च लक्ष्यब्रह्मशब्दार्थभूतविशिष्टैकदेशे विशेष्य इव विशेषणेऽपि लक्षणस्य वर्तनं नातिव्या-प्तिः । विशिष्टे लक्ष्ये स्वतो लक्षणाभावेन तदेकदेशगतलक्षणेनैव तस्य लक्षणवत्तायाः समर्थ-नीयत्वादिति । एवमन्नमयाद्याः शरीरप्राणमनोजीवाः । आनन्दमयस्तु ब्रह्मानन्दरूपा चि-च्छक्तिरिति केषाञ्चिन्मतमुपन्यस्तम् । इदानीमन्नमयाद्याः पञ्च कारणपुरुषा इत्यन्येषां मतमु-

**अन्ये पुनः ' अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्ये' त्यादावन्नमयादीनां प्रत्येकं चेतनवाचकात्मश्रुतिसम्बन्धात्संसारलोकादुत्क्रान्तस्य मुक्तस्य क्रमप्राप्यत्वावगमाच्च एते सर्वथान्नमयाद्य आत्मानः पञ्च चेतना अन्नाद्यनुमितपञ्चभूताधिष्ठातारः कारणभूताः पुरुषा ब्रह्मविष्णुरुद्रेश्वरसदाशिवसञ्ज्ञाः । अन्नमयाद्यात्माधारस्य सदाशिवस्यानन्दमयस्यापि कारणं परमशिवाख्यं ब्रह्म**

पन्यस्यति–अन्ये पुनरिति । तेषामयमभिप्रायः । अन्नमयादयस्तावच्चेतना देवताविशेषाश्चेत्यभ्युपगन्तव्यम् । 'एतमन्नमय'मित्यादिफलवाक्येषु प्रत्येकं तेषु चेतनवाच्यात्मशब्दश्रवणात् उपासनावाक्येषु श्रुतस्यैव तस्य दृष्टिविधानार्थत्वेनान्यथासिद्ध्यभावात् मुक्तौ संसारमण्डलादुत्तीर्णेन तेषां क्रमप्राप्यत्वश्रवणाच्च । अतस्ते मुक्तप्राप्यपरमशिवलोकनेदिष्ठक्रमिकलोकाधिष्ठातृदेवताविशेषा इति निश्चये सति सङ्ख्यासाम्यात् ब्रह्मादयः कारणपुरुषा इत्यवधार्यन्ते । ते हि ब्रह्मादिक्रमेण सृष्ट्यादिकर्तृत्वात् सदाशिवादिक्रमेणोत्तरोत्तरकारणत्वाच्च कारणपुरुषाः । यद्यपि ते परमेश्वरानुग्रहादाधिकारिकपदान्यवाप्ताः जीवविशेषाः न स्वयं सृष्ट्यादिकर्तारो नाप्युत्तरोत्तरकारणानि । किंतु तानधिष्ठाय वर्तमानः शिव एव । "लोकानुग्रहणायैव शिवेन परमेष्ठिना । सदाशिवादयस्सर्वे मूर्त्यात्मानो ह्यधिष्ठिताः । अयस्यग्नौ समाविष्टे दाहोऽग्नेरेव नायसः । मूर्त्यात्मस्वेवमैश्वर्यमीश्वरस्यैव नात्मनाम् । न हि काष्ठो ज्वलत्यूर्ध्वमग्निरेव ज्वलत्यसौ । काष्ठस्याङ्गारता नाग्नेरेवमत्रापि योज्यताम् । मूर्त्यात्मस्वपि रागाद्या दोषास्सन्त्येव वस्तुतः । तथापि तेषामेवैते न शिवस्य तु सर्वथा । अग्नावपि समाविष्टे ताम्रं खलु सकालिकम् । इति नाग्निरसौ दूष्यस्ताम्रसंसर्गकारणात् । नाग्नेरशुचिसंसर्गादशुचित्वमुपेयते । अशुचेस्त्वग्निसंयोगाच्छुचित्वमुपजायते । एवं शोध्यात्मसंसर्गान्न ह्यशुद्धः शिवो भवेत् । शिवसंसर्गतस्त्वेष शोध्यात्मैव विशुद्ध्यति ॥" इत्यादि शिवपुराणवचनप्रामाण्यात् । 'तेजोऽतस्तथा ह्याहे' ( ब्र० २–३–१० सू ) त्यधिकरणभाष्ये तथैव प्रतिपादयिष्यमाणत्वाच्च । तथापि तदधिष्ठातुः शिवस्यैव कारणत्वं तेषूपचर्य ते कारणपुरुषा इति व्यपदिश्यन्ते । ते च ब्रह्मादिक्रमेण पृथिव्यादिभूतानामधिदेवताः । एवं च पृथिव्या ओषधयः । ओषधीभ्योऽन्नमि'ति श्रुतेः अन्नकारणत्वादन्नशब्दलक्षितायाः पृथिव्या देवतात्वात् अन्नमयश्चतुर्मुखः । 'आपोमयः प्राण' इति श्रुतेः प्राणकारणतया प्राणशब्दलक्षितानामपां देवतात्वात्प्राणमयो विष्णुः । एवं तेजोवाय्वाकाशेषु केनचित्सम्बन्धेन मनोविज्ञानानन्दशब्दानां लक्षणामुपपाद्य मनोमयादयो रुद्रेश्वरसदाशिवा इति समर्थनीयम् । चेतनत्वमुक्तप्राप्यपरमशिवलोकनेदिष्ठलोकाधिष्ठातृत्वलिङ्गानुगृहीतया पञ्चसङ्ख्ययान्नमयादयो ब्रह्मादय इति निश्चिते अन्नमयप्राणमयशब्दयोः प्रसिद्धसम्बन्धाधीनलक्षणामूलया वृत्त्या ब्रह्मविष्णुपरत्वलाभे च सति मनोमयादिशब्दानां रुद्रादिपरत्वस्यावश्याङ्गीकरणीयत्वात् । एवं चानन्दमयः सदाशिवः तत्प्रतिष्ठारूपं ब्रह्म परमशिव इति स्थिते तयोरपृथक्सिद्धिरूपादभेदादानन्दमयशब्दो ब्रह्मपर इत्यभिप्रेत्यानन्दमयो ब्रह्मेति सूत्रकारोक्तिरिति । एवं चायमन्येषां पक्षेऽधिकरणप्रकारः । 'सोऽकामयते'त्यादिना जगत्कारणत्वेन प्रतिपाद्यमान आनन्दमयः

( १ ) 'सर्वेऽन्नमयादयः' इति. ख. पाठः ।

किमाकाशाभिमानी सदाशिवाख्य आधिकारिकपुरुषः किं वा परमशिवाख्यं परब्रह्मेति संशये पूर्वपक्षः—चेतनत्वोपासनाप्राप्यत्वलिङ्गसहकृतया पंचसङ्ख्यया 'आत्मन आकाशस्सम्भूत'इत्यादिप्राचीनवाक्यप्रतिपन्नपञ्चभूतपरिवृत्त्यनुगृहीतयान्नमयादयः पञ्च भूताभिमानिनः आधिकारिकपुरुषा इति निश्चिते स्थानप्रमाणादानन्दमयः आकाशाभिमानी सदाशिव इति युक्तम् । अत एव तस्मिन् 'यदेष आकाश आनन्दो न स्या'दित्याकाशशब्दः श्रूयते । 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्या'मिति (ब्र० २–१–५ सू) न्यायादाकाशशब्दस्य प्राचीनेन कामनालिङ्गेन तदभिमानिदेवतापरत्वौचित्यात् । एवं चाकाशशब्दसामानाधिकरण्येनानन्दशब्दश्रवणमप्यानन्दमयशब्दस्य स्वार्थिकमयडन्तत्वेनाकाशाभिमानिदेवतापरत्वज्ञापकतयोपपद्यते । 'को ह्येवान्यात्कः प्राण्या'दित्येतदपि तत्रोपपद्यते । यदि सदाशिवो भूताकाशमधिष्ठाय प्राणिनामसङ्कटेनावस्थानं सम्पादयेत् तदा नीरन्ध्रनिबिडीभूतानां तेषां श्वासचेष्टयोरसम्भवात् अत एव प्राणनहेतुतया सर्वानन्दकरत्वात् 'एष ह्येवानन्दयाती'त्यादिकमप्युपपद्यते । न चोपक्रमे प्रकृताद्ब्रह्मणो जगदुत्पत्तेरुक्तत्वात् तदनुसारेण जगत्कारणतयोच्यमान आनन्दमयो ब्रह्मेति शङ्कनीयम् । आनन्दमयपुच्छत्वेन तद्व्यतिरिक्ततया निर्दिष्टस्य ब्रह्मणस्तत्त्वायोगात् । 'आत्मन आकाशस्सम्भूत' इत्यस्याकाशाभिमानी सदाशिवः पूर्वकल्पानुष्ठितोपासनामहिम्ना स्वयमशरीरोऽपि स्वसङ्कल्पेन प्रथमं स्वाभिमानविषयाकाशं सृष्ट्वा तदवच्छिन्नः स्वयं स्वस्मादेव सम्भूत इत्यर्थकत्वोपपत्तेः । आत्मशब्दस्य स्वशब्दपर्यायत्वात् तत्र 'तस्माद्वा एतस्मादि'ति प्रकृतब्रह्मपरामर्शिसर्वनामसामानाधिकरण्यस्य 'स वा एष पुरुषोऽन्नरसमय'इत्यत्रेव, तदभेददृष्ट्यर्थत्वोपपत्तेः । अन्यथा सर्वनामत एव प्रकृतपरामर्शलाभा'दात्मन' इत्यादिकस्य वैयर्थ्यापत्तेः[1] । न च मुक्तेः प्राक् परिच्छिन्नस्याधिकारिकपुरुषस्य बहुभवनतत्सङ्कल्पाद्यनुपपत्तिः । मुक्तेः प्रागपि विद्यासामर्थ्येन चिच्छक्तिविकासस्याङ्गीकरणीयत्वात् । अन्यथा सौभरिप्रभृतीनां कायव्यूहपरिग्रहाद्यनुपपत्तेः । एवं चान्नमयादिशब्दोक्तब्रह्माद्युपासनया क्रममुक्तिफलकक्रमिकतावलोकावाप्त्युक्तिरप्युपपद्यत इति । एवं प्राप्ते सिद्धान्तः । आनन्दमयो ब्रह्म । निरतिशयत्वेनाभ्यस्यमानस्यानन्दस्य ब्रह्मण्येवोपपत्तेः । विकारभूताधिकारिकपुरुषविशेषपरत्वेनावगतानन्दमयशब्दात् ब्रह्मप्रतीतिर्न सम्भवतीति चेन्न । तेनापि तदवच्छिन्नब्रह्मप्रतीत्युपपत्तेः । 'तं ममायुरमृतमुपास्वे'त्यादिषु चेतनाचेतनात्मकविकारवाचिशब्दाद्विकारावच्छिन्नब्रह्मप्रत्ययस्य प्रचुरतरमुपलम्भात् । आनन्दयितृत्वव्यपदेशादप्यानन्दमयो ब्रह्म । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति ब्रह्मपरश्रुत्यन्तरैकार्थ्यात् । किंच मान्त्रवर्णिकं ब्रह्मैवानन्दमय इति गीयते । 'तस्माद्वा एतस्मा'दिति सर्वनाम्नोः सन्निहितासन्निहितमन्त्रब्राह्मणप्रकृतब्रह्मपरामर्शित्वात् । न च दृष्टिविध्यर्थस्तत्परामर्शः । प्रतीतभेदयोस्सामानाधिकरण्ये हि दृष्टिविधिरभ्युपगन्तव्यः । न चेह भेदप्रतीतिरस्ति । प्रत्युत 'एतस्माज्जायते प्राण'इत्यादिश्रुत्यन्तरेषु ब्रह्मण आकाशादिस्रष्टृभेदप्रतीतेः । न चात्रात्मशब्दस्याधिक्येन वैयर्थ्यपरिहारार्थं स्वस्मादित्यर्थोऽभ्युपगन्तव्य इति भेदप्रतीतिरस्तीति वाच्यम् । 'तस्यैष एव शारीर आत्मा । यः पूर्वस्ये'त्यत्रानुवादार्थत्वेन तदुपयोगात् । तथापि पुच्छपुच्छव-

(१) 'परामर्शकत्वोपपत्तेरात्मन' इति च. पाठः ।

'तत्प्रतिष्ठे' त्युच्यते। तदभेदादानन्दमयस्य ब्रह्मत्वव्यपदेश इति। सर्वथानन्दमयः परमेश्वर इति सिद्धम्॥ ॥ इत्यानन्दमयाधिकरणम्॥ ६॥

अथ इतरानुपपत्त्यधिकरणम्॥ ७॥

ब्रह्मणः परमशिवस्य समन्वयसिद्धं जगत्कारणत्वादिकं लक्षणं प्रधानजीवयोर्न व्यभिचरतीति स्थापितम्। अतः परं कथं जीवसमष्टिरूपस्य हिरण्यगर्भस्य जगत्कारणत्वादिकं श्रूयत इत्यत आह—

॥ सू० ॥ नेतरोऽनुपपत्तेः ॥ १७॥

भावेन ब्रह्मानन्दमययोः भेदप्रतीतिरस्तीति चेन्न। एकस्यैव विकारानवच्छेदतदवच्छेदाभ्यामौपाधिकभेदसत्त्वेन तत एव प्रियमोदादीनां दक्षिणोत्तरपक्षत्वादिकल्पनवत् पुच्छतद्बुद्धावकल्पनस्याप्युपपत्तेः। एवं चान्नमयाद्युपासनापि 'येऽन्नं ब्रह्मोपासत' इत्यादिवाक्यशेषानुसारेण तत्तदवच्छिन्नब्रह्मोपासने चतुर्मुखाद्यवच्छिन्नब्रह्मोपासनया तत्तल्लोकप्राप्तिपूर्वक'मानन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति मन्त्रोक्तमुक्तिप्राप्तिरित्येतदप्युपपद्यते इति। सूत्राण्यप्यस्मिन्नर्थे निगदव्याख्यानानि। ननूपन्यस्तमतत्रयमध्ये किं मतं ग्राह्यमित्याकाङ्क्षायामाह—सर्वथेति॥ यद्यानन्दमयः साक्षात्परं ब्रह्म यदि वा तदीया चिच्छक्तिः यदि वा सदाशिवेऽभिव्यक्तं परं ब्रह्म सर्वथाप्यानन्दमयो न जीवः। किं तु परमेश्वर इत्यतिव्याप्तिनिरासादधिकरणप्रयोजनसिद्धिरविशिष्टेति किं तत्र विशेषविचारेणेत्यभिप्रायः॥

॥ इत्यानन्दमयाधिकरणम्॥ ६॥

अथ इतरानुपपत्त्यधिकरणम्—॥ ७॥

मा भूद्व्यष्टिजीवे ब्रह्मलक्षणस्यातिव्याप्तिः। सकलशरीराभिमानितया समष्टिजीवरूपे हिरण्यगर्भे तु स्यात्। 'अम्भस्यपार' इति परमात्मसूक्तोपक्रमोपसंहारमध्यपरामर्शावगमितायास्तस्य जगत्कारणतायाः प्रत्याख्यातुमशक्यत्वादिति शङ्कानिराकरणार्थत्वेन प्रत्युदाहरणसङ्गत्योत्तराधिकरणमवतारयति—ब्रह्मण इति ॥ सू० ॥ नेतरोऽनुपपत्तेः ॥ १७॥

---

नयमणिमालायामथानन्दमयाधिकरणम्॥ ६॥

सू०॥ आनन्दमयोऽभ्यासात्॥ १३॥ विकारशब्दान्नेति चेन्न प्राचुर्यात्॥ १४॥ तद्धेतुव्यपदेशाच्च ॥ १५॥ मान्त्रवर्णिकमेव च गीयते॥ १६॥

आकाशादेः कारणमानन्दमयस्तु जीवः स्यात्। यदयं ब्रह्मविकारो ब्रह्माधारश्च शोध्यश्च॥ ११॥

निरतिशयानन्दयुते ब्रह्मैव प्रचुरता तु मयडर्थः। पुच्छं ब्रह्म प्रणवः शुद्धिश्च तिरोध्यपगमो विधुवत्॥ १२॥

सैषानन्दस्य वाक्ये निरतिशयदशाबन्धुरानन्दसिन्धुर्वर्ण्यस्साधारणो नन्वकमिहतमहाश्रोत्रियस्यापि मैवम्।

भोग्यत्वेनास्य साधारण इति भणितो नाश्रयत्वेन तेन ब्रह्मासाधारणोऽसौ खलु सकलमयी ब्रह्मणो दिव्यशक्तिः॥ १३॥

यः खलु परमात्मांशो निरूपितोऽग्रे जगत्प्रकृतिः। यस्यानन्दं ब्रह्मण इत्यादौ ब्रह्मधर्मताम्नाता॥ १४॥

केचित्तत्राचार्याः परमे व्योम्नि प्रतिष्ठितत्वोक्तेः। शक्त्या तया त्वभेदाच्छक्तिमतो⋯⋯त्तस्य॥ १५॥

आनन्दो ब्रह्मेति श्रवणं सूत्रं च युक्तमित्याहुः। ⋯⋯⋯⋯⋯⋯⋯⋯⋯⋯ ॥ १६॥

अन्ये त्वन्नमयाद्याः कारणपुरुषाः ⋯⋯। संसारादुत्क्रान्तैर्विमुच्यमानैः क्रमप्राप्याः॥ १७॥

द्रुहिणाच्युतरुद्रेश्वरसदाशिवाख्या न ते शरीराद्याः। आनन्दमयो ब्रह्मेत्यविप्रकर्षात्तु सूत्रमित्याहुः॥ १८॥

इत्यानन्दमयाधिकरणम्॥ ६॥

'यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्याम् । यदोषधीभिः पुरुषान्पशूंश्च विवेश भूतानि चराचराणि' इति महोपनिषदि श्रूयतेऽस्य विषयः। अत्र सकलजगत्प्रसूत्यादिहेतुत्वेन श्रूयमाणः पुरुषः परमेश्वरो वाऽन्यो वेति संशयः। हिरण्यगर्भ इति पूर्वःपक्षः। कथम्। तल्लिङ्गात् । 'एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः। भोगिशय्यायुतः शेते त्रैलोक्यग्रासबृंहितः॥' इति पुराणवचनात् ब्रह्मणः समुद्रशायित्वमवगम्यते। तदिह श्रूयते तल्लिङ्गं 'यमन्तस्समुद्रे कवयो वयन्ती' ति। 'प्रजापतिश्चरति गर्भे अन्त' रिति स एवोपक्रमे सर्वानुप्रविष्टतयाऽवगम्यते। उपसंहारे च 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चे' त्यादिना तस्यैव कारणत्वमवगम्यते। तस्मादुपक्रमोपसंहार-

---

यतः प्रसूतेति। जगतः प्रसूती प्रस्तुतजगत्प्रसवधर्मिणी प्रकृतिर्यस्मात्प्रसूता॥ ङीप् छान्दसः। यद्वस्तु भूम्यां तत्तल्लोकस्थाने तोयेन शरीरारम्भकेण जलप्रधानेन पार्थिवादिद्रव्येण जीवान् व्यससर्ज सृजतिस्म। लिट्यडागमश्छान्दसः। यच्च वस्तु ओषधीभिः स्थावरैः सह पुरुषान् देवमनुष्यादीन् पशून् तिर्यग्जातीयांश्चेत्येवं स्वसृष्टानि सर्वाणि चराचराणि स्थावरजङ्गमानि भूतान्यन्तर्यामितया विवेशेत्यर्थः। अत्र मन्त्रे विशेषाश्रवणात् पूर्वापरमन्त्रेषु सतां हिरण्यगर्भपरब्रह्मविषयश्रुतिलिङ्गानां बलाबलानवधारणाच्च संशयमाह—अत्रेति। 'नेतरोऽनुपपत्ते' रितिसूत्रानुसारेणान्यो वेति सन्देहकोटिर्दर्शिता। अन्यशब्दार्थो हिरण्यगर्भ इति तद्विवरणं पूर्वपक्षपरिग्रहवाक्येन कृतम्। ननु, कुतो हिरण्यगर्भ इति निर्णयः। उभयत्र प्रमाणाविशेषादित्याशङ्कते—कथमिति। बलवतः समुद्रशायित्वलिङ्गादित्याह—तल्लिङ्गादिति। समुद्रशायित्वस्य तल्लिङ्गत्वं तावद्विष्णुपुराणसम्मत्योपपादयति—एकार्णवे त्विति। नारायणात्मकः जलनिवासेन नारायणसंज्ञां प्राप्त इत्यर्थः। 'स चाप्सु शयनादेव शिवात्मा स्वेच्छया चिरम्। नारायणाख्यामवहच्छक्तिरूपः प्रजापतिः॥' इति स्मृतेः। यद्वा नारायणस्य विष्णोर्देहं प्राप्त इत्यर्थः। 'ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः। सुष्वाप योगशयने एकीभूयाथ चक्रिणा॥' इति कूर्मपुराणवचनात्। त्रैलोक्येति। प्रलयसमये त्रैलोक्यस्य ग्रसनेन पुष्ट इत्यर्थः। 'जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भव' इति वाक्यशेषेण ब्रह्मशब्दस्य कमलासनपरत्वं तत्रैव स्पष्टीकृतम्। अस्तु समुद्रशायित्वं कमलासनलिङ्गं तत्र श्रूयत इत्याशङ्क्याह—तदिहेति। यमन्तः समुद्रे कवयः प्राज्ञाः वयंति ध्यानेन सन्तन्वन्तीति। यद्यपि समुद्रस्थानत्वमात्रमवसीयते। तथापि तत्र निद्राणत्वमेव विवक्षितमित्युपबृंहणानुसारेणावसीयते। तच्च लिङ्गमनन्यथासिद्धत्वात्प्रबलम्। तमोवश्यस्यैव हि तत्सम्भवति। न तु तमोऽतीतस्य परब्रह्मण इति भावः। ननु समुद्रे निद्राणत्वं विष्णोरपि साधारणं कथं हिरण्यगर्भलिङ्गमित्याशङ्क्य शिवव्यावर्तकमेतल्लिङ्गमुदाहृतम्। श्रुतिवशाद्विष्णुव्यावृत्तिरपि लभ्यत इत्यभिप्रेत्याह—प्रजापतिरिति। ननु, मध्ये परब्रह्मलिङ्गान्यपि श्रूयन्त इत्याशङ्क्याह—तस्मादिति। उपक्रमोपसंहारगतप्रजापतिधातृश्रुतिभ्यां मध्यगतसमुद्रनिद्राणत्वलिङ्गेन च हिरण्यगर्भ एव जगत्कारणत्वादिधर्मैः प्रतिपाद्यत इति निश्चये सति तदनुसारेण मध्यगतान्य-

---

(१) 'गतः' इति. ख. पाठः। (२) 'मभजच्छक्ति' इति च. पाठः। (३) 'गम्यते' इति च. पाठः।
(४) 'रहितस्य' इति. च. पाठः

**सिद्धस्य हिरण्यगर्भस्यावान्तरसिद्धधर्मोपपत्तिः । किं च तत्प्रतिपादनप्रदेशान्तरोपसंहारश्च कृतः । 'अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टा' विति । 'अद्भ्यस्सम्भूत' इत्यत्र प्रजापतिरेव हि प्रतिपाद्यः । 'प्रजापतिश्चरति गर्भे अन्त' रिति दर्शनात् । 'हिरण्यगर्भस्समवर्तताग्रे' इत्यत्रापि 'प्रजापतिर्वै हिरण्यगर्भः' इति**

लिङ्गानि नेतव्यानीत्यर्थः । तत्र परात्परत्वं 'परात्परतरो ब्रह्मा परात्परतरो हरि' रिति हिरण्यगर्भस्यापि श्रूयमाणमापेक्षिकं नेतव्यम् । अमृतत्वफलप्रदानं जगत्सृष्ट्यादिकमिव कल्पभेदेन हिरण्यगर्भः करोतीत्यभ्युपगमेनोपपादनीयम् । तमोऽतीतत्वलिङ्गं तु प्रथमश्रुतनिद्राणत्वाक्षिप्ततमोवश्यत्वविरोधात्स्तुत्यर्थं नेतव्यमिति भावः । **किंचेति** । 'अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टा'विति वाक्येन 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्चे'त्यनुवाक्यस्य 'हिरण्यगर्भस्समवर्तताग्र'इत्यादीनामष्टानां मन्त्राणां चास्मिन्सूक्तेऽन्तर्भावकथनेन तदेकवाक्यतापादितेति ततोऽप्यस्य हिरण्यगर्भपरतावसीयत इत्यर्थः । न'न्वद्भ्यस्सम्भूत'इत्यनुवाको विष्णुपरः । 'ह्रीश्च ते लक्ष्मीश्च पत्न्या'विति श्रुताल्लक्ष्मीपतित्वलिङ्गादित्याशङ्क्याह—**अद्भ्य इति**।उपक्रमगतप्रजापतिश्रुतिविरोधादुपसंहारगतं लक्ष्मीपदं लज्जावाचिह्रीपदसमभिव्याहारेण पुरुषश्रैष्ठ्यापादकसद्गुणान्तरपरत्वेन नेतव्यमिति भावः । ननु, 'हिरण्यगर्भस्समवर्तताग्र'इत्यादिमन्त्राणां स्मृतौ विष्णुपूजायां विनियुक्तत्वाद्विनियोगलिङ्गेन तेषां विष्णुपरत्वमवसीयत इत्याशङ्क्याह—**हिरण्यगर्भ इति** । 'अत्रापी'त्येतदनन्तरं प्रजापतिरेव प्रतिपाद्यत इति पूर्ववाक्यादनुषङ्गः कार्यः । हिरण्यगर्भश्रुतेः कमलासने रूढत्वात् । तन्मन्त्रब्राह्मणे तस्यास्तत्परत्वेन व्याख्यातत्वाच्च । तद्विरोधिविनियोगलिङ्गमात्रमकिञ्चित्करम् । अन्यथा 'हिरण्यगर्भस्समवर्तताग्र'इत्याघारमाघारयती'ति वायव्यपशावैन्द्रे द्वितीयाघारे श्रौतविनियोगदर्शनादिन्द्रस्यैव तत्प्रतिपाद्यत्वप्रसङ्गादिति भावः । एतेना'द्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टा'विति विष्णुपरसन्दर्भैकवाक्यतापादना'दम्भस्य पार'इति सूक्तं विष्णुपरमित्यपि शङ्का निरस्ता । अपिचा'द्भ्यस्सम्भूत' इत्यनुवाक आदित आरभ्य विमृश्यमानो हिरण्यगर्भपर इति स्पष्टमवसीयते । तथाहि अद्भ्योऽण्डकटाहाधारभूताभ्यः पृथिव्यै रसात् पृथिव्याः कार्यात् तास्वप्सु निवृत्तात् पार्थिवादण्डकटाहाच्च संभूतो हिरण्यगर्भः विश्वकर्मणः प्रपञ्चविषयसृष्ट्यादिसर्वकार्ययुक्तस्य परमेश्वरस्याधि ऐश्वर्ये समवर्तत तदैश्वर्यविषयोऽभूत्तन्नियम्योऽभूदिति यावत् । तस्य हिरण्यगर्भस्य रूपं विदधच्छरीरं सृजन् त्वष्टा सकलप्रपञ्चनगरतक्षा परमेश्वर एति अन्तर्यामितया स्वयमपि तद्रूपं प्रविशति। तदुक्तप्रकारेण पुरुषस्य हिरण्यगर्भस्य विश्वं सर्वमप्युत्पत्त्यादिप्रकारमाजानमज्ञानमिति प्रथममन्त्रस्यार्थः । तेन ब्रह्माण्डोदरजातो हिरण्यगर्भः प्रथममन्त्रप्रतिपाद्य इति तावदवसीयते । 'प्रजापतिश्चरती'ति मन्त्रस्यायमर्थः । प्रजापतिर्जीवसमष्टिरूपो हिरण्यगर्भः व्यष्टिजीवात्मना गर्भेऽन्तश्चरति तदनन्तरं वस्तुतः स्वयमजायमानोऽपि तत्तद्व्यष्टिजीवशरीरोपाधिभिर्बहुधा सुरनरतिर्यगादिबहुप्रकारेण जायते । तस्य योनिं स्थानं धीराः धीमन्तो जानन्ति। किं तत्। मरीचीनां पदमादित्यमण्डलं तस्य वेधसः स्थानमिच्छन्तीति । अस्यापि मन्त्रस्य प्रजापतिश्रुत्या सकलजीवसमष्ट्यभिमानिनो हिरण्यगर्भस्य तदहंभावविषयव्यष्टिजी-

(१) 'मन्यथा नेयम्' इति च. पाठः ।

वात्मना गर्भावस्थानजननवर्णनौचित्यात् । तस्यादित्यमण्डलस्थानत्वाच्च स एव हिरण्यगर्भः प्रतिपाद्योऽवसीयते । हिरण्यगर्भस्य आदित्यमण्डलं स्थानमिति कुत्र प्रतिपन्नमिति चेत् छन्दोगोपनिषदि। तत्र ह्येवं श्रूयते—'असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत् तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवतां तद्रजतं येयं पृथिवी यत्सुवर्णं सा द्यौः यज्जरायुः ते पर्वताः यदुल्बं स मेघो नीहारो या धमनयः ता नद्यो यद्वास्तेयमुदकं स समुद्रोऽथ यत्तदजायत सोऽसावादित्यः तं जायमानं घोषाउल्लूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि सर्वे च कामास्तस्योदयं प्रतिपत्त्यायंघोषाउल्लूलवोऽनूत्तिष्ठन्ति सर्वाणि भूतानि सर्वे चैव कामा' इति। अत्र हि प्रलये प्रपञ्चस्यासच्छब्दोक्ताव्यक्तनामरूपतयावस्थानं ततः सर्गादावाकाशादिमहाभूतसृष्ट्या सच्छब्दवाच्यव्यक्तनामरूपतां ततो महाभूतानां ब्रह्माण्डाद्युत्पादनसामर्थ्यसिद्धये पञ्चीकरणेन त्रिवृत्करणेन वान्योन्यसङ्गतत्वरूपं सम्भूतत्वमण्डोत्पत्तिमण्डस्य द्विधाभावादिकं च पुराणप्रक्रिययैव निरूप्य तस्य ब्रह्माण्डस्य मध्ये यद्धिरण्यगर्भस्य जननं स्मृतिपुराणेषु प्रतिपादितम् । शतपथब्राह्मणे चोद्धारकाण्डे 'आपो वा इदमग्र आसीत्सलिलमेवे'त्युपक्रम्य 'तास्वन्तर्हिरण्मयमण्डं सम्बभूवे' त्यादिना तास्वप्सु ब्रह्माण्डस्योत्पत्तिमभिधाय 'तदन्तः पुरुषस्सम्बभूवे'ति तन्मध्ये पुरुषस्योत्पत्तिमुक्त्वा 'स प्रजापति'रिति तत्र प्रजापतिनामकीर्तनेन 'स भूरिति व्याहरत् तदिमं लोकमजनय'दित्यादिना भूलोकादिस्रष्टृत्वकीर्तनेन च तथैव च स्पष्टीकृतम् । तत्स्थाने आदित्यस्य जननमुक्त्वा 'तस्योदयं प्रती'त्यादिना प्रतिदिवसमुदयन् द्वीपान्तरादागच्छन्प्रसिद्धादित्य एवात्रादित्यशब्देनोक्त इति विभावितम्। तेन ज्ञायते हिरण्यगर्भ एवादित्यमण्डलस्थत्वात्तत्रादित्यशब्देनोक्त इति। बृहदारण्यकोपनिषदि च 'यो ब्रह्माणं विदधाति पूर्वमि'ति 'स वै शरीरी प्रथम' इति च श्रुतिस्मृत्योः प्रथमजत्वेन प्रसिद्धं हिरण्यगर्भं 'स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मे'ति प्रस्तुत्य 'आप एवेदमग्र आसुस्ता आपस्सत्यमसृजत इत्यब्ज्यस्सम्भूत' इत्युक्तप्रकारेण तस्य सृष्टिमुक्त्वा 'तद्यत्सत्यं असौ स आदित्यो य एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्ष'न्निति तस्यादित्यमण्डलस्थत्वं स्पष्टमेवोक्तम् । मण्डलाभिमानिनामधेयेन मार्ताण्डशब्देन च मृते द्विधाकरणादार्तेऽण्डे जात इत्यर्थे वृद्धैर्व्युत्पादिदितेन ब्रह्माण्डोदरजातो हिरण्यगर्भ एव मण्डलस्थ इति विभावितम् । ततश्च आदित्यमण्डलस्थानत्वात् लिङ्गाद्धिरण्यगर्भः प्रतिपाद्योऽवसीयत इति युक्तमेव। 'वेधस' इति षष्ठ्यन्तया वेधःश्रुत्यापि तथाऽवसीयते। 'यो देवेभ्य' इति मन्त्रस्यार्थः । यो द्युतिमद्भ्य इन्द्रादिदेवेभ्योऽधिकं तपति यस्तेषामग्रे श्रैष्ठ्ये निहितः परमेश्वरेण यस्तेभ्यः पूर्वं जातस्तस्मै रोचमानाय ब्रह्मणोऽपत्याय नम इति । यद्वा देवग्रहणं मनुष्यादीनामप्युपलक्षणम् । ततश्चायमर्थः । यो देवादिभ्यस्तेषां व्यवहारसिद्धये आतपति प्रकाशं करोति । यश्च तेषां पुरोहितः उदयन् प्रतिपुरुषमग्रे निहितः । यश्च तेभ्यः पूर्वं जातः तस्मै नम इति । अत्राप्यादित्यात्मकस्सुरज्येष्ठ इति प्रसिद्धो 'यो देवानां प्रथमं पुरस्ता'दिति 'यो ब्रह्माणं विदधाति पूर्वं'मिति च प्रथमसिद्धशरीरत्वेन प्रतिपन्नो हिरण्यगर्भः प्रतिपाद्य इति स्पष्टम् । 'रुचं ब्राह्म'मित्यस्यार्थः। रोचमानं ब्रह्मणोऽपत्यं प्रकृतं हिरण्यगर्भमण्डकटाहनिवर्तनद्वारेणोत्पादयन्तः सदाशिवाद्याः

श्रवणात् । ततो हिरण्यगर्भ एव जगत्प्रसूतिहेतुत्वादिनाऽत्र प्रतिपाद्यत इति प्राप्ते ब्रूमः । परमेश्वरादितरो भिन्नो हिरण्यगर्भोऽत्र न प्रतिपाद्यः । जगत्प्रसूतिहेतुत्वादीनां परमेश्वरधर्माणां तस्मिन्ननुपपत्तेः । 'यतः प्रसूता जगतः प्रसूती' त्या-

---

आकाशाद्यभिमानिदेवताः तद्ब्रह्मणोपत्यमुद्दिश्याब्रुवन् यस्त्वां ब्राह्मण एवं वेत्ति तस्य देवास्सर्वे वश्या भवन्तीति । ननु, पूर्वानुवाकरूपपुरुषसूक्तैकवाक्यत्वादस्यानुवाकस्य पुरुषसूक्तस्य च नारायणपरत्वात्कथमस्य हिरण्यगर्भपरत्वमुपपद्यते । उच्यते । पुरुषसूक्ते 'सहस्रशीर्षा पुरुष'इत्यादिभिः श्वेताश्वतरोपनिषदि शिवपरत्वेन निर्ज्ञातैर्मन्त्रैः शिवं प्रस्तुत्य 'तस्माद्विराडजायत विराजो अधि पुरुष' इति शिवाद्धिरण्मयतया विविधं राजमानस्याण्डस्य तदनन्तरं तत्र हिरण्यगर्भस्य चोत्पत्तिमभिधाय तस्यैव मुखाद्यवयवेभ्योऽग्न्यादिदेवानां ब्राह्मणादीनां चोत्पत्तिरभिहिता । न तु नारायणस्यावयवेभ्यः । पूर्वं तत्प्रसङ्गाभावात् । ऐतरेयोपनिषदि 'आत्मा वा इदमेक एवाग्र आसी'दित्यादिना परमेश्वरं प्रस्तुत्य 'सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत्तमभ्यतप'दिति तत्कृतां हिरण्यगर्भस्य सृष्टिं तस्य सृष्टयुन्मुखतापत्तिं चोक्त्वा 'तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डमुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुः अक्षिणी निरभिद्येतां अक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिश' इत्यादिनाग्न्यादीनां हिरण्यगर्भावयवेभ्यः पूर्वमुत्पत्तिवर्णनात् । मानवे धर्मशास्त्रे परमेश्वरसृष्टब्रह्माण्डोदरजातं हिरण्यगर्भमेव प्रस्तुत्य 'लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः । ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तय'दिति स्मरणाच्च । याज्ञवल्क्ये धर्मशास्त्रे परमेश्वरं प्रस्तुत्य 'मुखबाहूरुपज्जास्स्युस्तस्य वर्णा यथाक्रम'मिति स्मर्यत इति चेन्न । तस्योदाहृतश्रुतिस्मृत्यनुसारेण हिरण्यगर्भशरीरानुप्रविष्टतदात्मभूतपरमेश्वरविषयत्वोपपत्तेः । तस्मात्पुरुषसूक्तमारभ्य प्रकृतमेव हिरण्यगर्भमुद्दिश्य प्रवर्तमानस्य 'ह्रीश्च त' इत्यादेरेतदनुवाकवाक्यैकवाक्यतां प्रापितानां हिरण्यगर्भमन्त्राणां च कथमप्यन्यपरत्वाशङ्कानावकाशं लभते । एवं चोक्तमहिमा स एव हिरण्यगर्भः पूर्वकल्पानुष्ठितोपासनालब्धसत्यसङ्कल्पत्वादिमहिमा जगत्प्रसूत्यादिसकलप्रपञ्चहेतुत्वेन प्रतिपाद्यत इत्यतस्तत्रातिव्याप्तं ब्रह्मलक्षणमिति पूर्वपक्षमुपसंहरति—तत इति । तस्मिन्ननुपपत्तेरिति । जगत्प्रसवधर्मिणी परा शक्तिर्हि जगत्प्रसूतिः सा परमेश्वरस्य नित्यानपायिनी प्रभेति तस्याः प्रपञ्चमहावृक्षाङ्कुरतयोन्मेषरूपा प्रसूतिः 'प्रज्ञा च तस्मात्प्रसृता पुराणी' त्युक्तप्रकारा परमेश्वरादेव सम्भवतीति। 'तदेव ब्रह्म परमं कवीना'मित्यसाधारणब्रह्मशब्दार्थत्वोक्त्या व्यज्यमानं त्रिविधपरिच्छेदराहित्यरूपतदर्थपौष्कल्यं तत्रैव सम्भवति । 'तदेव भूतं तदु भव्यमाहुरिद'मिति सामान्येन भूतभाविवर्तमानसकलकल्पानुयायिसर्वप्रपञ्चात्मकत्वमुच्यमानमपि तत्रैव सम्भवति । 'तदेव शुक्रममृतं तद्ब्रह्म स आपस्स प्रजापति'रित्यत्र 'शुक्रममृत'मित्युच्यमानं नित्यमुक्तविभूतिकत्वं 'स प्रजापति'रिति प्रजापतिशब्दोक्तहिरण्यगर्भविभूतिकत्वं च तस्मिन्नेव सम्भवति । एकवचनान्तो हि प्रजापतिशब्दो हिरण्यगर्भपरः । न तु दक्षकाश्यपादिपरः । तद्ब्रह्मे'ति 'तु वेदादिविभूतिकत्वपरं तस्मिन्नुपपद्यते । एतान्युक्तानि सर्वाणि जगत्प्रसूतिहेतुत्वादीनि हिरण्यगर्भे नोपपद्यन्त इत्यर्थः । 'परात्पर'मित्यादिकमप्यापेक्षिकत्वादिना योजयितुमिहाशक्यमित्याशयेनाह—यतः प्रसूतेति । यस्य जगत्प्रसूतिहेतुत्वादिकमुक्तं यतः परं प्रकृष्टं च य-

रभ्य जगत्प्रसूतिहेतोस्तस्य 'अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम्। यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्।' इत्यादिना सर्वोत्कृष्टत्वं तमसः प्रकृतिमण्डलात्परत्वं चावगम्यते। तदण्डान्तर्वर्तिनो हिरण्यगर्भस्य न सम्भवति। किंच 'य एनं विदुरमृतास्ते भवन्ती' त्यस्य ज्ञानादमृतत्वं मुक्तिरभिधीयते। तन्न हिरण्यगर्भे सम्भवति। परमेश्वरस्य हि मुक्तिहेतुत्वमसाधारणं लिङ्गम्। 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यती' ति श्रवणात्। यदुक्तमुपक्रमोपसंहारसिद्ध इति तदप्रयोजकम्। अनुपपत्त्या प्रजापतिधातृशब्दौ हिरण्यगर्भं विहाय प्रजानां पशू-

---

तोऽन्यत्पृथग्भूतं यतोऽणीयः सूक्ष्मतरं च वस्तु नास्तीत्युक्तम्। तस्मात्परं किमधिकं भविष्यति येनेह परात्परत्वमापेक्षिकं नीयेत। 'परात्परतरो ब्रह्मे'त्यत्र तु ततोऽपि परस्यानुपदमेव वर्ण्यमानत्वात्तदापेक्षिकमिति युक्तम्। 'तमसः परस्ता'दित्येतदपि न स्तुत्यर्थं काल्पनिकम्। 'तदक्षरे परमे व्योम'न्निति यस्मिन्नविनाशिनि परमे व्योम्नि प्रागवस्थानमुक्तम्। तस्य हि तमोऽतीतदेशत्वमिहोच्यते। 'य एवं विदुरमृतास्ते भवन्ती'त्येतत्कल्पभेदेनापि हिरण्यगर्भे न सम्भवति। 'यदा चर्मवदाकाश'मिति मन्त्रेण शिवविज्ञानं विना मुक्तेर्गगनवेष्टनवदसम्भावितत्ववर्णनादिति भावः। 'यदा चर्मव'दिति मन्त्रे यदेत्यस्य यदीत्यर्थः। उपक्रमोपसंहारसिद्धो हिरण्यगर्भ इति शङ्कामनूद्य परिहरति—यदुक्तमिति। तदप्रयोजकमिति। मध्यगतैरपि बहुप्रमाणैर्विरोधे सति उपक्रमोपसंहारैकरूप्यमप्रयोजकमित्यर्थः। सूत्रे बहुप्रमाणविरोधं द्योतयितुमेव लिङ्गविशेषमनुपन्यस्य सामान्येनानुपपत्तेरित्युक्तम्। एवं चोपक्रमोपसंहारगतशब्दौ योगेन परमेश्वरे योजनीयावित्याह—अनुपपत्त्येति। मुण्डके 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते। तपसा चीयते ब्रह्म ततोऽन्नमभिजायत' इति कार्यकारणयोः प्रयुक्तस्य ब्रह्मशब्दस्येवात्र विभूतिविभूतिमतोः प्रयुक्तस्य प्रजापतिशब्दस्यार्थभेदावश्यम्भावेन कस्य चिदवश्यकल्पनीयो योगः प्राकरणिकलिङ्गानुसारात् विभूतिमति प्रयुक्तस्य कल्प्यते। धातृशब्द'स्तवम्भस्यपार' इति सूक्तोपसंहारगतो न भवति। 'पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि। तन्नो रुद्रः प्रचोदयात्'। 'तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदया' दित्येतदवसानत्वात्परमात्मविषयसूक्तस्य तदनन्तरं रुद्रगायत्रीप्रसङ्गागतानां गणेशगायत्र्यादीनां स्नानार्थदूर्वाधारणादिमन्त्राणां च परमात्मसूक्तान्तर्भावाभावात्। तथैव च भट्टभास्करेण सूक्तमर्यादायाः प्रदर्शितत्वात्। एवं चोपक्रमोपसंहारपर्यालोचनायां प्रजापतिश्रुतेरुपक्रमस्थत्वेऽपि तत एकस्याः प्रत्येकमभ्यस्तयोरौपसंहारिकरुद्रमहादेवश्रुत्योः प्रबलत्वात् सूक्तस्य परमेश्वरपरत्वमेव सिद्ध्यति। अथापि यदि धातृश्रुतेरुपसंहारगतत्वमभ्युपगम्यते तथापि तस्याः परमेश्वरे यौगिकत्वमभ्युपगन्तुं युक्तम्। मध्यगतबहुश्रुतिलिङ्गानुसारादिति भावः। 'यमन्तस्समुद्र' इति त्वेवं नेतव्यम्। समुद्रः पुरुषः। 'नाग्निस्तृप्यति काष्ठानां नापगानां महोदधि'रित्युक्तरीत्या तृप्तिराहित्येन समुद्रसाम्यात्पर्याप्तभोग्यसम्पत्तावपि सम्यगुत्प्लुत्य द्रवंत्यस्मादिन्द्रियाणि इति यौगिकार्थसम्भवात्। अत एव 'स एष पुरुषः समुद्रः सर्वलोक-

नां पतिं जगद्धारकं परमेश्वरमेव' प्रतिपादयतः। अद्भ्यस्सम्भूतो हिरण्यगर्भ- इत्युभयत्रापि परमेश्वर एव प्रतिपाद्यः। 'य ईशे अस्य द्विपदश्चतुष्पदः' 'आदित्य- वर्णं तमसः परस्ता' दिति विश्वेश्वरत्वविश्वातीतत्वलिङ्गात्। ततो जगत्कारण-

---

मत्ति। यद्ध किंचाश्नुते अत्त्येनं मन्येते'त्याद्यैतरेयोपनिषदि श्रूयते। एवं च यमन्तःपुरुषे हृदयादिप्रदेशेषु कवयश्चिन्तासन्तानेन तन्तुजालेन पटमिव स्वस्वाभिमतरूपविशिष्टं वयन्ती- त्यर्थः। एवं सति 'वयन्ती'त्येतदपि स्वारस्यं लभते। उत्तरनारायणाद्येकवाक्यतापादनेनापि नास्य हिरण्यगर्भपरत्वसिद्धिरित्याह—अद्भ्य इति। उत्तरनारायणे हि 'वेदाहमेतं पुरुषं महा- न्त'मिति द्वितीयमन्त्रः। तत्र श्रूयमाणं तमसः परस्तात् वर्तमानत्वमनन्योपायमुक्तिहेतुवेद- नविषयत्वं च हिरण्यगर्भे न सम्भवतीति तस्य शिवपरत्वमवश्यं वक्तव्यम्। तन्निर्वाहाय च 'तस्य त्वष्टा विदधद्रूपमेती'ति पूर्वमन्त्रे हिरण्यगर्भस्यान्तर्यामितया प्रस्तुतः परमेश्वर एव 'एतं पुरुष'मित्यनेन परामृश्यते। न तु हिरण्यगर्भ इत्युपपादनीयम्। एवं च हिरण्यगर्भवि- षयत्वेऽपि तदन्तर्यामिमहिमपर्यवसाय्येव सोऽनुवाकः। तथा हिरण्यगर्भमन्त्राष्टकमध्ये 'य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेमे'ति पठ्यते। तेन शिवासाधारणं पशु- पतित्वं वर्ण्यते। 'एतावन्तो वै पशवो द्विपादश्चतुष्पादश्चे'ति श्रुत्यन्तरदर्शनात्। अत एव श्वेताश्वतरोपनिषदि 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं प- श्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु' इति मन्त्रानन्तरं 'यो देवानामधिपो यस्मिँल्लोका अधिश्रिता' इति मन्त्रस्येदमेवोत्तरार्धं पठ्यते। अतस्तत्र श्रुतो हिरण्यगर्भशब्दः परमेश्वरपरो व्याख्येयः। हिरण्यरूपं वीर्यमस्य गर्भ इति व्युत्पत्तेः। न च 'प्रजापतिर्वै हिर- ण्यगर्भ' इति तद्व्याख्यानरूपार्थवाददर्शनात् तस्य कमलासनपरत्वं वक्तव्यमिति वाच्यम्। 'हिरण्यगर्भस्समवर्तताग्र' इत्यादि 'आघारमाघारयति' इति वायव्यपशावाघारे मन्त्रविधेः खल्वयमर्थवादः श्रूयते 'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाये'ति। स त्वमन्त्रके प्रा- जापत्ये पूर्वाघारे न भवति। किंत्वैन्द्रे मन्त्रवत्युत्तराघारे। तस्मिन्प्रकृतौ मन्त्रकार्यस्य नियमा- दृष्टस्य क्लृप्तत्वेन तदपेक्षितमन्त्रमात्रविधौ लाघवादमन्त्रके पूर्वाघारे प्रकृतावक्लृप्तस्य तस्या- प्यत्रैव कल्पनीयतया गौरवादिति स्थापितं दशमेऽध्याये 'हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गादुत्तर- स्य वा मन्त्रार्थत्वा'दिति पूर्वोत्तरपक्ष( जै० १०. ३. १३,१५.) सूत्राभ्याम्। तथा चानेन मन्त्रेण विनियोजकश्रुतिबलात् द्वितीयाघारदेवतायाः इन्द्रस्य प्रकाशनं कर्तव्यमिति तन्निर्वाहाय मन्त्रस्थहिरण्यगर्भपदस्येव तद्व्याख्यानरूपप्रजापतिपदस्यापि इन्द्रपरत्वस्य वक्तव्यत्वात् न तद्बलान्मन्त्रगतहिरण्यगर्भपदस्य कमलासनपरत्वप्रसक्तिः। अतश्श्वेताश्वतरोपनिषत्प्रत्यभि- ज्ञानगृहीतपाशुपत्यलिङ्गाद्धिरण्यगर्भमन्त्रा अपि परमेश्वरपरा एव। किं तु 'वचनात्त्वयथार्थ- मैन्द्री स्या'दिति ( जै० ३. २. ३. ) न्यायादैन्द्र्याघारे विनियोगविध्यनुसारेण तदनुष्ठानकाले यथाकथञ्चिदिन्द्रे मन्त्रार्थो योजनीयः। तस्मान्न तदुभयैकवाक्यतयाप्यस्य सूक्तस्य हिरण्य- गर्भपरत्वप्रसक्तिरिति भावः। तथाप्युत्तरनारायणपठितः 'प्रजापतिश्चरति गर्भे अन्तः' इति मन्त्रभाग इह 'अम्भस्यपार' इति मन्त्रपठितः परमेश्वरे न सङ्घटते। तत्र हिरण्यगर्भपरत्वेना- वधृतत्वादित्याशङ्क्याह—तत इति। इह जगत्प्रसूतिहेतुत्वादिपारमेश्वरलिङ्गसत्त्वा 'श्वेत-

त्वादिना प्रजापतिशब्दवाच्यः परमेश्वरो न हिरण्यगर्भः ॥

परमेश्वरेण हिरण्यगर्भस्याभेदाज्जगत्कारणत्वमस्त्वित्याशङ्क्याह—

॥ सू ॥ भेदव्यपदेशाच्च ॥ १८ ॥

अस्यां महोपनिषदि परमेश्वरहिरण्यगर्भयोः भेदो व्यपदिश्यते कारणत्वेन-

---

मूर्ध्वं न तिर्यञ्च'मित्यादिश्वेताश्वतरोपनिषद्गतानेकमन्त्रतदंशप्रत्यभिज्ञानसत्त्वाच्च तद्विरोधेऽन्य-परकिंचिन्मंत्रांशे प्रत्यभिज्ञानमकिञ्चित्करमिति भावः। ननु, तथापि 'अभिमन्ता जीवो नियं-तेश्वरस्सर्वाभिमानी हिरण्यगर्भ' इति तापनीयश्रुतेः समष्टिजीवे हिरण्यगर्भ इव परमेश्वरे व्यष्टिजीवात्मना गर्भे सञ्चारो न घटत इति चेन्न । हिरण्यगर्भस्यापि सर्वाभिमानित्वं सर्व-शरीरेष्वहंमानवत्त्वमेव । तत्सर्वप्रपञ्चशरीरकस्य परमेश्वरस्य सर्वत्राप्यविशिष्टमिति तत्र व्यष्टिजीवात्मना गर्भसञ्चाराद्युक्तिस्सङ्घटतेतराम् । अत एव श्वेताश्वतरोपनिषद्याम्नायते—'एष हि देवः प्रदिशो नु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ॥ स एव जातः स जनिष्य-माणः प्रत्यङ्ज्जनास्तिष्ठति सर्वतोमुख' इति । भो जना अन्तर्यामितया परमेश्वरस्सर्वेषां प्रत्यग्रूप-स्तिष्ठतीत्यर्थः । अयं मन्त्रः किञ्चित्पाठभेदेनात्रापि सूक्ते श्रूयते । तस्माद्युक्तमुक्तं 'नेतरोऽनु-पपत्तेः' इति । तत्र न हिरण्यगर्भ इति निर्देष्टव्ये 'नेतर' इति निर्देशो हिरण्यगर्भः परमेश्व-रान्न भिद्यते अतस्तत्र लक्षणसत्त्वं न दोषायेति केषाञ्चिन्मतं निरसितुं कृतः । तन्निरासहेतुप्र-दर्शनार्थत्वेनोत्तरसूत्रमवतारयति—परमेश्वरेणेति । अत्रेदं शङ्काबीजम् । प्रपञ्चसृष्टिहेतुका-मनावत्त्वं शिवासाधारणमिति तावत्सम्प्रतिपन्नम् । तच्च हिरण्यगर्भस्य 'प्रजापतिरकामयत प्रजाः सृजेयेति' इति बहुषु प्रदेशेषु श्रूयते । अतस्तद्धेतुकादनुमानात् 'ब्रह्मा शिवो मे अस्तु सदाशिवों, यो ब्रह्मा ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी'ति शिवहिरण्यगर्भवाच-कसामानाधिकरण्याच्च हिरण्यगर्भः शिवाभिन्नः । अत एव कूर्मपुराणे वसुमनसो राज्ञो ज-न्मप्रभृति सूर्यभक्तस्य सावित्रीजपेन बहुकालं सूर्यमाराधितवतः तदवसाने तस्मै फलं दातुं सूर्यमण्डलाद्धिरण्यगर्भरूपेण प्रादुर्भूतस्यैव देवस्य क्षणान्तरे परमेश्वररूपेण दर्शनमुक्तम् । "पूर्णे वर्षशते तस्य भगवानुग्रदीधितिः । प्रादुरासीन्महायोगी भानोर्मण्डलमध्यतः। स दृष्ट्वा देववपुषं मण्डलस्थं सनातनम् । स्वयम्भुवमनाद्यन्तं ब्रह्माणं विस्मयं गतः । तुष्टाव वैदिकै-र्मन्त्रैः सावित्र्या च विशेषतः । क्षणादपश्यत्पुरुषं तमेव परमेश्वरम् । चतुर्मुखं जटामौलिमष्ट-हस्तं त्रिलोचनम् । चन्द्रावयवलक्ष्माणं नरनारीतनुं हरम् । भासयन्तं जगत्कृत्स्नं नीलकण्ठं स्वरश्मिभिः ॥" इत्यादिना । तस्माद्धिरण्यगर्भस्य शिवाभिन्नत्वात्तत्र लक्षणसत्त्वं न दोषः । अतस्तद्व्यावर्तनाय यत्नो न कार्य इत्येतच्छङ्कानिराकरणार्थं सूत्रम् ॥ सू ॥ भेदव्यपदेशाच्च ॥ १८ ॥ 'अस्मिन्नस्य च तद्योगं शास्ती'ति व्यवहिताग्रिमसूत्रादस्मिन्निति पदस्यानयनम-भिप्रेत्य व्याचष्टे—अस्यामिति । सूत्रे त्वस्मिन्निति पदमुपनिषद्ग्रन्थाभिप्रायम् । तथा चा-स्यामेवोपनिषदि शिवहिरण्यगर्भयोः भेदे व्यपदिश्यमाने सन्निहिते तदभेदाभिप्रायेण 'यतः प्रसूते'त्यादिना जगत्प्रसूतिकारणत्वादिवर्णनमिति नयनमत्यन्तमयुक्तमिति भावः । 'यो दे-वाना'मिति मन्त्रः शास्त्रयोनित्वाधिकरणावसाने व्याख्यातः । ननु, ब्रह्मणस्सकाशाद्रुद्रस्यो-

---

(१) 'स जायमानस्सजनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः' । इति पाठभेदः श्रूयते ।

**कार्यत्वेन च 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानम्' ( महाना. १२. ) इति। अतो हिरण्यगर्भादेः सर्वप्रपञ्चस्य कारणत्वमीश्वरस्येति सिद्धम्॥**

---

त्पत्तिर्बहुषु प्रदेशेष्वाम्नायते। अतस्तदविरोधार्थमयं मन्त्रः इत्थं व्याख्यातव्यः। महर्षिर्योगबलेन कालत्रयवृत्तांतसाक्षात्कारसमर्थो रुद्रः स्वाविर्भावात्प्रागेव जातं स्वजनकं हिरण्यगर्भं जायमानावस्थाविशिष्टं योगबलेन साक्षात्कृतवानिति। अन्यथा परस्परविरोधेनाप्रामाण्यापत्तेरिति। अवैदिकव्याख्यानमुपसंहारव्याजेन निराकरोति–अत इति। अयमाशयः। एवं व्याख्यानेऽपि कथं विरोधस्समाहितो भवति। रुद्रस्य क्वचिद्ब्रह्मणः क्वचिन्नारायणादपि ह्युत्पत्तिः श्रूयते। कल्पभेदेन व्यवस्थितिरिति चेत् किमत्र सा व्यवस्था न प्रवर्तते येनेत्थं व्याख्यातव्यं स्यात्। श्वेताश्वतरपाठानध्ययनप्रयुक्तं चेदं व्याख्यानम्। तत्र हि द्वितीयाध्याये–'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु' इत्यप्यस्य मन्त्रस्य पाठो दृश्यते। अतस्तदनुसारेण तदीयचतुर्थाध्यायपाठे तैत्तिरीयपाठे च पश्यतेत्यस्य प्राग्वर्णित एवार्थो ग्राह्यः। वस्तुतस्तु, नात्र कल्पभेदेन व्यवस्था। किंतु परमशिवाद्ब्रह्मण उत्पत्तिरस्मिन्मन्त्रे प्रतिपाद्या। अन्यत्र ब्रह्मणो नारायणाद्वा संहाररुद्रस्योत्पत्तिः प्रतिपाद्येति व्यवस्था। अत्र हि दहरविद्योपास्यतया निर्धारणीयस्यास्य विभूतिषु 'स ब्रह्मा स शिवस्सेन्द्र' इति संहाररुद्रोऽपि गृहीतः। 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते अथ पुनरेव नारायणस्सोऽन्यत्कामो मनसा ध्यायत तस्य ध्यानान्तस्थितस्य ललाटात्स्वेदोऽपतत् ता इमा आपः प्रतता आसुः। तासु तेजो हिरण्मयमण्डं तत्र ब्रह्मा चतुर्मुखोऽजायत। अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाध्यायत। तस्य ध्यानान्तस्थस्य ललाटात्र्यक्षः शूलपाणिः पुरुषोऽजायत। बिभ्रत्सत्यं ब्रह्मचर्यं तपो वैराग्य"मित्यादि श्रुत्यन्तरयोस्तु ब्रह्मसहपाठात् 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ मम। मया दर्शितपन्थानौ सृष्टिसंहारकारका'विति महाभारते "ततो मे सहसोत्पन्नः प्रसादो मुनिपुङ्गवाः। चतुर्मुखस्ततो जातो ब्रह्मा लोकपितामहः। तदन्तरेऽभवत्क्रोधः कस्माच्चित्कारणात्तदा। आत्मनो मुनिशार्दूलास्तत्र देवो महेश्वरः। रुद्रः क्रोधात्मको जज्ञे शूलपाणिस्त्रिलोचनः। तेजसा सूर्यसङ्काशः त्रैलोक्यं संहरन्निव॥" इति कूर्मपुराणे च नारायणवचनैरुपबृंहणाच्च रुद्रशब्देन स एव मूर्त्यन्तर्गतसंहाररुद्रो गृहीतः। एवं शतपथब्राह्मणादिषु ब्रह्मण उत्पन्नत्वेन प्रतिपादितः स एव संहाररुद्रः। कथं ब्रह्मप्रभवस्य हि रुद्रस्य स्थाणुरित्यसाधारणं नाम। यथोपेन्द्रस्य विष्णुरिति यथावा यदूद्वहस्य कृष्ण इति। ब्रह्मप्रभवं ब्रह्मनियोगात्सृष्टौ प्रवृत्तं जरामरणहीनानेव सृजन्तमेवंभूताः प्रजा मा स्राक्षीरिति पुनर्ब्रह्मवचनात्सृष्टेर्निवृत्तं रुद्रं प्रस्तुत्य 'स्वात्मजैरेव तै रुद्रैर्निवृत्तात्मा व्यतिष्ठत। स्थाणुत्वं तेन तस्यासीद्देवदेवस्य शूलिन' इति कूर्मपुराणे, 'ततः प्रभृति देवोऽसौ न प्रसूते शिवाः प्रजाः। ऊर्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसम्प्लव'मिति शिवपुराणे, 'ततः प्रभृति विश्वात्मा न प्रसूते शिवाः प्रजाः। स्थाणुवन्निश्चलो यस्मात्स्थितः स्थाणुरतस्स्मृत' इत्यादित्यपुराणे च स्थाणुशब्दस्य तन्नामत्वप्रतिपादनात्। स्थाणुनाम्नश्च रुद्रस्य महाभारते सभापर्वणि 'यत्र भूतप-

तिः सृष्ट्वा सर्वलोकान्सनातनः । उपास्यते तिग्मतेजा वृतो भूतैस्सहस्रशः' इति मैनाके शिवस्य सन्निधानमुक्त्वा 'नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः । उपासते यत्र परं सहस्रयुगपर्यय'इति तदुपासकेषु परिगणनं कृतम्। राजधर्मे च 'भूयस्स भगवान्ध्यात्वा चिरं शूलवरायुधः । तस्य तस्य निकायस्य चकारैकैकमीश्वरम् । देवानामीश्वरं चक्रे देवं दशशतेक्षणम् ॥ यमं वैवस्वतं चापि पितॄणामकरोत्पति'मित्युपक्रम्य 'रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः । महात्मानं महादेवं विशालाक्षं सनातन'मिति तस्य शिवनियम्येषु परिगणनं कृतम् । 'विशालाक्ष'इत्यपि स्थाणुनाम्नो रुद्रस्य नामान्तरम् । राजधर्म एव प्रदेशान्तरे ब्रह्मप्रणीतं नीतिशास्त्रं प्रस्तुत्य 'ततस्तां भगवान्नीतिं पूर्वं जग्राह शङ्करः । बहुरूपो विशालाक्षः शिवस्स्थाणुरुमापति'रिति तस्य तत्र प्रयोगात् । अनन्तरं 'स देवस्सर्वभूतात्मा महादेवस्सनातनः । असङ्ख्यातसहस्राणां रुद्राणां स्थानमव्ययम् । युगानामायुषो ह्रासं विज्ञाय भगवान् शिवः । सञ्चिक्षेप ततश्शास्त्रं महार्थं ब्रह्मणा कृतम् । वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यते'ति तत्प्रणीते नीतिशास्त्रे वैशालाक्षसमाख्याकीर्तनाच्च। तस्मादुपपन्नेयमुक्तव्यवस्था। रुद्रस्य क्वचिन्नारायणादुत्पत्तिः प्रतिपाद्यते क्वचिच्चतुर्मुखादित्यादिकस्य तु कल्पभेदेन व्यवस्था । सा त्वध्यायान्तिमाधिकरणे पुराणप्रामाण्यव्यवस्थापनावसरे प्रदर्शयिष्यते । यद्वा । संहाररुद्रस्यापि न ब्रह्मणो नारायणाद्वोत्पत्तिः । किं तु तदंशस्य नीललोहितरुद्रस्यैव । यस्य महाभारते 'ततः पार्श्वे वृषाङ्कस्य ब्रह्मचारी व्यवर्तत। पिङ्गाक्षस्तपसा श्रेष्ठो बलवान्नीललोहित'इति कृष्णार्जुनयोः कैलासयात्रायां कैलासे श्रीकण्ठपार्श्वेऽवस्थानमुक्तम् । यस्य च कूर्मपुराणे ब्रह्मपञ्चमशिरोलवनप्रस्तावे शिवाविर्भावात्पूर्वमाविर्भाव उक्तः । तत्र हि ब्रह्मनारायणयोः परस्परोत्कर्षे विवदमानयोः नीललोहितरुद्रस्याविर्भाव उक्तः । तस्मिन् ब्रह्मणा 'जानासि पूर्वं हि भवान् ललाटान्मम शङ्कर। प्रादुर्भावं तवेशान मामतः शरणं व्रजे'ति सावज्ञमुक्ते तत्प्रेरितेन भैरवेण ब्रह्मणः पञ्चमे शिरसि च लूने तदनन्तरं शिवस्याविर्भाव उक्तः । 'अथान्वपश्यद्गिरिशं मण्डलान्तरसंस्थितम् । सहासीनं महादेव्या महादेवं सनातन'मित्यादि प्रपञ्चेन तत्स्तुतिनमस्काराभ्यां ब्रह्मणा प्रसादितस्य तं प्रीतिवचनैः सान्त्वितवतश्शिवस्य नीललोहितं प्रति वचनं श्रूयते । 'प्रोवाचाग्रेऽवतिष्ठन्तं नीललोहितमीश्वरम् । एष ब्रह्मास्य जगतः सम्पूज्यः प्रथमः सुतः । आत्मनो रक्षणीयस्ते गुरुर्ज्येष्ठः पिता तवे'ति कल्पादौ परमशिवात्त्रयाणामुत्पत्तौ ज्येष्ठः । अस्मिन्नीललोहितरुद्रावतारे पिता उभयथापि गुरुरित्यर्थः । इयं च नीललोहितरुद्रस्य ब्रह्मणो नारायणाद्वोत्पत्तिः नारायणस्य काश्यपदशरथादिभ्य उत्पत्तिरिवैच्छिकाविर्भावरूपा । अत एव कौर्मे नारायणं प्रति शिववचनम् । 'अहं च भवतो वक्त्रात्कल्पान्ते घोररूपधृक् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रक'इति । 'अनादिनिधनो देवः चैतन्यादिसमन्वितः । ज्ञानानि च वशे यस्य तारकादीन्यशेषतः । अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् । सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः । ततोप परमं घोरं ततो विप्राश्चतुर्मुखः । सृष्ट्यर्थं ब्रह्मणस्तस्य भ्रुवो घ्राणस्य मध्यतः । अविमुक्ताभिधाद्देशात्स्वकीयात्तु विशेषतः । त्रिमूर्तीनां महेशस्य द्विजा वेदान्तवित्तमाः । अंशभूतो महादेवः सर्वलोकनमस्कृतः। अर्धनारीश्वरो भूत्वा प्रादुरासीत्कृपानिधिः। तस्य हृत्कमलस्थस्य नियोगादंशजो

पुनराशङ्क्याह—

॥ सू ॥ कामाच्च नानुमानापेक्षा ॥ १९ ॥

'प्रजापतिरकामयत प्रजास्सृजेयेति' ( तै. सं. ३-१-१. ) इति सर्वत्र श्रुतिषु संकल्पो हिरण्यगर्भस्य जगत्सृष्टौ श्रूयते । तथाऽपि तस्य जगत्कारणत्वे अनुमानापेक्षा युक्त्यपेक्षा नास्ति, तस्य कामस्यावान्तरसृष्टिविषयत्वात् । परमेश्वरस्यैव हिरण्यगर्भात्मना अवान्तरसृष्टिश्चेति वक्ष्यति— 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' ( ब्र. सू. २-४-२०. ) इति ॥

'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, ( छा. ६-३. ) इति हिरण्यगर्भरूपेणात्मना प्रपञ्चानुप्रविष्टस्य परमेश्वरस्य नामरूपकर्तृत्वश्रवणात् अनयोरभेद एवाभ्युपेय इत्यत आह–

॥ सू ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

अस्मिन् उपनिषत्तन्त्र एव अस्य हिरण्यगर्भस्य तद्योगं तस्य परमेश्वरस्य

---

विभोः । ललाटं तस्य निर्भिद्य प्रादुरासीत्प्रभोर्मुखात् । निर्दिष्टः परमेशेन महेशो नीललोहितः । पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोऽनुज'इत्यादिमहाभारतस्कान्दलैङ्गशैवपुराणादिवचनानि चात्र द्रष्टव्यानि । तस्मात्त्रिमूर्तीनां परस्परस्मादुत्पत्तिसत्त्वेऽपि ब्रह्मविष्णुरुद्रादिक्रमिकसर्वप्रपञ्चकारणं संसाररुजां द्रावकः परमशिव एवेति तद्विषयस्य 'यो देवाना'मिति मन्त्रस्य नार्थान्तरकल्पनशङ्कावकाश इति । अथोत्तरसूत्रमवतारयति–पुनराशङ्क्येति । आशङ्काभिप्रायः पूर्वसूत्रावतारिकायां दर्शितः ॥ सू ॥ कामाच्च नानुमानापेक्षा ॥ १९ ॥ जगत्कारणत्व इति । जगत्कारणशिवाभिन्नत्वे यदनुमानं तत्रादरो न कार्य इत्यर्थः । अवान्तरसृष्टिः देवमनुष्यादिव्यष्टिसृष्टिः । तत्रापि न हिरण्यगर्भस्य स्वातन्त्र्यम् । किं तु तदन्तर्यामिणश्शिवस्यैवेति वक्ष्यमाणार्थं स्मारयति–परमेश्वरस्यैवेति । तथाच यदि सर्गाद्यकालसृष्टिहेतुः यदि वार्वाचीनकतिपयसृष्टिहेतुकामनावत्त्वम् उभयथा हेतुरसिद्ध इति भावः । सौत्रेण चकारेण श्रौतं ब्रह्मशिवशब्दसामानाधिकरण्यं पौराणिकं प्रथमं ब्रह्मत्वेन दृष्टस्य पुनश्शिवत्वेन दर्शनं चेत्येतदपि ब्रह्मशिवाभेदसाधकत्वेन नादरणीयम् । शरीरशरीरिभावादिना सर्वात्मकत्वेन तदुभयोपपत्तेरिति समुच्चीयते । यत्रादित्यरूपस्य हिरण्यगर्भस्य शिवरूपेणापि दर्शनमुक्तं तत्रैव हि कूर्मपुराणे तयोर्भेदोऽपि प्रतिपाद्यते । 'विद्यासहायो भगवान्यस्यासौ मण्डलान्तरे । हिरण्यगर्भः पुत्रोऽसावीश्वरो दृश्यते पर'इति । विद्यासहायो भगवानसौ मण्डलान्तरे स्थितो हिरण्यगर्भो यस्य पुत्रः असौ परमेश्वरो दृश्यत इत्यन्वयः ॥ उत्तरसूत्रमवतारयितुमाशङ्कते–अनेनेति । नामरूपव्याकरणं तावच्चतुर्मुखकर्तृकमिति सकलपुराणाद्यैककण्ठ्येन प्रसिद्धम् । तत्र पारमेश्वरोत्तमपुरुषप्रयोगेन परमेश्वरस्य कर्तृत्वं वदन्ती श्रुतिः परमेश्वरस्य तच्छरीरत्वेन तदभेदेन वोपपादनीया । तच्छरीरकत्वपक्षे 'जीवेनात्मने'ति सामानाधिकरण्यानुपपत्तेरभेदपक्ष एव परिशिष्यत इति भावः ॥ सू ॥ अस्मिन्नस्य च तद्यो-

**शेषत्वसंबन्धं शास्ति मन्त्रभागः–'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' (महाना. २१.) । इति । अतः परमेश्वर एव जगत्कारणं, तच्छेषभूतो हिरण्यगर्भ इति सिद्धम् ॥**

**॥ इति इतरानुपपत्त्यधिकरणम् ॥ ७ ॥**

---

**गं शास्ति ॥ २० ॥ ब्रह्माधिपतिरिति । 'ईशानस्सर्वविद्यानामि'त्यनेन वेदाधिपत्यस्य 'ईश्वरः सर्वभूताना'मित्यनेन ब्राह्मणाधिपत्यस्य च सिद्धत्वादिहाभ्यासेन हिरण्यगर्भाधिपत्यमेव विधीयते । श्रुत्यन्तरापातप्रतिपन्नतदुत्कर्षतदभेदभ्रान्तिवारणायेति भावः। जीवविषयात्मशब्दप्रयोगोपपत्तिस्तु संज्ञामूर्तिक्लृप्त्यधिकरणे (ब्र० २।८।१७ सू ) प्रदर्शयिष्यते ॥**

**॥ इति इतरानुपपत्त्यधिकरणम् ॥ ७ ॥**

---

## नयमणिमालायाम्

### अथ इतरानुपपत्त्यधिकरणम् ॥ ७ ॥

**सू० ॥ नेतरोऽनुपपत्तेः ॥ १७ ॥ भेदव्यपदेशाच्च ॥ १८ ॥ कामाच्च नानुमानापेक्षा ॥ १९ ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥**

ब्रह्मा यतः प्रसूतेत्यादौ कारणतया समाम्नाताः । तदुपक्रमोपसंहृतिमध्यश्रुतिभिस्सलिङ्गाभिः ॥ १९ ॥
मैवं मोक्षप्रदत्वाद्यनितरसुरसाधारणं शम्भुलिङ्गं लिङ्गे त्वन्तस्समुद्रश्रुतिसमधिगते नास्त्यसाधारणत्वम् ।
दृष्टास्तादृशंकरेऽपि श्रुतय इति ततो योगवृत्त्यैव योज्या नाभेदेनोपपाद्याः शिवजनिततया तस्य भेदोपदेशात् ॥२०॥
धातुस्सृष्ट्यर्थकामश्रुतिभिरनुमितिस्तद्वदीशाविभेदे नापेक्षावांतरेषु प्रभवति हि जगत्स्राष्टिभेदेषु सोऽपि ।
यज्जीवेनात्मनेति श्रुतिवचनमनेनापि नाभेदसिद्धिः तस्यात्र ब्रह्मणोऽसावधिपतिरिति यच्छास्ति शेषत्वयोगम्॥२१॥

**इति इतरानुपपत्त्यधिकरणम् ॥ ७ ॥**

## सूत्रार्थचन्द्रिकायाम्

### अथानन्दमयाधिकरणम् ॥ ६ ॥

**सू. । आनन्दमयोऽभ्यासात् ॥ १२ ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥ तद्धेतुव्यपदेशाच्च ॥ १४ ॥ मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥ नेतरोऽनुपपत्तेः ॥ १६ ॥ भेदव्यपदेशाच्च ॥ १७ ॥ कामाच्च नानुमानापेक्षा ॥ १८ ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥**

**भगवत्पादमते,** इदं सूत्राष्टकमेकमधिकरणम् । इत्थं सर्वेषां वेदान्तवाक्यानामुपास्तिविधिद्वारा साक्षाच्च निर्विशेषब्रह्मपरत्वे सिद्धेऽप्यधुना निर्विशेषवाक्यविचारात्मकमिदमधिकरणमारभते—**आनन्दमयोऽभ्यासादिति** । अस्याधिकरणस्य एकदेशीयमतरीत्या स्वमतरीत्या च वर्णकद्वयमुपन्यस्तं शाङ्करभाष्ये । एकदेशीयमते वर्णकं यथा—**आनन्दमयः**= तैत्तिरीये 'अन्योऽन्तर आत्मानन्दमय' इत्यत्र श्रुतानन्दमयशब्दवाच्यः परमात्मैव । कुतः । **अभ्यासात्**=आनन्दमयशब्दस्य ब्रह्मण्येव बहुकृत्वोऽभ्यासादिति सूत्रार्थः । अस्य तैत्तिरीये श्रुतम् 'अन्नमय' इत्याद्युपक्रान्तम् 'अन्योऽन्तर आत्मानन्दमय' इत्यन्तं वाक्यं विषयः । अत्र आनन्दमयशब्देन किं 'सत्यं ज्ञान' मिति प्रकृतं परं ब्रह्मोच्यते किं वान्नमयादिवद्ब्रह्मणोऽर्थान्तरं जीव इति संशयः । अन्नमयाद्यमुख्यात्मप्रवाहपठितत्वात् प्रियाद्यवयवयोगात् शारीरत्वश्रवणाच्च आनन्दमयशब्दवाच्यो ब्रह्मणोऽर्थान्तरं जीव एवेति पूर्वः पक्षः ॥

आनन्दमयं प्रकृत्य 'रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । सैषानन्दस्य मीमांसा भवति' । 'एतमन्नमयमात्मानमुपसंक्रामति' 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति । आनन्दो ब्रह्मेति व्यजाना'दित्यादिना आनन्दशब्दस्य ब्रह्मण्येव बहुकृत्वोऽभ्यासादानन्दमयस्यान्नमयाद्यमुख्यात्मप्रवाहपाठेऽपि स्थूलारुन्धतीन्यायेन सर्वान्तरत्वेनान्ततो मुख्यात्मोपदेशस्यैव सुश्लिष्टत्वात्प्रियाद्यवयवयो-

गस्यातीतानन्तरोपाधिजत्वेन स्वाभाविकत्वानङ्गीकाराच्छारीरत्वस्य चान्नमयादिशरीरपरंपराप्रदर्श्यमानत्वेनौपचारिकत्वाभ्युपगमाच आनन्दमयशब्दवाच्यः परमात्मैवेति सिद्धान्तः ॥ १२ ॥

**विकारशब्दान्नेति चेन्न प्राचुर्यात्** ॥१३॥ **विकारशब्दान्नेति चेत्**=विकारार्थकमयडन्तान्नमयादिप्रायपाठादानन्दमयशब्देऽपि मयटो विकारार्थत्वेन ब्रह्मणश्चानन्दविकारत्वानुपपत्तेः आनन्दमयस्य न ब्रह्मत्वमिति चेत् । **न**=तथा न भवति । कुतः । **प्राचुर्यात्**=आनन्दमयशब्दे मयटः प्राचुर्यार्थकत्वात् । स्मर्यते हि 'तत्प्रकृतवचने मय'डिति प्राचुर्यार्थेऽपि मयट्प्रत्ययः । यथा अन्नमयो यज्ञ इत्यन्नप्रचुर उपचर्यते एवमानन्दप्रचुरं ब्रह्मानन्दमयशब्देनोच्यते । ब्रह्मण आनन्दप्रचुरत्वं तावत् मनुष्यत्वादारभ्योत्तरोत्तरस्मिन्स्थाने शतगुण आनन्द इत्युक्त्या ब्रह्मानन्दस्य निरतिशयत्वावधारणात्सिद्ध्यति ॥ १३ ॥

**तद्धेतुव्यपदेशाच्च** ॥ १४ ॥ इतश्च प्राचुर्यार्थे मयट् । चकारोऽनुक्तसमुच्चयार्थः । तच्चानुक्तं ब्रह्मानन्दस्य निरतिशयत्वावधारणमेव । तच्च निरूपितं पूर्वसूत्रार्थवर्णनावसाने । 'एष ह्येवानन्दयाति' इति ब्रह्मण आनन्दहेतुत्वस्य श्रुत्या व्यपदिश्यमानत्वाच्चानन्दमयशब्दे मयट्प्राचुर्यार्थकः । तस्मादानन्दमयः परमात्मा ॥ १४ ॥

इतश्चानन्दमयः पर एवेत्याह— **मान्त्रवर्णिकमेव च गीयते** ॥ १५ ॥ 'ब्रह्मविदाप्नोति पर' मित्युपक्रम्य 'सत्यं ज्ञानमनन्तं ब्रह्मे' त्यस्मिन्मन्त्रे यत्सत्याद्यात्मकं सर्वान्तरं ज्ञेयत्वेनोक्तं तन्मान्त्रवर्णिकं ब्रह्मैवानन्दमय इति ब्राह्मणे गीयते । मन्त्रब्राह्मणयोरैकार्थ्यादित्यर्थः ॥ १५ ॥

इतश्चानन्दमयः परो न जीव इत्याह— **नेतरोऽनुपपत्तेः** ॥ १६ ॥ **इतरः**=ईश्वरादन्यः । **न**=आनन्दमयो न भवति । कुतः । **अनुपपत्तेः**='सोऽकामयत बहु स्यां प्रजायेये' त्यादिश्रूयमाणस्य सृष्टेः प्राक्कामयितृत्वस्रष्टृत्व्यात्मकत्वादेरनुपपत्तेः । इत्यर्थः ॥ १६ ॥

इतश्च नानन्दमयो जीव इत्याह— **भेदव्यपदेशाच्च** ॥ १७ ॥ 'रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति' इति जीवानन्दमययोर्लब्धृलब्धव्यत्वरूपेण भेदेन व्यपदिश्यमानत्वादित्यर्थः ॥ १७ ॥

ननु तर्ह्यानन्दमयशब्देन प्रधानमुच्यतां तत्राह— **कामाच्च नानुमानापेक्षा** ॥ १८ ॥ अनुमीयत इत्यनुमानमनुमानैकगम्यं प्रधानं तस्य **नापेक्षा**=आनन्दमयत्वेनात्र न स्वीकारः । कुतः । **कामात्**=तदधिकारे 'सोऽकामयते'तिगादित्यर्थः । अत्र प्रधाननिराकरणं गतिसामान्यप्रदर्शनाय प्रासङ्गिकमिति बोध्यम् ॥ १८ ॥

इतश्च नानन्दमयः प्रधानं जीवो वा इत्याह— **अस्मिन्नस्य च तद्योगं शास्ति** ॥ १९ ॥ **अस्मिन्**=आनन्दमये प्रकृत आत्मनि । **अस्य**=प्रबुद्धस्यास्य जीवस्य । **तद्योगं**=तदात्मना योगं तद्भावापत्तिरूपां मुक्तिम् । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये'इत्यादि शास्त्रं **शास्ति** । तस्मान्नानन्दमयो जीवः प्रधानं वा किं तु परमात्मैवेत्यर्थः ॥ इदं तु एकदेशीयमतम् ॥१९॥

भगवत्पादीयमते त्वित्थं सूत्रयोजना । अत्र सौत्रेणानन्दमयपदेन तद्वाक्यस्थं ब्रह्मपदं लक्ष्यते । अतः **आनन्दमयः**= आनन्दमयवाक्ये 'ब्रह्म पुच्छं प्रतिष्ठे'त्यत्र श्रुतो ब्रह्मशब्दः स्वप्रधानब्रह्मपरः नानन्दमयावयवपरः । कुतः । **अभ्यासात्**= 'असन्नेव स भवति' इति श्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वादित्यर्थः । अत्रानन्दमयवाक्यगते 'ब्रह्म पुच्छं प्रतिष्ठे' त्यत्र किमानन्दमयावयवत्वेन ब्रह्मोच्यते उत स्वप्रधानत्वेनेति संदेहः । ब्रह्मणः 'ब्रह्म पुच्छं प्रतिष्ठे'ति आनन्दमयस्य पुच्छरूपावयवत्वेन निर्देशात् ब्रह्मपदं तदवयवभूतब्रह्मपरमिति पूर्वः पक्षः । 'असन्नेव स भवती' त्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वादानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयववत्त्वेन ब्रह्मणस्सविशेषतापत्त्या वाक्यशेषे वाङ्मनसयोरगोचरत्वाभिधानान्निर्विशेषत्वस्य श्रवणात् पुच्छशब्दस्य लक्षणया पुच्छवत्पुच्छमित्याधारपरत्वाभ्युपगमाच्च पुच्छवाक्यस्थं ब्रह्मपदं स्वप्रधानब्रह्मपरमेव नानन्दमयावयवपरमिति सिद्धान्तः ॥ तस्मादन्नमयादिष्विवानन्दमयेऽपि मयड्विकारार्थ एव विज्ञेयो न प्राचुर्यार्थः । सूत्राण्यन्यान्यप्येवं व्याख्येयानि ॥ १२ ॥

यत्तु पुच्छशब्दस्यावयवपरत्वमिति तत्राह— **विकारशब्दादिति** । **विकारशब्दात्**=अवयवपरपुच्छशब्दात् तत्समानाधिकरणब्रह्मशब्दो न स्वप्रधानब्रह्मपर इति चेन्न । **प्राचुर्यात्**=अवयवप्राये वचनात् पुच्छमित्युच्यते नावयवविवक्षया । अतः प्रतिष्ठासमभिव्याहारात् पुच्छशब्दस्याधारपरतया स्वप्रधानत्वेन ब्रह्मोच्यत इत्यर्थः ॥ १३ ॥

इतश्च पुच्छशब्दस्याधारपरत्वमित्याह— **तद्धेत्विति** । तस्य ब्रह्मणः स्वविकारजातं प्रति हेतुत्वेन 'इदं सर्वमसृजत यदिदं किंचे'ति वाक्ये व्यपदेशादित्यर्थः । न हि कारणस्य ब्रह्मणः स्वविकारस्यानन्दमयस्यावयवत्वं. मुख्यया वृत्त्योपपद्यते । अतः पुच्छपदमाधारपरमेव ॥ १४ ॥

इतश्च पुच्छवाक्ये ब्रह्म स्वप्रधानमित्याह— **मान्त्रवर्णिकमिति** । 'यत्सत्यं ज्ञानमनन्त' मित्यादिमन्त्रवर्णप्रतिपाद्यं ब्रह्म तदेव 'ब्रह्म पुच्छ' मिति ब्राह्मणवाक्ये स्वप्राधान्येन गीयते । मन्त्रब्राह्मणयोरैकार्थ्यादित्यर्थः ॥ १५ ॥

नन्रु पुच्छवाक्ये आनन्दमयः स्वप्रधानत्वेन प्रतिपाद्यः किं न स्यादित्याह—**नेतर इति**। इतरः आनन्दमयोऽत्र न प्रतिपाद्यः। प्रियादिमत्त्वेनाग्रिमवाक्योक्तस्रष्टृत्वाद्यनुपपत्तेरित्यर्थः ॥ १६ ॥

इतश्च नानन्दमयोऽत्र प्रतिपाद्य इत्याह—**भेदव्यपदेशाच्चेति**। 'रसं ह्येवायं लब्ध्वानन्दी भवति' इति आनन्दमयब्रह्मणोर्लब्धृलब्धव्यत्वेन रूपेण भेदव्यपदेशादित्यर्थः ॥ १७ ॥

नन्वानन्दो ब्रह्मेत्यत्रानन्दस्य ब्रह्मत्वादानन्दमयस्यापि ब्रह्मत्वमनुमीयत इत्यत आह—**कामाच्चेति**। काम्यत इति काम आनन्दः तस्य ब्रह्मत्वदर्शनान्नानुमानेनानन्दमयस्यापि ब्रह्मत्वमपेक्षितव्यं विकारार्थकमयड्विरोधादित्यर्थः ॥ १८ ॥

इतोऽपि नानन्दमयोऽत्र प्रतिपाद्य इत्याह—**अस्मिन्नस्येति**। अस्मिन्=पुच्छवाक्योक्ते ब्रह्मणि। अस्य=प्रवुद्धस्यास्यानन्दमयस्य। 'यदा ह्येवेति' शास्त्रं तद्योगं तद्भावापत्तिं शास्ति। अतोऽत्रानन्दमयस्याप्रतिपाद्यत्वात् पुच्छब्रह्मैव निर्विशेषं स्वप्रधानत्वेन ज्ञेयतया प्रतिपाद्यमित्यर्थः ॥ १९ ॥

**श्रीकण्ठमते,** इदमानन्दमयाधिकरणं सूत्रचतुष्टयात्मकमन्यन्नेतर इत्यादिसूत्रचतुष्टयमधिकरणान्तरमिति बोध्यम्। इह शास्त्रैकसमधिगम्यस्य ब्रह्मलक्षणस्य जगत्कारणत्वस्य तान्त्रिके प्रधानेऽतिव्याप्तिमाशङ्क्य चेतनत्वादिहेतुना परिहृता। अचेतने प्रधान इव चेतनेऽपि जीवे तन्नातिव्याप्तमिति वक्तुमधिकरणान्तरमारभते—**आनन्दमयोऽभ्यासात्** ॥ १३ ॥ अस्य, तैत्तिरीये आनन्दवल्ल्यां श्रुतं 'तस्माद्वा एतस्मादात्मन आकाशस्संभूत' इत्यारभ्य 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मानन्दमय' इत्यन्तं वाक्यं विषयः। अत्रानन्दमय आत्मा जीवो वा परमेश्वरो वा इति सन्देहः। 'पृथिव्या ओषधयः' इत्यादिना पञ्चावयवशरीरादिनिरूपणात् अन्नमयप्राणमयमनोमयविज्ञानमयशब्दवाच्यानामन्नप्राणमनोबुद्धीनामाश्रयत्वोपपत्तेः मयट्छब्दस्य विकारार्थत्वेन 'आनन्दो ब्रह्मेति' आनन्दशब्दवाच्यतया श्रुतस्य ब्रह्मणः कार्यतया आनन्दविकारत्वोपपत्तेः परमेश्वरत्वाङ्गीकारे शुद्धिप्रार्थनावैयर्थ्यापत्तेश्च अयमानन्दमय आत्मा जीव एव न परमेश्वर इति पूर्वः पक्षः।

सिद्धान्तस्तु, **आनन्दमयो**ऽयमात्मा परमेश्वर एव। कुतः। **अभ्यासात्**='सैषानन्दस्ये' त्यादिना 'स एको ब्रह्मण आनन्द' इत्यन्तेनास्यानन्दस्य निरतिशयत्वेनाभ्यस्यमानत्वात्। न हि तदेतन्निरतिशयानन्दभाजनत्वं संसारिणो जीवस्य संभवति। यथा प्रकृष्टप्रकाशस्य चन्द्रस्य तिरोधायकमेघापगम एव प्रसादस्तथा नित्यशुद्धस्यानन्दमयवाच्यस्य ब्रह्मणः तिरोधानमलापनयनमेव शुद्धिरित्यङ्गीकारान्नानन्दमयस्य परमेश्वरत्वे तच्छुद्धिप्रार्थनावैयर्थ्यम् ॥ १३ ॥

नन्रु आनन्दस्यैव ब्रह्मत्वश्रवणात् विकारार्थकमयडन्तानन्दमयवाच्यः परमेश्वर इत्यभ्युपगमे परमेश्वरस्य ब्रह्मभिन्नत्वापत्तिर्विकाररूपत्वादनित्यत्वं च प्राप्नोतीत्याशङ्क्याह—**विकारशब्दान्नेति चेन्न प्राचुर्यात्** ॥१४॥ अन्नमयादीनामन्नादिविकारत्ववदानन्दमयस्यापि आनन्दविकारत्वेन परमेश्वरस्य विकारत्वासंभवान्नायं परमेश्वरः किं तु जीव एवेति चेत्। न। मयट्शब्दस्यात्र प्राचुर्यार्थकत्वात्। यतस्तत्र अन्नमयप्राणमयमनोमयेष्वेव मयड्विकारार्थः। विज्ञानमयानन्दमययोर्मयटः प्राचुर्यार्थत्वेन ताभ्यां तत्तत्प्रचुरौ जीवपरमेश्वरौ प्रतिपाद्येते ॥

सर्वथा विकारप्रकरणपाठात्तयोरपि विकारार्थत्वमेव न्याय्यमित्याशङ्क्याह—**तद्धेतुव्यपदेशाच्च** ॥ १५ ॥ 'एष ह्येवानन्दयाति' इति जीवान्प्रत्यानन्दहेतुत्वमानन्दमयस्य श्रूयते। स्वयं प्रचुरानन्दतायां हि तस्य परानन्दयितृत्वं युज्येत। अतः आनन्दमयः परमेश्वर एव ॥ १५ ॥

आनन्दमयस्यानन्दप्रचुरपरमेश्वरार्थकत्वेऽपि 'ब्रह्म पुच्छं प्रतिष्ठे' त्यस्य ब्रह्माधारत्वश्रवणात् ब्रह्मणोऽन्यत्वमेवावगम्यते। ब्रह्मणस्तदन्यत्वाङ्गीकारे अस्वातन्त्र्याज्जगत्कारणत्वासंभवापत्त्या जीवपक्ष एव युक्त इत्यत आह—**मान्त्रवर्णिकमेव च गीयते** ॥१६॥ य'त्सत्यं ज्ञानमनन्त' मिति मन्त्रवर्णोदितं ब्रह्म तदेव ब्राह्मणवाक्येऽपि आनन्दप्रचुरतया आनन्दमय इति गीयते। पुच्छवाक्यस्थब्रह्मपदस्य प्रणववाचकत्वेन तस्य परमेश्वरवाचकत्वादाधारत्वं युज्यते। अत्र केचित् 'सत्यंज्ञान'मित्यादि श्रुतं जगत्कारणं विश्वाधिकं परं ब्रह्म नानन्दमयशब्दवाच्यम्। किंतु। 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यादिना आकाशादिप्रपञ्चप्रकृतित्वेन श्रुतः परमाकाशः आनन्दमयशब्दवाच्यः। अस्यैव 'ब्रह्म पुच्छं प्रतिष्ठे'ति ब्रह्म आधारत्वेनावगम्यते। अयमेव 'स एको ब्रह्मण आनन्द' इति ब्रह्मधर्मत्वेन 'आनन्दाद्ध्येव खल्विमानि भूतानी'त्यादिना सकलभूतप्रकृतित्वेन चाभिधीयते। आनन्दस्य ब्रह्मत्वव्यपदेशस्तु धर्मधर्मिणोरभेदाभिप्रायेण। अतः ब्रह्मधर्मस्वभावः प्रकृत्यात्मा परमाकाशरूपा परमशक्तिरानन्दमयः। विज्ञानमयश्च तदुपासको जीवः। आधाराधेययोर्धर्मधर्मिणोः भेदादर्शनादानन्दमय आत्मा ब्रह्मेत्यभिप्रायेण 'आनन्दमयोऽभ्यासा' दितिसूत्रकार स्सूत्रमसूत्रयदिति च वर्णयन्ति। अन्ये पुनः अन्नमयादीनामात्मत्वश्रवणात् मुक्तस्य क्रमप्राप्यत्वावगमाच्च अन्नमयादय आत्मानः पञ्चभूताधिष्ठातारः ब्रह्मविष्णुरुद्रेश्वरसदाशिवसंज्ञाः पञ्च कारणपुरुषाः। तेषु अन्नमयादीनां चतुर्णामाधारस्य सदाशिवस्यानन्दमयस्यापि कारणभूतस्य परमशिवाख्यस्य ब्रह्मणः तत्प्रतिष्ठात्वोपपत्तिः। तदभेदादानन्दमयस्य ब्रह्मत्वोपदेश इति च निरूपयन्ति। अतः सर्वथा आनन्दमयः परमेश्वर इति सिद्धम् ॥ ॥ **इत्यानन्दमयाधिकरणम्** ॥६॥

## अथ इतरानुपपत्त्यधिकरणम् ॥ ७ ॥

ब्रह्मलक्षणस्य जगत्कारणत्वस्य प्रधानजीवयोरतिव्याप्तिं पूर्वाधिकरणाभ्यां निराकृत्य अधुना जीवसमष्टिरूपे हिरण्यगर्भे तामाशङ्क्य परिहरति—**सू. । नेतरोऽनुपपत्तेः ॥ १७ ॥** 'यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्याम् । 'यदोषधीभिः पुरुषान्पशूंश्च विवेश भूतानि चराचराणि ।' इति महोपनिषद्वाक्यमस्य विषयः । अत्र सकलजगत्प्रसूत्यादिहेतुत्वेन श्रूयमाणः पुरुषः परमेश्वरो वा अन्यो वेति संशयः । उपक्रमोपसंहारानुगुण्येन अवान्तरवाक्यसिद्धसर्वधर्माणां हिरण्यगर्भे उपपद्यमानतया समुद्रशायित्वसर्वान्तर्यामित्वचन्द्रसूर्यादिस्रष्टृत्वादिबोधकप्रजापतिधात्रादिशब्दघटितवाक्यबलात् हिरण्यगर्भ इदंवाक्यप्रतिपाद्य इति पूर्वः पक्षः । इतरः परमेश्वरादन्यो हिरण्यगर्भोऽत्र न प्रतिपाद्यः । जगत्प्रसूतिहेतुत्वादीनां परमेश्वरधर्माणां तस्मिन्ननुपपत्तेः । इति सूत्रार्थः । जगत्प्रसूतिहेतोस्तस्य सर्वोत्कृष्टत्वस्य तमसः परस्तादिति प्रकृतिमण्डलात्परत्वस्यच श्रूयमाणतया तयोः अण्डान्तर्वर्तिनि हिरण्यगर्भे असम्भवात् मुक्तिहेतुत्वरूपासाधारणपरमेश्वरलिङ्गात् प्रजापत्यादिशब्दानामनुपपत्त्या परमेश्वरप्रतिपादकत्वात् विश्वेश्वरत्वविश्वातीतत्वलिङ्गात् उपक्रमोपसंहारवाक्ययोरपि परमेश्वरपरत्वावगमाच जगत्कारणत्वादिना अत्र प्रतिपाद्यः प्रजापतिशब्दवाच्यः परमेश्वरः न हिरण्यगर्भ इति सिद्धान्तः ॥ १७ ॥

ननु परमेश्वरहिरण्यगर्भयोरभेदात् तस्यैवास्तु जगत्कारणत्वमित्यत आह—**सू. । भेदव्यपदेशाच्च ॥ १८ ॥** अस्यामेवोपनिषदि ' यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानम् ' इत्यादिना कारणत्वेन कार्यत्वेन च परमेश्वरहिरण्यगर्भयोः भेदो व्यपदिश्यते । अतः हिरण्यगर्भादेः सर्वप्रपञ्चस्य कारणत्वमीश्वरस्येति सिद्धम् ॥ १८ ॥

पुनराशङ्क्याह—**सू. । कामाच्च नानुमानापेक्षा ॥ १९ ॥** 'प्रजापतिरकामयत प्रजास्सृजेयेति' इत्यादिना हिरण्यगर्भस्य सृष्टिसङ्कल्पश्रवणेऽपि तस्य जगत्कारणत्वे **अनुमानापेक्षा**=युक्त्यपेक्षा नास्ति । तस्य कामस्यावान्तरसृष्टिविषयत्वात् । परमेश्वरस्यैव तदात्मना अवान्तरसृष्टिश्च इति वक्ष्यमाणत्वाच्च ॥ १९ ॥

'अनेन जीवेनात्मने' त्यादिना हिरण्यगर्भरूपेण प्रपञ्चानुप्रविष्टस्य परमेश्वरस्य नामरूपव्याकर्तृत्वश्रवणात् अनयोरभेद एवेत्यत आह—**सू. । अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥ अस्मिन्**=उपनिषत्तन्त्रे **अस्य**=हिरण्यगर्भस्य **तद्योगं**=तस्य परमेश्वरस्य शेषत्वसम्बन्धं मन्त्रभागः चास्ति 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपति'रिति । ततः परमेश्वर एव जगत्प्रसूतिहेतुः हिरण्यगर्भस्तु तच्छेषभूत इति सिद्धम् ॥ २० ॥ **इतरानुपपत्त्यधिकरणम् ॥ ७ ॥**

**रामानुजमते,** पूर्वं ब्रह्मलक्षणस्य अचेतनात्प्रधानात् व्यावृत्तिरुक्ता । इदानीमहंप्रत्ययसिद्धे जीवात्मनि अवतरन्ती —**सू. । आनन्दमयोऽभ्यासात् ॥ १३ ॥** विषयवाक्यं समानमेव । अत्र आनन्दमयः परमात्मा वा जीवो वा इति सन्देहः । शारीरत्वश्रवणात् अविद्यापरिकल्पितविविधविचित्रदेवादिभेदभिन्नजीवात्मस्वाभाविकरूपस्य अखण्डैकरससुखैकतानत्वात् आनन्दमयः जीव एव । इति पूर्वः पक्षः । सिद्धान्तस्तु 'सैषानन्दस्ये'त्यादिना 'यतो वाचो निवर्तन्त' इत्यन्तेन निरतिशयत्वेनाभ्यस्यमानस्य आनन्दस्य अनन्तदुःखमिश्रपरिमितसुखलवभाजि जीवात्मन्यसम्भवात् निखिलहेयप्रत्यनीकानन्तकल्याणगुणरत्नाकरायमाणः विज्ञानमयशब्दाभिधेयात् जीवात्मनो विलक्षणः अखण्डानन्दरसभाजनं पुरुषोत्तमः परमात्मैवानन्दमय इति । **आनन्दमयः** परमात्मा । कुतः । **अभ्यासात्**=तदानन्दस्यैव निरतिशयत्वेनाभ्यस्यमानत्वात् । इति सूत्रार्थः ॥ १३ ॥

प्रकारान्तरेणानन्दमयस्य परमात्मपरतामाक्षिप्य समाधत्ते—**सू. । विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १४ ॥** विकारार्थमयडन्तान्नमयादिसाहचर्यात् अत्रापि विकारार्थत्वस्यौचित्यात् मयटस्तस्मिन्नेवार्थे प्रयोगबाहुल्याच्च आनन्दविकारत्वस्य परमात्मन्यनुपपत्तेश्च नानन्दमयः परमात्मेति चेत् न । **प्राचुर्यात्**=प्राचुर्यार्थेऽपि मयटस्सम्भवात् । निरतिशयत्वेनाभ्यस्यमानानन्दस्य जीवाश्रयत्वासम्भवात् ब्रह्माश्रयत्वनिश्चये सति ब्रह्मणि विकारासम्भवात् प्राचुर्येऽपि मयड्विधिसम्भवाच्च आनन्दमयः परमात्मैवेति ॥ १४ ॥

इतश्च जीवादन्य आनन्दमयः । **सू. । तद्धेतुव्यपदेशाच्च ॥ १५ ॥** 'एष ह्येवानन्दयाती'ति जीवानामानन्दहेतुत्वं व्यपदिश्यते । अतश्च आनन्दयितव्याज्जीवात् आनन्दयिता अयमन्य आनन्दमयः परमात्मा इति सिद्धम् ॥ १५॥

इतश्च जीवादन्य आनन्दमयः । **सू. । मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥** 'सत्यं ज्ञान' मिति मन्त्रवर्णोदितं ब्रह्मैव आनन्दमय इति गीयते । तत्परं ब्रह्म जीवस्वरूपादन्यदेव ॥ १६ ॥

ननु यद्यपि उपासकात्प्राप्यस्य भेदेन भवितव्यम् । ब्रह्मणः जीवसम्बन्धिचिन्मात्रशुद्धस्वरूपानन्यत्वात् तस्यैव मान्त्रवर्णिकत्वाच्च जीवादनतिरिक्त एवानन्दमय इति चेत् तत्राह—**सू. । नेतरोऽनुपपत्तेः ॥ १७ ॥ इतरः**=परमात्मनोऽन्यः जीवशब्दाभिधेयः मुक्तावस्थोऽपि । **न**=मान्त्रवर्णिको न भवति । कुतः । **अनुपपत्तेः**=सत्यसङ्कल्पत्वादिकस्य निरुपाधिकस्य विपश्चित्त्वस्य मुक्तावस्थेऽपि तस्मिन्ननुपपत्तेः ॥ १७ ॥

इतश्च उभयावस्थाज्जीवादन्य आनन्दमयः ॥ **सू. ॥ भेदव्यपदेशाच्च ॥ १८ ॥** 'तस्माद्वा एतस्मादात्मन'इत्यारभ्य मांत्रवर्णिकं ब्रह्म व्यञ्जयत् वाक्यं अन्नप्राणमनोभ्य इव विज्ञानमयाज्जीवादपि 'अन्योऽन्तर आत्माऽऽनन्दमय'इति भेदं व्यपदिशति । अतः मान्त्रवर्णिक आनन्दमयः जीवादन्य एव ॥ १८ ॥

इतश्च जीवादन्य आनन्दमयः । **सू. । कामाच्च नानुमानापेक्षा ॥ १९ ॥** 'सोऽकामयत बहु स्यां प्रजायेये' ति अचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुसृष्टिसामर्थ्यसम्भवात् जगत्सृजतः अस्यानन्दमयस्य आनुमानिकाचिद्वस्तुसंसर्गापेक्षा न प्रतीयते । अविद्यापरवशस्य जीवस्य जगत्कारणत्वे तु अवर्जनीया खलु सा । अतः जीवादन्य एवायमानन्दमयः ॥ १९ ॥

इतश्च जीवादन्य आनन्दमयः । **सू. अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥ अस्मिन्**=आनन्दमये । **अस्य**=जीवस्य । **तद्योगम्**=आनन्दयोगं शास्ति । 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवती'ति रसशब्दाभिधेयानन्दमयलाभात् अस्य जीवस्य आनन्दित्वप्रतिपादनात् प्रधानार्थान्तरभूतस्य परस्य ब्रह्मणः जीवादपि अर्थान्तरत्वं सिद्धम् ॥ २० ॥

**आनन्दतीर्थमते,** पूर्वं समन्वयाधिकरणे विष्णोः शास्त्रगम्यत्वे हेतुत्वेन सिद्धवदुपन्यस्तस्य सर्ववेदान्तसमन्वयस्य तत्तद्वाक्यविशेषोदाहरणपूर्वकं पूर्वोत्तरपक्षप्रथनादिना स्थिरीकरणार्थमध्यायशेषस्यारम्भः । तत्र तैत्तिरीये श्रुतमानन्दमयवाक्यमुदाहृत्य विचार्यते–**सू. । आनन्दमयोऽभ्यासात् ॥१२॥ आनन्दमयः**=आनन्दमयादिशब्दवाच्यः विष्णुरेव । न प्रकृत्यादिः। कुतः । **अभ्यासात्**=प्रतिप्रकरणमानन्दमयादौ ब्रह्मशब्दश्रवणादित्यर्थः । आनन्दमयपदं अन्नमयादीनामप्युपलक्षणम् । विषयवाक्यं समानमेव । अत्र आनन्दमयादिशब्दवाच्यः हिरण्यगर्भो वा रुद्रो वा चित्प्रकृतिर्वा अचित्प्रकृतिर्वा जीवो वा भवितुमर्हति । विकारार्थकमयट्प्रत्ययादिविरोधात् सर्वथा नानन्दमयो विष्णुः । अतः समन्वयाधिकरणोक्तः विष्णौ गतिसामान्योपन्यासोऽयुक्त इति पूर्वः पक्षः । सिद्धान्तस्तु श्रुतिषु बहुशः गुणपूर्णत्वाभिधायकब्रह्मशब्दश्रवणात् हिरण्यगर्भादिषु गुणपूर्णत्वस्य अनुपपत्तेः अन्नमयादिष्वपि मयट्प्रत्ययस्य प्राचुर्यार्थत्वाभ्युपगमात् तेष्वपि ब्रह्मश्रुत्यविशेषात् तेषामपि विष्णुरूपत्वाङ्गीकाराच्च आनन्दमयः विष्णुरेवेति ॥ १२ ॥

**सू. । विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१३॥ विकारशब्दात्**=विकारार्थकमयट्शब्दात् **नेति चेत्**=आनन्दमयादिर्विष्णुर्न भवतीति चेत् न । कुतः **प्राचुर्यात्**=मयट्शब्दस्य प्राचुर्यपदोक्तपूर्णत्वाभिधायकत्वादित्यर्थः ॥ १३ ॥

**सू. । तद्धेतुव्यपदेशाच्च ॥ १४ ॥** चकारः समुच्चयार्थः । तस्य आनन्दमयस्य विष्णुत्वे लोकचेष्टकत्वाख्यहेतोः 'को ह्येवान्या' दित्यादिश्रुत्या प्रतिपादितत्वाच्चानन्दमयो विष्णुरेवेत्यर्थः ॥ १४ ॥

**सू. । मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥** 'सत्यं ज्ञान' मिति मन्त्रवर्णोक्तं ब्रह्मैव आनन्दमयादिशब्दैः प्रतिपाद्यते । अतः आनन्दमयादिशब्दवाच्यं ब्रह्मैवेत्यर्थः ॥ १५ ॥

**सू. । नेतरोऽनुपपत्तेः ॥ १६ ॥ इतरः**= चतुर्मुखादिः । **न**=आनन्दमयादिशब्दप्रतिपाद्यो न भवति । कुतः । **अनुपपत्तेः**='ब्रह्मविदाप्नोति पर'मित्यादिना श्रुतस्य मोक्षजनकज्ञानविषयत्वस्य इतरेषु असम्भवादित्यर्थः ॥ १६ ॥

**सू. । भेदव्यपदेशाच्च ॥ १७ ॥** चतुर्मुखादेरानन्दमयात् भेदधर्मोक्तेश्च नानन्दमयश्चतुर्मुखादिरित्यर्थः ॥ १७ ॥

**सू. । कामाच्च नानुमानापेक्षा ॥ १८ ॥ कामाच्च**=अद्वैतश्रुत्यनुकूलानुमानस्याभावात् केवलानुमानस्य इच्छामनुसृत्य प्रवृत्तत्वात् । **नानुमानापेक्षा** । अतीन्द्रियार्थविषये शुष्कानुमानापेक्षा न कार्येत्यर्थः ॥ १८ ॥

**सू. । अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥** चशब्दो युक्तिसमुच्चयार्थकः । यतः **अस्मिन्** आनन्दमयप्रकरणे मोक्षेऽपि **अस्य**=जीवस्य **तद्योगं**=आनन्दमयादिना सम्बन्धम् । **शास्ति**=श्रुतिः प्रतिपादयति । अतोऽपि आनन्दमयादिर्ब्रह्मैव । न देहादिः इति ॥ १९ ॥

इति सूत्रार्थचन्द्रिकायामानन्दमयाधिकरणम् ॥ ६ ॥

## अथान्तरधिकरणम् ॥ ८ ॥

**तदितः पूर्वैरधिकरणन्यायैः सर्वज्ञं नित्यतृप्तमनादिबोधं स्वतन्त्रमलुप्तशक्तिकमनन्तशक्तिकं सकलजगदुभयकारणं समस्तोपनिषत्तत्त्वसमन्वयैकप्रतिपाद्यं स्वप्रकाशनिखिलप्रपञ्चविशिष्टाद्वितीयस्वभावं सच्चिदानन्दस्वरूपं संसारपाशविच्छेदकारणं चिदचिदर्थान्तरं शिवतत्त्वं परं ब्रह्मेति सिद्धम्। तस्य साधकानां संसारभेषजं मनस्समाधानयोग्यं किमपि रूपं प्रदर्शयितुमिदमधिकरणमारभ्यते–**

---

उत्तराधिकरणमवतारयितुं प्राक्सिद्धमर्थजातमनुवदति–तदितः पूर्वैरिति । उभयकारणमित्यन्तेन सोपपत्तिकजन्माद्यधिकरणार्थोऽनूदितः । तदनन्तरविशेषणेनानन्तराधिकरणद्वयार्थः । स्वप्रकाशेत्यादिविशेषणेन ईक्षत्यधिकरणविषयवाक्यगतसच्छब्दार्थोऽनूदितः । 'सच्चिदानन्दस्वरूप'मित्यनेनानंदमयाधिकरणविषयवाक्यांतर्गतसत्यज्ञानादिवाक्यार्थः 'संसारपाशच्छेदकारण'मित्यनेन हिरण्यगर्भाधिकरणविषयवाक्यान्तर्गतस्य 'य एनं विदुरमृता' इत्यादिवाक्यस्यार्थः 'चिदचिदर्थान्तर'मित्यनेन चिदचिद्विलक्षणमित्यर्थकेन अचेतने प्रधाने चेतने मुक्ते हिरण्यगर्भे चानतिप्रसक्तं जगत्कारणत्वमस्येतरवैलक्षण्यमित्येवमीक्षत्याद्यधिकरणत्रयव्युत्पाद्यार्थः सङ्गृह्यानूदितः । अथोत्तराधिकरणे प्रतिपादयिष्यमाणमर्थं दर्शयति –तस्येति। संसारभेषजं मुक्तिप्रदम्। मनस्समाधानेति । दहरविद्याद्युपास्यं हि रूपं स्थानस्य हृदयपुण्डरीकादेरप्रसिद्धत्वात् शास्त्रावगततत्तत्स्वरूपानुसन्धानपूर्वकमनुसन्धेयमिति तावत्पर्यन्तमविक्षेपेण मनस्समाधानं दुस्सम्पादम्। वक्ष्यमाणरूपस्य तु स्थानमादित्यमण्डलमतिप्रसिद्धमिति तत्स्थानके वक्ष्यमाणरूपे मनस्समाधानं सुसम्पादमिति भावः। किमप्यप्राकृतं रूपमित्यर्थः । ननु किमर्थोऽत्र जन्मादिसूत्रार्थप्रभृति प्राचीनसकलार्थानुवादः। कथं च प्राणाकाशाद्यतिव्याप्तिनिरासेऽग्रे करिष्यमाणे मध्ये चिदचिदर्थान्तरमिति विशेषणेन चेतनाचेतनेष्वतिव्याप्तिनिरासात् सिद्ध्यतोऽर्थस्य सिद्धत्वेनोपन्यासः । कथं चातिव्याप्तिनिरासार्थपेटिकामध्ये ध्यानोपयुक्तरूपविशेषणनिरूपणार्थाधिकरणस्य प्रस्तावः । तस्य च साधनाध्यायसङ्गतस्य समन्वयाध्याये का सङ्गतिःका च पूर्वाधिकरणसङ्गतिः। उच्यते । लक्षणपरिष्कारपेटिकासमाप्तिप्रदर्शनार्थो लक्षणसूत्रार्थमारभ्यानुवादः । अत एवातिव्याप्तिनिराससिद्धार्थोपन्यासः । आकाशप्राणाधिकरणद्वयमाकाशप्राणयोरतिव्याप्तिनिरासार्थं न भवति। तयोरधिकरणनिरसनीयातिव्याप्तिशङ्काहेतोरदर्शनात् । किंत्वाकाशप्राणवाक्ययोर्ब्रह्मणि तात्पर्यनिरूपणार्थं तदर्थेन तेन वाक्यशेषगतकारणत्वानुवादप्रभवमन्दशङ्काविषयातिव्याप्तिनिरासोऽपि लभ्यत इत्यानुषङ्गिकप्रयोजनसूचनार्थं तदवतारिकाभाष्यम् । इदमप्यधिकरणमन्तरादित्यविद्यावाक्यस्य ब्रह्मणि तात्पर्यनिरूपणार्थमेव। ध्यानार्थरूपविशेषसिद्धिरप्यनेनाधिकरणेन लभ्यत इत्येतदवतारिकाभाष्यमप्यानुषङ्गिकप्रयोजनसूचनार्थम्। पूर्वाधिकरणविषयवाक्ये हिरण्यगर्भविषयोपक्रमोपसंहारैकरूप्यस्य मध्यगतबहुप्रमाणविरोधादनादरणीयत्वमुक्तम्। इह तद्विषयोपक्रमोपसंहारैकरूप्यस्य तथा विरोधो नास्तीति प्रत्यवस्थानात् प्रत्युदाहरणरूपा समन-

## ॥ सू ॥ अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

**'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' ( छा.१-६. ) इति छान्दोग्ये श्रूयतेऽस्य विषयः ॥ अयमादित्यान्तर्वर्ती हिरण्मयः पुरुषः परमेश्वरो देवताविशेषो वेति संशयः ॥ एवं सति सर्वाधारस्य सर्वगतस्य परमेश्वरस्यादित्यान्तर्वर्तित्वं हिरण्मयरूपत्वं च न संभवति, स्वेच्छया रूपाङ्गीकारे त्रिलोचनत्वं नियतं तदिह न विद्यते । 'पुण्डरीकमेवमक्षिणी' ( छा. १-६.) इति लोचनद्वयमेव श्रूयते । अथ वा-स्वेच्छागृहीतोपि देहः संसारिणामिव परमेश्वरस्यापि दुःखमुत्पादयेदेव । स्वेच्छासंबन्धेऽपि पावकस्य दाहकत्वं हि स्वभावः । अतः परमेश्वरस्य शरीरसंबन्धो न युक्तः । तस्मादयं कश्चिद्देवताविशेष एव, न**

---

न्तराधिकरणसङ्गतिः । सा पूर्वपक्षावसाने स्पष्टीकरिष्यते । भाष्येऽपि सा 'देवताविशेषो वे'ति संशयवाक्येन सूचयिष्यते । मण्डलान्तर्वर्तित्वेन प्रसिद्धो हि देवताविशेषः तत्र ग्राह्यः । हिरण्यगर्भश्च तथा प्रसिद्ध इति पूर्वाधिकरणे दर्शितम् । नन्वादित्य इत्यपि कश्चिदाधिकारिको देवताविशेषोऽस्ति । अस्तु सोऽपि पाक्षिकतया पूर्वपक्षावलम्बनं भविष्यति । अत एव भाष्ये सामान्येन 'देवताविशेषो वे'ति पूर्वपक्षकोटिः प्रदर्शिता । न तु हिरण्यगर्भ इत्यादित्य इति वा । तस्मात्सर्वमुपपन्नम् ॥ सू ॥ अन्तस्तद्धर्मोपदेशात् ॥२१॥ परमेश्वरस्य साधारत्वोक्तिविशेषणविशिष्टशरीरसम्भवासम्भवाभ्यां संशयमाह—अयमिति । पूर्वपक्षमाह—एवं सतीति । उक्तप्रकारेण संशये सतीत्यर्थः । सर्वाधारत्वमाधारासम्भवे सर्वगतत्वं हिरण्मयरूपासम्भवे च हेतुः । न हि व्यापको हिरण्यविकारतया परिच्छिन्ने विग्रहे मातीति भावः । ननु शरीरवतस्सर्वात्मना तस्मिन् शरीरेऽन्तर्गततया भाव्यमिति न नियमः । किं तु तदधिष्ठानमात्रेण भाव्यमिति । अन्यथा चिच्छक्तिव्याप्त्या जीवानां कायव्यूहपरिग्रहासम्भवप्रसङ्गात् । प्रमाणबलात्तेषां तदङ्गीकारे तत एवेश्वरस्यापि शरीरवत्त्वमङ्गीकरणीयम् । अस्ति हि 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त'मिति तस्यापि शरीरवत्त्वे प्रमाणम् । न च शरीरस्य कर्मजन्यत्वनियमेन कर्मरहितस्य तदसम्भवात् उपासनार्थमुमासहायत्वादिविशिष्टशरीरकल्पनामात्रपरं तदिति वाच्यम् । कर्माभावेऽप्युपासकानुग्रहार्थं शरीरपरिग्रहसम्भवात् । अन्यथा संसारिणां यत्किञ्चिन्निर्मातृत्वं कर्माधीनं दृष्टमिति तस्य प्रपञ्चनिर्मातृत्वस्याप्यसिद्धिप्रसङ्गादित्याशङ्क्याह—स्वेच्छयेति । त्रिलोचनत्वं नियतमिति त्वदभिमतप्रमाणानुसारेणैवेति भावः । स्वेच्छया प्रपञ्चसृष्टिवच्छरीरपरिग्रहोऽपि सम्भवति । अथवेति । उत्पादयेदेवेति । पावकस्य दाहकत्वमिव वस्तुस्वभावप्रयुक्तं शरीरस्य दुःखजनकत्वमैच्छिकत्वेऽपि परिहर्तुमशक्यमित्यर्थः । तस्मा'दुमासहाय'मित्यादिकमुपासनार्थकल्पनापरं योजनीयम् । 'ध्यात्वा मुनिर्गच्छती'ति वाक्यशेषात् । न चेह तथा योजनं सम्भवति । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इति दृश्यमानतोक्त्या स्वाभाविकत्वावसायादिति भावः । तथापि सर्वलोककामेश्वरत्वसर्वपापराहित्यादिधर्मैरयं परमेश्वरोऽवसीयत इत्याशङ्कामुपसंहारव्याजेन निराकरोति—तस्मादिति । अयं

---

(१) 'कृतत्व' इति. ख. पाठः ।

भावः । नास्यादित्यमण्डलान्तर्गतस्य पुरुषस्य सर्वलोककामेश्वरत्वं श्रूयते । किं तु 'ये चास्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च'त्यादित्यमण्डलादूर्ध्वं ये स्वर्लोकादयो लोका ये च तत्रत्यानां देवानां कामभोगास्तदुभयैश्वर्यं श्रूयते । तत्परिच्छिन्नैश्वर्यश्रवणं जीव एव कर्माधीनं सङ्कुचितैश्वर्यं सङ्गच्छते न तु स्वाभाविकनिरतिशयैश्वर्ये परमेश्वरे । न च देवलोककामैश्वर्योक्त्यैव तच्छेषमनुष्यादिलोककामैश्वर्यमर्थात्सिद्ध्यति । दुर्गाधिपत्योक्त्येव तच्छेषसीमाधिपत्यमिति सर्वैश्वर्यपरमेवेदं वाक्यमिति वाच्यम् । आदित्यपुरुषप्रतिपादनानन्तरं हि 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इत्यादिना प्रतिपाद्यस्याक्षिपुरुषस्य 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चे'ति विभज्यादित्यण्डलाधस्तनमनुष्यादिलोककामेश्वरत्वं श्रूयते । तत्कथं तेन वाक्येनादित्यपुरुषस्य सर्वैश्वर्यं सिद्ध्येत् । न खलु राजकीययोरनयोरयं दुर्गाधिपतिरयं तत्सीमाधिपतिरिति विभज्य कथने कस्यचिद्दुर्गाधिपत्यवचनेन तस्यैव तत्सीमाधिपत्यमपि सिद्ध्यति । ननु तथापि सर्वपापराहित्यं श्रूयत एव 'तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्यः उदित'इति । न च सर्वपापराहित्यं देवेषु संभवति । 'नह वै देवान्पापं गच्छति पुण्यमेवामून्गच्छती'ति श्रुतेः । यदि देवेष्वप्यनादिभवसञ्चितानि प्रसुप्तानि पापानि सन्त्येव तेषां देवत्वदशायां तेषु फलानारम्भकत्वमात्रं 'न ह वै देवा'निति श्रुत्यर्थ उच्येत तदा सर्वपापोदयवाक्यस्यापि स एवार्थोऽस्त्विति वाच्यम् । यतो मोक्षशास्त्रे पाप्मशब्दः पुण्यस्यापि ग्राहकः । मुमुक्षुं प्रति तस्याप्यनिष्टफलत्वात् 'न सुकृतं न दुष्कृत' मित्युपक्रम्य 'सर्वे पाप्मानोऽतो निवर्तन्त' इत्युभयत्रापि तत्प्रयोगाच्च पुण्यपापोदयराहित्यादिकं तु देवेष्वपि न सम्भवतीति चेन्न । पाप्मशब्दस्यानिष्टफलत्वेन रूपेण क्वचिदजहल्लक्षणया पुण्यसाधारण्येऽपि पापमात्रे गृहीतशक्तिकस्य तस्य मोक्षशास्त्रेऽपि तत्साधारण्यनियमाभावात् । अन्यथा 'नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त' इति प्रकृतेष्वहोरात्रजरामृत्युशोकसुकृतदुष्कृतेष्वविशेषेण पाप्मशब्दस्य प्रयुक्ततयान्यत्रापि[1] तावत्साधारण्यप्रसङ्गात् । न चेष्टापत्तिः । तस्मिन्नेव प्रकरणे 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोक'इति सत्यपि पाप्मशब्दे जरामृत्युशोकानां पृथग्ग्रहणात् । अस्तु वा मोक्षशास्त्रे सर्वत्र पाप्मशब्दः पुण्यसाधारणः । तथाप्यत्र नासङ्गतिः । कल्पान्ते मुक्तिं प्राप्स्यतां हिरण्यगर्भादीनां ब्रह्मसाक्षात्कारवत्त्वेन तन्निर्धूतसकलपुण्यपापपञ्जराणां प्रारब्धमात्रानुवृत्तिमतां पुण्यपापाल्पत्वाभिप्रायेण सर्वपापोदितत्वव्यपदेशार्हत्वात् । वस्तुतस्तु तद्व्यपदेशः परमेश्वर एव न सङ्गच्छते । कथं सर्वपापोदितत्वं पाप्मनः स्वाच्छादकादुद्गमनं प्राक् तदाच्छादितस्य घटते मेघमण्डलादुदितत्वमिव प्राङ्मेघमण्डलाच्छादितस्य चन्द्रस्य । न च कदाचिदपि परमेश्वरः पापाच्छादित इष्यते । अतः प्राक्पापाच्छादनपिहितस्वभावेषु ब्रह्मसाक्षात्कारनिर्धूतसकलतदाच्छादनेषु हिरण्यगर्भादिष्वेव तस्यापि स्वारस्यं प्रतिपद्यामहे । नन्वादित्यपुरुषस्य उदितिनामविधानतन्निर्वचनतद्वेदनफलकथनानन्तरं 'तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्माच्त्वेवोद्गातैतस्य हि गाते'ति ऋक्सामयोस्तद्गानरूपत्वं तस्मादेव हेतोरुद्गीथभक्तेरुद्गीथसंज्ञावत्त्वं तद्गायकस्य ऋत्विज उद्गातृ-

(१) 'तयात्रापि' इति च.पाठः।

**परमेश्वरः इति पूर्वपक्षन्यायः ॥ सिद्धान्तस्तु—परमेश्वर एव । कुतः ? तद्धर्माणामुपदेशात् । 'स एष सर्वेषां लोकानामीष्टे सर्वेषां कामानाम्' 'तस्योदिति-**संज्ञावत्त्वं चेति श्रूयते। तत्सोमेन्द्रादिदेवताविषयस्तोत्रीयऋक्सामगेयत्वं सर्वात्मनि ब्रह्मण्युपपद्यते न त्वन्यत्रेति चेन्न। तस्य ब्रह्मण्यप्यनवच्छिन्नपराहम्भाववत्त्वेनोपपादनं कार्यं न तु सोमेन्द्रादिदेवतारूपजीवाभेदेन । तद्वत्त्वं तु ब्रह्मज्ञानविगलितपरिच्छिन्नदेहाभिमाने पराहम्भाववति हिरण्यगर्भादावप्युपपद्यते । वास्तवसार्वात्म्याभावादनुपपत्तावप्याभिमानिकपराहम्भावविषयतामात्रेण कथञ्चिदुपपादनीयम् । उपक्रमोपसंहारगतसाधारणत्वविग्रहवत्त्वपरिच्छिन्नैश्वर्यलिङ्गानुरोधात् पूर्वाधिकरणविषयवाक्य इव अत्र मध्यगतबहुप्रमाणविरोधाभावात्। तस्मादयमादित्यमण्डलान्तर्वर्तित्वेन श्रुतिस्मृतिप्रसिद्धो हिरण्यगर्भः स्यात् । 'अर्यम्णे चरुं निर्वपेत्स्वर्गकाम'इतीष्टिविधा'वसौ वा आदित्योऽर्यमा' इत्यादित्यरूपत्वेन व्याख्यातस्यार्यम्णः तदिष्ट्यनुवाक्याया'मर्यमायाति वृषभस्तुविष्मान्दाता वसूनां पुरुहूतो अर्हन् । सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधात्वि'तीन्द्ररूपतया प्रतिपादनादिन्द्रो वा स्यान्मडलाभिमानित्वेन प्रसिद्धत्वात् ताभ्यामन्य आदित्यो वा स्यात् सर्वथा परब्रह्मव्यतिरिक्तो यः कश्चिद्देवताविशेष एवायमिति । अन्तरिति सौत्रपदेन मण्डलान्तर्वर्तिपुरुषः पक्षो निर्दिष्ट इति तत्रानुषङ्गलब्धं साध्यं दर्शयति—परमेश्वर इति ।'तद्धर्मोपदेशा'दित्यत्र बहुवचनान्तसमासेन धर्मबाहुल्यं विवक्षितमित्याह—तद्धर्माणामिति । स एष इति । ननु छान्दोग्यश्रुतिरिहोदाहृता । तत्र 'स एष सर्वेषां लोकानामीष्टे सर्वेषां कामाना'मिति सर्वलोककामैश्वर्यं न श्रूयते किंतु 'ये चैतस्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चे' ति कतिपयलोककामैश्वर्यं श्रूयते । तत्तु परिच्छिन्नैश्वर्याधिकारिकदेवताविशेषलिङ्गं परमेश्वरसाध्यं विरुद्धमेव। अत एवेदं लिङ्गं पूर्वपक्षसाधकत्वेनोदाहृतं शाङ्करभाष्ये । सत्यम् । अक्ष्यादित्यपुरुषयोरैक्यं सिद्धं कृत्वा ततस्सिद्धस्य सर्वलोककामेश्वरत्वस्यानुवादरूपमिदं भाष्यं न तु श्रुतिवाक्योदाहरणरूपम् । ऐक्ये हि तयोर्विभज्योक्तमादित्यमण्डलोपरितनलोककामेश्वरमधस्तनलोककामेश्वरत्वं चैकधर्मिकं भवत्सर्वलोककामेश्वरत्वरूपं पर्यवस्यति । विभज्यैश्वर्यकथनं परमुपासनार्थमिति सिध्यति । नन्वक्ष्यादित्यपुरुषयोरैक्यसिद्धिरेव कुतः । उच्यते । यद्ययं हिरणमयः पुरुषो मंडलाधिष्ठाता हिरण्यगर्भरूपः यदि वा परमेश्वरः उभयथाप्यादित्यमंडलस्थ एवायमक्षिस्थोऽपि ' तद्यत्तत्सत्यमसौ स आदित्यो य एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुष आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविश' दित्यादिश्रुतिषु हिरण्यगर्भादिरूपस्य मण्डलाधिष्ठातुः 'य आदित्ये तिष्ठन्नादित्यादन्तरो यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तर' इत्यादिश्रुतिषु परमेश्वरस्य चाक्ष्यादित्ययोरैक्यावसायात् । इह च नामरूपैक्येनाधिदैवतमन्तरादित्येऽध्यात्ममन्तरक्षिणि च मंडलाभिमानिपुरुषस्य परमेश्वरस्य चोभयत्राप्येकस्यैवोपासनाविधानप्रतीतेश्च। न चादित्यपुरुषस्य नामरूपाद्युपदेशानंतरं'य एषोऽन्तरक्षिणि पुरुषो दृश्यत'इत्युपक्रम्य'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णो तौ गेष्णौ यन्नाम तन्नामे'त्यादित्यपुरुषनामादीनामक्षिपुरुषेऽतिदेशात्तयोर्भेदः प्रतीयते अभेदेऽतिदेशानपेक्षणादिति शङ्कनीयम् । नाम्नः स्थानविशेषविशिष्टवाचित्वशङ्कया रूपस्यैच्छिकस्य प्रतिस्थानं

(१) 'पपादनीयम्' इति च पाठः ।

**नाम स एष सर्वेभ्यः पाप्मभ्य उदितः' ( छा.१–६. ) इत्यादिना प्रतिपादिताः सर्वलोककामेश्वरत्वसर्वपापराहित्यादयो धर्मा हि पारमेश्वराः, 'एको हि रुद्रो न द्वितीयाय तस्थुः य इमाँल्लोकानीशत ईशिनीभिः ॥' ( श्वे. ३–२. )'एको बहूनां यो विदधाति कामान् ( श्वे. ६–१३. )' इत्यादिश्रवणात् ॥ सर्वाधारस्य**

---

भेदशङ्कया चातिदेशोपपत्तेः। दृश्यते हि 'तद्यत्तत्सत्यमसौ स आदित्य' इत्युपक्रान्तस्य हिरण्यगर्भस्य मण्डलेऽक्षिणि च स्थानविशेषविशिष्टवाचित्वेन भिन्ने अहरहमिति नामनी दृश्येते तद्वद्रूपस्यापि स्थानभेदेन भेदशङ्कया 'य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर' इत्यादिना क्वचिदुपदिष्टस्य 'योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिर'इत्यादिनान्यत्राप्युपदेशः। एवं च मण्डलाभिमानिनः तदन्तर्यामिणश्चाक्ष्यादित्ययोरनुगतत्वम्। इह तयोरन्यतरस्याक्षिण्यादित्ये चैकस्यैव प्रतिपाद्यत्वं चान्तर्याम्यधिकरणसत्यविद्याधिकरणपर्यालोचनालभ्यं समानमेव पूर्वपक्षसिद्धान्तयोः। किंतु शरीरश्रवणात् सत्यविद्यायामिवात्रापि मण्डलाभिमान्याधिकारिकपुरुषः प्रतिपाद्यो न तु परमेश्वर इति पूर्वपक्षिणो विवादः। अत्रेदमुच्यते। स्थानविशेषेणैकस्योपासनार्थं विभज्य प्रतिपाद्यमानमूर्ध्वाधरलोककामेश्वरत्वं सर्वलोककामेश्वरत्वरूपं पर्यवस्यति। तत्तु परमेश्वर एव सङ्गच्छत इति। एवमर्थतः फलितलिङ्गमभिप्रेत्यैव शाङ्करभाष्येऽपि सिद्धान्ते लोककामेशितृत्वमपि निरङ्कुशं श्रूयमाणं परमेश्वरं गमयतीत्युक्तम्। तस्मादिह न काचिदनुपपत्तिः। सर्वेभ्यःपाप्मभ्य इति। अस्य वाक्यस्य मुख्यार्थः सर्वस्मात्पापादुद्गमनरूपो देवेष्वपि न सम्भवति। न हि कश्चिदपि जीवो नीडे स्थिते तस्माच्छकुन्त इव पापपञ्जरे स्थिते तस्मादपादानादूर्ध्वं गच्छति। तस्माद्यथा कुतश्चिदपादानात्तं विहायोद्गतस्सर्वात्मना तत्सम्बन्धरहितो भवति। एवमयं सर्वात्मना पापसंबन्धरहित इत्ययमर्थो लक्षणया । अन्यत्रापि हि परमेश्वरे पापसम्बन्धराहित्यवचनानि यथाकथञ्चिल्लाक्षणिकान्येव दृश्यन्ते यथा 'एष आत्माऽपहतपाप्मा सर्वे पाप्मानोऽतो निवर्तन्त' इत्यादीनि। असङ्कुचितसकलपापराहित्यं तु परमेश्वर एव सम्भवति नाधिकारिकपुरुषेषु। अतस्सर्वलोककामेश्वरत्ववत्सर्वपापराहित्यमपि पारमेश्वरं लिङ्गमिति भावः। अपि चादित्यपुरुषस्य ऋक्सामगेष्णत्वादिवचनेनाक्षिपुरुषस्य 'तद्य इमे वीणायां गायन्त्येतं ते गायन्ती'ति लौकिकगानविषयत्ववचनेन 'सैव ऋक्साम तदुक्थं तद्यजुस्तद्ब्रह्मे'ति साक्षात्सार्वात्म्यवचनेन च बहुशोऽवगम्यमानं सार्वात्म्यमपि परमेश्वरलिङ्गम्। न तदाभिमानिकत्वमात्रेण ततोऽन्यत्र नेतुं युक्तम्। इहान्यत्रोपक्रमोपसंहारैकरूप्यासिद्धेः। 'ये चैतस्मा'दित्याद्युपसंहारस्य परिच्छिन्नैश्वर्यविषयत्वाभावात्। उपक्रमगतसाधारणत्वविग्रहवत्वयोर्ब्रह्मण्यपि सम्भवेनान्यथासिद्धताया अपि वक्ष्यमाणत्वाच्च। तदेतत्सार्वात्म्यतत्समर्पकवचनजातं चादिशब्दाभ्यां संगृहीतम्। ननु सर्वलोककामेश्वरत्वादीनां परमेश्वरधर्मत्वं क्व सम्प्रतिपन्नं येन तेषां 'तद्धर्मोपदेशा'दिति सूत्रे परमेश्वरधर्मत्वेन सिद्धवदुपादानमुपपद्येतेत्याकाङ्क्षायां तत्सम्प्रतिपत्तिस्थानमुदाहरति–एको हि रुद्र इति। मन्त्रद्वयेऽप्येक इति विशेषणेन सर्वलोकेश्वरत्वं सर्वकामेश्वरत्वं चानितरसाधारणमित्यपि दर्शितम्। 'एष आत्माऽपहतपाप्मा सर्वं खल्विदं ब्रह्मे'त्यादिश्रवणमादिशब्देन गृह्यते। साधारत्वं परिच्छिन्नशरीरविशिष्टतयेत्युपपादयति–**सर्वाधारस्येत्यादिना**। शरीर-

**सर्वगतस्य आदित्यान्तर्वर्तित्वं न संभवतीति यदुक्तं तत्र न विरोधः, सर्वाधारः सर्वगतः परमेश्वरः साधकानुग्रहाय हिरण्मयं किमपि रूपं समास्थाय सवितृमण्डलमधिवसति । शरीरसंबन्धादस्मदादिवदीश्वरस्य न संसारदोषापत्तिः । श्रुतिरेव भगवती ह्यस्य शरीरसंबन्धं सर्वपापराहित्यं च प्रति-**

---

वत्त्वं तत्प्रतिक्षेपकतर्कस्य श्रुतिविरोधादप्रामाण्यसमर्थनेनोपपादयति—शरीरसम्बन्धादिति। यथा परमेश्वरस्वरूपं तस्यापहतपाप्मत्वादिगुणवत्त्वं च श्रुतिसिद्धत्वात्तर्को न प्रतिक्षेप्तुं शक्नोति तथा तस्य शरीरवत्त्वमपि।अपहतपाप्मत्वादिलिङ्गोपनीतस्य तस्य हिरण्यश्मश्रुत्वादिविशिष्टशरीरप्रतिपादकोदाहृतश्रुतिविरोधादिति भावः । स्यादेतत्।शरीराणां कर्मजन्यत्वदुःखजनकत्वनियमं लोकदृष्टमवलम्ब्य परमेश्वरस्य सशरीरत्वे कर्मवत्वदुःखित्वरूपं संसारित्वं नापाद्यते येन श्रुतिविरोधात्तर्कः प्रतिहन्येत । किंतु 'रमणीयचरणा रमणीयां योनिमापद्येरन् कपूयचरणाः कपूयां योनिं न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'त्यादिश्रुतिसिद्धं नियममवलम्ब्य । न चैच्छिकं शरीरं स्वातन्त्र्याविघातकमिति न तादृशशरीरस्य कर्मजन्यत्वं दुःखजनकत्वं वेति वाच्यम् । उदाहृतश्रुत्यनुरोधेन शरीरमात्रस्य कर्मजन्यत्वदुःखजनकत्वनियमेऽवधृते तथाभूतशरीरेच्छाया एव 'विधिविहितं बुद्धिरनुसरती'तिन्यायेन कर्मानुसारित्वप्राप्तेः । न च स्वेच्छाशरीरं स्वातन्त्र्यायोपपद्यते । 'स्वेच्छैव तादृशी पुंसां यस्मात्कर्मानुसारिणी'ति पौराणिकफणितेश्चेत्याशङ्कानिवारणाय भगवतीति श्रुतिविशेषणम् । भगवती वीर्यवती रमणीयचरणादिश्रुत्यपेक्षया बलवतीति यावत् । 'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिं'ष्विति हि नैघण्टुकाः । बलं चास्याः विशेषविषयत्वलक्षणमिति स्फोरयति—अस्य शरीरसम्बन्धमिति । नन्वपहतपाप्मत्वादिलिङ्गैरादित्यान्तर्वर्ती परमेश्वर इति निर्णये सति खलु हिरण्यश्मश्वादिवाक्यं तस्य दुःखहेतुपाप्मरूपकर्मरहितस्यैव सतः शरीरसम्बन्धं प्रतिपादयत् सामान्येन शरीरस्य कर्मजन्यत्वं दुःखजनकत्वं च प्रतिपादयतो वाक्याद्विशेषविषयत्वेन प्रबलमिति सामान्यवाक्यं शरीरविशेषविषयं भवेत् । तथा निर्णय एव न सिद्ध्यति । शरीरस्य कर्मजन्यत्वे दुःखजनकत्वे च लाघवाच्छरीरत्वमेवावच्छेदकं न तु तद्विशेषत्वमित्युपपत्तिरूपतात्पर्यलिङ्गवद्रमणीयचरणादिवाक्यसमर्पितकर्मजन्यत्वदुःखजनकत्वदोषदुष्टशरीरवत्त्वलिङ्गादादित्यान्तर्वर्तिपुरुषस्य संसारित्वनिश्चये सति सर्वपापोदयादिपरमेश्वरलिङ्गानां तदनुसारेण नेतव्यत्वात् । न च तेषां बहुत्वादेकं शरीरवत्त्वलिङ्गं न तद्विरुद्धार्थसमर्पणक्षममिति तात्पर्यं वाच्यम् । तात्पर्यलिङ्गवत्त्वाद्वाक्योपनीतदोषशालिनः शरीरित्वलिङ्गस्यैकस्याप्यनन्यथासिद्धत्वेन अतथाभूतबहुलिङ्गेभ्योऽनुकूलतर्कवदनुमानस्य तद्रहितबह्वनुमानेभ्य इव बलवत्त्वादित्याशङ्क्य प्रतिपादयतीत्युक्तम् । तात्पर्येण समर्थयतीत्यर्थः । अस्ति सर्वपापराहित्ये तावदुपास्यगुणे तदनुगुणफलरूप'मुदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'तिवाक्यशेषसमर्पितं तात्पर्यलिङ्गम् । तच्च श्रुतिसमर्पितत्वात्पुरुषबुद्धिकल्प्यलाघवरूपोपपत्तितः प्रबलम् । एवमक्ष्यादित्यवर्त्येकपुरुषगतोर्ध्वाधस्तनलोककामेश्वरत्वरूपे सर्वकामेश्वरत्वेऽपि 'सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्चाथानेनैव ये च तस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्चे'ति वाक्यशेषप्रतिपन्नमस्ति तदनुगुणरूपं तात्पर्यलिङ्गम् । तथा सार्वा-

**पादयति । वयं हि श्रुतिप्रामाण्यशरणा न युक्तिं बहु मन्महे । पावकोऽपि संबन्धात् न शक्तिमतां दाहकः । 'यथा कप्यासं पुडरीकमेवमक्षिणी' (छा. १-६)**

तम्येऽपि बहुविधोक्तप्रकारोपनीतत्वमस्त्यभ्यासरूपं तात्पर्यलिङ्गम् । एवं च बहुभिः प्रबलतात्पर्यलिङ्गवद्वाक्यसमर्पितैर्लिङ्गैः परमेश्वरत्वनिश्चये सति तस्यैव दुःखहेतुपापकर्मराहित्येन सह आदित्याक्षिस्थानयोरुपदेशातिदेशाभ्यां तात्पर्येण तत्प्रतिपाद्यमानमुक्तरूपं शरीरं न प्रत्याख्यातुं शक्यम् । न च दुःखहेतुकर्मजन्यदुःखजनकत्वं वा तत् कल्पयितुं शक्यमिति तदनुसारेण रमणीयचरणादिवाक्यमेवानीश्वरशरीरविषयतया व्यवस्थापनीयम् । तत्तात्पर्यलिङ्गतयोपन्यस्ता लाघवोपपत्तिस्तु कर्माजन्यं दुःखाजनकं च सर्वपापोदितस्य परमेश्वरस्य शरीरं प्रतिपादयन्त्या श्रुत्या विरुद्धत्वान्नादरणीयेति भावः । एवं च सर्वपापोदितत्वादिकं संसारिणि कथमप्यसम्भवादनन्यथासिद्धं शरीरवत्त्वं तदुपाधिकं साधारत्वं च पारमेश्वरगुणकलापवच्छ्रुतिप्रतिपन्नमङ्गीकर्तुं शक्यत्वादन्यथासिद्धमित्यनन्यथासिद्धिरूपोऽप्यत्र बलाबलविभागोऽनुसन्धेयः । पारमेश्वरशरीरप्रतिक्षेपतर्कस्य श्रुतिविरोधाभासत्वमुक्तं स्वतोऽपि तस्याभासत्वमाह—पावक इति । न हि दाहकस्वभाव इति पावकः शक्तिविशेषयुक्तान् भूतवशिनोऽपि दहति । एवं दुःखजनकस्वभावमपि शरीरं धर्मिग्राहकमानसिद्धसर्वशक्तियुक्तस्य परमेश्वरस्य दुःखं न जनयिष्यति । शरीरं दुःखजनकमेवेति नियमोऽस्ति चेत्तस्य वह्निर्दाहक एवेति नियमस्येव शक्तिरहितविषये चारितार्थ्यं भविष्यति । ईश्वरतज्ज्ञानादिवत्तच्छरीरस्यापि सर्वकारणत्वाभ्युपगमे विरोधाभावादेवं शरीरं कर्मजन्यमेवेति नियमस्यापि परमेश्वरानुग्राह्यनिग्राह्यपुरुषजन्यत्वेन चारितार्थ्यमुपपद्यत इति न कश्चिद्युक्तिविरोध इति भावः । यथा कप्यासमिति । एवंमिह[1] वक्तुं शक्यम् । अक्षिद्वित्वमुद्देश्यगतत्वान्न विवक्षितं ग्रहैकत्ववत् । तथा च सम्मार्गस्य सर्वग्रहविषयत्ववत्पुण्डरीकसादृश्यस्याक्षित्रयविषयत्वं भविष्यति।कोऽसिन्विग्रहे पारमेश्वरत्वासम्भवशङ्कावकाशः । किमर्थं च तत्र 'द्वावग्निकल्पा'वित्याद्युदाहरणेन परिहारान्वेषणम् । न च तृतीयलोचनस्य मुकुलितत्वाद्विकसितपुण्डरीकसादृश्यमक्षित्रयस्य न सम्भवतीति वाच्यम् । द्वित्वविवक्षायां खलु तस्य 'यथा कप्यासं पुण्डरीक'मिति विशेषणार्थस्य तृतीयलोचनाद्व्यावर्तकं तद्द्वित्वविशेषणं न तु लोचनान्तरव्यावर्तकमिति द्वित्वविशेषणोपपादनार्थं कपिशब्दस्य योगेन सूर्यपरत्वमङ्गीकृत्य सूर्यकरविकसितपुण्डरीकसादृश्यं तस्य 'यथा कप्यासमित्यादिवाक्यस्यार्थ इति व्याख्यातव्यम् । तदविवक्षायां तु कपिर्मर्कटः तस्यासः आस्यते उपविश्यते अनेनेति व्युत्पत्त्या पश्चाद्भागः तत्सादृश्यात् ताच्छब्द्यम् । तथा च मर्कटपश्चाद्भागवत् लोहितं यत्पुण्डरीकं तत्सादृश्यं तदर्थ इत्येव व्याख्यातुमुचितम् । प्रोद्गातृन्यायेन रूढिपूर्वकलक्षणासम्भवे योगानौचित्यात् । 'य उदगान्महतोऽर्णवाद्विभ्राजमानस्सलिलस्य मध्यात्समावृषभो लोहिताक्ष'इति मन्त्रे मण्डलान्तर्वर्तिनो लोहिताक्षत्ववर्णनदर्शनेन अत्रापि श्रुत्यन्तरप्रतिपन्नार्थवर्णनसम्भवे अर्थान्तरवर्णनानौचित्याच्च । न चैवं सति हीनोपमा दोषः उपमितोपमात्वात् 'महामहानीलशिलारुचः पुरो निषेदिवान्कंसकृषः स विष्टरे । श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥' इत्यादिषु सा-

(१) 'इदमिह' इति, ख. पाठः ।

क्षादपि हीनोपमाया दर्शनाच्च। तत्र 'त्वदाननसमश्चन्द्र' इत्यादिवत् कविसमयसिद्धत्वात् हीनोपमा न दोष इति चेत्तर्हि अनादिकवेः परमेश्वरस्य कृताविहापि सा न दोष इति सन्तोष्टव्यम्। एवं चात्र केषाञ्चिद्वेदपरिहरणीयन्यायविरोधमविगणय्य काव्यपरिहरणीयहीनोपमादोषभयात्कपिशब्दस्य सूर्ये योगाश्रयणमारोपितवृश्चिकभयादाशीविषमुखे निपातनम्। हीनोपमादोषमेकं परिहर्तुं प्रवृत्तानां च तेषां ब्रह्मोपासनां कुर्वन्ति ब्रह्महत्यां करोतीति वदतामिव अश्लीलनिगृहीतार्थत्वरूपौ द्वौ दोषौ प्रसज्येयाताम्। परमेश्वरलोचनोपमाने हीनोपमादोषादपि च तदभिव्यक्तिस्थाने भगवति सूर्ये मर्कटप्रसिद्धकपिशब्दप्रयोगरूपमश्लीलं कष्टतरम्। साक्षादेव च परमेश्वरे सकलवेदमन्त्रस्तूयमानेन्द्रानपकर्षविषयहीनार्थगायत्रीमन्त्रसादृश्यमनुसन्धेयमभ्युपगच्छतां न हीनोपमात्र दोषतयोद्भावयितुमुचिता। नन्वमरकोशे 'पुण्डरीकं सिताम्भोज'मित्यनुशिष्टं तत्र कथं कप्यासविशेषणोपनीतं लौहित्यमन्वेतु। सत्यम्। तदनुशासनं नाभियुक्तसम्मतम्। यतः शबरस्वामिना नवमाध्याये 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकाम' इति विहितायामिष्टौ पुण्डरिकाणि बर्हींषि भवन्ती'ति स्तरणार्थत्वेन विहितेषु पुण्डरीकेष्वतिदेशप्राप्तस्य 'दर्भैः स्तृणीत हरितै'रिति मन्त्रस्य दर्भपदस्थाने पुण्डरीकपदमिव हरितपदस्थाने रक्तपदमूहितव्यमित्युक्तम्। पार्थसारथिमिश्रप्रभृतिभिरपि रक्तपदोहवि–साविवोक्तः। वाक्यकारेणाप्यत्रैव विषयवाक्ये पुण्डरीकविशेषणं कप्यासपदं मर्कटजघनपरतया व्याख्यातम्। कपिशब्दस्य यौगिकार्थमादाय तस्य पदस्यान्येष्वपि केषु चिदर्थेषु वाक्यकारेण प्रदर्शितेष्वपि रूढिप्राबल्यश्रुत्यन्तरदृष्टार्थपरव्याख्यानौचित्यन्यायानुसारिभिस्तत्त्वविद्भिरिदमेव व्याख्यानं परिगृहीतम्। न चैतावदभियुक्तव्यवहारविरोधे कतिपयकाव्यप्रयोगमात्रदर्शिनः कोशकारस्य वचनं स्वार्थव्यवस्थापने प्रभवति। नन्वत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुष' इत्यादिना वर्णितविग्रहे लोचनं सोमे ग्रहवन्न प्राप्तम्। अतो रक्तारविन्दसादृश्यविशिष्टलोचनविधिपरमिदं वाक्यमवगन्तव्यम्। तथा च विधेयगतस्य द्वित्वस्य विवक्षितत्वात् द्वित्वविशेषणेन लोचनान्तरस्य तत्र रक्तारविन्दसादृश्यस्य वा व्यवच्छेदो लभ्येतेत्युभयथापि विग्रहस्य पारमेश्वरत्वव्याघातः। परमेश्वरस्य हि द्वात्रिंशल्लक्षणोपेतविग्रहस्य वामदक्षिणलोचनयोः प्रान्ते परं महापुरुषलक्षणं लौहित्यशालित्वमूर्ध्वलोचनमेव तु निखिलब्रह्मांडहोमाधारसंवर्ताग्निरूपं सर्वात्मना लोहितं यद्युच्येत विग्रहत्वसामान्यादर्थाल्लोचनप्राप्तिरस्ति। तथा सत्यौत्सर्गिकं तद्द्वित्वमपि प्राप्नोति। तथा च सोमग्रहबहुत्ववदुक्तविग्रहलोचनत्रित्वस्याप्राप्तेः सर्वेषु ग्रहेषु सम्मार्गविधेरिव त्रिष्वपि लोचनेषु रक्तारविन्दसादृश्यविधेरलाभात्स एव व्याघातः। तस्माद्विध्यनुवादपक्षयोरुभयोरप्यत्र विग्रहे पारमेश्वरत्वासम्भवशङ्का प्रवर्तत इति चेदुच्यते। अनूद्य विधानसम्भवे 'सोमेन यजेते' त्यादाविव गत्यन्तराभावे समाश्रयणीयं विशिष्टविधिगौरवं नाभ्युपगन्तव्यम्। सम्भवति चात्र श्रुत्यन्तरपुराणादिप्रसिद्धानां परमेश्वरलोचनानामनुवादः। तथाहि–सर्वकामेश्वरात्वादिलिङ्गैः परमेश्वर इह प्रतिपाद्ये बुद्धिसन्निहिते हिरण्मयत्वादिविशिष्टविग्रहवर्णने च तद्विषयत्वेनावधारिते तस्य विग्रहाङ्गीकारे चाविरुद्धे प्रतिपन्ने तत्र विग्रहे परमेश्वरविग्रहत्वलिङ्गेन श्रुत्यन्तरादिप्रसिद्धं लोचनत्रित्वं प्राप्नोतीत्येवं प्राप्तानां तेषामिहानु-

(१) 'वाक्यं व कव्यम्' इति. च. पाठः।

वादस्संभवति। शङ्कावादिनापि हि परमेश्वरविग्रहस्य लोचनत्रयप्रसिद्धिमवलम्ब्यैव द्विलोचनस्यास्य विग्रहस्य पारमेश्वरत्वं न सम्भवतीति शङ्कनीयम्। न च तथाप्यस्या'क्षिणी'इति विशिष्टानुवादो न सम्भवतीति शङ्कनीयम्। 'दध्नेन्द्रियकामस्य जुहुयादित्यत्र दध्नः फलसम्बन्धे विधीयमाने 'जुहुया'दित्यस्य प्रकरणप्राप्ताश्रयसम्बन्धानुवादकत्ववत् लोचनानां रक्तारविन्दसादृश्यसम्बन्धे विधीयमाने 'अस्ये'त्यस्य प्रकरणप्राप्तपरमेश्वरसम्बन्धानुवादकत्वोपपत्तेः। नन्वस्त्विहा'क्षिणी'इत्यंशोऽनुवादः तथापि तद्द्वित्वस्य विवक्षा स्यात्'अग्नी आदधीत यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः युवं हि स्थ स्वःपती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादिति विधिषूद्देश्यविशेषणस्याप्यग्नियजमानद्वित्वस्य विवक्षादर्शनादिति चेत् न। वैषम्यात्। उद्देश्यं हि द्विविधम्। उपात्तमुत्पाद्यं च। यद्वाक्यात्तरोत्पन्नं सिद्धक्रत्वादिस्वकार्यसम्बन्धं तत्रैव निर्ज्ञातसङ्ख्याकं संस्कारादिविधानार्थं केवलमन्यत्रानूद्यते तदुपात्तम्। यथा'ग्रहं संमार्ष्टि'इत्यादिविधिषु ग्रहादिकम्। तत्र नास्ति परिच्छेदकसङ्ख्यापेक्षा प्राङ्निर्ज्ञातसंख्यत्वादेव। यत्तु, संस्कारवाक्योद्देश्यं संस्कारेणोत्पाद्य स्वकार्येण योजनीयं तत्रप्रागनिर्ज्ञातसंख्याके तस्मिन्नस्ति परिच्छेदकसंख्यापेक्षा। अतस्तत्र विवक्षितैव सङ्ख्या। अत एव 'चमसाध्वर्यून्वृणीते' इत्यत्रोद्देश्याश्चमसाध्वर्यवो वरणेनोत्पाद्य क्रतावुपादेया इति तद्बहुत्वं विवक्षितमित्युक्तम् 'उत्पत्तौ तु बहुश्रुते' रिति तृतीयाध्यायाधिकरणे। ततश्च 'अग्नी आदधीते'त्यत्र उद्देश्ययोरग्न्योराधानोत्पादितयो'राहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयती'त्यादिवाक्यैः स्वकार्यसम्बन्धः कर्तव्य इत्युत्पाद्योद्देश्यत्वात् सङ्ख्याविवक्षा युक्ता।'यस्योभावग्नी अनुगता'वित्यत्र अग्न्योरुपात्तोद्देश्यत्वेऽप्यग्न्यनुगमे निमित्ते विधीयमानस्य पुनराधानस्य 'अग्नी आदधीते' ति विहिताधानाभ्यासरूपत्वात् तस्य चाधानस्याग्निद्वयोत्पादकतया निर्ज्ञातस्य सत्येकस्मिन्नग्नौ क्रियमाणस्याग्निद्वयोत्पादकत्वायोगाद्विधीयमानस्य नैमित्तिकाधानस्वभावपर्यालोचनयापेक्षितत्वात् तद्द्वित्वविवक्षा युक्ता। 'द्वयोर्यजमानयो'रित्यत्र तथैवोपात्तोद्देश्यत्वेऽपि नैमित्तिकप्रतिपन्मंत्रविधानस्यानियतनिमित्तापेक्षत्वाद्यजमानमात्रस्य यत्किञ्चिद्गतद्वित्वमात्रस्य च सर्वत्रक्रतौ नियतत्वाद्विधीयमाननैमित्तिकापेक्षानुसारेण कुलाययज्ञादौ क्वचिदेव सम्भवादनियतं यजमानद्वित्वं निमित्तं वक्तव्यम्। 'द्वयो'रिति विशेषणं च साफल्यं नेतव्यम्। 'उपास्मै गायता नर' इति नित्यप्रतिपन्मन्त्रेण 'एते असृग्रमिन्दव'इति बहुभ्यो यजमानेभ्य इति वाक्यान्तरविधेयप्रतिपन्मन्त्रान्तरेण च सहाष्टदोषदुष्टे विकल्पोऽपि परिहरणीय इत्यपेक्षितत्वात् तद्द्वित्वविवक्षापि युक्ता। इह'त्वक्षिणी' इत्येतन्नोत्पाद्योद्देश्यपरम्। न वा तद्द्वित्वसङ्ख्यापेक्षं किञ्चिद्विधेयमस्ति। तस्मात्तत्र'यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र हविरुभयत्वस्येवाक्षिद्वित्वस्याविवक्षैव न्यायप्राप्ताऽवतिष्ठते। नन्विहाद्वित्वविवक्षायां द्विवचनं किमालम्बनं ग्रहैकत्वहविरुभयत्वविवक्षायामेकवचनमुभयपदं च किमालम्बनम्। तत्त द्ग्रहगतैकत्वानुवादकमेकवचनम्। कदाचिदुभयार्तेरपि सम्भवात् पक्षप्राप्तोभयत्वानुवादकमुभयपदमिति चेत्तर्हि त्रिषु लोचनेषु द्वयोर्द्वयोः प्रत्येकं वर्तमानं द्वित्वं द्विवचनमनुवदतीत्यस्तु। स्यादेतत्। 'ग्रहं सम्मार्ष्टी'त्यत्रैकवचनं जात्येकत्वावलम्बनम्। यथा 'वृषलैर्न प्रवेष्टव्य' मित्यत्र बहुवचनं तद्बहुत्वावलम्बनम्। न हि तद्बहुवचनं नित्यवत् श्रुतं पक्षप्राप्तबहुत्वानुवादकमिति यु

**इति त्रिलोचनस्य परमेश्वरस्य लोचनद्वयग्रहणं पुण्डरीकसादृश्यवर्णनार्थं, न तृतीयलोचनाभावद्योतनपरम् । तथा हि–त्रिपुत्रं ब्राह्मणं प्रति 'द्वौ पुत्रावस्याग्नि-**

क्रम् । न च तत्रैव प्रत्येकबहुलत्वावलम्बनमिति वक्तुं शक्यम् । ( जातिर्बहुत्वावलम्बनमिति वक्तुं शक्यम् । ) वस्तुत एकस्यामपि जातौ 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति ( पा०. १. २–५८ ) सूत्रसिद्धस्यातिदेशकस्य बहुत्वस्यापि सत्त्वात् । ततश्च जातौ मुख्यस्यैकत्वस्यातिदेशिकस्य बहुत्वस्य चाव्यभिचारित्वात् जातिविवक्षायां श्रूयमाणयोरपि तयोरविवक्षा युक्ता । यथोदाहृतविधिनिषेधयोः द्वित्वविवक्षा न युक्ता । जातिविवक्षायां जातौ द्वित्वस्य कथमप्यप्राप्तेः । व्यक्तिविवक्षायामपि तत्र तस्य नियतस्याप्राप्तेः । तस्मादेकत्वबहुत्वन्यायाविषयत्वाद्द्वित्वस्य श्रूयमाणस्य विवक्षैव युक्ता । न च तथा सति 'यस्योभयं हविरार्तिं'मित्यत्रापि द्वित्वस्य विवक्षायामन्यतरार्तौ नैमित्तिकाभावप्रसङ्गः । तत्र द्वित्वमात्रं न श्रुतम् । किं तु द्व्यवयवस्समुदायः । 'संख्याया अवयवे तय'बिति ( पा०–५—२–४२ ) विहितस्य श्रूयमाणसंख्याविशेषयुक्तावयवघटितसमुदायार्थस्य तयप्प्रत्ययस्य 'द्वित्रिभ्यां तयस्यायज्वा । ( पा०–५–२–४३ ) ' उभादुदात्तो नित्य'मित्यु ( पा०५–२–४४ ) भशब्दात्परतायामयजादेशविधानात् । ततश्चोभयशब्दार्थस्यावयवद्वयारब्धसमुदायस्यैकावयवनाशेऽपि नाशोऽस्तीति युक्तं, तत्रान्यतरनाशेऽपि नैमित्तिकानुष्ठानमिति वैषम्यात् । इत्थमेव हेलाराजीय टीकायाम् 'एकत्वं वा बहुत्वं वा केषाञ्चिदविवक्षितम् । तद्धि जात्यभिधानाय द्वित्वं तु स्याद्विवक्षित'मित्यादिश्लोकव्याख्यानेषु प्रपञ्चितम् । तस्माच्छाब्दिकमर्यादया ग्रहैकत्वादिवद्द्वित्वस्याविवक्षोक्तिर्न युक्तेति चेत् उच्यते । शाब्दिकमर्यादावलम्बनेऽपि जातिविवक्षायां तदविवक्षोक्तिर्युक्ता । यत्तु जातिविवक्षायामेकवचनं बहुवचनं वा प्राप्नोति न द्विवचनमिति । सत्यमन्यत्र व्रीह्यादिजातिषु तथैव । स्तनलोचनादिजातिविवक्षायां तु द्विवचनमपि पक्षे भवति । 'स्तनादीनां द्वित्वाविष्टा जातिः प्रायेणे'ति वामनसूत्रे विधानात् ॥ 'स्नान्तीनां बृहदमलोदबिंदुचित्रौ रेजाते रुचिरदृशामुरोजकुंभौ' ॥ इत्यादिकाव्यप्रयोगदर्शनात् ॥ 'तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिंदवः॥ दीपाभ्यामिव दीप्ताभ्यां सार्चिषस्तैलबिंदवः॥' इति रामायणे दशाननक्रोधवर्णने नेत्राभ्यामिति द्विवचनदर्शनात्॥ तस्मात् स्तनलोचनादिजातिष्वेकत्वबहुत्ववद्द्वित्वस्यापि प्राप्तत्वात्तासु तस्याप्यविवक्षा युक्ता । 'द्वित्वं तु स्याद्विवक्षित'मिति वचनं तु द्वित्वानाविष्टव्रीह्यादिजातिविषयमिति न विरोध इति । एवमक्षिद्वित्वाविवक्षयोपपादयितुं शक्येऽपि प्रकृतेऽर्थे यदि कश्चिन्मीमांसान्यायानभिज्ञो मन्येत अस्य विग्रहस्य पारमेश्वरत्वं व्यवस्थापनीयमिति पक्षपातमात्रेण द्वित्वविवक्षां ब्रवीति न तु श्रूयमाणस्य द्विवचनस्यार्थाविवक्षाकल्पनं युक्तमिति तं प्रति तद्विवक्षामङ्गीकृत्य परिहारो भाष्यकारेणोच्यते 'यथाकप्यास'मित्यादिना । पुण्डरीकेति । कप्यासविशेषणलब्धविकसितपुण्डरीकसादृश्यवर्णनार्थमित्यर्थः । पुण्डरीकमात्रसादृश्यं तु तृतीयलोचनस्यापि साधारणमेव । ननु, लोचनविशेषणं द्वित्वं कथं लोचनान्तरव्यवच्छेदकं न स्यादित्याशङ्क्य दृष्टान्तमुखेनोपपादयति–तथाहीति । ननु सर्वत्र न्यूनाधिकसङ्ख्यान्यवच्छेदः सङ्ख्याविशेषविवक्षायाः फलम् । तथा च पुत्रगतद्वित्वसङ्ख्या विवक्षिता तद्ग-

(१) एतद्रेखाङ्कितं वाक्यं केषु चित्पुस्तकेषु न दृश्यते ।

कल्पा'वित्युक्ते द्विसंख्याग्रहणं न शेषपुत्रनिषेधपरं, किन्तु पुत्रद्वयस्याग्निसादृश्यपरम्, तद्वदत्रापि। कमुदकं रश्मिभिः पिबतीति कपिरादित्यः, तेनासितं विकसितं पुण्डरीकं यथा स्फुरति तथा परमेश्वरस्य लोचनद्वयम्। तृतीयलोचनं तु मुकुलितस्वभावं विकसितपुण्डरीकसदृशं न भवति, मुकुलितपुण्डरीकसदृशमित्यभिप्रायः॥'असौ योऽवसर्पति नीलग्रीवो विलोहितः,उतैनं गोपा अदृशन्नदृशन्नुदहार्यः, उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः, ( तै. सं. ४-५-१. ) इति नीलग्री-

---

ताधिकसङ्ख्याव्यवच्छेदेन पुत्रान्तरनिषेधे कथं न पर्यवस्येदित्याशङ्कां निराकरोति–किंत्विति। इह द्वित्वसङ्ख्या न स्वयं विधेया। किं तु उद्देश्यतावच्छेदकीभूतपुत्रगताग्निसादृश्यविधानार्था। तथा चाग्निसदृशपुत्रगताधिकसङ्ख्याव्यवच्छेदेन पुत्रान्तरगताग्निसादृश्यनिषेधे पर्यवस्येदिति भावः। ननु दृष्टान्ते द्वावित्यधिकविशेषणोपादानात्तथा भवतु नाम। इह तु 'द्वे' इत्यधिकविशेषणाभावान्नाक्ष्यन्तरगतपुण्डरीकसादृश्यनिषेधः प्राप्नुयात्। न हि द्वाविति विशेषणं विहाय 'अस्य पुत्रावग्निकल्पा'वित्युक्तेऽपि पुत्रान्तरगताग्निसादृश्यनिषेधो लभ्यते। तथा चाक्षिगतसङ्ख्या विवक्षिताक्ष्यन्तरनिषेध एव पर्यवस्येत् निषेध्यान्तराभावादित्याशङ्क्याह–तद्वदत्रापीति। विधेयान्तरवत्युद्देश्ये विवक्षिता सङ्ख्योद्देश्यादन्यत्र गतस्य विधेयस्य निषेधं प्रापयति। 'अस्य पुत्रावग्निकल्पा'वित्यत्रोद्देश्यविशेषणत्वात्सङ्ख्या न विवक्षितेति न तयान्यत्र विधेयस्याग्निकल्पत्वस्य निषेधः। नाप्युद्देश्यतावच्छेदकस्य पुत्रत्वस्य। किं 'त्वस्य पुत्रौ पठत' इत्यादाविव यथाप्राप्तसङ्ख्यानुवादमात्रम्। 'द्वावस्य पुत्रावग्निकल्पा' वित्यत्र तु द्वयोर्यजमानयो' रित्यत्रेव, द्विशब्दवैयर्थ्यपरिहाराय द्वित्वविवक्षावश्यंभाविनी। अतस्तत्र 'अस्य पुत्राणां मध्ये द्वावग्निकल्पा'विति द्वित्वस्योद्देश्यतावच्छेदकत्वेन विवक्षितत्वे सति विधेयस्याग्निकल्पत्वस्य पुत्रान्तरे निषेधः। इह तद्वदे'वाक्षिणी' इति द्विवचनोक्तस्याप्युद्देश्यविशेषणस्य द्वित्वस्य विवक्षितत्वाङ्गीकारे अक्ष्यन्तरे विधेयस्य पुण्डरीकसादृश्यस्यैव निषेधो भवेत् न त्वक्ष्यन्तरस्येति भावः। ननु परमेश्वरस्य तृतीयेऽक्षिणि पुण्डरीकसादृश्यस्य नापि कप्यासविशेषणलब्धलौहित्यविशेषशालिपुण्डरीकसादृश्यस्य निषेधस्सम्भवति। तस्यापि तथात्वादित्याशङ्क्य कप्यासशब्दमन्यथा व्याचष्टे–कमुदकमिति। प्रतिपादितन्यायैरिह वर्णितस्य विग्रहस्य पारमेश्वरत्वनिश्चये सति यद्यक्षिणी इत्यत्रोद्देश्यविशेषणस्य द्वित्वस्य न्यायविरुद्धमपि विवक्षितत्वमङ्गीक्रियते तदा तस्य 'द्वावस्य पुत्रावग्निकल्पा' वित्यत्रेवान्यगतविधेयनिषेधपर्यवसायित्वावश्यंभावेन तन्निर्वाहाय रूढिप्राबल्यादिन्यायं परित्यज्य कप्यासपदमेव व्याख्येयमिति भावः। कशब्दोपपदात् 'पा पान' इति धातोरौणादिक इकारप्रत्यये आतो लोपे च सति निष्पन्नः कपिशब्दः 'असु क्षेपण' इति धातोरस्यते विकास्यत इति कर्मणि घञन्तः। ततश्च कपेरासं विकास्यमिति कृद्योगलक्षणषष्ठीसमासः। तेनासितमिति भाष्ये स्वकीयनिष्ठान्तप्रयोगानुसारेण तृतीयाप्रयोगः। आसितमिति 'असु क्षेपणे' इति धातोर्ण्यन्तान्निष्ठायां रूपम्। मुकुलितेति। विशिष्टविधेयनिषेधोऽत्र विशेषणमात्रनिषेधपर्यवसायीति भावः॥ उत्तरसूत्रमवतारयति–असौ य इति। सिद्धान्तोपक्रमे परमेश्वर एवेति प्रतिज्ञावाक्येन 'नेतरोऽनुपपत्ते'रिति ( ब्र०-१-१-१७) सूत्रान्नेतर इत्यस्यानुवृत्तिमङ्गीकृत्यादित्यान्तर्वर्ती पर-

वस्य परमेश्वरस्य सर्वभूतप्रत्यक्षत्वावगमात्, 'स्वरुचाहितमण्डलस्त्रिनेत्रो रविः' इति तस्य त्रिलोचनत्वावगतेश्च, आदित्य एव प्रत्यक्षः परमेश्वरः प्रभामण्डलमध्यवर्ती । अन्यथा कथमस्य नीलग्रीवत्वं त्रिलोचनत्वं चोच्येत, 'असावादित्यो ब्रह्म' ( तै. आ. २-२. ) इति ब्रह्मत्वव्यपदेशश्च । तस्मात् 'अन्तरादित्ये' इति मण्डलवर्ती सूर्य एव हिरण्मयः पुरुष इत्यत आह—

**भेदव्यपदेशाच्चान्यः ॥ २२ ॥**

मण्डलाभिमानिनोऽस्मात् चेतनरूपात् आदित्यादन्य एव हिरण्मयरूपः परमेश्वरः, भेदव्यपदेशात् 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः,' (बृह. ५-७. ) इति । अत्रामृतशब्देन शिव उच्यते 'एतानि ह वा अमृतस्य नामधेयानि' ( जाबाल. ३. ) इति शतरुद्रीयप्रशंसापरजाबालोपनिषच्छ्रवणात् आदित्याद्भेद एव परमेश्वरस्य तदविदितत्वादिधर्मैः व्यपदिश्यते ।

---

मेश्वरः न तु मण्डलाभिमानी पुरुष इति साध्यं दर्शितम् । तत्रेयमाशङ्का । अस्तु परमेश्वरस्स तु मण्डलाभिमानिनः पुरुषादन्यो न भवति । 'असौ योऽवसर्पती'ति मन्त्रे यमतिपामरा गोपाला उदकुम्भहारिण्यः स्त्रियोऽन्यानि च सर्वाणि भूतानि व्योम्नि सञ्चरन्तं पश्यन्ति तस्यैव मण्डलाभिमानिनः पुरुषस्य नीलग्रीवत्वरूपपरमेश्वरासाधारणधर्मोपदेशात् । न च मण्डलमेव सर्वे पश्यन्ति न तु मण्डलाभिमानिनं नीलग्रीवमिति मन्त्रस्य यथाश्रुतार्थबाधः शङ्कनीयः । मण्डलस्यापि तदभिमानिपुरुषशरीरत्वेन मण्डलदर्शनस्य तच्छरीरकपुरुषदर्शनत्वोक्त्युपपत्तेः । 'ध्यायन्नुपविष्टस्तिष्ठन्परमेश्वरमवलोकयन् देवदत्तो मया दृष्ट' इत्यादिव्यवहारदर्शनात् । न च तस्य त्रिलोचनत्वाभावादक्षिद्वित्वविवक्षाप्राप्तमुकुलितलोचनान्तरवत्त्वायोगः । 'अरुणोऽरुणपङ्कजे निषण्णः कमलाभीतिवरान्करैर्दधानः । स्वरुचाहितमण्डलस्त्रिनेत्रो रविराकल्पशताकुलोऽवतान्नः ॥ " इत्यभियुक्तकृते तद्ध्यानश्लोके तस्य त्रिनेत्रत्वप्रतिपादनात् । तस्मान्मण्डलाभिमानी पुरुष एव परमेश्वरः स एव विषयवाक्येऽस्मिन्नुपास्यः प्रपितायते न तु तस्यान्तरः कश्चिदित्येवमाशङ्कानिराकरणार्थमुत्तरसूत्रमित्यर्थः॥ सू॥ भेदव्यपदेशाच्चान्यः ॥२२॥ ननु, 'य आदित्ये तिष्ठ'न्नित्यादिश्रुतावादित्यशब्दो मण्डलवाची । 'य एष एतस्मिन्मण्डले पुरुष' इति बृहदारण्यके 'एष एतस्मिन्मण्डलेऽर्चिषि पुरुष' इति तैत्तिरीये च पुरुषस्य मण्डलस्थत्वोक्तेः तदैकार्थ्यौचित्यात् । न चादितिशब्दान्निष्पन्नोऽपत्यार्थण्यप्रत्ययश्चेतन एवान्वेति न मण्डल इति वाच्यम् । अपत्यार्थण्यप्रत्ययानन्तरं 'तस्ये' दमित्यर्थे ण्यप्रत्ययान्तरनिष्पत्त्या तद्वाचित्वोपपत्तेः । 'दित्यदित्यादित्यपत्त्युत्तरपदाण्ण्य' इति ( पा०-४-१-८५. सू. ) ण्यप्रत्ययविधानस्य प्राग्दीव्यतीयसर्वार्थसाधारणत्वात् । ततश्च मण्डलाभिमानिपुरुषादसिद्धो भेदव्यपदेश इत्याशङ्क्याह—तदविदितत्वादिधर्मैरिति । 'यमादित्यो न वेदे'त्यत्र वेदनप्रसक्तिमत्त्वाच्चेतन एवादित्यशब्दार्थ इत्यवगम्यते । 'यमादित्यो न वेद यस्यादित्यश्शरीर'मिति पुल्लिङ्गाभ्यामपि तथाऽवगम्यते । श्रुत्यन्तरोक्तमण्डलपरत्वे हि नपुंसकलिङ्गता स्यात् । तैत्तिरीये 'य एष एतस्मिन्मण्डलेऽर्चि-

**तस्मादादित्याचेतनादन्य ईश्वरो हिरण्मयः 'नीलग्रीवो विलोहितः' ( तै. सं- ४-५-१. ) इति नीलग्रीवः परमेश्वर एवादित्यान्तर्वर्ती प्रतिपाद्यते। तदात्मतया तच्छब्दवाच्यत्वम् ॥ ननु न नीलग्रीवः परमेश्वर आदित्यान्तर्वर्ती, किन्तु नारायण एव। तथा हि, सर्वत्र लौकिकाः पठन्ति—'ध्येयस्सदा सवितृमण्डलम-**

षि पुरुष' इति मण्डलाभिमान्यादित्यवर्णनानन्तरं 'य एषोऽन्तरादित्ये हिरण्मयः पुरुष इति तदान्तरत्वेन परमेश्वरवर्णनाच्च तथाऽवगम्यते। एवं च 'य आदित्ये तिष्ठ'न्नित्यादित्यशब्दस्य ण्यप्रत्ययद्वयान्ततया प्रक्रियागौरवमपि नाश्रयणीयम्। उदाहृतबृहदारण्यकश्रुतेर्हिरण्यगर्भविषयत्वस्य प्रागुपपादितत्वात्तैत्तिरीयश्रुतेस्स्वान्तर्वर्त्तिपरमेश्वरान्यमण्डलाभिमानिविषयत्वस्य तत्रैव स्पष्टत्वाच्च । 'य आदित्ये तिष्ठ'न्नित्यादिपरमेश्वरविषयश्रुतौ तदैकार्थ्यं नानुसरणीयम् । परमेश्वरस्य मण्डलस्थत्वं क्वचिदाम्नातमस्ति चेत्पर्यङ्कस्थराज्ञः प्रासादस्थत्ववत्तदुपपद्यते । एवमुक्तन्यायैः प्रकृतविषयवाक्येऽप्यादित्यशब्दो मण्डलाभिमानिपुरुषपर इति भावः। तस्मादादित्यादिति । यद्यपि हिरण्यगर्भाद्भेदः पूर्वाधिकरणे सिद्धः। तथाप्यदितिपुत्रत्वेन प्रसिद्धान्मण्डलाभिमानिनः पुरुषाद्भेदोऽनेन सूत्रेण प्रतिपाद्यत इति भावः। 'असौ योऽवसर्पती'ति मन्त्रो न मण्डलाभिमानिपुरुषपरः। किं तु तदन्तर्वर्तिपरमेश्वरपरः। तच्छरीरकतया तत्प्रतिपादकशब्दविषयत्वं तस्योपपद्यत इत्याह— नीलग्रीवइति। भेदव्यपदेशसूत्रे चकारेण नारायणादप्ययमन्य इति दर्शितम्। तदुपपादयितुमाशङ्कते—नन्विति। लौकिकप्रसिद्धिपुण्डरीकाक्षत्वलिङ्गाभ्यामादित्यान्तर्वर्त्ती हिरण्मयः पुरुषो नारायणस्स एव सर्वलोककामेश्वरत्वादिपारमैश्वर्यशालीति प्राप्ते परिहारः—तैत्तिरीयोपनिषदि तमेव मण्डलाभिमान्यादित्यान्तरं हिरण्मयं पुरुषं प्रस्तुत्य तस्य छान्दोग्ये 'तस्यर्क्साम च गेष्णा'वित्यादिना वर्णितं स्तोत्रीयनानासूक्तप्रतिपाद्यतेजःप्रभृतिप्रधानसूर्यादिसकलदेवतारूपविभूतिमत्त्वं 'आदित्यो वै तेज ओजो बल'मित्यादिना प्रतिपाद्य तस्य भूतपतित्वलिङ्गेन 'सर्वो वै रुद्रः' 'पुरुषो वै रुद्रः' 'सर्वो ह्येष रुद्र'इतिरुद्रशब्दाभ्यासेनाभ्यस्तेनोमापतित्वलिङ्गेन च परमेश्वरत्वाविष्करणादसन्दिग्धार्थवाक्यान्तरानुसारेण विवादविषयवाक्यार्थनिर्णयस्य युक्तत्वाच्चासन्दिग्धार्थसमानविषयवाक्यान्तरगतान्नारायणभेदकपरमेश्वरधर्मव्यपदेशात्ततोऽन्यः परमेश्वर एवायम्। न चात्र सर्वात्मना हिरण्मयत्वमुक्तं वाक्यान्तरे बाहुमात्रे तदुक्तमिति भेदः शङ्कनीयः। तत्रापि 'य एषोऽन्तरादित्ये हिरण्मयः पुरुष' इत्युपक्रमानुसारेण बाहुग्रहणस्य सर्वावयवोपलक्षणत्वात्। न च 'सर्वो वै रुद्र' इत्यारभ्य अन्तरादित्यविद्याप्रकरणविच्छेदः शङ्कनीयः । असम्बन्धिपदनिचयव्यवधानादेर्भेदकस्याभावादादित्यान्तर्वर्त्तिनो हिरण्मयपुरुषस्योपासनार्थं रूपविशेषापेक्षायां तत्समर्पणपरत्वेनैकवाक्यतासमर्थत्वाच्च। सूर्यहृदये—'नमस्ते घृणिने तुभ्यं सूर्याय ब्रह्मरूपिणे। त्वमेव ब्रह्म परममापो ज्योती रसोऽमृतम्। भूर्भुवः स्वस्त्वमोङ्कारस्सर्वो रुद्रस्सनातनः। पुरुषस्सन्महोऽतस्त्वां प्रणमामि कपर्दिनम्। त्वमेव विश्वं बहुधा जातं यज्जायते च यत्। नमो [1]भीमाय रुद्राय त्वामहं शरणं गतः।

(१) 'नमो त्निजाय रुद्राय' इति ङ च. पाठः।

ध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः ।' इति । तस्यैव पुण्डरीकसदृशाक्षिद्वयसंबन्धो युक्तः, पुण्डरीकाक्ष इति प्रसिद्धेः । किमन्यथाप्रतिपादनप्रयासेन इति चेत् न, परमेश्वरासाधारणलिङ्गानां हिरण्मयपुरुषे दृश्यमानानां तस्मिन् नारायणेऽनुपपत्तेः । तथा हि—सूत्रविषयस्य संदिग्धस्यास्य वाक्यस्यासन्दिग्धैर्वाक्यान्तरैर्निर्णयो युक्तः । महोपनिषदि श्रूयते, 'आदित्यो वा एष एतन्मण्डलं तपति' इत्यादि । तत्र 'य एष एतस्मिन् मण्डलेऽर्चिर्दीप्यते' इति मण्डलप्रभामुक्त्वा 'य एष एतस्मिन् मण्डलेऽर्चिषि पुरुषः' इति मण्डलाभिमानिनं सूर्यमभिधाय ' य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति हिरण्मयं पुरुषमादित्यान्तर्यामिणमुक्त्वा पुनः 'आदित्यो वै तेज ओजो बलं यशः' इत्यादिना तस्यादित्यरूपस्य विभूतिमभिधाय ' एष पुरुष एष भूतानामधिपतिः' इति भूतपतित्वेन तं निर्दिश्य,पुनः कीदृश इत्याकाङ्क्षायां 'सर्वो वै रुद्रः' इत्यारभ्य 'हिरण्यबाहवे हिरण्यपतयेऽम्बि-

---

प्रचेतसे नमस्तुभ्यं नमो मीढुष्टमाय च । नमो नमस्ते रुद्राय त्वामहं शरणं गतः । हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः । अम्बिकापतये नित्यमुमायाः पतये नमः ॥' इति । 'सर्वो वै रुद्र' इत्याद्यनुवाकत्रयस्य 'घृणिस्सूर्य'इत्याद्यनुवाकैकवाक्यतया अन्तरादित्यविद्यापेक्षितरूपसमर्पणपरत्वस्य स्फुटीकरणाच्चेति । अत्र भाष्ये तैत्तिरीयमहोपनिषद्वाक्योपन्यासोऽन्येषामपि वेदत्रयसमाम्नातानां निर्णायकवाक्यानामुपलक्षणार्थः । तथा हि—ऋक्संहितायां तावत् 'कद्रुद्राय प्रचेतसे' इति रुद्रसूक्ते परमेश्वरं प्रस्तुत्याम्नायते—'यः शुक्र इव सूर्यो हिरण्यमिव च रोचते । श्रेष्ठो देवानां वसु'रिति । शुक्र इव तन्नामप्रवृत्तिनिमित्तात्सर्वपापराहित्याच्छुभ्र इव हिरण्यमिव उज्ज्वलविग्रहत्वात् सुवर्णमिव च रोचते देवानां श्रेष्ठो वसुरुत्तमं धनं तद्वत्सर्वकामसाधनश्च सूर्यान्तर्वर्ती परमेश्वर इति वर्णनया छान्दोग्ये वर्णितानि नामगुणौ विग्रहो देवकामेश्वरत्वं चेति विशेषणान्येव सङ्ग्रहेण दर्शितानि । तत्प्रत्यभिज्ञानाद्वसुरिति पुल्लिङ्गत्वं छान्दसं योजनीयम् । तथा यजुस्संहिताया'मसौ यस्ताम्रोऽरुण' इत्यादिमंत्रद्वयमादित्यान्तर्वर्तिनं शिवं प्रतिपादयतीति स्पष्टमेव । सामगानां कृच्छ्राङ्गादित्योपस्थानमन्त्रेषु 'नमो रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचरायाधिपतये हरये शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमः सूर्यायादित्याय नमः नमो नीलग्रीवाय शितिकण्ठाय नमः नमश्चन्द्रललाटाय कृत्तिवाससे नम इति मन्त्राश्चान्तरादित्यवर्तिनं शिवमेवाविष्कुर्वन्ति । अत एव रामायणेऽप्यादित्यस्य शिववपुष्ट्वमुक्तम् । 'ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नम'इति । अस्यार्थस्यैव वेदत्रयप्रसिद्धत्वं कूर्मपुराणे दर्शितम् । 'एष रुद्रो महादेवः कपर्दी च घृणी हरिः । आदित्यो भगवान्सूर्यो नीलग्रीवस्त्रिलोचनः । अधीयते सहस्रांशुस्सामगाध्वर्युहोतृभि'रिति । शिवपुराणेऽपि तत्तद्वेदवाक्यस्थितविशेषणसङ्ग्रहेणायमर्थो दर्शितः । सर्वो रुद्रो नमस्तस्मै पुरुषस्सन्परो महान् । हिरण्यबाहुर्भगवान् हिरण्यपतिरीश्वरः । अम्बिकापतिरीशानः पिनाकी वृषवाहनः ।' इत्यारभ्य हिरण्यकेशः पद्माक्षो ह्यरुणस्ताम्र एव च । यो वसर्पत्यसौ देवो नीलग्रीवो हिरण्मय' इत्यन्तेन । तस्मान्निर्णीतार्थवाक्यानुसारेण विवादविषये छान्दोग्यवाक्येऽप्यन्तरादित्यवर्ती शिव एव प्रतिपाद्योऽ

कापतय उमापतये' इत्युपसंहृतम् । तत्र बाहुग्रहणस्योपलक्षणत्वाद्धिरण्यरूप इति तात्पर्यम्। अतो हिरण्यसदृशरूपः उमापतिरादित्यमण्डलवर्तीति सिद्ध्यति। अत्र नीलग्रीवत्वमुमापतित्वमित्यादि विशेषलिङ्गम्, परमेश्वरादन्यत्र तस्यायोगात्। पुण्डरीकाक्षत्वं साधारणं लिङ्गं, नारायणादन्यत्रापि तस्य दर्शनात् कमललोचना नारी कमललोचनः पुरुष इति। अतो विशेषलिङ्गेन सामान्यलिङ्गस्य बाधः। 'ध्येयः सदा' इत्यादि लौकिकं वचनं भाक्तमेव। ततो हिरण्यसदृशरूपस्त्रिलोचनो नीलग्रीव उमापतिः सकललोककामेश्वरः सर्वपाप्मानाघ्रातो भगवान् परमेश्वर आदित्यान्तर्वर्ती सावित्रीप्रतिपाद्यः सर्वेषां मुमुक्षूणां ध्येय इति सिद्धम्॥

---

वसीयत इत्युपसंहरति—अत इति। पुण्डरीकाक्षत्वमिति। पुण्डरीकाक्ष इति नामैवासाधारणं न तु पुण्डरीकसदृशलोचनत्त्वम्। अतस्समानार्थशाखान्तरगतेनापि शिवासाधारणलिङ्गेन तस्य बाधः। लौकिकं वचनमिति। पौरुषेयं पौराणिकवचनं भाक्तं तद्भक्तविषयं विष्णुपूजावसाने विष्णोरादित्यमण्डले ध्येयत्वपरं न तु विष्णोरादित्यान्तर्वर्तित्वप्रतिपादनपरम्। सर्वदेवतानामपि हि तत्तन्मन्त्रादिनिष्ठैरादित्यमण्डले ध्यानं कार्यमिति विधानं दृश्यते। विशिष्य च विष्णोर्द्वादशादित्यान्तर्गतस्योपेन्द्ररूपस्य मासविशेषमण्डलाधिष्ठानाधिकारनिर्वर्तकत्वेन तत्र सन्निधानं स्मृतिपुराणेषु प्रसिद्धमिति भावः। सावित्रीप्रतिपाद्य इति। 'आदित्यमण्डलासीनं रुक्माभं पुरुषं परम्। ध्यायञ्जपेत्तदित्येतान्निष्कामो मुच्यते द्विजः। आदित्यमण्डलान्तःस्थं परं ब्रह्माधिदैवतम्। छन्दो निचृत्स्याद्गायत्री मया दृष्टा सनातनी' त्यादिस्मृतिवचनैरादित्यान्तर्वर्ति परं ब्रह्म गायत्रीप्रतिपाद्यमिति तावदवसीयते। तच्च शिव एवेत्यनुपदं व्यवस्थापितम्। तदनुसारेण 'विश्वामित्र ऋषिश्छन्दो गायत्री देवता रवि' रित्यादिस्मृतिषु रविवाचकं पदं तदन्तर्यामिणि पर्यवस्यति। सवितुर्वरेण्यमिति सवितृवरणीयत्वप्रतिपादनादपि'येन सूर्यस्तपति तेजसेद्ध'इति मन्त्रेण सवितुस्तेजःप्रदतया समाश्रयणीये तदन्तर्यामिणि शिवे पर्यवस्यति। न च सवितुर्भर्ग इत्यन्वयोऽस्तु। तथा सति सवितृशब्दस्य जगत्प्रसवितरि ब्रह्मणि वृत्त्या भर्ग इत्यस्य 'भञ्जो आमर्दन' इति धातोरसुन्प्रत्ययेन निष्पन्नस्य पापभञ्जके तस्मिन्नेव ब्रह्मरूपे ज्योतिषि वृत्त्या'राहोश्शिर'इतिवदुपचारेण सवितुर्भर्ग इत्यस्य ब्रह्मैवार्थस्स्यादिति वाच्यम्। सवितृशब्दस्य सन्निहितं प्रतिसम्बन्ध्यपेक्षं 'तदक्षरं तत्सवितुर्वरेण्यं' 'तां सवितुर्वरेण्यस्य चित्रा' मित्यादिमन्त्रान्तरेषु क्लृप्तस्वान्वयं वरेण्यशब्दं विहायान्यान्वयासम्भवात् उदाहृतस्मृतिवचनजातसिद्धस्यादित्यान्तर्वर्ति परं ब्रह्म गायत्र्या दैवतमित्यस्यार्थस्य प्रसिद्धये सवितृशब्दस्य रविपरत्वावश्यम्भावाच्च। मैत्रायणीयानां गायत्र्यर्थनिरूपणप्रकरणगतेन 'यदेष रुद्रो भर्गाख्यो ब्रह्मवादिन' इति वाक्येन तलवकारिणां 'द्वितीयपादो भर्गमय' इति वाक्येन 'आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभि'रिति योगयाज्ञवल्क्यस्मृतिवचनेन 'तद्भर्गाख्यं किमपि परमं धाम भर्ग प्रपद्य' इति साम्बस्तोत्रप्रयोगेण चाकारान्ततयावगतस्यात एव रूढ्या शिवपरस्य च भर्ग इत्यस्य सकारान्तत्वज्ज्योतिःपरत्वयोरयोगाच्च। न च वाच्यमकारान्तत्वे 'धीमही' त्यनेन कर्माकाङ्क्षेणान्वयो न स्यादिति। छन्दसि विभक्त्यादिव्यत्ययस्मरणेन 'सुपां सुलु'गित्यादिसूत्रतः स्वादेशेन वा भर्ग इत्यस्य कर्मार्थ-

त्वोपपत्तेः । प्रधानप्रकृत्यंशमुख्यार्थलाभार्थं प्रथमाविभक्तिव्यत्ययादिकल्पनोपपत्तेः । न च तथा सति तदिति नपुंसकनिर्देशानुपपत्तिः। नपुंसकलिङ्गस्य तत्पदस्य ब्रह्मनामतया तदुपपत्तेः। 'तदिति वा एतस्य महतो भूतस्य नाम भवति योऽस्यैतदेवं नाम वेद ब्रह्म भवतीत्यै'तरेयोपनिषदि 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति गीतासु च तस्य तन्नामत्वप्रसिद्धेः। न च तथा सति उत्तरार्धगतयत्पदाकाङ्क्षापूरणाय तत्पदान्तरमध्याहरणीयं स्यादिति वाच्यम्। उत्तरवाक्यगतयत्पदस्य तत्पदनिरपेक्षतायाः 'वीरप्रसूर्जगति भार्गव रेणुकैव या त्वां त्रिलोकतिलकं सुतमभ्यसूत' अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधु'रित्यादिलोकवेदप्रयोगेषु सुप्रसिद्धत्वात् तथैव शब्दविद्भिरालङ्कारिकादिभिर्व्युत्पादितत्वाच्च तदित्यस्य पुलिङ्गयत्पदप्रतिनिर्देशकत्वकल्पनस्य क्लिष्टत्वाच्च । यदि भर्ग इत्यस्य सकारान्तत्वमिष्यते तथापि छान्दसो वर्णविकार इत्यकारान्तरूढ्या शिववाचित्वमेव तस्य सिद्ध्यति न तु सान्तयोगेन ज्योतिर्वाचित्वम्। रूढशब्दत्वकल्पनसम्भवे यौगिकशब्दत्वाभ्युपगमायोगात् । किञ्चिद्वर्णविकारेऽपि बहुसारूप्ये लोकवेदयोः शब्दतदर्थानन्यत्वस्य लोकवेदाधिकरणसिद्धत्वात् 'गूढोत्मा न प्रकाशते' 'सर्वप्रोक्तं त्रिविधं ब्रह्ममेतत्' 'ऊर्ध्वरेतं विरूपाक्षं' 'चक्षोस्सूर्यो अजायते'त्यादिषु आत्मादिशब्दानामाकाराभावादिविकारे सत्यप्यात्मादिशब्दरूपत्वस्य प्रसिद्धार्थपरत्वस्य चाङ्गीकाराच्च । एवं च देवस्य द्युतिमतः सवितुरादित्यस्य वरेण्यं तेजःप्रदत्वेन समाश्रयणीयं भर्ग शिवं ध्यायामः य आदित्यान्तर्वर्ती भर्गो नोऽस्माकं धियः प्रचोदयात् अन्तर्यामित्वेन प्रेरयति इति मन्त्रयोजना । ननु 'यो देवस्सवितास्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे ॥' इति स्मृतौ यदिति विशेषणेन भर्ग इत्यस्य सान्तत्वं प्रख्याप्य तस्य सवितुरित्यनेनान्वयं धीप्रेरकत्वस्य सवितृविशेषणत्वं च समाश्रित्य विधान्तरेण योजना दर्शिता । सत्यम्। पूर्वोदाहृतसवितृवरेण्यशब्दान्वयोपपादकन्यायविरुद्धत्वान्नातीव श्रद्धेया सा॥ 'धियो यो न' इत्यस्यादित्यपरत्वे च प्रकाशदानेन चाक्षुषज्ञानजनकतामात्रं तदर्थः स्यात्। असङ्कुचितधीप्रेरकत्वं तदर्थो न स्यात् । तदेव हि तदर्थत्वेन वाच्यम्। असङ्कोचलाभात् । 'स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेव तदिति विद्यात्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तम् । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणत्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चे' त्यैतरेयोपनिषदर्थानुरोधाच्च । तत्र ह्य'शरीरः प्रज्ञात्मे'ति जीवानामन्तर्याम्युक्तः । 'तस्मात्पुरुषं पुरुषं प्रती'ति वाक्यशेषात्। शरीरे पुरुष इति यमवोचाम स एवायं दैहिक आत्मा तस्य योऽयमशरीरः प्रज्ञात्मा स रस इति प्राग्जीवान्तर्यामितया तद्रसत्वेन तस्य कीर्तनाच्च । न च न्यायविरोधमुपन्यस्य स्मृतिवचनं कथमुपेक्ष्यत इति वाच्यम्। विधान्तरेणापि मन्त्रयोजनाप्रदर्शकानां स्मृतिवचनानां दर्शनेन परस्परपराहतेषु तेषु न्यायस्यानुरोध्यत्वात्। दृश्यन्ते हि— 'देवस्य सवितुर्मध्ये यो भर्गो नो धियः क्रमात्। प्रचोदयात्तं वरेण्यं धीमहीत्यन्वयक्रमः॥'इत्यादीन्यपि स्मृतिवचनानि । श्रुतिविरोधाच्च तदुपेक्षणीयम् । उदाहृतानि हि भर्गशब्दस्याकारान्तत्वे सवितृवरेण्यशब्दयोः परस्परान्वये च गमकानि श्रुतिवचनानि । तस्माद्गायत्रीमन्त्रगतभर्गश्रुतितद्देवताप्रतिपादकस्मृतिपुराणवचनानुरोधाच्छिवस्यादित्यान्तर्वर्तित्वप्रतिपादकश्रुति-

स्मृतिपुराणवचनानुरोधाच्च गायत्रीप्रतिपाद्यः शिव एव । उक्तं चादित्यपुराणे 'ततो दर्भासने स्थित्वा गायत्रीं प्रजपेद्विजः । यद्गायत्र्याः परं तत्त्वं देवदेवो महेश्वरः । इति ज्ञात्वा जपेद्विद्वान् गायत्र्याः फलमश्नुते ।' इति । नन्वाश्वमेधिके पर्वणि ' तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् । उदुत्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि । गायत्रीं च यथाशक्ति जप्त्वा सूक्तं च मामक'मिति कृष्णवचनेन विष्णोरादित्यान्तर्वर्तित्वं गायत्र्युपास्यत्वं च प्रतिपादितम्। मैवम् । सन्ध्यासु विष्णुभक्तैरादित्यमण्डले तन्मूर्तिर्ध्यातव्येत्येतावत्परं तद्वचनजातम् । न तु विष्णोरादित्यान्तर्यामित्वगायत्रीप्रतिपाद्यत्वपर्यन्तस्थापनक्षमम् । श्रुतिविरुद्धेऽर्थे तस्य तात्पर्यायोगात् । 'ततः षडक्षरं मन्त्रं षट्कृत्वः परिवर्तये'दिति पूर्वश्लोके षडक्षरमन्त्रजपविधानदर्शनेन तदनन्तरमादित्यमण्डले तदर्थध्यानविधेरौचित्याच्च तत्तद्देवतामन्त्रजपनिष्ठानां सर्वेषामपि हि तद्देवतामन्त्रजपानन्तरं तद्देवतापूजानन्तरं च आदित्यमण्डले तद्देवताध्यानविधिरुपलभ्यते । अत एवाग्नेयपुराणे विष्णुपूजां विधाय तदवसाने 'ध्येयः सदे'त्यादिश्लोकः पठितः । किं चाश्वमेधिके वैष्णवधर्मशास्त्रात्मकः कृष्णयुधिष्ठिरसंवादो वैष्णवागमधर्मविधानार्थं प्रवृत्तः न तु वैदिकधर्मविधानार्थम् । 'भगवन् वैष्णवा धर्माः किंफलाः किंपरायणाः । कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशश्च ते । कथं वैखानसा ब्रूयुः कथं वै पाञ्चरात्रिकाः । एवमेतत्पुरावृत्तं वैष्णवं धर्मशासन'मिति तत्रादिमध्यान्तवचनोपलम्भात् । उपक्रमे च ' श्रुता मे मानवा धर्माः' इति वैदिकधर्मेभ्यः श्रुतेभ्यो व्यावर्त्य 'युष्मदीयान्परान्धर्मान्पुण्यान्कथय मेऽच्युते'ति तान्त्रिकधर्माणां प्रश्नविषयेनोपक्षिप्तत्वात् । मानवा धर्मा इति हि वैदिकधर्मा एवोच्यन्ते । 'यद्वै किं च मनुरवदत्तद्भेषज'मिति श्रुतेः कूर्मपुराणे व्यासगीतायां वर्णाश्रमाचारोपदेशानन्तर 'मित्येष मानवो धर्मो युष्माकं कथितं मये'त्युपसंहृतत्वाच्च । एवं च तन्त्रनिष्ठेन गायत्र्या विष्णुचिन्तने कर्तव्येऽपि न तद्वैदिकैः कार्यम् । 'क्वचित्तंत्रानुरोधेन धर्मं पौराणिका अपि । वदन्ति तादृशोंऽशस्तु ग्राह्यस्तन्त्रावलम्बिना । यत्तु तन्त्रानुसारेण कथितं तत्परित्यजेत् । धर्मशास्त्रे पुराणे च यत्नतो वैदिको जनः।' इति पौराणिकैरेव तथाव्यवस्थायाः प्रदर्शितत्वात् । तस्माद्गायत्रीप्रतिपाद्यशिवोऽवसीयत इति भावः ॥ सर्वेषां मुमुक्षूणां ध्येय इति । 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'ति सर्वपापराहित्यफलश्रवणात् ब्रह्मसाक्षात्कारं विना तदसम्भवात् ब्रह्मसाक्षात्कारद्वारा मुक्तिफलकत्वमस्योपासनस्यावसीयत इति भावः । यद्वा । गायत्र्यधिकृतानां सर्वेषामादित्यान्तर्वर्तिनः परमेश्वरस्य गायत्र्योपासनं मुक्तिफलकमित्यनेन वाक्येनोच्यते । अत एव कूर्मपुराणे वसुमनसो राज्ञः शिवं रविमण्डले गायत्र्या चिरमुपासितवतो देहान्ते मुक्तिरुपवर्णिता । अधिकरणार्थमुपसंहरति—इति सिद्धमिति ॥ ॥ इत्यन्तरधिकरणम् ॥ ८ ॥

नयमणिमालायाम्

## अथान्तरधिकरणम् ॥ ८ ॥

सू ॥ अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥ भेदव्यपदेशाच्चान्यः ॥ २२ ॥

कर्मस्पृङ्मण्डले सन्भवतु परशिवो नायमादित्यभिन्नस्तं हि ब्रह्मेति वेदः प्रथयति विदितं तस्य रूपं च शैवम् ।
मैवं भिन्नश्शिवस्त्वयमयितृवचसा भाव्यते मण्डलार्चिस्तद्वत्यादित्यजीवान्तरशिववचसाप्येष तन्नाच्युतोऽपि ॥ २० ॥
न हि कमललोचन इति स्तुतिरन्यत्राच्युतान्न दृष्टास्ति । विकसितसरसिजसाम्यं शंभोरपि नेत्रयोर्द्वयोरेव ॥ २१ ॥

इत्यन्तरधिकरणम् ॥ ८ ॥

## सूत्रार्थचन्द्रिकायाम्

## अथान्तरधिकरणम् ॥ ७ ॥ श्रीकण्ठमते तु ॥ ८ ॥

सू. । **अन्तस्तद्धर्मोपदेशात्** ॥ २० ॥ **भेदव्यपदेशाच्चान्यः** ॥ २१ ॥ अस्याधिकरणस्य 'अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्यधिदैवतम् । अथाध्यात्ममपि । य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्यादिकं छान्दोग्यवाक्यं विषयः । अत्र सूर्यमण्डले चक्षुषि च उपास्यत्वेन श्रूयमाणः पुरुषः विद्याकर्मादिवशात् प्राप्तोत्कर्षः कश्चित्संसारी उत नित्यसिद्धः परमेश्वर इति संशयः । रूपवत्त्वादिश्रवणात् अक्ष्यादित्ययोराधारत्वश्रवणात् मर्यादावदैश्वर्यश्रवणाच्च निरतिशयैश्वर्ये निराधारे नीरूपे ब्रह्मण्येषां धर्माणामनुपपत्तेश्च विद्यादिवशात् प्राप्तोत्कर्षकश्चित्संसारी अक्ष्यादित्ययोरन्तः श्रूयते न परमेश्वर इति पूर्वः पक्षः । सिद्धान्तस्तु, अपहतपाप्मत्वाद्यसाधारणब्रह्मलिङ्गश्रवणात् ऋक्सामाद्यात्मकतया सर्वात्मकत्वोपदेशस्य ब्रह्मण्येवोपपत्तेः नीरूपस्यापि परमेश्वरस्य लोकानुग्रहार्थं हिरण्यश्मश्रुत्वादिविशिष्टमायिकरूपपरिग्रहोपपत्तेः निराधारस्यापि तस्य परमेश्वस्य अक्ष्याधारत्वोपन्यासस्य मर्यादावदैश्वर्यश्रवणस्य च उपासनार्थत्वाच्च परमेश्वर एव अक्ष्यादित्ययोरन्तरुपदिश्यत इति । **अन्तः**=अक्ष्यादित्ययोरन्तः श्रूयमाणःपरमेश्वरः । कुतः । **तद्धर्मोपदेशात्**=तस्य परमेश्वरस्य धर्माणां अपहतपाप्मत्वादीनामत्रोपदेशात् । इति सूत्रार्थः ॥ सू. । **भेदव्यपदेशाच्चान्यः** ॥ २१ ॥ **भेदव्यपदेशात्**='य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेदे' त्यादिना श्रुत्यन्तरे वेदितुरादित्यात् अस्यान्तर्यामिणः भेदव्यपदेशाच्च । **अन्यः**=आदित्याभिमानिनो जीवात् अन्यः अयमन्तर्यामी परमेश्वर इत्यर्थः ॥

**श्रीकण्ठमते,** पूर्वाधिकरणे प्रतिपादितस्य परब्रह्मणः परमेश्वरस्य उपासकानां संसारभेषजं मनस्समाधानयोग्यं किमपि रूपं प्रकाशयितुमिदमधिकरणमारभ्यते । सू. । **अन्तस्तद्धर्मोपदेशात्** ॥ २१ ॥ विषयवाक्यं समानमेव । अयमादित्यान्तर्वर्ती हिरण्मयः पुरुषः परमेश्वरो वा उतान्यो देवताविशेषो वेति संशयः । सर्वाधारस्य परमेश्वरस्य आदित्यान्तर्वर्तित्वादिधर्माणामसम्भवात् अक्षिद्वयोपन्यासाच्च अयं कश्चिद्देवताविशेष एव न परमेश्वर इति पूर्वः पक्षः । सर्वलोककामेश्वरत्वसर्वपापराहित्यादीनां पारमेश्वरधर्माणाम् अत्र उपदेशात् हिरण्मयत्वादित्यान्तर्वर्तित्वाद्युपदेशस्य साधकानुग्रहार्थत्वोपपत्तेः 'कप्यासं पुण्डरीकमेवमक्षिणी' इत्यत्र कं उदकं रश्मिभिः पिबतीति कपिः आदित्यः तेन आसितं विकासितं पुण्डरीकं यथा स्फुरति तथा परमेश्वरस्य लोचनद्वयम् । तृतीयं लोचनं तु मुकुलितपुण्डरीकसदृशम् इत्यर्थवर्णनस्य न्याय्यत्वात् अत्र अक्षिगतद्वित्वसङ्ख्यायाः तृतीयलोचनाभावद्योतनपरत्वाभावाच्च अयं परमेश्वर एवेति सिद्धान्तः । सूत्रार्थः पूर्ववत् ॥ २१ ॥

'असौ योऽवसर्पति नीलग्रीवो विलोहितः' 'स्वरुचाहितमण्डलस्त्रिनेत्रः' 'असावादित्यो ब्रह्म' इत्यादिभिः आदित्यस्यैव नीलग्रीवत्वत्रिलोचनत्व ब्रह्मत्वादीनामुपदेशात् आदित्यमण्डलाभिमानी सूर्य एव हिरण्मयः पुरुषोऽस्तु इत्यत आह—सू. । **भेदव्यपदेशाच्चान्यः** ॥२२॥ 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद' इत्यादौ मण्डलाभिमानिजीवात् अन्तर्यामिणः परमेश्वरस्य भेदव्यपदेशात् अयमक्ष्यादित्यान्तर्वर्ती पुरुषः मण्डलाभिमानिजीवादन्य एवेत्यर्थः ॥ २२ ॥

**रामानुजमते,** आनन्दमयाधिकरणे निरतिशयानन्दभाजनत्वसकलप्रपञ्चस्रष्टृत्वादिधर्माणां जीवसामान्ये असम्भवेऽपि 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति आनन्दमयस्यैव आदित्यान्तर्वर्तित्वाभिधानात् आनन्दमय आदित्यादिः स्यादिति इमामाशङ्कां निराकर्तुं पूर्वाधिकरणशेषतया इदमधिकरणान्तरमारभ्यते–सू. । **अन्तस्तद्धर्मोपदेशात्** ॥ २१ ॥ **भेदव्यपदेशाच्चान्यः** ॥ २२ ॥ विषयवाक्यसूत्रार्थवर्णनादिकं च प्रायः न भिद्यते भगवत्पादीयमतात् । सन्देहोऽपि समान एव । पुण्योपचयप्राप्तैश्वर्यः आदित्यादिशब्दाभिधेयः जीव एव अक्ष्यादित्यमण्डलान्तर्वर्ती पुरुष इति पूर्वः पक्षः । अन्तरादित्यविद्यायामेव अपहतपाप्मत्वादीनां जीवेष्वसम्भावितधर्माणां श्रवणात् परमात्मनोऽपि करचरणादियुक्ताप्राकृतनित्यविग्रहसद्भावाच्च आदित्यमण्डलान्तर्वर्ती परमात्मैवेति आनन्दमयोऽपि तदभिन्नः परमात्मैवेति सिद्धान्तः ॥ २१ ॥ २२ ॥

**आनन्दतीर्थमते, सू० । अन्तस्तद्धर्मोपदेशात्** ॥ २० ॥ अस्य 'अन्तः प्रविष्टं कर्तारमेतं अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानं शतधा चरन्तम्' । इत्यादि तैत्तिरीयगतं वाक्यं विषयः । अन्तःप्रविष्टत्वेन श्रुतः इन्द्रादिर्वा विष्णुर्वेति संशयः । इन्द्रादिशब्दश्रुतेः इन्द्र इति पूर्वः पक्षः । समुद्रशायित्वादिकान्निरवकाशाल्लिङ्गात् इन्द्रादिशब्दानामपि योगतः विष्णुपरत्वसम्भवाच्च विष्णुरेवेति सिद्धान्तः । **अन्तः**=अन्तःप्रविष्टमिति हृदयान्तः श्रुतं ब्रह्मैव । नेन्द्रादिः । कुतः । **तद्धर्मोपदेशात्**=तस्मिन् वाक्ये क्षीराब्धिमध्यवर्तित्वप्रलयोदधिस्थितत्वब्रह्माण्डवीर्यत्वादिरूपविष्णुधर्माणां 'अन्तस्समुद्र' इत्यादौ श्रुतत्वात् इत्यर्थः ॥ २० ॥

सू. । **भेदव्यपदेशाच्चान्यः** ॥ २१ ॥ न केवलमन्तस्स्थो विष्णुः । किं तु इन्द्रादिभ्योऽन्यश्च । कुतः । **भेदव्यपदेशात्** । तस्य तदन्तर्यामित्वतत्प्रेरकत्वादिरूपभेदकधर्मश्रवणादित्यर्थः ॥ २१ ॥

**इति सूत्रार्थचन्द्रिकायामन्तरधिकरणम् ॥ ७ ॥**

अथाकाशाधिकरणप्राणाधिकरणे ॥ ९-१० ॥

**सर्वज्ञत्वादिधर्मकस्य परब्रह्मणः शिवस्य परममङ्गलास्पदमुपास्यं रूपमभिधाय तल्लक्षणस्य नामरूढिवशादन्यत्रातिव्याप्तिशङ्कायामधिकरणमारभ्यते—**

**॥ सू ॥ आकाशस्तल्लिङ्गात् ॥ २३ ॥ अत एव प्राणः ॥२४॥**

**छान्दोग्ये श्रूयतेऽस्य विषयः 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति' 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इति ॥ अत्र सकलभूतोत्पत्तिप्रलयकारणप्रतिपादकौ प्राणाकाशशब्दौ परमेश्वरप्रतिपादनपरौ किं वा भूताकाशप्राणवायुप्रतिपादनप-**

---

सङ्गतिं सूचयन्नुत्तराधिकरणमवतारयति—सर्वज्ञत्वादीति । यद्वाक्यमवलम्ब्य परब्रह्मणः शिवस्य योग्यं रूपमुपास्यं प्रदर्शितं तत्र तस्य तात्पर्ये व्यवस्थापिते तद्वाक्यानन्तरं पठितयोराकाशप्राणवाक्ययोर्बुद्धिस्थयोस्तत्र तात्पर्यनिरूपणं क्रियत इति प्रसङ्गलक्षणसङ्गतिरिह विषयवाक्यक्रममूला विवक्षिता । तयोर्ब्रह्मणि तात्पर्यनिरूपणे कृते मन्दानामाकाशप्राणयोर्ब्रह्मलक्षणातिव्याप्तिशङ्कापि निरस्ता भवतीत्येतावताऽतिव्याप्तिशङ्कायामित्युक्तम् । शिवस्य योग्यं रूपमित्येतत्सूचयितुं 'सर्वज्ञत्वादिधर्मकस्ये'ति 'परममङ्गलास्पद'मिति च विशेषणे । सर्वोत्तरगुणशालिनः सर्वोत्तरसौन्दर्यशालि रूपं योग्यम् । 'प्रायो विरूपेषु भवन्ति दोषा यत्राकृतिस्तत्र गुणा वसन्ती'ति सामुद्रिकशास्त्रवचनादिति भावः ॥ सू. ॥ आकाशस्तल्लिङ्गात् ॥ २३ ॥ अत एव प्राणः ॥ २४ ॥ इदं सूत्रद्वयमधिकरणद्वयार्थम् । तत्रोत्तराधिकरणं पूर्वाधिकरणन्यायातिदेशार्थम् । अतः पूर्वपक्षसिद्धान्तैकरूप्याद्युगपदधिकरणद्वयोपन्यासार्थं सूत्रद्वयं युगपल्लिखितम् । तथैव विषयवाक्यद्वयमप्युदाहरति—छान्दोग्य इति। श्रुत्यनन्यथासिद्धलिङ्गाभ्यां लिङ्गान्यथासिद्ध्यनन्यथासिद्धिभ्यां वा पूर्वोत्तरपक्षकोटिद्वयमित्यभिप्रेत्य संशयं दर्शयति—अत्रेति । इयमिह विषयशुद्धिः । दाल्भ्यशालावत्यजैवलिभिस्त्रिभिरारब्धायां वादकथायां प्रथमं शालावत्यदाल्भ्ययोः प्रश्नोत्तरपरम्परा प्रसृता 'का साम्नो गतिरिति स्वरइति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरिति अन्नमिति होवाच अन्नस्य का गतिरिति आप इति होवाच अपां का गतिरिति असौ लोक इति होवाच अमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाचे'ति।एवं दाल्भ्येन स्वर्गलोके सामगतिपरम्पराविश्रान्तिभूमित्वेन स्थापिते तस्य पक्षः शालावत्येन दूषितः 'अप्रतिष्ठितं वै किल ते दाल्भ्य सामे'ति । स्वर्गस्य मनुष्यकृतयज्ञाद्यधीनस्थितिकत्वात् सामगतिपरम्परा प्रतिष्ठारूपे वस्तुनि न समापितेत्यप्रतिष्ठितं साम स्यादित्यर्थः । एवं दूषितस्वपक्षतया शिष्यभावं प्राप्तस्य दाल्भ्यस्य शालावत्यस्य च प्रश्नद्वयमुत्तरद्वयं च प्रकृत 'ममुष्य लोकस्य का गतिरिति अयं लोक इति होवाच अस्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाचे'ति । ततश्शालावत्यस्य पक्षो जैवलिना दूषितः 'अन्तवत्किल ते शालावत्य सामे'ति । एवं शालावत्यस्य सामगतिपरम्पराविश्रान्तिस्थानत्वेन स्वाभिमते पृथिवीलोकेऽन्तवत्त्वेन दूषिते तस्यापि कारणमनन्तं किंचिदसौ जैवलिर्जानाति तत्किमिति जिज्ञासोस्तच्छिष्यभावं प्राप्तस्य तं प्र'त्यस्य लोकस्य का गति'रिति प्रश्ने 'आकाश इति होवाचे'त्युत्तरं श्रूयते । तस्यायं वाक्यशेषः 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं

प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्त'इति । तथा उषस्तिनामा कश्चिद्दषिर्धनाशया राज्ञो यज्ञं गत्वा स्वस्य ज्ञानवैभवं प्रकटयन्प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावभक्तिमनुगता तां चेदविद्वान्मम विदुषस्सन्निधौ प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति । एवमेवोद्गातारं प्रतिहर्तारं चोवाच उद्गीथप्रतिहारभक्त्यनुगतदेवतावेदनं विनोद्गाने प्रतिहरणे च स्वपुरतः क्रियमाणे तयोर्मूर्धा विपतिष्यतीति । ते भीताः कर्मभ्यो विरेमुः । ततो यजमानेनानुनीतो यावदेभ्यो धनं दद्यास्तावन्मह्यं दद्या इति यजमानं पृष्ट्वा ततो लब्धतावद्धनदानप्रतिश्रवण उषस्तिः तदनन्तरं प्रस्तोत्रा प्रस्तावदेवतां पृष्टः प्राण इत्युपदिश्य तत्र सर्वभूतसंवेशनोद्गमनमुक्त्वा 'सैषा देवता प्रस्तावमन्वायत्ते' त्युपसंजहार । तथोद्गात्रोद्गीथदेवतां पृष्ट आदित्य इत्युपदिश्य 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्ती' त्युक्त्वा 'सैषा देवतोद्गीथमन्वायत्ते' त्युपसंजहार । एवं प्रतिहर्त्रा प्रतिहारदेवतां पृष्टोऽन्नमित्युपदिश्य 'सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ती' त्युक्त्वा 'सैषा देवता प्रतिहारमन्वायत्ते' त्युपसञ्जहार । तत्राकाशवाक्ये तावदित्थं पूर्वपक्षः । उपक्रमगताभ्यस्ताकाशश्रुतिबलाद्भूताकाश एवायम् । वाक्यशेषगतं तु सर्वभूतकारणत्वश्रवणं तत्रापि योजयितुं शक्यम् । तस्य वाय्वादिसर्वभूतकारणत्वात् स्वस्मिन्नपि स्थूलसूक्ष्मरूपेण कार्यकारणभावसत्त्वाच्च । भूतशब्दस्य 'न हिंस्यात्सर्वभूतानी' त्यत्रेव प्राणिनिकायपरत्वे तत्कारणत्वमाकाशस्य न सम्भवति । चेतनवर्गं प्रति तस्याकारणत्वादिति चेत् सत्यम् । तस्येह पञ्चमहाभूतपरत्वं भविष्यति । एवमन्यथासिद्धं लिङ्गं नोपक्रमगतायाः श्रुतेर्बाधकम् । अनन्यथासिद्धेन हि लिङ्गेन प्राक्पूर्वपक्षे लिङ्गबाध उक्तः । न'न्वाकाश इति होवाचे'त्यतः प्राक्'अस्य लोकस्य का गति'रिति प्रश्नवाक्ये सर्वलोककारणत्वं श्रूयते । तत्र लोकशब्दो लोक्यत इति व्युत्पत्त्या प्राणिनिकायपरः । मैवम् । तत्रा'स्य लोकस्ये'ति शब्दः पृथिवीलोकपर इति प्राक् प्रस्तावानुसारेणावगमात् । न च पृथिवीमात्रकारणत्वेनापां प्रसिद्धतया प्रश्नवैयर्थ्यादस्येतिसर्वनामश्रुतेर्बलीयस्त्वाच्चायं प्रश्नः सर्वलोकगतिविषय एवेति वाच्यम् । अपां कारणस्य तेजसः प्रसिद्धत्वेऽप्यपां का गतिरिति प्रश्नदर्शनेन तद्वत्पृथिवीकारणेऽपि प्रश्नोपपत्तेः । 'अस्य लोकस्य का गति'रिति प्राग्दाल्भ्यकृतस्य प्रश्नस्य 'न प्रतिष्ठां लोकमतिनयेदिति होवाचे'ति वर्णितोत्तरानुसारेण पृथिवीमात्रकारणविषयत्वसम्प्रतिपत्तेश्च अन्तवत्त्वदूषणमुक्तवतस्ते प्रसिद्धविलक्षणमनन्तं कारणमभिमतं तत्किमिति प्रश्नोपपत्तेश्च । अस्येतिपदस्य श्रुतित्वेऽपि सर्वनामस्वाभाव्यात् 'यदेव विद्यया करोती'त्यत्र यत्पदस्येव प्रकृतमात्रे सङ्कुचितवृत्तित्वोपपत्तेश्च । अथापि स्यात् अभिधत्तामयमस्यशब्दः पृथिवीं तथाप्यन्तवत्त्वदोषापनिनीषया प्रश्नप्रवृत्तेः पृथिवीमात्रकारणनिरूपणे तदसिद्धेः छत्रिवदजहल्लक्षणया चेतनाचेतनात्मकसकलकार्यपर इति । मैवम् । प्रश्नवाक्यस्य केवलं पृथिवीकारणविषयत्वेऽपि अनन्ते सर्वकारणेऽपि पृथिवीकारणत्वसत्त्वेन उत्तरस्यानन्तसर्वकारणविषयतामात्रेण अन्तवत्त्वदोषापनयनसम्भवेन तदर्थं प्रश्नवाक्ये लक्षणाकल्पनस्यायुक्तत्वात् । नन्वाकाशस्य पृथिवीकारणत्वेन निरूपणेऽन्तवत्त्वदोषो नापनीतः स्यादिति चेत् तर्ह्यनन्तत्वलिङ्गमेव पूर्वपक्षविरोध्याशङ्कनीयं न तु प्रश्नवाक्यास्पृष्टं सर्वलोकगतित्वम् । ननु, तथैवास्तु अनन्तत्वमन्तवत्त्वदोषापनिनीषया विवक्षितम् उपक्रमोपसंहारपरामृष्टं

च बलवदाकाशश्रुतिबाधकं स्यादिति चेन्मैवम्। प्रतिष्ठात्ववदनन्तत्वस्याप्यपेक्षितत्वोपपत्तेः। दाल्भ्याभिमतस्वर्गलोकोद्भावितप्रतिष्ठितत्वदोषापनिनीषया हि शालावत्येन स्वर्गलोकस्य गतित्वेन स्वोपन्यस्ते पृथिवीलोके प्रतिष्ठात्वमुपन्यस्तम्। न च प्रतिष्ठात्वं निरपेक्षं ब्रह्मणोऽन्यत्र सम्भवति। सापेक्षं तु स्वर्गेऽप्यस्त्येव।तथापि केनचित्प्रकारेण स्वर्गापेक्षया पृथिव्याः प्रतिष्ठात्वातिशयं विवक्षित्वोद्भावितदोषापनयः समर्थनीयः। एवमनन्तत्वेऽपि भविष्यतीति किमनुपपन्नम्। पृथिव्यपेक्षया बहुकालावर्तिनि भूताकाशे ह्यनन्तत्वमुपचरितुं शक्यम्। 'कदापि न समाप्यतेऽस्य भोजन'मिति बहुकालानुवर्त्तिनि भोजन इव समाप्तिराहित्यम्। तस्मादनन्तत्वलिङ्गं न बाधकम्। 'नन्वाकाशादेव समुत्पद्यन्त' इत्यवधारणेन विवक्षितं सर्वभूतजनने कारणान्तरनैरपेक्ष्यं बाधकं स्यादिति चेन्न। ब्रह्मणोऽप्याकाशवत् कालादृष्टादिकारणान्तरसापेक्षत्वेन साम्यात् कथञ्चिदवधारणसमर्थनस्य भूताकाशेऽपि सम्भवात्। ननु, परोवरीयस्त्वं नाम परेभ्य उत्कृष्टेभ्योऽप्यतिशयेन श्रैष्ठ्यम्। तन्निरतिशयोत्कर्षरूपं स्वानुगुणफलश्रवणरूपतात्पर्यलिङ्गवत्त्वादाकाशश्रुत्यपेक्षया बलवदिति चेन्न।'परोवरीयसो हि लोकाञ्जयति परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोक' इति फलवचनस्यैहिकामुष्मिकजीवनसाधारणसापेक्षोत्कर्षविषयत्वेन निरतिशयोत्कर्षविषयत्वाभावात् सापेक्षोत्कर्षस्य भूताकाशेऽपि सम्भवात्। ननु तथाप्यसङ्कुचितसर्वभूतकारणत्वं तथाभूतसर्वभूताधारत्वं सर्वतोज्यायस्त्वं परायणत्वं परोवरीयस्त्वमनन्तत्वमित्येतानि लिङ्गानि च बहूनि ब्रह्मणि स्वारस्यवन्तीति बहुलिङ्गस्वारस्यानुग्रहार्थमाकाशश्रुतेरेकस्याः बाधो युक्तः 'त्यजेदेकं कुलस्यार्थे' इति 'भूयसां स्यात् स्वधर्मत्व'मिति च न्यायादिति चेन्न। 'आत्मार्थे पृथिवीं त्यजे' दिति 'द्रव्यसंस्कारविधेर्द्रव्यं तदर्थत्वा'दिति च ततोऽपि बलवता न्यायेन प्रधानविरोधिनां बहूनामपि गुणानामेव बाधनस्योचितत्वात्। 'अस्य लोकस्य का गति'रिति प्रश्नोत्तरे आकाशस्य गतित्वेन प्रतिपाद्यतया प्रधानत्वादुदाहृतलिङ्गानां तद्विशेषणतया गुणत्वात्। ननु तथापि कांस्यभोजिन्यायेन गुणानुरोधार्थमाकाशश्रुतिश्चिदाकाशपरास्त्विति चेन्न। प्रथमगृहीतव्युत्पत्त्यनुसारेण भूताकाशशक्तस्यैवाकाशशब्दस्य'आकाशवत्सर्वगतश्च नित्य' इत्यादिश्रुतिदर्शितरीत्या नित्यत्वसर्वगतत्वादिगुणेन चिदाकाशे वृत्त्युपपत्तौ तत्र शक्त्यन्तरकल्पनाया अयुक्तत्वात्प्रधानविरोधे च कांस्यभोजिन्यायानवतारादिति।

एवं प्राप्ते सिद्धान्तः। आकाशः परं ब्रह्म सर्वभूतकारणत्वरूपतल्लिङ्गात्। यद्यत्र भूतशब्दो महाभूतपरः यदि वा प्राणिनिकायपरः यदि वा तद्रूढ्योः परस्परव्याघातेनाप्रवृत्तौ बालाक्यधिकरणन्यायाल्लब्धोन्मेषेण भवन्ति जायन्त इति योगेन कार्यमात्रपरः सर्वथापि भूतशब्दोक्तं बिन्दुमायाप्रकृतिकार्यशुद्धमिश्रमलिनप्रपञ्चान्तर्गतं सर्वं प्रति कारणत्वं कस्यापि भूताकाशस्य न सम्भवत्येव। न च प्रथमश्रुतप्रधानपराकाशश्रुत्यनुसारेण सर्वभूतशब्दयोरर्थसङ्कोचः कल्पनीयः। 'आकाश इति होवाचे'त्यतोऽपि प्राक् श्रुतस्योपक्रमोपसंहाराभ्यां प्रतिपिपादयिषितस्यानन्तत्वस्योपपादनार्थं प्रवृत्तस्य सर्वभूतकारणत्वस्य सङ्कोचासहिष्णुत्वात्। तथाहि अनन्तत्वं त्रिविधपरिच्छेदराहित्यं तत्प्राक्प्रकृतिज्ञातमाकाशस्योपपादयितुं 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते' त्यत्र ब्रह्मणस्सर्वात्मकतायां हेतुत्वेनोपन्यस्तम्। सकलकार्योत्प-

---

(१) 'सर्वलयाधारत्वं' इति ङ. च. पाठः। (२) 'सर्वस्य ब्रह्मात्मकतायां' इति ङ. च. पाठः।

त्तिलयस्थित्याधारत्वं 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशः परायण'मिति वाक्यत्रयेणात्रापि हेतुतयोपन्यस्तम् । अत एवात्र प्रसिद्धिद्योतको ह्वे शब्दः । स हि प्रसिद्ध्यपेक्षहेतुपरत्वे सफलतरः । तेन वस्तुपरिच्छेदराहित्यं लब्धम् । तल्लाभार्थमपि भूतशब्दोऽत्र योगेन सकलकार्यपरः । 'आकाशादेवे'त्यवधारणेनोपादानातिरिक्तकर्त्रसद्भावकृतवस्तुपरिच्छेदशङ्काप्यनवकाशीकृता । अवधारणस्य गृहमेधीयाधिकरण पञ्चमपक्षन्यायेनोपात्तसजातीयव्यवच्छेदकतयात्राकाशस्योपादानत्वेन सकलजगन्मूलकारणत्वप्रतिपादने कर्तृतया प्रसक्तस्य मूलकारणान्तरस्यैव व्यवच्छेद्यत्वात् । अनाद्यनन्तकालव्यापिसकलजगन्मूलकारणत्वोक्त्यैव कालपरिच्छेदराहित्यमपि लब्धम् । 'आकाशो ह्येवैभ्यो ज्याया'निति सकलकार्यप्रपञ्चज्यायस्त्वस्य 'तावानस्य महिमा । ततो ज्यायांश्च पुरुषः ।' 'ज्यायान्दिवो ज्यायानन्तरिक्षा'दित्यादिश्रुत्यन्तरसिद्धस्य वर्णनेन देशपरिच्छेदराहित्यं लब्धम् । पूर्वोत्तरसन्दर्भपर्यालोचनादनन्तत्वोपपादनार्थत्वेनावगतं कर्त्रन्तरादिनिरपेक्षासंकुचितसर्वभूतकारणत्वं तावदेकं ब्रह्मलिङ्गम् । एवमनन्तत्वम् । अनन्तत्वोपपादकत्वादेव संकोचासहिष्णु ज्यायस्त्वादिकमपि तल्लिङ्गम् । एवं च सर्वभूतकारणत्वाद्युपपत्तिरूपेणोपक्रमोपसंहाररूपेण च तात्पर्यलिङ्गेनोपबृंहितमनन्तत्वमपि तल्लिङ्गमित्यनुक्तसिद्धम् । न च प्रतिष्ठात्ववदापेक्षिकत्वेन तद्योजयितुमपि युक्तम् । वैषम्यात् । तथाहि । यत्रोपक्रमे कश्चिद्दोषं सङ्कीर्त्य तद्दोषसमाधानं नोपसंह्रियते तत्र तन्मध्यगतवाक्यानां यथार्थाभ्युपगमेन तत्समाधानं लभ्यते तथा तदर्थोऽभ्युपगन्तव्यः । अत एव 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति' 'विष्णुरुपांशु यष्टव्यः' 'प्रजापतिरुपांशु यष्टव्यः' अग्नीषोमावुपांशु यष्टव्यावजामित्वाये' त्युपांशुयाजिविधिवाक्ये उपक्रमे पुरोडाशयागद्वयनैरन्तर्यकृते जामितादोषे उपसंहारे तत्समाधाने च श्रूयमाणे तत्समाधानं मध्यगतवाक्येष्वन्तरावाक्ये यागविधान एव लभ्यते । न तु विष्णवादिवाक्येषु यागविधान इति तेषु प्रत्यक्षमपि यागविधिं परित्यज्य अन्तरावाक्य एव कल्प्योऽपि यागविधिः स्वीकृतः । यत्र तु मध्ये प्रतिपादनीयस्यान्यप्रतिपादनशेषत्वं न तत्रायं नियमः प्रवर्तते । तद्यथा—'यद्ग्राम्याणां पशूनां पयसा जुहुयाद्ग्राम्यान्पशूंञ्छुचार्पयेद्यदारण्यानामारण्याञ्जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नारण्या'नित्यादौ सङ्कीर्तितस्य ग्राम्यारण्यपशुहिंसादोषस्यान्ते समाधानसङ्कीर्तनं मध्यगतवाक्यप्रतिपाद्यस्य जर्तिलगवीधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोरग्निहोत्रवैकल्पिकद्रव्यत्वाभ्युपगम एव लभ्यते न तु कस्यचिदपि । पयसस्तद्द्रव्यत्वाभ्युपगमे पशुहिंसादोषतादवस्थ्यापत्तेः । अथापि न तथाभ्युपगम्यते । तदनन्तर'मथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' 'पयसाग्निहोत्रं जुहुया' दिति श्रवणेन पय एवाग्निहोत्रे द्रव्यं जर्तिलादिवाक्यं तु ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तमपि जर्तिलयवाग्वादिकं यदपेक्ष्याहोम्यं तत्पयोऽत्यन्तं प्रशस्तमिति पयःप्राशस्त्यप्रतिपादनेन तद्विधिशेष इति दशमे व्यवस्थापितत्वात् । एवमिहापि पृथिव्याः प्रतिष्ठात्वसङ्कीर्तनस्यान्तवत्त्वदोषोद्भावनेन देशकालपरिच्छिन्नत्वात् निरपेक्षप्रतिष्ठात्वयोग्यता नास्ति इत्यपि प्रदर्श्य तदन्यस्यानन्तस्य निरपेक्षप्रतिष्ठारूपस्य प्रतिपादने शेषत्वात् न तत्र स नियमः प्रवर्तते किंत्वन्यप्रतिपादनशेषत्वरहितानन्तत्वप्रतिपादन एवानन्तत्वेनाकाशप्रतिपादनार्थमेव सर्वमिदं

प्रकरणमारब्धं न तु तस्यान्यप्रतिपादनशेषत्वमिति प्रथमोद्भावितान्तवत्त्वदोषसमाधानार्थेन 'स एषोऽनन्त' इत्युपसंहारेणावगमात्। वस्तुतस्तु पृथिव्याः प्रतिष्ठात्वरूपं सर्वाधारत्वमिह न कीर्तितम्। किं तु प्रतिष्ठितत्वरूपं निश्चलत्वम्। 'अप्रतिष्ठितं वै किल ते दाल्भ्य सामे' त्यप्रतिष्ठितत्वदोषोपक्रमानुसारेण 'प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामे'त्युपसंहारे श्रुतस्य प्रतिष्ठाशब्दस्य प्रतिष्ठितपरत्वावसायात् स्वर्गलोकं प्रति पृथिवीलोकस्याधारत्वाभावाच्च। न चोपजीव्यत्वरूपमौपचारिकमिहाधारत्वं विवक्षितमिति वाच्यम्। 'इतः प्रदानं देवा उपजीवन्ती'तिवद'मुतः प्रदानं मनुष्या उपजीवन्ती'त्यपि श्रवणेनोपजीव्यत्वस्योभयत्रापि तौल्यात्। तस्मान्निश्चलत्वरूपं प्रतिष्ठितत्वमेवेह विवक्षितमिति व्याख्येयम्। तद्धि स्वर्गलोके ज्योतिश्चक्रान्तर्गतत्वेन भ्रमणवति नास्ति। अतस्तत्राप्रतिष्ठितत्वदोषोद्भावनपूर्वकं पृथिव्यां तत्परिजिहीर्षया वर्णितमिति युज्यते। आर्यभटाभिमतस्तु भूभ्रमणवादः पुराणादिभिः 'पृथिवी प्रतिष्ठिते'ति श्रुत्या अनेन च प्रतिष्ठितत्ववर्णनेन विरुद्धत्वान्न ग्राह्यः। अत एव मत्स्यजिघृक्षुपक्षिशुष्कालाबुफलदृष्टान्तावलम्बनाभ्यां जैनयवनाभ्यां कल्पितौ भूपतनप्लवनवादावपि न ग्राह्यौ। तस्मात्प्रतिष्ठितत्वमपि मुख्यमेव विवक्षितमिति न तद्दृष्टान्तत्वेनानन्तत्वस्यापेक्षिकत्वकल्पनावकाश इति युक्तमेव अनन्तत्वं प्रबलं ब्रह्मलिङ्गमिति। एव'मस्य लोकस्य का गति'रिति शालावत्यप्रश्नवर्णितं सर्वलोककारणत्वमपि ब्रह्मलिङ्गमिति। न च दाल्भ्यप्रश्नसारूप्यात् शालावत्यप्रश्नोऽपि पृथिवीकारणमात्रविषय इति वाच्यम्। दाल्भ्यप्रश्नस्यानन्तवस्तुपरत्वाभावेऽपि ह्यन्तवत्त्वदोषमुद्भावितवान् जैवलिरनन्तं वस्तु पृथिवीकारणं विवक्षतीति निश्चयवतः शालावत्यस्य प्रश्नोऽयमनन्तवस्तुपर इति कल्पनीयम्। तथैव सर्वकारणत्वाभावे तदनन्तं न स्यात्। अतोऽनन्तं वस्तूपक्षिपता जैवलिना सर्वकारणमेव तदुपक्षिप्तं भवतीत्यपि निश्चयसम्भवेन तत्किं सर्वकारणमनन्तं वस्त्विवति तत्प्रश्नस्सर्वकारणवस्तुविषय इत्युपपद्यते। एवमुपपत्तौ च नान्यसन्निधानमात्रेणा'स्य लोकस्ये'ति श्रुत्योस्सङ्कुचितविषयत्वकल्पनोपपद्यते। एवमनेकलिङ्गसद्भावेऽप्यन्यानि सर्वाणि लिङ्गान्यनन्तत्वलिङ्गाधीनोन्मेषाणीति तेनैकेनैव लिङ्गेन लिङ्गान्तरैरुपबृंहितेन साध्यसिद्धिमभिप्रेत्य सूत्रे 'तल्लिङ्गा'दित्येकवचनं कृतम्। तस्मादिहाकाशः परं ब्रह्म। नन्वाकाशशब्दनिरूढिसद्भावादयं चिदाकाश इत्यस्तु। तत्रापि ब्रह्मणीवानन्तत्वादिलिङ्गानां सामञ्जस्यादिति चेदस्तु। न भूताकाश इति हि भूताकाशत्वमेव व्यवच्छिद्यते। ब्रह्मेत्यनुवृत्तस्साध्यनिर्देशस्त्वभेदोपचारादुपपद्यत इति। प्राणाधिकरणेऽप्याकाशाधिकरणवत्पूर्वपक्षसिद्धान्तौ। प्राणः पञ्चवृत्तिर्वायुः न ब्रह्म। उपक्रमगतप्रधानप्राणश्रुत्यनुसारेण चरमश्रुततद्गुणसर्वभूतसंवेशनोद्गमनादीनां वर्णनीयत्वादिति प्राप्ते 'कतमा सा देवते'ति 'सैषा देवते' त्युपक्रमोपसंहारगतप्रतिपिपादयिषितचेतनत्वलिङ्गेनासङ्कुचितसर्वभूतसंवेशनोद्गमनावधारणोपबृंहितेन प्राणश्रुतिबाधात् ब्रह्मवेति निर्णय इत्यतिदशस्य प्रयोजनमधिकाशङ्कानिराकरणम्। एवमत्राधिकाशङ्का—अनन्तत्ववद्देवतात्वं न ब्रह्मैकान्तिकं लिङ्गम्। आदित्यादिसाधारण्यात्। नाप्यचेतनव्यावृत्तम्। सूक्तप्रतिपाद्येषु सोमलतादिषु हविरुद्देश्येष्वश्वमेधाश्वावयवादिषु'हन्ताहमिमास्तिस्रो देवता'इति श्रुतिनिर्दिष्टेषु तेजःप्रभृतिषु च तद्व्यवहारदर्शनात्। इहापि प्रतिहारदेवतायामन्ने तच्छ्रवणात्। न च तत्रान्नशब्दस्तदभिमानिदेवतापरः। 'अन्नमेव प्रतिहरमाणानि

राविति संदेहः ॥ 'प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते, प्राणेन जातानि जीवन्ति, प्राणं प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुतेः, 'आकाशाद्वायुः' इत्यादिश्रुतेश्च, प्राणाकाशयोरपि सकलभूतकारणत्वावगमात् तावेवात्र प्रतिपाद्यौ॥ इति प्राप्ते ब्रूमः--प्राणाकाशशब्दवाच्यः परमेश्वर एव, सर्वकारणत्वादितल्लिङ्गात् । न ह्यनयोः सर्वकारणत्वादिकं संभवति । तत्रानन्दरूपस्य ब्रह्मणः कारणत्ववादे तात्पर्यं 'प्राणाद्ध्येव खलु' इत्यादिश्रुतेः, न प्राणस्य कारणत्ववादे, किंत्वनुवाद-

---

जीवन्ती'ति वाक्यशेषविरोधात् । तद्वत्प्राणशब्दोऽपि प्राणाभिमानिदेवतापर इति तत्र देवतात्वलिङ्गसमर्थनोपपत्तेश्च । न चाकाशवाक्य इव प्राणवाक्ये 'सर्वाणि ह वा इमानि भूतानी'त्येतत्सङ्कोचासहिष्णववगम्यते । तत्रानन्तत्वलिङ्गोपपादनार्थस्येवात्र कस्यचिदसङ्कोचहेतोरभावात् । तदभावे चोपक्रमगतप्रधानप्राणश्रुत्यनुरोधेन यथायोग्यं सङ्कोचस्योचितत्वात् । अन्नादित्यवाक्ययो'स्सर्वाणिभूतानी'त्यस्यावश्यं सङ्कोचनीयत्वेन तत्प्रायपाठादत्रापि सङ्कोचस्य प्राप्तेश्च । न हि सर्वे प्राणिनः आदित्यं गायन्ति अन्नं भक्षयन्त एव वा जीवन्ति किं तु तत्र योग्या एव जीवन्ति । अन्नशब्दो ह्योदनवाची नत्वदनीयमात्रवाची । 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री'ति नैघण्टुकप्रसिद्धेः । 'अन्नेन व्यञ्जन'मिति पाणिनि ( पा० २-१-३४. ) सूत्रदर्शनाच्च । न च 'प्राणमेवाभिसंविशन्ती'त्यवधारणमाकाशवाक्यगतावधारणमनन्तत्वलिङ्गोपपादनार्थत्वेनेव केनचिद्धेतुनान्यथासिद्धमवगम्यते । प्रत्युता'न्नमेव प्रतिहरमाणानी'त्यवधारणप्रायपाठेन तद्वद्याथाकथाचमित्येव प्रतीयते । वस्तुतस्तु 'सर्वाणि भूतानी'त्यादिवाक्यशेषस्य न काचिदनुपपत्तिः। भूतशब्दो ह्यत्र प्राणिनिकायपरः। तथा च तेषां संवेशनोद्गमने स्थितिप्रवृत्ती इन्द्रियवृत्तिविलयतदुद्भवरूपौ स्वापप्रबोधौ वा । तेषां च प्राणैकायत्तत्वं 'मा मोहमापद्यथ अहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य धारयामी'त्यादिप्राणसंवादगतवाक्यजातेन 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनस्स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त' इत्यादिस्वापप्रबोधविषयवाक्यजातेन स्थितिप्रवृत्त्योः प्राणाधीनत्वग्राहकप्रत्यक्षेण स्वापदशायां प्राणवृत्तिमात्रानुवृत्त्यनुभवेन चावगम्यत इति किमत्रानुपपन्नम्। अथवा। अस्त्वत्र संवेशनोद्गमने भूतानामुत्पत्तिप्रलयावित्यर्थपरिग्रहः। सोऽपि प्राणविषय उपपद्यत एव। 'प्राणाद्ध्येव खल्विमानि भूतानि जायन्त'इत्यादिश्रुतेः । ननु भृगुवल्ल्यामन्नप्राणमनोविज्ञानेषु चतुर्ष्वपि स्थूलारुन्धतीन्यायमवलम्ब्य जगदुत्पत्तिस्थितिप्रलयकारणत्ववर्णने दृश्यमाने केन विशेषेण विशिष्य प्राणे तदाशङ्क्यते । श्रुत्यन्तरसंवादेन विशेषेणेति ब्रूमः। 'असद्वा इदमग्र आसीत् । तदाहुः । किं तदासीदिति। ऋषयो वाव तेऽग्रे असदासीत् । तदाहुः । के ते ऋषय इति । प्राणा वावर्षय' इति श्रुतौ हि श्रुत्यन्तरेषु ब्रह्मण इव प्राणस्य प्राग्जगदुत्पत्तेस्सद्भावश्श्रूयते । तेनानन्दरूपे ब्रह्मणीव प्राणेऽपि जगदुत्पत्त्यादिश्रवणं तात्त्विकविषयमित्यस्ति शङ्कावकाशः। न च ब्रह्मकारणत्वप्रतिपादकश्रुत्यनुरोधात् तत्रत्यप्राणशब्दोऽपि ब्रह्मपर इति वाच्यम् । कल्पभेदेनोभयोरपि कारणत्वोपपत्तौ प्राणश्रुतिबाधायोगात् । न च बहुवचनं मुख्यप्राणेऽनुपपन्नमिति वाच्यम् । ब्रह्मणीव तदुपपत्तेः । 'एतस्माज्जायते प्राण'इति

मात्रम्। आकाशस्य भूतान्तर्वर्तितया सर्वशब्देन ग्रहणात्, सर्वभूतोत्पत्तिः 'आत्मन आकाशस्संभूतः' इति श्रुत्या परमेश्वरादेव। तस्मात् सर्वभूतकारणत्वं

---

प्राणोत्पत्तिश्रुतेः जीवोत्पत्तिश्रुतिवदुपपत्तेः। प्रथमं ब्रह्मण उत्पन्नस्य प्राणस्य भूतेन्द्रियादिसर्वकारणत्वोपपत्तेश्च। तस्मात्प्राणश्रुतेरन्नादित्यरूपाब्रह्मप्रायपाठादानन्दवल्ल्यामन्नमयाद्यब्रह्मप्रायपाठवदाकाशवाक्यसामगतिरूपस्वरप्राणाद्यब्रह्मप्रायपाठवत् भूमविद्यायां नामाद्यब्रह्मप्रायपाठवच्चात्र प्राणश्रुत्यनुग्राहके प्रायपाठे बाधकस्य बलवतो लिङ्गादेरभावाच्च अत्र प्राणो न ब्रह्मेति। एवमधिकाशङ्कानिराकरणार्थमिदमतिदेशाधिकरणम्। तन्निराकरणप्रकारस्त्वयम्। देवशब्दात्सुरवाचिनो 'देवात्तलि'ति स्वार्थविहिततद्धितान्तो देवताशब्दः क्वचित्क्वचिदचेतने पूज्यत्वविवक्षया प्रयुक्तोऽपि सुररूपचेतनविशेषवाचीति प्रयोगप्राचुर्याभिधानकोशादिभिरवगतम्। स चात्र प्रस्तावभक्तावुपासनीये प्राणे प्रश्नोपदेशरूपयोरुपक्रमोपसंहारयोः श्रवणेन विवक्षितार्थतयावसीयत इति तेन प्राणशब्दः चेतनविशेषवाची तावन्निर्धार्यते। अन्नशब्दोऽपि तेन तथा निर्धार्यते चेदन्नाभिमानिदेवतापरोऽस्तु। तथैव प्राणशब्दोऽपि यद्यपि प्राणाभिमानिदेवतापरो वक्तुं शक्यते। 'प्राणबन्धनं हि सोम्य मनः प्राणस्य प्राण'मित्यादिश्रुतिषु परमेश्वर इव प्राणसंवादादिषु प्राणाभिमानिनि प्रयुक्तश्च। तथा यत्र परमेश्वरपरत्वमेव तस्य युक्तम्। वाक्यशेषस्य स्वरसतोऽसङ्कुचितसर्वभूतसंवेशनोद्गमननिरपेक्षाधारपरस्य स्वतस्तत्र सम्भवात्। प्राणाभिमानिदेवतायां सङ्कुचितार्थस्य तस्य प्राणवायुगततदर्थारोपेण समर्थनीयत्वात्। न ह्यन्नवाक्यशेषः तदभिमानिदेवतां विना चेतनान्तरे कथमप्यन्वयमलभमानस्तस्यामन्नगततदर्थारोपेण समर्थित इत्यत्र गत्यन्तरसम्भवेऽप्यन्यदीयारोपस्समाश्रयणीयः। न वा गत्यन्तररहितयोरन्नादित्यवाक्यशेषयोस्सर्वशब्दस्य संकोचः कृत इत्यसंकोचसंभवेऽप्यत्र सङ्कोचः कल्पनीयः। नाप्यन्नवाक्यशेषेऽवधारणस्य स्वारसिकमन्ययोगव्यवच्छेदकत्वं त्यक्त्वा भिन्नक्रमत्वेनायोगव्यवच्छेदकत्वमाश्रितमित्यत्रापि तथाश्रयणीयम्। प्रायपाठस्तु स्थानप्रमाणरूपो लिङ्गबाध्योऽत्र न नियामकः। यत्तु संवेशनोद्गमनयोः स्थितिप्रवृत्तिरूपत्वे स्वापप्रबोधरूपत्वे वा सर्वशब्दसङ्कोचो नाश्रयणीय इति तन्न। स्थितिप्रवृत्त्यादीनां प्रतिदेहव्यवस्थितप्राणविशेषाधीनत्वेनैकत्र ततस्सर्वभूतसंवेशनोद्गमनहेतुत्वालाभात्। सर्वभूतलयोत्पत्तिकारणत्वमेकत्र समष्टिप्राणे सम्भवतीति चेन्न। असङ्कुचितसकलचेतनाचेतनरूपसर्वभूतकारणत्वस्य प्राणे सर्वशरीरके परमेश्वर एव सम्भवात्। 'प्राणा वा ऋषय' इति श्रुतेर्ज्ञातृत्वप्रतिपादकऋषिशब्दानुरोधेन 'आत्मा वा इदमेक एवाग्र आसी'दित्यादिश्रुत्यन्तरानुरोधेन च 'तथा प्राण' इत्यधिकरणे वक्ष्यमाणया रीत्या परमेश्वरपरत्वात्। 'प्राणाद्ध्येव खल्वि'त्यादिश्रुतेरप्यन्नादिपर्यायगतवाक्यानामिवानन्दरूपस्य परब्रह्मणः कारणत्व एव तात्पर्यात्। तस्मात्सर्वजगत्प्रकृतित्वावधारणोपबृंहितप्रतिपिपादयिषितचेतनत्वलिङ्गेन प्राणश्रुतिबाधात् प्राणः परमेश्वर इति सिद्धम्। 'आकाशस्य भूतान्तर्वर्तितये'त्यादिभाष्यस्यायमर्थः। शुद्धमिश्रमलिनप्रपञ्चान्तर्गतस्य त्रिविधस्याप्याकाशस्य भूतान्तर्भूततया सर्वशब्देन ग्रहणात् तदन्तर्भावेन सर्वभूतोत्पत्तिः कुतश्चिदप्येकस्मादाकाशान्न सम्भवति। किंत्वा'त्मन आकाश' इति श्रुतेः परमेश्वरादेवेत्य-

---

(१) 'रोपाश्रयणायोगात्' इति घ. पाठः। (२) 'परमेश्वर इवासंभवात्' इति च. पाठः।

न भूताकाशप्राणयोरिति सिद्धान्तः॥ ननु भूताकाश इत्युपपदग्रहणेन किमिति चे-त्-परमाकाशस्य परप्रकृतिरूपस्य सर्वभूतकारणत्वसद्भावात् सप्रयोजनम्। तर्हि परमेश्वर इति कथं निर्णयः? तदभेदात्, इति सिद्धम्॥

इत्याकाशाधिकरणप्राणाधिकरणे ॥ ९ ॥ १० ॥

---

प्यङ्गीकरणीयमिति। आकाशग्रहणमत्र वाय्वादिकस्याप्युपलक्षणम्। आकाशवत्रिविधं पृथि-व्यादिकं प्रत्यपि कस्यचिदाकाशस्य कारणत्वं न सम्भवतीत्यस्य हेतोरविशिष्टत्वात्प्रथमसृज्य-वाचित्वादाकाशपदं सर्वोपलक्षणत्वेनोपात्तम्। भाष्यान्तराणि निगदव्याख्यानानि॥

॥ इत्याकाशाधिकरणं प्राणाधिकरणं च ॥९॥१०॥

---

नयमणिमालायाम्

अथाकाशाधिकरणप्राणाधिकरणे ॥९॥१०॥

सू॥ **आकाशस्तल्लिङ्गात्** ॥ २३॥

आकाशस्याम्नाता छान्दोग्ये सर्वभूतकारणता। आम्नायबोधितेऽर्थे न च विमतिः कर्तुमुचिता नः॥ २२॥
अस्तु स परमाकाशस्तदभेदादीश्वरोऽपि तद्धर्मा। न हि भूताकाशे सा घटते जनिमत्तया विदिते॥२३॥

सू॥ **अत एव प्राणः** ॥ २४॥

प्राणे तु का गतिरिति प्राणाद्ध्येवेत्यपि श्रुतेऽन्यत्र। शिव एव सोऽपि लिङ्गात्सा श्रुतिरानन्दविश्रान्ता॥ २४॥

इत्याकाशाधिकरणप्राणाधिकरणे ॥ ९ ॥ १० ॥

---

## सूत्रार्थचन्द्रिकायाम्

## अथ आकाशाधिकरणप्राणाधिकरणे ॥ ८ ॥ ९ ॥ श्रीकण्ठमते तु ॥ ९ ॥ १० ॥

**भगवत्पादमते, सू.। आकाशस्तल्लिङ्गात्** ॥ २२ ॥ अस्य 'अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्।' इति छान्दो-ग्यवाक्यं विषयः। तत्र किमाकाशशब्देन परं ब्रह्माभिधीयते उत भूताकाशमिति संशयः। लोकवेदयोराकाशशब्दस्य भूताकाशे प्रसिद्धतरप्रयोगदर्शनेन ब्रह्मणि गौणत्वस्याश्रयणीयत्वेन मुख्यार्थसम्भवे गौणार्थग्रहणस्यान्याय्यतया भूताकाशस्यापि वाय्वादि-क्रमेण कारणत्वोपपत्त्या ज्यायस्त्वपरायणत्वयोरपि भूतान्तरापेक्षया अस्मिन्भूताकाशे उपपद्यमानतया च आकाशशब्देन भूताका-शमेवाभिधीयत इति पूर्वः पक्षः। सिद्धान्तस्तु 'आकाशादेवे'त्यवधारणबलात् 'सर्वाणी'ति भूतविशेषणस्वारस्याच्च सर्वभूतोत्पत्ति-लयकारणत्वस्य मूलकारणे ब्रह्मण्येवोपपत्तेः अनापेक्षिकयोर्ज्यायस्त्वपरायणत्वयोरपि परमात्मन्येकस्मिन्नेवोपपन्नतरत्वात् भूयसीनां ब्रह्मलिङ्गश्रुतीनामनुग्रहाय एकस्या आकाशश्रुतेर्बाधस्य युक्तत्वाच्च आकाशशब्देन ब्रह्मैव अत्र उद्गीथे उपास्यतयाभिधीयत इति। **आकाशः**=आकाशशब्दवाच्यः परमात्मैव। कुतः। **तल्लिङ्गात्**=तस्य ब्रह्मणः समस्तमहाभूतसृष्ट्यादिकस्य लिङ्गस्य अस्मि-न्वाक्ये दृष्टत्वादित्यर्थः॥ २२॥

**सू.। अत एवप्राणः** ॥ २३ ॥ उद्गीथे 'प्रस्तोतर्या देवते'त्युपक्रम्य 'कतमा सा देवतेति प्राण इति होवाच। सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ते'ति छान्दोग्ये श्रूयमाणं वाक्यं विषयः। संशयनिर्णयौ पूर्वाधिकरणवदेव। अत्र प्राणशब्देन किं पञ्चवृत्तिः प्राणोऽभिधीयते उत परं ब्रह्मेति संशये पञ्चवृत्तिः प्राण इति पूर्वः पक्षः। सर्वभूतसंवेशनोद्गमनादेः अनन्यथासिद्धब्रह्मलिङ्गात् पूर्वाधिकरणोक्तन्यायाच्च अत्रापि प्राणशब्दाभिधेयं परं ब्रह्मैव उपास्यतया अभिधीयत इति सिद्धान्तः॥ २४॥

**श्रीकण्ठमते,** पूर्वाधिकरणैः परमशिवस्य परममङ्गलास्पदमुपास्यरूपमभिधाय तल्लक्षणानां नामरूढिवशात् अन्यत्रातिव्याप्ति-शङ्कायां तन्निराकरणाय इमे अधिकरणे आरभते। **सू. ॥ आकाशस्तल्लिङ्गात् ॥ २३ ॥ अत एव प्राणः ॥ २४ ॥** विषयवाक्यपूर्वपक्षसिद्धान्तादिकं पूर्ववत्। प्राणाकाशशब्दाभ्यां परमेश्वर एव प्रतिपाद्यत इति निष्कर्षः॥ २३॥ २४॥

**रामानुजमते, सू. । आकाशस्तल्लिङ्गात् ॥ २३ ॥ अत एव प्राणः ॥ २४ ॥** विषयवाक्यपूर्वपक्षसिद्धान्तादिकं प्रायः पूर्ववदेव। नास्ति वैलक्षण्यमिति न पृथक्प्रपञ्च्यते॥ २३॥ २४॥

## अथ ज्योतिरधिकरणम् ॥ ११ ॥

पूर्वं निखिलभुवननाकस्य निरस्तसमस्तदोषवासनाकलङ्कस्य निरतिशयमाङ्गल्यरत्नाकरस्य उमापतेः परब्रह्मणः आदित्यमण्डलमास्पदमिति निरूपितम् । तदिह तस्य स्थानान्तरमुच्यते--

### ज्योतिश्चरणाभिधानात् ॥ २५ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' इत्यादि ॥ अत्र सकललोकव्यापितया दिवि श्रूयमाणं परं ज्योतिः परमेश्वरो वा तदन्यो वेति संशयः ॥ द्युशब्दस्याकाशवाचित्वात् 'परो दिवः' इत्याकाशवर्ती सूर्य

---

॥सू॥ ज्योतिश्चरणाभिधानात् ॥२६॥ सङ्गतिं दर्शयन्नुत्तराधिकरणस्य विषयमाह–पूर्वमिति । पूर्वं 'मन्तस्तद्धर्मोपदेशा'दित्यधिकरणे निखिलभुवननायकस्य सर्वलोककामेश्वरस्य निरस्तसमस्तदोषवासनाकलङ्कस्य सर्वपापोदितस्य निरतिशयमङ्गल्यरत्नाकरस्य साधकानुजिघृक्षया तदनुग्रहार्थं परिगृहीतदिव्यविग्रहकान्तिसौन्दर्यादिसर्वोत्तरमङ्गल्यगुणगणमणिगणमहासमुद्रस्य उमापतेस्तैत्तिरीयोपनिष'द्युमापतय' इति विशेष्यपदेन निर्दिष्टस्य परब्रह्मणः आदित्यान्तर्वर्तिनः परमेश्वरस्यादित्यमण्डलं पर्यङ्कस्थस्य राज्ञः प्रासादवदास्पदमिति निरूपितम् । इहाधिकरणे तस्य परमेश्वरस्य स्थानोक्तेः प्रसङ्गात्स्थानान्तरमुच्यत इत्यर्थः । यस्य वाक्यस्य ब्रह्मणि तात्पर्यनिर्णये सति तदुपासनस्थानान्तरावगतिरपि लभ्यते तस्य ब्रह्मणि तात्पर्यनिर्णयोऽत्र क्रियत इति यावत् । अनेन पूर्वाधिकरणद्वयस्य प्रसक्तानुप्रसक्तरूपत्वात्पूर्वाधिकरणेनैवास्यापि प्रसङ्गसङ्गतिरिति दर्शितं भवति । तत्प्रदर्शनार्थमेव तदधिकरणनिर्णीततात्पर्यकवाक्यलब्धानि परमेश्वरस्य विशेषणानि 'निखिलेभुवने' त्यादिना वर्णितानि ।'अथ यदतः पर' इति लिङ्गव्यत्ययः छान्दसः । अतोदिवः परमूर्ध्ववर्तितया बहिर्भूतं यत् ज्योतिर्दीप्यते । केषु विश्वतः विश्वस्य पृथिव्यादेरुपरिस्थानरूपेष्वनुत्तमेषूत्तमेषु च लोकेषु । लोकसामस्त्यस्पष्टीकरणार्थं विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्विति द्विर्वचनम् । तज्ज्योतिरिदमेव । यदन्तः पुरुषे जाठराख्यं ज्योतिरित्यर्थः । दिवः परमिति क्वचित्स्थितत्वेनोक्तस्यापि दीप्त्या सर्वलोकव्याप्तिरुपपद्यते । अत्र द्युशब्दस्य परापरान्तरिक्षलोकपराकाशसाधारण्यं संशयबीजमिति धर्मविशेषणेन दर्शयन् संशयमाह–अत्रेति । 'दिवी'ति सामीप्ये सप्तमी । उदुम्बरे वसतीतिवद्दिवः परं श्रूयमाणमित्यर्थः । तदन्यो वे ति । आदित्यजाठरपूर्वपक्षद्वयसङ्ग्रहार्थं साधारण्येन निर्देशः । द्युशब्दस्येति ।

---

आनन्दतीर्थमते, सू. ॥ आकाशस्तल्लिङ्गात् ॥ २२ ॥ अस्मिन्नधिकरणे विषयवाक्यसंशयादिकं समानमेव । आकाशः=आकाशशब्दवाच्यो विष्णुरेव । न प्रसिद्धाकाशः । कुतः । तल्लिङ्गात्=छन्दोगश्रुत्युक्ताकाशे परोवरीयस्त्वादिरूपविष्णुलिङ्गस्य श्रवणादित्यर्थः ॥ २२ ॥

सू. । अत एव प्राणः ॥ २३ ॥ 'तद्वै त्वं प्राणो अभवः । महान्भोगः प्रजापतेः । भुजः करिष्यमाणः । यद्देवान्प्राणयो नव ।' इति तैत्तिरीयवाक्यं विषयः । संशयपूर्वपक्षादिकं समानमेव । 'ह्रीश्च ते लक्ष्मीश्च पत्न्या'विति उत्तरत्र श्रूयमाणात् श्रीपतित्वरूपान्निरवकाशाद्विष्णुलिङ्गात् अत्रत्यप्राणशब्देन विष्णुरेवाभिधीयते न मुख्यप्राण इति सिद्धान्तः । प्राणः='तद्वै त्वं प्राणो अभवः' इत्युक्तः प्राणो विष्णुरेव नान्यः । कुतः । अत एव='ह्रीश्च' इति श्रीपतित्वलिङ्गादेवेत्यर्थः ॥ २३ ॥

इति सूत्रार्थचन्द्रिकायामाकाशाधिकरणप्राणाधिकरणे ॥ ८ ॥ ९ ॥ श्रीकण्ठमते ॥ ९ ॥ १० ॥

आदित्यपूर्वपक्षे आकाशो भूमिसूर्यमध्यवर्त्यपरोऽन्तरिक्षलोकः । 'यावत्प्रमाणा पृथिवी विस्तारपरिमण्डला । नभस्तावत्प्रमाणं स्याद्व्यासमण्डलतो द्विजे'ति तत्राकाशपर्यायप्रयोगदर्शनात् । जाठरपूर्वपक्षे देहबाह्यो भूताकाशः । अयमन्तरिक्षलोकरूपो देहबाह्यभूताकाशरूपो वा आकाशोऽत्र विषयवाक्ये द्युशब्देनोच्यते । ततःपरत्वं सूर्यस्य तत उपरि वर्तमानत्वम् । जाठरस्य ज्योतिःप्रकरणात्पूर्वं गायत्रीप्रकरणे योऽयं बहिर्धा पुरुषादाकाश इत्युक्तत्वात् देहबाह्याकाशात् पृथग्योऽयमन्तःपुरुषे आकाश इति निर्दिष्टे देहान्तराकाशे वर्तमानत्वं विवक्षितमित्यभिप्रेत्याह—परो दिव इत्याकाशवर्तीति । अन्तरिक्षलोकवाचिनो देहबाह्याकाशवाचिनश्चाकाशशब्दस्य सामीप्यसप्तमीसमासः।एवं चैतत्पर्यन्तं सूर्यविशेषणं जाठराग्नावप्यनुषञ्जनीयम् । सूर्य एवेत्येवकारेण परमेश्वरपक्षव्यवच्छेदः । तत्रायमाशयः । द्युशब्दोऽत्र स्वर्गवाची वक्तव्यः । आकाशवाची वा तत्पर्यायतयान्तरिक्षलोकवाची वा । आद्येऽपि परमेश्वरनित्यस्थानभूतसर्वोत्तरपरस्वर्गवाची शक्रादित्रिदशालयरूपसूर्यलोकादिध्रुवलोकावध्यपरस्वर्गवाची वा । प्रथमे 'दिवः पर'इत्येतदनुपपन्नम् । तस्योपरि तद्बहिर्भूततया वर्तमाने हि ततः पर इत्युच्यते । न हि वृक्षस्योपरि भ्राम्यन्निव वृक्षकोटरे स्थितोऽपि पक्षी वृक्षात्पर इत्युच्यते । न च परमेश्वरः परस्वर्गस्योपरि ततो बहिर्भूतो वर्तते किं तु तन्मध्यगते दिव्यमन्दिरे। परस्वर्गवाचित्वे 'चात' इति विशेषणमनुपपन्नम् । अपरस्वर्गवाचित्वपक्षोऽपि न सङ्गतः।न ह्यपरस्वर्गादप्यूर्ध्वम्महराद्यनेकलोकघटितस्य परपृथिवीलोकरूपस्य पार्थिवस्य प्रकृतिकार्यस्य ब्रह्माण्डस्य तदूर्ध्ववर्तिनः परस्वर्गाधस्तनस्य परान्तरिक्षलोकरूपस्य मायाकार्यस्य गुह्याष्टकाद्युन्मनान्तलोकनिवहस्य चोपरि परमाकाशमये परस्वर्गे वर्तमानस्य परमेश्वरस्यापरस्वर्गात्परत्वोक्त्या कश्चिदतिशयो लभ्यते । अत एव द्वितीयविकल्पोऽप्यनुपपन्नः । न हि तस्मात इति निर्दिष्टप्राकृताकाशात्परत्वोक्त्यापि कश्चिदतिशयो लभ्यते। तृतीये तु परान्तरिक्षविवक्षायां ततः परत्वोक्त्या लभ्यत एवातिशयः। किं तु तत्परतायामत इति विशेषणं नोपपद्यते। तस्मादिहापरान्तरिक्षात्परत्वं विवक्षणीयम् । तदादित्य एव सङ्गच्छते न ब्रह्मणि । ज्योतिष्ट्वेन दीप्तिमत्त्वेन च लोकप्रसिद्धे तस्मिन्नेव च यच्छब्दयोगेन प्रसिद्धवदनूद्यमानं तदुभयं सङ्गच्छते। ज्योतिःश्रुतिरपि प्रसिद्ध्यतिशयात्तत्रैव सङ्गच्छते । न च भूरादिलोकत्रयव्यतिरिक्तेषु महरादिलोकेषु सूर्यकिरणप्रचाराभावाद्विश्वतःपृष्ठेत्यादिकं तस्मिन्न सङ्गच्छत इति वाच्यम् । तदुपक्रमार्थत्वेनादित्ये निश्चिते तदनुसारेण तस्य त्रैलोक्यान्तर्गतलोकसामस्त्यपरत्वोपपत्तेः । स्यादेतत् । अथ यदतः प्राक् 'त्रिपादस्यामृतं दिवी'ति ब्रह्म प्रकृतम् । तदेव प्रकृतपरामर्शिना यत्पदेनाभिधातव्यम् । ततश्चोपक्रमगतयत्पदानुसारेण तत्समानाधिकरणज्योतिरादिपदानां तत्रैव कथंचन वृत्तिरभ्युपगन्तव्येति चेन्न । यत्पदादपि प्राथमिकेनाधिकारार्थेनाथशब्देन ज्योतिश्शब्दस्वारस्येन च प्रकृताच्छेदस्यैव संज्ञाधिकरणन्यायतः प्रतीतेः । 'संज्ञा चोत्पत्तिसंयोगा'दित्यधिकरणे हि'अथैष ज्योतिरेतेन सहस्रदक्षिणेन यजेते'त्यत्र किं प्रकृतं ज्योतिष्टोममनूद्य तत्र सहस्रदक्षिणाविधानमुत ज्योतिर्नामकसहस्रदक्षिणाविशिष्टकर्मान्तरविधानमिति 'एष इति सर्वनाम्नः प्रकृतपरामर्शित्वात् ज्योतिरिति नामैकदेशस्य 'वसन्तेवसन्ते ज्योतिषा यजेते' त्यत्रेव ज्योतिष्टोमे कथञ्चिद्वृत्तिसम्भवात् तत्र सहस्रदक्षिणाविधानमिति पूर्वपक्षं कृत्वाधिकारार्थेनाथशब्देन

**एवात्र प्रतिपाद्यते ज्योतिरिति । अथवा 'अन्तः पुरुषे ज्योतिः' इति पुरुषान्तर्वर्तितया जाठरोऽग्निरिति पूर्वपक्षः॥ सिद्धान्तस्तु 'परो दिवो ज्योतिः' इति सर्वोत्तरं परं ज्योतिः परमेश्वर एव। पूर्वत्र 'पादोऽस्य सर्वा भूतानि' इति ज्योतिषोऽ-**

---

प्रकरणविच्छेदावगमात् ज्योतिरिति संज्ञान्तरस्य स्वतोऽर्थान्तरपरत्वस्वारस्याच्च तद्वल'देष' इत्यस्य प्रक्रियमाणपरत्वमङ्गीकृत्य नामगुणविशिष्टकर्मान्तरविधानमिति सिद्धान्तितम् । तद्वदिहाप्यथशब्देन प्रकरणविच्छेदावगमात् प्राक् ब्रह्मण्यप्रयुक्तस्य ज्योतिश्शब्दस्य प्रसिद्धतरलौकिकार्थस्वारस्याच्च । यदित्यस्य प्रक्रियमाणादित्यपरत्वमभ्युपगम्य तदुपासनविधानमङ्गीकर्तुं युक्तमिति । अथवेति । अत्रायमाशयः । सत्यं ज्योतिरिह प्रकृतं ब्रह्म न भवतीति किंत्वादित्य इति न युक्तम् । जाठराग्निरित्येव युक्तम् । 'इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति'रिति श्रुत्या तस्य ज्योतिःपदस्य जाठराग्निपरत्वेन व्याख्यातत्वात्। उदाहृतवाक्यशेषश्रुतेः 'तस्यैषा दृष्टिर्यत्रैतदस्मिन्शरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोतीति तदनन्तरवाक्येन जाठराग्निविषयस्पष्टीकरणाच्च । न च जाठराग्नौ दिव ऊर्ध्ववृत्तित्वं सर्वलोकव्यापिदीप्तिमत्त्वं च नान्वेतीति शङ्कनीयम् । "गौण्या लक्षणया वापि वाक्यभेदेन वा पुनः। वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्"॥ इति वार्तिकोक्तरीत्या वैदिकव्याख्यानदर्शने व्याख्येयभागे तदनुकूलार्थपरत्वकल्पनावश्यम्भावात् । तथा च दिवः परत्वं बाह्याकाशादन्यत्र शरीराकाशे वर्तमानत्वं सकललोकव्यापिदीप्तिमत्त्वं ब्रह्माण्डरीत्या पिण्डाण्डरूपे देहे ध्यानार्थं तत्तल्लोकतया कल्पितेषु भागेषु व्याप्तया 'सन्तापयति स्वं देहमापादतलमस्तक' इति श्रुतिसिद्धया दीप्त्या युक्तत्वमिति व्याख्येयम् । न च 'स एष परोवरीयानुद्गीथ' इति सर्वलोकगताकाशस्योद्गीथसामानाधिकरण्यश्रवणमिव दिवः परस्य ज्योतिषो जाठराग्निसामानाधिकरण्यश्रवणं तथात्वेनोपासनार्थमस्तु माभूत्तद्व्याख्यानरूपमिति वाच्यम् । व्याख्यानतया तत्वार्थोपदेशरूपत्वोपपत्तौ स्पष्टभेनाधिकरण्यश्रवणस्यैव कल्पितार्थविषयत्वकल्पनायोगात् । अन्यथातिप्रसङ्गात् ॥ एवमादित्यो जाठरो वा परं ज्योति र्न परमेश्वर इति प्राप्ते सिद्धान्तयति—सिद्धान्तस्त्विति सर्वोत्तरमिति हेतुगर्भं विशेषणम् । सकलसंसारमण्डलातीतस्थानवृत्तित्वा'द्दिवःपर' इत्यनेन प्रतिपादितं ज्योतिः परमेश्वरः । आदित्यजाठरयोस्तदसम्भवादिति भावः । कथं 'दिवः पर' इत्यस्य सर्वोत्तरत्वपरताऽवसीयत इति चेत् । इत्थम् । इदं ज्योतिस्तावद्द्युसम्बन्धप्रत्यभिज्ञानात् प्राक्सर्वाणि भूतानि एकं पादं कृत्वा पादत्रयात्मना निरूपितः पुरुष इत्यवसीयते। तस्य च पुरुषसूक्ते 'त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात्पुन'रिति सर्वप्राणिनिकायापेक्षयोर्ध्ववर्तित्वमवगतम् । तथाभूते तस्मि'न्दिवः पर' इत्यनेनात्र प्राकृतान्तरिक्षमात्रात् प्राकृताकाशमात्राद्वा परत्वमुच्यते चेन्न तत्स्वारस्यं लभते । अतोऽत्र द्युशब्दस्य प्रकृतमायाकार्यरूपलौकिकाकाशसामान्यपरत्वमभ्युपगन्तव्यम् । 'अत'इत्यस्य च सन्निहितप्राकृताकाशग्रहणार्थत्वं परित्यज्य परमाकाशव्यावर्तनार्थत्वमङ्गीकरणीयम्। ततो 'दिवः पर' इत्यस्य सर्वोत्तरत्वपरता लभ्यते। अयं सर्वोत्तरत्वहेतु'श्चरणाभिधाना'दिति सूत्रांशेन चरणत्रयरूपस्य प्रकृतस्य पुरुषस्य ज्योतिःपदेनाभिधानादित्यर्थस्य विवक्षितत्वाल्लभ्यते । 'परं ज्योति'रिति परविशेषणं 'परं

ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति श्रुतौ परमेश्वरेऽपि ज्योतिःपदप्रयोगोऽस्तीति ज्ञापनार्थं परापरज्योतिषोः परज्योतिष एवात्र ग्रहणमुचितमिति ज्ञापनार्थं च । ज्योतिश्शब्दो हि नादित्यादीनामेव वाचकः । किं तु यदेव किञ्चिदवभासकं चेतनव्यवहारोपयोगि तस्य सर्वस्यापि वाचकः । बृहदारण्यके 'किं ज्योतिरयं पुरुष' इति प्रश्ने आदित्यचन्द्राग्निवचनात्मनां पूर्वपूर्वाभावे उत्तरोत्तरस्य पुरुषं प्रति ज्योतिष्ट्वमुक्तवता याज्ञवल्क्येन तेषु ज्योतिश्शब्दप्रवृत्त्युपपादनायादित्येनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुत इत्येवमादिभिरादित्यादीनां पुरुषव्यवहारोपयोगस्य प्रतिपादितत्वादन्यत्रापि 'मनो ज्योतिर्जुषतामाज्य'मित्यादिदर्शनाच्च । एवं च आदित्यादीन्यपरज्योतींषि कतिपयभासनेन तावन्मात्रव्यवहारोपयोगित्वात् । परमेश्वरस्तु परं ज्योतिः 'तस्य भासा सर्वमिदं विभाती'तिश्रुतेः सर्वावभासनेन सर्वव्यवहारोपयोगित्वात् । ततश्चात्र प्रकरणोपपदादिसङ्कोचकरहितेन ज्योतिःपदेन परमेव ज्योतिरभिधातुमुचितमिति । अयमपि हेतुश्चरणव्यपदेशादित्यादिकमनुक्त्वा 'चरणाभिधाना'दिति ज्योतिःपदस्याभिधावृत्तिप्रतिपादकशब्दोपादानेन विवक्षितः । एवं दिवः परत्वं ज्योतिश्श्रुतिश्चेति यदुभयं पूर्वपक्षसाधकत्वेनाभिमतं तदेव सिद्धान्तसाधकमिति विशेषणमुखेन दर्शितम् । अथ चरणाभिधानादिति सूत्रांशं हेत्वन्तरपरत्वेन व्याचष्टे—पूर्वत्रेति । एकांशतयेति । सौत्रचरणशब्दस्य भावप्रधानतया व्याख्यानम् । तथात्र सर्वेषां भूतानां ज्योतिरेकांशत्वेन प्रतिपादनात् ज्योतिः परमेश्वर इत्यर्थः । ननु नास्ति भूतानां ज्योतिरेकांशत्वेन प्रतिपादनं किं तु त्रिपात्पुरुषैकांशत्वेन । अतोऽयं हेतुरसिद्धः । एवं च सर्वोत्तरत्वहेतुरप्यसिद्धः । न च द्युसम्बन्धेन ज्योतिस्त्रिपात्पुरुषतया प्रत्यभिज्ञापितमिति वाच्यम् । 'दिवः पर' इत्यतः प्राथमिकेनाथशब्देनाधिकारार्थतया प्रकरणविच्छेदकेन ज्योतिषः प्रकृतत्रिपात्पुरुषान्यतयैव ज्ञापितत्वात् । तथा च प्रकृतस्य त्रिपात्पुरुषस्य निजैकांशसकलप्रपञ्चहेतुना परमेश्वरत्वसिद्धौ तदन्यपरस्य ज्योतिःपदस्यादित्यादिपरज्योतिःपरत्वमेवागत्याङ्गीकरणीयमिति ज्योतिश्श्रुतिरपि न सिद्धान्तसाधिका । एतेन यत्पदरूपसर्वनामश्रुतिः प्रकृतपरामर्शित्वस्वाभाव्यात् प्रकृतत्रिपात्पुरुषपरा सती समानाधिकरणं ज्योतिःपदमपि तत्र पर्यवसाययेदित्यपि शङ्का निरस्ता । प्राथमिकेनाथशब्देन प्रकरणविच्छेदावगमे सति यत्पदस्या'थैष ज्योति'रित्यत्रैतत्पदस्यैव प्रक्रियमाणपरत्वोपपत्तेरिति चेत् । उच्यते । सर्वनाम्नां समानाधिकृतशब्दस्वारस्यप्राप्तमपि प्रकरिष्यमाणपरत्वमतिलङ्घ्य प्रकृतपरामर्शित्वं व्युत्पत्तिसिद्धम् । अत एव प्रयुक्तिलक्षणे 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्यत्रामिक्षापदवाच्यं पयसोऽर्थान्तरं दधिसंसर्गजन्यं द्रव्यान्तरमभ्युपेयम् । पय आमिक्षेति व्यपदेशभेदात्तस्यैव द्रव्यान्तरस्य कठिनाम्लमधुरस्य वैश्वदेवयागद्रव्यत्वमामिक्षापदसमानाधिकृततत्पदस्य तद्द्रव्यपरत्वं चाभ्युपेयमिति प्राप्ते सर्वनाम्नः प्रकृतपरामर्शित्वस्वाभाव्यात् तत्पदमानयनक्रियां प्रति प्रधानकर्मतया दध्यानयनाधिकरणत्वेन निर्दिष्टं पयः परामृशतीति पय एव यागद्रव्यम् । तत्पदे स्त्रीलिङ्गमामिक्षापदसामानाधिकरण्यकृतम् । आमिक्षापदं तु न द्रव्यान्तरविधायकं किं तु तत्पदेन केवले पयसि यागद्रव्ये विहिते तत्र दध्यानयनसंस्कारविधिप्राप्तदधिसंसर्गानुवादकम् । तच्चास्मादेव वैदिकव्यवहारात् आम्लद्रव्यसंसर्गघनीभूतपयोमात्रवाचकं न तज्जन्यद्रव्यान्तरवाचकम् । आम्लरसो न यागद्रव्यगतः किं तु तत्संस्कारकद्रव्यगत इति निर्णीतम् । 'दधि मधु घृतं धाना उदकं

तण्डुलास्तत्संसृष्टं प्राजापत्य'मिति चित्रायागविधौ दध्याद्यनेकद्रव्यमेलनरूपसंसृष्टैकद्रव्यक एको यागः। तत्पदं च संसृष्टद्रव्यपरमिति प्राप्ते तत्पदं प्रकृतपरामर्शित्वस्वाभाव्यादसंसृष्टदध्यादिसप्तद्रव्यपरं न तु संसृष्टैकद्रव्यपरमिति। दध्यादि सप्तद्रव्यकाः सप्त यागाः। सप्तस्वपि द्रव्येषु तदिति नपुंसकैकवचनं 'नपुंसकमनपुंसकेने'त्यादिव्याकरणस्मृत्यनुसारेण। संसृष्टपदं तु यागभेदेऽपि एकदैवत्यतया सान्नाय्यवद्दध्यादीनां सहप्रक्षेपे संसर्गसत्त्वात्तदनुवादकं योज्यमिति निर्णीतं टुपटीकायामष्टमद्वादशाध्याययोः। 'अथैष ज्योति'रित्यत्र तु ज्योतिश्शब्दस्य ज्योतिष्टोमसंज्ञायाः संज्ञान्तरत्वेन स्वतोऽर्थान्तरपरत्वस्वारस्यात् नामैकदेशत्वेन ज्योतिष्टोमानुवादकत्वकल्पनायाः क्लिष्टत्वात्। एतेन 'सहस्रदक्षिणेन यजेते'त्येतावतापि प्रकृते ज्योतिष्टोमे गुणविधानोपपत्त्या 'अथैष ज्योति'रिति तदनुवादवैयर्थ्यात् ज्यौतिष्टोमिकद्वादशशतदक्षिणायाः सहस्रदक्षिणाया विकल्पप्रसङ्गाच्च। तत्रैष इति सर्वनाम्नः प्रस्तोष्यमाणपरत्वमगत्या कल्पितम्। इह तु विपरीतम्। ज्योतिश्शब्दस्य हि सर्वावभासके परश्वर एव स्वारस्यं न त्वादित्यादिषु। सकललोकव्यापिदीप्तियुक्तज्योतिष्ट्वेनानुवादश्च उपासनाविशेषार्थ इति न वैयर्थ्यम्। नाप्यत्र विधीयमानस्य कस्य चिद्गुणस्य केनचिद्विरोधिगुणेन विकल्पः प्रसज्यते। तथाप्यथशब्देनाधिकारार्थेन प्रकरणविच्छेदात् सर्वनाम्नः प्रकृतपरत्वं न सम्भवतीति चेन्न। तस्य कांस्यभोजिन्यायेन पूर्वप्रकृतापेक्षार्थत्वोपपत्तेः तस्य पूर्वोपासनान्वितब्रह्मगुणानां ज्योतिरुपासनायामप्यन्वयसमर्पकतया साफल्याच्च। इदमारभ्यत इत्यनुक्त्वाप्यारम्भसम्भवेन आरम्भापरपर्यायाधिकारप्रतिपादनस्य श्रोतृचित्तसमाधानमात्रफलस्य निष्फलप्रायत्वात्। 'अथैष ज्योति'रित्यत्र तु संज्ञाभेदादिभिः कर्मभेदनिश्चयात् पूर्वप्रकृतापेक्षार्थत्वं पूर्वपक्षितं न सम्भवतीत्यगत्या तत्राधिकारार्थत्वमाश्रितम्। न चेहाधिकारार्थत्वस्य सर्वथैवासम्भवोऽपि। प्रकृतं ब्रह्म अविहायैव तत्रोपासनान्तराधिकारार्थत्वसम्भवात्। तस्मात्सर्वनाम्नस्तत्समानाधिकरणज्योतिःपदस्य च प्रकृतत्रिपात्पुरुषपरत्वात् ज्योतिषि निजैकांशसमाप्तसकलप्रपञ्चहेतोस्सर्वोत्तरत्वहेतोश्च नासिद्धिः। अथशब्दस्य पूर्वप्रकृतार्थापेक्षित्वाच्च न ज्योतिःश्रुतिस्वारस्यहानिः। तथापि यच्छब्दयोगेन प्रसिद्धवदनूद्यमानसकललोकव्यापिदीप्तिशालिज्योतिःष्ट्वमादित्यपरिग्रह इव पूर्वप्रकृतार्थपरिग्रहे न सम्भवति। पूर्वं तत्र तस्यावर्णितत्वादिति चेत्। उच्यते। निजैकांशसमाप्तसकलभूतत्वहेतुना त्रिपात्पुरुषे वर्णितेन ज्योतिषः परमेश्वरत्वं त्रिपात्पुरुषेण सहैव सिद्ध्यति। तस्य परमेश्वरत्वाभावे तदभिन्नतया प्रत्यभिज्ञायमानस्य ज्योतिषस्तदसम्भवात्। अपि च 'त्रिपादस्यामृतं दिवी'त्येतदनन्तरं 'यद्वैतद्ब्रह्मे'ति वाक्ये प्रकृतं त्रिपात्पुरुषं तत्पदेन निर्दिश्य तद्विषयतया प्रयुक्तात्तदनन्तरं प्रागादिहृदयसुषिरवर्तिप्राणाद्युपासनानां प्रकृतत्रिपात्पुरुषोपासनाङ्गानां विधानानन्तरं 'ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपा' इति तेषां प्राणादीनां हृदयकमलान्तर्ध्यातव्यपरमाकाशाख्यस्वर्गलोकरूपप्रकृतत्रिपात्पुरुषराजधानीद्वारपालकत्वकीर्तने तद्विषयकतया प्रयुक्ताश्च ब्रह्मेति परमेश्वराभिधानादपि त्रिपात्पुरुषस्य परमेश्वरत्वं सिद्ध्यति। इदमपि 'चरणाभिधाना'दिति सूत्रांशेन विवक्षितम्। चरणत्रयरूपस्य पुरुषस्य ब्रह्मेति परमेश्वरवाचिना शब्देनाभिधानादित्यर्थः। एवं त्रिपात्पुरुषस्य परमेश्वरत्वसि-

**स्यैकांशतया विश्वभूतानामभिधानात् । नैतत् संभवति जाठराग्निसूर्ययोः, परिच्छिन्नत्वात् ॥**

**पूर्वं 'गायत्री वा इदं सर्वं भूतं' इति सर्वात्मकतया गायत्री प्रतिपाद्यते ।**

द्यौ तद्विषयत्वेन सम्प्रतिपन्नाभि'स्तस्य भासा सर्वमिदं विभाति तदेव ज्योतिषां ज्योति'रित्यादि श्रुतिभिस्तस्मिन्प्रसिद्धस्य सकललोकव्यापिदीप्तिशालिज्योतिष्ट्वस्यानुवाद उपपद्यते । एवं दिवः परस्य ज्योतिषः परमेश्वरत्वसिद्धौ तस्य जाठराग्निसामानाधिकरण्यं नामब्रह्मादिसामानाधिकरण्यवद्दृष्टिविधानार्थत्वेनोपपादनीयम् । ननु किमर्थमेवमुपपाद्यते । जाठराग्निशरीरकपरमेश्वरोपासनाविधानमस्तु प्रसिद्धतरसकललोकव्यापिदीप्तिमदादित्यशरीरकपरमेश्वरोपासनाविधानं वास्तु । माभूत्कल्पितार्थविषयोपासनाविधानं 'नाम ब्रह्मेत्युपास्ते' इत्यादिवदितिशिरस्कत्वाभावादित्याशङ्क्याह—नैतत्संभवतीति । दृष्टश्रुतत्वरूपबलवल्लिङ्गसत्त्वात् जाठराग्निविषयैव शङ्का निराकार्या । आदित्यविषया तु मन्देति सूचनाय जाठराग्निसूर्ययोरित्यल्पाच्तरस्यापि सूर्यशब्दस्य पश्चान्निवेशः । न चासाधुत्वमपि । 'लक्षणहेत्वोः क्रियाया' इति ( पा० ३-२-१२६) सूत्रप्रयोगदर्शनात् । परिच्छिन्नत्वादिति । तयोः परिच्छिन्नत्वे तत्र व्यवस्थितस्य परमेश्वरस्यापि सार्वात्म्यं न सम्भवतीति भावः ॥ उत्तरसूत्रं तदुद्भाव्यशङ्काप्रदर्शनपूर्वकमवतारयति-- पूर्वमिति । ननु अनुपदमेवोक्तं जाठराग्निसूर्ययोः परिच्छिन्नत्वात्तदवच्छिन्नस्य परमेश्वरस्यापि सार्वात्म्यं न सम्भवतीति कथं गायत्र्या एव सर्मात्मतया प्रतिपादनमिहाशङ्क्यते । उच्यते । इह सर्वात्मत्वकीर्तनं 'आपो वा इदं सर्वं'मित्यपां सर्वात्मकत्वकीर्तनमिव स्तुत्यर्थमिति शङ्कावादिनोऽभिप्रायः। तथाहि–'गायत्री वा इदं सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च । या वै सा गायत्री इयं वाव सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते । या वै सा पृथिवी इयं वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते । यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते । सैषा चतुष्पदा षड्विधा गायत्री'ति सन्दर्भेऽस्मिन्नादिमध्यावसानेष्वभ्यस्ता गायत्रीश्रुतिस्सर्वात्मत्वलिङ्गात्प्रबला । न च तथाभूताया अप्याकाशश्रुतेरनन्तत्वलिङ्गमिवैतदस्या बाधकमिति वक्तुं शक्यम् । तद्वदनन्यथासिद्धत्वाभावात् प्रत्युत गायत्रीश्रुतेरेवानन्यथासिद्धत्वात् । न खल्वियमाकाशश्रुतिरिव ब्रह्मण्यौपचारिकीति वक्तुं शक्यते । 'वाग्वै गायत्री'त्यग्रिमव्याख्याने 'वाग्वा इदं सर्वं भूतं गायति च त्रायते चेति'वाचि यौगिकत्वकीर्तनेन विरोधाच्चतुष्पदेति टाबन्तनिर्देशेन विरोधाच्च । 'टाबृची'ति ( पा० ४–१–९ ) ऋच्यभिधेयायामेव हि टाप्प्रत्ययो विहितः । अन्यत्र चतुष्पादिति भाव्यम् । त्रिपादितिवत् । न चात्र गायत्रीशब्दः तच्छरीरकपरमेश्वरपर्यन्त इत्यभ्युपगमेनापि सार्वात्म्यश्रवणनिर्वाहः । गायत्र्यामिव तदवच्छिन्नेऽपि तदसम्भवात् । तावत्पर्यंतं गत्वापि स्तावकत्वाभ्युपगमे प्रसिद्धतरे छन्दस्येव सार्वात्म्यश्रवणस्य स्तावकतास्त्विति । नन्वस्तु षड्विधा गायत्रीत्येतत्पर्यन्तः सन्दर्भो गायत्रीपरः । तदनन्तर'स्तावानस्ये'त्यादिसन्दर्भः परमेश्वरपर एव । तत्र गायत्रीप्रसङ्गाभावेन सर्वभूतपादत्वलिङ्गस्य ब्रह्मश्रुत्योश्च बाधनायोगात् । तथापि गायत्रीप्रकरणमनुवर्तत इति चेन्न । तस्य प्रबलश्रुतिलिङ्गबाधितस्य

प्रकरणात् तदेकांशत्वमेव प्रपञ्चस्य 'पादोऽस्य सर्वा भूतानि' इति श्रुतिराहेत्यत आह

**छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम्॥ २६॥**

पूर्वं 'गायत्री वा इदं सर्वं भूतं' इति छन्दसोऽभिधानात् तस्यैवात्राभिधानं न परमेश्वरस्य इति चेत्—नैतत् संभवति गायत्र्याख्यस्य छन्दोमात्रस्य सर्वभूता-

---

विच्छेदोपपत्तेरित्याशङ्क्याह—प्रकरणादिष्विति। 'षड्विधा गायत्री' त्येतदनन्तरं 'तदेतदृचा-भ्यनूक्त' मित्युक्तार्थविषयत्वेनावतारितायाः 'तावानस्य महिमा। अतो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवी'ति ऋचः तदेकविषयस्य 'यद्वैतद्ब्रह्मे' त्याद्यनन्तरसन्दर्भस्य च गायत्रीविषयत्वमावश्यकमिति श्रुतिवाक्येनैव सङ्घटितं प्रकरणमिदमनन्यथासिद्धम्। अतस्तदनु-सारेण सर्वभूतपादत्वमपि स्तावकत्वेन नेतव्यम्। ब्रह्मश्रुती वेदविषयत्वेन नेतव्ये इति भावः। ननु 'तदेतदृचाभ्यनूक्त' मिति वाक्यं पूर्वोत्तरसन्दर्भयोरेकविषयत्वघटकमिति न युज्यते। तथा सति हि तत्र तत्पदं पूर्वसन्दर्भप्रतिपादितं गायत्र्याश्चतुष्पदत्वषड्विधत्वरूपमर्थजातं परामृशेत् गायत्रीमेव वा। नाद्यः। उत्तरत्र षाड्विध्योक्त्यदर्शनात् पादचतुष्टयस्यापि गायत्र्यां भूतपृथिवी-शरीरहृदयरूपस्य प्रतिपादनमिहान्यादृशस्येति भेदात्। न द्वितीयः। नपुंसकलिङ्गविरोधात्। तस्मादत्र वाक्ये तत्पदमगत्या 'यद्वैतद्ब्रह्मे' ति प्रस्तोष्यमाणब्रह्मपरं वाच्यमिति नैतत्पूर्वोत्तर-सन्दर्भयोरेकविषयत्वघटकमिति चेत्। उच्यते। सर्वनाम्नो बुद्धिसन्निहितप्रस्तुतपरत्वे सम्भ-वति तदसन्निहितप्रस्तोष्यमाणपरत्वमयुक्तमिति प्रागुपपादितम्। सम्भवति च तदित्यत्र प्रधा-नस्य प्रकृत्यंशस्य प्रस्तुतगायत्रीपरत्वं तदनुसारेण पाशबहुत्ववल्लिङ्गसर्वनामरूपं नपुंसकलिङ्गं कथञ्चिन्नेतुं युक्तम्। तस्मात्प्रकृतस्य छन्दस एव 'तावानस्ये' त्यादिसन्दर्भेऽभिधानात् द्युसम्बन्धे-न प्राक्प्रस्तुतः परमेश्वरः प्रत्यभिज्ञाप्यत इत्येतदयुक्तमिति शङ्कार्थः॥ सू॥ छन्दोऽभिधा-नान्नेतिचेतिचेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम्॥२६॥ अत्राभिधानमिति। 'ता-वानस्ये' त्यादिसन्दर्भे अभिधानमित्यर्थः। यद्यपि 'तावानस्ये' तिमन्त्रे गायत्र्यभिधायकशब्दो नास्तीति न तत्प्रतिपादनमत्र शङ्कनीयम्। तथाप्यग्रे ब्रह्मश्रुत्योर्वेदवाचितया छन्दोऽभिधाय-कत्वमभिप्रेतं शङ्कावादिनेत्येतदपि दर्शयितुं सूत्रभाष्ययोरभिधानग्रहणम्। सौत्रेण नञा विव-क्षितां छन्दोऽभिधानानुपपत्तिमाह—नैतदिति। एत 'च्चरणाभिधाना' दिति पूर्वसूत्रोपन्यस्तं 'तावानस्ये' ति मन्त्रेणोच्यमानं सर्वभूतात्मत्वं गायत्र्याख्यस्य छन्दोमात्रस्य न सम्भवतीति यो-जना। अत्रायमाशयः। 'तावानस्ये' ति पुरुषसूक्तपठितो मन्त्र इह प्रकृतार्थविषयत्वेनावतारि-तः। पुरुषसूक्ते च सहस्रशीर्षत्वादिविशिष्टपुरुषविशेषविषये नास्ति छन्दसः प्रतिपाद्यत्वप्रसक्तिः प्रत्युत 'छन्दांसि जज्ञिरे तस्मा' दिति सर्वेषां छन्दसां तत्प्रतिपाद्यपुरुषकार्यकोटावाम्नानं दृश्यते। अतस्तत्र सर्वभूतपादत्वकथनं न गायत्रीस्तावकत्वेन योजयितुं शक्यमिति गायत्रीश्रुतिरप्यन-न्यथासिद्धा नान्यत्र योजयितुं शक्येत्याशङ्क्य तदनन्यथासिद्ध्युपपादकत्वेन तथेत्यादिसूत्रांशं व्याचष्टे—किं तु गायत्रीति। अनेन तथेतिशब्दो गायत्रीसादृश्यपरः। चेतोऽर्पणमनुसन्धा-नं निगद उपदेश इति व्याख्यातम्। एवं च गायत्रीसादृश्यानुसन्धानार्थं परमेश्वरे गौणोऽ

---

( १ ) 'स्ति किंतु, तत्प्रतिपादनमात्रं शङ्कनीयम्' इति ङ. च. पाठः।

त्मकत्वं, किंतु गायत्रीसादृश्यानुसंधानोपदेशः परमेश्वरस्य क्रियते, यथा गायत्री षडक्षरैश्चतुर्भिः पादैश्चतुष्पदा तथा ब्रह्मापि चतुष्पादिति । तथा ह्यन्यत्रापि

यं गायत्रीशब्द इत्युक्तं भवति । किं तद्गायत्रीसादृश्यमित्याकाङ्क्षायामाह—यथेति । चतुर्विंशत्यक्षरा गायत्री सा षडक्षरैः पादैश्चतुष्पदाप्यस्ति ( [1]यथा इन्द्रः शचीपतिर्बलेनपीडितः दुश्च्यवनो वृषा[2]समित्सुसाभहिरिति), तद्वत्परमेश्वरोऽपि चतुष्पादिति तत्सादृश्यमित्यर्थः। पादचतुष्टयवत्त्वेन प्रसिद्धेषु छन्दोऽन्तरेषु गवादिषु च सत्स्वपि क्वचित्तथात्वेन दृष्टाया गायत्र्या उपादानं तत्सादृश्यरूपमेव ब्रह्मणश्चतुष्पात्त्वमनुसन्धातव्यमित्येतदर्थं यथा भूयोऽङ्गकलापवत्त्वेन प्रसिद्धेष्विष्टिपशुसोमेषु सत्स्वपि कौण्डपायिनामयने कर्मणि अग्निहोत्रनामोपादानमग्निहोत्रसादृश्यरूपमेवाङ्गजातमनुष्ठातव्यमित्येतदर्थमिति भावः। यद्वा प्रसिद्धां त्रिपादमेव गायत्रीं षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमित्युक्तरीत्या षट्सु षट्स्वक्षरेषु पादकल्पनया चतुष्पदामनुसन्धाय तत्सादृश्यरूपं ब्रह्मणि चतुष्पात्त्वमनुसन्धेयमित्येतदर्थं प्रसिद्धगायत्रीसादृश्यपरमेवेदं भाष्यं व्याख्यातव्यम् । एवं च यथा 'गम्भीरायां नद्यां घोष'इत्यत्र गम्भीरत्वान्वितनदीसम्बन्धित्वलाभार्थं गम्भीरायामिति नद्या विशेषणं न तु लक्ष्यस्य तीरस्य। एवं चतुष्पादत्वापन्नगायत्रीसादृश्यलाभार्थं चतुष्पदेत्येतद्गायत्र्या विशेषणं न तु लक्ष्यस्य ब्रह्मण इति चतुष्पदेत्यस्य टाबन्तत्वमुपपद्यते । अनया दिशा 'वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते चे'त्येतदपि वाक् खलु सर्वं गायत्यभिधत्ते हिताहितोपदेशेन त्रायते च अतो वाग्रूपा गायत्री गानत्राणसाधनीत्येव वाग्रूपत्वं गायत्रीशब्दयौगिकार्थं च प्रसिद्धगायत्र्यामनुसन्धाय तत्सादृश्यं ब्रह्मण्यनुसन्धातव्यमित्येतदर्थं वाग्वा इत्यादिकं गायत्र्या विशेषणं न ब्रह्मण इति व्याख्याने यौगिकार्थप्रदर्शनमप्युपपद्यत इति तदुपपत्तिर्भाष्ये न प्रदर्शिता।'तथाहिदर्शन'मिति सूत्रांशं व्याचष्टे—तथेति।'वायुर्वाव संवर्गः प्राणोवा व संवर्ग' इति संवर्गविद्यायां 'वायुस्तस्मिन्नप्ययवन्तोऽग्निस्सूर्यश्चन्द्र आपश्चेत्यधिदैवतं पञ्च। प्राणस्तस्मिन्नप्ययवन्ति वाङ्मनश्चक्षुश्श्रोत्रं चेत्यध्यात्मं पंच । एतेषु दशसु संख्यासाम्यरूपदशाक्षरछन्दस्सादृश्यानुसन्धानार्थं तद्वाचिनो विराट्छन्दस्य प्रयोगो दृश्यते । एवमिहापि ब्रह्मणि गायत्रीशब्दस्य प्रयोग इत्यर्थः । इदमत्र वक्तुं शक्यम् । गायत्रीशब्दोऽत्र प्रकरणे गायत्र्यवच्छिन्नपरमेश्वरपर इति तत्रावच्छिन्नरूपेऽनन्वय्यपि सार्वात्म्यमनवच्छिन्नस्वरूपे तस्मिन्वस्तुगत्यान्वेत्येव । यथा दहरविद्यायां'दहरोऽस्मिन्नन्तराकाश' इति हृदयावच्छेदादल्पत्वेनोक्ते तस्मि'न्यावान्वा अयमाकाश'इत्युच्यमानं भूताकाशसाम्यं यथा वा शाण्डिल्यविद्यायाम् 'एष आत्मान्तर्हृदयेऽणीया'निति हृदयावच्छेदादणीयस्त्वेनोक्ते तस्मि'न्नेष म आत्मान्तर्हृदये ज्यायान्दिव' इत्यादिनोच्यमानं ज्यायस्त्वम् । अवश्यं चात्राप्येवमेव सार्वात्म्यमुपपादनीयम् । अत्रापि हि गायत्र्याख्यः परमेश्वरो हृदय एवोपासनीय इति हृदयसुषिरेषूपासनीयानां प्राणादीनां तद्द्वारपालकत्वकीर्तनादवसीयते। सूत्रमप्यस्मिन्नर्थे महद्भिर्योजितम् ।तथा तेन गायत्र्यवच्छिन्नप्रकारेण ध्यानोपदेशात्। तथान्यत्रा'प्येतं ह्येव बह्वृचाः महत्युक्थे मीमांसन्त' इत्यादौकार्यविशेषावच्छिन्नपरमेश्वरोपासनदर्शनमस्तीति । पूर्वयोजनायां च नैवं विषयवाक्यस्वारस्यानुगुण्यमस्ति। तथाहि—गायत्रीशब्दस्य परमेश्वरे गौण-

(१) एतद्रेखाङ्कितं वाक्यं च पुस्तके न दृश्यते । ( २ ) 'वृषा सु सासहि' इति ग्व. पाठः।

छन्दोऽभिधायी शब्दः सादृश्यादर्थान्तरे प्रयुज्यमानो दृश्यते, यथा संवर्गविद्यायां 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्' इत्युपक्रम्य 'सैषा विराट्' इत्युक्तम्। तथा च सर्वात्मकतया परमेश्वरस्य लिङ्गेन गायत्रीप्रकरणबाधः। अतः परमेश्वर एव ज्योतिरिति ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

तायां गायत्रीगतं पादचतुष्टयवत्त्वरूपं सादृश्यं निमित्तमिति कुतोऽवगन्तव्यम्। न तावच्चतुष्पदेत्यस्य गायत्रीछन्दोरूपसादृश्यप्रतियोगिविशेषणत्वबलात् तस्य भूतपृथिवीशरीरहृदयात्मकपादचतुष्टयवत्त्वार्थकत्वस्य छन्दोरूपगायत्र्याश्चाग्रिमसूत्रे सूत्रकृतैव वक्ष्यमाणत्वात्। नापि स्वतःप्रसिद्धिबलात् गायत्रीषु त्रिपादत्वस्यैव। प्रसिद्धेः। न च कविसमयप्रसिद्धिबलात्। कीर्तिधावल्यादिष्विव गायत्रीचतुष्पादत्वे तदसम्प्रतिपत्तेः। न च क्वचिद्दर्शनबलात्। प्रायिकस्य प्रसिद्धसादृश्यस्यैव सादृश्योक्तिषु ग्राह्यत्वात्। अन्यथा 'वराहं गावोऽनुधावन्ती'त्यत्र वायसस्यापि वराहशब्दार्थत्वापत्त्या यववराहाधिकरणविरोधप्रसङ्गात्। औपाधिक्याः कस्याश्चिद्गोर्द्विपात्त्वसम्भवेन वायसे तत्सादृश्योपपत्तेः। एतेन प्रसिद्धगायत्र्या गायत्र्यां चतुष्पादत्वकल्पनापक्षोऽप्यपास्तः। प्रसिद्धायां गवि वामदक्षिणभागस्थयोः द्वयोर्द्वयोः पादयोः ऐक्यारोपेण द्विपात्त्वकल्पनया वायसे तत्सादृश्यस्याप्युपपादनसम्भवेन पूर्वोक्तविरोधप्रसङ्गात्। तस्मादिह गायत्रीशब्दस्य गायत्रीशरीरकपरमेश्वरपरत्वस्योपपन्नत्वात्तद्विषयतया सूत्रव्याख्यानस्यापि भाष्यान्तरदृष्टस्योपलक्षणमिदं भाष्यकारकृतं सूत्रव्याख्यानमिति द्रष्टव्यम्। गायत्रीशब्दस्य सादृश्यपरत्वेन व्याख्यानेऽपि हि पादचतुष्टयवत्त्वेन सादृश्यवर्णनं षाड्विध्येन सादृश्यास्याप्युपलक्षणमित्यन्योपलक्षणत्वमाश्रयणीयम्। सहोपात्तयोश्चतुष्पदत्वषाड्विध्ययोरन्यतरेणैव सादृश्यं विवक्षणीयमित्यत्र विनिगमनाविरहात् षट्सु षट्स्वक्षरेषु कल्पितैः पादैश्चतुष्पादत्वस्येव कल्पितेषु चतुर्षु पादेषु प्रतिपादं षड्भिष्षड्भिरक्षरैः प्रसिद्धेषु त्रिषु पादेषु षड्भिरधैर्वा षाड्विध्यस्यापि सम्भवाच्च। लिङ्गेनेति। ब्रह्मश्रुत्योरप्युपलक्षणम्। प्राथमिकत्वादनन्यथासिद्धत्वाच्च लिङ्गस्य विशिष्य ग्रहणम्। गायत्रीप्रकरणबाध इति। गायत्रीशब्दस्य परमेश्वरपरतयोपपादितत्वा'द्गायत्री वा इदं सर्वं भूत'मित्यादिसन्दर्भस्य गायत्रीप्रकरणत्वबाध इत्यर्थः॥ एवं गायत्रीविषयसन्दर्भैकवाक्यतया श्रुतिसङ्घटिते तदुपरितनसन्दर्भे दृष्टैः श्रुतिलिङ्गैर्गायत्री न छन्दः परमेश्वर इति प्रसाधितम्। तत्सन्दर्भगतलिङ्गबलेनापि तथाऽवसीयत इत्येतदर्थत्वेनोत्तरसूत्रमवतारयति॥ सू ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२७॥ सैषा चतुष्पदे'ति व्यपदेशः तेषामृच्यत्रार्थवशेन पादव्यवस्थेत्युक्तरूपपादचतुष्टयवत्त्वेन न भवति। किं तु प्राग्वर्णितभूतादिरूपांशचतुष्टयवत्त्वेन। तथा हि—प्रथमवाक्येन तावद्गायत्र्यास्सर्वभूतात्मत्वमुक्तम्। तदनन्तरं या वै सा गायत्री'त्यादिवाक्यत्रयेण तस्याः पृथिवीशरीरहृदयात्मत्वं क्रमेण दर्शितम्। अतो भूतादिशब्दोक्ताश्चत्वारोंशा लब्धा इति तथाभूतांशचतुष्टयवत्त्वेन चतुष्पदत्वव्यपदेश इति युक्तम्। ननु वाग्वै गायत्री'ति वाक्येन गायत्र्या वागात्मत्वमप्युक्तम्। तथा च पूर्वं वाचा सह पञ्चांशा लब्धा इति तद्विषयत्वे पञ्चपदेति स्यात्। न चतुष्पदेति। उच्यते। तस्मिन्वाक्ये प्रसिद्धगायत्र्यामेव वाग्रूपत्वान्वये सति तथाभूतगायत्रीसादृश्येन तच्छरीरकत्वेन वा तत्रत्यगायत्रीशब्दः परमेश्वरपरः। यथा

**भूतपृथिवीशरीरहृदयैश्चतुष्पदेति व्यपदेशो न गायत्र्याख्ये छन्दस्युपपद्यते, परमेश्वर एवोपपद्यते ॥**

---

'नद्यां' घोष इत्युक्त्यनन्तरं विशिष्य 'गम्भीरायां नद्यां घोष' इति वाक्ये नद्यां गम्भीरत्वान्वये सति तथाभूतनदीसम्बन्धित्वेन नदीशब्दः तीरपरः । अतो वागात्मत्वस्य पूर्वमनुक्तत्वात् न चतुष्पदत्वव्यपदेशानुपपत्तिः । ननु, तथासति गायत्रीशब्दोक्ते परमेश्वरे षाड्विध्यान्वयो न सिद्ध्येत् । वाचि गानकर्तृत्वं त्राणकर्तृत्वं चेति द्वे विधे पृथिव्यां सर्वभूतप्रतिष्ठात्व- 'मैतामेव नातिशीयत' इति वाक्यनैतां पृथिवीं कर्मभूमिं सर्वभूतं संसारिजातं नातिशेत इत्यर्थकेनोक्तं सर्वभूतानतिवर्तनीयत्वं चेति द्वे विधे शरीरहृदययोः प्राणप्रतिष्ठात्वं तदनतिवर्तनीयत्वं चेति द्वे विधे इति हि षाड्विध्यमुपपादनीयम् । तत्र पृथिव्याद्यात्मत्वमिव वागात्मत्वमपि यदि परमेश्वरस्य प्राग्वर्णितं स्यात् तदा पृथिव्यादिधर्माणामिव वाग्धर्मयोरपि परमेश्वरधर्मत्वलाभात् तत्र षाड्विध्यान्वयस्सिद्ध्येत् नान्यथेति चेन्मैवं शरीरहृदययोर्ये प्राणप्रतिष्ठात्वतदनतिवर्तनीयत्वे तयोराश्रयभेदाच्चतुष्ट्वेन परिगणनया षाड्विध्यान्वयोपपत्तेः वाग्धर्मत्वेनोक्तयोस्सर्वभूतगानत्राणयोर्वाग्रूपत्वेनोक्तायां गायत्र्यामन्वये सति पृथिव्यादिधर्माणां सर्वभूतप्रतिष्ठात्वादीनां तदात्मभूते परमेश्वर इव गायत्रीधर्मयोस्तयोरपि तदात्मभूते तस्मिन्पर्यवसानेन तदुपपत्तेश्च । गायत्रीसादृश्यानुसन्धानपक्षेऽपि वाग्रूपगायत्रीपर्यवसितयोस्तयोस्तत्सादृश्यरूपतया परमेश्वरेऽपि प्राप्तेः । यद्वा । 'वाग्वै गायत्री वाग्वा इदं सर्वं भूत' मित्येतत्पर्यन्तं यत्सदृशत्वेन यच्छरीरकत्वेन वा शिवस्योपादानं कार्यं तस्या गायत्र्यास्सर्वभूतात्मत्वेन वा प्रशस्ततरत्वप्रतिपादनार्थम् । परशक्तिरूपेण सर्वभूतात्मिका हि वाक् । तत्सारकार्यतया तद्रूपा गायत्री प्रशस्ततरेति तात्पर्यम् । 'गायति च त्रायते चे'त्येतत्तु सर्वभूतात्मभूतस्य गायत्र्यात्मभूतस्य च परमेश्वरस्यैव तच्छरीरद्वारकधर्मयोः प्रतिपादकम् । अयं परमेश्वरः स्वशरीरभूतसर्वभूतान्तर्गतत्रैवर्णिकात्मना गायति गायत्रीमन्त्रं जपति गायत्रीमन्त्रात्मना च जपतस्त्रात्रक्षतीति । 'आगच्छ वरदे देवि जप्ये मे सन्निधीभव । गायन्तं त्रायसे यस्माद्गायत्री त्वमुदाहृते'ति स्मृतिः । तस्मा'च्चतुष्पदे'ति व्यपदेशो भूतादिरूपांशचतुष्टयवत्त्वेनैवेति नायं छन्दस्युपपद्यते । तदेतत्सर्वमभिप्रेत्याह—भूतपृथिवीति । नन्वयं भूतादिपादव्यपदेशः क्षोदीयसि छन्दसीवातिमहीयसि परमेश्वरेऽपि नोपपद्यते । न हि परमेश्वरस्वरूपं चतुर्ष्वेव भूतादिषु पर्यवसितमित्याशङ्क्याह—परमेश्वर एवेति । परमेश्वर उपपद्यत एवेत्येवकारो भिन्नक्रमः । न ह्यंशचतुष्टयपरिच्छिन्नः परमेश्वरः इति सावधारणमुच्यते । किं त्वंशचतुष्टयवानित्येतावदुपासनार्थं कीर्त्यते । अत एव तावन्मात्ररूपत्वशङ्कानिराकरणार्थं प्रकृतपरमेश्वरविषयतया 'तावानस्ये'ति मन्त्रोऽवतारितः । तेन ह्यस्य परमेश्वरस्य महिमा तावान्पूर्वोक्तांशचतुष्टयपरिमाणः । न चैवं तावन्मात्रपरिच्छिन्न इति शङ्कनीयम् । यतोऽयं पुरुषः परमेश्वरः ततो ज्यायांश्च भवतीत्युक्त्वा तज्ज्यायस्त्वमुत्तरार्धेनाविष्कृतम् । अंशचतुष्टयात्मना विभक्तानि यानि सर्वाणि भूतानि पृथिवीशरीरहृदययुक्तानि तान्यस्यैकः पादः । त्रिपादयं तु तानि सर्वाणि अतिक्रम्य वर्तत इति । ननु, पुरुषसूक्ते प्रकृतेन महिमवर्णनेन प्रसक्तां तत्परिच्छेदशङ्कामपाकर्तुं प्रवृत्तः 'तावानस्ये'ति मन्त्रः कथमेतत्प्रकरणकृतमहिमवर्णनप्रसक्ततत्परिच्छेदशङ्कापाकरणार्थः स्यात् ।

पुनराशङ्क्य परिहरति—

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

ननु 'पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवि' इत्यत्र द्युसंबन्धप्रत्यभिज्ञानाज्ज्योतिर्वाक्ये परमेश्वरः प्रतिपाद्यत इति न सारम्—उपदेशभेदेन विरोधात् प्रत्यभिज्ञानासिद्धेः। 'त्रिपादस्यामृतं दिवि' इति, 'परो दिवो ज्योतिः' इति विभक्तिभेदेनोपदेशभेदः। अतो विरोध इति चेत्—न, उभयत्रापि विरोधाभावात्, यथा वृक्षाग्रे श्येनः, वृक्षाग्रात् परतः श्येन इति व्यपदेशे। उभयत्रापि वृक्षात्प-

---

नैष दोषः। उभयत्रापि प्राचीनमहिमवर्णनस्यार्थत एकत्वात्पुरुषसूक्ते 'स भूमिं सर्वतो वृत्वे' त्युक्त्या भूम्यनतिवर्त्तिभूतशरीरहृदयाक्रमणस्यार्थतस्सिद्धत्वात् तदाक्रमणस्य 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्य'मिति मन्त्रतः शरीरशरीरिभावेनाधिष्ठानाधिष्ठातृत्वरूपतापर्यवसानाच्चेति भावः। तस्माद्भूतादिचतुरंशत्वं परमेश्वर उपपद्यत एव॥ एवं 'तावानस्ये'ति मन्त्रस्य छन्दःपरत्वेन प्राक् ब्रह्म न प्रकृतमिति शङ्का पूर्वसूत्राभ्यां निराकृता। इदानीं ब्रह्मणः प्रकृतत्वेऽपि निर्देशभेदाज्ज्योतिर्वाक्यं न ब्रह्मविषयमिति शङ्का निराक्रियत इत्येवं शङ्कान्तरनिराकरणार्थत्वेनोत्तरसूत्रमवतारयति—पुनराशङ्क्येति॥ सू॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्॥ २८॥ प्राग्व्यवस्थापितार्थानुवादपूर्वकं तत्र सूत्रोद्भावितां शङ्कां दर्शयति—नन्वित्यादिना। वृक्षस्योपरि भ्राम्यति पक्षिणि वृक्षाग्र इति व्यपदेश इव परान्तरिक्षरूपायाः लौकिकाकाशरूपाया वा दिव उपरि सूर्याद्यस्थाने वर्तमाने परमेश्वरे दिवीत्यपि निर्देश उपपद्यते। सप्तम्यास्सामीपिकाधिकरणविषयत्वसम्भवात् प्रधानप्रकृत्यर्थप्रत्यभिज्ञानिर्वाहाय तदनुसारेण प्रत्ययार्थवर्णनौचित्याच्चेति सौत्रपरिहारांशाभिप्रायं दर्शयति—उभयत्रापीति। ननु द्युशब्दस्याद्यस्थानपरत्वमङ्गीकृत्य सप्तम्यौपश्लेषिकाधिकरणविषयेत्यपि समर्थयितुं शक्यत इति चेत् सत्यम्। तथा सति 'दिवः पर' इति निर्देशोऽनुपपन्नस्स्यादिति दर्शितं प्राक्। तस्मादिह 'दिवि दिव' इति शब्दौ परान्तरिक्षपराकाशान्यतरपरावित्येव युक्तम्। अत एव 'य इमा विश्वा भुवनानि जुह्व'दिति हि परमेश्वरसूक्ते 'परो दिवा पर एना पृथिव्ये'ति मन्त्रगतस्य द्युशब्दस्य परान्तरिक्षपरत्वज्ञापकः पृथिवीसमभिव्याहारो दृश्यते। तत्र 'दिवे'ति 'पृथिव्ये'ति च तृतीया पञ्चम्यर्थे। एना एनया अनयेत्यर्थः। अन्वादेशविषय एनादेशस्तृतीयाया आकारादेशश्च छान्दसः। तथा चास्मात्परपृथिवीलोकरूपात् ब्रह्माण्डात्परान्तरिक्षरूपात्तदुपरितनमायाकार्यलोकनिकायाच्च परस्वर्गरूपपरमाकाशवर्ती परमेश्वरः पर इत्यर्थः। अत एव च 'आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्। परो यदि द्युते दिवी'ति सप्तम्या निर्दिष्टस्यापि पर इत्युक्तम्। तेन सप्तम्या निर्देश्यस्य सामीपिकाधिकरणविषयत्वं द्युशब्दस्याद्यस्थानातिरिक्तपरान्तरिक्षपराकाशान्यतरपरत्वं चाविष्कृतम्। ननु देवताविशेषपरत्वेन निश्चिते पुरुषसूक्ते पठित'स्यैतावानस्ये'ति मन्त्रस्य छन्दस्तावकत्वेनावधारणायोगात् तदेकविषयस्य गायत्रीप्रकरणस्यास्य छन्दःपरत्वं न सम्भवतीत्युक्तं 'छन्दोऽभिधाना'दिति सूत्रे। तन्न सम्भवति चेन्मासम्भूत्तावता तस्य परमेश्वरपरत्वं न सम्भवति। पुरुषसूक्तस्य हिरण्यगर्भपरतया तद्गत'स्यैतावानि'ति मन्त्रस्य तद्विषयत्वावश्यम्भावेन तदनुरोधादस्या-

रत्वमेव विवक्षितम्। एवमत्रोभयत्रापि दिवः परत्वमेव विवक्षितम्। अनेन लिङ्गेन परमेश्वर एव पुरुषसूक्तोदितः पुरुष इति सिद्धम्, 'पादोऽस्य विश्वा भूतानि' इत्यत्रापि श्रवणात्। अतो निजैकांशसमासकलप्रपञ्चं दिवि दीव्यमानं परं ज्योतिः परमेश्वर इति निर्णयः ॥ इति ज्योतिरधिकरणम् ॥ ११ ॥

पि तत्परत्वस्यैव सिद्धेः। तथा च द्युसम्बन्धप्रत्यभिज्ञानात् ज्योतिरप्यादित्यमण्डलस्थितो हिरण्यगर्भ इत्येव सिद्ध्येदित्याशङ्क्याह—अनेन लिङ्गेनेति। सर्वभूतपादत्वलिङ्गेन गायत्र्या इव सहस्रशीर्षत्वादिविशिष्टस्य पुरुषसूक्तप्रतिपाद्यपुरुषस्यापि परमेश्वरत्वं सिद्ध्यति। 'तस्माद्विराडजायते'त्यादेः 'तथा लोकाꣳअकल्पय'न्नित्यन्तस्य पुरुषसूक्तान्तर्गतसन्दर्भस्य परमेश्वरसृष्टब्रह्माण्डोदरजातहिरण्यगर्भविषयत्वेऽपि तत्पूर्वोत्तरसन्दर्भयोस्सूक्तविषयतया प्राधान्येन परमेश्वरत्वप्रतिपादकत्वोपपत्तेः। विस्तरेण चैतदध्यायान्त्याधिकरणे समर्थयिष्यते। 'विश्वा-भूतानी'ति तैत्तिरीयपाठः। अधिकरणार्थमुपसंहरति—अतइति। दिवीति। श्रुत्यनुसारेण सामीप्यसप्तमी। द्युशब्दो वात्र परस्वर्गरूपाद्यस्थानरूपः ॥ इति ज्योतिरधिकरणम् ॥ ११ ॥

नयमणिमालायाम्

## अथ ज्योतिरधिकरणम् ॥ ११ ॥

सू ॥ ज्योतिश्चरणाभिधानात् ॥ २५ ॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥२६॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२७॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् । २८

ज्योतिः पूषा दिवोऽश्रात्स हि भवति परो जाठरैक्योपदेशाद्वाद्विर्वा तन्न शम्भुश्चरणकथनतस्तत्र हेतोरसिद्धेः।
गायत्री तेन सिद्ध्येत्स इति न चरणाच्छन्दसोऽस्तु श्रुतत्वात्स ज्योतिर्यद्यपि स्याद्दिवि दिव इति चादेशभेदान्न स स्यात् ॥
मैवं सार्वात्म्यभूतप्रमुखचरणता सर्वभूतांघ्रितोद्यत्पुंसूक्तप्रत्यभिज्ञावचनविहिततद्द्वारपालाभिधानैः ॥ २५ ॥
गायत्री तावदीशो दिव इति वचसा प्रत्यभिज्ञाविबाधाज्ज्योतिश्च द्यौस्तदायं परमशिवपदं नान्तरिक्षं न नाकः ॥ २६ ॥

इति ज्योतिरधिकरणम् ॥ ११ ॥

सूत्रार्थचन्द्रिकायाम्

## अथ ज्योतिरधिकरणम् ॥ १० ॥ श्रीकण्ठमते ॥ ११ ॥

सू ॥ ज्योतिश्चरणाभिधानात् ॥ २४ ॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॥२५॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२६॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२७॥

**भगवत्पादमते** अस्याधिकरणस्य 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति'रिति छान्दोग्यगतं वाक्यं विषयः। किमिह ज्योतिश्शब्देन आदित्यादिकं ज्योतिरभिधीयते किं वा परमात्मेति। प्रसिद्धिबलात् द्युमर्यादत्वश्रुतेः कौक्षेयज्योतिरध्यासात् ब्रह्मलिङ्गादर्शनाच्च आदित्यादिकमेव ज्योतिश्शब्देन परिगृह्यत इति पूर्वः पक्षः। पूर्ववाक्ये परब्रह्मणो द्युसंबन्धित्वनिर्देशेन 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी'त्यनेन मन्त्रेण ब्रह्मणः चतुष्पात्त्वाभिधानेन सर्वगतस्यापि ब्रह्मणः उपासनार्थं प्रदेशविशेषादीनामुपाधिसम्बन्धात्परिकल्पने विरोधाभावेन च ज्योतिश्श्रुतिः ब्रह्मपरैवेति सिद्धान्तः। **ज्योतिः**=अत्रत्यं ज्योतिःपदं ब्रह्मपरम्। कुतः। चरणाभिधानात् चतुष्पात्त्वाभिधानादित्यर्थः ॥ २४ ॥ ननु 'गायत्री वा इदं सर्वं'मिति गायत्र्याख्यछन्दसः प्रकृतत्वात् तस्यैवोपास्यत्वं नान्यस्येत्याशङ्क्याह—**सू०। छन्दोऽभिधानादिति ॥ छन्दोऽभिधानात्**=गायत्र्याख्यछन्दस एवाभिधानात्। **नेति-चेत्**=पूर्ववाक्ये ब्रह्मणः न प्रकृतत्वमिति चेत्। न। कुतः। **तथा**—गायत्र्याख्यछन्दोद्वारेण तद्गते ब्रह्मणि। **चेतोऽर्पणनिगदात्**=चित्तसमाधानस्याभिधानात्। **तथाहि दर्शनम्**=विकारद्वारेण ब्रह्मणः उपासनमन्यत्रापि 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते'इत्यादौ दृश्यत इत्यर्थः। अतः ब्रह्मैव पूर्ववाक्ये निर्दिष्टम्। न छन्द इति सिद्धम् ॥ २५ ॥

इतश्च गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमित्याह—**सू० ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥** भूतपृथिवीशरीरहृदयैः चतुष्पदा गायत्रीति व्यपदेशस्य ब्रह्मण्येवोपपत्तेः। न ह्यक्षरसन्निवेशरूपगायत्र्यां भूतादिपादव्यपदेशस्सम्भवति। अतो गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमिति ज्योतिर्वाक्ये द्युसम्बन्धात् तदेव प्रत्यभिज्ञायत इति सिद्धम् ॥ २६ ॥

ननु पूर्वं दिवीति सप्तम्या इह दिव इति पञ्चम्या च दिवः आधारत्वावधित्वयोर्निर्दिश्यमानतया विभक्तिभेदात् द्युसम्बन्धात् ब्रह्मणः प्रत्यभिज्ञानं न सम्भवतीत्यत आह—सू० ॥ **उपदेशभेदान्नेति चेदिति** ॥ **उपदेशभेदान्नेति चेत्**= दिवि दिव इति विभक्तिभेदेन उपदेशात् ज्योतिर्वाक्ये प्रत्यभिज्ञानं न सम्भवतीति चेत् । **न** । कुतः । **उभयस्मिन्नपि**-विभक्तिभेदेन उपदेशद्वयेऽपि । **अविरोधात्**-प्रधानप्रातिपदिकार्थेन प्रत्यभिज्ञाया अविरोधादित्यर्थः। अतः प्रकृतत्रिपाद्ब्रह्मपरामर्शियच्छन्दानुबन्धात् परं ब्रह्मैव ज्योतिश्शब्दितमुपास्यमिति सिद्धम् ॥ २७ ॥

**श्रीकण्ठमते,** पूर्वं निखिलभुवननायकस्य उमापतेः परब्रह्मणः आदित्यमण्डलमास्पदमित्युक्तम् । तस्यैवेहाधिकरणे स्थानान्तरमुच्यते—सू० ॥ **ज्योतिश्चरणाभिधानात्** ॥ **२५** ॥ विषयवाक्यं समानमेव । अत्र सकललोकव्याप्ततया दिवि श्रूयमाणं पर ज्योतिः परमेश्वरो वा अन्यो वेति संशये द्युशब्दस्याकाशवाचित्वात् आकाशवर्ती सूर्य एव ज्योतिश्शब्दितः इत्येकः पूर्वपक्षः । 'अन्तःपुरुषे ज्योति'रिति पुरुषान्तर्वर्तित्वाभिधानात् जाठराग्निर्ज्योतिश्शब्दित इत्यपरः । इत्येवं द्विधा पूर्वपक्षोत्थितिरिति विशेषः । सिद्धान्तस्तु पूर्वत्र 'पादोऽस्य सर्वा भूतानी'ति विश्वभूतानामस्य ज्योतिषः एकांशत्वाभिधानात् परिच्छिन्नयोर्जाठराग्निसूर्ययोः तदसम्भवाच्च ज्योतिश्शब्दप्रतिपाद्यः परमेश्वर एवेति ॥ २५ ॥

इतरेषु गुणसूत्रेषु नास्ति वैलक्षण्यमिति विरमामस्तत्प्रपञ्चनात् ॥

**रामानुजमते,** इदमधिकरणस्य विषयवाक्यसन्देहपूर्वपक्षसिद्धान्तादिकं भगवत्पादीयान्मतान्न भिद्यते इत्यतो न पृथक्प्रपञ्च्यते ॥

**आनन्दतीर्थमते, सू०** । **ज्योतिश्चरणाभिधानात्** ॥ **२४** ॥ इदमेकसूत्रकमेवेदमधिकरणं 'छन्दोऽभिधाना'दित्यादि सूत्रत्रिकमधिकरणान्तरमिति विशेषः । अस्य 'वि मे कर्णा पततोऽपि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधीः किं स्विद्वक्ष्यामि किमु न मनिष्ये'इति वाक्यं विषयः । अत्र हृदयाहितत्वेन श्रूयमाण ज्योतिः जाठराग्निर्वा विष्णुर्वेति संदेहः । हृदयाहितत्वलिङ्गात् अस्य वाक्यस्याग्निसूक्तान्तर्गतत्वाच्च जाठराग्निरिति पूर्वः पक्षः । इयदिति परिच्छेदानर्हवैभवत्वरूपस्य कर्णादिविदूरत्वस्यात्राभिधीयमानस्य विष्णोरन्यत्रासंभवान्निरवकाशलिङ्गेन सावकाशश्रुतिप्रकरणबाधस्य न्याय्यत्वाच्च ज्योतिश्शब्दवाच्यो विष्णुरेवेति सिद्धान्तः । **ज्योतिः**-ज्योतिश्शब्दवाच्यः विष्णुरेव । कुतः । **चरणाभिधानात्**-कर्णादीनां विचरणाभिधानात् । ज्योतिषः साकल्येन कर्णादिविदूरत्वश्रवणादिति सूत्रार्थः ॥ २४ ॥

**इति ज्योतिरधिकरणम्**

## अथ गायत्र्यधिकरणम् ।

**सू० ॥ छन्दोभिधानान्नेतिचेत्तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २५ ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥**

**आनन्दतीर्थमते,** इदं सूत्रत्रयं ज्योतिरधिकरणात् भिन्नमधिकरणान्तरं बोध्यम्। अस्याधिकरणस्य 'गायत्री वा इदं सर्वं भूतं' 'वाग्वै गायत्री' वाग्वा इदं सर्वं' 'गायति च त्रायते च' इत्यादि छान्दोग्यवाक्यं विषयः । अत्र गायत्रीशब्दवाच्यः छन्दोविशेषो वा विष्णुर्वेति सन्देहः । गायत्र्याः वेदतया नित्यत्वात् विष्ण्वधीनत्वासम्भवात् योगाद्रूढेः प्रबलत्वाच्च छन्दोविशेषपर एवेति पूर्वः पक्षः । गानत्राणकर्तृत्वं भूतादिपादत्वं 'एतामेव नातिशेत' इति सर्वोत्तमत्वमित्यादिलिङ्गानां छन्दस्यसम्भवेन 'अतो ज्यायांश्च पुरुषः' 'यद्वै तद्ब्रह्म' 'एतामेव ब्रह्मोपनिषद' मित्यादिश्रुतीनां निरवकाशानां सत्त्वाच्च नित्यानामपि सदा भगवन्नित्यशक्त्यधीनतया तदधीनत्वन्यायविषयत्वसम्भवाच्च गायत्रीशब्दवाच्यो विष्णुरेवेति सिद्धान्तः ॥ **छन्दोऽभिधानात्**=चतुर्विंशत्यक्षरात्मकछन्दसः प्रतिपादनात् । **नेति चेत्**=गायत्रीशब्दवाच्यो विष्णुर्न भवतीति चेत् । न । कुतः । **तथा हि दर्शनम्**= यस्मात् तथा गानत्राणकर्तृत्वनिमित्तेन **दर्शनं** विष्णोः गायत्रीशब्दवाच्यत्वप्रतिपादिका श्रुतिः अस्ति । तस्मात् । **तथाचेतोऽर्पणनिगदात्**=विष्णोः तथा गायत्र्यादिशब्दप्रवृत्तिनिमित्तवत्त्वेन चेतसि अर्पणाय उपासनाय निगदात् श्रुतौ प्रतिपादनादित्यर्थः । **सू० ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम्** ॥ **२६** ॥ एवमिति पदमावर्त्यते । एवं गायत्रीशब्दवाच्यं ब्रह्मेत्येवमेव युक्तम्। कुतः। **एवं भूतादिपादव्यपदेशोपपत्तेः**='पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी'ति एवंरूपभूतामृतांशवत्त्वोक्तेश्च तस्य च विष्णावेवोपपत्तेरन्यत्रानुपपत्तेश्चेत्यर्थः ॥ **सू० ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्** ॥**२७**॥ **उपदेशभेदात्**=गायत्रीज्योतिषोः द्युस्थत्वदिवःपरत्वरूपविरुद्धधर्मबोधकश्रुतिभेदात्। **नेति चेत्**-तद्द्वयं विष्ण्वाख्यमेकं वस्तु न भवति किं तु भिन्नमेवेति चेत् । **न** । कुतः । **उभयस्मिन्** श्रुतिवाक्येऽपि एकस्य प्रतिपाद्यत्वेऽपि । **अविरोधात्**= त्रिसप्तलोकविवक्षया विरोधाभावादित्यर्थः ॥

**॥ इति सूत्रार्थचन्द्रिकायां आनन्दतीर्थमते गायत्र्यधिकरणम् ॥ ११ ॥**

---

## अथ इन्द्रप्राणाधिकरणम् ॥ १२ ॥

**भगवत्सवितृमण्डले साक्षादुपास्यतया निर्दिष्टस्य परमेश्वरस्य तस्मिन्नधिकरणे विश्वात्मकत्वमुक्तं, तदात्मकतया तदन्येषामुपास्यत्वं नान्यथेति प्रतिपादयितुमिदमधिकरणमारभ्यते—**

### प्राणस्तथाऽनुगमात् ॥ २९ ॥

**अस्य कौषीतकोपनिषदि विषयः श्रूयते—'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व' इतीन्द्रवचनं विषयः ॥ अत्रोपासनाविषयत्वेन प्राणशब्दसामानाधिकरण्येन निर्दिष्ट इन्द्रो वा परमेश्वरो वेति संशयः ॥ इह 'प्राणोऽस्मि प्रज्ञात्मा तं माम्' इति प्राणशब्दस्य साक्षादिन्द्रेण सामानाधिकरण्यमवगम्यते ।**

---

प्रासङ्गिकाधिकरणानि परित्यज्य 'अन्तस्तद्धर्मोपदेशा'दित्यधिकरणेन सङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति—भगवत्सवितृमण्डल इति । 'तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाते' त्यन्तरादित्यविद्याप्रकरणगतवाक्येनोद्गातृकर्तृकाणामिन्द्रादिविषयस्तोत्राणां परमेश्वरविषयत्वोक्त्या परमेश्वरस्येन्द्राद्यात्मत्वमुपवर्णितम् । तत्सिद्धेन परमेश्वरात्मकत्वहेतुना इन्द्रादीनां स्वतो मुक्त्यर्थमनुपास्यानां तदर्थमुपास्यत्वश्रवणमुपपद्यत इति हेतुहेतुमद्भावसङ्गतिः । यथा स्तोत्रीयाणामिन्द्रादिमहिमप्रतिपादिनीनामृचां तदात्मभूतपरमेश्वरपर्यन्तत्वं तथेन्द्राद्युपासनाविषयश्रुतीनामप्युपपाद्यत इति दृष्टान्तसङ्गतिर्वात्र विवक्षिता । प्रतर्दनाख्यायिकादीनां परमेश्वरे तात्पर्यसमर्थनार्थेनाप्यनेनाधिकरणेनोक्तप्रयोजनमानुषङ्गिकं सिद्ध्यतीति तावता प्रतिपादयितुमिति तुमुन्प्रत्ययः ॥ सू ॥ प्राणस्तथानुगमात् ॥ २९ ॥ 'प्रतर्दनो ह दैवोदासिरिन्द्रस्य प्रियं धामोपजगामे'त्यारभ्य 'वरं वृणीष्वे'त्युक्तवतः 'त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस'इति प्रतर्दनेनोक्तस्येन्द्रस्य वचनमिदं श्रूयते 'प्राणोऽस्मी'त्यादि । तत्र त्वाष्ट्रवधादीनामिन्द्रलिङ्गानामानन्दादीनां परमेश्वरलिङ्गानां च बलाबलानवधारणात्संशयमाह—अत्रेति । ननु प्राणशब्दश्रवणान्मुख्यप्राणो वेति सन्देहकोटिः प्रदर्शनीयेत्याशङ्क्याह—प्राणशब्देति । 'प्राणोऽस्मी'ति सामानाधिकरण्येन प्राणस्यान्यविशेषणत्वप्रतीतेः प्राणः प्राधान्येनोपास्यतया प्रतिपाद्यत इति सन्देहो नावतरति । किं तु 'प्राणोऽस्मी'ति वचनं यदीन्द्रलिङ्गानुरोधेन वक्तरि पर्यवस्यति तदेन्द्रः यदि परमेश्वरलिङ्गानुरोधेन तदन्तर्यामिपर्यन्तं धावति तदा परमेश्वर इतीन्द्रपरमेश्वरकोटिक एवात्र सन्देहोऽवतरतीति भावः । इन्द्रेणेति । 'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छं बह्वीस्सन्धा अतिक्रम्य दिवि प्रह्लादिनमतृणमहमन्तरिक्षे पौलोमान् पृथिव्यां कालकक्ष्यान् तस्य मे तत्र न लोम च मीयते' इति श्रुतैस्त्वाष्ट्रवधादिलिङ्गैः प्रसिद्ध एवेन्द्रोऽत्र वक्तावसीयते । अतस्तत्सामानाधिकरण्यात्प्राणशब्दस्य तद्विषयत्वमवसीयत इति भावः । ननु प्राणशब्दसामानाधिकरण्येनैव 'आनन्दोऽजरोऽमृत'इति परमेश्वरलिङ्गान्यपि श्रूयन्ते । न च तेषामौपसंहारिकत्वेन दुर्बलत्वाद्बाध्यत्वमपि । विरोधाभावात् । 'गौरो विद्वान्देवदत्त उपासनीय' इत्यत्र गौरत्ववैदुष्ययोर्देवदत्तात्मनीवेन्द्रपरमेश्वरलिङ्गजातयोरिन्द्रात्मनि तस्मिन्सद्वारकाद्वारकान्वयोप-

'मामुपास्व' इति तद्विषय एवोपासनाविधिः श्रूयते । तस्य प्राणत्वं वृष्टिद्वारा सकलरक्षकत्वादुपपद्यते । सकलोपास्यत्वं च परमैश्वर्यवत्त्वादुपपन्नम् । तथा हि श्रुतिः–'इन्द्रो राजा जगतो य ईशे' इत्यादिः । तस्मादिन्द्र एवोपास्यतया निर्दिश्यत इति पूर्वः पक्षः ॥ सिद्धान्तः परमेश्वर इति । कुतः ? आनन्दाजरामृतप्रज्ञात्मादीनां तदसाधारणधर्माणामस्मिन् प्राणशब्दनिर्दिष्टेऽनुगमात् 'एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इति । 'इन्द्रो राजा' इति श्रुतौ इन्द्रशब्दः ईश्वरविषयः प्रकरणादवगम्यते ॥

आशङ्क्य परिहरति–

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबधभूमा ह्यस्मिन् ॥ ३० ॥

पत्तेरित्याशङ्क्याह–तद्विषय एवेति । तत्र 'हि मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीया'मित्यवधारणेन स्वान्तर्यामिपर्यन्तत्वव्यावर्तनपूर्वकं स्वस्यैवोपास्यत्वं प्रतिपाद्यते । अतस्तद्विरोधादानन्दाजरामृतत्वानीन्द्र एवापेक्षिकाणि योजनीयानीति भावः । तस्य प्राणत्वमिति । प्राणयतीति व्युत्पत्त्यात्र प्राणशब्द इति भावः । ननु 'यं त्वं मनुष्याय हिततमं मन्यसे' 'एतदेवाहं मनुष्याय हिततमं मन्य' इति प्रश्नोत्तरयोर्मनुष्यसामान्ये हिततमत्वोक्त्या सकलोपास्यत्वं प्रतीयते । तत्कथं वृष्टिकामादिमात्रोपास्यस्येन्द्रस्येत्याशङ्क्याह–सकलोपास्यत्वं चेति । इन्द्रेण हि 'त्रिशीर्षाण' मित्यादिना 'न लोम च मीयत' इत्यन्तेन स्वस्य सकलपापास्पृष्टत्वमुक्त्वा 'स यो मां विजानीयान्नास्य केन चन कर्मणा लोको मीयते न मातृवधेन पितृवधेन न स्तेयेन न भ्रूणहत्यये'त्युपास्यगुणानुसारिसकलपापासंस्पर्शरूपं फलं स्वोपासकस्योक्तम् । तच्च फलं सर्वेषामीप्सितमिति सर्वोपास्यत्वं युज्यते । न चैतादृशफलप्रदानसामर्थ्यं कथमिन्द्रस्येति शङ्कनीयम् । 'इन्द्रो राजा जगतो य ईशे' 'ईशानमस्य जगतस्सुवर्दृशम्' 'इन्द्रो यातोऽवसितस्य राजे' त्यादिश्रुतिभिस्तस्य जगदीश्वरत्वावगमेन तत्र तत्सामर्थ्यसम्भवादिति भावः । 'प्राणोऽस्मीति निर्दिष्टः प्राणः परमेश्वरः । तथा 'हिततमं मन्यस' इत्युपक्रम इवानु पश्चादुपसंहारेऽप्यानन्दोऽजरोऽमृत इति परमेश्वरधर्मावगमादिति सूत्रार्थः। तत्रानुगमादित्यनेनोक्तः औपसंहारिको हेतु'रानन्दाजरामृतप्रज्ञात्मादीना'मित्यादिभाष्येण प्रदर्शितः । उपक्रमहेतु'स्त्विन्द्रो राजेतिश्रुतौ' इति भाष्येण तदन्यथासिद्धिपरिहारप्रदर्शनमुखेन पश्चाद्दर्शितः । हिततमत्वं ह्युपासनस्य मोक्षसाधनत्वं तद्वाक्यशेषावगतं सर्वपापास्पर्शसाधनत्वं चेत्तदपि फलतो मोक्षपर्य्यवसाय्येव । इदमिन्द्रोपासनस्यापि सम्भवति । इन्द्रस्य सकलजगदीश्वरत्वेन सकलफलप्रदानशक्तत्वादिति शङ्कायाः ख'ल्विन्द्रो राजे'त्यादिश्रुतिर्मूलम् । नैषा श्रुतिरिन्द्रविषया । किं तु तदन्तर्यामिपरमेश्वरविषया । 'इन्द्रस्यात्मानं दशधा चरन्तं' 'इन्द्रस्यात्मानं शतधा चरन्त' 'मिन्द्रस्यात्मा निहितः पञ्चहोते'ति पूर्वापरमन्त्रैः प्रकरणस्य तदन्तर्यामित्वावगमात् एव'मीशानमस्य जगतः सुवर्दृश'मित्यादिकमप्यथर्वशिरःपाठादिहेतुभिः परमेश्वरपरमवगम्यते । अतोऽन्यथासिद्धिरहिताद्धिततमत्वलिङ्गादपि प्राणः परमेश्वर इति भावः ॥ 'मामेव विजानीही'त्यवधारणमूलशङ्कानिराकरणार्थमुत्तरसूत्रमित्यभिप्रेत्यावतारयति—आशङ्क्येति ॥ सू ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्म-

नायमुपास्यः परमेश्वरः, उपक्रमे 'मामेव विजानीहि त्रिशीर्षाणं त्वाष्ट्रमहनम्' इत्यादिना प्रज्ञातजीवभावस्येन्द्रस्योपास्यत्वोपदेशात् । अत उपसंहारस्तदनुगुणो नेतव्य इति चेत्—नैतदुचितम्, उपक्रमादारभ्यास्मिन् प्रकरणेऽध्यात्मसंबन्धस्य परमेश्वरधर्मस्य बाहुल्यात् । तथा हि, उपक्रमे तावत् 'यं त्वं मनुष्याय हिततमं मन्यसे' इति हिततमोपासनं प्रारब्धम् । तत् परमेश्वरधर्मः, तदुपासनस्यैव मोक्षसाधनस्य हिततमत्वात् । मध्ये च 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' इति सर्वकर्मकारयितृत्वं श्रूयते । तथा, 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' इति जडचेतनात्मकसकलप्रपञ्चाधारत्वं श्रूयते तच्च परमेश्वरधर्मः । अतः परमेश्वरधर्मबाहुल्यादिहोपास्य इन्द्रो न भवति ॥

कथमिन्द्रो जीवत्वादनुपास्योऽपि स्वविषयमुपासनमुपदिशतीत्याशङ्कायामाह—

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥**

'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिशास्त्रदृष्ट्या

---

सम्बन्धभूमा ह्यस्मिन् ॥३०॥ 'आत्मोपदेशा'दिति हेतो'र्मामेव विजानीही'ति सावधारणवाक्येन 'त्रिशीर्षाणं त्वाष्ट्र'मित्यादिना स्वचरितोपन्यासेन च स्वात्मन एवोपास्यत्वोपदेशादित्यर्थमभिप्रेत्य व्याचष्टे—नायमित्यादिना । उपसंहार इत्येतद्धिततमत्वोपक्रमस्याप्युपलक्षणम् । उपक्रमोपसंहारापेक्षयावधारणश्रुत्युपबृंहितं मध्यगतत्वाष्ट्रवधादिलिङ्गबाहुल्यं प्रबलमिति भावः । उपक्रमादारभ्येति । तथा च परमेश्वरधर्माणामेव भूयस्त्वादिन्द्रलिङ्गानां भूयस्त्वमसिद्धम् । तत्सत्त्वेऽपि तेषां परमेश्वरधर्माणामिवोपक्रममारभ्योपसंहारपर्यन्तमनुवर्तमानतया भूयस्त्वं सौत्रेणास्मिन्निति पदेन सूचितमसिद्धमिति भावः । जडचेतनात्मकेति । यद्यपि पूर्वं 'ता वा एताः दशैव भूतमात्राः अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूत'मिति भूतमात्राभिः सह परस्परापेक्षत्वेनोक्ता दश प्रज्ञामात्रा दशेन्द्रियाणि तथाप्यत्र नेम्यरनाभिदृष्टान्तोपन्यासपूर्वकं भूतमात्राधारत्वेन प्राणाधारत्वेन चोक्तत्वाद्दशसङ्ख्याराहित्याच्च ज्ञानस्वरूपाश्चेतना एव प्रज्ञामात्राशब्देन ग्राह्या इति भावः । तच्चेति । 'एष लोकाधिपतिरेष लोकपाल एष लोकेश' इत्युक्तमौपसंहारिकमानन्दादिकं च परमेश्वरधर्मजातं समुच्चीयते ॥ 'मामेव विजानीही'ति वचननिर्वाहार्थत्वेनोत्तरसूत्रमवतारयति—कथमिति । जीवत्वादनुपास्योऽपीति । 'सर्वमन्यत्परित्यज्ये'ति श्रुतेरिति भावः ॥ सू ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥३१॥ ॥ अनेनेति । नामव्याकरणं नामवाच्यत्वात्मकनामवैशिष्ट्यसम्पादनं तदुभयं परमेश्वरकर्तृकमित्येतावदेव यद्यपि 'नामरूपे व्याकरवाणी'त्यतः प्रतीयते न तु तन्नामवैशिष्ट्यं रूपवैशिष्ट्यं च परमेश्वरधर्मिकमित्यपि प्रतीयते । तथापि 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते'ति समानार्थश्रुत्यन्तरे नामरूपव्याकरणस्याव्याकृतशब्दपरिगृहीतप्रलयदशोपसंहृतानभिव्यक्तनामरूपपरमेश्वरपर्यन्ततया स्पष्टमाम्नातत्वादिहापि 'बहु स्या'मिति प्राग्वर्णितपारमेश्वरबहुभवनसङ्कल्पानुगुण्यात् 'अनेन जीवेनात्मनानुप्रविश्ये'ति जीवशरीरकेण स्वात्मना

सर्वशब्दवाच्यत्वात् परमेश्वरस्य स्वशरीरकतया स्वशब्दवाच्यं परमेश्वरमेवोपास्यत्वेनोपदिष्टवानिन्द्रः। अत इन्द्रशब्देनोपदेशः परमेश्वरस्य । दृष्टान्तमाह— वामदेववत्। वामदेवो हि स्वस्य परमेश्वरात्मत्वदृष्ट्या 'अहं मनुरभवं सूर्यश्च' इत्युपदिदेश। तद्वदिन्द्रोपदेशः। अथवा—वेदान्तविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्मभावमुपगतस्य विगलितमनुष्यादिदेहविषयकल्पिताहंभावसंकोचस्य संपन्नविश्वाकारपराहंभावस्य वामदेवस्य स्वात्मनः सर्वगतत्वावगमान्मनुसूर्यादिप्रपञ्चभावोक्तिः। एवमिन्द्रस्यापीति निश्चीयते। 'प्राणोस्मि प्रज्ञात्मा' इति प्राणशब्देन परं ब्रह्मोच्यते, तस्यानन्दरूपत्वेन सकलप्राणनहेतुत्वात् 'प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इति श्रवणात् । तथा च 'अहं ब्रह्मास्मि'

---

तेजःप्रभृत्यनुप्रवेशोक्तेः तदीयनामरूपव्याकरणस्य स्वात्मपर्यन्तत्वावगत्यर्थत्वाच्च नामरूपव्याकरणश्रुत्या परमेश्वरस्य सर्वशब्दवाच्यत्वं सिद्ध्यतीति भावः । आदिशब्दे'नैतदात्म्यमिदं सर्व'मित्युपरितनवाक्यं 'य आत्मनि तिष्ठ'न्नित्यादि श्रुत्यन्तरं च सर्वशब्दवाच्यत्वोपपादकसार्वात्म्यप्रतिपादकं गृह्यते। शास्त्रदृष्ट्येति । शास्त्रमूला दृष्टिः शास्त्रदृष्टिः नामरूपव्याकरणश्रुतिमूला सर्वशब्दवाच्यत्वावगतिः सार्वात्म्यप्रतिपादकशास्त्रमूलयोगाभ्यासप्रभवा स्वात्मभूतब्रह्मानुभूतिश्च। 'सर्वशब्दवाच्यत्वा'दित्येतत्सर्वात्मत्वादित्यस्याप्युपलक्षणम्। स्वशरीरकतयेति। इन्द्रः स्वप्रयुक्तस्य मामिति शब्दस्य स्वात्मभूतपरमात्मपर्यन्तत्वं पश्य'न्मामेव विजानीही'ति स्वशरीरकं परमेश्वरमेवोपास्यमुपदिदेशेत्यर्थः । इन्द्रशब्देनेति। इन्द्रविषयेण मामिति शब्देनेत्यर्थः। वामदेवो हीति । वामदेवः स्वस्य परमेश्वर आत्मेति दृष्ट्या स्वविषयस्याहमिति शब्दस्य तत्पर्यन्तत्वं स मन्वादीनामप्यात्मेति दृष्ट्या मन्वादिशब्दानां तत्पर्यन्तत्वं चावगच्छ'न्नहं मनु'रित्याद्युपदिदेशेत्यर्थः। एवमिन्द्रस्य तद्दृष्टान्तस्य वामदेवस्य च। परमेश्वरे मामहमितिशब्दयोः प्रयोगस्तयोः स्वान्तर्यामिपरमेश्वरपर्यन्ततावगतिप्रयुक्त इत्युपपादितम्। इदानीं सर्वात्मभूतपरमेश्वरैक्यभावनादार्ढ्यप्रयुक्तस्स इति। प्रकारान्तरेण सूत्रार्थमाह—अथवेति। अयमर्थः। 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसी'त्यादि वेदान्तविषयप्रामाण्यात् दहराद्युपासकैः परब्रह्मणा मलमायादिसकलदोषरहितेन सत्यसङ्कल्पत्वादिसकलमङ्गलगुणास्पदेन सकलभोक्तृभोग्यशरीरकेण शिवेन स्वात्मनस्सामरस्यभावनावर्णित धर्मजातविशिष्टतदैक्यभावना कार्येत्येव 'मात्मेति तूपगच्छन्ति ग्राहयन्ति चे' (ब्र०४-१-३.सू) त्यधिकरणे समर्थयिष्यते। ततश्चिरनिरन्तरासेवितभावनादार्ढ्येन तेषां वस्तुतस्स्वशरीररीत्या सर्वप्रपञ्चप्रेरणासामर्थ्यरूपे सर्वशरीरकत्वे सर्वदा सत्यपि वातव्याधिदशायां वाताभिभूतशरीरैकदेशप्रेरणासामर्थ्यस्येव संसारदशायां तस्यानभिव्यक्त्या मनुष्यादिशरीरमात्रे परिच्छिन्नो यः कल्पितोऽहंभावस्स्थितस्स विगलितो भवति । विषनिर्हरणमन्त्रैर्गरुडमुपासीनानां वीक्षणमात्रसाध्यविषनिर्हरणसामर्थ्यशालिना गरुडेनैक्यभावनायाः दार्ढ्यात्तेषां तदसाधारणोक्तरूपसामर्थ्यविशेषणस्येव दहराद्युपासकानामुक्तरूपशिवाभेदभावनासामर्थ्यात् शिवासाधारणसकलप्रपञ्चप्रेरणसामर्थ्यस्याभिव्यक्तिः मनुष्यादिशरीर इव भोग्यभोक्तृरूपे सर्वस्मिन्नपि प्रपञ्चे विजृम्भमाणोऽहंभावश्च प्रवर्तते। उपपद्यते च चिच्छक्तिव्याप्त्या स्वकीयं सर्वगतत्वमवगच्छतां सर्व-

'मामुपास्स्व' इति ब्रह्मदृष्ट्योपदेशः । तथा हि कृष्णादयोऽप्यर्जुनादीन् प्रत्युपदिष्टवन्तः ॥

---

प्रपञ्चानुप्रवेशेन तत्प्रेरणासामर्थ्यकृतया स्वशरीरत्वावगत्या सर्वस्मिन्नपि संसारितद्भोग्यवर्गरूपे प्रपञ्चे सर्वशरीरत्वप्रयुक्ताहंबुद्धिः । एवं शिवाभेदभावनया शिवसामर्थ्यप्राप्तिस्तृतीयाध्याये 'प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासा'दिति( ब्र० ३-२-२४ ) सूत्रे प्रदर्शयिष्यते । चिच्छक्तिव्याप्त्या सर्वानुप्रवेशेन तत्पूर्वकसर्वप्रेरणासामर्थ्यात्मकसर्वशरीरत्वरूपं सार्वात्म्यं चतुर्थाध्याये 'प्रदीपवदावेश'इति (ब्र० ४-१-१५.) सूत्रे 'तदपश्यत्तदभवत् प्रजा'स्विति श्रुत्युदाहरणपूर्वकं प्रदर्शयिष्यते । तत्कृता सर्वत्र भोग्यभोक्तृरूपे प्रपञ्चेऽहंबुद्धिर्मुक्तिदशायामप्यनुवर्तमाना तत्रैव 'विकारावर्ति च तथाहि स्थितिमाह' इति ( ब्र० ४-३-१९. ) सूत्रे 'अहमन्नमहमन्नाद' इति श्रुत्युदाहरणपूर्वकं प्रदर्शयिष्यते । एवं च वामदेवस्य सर्वात्मत्वभावनादार्ढ्याद्यथा स्वस्य मनुसूर्यादिरूपत्वव्यवहारः एवमिह तथाभूतब्रह्माभेदभावनादार्ढ्यादिन्द्रस्य ब्रह्माभिप्रायेण 'मा'मिति व्यवहार इति । मामेवेत्येवकारोऽपि ब्रह्माभेदभावनादार्ढ्यादुपपद्यते । तथा हीति । तथा तेन प्रकारेण भावनादार्ढ्यकृतशिवाभेददृष्ट्यैव हि 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे'त्यादि भगवान्कृष्णोऽप्यर्जुनं प्रत्युपदिदेश । अत एव 'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥' इत्यादिवचनान्वितं गीताशास्त्रमात्रं श्रुत्वापि 'स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तवे'ति शास्त्रान्ते गुरुं प्रत्युक्त्वाप्यर्जुनो यावज्जीवं शिवपूजारत एवावर्तत । भारतयुद्धमध्ये शिवाय कल्पितेन नित्यपूजोपहारेण कृष्णं शिवबुद्ध्यैव चार्चयत एव तदीयस्य पूजोपहारस्य कैलासे शिवसमीपे दर्शनमुक्तम् । द्रोणपर्वणि 'तं चोपहारं विततं नैशं नैत्यिकमात्मनः । ददर्श त्र्यम्बकाभ्याशे वासुदेवे निवेदित'मिति । एवं भगवद्गीतायाः शिवपरत्वे सत्येव 'ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया । स्वयमेव हृषीकेशः प्रीत्योवाच सनातनम् । गच्छगच्छ स्वकं स्थानं न शोकं कर्तुमर्हसि । भजस्व परया भक्त्या शरण्यं शरणं शिव'मिति कूर्मपुराणेऽर्जुनं प्रति व्यासवचनम् । तत्रैवेश्वरगीतान्ते'नारायणोऽपि भगवान्देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम् ॥' इति वचनं च सङ्गच्छते । ननु 'केषु केषु च भावेषु चिन्त्योऽसि भगवन्मये'त्यादि पृष्टवन्तमर्जुनं प्रति 'मन्मना भव मद्भक्त'इत्यादिभगवद्वचनं कथं हि शिवोपासनादिविषयं स्यादिति चेन्न । भगवतः कृष्णस्य स्वचरितवचनतेजोविशेषैः शिवभावभावितत्वं निश्चितवतोऽर्जुनस्य प्रश्नोऽपि शिवोपासनादिविषय इत्युपपत्तेः । ऐतरेयोपनिषदि विश्वामित्रं प्रकृत्य श्रुते 'इन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागा वरं ते ददामीति । स होवाच त्वामेव विजानीया'मिति सन्दर्भे विश्वामित्रप्रश्नस्य 'तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणस्सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मी'त्याद्युत्तरसन्दर्भानुसारेण तथा गतिकल्पनायास्सम्प्रतिपन्नत्वात् । 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् । तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी । कथं विद्या महायोगिन् त्वां सदा परिचिन्तयन् । योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् । एवमुक्त्वा ततो राजन्महायोगीश्वरो हरिः । यत्र

पुनराशङ्क्याह—

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥३२॥**

ब्रह्मज्ञानोपासनया ब्रह्मभावमुपगतस्य विगलितजीवभावस्य तद्रूपदृष्ट्या स्वस्मिन्नुपास्यत्वसर्वात्मभावोपदेशो युक्तः। अत्र 'त्रिशीर्षाणं त्वाष्ट्रमहनं' 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इत्यादौ जीवलिङ्गं मुख्यप्राणलिङ्गं च

---

योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः।' इति गीताम्नातासु कृष्णार्जुनसंशयोक्तिषु कृष्णस्येश्वरविषययोगवत्त्वस्य प्रतिपादितत्वेन 'परं हि ब्रह्म कथितं योगयुक्तेन तन्मये'त्यनुगीतारम्भे कृष्णेनैव शिवयोगमास्थाय मया गीतोपदेशः कृत इत्युक्तत्वेन विभूत्यध्याये कृष्णेना'दित्यानामहं विष्णु'रिति स्वपूर्वावताररूपस्योपेन्द्रस्य 'वृष्णीनां वासुदेवोऽस्मी'ति स्वस्य च स्वविभूतिषु परिगणनपूर्वकं विश्वरूपाध्याये 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचि'न्निति विपक्षाणां प्रत्यक्षहननात्प्रागेव स्ववीर्यप्रभावनिहतत्वमुपवर्ण्य समयान्तरे स्वरूपमास्थितेन तेन मोक्षधर्मेषु पार्थं प्रत्येव 'निहतांस्त्वेव पूर्वं त्वं हतवानसि वै रिपून्। अप्रमेयप्रभावं त्वं देवदेवमुमापतिम्। भजस्व नित्यं प्रयतो विश्वेशं हरमव्यय'मिति तेषां शिववीर्यप्रभावनिहतत्वोपदेशेन गीतास्वप्राकृतगुणचरितोपदेशस्य सर्वस्यापि पराहंभावगृहीतशिवविषयत्वस्य व्यक्तीकृतत्वेन च गीतायाः कार्त्स्न्येन शिवविषयत्वस्यावश्याभ्युपगन्तव्यत्वाच्च। तस्मात्कृष्णस्य 'मन्मना भवे'त्यादिवचनं शिवदृष्ट्यैव। तद्वदिन्द्रवचनमपि। सूत्रगतवामदेवग्रहणमुपलक्षणीकृत्य दृष्टान्तान्तरोपन्यासोऽयम्। अदिशब्देनोक्तवाक्यान्तरदृष्टानामेवंभूतोपदेशानां सङ्ग्रहः। एवं 'मामेव विजानी ही' ति वक्तुरात्मोपदेशस्य निर्वाहः कृतः। त्वाष्ट्रवधादिलिङ्गानामनिर्वाहे कृतनिर्वाहोऽपि न प्रतिष्ठितः स्यादिति तदाशङ्कोद्भावनपूर्वकं तन्निर्वाहार्थत्वेनोत्तरसूत्रमवतारयति—पुनरिति ॥ सू ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥३२॥ युक्त इति। 'प्राणो वा अहमस्मृष'इति श्रुत्यन्तर इति शेषः। यद्वा। उपास्यत्वं सार्वात्म्यं चेतीन्द्रवामदेवसम्बन्धिनोः प्रकृताप्र-
ानम्। तथा च ब्रह्मदृष्ट्या वामदेवसार्वात्म्योपदेशवदिन्द्रोपास्यत्वोपदेशो युक्त इत्यर्थः। यद्यत्र त्वाष्ट्रवधादिजीवमुख्यप्राणलिङ्गं न स्यादिति शेषः। अस्ति त्वत्र तदित्याह—अत्र त्विति। इत्यादावित्यादिशब्देन 'न वाचं विजिज्ञासीत वक्तारं विद्या'दित्यादिकमिन्द्रलिङ्गसहपाठाद्विशेषपर्यवसायि जीवसामान्यलिङ्गं 'मिदं शरीरं परिगृह्योत्थापयती'त्यादि मुख्यप्राणलिङ्गं च गृह्यते। मुख्यप्राणलिङ्गमपि मुख्यप्राणसम्बन्धरूपजीवसामान्यलिङ्गोत्थापनद्वारा जीवविशेषपर्यवसायि। ननु प्राणश्रुतौ सत्यां किमिति मुख्यप्राणविषये लिङ्गान्वेषणम्। उच्यते। ऐतरेयोपनिषदि 'त्वामेव विजानीया'मिति पृष्टवन्तं विश्वामित्रं प्रति 'प्राणो वा अहमस्मृष'इतीन्द्रवाक्ये प्राणशब्दस्य 'प्राणस्त्व'मित्यादिवाक्यशेषे सर्वात्मत्वप्रपञ्चनानुसारेण ब्रह्मविषयत्वं दृष्टम्। तत्सामान्यादियमपि प्राणश्रुतिर्ब्रह्मविषयेति शङ्का स्यात्। अतो यथा 'यन्मां विजानीया' दित्यन्तवाक्ये 'मा'मितीन्द्रविषयश्रुतौ सत्यामपि ब्रह्मधर्मभूमानमवलम्ब्य वामदेवसार्वात्म्योपदेशवत् ब्रह्मदृष्ट्या मामित्युपदेश इति शङ्कावारणाय मामित्यस्येन्द्रविषयत्वमुपपादयितुं तद्वाक्यशेषत्वाष्ट्रवधादिलिङ्गोपन्यासः। एवं तद्भूमानम-

**दृश्यते। ततोऽयमुपदेशो न युक्त इति चेत्—नैवं वाच्यम्। यतो जीवप्राणशब्द-वाच्यत्वं परमेश्वरस्य समुचितम्, उपासनात्रैविध्याद्धेतोः। अत्र परमेश्वरस्य स्वरूपेण भोक्तृशरीरेण भोग्यरूपेण चोपासनं त्रिविधमिह विवक्षितं, आत्मतया**

---

वलम्ब्य 'प्राणो वा अहमस्म्यृष'इत्यत्र प्राणशब्दवत् 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे'त्यत्रापि ब्रह्मपरः प्राणशब्द इति शङ्कावारणाय तत्र प्राणश्रुतेर्मुख्यप्राणविषयत्वमुपपादयितुमेव तद्वाक्यशेषगतप्राणलिङ्गोपन्यासः। तेनायमर्थः सम्पन्नः। प्रकरणोपक्रमोपसंहारगतत्वेन दूरवर्तिभ्यो ब्रह्मलिङ्गेभ्यो मामित्यस्येन्द्रपरत्वस्पष्टीकरणार्थं प्रवृत्तानां तद्वाक्यशेषगतत्वाष्ट्रवधादिलिङ्गानां प्राणशब्दस्य मुख्यप्राणपरत्वस्पष्टीकरणार्थं प्रवृत्तानामायुर्हेतुत्वादिलिङ्गानां च प्रबलत्वेन तद्विरुद्धानां ब्रह्मलिङ्गानामन्यथा नेयत्वान्मामित्यस्य प्राणशब्दस्य च ब्रह्मविषयत्वमभ्युपगम्य तदुपासनोपदेश इत्युक्तमयुक्तमिति। एवं सौत्रशङ्काभागं व्याख्याय परिहारभागं व्याचष्टे—नैवं वाच्यमित्यादिना। ब्रह्मजीवमुख्यप्राणलिङ्गानां विरोधे हि प्रबलजीवमुख्यप्राणलिङ्गविरोधात् ब्रह्मलिङ्गावगमितं मामिति जीवशब्दस्य प्राणशब्दस्य च परमेश्वरपरत्वं त्यक्तव्यम्। नास्ति तेषां विरोधः। वेदान्तेषु विधीयमाना ब्रह्मण उपासना क्वचित्स्वधर्मविशिष्टत्वेन यथा 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र क्वचिच्चेतनधर्मविशिष्टत्वेन यथा 'तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इत्यत्र क्वचिदचेतनधर्मविशिष्टत्वेन यथा 'पुरुषेऽन्तःप्रतिष्ठितं वेदे'त्यत्रेत्येवमुपासनात्रैविध्यसद्भावादित्येतदर्थपरत्वेनोपासात्रैविध्यादिति सूत्रपदं व्याचष्टे—यतो जीवेति। अस्त्वन्यत्र त्रिविधोपासनदर्शनं प्रकृते किमायातमित्याकाङ्क्षायामत्रापि त्रिविधोपासनस्य विवक्षितत्वादित्येतदर्थत्वेन 'आश्रितत्वादिहे' ति सूत्रपदद्वयं व्याचष्टे—अत्र परमेश्वरस्येति। ननु ब्रह्मजीवमुख्यप्राणधर्मविशिष्टविषयमेकमुपासनमिह विवक्षितं तत्तद्विशिष्टविषयाणि त्रीण्युपासनानि वा। नाद्यः। 'स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयते तस्मात्तदेवोक्थमुपासीते'ति जीवमुख्यप्राणयोरपि प्रत्येकमुपासनाविधिश्रवणात्। न द्वितीयः। 'प्राणोऽस्मि प्रज्ञात्मा स एष प्राण एव प्रज्ञात्मे'त्युपक्रमोपसंहारावगतैकवाक्यत्वभङ्गप्रसङ्गादिति शङ्कानिराकरणार्थं 'तद्योगा'दिति सूत्रपदमुभयथापि युज्यत इत्येतदर्थपरमभिप्रेत्य व्याचष्टे—आत्मतयेति। यदि 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे'त्येतस्मिन्वाक्ये 'आयुः प्राणः प्राणो वा आयुः प्राण एवामृतं यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः प्राणेन ह्येवामुष्मिन्लोके अमृतत्वमाप्नोती'ति तदनन्तरवाक्यशेषे प्राणधर्मत्वेनावगताभ्यामायुष्ट्वामृतत्वाभ्यां विशिष्टेन प्राणेन 'त्रिशीर्षाणं त्वाष्ट्रमहन'मित्यादिपूर्ववाक्ये इन्द्रधर्मत्वेनावगतैस्त्वाष्ट्रहन्तृत्वादिभिर्विशिष्टेनेन्द्रेणोपसंहारे 'प्राण एव प्रज्ञात्मे'त्येतद्वाक्योपात्तमुपास्यं ब्रह्म प्रत्यभिज्ञाप्य तद्धर्मत्वेनाम्नातैरानन्दादिभिश्च विशिष्टस्य ब्रह्मण एकमेवोपासनं विधीयते। तथा 'स यो मां विजानीया'दिति वाक्यं त्वाष्ट्रहन्तृत्वादिजीवविशेषणानुचिन्तनफलार्थवादरूपं स्तुतिपरम्। 'उक्थमुपासीते'ति वाक्यं प्राणविशेषणशरीरोत्थापकत्वगुणोपासनाविधिपरमिति उपपद्यते। यदा ते वाक्ये जीवमुख्यप्राणधर्मविशिष्टब्रह्मोपासनाविधिपरे तदा प्राणोऽस्मीत्यादिवाक्यमायुष्ट्वादिस्वधर्मविशिष्टप्राणशब्दोदितसर्वप्राणयितृब्रह्मोपासनाविधिपरम्। 'आयुः प्राण' इत्यादिवाक्यशेषोऽपि ब्रह्म-

भोक्तृभोग्याश्रितत्वेन च तदुपपत्तेः । परमेश्वरस्य स्वरूपोपासनमविलम्बेन मुक्तिहेतुः, अन्यदपि द्वयं कालेन । तस्मादिह परमेश्वरात्मकतयेन्द्रस्योपासनसिद्धिरिति निर्णयः ॥ इति इन्द्रप्राणाधिकरणम् ॥ १२ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य प्रथमः पादः ॥

---

पर एव । न 'प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रिता'विति श्रुतेः। प्राणस्यापि प्राणभूतस्य ब्रह्मण एवायुषि मुख्यहेतुत्वात् तत्रैव मुख्यामृतत्वविश्रान्तेश्च प्राणधर्मविशिष्टब्रह्मोपासनाप्रसङ्गः। 'तद्धैक आहुरेकभूयं वै प्राणा गच्छन्ती'त्याद्युत्तरसन्दर्भेण च जीवमुख्यप्राणोपासनयोः प्रत्येकविधिस्वीकारे तयोर्ब्रह्मपर्यन्तत्वासिद्धिप्रसङ्गः । 'स यो मां विजानीया'दिति विधेर्मुक्तिपर्यायसकलपापासंस्पर्शफलत्वोक्त्या ब्रह्मपर्यन्तत्वसिद्धेः अत एवो'कथमुपासीते'ति प्रकृतप्राणोपासनाविधानानन्तरं 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका' इति प्रकृतप्राणविषयात्मश्रुत्येन्द्रियादिनिस्सरणापादानत्वलिङ्गेन च तस्यापि ब्रह्मपर्यन्तत्वसिद्धेः । तस्मादुभयथापि त्रिविधोपासनाविधानं युज्यत इति भावः । उपासनाभेदपक्षे स्वधर्मविशिष्टब्रह्मोपासनादितरोपासनयोः फलतो वैलक्षण्यं चतुर्थाध्याये वक्ष्यमाणं स्मारयति--परमेश्वरस्येति ॥ ॥

इति इन्द्रप्राणाधिकरणम् ॥ १२ ॥

इति श्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवादित्यमणिदीपिकाख्यायां प्रथमस्याध्यायस्य प्रथमः पादः ॥

---

नयमणिमालायाम्

## अथेन्द्रप्राणाधिकरणम् ॥ १२ ॥

सू० ॥ प्राणस्तथानुगमात् ॥ २९ ॥ नवक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ ३० ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥

प्राणोऽस्मीत्युक्त इन्द्रः स हि जगदखिलं प्राणयत्यंबुवर्षैरिन्द्रो राजेत्यनेकश्रुतिमितमहिमा स्यादुपास्यश्च मुक्त्यै ।
नैवं क्षुण्णस्स सज्ज्यस्तमजरममृतं शक्नुमो नैव वक्तुं तस्मात्तं मामुपास्स्वेत्यखिलपरिवृढे युज्यतां शास्त्रदृष्ट्या ॥ २७ ॥

इतीन्द्रप्राणाधिकरणम् ॥ १२ ॥

इति श्रीमदप्पयदीक्षितकृतौ चतुर्मतसारसंग्रहे नयमणिमालिकाख्ये तृतीयपरिच्छेदे प्रथमस्याध्यायस्य प्रथमः पादः ॥

---

## सूत्रार्थचन्द्रिकायाम् ।

अथ इन्द्रप्राणाधिकरणम् ॥

सू० । प्राणस्तथानुगमात् ॥२८॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥२९॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

**प्राणस्तथानुगमात्** ॥ कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिकायां प्रतर्दनं प्रतीन्द्रवाक्यं श्रूयते 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व' इति तथोत्तरत्रापि 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति तथा 'न वाचं विजिज्ञासीत वक्तारं विद्या'दिति च 'अन्ते च 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत' इत्यादि । तत्र किं प्राणशब्देन वायुमात्रमभिधीयते उत इन्द्रदेवता उत जीवः अथवा परं ब्रह्मेति संशयः । 'अथ खल्वि'त्यादिशरीरपरिग्रहोत्थापनलिङ्गात् वायुमात्रमिति पूर्वः पक्षः । 'मनुष्याय हिततमं मन्यस'इत्यादि पूर्वापरवाक्यपर्यालोचनया आनन्दत्वाजरत्वामृतत्वाद्यसाधारण-ब्रह्मलिङ्गानामनुगमात् अत्र प्राणशब्देन परं ब्रह्मैवाभिधीयत इति सिद्धान्तः ॥ **प्राणः**=प्राणशब्दवाच्यं परं ब्रह्मैव । कुतः । **तथा** परब्रह्मपरत्वेन । **अनुगमात्**-पूर्वापरवाक्यपर्यालोचनयाऽवगम्यमानत्वादित्यर्थः ॥ ननु अस्मीत्यहङ्कारवादलिङ्गादिन्द्र-देवतैवाभिधीयत इत्याशङ्क्याह—**न वक्तुरित्यादि** । **वक्तुः**=इन्द्रस्य देवताविशेषस्य । **आत्मोपदेशात्**-'मामेव विजानीही-त्यात्मत्वेनोपदिश्यमानत्वात् प्राणो न ब्रह्मेति चेत् । अत्रोच्यते । **अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति** । **हि**=यस्मात् । अस्मिन्नध्याये'यावदस्मिन् शरीरे प्राणो वसति तावदायुः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत' इत्याद्यध्यात्मसम्बन्धस्य प्रत्यगात्मसंबन्धस्य **भूमा** बाहुल्यमुपलभ्यते । तस्मात्प्राणात्मकब्रह्मोपदेश एवायं न देवताविशेषोपदेश इति सिद्धम् ॥

कथं तर्हि वक्तुरात्मोपदेशस्तत्राह-**शास्त्रदृष्ट्येत्यादि** ॥ इन्द्रस्य वक्तुर्मामेव विजानीहीत्युपदेशः शास्त्रदृष्ट्या ज्ञातव्यः । अहमेव परं ब्रह्मेति शास्त्रदृष्ट्या पश्यन्नेवमुक्तवानित्यर्थः । तत्र दृष्टान्तः **वामदेववत्** यथा वामदेवः शास्त्रदृष्ट्या 'अहं मनुर-भव'मित्याह तद्वदिति । अतो ब्रह्मपरमेतद्वाक्यमिति सिद्धम् ॥

नन्वेवमपि न ब्रह्मपरमिदम् । अपि त्वन्यपरमित्याशङ्क्याह—**जीवमुख्यप्राणेत्यादि** ॥'वक्तारं विद्या'दिति जीवलिङ्गात् 'इदं शरीरं परिगृह्योत्थापयती'ति मुख्यप्राणलिङ्गाच्च तदुभयपरं न ब्रह्मपरमेवेति चेन्न । कुतः **उपासात्रैविध्यात्**-जीवमुख्य-प्राणब्रह्मोपासनानि त्रीणि प्रसज्येरन् । न च तदिष्टम् । 'मामेवे'त्युपक्रम्य प्राणोऽस्मीत्युक्त्वान्त उपसंहरति 'स एष प्राण एव प्रज्ञात्मे'त्येवमुपक्रमोपसंहाराभ्यां वाक्यैकवाक्यत्वावगमात् । किंचान्यत्र ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेराश्रितत्वादिहापि तद्योगात् हिततमत्वाद्यसाधारणब्रह्मलिङ्गयोगात् ब्रह्मण एवायमुपदेश इति सिद्धम् ॥ अस्मिन्पादे एकादशाधिकरणानि । सूत्राण्येकत्रिंशत् ॥

**श्रीकण्ठमते,** सवितृमण्डले साक्षादुपास्यत्वेन निर्दिष्टस्य परमेश्वरस्य तस्मिन्नधिकरणे विश्वात्मकत्वमुक्तम् । तदात्मक-तया तदन्येषामुपास्यत्वं नान्यथेति प्रतिपादयितुमस्याधिकरणस्यारम्भः । **सू० । प्राणस्तथानुगमात्** ॥ विषयवाक्यं पूर्ववदेव । अत्र उपासनाविषयत्वेन प्राणशब्दसामानाधिकरण्येन निर्दिष्टः इन्द्रो वा परमेश्वरो वेति सन्देहः । प्राणशब्दस्य 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे'ति साक्षादिन्द्रेण सामानाधिकरणस्य तस्यैव उपासनाविधिविषयत्वस्य च श्रूयमाणत्वात् प्राणत्व-सकलोपास्यत्वयोः रक्षकत्वपारमैश्वर्याभ्यामुपपन्नत्वाच्च इन्द्र एवोपास्यतया निर्दिष्ट इति पूर्वः पक्षः । आनन्दाजरामृतप्रज्ञात्मत्वा-दीनां ब्रह्मासाधारणधर्माणां अस्मिन्प्राणशब्दनिर्दिष्टे अनुगमात् परमेश्वर एवेति सिद्धान्तः ॥

**'नवक्तुरात्मोपदेशा'दिति** सूत्रार्थस्तु भगवत्पादीयमतान्न भिद्यते ।

कथमिन्द्रो जीवत्वादनुपास्योऽपि स्वविषयमुपासनमुपदिशतीत्याशङ्क्याह-**सू० । शास्त्रदृष्ट्या त्विति** ॥ 'अनेन जीवे-ने'त्यादिनामरूपव्याकरणप्रतिपादकशास्त्रदृष्ट्या सर्वशब्दवाच्यत्वात्परमेश्वरस्य स्वशरीरकतया स्वशब्दवाच्यं परमेश्वरमेव उपास्यत्वेन इन्द्र उपदिदेश । अत्र दृष्टान्तमाह **वामदेववदिति** । वामदेवो हि स्वस्य परमेश्वरात्मत्वदृष्ट्या 'अहं मनुरभवं सूर्यश्च' इत्युप-दिदेश तद्वदयमिन्द्रोपदेश इत्यर्थः । अथवा वेदान्तविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्मभावमुपगतस्य वामदेवस्य स्वात्मनस्सर्वगतत्वावगमान्मनुसूर्यादिप्रपञ्चभावोक्तिः । एवमिन्द्रस्यापि इत्यतः प्राणशब्देन आनन्दरूपत्वेन सकलप्राणनहेतुभूतं परं ब्रह्मैवोच्यते ॥

पुनराशङ्क्याह-**सू० । जीवमुख्यप्राणलिङ्गादिति** ॥ ब्रह्मभावमुपगतस्य विगलितजीवभावस्य वामदेवस्य तद्रूप-दृष्ट्या स्वस्मिन्नुपास्यत्वाद्युपदेशो युक्तः । अत्र तु त्वाष्ट्रहननशरीरवासादिजीवमुख्यप्राणलिङ्गयोः श्रूयमाणत्वात् नायमुपदेशो युक्त इति चेत् । न । कुतः । परमेश्वरस्य स्वशरीरेण भोक्तृशरीरेण भोग्यरूपेण च उपासनात्रैविध्यस्य विवक्षितत्वात् आत्मतया भोक्तृभोग्याश्रितत्वेन च तदुपपत्तेश्च इह परमेश्वरात्मतया इन्द्रस्योपास्यत्वसिद्धेरित्यर्थः ॥ अस्मिन्पादे द्वादशाधिकरणानि । सूत्राणि द्वात्रिंशत् ॥

**रामानुजमते,** विषयवाक्यसूत्रार्थवर्णनादिकं श्रीकण्ठमतान्न भिद्यते इति न पृथक् प्रपञ्च्यते । अयमत्र श्रीभाष्यकारो-दितः पादार्थसङ्ग्रहः । यथा वेदान्तसारे—'जन्माद्यस्ययत' इत्यादिषु सद्ब्रह्मात्मादिसामान्यशब्दैः जगत्कारणं प्रकृतिपुरुषाभ्या-मर्थान्तरमिति साधितम् । 'ज्योतिश्चरणाभिधाना'दिति सूत्रे पुरुषसूक्तोदितो महापुरुषो जगत्कारणमिति विशेषतो निर्णीतम् । स एव प्रज्ञातजीववाचिभिरिन्द्रादिशब्दैरपि क्वचित् शास्त्रदृष्ट्या तत्तच्छरीरकतया उपास्यत्वायोपदिश्यत इति 'शास्त्रदृष्ट्या तूप-देशो वामदेववत्' 'उपासात्रैविध्यादि'ति साधितम् ॥ अस्मिन्मते एकादशाधिकरणानि । सूत्राणि द्वात्रिंशत् ॥

**आनन्दतीर्थमते, सू० । प्राणस्तथानुगमात्** ॥ अस्य 'ता वा एताः शीर्षन् श्रियः श्रिताः चक्षुश्श्रोत्रं मनो वाक् प्राणस्तत्त्वं ब्रह्म गिरिरित्याचक्षते । गिरति ह वै द्विषन्तं पाप्मान'मित्याद्यैतरेयवाक्यं विषयः । अत्र प्राणशब्दवाच्यः मुख्यप्राणो वा इन्द्रो वा जीवो वा विष्णुर्वा इति सन्देहः । इन्द्रियैस्सह पठितत्वात् तैस्सह कलहाभिधानाच्च मुख्यप्राणो वा 'प्राणो वा अहमस्मी'त्यैन्द्रवचनादिन्द्रो वा शतवत्सरजीवित्वादिलिङ्गात् जीवो वा प्राणशब्दवाच्यो भवितुमर्हतीति पूर्वः पक्षः । इन्द्रजीवमुख्य-प्राणलिङ्गानामन्तर्यामिविषयतयोपपत्तेः देवोपास्यत्वादीनामसाधारणब्रह्मलिङ्गानां श्रूयमाणत्वात् विष्णुरेवेति सिद्धान्तः । **तथा**= 'तद्वै त्वमि'ति तैत्तिरीयोक्तप्राणवत् । **प्राणः**=ता वा इत्यैतरेयोक्तप्राणोऽपि विष्णुरेव । कुतः । **अनुगमात्**—देवतोपास्यत्वादि-विष्णुलिङ्गब्रह्मशब्दानामसकृच्छ्रवणादित्यर्थः ॥

**सू० । नवक्तुरात्मोपदेशादिति** ॥ वक्तुरिति द्वितीयार्थे षष्ठी । बृहतीसहस्रवक्तारं विश्वामित्रं प्रति इन्द्रेण आत्मोप-देशात् आत्मनः स्वस्य प्राणतयोपदेशात् इन्द्र एवायं प्राणः न विष्णुरिति चेत् । न इत्यध्याहारः तस्यावृत्तिश्च । अनुगमादित्य-नुवर्तते । तथा च प्रागुक्तानुगमहेतोः नेन्द्रः प्राणः । तथा सति उपदेशविरोध इत्यपि न । कुतः । यस्मात् **अस्मिन्**प्रकरणे भगवतः **अध्यात्मसम्बन्धभूमा** इन्द्रविश्वामित्रादिरूपबहुदेहसम्बन्धः उक्तोऽस्ति तस्मादित्यर्थः । यद्वा । **हि** यस्मात् **अ-स्मिन्** इन्द्रे **अध्यात्मसम्बन्धभूमा** अधि अधिकस्यात्मनः सम्बन्धस्य आवेशस्य भूमा बाहुल्यं विद्यते तस्मादित्यर्थः॥२९

**सू० । शास्त्रदृष्ट्या तूपदेशो वामदेववत्** ॥ तुशब्द एवार्थे । **वामदेववत्** । यथा अन्तर्यामिविवक्षया वामदेव-ऋषिः 'अहं मनुरभव'मिति स्वस्य मनुसूर्याद्यैक्यमाह । तद्वत् । **शास्त्रदृष्ट्या**=शास्ति सर्वमिति शास्त्रमन्तर्यामि तदृष्ट्या तद्वि-वक्षयैवोपदेशः प्राणोऽहमिति व्यपदेशः । न त्वैक्येनेत्यर्थः ॥ ३० ॥

**सू० । जीवमुख्यप्राणलिङ्गादिति** ॥ **जीवमुख्यप्राणलिङ्गात्**=शतायुष्ट्वादिजीवलिङ्गानां इन्द्रियदेवैः संवादादि-रूपमुख्यप्राणलिङ्गानां च श्रवणात् प्राणोऽन्य एव न विष्णुरिति चेत् । **न** । कुतः । अनुगमात् । न च लिङ्गविरोधः । तल्लिङ्गा-नामन्तर्यामिविषयत्वोपपत्तेरित्यादिकमध्याहार्यम् । किमर्थमन्तर्यामिकथनमित्यत उक्तम् **उपासात्रैविध्यादिति** । अन्तर्बहि-स्सर्वगतभेदेन ब्रह्मोपासनस्य त्रिविधत्वात् इह प्रकरणे तत्त्रैविध्यस्याश्रितत्वात् उक्तत्वात्तद्योगात्तेषामधिकारिणां त्रिविधोपासना-योग्यत्वादित्यर्थः । तथा च तत्तच्छब्दैस्तत्तदधिकारिभेदेनोपासनार्थमन्तर्यामिकथनं युक्तमिति भावः ॥ ३१ ॥ अस्मिन्मते द्वा-दशाधिकरणानि । सूत्राणि एकत्रिंशत् ॥

इति हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायामिन्द्रप्राणाधिकरणम् ।

यं प्रासूत विशुद्धशीलमनघं वृद्धांबिकाख्या सती
यं मृत्युञ्जयशर्मणो बुधमणेर्भाग्यं विदुस्साधवः ।
वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-
स्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥
सूत्रार्थचन्द्रिकायामाद्येऽध्याये समन्वयाभिख्ये ।
सुस्पष्टलिङ्गवाक्यक आद्यः पादोऽयमभ्यगात्पूर्तिम् ॥

इति प्रथमाध्यायस्य प्रथमः पादश्च ॥

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## प्रथमस्याध्यायस्य

# अथ द्वितीयः पादः ।

ब्रह्मबोधकानां वेदान्तवाक्यानामानन्त्यात् प्रतिवाक्यं विचारानुपपत्तेः सन्दिग्धानां केषांचिद्विचारेण तन्न्यायैस्तादृशानामपि निर्णयो भवतीति कतिचिदेव वाक्यानि तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधकानि सूत्रितानि । तेषु कतिचित् स्पष्टलिङ्गानि प्रथमपादे विचारितानि, कतिचित् अनतिस्पष्टलिङ्गानि द्वितीयपादे विचार्यन्ते—

॥ सू ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः 'मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः' इत्यादि ॥

अत्र मनोमयत्वादिधर्मकः श्रूयमाणः पुरुषः परमेश्वरो वा जीवो वेति संशयः॥

---

## शिवार्कमणिदीपिकायाम्

अथ प्रथमस्याध्यायस्य द्वितीयः पादः ।

पूर्वोत्तरपादयोरर्थभेदप्रदर्शनपूर्वकं सङ्गतिं दर्शयति—ब्रह्मबोधकवाक्यानामिति । स्पष्टानतिस्पष्टब्रह्मलिङ्गवाक्यविषयत्वोक्त्या पादयोरर्थभेदश्चावसरसङ्गतिश्चेत्युभयं दर्शितम् । स्पष्टब्रह्मलिङ्गवाक्येष्वविचारितेष्वपि बहुषु सत्सु कथं तद्विचारं परिसमाप्य वाक्यान्तरविचारः प्रस्तूयत इत्याशङ्क्य न्यायसाम्येन शक्यार्थनिर्णयतया तेषां विचारितप्रायत्वमुक्तम् ॥ सू ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।' 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मींल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीते'ति प्रकृत्य श्रूयते 'मनोमयः प्राणशरीर' इत्यादि । तत्र मनोमयादिशब्दानां पूर्वप्रस्तुतब्रह्मपुरुषान्यतरपरत्वानिर्धारणात् ब्रह्मपरत्वेऽपि ब्रह्मशब्दस्य शिवजीवान्यतरपरत्वानिर्धारणात् शिवपरत्वे'ऽप्युपासीत' 'क्रतुं कुर्वीते'ति वाक्यद्वयश्रुतोपासनैक्यभेदानवधारणाच्च संशयमाह—अत्रेति । 'स क्रतुं कुर्वीते'ति तत्पदेन जीवपरामर्शिना समानाधिकरणानां तत्समानलिङ्गानां मनोमयादिपदानां तदन्वये सम्भवति विप्रकृष्टवाक्यान्तरश्रुतभिन्नलिङ्गब्रह्मान्वयकल्पनमयुक्तम् । न च तथा सति तेषामुपासकविशेषणत्वापत्त्या 'स आत्मानं मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनुदिशः प्रभूतं सर्वमिदमभ्यात्तमवाकमनादर'मित्यग्निरहस्यगतसमानप्रकरणवाक्यविरोधः । कस्य क्रतुमिति

जीव इति पूर्वः पक्षः। कुतः ? तस्य प्रत्यासन्नत्वात्। 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत' इति कर्मवशादिह परत्र च परिभ्रमन् जीवः प्रस्तुतः पूर्वम्। तदनन्तरं 'मनोमयः' इति श्रूयते। अत एव मनोमयत्वादिधर्मको जीवः। मनोमयत्वप्राणशरीरत्वादेकं च संसारिलक्षणं न परमेश्वरलिङ्गम्। सति यथार्थे असंकल्पः इति सत्यसंकल्पत्वमपि संसारिधर्मत्वेन योजनीयम्। अतः सर्वथा मनोमयत्वादिधर्मको

---

प्रतिसम्बन्ध्याकाङ्क्षाया'मन्तर्धौ येनादर्शनमिच्छति' (पा०१-४-२८-सू.) इत्यत्रेवान्तरङ्गत्वात स्वात्मन इति लभ्यते। स्वात्मा चोक्तमनोमयत्वादिविशेषणविशिष्टो बुद्धिसन्निहित इति तेषामिहोपासकविशेषणत्वेऽप्यर्थादुपास्यविशेषणत्वपर्यवसानादित्याशयेन पूर्वपक्षयति–जीव इति। स्यादेतत्। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'त्यत्र विहितां ब्रह्मोपासनामनूद्य तत्र गुणमात्रविधायकं 'स क्रतुं कुर्वीते'त्यादिवाक्यं न तु गुणविशिष्टकर्मविधायकम्। अग्निहोत्रविधिसन्निहितदध्यादिवाक्यवत्तत्र गुणमात्रविधिसम्भवे विशिष्टविधिगौरवाङ्गीकारायोगात्। तथा चोत्पत्तिशिष्टब्रह्मावरुद्धायामुपासनायां जीवस्योपास्यत्वेनान्वयायोगात् न तदन्वयो मनोमयत्वादीनामुपास्यगुणानां किं तु तेषां ब्रह्मान्वय एव युक्तः। ननु तत्राप्युत्पत्तिशिष्टसार्वात्म्यावरोधान्मनोमयत्वाद्यन्वयो न सम्भवति। न च सार्वात्म्यमुपासनाविधिवाक्यस्थं न सम्भवति। सर्वं खल्विदं ब्रह्म तज्जत्वादिहेतुनेति खलुशब्दकृतेन प्रसिद्धवन्निर्देशेन 'तज्जला'नित्यन्तस्योपासनविध्येकवाक्यत्वानिवारणात् किं तु शान्त्युपायप्रदर्शकवाक्यान्तरगतमनस्सार्वात्म्यं तत्र नोपास्यगुण इति शङ्क्यम्। उपासनविध्याकाङ्क्ष्या ब्रह्मण इव तद्गुणस्याप्यन्यार्थसन्निधानत एव ग्रहणोपपत्तेरिति चेत्। मैवम्। एकस्यामुपासनायां स्वतन्त्रोपास्यद्वयाभावादेकोपास्यावरुद्धायामुपास्यान्तरान्वयासम्भवेऽप्येकस्मिन्नुपास्ये बहुगुणवैशिष्ट्योपासनसद्भावादेकगुणावरुद्धेऽप्युपास्ये तदविरुद्धगुणान्तरान्वयोपपत्तेः। नन्वस्त्वेवं तथाप्यत्र नोत्पत्तिशिष्टगुणावरोधः। उपक्रमे जीवोपासनाया एव विधानात्। हेयपशुपक्षिसरीसृपादिसर्वात्मत्वस्यानादिसंसारभाजि जीव इव निर्दोषे ब्रह्मण्यसम्भवेन 'इदं ब्रह्मागच्छती'त्यादिश्रुत्यन्तरेषु जीवेऽपि ब्रह्मशब्दप्रयोगदर्शनेन चात्र ब्रह्मशब्दस्य जीवपरत्वादिति चेन्न। तस्य प्रसिद्धिप्राचुर्येण यौगिकार्थपौष्कल्येन 'गायत्री वा इदं सर्व'मित्यारभ्य 'ब्रह्मप्रकरणानुवृत्त्या चात्र ब्रह्मपरत्वस्यैवोचितत्वात्। ब्रह्मणस्सार्वात्म्यं सर्वशरीरत्वं न तु तत्तादात्म्यमिति हेयतादात्म्येन न तस्य दोषवत्त्वप्रसङ्गः। शरीरगतदोषाणां शरीरिण्यप्रसङ्गादिति द्वितीयाध्याये समर्थयिष्यमाणत्वेनात्र ब्रह्मणि सार्वात्म्यानुपपत्तिशङ्कानवकाशाच्च। प्रत्युत यस्य जीवस्य यावन्ति शरीराणि तावदात्मत्वमेव तस्य न त्वसङ्कुचितं सर्वात्मत्वमिति जीव एव सार्वात्म्यानुपपत्तेः स्पष्टत्वाच्च तथाभूतस्य सङ्कुचितसार्वात्म्यस्यान्यत्र द्वेषादिवर्जनरूपशान्तावनुपयोगेनात्र तद्ग्रहणानुपपत्तेश्च। तस्मादुत्पत्तिशिष्टब्रह्मावरुद्धायामुपासनायामुपास्यत्वेनानन्विते जीवे मनोमयत्वादीनामुपास्यगुणानामन्वयासम्भवात्तेषामुपास्यब्रह्मान्वय एव युक्त इत्याशङ्कानिराकरणार्थमाह–मनोमयत्वेति। अयमाशयः। यद्यपि मयटो विकार-

---

(१) 'ब्रह्मगुण' इति. ङ. च. पाठः।

प्राचुर्याद्यनेकार्थसाधारण्यात् 'प्राणश्शरीरमस्ये'ति वचनस्य येन केन चित्सम्बन्धेन निर्वोढुं शक्यत्वाच्च नियन्तृत्वादिरूपमनःप्राणसम्बन्धवति ब्रह्मण्यपि 'मनोमयः प्राणशरीर'इत्येतद्योजयितुं शक्यम् । तथापि मनःप्राणसम्बन्धप्रतिपादने तदभावप्रतिपादन इव तयोर्जीवेन सहोपकरणोपकरणीभावलक्षणसम्बन्ध एव लोकवेदयोः प्रसिद्धतरो ग्राह्यः । न तु ब्रह्मणा सह तयोरप्रसिद्धसम्बन्धः । प्रसिद्धसम्बन्धे प्रथमं बुद्ध्यवतारात् । अत एव ख'ल्वप्राणो ह्यमना'इति ब्रह्मणि मनःप्राणनिषेधो झटिति स्वारस्येनैव बुद्धिमारोहति न तु घटवति भूतले घटाभाववद्भूतलमित्याप्तवाक्यमनुपपन्नतया शङ्कितं सत्समवायसम्बन्धेन घटाभाववत्त्वपरमित्युपपादनमिवा'प्राणो ह्यमना'इति श्रुतिवाक्यं नियन्तृत्वादिसम्बन्धेन मनःप्राणवति ब्रह्मणि कथमप्राणत्वममनस्त्वं चेत्यनुपपन्नार्थतया शङ्कितं सद्योगोपकरणोपकरणीभावेन मनः-प्राणाभाववत्त्वपरमित्युपपादनमपेक्षते । न च वाच्यं मनःप्राणयोर्जीवसम्बन्धप्रसिद्धावपि मनोमयप्राणशरीरशब्दौ 'मनोमयः प्राणशरीरनेता' 'य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमय' इत्यादिश्रुतिषु ब्रह्मण्येव प्रसिद्धौ, अतोऽर्थानुसन्धानात्पूर्वमेव बुद्धिस्थया शब्दप्रसिद्ध्या तयोर्ब्रह्मपरत्वसिद्धौ तत्र सम्भवति मनःप्राणसम्बन्धे पर्यवसानं स्यादिति । श्रुत्यन्तरेष्वपि प्रसिद्धसम्बन्धानुसारेण तयोर्जीवपरत्वमपेक्ष्यैव तद्द्वारा ब्रह्मणि पर्यवसानात् इह प्रथमं बुद्धिस्थस्य जीवस्य ग्रहणे सम्भवति तमतिलङ्घ्य तद्द्वारा ब्रह्मणि पर्यवसानकल्पनायाः 'त्रिः प्रथमामन्वाह त्रिरुत्तमा'मिति विहितस्य सामिधेन्यभ्यासस्य प्रथमप्रतीतस्थानधर्मत्वमतिलङ्घ्य तद्द्वारा प्रवोवाजीयादिऋग्धर्मकल्पनावदयुक्तत्वात् । न चात्रोपरितनसत्यसङ्कल्पत्वादिब्रह्मलिङ्गानुसारेण तथाकल्पनं युक्तमिति शङ्क्यम् । 'सत्यसङ्कल्प'इत्यस्य सति ब्रह्मण्यसङ्कल्पः सङ्कल्परहित इति जीवे व्याख्यातुं शक्यत्वा'त्सर्वकर्मा सर्वकाम'इत्यादेर्जीवे पर्यायेणोपपत्तेः युगपद्ब्रह्मण्यप्यसम्भवात् 'एष आत्मान्तर्हृदये' 'ज्यायान्दिव'इत्यादे'रेषम आत्मान्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वे'त्यादिपूर्ववाक्यश्रुताणीयस्त्वानुसारेण मुक्तिकालभाविचिच्छक्तिव्याप्तिविषयत्वोपपत्तेः । एवं ज्यायस्त्ववचनमारभ्य भाव्यवस्थाविषयत्वे सत्येव तदनन्तरश्रुतस्य 'सर्वकर्मा सर्वकामः सर्वगन्धः'इत्यादेर्मुक्त्यवस्थाभाविविशुद्धसर्वकामत्वादिविषयत्वेनापौनरुक्त्यं लभ्यते । एवं च 'एतमितः प्रेत्याभिसम्भवितास्मी'ति प्राप्यप्राप्तृभावनिर्देशोऽपि साधकफलावस्थाभेदेन सङ्गच्छते । तस्मान्मनोमयत्वादिगुणानां प्रथमवाक्योपक्रान्तब्रह्मान्वयित्वे वाक्यशेषश्रुतमनोमयत्वप्राणशरीरत्वाणीयस्त्वलिङ्गसमानविभक्तिकजीवपरतत्पदमनोमयादिपदसमभिव्याहारात्मकवाक्यरूपबहुप्रमाणानुसारेण तत्तदुपरितनसत्यसङ्कल्पत्वज्यायस्त्वादिलिङ्गवदुपक्रमगतापि ब्रह्मश्रुतिर्भाविचिच्छक्तिव्याप्त्यभिप्राया जीवे योजनीया । तदभिप्रायैव हि मनोमयादिवाक्यशेषे ज्यायस्त्वोक्त्यनन्तरमेव तद्ब्रह्मेति श्रुतिरपि नेया । एवं'सर्वं खल्विद'मित्युक्तं सार्वात्म्यमपि भाव्यवस्थाविषयत्वेन योजनीयम् । अस्ति हि मुक्तस्य सर्वसांसारिकभोग्यभोक्तृत्ववर्गाधिष्ठानसामर्थ्यलक्षणं सार्वात्म्यम् । अत एव तस्य पूर्वाधिकरणे विश्वाकारपराहम्भाव उक्तः । अत एव च बृहदारण्यके 'यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्त'इति ब्रह्मविद्याफलत्वेन 'सर्वमेधो दशरात्रो राजा यजेत यः

कामयेत सर्वमिदं भवेय'मित्यादिषु सर्वमेधादिविधिषु मोक्षपर्यवसाय्यन्तःकरणशुद्ध्यर्थकर्मफलत्वेन च सार्वात्म्यं श्रूयत इति। अथोच्येत जीवस्य सार्वात्म्यमात्रसम्भवेऽपि 'सर्वं खल्विदं ब्रह्म तज्जला'निति जन्मादिकारणत्वप्रयुक्ततयात्र श्रूयमाणं निरङ्कुशं सार्वात्म्यं न सम्भवति। अतः परमेव ब्रह्मात्र ब्रह्मशब्दोक्तमिति तत्राह—सर्वथेति। यदि मनोमयत्वादीनामव्यवहितनिर्दिष्टजीवान्वयः यदि वा व्यवहितनिर्दिष्टब्रह्मान्वयः ब्रह्मशब्दश्च यदि जीवपरः यदि वा परब्रह्मपरः सर्वथापि मनोमयत्वादिगुणको जीव इत्यर्थः। अत्रायमाशयः। प्रथमपक्षाश्रयणे द्वितीयपक्षेऽपि ब्रह्मशब्दस्य जीवपक्षाश्रयणे चोक्तसाध्यसिद्धौ न किञ्चिद्वक्तव्यमस्ति। तृतीयपक्षाश्रयणेऽपि नोत्पत्तिशिष्टः ब्रह्मावरोधो दोषः। मनोमयत्वादिगुणकस्य जीवस्योपासनान्तरान्वयाङ्गीकारात्। न हि सर्वात्मब्रह्मोपासनानुवादेन मनोमयत्वाद्यनेकगुणविधानं सम्भवति। विद्वद्वाक्यश्रुतयागानुवादेनेव अष्टाकपालादिद्रव्याणामग्न्यादिदेवतानां च विधानम्। यदाहुः। 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयेरन्बहवोऽप्येकयत्नत'इति। अत उभयत्राप्युपासनाद्वयं विधीयत इति युक्तम्। 'त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत' 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति वाक्यद्वय इव यागद्वयम्। न चानेकगुणश्रवणयुक्तवाक्य एवोपासनाविधाने सति 'सर्वं खल्वि'त्यादौ तदनुवादेन तदङ्गशममात्रविधिरस्त्विति वाच्यम्। तावता सर्वात्मकस्य ब्रह्मण उपास्यत्वासिद्धेर्विधीयमानशमोपायप्रदर्शकार्थवादे तच्छ्रवणस्यान्यार्थत्वाद्वाक्यप्रमाणान्वितमनोमयत्वादिगुणकजीवोपासनायामपि शमगुणविधिसम्भवात्। शतपथब्राह्मणेऽग्निरहस्ये'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'ति स्थाने 'सत्यं ब्रह्मेत्युपासीते'ति सत्यत्वविशिष्टब्रह्मोपासनां विधाय 'अथ खलु क्रतुमयोऽयं पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैत्यैवंक्रतुरिहामुं लोकं प्रेत्याभिसम्भवती'ति तत्क्रतुन्यायप्रदर्शनपूर्वकं 'स आत्मानमुपासीते'त्यादिना मनोमयत्वादिगुणकविद्याप्रपञ्चनेनात्रापि स्थानप्रमाणबलात्सर्वात्मत्वविशिष्टब्रह्मोपासनाविधानप्रतीतेश्च। न च तथापि क्वचित्सत्यत्वमुपास्यविशेषणमन्यत्र सार्वात्म्यमिति रूपभेदादैकार्थ्यालाभः। सत्यशब्दस्य 'सच्च त्यच्चाभव'दिति श्रुत्युक्तरीत्या परोक्षापरोक्षात्मकसर्वप्रपञ्चभावरूपसार्वात्म्यपरत्वोपपत्तेः। न च तथा सति 'सर्वं खल्वि'त्यादौ मनोमयत्वादिगुणकविद्योपास्ये सार्वात्म्यगुणमात्रविधिरस्तु। शान्तग्रहणं 'शान्तो दान्त उपरत'इत्यादिश्रुत्यन्तरविहितशमानुवादकं भविष्यति। तथा च तज्जलत्वादिहेतुकसार्वात्म्यस्य जीवेऽनुपपत्तेः मनोमयत्वादिगुणकोपासना ब्रह्मोपासनैव पर्यवस्येदिति वाच्यम्। तथापि सार्थवादस्य शमस्यापि विधेयत्वावश्यंभावेन तत्प्रयुक्तानेकगुणविध्यपरिहारात्। न च तर्हि 'स क्रतुं कुर्वीते'त्यत्र मनोमयत्वाद्युपास्यगुणविधानं माभूत्तच्छब्दनिर्दिष्टोपासकविशेषणस्य'एतमितः प्रेत्याभिसम्भवितास्मी'ति तत्क्रतुन्यायानुसन्धानमात्रस्य तदङ्गत्वेन विधानमस्त्विति शङ्कनीयम्। तथा सति मनोमयत्वादिगुणकीर्तनवैयर्थ्यप्रसङ्गात् अग्निरहस्यब्राह्मणानुसारेण तेषामुपास्यगुणत्वावश्यम्भावाच्च। अतः क्रतुवाक्येऽप्युपासनान्तरविधानावश्यंभावे सति तत्रोपासकात्मैव प्रागुक्तन्यायैरुपास्यत्वेना-

जीव एव, न परमेश्वरः ॥ इति प्राप्ते ब्रूमः—परमेश्वर एव मनोमयत्वादिधर्मकः । कुतः? परब्रह्मणः परमेश्वरस्यैवोपक्रमे 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति सर्वकारणत्वेनोपास्यत्वेनोपदेशात् । श्रुतितात्पर्यं च—तज्जलान् इदं सर्वं ब्रह्माधीनजन्मस्थितिध्वंसकम् । एतत् सर्वं चिदचिद्रूपं ब्रह्म खलु इति शान्त उपासीत ब्रह्म इति; यथा सागरे संपन्नजन्मस्थितिविलयं फेनबुद्बुदकद-

---

न्वेति न तु विध्यन्तरान्वितं ब्रह्म । अतस्स एव मनोमयत्वादिगुणक इति युक्तम् । एवं सति मनोमयत्वादिस्वारस्यमप्युपपद्यते । अथोच्येत मनोमयत्वं प्राणशरीरत्वं च न प्राकृतमनःप्राणोपकरणकत्वरूपं ग्राह्यम् । किंत्वीश्वरस्य मुक्तानां च निरतिशयानन्दानुभवसाधकं(१) यन्मनस्तत्प्रधानत्वं मनोमयत्वम् । प्राणयन्तीतिव्युत्पत्त्या प्राणशब्दोक्तजीवनियन्तृत्वं प्राणशरीरत्वम् । अनुपदप्रदर्शिततत्क्रतुन्यायानुगुण्येन तयोरहेयगुणरूपत्वेन योजनीयत्वात् । ततश्च 'सत्यसङ्कल्प' इत्यादेरपि क्लिष्टयोजनाया अकर्तव्यत्वात् बलवदनेकब्रह्मलिङ्गविरुद्धसामानाधिकरण्यरूपं वाक्यं बाधित्वा मनोमयत्वादीनां पूर्वोपासनोपास्यत्वेन प्रकृते ब्रह्मण्यन्वयोऽभ्युपगन्तुं युक्तः । पुलिङ्ग'मेष म आत्मे'तिविशेष्यान्तरसत्त्वादुपपद्यते । अनेकगुणविधानं तद्विशिष्टोपासनान्तरविधानादुपपद्यते । अणीयस्त्वं ज्यायसोऽपि हृदयावच्छेदादुपपद्यत इति । तत्रेदं वक्तव्यम् । यथा मनोमयत्वं प्राणशरीरत्वं च तत्क्रतुन्यायानुगुण्येन मुक्तेश्वरसाधारणं व्याख्येयं तथैव सत्यसङ्कल्पत्वादिकमपि व्याख्येयम् । न तु ब्रह्मासाधारणनित्याविर्भूतसत्यसङ्कल्पत्वादिरूपं तद्व्याख्येयम् । तेष्वपि तत्क्रतुन्यायानुरोधस्यावश्यकत्वात् । तथा च लिङ्गानां जीवेश्वरसाधारणत्वेन तद्विरोधाभावाद्वाक्यं न बाध्यमिति वाक्यबलान्मनोमयत्वादीनामुपासकजीवविशेषणत्वमेव युक्तमिति । एवं च यदि ब्रह्मलिङ्गतस्तदधिकरणोदाहृतविषयवाक्यानां जीवपरत्वनिरासेन ब्रह्मपरत्वनिर्णयोऽप्याक्षिप्तो भवेत् भवत्विति पूर्वपक्षाभिप्रायः । मनोमयत्वादिगुणक इत्यध्याहृतपक्षे परमेश्वर इत्यनुवृत्तसाध्यं योजयित्वा सूत्रं तत्र हेतुसमर्पकत्वेन व्याचष्टे—परमेश्वर एवेत्यादिना । अनेन सौत्रहेतुरित्थं व्याख्यातः । सर्वत्र सर्वेषु वेदान्तेषु प्रसिद्धस्य सर्वप्रपञ्चजन्मादिकारणत्वहेतुकसार्वात्म्यवत्तया विश्रुतस्य परस्य ब्रह्मण उपदेशात् 'सर्वं खल्वि'त्याद्युपक्रमे उपास्यत्वेन प्रतिपादनादिति । अनेन हेतुना प्रकृतसाध्यसिद्धिमुपपादयिष्यन्नेव सिद्धिपरिहारार्थमुपक्रमवाक्यार्थमाह—श्रुतितात्पर्यमिति । जायत इति जम् । लीयत इति लम् । उभयत्र डप्रत्ययः । अनिति जीवतीत्यन् । क्विप्प्रत्ययः । जलानिति निम्नोन्नतवद्विशेषणसमासः । तस्य तदिति ब्रह्मपरामर्शिना सर्वनाम्ना तत्तदुचितसम्बन्धविशेषपर्यवसायिनि सम्बन्धसामान्ये षष्ठीसमास इत्यभिप्रेत्य तज्जलानिति पदं व्याचष्टे—ब्रह्माधीनेति । खलुशब्देन ब्रह्मणस्सर्वप्रपञ्चजन्मस्थितिलयकारणत्वहेतुकं सार्वात्म्यं सकलवेदान्तप्रसिद्धमित्येतत् द्योत्यत इति दर्शयितुं भिन्नक्रमतया तस्य योजनम् । प्रसिद्धं खल्वेतद्बहुभवनसङ्कल्पादिप्रतिपादकेषु वेदान्तवाक्येषु । ननु ब्रह्मणस्सर्वप्रपञ्चजन्मादिकारणत्वेऽपि कथं सर्वप्रपञ्चात्मकत्वम् । ब्रह्मप्रपञ्चयोरान्तर्गणिकभेदाङ्गीकारादित्याशङ्क्य दृष्टान्तेन तदुपपादयति—यथेति । ननु तर्हि सागरवद्ब्रह्मणः प-

---

(१) 'नन्दानुसन्धानसाधकं' इति. च. पाठः ।

**म्बकं तद्रूपमेव दृश्यते तथा शक्तिमति ब्रह्मणि संपन्नजन्मादिकं तन्मयमेव । तदतिरिक्तं किंचन नोपलभ्यते । तथाहि अथर्वशिरसि निरूपितमीश्वरेण 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इति । ततश्च तेन 'ब्रह्माहम्' इत्यादिना विश्वरूपत्वमात्मनः प्रपञ्चितम् । तत्र विश्वरूपत्वे 'सोन्तरादन्तरं प्राविशत्'(श्वे०) इत्यनुप्रवेश एव हेतुरुक्तः। अतो ब्रह्मणाऽपृथक्सिद्धजन्मस्थितिप्रवृत्तिकत्वात् अस्य जगतस्तद्व्यतिरिक्तता नास्ति। तथाऽभियुक्ता वदन्ति—**

**'शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः। शक्तिस्तु शक्तिमद्रूपात् व्यतिरेकं न गच्छति ॥ तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव । शक्तिशक्ति-**

---

रिणामित्वं स्यादित्याशङ्क्याह—शक्तिमतीति । यथा सागरे पवनादिसङ्क्षोभ्योपरितनपरिणामः वीचीफेनबुद्बुदप्रपञ्चः एवं ब्रह्मणि तदिच्छासङ्क्षोभ्यमाणतदाश्रितशक्तिपरिणामः सर्वोऽयं प्रपञ्च इति भावः । अयं विशेषोऽत्रैव प्रकरणे समाम्नातेनाकाशात्मनेति विशेषणेन लब्धः । परमाकाशरूपायाश्चिच्छक्तेरधिष्ठातेति तदर्थः । ननु भेदे सत्येव कथं तदतिरिक्तानुपलम्भ इत्याशङ्क्य तथोपनिषदि व्यवहारो दृश्यत इत्याह—तथाहीति । अथर्वशिरसि भूतवर्तमानभविष्यदात्मकसकलप्रपञ्चरूपत्वं तद्व्यतिरिक्ताभावं चोक्त्वा परमेश्वरस्य प्रपञ्चानुप्रवेशस्तत्र हेतुत्वेनोक्तः । अनुप्रवेशस्तत्कर्मकर्तृभेदापेक्ष इति भेदे सत्येव ताद्रूप्यतदव्यतिरेकव्यवहारो दृष्ट इत्यर्थः । ननु महदेतदिन्द्रजालं सत्येव भेदे ताद्रूप्यं तदव्यतिरेकश्चेति तत्राह—अतइति । अपृथक्सिद्धेति । ब्रह्मापेक्षया पृथग्भूतेऽन्यत्र वस्तुनि सिद्धा ब्रह्मणः पृथक्सिद्धा । अतथाभूतस्थितिक्रियाव्यापारत्वादित्यर्थः । अनेन नाभेदस्ताद्रूप्यं न वा भेदो व्यतिरेकः किं तु घटनैल्यन्यायेनायुतसिद्धिस्ताद्रूप्यं युतसिद्धिर्व्यतिरेक इत्युक्तं भवति। ननु तथापि चिच्छक्तिपरिणामस्य प्रपञ्चस्य चिच्छक्त्यैवापृथक्सिद्धिस्स्यात् न तु परमेश्वरेणेत्याशङ्क्य चिच्छक्तेः परमेश्वरापृथक्सिद्धत्वात्कार्यस्य तदात्मकस्य प्रपञ्चस्यापि तदपृथक्सिद्धिरित्यभिप्रेत्य चिच्छक्तेः परमेश्वरापृथक्सिद्धौ प्रमाणमाह—तथाभियुक्ता इति । शक्तय इति । जगत्कृत्स्नमस्य परमेश्वरस्य शक्तयः तदीयशक्तिपरिणामभेदाः । महेश्वरः शक्तिमान् । नित्ययोगे मतुप् । नित्यानपायिशक्तिकः । अत एव भगवती शक्तिः शक्तिमदीश्वरस्वरूपाद्व्यतिरेकं पृथक्सिद्धिं न वाञ्छति नानुमन्यते। किं तु चन्द्रचन्द्रिकान्यायेन ब्रह्मापृथक्सिद्धैव भवति । विष्णुपुराणेऽप्येवमुक्तम्। 'एकदेशस्थितस्येन्दोर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणश्शक्तिस्तथैवमखिलं जगत् । तत्राप्यासन्नरूपत्वबहुत्वस्वल्पतामयः। ज्योत्स्नाभेदोऽस्ति तच्छक्तेस्तद्वन्मैत्रेय विद्यते । ब्रह्मविष्णुशिवा ब्रह्मन्प्रधाना ब्रह्मशक्तयः । ततो देवाश्च मैत्रेय न्यूना यक्षादयस्ततः। ततो मनुष्याः पशवो मृगपक्षिसरीसृपाः। न्यूना न्यूनतराश्चैव वृक्षगुल्मादयस्ततः' इति । अत्र परस्य ब्रह्मण इति न विष्णुरुच्यते । ब्रह्मविष्णुशिवा इति तस्य ब्रह्मशक्तिमध्ये पाठात्तदनन्तरं 'सर्वशक्तिमयं विष्णोस्स्वरूपं ब्रह्मणोऽपर'मिति विष्णुं प्रकृत्य 'स परस्सर्वशक्तीनां ब्रह्मणस्समनन्तर' इति तस्य सर्वेषां ब्रह्मविष्ण्वादीनां ब्रह्मशक्तीनां मध्य उत्कर्षस्य ब्रह्मापेक्षया परत्वस्य चोक्तेः । किं तु 'अत्ता चराचरग्रहणा(ब्र-

मतोर्यस्मादभेदः सर्वदा स्थितः ॥ अतस्तद्धर्मधर्मित्वात् परा शक्तिः परात्मनः। न वह्नेर्दाहिका शक्तिः व्यतिरिक्ता विभाव्यते' ॥इत्यादि । वायुसंहितायां च-

'शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् । तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ॥ पराऽस्य विविधा शक्तिः प्रबोधानन्दरूपिणी । एकानेकस्वरूपेण भाति भानोरिव प्रभा' ॥ इति ॥ 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥'(श्वे.६.८) 'एकएव रुद्रो न द्वितीयाय तस्थुर्य इमाँल्लोकानीशत ईशिनीभिः॥'(श्वे.३.२)इत्यादयश्च परब्रह्मणः स्वाभाविकानन्तजगज्जननशासन-

---

१-२-१० सू )दित्यधिकरणे त्रिमूर्त्युत्तीर्णः सेत्स्यन्परमशिवः परमेश्वर उच्यते। 'सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मकाः । प्रधानांशास्स्मृता देवाः शक्तयः परमात्मनः। आभ्यः परस्ताद्भगवान्परमात्मा सनातनः । गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ॥' इति कूर्मपुराणवचनैकार्थ्यात् । एवमनयोर्वह्निदाहकशक्त्योरिव नित्यं तादात्म्यं नित्य आश्रयाश्रयिभावः । यस्मादेवं शक्तिशक्तिमतोरभेदः घटपटन्यायेन स्वतन्त्रपृथगवस्थानरूपभेदाभावः सर्वदा स्थितः, अतः परमेश्वरस्य तया शक्त्या धर्मिणः घटत्वादिधर्मवन्नित्यपरतन्त्रधर्मवत्त्वात् सा परा शक्तिः परमात्मन एव कदाचिदपि नान्यस्य । नापि स्वतन्त्रा । न हि वह्नेर्दाहिका शक्तिः कदापि तदन्याश्रितत्वेन वा ततः पृथक्सिद्धा वा विभाव्यत इत्यर्थः । शक्त्यादीति । शक्तिराद्याया नित्यसिद्धायाश्शक्तेराद्य उन्मेषः 'प्रज्ञा च तस्मात्प्रसृता पुराणी'ति प्रसिद्धः । पृथिवी 'अद्भ्यः पृथिवी'ति श्रवणात्तत्त्वेषु चरमकार्यभूता भूमिः । तत्र 'मृदा कुम्भादिकं यथे'त्यनेन मृद्घटन्यायेन शक्तिकार्यस्य कृत्स्नस्यापि प्रपञ्चस्य परमेश्वरापृथक्सिद्धिर्दर्शिता । एवं सकलप्रपञ्चाकारपरिणामिनी परमाकाशपरमानन्दरूपा पराशक्तिरपृथग्भावेन परब्रह्माश्रितेति दर्शितम् । कथमेवंभूता परब्रह्मभिन्ना सा 'यद्वैतद्ब्रह्मे'ति 'इदं वाव तद्योऽयं वहिर्धा पुरुषादाकाश आनन्दो ब्रह्मे'त्यादिश्रुतिषु ब्रह्मेति व्यपदिश्यत इत्याकाङ्क्षायां परब्रह्मणः परब्रह्मत्वं सर्वज्ञत्वसर्वकारणत्वाद्युपलक्षितं ज्ञानक्रियाशक्त्याद्यनन्ताकारविजृम्भणशालिन्यां तस्यामेवायत्तमित्यन्तरङ्गत्वेनाभेदोपचारात्सापि तथा व्यपदिश्यत इति प्रदर्शयितुं तस्या एव ज्ञानक्रियाशक्त्याद्यनन्तशक्तिरूपत्वे प्रदेशान्तरस्थं वायुसंहितावचनमुदाहरति-परेति। अस्य परमेश्वरस्य। विविधा विविधाकारविजृम्भणक्षमा। परा उत्कृष्टा। प्रबोधानन्दरूपिणी प्रकृष्टो बोधः प्रकाशः समन्तात्प्रकाशमानः परमाकाशः आनन्दः 'स एको ब्रह्मण आनन्द'इत्युक्तो निरतिशयानन्दः तद्रूपिणी शक्तिर्वस्तुत एकैव सती ज्ञातव्येष्टव्यकर्तव्यस्रष्टव्यपालनीयसंहार्यबद्धव्यानुग्राह्यादिप्रतियोगिभेदात् ज्ञानेच्छाक्रियासृष्टिपालनसंहारतिरोधानानुग्रहशक्त्याद्यनन्ताकारेण भाति । 'एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्य'दिति श्रुतेः । यथैकैव भानोः प्रभा तदपृथक्सिद्धा मण्डलरूपेण त्रैलोक्यं व्याप्य स्थिता द्रावणीयशोषणीयदहनीयजतुजलतूलादिप्रतियोगिभेदाद्द्रावणशोषणदाहतापस्फोटशक्त्याद्यनन्ताकारेण व्यपदिश्यते तद्वदित्यर्थः । अत्रार्थे मूलश्रुतिमुदाहरति-परास्येति । अत्र शक्तिरित्येकवचनादौपाधिकं विविधत्वमिति स्पष्टम् । एतदौपाधिकमेव विविधत्व'मेक एव रुद्र'इत्यादिश्रुतिषूच्यत इत्याशयेनोदाहरति-एक इति । अस्या-

पालन शक्तिमत्त्वं श्रुतयो वदन्ति। किं बहुना—श्रुतिस्मृतीतिहासपुराणाभियुक्तसू-क्तिप्रामाण्यात् सकलचिदचित्प्रपञ्चमहाविभूतिरूपा महासंविदानन्दसत्ता देशकालादिपरिच्छेदशून्या स्वाभाविकी परमशक्तिः परब्रह्मणः शिवस्य स्वरूपं च गुणश्च भवति । तद्व्यतिरेकेण परब्रह्मणः सर्वज्ञत्व सर्वशक्तित्वसर्वकारणत्व सर्वनियन्तृत्व सर्वोपास्यत्व सर्वानुग्राहकत्वसर्वपुरुषार्थहेतुत्वादिकं सर्वगतत्वं च न संभवति । किंच—महेश्वरशिव महादेवरुद्रादिपरमाख्यानामभिधेयत्वं च न

---

स्सर्वप्रकारेण परब्रह्मोपकारकत्वमाक्षेपालङ्कारेण दर्शयति—किं बहुनेति । सकलेति । सकलचिदचित्प्रपञ्च एव महाविभूतिः परब्रह्मणः महदैश्वर्यम् । महासंविदिति । महच्छब्दस्संविदादिषु त्रिष्वपि सम्बध्यते । ततश्च 'तस्य भासा सर्वमिदं विभाती'तिश्रुतेस्सकलप्रपञ्चावभासकमहासंविद्रूपा 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुतेस्सकलप्रपञ्चवैषयिकानन्दशीकरनिकरसमुद्रायमाणपरमानन्दरूपा । 'तथा हि तां समाश्रित्य सन्तोऽन्ये सा स्वतस्सती'ति शिवशास्त्रोक्तरीत्या 'घटस्सन्पटस्स'न्नित्यादिरूपेण सर्वप्रपञ्चानुविद्धमहासत्तारूपा चेत्यर्थः । ननु 'स्वरूपं च गुणश्चे'ति कथमभिन्नत्वेन गुणैकरूपत्वादित्याशङ्क्याह—तद्व्यतिरेकेणेति । ब्रह्म हि स्वमात्रप्रकाशज्ञप्तिरूपं निर्विकारम् । तस्य सर्वज्ञत्वसर्वकारणत्वादिकं शक्त्यपेक्षमित्यर्थः । सर्वगतत्वं व्यापकत्वम् । तदपि व्यापकस्वभावशक्त्यायत्तम् । एवं प्रभारूपायाश्शक्तेर्व्यापकत्वाभावे प्रभावतः परब्रह्मणः तामतिलङ्घ्य देशान्तरव्यापनायोगात् । यद्वा । सर्वगतत्वं सर्वत्रगतिमत्त्वम् । प्रसिद्धं हि पूजायामावाहनविसर्जनकालयोर्हृदयद्वादशान्तादिस्थानेषु गतिमत्त्वं परब्रह्मणश्शिवस्य कामिकादिवचनेषु । प्रसिद्धं च भक्तानुजिघृक्षया तत्रतत्र गतिमत्त्वं 'पिनाकं बिभ्रदागही'त्यादिश्रुतिषु । सर्वमिदं स्वतो गतिरहितस्य शक्तिपरिणामविशेषोपाधिकमचिन्त्यशक्तियोगात्स्वाभाविकमेवेति समर्थनीयम् । अतएव कामिके 'सर्वगस्य शिवस्येह कथमावाहनं प्रभो । यद्यावाहनमिष्टं स्यात्सर्वगत्वं विहन्यते ॥' इति पृष्टवत ऋषीन्प्रति परमेश्वरेण 'आमूलाग्रस्थितस्याग्नेरभिव्यक्तिर्यथा तरौ । तद्वदेकत्र चिच्छक्तिर्व्यापकस्य न बाध्यते ।' इत्येकं पक्षमुक्त्वा पुनः पक्षद्वयमुक्तम् । 'यथात्मनस्तनुद्वारा स्यातामिह गमागमौ । तद्वन्मन्त्रतनुद्वारा शिवस्येष्टौ गमागमौ । अचिन्त्यशक्तियुक्तत्वाद्व्यापकोऽव्यापकश्च सः । सतनुस्तनुभिन्नो वा सर्वकृत्सर्वगश्शिवः ॥' इति । अतस्तस्य गतिमत्त्वमपि शक्त्यधीनमेव समर्थनीयमिति भावः । अभिधेयत्वं चेति । नामप्रवृत्तिनिमित्तगुणानां शक्त्यधीनत्वादिति भावः । एवं परब्रह्मणस्सकलचेतनाचेतनवैलक्षण्यप्रयोजकषडङ्गदशाव्ययादिनिखिलमङ्गलगुणनिर्वाहिका शक्तिः । अतस्तामनपेक्ष्य परब्रह्मणस्स्वरूपमित्येव वक्तुं नार्हमित्यभिप्रेत्य प्राक् 'स्वरूपं चे'त्युक्तम् । तथैव वेदान्तेष्वपि तदैक्योपदेश इति तात्पर्यम् । ननूक्तरीत्या ब्रह्मणस्स्वापृथक्सिद्धशक्तिपरिणामभूतसर्वप्रपञ्चजन्मादिकारणत्वहेतुना तदपृथक्सिद्धिमात्रं सिद्ध्यति न तु सर्वात्मत्वम् । न च तदेवात्र पारिभाषिकं सर्वात्मत्वं विवक्षितमिति वाच्यम् । तावता ब्रह्मभिन्नप्रपञ्चपरयोरिदंसर्वशब्दयोर्ब्रह्मणि प्रवृत्तेरनिर्वाहात्प्रपञ्चब्रह्मनियम्यत्वावगतिमात्रस्य शान्तिहेतुत्वासम्भवाच्चे-

**संभवति। तथा च सर्वचिदचित्प्रपञ्चशरीरविशिष्टं ब्रह्म सर्वशब्दवाच्यम्। यथा**

---

त्याशङ्क्याह—तथा चेति । ब्रह्मणस्सर्वकारणत्वहेतुना सर्वानुप्रवेशस्तावत्सिद्ध्यति । 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतेः । ततस्सर्वनियन्तृत्वं सिद्ध्यति । 'अन्तःप्रविष्टः शास्ता जनाना'-मिति श्रुतेः । ततः सर्वशरीरत्वं सिद्ध्यति । 'यः पृथिव्यां तिष्ठ'न्नित्यन्तर्यामिब्राह्मणे नियम्यस्य पृथिव्यादेः सर्वस्याऽपि प्रपञ्चस्य नियन्तृशरीरत्वश्रवणात् । इदमेव जगज्जन्मादिकारणत्वहेतुना परम्परया सिद्ध्यत्सर्वशरीरत्वमिह सर्वात्मत्वं विवक्षितम् । इदं च 'सर्वमिदं ब्रह्मे'ति समानाधिकरणनिर्देशस्य तावदुपपादकं भवत्येव।' 'ब्रह्मणो विद्वान्' 'ब्राह्मणो बृहस्पतिसवेन यजेते'त्यादिलौकिकवैदिकव्यवहारेषु शरीरवाचिशब्दानां शरीरिपर्यन्तत्वदर्शनादिति भावः। स्यादेतत्। शरीरवाचिनां शरीरिपर्यन्तत्वमसिद्धम् । तथानुशासनाभावात् । लौकिकवैदिकव्यवहारयोश्शरीरात्मभ्रमसिद्धार्थावलम्बनत्वोपपत्तेः। अस्ति च भ्रमसिद्धार्थावलम्बनो वैदिकव्यवहारः 'उत्ताना वै देवगवा वहन्ती'त्यादिः । तथा च पर्यायेण सुरनरतिर्यगादिसर्वदेहेष्वात्मभ्रमवति जीव एव 'सर्वं खल्विदं ब्रह्मे'त्ययं भ्रमसिद्धसार्वात्म्यनिर्देश उपपद्यते न तु परब्रह्मणि सर्वशरीरकत्वमात्रवति तत्तादात्म्यभ्रमरहित इत्याशङ्क्याह—यथेति। स्वस्य स्वीयस्य स्वाभिधेयस्य नीलस्येत्यर्थः। स्यादेतत्। गुणवचनेभ्यो मतुब्लोपो वक्तव्य'इति व्याकरणानुसाराल्लुप्तमतुबन्तो नीलशब्दो नीलमुत्पलमिति नीलविशिष्टद्रव्यपरः प्रयुज्यते न केवलः । व्याकरणानभिज्ञानां तु गुणगुणिनोरभेदभ्रमेण नीलशब्दस्य नीलविशिष्टे शक्तिभ्रमेण तत्र लाक्षणिकत्वाभिप्रायेण गुणगुणिनोरभेदोपचारेण वा नीलमुत्पलमिति व्यवहार इत्यसिद्धं नीलशब्दस्य नीलविशिष्टद्रव्यवाचकत्वम्। 'घटस्य नीलं रूपं' 'तद्वा यदेतदादित्यस्य लोहितं रूप'मित्यादिलौकिकवैदिकप्रयोगानुसारेण नीलादिशब्दानां गुणमात्रशक्त्यवश्यंभावे तयैवोक्तरीतिभिश्चरितार्थतया गुणविशिष्टे शक्त्यन्तरकल्पनायोगात्। ननु, तादृशेषु प्रयोगेषु विशिष्टशक्तानां नीलादिपदानां केवले गुणे लक्षणास्त्विति चेन्न। तथासति 'अरुणयैकहायन्या गवा सोमं क्रीणाती' त्यत्रारुणापदमुख्यवृत्त्यनुसारेणारुण्यविशिष्टद्रव्यस्य क्रयसाधनत्वापत्त्या तत्र गुणद्रव्ययोः प्रत्येकं तुल्यवत्क्रयसाधनत्वेनान्वय इति पूर्वमीमांसकप्रवादसिद्धारुणाधिकरणन्यायविरोधापत्तेः। ननु, पूर्वमीमांसकानां तथाप्रवादसद्भावेऽपि किंचिद्द्रव्यगतमारुण्यं किंचिद्वर्णमेकहायनीद्रव्यं च क्रयसाधनमिति न तेषां मतं किं तु शब्दान्वयवेलायां गुणद्रव्ययोः प्रत्येकं क्रयसाधनत्वप्रतीतावप्यमूर्तस्यारुण्यस्य द्रव्यपरिच्छेदद्वारं विना साक्षात्क्रयसाधनत्वायोगेन परिच्छेद्यद्रव्यान्वयाकाङ्क्षयार्थसिद्धेन पार्ष्ठिकेन समभिव्याहृतैकहायनीद्रव्यान्वयेनारुण्यविशिष्टमेकहायनीद्रव्यं क्रयसाधनमित्येव तेषामभिमतम्। तथा च फलतो विशेषाभावादर्थैकत्वे 'द्रव्यगुणयोरैककर्म्यान्नियमस्स्या'(जै० ३.१.१५.)दित्यरुणाधिकरणसूत्रमारुण्यविशिष्टद्रव्यस्य क्रयसाधनत्वविषयतयैव व्याख्यायताम् । अर्थैकत्वे 'अरुणयैकहायन्ये' त्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोस्सामानाधिकरण्येनार्थैकत्वे सिद्धे सति द्रव्यगुणयोररुणयेति पदेनैव विशेषणविशेष्यभावेन संसृष्टतयाभिहितयोः क्रयाख्यै-

---

(१) 'मपि मतम्.' इति च पाठः।

नीलशब्दो न केवलं स्वस्यैव वाचकः, किंतु स्वविशिष्टस्योत्पलस्यापि, तथा

---

ककर्मान्वयाविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमः स्यादिति। अनेनेत्थं पूर्वपक्षशङ्का निरस्ता भवति। एकहायनीद्रव्यस्य क्रयसम्बन्धविधायकेनैव वाक्येनारुण्यसम्बन्धोऽपि विधातुं न शक्य इत्यरुणयेत्यनेन पृथग्वाक्यभूतेन प्राकरणिकसकलकरणान्वय्यारुण्यं विधीयत इति नात्र शङ्कनीयम्। न ह्यारुण्यस्य द्रव्यमात्रसम्बन्ध एकहायनीद्रव्यसम्बन्धे वा क्रयसम्बन्ध इव वाक्यव्यापारापेक्षास्ति। अरुणापदेनैव गुणविशिष्टद्रव्यवाचकेनारुण्यस्य द्रव्यमात्रसम्बन्धसिद्धेः 'अरुणयैकहायन्ये'ति पदद्वयसामानाधिकरण्येन एकहायनीद्रव्यसम्बन्धसिद्धेश्च। यथा 'रक्तः पटो भवती'त्यत्र रागगुणस्य रक्तपदेनैव द्रव्यमात्रसम्बन्धे पटपदसामानाधिकरण्येन पटरूपद्रव्यविशेषसम्बन्धे च सिद्धे सति वाक्यं रक्तपदस्य भवनसम्बन्धमात्रे व्याप्रियत इति रागस्य विवक्षितभवत्पटस्य सम्बन्धनियमस्सिद्ध्यति। एवमिहाप्यारुण्यस्य क्रयसाधनैकहायनीसम्बन्धनियमस्सिद्ध्यतीति तस्माद्गुणवाचिशब्दानां द्रव्यपर्यन्ततायां नास्त्यरुणाधिकरणन्यायविरोध इति चेत्स्यादेतदेवं यद्येकहायनीवाक्यसङ्घटनमात्रपरिहार्योऽयं विरोधः स्यात्। नत्वेवमरुणाधिकरणसमर्थितस्य समानविभक्त्यन्तपदनिर्दिष्टयोरपि द्रव्यगुणयोः परस्परसम्बन्धं विना वैयधिकरण्येन क्रियाविशेषणतयान्वयनियमस्यानङ्गीकारे ह्यन्यत्रानिष्टं प्रसज्यते। अन्यथा दशमे 'प्राजापत्यो नैवारश्चरुस्सप्तदशशरावो भवती'ति वाजपेयप्रकरणविहितायामिष्टौ 'चतुरो मुष्टीन्निर्वपती'ति प्रकृतौ विहिते चतुर्मुष्टिनिर्वापेऽतिदेशतः प्राप्ते चतुर्भिर्मुष्टिभिस्सप्तदशशरावपरिमाणचरुद्रव्यानिष्पत्तेः सङ्ख्यामुष्ट्यन्यतरलोपेऽवश्यकर्तव्ये मुष्टीनां साक्षान्निर्वापक्रियाङ्गानां प्रधानगुणत्वाच्चतुस्सङ्ख्याया मुष्टिविशेषणभूताया अङ्गगुणत्वात् अङ्गगुणस्य प्रधानगुणेन विरोधे 'अङ्गगुणलोपस्याङ्गगुणविरोधे च तादर्थ्या'दित्यधिकरणनिर्णीतत्वात्सङ्ख्यालोप इत्येवं 'मुष्टिलोपात्तु सङ्ख्यायास्तद्गुणत्वा'दिति(जै०) सूत्रेण पूर्वपक्षं कृत्वा सङ्ख्यामुष्ट्योरुभयोरपि परस्परान्वयं विना क्रियाशेषत्वेनान्वयात् समप्राधान्येन गुणप्रधानभावकृतविशेषाभावे च मुख्यानुग्रहस्य 'मुख्यं वा पूर्वचोदनाल्लोकव'दित्यधिकरणे निर्णीतत्वात् सङ्ख्यानुग्रहो मुष्टिलोपश्चेत्येवं 'न निर्वापशेषत्वा'दिति (जै०—)सूत्रेण सिद्धान्तितम्। अत्र हि गुणशब्दानां द्रव्यपर्यन्तवाचकत्वाभ्युपगमे पूर्वपक्षन्यायो दृढो भवेत्। तस्मात्तेषां गुणमात्रवाचित्वमङ्गीकृत्यैवारुणाधिकरणन्यायः प्रवर्तनीयः। आकृत्यधिकरणन्यायेन गुणशब्दः गुणमात्रवचनः। तथापि 'अरुणः पटो भवती'त्यादिकारकविभक्तिरहितप्रयोगेषु पटादिपदसामानाधिकरण्यबलाल्लक्षणया द्रव्यपर्यन्तो भवति। न चेहापि पिङ्गाक्ष्येकहायनीपदसामानाधिकरण्यवशाद्द्रव्यपर्यन्तताभ्युपगन्तव्या। बलवत्या करणकारकाभिधायिन्या विभक्तिश्रुत्या प्रातिपदिकार्थस्यारुण्यस्य कारकत्वरूपे क्रियाविशेषणत्वेऽभिधीयमाने तद्विहाय द्रव्यपरपदसामानाधिकरण्यरूपवाक्यप्रमाणमवलम्ब्य 'द्रव्योपसर्जनकत्वकल्पनायोगा'दिति (जै०) सूत्रमपि वार्तिकादिप्रदर्शितप्रकारेणैव व्याख्यातव्यम्। 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती'त्येतावताऽर्थैकत्वरूप एकवाक्यत्वे प्रतीयमाने तदनुसारेण द्रव्यगुणयोः पिङ्गाक्ष्येकहायनीपदोक्तस्य द्रव्यस्य अरुणापदोक्तस्य गुणस्य च नियमः स्यात्। परस्परान्वयनियमो न भवेत्। कुतः। ऐककर्म्यादेककार्यत्वात्क्रयरू-

**प्रपञ्चशब्दोऽपि ब्रह्मणः। तस्मात् सर्वशब्दवाच्यत्वं ब्रह्मणः 'सर्वो वै रुद्रः' (महाना०**

पैकक्रियासाधनत्वादिति यावत्। गुणद्रव्ययोर्हि विभक्तिश्रुतिभिरभिधीयमानं क्रियासामान्यशेषत्वं विशेषाकाङ्क्षायां समभिव्याहृतक्रीणातिपदसमर्पितक्रयात्मकैकक्रियाशेषत्वरूपं पर्यवस्येत्। ततश्च गुणस्य साक्षात्क्रियां साधयितुमसमर्थस्य द्रव्यपरिच्छेदरूपद्वाराकाङ्क्षया द्रव्यस्य परिच्छेदकगुणाकाङ्क्षया चार्थिकेन पार्ष्ठिकान्वयेनान्योन्यान्वयनियमः पर्यवस्येदिति। एवं चामूर्तस्यारुण्यस्य क्रयसाधनत्वायोगात् अरुणयेत्येतदगत्या वाक्यभेदेन प्राकरणिककरणभूतसकलद्रव्यान्वयीति पूर्वपक्षशङ्कापि निरस्ता भवतीति। एवमरुणाधिकरणन्यायसिद्धावेव तदवलम्बनः सङ्ख्यामुष्टयधिकरणन्यायः प्रवर्तते। तस्माद्गुणमात्रवाचिनो नीलादिशब्दा भवन्तु वा ते द्रव्यपर्यन्ताः। तावता प्रकृते का सङ्गतिः। न हि तावता विशेषणवाचिनः सर्वे शब्दास्तद्विशिष्टधर्मिपर्यन्ता इति नियमस्सिद्ध्यति। दण्डादिशब्देषु स्वात्मविशिष्टपुरुषाद्यनभिधायिषु व्यभिचारात्। न च विशेषणतैकस्वभाववाचिनां तथा नियमः। प्रपञ्चस्यापि ब्रह्मविशेषणत्वनियमासिद्धेः। 'ब्रह्म सर्वात्मभूत'मिति व्यवहारे तद्विशेषणस्यापि प्रपञ्चस्य 'सर्वं ब्रह्म' 'सर्वं ब्रह्मणी' त्यादिव्यवहारे तद्विशेष्यत्वस्य ब्रह्मानवगाहिलौकिकव्यवहारे स्वातन्त्र्यस्य च दर्शनात्। न चापृथक्सिद्धधर्मवाचिना तथा नियमः। हस्तादिशब्दानां शरीरपर्यंतत्वादर्शनात् आत्मवियुक्तस्य शरीरस्य शोषणविशरणादिदर्शनेनात्मापृथक्सिद्धेरिव शरीरवियुक्तानां हस्तादीनामपि तद्दर्शनेन शरीरापृथक्सिद्धेस्सिद्ध्यविशेषात् देहादिशब्दानामात्मपर्यन्तत्वादर्शनाच्चेत्याशङ्क्याह—**तस्मादिति**। अयमाशयः। नीलादिशब्दास्तावद्गुणविशिष्टद्रव्यस्यापि वाचकाः। नीलमुत्पलमित्यादिसमानाधिकरणव्यवहारदर्शनात्। न च मतुब्लोपात्तन्निर्वाहः। मतुब्लोपानुशासनस्य हि मतुब्लोपेनैव द्रव्याभिधानमिति नाभिप्रायः। शब्दाभावस्य शब्दकार्यकारित्वाभावात्। नापि लुप्तेन स्मृतेन मतुपा तदभिधानमिति तदभिप्रायः। मतुब्लोपस्य सिद्धशब्दान्वाख्यानार्थं वैयाकरणकल्पितत्वेन वस्तुतस्तत्र लुप्तस्य मतुपोऽभावात्। तस्मान्मतुब्लोपानुशासनेनापि नीलादिशब्दानां गुणविशिष्टद्रव्यवाचकत्वमेव सिद्ध्यति। मतुबश्रवणे तल्लोपानुशासनबलात् तदर्थप्रत्ययावश्यंभावेच सति नीलादिशब्दानामिव तज्जनकत्वपर्यवसानात् किमर्थं तर्हि मतुब्लोपानुशासनम्। समानाधिकरणव्यवहारादेव हि नीलादिशब्दानां गुणविशिष्टद्रव्यवाचकत्वं सिद्ध्यति। उच्यते। सन्ति नीलादिशब्दाः केवलगुणवाचका अपि। 'घटस्य नीलो गुण' इत्यादिव्यधिकरणव्यवहाराणामपि दर्शनात्। तथा च यथा गुणविशिष्टद्रव्यवाचिनां नीलादिशब्दानां निष्कृष्टगुणपरत्वविवक्षायां नैल्यं नीलत्वं नीलिमेति भावप्रत्ययः तथा तेषां निष्कृष्टगुणवाचिनां द्रव्यपरत्वविवक्षायां मतुष्प्रत्ययोऽपि भवेत्। दृश्यते हि पुण्यपापादिशब्दाना 'मयं पुरुषः पुण्यः अयं पापः' 'अस्य पुण्यमस्य पाप' मित्यादिद्विविधव्यवहारदर्शनात् धर्माधर्मादिमात्रवाचकत्वेन तद्धर्मिपर्यन्तत्वेन च द्विविधानां धर्माधर्ममात्रवाचकानां धर्मिपर्यन्तत्वविवक्षायां पुण्यवान्पापवानित्यादिर्मतुबन्तव्यवहारः। तथात्रापि तत्प्राप्तौ तद्व्यावृत्त्यर्थं मतुब्लोपानुशासनम्। तेन द्रव्यपर्यन्ता एव नीलादिशब्दाः द्रव्येषु प्रयोक्तव्याः। गुणमात्रपर्यवसायिनोऽप्यभेदोपचारविवक्षायां प्रयोक्तव्याः। यथा—'साक्षान्नीलगुण एवेयं वनिता नीलमेवेय'मिति कदापि गुणमात्रपर्यवसितानां

द्रव्यपर्यन्तत्वविवक्षायां मतुबन्तप्रयोगो नास्तीति सिद्ध्यति। वार्तिककृताऽपि 'गुणवचनेभ्यो मतुपो लु'गित्यनुशासनानन्तरमिदमेव तस्य प्रयोजनमुक्त'मव्यतिरेकात्सिद्धमिति चेद्दृष्टोऽव्यतिरेक'इति । अत्राव्यतिरेकः अव्यभिचारः । ततश्च शुक्लादिशब्दैरभिधीयमानानां गुणानां गुण्यव्यभिचारात् गुणिना सहैवाभिधानात् शुक्लादिशब्दशक्त्यैव गुण्यभिधानसिद्धेर्मतुब्लोपानुशासनं व्यर्थमिति शङ्का। 'वस्त्रस्य शुक्ल' इति गुणाभिधानस्य गुणिव्यभिचारो दृष्टः। अतः केवलगुणाभिधायकशब्दस्य द्रव्यपर्यन्तत्वविवक्षायां ततो मतुपि प्राप्ते लुगनुशासनमिति परिहारः। एतेन नीलादिशब्दा गुणमात्रवाचिन एव। अभेदोपचारावलम्बनस्तु 'नीलमुत्पल'मित्यादि समानाधिकरणनिर्देशो 'नीलमेवेय'मितिनिर्देशवदित्यपि शंका निरस्ता। गुणविशिष्टद्रव्यवाचिनां नीलादिशब्दानां भावे गुणवाचिनां नीलिमादिशब्दानामनिष्पत्तिप्रसंगात्। गुणवाचिभ्यो भावप्रत्ययोत्पत्तौ हि तेषां गुणगतधर्मवाचित्वमेव स्यात्। न तु गुणवाचित्वम्। एतेनैवाभेदभ्रमशक्तिभ्रमाभ्यां समानाधिकरणनिर्देशनिर्वाहोऽप्यपास्तः । न चायमभ्रान्तव्यवहारसाधारणो निर्वाहः। ननु तथापि गुणमात्रवाचकानां नीलादिशब्दानां तद्विशिष्टेषु द्रव्येषु लक्षणया समानाधिकरणव्यवहारः सम्भवति। तत्सम्भवे च न तेष्वपि शक्त्यन्तरं कल्पनीयम्। गौरवात्। एवं च लक्षणानियमार्थं मतुब्लोपानुशासनम्। लक्षणीयपरनीलादिशब्दाद्भावप्रत्ययेन नीलिमादिशब्दनिष्पत्तिरिति सर्वं सङ्गच्छते। अरुणाधिकरणन्यायश्चैवं समञ्जसो भवति। धर्मिण्यपि शक्त्यङ्गीकारे ह्यरुणाशब्दस्य पिङ्गाक्ष्येकहायनीशब्दसामानाधिकरण्यस्वारस्येन धर्मिपरत्वशङ्का प्रसज्यते। उच्यते। स्यादेतदेवं यदि नीलादिशब्दानां विषयशक्त्यङ्गीकारे गौरवं स्यात्। न त्वेवं तदनङ्गीकार एव गौरवम् । तथा हि—तेषां गुणगुण्युभयशक्तिपक्षे गुणमात्रशक्तिपक्षे च गुणगतो नीलत्वादिरेव प्रवृत्तिनिमित्तम्। किं त्वाद्यपक्षे साक्षात्परम्परया वेति विशेषमनपेक्ष्य यत्रयत्रापृथक्सिद्धाश्रये नीलत्वादिकं वर्तते तत्र सर्वत्रापि नीलादिशब्दप्रवृत्तौ तन्निमित्तं भवति। द्वितीयपक्षे तु यत्र साक्षादपृथक्सिद्धाश्रये वर्तते तत्र तत्प्रवृत्तौ निमित्तमिति विशेषणीयम्। अतोऽत्र गौरवं स्पष्टमेव। ततश्च लाघवानुगृहीतप्रमाणसिद्धया साक्षात्परम्परया साधारणगुणगतनीलत्वाद्याश्रयविषयैकयैव शक्त्या गुणशब्दानां गुणगुण्युभयवाचकत्वे सत्यरुणवाक्ये गुणिपरिग्रहे विभक्तेः शब्दसाधुत्वमात्रार्थतया वैयर्थ्यं स्यात् । गुणिगतकरणकारकत्वस्य समानाधिकरणपदान्तरगततृतीयाविभक्तिलब्धत्वात्। न च गुणपरिग्रहेण तद्गतकरणकारकत्वार्थतया सार्थकत्वे सम्भवति वैयर्थ्याङ्गीकारो युक्तः। न च द्रव्यैकपरपिङ्गाक्ष्येकहायनीपदगतविभक्तिद्वयवदरुणापदगतविभक्तावनन्यगतिकत्वमस्ति । अरुणापदस्य गुणार्थपरिग्रहेण तत्सार्थकत्वसमर्थनसम्भवादिति न्यायमालोच्य तस्य गुणार्थपरिग्रहः कृतः। तथा च यत्र गुणशब्दे गुणार्थपरिग्रहलभ्य(फलं)तृतीयादिकारकविभक्तिश्रवणमस्ति तत्र तदर्थवत्त्वाय पदान्तरसामानाधिकरण्यमनादृत्य गुणार्थपरिग्रहः। यत्र तन्नास्ति 'पिशङ्गी पष्ठौही दक्षिणा' यस्योभावग्नी अनुगता' वित्यादौ तत्र श्रुतसामानाधिकरण्यानादरहेत्वभावात् गुण्यर्थपरिग्रह इति सर्वमुपपद्यते। अनया दिशा शरीरवाचिनो देवमनुष्यब्राह्मणादिशब्दा अपि आत्मपर्यन्ताः।

( १ ) (   ) एतद्रेखांकितं पदं च पुस्तके नास्ति।

**१६) इत्यादय उपपादयन्ति। ततः 'सर्वं खल्विदं ब्रह्म' (छा०३.४.) इति सर्वचिदचित्प्रपञ्चशरीरं ब्रह्माभिधीयते। ततो ब्रह्मस्वरूपत्वात् प्रपञ्चस्य द्वेषाद्यविषयत्वाच्छा-**

---

न च तथा सति शरीरादिशब्दानामप्यात्मपरता स्यादिति वाच्यम्। तत्प्रवृत्तिनिमित्तस्य शरीरत्वस्य साक्षात्स्वापृथक्सिद्धाश्रय एव प्रवृत्तिनिमित्तत्वात्। देवमनुष्यादिशब्दानामिव तेषामात्मपर्यंतप्रयोगाभावेनातिप्रसंगवारणार्थं साक्षात्त्वविशेषणस्यापेक्षितत्वात्। अत एव रूपरसादिशब्दानां द्रव्यपर्यन्तत्वं हस्तादिशब्दानां शरीरपर्यन्तत्वं वा नास्ति। तत्रापि व्यवहारानुसारेण साक्षात्त्वविशेषणापेक्षणात्। न च क्वचित्तदनपेक्षणमात्रेण सर्वत्र तदनपेक्षणं भवति। अपत्यशब्दस्य साक्षात्परम्परासाधारण्येन जन्यचेतनवृत्तित्वेऽपि पुत्रशब्दस्य साक्षाज्जन्यचेतन एव वृत्तिदर्शनात्। तस्मान्नीलादिशब्दानां द्रव्यपर्यन्तत्वदर्शनात् तद्रीत्या प्रपञ्चशब्दानामपि ब्रह्मपर्यन्तत्वं युक्तम्। 'नीलो घट' इत्यादिवत् 'सर्वो वै रुद्र' इत्यादिप्रयोगदर्शनेन तेषां नीलादिशब्दसमानत्वात्। नन्वनुपदमेवोक्तं 'रूपरसादिशब्दाः शरीरादिशब्दाः हस्तादिशब्दाश्च साक्षात्स्वप्रवृत्तिनिमित्ताश्रयस्यैव वाचका' इति। तथा च सर्वे शब्दा नीलारुणदेवमनुष्यादिशब्दसमाना न भवन्तीति कथं नीलादिशब्दरीत्या सर्वे शब्दा ब्रह्मवाचकाः सिद्ध्येयुः। सत्यम्। येषां शब्दानां स्वप्रवृत्तिनिमित्ताश्रयमात्रे शक्तिः सम्भवति तेषु नीलादिशब्दन्यायोपन्यासः येषां शक्तौ तदाश्रये साक्षात्त्वविशेषणमपेक्षितं तेषां ब्रह्मवाचकत्वं न नीलादिशब्दन्यायेन सिद्ध्यति। किंतु 'सर्वो वै रुद्र' इत्यादिसामानाधिकरण्यं बहुभवनसङ्कल्पो नामरूपव्याकरणमिति प्रमाणैः सिद्ध्यति। अत एव भाष्ये 'तस्मात्सर्वशब्दवाच्यत्वं ब्रह्मण' इति नीलारुणादेवमनुष्यादिशब्दानामपृथक्सिद्धस्वाश्रयसामान्यवाचित्वात् ब्रह्मणः सर्वशब्दवाच्यत्वं प्रसाध्यापि निर्णीतस्य हेतोरव्यापित्वमालोच्य "सर्वो वै रुद्र' इत्यादय उपपादयन्ती"ति व्यापकानि हेत्वन्तराण्युपन्यस्तानि। एवं च रूपादिशब्दानां साक्षात्स्वाश्रय एव शक्तिरिति व्यवस्था नीलादिशब्दशक्तिवत् तस्याः घटादिपर्यन्तत्वं माभूदिति तन्मात्रव्यावर्तनार्थेति न तथा नामरूपव्याकरणश्रुत्यादिसिद्धा ब्रह्मणश्शक्तिर्व्यावर्त्यत इति सर्वं समञ्जसम्। एवमुपपादितं 'सर्वं खल्विदं ब्रह्मे'ति वाक्यस्य विवक्षितमर्थमुपसंहरति––तत इति। तद्वाक्यार्थस्य शान्तावुपयोगमाह–ततो ब्रह्मस्वरूपत्वादिति। यतः प्रपञ्चो ब्रह्मशरीरमतः प्रसिद्धतदीयदिव्यविग्रहवत्तस्य पूज्यत्वेन द्वेषतत्प्रयुक्तनिग्रहाद्यनर्हत्वात्ततो निवृत्तस्सन् ब्रह्मोपासीतेति। यद्यप्युपासनाकर्मत्वेन ब्रह्म न श्रूयते, तथाप्युपासनस्य कर्माकाङ्क्षायां शान्तिहेतूपदेशवाक्ये सन्निहितं सर्वात्मकं ब्रह्मैव तत्कर्मत्वेनान्वेति। अत एव समानप्रकरणे वाजसनेयके 'सत्यं ब्रह्मेत्युपासीते'ति श्रूयत इति भावः। ननु नामरूपव्याकरणश्रुत्याद्यनुसारेण नीलादिशब्दशक्त्यनुसारेण च सर्वशब्दवाच्यं ब्रह्म, ततः 'सर्वं खल्विदं ब्रह्मे'ति निर्देशश्चोपपद्यतां नाम, न तु ब्रह्म सर्वशरीरकम्। सर्वस्य द्रव्यगुणकर्मादिरूपस्य प्रपञ्चस्य शरीरत्वासम्भवात्। द्रव्यैकरूपं हि शरीरम्। नापि सर्वद्रव्यशरीरकं ब्रह्मेति युक्तम्। हस्तपादादिसंस्थानविशेषरहितानां काष्ठलोष्टादीनां शरीरत्वासम्भवात्। ननु, मनुष्यपशुपक्षिसरीसृपतरुगुल्मलतादिसकलशरीरसाधारणस्यैकस्यानुगतस्य संस्थानवि-

---

(१) 'पर्यन्तता' इति च–पाठः।

न्तएव ब्रह्मोपासीतेति । एतमर्थं पौराणिकी भणितिरप्यभिव्यनक्ति—विग्रहं देवदेवस्य जगदेतचराचरम् । एतमर्थं न जानन्ति पशवः पाशगौरवात् ॥ विद्येति चेतनां प्राहुस्तथाऽविद्यामचेतनाम् । विद्याऽविद्यात्मकं सर्वं विश्वं विश्वगुरोर्विभोः ॥ रूपमस्य न संदेहो विश्वं तस्य वशे यतः। सत्ये साधौ च सच्छब्दः सद्भिरेव प्रयुज्यते ॥ विपरीते त्वसच्छब्दः कथ्यते वेदवादिभिः। सचासच जगद्विश्वं शरीरं

---

शेषस्याभावात् संस्थानविशेषकृतं न शरीरलक्षणं, किं तु यस्य चेतनस्य यद्द्रव्यं सर्वात्मना धार्यं नियम्यं शेषभूतं वा तत्तस्य शरीरमिति तल्लक्षणम् । अतः प्रपञ्चस्य ब्रह्मशरीरत्वमुक्तलक्षणयोगाद्युक्तमिति चेन्मैवम् । सर्वात्मनेत्यस्य धार्यत्वादीनां तदेकप्रतिसम्बन्धित्वमर्थ इत्यन्ययोगव्यवच्छेदपरत्वाङ्गीकारे परमेश्वरस्यापि धार्यनियम्यशेषभूतास्मदादिशरीरेष्वव्याप्तेः। यावदवस्थानं तद्धार्यत्वादिनियमस्तदर्थ इत्ययोगव्यवच्छेदपरत्वाङ्गीकारेऽपि तेष्वव्याप्तेः। स्वप्नसमये शरीरान्निष्क्रान्तस्य मूर्छादशायामत्यन्ताक्षमस्य च जीवस्य शयाने शरीरे तद्धार्यत्वनियम्यत्वतच्छेषत्वाभावात् । धार्यत्वादियोग्यताविवक्षायां चैत्रशरीरस्य मैत्रादीन्प्रत्यपि शरीरत्वापत्तेः । सर्वेषामपि हि सर्वं शरीरं सर्वदा धार्यत्वादियोग्यमेव। परशरीरानुप्रवेशादिधारणहेत्वाद्यसमवधानात् परं तद्धारणाद्यभावः । तत एव पिशाचः परशरीरमनुप्रविष्टः तद्धारयति स्वाभिमतकार्येषु नियच्छति तत्प्रयुक्तसुखभोगेन तच्छेषि च भवति । भृतिग्रहणदानादिभिश्च परे परशरीरस्य धारयितारो नियन्तारश्शेषिणश्च भवन्ति । संस्कारद्रव्यसंयोजनपूर्वकं हस्तेन धृत्वाग्नौ प्रतापनेन निष्पादितेषु तत्कालमेव भक्षितेषु भक्ष्यविशेषेष्वतिव्याप्तेश्च । नैतानि लक्षणानि शरीरस्य। चैत्रप्राणाः तद्धृता चैत्रेण धार्यन्ते प्राणायामक्रियासु च नियम्यन्ते प्राणायामप्रयुक्तव्याधिनिवृत्त्यादिफलभाजस्तस्य शेषाश्च भवन्ति। न चैते तस्य शरीराणीति व्यवह्रियन्ते । प्राणेन्द्रियादिषु तत्तदभिमानिदेवतानामहमभिमानविषयतया शरीरभूतेष्वव्याप्तेश्च । प्राणेन्द्रियादयो हि प्राकृतसर्गोत्पन्नाः प्राकृतप्रलयपर्यन्तावस्थायिनः । न च तदधिदेवतानां प्रतिमन्वन्तरं नवनवानां मध्ये का चिदपि देवता यावत्प्राणेन्द्रियाद्यवस्थानं तेषां धारयित्री नियन्त्री शेषीभूता वास्ति । अतो नास्ति तल्लक्षणं येन काष्ठलोष्टादिकमपि शरीरत्वेन सङ्गृह्येत । तस्मात्प्रपञ्चस्य ब्रह्मशरीरत्वायोगात् 'यस्य पृथिवी शरीर'मित्यादिव्यपदेशस्य तन्नियम्यत्वमात्रेणौपचारिकत्वात्प्रपञ्चस्य ब्रह्मशरीरत्वेन द्वेषाद्यनर्हतया शान्तस्सन्नुपासीतेति वाक्यार्थवर्णनं न सङ्गच्छत इत्याशङ्क्य शरीरलक्षणप्रदर्शनेनोक्तवाक्यार्थोपपादकं वायुसंहितावचनमुदाहरति—तथा हीति ।विग्रहमिति छान्दसो लिङ्गव्यत्ययः। अनेन श्लोकेन सामान्यतः सर्वप्रपञ्चस्य परमेश्वरशरीरत्वं दर्शितम् । द्वितीयश्लोकेन विशिष्य चेतनाचेतनात्मकस्य तस्य तच्छरीरत्वं दर्शितम् । तस्य द्वितीयार्धे 'रूपमेव न सन्देह' इत्युक्त्या प्रपञ्चस्य तच्छरीरत्वं मुख्यमेव न त्वौपचारिकमिति दर्शितम् । तदुपपादनार्थं शरीरलक्षणसूचनपूर्वकं प्रपञ्चे तदनुगति'विश्वं तस्य वशे यत' इत्युक्त्या दर्शिता । अनेन वश्यत्वरूपं नियम्यत्वं शरीरलक्षणमिति सूचितम् । स्वामिनियम्यभृत्यादिष्वतिव्याप्तिवारणार्थं यो यद्व्यापनेन नियच्छति तत्तस्य शरीरमिति तल्लक्षणं विशेषणेन परिष्कर्तुं द्वितीयार्धे विभोरिति विशेषणेन तस्य स्वनियम्यप्रपञ्चव्यापकत्वमुक्तम् । तदभिप्रायेणैव तत्र नामाष्टकनिर्वचनप्रकरणेऽप्युक्तम्।

**परमेष्ठिनः ॥ वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा। शिवस्य पूजया तद्वत् पुष्यत्यस्य वपुर्जगत्॥ आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः। व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् ॥ देहिनो यस्य कस्यापि निग्रहः क्रियते यदि। अनिष्टमष्टमूर्तेस्तन्नात्र कार्या विचारणा ॥ सर्वोपकारकरणं सर्वानुग्रहणं तथा। सर्वाभ-**

---

'शिवतत्त्वादिभूम्यन्तं पृथिव्यादि घटादि च। व्याप्याधितिष्ठति शिवस्तस्माद्विष्णुरुदाहृतः ॥' इति ॥ स्वामी भृत्यासंस्पृष्टस्तं नियच्छति नाविको नावमारुह्य नियच्छन्नपि तदेकदेशे वर्तते। कृत्रिमव्याघ्रः पुमान् व्याघ्राकृतिदारुचर्मादियन्त्रमनुप्रविश्य नियच्छन्नपि न तद्व्याप्याधितिष्ठति। हस्तपादादिकं वियुक्तावस्थापन्नं कदाचित्प्रेरणादिनाधितिष्ठन्नपि व्याप्य नाधितिष्ठतीति न तेष्वतिव्याप्तिः। परस्परसंयोगविशेषरूपावस्थाविशेषापन्नं तु हस्तपादादिकं शरीरमेवेति तस्य लक्ष्यत्वात् तत्र नातिव्याप्तिः। प्राणेन्द्रियवर्गस्यापि लिङ्गशरीरान्तर्गतत्वेन लक्ष्यत्वात्तत्रापि नातिव्याप्तिः। संसारिणश्चिच्छक्तिव्याप्त्या स्वशरीरे नियम्यप्रदेशानधिष्ठायैव नियच्छन्ति। मुक्ताश्चिच्छक्तिव्याप्त्यैव विश्वमधिष्ठाय नियच्छन्तीति न क्वाप्यव्याप्तिः। इदं च जगज्जन्मादिब्रह्मलक्षणवत् कादाचित्कमुपलक्षणतया लक्षणं, न विशेषणतया। अतस्सुषुप्तशरीरस्य शरीरत्वापत्तिरिति दोषस्य नावकाशः। न चैवं सति मुक्तौ यावदधिष्ठास्यति चैत्रस्तावतस्तं प्रति संसारावस्थायामपि शरीरत्वापत्तिर्दोषः। इष्टापत्तेः। अत एव मनुष्यादिशरीरमात्रविषयपरिच्छिन्नाहंभावस्य भ्रान्तिरूपत्वं भाष्ये तत्रतत्राविष्कृतम्। इदमेव शरीरलक्षणं सूचयितुं 'यः पृथिव्यां तिष्ठ'न्नित्याद्यन्तर्यामिब्राह्मणे परमेश्वरस्य पृथिव्यादिषु बहिरन्तश्च व्याप्तिदर्शनपूर्वकं पृथिव्यादेस्तन्नियम्यत्वमुक्तम्। एवं परमेश्वरस्य सर्वप्रपञ्चशरीरकत्वे लक्षणमुखेन सिद्धे साधुष्विवासाधुष्वपकारिष्वपि परमेश्वरशरीरत्वभावना द्वेषनिग्रहबुद्ध्यादित्यागोपयोगिनी कार्येति 'सत्ये साधौ चे'ति गाधारूपेण श्लोकेन दर्शितम्। एवं प्रपञ्चपरमेश्वरयोः शरीरशरीरिभावे सति यथा परमेश्वरः पूजया तुष्यति एवं प्रपञ्चानुग्रहेण परमेश्वरस्तुष्यतीति सूचयितुं 'वृक्षस्य मूलसेकेने'ति श्लोकेन दृष्टान्तांश उपन्यस्तः। लिङ्गपुराणादिषु परमेश्वरमूर्त्यष्टकपरिगणनप्रकरणे 'भूम्यम्भोऽग्निमरुद्व्योमभास्करा दीक्षितश्शशी'ति विशिष्य यज्वनां परिगणनात् तद्व्यतिरिक्तचेतनानां परमेश्वरशरीरत्वं नास्तीति यज्वस्वेव परमेश्वरशरीरत्वभावनया द्वेषनिग्रहादिबुद्धिस्त्यक्तव्येति शङ्कावारणार्थं 'मात्मा तस्याष्टमी मूर्ति'रिति श्लोकेन सर्वचेतनानां तच्छरीरत्वं विशिष्य दर्शितम्'। अनेनैव श्लोकेन मूर्त्यष्टकमध्ये विशिष्य भूतानां परिगणनात् अन्येषामचेतनानां तच्छरीरत्वं नास्तीति शङ्कापि 'विश्वं तस्माच्छिवात्मक' मित्युक्त्या निराकृता। सर्वेषामात्मनां परमेश्वरशरीरत्वे हि भूतव्यतिरिक्तमायाकालनियत्याद्यभिमानिचेतनानामपि तच्छरीरत्वसिद्धौ तन्नियम्यानां मायाकालाद्यचेतनानामपि कैमुतिकन्यायेन परमेश्वरनियम्यत्वं सिद्ध्यति। किमर्थं तर्हि परमेश्वरस्य मूर्त्यष्टकपरिगणने केषुचित्पुराणेषु चेतनस्थाने यज्वनां परिगणनं सर्वेष्वपि पुराणेष्वचेतनस्थाने भूतानां परिगणनम्। उच्यते। नेदं परिसङ्ख्यार्थं परिगणनं, किंत्वर्चनोपयोगिभवशर्वरुद्रादिनामभेदविधानार्थम्। यथा सप्तरात्रादीनामहर्गणानां दीक्षणीयादिष्वहरन्तेषु सत्स्वपि 'ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्यआयुरुक्थ्यः अभिजिदग्निष्टोमः विश्वजिदग्निष्टोमः सर्वजिदग्निष्टोमस्सर्वस्तोमोऽतिरात्र' इत्यादिवाक्यैर्विशिष्य सौ-

**यप्रदानं च शिवस्याराधनं विदुः ॥ इत्यादिका' । अतः सर्वाकारत्वात् ब्रह्मणः**

---

त्यानामह्नामनुकीर्तनं धर्मातिदेशोपयोगि ज्योतिष्टोमगवायुरादीनामभेदविधानार्थम् । अथवा 'स्थानेष्वेतेषु ये रुद्रं ध्यायन्ति प्रणमन्ति च । तेषामष्टतनुर्देवो ददाति परमं पद'मिति वाक्यशेषानुसारादुपासनाविधानार्थम् । यथा प्राणेष्वेकादशसु सत्स्वपि विद्याविशेषे 'सप्त प्राणाः प्रभवन्ति तस्मा'दिति तेषां सप्तसङ्ख्याकीर्तनं तत्रत्योपासनाविशेषलाभार्थम् । अथवा सर्वेष्वपि लैङ्गादिपुराणेषु मूर्त्यष्टकपरिगणने पृथिव्यादेरेकैकस्या मूर्तेस्सर्वलोकोपकारकत्वेन स्तुतिदर्शनात् स्तुत्यर्थं विशिष्य परिगणनम् । यथा सर्वासु विद्यासु सतोऽप्यर्चिरादिमार्गस्य पञ्चाग्निविद्यायामुपकोसलविद्यायां च विशिष्य कीर्तनं स्तुत्यर्थम् । एवं च जगन्मूर्तेः परमेश्वरस्याष्टमूर्तिरिति नामाप्यष्टानां मूर्तीनां केनचिद्विशेषेणोपपद्यते । यथा षड्विंशताऽहोभिर्निर्वर्त्यस्यापि ऋतोर्द्वादशाह इति नाम सौत्यानामह्नां प्राधान्येन विशेषणं यथा वा षडग्निगोचराया विद्यायाः पञ्चाग्निविद्येति नाम पञ्चानामग्नीनां सम्पादकत्वेन विशेषणम् । प्रपञ्चेनायमर्थोऽस्माभिश्शिवतत्त्वविवेके निरूपितो द्रष्टव्यः । एवं परमेश्वरस्यासङ्कुचितसकलप्रपञ्चशरीरकत्वसिद्धेः क्वचिदपि द्वेषेण निग्रहबुद्धिर्न कार्या, किंतु शिवमूर्तित्वबहुमानेन शिवाराधनरूपानुग्रहबुद्धिरेव कार्येति 'देहिनो यस्य कस्यापी'त्यादिश्लोकद्वयेन दर्शितम् । उपपादितं 'सर्वं खल्वि'त्यादिवाक्यार्थवर्णनमुपसंहरति—अत इति । अत्रेदं चिन्त्यते । 'सर्वं खल्विदं ब्रह्म तज्जला'निति श्रुतिवाक्यस्य सर्वमिदं जगत् ब्रह्माधीनजन्मस्थितिध्वंसवत्त्वात् सागरबुद्बुदन्यायेन ब्रह्मापृथक्सिद्धमित्यर्थे तात्पर्यं वर्णयित्वा प्रपञ्चस्य ब्रह्मापृथक्सिद्धिमात्रेण कथं ब्रह्मप्रपञ्चशब्दयोर्भिन्नार्थवाचिनोस्सामानाधिकरण्यमित्याकाङ्क्षायां तदुपपादनार्थमपृथक्सिद्धप्रकारवाचिशब्दानां प्रकारिपर्यन्तत्वं व्युत्पादितम् । इदं व्यधिकरणम् । प्रपञ्चे ब्रह्मशब्दप्रवृत्त्युपपादनाय प्रकारिवाचिशब्दानामपृथक्सिद्धप्रकारपर्यन्तत्वं हि व्युत्पादनीयम् । न च प्राचीनग्रन्थस्यापि ब्रह्म स्वापृथक्सिद्धसर्वप्रपञ्चरूपप्रकारविशिष्टमिति श्रुत्यर्थवर्णन एव तात्पर्यं न तु सर्वं जगद्ब्रह्मापृथक्सिद्धमिति श्रुत्यर्थवर्णन इति शङ्कनीयम् । 'तज्जलानिदंसर्वंब्रह्माधीनजन्मस्थितिध्वंसकमेतत्सर्वं चिदचिद्रूपं ब्रह्म ख' ल्विति भाष्यस्य जगद्ब्रह्मणोःप्रथमचरमनिर्देशेन खलुशब्दस्योपदिश्यमानार्थप्रसिद्धिद्योतकत्वसिद्धये भिन्नक्रमयोजनेन च सर्वं ब्रह्मापृथक्सिद्धमिति श्रुत्यर्थवर्णनपरत्वस्य स्पष्टं प्रतीतेः । न च प्रकारवाचिशब्दानां प्रकारिपर्यन्तत्वस्याग्रे यत्नेन व्युत्पाद्यमानस्य वैयधिकरण्यपरिहाराय प्राचीनग्रन्थगतं प्रथमचरमनिर्देशादिमात्रमन्यथा योजनीयमिति वाच्यम् । श्रुतौ सर्वशब्दस्य सर्वजगदपृथक्सिद्धब्रह्मपर्यन्तत्वकल्पने तज्जलानित्यस्यानन्वयापत्तेः । न हि तस्य ब्रह्मविशेषणतया पदार्थैकदेशे जगत्यन्वयस्सम्भवति । नापि ब्रह्माधीनजन्मस्थितिध्वंसरहिते ब्रह्मण्यन्वयस्सम्भवति । न च 'तज्जला'नित्यस्यापि ब्रह्माधीनजन्मस्थितिध्वंसवज्जगदपृथक्सिद्धब्रह्मपर्यन्तत्वं वाच्यम् । तथा सति सर्वमिदं जगत् ब्रह्माधीनजन्मस्थितिध्वंसवत्त्वात्तदपृथक्सिद्धं तदपृथक्सिद्धत्वात्तद्व्यपदेशार्हमित्येवं सर्वं ब्रह्मेति समानाधिकरणनिर्देशोपपादकतया तज्जलानित्यस्यान्वयाभावप्रसङ्गात् । न चेष्टापत्तिः । यद्यतो जायते येनैव हेतुनावतिष्ठते यत्रैव लीयते तत्तस्मात्स्वजननादिकारणान्न व्यतिरिच्यते तदपृथक्सिद्धमेव भवतीति सा-

मान्यव्याप्तौ यथा सागरे सम्पन्नजन्मस्थितिविलयं बुद्बुदकदम्बकं तद्रूपमेव दृश्यत इति दृष्टान्तोपपादनेन सागरबुद्बुदनिकरस्य सागरापृथक्सिद्धतया सर्वोऽयं सागर इति सागरव्यपदेशार्हत्ववज्जगतस्सर्वस्य ब्रह्मापृथक्सिद्धतया ब्रह्मव्यपदेशार्हत्वमिति 'सर्वं ब्रह्मे'ति समानाधिकरणनिर्देशोपपादकतया 'तज्जला'नित्येतदन्वयस्फुटीकरणात्। तस्मा'त्सर्वं खल्विदं ब्रह्मे'तिवाक्यार्थवर्णनं पूर्वोत्तरविरोधादसङ्घटितमिव प्रतिभाति। एवं 'ततो ब्रह्मस्वरूपत्वात्प्रपञ्चस्य द्वेषाद्यविषयत्वात् शान्त एव ब्रह्मोपासीतेति' वाक्यार्थवर्णनमपि। 'तज्जला'निति हेतुना हि ब्रह्मप्रपञ्चयोस्सागरबुद्बुदन्यायेनापृथक्सिद्धिमात्रसिद्धिः प्राक्समर्थिता। न पुनः प्रपञ्चस्य ब्रह्मरूपत्वसिद्धिः। तदनन्तरमुदाहृतेन 'विग्रहं देवदेवस्ये'ति पुराणवचनेन तत्सिद्धिरिति चेत्। किं ततः। न हि तावता 'तज्जला'निति हेत्वविषयतया 'सर्वं खल्विदं ब्रह्मे'ति वाक्येनास्पृष्टं तत्तदनन्तरमितिकरणेन हेतूकर्तुं शक्यम्। तस्मात्सर्वमिदं श्रुतितात्पर्यवर्णनमसङ्घटितमिवाभाति। अत्रेदं समाधानम्। 'सर्वं खल्विदं ब्रह्मे'ति वाक्येन स्वार्थे प्रतिपादिते कुत स्सर्वमिदं ब्रह्मेति भिन्नयोरभेदानुपपत्त्या तदुपपादकहेत्वाकाङ्क्षायां हेतुगर्भविशेषणसमर्पकं 'तज्जला'निति वाक्यं पश्चात्प्रवर्तते। 'पर्वतो वह्निमा'निति वाक्यानन्तरं 'यतो धूमवा'निति वाक्यवत्। न तु तज्जलान् सर्वमिदं ब्रह्मेति प्रथममेव सर्वविशेषणतयान्वेति। प्रतिज्ञावाक्यानन्तरमेव हेत्वाकाङ्क्षोदयात् सर्वं ब्रह्मेति वाक्येन ब्रह्मणो बुद्धिसन्निधानसम्पादनाभावे तत्पदस्य ब्रह्मपरामर्शित्वासम्भवात्। ततश्च 'तज्जला'निति हेतुवाक्ये विशेष्यसमर्पकतया सर्वपदमनुषञ्जनीयम्। तन्निष्कृष्टप्रपञ्चपरमिति तज्जलानित्यस्यान्वयोपपत्तिः। एवं 'तज्जला'निति सर्वस्य ब्रह्माधीनजन्मस्थितिलयवत्त्वकीर्तनेन ब्रह्मणस्सर्वप्रपञ्चजन्मस्थितिलयकारणत्वमपि सिद्ध्यतीति सोऽत्र हेतुः। तस्य हेतोः ब्रह्म सर्वात्मेति ब्रह्मणस्सर्वशरीरकत्वं साध्यम्। यद्यपि सर्वस्य ब्रह्मशरीरत्वे साध्येऽभ्युपगम्यमाने 'तज्जला'नित्यस्य श्रौतार्थ एव हेतुर्भवति। प्रथमचरमश्रुतयोरुद्देश्यविधेयभावव्यवस्थाप्याहृता भवति। प्रपञ्चे ब्रह्मशरीरत्वस्य तस्मिन्द्वेषाद्यभावहेतोः 'सर्वं खल्विदं ब्रह्मे'त्यतः साक्षाल्लाभश्च भवतीति श्रुत्यनुषक्तसर्वब्रह्मशब्दयोरैकार्थ्यं च लभ्यते। तथापि ब्रह्मश्रुतिविरोधान्न तथाभ्युपगमो युक्तः। ब्रह्मश्रुतिर्हि ब्रह्मशरीरभूतप्रपञ्चपरतां नीता पीडिता स्यात्। सर्वश्रुतिस्तु सर्वशरीरकब्रह्मपरतां नीतापि न पीडिता भवति। अपृथक्सिद्धप्रकारवाचिनां प्रकारिपर्यन्तत्वस्य शरीरवाचिनां शरीरिपर्यन्तत्वस्य च व्युत्पत्तिसिद्धत्वात्। ततश्च ब्रह्मश्रुत्यनुग्रहाय 'तज्जला'नित्यत्र समानसंवित्संवेद्यस्यार्थान्तरस्य हेतुत्वेन ग्रहणमुचितम्। न हि तत्र श्रौतार्थस्य हेतुत्ववाचिनी पञ्चमीविभक्तिरस्ति। किं तु योग्यतामात्रेण हेतुत्वं ग्राह्यम्। योग्यता तु श्रौतार्थसमानसंवित्संवेद्येऽर्थान्तर एव ब्रह्मश्रुत्यनुसारेणावधार्यते। श्रुतानुषक्तसर्वब्रह्मशब्दयोरैकार्थ्यस्यापि न हानिः। प्रपञ्चवाचिशब्दप्रवृत्तिनिमित्तानां साक्षात्परंपरासाधारण्येनापृथक्सिद्धस्वाश्रयमात्रे शब्दप्रवृत्तिनिमित्ततायास्समर्थितत्वेन सर्वशब्दः प्रपञ्चे ब्रह्मणि चाभिधेये प्रवृत्तिनिमित्तभेदाभावात् प्रपञ्चब्रह्मणोरुद्देश्यविधेयभावज्ञापकः। पदयोः प्रथमचरमभावस्तु वाक्यप्रमाणरूपत्वाद्ब्रह्मश्रुत्यनुग्रहाय बाध्यः। 'सर्वं खल्विदं ब्रह्मे'त्युक्तार्थस्य हेतुसमर्पकस्येतिकरणस्य श्रुतित्वेऽपि ब्रह्मश्रुतिगर्भवाक्ये प्रवृत्तिमपेक्ष्य तदर्थस्येतिकरणेन हेतुत्वं वक्तव्यमिति प्रथमप्रवृत्तब्रह्मश्रुत्यनुग्रहाय ब्रह्मणस्सर्वशरीरत्वे प्रतिपाद्यमाने तत्समानसंवित्संवेद्यं सर्वस्य ब्रह्मशरीरत्वं तेन हेतुतयोच्यत इति समर्थनीयम्।

**'सर्वं ब्रह्म' इति शान्त उपासीत इति' समञ्जसमेव । तस्मादुपास्यत्वेनोपक्रमगतं ब्रह्मैव मनोमयत्वादिधर्मकम् । न च मनोमयत्वादिकं संसारिणो लक्षणम् । उपास्याकारपरिग्रहादस्य परिच्छेदसंभवात् ।**

---

यद्यपि सागरबुद्बुदन्यायाश्रयणे 'तज्जला'निति हेतुना ब्रह्मप्रपञ्चयोरपृथक्सिद्धिमात्रं सिद्ध्यति । तथापि 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'अन्तः प्रविष्टः शास्ता जनानां' 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' इत्यादिश्रुत्यन्तरालोचने तज्जत्वसमानसंवित्संवेद्येन तत्स्रष्टृत्वेन तदनत्वसमानसंवित्संवेद्येन तत्प्राणयितृत्वेन च ब्रह्मणः सर्वमनुप्रविश्य तन्नियन्तृत्वलक्षणं तच्छरीरकत्वमपि सिद्ध्यति । तस्मात्तज्जलानिति हेतुवाक्यलब्धेन सर्वस्रष्टृत्वादिना 'सर्वं खल्विदं ब्रह्मे'ति वाक्यप्रतिपाद्यं ब्रह्मणस्सर्वशरीरकत्वं तद्वाक्यलब्धेन प्रपञ्चस्य ब्रह्मशरीरत्वेन द्वेषाद्यनर्हत्वं चोपपादितं भवतीत्युपपन्नमिदमुदाहृतश्रुतितात्पर्यवर्णनम् । 'तज्जलानिदं सर्व' मित्यादिभाष्ये विधेयस्य पश्चान्निर्देष्टव्यस्य प्रथमनिर्देशः । 'सर्वं खल्विद'मित्यादिव्याख्येयश्रुत्यनुसारेण प्रसिद्धिद्योतकस्य खलुशब्दस्य ब्रह्मान्वयतया योजनं ब्रह्मण उद्देश्यत्वज्ञापनाय । अत एवहि 'आकाशो वै नाम नामरूपयोर्निर्वहिते'तिश्रुत्यन्तरे 'वै नामेति' प्रसिद्धिद्योतकनिपातसमुदायस्योद्देश्यान्वयो दृष्टः । यदि तूद्देश्यस्य वस्तुतः प्रसिद्धिमात्रेणोद्देशतोपपत्तेः विधेयस्यैव स्थलान्तरसिद्ध्युपन्यासेनोपपादनीयत्वात्तत्र 'वै नामे'तिनिपातसमुदायः उद्देश्यान्वय्यपि विधेयत्वेन प्रसिद्धिद्योतको न स्वरूपेणेति मतं तर्ह्यत्रापि तथास्तु । 'तज्जला'नित्यस्य हेतुसमर्पकवाक्यान्तरत्वेऽपि सर्वविशेषणं तदिति प्रदर्शनाय तज्जलानिदं सर्वमित्येकवाक्यतयोपन्यासः । यद्वा भिन्नवाक्यतयैवोपन्यासः । 'तज्जलानिदं सर्व'मिति प्रथमं हेतुवाक्योपन्यासः । प्रतिज्ञावाक्यगतस्येदंशब्दस्य तत्र प्रयोजनाभावेनानपेक्षितत्वात् हेतुवाक्ये विशेष्यवाचकपदापेक्षणाच्च 'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारण'मिति वार्तिकोक्तरीत्या हेतुवाक्येऽन्वयः । एवं च सर्वशब्दस्यानुषङ्गो न कार्य इत्यभिप्रेत्य सर्वमिदमित्यन्वयो दर्शितः । इदंशब्दः प्रतिज्ञावाक्यप्रस्तुतसर्वपरामर्शीति ज्ञापनार्थं सर्वपदं न तु तद्व्याख्येयपदम् । ततश्च ब्रह्माधीनजन्मस्थितिध्वंसकमेतदित्येतावदेव हेतुवाक्यव्याख्यानं सर्वं चिदचिद्रूपमिति प्रतिज्ञावाक्यगतसर्वपदव्याख्यानं चिदचिदात्मकं सर्वं वस्तुरूपमपृथक्सिद्धधर्मशरीरं वास्येति तथोक्तम् । न च प्रतिज्ञावाक्यगतसर्वशब्दस्य ब्रह्मपर्यन्तत्वे तदर्थपरामर्शिन इदंशब्दस्यापि तत्पर्यन्तत्वनियमः । तज्जलानित्येतदन्वयौचित्येन विशेषणभूतप्रपञ्चमात्रपर्यवसायित्वोपपत्तेः । 'त्रेधा तंडुलान्विभजे'दित्यत्र दार्शिकहविर्मात्रोपलक्षकस्य तण्डुलपदस्यार्थैकदेशानां तण्डुलानां मध्यमादिवाक्यगतसर्वनामभिः परामर्शदर्शनात् । सागरबुद्बुददृष्टान्तेन ब्रह्मप्रपञ्चयोरपृथक्सिद्धिमात्रं भाष्ये कण्ठत उक्तम् । तयोरात्मशरीरभावः श्रुत्यन्तरालोचनेन सिद्ध्यतीति कण्ठतो नोदाहृतः । तस्मात्सर्वमिदं श्रुत्यर्थवर्णनं समञ्जसमेव । निर्णीतमर्थं प्रकृतसाध्ये हेतुत्वेन सङ्गमयति—तस्मादिति । ननु मनोमयत्वादिकं जीवलिङ्गं ब्रह्मविशेषणत्वेन नान्वेति । इत्युक्तमनूद्य निराकरोति—नचेति । उपास्याकारेति । 'मनोमयः प्राणशरीर'इत्यारभ्य 'एतमितः प्रेत्याभिसम्भवितास्मी'त्यन्तेन सन्दर्भेणोपास्याकारः परिगृह्यत इति तावदभ्युपगन्तव्यम् । अन्यथा तदनुक्रमणवैयर्थ्यात् । न च सांसारिकं मनःप्राणोप-

**यदुक्तं क्रतुमयस्य जीवस्य प्रस्तुतत्वान्मनोमयो जीव इति, तदयुक्तम्, उत्प-**

करणकत्वं हेयमुपास्याकारो भवितुमर्हति। अव्यवहितवाक्योक्ततत्क्रतुन्यायविरोधात्। अतः 'प्राणारामं मनआनन्द' मिति श्रुतिसिद्धं ब्रह्मणो यन्निरतिशयानन्दानुभवसाधनमनश्शालित्वं यच्च प्राणन्तीति व्युत्पत्त्या प्राणशब्दोक्तानां संसारिणां नियमने सामर्थ्यं तदुभयं मनोमयत्वं प्राणशरीरत्वं चेति तत एव लिङ्गात् संसारिव्यावृत्तमनोमयत्वादिविशिष्टं ब्रह्मेति परिच्छेदस्सम्भवतीत्यर्थः । ननु मनोमयत्वादिशब्दानां तच्छब्दनिर्दिष्टोपासकविशेषणत्वमेव युक्तम्। लिंगविभक्त्यैकरूप्येण तत्समभिव्याहृतत्वात्। तथात्वेऽप्युपास्याकारत्वमविरुद्धम्। तस्यैवोपास्यत्वपर्यवसानादित्युक्तमनूद्य निराकरोति---यदुक्तमिति । उपासके संसारदशायामसम्भवदप्युक्तरूपमुपादेयं मनोमयत्वं प्राणशरीरत्वं च मुक्तौ सम्भवति। 'मनसैतान्कामान्पश्यन् रमते य एते ब्रह्मलोक' इति श्रुतेः सार्वात्म्यफलश्रुतेश्चेति शङ्कितुर्हृदयम् । उत्पत्तिशिष्टेति। यथा 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन' मित्यत्रामिक्षावरुद्धे वैश्वदेवयागे वाजिनरूपद्रव्यान्तरप्रवेशो न सम्भवति। उत्पत्तिवाक्यसंसिद्धं कर्म सर्वमनूद्यते। 'न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तर' मिति गुणाधिकरणोक्तन्यायात्। एवमिहापि ब्रह्मरूपोपास्यावरुद्धायामुपासनायां जीवरूपोपास्यान्तरप्रवेशो न सम्भवतीत्यर्थः। अयमाशयः। 'मनोमयः प्राणशरीर' इत्यादीनां प्रथमान्तानां न तत्पदोपात्तजीवविशेषणसमर्पकतयान्वयः। किं तु 'स क्रतुं कुर्वीते' त्यनूदितसार्वात्म्यब्रह्मोपासनां प्रति प्रकारसमर्पकतया। 'एतमितः प्रेत्याभिसंभवितास्मी' त्येतदनन्तरमितिकरणबलादनेन प्रकारेण 'क्रतुं कुर्वीते' त्यन्वयप्रतीतेः तथान्वये सत्येव 'एष म आत्मान्तर्हृदय' इति वाक्यसामञ्जस्याच्च। तस्योपासनाप्रकाराभिनयपरत्वं विना स्वतन्त्रश्रुतिवाक्यत्वे म इत्यस्यान्वयसाञ्जस्याभावात्। तथा सत्येव च 'एष म आत्मान्तर्हृदय' इति वाक्यानां त्रिः पाठस्य 'सर्वकर्मा सर्वकाम' इत्यादिवाक्यानां द्विःपाठस्य च 'प्रायणीयं प्रथममहः चतुर्विंशं द्वितीयं चत्वारोऽभिप्लवाः षडहा एकः प्रष्ठ्यः षडहस्स मासस्स द्वितीयः स तृतीयस्स चतुर्थस्स पञ्चमस्त्रयोऽभिप्लवाः षडहा एकः प्रष्ठ्यष्षडह' इत्यादौ गावामयनिकाहःक्लृप्तिवाक्ये अभिप्लवषडहादिशब्दानामसकृत्पाठस्य [१]तत्रतत्र स्थाने षडाहाद्यनुष्ठानाभ्यासार्थत्वेनेव तत्रतत्र स्थाने हृदयान्तर्वर्तित्वाद्यनुसन्धानाभ्यासार्थत्वेन सार्थक्यात् तेषां वाक्यानामुपास्ये तत्तद्धर्मसद्भावमात्रबोधकश्रुतिवाक्यत्वे तद्वैयर्थ्यात्। न च विहितोपासनानुवादेन मनोमयत्वाद्यनेकगुणविधाने वाक्यभेदः। तेषामितिकरणोक्तेन प्रकारभावेनैकरूपेण विधेयत्वात्। नचविधेयतावच्छेदकरूपैक्ये विधेयपदार्थश्रुतरूपान्तरभेदो वाक्यभेदावहः। अत एव 'यदग्नये च प्रजापतये च सायं जुहोती' तिवाक्यस्याग्निहोत्रदेवतात्वेनाग्निप्रजापतिविधायकत्वपक्षे चतुर्थीद्वयेनप्रातिपदिकार्थगतदेवतात्वकल्पकेन लाघवादुभयानुगतकदेवतात्वकल्पनादग्निप्रजापत्योर्विधेयताच्छेदकैक्येन वाक्यभेदःपरिहृतः। 'गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणे'तिज्योतिष्टोमदक्षिणाविधिवाक्ये गवादीनां दक्षिणात्वेनैकेन रूपेण

(१) 'तत्रतत्र स्थाने षडहाद्यनुष्ठानाभ्यासार्थत्वे तत्रतत्र स्थाने षडहाद्यनुष्ठानाभ्यासार्थत्वेन सार्थक्यवत् तत्रतत्र स्थाने हृदयान्तर्वर्ति' इति-च-पाठः।

**त्तिशिष्टब्रह्मावरुद्धायामुपासनायामवान्तरप्राप्तस्य जीवस्य प्रवेशयितुमशक्य-**

---

विधेयत्वात्तथैव वाक्यभेदः परिहृतः। गवाद्यात्मिकैकैव दक्षिणा ज्योतिष्टोमस्य न तु गवादयः प्रत्येकं दक्षिणा इति च सिद्धं कृत्वा 'अथैष भूर्वैश्वदेवः तस्य धेनुर्दक्षिणे'तिभूनामकतद्विकृतिविशेषविहितया धेनुदक्षिणया सर्वेषां गवादीनां प्राकृतदक्षिणाद्रव्याणां निवृत्तिः न तु गोत्वलिङ्गेन गोमात्रस्येति तस्य धेनुरिति 'गवां प्रकृतौ विभक्तचोदितत्वा'दित्यधिकरणे निरूपितम्। यद्वा श्रुताविति शब्दः क्रमरूपं मनोमयत्वादीनां प्रकारमाचष्टे इति अनेन मनोमयत्वाद्यनुसन्धानक्रमेण क्रतुं कुर्वीतेति। तथा च विततिरूप एकः क्रम एवात्र विधेयः। मनोमयत्वादीनामुपास्यगुणानां विधानं तु तत्क्रमविधानादाक्षेपतो लभ्यते प्रष्ठगतसर्वताविधानादिवत्प्रष्ठानाम्। अथवा मनोमयत्वाद्यनेकगुणविशिष्ट उपासनाप्रयोगोऽत्र विधीयते। उपासनाया विहितत्वेऽपि सम्भवति तत्प्रयोगस्याविहितस्य विधानम्। यद्यपि प्रयोगमन्तरेणोपासनस्यानिष्पत्तेः प्रयोगविधिरर्थाल्लभ्यते, तथाप्येकेन वाक्येनानेकगुणविधिनिर्वाहाय प्रागेवाक्षेपप्रवृत्तेरनेकगुणविशिष्टस्य प्रयोगस्य विधानमुपपद्यते। एवं प्रयोगविधिमाश्रित्यैवाभ्युदयेष्टिगतमध्यमादिवाक्येषु वाक्यभेदं केचन परिहरन्ति। तथा हि—'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधातण्डुलान्विभजेद्ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरु'मिति श्रूयते। चतुर्दश्याममावास्याभ्रान्त्या दर्शोपक्रमं कृतवतः तत्प्रायश्चित्तविधानमिदम्। अत्र त्रेधा तण्डुलान्विभजेदिति तण्डुलानां मध्यमादिभावेन त्रेधाविभागो न विधीयते मध्यमादिवाक्यैस्तत्सिद्धेः। किं तु सर्वेषां दार्शिकहविषां पूर्वदेवताभ्योऽपनयो विधीयते। विभजेदित्युक्ते ह्ययमर्थोऽवगम्यते। यानि संयुक्तानि तानि विभजेदिति। तण्डुलादीनि च हवींषि देवताभिस्संयुक्तानि। अतस्तण्डुलशब्दो विभागकर्मत्वेनार्थतः प्राप्तानां दार्शिकहविषामुपलक्षक इति तेषां पूर्वदेवतापनयो विधीयत इति युक्तम्। अपनीतपूर्वदेवतानां तेषां हविषां मध्यमादिवाक्यैर्देवतान्तरसंयोजनं क्रियते न तु द्रव्यदेवताविशिष्टं कर्मान्तरं विधीयत इत्यभ्युदयपेटिकायां निरूपितम्। तत्र मध्यमादिवाक्यानां प्रकृते दर्शकर्मणि देवतान्तरसंयोजनपरत्वे वाक्यभेदः प्रसज्यते। कथं दर्शद्रव्येष्वग्न्यादिदेवतानां विधानं देवतासु दातृत्वादिगुणविधानं चेति त्रिष्वपि वाक्येषु तावदेको वाक्यभेदः। दधिशृतवाक्ययोः स्थविष्ठानां दध्यणिष्ठानां शृतं चाधिकरणविधेयमित्यपरो वाक्यभेदः। तयोः स्थविष्ठानामणिष्ठानां च चरुभावोऽपि विधेय इत्यन्यो वाक्यभेदः। यद्युच्येत नैते वाक्यभेदाः प्रसरन्ति। कथम्। दातृप्रदातृशिपिविष्टशब्दानामग्न्यादिपदसामानाधिकरण्यात् पदद्वयप्रतिपादितं विशिष्टं देवताकारकमेकमेव विधेयं न तु देवतास्तद्गुणाश्च प्रत्येकं विधेयाः। अभ्युदयेष्टिप्रकरणे 'सह श्रपयती'ति वचनमस्ति। तदेवतैक्यात् तद्धि स्थविष्ठयोः शृताणिष्ठयोश्च सहपाकविषयम्। ततश्च स्थविष्ठानामणिष्ठानां च तण्डुलानामल्पत्वाद्दधिशृतयोर्भूयस्त्वाच्च तण्डुलानां चरुत्वं दधिशृतयोरधिकरणत्वं चार्थात्प्राप्नोति। अर्थप्राप्तं च तत्सर्वमनूद्यते। तत्तद्गुणविशिष्टं देवताकारकमेव विधीयते मध्यमानां तण्डुलानामग्निर्देवता स्थविष्ठानां दध्नः चन्द्रः प्रदाता अणिष्ठानां शृतस्य च विष्णुः शिपिविष्ट इति। अतो नैवं वाक्य-

भेद आप्नोति । तथापि प्रकारान्तरेण वाक्यभेदः स्यादेव । दधिवाक्ये दध्नि स्थविष्ठेषु च प्रत्येकं देवतासंयोजनात् । इयांस्तु भेदः । पूर्वस्मिन्पक्षे स्थविष्ठेषु देवता प्रणीता कार्ये दधि च विधेयं क्षोदिष्ठेषु देवता प्रणीता कार्ये शृतं च विधेयमिति विधेयभेदाद्वाक्यभेदः । 'सह श्रपयती'ति वाक्यसत्त्वमभ्युपगम्य प्रवृत्ते द्वितीयपक्षे स्थविष्ठेषु शृतेषु च दध्नि च क्षोदिष्ठेषु देवता विधेयेत्युद्देशभेदाद्वाक्यभेद इति । एवं प्रसक्तं वाक्यभेदमनेकगुणविशिष्टप्रयोगविध्याश्रयणेन परिहरन्ति । तत्र प्रयोगविध्याश्रयणपक्षे दूषणान्यस्माभिर्विधिरसायने दर्शितानि । तथापि यत्रानेकगुणश्रवणेऽपि प्रकृतहानाप्रकृतकल्पनापूर्वककर्मान्तरकल्पनागौरवपरिहारार्थं प्रकृतकर्मविषयत्वं वक्तव्यं तत्र वाक्यभेदपरिहारार्थं प्रयोगविध्याश्रयणं दृष्टमित्येतावति दृष्टान्तोऽयमुपन्यस्तः । अथवा । अस्मिन्वाक्ये विशिष्य का वाक्यभेदशङ्का । दहरविद्यादिष्वपि ह्युत्पत्तिवाक्यबहिर्भूतान्यपहतपाप्मत्वाद्यनेकगुणश्रवणानि दृश्यन्ते । तेषु यदि वाक्यभेदः सोढः इहापि स सोढव्यः । यदि तु वर्णितानां वाक्यभेदपरिहारोपायानामन्यतमः कश्चिदन्यो वा उपायोऽन्विष्यते इहापि स एवान्विष्यतामित्यलं प्रपञ्चेन । एवं प्राग्विहितायामेवोपासनायां मनोमयत्वादिगुणवाद इति स्थिते ब्रह्मावरुद्धायां तस्यां जीवान्वयो न सम्भवतीति मनोमयत्वादीनामुपास्यगुणानां न जीवविशेषणतयान्वयः किं तु ब्रह्मविशेषणतयेति युक्तम् । ननु ब्रह्मरूपोपास्यान्वितत्वेनावगतायामुपासनायां मनोमयत्वाद्यन्वयः केन प्रमाणेनावसीयते । 'स क्रतुं कुर्वीते' त्यादिना 'अभिसंभवितास्मी'त्यन्तेन प्रकृतोपासनमनूद्य मनोमयत्वादिगततत्प्रकारसमर्पणार्थेतिकारणान्वितेन वाक्यप्रमाणेनेति चेत्तर्हि वाक्यादन्यार्थसन्निधानस्यातिदुर्बलत्वात्तेन ब्रह्मण उपास्यतयान्वयो न सिद्ध्येत् । दुर्बलमपि सन्निधानं वाक्यस्योपजीव्यत्वमात्रे प्रबलमिति चेन्न । उपासनानुवादे तद्विधानमात्रस्योपजीव्यत्वात् । न च विषयरहितमुपासनं विधातुं शक्यम् । येनोपासनविधानोपे॑युक्तं विषयसमर्पणमिति तदर्थमस्यार्थस्य सन्निधानमुपजीव्यं स्यात् । सम्भवति 'ह्यग्निहोत्रं जुहोती'ति होममात्रविधानवदुपासनामात्रविधानं विहितहोमानुवादेन द्रव्यविधानवद्विहितोपासनानुवादेनोपास्यविधानं च । तथापि सन्निधानेनोपास्यसमर्पणं प्रथमप्रवृत्तत्वाद्बलवदिति चेत् न, विषयसमर्पणार्थप्रमाणाभावं निश्चित्य ह्यन्यार्थसन्निधानतो विषयग्रहणमपेक्षणीयम् । पश्चादपि तादर्थ्येन प्रमाणावतारसद्भावे तु तन्नापेक्षणीयम् । अतस्तस्य प्रथमप्रवृत्त्युक्तिर्भ्रान्तिकृतैव । तस्मादिह नास्त्युत्पत्तिशिष्टगुणावरोध इति चेन्मैवम् । मनोमयादिवाक्येन प्रकृतोपासनायामुपास्यगतप्रकारमात्रस्य हि समर्पणं क्रियते न तु साक्षादुपास्यस्य विशेष्यस्यापि । मनोमय इत्यारभ्यान्वयिनेतिकरणेन मनोमयत्वादेः 'एतं मनोमयत्वादिविशिष्टं प्राप्तास्मी'त्येतदन्तस्य सर्वस्याप्यर्थजातस्य प्रकारतापादनात् । तथा च मनोमयत्वादिप्रकारेण किमुपासीतेति तद्विशेष्याकाङ्क्षायामाकाङ्क्षितविशेष्यसमर्पकमन्यार्थसन्निधानं वाक्यानुकूलत्वात् न वाक्येन बाध्यम् । यद्यप्युपासनोत्पत्तिवाक्ये ब्रह्मण इव तदनुवादवाक्ये जीवस्याप्यन्यार्थसन्निधानमस्ति । तथापि प्रथमश्रुतत्वादुत्पत्तिवाक्यगतत्वाच्च प्रथमं ब्रह्मान्वये सति पश्चान्न जीवान्वय इति युक्तमुत्पत्तिशिष्टगुणावरोधवचनम् । यद्यप्युत्पत्ति-

॥ १ ॥ 'पयुक्तमन्यार्थसन्निधानमप्युपजीव्यं स्यात्' इति-च-पाठः ।

त्वात्; यथा विश्वेदेवावरुद्धायामामिक्षायां वाजिनां न प्रवेशः। अतो ब्रह्मैव मनोमयत्वादिधर्मवत्त्वेनोपास्यमिति॥ उपक्रमगतं ब्रह्मैव मनोमयत्वादिविशिष्टमित्युक्ते अवान्तरसिद्धस्य जीवस्य प्रसङ्गोऽनर्थकः स्यादित्याशङ्कायामाह—

॥ सू० ॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥

सत्यसंकल्पत्वसर्वकामत्वादीनां विवक्षितानां गुणानां ब्रह्मण्येवोपपत्तेश्च

---

शिष्टगुणावरोधे सति तु श्रूयमाणं तद्विरुद्धं गुणान्तरंस्वात्मसंगतियोग्यं कर्मान्तरं गमयेदितिगुणाधिकरणन्यायः।इह तु नास्ति तथाकर्मान्तरावगतिः।जीवस्याहत्योपास्यत्वेन श्रवणाभावात्। तस्मादुत्पत्तिशिष्टगुणावरुद्धे कर्मणि न तद्विरुद्धगुणान्वय इत्येतावत्यंशे दृष्टान्ततया गुणाधिकरणन्यायोपन्यासः। तस्माच्छान्दोग्याग्निरहस्ययोस्सर्वात्मत्वेनोपक्रान्तं ब्रह्मैव मनोमयत्वादिगुणकम्। अत एव बृहदारण्यके शाण्डिल्यविद्यायां 'मनोमयोऽयं पुरुषो भास्सत्य' मित्यादिना मनोमयत्वादिगुणानां सत्यशब्दोक्तस्य सार्वात्म्यस्य च समुच्चयो दर्शित इति सर्वं समञ्जसम्॥ उत्तरसूत्रमवतारयितुमाशङ्कते—ब्रह्मैवेति। अयमाशयः। 'स क्रतुं कुर्वीते' त्यत्र 'यथाक्रतुरस्मिँल्लोके पुरुष' इति प्रकृतः पुरुषो निर्दिश्यते। तन्निर्देशो न तद्विशेषणत्वेन फलविशेषप्रतिपत्त्यर्थः। फलविशेषविशिष्टत्वेन पूर्वं तस्याप्रकृतत्वात्। नाप्युपास्यगुणानुसारिफलसामान्यप्रतिपत्त्यर्थः। तत्प्रतिपत्तेर्यथाक्रतुवाक्येनैव सिद्धत्वात्। नाप्युपासनाकर्तृपुरुषसामान्यप्रतिपत्त्यर्थः। उपासनायाः कर्तृव्यभिचारेणार्थादेव तत्सिद्धेः। अतो मनोमयत्वादीनां ब्रह्मविशेषणत्वे तन्निर्देशोऽनर्थक एव स्यात्। तेषामुपासकपुरुषविशेषणत्वे तु विशेषणप्रतिपत्त्यर्थत्वेन सार्थको भवति। अस्ति ह्यर्थसिद्धस्यापि विशेष्यस्य विशेषणप्रतिपत्त्यर्थो निर्देशः। यथा 'उमां स पश्यन्नृजुनैव चक्षुषे'ति। तस्माज्जीवनिर्देशानर्थक्यपरिहाराय मनोमयत्वादीनां तद्विशेषणत्वमभ्युपगन्तव्यम्। तथा च सत्युपास्यगुणान्वयादन्यार्थनिर्दिष्टस्यापि जीवस्योपास्यत्वमुपास्यभेदादुपासनान्यत्वं च भवदभ्युपगन्तव्यमित्याशङ्कानिवारणार्थमिदं सूत्रमिति।॥ सू॥ विवक्षितगुणोपपत्तेश्च॥ २॥ सत्यसङ्कल्पत्वेति। सत्यसङ्कल्पत्वमवितथसङ्कल्पत्वं न तु सद्विषये सङ्कल्पराहित्यम्। श्रुत्यन्तरप्रसिद्ध्यहेयगुणत्वसिद्ध्याद्यनुसारेणैकपद्यस्योचितत्वात्। तच्च स्वाभाविकं नित्याविर्भूतं ब्राह्ममेव ग्राह्यम्। न तु मुक्तौ हेत्वन्तराधीनाविर्भावम्। हेत्वाक्षेपकल्पनागौरवात्।सर्वकर्मत्वं सर्वप्रपञ्चरूपकार्यवत्त्वम्।कर्मशब्दस्य बालाक्यधिकरणन्यायेन कार्यमात्रपरत्वात्। सर्वकामत्वं सर्वं कामयत इति व्युत्पत्त्या सकलसृज्यविषयकामनावत्त्वं सर्वकल्पनानुयायिसकलभोग्यवस्तुशालित्वं वा। एतेन 'सर्वगन्धस्सर्वरस' इति व्याख्यातम्। 'सर्वमिदमभ्यात्त' इत्युपासनाकालवृत्तिसकलप्रपञ्चव्यापित्वं तात्कालिकं न तूपासकस्य मुक्तिकाले भविष्यत्तात्कालिकप्रपञ्चव्यापित्वम्। अवाकित्वमुपासनाकाले वागिन्द्रियोपलक्षितसकलेन्द्रियराहित्यम्। वाकिशब्दो वाग्वाचिनो वाक्शब्दादिनिप्रत्ययस्य तदस्यास्तीति वर्तमानार्थे विहितत्वात्। अतस्सत्यसङ्कल्पत्वादिकं ब्रह्मण्येवोपपद्यते न जीव इत्यर्थः। नन्वत्रैव प्रकरणे तत्क्रतुन्यायप्रतिपादनात्तदनुसारेण ये गुणा मुक्तौ उपासकेन प्राप्तुं शक्यास्तत्परत्वेनैव सत्यसङ्कल्पादिशब्दाः व्याख्यातव्याः न तु ब्रह्मसाधारणगुणपरत्वेनेति

**तदेवोपास्यम्, अवान्तरसिद्धस्तु जीवः उपासकः तदाकाङ्क्षायोगादिति ॥**

**इति सर्वत्रप्रसिद्धाधिकरणम् ॥ १ ॥**

चेत् न,तत्क्रतुन्यायस्य जगद्व्यापारवर्जाधिकरणानुसारेण ब्रह्मासाधारणगुणातिरिक्तगुणविषयत्वात्। अन्यथा 'एष सर्वेश्वरः एष भूतपालः एष भूतपतिः एष सेतुर्विधारण एषां लोकानामसम्भेदाये'त्यादिवाक्यैस्तासु तासु विद्यासु प्रपञ्चितानां सर्वेश्वरत्वसर्वाधारत्वसर्वकारणत्वादिगुणानामनुपास्यत्वप्रसङ्गात् ब्रह्मण्युपासनाकालेऽप्याविर्भाववतः सत्यसङ्कल्पत्वादीनुपासीनस्य मुक्तिकाले तदाविर्भावसत्तामात्रेण तत्र तत्क्रतुन्यायप्रवृत्त्युपपत्तेश्च। 'तथेतः प्रेत्य भवती'ति हि श्रूयते। न खल्विदानीमयं यथाभूतगुणः तथाभूतगुणोऽस्य पुत्रो भवितेति व्यवहारकाले पितृगुणानां पुत्रगुणानां च वर्तमानत्वभविष्यत्त्ववैषम्ये सत्यपि यथा तथेति साम्यप्रतिपादनं च दृश्यते। अपि चाहंग्रहवतीषु ब्रह्मोपासनास्वहमर्थो जीवो भाविनार्चिरादिगतिमत्त्वसत्यसङ्कल्पत्वादिनोपासनीय इति तद्विषयत्वेनापि तत्क्रतुन्याय उपपद्यते। वस्तुतस्तूपास्यप्राप्तिरूपफलविषयस्तत्क्रतुन्याय इति 'कार्यं बादरि'(ब्र०४.३.७.)रित्यधिकरणे दर्शयिष्यते। 'तं यथायथोपासते तथैव भवन्ती'ति श्रुतिस्तु परमेश्वरं भक्ताः येनयेन प्रकारेणाम्बासहितत्वार्धनारीश्वरत्वादिना वस्त्रभूषणादिविशेषेण चोपासते तेभ्यस्तथैवाविर्भवतीत्येवंपरत्वेनोपपद्यते। 'यादृशाकारयोगेन यजन्ते साधकाः स्वयम्। भासते तादृगाकारश्चिन्तामणिरिवेश्वर' इति शिवागमे श्रूयते। तस्मात्सत्यसङ्कल्पत्वादयो ब्रह्मण्येवोपपद्यन्ते। 'एतमितः प्रेत्याभिसम्भवितास्मी'त्युपास्योपासकयोः कर्मकर्तृभावनिर्देशः छान्दोग्ये'एष म आत्मान्तर्हृदय' इति वाजसनेयके 'एवमयमन्तरात्मन् पुरुषो हिरण्मय'इति तयोरसमानविभक्तिनिर्देशश्च ब्रह्मण्युपास्य एवोपपद्यते। तस्माद्बह्वाङ्गस्यानुरोधेनाकाङ्क्षितस्याप्यर्थप्राप्तस्योपासकस्यानुवादकं 'स' इति पदमित्यङ्गीकरणीयमिति भावः। यद्वा 'एतमितः प्रेत्याभिसम्भवितास्मी'त्यनन्तरं 'यस्य स्यादद्धा न विचिकित्सास्ती'ति श्रूयते। तस्यायमर्थः। अभिसम्भवितास्मीत्यन्तेन यः प्रकार उक्तः अयंप्रकारो यस्याद्धा सत्यो निश्चितस्स्यात्। न तु विचिकित्सा संशयोऽस्तीति। अत्र यच्छब्दस्य प्रतिनिर्देशसापेक्षत्वात् तत्प्रतिनिर्देशार्थः 'स क्रतुं कुर्वीते'त्यत्र तच्छब्दः। एवं मनोमयत्वाद्युपास्यगुणजाततदुपासनाक्रमोपास्यप्राप्तिरूपफलेषु यथा संशयलेशोऽपि न प्रसरति तथा श्रवणमननाभ्यां निश्चित्योपासनमारभेतेत्येवं 'स क्रतु'मित्यादे'र्न विचिकित्सास्तीत्यन्तस्यार्थः पर्यवस्यति। अस्मिन्पक्षे 'अभिसम्भवितास्मी'त्येतदनन्तरमितिशब्द उपासनाप्रकारनिर्देशकतया क्रतुवाक्येन नान्वेति। किंतूपासनापूर्वभाविश्रवणादिसाध्यनिश्चयप्रकारतया 'यस्य स्या'दित्यादिनान्वेति। मनोमयत्वादेरुपासनाप्रकारत्वं त्वर्थात्सिद्ध्यति। अन्यथा तन्निश्चयस्योपासनापेक्षितत्वायोगात्। सूत्रे विवक्षितविशेषणेन तत्क्रतुन्यायविरोधात् ब्रह्मासाधारणगुणा न विवक्षिता इति शङ्का निराकृता। ब्रह्मण्युपपत्त्या च जीवेऽनुपपत्तिर्विवक्षिता। तथा बह्वाङ्गस्यानुरोधा'त्स'इत्येतस्यैकस्यानुवादकत्वमग्रिमतच्छब्दप्रतिनिर्देशकत्वं वा कल्पयितुं युक्तमिति सूचितम्। अत्र सत्यसङ्कल्पादिशब्दस्वरसप्रतीतानां नित्याविर्भूतसत्यसङ्कल्पत्वादीनां जगत्स्रष्टृत्वाद्याक्षिप्ततया श्रुत्यन्तरप्रसिद्ध्या च ब्रह्मलिङ्गत्वेन स्पष्टानामपि पूर्वपक्षदशायामुपास्यब्रह्मगुणत्वासम्भवशङ्काकलुषितत्वादनतिस्पष्टतेति पादसङ्गतिः॥

**इति सर्वत्रप्रसिद्धाधिकरणम् ॥ १ ॥**

## अथ अनुपपत्त्यधिकरणम् ॥ २ ॥

इह सामान्येन जीवस्योपास्यत्वं नास्ति, किंतूपासकत्वमिति निरूपितम्। पुनरपि सकलजीवसमष्टिरूपहिरण्यगर्भोपादानभूतस्य नारायणस्यापि विश्वाधिकब्रह्मविषयकमुपासकत्वं, नोपास्यत्वमित्यभिधातुमिदमधिकरणमारभ्यते—

॥ सू ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

अस्य महोपनिषदि श्रूयते विषयः 'पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्। नारायणं महाज्ञेयम्' इत्यादि ॥ अत्र विश्वपतित्वादिलक्षणयुक्ततया नारायणशब्दवाच्यो मूर्त्यात्मा परमेश्वरोऽन्यो वेति संदेहः ॥ 'सहस्रशीर्षं देवम्' इत्यारभ्य सहस्रशीर्षत्वादिविधेयत्वेन नारायणस्य मूर्त्यात्मन एवोद्देश्यत्वेनाभ्यासात्, 'समुद्रेऽन्तं विश्वशम्भुवम्' इति समुद्रशायित्वादितल्लिङ्गाच, तत्पर्यायवाचकाच्युतहरिशब्दादिप्रयोगाच्च, नारायण एव मूर्त्यात्मा

---

## अथ अनुपपत्त्यधिकरणम् ॥ २ ॥

यथा शाण्डिल्यविद्यायां जीवसामान्यस्य प्रसङ्गो नोपास्यत्वेन किं तूपासकत्वेन । तथैव चेतनमध्ये सर्वोत्कृष्टस्य नारायणस्य नारायणानुवाके प्रसङ्गोऽपीति दृष्टान्तसङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति—इहेति ॥ सू ॥ अनुपपत्तेस्तु न शारीरः ॥३॥ तैत्तिरीयोपनिषदि 'पतिं विश्वस्ये'त्यादिकमुदाहृत्य तत्र विश्वपतित्वानन्येश्वरत्वादिधर्मैः प्रतिपाद्यः पञ्चकृत्याधिकारिषु मूर्त्यात्मसु पञ्चसु पञ्चमो नारायणाख्यो मूर्त्यात्मा उत मूर्त्यात्मातीतः परमेश्वर इति तयोर्मध्ये कस्य विश्वपतित्वादिकं युक्तमित्यनवधारणात्संशयमाह—महोपनिषदीत्यादिना। यद्यपि नारायणस्तत्र विश्वपतित्वादिधर्मैः प्रतिपाद्य इति स्पष्टमेव। तथापि नारायणः स्वकीयैस्तैः प्रतिपाद्यः उत परमेश्वराभेददृष्ट्यवलम्बनैस्तदीयैरिति संशयार्थो द्रष्टव्यः। अत्रैवं पूर्वपक्षः। श्रुतिरेव भगवती विश्वपतित्वादिधर्मेषु प्रमाणम्। श्रुतिश्च 'पतिं विश्वस्ये'त्यादिना नारायणस्य तान्प्रतिपादयति। अत्र हि नारायणमुद्दिश्य विश्वपतित्वादयोऽभिधीयन्ते। द्वितीयानां 'येनावृतं स्वं च दिवं महीं चे'त्यादाविव प्रथमार्थत्वा'त्तत्वं नारायणः परः''व्याप्य नारायणः स्थित'इत्यादिप्रथमान्तसामानाधिकरण्यात्। न च प्रथमानामेव 'भूयसृष्ट्वा पतयस्तथेश'इत्यादाविव द्वितीयार्थत्वं कल्प्यतामिति वाच्यम्। प्रथमान्तत्वे विनैव क्रियाध्याहारमुद्देश्यविधेयभावेनान्वयोपपत्तेः। द्वितीयान्तत्वे 'उपासीते'ति क्रियाध्याहारप्रसङ्गात्। यद्यपि रुद्राध्याये रुद्रस्यापि विश्वपतित्वादिकं श्रुतं तथापि तस्य नमस्कारैरिष्टानिष्टप्राप्तिनिवृत्तिप्रार्थनालिङ्गैस्स्तुतिपरत्वावसायात्। स्तुतिपरवाक्येभ्यस्तत्वपरवाक्यस्य प्रबलत्वात्तदनुसारेण विश्वपतित्वादिकं नारायणस्यासाधारणधर्म इत्यभ्युपगन्तव्यम्। नच नारायणानुवाक-

---

नयमणिमालायाम्

अथ सर्वत्रप्रसिद्धाधिकरणम् ॥ १ ॥

सू॥ सर्वत्र प्रसिद्धोपदेशात्॥ १ ॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥

प्रकृतत्वात्क्रतुवाक्ये मनोमयत्वादिधर्मको जीवः। स वितथसंकल्पोऽपि स्यात्सति वस्तुन्यसंकल्पः॥ ३३ ॥

ब्रह्मावरुद्धमासीदुपासनमुपक्रमान्नातम्। तद्गुणसमर्पणपरे वाक्ये जीवः कथं प्रविशेत्॥ ३४ ॥

इति सर्वत्रप्रसिद्धाधिकरणम् ॥ १ ॥

**विश्वपतित्वादिना लिङ्गेन प्रतिपाद्यत इति पूर्वः पक्षः ॥ सिद्धान्तस्तु—नारायणात्मा महेश्वर इति। कुतः? विश्वपतित्वादीनां परमेश्वरधर्माणां तदर्थान्तरे नारायणेऽनुपपत्तेः। 'पशूनां पतये' 'वृक्षाणां पतये' 'जगतां पतये' (तै.सं.४.५.) इत्यादिना**

---

स्यान्यपरत्वं शङ्कितुं शक्यम्। नारायणनामाभ्यासेनाच्युतानन्तहरिनामनिर्देशेन समुद्रशायित्वलिङ्गेन चावगमितस्य तत्परत्वस्याविचलत्वात्। तस्माद्देवतान्तरेषु विश्वपतित्वादिश्रवणं परिच्छिन्नकतिपयैश्वर्यादिपरतया योजनीयम्। अत एव लोकाक्षिगृह्ये कृच्छ्राङ्गहोममन्त्रे 'ध्वग्नये पृथिव्यधिपतये स्वाहे'त्यारभ्य 'ब्रह्मणे लोकाधिपतये स्वाहे'त्यन्तैरेकादशभिर्मन्त्रैरग्निसोमवायुसूर्येन्द्रयमवरुणकुबेरमहासेनरुद्रब्रह्मणां पृथिवीनक्षत्रान्तरिक्षद्युसुरप्रेतसलिलयक्षसेनाभूतलोकेष्वेकैकस्मिन्नाधिपत्यमुक्त्वा 'विष्णवे सर्वाधिपतये स्वाहे'तिमन्त्रेण नारायणस्य सर्वाधिपत्यमुक्तम्। तस्मादिह नारायण एव विश्वपतित्वादिधर्मैर्निर्दिश्यत इति। अत्रायं सिद्धान्तः। नारायणस्यात्मभूतः परमेश्वर एव विश्वपतित्वादिधर्मशाली न तु मूर्त्यात्मा नारायणः। स तु तदभेदभावनाभ्यासदार्ढ्येन तदभेदमापन्नस्तद्धर्मैर्व्यपदिश्यते न स्वकीयैः। तत्र विश्वपतित्वाद्यनुपपत्तेः। रुद्राध्याये हि परमेश्वरस्य प्रपञ्चान्तर्गतैकैकवस्त्वाधिपत्यप्रदर्शनेन सर्वाधिपत्यं स्थिरीक्रियते। तस्य न तावन्नमस्कारयोगेन दौर्बल्यम्। तद्योगो हि नमस्कार्यमहिमसमर्पकाणां विशेषणानामर्थविवक्षामेवोपोद्बलयति नत्वर्थविवक्षां वारयति। 'नमस्कृत्य हि वसीयांसमुपचरन्ती'ति श्रुतौ 'सर्वं रुद्रेति वै प्राहुर्मुनयस्तत्त्वदर्शिनः। नमस्कारेण सहितं गौरवात्परमेष्ठिनः ॥' इति। 'सर्वो वै रुद्र' इत्यादिमन्त्रतात्पर्यकथनार्थलैङ्गपुराणवचने च नमस्कारस्य विषयोत्कर्षप्रयुक्तत्वप्रतिपादनात् नमस्कार्योत्कर्षगवेषणे श्रुतविशेषणसमर्पितोत्कर्षमपहायोत्कर्षान्तरपरिग्रहायोगात्। तथा च रुद्राध्यायगतेनानितरसाधारणेन नमस्काभूयस्त्वेन नमस्कार्यस्य सर्वोत्कर्षस्सिद्ध्यन्नमस्कारघटिततत्तन्मन्त्रगतनमस्कार्यविशेषणसमर्पितसर्वाधिपत्यादिरूप एव सिद्ध्यति। प्रार्थनायाः स्तुतिलिङ्गेन दौर्बल्यं भवदपि यत्र मन्त्रे सा दृश्यते तत्रैव भवेत् नान्यत्रापि। अन्यथा पुरुषसूक्तैकवाक्यतापन्नोत्तरनारायणावसानगतेन प्रार्थनालिङ्गेन सूक्तद्वयस्यापि स्तुतिपरत्वं प्रसज्यते। तस्माद्रुद्राध्यायेऽपि येषुयेषु मन्त्रेषु प्रार्थना दृश्यते तद्गतप्रार्थनीयविशेषणानां स्तावकत्वकल्पनेऽपि नान्यत्र तत्कल्पनावकाशः। तथापि नारायणमुद्दिश्य विश्वपतित्वादिविधानैदंपर्येण प्रवृत्तं वाक्यं नमस्कारपरवाक्येभ्यस्तादर्थ्येन विश्वपतित्वादिसमर्पकेभ्यः प्रबलमिति चेन्न। 'पतिं विश्वस्ये'त्यादेरपि तद्विधानैदंपर्यासिद्धेः। द्वितीयान्तानां 'तद्विश्वमुपजीवती'ति श्रुतसकर्मकक्रियान्वये सम्भवति द्वितीयार्थप्रहाणायोगात्। 'अनन्तमव्ययं कविं समुद्रेऽन्तं विश्वशम्भुव'मिति द्वितीयान्तपदानां 'यस्य येनार्थसम्बन्ध' इति न्यायेन प्रथमान्तपदेभ्यः प्राचीनया क्रिययान्वयोपपत्तेः प्रथमान्तानां भिन्नवाक्यत्वोपपत्तेः सर्वत्र प्रथमार्थकल्पने बहुधा वाक्यभेदस्याश्रयणीयत्वात् द्वितीयान्तेषु तदर्थात्यागे प्रथमान्तपदघटितमन्त्रयोरेव तदाश्रयणेन लाघवात्। अपि च श्वेताश्वतरोपनिषदि 'एको हि रुद्र' इति मन्त्रे शिवव्यतिरिक्तस्य जगदीश्वरत्वं निषिध्यते। तस्य ह्ययमर्थः। एक एव रुद्रः न तत्र द्वितीयस्तिष्ठति। किं सर्वात्मना निषिध्यते। न। य इमाँल्लोकानीशनीभिश्शक्तिभिरिष्टे तादृग्द्वितीयो निषिध्यत इति। श्वेताश्व-

तर एव 'यो देवाना'मिति मन्त्रे तस्य विश्वाधिकत्वं च श्रूयते। तद्विश्वपतित्वलिङ्गम्। तदन्यस्य विश्वपतित्वे तस्य तदधिकत्वासिद्धेः। यद्यप्यत्र प्रार्थनारूपं स्तुतिलिङ्गं दृश्यते तथाप्यत्र यच्छब्दयोगेनानूद्यमानस्य विश्वाधिकत्वस्य प्रापकप्रमाणसापेक्षत्वात्तत्रैव श्वेताश्वतरे श्रूयमाणं 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्। न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप' इत्यादिकं शब्दतोऽर्थतश्च तत्प्रापकं प्रमाणमिति ततो निर्विवादविश्वाधिकत्वसिद्धिरनुसन्धेया। 'नन्वग्निर्वै देवानामवमो विष्णुः परमः तदन्तरेण सर्वा अन्या देवता'इति बह्वृचब्राह्मणे विष्णोस्सर्वदेवतोत्कर्षश्श्रूयत इति चेन्मैवम्। आग्नावैष्णवपुरोडाशार्थवादस्यास्य 'अग्निर्मुखं प्रथमो देवताना' 'मग्निरेतु प्रथमो देवताना' 'मग्निस्सर्वा देवता' 'अग्निमुखा वै देवाः' 'राजानौ वा एतौ देवतानां यदग्नीषोमा'वित्यादिश्रुतिभि'र्यथाग्निर्देवतानां स्यादृतूनां कुसुमाकरः। द्विपदां ब्राह्मणश्श्रेष्ठ' इत्यादिस्मृतिभिः 'हुताशनपुरोगमा' इत्यादिविष्णुपुराणादिलिङ्गैश्चाग्नेरुत्कर्षप्रतीतेस्सर्वदेवतान्यूनत्वायोगेनाग्निरवम इत्यंशे कांश्चिद्देवताविशेषान्प्रत्यग्नेरवमत्वपरतया सङ्कुचितार्थत्वस्यासदालम्बनार्थवादत्वरूपस्य वक्तव्यतया तत्समभिव्याहृते 'विष्णुः परम'इत्यंशेऽपि तथा तस्योचितत्वात्। यत्त्विममर्थवादमवलम्ब्य 'ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वा'दिति (जै०) पूर्वतन्त्राधिकरणे सिद्धान्तवर्णनं तदविवक्षितार्थं कञ्चिदर्थवादमवलम्ब्य प्रवृत्ते पूर्वपक्षे तथाभूतमेवार्थवादान्तरमवलम्ब्य तन्निराकरणार्थं 'महृदयवाचामहृदया एव प्रतिवाचो भवन्ती'ति न्यायेन प्रवृत्तं कृत्वाचिन्तारूपमिति तत्रैवाधिकरणे व्यक्तम्। एतेन 'विश्वस्मादिन्द्र उत्तरः। न किरिन्द्र त्वदुत्तर'इत्यादिमन्त्रेष्विन्द्रादीनामपि विश्वोत्तरत्वं दृश्यत इत्यपि शङ्का निरस्ता। कर्मविधिस्तावकार्थवादवत् कर्मान्वयिपदार्थस्मृत्यर्थानां मन्त्राणामप्यन्यपरत्वाविशेषेणानन्यपरवेदान्तप्रतिपन्नार्थविरुद्धार्थसमर्पणाक्षमत्वात्कर्मान्वयिपदार्थेष्वसमर्थानामत एवानूहनीयानां तद्विशेषणानां मन्त्रेषु बहुलमुपलब्धेश्च। 'इयमेव सा या प्रथमा व्यौच्छ'दित्यादौ इष्टकासु परमेश्वरीयधर्मारोपेण स्तुतिवदिन्द्रे परमेश्वरधर्मारोपेण स्तुतिसम्भवाच्च। अपि चाथर्वशिखायां ध्येयनिर्धारणार्थे 'ध्यायीतेशान'मित्यादिसन्दर्भे स्वाभाविकनिरतिशयैश्वर्यवानत एव सकलफलप्रदानशक्तश्शिवो मुमुक्षुभिर्ध्येय इति प्रतिज्ञाय ब्रह्मादयः किं न तादृशाः येन ते तैर्ध्येया न स्यु'रित्याकाङ्क्षायां तेषां शिवादुत्पत्तिवर्णनेन ते परिच्छिन्नैश्वर्या इति सूचयित्वा शिवोऽपि कुतश्चिदुत्पन्नश्चेत्सोऽपि तथा स्यादित्याशङ्कापरिहारार्थं तस्योत्पत्त्यभावं प्रतिपाद्य सोपपत्तिकमनितरसाधारणं तस्य सर्वैश्वर्यमुपसंहृतम्। तदेतत्सर्वं'मत्ता चराचरग्रहणा' (ब्र० १–२–९सू०)दित्यनन्तराधिकरणे स्फुटीकरिष्यते। ततश्च ब्रह्मादीनां ध्येयत्वव्यवच्छेदायैश्वर्यपरिच्छेददोषमुद्भाव्य ध्येयत्वेनोपदिष्टस्य शिवस्य तद्दोषपरिजिहीर्षया निरतिशयैश्वर्यप्रतिपादनं सङ्कुचितैश्वर्यपरत्वे अन्यत्रोद्भावितदोषपरिहारालाभेन सङ्कोचासहिष्णुत्वात् सर्वलोकगत्याकाशानन्तत्वप्रतिपादनवदन्यथासिद्धम्। उदाहृतमन्यच्च देवतान्तरैश्वर्यप्रतिपादनं चातुर्मास्यफले क्षयिष्णुन्यक्षय्यत्वव्यपदेशवत् सङ्कुचितार्थपरं नेतुं शक्यमन्यथासिद्धम्। 'ब्रह्मादयोऽपि लोकानां सर्गस्थित्यन्तहेतवः। निग्रहानुग्रहं प्राप्ताः शिवस्य वशवर्तिनः। शिवः पुनर्न कस्यापि निग्रहानुग्रहास्पदम्। अतोऽन-

परमेश्वर एव निखिलभुवनाधिपत्यमभ्यस्यते । 'एको हि रुद्रो न द्वितीयाय तस्थुर्य इमाँल्लोकानीशत ईशिनीभिः'(श्वे०३.२) इति रुद्रव्यतिरिक्तस्य जगदीश्वरत्वं निषिध्यते। 'विश्वाधिको रुद्रः'(महाना० १०) इति विश्वाधिकत्वं च तस्यैव श्रूयते। अतो विश्वपतित्वादिलक्षणो नारायणात्मा परमेश्वर इति समीचीनम् ॥ ननु 'नारायणात्मा' इति नारायणान्तर्यामी परमेश्वर इति हृदयम्। तदयुक्तं; 'नारायणपरं ब्रह्म' इति नारायणस्य परब्रह्मभावमुक्त्वा 'पद्मकोशप्रतीकाशम्' इत्यादिना पुरुषस्य हृदयपुण्डरीकस्थानमुक्त्वा 'तस्य मध्ये वह्निशिखा' इत्यादिना जीवस्वरूपमुक्त्वा 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति परमात्मत्वेन जीवान्तर्यामित्वेन तस्योपास्यत्वमवगम्यते। 'स ब्रह्मा स'

---

तिशयैश्वर्यं तस्यैवेति सुनिश्चित'मिति पुराणरीत्या प्रवृत्तत्वेन व्यत्यस्तोत्कर्षापकर्षासहिष्णुत्वादप्यनन्यथासिद्धम् उपपत्तिरूपतात्पर्यलिङ्गत्वादपि प्रबलम् । न चैवंभूतं नारायणस्य विश्वपतित्वादिवर्णनम् । लोकाक्षिगृह्याम्नातो 'विष्णवे सर्वाधिपतय'इति मन्त्रो न पूर्वमन्त्रप्रतिपन्नेभ्योऽग्न्यादिदेवेभ्यो व्यवच्छिद्य नारायणे सर्वैश्वर्यप्रतिपादकः । द्वादशसु होमेषु प्रत्येकं विनियुक्तानां मन्त्राणामेकवाक्यत्वाभावात् प्रत्येकं चतुर्थ्यन्तानामग्न्यादिपदानां शिखावाक्यान्तर्गतपदानामिव केभ्यश्चित्सर्वैश्वर्यव्यवच्छेदे क्वचित्तत्प्रतिपादने च सामर्थ्याभावाच्च । तत्र च 'रुद्राय भूताधिपतये स्वाहे'ति मन्त्राम्नातो रुद्रो लोकपालः । इन्द्रादिप्रायपाठात् । लोकपालरुद्रश्च शिवकलाविर्भावयुक्तः कश्चिद्गणनाथः । कूर्मपुराणे लोकपालपुर्यष्टकवर्णनप्रस्तावे 'तस्याश्च पूर्वदिग्भागे शङ्करस्य शुभा पुरी । नाम्ना यशोवती पुण्या सर्वेषां सुदुरासदा । तत्रेशानस्य भवनं रुद्राविष्टतनोश्शुभम् । गणेश्वरस्य विपुलं तत्रास्ते स गणैर्वृत' इति श्लोकैस्तथाविष्करणात् । तस्मादिह नारायणस्यात्मभूतः परमेश्वर एव विश्वपतित्वादिधर्मैः प्रतिपाद्यत इति सूत्रे शारीरपदं मूर्त्यात्मपरतया[1] प्रयुक्तम् । ब्रह्मविष्णुरुद्रेश्वरसदाशिवानां मूर्तयो हि पञ्चकृत्यकारिण्यः शिवस्य साधारण्यो मूर्तयः । ब्रह्मादयस्त्वसाधारण्येन तास्वेकैकाभिमानिनो मूर्त्यात्मान इति। शारीरपदमपि तत्रतत्र शरीरे भव इति व्युत्पत्त्या तत्समानार्थम् ॥ एवं पूर्वपक्षसिद्धान्तप्रकारं सूत्रार्थं च शब्दगत्यार्थगत्या च 'सहस्रशीर्षं देव'मित्यारभ्येत्यादिना 'नारायणात्मा परमेश्वरः श्रूयत इति समीचीन' मित्यन्तेन सन्दर्भेण सङ्ग्रहेण प्रदर्श्योत्तरसूत्रमवतारयितुमाशङ्कते—नन्विति । अयमर्थः । नारायणस्यात्मा तदन्तर्यामी परमेश्वर इत्ययुक्तम् । नारायणः खल्वत्र परं ब्रह्मेति श्रूयते । अतस्स एवान्तर्यामीति युक्तम् । उपरितनसन्दर्भपर्यालोचनयापि तथैव स्पष्टमवसीयते । तत्र ह्युपासकस्य हृदयपुण्डरीकं प्रस्तुत्य 'तस्य मध्ये महा'नित्यादिना 'सन्तापयति स्वं देह' मिति देहस्वामित्वलिङ्गावगमितं जीवात्मानमग्निशब्दलक्षितं तन्मध्यगतमुक्त्वा 'तस्य मध्ये वह्निशिखे'त्यादिना तत्प्रभारूपान्तर्हृदयचिच्छक्तिं हृदयपुण्डरीकमुकुलावच्छेदकृतदीर्घभावेन दीपशिखाकारां तन्मध्यगतामुक्त्वा तन्मध्ये तदन्तर्यामितया

---

(१) 'पर्यायतया' इति च. पाठः ।

शिवः' इत्यादिना तद्विभूतित्वं ब्रह्मशिवादीनामुच्यते । अतो नारायण एव विश्वपतिः परब्रह्मभूतो जीवान्तर्यामित्वेनोपास्य इति तदात्मकत्वेन तदधिकत्वं तदुपास्यत्वं च परमेश्वरस्य वक्तुमयुक्तमित्यत आह—

॥ सू ॥ कर्मकर्तृव्यपदेशात् ॥ ४ ॥

कर्मत्वं कर्तृत्वं च व्यपदिश्यते तत्र ध्यातृध्येययोः परमेश्वरनारायणयोः। कथं ? 'पद्मकोशप्रतीकाशम्' इति प्रकृतस्य नारायणस्यैव हृदयमुच्यते

---

निर्दिश्यमानः परमात्मा प्रकृतो नारायण एव भवेत् । न च 'पद्मकोशप्रतीकाश' मित्यादिना वर्ण्यमानं हृदयपुण्डरीकं नाशब्दनिर्दिष्टस्योपासकस्य । किं तु प्राक्शब्दसन्निधापितस्य नारायणस्यैव । यथा 'हृदयस्याग्रेऽवद्यती'त्यत्र निर्दिष्टं हृदयं प्राक्प्रस्तुतस्य पशोरेव न तु यजमानस्य । अतो नारायणस्योपासकत्वपर्यवसानान्नायमुपास्यः परमात्मा । किं तु पूर्वानुवाके 'यः परस्स महेश्वर'इति प्रस्तुतः शिव एवेति वाच्यम् । प्राक् परं ब्रह्म परं ज्योतिः परमात्मेति प्रतिपादितस्य नारायणस्योपासकत्वेनान्वयायोगात् । अतः 'य एषोऽक्षिणि पुरुषो दृश्यत'इत्यत्रोपासकाक्षिवदुपासकहृदयमुपासनास्थानत्वेन निर्दिश्यते । तन्मध्यवर्ती परमात्मा चाव्यवहितप्रकृतो नारायणः न तु व्यवहितप्रकृतश्शिव इति युक्तम् । 'आत्मा नारायणः पर'इति नारायणस्यैव प्राक्परमात्मत्वेनोक्तत्वात् उपास्यपरमात्मविभूतिषु 'स ब्रह्मा स शिवस्सेन्द्र' इति शिवस्य परिगणनाच्च । ननु, प्रागुपास्यत्वेन निर्दिष्टस्योपासनास्थानवर्तित्वप्रतिपादनमुचितम् । शिव एव च 'तस्मिन्यदन्तस्तदुपासितव्य'मिति पूर्वानुवाकविहितायामुपासनायामुपास्यत्वेन निर्दिष्टः । तत्रोपास्यपरस्य यत्पदस्य पूर्वापरमन्त्रगतरुद्रमहेश्वरनामसमर्पितशिवपर्यवसायित्वात् । मैवम् । 'सहस्रशीर्षं देव'मित्यारभ्य नारायणगुणकीर्तनवैयर्थ्यपरिहाराय तदुपासनविधेः कल्पनीयत्वेन तस्याप्युपास्यत्वेन प्रकृतत्वात् । एतेन 'पद्मकोशप्रतीकाश'मित्यादेः पूर्वानुवाकविहितशिवोपासनासम्बन्धिहृदयपुण्डरीकसंस्पर्शात्तदपेक्षितगुणविधिपरत्वमवसीयत इत्यपि शङ्का निरस्ता । नारायणगुणकीर्तनकल्प्यतदुपासनविधिना शिवोपासनाप्रकरणस्य विच्छिन्नत्वात् । न च जुह्वादीनामव्यभिचरितक्रतुसम्बन्धवद्धृदयस्याव्यभिचरितशिवोपासनासम्बन्धोऽस्ति । येन प्रकरणाभावेऽपि जुह्वादिद्वारेण पर्णतादीनां क्रत्वन्वयवद्धृदयद्वारेण तद्धर्माणां वाक्य[1]द्वारेण तदन्वयो भवेत् । उपासनासम्बन्ध एव हि हृदयस्य नाव्यभिचरितः । लौकिकचिन्तादिसाधारण्यात् । अत एव 'शुक्रं प्रविध्य हृदयं प्रविध्ये'त्यादिमन्त्राणां हृदयद्वारेण न विद्याङ्गत्वम् । तस्मान्नारायणगुणकीर्तनसामर्थ्यकल्प्योपासनोपास्यत्वेन प्रकृतस्स एवोपासकहृदयपुण्डरीकमध्यगतजीवान्तर्यामित्वेन प्रतिपाद्य उपास्य इति शिवस्य तदन्तर्यामित्वं तदुपास्यत्वं च वक्तुमयुक्तमित्येवमाशङ्कानिराकरणार्थमिदं सूत्रमिति ॥ सू ॥ कर्मकर्तृव्यपदेशात् ॥ ४ ॥ कर्मकर्तृपदद्वयं भावप्रधानमभिप्रेत्य साध्याहारं सूत्रं व्याचष्टे—कर्मत्वमिति । प्रकृतस्येति । 'य एषोऽक्षिणी'त्यत्र शब्दसन्निधापितस्य कस्यचित्सम्बन्धिनोऽभावात् उपासकस्याक्षि गृह्यते । इह शब्दसन्निधापिते सम्बन्धिनि लभ्ये नातथाभूतः सम्बन्धी ग्राह्यः । 'नारायणपरं ब्रह्मे'त्यादिकं सहस्रशीर्षत्वा-

---

( १ ) 'वाक्यप्रमाणेन' इति च.पाठः ।

'परमात्मा व्यवस्थितः' इति परमेश्वर एव परमात्मा तदन्तर्वर्तितया ध्येयत्वेनोच्यते। ततो ध्यातृत्वेन नारायणस्य ध्येयत्वेन परमेश्वरस्य च कर्मत्वं कर्तृत्वं च व्यपदिश्यते। अतो नारायणादन्य एवोपास्यः परमात्मा। 'स ब्रह्मा स शिवः' इत्यादिना ब्रह्मविष्णुरुद्रेन्द्रादिप्रपञ्चविभूतिविशिष्टत्वं परमेश्वरस्योपदिश्यते। अत्र विष्णोरग्रहणेऽपि कैवल्योपनिषदि श्रूयते। 'हृत्पुण्डरीकं विरजम्' इत्यादिना हृदयपुण्डरीकं प्रस्तुत्य, 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्तात्। स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः स कालोऽग्निः॥ (कैव)' इत्यादि। तन्न्यायोऽत्राध्याहार्यः। 'यो वै रुद्रः स भगवान् भूर्भुवःसुवर्यश्च ब्रह्मा तस्मै वै नमो नमः यश्च विष्णुः, यश्च महेश्वरः' इत्याद्यथर्वश्रुतिरपि द्रष्टव्या। अत्र विभूतित्वेन ब्रह्मशिवयोर्मध्ये विष्णोरग्रहणं परमेश्वरोपासकतया तस्य प्रस्तुतत्वादित्यविरोधः॥ 'सहस्रशीर्षा पुरुषः'

---

दिगुणकीर्तनं च नोपासकत्वान्वयविरोधीति समर्थयिष्यत इति भावः। परमेश्वर एवेति। परमेश्वर एव 'परमात्मा व्यवस्थित' इत्युक्तः परमात्मा नारायणहृदयपुण्डरीकमध्यवर्तित्वेनोच्यते ध्येयत्वेन हेतुनेति योजना। ध्येय एव हि ध्यानस्थानवर्तित्वेन वक्तुमुचितः। ध्येयत्वं च परमेश्वरस्यैव पूर्वानुवाके प्रतिपन्नम्। तत्र च परमात्मशब्दोऽपि वर्तितुमर्हति। 'अणोरणीया'निति विद्योपक्रममन्त्रे तस्य महामहिमयुक्तात्मनः[1] प्रस्तुतत्वादिति भावः। नन्वेतावता परमेश्वरस्यैवादित्यपुरुषान्तर्वर्तित्वेनेव नारायणहृदयपुण्डरीकवह्निशिखामध्यवर्तित्वेनास्मदाद्युपास्यत्वमत्र लभ्यते न तु नारायणोपास्यत्वमपि। तथा च कथं 'कर्मकर्तृव्यपदेशा'दिति सूत्रोपपत्तिरित्याशङ्क्याह—तत इति। यस्मात्प्रकृतो नारायणो हृदयपुण्डरीकसम्बन्धित्वेनान्वेति ततो हृदयपुण्डरीकवर्तित्वेनोक्तस्य पूर्वानुवाके हृदयवदुपास्यत्वस्य दृष्टतयात्रापि नारायणहृदयपुण्डरीकवर्तित्वेनोक्तस्य नारायणोपास्यत्वप्रतीतौ तन्निर्वाहाय 'महाज्ञेय'मिति नारायणविशेषणम्। महान् 'धातुः प्रसादान्महिमानमीश'मिति प्राज्ञमहत्त्वेन वर्णितो भवादिनामाष्टकान्तर्गतमहान्नामा च परमेश्वरो ज्ञेयः उपास्योऽस्येत्येवमर्थकं वक्तुमुचितमिति तेन विशेषणेन परमेश्वरनारायणयोर्ध्यानक्रियायां कर्मकर्तृभावो व्यपदिश्यत इत्यर्थः। एवं 'महाज्ञेय'मिति विशेषणस्य सिद्धान्तोपयोगित्वं सूचयितुमेव भाष्ये तावत्पर्यन्तं विषयवाक्यं लिखितम्। तन्न्यायोऽत्रेति। तथैवात्रापि विष्णोरुपास्यविभूत्यन्तर्गतिर्विवक्षितेत्यभ्युपगन्तव्यम्। विध्यैक्यादिति भावः। ब्रह्मविष्णुरुद्राणां परमेश्वरविभूतित्वं श्रुत्यन्तरे सिद्धमित्युदाहरति—यो वै रुद्र इति। नारायणानुवाके विष्णोरुपास्यविभूतिविवक्षायामपि तदनभिधानमुपासकत्वनिर्देशेनैव तल्लाभादित्याह—अत्रेति। उत्तरसूत्रमवतारयितुमाशङ्कते—सहस्रशीर्षेति। पुरुषसूक्ते सहस्रशीर्षत्वादिविशिष्टं पुरुषमुपक्रम्य तस्य निजैकांशसमाप्तजगद्विशिष्टतया सकलजगदुपादानत्वमुक्तम्। स एव पुरुषो नारायणानुवाकेऽपि 'सहस्रशीर्ष'मित्यारभ्य 'व्याप्य नारायणः स्थित'इत्यन्तेन प्रतिपाद्यते। स च

---

(१) 'युक्तात्मत्वेन' इति च. पाठः।

इत्यारभ्य प्रस्तुतस्य पुरुषस्य 'पादोऽस्य विश्वा भूतानि' इति निजैकांशजगद्विशिष्टत्वमुच्यते। 'सहस्रशीर्षं देवम्' इति स एवात्र नारायण इति बोध्यते। स चायं 'नारायणपरं ब्रह्म' इति ब्रह्मत्वेनोच्यते। ब्रह्मैव हि सर्वोपास्यम्। कथमस्य तथाभूतस्यान्यं प्रत्युपासकत्वमित्यत आह—

॥ सू ॥ शब्दविशेषात् ॥ ५ ॥

'नारायणपरं ब्रह्म' इति शब्दविशेष एव नारायणात् परमिति ब्रह्म प्रतिपादयति। अतो नारायणादन्यदेव परं ब्रह्मोपास्यम्। परब्रह्मणः सहस्रशीर्ष-

---

पुरुषः परं ब्रह्मेति युक्तम्। ततोऽन्यत्र जगदुपादानत्वासम्भवात्। 'उतामृतत्वस्येशानः' 'नान्यः पन्था' इत्यादिलिङ्गैः पुरुषसूक्तस्य च परब्रह्मविषयत्वावगमात्। आहत्य चात्र परं ब्रह्मेति प्रतिपाद्यते। ब्रह्म च सर्वोपास्यं प्रसिद्धम्। अतस्तस्यान्योपासकत्वेनान्वयकथनमयुक्तमिति शङ्कानिराकरणार्थमुत्तरसूत्रमित्यर्थः ॥ सू ॥ शब्दविशेषात् ॥ ५ ॥ नारायणपरमिति। समस्तपदरूपादत्रत्यशब्दविशेषादेव नारायणाद्भिन्नं ब्रह्म प्रतीयते। अतो नारायण एव ब्रह्मेति शङ्कात्र नावकाशमासादयतीति भावः। कथं तर्हि तस्य जगदुपादानत्वोक्तिरित्याशङ्क्य सहस्रशीर्षत्वादिविशिष्टनारायणाख्यपुरुषावस्थस्य परमेश्वरस्य जगदुपादानतायाः प्रकृत्यधिकरणे व्यवस्थापयिष्यमाणत्वात्तत्रापि तदुक्तिरुपपद्यत इत्याह—परब्रह्मण इति। 'नारायणपरं ब्रह्मे'ति मन्त्रेणापि प्रकृत्यधिकरणे व्युत्पादयिष्यमाणः स एवार्थः प्रतिपाद्यते। तत्र हि 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवती'ति विश्वस्य पुरुषपारतन्त्र्यरूपं तदुपजीवकत्वं पुरुषस्य च विश्वात्मकत्वमुक्तम्। 'पतिं विश्वस्ये'त्यनन्तरमन्त्रे च तदेव विश्वात्मत्वमनूदितम्। तर्हि ब्रह्मणः किं न विश्वात्मत्वमित्याकाङ्क्षायां तस्यैव विश्वात्मत्वं विश्वोपादानत्वरूपं पुरुषावस्थाद्वारकमित्यनेन मन्त्रेण प्रतिपाद्यते। तत्र 'नारायणपरं ब्रह्मे'त्यनेनैतदुच्यते। शिवाख्यं परं ब्रह्म नारायणपरं नारायणप्रधानम्। नारायणपरतन्त्रमिति यावत्। निरतिशयस्वातन्त्र्यशालिनः कथं वा पारतन्त्र्यमित्याकाङ्क्षायामुच्यते 'तत्त्वं नारायणः परः' परो नारायणश्चिच्छक्त्यवस्थारूप आदिनारायणः शक्त्यादिपृथिव्यन्तसकलतत्त्वात्मकः। तदुपादानत्वात्। अतः परब्रह्मणो जगदात्मना भवनं पुरुषावस्थाद्वारकमिति तस्य तत्पारतन्त्र्यमुक्तमिति भावः। एवं जडोपादानतायां परब्रह्मणः पुरुषावस्थापत्त्यपेक्षत्वमुक्तम्। चेतनोपादानतायां तदुच्यते। 'नारायणपरो ज्योतिः' प्रकाशात्मकं चेतनोपादानतावस्थं ब्रह्मापि नारायणपरः। पूर्ववद्व्याख्येयम्। लिङ्गव्यत्ययश्छान्दसः। तत्र हेतुरुच्यते—'आत्मा नारायणः परः'। परो नारायणः आत्मा सर्वोऽपि चेतनवर्गः। तदुपादानत्वादिति। इत्थमेव यजुर्वेदारण्यकभाष्ये भट्टभास्करेणापि व्याख्यातोऽयं मन्त्रः। यत्तु भाष्ये 'नारायणपर'मित्यस्य 'नारायणात्पर'मिति विवरणं तदर्थसिद्धस्य नारायणभिन्नत्वस्य प्रकटनार्थम्। तथैवार्थपरिग्रहे तु नारायणपरमित्यनेनैवार्थसिद्धस्यानुवादो 'नारायणः पर' इति। ब्रह्मणो नारायणभिन्नत्वे हि नारायणोऽपि तद्भिन्नो भवति। उत्तरनारायणे 'नारायणपरो ज्योतिरात्मे'त्येकं वाक्यम्। त'न्नारायणः पर' इति तत्सिद्धार्थानुवादः। अस्मिन्पक्षे न विश्वात्मत्वोपपादकोऽयं मन्त्रः किं तूपास्योपासकभावाक्षिप्तप्रधानोपसर्जनभावोपपादक इति वि-

त्वादिविशिष्टपुरुषरूपेण जगदुपादानत्वात्। परब्रह्मात्मकस्य तस्य जगदाकारत्वमिति वक्ष्यामः 'प्रकृतिश्च' (ब्र०२.१.२३) इत्यधिकरणे ॥

नारायणस्योपासकत्वे प्रमाणान्तरमाह—

॥ सू ॥ स्मृतेश्च ॥ ६ ॥

'एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः। दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥(भ०गी११.९) इति स्मृतेश्च महायोगस्वामिनो नारायणस्य परमेश्वरविषयो योगःसमाधिरभिव्यज्यते। अत्र, 'अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा। तस्मा-

---

शेषः। ननु 'नारायणपरं ब्रह्मे'त्यस्य नारायणः परं ब्रह्मेत्येवार्थः । विभक्त्यश्रवणं तु 'सुपां सुलु'गित्यादिना तल्लोपादित्यभ्युपगन्तव्यम्। 'अहमेव परं ब्रह्म परं तत्वं पितामह। अहमेव परं ज्योतिः परमात्मा त्वहं विभुः।' इति लिङ्गपुराणे तदुपबृंहणदर्शनादिति चेदुच्यते। अयं श्लोकस्तत्र महालिङ्गप्रादुर्भावात्पूर्वं ब्रह्मनारायणयोः परस्परोत्कर्षविवादप्रस्तावे ब्रह्माणं प्रति नारायणोक्तिरूपः । अनन्तरं तद्विवादप्रशमनार्थोऽद्भूतमहालिङ्गमध्यसन्निहितस्य शिवस्य वचनैः 'पश्यतं मां महादेवं भयं सर्वं विमुच्यताम्। युवां प्रसूतौ गात्राभ्यां मम पूर्वं महाबलौ। त्रिधा भिन्नोऽस्म्यहं विष्णोः ब्रह्मविष्णुभवाख्यया। सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः। संमोहं त्यज विष्णो त्व'मित्यादिभिः तत्रैवापोदितः कथमर्थतत्त्वव्यवस्थापकः। प्रत्युत मोहावस्थावचनत्वाविष्करणेन भ्रान्तिगृहीतमन्त्रार्थोपन्यासोऽयम्। मन्त्रार्थस्तु गूढोऽन्यः इत्येव तदाशयः स्पष्टं प्रतिभाति। तात्पर्यसङ्ग्रहे त्वाचार्यैः नारायणेत्येतद्भिन्नं पदमिति प्रौढिवादेनाभ्युपगम्य नारायणस्य परब्रह्मत्वादिकं विश्वपतित्वादिकमिवोपास्यगतमेव तदभेदभावनादार्ढ्यसिद्धमुपन्यस्तमित्युपपादितम्। 'ब्रह्मोच्यते परमसौ परमं च तत्वं ज्योतिः परं च परमेश्वर पद्मनाभः । त्वद्भावनैकरसिकस्त्वदनन्यभावान्मन्त्री यथा गरुडभावनया गरुत्मान्।' इति। तत्रायमाशयः। 'ऋतं सत्य' मित्युपास्यरूपसमर्पकेऽग्रिमानुवाके तस्यापि परब्रह्मभावः श्रूयते। न चोभयोस्स युक्तः । नाप्युपासकः परं ब्रह्म उपास्यस्तदन्य इति युक्तम्। तस्मादुक्तैव रीतिरनुसर्तव्या । न चाभेदभावनासिद्धा उपास्यधर्मा उपासकेनैव स्वगतत्वेन वर्ण्यन्ते न तु तटस्थवचनैरिति नियमोऽस्ति। 'उत्ताना वै देवगवा वहन्ती'त्यादिवदन्यभ्रमसिद्धस्याप्यन्येनानुवदितुं युक्तत्वादिति ॥ नारायणस्य हृदयसम्बन्धान्महाज्ञेयमिति विशेषणाच्च सिद्धं परमेश्वरोपासकत्वमुपबृंहणेन दृढीकर्तुमुत्तरसूत्रमित्याह—नारायणस्येति ॥ सू ॥ स्मृतेश्च ॥ ६ ॥ अभिव्यज्यत इति। महायोगेश्वर इति श्रीकृष्णस्य योगनिष्ठामुक्त्वा तत्सामर्थ्यात्पारमेश्वरप्रदर्शनोक्त्या तद्योगः परमेश्वरविषय इति ज्ञाप्यते । गरुडभावनां विना गारुडरूपस्येव परमेश्वरभावनां विना तदीयरूपस्यान्येन प्रदर्शयितुमशक्यत्वात्। परमेश्वरभावनासामर्थ्यादेव दधीचेनापि तदीयं रूपं प्रदर्शितमिति लिङ्गपुराणादिषु दक्षदधीचसंवादे प्रतिपादितत्वाच्चेति भावः। 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वर'मिति पूर्वश्लोके कृष्णस्य परमेश्वरविषयो योगः कण्ठतः प्रतिपादितः । तथापि कृष्णेन दर्शितं रूपं पारमेश्वरमित्येतदपि ज्ञापयितुमयं श्लोक उदाहृतः। यत्त्वाश्वमेधिके 'द्रष्टुमिच्छामि ते रूपमैश्वरं तन्निदर्शये'त्युदङ्कप्रार्थनायां 'ततस्स तस्मै प्रीतात्मा दर्शयामास त-

दिष्टतमः कृष्णादन्यो मम न विद्यते ॥' इति अश्वत्थामानं प्रति परमेश्वरवचनं

---

द्वपुः । शाश्वतं वैष्णवं धीमान्ददृशे यद्धनञ्जय'इति तस्मै कृष्णेन प्रदर्शिते रूपे वैष्णवपदं तदुपक्रमानुसारेणैश्वरपरम् । नामाष्टकादिषु शिवेऽपि विष्णुनाम्नः प्रसिद्धेः । 'तद्दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् । विस्मयं च ययौ विप्रस्तद्दृष्ट्वा पारमेश्वर'मिति तदनन्तरश्लोके विष्णोरित्यनेनैव विष्णुसम्बन्धित्वे सिद्धे वैष्णवमित्यस्यैश्वरविषयतयैवापौनरुक्त्यस्य वक्तव्यत्वाच्च कृष्णस्य परमेश्वरतया दर्शनेन विस्मयप्रदर्शनाच्च । 'संहरस्व पुनर्देव रूपमक्षय्यमुत्तमम् । पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वत'मित्यनन्तरश्लोके पुनः परिग्राह्ये प्राचीनरूपे स्वकीयविशेषणत्वेनैतस्यान्यदीयत्वविभावनाच्च । 'अहं यथावदाराध्य'इति सौप्तिके पर्वणि अश्वत्थामानं प्रति परमेश्वरवचने यथावदाराधनं विवक्षितम् । 'तस्मादिष्टतम'इत्यादिवाक्यशेषात् । 'यथान्तरोपचारेण नरः स्त्रीषु प्रसीदति । तथान्तरेण ध्यानेन प्रसीदति महेश्वरः । बहिःकर्मकरा यद्वन्नातीव फलभागिनः । दृष्टा नरेन्द्रभवने तद्वदत्रापि कर्मिणः । हिंसादोषविनिर्मुक्तो विशुद्धश्चित्तसाधनैः । ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः ।' इत्यादिवचनैरुपासकस्यैवात्यन्तं परमेश्वरप्रसादविषयत्वावगमादित्येतदभिप्रायेणैतदपि वचनमुदाहृतम् । यद्यपि 'देवदेवस्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः । सर्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति तं प्रभुम् । तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ।' इत्यादिभिर्द्रोणपर्वादिवचनैर्नारायणस्य बाह्या परमेश्वरार्चा ततः परमेश्वरस्य तस्मिन्नधिका प्रीतिश्च प्रतिपन्ना । इहापि 'सत्यशौचार्जवत्यागैस्तपसा नियमेन च । क्षान्त्या भक्त्या च धृत्या च कर्मणा मनसा गिरे'ति पूर्वश्लोकानुरोधात्कायिकार्चनादिरूपमपि यथावत्समाराधनमिह विवक्षितमिति प्रतीयते । 'तस्मादिष्टतमोऽन्यो नास्ती'तिवाक्यशेषावगतात्यन्तशिवप्रीतिकरत्वलिङ्गात् तदाराधनमिह महायोगरूपं मानसमेव प्रधानं विवक्षितम् । कायिकादिकं तु तदङ्गतयेत्यवसीयत इति भावः ॥ ननूत्तरसूत्रेणोद्भाव्य निराक्रियमाणा परमेश्वरेऽल्पौकस्त्वानुपपत्तिशङ्का न पूर्वपक्षिणस्सङ्गच्छते । 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित'इति निर्दिश्यमान उपास्यो नारायणः न तु परमेश्वर इति पूर्वपक्षशङ्कानिराकरणं हि कर्मकर्तृव्यपदेशसूत्रमारभ्य प्रस्तुतम् । अल्पौकस्त्वानुपपत्तिशङ्का च परमेश्वर इव जगदुपादानतया व्यापिनि नारायणेऽपि तुल्या । अतश्शङ्कावकाशाभावादुत्तरसूत्रस्य तन्निराकरणार्थत्वमनुपपन्नमित्याशङ्क्यावतारयति–पुनरिति । अयमाशयः । अल्पौकस्त्वादयमुपास्यः परमात्मा न व्यापी परमेश्वरः किं तु जीवविशेषः कश्चिदितीह शङ्का न तु सर्वजगदुपादानभूतो नारायण इति शङ्का । इह जीव उपास्य इति शङ्कायाः कः प्रसङ्ग इति चेत् य एव नारायण उपास्य इति शङ्कायाः प्रसङ्गः सः । न ह्यत्र नारायण उपास्यः परमात्मेति मुख्यः पूर्वपक्षः । किं तु 'पतिं विश्वस्ये'त्यादौ नारायणः स्वकीयैरेव विश्वपतित्वादिभिः प्रतिपाद्यः न तूपास्यपरमात्माभेदभावनाप्राप्तैस्तदीयैरित्येवंरूपः । तदुपयोगितया परनारायण उपास्यः परमात्मा न तु शिवः येनोपास्यशिवाभेदभावनासिद्धैस्तदीयैर्विश्वपतित्वादिभिर्नारायणः प्रतिपाद्यो भवेदिति शङ्का कर्मकर्तृसूत्रमारभ्य निराकृता । इह तु सूत्रे जीवरूपः कश्चिद्देवताविशेष उपास्यः परमात्मा । अणीयसस्तस्याल्पौकस्त्वोपपत्तेः । तथा च न तदुपासकश्चिच्छक्त्यवस्थारूपो नारायणः ।

च । तस्मादन्यन्नारायणादुपास्यं परं ब्रह्म ॥ पुनरनुपपत्तिमाशङ्क्याह—

॥ सू ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

'नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ॥' इति स्वल्पवह्निशिखान्तर्वर्तितया स्वल्पाश्रयत्वादल्पत्वव्यपदेशाच्चायं व्यापी न परमेश्वर इति चेत्—न, उपास्यत्वात् तथाव्यपदेशः; न स्वरूपाल्पत्वात् व्योमवत् स्वरूपमहत्त्वस्य सिद्धत्वात्—यथा घटादिषूपहितस्य व्योम्नस्तदुपाधिवशादल्पत्वं स्वरूपतो महत्त्वं च । ततो न विरोधः ॥ पुनराशङ्क्य परिहरति—

॥ सू ॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

यदुक्तं 'नारायणपरं ब्रह्म' इति नारायणात् परं तदुपास्यं ब्रह्म, तदेव हि 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्' इत्युच्यते । तत्र परमशक्त्युमाशबलाकारतया कृष्णपिङ्गलं कृशानुरेतस्कतया चोर्ध्वरेतस्कं, त्रिलोचनतया विरूपाक्षं, पुरि पूर्वोक्तदहरपुण्डरीके शेत इति पुरुषं, ऋतं सत्यं मनोवाग्विपर्यासरहितं परं ब्रह्म इति लक्षणम्।अतोऽस्य त्रिलोचनत्वादिलक्ष-

---

नापि विश्वपतित्वादयस्तस्य सन्ति धर्माः । येन तदभेदभावनासिद्धैस्तैर्नारायणः प्रतिपाद्यो भवेदिति शङ्का निराक्रियत इति ॥ सू॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ अर्भकशब्दोऽल्पत्वलक्षकः । ओको हृदयपुण्डरीकावच्छिन्नवह्निशिखारूपं परमात्मन उपासनास्थानमल्पमिति वस्तुस्वभावादवगम्यते । 'नीवारशूकवत्तन्वी'त्यल्पत्वव्यपदेशादप्यवगम्यते । अतोऽल्पस्थानत्वान्नायं परमात्मा व्यापी परमेश्वरः किं तु कश्चिज्जीवरूपो देवताविशेष इति शङ्काभागस्यार्थमाह—नीवारेति । उपास्ये पूर्वानुवाकश्रुतैरीशरुद्रमहादेवमहेश्वरनामभिरुत्तरानुवाकश्रुतेन विरूपाक्षत्वादिविशिष्टविग्रहेण 'परं ब्रह्मे'ति श्रवणेन चावगम्यमानस्य परमेश्वरभावस्याविचलत्वादल्पस्थानत्वश्रवणमेवाल्पस्थानतया ध्येयत्वाभिप्रायेण नेतव्यम् । तथा च ध्यानार्थेनाल्पस्थानत्वेनाविरोधात् आकाशवत्सर्वगत एव परमेश्वर इति परिहारभागस्यार्थं दर्शयति—नेत्यादिना । ननूत्तरसूत्रेण परमेश्वरस्य शरीरित्वप्रयुक्तदोषनिराकरणं क्रियते । पूर्वमन्तरादित्यविद्याधिकरणे तन्निराकरणं कृतम् । अग्रेऽपि गुहाधिकरणे भोक्त्रापत्त्यधिकरणे च करिष्यते । अतो नात्र तच्छङ्कावकाशोऽस्तीत्याशङ्क्यावतारयति—पुनरिति । इहाधिकरणे परमेश्वरस्यासाधारणविग्रहविशेषेण शरीरित्वप्रयुक्तदोषशङ्का तदीयविग्रहस्येतरशरीरविलक्षणत्वसमर्थनेन निराक्रियते । गुहाधिकरणे तस्यास्मदादिशरीरानुप्रवेशेन शरीरित्वप्रयुक्ता दोषशङ्का श्रुतिबलेन निराकरिष्यते । भोक्त्रापत्त्यधिकरणे सकलचिदचिच्छरीरकत्वप्रयुक्ता सा लोकदृष्टान्तबलेन निराकरिष्यते । अन्तरादित्यविद्याधिकरणे तु वक्ष्यमाणन्यायावष्टम्भेन भाष्यमात्रे तन्निराकरणं कृतम् । न तत्सूत्रारूढमतो नास्य सूत्रस्य वैयर्थ्यमित्याशयः ॥ सू ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥ अतोऽस्य त्रिलोचनत्वादीति । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'ति

णशरीरसंबन्धात् शरीरगतसुखदुःखादिसंभोगप्राप्तिरिति चेत्—न, वैशेष्यात्। सुखदुःखभोगहेतुभ्यो जीवशरीरेभ्यो ब्रह्मरूपस्यास्ति हि वैशेष्यम्; इच्छागृहीतत्वादस्य, तेषां कर्ममूलत्वाच्च। अत एव श्रूयते परमेश्वरः 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इति संसारिशरीरधर्मरहितत्वेन। न चैवं संसारी जीवः। अत एवाप्राकृतानि पापजरामरणशोकादिरहितानि स्वेच्छासंपादितानि लीलामङ्गलरूपाणि परमेश्वरस्य 'स्थिरेभिरङ्गैः पुरुरूप उग्रः' इत्यादिषु स्थिराणि नित्यानि विज्ञायन्ते। अतः परब्रह्मणः परमेश्वरस्य जीवाद्वैशेष्यान्न तद्वच्छरीरादिगतदोषापत्तिः।

---

श्रुतेः सशरीरत्वे सुखदुःखादिकमवर्जनीयम्। अतो नायमुपास्यः परमात्मा परमेश्वरः। किंतु लोकपालरुद्रवत्कश्चन रुद्रविशेष इत्यभ्युपगन्तव्यमिति भावः। तदभिप्रायेणैव पूर्वसूत्रनिराकरणीयापि शङ्का सा तत्रेशमहेश्वरश्रुतिभ्यां तत्समभिव्याहृततया सर्वदेवप्रथमहिरण्यगर्भस्रष्टृविषयतया संसाररुग्द्रावकत्वप्रवृत्तिनिमित्तया रुद्रश्रुत्याऽग्रिमानुवाकश्रुतस्य विग्रहस्य पारमेश्वरत्वप्रसिद्ध्या ब्रह्मश्रुत्या च निराकृता। इह तु परमेश्वरस्य दुःखादिप्रसङ्गान्नास्ति स्वतो विग्रहः। कदाचिद्विरूपाक्षत्वादिविशिष्टेषु रुद्रविशेषाणां विग्रहेष्वाविर्भावसत्त्वात् तथाभूतविग्रहत्वव्यपदेशः। अत एव 'स्थाने संशयितुं विप्रा' इति वायुसंहिताध्याये सदाशिवादिविग्रहेष्वेव तस्याविर्भाव उक्तः। अतोऽत्र कश्चन रुद्रविशेष एवोक्तरूपविग्रहाभिमान्यत्रोपास्यः प्रतिपाद्यते। तत्र कादाचित्कपरमेश्वरावेशसद्भावमात्रेणोपचारात्तस्मिन्परमेश्वरनामादिश्रवणमिति शङ्का। परमेश्वरस्य विग्रहवत्त्वे दोषाप्रसक्तेः। कैवल्योपनिषदादिषु तदीयदिव्यविग्रहप्रसिद्धेर्नात्र तदीयश्रुतिलिङ्गानां क्लिष्टगत्यान्यत्र नयनं कार्यम्। वायुसंहितायां सदाशिवादिविग्रहेष्वेव तस्याविर्भाव इति प्रतिपादनं तद्वत्प्राकृतो विग्रहस्तस्यासाधारणो नास्तीत्येवमर्थं न तु विग्रहमात्रनिरासार्थम्। तस्यास्संहिताया उपक्रम एव 'अप्राकृतवपुः श्रीमान् लक्ष्यलक्षणवर्जित' इत्यादिश्रवणात्तदुत्तरभागे तदसाधारणसाम्बविग्रहवर्णनदर्शनाच्चेत्येवमत्र निराक्रियत इति विशेषः। परमेश्वरविग्रहस्याप्राकृतत्वेनास्मदादिशरीरेभ्यो विशेषान्न तद्वत्त्वेन सुखदुःखदोषप्रसङ्ग इति परिहाराभिप्रायमाह—नेत्यादिना। वैशेष्यं विशेषः। स्वार्थे ष्यञ्। वैशेष्यादित्यस्यास्मदादिभ्यः परमेश्वरस्य शक्तिविशेषवत्त्वरूपवैलक्षण्यपरत्वेनार्थान्तरमाह—अतः परब्रह्मण इति। नन्वेवमस्या दहरविद्यायाः परमेश्वर उपास्य इति निर्णयोऽनुपपन्नः। नारायणस्यैव तदुपास्यत्वात्। तस्यैव हि नारायणानुवाके भूयान्महिमा वर्णितः। न च वाच्यं पूर्वानुवाके 'तस्मिन्यदन्तस्तदुपासितव्य' मित्युपासनाविधिः श्रूयते। तत्रैव चोपासनाफलं श्रूयते 'परामृतात्परिमुच्यन्ति सर्वे' इति। तत्र चोपास्यपरस्य यत्पदस्य 'यो देवानां' 'यद्वेदादा' विति पूर्वोत्तरमन्त्रप्रयुक्तरुद्रमहेश्वरशब्दनिर्दिष्टे परमेश्वरे पर्यवसानं स्यात्। अत उत्पत्तिशिष्टोपास्यान्तरावरुद्धायामुपासनायां नारायणस्योपास्यत्वेनान्वयासम्भवात्परिशेषादुपासकत्वेनैवान्वयः स्यादिति। उत्पत्तिशिष्टगुणान्तरावरोधासिद्धेःउदाहृतपूर्वापरमन्त्रयोरपि नारायणपरत्वात्। तथा हि 'यो देवाना' मित्यादिना हिरण्यगर्भकारणत्वानुवादो 'नारायणाद्ब्रह्मा जायत' इत्यादिपुरोवादानुसारेण नारायणविषय इति रुद्रपदस्य तस्मिन्नेव कथंचिद्वृत्तिः कल्पनीया। 'यद्वेदादा' विति मन्त्रस्यायमर्थः।

अत्र खलूपक्रमादिभिर्लिङ्गैर्विरूपाक्षं ब्रह्म सर्वोत्कृष्टमुपास्यमिति युक्तमेव। तथा हि उपक्रमे—'अणोरणीयान्' (ऋ. सं. २.७.१७) इत्यादिना 'महिमानमीशम्' (महाना. १०.) इत्यन्तेन सकलजन्तुहृदयगुहावर्तित्वेन स्वप्रसादातिशयवीतशोकपुरुषदर्शनविषयत्वेन च महिमातिशयवानीशः प्रस्तुतः। पुनः 'सप्त प्राणाः प्रभवन्ति तस्मात्' (महाना. १०.) इत्यादिना स एव परमशक्तिमान् प्राणादिजगदुपादानत्वेन निरूपितः। ततश्च, 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानम्' (महाना. १०) इति विश्वाधिकत्वेन सर्वज्ञत्वेन सकलकार्यप्रथमहिरण्यगर्भजनकत्वेन च निमित्तभूतः परामृष्टः।

---

'प्रणवाद्या मुने वेदाः प्रणवे पर्यवस्थिता' इति स्मृतेर्वेदानामुत्पत्तिलयस्थानतया तदाद्यन्तयोः 'प्रतिष्ठितः स्वरः ॐकारः। तस्य प्रकृतिरकारः। 'अकारो वै सर्वा वा' गित्यकारस्य सर्ववाक्प्रकृतित्वश्रवणात्। तस्मिन्स्वप्रकृतावकारे लीनस्याकारात्मतां प्राप्तस्य तस्योङ्कारस्य यः परो वाच्यः। 'इदंपरः' 'तत्पर' इत्यादौ वाच्ये परपदप्रयोगदर्शनात्। स महेश्वरः। इत्थं सर्वशब्दजालप्रकृतितया निखिलवाचकोत्कृष्टाकारवाच्यस्य निखिलवाच्योत्कर्षो युक्त इत्यौचितीमवलम्ब्याकारवाच्यस्य सर्वेश्वरत्वप्रतिपादकोऽयं मन्त्रो नारायणपर एव पर्यवस्यति। अत एवाग्रे 'सहस्रशीर्षं देव' मित्यारभ्य नारायणस्यैव महिमवर्णनं दृश्यते। तस्मादत्र परमेश्वरस्योपास्यत्वनिर्णयो न युक्त इत्याशङ्कां मनसि निधायोपक्रमादिभिस्तथा निर्णयस्य युक्तत्वमुपपादयितुमुपक्रमते—अत्र खल्विति। उपक्रमस्य तावदीशश्रुत्या परमेश्वरविषयत्वमुपपादयति—उपक्रम इति। अनन्तरसन्दर्भस्यापि तमेव परमेश्वरमीशशब्देनोपक्रान्तं सर्वनाम्ना परामृश्य प्रवृत्तत्वान्नान्यविषयत्वशङ्कावकाश इत्याह—पुनरिति। 'यो देवाना' मिति मन्त्रस्य तु स्पष्टं परमेश्वरविषयत्वमित्याह—ततश्चेति। 'निमित्तभूतः परामृष्ट' इत्यस्यायमभिप्रायः। यच्छब्दयोगेनानुवाद्यतया प्रतीयमानस्यापि हिरण्यगर्भजनयितृत्वस्य 'नारायणाद्ब्रह्मा जायत' इति न पुरोवादः। इहानूद्यमानस्य रुद्रशब्दवाच्यपरमेश्वरगतहिरण्यगर्भजनयितृत्वस्य ततः प्राप्त्यभावात्। न ह्यनूद्यमानार्थप्रापकस्य पुरोवादत्वं कल्पयितुं युक्तम्। तथा सति 'यदाग्नेयोऽष्टाकपालो' 'य एवं विद्वान्साम्ना स्तुवीते' त्यादीनामपि यत्किञ्चित्पुरोवादकल्पनया तदनुवादकत्वाभ्युपगमापत्तेः। नारायणे रुद्रपदस्य लक्षणया 'नारायणाद्ब्रह्मा जायते' इत्यस्य प्रापकत्वमुपपद्यत इति चेन्न। अन्योन्याश्रयापत्तेः। रुद्रशब्दस्य नारायणे लक्षणासिद्धौ हि तस्य प्रापकतोपपत्त्याऽस्य तदनुवादत्वं सिद्ध्यति सिद्धे च तदनुवादत्वे लक्षणाकल्पनमिति। तस्मादनुगुणपुरोवादासम्भवेऽस्य 'य एवं विद्वान् साम्ना स्तुवीते' तिवदननुवादकत्वमेव भवेत्। सम्भवति चास्यानुगुणपुरोवादः 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इत्यादिः। यदि तु द्वयोर्हिरण्यगर्भकारणत्वं न सम्भवेत् तदा रुद्रशब्दस्य वा नारायणे लक्षणा कल्प्येत। नारायणशब्दस्य वा परमेश्वरे। सम्भवति तु द्वयोरपि तत्कारणत्वं निमित्तोपादानभावेनेति। एतदभिप्रायेणैव एतदधिकरणारम्भभाष्येऽपि 'हिरण्यगर्भोपादानस्ये' ति नारायणो विशेषितः। 'यो देवाना' मिति मन्त्रानन्तरमाम्नातो 'यस्मात्परं नापरमस्ति किञ्चि' दिति मन्त्रः। तस्य शिवविषयत्वं 'यस्मात्परतरं नास्ति नापरं च परात्मनः। न ज्यायोऽस्ति न

**स एव ततः 'परेण नाकम्'(महाना १०) इति पराकाशगुहावर्ती त्यक्तफलकर्मानुष्ठायिनां वेदान्ततात्पर्यवेदिनां यतीनां जितेन्द्रियाणां 'परामृतात्परिमुच्यन्ति' (महाना. १०.) इति परामृतरूपतया प्राप्यत्वेन वर्णितः। कस्तत्प्राप्तावुपाय इति प्राप्ते 'दहरं विपाप्मम्' (महाना. १०) इति दहरोपासनमारब्धम्। तत्र 'तस्मिन् यदन्तस्तदुपासितव्यम्' (महाना १०.) इति दहरपुण्डरीके यद्वस्तु तदुपास्यमिति सामान्येनोक्तम्। तत् किमित्याकाङ्क्षायां, 'यः परः स महेश्वरः' (महाना १०.) इति महेश्वराख्यं तदुपवर्णितम्।**

चाणीयो नमस्तस्मै स्वयंभुवे॥ येनेदमखिलं व्याप्तं यन्मया मूर्तयः स्मृताः। तस्मै शिवाय महते नमः सूक्ष्माक्षरात्मन' इत्याश्वलायने स्पष्टीकृतम्। तदनन्तरं 'न कर्मणा न प्रजया धनेन' 'वेदान्तविज्ञानसुनिश्चितार्था'इति मन्त्रद्वयमाम्नायते। तद्वर्णितपरमेश्वरप्राप्त्युपायतदुपासनाविध्याकाङ्क्षानुकूलतया परमेश्वरप्राप्तेर्महाफलत्वप्रतिपादकमिति दर्शयति—स एवेति। नाकस्सुखैकरूपं परमाकाशात्मकमुमापतेराद्यं स्थानम्। तं परेण तस्योपरि भूमौ या गुहा परमेश्वरस्य दिव्यमन्दिरं तत्र निहितं सन्निहितमिति प्राप्तेः स्थानमुक्तं पूर्वमन्त्रे। तस्य स्थानस्य मुक्तप्राप्यत्वमुत्तरमन्त्रेण विवृतम्। तत्र 'सन्यासयोगाद्यतयश्शुद्धसत्वा'इत्यस्य विवरणं—त्यक्तफलकर्मानुष्ठायिनामिति। यतिशब्दोऽत्र न चतुर्थाश्रमपरः। गृहस्थादीनामप्युपासनाधिकारात्। किं तु 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च त' इति कोशदर्शनात् जितेन्द्रियमात्रपर इत्याह—यतीनामिति। परामृतशब्दो नित्यमुक्तस्य परमेश्वरस्य वाचकः। तस्माल्ल्यब्लोपे पञ्चमीत्यभिप्रेत्य व्याचष्टे—प्राप्यत्वेन वर्णित इति। महेश्वराख्यं तदुपवर्णितमिति। अत्रायमाशयः। 'यद्वेदादा'विति मन्त्रस्य न तावदुपक्रमानुरोधेन नारायणविषयतयार्थवर्णनम्। ईशरुद्रामृतश्रुतिभिस्तस्य शिवविषयत्वेन व्यवस्थितत्वात्। नाप्युपसंहारानुरोधेन। 'ऋतं सत्य' मित्युपसंहारस्यापि विरूपाक्षश्रुत्यादिभिस्तथात्वात्। नापि 'सहस्रशीर्षं देव'मित्याद्यग्रिमसन्दर्भानुरोधेन। तस्योपक्रमोपसंहारैकरूप्यावगतशिवविषयत्वानुरोधेनोत्पत्तिशिष्टोपास्यावरोधेन च परिशेषात्'पद्मकोशप्रतीकाश'मित्यादिलिङ्गात् 'महाज्ञेय'मिति विशेषणसामर्थ्याच्चोपासकविषयत्वपर्यवसानात्। नाप्यस्मिन्नेव मन्त्रे विधेयानुरोधेन। 'यः परः स महेश्वर' इति विधेयसमर्पकस्य महेश्वरपदस्य श्रुतिस्मृत्यभिधानकोशलोकप्रसिद्धिभिः शिवासाधारणत्वात्। नाप्यनुवादानुरोधेन। अनुवाद्यभागस्य विधान्तरेणाप्यर्थोत्प्रेक्षणसम्भवेनाव्यवस्थितार्थत्वात्। तथा हि 'अग्निमीळे पुरोहितं' 'योनिस्समुद्रो बन्धुः' 'समानं वर'मित्येषु श्रुतानामकारोकारमकाराणां वेदादिमध्यान्तवर्णत्वप्रसिद्धेरकारो वेदादौ प्रोक्तः स्वरः स एव तदन्ते प्रतिष्ठितः 'समानं वर'मित्यत्रोपान्त्यः। ततः परं स्वराभावेन तस्यैवान्त्यस्वरत्वात्। तस्य प्रकृतिलीनस्य। प्रकृतिर्विष्णुः। 'वासुदेवः परा प्रकृति'रिति श्रवणात्। तस्मिन् लीनस्य वाच्यवाचकभावेनाभेदं प्राप्तस्य 'वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचिदि'ति वायूक्तेः। तस्य वेदान्त्यभागपाठगमिताभ्यर्हितभावाकारवाच्यस्य प्रकृतिरूपस्य विष्णोः। परः प्रधानभूतः। 'प्रकृतिस्त्वं पुमान्रुद्रस्त्वयि तद्वीर्यमाहितम्। त्वन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामह'इत्यादिषु विष्णुरूपां प्रकृतिं प्रति पुरुषत्वेन 'प्रसिद्धस्स महेश्वर' इति तावन्मन्त्रार्थ उत्प्रेक्षितुं शक्यते। अथवास्य मन्त्रस्य यजुर्वेदपठितत्वात् वेदोऽत्र यजुर्वेदः।

तत् किंरूपमित्याकाङ्क्षायां 'ऋतं सत्यम्' (महाना १०.) इत्यादिना विरूपाक्षत्वादिलक्षणरूपमित्युपसंहृतम् । तत्रावान्तरवाक्यसिद्धो नारायणः पूर्वाधिकरणन्यायादुपासकत्वेनान्वेतीति युक्तम् । अत्र सर्वेषामुपासनेऽधिकारस्य सद्भावेऽपि नारायणग्रहणमस्याधिक्यार्थम् । तदिहोपास्येन

---

तस्मादौ पठितः स्वर इकारः 'इषेत्वे'ति । स एव तदन्तेऽपि प्रतिष्ठितः 'एव तपती'ति । प्रकृतिर्लक्ष्मीः । 'तत्र श्रीरभवद्देवी कमलायतलोचने'त्युपक्रम्य 'मूलप्रकृतिरव्यये'ति कौर्मे प्रयोगात्तस्यां वाच्यवाचकभावेन लग्नस्य दीर्घभावं प्राप्तस्येति यावत् । ईकारस्य लक्ष्मीवाचकत्वात् तस्य यः परः । पञ्चमीविषये षष्ठी । तस्माद्य उत्तरो वर्णः स महेश्वरः । उकारवाच्यो महेश्वर इत्युक्तं भवति । इत्युत्प्रेक्षितुं शक्यते । अकारवाच्यो महेश्वर इति तदर्थोत्प्रेक्षायामपि शिव एव तदर्थ इत्यपि वक्तुं शक्यते । प्रणवस्य ह्यकारो न प्रकृतिः 'अकारो वै सर्वा वाँगिति श्रुते'रोङ्कारेण सर्वा वाक्सन्तृण्णे'तिवत्स्तावकत्वात् । किं तु 'मात्रामात्राः प्रतिमात्राः कृत्वे'ति तापनीयश्रुतौ उत्तरोत्तरमात्राणां पूर्वपूर्वमात्रालयस्थानत्वप्रतिपादनात् 'यावसाने चतुर्थ्यर्धमात्रे'ति व्यपदिष्टः प्रणवः सूक्ष्मावस्थारूपत्वेन प्रसिद्धो नादस्तत्प्रकृतिः । भागवतेऽपि तथैवोक्तम् । तत्र हि'समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः । हृदाकाशादभून्नाद'इति प्रस्तुत्य 'ततोऽभूत्त्रिवृदोङ्कार' इत्युक्तम् । नादस्य तु शिव एवार्थः । 'एवं तिसृभिरेवैतन्मात्राभिरखिलं त्रिधा । अभिधाय शिवात्मानं बोधयत्यर्धमात्रये'त्याद्यथर्वशिखानुसारिपुराणवचनात् । सर्वथायं मन्त्रः पदस्वारस्यानुरोधादुपक्रमाद्यनुरोधाच्च शिवविषय एवेति । तत्किंरूपमित्याकाङ्क्षायामिति । 'ऋतं सत्य'मिति मन्त्रस्तावत्प्रकृतविद्यायां रूपसमर्पक इति प्रकरणानुवृत्त्यावसीयते । 'अथवा परमात्मानं परमानन्दविग्रह'मित्यादिभिः योगयाज्ञवल्क्यादिवचनैश्च तथावसीयते । स च विरूपाक्षश्रुत्या तदीययौगिकार्थत्रिलोचनत्वप्रसिद्ध्यतिशयलिङ्गेन 'कृष्णपिङ्गल'मित्युमासाहित्यलिङ्गेन 'ऊर्ध्वरेत'मित्यूर्ध्वज्वलनात्मकवह्निरेतस्त्वलिङ्गेन 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठ'मित्येतद्विद्यापेक्षितोपास्यस्वरूपसमर्पककैवल्योपनिषन्मन्त्रैकार्थ्येन तस्य मन्त्रस्य 'नमस्कुर्यान्महादेवमृतं सत्यमितीश्वरम् । निवेदयीत चात्मानं यो ब्रह्माणमितीश्वरे ॥'इति, कूर्मपुराणे, शिवपूजाविधौ शिवनमस्कारे विनियोगविधानेन बोधायनसूत्रे 'अथातो महादेवस्य पादोदकप्राशनविधिं व्याख्यास्याम' इत्युपक्रम्य 'ऋतं सत्य' मिति मन्त्रेण प्राशये'दिति शिवपादोदकप्राशने विनियोगविधानेन च शिवपरमित्यपि स्पष्टमवसीयत इति भावः । एवं च सति मध्ये प्रसक्तस्य नारायणस्य 'स क्रतुं कुर्वीते'ति प्रसक्तस्य जीवस्येवोपासकत्वेनान्वय इत्येव युक्तमिति भावः । नन्वत्र नारायणस्योपासकत्ववर्णनं किमन्येषामस्मिन्नुपासने अधिकारव्यावर्तनार्थं नेत्याह—अत्रेति । पूर्वानुवाके 'वेदान्तविज्ञानसुनिश्चितार्था'इति मन्त्रेण सर्वेषामधिकारप्रदर्शनान्नेतरेषामधिकारव्यवच्छेदार्थं नारायणग्रहणम् । किं तु विशिष्टपुरुषानुष्ठितत्वेनास्योपासनस्यातिशयाविष्करणार्थमित्यर्थः । तस्मादस्मिन्नेव प्रकरणे परमेश्वरनारायणयोरुपास्योपासकभावप्रतिपादनात्परमेश्वराभेदभावनासिद्धैर्विश्वपतित्वादिभिस्तदीयैर्धर्मैर्नारायणस्य वर्णनमित्येतदुपपद्यत इत्यधिकरणार्थमुपसंहरति—तदि-

**विरूपाक्षेण ब्रह्मणा तदुपासकस्य नारायणस्याभेदभावनया तद्धर्मैरस्य प्रतिपादनमुपादानस्य तदात्मनइति समीचीनम् ॥ इत्यनुपपत्त्यधिकरणम् ॥ २ ॥**

**हेति। पारमेश्वरत्वेन प्रसिद्धानामपि विश्वपतित्वादीनामन्यदीयत्वप्रत्यायकश्रुतिप्राबल्यशङ्कया पूर्वपक्षदशायां नातिस्पष्टतेति पादसङ्गतिः ॥ इति अनुपपत्त्यधिकरणम् ॥ २ ॥**

---

नयमणिमालायाम्

## अथ अनुपपत्त्यधिकरणम् ॥ २ ॥

**सू० ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशात् ॥ ४ ॥ शब्दविशेषात् ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥**

नारायणानुवाके विश्वपतित्वादिभिर्धर्मैः । प्रतिपाद्यो मूर्त्यात्मा श्रवणात्तन्नामलिङ्गानाम् ॥ ३५ ॥

मैवं नारायणात्मा स तु परमशिवो दर्शनीयो हृदब्जे वर्ण्योऽग्रे श्यामगौरस्त्रिणयनलसितो वह्निरेताः परात्मा ।
तस्य ध्यातायमित्थं प्रकृत इह यथा तत्क्रतुन्यायवाक्ये जीवस्तस्मादमुष्मिन्परवति घटना न स्वरूपेण तेषाम् ॥ ३६ ॥

हृत्पद्मामेदिशिखायां विभुरपि भगवान्वर्तितां व्योमरीत्या रूपं तस्यास्ति किंचिद्यदिह कथमिव स्यान्न दुःखादिभोगः ।
न स्यादिच्छागृहीते वपुषि हि वपुषः कर्ममूलस्य दोषा न प्रादुःष्युः श्रुतश्चापहतदुरितायष्टधर्मा महेशः ॥ ३७ ॥

**इति नयमणिमालायामनुपपत्त्यधिकरणम् ॥ २ ॥**

---

## सूत्रार्थचन्द्रिकायाम्

### अथ प्रथमस्याध्यायस्य द्वितीयः पादः ॥

### अथ सर्वत्र प्रसिद्धाधिकरणम् ॥ १ ॥ श्रीकण्ठमते ॥ १ ॥ २ ॥

**सू० । सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ शब्दविशेषात् ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥**

**भगवत्पादमते,** इदं सूत्राष्टकमेकमधिकरणम् । पूर्वस्मिन्पादे स्पष्टब्रह्मलिङ्गानां वाक्यानां ब्रह्मणि समन्वयस्साधितः । अधुना अस्पष्टब्रह्मलिङ्गानां तस्मिन् समन्वयं साधयितुं द्वितीयतृतीयपादावारभ्येते । छान्दोग्ये शाण्डिल्यविद्यायामाम्नातं 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यकामस्सत्यसङ्कल्प' इत्यादिवाक्यं विषयः । अत्र किं मनोमयत्वादिगुणकश्शारीरः उपास्यत्वेनोपदिश्यते किं वा परमात्मा इति संशयः । मनोमयत्वादिजीवलिङ्गश्रवणात् शारीर इति पूर्वः पक्षः । सिद्धान्तस्तु, सर्वेषु वेदान्तेषु प्रसिद्धस्य जगत्कारणस्य ब्रह्मण एव अत्र 'सर्वं खल्वि'त्यादिना उपदेशात् परमात्मैव मनोमयत्वादिधर्मरूपास्यत्वेन उपदिश्यत इति । सूत्रार्थस्तु । **सर्वत्र**—सर्वेषु वेदान्तेषु । **प्रसिद्धोपदेशात्**—प्रसिद्धस्य ब्रह्मण एव अत्रोपदेशादिति ॥

इतश्च ब्रह्मैवात्रोपदिश्यत इत्याह—**विवक्षितगुणोपपत्तेश्च** ॥ विवक्षिताः 'भारूपः सत्यकाम' इत्यादिनोपासनायामुपादेयत्वेनोपदिष्टा ये गुणाः सत्यसङ्कल्पत्वादयः तेषां ब्रह्मण्येवोपपत्तेरित्यर्थः । जीवासाधारणस्यापि मनोमयत्वादेः सत्यसङ्कल्पत्वाद्यनुरोधेन सर्वात्मके ब्रह्मण्युपपत्तेः । अतः तद्गुणकं ब्रह्मैवोपास्यमिति सिद्धम् ॥

ननु विपरीतं किं न स्यात् इति चेन्नेत्याह—**अनुपपत्तेस्तु न शारीरः** ॥ **अनुपपत्तेः**—सत्यसङ्कल्पत्वादीनां जीवे सामञ्जस्येनानुपपत्तेः । **शारीरः**=जीवः । **न**=न तद्धर्मैरुपास्यः । किं तु ब्रह्मैवेत्यर्थः ॥

इतश्च न शारीर उपास्य इत्याह—**कर्मकर्तृव्यपदेशाच्च** ॥ 'एतमितः प्रेत्याभिसम्भवितास्मी'त्यनेन 'एत'मिति प्रकृतस्य मनोमयत्वादिगुणकस्य ब्रह्मणः कर्मत्वेन प्राप्यत्वेन अभिसम्भवितास्मि प्राप्तास्मीति शारीरस्य कर्तृत्वेन व्यपदिश्यमानत्वादित्यर्थः ॥

इतश्च न शारीर उपास्य इत्याह—**शब्दविशेषात्** ॥ समानप्रकरणे 'अन्तरात्मन् पुरुषो हिरण्मय' इति शारीरस्य यः शब्दोऽभिधायकः सप्तम्यन्तोऽन्तरात्मन्निति तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकस्तस्य सत्त्वात् न परस्मादन्यश्शारीर इह उपास्य इत्यर्थः ॥

---

( १ ) अस्याधिकरणस्य 'शारीराधिकरण' मिति नामान्तरमपि केषुचित्पुस्तकेषु दृश्यते ।

किं च **स्मृतेश्च** ॥ 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।' इत्यादौ जीवपरमात्मनोर्भेदस्मरणात् न परस्मादन्यो जीव उपास्य इति सिद्धम् । अनयोर्भेदस्तु काल्पनिकः न वास्तव इति सैद्धान्तिकी निष्ठा ॥

अधुना परमात्मन उपास्यत्वमाक्षिप्य परिहरति—**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च** ॥ **अर्भकौकस्त्वात्**=अर्भकम् अल्पम् ओकः स्थानं यस्य सोऽर्भकौकाः तस्य भावः तत्त्वं तस्मात् । 'एष म आत्मान्तर्हृदय' इति परिच्छिन्नहृदयायतनत्वादित्यर्थः । किं च **तद्व्यपदेशाच्च**=तस्य स्वशब्देनैव अणीयानित्यणीयस्त्वस्य व्यपदेशात् **नेतिचेत्**=आराग्रमात्रो जीव एवेहोपास्यः न सर्वगतः परमात्मेति चेत् । **न** । कुतः । **निचाय्यत्वादेवम्**=एवमर्भकौकस्त्वाणीयस्त्वादिविशिष्टत्वेन रूपेण परमात्मन इह उपास्यत्वात् । अतः सर्वगतस्यात्मनः उपासनापेक्षया अर्भकौकस्त्वादिगुणः । नैतावता सर्वगतत्वहानिः । तत्र दृष्टान्तमाह—**व्योमवत्**=यथा सर्वगतमपि व्योम सूच्यग्राद्यवच्छेदेन अर्भकौकोऽणीयश्च व्यपदिश्यते तद्वद्ब्रह्मापीत्यर्थः ॥

अधुना परमात्मनः सर्वगतत्वे दोषमाशङ्क्य परिहरति—**सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्** ॥ **सम्भोगप्राप्तिरिति चेत्**=व्योमवत् परमात्मनः सर्वगतत्वे चेतनत्वाविशेषात् जीववत् सुखदुःखाद्यनुभवरूपसम्भोगप्राप्तिरिति चेत् । **न वैशेष्यात्**=जीवपरमात्मनोर्भोक्तृत्वाभोक्तृत्वादिविशेषात् न तद्भोगेनास्य भोगप्राप्तिरिति । तस्मात् मनोमयत्वादिगुणकः परमात्मैवोपास्यो न शारीर इति सिद्धम् ॥

**श्रीकण्ठमते,** आद्यं सूत्रद्वयमेकमधिकरणम् । अन्यत् सूत्रषट्कमधिकरणान्तरमिति विशेषः । विषयवाक्यं समानमेव । अत्र मनोमयत्वादिधर्मकः श्रूयमाणः पुरुषः परमेश्वरः जीवो वेति सन्देहः । पूर्वत्र जीवस्य प्रकृतत्वात् सर्वथा मनोमयत्वादिधर्मको जीव उपास्यः न परमेश्वर इति पूर्वः पक्षः । सिद्धान्तस्तु, परब्रह्मणः परमेश्वरस्यैवोपक्रमे 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'ति सर्वकारणस्य सकलचिदचित्प्रपञ्चशरीरविशिष्टस्य सर्वाकारस्य ब्रह्मण एव निखिलश्रुतिस्मृतिप्रसिद्धस्य उपास्यत्वेनोपदेशात् पूर्वत्र प्रस्तुतत्वेऽपि जीवस्य उत्पत्तिशिष्टब्रह्मावरुद्धायामुपासनायामवान्तरप्राप्तस्य जीवस्य प्रवेशयितुमशक्यत्वाच्च उपक्रमगतं ब्रह्मैव मनोमयत्वादिधर्मवत्त्वेनोपास्यमिति ॥

ननु तर्हि अवान्तरसिद्धस्य जीवस्य प्रसङ्गोऽनर्थकः स्यादित्याशङ्कायामाह—**विवक्षितगुणोपपत्तेश्च** ॥ सत्यसङ्कल्पत्वादीनां विवक्षितानां गुणानां ब्रह्मण्येवोपपत्तेस्तदेवोपास्यम् । अवान्तरसिद्धस्तु जीवः उपासकः तदाकाङ्क्षायोगात् । सूत्रार्थस्तु, **मनोमयत्वादिगुणक** इत्यध्याहारः । **ब्रह्मपदं** चानुवर्तते । तथा च मनोमयत्वादिगुणकः परमेश्वरः । **सर्वत्र**=सर्वेषु वेदान्तेषु प्रसिद्धस्य सर्वप्रपञ्चजन्मादिकारणत्वेन सर्वात्मकतया श्रुतस्य ब्रह्मणः उपदेशात् । **विवक्षितानां**=सत्यसङ्कल्पत्वादीनां **गुणानां** ब्रह्मण्ये**वोपपत्तेश्चे**ति ॥ इति श्रीकण्ठमते **सर्वत्रप्रसिद्धाधिकरणम्** ॥ १ ॥

पूर्वस्मिन्नधिकरणे सामान्येन जीवस्योपास्यत्वाभावमुपासकत्वं च निरूप्य पुनरपीहाधिकरणे सकलजीवसमष्टिरूपहिरण्यगर्भोपादानभूतस्य नारायणस्यापि विश्वाधिकब्रह्मोपासकत्वमेव नोपास्यत्वमित्यभिधातुमधिकरणान्तरमारभ्यते—**अनुपपत्तेस्तु न शारीर इति** । अस्य 'पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतं नारायणं महाज्ञेय'मित्यादि महोपनिषद्वाक्यं विषयः । अत्र विश्वपतित्वादिलक्षणयुक्तो नारायणशब्दवाच्यो मूर्त्यात्मा वा परमेश्वरो वेति संदेहः । 'सहस्रशीर्षं देव'मित्यारभ्य मूर्त्यात्मनो नारायणस्यैवाभ्यासात् 'समुद्रेऽन्तं विश्वशंभुव'मिति समुद्रशायित्वलिङ्गात् तत्पर्यायवाचकाच्युतहरिशब्दादिप्रयोगाच्च मूर्त्यात्मा नारायण एव विश्वपतित्वादिलिङ्गेन प्रतिपाद्यत इति पूर्वः पक्षः । विश्वपतित्वादीनां परमेश्वरधर्माणां तदर्थान्तरे नारायणेऽनुपपत्तेः 'पशूनां पतये 'इत्यादिना निखिलभुवनाधिपत्यस्य परमेश्वर एवाभ्यस्यमानत्वात् 'एको हि रुद्रो न द्वितीयाय तस्थु' रित्यादिना रुद्रव्यतिरिक्तस्य जगदीश्वरत्वनिषेधात् 'विश्वाधिको रुद्र'इति परमेश्वरस्यैव विश्वाधिकत्वश्रवणाच्चात्र विश्वपतित्वादिलक्षणो नारायणात्मा परमेश्वर एवेति सिद्धान्तः ।

ननु 'नारायणान्तर्यामी परमेश्वर एवात्र विश्वपतित्वादिलक्षणः' प्रतिपाद्यत इति न युक्तम् । 'नारायणपरं ब्रह्मे'त्यादिना प्रतिपादितपरब्रह्मभावो नारायण एव ' तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित इति जीवान्तर्यामित्वेनोपास्यः श्रूयते । 'स ब्रह्मा स शिव'इत्यादिना तद्विभूतित्वमेवं ब्रह्मशिवादीनामुच्यते । अतो नारायण एव विश्वपतिः परब्रह्मभूतो जीवान्तर्यामितयोपास्यत इति तदात्मकत्वेन तदधिकत्वं तदुपास्यत्वं च परमेश्वरस्य वक्तुमयुक्तमित्यत आह—**सू० । कर्मकर्तृव्यपदेशाच्च** ॥ तत्र ध्येयध्यात्रोः परमेश्वरनारायणयोः कर्मत्वं कर्तृत्वं च व्यपदिश्यते । तथा हि—पद्मकोशप्रतीकाशतया निरूपिते नारायणहृदय एव खलु 'परमात्मा व्यवस्थित' इति परमेश्वर एव परमात्मा तदन्तर्वर्तितया ध्येयत्वेनोच्यते । अतो ध्यातुर्नारायणादन्य एव ध्येयः परमात्मेति सिद्धम् । 'स ब्रह्मा स शिव'इत्यत्र विष्णोरग्रहणेऽपि कैवल्योपनिषदि हृत्पुण्डरीकं प्रस्तुत्य तत्र 'उमासहायं परमेश्वर'मित्यादिना परमेश्वरमेव ध्येयत्वेन निर्दिश्य'स ब्रह्मा स शिवस्सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुस्स प्राणस्स कालोऽग्नि'रित्यादिप्रतिपादनैकमत्येन 'यो वै रुद्रस्स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः यश्च विष्णुः यश्च महेश्वरः' इत्याद्याथर्वणश्रुत्या च अत्रापि ब्रह्मविष्णुरुद्रेन्द्रादिप्रपञ्चविभूतिविशिष्टत्वमेव परमेश्वरस्योपदिश्यत इति निर्धारणीयम् । अत्र विभूतित्वेन ब्रह्मशिवयोर्मध्ये विष्णोरग्रहणं परमेश्वरोपासकतया तस्य प्रस्तुतत्वादित्यविरोधः ।

'नारायणपरं ब्रह्मे'ति ब्रह्मत्वेनोक्तस्य'पादोऽस्य विश्वा भूतानि'इत्यादिना प्रतिपादितनिजैकांशजगद्विशिष्टत्वस्य सर्वोपास्यस्य परब्रह्मणो नारायणस्य कथमन्यं प्रत्युपासकत्वमित्यत आह—**सू०॥ शब्दविशेषात्**॥५॥ 'नारायणपरं ब्रह्मे'ति शब्दविशेषादेव ब्रह्म नारायणात्परमित्यवगम्यते । अतो नारायणादन्यदेव परं ब्रह्मोपास्यम् । इति । परब्रह्मणस्सहस्रशीर्षत्वादिविशिष्टपुरुषरूपेण जगदुपादानत्वात् परब्रह्मात्मकस्य तस्य जगदाकारत्वं संभवत्येवेति न विरोधः ॥

किं च नारायणस्योपासकत्वे प्रमाणान्तरमाह—**सू० ॥ स्मृतेश्च** ॥ ६ ॥ 'एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः । दर्शयामास पार्थाय परमं रूपमैश्वरम्' इति स्मृतेर्महायोगस्वामिनो नारायणस्य परमेश्वरविषययोगसमाधेरभिव्यज्यमानतया 'अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते'॥ इत्यश्वत्थामानं प्रति परमेश्वरवचनाच्च नारायणादन्यदुपास्यं परं ब्रह्म परमेश्वर इति ॥

पुनरनुपपत्तिमाशंक्याह—**सू० ॥ अर्भकौकस्त्वादित्यादि** ॥ 'नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः ॥' इति स्वल्पाश्रयस्वाल्पत्वयोर्व्यपदेशादयं व्यापी न परमेश्वर इति चेत् न । व्योमवत्तस्य स्वरूपमहत्त्वस्य सिद्धत्वात् उपास्यत्वात्तथा व्यपदेशो न स्वरूपाल्पत्वादिति न विरोधः ॥

पुनराशंक्य परिहरति—**सू० ॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात्** ॥ ७ ॥ परब्रह्मणः परमेश्वरस्य त्रिलोचनत्वादिलक्षणशरीरसंबन्धात् शरीरगतसुखदुःखादिसंभोगप्राप्तिरिति चेत् **न** । सुखदुःखभोगहेतुभ्यो जीवशरीरेभ्यो ब्रह्मशरीरस्येच्छागृहीतस्य 'स्थिरेभिरंगैः पुरुरूप उग्र'इत्यादिना वैलक्षण्यस्य प्रतिपादितत्वात्परमेश्वरस्य जीववत् न शरीरादिगतदोषापत्तिरित्यर्थः ॥ **इति श्रीकण्ठमते शारीरा( अनुपपत्त्य )धिकरणम्** ॥ २ ॥

**रामानुजमते, सर्वत्र प्रसिद्धोपदेशात्** ॥ १ ॥ अथ द्वितीयपादे अस्पष्टजीवादिलिङ्गकानि वाक्यानि विचार्यन्ते । अस्मिन्नपि मते सूत्राष्टकमेकमधिकरणम् । 'सर्वं खल्विद'मित्यादिकं छान्दोग्यवाक्यमेव विषयः । पूर्वपक्षसिद्धान्तयोर्योजनाद्वयं प्रदर्श्य द्वितीययोजनाया एव स्वाभिततरत्वं व्यञ्जितम् । आद्या योजना यथा—अत्र मनोमयत्वादिगुणकः क्षेत्रज्ञो वा परमात्मा वा इति संशयः । मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्परमात्मनस्तत्प्रतिषेधाच्च क्षेत्रज्ञ इति पूर्वः पक्षः । सर्वत्र वेदान्तेषु । परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् मनोमयत्वादिगुणकः परमात्मेति सिद्धान्तः । प्रसिद्धं हि श्रुत्यन्तरेषु मनोमयत्वादि ब्रह्मणः 'मनोमयः प्राणशरीरनेता' इत्यादिषु । 'अप्राणो ह्यमना' इति तु मनआयत्तं ज्ञानं प्राणायत्तां स्थितिं च निषेधति ब्रह्मणः इति न विरोधः ॥ अथवा—'सर्वं खल्विदं ब्रह्मे'त्यत्र ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते वा उत परमात्मेति संशयः । सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः प्रत्यगात्मेति पूर्वपक्षः । 'तज्जला'निति हेतुतया जन्मादीनां प्रसिद्धवदुपदेशात् तेषां च परमात्मसंबन्धितया प्रसिद्धेः सर्वशरीरकस्य परस्य सर्वतादात्म्योपपत्तेश्च ब्रह्मशब्दनिर्दिष्टः परमात्मेति सिद्धान्तः । तथा चायं सूत्रार्थः । **सर्वत्र** 'सर्वं खल्विद'मिति निर्दिष्टे सर्वस्मिञ्जगति ब्रह्मशब्देन तदात्मतया निधीयमानं परं ब्रह्मैव । न प्रत्यगात्मा । कुतः । तज्जलानिति हेतुत'स्सर्वं खल्विदं ब्रह्मे'ति प्रसिद्धवदुपदेशात् । इति ।

**सू० ॥ विवक्षितगुणोपपत्तेश्च** ॥२॥ मनोमयत्वसत्यसंकल्पत्वादीनां विवक्षितानां गुणानां ब्रह्मण्येवोपपत्तेश्च इत्यर्थः ।

**सू० ॥ अनुपपत्तेस्तु न शारीरः** ॥ ३ ॥ दुःखमिश्रपरिमितसुखलवभागिनि शारीरे तु एषां गुणानामनुपपत्तेर्न शारीरोऽयमित्यर्थः ।

**सू० ॥ कर्मकर्तृव्यपदेशाच्च** ॥ ४ ॥ 'एतमितः प्रेत्याभिसंभवितास्मी'ति अभिसंभाव्याभिसंभवितृत्वेन प्रस्तुतब्रह्मजीवयोर्व्यपदेशादभिसंभाव्यं ब्रह्माभिसंभवितुर्जीवादर्थान्तरमिति भावः ।

**सू० ॥ शब्दविशेषात्** ॥ ५ ॥ 'एष म आत्मान्तर्हृदय ' इति षष्ठ्या प्रथमया च जीवो ब्रह्म च व्यपदिश्यते । ततश्च ब्रह्म जीवादर्थान्तरम् ।

**सू० ॥ स्मृतेश्च** ॥ ६ ॥ 'सर्वस्य चाहं हृदि सन्निविष्ट'इति स्मृतावपि शारीरस्योपासकत्वं परमात्मन उपास्यत्वं च दर्शितं भवति ।

**सू० ॥ अर्भकौकस्त्वादित्यादि** ॥ ७ ॥ अस्यार्थे न वैलक्षण्यमिति विरम्यते तद्विवरणात् ।

**सू० ॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात्** ॥८॥ जीवस्येव परस्यापि ब्रह्मणश्शरीरान्तर्वर्तित्वाभ्युपगमे तद्वदेव शरीरसंबन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेन्न । **वैशेष्यात्** । हेतुवैशेष्यादित्यर्थः । न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः । अपि तु पुण्यपापरूपकर्मपरवशत्वम् । तत्त्वपहतपाप्मनः परमात्मनो न संभवति । 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति । इति श्रुतेः ॥

**आनन्दतीर्थमते—सर्वत्रप्रसिद्धोपदेशात्** ॥ १ ॥ अस्मिन्नपि मते इदं सूत्राष्टकमेकमधिकरणमेव । अस्याधिकरणस्य'तस्यैतस्यासावादित्यो रसः । स यश्चायमशरीरः प्रज्ञात्मा । यश्चासावादित्ये । एकमेव तदिति विद्यात् । तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तम् । 'चित्रं देवानामुदगादनीकम्' । इत्यादिना प्रक्रान्तम्'एतं ह्येव बह्वृचा महत्युक्थे

## अथ अत्त्रधिकरणम् ॥ ३ ॥

## ॥ सू० ॥ अत्ता चराचरग्रहणात् ॥ ९ ॥

'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र

अथ अत्त्रधिकरणम् ॥ ३ ॥ सू० अत्ता चराचरग्रहणात् ॥ ९ ॥ ॥ 'यस्य ब्रह्म च क्षत्रं चे'ति मन्त्रे ब्रह्मक्षत्रयोः षष्ठीनिर्दिष्टस्य यस्योदनत्वेन रूपणं कृतं स तयोर्भोक्तेति तदोदनत्वरूपणबलात्प्रतीयते । तत्र यदि ब्रह्मक्षत्रयोरोदनशब्दस्य गौणवृत्तौ भोज्यत्वरूपः प्रसिद्धौदनवृत्तिर्विशेषाकारो निमित्तं स्यात् तदा तयोः प्रसिद्धौदनरीत्या खादिता व्याघ्रादिजीवस्तद्भोक्ता भवेत् । यदि भोज्यत्वापेक्षया सामान्यरूपो भोग्यत्वाकारो निमित्तं भवेत् तदा स्त्रीभृत्यादिरूपेण तयोरुपभोक्ता जीवस्तद्भोक्ता भवेत् । तत्र यद्यपि विशेषाकारस्य गौणवृत्तिनिमित्तत्वसम्भवे सामान्याकारस्तथात्वेन न परिगृह्यते । अत एव

मीमांसन्ते । एतमग्नावध्वर्यवः । एतं महाव्रते छन्दोगाः । एतमस्यामेतं दिव्येतं वायावेतमाकाशे एतमप्सु एतमोषधीषु एतं वनस्पतिषु एतं चन्द्रमसि एतं नक्षत्रेषु एतं सर्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षत'इत्यादि ऐतरेयवाक्यं विषयः। अत्र 'एतं ह्येव'. त्यारभ्य पृथिव्यादिसर्वगतत्वेनोच्यमानः आदित्यो वा जीवो वा तदन्तर्यामी विष्णुर्वेति संदेहः । आदित्यश्रुतिलिङ्गादीनां बहूनां श्रवणात् सजातीयेषु चन्द्राग्निनक्षत्रादिष्विव'एतमादित्य'इत्यनुक्तेश्च 'चक्षुर्मयश्छन्दोमय'इत्यादितदसाधारणलिङ्गश्रवणाच्च आदित्यो वा जीवो वा भवितुमर्हति नान्तर्यामी विष्णुरिति पूर्वः पक्षः । 'तदेव ब्रह्म परमं कवीना'मित्यादिषु तस्मिन्नेव प्रसिद्धस्य ब्रह्मशब्दस्य'एतमेव ब्रह्मेत्याचक्षत'इति सावधारणनिर्देशेन मुख्यब्रह्मपरत्वसूचनात् अश्रुतत्वामतत्वादिलिङ्गबलात् सर्वभूतस्थत्वादीनां जीवादिष्वनुपपत्तेश्च सर्वत्र पृथिव्यादिषूच्यमानो विष्णुरेवेति सिद्धान्तः। सूत्रार्थस्तु **तत्तु** इत्यनुवर्तते । **सर्वत्र**=पृथिव्यादिषु उच्यमानं वस्तु **तत्तु** नारायणाख्यं ब्रह्मैव । न त्वन्यत् । कुतः । **प्रसिद्धोपदेशात्**='एतमेव ब्रह्मेत्याचक्षते' इति सर्वगते वस्तुनि नारायणवाचित्वेन श्रुत्यादिप्रसिद्धब्रह्मशब्दश्रवणादित्यर्थः । इति ।

सू० । **विवक्षितगुणोपपत्तेश्च** ॥१॥ चः समुच्चये । अवधारणे वा । **सर्वगते श्रुत्येति** शेषः । तथा च **विवक्षिता**नामितः परं **सर्वगते श्रुत्या** तन्निष्ठतया वक्तुं योग्यानां वक्ष्यमाणानां वा श्रुतत्वादिगुणानां विष्णोरेव योग्यत्वेन तस्मिन्नेवोपपत्तेरन्यत्रानुपपत्तेश्च विष्णुरेव सर्वगत इत्यर्थः ।

सू० । **अनुपपत्तेस्तु न शारीरः** ॥ ३ ॥ तुशब्द एवार्थे । शारीरो जीवः आदित्यो वा । न सर्वगतः । कुतः । **अनुपपत्तेः**=एकस्य जीवस्य सर्वशरीरस्थत्वायोगादेवेत्यर्थः ।

सू० । **कर्मकर्तृव्यपदेशाच्च** ॥ ४ ॥ सर्वगते वस्तुनि आत्मानमिति कर्मत्वस्य जीवे च शंसतीति तद्विरुद्धकर्तृत्वस्य व्यपदेशादुक्तत्वाच्च न जीवस्सर्वगत इत्यर्थः ।

सू० ॥ **शब्दविशेषात्** ॥ ६ ॥ 'एतमेव ब्रह्मे'ति वाक्ये ब्रह्मशब्दस्यावधारणार्थक एवशब्दाख्यविशेषणवत्त्वाद्ब्रह्मशब्दो न जीवपर इत्यर्थः ।

सू० । **स्मृतेश्च** ॥ ६ ॥ चः समुच्चये । न केवलं श्रुत्युक्तत्वाद्ब्रह्मशब्दो न जीवपर इति किं तु 'अहमात्मा गुडाकेशे'त्यादिस्मृतिसद्भावाच्च ब्रह्मशब्दो न जीवपर इत्यर्थः ।

सू० । **अर्भकौकस्त्वादिति** ॥ ७ ॥ **अर्भकौकस्त्वात्**='सर्वेषु भूते'ष्विति सर्वगतवस्तुनः सर्वप्राणिहृदयाकाशरूपाल्पस्थानत्वकथनात् । **तद्व्यपदेशात्**=तस्य जीवस्य तच्छ्रुतिलिङ्गादिना व्यपदेशात् उक्तत्वाच्च । **नेति चेत्**=ब्रह्मैव सर्वगतमित्युक्तं नेति चेत् । **न** । कुतः । तेषां विष्णावेवोपपत्तेरिति शेषः । न च वैयर्थ्यम् । **एवं निचाय्यत्वात्**=एवमर्भकौकस्त्वादिरूपेण विष्णोरेवोपास्यत्वात् । तथा च न वैयर्थ्यमिति भावः । श्रुतिलिङ्गादीनां ब्रह्मपरत्वेन न तद्विरोध इति भावः । व्याप्तस्य विष्णोः कथमल्पस्थानस्थितिरित्यत उक्तं **व्योमवच्चेति** । यथाकाशस्य व्याप्तस्यापि गृहाद्येकदेशावस्थितिस्तद्वद्विष्णोरपीत्यर्थः ॥

सू० । **संभोगप्राप्तिरिति चेन्न वैशेष्यात्** ॥८॥ यतो ब्रह्मणः व्योमवत्सर्वजीवशरीरस्थत्वे **संभोगप्राप्तिः**=समानभोगप्राप्तिः इत्यतो बाधकान्न ब्रह्म सर्वगतमिति चेन्न । कुतः । **वैशेष्यात्**=विष्णोस्सामर्थ्यविशेषवत्त्वादित्यर्थः । तथा च न तस्य जीवसमानभोगप्राप्तिरिति भावः ॥ ८ ॥

इति सूत्रार्थचन्द्रिकायां सर्वत्रप्रसिद्धाधिकरणम् ॥ १ ॥ २ ॥ १ ॥

**सः'॥ (कठ. २. २५) इति श्रूयतेऽस्य विषयः॥ इह मृत्यूपसेचनमिलितब्रह्मक्षत्रोपलक्षितनिखिलचिदचित्प्रपञ्चकबलभोक्तृतया श्रूयमाणः परमेश्वरोऽन्यो वेति सं-**

---

'सिंहो देवदत्त' इत्यादौ क्रौर्यादिविशेषाकार एव गौणवृत्तिनिमित्तं न तु द्रव्यत्वादिसामान्याकार इति लोके दृश्यते। अत एव च पूर्वतन्त्रे 'उद्गातृचमसमेकस्य श्रुतिसंयोगा' (जै० सू०) दित्यधिकरणे 'प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयजमानस्ये'त्यध्वर्युप्रैषगतस्योद्गातृपदस्य बहुवचनानुसारेणाजहल्लक्षणया बहुषु प्रवृत्तौ वक्तव्यायामुद्गातृगणमात्रवृत्तिविशेषाकारस्तन्निमित्तं न तु षोडशर्त्विक्साधारणस्सामान्याकार इति निरूपितम्। तथाप्यत्र विनाश्यत्वरूपसामान्याकार एव गौणवृत्तिनिमित्तम्। अतस्संहर्तैव भोक्तेति विशेषणमुखेनोपपादनपूर्वकं संहर्ता किं परमेश्वरः उत सङ्कर्षणरुद्रादिरूपस्तमोगुणोपाधिको देवताविशेषो वेति परमेश्वरस्य संहर्तृत्वसम्भवासम्भवाभ्यां संशयं दर्शयति—मृत्यूपसेचनेति। अयमाशयः। अस्मिन्मन्त्रे अन्यदपि रूपकं क्रियते 'मृत्युर्यस्योपसेचन'मिति। उपसेचनं नाम तदुच्यते ओदनो येन दधिपयःप्रभृतिना तद्भोजनायोपसिच्यते। 'दध्नोपसिच्य भुङ्क्ते' 'पयसोपसिच्य भुङ्क्ते' इत्यादिव्यवहारदर्शनात्। ततश्च मृत्योरुपसेचनत्वरूपणबलादोदनत्वेन निरूपितयोर्ब्रह्मक्षत्रयोर्मृत्युमिश्रणं प्रतीयते। तेन ब्रह्मक्षत्रयोरोदनत्वेन रूपितयोरत्ता संहर्त्ता। अदनं संहारः। संहार्यत्वरूपमद्यत्वमोदनशब्दस्य गौणवृत्तौ निमित्तमित्येतत्सर्वं लभ्यते। मृत्युरूपोपसेचनमिश्रणस्य संहाररूप एव ह्यदने उपयोगः न खादनरूपे नाप्युपभोगरूपे। शब्दप्रवृत्तिनिमित्तसंदेहे च समभिव्याहृतपदान्तरार्थसामर्थ्योपस्थितप्रवृत्तिनिमित्तसत्त्वे तदेव ग्राह्यं न पुरुषबुद्धिकल्पनीयमन्यत्। अत एव 'इमां स्पृष्ट्वोद्गायेदिमां हि विश्वा भूतान्युपजीवन्ती'ति वाक्ये 'इमा'मिति सर्वनाम्नस्सर्वभूतोपजीव्यत्वलिङ्गोपस्थितं पृथिवीत्वं प्रवृत्तिनिमित्तं गृह्यते न त्वन्यदौदुम्बरीत्वादिकम्। तच्च संहाररूपमदनं न केवलं ब्रह्मक्षत्रयोरेवात्र विवक्षितम्। किंतु तदुपलक्षितस्य सर्वस्यापि चराचरस्येत्यपि मृत्योरुपसेचनत्वरूपणादेवावगम्यते। यथा ह्युपसेचनमोदनादनोपयोगितया स्वयं तथैवाद्यमानं च भवतीति। मृत्योरुपसेचनरूपणबलात्प्रतीयमानस्य मृत्युना सह तत्संसृष्टसंहारस्य प्रलय एव भावात् प्रलये सर्वस्य चराचरस्य संहारप्रसिद्धेः। तस्मात्सकलप्रपञ्चसंहर्तैवानेन मन्त्रेण प्रतिपाद्यत इति। अत्र संशयप्रदर्शकवाक्येन पूर्वाधिकरणसङ्गतिरित्थं सूचिता। त्रिमूर्त्युत्तीर्णं परमशिवाख्यं परं ब्रह्म सकलवेदान्तप्रतिपाद्यमिति निर्णेतुं प्रवृत्तमिदं शास्त्रम्। केचित्त्रयाणां ब्रह्मविष्णुरुद्राणामन्यतम एव परं ब्रह्म न तदुत्तीर्णं तत्वान्तरमस्तीति मन्यन्ते। तत्प्रबोधनाय परब्रह्मणो हिरण्यगर्भातिरिक्तत्वं तस्य हिरण्यगर्भस्य च शेषशेषिभावप्रदर्शनेन पूर्वपादे हिरण्यगर्भाधिकरणे समर्थितम्। पूर्वाधिकरणे तस्य नारायणस्य चोपासकभावप्रदर्शनेनैव तदतिरिक्तत्वमपि समर्थितम्। तत्प्रसङ्गात्संहाररुद्रातिरिक्तमनेनाधिकरणेन प्रदर्श्यत इति। यद्यप्यस्मिन्नधिकरणे परब्रह्मणः संहाररुद्रस्य चोपास्योपासकभावादिर्न प्रदर्श्यते। तथापि तयोर्भेदं सिद्धं कृत्वा 'यस्य ब्रह्म च क्षत्रं चे'ति मन्त्रस्य संहाररुद्रपरत्वेन पूर्वपक्षस्य निरासार्थः परब्रह्मपरत्वेन सिद्धान्तः प्रवर्तत इति तेन तयोर्भेदावगतिसिद्धिः। एवं तदुभयभेदसिद्धवत्कारेणाधिकरणप्रवृत्तिं सूचयितुमेव भाष्ये 'तदन्यो वे'ति तद्भिन्नत्वपुरस्कारेण संहाररुद्रविषया पूर्वपक्षको-

शयः। परमकारुणिकस्य सर्वानुग्राहकस्य सकलभक्षकत्वमनुचितम्। हिंसारूपं हि परप्राणविमोचनम्। हिंसाप्रवृत्तेः क्रोध एव मूलाङ्कुरः। क्रोधस्य चामङ्गलगुणस्य मोह एव मूलकन्दः। तस्य सर्वसंहारनिदानस्य तम एव प्रकृतिः। अतस्तामसः सर्वसंहर्ता। तामसत्वं नाम आवृतज्ञानादिमत्त्वान्निष्प्रकाशत्वम्। सर्व-

टिरुपन्यस्ता। परमेश्वरस्य संहर्तृत्वासम्भवमुपपादयन् पूर्वपक्षयति–परमकारुणिकस्येति। अनुचितमिति। न हि सर्वदा करुणया सर्वाननुजिघृक्षन्किञ्चिदपि हिंस्यादिति भावः। न केवलं परमेश्वरस्य संहारप्रवृत्त्यसम्भवः तद्विरोधिकरुणावत्त्वात् किंतु तत्कारणक्रोधतमोगुणाभावादपीत्याह–हिंसारूपं हीति। यद्यपि परप्राणविमोचनमात्रं न हिंसा। क्रतुषु पशुप्राणविमोचनं पशूनामपि गतिप्रदत्वान्न हिंसेति तृतीयाध्याये समर्थयिष्यमाणत्वात्। तथाप्यवैधं तत्तथेति तात्पर्यम्। मूलाङ्कुर इति। वक्ष्यमाणमोहकन्दप्रभवायाः परहिंसाविषवीरुधः प्रथमाङ्कुर इत्यर्थः। अस्तु क्रोधोऽपि परमेश्वरस्य तत्राह–क्रोधस्य चेति। क्रोधो हि पुरुषाणां परोपद्रवपर्यवसायित्वाच्च हेयस्सर्वथैवामङ्गलगुणः स क्वचिदपि कथञ्चिदपि यथा नोद्भवेत् तथाभिज्ञैः प्रयतितव्यमिति वस्तुस्थितिः। अतः पुरुषाणां क्रोधोदये वस्तुतत्त्वानभिज्ञानरूपस्तमोगुणाविर्भावाधीनो मोह एव मूलमित्यर्थः। ननु, रुद्रस्य तामसत्वं तमउपाधिकत्वमात्रं न तु प्राकृतानामिव तमसाऽभिभवः। अतस्तस्य तामसत्वेऽपि ज्ञानावरणं न सम्भवतीत्याशङ्क्याह–तामसत्वं नामेति। तमोगुणावृतज्ञानादिमत्त्वरूपं हि तामसत्वं लोके प्रसिद्धम्। रुद्रेऽपि तत्तथाभूतमेवाङ्गीकर्तुं युक्तम्। लोकप्रसिद्ध्यनुरोधात्। तस्मिन् तमोऽभिभवकार्यक्रोधसंहारप्रवृत्तिसम्प्रतिपत्तेश्चेति भावः। ननु, हिंसायाः क्रोधैकमूलत्वावधारणमयुक्तम्। अस्ति हि मांसचर्माद्यपेक्षया धनलिप्सया परोपचिकीर्षया वा हिंसा। अस्ति च लीलामात्ररूपा। 'लोकवत्तु लीलाकैवल्य'मिति (ब्र० २.१.३३.) सूत्रे च जगद्व्यापारः परब्रह्मणो लीलेति स्थापयिष्यते। सत्यम्। क्रोधात्मकः प्रपञ्चसंहर्ता रुद्रस्तावत्प्रसिद्धोऽस्ति। तद्विषयत्वेऽस्य मन्त्रस्य सम्भवत्यन्यविषयत्वं परिकल्प्य तस्य हिंसाव्यापारप्रवृत्तौ मूलान्तरान्वेषणायां गौरवमिति पूर्वपक्षी मन्यते। प्रसिद्धं हि 'अहं च भवतो वक्त्रात्कल्पान्ते घोररूपधृत्। शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रक॥' इत्यादिषु रुद्रस्य क्रोधप्रभवत्वं क्रोधजत्वं च। तामसत्वं च तस्य प्रसिद्धमेव। तदेतदभिप्रेत्योक्तम् अतस्तामसस्सर्वसंहर्तेति। ननु, गुणमूर्तीरनुप्रविश्य परमेश्वर एव जगद्व्यापारान्करोतीति मर्यादा 'अयस्यग्निसमाविष्टे दाहोऽग्नेरेव नायसः। मूर्त्यात्मस्वेवमैश्वर्यमीश्वरस्यैव नात्मना'मित्यादिशास्त्रप्रसिद्धा। अतश्चतुर्मुखस्य स्रष्टृत्ववन्नारायणस्य पालयितृत्ववच्च रुद्रस्य संहर्तृत्वमपि पारमेश्वरं स्यादिति चेन्न। गुणमूर्तिचरितेष्वपि यानि लोकानुग्रहरूपाणि सच्चरितानि तानि पारमेश्वराणि विपरीतानि-तत्तद्गुणमूर्तिचरितानीति व्यवस्थाङ्गीकारात्। 'सर्वं शिवोऽनुगृह्णाति न निगृह्णाति कंचन। निगृह्णतां तु ये दोषाश्शिवे तेषामसम्भवात्। लोकानुग्रहणायैव शिवेन परमात्मना। सदाशिवादयस्सर्वे मूर्त्यात्मानोऽप्यधिष्ठिताः॥ मूर्त्यात्मस्वपि रागाद्या दोषास्सन्त्येव वस्तुतः। तथापि तेषामेवैते न शिवस्य तु सर्वथे'त्यादिशास्त्रप्रामाण्यात्। अत एव नीललोहितनियुक्तेन भैरवेण ब्रह्मपञ्चमशिरोलवने कृते तत्कालमाविर्भूतेन परमेश्वरेण ब्रह्मणे जीवनं दत्वा नीललोहितरुद्राय 'मैवमित्थं क्रूरकर्म कार्षी'रित्युपदिष्टमिति कूर्मपुराणे प्रपञ्चितम्। ननु, परमेश्वरस्यापि सर्वसंहर्तृ-

**संहर्तृ ब्रह्मेत्युक्ते तस्य नित्यशुद्धस्य निरुपाधिकमङ्गलाकरस्य निस्संसारकलङ्कस्य अज्ञानतमोमोहक्रोधादिकामङ्गलगुणसंकरप्रसङ्गः । स्वरूपलक्षणतया निर्णीतं सर्वज्ञत्वनित्यतृप्तत्वादिकमनर्थमेव स्यात् । तस्मात् ब्रह्मणोऽन्य एतादृशगुणः संहर्ता भवतीति पूर्वः पक्षः ॥ सिद्धान्तस्तु—ब्रह्मैव सर्वसंहर्तृत्वेन श्रूयते । कुतः ? चराचरग्रहणात् । यदुक्तं निखिलचराचरप्रपञ्चभोक्तृत्वमयुक्तमिति तदेव ब्रह्मत्वे लक्षणं, परिच्छिन्नशक्तेर्जीवस्य सकलचराचरसंहरणसामर्थ्याभावात्**

---

त्वमवश्यमङ्गीकरणीयम् । 'यतो वा इमानी'त्यादिश्रुतौ तस्य प्रपञ्चोत्पत्तिस्थितिलयकारणत्वश्रवणात् 'एकैकं जालं बहुधा विकुर्वन्नस्मिन्क्षेत्रे संहरत्येष देवः। भूयस्सृष्ट्वा पतयस्तथेशस्सर्वाधिपत्यं कुरुते महात्मे'तिश्वेताश्वतरोपनिषदि विशिष्य संहर्तृत्वश्रवणाच्चेत्याशङ्क्याह—सर्वसंहर्तृ ब्रह्मेत्युक्त इति । क्रोधादिकेत्यादिशब्देन रागो गृह्यते। तथा च परमेश्वरस्य संहर्तृत्वं क्रोधाधीनं चेत् क्रोधस्य ज्ञानावरणमूलकत्वात्तस्य सर्वज्ञत्वभङ्गः । रागमूलकं चेन्नित्यतृप्तत्वभङ्गः। न च परानुग्रहार्थं तत्संहार्यस्य ततोऽनुग्रहाभावात् तदन्यानुग्रहार्थमित्यपि न सार्वत्रिकम् । सार्वदिकनिर्व्याजनिरतिशयकरुणाशालिनो निग्राह्ये तदन्यत्र च करुणाया अविशिष्टत्वात् । अतः परमेश्वरस्य संहर्तृत्वायोगात् 'यत्प्रयन्ती' त्यादिरुपादानत्वेन लयाधिष्ठानत्वपरतया 'अस्मिन् क्षेत्रे संहरति' इत्यादिश्रुतिः सद्वारकान्वयपरतया च योजनीयेति भावः। तस्मात्क्रोधादिगुणकस्संहर्ता परमेश्वरादन्यः स एव चोदाहृतमन्त्रप्रतिपाद्य इति पूर्वपक्षमुपसंहरति—तस्मादिति। सर्वसंहर्तृत्वं परमेश्वरस्यैव सम्भवति नान्यस्येत्युपपादनपूर्वकं तेनैव लिङ्गेनोदाहृतमन्त्रप्रतिपाद्यः परमेश्वर इति सिद्धान्तयति—सिद्धान्तस्त्विति । अयमाशयः। नानेन मन्त्रेण किञ्चित्प्रलयगतं चराचरसंहर्तृत्वमुच्यते किं तु पूर्वोत्तरसकलप्रलयानुयायि । प्रकरणोपपदादिसङ्कोचकाभावात् चराचरगतस्योदनभावस्य लटा वर्तमानत्वव्यपदेशाच्च । न हि तस्य वर्तमानत्वमेतद्वाक्यश्रवणसमये तत्सत्त्वमपेक्ष्य समर्थयितुं शक्यम् । किं तु पूर्वोत्तरप्रलयानुयायित्वेन प्रारब्धापरिसमाप्तित्वमपेक्ष्य समर्थनीयम्। अस्ति हि तत्कालमसत्यामपि क्रियायां पूर्वोत्तरकालानुयायित्वेन प्रारब्धापरिसमाप्ततामात्रमपेक्ष्य वर्तमानत्वव्यवहारः । यथा 'चैत्रसकाशे वयमधीमह'इत्यनध्यायदिवसेष्वपि व्यवहारः। यथा वा 'मधुरायां वसामी'ति ग्रामान्तरगमनेऽपि व्यवहारः । अत एवैतादृशप्रयोगेषु 'वर्तमाने लडि'ति सूत्रतो लटः प्राप्तिर्नास्तीति तेषु तदनुशासनार्थं सूत्रान्तरमारम्भणीयमिति एवं शब्दवार्तिककृता कात्यायनेन 'प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वा'दिति वार्तिकेन पूर्वपक्षं कृत्वा 'न्याय्या त्वारम्भानपवर्गा'दिति वार्तिकेन तत्रापि वर्तमानता न्याय्या प्रारब्धापरिसमाप्तत्वादिति सिद्धान्तितम् । एवं सकलप्रलयानुयायिन्येतन्मन्त्रप्रतिपाद्ये संहारव्यापारे प्रतिकल्पं भिन्नस्य परिच्छिन्नशक्तिकस्य गुणिरुद्रस्य न सामर्थ्यमस्ति । न च गुणिरुद्रसामान्यविषयोऽयं मन्त्रो योजनीयः । पूर्वोत्तरप्रलयद्वयानुयायिनः प्रपञ्चसंहर्तृत्वस्य वर्तमानापदेशलब्धस्य गुणिरुद्रे क्वचिदप्यसम्भवेन सकलविशेषव्यावृत्तस्य सामान्येऽप्यसम्भवात् तस्यैव मुख्यैकाश्रयत्वे सम्भवति गृहद्वये सकलपाकसामग्रीन्यायेन योजयितुमयुक्तत्वाच्च । तस्मात्परमेश्वरस्यैवेदं पूर्वोत्तरसकलप्रलयानु-

'तस्मा उपसंहर्त्रे महाग्रासाय वै नमः' इति परमेश्वरस्याथर्वशिरसि श्रूयते सर्वसंहर्तृभावो, न कचिज्जीवस्य। 'य इमा विश्वा भुवनानि जुह्वत्'(ऋ.सं.८.३.१६.)॥ इति ब्रह्मणो निजप्रकाशवह्नौ निखिलभुवनहव्यहौतृत्वमवगम्यते। न चैवमस्ति जीवस्य सामर्थ्यं हव्यकोटिनिविष्टस्य। खेतरमखिलं चराचरं चिदचित्प्रपञ्चं

---

यायिनः सर्वप्रपञ्चसंहर्तृत्वं तदेव चानेन मन्त्रेणोच्यत इति। तस्मा इति। 'जगद्धितं वा एतदक्षरं प्राजापत्यं सूक्ष्मं सौम्यं पुरुषमग्राह्यमग्राह्येण वायुं वायव्येन सोमं सौम्येन ग्रसति स्वेन तेजसे'ति पूर्ववाक्ये प्रणवाक्षरमात्रात्रयदेवताग्रसितृत्वं यदुक्तं तद्विशिष्टायेति तस्मा इत्यनेनोच्यते। 'महाग्रासाये'त्यनेन गोबलीवर्दन्यायेन तदतिरिक्तसर्वप्रपञ्चग्रसितृत्वमुच्यते। ग्रसितृत्वमत्र न खादितृत्वमुपभोक्तृत्वं वा किं तु संहर्तृत्वम् 'उपसंहर्त्रे'इति विशेषणेन ख्याप्यते। ततश्चोदाहृतमन्त्रस्थस्य 'उपसंहर्त्रे' इत्यस्य कस्येति प्रतियोग्याकाङ्क्षायां 'सर्वजगद्धितं वा एतदक्षर'मित्यत्र सन्निहितं सर्वं जगत्प्रतियोगित्वेनान्वेति। 'अधिकं वा स्याद्बह्वर्थत्वादितरैस्सन्निधाना'दिति न्यायेनान्यार्थसन्निहितस्यापि प्रतियोगितयान्वयोपपत्तेरित्यन्यार्थसन्निहितसर्वजगदन्वयेन महदुपपदेन च सर्वसंहर्तृत्वसिद्धिरस्पष्टेति तत्स्पष्टीकरणार्थं सर्वसंहर्तृभावविषयत्वसिद्धये 'य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसादा पिता नः। स आशिषा द्रविणमिच्छमानः परमच्छदो वर आविवेशे'ति मन्त्र उदाहृतः। अस्यायमर्थः। ऋषिः सकलवेदद्रष्टा। नः अस्माकम्। पिता जनयिता। इमानि सर्वाणि भुवनानि जुह्वत्सन् होता निषसाद होमकर्ता स्वयमेवावशिष्टस्सन्निविष्टः। अनेन स्वमात्रावशेषवचनेन स्वप्रकाशचिद्रूपः स्वयमेव होमाधारोऽग्निरित्यपि लब्धम्। प्रसिद्धं चाथर्वशिखायां परमेश्वरस्य संवर्तकाग्निरूपत्वम्। तत्र हि परमेश्वरध्यानसाधनत्वेनोपक्रान्तस्य प्रणवस्य ध्यानार्थमकारोकारमकारमात्राभिस्सर्वात्मत्ववर्णनं प्रस्तुत्य मात्रात्रयस्य पृथिव्यन्तरिक्षस्वर्गलोकऋग्यजुस्सामवेदब्रह्मविष्णुरुद्राद्यात्मत्वमुक्त्वा 'यावसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओङ्कारस्साथर्वणैर्मन्त्रैरथर्ववेदस्संवर्तकोऽग्नि'रित्यादिनार्धमात्रायाः 'तदूर्ध्वमुन्मनालोकात्सोमलोकमलौकिकम्। सोमस्सहोमया यत्र नित्यं निवसतीश्वर' इति पुराणप्रसिद्धोन्मनान्तसकलभुवनातीतोमासहितपरमेश्वरलोकाथर्ववेदपरमेश्वरात्मत्वाद्युक्तिसमये परमेश्वरे संवर्तकाग्निशब्दः प्रयुक्तः। एवं प्रलयकाले सर्वं स्वात्मन्युपसंहृत्य स्वमात्रावशेषेण स्थितः परमेश्वरः। आशिषा। आशीरिच्छा। 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयो'रिति कोशकारस्मरणात्। तया। स्वात्मन इच्छाशक्त्या। द्रविणं स्वविभूतिरूपं प्रपञ्चमिच्छमानः स्वेच्छाशक्तिरूपेणोपादानेन सुवर्णेन कुण्डलमिव प्रपञ्चं सिसृक्षन्। परमच्छदः सङ्कल्पमात्रसृष्टप्रपञ्चरूपोत्कृष्टनिजाच्छादनस्तद्विशिष्टो भूत्वा। वरे उत्कृष्टे परमच्छदत्वेन प्रागुक्ते प्रपञ्चे आविवेश अन्तर्यामितया प्रविष्ट इति। अत्र यद्यपि विश्वशब्दस्सामस्त्यवाच्यस्ति तथापि भुवनशब्दस्य लोकसंस्थानवाचित्वात् भूर्भुवस्सुवरित्यादिसमस्तभुवनसंहर्तृत्वमेव प्रतीयते। न तु चेतनाचेतनात्मकसर्वप्रपञ्चसंहर्तृत्वम्। तत्तु 'होता निषसादे'ति होतृमात्रावशेषोक्तिसामर्थ्यात् भुवनशब्दस्य कार्यमात्रपरत्वमुपपाद्य समर्थनीयम्। तत्समर्थनसिद्धये 'होता निषसादे'त्यस्य परमेश्वरमात्रावशेषपरत्वं मन्त्रान्तरैकार्थ्येन स्पष्टीकर्तुं मन्त्रान्तरं तदर्थोपन्यासपूर्वकमुदाहरति—खेतरमखिलमित्यादिना। 'न

स्वात्मनि संहृत्य यदा वर्तते परमेश्वरः तदा सर्वमिदं निरस्तचन्द्रसूर्यादिप्रकाशतया विध्वस्तरात्रिदिनादिकालविभागम् अपगतनामरूपविशेषतया स्थूलसूक्ष्मदेवमनुष्यादिव्यवहारशून्यं तमोमात्रं वर्तते । स एक एव परमेश्वरो निरङ्कुशप्रकाशः सर्वसाक्षी तदानीमपि परिशिष्यते । तथा हि श्रुतिः,—'यदा तमस्तन्नदिवा न रात्रिर्न सन्न चासच्छिव एव केवलः।'(श्वे.४.१८.)इति । अत्र 'न सन्न चासत्' इति सदसतोः पशुपाशयोर्न स्वरूपसत्ता निषिध्यते, किं तु नामरूपविभागार्हं स्थूलत्वम् । ननु, नित्यप्रकाशे शिवे परब्रह्मणि सत्यपि कथं तमोमयं जगदिति चेत्–न, स्वयंप्रकाशस्य सर्वसाक्षिणः शिवस्य का हानिः । नामरूपशून्यतया ग्रहणायोग्येषु विषयेषु विहतकरणशरीरशक्तीनां जीवानां प्रपञ्चग्रहणं नास्ति मलतिरोहितस्वज्ञानकरणतया शिवस्य स्वप्रकाशरूपस्यापि पूर्वमिव दर्शनं नास्ति । तस्मात् निरस्तसमस्तकार्यविशेषज्ञाना परमसुषुप्तिमयी महावस्था तमइत्युच्यते। तथा हि स्मृतिः 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्' (मनु. १. ५.) इति । नामरूपविभागानर्हसूक्ष्मचिदचित्प्रपञ्चशक्तिविशिष्टतया शिवः केवल इत्युच्यते। स पुनः सर्गकाले स्वसङ्कल्पमात्रेण समवायिकारणनिरपेक्षमेव स्वस्मात् प्रथमश-

---

सन्न चास'दित्यत्र स्वतस्साधुर्जीववर्गः सच्छब्देनोक्तः तयोरसाधुत्वापादकः पाशवर्गस्त्वसच्छब्देनेत्यभिप्रेत्य तयोस्स्वरूपेणात्र न निषेधः। नित्यत्वात्। किं तु नामरूपविभागार्हेण स्थूलरूपेणेति व्याचष्टे–अत्रेति । 'तम एवे'त्येतत्पशुवर्गं प्रत्युच्यते न तु शिवं प्रति । तं प्रति सर्वस्य सर्वदा प्रकाशमानत्वात् इत्यमुमर्थं शङ्कोत्तराभ्यां दर्शयति–नन्वित्यादिना । ननु मा भूत् जीवानां प्रलये प्रपञ्चावभासः, शिवावभासस्तु स्यात् तस्य स्वप्रकाशत्वात्, अतस्तम एवेत्युक्तिरयुक्तेत्याशङ्क्याह–मलतिरोहितेति। शिवस्य स्वस्मै प्रकाशत इत्येव स्वयंप्रकाशः न तु जीवेभ्यः प्रकाशत इत्यपि । अतो जीवानां शिवावभासः तदीयज्ञानैरेवेष्टव्यः । तानि मलावृतानीति तैस्तदानीमवभासो नास्तीत्यर्थः । पूर्वमिवेति । यथा सर्गकाले जीवानां शिवदर्शनं नास्ति तथा प्रलयकालेऽपीत्यर्थः । अतः तम एवेत्युक्तिरुपपद्यतइत्याह– 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वत' इति। अत्र 'तमोभूत'मित्येतदुत्तरविशेषणैः प्रत्यक्षादिप्रमाणाप्रवृत्त्योपपाद्यते । तत्रा 'प्रज्ञातमलक्षण' मित्यनेनेदमित्थमित्यसाधारणधर्ममुखेन परिच्छिन्दतः प्रत्यक्षस्याप्रवृत्तिर्दर्शिता । अप्रतर्क्यमित्यनुमानस्य । अनिर्देश्यमिति शब्दस्य । तथापि'शिव एव केवल'इत्युक्तिरनुपपन्ना। सूक्ष्मरूपेण पशुपाशवर्गसद्भावादित्याशङ्क्याह–नामरूपेति । सूक्ष्मचिदचिद्विशिष्ट एव केवलशिव इत्युच्यते । न तु विशेष्यमात्रमित्यर्थः । एवं 'यदा तमो' मन्त्रपूर्वार्धैकार्थ्येन 'होता निषसादे'त्यनेन सिद्धः प्रलये परमेश्वरस्य तन्मात्रावशेषः प्रपञ्चितः । अथ तदुत्तरार्धैकार्थ्येन 'स आशिषा द्रविण'मित्यादिना सिद्धः तस्य सर्गादौ निमित्तोपादानभावेन प्रपञ्चकारणभावः प्रपञ्च्यते 'स पुनस्सर्गकाल' इत्यादिना । स्वसङ्कल्पमात्रेणेति। इच्छमान इति हेतौ शानच्प्रत्ययः । परस्मैपदिनोऽपि छान्दसः शानच् । हेतुत्वमात्रेच्छाया अवधारणगर्भत्वं विवक्षितम् । इच्छामात्रस्य कुलालादिसाधारण्यादित्यभिप्रेत्य मात्रशब्दः। तस्य व्यवच्छेद्यमाह–समवायिकारणनिरपेक्षमिति । कुलालस्य स्वपृथक्सिद्धमृत्पिण्डस-

क्तिपरिस्फुरणपूर्वकं पूर्वतत्तन्नामविशिष्टमेव सकलं चिदचिदर्थजातं सृजति प्रकाशयति। तथाऽभियुक्तसूक्तिः— 'चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद्बहिः। योगीव निरुपादानमर्थजातं प्रकाशयेत्॥' इति॥ ननु, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे०४.१०) 'तस्माद्विराडजायत' (पुरु०) इत्यादिश्रुत्या मायापुरुषयोरुपादानत्वं श्रूयते। कथं निरुपादनत्वमिति चेत्—सत्यम्, यथा घटनिष्पत्तौ कुलालस्य स्वशरीरपृथक्त्वेन मृत्पिण्ड उपादानं दृश्यते, तथा न परमेश्वरात् पृथक्सिद्धं मायाद्युपादानं, मायादिरूपात् परमेश्वराज्जगदुत्पत्तेः। अतो न विरोधः। ततः स्वरूपापृथगवस्थानसूक्ष्ममायापुरुषः परमेश्वर एव स्वयमुपादानमपीत्युच्यते। तथाऽथर्वशिखायाम्—'ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं

---

म्भरण इव परमेश्वरस्य स्वपृथक्सिद्धप्रपञ्चोपादानसम्भरणे नैरपेक्ष्यं विवक्षितम्। तदेतदुत्तरत्र भाष्य एव स्फुटीभविष्यति। स्वस्मात्प्रथमशक्तिपरिस्फुरणपूर्वकमिति 'प्रज्ञा च तस्मात्प्रसृता पुराणी'त्येतदैकार्थ्याविष्करणम्। प्रथमशक्तिपरिस्फुरणपूर्वकं तत्स्फुरणरूपसङ्कल्पमात्रेण सृजतीत्यन्वयः। सृजतीत्येतत्सत्कार्यवादमनुसृत्य व्याचष्टे—प्रकाशयतीति। नामरूपसम्बन्धेन व्यवहारार्हतयाभिव्यञ्जयतीत्यर्थः। अन्तस्स्थितमनभिव्यक्तनामरूपतया स्वात्मनि स्थितं बहिरभिव्यक्तनामरूपतया प्रकाशयेदित्यर्थः। निरुपादानमित्येतत् स्वपृथक्सिद्धोपादाननैरपेक्ष्यपरमिति शङ्कोत्तराभ्यां दर्शयति—नन्वित्यादिना। विविधं राजतीति विराट् हिरण्मयमण्डम्। मायादिरूपादिति। माया पुरुषश्च रूपमपृथक्सिद्धधर्मोऽस्येति मायादिरूपः। स्वरूपेति। स्वरूपात् स्वात्मनः अपृथगवस्थानं ययोस्तथाभूतौ सूक्ष्मौ जडचेतनप्रपञ्चाकारपरिणामात्प्रागव्यक्तौ मायापुरुषावस्मिन्निति तथोक्तः। ननु 'तस्माद्विराडजायते'त्यतः प्राक् 'सहस्रशीर्षा पुरुष'इत्यारभ्य परमेश्वर एव प्रस्तुतः न तु नारायणरूपः पुरुषः। सत्यम्। 'तस्माद्विराडजायत। विराजो अधि पुरुष'इति प्रकृतात्परमेश्वरात् जडस्य ब्रह्माण्डस्य सकलचेतनसमष्टिरूपस्य हिरण्यगर्भस्य च जननोक्तिसामर्थ्यात्तदुभयोपादानत्वयोग्यानभिव्यक्तमायापुरुषविशिष्ट एव परमेश्वरः प्राक्प्रकृतोऽवसीयत इति तात्पर्यम्। 'उपादानमपी'त्यपिशब्देन निमित्तत्वसङ्ग्रहः। ब्रह्मविष्णुरुद्रादिसकलचेतनाचेतनप्रपञ्चनिमित्तोपादानभावे'स आशिषे'त्यादेस्तात्पर्यं श्रुत्यन्तरैकार्थ्येनाविष्कर्तुं श्रुत्यन्तरमुदाहरति—तथेति। अथर्वशिखायां 'भगवन्किमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्। किं तत् ध्यानं को वा ध्याता कश्च ध्येय' इत्यथर्वाणं ब्रह्मणः पुत्रं प्रति पिप्पलादप्रभृतीनामृषीणां ध्यानसाधनमन्त्रध्यातृध्येयविषये प्रश्नचतुष्टये प्रश्नत्रयप्रतिवचनानन्तरं ध्येयनिर्धारणार्थमाम्नायते 'ध्यायीतेशानं प्रध्यायितव्य'मित्यादि। अस्यार्थः। प्रध्यायितव्यं मुमुक्षुभिः प्रकर्षेण ध्यातुमर्हम्। 'आदेच उपदेशेऽशिति'(पा०६-१-४५.सू)इत्यात्वाभाव इडागमश्छान्दसः। ईशानं परमेश्वरं ध्यायीत। आत्मनेपदं छान्दसम्। स एव मुमुक्षुभिः प्रध्यातुमर्हो न ब्रह्मादय इत्यत्रोपपादकत्वेन तस्य ब्रह्मादिकारणत्वमुच्यते। सर्वमिदं सुरनरतिर्यगादिभूतजातम्। ब्रह्मविष्णुरुद्रेन्द्राः। तत्प्रधानत्वात्ताच्छब्द्यम्। देवदत्त एव सर्वोऽयं ग्राम इतिवत्। इन्द्रशब्द ईश्वरपरः सदाशिवस्याप्युपलक्षकः। ते सर्वप्रधानभूता ब्रह्मविष्णुरुद्रेश्वरसदाशिवा अपि सम्प्रसूयन्ते सम्यगनुपचरितत्वेनैवोत्पद्यन्ते। प्रकृतादीशानादिति शेषः। भूतेन्द्रियग्रहणं दृष्टान्तार्थम्। जडवर्गसमानयोगक्षेमत एव तेऽपि

ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये'

तस्मादुत्पद्यन्त इति भावः। यदि ब्रह्मादिकारणभूत ईशानोऽपि कुतश्चित्सम्प्रसूयते तदा तद्वदेव सोऽपि ध्यातव्यो न भवेदित्याशङ्क्य तस्योत्पत्त्यभाव उपन्यस्यते—न कारणं कारणानां धाता ध्यातेति । सम्प्रसूयत इति वचनविपरिणामेनानुषङ्गः । कारणानां सृष्ट्यादिपञ्चकृत्याधिकारिणां प्रागुक्तानां ब्रह्मादीनां कारणमुपादानं धाता धारयिता ध्याता निमित्तत्वेन सृष्ट्यादिसङ्कल्पकर्ता एवंभूत ईशानः कुतश्चिदपि न सम्प्रसूयत इत्यर्थः । अतस्सर्वकारणभूतः परमेश्वर एव ध्यातव्य इत्युच्यते कारणं त्विति । तुशब्द इतरेषां जन्मवतां ध्येयत्वव्यवच्छेदार्थः । 'शिव एको ध्येयः शिवश्शङ्करः सर्वमन्यत्परित्यज्ये'ति ह्यन्ते[1] वक्ष्यते । स्वयं जन्मरहित एव मुमुक्षुभिः प्रपदनीय[2] इति श्वेताश्वतरोपनिषद्यप्युक्तम् । 'अजात इत्येव कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मा पाहि नित्य'मिति । उपबृंहितं च शिवपुराणे—'अजातमिममेवैकं मत्वा जन्मनि भीरवः । रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणं मुख'मिति सर्वकारणभूतः परमेश्वरो जन्मरहितत्वादिव सर्वेश्वरत्वेन सकलपुरुषार्थप्रदानशक्तत्वादपि मुमुक्षुभिर्ध्यातव्य इत्यभिप्रेत्य 'सर्वैश्वर्यसम्पन्न' इत्युक्तम्। यद्वा प्रागीशानपदेनैव ताच्छील्यार्थशानजन्ततया स्वाभाविकनिरतिशयैश्वर्यपरेणेयमुपपत्तिस्सूचिता । ब्रह्मादीनामुत्पत्त्युक्तिस्तु तेषां ध्येयत्वोपयोगिताद्दृगैश्वर्यव्यवच्छेदार्थं न तु साक्षाद्ध्येयत्वव्यवच्छेदार्थम् । ईशानस्योत्पत्त्यभावोक्तिस्तु ब्रह्मादिषूद्भावितस्यैश्वर्यपरिच्छेदहेतोर्दोषस्य परिहारेण प्राङ्निर्दिष्टताद्दृगैश्वर्योपपादनार्थम्।एवमुपपादितस्य तस्यानुवादः 'सर्वैश्वर्यसम्पन्न' इति। न केवलं सर्वैश्वर्यसम्पत्तिरुपन्यस्तोपपत्त्यावसीयते किं तु सर्वेश्वर इति नाम्नापीत्यभिप्रेत्य 'सर्वेश्वर' इत्युक्तम् । सर्वेश्वर इत्यपि हि तस्य नामास्तीति 'अकारं ब्रह्माणं नाभावुकारं विष्णुं हृदये मकारं रुद्रं भ्रूमध्ये ॐकारं सर्वेश्वरं द्वादशान्त'इति तापनीयप्रयोगादवगम्यते । शम्भुर्निरतिशयानन्दरूपो निरतिशयानन्दहेतुर्वा । आकाशमध्ये चिद्गगनमध्ये। एवमस्याश्श्रुतेरुपबृंहणं शिवपुराणे दृश्यते। 'यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् । सह भूतेन्द्रियैस्सर्वैः प्रथमं सम्प्रसूयते । कारणानां च यो धाता ध्याता परमकारणम् । न सम्प्रसूयते तस्मात्कुतश्चन कदाचन। स सर्वैश्वर्यसम्पन्नो नाम्ना सर्वेश्वरः स्वयम्। सर्वैर्मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यग'इति । हरिवंशेऽप्येवमुपबृंहणं दृश्यते । तत्र हि परमेश्वरं प्रति कृष्णवचनम्। 'अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्रास्सर्वे ब्रह्मणश्चातिवीराः । त्वत्तस्सर्वे देवदेव प्रसूता एवं सर्वैः कारणात्मा त्वमीड्य'इति । एवं च कारणात्मत्वात्सर्वेश इत्यर्थः । एतेन 'कारणं तु ध्येय'इति श्रुतिः 'नारायणाद्ब्रह्मा जायत'इत्यादिश्रुत्यन्तरसिद्धकारणानुवादेन तस्य ध्येयत्वविधायिनी न स्वयं कस्यचित्कारणत्वप्रतिपादिनी । ध्येयप्रश्नोत्तरत्वात् । अतः पुरोवादानुसारेण कारणपदसमानाधिकरणः शम्भुशब्दो नारायणपर इति निरस्तम् । ध्येयप्रश्नोत्तरमध्ये परमेश्वर एव ध्येय इत्यस्योपपादनाय 'सर्वमिद'मित्यारभ्य तस्य जगत्कारणताया अपि प्रतिपादनात् प्रकृतार्थानुवादसम्भवे च पुरोवादान्तरापेक्षायोगात् । न च ब्रह्मादीनां प्रसूतिमा-

(१) 'ह्यग्रे'इति च. पाठः । (२) 'प्रतिपत्तव्य' इति च. पाठः ।

त्रमुक्तं न तु प्रकृतादीशानादिति शङ्क्यम् । प्रसूतेरपादानापेक्षायां सन्निहितस्येशानस्यैव तथात्वेनान्वयौचित्यात् । ईशानस्य ध्येयत्वोक्तिप्रस्तावे ब्रह्मादीनां प्रसूत्युक्तेर्ध्येयोत्कर्षपर्यवसानं विनान्वयासम्भवेन तत्पर्यवसानार्थं ध्येयत्वेन वर्णितादीशानात्तत्प्रसूतिपरत्वस्यावश्यवक्तव्यत्वाच्च । 'न कारणं कारणानां धाता ध्याते'ति वाक्ये ब्रह्मादिवत्तत्कारणस्यापि कुतश्चित्प्रसूतौ स एवोत्कृष्टतया ध्येयः स्यात् न तत्प्रसूत ईशान इति शङ्कावारणार्थं प्रवृत्ते धातृध्यातृशब्दयोः पुलिङ्गदर्शनेन तद्विशेष्यतयेशानपदानुषङ्गावगतेश्च । न च तयोः शम्भुपदेनान्वयः । 'कारणं त्वि'त्यत्र तुशब्देन तत्र वाक्योपक्रमप्रतीतेः । अपि च 'कारणं त्वि'ति वाक्ये निर्दिष्टस्य कारणस्य प्रतियोग्याकाङ्क्षायां प्राक्प्रसूतिमत्त्वेनोक्तानां ब्रह्मादीनामेव प्रतियोगित्वेनान्वयो भवति । अपरिमिताधिकरणन्यायेन सन्निहितप्रतियोग्यन्वयौचित्यात् । न च नारायणस्य त्रिमूर्तिकारणत्वं श्रुत्यन्तरे क्वचिदपि प्रतिपन्नमस्ति । येनात्र तदनुवादो भवेत् । तस्मान्न्यायोपबृंहणाभ्यां ब्रह्मादिकारणत्वेन प्राक्प्रतिपादितस्येशानस्यानुवाद इति युक्तम् । नन्वस्तु तथैव, तथाप्यनुवादो नारायणविषयः स्यात् । ध्येयनिर्धारणस्य नारायणविषयत्वात् । अथर्वशिखायामुपक्रमे हि प्रणवस्य मात्रात्रयं ब्रह्मविष्णुरुद्रदेवत्यमुक्त्वा 'याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सर्ववर्णा पुरुषदेवत्ये'त्युक्तम् । उपसंहारे मात्रात्रयवाच्यान्ब्रह्मविष्णुरुद्रान्ध्यानसाधनध्यानध्यातृरूपानुक्त्वा प्राणं मनसि सह करणैर्नादान्ते परमात्मनि सम्प्रतिष्ठाप्य 'ध्यायीतेशान'मिति ध्येयप्रश्नोत्तरे नादान्तविशेषणेनार्धमात्रावाच्यः पुरुषो ध्येय इत्याविष्कृतम् । स तु पुरुषो नारायण एव । 'यथा शङ्करशब्दोऽयं महादेवेऽवतिष्ठते । तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते ॥' इत्यादिपुराणवचनैः 'पुरुषो ह वै नारायणोऽकामयते'त्यादिश्रौतप्रयोगैः 'न यस्य देवी न पितामहो वा नेन्द्रो न चाग्निर्वरुणो न मृत्युः । प्रभावमद्यापि विदन्ति रुद्रं तमादिदेवं पुरुषो ददर्शे'त्यादिपौराणिकप्रयोगैः 'संहृत्य लोकान्पुरुषोऽधिशेत' इत्याद्यभियुक्तप्रयोगैश्च पुरुषशब्दस्य नारायणवाचित्वावगमात् । एवं चोपक्रमानुसारेणोपसंहारगता ईशानशम्भुशिवशब्दा नारायण एव योजयितव्या इति चेत् । मैवम् । उपक्रमगतैकश्रुत्यपेक्षयोपसंहारगतबहुश्रुतीनां प्रबलतया तदनुसारेण पुरुषश्रुतेरेव शिवे योजयितुमुचितत्वात् । पुरुषदेवत्येत्यतः प्राक् 'यावसानेऽस्य चतुर्थ्यर्धमात्रा स सोमलोक' इत्यर्धमात्रायाः शिवलोकत्वोक्तिदर्शनेनोपक्रमस्य नारायणविषयत्वासिद्धेश्चोदाहृतपरमोपक्रमा'दोङ्कारः प्रलयः प्रणवस्तारो विष्णुः ब्रह्म प्रकाशो विद्युद्व्यापी'त्योङ्कारनामनिर्वचने व्यापनाद्व्यापी महादेव इति वाच्यवाचकयोरभेदोपचारमाश्रित्य महादेवशब्देन नामनिर्देशात् उपसंहारे शिवनाम्नां प्रयोगेण च अथर्वशिखायाः कात्स्न्र्येन शिवपरत्वस्यैव स्पष्टं प्रतीतेश्च । 'पुरुषो नाम सम्पूर्णः शिवस्सत्यादिलक्षणः । न विष्णुर्न विरिञ्चश्च न रुद्रो नापरः पुमा'नित्यादिपौराणिकवचनैः 'पुरुषो वै रुद्रः'–'पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमही' त्यादिवैदिकप्रयोगैश्च पुरुषशब्दस्य शिववाचकत्वस्याप्यवगतेश्च । बर्हिराज्याधिकरणन्यायानुसरणे चेतनसामान्यशक्त्यैव तत्रतत्र विशिष्य प्रयोगाणामुपपन्नत्वेन च पुरुषशब्दस्य क्वचिदपि विशिष्य शक्त्यसिद्धेश्च । ब्रह्मदेवत्या विष्णुदेवत्या रुद्रदेवत्येति प्रणवमात्रादेवतानां तत्तदसाधारणनाम्ना निर्देशप्रायपाठस्यै'कादेया द्वादश देयाश्चतुर्विंशतिर्देयाः सहस्रं देयमपरिमितं देय'मित्याधानदक्षिणाकल्पभेदश्रुतौ

इति श्रूयते। ततः सर्वभूतानां यत्र संहारस्तत एव सर्वेषामुत्पत्तिरिति अनन्तानां तेषां यावत् संहृतिस्तावत् तत्रैवानन्तशक्तौ शिवे स्थितिः इति सर्वसंहर्ता शिव एव ब्रह्मशब्दाभिधेयः॥यदुक्तं संहारस्य हिंसारूपत्वात् तन्मूलक्रोधाद्यनर्थगुणसंबन्धो ब्रह्मणो भवेत् इति, तदविचारवाग्विलासः। क्रोधादिमूलस्य तमोगुणस्य प्राकृतधर्मत्वात्। 'उमासहायं परमेश्वरं प्रभुम्' इत्यारभ्य 'समस्तसाक्षिं तमसः परस्तात्' (कैव) इति श्रुतिरेव भगवती प्रमाणं परमेश्वरस्य तमसः

---

दक्षिणासङ्ख्यानां तत्तदसाधारणशब्देन निर्देशप्रायपाठस्य बहुलत्वसामान्यशक्त्यैव सहस्राधिकबहुत्वपर्यवसायिन्यपरिमितशब्द इव चेतनसामान्यशक्त्यैवोपपन्नविशेषप्रयोगे पुरुषशब्दे त्यागस्यादोषत्वात्। तस्मादुपपन्नमिदमुदाहृतमथर्वशिखावाक्यं परमेश्वरस्य ब्रह्मविष्णुरुद्रादिसकलजगन्निमित्तोपादानभावं प्रतिपादयतीति। एवं प्रपञ्चस्याभिन्ननिमित्तत्वोपादानत्वसिद्धौ तस्य यत्र लयः तत्कृत एव संहारो वाच्य इति 'यत्प्रयन्त्यभिसंविशन्ती'तिश्रुत्यालोचनयापि परमेश्वरस्य सर्वसंहर्तृत्वं सिद्ध्यतीति सूचयन्नेव 'य इमा विश्वे'तिमन्त्रोदाहरणेन समर्थितं तस्य सर्वसंहर्तृत्वमुपसंहरति–तत इति। ब्रह्मशब्दाभिधेयः शिव एव सर्वसंहर्तेत्यन्वयः। उदाहृते मन्त्रे–'आशिषे'ति–'वरआविवेशे'ति विशेषणद्वयमुदाहरिष्यमाणदशाव्ययवचनतात्पर्यवचने स्पष्टीभविष्यतीति मत्वा परमेश्वरस्य संहर्तृत्वे पूर्वपक्ष्यापादितं दोषं परिहर्तुमनुभाषते यदुक्तमिति। अयमत्र परिहाराभिसन्धिः। द्विविधो निग्रहः अनुग्रहोद्देश्यः तदनुद्देश्यश्च। आद्यस्त्रिविधः। निग्राह्यानुग्रहार्थः तदितरानुग्रहार्थः उभयानुग्रहार्थश्च। सदाचारानुवर्तनाद्यर्थः पुत्रादिनिग्रह आद्यः। स तु सर्वथा न दोषः। द्वितीयस्तु उत्कृष्टानुग्रहार्थमपकृष्टनिग्रहः। 'एकस्मिन्यत्र निधनं प्रापिते दुष्टचारिणि। बहूनां भवति क्षेमं तत्र पुण्यप्रदो वध' इत्यादिवचनप्रामाण्यान्न दोषः। यथा राज्ञां मृगयासु प्रजानुग्रहार्थं व्याघ्रादिवधः। चोरादिवध उभयानुग्रहार्थः। तेन हि प्रजानुग्रह इव 'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तस्सुकृतिनो यथे'ति वचनप्रामाण्यात् चोरानुग्रहश्च भवति। प्रत्युत त्रिविधोऽप्ययं निग्रहो गुण एव। उक्तत्रिविधनिग्रहान्तर्भूतस्सर्वोऽपि परमेश्वरकृत्यभूतस्संहारः। तत्र प्रपञ्चस्थितिकाले दैत्यादिनिग्रह उभयानुग्रहार्थः। हिंस्रतिर्यग्जातिनिग्रहस्तदन्यानुग्रहार्थः। नरकादिनिपातनरूपः निग्रहः पापक्षपणेन तत्तदनुग्रहार्थः। अयं त्रिविधो निग्रहः तत्तदधिकृतदेवमनुष्यादिमूर्तिद्वारकः। महाप्रलये सर्वसंहारः साक्षात्पारमेश्वरः। स तु संसाराध्वचिरगतागतखिन्नानां महासुषुप्त्यापादनेन तत्तदनुग्रहार्थः। एवं परमेश्वरकर्तृकाणां निग्रहाणामनुग्रहार्थत्वेनादोषत्वं गुणत्वं च वायुसंहितायां प्रपञ्चितम्। 'ये पुत्रनिग्रहाः केचिद्ब्रह्मादिषु निदर्शिताः। तेऽपि लोकहितायैव कृताः श्रीकण्ठमूर्तिना। अण्डस्यास्याधिपत्यं हि श्रीकण्ठस्य न संशयः। श्रीकण्ठाख्यां शिवो मूर्तिं क्रीडन्तीमधितिष्ठति। सदोषा एव देवाद्या निगृहीता यथोचितम्। ततस्तेऽपि विपाप्मानः प्रजाश्च विगतज्वराः। निग्रहोऽपि स्वरूपेण विदुषां न जुगुप्सितः। अत एव हि दण्ड्येषु दण्डो राज्ञां प्रशस्यते। यत्सिद्धिरीश्वरत्वेन कार्यवर्गस्य कृत्स्नशः। न स चेदीशतां कुर्याज्जगतः कथमीश्वरः। हिते सदा निषण्णानामीश्वरस्यान्निदर्शनम्। स कथं दूष्यते सद्भिरसतामेव निग्रहात्। सर्वोऽपि निग्रहो

परत्वे। पौराणिकी भणितिरपि परमेश्वरे मोहादिनिवर्तकज्ञानादीनां नित्यसंबन्धमाह—'ज्ञानं वैराग्यमैश्वर्यं तपस्सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥' इति। 'अशेषविषयामोघशुद्धबुद्धिविजृम्भणः। आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा॥' इत्यादि च। असंकुचितविभवः परमेश्वरो हि सिसृक्षुः 'सोऽकामयत बहु स्याम्' (तै.२.६.) इति बहुप्रपञ्चभवनायात्मनो मायालक्षणामिच्छारूपां शक्तिमाश्रयति। 'स तपोऽतप्यत' इति तपस्स्वरूपिकया ज्ञानात्मिकया शक्त्या सकलजीवकर्मानुगुणतत्तच्छरीरसामग्रीमालोचयति। आलोच्य च संकल्पितसकलकरणविदग्धया क्रियाशक्त्या 'इदं सर्वमसृजत' इतीच्छाशक्तिभित्तौ निखिलजगच्चित्रमुन्मीलयति। 'तत् सृष्ट्वा, तदेवानुप्राविशत्' इति सकलकार्यजातमनुप्रविश्य शक्तित्रयसंबन्धेन त्रिगुणभिन्नमूर्तित्रयादिप्रपञ्चरूपो भवति। तदिह

---

लोके न च विद्वेषपूर्वकः। न हि द्वेष्टि पिता पुत्रं यो निगृह्यापि शिक्षये' दिति। एवं च यद्यपि परमेश्वरस्य क्वचित्क्वचिद्दैत्यादिसंहारे क्रोधस्सम्भावितः। तथापि नासौ तमोमूलकः। 'तमसः परस्ता'दित्यादिवचनविरोधात्। किं तु 'क्रोधमाहारयन् तीव्र'मिति रामायणोक्तरीत्या दुष्टनिग्रहार्थमाहार्यस्तद्वश्य एवेति॥ ज्ञानं वैराग्यमिति॥ ज्ञानं सकलप्रपञ्चगताशेषविशेषापरोक्ष्यम्। वैराग्यं निरतिशयस्वात्मानन्दानुभवप्रयुक्तं सकलविषयवैतृष्ण्यम्। ऐश्वर्यं सकलप्रपञ्चनियमनशीलत्वम्। तपः सृष्टिकाले स्रष्टव्यवस्तुजातालोचनम्। सत्यमनृतराहित्यम्। वेदागमादिसत्यैकरूपवचनवक्तृत्वं वा। क्षमा भक्तापराधसहिष्णुत्वं-'नमस्सहमानाये'तिश्रुतिप्रसिद्धम्। धृतिर्धैर्यम्। 'इमा रुद्राय स्थिरधन्वने गिरः''स्थिराय स्थिरधन्वने नम'इति श्रुतिप्रसिद्धं जगद्धारणं वा। स्रष्टृत्वं प्रपञ्चनिर्मातृत्वम्। आत्मसम्बोधः स्वात्मानन्दामृतास्वादः। अधिष्ठातृत्वं प्रपञ्चरूपं शरीरमनुप्रविश्य वर्तमानत्वम्। नित्यमिति। कानिचित्स्वरूपनित्यतया कानिचित्प्रवाहनित्यतया तिष्ठन्तीत्यर्थः। अत्र ज्ञानात्मसम्बोधयोर्विवक्षितं भेदं सम्मत्यन्तरोदाहरणव्याजेन दर्शयति—अशेषविषयेति। तपश्शब्दोऽत्र न कृच्छ्रचान्द्रायणादिपरः। किं तु सृष्टिकाले स्रष्टव्यालोचनरूपज्ञानशक्तिपर इति दर्शयन्प्रसङ्गादिच्छाज्ञानक्रियाशक्तीनां सृष्टावुपयोगप्रकारमाह—असङ्कुचितविभव इत्यादिना। मायारूपामित्यनेन सिसृक्षारूपेच्छाशक्तिरेव जगदुपादानत्वेन प्रसिद्धा मायेति दर्शितम्। तदेवेच्छाशक्तिभित्तावित्यनेनाप्याविष्कृतम्। 'आशिषे'ति प्रागुदाहृतमन्त्रगतविशेषणप्रमाणकमेतत्। अधिष्ठातृत्वं प्रपञ्चानुप्रवेशरूपं तद्धेतुकप्रपञ्चनियमनरूपादैश्वर्याद्भिन्नमिति दर्शयितुं 'तत्सृष्ट्वे'त्यादिकमुक्तम्। 'सोऽकामयत बहु स्या'मित्यादिश्रुत्युदाहरणेषु सर्वेषु 'इति श्रुत्युक्तप्रकारेणे'ति शेषो द्रष्टव्यः। शक्तित्रयेति। ज्ञानेच्छाक्रियाशक्तिमध्ये क्वचित्किञ्चित्प्राधान्येन रजस्सत्वतमोभिस्त्रिगुणैर्ब्रह्मविष्णुरुद्राणामुपाधिरूपैर्ब्रह्मविष्णुरुद्राणां तनुरूपैश्च भिन्नं परस्परविलक्षणं यन्मूर्तित्रयं तत्प्रमुखप्रपञ्चशरीरो भवतीत्यर्थः। नन्वस्मिन्मन्त्रे प्रतिपाद्यस्सर्वसंहर्ता परमेश्वर इत्यनुपपन्नम्। तस्य प्रतिष्ठात्वेन वर्ण्यमानः परमेश्वर इति प्रतीतेरित्याशङ्कानिवारणाय 'यत्र स'इत्यस्य विवक्षितमर्थं दर्शयति—तदिहेति। तत्तस्मात्सर्वसंहारस्य परमेश्वरकर्तृकत्वादिह सर्वसंहारे निमित्ते

सर्वशक्तेः सर्वज्ञस्य शिवस्य महिमा केन विज्ञायते । अतः सर्वसंहर्ता परमेश्वर इति ॥

॥ सू०॥ प्रकरणाच्च ॥ १० ॥

'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' ( कठ. २.२२. ) 'नायमात्मा प्रवचनेन लभ्यः' इति परमेश्वरस्यैव प्रकरणम् । अतश्च परं ब्रह्म परमेश्वरः सर्वसंहर्ता नान्य इति सिद्धम् ॥

इति अत्त्रधिकरणम् ॥ ३ ॥

---

सर्वज्ञस्य सर्वशक्तेस्सर्वसंहारोपयोगिसार्वज्ञ्यसर्वशक्तिमतः परमेश्वरस्य महिमा न केनाप्यवधारयितुं शक्य इति 'क इत्था वेद यत्र स' इत्येतदर्थानुवादः । अयमाशयः । यस्य सर्वसंहर्तृत्वमुक्तं तत्र खलु सर्वविषयकज्ञानशक्तिमत्त्वेनापरिच्छेद्यमहिमत्वमन्वेति न तु तदधिकरणे । अतस्सर्वसंहर्तृत्वस्योपन्यासपूर्वकमपरिच्छेद्यमहिमत्वोक्तिः संहर्तृविषयैव भवतीति तन्निर्वाहाय यत्रेति पदं छान्दसत्वात्प्रथमार्थ एव योजनीयमिति । सूत्रार्थमुपसंहरति–अत इति । सू ॥ प्रकरणाच्च ॥ १० ॥ यत्रेत्यस्य प्रथमान्तताया अवश्यवक्तव्यत्वात् संहर्तुः परमेश्वरत्वाभावे तत्प्रकरणं विरुध्येतेति भावः ॥ अस्मिन्नधिकरणे सिद्धान्तोपपादकं सर्वसंहर्तृत्वलिङ्गं पञ्चकृत्यकारिणः परमेश्वरस्य धर्म इति स्पष्टमेव तल्लिङ्गम् । तथापि परमकारुणिकस्य संहर्तृत्वं न सम्भवतीति शङ्कानिराकरणेनोपपादनीयत्वात् नातिस्पष्टमिति पादसङ्गतिः । अत्र पूर्वपक्षसिद्धान्तयोस्संहाररुद्रात्परमेश्वरो भिन्नत्वेन व्यवहृतस्सर्वसंहर्ता परमेश्वरो न तु संहाररुद्र इति सिद्धान्तव्यवस्थापनार्थं भाष्ये सूत्राभिप्रेतश्रुत्यन्तरोपन्यासेन सृज्यात्संहार्याच्च ततः स्रष्टा संहर्ता च परमेश्वरो भिन्नत्वेनोपपादितश्च । ततश्च विषयवाक्ये मृत्युशब्दोऽवान्तरसंहाराधिकारित्वाविशेषान्मृत्युयमचित्रगुप्तादीनामिव संहाररुद्रस्याप्युपलक्षक इति श्रुत्यन्तरानुसारेण विषयवाक्यतोऽपि तत्सिद्धिरिति भाष्याभिप्रायः । एवं हिरण्यगर्भाधिकरणशारीराधिकरणाभ्यामनेनाधिकरणेन च त्रिमूर्त्युत्तीर्णत्वेन सिद्धे परमेश्वरे परमशिवे सर्वेषां वेदान्तानामिह समन्वयः प्रतिपाद्य इति सिद्धम् । यत्तु पुराणेषु क्वचित्क्वचिद्धिरण्यगर्भस्य नारायणस्य संहाररुद्रस्य वा त्रिमूर्त्युत्तीर्णत्ववचनं तत्सर्वं तत्तद्विभूतिभूताधिकारिपुरुषापेक्षम् । सन्ति खलु त्रिमूर्तीनामधिकारिपुरुषास्तत्र तत्रावान्तरसृष्टिस्थितिसंहारकारिणः । यथा हिरण्यगर्भस्य विराट्कालपुरुषाः नारायणस्यानिरुद्धप्रद्युम्नसङ्कर्षणाः संहाररुद्रस्य भवमृडहराः । एते च वायुसंहितायां निरूपिताः । न च ब्रह्मविष्णुरुद्राणां प्रत्येकं त्रिमूर्तिरूपाधिकारिपुरुषवत्त्वाभ्युपगमे शिवस्य त्रिमूर्त्युत्तीर्णत्ववचनानां भवमृडहरातीतसंहाररुद्रविषयत्वसम्भवेन प्रधानत्रिमूर्त्युत्तीर्णपरमशिवासिद्धिप्रसङ्गः । वायुसंहितायामेव 'सृजत्यशेषमीशस्य शासनाच्चतुराननः । तिसृभिर्मूर्तिभिश्चापि पाति चान्ते निहन्ति च । विष्णुः पालयते विश्वं विश्वयोनेर्नियोगतः । सृजते ग्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः ॥ हरत्येतज्जगत्सर्वं हरस्तस्यैव शासनात् । सृजत्येतच्च विश्वात्मा त्रिधा भिन्नस्तु रक्षति ॥' इति स्वस्वव्यूहभूतमूर्तित्रयातीतप्रधानमूर्तित्रयपरत्वेन परमशिवस्य निरूपणात् । अतो नात्र कश्चिद्विरोध इति सर्वं समञ्जसम् ॥ ॥ इति अत्त्रधिकरणम् ॥ ३ ॥ ॥ ॥

नयमणिमालायाम्

## अथात्त्रधिकरणम् ॥ ३ ॥

**सू० । अत्ता चराचरग्रहणात् ॥ ९ ॥ प्रकरणाच्च ॥ १० ॥**

अत्ता चराचरस्य स्यात्कश्चित्तामसदृशिवादन्यः । न हि स समानुग्रहकृद्घोरां हिंसां वितन्वीत ॥ ३८ ॥
शंकर एव तदन्यो न कश्चिदपि सकलसंहृतौ शक्तः । हिंसाप्यनुग्रहः स्याद्व्रणगदिनां शस्त्रवैद्यकवत् ॥ ३९ ॥

इति अत्त्रधिकरणम् ॥ ३ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ अत्त्रधिकरणम् ॥ २ ॥ श्रीकण्ठमते तु ॥ ३ ॥

### सू० । अत्ता चराचरग्रहणात् ॥ ९ ॥ प्रकरणाच्च ॥ १० ॥

**भगवत्पादमते,** अस्य कठवल्ल्यां श्रूयमाणं 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।' इति वाक्यं विषयः । अत्र कश्चिदोदनोपसेचनसंसूचितोऽत्ता प्रतीयते । त्रयाणां चाग्निजीवपरमात्मनामस्मिन्ग्रन्थे प्रश्नोपन्यासोपलब्धेर्विशेषानवधारणात् स किमग्निरुत जीव आहोस्वित्परमात्मेति संशयः । 'अग्निरन्नाद' इति श्रुतिप्रसिद्धिभ्यामग्निरत्ता स्यात् । उत 'तयोरन्यः पिप्पलं स्वाद्वत्ती'ति दर्शनात् जीवो वात्ता स्यात् । 'अनश्नन्नन्यो अभिचाकशीति' इति दर्शनान्न परमात्मात्ता भवितुमर्हति इति पूर्वः पक्षः । सिद्धान्तस्तु परमात्मैवात्ता । कुतः । **चराचरग्रहणात्**=चराचरयोः स्थावरजङ्गमयोर्मृत्यूपसेचनयुक्तयोरद्यत्वेनास्मिन्वाक्ये **ग्रहणात्**=श्रवणात् । न हि परमात्मानं सर्वसंहर्तारमृतेऽन्यस्य कस्यचिच्चराचरात्तृत्वं संभवतीत्यर्थः । 'अनश्न'न्नित्येतद्ब्रह्मणः कर्मफलभोगप्रतिषेधकं न विकारसंहारप्रतिषेधकमित्यतः परमात्मनो नात्तृत्वानुपपत्तिः । प्रसिद्धं हि ब्रह्मणः सृष्टिस्थितिसंहारकारणत्वं सर्वेषु वेदान्तेषु ॥

इतश्च परमात्मैवात्तेत्याह—**प्रकरणाच्च** ॥ १० ॥ 'न जायते म्रियते वा विपश्चि' दित्यादिना परमात्मनः **प्रकरणात्** प्रकृतत्वात् 'क इत्था वेद यत्र सः' इति दुर्विज्ञेयत्वरूपासाधारणलिङ्गाच्चेत्यर्थः ॥ १० ॥

**श्रीकण्ठमते, अत्ता चराचरग्रहणात्** ॥ ९ ॥ विषयवाक्यं समानमेव । मृत्यूपसेचनमिलितब्रह्मक्षत्रोपलक्षितनिखिलचिदचित्प्रपञ्चभोक्तृतया श्रूयमाणः परमेश्वरो वा संहाररुद्रो वेति संशयः । परमकारुणिकस्य सर्वानुग्राहकस्य परमेश्वरस्य सकलभक्षकत्वानौचित्यात् तथा सर्वसंहर्तृत्वाभ्युपगमे तामसत्वापत्त्या नित्यशुद्धस्य निरवधिकमङ्गलगुणाकरस्य तस्याज्ञानतमोमोहक्रोधादिकामङ्गलगुणसंकरप्रसंगात् स्वरूपलक्षणभूतसर्वज्ञत्वनित्यतृप्तत्वादीनामानर्थक्यापाताच्च ब्रह्मणोऽन्य एतादृशगुणः संहाररुद्रोऽत्ता भवितुमर्हतीति पूर्वः पक्षः । अथर्वशिरसि 'तस्मा उपसंहर्त्रे महाग्रासाय वै नमो नमः' इति परमेश्वरस्य सर्वसंहर्तृभावस्य श्रवणात् क्रोधादिमूलकस्य तमोगुणस्य प्राकृतधर्मत्वात् 'समस्तसाक्षिं तमसः परस्ता'दिति ज्ञानवैराग्याद्यव्ययदशकाधिष्ठानस्य तस्य तमःपरत्वश्रवणात् परिच्छिन्नशक्तेरन्यस्य सकलचराचरसंहरणसामर्थ्याभावाच्च निखिलचराचरप्रपञ्चभोक्ता परमेश्वर एवेति सिद्धान्तः ॥

**सू० ॥ प्रकरणाच्च** ॥ १० ॥ 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति । नायमात्मा प्रवचनेन लभ्य' इतीदं परमेश्वरस्यैव प्रकरणम् । अतश्च परमेश्वरस्सर्वसंहर्ता नान्य इति सिद्धम् ॥ १० ॥

**रामानुजमते, ॥सू०॥ अत्ता चराचरग्रहणात् ॥९॥ प्रकरणाच्च ॥१०॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥** इति चतुस्सूत्रात्मकमिदमधिकरणमिति विशेषः । विषयवाक्यं समानमेव । पूर्वाधिकरणस्यान्तिमसूत्रे परमात्मा न भोक्तेत्युक्तम् । तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशंक्याह—**अत्ता चराचरग्रहणात् ॥ १ ॥** अत्र अत्ता जीवो वा परमात्मा वेति संदेहः । कर्मनिमित्तस्य भोक्तृत्वस्य परमात्मन्यसंभवात् जीव एवात्ता इति पूर्वः पक्षः । कृत्स्नचराचरात्तृत्वस्य परमात्मन्येव संभवात् ईदृशजगदुपसंहाररूपभोक्तृत्वस्य कर्मनिमित्तभोक्तृत्वस्य च विलक्षणत्वाच्च अत्ता परमात्मैवेति सिद्धान्तः ॥ **सू० ॥ प्रकरणाच्च ॥ १० ॥** अस्यार्थः श्रीकण्ठमतवदेव ॥ अतश्चात्ता परमात्मैव ॥ ननु समानप्रकरणे 'ऋतं पिबन्ता'विति मन्त्रे कर्मफलभोगरूपऋतपानकर्तुर्जीवस्यैव सद्वितीयस्याभिधानात् कर्मफलभोगस्य परमात्मन्यसंभवात् द्वितीयेन जीवोपकरणभूतयोर्बुद्धिप्राणयोरन्यतरेण भाव्यमित्यतः पूर्वप्रस्तुतोऽत्तापि स एव भवितुमर्हति इत्याशंक्याह—**गुहां प्रविष्टाविति** । 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ।' इति मन्त्रे न प्राणजीवौ बुद्धिजीवौ वा उच्येते अपि तु जीवपरमात्मानौ हि तथा व्यपदिश्येते । कुतः । **तद्दर्शनात्**=अस्मिन्प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशदर्शनात् । एवं च 'ऋतं पिबन्ता'विति व्यपदेशश्छत्रिन्यायेन | वा प्रयोज्यप्रयोजकभावेन वा तयोरुपपद्यते । इति भावः ।

## अथ गुहाधिकरणम्. ॥ ४ ॥

**इहाधिकरणे सर्वसंहर्तृत्वलक्षणेन सिद्धस्य परमेश्वरस्य 'द्वा सुपर्णा' (श्वे.४.६.) इत्यादिना प्रसिद्धं स्वविभूतिजीवसाहचर्यमभिव्यञ्जयितुमधिकरणान्तरारम्भः—**

**॥ सू० ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥**

**'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः॥ (कठ.३.१.) इति श्रूयतेऽस्य विषयः ॥ इह सुकृतस्थाने परार्धे ब्राह्मणादिशरीरे हृदयगुहां प्रविष्टौ फलभोक्तारौ छायातपाविव विलक्षणौ कौचित् श्रूयेते; तावेतौ बुद्धिजीवौ जीवपरमेश्वरौ वेति संदेहः॥**

सङ्गतिं सूचयन्नुत्तराधिकरणमवतारयति—इहेति । पूर्वाधिकरणे संहाररुद्रासम्भावितसर्वसंहर्तृत्वेन त्रिमूर्त्युत्तीर्णः परमेश्वरः प्रसाधितः । तत्प्रसाधनोपयोगिभाष्यलिखिताथर्वशिखादिश्रुतिसद्भावसंसूचनेनाथर्वशिखाद्युक्तप्रकारेण मुमुक्षुभिः स एव ब्रह्मविष्णुरुद्रादिसकलेतरपरित्यागेनोपासनया साक्षात्करणीय इति च सूचितम् । तदनुपपन्नम् । अथर्वशिखादिपून्मनान्तसकलभुवनातीतसोमलोकवर्तित्वेन श्रुतस्य 'हरिश्चाहं च रुद्रश्च तथान्ये च सुरासुराः। तपोभिरुग्रैरद्यापि तस्य दर्शनकाङ्क्षिणः ॥' इत्यादिषु चतुर्मुखादिवचनेषु मूर्त्यात्मभिरपि दुर्दर्शत्वेन प्रसिद्धस्य तस्यास्मदादिभिरुपासनया साक्षात्कर्तुमशक्यत्वादित्याशङ्कानिवारणाय तस्य सदोपासकसहचरितत्वेन नित्यसौलभ्यं व्यञ्जयितुमधिकरणान्तरारम्भ इत्याक्षेपिकी सङ्गतिरिति भावः । ननु तथा महाप्रभुः परमेश्वरः केन हेतुनास्मदादीनां साक्षात्कारसौकर्याय साहचर्यमनुमोदेतेत्याकाङ्क्षायां निरतिशयवात्सल्यरूपेण सख्येनेति विभावनाय सख्यप्रतिपादकस्य 'द्वा सुपर्णे'ति मन्त्रस्योपन्यासः। तथाभूते वात्सल्ये हेतुसंसूचनाय स्वविभूतिभूतेति विशेषणम्। गोस्वामिनो गोष्विव स्वकीयेषु वात्सल्यं युक्तमिति भावः ॥ सू०॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विषयवाक्यमुदाहृत्य तदर्थोपन्यासेन संशयबीजसूचनपूर्वकं संशयं दर्शयति—ऋतमिति ॥ सुकृतस्थान इति॥ लोक्यतेऽस्मिन्नित्यधिकरणसाधनो लोकशब्दः। ततश्च सुकृतानुष्ठानमस्मिन् दृश्यत इत्यर्थलाभे सति सुकृतस्थान इत्यर्थः पर्यवस्यतीति भावः। परार्धमुपासनाद्यधिकारसम्पादकत्वेनोत्कृष्टं परस्योपासनाद्यधिकारसम्पादकत्वेनोत्कृष्टस्यात्मनोऽर्धं स्थानमिति वा परार्धम् । उभयथापि ब्राह्मणादिशरीरमुच्यत इत्यभिप्रेत्य व्याचष्टे—परार्ध इति ॥ परा उत्कृष्टा मा मतिः ब्रह्मविद्या यस्मिन् जायते तत्परमम् । एभिर्विशेषणैरुपासनाधिकारिणां ब्राह्मणादीनामनुग्रहाय विशिष्य तेषां शरीरे हृदयगुहायामुपासनासाक्षा-

---

सू० ॥ विशेषणाच्च ॥ १२ ॥ अस्मिन्प्रकरणे सर्वत्र जीवपरयोरेवोपास्योपासकभावेन प्राप्यप्राप्तृभावेन च प्रतिपादनादित्यर्थः । अतश्च परमात्मात्तेति सिद्धम् ॥

आनन्दतीर्थमते, ॥ सू० ॥ अत्ता चराचरग्रहणात् ॥ ९ ॥ 'स यद्यदेवासृजत । तत्तदत्तुमध्रियत । सर्वं वा अत्तीति । तददितेरदितित्वम्' इति बृहदारण्यवाक्यं विषयः । अत्र 'सर्वं वा अत्ती'त्युक्तसर्वात्ता अदितिशब्दवाच्यो देवताविशेषो वा विष्णुर्वेति संदेहः । अदितिश्रुतेरत्तृत्वलिङ्गाच्च अदित्याख्यो देवताविशेष इति पूर्वः पक्षः । 'सर्वं वा अत्ती'ति सर्वशब्दस्यासंकुचितसकलचराचरपरत्वस्यैव न्याय्यत्वात् 'स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः' ॥ स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु॥ वासुदेवः परः पुंसामितरेऽल्पस्य वा न वा ॥' इत्यादिवचनाच्च सर्वात्ता विष्णुरेवेति सिद्धान्तः॥

सू० ॥ प्रकरणाच्च ॥ १० ॥ 'नैवेह किंचने'ति विष्णुप्रकरणबलाच्च विष्णुरेवात्तेत्यर्थः ॥

इति सूत्रार्थचन्द्रिकायामत्रधिकरणम् ॥ २ ॥

---

**बुद्धिजीवावेव तौ। कुतः ? 'ऋतं पिबन्तौ' इति भोक्तृत्वावगमात्। परमेश्वरस्य न भोक्तृत्वम्, 'अनश्नन्नन्यो अभिचाकशीति' (श्वे०४.६.) इति दर्शनात्। बुद्धिजीवयोर्भोक्तृत्वं प्रसिद्धमेव। किंच—जीवेश्वरयोश्चेतनरूपयोश्छायातपवदतीव वैलक्षण्यं नास्ति। बुद्धेरचेतनत्वादस्ति जीवाद्वैषम्यम्। तदेवं बुद्धिजीवौ ॥ इति प्राप्ते ब्रूमः—जीवपरमेश्वरावेव गुहागतौ, तयोरेव 'तं दुर्दर्शं गूढमनुप्रविष्टं**

---

त्कारयोग्येन सूक्ष्मरूपेण प्रविष्टस्य परमेश्वरस्योपासकसौलभ्यार्थं तत्साहचर्यमनेन मन्त्रेण प्रतिपाद्यत इति प्रतीयते। अन्यथैषां विशेषणानां वैयर्थ्यात्। 'हृदयगुहा'मिति गुहामित्यस्यार्थोपन्यासः। ऋतं पिबन्ताववितथं भोगं भुञ्जानावित्यस्य 'फलभोक्तारा'वित्यर्थोपन्यासः। 'छायातपाविव विलक्षणा'विति छायातपावित्यस्यार्थोपन्यासः। एभिर्विशेषणैः परमेश्वरस्य तत्साहचर्यं न प्रतिपाद्यते। तस्य भोक्तृत्वापत्त्या मनुष्यादिहृदयगुहाप्रविष्टत्वायोगात्। 'अनश्नन्नि'तिश्रुत्या तस्याभोक्तृत्वावगमात् उभयोश्चेतनत्वेन छायातपवदतिवैलक्षण्यासम्भवाच्च। किं तु बुद्धेरेव तत्साहचर्यं प्रतिपाद्यते। तस्य भोगोपकरणभूतायास्तस्याश्चक्षुषो रूपग्राहकत्वेनेव भोक्तृत्वेन व्यपदेशार्हत्वात्। मुख्यतया भोक्तृत्वेनैव साङ्ख्यादिप्रसिद्धिसद्भावाच्च जडत्वेन जीवविलक्षणत्वाच्चेति प्रतीयते। एवं स्थानविशेषणानां स्थानिविशेषणानां च परस्परविरुद्धार्थोपनायकत्वे सति विशेषणवैयर्थ्यापेक्षया विशेषणानुपपत्तेर्बलवत्त्वात्तत्रापि 'ऋतं पिबन्ता'वित्यस्यापि श्रुत्यन्तरप्रसिद्धस्वस्वानन्दभोक्तृत्वविषयत्वेनोपपत्तेः छायातपवद्वैलक्षण्यस्य यथाकथञ्चित्समर्थयितुं शक्यत्वाच्च। परमेश्वरस्य दुःखभोक्तृत्वापादकत्वशङ्कास्पदगुहाप्रवेशसम्भवासम्भवाभ्यां संशय इत्येव मुख्यतः पर्यवस्यति। ननु यथा वस्तुतो बुद्धेरभोक्तृत्वेऽप्यौपचारिको भोक्तृत्वव्यपदेशो भोगोपकरणत्वात्तथा परमेश्वरस्यापि भोगप्रयोजकत्वादुपपद्यते। अपि च भोगप्रयोजके परमेश्वरे भोगकर्तृत्वसामान्यमस्तीति मुख्य एव तद्व्यपदेशस्सम्भवति। एवं च भोक्तृत्वमुख्यतानुसारेण स्थानविशेषणसाफल्यानुसारेण च छायातपनिर्देशो जडचेतनत्वरूपात्यन्तवैलक्षण्याभावेऽपि अज्ञत्वसर्वज्ञत्वादिवैषम्यमात्रावलम्बनस्स्यादित्याशङ्क्याह—तदेवमिति। प्रकारवाचिना शब्देनायं पूर्वपक्षप्रकारोऽनुसंहितः। यदि ब्राह्मणादिशरीरानुप्रविष्टो जीवद्वितीयश्चेतनो भवेत् तदा जीववदेव तस्यापि मनुष्यशरीरानुप्रवेशप्रयुक्तं तत्कृतसुखदुःखादिभोक्तृत्वमज्ञत्वादिना तदवैलक्षण्यं चानिवार्यम्। तस्मादेकस्मिन्ब्राह्मणादिशरीरे मुख्यभोक्तृत्वादियुक्तचेतनद्वयासम्भवेन जीवद्वितीयस्याचेतनत्वावश्यम्भावात् बुद्धिरेव तद्द्वितीयेत्यभ्युपगन्तव्यम्। एवं च सत्यग्रिमसन्दर्भानुरोधोऽपि लभ्यते। अग्रे हि 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव चे'त्यादिमन्त्रवाक्यैर्जीवशरीरबुद्ध्यादीनां रथिरथसारथ्यादिभावं कल्पयित्वान्ते 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद' मित्यनेन रथसारथ्यादिमज्जीवप्राप्यमध्वनः सर्वस्यापि पारभूतं परमेश्वरस्थानमिति वर्णितम्। तत्र रथिसारथिरूपेण वर्णितयोर्जीवबुद्ध्योरेव शरीराख्यरथप्रवेशोऽपेक्ष्यते न तु प्राप्तृप्राप्ययोर्जीवपरमेश्वरयोरिति सौत्र'मात्माना'विति पदं साध्यनिर्देशार्थं हिशब्दमवधारणार्थं च व्याचष्टे—जीवपरमेश्वरावेवेति। 'तद्दर्शना'दिति हेतौ तत्पदं पक्षवि-

गुहाहितं गह्वरेष्ठं पुराणम्’(कठ०२.१२.) इति गुहाप्रवेशदर्शनात्। यदुक्तमीश्वरस्य न भोक्तृत्वमिति तदपि न युज्यते; ‘प्राणारामं मनआनन्दम्’ (तै०१.६.) इति ब्रह्मणोऽप्यात्मारामस्य मनोमात्रविषयस्वरूपानन्दभोगदर्शनात्। तथा पुराणं च–‘आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा। अनन्तपरमानन्दमकरन्दमधुव्रतः॥’ इत्यादि। जीवस्य स्वकर्मफलभोक्तृत्वं प्रसिद्धम्। एवं च तयोर्भोगस्य साधारणत्वेन श्रवणेऽपि तत्र विशेषः समाश्रीयते भोक्तृविशेषात्, यथा ‘राजभृत्यावन्नं भुञ्जाते’ इत्यत्र तत्तदुचितान्नविशेषः। यदुक्तं तयोर्न वैषम्यमिति, तन्न; यतो ‘नित्यो नित्यानां चेतनश्चेतनानां’ (कठ०५.१३.) इत्यादिश्रुत्या नित्यत्वचेतनत्वादिना

---

शेषणगुहाप्रवेशपरामर्शि। ‘सर्वनाम्नानुसन्धिः वृत्तिछन्नस्ये’ति शब्दविद्भिरुक्तत्वेनान्योपसर्जनस्यापि सर्वनाम्ना परामर्शसम्भवादित्यभिप्रेत्य व्याचष्टे–तयोरिति। परमेश्वरस्य गुहाप्रवेशदर्शने ‘तं दुर्दर्श’मिति मन्त्र उदाहृतः। जीवस्य तद्दर्शने तु ‘या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायते’ति मन्त्र उदाहार्यः। जीवस्य गुहाप्रवेशे पूर्वपक्षिणो विवादाभावादयं मन्त्रः कण्ठतो भाष्ये नोदाहृतः। कर्मफलमत्तीत्यदितिर्जीवः प्राणेन सम्भवति सह वर्तते। देवशब्दादिन्द्रियवाचिनः स्वार्थे तल्प्रत्यय इति देवतामयी चक्षुरादीन्द्रियप्रधानभूता। भूतेभिर्व्यजायत देहाकारविपरिणतभूतोपाधिकं जननं प्राप्नोति मन्त्रार्थः। एवमेतत्प्रकरणगतयोरेव मन्त्रयोर्जीवपरौ गुहाप्रविष्टत्वेन निर्दिष्टाविति तयोरेवात्रापि ग्रहणं युक्तमिति भावः। ‘ऋतं पिबन्ता’विति विशेषणं छत्रिन्यायेन। लक्षणां स्वतन्त्रप्रयोजकानुगतकर्तृत्वसामान्यविवक्षां चानपेक्ष्य द्वयोरपि मुख्यस्वतन्त्रभोक्तृत्वं विषयतयोपपादयति–यदुक्तमित्यादिना। स्यादेतत्। ‘ऋतं पिबन्ता’वित्यस्य परमेश्वरेऽपि तदुचितानन्दभोक्तृत्वविषयतया ‘छायातपा’वित्यस्य ‘ज्ञाज्ञौ द्वा’वित्यादिश्रुत्यन्तरसिद्धवैलक्षण्यविषयतया च सङ्गतावपि गुहाप्रवेशः परमेश्वरे न सङ्गच्छते। तस्य मनुष्यादिशरीरप्रवेशे मनुष्यादेरिव तत्प्रयुक्तदुःखभोक्तृत्वप्रसङ्गात् परशरीरानुप्रविष्टस्यापि पिशाचादेस्तत्ताडनादिना दुःखदर्शनात्। अत‘स्तं दुर्दर्श’मिति मन्त्रे ‘तत्सृष्ट्वा तदेवानुप्राविशत्’ ‘अन्तः प्रविष्टः शास्ता जनाना’मित्यादिश्रुत्यन्तरेषु च परमेश्वरस्य मनुष्यादिशरीरप्रवेशश्रवणं गौणतया नेतव्यम्। यथा राजकीयानां देशव्याप्तिरेव राज्ञो देशव्याप्तिरिति व्यपदिश्यते तथा परमेश्वरनियम्यत्वादिना तदीयानां जीवानां सुरनरतिर्यगादिशरीरानुप्रवेशः परमेश्वरस्य तत्प्रवेश इति व्यपदिश्यते। यद्वा। ‘मीमांसायामस्य प्रवेश’इत्यादिव्यवहार इव ‘गूढमनुप्रविष्ट’मित्यादिषु प्रवेशशब्दो ज्ञानपरः। तथा च सकलप्राणिहृदयगुहान्तर्गताशेषवृत्तान्ताभिज्ञत्वं तेनोच्यते। न च ‘गुहां प्रविष्टा’वित्यत्रापि प्रवेशशब्दः परमेश्वरे तथा योजयितुं शक्यः। जीवतद्वितीययोरुभयोरप्यत्र प्रवेशश्रवणेन आद्ययोजनाया असङ्घटनात्। राजकीयव्याप्तेरेव राजव्याप्तित्वोपचारस्थले राजतदीया देशं व्याप्नुवन्तीति व्यपदेशादर्शनात् छत्र्यच्छत्रिसाधारणैकसार्थवर्तित्ववदिह मुख्यगौणसङ्ग्राहकस्यैकस्य शब्दवृत्तिनिमित्तस्याभावात् वृत्तिद्वयविरोधेन छायातपावित्यस्यावृतानावृतप्रकाशतापरत्वे तेनैव सार्वज्ञ्यस्य सिद्धतया तत्पौनरुक्त्यप्रसङ्गेन च द्वितीययोजनाया अप्यसङ्घटनात्। तस्माद्गुहां प्रविष्टौ बुद्धिजीवावित्येवाभ्युपगन्त-

जीवेश्वरयोः साम्येऽपि वैषम्यमनादिमलसंबन्धभावाभावाभ्यां संभवति। 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यादिश्रुत्या (श्वे०१.९.) ज्ञत्वाज्ञत्वस्वातन्त्र्यास्वातन्त्र्यादि-धर्मवैषम्यं चावगम्यते ॥ ननु कथमेतयोः शरीरसंबन्धे समानेऽपि कस्यचिदज्ञ-त्वादिकानर्थसंबन्धः, कस्यचिदनर्थाभावः, इति चेत्—न, सुखदुःखयोर्नैकाश्र-यत्वं प्रयोजकं, किं तु स्वातन्त्र्यास्वातन्त्र्यमेव। तथाहि श्रुतिः,—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महि-मानमिति वीतशोकः॥' (मु०३.१.) इति। अस्याः श्रुतेः सांप्रदायिकोऽर्थः—जी-वोऽयमनादिना कर्मनिगडेन बद्धः तत्तत्फलभोगानुगुणमायामयबहुकलेबरप्रवि-ष्टो दुर्वारतापसंघातमनुभवन् अनीशया पारवश्येन तद्व्यपोहितुमकुशल एव मुह्यमानः शोचति महामोहनिबन्धनशोकजलधिमग्नः वर्तते। स्वप्रेरकतया स्व-जुष्टं सर्वानुग्राहकमीशमुमासहितं यदा पुनरस्य प्रसादेन पश्यति अपरोक्षेण

---

व्यम्। उपरितनरथिसारथिकल्पनानुगुण्यादित्यभिप्रेत्याशङ्कते—नन्विति। सौत्रेणावधारणेन सूचितं परिहारमाह—सुखेति। कस्य चित्किञ्चिदाश्रयतस्तत्कृतसुखदुःखभोक्तृत्वे तदाश्रयत्वमे-व न प्रयोजकं येन तदाश्रयतोऽन्यस्यापि तद्भवेत् किं त्वस्वातन्त्र्यमपीत्यर्थः। एवकारोऽस्वा-तन्त्र्यस्य मुख्यकारणत्वाभिप्रायः। 'भोक्त्रापत्ते'रित्यधिकरणेऽपि परमेश्वरस्य चिदचिदात्मक-सकलप्रपञ्चशरीरत्वे मनुष्यादिवच्छरीरित्वप्रयुक्तं सुखदुःखभोक्तृत्वं स्यादिति पूर्वपक्षनिराकर-णार्थमेव वक्ष्यते'न खलु शरीरित्वप्रयुक्तमनिष्टभोक्तृत्वं किं तु पराधीनप्रयुक्तमेवे'ति। त-थापि न पौनरुक्त्यम्। यतस्तत्रास्वातन्त्र्यस्य प्रयोजकत्वं लौकिकयुक्त्या स्थापयिष्यते। अत एव तत्र 'लोकव'दिति सूत्रम्। यथा लोके राज्ञः सशरीरत्वेऽप्यनन्यवश्यस्य न स्वाज्ञाननुवृ-त्तिकृतानिष्टप्रसङ्ग इति भोक्तृत्वं नेतरसमानमिति। इह तु तच्छ्रुत्या स्थाप्यते। तदर्थमेवाव-धारणमित्यभिप्रेत्य श्रुतिमुदाहरति—तथा हीति। समाने एकस्मिन्वृक्षे शरीररूप आश्रय इत्यर्थः। अनेनैकशरीराश्रयत्वस्य तत्कृतसुखदुःखभोक्तृतायामतन्त्रत्वं दर्शितम्। निमग्न इत्यनेन जीवस्य शरीरानुप्रवेशेनागाधजलमज्जनेनेव तत्कृतक्लेशभाक्त्वं दर्शितम्। 'ईश ऐश्वर्य' इतिधातोर्भावे'गुरोश्च हल' (पा० ३. ३. १०३.)इति आकारप्रत्यये सति ईशाशब्दः ऐश्व-र्यवाची[1] अनीशया पारतन्त्र्येणेत्यर्थः। मुह्यमान इति ताच्छील्ये शानच्प्रत्ययः। अनादिसि-द्धाज्ञानावृत इत्यर्थः। जुष्टम् उपासनामुखेन सेवितम्[2]। अन्यं शरीरानुप्रवेशेऽपि तत्कृतक्लेशभा-क्त्वाभावेन स्वविलक्षणम्। ईशा स्वातन्त्र्यरूपा शक्तिः साऽस्यास्तीति मत्वर्थीयोऽच्प्रत्यय इति। ईशम् उमासहितमित्यर्थः। अस्य महिमानं सार्वज्ञ्यादिरूपम्। इति प्राप्नोति। एतेर्लटि गुणाभावश्छान्दसः। 'संज्ञापूर्वकविधिरनित्य'इति वा गुणाभावः। एवं पदार्थान्मनसि निधाय मन्त्रवाक्यतात्पर्यं दर्शयति—अस्या इति। मायामयेति। प्राकृतकलेबराणामप्युपलक्षणम्। अ-नीशायाः शोके हेतुत्वं तापसङ्घातप्रतीकाराक्षमत्वद्वारकमित्यभिप्रेत्य 'तं व्यपोहितुमकुशल' इत्युक्तम्। उपासनापि सर्वानुग्राहकपरमेश्वरप्रेरणाधीनेति 'स्वप्रेरकतये'त्यादिना दर्शितम्। एवं शरीराश्रयणप्रयुक्तसुखदुःखभोक्तृतायाः पारतन्त्र्यप्रयुक्तत्वात् स्वतन्त्रस्य परमेश्वरस्य मनुष्यादि-

---

(१) 'स्वातन्त्र्यवाची' इति च. पाठः। (२) 'उपासनादिभिः स्वेन सेवितम्' इति च. पाठः।

जानाति तदाऽस्य महिमानं निरतिशयं अपहतशोकः प्राप्नोतीति । अतः स्वतन्त्रस्य शिवस्यानादिमुक्तस्य शरीरसंबन्धेऽपि जीववन्न तद्गतदोषापत्तिः । तस्माज्जीवपरमेश्वरौ गुहागतौ ॥ पुनरुपपत्तिमाह—

## ॥ सू० ॥ विशेषणाच्च ॥ १२ ॥

किंच—जीवपरमेश्वरावस्मिन् प्रकरणे विशेष्येते, 'न जायते म्रियते वा विपश्चित्' (कठ०२.१८.२०.) इत्यादिना जीवः, 'अणोरणीयान् महतो महीयान्' इत्यादिना परमेश्वरः। एतद्विशेषणं जीवबुद्धिपक्षे कथं संभवतीति ? अतो जीवपरमेश्वरावेव गुहां प्रविश्य प्रेर्यप्रेरकभावेन शरीरशरीरिभावेन चाश्रिताविति निर्णयः ॥

इति गुहाधिकरणम् ॥ ४ ॥

---

शरीरानुप्रवेशेऽपि न तत्प्रयुक्तदोषसप्रसङ्ग इत्युपसंहरति—अत इति॥ उत्तरसूत्रमवतारयति—पुनरिति । रथिसारथिकल्पनानुगुण्येन बुद्धिजीवावेव गुहाप्रविष्टौ वाच्याविति शङ्कावारणाय युक्त्यन्तरमुच्यत इत्याशयः ॥ सू० ॥ विशेषणाच्च ॥ १२॥ जीवपरमेश्वराविति। अयमाशयः। पूर्वोत्तरसन्दर्भपर्यालोचनायामपि गुहाप्रविष्टौ जीवपरमेश्वरावेव लभ्येते । 'न जायते म्रियते''अणोरणीया'नित्यादिमन्त्रेषु जीवपरावुपक्षिप्य 'तमक्रतुं पश्यति वीतशोक'इत्यादिप्रदेशेषु द्रष्टृदृश्यभावेन तौ विशेष्येते ।तत्र जीवस्य द्रष्टृत्वं दृश्यपरसन्निकर्षापेक्षम्। यदि तयोरेव गुहाप्रवेशवर्णने तात्पर्यं कल्प्येत तदा स्थानविशेषणमहिम्ना परोपासनानिरतब्राह्मणादिहृदयगुहासूपासनातज्जन्यसाक्षात्कारविषयत्वयोग्येन सूक्ष्मरूपेण परमेश्वरस्योपासकसन्निकर्षप्रतिपादकत्वेनाकाङ्क्षितार्थसमर्पकोऽयं मन्त्रः उपपादितो भवेत्। बुद्धिजीवपरत्वे तदाकाङ्क्षापूरणमपि न भवेत्। 'तं दुर्दर्श'मित्यादिषु गुहाहितत्वादिवर्णनस्य सकलचेतनाचेतनसाधारणान्तर्यामिविषयतयाप्युपपन्नत्वेनात्र स्थानविशेषणमहिम्नेव तत्र केनचिदुपायेन विशिष्योपासकहृदयेपूपासनासाक्षात्कारविषयत्वयोग्येन प्राप्यरूपभिन्नेन केनचित्सूक्ष्मरूपेणोपासकसन्निकर्षप्रतिपादनस्यापेक्षितस्यान्यतोऽलाभात्। रथिसारथिरूपयोर्जीवबुद्ध्योः शरीररूपरथाश्रयत्वप्रतिपादनं तु नापेक्षितम् । तस्य प्रसिद्धत्वात्। अपिच रथिरथादिकल्पनं न परप्राप्त्यर्थम् । रथत्वादिना कल्पितेनोपासनोपयुक्तेन शरीरेण सोमलोकस्थस्य तस्य प्राप्त्यसम्भवात्। किं तु तद्ज्ञानप्राप्त्यर्थम्। रथसारथ्यादीनामभिमतदेशं प्राप्तुकामेन रथिनेव ज्ञानं प्राप्तुकामेन शरीरेन्द्रियप्रभृतीनां वशीकरणीयत्वात्। 'यस्तु विज्ञानवान्भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथे'रिति ज्ञानोपायभूतस्य तेषां वशीकरणस्य तत्रैवोच्यमानत्वाच्च। तथा च ज्ञानोपायत्वेन रथसारथ्यादिकल्पनमपि दर्शनरूपज्ञानापेक्षितदृश्यसन्निकर्षसिद्धये परस्य गुहाप्रवेशप्रतिपादनमपेक्षत इति तदनुरोधेऽपि गुहाप्रविष्टौ जीवपरावेव सिद्ध्यत इति । एतद्विशेषणमिति। जीवपरयोर्द्रष्टृदृश्यभावेन विशेषणं बुद्धिजीवपक्षे कथं निराकाङ्क्षं भवतीत्यर्थः । अधिकरणार्थमुपसंहरति—अतो जीवेति । अत्र गुहाप्रवेशस्य श्रुत्यन्तरप्रसिद्ध्या ब्रह्मधर्मत्वेन स्पष्टस्यापि पूर्वपक्षदशायां ब्रह्मधर्मत्वासम्भवशङ्काकलुषितत्वान्नातिस्पष्टतेति पादसङ्गतिः ॥

॥ इति गुहाधिकरणम् ॥ ४ ॥

नयमणिमालायाम्

## अथ गुहाधिकरणम् ॥ ४ ॥

**सू० ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥**

वपुषीह बुद्धिजीवौ गुहां प्रविष्टौ न जीवपरौ । छायातपवैषम्यं चेतनयोर्नास्ति न च परो भोक्ता ॥ ४० ॥

जीवपरावस्ति तयोर्वैषम्यं मलिननिर्मलत्वेन । भोक्तृत्वं स्वानन्दे परस्य दृष्टं गुहाहितत्वं च ॥ ४१ ॥

इति गुहाधिकरणम् ॥ ४ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ गुहाधिकरणम् ॥ ३ ॥ श्रीकण्ठमते ॥ ४ ॥

**सू० ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥**

**भगवत्पादमते,** 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः ।' इति कठवल्लीवाक्यमस्य विषयः । किमिह बुद्धिजीवौ निर्दिश्येते उत जीवपरमात्मानाविति संशयः । गुहाप्रवेशवर्णनात् सति संभवे सर्वगतस्य ब्रह्मणो विशिष्टदेशकल्पनस्यायुक्तत्वात् 'अनश्नन्नन्य' इति परमात्मनो भोक्तृत्वनिषेधात् छायातपवद्वैलक्षण्यस्य चेतनाचेतनयोरेव संभवाच्च बुद्धिजीवाविति पूर्वपक्षः । संख्यावतोरेकरूपत्वस्य लोके दृष्टत्वात् 'गुहाहितं गह्वरेष्ठं पुराणम्' 'आत्मानमन्विच्छ गुहां प्रविष्ट'मित्यादिश्रुतिस्मृतिषु परमात्मनोऽसकृद्गुहाहितत्वश्रवणात् सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थदेशविशेषोपदेशे विरोधाभावात् छत्रिन्यायेन प्रयोज्यप्रयोजकभावेन वा द्वयोः ऋतपानकर्तृत्वस्य निर्देश्यत्वात् संसारित्वासंसारित्वयोश्छायातपवत्परस्परविलक्षणत्वाच्च जीवात्मपरमात्मानावेव गुहां प्रविष्टाविति सिद्धान्तः ॥ सूत्रार्थस्तु **गुहां**=हृदयगुहां **प्रविष्टौ । आत्मानौ हि**=चेतनौ हि । कुतः । **तद्दर्शनात्**=संख्यावतोरेकरूपत्वस्य लोके दर्शनात् । इति ॥

**सू० ॥ विशेषणाच्च ॥ १२ ॥** 'सोऽध्वनः पारमाप्नोति' 'देवं मत्वा हर्षशोकौ जहाति' इति जीवपरमात्मनोरेव गन्तृगन्तव्यभावेन मन्तृमन्तव्यभावेन च विशेषितत्वादित्यर्थः ॥

**श्रीकण्ठमते,** विषयवाक्यसंदेहपूर्वपक्षादिकं सर्वं समानमेव प्रायश इति विरम्यते तत्प्रपञ्चनात् ॥

**रामानुजमते तु** अनयोस्सूत्रयोः पूर्वाधिकरणान्तर्भूतत्वादधिकरणान्तरत्वाभावाच्च पूर्वाधिकरण एव इमे सूत्रे प्रपञ्चिते ।

**आनन्दतीर्थमते ॥सू०॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥** विषयवाक्यं भाष्यान्तरसमानमेव । अत्र 'पिबन्तौ' इति निर्दिष्टौ हरिजीवौ वा हरिरेव वा इति संदेहः । द्वित्वभोक्तृत्वलिङ्गात् हरिजीवाविति पूर्वः पक्षः । 'घर्मासमन्तात्त्रिवृत्तं व्यापतुः । तयोर्जुष्टिं मातरिश्वा जगाम' इति श्रुतौ रूपद्वयेन तस्य शरीरगुहाप्रवेशश्रवणात् 'यो वेद निहितं गुहाया'मिति हरेरेव गुहागतत्वप्रसिद्धेः 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते ॥' आत्मान्तरात्मेति हरिरेक एव द्विधा स्थितः । निविष्टो हृदये नित्यं रसं पिबति कर्मजम् ॥' इत्यादिस्मृतिषु हरेः रूपद्वयेन विषयकर्मफलभोक्तृत्वप्रतिपादनात् 'अनश्न' न्नित्यस्य 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।' इति पात्मवचनानुसारेण अशुभकर्मफलविषयत्वाच्च हरेरेव द्वे रूपे पिबन्ताविति निर्दिश्येते इति सिद्धान्तः । सूत्रार्थस्तु 'तत्तु' इति विभक्तिविपरिणामेनानुवर्तते । **आत्मानौ**=आदेयं मातीति व्युत्पत्त्या 'ऋतं पिबन्ता'विति श्रुतिस्थपिबच्छब्दोदितशुभकर्मफलभोक्तारौ । **ते तु**=आत्मान्तरात्माख्यविष्णुरूपे एव । न तु जीवेश्वरौ । कुतः । **हि**=यस्मात् । तौ **गुहां प्रविष्टौ**=हृदयगुहां प्रविष्टौ । तस्मादित्यर्थः । हिशब्देन हृदयगुहास्थितत्वलिङ्गस्य 'यो वेदे'ति श्रुतिप्रसिद्धत्वं सूचयति । द्विरूपतया शरीरहृदयगुहास्थितत्वे प्रमाणमाह— **तद्दर्शनादिति** । तस्य हरेः द्विरूपतया शरीरहृदयगुहास्थितत्वस्य 'घर्मासमन्ते'ति श्रुतावुक्तत्वादित्यर्थः ॥

**सू० ॥ विशेषणाच्च ॥** चः युक्तिसमुच्चयार्थः । 'यः सेतु'रिति एकवचनेन विशेषणादेक एव पाता । स च सेतुत्वब्रह्मत्वादिना विशेषितत्वाद्विष्णुरेव न जीव इत्यर्थः ॥ १२ ॥

इति सूत्रार्थचन्द्रिकायां गुहाधिकरणम् ॥ ३ ॥

---

## अथ अन्तराधिकरणम् ॥ ५ ॥

**हृदयगुहान्तर्वर्तितयोपास्यस्य परमेश्वरस्येहोपासनस्थानान्तरमुच्यते—**

### ॥ सू० ॥ अन्तर उपपत्तेः ॥ १३ ॥

**छान्दोग्ये श्रूयतेऽस्य विषयः 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति**

---

सङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति—हृदयगुहेति। उपासकनेदिष्ठोपासनास्थानप्रदर्शनप्रसङ्गात्तथाभूतस्यैवोपासनास्थानान्तरस्य प्रदर्शनार्थमधिकरणान्तरमारभ्यत इत्यर्थः ॥ सू ॥ अन्तर उपपत्तेः ॥ १३ ॥ विषयवाक्यमुदाहृत्य संशयं दर्शयति—छान्दोग्य इत्यादिना ।

होवाच एतदमृतमभयमेतद्ब्रह्म' इत्यादि ॥ इहामृतत्वादिलक्षणोऽक्ष्यन्तःश्रूयमाणः पुरुषः ईश्वरो वा अन्यो वा ?॥ इति संशये परमेश्वरादन्य इति वदामः,

नन्वमृतत्वादिलक्षण इति धर्मिणं निर्दिश्य परमेश्वरस्तदन्यो वेति कथं सन्दिह्यते। परमेश्वरैकान्तिका एव ह्यमृतत्वाभयत्वब्रह्मत्वश्रुतयः। तदनन्तरम'प्येतं संयद्वाम इत्याचक्षते। एतं हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेदे'त्यादिना संयद्वामत्ववामनीत्वभामनीत्वादिस्वस्वानुगुणफलपर्यवसायित्वेन बलवन्ति ब्रह्मलिङ्गानि प्रतिपाद्यन्ते। पुष्करपलाशवाक्येनार्चिरादिवाक्येन च ब्रह्मविद्याफलत्वेन प्रसिद्धं सकलपापानाश्लेषब्रह्मप्राप्तिलक्षणं फलमिह प्रतिपाद्यते। प्रकरणादयमक्षिपुरुषः परमेश्वरोऽवसीयते। एवं छन्दोगानामुपनिषद्युपाख्यायते। उपकोसलः कामलायनः सत्यकाममाचार्यमुपसन्नः तस्य द्वादशवर्षाण्यग्नीन्परिचरन्नास्त। तस्मै ब्रह्मोपदेशमकृत्वैवाचार्ये प्रोषिते सत्याधिव्याधिपरवशमनश्नन्तं तदाद्याचार्याग्निपरिचर्यायामवहितं तमवेक्ष्य गार्हपत्यदक्षिणाग्न्याहवनीयास्त्रयोऽप्यग्नयस्सम्भूय करुणया तस्मै 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'त्यादिना ब्रह्मविद्यामुपदिश्य प्रत्येकं च स्वस्वविषयां विद्यां 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मी'त्यादिना 'य एष चन्द्रमसि पुरुषो दृश्यत'इत्यादिना 'य एष विद्युति पुरुष'इत्यादिना चोपदिदिशुः। तदनन्तरं सर्वेऽग्नयस्सम्भूयै'षा सोम्य तेऽस्मद्विद्या चात्मविद्या चे'त्यभिधाया'चार्याद्धेव विद्या विदिता साधिष्ठं प्राप'दिति श्रुत्यनुसारेण स्वोपदिष्टविद्या तदाचार्यकर्तृकगत्युपदेशेन साधिष्ठत्वं प्राप्नोत्वित्यालोच्या'चार्यस्तु ते गतिं वक्ते'त्यवोचन्। ततः प्रत्यागत आचार्यः प्रसन्नमुखमुपकोसलं वीक्ष्य 'ब्रह्मविद इव वै सोम्य ते मुखं भाति को नु त्वामनुशशासे'ति पृष्ट्वा सहाग्निभिर्भीते तस्मिन्नग्नयोऽस्मा उपदिदिशुरिति निश्चित्य'किन्नु सोम्य किल तेऽवोच'न्निति पृष्ट्वा एतावदुपादिशन्निति तेनोक्ते तत्र वक्तव्यशेषोऽस्तीत्यवधार्य 'अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति स्ववक्तव्यं प्रतिज्ञाय 'ब्रवीतु मे भगवा'निति तेन प्रार्थितः संयद्वामत्वादिगुणकमक्षिपुरुषमुपदिश्य तदुपासकस्या'र्चिषमेवाभिसम्भवन्ती'त्यादिना 'एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इत्यन्तेनार्चिरादिमार्गप्राप्त्यन्तं पुनरावृत्तिरहितं ब्रह्मप्राप्तिफलमुपदिदेशेति। अतः प्रकृतब्रह्मविद्यायामेव स्थानगुणविशेषोपदेशार्थं 'यएषोऽक्षिणी'त्यादि प्रवृत्तमित्यवसीयते। 'य एष'इति सर्वनामश्रुत्योः प्रकृतपरामर्शित्वस्वाभाव्यादपि तथावसीयते। एवं च कथमिहाक्षिपुरुषः परमेश्वरादन्य इति कोटेरुत्थानं परमेश्वरादन्यश्च भवन्नयं वक्ष्यमाणपूर्वपक्षानुसारेण जीवः प्रतिबिम्बो वा स्यात्। नोभयथापि सङ्गच्छते। न हि परमेश्वरपक्षे श्रुतिलिङ्गवाक्यप्रकरणवज्जीवपक्षे प्रतिबिम्बपक्षे वा श्रुतिलिङ्गादिषु किञ्चिदपि प्रमाणं शङ्कास्पदमस्ति। अक्षिस्थत्वलिङ्गमस्तीति चेत् न। 'यश्चक्षुषि तिष्ठन्य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्मे'त्यादिश्रुत्यन्तरेषु परमेश्वरेऽपि श्रुतत्वेन साधारणत्वात्। तस्मादनुपपन्नोऽयं संशय इति चेदुच्यते। अमृतत्वादिलक्षण इति संशये सिद्धान्तकोटेर्बीजोपन्यासः। अक्ष्यन्तश्श्रूयमाण इति पूर्वपक्षकोटेः। यथा चाक्ष्याधारत्वं परमेश्वराद्व्यावृत्तममृतत्वादीनां प्रतिबन्दीभवितुं क्षमं च भवति तथानुपदमेव पूर्वपक्षोपपादनेन स्पष्टीकरिष्यामः।

परमेश्वरस्य 'दहरं विपाप्मम्' (महाना.१०.११.) 'पद्मकोशप्रतीकाशम्' इत्यादिषु हृदयपुण्डरीक एव सन्निधानश्रवणात् । जीवस्य तु रूपादिग्रहणे चक्षुरि-

---

परमेश्वरस्येति । अयमाशयः । अक्ष्याधारत्वं स्वमहिमप्रतिष्ठस्य परमेश्वरस्य मुख्यं तावन्न सम्भवति । रूपविशेषावच्छेदोपाधिकमौपचारिकं सम्भवदपि तदङ्गीकरणीयम् । यद्यनन्यथासिद्धमक्ष्यन्तश्श्रूयमाणस्य परमेश्वरत्वगमकं श्रुतिलिङ्गादिषु किञ्चिदिह जागृयात् । न त्वेतदस्ति । आत्मब्रह्मश्रुत्योस्संयद्वामत्वादिगुणश्रवणस्य चेतिशब्दशिरस्कत्वेन 'मनो ब्रह्मे'त्यादिवदतस्मिंस्तद्रूपप्रत्ययपरत्वावगमात् तत्समभिव्याहारेणामृतत्वादिश्रवणानामपि तन्मात्रपरत्वावगमात् । अमृतत्वाभयत्वयोर्मुक्तौ सत्त्वेन तच्छ्रवणयोर्भाव्यवस्थाविषयत्वेनोपपत्तेश्च । अब्रह्मोपासनयाप्युदाहृतफलानां वैवाहिकवरवधूदर्शनेनाभ्युदयवद्वचनबलादुपपत्तेः । न ह्यब्रह्मविदामर्चिरादिमार्गो नास्तीति नियमः । अब्रह्मविदामेव पञ्चाग्निविद्योपासकानां 'तद्य इत्थं विदु'रित्यादिवचनबलेन तदभ्युपगमात् । ब्रह्मप्रकरणानुवृत्तिरप्यसिद्धा । 'प्राणो ब्रह्मे'त्यादे'र्मनोब्रह्मे'त्यादिसारूप्येण ब्रह्मदृष्टिविधिपरत्वात् । तस्य ब्रह्मोपासनापरत्वेऽपि तदग्निवाक्यं 'य एषोऽक्षिणी'त्याचार्यवाक्यमिति वक्तृभेदादग्निविद्यादिभिर्व्यवधानाच्च । न चा'चार्यस्तु ते गतिं वक्ते'ति ब्रह्मोपासनान्वय्याचार्यवक्तव्यशेषश्रवणादग्निविद्यानां तदङ्गत्वाच्च न वक्तृभेदाग्निविद्योपदेशाभ्यां तत्प्रकरणविच्छेदो भवेदिति वाच्यम् । गत्यभिधानमात्रस्याचार्यवक्तव्यतया परिशेषितत्वेनार्चिराद्यभिधानस्य तदन्वयलाभेऽपि स्थानगुणयोराचार्यवक्तव्यत्वेनापरिशेषिततया 'य एषोऽक्षिणी'त्यादेः प्रकृते ब्रह्मण्यक्षिस्थानसंयद्वामत्वादिगुणविधायकत्वेनान्वयालाभात् । अग्निभिरे'षा सोम्य तेऽस्मद्विद्या चात्मविद्या चे'ति विद्यां निरपेक्षमुपदिष्टतयोपसंहृत्य गतिमात्रमाचार्येणोपदेष्टव्यमिति परिशेषितेऽप्याचार्योऽभ्युपदिष्टस्य ब्रह्मणोऽक्षिस्थानं संयद्वामत्वादिगुणजातं चाधिकमुपदेष्टव्यमस्तीत्यालोच्य स्वयमुप दिदेशेति तदन्वयसमर्थने अग्नीनामनृतवादित्वस्यानभिज्ञत्वस्य वा प्रसङ्गात्। अपहते 'पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्चे'त्यग्निविद्यानां पृथक्फलश्रवणेन प्रकृतविद्यात्वाभावाच्च। नन्विहाक्षिपुरुषोपन्यासानन्तरमर्चिरादिगतिः न प्रकृतब्रह्मवित्प्राप्यत्वेन कीर्तिता न वा ताटस्थ्येन । किं तु 'य एवं वेदे'त्यक्षिपुरुषविदमुपक्षिप्य 'अथ यदु चैवास्मि'न्नित्यादिना तत्प्राप्यत्वेन कीर्तिता। तथा चाग्निभिस्स्वोपदिष्टब्रह्मवित्प्राप्यगतेराचार्यवक्तव्यत्वेन परिशेषितायास्तेनाक्षिपुरुषवित्प्राप्यत्वेनोपदिष्टत्वादक्षिपुरुषः प्रकृतं ब्रह्मैवेति चेन्नैवम्। आचार्यस्स्वयमपि विद्यान्तरमुपदिश्य तदर्थमर्चिरादिगतिमुपदेक्ष्यतीत्येतदग्नयो निश्चित्य तत्सर्वमनुद्घाट्य यां गतिमाचार्य उपदेक्ष्यति सा प्रकृतब्रह्मविदोऽपीत्यभिप्रायेणा'चार्यस्तु ते गतिं वक्ते'त्यग्नयोऽवोचन्नित्युपपादनसम्भवे तन्मात्रमवलम्ब्य निरपेक्षतयोपसंहृताया बहुविद्यान्तरव्यवहितायाः पुनस्स्थानगुणविध्यङ्गीकारायोगात्। तस्माद्दहरविद्यादिषु हृदयपुण्डरीकाधारस्येवाक्ष्याधारस्यात्र ब्रह्मत्वे दृढश्रुतिलिङ्गादिप्रमाणाभावात् ब्रह्मणो हृदयपुण्डरीकाधारत्वमिवाक्ष्याधारत्वमिहौपचारिकं नाश्रयणीयम् । जीवपरिग्रहेण तस्य मुख्यतयोपपादनसम्भवात् । जीवो हि ब्रह्माश्रितो न ब्रह्मवत् स्वमहिमप्रतिष्ठः। जिज्ञासितार्थग्रहणाय मनसा सह सञ्चरन् रूपादिग्रहण-

न्द्रियप्रवेशोऽस्ति, मनःसंबन्धात्। स एवाक्षिपुरुषः। अथवा छायापुरुषः। इति प्राप्ते निरूपयामः–परमेश्वर एवाक्ष्यन्तःपुरुष इति, निरुपाधिकामृतत्वाभय-

---

काले मनसोऽक्षिसंयोगे स्वयमपि तत्संयुक्तस्सन्मुख्यतयैव भवत्यक्ष्याश्रितः। एतेन 'यश्चक्षुपि तिष्ठन् य एषोऽन्तरक्षिणी'त्यादिश्रुतिषु ब्रह्मणोऽप्यक्ष्याधारत्वं प्रसिद्धमिति निरस्तम्। स्वमहिमप्रतिष्ठे तस्मिन्मुख्यस्य तस्यासम्भवात्। अमुख्यपरिग्रहस्य च मुख्ये सम्भवत्ययुक्तत्वात्। वस्तुतस्तु, ब्रह्मणो हृदयपुण्डरीकाधारत्वस्येवाक्ष्याधारत्वस्य नास्त्यमुख्यस्यापि प्रसिद्धिः। 'यः पृथिव्यां तिष्ठ'न्नित्यादेरन्तर्यामिब्राह्मणस्य 'स एवाधस्तात् स उपरिष्टादाकाशवत्सर्वगतश्च नित्य'इत्यादिश्रुत्यन्तरवदपरिच्छिन्नस्य ब्रह्मणः सर्वानुस्यूतिमात्रविषयत्वात् 'य एषोऽन्तरक्षिणी-त्यादेः प्रकृतविषयवाक्यवज्जीवपरत्वसम्भवात्। न चा 'न्तस्तद्धर्मोपदेशा' (ब्र० १.१.२१.सू.) दित्यधिकरणे तस्य ब्रह्मविषयत्वं सिद्धमिति वाच्यम्। सर्वपापोदयलिङ्गेन आदित्यान्तर्वर्त्येव ब्रह्म नाक्ष्यन्तर्वर्तीत्यधिकाशङ्काया इहैव निवर्तनीयत्वात्। न चोभयत्रापि निर्णायकलिङ्गं तुल्यमिति शङ्कनीयम्। सर्वपापोदयलिङ्गस्यान्तरादित्यवर्तिन्येव श्रवणात् 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामे'ति नाम्नोऽतिदेशान्नामप्रवृत्तिनिमित्तत्वेन सर्वपापोदयोऽपि तत्र प्राप्नुयादिति चेन्न। नामातिदेशस्य तत्प्रवृत्तिनिमित्तप्रापकत्वनियमाभावात्। 'घनसारश्चन्द्रसंज्ञ'इत्यादिदर्शनात् सर्वपापोदयलिङ्गेन आदित्यान्तर्वर्ति ब्रह्मेति सिद्धौ तन्नामरूपातिदेशविषयस्य 'तन्नामनामा तद्रूपस्तत्कार्यकरणक्षमः। तत्तुल्यव्यवहारश्च तदाज्ञापरिपालक'इति निर्दिष्टस्य संहाररुद्रस्येव स्वरसतस्ततो भेदप्रतीत्या तस्मिन्ब्रह्मासाधारणसर्वपापोदयव्यतिरेकस्यैव प्राप्तेश्च। न च सर्वलोककामेश्वरत्वलिङ्गेन तस्य ब्रह्मत्वसिद्धिः। तल्लिङ्गसिद्धेरक्ष्यादित्यान्तर्वर्तिपुरुषद्वयैक्यसिद्ध्यधीनत्वस्य तत्रैवाधिकरणे दर्शितत्वेन तद्भेदशङ्कायां तदसिद्धेः। न च 'सैव ऋक्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्मे'तिश्रुतेन सार्वात्म्येनाक्षिपुरुषस्य ब्रह्मत्वसिद्धिः। ऋक्सामाद्यात्मकत्वस्य तैत्तिरीयोपनिषदादिषु मण्डलाभिमानिनि जीवेऽपि प्रसिद्धत्वात् ऋक्सामादिसमभिव्याहारेण तत्र ब्रह्मशब्दस्यापि वेदसामान्यपरत्वौचित्यात्। न च ऋक्सामगेष्णत्वेन तस्य तत्सिद्धिः। ऋक्सामयोः पृथिव्याद्यात्मकत्वस्येव तस्याप्यक्षिपुरुषे ध्यानार्थोपपत्तेः। एतेन 'तद्य इमे वीणायां गायन्ति एतं ते गायन्ती'ति लौकिकगानेऽप्यनुवृत्तत्वं ब्रह्मलिङ्गमित्यपि शङ्का निरस्ता। 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्ती' तिवत्तस्यासदर्थवादत्वात्। तस्मादिहाक्षिपुरुषो जीव इत्येव युक्तम्। न च तस्मिन्नुपासकसाक्षात्कारविषये ब्रह्मणीव दृश्यत्वोक्तिर्नान्वेतीति वाच्यम्। तस्य प्रथमप्रवृत्ताक्षिस्थत्वलिङ्गानुसारेण ज्ञेयत्वमात्रपरत्वोपपत्तेः। यदि दृश्यत्वं मुख्यमुपपादनीयं तर्ह्ययमक्षिपुरुषः प्रतिबिम्बोऽस्तु तत्र चाक्षुषसाक्षात्कारविषये मुख्यस्य तस्य सम्भवात् ब्रह्मण्यपि तदसंभवात्। न च पुरुषश्रुतिश्चेतनवाचिनी नाचेतने प्रतिबिम्बे सङ्गच्छत इति वाच्यम्। 'य एष' इति प्रसिद्धिलिङ्गेन दृश्यत्वलिङ्गेन च सन्दृष्टायास्तस्याः पुरुषप्रतिबिम्बविषयत्वकल्पनोपपत्तेः। देवदत्तप्रतिबिम्बे देवदत्तव्यवहारदर्शनादिति। एवं जीवः प्रतितिम्बो वाक्षिपुरुषः न तु परमेश्वर इति प्राप्ते पूर्वपक्षद्वयव्यावर्तकं सिद्धान्तमाह–परमेश्वर एवेति। निरुपाधिकेति। यत्रोच्यमानस्यार्थस्याप्तवचनसम्बन्धः प्रतिपाद्यः

त्वादीनामस्मिन्नेवोपपत्तेः ॥

यदुक्तमक्ष्यन्तःस्थितिरीश्वरस्य न श्रुतेति तत्राह—

## ॥ सू ॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥

'यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः' (बृह० ५.७.) इत्यादिश्रुत्या चक्षुःस्थिति-नियमनादिकमीश्वरस्य व्यपदिश्यते । अतः पर एवायमीश्वरः ॥

---

तत्रेतिशब्दो नार्थविवक्षां वारयति यथा--'इति ह स्मोपाध्यायः कथयति।' तस्मादिहामृतत्वा-दीनामाचार्यवचनसम्बन्धस्य प्रतिपाद्यत्वात् इतिशब्दो 'मनो ब्रह्मे'त्यादाविव नार्थविवक्षाया वारकः । स्वाभाविकं चामृतत्वादिकं जीवस्य न सम्भवति प्रतिबिम्बस्य तु कथमपि न सम्भ-वति । अतोऽमृतत्वादिकं परमेश्वर एवोपपद्यते । अतो ब्रह्मश्रुत्यमृतत्वाभयत्वसंयद्वामत्ववा-मनीत्वभामनीत्वलिङ्गैर्बहुभि'रेतद्ब्रह्मे'त्यादिवाक्यापादितसम्बन्धैरक्षिपुरुषस्य ब्रह्मत्वनिश्चये सत्यक्ष्याधारत्वमेकमौपचारिकं नेतव्यम् । उपक्रमस्थैकप्रमाणापेक्षयोपरितनानेकप्रमाणानां ब-लवत्त्वस्य पूर्वं निर्णीतत्वादिति भावः ॥ अक्ष्याधारत्वमौपचारिकमपि परमेश्वरे न प्रसिद्धमस्ति इति शङ्कोत्तरत्वेनोत्तरसूत्रमवतारयति–यदुक्तमिति ॥ सू ॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥ अन्तर्यामिब्राह्मणे तिष्ठन्नित्यवस्थानवाचकशब्दस्यापि श्रूयमाणत्वात् ब्रह्मणः स्वमहिमप्रतिष्ठ-स्याप्यौपचारिकमक्ष्याधारत्वं विवक्षितमिति गम्यते । इह दृश्यत इत्युपासनाकाले वर्तमानत्व-व्यपदेशादपि तस्य तद्विवक्षितमिति गम्यते । न हि रूपग्रहणकालबिम्बसन्निधानकालयोरि-वोपासनाकाले जीवप्रतिबिम्बयोरक्षिस्थितिस्सम्भवति। ननु,'नेत्रस्थं जाग्रतं विद्यात्कण्ठे स्वप्नं विनिर्दिशेत् । सुषुप्तौ हृदयस्थं तु तुरीयं मूर्धनि स्थित'मिति जागरदशायां सर्वस्यापि जीवस्या-क्षिस्थत्वश्रवणात् उपासनाकालेऽक्ष्यभिमुखबिम्बसन्निधापनसम्भवाच्च तत्काले तयोरक्षिस्थि-तिस्सम्भवतीति चेन्न । 'तुरीयं मूर्धनी'त्युपासनाकाले तु तुरीयशब्दोक्तजीवस्य मूर्धनि स्थि-तिश्रवणेन नासाग्रन्यस्तदृष्टिके तस्मिन्काले बिम्बसन्निधापनकल्पनागौरवाभ्युपगमेऽपि प्रति-बिम्बोदयानुपपत्त्या च तदसम्भवात् । तस्मात्तन्नियन्तुः परमेश्वरस्य नियमनार्थमुपासनाका-लेऽप्यक्षिणि सन्निधानमस्तीति स एवेहाक्ष्याधारोऽस्त्विति तदेव तस्यौपचारिकमक्ष्याधारत्वमिह विवक्षितमित्यभ्युपगन्तव्यम् । न चाक्ष्यभिमानिन आदित्यजीवस्याप्युपासनाकालसाधारणी तत्र स्थितिरस्तीति स एवेहाक्ष्याधारोऽस्त्विति शङ्क्यम्। 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठित'इति श्रुते-स्तत्परिग्रहेऽप्यक्ष्याधारत्वस्यौपचारिकत्वानपायेन तं परिगृह्य ब्रह्मश्रुत्याद्युपेक्षणायोगात् । तदेतत्सर्वमभिप्रेत्य सूत्रे 'स्थानादी'त्यादिग्रहणमपि कृतमिति मत्वा भाष्ये तद्विवरणार्थं 'नियमनादिक'मित्युक्तम्। तत्रादिशब्देन तु 'य एषोऽन्तरक्षिणी'ति श्रुतिमपि प्रागितिशब्देन प्रकारवाचिना सङ्गृहीतामभिप्रेत्य तत्प्रतिपाद्यस्याक्ष्याधारस्य परमेश्वरत्वसाधकं सार्वात्म्या-दिकं सङ्गृहीतम् । न ह्यादित्यजीवस्य ऋक्सामाद्यात्मकत्वं मुख्यं सम्भवति यदि तस्या-

छायापुरुषपक्षे पुनरनुपपत्तिमाह—

॥ सू ॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥

'कं ब्रह्म खं ब्रह्म' इति पूर्वमस्य सुखविशिष्टतयाऽभिधानादेवायमीश्वरः ।

---

क्ष्याधारत्वं मुख्यं सम्भवेत्तदा प्रथमश्रुतमुख्यत्वलोभादौपचारिकमपि तत्परिगृह्येत । तदपि रश्मिद्वाराक्षिणि प्रतिष्ठिते तस्मिन्मुख्यं न सम्भवतीत्युक्तम् । सर्वपापोदितत्वमपि तस्य परमेश्वरत्वसाधकम् । यथा खल्वग्निहोत्रनाम्नः कौण्डपायिनामयने कर्मण्युपदिष्टस्य 'सिंहो देवदत्त' इत्यादिवत्सिद्धधर्मावलम्बनगौणत्वसम्भवेऽप्यनुष्ठानोपयोगिधर्मलाभाय 'पिष्टपिण्डाः सिंहाः क्रियन्ता'मित्यत्रेव साध्यधर्मावलम्बनगौणत्वमङ्गीकृत्य तस्य नैयमिकाग्निहोत्राङ्गकलापप्रापकत्वमुक्तम् । तथाप्यक्षिपुरुषेऽतिदिष्टस्योदितिनाम्नः कर्पूरेऽतिदिष्टस्य चन्द्रनामजातस्येव क्लृप्तप्रवृत्तिनिमित्तं विनाभिधायकत्वसम्भवेऽप्युपासनोपयोगिगुणलाभाय क्लृप्तप्रवृत्तिनिमित्तावलम्बनाभिधायकत्वमङ्गीकृत्य तस्यादित्यपुरुषश्रुतसर्वपापोदितत्वतत्फलप्रापकत्वं वक्तुं युक्तमिति भावः । अतो जीवप्रतिबिम्बग्रहणासम्भवात् परमेश्वर एवायमक्षिपुरुष इत्याह—अतः पर एवायमिति ॥ एवं पूर्वपक्षद्वयसाधारणसिद्धान्तो दर्शितः । उत्तरसूत्रं प्रतिबिम्बपूर्वपक्षानुपपत्तिप्रदर्शनार्थत्वेनावतारयति—छायेति ॥ सू ॥ सुखविशिष्टाभिधानादेव च ॥१५॥ सुखविशिष्टाभिधानादिति । कं ब्रह्मेति । कशब्दः सुखवाची नीलादिशब्दवत्प्रकारिपर्यन्त इति भावः । ननु प्राणादिषु प्रत्येकं ब्रह्मपदयोगा'न्नाम ब्रह्म''मनो ब्रह्मे'त्यादाविव ब्रह्मदृष्टिविधिपरत्वं युक्तम् । अत एव 'प्राणं च हास्मै तदाकाशं चोचु'रिति प्राणादिशब्देन निगमनं दृश्यते । प्राणादिप्रधानत्वात् । ब्रह्मप्रधानत्वे हि ब्रह्मशब्देन निगमनं स्यात् । अतो नात्र ब्रह्म प्रकृतमस्ति । येन 'य एष' इति सर्वनाम्नोः प्रकृतपरामर्शित्वादक्षिपुरुषो ब्रह्म भवेदिति चेदुच्यते । नेदं ब्रह्मदृष्टिविधानं 'प्राणो ब्रह्मे'त्याद्युपदेशानन्तरं 'विजानाम्यहं यत्प्राणो ब्रह्मे'ति'कं च तु खं च न विजानामी'त्युपकोसलप्रश्नस्य'यद्व्यापकं तदेव खं यदेव खं तदेव क'मिति तदुत्तरस्य चानन्वयप्रसङ्गात् । न हि 'प्राणो ब्रह्मे'त्यादीनां प्राणादिषु ब्रह्मदृष्टिविधिपरत्वेन वाक्यत्रयरूपतायामाद्यस्य वाक्यस्यार्थं जानामि अन्ययोरर्थं न जानामीति विशिष्य प्रश्नस्यावकाशोऽस्ति । न वा कखशब्दोक्तयोरैक्येनोत्तरं सङ्गच्छते । 'यद्व्यापकं तदेव ख'मिति वैषयिकसुखे भूताकाशदृष्टिपरं 'यदेव खं तदेव क'मिति भूताकाशे वैषयिकसुखदृष्टिपरमित्येवं योजनायामपि 'कं ब्रह्म''खं ब्रह्मे'त्यनयोरर्थाज्ञानेन पृष्टवन्तं प्रति तदुत्तरत्वेनान्वयो न सङ्गच्छते । न हि कयोश्चिद्विध्योरभिप्रायाज्ञानेन प्रश्नस्य विध्यन्तरवचनमुत्तरं भवति । तस्मादित्थं प्रश्नोत्तरे योजनीये । 'प्राणो ब्रह्मे'ति वाक्यस्यार्थं जानामि । ब्रह्मणि हि सकलजगत्प्राणयितृत्वमुपास्यगुण इत्युपपद्यते । कखशब्दयुक्तवाक्यद्वयार्थं तु न जानामि । यदि हि प्राणत्ववत् कशब्दोक्तसुखरूपत्वं खशब्दोक्तपरमव्योमरूपत्वं चोपास्यगुणान्तरं विवक्षितं स्यात् तदा 'कं ख' मित्येतावदेव वक्तव्यं भवेत् । तथा सति प्राणत्वादिगुणविशिष्टं ब्रह्मोपास्यमित्येकेनैव वाक्येन विहितं भवति । 'कं ब्रह्म खं ब्रह्मे'ति प्रत्येकं ब्रह्मशब्दयोगेन पुनर्वाक्यद्वयं किमर्थम् । प्राणसुखभूताकाशेषु ब्रह्मदृष्टिविधयस्त्रयोऽत्रेति वक्तुं न शक्यते । न हि मोक्षार्थमेकां ब्रह्मविद्यामर्थयमानं मां प्रत्यब्रह्मविद्या बह्वीर्भवंत उपदिशेयुरिति

**न हि छायापुरुषे सुखसंभवः॥ यदुक्तमक्षिपुरुषस्य जीवरूपत्वं तत्राह—**

प्रश्नाभिप्रायः । उत्तरस्य त्वयमभिप्रायः । यदि 'प्राणो ब्रह्म कं ख'मित्येतावदुच्येत तदा 'यदेष आकाश आनन्दो न स्या'दितिश्रुतावाकाशानन्दशब्दयोरिव कखशब्दयोर्विशेषणविशेष्यभावेनान्वयात् परमव्योमात्मकसुखरूपत्वमेकमेवोपास्यगुण इति लभ्यते । न तु परमव्योमात्मकसुखरूपत्वं सुखात्मकपरमव्योमरूपत्वं चोपास्यगुणद्वयमिति । तथोपास्यगुणद्वयं चेह विवक्षितम् । तल्लाभाय कखशब्दोक्तयोस्सुखपरमव्योम्नोस्स्वातन्त्र्येण ब्रह्मविशेषणत्वं प्रकटयितुं 'कं ब्रह्म खं ब्रह्मे'ति प्रत्येकं ब्रह्मशब्दयुक्तं वाक्यद्वयं कृतम् । यद्यपि तेन वाक्यद्वयेन सुखरूपत्वं परमव्योमरूपत्वं च ब्रह्मणस्स्वतन्त्रं विशेषणद्वयमिति तावदेव लभ्यते न तु तस्य विशेषणद्वयस्य परस्परविशेषितत्वमपि । तथापि'यद्वावकं तदेव खं यदेव खं तदेव क'मिति परस्परविशेषितसुखपरमव्योमप्रदर्शकवाक्यद्वयरूपोत्तरवशा'त्कं ब्रह्म खं ब्रह्मे'त्यत्रापि तावत्पर्यन्तविवक्षास्तीत्यवसीयत इति तस्मा'त्कं ब्रह्म खं ब्रह्मे'ति वाक्यद्वयनिर्दिष्टं परं ब्रह्मैव न तु ब्रह्मदृष्टिविशिष्टं वैषयिकं सुखं भूताकाशं च। कखशब्दोक्तयोस्सुखाकाशयोरग्रे परस्परवैशिष्ट्याभिधानाद्वैषयिकसुखभूताकाशयोस्तदसम्भवात् । अस्मिन्नप्यर्थे सूत्रमित्थं पक्षाध्याहारेण योजनीयम् । 'कं ब्रह्मे'तिवाक्यनिर्दिष्टं परं ब्रह्म न तु ब्रह्मदृष्टिविशिष्टं वैषयिकं सुखम् । सुखविशिष्टाभिधानादेव सुखेषु यद्विशिष्टं परमव्योमात्मकं निरतिशयं सुखं तस्य कशब्देनाभिधानादित्यर्थः । तथा'खं ब्रह्मे'ति वाक्यनिर्दिष्टं च परं ब्रह्म न तु तद्दृष्टिविशिष्टो भूताकाशः । सुखविशिष्टाभिधानादेव शोभनं यत्खं सुखात्मकं परमं व्योम तस्य खशब्देनाभिधानादित्यर्थः । एवं सूत्रस्यान्यदपि प्रयोजनद्वयमभिप्रेत्यैव सुखविशिष्टाभिधानादिति गुरु सूत्रं कृतम्। अन्यथा लाघवार्थमत्राधिकरणद्युभ्वाद्यधिकरणयोरिव 'प्रकरणा'दित्येव सूत्रमकरिष्यत । एवकारश्च योजनान्तरविवक्षायामेवार्थवान् । यस्सुखविशिष्टाभिधानादिति हेतुरक्षिपुरुषस्य ब्रह्मत्वे साध्ये स एव हेत्वसिद्धिपरिहारार्थे 'कं ब्रह्म खं ब्रह्मे'त्यत्र निर्दिष्टस्य ब्रह्मत्वे साध्येऽपि हेतुः । हेतुवाक्यस्यार्थः परं तत्र तत्र भिद्यत इति । एवं प्रश्नोत्तरपर्यालोचनया दृष्टिविध्यसम्भवे सिद्धे सत्युपक्रमानुसारेण 'प्राणं च हास्मै तदाकाशं चोचु'रिति निगमनवाक्यं ब्रह्मण्युपास्यगुणत्रयोपसंहारार्थं न तु ब्रह्मदृष्ट्यालम्बनत्रयोपसंहारार्थमिति योजनीयम् । प्राणं प्राणत्वगुणविशिष्टं तत्सुखात्मकमाकाशं परमव्योमात्मकं च ब्रह्माग्नय ऊचुरिति तदर्थो वर्णनीयः । ननु माभू'त्कं ब्रह्म खं ब्रह्मे'त्यत्र वैषयिकसुखभूताकाशयोर्ब्रह्मदृष्टिविधानम्। इहाक्षिपुरुषत्वेन शङ्क्यमानस्य प्रतिबिम्बस्यैवारोपितसुखविशेषविशिष्टत्वेन तत्र निर्देशोऽस्त्वित्याशङ्क्याह—न हीति । अनारोपितार्थग्रहणे सम्भवत्यारोपितार्थग्रहणमयुक्तमिति भावः। अयमप्यर्थ'स्सुखविशिष्टाभिधानादेवे'ति सूत्रेणैव लम्भनीयः । अत्र छायापुरुषत्वानुपपत्तौ सौत्रेण चकारेण हेत्वन्तरं समुच्चीयते । यतो मोक्षार्थं ब्रह्मविद्यामर्थयमानाय 'कं ब्रह्मे'त्याद्युपदेशः । अतो नात्र निर्दिष्टः प्रतिबिम्बः किं तु ब्रह्मैवेति । एवं'कं ब्रह्मे'त्यादौ निर्दिष्टः प्रतिबिम्ब इति शङ्कानिराकरणार्थं चकारसमुच्चितेन हेत्वन्तरेण । तत्र निर्दिष्टो जीव इति शङ्कानिराकरणार्थतयोत्तरसूत्रमवतारयति—यदुक्तमिति । 'कं ब्रह्मे'त्यादौ निर्दिष्टस्य जीवत्वे निराकृते सत्यक्षिपुरुषस्य पूर्वपक्षिशङ्कितं जीवत्वं निराकृतं भवतीत्यभिप्रेत्य यदुक्तमक्षिपुरुष-

## अत एव स ब्रह्म ॥ १६ ॥

**यत एव भवभयभीतायोपकोसलाय ब्रह्मजिज्ञासवे 'कं ब्रह्म खं ब्रह्म' इत्युपक्रम्योपदिष्टं 'यदेव कं तदेव खं यदेव खं तदेव कम्' इति, अत एव खशब्दाभिधेय आकाशः परमेव ब्रह्म । किमीदृशोपपत्तिरस्ति जीवस्य ? न हि जीवे निरतिशयसुखसंभवः । अतो यदेव पूर्वमपरिच्छिन्नसुखरूपतया प्रकृतं**

---

स्येत्यनुवादः ॥ सू ॥ अत एव स ब्रह्म ॥ १६ ॥ भवभयभीतायेति । ननु भवभयभीत्या ब्रह्मजिज्ञासुरुपकोसल इति कुतोऽवसीयते। तत्र 'व्याधिभिः परिपूर्णोऽस्मी'त्याचार्यजायां प्रत्युपकोसलवाक्यं सांसारिकेषु विषयेषु व्याधित्वारोपेण संसारनिन्दापरमतोऽयं तथावसीयत इति चेत् न । तत्र व्याधिशब्दस्य बहुकालं गुरुकुलवासेनाप्युपदेशो न लब्ध इति चिन्ताप्रयुक्तव्याधिविशेषपरत्वात् । एवं हि तत्र पूर्वप्रसङ्गः । उपकोसले द्वादशवर्षाण्यग्निपरिचरणपूर्वकं गुरुकुलवासं कृतवत्याचार्ये च तत्सहागतानन्यानन्तेवासिनस्समावर्त्यापि तमसमावर्त्यैव प्रवासोद्युक्ते तं दृष्ट्वा तज्जायया सम्यगयमग्नीनुपकोसलः पर्यचारीदस्मा अनुपदिश्य प्रवासे अग्नय एव त्वां शपेयुरतोऽवश्यमयमुपदिश्य समावर्तनीय इति प्रार्थितेऽपि तदविगणय्य प्रोषिते सत्युपकोसलश्चिन्तापरीतः तत्प्रयुक्तव्याध्यभिभूतः अनश्नन्नेव कञ्चित्कालमग्नीन्परिचचार । तमाचार्यजायोवाच 'ब्रह्मचारिन्नशान किन्नु नाश्नासी'ति । तत्र खल्विदं प्रतिवचनं 'व्याधिभिः परिपूर्णोऽस्मि नाशिष्यामी'ति । अतः प्रक्रमानुसारेणात्र व्याधिशब्दस्य उपदेशालाभप्रयुक्तचिन्ताकृतव्याधिविशेषपरत्वमेव युक्तम् । उच्यते । 'उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवासे'त्युपक्रमे तावदुपकोसलस्य ब्रह्मचर्यवासः श्रूयते । स 'त्वेकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवासे'त्यत्रेव ब्रह्मोपदेशलाभार्थव्रतग्रहणपूर्वकगुरुकुलवासरूपः । न तु वेदग्रहणार्थं प्रसिद्धोपकुर्वाणब्रह्मचर्यवासरूपः । अग्रे वेदोपदेशस्याकीर्तनात् उपासनातत्फलयोरेव कीर्तनात् । तस्माद्ब्रह्मोपदेशार्थगुरुकुलवासलिङ्गादेवायं भवभयभीत्या ब्रह्मजिज्ञासुरवसीयते। अत एवातिचिरं गुरुकुलक्लिष्टायैव ब्रह्मविद्योपदेष्टव्येति मत्वा वेदोपदेशार्थिषु समावर्तितेष्वप्ययमाचार्येण न समावर्तित इत्यपि सङ्गच्छत इत्याशयः । किमीदृशेति । भवभयभीतायोपदेश्यत्वं जीवस्य नोपपद्यत इत्यर्थः । पूर्वं 'कं ब्रह्मे'त्यादि छायापुरुष एव नोपपद्यत इत्युक्तम् । तत्रायमाशयः। 'प्राणो ब्रह्मे'त्येतज्जीवेऽपि प्राणसम्बन्धादुपपद्यते । 'कं ब्रह्म खं ब्रह्मे' त्येतच्च यत्किञ्चिद्धर्मावलम्बनभूताकाशसाम्यवल्लौकिकसुखसम्बन्धादुपपद्यत इति । अत एव पूर्वसूत्रे चशब्दसमुच्चित एव हेतुरस्मिन्सूत्रे सर्वनाम्ना परामर्शनीयत्वेन व्याख्यातः। इदानीमभ्युपगमवादं त्यक्त्वा वस्तुतः'कं ब्रह्मे'त्यादि जीवेऽपि नोपपद्यत इत्याह—न हि जीव इति । खशब्देन परमाकाशवाचिना भूताकाशवदनवच्छिन्नत्वलक्षकेण वा विशेषणात् सुखं निरतिशयमिति लभ्यते । अन्यथा लौकिकसुखसाधारण्ये खशब्दोपात्तविशेषणवैयर्थ्यापत्तेः । तथाभूतं सुखं न जीवे सम्भवतीत्यर्थः । नन्वस्तु'कं ब्रह्मे'त्यादौ निर्दिष्टं परं ब्रह्म । तथापि वक्तृभेदादग्निविद्याव्यवधानाच्च तत्प्रकरणाननुवृत्तेरक्षिपुरुषो जीवः प्रतिबिम्बो वा स्यादित्याशङ्कानिराकरणायाह—अत इति। अयमाश-

---

( १ ) इदं सूत्रं श्रीकण्ठरामानुजभाष्ययोरेवाधिकतया पठ्यते । 'अत एव च स ब्रह्म' इति पाठान्तरमप्यस्ति।

यः। वक्तृभेदस्तावन्न प्रकरणविच्छेदकः।'आचार्यस्तु ते गतिं वक्ते'ति वाक्येन आचार्यवचनजातं न स्वातन्त्र्येण किञ्चिदुपदेशार्थं प्रवृत्तं किं त्वग्न्युपदिष्टावशेषितपूरणार्थमेव प्रवृत्तमित्यवगमात्। नन्वग्निभिर्गतिमात्रस्याचार्येण वक्तव्यतयावशेषितत्वात् प्रकृतस्य ब्रह्मणस्थानस्य गुणजातस्य च वक्तव्यत्वेनानवशेषितत्वात् अग्न्युपदिष्टायां ब्रह्मविद्यायां देवयानगतिमात्रस्यान्वयो भवेत् न त्वक्षिवाक्यार्थस्य। तथापि सर्वनाम्नः प्रकृतपरामर्शित्वस्वाभाव्यादक्षिपुरुषः प्रकृतं ब्रह्म भवेदिति चेन्न। अत्रैव गार्हपत्यादिविद्यासु'य एष' इति पदानां प्रकृतब्रह्मपरामर्शित्वाभावदर्शनात्। य'द्येषा सोम्य ते अस्मद्विद्या चात्मविद्या चे'त्यग्निभिस्स्वविद्यानामात्मविद्यायाश्च भेदेन कीर्तितत्वात् तत्र सर्वनाम्नः प्रकृतपरामर्शित्वं त्यक्तव्यं तर्ह्यत्रापि गतिमात्रस्यावशेषितत्वाद्विद्याया निरपेक्षमुपदिष्टत्वेनोपसंहृतत्वाच्च तस्य प्रकृतपरत्वं त्यक्तव्यमिति तुल्यम्। अक्षिविद्यायाः प्रकृतब्रह्मविद्यातः पात्नीवतपशुयागात्तदनन्तरश्रुताज्ययागस्येव भिन्नत्वेऽप्यक्षिविद्याया गतिरेव प्रकृतब्रह्मविद्याया अपीत्यभिप्रायेणा'चार्यस्तु ते गतिं वक्ते'ति वचनोपपत्तेरिति चेत् उच्यते । 'आचार्यस्तु ते गतिं वक्ते'त्यत्र गतिशब्दः करणव्युत्पत्त्या देवयानमार्गपरो न भवति। किं तु कर्मव्युत्पत्त्या प्रकृतब्रह्मविद्याफलपरः। प्रथमं फल एवाकाङ्क्षोदयात्। लोकान्तरभोग्यफलनिर्देशानन्तरमेव तत्प्राप्त्युपायमार्गाकाङ्क्षोदयौचित्यात्। न च प्राक् ब्रह्मविद्यायाः फलं निर्दिष्टं तदङ्गभूतानामग्निविद्यानामेव हि परं 'लोकीभवती'त्यादिना फलमर्थवादेन वर्णितम्। अत एवाचार्यो'लोकान्वाव किल सोम्य तेऽवोचन् अहं तु ते तद्वक्ष्यामी'त्यग्नयः स्वविद्याफलभूतानग्निलोकादीनेवावोचन् न तु ब्रह्मविद्याया महत्फलं तदहं वक्ष्यामीति प्रतिजज्ञे। तस्मात्ततः प्रभृति यद्यावदाचार्यवाक्यं 'मानवमावर्तं नावर्तन्त'इत्येतत्पर्यन्तं तत्सर्वमग्न्यवशेषितफलरूपगत्यभिधानमेव। तथाहि–प्रथमं तावत्पुष्करपलाशवाक्यं फलवर्णनात्मकमिति निर्विवादम्। तदुपपादकः तदनन्तरमक्षिस्थानोपदेशः। यदक्षिस्थानोपदेशानन्तरमक्षिस्थानिनो माहात्म्येनैव सर्पिरुदकाद्यश्लेषं वर्णयति तेन सकलपापश्लेषविदूरं स्वोचितेऽक्षिस्थाने विद्यमानं ब्रह्मोपासनीयमिति विधिर्लभ्यमानस्तत्क्रतुन्यायेन वर्णितफलोपपादको भवति। सलेपेऽप्यक्षिण स्थानिमाहात्म्यायत्तसर्पिरादिलेपराहित्योक्तिः स्तुतिमात्रमिति ततः स्थानिनो निर्लेपत्वासिद्धेः न तस्य फलोपपादकत्वमिति चेन्न। तस्यास्स्तुतित्वेऽपि हि तथाभूतस्तुतिद्वारतया श्रुत्यन्तरेषु निर्लेपत्वेन प्रसिद्धस्य परमात्मन एव स्थानितया ग्रहणं प्राप्नोति। यथा 'द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेती'त्यत्र 'प्रणयनवतोर्द्वयोः पर्वणोः महिम्ना चातुर्मास्याख्यो यज्ञ एव गच्छती'ति हेतुहेतुमद्भाववर्णनस्य स्तुतित्वेऽपि स्तुतिनिर्वाहकतया 'ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासास्साकमेधाश्चे'त्यर्थवादान्तरे ऊरुत्वेन संस्तुतयोर्वरुणप्रघाससाकमेधपर्वणोरेव द्वयोरिति शब्दार्थतया ग्रहणम्। एवं 'सर्वाण्येवैनं वामान्यभिसंयन्ति य एवं वेद सर्वाणि वामानि नयति य एवं वेद सर्वेषु लोकेषु भाति य एवं वेदे'ति वाक्यान्यपि फलवर्णनात्मकानि। आद्येन वाक्येन हि सङ्कल्पमात्रसाध्यनिखिलाभिमतवस्तुप्राप्तिमत्त्वं दहरविद्यायां ब्रह्मविद्याफलत्वेन प्रसिद्धं वर्ण्यते। द्वितीयवाक्येन स्वभक्तेष्टसकलवस्तुप्रापकत्वं 'यं यं लोकं मनसा संविभाति'इत्यादिश्रुतौ तत्फलत्वेन प्रसिद्धं वर्ण्य-

( १ ) 'पदिष्टविद्याविशेषणार्थमेव'इति–च–पाठः।

**ब्रह्म तदेवाक्ष्याधारतया प्रतिपाद्यत इत्यक्ष्यन्तःपुरुषः परमेश्वर इति ॥**

ते। तृतीयवाक्येन 'स स्वराड्भवति तेषां सर्वेषु लोकेषु कामचारो भवती'त्यादिश्रुतिप्रसिद्धं तत्फलं वर्ण्यते। तत्तत्फलोपपादकत्वेन च तत्तद्वाक्येभ्यः प्राक् ब्रह्मणः संयद्वामत्ववामनीत्वभामनीत्वगुणा विधीयन्ते। अग्रे 'इमं मानवमावर्तं नावर्तन्त'इति ब्रह्मप्राप्त्यनन्तरमनावृत्तिलक्षणं फलं वर्ण्यते। तच्चामृतत्वाभयत्वविशिष्टतया 'अथ मर्त्योऽमृतो भवति । अथ सोऽभयं गतो भवती'त्यादिश्रुतिषु प्रसिद्धमिति तदुपपादकत्वेनामृतत्वाभयत्वगुणौ विधीयेते। एवमाचार्यस्सोपपादकं फलं वक्ष्यति फलोपपादकत्वेनैव स्थानगुणविधानमपि लप्स्यत इति कृत्स्नस्याप्याचार्यवाक्यस्य सोपपादकफलप्रदर्शनपरत्वमभिप्रेत्य 'आचार्यस्तु ते गतिं वक्ते'त्यत्र गतिमात्राभिधानपरिशेषः कृतः। तदतिरेकेण विद्या चोपदिष्टत्वेनोपसंहृतेति सर्वं सङ्गच्छते। यदि'त्वाचार्यस्तु ते गतिं वक्ते'त्यत्र गतिशब्दो देवयानमार्गपरः तदापि सङ्गच्छत एव। तदा हि गतिशब्दो मार्गस्योपदेश्यत्वाभिप्रायो न वर्णनीयः। अत्र मार्गस्यानुपदेशेऽपि दहरवैश्वानरविद्यादिष्विव 'अनियमस्सर्वेषा' (ब्र०३-३-३२-सू०) मित्यधिकरणे प्रदर्शयिष्यमाणेन न्यायेन पञ्चाग्निविद्योपदिष्टस्यैव तस्य प्राप्तिसम्भवात्। किं तु मार्गानुबन्धिनां विद्यान्तरसाधारणैतद्विद्यामात्रासाधारणरूपाणां केषाञ्चिद्विशेषाणामुपदेश्यत्वाभिप्रायो वर्णनीयः। तत्रै'तेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त'इति विद्यान्तरसाधारणः पञ्चाग्निविद्यायामनुपदिष्टो विशेषः। 'अथ यदु चैवास्मिन्शव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसंयंतीत्ये'तद्विद्यामात्रासाधारणो विशेषः। अस्य ह्ययमर्थः। अस्मिन्नक्षिपुरुषोपासके मृते पुत्रादयश्शवकर्म पैतृमेधिकसंस्कारादिकं यदि कुर्वन्ति, यदि वा न कुर्वन्ति, उभयथापि तस्यार्चिरादिगतिप्राप्तिरवश्यंभाविनीति। अनेन विद्यान्तरोपासकानां शवकर्माकरणेऽर्चिरादिगतिप्राप्तौ कञ्चित्कालं प्रतिबन्ध उन्नीयते इत्यक्षिविद्यायामयमसाधारणो विशेषः। एवमेवाक्षिस्थानं संयद्वामत्वादिगुणजातमपि तस्यामसाधारणो विशेष इति तस्यापि देवयानमार्गप्राप्यफलोपपादकत्वेन तदनुबन्धित्वात् गतिशब्देन परिग्रहोऽस्तीति न काचिदसङ्गतिः । सर्वोऽप्ययमर्थ'श्श्रुतोपनिषत्कगत्यभिधाना'दित्युत्तरसूत्रेण विवक्षितः। तत्राद्यपरिहारे श्रुतोपनिषत्कस्य श्रुतसुखाकाशरूपब्रह्मण उपकोसलस्याचार्यवक्तव्यत्वेनाग्निभिरवशेषितायाः फलरूपाया गतेः कृत्स्नेनाप्याचार्यवाक्येनाभिधानात्तत्प्रकरणविच्छेदाशङ्का न कार्येत्यर्थः। द्वितीयपरिहारे गतेरित्यस्य मार्गरूपगत्यनुबन्धिविशेषणमित्यर्थ इति विशेषः। तस्माद्वक्तृभेदेन तावन्न प्रकरणविच्छेदशङ्कावकाशः। अत एव नाग्निविद्याभिर्व्यवधानेनापि वक्तृभेद इति तद्वत् विद्यान्तरव्यवधानेना'प्याचार्यस्तु त'इति वाक्यापादितस्य एकवाक्यत्वस्य क्षत्यसम्भवात्। किं चाग्निविद्यानां प्रकृतब्रह्मविद्याङ्गत्वादपि न व्यवधायकत्वं तदङ्गत्वं च तदुपक्रमोपसंहारमध्यपातित्वा'दथहैन'मिति पूर्वप्रकृतापेक्षावाचकेनाथशब्देनाग्निविद्यानां ब्रह्मविद्यायाश्च सम्बन्धावगमाच्च सिद्ध्यति। न चा'पहते पापकृत्या'मित्यादिना फलान्तरप्रतिपादनादङ्गत्वासम्भवः। तेषां वाक्यानां ब्रह्मविद्यायामग्निविद्यानामङ्गतायां द्वारप्रदर्शनार्थतया तदंगानुगुणत्वात्। तथा हि 'अपहते पापकृत्या'मिति वाक्येन तासां ब्रह्मोपासनानुवृत्तिप्रतिबन्धकदुरितनिवृत्तिकरत्वमुच्येत। 'लोकीभवती'ति वाक्येन'स एवैनं देवयानं पन्थानमासाद्याग्निलोकमागच्छती'त्यादिश्रुतिष्वर्चिरादिमार्गे प्रथमपर्वत्वेन श्रुताग्निलोकप्रापकत्वमुच्यते।अग्न्युपासनानामग्निलोकप्राप्तिफलकत्वौ-

**पूर्वपक्षे पुनरियमप्यनुपपत्तिरित्याह—**

**॥ सू० ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥**

**श्रुतब्रह्मस्वरूपाणामधिगन्तव्याया अर्चिरादिगतेः अक्षिपुरुषं श्रुतवतः 'अर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्नः' इत्यादिना 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथः, एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इत्यन्तेनाभिधानान्नासौ जीवश्छायापुरुषो वा, किं त्वीश्वर एव ॥**

**इति अन्तराधिकरणम् ॥ ५ ॥**

---

त्वात् । यद्यपि ब्रह्मोपासन एवार्चिरादिपर्वप्राप्तिर्लभ्यत इति तदर्थं नोपासनान्तरमपेक्ष्यते । तथापि विदुषो देहपातानन्तरमेवार्चिरादिगतिप्राप्तौ प्रतिबन्धकसद्भावेऽपि तत्तिरस्कृत्य तदानीमेव तत्प्रापकत्वमनेनोच्यते । ततश्चाग्निविद्यारूपाङ्गविशेषानुग्रहप्रयुक्त एवार्थोऽ'थ यदु चैवास्मिन्नि'त्यादिना प्रदर्श्यत इति तदपि वाक्यमुपपन्नतरं भवति । 'सर्वमायुरेती'ति वाक्येन ब्रह्मोपासनायास्साक्षात्कारपर्यन्तत्वसिद्धये यावदायुरपेक्षितं तस्य सर्वस्य प्राप्तिरुच्यते । 'ज्योग्जीवती'ति वाक्येन 'आप्रायणमहरहरनुवर्तनीयायामुपासनायां प्रत्यहं प्रवृत्तौ प्रतिबन्धकानामर्थप्राप्तिरोगनिवृत्त्याद्युपायचिन्ताक्लेशानामप्रसङ्गाय ज्योगुज्ज्वलं धनधान्यादिसमृद्धं रोगानभिभूतं च जीवनमुच्यते । 'नास्यावरपुरुषाः क्षीयन्त'इति वाक्येन 'नास्याब्रह्मवित्कुले भवती'ति श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन प्रसिद्धस्य पुत्रपौत्रादीनां ब्रह्मवित्त्वस्यानुगुणं तेषां सत्कर्मभिरक्षीणत्वमुच्यते । 'उप वयं तं भुञ्जाम' इति वाक्येन ब्रह्मोपासनारम्भप्रभृति ब्रह्मप्राप्तिपर्यन्तं मध्येसम्भावितसकलविघ्ननिवारणेनाग्नीनां समीपे सन्निधायोपासकपरिपालकत्वमुच्यते । एवं ब्रह्मविद्याफलानुगुणफलकत्वेन तदङ्गत्वादपि नाग्निविद्यानां व्यवधायकत्वम् । अतः प्रकरणानुवृत्तेरसन्दिग्धतया 'य एष' इति सर्वनाम्नोर्बाधकाभावेन प्रकृतब्रह्मपरामर्शित्वा'देतद्ब्रह्मे'ति वाक्येन प्रकृतब्रह्मरूपताप्रत्यभिज्ञानाच्चाक्षिपुरुषः प्रकृतं परमेव ब्रह्मेति ॥ उत्तरसूत्रमवतारयति—पूर्वपक्ष इति ॥ पूर्वपक्षद्वय इत्यर्थः । यद्यपि पूर्वपक्षद्वयनिराकरणार्थं सूत्रं तदर्थसूत्रान्तरसङ्गतमेकैकपूर्वपक्षनिराकरणार्थसूत्रद्वयात्प्रागेव कर्तव्यं तथापि गतिमात्राभिधानपरिशेषात् स्थानगुणाभिधानं न प्रकृतब्रह्मविद्यान्वयीति शङ्कावारणार्थमनेन सूत्रेणार्थान्तरस्यापि विवक्षितत्वात्तदर्थसङ्गत्यात्र कृतम् ॥ सू० ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥ जीवगतागतचिन्तकानां वचनबलाद्भवन्त्यप्यर्चिरादिगतिर्ब्रह्मविदामेवेत्युत्सर्गो बाधकाभावान्नापवाध्यत इति भावः । अत्र ब्रह्मश्रुत्यादीनामितिशब्दशिरस्कत्वेनाविवक्षितार्थत्वशङ्काकुलितत्वाद्ब्रह्मप्रकरणानुबन्धस्य सतोऽपि मार्गाभिधानमात्रविषयत्वशङ्काक्रान्तत्वान्नातिस्पष्टतेति पादसङ्गतिः ॥

**॥ इति अन्तराधिकरणम् ॥ ५ ॥**

---

नयमणिमालायाम्

**अथान्तराधिकरणम् ॥ ५ ॥**

**सू० ॥ अन्तर उपपत्तेः ॥ १३ ॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥ अत एव स ब्रह्म ॥ १६ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥**

अक्षिपुरुषः प्रसिद्धेर्जीवः प्रतियातनाथवा पुंसः । शिव एवामृतताद्यैस्तस्याप्यक्षिण स्थितिः प्रसिद्धेव ॥ ४२ ॥

**इत्यन्तराधिकरणम् ॥ ५ ॥**

अथ अनवस्थित्यधिकरणम् ॥ ६ ॥

## ॥ सू० ॥ अनवस्थितेरसंभवाच्च नेतरः ॥ १८ ॥

**अस्य महोपनिषदि श्रूयते विषयः—'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥' इत्यादि ॥ इहाङ्गुष्ठमात्रत्वादि-विशिष्टः परमेश्वरो वाऽन्यो वेति संशयः ॥ प्राणाग्निहोत्रप्रकरणात् 'अङ्गुष्ठमात्रः' इत्यल्पत्वव्यपदेशाच्च अयं प्राणवायुरेव पञ्चानामाहुतीनां भोक्ताऽवगम्यते। न चास्य भोक्तृत्वानुपपत्तिः, 'आपश्च पृथिवी चान्नमत्तारौ वह्निमारुतौ' इत्यादिषु वायोरपि भोक्तृत्वप्रसिद्धेः। सर्वथाऽयं प्राणवायुरिति पूर्वः पक्षः ॥ परमेश्वर एवेति सिद्धान्तः, सकलजगदीशत्वविश्वभुक्त्वादीनां धर्माणामन्यत्राभि-**

---

अनवस्थितेरसम्भवाच्च नेतरः ॥ १८ ॥ इहापि पूर्वाधिकरण इवोपासकनेदिष्ठस्थानान्तरोक्तिरिति प्रासङ्गिकसङ्गतिः स्पष्टेति भाष्ये न प्रदर्शिता। दृष्टान्तप्रत्युदाहरणरूपं सङ्गत्यन्तरमपि पूर्वपक्षोपन्यासेन स्फुटीभविष्यतीति विषयवाक्यमुदाहृत्य प्राणलिङ्गप्रकरणयोर्ब्रह्मलिङ्गयोश्च बलाबलानवधारणात्संशयं दर्शयति–अस्येति । यथा ब्रह्मप्रकरणादक्षिपुरुषो ब्रह्म तथा प्राणाग्निहोत्रप्रकरणादङ्गुष्ठमात्रः प्राण इति पूर्वपक्षयति–प्राणेति । अङ्गुष्ठेति। नन्वङ्गुष्ठपरिमाणत्वं सकलशरीरव्यापिनि प्राणेऽपि न सम्भवति अङ्गुष्ठसमाश्रयणोपाधिकं तु तत् ब्रह्मण्यपि सम्भवतीति चेन्न । ब्रह्मणि मुख्यस्याङ्गुष्ठसमाश्रयणस्यासम्भवेन तदुपाधिकस्य तस्य ब्रह्मण्यनुपपत्तेः। अङ्गुष्ठावच्छेदोपाधिकस्य तस्य ब्रह्मणि सम्भवेऽप्यत्र 'समाश्रित' इति समाश्रयणोपाधिकस्यैव तस्य ग्राह्यत्वात् । न चाक्ष्याधारत्वमिवाङ्गुष्ठसमाश्रयणममुख्यं ग्राह्यम् । तथेहामुख्यग्रहणहेत्वभावात् । 'ईशस्सर्वस्य जगत' इत्यस्य धारणेन पतनाभावं सम्पाद्य स्थानासनगमनादिषु सर्वेषामपि देहान्नियच्छति प्राणेऽप्युपपत्तेः । 'ईशानमस्य जगतस्सुवर्दृशमीशानमिन्द्र तस्थुष' इति निर्दिष्टस्थावरप्रतिद्वंद्विजङ्गममात्रपरतया जगच्छब्दस्य प्रयुक्ततया तथेहापि कार्यसामान्यपरत्वमपहाय जङ्गममात्रपरत्वाभ्युपगमोपपत्तेः । तस्य कार्यसामान्यपरत्वेऽपि वचनबलात्प्राणस्यापि सर्वजगदीश्वरत्वोपपत्तेश्च । ब्रह्मप्रकरणे सर्वैश्वर्यश्रवणादेव हि ब्रह्मणस्तदभ्युपगम्यते । इह 'प्राणे निविष्टोऽमृतं जुहोमी'त्यादिमन्त्रोपक्रमे प्राणप्रकरणेऽस्मिन् 'ईशस्सर्वस्य जगत' इति श्रवणे जाग्रति प्राणस्यापि किमिति तन्नाभ्युपगन्तव्यम् । तस्यापि ब्रह्मण इव महामहिमा श्रूयते । 'यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पित'मिति भूमविद्यायां सर्वाधारत्वं तावच्छ्रूयते । तथा 'प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणस्स्वसा प्राण आचार्य' इति हितप्रवर्तकत्वसंरक्षकत्वादिगुणयोगात्पितृमात्राद्यात्मना रूपणं दृश्यते । एवं प्राणसंवादादिष्वपि प्राणस्य भूयांसि महामहिमश्रवणानि । एवं च 'विश्वभुगि'ति विशेषणमपि विश्वं भुनक्ति पालयतीत्यर्थकतया प्राणे सुयोजमिति स्पष्टमेव । भुजेरभ्यवहारार्थत्वेऽपि नासङ्गतिः । पञ्चवृत्तेः प्राणस्य सकलप्राणाहुत्युद्देश्यत्वात् । 'अत्तारौ वह्निमारुता'विति श्रवणाच्चेति भावः । सर्वथेति । यदि जगच्छब्दो जङ्गमपरः कार्यसामान्यपरो वा यदि भुजिः पालनार्थः अदनार्थो वा सर्वथाप्यङ्गुष्ठमात्रः प्राणः तल्लिङ्गप्रकरणयोर्बाधकाभावादिति भावः। परमेश्वर एवेति । जगच्छब्दो-

धानेऽनवस्थानात्, असंभवाच्च तत्र तेषाम् । अत ईश्वर एवैतादृशः । तस्य प्राणरूपत्वेनाप्युपास्यत्वमुच्यते, 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः' इति प्राणाधारत्वेन तस्य श्रवणात् । अङ्गुष्ठमात्रपरिमाणस्योपास्यत्वादित्यविरोधः । प्रा-

---

ऽत्र रूढ्या भूतादिषु लोकेषु वा वर्तते । रूढिसम्भवे योगग्रहणायोगात् । विश्वशब्दश्च भुजिविषयत्वयोग्यसामस्त्यपरः न तु प्राणाहुतिसामस्त्यपरः । सङ्कोचे कारणाभावात् । न च सर्वलोकेश्वरत्वं विश्वभोक्तृत्वं च ब्रह्मणीव प्राणेऽप्यभ्युपगन्तुं शक्यम् । श्रुतिवशादभ्युपगम्यतामिति चेन्न । तथा सति 'इन्द्रो यातोवसितस्य राजा। आत्वा विशन्त्विन्दवः। समुद्रमिव सिन्धवः । न त्वामिन्द्रातिरिच्यते।' इत्यादिश्रुत्यनुसारेणेन्द्रादिष्वपि तयोरभ्युपगन्तव्यत्वेनाव्यवस्थाप्रसङ्गात् । प्राणे तयोरसम्भवाच्च । 'एतस्माज्जायते प्राण' इति ब्रह्मसृज्यत्वेन 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रिता'विति ब्रह्माश्रयाधीनस्वकार्यकरणशक्तिकत्वेन च प्राणः श्रूयते । कथमयमसङ्कुचितसकलजगदनपेक्षेशिता स्यात् । कथं चासङ्कुचितसकलभोक्ता स्यात् । कथं च निरङ्कुशप्रभवितृपरप्रभुशब्दोक्तसकलोत्पादकः स्यात् । भूमविद्यायां प्राणशब्दस्तु जीवपरः । तस्य मुख्यप्राणपरत्वेऽपि जीव इव तत्रापि सर्वाधारत्वमौपचारिकं पितृत्वादिवचनं प्राण एव पित्रादिः न तु शरीरमित्यन्वयव्यतिरेकाभ्यां प्रदर्शनपरम् । तदेतद्भूमविद्यायां स्पष्टीभविष्यति । तस्मादुदाहृतलिङ्गद्वयानुसारात् परब्रह्मरूपः शिव एवायमिति भावः । ननु प्राणाग्निहोत्रमन्त्रप्रकरणाम्नानादुपक्रमगतलिङ्गवशाच्च प्राणाहुत्याराधितप्राणविषय एवायं मन्त्रस्स्यादित्याशङ्क्य प्रकरणमविरोधेन सङ्गमयति—तस्येति । प्राणरूपत्वेनेति । 'प्राणे निविष्ट' इत्यादिमन्त्रेषु प्राणादिशब्दास्तदन्तर्यामिपर्यन्ताः। तेषामन्तर्यामिण्यपि शक्त्यविशेषादिति भावः । ननु साक्षात्त्वस्यौत्सर्गिकत्वात् प्राणादिप्रवृत्तिनिमित्तसाक्षादाश्रयाः मुख्यप्राणवृत्तय एव तैरभिधीयेरन् प्रसिद्धिप्राचुर्याच्चेत्याशङ्क्य तेषां तदतिलङ्घनेनान्तर्यामिपर्यन्तत्वे प्रमाणमाह—प्राणानामिति । 'तेनान्नेनाप्यायस्वे'ति मन्त्रशेषः । 'अङ्गुष्ठमात्रः पुरुष' इति मन्त्रात्प्राक् 'प्राणानां ग्रन्थिरसी'त्यादिमन्त्र आम्नायते । तेन परमेश्वरं प्रति प्रार्थना क्रियते । त्वं खलु प्राणानां ग्रन्थिः ग्रथयिता निश्चितत्वेन व्यवस्थापकोऽसि । अतस्त्वमन्तकस्संहारकर्ता रुद्रो भूत्वा मां प्रविश । तेन कालाग्निरुद्रात्मना रूपेणाशितमन्नं पक्त्वा अन्नवीर्येण मामाप्यायितं कुर्विति मन्त्रार्थः । 'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्ये'ति परमेश्वरस्य द्विविधं रूपं प्रसिद्धम् । तस्य भोजनकाले जाठराग्निज्वालाशान्त्यर्थं शिवरूपेणान्तर्भोक्तृतया सन्निधानं 'प्राणे निविष्टोऽमृतं जुहोमी'ति 'शिवो मा विशाप्रदाहाये'त्यादिभिः प्राणाहुतिमन्त्रैः प्रार्थितम् । भोजनानन्तरं जठराभिमर्शनमन्त्रेणानेन भुक्तान्नपरिणामकृतदेहाप्यायनेन प्राणानां निश्चलतया देहेऽवस्थानसिद्धये रुद्ररूपेणान्तःपकृतया सन्निधानं प्रार्थ्यते । अतोऽत्र मन्त्राणामन्तर्यामिप्रधानत्वात् 'प्राणे निविष्ट' इत्यादिमन्त्राणां 'प्राणात्मनि त्वय्यभिनिविष्टो भक्तस्सन्नमृतं जुहोमी'त्यादिरर्थो ग्राह्य इति भावः । लिङ्गमुपपादयति—अङ्गुष्ठमात्रेति । अङ्गुष्ठपरिमाणरूपमुपास्यगतं तद्रूपावच्छेदेनाङ्गुष्ठसमाश्रयणमङ्गुष्ठपरिमाणत्वं चोपपद्यत इति भावः । जठराभिमर्शनानन्तरं दक्षिणपादाङ्गुष्ठे पाणिजलस्रावणार्थोऽयं मन्त्रः । ततश्च ब्रह्मा-

णवायोः भोक्तृत्वसिद्धावपि 'विश्वभुक्' इत्येतत् न संभवति । अतोऽयमीश्वर एव प्राणाग्निहोत्राराध्यत्वेन प्राणरूपः प्रतिपाद्यत इति सिद्धम् ॥

इत्यनवस्थित्यधिकरणम् ॥ ६ ॥

---

ण्डमूलभूताधारलोकस्थितकालाग्निरुद्रात्मना पिण्डाधारभूते पादाङ्गुष्ठे परमेश्वरं ध्यात्वा तत्प्रीत्यर्थं पाणिजलस्रावणमनेन मन्त्रेण कर्तव्यमिति पर्यवस्यति । ननु विश्वभुक्त्वं प्राणवायौ न सम्भवतीत्युक्तं तदनुपपन्नम् । 'सर्व एव हार्योजनस्य लिप्सन्त' इत्यत्र सर्वशब्दस्य सोमयागे कर्मकर्तृत्वेन प्रकृतेष्विवात्र विश्वशब्दस्य हविष्ट्वेन प्रकृतेषु प्राणाहुतिद्रव्येषु सङ्कोचसम्भवादित्याशङ्क्याह–प्राणवायोरिति । हार्योजनभक्षणे निरङ्कुशसर्वपुरुषान्वयासम्भवात् प्रकरणं सङ्कोचकमङ्गीकृतम् । इह विश्वभुगित्यस्यासङ्कुचितसकलहव्यकव्यभोक्तृपरमेश्वरविषयत्वसम्भवान्न प्रकरणं सङ्कोचकमङ्गीकर्तव्यमिति भावः । नन्वत्राङ्गुष्ठमात्रस्य परमेश्वरस्योपास्यत्वं व्यवहृतं तदनुपपन्नम् । प्राणाग्निहोत्रकर्मान्वयिदेवतारूपपरमेश्वरप्रकाशकानां मन्त्राणामुपास्यसमर्पकत्वाभावादित्याशङ्कां निराकुर्वन्नधिकरणार्थमुपसंहरति–अत इति । कर्माराध्यत्वेन प्रतिपाद्यस्यापि कर्मकाले ध्यातव्यत्वमस्तीत्येतावतोपास्यत्वमुक्तमिति न विरोध इति भावः । कर्मान्वयिदेवताविचारात्मकस्याधिकरणस्य मुमुक्षूपास्यविचारात्मकेऽस्मिन् शास्त्रे प्रवर्तनस्य फलं वैश्वानराधिकरणे प्रदर्शयिष्यामः ॥

इति अनवस्थित्यधिकरणम् ॥ ६ ॥

---

नयमणिमालायाम्

## अथानवस्थित्यधिकरणम् ॥ ६ ॥

सू० ॥ अनवस्थितेरसंभवाच्च नेतरः ॥ १८ ॥

प्रीणाति विश्वभुगिति प्राणः प्राणाग्निहोत्रपूज्यः स्यात् । भोक्तृत्वमस्ति तस्याप्यत्तारौ वह्निमारुताविति हि ॥ ४३ ॥
विश्वेशविश्वभुक्त्वं यद्यन्यत्रापि न व्यवस्था स्यात् । न च संभवति ततोऽस्मिन्प्राणाधारः शिवः पूज्यः ॥ ४४ ॥

इत्यनवस्थित्यधिकरणम् ॥ ६ ॥

## सूत्रार्थचन्द्रिकायाम्

अथ अन्तराधिकरणम् ॥ ४ ॥ श्रीकण्ठमते ॥ ५ ॥ ६ ॥

सू० ॥ अन्तर उपपत्तेः ॥ १३ ॥ स्थानादिव्यपदेशाच्च ॥१४॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥ ( अत एव स ब्रह्म । ) श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

भगवत्पादमते, सू० ॥ अन्तरउपपत्तेः ॥ १३ ॥ अस्य 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मे'ति 'तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छती'त्यादि वाक्यं विषयः । अत्रान्तरक्ष्युपदिश्यमानः प्रतिबिंबात्मा वा जीवात्मा वा इन्द्रियाधिष्ठातृदेवतात्मा वा अथवेश्वर इति संशयः । दृश्यमानत्वप्रसिद्धेः प्रतिबिंबात्मा वा, रूपद्रष्टृत्वेन चक्षुषि सन्निधानाज्जीवो वा, रश्मिभिरेषोऽस्मिन्प्रतिष्ठित'इत्यादिश्रवणात् आदित्यपुरुषो वा स्यात् । आत्मत्वामृतत्वादिधर्माश्चैषु त्रिष्वपि पक्षेषु कथंचिदुपपद्येरन् स्थानविशेषनिर्देशान्न परमात्मेति पूर्वः पक्षः । आत्मत्वामृतत्वाभयत्वापहतपाप्मत्वसंयद्वामत्वादिधर्माणामस्मिन्परमात्मनि सामञ्जस्येनोपपत्तेः निर्लेपस्यास्य निर्लेपचक्षुःस्थानानुरूप्याच्च परमेश्वर इति सिद्धान्तः ।

सू० ॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥ अन्येषामपि पृथिव्यादिस्थानानां नामरूपादीनां च श्रुतिष्वस्य परमात्मन एव व्यपदेशदर्शनात् सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषोपदेशे विरोधाभावाचाक्षिस्थानत्वं ब्रह्मण उपपद्यत एव । इत्यर्थः ॥

प्रकरणादप्यक्षिस्थः परमात्मैवेत्याह—सुखविशिष्टाभिधानादेव च ॥ १५ ॥ 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'ति वाक्योपक्रमे श्रुतस्य सुखविशिष्टस्य ब्रह्मण एवेहाभिधानादित्यर्थः ।

लिङ्गादपि परमात्मेत्याह—**श्रुतोपनिषत्कगत्यभिधानाच्च** ॥ १६ ॥ श्रुतरहस्यविज्ञानब्रह्मवित्प्राप्यदेवयानाख्यगतेरेवेहाक्षिपुरुषविदोऽभिधानाच्चेत्यर्थः ॥

**सू० ॥ अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥** प्रतिबिंबजीवपक्षयोरक्ष्णि तयोर्नित्यावस्थानाभावादादित्यपक्षे तदुपपत्तावपि आत्मत्वाद्यसंभवात् त्रिष्वप्यमृतत्वाभयत्वादिधर्माणां सुतरामसंभवाच्च परमेश्वर एवाक्षिस्थानः प्रत्येतव्य इत्यर्थः॥१७

**श्रीकण्ठमते, 'अनवस्थिते'** रित्येतदधिकरणान्तरमिति विशेषः । विषयवाक्यसंशयपूर्वपक्षादिकं पूर्ववत् प्रायशः । संशयविकल्पे इन्द्रियाधिष्ठातृदेवतात्मत्वं तु नोपात्तम् । 'दहरं विपापं' 'पद्मकोशप्रतीकाश'मित्यादिषु परमेश्वरस्य हृदयपुण्डरीक एव सन्निधानश्रवणादक्ष्यन्तःस्थितेरश्रवणादक्ष्यन्तःश्रूयमाणः पुरुषः प्रतिबिंबात्मा वा जीवो वा स्यान्न परमेश्वर इति पूर्वपक्षं कृत्वा निरुपाधिकामृतत्वाभयत्वादीनां परमेश्वर एवोपपत्तेस्स एवाक्ष्यन्तश्श्रूयते इति सिद्धान्तितम् ॥ १३ ॥

यदुक्तमक्ष्यन्तः स्थितिरीश्वरस्य न श्रुतेति तत्राह—**स्थानादिव्यपदेशाच्च** ॥ १४ ॥ 'यश्चक्षुषि तिष्ठन्' इत्यादिश्रुतिषु चक्षुःस्थितिनियमनादिकस्य व्यपदिश्यमानत्वाच्चायं परमेश्वर एवेत्यर्थः ॥ १४ ॥ ·

प्रतिबिंबात्मपक्षेऽनुपपत्तिमाह-**सुखविशिष्टाभिधानादेव च** ॥ १५ ॥ प्रतिबिंबात्मनि सुखासंभवात् 'कं ब्रह्म खं ब्रह्मे'ति पूर्वमस्य सुखविशिष्टतयाभिधानाच्चायं परमेश्वर एव ॥ १५ ॥

यदुक्तमक्षिपुरुषस्य जीवरूपत्वं तत्राह—**अत एव स ब्रह्म** ॥ १६ ॥ श्रीकण्ठरामानुजभाष्ययोरेवास्य सूत्रत्वेन लेखनं दृश्यते-**अत एव**=यत एव 'यद्वाव कं तदेव खं यदेव खं तदेव क'मिति कखशब्दाभिधेयं प्रकृतं ब्रह्मैवापरिच्छिन्नसुखरूपतयोपदिष्टमत एव-**सः**=अक्ष्याधारतया प्रतिपाद्यमानः-**ब्रह्म**=परमेश्वर एव । जीवे निरतिशयसुखरूपत्वासंभवान्न जीव इत्यर्थः ।

पूर्वपक्षे पुनरन्यामनुपपत्तिमाह—**सू० ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥** श्रुतब्रह्मस्वरूपाधिगन्तव्यार्चिरादिगतेरक्षिपुरुषं श्रुतवतः प्रतिपादनाच्च नासौ जीवश्छायापुरुषो वा भवितुमर्हति किं त्वीश्वर एवेति सिद्धम् ॥ १७ ॥

इति श्रीकण्ठमते अन्तराधिकरणम् ॥ ५ ॥

**सू० ॥ अनवस्थितेरसंभवाच्च नेतरः ॥१८॥** अस्य 'अंगुष्ठमात्रः पुरुषोऽगुष्ठं च समाश्रितः । ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभु'गित्यादि महोपनिषद्वाक्यं विषयः । इहाङ्गुष्ठमात्रत्वादिविशिष्टः प्राणवायुर्वा परमेश्वरो वेति संशयः । प्राणाग्निहोत्रप्रकरणादंगुष्ठमात्र इत्यल्पत्वव्यपदेशाच्च पंचाहुतिभोक्ता प्राणवायुरेवेति पूर्वपक्षः । सकलजगदीश्वरत्वविश्वभुक्त्वादीनां धर्माणामन्यत्राभिधानेऽनवस्थानादसंभवाच्च न प्राणः किं तु परमेश्वर एवेति सिद्धान्तः । अतोऽत्रेश्वर एव प्राणाग्निहोत्राराध्यत्वेन प्राणरूपः प्रतिपाद्यत इति सिद्धम् ॥ १८ ॥

इति श्रीकण्ठमते अनवस्थित्यधिकरणम् ॥ ६ ॥

**रामानुजमते, 'अन्तरउपपत्ते'**रित्यारभ्य **'अनवस्थितेरसंभवाच्च नेतर'**इत्यन्तं सूत्रषट्कमेकाधिकरणमेव ।

अर्थवर्णने परं प्रायःश्रीकण्ठमतमेवानुस्रियते । विषयवाक्यं समानमेव । संशयकोटिस्तु भगवत्पादमतवत् अक्ष्यन्तःश्रूयमाणः प्रतिबिंबात्मा वा जीवो वा इन्द्रियाधिष्ठातृदेवतात्मा वा परमात्मा वेति चतुर्विधैव । प्रतिबिंबदेवताजीवेष्वेकतमस्यैवाक्ष्यन्तःश्रूयमाणत्वं न परमात्मन इति पूर्वः पक्षः । सिद्धान्तस्तु, **सू० ॥ अन्तर उपपत्तेः ॥ १३ ॥** निरुपाधिकामृतत्वाभयत्वसंयद्वामत्वादीनां परमात्मन्येवोपपत्तेरन्तरः परमात्मैवेत्यर्थः ।

**सू० ॥ स्थानादिव्यपदेशाच्च ॥१४॥ सुखविशिष्टाभिधानादेव च ॥१५॥ अत एव च स ब्रह्म ॥१६॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥** इत्येतेषां चतुर्णां सूत्राणामर्थः श्रीकण्ठमतान्न भिद्यते ॥

**सू० ॥ अनवस्थितेरसंभवाच्च नेतरः ॥ १८ ॥** परस्मादितरो जीवादिर्नाक्ष्याधारः । चक्षुषि नियमेनानवस्थितेरमृतत्वाद्यसंभवाच्च ॥ इति ।

**आनन्दतीर्थमते ।** विषयवाक्यं समानमेव । अक्षिस्थः पुरुषः अग्निर्वा विष्णुर्वेति संशयः । तस्मिन्नेव प्रकरणे अग्निना 'य एवादित्ये पुरुषस्सोऽहमस्मी'ति स्वस्यादित्यमण्डलस्थत्वाभिधानात् 'एषा सोम्य तेऽस्मद्विद्या चात्मविद्या चे'ति तत्राग्निविद्याया आत्मविद्यातः पृथक्त्वस्योपदेशाच्चादित्यस्थस्यैवाक्षिस्थत्वादग्निरेवाक्षिस्थ इति पूर्वः पक्षः । सिद्धान्तस्तु अमृतत्वाभयत्वादिनिरवकाशबहुलिङ्गाद्यनुरोधाद्विद्याभेदोक्तेरग्न्यन्तर्यामित्वसर्वगतत्वादितद्धर्मभेदमूलकत्वादुभयत्र विष्णोरेकस्यैवोपास्यत्वावगमाच्च अक्षिस्थो विष्णुरेवेति ॥ सूत्रार्थस्तु, **सू० ॥ अन्तर उपपत्तेः ॥ १३ ॥ अन्तरः**='य एषोऽन्तरक्षिणी'ति श्रुत्युक्तः चक्षुरन्तःस्थो विष्णुरेव न त्वग्निः । कुतः-**उपपत्तेः**=एतदमृतत्वब्रह्मशब्दादीनामन्तरे श्रवणात्तेषां च विष्णावेवोपपत्तेरित्यर्थः ।

**सू० ॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥** ब्रह्मस्थानभूताक्षिशक्तेः तदधिष्ठातृब्रह्मशक्तेश्चाक्षिस्थपुरुषसंबन्धादक्षिस्थानासंगत्वादेर्व्यपदेशादक्षिस्थो विष्णुरेवेत्यर्थः ।

## अथ अन्तर्याम्यधिकरणम् ॥ ७ ॥

सर्वज्ञस्य सर्वशक्तेः सर्वानुग्राहकस्य विभोरपि शिवस्य परब्रह्मणः सवितृमण्डलपुरुषहृदयपुण्डरीकादिषूपासनाय स्थितिरुपपादिता सर्वत्र तां प्रतिपादयितुमिदमधिकरणमारभ्यते—

॥ सू० ॥ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥

अन्तर्यामिब्राह्मणेऽस्य विषयः श्रूयते 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः'—इति ॥ एवं पृथिवीमारभ्य प्रतिपर्यायमात्मतत्त्वपर्यन्तमखिलवस्त्वन्तर्यामितया श्रूयमाणः परमेश्वरो जीवो विराट्पुरुषो वा प्रधानं वेति संशयः। स्वोपार्जितविचित्रफलभोगाय सकलभूतेन्द्रियानुप्रवेशो जीवस्य युज्यते। सकलचेतनोपादानतया सर्वभूतानुप्रवेशो विराट्पुरुषस्य युक्तः। अथवा।

---

सङ्गतिप्रदर्शनपूर्वकमुत्तराधिकरणमवतारयति—सर्वज्ञस्येति। विभुत्वोपपादकं सर्वज्ञत्वादिविशेषणत्रयम्। सर्वज्ञत्वं सकलप्रपञ्चापरोक्षीकरणम्। सर्वशक्तिमत्त्वं तदुपादानत्वं सर्वानुग्राहकत्वं तत्सत्तास्फूर्तिप्रदत्वम् ॥ सू ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥ बृहदारण्योपनिषद्गतं विषयवाक्यमुदाहरति—अन्तर्यामिब्राह्मण इति। 'स त आत्मे' ति माध्यंदिनपाठः। 'एष त' इति तु काण्वपाठः—पृथिवीमारभ्येति। पृथिवीजलाग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकातमःप्रभृतिष्वात्मपर्यन्तेष्वखिलवस्तुष्वन्तर्यामितया श्रूयमाणः परमेश्वरस्तदन्यो वेति परमेश्वरे हेयसकलप्रपञ्चानुप्रवेशसम्भवासम्भवाभ्यां प्रथमं संशयः। ततस्तदन्यकोटौ जीवो विराट्पुरुषः प्रधानं वेति। पृथिव्याद्यनुप्रवेशस्य जीवादित्रयसाधारण्यात्संशयः। जीवपक्षे तावत्सर्वानुप्रवेशमुपपादयति—स्वोपार्जितेति। एकस्य जीवस्य सकलप्रपञ्चानुप्रवेशाभावात्पृथिव्यादिपर्यायगता यच्छब्दास्तदधिष्ठातृजीवविशेषपराः। 'इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयती'त्येकवचनं जीवसमुदायाभिप्रायम्। 'आत्मनि तिष्ठ'न्नित्याद्यात्मेश्वरत्ववन्नियन्त्रन्तराभावाभिप्रायम्। 'यं पृथिवी न वेदे'त्यादिकं निष्कृष्टस्वरूपाज्ञानाभिप्रायं च जीवे योजनीयम्। द्वितीयपूर्वपक्षमुपपादयति—सकलेति। अस्मिन्पक्षे 'य' इत्येकवचनं विज्ञानात्मनियन्तृत्वं च मुख्यमुपपद्यते। सुबालोपनिषदि 'यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन्यं पृथिवी न वेद यस्यापः शरीर'मि-

---

सू० ॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥ चः समुच्चये। 'कं ब्रह्मे'त्यादिप्रकरणे विशिष्टसुखस्य पूर्णसुखस्याभिधानादेव चक्षुरन्तरो विष्णुरेव। किमु 'खं ब्रह्मे'ति पूर्णज्ञानादपीत्यर्थः।

सू० ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ श्रुतोपनिषदां=श्रुतमतध्यातैतद्विद्यानां पुंसाम्—केन=वायुना—कयोः=कार्यपरब्रह्मणोः—गतेः=प्राप्तेः। 'स एनान्ब्रह्म गमयती'ति श्रुतावभिधानाच्च चक्षुरन्तरो विष्णुरेवेत्यर्थः ॥

सू० ॥ अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥ इतरः=अग्निः—न=चक्षुरन्तरो न भवति। किं तु विष्णुरेव। कुतः—अनवस्थितेः=जीवस्याग्नेर्जीवान्तरनियामकत्वे तस्यापि जीवत्वाविशेषात्तस्यापि नियामकान्तराभ्युपगमे तस्याप्येवं तस्याप्येवमित्यनवस्थानात्—असंभवाच्च=अग्न्यादिजीवस्य जीवान्तरनियामकत्वासंभवाच्चेत्यर्थः ॥

इति सूत्रार्थचन्द्रिकायामन्तराधिकरणम् ॥ ४ ॥

**महदादिरूपेण परिणतत्वात् प्रधानस्य सर्वव्यापकत्वमुचितम् । 'विश्वाधिको रुद्रः' (महाना० १०.) इति विश्वाधिकत्वेन निखिलविकारोत्तीर्णस्य परमेश्वरस्य**

---

त्याद्युपक्र'म्यैष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण'इत्यन्तर्यामिणि नारायणपदप्रयोगोऽपि सङ्गच्छते । यद्यत्र विराट्पुरुषः सहस्रशीर्षत्वादिविशिष्टश्चिच्छक्त्यवस्थारूपः परनारायणो विवक्षितः, यदि वा हिरण्यगर्भ उभयथापि सङ्गच्छते । उभयत्रापि नारायणशब्दप्रसिद्धेः प्राग्दर्शितत्वात् । अथवेत्यनेन तृतीयपूर्वपक्षे स्वारस्याभावो व्यञ्जितः । अचेतनस्य प्रधानस्य व्यापकत्वेऽपि तस्मि'न्नदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाते'ति वाक्यशेषे श्रुतानामदृष्टत्वादीनां सम्भवेऽपि द्रष्टृत्वादीनामात्मश्रुतेर्नियन्तृत्वस्य मुख्यतया तस्मिन्नसम्भवात् । ननु परमेश्वरस्यापि व्यापकत्वात्तस्मिन्नपि सर्वप्रपञ्चनियन्तृत्वं सम्भवतीति कथं पूर्वपक्षे तत्प्रतिक्षेप इत्याशङ्क्याह–विश्वाधिक इति । अयमाशयः । परमेश्वरस्य सर्वान्तर्यामित्वं पृथिव्यादिस्थानेषु शरीरविशेषवत्तया जीवविभुत्ववादे जीवसाधारणेन व्यापकतामात्रेण वा । आद्ये रेतोमूत्रपुरीषादिसकलहेयवस्त्वनुप्रविष्टशरीरवत्तया परमेश्वरस्य विश्वाधिकत्वभङ्गप्रसङ्गः । द्वितीये नियन्तृत्वासंभवप्रसङ्गः । शरीरवतामेव तक्षादीनां वास्यादिनियन्तृत्वदर्शनात् स्वशरीरनियमनेऽपि तेनैव शरीरेण शरीरवत्त्वात् । न च परमेश्वरोऽपि नियम्यपृथिव्यादिशरीरेणैव शरीरवा'न्यस्य पृथिवी शरीर'मित्याद्याम्नानादिति वाच्यम् । अन्येन नियम्यमानस्य शरीरस्य नियमने शरीरान्तरेण शरीरवत्त्वस्य प्रयोजकत्वदर्शनेन पृथिव्यादिशरीराणां च तत्तदभिमानिजीवैर्नियम्यमानत्वेन तन्नियमने शरीरान्तरावश्यंभावात् । शरीरान्तरं विना स्वमहिमप्रतिष्ठे ब्रह्मणि 'यः पृथिव्यां तिष्ठ'न्नित्यादिषु श्रुतायाः पृथिव्यादिषु स्थितेरुपपादनासम्भवाच्च । अपि च 'अदृष्टो द्रष्टे'त्यादिवाक्यशेषे दर्शनादीनि परमेश्वरविषयसाक्षात्कारश्रवणमनननिदिध्यासनरूपाणि वाच्यानि । 'आत्मा वारे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते' इत्यादिवाक्यानुक्रमणैकरूप्यात् । न च परमेश्वरे श्रवणमनननिदिध्यासनसाक्षात्कारविषयत्वं तद्वत्त्वं च जीव इव सम्भवति । न चात्र दर्शनादीनि चक्षुश्श्रोत्रमनोबुद्धिजन्यज्ञानानि विवक्षणीयानि । तथा विवक्षयापि चक्षुरादिजन्यज्ञानरहिते परमेश्वरे द्रष्टृत्वाद्यनिर्वाहात् । तर्हि दर्शनादीनि रूपालोकनादिरूपाणि विवक्षणीयानीति चेन्न । तथा सति 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोते'त्यादिसमनन्तरसन्दर्भस्यानन्वयापत्तेः । न हि परमेश्वरव्यतिरेकेण रूपालोकनादिमानन्यो नास्तीति निषेद्धुं शक्यम् । न च तस्य 'तस्मिन् ग्रामे अयमेक एव सर्वनियामक' इति वाक्यानन्तरं 'नान्यः पुरुषोऽस्ती'ति वाक्यस्य प्राग्वर्णितसर्वनियामकत्वविशिष्टपुरुषान्तरनिषेधपरत्ववत्प्रस्तुतसर्वनियन्तृत्वादिविशिष्टद्रष्ट्रन्तरनिषेधपरत्वं कल्पनीयम् । तत्र प्रमाणान्तराविरोधाय सङ्कोचकल्पनेऽप्यत्र परमेश्वरान्यविषयत्वेनासङ्कोचसम्भवे सङ्कोचकल्पनायोगात् । अपि च रूपशब्दौ चक्षुश्श्रोत्रयोरिव मनोबुद्ध्योर्नासाधारणविषयौ स्तः । येन मननविज्ञानशब्दौ न तत्साक्षात्कारवाचिनौ स्याताम् । ततश्चात्र मन्ता विज्ञातेत्यनयोर्मनननिदिध्यासनपरत्वं मनोबुद्धिकरणकज्ञानपरत्वं वा वाच्यम् । तत्समभिव्याहारतः श्रोता द्रष्टे-

**विकाररूपप्रपञ्चानुप्रवेशो न घटते । ततः परमेश्वरमन्तरेण जीवादिष्वेकतमः स्यादन्तर्यामी ॥**

**इति पूर्वपक्षे प्राप्ते ब्रूमः–पृथिव्याद्यन्तर्यामितया श्रूयमाणः परमेश्वर एव, सर्वान्तरत्वादितद्धर्मव्यपदेशात् । अथर्वशिरसि च 'सोन्तरादन्तरं प्राविशत्' इति परमेश्वरस्यैव सर्वात्मतयाऽनुप्रवेशदर्शनात् । 'स त आत्माऽन्तर्याम्यमृतः' इति शिव एवानादिमुक्तोऽमृत इत्युच्यते, 'एतानि वा अमृतस्य नामधेयानि' (जाबा० ३.) इति श्रवणात् । यथा 'विश्वाधिको रुद्रः' इति विश्वाधिकत्वं परमेश्वरस्य श्रूयते, तथा विश्वरूपत्वमपि 'सर्वो वै रुद्रः' इत्यादिषु । सर्वविकारानुप्रवेशेऽपि तद्विकारस्पर्शलेशोऽपि नास्तीति खलु प्रतिपर्यायममृतशब्दप्रयोगः ।**

---

त्यनयोरपि वेदान्तश्रवणतन्मूलपरमेश्वरसाक्षात्कारपरत्वं श्रावणचाक्षुषसाक्षात्कारपरत्वं वा वक्तुमुचितम् । अवश्यं च दर्शनश्रवणशब्दौ चाक्षुषश्रावणसाक्षात्कारवाचकावित्येवाभ्युपगन्तव्यम् । न तु रूपशब्दसाक्षात्कारवाचकाविति । तथात्वे 'रूपं दृष्टं शब्दश्श्रुत' इत्यादिप्रयोगाणा'मिन्द्र इन्द्राणीपति'रित्यादिवत् 'घटो दृष्ट'इत्यादिप्रयोगाणां 'वरुण इन्द्राणीपति'-रित्यादिप्रयोगवच्चासामञ्जस्यं स्फुटीभवेत् । न च तयोश्चक्षुश्श्रोत्रकरणकज्ञानत्वप्रवृत्तिनिमित्तकत्वे पश्यामि शृणोमीत्यनुभवयोस्तदभानप्रसङ्गः चक्षुश्श्रोत्रयोरयोग्यत्वादिति वाच्यम् । चक्षुःश्रोत्ररूपकरणविशेषप्रयोज्यजातिविशेषयोस्तत्प्रवृत्तिनिमित्तत्वेनोक्तानुभवविषयत्वोपपत्तेः । कथं तर्हि 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इति प्रयोगः । तत्राचक्षुरकर्णइति विशेषणसमभिव्याहारानुपपत्त्या पश्यतिशृणोत्योश्चाक्षुषश्रावणसाक्षात्कारविषयत्वयोग्यसर्वार्थगोचरसाक्षात्कारविषयिणी लक्षणा कल्प्यते । दर्शनादिशब्दो रूपालोकनादिवाचक इत्यङ्गीकारेऽपि हि रूपालोकनविषयत्वयोग्यरूपतदाश्रयादिरूपसर्वार्थगोचरसाक्षात्कारविषयिणी लक्षणा कल्पनीया । अन्यथा 'पश्यत्यचक्षु'रित्यस्य चक्षुरभावेऽपि रूपं साक्षात्करोतीत्यर्थलाभे सति विशिष्य रूपग्रहणसामर्थ्येन तदाश्रयादिसाक्षात्काराभावप्रतीतिप्रसङ्गात् । न चेह तथा 'द्रष्टा श्रोते'त्यादिषु दृशिधात्वादीनां लक्षणा कल्पनीया । तेषां परमेश्वरान्यविषयत्वेन मुख्यार्थपरिग्रहापत्तेः । अतः परमेश्वरादन्योऽयमन्तर्यामीति । सूत्रं व्याकुर्वन् सिद्धान्तयति–पृथिव्यादीति । अधिदैवाधिलोकादिष्वन्तर्यामीत्यस्य व्याख्यानं 'पृथिव्याद्यन्तर्यामी'ति । अन्तर्यामिब्राह्मणे पृथिव्यादिस्तनयित्न्वन्तमधिदैवं यस्सर्वेषु लोकेष्वित्यधिलोकं यस्सर्वेषु वेदेष्वित्यधिवेदं[1] यस्सर्वेषु यज्ञेष्वित्यधियज्ञं यस्सर्वेषु भूतेष्वित्यधिभूतं प्राणवाक्चक्षुश्श्रोत्राद्यात्मान्तमध्यात्ममधिलोकमधिवेदमधियज्ञं स्तनयित्न्वादिकं च किंचिन्माध्यन्दिनपाठप्राप्तम् । सर्वान्तरत्वस्य परमेश्वरधर्मत्वं क्व प्रसिद्धमित्याकाङ्क्षायामाह—अथर्वशिरसीति । अमृतशब्दोक्तमनादिमुक्तत्वं सर्वान्तरत्वादीत्यादिशब्दग्राह्यमिति दर्शयति—स त आत्मेति । विश्वाधिकस्य हेयप्रपञ्चानुप्रवेशो विरुद्ध इत्याशङ्क्य विश्वाधिकत्ववदेव विश्वरूपत्वमपि श्रुतिप्राप्तमङ्गीकरणीयमित्याह—यथा विश्वाधिक इति । विरोधपरिहारस्त्वमृतशब्देनैव विकारदोषास्पर्शपरेण सूचित इत्याह—तद्विकारेति । प्रतिपर्यायमिति । तत्तदनुप्रवेशप्रयु-

---

(१) 'अधिदेव' मिति पाठान्तरम् ।

**अथर्वशिरसि च 'यो वै रुद्रः स भगवान् भूर्भुवस्सुवर्यश्च ब्रह्मा तस्मै वै नमो नमः' इत्यादिना ब्रह्मविष्णुरुद्रोमालक्ष्मीसरस्वतीगणेशस्कन्देन्द्रादिलोकपालभूरादिसप्तलोकपृथिव्यादिपञ्चभूतसूर्यसोमग्रहनक्षत्रकालादिरूपेण प्रत्येकमभ्यासतो निरूप्यते परमेश्वरः। तत्रापि सकलचिदचित्तत्वानुप्रवेशादस्यापुरुषार्थसंबन्धो भवेदिति शङ्कायां प्रतिपर्यायमैश्वर्यादिमङ्गलगुणसंबन्धाभिधायिभगवच्छब्दप्रयोगः कृतः। ततः सर्वाधिकः सर्वात्मा च शिवः परमेश्वर इति युक्तमेव ॥**

कतत्तद्दोषसंस्पर्शशङ्कापरिहारार्थमेव यत्नेन प्रतिपर्यायममृतशब्दप्रयोगः कृत इत्यर्थः। अथर्वशिरस्यपि 'सोऽन्तरादन्तरं प्रविश' दिति सर्वानुप्रवेशमभिधाय 'यो वै रुद्रस्स भगवा' नित्यादिविबुधकृतपरमेश्वरस्तुतिमुखेन सर्वानुप्रवेशप्रयुक्तसार्वात्म्यप्रपञ्चने ब्रह्मविष्णवादिपर्यायेषु सर्वेष्वपि तत्तदनुप्रवेशप्रयुक्ततत्तद्दोषसंस्पर्शशङ्कापरिहारार्थमेव प्रतिपर्यायमैश्वर्यादिषाड्गुण्यसामग्र्यप्रतिपादको भगवच्छब्द इत्याह—अथर्वशिरसि चेति। अन्तर्यामिब्राह्मणे अमृतशब्देन प्रपञ्चानुप्रवेशप्रयुक्ततत्तद्दोषासंस्पर्शमात्रमुक्तम्। तदुपपादकमैश्वर्यमथर्वशिरसि भगवच्छब्देनोक्तम्। तथाच शरीराभावेऽपि स्वतस्सिद्धैश्वर्यवशान्नियन्तृत्वमुपपद्यते। नियमनशक्तिरूपैश्वर्याभिव्यक्तये हि शरीरविशेषापेक्षा। स्वतस्सिद्धे तस्मिन् किं शरीरेण। तत्रतत्र तत्तन्नियमनोपयोगिशरीरविशेषसद्भावेऽपि शक्तिविशेषात्तस्य प्रपञ्चानुप्रवेशप्रयुक्तसुखदुःखानाश्रयणम्। स्वशरीरादिसम्बन्धितया दुःखजनकत्वेन हि प्रपञ्चस्य हेयत्वम्। शक्तिविशेषवन्तं प्रति तज्जननाशक्तस्य तस्य हेयत्वमेवासिद्धम्। एवं च तत्तन्नियमनशक्तिविशेषोपधानेन शरीरविशेषोपधानेन वा तत्रतत्र परमेश्वरस्य स्थितिरप्युपपद्यते। 'अदृष्टो द्रष्टे'त्यादिकं त्वित्थं व्याख्येयम्। 'श्रवणायापि बहुभिर्यो न लभ्यः श्रुतवन्तोऽपि बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलोऽनुशिष्टः'इति-श्रुत्यन्तरदर्शनान्मन्दानां श्रवणमननविज्ञानसाक्षात्काराविषयो भवति। ये धीराः श्रोतृमन्तृविज्ञातृद्रष्टारस्तच्छरीरकस्तन्नियन्तापि भवति। अतोऽन्यः कश्चन श्रवणादिकर्तृशरीरकः स्वतन्त्रस्तन्नियन्ता नास्ति। इति तत्सङ्कल्पोपज्ञैव तद्विषयश्रवणादिसिद्धिरिति। यद्वा। दर्शनादिशब्दाश्चाक्षुषादिज्ञानपराः। अदृष्टादिशब्दाः बहुव्रीहिसमासाः। ततश्च स्वयं चक्षुरादिकरणकज्ञानविषयीकृतार्थरहितश्चक्षुराद्यभावेन तत्करणकज्ञानरहितत्वात्। अथापि द्रष्टा श्रोता मन्ता विज्ञाता च चाक्षुषादिज्ञानगोचरत्वार्हसकलनियमनोपयोग्यशेषविशेषगोचरस्वतस्सिद्धसाक्षात्कारवानन्यस्तथाभूतसाक्षात्कारवान्नास्तीति। यद्वा। अदृष्टादिशब्दास्तत्पुरुषाः। स्वनियम्यदेवमनुष्यपशुपक्षिसरीसृपादिदर्शनश्रवणमननबुद्ध्यविषय एव सन् स्वयं दर्शनादिमान्भवति। स्वनियम्यैस्तैर्ये बहिरिन्द्रियैर्दृश्यन्ते द्रष्टुमशक्या ये शब्देन ज्ञायन्ते तद्गोचरशब्दस्याप्यप्रवृत्त्या ये बुद्ध्या परं निश्चीयन्ते तथा निश्चेतुमप्यशक्याः ये मनःकृत्यसंशयमात्रगोचरा भवन्ति सर्वानपि स्वातन्त्र्येण नियमनार्थं साक्षात्करोति एवंभूतोऽन्यः कश्चिद्दर्शनादिमान्नास्तीति। ननु सर्वत्राप्यस्मिन्व्याख्याने केनचिदवच्छेदेन द्रष्ट्रन्तरादिनिषेधो वैवक्षिको न मुख्यः। स चान्तर्यामिणो जीवत्वाभ्युपगमेन द्रष्ट्रादिशब्दानां चाक्षुषज्ञानादिमत्परत्वाभ्युपगमेन चक्षुष्यत्वनिर्वाहे सम्भवति न युक्त इति चेदुच्यते। असङ्कुचितसर्वप्रपञ्चनियन्तृत्वममृत-

यदुक्तं प्रधानादीनामन्तर्यामित्वमुचितमिति, तत् परिहरति—

॥ सू० ॥ न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥

न च स्मार्तं प्रधानमन्तर्यामीति श्रुतं, तस्य विकारजडत्वादिधर्मानभिलापात्।

शब्दोक्तमनादिमुक्तत्वममृतश्रुतिरित्येतत्सर्वं परमेश्वरादन्यत्र न सम्भवतीति तद्वशादन्तर्यामी परमेश्वर इति सिद्धावयं 'नान्योतोऽस्तीत्यादिवाक्यशेषस्तत्रैव सङ्गमयितव्यः। तत्सङ्गतिस्सर्वनियन्तृत्वविशिष्टद्रष्ट्रन्तरनिषेधादिपरत्वकल्पन एव लभ्यते। किंचायं वाक्यशेषः प्रकृतस्यान्तर्यामिणस्स्तुत्यर्थतया तदुत्कर्षपर्यवसायी व्याख्येयः। न चान्तर्यामी जीव इत्यङ्गीकृत्यास्य वाक्यशेषस्य जीवादन्यश्चक्षुरादिकरणाधीनज्ञानो नास्तीत्यर्थकल्पने कश्चिदुत्कर्षो वर्णितः पर्यवस्यति। तेन ततोऽन्यस्य परमेश्वरस्य स्वतस्सिद्धसर्वविषयज्ञानसिद्ध्या तदपकर्षस्यैव पर्यवसानात्। तस्मात्प्रस्तुतसकलप्रपञ्चनियन्तृत्वविशिष्टद्रष्ट्रन्तरनिषेधादिपरतयैव व्याख्यानमुचितम्। तस्य समाभ्यधिकराहित्यरूपोत्कर्षपर्यवसायित्वात्। अपि च 'नान्योऽतोऽस्ती'त्यनन्यशब्दव्युत्पत्त्यनुसारादपि प्रदर्शितव्याख्यानौचित्यमनुसन्धेयम्। अन्येतरादिशब्दानां हि प्रतियोगिसदृशे तद्भिन्ने व्युत्पत्तिः। न तु तद्भिन्नमात्रे। अत एव खल्विषुनामके क्रतौ विष्टुतिं प्रकृतिं विधाय श्रुते 'समानमितरत् श्येनेने'ति वाक्य इतरशब्दस्य प्रस्तुतविष्टुतिविकाररूपवैशेषिकाङ्गसदृशपरत्वात्तद्वाक्यं सदृशानां श्येनवैशेषिकाङ्गानां लोहितोष्णीषत्वादीनामतिदेशकम्। न तु श्येने इषौ च साम्येन चोदकप्राप्तानां वैकृताङ्गानामनुवादकमिति पूर्वतन्त्रे वचनातिदेशविचारे सिद्धान्तितम्। यद्यपि वार्तिककारपक्षे विष्टुतिरूपप्राकृताङ्गादिषु 'विष्टुतिं करोती'त्यत्रोद्देश्यत्वेन प्रकृतादितरस्य चोदकसन्निहितस्य प्राकृताङ्गजातस्यानुवादक इतरशब्दो न तु तत्र विधेयत्वेन प्रकृतादिष्वाकाररूपादिषुवैशेषिकाङ्गादितरस्य लोहितोष्णीषत्वादेः श्येनवैशेषिकाङ्गस्य निर्देशकः। इषौ लोहितोष्णीषत्वादिप्राप्तिस्तु विष्टुतेरन्यस्य ऋत्विगादेः प्राकृताङ्गजातस्य। श्येनसादृश्यविधानेन त्वितरपदार्थानुप्रविष्टतया तत्पक्षे श्येनगतः स्वतन्त्रः। वैशेषिकाङ्गानां कण्टकवितोदनादीनां त्विषौ न प्राप्तिरिष्यते। तथापि प्राकृतविष्टुतिसादृश्यं प्राकृतस्य ऋत्विगादेरस्तीति तत्पक्षेऽपि नेतरशब्दस्य सादृश्यार्थकत्वहानिः। अत एव वार्तिककारैरपि 'स्विष्टकृतोभक्षप्रतिषेधस्स्या'दिति ( जै० १० ) दाशमिकाधिकरणे गृहमेधीयेष्टावाज्यभागौ यजतीत्येतल्लक्षणया तदितरपरिसङ्ख्यार्थमिति गृहमेधीयाधिकरणपञ्चमपक्षे तद्वाक्यमाज्यभागसदृशयागान्तरमात्रपरिसङ्ख्यापकमित्यङ्गीकृत्य तत्रा'ग्निं स्विष्टकृतं यजती'ति वाक्यस्य स्विष्टकृतस्सदृशशेषकार्यान्तरे परिसङ्ख्यार्थत्वं व्यवस्थापितम्। यस्मा'दृष्टो द्रष्टे'त्यादिवाक्यशेषानाञ्जस्याभावादप्यन्तर्यामी परमेश्वर इति॥ अथोत्तरसूत्रं प्रधानादिपूर्वपक्षत्रयनिराकरणार्थत्वेनावतारयति—यदुक्तमिति ॥ सू० ॥ न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥ तस्य विकारजडत्वादिधर्मानभिलापादिति। अयमाशयः। सर्वाणि भूतानि योऽन्तरोयमयती'त्यारभ्य अन्तर्यामिणो ये धर्मास्सर्वभूतनियन्तृत्वादयः श्रुताः

(१) शाङ्करभाष्यतट्टीकादिषु' न च स्मार्तमतद्धर्माभिलापात्' इत्यन्तमेकं सूत्रम्। 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इति सूत्रान्तरम्। श्रीकण्ठरामानुजभाष्ययोस्तु' शारीरश्चे 'त्यन्तमेकं सूत्रम्।' उभयेऽपि ' इत्यादि सूत्रान्तरमिति विशेषोऽत्रावधेयः।

न शारीरो विराट्पुरुषश्च, तस्य सकलनियामकत्वाद्यनुपपत्तेः ॥

ते सर्वे न प्रधानधर्माः। कथञ्चित्प्रधाने योजनीयाः। तथा हि–भूतशब्दः कार्यपर इति सर्वस्य कार्यस्य कारणाधीनत्वात् सर्वभूतनियन्तृत्वं 'यः पृथिव्यां तिष्ठ' न्नित्यादिकम्। कार्यवर्गे कारणस्यानुगतत्वात्। 'यं पृथिवी न वेदे'त्यादि प्रधानस्य पृथिवीदेवतादिवेद्यत्वसम्भवेऽपि तस्या'प्रतर्क्यमविज्ञेय'मित्यादिप्रसिद्ध्यनुसारात्। 'यस्य पृथिवी शरीर'मित्यादि कार्यकारणयोर्वस्तुतो भेदाभावात्। पूर्वपक्षशरीरमित्यादौ स्वरूपेऽपि शरीरशब्दप्रयोगदर्शनात्'एष त आत्मे'ति जीवस्य सर्वनिर्वाहके तस्मि'न्ममात्मा भद्रसेन' इत्यादिवदात्मत्वोपचारात्। 'अदृष्टो द्रष्टे'त्यादावदृष्टत्वाश्रुतत्वे रूपादिहीनत्वात्। अमतत्वाविज्ञातत्वे अविज्ञेयप्रसिद्ध्यनुसारात्। द्रष्टृत्वादि तत्प्रकृतिकत्वेन तदभिन्नानां चक्षुरादीनां दर्शनादिसाधनत्वात्। 'रूपग्राहकं चक्षु'रित्यादौ करणे कर्तृत्वोपचारदर्शनादिति सर्वे धर्माः क्लेशेन प्रधाने योजनीयाः। तथा क्लेशेनापि प्रधाने योज्येरन् यदि विकारत्वजडत्वादयोऽनन्यथासिद्धास्तद्धर्मा इहाभिलप्येरन्। न च तेषामिहाभिलापोऽस्तीति। तस्य सकलनियामकत्वाद्यनुपपत्तेरिति। 'सर्वाणि भूतानि योऽन्तरो यमयती'त्यादिषु सर्वकल्पानुयायिसकलप्रपञ्चनियन्तृत्वमसङ्कुचितं प्रतीयते। 'नान्योऽतोऽस्ति द्रष्टे'त्यादौ प्राग्वर्णितरूपनियन्तृत्वविशिष्टद्रष्ट्रन्तरादिनिषेधेन च तत् स्थिरीक्रियते।तत्तावत्प्रतिकल्पं भिन्नस्य मूर्त्यात्मनो हिरण्यगर्भस्य नारायणस्य च न सम्भवति। ननु सुबालोपनिषदि पृथिव्याद्यन्तर्यामिणि नारायणपदप्रयोगान्नारायणस्यासङ्कुचितसकलनियन्तृत्वमुपपद्यत इति भाति। उच्यते। सुबालोपनिषदुपक्रमे 'तदाहुः किं तदासी'दिति प्रश्नपूर्वकं निर्विकल्पकं परमात्मस्वरूपं प्रथममासीत् ततस्तमस्ततो भूतादिस्तत आकाशादिक्रमेण भूतपञ्चकं तेन ब्रह्माण्डमुत्पादितं तन्मध्ये 'दिव्यस्सहस्रशीर्षा सहस्राक्षः सहस्रपात् सहस्रबाहुः पुरुषोऽजायत' इत्युक्त्वा 'ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृत'इत्यादिना पुरुषसूक्तप्रक्रियया तस्य मुखादिभ्यः ब्राह्मणादीनां हृदयाद्यवयवान्तरेभ्योऽन्येषां च केषाञ्चिच्चेतनाचेतनानामुत्पत्तिः ललाटात्क्रोधजस्य रुद्रस्य निश्वासेभ्यो वेदादिशब्दजालप्रादुर्भावं चाभिधाय तस्मादेवार्धेन स्त्रीभावमर्धेन पुरुषभावं च प्राप्तात् देवर्षियक्षराक्षसादीनां तिरश्चां च तत्तज्जननोचितस्त्रीपुंसविग्रहपरिग्रहेण मिथुनीभावमापन्नादुत्पत्तिं वर्णयित्वा उपसंहारकाले तेन क्रियमाणत्रैलोक्यभस्मीभावमुपक्रम्य 'पृथिव्यप्सु लीयत'इत्यादिना 'तमः परस्मिन्नेकीभवती'त्यन्तेन पृथिव्यादेः प्रथमकार्यतमःपर्यन्तस्य प्रपञ्चस्य परमात्मनि लयो दर्शितः। एवं तावत्सुबालोपनिषदि प्रथमानुशासने जगदादिकारणभूतः परमात्मा तेन ब्रह्माण्डमध्ये सृष्टः तन्मध्यगतदेवमनुष्याद्यवान्तरसृष्टिसंहारकारी सहस्रशीर्षत्वादिविशिष्टपुरुषश्चेति द्वौ वर्णितौ।तत्र 'तदण्डं हिरण्मयं समभव'दिति प्रक्रम्य मध्ये 'दिव्यः सहस्रशीर्षा सहस्राक्षः सहस्रपात् सहस्रबाहुः पुरुषोऽजायत'इति ब्रह्माण्डमध्ये परमात्मना सृष्टो यः पुरुषो वर्णितः तमेव ब्राह्मणादिसकलप्रजास्रष्टारं दिव्यपुरुषं 'नैवेह किञ्चनाग्र आसीदमूलमनाधारा इमाः प्रजाः प्रजायन्त'इति प्रवृत्ते तृतीयानुशासने 'दिव्यो देव एको नारायण' इति प्रस्तुत्य 'चक्षुश्च द्रष्टव्यं च नारायण' इत्यादिना तस्य सर्वोपादानत्वप्रयुक्तं सार्वात्म्यमुक्त्वा तस्यैव चतुर्थानुशासने 'यस्य पृथिवी शरीर'मित्यादिना 'स एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण' इत्यन्तेन सर्वान्तर्यामित्वमुक्तम्।न च तत्परमात्मसृज्यत्वेन दिव्यविशेषणावृत्त्या दिवि

जीवश्च न भवतीत्याह—

॥ सू० ॥ उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥

उभये काण्वा माध्यन्दिनशाखिनश्च 'यो विज्ञाने तिष्ठन्' 'य आत्मनि तिष्ठन्' (बृह०५.७.) इत्यादिना जीवादन्तर्यामिणं भेदेनाधीयते। ततः परमेश्वरस्यैव सकला-

परमाकाशरूपायां चिच्छक्तौ भवत्वेन च प्रकृतस्य श्रुत्यन्तरप्रसिद्धमहाजलौघमध्यसृष्टब्रह्मांडरूपगर्भगोलकमध्यनिवासलब्धनारायणसंज्ञस्य स्वरूपेणोपपद्यते । अतः शारीराधिकरणन्यायेन परमात्माभेददृष्ट्या तदुपपादनीयम् । तथोपपादनं सूचयितुं 'अनुपपत्तेस्तु न शारीर'इति ( ब्र०१.२.३.) शारीराधिकरणे नारायणविषयतया प्रयुक्तं शारीरपदमिहापि तद्विषयतया प्रयुक्तम् ॥ जीवपूर्वपक्षनिराकरणार्थत्वेनोत्तरसूत्रमवतारयति—जीवश्चेति ॥ सू ॥ उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥ 'यो विज्ञान'इति स्थाने 'य आत्मनी'ति- माध्यन्दिनपाठदर्शनात् स्थानप्रमाणेन विज्ञानशब्दस्य जीवपरत्वमवसीयते । न चात्मशब्दस्यैव स्थानप्रमाणेन ज्ञप्तिपरत्वं कल्प्यतामिति वाच्यम् । तत्र तस्य प्रयोगादर्शनात् । 'विज्ञानं यज्ञं तनुत' इत्यादिश्रुतिषु विज्ञानशब्दस्य जीवे दृष्टप्रयोगत्वादित्यभिप्रेत्य सूत्रं व्याचष्टे- उभय इति । पूर्वसूत्राच्छारीर इत्यस्यानुवृत्तिं प्रकृतेर्जीवार्थत्वं प्रत्ययस्य पञ्चम्यर्थत्वं च परिगृह्य तल्लब्धमर्थमाह—जीवादिति । इदं त्विह वक्तव्यम् । जीवपूर्वपक्षे कः खलु जीवोऽन्तर्यामी स्यात् । न तावत्तत्तदुपासकजीवः । परिच्छिन्ने तत्र पृथिव्यादिस्थितितन्नियन्तृत्वयोरसम्भवात् 'किमन्तर्यामिणं वेत्थे'ति गन्धर्वेण पृष्टस्य काप्यस्य 'नाहं तं भगवन्वेदे' ति उत्तरासामञ्जस्यप्रसङ्गाच्च यज्ञविद्याविदः काप्यस्य कर्मफलभोक्तृदेहातिरिक्तजीवज्ञानावश्यंभावात् । नापि पृथिव्याद्यभिमानिजीवः । श्रोतारमुद्दालकं प्रति पराभूते तस्मिन् 'एष त आत्मे'ति तदात्मत्वोपदेशायोगात् पृथिव्यादिष्वप्यभिमानिजीवस्य प्रत्येकं भिन्नतया सर्वाणि भूतानि योऽन्तरो यमयती'त्युपक्रान्तायाः एकस्य सर्वनियन्तृताया अनन्वयप्रसङ्गाच्च । नापि जीवसमुदायः । तस्य पृथिव्यादिस्थत्वतन्नियन्तृत्वयोरभावेन 'यः पृथिव्यां तिष्ठ'न्नित्यादेरनन्वयात् । न च सर्वभूतवाक्ये जीवसमुदायः पृथिव्यादिवाक्ये तत्तदभिमानिजीव इति वैरूप्यकल्पनं युक्तम् । न वा तदपि निर्वोढुं शक्यम् । 'एष त आत्मे'त्युपदेशायोगस्योक्तत्वात् । अपि चोपासकजीव इति पृथिव्याद्यभिमानिजीव इति सर्वजीवसमुदाय इति पक्षत्रयमपि 'भेदव्यपदेशाच्चान्य' इति ( ब्र० १. १. २२. ) सूत्रेणैव निरस्तम् । 'एष त आत्मा यं पृथिवी न वेद यं सर्वाणि भूतानि न विदु'रित्यादिभेदव्यपदेशसत्त्वात् । तस्मान्निरालम्बनो जीवपूर्वपक्षः । 'नान्योऽतोऽस्ति द्रष्टे'त्यादिकं तूपपादितम् । प्रदर्शितसिद्धान्तोऽप्ययुक्तः । विज्ञानशब्दानुसारेणात्मशब्दः परमेश्वरचिच्छक्तिपर इति वैपरीत्यस्यापि वक्तुं शक्यत्वात् । तस्यात्मशब्दस्यानन्दमयाधिकरणभाष्ये भट्टभास्करीये तैत्तिरीयारण्यकभाष्ये च सुप्रसिद्धत्वात् । तस्मादिदं सूत्रं चिच्छक्तिरन्तर्यामित्वेन प्रतिपाद्यत इति पूर्वपक्षान्तरनिराकरणार्थमिति युक्तम् । उपपद्यते हि तस्यां 'तस्य भासा सर्वमिदं विभाती'ति श्रुत्यनुसारेण सर्वस्फूर्तिप्रदायां 'नान्योऽतोऽस्ति द्रष्टे'त्यादिविशेषणम् । अन्यदपि सर्वं विशेषणं तत्रोपपद्यत इति स्पष्टमेव । सिद्धान्तस्तु 'यो विज्ञाने तिष्ठ' 'न्य आत्मनि तिष्ठ'न्निति चिच्छक्तितोऽन्तर्यामिणं भेदेनाधीयते । न चात्मविज्ञानशब्दयोर्जीवपरत्वं शङ्कनीयम् । 'यस्सर्वेषु भूतेषु तिष्ठ'न्निति

न्तर्यामित्वं, न प्रधानविराट्पुरुषजीवानामिति सिद्धम् ॥

इत्यन्तर्याम्यधिकरणम् ॥ ७ ॥

---

पर्याये भूतशब्दोदितानां ब्रह्मादिस्तंबपर्यन्तानां सर्वेषां जीवानां पृथगन्तर्यामिनियम्यत्वस्य वर्णितत्वात्। न च तत्र भूतशब्दो जननरूपभवनवत्सु कार्येषु वर्तत इति शङ्कनीयम्। कार्ययोगतः प्राणिरूढेर्बलवत्त्वात्। न च महाभूतरूढेः प्राणिरूढेश्च विनिगमनाविरहेण परस्परविरोधोन्मेषः शङ्कनीयः। 'पृथिव्यां तिष्ठ'न्नित्यादिपर्यायेषु पृथिव्यादिमहाभूतानामन्तर्यामिनियम्यत्वस्योक्तत्वेनात्र प्राणिरूढेरेवोन्मेषात्। तस्मान्न चिच्छक्तिरन्तर्यामित्वेन प्रतिपाद्येति। यदि तु सर्वभूतपर्याये जीववर्गादन्तर्यामिणं भेदेनाधीयत इति जीवपूर्वपक्षनिराकरणमप्यत्र विवक्षितं स्यात् अस्तु न कापि हानिरिति ॥

इति अन्तर्याम्यधिकरणम् ॥ ७ ॥

---

नयमणिमालायाम्

## अथान्तर्याम्यधिकरणम् ॥ ७ ॥

सू० ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥ न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥ उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥

अन्तर्यामी भोक्ता भवेद्विराड्वा प्रधानं वा। विश्वोत्तीर्णस्तु शिवः स्वयं न विश्वान्तरत्वमियात् ॥ ४५ ॥

शिव एव सर्वनियमनशक्तस्तस्य श्रुतः प्रवेशोऽपि। अमृतपदमत्र दृष्टं जाबालाश्चामनन्ति तत्रैव ॥ ४६ ॥

इत्यन्तर्याम्यधिकरणम् ॥ ७ ॥

## सूत्रार्थचन्द्रिकायाम्

अथान्तर्याम्यधिकरणम् ॥ ५ ॥ श्रीकण्ठमते ॥ ७ ॥

सू० ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

भगवत्पादमते, **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** ॥१८॥ **अधिदैवादिषु**=अधिदैवाधिलोकादिषु। **अन्तर्यामी**=अन्तर्यमयितृत्वेन श्रूयमाणः परमात्मा। कुतः। **तद्धर्मव्यपदेशात्**=तस्य परमात्मनो धर्माणां यमयितृत्वादीनां निर्दिश्यमानत्वादित्यर्थः। अस्य 'य इमं च परं च लोकं सर्वाणि च भूतान्यन्तरो यमयती' त्युपक्रम्य श्रूयमाणं 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृत' इत्यादिवाक्यं विषयः। अत्राधिदैवादिषु अन्तर्यमयितृत्वेन श्रूयमाणः किं तत्तदभिमानी देवताविशेषः उत योगी कश्चित् जीवः अथवा प्रधानम् आहोस्वित्परमेश्वर इति संशयः। अकार्यकरणे ब्रह्मण्यन्तर्यमयितृत्वाद्यनुपपत्तेर्जीवादिरेवान्तर्यामीति युक्तमिति पूर्वः पक्षः। सर्वविकारकारणे ब्रह्मणि सर्वशक्त्युपपत्तेर्नियम्यकार्यकरणैरेव तस्य कार्यकरणवत्त्वोपपत्तेश्च परमात्मैवान्तर्यामीति सिद्धान्तः ॥ **सू० ॥ न च स्मार्तमतद्धर्माभिलापात्** ॥ १९ ॥ रूपादिहीने सांख्यकल्पिते प्रधाने अदृष्टत्वादिधर्माणामुपपद्यमानतया प्रधानमन्तर्यामि स्यादित्याशंक्य परिहरति—**स्मार्तम्**=सांख्यस्मृतिकल्पितं प्रधानं च। नान्तर्यामी। कुतः। **अतद्धर्माभिलापात्**=प्रधानभिन्नपरमात्मधर्माणां द्रष्टृत्वादीनामपीहाभिधानादित्यर्थः।

ननु तर्हि चेतनो योगी जीवोऽन्तर्यामी स्यादित्यत आह—**शारीरश्चोभयेपि हि भेदेनैनमधीयते** ॥ २० ॥ पूर्वसूत्रात् नेत्यनुवर्तते। **शारीरश्च**=जीवश्च नान्तर्यामी। कुतः। **हि**=यस्मात्। **उभयेऽपि**=काण्वा माध्यन्दिनाश्च। **भेदेन**='यो विज्ञाने तिष्ठन्' इत्यादिषु अन्तर्यामिणो भेदेन। **एनं**=शारीरम्। पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन च **अधीयते**। अतोऽधिदैवादिष्वन्तर्यामी परमात्मैवेति सिद्धम् ॥

**श्रीकण्ठमते अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्**। विषयवाक्यसंशयपूर्वपक्षादिकं प्रायस्समानमेव। पूर्वपक्षकोटौ परमस्त्यनुप्रवेशो विराट्पुरुषस्यापि। **अन्तर्यामी**=पृथिवीमारभ्य अव्यक्तात्मतत्त्वपर्यन्तमन्तर्यामितया प्रतिपर्यायं श्रूयमाणः परमेश्वर एव। कुतः। सर्वान्तरत्वादितद्धर्मव्यपदेशादित्यर्थः।

## अथ अदृश्यत्वाधिकरणम्. ॥ ८ ॥

**इह प्रत्यक्षपृथिव्यादिरूपत्वेन प्रतिपादितस्य परमेश्वरस्य तद्वदृश्यत्वादिकं नास्तीति प्रतिपादयितुमिदमधिकरणमवतार्यते—**

सङ्गतिं प्रदर्शयन्नुत्तराधिकरणमवतारयति—इहेति । पुरोवर्तितया प्रत्यक्षतो दृश्यमानं यत् पृथिव्यादिकं तत्परमेश्वरस्य नियम्यत्वेन रूपमिति तदनुप्रविश्य तत्रावस्थितस्य गृहस्थितस्य चैत्रस्येव दृश्यता स्यादिति शङ्कानिराकरणार्थं सर्वत्र तन्नियम्यानुरूपशरीरवत्तया स्थितस्यापि दृश्यत्वाभावप्रतिपादकं वेदान्तवाक्यमन्यपरत्वनिराकरणेन तद्विषयत्वं प्रतिपादयदधिकरणं प्रवर्त्यत इत्यर्थः। इह पूर्वाधिकरणसङ्गतिवत्पादसङ्गतिरपि प्रदर्शिता। 'न चक्षुषा पश्यति कश्चनैन'मित्यादिश्रुतिप्रसिद्धब्रह्मलिङ्गभावस्याप्यदृश्यत्वस्य प्रदर्शिततया दृश्यत्वप्रसक्त्यानतिस्पष्ट-

---

यच्छङ्कितं प्रधानादीनामन्तर्यामित्वमुचितमिति तत्परिहरति—**न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥२०॥** **स्मार्तं च**=प्रधानं च नान्तर्यामि । कुतः। **अतद्धर्माभिलापात्**=विकारजडत्वादितदीयधर्मानिरूपणात् । **शारीरश्च**=विराट्पुरुषश्च । नान्तर्यामी । कुतः । सकलनियामकत्वाद्यनुपपत्तेरित्यर्थः ।

जीवश्च न भवतीत्याह—सू० ॥ **उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥** **उभयेऽपि**=काण्वा माध्यन्दिनाश्च । **एनम्**=अन्तर्यामिणम् । **भेदेन**=‘यो विज्ञाने तिष्ठन्’ ‘य आत्मनि तिष्ठन्’ इत्यादिना जीवाद्भेदेनाधीयते । अतः परमेश्वरस्यैव सकलान्तर्यामित्वं न प्रधानविराट्पुरुषजीवानामिति सिद्धम् ॥ इति ।

**रामानुजमते सू० ॥ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥** विषयवाक्यं समानमेव अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणः अन्तर्यामी प्रत्यगात्मा वा परमात्मा वेति संशयः । ‘ द्रष्टा श्रोते’ति करणायत्तज्ञानताश्रुतेः द्रष्टुरेवान्तर्यामित्वोपदेशात् ‘ नान्योऽतोऽस्ती’त्यादिना द्रष्ट्रन्तरनिषेधाच्च प्रत्यगात्मेति पूर्वः पक्षः । सर्वान्तरत्वसर्वाविदितत्वसर्वशरीरकत्वसर्वनियन्तृत्वादिधर्मव्यपदेशात् अन्तर्यामी परमात्मा नारायण एवेति सिद्धान्तः ।

**सू० । न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥** नायं प्रधानं जीवश्च । तयोरसंभावितसर्वाविदितत्वादिधर्माभिलापात् । असंभावनया यथा न प्रधानं तथा जीवोऽपीत्यर्थः ।

अमीषां गुणानां परमात्मन्यन्वयं प्रत्यगात्मनि व्यतिरेकं च सूत्रद्वयेन प्रदर्श्य निरपेक्षं हेत्वन्तरमाह—**सू० ॥ उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥** उभये काण्वा माध्यन्दिनाश्च ‘ यो विज्ञाने’ ‘य आत्मनि’ इत्यादिना एनमन्तर्यामिणं भेदेन परमात्मनियाम्यात्प्रत्यगात्मनो विलक्षणत्वेनाधीयते । अतोऽन्तर्यामी प्रत्यगात्मनो विलक्षणः परमात्मा नारायणइति सिद्धम् ॥

**आनन्दतीर्थमते,** विषयवाक्यं समानमेव । पृथिव्याद्यन्तर्यामितया श्रूयमाणः प्रधानं वा पृथिव्याद्यभिमानिजीवो वा विष्णुर्वेति संदेहः । पृथिव्यादेर्विष्णुं प्रति शरीरत्वाभावात् अन्यत्र कथंचिदुपपत्तेश्च प्रधानादिरेवेति पूर्वः पक्षः । पृथिव्याद्यवेद्यत्वतदन्तरत्वरूपतद्धर्मव्यपदेशात् ‘ शीर्यते नित्यमेवास्माद्विष्णोस्तुजगदीदृशम् । रमेत च परो ह्यस्मिन् शरीरं तस्य तन्मत’ मिति वचनसिद्धयोगबलेन तं प्रति पृथिव्यादेश्शरीरत्वस्योपपत्तेश्च विष्णुरेवेति सिद्धान्तः।

**सूत्रार्थस्तु, सू० ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ अन्तर्यामी**=‘ एष आत्मान्तर्याम्यमृत ’ इति श्रुत्युक्तोऽन्तर्यामी विष्णुरेव न प्रधानादिः। कुतः । **अधिदैवादिषु**=अधिदैवाध्यत्माधिभूतादिप्रकरणेषु । **तद्धर्मव्यपदेशात्**=तस्मिन्नन्तर्यामिणि तस्य ‘ यं पृथिवी न वेदे’तिश्रुताबुक्तस्याविदितत्वादिब्रह्मधर्मस्य व्यपदेशात् उक्तत्वादित्यर्थः॥

**सू० ॥ न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥** चकारस्समुच्चये । **स्मार्तम्**=कपिलस्मृत्युक्तं प्रधानं जीवश्च न अन्तर्यामि । कुतः । **अतद्धर्माभिलापात्**=तद्धर्माणां प्रधानजीवधर्माणां त्रिगुणत्वसंसारित्वादीनाम् अनभिलापात् अनुक्तत्वादित्यर्थः ।

**सू० ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयत ॥ २० ॥** चकारो न ज्ञोऽनुकर्षणार्थः । **हि**=यस्मात् । **उभयेऽपि**=काण्वा माध्यन्दिनाश्च । ‘आत्मनोऽन्तरः’ ‘ विज्ञानादन्तरः’ इति । **एनं**=जीवम् । **भेदेन**=अन्तर्यामिणस्सकाशाद्भिन्नत्वेन । **अधीयते**=पठन्ति । तस्मात् **शारीरः**=जीवश्च नान्तर्यामीत्यर्थः ॥ २० ॥

**इति सूत्रार्थचन्द्रिकायामन्तर्याम्यधिकरणम् ॥ ६ ॥ श्रीकण्ठमते ॥ ७ ॥**

---

## ॥ सू० ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

'अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मु०१.१.) इत्यादि श्रूयतेऽस्य विषयः॥ अत्राक्षरं प्रधानं जीवः परमेश्वरो वेति संशयः। प्रधानमत्राक्षरं, तस्य महदादिपरिणामिनो भूतयोनित्वसंभवात्।

---

ब्रह्मलिङ्गभावत्वात् ॥ सू० ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥ सर्वज्ञत्वादेरक्षरानन्वयेन पूर्वपक्षकोटिद्वयं तदन्वयेन सिद्धान्तकोटिं चाभिप्रेत्य संशयं दर्शयति—अत्राक्षरमिति। नन्विहाक्षरं प्रधानं जीवो वेति पूर्वपक्षो न सम्भवति। इह 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणा मनस्सत्यं लोकाः कर्मसु चामृतम्। यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेव ब्रह्म नामरूपमन्नं च जायत'इत्यादिमन्त्रेषु ब्रह्मश्रुतिसर्वज्ञत्वलिङ्गादिकमाम्नायते। उपक्रमेऽपि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात'मित्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं ब्रह्मलिङ्गमाम्नायते। परमोप्रक्रमे'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहे'ति ब्रह्मविद्यासामाख्या दृश्यते। तथा 'द्वे विद्ये वेदितव्ये परा चैवापरा चे'ति विद्ययोः परापरविभागं कृत्वा तयोरपरामृग्वेदादिलक्षणामुक्त्वा 'अथ परा यया तदक्षरमधिगम्यत'इति वक्ष्यमाणाक्षरविद्यायाः परविद्यासमाख्या कृता दृश्यते। अपि च सद्विद्यावाक्यानामीक्षत्यधिकरणे साङ्ख्याभिमतप्रधानपरत्वं निरस्तम्। तदुपदर्शिता युक्तयोऽत्रापि प्रवर्तन्त एव।अस्तिखल्वीक्षापूर्वकस्रष्टृत्वश्रवणमत्रापि।'तपसा चीयते ब्रह्मे'ति यतस्तपःशब्दोऽत्र 'तप आलोचन'इति धातोर्निष्पन्नः स्रष्टव्यालोचनरूपज्ञानवाची। 'यस्य ज्ञानमयं तप'इत्यग्रे विवरणात्। आत्मशब्दश्चास्ति 'यस्सर्वज्ञस्सर्वविद्यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठित' इत्यादिमन्त्रेषु। तन्निष्ठस्य मोक्षोपदेशोऽप्यस्ति'यदापश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'त्यादिषु। हेयत्वं च तस्य नोच्यते। प्रतिज्ञाविरोधोऽप्यस्तीति प्राग्दर्शितम्। साक्षाच्च परमेश्वरस्य कर्तृत्वमुपादानत्वं च श्रूयते 'यदा पश्य' इत्यादिमन्त्रेष्वित्याशङ्क्य प्रधानपूर्वपक्षं तावदुपपादयति—प्रधानमत्रेति। ननु यदि भूतयोनित्वं योनिशब्दस्य स्थानवाचित्वेन भूताधारत्वं तदा तत् सर्वाधारे ब्रह्मण्युपपद्यते। यदि च तस्योपादानवाचितया भूतोपादानत्वं तदपि तस्योपपद्यते। प्रकृत्यधिकरणे तस्य सर्वोपादानतायाः स्थापयिष्यमाणत्वादित्याशङ्क्य विशेषयति—महदादिपरिणामिन इति। भूतयोनिशब्देन परिणामितया भूतोपादानत्वमुच्यते न तु भूताधारत्वं भूतोपादानत्वसामान्यं वा। भूतयोनित्वविवरणार्थं प्रवृत्ते 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्व'मिति समनन्तरमन्त्रे परिणाम्युपादानरूपोर्णनाभ्यादिदृष्टान्तोपादानेन 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ती'त्युपरितनमन्त्रान्तरप्रदर्शिताचेतनप्राणादिवक्ष्यमाणकार्यसारूप्यश्रवणाच्च तथावगतेः। तच्च निर्विकारे परमेश्वरे न सम्भवतीति भावः। तदभिप्रायेणैवा-

त्रा'क्षरं प्रधान'मित्यक्षरशब्देन धर्मिनिर्देशः कृतः। अत्र भूतयोनिशब्देन धर्मिनिर्देशः कर्तुमुचितः। 'अदृश्यत्वादिगुणक' इति सूत्रानुरोधात्। यतस्तत्राऽदृश्यत्वादिकं भूतयोनेर्विशेषणम्। न त्वक्षरस्य। भूतयोनिवाक्ये श्रवणात्। 'यया तदक्षरमधिगम्यत' इति अक्षरवाक्ये श्रवणाभावात्। न च भूतयोनिवाक्येऽपि 'तद्भूतयोनि'मिति नपुंसकलिङ्गेन तत्पदेनाक्षरपरामर्शात्तद्विशेषणमदृश्यत्वादिकं स्यादिति वाच्यम्। 'नित्यं विभुं सर्वगतं सुसूक्ष्म'मित्यत्र विभुविशेषणस्य पुल्लिङ्गतया भूतयोनिविशेषणत्वेन तत्समभिव्याहृतानामदृश्यत्वादीनामपि तद्विशेषणत्वावगमात्। अत एवा'दृश्यत्वादिगुणक' इति सूत्रे पुल्लिङ्गनिर्देशः। अक्षरविशेषणत्वे हि नपुंसकलिङ्गनिर्देशस्स्यात्। एवं सूत्रानुरोधात् भूतयोनिशब्देन धर्मिनिर्देशे कर्तव्येऽपि यदक्षरशब्देन धर्मिनिर्देशः कृतः तदक्षरशब्दनिर्दिष्टान्वयिपरिणाम्युपादानत्वरूपप्रधानलिङ्गप्रतिपत्तिसौकर्याय। भूतयोनिः प्रधानम् अक्षरस्य परिणाम्युपादानत्वश्रवणादित्युक्ते हि वस्तुतोऽक्षरभूतयोन्योरभेदेऽप्यापाततो वैयधिकरण्यस्फुरणं भवेत्। सूत्रकृता तु सर्वज्ञत्वादिपरमेश्वरलिङ्गानामन्यान्वयशङ्कानिराकरणेन भूतयोन्यन्वयप्रतिपत्तिसौकर्यार्थमदृश्यत्वादिगुणक इति धर्मिनिर्देशः कृतः। तदेतदग्रे स्फुटीभविष्यति। ननु, परिणाम्युपादानत्वरूपैकलिङ्गापेक्षया ब्रह्मात्मश्रुतिसर्वज्ञत्वादिलिङ्गब्रह्मविद्यादिसमाख्यारूपं प्रमाणजातं भूयस्त्वात्प्रबलमिति चेदुच्यते। इहाक्षरप्रतिपादनानन्तरं 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः॥' इति ततः परस्य पुरुषस्य प्रतिपादनं दृश्यते स पुरुषो ब्रह्मेति। तत्र ब्रह्मश्रुत्यादिसमन्वयः। 'तथाक्षरात्सम्भवतीह विश्व'मिति अक्षरकार्यत्वेन वर्णिताद्विश्वस्मात्परतोऽक्षरादपि परत्वेन ब्रह्मण एव 'महतः परमव्यक्तमव्यक्तात्पुरुषः पर' इति कठवल्लीष्विव प्रतिपादयितुमुचितत्वात्। यत्तु 'यया तदक्षरमधिगम्यत'इति परविद्याविषयत्वमक्षरस्योक्तं तदुपक्रान्तसर्वविज्ञानप्रतिज्ञानिर्वाहार्थं प्रतिपिपादयिषितम्। 'तपसा चीयते ब्रह्मे'त्यादिमन्त्रेषु प्रतिपाद्यमानं ब्रह्मणस्सर्वोपादानत्वं ब्रह्मशक्तिरूपेण प्रधानेन घटनीयमिति तस्याप्यत्राक्षरभूतयोनिशब्दगृहीतस्य सर्वोपादानत्वेनात्र प्रतिपादनीयत्वमित्यभिप्रेत्य न तु स्वातन्त्र्येण तदेव प्रतिपादनीयमित्यभिप्रेत्य। 'अक्षरात्परतः पर'इत्यग्रे तत्प्रतिपादनपारार्थ्यस्य स्फुटत्वात्। एवं ब्रह्मश्रुतिलिङ्गसमाख्यानामक्षरात्परतः परेऽन्वयात् नाक्षरस्य प्रधानत्वे ब्रह्मश्रुत्यादिविरोध इति पूर्वपक्षे युक्तिप्रतिपत्तिसौकर्यार्थमप्यक्षरशब्देन धर्मिनिर्देशः कृतः। ननु'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्या'मित्यक्षरात्परत्वेन वर्णनीये पुरुषे अक्षरशब्दश्रुतेः तेन स एव प्राधान्येन प्रतिपाद्यमानो भूतयोन्यक्षरमक्षरात्परत इति पुरुषात्परत्वेन श्रुतमक्षरमेव केवलं प्रधानमिति चेन्नैवम्। उभयथाप्युपपत्तौ परिणाम्युपादानत्वरूपप्रधानलिङ्गानुरोधस्योचितत्वात् असति विरोधे तद्बाधायोगात् 'यथा सुदीप्ता'दिति मन्त्रानन्तरमेव 'दिव्यो ह्यमूर्त'इति मन्त्रस्य प्रवृत्तत्वेन पूर्वमन्त्रे यस्मादक्षरात्सरूपकार्यनिष्पत्तिरुक्ता तस्मादेव परत्वमनन्तरमन्त्रे पुरुषस्य वर्ण्यत इति प्रतीतेश्च। ननु तर्हि 'यथा सुदीप्ता'दिति मन्त्रोक्तं सरूपकार्यप्रभवाक्षरं ततः प्राक् 'यथोर्णनाभि'रिति मन्त्रोक्तं विश्वसम्भवोपादानाक्षरं च 'अक्षरात्परतः पर'इत्युक्तं परत्वावध्यक्षरमेवास्तु। तथा च परिणाम्युपादानत्वस्यान्यसङ्क्रान्तत्वात्परविद्याविषयत्वेनोक्तभूतयोन्यक्षरं ब्रह्मैव स्यादिति चेन्न।

**अथवा जीवः, तस्य हि 'क्षरं प्रधानममृताक्षरम्' (श्वेताश्व० १.१०.) इति श्रुतेरक्षरशब्दवाच्यत्वमुचितं, स्वकर्मवशेन महाभूतयोनित्वं च। अतस्तयोरन्यतरदक्षरम्॥**

भूतयोन्यक्षरप्रतिपादनानन्तरमेव 'यथोर्णनाभि'रिति मन्त्रस्य प्रवृत्तत्वेन तस्य तदीयभूतयोनित्वप्रकारनिरूपणार्थत्वस्य 'यथा सुदीप्ता'दितिमन्त्रस्याक्षरपरापादानपञ्चम्या तदेकविषयत्वस्य च प्रतीयमानत्वेन परिणाम्युपादानत्वस्यान्यसङ्क्रमणायोगात् । एवं तर्हि 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायत'इति मन्त्रस्याप्यपादानपञ्चम्याक्षरपरमन्त्रद्वयैकविषयत्वस्य प्रतीयमानत्वात् तस्य मन्त्रद्वयस्य भूतयोन्यक्षरविषयतायास्त्वयैवोक्तत्वाच्च भूतयोन्यक्षरं ब्रह्मैव स्यात्। परत्वावध्यक्षरमेव केवलं प्रधानं भवेत् । न च ब्रह्मणि परिणाम्युपादानत्वासम्भवो दोषः। अपादानपञ्चमीनामैकरूप्येण ब्रह्मैव भूतयोन्यक्षरमिति सिद्धौ दृष्टान्तगतसर्वसादृश्यविवक्षायां नियमाभावादुपादानत्वमात्रे परमूर्णनाभ्यादिदृष्टान्तः । सरूपकार्यप्रभवत्वं जीवोपादानत्वाभिप्रायमिति कल्पनोपपत्तेरिति चेन्न । परिणामितया परिणाम्यधिष्ठानतया च प्रधानस्य ब्रह्मणश्चोभयोरप्युपादानस्य सम्प्रतिपन्नस्य सद्भावेन सर्वविज्ञानप्रतिज्ञानिर्वाहकब्रह्मजगदुपादानत्वघटकतया प्रधानगतजगदुपादानत्वप्रतिपादनस्यापि सङ्गतिसत्त्वेन चान्यथासिद्धेनापादानपञ्चम्यैकरूप्येण प्रथमश्रुतोर्णनाभ्यादिदृष्टान्तप्राप्तस्य प्राणमनःप्रभृत्यचेतनपर्यवसितसरूपकार्यप्रभवत्वप्राप्तस्य च परिणाम्युपादानत्वस्य त्यागायोगात् । नन्वेवं सति 'तथाक्षरात्सम्भवतीह विश्व'मित्यन्तं प्रधानपरम्। तदनन्तरं 'तपसा चीयत'इत्यारभ्य 'प्रोवाच तां तत्वतो ब्रह्मविद्या'मित्यन्तं ब्रह्मपरम्। ततो'यथा सुदीप्ता'दित्यादि प्रधानपरम्। पुनश्च 'दिव्यो ह्यमूर्त'इत्यादि ब्रह्मपरमिति स्यादिति चेदस्तु को दोषः। अर्थसम्बन्धानुसारेण वाक्यान्वयोपपत्तेः। उक्तं हि जैमिनिना विश्वजिदधिकरणे–अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसम्बन्ध इति । उक्तं च वार्तिककृता—'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्' इति । एवमुपपादितः प्रधानपूर्वपक्षः । अथ जीवपूर्वपक्षमुपपादयति–अथवेति। नन्वक्षरशब्द एव तावज्जीवे नोपपद्यते। न हि प्रधाने स्वकार्याण्यश्नुते व्याप्नोतीति व्युत्पत्त्येव ब्रह्मणि न क्षरतीति व्युत्पत्त्येव जीवे कया चिद्व्युत्पत्त्या तदुपपद्यत इत्याह–तस्य हीति। 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः'इति श्वेताश्वतरोपनिषदि परब्रह्मणः पशुपाशपतित्वमाम्नायते। तत्र 'क्षरं प्रधान'मिति प्रधाने क्षरशब्दवदमृताक्षरमित्यमृतशब्दनिर्दिष्टजीवेऽक्षरशब्दः प्रयुक्तः । 'अमृते'ति 'सुपां सुलु'गित्यादिना छान्दसो विभक्तिलोपः। अमृतमक्षरमित्ययं जीवनिर्देश इत्येतच्च 'हर एको देवः क्षरात्मानावीष्ट' इत्युत्तरवाक्ये आत्मशब्दप्रतिनिर्देशादवगम्यते । 'यच्चेदं क्षरमव्यक्तं यदप्यमृतमक्षरम्। तावुभौ यः क्षरात्मानावेको देवः स्वयं हरः ॥' ईशते तदभिध्यानाद्योजनात्तत्वभावत'इत्यादिशिवपुराणवचनैश्चास्य मन्त्रस्यैवमेवार्थो दर्शितः । तस्मादक्षरशब्दो जीवे नानुपपन्नः। जीवस्य जननमरणवत्त्वेऽपि न क्षरति स्वरूपेण न परिणमत इति स्वरूपान्यथाभावाभावपरतया तत्राक्षरशब्दस्य व्युत्पत्तिरपि सम्भवतीति भावः। ननु तथापि परिणाम्युपादानत्वरूपं भूतयोनित्वं जीवस्य न सम्भवतीत्यत आह–स्वकर्मवशेनेति । अयमाशयः। 'अगोत्रमवर्णमचक्षुरश्रोत्रमपाणिपाद'मिति जीवे प्रसिद्धानां गोत्रादीनां निषेध्य-

इति प्राप्ते ब्रूमः—परमेश्वर एवाक्षरं, 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इत्या-

जातस्याधिकरणविशेषाकाङ्क्षायां तस्यैतस्यैव जीवस्याधिकरणत्वोपपत्तौ नाधिकरणान्तरमपेक्षणीयम्। बुद्धिगौरवापत्तेः। उपपद्यते च शरीरद्वारा गोत्रवर्णादिमतोऽपि जीवस्य साक्षात्सम्बन्धेन गोत्रादिमत्तया भ्रान्तिप्रतीतस्य रजतात्मना भ्रान्तिप्रतीतस्य रङ्गस्य रजतत्वनिषेधं प्रतीव गोत्रादिनिषेधं प्रत्यधिकरणत्वम्। दृष्टं च बाल्यकार्श्याद्यधिकरणस्यैवावस्थाभेदेन तन्निषेधं प्रत्यधिकरणत्वम्। नन्वक्षरशब्देन जीवसाधारणेन तद्ग्रहणप्रसक्तौ तद्व्यावर्तनेनैवागोत्रमित्यादिकं सफलं स्यान्नान्यथेति चेन्न। जीवे गोत्रसम्बन्धादिप्रतीतिकाले तदभावायोगप्रसक्तौ तद्व्यवच्छेदकत्वेनापि तस्य साफल्योपपत्तेः। उभयविधफलसम्भवेऽप्ययोगव्यवच्छेदस्यैव फलस्य ग्रहणं युक्तम्। अधिकरणान्तरकल्पनालाघवात् अयोगव्यवच्छेदफलस्यागोत्रत्वादिरूपोपात्तधर्मिगतत्वेन प्रत्यासन्नत्वाच्च। अन्ययोगव्यवच्छेदस्य तु फलस्य ग्रहणं न युक्तम्। गोत्राद्यधिकरणव्यतिरेकेण तन्निषेधं प्रत्यधिकरणान्वेषणगौरवापत्तेः। अन्ययोगव्यवच्छेदस्यागोत्रपदानुपात्तजीवगताक्षरपदग्राह्यत्वयोगव्यवच्छेदात्मकत्वेन विप्रकृष्टत्वाच्च। उपात्तधर्मिगतफले लभ्ये हि नानुपात्तधर्मिगतं फलं ग्राह्यम्। अत एवावहननविधेरुपात्तावहननगताप्राप्तांशपरिपूरणरूपस्तदयोगव्यवच्छेद एव फलं न त्वनुपात्तनखविदलननिवृत्तिरूपस्तदयोगव्यवच्छेद इति नियमस्य परिसङ्ख्यातो भेद इष्यते। तस्मादगोत्रत्वादिविशेषणं जीव इव न ब्रह्मणि स्वारस्येनान्वेति। प्रधाने त्वचेतने गोत्रादिप्रसक्त्यभावात् नान्वेतीति स्पष्टमेव। ननु यथैवागोत्रत्वादिकं जीव एव स्वरसतोऽन्वेति न ब्रह्मणि प्रधाने वा। एवमदृश्यत्वमग्राह्यत्वं च दृश्यग्राह्यप्रपञ्चभिन्ने दर्शनादिप्रसक्तिमति च प्रधान एवान्वेति। न तु जीवे ब्रह्मणि वा। ततश्चोपक्रमगतादृश्यत्वाग्राह्यत्वानुसारेणागोत्रत्वादिकं प्रधाने नेतुं युक्तमिति चेन्न। उपक्रमगतादपि लिङ्गद्वयादुपरितनानामनेकलिङ्गानां प्रबलतया तदनुसारेणैवादृश्यत्वाग्राह्यत्वयोर्नेतव्यत्वात्। एवं चागोत्रत्वाद्यनुसारेण प्रधानमेवाक्षरमिति व्यवस्थितौ तदनुसारेण भूतयोनित्वमदृष्टद्वारा जगत्कारणत्वमिति योजनीयम्। ततश्चाक्षरात् परतः परा-ज्जीवात्परः परमेश्वर इति तत्रामूर्तत्वमप्राणत्वममनस्त्वं च निषेधस्य प्रतियोग्यधिकरणानधिकरणत्वलाघवमयोगव्यवच्छेदफललाभलाघवं चानादृत्य परमेश्वर एव चेतनत्वेन प्रसक्तस्य मूर्तिमत्त्वादेर्व्यावर्तनार्थमिति योजनीयम्। न चाक्षरात्परतः परोऽपि जीव इत्येव पूर्वपक्षोऽस्तु, तत्रत्याक्षरशब्दस्य प्रधानपरत्वोपपत्तेरिति शङ्कनीयम्। तथा सति ब्रह्मश्रुतिलिङ्गसमाख्यानामनवकाशत्वापत्तेरतः परमेश्वर एवाक्षरमिति। अक्षरं प्रधानं जीवो वेति पूर्वपक्षस्य प्रवृत्तत्वाददृश्यत्वादिगुणक इति सौत्रं धर्मिनिर्देशमननुरुध्याक्षरमिति धर्मिनिर्देशः कृतः—यस्सर्वज्ञ इति। अयमाशयः। यत्पदस्य प्रकृताक्षरपरामर्शित्वात् सर्वज्ञत्वं सर्ववित्त्वं स्रष्टव्यालोचनरूपज्ञानवत्त्वं च प्रकृतस्याक्षरस्यैव धर्मः। न तु प्रकरिष्यमाणस्याक्षरात्परस्य। सर्वनाम्नः प्रकृतपरत्वसम्भवे प्रकरिष्यमाणपरत्वकल्पनानौचित्यात्। मुण्डके प्रथमखण्डान्ते 'यस्सर्वज्ञ' इति मन्त्रः। तत्रैव खण्डे भूतयोनिः प्राक्प्रकृतः। अक्षरात्परस्य तु तृतीयखण्डे प्रस्ताव इति सन्निहितपरामर्शसम्भवेऽत्यन्तव्यवहितपरामर्शानौचित्याच्च।

(१) 'जीव एवाक्षर' मिति च-पाठः।

**दिना तद्धर्मोक्तेः । न हि परमेश्वरादन्यस्मिन् सर्वज्ञत्वादिकं सम्भवति । यदुक्तं भूतयोनित्वं जीवप्रधानयोः संभवतीति, तदयुक्तं, तयोरचेतनासर्वज्ञयोस्तत्सामर्थ्याभावात् ॥**

---

न च प्रकृतपरत्वेऽपि 'तपसा चीयते ब्रह्मे'त्यव्यवहितपूर्वमन्त्रप्रकृतब्रह्मपरत्वमेव स्यात् न तु व्यवहितप्रकृताक्षरपरत्वमिति वाच्यम् । पुल्लिङ्गेन यत्पदेन नपुंसकलिङ्गब्रह्मपदोक्तपरामर्शायोगात् । अक्षरस्य तु भूतयोनिशब्देनापि प्रकृतत्वात्तदभिप्रायेण पुल्लिङ्गत्वमुपपद्यते । न च 'तपसा चीयते ब्रह्मे'ति मन्त्रस्थिततपःशब्दविवरणार्थत्वा'द्यः सर्वज्ञ'इति मन्त्रस्य तन्मन्त्रोक्तब्रह्मपरत्वमावश्यकमिति वाच्यम् । तस्यापि मन्त्रस्य 'तथाक्षरात्सम्भवतीह विश्व'मिति तत्पूर्वमन्त्रोक्तविश्वसम्भवप्रकारविशेषविवरणार्थत्वेन त्वदुक्तरीत्यैव तन्मन्त्रोक्तब्रह्मणोऽपि तत्पूर्वमन्त्रोक्तभूतयोन्यक्षररूपत्वावश्यम्भावात् । तस्माद्भूतयोन्यभिप्रायेणैव पुल्लिङ्गनिर्देशः । एवं च भूतयोनित्वविवरणार्थं'तथाक्षरात्सम्भवतीह विश्व'मित्यन्तो मन्त्रः तन्मन्त्रोक्तविश्वसम्भवप्रकारविशेषनिरूपणार्थं 'तपसा चीयते ब्रह्मे'ति मन्त्रः तन्मन्त्रोक्ततपश्शब्दविवरणार्थं'यस्सर्वज्ञ'इतिमन्त्र इतिमन्त्राणामाकाङ्क्षाक्रमेणावतरणमुपपद्यते।मन्त्रत्रयाम्नातस्याक्षरात्ततस्तस्मादित्यपादानपञ्चमीत्रयस्यैकार्थ्येनावतरणमभ्युपपद्यते। प्रञ्चमीत्रयस्याप्यपादानपरस्यैकविषयत्वसम्भवे ह्यक्षरादित्यस्यैवापादानान्तरपरत्वं ततस्तस्मादित्यनयोरुपादानान्तरपरत्वमिति कल्पनं न युक्तम् । न च तथाक्षरात्ततस्तस्मादित्यपादानपञ्चमीनामर्थैकरूप्यकृतप्रत्यभिज्ञानतस्तथाक्षरादक्षरात्परतः पर इति पञ्चम्योः शब्दैकरूप्यकृतं प्रत्यभिज्ञानं प्रथमोपस्थितिविषयत्वात्प्रबलमिति तदनुसारेण परत्वावध्याक्षरमेव भूतयोन्यक्षरं स्यात् न ब्रह्मेति वाच्यम् । 'अक्षरात्परतः पर' इत्यतः ततस्तस्मादित्यनयोः प्राक्पठितत्वेन तद्गतशब्दैकरूप्यकृतप्रत्यभिज्ञानादप्यत्रत्यार्थैकरूप्यकृतप्रत्यभिज्ञानस्यैव प्राथमिकत्वादिति । ननु यदि प्राथमिकत्वमाद्रियेत[1] तदोर्णनाभिदृष्टान्तस्वारस्यप्राप्तं परिणाम्युपादानत्वं प्रधानलिङ्गमगोत्रत्वादिकं जीवलिङ्गं च सर्वज्ञत्वादितः प्रबलमिति तदनुसारेण प्रधानं जीवो वा भूतयोन्यक्षरमिति निश्चिते तत्रानन्वयि सर्वज्ञत्वादिकमगत्याक्षरात्परतः परं योजनीयमित्याशङ्कामनुवदति—यदुक्तमिति । अचेतनासर्वज्ञयोरिति । अयं भावः । ऊर्णनाभ्यादिदृष्टान्तैः प्रधाने सम्भवत्परिणाम्युपादानत्वं न लभ्यते किं तु प्रधानादिव्यावृत्तं सकलप्रपञ्चसृष्टिपालनसंहारकर्तृत्वमभिन्ननिमित्तोपादानत्वं तथात्वेऽपि प्रपञ्चदोषैरस्पृष्टत्वं चेत्येतत्सर्वं लभ्यते । तथा हि—प्रथमदृष्टान्तेन तावदूर्णनाभिः स्वशरीरैकदेशभूतया लालया तंतुमिव परमेश्वरः स्वशक्तिशकलेन प्रपञ्चं सृजति संहरति चेति लभ्यते । तथासत्यूर्णनाभिवियोगेन तल्लालासृष्टतन्तोरिव परमेश्वरपृथग्भावेनापि प्रपञ्चस्य कदाचिदवस्थितिः[2] स्यादिति शङ्कायां द्वितीयदृष्टान्तः । तेनौषधीनां पृथिव्यपृथक्सिद्ध्या पृथिव्येकदेशत्ववत्प्रपञ्चस्य परमेश्वरापृथग्भावसिद्ध्या तदेकदेशत्वमिति तस्य सर्वोपादानत्वं लभ्यते । तर्हि यथा पुरुषस्य स्वशरीरैकदेशो हस्तपादादिर्यत्नेन परिपालनीयः तस्मिन्कदाचिदुपहन्यमाने तदुपादानसृजिवतः पुरुषस्य दुःखित्वं च तथा परमेश्वरस्य स्वशरीरभूतशक्त्येकदेशः प्रपञ्चोऽवश्यं परिपालनीयः तस्मिन्कदाचिदुपहन्यमाने तस्य

---

(१) प्राथमिकत्वमाकस्मिकमाद्रियेत ' इति च. पाठः । ( २ ) 'स्थितिरस्त्वित्याशङ्कायाम्' इति-च पाठः ।

दुःखित्वं च स्यादिति शङ्कायां तृतीयदृष्टान्तः। तेन यथा जीवतः पुरुषादुद्भूते तच्छरीरैकदेशे केशनखादौ तेन परिपाल्यमाने कदाचिदुपहन्यमानेऽपि पुरुषस्य दुःखास्पर्शः तथा प्रपञ्चे परमेश्वरादुद्भूते तेन परिपाल्यमाने कदाचिदुपहन्यमानेऽपि न तस्य दुःखस्पर्श इति परमेश्वरस्य प्रपञ्चपालयितृत्वं प्रपञ्चप्रयुक्तदोषास्पृष्टत्वं च लभ्यते। एतत्सिद्धमभिन्ननिमित्तोपादानत्वादिकं प्रपञ्चयितुमेव 'तपसा चीयते ब्रह्मे'त्यादिमन्त्रैस्तस्य स्रष्टव्यालोचनादिकं प्रपञ्च्यते। न चैवंभूतमभिन्ननिमित्तोपादानत्वरूपं भूतयोनित्वमचेतनस्य प्रधानस्यासर्वज्ञस्य जीवस्य वोपपद्यते। एवं चा'गोत्रमवर्ण'मित्यादिकममूर्तत्वाप्राणत्वादिवत् ब्रह्मण्येव चेतनत्वसामान्यप्रसक्तजीवधर्मव्यावर्तकतया योजनीयम्। 'यथा सुदीप्ता' दितिमन्त्रे सरूपग्रहणमपि जीवरूपकार्याभिप्रायेण योजनीयम्। नन्वे'तस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'ति व्यवहितानन्तरमन्त्रे वक्ष्यमाणप्राणमनःप्रभृत्यचेतनकार्याभिप्रायेण योजनीयमिति। सूत्रे 'अदृश्यत्वादिगुणक' इति पुल्लिङ्गनिर्देशो भूतयोन्यभिप्राय इति प्रागेवोक्तम्। यद्यपि विषयवाक्ये 'यया तदक्षर'मित्यक्षरशब्दस्य प्रथमनिर्दिष्टत्वाल्लघुत्वाच्च तेनैव सूत्रेऽपि धर्मिनिर्देशः कर्तुमुचितः। तथापि 'धर्मोक्ते'रित्यनेन गृहीतसर्वज्ञत्वादिधर्मोऽक्षरात्पर एवान्वेति न त्वक्षरे पुल्लिङ्गनिर्दिष्टत्वादिति शङ्कानिराकरणार्थं भूतयोन्यभिप्रायो 'यस्सर्वज्ञ' इत्यादिपुल्लिङ्गनिर्देश इति द्योतयितुं विशेषणीभूतादृश्यत्वादिगुणमुखेन प्रकृताक्षररूपो भूतयोनिर्धर्मित्वेन निर्दिष्टः। नन्वेवं सति लाघवाद्भूतयोनिरित्येव धर्मिनिर्देशः कर्तुमुचितः। सत्यम्। अधिकरणवैफल्यशङ्कापरिहारार्थमित्थं धर्मिनिर्देशः कृतः। अत्र ह्येवमाशङ्कोदेति। मुण्डकोपनिषदः परमोपक्रमप्रभृति समाप्तिपर्यन्तमक्षरात्परे परब्रह्मणि महातात्पर्येण समन्वयः पूर्वपक्षिणोऽपि सम्प्रतिपन्न एव। तस्यां कियतः प्रदेशस्य परत्वावध्यक्षरप्रतिपादनार्थत्वमात्रमधिकं पूर्वपक्षिणेष्यते। किं तेन सर्वेषां वेदान्तानां महातात्पर्येण ब्रह्मणि समन्वयं व्यवस्थापयितुं प्रवृत्तस्य सिद्धान्तिनः प्रहीयते। मुण्डक एव हि द्वितीयखण्डे 'काली कराली च मनोजवा चे'ति मन्त्रे ब्रह्मविद्याप्रस्तावे अत्यन्तदवीयस्तयोपयुक्तमग्निजिह्वानिरूपणमपि दृश्यते। तस्माद्विफलमिदमधिकरणमितीयमाशङ्केत्थमनेन धर्मिनिर्देशेन निराक्रियते। यद्यदृश्यत्वादिगुणको भूतयोनिः परं ब्रह्मेत्यनेनाधिकरणेन सिद्ध्यति तदानीमस्यामक्षरविद्यायामदृश्यत्वादिगुणवैशिष्ट्येन परं ब्रह्मोपासनीयमिति न सिद्ध्यति। 'अक्षरधियां त्ववरोध' (ब्र०३. ३. ३३ सू.) इत्यधिकरणरीत्यास्यामक्षरविद्यायां परब्रह्मगुणत्वेन सम्प्रतिपन्नमदृश्यत्वादिगुणजातं सर्वासु ब्रह्मविद्यासूपसंहरणीयमित्येतदपि सिद्ध्यति। पूर्वपक्षे त्वदृश्यत्वादिगुणकादक्षरात्परत्वेनैवात्र ब्रह्मोपासना सिद्ध्येत् न त्वदृश्यत्वादिगुणकत्वेनेति सिद्धान्ते पूर्वपक्षे च फलभेदसद्भावान्नाधिकरणवैफल्यमिति। अपि चाधिकरणावतारिकाभाष्योक्तरीत्या परमेश्वरस्य पृथिव्यादिनियमनार्थेन शरीरेण पृथिव्यादिवद्दर्शनस्पर्शनविषयत्वप्रसक्त्या 'न चक्षुषा पश्यति कश्चनैन'मित्यादिश्रुतिप्रसिद्धस्यादृश्यत्वादेस्तद्धर्मानुपपत्तिशङ्कानिराकरणार्थत्वेनास्याधिकरणस्यानतिस्पष्टब्रह्मलिङ्गकवाक्यचिन्तनार्थेन पादेन सङ्गत्युपपादनार्थमप्यदृश्यत्वादिगुणक इति धर्मिनिर्देशः कृतः। तेनादृश्यत्वादिः परमेश्वरगुणो भवितुमर्हत्येव। 'अदृश्यमग्राह्य'मित्यादिश्रवणात्।

पुनरत्र जीवप्रधानयोरनुपपत्तिमाह—

॥ सू० ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २३ ॥

अत्रैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मुण्ड० १.१.) इति। तच्चान्यच्चैवंरूपं विशेषणम्। तद्व्यपदेशाच्च न

---

पृथिव्यादिनियामकेन शरीरेण पृथिव्यादिषु परमेश्वरस्य दृश्यत्वं स्पृश्यत्वं च प्रसज्येतेति शङ्कावारणार्थमेव खल्वदृश्यमग्राह्यमित्युच्यते। रूपस्पर्शहीने स्वरूपे दर्शनादिप्रसक्त्यभावेन तत्राऽदृश्यत्वाग्राह्यत्वयोरवक्तव्यत्वात्। श्रुतोपपत्त्यर्थं पृथिव्यादिनियामकशरीरस्यास्मदादिदर्शनाद्ययोग्यत्वादि कल्पनीयम्। अपाणिपादादिश्रवणमपि दर्शनादियोग्यपाणिपादाद्यभावाभिप्रायमित्युपपत्तिः सूचिता भवति। नन्वधिकरणान्तरेषु सूत्रे पादसङ्गतिसूचनार्थं विशेषणं नास्ति किमर्थमस्मिन्नधिकरणे तत्कृतम्। उच्यते। पूर्वपक्षे स्पष्टानां ब्रह्मश्रुतिलिङ्गवाक्यानामक्षरात्परेऽन्वयोऽभिमतः। तेन स्पष्टास्पष्टब्रह्मलिङ्गवाक्यचिन्तनार्थे तृतीयपाद एवास्याधिकरणस्य सङ्गतिः न द्वितीयपाद इति शङ्कोन्मिषति तन्निराकरणाय द्वितीयपादेऽप्यस्य सङ्गतिसूचनार्थं तद्विशेषणं कृतम्। तेनोभयत्र सङ्गतमप्येतदधिकरणमुभयत्र न प्रवर्तनीयमित्येकत्र प्रवर्तनीयं सत्प्रथमातिक्रमे कारणाभावादत्रैव प्रवर्तितमिति सङ्गतिरुपपादिता भवति। स्यादेतत्। 'यथा सुदीप्ता'दितिमन्त्रोक्तमक्षरं तावद्भूतयोन्यक्षरमिति सम्प्रतिपन्नम्। अतस्तदनन्तरमन्त्रे ब्रह्मगतपरत्वावधितया निर्दिष्टमक्षरमपि तदेवेत्येतदप्रत्याख्येयम्। तथा च भूतयोन्यक्षरस्य ब्रह्मपरत्वासिद्धौ तत्प्रधानं जीवो वेत्येवाङ्गीकर्तव्यमिति तदनुसारेण यथोर्णनाभिरित्यादिकं प्रधाने जीवे वा यथाकथञ्चिद्योजनीयमित्याशङ्कानिराकरणार्थं तस्य प्रधानत्वजीवत्वपक्षयोरनुपपत्त्यन्तरप्रदर्शनपरत्वेनोत्तरसूत्रमवतारयति—पुनरिति॥सू०॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २३ ॥ 'न च स्मार्त'मिति पूर्वाधिकरणसूत्रे प्रकृतौ प्रधानशारीरावितरशब्देन परामृश्येते। तत्र प्रधानपक्षनिराकरणार्थतया विशेषणव्यपदेशं व्याचष्टे —अत्रेति। तच्चान्यच्चेति। तत्सामान्यतः प्रतिपाद्यविशेषणत्वेन श्रुतं सर्वविज्ञानप्रतिज्ञादिकम् अन्यच्चाक्षरात्परस्य पुरुषस्य साक्षाद्विशेषणत्वेन श्रुतम् एवंरूपं प्रधानव्यावर्तनक्षममिह सूत्रे विशेषणशब्देनोक्तमित्यर्थः। 'स बाह्याभ्यन्तर' इत्यत्र 'स'इति पुरुषविशेषणं 'यथा सुदीप्ता' दितिमन्त्रप्रकृतभूतयोन्यक्षरपरामर्शि साक्षादक्षरात्परस्य विशेषणम्। न च बाह्याभ्यन्तरसहित इत्यर्थकं तदेकपदत्वेन योजनीयम्। वैयर्थ्यात्। बाह्याभ्यन्तर इति सर्वगतत्वोक्त्यैव बाह्याभ्यन्तरसकलवस्तुसंसर्गसिद्धेः। भिन्नपदत्वे च अक्षरात्परतः पुरुष एव प्रकृतभूतयोन्यक्षरं न तु परत्वावधिभूतमक्षरमिति प्रत्यायनेन सार्थकत्वात्। एवं च भूतयोन्यक्षरपरामर्शितत्पदसामानाधिकरण्येनाक्षरात्परतइत्यतः प्राचीनेन 'येनाक्षर'मित्यक्षरपुरुषपदसामानाधिकरण्यानुगृहीतेनाक्षरात्परतः पुरुषो भूतयोन्यक्षरमिति स्थिते तदवरतया ततो भेदेन व्यपदिश्यमानमक्षरं प्रधानमिति न तद्भूतयोन्यक्षरमिति सिद्ध्यतीति भावः। 'अक्षरात्परत'इति पूर्वपक्ष्युक्तरीत्या न समानाधिकरणे पञ्चम्यौ। कारणस्य कार्यवर्गापेक्षया पूर्ववर्तित्वादिरूपस्य परत्वस्य प्रसिद्धत्वात्। किं तु व्यधिकरणे। तेन प्रधानात्परो जीवो लभ्यत इति तदपेक्षया

प्रधानमक्षरम् । 'अक्षरात्परतः परः' ( मुण्ड० २.१. ) इति जीवाद्भेदव्यपदेशाच्च न जीवः ॥

## ॥ सू० ॥ रूपोपन्यासाच्च ॥ २४ ॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥' (मुण्ड०२.१.) इत्यक्षरस्य त्रैलोक्यरूपत्वमुपन्यस्यते । अतश्च सकलात्मा परमेश्वर एवात्राक्षरपदाभिधेयः ॥

इत्यदृश्यत्वाधिकरणम् ॥ ८ ॥

---

परत्वरूपभेदव्यपदेशादक्षरं न जीवश्चेत्याह—अक्षरादिति । एवं 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीश'मिति कर्तृकर्मभावेन जन्यजनकभावेन नियम्यनियामकभावेन च भेदव्यपदेशोऽपि सूत्रार्थतया द्रष्टव्यः। प्रधानजीवव्यावृत्तत्रैलोक्यशरीरत्वश्रवणादपि न प्रधानं जीवो वाक्षरमिति प्रतिपादयितुं सूत्रम्—सू० ॥ रूपोपन्यासाच्च ॥२४॥ न'न्वग्निर्मूर्धे'त्यादिमन्त्रे अस्येति सर्वनाम्ना 'दिव्यो ह्यमूर्तः पुरुष'इति मन्त्रवर्णितमक्षरात्परं पुरुषं परामृश्य तस्यैव त्रैलोक्यशरीरत्वमुच्यते नाक्षरस्येत्याशङ्क्याह—अक्षरस्येति । 'अग्निर्मूर्धे'त्येतस्मादव्यवहितपूर्वपठिते 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे'ति मन्त्रे एतस्मादित्यस्य प्रकृताक्षरपरत्वेन 'अग्निर्मूर्धे'ति मन्त्रपठितस्यास्येतिपदस्यापि तत्परत्वमेवोचितम् । 'एतस्मा'दिति पदमपि तदव्यवहितपूर्वमन्त्रपठितमक्षरात्परं परामृशेदिति चेत् यद्येवं तस्मिन्मन्त्रेऽक्षरात्परतः परे प्रयुक्तं 'स बाह्याभ्यन्तर'इत्यत्र श्रुतं स इति सर्वनामापि'यथा सुदीप्ता'दिति तदव्यवहितमन्त्रश्रुतं भूतयोन्यक्षरमेव परामृशेदिति तत्प्रणाडिकया 'अग्निर्मूर्धे' तिमन्त्रश्रुतमस्येतिपदमपि तदेव परामृशेदिति भावः ॥ ॥ इति अदृश्यत्वाधिकरणम् ॥ ८ ॥ ॥

---

नयमणिमालायाम्

### अथ अदृश्यत्वाधिकरणम् ॥ ८ ॥

सू० । अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २३ ॥ रूपोपन्यासाच्च ॥ २४ ॥

प्रकृतिः परिणामित्वादक्षरशब्दोक्तमव्यक्तम् । पुरुषोवाक्षरशब्दात्कर्मद्वारास्य योनित्वम् ॥ ४७ ॥

................तद्विज्ञानेन सर्वविज्ञानम् । अग्निर्मूर्धेत्यादि च पुरुषे प्रकृतौ च नान्वेति ॥ ४८ ॥

इत्यदृश्यत्वाधिकरणम् ॥ ८ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ अदृश्यत्वादिगुणकाधिकरणम् ॥ ६ ॥ श्रीकण्ठमते ॥ ८ ॥

सू० ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ रूपोपन्यासाच्च ॥ २३ ॥

पूर्वाधिकरणे प्रधानविरोधिद्रष्टृत्वादिधर्मवशान्न प्रधानमन्तर्यामीत्युक्तम् । तर्हि तद्विरोधिधर्माणामत्राश्रवणात् प्रधानमेवादृश्यत्वादिगुणको भूतयोनिः स्यादिति प्रत्युदाहरणत्वेनाधिकरणान्तरमारभते ॥सू०॥ अदृश्यत्वादिगुणको धर्मोक्तेः॥२१॥ अदृश्यत्वादिगुणकः भूतयोनिः परमात्मा । कुतः । 'यः सर्वज्ञस्सर्ववित्'इत्यादिना परमात्मधर्माणां सर्वज्ञत्वसर्ववित्वादीनामुच्यमानत्वादित्यर्थः । अस्य'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥'इत्यादि वाक्यं विषयः । तत्र किमदृश्यत्वादिगुणको भूतयोनिः प्रधानमुत शारीरः किं वा परमात्मेति संदेहः । योनिशब्दस्य प्रकृत्यर्थत्वनिमित्तार्थत्वाभ्यां प्रधानं वा जीवो वा अदृश्यत्वादिगुणको भूतयोनिर्भवितुमर्हतीति पूर्वः पक्षः । सर्वज्ञत्वसर्ववित्त्वाभ्यां परमात्मैवादृश्यत्वादिगुणको भूतयोनिर्नान्य इति सिद्धान्तः ॥

भूतयोनेः परमात्मत्वे हेत्वन्तरमाह॥सू०॥विशेषणभेदव्यपदेशाभ्यां च नेतरौ॥२२॥'दिव्यो ह्यमूर्तः पुरुष'इत्यादिना दिव्यत्वादिविशेषणश्रवणान्न जीवः'अक्षरात्परतः पर' इत्यादिना अक्षरस्याव्याकृतस्य परमात्मनश्च भेदेन व्यपदिष्टत्वात्

न प्रधानं भूतयोनिः । अपि तु परमात्मैवेत्यर्थः ॥

पुनरपि भूतयोनेः परमात्मत्वे हेत्वन्तरमाह—**रूपोपन्यासाच्च** ॥ २३ ॥ 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ'वित्यादिसर्वकार्यात्मकरूपस्योपन्यासात्परमात्मैव भूतयोनिरिति वृत्तिकारमतम् । 'पुरुष एवेदं विश्वं कर्मे'त्यादिसर्वात्मकरूपोपन्यासात्परमात्मैव भूतयोनिरिति भगवत्पादीयमतम् । अस्मिन्पक्षे सर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति तात्पर्यम् ॥

**श्रीकण्ठमते,** प्रत्यक्षपृथिव्यादिरूपत्वेन प्रतिपादितस्य परमेश्वरस्य तद्वद्दृश्यत्वादिकं तु नास्तीति प्रतिपादयितुमिदमधिकरणमवतार्यते ॥सू०॥ **अदृश्यत्वादिगुणको धर्मोक्तेः** ॥२२॥ अस्य 'अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्य'मित्यादि 'परिपश्यन्ति धीरा'इत्यन्तं वाक्यमेव विषयः । अत्राक्षरशब्दवाच्यः प्रधानं वा जीवो वा परमेश्वरो वेति संदेहः । महदादिपरिणामिनः प्रधानस्य भूतयोनित्वसंभवात् जीवस्य'क्षरं प्रधानममृताक्षर'मितिश्रुतेरक्षरशब्दवाच्यत्वौचित्यात् स्वकर्मवशेन महाभूतयोनित्वसंभवाच्च तयोरन्यतरदक्षरमिति पूर्वपक्षः । सिद्धान्तस्तु परमेश्वर एवाक्षरशब्दवाच्यः । 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तप'इत्यादिना सर्वज्ञत्वादिपारमेश्वरधर्मोक्तेरचेतनासर्वज्ञयोः प्रधानजीवयोर्भूतयोनित्वसामर्थ्याभावाच्च । इति ॥

पुनरनुपपत्तिमाह—सू ॥ **विशेषणभेदव्यपदेशाभ्यां च नेतरौ** ॥ २३ ॥ एकविज्ञानेन सर्वविज्ञानरूपस्यान्यस्याप्येवंरूपस्य च विशेषणस्य व्यपदेशदर्शनान्न प्रधानमक्षरं 'अक्षरात्परतः पर'इति जीवाद्भेदव्यपदेशाच्च न जीव इत्यर्थः ॥

**सू ॥ रूपोपन्यासाच्च** ॥ २४ ॥ 'अग्निर्मूर्धे'त्यादिना अक्षरस्य त्रैलोक्यरूपत्वोपन्यासाच्च परमात्मा परमेश्वर एवात्राक्षरपदाभिधेय इत्यर्थः ॥

**रामानुजमते,** ॥ सू ॥ **अदृश्यत्वादिगुणको धर्मोक्तेः** ॥ २२ ॥ विषयवाक्यं प्रायः समानमेव । किं तु'अक्षरात्परतः पर'इत्यादिवाक्यान्तरमप्यधिकं विषयतया संगृह्यते । किमिहादृश्यत्वादिगुणकमक्षरं प्रधानमुत परमात्मा अक्षरात्परतः परश्च किं पुरुषः उत परमात्मा इति संशयः । अत्रादृश्यत्वादिगुणकशब्देनाक्षरं पुँल्लिंगनिर्देशेन चाक्षरात्परतः परश्च द्वयमपि विषयीक्रियत इत्यभिप्रायेण वाक्यद्वयं विषयतयोपात्तमिति विशेषः । पृथिव्याद्यचेतनगतदृश्यत्वादीनां प्रतिषेधात्तज्जातीयाचेतनं प्रधानमेव भूतयोन्यक्षरं सर्वस्माद्विकारादक्षरादस्मात्परभूतात्प्रधानात्परश्च चैतन्याधिष्ठाता पुरुष एवेति पूर्वः पक्षः। उत्तरत्र 'यस्सर्वज्ञः सर्ववि'दिति प्रधानपुरुषयोरसंभावितस्य सर्वज्ञत्वादेरभिधानात्'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत' इति सर्वज्ञात्सत्यसंकल्पाज्जगदुत्पत्तिश्रवणाच्च पूर्वोक्तमदृश्यत्वादिगुणकं भूतयोन्यक्षरं'अक्षरात्परतः पर'इति च निर्दिष्टं तदक्षरं परं ब्रह्मैवेति सिद्धान्तः । सूत्रार्थस्तु, अदृश्यत्वादिगुणकः परमात्मा सर्वज्ञत्वादितद्धर्मोक्तेः । इति ।

॥ सू ॥ **विशेषणभेदव्यपदेशाभ्यां च नेतरौ** ॥ २३ ॥ परविद्याप्रकरणेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः प्रधानपुरुषाभ्यां भूतयोन्यक्षरस्य व्यावर्त्यमानत्वात्'अक्षरात्परतः परः'अव्याकृतात्परतोऽवस्थितात् समष्टिपुरुषादपि पर इति प्रधानपुरुषाभ्यामस्य भूतयोन्यक्षरस्य भेदेन व्यपदिश्यमानत्वाच्च नात्र प्रधानपुरुषौ निर्दिष्टौ । अपि तु परमात्मैव । इति ।

॥ सू ॥ **रूपोपन्यासाच्च** ॥ २४ ॥ 'अग्निर्मूर्धे' त्यादिना सर्वभूतान्तरात्मसंबन्धितयोच्यमानस्येदृशस्य रूपस्य परमात्मन एव संभवाच्चायमदृश्यत्वादिगुणकः परमात्मा ॥ इति ॥

**आनन्दतीर्थमते,** ॥सू॥ **अदृश्यत्वादिगुणको धर्मोक्तेः** ॥२१॥ विषयवाक्यं श्रीकण्ठमतवदेव । अत्रादृश्यत्वादिगुणकमक्षरं प्रकृतिर्वा ब्रह्मा वा विष्णुर्वेति संशयः। ऊर्णनाभ्यादिदृष्टान्तपूर्वकं तस्य विश्वोपादानत्वोक्तेः प्रकृतिर्वा 'ब्रह्मा देवाना'मित्याद्युपक्रमस्थपुल्लिंगब्रह्मशब्दानुरोधेन ब्रह्मविद्यात्वव्यपदेशादेरपि तत्परत्वौचित्यात् 'तस्मादेतद्ब्रह्म' इत्यादिजायमानब्रह्मलिङ्गाच्च विरिंचिर्वा अदृश्यमिदमक्षरं भवितुमर्हति'दिव्यो ह्यमूर्त' इत्यादिना दिव्यपुरुषं विष्णुं प्रति परत्वावधितयाक्षरस्य निकृष्टत्वेन प्रतिपादनान्न हरिरिति पूर्वः पक्षः । परविद्याविषयत्वरूपतद्धर्मोक्तेः सर्वज्ञत्वादिविशेषणात्'तस्मादेतद्ब्रह्मे'ति भेदव्यप देशात् अक्षरादिति पंचम्या निर्दिष्टस्याक्षरान्तरत्वाच्च विष्णुरेवेदमक्षरमिति सिद्धान्तः । **अदृश्यत्वादिगुणकः**='यत्तदद्रेश्य'मित्यादिश्रुत्युक्तादृश्यत्वादिधर्मविशिष्टाक्षरशब्दवाच्यो विष्णुरेव । कुतः । **धर्मोक्तेः**=ऋगादिपरविद्याविषयत्वरूपविष्णुधर्मस्य 'यये'ति श्रुत्योक्तत्वादित्यर्थः ।

॥सू॥ **विशेषणभेदव्यपदेशाभ्यां च नेतरौ** ॥ २२ ॥ चकारस्समुच्चायकः । **इतरौ च**=प्रकृतिद्वयं विरिञ्चिरुद्रौ च । **न**=नादृश्यत्वादिगुणकौ । कुतः । **विशेषणभेदव्यपदेशाभ्याम्**=सर्वज्ञादिविशेषणात् 'तस्मा'दिति अदृश्यत्वादिगुणकाक्षराद्विरिंचिरुद्रयोर्भेदोक्तेश्च । प्रतिज्ञाद्वयेऽपि हेत्वोः क्रमेणान्वयः ।

**रूपोपन्यासाच्च** ॥ २३ ॥ ' यदापश्यः पश्यत'इति विष्ण्वसाधारणस्वर्णरूपप्रतिपादनाच्चादृश्यत्वादिगुणको विष्णुरेवेत्यर्थः ॥

**इति सूत्रार्थचन्द्रिकायामदृश्यत्वादिगुणकाधिकरणम्** ॥ ६ ॥ **श्रीकण्ठमते** ॥ ८ ॥

## अथ वैश्वानराधिकरणम्. ॥ ९ ॥

प्राणाधारत्वेन पूर्वमुपास्यतयोक्तस्य पुनर्जाठराग्निरूपेणोपास्यत्वमाह—

### ॥ सू० ॥ वैश्वानरः साधारणशब्दविशेषात् ॥ २५ ॥

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इत्यादि छान्दोग्येऽस्य विषयः श्रूयते॥ अत्रोपास्यतयोक्तो वैश्वानरः परमेश्वरोऽन्यो वेति सन्देहः॥ पूर्वपक्षन्यायस्तु— वैश्वानरशब्देन जाठराग्निरुच्यते; 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदम-

---

सङ्गतिं प्रदर्शयन्नुत्तराधिकरणमवतारयति—प्राणाधारत्वेनेति। ननु यद्येवमस्य वैश्वानराधिकरणस्य अङ्गुष्ठाधिकरणेन सङ्गतिः तदा तदनन्तरमेवेदं प्रवर्तनीयम्। अस्यापि प्रवर्तनेनोपासकनेदिष्ठस्थाननिरूपणं समाप्य सर्वत्रावस्थानमन्तर्याम्यधिकरणे निरूपयितुमुचितमिति चेत् सत्यम्। सङ्गत्यन्तरवशादन्तर्याम्यधिकरणं पूर्वं प्रवर्तितम्। अङ्गुष्ठाधिकरणे हि परमेश्वरस्याङ्गुष्ठसमाश्रयणेनोपासकनेदिष्ठत्वमुक्तम्। तत्रेयं शङ्कोन्मिषति। नमस्कर्तुरिवापकर्षावहं पराङ्गुष्ठसमाश्रयणं परमेश्वरस्यानुपपन्नमिति इमां शङ्कां नियन्तृतया रेतोमूत्रपुरीषादिसाधारण्येन सकलप्रपञ्चसमाश्रयणेऽपि न तत्प्रयुक्तदोषस्पर्शइति सामान्यतस्समर्थनेन परिहर्तुमन्तर्याम्यधिकरणं प्रवर्तितम्। तदनन्तरं पृथिव्यादिषु रूपविशेषमास्थायावस्थितस्य पुरोदेशावस्थितचैत्रवद्दृश्यता स्यादिति शङ्कां परिहर्तुं भूतयोन्यधिकरणं प्रवर्तितम्। इत्थमङ्गुष्ठाधिकरणमुखागतशङ्काद्वयनिराकरणानन्तरं पूर्ववदुपासकनेदिष्ठस्थानान्तरमुच्यत इति युक्तैवेयं सङ्गतिः। यद्यप्युपकोसलविद्याधिकरणप्रवर्तनानन्तरमेवास्याधिकरणस्य प्रवर्तनेन शरीरान्तर्वर्तितयोपासकनेदिष्ठत्वे कार्त्स्न्येन प्रतिपादिते तदनन्तरमन्तर्याम्यधिकरणं प्रवर्तयितुं शक्यं तथाप्यङ्गुष्ठाधिकरणपूर्वपक्षप्रवृत्तिप्रकारप्रदर्शितदृष्टान्तप्रत्युदाहरणसङ्गतिवशात्तदधिकरणं पूर्वं प्रवर्तितमिति न किञ्चिदसाङ्गत्यम्॥ सू ॥ वैश्वानरः साधारणशब्दविशेषात्॥ २५ ॥ विषयवाक्यमुदाहृत्य, ब्रह्मवैश्वानरश्रुतिभ्यां संशयमाह—यस्त्वेतमिति। 'तदन्यो वे'त्यनेन जाठराग्न्यादिपूर्वपक्षत्रयं क्रोडीकृतम्। तत्र वैश्वानरशब्दस्य जाठरादिविषयप्रयोगदर्शनेन पूर्वपक्षत्रयं क्रमेणोपपादयति—वैश्वानरशब्देनेति। वैश्वानरश्रुत्युदाहरणं 'शब्दादिभ्य' इति (ब्र० १. २. २७) सूत्रे प्रदर्शयिष्यमाणानामग्निश्रुतित्रेताग्निकल्पनप्राणाहुत्याधारत्वादिलिङ्गानामप्युपलक्षणम्। छान्दोग्ये 'को न आत्मा किं ब्रह्मे'ति ब्रह्मात्मश्रुतिभ्यामुपक्रमेऽपि वाजसनेयिशाखायां 'वैश्वानरं वै भगवन्सम्प्रति वेद तन्नो ब्रूही'ति वैश्वानरशब्देनोपक्रमदर्शनादुपक्रमो न विनिगमकः। 'सर्वेषु लोके'ष्वित्यादिनोक्तमन्नादत्वफलमब्रह्मोपासनयाप्युपपद्यते। 'एतयान्नाद्यकामं याजये'दित्यादौ कर्मप्राप्यत्वेनापि हि तदाम्नायते। इह तु तदन्नादत्वं भूरादिषु यं कञ्चिल्लोकं पृथिव्यादिषु यत्किञ्चिद्भूतप्रधानं शरीरं देवमनुष्याद्यात्मसु यत्किञ्चिदात्मतां गतेनापि प्राप्यत इति विशेषो दर्शित इति भेदः। सर्वपापप्रदाहस्तु न वैश्वानरोपासनस्य फलं किंतु तदनन्तरमाम्नातस्य प्राणाग्निहोत्रस्य। तद्विधानानन्तरं हि 'य एवं विद्वानग्निहोत्रं जुहोती' त्युपक्रम्य तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयते एवं हास्य सर्वे पाप्मानः प्रदूयन्त'इति श्रूयते। ततश्च-

द्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति, स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति' (बृह० ७.९.) इति जाठराग्नौ प्रयोगदर्शनात्। महाभूततृतीयोऽग्निर्वा स्यात् 'एष वा अग्निर्वैश्वानरः' (तै० सं० ३.३.८.) इत्यादौ वैश्वानरशब्दस्याग्नौ प्रसिद्धत्वात् । अग्निर्देवता वा स्यात्; 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' (तै० सं० २.२.५.) इत्यादिष्विष्टिदेवतात्वेन फलदातृत्वश्रवणात्। न तु परमेश्वरः, 'प्रादेशमात्रम्' इति परिच्छेदावगमादिति ॥ अत्रोच्यते—परमेश्वर एव वैश्वानरः । कथं? वैश्वानरशब्दस्य साधारण्येऽप्यस्मिन् प्रकरणे 'को न आत्मा ? किं ब्रह्म ?' 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' (छा०५.११.) इत्यादिषु परमेश्वरासाधा-

---

वचनबलात्कर्मण एव तत्फलमिति सिद्धान्तिनापि स्वीकरणीयम्। 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त' इति प्रार्थितवन्तं केकयराजं प्रत्या'त्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही'ति धनलिप्सां विना वैश्वानरविद्याप्रकारस्यैव प्रश्नस्तस्य पूर्णायुःप्राप्तिफलकत्वादुपपद्यते । वाजसनेयशाखायां ह्यस्यास्तत्फलकत्वमुक्तम् 'अपपुनर्मृत्युं जयति सर्वमायुरेती'ति । द्युमूर्धत्वादिकं द्युवैश्वानरत्वादिवत् कल्पनामात्ररूपं जाठराग्नावपि सम्भवति । एवं ह्युपाख्यायते । औपमन्यवादयः पञ्च महर्षयः 'को न आत्मा किं ब्रह्मे'ति मीमांसित्वा निश्चयमलभमाना वैश्वानरोपासनापरमुद्दालकं गत्वा तेनापि तस्यामकृत्स्नवेदिना अश्वपतिः केकयो वैश्वानरमुपास्ते तमभ्यागच्छामेत्युक्ताः उद्दालकषष्ठास्तमभिजग्मुः। स च तेषां ज्ञानं परीक्ष्य ततो वक्तव्यशेषं वक्ष्यामीत्यभिसन्धाय 'औपमन्यव कं त्वमात्मानमुपास्से' इत्यादिना तान्षडपि ऋषीन् क्रमेण पृष्ट्वा तै 'र्दिवमेव भगवो राज' न्नित्यादिभिः यथाक्रमं द्युसूर्यानिलाकाशजलावनीषु वैश्वानरबुद्ध्या तैरुपास्यमानतयोक्तासु दिवादयो वैश्वानरं प्रति मूर्धचक्षुःप्राणमध्यमूत्रस्थानपादावयवत्वेनोपास्याः न तु वैश्वानरत्वेनेति व्यस्तोपासनाः प्रतिषिध्य समस्तोपासनाविषयस्य वैश्वानरस्य प्रागुपक्षिप्तं द्युमूर्धत्वादिविशिष्टरूपमेकीकृत्योपदिदेश 'मूर्धैव सुतेजा' इत्यादिनेति । एवं च द्युप्रभृतिषु यथा वैश्वानरत्वं कल्पितं तथा वैश्वानरमूर्धत्वादिकमपीत्येव युक्तम्। तच्च जाठराग्नावपि सम्भवति। ब्रह्मश्रुतिरपि द्युमूर्धत्वादिसादृश्यात् गौणतयोपपद्यते। ब्रह्मणोऽपि हि द्युमूर्धत्वादिक 'मग्निर्मूर्धा चक्षुषी चन्द्रसूर्या'वित्यादिमन्त्रे श्रूयते। एतेनात्मपुरुषश्रुत्योरपि गौणत्वं व्याख्यातम्। तस्माज्जाठराग्निरेव वैश्वानरः। यदि तु द्युमूर्धत्वादिकं कल्प्यमानमपि द्युप्रदेशादिव्यापक एव कल्पनीयम्। तदा तृतीयमहाभूतरूपोऽग्निर्वैश्वानरोऽस्तु। 'यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्ष' मिति तस्यैव त्रैलोक्यव्याप्तिश्रवणात् जाठररूपेण तस्य पुरुषान्तःप्रतिष्ठितत्वाच्च । यदि त्वात्मब्रह्मपुरुषश्रुतीनामब्रह्मण्यपि चेतनत्वेन संनिकृष्ट एव गौणी वृत्तिः कल्पनीया तदा तृतीयभूताभिमानिदेवता वैश्वानरोऽस्तु। 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्व'न्नित्यादिषु तृतीयमहाभूत इव 'वैश्वानरं द्वादशकपालं निर्वपे' दित्यादिषु फलदात्र्यां तदभिमानिदेवतायामपि वैश्वानरशब्दप्रयोगदर्शनात्। कथञ्चिदपि वैश्वानरो न परमेश्वरः परिच्छिन्नपरि-

रणब्रह्मशब्दादिभिर्विशेष्यमाणत्वान्न जाठराग्न्यादिषु तद्विशेषणं संभवति। अतः परमेश्वर एव वैश्वानरः॥

परमेश्वरपक्षे प्रमाणान्तरमाह—

॥ सू० ॥ स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' (मुण्ड० २.१.) इत्यादिषु परमेश्वरस्य द्युलोकादिपृथिव्यन्तरूपत्वमुक्तम्। तदित्थंभूतरूपमिह 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' (छा०५.१९.) इत्यत्र प्रत्यभिज्ञायमानं तस्य परमेश्वरत्वे लिङ्गम्॥

॥ सू० ॥ शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न, तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ २७ ॥

'स एषोऽग्निर्वैश्वानरः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः,

---

माणश्रवणादिति पूर्वपक्षसङ्क्षेपः। सिद्धान्तस्तु—परमेश्वर एव वैश्वानरः। जाठराग्न्यादिश्रुतित्वेनाभिमतयोरग्निवैश्वानरशब्दयोरन्तर्यामिणि परमेश्वरेऽपि वृत्त्या तत्साधारण्यात् साक्षात्प्रवृत्तिनिमित्ताश्रयवृत्तित्वस्यौत्सर्गिकत्वेऽपि शब्दशक्तेः परमेश्वरसाधारण्यानपायात्। इत्थं तयोस्साधारण्येऽपि नात्मादिश्रुतीनां कथञ्चिदपि जाठराग्न्यादिसाधारण्यं सम्भवतीति साधारणयोरग्निवैश्वानरशब्दयोः परमेश्वरासाधारणैः आत्मब्रह्मपुरुषशब्दैः विशेषणात्तत्समभिव्याहृतयोस्तयोरौत्सर्गिकं साक्षात्त्वमनादृत्य परम्परया प्रवृत्तिनिमित्ताश्रये परमेश्वरे पर्यवसानौचित्यादिति सूत्रे विशेषशब्दो विशेषणपरः। साधारणशब्दयोरसाधारणशब्दैस्समभिव्याहृतैर्विशेष्यमाणत्वादिति सूत्रार्थः। निगदव्याख्यानमस्य भाष्यम् ॥ परमेश्वरपक्षे श्रुतयः प्रमाणत्वेन दर्शिताः। लिङ्गदर्शनार्थत्वेनोत्तरसूत्रमवतारयति—परमेश्वरेति ॥ सू ॥ स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥ द्युलोकादीति। अग्निशब्दो मन्त्रे द्युलोकपरः। 'असौ वाव लोको गौतमाग्नि'रिति श्रुतावग्निशब्दस्य तत्र प्रयोगदर्शनादिति भावः। 'सुतेजाः विश्वरूपः पृथग्वर्त्मात्मा बहुलो रयि'रिति शब्दैः पूर्ववाक्ये सुतेजस्त्वादिगुणयोगितया वर्णितानि द्युसूर्यवाय्वाकाशजलान्युक्तानि। पूर्ववाक्ये प्रतिष्ठात्वगुणयोगितयोक्ता पृथिवी स्वशब्देनैवानूदिता। सन्देहस्सम्यगुपचितो देहः नाभिकण्ठमध्यदेशः। एवं च द्युमूर्धत्वादिकल्पनस्य परमेश्वर इव जाठरादिष्वपि सम्भवेऽपि परमेश्वर एव श्रुत्यन्तरे प्रसिद्धत्वात्तदिह प्रत्यभिज्ञायमानं तमेव गमयेदिति भावः॥ सू ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २७ ॥ अयमत्र शङ्काभिप्रायः। 'को न आत्मा किं ब्रह्मे' त्यत्रात्मश्रुतिर्व्याप्तचेतनस्य परब्रह्मणो वाचिका चेतनसामान्यवाचिन्यपि 'न' इति विशेषणात् सकलजीवान्तर्यामिणि तस्मिन्पर्यवसिता। ब्रह्मश्रुतिस्साक्षादेव तद्वाचिनी। पुरुषश्रुतिश्च पूर्णत्वयोगेन तद्वाचिनी। एतत्समभिव्याहारादग्निवैश्वानरशब्दावग्नेरन्तर्यामिणि तस्मिन्पर्यवस्यत इति यदुक्तं तन्न युक्तम्। 'स एषोऽग्निर्वै-

तद्यत् भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्'(छा०)इत्यादिषु प्रतिपन्नेभ्योऽग्निशब्दाग्नित्रयकल्पनप्राणाहुत्याधारत्वेभ्यः,'स यो हैनमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' इति श्रुतात् पुरुषान्तःप्रतिष्ठितत्वलिङ्गाच जाठरोऽग्निरेव, नासौ परमेश्वर इति चेत्—न, जाठराग्निरूपतयोपास्यत्वेनोपदेशात्, केवलस्य जाठराग्नेस्त्रैलोक्यशरीरत्वाद्यसंभवाच । किंच 'स एषोऽग्निर्वै-

श्वानरो यत्पुरुष'इत्येतदनन्तरं हि 'स यो हैनमेवमग्नि'मित्यादिवाक्ये पुरुषशब्देनोक्तस्य पुरुषविधशब्देन पुरुषसादृश्यमुच्यते। न च पुरुषस्य सतः पुरुषसादृश्योक्तिस्सङ्गच्छते। अतः केन निमित्तेनायमपुरुषे जाठरे पुरुषशब्दः प्रयुक्त इत्याकाङ्क्षायां मूर्धचक्षुराद्यवयवकल्पनालब्धेन शरीरवत्त्वरूपेण पुरुषसादृश्येनेति दर्शयितुं जाठरस्येयं पुरुषसादृश्योक्तिरित्येव सङ्गच्छते। एवं च तत्समानविषययोरात्मब्रह्मश्रुत्योरपि तत्र गौणत्वमनिवार्यम्। किं च तयोरन्यथापि गौणत्वमभ्युपगन्तव्यम्। कथं 'प्राचीनशाल औपमन्यवस्सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयोजनशार्कराक्ष्यो बुडिल आश्वतराश्विस्तेहैते महाशाला महाश्रोत्रियाः समेत्य मीमांसांचक्रुः को न आत्मा किं ब्रह्मे'त्यादिविद्योपक्रमे प्राचीनशालादीनामग्रे 'औपमन्यव कं त्वमात्मानमुपास्से' 'प्राचीनयोग्य कं त्वमात्मानमुपास्से' इत्यादिषु केकयराजस्य प्रश्नेषु 'दिवमेव भगवो राजन्नादित्यमेव भगवो राज'न्नित्यादितत्तदुत्तरवाक्यैर्द्युसूर्यप्रभृतीनात्मबुद्ध्योपासीनत्वेन वक्ष्यमाणानां क्वचित्समवेतानां वैश्वानरोपासकत्वेनैकविद्यत्वाभिमानिनामन्योन्यसम्भावितविशेषग्रहणाय स्वस्वोपासनाप्रकाराविष्करणे कृते अन्योन्यमुपासनाप्रकारविरोधं दृष्ट्वा क एषां द्युसूर्यप्रभृतीनामस्मदादिभिः वैश्वानरबुद्ध्योपास्यमानानां मध्ये अस्मदन्तर्यामिपरब्रह्मभूतवैश्वानरबुद्ध्या ग्राह्य इत्येतदर्थकं 'को न आत्मा किं ब्रह्मे'ति विमर्शवाक्यं व्याख्यातव्यम्। अग्रिमप्रश्नोत्तरवाक्यानुसारात्। तथा च तत्रात्मब्रह्मशब्दयोरात्मब्रह्मबुद्धिविषयीकर्तव्येऽर्थे गौणत्वमवश्यमेवाभ्युपेयम्। एवमात्मब्रह्मपुरुषश्रुतिभिः गौणत्वेनावश्याभ्युगन्तव्याभिरनपोदितस्यौत्सर्गिकस्य साक्षात्त्वस्य त्यागायोगात्। साक्षात्प्रवृत्तिनिमित्ताश्रयविषयाभ्यामग्निवैश्वानरशब्दाभ्यां त्रेताग्निकल्पनप्राणाहुत्याधारत्वपुरुषान्तःप्रतिष्ठितत्वलिङ्गैश्च जाठर एव वैश्वानर इति युक्तम्। बहुश्रुतिलिङ्गविरोधे द्युमूर्धत्वादिप्रत्यभिज्ञानस्याकिञ्चित्करत्वात् द्युमूर्धत्वादिकल्पनस्य पुराणेषु हिरण्यगर्भेऽपि दर्शनेन तस्यानियतत्वाच । तथापि द्युप्रदेशाद्यव्यापके जाठरे द्युमूर्धत्वादिकल्पना निरालम्बना स्यादिति चेन्न। वाजसनेयके "स होवाच मूर्धानमुपदिशन्नुवाच एष वा अतिष्ठा वैश्वानर इति चक्षुषी उपदिशन्नुवाच एष वै सुतेजा वैश्वानर इति नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मा वैश्वानर इति मुख्यमाकाशमुपदिशन्नुवाच एष वै बहुलो वैश्वानर इति मुख्या आप उपदिशन्नुवाच एष वै रयिर्वैश्वानर इति चुबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर" इत्युपासकमूर्धादीनामतिष्ठासुतेजश्शब्दाद्युक्तद्युलोकसूर्यादिरूपवैश्वानरमूर्धचक्षुराद्यात्मना सम्पादनात्तद्व्यापिनस्तदीयजाठराग्नेर्द्युमूर्धत्वादिकल्पनोपपत्तेः। एवं च पुरुषान्तःप्रतिष्ठितत्वोक्तिरप्युपपद्यते। ततो हि स्वरसतः पुरुषान्तःपर्याप्तवृत्तित्वं प्रतीयते। न च प्रसिद्धद्युप्रदेशादिव्यापकस्य तत्सम्भवतीति। एवमन्तःप्रतिष्ठितत्वोक्त्यनुरोधेन उपासकमूर्धादिचुबुकान्तावयवसम्पादितमेव द्युमूर्धत्वादिकमत्र ग्रा-

**श्वानरो यत् पुरुषः' इत्येनं वैश्वानरं पुरुषमप्यधीयते वाजसनेयिनः। निरुपाधिकपुरुषशब्दवाच्यस्तु परमेश्वर एव, 'तेनेदं पूर्णं पुरुषेण सर्वम्' (महाना०१.) इति श्रवणात्। अतः परमेश्वर इति युक्तम्॥**

द्युम्। न तु प्रसिद्धद्युप्रदेशादिव्याप्त्यापादकमिति जाठरे द्युमूर्धत्वाद्यसम्भवपरिहारं द्योतयितुमेव 'शब्दादिभ्य'इत्यादिशब्देन ग्रहीतुं शक्योऽपि पुरुषान्तःप्रतिष्ठितत्वहेतुस्सूत्रे पृथङ्निर्दिष्टः। परिहाराभिप्रायस्त्वयं, न केवलपरमेश्वरोपासनेहोपदिश्यत इत्यभ्युपगम्येत किं तु जाठरावच्छिन्नतदुपासनोपदिश्यत इति। अतो न जाठरश्रुतिलिङ्गविरोधः। न च केवलजाठरोपासनोपदिश्यत इत्यभ्युपगम्यतां तदीयश्रुतिलिङ्गस्वारस्यानुरोधादिति वाच्यम्। द्युमूर्धत्वादेस्तस्मिन्नसम्भवात्। वैश्वानरमूर्धादिरूपेण कल्पितैः प्रसिद्धैर्द्युप्रभृतिभिः खल्वतिष्ठासुतेजःप्रभृति शब्दोक्तभूम्याद्यधरलोकातीतस्थितिकत्वोत्कृष्टतेजस्त्वादिगुणमुखेनोपात्तैरुपासकमूर्धादीनामभेदो वाजसनेयिशाखायामाम्नायते न तु तत्रोपासकमूर्धादिषु वैश्वानरमूर्धादिकल्पना क्रियते। अतो जाठरे प्रसिद्धद्युमूर्धत्वादिकल्पनालम्बनस्य त्रैलोक्यव्यापित्वस्याभावात्तत्र द्युमूर्धत्वादिव्यपदेशो न सम्भवति। द्युप्रभृतीनां मूर्धत्वादिव्यपदेशश्च तन्नियमनशक्तं प्रति समञ्जसो भवति। अत एव 'सहस्रशीर्षा पुरुषः''सर्वाननशिरोग्रीवः' 'सर्वतः पाणिपादं तदि'त्यादिश्रुतिषु सुरनरतिर्यगादीनां शीर्षादीन्नियच्छन्तं प्रत्येव तेषां शीर्षादिरूपत्वं व्यपदिश्यते। जाठरस्तूपासकमूर्धादिचुबुकान्तावयवरूपाणामपि द्युप्रभृतीनां न नियमने शक्तः। अतस्तत्र द्युमूर्धत्वादिकं समञ्जसं न भवति। परमेश्वरे तु सर्वनियन्तरि तत्समञ्जसम्। प्रसिद्धं च मुण्डकोपनिषदि 'दिव्यो ह्यमूर्तः पुरुष' इति मन्त्रे सकलप्रपञ्चबहिरन्तःप्रदेशव्याप्त्युक्त्युन्मेषितपूर्णत्वप्रवृत्तिनिमित्तत्वेन पुरुषशब्देन प्रस्तुतस्य परमेश्वरस्याग्निर्मूर्धेति वर्णितं द्युमूर्धत्वादिकम्। स एव द्युमूर्धत्वादिशाली पुरुषोऽत्र वैश्वानरशब्देनोक्त इति प्रतिपादयितुमेव 'स एषोऽग्निर्वैश्वानरो यत्पुरुष' इति पुरुषमप्येनं वैश्वानरमभिधीयते वाजसनेयिनः। अत्र हि द्युमूर्धत्वादिव्यपदेशानन्तरं यत्पुरुष इति प्रसिद्धानुवादः। तथात्वेन श्रुत्यन्तरव्यपदिष्टस्यैव पुरुषस्यानुवाद इति युक्तम्। न चास्य वाक्यस्य द्युमूर्धत्वादिना श्रुत्यन्तरप्रसिद्धो यः पुरुषः स एवायं वैश्वानर इति प्रकरणप्रतिपाद्यस्य वैश्वानरस्य तदभेदप्रतिपादकत्वेऽपि द्युमूर्धत्वादिसादृश्यनिमित्तक औपचारिकस्तदभेदव्यपदेश इत्येव युक्तम्। पुरुषविधमित्यग्रे तत्सादृश्यप्रतिपादनात्। पूर्वोत्तरभाष्यवाक्यगतयोः पुरुषशब्दयोरैकार्थ्यस्यैवोचितत्वादिति वाच्यम्। उत्तरवाक्ये पुरुषेऽन्तःप्रतिष्ठितमिति पुरुषशब्दस्य मनुष्यादिजीवपरत्वेन तदेकवाक्यपठितस्य पुरुषशब्दान्तरस्यापि तद्विषयत्वोपपत्तेः। सम्भवति हि मूर्धाद्यवयवत्वमात्रेण मनुष्यादिसादृश्यम्। एवमर्थाभ्युपगमेन पुरुषात्मब्रह्मश्रुतीनां मुख्यार्थत्वस्य व्यवस्थापनसम्भवेऽर्थान्तराभ्युपगमेन तासामौपचारिकत्वकल्पनं न युज्यते। न चास्मिन्पक्षेऽग्निवैश्वानरश्रुत्योर्मुख्यार्थत्यागः। परम्परया प्रवृत्तिनिमित्ताश्रयेऽपि शक्तिसद्भावात्। ननु तथापि जाठरलिङ्गानि परमेश्वरे न सङ्गच्छन्ते। तथाहि—प्राणाहुत्याधारत्वं तावत्प्राणाहुतिद्रव्यस्यान्नस्य पाचके जाठराग्नावेव सङ्गच्छते।'अवाङ्व्यानि सुरभीणि कृत्वे'ति श्रुतितः प्रत्यक्षतश्चाहुतिद्रव्याधारस्यैवाग्नेस्तत्पाचकत्वदर्शनात्। ततश्च गार्हपत्याद्यायतनकल्पनमपि जाठरं प्रत्येव युज्यते,य

## ॥ सू० ॥ अत एव न देवता भूतं च ॥ २८ ॥

यतोऽयं वैश्वानरस्त्रैलोक्यशरीरकः पुरुषशब्दवाच्यश्च अत एव न देवताऽग्निः, न तृतीयं भूतं वा ॥

इह जाठराग्निरूपतयोपास्यत्वे सिद्धे परमेश्वरस्याग्निशब्दवाच्यत्वे तद्योजनाभेदमाचार्यान्तराणां दर्शयति—

## ॥ सू० ॥ साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

नावश्यमग्निरूपतयोपास्यत्वादेवेदमग्निशब्दसामानाधिकरण्यम्। अग्रनयना-

---

आहुत्याधारस्तत्पाचकश्च तं प्रत्येवायतनकल्पनौचित्यात्। पुरुषान्तःप्रतिष्ठितत्वमपि पुरुषे पर्याप्तवृत्तौ तत्रैवस्वारसिकम् । 'इदं वाव तदिदमस्मिन्नन्तःपुरुषे ज्योति'रितिश्रुत्यन्तरप्रसिद्ध्यनुसारि च। तस्मादग्निवैश्वानरश्रुत्योः प्रवृत्तिनिमित्तसाक्षादाश्रयविषयत्वरूपौत्सर्गिकार्थलाभेनानुगृहीतस्य बहुलिङ्गानुग्रहस्य लाभाय पुरुषात्मब्रह्मश्रुतीनां गौणत्वाङ्गीकारो न दोषायेति चेन्न। 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विध'मिति प्राणाहुतिद्रव्यपक्तृत्वस्य जाठरान्तर्यामिणि परमेश्वरेऽपि प्रसिद्धतया जाठरान्तर्यामिरूपेण प्राणाहुतिद्रव्याधारत्वस्यायतनत्रयकल्पनस्य पुरुषेऽन्तःप्रतिष्ठितत्वस्य च तत्राप्युपपत्तेः। 'यदिदमस्मिन्नन्तः पुरुषे ज्योति'रिति विद्यान्तरे पुरुषशब्दस्य 'स वा एषपुरुषोऽन्नरसमय' इत्यत्रेव शरीरपरतया अत्र 'पुरुषेऽन्तःप्रतिष्ठित'मिति पुरुषशब्दस्य पुरुषविधमिति शरीरवत्परपुरुषशब्दसमभिव्याहारेण शरीरवत्त्वपरतया च भिन्नार्थत्वेन तत्र प्रसिद्धेरत्रानुपयुक्तत्वाच्च। तस्मान्न जाठरो वैश्वानर इति ॥ सू ॥ अत एव न देवताभूतं च ॥ २८ ॥ भूतदेवतयोस्त्रैलोक्यव्यापित्वमस्ति। देवतायां पुरुषश्रुतिरप्युपपद्यते। उभयोरपि वाभिमानिदेवतारूपेण जाठररूपेण च पुरुषेऽन्तःप्रतिष्ठितत्वमप्युपद्यत इत्यधिकाशङ्कानिराकरणार्थं सूत्रम्। तथाहि–भूते द्युप्रभृतिनियमनशक्तेः पुरुषश्रुत्यन्वयस्य चासम्भवात् देवतायां हेत्वनपेक्षितनियमनशक्तिपूर्णत्वप्रवृत्तिनिमित्तकपुरुषश्रुत्यन्वययोरसम्भवाच्च देवता भूतं च न वैश्वानर इति तन्निराकरणाभिप्रायः ॥ सू ॥ साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥ पूर्वमग्निवैश्वानरशब्दप्रवृत्तिनिमित्तं प्रति साक्षादग्निवत्तद्द्वारा परमेश्वरस्याप्याश्रयत्वेन उभयोरपि प्रवृत्तिनिमित्ताश्रयत्वाविशेषादग्निवैश्वानरशब्दयोस्तदुभयसाधारण्यमुक्तम्। इदानीं परमेश्वरस्य साक्षात्प्रवृत्तिनिमित्ताश्रयतयापि तयोस्तत्साधारण्यमुच्यते । अग्रमुत्कृष्टफलं नयत्याराधकानिति नैरुक्तप्रसिद्धमग्निशब्दस्य निर्वचन 'मग्निः कस्मादग्रं नयती' ति। तदेव महाभारतेऽपि प्रदर्शितम्—'यस्माच्चायं नयत्यग्रां गतिं विप्रान्सुपूजितः। तस्माच्च नयनाद्राजन्वेदेष्वग्निरितीर्यत' इति। तन्निर्वचनमङ्ग्यपेक्षयापि परमेश्वरे समञ्जसतरम्। तथा अङ्गति गच्छत्यूर्ध्वदेशमित्य'गिगता' वितिधातोरौणादिकेन निप्रत्ययेन नलोपेन च तस्य निर्वचनं प्रसिद्धम् । तदपि निरुपाधिकोर्ध्वदेशरूपदिव्यस्थानप्राप्तिमति परमेश्वरेऽङ्ग्यपेक्षयापि समञ्जसतरम् । वैश्वानरशब्दस्य निर्वचनमग्नौ वैश्वानरस्य ऋषेरपत्यमित्यपत्यार्थतद्धितान्ततया प्रसिद्धस्य तस्य विश्वेषु नरेष्वन्तर्यामितया सति परमेश्वरे भवतार्थद्धि-

**दियोगेन परमेश्वर एवाग्निशब्दस्य साक्षाद्वृत्तित्वसंभवादिति सामानाधिकरण्याविरोधं जैमिनिरुवाच ॥**

## ॥ सू० ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥

**'यस्त्वेतमेवं प्रादेशमात्रम्' (छा० ६.१८.) इत्यपरिच्छिन्नस्य द्युप्रभृतिपृथिव्यन्तप्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वमुपासकाभिव्यक्तये इत्याश्मरथ्यमुनिः ॥**

---

तान्ततया तदुपपद्यते। 'वैश्वानरः कस्माद्विश्वानर एव वैश्वानरः राक्षसो वायस इतिवत्। रक्ष एव हि राक्षसः वय एव वायस' इति नैरुक्तमपि तन्निर्वचनं सर्वजीवात्मभूते परमेश्वर एवोपपद्यत इति भाष्येऽग्निशब्दस्य साक्षाद्वृत्तेस्सम्भवप्रदर्शनं वैश्वानरशब्दस्यापि तत्सम्भवस्योपलक्षणम्। न्यायतौल्यात्। न च 'साधारणशब्दविशेषा' दिति सूत्रखण्डभाष्ये 'वैश्वानरशब्दस्य साधारण्येऽपी'ति विशिष्य वैश्वानरशब्दस्य जाठरमहाभूततद्देवतापरमेश्वरसाधारण्यस्योक्तत्वात् 'शब्दादिभ्य' इति सूत्रभाष्ये वैश्वानर शब्दस्य परमेश्वरसाधारण्यं मत्वा तं विहायाग्निशब्दस्यैव पूर्वपक्षावलम्बनत्वेनोपन्यस्तत्वाच्च। 'तथादृष्ट्युपदेशा'दिति परम्परया प्रवृत्तिनिमित्ताश्रयविषयत्वेन शब्दगतिप्रदर्शनमग्निशब्दमात्रविषयम्। अतस्साक्षात्प्रवृत्तिनिमित्ताश्रयविषयत्वेन गत्यन्तरप्रदर्शनमपि तन्मात्रविषयमित्येव युक्तमिति भ्रमः कार्यः। न्यायतौल्येन आद्यसूत्रभाष्ये वैश्वानरशब्दसाधारण्योक्तेरग्निशब्दसाधारण्यस्याप्युपलक्षणत्वात् 'शब्दादिभ्य' इति सूत्रभाष्ये पूर्वपक्षावलम्बनतयाग्निशब्दोदाहृतेर्वैश्वानरशब्दस्याप्युपलक्षणत्वाच्च। न ह्यग्निशब्दाद्व्यावृत्तो वैश्वानरशब्दमात्रस्य परमेश्वरसाधारण्यापादकः कश्चिन्न्यायो दृश्यते। 'तदात्मन्येव हृदय्येऽग्नौ वैश्वानरे प्रास्य'दिति 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत' इति च श्रुत्यन्तरे परमेश्वरे वैश्वानरशब्दवदग्निशब्दस्यापि प्रयोगदर्शनमविशिष्टम्। ननु 'तथादृष्ट्युपदेशा'दिति दर्शितं मतमपेक्ष्य मतान्तरमस्मिन्सूत्रे प्रदर्श्यते। तत्र च सूत्रे वैश्वानरशब्दस्य साक्षाद्वृत्तिमुपेत्य अग्निशब्दमात्रस्याग्निशरीरके परमेश्वरे परम्परयाऽग्नित्वरूपप्रवृत्तिनिमित्ताश्रयविषयतया गतिः प्रदर्शिता। नतु वैश्वानरशब्दस्यापि तथा गतिः प्रदर्शिता। तथात्वे पौनरुक्त्यप्रसङ्गात्। ततश्च तन्मतमातिष्ठमानं प्रति तत्सम्प्रतिपन्नं वैश्वानरशब्दमपहायाग्निशब्दमात्रे साक्षाद्वृत्तिरुपपादनीयेति चेन्न। 'एष वा अग्निर्वैश्वानरः' अयमग्निर्वैश्वानरो येनेदमन्नं पच्यत' इत्यादिभूतजाठरविषयप्रयोगेष्विव परमेश्वरविषयप्रयोगेऽपि तयोः प्रवृत्तिनिमित्तभेदेनापौनरुक्त्योपपत्तेः। अन्यथा अग्निशब्दस्य साक्षाद्वृत्तिमभ्युपगम्य वैश्वानरशब्दस्य वृत्तौ मतभेदः प्रदर्शित इति वैपरीत्यस्यापि कल्पनापत्तेः। द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वरूपं प्रादेशमात्रत्वमपरिच्छिन्ने ब्रह्मणि न सम्भवतीति शङ्कानिराकरणार्थं सूत्रम्—सू॥ **अभिव्यक्तेरित्याश्मरथ्यः ॥३०॥** **परिच्छिन्नत्वमिति।** उच्यत इति शेषः। **उपासकाभिव्यक्तय इति।** उपासकबुद्ध्यारोहार्थमित्यर्थः। अन्नाद्धेतोर्वसतीतिवत् फलस्य हेतुत्वविवक्षया सूत्रे पञ्चमीनिर्देशः। प्रादेशमात्रमित्येतदनन्तरमभिविमानमित्यभितो विगतमानत्वोक्तेः प्रादेशविशेषपरिच्छिन्नत्वोक्तिरुपासकबुद्ध्यारोहफलावसीयत इति भावः। यदितु वाजसनेयशाखोक्तप्रकारेण मूर्धचुबुकान्तरालप्रमाणतारूपं प्रादेशाख्यपरिमाणविशेषशालित्वं छान्दोग्येऽपि प्रादेशमात्र-

॥ सू० ॥ अनुस्मृतेरिति बादरिः ॥ ३१ ॥[1]

द्युप्रभृतिपृथिव्यन्तस्य मूर्धादिपादान्तावयवत्वकल्पनमनुस्मृतये ब्रह्मप्राप्त्यर्थमिति बादरिः ॥

॥ सू० ॥ संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥

'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छा० ५.१८.) इत्युपासकस्योरःप्रभृतीनां वेद्यादित्वकल्पनं विद्याङ्गभूतायाः प्राणाहुतेरग्निहोत्रत्वकल्पनार्थमिति जैमिनिः । तथा हि दर्शयति श्रुतिः—'अथ य एतदेवं विद्वानग्निहोत्रं जुहोति' (छा० ५.२४.) इति ॥

---

मित्यनेनोच्यत इति अभ्युपगम्येत तथाप्ययमेव परिहारः। भाष्ये तु प्रसिद्धद्युप्रभृतिपृथिव्यन्तावयवकल्पनानन्तरमेवंशब्दपरामृष्टेन तेन प्रकारेण प्रादेशमात्रत्वकथनं यौगिकार्थकथन एव घटत इति तत्स्वारस्यानुसारेण प्रादेशशब्दस्य यौगिकार्थं परिगृह्य........विष्कृतः । वस्तुतस्तु रूढ्यर्थपरिग्रहेऽपि नैवंशब्दस्वारस्यविरोधः । वाजसनेयिशाखायां द्युप्रभृतिपृथिव्यन्तानां वैश्वानरावयवत्वकल्पनामपहाय स्वातन्त्र्येणोपासकमूर्धादीनामेव तदवयवत्वं कल्पितं चेत्खलु तद्विरोधस्स्यात्। न तथा तत्र कल्पनम्। किं तु छान्दोग्य इव द्युप्रभृतिषु ऋषिभिर्वैश्वानरबुद्ध्या स्वस्वोपास्यत्वेन कथ्यमानेषु तेषां वैश्वानरद्युमूर्धादित्वकल्पनानन्तरं 'प्रादेशमात्रमिति ह वै देवास्सुविदिता अभिसम्पन्ना' इत्युक्तरूपं वैश्वानरं देवाः प्रादेशपरिमाणमुपास्य कृतार्था अभूवन्नित्युक्तत्वात्। कथं द्युप्रभृतिपृथिव्यन्तलोकसंस्थानावयवः प्रादेशमात्रः स्यादित्याकाङ्क्षायां 'तथा तु व एनान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामी'ति तदुपपादनं प्रतिज्ञाय पूर्वं प्रतिष्ठादिशब्दोक्तगुणविशेषयुक्तत्वेन वर्णितानां वैश्वानरमूर्धादिरूपेण कल्पितानां द्युप्रभृतीनामेवोपासकमूर्धादिषु कल्पना कृता । तदभिप्रायेण छान्दोग्येऽपि द्युप्रभृतिपृथिव्यन्तावयवत्वप्रकारेणैव प्रादेशमात्रत्वोक्तेः । अत एव हि छान्दोग्येऽपि त्रैलोक्यशरीरत्वेन वैश्वानरोक्त्यनन्तरमुपासकमूर्धचुबुकान्तरालगतमास्यमाहवनीयत्वेन कल्पितम् ॥ नन्वपरिच्छिन्नस्य परमेश्वरस्य बुद्ध्यारोहसौकर्यार्थं द्युप्रभृतिप्रादेशपरिच्छिन्नत्वमात्रमुच्यतां किं द्युप्रभृतीनां मूर्धादित्वकल्पनयेति शङ्कानिराकरणार्थं सूत्रम् —सू ॥ अनुस्मृतेरिति बादरिः ॥ ३१ ॥ न केवलं परमेश्वरस्य कदाचिद्बुद्ध्यारोहत्वमात्रमपेक्षितं किं त्वाप्रायणमहरहरनुवर्तनीया ध्यानरूपा स्मृतिर्ब्रह्मप्राप्त्यर्थमपेक्षिता । तथा स्मृतिसन्तानानुवृत्तिर्बुद्ध्यारोहदार्ढ्ये सत्येव भवतीति तद्दार्ढ्यसौकर्यार्थं द्युमूर्धत्वादिकल्पनेति सूत्राशयमाह—द्युप्रभृतीति । तथापि द्युमूर्धत्वादिकल्पनानन्तरं कर्माङ्गवेदिबर्हिस्त्रेताग्निकल्पनमिहानुपयोगीति शङ्कानिराकरणार्थं सूत्रम्—सू ॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥ ननु प्राणाहुतेः प्राणवायुदेवत्यस्याग्निहोत्रत्वकल्पनायां प्राणवायुं प्रत्येव वेद्यादिकल्पनं कार्यं न वैश्वानरं प्रति । न च

---

(१) 'अनुस्मृतेर्बादरिः' इति भाष्यान्तरानुसारिपाठः ।

## ॥ सू० ॥ आमनन्ति चैनमस्मिन् ॥ ३३ ॥

**तैत्तिरीया एनं परमेश्वरमस्मिन्नुपासकशरीरे प्राणाहुतिवेलायां भोक्तृतया 'शिवो मा विशाप्रदाहाय' इति ( महाना० ३३ ) 'प्रभुः प्रीणाति विश्वभुक्' ( महाना० ३६ )इति चामनन्ति । अतः सकलाचार्यमतेन न्यायेन च जाठराग्नि-**

---

प्राणाग्निहोत्रस्य वैश्वानरब्रह्मविद्याङ्गत्वात्तद्देवत्यत्वं वाच्यमिति शङ्कनीयम् । गार्हपत्यादिविद्यान्यायेनान्यदेवत्यत्वेऽपि ब्रह्मविद्याङ्गत्वोपपत्तेरित्याशङ्कानिराकरणार्थं सूत्रम्—आमनन्ति चैनमस्मिन् ॥ ३३ ॥ तैत्तिरीयशाखायां पुरुषार्थं प्राणाग्निहोत्रं परमेश्वरदेवत्यमिति प्रागङ्गुष्ठाधिकरणे प्रसाधितम् । तत्सामान्यादिदमपि तथेति सूत्राशयमाविष्करोति—तैत्तिरीया इति । एतदुपयोगितयैव कर्मदेवताविचारात्मकमपि तदधिकरणमिह शास्त्रे प्रवर्तितम् । ननु तैत्तिरीयशाखायां स्वतन्त्रं प्राणाग्निहोत्रमाम्नातम् । छान्दोग्ये तु वैश्वानरविद्याङ्गम् । अतो यथा नैमित्तिकविकारयुक्तदर्शरूपाया अभ्युदयेष्टेः पशुकामेष्टिविशेषस्य च समानश्रुतित्वेऽपि क्वचित्पयसि प्रदेय....नान्यत्र । एवं क्वचित्परमेश्वरदेवत्यत्वं नान्यत्रेति विशेषस्सम्भवति । किं च द्वयोरपि परमेश्वरदेवत्यत्वाभ्युपगमेऽपि तत्र प्राणरूपः परमेश्वरो देवता इह जाठराग्निरूप इति विशेषोऽभ्युपगतः । तथा तत्र परमेश्वरस्य अङ्गुष्ठे सन्निधानमुक्तम् । इह तु मुखे । अतः पुरुषविद्याधिकरणन्यायेनात्र किञ्चिद्विषयं समानश्रुतित्वमप्रयोजकमिति चेत्सत्यम् । तथापि छान्दोग्ये श्रुतः प्राणाहुत्याराध्यत्वेनोपासकशरीरे सन्निहितः परमेश्वरः प्राणाग्निहोत्रान्तरविषये श्रुत्यन्तरे तस्य तथात्वेनोपासकशरीरे सन्निधानाम्नानदर्शनादित्येतावदिह लिङ्गमुपन्यस्यते । 'आमनन्ति चैनमस्मि'न्निति सूत्रमपि तावदेव प्रतिपादयतीति स्पष्टमेव । ननु तथाप्यत्र जाठराग्निरूपेणोपास्ये वैश्वानरे कथं प्राणापानादिशब्दवाच्येन प्राणवायुरूपेणाहुत्युद्देश्यता सङ्गच्छतामिति चेदुच्यते । इह ज्योतिर्विद्यायामिव जाठराग्निरूपेणोपासनं न सूत्रकाराभिमतम् । अत एव 'तथाद्दष्ट्युपदेशा'दित्युक्त्यनन्तरं 'साक्षादप्यविरोधं जैमिनि'रिति पक्षान्तरमुक्तम् । अन्यथा पूर्वं ब्रह्मपरतया निर्णीतेषु प्राणाकाशादिशब्देष्वपि सम्भवन्ती साक्षाद्वृत्तिरिहैव किमर्थं विशिष्य प्रदर्श्येत । अतोऽत्र जैमिनिग्रहणं नानभिमतिसूचनार्थं किं 'त्वन्यार्थं तु जैमिनि'रिति सूत्र इव शिष्यप्रौढिप्रख्यापनार्थम् । न च वैश्वानरस्याग्निरूपत्वाभावे तं प्रति गार्हपत्याद्यायतनकल्पनं न सङ्गच्छेतेति वाच्यम् । 'हृदयं गार्हपत्य'इत्यादिषु श्रुतानां गार्हपत्यादिशब्दानामग्निविशेषवाचिनामग्न्याधारेषु लक्षणाकल्पनायोगात् । तेषां हृदयादिषु वैश्वानरोद्देश्यकाहुत्याधाराग्नित्वकल्पनार्थतया स्ववाच्यविषयत्वोपपत्तेः । तस्माद्युज्यत एवैतद्वैश्वानरोद्देश्यकत्वं प्राणाग्निहोत्रस्य । अत एव 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त'इति फलनिर्देशानन्तरं 'तस्मादु हैवंविद्यदपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्या'दिति वचनेन वैश्वानरोद्देश्यत्वं प्राणाग्निहोत्रस्य व्यञ्जितम् । तत्र वैश्वानर इति सप्तमी 'समं ब्राह्मणे दान'मितिवदुद्देश्यार्था । 'चण्डालाये'ति चतुर्थ्योपक्रमात् । न 'त्वाहवनीये जुहोती'ति सप्तमीवदाधारार्थेति न विरोधः ।

रूपेण परमेश्वर एवाराध्यः प्राणाग्निहोत्रेणेति समीचीनम् ॥

इति वैश्वानराधिकरणम् ॥ ९ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

एवं स्वप्रकरणाम्नातसाधकान्तरसमुच्चयार्थस्सूत्रे चकार इति सर्वमनवद्यम् ॥

इति वैश्वानराधिकरणम् ॥ ९ ॥

इति श्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरंधरसकलदेवभूदेवप्रतिष्ठापकश्रीमचिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवादित्यमणिदीपिकाख्यायां प्रथमस्याध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

---

नयमणिमालायाम् ॥

अथ वैश्वानराधिकरणम् ॥ ९ ॥

सू० ॥ वैश्वानरस्साधारणशब्दविशेषात् ॥ २५ ॥ स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥२७॥ अत एव न देवताभूतं च ॥ २८ ॥ साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥ अनुस्मृतेरिति वादरिः ॥ ३१ ॥ सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३२ ॥ आमनन्ति चैनमस्मिन् ॥ ३३ ॥

प्राणाहुत्याधारः पुरुषेऽस्यान्तः प्रतिष्ठितोऽग्निश्च । वैश्वानरः श्रुतो यतस जाठरस्स्यादतो वह्निः ॥ ४९ ॥

वैश्वानरशिवस्स्या......ग्निमुखैर्मानैः । जाठरलिङ्गानि तथादृष्ट्युपदेशेन युज्यन्ते ॥ ५० ॥

इति श्रीमदप्पयदीक्षितकृतौ चतुर्मतसारसङ्ग्रहे नयमणिमालिकाख्ये तृतीयपरिच्छेदे प्रथमस्याध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

---

## सूत्रार्थचन्द्रिकायाम्

अथ वैश्वानराधिकरणम् ॥ ७ ॥ श्रीकण्ठमते ॥ ९ ॥

सू ॥ वैश्वानरस्साधारणशब्दविशेषात् ॥२४॥ स्मर्यमाणमनुमानं स्यादिति ॥२५॥ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषविधमपि चैनमधीयते॥ २६ ॥ अत एव न देवताभूतं च ॥ २७ ॥ साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ अनुस्मृतेर्बादरिः ॥ ३० ॥ संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥ आमनन्ति चैनमस्मिन् ॥ ३२ ॥

भगवत्पादमते, अस्य 'को न आत्मा किं ब्रह्मेत्यात्मानमेव वैश्वानर' मित्युपक्रम्याम्नातं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इत्यादिकं छान्दोग्यवाक्यं विषयः। अत्र किं वैश्वानरो जाठराग्निरुत भूताग्निरथ तदभिमानिनी देवता अथवा शारीर आहोस्वित्परमेश्वर इति संशयः। 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे' 'विश्वस्मा अग्निं भुवनाय देवाः' 'वैश्वानरस्य

सुमतौ स्याम' इत्यादिषु क्रमेण जाठरभूतदेवतासु वैश्वानरशब्दप्रयोगदर्शनात् आत्मत्वसमानाधिकरणप्रादेशमात्रत्वस्य शारीरे परिच्छिन्ने संभवाच्च जाठरादिरेव वैश्वानरो नेश्वर इति पूर्वपक्षः। सिद्धान्तस्तु, **वैश्वानरः**=वैश्वानरशब्दवाच्यः परमात्मैव। कुतः **साधारणशब्दविशेषात्**-साधारणशब्दयोर्जाठरभूतदेवतासाधारणस्य वैश्वानरशब्दस्य जीवपरमात्मसाधारणस्यात्मशब्दस्य च 'तस्य हवा एतस्य वैश्वानरस्य मूर्धैव सुतेजा' इत्यादावुक्तस्य द्युमूर्धत्वादेर्विशेषस्य सर्वात्मकपरमेश्वरपरत्व एवोपपन्नतरस्यावगम्यमानत्वात् चरमश्रुतहोमाधारत्वापेक्षया प्रथमश्रुतद्युमूर्धत्वादेर्बलवत्त्वाच्च ॥ इति ॥ २४ ॥

स्मृत्या च श्रुत्यर्थश्शक्यो निर्णेतुमित्याह-**स्मर्यमाणमनुमानं स्यादिति** ॥ २५ ॥ वैश्वानरशब्दस्य परमात्मपरत्वे **स्मर्यमाणं**- 'यस्याग्निरास्यं द्यौर्मूर्धे' त्यादिस्मृत्युक्तं, त्रैलोक्यात्मकं रूपम्। **अनुमानं स्यात्**=अनुमापकलिङ्गं स्यात् इत्यर्थः। सौत्र इतिशब्दो हेतौ। यस्मादेवं स्मार्तं लिङ्गमस्ति तस्मात् मूलभूतश्रुतौ वैश्वानरशब्दप्रतिपाद्यः परमात्मेति सिद्धम् ॥ २६ ॥

सिद्धान्तं विधान्तरेणाक्षिप्य समाधातुमाह-**शब्दादिभ्य इत्यादि। शब्दादिभ्यः**=जाठरे रूढः वैश्वानरशब्दः 'हृदयं गार्हपत्य' इत्याद्यग्नित्रेतापरिकल्पनं, 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीय' मित्यादिना प्राणाहुत्याधारतासंकीर्तनं च इत्येतेभ्यो **हेतुभ्यः। अन्तःप्रतिष्ठानाच्च**।='पुरुषेऽन्तःप्रतिष्ठितं वेदे'ति वैश्वानरस्यान्तःप्रतिष्ठानश्रवणाच्च। **नेति चेत्**=जाठर एव वैश्वानरो न परमात्मेति चेत्। **न**=न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम्। कुतः। **तथा दृष्ट्युपदेशात्**=तथा जाठररूपेण परमेश्वरस्य दृष्टेरुपास्ते 'मनो ब्रह्मेत्युपासीते' त्यादिवदुपदेशात्। यद्वा। तथा जाठरापरित्यागेन जाठरेऽस्मिन्परमेश्वरदृष्टेः'मनोमयः प्राणशरीर' इत्यादिवदुपदेशात्। **असंभवात्**='मूर्धैव सुतेजा' इत्यादेर्विशेषस्य जाठरेऽसंभवात्। किं च। यतः **एनं**-वैश्वानरम्। पुरुषं 'स एषोग्निर्वैश्वानरो यत्पुरुषस्स यो हैतमेवाग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे' ति पुरुषाकारं **पुरुषविधं च अधीयते** वाजसनेयिनः। अतः जाठरे पुरुषत्वपुरुषविधत्वयोरसंभवात् सर्वात्मके परमात्मनि पुरुषत्वपुरुषान्तःप्रतिष्ठितत्वोपपत्तेश्च न जाठरो वैश्वानरः किं तु परमात्मैवेति सिद्धम् ॥ २६ ॥ इत्थं द्युमूर्धत्वादिविशेषस्य जाठरविषयत्वं संदूष्य देवतादिविषयत्वं दूषयितुमाह-**सू॥ अत एव न देवताभूतं च ॥ ७ ॥ अत एव**=उक्तेभ्यो हेतुभ्यः। **देवताभूतं च**=देवता च भूतं च देवताभूतम्। एकवद्भावादुभयमपि। **न** वैश्वानरः। विकारस्य भूताग्नेर्विकारान्तरद्युलोकाद्यात्मत्वासंभवात् देवताया अपि परमेश्वराधीनैश्वर्यवत्त्वाच्च वैश्वानरस्सर्वात्मकः परमात्मैवेत्यर्थः ॥ २७ ॥

पूर्वं जाठरार्थकत्वं वैश्वानरशब्दस्याभ्युपेत्य जाठरोपाधिकं जाठरप्रतीकं वा ब्रह्मोपास्यमित्यभिहितम्। अधुना विनैवोपाधिकल्पनां साक्षादेव परमात्मोपासनापरिग्रहे विरोधाभावं जैमिनिराचार्यो मन्यत इत्याह—**सू॥ साक्षादप्यविरोधं जैमिनिः ॥ ॥ २८ ॥** वैश्वानरस्य पूर्वापरपर्यालोचनया ब्रह्मत्वे निर्णीते विश्वश्चासौ नरश्च विश्वनरः स एव वैश्वानर इति योगेन वैश्वानरशब्दो ब्रह्मपरतया नेतव्य इति तात्पर्यम्। ननु परमात्मपरिग्रहे कथं प्रादेशमात्रश्रुत्युपपत्तिरित्याशंक्य तां व्याख्यातुमाह—**सू॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥** उपासकानुग्रहाय परमेश्वरस्य हृदयादिस्थानेषु प्रादेशपरिमाणत्वाभिव्यक्तेरभ्युपगमात् अनवच्छिन्नस्यापि परमात्मनः प्रादेशमात्रत्वमुपपद्यत **इत्याश्मरथ्य** आचार्यो मन्यत इत्यर्थः ॥ २९॥

मतान्तरमाह-**सू॥ अनुस्मृतेर्बादरिः ॥ ३० ॥** प्रादेशमात्रहृदयपुण्डरीकस्थाने मनसा **अनुस्मृतेः**=ध्यानात् प्रादेशमात्र इत्युपचर्यत इति **बादरि**राचार्यो मन्यत इत्यर्थः ॥ ३० ॥

मतान्तरमाह—**सू॥ संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥** मूर्धप्रभृति चुबुकान्ते प्रादेशमात्रे वैश्वानरस्योपास्यत्वप्रतिपादनात् परमेश्वरस्य प्रादेशमात्रत्वसंपत्तेः प्रादेशमात्रश्रुतिरुपपद्यत इति जैमिनिराचार्यो मन्यते। अस्मिन्नर्थे श्रुत्यन्तरसंवादमाह सूत्रकारः-**तथा हि दर्शयति**='प्रादेशमात्रमिव ह वै देवास्सुविदिता अभिसंपन्ना' इत्यादि वाजसनेयिब्राह्मणं मूर्धादिचुबुकान्तेषु द्युप्रभृतीन्पृथिव्यन्तानवयवान्त्रैलोक्यात्मनो वैश्वानरस्य संपादयत् प्रादेशमात्रत्वसंपत्तिं परमात्मनो दर्शयतीत्यर्थः ॥ ३१ ॥

प्रादेशमात्रश्रुतिस्संपत्तिनिमित्तेत्यत्र श्रुत्यन्तरमाह-**सू॥ आमनन्ति चैनमस्मिन् ॥ ३२॥** अस्मिन्प्रादेशपरिमाणे मूर्धचुबुकान्तराले। **एनं**=परमेश्वरम्। जाबालाः 'य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इती'त्याद्यामनन्ति। अतः प्रादेशमात्रश्रुतिरुपपन्नेत्यर्थः। तस्मात्सर्वात्मकः परमात्मैवोपास्य इति सिद्धम् ॥ इति ॥ ३२ ॥ **अस्मिन्पादे सप्ताधिकरणानि ॥ ७ ॥ द्वात्रिंशत्सूत्राणि ॥ ३२ ॥**

**श्रीकण्ठमते,** प्राणाधारत्वेन पूर्वमुपास्यतयोक्तस्य पुनर्जाठराग्निरूपेणोपास्यत्वमाह—**सू ॥ वैश्वानरस्साधारणशब्दविशेषात् ॥ २६ ॥** इह विषयवाक्यसंशयपूर्वपक्षादिकं प्रायस्समानमेव। सूत्रार्थस्तु कियदिव भिद्यते। **वैश्वानरः** परमेश्वर एव। कुतः। **साधारणशब्दविशेषात्**=वैश्वानरशब्दस्य साधारण्येऽपि इदंप्रकरणोपक्रमे परमेश्वरासाधारणब्रह्मशब्दादिभिर्विशेष्यमाणत्वाज्जाठराग्न्यादिषु तद्विशेषणस्यासंभवाच्च। परमेश्वर एव वैश्वानर इत्यर्थः ॥

परमेश्वरपक्षे प्रमाणान्तरमाह—**सू ॥ स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥** स्मृतिषु 'अग्निर्मूर्धा' इत्यादिना स्मर्यमाणं परमश्वेरस्य द्युलोकादिपृथिव्यन्तरूपत्वमिह 'मूर्धैव सुतेजा' इत्यत्र प्रत्यभिज्ञायमानं वैश्वानरस्य परमेश्वरत्वे लिङ्गमित्यर्थः ॥ **सू ॥ शब्दादिभ्यः इत्यादि ॥ २७ ॥ शब्दादिभ्यः**=अग्निशब्दाग्नित्रयकल्पनाप्राणाहुत्याधारत्वेभ्यः। **अन्तःप्रतिष्ठानाच्च**=पुरुषेऽन्तःप्रतिष्ठितत्वलिङ्गाच्च। **नेतिचेत्**=नासौ परमेश्वर इति चेत्। **नातथादृष्ट्युपदेशात्**=जाठराग्निरूपतयोपास्यत्वोपदेशात्। **असंभवाच्च**=केवलस्य जाठराग्नेस्त्रैलोक्यशरीरत्वाद्यसंभवाच्च। किं च ॥ यत एनं 'स एषोऽग्निर्वैश्वानरो यत्पुरुष' इति वाजसनेयिनः निरुपाधिकपुरुषशब्दवाच्यमधीयते। अतोऽपि परमेश्वर एव वैश्वानर इति युक्तमित्यर्थः ॥

**सू ॥ अत एव न देवता भूतं च ॥२८॥ अत एव**=यतोऽयं वैश्वानरस्त्रैलोक्यशरीरकः पुरुषशब्दवाच्यश्च अत एव। **न देवताग्निर्नापि भूताग्निरि**त्यर्थः ॥

इह परमेश्वरस्य जाठराग्निरूपतयोपास्यत्वेनाग्निशब्दवाच्यत्वे सिद्धे तद्योजनाभेदानाचार्यान्तराभिमतान्दर्शयति—**सू ॥ साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥** अग्रनयनादियोगेनाग्निशब्दस्य परमेश्वरे साक्षाद्वृत्तिसंभवात्सामानाधिकरण्याविरोधस्सुसाध इति जैमिनिरुवाचेत्यर्थः ॥

**सू॥ अभिव्यक्तेरित्याश्मरथ्यः ॥३०॥३१॥** उपासकबुद्ध्यारोहार्थमपरिच्छिन्नस्यापि तस्य द्युप्रभृतिपृथिव्यन्तप्रदेशविशेषपरिच्छिन्नत्वमुच्यते इत्याश्मरथ्यः।

**सू॥अनुस्मृतेरिति बादरिः॥** द्युप्रभृतिपृथिव्यन्तस्य मूर्धादिपादान्तावयवत्वकल्पना **अनुस्मृतेः**=ब्रह्मप्राप्त्यर्थमाप्रायणमनुवर्तनीयध्यानरूपबुद्धिवृत्तये इति बादरिः। अन्नाद्धेतोर्वसतीतिवत्फलस्य हेतुत्वविवक्षया सूत्रे पञ्चमीनिर्देशः ॥

**सू ॥ संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥३२॥** उपासकस्योरःप्रभृतीनाम् 'उर एव वेदि' रित्यादिना वेद्यादित्वकल्पनं विद्याङ्गभूतायाः प्राणाहुतेरग्निहोत्रत्वकल्पनार्थमिति जैमिनिर्मन्यते। **तथा हि दर्शयति**='अथ य एवं विद्वानग्निहोत्रं जुहोति' इति श्रुतिर्दर्शयति इत्यर्थः।

**सू ॥ आमनन्ति चैनमस्मिन् ॥ ३३ ॥** तैत्तिरीयाः **एनं**=परमेश्वरम्। **अस्मिन्**=उपासकशरीरे। प्राणाहुतिवेलायां भोक्तृतया 'शिवो मा विशाप्रदाहाय' 'प्रभुः प्रीणाति विश्वभुक्' इति **चामनन्ति**। सकलाचार्यमतेन न्यायेन प्राणाग्निहोत्रेण परमेश्वर एवाराध्य इति सिद्धम् ॥ इति ॥ **अस्मिन्पादे त्रयस्त्रिंशत्सूत्राणि ॥ ३३ ॥ अधिकरणानि नव ॥ ९ ॥**

**रामानुजमते ॥ सू ॥ वैश्वानरस्साधारणशब्दविशेषात् ॥२५॥** विषयवाक्यं समानमेव। किमयं वैश्वानरः परमात्मेति शक्यनिर्णयः उत नेति संशयः। वैश्वानरशब्दस्य जाठराग्नौ महाभूततृतीये देवताविशेषे परमात्मनि च वैदिकप्रयोगदर्शनात् अस्मिन्प्रकरणे सर्वेषां लिङ्गोपलब्धेश्च अशक्यनिर्णय इति पूर्वः पक्षः। 'को न आत्मा किं ब्रह्म इति' सर्वेषां जीवानामात्मभूतं ब्रह्म किमिति प्रक्रमात् उत्तरत्र 'आत्मानं वैश्वानर' मिति ब्रह्मशब्दस्थाने सर्वत्र वैश्वानरशब्दप्रयोगाच्च वैश्वानरात्मा सर्वेषां जीवानामात्मभूतं परं ब्रह्मेति विज्ञायत इति सिद्धान्तः। सूत्रार्थस्तु, वैश्वानरशब्दनिर्दिष्टः परमात्मा अनेकार्थसाधारणस्यापि तस्यास्मिन्प्रकरणे सर्वात्मत्वादिभिः परमात्मासाधारणैर्विशेषणैर्विशेष्यमाणत्वात्। विशेष्यत इति विशेषः ॥

**सू ॥ स्मर्यमाणमनुमानं स्यादिति ॥२६ ॥** इतिशब्दः प्रकारवचनः। **स्मर्यमाणं**=प्रत्यभिज्ञायमानम्। इत्थं प्रत्यभिज्ञायमानं श्रुतिस्मृतिप्रसिद्धं रूपं वैश्वानरस्य परमात्मत्वे लिङ्गं स्यात् इत्यर्थः। अनुमीयतेऽनेनेति अनुमानम्। अन्येषामेतदधिकरणसूत्राणामर्थः श्रीकण्ठमतान्न भिद्यते प्रायशः। अन्तिमसूत्रार्थस्तु भिद्यते मनाक्। यथा ॥ **सू ॥ आमनन्ति चैनमस्मिन् ॥ ३२ ॥ एनं**=परमपुरुषं द्युभ्वादिदेहं वैश्वानरम्। **अस्मिन्**=उपासकदेहे प्राणाग्निहोत्रेणाराध्यत्वाय 'तस्य हवा एतस्य वैश्वानरस्य मूर्धैव सुतेजा' इत्यादिना **आमनन्तिहि**। उपासकमूर्धादिपादान्ता एव द्युप्रभृतयः परमपुरुषस्य मूर्धादय इति प्राणाग्निहोत्रवेलायामनुसंधेयाइत्यर्थः। **अस्मिन्नपि मते सूत्राणि त्रयस्त्रिंशत्। अधिकरणानि तु षट्।** इति विशेषः ॥

**आनन्दतीर्थमते, ॥ सू ॥ वैश्वानरस्साधारणशब्दविशेषात् ॥ २८ ॥** 'यस्त्वेतमेव' मित्यादिछान्दोग्यवाक्यमेव विषयः। अत्र वैश्वानरादिशब्दवाच्योऽग्निर्वा विष्णुर्वेति संशयः। 'अयमग्निर्वैश्वानरः' 'तद्यत्प्रथममागच्छेत्तद्धोमीयम्' 'येनेदमन्नं पच्यते' इत्याद्यग्निवैश्वानरश्रुतिहोमाधारत्वपक्तृत्वादिलिङ्गैर्लोकप्रसिद्ध्यग्निसूक्तादिव्यवस्थाविरोधापत्तेश्च वैश्वानरादिशब्द-

वाच्योऽग्निरेवेति पूर्वः पक्षः । 'आत्मानं वैश्वानर' मित्यात्मविशेषणात् 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' इति स्मृतिसमाख्यानात् उदाहृतप्रकरणलिङ्गादिभ्यस्सर्वेषां पदानां विष्णावेव मुख्यवृत्तित्वस्य सिद्धान्तितत्वात् सर्वत्र तत्तच्छब्दानां तत्तदन्तर्यामिपरतया विष्णोः तत्तत्स्थत्वानुस्मरणेन सूक्तव्यवस्थोपपत्तेश्च वैश्वानरादिशब्दवाच्यो विष्णुरेवेति सिद्धान्तः ॥ सूत्रार्थस्तु, **वैश्वानरः**='यस्त्वेत' मित्यादिवाक्यगतवैश्वानरादिशब्दवाच्यो विष्णुरेव । नत्वग्निः । कुतः । साधारणशब्दविशेषात्=अग्नाविष्ण्वोस्साधारणस्य वैश्वानरशब्दस्य 'आत्मानं वैश्वानर' मिति श्रुतावात्मशब्देन विशेषितत्वादित्यर्थः ।

॥ सू ॥ **स्मर्यमाणमनुमानं स्यादिति** ॥२५॥ इति **स्मर्यमाणं**='अहं वैश्वानरो भूत्वे'ति स्मृत्युक्तं विष्णोर्वैश्वानरत्वम् । **अनुमानं**–वैश्वानरविद्यायाः गीतोक्तभगवत्परत्वस्यानुमापकम् । **स्यात्**=भवेदित्यर्थः ॥

॥ **शब्दादिभ्यइत्यादि** ॥ २६ ॥ चशब्दो युक्तिसमुच्चायकः । **शब्दादिभ्यः**=अग्निशब्दहोमाधिकरणत्वलिङ्गात् । **अन्तःप्रतिष्ठानात्**=पाचकत्वेन शरीरान्तरावस्थानाच्च । **नेति चेत्**=वैश्वानरो न विष्णुः किंतु अग्निरेवेति चेन्न । कुतः । **तथादृष्ट्युपदेशात्**=अग्न्यादिनामलिङ्गकर्मवत्त्वेन उपासनोपदेशात् । किंचात्रोक्तात्मब्रह्मत्वादीनामग्न्यादावसंभवाच्च वैश्वानरो विष्णुरेव । अपि च । यतः छन्दोगाः **एनं**=वैश्वानरम् । **पुरुषविधं**=पुरुषसूक्तप्रतिपाद्यनारायणसमानगुणकमेव । **अधीयते**=अभिदधति । अतोऽपि विष्णुरेवेत्यर्थः । चशब्देन पुरुषसूक्तस्य विष्णुपरत्वं बहुप्रमाणसिद्धमिति सूचितम् ॥

॥ **अत एव न देवता भूतं च** ॥ २७ ॥ अत एव=निरवकाशात्मशब्दादिहेतोरेव । **देवता**=अग्न्यादिरूपा । **भूतं च**=तदभिमन्यमानतेजोभूतं च । **न**=वैश्वानरशब्दवाच्यं न भवति ।

॥ सू ॥ **साक्षादप्यविरोधं जैमिनिः** ॥ २८ ॥ **साक्षात्**=मुख्यवृत्त्या । **अपि**=ब्रह्मणोऽग्न्यादिशब्दवाच्यत्वेऽपि । **अविरोधम्**=अज्ञानादिनिमित्तान्तरेण अग्न्यादौ तत्तच्छब्दविरोधाभावं जैमिनिराचार्यो वक्तीत्यर्थः ।

॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ **अभिव्यक्तेः**=अग्न्यादिषु ब्रह्मोपास्तौ कृतायां तेषु ब्रह्मणोऽभिव्यक्तेः तत्तन्निमित्तोऽग्न्यादिसूक्तनियम इत्याश्मरथ्याचार्यो मन्यत इत्यर्थः ॥

॥ सू ॥ **अनुस्मृतेर्बादरिः** ॥ ३० ॥ **अनुस्मृतेः**=तत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेव ब्रह्मणोऽनुसंधानाद्धेतोः अग्न्यादिसूक्तव्यवस्थेति **बादरिर्व**क्तीत्यर्थः ॥

॥ सू ॥ **संपत्तेरिति जैमिनिस्तथाहि दर्शयति** ॥ ३१ ॥ **हि**=यस्मात् तं यथा **इतिहि**=प्रसिद्धा श्रुतिः । **तथा दर्शयति** यथा जैमिनिमतं तथा प्रतिपादयति । तस्माज्जैमिनिः स्वोक्त्यनुकूलश्रुत्यनुसारेण **संपत्तेः** अग्न्यादिसूक्तोपासकानामग्न्यादिप्राप्तिहेतोस्तद्विवक्षया सूक्तादिनियम इत्याहेत्यर्थः ।

॥ **आमनन्ति चैनमस्मिन्** ॥ ३२ ॥ चकारश्शङ्कानिवर्तकः । यस्मात् एनं विष्णुमग्न्यादावामनन्ति तत्स्थतया 'योऽग्नौ तिष्ठ'न्नित्याद्याः श्रुतयः प्रतिपादयन्ति । तस्मात् कथमग्न्यादिषु विष्णूपास्त्या अग्न्यादिप्राप्तिर्भवतीति शङ्का निवृत्ता । अग्न्यादिशब्देन तत्स्थभगवत्प्राप्तेरेवाभिप्रेतत्वादित्यर्थः ॥ **अस्मिन्मते सूत्राणिद्वात्रिंशत्** ॥ ३२ ॥ **अधिकरणानि सप्त** ॥७॥

**इति सूत्रार्थचन्द्रिकायां वैश्वानराधिकरणम्** ॥७॥

**यं प्रासूत विशुद्धशीलमनघं वृद्धाम्बिकाख्या सती**
**यं मृत्युंजयशर्मणो बुधमणेर्भाग्यं विदुः साधवः ।**
**वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-**
**स्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥**

सूत्रार्थचन्द्रिकायामाद्येऽध्याये समन्वयाभिख्ये ॥ पूर्तिं द्वितीय आगादनधिकविस्पष्टलिङ्गकः पादः ॥
श्रीकण्ठाचार्यमते भगवत्पादीयभाष्यरीत्या तु । अस्पष्टलिङ्गवाक्योपास्यब्रह्मावबोधकः प्रोक्तः ॥
रामानुजमतरीत्या त्वस्फुटजीवादिलिङ्गको गदितः । आनन्दतीर्थसन्मतरीत्याभिहितश्च लिङ्गपाद इति ॥

**इति हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायां प्रथमस्याध्यायस्य द्वितीयः पादः ॥ १–२ ॥**

---

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

प्रथमस्याध्यायस्य

## अथ तृतीयः पादः ।

### अथ द्युभ्वाद्यधिकरणम् ॥ १ ॥

**इह पादे स्पष्टास्पष्टब्रह्मलिङ्गानां वेदान्तवाक्यानां विचारः, प्रसङ्गात् अधिकारिनिरूपणं च क्रियते—**

### ॥ सू० ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

**'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः'( मुण्ड० २.२.) इति अस्य विषयः श्रूयते मुण्डकोपनिषदि ॥ अत्र श्रुतौ द्युभ्वाद्याधारतया श्रूयमाणः परमेश्वरः अन्यो वेति संशयः ॥ एवंसति परमेश्वरादन्यो वायुरेव द्युभ्वाद्याधार इति गम्यते; 'वायुना वै गौतम सूत्रेणायं च लोकः सर्वाणि च भूतानि संदब्धानि भवन्ति' ( बृह. ५.७ ) इति श्रुतौ तस्य सर्वाधारत्वप्रसिद्धेः ॥ इति प्राप्ते ब्रूमः—**

---

## शिवार्कमणिदीपिकायाम्

### अथ प्रथमस्याध्यायस्य तृतीयः पादः ।

### अथ द्युभ्वाद्यधिकरणम् ॥ १ ॥

येषु विषयवाक्येषु श्रुतानां ब्रह्मलिङ्गानां पूर्वपक्षे न ब्रह्मलिङ्गत्वाक्षेपः नाप्यन्यत्रान्वयसमर्थनं किं तु विचारणीय एव धर्मिण्यन्वयः तद्विरोध्यब्रह्मलिङ्गप्राबल्योपपादनेन तत्समर्पकशब्दानां यथाकथञ्चिद्ब्रह्मणि योजनामात्रं तानि स्पष्टब्रह्मलिङ्गानि प्रथमपादे विचारितानि। येषु श्रुतानां तेषां ब्रह्म....येन तल्लिङ्गत्वाक्षेपः विचारणीय एव धर्मिण्यन्वयश्च तान्यनतिस्पष्टब्रह्मलिङ्गानि ब्रह्मापलापान्यान्वयरहितपूर्वपक्षविषयत्वसाम्यात् तदनन्तरं द्वितीयपादे विचारितानि । येषु श्रुतानां तेषां पूर्वपक्षे ब्रह्मलिङ्गत्वानाक्षेपेण ब्रह्मानपलापेन चान्यान्वयसमर्थनं तानि ब्रह्मापलापरहितपूर्वपक्षविषयत्वसाम्यादिदानीं विचार्यन्त इति पादार्थभेदः सङ्गतिश्च॥सू॥द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ 'यस्मिन्द्यौ'रिति मन्त्रे सप....द्युपृथिव्यादीनामाधारत्वेन श्रूयमाणः परमेश्वरो वायुर्वेति संशयं दर्शयति—अत्रेति । परमेश्वरकोटेरात्मश्रुतिर्बीजमिति स्पष्टम् । पूर्वपक्षकोटे'रमृतस्यैष सेतु'रित्यनेन द्युभ्वाद्याधारस्य परमेश्वरान्यत्वप्रतीतिर्बीजमित्येतत्परमेश्वरादन्यो वेति पूर्वपक्षकोटिप्रदर्शनेन सूचितम् । तत्प्रतीतिमुपजीव्यैव पूर्वपक्षयति—एवं सतीति । 'अमृतस्य सेतु' रित्यनेन द्युभ्वाद्याधारः परमेश्वरादन्यः प्रतीयते । अमृतशब्दो ह्यनादिमुक्तस्य परमेश्वरस्य वाचक इति निर्णीतमन्तर्याम्य-

धिकरणे। सोऽत्र 'यस्मिन्द्यौ'रिति मन्त्रात्पूर्वं 'तदेतत्सत्यममृत'मिति ततः पश्चा'दानन्दरूपममृतं यद्विभाती'ति परमेश्वरे प्रयुक्तश्च। तस्य सेतुरिव सेतुः परतीरस्य सेतुरिव तस्यायं प्रापयितेति हि तदर्थः। एवं परमेश्वरादन्यत्वेन सिद्धोऽयं द्युभ्वाद्याधारो वायुरिति युक्तम्। स खल्वर्चिरादिमार्गे पर्वविशेषतया तत्प्राप्तिहेतुः। यद्यपि देवतान्तराणामपि तत्र पर्वत्वमस्ति तथापि 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ती'ति श्रुत्यन्तरे वायोर्द्युभ्वाद्याधारत्वप्रसिद्धेर्वायुरेवायम्। एवं 'यस्मिन्द्यौः पृथिवी चे'त्यत्रा'यं च लोकः परश्च लोक' इति वायुविषयश्रुत्यन्तरार्थप्रत्यभिज्ञां स्फुटीकर्तुमेव सूत्रे लाघवार्थं दिवाद्यायतनमिति वक्तव्ये द्युभ्वाद्यायतनमित्युक्तम्। एवं च सर्वाधारत्वप्रसिद्धेः परमेश्वरसाधारण्येऽप्यर्चिरादिमार्गपर्वभूतदेवतान्तरव्यवच्छेदहेतुत्वेनोपादानान्न पूर्वपक्षहेतुत्वासम्भवदोषशङ्कावकाशः। यद्वा। अर्चिरादिमार्गपर्वभूतदेवतान्तरव्यवच्छेदहेतुत्वेन भाष्ये सर्वाधारत्वप्रसिद्धिर्नोपन्यस्ता। 'अमृतस्यैष सेतु'रित्यनेनैव परमेश्वरपरिग्रहशङ्काया इव तत्परिग्रहशङ्काया अपि व्यवच्छेदसिद्धेः। तेन हि सेतुवत्साक्षात्प्रापकत्वं लक्ष्यते। सम्भवदन्तरङ्गसाद्दश्यत्यागायोगात्। तद्यद्यप्यर्चिरादिमार्गप्रविष्टादित्याधस्तनपर्वभावेन वायोर्न सम्भवति। तथापि 'तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयती'ति श्रुत्युक्तामानवपुरुषभावेन सम्भवत्येव। अमानवपुरुषो हि वायोरेव रूपविशेषः। बृहदारण्यके 'क्व पारिक्षिता अभव' न्निति विद्यासहिताश्वमेधानुष्ठातॄणां प्राप्यलोकप्रश्ने ब्रह्माण्डाद्बहिरेतेषां प्राप्यलोकमभिप्रेत्य तद्गमनार्थं 'तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाश' इति ब्रह्माण्डच्छिद्रमुक्त्वा 'तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत् तान्वायुरात्मनि धृत्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशंसे'ऽति तेन ब्रह्माण्डच्छिद्रमार्गेण ब्रह्माण्डाभिमानिना प्रजापतिनाश्वमेधिकचित्याग्निरूपसुपर्णतां प्राप्तेन समर्पितानां तेषां वायुरेव साक्षाद्ब्रह्माण्डाद्बहिस्स्थितं परमाकाशरूपं लोकं प्रापयितेत्युक्तत्वात्। एवं च साक्षात्परमेश्वरप्रापकत्ववर्णनेनैव देवतान्तरपरिग्रहशङ्काया अपि व्यवच्छेदसिद्धेः सर्वाधारत्वप्रसिद्धिवर्णनं द्युभ्वाद्याधारत्वश्रवणस्य केवलं वायावुपपादनार्थमेव। एवमुपक्रमोपसंहारैकमत्येन परमेश्वरस्य प्रापको वायुर्मन्त्रप्रतिपाद्य इति स्थिते 'तमेवैकं जानथे'त्येतत्परमेश्वरोपासनासु गत्यनुस्मरणसिद्धये साक्षात्परमेश्वरप्रापको वायुरेक एवानुसन्धातव्यः न तु ततोऽधस्तनाः आतिवाहिका इत्येवंपरं योज्यम्। इतरव्यवच्छेदस्य सजातीयविषयत्वस्वारस्यात्। अत एव गृहमेधीयेष्टौ श्रूयमाणस्या'ज्यभागौ यजती'ति वाक्यस्य दार्शपूर्णमासिकाङ्गेषु सर्वेष्वप्यतिदेशतः प्राप्तेष्वाज्यभागयोरपि प्राप्तत्वेन तद्विधायकत्वायोगात् आज्यभागव्यतिरिक्ताङ्गजातपरिसङ्ख्यारूपत्वमिति गृहमेधीयाधिकरणोक्तपञ्चमपक्षरीत्या तस्यां श्रुतस्य 'अग्नये स्विष्टकृते समवद्यती' त्यस्यापि सङ्ख्यारूपत्वमङ्गीकृत्य कृत्वाचिन्तारूपेण प्रवृत्ते तद्व्यवहितानन्तराधिकरणे आज्यभागवाक्यस्य आज्यभागसजातीययागान्तरप्रतिषेधकत्ववत्स्विष्टकृद्वाक्यस्य स्विष्टकृत्सजातीयद्रव्यप्रतिपत्तिरूपप्राशित्रादिप्रतिषेधकत्वमुक्तम्। आत्मशब्दस्तु वायुदेवतायाश्चेतनत्वादुपपन्नः। मुक्तोपसृप्यव्यपदेशादिकं तु द्युभ्वाद्याधारप्रापणीयामृतशब्दोक्तपरमेश्वरविषयत्वकल्पनादुपपन्नमेवेति पूर्वपक्षाभिप्रायः। द्युभ्वाद्याधारः परमेश्वरः। आत्मशब्दात्। आत्मशब्दो हि रूढ्या चेतनमभिदधानो

**परमेश्वर एव द्युभ्वाद्यायतनं, तमेवैकं जानथ आत्मानम्' इत्यात्मशब्दात् ॥**
**सूत्रात्मनो वायोरप्यात्मशब्दवाच्यत्वे को दोष इत्यत आह—**

**॥ सू ॥ मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥**

**'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।' (मुण्ड. ३.२) 'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम् ।' ( मुण्ड. ३.२.२ ) इति पुण्यापुण्यप्रवृत्तनामरूपविनिर्मुक्तानां मुक्तानां प्राप्यतया व्यपदेशाच्चायं परमेश्वर एव ।**

---

योगेन व्याप्तिमप्याह।'आप्लृ व्याप्तौ' वितिधातोर्मनिन्प्रत्यये बाहुलके दकारे च सति तन्निष्पत्तेः। एवं च 'यं आत्मनि तिष्ठ'न्नित्यादिप्रयोगात् तस्य रूढ्या जीवसाधारण्येऽपि योगरूढ्युभयानुग्रहलाभात् परमेश्वरे तस्य स्वारस्यमिति ततस्स एव द्युभ्वाद्याधार इति युक्तमित्यभिप्रेत्य सिद्धान्तयति—परमेश्वर एवेति। सूत्रे योगरूढिभ्यामात्मशब्दस्य परमेश्वरासाधारण्यद्योतनार्थस्तत्र स्वशब्दादिति स्वशब्दप्रयोगः। स्वस्य परमेश्वरस्यासाधारणशब्दादित्यर्थः। 'नन्वमृतस्यैष सेतु' रित्यतः परमेश्वरान्यत्वप्रतीत्यनुसारेण रूढिमात्रं परिगृह्य आत्मशब्दः सूत्रात्मनि वायौ नेतुं युक्तः । 'अत सातत्यगमन' इति धातोर्मनिन्प्रत्यये दीर्घे च सति योगोऽपि वा तत्र सम्भवतीति शङ्कोत्तरत्वेनोत्तरसूत्रमवतारयति—सूत्रात्मन इति ॥ सू ॥ मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥ यदा पश्य इति । नन्वस्मिन्मन्त्रद्वये मुक्तप्राप्यत्वव्यपदेशो मा भूत् द्युभ्वाद्याधारविषयः किं त्वमृतविषयोऽस्त्विति चेदुच्यते । तस्यामृतविषयत्वेऽपि तत्प्राप्तिर्विद्वत्पदोपात्तज्ञानफलत्वेन विवक्षितेति तावदभ्युपगन्तव्यम्।'लक्षणहेत्वोः क्रियाया' इति (पा० ३–२–१४) सूत्रतस्तत्र शत्रादेशस्य वसोर्हेत्वर्थत्वात्।तथा च तत्र मन्त्रद्वये ज्ञानस्य परमेश्वरप्रापयितृत्वप्रतिपादनादिहापि तदेव प्रतिपाद्यमित्युन्नीयते । अत्र प्रतिपाद्य एव ज्ञानस्य परमेश्वरप्रापकत्वे तस्य पुण्यपापविधूननामरूपविमोक्षपूर्वकत्वरूपविशेषसमर्पकत्वेनैकविषयत्वे सम्भवति तत्र ज्ञानस्य प्रापकत्वमुच्यते इह ज्ञानविषयस्येति वरूप्यकल्पनायोगात् । 'अरा इव रथनाभा' वित्यस्मिन्नेतदनन्तरमन्त्रे 'ओमित्येव ध्यायथात्मानं स्वस्ति वः पाराय तमसः परस्ता'दिति ध्यानरूपज्ञानस्यैव तत्प्रापकत्वस्य वर्ण्यमानत्वाच्च । सम्भवति चा'मृतस्यैष सेतु'रित्यत्रैष इत्यस्य प्रकृतज्ञानविषयपरामर्शित्वमिव प्रकृतज्ञानपरामर्शित्वमपि। 'श्येनेनाभिचरन्यजेत यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावः अपोऽश्नाति तन्नेवाशितं नेवानशित' मित्यादिषु सर्वनाम्नामाख्यातोपात्तक्रियापरामर्शित्वस्यापि दर्शनात् । तथा च'अमृतस्यैष सेतु' रित्यत्र द्युभ्वाद्याधारस्यामृतशब्दोक्तपरमेश्वरान्यत्वप्रतीत्यसिद्धेरन्योपासनयान्यप्राप्त्युक्तेरनाञ्जस्येन प्राप्योपास्ययोरमृतद्युभ्वाद्याधारयोरैक्यावसायनान्मुक्तोपसृप्यव्यपदेशादरमृतविषयत्ववादेऽपि द्युभ्वाद्याधारविषयत्वमेव पर्यवस्यतीति भावः। प्राप्यतया व्यपदेशाच्चेति । उक्तरीत्यैतन्मन्त्रप्रतिपाद्यप्राप्योपास्ययोरैक्यावगमे सत्यत्रत्यान्मुक्तप्राप्यत्वव्यपदेशात्'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' 'शिव एको ध्येयः शिवंकरस्सर्वमन्यत्परित्यज्ये'तिश्रुत्यन्त-

**कथमेतद्वायोः संभवति ? परमेश्वरात्मक एव वायुः सूत्रात्मा, पारमेश्वरीष्वष्टासु मूर्तिष्वेकत्वात् । ततो न वायुरिति निर्णयः ।**

---

रप्रसिद्धसर्वेतरज्ञेयान्तरविमोकपूर्वकज्ञेयत्वव्यपदेशात् 'नानुध्यायाद्बहून् शब्दान्वाचो विग्लपनं हि त'दितिश्रुत्यन्तरप्रसिद्धवागन्तरविमोकपूर्वकज्ञेयत्वव्यपदेशाच्चायं द्युभ्वाद्याधारः परमेश्वरोऽवसीयत इति हेतुत्रयमस्यैव सूत्रस्यार्थान्तरभूतं चकारेण समुच्चीयते । द्युभ्वाद्याधारत्वमपि वायोर्न सम्भवतीत्याह—**कथमिति** । अयमिति पदाद्विशेषणत्वेन प्रतीतं द्युभ्वाद्याधारत्वमेतत्पदेन परामृश्यते । ननु 'वायुर्वै गौतम तत्सूत्र'मित्यादिश्रुत्यन्तरे वायोस्तत्प्रसिद्धमित्यत आह—**परमेश्वरात्मक इति**।ततश्च पारमेश्वरमेव द्युभ्वाद्याधारत्वं तन्मूर्तिभूते वायौ व्यपदिष्टं तत्रेति भावः ।अत एव तलवकारिणामुपनिषदि परमेश्वरबलायत्तेन दैत्यविजयेन दृप्तान्देवान्दर्पापनोदेनानुग्रहीतुं तेषां दृष्टिगोचरे यक्षरूपेण प्रादुर्भूते परमेश्वरे क एष इति जिज्ञासया देवैस्तत्समीपं प्रेषितो वायुः कस्त्वं तव किं बलमिति तेन पृष्टो वायुरहं मम त्रैलोक्यमपि चालयितुं बलमस्तीत्युक्त्वा तेनेदं चालयेति पुरस्तान्निहितं तृणं स्वीयेन सर्वेणापि प्रयत्नेन चालयितुं न शशाकेति श्रूयते 'ब्रह्म ह देवेभ्यो विजिग्य' इत्यादिखण्डे । तस्माद्द्युभ्वाद्याधारो न वायुरित्युपसंहरति—**तत इति** । स्यादेतत् । माभूदयं वायुः । प्रधानं तु स्यात् । तथाहि—'यस्मिन्द्यौ'रित्यादिमन्त्रे द्युभ्वाद्याधारत्वस्यानुवादेनापेक्षिता प्राप्तिरानुमानिकी ग्राह्या । न तु श्रुत्यन्तरलब्धा ।आनुमानिकी हि प्राप्तिश्श्रौतप्राप्तेश्शीघ्रतरा । अनुमानस्य प्रत्यक्षमात्रापेक्षा श्रुतेर्व्युत्पत्तिग्रहादावुभयापेक्षेत्यनुमानतः श्रुतेः श्रुतितः श्रौतलिङ्गस्येव विलम्बितप्रवृत्तिकत्वात् । ततश्च सर्वोपादानतया द्युभ्वाद्यायतनत्वेनानुमानगम्यं प्रधानमेव'यस्मिन्द्यौ' रित्यादिनानूद्यत इति मन्त्रोपक्रमस्य तावत्प्रधान एव स्वारस्यमवगम्यते। तथौपसंहारिकस्य सेतुशब्दस्यापि । स हि 'षिञ्बन्धन' इति धातोर्व्युत्पन्नो बन्धनहेतुमाचष्टे । न च बन्धनहेतुमात्रं जलबन्धनहेतुमात्रं वा तदर्थः । घटोदरनिस्सरज्जलबन्धनहेतुमधूच्छिष्टादेरपि तदर्थत्वप्रसङ्गात्। किंतु पारावारमध्यवर्तित्वविशेषितो जलबन्धनहेतुस्तदर्थ इत्यभ्युपगन्तव्यम् । तस्मादिह लक्षकेण सेतुशब्देन पारवत्त्वमेव लक्षयितुमुचितम् । सहजत्वाच्छब्दार्थैकदेशत्वाच्च।न तु प्रापकत्वम् । कादाचित्कत्वात् शब्दार्थबहिर्भूतत्वाच्च । पारवत्त्वं तु प्रधानस्यैवास्ति न ब्रह्मणः । ननु पारवत्त्वलक्षणायाममृतस्य सेतुरिति कथमन्वेति । न खल्वमृतस्य सेतुरित्यन्वयोऽभ्युपगम्यते किं त्वमृतस्यैष इति ।तावन्मात्रेण 'तस्येदम्' (पा०४. ३—१२०)इति सूत्रेणैव षष्ठ्यन्तपदवाच्यसम्बन्धित्वमुच्यते। सेतुशब्देन त्वमृतपदानन्वितेनैव पारवत्त्वं लक्ष्यत इति ।एवं चोपक्रमोपसंहारानुसारेण प्रतर्दनाधिकरणनयान्मध्यपातिन्यात्मश्रुतिः 'अन्या वाचो विमुञ्चथे'त्युक्तिश्च नेतव्या । कथम् । आत्मशब्दो देहपरः । 'आत्मा जीवे धृतौ देह'इत्यभिधानकोशदर्शनात् । एवं च द्युभ्वाद्यायतनं प्रधानमेकमेव युष्माकं देहं जानीध्वं स्थूलशरीररूपदेहान्तरविषया देहत्ववाचो विमुञ्चथेति । एतदुक्तं भवति । देहविविक्तात्मज्ञानार्थं देहो मुमुक्षुभिर्ज्ञातव्यः । देहस्तु न स्थूलो विवक्षितः । आगमापायिनस्ततो विवेकस्य सुज्ञानत्वात् । किं त्वव्याकृतदेहः सूक्ष्मो विवक्षितः । यदनुबन्धादनादिरयं संसारः प्रवर्तत इति । तस्मात्प्रधानं द्युभ्वाद्याधार इति युक्तम् । जीवो वा स्यात् । मनःप्राणसम्बन्धश्रवणात् । न च, जीवस्य मनःप्राणैरुपकरणो-

## ॥ सू ॥ नानुमानमतच्छब्दात् प्राणभृच्च ॥ ३ ॥

**अनुमानगम्यं प्रधानमेव द्युभ्वाद्यायतनं, तस्य सर्वोपादानत्वात् इति न वाच्यम्; अतच्छब्दादात्मशब्दात् ।**[1]

---

प्रकरणिभावसम्बन्ध एव प्रसिद्धो नाश्रयाश्रयिभावः । इह त्वाश्रयाश्रयिभाव एव प्रतीयते। द्युपृथिव्यन्तरिक्षैराश्रयाश्रयिभाववाचकेनैवोतशब्देनोपात्तत्वात् ओतशब्दस्वारस्याच्चेति वाच्यम्। जीवोपकरणानां तेषां जीवादृष्टायत्तोत्पत्तिस्थितिकत्वेन तदाश्रितत्वव्यपदेशोपपत्तेः। 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश । प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मे'ति मुण्डक एवाग्रे मनसः प्राणानां चाणुत्वलिङ्गोपस्थापितजीवाश्रयत्वप्रतिपादनाच्च।अत एव जीवः प्राणभृदिति व्यवह्रियते । एवं च जीवे द्युपृथिव्याद्यायतनत्वव्यपदेशोऽपि युज्यते । दिवादीनां तददृष्टायत्तत्वात् । 'यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पित'मिति भूमविद्यायां तस्य सर्वाधारत्वप्रसिद्धेश्चेति शङ्काद्वयनिराकरणार्थं सूत्रम्—सू ॥ नानुमानमतच्छब्दात् प्राणभृच्च ॥ ३ ॥[2] प्रधानविषये शङ्कां दर्शयति—अनुमानगम्यमिति।परिहारांशं व्याचष्टे—अतच्छब्दादात्मशब्दादिति । आत्मशब्दो हि न स्वरूपेण प्रधानं वक्ति । नापि शरीरत्वेन । शक्तिग्राहकाभावात् । न चाभिधानकोशश्शक्तिग्राहकः । चेतनवाचिन आत्मशब्दस्य तत्तादात्म्याभिमानविषये शरीरे लक्षणया प्रयोगोपपत्तौ तादृक्प्रयोगदर्शनमूलानामद्यतनाभिधानकोशानां न्यायविरुद्धशक्तिकल्पनायामसामर्थ्यात् । एवं 'तमेवैकं जानथ अन्या वाचो विमुञ्चथे'ति श्रवणमपि श्रुत्यन्तरप्रत्यभिज्ञाद्यनुसारेण परमेश्वरविषयत्वादतच्छब्दः। प्रधानपरत्वकल्पनायां 'तमेवैकं जानथे'त्यादिक'मपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वा' इतिवदर्थवादमात्रं स्यात्। प्रसिद्धशरीरेष्वशरीरत्ववादस्य गवाश्वव्यतिरिक्तपशुष्वपशुत्ववादस्येव बाधितत्वात् । परमेश्वरपरत्वे तु भूतार्थवादो भवति ।तदुपासनस्यात्यन्तचित्तैकाग्र्यसाध्यत्वेन विषयान्तरत्यागस्यापेक्षितत्वात् । अथर्वशिखायां तदुपासने ब्रह्मादिसकलदेवतान्तरत्यागस्य विहितत्वात् । एवं 'यस्मिन्द्यौ'रित्यादिरप्यतच्छब्द एव । यत्तु द्युभ्वाद्यायतनत्वं प्रत्यक्षमात्रापेक्षानुमानप्रापितमेवानुवदितुं युक्तं न तु प्रत्यक्षानुमानसापेक्षशब्दप्रापितमित्युक्तं तदयुक्तम्। शब्दानां व्युत्पत्तिवेलायामर्थग्राहिमानान्तरापेक्षत्वेऽपि तत्प्रतिपादनवेलायां तदपेक्षत्वाभावेन विलम्बासिद्धेः । अन्यथा 'गामानये'त्यादिवाक्यानामसन्निकृष्टार्थविषयाणां प्रत्यक्षसाचिव्याभावेन गवानयनादिप्रतिपादकत्वाभावप्रसङ्गात् प्रधानस्यापि 'क्षरं प्रधानममृताक्षरं हर'इत्यादिश्रुतिगम्यत्वेनानुमानगम्यत्वाभावाच्च । साङ्ख्यानुमानस्य तर्कपादे दूषयिष्यमाणत्वात् । न च वाच्यं श्रुतिप्रापितद्युभ्वाद्याधारत्वं प्रधानेऽप्यस्ति' अक्षरब्राह्मणे 'यदूर्ध्वं गार्गि दिवो यदतः पृथिव्या'इत्यारभ्या-'काश एव तदोतं च प्रोतं चे'ति श्रवणादिति। 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतना' इत्यादिश्रुतिप्राप्तनिरपेक्षाधारानुवादकत्वे सम्भवति सापेक्षाधारानुवादकत्वकल्पनायोगात्। एव'ममृतस्यैष सेतु' रित्यप्यतच्छब्द एव।तत्र'एष' इत्यस्य 'तदा विद्वा'नित्याद्यनुसारेण

---

( १ ) 'अतच्छब्दात् तद्वाचकशब्दाभावात् ' इति पाठान्तरम् ।

( २ ) शांकरमाध्वभाष्यरीत्या तु, 'नानुमानमतच्छब्दात्' इत्यन्तमेकं सूत्रम् । ' प्राणभृच्च ' इति सूत्रान्तरमिति बोध्यम् ॥

न प्राणभृज्जीवश्च, अनुपपत्तेरिति ॥

॥ सू ॥ भेदव्यपदेशात् ॥ ४ ॥

अत्रेश्वरस्य जीवाद्भेदो व्यपदिश्यते—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।'

---

प्रकृतज्ञानपरामर्शितायास्समर्थितत्वात् सेतुपदे च तदनुसारेणैव च प्रापकत्वलक्षणाया वक्तव्यत्वात् । अत्राधिकरणे बहिरङ्गाप्येकवाक्यत्वयोग्यशब्दान्तरानुसारिण्येव लक्षणा ग्राह्येति व्यवस्थापितत्वात् । भाष्ये 'आत्मशब्दा'दित्यनेनैते सर्वेऽ'प्यतच्छब्दा' दिति सौत्रपदस्यार्थत्वेनोपलक्षिताः । जीवपक्षं दूषयति—न प्राणभृदिति । अनुपपत्तेरिति । अणौ जीवे मुख्यस्य द्युभ्वाद्याधारत्वस्येतरपरित्यागेन ज्ञेयत्वस्येतरपरित्यागेन तज्ज्ञानादमृतप्राप्तेर्द्युभ्वाद्याधारत्वोपयोगितया व्याप्त्यर्थस्यात्मशब्दस्य चानुपपत्तेरित्यर्थः ।अनेनैते जीवपक्षेऽप्यतच्छब्दा इत्युक्तं भवति । 'अतच्छब्दात्' इत्यब्भक्षवदवधारणगर्भः समासः । तथा च तद्व्यतिरिक्तस्यैव प्रतिपादकात्तस्मिन्ननुपपन्नाच्छब्दादिति तस्यार्थ इत्यभिप्रेत्य तल्लब्धार्थो 'ह्यनुपपत्ते'रित्यनेन दर्शितः । स्यादेतत् ।'एषोऽणुरात्मे'त्यग्रिममन्त्रप्रदर्शितजीवविषयमनःप्राणाधारत्वप्रत्यभिज्ञानाद्द्युभ्वाद्याधारो जीवः प्रतीयते ।न च तत्रात्मशब्दानुपपत्तिः।'प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवे'दिति पूर्वमन्त्रे तत्रैवात्मशब्दस्य प्रयुक्ततयात्रापि तस्य तादर्थ्यस्यैव युक्तत्वात् । न च तज्ज्ञानादमृतत्वप्राप्त्यनुपपत्तिः शङ्क्या । 'मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाती'त्यग्रिममन्त्रे तद्विज्ञानस्य ब्रह्मदर्शनहेतुत्वोक्त्या तद्द्वारा तत्प्राप्तिहेतुत्वोपपत्तेः । 'धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं संदधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विध्ये'दिति व्यवहितपूर्वमन्त्रे च देहस्थौल्यादिविशिष्टतया भासमानस्य जीवस्योपासनया देहादिविवेकदार्ढ्यापादनेन तनूकरणोक्तेश्च। एवं च तस्येतरपरित्यागेन ज्ञेयत्वोक्तिरपि तत्रोपपन्ना । ध्यानरूपाया उपासनाया विजातीयप्रत्ययतिरस्कारगर्भत्वात् । एवं पूर्वापरमन्त्रगतशब्दार्थप्रत्यभिज्ञानबलाज्जीवो मन्त्रप्रतिपाद्य इति निश्चिते तत्रैव द्युभ्वाद्याधारत्वमपि नेतव्यम् । न चानेकमन्त्रपरामर्शसापेक्षशब्दार्थप्रत्यभिज्ञानुसारेणोपक्रमगतसप्तमीश्रुतिप्राप्तं लिङ्गमन्यथा नेतुमयुक्तमिति शङ्क्यम् । सत्यसङ्कल्पे मुक्तजीवे स्वसङ्कल्पवशेन मुख्यस्यापि द्युभ्वाद्याधारत्वस्योपपत्तेरित्याशङ्कानिराकरणार्थं सूत्रम्—सू ॥ भेदव्यपदेशात् ॥ ४ ॥ ननु 'समाने वृक्ष' इति मन्त्रस्यायमर्थः । समान एकस्मिन्वृक्षे वृक्षवद्वृश्चनार्हस्वभावे शरीरे निमग्नः पांसुपुञ्जनिमग्नो जलकण इव तदविवेकमापन्नोऽत एव तद्गतदोषानात्मीयत्वेनाभिमन्यमानः पुरुषो जीवः अनीशया अनैश्वर्येण तद्दोषनिराकरणाशक्त्या शोचति । यदा जुष्टं भक्त्या सेवितं स्वस्मादन्यं परमेश्वरं पश्यति तदा वीतशोकस्सन्नस्य परमेश्वरस्य महिमानं सत्यसङ्कल्पत्वाद्यैश्वर्यरूपम्[1]। इति एति । इण्गताविति धातोर्लटि गुणाभावः।संज्ञापूर्वकविधेरनित्यत्वात् । 'अनीशयेत्यत्र' भावार्थे 'गुरोश्च हल' (पा० ३. २. १०३ सू.)इत्यकारप्रत्ययान्त ईशाशब्दः।अत्र यथा जीवाद्भेदेन परमेश्वरो निर्दिष्टः

---

( १ ) 'रूपत्वात्' इति च पाठः ।

( मुण्ड. ३.१. ) इति । अतः स्वतः परमेश्वर एव द्युभ्वाद्याधारः ॥

## ॥ सू ॥ प्रकरणात् ॥ ५ ॥

एवं तद्गतभेदप्रतियोगित्वेन जीवोऽपि निर्दिष्ट एव । एवमुभयोर्निर्दिष्टत्वाविशेषे परमेश्वर एव द्युभ्वाद्याधार इत्यत्र किं विनिगमकं 'तमेवैकं जानथ' 'जुष्टं यदा पश्यती'त्युभयत्रापि ज्ञेयतया निर्दिष्टत्वं विनिगमकमिति चेन्न । 'शरं ह्युपासानिशितं सन्दधीत' 'तद्विज्ञानेन परिपश्यन्ति धीराः' 'एषोऽणुरात्मा चेतसा वेदितव्य' इति पूर्वापरमन्त्रेषु जीवस्यापि ज्ञेयतया निर्देशदर्शनादित्याशङ्क्याह—स्वतःपरमेश्वर इति । अयमाशयः । 'समाने वृक्ष' इति मन्त्रे ईशशब्देन प्रकरणोपपदादिसङ्कोचकरहितेन स्वतस्सिद्धनिरतिशयैश्वर्यशाली परमेश्वरो निर्दिष्टः । जीवस्तु तत्प्रसादाधेयसत्यसङ्कल्पत्वादितदैश्वर्यैकदेशशाली । एवंरूपाद्भेदव्यपदेशात् परमेश्वर एव द्युभ्वाद्याधार इति युक्तम् । अनादिसिद्धपरमैश्वर्यस्यैवानादिसिद्धद्युभ्वाद्याधारत्वोपाधिकत्वादिति । ननु 'यस्मिन्द्यौ'रित्येतन्मन्त्रसमनन्तराम्नाते 'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमान' इति मन्त्रे प्रकृतं द्युभ्वाद्याधारमात्मानं 'स एष' इति परामृश्य तस्य हृदयान्तस्सञ्चरणमुच्यते । तथा हि—अरनाभिन्यायेन यत्र नाडीनां संहतत्वं श्रुत्यन्तरप्रसिद्धं तद्यत्रेत्यनूद्यते । प्रसिद्धं तु श्रुत्यन्तरेषु 'हृता नाम हृदयस्य नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्त' इत्यादिषु हृदय एव तत् । अतो यच्छब्दापेक्षिततच्छब्दाध्याहारेण तस्य हृदयस्यान्तस्सञ्चरतीति लभ्यते । परब्रह्मणः शिवस्य लीलामङ्गलविग्रहेण कैलासादिषु प्रसिद्धोऽपि सञ्चारो हृदये न प्रसिद्धः । किं त्वन्तर्यामितया तत्रावस्थानमात्रं प्रसिद्धं 'य आत्मनि तिष्ठन्नि'त्यादिश्रुतिषु।अत एव सूत्रकारोऽपि 'स्थानादिव्यपदेशाच्च' ( ब्र० १.२.१४.सू ) 'अवस्थितेरिति काशकृत्स्न'( ब्र० १.४.२२.सू.) इत्यन्तर्यामितया तत्रावस्थानमात्रमेव व्यवहरति न तु सञ्चारम् । तस्मादशक्यसङ्घटनं ब्रह्मणि हृदयान्तस्सञ्चरणं जीवे त्वणौ तत्सुघटम्।तथैव बहुधा जायमानत्वमपि। यद्यप्यैच्छिकविग्रहपरिग्रहेण तदुपाधिकं जायमानत्वं ब्रह्मण्यपि कथञ्चित्सम्पादयितुं शक्यं तथापि 'बहुधा जायमान' इत्यत्र 'लक्षणहेत्वोः क्रियाया'( पा० ३.२१.२७. सू.)इति प्रथमासमानाधिकरणशानज्विधायकसूत्रानुसारेण यो जायते सोऽन्तस्सञ्चरतीत्यन्तस्सञ्चरणक्रियालक्षणत्वेनोपन्यस्तं जननं प्रसिद्धतरं जीवगतमेव ग्राह्यम् । प्रसिद्धतरस्यैव लक्षणत्वात् । तस्मादनन्तरमन्त्रश्रुतहृदयान्तस्सञ्चरणबहुधाजायमानत्वलिङ्गबलेन पूर्वापरसन्दर्भसन्निधापितजीवविषयमन्त्रान्तरगतशब्दार्थप्रत्यभिज्ञानभूयस्त्वबलेन च मन्त्रोपक्रमगतश्रुतिसमर्पितमप्येकं द्युभ्वाद्याधारत्वलिङ्गं बाध्यमिति तदौपचारिकं नेतव्यमित्याशङ्कानिराकरणार्थं सूत्रम्—सू. ॥ प्रकरणात् ॥ ५ ॥ प्रकरणमिदं मुण्डकोपनिषदि 'कस्मिन्नु भगवो विज्ञात' इत्युपक्रममारभ्यासमाप्ति बहुतरश्रुतिलिङ्गादिनियमितं भूतयोनेरक्षरस्य परब्रह्मणः। तदेत 'दद्दश्यत्वादिगुणक' ( ब्र० १. २. २१. सू ) इत्यधिकरण एव व्यवस्थापितम् । तथा च प्राकरणिकपूर्वापरमन्त्रगतानि ब्रह्मविषयाणि बहूनि श्रुतिलिङ्गानि समनन्तरमन्त्रगतलिङ्गद्वयापेक्षया बलवन्ति । ते च लिङ्गे हृदयेषु योगिदृश्यसूक्ष्मरूपव'त्यजायमानो बहुधा विजायत' इति श्रुत्यन्तरप्रसिद्धैच्छिकविग्रहपरिग्रहरूपबहुविधजननवति परब्रह्मणि परमशिवेऽप्युपपद्येते । प्राकरणिकशब्दा-

**‘अथ परा यया तदक्षरमधिगम्यते ( मुण्ड. १. १. ) इति परस्य खल्विदं प्रकरणम् । अतश्च परमेश्वरः ॥**

र्थप्रत्यभिज्ञाश्च सन्निहितशब्दार्थप्रत्यभिज्ञातो बलीयस्यस्सन्ति च । प्राकरणिकेषु ‘यस्सर्वज्ञस्सर्वविद्यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः । ‘नायमात्मा प्रवचनेन लभ्यः’ ‘यस्मिन्लोका निहिता लोकिनश्च । तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । न वेदैतत्परं ब्रह्म धाम यत्रैवं निहितं भाति शुभ्र’मित्यादिमन्त्रेषु प्रकरणिनि ब्रह्मण्यप्यात्मशब्दो लोकाद्याश्रयत्वप्रतिपादनं च । अतः प्रकारणानुसार्येवास्य मन्त्रस्यार्थो ग्राह्य इत्यभिप्रेत्य व्याचष्टे—अथ परेति । ननु यद्यस्मिन्नधिकरणे भूतयोन्यधिकरणप्रसिद्धमक्षरप्रकरणमविचलमास्ते कथं तदन्तर्गते मन्त्रे वाय्वादिपरत्वपूर्वपक्षोत्थानं वायुलिङ्गादिकं ब्रह्मप्रकरणाद्बलीय इति । अस्ति खल्वस्मिन्नेव ब्रह्मप्रकरणे श्रुतिलिङ्गादिनियमितान्यविषयस्तत्र तत्र मन्त्रः । यथा ‘काली कराली च मनोजवा चे’ति मन्त्रो होमकालानुसन्धेयाग्निजिह्वाविषयः । यथा वा ‘एषोऽणुरात्मा चेतसा वेदितव्यः’ इत्यादिर्जीवविषयः । एवं ‘यस्मिन्द्यौरि’ति मन्त्रोऽयं ब्रह्मप्रकरणगतोऽपि वायुलिङ्गादिबलादन्यविषयः स्यादिति । ननु तर्हि ‘काली कराली’ त्यादिमन्त्रान्तरवदयमपि कश्चन मन्त्रोऽन्यविषयोऽस्तु । तावता ब्रह्मप्रकरणस्य किं हीयते । यदर्थोऽस्य ब्रह्मविषयत्वप्रसाधनप्रयासः । न चास्य मन्त्रस्य ब्रह्मपरत्वप्रसाधनेनाक्षरविद्यायामेतन्मन्त्रप्रतिपाद्यः कश्चिदपूर्व उपास्यगुणविशेषादिर्लभ्यते । अक्षरे जगदाश्रयत्वगुणस्य इतरपरित्यागस्य च प्राकरणिकै ‘र्यस्मिँल्लोका निहिताः’ ‘तदेवाक्षरं सोम्य विद्धि’इत्यादिमन्त्रान्तरैर्लभ्यत्वात् । ‘अन्या वाचो विमुञ्चथे’त्यस्य ‘तमेवैकं जानथे’त्येवकारप्रतिपाद्यविषयान्तरपरित्यागार्थलभ्यतद्विषयशास्त्रालोचनपरित्यागानुवादकत्वे तत्र विद्यायां कस्य चिदतिशयस्यालाभात् । न च सिद्धान्ते प्रधानस्यानभ्युपगमात् प्रधानपूर्वपक्षनिराकरणार्थमधिकरणं स्यादिति वाच्यम् । ब्रह्मप्रकरणगतस्य मन्त्रस्य प्रधानपरत्वेऽपि तत्परतन्त्रप्रधानस्यैव सिद्धिरिति सिद्धान्तानभिमतस्वतन्त्रप्रधानसिद्ध्यप्रसङ्गात् परतन्त्रप्रधानस्येहा ‘क्षरात्परतः पर’इत्यत्राक्षरपदेनेव श्वेताश्वतरतैत्तिरीयोपनिषदोरजामन्त्रेणेव च ‘यस्मिन्द्यौ’ रिति मन्त्रेणापि प्रतिपादने विरोधाभावादिति चेत् उच्यते । वायुपूर्वपक्षे ‘तमेवैकं जानथे’ त्यनेनाक्षरविद्याङ्गभूतायां गत्यनुस्मृतावातिवाहिकदेवतासु वायुरेक एव स्मर्तव्यो नार्चिरादय इति लभ्यते । सिद्धान्ते तु विद्यान्तरवदर्चिरादयोऽपि स्मर्तव्या इत्यस्ति फलभेदः । प्रधानजीवपूर्वपक्षौ तु दृष्टान्तार्थौ यथा ह्यतच्छन्दाद्द्युभ्वाद्याधारो न प्रधानं न वा जीव एवं न वायुरपीति । यत्र क्वचिद्विषयवाक्यान्तरे ब्रह्मपरत्वनिर्णयोपयोगिनो न्यायविशेषस्य व्युत्पादनार्थौ वा प्रधानजीवपूर्वपक्षौ । ननु ब्रह्मप्रकरणा ‘द्यस्मिन्द्यौ’रिति मन्त्रप्रतिपाद्यं ब्रह्मैव न तु जीव इत्ययुक्तम् । ब्रह्मण एव जीवरूपत्वात् । मुण्डकस्यापि ‘कस्मिन्नु खलु विज्ञाते सर्वमिदं विज्ञातं भवती’त्युपक्रमेण ‘ब्रह्म वेद ब्रह्मैव भवती’-त्युपसंहारेण च ब्रह्मजीवाभेदे तात्पर्यावसायात् । ‘समाने वृक्ष’ इति मन्त्रे तयोर्भेदव्यपदेशस्त्वसिद्धः । अन्यदीयस्य महिम्नोऽन्येन कथमपि प्राप्तुमशक्यतया ‘अस्य महिमानमिति’इत्यस्याज्ञानतिरोहितब्रह्मभावाविर्भावपरत्व एव साङ्गत्यात् । तत्र ‘जुष्टं यदा पश्यत्यन्यमीश’ मित्यस्य पूर्वार्धे देहात्मभ्रमेण शोकवत्तयोक्तं स्वात्मानं यदा देहादन्यमीशं ब्रह्माभिन्नं च पश्यतीत्येवमर्थ-

## ॥ सू ॥ स्थित्यदनाभ्यां च ॥ ६ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ।' इति जीवस्य कर्मफलादनमुक्त्वा अनश्नत एव दीप्यमानस्याभिधानाच्च । तस्मादर्थान्तरभूतः परमेश्वर एव द्युभ्वाद्यायतनमिति निर्णयः ।

---

परत्वोपपत्तेरित्याशङ्कानिराकरणार्थं सूत्रम्—सू ॥ स्थित्यदनाभ्यां च ॥६॥ 'भेदव्यपदेशा' दिति व्यवहितं सूत्रमिहानुवर्तते । ततश्चायं सूत्रार्थः । 'द्वा सुपर्णे'ति मन्त्रे 'तयोरन्य'इ'त्यनश्नन्नन्य' इति च जीवब्रह्मणोरेव परस्परभेदो व्यपदिश्यते । स चात्त्यनश्नन्नभिचाकशीतीत्यत्तृत्वानशनस्थितिरूपपरस्परविरुद्धधर्माभ्यामुपपादनपूर्वकमेव व्यपदिश्यते । तस्मादुपपत्तिरूपतात्पर्यलिङ्गोपबृंहितभेदव्यपदेशात् संसारिणोऽर्थान्तरभूत एव परमेश्वरः प्रकरणप्रतिपाद्य इति तत्प्रकरणात् स एव द्युभ्वाद्याधार इति युक्तमित्येवं सूत्रार्थमभिप्रेत्य व्याचष्टे—द्वा सुपर्णेत्यादिना । सर्वविज्ञानप्रतिज्ञानं विशिष्टशिवाद्वैतरूपे सविशेषाद्वैत एवोपपन्नम् । 'ब्रह्म वेद ब्रह्मैव भवती' त्येतत् ब्रह्मसदृशो भवतीत्येतदर्थकमिति भाष्य एव तत्रतत्रोपपादितम् । 'अस्य महिमानमिती'त्येतदपि सोपपत्तिकभेदव्यपदेशानुसारेण सदृशमहिमावाप्तिपरं द्रष्टव्यम् ।'यदा पश्यः पश्यत' इत्यनन्तरमन्त्रे तत्साम्यापत्तेः कथ्यमानत्वात्तदनुसारेण 'एषोऽणुरात्मे' त्यग्रिममन्त्रे 'तस्मिन्विशुद्धे विभवत्येष आत्मे'त्यस्य विभुवदाचाररूपतत्साम्यप्राप्तेर्विवक्षितत्वाच्च। अधिकरणार्थमुपसंहरति—इति निर्णय इति । अत्र यद्यपि प्राग्ब्रह्मपरतया निर्णीते मुण्डके स्पष्टान्येव ब्रह्मलिङ्गानि । तथापि द्युभ्वाद्याधारो वायुः प्रधानं जीवो वा तेन तज्ज्ञानेन वा प्राप्ये ब्रह्मण्यमृतशब्दोदिते प्राकरणिकसर्वधर्मान्वय इति पूर्वपक्षकरणादस्पष्टब्रह्मलिङ्गता । इहा'मृतस्यैष सेतु'रित्यत्र केनचित्प्रकारेण सेतुशब्दावलम्बेन पूर्वपक्षे निरस्तेऽपि 'परमतस्सेतून्मानसम्बन्धे'( ब्र० ३. २. ३०. सू. ) त्यधिकरणे प्रकारान्तरेण तदवलम्बनः पूर्वपक्षः करिष्यत इति न पौनरुक्त्यम् ॥    ॥ इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

---

### नयमणिमालायाम्

### अथ द्युभ्वाद्यधिकरणम् ॥ १ ॥

सू० । द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥ नानुमानमतच्छब्दात् प्राणभृच्च ॥ ३ ॥ भेदव्यपदेशात् ॥ ४ ॥ प्रकरणात् ॥ ५ ॥ स्थित्यदनाभ्यां च ॥ ६ ॥

द्युपृथिव्याद्यायतनं युक्तं वायुरिति तल्लिङ्गात् । सर्वाधारत्वगुणः श्रुतो हि सूत्रात्मनस्तस्य ॥ ५१ ॥

आत्मश्रुतेर्विमुक्तप्राप्यत्वश्रवणतश्च शिव एव । अत एव न प्रधानं जीवो वा तद्भिदापदेशाच्च ॥ ५२ ॥

इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ प्रथमस्याध्यायस्य तृतीयः पादः ।

### अथ द्युभ्वाद्यधिकरणम् ॥ १ ॥

॥ सू० ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ नानुमानमतच्छब्दात् ॥ ३ ॥ प्राणभृच्च ॥ ४ ॥ भेदव्यपदेशात् ॥ ५ ॥ प्रकरणात् ॥ ६ ॥ स्थित्यदनाभ्यां च ॥ ७ ॥

**भगवत्पादमते,** द्वितीयपादे अस्पष्टब्रह्मलिङ्गानां वाक्यानां प्रायश उपास्यत्वेन ब्रह्मणि समन्वयं प्रतिपाद्य अधुना तादृशानामेव वाक्यानां ज्ञेयत्वेन ब्रह्मणि समन्वयं प्रतिपादयितुं तृतीयपादोऽयमारभ्यते—अस्य 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' इति मुण्डकवाक्यं विषयः। अत्र द्युभ्वादीनामोतत्वेन किंचिदायतनं प्रतीयते । तत्किं प्रधानमुत वायुरुत जीव आहोस्विद्ब्रह्मेति संशयः । 'अमृतस्यैष सेतु' रिति षष्ठ्या भेदनिर्देशात् सेतुत्वश्रवणात् जलविधारकमुख्यसेतोर्ग्रहणासंभवाद्गौणसेतौ ग्राह्ये मुख्यसेत्वविनाभूतपारवत्वगुणवत एव ग्राह्यत्वात् कारणस्य प्रधानस्यायतनत्वोपपत्तेश्च स्मृतिप्रसिद्धं प्रधानं वा, 'वायुर्वै गौतम तत्सूत्र'मित्यादिना वायोरपि विधारणत्वश्रवणात् वायुर्वा भोक्तुर्जीवस्य भोग्यप्रपञ्चायतनत्वोपपत्तेर्जीवो वा द्युभ्वाद्यायनं भवितुमर्हति न ब्रह्म इति पूर्वः पक्षः । 'तमेवैकं जानथ आत्मान'मित्यात्मशब्दश्रवणात् विधारणत्वमात्रस्य सेतुश्रुत्या विवक्षितत्वात् मुक्तप्राप्यत्वव्यपदेशात् प्रधानादिप्रतिपादकशब्दाभावाच्च 'सिनोति बध्नाति'इति व्युत्पत्त्या सेतुशब्दस्य विधारकत्वस्यैवार्थस्य लाभात् 'तमेवैकं जानथ आत्मानम्' 'अन्या वाचो विमुञ्चथ'इति विहितयोरात्मज्ञानवाग्विमोचनयोरेवामृतत्वसाधनत्वात्सेतुश्रुत्या संकीर्तनमित्यङ्गीकाराद्वा द्युभ्वाद्यायतनं ब्रह्मैवेति सिद्धान्तः ॥ सूत्रार्थस्तु द्यौश्च भूश्च द्युभ्वौ । द्युभ्वावादी यस्य तत् **द्युभ्वादि** । द्यौःपृथिव्यन्तरिक्षमित्येवमात्मकमित्यर्थः । **तस्य आयतनम्**=अधिष्ठानं ब्रह्मैव । कुतः । **स्वशब्दात्**=स्वस्य परब्रह्मणो वाचको य आत्मशब्दः 'तमेवैकं जानथ आत्मान'मिति श्रुतस्तस्मादित्यर्थः ।

द्युभ्वाद्यायतनं ब्रह्मेत्यत्र हेत्वन्तरमाह—सू० ॥ **मुक्तोपसृप्यव्यपदेशात्** ॥ २ ॥ मुक्तैरुपसृप्यं मुक्तोपसृप्यम् । भावप्रधानोऽयं निर्देशः । 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य'मिति ब्रह्मणोऽविद्यातत्कार्यसकलानर्थोच्छेदद्वारा मुक्तप्राप्यत्वस्य व्यपदिश्यमानत्वादतो द्युभ्वाद्यायतनं ब्रह्मैवेत्यर्थः ॥

सिद्धान्तमभिधाय प्रधानपक्षं निषेधति–सू० ॥ **नानुमानमतच्छब्दात्** ॥ ३ ॥ अनुमीयत **इत्यनुमानं**=सांख्यपरिकल्पितं प्रधानं **न** द्युभ्वाद्यायतनम् । कस्मात् । **अतच्छब्दात्**=तस्याचेतनस्य प्रधानस्य प्रतिपादकः शब्दः । न तच्छब्दः अतच्छब्दः । तस्मात् प्रधानप्रतिपादकशब्दस्येहाश्रवणात् प्रत्युत तद्विपरीतचेतनप्रतिपादकस्य 'यस्सर्वज्ञस्सर्ववि'दित्यादेश्शब्दस्य श्रवणादित्यर्थः ॥

ननु तर्हि शारीरोऽस्तु द्युभ्वाद्यायतनं तस्य चेतनत्वादियोगादित्याशंक्याह—सू० ॥ **प्राणभृच्च** ॥ ४ ॥ प्राणभृत्= शारीरोऽपि न द्युभ्वाद्यायतनम् । कुतः । **अतच्छब्दादेव**=शारीरस्य सर्वज्ञत्वासंभवात्तत्साधारण आत्मशब्दोऽतच्छब्द एव ॥ शारीरनिरासे हेत्वन्तरमाह त्रिभिः सूत्रैः—सू० ॥ **भेदव्यपदेशात्** ॥ ५ ॥ तमेवैकं जानथे'ति ज्ञातृज्ञेयभावेन जीवपरयोर्भेदेन व्यपदिश्यमानत्वादित्यर्थः । सू० ॥ **प्रकरणात्** ॥ ६ ॥ 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात'मित्युपक्रमात् ब्रह्मण एवेदं प्रकरणम् । न हि शारीरज्ञानात्सर्वविज्ञानं भवति । तस्मात् प्रकरणादपि न शारीर इत्यर्थः ॥

॥ सू० ॥ **स्थित्यदनाभ्यां च** ॥ ७ ॥ 'द्वा सुपर्णे'तिमन्त्रे 'अनश्नन्नन्यो अभिचाकशीति'इत्यौदासीन्येन स्थितिः परमात्मनो निर्दिश्यते । 'तयोरन्यः पिप्पलं स्वाद्वत्ती'त्यदनं शारीरस्य । अतः स्थित्यदनाभ्यां न शारीरो द्युभ्वाद्यायतनम् । अपि तु परं ब्रह्मैवेति सिद्धम् ॥

**श्रीकण्ठमते,** अस्मिन्पादे स्पष्टास्पष्टब्रह्मलिङ्गानां वाक्यानां विचारः प्रासङ्गिकमधिकारिनिरूपणं च क्रियते ॥ सू० ॥ **द्युभ्वाद्यायतनं स्वशब्दात्** ॥ १ ॥ विषयवाक्यपूर्वपक्षादिकं प्रायः पूर्ववत् । द्युभ्वाद्याधारः परमेश्वरो वा अन्यो वेति संशये 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ती'ति श्रुतौ तस्य सर्वाधारत्वस्य श्रूयमाणतया वायुरेव द्युभ्वाद्याधार इति पूर्वपक्षः; । सिद्धान्तस्तु 'तमेवैकं जानथ आत्मान'मित्यात्मशब्दश्रवणात् मुक्तानां प्राप्यतया व्यपदेशाच्चायं परमेश्वर एवेति ॥ सूत्रार्थस्तु **द्युभ्वाद्यायतनं** परमेश्वर एव । कुतः । **स्वशब्दात्**= स्वस्य परमेश्वरस्यासाधारणशब्दात् । तस्य रूढ्या जीवसाधारण्येऽपि योगरूढ्युभयानुग्रहलाभात्परमेश्वरे तस्य स्वारस्यमित्याशयः॥

सूत्रात्मनो वायोरपि आत्मशब्दवाच्यत्वे को दोष इत्यत आह—सू० ॥ **मुक्तोपसृप्यव्यपदेशाच्च** ॥ २ ॥ 'यदा पश्य'इत्यादौ पुण्यपापप्राकृतनामरूपविनिर्मुक्तमुक्तप्राप्यत्वव्यपदेशस्य श्रूयमाणतया एतादृशस्य द्युभ्वाद्याधारत्वस्य वायावसंभवात् सूत्रात्मनस्तस्य अष्टासु मूर्तिष्वेकतमत्वेन परमेश्वरात्मकत्वाच्च न वायुरिति निर्णयः । पारमेश्वरमेव द्युभ्वद्याधारत्वं तन्मूर्तिभूते वायौ व्यपदिष्टं तत्रेति भावः ॥

'यस्मिन्द्यौ'रिति मन्त्रोपक्रमौपसंहारिकसेतुशब्दानुसारेण द्युभ्वाद्याधारत्वस्य सर्वोपादाने प्रधाने प्रतीयमानतया अनुमानगम्यं प्रधानं द्युभ्वाद्याधारः स्यात् मनःप्राणसंबन्धश्रवणात् दिवादीनां जीवादृष्टायत्तत्वेन द्युपृथिव्याद्यायतनत्वव्यपदेशस्यापि तत्रोपपत्तेर्जीवो वा स्यादिति शङ्काद्वयं निराकरोति—**सू० ॥ नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥** शाङ्करमाध्वभाष्ययोस्तु 'अतच्छब्दा'दित्यन्तमेकं सूत्रम् । 'प्राणभृच्च'इति सूत्रान्तरमिति विशेषः । अनुमानगम्यं प्रधानं न द्युभ्वाद्यायतनं भवितुमर्हति । कुतः । अतत्प्रतिपादकानामात्मशब्दादीनां श्रवणादित्यर्थः । तथा अणौ जीवे मुख्यस्य द्युभ्वाद्याधारत्वस्येतरपरित्यागेन ज्ञेयत्वस्य इतरपरित्यागेन तज्ज्ञानादमृतप्राप्तेर्द्युभ्वाद्याधारत्वोपयोगितया व्याप्त्यर्थस्यात्मशब्दस्य चानुपपत्तेर्न जीवोऽपि द्युभ्वाद्यायतनं भवति इत्यर्थः । 'अतच्छब्दा'दित्यब्भक्षवदवधारणगर्भः समासः । तथा च तद्व्यतिरिक्तस्यैव प्रतिपादकात्तस्मिन्ननुपपन्नाच्छब्दादिति तस्यार्थ इत्यभिप्रेत्य तल्लब्धार्थो हि अनुपपत्तेरित्यनेन श्रीकण्ठाचार्यैर्दर्शितः । अनेनैते जीवपक्षेऽप्यतच्छब्दार्था इति दर्शितं भवति ॥

पूर्वापरमन्त्रगतशब्दार्थप्रत्यभिज्ञानबलाज्जीवस्य मन्त्रप्रतिपाद्यत्वप्रतीत्या जीव एव द्युभ्वाद्याधारोऽस्तु इत्याशंक्य परिहरति—**सू० ॥ भेदव्यपदेशात् ॥ ४ ॥** 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥'इति मन्त्रे प्रकरणोपपादिसंकोचकरहितेन ईशशब्देन स्वतस्सिद्धनिरतिशयैश्वर्यशालिनः परमेश्वरस्य तत्प्रसादाधेयसत्यसंकल्पत्वादितदैश्वर्यैकदेशशालिनो जीवस्य च भेदव्यपदेशात्परमेश्वर एव द्युभ्वाद्याधार इत्यर्थः ॥ प्रकरणादपि परमेश्वर एव द्युभ्वाद्याधार इत्याह—**सू० ॥ प्रकरणात् ॥ ५ ॥** 'अथ परा यया तदक्षरमधिगम्यत'इति परस्य खल्विदं प्रकरणम् । अतश्च परमेश्वर एव द्युभ्वाद्याधारः ॥ ननु ब्रह्मप्रकरणात् 'यस्मिन्द्यौ'रितिमन्त्रप्रतिपाद्यं ब्रह्मैव न तु जीव इत्ययुक्तं ब्रह्मण एव जीवरूपत्वादित्याशंक्याह—**सू० ॥ स्थित्यदनाभ्यां च ॥ ६ ॥** 'भेदव्यपदेशा' दिति व्यवहितं सूत्रमिहानुवर्तते। ततश्चायं सूत्रार्थः । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥' इति मन्त्रे 'तयोरन्य' इति 'अनश्नन्नन्य' इति च जीवब्रह्मणोरेव परस्परभेदः 'अत्ति अनश्नन्नभिचाकशीति' इत्यत्तृत्वानशनस्थितिरूपपरस्परविरुद्धधर्माभ्यामुपपादनपूर्वकमेव व्यपदिश्यते । तस्मादुपपत्तिरूपतात्पर्यलिङ्गोपबृंहितभेदव्यपदेशात् संसारिणोऽर्थान्तरभूत एव परमेश्वरः प्रकरणप्रतिपाद्य इति तत्प्रकरणात्स एव द्युभ्वाद्याधार इति भावः ॥

**रामानुजमते, सू० ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥** विषयवाक्यं पूर्ववत् । अत्र द्युभ्वादीनामायतनं किं जीवः उत परमात्मेति संशयः । मनःप्रभृतीन्द्रियाधारत्वश्रुतेः उत्तरत्र नाडीसंबन्धाज्जायमानत्वश्रुतेश्च जीव इति पूर्वः पक्षः । निरुपाधिकात्मत्वामृतसेतुत्वयोः परमात्मधर्मयोः श्रवणात् 'सन्ततं सिराभिस्तुलं पल्या कोशसन्निभम्' 'अजायमानो बहुधा विजायते' इत्यादिषु परमात्मनोऽपि नाडीसंबन्धबहुधाजायमानत्वादेः श्रूयमाणत्वाच्च परमात्मैव द्युभ्वाद्याधार इति सिद्धान्तः ।

**सू० ॥ मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥** 'तदा विद्वान्पुण्यपापे विधूय' इत्यादिषु 'पुण्यपापे विधूय' नामरूपाद्विमुक्त' इति च बन्धान्मुक्तस्य प्राप्यतया व्यपदेशाच्चायं परमात्मा ॥

**॥ सू० ॥ नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥ आनुमानम्**=अनुमानगम्यं प्रधानम् । यथा **अतच्छब्दात्** तद्वाचिशब्दाभावात् तदिह **न** गृह्यते तथा **प्राणभृद**पीत्यर्थः । अतश्चायं परमात्मा ॥

**सू० ॥ भेदव्यपदेशाच्च ॥ ४ ॥ प्रकरणात् ॥ ५ ॥ स्थित्यदनाभ्यां च ॥ ६ ॥** एषां सूत्राणामार्थवर्णनप्रक्रिया श्रीकण्ठमतवदेवेति न पुनः प्रपञ्च्यते ॥

**आनन्दतीर्थमते, सू० ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥** विषयवाक्यं समानमेव । अत्रोक्तं द्युभ्वाद्यायतनं 'रुद्रो वा प्रधानं वा वायुर्वा जीवो वा विष्णुर्वे'ति संशयः । 'रुद्रो वाव लोकाधारः' 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः' 'प्राणेश्वरः कृत्तिवासाः पिनाकी' 'मनो वै रुद्र ओतं च प्रोतं चे'ति श्रुत्यन्तरेषु द्युभ्वाद्यायतनत्वमनःप्राणाधारत्वादीनां श्रूयमाणत्वात् रुद्रो वा,'यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते''आकाश एव तदोतं च प्रोतं चे'ति श्रुत्यन्तरसमाख्यानात्प्रधानं वा 'अरा इव रथनाभौ संहता यत्र नाड्यः''स एषोऽन्तश्चरते बहुधा जायमान'इति जायमानत्वलिङ्गाज्जीवो वा,'वायुर्वाव'इत्यादिषु वाय्वादिसमाख्यानाद्वायुर्वा स्यात् । जायमानत्वलिङ्गस्य कथमपि विष्णावसंभवेन तत्सहिताया वाय्वादिसमाख्याया जीवपक्षस्य च बलवत्त्वेन 'रुद्रः कृत्तिवासाः पिनाकी 'इति बहुरुद्रलिङ्गसत्त्वेन तेषां विष्णौ पर्यवसानासंभवेन च न विष्णुरिति पूर्वपक्षः । सिद्धान्तस्तु' 'तमेवैकं जानथ आत्मान'मित्यात्मशब्दात् 'अमृतस्यैष सेतु' रिति मुक्तप्राप्तत्वव्यपदेशात् रुद्रादीनां प्रापकशब्दाभावात् 'सोऽन्तकस्य रुद्रस्य प्राणभृत्स्य प्राणनायकस्य ईशो यो हरिः।'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः । पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात् । तदाधारो यतो विष्णुः पिनाकीति ततः श्रुतिः । कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन् । कृत्तिवासास्ततो देवो विरिंचिश्च विरोचनात् ।' इत्यादिश्रुतिस्मृतिदर्शनेन रुद्रादिसमाख्यानां विष्णौ सावकाशत्वात् 'अजायमानो बहुधा विजायते' इत्यादिश्रुत्या 'किं तु निर्दोषचैतन्यसुखानित्यं स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चान्यथा ।' इति स्मृत्या च विष्णोः प्रादुर्भावलक्षणाया घटजीवादिविलक्षणाया जनेः सिद्धत्वाच्च द्युभ्वाद्यायतनं विष्णुरेवेति । सूत्रार्थस्तु **द्युभ्वाद्यायतनं** विष्णुरेव । कुतः । **स्वशब्दात्**=स्वशब्दगृहीतब्रह्मवाचकात्मशब्दादित्यर्थः ।

## अथ भूमाधिकरणम्. ॥ २ ॥

मुक्तप्राप्यतयेह प्रतिपादितस्य परमेश्वरस्य प्राप्तिप्रयोजनं निरतिशयसुखं दर्शयति—

॥ सू० ॥ भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥

छान्दोग्ये 'भूमैव सुखम्' इत्युक्त्वा भूम्नः स्वरूपमाह 'यत्र नान्यत् पश्यति

सङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति—मुक्तेति । द्युभ्वाद्याधारस्य परमेश्वरत्वे मुक्तोपसृप्यत्वं हेतुतयोक्तं तदनुपपन्नम् । न खलु मुक्तानां परमेश्वरोपसर्पणं प्रजानां राजोपसर्पणमिव विषयभोगलिप्सया सम्भवति । सकलविषयभोगविरक्तानामेव मुक्तावधिकाराङ्गीकारादित्याशङ्क्य स्वतस्तस्य निरतिशयानन्दरूपतयैव मुक्तप्राप्यत्वमिति तदुपपादयितुमुत्तराधिकरणमारभ्यत इत्यर्थः। अनेनाक्षेपिकी पूर्वाधिकरणसङ्गतिर्दर्शिता भवति॥ सू० ॥ भूमा सम्प्रसादादध्युपदेशात् ॥ ७ ॥ छन्दोगोपनिषदि श्रुतं भूमलक्षणं विषयत्वेनोदाहरन् मुक्तोपसृप्यत्वनिर्वहणोपयोगितया करिष्यमाणतदर्थविवरणोपयोगितया च निरतिशयानन्दस्य तल्लक्षणमिति भूमशब्दो धर्मिपर इति च ज्ञापयितुमाह—भूमैव सुखमित्युक्त्वेति। भूमशब्दो हि वहुत्ववाची बहुशब्दादिमनिचि ' बहोर्लोप ' इति ( पा०–६–४–१५८ ) सूत्रेण प्रकृतिप्रत्ययविकारे च सति तन्निष्पत्तेः ' प्रशंसा भूमलिङ्गसमवायात् ' ' अध्यात्मसम्बन्धभूमा ह्यस्मिन् ' ( ब्र० १–३–७–सू० ) 'सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते ' इत्यादिप्रयोगाच्च । बहुत्वं चात्र वैपुल्यं न सङ्ख्याविशेषः । बहुशब्दस्य ' बहुषु बहुवचन ' ( पा० १–४–२१ सू० ) मित्यादौ सङ्ख्यायामिव 'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः' इत्यादौ वैपुल्येऽपि प्रयोगदर्शनादिह चा 'थ यदल्पं तन्मर्त्य' मिति बहुत्वसङ्ख्यायुक्तस्याप्यल्पस्य भूमप्रतियोगित्वेनोपादानात् पूर्वत्र नामादिभ्योऽधिकसङ्ख्याहीनेषु वागादिषु 'वाग्वाव नाम्नो भूयसी' 'आकाशो वाव तेजसो भूया' नित्यादौ बहुशब्दनिष्पन्नभूयश्शब्दप्रयोगदर्शनाच्च । वैपुल्यं चात्र गुणोत्कर्षरूपं न परिमाणविशेषरूपम् । पूर्वत्र वाङ्मनस्सङ्कल्पचित्तध्यानविज्ञानबलादिषूत्तरोत्तरगुणोत्कर्षाभिप्रायेणैव भूयश्शब्दप्रयोगदर्शनात् सुखशब्दसामानाधिकरण्याच्च । उत्कर्षापकर्षरूपं हि सुखतारतम्यं प्रसिद्धं न परिमाणविशेषरूपम्। वैपुल्याश्रयधर्मिपर्यन्तश्चायं भूमशब्दः न वैपुल्यमात्रपरः । 'अथ यदल्पं तन्मर्त्य' मिति तत्प्रतियोगिनोऽल्पशब्देन निर्देशात् उत्त-

---

सू० ॥ मुक्तोपसृप्यव्यपदेशात् ॥२॥ द्युभ्वाद्यायतनं न विष्णोरन्यः । किंतु विष्णुरेव । कुतः। मुक्तोपसृप्यव्यपदेशात्=भावप्रधानोऽयम् । द्युभ्वाद्यायतनस्य वस्तुनो'ऽमृतस्यैष सेतु'रिति मुक्तप्राप्यत्ववचनात्तस्य चान्यत्रायोगादित्यर्थः ॥

सू० ॥ नानुमानमतच्छब्दात् ॥ ३ ॥ अनुमानमानुमानमिति वा । अनुमानसिद्धप्रामाण्ययुतपाशुपताद्यागमैः सर्वाश्रयतया कल्पितं रुद्रप्रधानादिकं न द्युभ्वाद्यायतनम् । कुतः । अतच्छब्दात्=भस्मधरोग्रत्वादितच्छ्रुतिलिङ्गाद्यभावादित्यर्थः ॥

सू० ॥ प्राणभृच्च ॥ ४ ॥ जीवोऽप्यत एव न द्युभ्वाद्यायतनमित्यर्थः ॥

सू० ॥ भेदव्यपदेशात् ॥ ५ ॥ 'अन्यमीश'मिति जीवेशयोर्भेदोक्तेः न तयोरैक्यमित्यर्थः ।

सू० ॥ प्रकरणात् ॥ ६ ॥ अन्यमित्यादेर्विष्णुप्रकरणत्वात् । अत्र जीवस्य विष्णुभेद एवोच्यते । न त्वन्यस्माद्भेद इत्यर्थः ।

सू० ॥ स्थित्यदनाभ्यां च ॥ ७ ॥ ईशजीवयो 'र्द्वासुपर्णे' त्यादिवाक्योक्तकर्मफलानुपजीवनस्थितितदुपजीवनरूपहेतुभ्यां न च तयोरैक्यं वाच्यमित्यर्थः ॥

इति सूत्रार्थचन्द्रिकायां द्युभ्वाद्यधिकरणम् ॥ १ ॥

नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा. ७.१) इति। तत्र सन्देहः—भू-

रोत्तरोत्कृष्टधर्मिपरभूयःशब्दप्रायपाठात् 'भूमैव सुखं यो वै भूमा तत्सुखं यो वै भूमा तदमृत' मिति धर्मिपरशब्दसामानाधिकरण्याच्च। यद्यपि भूमशब्दो भावप्रत्ययान्तत्वात् दर्शित-प्रयोगाच्च धर्मवाचकस्तथापि 'स एषोऽणिमैतदात्म्यमिदं सर्वं' 'धातुः प्रसादान्महिमान-मीश' मित्यादिषु अणिममहिमादिशब्दवद्धर्मवाचकेन तेन धर्मी लक्षयितुं युक्तः। एवं च सुखशब्दसामानाधिकरण्यान्निरतिशयानन्दो भूमशब्दार्थः फलितो भवति। एवं स्थिते स जीवः परो वेति संशयं दर्शयति—तत्रेति। जीवप्रकरणानुवृत्त्यननुवृत्तिभ्यां संशयोऽभिमतः। तत्रेयं शङ्का समुन्मिषति। प्राग्जीवस्यात्र प्रकरणमेव नास्ति कस्तदनुवृत्त्यननुवृत्तिविचारावकाशः। 'प्राणो वा आशाया भूया' नित्यारभ्य हि जीवप्रकरणमिहाभिमतम्। तत्परस्यैव प्रकरणम्। तदनन्तरमेव 'यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पित' मित्यरनाभि-दृष्टान्तोपन्यासपूर्वकं सर्वाधारत्ववर्णनेन 'प्राणः प्राणेन याति, प्राणः प्राणं ददाति प्राणाय ददाती'ति गन्तृगतिसाधनदातृदेयसम्प्रदानादिसर्वात्मकत्ववर्णनेन 'प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मण' इति पितृमात्रादिसर्वरूपत्व-वर्णनेन च तत्र प्राणशब्देन पर एव प्रतिपाद्य इत्यवगमादिति। तन्निराकरणाय जीवो वेति पूर्वपक्षकोटावुपन्यसनीयायां तदन्यो वेत्युपन्यस्तम्। परमेश्वरादन्य एव तत्र प्राणश-ब्देनोक्तः। 'स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वास्त्वित्येवैनमाहुः पितृहा वै त्वमसि' इत्यादिना सप्राणेषु पित्रादिषु अधिक्षे-प्यमाणेषु हिंसोपक्रोशवर्णनात्। 'अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषं दहेन्नैवैनं ब्रूयुः पितृहासीति न मातृहासीति' इत्यादिना तेषूत्क्रान्तप्राणेषु शूलेन सम्यक्प्रक्षेप-पूर्वकं व्यत्यस्य समन्ताद्दह्यमानेष्वपि हिंसाव्यवहाराभाववर्णनाच्च। न हि परस्य हिंस्यत्वमस्ति। न वा तस्योत्क्रान्तिरस्ति। यद्यप्युक्तरीत्या परमेश्वरादन्योऽप्ययं पञ्चवृत्तिः प्राण इति प्रति-भाति प्राणशब्दस्वारस्यात्। उत्क्रान्तिप्रतिपादनस्य प्राणस्थितितदस्थितिनिबन्धनहिंसोपक्रो-शतदभावात्मकव्यवहारानुवादस्य च तद्विषयत्वेनाप्युपपत्तेः। तथापि 'प्राणो ह पिते'त्यादिकं जीव एवोपपद्यते। पितृमातृभ्रातृस्वस्राचार्यब्राह्मणशब्दानां शरीरविशेषविशिष्टात्मवाचित्वात्। अतः 'प्राणो ह पिते' त्याद्युक्तिमन्वयव्यतिरेकाभ्यामुपपादयितुं प्रवृत्तं प्राणस्थितितदस्थि-त्योर्हिंसोपक्रोशतदभाववर्णनमपि तद्विषयएव वक्तुं युक्तम्। पितृमात्रादिबहुशब्दानुरोधादेकस्य प्राणशब्दस्य प्राणसहचरिते जीवे लक्षणेत्यपि कल्पयितुं युक्तम्। एवं च जीव एव प्राण इति निश्चिते सर्वाधारत्ववर्णनं भोगोपकरणभोगस्थानरूपस्य सर्वस्य जीवादृष्टायत्तस्थितिकत्वा-भिप्रायं 'प्राणः प्राणेन याती' त्यादिकं गन्तृदातृसम्प्रदानवद्गमनसाधनं देयं चाश्वादिकं जीवरूपमित्यभिप्रायं चोपपादनीयम्। न चोपक्रमगतसर्वाधारत्वाद्यनुरोधेनोत्क्रान्त्यादिक-मेव परमेश्वरविषयमुपपाद्यतामिति वाच्यम्। तथा सत्युत्क्रान्त्याद्युक्त्यनन्तरं 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवती'ति तद्दर्शिनोऽतिवादित्ववर्णनस्या-सामञ्जस्यप्रसङ्गात्। स्वोपास्यस्य वस्तुनोऽतिशयितगुणकत्ववादित्वं ह्यतिवादित्वम्। न चोत्क्रान्त्यादिदोषरहितस्य कथञ्चित्तद्वत्तोत्प्रेक्षणं गुणातिशयप्रतिपादनं भवति। भवति तु

**मशब्दनिर्दिष्टः परमेश्वरस्तदन्यो वेति । परमेश्वरादन्यः प्राण एव भूमा; पूर्वेषु नामादिषु तत्त्वेषु 'अस्ति भगवो नाम्नो भूयः' इत्यादिनारदप्रश्ने सनत्कुमारो 'वाग्वाव नाम्नो भूयसी' इत्यादिना वागादीनि निर्दिश्य प्राणस्योपरि प्रश्नप्रत्युक्तिभ्यां विनैव यतो भूमानमवतारयति न परमेश्वरस्तत्र प्रसक्तः,**

---

स्वत उत्क्रान्तिमतो जीवस्य तत्स्थित्युत्क्रान्त्योः पित्रादिहन्तृत्वतदहन्तृत्वप्रसिद्ध्यनुवादेन तस्यैव पित्रादिरूपतया पूजार्हत्वं न तु शरीरमात्रस्येत्युपपादनं तद्गुणातिशयप्रतिपादनम् । औपचारिकत्वेनापि सर्वाधारत्वप्रतिपादनमपि तथैव । न चोत्क्रान्त्यादिवत्तद्दर्शिनोऽतिवादित्वमप्यौपसंहारिकं गौणं नीयतामिति वाच्यम् । 'तं चेद्ब्रूयुरतिवाद्यसीति अतिवाद्यसीति ब्रूयान्नापह्नुवीते' ति तस्य मुख्यत्वव्यवस्थापनात् । 'एष तु वा अतिवदती'त्यादिना तस्याभ्यस्यमानत्वाच्चेत्याशयः । एवं च परमेश्वरस्तदन्यो वेत्यस्यायमर्थः । य उत्क्रान्त्यादिभिः परमेश्वरादन्यत्वेनावगतः 'प्राणो वा आशाया भूया'नित्यारभ्य प्रकृतो जीवस्तस्य प्रकरणमनुवर्तत इति स एव 'यो वै भूमा तत्सुख'मित्यादौ निरतिशयानन्दतया प्रतिपाद्य उत तस्य प्रकरण'मेष तु वे'त्यादौ विच्छिन्नमिति तस्मादधिकः परमेश्वरः तथा प्रतिपाद्य इति । उक्तप्रकारेण सतो जीवप्रकरणस्यानुवृत्तिं विशेषणेन सूचयन्पूर्वपक्षयति—परमेश्वरादन्यः प्राण एव भूमेति । स्यादेतत् । यथा नामादिषु प्रकृतेष्वपि ततस्ततोऽधिकतया वागादिप्रतिपादनमेवं प्राणे प्रकृतेऽपि ततोऽधिकतया 'यो वै भूमा तत्सुख' मित्यादौ परमेश्वरप्रतिपादनं भविष्यतीत्याशङ्क्याह—पूर्वेष्विति ।युक्तं नामादिषु प्रकृतेष्वपि वागादिषु तत्तत्प्रकरणविच्छेद इति। तत्रतत्रा'स्ति भगवो नाम्नो भूयः वाग्वाव नाम्नो भूयसी'त्यादिरूपाया प्रश्नोत्तरपरम्पराया दर्शनात् । न चेह 'अस्ति भगवन् प्राणाद्भूयः अदो वाव प्राणाद्भूय ' इति प्रश्नोत्तरे दृश्येते। तथा च सति नारदसनत्कुमारसंवादेऽस्मिन् तत्तदवान्तरप्रकरणविच्छेदकतया दृष्टयोः प्रश्नोत्तरयोरिहादर्शनात् प्राणप्रकरणानुवृत्तिरवसीयत इति भावः। स्यादेतत् । भूमविद्योपक्रमे तावत् 'अधीहि भगव' इति सनत्कुमारमुपसन्नो नारदः सनत्कुमारेण 'यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामी'त्युक्तस्स'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेद'मित्यादिना स्ववेदनं सर्वमुपन्यस्य 'सोऽहं मन्त्रविदेवास्म्यनात्मवि'दिति चोक्त्वा 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पार तारय'त्विति शोकतारिणीमात्मविद्यां प्रार्थयामासेत्युपाख्यायते। परमात्मविद्ययैव शोकतरणं श्रुतिषु प्रसिद्धम्। तदुपसंहारे चा 'त्मैवेदं सर्व' 'मित्युक्त्वा' 'स वा एष एवं पश्य' न्नित्यादिना'स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवती'ति तद्दर्शनेन मोक्षरूपं फलमुक्तम् । तदनन्तरं चा'त्मतः प्राण आत्मत आकाश' इत्यादिना प्राणादीनां प्रकृतादात्मन उत्पत्तिरभिहिता । तत्र प्राणशब्दः 'प्राणो वा आशाया भूया'नित्यारभ्य वर्णितं जीवमेवाचष्टे । प्रागुत्तरोत्तरभूयस्त्वेन प्रदर्शितानां नामादिप्राणान्तानामेवात्र व्युत्क्रमेण सङ्कीर्तनात् । तदनन्तरं च 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार' इति तमःपारस्य परमेश्वरस्यैवोपदिष्टत्वं वर्णितम् । तदेवमुपक्रमोपसंहारानुरोधात् भूमा परमेश्वर एव स्यादित्याशङ्क्याह—न परमेश्वरस्तत्र प्रसक्त इति । यद्यप्यत्र परमेश्वरो महाप्रकरणी । तथापि स तत्र 'प्राणो वा

**अतो भूमा प्राणः। इति प्राप्ते ब्रूमः—परमेश्वर एव भूमशब्दनिर्दिष्टः, संप्रसादादध्युपदेशात्। संप्रसादो जीव उच्यते 'अथ य एष संप्रसादः (छा० २६) इति श्रुतेः।**

आशाया भूया'नित्यारभ्य प्रवृत्ते जीवावान्तरप्रकरणे नामवागाद्यवान्तरप्रकरण इव न प्रसक्तः। न च जीवप्रकरणं 'नापह्नुवीते'त्यत्र समाप्त'मेष तु वा अतिवदति यस्सत्येनातिवदती'त्यारभ्य परमात्मन एवोपक्रान्तस्य महाप्रकरणमिति शङ्कनीयम्। 'अतिवाद्यसीति ब्रूया'दिति प्राणविद्वत्त्वेनोक्तस्यातिवादित्वस्यानुकर्षणेन तत्रापि प्राणप्रकरणानुवृत्त्यवसायात्। 'एष तुवा अग्निहोत्री यस्सत्यं वदती'त्युक्तौ प्रसिद्धाग्निहोत्रिण इव प्रकृतप्राणातिवादिनस्सत्यवदनमङ्ग 'मेष तु वे' त्यादौ विधीयत इति तत्र तत्प्रकरणानुवृत्तिसमर्थनोपपत्तेश्च। तथा सति 'सत्येने'ति तृतीया न स्यादिति चेत्। न। द्वितीयार्थे तृतीयाप्रयोग इति वा सत्यवचनेन सह योऽतिवदतीति विवक्षया सहयुक्तेऽप्रधाने तृतीयाप्रयोग इति वा तदुपपत्तेः। 'यदा वै विजानात्यथ सत्यं वदती'ति पुनर्निर्देशे द्वितीयाप्रयोगदर्शनात्। जीवो भूमेति पक्षे 'स एवाधस्तात्स उपरिष्टा'दित्यादिनोच्यमानं व्यापित्वं न सङ्गच्छत इति चेन्न। निवृत्तावरणानां मुक्त्यवस्थामधिकृत्य हि 'यत्र नान्यत्पश्यती' त्यादिना यस्मिन्निरतिशयानन्देऽनुभूयमाने किमप्यन्यन्नानुभूयत इत्युच्यत इत्युपपादनीयम्। संसारदशायां जीवस्य तदनुभवाभावात्। ततश्च मुक्त्यवस्थायां धर्मज्ञानविकासेन व्यापित्वमस्ति जीवस्य तदेव तस्य व्यापित्व'महमेवाधस्ता'दित्यादिना स्पष्टीक्रियते। अन्यथा प्राक् 'स एवाधस्ता'दित्यादौ तत्पदेन परोक्षतया निर्दिष्टो भूमा जीवो न भवतीति शङ्क्येतेति। प्रत्युत भूमा परमात्मेति पक्ष एवा'हमेवाधस्ता'दित्याद्यन्वयित्वेन' आत्मैवाधस्ता'दित्यादि पुनरुक्तत्वेन च तत्र न सङ्गच्छते। 'अहमेवेदं सर्वमित्येतत्पर्यन्तं जीवस्यावान्तरप्रकरणम् 'अथात आत्मादेश' इत्यारभ्य शोकतरणायोपदेष्टव्यस्य परमात्मनो निरूपणमिति स्वीकारे तु सर्वं सङ्गच्छते। मुक्तिहेतुदर्शनविषयत्वसर्वकारणत्वादेः परमात्मलिङ्गस्यात्मादेशाधिकारानन्तरमेव श्रवणात् भूमाधिकारे तदश्रवणात्। ननु तत्र 'स भगवः कस्मिन्प्रतिष्ठित' इति प्रश्ने 'स्वे महिम्नी'त्युत्तरं श्रूयत इति चेत्। सत्यं श्रूयते। न तु तत्परमात्मलिङ्गम्। किं तु जीवलिङ्गमेव। तदनन्तरं 'यदि वा न महिम्नी'ति भूम्नो वर्णितं स्वमहिमप्रतिष्ठितत्वं प्रतिषिध्य तत्र हेतुत्वेन 'गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानी'ति प्रकृतभूमविषये गवाश्वादीनामेव महिमत्वोक्तेः। भूम्नो जीवत्वे हि राजादिविभूतित्वेन प्रसिद्धानां तेषां तन्महिमत्वोक्तिस्सङ्गच्छते। तस्य परमात्मत्वे 'त्वस्य महिमानमिति वीतशोक' इत्यादौ तन्महिमत्वेन प्रसिद्धानि सत्यसंकल्पत्वादीनि तथोच्येरन्। तस्माद्भूमावान्तरप्रकरणे परमेश्वरस्य कथञ्चिदपि न प्रसक्तिरिति भावः। एवं च भूमा जीव एवेति तस्मिन्निरतिशयानन्दरूपे अनुभूयमाने अन्याननुभवस्य श्रुत्योक्ततया परमेश्वरस्याप्यानन्दवल्ल्युक्तप्रकारेण निरतिशयानन्दरूपत्वेऽपि तस्य मुक्तानुभाव्यत्वायोगान्न तस्य मुक्तगम्यतेति पूर्वाधिकरणाक्षेपेण प्रवृत्तं पूर्वपक्षमुपसंहरन् सिद्धान्तं प्रतिजानीते—**अत इति**। सौत्रं सम्प्रसादशब्दं व्याकुर्वन् प्राणो भूमेति पूर्वपक्षो जीवविषयो न प्राणवायुविषय इति पूर्वपक्षाभिप्रायं व्यक्तीकरोति—**सम्प्रसाद इति**। संप्रसीदत्यस्यामवस्थायां जीव इति सम्प्रसादस्सुषुप्तिः तद्वत्त्वाद्वा मुक्तौ विशुद्धिभाक्त्वाद्वा सम्प्रसादो जीवः 'य एष सम्प्रसाद' इति श्रुतिप्रयो-

**स चात्र प्राणशब्देन निर्दिश्यते; तस्मादूर्ध्वमात्मान्तरत्वेन भूमोपदिश्यते 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्यादिना। अत्र हि पूर्वं 'स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्नतिवादी भवति' इति प्राणातिवादिनोऽतिवादित्वमुक्त्वा तदनन्तरं 'एष तु वै' इति तुशब्देन पूर्वस्मात् प्राणातिवादितः सत्यातिवादिन आधिक्यप्रदर्शनात् पूर्वातिवादनिमित्तात् प्राणात् एतदतिवादनिमित्तस्य सत्यशब्दाभिधेयस्याधिक्यमवसीयते। स एवाग्रे भूमगुणविशिष्टः प्रतिपाद्यते।**

---

गावगतः। 'ऊर्ध्व'मित्यनेन सौत्रोऽधिशब्दोऽधिकपरतया व्याख्यातः। भूमविद्यायामेव हि 'ततस्त ऊर्ध्वं वक्ष्यामी'त्यूर्ध्वशब्दोऽधिके दृष्टः। ननु भूमा परमेश्वर इति साध्ये जीवादधिकत्वेनोपदिष्टत्वादिति हेतु'र्महतः परमव्यक्त'मिति श्रुतौ जीवादधिकत्वेन निर्दिष्टे शरीरे व्यभिचारीत्याशङ्क्य विशेषयति—आत्मान्तरत्वेनेति। आत्मत्वेनेत्येतावदेव विवक्षितम्। प्रतियोगिनो जीवस्याप्यात्मत्वादन्तरशब्दः प्रयुक्तः। तथा च जीवाधिकत्वेनोपदिष्टत्वं हेतुरिति न व्यभिचार इति भावः। निरतिशयसुखवर्णनपरस्य भूमोपदेशस्यात्मविषयत्वं स्पष्टमिति हेतावपेक्षितमपि तद्विशेषणं सूत्रे न कृतम्। जीवादधिकत्वेन भूमा केन वाक्येनोपदिश्यत इत्याकाङ्क्षायामाह—एष इति। 'एष तु वा अतिवदति यस्सत्येनातिवदती'त्यत्र तुशब्दसत्यशब्दाभ्यां प्राणातिवादिनोऽन्यस्सत्यातिवादी प्रतीयते। 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः'इत्यत्र पश्वन्तरेभ्यो गोअश्वानामिव प्रकृतप्राणातिवादिनः सत्यातिवादितः प्राशस्त्यं च प्रतीयते। ततश्च तत एतस्य प्राशस्त्यं तदतिवदननिमित्तात्प्राणादेतदतिवदननिमित्तस्य सत्यस्याप्याधिक्येनैव पर्यवस्यतीत्यनेन वाक्येनार्थाज्जीववाक्याधिकत्वेन भूमोपदिश्यते। नचात्र 'एष तु वा अग्निहोत्री'ति वाक्यन्यायावतारः। तत्र हि द्रव्यदेवतान्तराभावेनाग्निहोत्रान्तराप्रतीतेस्तुशब्दस्वारस्यभङ्गः। इह प्रकृतातिवदननिमित्तप्राणव्यतिरिक्तसत्यशब्दोक्तमहाप्रकरणिपरमात्मरूपातिवादनिमित्तान्तरप्रतीतेः तत्स्वारस्यभङ्गो न युक्तः। तुशब्देन प्राणातिवादिनोऽयमतिवाद्यन्य इत्यवसीयते। सत्यशब्देन च करणविभक्त्यन्तेन परमेश्वरस्तत्र निमित्तमिति प्रतीयते। छान्दोग्य एव 'तस्य ब्रह्मणो नाम सत्य'मिति ब्रह्मनामत्वोक्तेः सत्यशब्दः परमेश्वर एव स्वारसिकः। तृतीयाविभक्तिश्च करणत्वे। अतस्तुशब्दसत्यनामकरणविभक्तिस्वारस्यभङ्गेन न प्रकृतप्राणातिवादिविषयत्वकल्पनावकाशः। न चाग्रे 'यदा वै विजानात्यथ सत्यं वदती'त्यादिदर्शनात् प्राणातिवादिव्रतत्वेन सत्यवचनविधिः प्रतीयत इति शङ्क्यम्। उपक्रमगततुशब्दादिस्वारस्याद्यनुरोधेन 'सत्यं वदती'त्यस्यापि परमात्मातिवदनविषयत्वौचित्यात् सत्यस्यातिवदने निमित्तत्वविवक्षया तृतीयावद्विषयत्वविवक्षया द्वितीयाया अप्युपपत्तेरिति भावः। यस्सत्येनातिवदतीत्यादिनेति। अत्रत्यादिशब्देन 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति यो वै भूमा तदमृतम् अथ यदल्पं तन्मर्त्य' मित्यादिभूमाल्पयोर्वैषम्यप्रदर्शकवाक्यमपि भूम्नो जीवाधिकत्वोपदेशवाक्यत्वेन विवक्षितम्। अत्र ह्यल्पशब्देन जीववर्ग एव विवक्षितः। जडे सुखस्याप्रसक्तेः। जीववर्गे सुखसद्भावेऽपि 'अपशवो वा अन्य'इत्यत्र गवाश्वव्यतिरिक्तेषु प्रशस्तपशुत्वनिषेधवत् प्रकृतोत्कृष्टसुखनिषेधोपपत्तेश्च। अत एवोत्तरत्राप्यल्पशब्दो जीवपरः। ननु भूमैव प्रकरणी परमात्मा न प्राण इति सिद्धान्ते भूम्नस्सर्वतो भूयस्त्वार्थमेव नामादिप्राणान्ताना-

'अथात आत्मादेशः' इत्यात्मत्वेनाप्यग्रे वर्ण्यते। ततः प्राणशब्दनिर्दिष्टाज्जीवादधिक आत्मा भूमा परमेश्वर एव ॥

## ॥ सू० ॥ धर्मोपपत्तेश्च ॥ ८ ॥

'स भगवः कस्मिन् प्रतिष्ठितः? स्वे महिम्नि' इति, 'आत्मैवेदं सर्वं' 'आत्मतः प्राण आत्मत आशा' इत्यादिना स्वमहिमप्रतिष्ठितत्वसर्वात्मत्वसर्वकारणत्वाद्यो धर्मा उपदिश्यन्ते। तेषां परमेश्वर एवोपपत्तिः, न प्राणशब्दोदिते जीवे।

---

मुत्तरोत्तरभूयस्त्वेनानुक्रमणमिति चे[1]न्नैवम्। न तु तद्युज्यते। तथासति प्राणाद्भूमन्यपि भूयस्त्वविषययोः प्रश्नप्रतिवचनयोर्दर्शनापत्तिः। न हि यदर्थमन्यत्प्रक्रान्तं तदनुक्तिर्युक्तेति चेन्नैवम्। पूर्वपर्यायेष्वनुक्तस्यातिवादित्वस्य प्राणपर्याये प्रतिपादनेन प्राणस्य सर्वप्रतिष्ठात्वाद्युपन्यासेन च प्रक्रान्तात्मोपदेशः प्राण एव समाप्त इति मत्वा नारदे भूयः पृच्छति सनत्कुमारः प्राणविज्ञानमप्युपक्रान्तात्मविषयं न भवतीति न तेन सम्यगतिवादित्वं किं तु सत्येन परमात्मनेति सत्यविज्ञानं स्वयमेवोपचिक्षेप। ततः 'सोऽहं भगवः सत्येनातिवदानी'ति पृष्टवते तस्मै विज्ञानमतश्रद्धादिसाधनपरम्परया तमेव सत्यं परमात्मानं भूमानमुपदिदेशेति प्रश्नप्रतिवचनाभावस्यान्यथोपपत्तेः। 'अथात आत्मादेश'इत्यारभ्य प्रकरणिनः परमात्मन उपदेश इति पूर्वपक्षेऽपि प्रश्नप्रतिवचनाभावस्याविशिष्टत्वाच्च। तस्मा 'देष तु वे' त्यारभ्य प्राणशब्दोदितजीवावान्तरप्रकरणानुवृत्तिशङ्कानवकाशात् महाप्रकरणी परमेश्वर एव भूमेत्युपसंहरति—तत इति ॥ सू० ॥ धर्मोपपत्तेश्च ॥८॥ भूम्नः परमेश्वरत्वे 'स्वे महिम्नी'त्यादिकं तत्रानुपपन्नमिति पूर्वपक्षप्रदर्शितशङ्कानिराकरणार्थमिदं सूत्रम्। अत एव भाष्ये स्वरसत एव परमेश्वरे सङ्गटमानं 'यो वै भूमा तदमृत'मित्यादिकं परित्यज्य 'स भगव' इत्यादिकमेव सूत्रविषयत्वेनोदाहृतम्। अत्रायमाशयः। 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नीति यदि वा न महिम्नीति गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित' इति श्रूयते। तत्र 'स भगवः कस्मिन्प्रतिष्ठित'इति प्रश्ने 'स्वे महिम्नी'त्यनेन आत्मीयायां विभूतावित्युत्तरमुक्त्वा'यदि वा न महिम्नी'त्यनेनात्मीयविभूतिप्रतिष्ठितत्वं पुनः प्रतिषिध्य तत्र हेतुत्वेन गवाश्वादिविभूतिषु तत्स्वामिनां चैत्रादीनामवस्थानादर्शनं नोच्यते किं तु स्वात्मन्यानन्दरूपे महिम्नि महति परिच्छेदशून्ये प्रतिष्ठित इत्युक्त्वा यथा लोके गवाश्वादिरूपायामात्मीयविभूतौ चैत्रः प्रतिष्ठित इत्युच्यते तथात्रोक्तमिति नारदस्य भ्रान्तिमपनेतुं तथार्थं गृह्णाति चेत् भूमा स्वमहिमप्रतिष्ठो न भवतीत्युक्त्वा तत्र हेतुत्वेन 'गवाश्वमिहे' त्यादिना भूम्नः परमेश्वरस्य निरतिशयस्वात्मानन्दनित्यतृप्तस्य क्षुद्रवैषयिकानन्दसतृष्णचैत्रादिवत् गवाश्वादिप्रतिष्ठितत्वासम्भव उच्यते। अत एव तदनन्तरं 'नाहमेवं ब्रवीमि ब्रवीमीति होवाचे'ति वाक्येन चैत्रो गवाश्वादिप्रतिष्ठित इतिवदहं न ब्रवीमि किं तु यथा 'स्वयं दासास्तपस्विन' इति स्वस्यैव स्वात्मानं प्रति दासत्वमुपचारेण वदन्ति दासभावज्ञापनाय एवमपरिच्छिन्नानन्दरूपे स्वात्मनि प्रतिष्ठितत्वमुपचारेण ब्रवीमि वस्तुतोऽस्य प्रतिष्ठारूपः आधारो नास्ति इति ज्ञापनायेत्यभिप्रायं सनत्कुमारस्य वचनं प्रदर्श्य मुख्य एवाधाराधेयभावोऽस्त्वित्याशङ्कानिरा-

---

(१) 'वक्तव्यम्' इति. च पाठः।

ततः परमेश्वर एव भूमा नापर इति सिद्धम् । ननु पूर्वत्राधिकरणे 'निरञ्जनः परमं साम्यमुपैति' इति मुक्तानां ब्रह्मसादृश्यमभिहितम् । ततो ब्रह्मणः सायुज्यमुपगता मुक्तात्मानः तत्पृथग्भूता वर्तन्ते इति सिद्धम् । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति भूमशब्दवाच्ये ब्रह्मणि दृष्टे तन्निष्ठभेदप्रतियोगिप्रपञ्चदर्शनादिनिषेधः क्रियते । कथमिह साङ्गत्यमिति चेत्—भूम्नि प्रत्यक्षे 'नान्यत् पश्यति' इत्यादेरयमभिप्रायः—निरतिशयसुखस्वभावे यस्मिन् साक्षात्कृते सुखान्तराभिलाषेण रूपादिविषयदर्शनादौ न प्रवर्तते यन्मग्नः पुरुषः स भूमा ब्रह्मेति । ब्रह्मानन्दलवपरमाणवो हि विषयसुखविशेषाः । तथा हि श्रुतिः—'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति । तस्मादिह ब्रह्मणि न द्वैतनिषेधप्रसक्तिः । प्रपञ्चे सत्येव कथं मुक्तात्मनामपुरुषार्थस्य तस्य दर्शनं परिह्रियत इति न विचार्यम् । न हि मुक्तात्मनां प्राकृतप्रपञ्चो दर्शनविषयः, किं-

---

करणार्थं स्वस्य स्वस्मिन्नेव मुख्य आधाराधेयभावो न सम्भवति तस्य भेदगर्भत्वादित्युच्यते—'अन्यो ह्यन्यस्मिन्प्रतिष्ठित'इति । तर्हि तदन्य एव कश्चिदाधारो मुख्योऽस्त्वित्याशङ्कावारणार्थं सर्वात्मनः सकलचिदचिद्विशिष्टाद्वितीयस्वरूपात्तस्मादन्यदाधारत्वयोग्यं किमपि वस्तु नास्ति इति प्रत्याययितुमुच्यते—'स एवाधस्ता' दित्यादि 'स एवेदं सर्व' मित्यन्तम् । 'अथातोऽहङ्कारादेश एवे'ति नायं जीवोपदेशः । अहङ्कारशब्दस्य जीववाचित्वाभावात् । किं त्वहमिति करणीयस्य बुद्धिपूर्वकं ग्रहणीयस्य तस्यैव भूम्न आदेशः । तथाच । 'अहमेवाधस्ता'दित्यादौ भूम्नि वर्णितस्यैव सार्वात्म्यस्य शास्त्रदृष्ट्या परिपूर्णाहंभावशालिभिर्विगलितदेवमनुष्यादिशरीरपरिच्छिन्नाहंभावैर्विद्वद्भिर्गृह्यमाणेनाहंत्वेन रूपेण 'एतत्साम गायन्नास्त' इत्यादि श्रुताविवोपदेशः । 'अथात आत्मादेश एवे'त्यादि भूम्नि स्वरूपेण विद्वदहंभावेन वोपदिष्टस्यैव सर्वात्मत्वस्य विद्वदन्तर्यामित्वेन रूपेणोपदेशः । अत एवा'त्मैवाधस्ता'दित्याद्युक्त्यनन्तरं 'तस्य ह वा एतस्यैवं पश्यतः एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशा आत्मतः स्मर' इत्यादिना प्रकृतादात्मनः प्राणाद्युत्पत्तिप्रतिपादने प्रकृतस्यात्मनो विद्वांसं प्रत्यात्मत्वं विशिष्योच्यते । एवं त्रेधा तस्य सार्वात्म्योपदेशः त्रिविधोपासनोपयोगी । अतो न कस्याप्यनुपपत्तिरिति सविशेषमुक्तेः प्रामाणिकत्वा'द्यत्र नान्यत्पश्यती'त्याद्ययुक्तमित्याशङ्क्ते—नन्विति । यथा किञ्चिद्विषयसुखमनुभवन्नपि तदधिकविषयान्तरदर्शनाकर्णनध्यानेषु प्रवर्तते नैवं निरतिशयसुखरूपं ब्रह्मानुभवन्निति'यत्र नान्य'दित्यादेरभिप्रायः । अत एव भूम्नो निरतिशयसुखत्वप्रतिपत्त्यर्थं 'यो वै भूमा तत्सुख'मित्युक्त्वा 'नाल्पे सुखमस्ती'त्यल्पे जीववर्गे कीटादिहिरण्यगर्भान्ते सुखं निषिध्यते । 'भूमैव सुख'मित्येवकारेणापि तत्र तन्निषेध एव दृढीक्रियते । न च तत्र सुखमात्रनिषेधः संभवतीति निरतिशयसुखे तत्र निषेध्ये 'यो वै भूमा तत्सुख'मित्यत्र तथाभूतमेव सुखं विधेयं लभ्यत इत्याशयेन परिहरति—भूम्नि प्रत्यक्ष इत्यादिना । ननु 'यत्र नान्य' दित्यादेः सर्वात्मना वस्त्वन्तरदर्शनादिनिषेध एवार्थः प्रतीयते । स कथमुपपद्यते । प्रपञ्चस्य सत्यतया मुक्तिदशायामपि विद्यमानत्वेनाविर्भूतसार्वज्ञ्यादिगुणस्य मुक्तस्य तद्दर्शनानिवारणादिति शङ्कते—प्रपञ्चे सत्येवेति । परिहरति—इति न विचार्यमिति । अयमाशयः । भू-

तु निरतिशयानन्दस्वरूपं ब्रह्मैव प्रपञ्चाकारेण दर्शनगोचरो भवति। तथा हि श्रुतिः—'एतत्ततो भवति, आकाशशरीरं ब्रह्म, सत्यात्म प्राणारामं मनआनन्दम्' इति। तत्र 'आप्नोति स्वाराज्यम्, आप्नोति मनसस्पतिम्' इत्यादिना मुक्तात्मा प्रस्तुतः। तस्य 'वाक्पतिः' इत्यादिना स्वाधीनाप्राकृतविशुद्धवागिन्द्रियादिसंबन्ध उक्तः। तस्य पुनस्तादृशावस्थाप्राप्त्यनन्तरमेतत् दृश्यमानं प्राकृतप्रपञ्चजालमाकाशशरीरं चिदम्बरप्रकाशशरीरं ब्रह्मैव भवतीति तात्पर्यरहस्यार्थः। ततो मुक्तानां ब्रह्मणा सादृश्यं तत्समरसीभूतप्रपञ्चदर्शित्वमिति सर्वं समीचीनम् ॥

## इति भूमाधिकरणम् ॥ २ ॥

म्नो हीदं लक्षणमुच्यते। भूमशब्दोऽयं ब्रह्मशब्दतुल्यन्यायत्वात् तद्वदेव त्रिविधपरिच्छेदान्तर्भूतवस्तुपरिच्छेदराहित्यसिद्धये स्थूलसूक्ष्मसकलचेतनाचेतनप्रपञ्चविशिष्टस्य परमेश्वरस्य वाचकः वृक्षशब्द इव पत्रपुष्पादिविशिष्टस्य स्थावरस्य। तथा च यथा वृक्षं पश्यतः पत्रपुष्पाद्याकारेणापि वृक्ष एव दर्शनगोचरो भवति। अत एव वृक्षं पश्यन्नामूलमाशिखरं सर्वावयवसहितं तं वृक्ष इत्येव पश्यति। एवं ब्रह्मानुभवतः प्रपञ्चाकारेणापि ब्रह्मैवानुभवगोचरो भवति। अतो युक्तं 'यत्र नान्यत्पश्यती'त्यादि। भूम्न्यनुभूयमाने भूमशब्दार्थानन्तर्गतस्य कस्यापि दर्शनाभावात्। उक्तेऽर्थे तैत्तिरीयश्रुतिं प्रमाणयति—तथा हीति। एतत्परिदृश्यमानं प्राकृतप्रपञ्चजातं ततो मुक्त्यवस्थाप्राप्त्यनन्तरमाकाशशरीरत्वादिविशिष्टं ब्रह्मैव भवति। मुक्तं प्रत्युक्तरूपब्रह्मात्मना स्फुरतीत्यर्थः। उदाहृतश्रुतेर्मुक्तविषयत्वं दर्शयितुं पूर्ववाक्यान्युदाहरति—आप्नोतीति। व्याहृतिविद्यायां ब्रह्मविदमधिकृत्येदमुच्यते 'आप्नोति स्वाराज्य'मित्यादि। स्वः स्वर्गसुखरूपे पदे राजत इति स्वाराट् तस्य भावं स्वाराज्यमाप्नोति सुखैकरसं परब्रह्मणः शिवस्य पदमाप्नोतीति यावत्। मनसस्पतिं ज्ञानशक्त्यधिष्ठानभूतं शिवं चाप्नोति। अयं प्रस्तुतो मुक्तात्मा तदा किंविशिष्टो भवतीत्याकाङ्क्षायामुच्यते 'वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपति'रिति। विज्ञानं मनः। एवं प्रस्तुतं मुक्तात्मानं प्र'त्येतत्ततो भवती'त्यादिकमुच्यत इति युक्तम्। इहापि भूमविद्यायां मुक्तः सर्वप्रपञ्चं पश्यन्नपि तत्र किञ्चिदपि दुःखरूपतां न पश्यति किं तु निरस्तसमस्तदुःखसंसर्गब्रह्मरूपतामेव पश्यतीत्युक्तम्। 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वश' इति। तस्मा 'द्यत्र नान्यत्पश्यती'त्यादेर्विरोधाभावान्मुक्तानां ब्रह्मसादृश्यं तदपृथग्भूतप्रपञ्चदर्शित्वं चोपपद्यत इत्युपसंहरति—तत इति ॥ ॥ इति भूमाधिकरणम् ॥ २ ॥

---

नयमणिमालायाम्

## अथ भूमाधिकरणम् ॥ २ ॥

सू०। भूमा सम्प्रसादादध्युपदेशात् ॥ ७ ॥ धर्मोपपत्तेश्च ॥ ८ ॥

भूमा जीवस्तदुपरि नामाद्युपरीव वागादेः। प्रश्नप्रतिवचनाभ्यां विनैव भूम्नोऽवतारणतः ॥ ५३ ॥

एष तु वेति तुशब्दो गमयति पूर्वार्थविच्छेदम्। भूमा ततः शिवस्स्याल्लिङ्गाच्च स्वमहिमस्थितत्वादेः ॥ ५४ ॥

इति भूमाधिकरणम् ॥ २ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ भूमाधिकरणम् ॥ २ ॥

**॥ सू ॥ भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥ धर्मोपपत्तेश्च ॥ ९ ॥**

**भगवत्पादमते,** आत्मशब्दश्रवणात् द्युभ्वाद्यधिकरणं परं ब्रह्मेति पूर्वस्मिन्नधिकरणे राद्धान्तितम्। तन्न। 'तरति शोकमात्मवित्' इत्यत्राब्रह्मणि प्राणेऽप्यात्मशब्दप्रयोगदर्शनादित्याक्षेपसंगत्येदमधिकरणमारभ्यते—**भूमेत्यादि**। अस्याधिकरणस्य 'भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यत्यन्यच्छृणोति अन्यद्विजानाति तदल्पम्'। इत्यादि छान्दोग्यवाक्यं विषयः। अत्र किं प्राणो भूमा उत परमात्मेति संदेहः। भूमशब्दस्य भावप्रत्ययान्तत्वात् किमात्मकं तद्बहुत्वमिति विशेषाकांक्षायां 'प्राणो वा आशाया भूया' निति प्राणसन्निधानात् भूयः प्रश्नप्रतिवचनपरंपरादर्शनात् प्राणव्रतमतिवादित्वमनुवत्यैवापरित्यज्य प्राणं सत्यादिपरंपरया भूम्नोऽवतारणात्तस्यैव भूमत्वप्रतीतेश्च प्राणो भूमेति पूर्वः पक्षः। सिद्धान्तस्तु भूमा परमात्मैव। कुतः। प्राणोपदेशानन्तरं 'एष तु वा अतिवदति यस्सत्येनातिवदतीति' तुशब्देन प्राणवादस्यानतिवादित्वमभिधाय सत्यशब्दवाच्यपरमात्मवादस्यातिवादित्वं ब्रुवता भून्न एवोपदिश्यमानत्वात्'तरति शोकमात्मवित्' इति प्रश्नवाक्ये आत्मोपक्रमेणात्मप्रकरणात् सन्निधितः प्रकरणस्य प्राबल्यात् वैपुल्यात्मकभूमरूपतायास्सर्वकारणे परमात्मनि सुतरामुपपत्तेश्च। सूत्रार्थस्तु **भूमा** परमात्मैव। कुतः। **संप्रसादादधि**=प्राणादधि प्राणोपदेशानन्तरमित्यर्थः। सम्यक्प्रसीदत्यस्मिञ्जीव इति संप्रसादः सुषुप्त्यवस्था। तस्यां प्राणो जागर्तीति संप्रसादशब्देन प्राणोऽभिधीयते। तदनन्तर 'मेष तु वे' **त्याद्युपदेशादित्यर्थः** ॥ परमात्मनो भूमत्वे युक्त्यन्तरमाह—**सू ॥ धर्मोपपत्तेश्च ॥ ९ ॥** 'यत्र नान्यत्पश्यती'त्यादिनोक्तानां सर्वव्यवहाराभावादिधर्माणां परमात्मन्येवोपपत्तेः परमात्मैव भूमेत्यर्थः ॥

**श्रीकण्ठमते,** मुक्तप्राप्यस्य परमेश्वरस्य प्राप्तिप्रयोजनं निरतिशयं सुखं दर्शयति—**सू॥ भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥** 'विषयवाक्यमभिन्नमेव। तत्र भूमशब्दनिर्दिष्टः परमेश्वरो वा तदन्यो वेति संशयः। तत्र नामादिषु तत्त्वेषु वागादीनि निर्दिश्य प्राणस्योपरि प्रश्नप्रत्युक्तिभ्यां विनैव भूम्नोऽवतारणात् भूमा प्राण इति पूर्वः पक्षः। प्राणशब्दनिर्दिष्टात्संप्रसादशब्दवाच्याज्जीवादूर्ध्वं 'मेष तु वे'त्यादिनात्मान्तरत्वेन भूम्न उपदेशात् आधिक्यप्रतिपादना'दथात आत्मादेश'इत्यात्मत्वेनाप्यग्रे तस्य वर्ण्यमानत्वाच प्राणशब्दनिर्दिष्टाज्जीवादधिक आत्मा भूमा परमेश्वर एवेति सिद्धान्तः ॥

**सू ॥ धर्मोपपत्तेश्च ॥ ८ ॥** 'स भगवः कस्मिन्प्रतिष्ठित' इत्यादिनोपदिश्यमानानां स्वमहिमप्रतिष्ठितत्वसर्वात्मत्वसर्वैकारणत्वादीनां धर्माणां परमेश्वर एवोपपत्तेः प्राणशब्दोदिते जीवेऽनुपपत्तेश्च परमेश्वर एव भूमा नापर इति सिद्धम्।

ननु पूर्वत्राधिकरणे 'निरञ्जनः परमं साम्यमुपैति' इति ब्रह्मसादृश्याभिधानात्तत्सायुज्यमुपेयुषां मुक्तानां तत्पृथग्भावेनावस्थितिसिद्धौ अत्र श्रूयमाणस्य 'यत्र नान्यत्पश्यती'त्यादेः प्रपञ्चदर्शनादिनिषेधस्य कथं सांगत्यमिति चेत् उच्यते निरतिशयसुखस्वभावे भूम्नि साक्षात्कृते सति मुक्तानां ब्रह्मैव प्रपंचाकारेण दर्शनगोचरो भवति न प्रकृतप्रपंच इति ब्रह्मसादृश्यं नाम तत्समरसीभूतप्रपंचदर्शित्वमेवेति च न काप्यनुपपत्तिरिति ॥

**रामानुजमते, ॥ सू ॥ भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥** विषयवाक्यं समानमेव। भूमा प्रत्यगात्मा वा परमात्मा वेति संदेहः।' तरति शोक 'मित्यादिना प्रक्रान्तस्यात्मोपदेशस्य प्राणशब्दनिर्दिष्टे प्रत्यगात्मनि समाप्तिदर्शनात्प्रत्यगात्मेति पूर्वपक्षः। तथा प्राणे पर्यवसानेऽपि प्राणवेदिनोऽतिवादित्वमुक्त्वा 'एषतु वे'त्यादिना तुशब्देनोपासकभेदं प्रतिपाद्य तस्य सत्योपासकस्य पूर्वस्मादाधिक्योपदेशात्सत्यशब्दितं परं ब्रह्मैव भूमविशिष्टमिति सिद्धान्तः। संप्रसादः प्रत्यगात्मा। तस्मादधिकतयोपदेशादित्यर्थः। अतिवादित्व हि स्वोपास्याधिक्यवादित्वम् ॥

**सू ॥ धर्मोपपत्तेश्च ॥ ८ ॥** स्वाभाविकामृतत्वस्वमहिमप्रतिष्ठितत्वसर्वात्मत्वसर्वोत्पत्तिहेतुत्वादीनां धर्माणां परस्मिन्ब्रह्मण्येवोपपत्तेश्च भूमा परं ब्रह्मैव ॥ इति।

**आनन्दतीर्थमते, सू ॥ भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥** 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य' इति वाक्यं विषयः। भूमा मुख्यप्राणो वा विष्णुर्वेति संदेहः। प्राणस्य प्राक्प्रकृतत्वात् तत्रैवोत्तरोत्तरभूयस्त्वप्रश्नप्रतिवचनयोस्समाप्तिदर्शनात् 'यद्यप्येनानुत्क्रान्तप्राणा' नित्यादिना तस्योत्क्रमश्रवणात् विष्णौ उत्क्रमायोगाच भूमा प्राण एवेति पूर्वपक्षः। 'यो वै भूमा तत्सुख'मिति सुखशब्दोक्तपूर्णसुखरूपत्वाभिधानात् भूमेति सर्वोत्तमत्वोपदेशात् गुणतो वैपुल्यस्य भूमशब्दार्थत्वात् प्राणस्यापि विष्णुत्वे तत्रैवोत्तरोत्तरभूयस्त्वप्रश्नप्रतिवचनयोर्विश्रान्त्युपपत्तेरणुत्वविशिष्टस्य तस्याप्युत्क्रमोपपत्तेश्च भूमा विष्णुरेवेति सिद्धान्तः। सूत्रार्थस्तु **भूमा**='यो वै भूमेति श्रुतौ भूमशब्दोक्तपूर्णो विष्णुरेव। कुतः। **संप्रसादात्**='भूमैव तत्सुख'मित्यनेन संप्रसादशब्दितपूर्णसुखरूपत्वाभिधानात्। किं च। **अध्युपदेशात्**=नामादेरपि तदुपरि नामादिदेवतोत्तमत्वेन भूम्नोऽभिधानाच्चेत्यर्थः॥ **सू ॥ धर्मोपपत्तेश्च ॥९॥** 'स एवाधस्ता'दित्यादिना भूम्नि सर्वगतत्वादिधर्मश्रवणात् तस्य च विष्णावेवोपपत्तेर्विष्णुरेवेत्यर्थः॥ इति **सूत्रार्थचन्द्रिकायां भूमाधिकरणम् ॥ १ ॥**

## अथाक्षराधिकरणम् ॥

### ॥ सू ॥ अक्षरमम्बरान्तधृतेः ॥ ९ ॥

बृहदारण्यके श्रूयतेऽस्य विषयः 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति, अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्' इत्यादि ।

अत्र अक्षरशब्दवाच्यस्त्रेधा संदिह्यते प्रणवो जीवः परमेश्वरो वा इति ।

प्रणवजीवयोरन्यतर एवाक्षरशब्दवाच्यः । कुतः ? अक्षरशब्दस्य वर्णपर्यायत्वात् प्रणववाचकत्वमुचितम् । 'पुरुषोऽक्षरमुच्यते' इति पुरुषस्यापि तदभिधेयत्वमुक्तम् । अतस्तावेवाक्षरशब्दवाच्यौ ।

---

॥ सू० ॥ अक्षरमम्बरान्तधृतेः ॥ ९ ॥ अक्षरब्राह्मणगतं विषयवाक्यमुदाहरति—बृहदारण्यक इति । अक्षरशब्दस्य बहुधाभ्यस्तस्य रूढ्या वर्णजीवैकान्त्यादम्बरान्तधृत्यादेः परमेश्वरैकान्त्याच्च ताभ्यां संशयमाह—अत्रेति । अक्षरशब्दरूढिमवलम्ब्य पूर्वपक्षयति—अक्षरशब्दस्येति । पुरुषोऽक्षरमुच्यत इति । अत्रो'च्यत' इत्यनेन जीवस्याक्षरशब्दवाच्यत्वमुक्तम् । तद्रूढ्यैव पर्यवस्यति । न क्षरत्यश्नुत इति वा योगस्य धर्मज्ञानसङ्कोचादिरूपक्षरणवत्यणौ च तस्मिन्नसम्भवादिति भावः । स्यादेतत् । अक्षरस्य 'यदूर्ध्वं गार्गि दिव' इत्यादावाकाशान्तसकलजगद्धारकत्व'मेतस्यैवाक्षरस्य प्रशासने गार्गी'त्यादौ प्रशासितृत्व'मदृष्टं द्रष्टृ'त्यादावदृष्टत्वादिविशेषितद्रष्टृत्वादिकं च श्रूयते । तत्प्रणवजीवयोर्न सम्भवतीति परमेश्वर एवाक्षरमित्याशङ्क्याह—अतस्तावेवेति । प्रणवो जीवो वाऽक्षरं न तु परमेश्वर इत्यर्थः । अयमाशयः । 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'ति गार्ग्याः प्रश्नस्योत्तरतया स'त्वेतद्वै तदक्षर'मित्यक्षरनिरूपणं प्रवृत्तम् । तत्राकाशशब्दस्साक्षात्परमेश्वररूपपरब्रह्मपर एव । तथाहि अक्षरब्राह्मणात्पूर्वं गार्गिब्राह्मणे गार्गियाज्ञवल्क्ययोः प्रश्नोत्तरपरम्परा प्रवृत्ता 'यदिदं सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेति अन्तरिक्षलोकेषु गार्गी'त्यारभ्य 'ब्रह्मलोकेषु गार्गी'त्यन्ते वाक्यसन्दर्भे । तत्र पृथिवीसलिलवाय्वन्तरिक्षलोकगन्धर्वलोकादित्यलोकचन्द्रलोकनक्षत्रलोकदेवलोकेन्द्रलोकप्रजापतिलोकब्रह्मलोकानां पूर्वपूर्वस्योत्तरोत्तरस्मिन्नोतप्रोतत्ववर्णनानन्तरं 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चे'ति पुनः पृष्टेन याज्ञवल्क्येन ब्रह्मलोकशब्दोदितस्य चिदाकाशरूपस्य परमेश्वरपदस्योतप्रोतत्वं परमेश्वरे परब्रह्मण्येव वर्णनीयं स्यात् । तथा रहस्योद्घाटनं झटिति कर्तुमनुचितमिति मन्यमानेन 'गार्गि माति प्राक्षीर्मा ते मूर्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि मातिप्राक्षी'रिति सक्रोधमुक्ते भीता गार्ग्युपरराम । एवं बहुषु ब्राह्मणेषु याज्ञवल्क्यविजिगीषया तेन सह जल्पकथायां पर्यायेण प्रवर्तमानेष्वनुप्रविष्टा गार्गी तदानीं भीत्योपरतापि स्वोपरमानन्तरमुद्दालके प्रसिद्धे ब्रह्मविदि सूत्रमन्तर्यामिणं च पृष्टवति याज्ञवल्क्येन जिते सर्वेषां ब्राह्मणानामेवमेव पराजयो जायते स माभूदिति मन्यमाना पुनरपि याज्ञवल्क्यं प्रक्ष्यामीति ब्राह्मणाननुज्ञाप्य'अहं वै

(१) 'अदृष्टो द्रष्टे'त्यादाविति पुँल्लिङ्गतया पाठान्तरमप्यस्ति ।

त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वा राजपुत्र उग्रं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ शरौ सपत्नातिव्याधिनौ हस्ते कृत्वा उपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहि' इति द्वितीयप्रश्ननिवारणपरिजिहीर्षया प्रश्नद्वयानुज्ञां युगपदेव याज्ञवल्क्यं प्रति पृष्ट्वा 'पृच्छे'ति तदनुज्ञाता 'यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चे'ति पृष्ट्वा 'यदूर्ध्वं गार्गि दिव' इत्यादिना 'आकाशे तदोतं च प्रोतं चे'त्यन्तेनोत्तरे दत्ते 'नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोच इति तं प्रशस्य इतः परं द्वितीयप्रश्नस्योत्तरं न जानीयादित्यभिमानेन 'अपरस्मै धारयस्वे'त्युक्त्वा पृच्छेति तेनोक्ते प्रथमप्रश्नोत्तरस्थिरीकरणार्थं पुनरपि 'यदूर्ध्वं याज्ञवल्क्य दिव' इत्यादिना प्राक्पृष्टमेव पृष्टवती। याज्ञवल्क्येन 'यदूर्ध्वं गार्गि दिव' इत्यादिना' काश एव तदोतंच प्रोतं चे'त्यन्तेन प्राचीनोत्तर एवावधारणेन दृढीकृते तदनन्तरं कृतस्य 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'ति द्वितीयप्रश्नस्योत्तरतया 'एतद्वै तदक्षर'मित्या'द्येतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'त्यन्तं कृत्स्नमक्षरब्राह्मणं प्रवृत्तम्। अत्र गार्गिब्राह्मणान्ते याज्ञवल्क्येन यः प्रश्नः सक्रोधं निवारितः स एव खलु गार्ग्या सर्वेषां ब्राह्मणानां पराजयो भविष्यतीति भीतया तस्य क्रोधमविगणय्य पुनरवतारितः। निवारितप्रश्नस्य परमेश्वरे पर्यवसानं गार्गिब्राह्मण एवा'नतिप्रश्न्यां वै देवतामतिपृच्छसी'ति याज्ञवल्क्यवचनेन स्फुटमिति तदनुसारेणाकाशशब्दस्य परमेश्वरपरत्वमेव युक्तम्। अत एव याज्ञवल्क्यः प्रथमप्रश्नस्योत्तरं वक्तुं न जानातीति तदीयप्रश्ननिवारणभङ्ग्यावगम्य द्वितीयप्रश्नोत्तरं निधाय युगपत्प्रश्नद्वयानुज्ञामर्थितवती प्रथमप्रश्नोत्तरप्रशंसामिव कृत्वा सर्वाधारस्य परमेश्वरस्य केनचित्प्रकारेण कश्चिदाधारोऽस्तीति ज्ञात्वा वक्तुमयं न प्रभवतीत्यभिप्रायेण 'अपरस्मै धारयस्वे'ति धृष्टमुक्तवतीति सङ्गच्छते। एवमत्राकाशः परमेश्वर इति निर्णीते स यत्रोतप्रोतत्वेन वर्ण्यते तस्य परमेश्वरत्वासम्भवात् तदक्षरशब्दरूढविषयः प्रणवो जीवो वेति युक्तम्। प्रणवस्य जीवस्य वा परमात्मोपासनास्थानतया तदधिकरणत्वेन व्यपदेशसम्भवात्। अस्ति हि हृदयादिषु प्रणवं जीवं वा विचिन्त्य तन्मध्यवर्तित्वेन परमात्मोपासनं श्रुत्यन्तरादिसिद्धम्। तथाप्याकाशान्तसकलजगद्धृतिस्तयोरनुपपन्नेति चेत् मैवोपपादि। न ह्यत्र सा श्रुता। किं तु 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' 'एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्चे'ति प्रश्नोत्तरयोराकाशमात्रधृतिः श्रुता। प्रशासनमदृष्टत्वादिविशिष्टद्रष्टृत्वादिकं च प्रणवे स्वतोऽसम्भवदपि परमेश्वराभेदोपचाराद्व्यपदेष्टुं शक्यम्। 'शिवो वा प्रणवो ह्येषः प्रणवो वा शिवः स्मृतः। वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचित्। तस्मादेकाक्षरं देवमाहुरागमपारगाः। वाच्यवाचकयोरैक्यं मन्यमाना मनस्विनः।' इत्यादिपुराणेषु वाच्यवाचकयोः शिवप्रणवयोरभेदोपचारस्य निरूढत्वात्। अथर्वशिरसि च 'य ॐकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्मेति स एकस्स एको रुद्रस्स ईशानस्स भगवान् स महेश्वरस्स महादेव' इति शिवप्रणवाभेदोपचाराश्रयणेन तदुभयनाम्नामेकनामत्वेन परिगणनपूर्वकमथ कस्मादुच्यत ॐकारः यस्मिन्नुच्चार्यमाण एव सर्वं शरीरमूर्ध्वमुन्नामयति तस्मादुच्यत ॐकार' इत्यारभ्य 'अथ कस्मादुच्यते महादेवो यस्सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेव'

इति प्राप्ते ब्रूमः—अत्राक्षरशब्दवाच्यं परं ब्रह्मैव । कुतः ? अम्बरान्तधृतेः 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्याः यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च' इति सर्वविकाराधारतया निर्दिष्ट आकाशः 'कस्मिन्नोतश्च प्रोतश्च' इति गार्ग्या पृष्टे एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इत्यादिना 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्यन्तेन याज्ञवल्क्यवचनेन निर्दिष्टस्याक्षरस्याम्ब-

इत्यन्तेन तत्तद्व्यवस्थितयोगेनैव निर्वचनात् उपनिषदन्तरेषु च 'ओङ्कार एवेदं सर्वमोमितीदं सर्व'मित्यादिवाक्यैः प्रणवे शिवाभेदोपचारेण शिवगतसार्वात्म्यव्यपदेशदर्शनाच्च । जीवे तु पर्यायेण देवमनुष्यादिजन्मवति द्यावापृथिव्यादिशासितृत्वं तत्तदधिकारोपयुक्तजन्मप्राप्त्या पर्यायेणोपपद्यते । अदृष्टत्वाश्रुतत्वश्रवणं चक्षुश्श्रोत्रागोचरे तस्मिन्परमेश्वर इवोपपद्यते । अमतत्वाविज्ञातत्वश्रवणमक्लेशेन परमेश्वरेऽपि नोपपद्यते । कथंचित्तु जीवेऽप्युपपद्यते । द्रष्टृत्वादिश्रवणं तु चाक्षुषादिज्ञानवति जीव एवोपपद्यते । 'यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति यजति तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मण'इत्येतत्सर्वं प्रणवे जीवे च सङ्गच्छते । अधीयानानां कर्माण्यातिष्ठतां ब्राह्मणादीनां प्रणवस्वरूपपरिज्ञानस्य देहातिरिक्तात्मविज्ञानस्य चावश्यकत्वादिति । सिद्धान्तं प्रतिज्ञाय सौत्रं हेतुमुपादायाक्षरे आकाशमात्रधृतिः श्रुता न त्वाकाशान्तसकलधृतिरिति सौत्रहेतोरसिद्धिशङ्कापरिहारोपयोगिपूर्ववाक्यप्रदर्शनपूर्वकं सौत्रं हेतुं व्याचष्टे—यदूर्ध्वं गार्गीत्यादिना । अक्षरे आकाशमात्रधृतिर्नोच्यते किं तु प्रागुपक्रान्तस्य भूगोलकादेराकाशान्तस्य सर्वस्य धृतिरुच्यते । न हि 'यदिदं किञ्चिदप्स्वोतं च प्रोतं चे'त्यादिवाक्यानां भूगोलकादिषु पूर्वपूर्वस्योत्तरोत्तरस्मिन्नोतप्रोतत्ववर्णने तात्पर्यम् । अधस्स्थितानामन्तरिक्षलोकादीनामुपरितनेषु गन्धर्वलोकादिष्वोतप्रोतत्वस्य दुरुपपादत्वात् पर्वतानां क्षितिधारकत्वस्येव ध्रुवस्य ज्योतिश्चक्रधारकत्वस्येव च यथाकथञ्चित्तस्योपपादनसम्भवेऽप्यत्र प्रकरणे तन्निरूपणस्य निष्फलत्वात् अक्षरस्य भूगोलकाद्याकाशान्तसकलाधारतायां सर्वस्याप्यस्य वाक्यसन्दर्भस्य 'एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते पञ्च वृणीते न पञ्चातिवृणीते' इति वाक्यसन्दर्भस्य त्र्यार्षेयवरणविधान इव एकत्रैव तात्पर्येणैकवाक्यत्वे सम्भवति वाक्यभेदकल्पनायोगाच्च । गार्गिब्राह्मणे भूगोलकादिब्रह्मलोकान्तानां प्रश्नोत्तरपरम्परया पूर्वपूर्वस्योत्तरोत्तरस्मिन्नोतप्रोतत्ववर्णनानन्तरं 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चे'त्यन्तिमप्रश्नस्य तदानीं निवारितस्याक्षरब्राह्मणे पुनः प्रवर्तनायां ब्रह्मलोकाधारमात्रविषयतारीतिं परित्यज्य भूगोलकादिसकलकार्यप्रपञ्चाधारविषयतयैव प्रवर्तनापूर्वकं 'यदूर्ध्वं गार्गि दिव' इत्यादितदुत्तरवाक्ये आकाशस्य सकलकार्यप्रपञ्चाधारत्वेन निर्दिष्टतया 'कस्मिन्नु खल्वाकाश' इत्यादितदनन्तरप्रश्नतदुत्तरवाक्ययोरपि तन्न्यायावतरणाच्चेति भावः । ननु पृथिव्याद्याधारप्रश्नोत्तरपरम्पराया वस्तुतोऽक्षरस्यैव सर्वाधारत्वप्रतिपादने विश्रान्तौ ब्रह्मलोकाधार-

(१) 'विषयतामपरित्यज्य' इति च पाठः ।

रान्तप्रपञ्चधृतिरवगम्यते । कथमेतदन्यत्र परमेश्वरात् संभवति ? ततः परमेश्वर एवाक्षरपदाभिधेयः ॥

विषयत्वेन प्राक्प्रवर्तितः प्रश्नः कथं पृथिव्यादिसकलकार्यप्रपञ्चाधारविषयतया पश्चात्प्रवर्तितः। न ह्यस्याः प्रश्नोत्तरपरम्पराया आकाशस्य ब्रह्मलोकान्तसकलकार्याधारत्वप्रतिपादने अक्षरस्याकाशान्तसकलकार्याधारत्वप्रतिपादने च तात्पर्यं वक्तुं शक्यम् । वाक्यभेदापत्तेः । न चाक्षरं परमेश्वरं साधयतस्सिद्धान्तिनः तदाधेय आकाशे ततोऽन्यत्वेन समर्थनीये सकलकार्याधारत्वं सम्भवति परमेश्वरस्यैव तथात्वादिति चेदुच्यते । आकाशोऽत्र न भूताकाशः किं तु चिदम्बररूपा पारमेश्वरी शक्तिः । तस्यास्सर्वोपादानभूतायाः सर्वाधारत्वमस्त्येव 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायण'मित्यादिश्रुत्यन्तरसिद्धम् । यद्यप्यत्र[१] चरमनिर्देश्यस्याक्षरस्य सर्वाधारत्वप्रतिपादनैकपरतयेयं[२] प्रश्नपरम्परा प्रवर्तिता[३] तथापि तत्सर्वाधारत्वं ब्रह्मलोकाधारे समापितमिति याज्ञवल्क्यस्य भ्रान्त्युत्पादनेन तस्याप्याधारान्तरप्रश्ने निरुत्तरतया तस्याधारान्तरं नास्तीति वचनेन वा पराजितो भवत्वित्यभिसन्धाय तत्र प्राङ्निर्दिष्टपृथिव्यादिसर्वाधारत्वब्रह्मलोकाधारप्रश्ने पुनः क्रियमाणे गार्ग्याशयविद्याज्ञवल्क्यस्तु तस्या दुराशयमवगत्य द्वितीयप्रश्नोत्तरे वक्तव्यतया परमेश्वरं निर्दिश्य परमाकाशं तदाधारमवोचत् । ततः परमाकाशोऽपि स्वेन सह स्वाधेयसकलकार्यधारणसमर्थे परमशिवे परब्रह्मणि सत्येव सकलकार्याधारो भवति यथा वह्निः स्वेन सह स्वाधेयसकलहविर्धारणसमर्थे वेदिरूपे स्थले सत्येव स्वयं सकलहविराधारो भवतीति मत्वा यदाश्रयणबलेनायमाकाशः सकलकार्याधारो भवति तथाभूतस्तस्याधारः क इति गूढभावेन 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'ति गार्ग्या पृष्टे याज्ञवल्क्येनाक्षरमाकाशान्तसकलधारकमित्यभिप्रायेणै'तद्वै तदक्षर' मित्याद्युक्तं न त्वाकाशमात्रधारकमित्यभिप्रायेण । आकाशस्य सकलकार्याधारत्ववचनपूर्वकमक्षरस्याकाशाधारत्ववचनस्याक्षरस्याकाशान्तसकलधारकत्वप्रतिपादने 'जलपूर्णः कुम्भ' इत्युक्तिपूर्वकस्य 'तमयं वहती'ति वाक्यस्य जलसहितकुम्भवोढत्वप्रतिपादन इव तात्पर्यावसायात्। न चैवं सति वाक्यभेददोषावकाशः । जलादिषु पृथिव्यादिधारकत्ववचनानामिवाकाशे सकलकार्यधारकत्ववचनस्यापि अक्षरस्याकाशान्तसकलकार्यधारकत्वप्रतिपादनार्थतया तदेकवाक्यत्वेन तस्य स्वातन्त्र्याभावात् । ननु भवेदेवमेतत्सर्वं यद्यत्राकाशः परमेश्वरो न स्यात् । स तु परमेश्वर एवेत्यभ्युपगन्तव्यम् । 'अनतिप्रश्न्यां वै देवतामतिपृच्छसी'ति याज्ञवल्क्यवचनानुसारात् । अतः परमेश्वरादन्यदक्षरमिति तस्य परमेश्वरस्योतप्रोतत्वव्यपदेशस्तस्य परमेश्वरोपासनास्थानत्वाभिप्रायेणौपचारिको नेतव्य इत्याशङ्क्याह—कथमेतदिति । इह श्रुतमाकाशधृतिमात्रमौपचारिकतया नेतुं शक्यम् । आकाशधृतिश्रवणस्याकाशगतसकलकार्याधारत्वोक्तिपूर्वकत्वसामर्थ्यात् सिद्ध्यन्त्याकाशान्तसकलधृतिस्तु परमेश्वरादन्यत्र योजयितुं न शक्यते । सामर्थ्ये शब्द इवोपचारासम्भवात् । उदाहृतयाज्ञवल्क्यप्रतिवचनं तु ब्रह्मलोकाधारप्रश्नस्य परमेश्वराविषयत्वेऽपि ब्रह्मलोकाधार आकाश इति प्रतिवचने सति तदनन्तरमाकाशाधारविषयः प्रश्नस्तद्विषयो भविष्यतीति दूरदृष्टिमता याज्ञवल्क्येन पूर्वप्रश्नस्यैव निवार-

( १ ) 'यद्यप्यस्य' इति च पाठः । ( २ ) 'परत्व एव' इति च. पाठः । ( ३ ) 'प्रवृत्तिः' इति. च पाठः ।

## ॥ सू ॥ सा च प्रशासनात् ॥ १० ॥

सा च धृतिः 'तस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः।' इत्यादिना प्रकृष्टाज्ञाधीनाऽवगम्यते । तज्जगच्छासनं जीवस्य न संभवति; 'एक एव रुद्रो न द्वितीयाय तस्थुः' इति जगच्छासने द्वितीयाभावश्रवणात् । अतः परमेश्वर एवाक्षरशब्दवाच्यः ॥

## ॥ सू ॥ अन्यभावव्यावृत्तेश्च ॥ ११ ॥

अन्यभावोऽर्थान्तरत्वम् । 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ' इति वाक्यशेषः परमेश्वरादक्षरस्यान्यभावं व्यावर्तयति, प्रणवजीवपक्षयोरदृष्टत्वादिविशेषितद्रष्टृत्वाद्यसम्भवात् ।

---

णं कृतमित्येतदभिप्रायं चिदम्बरशक्तेरतिरहस्यदेवतात्वाभिप्रायं चोपपद्यते । तस्मादक्षरं परमेश्वरस्तदाधारक आकाशश्चिदम्बरमित्येव युक्तमिति भावः ॥ नन्वस्त्वाकाशश्चिदम्बरम् । अक्षरं तु जीव इत्यपि सम्भवति । यथा वा 'अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पित'मिति भूमविद्यागतवचनबलाज्जीवस्यापि देशकालवत्सर्वाधारत्वोपपत्तेरित्याशङ्कानिराकरणार्थं सूत्रम् । सू० ॥ सा च प्रशासनात् ॥१०॥ साच धृतिरिति । नन्वम्बरान्तधृतिः प्रशासनाधीना न श्रूयते किं तु सूर्यादिकतिपयधृतिरिति चेत्सत्यम् । तच्छ्रवणमेव स्थालीपुलाकन्यायेन सकलजगद्धृतेरपि तदधीनत्वं प्रत्याययिष्यति । यथा हि लोके स्थाल्यां तुल्यपाकानां पुलाकानामेकस्यदिन्नान्येषामपि सिद्धता ज्ञाप्यते तुल्यो हेतुरस्य चान्येषां च सिद्धत्वस्य ज्ञापक इति एवमिहापि सूर्यादिधृतेरक्षरप्रशासनाधीनत्वं प्रदर्श्यान्येषां धृतेरपि तथैव तदधीनत्वमिति श्रुत्या प्रत्याय्यते तुल्यः प्रकृष्टशासनरूपः सर्वत्राप्रतिहतो हेतुरिति ।'न द्वितीयाय तस्थ' इति तैत्तिरीयश्रुतिपाठः । तत्राविशेषणस्य परमेश्वरस्य द्वितीयाभावश्रवणेऽपि 'य इमाँल्लोकानीशत ईशिनीभि'रिति श्वेताश्वतरे 'य इमाँल्लोकानीशत ईशनीयु'रित्यथर्वशिरसि च तद्वाक्यशेषश्रवणात्तदनुसारेण जगच्छासनविषयमेव तद्द्वितीयाभाववचनम् । तथा च जगतो यथाकथञ्चिदनेकाधारत्वकल्पनसम्भवेऽप्यनेकशासितृत्वकल्पनं न सम्भवतीति भावः ॥ ननु द्रष्टृत्वादिकं जीव एव सम्भवति न परमेश्वर इत्याशङ्कानिराकरणार्थं सूत्रम् ॥ अन्यभावव्यावृत्तेश्च ॥११॥ अदृष्टत्वादिविशेषितद्रष्टृत्वाद्यसम्भवादिति ॥ अयमाशयः।'अविज्ञातं विज्ञात्रि'त्येतदनन्तरं 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ' इति श्रूयते। तस्य सर्वथा द्रष्ट्रन्तरनिषेधपरत्वं वक्तुमयुक्तम् । द्रष्टृबहुत्वस्यानेकप्रमाणसिद्धत्वात् किं तु पूर्वोक्तं द्रष्टृ यावद्गुणविशिष्टतया प्रकृतं तावद्गुणैस्तत्सदृशं द्रष्ट्रन्तरं नास्तीत्येवंपरं वाच्यम् । दृश्यते हि बहुविद्वद्युते ग्रामे चैत्रस्य बहुशास्त्रवेदितृत्वादिगुणानभिधायास्मिन्ग्रामे चैत्र एव विद्वानिति वचनस्य प्रागुक्तैर्गुणैश्चैत्रसमो विद्वान्नास्तीत्येवंपरत्वम् । तथा च 'नान्यदतोऽस्ति द्रष्ट्रि'त्यादेः प्रागुक्तैः सर्वाधारत्वसर्वप्रशासितृत्वादिगुणैः प्रकृतस्य द्रष्टुः सदृशं द्रष्टृ नास्तीत्येवमाद्यर्थपरत्वस्थितौ तस्य परमेश्वरविषयत्वमवश्यंभावीति

---

( १ ) 'न त्वंबरान्तधृतिः प्रशासनाधीना श्रूयते ।' इति च. पाठः ।

**अतः परमेश्वर एवाक्षरमिति निर्णयः ॥**

**॥ इत्यक्षराधिकरणम् ॥ ३ ॥**

---

**तत्रत्याः द्रष्ट्रादिशब्दाः परमेश्वरे चाक्षुषश्रावणमन्तव्याध्यवसेयविषयसाक्षात्कर्तृपरत्वेन सङ्गमयितव्याः । तथा च पूर्ववाक्यगतानामपि द्रष्ट्रादिशब्दानां स एवार्थस्सिद्ध्यतीति पूर्ववाक्यसन्दर्भस्यायमर्थः पर्यवस्यति। अदृष्टं जीववर्गस्य रूपदर्शनदशायां तदात्मवत्तं प्रत्यभासमानमेव सत् द्रष्टृ तद्दर्शनविषयरूपसाक्षात्कर्तृ अश्रुतं शब्दश्रवणदशायां तं प्रत्यभासमानमेव सत् श्रवणविषयशब्दसाक्षात्कर्तृ । अमतं तस्य स्थाणुपुरुषादिविचारदशायां तं प्रत्यभासमानमेव सत् तद्विचारविषयवस्तुसाक्षात्कर्तृ । अविज्ञातं तस्य स्थाण्वाद्यध्यवसायदशायां तं प्रत्यभासमानमेव सत् ब्रह्म विज्ञातृ तदध्यवसायविषयसाक्षात्कर्त्रिति । एवं जीववर्गव्यावर्तकार्थवर्णनायामेव प्रकृताक्षरसदृशद्रष्ट्रन्तरादिनिषेधपूर्वोत्तरवाक्यसन्दर्भानुगुण्यं लभ्यते । तस्माददृष्टत्वादिविशेषितद्रष्टृत्वादिकं जीववर्गे न सम्भवतीत्यधिकरणार्थमुपसंहरति—अत इति। अत्र सर्वप्रशासितृत्वादीनामस्पष्टानां ब्रह्मलिङ्गानां पूर्वपक्षदशायामक्षरधर्मत्वे बाधकोपन्यासात्तत्सान्निध्याम्नाताकाशधर्माणामेव सतामौपचारिकोऽक्षरान्वय इति स्पष्टास्पष्टब्रह्मलिङ्गता ॥**

**॥ इति अक्षराधिकरणम् ॥ ३ ॥**

---

नयमणिमालायाम्

**अथ अक्षराधिकरणम् ॥ ३ ॥**

**सू० । अक्षरमम्बरान्तधृतेः ॥ ९ ॥ सा च प्रशासनात् ॥ १० ॥ अन्यभावव्यावृत्तेश्च ॥ ११ ॥**

अक्षरमोङ्करोऽस्तु प्रसिद्धितस्तत्र चाम्बरान्तधृतेः। सर्वाभिधायकत्वाद्द्रष्टृत्वाद्वत्वा जीवो वा ॥ ५५ ॥

तत्परमेश्वर एव प्रशासनाधीनतद्धृतिश्रवणात्। सर्वादृष्टस्य सतो द्रष्टृत्वस्योपदेशाच्च ॥ ५६ ॥

**इत्यक्षराधिकरणम् ॥ ३ ॥**

सूत्रार्थचन्द्रिकायाम्

**अथाक्षराधिकरणम् ॥ ३ ॥**

**॥ सू ॥ अक्षरमंबरान्तधृतेः ॥ १० ॥ सा च प्रशासनात् ॥ ११ ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥**

**भगवत्पादमते,** पूर्वं सत्यशब्दस्य ब्रह्मणि रूढत्वात् भूमा ब्रह्मेत्युक्तम् । तद्वदिहापि अक्षरशब्दस्य वर्णे रूढत्वाद्वर्ण एवाक्षरमस्त्विति दृष्टान्तसंगत्येदमारभ्यते—**सू ॥ अक्षरमंबरान्तधृतेः ॥ १० ॥** 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूल'मित्यादि बृहदारण्यकवाक्यं विषयः । तत्र किमक्षरशब्देन वर्ण उच्यते उत ब्रह्मेति संदेहः । अक्षरसमाम्नाय इत्यादौ अक्षरशब्दस्य वर्णे रूढत्वात् वर्ण इति पूर्वः पक्षः । 'एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'ति पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यां चाक्षरं परं ब्रह्मैवेति सिद्धान्तः । **अक्षरं**=अक्षरशब्दवाच्यं । परं ब्रह्मैव । कुतः । **अंबरान्तधृतेः**—पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणादित्यर्थः ॥

नन्वंबरान्तधृतिः प्रधानेऽपि संभवतीत्यत आह **सू ॥ सा च प्रशासनात् ॥ ११ ॥ सा च**= धृतिः परमेश्वरस्यैव कर्म । नान्यस्याचेतनस्य। कुतः । **प्रशासनात्**-'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिना प्रशासनश्रवणादित्यर्थः ।

प्रधानादिनिरासेन ब्रह्मोपादाने हेत्वन्तरमाह—**सू ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥** अन्यस्य प्रधानादेर्भावो धर्मः सोऽन्यभावः । तद्व्यावृत्तेश्च 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ'त्यादितद्विपरीतधर्मश्रवणात् न प्रधानाद्यक्षरं किं तु ब्रह्मैति सिद्धम् ॥

**श्रीकण्ठमते ॥ सू ॥ अक्षरमंबरान्तधृतेः ॥ ९ ॥** विषयवाक्यं समानमेव । अत्राक्षरशब्दवाच्यः प्रणवो वा जीवो वा परमेश्वरो वेति त्रिधा संदेहः । अक्षरशब्दस्य वर्णपर्यायत्वात् 'पुरुषोऽक्षरमुच्यत'इति जीवस्यापि तदभिधेयत्वश्रवणाच्च

## अथेक्षतिकर्माधिकरणम् ॥ ४ ॥

**प्रत्यक्षादिप्रमाणातीतस्यापि परमेश्वरस्य परमकरुणावशादुपासकप्रत्यक्षत्वमुपपादयितुमेतदधिकरणमारभ्यते—**

### ॥ सू० ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ १२ ॥

पूर्वाधिकरणेन सङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति—प्रत्यक्षादीति । पूर्वाधिकरणविषयवाक्ये, 'अदृष्टमश्रुत'मित्यादिना जीववर्गस्य चक्षुःश्रोत्रान्तःकरणव्यापारदशासु परमेश्वरस्यानवभासमानतोक्त्या तस्य प्रत्यक्षादिप्रमाणातीतत्वं लब्धम् । तथाभूतस्य तस्य साक्षात्कारः कथं फलत्वेनोच्यत इत्याशङ्कानिराकरणार्थं बाह्यान्तरिन्द्रियजन्यप्रत्यक्षाविषयोऽपि परमेश्वरः कृपावशादुपासकानां स्वरूपावरणमपनीय स्वरूपज्ञानात्मकसाक्षात्कारविषयो भवतीति प्रदर्शयितुमुत्तराधिकरणमारभ्यत इत्यर्थः ॥ सू० ॥ ईक्षतिकर्मव्यपदेशात्सः ॥१२॥ प्रश्नोपनिषदि

---

प्रणवजीवावेवाक्षरशब्दवाच्याविति पूर्वः पक्षः । 'एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'ति आकाशान्तसकलप्रपञ्चधृतेः श्रवणात् परमेश्वर एवाक्षरपदाभिधेय इति सिद्धान्तः ॥

सू० ॥ **सा च प्रशासनात्** ॥ १० ॥ सा च धृतिः 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिना प्रकृष्टाज्ञाधीनावगम्यते । 'एक एव रुद्रो न द्वितीयाय तस्थु' रिति जगतश्शासने परमेश्वरस्याद्वितीयत्वश्रवणात् तच्छासनं न जीवस्य संभवति । अतः परमेश्वर एवाक्षरशब्दवाच्यः ॥

सू० ॥ **अन्यभावव्यावृत्तेश्च** ॥ ११ ॥ 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ' इत्यादिनाक्षरस्य परमेश्वरादर्थान्तरत्वस्य व्यावर्त्यमानत्वात् प्रणवजीवपक्षयोरदृष्टत्वविशेषितद्रष्टृत्वाद्यसंभवाच्च परमेश्वर एवाक्षरशब्दवाच्यः । इति ।

**रामानुजमते, सू० ॥ अक्षरमंबरान्तधृतेः** ॥ ९ ॥ विषयवाक्यं पूर्ववत् । अक्षरशब्दनिर्दिष्टं प्रधानं वा जीवो वा उत परमात्मा वेति संदेहः । प्रधानस्य विकाराधारत्वाज्जीवस्याचिद्वस्त्वाधारत्वाच्चाकाशाधारतयोच्यमानमक्षरं प्रधानं वा जीवो वा स्यात् न परमात्मेति पूर्वः पक्षः । 'यदूर्ध्वं गार्गि दिव' इत्यारभ्य कृत्स्नस्य विकारस्याधारतया निर्दिष्टस्याकाशस्याव्याकृतस्याधारतयोच्यमानस्याक्षरस्य प्रधानत्वायोगात् प्रशासनाधीनसूर्याचन्द्रमस्त्वसर्वाधारत्वादिश्रवणस्यापि जीवेऽनुपपन्नत्वाच्च न प्रधानजीवयोरक्षरत्वं किं तु परमात्मन एवेति सिद्धान्तः । सूत्रार्थस्तु **अक्षर** 'मेतद्वै तदक्षरं गार्गि'इति निर्दिष्टं परमात्मा । कुतः । **अंबरान्तधृतेः**=अंबरं वायुमानाकाशः । अंबरान्तः अंबरपारभूतमंबरकारणमित्यर्थः । कारणापत्तेरेव कार्यस्यान्तत्वात् । **अंबरान्तः**=अव्याकृतं प्रधानं, तस्य **धृतेः**=धारणात् । अक्षरं परमात्मैवेति ॥

एवं तर्हि जीवस्य, प्रधानधृत्युपपत्तेरक्षरं जीवोऽस्तु इत्याशंक्याह—**सू० ॥ सा च प्रशासनात्** ॥ १० ॥ सा च अंबरान्तधृतिः 'एतस्य वा अक्षरस्य प्रशासने'इत्यादिना प्रशासनात्क्रियत इति श्रूयते । प्रशासनमप्रतिहताज्ञेत्यर्थः । न ह्यप्रतिहताज्ञया कृत्स्नस्य जगतो धारणं जीवे उपपन्नम् । अतो न जीवोऽक्षरम् । **सू० ॥ अन्यभावव्यावृत्तेश्च** ॥ ११ ॥ अस्यार्थः श्रीकण्ठमतवदेवेति न पृथक्प्रपञ्च्यते ॥

**आनन्दतीर्थमते, सू० ॥ अक्षरमंबरान्तधृतेः** ॥ १० ॥ विषयवाक्यं न भिद्यते । अत्राक्षरं मध्यमाक्षररूपं श्रीतत्त्वं वा ब्रह्म वेति संदेहः । अभ्रणीसूक्तस्थश्रीवाक्ये तस्याश्चन्द्रादिधारकत्वप्रशासनादिश्रवणात् श्रीतत्त्वमेवाक्षरं 'न तदश्नाती'ति असंहर्तृत्ववर्णनान्न ब्रह्म इति पूर्वपक्षः ।

आकाशान्तसकलधारकत्वप्रतिपादनात् प्रकृष्टापराधीनासंकुचितशासनश्रवणात् स्थौल्याणुत्वाद्यन्यवस्तुस्वभावरहितत्ववर्णनात् अनशनोक्तेरन्यानुपजीवनप्रतिपादनार्थत्वेनाविरोधाच्च ब्रह्मैवेति सिद्धान्तः । सूत्रार्थस्तु **अक्षरं** ब्रह्मैव । न चित्प्रकृतिः । कुतः । **अंबरान्तधृतेः**=आकाशान्तपदार्थधात्वश्रवणात् इति ॥ **सू० ॥ सा च प्रशासनात्** ॥ ११ ॥ **च**=यतः । **सा**=अंबरान्तधृतिः । **प्रशासनात्**=विष्णोराज्ञामात्रादेव भवतीति श्रुतावुक्ता । अतोऽप्यक्षरं ब्रह्मैव न चेतनप्रकृतिः ॥

**सू० ॥ अन्यभावव्यावृत्तेश्च** ॥ १२ ॥ अन्यभावानां=विष्ण्वन्यवस्तुस्वभावानां स्थूलत्वादीनाम् । व्यावृत्तेश्च अभावकथनाच्च । ब्रह्मैवाक्षरमित्यर्थः ॥

**इति सूत्रार्थचन्द्रिकायामक्षराधिकरणम् ॥ ३ ॥**

**अस्य विषयः प्रश्नोपनिषदि श्रूयते 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तस्स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरुषमीक्षत' इति । अत्रेक्षतिकर्मत्वेन श्रूयमाणः परमेश्वरोऽन्यो वेति संशयः। नासौ परमेश्वरः हिरण्यगर्भ एव।'स सामभिरुन्नीयते ब्रह्मलोक' मिति तल्लोकप्राप्तिश्रवणात्। परशब्दस्य जीवोत्कृष्टे तस्मिन्सम्भवाच्च। अथवा**

---

'स यो हवैतद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयती'ति पिप्पलादं प्रति सत्यकामप्रश्ने 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती'ति तत्प्रतिवचनमुपक्रम्य 'स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवत्यथ यो द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तत' इत्येकमात्रमोङ्कारमुपासीनस्य तत्प्रथममात्रात्मकऋक्प्रापणीयमनुष्यलोकप्राप्तिफलं द्विमात्रं तमुपासीनस्य तद्द्वितीयमात्रात्मकयजुःप्रापणीयान्तरिक्षलोकप्राप्तिफलं चाभिधायेदमाम्नायते। 'यः पुनरेत'मित्यादि । अत्र ध्यातव्यः परमपुरुष एव ईक्षणीयः फलफलिनोरीक्षणध्यानयोरेकविषयत्वनियमात्।'परं पुरुष' मित्यत्र परत्वावधित्वेन विवक्षितस्यापि केभ्यश्चित्परत्वसम्भवेन 'परात्परं पुरिशयं पुरुष' मिति निर्देशस्य ततो भेदावहत्वाभावात् इति स्थिते यो ध्यातुरीक्षणविषयः पुरुषः तत्र त्रेधा संशयं दर्शयति–अत्रेति । 'अन्यो वे'त्यनेन हिरण्यगर्भो नारायणो वेति कोटिद्वयमपि सङ्गृहीतम्। अस्मिन्सन्देहवाक्ये 'अत्रे'त्यनेन परमेश्वर इति कोटेर्बीजं सूचितम् । यस्योपक्रमे 'एतद्वै सत्यकामे'त्यादिना परब्रह्मणः परमेश्वरस्योपासनाया विधित्सावगतात्रेत्यर्थः । 'ईक्षतिकर्मत्वेन श्रूयमाण' इत्यनेन 'तदन्यो वे'ति कोटेर्बीजं सूचितम्।पूर्वत्र 'ह्यदृष्टं द्रष्टृ'त्यादिना परमेश्वरस्य प्रत्यक्षाविषयत्वमुक्तम् । अत ईक्षतिकर्मत्वश्रवणं परमेश्वरादन्यत्रैव सम्भवतीति भावः। **नासौ परमेश्वरः इति** । ईक्षतिकर्मत्वश्रवणादेवेति भावः । कस्तर्हीत्याकाङ्क्षायां प्रथमपूर्वपक्षमाह–**हिरण्यगर्भ इति**। **तल्लोकप्राप्तिश्रवणादिति**। भूलोकान्तरिक्षलोकरूपप्राकृतलोकप्रायपाठादत्र ब्रह्मलोकशब्दः कार्यब्रह्मलोकपर इति भावः।ननु हिरण्यगर्भे जीवघनात्परात्परमित्येतदनुपपन्नम् । जीवसङ्घातवाची हि जीवघनशब्दः । 'घनाः कठिनसङ्घातमेघकाठिन्यमुद्गरा'इत्यभिधानकोशस्मृतेषु घनशब्दार्थेषु सङ्घातस्यैवात्रान्वययोग्यत्वात्।एवं चात्र यदि जीवघनः जीवसमष्टिरूपो हिरण्यगर्भः तदा तस्यैव तस्मात्परत्वमनुपपन्नम् । यदि व्यष्टिसमष्टिसाधारण्येन जीवसमूहः तथापि समूहान्तर्गतस्य तस्मात्परत्वमनुपपन्नम्। यदि व्यष्टिसमूह एव तथापि तस्माद्यः परः ततः परत्वं हिरण्यगर्भस्यानुपपन्नमित्याशङ्क्याह–**परशब्दस्येति** । जीवघनोऽत्र जीवसमूहः । स एतस्मादिति विशेष्यमाणः परिदृश्यमानो व्यष्टिसमूह एव भवति । पञ्चम्यौ समानाधिकरणे। तथा च प्रकृत्यादिभ्यः पराद्व्यष्टिजीववर्गात्परत्वं

नारायणः। तस्य पुरुषशब्दवाच्यत्वात् जीवघनात्पराद्धिरण्यगर्भात्परत्वोपपत्तेश्च। तस्मिन्नेव प्रणववाच्यत्वप्रसिद्धेश्च। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति तत्पदस्यैव विद्वदनुभवविषयत्वश्रवणात्। 'ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्त' इत्यग्रिमश्लोके तत्प्रत्यभिज्ञानाचेति प्राप्ते ब्रूमः। ईक्ष-

---

मुख्यजीवेऽपि हिरण्यगर्भे सम्भवतीति न किञ्चिदत्रानुपपन्नमित्याशयः। पुरुषशब्दवाच्यत्वादिति। 'यथा शङ्करशब्दोऽयं महादेवेऽवतिष्ठते। तथा पुरुषशब्दोऽपि वासुदेवेऽवतिष्ठत'इत्यादिषु पुरुषशब्दस्यासाधारण्येनापि नारायणे शक्तिस्मरणादिति भावः। जीवघनात्पराद्धिरण्यगर्भादिति। यदि जीवघनो व्यष्टिजीववर्गस्तदा व्यधिकरणे पञ्चम्यौ। यदि समष्टिजीवस्तदा समानाधिकरणे इत्युभयथापि हिरण्यगर्भात्परत्वं वाक्यार्थ इति स नारायणे समुपपद्यत इति भावः। प्रणववाच्यत्वप्रसिद्धेरिति। प्रपञ्चसारादिष्विति शेषः। प्रत्यभिज्ञानाचेति। अयमाशयः। 'यत्तत्कवयो वेदयन्त' इत्यत्र'तद्विष्णो'रिति मन्त्रश्रुतविष्णुपदसाधारणविद्वदनुभवत्वविषयत्वप्रत्यभिज्ञानादिह ब्रह्मलोको विष्णुपदमेवेति तत्रेक्षणविषयः तदर्थं ध्यातव्यश्च पुरुषो विष्णुरेव। न चैवं सति परब्रह्मोपासनाविधित्सयोपक्रमस्य कश्चिद्विरोधः। अस्मिन्नेव श्लोके 'तमोङ्कारेणान्वेती'त्योङ्कारेण विष्णूपासनया तत्पदप्राप्तिमभिधाय 'यत्तच्छान्त'मित्यादिनोङ्कारेणैव शान्तत्वादिविशिष्टं शिवमपि प्राप्नोतीति वचनादोङ्कारेण शिवोपासनस्यापि विधिसिद्धेः। एवं च शान्तत्वादिब्रह्मलिङ्गैरुपसंहारस्यापि न विरोधः। प्रत्युत सिद्धान्तिन एवोपक्रमोपसंहारविरोधः। उपक्रमे परब्रह्मोपासनावदपरब्रह्मोपासनापि तल्लोकप्राप्तिफलोपक्षिप्ता। न च 'यः पुनरेत'मित्यादेः परब्रह्मोपासनाविषयत्वे ततोऽन्यत्र क्वचिदपरब्रह्मोपासनाविधानं कृतमिति प्रदर्शयितुं शक्यम्। न चौपसंहारिकश्लोकस्य प्रागुक्तोपासनाफलोपसंहारमात्रपरत्वे 'यत्तच्छान्तमजरममृतमभयं परं चे'ति प्राप्यान्तरसमुच्चयार्थश्चकारो युज्यते। तस्माच्छान्तत्वादिविशिष्ट एव परमेश्वरः। ईक्षतिविषयस्तु तदन्यश्चतुर्मुखो नारायणो वेति। सूत्रे 'स' इति निर्देशो यस्य परमेश्वरस्योपासन'मेतद्वै सत्यकाम परं चापरं चे'त्युपक्रमविधित्सिततयोक्तं स एव ध्यानेक्षणवाक्ययोः परशब्देन प्रत्यभिज्ञाप्यत इति प्रत्यभिज्ञासूचनायेत्यभिप्रेत्याह—ईक्षतिविषयस्स परमेश्वर इति। न चेक्षणवाक्ये 'परात्पर'मिति निर्देशान्नास्त्युपक्रमगतपरब्रह्मप्रत्यभिज्ञेति वाच्यम्। 'परं चापरं च ब्रह्मे'त्युपक्रमे अपरब्रह्मणः सन्निहितनिर्दिष्टतया तस्यैव परभावाक्षेपितत्प्रतियोगितयान्वयात्। ईक्षणवाक्येऽपि तस्मादपरब्रह्मण एवेक्षतिकर्मणः परत्वप्रतिपादनात्। ननु परशब्दप्रत्यभिज्ञानुसरणे परब्रह्मोपासनया सह विधित्सिततयोपक्रान्ता क्वचिदप्यपरब्रह्मोपासना न विहिता स्यादिति चेन्माभूत्। सर्वस्याप्यस्य प्रकरणस्य त्रिमात्रोङ्कारपरब्रह्मोपासनाविध्यर्थत्वात्। ओङ्कारस्येदृशो महिमा यदनेनापरब्रह्मोपासनापि तत्प्राप्तिफला मात्रावैगुण्येनापि मनुष्यलोकान्तरिक्षलोकप्राप्तिफला। तस्मादेवंभूतमहिमशालिनोङ्कारेण मात्रावैगुण्यरहितेन हेयमल्पफलमपरं ब्रह्म विहाय परमेव ब्रह्मोपासनीयमिति। एवमेकवाक्यत्वसम्भवे वाक्यभेदकल्पनायोगात्। तस्मादेकवाक्यतासाकाङ्क्षपरब्रह्मप्रकरणानुगृहीतपरश्रुतिप्रत्यभिज्ञाबलादीक्षतिविष-

**तिविषयस्स परमेश्वरः। उत्तरत्र 'तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परंचे'ति तदसाधारणशान्तत्वादिधर्मव्यपदेशात्। न हि हिरण्यगर्भे तत्कार्ये शान्तत्वादिकमस्ति। 'ब्रह्मलोक'मिति परब्रह्मणः शिवस्य लोकः प्राप्यतयाऽवगम्यते। जीवघन इति जीवसमष्टिरूपो हिरण्यगर्भः तस्मात्परात् परं हि ध्येयं श्रूयते। ततो हिरण्यगर्भपक्षो न युक्तः। नारायण इति यदुक्तं तद्विचार्यम्। 'अमृतमभयं परं चे'ति नित्यमुक्तत्वमभयहेतुत्वं विश्वाधिकतया परत्वं च कथमस्मिन्नुपपद्यते। विश्वरूपो ह्यसौ। कथं चैतदुपपद्यते। यज्जीवघनाद्धिरण्यगर्भादपि परादुत्कृष्टात् नारायणात्परमुत्कृष्टं पुरिशयानमन्तर्यामितया अत एव पुरुषं परं ब्रह्म तदुपासकस्साक्षात्पश्यतीति वर्णितम्। 'नारायणपरं ब्रह्म' 'ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरू-**

---

यः परमेश्वर एवेति भावः। व्यपदेशादिति सौत्रं हेतुं व्याचष्टे—उत्तरत्रेति। शान्तत्वादिकं प्रकृतध्यानेक्षणकर्मणोऽन्यत्रोपासनान्तरविषयेऽन्वेतीति वक्तुमयुक्तम्। वाक्यभेदप्रसङ्गेनात्रोपासनान्तरविध्यनङ्गीकारात्। 'अमृतमभयं परं चे'ति चकारस्येक्षतिकर्मण्येव शान्तत्वादिगुणसमुच्चयार्थत्वोपपत्तेरिति भावः। न हि हिरण्यगर्भ इति। शान्तत्वं निरस्तसकलसांसारिकदोषकलङ्कत्वममृतत्वमनादिमुक्तत्वमभयत्वमभयहेतुत्वम्। स्वयं भयराहित्यस्य शान्तत्वविशेषणेनैव सिद्धेः। अभयशब्दात्तत्करोतिण्यन्तात्पचाद्यचि अभयशब्दस्याभयहेतुपरत्वोपपत्तेः। परत्वं सर्वोत्कृष्टत्वम्। एतत्सर्वं हिरण्यगर्भे न सम्भवतीत्यर्थः। प्राकृतलोकप्रायपाठात् ब्रह्मलोकशब्दः कार्यब्रह्मलोकपर इति पूर्वपक्षहेतुं विघटयति—ब्रह्मलोकमिति। परश्रुतिप्रत्यभिज्ञालिङ्गप्रकरणैः प्रायपाठस्य बाध इति भावः। इतश्च न हिरण्यगर्भ इत्याह—जीवघन इति। एतस्मादित्ययं सर्वनामशब्दः 'परं चापरं च ब्रह्मे'त्यत्र प्रकृतपरमेश्वरगतपरत्वावधित्वेन तत्रैव निर्ज्ञातं हिरण्यगर्भं परामृशतीति तत्सामानाधिकरण्यात् जीवघनशब्दोऽपि तद्विषय इति भावः। नारायणपक्षे शान्तत्वाजरत्वसम्भवेऽप्यमृताभयपरशब्दोक्तानि नित्यमुक्तत्वसंसारमोचकत्वविश्वाधिकत्वानि नोपपद्यन्त इत्याह—अमृतमभयमिति। नित्यमुक्तत्वमिह न नित्यमेव सांसारिकसकलदोषनिर्मुक्तत्वम्। शान्तविशेषणेन तल्लाभात्। किं तु सर्वकालं निरतिशयानन्दभोक्तृत्वम्। तत्परमेश्वरधर्मस्य परमाकाशशब्दितस्य निरतिशयानन्दस्यावस्थाविशेषरूपे नारायणे न सम्भवतीति भावः। इतश्च नारायणो नेक्षतिविषय इत्याह-कथञ्चैतदिति। 'जीवघनात्परा'दिति पञ्चम्योर्वैयधिकरण्यमेव युक्तम्। अधिकार्थलाभादिति भावः। ननु तयोर्वैयधिकरण्येऽपि हिरण्यगर्भात्पर ईक्षतिकर्मगतपरत्वावधिभूतो नारायण इति कुतोऽवसीयते येनेक्षतिकर्म नारायणो न स्यादित्याशङ्क्याह—नारायणपरमिति। तैत्तिरीये दहरविद्याया'मणोरणीया'नित्यनुवाके 'यो देवाना'मिति मन्त्रेण शिवस्य हिरण्यगर्भादधिकत्वे सिद्धेऽपि तदनन्तरानुवाके'नारायणपरं ब्रह्मे'ति नारायणाद्ब्रह्मणः परत्वमुक्तम्। तत्किं नारायणात्परं ब्रह्मेत्याकाङ्क्षायाम् 'ऋतं सत्य'मिति तदनन्तरानुवाके शिव एव नारायणात्परं ब्रह्मेति प्रदर्शितम्। तेन हिरण्यगर्भात्परो नारायणस्ततः परश्शिव इति सिद्धम् स्पष्टं चैतच्छिवसङ्कल्पोपनिषदि 'परात्परतरं ब्रह्मे'ति मन्त्रे। अतस्तदर्थप्रत्यभिज्ञानादिह हिरण्यगर्भात्परो नारा-

पाक्ष'मिति हि श्रूयते। तस्मात्पुरि दहरपुण्डरीके वर्तमानतया पुरुषशब्दवाच्यं 'तस्य प्रकृतिलीनस्य यः परः स महेश्वर'इति श्रुत्या प्रणवाभिधेयं 'नारायणपरं ब्रह्मे'ति श्रुत्या नारायणाद्विश्वरूपादधिकं वाङ्मनसविपर्यासरहिततया ऋतं सत्यं त्रिलोचनतया विरूपाक्षं परशक्त्या प्रणववर्णव्यत्यासरूपोमाशब्दवाच्यया शबलाकारत्वेन कृष्णपिङ्गलं परं सर्वानिशायि ब्रह्म 'परात्परं पुरिशयं पुरुषमीक्षत'इति ईक्षतिकर्मत्वेन व्यपदिश्यत इति युक्तम्। यदुक्तं 'तद्विष्णोः परमं पद'मिति तत्र प्रपञ्चाकारत्वमन्तरेण यन्निरतिशयानन्दस्वभावं विष्णोः परमं पदं

---

यण एवेति भावः। तस्मादिहेक्षतिविषयो न हिरण्यगर्भो नापि नारायणः किं तु उदाहृतदहरविद्यायां यदनेकमङ्गलगुणविशिष्टं दिव्याद्भुतरूपं च ब्रह्म वर्णितं तदेवेति तत्रत्यगुणरूपविवरणपूर्वकमुपसंहरति—तस्मादिति। 'पुरि दहरपुण्डरीक' इत्यादिकं शारीराधिकरणे विवृतम्। प्रणववर्णव्यत्यासरूपेति। अयमर्थो लिङ्गपुराणे शिवेनाम्बिकायै वर्णितः। 'त्वदीयः प्रणवः कश्चिन्मदीयः प्रणवस्तथा। त्वदीयो देवि मन्त्राणां शक्तिभूतो न संशयः। अकारोकारमकारा मदीये प्रणवे स्थिताः। उकारं च मकारं च अकारं च क्रमेण तु। त्वदीयं प्रणवं विद्धि त्रिमात्रं प्लुतमुत्तम'मिति। व्यपदिश्यत इति युक्तमिति। नन्विह दहरविद्योपवर्णितस्थानगुणरूपविशिष्टमेव ब्रह्मेक्षतिकर्मत्वेन व्यपदिश्यत इति कुतस्सिद्ध्यति। पुरिशयमिति विशेषणात्। ननु 'स सामभिरुन्नीयते ब्रह्मलोक'मिति 'स एतस्माज्जीवघना'दिति ब्रह्मलोकं प्राप्तस्य 'स'इति सर्वनाम्ना परामर्शात् पर्यङ्कविद्यादिवर्णितपरमाकाशरूपब्रह्मलोकस्थानतदुचितरूपगुणविशिष्टं ब्रह्मेक्षणीयमिति कुतो न सिद्ध्यति। वाक्यवैयर्थ्यप्रसङ्गान्न सिद्ध्यति। तल्लोकं प्राप्तस्तं पश्यतीत्यर्थतः सिद्ध्यन्नर्थो हि 'स एतस्मा'दिति वाक्यं नापेक्षते। कथं तर्हि तदवैयर्थ्यम्। 'परं पुरुषमभिध्यायीते'त्येतदनन्तरं तद्योजनया। तथा सति ध्यानस्य परब्रह्मलोकप्रापकत्वे द्वारतया तत्साक्षात्कारः प्रदर्शितो भवति। ध्यानद्वारभूतस्तत्साक्षात्कारश्च 'आप्रायणात्तत्रापि हि दृष्ट'मि (ब्र० ४. १. १२. सू०) त्यधिकरणभाष्ये दर्शितः। हृदयपुण्डरीक एव भवतीति पुरिशयमिति विशेषणमपि युज्यते। तस्मात्पाठक्रमादर्थक्रमस्य बलीयस्त्वात् 'स एतस्मादिति वाक्यस्य प्रागेवान्वयमभिप्रेत्य दहरविद्योपवर्णितविशेषणानामीक्षतिकर्मणि संयोजनं युक्तमेव। अथ ब्रह्मलोकशब्दोक्ते शिवपदे तद्विष्णोरिति मन्त्रार्थप्रत्यभिज्ञाया अविरोधमुपपादयति—यदुक्तमित्यादिना। नन्वविरोधार्थं 'तद्विष्णो'रिति मन्त्रस्य शिवपदविषयत्वमेव वक्तुं युक्तं न तु शिवविषयत्वम्। तस्य शिवविषयत्वोपपादनमपि दुष्करम्। न हि प्रपञ्चाकारेणावस्थितस्य विष्णोः शिवपदं स्वरूपं किं तु शिवशक्तिस्वरूपः परमानन्दः। तथैव भाष्ये प्रकृत्यधिकरणादिष्वपि प्रतिपादितम्। तस्य शिवपदत्वोपपादनं तु सुकरम्। तद्विष्णोः परमं रूपं यः परमानन्दः स एव परमाकाशरूपः शिवपदतयापि वर्तत इति। एवमेव 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद' मिति कठवल्लीमन्त्रस्य शिवपदविषयत्वोपपादनं कृतं 'कार्यं बादरिरस्य गत्युपपत्ते' रित्य ( ब्र० ४. ३. ६. सू० ) धिकरण इति चेत्सत्यम्। इहापि स एवाभिप्रायः। 'तदेव शिवाभिधं ब्रह्मे'त्यादि तु शिवशक्त्योरभेदोपचारेण प्रवृत्तमिति न दोषः। दर्शितो हि प्रागा'नन्दो ब्रह्मे'त्यादिश्रुतिषु 'आनन्दमयोऽभ्यासात्' (ब्र०

**रूपं तदेव शिवाभिधं परं ब्रह्मेत्यविरोधः । यतो विष्णुशिवयोरुपादाननिमित्तयोरवस्थाभेदमन्तरेण स्वरूपभेदो नास्ति । इति ईक्षतिकर्माधिकरणम् ॥ ४ ॥**

**१. १. १३. सू० ) 'आकाशस्तलिङ्गा'दि ( ब्र० १. १. २३. सू० ) त्यादिसूत्रेषु च शिवशक्त्योरभेदोपचारः ॥ ॥ इतीक्षतिकर्माधिकरणम् ॥ ४ ॥**

**नयमणिमालायाम्।**

## अथ ईक्षतिकर्माधिकरणम् ॥ ४ ॥

**सू० । ईक्षतिकर्मव्यपदेशात्सः ॥ १२ ॥**

ईक्षतिलक्ष्यो विष्णुस्तद्विष्णोरिति तथा प्रथितेः । पुरुषश्च स प्रसिद्धो हिरण्यगर्भात्परश्च जीवघनात् ॥ ५७ ॥

जीवघनात्पर इति यस्तस्मादपि परोऽत्र शिव उदितः । स्वावस्थाभेदतनोस्स एव विष्णोश्च परमपदम् ॥ ५८ ॥

## इति ईक्षतिकर्माधिकरणम् ॥ ४॥

**सूत्रार्थचन्द्रिकायाम्**

**अथ ईक्षतिकर्माधिकरणम् ॥ ४ ॥**

**॥ सू० ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥**

**भगवत्पादमते,** पूर्वे वर्णे रूढस्याक्षरशब्दस्य जगद्धृतिलक्षणलिंगेन ब्रह्मणि न क्षरतीति योगवृत्तिराश्रिता । तद्वदिहापि देशपरिच्छिन्नफलश्रुतिलिंगेन परशब्दस्यापेक्षिकपरत्वविशिष्टे हिरण्यगर्भे वृत्तिरस्त्विति दृष्टान्तसंगत्येदमाह—**सू० ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥** 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' इति प्रश्नोपनिषद्वाक्यं विषयः । तत्र ध्येयं वस्तु हिरण्यगर्भाख्यं परं ब्रह्म वा उत परमात्मा वेति संदेहः । 'स तेजसि सूर्ये संपन्नः' 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमानत्वात् पिण्डापेक्षया प्राणस्य परत्वोपपत्तेश्च हिरण्यगर्भ इति पूर्वपक्षः । 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत' इति ध्यातव्यस्येक्षतिकर्मत्वेन व्यपदेशाद्ध्यानेक्षणयोरेकविषयत्वनियमात् परिच्छिन्नफलस्य क्रममुक्त्यर्थत्वोपपत्तेश्च सः ध्यातव्यः परमात्मैवेति सिद्धान्तः ॥

**श्रीकण्ठमते, सू० ॥ ईक्षतिकर्म व्यपदेशात्सः ॥१२॥** विषयवाक्यं 'यः पुन'रित्यादि 'पुरुषमीक्षत' इत्यन्तं वाक्यं विषयः । अत्रेक्षतिकर्मत्वेन श्रूयमाणः हिरण्यगर्भो वा नारायणो वा परमेश्वरो वेति संदेहः । ब्रह्मलोकप्राप्तिफलत्वश्रवणात् जीवोत्कृष्टत्वात्परशब्दवाच्यो हिरण्यगर्भो वा पुरुषशब्दवाच्यत्वात् जीवघनात्पराद्धिरण्यगर्भादपि परत्वोपपत्तेः प्रणववाच्यत्वप्रसिद्धेः 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति तत्स्वरूपस्यैव विद्वदनुभवविषयत्वश्रवणाच्च नारायणो वा ईक्षतिकर्म स्यात्, इति पूर्वपक्षः। उत्तरत्र,'यत्तच्छान्तमजरममृतमभयं परं चे'त्यसाधारणशान्तत्वादिधर्मव्यपदेशात् ब्रह्मणः शिवस्य लोकस्य प्राप्यत्वोपपत्तेः जीवसमष्टिरूपाद्धिरण्यगर्भादपि परात्परत्वाभिधानाच्च परमेश्वर एवेक्षतिविषयः न हिरण्यगर्भ इति जीवघनाद्धिरण्यगर्भादपि परादुत्कृष्टान्नारायणादपि परमिति प्रतिपादनात् विष्णुशिवयोरुपादाननिमित्तयोरवस्थाभेदमन्तरेण स्वरूपभेदानभ्युपगमेन प्रपञ्चाकारत्वमन्तरेण निरतिशयानन्दस्वभावस्य विष्णोः परमस्वरूपस्यैव ब्रह्मत्वाभ्युपगमेन च तस्य विद्वदनुभवविषयत्वे विरोधाभावाच्च पुरि दहरपुण्डरीके वर्तमानतया पुरुषशब्दवाच्यं 'तस्य प्रकृतिलीनस्य यः परः स महेश्वर' इति श्रुत्या प्रणवाभिधेयं 'नारायणपरं ब्रह्मे'ति श्रुत्या नारायणाद्विश्वरूपादधिकं सर्वातिशायि ब्रह्मैव ईक्षतिकर्मत्वेन व्यपदिश्यत सिद्धान्तः। सूत्रार्थस्तु, **ईक्षतिकर्म–** ईक्षति विषयः । **सः**–परमेश्वरः । कुतः । **व्यपदेशात्**–उत्तरत्रासाधारणशान्तत्वादिधर्मव्यपदेशात् । इति ।

**रामानुजमते, सू० ॥ ईक्षतिकर्म व्यपदेशात्सः ॥१२॥** विषयवाक्यं पूर्ववत् । अत्र ध्यायतीक्षतिकर्मतया व्यपदिष्टः परमपुरुषः हिरण्यगर्भो वा उत परब्रह्मभूतः पुरुषोत्तमो वेति संशयः । एकद्विमात्रप्रणवोपासकफलभूतमनुष्यान्तरिक्षलोकसाहचर्यात् ब्रह्मलोकरूपफलस्यापि चतुर्मुखलोकत्वनिश्चयात् हिरण्यगर्भ इति पूर्वपक्षः । उत्तरत्र निरुपाधिकशान्तत्वादिधर्मव्यपदेशात् परमात्मत्वनिश्चये सति ब्रह्मलोकशब्दस्यापि तत्स्थानत्वोपपत्तेश्च पुरुषोत्तम एवेति सिद्धान्तः । **ईक्षतिकर्म–सः** परमात्मा ध्यायतीक्षत्योरेकविषयत्वेन ध्यायतिकर्मापि स एवेत्यर्थः । श्रीकण्ठमतवदत्रापि त्रिपदमेवैतत्सूत्रमिति वेद्यम् ॥

**आनन्दतीर्थमते, सू० ॥ ईक्षतिकर्मव्यपदेशात्सः ॥१३॥** 'सदेव सोम्येदमग्रआसीत्' इत्यादिकं, सृष्टिप्रतिपादकमनेकप्रकरणात्मकं सच्छब्दघटितं वाक्यं विषयः। तत्र सच्छब्दवाच्यं प्रधानं वा विष्णुर्वेति संदेहः। 'तदैक्षत बहु स्यां प्रजायेये'तिबहुभावश्रवणात् निर्विकारश्रुत्यानुपादानस्य तस्य बहुभावासंभवात् कार्योन्मुख्यरूपस्य गौणेक्षणस्य प्रधाने संभवाच्च प्रधानमेव सच्छब्दवाच्यमिति पूर्वपक्षः। 'तत्तेज ऐक्षत' 'तदपोऽसृजत' इत्यादिषु ईक्षितृत्वस्रष्टृत्वश्रवणेन तस्य तेजोऽन्नाभिमानिदेवतात्वप्रतीत्या देवतात्मना बहुभावस्य प्रधानेऽसंभवात् प्रत्युत विष्णावेव संभवाच्च विष्णुरिति सिद्धान्तः । सूत्रार्थस्तु सदेवेत्यादिप्रकरणस्थितसदादिशब्दवाच्यः **सः** विष्णुरेव । न प्रधानम् । कुतः। **ईक्षतिकर्मव्यपदेशात्**–तदैक्षतेति चेतननिष्ठैक्षतेति शब्दोपलक्षितदर्शनाख्यक्रियाभिधानात् इति ॥ **इति सूत्रार्थचन्द्रिकायामीक्षतिकर्माधिकरणम् ॥ ४ ॥**

## अथ दहराधिकरणम् ॥ ५ ॥

तदिह हरिविरिञ्चादिप्रपञ्चोत्तीर्णस्यापि साधकानुग्रहाय पुरिशयानतया पुरुषस्य परमशक्तिरूपोमाशबलितस्य विरूपाक्षस्य परब्रह्मणः साक्षात्कारः सकलसंसारनिवृत्तिपूर्वकं तत्प्राप्तये तदुपासकानां तद्वाचकप्रणवपराणां भवतीति निरूपितम्। तस्य पुरिशयनमुपासनं च प्रकटयितुमिदमधिकरणं प्रस्तूयते—

॥ सू० ॥ दहर उत्तरेभ्यः ॥ १३ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यादि ॥

दहराकाशइह किं भूताकाश उच्यते, उत जीवः, परमेश्वरो वेति संशयः॥

आकाशशब्दस्य वियति रूढतया भूताकाशो दहराकाशः। अथवा जीवो दहर

---

### अथ दहराधिकरणम् ॥ ५ ॥

पूर्वाधिकरणसङ्गतिप्रदर्शनपूर्वकमुत्तराधिकरणमवतारयति—तदिहेति। अध्वातीतपरमाकाशवर्त्यपि शिवः उपासकानां प्रत्यक्षविषयो भूत्वा 'तदोकोऽग्रज्वलन'मित्य (ब्र०४-२-१६ सू०) धिकरणोक्तरीत्या तदनुग्रहीतुं तेषां हृदयपुण्डरीकेऽपि कृष्णपिङ्गलत्वादिविशिष्टेन सूक्ष्मेण रूपेणावस्थितः प्रणवेन स्वोपासकानां सकलसंसारनिवृत्तिपूर्वकस्वप्राप्तये तदीक्षणविषयो भवतीति खल्वीक्षतिकर्माधिकरणे निरूपितम्। तस्य यत्र स्थितस्य यथाभूतरूपगुणविशिष्टस्य प्रणवेनोपास्यत्वं तत्सर्वं प्रकटीकर्तुं दहरविद्याविचारार्थमधिकरणमारभ्यत इत्यर्थः। एषा प्रासङ्गिकी सङ्गतिः। प्रकृतसिद्ध्यर्थेयमुपोद्घातसङ्गतिरिति केचित्॥सू०॥ दहर उत्तरेभ्यः ॥१३॥ त्रेधा संशयं दर्शयन् संशयकोटीनां बीजानि सूचयति—दहराकाश इहेति। आकाशश्रुतिरभ्यस्यमाना भूताकाशकोटेर्बीजम्। दहरत्वलिङ्गमभ्यस्यमानं जीवकोटेरिति दहराकाश इत्यनेन सूचितम्। इहेत्यनेन सिद्धान्तकोटेर्बीजं सूचितम्। यत्र प्रकरणे अपहतपाप्मत्वादिकं परमेश्वरलिङ्गं श्रूयत इति भावः। वियति रूढतयेति। आकाशशब्दस्तावल्लोके वियति प्रसिद्धतरः। न च सा प्रसिद्धिरासमन्तात्काशत इति योगमूला। जडे तदसम्भवात्[1]। अतस्तस्य तत्र रूढिरेव। परमेश्वरे तु योगो वा व्यापकत्वादिना भूताकाशसाम्येन गौणवृत्तिर्वा वक्तव्या। तदुभयं रूढितो दुर्बलम्। अतो रूढ्या भूताकाश एवायमिति भावः। दहरेति। तस्य स्वरूपतो व्यापकत्वेऽपि हृदयपुण्डरीकावच्छेदेनाल्पत्वं सम्भवतीति भावः। स्वरूपेणैवाल्पत्वमुपपादनीयं चेत् जीवोऽयमस्त्वित्याह—अथवेति। ननु पक्षद्वयेऽपि 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इति वाक्यशेषो न सङ्गच्छते। तथाहि भूताकाशे तावदभेदादुपमानोपमेयभावो न सङ्गच्छते। न च बाह्याभ्यन्तरकृतभेदेन तदुपपत्तिः। आन्तरस्य बाह्यवद्व्यापकत्वाभावात्। जीवे स्वत एवाणुत्वान्न सङ्गच्छते। परमेश्वरे तु हृदयावच्छेदेनाल्पत्वेऽपि स्वरूपेण व्यापकत्वविवक्षयोपपद्यते[2]।'एष त आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वे'ति

---

(१)'जीवे तदसंभवात् इति- क- पाठः. (२) 'व्यापकतयोपपद्यते' इति-ख-पाठः।

**इति अल्पपरिमाणत्वात्, तस्याणुभूतेऽस्मिन् संभवात्, न व्यापी परमेश्वरो दहरः॥**

परमेश्वरस्य हृदयावच्छेदोपाधिकाणीयस्त्वे वर्णितेऽपि तदनन्तर 'मेष म आत्मान्तर्हृदये ज्यायान् दिवो ज्यायानन्तरिक्षा'दित्यादिना स्वाभाविकव्यापकस्यापि वर्णनदर्शनात्। एवं च वाक्यशेषानुसारेण स्वाभाविकव्याप्तिमान्परमेश्वर एव दहराकाश इति युक्तम्। एवं स'त्यथ यदिदमस्मिन्ब्रह्मपुर' इत्युपक्रमोऽपि सङ्गच्छते। देहस्य ब्रह्मपुरत्वोक्त्यापि देहान्तर्वर्तित्वेन ब्रह्मोपासनाविधित्सयेदं प्रकरणमारभ्यत इति अवगम्यते। ननु'चैत्रगृहे मैत्रस्तिष्ठती'त्यन्यगृहत्वेन निर्दिष्टेऽप्यन्यावस्थानमुच्यते। तत्र 'मैत्र' इति विशिष्याधेयो निर्दिष्टः इहाप्याकाशश्रुत्या विशिष्य भूताकाशो निर्दिष्ट इति तुल्यमिति चेन्न। इह चैत्रगृहवाक्यान्वयाङ्गीकारे ब्रह्मपुरत्वेन देहोक्तेर्वैयर्थ्यप्रसङ्गात्। नहि मैत्रान्वेषिणं प्रति 'चैत्रगृहे मैत्रस्तिष्ठती'ति वाक्ये चैत्रगृहत्वोक्तिर्देवदत्तगृहादिव्यावर्तनेनेवात्र ब्रह्मपुरत्वोक्तिर्देहान्तर्वर्तित्वेन ब्रह्मोपासनाविधित्साभावे प्रकारान्तरेण साफल्यमश्नुवीत। तस्माद्यथा'प्रजापतिर्वरुणायाश्वमनय'दित्याद्युपक्रमगतार्थवादेनाश्वदातुः किञ्चिद्विधास्यत इत्यवगमात् तदनन्तरश्रुतं 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपे'दिति वाक्यमश्वप्रतिग्रहीतुरिष्टविधायकतयावभासमानमप्यश्वदातुस्तद्विधायकमिति योज्यते। एवमिहाप्युपक्रमे देहस्य ब्रह्मपुरत्वोक्त्या देहस्यान्तः किञ्चित्परमेश्वरस्योपासनं विधास्यत इत्यवगमात् तदनन्तरश्रुतं दहराकाशवाक्यं भूताकाशप्रतिपादकतयावभासमानमपि स्वरूपेण व्यापकस्य ब्रह्मशब्दोक्तस्य परमेश्वरस्य प्रतिपादकमिति योजनीयम्। तथा सत्येव 'यावान्वा अयमाकाश'इति बाह्याकाशसाम्योक्त्यनन्तर 'मुभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ। विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहित'मिति द्यावापृथिव्यादिसमाधानाधारत्ववर्णनमपि सङ्गच्छते। तस्मात्स्वरूपेण व्यापकः परमेश्वर एव दहराकाश इत्याशङ्क्याह—न व्यापी परमेश्वर इति। अयमाशयः। 'यावान्वा' इत्यादिवाक्यं भूताकाशसाम्यप्रतिपादनेन दहराकाशस्य व्यापकत्वपरं न भवति किं तु दहराकाशेनैव दहराकाशस्य साम्यप्रतिपादनेनातिसौक्ष्म्यपरम्। अयमित्यस्य प्रकृतदहराकाशपरामर्शित्वे सम्भवत्यप्रकृतबाह्याकाशपरामर्शित्वकल्पनानौचित्यात्। तेनैव तस्योपमानोपमेयभावो नान्वेतीति चेत् सत्यम्। अनन्वय्यपि तन्निबध्यते अनुपमत्वद्योतनाय यथा 'स्वे महिम्नी' त्यत्रानन्वय्यपि स्वस्य स्वेनाधाराधेयभावोऽनाधारत्वज्ञापनाय निबध्यते। अत एव 'रामरावणयोर्युद्धं रामरावणयोरिवे'त्यादावनुपमत्वद्योतनायाभेदे निबध्यमाने उपमानोपमेयभावो नान्वेतीति अन्वर्थनामानन्वयालङ्कार इत्याहुरालङ्कारिकाः। एवं निरतिशयसौक्ष्म्यपरत्वेन भूताकाशे जीवे चायं वाक्यशेष उपपद्यते। प्रत्युत भूताकाशवद्व्यापको दहराकाश इत्येवं परमेश्वरपरत्वमेवास्य नोपपद्यते। कथं, तस्मिन्पक्षे खल्वाकाशशब्दस्य परमेश्वरे गौणी वृत्तिरेष्टव्या न यौगिकी वृत्तिः। प्रथमप्रतीतरूढ्यपरित्यागेन तत्पूर्वकगौणवृत्त्युपपत्तौ तत्परित्यागापेक्षस्य योगस्यानुन्मेषात्। तस्याश्चा'काशवत्सर्वगत' इति श्रुत्यन्तरप्रसिद्धम्, इहापि ब्रह्मपुर इति ब्रह्मशब्देन परमेश्वरस्योपासनात् बुद्धिस्थितं च व्यापकत्वमेव सादृश्यनिमित्ततयावतिष्ठते। तथा चोपमेयनिर्देशकेन आकाशशब्देनैव भूताकाशसादृश्ये प्रतिपादिते वाक्येन प्रतिपाद्यमानं तत्सादृश्यं कथमन्वेतु। न हि यो भूताकाशवद्व्यापकः स भूताकाशे तद्व्या-

पक इति वाक्यं समञ्जसं भवति । न च वाच्यं यथाग्नेयादीनां षण्णां यागादीनाममावास्यापौर्णमास्याकालयोस्तदुत्पत्तिवाक्यविहितयोरप्य'मावास्यायाममावास्यया यजेत पौर्णमास्यांपौर्णमास्या यजेते'ति वाक्ययोर्गौणाभ्यां तृतीयान्ताभ्याममावास्यापौर्णमासीपदाभ्यामनूद्यमानयोरपि सप्तम्यन्तामावास्यापौर्णमासीपदोपात्तयोः पुनर्विधानं तद्वदिहापि स्यादिति। तयोर्वाक्ययोष्षण्णां यागानां प्रयोगैक्यस्यौत्सर्गिकतया पौर्णमास्यां प्राच्याङ्गानुष्ठानपूर्वकं पौर्णमासीत्रिकमनुष्ठायामावास्यायां प्राप्तायाममावास्यात्रिकमनुष्ठाय उदीच्याङ्गसमापनप्रसङ्गात्। ननु, यदि 'यावान्वा' इत्यादिकं दहराकाशस्य स्वरूपतो व्यापकत्वपरं न भवेत् किं त्वतिसूक्ष्मत्वपरमेव भवेत् तदाग्रे वर्ण्यमानं द्यावापृथिव्यादिसमाधानाधारत्वं कथमुपपद्यत इति चेत् वचनबलादिति-ब्रूमः। श्रूयते हि तैत्तिरीयेऽपि समानप्रकरणे हृदयं प्रक्रम्य'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठित'मिति। ननूच्यमानमप्यसम्भावितं कथं श्रद्धेयमिति चेत् उच्यते 'उभे अस्मिन्नि'त्यादिना दहरविद्योपासकस्य ब्रह्मलोकप्राप्त्यनन्तरमुपयोगि भोगस्थानभोगोपकरणभोग्यजातमुच्यते। तत्र द्यावापृथिवीग्रहणं सकलभोगस्थानोपलक्षणम् । अग्निवायुचन्द्रसूर्यग्रहणं सकलभोगोपकरणोपलक्षणम्। 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहित' मिति भोग्यजातमुच्यते।यदस्योपासकस्येह लोके विद्यते यच्चेहलोके इदानीं न विद्यते नष्टं भविष्यद्वा चेतनाचेतनात्मकं भोग्यं तत्सर्वमस्मिन्दहराकाशे समाहितमिति हि तस्यार्थः। अग्रे 'यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते।अथ ये चास्य जीवा येच प्रेताः यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दत'इति श्रुत्यैवाग्रे तथा विवृतत्वात् । तच्च ब्राह्मलौकिकं भोगस्थानभोगोपकरणजातं द्विविधम्। मुक्तस्य शरीरविरहावस्थायामीश्वरेणैव सृष्टं स्वाप्नपदार्थजाततुल्यमेकं तस्य शरीरवत्त्वदशायां तेनैव सृष्टं जाग्रत्पदार्थजाततुल्यमपरम्। तदुभयं सूत्रकार एव चतुर्थाध्याये'तन्वभावे सन्ध्यवदुपपत्ते (ब्र०४-४-१३ सू.)र्भावे जाग्रद्वत्(ब्र०४-४-१४)इति सूत्राभ्यां विवेचयिष्यति।तत्राद्यं स्वाप्नपदार्थजातवदेव सूक्ष्मेऽपि मातुमर्हम् । स्वप्ने ह्यपवरकेऽनुभूयमाने तदन्तर्गिरिनदीसमुद्रादिकमप्यनुभूयते। अत एव स्वाप्नपदार्थजातमाश्चर्यरूपमिति वक्ष्यति सूत्रकारः 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा'(ब्र०-३-२-३सू-)दिति। तदभिप्राय'मुभे अस्मि'न्नित्यादिकं भविष्यतीति किमसम्भावितम्।जागरानुभूयमानस्य स्थूलस्य द्यावापृथिव्यादेर्दहराकाशे समाधानं तु 'यावान्वा' इत्यादेर्भूताकाशवद्व्यापकत्वपरतया परमेश्वरविषयत्वाङ्गीकारेऽपि सम्भावयितुं न शक्यते। 'अन्तरेव समाहिते' इति देहस्यान्तर्हृदयावच्छिन्न एव दहराकाशे द्यावापृथिव्यादिसमाधानवर्णनात् तदुपश्रुत्यान्ततो देहमेव द्यावापृथिव्याद्याधारमुक्तं मत्वान्तेवासिभिराक्षिप्तमिति'तं चेद्ब्रूयु'रित्याद्युत्तरसन्दर्भेण प्रदर्शनाच्च।नन्वेवं दहराकाशस्याब्रह्मत्वसमर्थने उपक्रमगतब्रह्मसङ्कीर्तनस्य को निर्वाहः? कश्चै'ष आत्मा अपहतपाप्मे'त्यादिवाक्यशेषसङ्कीर्तितानां ब्रह्मलिङ्गानां निर्वाहः?। उच्यते। दहराकाशसङ्कीर्तनानन्तरं 'तस्मिन्यदन्तः तदन्वेष्टव्य 'मिति तदन्तर्गतस्योपासना विधीयते। तद्ब्रह्मेति तद्विषयत्वेनोपक्रमगतवाक्यशेषयोस्सङ्गतिर्भविष्यति। ननु'तस्मिन्यदन्त'रिति दहराकाशान्तर्गतस्योपासनाविधानानन्तरं किं तत्र विद्यत इति प्रश्नपूर्वकं 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इत्युक्त्वा 'उभे अस्मिन्द्यावापृथिवी' इ-

(१) 'न्यदिह न लभते' इति ख. पाठः ।

इति प्रासे ब्रूमः—परमेश्वर एव दहराकाशः। कुतः ? उत्तरेभ्योऽपहतपाप्मत्वादिभ्यो धर्मेभ्यः 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघ-

---

त्यादिना द्यावापृथिव्यादिकं तदन्तर्गतमिति निरूपितम्। ततश्च तदेवोपास्यमिह समीहितं पर्यवस्यति। तत्र नोपक्रमवाक्यशेषयोः सङ्गतिरिति चेत् उच्यते। द्यावापृथिव्यादिसमाधानोपन्यासानन्तर'मेतत्सत्यं ब्रह्म पुर'मिति प्रकृतद्यावापृथिव्यादिपरैतत्पदसमानाधिकरणेन 'सत्यं ब्रह्मपुर'मित्यनेन द्यावापृथिव्याद्यवच्छिन्नं ब्रह्म निर्दिश्यते। तेन दहराकाशान्तरनुचिन्तनीयद्यावापृथिव्याद्यवच्छिन्नं ब्रह्मोपास्यं लभ्यते। अतस्तत्रोपक्रमवाक्यशेषयोरुपपद्यत एव सङ्गतिः। न'न्वेतत्सत्यं ब्रह्मपुर'मित्यत्रैतत्पदं दहराकाशपरामर्शि। 'उभे अस्मिन्द्यावापृथिवी' इत्यादिप्राचीनवाक्येषु सर्वनाम्नस्तत्परामर्शित्वदर्शनात्। 'एत' दिति नपुंसकलिङ्गस्य सत्यब्रह्मपुरशब्दसामानाधिकरण्यानुरोधेन संगतत्वात्। तस्य द्यावापृथिव्यादिपरामर्शित्वे एकवचनानुपपत्तेश्च। तस्मा'त्सत्यं ब्रह्मपुर'मित्यारभ्य श्रुतानां सर्वेषां ब्रह्मश्रुतिलिङ्गानां दहराकाश एव समन्वय इति चेन्मैवम्। 'उभे अस्मि'न्नित्यादिवाक्येषु प्राधान्येन प्रथमाविभक्तिनिर्दिष्टस्य द्यावापृथिव्यादेरेव 'प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छदि'त्यत्र प्रजापतेरिव सर्वनाम्ना परामष्टुं युक्तत्वात्। तत्र बहुवचनस्य 'सुपां सुलुगि'त्यादि (पा० ७.१.३९) सूत्रतस्स्वादेशेन लुका वा एकवचनस्य 'व्यत्ययो बहुल'मिति (पा० ३० १० ८५) सूत्रतो वचनव्यत्ययेन 'सर्वं तदस्मिन्समाहित'मित्येकवचनान्तप्रकृतसर्वपरामर्शित्वेन वा एतदिति रूपोपपत्तेश्च। तस्माद्दहराकाशः परमेश्वरो न भवतीति—एवं प्राप्ते सिद्धान्तयति—इति प्रासे ब्रूम इति। 'उत्तरेभ्य' इति सौत्रहेतुं व्याचष्टे—अपहतपाप्मत्वादिभ्य इति। न च तेषां दहराकाशानन्वयः शङ्कनीयः। पूर्वसन्दर्भानुरोधेनापततस्तदन्वयस्यापरिहार्यत्वात्। तथा हि द्यावापृथिव्यादिसर्वसमाधानोक्त्यनन्तरं प्राग्ब्रह्मपुरशब्दोक्तदेह एव तस्य सर्वस्य समाधानमुक्तमापाद्य देहे जीर्णे नष्टे वा जीर्णे कुसूलादौ धारणाक्षमे तदन्तर्निहितं व्रीह्यादिकमिव नष्टे घटे तदन्तर्निहितं दध्यादिकमिव च तत्किमपि नावतिष्ठेतेत्यन्तेवासिभिराक्षिप्तं 'तं चेद्ब्रूयुः अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैनज्जरावाप्नोति प्रध्वंसते वा किं ततोऽवशिष्यत' इति। तत्रेदमाचार्यस्योत्तरमुक्तं 'नास्य जरयैतज्जीर्यते न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामास्समाहिता' इति दहराकाशे वर्णितं सर्वसमाधानं देह एव वर्णितमित्यापादनस्य हि द्वेधाभिप्रायस्सङ्गच्छते। यथा घटाद्यन्तराकाशे निहितस्य दध्यादेर्वस्तुतो घटादिरेवाधारः आकाशः परमवकाशात्मनोपकरोति एवमिहापीति वा दहराकाशस्य स्वतस्सर्वाधारत्वेऽपि तस्य देहजराप्रध्वंसानुपदभाविजराप्रध्वंसवत्त्वात् यावद्देहस्य भारधारणानुकूलं बलं तावत्पर्यन्तमेव दहराकाशस्य तद्धारकत्वमिति फलतो देह एव तस्य सर्वस्य धारकः पर्यवस्यतीति वा। तत्र द्वितीयाभिप्रायावलम्बनाक्षेपसमाधानार्थं 'नास्य जरये'त्यादि। प्रथमाभिप्रायाक्षेपसमाधानार्थ'मेतत्सत्य'मित्यादि। तत्र कामग्रहणमाक्षेपे देहसमाहितत्वेनापाद्यानूदितानां भोग्यभोगस्थानभोगोपकरणानां त्रयाणामप्युपलक्षणम्। तथाचा'स्मिन्कामास्समाहिता' इत्यस्य 'उभे अस्मिन्नि' त्यादिना दहराकाशे समाहितत्वेन निर्दिष्टानि तदनन्तरं प्रश्नवाक्ये फलतो देह एव समाहितत्वेन विवक्षितानीति मत्वा 'इदं सर्व'मिति'सर्वाणि भूतानि' इति 'सर्वे कामा' इति च पृथक् निर्देश

पूर्वकं देहसमाहितत्वेनानूदितानि भोगस्थानभोगोपकरणभोग्यजातानि दहराकाश एव समाहितानि न तु देह इत्यर्थः। ननु घटाकाशो दध्यादेरिव दहराकाशो द्यावापृथिव्यादेर्न धारक इत्याशङ्क्य विशेषितं 'एतत्सत्यं ब्रह्मपुर'मिति। न हि घटाकाश इव दहराकाशः किं तु ब्रह्म। तत्पुरमिवोपासकापेक्षितविविधभोग्यजातादिपूर्णं तद्धारकमेव। यतस्तत्सत्यं सकलप्रपञ्चनियामकमिति। सत्यपदं हि नित्यानित्यात्मकचेतनाचेतननियन्तृपरं ब्रह्मनामेत्यत्रैव वर्णितम्। 'तस्य हवा एतस्य ब्रह्मणो नाम सत्य'मिति 'तानि वा एतानि त्रीण्यक्षराणि सत्ति यमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छती'ति। नियन्तृत्वं धारकत्वव्याप्तम्। 'एष सेतुर्विधरण एषां लोकानामसम्भेदाये'ति श्रुत्यन्तरात् 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाये'त्यत्रैव प्रकरणे श्रवणाच्च। एवं कृताक्षेपसमाधानसिद्ध्यानुगुण्येन समाधानवाक्यगतयोरेतदिति पदयोर्दहराकाशपरत्वं वक्तव्यमिति द्यावापृथिव्यादिपरत्ववर्णनं न युज्यते। न हि तदानीं कृतस्याक्षेपस्य समाधानं लभ्यते। माभूज्जरादिना द्यावापृथिव्यादेस्तदाश्रितस्य जरादि तथापि यथा कुसूलादेर्जरादौ सति तदनुविधायि जरादिरहितमपि व्रीह्यादि तत्र नावतिष्ठते एवमिदमपि नावतिष्ठेतेत्याक्षेपस्य तादवस्थ्यात्। तस्माद्यथा 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' इत्यादिषु विध्यङ्गीकारे तव्यप्रत्ययस्वारस्ये सत्यपि तेषु विधानेनोपक्रान्तजामितादोषपरिहारालाभात् तल्लाभाय वर्तमानापदेशयुक्तेऽप्यन्तरावाक्य एव विधिरङ्गीक्रियते। एवमिहाप्येतत्पदयोर्द्यावापृथिव्यादिपरत्वाङ्गीकारे विभक्त्यैकरूप्यस्वारस्यलाभे सत्यपि तत्परत्वे कृताक्षेपसमाधानालाभात् तल्लाभाय दहराकाशपरत्वमेवाङ्गीकर्तव्यम्। एवं सत्येवा 'स्मिन्कामास्समाहिता' इत्यत्र अस्मिन्नित्यस्य दहराकाशपरत्वलाभात्तस्मिन्कामसमाधानवर्णनमुपपद्यते। अन्यथास्मिन्नित्यस्य द्यावापृथिव्यादिपरामर्शित्वापत्त्या तत्रैव तत्समाधानवर्णनमनुपपन्नं स्यात्। अस्मिन्नित्येतत् ब्रह्मपुरमित्यव्यवहितनिर्दिष्टब्रह्मपरामर्शि स्यादिति चेत्तर्हि दहराकाशे समाहितत्वेन प्राग्वर्णिता इह कामशब्दनिर्दिष्टा द्यावापृथिव्यादयो ब्रह्मणि समाहितत्वेन वर्ण्यन्ते चेद्दहराकाश एव निर्दिष्टं ब्रह्म स्यादिति घट्टकुट्यां प्रभातं पर्यवस्यति। एवं चात्रास्मिन्निति पदस्य दहराकाशपरत्वे सन्दंशन्यायेनापि मध्यगतयोरेतत्पदयोस्तत्परत्वमपरिहार्यम्। एतदिति तु दहराकाशे 'व्यत्ययो बहुल'मिति (पा० ३. १. ८५. सू) द्यावापृथिव्यादिषु वचनव्यत्ययेनेव लिङ्गव्यत्ययेनोपपद्यते। नपुंसकलिङ्गं स्त्रीलिङ्गपुँल्लिङ्गानुगतं सामान्यं न तु विशेषान्तरमिति शाब्दिकमर्यादया लिङ्गान्तरनिर्दिष्टे नपुंसकलिङ्गं व्यत्ययवचनमनपेक्ष्याप्युपपद्यते। 'मुखनासिकावचनोऽनुनासिकः' (पा० १. १. ८. सू) द्विगुरेकवचन (पा० २. ४. १. सू) मित्यादौ स्त्रीलिङ्गपुँल्लिङ्गविशेषणयोर्नपुंसकलिङ्गमेव हि समर्थयन्ते। किं च 'सुपां सुलुगि'ति (पा० ७. १. ३९.) सूत्रेण सोर्लुकि पुल्लिङ्गेऽप्येतदिति रूपमुपपद्यते। तस्माद्द्वितीयाक्षेपसमाधाने श्रुत्यैव दहराकाशस्य ब्रह्मरूपतया विवृतत्वात् तदनन्तरस्यै'ष आत्मे'त्यादिसन्दर्भस्यान्यपरत्वशङ्कानवकाशात्। औपसंहारिकैरपि बहुभिः श्रुतिलिङ्गैरभ्यस्तस्याप्येकस्याकाशशब्दस्य दहरत्वलिङ्गस्य च बाध्यत्वादुत्तरेभ्यः श्रुतिलिङ्गेभ्यो दहराकाशः परमेश्वर एवेति युक्तमित्यभिप्रायः। ननु भूताकाशे ब्रह्मात्मश्रुत्यपहतपाप्मत्वादिलिङ्गानामसम्भवेऽपि मुक्तजीवे तेषां सम्भवोऽस्ति। मुक्तौ धर्मज्ञानविकासेन ब्रह्मात्मशब्दप्रवृत्तिनिमित्तस्य व्यापकत्वस्यापहतपाप्मत्वाद्याविर्भावस्य च सत्त्वा-

त्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति वाक्यशेषसिद्धेभ्यः । त एते कथं संसारिणि जीवे संभवन्ति ? तस्मादीश्वर एव दहराकाशोऽपहतपाप्मत्वादिगुणक इति ॥

## ॥ सू० ॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १४ ॥

'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः' इति वाक्यशेषे प्रजानामहरहरस्मिन् दहराकाशे या गतिः श्रूयते, यश्चात्र ब्रह्मलोकशब्दः; ताभ्यामपि दहराकाशः परमेश्वरः। तथा हि श्रुत्यन्तरे परमेश्वर एव एवंरूपं गमनं दृष्ट'मेवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्यामहे' इति। ब्रह्मलोकशब्दश्च तस्मिन् दृष्टः 'एष ब्रह्मलोकः सम्राडिति होवाच' इति।

---

दित्याशङ्क्याह—कथं संसारिणीति। दहराकाशशब्दस्य जीवपरत्वे संसारिजीवपरत्वमङ्गीकरणीयम् । 'अथ यदिदमस्मिन्ब्रह्मपुर' इत्यादिना दहराकाशस्येदानींतनोपासकदेहावच्छिन्नतयोच्यमानत्वात् । न चैतेषां संसारिणि सम्भवोऽस्तीति भावः ॥ सू० ॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १४ ॥ ननु 'ब्रह्मलोकं न विन्दती'त्यत्र ब्रह्मलोकशब्दस्य परमाकाशरूपशिवपदपरत्वं युक्तम्। 'अरश्च ह वैण्यश्चार्णवौ ब्रह्मलोके' 'तृतीयस्यामितो दिवि'इत्यत्रैव प्रकरणे तत्र तस्य प्रयोगदर्शनात्तत्र क्लृप्ते षष्ठीसमासे बुद्धिस्थे निषादस्थपतिन्यायानवतारात् । तस्माद्ब्रह्मलोकशब्दस्तावन्न सिद्धान्तसाधकः। एवं च अहरहस्तद्गतिश्रवणमसम्भवदर्थकत्वादर्थवादमात्रमिति गतिरपि न तत्साधिकेत्याशङ्कानिराकरणार्थं 'तद्यथे' 'त्यनृतेने'ति च पूर्वोत्तरवाक्ये अप्युपात्ते । 'न विन्दन्ती'त्युक्तस्य अहरहर्ब्रह्मलोकगत्यज्ञानस्या'नृतेन हि प्रत्यूढा' इति मलावृतत्वहेतुना 'तद्यथा हिरण्यनिधि'मिति भूतलान्तर्गतहिरण्यनिध्यज्ञानदृष्टान्तेन चोपपादनान्नेदमर्थवादमात्रमित्यहरहर्गतिस्तावदुपपादनीया । अहरहस्सुषुप्तिदशायां गतियोग्यं च हार्दं ब्रह्मैवेति ब्रह्मलोकशब्दोऽपि समानाधिकरणसमासेन ब्रह्मपर एव वक्तव्य इति भावः। ननु हार्दे ब्रह्मणि जीवस्याहरहरेवं गत्युपपादने हृदयावच्छिन्ने भूताकाशेऽपि सा निवारयितुं न शक्येति गतिस्तावद्भूताकाशेऽपि सम्भवति ब्रह्मलोकशब्दोऽपि तत्प्रकरणगतब्रह्मलोकशब्दान्तरे क्लृप्तेन षष्ठीसमासेन परमाकाश इव हार्दे भूताकाशेऽप्युपपद्यत इत्याशङ्कानिराकरणार्थं तथा हि दृष्टमिति सूत्रशेषं व्याचष्टे—तथाहि श्रुत्यन्तर इति । गतिशब्दयो'रेवमेव खलु सोम्ये'त्यादिश्रुत्यन्तरे ब्रह्मण्येव दर्शनमस्ति न भूताकाशे । अतस्तदुभयमिह ब्रह्मगतमेव ग्राह्यम् । श्रुत्यन्तरप्रसिद्धत्वात् । न भूताकाशगतम् । तत्सामर्थ्यस्य कल्पनीयत्वेन विलम्बितोपस्थितिकत्वादिति भावः। सूत्रे दृष्टशब्दः ' तथा चेतोऽर्पणनिगदात्तथाहि दर्शन'मिति सूत्रे दर्शनशब्द इव भावप्रत्ययान्तः न तु कर्मणि निष्ठान्तः । तथा च दृष्टशब्दस्य गतिशब्दौ प्रति विशेषणतया पुलिङ्गेन द्विवचनेन च भाव्यमिति शङ्काया नावकाशः। भाष्ये गमनं दृष्टं ब्रह्मलोकशब्दश्च तस्मिन् दृष्ट इति दृष्टशब्दस्य गतिशब्दविशेषणत्वेन निवेशनं फलितार्थप्रदर्शनपरं न सौत्रदृष्टपदयोजनापरम् । अस्तु वा तथापि न विरोधः । विशेष्यस्य पुलिङ्गद्विवचनान्तत्वेन निर्दिष्टत्वेऽपि पाणिनीये 'द्विगुरेकवचन'मिति सूत्रे लिङ्गसामान्यविव-

---

( १ ) 'न तदपि साधकमित्याशङ्का' इति ख. पाठः ।

किं च—मा भूद्गतिशब्दयोरन्यत्र दर्शनम्। अस्मिन् प्रकरणे सर्वासां प्रजानामहरहः श्रूयमाणं गमनं ब्रह्मलोकशब्दश्च परमेश्वरस्य दहराकाशत्वे पर्याप्तं गमकम्॥

॥ सू० ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥

'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' इति जगद्विधृतिः परमेश्वरस्य महिमाऽस्मिन् दहराकाशे उपलभ्यते। धृतिश्च परमेश्वरमहिमा, 'एष

---

क्षया पुल्लिङ्गविशेषणे नपुंसकलिङ्गव "त्कर्मणो रोमन्थतपोभ्यां वर्तिचरो'रिति (पा० ३. १. १५.) सूत्रे द्विवचनान्ते विशेषणे विशेष्यद्वयगतप्रातिस्विकैकत्वविवक्षयैकवचनवच्चात्र नपुंसकस्यैकवचनस्य चोपपत्तेः। लिङ्गं चेति सूत्रशेषं व्याचष्टे—किं च माभूदिति। अवेदनस्य मलावृतत्वहेतुनोपपादनं पुरुषार्थरूपहिरण्यनिधिदृष्टान्तोपपादनं च गतिशब्दयोः परमेश्वरविषयत्व एव सम्भवति न भूताकाशविषयत्व इति भावः॥ सू० ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥ नन्वस्तु नाम धृतिः पारमेश्वरो महिमा तथापि दहराकाशे स न श्रूयते। 'अथ य आत्मे'त्यथशब्देन दहराकाशप्रकरणविच्छेदादित्याशङ्कानिराकरणार्थं 'मस्यास्मिन्नुपलब्धेरिति सूत्रशेषमस्य महिम्नोऽस्मिन्दहराकाश एवोपलब्धेरित्यर्थपरतया व्याचष्टे—अस्मिन्दहराकाश इति। 'अथ य आत्मे'ति प्रकृतपरामर्शिनो यत्पदस्यात्मशब्दस्य च प्राग्दहराकाशे प्रयुक्तस्य विद्यमानतया सेतुत्वादिवर्णनस्य तदन्यविषयत्वं न सम्भवति। तस्मादथशब्दः पूर्वप्रकृतापेक्षार्थो वर्णनीयः। तस्य च प्राङ्निर्दिष्टा अनन्तरं निर्देक्ष्यमाणाश्च गुणाः परस्परापेक्षया समुच्चित्योपासनीया इति सूचनं फलम्। अन्यथा 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवती'ति दहरविद्याफलविधिवाक्ये दहराकाशगतवस्तुजातमध्ये विशिष्य सत्यकामपुनर्ग्रहणस्यास्मिन्प्रकरणे प्रागुक्तानामपहतपाप्मत्वादीनां वक्ष्यमाणानां सेतुत्वादीनां च दहराकाशगुणानां परिसङ्ख्यार्थत्वशङ्कया सर्वेषामुक्तवक्ष्यमाणगुणानामुपास्यत्वं न सिद्ध्येत्। तत्र 'सत्यान्कामानि'ति शब्दो हि तदनन्तरं 'स यदि पितृलोककामो भवती'त्यारभ्यानुक्रान्तानां पितृमातृभ्रातृस्वसृसखिगन्धमाल्यान्नपानगीतवादित्रस्त्रीप्रभृतीनामुपासकभोग्यानां वाचकः। पित्राद्यनुक्रमणानन्तरं 'त इमे सत्याः कामा अनृतापिधाना' इति श्रुत्यैव तथा विवृतत्वात्। स च सत्यकामशब्दः पितृमात्रादिरूपचेतनात्मकसकलभोग्यरूपत्वार्थाभिधानद्वाराभावात् सदृशस्य निरतिशयप्रेमास्पदस्य दहराकाशगतस्य निरतिशयानन्दस्य लक्षक इति वक्ष्यते। तस्माद्धृत्यादिमहिमवर्णनं दहराकाशविषयमेवेति भावः। नन्वस्त्विदं दहराकाशविषयं तावता तस्य न परमेश्वरत्वसिद्धिः। अवकाशरूप आकाशेऽपि सर्वविधारकत्वोपपत्तेः। न च वाच्यं विधारकत्वमात्रोपपत्तावपि 'लोकानामसम्भेदाय सेतु'रिति विशेषणं भूताकाशे नोपपद्यते इति। तेन हि विशेषणेन यथा जलमध्ये निबद्धस्सेतुर्जलराशिद्वयस्यासङ्कराय भवति एवमयमपि लोकबृन्दस्येत्येतावत्प्रतिपाद्यते। इदं भूताकाशसाधारणमेव। यदि हि लोकानामन्तरावकाशात्मकः भूताकाशो न स्यात् तेषां सङ्करस्स्यादेवेति शङ्कापाकरणार्थत्वेनाप्यस्या 'स्मिन्नुपलब्धे'रिति सूत्रशेषं योजयति—धृतिश्चेति। नात्र धृतिमात्रं प्रतिपाद्यते किं तु स्थावरजङ्गमात्मकसर्वलोकव्यवस्थिततत्तत्स्वरूपस्वभावाकृत्याद्यसङ्करापादनसर्वनियमनशक्तिमत्त्वरूपपरमेश्वराधीनविधारकत्वरूपः कश्चन महिमा प्रतिपाद्यते। अ-

सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति श्रुतेः। अतोऽपि दहराकाशः परमेश्वरः॥

॥ सू० ॥ प्रसिद्धेश्च ॥ १६ ॥

'दहं विपाप्मं परवेश्मभूतं यत् पुण्डरीकं पुरमध्यसंस्थम्। तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति महोपनिषिदि, 'हृत्पुण्डरीकं विरजम्' इत्यारभ्य—'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा' इत्यादि कैवल्योपनिषदि च परमेश्वरस्योमासखस्य दहरपुण्डरीकमध्यवर्तित्वेनोपास्यत्वं प्रसिद्धम्। ततोऽपि परमेश्वरो दहराकाशः॥

ननु दहरपुण्डरीकमध्ये दहराकाशान्तर्वर्तित्वेनोपास्यत्वं 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इत्याद्युपनिषदन्तरे प्रसिद्धं परमेश्वरस्य इह दहराकाशत्वेनेति विरोध इति चेत्—तत्रापि दहराकाशमध्यवर्ती न परमेश्वर उपास्यः; किं तु दहराकाशो परमेश्वरधर्माणामपहतपाप्मत्वादीनां संबन्धप्रतीतेः दहराकाशत्वमप्यस्य चिदम्बररूपतयेति न विरोधः॥

---

स्यैवंभूतस्य महिम्नोऽस्मिन्परमेश्वरे 'एष सर्वेश्वर' इत्यादिश्रुतावुपलब्धेः 'लोकानामसम्भेदाये'त्यत्रापि तत्प्रत्यभिज्ञानाच्चेति भावः। ननु 'यद्येष सर्वेश्वर' इत्यादिबृहदारण्यकश्रुत्यनुसारेण 'सेतुर्विधृति'रित्यत्र ऐश्वर्याधीनं विधारकत्वं प्रतिपाद्यं स्यात् तर्हि दहराकाशः परमेश्वरो न स्यात्। किं तु तदन्तर्वर्त्त्येव परमेश्वरः स्यात्। बृहदारण्यके 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपति'रित्युपक्रम्य 'एष सर्वेश्वर' इत्याद्याम्नानादित्याशङ्कानिराकरणार्थं सूत्रम्॥ सू०॥ प्रसिद्धेश्च ॥ १६॥ छान्दोग्यश्रुतौ तावदपहतपाप्मत्वादिगुणान्वयस्वारस्यात् दहराकाशः परमेश्वरः प्रतीयते। 'दहं विपाप्म'मित्यादितैत्तिरीयश्रुतावपि 'गगनं विशोक'इत्यपहतपाप्मत्वाद्यनन्तरं तद्विशोकत्वान्वयप्रत्यभिज्ञानात् गगनशब्दोक्तो दहराकाशः परमेश्वरो विवक्षित इति प्रतीयते। कैवल्योपनिषदि तु हृत्पुण्डरीकान्तर्वर्तित्वेनैव परमेश्वरस्योपासना विधीयत इति न तत्र तदन्तर्वर्त्त्याकाशान्तर्गतत्वेन तदुपासनाविधानमिति शङ्कावकाशोऽस्ति। तस्माद्दहरपुण्डरीकवर्ती परमेश्वर इत्यत्रापि श्रुत्यन्तरानुरोधसत्त्वादिहापहतपाप्मत्वाद्यन्वयस्वारस्यानुरोधेन दहराकाशः परमेश्वर इत्यत्र नानुपपत्तिरिति भावः। पूर्वपक्षबीजमुद्घाटयति—नन्विति। 'इत्याद्युपनिषदन्तर' इत्यादिशब्देन 'दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः। तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम्॥ तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः। तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः॥'इति वाक्यान्तरं संगृह्यते। विरोध इति। क्वचिद्दहराकाशः परमेश्वरः प्रतीयते क्वचित्तदन्तर्वर्तीति विरोधादनिर्णयः प्राप्त इतिभावः। असिद्धो विरोधः। अत्रापि 'दहरोऽस्मिन्नन्तराकाशः तस्मिन्यदन्तस्तदन्वेष्टव्य'मिति दहराकाशमध्यवर्तिनः परमेश्वरस्योपास्यत्वप्रतिषेधादिति समाधत्ते—तत्रापीति। तर्हि अपहतपात्मत्वादिधर्मान्वयात् दहराकाशः परमेश्वर इति पूर्वोक्तं सर्वं विरुद्ध्येतेत्याशङ्क्य परिहरति—किं त्वित्यादिना। अत्रेदं चिन्त्यते। कथं दहराकाशस्तदन्तर्वर्ती च परमेश्वर इति सङ्गच्छते। स्वस्यैव स्वान्तर्वर्तित्वस्य विरुद्धत्वात् 'अन्यो ह्यन्य-

स्मिन्प्रतिष्ठित' इति श्रुतेः । तयोः शक्तिशिवत्वस्य शक्तिशक्तिमद्रूपत्वस्य वाभ्युपगमे विरोधो नास्तीति चेत्सत्यम् । तथापि दहराकाश एव शिवरूपतया शक्तिरूपतया वा परमेश्वर इति युक्तम्। न तु तदन्तर्वर्त्यपि परमेश्वर इति 'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य-मित्येतदनन्तरं 'तंचेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमित्यन्तेवासिनां प्रश्नमुद्भाव्य 'स ब्रूयाद्या-वान्वा अयमाकाश'इत्याचार्यस्योत्तरमुपक्रम्य' 'उभे अस्मि'न्नित्यादिना द्यावापृथिव्यादिकस्यैव दहराकाशान्तर्वर्तित्वप्रतिपादनादिति । अत्रायं भाष्याभिप्रायः । इदं प्रकरणं ब्रह्मोपासनाविधिप-रमिति तावदभ्युपगन्तव्यम् । 'अथ यदिदमस्मिन्ब्रह्मपुर' इत्युपक्रम एव तद्विधित्सावगमात् । मध्ये 'तेषां सर्वेषु लोकेषु कामचारो भवती'ति मुक्तेः फलत्वश्रवणात् । उपसंहारे च 'तयो-र्ध्वमायन्नमृतत्वमेती'ति मुक्तिफलवर्णनाद्दहराकाशः परमेश्वर इत्यभ्युपगन्तव्यम् । ब्रह्मात्म-श्रुत्यपहतपाप्मत्वाद्यन्वयानुरोधात् दहराकाशान्तर्वर्त्यपि परमेश्वर इत्यभ्युपगन्तव्यम् । तदन्तर्वर्तिविषयत्वादुपासनविधानस्य । एवमवश्याभ्युपगन्तव्यार्थतया अविरोधेनैव सन्दर्भो योजनीयः । तद्योजनाप्रकारस्तु, दहराकाशान्तर्वर्त्युपासनाविधानानन्तरं दहराकाशे किं वर्त-त इति प्रश्नः कृतः । अत्र पुण्डरीकदहरत्वेनैतदन्तर्गताकाशस्य सूक्ष्मत्वसिद्धावपि अतिसूक्ष्म-त्वसिद्ध्यर्थमेव खल्वाकाशेऽपि दहरत्वविशेषणं कृतम् । तत्र किं वर्तितुमर्हतीति शङ्कां मनसि निधायोक्तसर्वानुवादःतदुत्तरे दहराकाशान्तर्वर्त्युपास्यमतिसूक्ष्मेऽपि वर्तितुमर्हतीत्युपपादयि-तुमेव 'यावान्वा' इत्यादिना पूर्वपक्षदर्शितया रीत्या तस्य हृदयसुषिरविशेषावच्छेदोपाधिकम-तिसौक्ष्म्यं दृढीकृतम् । तेनातिसूक्ष्मे किं वर्तितुमर्हतीति चोद्यं निरवकाशीकृतम् । तत्र किं वर्तत इति प्रश्नस्योत्तरमुच्यते 'उभे अस्मि'न्नित्यादिना । तत्रोपासकस्य भोगस्थानभोगोपकरणभोग्यजा-तं दहराकाशे समाहितमिति नोच्यते । दहराकाशस्य स्वरूपेण व्यापकत्वसम्भवेऽपि अन्तरेवेत्यु-क्त्या तदनन्तरप्रश्नभङ्ग्या च देहावच्छिन्न एव दहराकाशे प्रतिपिपादयिषितत्वेनावगतस्य समाधानस्य तत्रानन्वयात् ।मुक्तौ विदेहावस्थायां परमेश्वरेण स्त्रक्ष्यमाणे तस्मिन्द्यावापृथिव्यादि-शब्दानां सङ्कोचकल्पनायोगात् तस्येदानींतनोपासकशरीरावच्छिन्ने दहराकाशे समाधानायो-गाच्च सर्वविषयविरक्तस्य ब्रह्मानन्दैकप्रेप्सोरुपासकस्यास्मिन्सन्दर्भे दहराकाशे सर्वविषयसमा-धानवर्णनेन 'यो ह्यस्येतः प्रैती'त्यादिसन्दर्भे दहरोपासनया तल्लाभवर्णनेन च प्रयोजनाभावा-च्च । किं तु सर्वविधमपि भोगस्थानभोगोपकरणभोग्यजातमविरक्तावस्थायामुपासकेन युगपल्लब्धं चेत् यावत्प्रेमास्पदं भवेत्तावत्प्रेमास्पदत्वयोग्यं 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मा'दिति श्रुत्यन्तरे तथैव प्रसिद्धम् ।निरतिशयानन्दरूपं ब्रह्म गौण्या वृत्त्या द्यावापृथिव्यादिसर्वशब्दानन्द-सकलशब्दसन्दर्भे प्रतिपाद्यमिति तदेव दहराकाशे समाहितमित्युच्यते ।' तस्मिन्सर्वं प्रतिष्ठित'-मिति श्रुत्यन्तरेऽपि तदेवोच्यते । तत्र सर्वभोग्यजातसदृशतया सर्वशब्दोक्तं ब्रह्मैव'तस्याश्शि-खाया मध्ये परमात्मा व्यवस्थित' इत्युत्तरत्र स्पष्टीक्रियते । इह तु विनैव च तथा स्पष्टीकरणं यदि सर्वविषयसमुदायसदृशं निरतिशयप्रेमास्पदं किञ्चिद्वस्तु देहान्तराकाशे समाहितं तदा वस्त्रभ-स्त्रिकान्तराकाशे समाहितं मृगमदकर्पूरादि वस्त्रभस्त्रिकायामिव देह एव समाहितं स्यादिति मत्वा प्रश्नः । दहराकाशस्य परब्रह्मरूपत्वेन भूताकाशवैलक्षण्याद्दहराकाश एव तत्समाहितं न तु तद-

(१) 'शक्तिशिवत्वस्य शिवशक्तिरूपत्वस्य वा' इति च पाठः । (२) सर्वशब्दशक्तं इति च. पाठः ।

वच्छेदके देह इत्युत्तरमिति । ननु दहराकाशतदन्तर्वर्तिनोर्मध्ये कः शिवः का च शिवा उ-भयथाप्युपपद्यते। दहराकाशः परमाकाशरूपा चिच्छक्तिस्तदन्तर्वर्ती शिव इति तावदुपपद्यते। 'यो वेद निहितं गुहायां परमे व्योमन्' 'कारणं तु ध्येयस्सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुरा-काशमध्य' इत्यादिश्रुतिषु हृदि शिवध्याने तदन्तर्गतशिवस्थानत्वेन मन्त्रशास्त्रेषु शिवासनत्वे-न च तस्याः प्रसिद्धत्वात् । दहराकाशः शिवस्तदन्तर्वर्ति वस्तु परमानन्दरूपा शक्तिरित्य-प्युपपद्यते। 'स एको ब्रह्मण आनन्दः' 'आनन्दं ब्रह्मणो विद्वानि'त्यादिश्रुतिषु तद्धर्मत्वेन तस्याः प्रसिद्धत्वात्। अत्रान्यतरपक्षनिर्णयेनोपासनाप्रकारस्त्वानन्दमयब्रह्मोपासनाप्रकार इव सम्प्र-दायविदुपदेशादवगन्तव्यः । ननुदहराकाशतदन्तर्वर्तिनोःशक्तिशिवरूपत्वे शिवशक्तिरूपत्वेवा तयोरुभयोरप्युपासनं विधातव्यं कथं तदन्तर्वर्तिन एवोपासनं विधीयते। न च वाच्यं 'तस्मिन्यद-न्तस्तदन्वेष्टव्य'मित्युपासनाविधिवाक्ये पुण्डरीकान्तर्वर्ती दहराकाशस्तदन्तर्वर्ति यत्पदोक्तं चे-त्युभयं तत्पदपरामृष्टमन्वेष्टव्यमिति विधीयते । तत्पदस्य दहराकाशतदन्तर्वर्त्युभयपरत्वेऽपि 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या' (पा० १. २-६९-सू ) मिति नपुंसकैकशेषस्यैकवच-नस्य चोपपत्तेरिति। त्यदादिष्वेकशेषस्य 'त्यदादीनि सर्वैर्नित्यमिति(पा०. १. २- ७२.)परसूत्रे-णैव कर्तव्यत्वात् तत्र चैकवद्भावानुवृत्त्यभावात्।'एकवच्चास्यान्यतरस्या'मित्यत्रास्येत्यस्य नपुं-सकसूत्रकृतैकशेषस्यैवायमेकवद्भाव इत्येतदर्थत्वात्।न च वाच्यं त्यदादिषु नपुंसकानपुंसकयोर्न-पुंसकशेषसिद्ध्यर्थं नपुंसकसूत्रस्यापिभाव्यमिति । त्यदादिषु स च सा च ताविति स्त्रीपुंसयोः पुमे-कशेषसिद्ध्यर्थं स च तच्च ते साच तच्च ते इति नपुंसकानपुसकयोर्नपुंसकशेषसिद्ध्यर्थं च'त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानी'ति वार्तिककृता यत्नान्तरस्य कृतत्वात्। तथैकवद्भावसिद्ध्यर्थं-भाष्यवार्तिकादिषु यत्नान्तरदर्शनात्। कथं तर्हि तन्त्ररत्ने'दधि मधु घृतं धाना उदकं तण्डुला-स्तत्संसृष्टं प्राजापत्य'मिति चित्रेष्टिविधिवाक्ये दध्यादिप्रत्येकद्रव्यको यागगणः न तु संसृष्टैकद्र-व्यको याग इति सिद्धान्तसिद्धये तत्पदं संसृष्टशब्दोक्तैकद्रव्यपरं न भवति किंतु दध्याद्यने-कद्रव्यपरमित्युक्त्वा दध्यादिषु तदिति पदं नपुंसकैकशेषैकवद्भावाभ्यां निर्व्यूढम्।अथ वा 'न-पुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मिति (पा०. १.१. ६९.) स्मरणान्नपुंसकानपुंसकानेका-भिप्रायमपि युक्तमेव तदिति नपुंसकैकवचनम्। एवं प्राजापत्यमपि द्रष्टव्यमिति अभ्युच्चयत्वे-न तथोक्तम्। सर्वनाम्नां प्रक्रान्तपरत्व एव स्वारस्येन प्रक्रम्यमाणपरामर्शित्वस्यानन्यगतिकत्वात् द्रव्यविशेषस्यैवाकाङ्क्षापूरकत्वेन संसृष्टमात्रस्य प्रजापतिसम्बन्धानर्हत्वाच्च । न्यायतस्तत्पदस्य दध्याद्यनेकपरत्वावश्यंभावे सति तदित्येकवचनोपात्तमेकत्वं 'गुणे त्वन्याय्यकल्पने'ति न्या-येन पाशबहुत्ववदविवक्षितमिति मुख्यहेतूक्त्यनन्तरमथ वेत्यारम्भादिति चेत्। उच्यते। अ-न्वेष्टव्यमित्यत्र 'नपुंसकमनपुसकेने'त्येकशेषे सति तत्रैकस्मिन्नर्थ इवैकवचनरूपं कार्यं भवत्त-द्विशेषणे नपुंकसूत्र कृतैकशेषशब्दोक्तार्थवर्तिनि तदिति सर्वनाम्न्यपि भवति। यथा "अस्मदो द्व-योश्चे'ति सूत्रेणास्मदर्थस्यैकत्वे द्वित्वे च बहुष्वर्थेष्विव बहुवचनं भवत् अस्मदर्थवर्तिनि क्रिया-पदेऽपि भवति'वयं ब्रूम' इति । 'शुक्लश्च शुक्ला च शुक्लं च वर्तत' इति क्रियापदेऽप्ये-कवचनं दृश्यत एव। तद्वत्सर्वनाम्न्यपि भवितुमर्हति । अत एव महाभाष्ये 'शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्लं तानीमानि शुक्लानी'ति द्विविधे नपुंसकसूत्रो-दाहरणे कृतैकवद्भावमेव तदिति पदं प्रथमोदाहरणविशेषणं कृतम्। एवं चित्रेष्टिवाक्येऽपिप्रा-

## ॥ सू० ॥ इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १७ ॥

'अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' इति इतरो जीवः परामृश्यते । अतः प्रकृताकाशः स एव भवतीति चेत्—न, उक्तानामपहतपाप्मत्वादीनां तस्मिन् असम्भवात् । अतः परमेश्वर एव तदाश्रय इति युक्तम् ॥

---

जापत्यशब्दे नपुंसकसूत्रप्रवृत्तौ तदर्थवर्तिनि तदिति पदेऽपि नपुंसकैकवचनं भवतीति तत्रत्याभिप्रायो वर्णयितव्य इत्यभ्युच्चयत्वेन तद्वाक्यं योजनीयम् । यद्वा । 'तदन्वेष्टव्य'मित्यत्र सामान्याभिप्रायेण तदिति नपुंसकैकवचनं भविष्यति । यथा शुक्लेन वस्त्रेण शुक्लेन च कम्बलेन तेन शुक्लेनेति प्रयोगे तृतीयान्तैकतृतीयशुक्लपदे नपुंसकानपुंसकलक्षणविशेषाभावान्नपुंसकसूत्राप्रवृत्तेः शुक्लेनेति सामान्याभिप्रायं नपुंसकैकवचनम् । एवमेव ह्ययं शुक्लेनेति प्रयोगः पदमञ्जर्यां समर्थितः । तथैव 'शक्यमञ्जलिभिः पातुं वाताः केतकगन्धयः' इत्यादयः प्रयोगा उपलभ्यन्ते । यद्वा । 'तदन्वेष्टव्य'मिति दहराकाशान्तर्वर्तिन एवोपासनाविधिरस्तु । दहराकाशोपासनाविधिस्तु तदाक्षिप्तो लभ्यते 'विश्वजित्सर्वपृष्ठोऽतिरात्रो भवती'त्यत्र पृष्ठगतसर्वताविध्याक्षिप्त इव पृष्ठविधिः । न हि दहराकाशमनुपासीनस्तदन्तर्वर्तित्वेनान्यदुपासितुं शक्नोति । अथ वा । अस्मिन्दहरविद्याप्रकरणे 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवती'ति वाक्यं फलविशेषविशिष्टोपासनाविधायकम् । तत्र 'त्मान'-मिति दहराकाशस्य 'सत्यान्कामा'निति तदन्तर्वर्तिनः परमप्रेमास्पदतया सकलभोग्यसमानस्य परमानन्दस्य चोपास्यत्वेन निर्देशोऽस्त्विति न काचिद्न्यूनता । 'तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य'मिति नोपासनाविधिः । एकत्र विधिद्वयवैयर्थ्यात् । किं तूपासनाविध्यर्थाक्षिप्ते तद्विचाररूपे तदन्वेषणे वोपासनाफलरूपे तत्साक्षात्कारे च विधिसरूपमर्थवादवाक्यम् । न चार्थवादे यावदुपास्यगतं तस्य सर्वस्यापि ग्रहणनियमः । द्रव्यदेवताविशिष्टयागविध्यर्थवादानां केवलद्रव्यविषयाणां 'स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरस्समभव'दित्यादीनां केवलदेवताविषयाणां 'मग्निं वा एतस्य शरीरं गच्छति सोमं रस' इत्यादीनां बहुलमुपलम्भेन तद्वदस्याप्यर्थवादस्य अन्यतरोपास्यविषयत्वोपपत्तेः । तस्माद्दहराकाशस्तदन्तर्वर्ती चोपास्यः परमेश्वरइति युक्तमेव । एवं भूतजीवसाधारणः पूर्वपक्षो निराकृतः । अतः परं जीवपक्षोपपादकहेत्वन्तरोद्भावनपूर्वकं तन्निराकरणार्थानि सूत्राणि ॥ सू० ॥ इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १७॥ इतरो जीवः परामृश्यत इति । सुषुप्त्यवस्थावाचकस्सम्प्रसादशब्दः तद्वति जीवे वर्तितुं शक्नोति न ब्रह्मणि । शरीरात्समुत्थानं च तदाश्रयस्य जीवस्यैवोपपद्यते । ब्रह्मप्राप्त्या स्वरूपाविर्भावश्च तस्यैवोपपद्यत इति भावः । नन्वस्तु 'य एष सम्प्रसाद' इत्यादौ जीवपरामर्शः 'एष आत्मे'त्यत्र तु तत्प्राप्यस्य ज्योतिष एतच्छब्दपरामृष्टस्य आत्मशब्दनिर्दिष्टदहराकाशत्वविधानमित्याशङ्क्याह—अत इति । 'य एष' इत्यादौ निर्दिष्टस्यैव अग्रे 'एष' इत्यनेन प्रतिनिर्देशो युक्त इति भावः । तस्मिन्नसम्भवादिति । यद्यप्यपहतपाप्मत्वाद्यसम्भवो जीवे स्पष्ट एव तथापि तत्सम्भवशङ्कां काञ्चिदुद्भाव्य निराकर्तुं शङ्कावकाशप्रदमिदं सूत्रम्

## ॥ सू० ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥

उत्तरत्र प्रजापतिवाक्ये 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' इति जीवस्यापहतपाप्मत्वादिकं श्रूयते। जीवलक्षणमवस्थात्रयवर्तित्वं च श्रूयते, 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' 'य एष स्वप्ने महीयमानश्चरति एष आत्मेति होवाच' तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वं न विजानात्येष आत्मेति होवाच' इति। ततः स एवायं भवितुमर्हतीति चेत्—न सारमेतत्; निजानादिकर्मकलङ्कसंबन्धघटितकलेबरतिरोहितापहतपाप्मत्वादिको

---

॥ सू ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥ ननु प्रजापतिविद्यायामपि परमेश्वरस्यैवापहतपाप्मत्वादिकं श्रूयते न जीवस्येत्याशङ्क्याह—जीवत्वलक्षणमिति । 'य एषोऽक्षिणी'त्यादिवाक्यान्यपि ब्रह्मपराण्येव। वाक्यत्रयेऽ'प्येतदमृतमेतदभयमेतद्ब्रह्मे'ति श्रवणात्। अक्षिवाक्ये उपकोसलविद्योपास्यप्रत्यभिज्ञानात्। 'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीती'ति श्रुत्यन्तरे ब्रह्मणोऽपि स्वप्नसम्बन्धप्रसिद्धेरिह महीयमानत्वलिङ्गात्स्वप्नवाक्यस्यापि ब्रह्मपरत्वोपपत्तेः सुषुप्तिवाक्यस्य यत्र यस्मिन्नाधारे समस्तोऽपि जन्तुस्सुषुप्तो भवतीति सुषुप्त्याधारपरत्वोपपत्तेरित्याशङ्कानिराकरणार्थं जीवत्वलक्षणमेतद्वाक्यत्रयप्रतिपाद्यमिदंतया निर्दिशति— अवस्थात्रयवर्तित्वं चेति। अयमाशयः। स्वप्नवाक्ये स्वप्नप्रयोजकत्वेन सुषुप्तिवाक्ये सुषुप्त्याधारत्वेन च ब्रह्मणि सम्भवि स्वप्नसुषुप्त्यवस्थावत्त्वमुपपद्यते। स्वप्नसम्बन्ध्यात्मोपदेशानन्तरं 'घ्नन्ति त्वेवैनं विच्छादयन्ति वाप्रियवेत्तेव भवत्यपि रोदितीवे'तीन्द्रेण तस्य हन्यमानत्वविच्छाद्यमानत्वबन्धुजनमरणाद्यप्रियद्रष्टृत्वरोदितृत्वादिप्रतिभासवतो दुष्टत्वस्य सुषुप्तिसम्बन्ध्यात्मोपदेशानन्तरं 'नाह खल्वेवं सम्प्रत्ययमात्मानं जानात्यहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामी'ति तस्य विशेषविज्ञानरहिततया विनष्टप्रायत्वतो दुष्टत्वस्य चोक्तत्वात्। 'एतदभय'मित्यादि तु मुक्तावस्थाभाविरूपापेक्षयोपपद्यते। एवं द्वितीयतृतीयपर्याययोस्स्वप्नसुषुप्त्यवस्थावत्त्वप्रतिपादकत्वव्यवस्थितौ प्रथमपर्यायस्य जागरावस्थावत्त्वप्रतिपादकत्वमौचित्यात्सिद्ध्यति। प्रथमपर्यायानन्तर'मेतं त्वेव ते भूयोऽनुव्याख्यास्यामी'ति प्रतिज्ञापूर्वकमेव द्वितीयतृतीयपर्याययोः प्रवृत्तत्वेन प्रथमपर्यायस्य स्वप्नसुषुप्तिमज्जीवान्यविषयत्वकल्पनायोगात् 'अक्षिणि दृश्यत' इत्यस्य दर्शनादक्षिणि सन्निहितोऽनुमीयत इत्यर्थकत्वेन जागरावस्थाविषयत्वोपपत्तेश्चेति प्रजापतिवाक्ये जीवः संसारिदशायां तिरोहितापहतपाप्मत्वादिकः सन् मुक्त्यवस्थायां साधनाधीनतदाविर्भावः प्रतिपाद्यते न संसारदशायामप्याविर्भूतापहतपाप्मत्वादिकः। दहराकाशे श्रूयमाणं त्वपहतपाप्मत्वादिकं नित्याविर्भूतमेव ग्राह्यम्। तद्ग्रहसम्भवे तिरोहितत्वेनासत्प्रायस्य साधनाधीनाविर्भावस्य च ग्रहणायोगादित्यभिप्रायमाविर्भूतस्वरूपस्त्विवति परिहारसूत्रांशं व्याचष्टे—निजानादीति। ननु दहरवाक्येऽपि संसारदशायां तिरोहितं मुक्तिदशायामाविर्भवदेवापहतपाप्मत्वादिकमुच्यते। तथा हि 'त इमे सत्याः कामा अनृतापिधाना' इति सत्यकामत्वस्य तावत्तिरोहितत्वमुक्तम्। येषामेव तिरो-

जीवः परं ज्योतिरुपसंपद्य पश्चादाविर्भूतस्वरूप आविर्भूतापहतपाप्मत्वादिकोऽत्र प्रतिपाद्यते, न संसारी । दहराकाशस्तु स्वाभाविकातिरोहिततत्तत्कल्याणगुण इति न बद्धो मुक्तो वाऽत्र दहराकाशः ॥

॥ सू० ॥ अन्यार्थश्च परामर्शः ॥ १९ ॥

'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति जीवस्य दहराकाशशब्दनिर्दिष्टेन परवस्तुना संपद्य स्वरूपाविर्भावोऽभिधीयते । तत्र तादृक्तन्माहात्म्यप्रतिपादनार्थो जीवपरामर्शः । अतो न विरोधः ॥

॥ सू० ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥

अल्पस्थानाश्रयत्वात् अल्पस्वरूपप्रतीतेः न परोऽयमिति शङ्कायाः पूर्वमुक्तमेवोत्तरं 'व्योमवच्च' इति ॥

---

हितत्वमुक्तं तद्बद्धत्वमेव खल्वपहतपाप्मत्वाद्यन्तर्गतं सत्यकामत्वम्। तदन्यकल्पनायां प्रमाणाभावात् । तत्तिरोधानोक्तिश्चापहतपाप्मत्वादीनामपि तिरोधानस्योपलक्षणम् । अत एव दहरवाक्ये मध्येमध्येऽपि प्रजापतिवाक्यमध्य इव 'य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाये'त्यादिनाऽपहतपाप्मत्वादिस्वरूपाविर्भाव उच्यत इत्याशङ्क्याह—दहराकाशस्त्विति । दहराकाशगतस्य सत्यकामत्वस्य मलावृतानस्मान्प्रति तिरोहितत्वमुच्यते न तु साश्रयं प्रति । 'सर्वं तदत्र गत्वा विन्दत' इत्यग्रे निवृत्तमलावरणस्य दहराकाशदर्शिनस्तत्त्वदर्शित्वोक्तेः । जीवस्वरूपाविर्भावस्त्वन्यार्थं दहरवाक्यशेषे परामृश्यत इत्युत्तरसूत्रे वक्ष्यते । तस्मादाविर्भावसाधनापेक्षकल्पनागौरवपरिहाराय नित्याविर्भूतसकलकल्याणगुण एव दहराकाशः प्रतिपाद्य इत्यभ्युपगन्तव्यमिति भावः । यदि दहराकाशो न जीवः किमर्थस्तर्हि 'य एष सम्प्रसाद' इत्यादौ जीवपरामर्शः तत्राह—॥ सू. ॥ अन्यार्थश्च परामर्शः ॥ १९ ॥ 'अहरहर्वा एवंवित्स्वर्गं लोकमेती'ति प्रकृतो विद्वान् 'य एष सम्प्रसाद' इति परामृश्यते। स विद्वान् कदा स्वर्गं लोकमेति तस्य स्वर्गलोकप्राप्तौ किं भवतीत्याकाङ्क्षितार्थप्रतिपादकतया अनन्तरग्रन्थावतरणौचित्यात्। 'परं ज्योति'रिति दहराकाश उच्यते। विदुषोपासितव्यदहराकाशस्यैव तत्क्रतुन्यायेन तत्प्राप्तव्यतौचित्यात्।अतः 'परं ज्योतिरि'ति निर्दिष्टो दहराकाशो मुक्तप्राप्यत्वलिङ्गाद्ब्रह्मेत्ये'ष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मे'ति वाक्यस्य यच्छब्दनिर्दिष्टमपि जीवं विहाय ज्योतिश्शब्दनिर्दिष्टदहराकाशपरत्वमेव वक्तुं युक्तम्। अथ वा मुक्तावभिनिष्पत्तव्यजीवरूपवर्णनपरतया तज्जीवपरमेवास्तु । अस्मिन्पक्षे 'एष आत्माऽपहतपाप्मा' 'तद्य इहात्मानमनुविद्य व्रजन्ति' 'अथ य आत्मा स सेतुर्विधृति'रित्येतत्प्रकरणगतात्मशब्दानां ब्रह्मपरत्वेऽप्येतद्वाक्यगतात्मशब्दस्य जीवपरत्वमिति वैरूप्यं भवति। स तु न दोषः। 'स्याच्चैकस्य ब्रह्मशब्दव' दिति न्यायात्। एवं स्थिते 'य एष सम्प्रसाद' इत्यादिवाक्यं जीवपरामर्शकमपि ज्योतिश्शब्दोक्तस्य दहराकाशस्य परब्रह्मणो....त्वतत्स्वरूपाविर्भावयितृत्वरूपमहिमविशेषप्रतिपादनार्थमिति न ब्रह्मप्रकरणे जीवपरामर्शस्य वैयर्थ्यमिति भावः ॥ सू. ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥२०॥ शारीराधिकरणे केवलमल्पौकस्त्वेन घटकरकाद्यवच्छेदेन व्योम्न इव व्यापकत्वं न हीयत इत्युक्तम्। इह तु पुण्डरीकदहरत्वोक्त्या तदवच्छेदकृतदहरत्वस्यार्थसिद्धत्वेऽप्याहत्य

## ॥ सू० ॥ अनुकृतेस्तस्य च ॥ २१ ॥

तस्य जीवस्य दहराकाशशब्दनिर्दिष्टपरज्योतिरनुकृतिरवगम्यते, 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोकः, तस्माद्वा एतं सेतुं तीर्त्वा अन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवति उपतापी सन्ननुपतापी भवति, तस्माद्वा एतं सेतुं तीर्त्वा अपि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येष ब्रह्मलोकः' इति वाक्यशेषे । अत्र हि दहराकाशं प्राप्तस्य पाप्मकार्यान्धत्वाद्यभावे सततोदितप्रकाशत्वे च प्राप्यस्य दहराकाशस्यापहतपाप्मत्वं च हेतुत्वेनोच्यते ।

दहरत्वोक्त्या 'यावान्वा अयमाकाश' इत्यतिसौक्ष्म्यदृढीकरणेन चाल्पत्वं स्वाभाविकमवधृतम्। यद्यपि शारीराधिकरणविषयवाक्येऽपि 'अणोरणीयानि'त्याहत्याणीयस्त्वमुक्तं तथापि 'महतो महीयानि'ति तत्र महत्त्वमपि वर्णितम् । अतोऽत्र स्वाभाविकाल्पत्ववचनेन व्यापकत्वं हीयत एवेति दहराकाशस्य जीवत्वमेव युक्तम्। न तु परमेश्वरत्वं तच्छक्तित्वं चेत्यधिकशङ्कापरिहारार्थं सूत्रम् । आहत्य महत्त्वानुक्तावपि ब्रह्मश्रुत्यपहतपाप्मत्वादिबहुप्रमाणानुरोधात् अल्पत्वं स्थानोपाधिकम् । आहत्य वचनं सूक्ष्मत्वदृढीकरणं च 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठित' मिति शाखान्तरश्रुतं हृदयावच्छेदोपाधिकत्वं विभावयितुम् । अन्यथा कृत्स्नहृदयाकाशावच्छेदे समनन्तराधिकरणे वक्ष्यमाणरीत्या अङ्गुष्ठपरिमाणत्वं स्यादित्येतदभिप्रायमुपपादनीयम् । तथा च व्योमवत्स्वाभाविकं व्यापकत्वमिहापि न हीयत इति परिहाराभिप्रायः ॥ जीवपूर्वपक्षनिराकरणे हेत्वन्तरमाह ॥ सू० ॥ अनुकृतेस्तस्य च ॥ २१॥ 'इतरपरामर्शादिति सूत्रप्रकृतो जीवस्तस्येत्यनेन परामृश्यते। 'दहर उत्तरेभ्य' इति सूत्राद्दहरशब्दोऽनुवृत्तः पष्ठ्यन्ततया विपरिणम्यते । सा कर्मणिषष्ठी । तस्येति कर्तरिषष्ठी । न 'चोभयप्राप्तौ कर्मणी'ति कर्तृकर्मोभयप्राप्तिमत्कृद्योगकर्मण्येव षष्ठीति नियमनात् कर्तरि तृतीयया भाव्यमिति शङ्कनीयम् । वार्तिककृता 'शेषे विभाषे'त्यकाकारव्यतिरिक्तस्त्रीप्रत्यये तस्य नियमस्य विकल्पितत्वात् । ततश्च तेन सूत्रेणात्र षष्ठी नियम्यते इति 'कर्तृकर्मणोः कृती'ति सूत्रेऽत एव कर्तरि कर्मणि च षष्ठी । अनुकृतिरनुकारः । इतरपरामर्शसूत्राज्ञेत्यनुवर्तते । तथा च तस्य जीवस्य दहराकाशानुकृतेश्च हेतोर्दहराकाशो न जीवः । अनुकर्त्रनुकार्यभावस्य भेदगर्भत्वादिति सूत्रार्थः । अस्मिन्नर्थे सूत्रं योजयति—तस्य जीवस्येत्यादिना । परज्योतिरनुकृतिरिति । न चात्र 'कर्मणि चे'ति सूत्रेण षष्ठ्यास्समासनिषेधश्शङ्कनीयः । तस्यो'भयप्राप्तौ कर्मणी'ति सूत्रेण कर्मणीति शब्दमुच्चार्य या षष्ठी नियमिता 'आश्चर्यो गवां दोहोऽशिक्षितेन अगोपालकेने'त्यादौ तद्विषयत्वात् । 'कर्तृकर्मणोः कृती'ति सूत्रत एवोभयत्रापि षष्ठीत्युक्तत्वात् । दहराकाशं प्राप्तस्येति । अनेनै'तं सेतुं तीर्त्वे'त्यस्य 'अथ य आत्मा स सेतुर्विधृतिः सेतुवदसङ्करापादकत्वेन प्राग्वर्णितमेतं दहराकाशं प्राप्तस्येत्यर्थ इति दर्शितम्। अन्धत्वादेरित्यादिशब्देन श्रुतौ विद्धोपतापिशब्दाभ्यामुक्तावायुधाधिवेधव्याधी सङ्गृहीतौ । सततोदितप्रकाशत्वापहतपाप्मत्वशब्दाभ्यां सप्तम्यन्तप्रथमान्ताभ्याम'पि नक्तमहरेवाभिनिष्पद्यते' 'सकृद्विभातो ह्येष ब्रह्मलोक' इति

( १ ) 'दहराकाशप्राप्त्या पाप्मकार्यतया जरादिवत्पाप्मरूपस्यान्धत्वादेरभावे' इति पाठान्तरम् ॥

तस्य तद्धेतुत्वं 'निरञ्जनः परमं साम्यमुपैति' इति श्रुत्यन्तरप्रसिद्धम्। तेन दहराकाशं प्राप्तस्योक्तफलावाप्तिस्तत्साम्यापत्तिरूपा तदनुकृतिरिति लभ्यते। सा च ततो भेद एवोपपद्यते। अतश्चायं न जीव इति तात्पर्यम् ॥

पुनरस्मिन् प्रमाणान्तरमाह—

॥ सू ॥ अपि च स्मर्यते ॥ २२ ॥

दहरपुण्डरीकान्तर्वर्तित्वमुपास्यत्वं च ब्रह्मणः स्मर्यते—

'अथवा परमात्मानं परमानन्दविग्रहम्। गुरूपदेशाद्विज्ञेयं पुरुषं कृष्णपिङ्गलम् ॥ ब्रह्म ब्रह्मपुरे गार्गि दहराब्जखमध्यमे। अभ्यासात् संप्रपश्यन्ति सन्तस्त्वं च तथा कुरु' ॥ इत्यादि। ततः परज्योतिस्स्वरूपं मुक्तप्राप्यं परशक्त्युमासनाथं परं ब्रह्म दहरपुण्डरीकाकाशमध्यवर्ति स्वाभाविकापहतपाप्मत्वादिगुणकमुपासनीयमिति सिद्धम् ॥ इति दहराधिकरणम् ॥ ७ ॥

---

वाक्ययोरर्थो गृहीतः। एवं दहराकाशस्य परमेश्वरत्वमुपपादितम्। तदन्तर्वर्तिनोऽपि परमेश्वरत्वमुपबृंहणेन व्यक्तीकर्तुं सूत्रम् ॥ सू. ॥ अपि च स्मर्यते ॥२२॥ योगयाज्ञवल्क्यश्रुतौ ध्यानाध्याये कैश्चित्प्रकारैः परमेश्वरध्यानोपदेशानन्तरं प्रकारान्तरेण तद्ध्यानमुपदिश्यते—अथ वेति। परमात्मानमिति 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित' इति मन्त्रार्थस्योपसंहारः। परमानन्दविग्रहमिति 'यच्चास्येहास्ती'ति वाक्यार्थस्य। गुरूपदेशाद्विज्ञेयमिति 'तं चेद्ब्रूयु'रित्यादिशिष्याचार्यनिबन्धनज्ञापितस्य गुरूपदेशावश्यकत्वस्य। पुरुषं कृष्णपिङ्गलमिति 'ऋतं सत्य'मिति मन्त्रार्थस्य। ब्रह्म ब्रह्मपुर इति 'अथ यदिदमस्मिन्ब्रह्मपुर' इत्युपक्रमार्थस्य। दहराब्जखमध्यम इति 'तस्मिन्यदन्त'रित्युक्तार्थस्य। अभ्यासात् सम्प्रपश्यन्ति इति 'अन्वेष्टव्यं विजिज्ञासितव्य'मित्यस्य। स्वाभाविकेति। यद्यप्यपहतपाप्मत्वादिकं दहराकाशत्वेनेति प्रागुक्तं तथापि तदभेददृष्ट्या तन्मध्यवर्तिन्यपि तत्कीर्तनमुपपद्यते। तत्रापहतपाप्मत्वादीनां ब्रह्मलिङ्गानां स्पष्टानामपि पूर्वपक्षे दहराकाशादन्यत्र तदन्तर्वर्तिन्येवान्वयात् स्पष्टास्पष्टब्रह्मलिङ्गता ॥

॥ इति दहराधिकरणम् ॥ ५ ॥ ॥

नयमणिमालायाम्

अथ दहराधिकरणम् ॥ ५ ॥

सू ०। दहर उत्तरेभ्यः ॥ १३ ॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १४ ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥ प्रसिद्धेश्च ॥ १६॥ इतरपरामर्शात्स इति चेन्नासम्भवात् ॥१७॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८॥ अन्यार्थश्च परामर्शः ॥१९॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥२०॥ अनुकृतेस्तस्य च ॥२१॥ अपि च स्मर्यते ॥ २२ ॥

युक्तो दहराकाशो भूताकाशः प्रसिद्धितो यद्वा। तदुपमितोऽसौ जीवस्तथाश्रुतेरेष सम्प्रसाद इति ॥ ५९ ॥
अपहतपाप्मत्वादेरसम्भवाद्भूतजीवयोस्स शिवः। स च जीवपरामर्शस्तन्महिमख्यापनायैव ॥ ६० ॥

इति दहराधिकरणम् ॥ ५ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ दहराधिकरणानुकृत्यधिकरणे ॥ ५ ॥ ६ ॥

**॥ सू० ॥ दहर उत्तरेभ्यः ॥ १४ ॥ गतिशब्दाभ्यां तथाहि दृष्टं लिंगं च ॥ १५ ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ प्रसिद्धेश्च ॥ १७ ॥ इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥ अन्यार्थश्च परामर्शः ॥ २० ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ अनुकृतेस्तस्य च ॥ २२ ॥ अपि च स्मर्यते ॥ २३ ॥**

**भगवत्पादमते,** 'दहर उत्तरेभ्य' इत्यारभ्य 'अल्पश्रुतेरिति चेत्तदुक्तम्' इत्यन्तं सूत्राष्टकमात्रमेकमधिकरणम् । इतरत्सूत्रद्वयमधिकरणान्तरमिति विशेषः । आनन्दतीर्थमतेऽप्येवमेव । श्रीकण्ठरामानुजमतयोस्त्विदं सूत्रदशकमेकाधिकरणतया योजितम् ॥

पूर्वं परपुरुषशब्दस्य ब्रह्मणि रूढत्वात् ब्रह्मोपास्यमित्युक्तम् । तद्वदिहाप्याकाशशब्दस्य भूताकाशे रूढत्वात्तस्यैवोपास्यत्वमस्त्विति दृष्टान्तसंगत्येदमधिकरणमारभ्यते—**सू० ॥ दहर उत्तरेभ्यः ॥ १४ ॥** अस्य 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यादिकं छान्दोग्यवाक्यं विषयः । अत्र दहरपुण्डरीके यो दहराकाशः श्रुतः स किं भूताकाशः उत जीव आहोस्वित्परमात्मेति संशयः । अत्राकाशशब्दस्य भूताकाशे रूढत्वात् भूताकाशो वा ब्रह्मपुरशब्दश्रवणात् जीवे पुरशब्दवाच्यशरीरस्वामित्वोपपत्तेराराग्रोपमितत्वाच्च तस्मिन्दहरत्वस्याप्युपपत्तेश्च जीवो वा स्यादिति पूर्वः पक्षः । उत्तरेभ्यो वाक्यशेषसिद्धेभ्य आकाशसमानत्वद्यावापृथिव्यधिष्ठानत्वात्मत्वापहतपाप्मत्वादिहेतुभ्यः परमेश्वर एव दहराकाशो भवितुमर्हति न भूताकाशो जीवो वेति सिद्धान्तः ॥

दहराकाशस्य परब्रह्मत्वे हेत्वन्तरमाह—**सू० ॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १६ ॥** 'इमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति दहरवाक्यशेषे जीवानां प्रत्यहमुच्यमाना प्रकृतदहरविषया या गतिः यश्च ब्रह्मलोकशब्दस्ताभ्यां दहरस्य परब्रह्मतावगम्यते । तथाहि दृष्टं श्रुत्यन्तरे 'सता सोम्य तदा संपन्नो भवती'ति । एवं च प्रत्यहं हिरण्यगर्भलोकगमनासंभवात् ब्रह्मैव लोक इति सामानाधिकरण्यपरिग्रहे अहरहर्गमनमेव लिङ्गं ज्ञापकम् । चशब्देन निषादस्थपतिन्यायोऽपि सामानाधिकरण्यपरिग्रहे समुच्चीयत इति भावः ।

दहरस्य परब्रह्मत्वे हेत्वन्तरमाह द्वाभ्याम्—**सू० ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥** 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' इति श्रुताया धृतेरपि हेतोः 'एष भूतपाल एष सेतुर्विधरण' इत्यादिश्रुत्यन्तरेऽपि अस्य सर्वलोकविधारणलक्षणमहिम्नोऽस्मिन्परमात्मनि उपलब्धेश्च दहराकाशः परमात्मैव । इति ।

**सू० ॥ प्रसिद्धेश्च ॥ १७ ॥** दहराकाशस्यापि परमात्मन्येव प्रसिद्धेः लोकरूढ्यपेक्षया 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यादिश्रौतरूढेर्बलीयस्त्वाच्च दहराकाशः परमात्मैव न भूताकाश इति सिद्धम् ॥

ननु तर्हि जीवोऽस्त्वित्याशंक्याह—**सू० ॥ इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥** 'य एष संप्रसाद' इति संप्रसादशब्देन इतरस्य जीवस्याप्यस्मिन्प्रकरणे परामर्शात्स जीवो दहराकाशोऽस्त्विति चेन्न । **असंभवात्**=जीवे आकाशोपमेयत्वापहतपाप्मत्वादीनामसंभवादित्यर्थः ।

इत्थमभिहितस्यासंभवस्यासिद्धिमाशंक्य परिहरति—**सू० ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥ उत्तरात्**='य एषोऽक्षिणि पुरुषो दृश्यते' इत्यादि प्रजापतिवाक्यात् जाग्रदाद्यवस्थापन्ने जीवे अपहतपाप्मत्वादेस्संभवात् जीव एव दहराकाश इति चेत् अत्राह—**आविर्भूतस्वरूपस्तु ।** तुशब्दो जीवशंकाव्यावर्तकः । यतस्तत्रापि आविर्भूतं पारमार्थिकं स्वरूपमस्येति आविर्भूतस्वरूपो जीवो विवक्षितः । न तु जीवत्वेन रूपेण । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इत्युपसंहारदर्शनात् । अतस्तस्य ब्रह्मत्वेनापहतपाप्मत्वादिसंभव इति जीवत्वेन तदसंभवान्न पूर्वसूत्रस्थहेतोरसंभवस्यासिद्धिरिति भावः ॥

ननु तर्हि संप्रसाद इति जीवपरामर्शो व्यर्थः स्यादित्यत आह—**सू० ॥ अन्यार्थश्च परामर्शः ॥ २० ॥** जीवपरामर्शः परं 'ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युपसंपत्तव्यपरमात्मपर एव न जीवप्रतिपादनार्थं इत्यर्थः ।

जीवपूर्वपक्षमाशंक्य परिहरति—**सू० ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥** 'दहरोऽस्मिन्नन्तराकाश' इत्याकाशस्याल्पत्वश्रवणान्न परमात्मत्वं किं तु जीवत्वमिति चेत् । **तदुक्तम्**=तत्र समाधानमुक्तम् 'अर्भकौकस्त्वात्तद्व्यपदेशाच्चे'त्यत्र । तस्माद्दहराकाशः परमात्मैवोपास्य इति सिद्धम् ॥ **इति दहराधिकरणम् ॥ ५ ॥**

**अथानुकृत्यधिकरणम् ॥ ६ ॥ सू० ॥ अनुकृतेस्तस्य च ॥ २२ ॥** अस्य 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥' इति मुण्डकवाक्यं विषयः । अत्र सूर्यादिजगद्भासकतया प्रतीयमानं किं तेजोविशेषः उत ब्रह्मेति संशयः । प्रबलेन तेजसा दुर्बलस्याभिभवदर्शनात् तेजोविशेष इति पूर्वपक्षः । सिद्धान्तस्तु 'तमेव भान्तमनुभाति सर्व'मित्यनुभानश्रवणात् 'तस्य भासा सर्वमिदं विभाति' इति ब्रह्मभासा सर्वस्य जगतो भास्यत्वावगमाच्च सूर्यादिसर्वजगद्भासकतया प्रतीयमानं ब्रह्मैवं न तेजोविशेषः इति । सूत्रार्थस्तु,

अनुकृतेः=अनुकृतिरनुकरणम् । तस्मात् 'तमेव भान्तमनुभाति सर्वमि'त्यनुभानात् । **तस्य च**='तस्य भासा सर्वमिदं विभाति' इति वाक्याच्च तत्र प्रकृतं सूर्यादिसकलजगदवभासकं स्वयं ज्योतिः ब्रह्मैव न तु लौकिकं तेज इति ॥ 'न तत्र सूर्य' इत्यत्र 'तत्र' इति न सतिसप्तमी । किं तु विषयसप्तमी । 'भाती'ति णिजध्याहारेण भासयतीत्यर्थः ॥

अस्मिन् श्रुत्युक्तार्थे स्मृतिं दर्शयितुमाह—**सू० अपि च स्मर्यते ॥ २३ ॥** 'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥' इति 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' इति च भगवद्गीतासु स्मर्यत इत्यर्थः ॥

## इति अनुकृत्यधिकरणम् ॥ ६ ॥

**श्रीकण्ठमते,** इदं सूत्रदशकमेकमधिकरणम् । विषयवाक्यसंशयपूर्वपक्षसिद्धान्तादिकं प्रायस्समानमेव । सूत्रार्थवर्णनमात्रे क्वचिदस्ति कियानिव भेद इति तादृशेष्वेव सूत्रेषु स एवांशः प्रस्तोष्यते इति नात्र विस्तरस्यावकाशः । परब्रह्मणश्शिवस्य पुरिशयनमुपासनं च निरूपयितुमिदमधिकरणमारब्धम् । दहरशब्दवाच्यः परमेश्वर एव न भूताकाशो नापि जीव इति सिद्धान्तानुसारेण पूर्वमुक्ते दहरसूत्रार्थे नास्ति विशेषः । **'गतिशब्दाभ्या' मिति** द्वितीयसूत्रे परमस्ति कियतीव भिदा । **तथाहि दृष्टम्**=श्रुत्यन्तरे परमेश्वर एव एवं रूपं गमनं दृष्टम् 'एवमेव खलु सोम्येमास्सतीः प्रजास्सति संपद्य न विदुस्सति संपत्स्यामह' इति । ब्रह्मलोकशब्दश्च तस्मिन्दृष्टः 'एष ब्रह्मलोकस्सम्राडिति होवाच' इति । **लिङ्गं च**=किं च । गतिशब्दयोरन्यत्र दर्शनमेव मास्तु । अस्मिन्प्रकरणे सर्वासां प्रजानामहरहः श्रूयमाणं गमनं ब्रह्मलोकशब्दश्च परमेश्वरस्य दहराकाशत्वे पर्याप्तं गमकमित्यर्थः ॥ इति ॥

**सू० ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १ ॥ अस्य**=परमेश्वरस्य । **धृतेः**=जगद्विधृतिरूपस्य श्रुत्यन्तरेऽपि प्रतिपादितस्य महिम्नः । **अस्मिन्**=दहराकाशे । उपलब्धेश्च दहराकाशः परमेश्वर इत्यर्थः ।

**सू ॥ प्रसिद्धेश्च ॥१७॥** 'दहं विपाप्म' मित्यादिना महोपनिषदि 'हृत्पुण्डरीक' मित्यारभ्य 'उमासहाय' मित्यादिना कैवल्योपनिषदि च उमासहायस्य परमेश्वरस्य दहरपुण्डरीकमध्यवर्तित्वेनोपास्यत्वप्रसिद्धेश्च दहराकाशः परमेश्वर इत्यर्थः ॥

**'इतरपरामर्शात्स'** इति सूत्रार्थस्समान एव । **'उत्तराच्चे'** दिति सूत्रार्थः परं कियानिव भिद्यते । **उत्तरात्**प्रजापतिवाक्याज्जीवस्यापमहतपाप्मत्वादिकस्य प्रतीत्या स एव दहराकाशो भवतु इति चेत् । न युक्तमेतत् । यतोऽत्र प्रतिपाद्यो जीवः निजानादिकर्मबन्धोपार्जितशरीरतिरोहितापहतपाप्मत्वादिगुणकः परं ज्योतिरुपसंपद्य पश्चादाविर्भूतस्वरूपः आविर्भूतापहतपाप्मत्वादिकः खलु प्रतीयते । न संसारी । दहराकाशस्य स्वाभाविकातिरोहिततत्तत्कल्याणगुणतया अतथाभूतयोर्बद्धमुक्तयोर्जीवयोर्नास्ति दहराकाशत्वशङ्कावकाश इति तात्पर्यम् ॥

**सू० ॥ अन्यार्थश्च परामर्शः॥२०॥** 'अस्माच्छरीरा'दिति वाक्ये जीवस्य दहराकाशशब्दनिर्दिष्टपरज्योतीरूपपरवस्तुना संपद्य स्वरूपाविर्भावस्याभिधीयमानतया तत्रत्यो जीवपरामर्शः दहराकाशनिष्ठतत्तादृङ्माहात्म्यप्रतिपादनार्थ इति नास्ति विरोधः। **'अल्पश्रुते'**रिति सूत्रार्थः पूर्ववत् । **सू० ॥ अनुकृतेस्तस्य च ॥ २२ ॥ तस्य**=जीवस्य । **अनुकृतेश्च**=दहराकाशशब्दनिर्दिष्टपरज्योतिरनुकरणाच्च न जीवो दहर इत्यर्थः । 'नैनं सेतुमहोरात्र' इत्यादिवाक्यशेषे दहराकाशं प्राप्तस्यान्धत्वाद्यभावस्सततोदितप्रकाशत्वं चाभिधीयते । दहराकाशस्य तथात्वात् । एवं च दहराकाशं प्राप्तस्योक्तफलावाप्तिस्तत्साम्यापत्तिरूपा तदनुकृतिरिति सिद्ध्यति । सा च भेदे सत्येवोपपद्येत । अतश्चायं दहरो न जीव इत्याशयः । तस्येति कर्तरिषष्ठी । अनुवृत्तस्य दहरपदस्य कर्मणिषष्ठ्यन्ततया विपरिणामेनान्वय इति भावः ॥

उक्तेऽर्थे प्रमाणान्तरमप्यस्तीत्याह—**सू० ॥ अपिच स्मर्यते ॥ २३ ॥** 'अथवा परमात्मान'मित्यादिना ब्रह्मणः दहरपुण्डरीकान्तर्वर्तित्वमुपास्यत्वं च स्मर्यते । अतः परज्योतिस्स्वरूपं मुक्तप्राप्यं परशक्त्युमासनाथं परं ब्रह्म दहरपुण्डरीकाकाशमध्यवर्ति स्वाभाविकापहतपाप्मत्वादिगुणकमुपासनीयमिति सिद्धम् ॥

**रामानुजमते**=अस्याधिकरणस्य विषयवाक्यसंशयपूर्वपक्षसिद्धान्तादिकं सर्वं प्रायः श्रीकण्ठमतवदेव । परमात्मा परं नारायणः इति विशेषः । पूर्ववत्सूत्रदशकात्मकमेवेदमधिकरणम् ।

**सू० ॥ प्रसिद्धेश्च ॥ १८ ॥** 'को ह्येवान्यात्' सर्वाणि हवा इमानि'इत्यादिश्रुतिवाक्येषु आकाशशब्दस्य ब्रह्मण्येव प्रसिद्धेरित्यर्थः । **सू० ॥ अनुकृतेस्तस्य च ॥ २२ ॥ तस्य**=परमात्मनः । **अनुकृतेश्च**=तत्साम्यापत्तिरूपादनुकाराच्च । परमात्मनोऽनुकाराद्धि जीवस्याविर्भूतस्वरूपस्यापहतपाप्मत्वादिगुणकत्वम् । अतोऽनुकर्तुर्जीवादनुकार्यो दहरः पृथग्भूत इति सिद्धम् । तत्साम्यापत्तिरूपस्तदनुकारः 'निरंजनः परमं साम्यमुपैति' इति श्रुतिप्रसिद्ध एव । इति ।

**सू० ॥ अपि स्मर्यते ॥२३॥** 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' इति तदुपासनात्तत्साम्यापत्तिरूपानुकृतिर्जीवस्य स्मर्यते चेत्यर्थः । शेषं समानं श्रीकण्ठमतेनेति संग्रहः ॥

**आनन्दतीर्थमते,** विषयवाक्यसंदेहपूर्वपक्षसिन्द्धान्तादिकं प्रायः मतान्तरसमानमेव। किं तु उद्देश्यं परं भिद्यते ॥ **सू०॥ दहर उत्तरेभ्यः ॥१८॥** दहरे उत्तरेभ्यः इति पदच्छेदः । भगवत्पादमतवदिहाप्यधिकरणयोजनेत्यपरो विशेषः । हृत्पद्मस्थदहराकाशस्थत्वं विष्णोरस्ति वा नास्तिवेति संदिह्य नास्तीति पूर्वपक्षमाकलय्य भूताकाशजीवयोरसंभवाद्विष्णोरस्ति इति सि-

## अथ प्रमिताधिकरणम् ॥ ६ ॥

### अतः परमेश्वरस्योपास्यरूपान्तरमुच्यते—

### ॥ सू ॥ शब्दादेव प्रमितः ॥ २३ ॥

उत्तराधिकरणस्य प्रासङ्गिकीं सङ्गतिमाह—अतः परमेति । पूर्वाधिकरणे परमेश्वरस्य हृदये कृष्णपिङ्गलत्वादिविशिष्टं रूपमुपासनार्थमुक्तम् । तत्प्रसङ्गात्तत्र तस्य रूपान्तरमुच्यत इत्यर्थः ॥ सू. ॥ शब्दादेव प्रमितः ॥ २३ ॥ 'ईशानो भूतभव्यस्ये'त्यत्र विदित्वे-त्यध्याहारः । अङ्गुष्ठमात्रः पुरुष उक्तः । तं भूतभव्यस्येशानं विदित्वा ततस्तदनन्तरं

---

द्धान्तितम्॥ सूत्रार्थस्तु, दहरे='दहरं पुण्डरीकं वेश्मे'तिवाक्योक्तहृत्पद्मस्थाल्पाकाशे स्थितो विष्णुरेव । न तु जीवादिः । कुतः । उत्तरेभ्यः='य आत्मापहतपाप्मे'त्याद्युत्तरवाक्योक्तनिर्गतपाप्मत्वादिधर्मेभ्य इत्यर्थः ।

**गतिशब्दाभ्यामित्यादि । गतिशब्दाभ्याम्**=अस्यार्थोऽविशिष्ट एव । **तथाहि दृष्टं लिङ्गं च** । किं च । यत' 'अरश्च' इति श्रुतौ **तथा**=सुप्तप्राप्यत्ववत् । **हि**=विष्णुनिष्ठत्वेन प्रसिद्धम् । **लिंगम्**=अर्णवाख्यसुधासमुद्राश्रयलोकवत्त्वरूप-ज्ञापकं हृत्पद्मस्थे दृष्टमुक्तम् । अतोऽपि दहरपद्मस्थो विष्णुरेवेत्यर्थः ॥

**सू० ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ धृतेः**='स एष सेतुर्विधृति' रिति हृत्पद्मस्थस्य सर्वाधारत्वश्र-वणाच्च विष्णुरेव हृत्पद्मस्थः । किं च छान्दोग्ये हृत्पद्मस्थनिष्ठतयोक्तस्य **अस्य** विष्णुमहिम्नः सर्वेश्वरत्वादेः । **अस्मिन्**='एष सर्वेश्वर' इति वाजसनेयकवाक्ये । उपलब्धेः=श्रवणात् । विष्णुरेव हृत्पद्मस्थः । **प्रसिद्धेश्च ॥ १८ ॥** 'दहं विपाप'मिति श्रुतौ विष्णोः हृत्पद्मस्थत्वप्रसिद्धेश्च स एव हृत्पद्मस्थ इत्यर्थः ।

**इतरपरामर्शादित्यादि। इतरपरामर्शात्**='स्वेन रूपेणाभिनिष्पद्यत' इत्युक्तस्य जीवस्य हृत्पद्मस्थात्मतया 'एष आत्मे-त्येतच्छब्देन परामर्शात् ग्रहणात् जीव एव हृत्पद्मस्थ इति चेन्न । कुतः । **असंभवात्**=हृत्पद्मस्थनिष्ठतया श्रुतानामपहतपा-प्मत्वादिगुणानां जीवे स्वातन्त्र्येणासंभवादित्यर्थः ॥

**उत्तराच्चेदित्यादि** । तुशब्द एवार्थे । नेति शेषः । **उत्तरात्**= 'स तत्र पर्येती'त्युत्तरवाक्यात् जीव एव हृत्पद्मस्थ इति चेन्न । यतस्तद्वाक्ये **आविर्भूतस्वरूपस्तु**=मुक्त एव प्रतिपाद्यः । मुक्तस्तु न स्वतोऽपहतपाप्मत्वादिगुणकः । अतो न तस्यापि हृत्पद्मस्थत्वमित्यर्थः ।

**सू० ॥ अन्यार्थश्च परामर्शः ॥ २० ॥** चः एवार्थे । **परामर्शः** 'एष आत्मे' ति वाक्यगतैतच्छब्दः । **अन्यार्थ-श्च**='परं ज्योति'रित्युक्तपरमात्मार्थ एव । न जीवार्थ इत्यर्थः ॥

**अल्पश्रुतेरित्यादि** समानमेव ॥ **इति दहराधिकरणम् ॥ ५ ॥**

**अथानुकृत्यधिकरणम् ॥ सू० ॥ अनुकृतेस्तस्य च ॥ २२ ॥** अस्य 'तदेतदिति मन्यन्ते अनिर्देश्यं परं सुखम् । कथं नु तद्विजानीयां किमु भाति न भाति वा ॥' कठवल्लीमन्त्रो विषयः । अत्र 'कथं नु तद्विजानीया' मिति वाक्ये लिङा प्रतीयमानं ज्ञानार्थं प्रार्थ्यमानरूपमानुकूल्येन गृह्यमाणं ज्ञानिसुखं वा ब्रह्म वेति संशयः । नपुंसकलिंगयोस्तदेतच्छब्दयोर्ज्ञा-निसुखपरामर्शित्वात् ज्ञानिसुखमिति पूर्वःपक्षः । उपसंहारे 'न तत्र सूर्य' इति श्रूयमाणे मन्त्रे तत्र, तम्, तस्येति, च तच्छब्दैः 'कथं नु तद्विजानीया' मिति प्रकृतमानुकूल्येन गृह्यमाणं परामृश्य तस्य सूर्याद्यप्रकाश्यत्वादिब्रह्मलिंगानामुच्यमानत्वात् बल-वदुपसंहारस्थबहुलिंगानुसारेणानुकूल्येन गृह्यमाणस्य सुखस्य ब्रह्मत्वे निश्चिते दुर्बलोपक्रमगतयोस्तदेतत्पदयोः 'नित्यो नित्याना' मिति प्रकृते ईश्वर एव लिङ्गव्यत्ययेन वृत्तिकल्पनोपपत्तेश्च आनुकूल्येन गृह्यमाणमनिर्देश्यं सुखं ब्रह्मैवेति सिद्धान्तः । सूत्रार्थस्तु **चः** समुच्चये । तस्येति श्रुतिप्रतीकग्रहणम् । अनुकृतिरनुक्रिया । 'कथं नु तद्विजानीया'मिति ज्ञानार्थं प्रार्थितत्वरूपानुकूल्येन गृह्यमाणं ब्रह्मैव । कुतः । **अनुकृतेः**='तमेव भान्तमनुभाति सर्वं' मिति वाक्यशेषे सूर्यादीनां भगवत्क्रियानुसारिप्रकाशाख्य-क्रियाकर्तृत्वश्रवणात् । **तस्य च**='तस्य भासा सर्वमिदं विभाती'ति जगतः परमात्मप्रभाप्रकाश्यत्वश्रुतेश्च इत्यर्थः ॥

**सू० ॥अपि स्मर्यते ॥ २३॥** न केवलं हेतूकृतानुकृत्यादेर्विष्णुधर्मत्वं श्रूयते । किं तु कृष्णादिभिः 'यदादित्यगतं तेज'इत्या-दिस्मृतिषु च उच्यत इत्यर्थः ॥ **इति अनुकृत्यधिकरणम् ॥ ६ ॥**

**इति सूत्रार्थचन्द्रिकायां दहराधिकरणानुकृत्यधिकरणे ॥ ५ ॥ ६ ॥**

कठवल्ल्यामस्य विषयः श्रूयते—

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥'

इत्यादि । इहाङ्गुष्ठमात्रतया श्रूयमाणः पुरुषः परमेश्वरो जीवो वेति सन्देहः ॥

जीव इति वक्तुं युक्तम्—

'स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः। अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः ॥'

इति तस्याङ्गुष्ठमात्रत्वप्रसिद्धेः, 'मध्य आत्मनि तिष्ठति' इति देहान्तर्वर्तित्वावगमाच्च । न तु परमेश्वरो व्यापकः ॥'

---

न विजुगुप्सते आत्मानं गोपायितुं नेच्छति अभयप्राप्तत्वादित्यर्थः । 'अङ्गुष्ठमात्रतया श्रूयमाण' इति संशयधर्मिणः पुरुषस्य विशेषणेन जीव इति पूर्वपक्षकोटेर्बीजं सूचितम् । परमेश्वर इति संबंध्युपन्यासेनैव भूतभव्येशितृत्वलिङ्गं सिद्धान्तकोटेर्बीजं सूचितम् । स विश्वरूप इति । विश्वरूपः पर्यायेण देवतिर्यङ्मनुष्यादिसकलरूपभाक् । त्रिगुणः सत्वादिगुणत्रयवश्यः । त्रिवर्त्मा जागरस्वप्नसुषुप्तिलक्षणसांसारिकमार्गत्रयसञ्चारी। प्राणाधिपः सकलप्राणेन्द्रियप्रवर्तकः। स प्रत्यगात्मा स्वकर्मभिरेव त्रिषु वर्त्मसु सञ्चरति। इदं पूर्वमन्त्रस्योत्तरार्धम् 'अङ्गुष्ठमात्र' इत्युत्तरमन्त्रस्य जीवविषयत्वस्फुटीकरणाय लिखितम् । रवितुल्यरूपः यथा रविस्त्रैलोक्यप्रकाशक एवमयं स्थूलसूक्ष्मदेहद्वयप्रकाशकः । सङ्कल्पाहङ्कारसमन्वितः ममेदं फलं भूयात्तदर्थमिदं साधनमनुष्ठेयमित्याद्यात्मा सङ्कल्पः, अहमेतेषां कर्मणां कर्ता तत्फलानां भोक्तेत्यात्माहङ्कारस्ताभ्यां समन्वित इति । नन्वङ्गुष्ठमात्रत्वं परमेश्वरेऽपि श्रूयते। 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' इति मन्त्रो हि 'अनवस्थितेरसम्भवाच्च नेतर' (ब्र० १-२-१८) इत्यधिकरणे परमेश्वरपरो निर्णीतः । सत्यम्। सोऽपि मन्त्रोऽङ्गुष्ठमात्रत्वश्रवणादेव जीवपर इत्याक्षिप्यते । अङ्गुष्ठमात्रत्वश्रवणं जीवासाधारणमिति। एतत् 'अथ सत्यवतः कायात्पाशबन्धवशंगतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादि'ति भाष्यप्रयोगादपि हि निश्चीयते । तस्मान्मन्त्रान्तरेऽप्यङ्गुष्ठमात्रत्वश्रवणं दृश्यमानं जीवविषयमेवेति पूर्वपक्षिणोऽभिमानः । ननु 'मध्य आत्मनी'ति जीवात्मनोऽङ्गुष्ठमात्रपुरुषस्य भेदनिर्देशात्परमेश्वरः स्यादित्याशङ्क्याह—मध्य आत्मनीति । न ह्यत्रात्मशब्देन जीवोऽभिधीयते । तस्य मध्याभावात्। किं तु देह एव । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनी'त्यभिधानकोशदर्शनात् 'आत्मैवेह महय्य आत्मा परिचर्य' इति प्रजापतिविद्यायामात्मशब्दस्य देहे प्रयोगदर्शनाच्च । 'इहाप्यूर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वेदेवा उपासत' इत्यग्रिममन्त्रे प्राणापानमध्यवर्तित्वोक्त्या देहमध्यवर्तित्वस्यैव लाभेन तदनुरोधा'न्मध्य आत्मनी'त्यस्यापि देहमध्यपरत्वस्यैवाङ्गीकर्तुमुचितत्वाच्चेति भावः । न'न्वीशानो भूतभव्यस्ये'ति श्रूयते अतः परमेश्वर एवाङ्गुष्ठमात्रस्स्यादित्याशङ्क्याह—न त्विति । नात्रेशानशब्दो ब्रह्मणोऽभिधानश्रुतिः । 'भूतभव्यस्ये'त्यैश्वर्यप्रतिसम्बन्ध्युपादानेन तस्य भूतभव्येशितृत्वरूपकेवलयौगिकार्थपरत्वात् योगरूढिमतां शब्दानां यौगिकार्थप्रतिसम्बन्ध्युपादाने रूढ्यनुन्मेषा-

**इति प्राप्ते—वदामः। परमेश्वर एवाङ्गुष्ठमात्र इति युक्तम्; 'ईशानो भूतभव्यस्य' इत्यादिपरमेश्वरलिङ्गशब्दात् 'सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इति तस्यैव सर्वेश्वरत्वश्रवणात् ॥**

---

त्। अत एव 'पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखै'रिति सरःप्रतिसम्बन्ध्यग्रोपादानवति सरोरुहशब्दे स्थितेऽपि पद्मशब्दप्रयोगः। तस्मा'दीशानो भूतभव्यस्ये'ति पदद्वयसमभिव्याहारबोध्यं लिङ्गमात्रमस्ति। तच्चूपक्रमगतादङ्गुष्ठमात्रश्रवणाद्दुर्बलम्। उपक्रमगतमप्यङ्गुष्ठमात्रश्रवणं जीवस्य न श्रुतिः। तत्र तस्य शब्दस्य रूढ्यभावात्। नाप्यङ्गुष्ठमात्रत्वं तल्लिङ्गम्। अतिसूक्ष्मत्वात्तस्मिन्नङ्गुष्ठपरिमाणाभावात्। किं तु शाखान्तरे जीवे प्रयुक्तस्याङ्गुष्ठमात्रशब्दस्यात्र प्रत्यभिज्ञानमात्रं प्रमाणत्वेन वक्तव्यम्। तत्तु शाखाद्वयपरामर्शापेक्षम्। तेन अतिविलम्बितमित्युपसंहारगतमपि भूतभव्येशितृत्वलिङ्गं ततो बलवदिति चेत् मैवम्। अङ्गुष्ठमात्रत्वं जीवलिङ्गमेव। अङ्गुष्ठमात्रशब्देन हि अङ्गुष्ठाधिकपरिमाणव्यवच्छेदः क्रियते। न त्वङ्गुष्ठपरिमाणमपि विधीयते। एकस्य शब्दस्योभयत्र तात्पर्यायोगात्। अत एवाग्नीषोमीयपशावध्रिगुप्रैषे छागस्य पशोः पार्श्वद्वयगतानामस्थ्नां वङ्क्रिशब्दवाच्यानामियत्ताप्रकाशकस्य 'षड्विंशतिरस्य वङ्क्रय' इति मन्त्रस्य अश्वमेधपशावश्वे चोदकप्राप्तस्य तत्प्रकरणाम्नातेन 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिस्समेती'ति मन्त्रेणापवादप्रसक्तौ तदपवादार्थेन 'षड्विंशतिरित्येव ब्रूया'दिति वाक्येनैव निराकृष्टशक्तितया षड्विंशतिमन्त्रादन्यस्य चतुस्त्रिंशन्मन्त्रस्य व्यवच्छेद एव क्रियते। न तु षड्विंशतिरिति ब्रूयादित्यपि विधीयते। षड्विंशतिमन्त्रस्तु तत्र चोदकापवादे निरस्ते चोदनादेव प्राप्यते। अतष्षड्विंशतिपदयुक्त एव स मन्त्रोऽश्वमेधे वक्तव्य इत्यत्र प्रमाणाभावादश्वस्य चतुस्त्रिंशतो वङ्क्रीणां तेन सहानुष्ठेयतूपरगोमृगयोर्वङ्क्रीणां च समस्य वचनरूपस्यास्य न बाध इति निरूपितं पूर्वतन्त्रे नवमाध्याये। नन्वङ्गुष्ठमात्र इत्यत्र मात्रशब्दः 'प्रमाणे द्वयसज्दघ्नञ्मात्रच' इति(पा०५-२.३७)सूत्रेणानुशिष्टः प्रमाणवाची प्रत्ययः। न तु 'शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितार्द्धि' रित्यत्रेवोत्तरपदत्वनियतं प्रातिपदिकम्। तथा सत्यङ्गुष्ठमात्रपरिमाण इत्यर्थलाभायाङ्गुष्ठशब्दस्याङ्गुष्ठपरिमाण इत्यर्थलक्षणापत्तेरिति चेन्मैवम्। अङ्गुष्ठपरिमाणत्वस्य जीवेश्वरयोरुभयोरपि बाधितत्वेन पक्षद्वयेऽपि तथार्थग्रहणस्य विरुद्धत्वात् उदाहृतश्वेताश्वतरमन्त्रोत्तरसन्दर्भविरोधापत्तेश्च। तस्यैव हि मन्त्रस्य चतुर्थपादे 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति जीवस्याराग्रमात्रत्वमुक्तम्। 'वालाग्रशतभागस्ये'ति तदनन्तरमन्त्रे वालाग्रयुतांशैकदेशप्रमाणत्वं जीवस्योक्तम्। कथं तथा सूक्ष्मपरिमाणः स्यात् कथं चाराग्रपरिमाणोऽङ्गुष्ठपरिमाणः स्यात्। तस्मादङ्गुष्ठमात्र इत्यङ्गुष्ठाधिकपरिमाणव्यवच्छेदः। ततोऽङ्गुष्ठपरिमाणवत्त्वप्रसक्तावाराग्रमात्र इत्याराग्राधिकपरिमाणव्यवच्छेदः पुनराराग्रसमपरिमाणवत्त्वप्रसक्तौ 'वालाग्रशतभागस्ये'त्यनेनात्यन्तसूक्ष्मत्वप्रतिपादनमिति युक्तम्। तस्मादिहोपक्रमगतस्याङ्गुष्ठाधिकपरिमाणभाववत्त्वरूपस्य जीव एव सम्भवात् चरमश्रुतं भूतभव्येशितृत्वं भूतभविष्यदनेकशरीरनियन्तृत्वपरतया जीव एव योजनीयमिति पूर्वपक्षाभिप्रायः। परमेश्वरलिङ्गशब्दादिति। भूतभव्यशब्दयोः प्रकरणोपपदादिसङ्को-

कथं परमेश्वरे परिच्छिन्नत्वमभ्यस्यमानमुपपद्यत इत्यत आह—

॥ सू ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

अपरिच्छिन्नस्यापि परमेश्वरस्याङ्गुष्ठमात्रत्वमुपासकहृदयापेक्षया, मनुष्याधि-

---

चकाभावेन असङ्कुचितभूतभविष्यद्वस्तुजातपरत्वात्तन्नियन्तृत्वं परमेश्वरलिङ्गम् । ईशानश-ब्दश्चाभिधानश्रुतिरूपस्तस्य शब्द इति । तस्मादुभयस्मात्प्रमाणात् अङ्गुष्ठपरिमितः परमेश्वरः सिद्ध्यतीत्युक्तिभङ्ग्या शब्दव्यतिरेकेणान्यदपि तत्रार्थे प्रमाणमस्तीति सूचितम् । तदाविष्कृतं भाष्ये लिङ्गशब्देन । न च यौगिकार्थप्रतिसम्बन्ध्युपादानादीशानशब्दस्य श्रुतित्वभङ्गश्शङ्कनी-नीयः । तदुपादानेऽपि रूढशब्दश्रवणप्रयुक्तस्य रूढ्यर्थोन्मेषस्यानिवार्यत्वात् । काव्येषु तु व्यङ्ग्यार्थप्रधानेषु यस्य शब्दस्य यौगिकार्थो व्यञ्जनव्यापारानुकूलः तं शब्दं यौगिकार्थ एवोपक्षीणं कृत्वा तदीयरूढ्यर्थसमर्थनार्थं क्वचित्क्वचित्पदान्तरमुपाददते । तत्र पदान्तरोपा-दानं यौगिकार्थप्रतिसम्बन्ध्युपादानस्य रूढ्यर्थोन्मेषविरोधित्वप्रयुक्तम् । तदनुपादानेऽपि 'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा । कुर्यां हरस्यापि पिनाकपाणेर्धै-र्यच्युतिं के मम धन्विनोऽन्य' इत्यत्र तद्दर्शनात् । अत्र हि कैमुतिकन्यायोपयोगिसारतरा-युधत्वव्यञ्जनानुकूले यौगिकार्थ एव पिनाकपाणिशब्दमुपक्षीणं कृत्वा तद्रूढिविषयशिवस-मर्पणाय पदान्तरं प्रयुक्तम् । एवमिहापि हिमवदौन्नत्यव्यञ्जनानुकूलयौगिकार्थसमर्पणव्यग्रं सरोरुहपदमिति तद्रूढ्यर्थबोधनाय पद्मपदं प्रयुक्तमित्युक्तमित्युपपद्यते । किं च यस्य योगरूढ्यो-पास्य तदलभ्यं कस्यचिदवयवार्थस्य विशेषकमुपपाद्यते यथा 'पद्मानि यस्याग्रसरोरुहाणी'ति यथा वा 'लपनं पद्ममेवास्या लावण्यसरसीरुह'मिति तत्पदं तद्विशेषितयौगिकार्थवशीकृत-मिति तेनापि हेतुना तत्र रूढ्युन्मेषो न भवतीति वक्तुं शक्यम् । इह तु सङ्कोचकाभावादी-शानपदयौगिकार्थतया तल्लब्ध एवार्थो 'भूतभव्यस्ये'त्यनेनानूद्यत इति नात्र तदनुन्मेषशङ्का-वकाशः । पूर्वपक्षबीजमुद्भाव्य तत्परिहारपरत्वेनोत्तरसूत्रमवतारयति—कथमिति । अभ्य-स्यमानमिति । 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवा द्य स उ श्व' इत्यग्रिममन्त्रे 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषिकां धैर्येण तं विद्यात् शुक्रममृत'मित्यग्रिमखण्डान्तमन्त्रे च श्रूयमाणमङ्गुष्ठमात्रशब्दोक्तं परिच्छिन्नत्वमभ्यस्यमानत्वात् नान्यथा नेतव्यमिति भावः। 'अ-भ्यस्यमान'मित्यनेना'ङ्गुष्ठमात्रः पुरुषोऽन्तरात्मे'ति मन्त्रस्यापि स्मरणात् । तत्र तं स्वाच्छ-रीरात्प्रवृहे'दित्येतच्छरीराद्विविक्ततया ज्ञातव्यत्वपरमिति जीवलिङ्गान्तरमपि ध्वनितम्॥ सू.॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥ 'अङ्गुष्ठमात्र' इत्यनेनाङ्गुष्ठपरिमाणत्वमु-च्यते । न तु तदधिकपरिमाणाभावः । अङ्गुष्ठशब्दस्य प्रागुक्तरीत्या लक्षणापत्तेः । सम्भ-वति च व्यापकस्यापि परमेश्वरस्योपासकहृदयापेक्षयाङ्गुष्ठपरिमाणत्वम् । दहरशाण्डिल्यविद्य-योरतिसौक्ष्म्यवचनं हृदयोर्ध्वसुषिरापेक्षया इदं तु हृदयमध्यावकाशापेक्षयेति न वि-रोध इत्यभिप्रेत्याह—अपरिच्छिन्नस्यापीति। हृदयापेक्षयेति। सूत्रे 'हृदी'ति विषयसप्तमीति भावः । ननु हृदयापेक्षयाप्यङ्गुष्ठमात्रत्वमनुपपन्नम् । हस्तिमशकादीनां हृदयपरिमाण-भेदात् । न च तत्तदङ्गुष्ठपरिमाणं ग्राह्यम् । खरतुरगादीनामङ्गुष्ठाभावादित्याशङ्कापरिहारार्थं

कारत्वादुपासनाशास्त्रविधेः । मनुष्याणां हृदयं यावत्प्रमाणं तदवच्छिन्नं रूपं परमेश्वरः परमकारुणिकः परिगृह्णाति तदुपासनासिद्धये । ततः परमेश्वरो ज्योतिर्मयो लिङ्गरूपतयोपासकानां हृदयमध्ये तिष्ठतीति निर्णयः ॥

॥ इति प्रमिताधिकरणम् ॥ ६ ॥

साध्याहारं सूत्रशेषमुपादाय तस्य तात्पर्यमाह—मनुष्याधिकारत्वादित्यादिना । लिङ्गरूपेति । अङ्गुष्ठसमानाकारत्वं लिङ्गभाव एव सम्भवति । प्रसिद्धं च पुराणागमेषु शिवस्य लिङ्गरूपेण हृदि सन्निधानम् । अतो लिङ्गरूप एवात्र विवक्षित इति भावः । न'न्वत्ता चराचरग्रहणा' (ब्र० १-२-१०) दित्यधिकरणे 'प्रकरणा'दिति (ब्र० १-२-१२)सूत्रेण कठवल्लीषु प्रकरणं ब्रह्मपरमित्युक्तम् । कथं तदन्तर्गतस्याङ्गुष्ठमन्त्रस्य जीवपरत्वमिति पूर्वपक्षावकाशः । उच्यते । आनुमानिकाधिकरणे 'त्रयाणामेव चैव'मिति (ब्र० १-४-६) सूत्रेण त्रयाणामुपासकोपासनीयतदुपासनानां कठवल्लीषु प्रश्नप्रतिवचनाभ्यां निरूपणमिति वक्ष्यते। तथा च 'महान्तं विभुमात्मानं मत्वा धीरो न शोचती'त्यादिप्राकरणिकपूर्वापरमन्त्रगतब्रह्मश्रुतिलिङ्गानामुपासनीयब्रह्मण्यन्वयः । अयं तु मन्त्रो 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिन' इत्यादिकठवल्ल्यन्तर्गतमन्त्रवदुपासकप्रश्नोत्तरतया जीवपरस्स्यादिति पूर्वपक्षोत्थानम् । अत्र प्राकरणिकब्रह्मलिङ्गानां स्पष्टत्वेऽपि पूर्वपक्षे तेषामन्यत्रान्वय इति स्पष्टास्पष्टब्रह्मलिङ्गता । ननु 'योनिमन्ये प्रपद्यन्त' इति मन्त्रान्तरवदस्यापि मन्त्रस्योपासकपरत्वेऽपि प्रकरणस्योपास्यतया प्रधाने ब्रह्मणि पर्यवसानं न हीयत इति नास्त्यधिकरणस्य प्रयोजनम् । उच्यते । पूर्वपक्षे सर्वेषामङ्गुष्ठवाक्यानां जीवपरत्वात् हृदि ज्योतिर्लिङ्गरूपः परमेश्वर उपासनीयो न सिद्ध्यति । सिद्धान्ते त्व'ङ्गुष्ठमात्रो रवितुल्यरूप' इत्यादिषु जीवपरत्वेन सम्प्रतिपन्नेषु मन्त्रेष्वङ्गुष्ठमात्रशब्दस्य जीवपरत्वेऽपि ब्रह्मश्रुतिलिङ्गवत्सु मन्त्रेषु श्रुतस्य तस्य ब्रह्मपरत्वात्सा सिद्ध्यतीत्यस्ति प्रयोजनम् । ननु जीवपरमन्त्रेष्वङ्गुष्ठमात्रशब्दस्याङ्गुष्ठपरिमाणत्वं नार्थः बाधात् किंतु अङ्गुष्ठाधिकपरिमाणाभाव इति ब्रह्मपरत्वाभिमतेष्वपि मन्त्रेषु तथैकरूप्याय स एवार्थः स्यात्। नेति ब्रूमः। एकस्यापि विशेषणशब्दस्य विशेष्यभेदेन तत्तदुचितार्थग्रहणोपपत्तेः'स्थूलो विद्वान्देवदत्त' इत्यत्र देवदत्तात्मनि तदपृथग्भूतविशेषस्य शरीरस्थौल्यस्य सद्वारकान्वयवज्जीवापृथग्भूतहृदयावच्छेदकृतसङ्कोचशालिधर्मज्ञानगताङ्गुष्ठपरिमाणस्य जीवे सद्वारकान्वयस्योपपत्त्या जीवपरवाक्येऽप्यङ्गुष्ठमात्र इत्यस्याङ्गुष्ठमात्र इत्यर्थग्रहणोपपत्तेश्च । एतेना'राग्रमात्र' इत्येतदपि व्याख्यातम्। नाड्यवच्छेदप्रयुक्तसङ्कोचधर्मज्ञानपरिमाणस्य सद्वारकान्वयो विवक्षित इति तत्रापि वक्तुं शक्यत्वात् ॥

॥ इति प्रमिताधिकरणम् ॥ ६ ॥

नयमणिमालायाम्

अथ प्रमिताधिकरणम् ॥ ६ ॥

सू० ॥ शब्दादेव प्रमितः ॥ २३ ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

अङ्गुष्ठप्रमितःस्याज्जीवो मैवं स भूतपतिरेव । निस्सङ्कोचैश्वर्यात्तत्त्वादीशानशब्दाच्च ॥ ६१ ॥

इति प्रमिताधिकरणम् ॥ ६ ॥

## अथ देवताधिकरणम् ॥ ७ ॥

'मनुष्याधिकारत्वात्' इत्यस्मिन्नधिकरणे मनुष्याणामेव परमेश्वरोपासनेऽधिकारस्सूचितः। कथं देवानामपि परमेश्वरविषयमुपासनं श्रूयतेऽथर्वशिरसि, 'ततो देवा रुद्रं नापश्यंस्ते देवा रुद्रं ध्यायन्ति' इत्यत्रेत्याशङ्कायां तदुपपादनायाधिकरणमिदमारभ्यते—

## अथ देवताधिकरणम् ॥ ७ ॥

उत्तराधिकरणस्य प्रासङ्गिकीं सङ्गतिमाह—मनुष्याधिकारत्वादिति । पूर्वाधिकरणसूत्रे मनुष्यग्रहणेन तदितरेषामधिकारो नास्तीति ज्ञापितत्वात् देवाः परमेश्वरोपासनायामधिकारिणो न भवन्तीति सिद्धम्। 'ततस्ते देवा रुद्रं ध्यायन्ती' त्यर्थवादः केवलमसदर्थावलम्बनस्तुतिपर इति प्राप्तौ तेषामधिकारोपपादनार्थमुत्तराधिकरणमारभ्यत इत्यर्थः। एषा प्रा-

---

## सूत्रार्थचन्द्रिकायाम्

## अथ प्रमिताधिकरणम् ॥ ७ ॥

सू० ॥ शब्दादेव प्रमितः ॥ २४ ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

भगवत्पादमते, ॥ सू ॥ शब्दादेव प्रमितः ॥ २४ ॥ अस्याधिकरणस्य 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' 'अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य' इत्यादि कठवल्लीवाक्यं विषयः। इहांगुष्ठवाक्यप्रतिपाद्यः जीवात्मा वा परमात्मा वेति संशयः। परिमाणोपदेशात् शरीरान्तर्वर्तित्वोपदेशाच्च जीवात्मेति पूर्वपक्षः। सिद्धान्तस्तु, **प्रमितः**=अंगुष्ठमात्रपरिमाणः पुरुषः परमात्मैव। कुतः। **शब्दादेव**='ईशानो भूतभव्यस्ये'त्यत्र ईशानशब्दात्। न चांगुष्ठमात्रजीवलिंगविरोधः। लिंगश्रुत्योर्विरोधे श्रुतेरेव बलीयस्त्वमिति मर्यादाया एवशब्देन सूच्यमानत्वात्। न च परमात्मनोऽङ्गुष्ठमात्रत्वानुपपत्तिः। अंगुष्ठमात्रजीवानुवादेन ब्रह्माभेदबोधनादिति ॥

कथं पुनस्सर्वगतस्य परमात्मनः परिमाणोपदेश इत्यत आह—सू० । **हृद्यपेक्षया तु मनुष्याधिकारत्वात्** ॥ २५ ॥ तुशब्दः शंकानिरासार्थः। मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्याणां हृदयस्यांगुष्ठमात्रत्वात् हृदि वर्तमानत्वात्परमात्मनस्तदपेक्षया सर्वगतस्यात्मनोऽङ्गुष्ठमात्रत्वमविरुद्धम्। अतोऽङ्गुष्ठवाक्ये प्रतिपाद्यः परमात्मैवेति सिद्धम् ॥

**श्रीकण्ठरामानुजमतयोः** विषयवाक्यसंशयपूर्वपक्षसिद्धान्तादिकं सर्वं समानमेवेति न पृथक्प्रपञ्च्यते। श्रीकण्ठमते, **शब्दात्**=सर्वेश्वरत्वादिपरमेश्वरलिंगात् ईशानशब्दाच्च इत्यर्थो वर्णित इति विशेषः। रामानुजमते अस्याधिकरणस्य नात्र परिसमाप्तिः। अस्याधिकरणस्य गर्भे अधिकरणत्रयस्य प्रासंगिकस्य विचारस्ततोऽस्य परिसमाप्तिरितिअसाधारणोऽधिकरणरचनाविशेषश्चेति बोध्यम्।

**आनन्दतीर्थमते**, विषयवाक्यं समानमेव। अत्र ईशाननामोक्तो वायुर्वा विष्णुर्वा इति संदेहः। 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासते'इति तदनन्तरमन्त्रे प्राणव्यवस्थापकत्वादिवायुलिंगश्रवणात् ईशानशब्दप्रवृत्तिनिमित्तस्य प्रेरकत्वस्य सत्त्वात् तस्यैव सर्वोत्तमत्वविरोधिमध्यमत्वप्रसिद्धेश्च वायुरिति पूर्वः पक्षः। राद्धान्तस्तु, निरवकाशाद्विष्णौ रूढाद्वामनशब्दात् सर्वव्यवस्थापके सर्वोपास्ये च विष्णौ प्राणव्यवस्थापकत्वादेवोपास्यत्वयोरपि सत्त्वात् उपासनाधिकारिमनुष्यहृदयाभिव्यक्तस्य भगवन्मूर्तिविशेषस्यांगुष्ठमात्रपरिमाणत्वाद्वा स्थानपरिमाणस्य स्थानिनि तस्मिन्नुपचाराद्वा अंगुष्ठमात्रत्वस्य तस्मिन्नुपपत्तेः मध्यदेशरूपहृदयावस्थितिसंभवाच्च ईशानशब्दवाच्यो विष्णुरेव इति। सूत्रार्थस्तु विष्णुरेव **प्रमितः**='ईशानो भूतभव्यस्य'इतीशानशब्दवाच्यत्वेन तत्वतो निश्चितः। न तु वायुः। कुतः। **शब्दादेव**='मध्ये वामन'मिति निरवकाशवामनश्रुतेरेवेत्यर्थः ॥

सू० ॥ **हृद्यपेक्षया तु मनुष्याधिकारत्वात्** ॥ २५ ॥ तुशब्द एवार्थे, अपिशब्दार्थे च। तथा च सर्वगतस्यापि विष्णोः अङ्गुष्ठमात्रत्वोक्तिः अङ्गुष्ठपरिमितहृदाकाशापेक्षयैव। न तावता विष्णोः परिच्छिन्नत्वं ज्ञेयमित्यर्थः। शेषं पूर्ववत् ॥

इति सूत्रार्थचन्द्रिकायां प्रमिताधिकरणम् ॥ ७ ॥

## ॥ सू ॥ तदुपर्यपि बादरायणः संभवात् ॥ २५ ॥

**अस्याथर्वशिरसि श्रूयते ' ते देवा रुद्रं ध्यायन्ति ' इति विषयः ॥**
**इह परमेश्वरोपासने देवानामधिकारः संभवति न वेति संशयः ॥**
**न संभवतीति पूर्वः पक्षः। अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तो हि वैदिके कर्मण्यधिकारी। न च तेषां सामर्थ्यमस्ति, विग्रहाभावात् । विग्रहवन्तो हि**

सङ्गिकी सङ्गतिः । बुद्धिस्थस्योपेक्षानर्हत्वं प्रसङ्गः ॥ सू० ॥ तदुपर्यपि बादरायणः सम्भवात् ॥ २५ ॥ देवानामर्थित्वसामर्थ्यादिसम्भवासम्भवौ संशयकोट्योर्बीजमित्यभिप्रेत्य संशयं दर्शयति—इहेति । विग्रहाभावादिति । न तावद्देवतानां विग्रहे प्रत्यक्षादि प्रमाणमस्ति। न च देवतावाचिशब्दानां लौकिकवैदिकप्रयोगेषु स्त्रीप्रत्ययतद्धितप्रकृतितया प्रातिपदिकत्वेनार्थवत्त्वावश्यंभावात्तत्सिद्धिः। तेष्वादित्यादिग्रहवाचिनामश्विन्यादिनक्षत्रवाचिनामन्येषां च केषाञ्चिदचेतनैर्गगनपरिदृश्यमानज्योतिर्मण्डलरूपैरर्थैरर्थवत्त्वसम्प्रतिपत्तेः। नक्षत्रेष्टियाज्यानुवाक्यासु क्वापिक्वचिदि'न्द्रो ज्येष्ठामनुनक्षत्रमेति' इत्यादौ ज्येष्ठादिनक्षत्राणामिन्द्रादिदेवताभेदनिर्देशस्य नक्षत्रपदवाच्यलौकिकतेजोविशेषत्वदेवतापदवाच्यालौकिकहविरुद्देश्यत्वात्मकरूपभेदेनोपपत्तेः । सोऽयं गकार इति प्रत्यभिज्ञालम्बितसर्वविधगकाराभेदानुसारेण द्वावेतौ गकारौ तारेण मन्दोऽभिभूतः तारान्मन्दोऽन्य इत्यादिभेदप्रत्ययानामौपाधिकरूपभेदविषयत्वस्याङ्गीकृतत्वेन तद्वदिहापि सम्भवात्। अन्येषां च लोकवेदप्रसिद्धदेवतावाचिपदानां नक्षत्रयुक्तज्योतिर्मण्डलगत्वे क्वचित्क्वचिन्नक्षत्रे इन्द्रादिपदवर्तनसम्भवात् । इन्द्राण्यादिशब्दानां नक्षत्रविशेषवाचितया पुंविशेषयुक्तस्त्रीवाचित्वाभावेऽपि हिमानीयवानीशब्दवत् स्त्रीप्रत्ययान्तत्वसम्भवात् 'पृथिव्यापोग्निर्वायुरन्तरिक्षं विद्युदोषधयो वनस्पतयः पुष्पाणि फलान्यहोरात्रौ प्राची प्रतीची मनश्चित्त'मित्यादिकर्मविशेषविनियुक्तदेवतावाचिपदानां लोकवेदप्रसिद्ध्यनुसारेण प्रसिद्धेषु मृदादिष्विव वृत्तेश्च । तस्मादादित्यादिपदसामर्थ्यान्न विग्रहादिमद्देवतासिद्धिः। नापि यागविधीनां 'यज देवपूजाया'मिति स्मरणेन देवताराधनरूपत्वात् देवताराधनानां च राजाराधनवत् आराधनप्रसन्नाराधनीयदेयसकलार्थत्वनियमात् तत्सिद्धिः। तन्नियमाभावात्। राज्ञश्शिशवस्तत्पादुकादयश्च राजभृत्यैरुपचितोपचारेण पूज्यन्ते । ज्योतिष्टोमे सोमलता पयोऽन्ननिवेदनेन पूज्यते । शिवपूजायां पूजोपकरणादयो गन्धपुष्पादिभिः पूज्यन्ते । न हि तेषां फलदातृत्वमस्ति । यद्युच्येत राजकुमारादीनामुपचारो राजादीनामेव पूजा तेषां च फलदातृत्वमस्तीति नास्ति नियमविरोध इति तदा क्रतुषु देवानामिज्या तत्तद्वर्णाश्रमाचारादिरूपाज्ञाप्रवर्तकस्य परमेश्वरस्यैव पूजा तस्य च फलदातृत्वमस्तीति नास्माकमपि नियमविरोधः। अवश्यं च पितृमातृगुरुभर्त्रतिथिवित्तजातिवयःकर्मविद्यावृद्धादिपूजासु दर्शपूर्णमासेष्ट्याः दर्शपूर्णमासशब्दिताग्न्यादिदैवत्यैकयागविकारेषु सौर्यादिषु अनतिदेश्यत्वेन च स्वीकृतयोः पार्वणहोमयोरश्वमेधे मेध्यस्याश्वगुणक्रियाङ्गान्युद्दिश्य 'कृष्णाय स्वाहा श्वेताय स्वाहा यन्मेहति तस्मै स्वाहा यच्छकृत्करोति तस्मै स्वाहा दद्भ्यः स्वाहा दनूभ्यां स्वाहे'त्यादिमन्त्रैः क्रियमाणेषु होमेषु सामगानामुद्वाहकर्मण्युदुह्यमानां कन्यामुद्दिश्य रेखासन्धिषु

(१) 'दर्शपूर्णमासशब्दितयागसमुदायगतैकदैवत्यकयागविकारेषु' इति पाठः समीचीन इति भाति ।

स्वित्यादिमन्त्रैः क्रियमाणेषु होमेषु तिर्यग्जन्मगतानपि मृतानुद्दिश्य क्रियमाणेषु श्रा-कल्पावसानानुद्दिष्टभाविकल्पभोग्यफलयोगादिषु च एषैव गतिराश्रयणीया नान्या स्ति। तस्मान्न यागविधिसामर्थ्याद्विग्रहवद्देवतासिद्धिः । नापि 'यदाग्नेयोऽष्टाकपाल' दिष्वग्न्यादीनां भोज्येन पुरोडाशादिना सम्बन्धो योग्यतया भोक्तृत्वमेव भोक्तृत्वे च तदु-क्तो विग्रहः स्वीकर्तव्य इत्येवं द्रव्यदेवतादिसम्बन्धसामर्थ्यात्तत्सिद्धिः। भोज्यभोक्तृ-रूपसम्बन्धस्य पुरुषेणानुष्ठातुमशक्यस्य विध्यगोचरत्वात् । यथाविधि तत्तद्देवतावा-चिशब्दोच्चारणपूर्वकत्यागविषयत्वरूपस्य तयोः परम्परासम्बन्धस्यैव विधेयत्वात् शब्दोच्चा-रण पुरुषेणानुष्ठातुं शक्यस्य विध्यर्हत्वात्। यत एवं द्रव्यत्यागसमयेषु तत्तद्विधिश्रुतदे-वताचिशब्दोच्चरण एव विधिपर्यवसानं न देवतायां द्रव्यस्य तत्सम्बन्धे वा। अतएवाग्न्या-दियागकालेष्वग्न्यादिशब्दपर्याया नोच्चार्यन्ते। अन्यथोद्देश्यदेवतास्मृतिमात्रार्थत्वे कदाचिदि-तरपर्याया अपि प्रयुज्येरन्। यद्युच्येत विध्युपात्तदेवतावाचिशब्दस्य बुद्धिसन्निहितस्य त्यागे कारणाभावात् स एव यागकाले प्रयुज्यत इति तथाप्य'ग्नये पावकाय पुरोडाश'मि-त्यादिविधिविहितयागानुष्ठाने द्वयोरग्निवाचकपदयोः प्रयोगो न स्यात्।एकेनाप्यर्थस्मृतिसिद्धेः। अतो विधिवाक्यश्रुतयावद्देवतावाचिशब्दोच्चारणविधिबलादेव स नियमो निर्वाह्यः । तस्मा-द्द्रव्यदैवतसम्बन्धविधिसामर्थ्याद्विग्रहवद्देवतासिद्धिः । नापि प्रगीताप्रगीतमन्त्रसाध्यगुण-कीर्तनरूपस्तोत्रशस्त्रविधिसामर्थ्यात्तत्सिद्धिः। न हि गुणवचनं देवतानां राज्ञामिवाराधनरूपम्। आराध्यमानानां देवतानां राज्ञामिव फलदातृत्वं कल्पनीयमिति तदर्थं विग्रहवत्त्वमपि कल्पनीयं स्यात्। अचेतनत्वेऽपि हि सोमलताया बहिष्पवमानस्तोत्रे तदभिषवसाधनानां ग्राव्णां ग्रावस्तुतिरुपलभ्यते । किं च द्वादशाहे 'प्रजापतिं परिवदन्ती'ति विधाना'दकुशलो वा अयं प्रजापतिर्यो दंशमशकान्ससृजे यः स्तेना'नित्यादीन्प्रजापतिपरिवादानधीयते।तन्न प्रीत्यर्थं किं त्वदृष्टार्थमित्येवोपपादनीयम् । एवमपि स्तुतशस्त्रादिगानस्यादृष्टार्थत्वोपपत्तौ प्रीत्यर्थतायामाग्रहः । नापि हविःप्रदानसमये हविरुद्देश्यभूतदेवताह्वानतद्ध्यानयोर्दृष्ट-प्रयोजनभूतहविःस्वीकरणार्थत्वस्य कल्पनीयत्वेन तदाह्वानध्यानविधिसामर्थ्यात् विग्रहव-द्देवतासिद्धिः। विहितस्थलेष्वाहवनीयादिषु प्रक्षिप्तानां हविषां तत्रैव भस्मीभावादिदर्शनेन देवतामुद्दिश्य त्यक्तानां हविषां निमन्त्रितब्राह्मणभुज्यमानत्वदर्शनेन पर्यग्निकरणान्तोत्सृष्ट-देवतादिपशूनां यथापूर्वमविकलावस्थादर्शनेन च हवींषि देवताः स्वीकुर्वन्तीति कल्पना-योगात्। एवम् 'ऐन्द्रमेकादशकपालं निर्वपेन्मारुतं सप्तकपाल'मिति विहितायामिष्टौ'ऐन्द्र-स्यावद्यन्ब्रूयादिन्द्रायानुब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति मारुतस्यावद्यन्ब्रूयान्मरुद्भ्योऽनु-ब्रूहीत्याश्राव्य ब्रूयादिन्द्रं यजे'त्याहूतदेवतायै द्रव्याप्रदानस्यानाहूतदेवतायै तत्प्रदानस्य च विधेयतया श्रूयमाणत्वात् हविःप्रक्षेपणसमयदेवताह्वानतद्ध्यानतदुद्देशानां बृहत्स्तोत्रादिषु विहितनिधनादिवददृष्टार्थत्वस्यैवाभ्युपगन्तव्यत्वात् । अतः प्रमाणाभावेन देवानां विग्रहा-द्यभावात् पटुदेहेन्द्रियादिमत्त्वरूपमुपासनासामर्थ्यं नास्तीति भावः। नन्वादित्यादिपदानामर्थव-त्त्वावश्यंभावात्तदर्थानामेव कर्मसु देवतात्वावश्यंभावाच्च सन्ति तावद्देवा इति निर्विवादम्।

**स्तुतिध्यानादिषु कर्मसु समर्थाः। 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादी माण्यात् तेषां विग्रहवत्त्वमिति चेत्-न, विध्येकवाक्यतापन्नानामन्यत्र ता**

ते चेतना वेत्यत्रैव विवादस्सोऽपि निरवकाशः। 'इन्द्रो वृत्राये'त्याद्यर्थवादै'र्वज्रहस्त न्दर' इत्यादिमन्त्रैश्च तेषां चेतनत्वस्य सविग्रहत्वस्य च सिद्धेरित्याशङ्क्ते—इन्द्रो वृत्रा विधेयस्तावकतयार्थवादानां प्रयोगान्तरानुष्ठेयार्थस्मारकतया मन्त्राणां च विध्येकवाक पन्नानां देवताविग्रहादौ तात्पर्याभावेन न तैस्तत्सिद्धिरिति परिहरति—विध्येकवाक्य स्यादेतत्। तेषां विध्येकवाक्यत्वेऽप्यवान्तरसंसर्गप्रतीतिस्तावदस्त्येव। अत एव जैमिनि 'अविशिष्टस्तु वाक्यार्थः' 'अर्थैकत्वादेकं वाक्य'मित्यादिसूत्रैर्मन्त्राणां वाक्यार्थवत्त्वं तम्। तद्विरोधिनश्च शास्त्रादयो मन्त्राधिकरणे परिहृताः। अपरिपूर्णेषु मन्त्रवाक्येषु त प्रतीत्युपपादकौ चानुषङ्गाध्याहारा'वनुषङ्गो वाक्यसमाप्तिः' 'व्यवायान्नानुषज्यत' इति त्राभ्यां दर्शितौ। अर्थवादवाक्यानामर्थवत्त्वविरोधिनश्च तदर्थशास्त्रदृष्टविरोधादयोऽर्थव धिकरणे परिहृताः। तदर्थप्रतीत्युपपादकाश्च तत्कार्यकरत्वादिलक्षणास्तत्सिद्धिपेटिकायां र्शिताः। मन्त्रवाक्यार्थप्रतीतिमुपजीव्यैव तृतीये इन्द्रपीताधिकरणपात्नीवताधिकरणा दधिकरणप्रभृति'ष्विन्द्रपीतस्ये'ति भक्षमन्त्रगतस्य विशेषणस्योहानूहचिन्ता नवमे 'द णीत हरितैरिन्द्रागच्छ हरिव आगच्छे'त्यादिषु द्रव्यदेवताविशेषणानामूहानूहचिन्ता च र्तिता। अर्थवादवाक्यार्थप्रतीतिमुपजीव्यैव रात्रिसत्रे सत्रस्य प्रतिष्ठाफलत्वं ज्योतिष्टो ब्दस्य सोमयागमात्रविषयत्वं द्वादशाहविकारेषु तदीयमध्यमदशरात्रस्य प्रवृत्तिः गवाम त्यणीकायां स्वस्थानवृद्धिरित्याद्यर्थजातं निर्णीतम्। तथा च तस्याः मन्त्रार्थवादवाक्य भूतावान्तरसंसर्गप्रतीतेरसति बाधे प्रमात्वावश्यंभावात्तत्र तत्रार्थेषु प्रामाण्यं तात्पर्याभावे निवार्यमिति चेत्। मैवम्। शब्दस्य तात्पर्यविषय एव प्रामाण्यव्यवहाराभावात्। अन श्वित्रिरजककर्तृकवस्त्रशोधनतात्पर्येण प्रयुक्ताद्वाक्याद्वक्तृतात्पर्ययुक्तार्थ एव प्रतीत्युत्पत्ता कस्यचित्समीपतो गच्छति शुनके पदव्युत्पत्तिमात्रेण तस्य तत्रापि प्रामाण्यप्रसङ्गात्। चेष्टापत्तिः। तस्य ह्यनुमितेः पर्वत इव प्रामाण्यव्यवहाराभावात् लोकव्यवहारमना स्वकल्पितमर्यादामवलम्ब्य प्रामाण्याभ्युपगमे 'जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा ग्राम्यान्पशून्हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चे'ति 'पयसाग्निहे जुहुया'दित्यग्निहोत्रद्रव्यविधायके महावाक्ये जर्तिलगवीधुकवाक्ययोर्ग्राम्यारण्यपशुहिंसा हित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोर्यदपेक्षयानाहुतित्वं तत्पयः प्रशस्ततरमिति पयोविध्ये वाक्यतया तत्रैव तात्पर्येऽपि....स्तवनबलाच्च जर्तिलगवीधुकयवाग्वोर्विकल्पेनाग्निहोत्र द्रव्यत्वविधिप्रतीतेरपि सम्भवंत्याः प्रमात्वस्यानिवार्यत्वेन तयोस्तत्रापि प्रामाण्यप्रसङ्गात 'न्वेतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसामकृत्वा पशुकामो ह्येतेन यजेते'ति रेवत्याधारवा वन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधायकवाक्ये 'रेवतीषु वारवन्तीय'मित्यंशस्य तीर्णस्सधमाद' इत्यादिऋगाधारवारवन्तीयसामरूपेऽग्निष्टोमस्तोत्रविशेषणे तात्पर्याभावे प्रामाण्यं दृष्टम्। न हि तद्विशेषणं 'सोमेन यजेते'त्यादि विशिष्टविधाविव तात्पर्यवत् वक्तुं शक्य अनुपपत्तिप्रसङ्गात्। न चाक्षेपाद्विशेषणलाभः। आक्षेपाद्विशेषणप्रसिद्धौ सत्यां विधि

भावात् । सद्भावेऽपि तेषामर्थित्वं नास्ति परमेश्वरं प्रति, तेषां परमेश्वरस्य च

शिष्टविधिनैव च विशेषणस्याक्षेप इति परस्पराश्रयापत्तेः। तस्माद्विशिष्टविधेर्विशेषणस्वरूपे तात्पर्याभावेऽपि तस्मिन्नप्रसिद्धे 'रेवतीषु वारवन्तीय'मिति पदद्वयसमभिव्याहारस्यैव प्रामाण्यमगत्याभ्युपगन्तव्यमिति चेत् मैवम्। तत्र विशिष्टविधिगतपदद्वयसमभिव्याहारलभ्यरेवत्याधारवारवन्तीयप्रतीतिमुपजीव्य प्रवृत्तेन विशिष्टविधिना रेवतीषु वारवन्तीयं कुर्यादिति विशेषणस्यैव तत्र प्रामाण्याद्विशिष्टविधेः पूर्वं तत्प्रतीत्यभावे त्वयापि तत्र प्रामाण्यमङ्गीकर्तुमशक्यत्वेन तत्प्रतीतेरवश्याभ्युपगन्तव्यत्वात्। इयांस्तु विशेषः।सोमलताविशेषणं मानान्तरसिद्धं पदात्प्रतीयते इदं तु मानान्तरासिद्धमेव पदसमभिव्याहारात्प्रतीयत इति प्रतीयमानोऽपि विशेषणविधिर्विशिष्टविधेः प्रामाण्याभाव उभयत्राप्यविशिष्टः।अयं चापरो विशेषः। सोमलतादिद्रव्यस्य लोकसिद्धत्वात् तत्र यागसम्बन्धित्वेनैव विधिः कल्पनीयः। इह तु विशेषणस्वरूपस्यापि मानान्तरासिद्धत्वात् प्रतीयमानेऽपि तस्मिन् विशिष्टविधेः प्रामाण्याभावात् विशेषणस्वरूपेण स्तोत्रविशेषसम्बन्धित्वेन च विधिद्वयं कल्प्यमिति । तस्मान्मन्त्रार्थवादानां स्वार्थे तात्पर्याभावान्न तेभ्यो देवताविग्रहसिद्धिरिति भावः। अस्तु तर्हि मन्त्रार्थवादानां विध्येकवाक्यतापन्नानां स्वस्वार्थेऽप्यवान्तरतात्पर्यम्। प्रधानविध्येकवाक्यतापन्नानां प्रयाजादिविधीनां स्वस्वार्थेऽवान्तरतात्पर्यस्यापि दर्शनात् । प्रयाजादीनामितिकर्तव्यतारूपेण प्रधानविध्याकाङ्क्षितत्वात्तेष्ववान्तरतात्पर्यं स्यात्। न देवताविग्रहादौ'अनपेक्षितत्वादिति चेन्न। क्लृप्ताकारसाकाङ्क्षाः प्रथमं प्रकृतैस्सह सम्बध्यन्ते समीपविकाराः प्रे........................क्न्यायेन क्लृप्तोपकारप्रकृताङ्गकलापप्राथमिकान्वयनिराकाङ्क्षीकृतप्रधानविध्यनपेक्षिताङ्गसमर्पका..........................होमादिविधिषु स्वस्वार्थेष्ववान्तरतात्पर्याभ्युपगमात् मन्त्रार्थवादप्रतिपाद्यानामाकाङ्क्षितत्वमपि प्रसिद्धे अर्थवादा..............यागादिषु परीक्षकप्रतियोगिस्तुतिद्वारकत्वेनापेक्षितत्वात्। यद्यपि काव्येषु पुरुषवर्णनादिरूपसहृदयहृदयोल्लासप्रयोजनकेषु राजादिहृदयावर्जनप्रयोजना बालानामौषधादिप्रवृत्तिप्रयोजना च स्तुतिरसदर्थावलम्बनापि दृश्यते । तथापि परीक्षकाणां बहुवित्तव्ययायाससाध्ययागादिप्रवृत्तिप्रयोजना स्तुतिरसदर्थावलम्बना न सम्भवत्येव। एव'मपां फेने नमुचेः शिर उदवर्तय' दित्यादिमन्त्रार्थानामपि स्तुतिद्वारत्वात्तेषामसदर्थावलम्बनता न सम्भवतीति। न चैवं मन्त्रार्थवादानामवान्तरतात्पर्याभ्युपगमे'न सुरां पिबे'दित्यत्र'सुरां पिबे'दित्येतावतोऽवान्तरतात्पर्यप्रसङ्गः। तत्र पदैकवाक्यत्वेन पदद्वयसंसर्गतोऽर्थप्रतीतेरेवाभावान्मन्त्रार्थवादानां देवताविग्रहे तात्पर्यं सम्भवतीत्याशङ्क्याह–तत्सद्भावेऽपीति । अपिशब्देनेदं द्योत्यते। वस्तुतो मन्त्रार्थवादानां देवताविग्रहे तात्पर्यं न सम्भवतीत्येव अन्यपराणां वाक्यानां मानान्तराविरोधे हि स्वार्थेऽप्यवान्तरतात्पर्यमभ्युपगम्यते न तु तद्विरोधेऽपि। 'यजमानः प्रस्तर' इत्यादीनामपि प्रतीयमानार्थे तात्पर्यापत्तेः।इह तु देवताविग्रहपरमन्त्रार्थवादानां स्वार्थपरत्वे ज्योतिरादिष्वचेतनेष्वादित्यादिशब्दानां शक्तिग्राहकैस्तदनुसारिभिर्लौकिकवैदिकप्रयोगैश्च विरोधः । 'इन्द्रो वृत्राय वज्रमुदयच्छ'दित्यादीनां प्रतीयमानार्थपरत्वे वेदस्यानित्यसंयोगरूपप्रसङ्गो विरोधः। 'न किरिन्द्र त्वदुत्तर' इत्यादिमन्त्राणां प्रतीयमानार्थपरत्वे परमेश्वरस्यैव सर्वोत्तरत्वं प्रतिपादयद्भिरौपनिषदवचनैर्विरोधः । तस्मादुदाहृतवाक्येष्वसदर्थावलम्बना स्तुतिरित्येव युक्तम् । दृश्यते ह्यचेतनेषु चेतनधर्मानारोप्य स्तुतिरन्यत्रापि 'तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्य-

पदस्यैकत्वात् । 'देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन् को भवानिति' इति श्रुत्या स्वर्ग एव लोको रुद्रस्य परब्रह्मणः पदमवगम्यते, स एव देवानाम्। मुक्तस्यापि स्वाराज्यमेव प्राप्यतया अवगम्यते 'आप्नोति स्वाराज्यम्' इत्यादिषु। तथा वैदुष्यमपि तेषां नास्ति,उपनयनसंस्कारपूर्वकस्य वेदाध्ययनस्याभावेन तेषां वेदान्तविचारासंभवाद्ब्रह्मबोधानुपपत्तेः । अत एव तेषां शास्त्रपर्युदासश्च। तस्माद्देवानां नास्ति ब्रह्मोपासनेऽधिकार इति ॥

सिद्धान्तस्तु–ब्रह्मोपासने देवानामप्यधिकारोऽस्ति । कुतः?तेषामर्थित्वसंभवात्। न च परमेश्वरस्य देवानां च पदं समानं, यतः सामान्येन सुखवाचकोऽपि स्वर्गशब्दः प्रकरणादिना विशेषमभिधत्ते; यथेश्वरशब्दः स्वामिमात्रवाचकः प्रकरणवशात् 'उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये' इत्यादिषु जनपदाधिपतिमात्रवाची राजविषयः, ब्रह्मणः प्रकरणे पुनरयं निरतिशयैश्वर्यवाची तद्विषयो भवति, तथा सुखमात्रवाचकः स्वर्गशब्दः प्रकरणेन प्रमाणान्तरोपपत्त्या च देवानां पदं क्षयि-

---

मानः।''अग्निष्टेतनुवं मातिधागग्ने हव्य ँरक्षस्व''श्रृणोत ग्रावाणो विदुषो नु यज्ञ'मित्यादिषु कथमसदर्थावलम्बनश्रुत्या परीक्षकाः प्ररोचिताः प्रवर्तेरन्। इत्थमारोग्यादिफले कटुतिक्ताद्यौषधसेवने बहुनियमपरिकरे प्रवर्तकस्य पित्रादेः प्रवर्तनीयेष्टतमानि सत्यानीति फलोक्तीनामिव बहुवित्तव्ययायाससाध्ये कर्मणि प्रवर्तकस्य वेदस्य स्तावकवाक्यानामसदर्थविषयत्वमवगच्छन्तोऽपि प्रवर्तनीयाः परीक्षका यदस्य वास्तवं फलं तल्लम्भनार्थमेव इदमनुष्ठापनीयमिति हितैषित्वेन प्रवृत्तिप्रतिबन्धकद्वेषालस्यादिभंगप्ररोचनार्थं पित्रादिवदसत्यान्यन्यान्यपि फलान्युपन्यस्य कृत्युद्देशार्हमिदं कर्मेति स्तुवन्तीति स्तावकवाक्यानामसदर्थावलम्बनस्वार्थबाधितायां कर्मस्तुतौ तात्पर्यं निश्चित्य प्रवर्तकस्य वेदस्य हितैषित्वेन स्तुतिद्वारभूतार्थासत्यत्वमदोषं मन्यमानाः प्रवर्तेरन्नेव। तस्माद्देवताविग्रहादौ अवान्तरतात्पर्यस्याप्यसम्भवात् ततस्तत्सिद्धिर्नास्त्येव । अथापि तत्सिद्धिमभ्युपेत्य ततस्सामर्थ्यसद्भावेऽप्यर्थित्वाद्यभावादधिकाराभावस्समर्थित इति। अत एव तेषामिति । उपनयनाध्ययनरहितानां व्रात्यादीनां वैदिकेषु कर्मस्वनधिकारस्मरणादिति भावः। नन्वीश्वरशब्दः स्वतो निरतिशयैश्वर्यशालिनः प्रतिपादने स्वारसिकोऽ'प्युपेयादीश्वरं चैवे' त्यत्राप्राक्तनभूम्यादिप्राप्तिरूपस्य योगस्य प्राक्तनतत्परिपालनरूपस्य क्षेमस्य च प्रसिद्ध्ये तत्तज्जनपदाधिपतेरुपसर्पणविधेः स्नातकगृहस्थधर्मप्रकरणतोऽवगमात् तत्र सङ्कुचितवृत्तिरस्तु। इह स्वर्गशब्दो देवपदविषये क्षयिष्णुसातिशयसुखवचन इत्यत्र प्रमाणाभावात् 'यन्न दुःखेन सम्भिन्न'मिति स्वर्गशब्दार्थवर्णनस्य सर्वविषयत्वात् परमशिवपद इवेन्द्रादिपदेऽपि निरतिशयसुखपर एव स्यादित्याशङ्क्याह–प्रकरणेन प्रमाणान्तरोपपत्त्या चेति।'ज्योतिष्टोमेन स्वर्गकामो यजेत''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'' अग्निहोत्रं जुहुयात्स्वर्गकाम' इति स्वर्गफलत्वेनोच्यमानानां सोमेष्टिदर्वीहोमानां तत्तत्प्रकरणपर्यालोचनया तत्तद्यागानां फलस्य कर्मनिष्पत्तेः 'तेषां लोकवत्परिमाणतः फलविशेषः स्या'दित्यर्थवादाधिकरणसूत्रोक्तन्यायेन फलतारतम्यमावश्यकमिति कर्मभिः प्राप्यस्येन्द्रादिपदरूपस्य स्वर्गस्य सातिशयत्वं तावद्दुर्वारम्। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षी-

ष्णुत्वसातिशयत्वादिदोषकलुषितं स्वल्पसुखमभिधत्ते। परब्रह्मणः शिवस्य पदं तु निरतिशयसुखस्वरूपमनावृत्तिलक्षणमेव ब्रूते । अतः सातिशयत्वादिदोषदुष्टसुखपदवर्तिनां निरतिशयसुखं ब्रह्मपदं प्रत्यर्थित्वं संभवत्येव । शक्त्यतिशयतः स्वयंभातवेदार्थत्वात् पूर्वाधीतवेदविस्मरणाभावाद्वा तेषां वैदुष्यं च संभवति। शास्त्रस्य साधारण्येनोपासनाविधायकत्वादधिकारस्यदुर्निवारत्वेन दूरतस्तत्पर्युदासः।तेषामर्थवादप्रामाण्यात् विग्रहवत्त्वेन सामर्थ्यं चास्ति; 'आदित्योयूपः' 'अग्निर्हिमस्य भेषजम्' इत्यादीनां गुणवादानुवादानां स्वार्थे तात्पर्याभावेऽपि 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्याद्यर्थवादानां विरोधस्य मानान्तरप्राप्तेश्चाभावेन स्वार्थे तात्पर्यसंभवात्।

---

यत' इत्यौपनिषदवाक्यरूपप्रमाणान्तरदर्शितयोपपत्त्या क्षयिष्णुत्वमपि दुर्वारम्। आदिशब्देन अर्थवादादिसिद्धमसुरभयवत्त्वादिकं सङ्गृह्यते । अतो 'यन्न दुःखेन सम्भिन्न'मित्यादिश्लोकस्तत्कृतनिर्वचनस्वर्गशब्दश्च मुख्यवृत्त्या परमेश्वरपद एव स्वारसिकः कथञ्चिदिन्द्रादिपदेष्वपि वर्तते जनपदाधिपेष्विवेश्वरशब्द इति भावः। शक्त्यतिशयेति। सर्वज्ञशक्त्यतिशयवत्त्वादनधीतोऽपि वेदस्तदर्थश्च देवानां भातीति वा पूर्वाधीतस्यैव वेदस्य सुप्तप्रबुद्धन्यायेन स्मृतिर्भवतीति वा तेषां वैदुष्यमपि सम्भवतीत्यर्थः । शास्त्रस्येति। तदुपासनाविधेः साधारण्यात् । तस्मा'च्छूद्रो यज्ञेऽनवक्लृप्त' इतिवन्निषेधाभावात् देवानामधिकारस्यावश्यंभावात्तत्पर्युदासशङ्का कथञ्चिदपि नावकाशं लभत इत्यर्थः।ननु सम्भवेदेवमर्थित्वादिकं यदि तेषां विग्रहवत्त्वं स्यात्तदभावात् सामर्थ्यमर्थित्वादिकमपि न सम्भवतीत्याशङ्क्याह—तेषामिति । 'इन्द्रो वृत्राये'त्यादीनां देवताविग्रहप्रापकाणां स्वार्थेऽवान्तरतात्पर्यं तदा न स्यात् यद्या'दित्यो यूप' इत्यादीनामिव मानान्तरविरोधेन गुणवादत्वम् 'अग्निर्हिमस्य भेषज'मित्यादीनामिव मानान्तरतः प्राप्त्यानुवादकत्वं स्वीकर्तव्यं स्यात्। न चैतदुभयमस्ति। न त्वादित्यादिपदशक्तिग्रहतत्प्रयोगविरोधोऽस्तीति दर्शितम् । सत्यम् । स विरोधसूत्रे 'तदुपरी'त्यंशेन निराकृतः। तथा हि —तदिति पदं मनुष्याधिकारत्वादिति प्रकृतमनुष्यपरामर्शि तेषामित्यर्थे 'सुपां सुलुगि ' त्यादिसूत्रेण लुप्तषष्ठीकं भिन्नपदं न तु तदुपपादकम्। 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेने'ति सूत्रेणाव्ययेन सह समासस्य प्रतिषिद्धत्वात्। तथा च तेषां मनुष्याणां न केवलं मनुष्यत्वदशायामेव परमेश्वरोपासनायामधिकारः। किं तु तदुपरि ऊर्ध्वदशायाम्। एवमेव 'अयमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यं नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वे'ति श्रुतिप्रसिद्धायां मनुष्यशरीरत्यागानन्तरभावितदुत्कृष्टशरीराधिष्ठानरूपायां देवत्वादिदशायामपि तदधिकारोऽस्ति। अधिकारविशेषणानामर्थित्वादीनां सम्भवादिति सूत्रार्थः। स्पष्टार्थं देवादीनामिति सूत्रणीये तदुपरीति सूत्रणं प्राङ्मनुष्याणामेव तदीयसत्कर्मोपार्जिता उपरितन्यो दशा बह्व्य इति प्रदर्शनेन मनुष्याणां यानि देवत्वप्रापकाणि कर्माणि तद्विध्यन्यथानुपपत्तिर्देवतासद्भावे प्रमाणमिति सूचनार्थम् । ज्योतिष्टोमादिविध्यन्यथानुपपत्त्या हि देशान्तरदेहान्तरभोग्यैहिकसुखविलक्षणस्वर्गशब्दोक्तसुखरूपतत्फलभोक्तृत्वेन कर्मदेवाः सिद्ध्यन्ति। तथैवाजानदेवा अपि सिद्ध्यन्ति। तत्तत्कल्पादिप्रभवेन्द्राद्याजानदेवपदस्यापि पूर्वकल्पानुष्ठितकर्मविशेषफलत्वात्। तथा सामगानां पञ्चविंशब्राह्मणेऽ'प्यतिरात्रः

**तस्माद्ब्रह्मविद्यायामधिकारिणो देवाः ॥**

पृष्ठ्यः षडहो महाव्रतं पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणोऽतिरात्रः य एताभिर्वै देवताभि ........स्थं देवत्वं गच्छन्ति य एतामुपयन्ती'ति। अत्र देवत्वप्राप्त्यर्थव्रतविध्यन्यथानुपपत्त्या देवानां चेतनत्वविग्रहवत्त्वसिद्धिः। सामविधिब्राह्मणे........"मयि वर्च' इत्यन्तेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानस्त्रयाणां लोकानामाधिपत्यं गच्छती'ति श्रूयते। त्रैलोक्याधिपत्यमिन्द्रत्वमेव। तस्यैव त्रैलोक्याधिपतित्वेन प्रसिद्धेः। तथा तत्रैव ब्राह्मणे देवतावशीकरणफलकास्सामविशेषप्रयोगाः श्रूयन्ते। 'यः कामयेत....यमित्येकरात्रं क्षुरसंयुक्तस्तिष्ठेत्सुतासो मधुमत्तमा इति वर्गाः। एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः एकरात्रेण कुटुम्बिनमासादयति द्विरात्रेण राजोपजीविनं, त्रिरात्रेण राजानं, चतूरात्रेण ग्रामं, पञ्चरात्रेण नगरं षड्रात्रेण जनपदं, सप्तरात्रेणासुरानष्टरात्रेण पितृपिशाचान्नवरात्रेण यक्षान्दशरात्रेण गन्धर्वाप्सरसोऽर्धमासेन वैश्रवणं मासेनेन्द्रं चतुर्भिः प्रजापतिं संवत्सरेण ............... त्रिजगत्सर्वं हास्य गुणि भवती'ति। अत्र देवताद्यभावे वशीकरणस्य फलत्वानुपपत्तेर्देवतानां सिद्धिः। तथा तैत्तिरीयाणां.... ...........धे विश्वसृजामयनकर्तृत्वेन काश्चिद्देवता अनुक्रम्य तत्फलविधिः श्रूयते। 'ब्रह्मणः सायुज्यं सलोकतां यन्ति। एतासामेव देवतानां सायुज्यम्। सार्ष्टिताँ समानलोकतां यन्ति। यएतदुपयन्तीति' सालोक्यं तत्तल्लोकावाप्तिः सार्ष्टितत्तद्देवतानां यावन्ति भोग्यवस्तूनि तावतां प्राप्तिस्सायुज्यं तत्तद्देवतानां गीतनृत्तादिषु भोग्यस्तुतिषु सङ्गीतशास्त्रादिप्रावीण्येन यावान्भोगस्तावत्प्राप्तिरिति भेदः। अत्र देवतासायुज्यादिफलान्यथानुपपत्त्या देवतासिद्धिः। तथा छन्दोगोपनिषदि मधुविद्यायां श्रूयते 'एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती' त्यादि। अत्र देवमधुरूपादित्यमण्डलगतलोहितादिरूपात्मकामृतपञ्चकोपासकानां वसुरुद्रादित्यमरुत्साध्यगणान्तर्भावप्राप्तिः फलत्वेन श्रूयते' तद्वस्वादिदेवतासद्भावं विनानुपपन्नमिति तदन्यथानुपपत्त्यैव वस्वादिदेवतासिद्धिः। एवं विध्यन्यथानुपपत्त्यैव सामान्यतो देवानां विशिष्येन्द्रादीनां च सिद्धौ तेषां सङ्ख्याविशेषरूपायुष्यभोगभूबलादिविशेषाकाङ्क्षायां तत्तदर्थवादाः प्रवर्तन्ते। तथा च यथा स्रक्चन्दनवनिताहिमोष्णादिषु सुखजनकत्वदशायां स्वर्गशब्दप्रयोगस्य तदजनकत्वदशायां तत्प्रयोगाभावस्य च दर्शनेनान्वयव्यतिरेकाभ्यां सुखवाचकत्वेनावधारितस्य स्वर्गशब्दस्य अग्निष्टोमादिवाक्येषु फलनिर्देशकतया श्रवणे सति ज्योतिष्टोमादिजन्यं सुखं कीदृशमित्याकाङ्क्षायां 'यन्न दुःखेन सम्भिन्न' मित्यादिवाक्यशेषात् यत्र लौकिकसुखे स्वर्गशब्दस्य शक्तिग्रहःतद्विलक्षणसुखे शक्तिग्राहकात्ज्योतिष्टोमादिवाक्यगतस्य स्वर्गशब्दस्य तथाभूतसुखविशेष एवार्थ इति निर्णीते सति प्राचीनलौकिकसुखवाचकत्वनिर्णयो बाध्यते-ऐहिकसुखेषु प्रयोगो लाक्षणिक इत्येवं निश्चीयते।एवमिहापि देवतावाचिनां शब्दानां ज्योतिर्मण्डलादिषु शक्तिग्रहे प्रयोगे च सत्यपि यागविधीनामन्यथानुपपत्त्या विध्याकाङ्क्षिततत्तद्देवतारूपविशेषादिसमर्पकमन्त्रार्थवादादिसहितया विग्रहवद्देवतापरत्वनिर्णये सति प्राचीनस्तेषां ज्योतिरादिषु शक्तिग्रहश्च बाध्यते। तेषु प्रयोगो लाक्षणिक इत्येव कल्प्यते। दृष्टं च नयनगोलकादिषु प्रयुज्यमानानां नेत्रनयनलोचनादिशब्दानां श्रुत्याद्यनुरोधेन तदन्तर्वर्त्यतीन्द्रियनयनादिवाचकत्वसिद्धौ गोलका...............................................................................

...............................................................................................................

देवानां विग्रहादिमत्त्वे विरोधमाशङ्क्य परिहरति—

**॥ सू ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २६ ॥**

नानादेशप्रवृत्तेषु यज्ञेषु तत्रतत्राहूतानां देवानां विग्रहादिमत्त्वे सर्वत्र युगपत् सान्निध्यं वाच्यम् । तन्न युज्यते । ततः कर्मणि विरोध इति चेत्—न शङ्क्यमेतत् । विग्रहवत्त्वेऽपि सौभरिप्रभृतिषु युगपदनेकदेहप्रतिपत्तिर्दृष्टा । ततो न कश्चिद्विरोधः ॥

मा भूत्कर्मणि विरोधः, वैदिकशब्दे भवतीत्यत आह—

**॥ सू ॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥**

कर्मणि विरोधाभावेऽपि वैदिकशब्दे विरोधः प्रसज्यते । कथम् । देवानां सावयवत्वादनित्यत्वं सहजमेव ।

..................................................................................................................

..................................................................................................................

..................................................................................................................

..................................................................................................................

..................................................................................................................

..................................................................................................................

..................................................................................................................

॥ सू० ॥ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥ शब्दे विरोध इति । अनेन सूत्रे शब्द इति सप्तम्यन्तं पदम् । विरोध इत्यस्य पूर्वसूत्रादपकृष्टस्य तत्रान्वयः । वैदिकानामिन्द्रादिशब्दानां विग्रहविशिष्टवाचित्वेऽभ्युपगम्यमाने विग्रहनाशे तेषामर्थशून्यत्वलक्षणो विरोधः प्रसज्येतेत्यर्थः । ननु नायं दोषः । इन्द्रादिविग्रहाणां शिवविग्रहवन्नित्यत्वोपपत्तेः । अनित्यत्वेऽपि कदाचिदर्थसत्तयैव पाण्डवादिशब्दानामिवार्थवत्त्वोपपत्तेः । सार्वकालिकार्थापेक्षायामपि गवादिशब्दवज्जातिशब्दत्वोपपत्तेरित्यभिप्रायेण पृच्छति—कथमिति । तन्नित्यत्वपक्षस्तावन्न सङ्गच्छते । प्राकृतानां सावयवानामनित्यत्वनियमात् तन्नियममनादृत्य इन्द्रादिविग्रहाणां नित्यत्वाभ्युपगमे सांसारिकशरीरनाशपूर्विकाया मुक्तेरसम्भवेन इन्द्रादीनां मुक्त्यर्थित्वाभावेन उपासनानधिकारापत्तेरित्याशयेनाह—देवानामिति । अनित्यत्वपक्षे यद्विग्रहविशिष्टवाचित्वमिन्द्रादिशब्दानामिष्यते तदुत्पत्तेः प्राक्पश्चात्कालयोरपि कश्चि-

---

अत्रेदमवधेयं सहृदयैः । 'देवानां विग्रहादिमत्त्वे' इत्यारभ्य 'शब्द इति चेन्नातः प्रभवात्' इत्यन्तस्य श्रीकण्ठभाष्यसंदर्भस्य व्याख्यानांशभूताः काश्चन पङ्क्तयः शिवार्कमणिदीपिकायां सर्वास्वप्युपलब्धासु मातृकासु त्रुटिता वर्तन्ते । यद्यपि दहराधिकरणीयम् **'इतरपरामर्शात्स'** इति सूत्रमारभ्यैव शिवार्कमणिदीपिकासंदर्भस्त्रुटित एव त्रिचतुरासु मातृकासु । तथाप्यतिशिथिलां मध्येमध्ये त्रुटितत्रिचतुरपदां मातृकामेकतमामवलंब्येयानंशः पर्यपूरि । तस्यामप्यस्याणीयसस्सन्दर्भस्य त्रुटिततया यथाकथंचित्तं संपिपादयिषुस्सर्वतस्समन्विष्यन्नपि नैवालभे मातृकान्तरम् । श्रीमदनन्तशयनमहाराजप्रासादस्थपुस्तकालयस्थायां मातृकायामप्यस्यांशस्य त्रुटिततया दौर्लभ्यमज्ञासिषं सुहृत्कार्यधुरंधरेभ्यो राजकीयपाठशालाप्रथमाध्यापकेभ्यस्तत्रभवद्भ्यः श्रीमद्गणपतिशास्त्रिभ्यः । ततस्त्रुटितस्यास्य संदर्भस्य परिपूरणं दुस्साधमिति विलंबभीरुतया निरवीवृतं यथोपलंभं मुद्रणकर्म । इतोऽपि यदि सहृदया यत्र क्वापि लभेरन्मातृकान्तरं तर्ह्यस्य त्रुटितांशस्य विलिख्य प्रेषणेन समनुगृह्णन्तु मां संमुद्रय प्रकटीकर्तुं ग्रंथावसाने वापीति प्रतीक्षे तेषां तादृशमुपकारमित्यलम् ॥

**तत इन्द्रादिदेवानामपि उत्पत्तिरनिवार्या । तथात्वे तदुत्पत्तेः प्राक् तद्विनाशात् परतश्च वैदिकेन्द्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यात् । अनित्यत्वेऽपि पौरुषेयत्वने विधिनिषेधवाक्यानामप्रामाण्यम् । अतस्तत्प्रयुक्तकर्मणां चासिद्धिरित्यनेकानर्थापत्तिः । ततो वैदिकशब्दविरोधस्य परिहाराय विग्रहवत्त्वं देवानामनङ्गीकार्यमिति चेत्—न, अतो वैदिकादेव इन्द्रादिशब्दात् इन्द्राद्यर्थसृष्टेः । यदीन्द्रादिशब्दा व्यक्तिवाचकाः स्युः तदा खल्विन्द्रादिशब्दार्थनाशे तेषामर्थशून्यत्वमनित्यत्वं वा स्यात् । गवादिशब्दवत् आकृतिवाचकत्वमेवेन्द्रादिशब्दानामुच्यते । तथा च– यथा कुलालो घटादिशब्दात् म-**

---

त्कश्चित्स्वपित्रादिकृतेन्द्रनामवान्देवस्सम्भवति । डित्थादिशब्दानां व्यक्तिविशेषेषु साङ्केतिकत्वेऽपि लोके तन्नामकव्यक्तिप्रवाहाविच्छेददर्शनात् । तथा च तथाभूता एव देवा 'इन्द्रागच्छ' 'अग्न आयाहि वीतय' इत्यादिशब्दानामपि तत्तत्काले विषया भविष्यन्तीत्याशङ्क्याह—अनित्यत्वं वा स्यादिति । तथा सति वैदिकानामिन्द्रादिशब्दानां नित्य एकोऽर्थो व्यवस्थितो न स्यात् । एकस्य शब्दस्य कालभेदेनानेकार्थत्वं तु क्वापि न दृष्टमिति भावः । ननु व्यवस्थितैकार्थराहित्यरूपमनित्यत्वं मन्त्राणां न दोषः । 'कदा चन स्तरीरसि' इत्यादिमन्त्राणा'मैन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादिभिरग्न्युपस्थानादिषु स्तोत्रशस्त्रप्रकरणपाठादिभिरिन्द्रस्तुत्यादिषु च विनियुक्तानां तत्तत्प्रयोगभेदेनानेकार्थपरत्वदर्शनादित्याशङ्क्य 'कदा चन स्तरीरसी'त्यादिमन्त्रगतानामिन्द्रादिपदानां प्रयोगविशेषेषु अग्न्यादिपरत्व 'मैन्द्र्या गार्हपत्यमुपतिष्ठते'त्यादिविध्यधीनम् । नैवमिह पूर्वकल्पे व्यक्त्यन्तरपराणां वैदिकानामिन्द्रादिशब्दानां कल्पान्तरे व्यक्त्यन्तरपरत्वं विध्यधीनमिति वक्तुं शक्यते । किं तु तत्तत्कालवर्तीन्द्रादिशब्दसङ्केतयितृपुरुषबुद्ध्यधीनमिति वक्तव्यम् । तथा चेन्द्रादिदेवतापदघटितानां विधिनिषेधाख्यानानां तत्तत्कालवर्तीन्द्रादिपदसङ्केतयितृस्वतन्त्रपुरुषबुद्ध्यधीनार्थप्रतिपादकत्वे तत्सापेक्षत्वलक्षणमप्रामाण्यं तच्चोदितकर्मणामननुष्ठानं च स्यादित्यर्थः । तस्मादप्रामाण्यादिदोषपरिहारायेन्द्रादिशब्दानां गवादिशब्दवज्जातिशब्दत्वमभ्युपेतव्यम् । तच्चाचेतनज्योतिरादिवाच्यत्व एव सम्भवति न विग्रहवच्चेतनवाचित्वे । डित्थादिशब्दविषयाणामिवेन्द्रादिशब्दविषयाणां विग्रहाणामेकजात्यवच्छेदासम्भवात् शब्दविरोधपरिहाराय देवतानां विग्रहवत्त्वं त्यक्तव्यमित्युपसंहरति—तत इति । सौत्र'मत' इति पदं व्याचष्टे—वैदिकादेवेति । ननु वैदिकादिन्द्रादिशब्दादिन्द्राद्यर्थसृष्टिः कथं विरोधपरिहारे हेतुः स्यादित्याशङ्क्य तेन हेतुना साध्यमिन्द्रादिशब्दानां जातिवाचित्वं तत्र हेतुत्वेन विवक्षितमिति दर्शयति—यदीन्द्रादिशब्दा इति । ननु जातिशब्दत्वं शब्दविरोधपरिहारे हेतुरिति युक्तमेव । जातिशब्दत्वे कथमिन्द्रादीनामिन्द्रादिशब्दप्रभवत्वं हेतुरित्याशङ्क्य तस्य तत्र हेतुत्वं दृष्टान्तमुखेनोपपादयति—यथा कुलाल इति । शब्देनार्थस्मृतिसापेक्षा सृष्टिः स्रष्टव्यार्थस्य स्मर्यमाणार्थसमानाकृतित्व एव लोके दृष्टा । तथा च ब्रह्मा वैदिकादिन्द्राद्याकृतिविशेषप्रतिपादकाच्छब्दात्पूर्वेन्द्राद्याकृतिविशेषमनुसन्धाय कल्पादाविन्द्रादीन्सृजतीति तेषां पूर्वेन्द्रादिसमानाकृतित्वसिद्धौ तदभिव्य-

(१) 'शब्दानाम्' इति छ. पाठः ।

नसि विपरिवर्तमानं तत्तदाकारं स्मृत्वा घटादिकं सृजति, तथा पूर्वस्मिन्निन्द्रादौ विनष्टे वैदिकादिन्द्रादिशब्दात् ब्रह्मा पूर्वेन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं सृजति। तत इन्द्रादिव्यक्तिविनाशेऽपि तत्तदाकृतेरविनाशेन शब्दानां नित्यत्वादविरोधः। किं प्रमाणमिति चेत्—श्रुतिः स्मृतिश्च। तथा हि 'वेदेन रूपे व्यकरोत्। सतासती प्रजापतिः।' 'स भूरिति व्याहरत्। स भूमिमसृजत' इत्यादिः श्रुतिः॥ 'सर्वेषां च स नामानि कर्माणि च पृथक्पृथक्।

---

ङ्ग्या जातिस्सिद्ध्यतीति जातिशब्दत्वे भवति शब्दप्रभवत्वं हेतुरिति भावः। नन्वसम्प्रतिपन्नः कुलालदृष्टान्तः। घटादिसृष्ट्यर्थमपेक्षितस्य घटाद्याकृत्यनुसन्धानस्य प्राक्तनतदनुभवादेव सम्भवे घटादिशब्दानपेक्षणात्। अत एव कैश्चिदुपकरणैः कञ्चिदर्थं निर्मिमाणं दृष्ट्वा तद्वाचकशब्दानभिज्ञा अपि नानाशिल्पनिपुणास्तैरुपकरणैस्तथाभूतमेव व्यक्त्यन्तरं निर्मिमाणा दृश्यन्ते। जीवकर्तृकसृष्टेः कथञ्चिच्छब्दापेक्षासम्भवेऽपि परमेश्वरकर्तृकाया जगत्सृष्टेर्न सा सम्भवति। तस्य स्वत एव सर्वज्ञत्वात् आगन्तुकसार्वज्ञ्यश्चतुर्मुखः देवादीनां स्रष्टा न साक्षात्परमेश्वर इति चेन्न। देवादीनां नामरूपस्रष्टा परमेश्वर एवेति 'संज्ञामूर्तिक्लृप्त्य'धिकरणे व्यवस्थापयिष्यमाणत्वात्। चतुर्मुखस्यापि सार्वज्ञ्यस्य 'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टय'मिति स्वाभाविकत्वस्मरणादिति चेत्। उच्यते। शिल्पशास्त्रेभ्यो देवादीनां नामरूपाणि विज्ञाय प्रतिमादिकं निर्मातीति दृश्यते सोऽत्र दृष्टान्तः। कुलालदृष्टान्तस्तथाभूतस्योपलक्षणम्। यद्यपि देवादीनां नामरूपसृष्टौ परमेश्वरः शास्त्रतस्स्रष्टव्यनामरूपालोचनोपेतः। तथापि चतुर्मुखस्याप्यस्येव सोऽपि देवादिनामरूपसृष्टौ हेतुरिति तत्सृष्टिसामर्थ्यसिद्धये पुराणादिषु तस्य तपश्चरणवर्णनादिभिरवसीयते। ईश्वरकर्तृके घटे कुलालस्यापि कर्तृत्ववत् तत्र चतुर्मुखस्यापि कर्तृत्वं नानुपपन्नम्। तस्य सार्वज्ञ्यं परमेश्वरानुग्रहलब्धवेदतदर्थस्फुरणाधीनम्। अत एत श्रूयते—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये'इति। तस्य किलायमाशयः। यथा शिल्पी शिल्पशास्त्रात् देवादीनां नामरूपाणि विज्ञाय प्रतिमादिकं निर्माति तथाऽयं वेदेभ्यः तानि विज्ञाय सृजत्विति मत्वा परमेश्वरश्चतुर्मुखसृष्ट्यनन्तरमेव तस्मै वेदांस्तदर्थांश्च दत्तवानिति जातमात्रेण लब्धत्वात्तत्सार्वज्ञ्यं सहजमिति स्मर्यते। तस्मात्सर्वमेतदुपपन्नम्। ननु भवेदेतत्सर्वमुपपन्नं यदि वेदशब्देभ्यस्तदर्थानुसन्धानपूर्वकं चतुर्मुखस्ससर्जेत्यत्र किञ्चित्प्रमाणं स्यात् तत्रैव प्रमाणं वक्तव्यमित्याशङ्कते–किं प्रमाणमिति। 'प्रत्यक्षानुमानाभ्या' मिति सूत्रमर्थतो व्याचक्षाणः परिहरति– श्रुतिस्स्मृतिश्चेति। वेदेनेति। सतासती सदसती चेतनाचेतनरूपे व्याकरोत् देवमनुष्यादिरूपेण भूभूधरसरित्समुद्रादिरूपेण विविधान्यकरोदित्यर्थः। इत्यादिःश्रुतिरिति। आदिशब्देन 'स भुव इति व्याहरत् सोऽन्तरिक्षमसृजते'त्याद्याः श्रुतयो गृह्यन्ते। 'भूर्भुवस्सुवरो'मिति शब्दाः पृथिव्यन्तरिक्षस्वर्गलोकवाचकाः। तथा च तत्तल्लोकनामभिस्तत्तन्नामप्रवृत्तिनिमित्तभूतानसाधारणानाकृतिविशेषाननुसन्धाय भूलोकादीनसृजदित्यर्थः। **सर्वेषां चेति**। नामानीन्द्रादीनि। कर्माणि इन्द्राद्यसाधारणत्रैलोक्याद्याधिपत्यादीनि। पृथक्संस्थाः

वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे' ॥ इत्यादिः स्मृतिः ॥

॥ सू ॥ अत एव च नित्यत्वम् ॥ २८ ॥

अत एव 'मन्त्रकृतो वृणीते' 'विश्वामित्रस्य सूक्तं भवति' इति विश्वामित्रादीनां मन्त्रकृत्त्वेऽपि विश्वामित्रादिशब्दानामाकृतिनिमित्तत्वेन मन्त्रब्राह्मणमयस्य वेदस्य नित्यत्वमुपपद्यते। यतो ब्रह्मा वैदिकात् शब्दात् अर्थं स्मृत्वा सृजति। अनधीतमन्त्रादिदर्शनशक्तत्वात् । तथा च पूर्वविश्वामित्रादीनामाकृतिविशेषांस्तत्तद्वैदिकशब्दैः स्मृत्वा तदाकारानेवापरान् तत्तच्छक्तिविशेषयुक्तान् ब्रह्मा नैमित्तिके प्रलये गते सृजति। ते चानधीत्यैव तान् मन्त्रानखिलान् पठन्ति । अतस्तेषां मन्त्रादिकर्तृत्वं वेदनित्यत्वं च ॥

भवत्वेवं नैमित्तिकप्रलये, प्राकृतप्रलये ब्रह्मादौ वेदाख्यशब्दे च विनष्टे

---

पृथक्संस्थानानि सहस्राक्षत्वादिविशिष्टानसाधारणाकृतिविशेषान्। इत्यादिःस्मृतिरिति। आदिशब्देन 'नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ 'इत्यादिस्मृतिर्गृह्यते । माभूदर्थद्वारको वैदिकशब्दे विरोधः शब्दद्वारकस्तु स्यात्। मन्त्रार्थवादानां हि प्रतीयमानेऽर्थे प्रामाण्यमुपपादितम्। तथा च 'मन्त्रकृतो वृणीते'संहिताकारपदकारसूत्रकारब्राह्मणकाराणां'विश्वामित्रस्य सूक्तंभवति'इत्यादिप्रामाण्याद्वेदस्यपौरुषेयत्वमनिवार्यमित्याशङ्कानिराकरणार्थं सूत्रम् ॥ सू. ॥अत एव च नित्यत्वम् ॥२८॥ ननु विश्वामित्रादिशब्दानामाकृतिनिमित्तत्वहेतुना कथमुद्भावितवेदानित्यत्वशङ्कापरिहारलाभः' कथं च तस्य हेतोस्सिद्धिरित्याशाङ्कानिराकरणार्थमत एवेति निर्दिष्टं सौत्रं हेतुं विवृणोति—यत इति। परमेश्वरानुग्रहादनधीतसकलवेदार्थदर्शनशक्तश्चतुर्मुखो वैदिकाच्छब्दादृषिमनुष्यादीनामसाधारणनामरूपकृत्यविशेषाननुसन्धाय तथैव सृजतीति अतः प्रभवादिति पूर्वसूत्रांशसिद्धोऽर्थः सौत्रेणात एवेति शब्देन परामृश्यत इति विवृतं भवति। ततश्च विश्वामित्रादीनामपि वेदशब्देभ्यः पूर्वकल्पस्थितविश्वामित्रादिनामरूपकृत्यविशेषाननुसन्धाय तथैव सृष्टत्वलाभे सति अतीतवर्तमानकल्पगतास्सर्वेऽपि विश्वमित्रादयः विश्वामित्रादिपदप्रापकपूर्वकल्पानुष्ठितपुण्यवशाद्विश्वामित्रसूक्तादीननधीत्यैव पश्यन्तीति तत्तत्सूक्तादिद्रष्टृत्वमेव तत्तत्कर्तृत्वं न त्वपूर्वानुपूर्वीकाभिनवसूक्तादिकर्तृत्वमिति पर्यवस्यति। वेदानामनेकऋषिकर्तृकत्वे वेदशब्देभ्यस्तत्कृत्यविशेषाननुसन्धाय तेषामृषीणां स्रष्टृत्वानुपपत्तेरित्यत एवेति हेतुलब्धमर्थमाह—तथा चेत्यादिना ॥उत्तरसूत्रमवतारयति—भवत्वेवमिति।चतुर्मुखस्य स्वमानेन परार्धद्वयरूपशतवर्षजीविनः चतुर्युगसहस्ररूपैकैकदिवसात्मकावान्तरकल्पस्यावसाने तावत्कालप्रमाणा रात्रिर्नैमित्तिकप्रलयः। यत्र भूर्भुवस्सुवरिति त्रैलोक्यं नश्यति। महर्लोकादयस्तिष्ठन्ति।तदीयशतवर्षावसाने तावत्प्रमाणः कालः प्राकृतः प्रलयः। यत्र ब्रह्माण्डादिकं सर्वं नश्यति प्रकृतिमात्रमवशिष्यते। तत्रैव नैमित्तिकप्रलये भवतु वेदस्यावस्थानम्। प्राकृतप्रलये तु तन्न सम्भाव्यते। न च प्राकृतप्रलयानन्तरजगत्सृष्टेरपि प्रागुदाहृतश्रुतिस्मृतिभ्यां वेदशब्दप्रभवत्वावगमात् प्राकृतनैमित्तिकप्रलयेऽपि तदवस्थानमुपपादनीयमिति वाच्यम्। प्रकृतिमात्रावशेषे काले कथमपि तदुपपादनासम्भवात् उदाहृतश्रुतिस्मृत्योर्नैमित्तिकप्रलयानन्तरभाव्यवान्तरसृष्टिविषयत्वोपपत्तेः । 'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ।' इति स्मृतौ शर्वर्यन्त इति विशेषणेनावान्तरकल्पविषयत्वस्पष्टीकरणाच्च । तस्मात्पूर्वसूत्रोपवर्णितं

कथं वेदनित्यत्वमित्यत आह—

॥ सू० ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ २९ ॥

सृज्यानां समाननामरूपत्वादेव प्राकृतप्रलयावृत्तावप्यविरोधः। तथा हि-सर्वज्ञः सर्वशक्तिः विश्वाधिकः परमेश्वर आदिकर्ता पूर्वप्रपञ्चसंस्थानं स्मृत्वा तदाकारमेव पुनः प्रपञ्चं सृजति। वेदानपि पूर्वानुपूर्वीविशिष्टान् अनुस्मृत्य पुत्रभूताय ब्रह्मणे प्रयच्छति। कथमवगम्यते? श्रुत्या स्मृत्या च। 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो सुवः॥' 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै '॥ इत्यादिः श्रुतिः। स्मृतिरपि 'अप एव ससर्जादौ तासु वीर्यमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। ब्रह्माणं विदधे पूर्वं वेदानस्मै प्रयच्छति ॥' इत्यादिः। ततः प्राकृतप्रलयावृत्तावपि वेदानां नित्यत्वमेव ॥

---

वेदनित्यत्वमनुपपन्नमिति शङ्काभिप्रायः ॥ सू. ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ २९ ॥ प्राकृतप्रलये वेदानामभावेन स्वरूपतो वेदनित्यत्वानुपपत्तिराशङ्क्यते चेदिष्टापत्तिः।'अस्य महतो भूतस्य निश्वसितमेवैतद्यदृग्वेदो यजुर्वेदस्सामवेदः' 'छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत' इत्यादिश्रुतिषु महदहङ्कारादिवत्तेषामपि सृष्टिश्रवणात्। एकरूपवर्णपदवाक्यतदानुपूर्वीकत्वलक्षणे तु नित्यत्वे न विरोधः। अवान्तरकल्पेष्विव महाकल्पावृत्तावपि सृज्यानां समाननामरूपत्वस्य श्रुतिस्मृतिभ्यामवगमात् इत्यभिप्रेत्य सूत्रं व्याचष्टे—सृज्यानामिति। ननूदाहृतश्रुतिस्मृत्योरवान्तरकल्पविषयत्वोपपत्तेरुक्तहेतुरसिद्ध इत्याशङ्क्य तमुपपादयति—तथा हीति। 'यो ब्रह्माण' मिति श्रुतिरवान्तरकल्पविषयत्वेन योजयितुं न शक्यते, तत्र ब्रह्मसृष्टेरभावात्। ततश्च तस्या महाकल्पविषयत्वेन तत्र वर्ण्यमानं ब्रह्मणे वेदतदर्थप्रदानं शिल्पिन्यायेन पूर्वकल्पगतेन्द्रादिनामरूपवैभवानि वैदिकेभ्यो मन्त्रार्थवादेभ्योऽवगत्येन्द्रादीनयं सृजत्वित्येतदभिप्रायेणेति समाननामरूपत्वसिद्धिस्ततो वेदनित्यत्वसिद्धिश्चेत्याशयः। ननु, महाकल्पादौ तत्कालसृष्ट्युपयोग्यभिनवदेवादिनामरूपप्रतिपादकमन्त्रार्थवादयुक्तपूर्वकल्पविलक्षणवर्णपदवाक्यतदानुपूर्वीयुक्तान्वेदान्निर्माय ब्रह्मणे प्रायच्छदिति मन्त्रार्थवर्णनेऽपि ब्रह्मणे वेदप्रदानस्य तत्कालसृष्ट्यर्थत्वमुपपद्यत इति कुतस्तेषां समाननामरूपत्वस्य वेदनित्यत्वस्य वा सिद्धिः। उच्यते। देवऋषिमनुष्यतिर्यक्स्थावरादिभावस्तावत्कर्मानुष्ठानफलमिति 'तदुपर्यपि बादरायण' इति सूत्रे वर्णितम्। फलवैचित्र्यान्यथानुपपत्त्या च तथैवाभ्युपगन्तव्यम्। ततश्च यैर्महेन्द्रवरुणकुबेरादिभावस्य वसिष्ठविश्वामित्राद्यृषिभावस्य ब्राह्मणक्षत्रियादिमनुष्यभावस्य वा प्रापकत्वेन वेदविहितानियज्ञाध्ययनदानतपांस्युपासनानिवा यथाविधि तत्तद्भावप्राप्तिसङ्कल्पपूर्वकमनुष्ठितानि त एव महाप्रलयानन्तरभाविन्यामपि सृष्ट्यावृत्ताविन्द्रादिभावं प्रतिपद्यन्ते। यैर्गवाश्वगजधनधान्यगृहक्षेत्रारामादिप्रापकत्वेन वेदविहितानि तान्यनुष्ठितानि तद्भोग्यतया तिर्यञ्चः स्थावराश्च जन्म प्रतिपद्यन्ते। ते चानुष्ठातारस्तस्मिन्कल्पे प्रचरद्भिर्वेदवाक्यैस्तत्कालवर्तिनामिन्द्रादीनां दिव्यविग्रहैश्वर्यमहाभोगादिकं वसिष्ठादीनां दिव्यज्ञानमाहात्म्यादिकं च यादृग्वर्णितं प्रत्यक्षादिभिश्च ब्राह्मणक्षत्रियादीनां विशिष्टदेशजा-

मतान्तरमाह—

## ॥ सू० ॥ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३० ॥

तिकुलरूपायुःश्रुतवित्तसुखतेजसां[1] मुक्तिपर्यन्तसकलपुरुषार्थसम्पादनाधिकारवतां वैशिष्ट्यं गवाश्वादीनां दोहनवाहनादिकृत्यतदुपयोगिसंस्थानविशेषादिकं च यादृशमवगतं तादृशमेव प्राप्तव्यतया सङ्कल्पयन्ते नान्यथा । यथावगतेष्टसाधनविषयत्वादिच्छायास्तस्मिन्कल्पे प्रचरद्भिर्वेदवाक्यैस्तत्कालवर्तिदेवऋषिमनुष्यादिवाचकपदवद्भिस्तत्सजातीयदेवभावादिप्राप्तिसाधनत्वेनैव यज्ञादीनामुपासनानां च विधानाच्च । तथा च तथा सङ्कल्पपूर्वकमनुष्ठितानां कर्मणां फलतया भवन्ती देवादिसृष्टिः पूर्वकल्पस्थितदेवादिसमाननामरूपस्वभावप्रभावैश्च भवन्ति । ततो वेदानामुक्तरूपं नित्यत्वं च सिद्ध्यति । पूर्वस्मिन्कल्पे यैर्वेदवाक्यैरिन्द्रादिनामरूपप्रभावानवगत्य तद्भावप्राप्तये कर्माण्यनुष्ठितानि ते तत्समानवर्णपदवाक्यतदानुपूर्वीकैरेव वेदैः पूर्वकल्पस्थितेन्द्रादीनां नामरूपे स्मृत्वा चतुर्मुखेन महाप्रलयव्यवहितायां पुनस्सृष्ट्यावृत्तौ तत्समाननामरूपादिशालीन्द्रादिभावेन ते सृष्टा इत्यङ्गीकर्तव्यत्वादन्यादृशवेदैस्तन्नामरूपानुसन्धानासम्भवात् 'मन्त्रकृतो वृणीते पितृणां पितामहानां मातृणां मातामहानामाचार्याणां प्राचार्याणां संहिताकारपदकारसूत्रकारब्राह्मणकाराणा'मित्यादिश्रुतिप्रसिद्धा ये कल्पादावनधीतवेदमन्त्रब्राह्मणादिद्रष्टारः तैःपूर्वस्मिन्कल्पे येषां तत्कालवर्तिनां वसिष्ठविश्वामित्रादीनां यद्यन्मन्त्रब्राह्मणादिद्रष्टॄणां तत्तन्मन्त्रब्राह्मणादिद्रष्टृत्वप्रयुक्तवैभवविशेषवतां पदमपेक्ष्य कर्माण्यनुष्ठितानि ते पुनस्सृष्ट्यावृत्तौ तत्तन्मन्त्रब्राह्मणादिद्रष्टृसमाननामरूपत्वेन तद्दृष्टमन्त्रब्राह्मणादिसमानवर्णपदतदानुपूर्वीकब्रह्मब्राह्मणादिद्रष्टृत्वेन च सृष्टा इत्यङ्गीकर्तव्यत्वाच्चेत्याशयः। यद्य-'प्यप एव ससर्जादा' विति मनुस्मृतौ ब्रह्मसृष्टिमात्रमुक्तं न तु ब्रह्मणे वेदप्रदानं, तथापि प्राक्पश्चाल्लिखितश्रुतिस्मृत्यनुसारेण तत्रापि सृष्ट्युपयोगिप्रदानमपि सिद्ध्यतीत्याशयः । एवं देवानां ब्रह्मविद्यास्वधिकारः समर्थितः । तत्र मधुविद्यादीनां ब्रह्मविद्यात्वात्तेषु देवानां नाधिकार इति जैमिनेर्मतमनूद्य तेष्वपि ब्रह्मविद्यात्वसमर्थनेन तन्मतनिरसनार्थं 'मध्वादिष्वसम्भवा' दित्यादि सूत्रत्रयम् । तदपि देवताविषयविद्याधिकारनिरूपणार्थत्वाद्देवताधिकरणैकदेशमभिप्रेत्यावतारयति—मतान्तरमिति ॥ सू० ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३० ॥ छन्दोगानामुपनिष'द्यसौ वा आदित्यो देवमधु' इत्यारभ्य निरूपिता मधुविद्या। तस्यां वस्वादय उपास्याः प्राप्याश्च श्रूयन्ते । तत्र ह्यादित्यव्यपाश्रयाणि रोहितादिपञ्चरूपात्मकानि पञ्चामृतानि वसुरुद्रादित्यमरुत्साध्यगणभोग्यत्वेनोपास्यानि । तदुपासनानां च वस्वादिप्राप्तिः फलमिति वर्णितं 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति अग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती' त्यादिना । ततश्च वस्वादीनां स्वस्वोपास्यत्वासम्भवात्स्वस्वपदप्राप्तेः फलत्वासम्भवाच्च वस्वादीनां मधुविद्यायां नाधिकारः । एवं 'वायुर्वाव संवर्ग' इत्यादिश्रुतिविहितासु संवर्गविद्यादिष्वपि वाय्वादीनां नाधिकारः इत्यस्मिन्नर्थे

(१) 'मेधसाम्' इति छ. पाठः ।

**मधुविद्यादिषु वस्वादिदेवानामेवोपास्यत्वात् ( वसुत्वादीनामेव ) प्राप्यत्वाच्च वस्वादीनां कर्तृकर्मभावविरोधेनोपास्यत्वासंभवात् वस्वादीनां सतां वस्वादित्वं प्राप्तमिति प्राप्यत्वासंभवाच्च तत्र वस्वादीनामनधिकारं जैमिनिर्मन्यते ॥**

**॥ सू ॥ ज्योतिषि भावाच्च ॥ ३१ ॥**

**'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति ज्योतिषि परब्रह्मणि देवानां साधारण्येन प्राप्तत्वेऽपि अधिकारभाववचनादन्यत्र मध्वाद्युपासनेऽनधिकारो**

---

सूत्रं योजयति–मधुविद्यादिष्विति । ननु, मधुविद्यायां मध्वाश्रितानमृतविशेषानुपजीवतां वस्वादीनामन्तर्यामिणः उपासनानि विधीयन्ते न तु वस्वादीनामेव । 'य एतामेवं ब्रह्मोपनिषदं वेदे'ति ब्रह्मविद्यात्वेनोपसंहारदर्शनात् । ब्रह्मविद्यायां च न स्वात्मनोऽपि ब्रह्मभावो दोषः । सर्वास्वपि ब्रह्मविद्यासु 'अहं ब्रह्मास्मी' त्यनुसन्धानसम्प्रतिपत्तेः । नापि वस्वादीनां सतां वस्वादिप्राप्तव्यफलत्वाभावो दोषः । इह जन्मनि पुत्रादिमतां जन्मान्तरेऽपि पुत्रादयस्सन्त्वित्याशंसनवदिह कल्पे वस्वादीनामेव सतां कल्पान्तरेऽपि वसुत्वादिकमस्त्वित्याशंसनोपपत्तेः । वस्वादीनामेवोपास्यत्वेऽपि न दोषः । भूमविद्यामध्यगतायां प्राणविद्यायां स्वस्य स्वोपास्यत्वसम्प्रतिपत्त्या तद्वदेव वस्वादीनामेव भाविवसुत्वादिप्रेप्सया वस्वाद्युपासनोपपत्तेरिति चेदुच्यते । एवं पूर्वपक्षी मन्यते । 'वसूनामेवैको भूत्वे' त्यादिषु मधुविद्योपासकानां न वस्वादिभावः फलमुच्यते किं तु वस्वादिस्थानप्राप्तिपूर्वकं तत्तद्भोगसाम्यं यथा-सम्भ्रातृणां मध्ये त्वमेक इति लौकिकोक्तौ भ्रातृभिर्भोगसाम्यम् । अन्यथा मधुविद्योपासकानां प्रायणानन्तरं वस्वादिभावप्राप्तौ 'अष्टौ वसव एकादश रुद्रा' इत्यादिश्रुतिसिद्धवस्वादिसङ्ख्यातिरेकप्रसङ्गात् । दृष्टं च 'वैष्णवं वामनमालभेत स्पर्धमान' इति विधिशेषस्य 'विष्णुरेव भूत्वेमाँल्लोकानभिजयती'त्यर्थवादस्य विष्णुवज्जेतृत्वमात्रपरत्वम् । एवं च 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती'ति तत्क्रतुन्यायेन'एतदेवामृतं दृष्ट्वा तृप्यती'त्युक्त्या वस्वादिभोगसाम्यप्राप्तेरुक्तरूपामृतभोक्तृवस्वाद्युपासनाफलत्वस्यैव वक्तव्यत्वाद्वस्वादय एवात्रोपास्याः।'ब्रह्मोपनिषद'मिति तु वेदोपनिषदमिति व्याख्येयम्।न चैवमपि प्राणविद्योक्तन्यायेन वस्वादीनां तदुपासनायामधिकारस्स्यादिति वाच्यम्। तदुपासनया तद्भोगसाम्यप्राप्तेस्तत्प्रीतिद्वारत्वस्यौत्सर्गिकत्वेन वस्वादिषु प्रीणयितृत्वप्रीणनीयत्वलक्षणकर्तृकर्मभावविरोधापत्तेः । न हि स्वयमेव स्वात्मानं प्रीणयित्वा प्रीतात्स्वस्मात्फलं लभत इत्यस्ति सम्भवः । प्राणविद्यया तु परमेश्वरप्रीतिद्वारयैव फललाभः। न हि तत्रोपास्यसमभोगप्राप्तिफलश्रवणमस्ति । येन तत्रोपास्यप्रीतिर्द्वारं कल्प्येतेति । भाष्ये 'वस्वादित्वं प्राप्त'मित्यस्य वस्वादीनां यो भोगस्तद्वत्त्वं प्राप्तमित्यर्थः । अत एव प्रा(१)ग्वस्वादिदेवतानामेवोपास्यत्वात् प्राप्यत्वाच्चे'त्यत्र वस्वादीनामेव प्राप्यत्वमुक्तं न तु वसुत्वादीनाम्। कर्तृकर्मभावविरोधोऽत्र प्रीणयितृप्रीणनीयभावो विवक्षितः ॥ सू० ॥ ज्योतिषि भावाच्च ॥ ३१ ॥ **साधारण्येन प्राप्तत्वेऽपीति ।** मुक्त्यर्थित्वाद्यधिकारिविशेषणसाधारण्येन ब्रह्मोपासनेषु मनुष्याणामिव देवानामधिकारित्वेन प्राप्तत्वेऽपीत्यर्थः । अनेन 'तद्देवा ज्योतिषां ज्योति'रित्यस्यार्थवत्त्वाय परिसङ्ख्यापरत्वमभ्युप-

---

(१)( ) एतद्रेखाङ्कितं पदं केषुचित्पुस्तकेषु न दृश्यते । स एव व्याख्यात्रभिमतः पाठः ।

न्यायसिद्धोऽवगम्यते ॥ स्वमतमाह—

॥ सू ॥ भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥

मधुविद्यादिष्वपि वस्वादीनामधिकारभावं बादरायणो मन्यते । अस्ति हि वस्वादीनां सतां वस्ववस्थब्रह्मण उपास्यत्वसंभवः, कल्पान्तरे वसुत्वादेः प्राप्यत्वसंभवश्च । कार्यकारणोभयावस्थं ब्रह्मात्र समुपास्यम् । तत्र 'असौ वा आदित्यो देवमधु'इत्यारभ्य आदित्यवस्वादिनामरूपकृत्ययुक्तकार्यविशेषावस्थं ब्रह्मोपास्यमुपदिश्यते। 'अथ तत ऊर्ध्व उदेत्यनेनैवोदेता नास्तमेता' इत्यादिना नामरूपकृत्य-

---

गन्तव्यं चेद्देवा एव तद्ब्रह्मोपासत इति परिसङ्ख्यापरत्वमस्त्विति शङ्का निरस्ता । अर्थित्वादिसाधारण्येन 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथा ऋषीणां तथा मनुष्याणा'मिति ब्रह्मविद्याधिकारितया तत्परिसङ्ख्यानस्याशक्यत्वाद्देवास्तद्ब्रह्मैवोपासत इत्येव परिसङ्ख्याभ्युपेतव्येति भावः ॥ सू० ॥ भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥ कल्पान्तर इति । अयमाशयः । वसुत्वादिकमेवात्र प्राप्यं फलम् । 'वसूनामेवैको भूत्वे'त्यादिस्वारस्यात् । न वस्वादिभोगसाम्यमात्रम् । 'विष्णुरेव भूत्वे'त्यत्र तु कस्यचित्पशुयागस्यानुष्ठानमात्रेण विष्णुभावप्राप्तिरत्यन्तमसम्भावितेति बाधकात्तत्साम्यं फलमाश्रीयते । न चात्रापि वस्वादिसङ्ख्यातिरेकप्रसङ्गो बाधकोऽस्तीति वाच्यम् । वर्तमानवस्वाद्यधिकारसमाप्त्यनन्तरं कल्पान्तरे भाविवस्वादिसृष्टिसमये तदन्यतमभावप्राप्तेः फलत्वसम्भवात् । तथासतीदानीं मधुविद्योपासकानां प्रायणानन्तरं फलप्राप्तिर्न स्यादिति चेत्, माभूत् । फलस्वभावपर्यालोचनया स्वर्गस्य वृष्ट्यन्नाद्यपशुपुत्रादिवदैहिकत्वासम्भवेनेव वस्वादिभावस्येदानीन्तनप्रायणानन्तरभावित्वासम्भवेन विलम्बस्य सह्यत्वात् । न च कल्पान्तरभाविवस्वादिसृष्टिसमये फलप्राप्त्यभ्युपगमेऽप्यष्टाधिकसङ्ख्येषूपासकेषूपस्थितेषु सर्वेषां वस्वादिभावप्राप्तेर्वक्तव्यतया तत्सङ्ख्यातिरेकप्रसङ्गो बाधकस्स्यादिति वाच्यम् । वस्वादिसङ्ख्याश्रुतिबलेन तत्तदुपासनकर्मणां विपाकक्रमकल्पनोपपत्तेः।प्रलयश्रुतिबलेन भिन्नकालजातानामपि सर्वप्राणिगतदेहादिवियोजककर्मणां विपाकयौगपद्यकल्पनवत्। अन्यथा पूर्वपक्षिणोऽपि वस्तुतो यद्वसुत्वादिप्रापकं कर्माभिमतं तदनुष्ठितवतामष्टाधिकानां युगपदुपस्थितौ सङ्ख्यातिरेकस्यानिवार्यत्वात्।एवं च फलपर्यालोचनयावस्वादीनामेवोपास्यत्वमभ्युपगन्तव्यमित्यस्य सङ्गे सति उपसंहारस्वारस्याद्वस्वाद्यन्तर्यामिपरमेश्वर उपास्य इति युक्तम्।अतो न पूर्वोक्तदोषप्रसक्तिरिति। उपसंहारस्वारस्यसिद्धमर्थमुपसंहारस्वारस्यं च विविच्य दर्शयितुमुपक्रमते—कार्यकारणेत्यादिना । तत्र कार्यावस्थब्रह्मोपासनोपदेशं दर्शयति—तत्रेति । आदित्यादीनामादित्यवस्वादीनि नामानि, आदित्यस्य वस्वादिदेवभोग्यमधुत्वेन रूपितं ज्योतिर्मण्डलं रूपं, वस्वादीनां तत्तदमृतभोगाक्षिप्तानि रूपाणि, आदित्यस्य 'पुरस्तादुदेता पश्चादस्तमेते'त्यादिना निर्दिष्टं कृत्यं, वस्वादीनां 'तद्वसव उपजीवन्ती'त्यादिना निर्दिष्टं कृत्यम् । एवंभूतनामादियुक्ततया कार्यभूतेष्वादित्यादिजीवेष्वन्तर्यामितयावस्थितं ब्रह्म तदवस्थमुच्यते । कारणावस्थब्रह्मोपासनोपदेशं दर्शयति—अथ तत इति । ब्रह्मदिवसरूपस्य कल्पस्य समाप्त्यनन्तरमुदयास्तमयाभ्यां प्राण्यनुग्रहादूर्ध्वमुदयास्तमयकृत्यरहित इत्यर्थः।कृत्याभावादेव तदुपयोगिरूपराहित्यं

रहितसूक्ष्मादित्यान्तरात्मतयाऽवस्थितं कारणावस्थं ब्रह्मोपास्यमुपदिश्यते।तदुभयावस्थब्रह्मोपासनफलं कल्पान्तरे वस्वादित्वम्,उभयाधिकारावसाने ब्रह्मप्राप्तिश्च तत्र 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना वस्वादित्वरूपं फलमुपदिश्यते, 'न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद' इति ब्रह्मप्राप्तिरूपं फलमुपदिश्यते। ततो मध्वादिष्वपि देवानामधिकारोऽस्तीति।तस्मात्

---

तत्प्रवृत्तिनिमित्तनामराहित्यं च फलितम्। नह वा अस्मा इति। अस्मै कार्यकारणावस्थब्रह्मविदे नामरूपकृत्ययुक्तदशायामप्यादित्यो नोदेति तत्प्रयुक्तप्रकाशानपेक्षणात्। नास्तमेति तत्प्रयुक्तज्ञानप्रतिबन्धाप्रसङ्गात् किं त्वस्मै ब्रह्मविदे सकृद्दिवैव भवति सदैवाहर्भवति सन्ततमनावृतसर्वविषयज्ञानप्रकाशोऽस्य भवतीत्यर्थः। अस्मा इत्युक्तं कस्मा इत्याकाङ्क्षायामुच्यते—य एतामिति। ब्रह्मोपनिषदं ब्रह्मविद्यां वेद ब्रह्मोपासनं करोतीत्यर्थः। अथवोपनिषच्छब्दोऽत्र ब्रह्मगतोपासनाविषयप्रागुपदिष्टरहस्यधर्मजातवाची। एवमुपसंहारे ब्रह्मप्राप्तिफलश्रवणात् ब्रह्मविद्यात्वश्रवणाच्च वस्वादिशब्दा वस्वाद्यन्तर्यामिपरा इति तदुपासनायां वस्वादीनामधिकारस्सम्भवतीति अवान्तरचिन्तोपसंहारपूर्वकमधिकरणार्थमुपसंहरति—तत इति। मध्वादिष्वित्यादिशब्देन संवर्गविद्यादिसंग्रहः। संवर्गविद्यायाः परब्रह्मविद्यात्वमनन्तराधिकरणे जानश्रुत्युपाख्याने स्पष्टीभविष्यति। वस्वादीनामधिकारोऽस्तीति विशिष्य चिन्तितार्थस्योपसंहारे कर्तव्ये सामान्येन देवानामधिकारोऽस्तीत्युक्तिराशङ्कान्तरनिराकरणार्था। अत्रेत्थमाशङ्कान्तरं समुन्मिषति। मधुविद्यायां वस्वादीनामधिकारसम्भवेऽपि ये वस्वादिपदादुत्कृष्टे पदे स्थिता इन्द्रादयः तेषां तस्यामधिकारो न स्यात्। उत्कृष्टपदे स्थितानामपकृष्टपदप्राप्तिपूर्वकमुक्त्यर्थित्वासम्भवात् इन्द्राद्युत्कृष्टपदप्राप्तिपूर्वकमुक्तिफलानां ब्रह्मविष्णवादिप्रतीकपरमेश्वरोपासनानां किञ्चित्प्राप्तिव्यवधानरहितमुक्तिफलानामप्रतीकपरमेश्वरोपासनानां च सत्त्वादिति। तत्रेदमुत्तरमभिमतम्। हैरण्यगर्भान्तसकलभोगविरक्तस्य ब्रह्मानन्दैकप्रेप्सोर्मोक्ष्यमाणस्य उत्कृष्टपदप्राप्तिपूर्वकमुक्तिफलास्वपि विद्यासु नोत्कृष्टपदार्थित्वेन प्रवृत्तिरुपपादयितुं शक्येत्यानुषङ्गिकतया भवत्सु फलान्तरेषु अनर्थिनामेव मुक्तिमात्रार्थितया प्रवृत्तिरुपपादनीया। सेन्द्रादीनामपि मधुविद्यादिषूपपादयितुं शक्येति। मैवम्। उपकोसलविद्यायामपि देवानामधिकार उपपादनीयः। तस्यामपि ह्येवं शङ्का स्यात्। तस्यामग्निविद्यास्तावदङ्गानि तासामवान्तरफलमुक्तमग्निलोकप्राप्तिः तत्राग्निभिः परिपाल्यत्वं च। सर्वमिद'मन्तरउपपत्ते'रित्यधिकरण एव दर्शितम्। तथाभूतावान्तरफलार्थित्वमग्नेस्तदुत्कृष्टदेवानां च न सम्भवतीत्यङ्गानुष्ठानरहितानां देवतानां प्रधाने नाधिकार इत्युक्तरीत्यैव तस्यामप्यधिकारस्सिद्ध्यति।नन्वेवमपि देवतानां ब्रह्मविद्याधिकारो न सम्भवति तदङ्गभूतार्चिरादिगत्यनुस्मरणासम्भवात् 'तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारोविद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकये'ति(४-२-१६)सूत्रे हि सूत्रकारएव गत्यनुस्मरणस्य विद्याङ्गत्वं वक्ष्यति।'योगिनःप्रति स्मर्यते स्मार्ते चैते'इति (४-२-२०).सूत्रे च 'अग्निर्ज्योतिरहश्शुक्लःषण्मासा उत्तरायणम्।तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥'

**सर्वथा देवा ब्रह्मविद्याधिकारिण इति ॥ इति देवाधिकरणम् ॥ ७ ॥**

इति श्लोकस्य योगिनां विद्याङ्गतयानुदिनस्मर्तव्यायामर्चिरादिगतौ तात्पर्यं वक्ष्यति । न चाग्न्याद्यातिवाहिकदेवतागणयुक्तगत्यनुस्मरणमग्न्यादित उपरि स्थितानामादित्यादीनां सम्भवति। न चाग्न्यादीनामातिवाहिका अन्येऽग्न्यादयस्सन्ति 'यावदधिकारमवस्थितिराधिकारिकाणा'मित्यधिकरणोक्तन्यायेन कल्पावसाने मुच्यमानेषु तेषु भाविकाले स्रक्ष्यमाणानामन्येषामग्न्यादीनामभावात् । तथा च यथा देवतानामुद्देश्यदेवतान्तराभावेन यागनिवृत्त्यसम्भवात् कल्पादौ सृष्टानामृषीणां वरणीयऋष्यन्तराभावेन आर्षेयवरणरूपाङ्गान्तरासम्भवाच्च न यागेष्वधिकारः । एवं देवतानामातिवाहिकदेवतान्तराभावेन गत्यनुस्मरणरूपाङ्गासम्भवात् विद्यासु नाधिकार इत्येव युक्तमित्याशङ्क्याह–सर्वथेति । यद्यातिवाहिकगणसहितार्चिरादिगतिस्मरणमदृष्टार्थं तदाग्न्यादयोऽपि स्वस्वान्तर्भावेनान्येषां मुच्यमानानामातिवाहिकेन गणेन सहितानां स्मरिष्यन्ति । यदि त्वेवंभूतेन मार्गेण निरतिशयानन्दशालिपदमथानया विद्यया प्राप्यमिति स्मरणमहरहःकर्तव्यायामुपासनायामृत्विग्भिरेव हविश्शेषस्य भक्षणं तेषां करिष्यमाणकर्मसन्तताविवोत्साहजननार्थं तदाग्न्यादयस्स्वस्वानपेक्षितगत्यंशं विहायापेक्षितं स्वस्वपदानामुपरिस्थितं गत्यंशं स्मरिष्यन्ति, यथा ऋत्विजोऽश्वमेधादिष्वनेकपशुप्रभवहविश्शेषमध्येऽनपेक्षितांशं विहायापेक्षितांशं भक्षयन्ति मृतयजमानकेष्टिकर्मणि सूक्तवाके यजमानस्यायुराशासनाद्यभावादनपेक्षितमायुराशास्त इत्यादिकमंशं विहायापेक्षितांशं पठन्ति । सर्वथा गत्यनुस्मरणस्यादृष्टार्थत्वे च देवानामपि तत्संभवतीति तेषां विद्याधिकारो युज्यत इति भावः। ननु, देवानां ब्रह्मविद्याधिकारचिन्ता नास्मदादीनां प्रवृत्तावुपयुक्ता नापि देवानाम् । तेषां स्वकीये विग्रहवत्त्वे तत्प्रयुक्तसामर्थ्यादिमत्त्वे च सिद्धान्तन्यायनिरपेक्षमेवावगतिसद्भावात् । न च, देवास्स्वपदानि नित्यान्यनपायीनीति मुक्त्यसम्भवशङ्कया तत्र न प्रवर्तन्ते। सा च शङ्का तेषामित्थं सम्भाविता । स्वपदानामनित्यत्वे वैदिकेन्द्रादिशब्दविरोधः प्रसज्येतेति नित्यान्येव स्वपदानि प्रलयेषु तत्तत्स्थानिनो विग्रहाणां च नाशे सति परमेश्वरेण तानि सृष्ट्वा यथापूर्वं स्वेभ्य एव दीयन्ते प्रलयव्यवहितत्वात्स्वकीयपूर्वकल्पवृत्तान्तास्मृतिरिति । अतस्तेषामुपासनासु प्रवृत्तावुपयुक्तेयं चिन्तेति वाच्यम् । तेषां पूर्वकल्पाधीतवेदतदर्थस्मृतिमतां सदा पारिजाततरुनिकटवर्तिनां च जातिस्मरत्वेन प्राचीनब्राह्मणजन्माद्यनुष्ठितसत्कर्मायत्तं स्वपदं न नित्यमिति स्वत एवावगतिसत्त्वात् । न चास्मदादीनामेव देवोपास्यत्वेन ब्रह्मोपासनसिद्धावुपयुक्ता । उपासनाप्रकरणेषु देवोपास्यत्वविशेषणसत्त्वे द्युमूर्धत्वादिवदारोपितेनापि तेन रूपेणोपासनोपपत्तेरिति चेदुच्यते । देवता न सन्तीति व्यवस्थितौ मधुविद्यादीनां तत्तद्देवतापदप्राप्तिः फलं न भवेत् । वरुणग्रहनिर्मोकादिवत् बाधितस्य श्रुतत्वेऽपि विधेयक्रियाफलत्वायोगात् । किं तु अन्यदेव फलं कल्प्यं स्यात्।अन्तरादित्यविद्यादिष्वादित्यदेवताद्यन्तर्वर्तित्वेन ब्रह्मोपासनं न सिद्ध्येत् ।ज्योतिर्मण्डलाद्यन्तर्वर्तित्वेनैव तदुपासनं सिद्ध्येत्।गत्यनुस्मृतावचेतनानि अर्चिरादीन्येव मार्गपर्वत्वेन स्युः। आतिवाहिकदेवताश्चिन्तनीया न स्युः ।'भाक्तं वानात्मवित्त्वादि'ति (३-१-७.) सूत्रोक्तन्यायेन ज्योतिष्टोमादिकर्मफलं भुञ्जानानां निरन्तराजानदेवकर्मकरभावावगत्या वैराग्यं न सिद्ध्येत्।न

तादृशस्याभिमतस्य सिद्धिः प्रयोजनं, देवतान्तरसद्भावप्रसाधनस्य मन्त्रार्थवादाः प्राप्तिविरोधयोरसतोः प्रतीयमानेऽर्थे प्रामाण्यं न जहतीति ह्येतासां विग्रहप्रसाधनोपयोगिन्यायप्रतिपादनस्यापि 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरांमृत्युं ते पुनरेवापियन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेते' त्यादिमन्त्रार्थवादैः विवेकवैराग्यादिकं सिद्ध्यतीति प्रदर्शनमपि प्रयोजनमित्यायूह्यम् ॥ ॥ इति देवताधिकरणम् ॥ ७ ॥ ॥

---

## नयमणिमालायाम् अथ देवताधिकरणम् ॥ ७ ॥

सू० ॥ तदुपर्यपि बादरायणः सम्भवात् ॥ २५ ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २६ ॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥ अत एव च नित्यत्वम् ॥ २८ ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ २९ ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३० ॥ ज्योतिषि भावाच्च ॥ ३१ ॥ भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥

देवानां नास्ति विद्याधिकृतिरधिगतास्ते हि सामर्थ्यहीनास्तत्सत्त्वे वा पदैक्यात्समधिगतफला नार्थिनो नापि वैद्याः।
तेषां वा ब्रह्मविद्यास्वधिकृतिघटना यद्यपि स्यान्न सा स्यात् वस्वादीनां वसुत्वाद्यधिगतिफलकस्यात्मगोपासनाद्यु ॥ ६२॥
मैवं मन्त्रार्थवादप्रकटिततनवश्शाम्भवात्सर्गतोऽन्यत्तन्नामक्षुद्रमन्तर्भुवनमधिगतास्ते स्वयंभातविद्याः ।
तत्तेषां ब्रह्मविद्यास्वधिकृतिरचला भाविवस्वादिताप्त्यै वस्वादीनामपि स्वान्तरगिरिशमतावन्ततो भाविमुक्त्यै ॥ ६३ ॥

॥ इति देवताधिकरणम् ॥ ७ ॥

## सूत्रार्थचन्द्रिकायाम् अथ देवताधिकरणम् ॥ ७ ॥

सू ॥ तदुपर्यपि बादरायणस्संभवात् ॥ २६ ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥ अत एव च नित्यत्वम् ॥ २९ ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥ ज्योतिषि भावाच्च ॥ ३२ ॥ भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

भगवत्पादमते, पूर्वं मनुष्याधिकारं शास्त्रमित्युक्ते तर्ह्यमनुष्याणां देवादीनामधिकारो न स्यादित्याक्षिप्य समाधीयत इत्याक्षेपसंगत्या प्रसंगसंगत्या वा इदमारभ्यते—सू ॥ **तदुपर्यपि बादरायणस्संभवात्** ॥ २६ ॥ अस्य 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभव' दित्यादिकं बृहदारण्यकवाक्यं विषयः । तत्र किं देवानां ब्रह्मविद्यायामधिकारोऽस्ति उत न वा इति संदेहः । देवानां विग्रहवत्त्वे प्रमाणाभावात्तेषामर्थित्वसामर्थ्ययोरसंभवाच्च नास्ति ब्रह्मविद्यायामधिकार इति पूर्वपक्षः । सिद्धान्तस्तु, **तदुपर्यपि**=तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तेषामपि । **संभवात्**–अर्थित्वसामर्थ्याद्यधिकारकारणस्य संभवात् । ब्रह्मविद्यायामधिकारोऽस्तीति **बादरायणाचार्यो** मन्यत इत्यर्थः ।

ननु यदीन्द्रादीनां विग्रहवत्त्वेन विद्याधिकारस्तर्हि कर्मणि विरोध इत्याशंक्याह—सू ॥ **विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्** ॥ २७ ॥ इन्द्रादीनामृत्विगादिवदेकस्य शरीरस्यानेकत्र कर्मणि युगपत्सन्निधानासंभवाद्विरोधः प्रसज्येतेति चेन्न । कस्मात् **अनेकप्रतिपत्तेः**=एकस्येन्द्रस्यानेकेषां शरीराणां युगपत्प्राप्तेः । **दर्शनात्**='स एकधा भवति त्रिधा भवति' इत्यादिश्रुतौ दर्शनात् इत्यर्थः । यद्वा । **अनेकप्रतिपत्तेर्दर्शनात्**=अनेकत्र कर्मण्येकस्य प्रतिपत्तिरङ्गभावस्तस्य लोके दर्शनात् । यथा बहुभिर्नमस्कुर्वाणैर्युगपदेको ब्राह्मणो नमस्क्रियमाणो दृश्यते तद्वदित्यर्थः ॥ ननु मास्तु कर्मणि विरोधः शब्दे तु स्यादित्याशंक्याह—सू ॥ **शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्** ॥ २८ ॥ **शब्दे**= वेदवाक्ये । अनित्यविग्रहवद्देवादेर्नित्यवेदार्थत्वाङ्गीकारे शब्दस्यार्थेन सह नित्यसंबन्धाभावेन नित्यानित्यसंयोगविरोधः **इति चेन्न । अतः प्रभवात्**=अत एव हि वैदिकाच्छब्दाद्देवादिजगतः प्रभवादुत्पत्तेः । कथं तत्प्रभवत्वं देवादेः । **प्रत्यक्षानुमानाभ्याम्**=श्रुतिस्मृतिभ्याम् 'एत इति वै प्रजापतिर्देवानसृजते' त्यादिका श्रुतिः 'वेदशब्देभ्य एवादा' वित्यादिका स्मृतिः ताभ्यां नित्यशब्दप्रभवत्वं देवादेरवगम्यते । एवं च देवादिव्यक्त्युत्पत्तावपि तदाकृतिनिष्ठनित्यताश्रुतेर्वैदार्थत्वात्तत्संबन्धो नित्य इत्यविरुद्धम् ।

नन्वेवमपि 'अतः प्रभवा' दिति देवादेर्वेदप्रभवत्वोक्त्या तदुत्पादकवेदस्यापि प्रभवप्रसंगादनित्यत्वमाशंक्याह—सू ॥ **अत एव च नित्यत्वम्** ॥ २९ ॥ **अतएव**=नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वादेव वेदस्य नित्यत्वं प्रत्येतव्यम् । कर्तृस्मरणात्सिद्धमेव वेदनित्यत्वमनेन दृढीकृतमिति बोध्यम् ॥

ननु महाप्रलये आकृतेरप्यनित्यत्वाच्छब्दार्थसंबन्धस्यानित्यत्वविरोधस्तदवस्थ एवेत्याशंक्याह—**सू ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥** सुषुप्तिप्रबोधयोरिव सृष्टिप्रलययोरावृत्तावपि प्रलये प्रपञ्चस्य संस्कारात्मना अविद्यायां विद्यमानत्वेन पूर्वकल्पप्रपंचसमाननामरूपत्वादुत्तरकल्पप्रपंचस्याकृतेर्नित्यतया न शब्दार्थसंबन्धस्यानित्यत्वविरोधः । कथं समाननामरूपत्वम् । **दर्शनात्**='धाता यथापूर्वकमकल्पयत्' इति श्रुतौ दर्शनात् । **स्मृतेश्च**—'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥' इत्यादिस्मृतेश्च ॥

इत्थमभिहितं देवानामधिकारमाक्षिपति—**सू ॥ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥** ब्रह्मविद्यायां देवानामनधिकारं जैमिनिराचार्यो मन्यते । कस्मात् । **मध्वादिष्वसंभवात्**='असौ वा आदित्यो देवमधु' 'आदित्यो ब्रह्मेत्यादेशः' इत्यादिषु मधुब्रह्माद्यध्यासेनादित्यदेवतोपासनेषु मनुष्याधिकारिकेषु तेषामेवादित्यादीनामधिकारासंभवात् । न ह्येकस्यैवोपास्योपासकभावस्संभवति । तस्य भेदनिष्ठत्वात् । तथा चायं प्रयोगः । ब्रह्मविद्या न देवानधिकरोति विद्यात्वान्मधुविद्यावदिति ॥ ननु क्वचिदनधिकारान्न सर्वत्रानधिकारोऽस्ति, ब्राह्मणस्य राजसूयानधिकारेऽपि बृहस्पतिसवेऽधिकारादित्याशंक्याह—**सू ॥ ज्योतिषि भावाच्च ॥ ३२ ॥** अलौकिकयोरादित्यशब्दप्रत्यययोः ज्योतिर्मण्डले भावात् तेषामसदादिवदिष्टानिष्टप्राप्तिपरिहाररूपचेष्टाया अदर्शनेनाचेतनत्वावधारणात्तदतिरिक्तस्य चेतनस्य विग्रहादिमतः प्रत्यक्षाद्यगोचरत्वात्तद्विग्रहादिप्रतिपादकानां मन्त्राणामन्यपरत्वेन स्वार्थे प्रामाण्याभावान्न देवानां विद्याधिकार इति सूत्रद्वयस्य तात्पर्यार्थः ॥

इत्थं पूर्वपक्षे सिद्धान्तयति—**सू ॥ भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥** तुशब्दो जैमिनिमतनिरासार्थः । बादरायणस्त्वाचार्यो देवादीनां विग्रहवत्त्वेन ब्रह्मविद्यायामधिकारभावं मन्यते । कस्मात् । **अस्ति हि** अर्थित्वाद्यधिकारकारणम् । न हि क्वचिदधिकारो नेति सर्वत्र वक्तुं पार्यते । निर्गुणविद्यायां संभवात् । न च तेषां विग्रहवत्त्वं नेति वाच्यम् । तदप्यस्ति हि । तत्प्रतिपादकमन्त्राणां मानान्तरविरोधसंवादाभावेन प्रमाणत्वात् ॥ इति ॥

**श्रीकण्ठमते,** पूर्वस्मिन्नधिकरणे मनुष्याणामेव परमेश्वरोपासनेऽधिकारस्सूचितः । कथं तर्हि देवानामप्यथर्वशिरसि परमेश्वरोपासनं श्रूयत इत्याशङ्कायामिदमारभ्यते ॥ **सू ॥ तदुपर्यपि बादरायणस्संभवात् ॥२६॥** अस्मिन्नधिकरणे पूर्वपक्षसिद्धान्तादिकं प्रायः पूर्ववत् । विषयवाक्यं परं भिद्यते । 'ततो देवा रुद्रं नापश्यन् । ते देवा रुद्रं ध्यायन्ति' इत्यथर्वशिरोवाक्यं विषयः।अत्रापि विध्येकवाक्यतापन्नानां'इन्द्रो वृत्राय वज्रमुदयच्छ'दित्यादीनां मन्त्रार्थवादानां स्वार्थे तात्पर्याभावात् देवानां विग्रहवत्त्वासिद्धौ अर्थित्वसामर्थ्ययोरभावेन न ब्रह्मविद्यायामधिकारिणो देवा इति पूर्वपक्षं कृत्वा 'आदित्यो यूपः' 'अग्निर्हिमस्य भेषज' मित्यादीनां स्वार्थे तात्पर्याभावेऽपि 'इन्द्रो वृत्राये' त्यादीनां विरोधस्य मानान्तरप्राप्तेश्चाभावेन स्वार्थे तात्पर्यसंभवाद्विग्रहवत्त्वसिद्ध्या अर्थित्वसामर्थ्ययोस्संभवेन ब्रह्मविद्यायामधिकारिण एव देवा इति सिद्धान्तितम् । **विरोधः कर्मणीति** सूत्रे **अनेकप्रतिपत्तेः**=विग्रहवत्त्वेऽपि सौभरिप्रभृतिषु युगपदनेकदेहप्रतिपत्तेः । **दर्शनात्**=दृष्टत्वादित्यर्थः ॥

**शब्द इति चेदित्यादि** । विरोध इत्यनुवर्तते । देवानां विग्रहवत्त्वे सावयवत्वेनोत्पत्तिविनाशयोगादुत्पत्तेः प्राग्विनाशादूर्ध्वं च वैदिकेन्द्रादिशब्दानामर्थशून्यत्वस्य वा अनित्यत्वस्य वापत्तौ वैदिकशब्दे विरोधः प्रसज्यते इति चेन्न । 'अतः प्रभवा' दित्यादि शेषं समानार्थकमेव ।

**'अत एव नित्यत्वम् ॥ २९ ॥ अत एव**=यतो ब्रह्मा पूर्वविश्वामित्रादीनामाकृतिविशेषांस्तत्तद्वैदिकशब्दैः स्मृत्वा तदाकारानेवापरांस्तत्तच्छक्तिविशेषयुक्तान् नैमित्तिकप्रलयानन्तरं सृजति अतएव । विश्वामित्रादीनां मन्त्रकृत्त्वेऽपि विश्वामित्रादिशब्दानामाकृतिनिमित्तत्वेन वेदस्य नित्यत्वमुपपद्यते ॥

**'समाननामरूपत्वा'** दिति सूत्रार्थोऽविशिष्ट एव ॥

मतान्तरमाह—**मध्वादिष्विति** । मधुविद्यादिषु वस्वादिदेवानामेवोपास्यत्वात्प्राप्यत्वाच्च वस्वादीनां कर्तृकर्मभावविरोधेनोपास्यत्वासंभवात् वस्वादीनां सतां वस्वादित्वं प्राप्तमिति प्राप्यत्वासंभवाच्च वस्वादिदेवानामनधिकारं **जैमिनि**र्मन्यत इत्यर्थः ॥

**सू ॥ ज्योतिषि भावाच्च ॥ ३२ ॥** 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत' मिति ज्योतिषि परब्रह्मणि देवानां साधारण्येन प्राप्तत्वेऽप्यधिकारभाववचनाच्च अन्यत्र मध्वादिविद्यास्वनधिकारो ज्ञाप्यते । 'तं देवा' इत्यत्र देवाः वस्वादय इत्यर्थः । एवं च मध्वादिविद्यायामेवानधिकारो देवानां ब्रह्मविद्यायां त्वधिकारोऽस्त्येव तेषामिति पूर्वस्मान्मताद्विशेषः ॥

**सू ॥ भावं तु बादरायणोऽस्ति हि ॥३३॥ बादरायणस्तु** मधुविद्यादिष्वपि वस्वादीनामधिकारभावं मन्यते । **अस्ति हि** वस्वादीनां सतां वसुत्वस्थब्रह्मण उपास्यत्वस्य कल्पान्तरे वसुत्वादेः प्राप्यत्वस्य च संभवः । कार्यकारणोभयावस्थं हि ब्रह्म समुपासीनानां कल्पान्तरे वस्वादित्वमुभयाधिकारावसाने ब्रह्मप्राप्तिश्च फलतयोपदिश्यते । ततो मध्वादिविद्यास्वपि देवानामधिकारोऽस्तीति सर्वथा देवा ब्रह्मविद्याधिकारिणः । इति ॥

## अथ अपशूद्राधिकरणम् ॥ ८ ॥

अथ 'मनुष्याधिकारत्वात्' इति सामान्येन मनुष्याणामधिकारे प्राप्ते विशेषमाह–

**॥ सू ॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३३ ॥**

छान्दोग्ये श्रूयतेऽस्य विषयः 'आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथ'

---

### अथ अपशूद्राधिकरणम् ॥ ८ ॥

उत्तराधिकरणस्याङ्गुष्ठाधिकरणेन सङ्गतिमाह—अथेति । यदि 'हृद्यपेक्षये'ति सूत्रे मनुष्यग्रहणं मनुष्याणामेव ब्रह्मविद्याधिकार इत्येतदर्थं न भवति तत्र देवानामप्यधिकारसद्भावात्, तर्हि मनुष्याणां सर्वेषां तत्राधिकारोऽस्तीत्येतदर्थं तद्भवेत् । अन्यथा तद्वैफल्यप्रसङ्गात् । ततश्च शूद्रसाधारण्येन मनुष्याणां तत्राधिकार इति प्राप्नोति । तत्र शूद्रापवादेन विशेषप्रदर्शनार्थमुत्तराधिकरणमारभ्यत इत्यर्थः । इयमपि प्रासङ्गिकी सङ्गतिः ॥ सू० ॥ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३३ ॥ छान्दोग्य इति । एवं तत्रोपाख्यायते । जानश्रुतिः पौत्रायणः श्रद्धया बहुधनान्नप्रदः सर्वासु दिक्षु ग्रामनगरमा-

---

**रामानुजमते,** पूर्वाधिकरणमध्ये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्ते तत्प्रसगेन देवादीनामपि ब्रह्मविद्यायामधिकारोऽस्ति न वेति प्रस्तूयते । पूर्वपक्षसिद्धान्तादिकं सर्वं श्रीकण्ठमतवदेवेति न पृथक्प्रपञ्चनावकाशः । अधिकरणरचनायां त्वस्ति विशेषः । 'मध्वादिष्वसंभवा'दित्यादिकं सूत्रत्रयमधिकरणान्तरतया योजितम् । प्रासंगिकत्वादस्य विचारस्य न विषयवाक्योल्लेखः प्रातिस्विको दृश्यते । 'तदुपरि' इत्यत्र तत् उपरि इति पदच्छेदः । **तत्**=ब्रह्मोपासनम् । **उपरि**=देवादिष्वपि इति सूत्रार्थे विशेषः । इतराणि सूत्राणि श्रीकण्ठीयमतेन समानार्थानि । अतो देवानां ब्रह्मविद्याधिकारे न कश्चिद्विरोधः ॥ **इति श्रीरामानुजमते देवताधिकरणम् ॥ ७ ॥**

**अथ मध्वधिकरणम् ॥ ८ ॥**

**सू॥ मध्वादिष्वित्यादि।** अत्राधिकरणान्तरत्वरचनामात्रमेव श्रीकण्ठमताद्विशेषः । सूत्रार्थवर्णनादिकं श्रीकण्ठमतवदेवेति नास्ति विशेषः। अस्य 'असौ वा आदित्यो देवमधु' इत्यादिक 'मेतदेवामृतं दृष्ट्वा तृप्यती' त्यन्तं छान्दोग्यवाक्यं विषयः। शेषं श्रीकण्ठमतवत् । **इति श्रीरामानुजमते मध्वधिकरणम् ॥ ८ ॥**

**आनन्दतीर्थमते,** देवानां मुक्त्यर्थविद्यास्वधिकारोऽस्ति वा नवेति संदेहः । अनादिनित्यानां स्वमुक्त्यसंभवनिश्चयवतां देवानां मुक्त्यर्थित्वाभावेन नास्ति तेषां ब्रह्मोपासनेऽधिकारः । अत एव पूर्वाधिकरणे मनुष्याधिकारत्वमुक्तमुपासनानामिति पूर्वः पक्षः । **सिद्धान्तस्तु,** तेषामपि विशिष्टबुद्ध्यादिसद्भावेनाधिकारसंभवात् सृष्टिप्रलयार्थवादस्वारस्येन तेषामनित्यत्वाच्च अस्ति देवानामपि ब्रह्मोपासनेऽधिकार इति ॥ सूत्रार्थस्तु ॥ **सू ॥ तदुपर्यपि बादरायणस्संभवात् ॥ २५ ॥ तदुपर्यपि**=देवत्वयोग्यमनुष्याणां न केवलं मनुष्यत्वदशायां किं तु देवत्वादिप्राप्त्यनन्तरमपि वेदविद्याधिकारोऽस्ति । कुतः । **संभवात्**=तेषामप्यधिकारप्रयोजकविशिष्टबुद्ध्यादेर्योगात् । इति **बादरायणो** भगवान्वक्तीत्यर्थः ॥ **'विरोधः कर्मणी' त्यादि** । देवानां सादित्वे **कर्मणि**=पूर्वकल्पप्रवृत्तयज्ञादिकर्मणिविषये । **विरोधः**=उद्देश्याभावनिमित्तवैयर्थ्याख्यविरोधः । स्यादिति **चेन्न** । कुतः । **अनेकप्रतिपत्तेः**=अनेकेषां योग्यमनुष्याणां देवतापदप्राप्तेः । **दर्शनात्**='यत्र पूर्व, इति श्रुतावुक्तत्वादित्यर्थः । **शब्दइति चेन्नेत्यादि** । विरोधइति वर्तते । देवानामाद्यन्तवत्त्वे **शब्दे**=वेदे । **विरोधः**=अप्रामाण्याख्यो विरोधः स्यात् नित्यत्वेन श्रुतिसिद्धवेदवाचां कदाचिद्वाच्यहीनत्वापत्तेरिति **चेन्न** । **अतः**='धाता यथे' ति वेदवाक्यात् । तथा **प्रत्यक्षानुमानाभ्याम्**=महतां प्रत्यक्षात् देवानां प्रवाहतः उत्पत्तिसाधकलिङ्गाच्च । **प्रभवात्**=प्रतिकल्पं नियमेन प्रभवशब्दितोत्पत्त्यवगमाच्च उक्तं युक्तमिति भावः ॥ **सू ॥ अतएव च नित्यत्वम् ॥ २८ ॥ अत एव**=पूर्वपक्षयुक्तवेदनित्यत्वादेव तदन्यथानुपपत्त्यापि तद्वाच्यदेवप्रवाहस्य नित्यत्वं सिद्ध्यति इत्यर्थः ॥

**समाननामरूपत्वादित्यादि।अवृत्तावपि**=पूर्वकल्पे मुक्तानां देवानां पुनः स्वपदेषु असत्त्वेऽपि । **अविरोधः** तत्प्रतिपादकैकविधवेदाप्रामाण्याख्यविरोधो नास्ति । कुतः । **समाननामरूपत्वात्**=एतत्कल्पोत्पन्नानामपि देवानां

**इति ॥ अत्राचार्यः शिष्यं शूद्रेत्यामन्त्रयते । अतः शूद्राणामपि ब्रह्मविद्याया- मधिकारोऽस्ति न वेति संदेहः ॥ तेषामधिकारोऽस्ति, अर्थित्वादिसंभवात् ।**

गारण्यतीर्थादिषु पान्थानामनाथानां च शीतवातातपवर्षबाधानिवारकान्नोदकशयनाच्छाद- नादिभोग्यजातसम्पूर्णानावसथान्मापयाञ्चक्रे । तस्य धार्मिकप्रवरस्य कर्मभिः क्षीणदुरितस्य ब्रह्मविविदिषामुत्पादयितुं केचन महर्षयो हंसरूपमास्थाय निशायां हर्म्ये शयानस्य तस्यो- परि पङ्क्तिमाबध्याजग्मुः । तेषामग्रेसरं हंसं भोभो भल्लाक्षभल्लाक्षेति विपरीतलक्षणया मन्द- लोचनेति सम्भ्रमेण द्विवारं सम्बोध्य पृष्ठगामी कश्चिद्धंस उवाच । जानश्रुतेरन्नदानादि- प्रभावजनितं ज्योतिर्द्युलोकपर्यन्तं व्याप्तं वर्तते । तत्र त्वं लग्नो माभूः तेन तव प्रदग्धता माभूदिति । एवमुक्तवन्तमग्रगामी हंसः प्रत्युवाच । एनं जानश्रुतिं मनुष्यसामान्यदशा- मनतिक्रम्य वर्तमानं शकटसहितं रैक्वमिव कीदृशमाहात्म्यशालिनमात्थ । रैक्व एव खलु ब्रह्म- ज्ञो महाप्रभावः।अस्य जानश्रुतेरब्रह्मज्ञस्य कः प्रभावः यज्जनितमस्य तेजो रैक्वप्रभावजं तेज इव दहेदित्याशयः । एतदाकर्ण्य तेन पृष्ठगामिना कोऽसौ रैक्व इति पुनः पृष्टः स एव प्रत्युवाच।सर्वेषामपि यद्यावत्कर्मजातं विज्ञानं च यदीयकर्मविज्ञानान्तर्भूतमसौ रैक्व इति। तदेतद्धंसवाक्यं रैक्वप्रशंसारूपं तथाभूतस्य रैक्वस्यैव ज्योतिरसह्यं न त्वस्य वराकस्येति स्वनि- न्दागर्भं च जानश्रुतिराकर्ण्य कथमपि निशामतिवाह्य तल्पं त्यजन्नेव क्षत्तारमाहूय सचिह्नं रैक्वमुक्त्वा तदन्वेषणाय तं प्रेषयित्वा क्वचिद्विविक्तदेशे शकटस्याधस्तात्पामानं कण्डूयमानंरै- क्वमुपलभ्य प्रत्यागम्य निवेदितवति तस्मिन् स्वयं रैक्वमुपगम्य गवां षट्शतानि निष्कं हारम- श्वतरीयुक्तं रथं चोपहृत्य त्वदुपास्यां देवतामनुशाधीति रैक्वं प्रार्थयामास।स रैक्वस्तेन दीयमानं सर्वं प्रत्याचक्षाण उवाच । 'अह हारेत्वा शूद्र तवैव सह गोभिर'स्त्विति । अहेति निपातः। हार- सहित इत्वा रथः गोभिस्सह तवैवास्तु, किमनेनाल्पधनेन सन्तोषः मम कलत्रहीनस्य प्रति- ष्ठाहीनस्य च । का मम एतद्धनरक्षणे शक्तिः, तव वा मत्प्रयोजनापर्यवसाय्यल्पधनदानेन ब्रह्मविद्या प्रतिष्ठिता न भवेदिति भावः । पुनर्जानश्रुतौ सहस्रं गवां पूर्वानीतं हारादिकं रैक्वस्य परिणयनार्थं कन्यामावसथार्थं तत्रत्यं ग्रामं चोपहृत्य प्रार्थयमाने विद्याप्रदानार्थमुपहारस्य पर्याप्ततामनुजानानस्य रैक्वस्येदं वाक्यम्'आजहारेमाः शूद्रे' त्यादि । इमा दक्षिणा आहृतवा- नसि अनेनैव मुखेन विद्याग्रहणोपायेन मामालापयिष्यसि ब्रह्मविद्योपदेष्टारं करिष्यसीत्य- र्थः । ननु, कर्मस्विव विद्यास्वपि शूद्रस्य नाधिकार इत्येव युक्तम् । कथमस्याधिकारसंशय इत्याशङ्क्य पूर्वपक्षकोटेर्बीजोपन्यासपूर्वकं संशयं दर्शयति—अत्रेति । अत्र 'आजहारे'ति

---

प्राचीनतुल्यनामरूपत्वात् । तथा च प्रतिपाद्यस्याप्येकविधत्वात् न तद्बोधकवेदाप्रामाण्यमिति भावः । एकविधत्वमेव कुत इत्यत उक्तं **दर्शनात्स्मृतेश्चेति** । 'यथापूर्व' मिति श्रुतेः 'अनादिनिधने' ति स्मृतेश्चेत्यर्थः ॥ **मध्वादिष्वसभवा- दित्यादि** । **मध्वादिषु**—'असौवाआदित्यो देवमधि' त्याद्युक्तमध्वादिविद्यासु । **अनधिकारं**=देवानामधिकाराभावम् । **जैमिनिराचार्यो** मन्यते । कुतः । **असंभवात्**=तेषामर्थित्वतत्पदयोग्यत्वाद्ययोगादित्यर्थः ॥

**सू ॥ ज्योतिषि भावाच्च ॥ ३१ ॥ ज्योतिषि**=देवानां ज्ञाने । **भावात्**=सर्ववस्तूनां विषयतयान्तर्भूतत्वात् । सिद्धज्ञानानां देवानां न ज्ञानार्थिता युज्यत इति न मोक्षविद्यास्वप्यधिकार इत्यर्थः ॥

**सू ॥ भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥ बादरायणस्तु, हि**=यस्मात् । देवानामपि **अस्ति**=विद्या- साध्यापूर्वप्रकाशविशेषो मोक्षफले अतिशयश्चास्ति । तस्मात् **भावं**=देवानामधिकारसद्भावं मन्यत इत्यर्थः । जैमिनिमतं तु देवानां प्राप्तज्ञानफलार्थमनधिकाराभिप्रायमित्यवधेयम् ॥ **इति सूत्रार्थचन्द्रिकायां देवताधिकरणम् ॥ ७ ॥**

---

१ 'प्रकाशनार्थम् ' इति छ. पाठः ।

**न च त्रैवर्णिकानामेवेति नियमः; अत्रैवर्णिकानामपि देवानां तद्दर्शनात् । देवानामुपनयनाध्ययनाभावेऽपि स्वयंभातवेदार्थतया युज्यते विद्वत्ता, कथमेषामिति न शङ्क्यम् । एषामपि पुराणश्रवणादिना बोधोपपत्तेः, निषादस्थपतिन्यायेन महावाक्यग्रहणेऽधिकारसंभवाच्च । तस्मादमीषामधिकारो ब्रह्मविद्यायामुचितः ॥**

---

वाक्ये । यद्यप्य'ह हारेत्वा शूद्रे'ति दक्षिणाप्रत्याख्यानवाक्ये शूद्रेत्यामन्त्रणं शूद्रवत् ब्रह्मविद्यागौरवमजानानः स्वल्पां दक्षिणामाहरसीति कोपेन शूद्रेत्यामन्त्रणस्यान्यथासिद्धिर्वक्तुं शक्या, तथाप्यत्र प्रसादवाक्ये न सा वक्तुं शक्येति । अत्र शूद्रेत्यामन्त्रणलिङ्गेन शूद्रस्याप्यधिकारोऽस्तीति प्रतीयते । जानश्रुतेश्शोकाविष्टत्वं प्राक्सूचितमस्तीति बुद्धिसन्निहितयोगेन शूद्रशब्दस्य क्षत्रियवृत्तित्वसम्भवात् । लिङ्गासिद्ध्या तस्य नाधिकार इत्यपि प्रतीयते । अतस्संशय इति भावः । नन्वर्थित्वसामर्थ्ययोरन्यत्रापि सम्भवेऽपि यथा त्रैवर्णिकानामेव कर्माणि तथा विद्या अपि स्युरित्याशङ्क्याह—न चेति । न कर्मवद्विद्यायास्त्रैवर्णिकनियमोऽस्ति । देवेष्वपि तदङ्गीकारादित्यर्थः । पूर्वाधिकरणेनापि दृष्टान्तरूपा सङ्गतिरनेन लब्धा । देवानां वैदुष्यं सम्भवति न शूद्राणामिति विशेषमाशङ्क्य निराकरोति—देवानामिति । एषामपीति । यद्यपि पुराणादिश्रवणमात्रेण कर्माधिकारो न सम्भवति 'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यश्शरदि वैश्य' इति त्रैवर्णिकाधिकारत्वेन विहितस्याधानस्यासम्भवेन तेषामाहवनीयाद्यग्न्यभावात् कर्माङ्गवैदिकमन्त्राध्ययनाभावाच्च । तथापि विद्यास्वग्नीनां मंत्राणां चानपेक्षितत्वात् पुराणेभ्यो विद्योपयुक्तब्रह्मप्रतिपत्तिसम्भवात् यज्ञादिधर्मराहित्येऽपि 'स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नर' इत्युक्तरीत्या शूद्रवर्णोचितकर्मभिरेव विद्यानुग्रहसम्भवाच्च सम्भवति विद्याधिकार इति भावः । ब्रह्मप्रतिपत्तावुपायान्तरमाह—निषादेति । यथै'तया निषादस्थपतिं याजये'दिति वाक्ये निषादस्थपतिशब्दे षष्ठ्यर्थलक्षणापरिहाराय समानाधिकरणसमासस्याभ्युपगन्तव्यतया निषादजातीयस्य 'रौद्रं वास्तुमयं चरुं निर्वपे'दिति प्रकृतायामिष्टावधिकारे सिद्धे तदङ्गभूतमन्त्रग्रहणमत्रैवर्णिकस्यापि निषादजातीयस्य सिद्ध्यति । एवं शूद्रेत्यामन्त्रणलिङ्गेन शूद्रस्यापि विद्याधिकारे सिद्धे ब्रह्मपरमहावाक्यग्रहणं तस्यार्थापत्त्या सिद्ध्यतीत्यर्थः । ततश्च ब्रह्मपरमहावाक्येषु संशयविपर्ययनिरासार्थं विचारोऽपेक्षितश्चेत् सोऽप्यर्थापत्तिलभ्योऽङ्गीक्रियतामिति भावः । ननु, विधिबलान्निषादस्य मन्त्रग्रहणाक्षेपो युक्तः । न त्वर्थवादमात्रानुरोधात् शूद्रस्य महावाक्यग्रहणाक्षेपः । 'गावो वा एतत्सत्रमासत' 'देवा वै सत्रमासते'त्यादिवदार्थवादिकस्यान्यार्थदर्शनलिङ्गस्य यथाकथञ्चित्स्तुत्यालम्बनत्वोपपत्तेरित्याशङ्कां परिहरन्नुपसंहरति—तस्मादिति । उचित एव शूद्रस्य ब्रह्मविद्याधिकारः । अर्थित्वादिसम्भवेन विरोधाभावात् । न हि गवां सत्रेष्वशक्त्यादिवत् देवानामुद्देश्यदेवतान्तरसूत्राधानाधिकारिविशेषणब्राह्मण्याद्यभाववच्च शूद्रस्य विद्याधिकारे किञ्चिद्बाधकमस्ति । ननु, तस्मा 'च्छूद्रो यज्ञेऽनवक्लृप्त' इति श्रुतिर्बाधिका । तस्याश्श्रुतेर्यज्ञानधिकारमात्रप्रतिपादनपरत्वात् । प्रत्युत शूद्रस्य विशिष्य यज्ञाधिकारनिषेधेन विद्याधिकारानुमतेरेव प्रतीतेरिति भावः । शूद्राणां मुक्त्यर्थित्वस्य देहेन्द्रियपाटवरूपसामर्थ्यस्य च सम्भवेऽप्युपास्यतद्गुणज्ञानविरहात् नास्त्युपासनाधिकार इति सिद्धान्तयति—

इति प्राप्ते ब्रूमः—नास्ति शूद्राणां ब्रह्मविद्यायामधिकारः, तेषामध्ययनाभावेन तदुपायभूतोपास्यतद्गुणादिज्ञानासंभवात् । इतिहासपुराणानि वेदोपबृंहणं कुर्वन्त्येवोपायभावमनुभवन्ति, न स्वातन्त्र्येण । शूद्राणामितिहासपुराणश्रवणानुज्ञानं तु पापक्षयफलम् । विदुरधर्मव्याधादीनां जन्मान्तरसिद्धज्ञानाप्रमोषात् ब्रह्मनिष्ठता । कथं ब्रह्मविद्योपदेशे शूद्रेत्यामन्त्रणमिति चेत् नात्र जातियोगेन शूद्रेत्यामन्त्रणम्, किंतु ब्रह्मज्ञानाप्राप्त्या शुगस्य संजातेति दर्शनात् । शुगस्य

---

इति प्राप्त इति । उक्तज्ञानविरहे हेतुमाह—अध्ययनाभावेनेति । उपासनाविधयो हि स्वविषयानुष्ठानार्थमनुष्ठेयार्थज्ञानसम्पन्नान्द्विजातीनासाद्य निर्वृण्वन्ति यथा क्रतुविधयो याजकानपेक्षमाणाः स्ववर्णोचितद्रव्यार्जनोपाय इति याजने स्वत एव प्रवृत्तान्ब्राह्मणानासाद्य निर्वृण्वन्ति । अत उपासनाविधिभिरङ्गत्वेन गृहीतज्ञानं तावत् शूद्राणां न सम्भवति । स्वेच्छया केनचिच्छूद्रेण लिखितपाठादिना महावाक्यग्रहणतस्संपादितमपि तज्ज्ञानं तदुपायतामश्नुते । न 'ह्याग्नेय्याग्नीध्रमुपतिष्ठत' इत्यत्र ज्योतिष्टोमापूर्वसम्बन्धित्वेन क्लृप्तायां प्रकरणाम्नातायामाग्नेय्यां लाघवानुसारिणा विधिना उपस्थानाङ्गत्वेन गृहीतायां कस्यचिद्बुद्धिसन्निहितमाग्नेय्यन्तरं विधिनोपस्थानाङ्गत्वेन गृहीतं तदुपायतामश्नुवीतेति भावः । ननु, वेदान्तेष्विव पुराणेतिहासेष्वपि उपास्यस्य ब्रह्मणस्तद्गुणानां च वेदान्तानुसारेणैव तत्रतत्र प्रपञ्चेन प्रतिपादनं दृश्यते । तज्जन्यं ज्ञानमुपासनाङ्गं यदि न स्यात्तदा तेषु तत्प्रतिपादनं व्यर्थमेव स्यात् । अतो यथा प्रबलेन 'अथातोऽग्निमग्निष्टोमेनानुयजन्ती'ति वाक्येन इष्टकारचितस्थण्डिलरूपस्याग्नेराहवनीयाधारतया ज्योतिष्टोमाङ्गत्वे सिद्धे दुर्बलप्रकरणोपनीता उत्तरवेदिरप्यग्न्याधारतया तदङ्गमन्यथा ज्योतिष्टोमप्रकरणे तदाम्नानवैयर्थ्यापत्तेरित्याशङ्क्याह-इतिहासेति । 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।' इति वेदतात्पर्यनिर्णयार्थत्वेन विनियुक्तत्वान्न तद्वैयर्थ्यमिति भावः । ननु, पुराणादीनां वेदोपबृंहणार्थत्वेन विनियुक्तत्वेऽपि तेभ्यस्स्वातन्त्र्येणापि ब्रह्मप्रतिपत्तिर्भवन्ती नापह्नोतुं शक्या। साप्युपासनाङ्गमेव । अन्यथा शूद्रकर्तृकपुराणश्रवणवैफल्यप्रसङ्गात् । न च तस्य फलान्तरमेव । विदुरधर्मव्याधादीनां ब्रह्मनिष्ठतायामुपायान्तरादर्शनेन तदङ्गत्वस्याप्यवश्यकल्प्यत्वादित्याशङ्क्याह—शूद्राणामिति । एवं सूत्राभिप्रेतं ज्ञानाभावेन शूद्रस्य विद्यानधिकारमुपपाद्य सूत्रेण कण्ठोक्तं शूद्रेत्यामन्त्रणस्य निर्वाहमुपपादयितुमाशङ्कां दर्शयति—कथमिति । एतच्छङ्कोत्तरत्वेन 'शुगस्ये'ति सूत्रांशविवक्षितमर्थमाह—न जातीति । यद्यपि शूद्रशब्दस्य जातौ रूढिः, तथाप्यत्र ब्रह्मज्ञानाप्राप्त्या जानश्रुतेर्या शुक् सञ्जाता तां दृष्ट्वा रैक्केण व्यवहितार्थविषयस्वज्ञानवैभवप्रकटनाय शोचितृत्वयोगेन शूद्रेत्यामन्त्रणं कृतमित्यङ्गीकर्तुं युक्तम् । बुद्धिसन्निहितयोगस्य रूढितो बलवत्त्वात् । स्वज्ञानवैभवप्रकटनस्य प्रथमामन्त्रणे राज्ञोऽधिकदक्षिणादित्सासम्पादनार्थत्वेन द्वितीयामन्त्रणे राज्ञः स्वोपदेक्ष्यमाणविद्यायां श्रद्धातिशयसम्पादनार्थत्वेन च प्रकृतोपयुक्तत्वाच्चेति भावः । ननु, जानश्रुतेश्शुक् सञ्जातेति केन प्रमाणेन बोध्यते यां दृष्ट्वा रैक्कः शूद्रेत्यामन्त्रितवानिति कल्प्यत इत्याशङ्कापरिहारत्वेन 'तदनादरे' त्यादिसूत्रशेषं व्याचष्टे—शुगस्येति । हंसोक्तानादरवाक्यश्रवणेन कारणेन तदैवाचार्यं प्रत्या-

**संजातेति च तदनादरश्रवणात् ब्रह्मविद्यावैकल्येन स्वात्मानं प्रति हंसोक्तानादरवाक्यश्रवणात् तदैवाचार्यं प्रत्याद्रवणाच्च सूच्यते। हिशब्दो हेतौ। यतः शूद्रेत्यामन्त्रणं न जातियोगेन ततः शूद्रस्य ब्रह्मोपासनं नास्तीति ॥**

---

द्रवणेन कार्येण च शुगस्य सञ्जातास्तीति ज्ञाप्यते। अतश्शूद्रेत्यामन्त्रणं न रूढ्या, किं तु शोचितृत्वयोगेनैवेत्यर्थः। ननु शोचतीत्यर्थे शूद्रशब्दस्य व्युत्पत्तिर्व्याकरणप्रक्रियया न दृश्यते, नाप्युणादिप्रक्रियया। उणादिसूत्रे हि 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपी'त्यादिसूत्रतो रक्प्रत्ययेऽनुवर्तमाने 'शतेरश्चे'ति सूत्रेण 'शटशातने' इति धातो रक्प्रत्ययेन धातोरकारस्य ऊकारादेशेन च शूद्रशब्दो निष्पादितः। न च 'शुचिदूलृशोक' इति धातोरौणादिकरक्प्रत्ययेन शूद्रशब्दस्य कथञ्चिन्निष्पत्तिसम्भवेऽपि ततस्तस्य न यौगिकत्वनिर्वाहः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'त्यतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य'इति (पा० ८ ३-४६) सूत्रे कमिग्रहणे सत्यपि कमेरौणादिकसप्रत्ययान्तस्य कंसपदस्य ग्रहणेन सर्वेषां नाम्नामुणादिप्रत्ययैः पदान्तानां कृत्तद्धितसूत्रेण प्रातिपदिकसंज्ञासिद्धिसम्भवेऽपि अर्थवत्सूत्रप्रणयनेन च ज्ञापितत्वादिति चेत् अत्राहुः। रुजं द्रावयतीत्यर्थे रुद्रशब्दस्येव शोचतीत्यर्थे शूद्रशब्दस्य नैरुक्तप्रक्रियया सिद्धिरिति। केचित्तु 'स्फायितञ्ची'त्यादिरक्प्रकरणे 'अमितम्योर्दीर्घश्चे'ति सूत्रादनन्तरं 'शुचेर्दश्चे'ति सूत्रान्तरपाठं कल्पयन्तः तेन शुचेश्चकारस्य दकारेण रक्प्रत्ययेन पूर्वसूत्रानुवृत्तेन धातोरुकारस्य दीर्घादेशेन च शूद्रशब्दनिष्पत्तिं मन्यन्ते। ननु, हंसवाक्यश्रवणरैक्वोपसर्पणाभ्यां जानश्रुतेश्शोकस्सूच्यत इत्युक्तमयुक्तम्। हंसवाक्यश्रवणानन्तरमेव क्षत्तृप्रेषणपूर्वकरैक्वोपसर्पणेन हि जानश्रुतेः कश्चन रैक्वोपसर्पणहेतुः मानसो भावो हंसवाक्यश्रवणेन सञ्जात इत्येतावत्प्रतिपत्तुं शक्यम्। स भावः शोक इति कुतः प्रतिपत्तव्यम्। हंसवाक्यं जानश्रुतिनिन्दात्मकमिति ततस्तस्य शोकोदय एव युक्त इति चेन्न। तद्रैक्वस्य स्तुतिरूपमपि भवतीति ततस्तोषोदयोऽपि युक्तएव। स्वस्यापि रैक्वमहिमप्राप्त्युपायस्य तदुपास्यदेवतोपासनस्य तेन प्रदर्शनात् तदुपासनप्रकारोपदेशार्थं प्रार्थनीयस्स एव रैक्व इति सूचयितुं 'सयुग्वान' मिति तच्चिह्नस्योपन्यासाच्च। तथापि जानश्रुतेस्स्वनिन्दया हंसवाक्यगतया शोकोदयोऽपि स्यादिति चेन्न। हंसवाक्ये प्रकृतानुपयुक्तरैक्वस्तुतेस्तच्चिह्नोपन्यासस्य च सत्त्वेन तेन लिङ्गेन नायं लौकिको हंसः किं तु मम हितैषी कश्चिद्दृषिरेव अन्येन ऋषिणा सह स्वयमुक्तिप्रत्युक्तिव्याजेन रैक्वो देवतोपासनालब्धमहामहिमवैभवस्त्वमपि रैक्वोपास्यां देवतामुपास्व, स इव महामहिमा भविष्यसि, तदुपासनालाभे च स एव रैक्व उपदेष्टा, तस्य चिह्नं शकटपर्यटनं, तमन्विष्य ततो विद्यां लब्ध्वा कृतार्थो भवेति मामवबोधयितुमागतः इत्यतिविदग्धस्य विविधधर्मानुष्ठानविशुद्धान्तःकरणस्य राज्ञोऽवगतिसम्भवेन हंसकृतस्वनिन्दायाः सम्राजमेव राजानं प्रति 'कियदस्त्यधुना राज्यं कियदाज्ञाबलं तव। अनेन त्वमुपायेन सार्वभौमो भविष्यसी'त्यैश्वर्योपाये प्रवर्तयितुकामेन हितैषिणा कृताया निन्दाया इव हर्ष एव हेतुत्वात्। किं च नेयं जानश्रुतेर्निन्दा यद्भुवमारभ्य द्युलोकपर्यन्तं व्याप्तस्य कालाग्निज्वालाकलापवत्स्पर्शमात्रेण दहनशक्तस्य सूर्येऽप्यसम्भावितस्य ज्योतिषस्तस्मिन्नभाववर्णनम्। सम्भावितगुणवैकल्यवर्णनं हि निन्दा भवति। न'त्वाकाशमयं खादितुं न शक्त' इतिवदस-

इतश्च शूद्रेत्यामन्त्रणं न जातियोगेनेत्याह—

॥ सू ॥ क्षत्रियत्वगतेश्च ॥ ३४ ॥

शुश्रूषोर्जानश्रुतेः क्षत्रियत्वावगतेश्च न जातियोगेन शूद्रेत्यामन्त्रणम् । उपाख्यानोपक्रमे हि 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस, स ह सर्वत आवसथान् मापयांचक्रे सर्वत एव मेऽन्नमत्स्यन्ति' इति जानश्रुते-

---

म्भावितगुणवैकल्यवर्णनम् । यदि कस्याप्यसम्भावितं ज्योतिस्स्वस्य नास्तीति जानश्रुतेः शोकः कल्प्यते । तदा तस्य जडत्वमेवोपपादितं स्यात् । तस्मादिह शोकस्य सूचितत्ववर्णनमयुक्तमिति चेत् । उच्यते । भल्लाक्षस्य रैक्वजानश्रुतिविषयादरानादरवचसी दिव्यज्योतिस्सत्त्वासत्त्वालम्बनत्वेऽपि वस्तुतो विद्यातद्वैकल्यप्रयुक्ते एव पर्यवस्यतः । अन्यथा 'गगनमयं खादति 'अयं तु खादितुं न शक्नोती' त्युक्तिप्रत्युक्तिवत् हंसाभ्यां कृतयोरुक्तिप्रत्युक्त्योरपार्थकत्वप्रसङ्गात् । विद्या च सम्भावितगुण इति तद्वैकल्येन 'किमपर एन'मित्यादिजानश्रुत्यनादरवचनं तावत्तन्निन्दा भवत्येव । अतस्तद्वर्णनं जानश्रुतेरत्यन्तास्तिकस्य एतावन्तं कालमेवं प्रशस्तां विद्यां नाध्यगमं येनैवमवमानस्य पात्रमभूवमिति शोकहेतुकं भवति । एवं च यद्यपि भल्लाक्षवचनं प्रशस्तविद्यातदुपदेष्टृगुरुसद्भावप्रत्यायकतया हर्षहेतुः, तथापि हर्षवदेव सद्यो गुरूपसर्पणहेतौ शोकेऽपि हेतुरिति स एव शोकः शूद्रेत्यामन्त्रणेन सूचितो महर्षिणा स्ववैभवख्यापनाय राज्ञो विद्याधिगमे विशिष्टाधिकारित्वज्ञापनाय च । केवलविद्याकामाद्धि विद्यावैकल्यकृतेनानुतापेन युक्तोऽधिकारी विशिष्यते । शूद्रेत्यामन्त्रणस्य यौगिकत्वे हेत्वन्तरपरत्वेनोत्तरसूत्रमवतारयति—इतश्चेति ॥ सू० ॥ क्षत्रियत्वगतेश्च ॥ ३४ ॥ जनश्रुतस्यापत्यं जानश्रुतिः । पुत्रनाम्नो गोत्रापत्यं पौत्रायणः । श्रद्धया देयमस्येति श्रद्धादेयः । अर्थिभ्यो बहु दातुं शीलमस्येति बहुदायी । बहु पाक्यं पक्तव्यमन्नादिकमस्य गृहेष्वावसथेषु वास्तीति बहुपाक्यः । आगत्य वसन्ति येष्वतिथय इति तानावसथानतिथीनां निवासार्थान् गृहान्कारयामास । किमिति । सर्वत एवेमे ममान्नमत्स्यन्ति भोक्ष्यंते जना इत्यभिप्रायेण । 'वैश्याद्ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते । जीविका वृत्तिरेतस्य राजान्तःपुररक्षणम् ॥' इत्युक्तलक्षणः क्षत्ता । इयं जायेति रैक्वाय स्वकन्यासमर्पणम् । अयं ग्रामो यस्मिन्नास्से वर्तसे इति तदानीं यत्र ग्रामे रैक्वः स्थितः तस्य समर्पणम् । 'ते हैत' इत्यादिना महावृषाख्येषु देशेषु येषु ग्रामेषु रैक्वः पूर्वमुषितवान् तेषां रैक्वाय दत्तानां रैक्वपर्णा इत्यद्यापि रैक्वनाम्ना प्रसिद्धिरित्युक्तम् । ननु, सर्वमेतत् बहुदायित्वादिकं जानश्रुतेः क्षत्रियत्वे लिङ्गं न भवति । तथा हि—दानं तावत् शूद्रस्याप्यस्ति । 'दानं च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजेत च ॥' इति स्मरणात् । शूद्रादिभ्यः पक्वान्नदानं च तस्य सम्भवति । न च वाच्यं बहुदायीत्युक्तं दानपतित्वं सर्वत्रावसथान्निर्मायान्नसत्रप्रवर्तनं च बहुधनसाध्यं न तस्य सम्भवति । 'शक्तेनापि हि शूद्रेण न कार्यो धनसञ्चयः । शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥' इति तस्य बहुधनसम्पादननिषेधात् इति । तस्य निषेधस्य धर्मप्रावण्यरहितशूद्रविषयत्वात् । अत एव व्यासस्मृतौ 'शूद्रो धनसञ्चयं न कुर्वीते'ति निषेधानन्तरं 'राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः । पापीयान्हि धनं लब्ध्वा वशे कुर्याद्गरीयसः' ॥ इति विशेषः स्मर्यते । क्षत्तृ-

र्धनिपतित्वं बहुतरपक्वान्नदायित्वं चोक्तम् । मध्ये च 'स ह संजिहान एव क्षत्तारमुवाच' इति क्षत्तृप्रेषणमुक्तम् । अन्ते च 'इयं जाया अयं ग्रामो यस्मिन्नास्से' इति 'ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास' इति बहुग्रामप्रदायित्वमुक्तम् । एतैर्लिङ्गैर्जानश्रुतेः क्षत्रियत्वमवगम्यते ॥

---

प्रेषणार्थं ग्रामदानार्थं चापेक्षितं राज्याधिपत्यमपि शूद्रस्य सम्भवतीत्यवेष्टिनयपूर्वपक्षसिद्धान्तप्रवृत्तिवशादवगतम् । अवेष्ट्यधिकरणे हि 'राजा स्वाराज्यकामो राजसूयेन यजेते'ति विहितराजसूये त्रयाणामपि वर्णानामधिकारोऽस्ति न क्षत्रियस्यैव, राजशब्दस्यार्यावर्तप्रसिद्ध्या राज्यपालयितृवाचित्वात् चतुर्णामपि वर्णानां राज्यपालयितृत्वदर्शनेन शूद्रस्यानग्नित्वावैद्यत्वप्रतिषेधहेतुभिरधिकारपर्युदासेऽपि ब्राह्मणवैश्ययोरपर्युदासादिति पूर्वपक्षं कृत्वा भवेदेवं राजशब्दस्य राज्यपालयितृत्वार्थत्वे । स तु राज्ञः कर्म राज्यमित्यस्मिन्नर्थे राज्यशब्दनिष्पत्त्यर्थं राजशब्दाद्यत्प्रत्ययविधायकेन पाणिनिस्मरणेनानुगृहीतया दक्षिणापथप्रसिद्ध्या क्षत्रियस्यैव वाचकः । अतस्तस्यैव तत्राधिकार इति स्थापितम् । तस्मात्क्षत्रियत्वलिङ्गोपन्यासोऽयमशक्त इति चेन्न । राजभिरावसथनिर्माणं सर्वेषां बुभुक्षूणां भोजनार्थादिकं लभ्यतामित्यनेनैवाभिप्रायेण क्रियते । ततश्चावसथनिर्माणोक्त्यैव सिद्धो राजाभिप्रायः । यत्पुनः कीर्त्यते 'सवर्त एव मेऽत्स्यन्तीति' तस्यायमाशयः । ममान्नं शूद्रपतितादीनामन्नमिवाश्रयदुष्टं न भवति । अतस्सर्वतस्समागत्य सर्वेऽपि ब्राह्मणादयः ममान्नं भोक्ष्यन्त इत्यभिप्रायेण सर्वतस्सर्वेषु ब्राह्मणादिमेलनस्थलेषु आवसथान्मापयाञ्चक्रे इति । एवमुपक्रमगतं लिङ्गं तावत् शूद्राद्व्यावृत्तम् । तथा मध्ये श्रुत 'मियं जाये'ति लिङ्गमपि'न ब्राह्मणक्षत्रिययोरापत्स्वपि हि तिष्ठतोः । कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यत' इति ब्राह्मणस्य शूद्रभार्याया निषिद्धत्वात् । न च रैक्वस्य ब्राह्मणत्वे विप्रतिपत्तिः कार्या । तदन्वेषणार्थं प्रेषिते क्षत्तरि तमन्विष्य नाद्राक्षमिति प्रत्यागते सति 'यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छे'ति जानश्रुतिवाक्येन यत्र तपोवनादौ ब्राह्मणस्यान्वेषणं कर्तुमुचितं तत्र गत्वैनं प्राप्नुहीत्यर्थकेन तस्य ब्राह्मणत्वस्फुटीकरणात् । तथा 'यत्रास्मा उवासे'त्युपसंहारे श्रुतमपि शूद्राद्व्यावृत्तं लिङ्गम् । 'नाधार्मिकाश्रिते ग्रामे न व्याधिबहुले तथा । न शूद्रराज्ये निवसेन्न पाषण्डजनैर्वृत' इति शूद्रपालितराज्ये निवासस्य प्रतिषिद्धत्वात् । क्षत्तृप्रेषणग्रामदानलिङ्गद्वयं तु साक्षात्क्षत्रियत्व एव लिङ्गम् । तदुभयं हि पालयितृधर्मः । पालनं च क्षत्रियस्यैव वृत्तिः । 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि । धर्मस्यास्य यथान्यायं कर्तव्यं परिरक्षण'मिति स्मरणात् । अवेष्ट्यधिकरणे त्वतिक्रान्तनिषेधानां ब्राह्मणवैश्यशूद्राणां पालयितृत्वं दृश्यमानमवलम्ब्य प्रवृत्तं वर्णान्तराणामपि राजसूयाधिकारमापादयता हि पूर्वपक्षिणा स्वाभिमतं राजशब्दप्रवृत्तिनिमित्तं पालनं वर्णान्तरेष्वपि दर्शनीयं शब्दप्रवृत्तिनिमित्तत्वं च धर्मवदधर्मस्याप्यस्य राजत्वादेरिवोपपद्यते । अत एव तदधिकरणपूर्वपक्षे वार्तिके क्षत्रियसम्बन्धित्वेन राज्यं विहितमन्यायेनेतरौ कुर्वाणौ न स्यातामित्याशङ्क्य,सर्वथा तावद्राज्यकरणात्ताभ्यामपि राजत्वं लब्धम् । तावता च राजसूयचोदनायाः प्रयोजनम् । यौ तु न्यायान्यायौ तयोः पुरुषधर्मत्वान्नैकोऽपि क्रतुविधिना गृह्यत इति परिहृतं च।इदमपि जानश्रुतेः क्षत्तृप्रेषणादिलिङ्गावगतं

## ॥ सू० ॥ उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

उपरिष्टाचास्यां संवर्गविद्यायां ब्रह्मक्षत्रिययोरेवान्वयो दृश्यते 'अथ शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' इत्यादौ। अत्राभिप्रतारी चैत्ररथः क्षत्रिय इत्यवगम्यते, कापेययाज्यस्य कापेयाख्ययाजकयोगात्। कापेययाजकयोगो हि चैत्ररथस्य श्रुतः 'एतेन चैत्ररथं कापेया अयाजयन्, तमेकाकिनमन्नस्याध्यक्षमकुर्वन्' इति । तेनाभिप्रतारिणः संज्ञाभेदात् चित्ररथत्वासिद्धावपि तद्वंश्यत्वं सिध्यति । समानान्वयानां हि समानान्वयाः प्रायेण याजका

---

राज्यकरणं तादृशमिति वक्तुं शक्यम्।बाधकाभावे वैदिकलिङ्गावगतस्य तस्य धर्म्यस्यैव ग्राह्यत्वात् । अन्यथा शूद्रेत्यामन्त्रणावगतं शूद्रस्य विद्याग्रहणमवर्ज्यं वेदे निबद्धमिति वक्तुं शक्यतया शूद्रस्य विद्याधिकारे उक्तवैदिकलिङ्गासिद्धेः वक्ष्यमाणबाधकानां चानुपन्यसनीयतापत्तेः । तस्मादुपक्रमादिगतलिङ्गैः शूद्रत्वाभावः क्षत्तृप्रेषणग्रामदानलिङ्गावगतेन राज्यकरणेन क्षत्रियत्वं चावगम्यते । 'सर्वैरप्युक्तलिङ्गैः क्षत्रियत्वमवगम्यत' इति भाष्यं तु सर्वेषामेषां लिङ्गानां क्षत्रियपर्यवसायित्वाभिप्रायमिति न विरोधः । अस्यां संवर्गविद्यायामुपसंहारगताख्यायिकान्तरे ब्राह्मणक्षत्रिययोरन्वयदर्शनात्पूर्वाख्यायिकायामपि तत्प्रायपाठात् रैक्वेन ब्राह्मणेनान्वयी जानश्रुतिः क्षत्रियोऽवगम्यत इति ॥ तस्य क्षत्रियत्वावगतौ हेत्वन्तरपरं सूत्रम् ॥ सू० ॥ उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ परिविष्यमाणौ भोजनार्थमुपविष्टौ सूपकारैः प्रदीयमानान्नौ । अत्र कपिगोत्रोत्पन्नश्शौनकस्तावद्ब्राह्मणः प्रसिद्धः । तदन्वयिनोऽभिप्रतारिणः क्षत्रियत्वं साधनीयम् । प्रायपाठसिद्ध्यर्थं तत् चित्ररथवंश्यत्वेन सिसाधयिषुः तदुभयं प्रतिजानीते—अत्रेति । तत्र चित्ररथवंश्यत्वे हेतुमाह--कापेययाज्यस्येति । तस्य हेतुत्वमुपपादयति--कापेययाजकेति । छन्दोगब्राह्मणे 'अथ यस्य ज्योतिरुस्यपूर्वमहर्भवति आयुरुत्तरः' इति द्विरात्रप्रकरणे'एकाकिनमेवैनमन्नाद्यस्याध्युषं करोती'ति एनं द्विरात्रयाजिनमेकमेव भ्रातृवर्गादिमध्ये ऐश्वर्यस्याध्यक्षं करोतीति फलार्थवादस्यानन्तरं तदुपपादकमर्थवादान्तरं दृश्यते । 'एतेन वै चित्ररथं कापेया अयाजयन् तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वन् तस्माच्चैत्ररथिर्नाम एकः क्षत्रपतिरजायते'ति । अत्र चित्ररथस्य कापेययाजकयोगः श्रुतः । ननु, तेनाभिप्रतारिणः चित्ररथत्वमेव सिद्ध्येत् न तु चित्ररथवंश्यत्वमित्यत आह—तेनेति । ननु संज्ञाभेदादभिप्रतारिणः चित्ररथादन्यत्वे तद्वंश्यत्वं कुतस्सिद्ध्यतीत्यत आह--समानान्वयानामिति । याजकास्त्रिप्रकाराश्शाट्यायनिशाखायां दर्शिताः। 'पितृभूता मनुष्यभूता देवभूता' इति । पितृपितामहादिपरम्परया कुलक्रमेणागता ऋत्विजः पितृभूताः । तदसंभवे कस्यचिदाधानप्रभृति यावजीवमृत्विक्त्वेन प्राप्ता मनुष्यभूताः । तदसम्भवे तत्र तत्र कर्मणि दैवादागत्यार्त्विज्यं कुर्वन्तो देवभूताः । अतस्समानान्वयानामेव याज्ययाजकभावः इति नास्ति नियम इत्याशङ्कयोक्तं—प्रायेणेति । नियमाभावेऽपि मुख्यत्वात्प्रायिकत्वरूपमौत्सर्गिकत्वं तावदस्ति । ततश्च औत्सर्गिकत्वात् पूर्वराजचरित्रेषु बहुशो याज्ययाजककुलव्यवस्थादर्शनात् इहापि 'चित्ररथं कापेया अयाजय'न्निति कपिगोत्रोत्प-

भवन्ति। चित्ररथवंश्यत्वे सति क्षत्रियत्वं 'तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिर्जायते' इति तद्वाक्यशेषेण सिद्ध्यति। एवं चोत्तरत्र ब्राह्मणेन कापेयेन युक्तोऽभि-

---

न्नानामेव बहूनां चित्ररथं प्रति याजकत्ववर्णनाच्च तेषां पितृभूतयाजकत्वनिश्चयात् कापेययाजकयोगेन चित्ररथवंश्यत्वं सिद्ध्यतीति भावः। चित्ररथवंश्यत्वसिद्धौ तत एव तस्य क्षत्रियत्वं सिद्ध्यति। 'तस्माच्चैत्ररथिर्नामे'त्यादिवाक्यशेषात् इत्याह–चित्ररथेति। एवं प्रायपाठसिद्ध्या तेन प्रकृतार्थसिद्धिं दर्शयति–एवं चेति। स्यादेतत्। प्रायपाठेन रैक्वान्वितस्य जानश्रुतेः क्षत्रियत्वनिर्धारणं प्रायपाठसत्त्वाधीनं तदभिप्रतारिणः क्षत्रियत्वनिर्धारणाधीनं तदपि तस्य चैत्ररथित्वनिर्धारणाधीनं तच्च तस्य कापेययाज्यत्वनिर्धारणाधीनं तत्कुतो निर्धार्यते। न हि तदस्यां श्रुतौ श्रुत्यन्तरे वा श्रुतमस्ति। नापि कल्प्यम्। कल्पकाभावात्। ननु, यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र स्वर्गार्थं विधीयमानस्य यागस्य ज्योतिष्टोमनामसम्बन्धावगतत्रिवृत्पञ्चदशसप्तदशैकविंशरूपज्योतिर्नामकस्तोमसम्बन्धो 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोती'ति श्रुत्यन्तरप्रसिद्धेः स्तोत्रोपकरणसोमयागाङ्गग्रहग्रहणपौर्वापर्यलक्षणः पर्यवस्यति। ततः फलार्थं विधीयमानो यागः सोमयाग इत्यपि सिद्ध्यति। तथेहाप्यभिप्रतारिणः कापेयसम्बन्धः प्रतीयमानश्रुत्यन्तरप्रसिद्धस्तद्याज्यत्वलक्षणः पर्यवस्यतीति तत एव स चैत्ररथ इत्यपि सिद्ध्येदिति चेत्स्यादेतदेवं, यदि 'त्रिवृत्पञ्चदशस्सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा' इति ज्योतिष्टोमनामनिर्वचनरूपार्थवादानुसारिणि 'ज्योतींषि स्तोमा अस्ये' ति विग्रहवाक्ये षष्ठ्यन्तपदेन यागस्य स्तोमसम्बन्ध इवात्राभिप्रतारिणः कापेयसम्बन्धः केनचित्पदेन यागस्य बोध्येत। न च कापेयसहपाठात् तत्सम्बन्धः कश्चित् अर्थात्सिद्ध्येदिति वाच्यम्। भोजनार्थं सहोपविष्टाविति हि सहपाठः। न च तावन्मात्रेण कश्चन सम्बन्धस्सिद्ध्यति। अतिथिगृहस्थयोरदर्शनात्। न च विद्याङ्गोपाख्याने सहपाठस्सम्बन्धनियतः। भूम[1]वैश्वानरादिविद्याङ्गोपाख्यानेषु सहपठितानां प्राचीनशालसत्ययज्ञादीनां तदश्रवणात्। एकविद्यात्वं तेषां सम्बन्ध इति चेत् इहापि स एवास्तु। तस्यैवान्योन्यस्माद्विद्यागतविशेषगुणग्रहणार्थत्वेन विद्याङ्गोपाख्यानेषु विवक्षितुमुचितत्वात्। केचि'त्त्वेतेन वै चैत्ररथं कापेया अयाजय'न्निति द्विरात्रब्राह्मणपाठं कल्पयित्वा तेनाभिप्रतारी साक्षादेव श्रुत्यन्तरश्रुतकापेययाज्यभावः चैत्ररथस्सिद्ध्यतीत्याहुः। तेषामसाम्प्रदायिकश्रुतिपाठकल्पनेनानाप्तत्वं तावत्सिद्ध्यति। न तु ततः अभिप्रतारिणः कापेययाज्यत्वं चैत्ररथित्वं च सिद्ध्यति। सहपाठस्य द्विरात्रब्राह्मणश्रुतसम्बन्धानपेक्षत्वस्योक्तत्वात्। तस्मादनुपपन्नोऽयं प्रायपाठेन क्षत्रियत्वावगत्युपन्यास इति चेदुच्यते। श्रुतितोऽर्थतोऽभिप्रतारिणः कापेयेन सम्बन्धे सामान्यतस्सिद्धे श्रुत्यन्तरतस्स याज्ययाजकभावस्सिद्ध्यतीत्यभिप्रेत्य श्रुत्यन्तरं नोदाहृतम्। किं त्वभिप्रतारिणा सह पठिते कापेये श्रुत्यन्तरबलात् चित्ररथयाजकत्वेन प्रत्यभिज्ञायमाने कापेययाज्योऽयमभिप्रतारी चित्ररथवंश्यश्चेति बुद्धिर्भवतीत्यभिप्रेत्य श्रुत्यन्तरमुदाहृतम्। इयं च बुद्धिस्सम्भवत्येव। यथा खल्वविदितपूर्वस्य हस्तिनो निकटे दृश्यमाने पुरुषे राज्ञो हस्तिपकोऽय-

---

(१) 'भूम' इत्येतत् छ पाठे न दृश्यते।

प्रतारी क्षत्रिय इति निश्चिते तद्वत् ब्राह्मणेन रैक्वेण युक्तो जानश्रुतिरपि क्षत्रिय इति गम्यते । अतः क्षत्रिय एव शूद्रेत्यामन्त्रितः ॥

यदुक्तं निषादस्थपतिन्यायेन शूद्रस्य महावाक्यश्रवणमात्रेऽधिकार इति तत्राह—

॥ सू० ॥ संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥

ब्रह्मविद्योपक्रमे 'उप त्वा नेष्ये' 'तं होपनिन्ये' इत्यादिप्रदेशेषूपनयनसंस्कार-

---

मिति प्रत्यभिज्ञायमाने सत्ययमस्य हस्तिपकस्य शिक्षणीयो हस्ती राजकीयश्चेति बुद्धिः। अतो युक्तः प्रायपाठादभिप्रतारिणः क्षत्रियत्वावगमः । सूत्रे 'चैत्ररथेन लिङ्गा'दिति भिन्नविभक्तिनिर्देशेन चैत्ररथेन समभिव्याहारादित्यध्याहाराशय उन्नीयते । अभिप्रतारिणेति श्रुत्युपात्तशब्दे निर्देष्टव्ये चैत्ररथेनेति निर्देशश्शङ्कापरिहारार्थः । एवमत्र शङ्का समुन्मिषति । नाभिप्रतारिणः कापेययाज्यत्वेन क्षत्रियत्वमवगन्तुं शक्यम् । तद्धि तस्य तेन चित्ररथत्वसिद्धिद्वारावगन्तव्यम् । श्रुत्यन्तरे चित्ररथस्यैव कापेययाज्यत्वेन निर्दिष्टत्वात् । न च तस्य तत्सिद्ध्यति । संज्ञाभेदेन चित्ररथाद्भेदप्रतीतेरिति । तत्रायं परिहारो विवक्षितः । चित्ररथाद्भेदेऽपि तद्वंश्यत्वसिद्धितः क्षत्रियत्वं सिद्ध्यति । ननु, श्रुतौ चित्ररथवंश्येषु चैत्ररथिशब्दः इकारान्तः प्रयुक्तः सूत्रे कथं चैत्ररथशब्दप्रयोगः । उच्यते । चित्ररथस्य द्विरात्रानुष्ठानानन्तरं तदपत्यभूततत्पुत्रपौत्रादिपरम्परायामद्याप्येकैक एव क्षत्रपतित्वं तदीयद्विरात्रानुष्ठानफलमनुभवतीति प्रदर्शनार्थेऽर्थवादे ' अत इदिति, अपत्यार्थेप्रत्ययान्तश्चैत्ररथिशब्दः प्रयुक्तः । अभिप्रतारिणः कापेययाज्यत्वेन चित्ररथवंश्यत्वमात्रं ज्ञातुं शक्यं न तु तदपत्यत्वमित्यभिप्रेत्य चित्ररथवंश्यत्वज्ञापनाय सूत्रे सम्बन्धसामान्यविहिताणप्रत्ययान्तस्य चैत्ररथशब्दस्य प्रयोग इति विवेकः । 'अयमश्वतरीरथः' इत्युक्तचित्ररथवत्त्वं क्षत्रियत्वे लिङ्गतयोपन्यस्तमिति मन्दानां भ्रान्तिवारणार्थमुत्तरत्रेति विशेषणम् । अस्तु तदपि लिङ्ग को दोष इति चेन्न । तस्य लिङ्गत्वासिद्धेः । शूद्रस्यापि रथसम्भवात् शूद्रस्य वेदनिषेधवद्रथनिषेधस्य प्रामाणिकवचनारूढस्यादर्शनात् तस्य तन्निषेधसत्त्वेऽपि सशकटं पर्यटतो रैक्वस्याश्वतरीरथः प्रियो भवेदिति तदर्थं सम्पाद्यानयनसम्भवात् स्वोपभोगार्हमेव परस्मै दातव्यमिति नियमाभावात् ॥ एवं तावच्छूद्रस्य विद्याधिकारे शूद्रेत्यामन्त्रणरूपं लिङ्गं विघटितम् । तथाप्यर्थित्वादिसद्भावादध्ययनाभावेऽपि निषादस्थपतिन्यायेन विद्यानुष्ठानोपयोगिब्रह्मपरमहावाक्यादिग्रहणं स्यादित्याशङ्कामुद्भाव्य तत्परिहारार्थत्वेनोत्तरसूत्रमवतारयति—यदुक्तमिति ॥ ॥ सू० ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥ ब्रह्मविद्योपक्रम इति । एवं छन्दोगोपनिषद्युपाख्यायते । शैशवे प्रमीतपितृकः सत्यकामो विद्यार्थमाचार्यमुपेत्य ब्रह्मचर्यं चरिष्यामि किंगोत्रोऽहमिति मातरं पृष्ट्वा तया त्वज्जनकपरिचरणं कृत्वैव सूतासि नाहं गोत्रं वेदेत्युक्तो गौतममासाद्य ब्रह्मचर्यं भगवति वत्स्यामि उपेयां भगवन्तमित्युक्त्वा किंगोत्रस्त्वमिति तेन पृष्टो नाहं मम गोत्रं वेद मातापि नावेदीत् माता मे जाबाला सत्यकामोऽहमित्येतावद्वेद्मीत्युवाच । अथ गौतमस्सत्यवचनेनायं ब्राह्मण इति निर्धार्य 'समिधं सोम्याहर उप त्वा नेष्य' इति चोक्त्वा तथैव तमुपनीय स्वकीयात् गोयूथात् कृशानां दुर्बलानां गवां चत्वारि शतानि पृथक्कृत्य तत्पोषणे तं नियुयुजे । स तु सत्यकामस्तावद्गवां

परामर्शात्, शूद्रस्य च 'न शूद्रे पातकं किं चिन्न च संस्कारमर्हति' 'शूद्रश्चतुर्थो वर्ण एकजातिः' इत्यादिस्मृतिषु तदभावश्रवणात्, तस्य ब्रह्मविद्यायामनधिकारः। 'निषादस्थपतिं याजयेत्' इति विधिरस्तीति न विरोधः। उपनयनाभावेऽपि शूद्रस्य महावाक्यश्रवणे क्वापि न विधिः॥

---

सहस्रसङ्ख्यापूरणात्प्राङ्न प्रत्यागच्छेयमिति प्रतिज्ञाय तृणोदकबहुलमरण्यं नीत्वा तास्संरक्षन् वर्षगणं प्रोवास। ताश्च सहस्रं संपेदिरे। तदनन्तरमृषभोऽग्निः हंसो मद्गुरिति चत्वारो देवतात्मानः तस्य गुरुशुश्रूषया सन्तुष्टास्तस्मै षोडशकलब्रह्मविद्यामुपदिदिशुः। ततस्सहस्रगोभिराचार्यकुलं प्राप्याचार्येण 'ब्रह्मविदिव सोम्य भासि कोऽनु त्वामनुशशास' इति पृष्टस्तद्वृत्तान्तमुक्त्वा देवैरुपदिष्टमित्यतोऽपि नाहं हृष्यामि स्वकीयादाचार्यादेव किल लब्धा विद्या साधीयसी भवति भगवानेव मह्यं ब्रवीत्विति प्रार्थयामास। ततो गौतमस्तामेव षोडशकलब्रह्मविद्यामुपदिदेशेति। अत्र विद्योपक्रमे तावदुपनयनं परामृश्यत इति उपनयनवतामेव ब्रह्मविद्याधिकार इत्येष्टव्यमिति भावः। अस्तु शूद्रस्याप्युपनयनमित्यत आह—शूद्रस्येति। पातकं वृथामांसभक्षणादिकृतम्। ननु मानवधर्मशास्त्रे 'न शूद्रे पातकं किञ्चिदि'ति शूद्रस्य संस्कारनिषेधानन्तरं 'धर्मेप्सवस्तु धर्मज्ञास्सतां वृत्तिमनुव्रताः। मन्त्रवर्जं न दुष्यन्ति प्रतिष्ठामाप्नुवन्ति च॥'इति श्लोकेन धार्मिकाणां शूद्राणां मन्त्रवर्जं संस्काराणामभ्यनुज्ञानं कृतमिति चेत् सत्यम्। तदभ्यनुज्ञानं जातकर्मादिसंस्कारान्तरविषयं नोपनयनविषयमपि। शूद्राणामाहत्योपनयनाभावस्मरणादित्यभिप्रेत्य गौतमस्मृतिमुदाहरति—शूद्र इति। एकजातिः द्वितीयादिजन्मरहित इत्यर्थः। तच्छूद्रस्य द्वितीयजन्मरूपोपनयनाभावाद्विद्यायां नाधिकार इत्याह—तस्येति। निषादस्य त्वनुपनीतस्यापि विशिष्टविधिबलात् मन्त्रग्रहणमुपपद्यत इत्याह—निषादेति। शूद्रस्य महावाक्यग्रहणे विशिष्य विधिर्नोपलभ्यत इति न तस्य विद्याधिकारप्राप्तिः। प्रत्युत विद्याप्रकरणे उपनयनपरामर्शात्तद्रहितस्य तत्रानधिकार एवोन्नीयते इत्यभिप्रेत्याह—उपनयनाभावेऽपीति। नन्वेवं सति तत्र 'नैतदब्राह्मणो विवक्तुमर्हती'ति ब्राह्मण्यनिर्धारणपूर्वकं सत्यकामस्य शिष्यत्वेन स्वीकारस्योक्तत्वात् ब्राह्मणस्यैव विद्याधिकारः स्यात् न क्षत्रियवैश्ययोः। ब्राह्मण्यनिर्धारणं तु तत्र उपनयनार्थमुच्यते न विद्यार्थमुपनयने ब्राह्मणक्षत्रियवैश्यजातिभेदेन प्रकारभेदसत्त्वेन तत्रैव जातिनिर्धारणस्यापेक्षितत्वादिति चेत् तर्ह्युपनयनमप्यध्ययनार्थमित्युच्यते न विद्यार्थमिति तुल्यम्। न च वाच्यं नाध्ययनाङ्गमिदमुपनयनमुपनयनानन्तरमध्ययनस्याप्रतिपादनात् तदनन्तरमेव गोसंरक्षणे नियुज्य तन्नियोगानुष्ठानपूर्वकं प्रत्यागताय तस्मै विद्योपदेशस्यैव प्रतिपादनात्। किं तु श्रुत्यन्तरप्रसिद्धमध्ययनाङ्गोपनयनादन्यद्विद्याङ्गमिदमुपनयनम्। तत्रैव 'समिधं सोम्याहरे'ति समिदाहरणानुशासनस्योपयुक्तत्वात् तदर्थे शिष्यकर्तृकोपगमने 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ'मिति समित्पाणित्वस्य विहितत्वादिति। उपक्रमगताभ्यां गोत्रापरिज्ञानगोत्रप्रश्नाभ्यामध्ययनाङ्गमिदमुपनयनमिति प्रतीतेः। गोत्रापरिज्ञानं हि अकृताध्ययनाङ्गोपनयनस्य बालस्य सम्भवति। न तूपनीतस्याधीतसाङ्गस्वाध्यायस्य ब्रह्मविद्याधिजिगमिषया गुरुमुपसीदतः। अध्ययनाङ्गोपनयन एव च गोत्रपरि-

## ॥ सू० ॥ तद्भावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

ज्ञानमुपयुज्यते । गोत्रभेदेन तत्र प्रकारभेदसत्त्वात् विद्याङ्गोपनयने तदभावात् । समिदाहरणानुशासनं तु अध्ययनाङ्गोपनयनहोमोपयुक्तसमिदाहरणं येन केनचित्कर्तव्यमयमेव सन्निहितः करोत्वित्यभिप्रायेणाप्युपपद्यते। तमुपनीय 'कृशानामबलानां चतुश्शता गा निराकृत्योवाचे'त्यनन्तरवाक्यगतमुपनीयेत्येतद्यदर्थोऽयमुपनयनसंस्कारः तत्पर्यन्ताध्ययनपरमित्यध्ययनप्रतिपादनमपि लभ्यते । दृष्टं हि 'तस्मादग्निचिद्वर्षति न धावे'दित्यत्राग्निचिदित्यस्य यदर्थोऽग्नेश्चयनसंस्कारस्तत्पर्यन्ताग्निचयनपरत्वम् । अत एवाग्निचयनाङ्गकक्रतौ भूत एव वर्षति न धावेदित्याद्यग्निचिद्व्रतानि न त्वग्निचयनसंस्कारमात्रे भूत इति निर्णीतं पूर्वतन्त्रे क्रमलक्षणे । एवं चोपनयने सत्युपनीतकर्तृकेऽध्ययने निवृत्ते सत्याचार्यस्समावर्तनात्प्राक् गुरुदक्षिणार्थतया महतीं शुश्रूषां कृत्वा तया शुद्धान्तःकरणः कांचन ब्रह्मविद्यामयमधिगच्छत्वित्यभिप्रायेण गवां संरक्षणे नियुयुजे इत्युत्तरसंदर्भोऽपि सङ्गच्छते । तस्माद्विद्योपक्रमगतस्यापि ब्राह्मण्यनिर्धारणस्य उपनयनार्थत्वेनान्यथासिद्धौ तस्योपनयनस्याप्यध्ययनार्थत्वेनान्यथासिद्धिः स्यादिति तुल्य एव न्यायः । यद्युच्येताध्ययनार्थत्वेऽप्युपनयनस्य विद्याङ्गोपाख्याने तत्कीर्तनमुपनीतस्यैव विद्यायामधिकार इति ज्ञापनार्थत्व एव साफल्यमश्नुत इति । तर्हि तत्र ब्राह्मण्यनिर्धारणवचनमपि ब्राह्मणस्य सत उपनीतस्य तत्राधिकार इति ज्ञापनार्थत्व एव साफल्यमश्नुत इति तुल्यम् । न च वाच्यं 'नैतदब्राह्मणो विवक्तुमर्हती'ति शूद्रत्वाभावमात्रनिर्धारणं न तु ब्राह्मणत्वनिर्धारणमिति । ब्राह्मणभिन्नत्वस्य प्रवृत्तिनिमित्तस्य क्षत्रियवैश्यसाधारणत्वेनाब्राह्मणशब्दस्य शूद्रमात्रविषयत्वाभावात् 'यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयाता'मित्यत्र क्षत्रियादिवर्णत्रयसाधारण्येन तत्प्रयोगदर्शनाच्च । 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगति'रिति शाब्दिकोक्तन्यायेन ब्राह्मणसदृशतद्भिन्नपरस्याब्राह्मणशब्दस्य द्विजन्मतया ब्राह्मणेनात्यन्तसदृशौ क्षत्रियवैश्यौ परित्यज्य शूद्र एव वृत्त्ययोगाच्च । मातरं प्रति ब्राह्मण्यनियतगोत्रप्रश्नस्य विशिष्य ब्राह्मण्यनिर्धारणहेतुत्वेन ततश्शूद्रत्वाभावमात्रनिर्धारणोक्त्ययोगाच्च । तस्माद्विद्याङ्गोपाख्याने ब्राह्मण्यनिर्धारणवचनं ब्राह्मणस्यैव विद्यायामधिकार इत्यत्रेव तस्यामुपनयनवचनमप्युपनीतस्यैव तत्राधिकार इत्यत्रापि न लिङ्गमित्याशङ्कानिराकरणार्थं सूत्रम्—तद्भावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ शूद्रत्वाभावनिर्धारणे सत्याचार्यस्सत्यकाममुपनेतुं प्रववृते इति 'नैतदब्राह्मणो विवक्तुमर्हती' त्यादिनोच्यते । न ह्यत्रोच्यमाने निर्धारणे मातरं प्रति गोत्रप्रश्नो हेतुः । येनेदं ब्राह्मण्यनिर्धारणं स्यात् । किं तु 'न सत्यादगा' इत्युच्यमानं 'नाहं गोत्रं वेद न मे मातापि माता जाबाला सत्यकामोऽह'मिति यथाभूतार्थवादित्वरूपं सत्यवचनानतिक्रमणम् ।'न सत्यादगा' इति वाक्यस्य वर्ण्यमाननिर्धारणहेतुपरत्वात् । सत्यवचनानतिक्रमणं च शूद्रत्वाभावनिर्धारण एव हेतूभवनयोग्यम् । 'अनृतं चातिवादश्च पैशुन्यमतिलोभिता । निकृतिश्चाभिमानश्च जन्मतश्शूद्रमाविशत् ॥ दृष्ट्वा पितामहश्शूद्रमभिभूतं तु तामसैः ॥ द्विजशुश्रूषणं धर्मं शूद्राणां समकल्पयत् ॥ न सन्ति तामसा भावाः शूद्राणां द्विजसेवनात् ॥' इत्यनृतवादि-

'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः' इति सत्यवचनेन जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव तदुपनयनानुशासन-विद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥

ननूपनयनाभावे ब्रह्मोच्चारणनिषेधः काचित्कः सार्वत्रिको वा । न सार्वत्रिकः। शिशोरुपनयनाभावेऽपि 'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्' इति स्वधानिनयने ब्रह्मोच्चारणविधानात् । तेन काचित्क इति युज्यते । अतः शूद्रस्यानुपनीतस्य पाकयज्ञादिषु ब्रह्मोच्चारणनिषेधो न ब्रह्मविद्यायामित्याशङ्कायामाह—

---

त्वस्य शूद्रेषु प्रसिद्धत्वात् । एवं च साधारणस्यापि अब्राह्मणशब्दस्य हेतुवचनानुसारेणात्र विशिष्य शूद्रे तात्पर्यमेष्टव्यम् । अतः पूर्वसूत्रोक्ते लिङ्गे न काचिदनुपपत्तिः । प्रत्युतेदमपि विद्याधिकारिणश्शूद्रत्वाभावनिर्धारणं शूद्रस्य विद्यानधिकारे लिङ्गान्तरमित्यभिप्रेत्य सूत्रं व्याचष्टे—नैतदब्राह्मण इति ॥ ननु विद्याप्रकरणे अध्ययनाङ्गोपनयनपरामर्शस्तद्वतामेव विद्याधिकार इत्यत्र लिङ्गमिति यदुक्तं तत्रेदं विचारणीयम् । अध्ययनाङ्गमुपनयनमध्ययन इव विद्यायां नोपनेयासत्तिद्वारोपयुज्यते । तदर्थस्य विद्योपदेशकाले कर्तव्यस्य विद्याङ्गोपनयनस्य सत्त्वात् । नाप्यध्ययनेन विद्योपयुक्तसकलवेदवाक्यावाप्तिद्वारा । स्वस्वशाखामात्रविषयविधिविहितेनाध्ययनेन शाखान्तरगततदुपयुक्तवाक्यानामवाप्त्यसम्भवात् । किं तु 'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्' 'नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृत' इत्यनुपनीतस्य वेदवाक्यग्रहणं निषिद्धमिति विद्योपयुक्तस्वपरशाखागतसकलवाक्यग्रहणार्थं तन्निषेधं तन्निषेधाविषयत्वसम्पादनद्वारेत्युपपादनीयम् । ततश्च शूद्रस्यानुपनीतस्य वेदवाक्योच्चारणनिषेधादेव प्रणवादिमन्त्रवतीषु वेदान्तवाक्यश्रवणमननपूर्विकासु च दहरपाशुपतादिविद्यासु नाधिकारः । विद्याप्रकरणे अध्ययनाङ्गोपनयनपरामर्शस्यात्रान्यार्थदर्शनं लिङ्गमित्येव पर्यवस्यति । न त्वेतद्युक्तम् । अनुपनीतानां वेदवाक्यग्रहणनिषेधो हि न सर्ववेदवाक्यविषयः । त्रैवर्णिकानां मातापित्रोः पैतृमेधिके कर्मणि तदुपयुक्तवेदवाक्योच्चारणस्योपनयनाभावेऽपि स्मृत्यनुमतत्वात् । किं तु तदतिरिक्तवेदवाक्यविषय इति वक्तव्यम् । एवं शूद्रस्याप्यनुपनीतस्य वेदवाक्योच्चारणनिषेधः सर्वविषयो माभूत् । विद्यानुपयोगिपाकयज्ञाद्यपेक्षितमन्त्रादिविषयोऽस्तु । अस्ति हि शूद्रस्यापि पाकयज्ञाधिकारः । 'दानं च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजेत चे'ति स्मरणात् । तदङ्गमन्त्रोच्चारणविषयः शूद्रस्य वेदवाक्योच्चारणनिषेधः । अत एव गौतमस्मृतौ शूद्रधर्मप्रकरणे 'पाकयज्ञैः स्वयं यजेते'ति श्लोके अनुज्ञातोऽस्य नमस्कारो मन्त्र इति तेषां लौकिको नमोऽन्तमन्त्र एवोक्तः । तस्मादुपनयनाभावेऽपि शूद्रस्य वि धिकारस्सङ्गच्छते । विद्याप्रकरणे दृष्टस्यापि शूद्रस्यापि शूद्रत्वाभावनिर्धारणस्य उपनयनार्थत्वादुपनयनस्य चाध्ययनार्थत्वात् अन्यार्थप्रवृत्तं तल्लिङ्गद्वयं मुक्त्यर्थित्वेन सामान्यतः प्राप्तस्य शूद्राणां विद्याधिकारस्य न व्यावर्तकमिति शङ्कोत्तरत्वेनोत्तरसूत्रमवतारयति नन्विति । यद्यपि त्रैवर्णिकानामुपनयनाभावेऽपि क्वचिद्वेदवाक्योच्चारणं दृष्टमित्येतदवलम्ब्य तद्वदेव शूद्राणामपि क्वचिद्वेदवाक्योच्चारणमस्त्विति शङ्का मन्दा । तथापि संवर्गविद्यायां क्वचिदुपाख्याने ब्राह्मणस्य द्वितीयः क्षत्रियो दृष्ट इत्येतदवलम्ब्य उपाख्यानान्तरे-

## ॥ सू० ॥ श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥

शूद्रस्य वेदवाक्यश्रवणादि निषिध्यते 'तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति। अनुपशृण्वतः कुतोऽध्ययनादिप्रसक्तिः॥

## ॥ सू० ॥ स्मृतेश्च ॥ ३९ ॥

स्मर्यते च शूद्रस्य वेदश्रवणादौ दण्डः 'अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् उदाहरणे जिह्वाच्छेदः धारणे शरीरभेदः' इति। एवं श्रुतिस्मृतिभ्यां शूद्रसमीपेऽध्ययनादिनिषेधात् कुतस्तेषां वेदार्थविचारादिकम्। अतः स-

---

ऽपि तथेति निर्णीतवन्तं सिद्धान्तिनं प्रत्येव शङ्का युक्तेति भावः ॥ सू० ॥ श्रवणाध्ययनार्थप्रतिषेधात् ॥३८॥ शूद्रस्य वेदवाक्यश्रवणतदध्ययनतदर्थविचारज्ञानानुष्ठानानि शूद्रसमीपेऽध्ययननिषेधेनार्थात् प्रतिषिध्यन्ते। यस्य हि समीपेऽपि नाध्येतव्यं वेदवाक्यं स तत्कथं शृणुयात् अशृण्वतः कुतोऽध्ययनं तदभावे कुतोऽर्थज्ञानमनुष्ठानं वेति सूत्रार्थमभिप्रेत्य व्याचष्टे—शूद्रस्येति। न केवलं शूद्रसमीपे वेदोच्चारणनिषेधसामर्थ्यात् शूद्रस्य श्रवणादिप्रतिषेधसिद्धिः। अपि तु श्रवणादौ दण्डस्मरणाच्चेत्येतदर्थं सूत्रम् ॥स्मृतेश्च॥३९॥ कुतस्तेषां वेदार्थविचारादिकमित्येतत्सिंहावलोकनन्यायेन पूर्वसूत्रस्थार्थपदविवरणं सूत्रद्वयस्याप्येकप्रयोजनत्वादिहेतुकम्। एवं च शूद्रविषय एव साक्षाद्वेदवाक्योच्चारणादिप्रतिषेधस्य सत्त्वादनुपनीतानां वेदवाक्योच्चारणनिषेधस्य शूद्रविषये पाकयज्ञाद्यर्थमन्त्रविषयत्वेनासङ्कोचनीयतया उपनयनराहित्येनापि हेतुना शूद्राणां वेदवाक्योच्चारणासम्भवान्न विद्याधिकार इत्युपसंहरति—अत इति। स्यादेतत्। शूद्रस्यानुपनीतत्वेन शूद्रत्वेन च हेतुना शूद्राणां वेदवाक्योच्चारणादिनिषेधात् न तदपेक्षासु विद्यासु अधिकार इत्यधिकरणस्य निष्कृष्टोऽर्थः। नायमुपपद्यते। निषादस्येव शूद्रस्य वेदोच्चारणे विध्याक्षिप्ते पुरुषार्थनिषेधाप्रवृत्तेः। न च वाच्यं विशिष्य निषादं प्रति इष्टिविधिना तस्य तदुपयोगिमन्त्रोच्चारणाक्षेपो युक्तः। न तथा शूद्राणां विशिष्य विद्याविधानमस्ति। सामान्यविधयस्त्वध्ययनलब्धमहावाक्यादिग्रहणेषु त्रैवर्णिकेषु चरितार्था इति। त्रैवर्णिकानामपि 'स्वाध्यायोऽध्येतव्य' इति पितृपितामहादिपरम्परागतस्वशाखामात्र एवाध्ययनस्य विहितत्वेन शाखान्तरगतगुणमन्त्रोपसंहारेण विद्यानुष्ठानार्थं शाखान्तरगततत्तद्वाक्यार्थग्रहणावश्यम्भावेन तथैव शूद्रस्यापि विद्यातदङ्गविषयवेदवाक्यग्रहणाक्षेपोपपत्तेः। न च वाच्यं शूद्रस्य विद्यानुष्ठानापेक्षितं कार्त्स्न्येन तदर्थतयाक्षेपणीयम्। त्रैवर्णिकानां तु शाखान्तराम्नातगोचरमात्रमित्याक्षेपलाघवाद्विद्याविधयस्त्रैवर्णिकानेवाधिकुर्युः न शूद्रमिति। एवं तर्हि यस्य कर्मणः उपासनस्य वा यस्यां शाखायां भूयसामङ्गानां विद्यानां भूयस्त्वेनोभयश्रुतिन्यायेन प्रधानस्यापि तत्र विधानं शाखान्तरे किञ्चिदङ्गमन्त्रविधानं तत्र कर्मण्युपासने वा तच्छाखाध्यायिनामेवाधिकारस्स्यात्। यस्य क्षुद्रस्य कर्मणः साङ्गस्य कस्याञ्चिदेव शाखायां विधानं तत्रापि तच्छाखाध्यायिनामेवाधिकारः स्यात्। तस्मात्त्रैवर्णिकानामप्यनुष्ठानोपयोगिज्ञानाक्षेपस्य सम्प्रतिपन्नत्वात् तद्वच्छूद्रस्यापि विद्यानुष्ठानोपयोगिज्ञानाक्षेपस्सम्भवति। न हि वृत्त्यर्थं याजने प्राप्ते

ब्राह्मणैरेवार्त्विज्यमिव स्वस्वशाखामात्रविषयाध्ययनजन्यज्ञानेनैव त्रैवर्णिकानां विद्यानुष्ठानं निर्वर्तते । येनार्त्विज्यार्थं क्षत्रियवैश्ययोरिव तेषां विद्यानुष्ठानार्थमनधीतशाखान्तरजन्यज्ञानस्यानाक्षेप्यत्वात् तद्दृष्टान्तेन शूद्राणामपि तदुपयुक्तवेदार्थज्ञानं नाक्षिप्येत। अवश्यं च स्त्रीणां विद्यानुष्ठानमेवमेवोपपादनीयम् । अन्यथाध्ययनाभावेन शूद्रस्य विद्याप्रत्याख्याने मैत्रेयीवाचक्नवीप्रभृतीनां ब्रह्मविद्यावाप्तौ का गतिः । अत्रत्यस्य शूद्रशब्दस्य क्षत्रिय इव 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी चे' त्यादिषु विद्याङ्गोपाख्यानेषु श्रुतानां मैत्रेय्यादिशब्दानां पुरुषेषु वृत्तिस्सिद्धान्तिनापि कल्पयितुं न शक्यते । तस्माद्यथा 'स क्रतुं कुर्वीते' त्यादिविद्याविधिषु अधिकारिणि श्रुतस्यापि पुंस्त्वस्य उद्देश्यविशेषणत्वेनाविवक्षितत्वात् स्त्रीणां विद्यास्वधिकारः । अत एव पूर्वतन्त्रे 'स्वर्गकामो यजेते' त्यादिविधिवाक्येषु अधिकारिणि पुल्लिङ्गनिर्देशात् पुमधिकारिकमेव यागादिकं कर्मेति 'लिङ्गविशेषनिर्देशात् 'पुंयुक्तमैतिशायन' इति सूत्रे पूर्वपक्षं कृत्वा 'जातिं तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वा' दिति सूत्रेण स्वर्गकामधर्मस्य स्वर्गकामपदप्रवृत्तिनिमित्तस्य स्त्रियामप्यविशिष्टत्वात् सापि कर्मण्यधिकारिणीति सिद्धान्तितम्। तथा शूद्रस्यापि विद्याविधिश्रुतफलार्थित्वाविशेषात् अस्ति विद्याधिकार इत्येव युक्तम् । इयांस्तु विशेषः। फलार्थित्वाविशेषेऽपि 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्त' इति निषेधान्नास्ति शूद्रस्य क्रत्वधिकार इति । तस्मान्निषादं प्रति विशिष्येष्टिविधेर्मुक्त्यर्थिनं प्रति सामान्येन विधानं च नास्ति तत्तदनुष्ठानोपयोगिवेदवाक्यग्रहणतदर्थग्रहणाक्षेपकत्वे विशेषः । किं च माभूच्छूद्राणां विध्याक्षेपेण विद्योपयुक्तवेदवाक्यतदर्थग्रहणलाभः । मुक्त्यर्थिनां तेषां विद्यानुष्ठानसम्पत्तये शूद्रत्वानुपनीतत्वप्रयुक्तं प्रतिषेधमुल्लङ्घ्याध्ययनं लिखितपाठादिना भविष्यति । प्रतिषिद्धानुष्ठानेन दुरितं भवेदिति निश्चयवतामपि कूपखानकन्यायेन प्रवृत्तिरुपपद्यते । यथा खलु सलिललाभार्थेन कूपखननेन देहस्य धूसरत्वं भवेदिति निश्चयवतामपि खननोद्गतेन सलिलेन तस्य क्षालनं भविष्यतीत्यभिसन्धिना कूपखनने प्रवृत्तिः तथा विद्यालाभार्थेन वेदवाक्यतदर्थग्रहणेन दुरितं भवेदिति निश्चयवतामपि शूद्राणां तथैव विद्यया प्रारब्धेतरसकलदुरितध्वंसकारिण्या तस्यापि दुरितस्य निवृत्तिर्भवेदित्यभिसन्धिना प्रतिषेधमुल्लङ्घ्य वेदवाक्यतदर्थग्रहणे प्रवृत्तिरुपपद्यत एव । अपि च माभूच्छूद्राणां प्रतिषिद्धश्रवणादिकेन वेदेन विद्योपयुक्तवेदार्थग्रहणम् । न ह्याहवनीयादिषु आधानमिव वेदार्थग्रहणे वेद एवोपायः।पुराणादीनामपि सत्त्वात् वेदाध्ययनाधीनमेव वेदार्थग्रहणमनुष्ठानाङ्गमिति नियमस्याहतत्वात् । ननु, यद्यप्युक्तरीत्याध्ययनाङ्गोपनयनरहितत्वेऽपि विद्याधिकारः शूद्राणां सम्भावयितुं शक्यते, तथापि नासौ युज्यते। तेषां विद्याङ्गोपनयनासम्भवात्। अस्ति खल्वध्ययनाङ्गोपनयनादन्यद्विद्याङ्गमुपनयनं 'तद्विज्ञानार्थं सगुरुमेवाभिगच्छे' दिति विहिते गुरूपसदने 'अधीहि भगव' इति मन्त्रपूर्वकं 'शिष्यस्तेऽहं शाधि मा' मिति प्रार्थयमानेन क्रियमाणे तस्य शिष्यत्वमङ्गीकृत्य गुरुणा क्रियमाणमनुज्ञादानादिना स्वसमीपप्रापणरूपम्। तदेतत् 'भृगुर्वै वारुणिर्वरुणं पितरमुपससाराधीहि भगवो ब्रह्मेति' 'अधीहि भगवो ब्रह्मेत्युपससार सनत्कुमारं नारद' इत्यादिश्रुतिषूपसन्नेभ्यो विद्योपदेशेनार्थात्सिद्धं प्रजापतिविद्यायां 'वसा-

पराणि द्वात्रिंशद्वर्षाणी' त्यग्रेतनवचनैरपि स्फुटीकृतम् । वैश्वानरविद्यायां 'ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैतदुवाचे' ति वाक्येन बालाक्यजातशत्रुसंवादे विधिवदुपसदनोद्युक्तं बालाकिं प्रति 'प्रतिलोमरूपमेव स्यात् यत् क्षत्रियो ब्राह्मणमुपनये' दित्यजातशत्रुवाक्येन चाचार्यस्यावरणवर्णनया उपनेतृसद्भावं प्रतिपादयता ह्यत्र विद्याङ्गोपनयनसत्त्वं व्यञ्जितम् । 'तं होपनिन्य' इत्यादौ कण्ठतश्चोक्तम् । तदेतद्विद्याङ्गमुपनयनं शूद्राणां न सम्भवति । 'न च संस्कारमर्हती' ति प्रतिषेधात् तदसम्भवे चाङ्गवैकल्येनानुष्ठितापि विद्या फलाय नालमिति कूपखननन्यायेनापि तत्र प्रवृत्तिर्नोपपद्यत इति चेन्मैवम् । शूद्राणाममन्त्रसंस्काराभ्यनुज्ञानेन स्त्रीणामिवामन्त्रकविद्याङ्गोपनयनसम्भवात् । अत एव मैत्रेयीब्राह्मणे 'यदेव भगवान्वेद तदेव मे ब्रूही'त्यमन्त्रकं विद्योपदेशं प्रार्थयमानां मैत्रेयीं प्रति 'एह्यास्व व्याख्यास्यामि व्याचक्षाणस्य तु मे निदध्यासस्वेति' विद्यार्थं समीपस्थित्यभ्यनुज्ञानं कृतमिति श्रूयते । 'शूद्रश्चतुर्थो वर्णः एकजाति' रित्यनेन तु शूद्रस्य द्वितीयजन्मरूपमध्ययनाङ्गोपनयनमेव निषिध्यते न तु विद्याङ्गोपनयनम् । ननु तथापि विद्याप्रकरणे शूद्रत्वाभावनिर्धारणाल्लिङ्गात् शूद्रस्य विद्यानधिकारस्सिद्ध्यति । न च तत्समनन्तरप्रतिपाद्ये अध्ययनाङ्गोपनयने प्रवृत्त्यर्थम् । सत्यपि शूद्रत्वाभावनिर्धारणे ब्राह्मणादिजातिभेदेन प्रकारभेदवत्युपदेश्यगायत्रीभेदवति च उपनयने प्रवृत्त्यर्थं वर्णत्रयमध्येऽपि जातिभेदनिर्धारणस्यावश्योपपादनीयतया तत एवोपनयननिर्वाहेण तत्र शूद्रत्वाभावनिर्धारणस्याकिञ्चित्करत्वात् । मातरं प्रति गोत्रप्रश्नेन ब्राह्मण्यनिर्धारणस्योपपत्तेश्च । शूद्रत्वाभावनिर्धारणानन्तरमध्ययनाङ्गोपनयने वर्ण्यमाने कथं तच्छूद्रस्य विद्यानधिकारे लिङ्गं स्यात् । इत्थं सत्यकामेन 'ब्रह्मचर्यं भगवति वत्स्यामि उपेयां भगवन्त' मित्यध्ययनार्थविद्यार्थोपनयनद्वयसाधारणरूपमुपगमनं कृतम् । तत्र यदि शूद्रस्य विद्याधिकारःस्यात् तदा सत्यकामश्शूद्रस्सन्नध्ययनाङ्गोपनयनानर्होऽपि विद्यार्थमुपगत इति विद्याङ्गोपनयनेन संस्कृत्य विद्यां ग्राहयितुं योग्यो भवेत् । तथा सति शूद्रत्वाभावनिर्धारणमपेक्ष्य समिदाहरणार्थं न नियुज्येत । तस्य तदनधिकारे तु अस्य शूद्रत्वाभावे निश्चिते सत्युपनीतचिह्नरहितत्वादकृताध्ययनाङ्गोपनयनोऽयं प्रथमं तेन संस्कृत्याध्यापनीयः ततो विद्याकामश्चेत् क्रमेण तामपि ग्राहयितव्य इत्यालोच्य गौतमेन शूद्रत्वाभावनिश्चयानन्तरमुपनिनीषुणा समिदाहरणार्थं तस्य नियोगः कृत इति सङ्गच्छते इति ततस्सत्यवचनेन शूद्रत्वाभावनिर्धारणलिङ्गाद्विद्यायां शूद्रो नाधिकारीति चेत् । अस्मादेव लिङ्गाद्विद्यायां शूद्रोऽधिकारीति ब्रूमः । यदि हि शूद्रोऽध्ययन इव विद्यायामप्यनधिकारी भवेत्तदा यदीदमस्योपगमनमध्ययनार्थं यदि वा विद्यार्थम् । उभयथापि तत एव नायं शूद्र इति निर्णयसम्भवात् तदनन्तरं तन्निर्णयार्थं सत्यवचनं नापेक्ष्येत । तस्य तदधिकारसद्भावे तु विद्यार्थोपगमनस्य शूद्रेऽपि सम्भवात् अग्रे सत्यवचनेनैव तन्निणय इति युज्यते । शूद्रस्य विद्याधिकारसत्त्वे शूद्रत्वाभावनिर्धारणं क्वोपयुज्यत इति चेत् । अध्ययनाङ्गोपनयन एवोपयुज्यते । तथा हि—उपगमनं कुर्वन्नुपनीतचिह्नरहितोऽयं किमध्ययनार्थी त्रैवर्णिकः किं वा विद्यार्थी शूद्र इति सन्दिग्धोऽभूत् । तस्य गोत्रप्रश्नो न तद्गोत्रविशेषनिर्दिधारयिषया । शूद्रत्वपर्यन्तसन्देहानुदयात् 'नैतदब्राह्मणो विवक्तुमर्हती' ति तन्निर्णयात्प्राक् ब्राह्म-

ण्यनिर्धारणाधीनस्य गोत्रविशेषप्रश्नस्यानवसरदुःस्थत्वात् । किं तु गोत्रप्रश्ने किमयं वक्ष्यतीति तज्जातिपरीचिक्षिषया । सत्यशूद्रश्चेदनुपनीतोऽयमिदानीमध्ययनाङ्गोपनयनेन संस्कार्यः शूद्रश्चेदिदानीमेव विद्याङ्गोपनयनेन संस्कार्य इति कर्तव्योपनयनविशेषनिर्णयार्थः । ततश्च शूद्रत्वाभावनिर्धारणमध्ययनाङ्गोपनयनकर्तव्यतानिर्णय उपयुज्यत इति व्यक्तमेव । अस्तु वा तस्य विद्योपदेशार्थता । तथापि न शूद्रस्य विद्यानधिकारसिद्धिः । तस्य सत्यपि विद्याधिकारे 'न शूद्राय मतिं दद्यादि'ति प्रतिषेधमालोच्य शूद्रत्वाभावनिर्धारणपूर्वकमाचार्यो विद्यामुपदेष्टुं प्रववृत इत्युपपत्तेः । न हि ज्योतिष्टोमादिष्वहीनत्वाभावमालोच्य आर्त्विज्ये याजकाः प्रवर्तन्त इत्येतावता प्रजाकामादीनां द्वादशाहादिष्वनधिकारः । तस्माच्छूद्रस्य विद्यानधिकारसिद्ध्युपसंहारोऽयमयुक्त इति चेत् । उच्यते । युक्त एवायमुपसंहारः । शूद्रस्याष्टवर्षत्वादियुक्तब्राह्मणादिसंस्काररूपोपनयनाभावेन विद्याधिगमोपयुक्तानां 'गुरुरनुगन्तव्योऽभिवादयितव्य' इत्यादिस्मृतिविहितानां प्रत्युपस्थितनियमाचाराणां सन्ध्यावन्दनादीनां च विद्यापेक्षितानां विद्यायाश्चानुष्ठानासम्भवात् । पूर्वतन्त्रे हि गुर्वनुगमनादयः किमनुपनीतेनापि शक्तेन पुरुषेण कर्तव्याः उत उपनीतेनैव कर्तव्या इति संशये गुर्वादिप्रीतिरूपदृष्टफलकत्वात्तदर्थिनानुपनीतेनापि कर्तव्या इति 'तस्मिंस्तु शिष्यमाणानि जनने न प्रवर्तेर'न्निति (जै०) सूत्रेण पूर्वपक्षं कृत्वा जातकर्माद्युपनयनान्तकर्मसु पुत्रगामिफलार्थेष्वपि बालादन्यस्य पित्रादेरधिकारश्रवणात् उपनयनादूर्ध्वमध्ययनादिषु सर्वेष्वपि तद्गामिफलकेषु कर्मसु तस्यानधिकारश्रवणादुपनयनसंस्कारेण वेदाध्ययनयोग्यतेव सकलवैदिककर्मयोग्यतापि क्रियत इत्यवगमात् स्मार्ताचाराणामप्यनुमितवेदमूलकत्वेन वैदिकत्वाविशेषादुपनीतेनैव कर्तव्या इति'अपि वा वेदमूलत्वादुपाये न प्रवर्तेर'न्निति (जै०) सूत्रेण सिद्धान्तितम् । स्मरन्तिच 'उपनयनादिर्नियम' इत्यादि । तस्मादनुपनीतस्य नास्ति सन्ध्योपासनादिकम् । तच्च वैदिककर्मानुष्ठानयोग्यतापादकमिति'आनर्थक्यमिति चेन्न तदपेक्षत्वादि'ति (ब्र०३-१-१० सूत्रेण सूत्रकारो वक्ष्यति । स्मरन्ति च 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवे'दित्यादि । एवं च शूद्रस्योपनयनाभावेऽपि तदुद्देशेन विशिष्य विहितानां कर्मणां तदङ्गनियमानां चानुष्ठानसम्भवेऽप्यन्येषां वैदिककर्मणां तदपेक्षितानां प्रत्युपस्थितनियमाचाराणां च सन्ध्योपासनादीनां चानुष्ठानं न सम्भवति । अतो युक्तो वैदिकीषु विद्यासु शूद्रस्यानधिकार इत्युपसंहारः । अत्रोपसंहारभाष्ये 'वेदाध्ययनादिप्राप्ति'रित्यत्र वेदाध्ययनग्रहणमनुपनीतस्य वेदाध्ययनाभावान्न शूद्रस्य ब्रह्मविद्यायामधिकार इत्येतदर्थं न भवति । उपनयनस्य सकलवैदिककर्मयोग्यतापादकत्वस्योपपादिततया तदभावे साक्षादेव तदनधिकारोपपादनसम्भवात् । किं तु दृष्टान्तार्थम् । तच्चोदाहृतपूर्वमीमांसाधिकरणसिद्धान्तसूत्रे 'वेदतुल्यत्वा'दित्यनेन विवक्षितम् । यथा वेदाध्ययनस्य उपनयनात्पूर्वमप्राप्तिः एवं स्मार्तनियमानामपि । वैदिकत्वाविशेषादित्येतद्वेदाध्ययनदृष्टान्तीकरणमनुकुर्वदिह तदधिकरणन्यायसञ्चारस्य विवक्षितत्वं सूचयति । यद्यपि 'वेदतुल्यत्वा'दित्येतत् स्मृतीनामनुमेयवेदसिद्धार्थविषयतया वैदिकार्थनिबद्धत्वेन वेदतुल्यत्वादिति तत्सूत्रभाष्ये शबरस्वामिना व्याख्यातम् । तथापि तस्य स्मार्ताचाराणामनुमेयवेद-

मूलतया वैदिकत्वेन वेदाध्ययनतुल्यत्वादित्यपि व्याख्यानमुपपद्यत इति भाष्यकाराभिप्रायः। एवं च यद्यपि स्त्रीणामुपनयनसन्ध्यावन्दनाद्यभावात् पत्न्यधिकरणसिद्धः क्रतुष्वधिकारो न प्राप्नोति। तासां विवाहसंस्कारस्योपनयनस्थानीयत्वस्मरणात् क्रतुष्वधिकारसमर्थने सन्ध्यावन्दनादिष्वधिकारः प्राप्नोति। तथापि तासां यत्राधिकारे लिङ्गमस्ति तन्मात्रेऽधिकारस्तद्बलादाश्रीयते। तदर्थमेव 'विवाह एव तु स्त्रीणामौपनायनिको विधि' रिति स्मरणम्। अस्ति च क्रतुषु पत्न्याः सहाधिकारे 'मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय संपत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूतां संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेता'मित्यादिविध्यर्थवादमन्त्रगतं लिङ्गम्। न तथा सन्ध्यावन्दनादिष्वधिकारे लिङ्गमस्ति। एवं विद्यास्वपि मैत्रेयीगार्गीसुलभाद्युपाख्यानगतलिङ्गवशात्तासामधिकारः। अत एव फलार्थित्वाविशेषाच्छूद्राणां पत्न्यधिकरणन्यायेन प्रसक्तस्य विद्याधिकारस्योपनयनसन्ध्यावन्दनाद्यभावेन प्राप्तोऽपवादः स्त्रीणामिव वैदिकलिङ्गबलादपोद्येतेति तत्परिहाराय प्रथममस्मिन्नधिकरणे लिङ्गान्यथाकरण एव प्रववृते सूत्रकारः। अन्यथा सिद्धान्तहेतूक्त्यनन्तरं पूर्वपक्षहेतुनिराकरणं कार्यमिति 'संस्कारपरामर्शा' दित्यादिसूत्राण्येव प्रथमं क्रियेरन्। अत्रोपसंहारभाष्ये सर्वथेत्यस्यायमर्थः। यद्यत्र शूद्रस्य विद्यानधिकारे दर्शितानि न्यायान्तराण्युपपद्येरन् यदि वा नोपपद्येरन् सर्वथाप्यध्ययनाङ्गोपनयनराहित्येन तत्सिद्धिस्तावदप्रतिहता। वस्तुतस्तु तान्यप्युपपद्यन्त एवेति। तत्रायमाशयः। विद्याङ्गोपनयनसंस्कारासम्भवेन तावदधिकारस्सिद्ध्यति। शूद्राणाममन्त्रकसंस्काराभ्युपगमेऽपि 'शूद्रश्चतुर्थो वर्ण एकजाति'रिति तेषां जन्मरूपसंस्कारनिषेधात् 'तत्र यत् ब्रह्मजन्माख्यं मौञ्जीबन्धनचिह्नितम्। तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते।' इति स्मरणादध्ययनाङ्गोपनयनस्यैव 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसी' ति वैदिकलिङ्गात्तस्यापि जन्मरूपत्वावगमात्। न च द्विजातीनां जन्मद्वयमेवेति नियमः। 'मातर्यग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनम्। तृतीयं यज्ञदीक्षायां द्विजस्य विधिचोदित'मिति मनुना यज्ञदीक्षाया अपि जन्मरूपत्वस्योक्तत्वात् 'अनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि' 'दक्षिणं पूर्वमाङ्क्ते सव्यं हि पूर्वं मनुष्या आञ्जत' इत्यादिमन्त्रार्थवादलिङ्गैरन्वाधानपूर्विकाया यज्ञदीक्षाया मनुष्यतोत्तीर्णदेवजन्मत्वसूचनाच्च। अयमपि न्याय'स्संस्कारपरामर्शा' दिति ( ब्र० १-३-३७) सूत्रेणैव सङ्गृहीतः। अत एव भाष्ये विद्याप्रकरणे क्वचि'दुप त्वा नेष्ये' इत्यध्ययनाङ्गोपनयनपरामर्शवदन्यत्र 'तं होपनिन्य' इति विद्याङ्गोपनयनपरामर्शोऽप्युदाहृतः। यद्यप्यध्ययनाङ्गोपनयनस्य विद्याप्रकरणे परामर्शस्यानुदाहरणेऽपि गुर्वनुगमनादिनियमेष्विव विद्यास्वप्यनुपनीतानामनधिकारः पूर्वतन्त्राधिकरणन्यायेनैव सिद्ध्यति। तथापि विशिष्य विद्याप्रकरणे अध्ययनाङ्गोपनयनपरामर्शरूपमन्यदप्युपष्टम्भकमत्रास्तीति दर्शयितुं तदुदाहरणं चेत् तत्परामर्शस्याध्ययनार्थत्वेनान्यथासिद्धिः। विद्याप्रकरणगतस्य तस्य साक्षाद्विद्याविध्यपेक्षितार्थसमर्पकत्वे सम्भवति तदन्यत्रोपक्षयकल्पनाया अयुक्तत्वात्। न चाध्ययनमत्रोपात्तं येनायमुपनयनपरामर्शस्तदर्थस्स्यात्। न चोपनीयेत्यत्रैवान्तर्भूतमध्ययनं फलपर्यन्तत्वात्संस्कारस्येति वाच्यम्। उपनयनसंस्कारस्य सर्वकर्मार्थतायाः उपपादितत्वेनाध्य-

यनमात्रे विश्रान्त्यभावात् उपनयनसाध्यसर्वकर्मानन्तर्यस्य गोसंरक्षणनियोगादिष्विवासम्भवात् । तथाप्युपनयनान्तरं तत्राध्ययनमस्तीति चेत् को नेत्याह । मध्ये सदपि तदनुपन्यस्य उपनयनोपन्यासानन्तरं विद्योपदेशस्यैवोपन्यासेनाध्ययनादिसर्वकर्मार्थस्याप्युपनयनस्यात्र विद्यार्थत्वमात्रमावेदितमुपनयनरहितशूद्राधिकारशङ्कानिरासायेति ब्रूमः। एतेन शूद्रत्वाभावनिर्धारणमपि विद्यार्थमिति व्याख्यातम् । ननु, शूद्रस्याध्ययन इव विद्यायामप्यनधिकारे तदुभयान्यतरार्थेनोपसदनेनैव शूद्रत्वसन्देहनिराससिद्धेस्तन्निरासार्थं सत्यवचनं नापेक्ष्येतेति चेदुच्यते । सत्यमुपसदनेनैव शूद्रत्वसन्देहनिरासस्सिद्धः । आकृतिविशेषानुमितेन ब्राह्मणजात्युपनयनोचितवयोविशेषेण ब्राह्मण्यनिर्णयोऽपि सिद्धः । अत एव गोत्रप्रश्नः । न चायं गोत्रप्रश्नः श्रुताद्गोत्रविषयात्प्रच्याव्याश्रुतं जातिविषयं नेतुं युक्तः । न चाग्रेतनसत्यवचनकृतशूद्रत्वाभावनिर्धारणानुसारेण तथानयनम् । उपसंहारस्वारस्यानुसारेणोपक्रमस्वारस्यभङ्गायोगात् । तस्माद्गोत्रप्रश्ने गोत्रापरिज्ञानोक्तिमात्रेण यथाकथञ्चिदब्राह्मण्यसन्देहमापाद्य सत्यवचनेन तदभावनिर्धारणं प्रतिपादयति श्रुतिरित्युपसंहारनयनं युक्तम् । आपाद्यप्रतिपादनस्य चेदं प्रयोजनं यद्विद्यायां शूद्रानधिकारज्ञापनम् । न चोपनयने तदनधिकारज्ञापनं प्रयोजनमस्त्विति वाच्यम् । प्राकरणिकार्थोपयोगे सम्भवत्यन्यत्रोपयोगकल्पनस्यायुक्तत्वात् । 'प्रकरणे सम्भवन्नपरीषो न कल्प्येते'ति न्यायात् । केचित्तु गोत्रप्रश्नदशायामसन्तमप्यब्राह्मण्यसन्देहं 'बह्वहं चरन्ती'त्यादिजाबालोक्तिश्रवणेन सञ्जातं स्वारसिकमेवोपपाद्य सत्यवचनेन तन्निरासं वर्णयन्ति । भर्तृश्वशुरादिपरिचर्याव्यग्रतया प्राग्गोत्रविचारं नाकार्षम् । अत इदानीं गोत्रं न वेदेति न जाबालोक्तेरर्थः । परिचर्याया गोत्रज्ञानाविरोधित्वात् प्रत्युत तस्यां गोत्रसङ्कीर्तनयुक्तदैवपित्र्यकर्मानुष्ठातृभर्तृश्वशुरादिसन्निधिप्रयोजकत्वेन गोत्रज्ञानानुकूलत्वात् प्राग्गोत्रपरामर्शाभावेऽपि पुत्रप्रश्नकालेऽवश्यकर्तव्यतदुपनयननिर्वाहार्थं स्वबन्ध्वादिभ्योऽवगम्य पुत्राय गोत्रोपदेशसम्भवेन सर्वथा गोत्रापरिज्ञानेन वाक्यपरिसमाप्त्ययोगाच्च । अतः 'परिचारिणी'त्यनेन स्वभर्तारमतिक्रम्य परितश्चरणरूपं व्यभिचरणमुच्यते । 'बहु चरन्ती'त्यनेनातिक्रान्तमर्यादायाः बहुपुरुषसम्पर्क उच्यते । यौवनविशेषणेन तत्कारणं मदपारवश्यं सूच्यते । ततश्च बहुपुरुषसंपर्केण कृतो गर्भ इत्यननुसन्धानात्तव गोत्रं न वेद्मीति तदर्थः । एवं जाबलोक्तिश्रवणात् किमयं शूद्रगर्भसंभूत इति सन्देहे सति तस्य सत्यवचनेन निरास इति । अस्मिन्पक्षे 'नैतदब्राह्मण' इति वाक्यं शूद्रत्वाभावनिर्धारणपरं वर्णयत'स्तदभावनिर्धारणे चे'ति सूत्रस्य नाञ्जस्यम् । प्रतिलोमत्वाभावनिर्धारणपरं हि तदा तद्वाक्यं भवेत् । अतस्तत्पक्षाश्रयणे तद्वाक्यमित्थं व्याख्येयम् । सत्यवचनदर्शनात् शूद्रोऽपि तावन्न भवति । शूद्राद्ब्राह्मण्यामुत्पन्नश्चण्डालो न भवतीति किमु वक्तव्यमिति । न च शूद्रत्वाभावनिर्धारणं 'न शूद्राय मतिं दद्यादि'ति प्रतिषेधपरिहारार्थत्वेनान्यथासिद्धं न शूद्रस्य विद्यानधिकारगमकमिति वाच्यम् । शूद्रस्य विद्याधिकारसत्त्वे तस्मै विद्यादाने प्रतिषेधस्याप्रसक्तेः शूद्राय तदनुष्ठानानुपयुक्तज्ञानदानस्यैव प्रतिषेधविषयत्वात् अत एव 'न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् । न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशे'दिति श्लोकस्यानन्तरश्लोके 'यो ह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतम् । सोऽ-

वेथा अष्टवर्षब्राह्मणाद्युपयुक्तोपनयनसंस्कारमन्तरेण वेदाध्ययनप्राप्तिर्न कुत्रापि कस्यचिदिति सिद्धम् । ततः शूद्रा ब्रह्मविद्यायामनधिकारिण एव ॥

इत्यपशूद्राधिकरणम् ॥ ८ ॥

संवृतं नाम तमस्सह तेनैव गच्छती'ति तत्सम्प्रदानस्य शूद्रस्यापि प्रत्यवायः श्रूयते । न हि स्वानुष्ठेयधर्मग्रहणे प्रत्यवायोऽस्ति । एतेन शूद्राणां विद्योपयुक्तवेदार्थग्रहणं लिखितपाठादिगृहीतेन वेदेन भविष्यति । विध्याक्षिप्ते प्रतिषेधाप्रवृत्तेः । कूपखानकन्यायतः प्रतिषेधोल्लङ्घनेन वा भविष्यति पुराणादिना वेति निरस्तम् । तेषामनुष्ठानप्रसक्तौ हि तदपेक्षितवेदार्थग्रहणप्राप्तिः । सैव नास्तीत्युक्तम् 'उपनयनाभावा'दिति हेतुभिः । ननूपनयनाभावश्शूद्रस्य तन्निषेधादिति तदभावेऽपि तस्य विद्यानुष्ठानं स्यात् । यस्याधिकारिणो यस्मिन्कर्मणि यदङ्गं निषिद्धं तस्य तदतिरिक्ताङ्गमात्रसहितात्तस्मात्कर्मणः फलनिष्पत्तेरभ्युपगमात् । अभ्युपगम्यते हि राजन्यस्य सोमभक्षणं निषिद्धमिति तस्य भक्षणरूपप्रतिपत्तिरहितात्सोमयागात्फलनिष्पत्तिः । अनूचानस्य प्रथमयज्ञे प्रवर्ग्यो निषिद्ध इति तस्य तद्रहितात्ततः फलनिष्पत्तिः । किंच । एकफलकानेकप्रधानमध्ये यस्य यत्प्रधानं निषिद्धं यथा दर्शपूर्णमासयोरसोमयाजिनस्सान्नाय्ययागः अग्नीषोमीयपुरोडाशयागश्च निषिद्धः तस्य तदतिरिक्तप्रधानैरेव फलनिष्पत्तिरभ्युपगम्यते । निषेधात् किञ्चित्प्रधानाननुष्ठानेऽपि फलनिष्पत्तौ ततोऽङ्गाननुष्ठाने फलनिष्पत्तिरिति किमु वक्तव्यम् । येषामनिषिद्धमप्यङ्गं प्रधानं वोपसंहर्तुमशक्यं यथा ऋषीणामार्षेयवरणमत्र्यार्षेयाणां त्र्यार्षेयवरणमप्रतिसमाधेयाङ्गवैकल्यानामाज्यावोक्षणविष्णुक्रमणादिकं देवतादीनां देवतोद्देशादिकं चोपसंहर्तुमशक्यं तेषां तु तत्र तत्राधिकारः । ततश्च निषेधाच्छूद्राणामुपनयनाभावेऽपि विद्यानुष्ठानं स्यादिति चेत् उच्यते । सोमयागादिषु क्षत्रियादीनामधिकारमनुमत्यैव कस्यचिदङ्गस्य प्रधानस्य वा निषेध इति तत्र तथा भवतु नाम । इह तु संस्कारनिषेधः संस्कारापेक्षविधिप्रतिषेधानधिकारार्थ इति कथं तथा स्यात् । एवं हि मानवे धर्मशास्त्रे स्मर्यते--'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति । नास्याधिकारो धर्मेऽस्ति नाधर्मात्प्रतिषेधन'मिति । अत्र सामान्येन विधिप्रतिषेधमात्रानधिकारः शूद्रस्य नोच्यते । उपनयनादिसंस्कारनिरपेक्षेषु परोपकारादिधर्मेषु हिंसानृताद्यधर्मप्रतिषेधेषु च तस्याप्यधिकारसम्भवात् । 'किं तु संस्कारनिषेधसन्निधानात् संस्कारापेक्षेषु सन्ध्यावन्दनादिकर्मसु 'नादित्यमीक्षेत' 'नाग्निमपश्च युगपद्धारयेत्' 'नाञ्जलिना पिबे'दित्यादिनिषेधेषु वानधिकार उच्यते । 'न शूद्रे पातकं किञ्चिदि'ति च संस्कारापेक्षविधिप्रतिषेधोल्लङ्घने च दुरिताभाव उच्यते तदनधिकारद्रढिमसिद्धये । तस्माद्युक्तोऽयमुपनयनसंस्काराभावेन शूद्राणां ब्रह्मविद्यानधिकारोपसंहारः ॥ इत्यपशूद्राधिकरणम् ॥८॥

## नयमणिमालायां अथ अपशूद्राधिकरणम् ॥ ८ ॥

सू । शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३३ ॥ क्षत्रियत्वगतेश्च ॥ ३४ ॥ उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ श्रवणाध्ययनप्रतिषेधात् ॥ ३८ ॥ स्मृतेश्च ॥ ३९ ॥

तर्ह्यस्तु तासु शूद्रोऽप्यर्थित्वाद्ब्रह्मविद्यासु । इतिहासपुराणाभ्यामधिकृतस्याधिकारदृष्टेश्च ॥ ६४ ॥
वेदोपबृंहणतया विद्यार्थे ते न तु स्वतन्त्रतया । विदुरादेः स्वयमुद्गतविद्या जानश्रुतिस्तु नृपः ॥ ६५ ॥

इत्यपशूद्राधिकरणम् ॥ ८ ॥

## सूत्रार्थचन्द्रिकायाम् अथ अपशूद्राधिकरणम् ॥ ९ ॥

**सू ॥ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥**

**भगवत्पादमते,** पूर्वं 'तयो यो देवना'मिति देवशब्दश्रुत्या मनुष्याधिकारनियममपोह्य देवानामधिकारस्साधितः । तथेह शूद्रशब्दश्रुत्या द्विजात्यधिकारमपोह्य शूद्रस्याप्यधिकारोऽस्त्विति दृष्टान्तसंगत्येदमधिकरणमारभ्यते—**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥** अस्य छान्दोग्ये संवर्गविद्यायां श्रूयमाणं 'अहहारे त्वा शूद्र तवैव सह गोभिरस्तु' इति वाक्यं विषयः । तत्र श्रूयमाणस्य शूद्रस्य ब्रह्मविद्यायामधिकारोऽस्ति वा नास्ति वेति संशयः । शूद्रस्याप्यर्थित्वसामर्थ्ययोरसंभवात् 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्त' इति यज्ञाधिकारनिषेधवद्ब्रह्मविद्याधिकारनिषेधाश्रवणात् शूद्राणां विदुरप्रभृतीनां विशिष्टविज्ञानसंपत्तेः स्मरणाच्च अस्ति शूद्रस्याप्यधिकारो ब्रह्मविद्यास्विति पूर्वः पक्षः । सिद्धान्तस्तु, शूद्रस्य वेदाध्ययनाभावात् शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् अध्ययननिराकरणेन तस्य निराकृतत्वात् असति सामर्थ्येऽर्थित्वस्याधिकारकारणत्वासंभवात् हंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य उत्पन्नशुचः 'शुचमभिदुद्राव, शुचावाभिदुद्रुवे, शुचा वा रैक्वमभिदुद्रावेति शूद्रः' इति यौगिकार्थपरेण शूद्रशब्देन समामन्त्रणमित्यर्थवर्णनस्य संप्रतिपत्तेश्च न जातिशूद्रस्य ब्रह्मविद्यास्वधिकार इति । सूत्रार्थस्तु, **अस्य**=जानश्रुतेः क्षत्रियस्य । **तदनादरश्रवणात्**=तस्य हंसस्य 'कं वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' इत्यनादरद्योतकवाक्यस्य श्रवणात् । या **शुगुत्पन्ना** सा **तदाद्रवणात्**=तं रैक्वं प्रति जानश्रुतिर्निर्वाराहित्यजनितया शुचा दुद्रावेति श्रवणात् । **सूच्यते हि** । अतो जानश्रुतेर्जातिशूद्रत्वाभावात् न शूद्रस्य ब्रह्मविद्यास्वधिकार इति भावः ॥ इति ॥

ननु मुख्य एव शूद्रो जानश्रुतिरस्तु किं गौणेन योगेनेत्यत आह—**सू ॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥** जानश्रुतिर्न मुख्यशूद्रः । कुतः । **उत्तरत्र**=संवर्गविद्यावाक्यशेषे । **चैत्ररथेन** प्रसिद्धक्षत्रियेणाभिप्रतारिणा । **लिङ्गात्**=समभिव्याहाररूपलिङ्गात् । **क्षत्रिय वगतेः**=जानश्रुतेः क्षत्रियत्वस्यावगम्यमानत्वात् । समानजातीयानामेव हि प्रायेण सहचारो भवतीति भावः । अतो न जातिशूद्रस्य ब्रह्मविद्याधिकार इति सिद्धम् ॥

ननु, कस्मान्नाधिकार इत्यत आह—**सू ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥** 'तं होपनिन्ये' 'अधीहि भगव इति होपससाद' इत्यादिविद्याप्रदेशेषु उपनयनादिसंस्कारपरामर्शात् । **तदभावाभिलापाच्च**='न शूद्रे पातकं किंचिन्न च संस्कारमर्हति ।' इत्यादिना शूद्रस्योपनयनादिसंस्काराभावाभिधानाच्च इत्यर्थः ॥

किं च । **सू ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥** तस्य जाबालस्य सत्यवचनेन शूद्रत्वाभावनिर्धारणे सत्येव गौतमस्य विद्योपदेशे प्रवृत्तिदर्शनादित्यर्थः । अतो न शूद्रस्याधिकार इति भावः ॥

अपि च ॥ **सू ॥ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥ स्मृतेः**='अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' 'तस्माच्छूद्रसमीपे नाध्येतव्यम्' 'न शूद्राय मतिं दद्यात्' द्विजातीनामध्ययनमिज्या दानम्' इत्यादिस्मृतितः । **श्रवणाध्ययनार्थप्रतिषेधाच्च**=वेदश्रवणस्य तदध्ययनस्य तदर्थयोजनयोरर्थज्ञानानुष्ठानयोश्च प्रतिषेधाच्च इत्यर्थः । अतः 'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणाच्च प्रतिषेधाच्च शूद्राणां नास्ति वेदपूर्वको ब्रह्मविद्यायामधिकार इति सिद्धम् ॥

**श्रीकण्ठमते,** संदेहपूर्वपक्षसिद्धान्तादिकं सर्वं समानमेव । विषयवाक्ये तु प्रकरणभेदाभावेऽपि शूद्रशब्दघटितं वाक्यान्तरमुपादीयते इति विशेषः । भगवत्पादमते तु 'अहहारे त्वा शूद्र तवैव सह गोभिरस्तु' इति वाक्यं विषयतयोपात्तम् । 'आजहारेमाः शूद्रानेन मुखेनालापयिष्यथ' इति वाक्यं तु अत्र विषयतयोदाहृतम् । पूर्वस्मिन्मते सूत्रपञ्चकात्मकमिदमधिकरणं योगविभागेन सूत्रद्वयगतेन 'क्षत्रियत्वगतेश्च' 'स्मृतेश्च' इति पृथक्सूत्रतापादनरूपेणेह सूत्रसप्तकात्मतामुपनीतम् । क्वचित्क्वचित्सूत्रार्थोपपादनप्रकाराणां भिन्नत्वेऽपि पूर्वपक्षसिद्धान्तनिर्णयादिष्वैककण्ठ्यदर्शनाद्विरम्यते पृथक्प्रपञ्चनतः । इति ॥

**रामानुजमते,** सर्वं श्रीकण्ठीयमतसाधारणमेवेति विरम्यते ॥

**आनन्दतीर्थमते,** विषयवाक्यपूर्वपक्षादिकं सर्वं भगवत्पादीयमतवदेव । क्वचित्क्वचित्सूत्रार्थवर्णने परमस्ति कियानिव भेदः । स एव तत्तत्सूत्रार्थनिरूपणेन स्फुटीकरिष्यते । **'शुगस्ये'**ति सूत्रार्थोऽविशिष्टः ॥ **सू ॥ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३४ ॥** चः लिङ्गान्तरसमुच्चये । **उत्तरत्र**=अश्वतरीरथ इत्युत्तरवाक्ये । श्रुतेनेति शेषः । **चैत्ररथेन**=चित्रशब्दादश्वतरीयुक्तरथसंबन्धित्वरूपेण । **लिंगात्**=लिंगेन च ज्ञापकेन **क्षत्रियत्वावगतेश्च**=क्षत्रियत्वज्ञानात् न पौत्रायणः शूद्र इति भावः । इतराणि सूत्राण्यनतिविभिन्नार्थानीति न तानि प्रपञ्च्यन्ते ॥

**॥ इति सूत्रार्थचन्द्रिकायामपशूद्राधिकरणम् ॥ ९ ॥**

## अथ कम्पनाधिकरणम् ॥ ९ ॥

एवं प्रासङ्गिकमधिकारिनिरूपणं कृत्वा प्रकृतमनुसरति—

॥ सू ॥ कम्पनात् ॥ ४० ॥

अङ्गुष्ठप्रमितपुरुषप्रकरणे कठवल्लीषु श्रूयते—
'यदिदं किंच जगत् सर्वं प्राण एजति निस्सृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥' इति ॥ तत्र कम्पनहेतुः परमेश्वरोऽन्यो वेति संशयः। अत्र प्राणशब्दनिर्दिष्टजनितभयेन सकलजगत्कम्पनमुच्यते । परमेश्वरस्य सकलजगदभयप्रदानमधुरस्वभावस्य परमकारुणिकस्य जगत्कम्पनहेतुत्वमयु-

---

## ॥ अथ कम्पनाधिकरणम् ॥ ९ ॥

उत्तराधिकरणमवतारयति—प्रासङ्गिकमिति । मनुष्याधिकारोक्तिप्रसङ्गादागतम् । देवादयोऽप्युपासनाधिकारिणः । मनुष्येषु अपशूद्रास्त्रयो वर्णाः इत्यधिकारनिरूपणं कृत्वा । तेन तत्र मनुष्यग्रहणं न मनुष्याणामेवाधिकार इति मनुष्यव्यतिरिक्तसर्वव्यावर्तकं नापि सर्वेषां मनुष्याणामधिकार इति सर्वमनुष्यसङ्ग्राहकं किं तु तिर्यगादिव्यावर्तकम् । तथा चाधिकारिणां सर्वेषां स्वस्वाङ्गुष्ठपरिमितं हृदयमस्तीति अङ्गुष्ठमात्रत्वश्रवणस्य न काचिदनुपपत्तिरिति प्रदर्श्य प्रकृतमङ्गुष्ठवाक्यविचारमेवानुसृत्य तत्प्रकरणपठितवाक्यान्तरविचारं करोतीत्यर्थः । अनेन वक्ष्यमाणाधिकरणस्याङ्गुष्ठाधिकरणेन सङ्गत्या प्रवृत्तिः न तु प्रासङ्गिकेनाधिकारविचारेणेति दर्शितं भवति ॥ सू० ॥ कम्पनात् ॥ ४० ॥ अत्र प्रकरणेन प्राणवज्रश्रुतिभ्यां च संशयमभिप्रेत्य प्रकरणकीर्तनपुरस्सरं प्राणवज्रश्रुतियुक्तं विषयवाक्यमुदाहरति—अङ्गुष्ठेति । श्रुत्यपेक्षया प्रकरणस्य स्वतो दुर्बलत्वेऽपि श्रुतिद्वयमिह परस्परविरोधात् अन्तश्छिद्रापादितदौर्बल्यं न तथा प्रकरणमिति तथाभूतयोः श्रुतिप्रकरणयोर्बलाबलानवधारणात् संशयो युक्त इति भावः । अन्यो वेति । अशनिः प्राणवायुर्वेत्यर्थः । अशनिपूर्वपक्षं तावदुपपादयति—अत्रेति । अत्र हि मन्त्रे प्राणशब्दनिर्दिष्टनिमित्तकं कम्पनमुच्यते । तत्तु तज्जनितभयहेतुकमेव । उत्तरार्धे तस्यैव प्राणशब्दनिर्दिष्ट'स्यैत' दिति परामृष्टस्य महाभयहेतुत्वेन विशेषितत्वात् भयपदं 'बिभेत्यस्मादित्यपादानविषय एच्प्रत्ययान्तं भीतिहेतुपरम् । न तु भावप्रत्ययान्तं भीतिपरम् । वज्रपदसामानाधिकरण्यात्प्राणशब्दनिर्दिष्टधर्मपरामर्शकैतत्पदसामानाधिकरण्याच्चेति भावः । अस्त्वेवं ततः किमित्यत आह—परमेश्वरस्येति । ननु तथाभूतस्यापि परमेश्वरस्य शासकतया भयहेतुत्वं भूपालादेरिव युक्तम् । श्रूयते चानन्तरमन्त्र एव तस्य भयहेतुत्वं 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम'इति । न हि तस्यापि मन्त्रस्याशनिपरत्वं वक्तुं युक्तम्। अशनितो भयेनाग्न्यादीनां स्वस्वकार्येषु प्रवृत्तेरनुपपत्तेः । आनन्दमयप्रकरणे, 'भीषास्माद्वातः पवत' इति परमेश्वराद्भयेनैव देवानां स्वस्वकार्येषु प्रवृत्तेरुक्तत्वात् । किं च विषयवाक्योपात्तं सर्वजगद्भयहेतुत्वमसङ्कुचितसकलशासकस्य परमेश्वरस्यैव सम्भवति न त्वशनेः कतिपयक्षुद्रप्राणिभीतिहेतोः । अपि च प्रकरणमिदं परमेश्वरस्येति निर्विवादम् । तत्र का प्रसक्तिरश-

क्तम्। तस्माद्वज्रश्रुतेरशनिः कम्पनहेतुः। यद्वा–प्राणवायुः कम्पनहेतुः, प्राणश्रुतेः। प्राणवायोर्देहचलनहेतुत्वेन प्राणे निमित्ते सर्वमिदं जगच्छरीररूपं चलतीति 'यदिदं किंच जगत् सर्वं प्राण एजति निस्सृतम्' इत्यस्य तत्रोपपत्तेः। वायुनिमित्तमेव विद्युत्स्तनयित्नुवृष्टिवन्महाभयहेतुरशनिरपि विवर्तत इति 'महद्भयं वज्रमुद्यतम्' इत्यस्यापि तत्रोपपत्तेः। 'वायुरेव व्यष्टिर्वायुरेव समष्टिरप पुनर्मृत्युं जयति य एवं वेद' इति श्रुतेर्वायुविज्ञानादमृतत्वोपपत्तेश्च ॥

---

निवर्णनस्येत्याशङ्कां हेत्वन्तरेण निराकुर्वन्नशनिपूर्वपक्षमुपसंहरति–तस्मादिति। अयमाशयः। परमेश्वरस्य भयहेतुत्वं श्रुतिप्रसिद्धमशनेर्लोकप्रसिद्धमित्युभयत्राप्यविशिष्टम्। अथाप्यत्र समभिव्याहृतवज्रश्रुत्यनुग्राहकमशनिगतमेव ग्राह्यम्। न तु मन्त्रान्तरसमर्पितं मन्त्रान्तरगतम्। असङ्कुचितत्वं तु परमेश्वरस्यापि तस्याविशिष्टम्। न हि परमेश्वरमजानानास्ततो भयात्कम्पन्ते। ब्रह्मप्रकरणेऽप्यस्मिन्'नूर्ध्वमूलो ह्यधश्शाख एषोऽश्वत्थस्सनातन'इति संसारवृक्षकीर्तनवदशनिवर्णनमप्युपपद्यते। तन्मूलत्वेन ब्रह्मप्रतिपत्त्यर्थं तत्कीर्तनमिति चेत् ब्रह्मोपासनाङ्गत्वेनाशन्युपासनासिद्ध्यर्थमशनिवर्णनमित्यस्तु। दृश्यते ह्युपकोसलविद्यायां ब्रह्मोपासनाङ्गत्वेनाशन्युपासनाविधानम्। तस्माद्यथेशानश्रुतेरङ्गुष्ठमात्रः परमेश्वरः। तथा वज्रश्रुतेरशनिरेव कम्पनहेतुः। यद्यपि वज्रशब्दः शक्रायुधेऽपि प्रसिद्धः। उद्यतशब्दोऽपि तत्रैव स्वारसिकः। 'उद्यतायुधदोर्दण्डा' इत्यायुधेष्वेव उद्यतत्वप्रसिद्धेः। 'इन्द्रो वृत्राय वज्रमुदयच्छ' दित्यादिश्रवणाच्च। तथापि शक्रायुधस्यासुरादिभयहेतुत्वं श्रुतिपुराणादिभिरवगन्तव्यम्। अशनेस्तल्लोकप्रसिद्धं शीघ्रमेव बुद्धिमारोहतीति तदेवात्र वाक्यप्रतिपाद्यं ग्राह्यम्। अशनेरप्युद्गच्छतः परमेश्वरेणोद्यतत्वमस्तीति तत्रापि नोद्यतश्रुतिभङ्गः। प्रधानभूतवाक्यार्थप्रसिद्ध्यनुसारेण पदार्थस्याप्रसिद्धस्यापि ग्रहणं युक्तम्। एवं च प्राणशब्दोऽपि अशनावेव योजनीयः। प्राणस्याशनेश्च वायुविकारत्वेन लक्षणोपपत्तेः। उपक्रमगतत्वेऽपि प्राणश्रुतेर्महाभयहेतुत्वतन्मूलकम्पजनकत्वलिङ्गसहकृतवज्रश्रुतितो दुर्बलत्वादिति। अथ द्वितीयपूर्वपक्षमुपपादयति–यद्वेति। उपक्रमगतप्राणश्रुत्यनुसारेण प्राणवायुरेव कम्पनहेतुः। तन्निमित्तं हि शरीरात्मकस्य सर्वस्य जगतश्चलनम्। 'महद्भयं वज्रमुद्यत'मित्यत्र प्राण इत्यनुषञ्जनीयम्। तथा च प्राणनिमित्तकमेव महाभयहेतोरशनेरुद्गमनमित्यर्थः। यद्यपि बाह्यवायुरेव धूमज्योतिस्सलिलसंवलितो विद्युत्स्तनयित्नुवृष्ट्यशनिभावेन विवर्तते। न त्वान्तरः प्राणवायुः। तथापि बाह्याध्यात्मिकभेदेन वायुतत्वस्यैव द्वेधावस्थानादभेदोपचारेण एवमुक्तिरुपपद्यत इति भावः। पूर्वपक्षद्वयेऽप्यमृतत्वफलश्रुतेरुपपत्तिमाह–वायुरेवेति। व्यष्टिः पृथक्पृथक्तत्तत्प्राणादिरूपेण विविधा व्याप्तिः। 'अशू व्याप्ताविति' धातोर्व्यष्टिशब्दो व्याप्तिवाची। समष्टिस्समन्तात्सर्वसाधारण्येन सूत्रादिरूपेण व्याप्तिः। पुनर्मृत्युमपजयति अपहन्ति पुनर्न म्रियते मुक्तो भवतीत्यर्थः। यद्वा। अपमृत्युं पुनर्मृत्युं च जयतीत्यर्थः। यद्युच्येत वायुविज्ञानादमृतप्राप्तिर्न सम्भवति 'तदा शिवमविज्ञायेति' श्रुतेः। अपपुनर्मृत्युं जयतीत्यस्यातीते क्वचित् जन्मनि अपमृत्युं यथा प्राप्तः न तथोक्तरूपवायुविज्ञानानन्तरं पुनरपमृत्युं प्राप्नोतीत्यर्थ इति। एवं तर्हि प्रधानब्रह्मोपासनाफलस्य एतदशन्युपासने प्राणो-

इति प्राप्ते परमेश्वर एव कम्पनहेतुरिति ब्रूमः। परमेश्वरस्य सकलजगत्कम्पनहेतुत्वं शासकत्वात् भवति, यस्य शासनभयेन सर्वे वयं निषिद्धेषु विमुखा विहितेषु प्रवर्तामहे, यच्छासनभयादेव वाय्वादीनां स्वस्वाधिकारप्रवृत्तिः 'भीषाऽस्माद्वातः पवते' इत्यादिष्ववगम्यते। कल्याणमूर्तिरपि परमेश्वरः शासकतया भयदर्शनो भवति। तत् श्रूयते-'तस्माद्राजमुखं भीष्मं भावुकम्' इति। तस्मात्

---

पासने वा तदङ्गभूते श्रवणमित्यस्तु। दृष्टं हि 'सोमापौष्णं त्रैतमालभेत पशुकाम' इति प्रधानसम्बन्धित्वेनावगतस्य, पशुफलस्य 'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे' इति तदङ्गविधावपि श्रवणम्। अभ्युपगतं च प्राभाकरैः 'रष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'त्यत्र प्रधानाध्यापनफलस्य आचार्यकस्य तदङ्गोपनयनविधौ श्रवणम्। अङ्गीकृतश्च सर्वैरपि मीमांसकैरिष्ट्यन्वयिनां वारणवैकङ्कतादिपात्राणामिष्ट्यपेक्षिताग्निसम्पादकत्वेन इष्ट्यङ्गकल्पस्याधानस्य प्रकरणे श्रवणमिति युक्त्यन्तरसमुच्चयार्थः उपपत्तेश्चेति चशब्दः। प्राणः कम्पनादिति धर्मिनिर्देशेन सह हेतुरधिकरणान्तरेष्विव सूत्रयितव्यः। परमेश्वर इति साध्यमात्रं हि 'भेदव्यपदेशाच्चान्यः' 'अत एव स ब्रह्म' 'वदतीति चेन्न प्राज्ञो हि' 'प्रकरणात्' इति सूत्रगतैरन्यशब्दादिभिर्लब्धमाध्यायपरिसमाप्ति तदपेक्षेष्वधिकरणेष्वनुवर्तते। तथापि कम्पनात् कार्याद्यस्तद्धेतुत्वेनावगम्यते स परमेश्वरकंपनाद्धेतोरित्यावृत्त्या योजनेन कम्पनादित्येतदेव लाघवार्थं प्रतिज्ञाहेतूभयपरं सूत्रितमित्यभिप्रेत्य सिद्धान्तप्रतिज्ञां दर्शयति-परमेश्वर एव कम्पनहेतुरिति। यद्यपि शरीरकम्पनहेतुत्वं प्राणवायोस्सम्भवति। भयजननद्वारा कम्पनहेतुत्वमशनेस्सम्भवति। तथापि महद्भयमिति विशेषणात् 'भयादस्याग्निस्तपती'त्युत्तरमन्त्रे अस्येत्यनेन प्रकृतं कम्पनहेतुं परामृश्य तद्भयादग्न्यादीनां स्वस्वाधिकारे प्रवृत्त्युक्तेश्च। शासकत्वात् भयजननद्वारा यत्कम्पनहेतुत्वं तदिह विवक्षितमित्यवसीयते। न कम्पनहेतुत्वमात्रं नापि भयजननद्वारककम्पनहेतुत्वमात्रम्। 'महद्भयं वज्रमुद्यत'मित्यस्य एतच्छब्दपरामर्शनीयं प्रकृतं कम्पनहेतुत्वं प्रत्युद्यतं वज्रमिव महाभयहेतुरित्येवंरूपविशेषणसमर्पकतया तदेकवाक्यत्वे सम्भवति प्राण इत्यस्यानुषङ्गं कृत्वा प्राणनिमित्तमेव महाभयहेतुरशनिर्विवर्तत इत्येवमर्थपरतया भिन्नवाक्यत्वकल्पनानुपपत्तेः। अनुषङ्गवाक्यभेददोषद्वयपरिहारार्थं वज्रशब्दलक्षणाया युक्तत्वात्। एवं 'महद्भय'मित्यस्य कम्पनहेतुविशेषणत्वे स्थिते तस्य कम्पनहेतुतोपयुक्तद्वारसमर्पकतयान्वयसम्भवे तदनाकाङ्क्षितपरत्वकल्पनानुपपत्तेश्च। उत्तरमन्त्रस्यापि प्रकृतकम्पनहेतुपरामर्शकास्यपदयुक्तस्य भयजननद्वारभूतशासकत्वसमर्पकतया सर्वं जगदित्यस्यासङ्कोचनीयस्य परमेश्वरशासनाभिज्ञाग्न्यादिविषयत्वेन तदाकाङ्क्षितार्थसमर्पकत्वसम्भवे तदनाकाङ्क्षितार्थपरत्वकल्पनानुपपत्तेश्च। एवं च द्वारद्वयप्रतिपादनरूपयोपपत्त्या प्रकरणेन चानुगृहीतं शासकत्वाद्भयजननद्वारा कम्पनहेतुत्वं ब्रह्मलिङ्गमन्योन्यकलहायमानात् प्राणवज्रश्रुतिद्वयात् बलवदित्यभिप्रेत्य कम्पनादिति सौत्रहेतोर्वाक्यशेषलब्धं विशेषणं दर्शयति-शासकत्वाद्भवतीति। भयजननद्वारेति शेषः। अत एव परमकारुणिकस्य परमेश्वरस्य शासकत्वेन भयजनकत्वमुपपादयति-यस्य शासनभयेनेत्यादिना। भीष्मं भयंकरं भावुकं भवनशीलं'लषपतपदे'त्यादि-

स्वामितया सकलजगद्भयहेतुरीश्वर एव ॥ ॥ इति कम्पनाधिकरणम् ॥ ९ ॥

सूत्रेण ताच्छील्यार्थे भूधातोरुकञ्प्रत्ययः । भयंकरं भवितुं शीलवदित्यर्थः । यद्वा । भावुकं मङ्गलं शासकतया भयंकरमपि परिणामे श्रेयस्करमित्यर्थः । 'श्वश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् । भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् । शस्तं चाथ त्रिषु द्रव्ये पापपुण्यसुखादि चे'ति अमरसिंहोक्तेः । अत्र प्राकरणिकानां ब्रह्मलिङ्गानां पूर्वपक्षे कम्पनहेतोरन्यत्रैवाशयात्तत्र तदन्वयोऽस्पष्ट इति स्पष्टास्पष्टब्रह्मलिङ्गता ॥ ॥ इति कम्पनाधिकरणम् ॥९॥

## नयमणिमालायामथ कम्पनाधिकरणम् ॥ ९ ॥

सू० । कम्पनात् ॥ ४० ॥

कम्पनहेतुः प्राणो मरुद्भवेदशनिपातने हेतुः । सकलजगदभयदायी भयदायी स्यात्कथं स शिवः ॥ ६६ ॥
शिव एव शासकत्वाद्राजवदभयप्रदोऽपि भयहेतुः । वायोस्तु न प्रसक्तिर्मध्येब्रह्मपरसन्दर्भम् ॥ ६७ ॥

इति कम्पनाधिकरणम् ॥ ९ ॥

## सूत्रार्थचन्द्रिकायाम्

## अथ कम्पनाधिकरणम् ॥ १० ॥

॥ सू० ॥ **कम्पनात्** ॥ ३९ ॥ भगवत्पादमते, इत्थं प्रासंगिकमधिकारविचारं परिसमाप्य प्रकृतवाक्यार्थं प्रवर्तयिष्यन् प्रमिताधिकरणे ब्रह्मवाक्ये जीवानुवादो ब्रह्मज्ञानायेत्युक्तम् ; न तथेह 'यदिद' मितिवाक्ये प्राणानुवादो युक्तः । तस्य स्वरूपतः कल्पितस्य ब्रह्मैक्यायोगादिति प्रत्युदाहरणसंगत्येदमाह— ॥सू०॥ **कम्पनात्** ॥ ३९ ॥ अस्य 'यदिदं किंच जगत्सर्वं प्राण एजति निस्सृत' मित्यादिकं कठवल्लीवाक्यं विषयः । तत्र 'एजृ कम्पने' इति धातोः कम्पनार्थकत्वात् सर्वजगत्कम्पनहेतुः प्राणः प्रतीयते । स किं वायुविकार उत परमात्मेति संशयः । प्रसिद्धेः पञ्चवृत्तिः प्राण इति पूर्वपक्षः । 'प्राणस्य प्राण' मिति प्राणशब्दस्य परमात्मनि प्रसिद्धेरिह प्राणशब्दवाच्यः परमात्मैव । कुतः । **कम्पनात्**=सर्वस्य सवायुकस्य जगतो जीवनादिचेष्टाहेतुत्वात् । तद्धेतुत्वं 'न प्राणेन नापानेने' त्यादिश्रुतिप्रसिद्धम् ॥

**श्रीकण्ठमते,** एवं प्रासंगिकमधिकारिनिरूपणं कृत्वा प्रकृतं प्रस्तौति— **सू०** ॥ **कम्पनात्** ॥ ४१ ॥ विषयवाक्यं समानमेव । अत्र कम्पनहेतुरशनिर्वा प्राणवायुर्वा परमेश्वरो वेति त्रेधा संशयः । सकलजगदभयदायिनः परमकारुणिकस्य परमेश्वरस्य जगत्कम्पनहेतुत्वस्यायुक्तत्वात् वज्रप्राणयोर्जगत्कम्पनहेतुत्वस्योपपत्तेश्च वज्रप्राणश्रुतिभ्यां तयोरन्यतरस्य जगत्कम्पनहेतुत्वं युक्तमिति पूर्वः पक्षः । कल्याणमूर्तेरपि परमेश्वरस्य शासकत्वाद्भयदर्शनत्वोपपत्तेः स्वामितया सकलजगद्भयहेतुः परमेश्वर एवेति सिद्धान्तः ।

**रामानुजमते,** प्रासंगिकं परिसमाप्य प्रकृतं परिसमापयति—**सू०** ॥ **कम्पनात्** ॥४१॥ अङ्गुष्ठप्रमितप्रकरणमध्ये 'यदिदं किं च' इति वाक्ये प्राणशब्दनिर्दिष्टाङ्गुष्ठप्रमितजनितभयनिमित्तस्याग्निवाय्वादिकृत्स्नजगत्कम्पनस्य श्रूयमाणतया अङ्गुष्ठप्रमितः परमात्मैवेति । ॥ **सू०** ॥ **ज्योतिर्दर्शनात्** ॥ ४२ ॥ तत्रैव प्रकरणमध्ये परब्रह्मासाधारणस्य सर्वतेजश्छादकस्य ज्योतिषो 'न तत्र सूर्यं' इत्यादिवाक्ये श्रूयमाणस्य दर्शनादङ्गुष्ठप्रमितः परमात्मैव इति ।

## इति रामानुजमते प्रमिताधिकरणम् ॥

**आनन्दतीर्थमते,** विषयवाक्यं समानम् । अत्र श्रूयमाणं वज्रमिन्द्रायुधं वा विष्णुर्वेति संशयः । वज्रश्रुतेरुद्यतत्वलिङ्गाच्च वज्रमिन्द्रायुधमिति पूर्वः पक्षः । सप्राणसकलजगच्चेष्टकत्वरूपान्निरवकाशाद्विष्णुलिङ्गात् मुक्तिप्रदत्वलिङ्गात् वर्जनाद्वज्रमिति वज्रशब्दस्य यौगिकार्थपरत्वाच्च वज्रं विष्णुरेवेति सिद्धान्तः ॥

इति सूत्रार्थचन्द्रिकायां कम्पनाधिकरणम् ॥ १० ॥

## अथ ज्योतिरधिकरणम् ॥ १० ॥

दहरादिषूपास्यतया निर्दिष्टस्य परमेश्वरस्य प्राप्यत्वमुपपादयितुमधिकरणान्तरमारभ्यते—

## ॥ सू ॥ ज्योतिर्दर्शनात् ॥ ४१ ॥

छान्दोग्येऽस्य प्रजापतिविद्यायामाम्नायते विषयः—'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति ॥

मुक्तप्राप्यतया श्रूयमाणं परं ज्योतिः परमेश्वरः किं वा नारायणो मूर्त्यात्मेति संशयः ॥

'उत्तमः पुरुषः' इति मुक्तप्राप्यस्य परज्योतिषः पुरुषोत्तमशब्दवाच्यतयाऽवगमात् पुरुषोत्तमशब्दस्य नारायणे रूढतया स एवोत्तमपुरुषशब्दसमानाधिकरणं परं ज्योतिः ॥

---

### अथ ज्योतिरधिकरणम् ॥ १० ॥

उत्तराधिकरणमवतारयति—दहरादिष्विति । दहरादिषु स्थानेषु उपास्यतया परमेश्वरः पूर्वाधिकरणान्तेष्वधिकरणेषु सिद्धः तदुपासनया तस्यैव प्राप्यत्वमित्युपपादयितुमुत्तराधिकरणमारभ्यत इत्यर्थः । यद्यपि 'मुक्तोपसृप्यव्यपदेशा'दिति द्युभ्वाद्यधिकरणगुणसूत्रे परमेश्वरस्य मुक्तप्राप्यत्वमुक्तं तथापि क्वचिद्विषयवाक्यविशेषे प्रसक्तशङ्कानिराकरणेन तदेव दृढीक्रियत इति भावः ॥ सू० ॥ ज्योतिर्दर्शनात् ॥ ४१ ॥ अत्र प्रजापतिविद्यागतेन वाक्येन विद्वान् देहादुत्क्रान्तस्सन्यदुपसम्पद्यापहतपाप्मत्वादिस्वरूपेणाविर्भवतीत्युच्यते तत् परं ज्योतिः नारायणः परमेश्वरो वेत्युत्तमपुरुषशब्दनिरूढियोगाभ्यां संशयं दर्शयति—मुक्तप्राप्यतयेति । 'उत्तमः पुरुष' इति वाक्यं तावत् पुरुषोत्तमशब्दासाधारणयौगिकार्थप्रतिपादकतया निरूढमिह मुक्तप्राप्ये परस्मिन् ज्योतिषि प्रयुक्तं तस्य पुरुषोत्तमस्य शब्दविषयतामवगमयतीति तदवगमितस्य पुरुषोत्तमशब्दस्य रूढ्या मुक्तप्राप्यपरंज्योतिर्नारायण इत्यवसीयते । अत एव गीतासु 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति श्लोके पुरुषशब्दाभिधेयतया प्रसिद्धं जीवजातं क्षराक्षरशब्दोक्तसंसार्यसंसारिरूपेण द्वेधा विभज्य 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर' इति श्लोकेन द्विविधादपि जीवजातादुत्कृष्टं तदुभयनियामकमन्यपुरुषं पुरुषोत्तमपदयौगिकार्थप्रतिपादकेन 'उत्तमः पुरुष' इति वाक्येन निर्दिश्य स क इति जिज्ञासायां 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति श्लोकेन लोकवेदयोः पुरुषोत्तमपदवाच्यतया प्रसिद्धोऽहमेव स उत्तमः पुरुष इति भगवतोपदिष्टमिति भावः । एवं च यद्यपि दहरविद्यादिषु परमेश्वर एवोपास्यः स्यात् तथापि तत्तद्विद्याप्रकरणे 'य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचे'ति 'परात्परं पुरुषमुपैति दिव्यं' 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मित्यादिवाक्येषु तत्तद्विद्यानिष्ठैः प्राप्य-

इति प्राप्ते ब्रूमः—मुक्तप्राप्यं परं ज्योतिरिह परमशिवाभिधानं परं ब्रह्म, तत्प्राप्तानामेवानावृत्तिदर्शनात्। परब्रह्मणोऽन्यत् प्राप्तानां कथमनावृत्तिः समुचिता। पुरुषोत्तमशब्दो नारायणे रूढोऽपि ब्रह्मण्यपि वर्तते, पुरुषेभ्यो जीवेभ्योऽधिकत्वात्, ब्रह्ममेधकल्पेऽपि—'वेष्टितुं पुरुषोत्तमम्' इति प्राप्यस्य परब्रह्मणः पर्या-

---

तया प्रतिपाद्यमानं परं ज्योतिः परमपुरुषादिशब्दितो नारायण एवेति तात्पर्यम्। 'नारायणः परं ब्रह्मे'ति तस्य मुक्तप्राप्यत्वमुच्यते उत तस्य परब्रह्मणोऽन्यत्वेऽपि पुरुषोत्तमशब्दरूढिबलात्तदुच्यते। नाद्यः। जन्माद्यधिकरणशारीराधिकरणादिषु शिव एव परं ब्रह्म नारायणस्तु तदीयचिच्छक्तिमहाविभूतिरिति निपुणतरं व्यवस्थापितत्वात् इत्यभिप्रेत्य द्वितीयपक्षपर्यवसितं पूर्वपक्षमापाद्य सिद्धान्तयति—इति प्राप्त इति। ननु नारायणं प्राप्तानामप्यावृत्तिर्नास्ति। आनुशासनिकपर्वण्युमामहेश्वरसंवादे 'सायुज्यानां विशिष्टे द्वे मामकं वैष्णवं तथा। मां प्राप्य न निवर्तन्ते विष्णुं वा शुभलोचने।' इति शिववचनादिति चेत्। सत्यम्। तत्रैव 'धर्मान्वेषी तपः कर्तुं यतेत सततं प्रिये। अमरत्वं शिवत्वं च तपसा चाप्नुयान्नर' इति प्राचीनश्लोके मुक्त्यर्थेन शिवत्वमितिशब्देन मुक्तेश्शिवसायुज्यरूपतया विष्णुतत्त्वेन तस्य वचनस्य विष्णुप्रतीकशिवोपासनया प्रथमं विष्णुसायुज्यं प्राप्तानां क्रमेण शिवपदप्राप्त्या स्वरूपाविर्भावे सत्यनावृत्तिर्भवतीत्येवंपरत्वात्। यथाकथञ्चित् नारायणं प्राप्तानामनावृत्तौ 'अनावृत्तिदर्शना' दिति हेतुरनैकान्तिक एवेति चेत्। एवं तर्हि तत्र हेतावनावृत्तिपदमावृत्तिविरोध्यपहतपाप्मत्वाद्याविर्भावपरं ब्रूमः। स एव हि ज्योतिर्वाक्ये दृश्यते 'स्वेन रूपेणाभिनिष्पद्यत' इति। अनावृत्तिस्तु निश्शेषनिवृत्तमलावरणानां निर्धूतनिखिलपुण्यपापानामाविर्भूतस्वरूपाणामावृत्तिकारणाभावेनार्थाल्लभ्यते। तथा चावृत्तिविरोध्यपहतपाप्मत्वाद्याविर्भावदर्शनादिति हेतुर्नानैकान्तिकः। पूर्वपक्षहेतुमन्यथाकरोति—पुरुषोत्तमशब्द इति। प्रबलापि तस्य रूढिरनन्यथासिद्धलिङ्गविरोधात् बाध्येति ब्रह्मणि तस्य योग एवाश्रयणीय इति भावः। पुरुषोत्तमशब्दस्यान्यत्र योगेन परब्रह्मणि शिवे प्रयोगोदाहरणव्याजेन तत्रापि पुरुषोत्तमशब्दस्य शिवपरत्वमेवेति दर्शयति—ब्रह्ममेधकल्प इति। आपस्तम्बसूत्रे 'हौत्रं च पितृमेधं च संसृज्य विधिरुत्तर' इति पितृमेधे 'ब्रह्म वै चतुर्होतार' इति परब्रह्मत्वेन स्तुतानां 'चित्तिस्स्रुगि' त्यादिमन्त्राणां हौत्रशब्दोक्तानां संसर्गेण लब्धविशेषस्य ब्रह्मविदामेव पित्रादीनां मृतौ कर्तव्यस्य ब्रह्ममेधाख्यसंस्कारस्य प्रतिपादने 'वेष्टितुं पुरुषोत्तममि'ति तदुचितं मुक्तिफलं प्रतिपादितम्। तत्रापि पुरुषोत्तमशब्दः केवलं यौगिक एवाश्रयणीय इत्याशयः। नन्वत्र विषयवाक्ये पुरुषोत्तमशब्दो न श्रूयते। श्रूयमाणस्य तु 'उत्तमः पुरुष' इति शब्दस्य नारायणे रूढिरस्तु। तस्मादिहोत्तमः पुरुष इति शब्दविषयत्वलिङ्गेन मुक्तप्राप्यस्य ज्योतिषः पुरुषोत्तमशब्दविषयत्वानुमाने प्रसक्ते तदनुत्थानमात्रमनन्यथासिद्धलिङ्गविरोधेन वक्तव्यमिति चेत् सत्यम्। इह पुरुषोत्तमशब्दः श्रूयत इति कृत्वाचिन्तयेदमुक्तम्। कृत्वाचिन्तायास्तु फलमिदं यत्पूर्वपक्षोपोद्बलकत्वेन पूर्वपक्षदशायां भाष्याभिप्रेतस्य गीतासू'त्तमः पुरुष' इति शब्दविषय एव प्रयुक्तस्य पुरुषोत्तमशब्दस्य रूढिं परित्यज्य योगेन परमशिवे ब्रह्मणि वर्तनम्। नन्व'तोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति कृष्णेन स्वस्मि-

यत्वेन पुरुषोत्तमशब्दस्य प्रयोगात् । अतः परं ब्रह्मैव परं ज्योतिः ॥

इति ज्योतिरधिकरणम् ॥ १० ॥

न्नेव पुरुषोत्तमशब्दप्रवृत्तिर्दर्शिता । तत्र तस्यानूदिता लौकिकी प्रसिद्धिश्च तत्रैवास्ति । 'देवकीनन्दनश्शौरिः श्रीपतिः पुरुषोत्तमः' । 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' 'महेश्वरस्त्र्यम्बक एव नापरः' इति कथं तस्य शिवे वर्तनमुपपादयितुं शक्यम् । इत्थम् अध्यायादा 'वूर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्यय' मित्यादिना संसारवृक्षं परिकीर्त्य 'ततः परं तत्परिमार्गितव्यं यस्मिन्गता न विवर्तन्ति भूय' इति संसारमण्डलातीतमप्राकृतदिव्यपदे स्थितं परं ब्रह्मानावृत्तिफलसिद्धये समुपासनीयमित्युक्त्वा 'तमेव चाद्यं पुरुषं प्रपद्य' इति भगवान् कृष्णः तमेवादिमं सर्वोत्तमं पुरुषमहमप्युपास इति बभाण । स चोपास्य उत्तमः पुरुषः परमशिव इति स्पष्टीचकार । 'यतः प्रवृत्तिः प्रसृता पुराणी'ति चतुर्थपादेन 'प्रज्ञा च तस्मात्प्रसृता पुराणी'ति श्वेताश्वतरमन्त्रभागसमानार्थेन पारमेश्वरी शक्तिर्ज्ञानशक्तिरूपत्वात्प्रज्ञेतिक्रियाशक्तिरूपत्वात्प्रवृत्तिरिति च व्यपदेशमर्हति । एवं मुमुक्षूणां कृष्णस्य चोपास्यत्वेनोक्तः परमशिवाख्यस्सर्वोत्तमः पुरुष एव क्षराक्षररूपोत्तमत्वप्रतियोगिनिर्देशपूर्वकं 'मुत्तमः पुरुषस्त्वन्य' इति श्लोकेन वर्णितः । तद्विषय एव प्रवर्तमानो यस्मात्क्षरमतीतोऽहमिति तदनन्तरश्लोकः कथं परमशिवविषयो न स्यात् । तद्विषयत्वेऽपि तदभेदभावनादार्ढ्येन 'शास्त्रदृष्ट्या तूपदेशो वामदेववदि'ति न्यायात् 'पुरुषोत्तमः प्रथितोऽस्मी'ति कृष्णवचनं लोकवेदप्रसिद्धिश्चेत्युपपन्नम् । अत एवाहुः—'ब्रह्मोच्यते परमसौ परमं च तत्त्वं ज्योतिः परं च परमेश्वर पद्मनाभः । त्वद्भावनैकरसिकस्त्वदनन्यभावान्मन्त्री यथा गरुडभावनया गरुत्मानि'ति । तस्मान्मुक्तप्राप्यं परं ज्योतिः परमेश्वराख्यं परं ब्रह्मैवेत्युपसंहरति—अत इति । नन्वस्याधिकरणस्य कथं स्पष्टास्पष्टब्रह्मलिङ्गता । न हि प्रजापतिविद्यायामवस्थात्रययुक्तं तद्विविक्तं च जीवस्वरूपं प्रतिपादयन्त्यां ब्रह्मलिङ्गानि सन्ति । येषां पूर्वपक्षदशायां मुक्तप्राप्यात्परज्योतिषोऽन्यत्रान्वयेन परज्योतिरन्वयोऽस्पष्ट इति स्पष्टास्पष्टब्रह्मलिङ्गतोच्येत । मुक्तप्राप्यत्वं च ब्रह्मधर्मत्वेन शङ्क्यमानं नास्मिन्नधिकरणे स्पष्टं ब्रह्मलिङ्गमिति चेत् उच्यते । 'यदेवैष सम्प्रसाद'इत्यादिवाक्यं प्रजापतिविद्यायां पठ्यते । तदेव दहरविद्यायामपि पठ्यते । तत्र स उत्तमः पुरुष इति पूर्वपक्षलिङ्गं नास्तीति परं तदिह नोदाहृतम् । तथा च प्रजापतिविद्यायां 'परं ज्योति'रित्यस्य नारायणपरत्वे दहरविद्यायामपि तन्नारायणपरमेव पर्यवस्यतीति तस्यां श्रूयमाणानामपहतपाप्मत्वादीनां स्पष्टब्रह्मलिङ्गानां परज्योतिषोऽन्यत्रैवान्वय इति स्पष्टास्पष्टब्रह्मलिङ्गता । इति ज्योतिरधिकरणम् ॥ १० ॥

## नयमणिमालायाम् अथ ज्योतिरधिकरणम् ॥१०॥

सू० । ज्योतिर्दर्शनात् ॥ ४१ ॥

नारायणइति युक्तं मुक्तप्राप्यं परं ज्योतिः । पुरुषोत्तमपदवाच्यः स खलु स्यादुत्तमः पुरुषः ॥ ६८ ॥

न शिवपदात्पदमन्यत्प्राप्तानां स्यादनावृत्तिः । पुरुषोत्तमता तु भवेद्योगाद्विश्वाधिके महेशेऽपि ॥ ६९ ॥

इति ज्योतिरधिकरणम् ॥ १० ॥

## अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥

## ॥ सू० ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४२ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः—'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' इति ॥

अत्र नामरूपयोर्निर्वोढृत्वेन श्रूयमाणः स आकाशः परमेश्वरो वियद्वा जीवो वेति संशयः ॥

सर्वभूतावकाशप्रदानेन नामरूपनिर्वोढृत्वस्य वियति संभवात् विय-

---

### अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥

प्रजापतिविद्यान्तर्गतवाक्यार्थनिर्णयानन्तरं प्रजापतिविद्यानन्तरपठिताकाशवाक्यार्थनिर्णयार्थमधिकरणान्तरमारभ्यते—सू॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात्॥ ४२ ॥ यद्यस्मिन्विषयवाक्ये नामरूपनिर्वोढुराकाशस्य नामरूपमध्यस्थात् ब्रह्मणोऽन्यत्वप्रतीतिः तदा निर्वोढृत्वमाधारत्वं चेदयमाकाशो जगदाधारो भूताकाशः व्याकर्तृत्वं चेदिन्द्रादिनामरूपव्याकर्ता हिरण्यगर्भजीवस्तस्य ततो यदि भेदप्रतीतिर्नास्ति तदा परमेश्वर इति त्रिकोटिकसंशयोपपत्तिः । आद्यकोटावाकाशं विचिन्त्य तत्कर्तृकसकलनामरूपास्पृष्टत्वेन तृतीयकोटौ सकलनामरूपनिर्वोढृत्वेन निर्वाह्यसकलनामरूपमध्यस्थत्वेन च तस्योपासनेति फलभेदः । क्रमेण पूर्वपक्षद्वयमुपपादयति—सर्वभूतेत्यादिना । वियदाकाशः आकाशश्रुत्यनुग्रहात् अवकाशप्रदायके

---

### सूत्रार्थचन्द्रिकायाम् ।

#### अथ ज्योतिरधिकरणम् ॥ ११ ॥

॥ सू० ॥ ज्योतिर्दर्शनात् ॥ ४० ॥ भगवत्पादमते, पूर्वं सर्वशब्दश्रुतिसंकोचानुपपत्त्या प्रकरणात्प्राणशब्दो ब्रह्मेत्युक्तम् । न तथेह संप्रसादवाक्ये प्रकरणानुग्राहकं किंचिदस्ति । येन प्रकरणात् ज्योतिश्शब्दं ब्रह्म स्यादिति प्रत्युदाहरसंगत्येदमाह– ज्योतिर्दर्शनात् ॥ ४१ ॥ अस्य 'य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य' इत्यादिक छान्दोग्ये प्रजापतिविद्यायां श्रूयमाणं वाक्यं विषयः । तत्र किं ज्योतिश्शब्दितमादित्यादितेजः उत ब्रह्म इति संशयः । ज्योतिश्शब्दस्यादित्यादितेजसि रूढत्वात् अत्र प्रसिद्धमादित्यादितेज एव ज्योतिश्शब्दितमिति पूर्वः पक्षः । सिद्धान्तस्तु ज्योतिरत्र परं ब्रह्मैव । कुतः । दर्शनात्='य आत्मापहतपाप्मे' त्युपक्रमालोचनया ब्रह्मण एव प्रतिपाद्यतयानुवृत्तिदर्शनादित्यर्थः॥

श्रीकण्ठमते, दहरादिषूपास्यतया निर्दिष्टस्य परमेश्वरस्य प्राप्यत्वमुपपादयितुमिदमारभ्यते––सू० ॥ ज्योतिर्दर्शनात् ॥ ४२ ॥ विषयवाक्यं पूर्ववत् । तत्र मुक्तप्राप्यतया श्रूयमाणं परं ज्योतिः परमेश्वरो वा मूर्त्यात्मा नारायणो वेति संदेहः । 'उत्तमः पुरुष' इति मुक्तप्राप्यस्य परज्योतिषः पुरुषोत्तमशब्दवाच्यतयावगमात् पुरुषोत्तमशब्दस्य नारायणे रूढतया स एव परं ज्योतिरिति पूर्वः पक्षः । नारायणे. रूढस्यापि पुरुषोत्तमशब्दस्य पुरुषेभ्यो जीवेभ्योऽधिके ब्रह्मण्यपि वर्तमानत्वात् 'वेष्टितं पुरुषोत्तम' मिति प्राप्यस्य परब्रह्मणः पर्यायत्वेन ब्रह्ममेधकल्पे पुरुषोत्तमशब्दप्रयोगात् तत्प्राप्तानामेवानावृत्तिदर्शनाच्च परशिवाभिधानं परं ब्रह्मैव परं ज्योतिरिति सिद्धान्तः ॥

रामानुजमते, इदं सूत्रं प्रमिताधिकरणशेषतया पूर्वत्राधिकरण एव व्याख्यातम् ।

आनन्दतीर्थमते, बृहदारण्यके श्रुतं 'कतम आत्मे'ति प्रश्नोत्तरे 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तज्योति' रिति वाक्यं विषयः । अत्र ज्योतिर्जीवो वा परमात्मा वेति संशयः । जननमृत्यादिजीवलिङ्गादेः श्रवणात् जीव इति पूर्वपक्षः । श्रुत्यन्तरे विष्णुरेव ज्योति'रित्यवधारणश्रवणात् तत्र श्रुतानां जीवलिङ्गानां पूर्वोत्तरसंदर्भानुसारेण णिजर्थाध्याहारेण ब्रह्मपरतया योजनस्य न्याय्यत्वाच्च ज्योतिः परमात्मैवेति सिद्धान्तः । सूत्रार्थस्तु, ज्योतिः=योऽयमन्तर्ज्योतिरिति ज्योतिश्शब्दवाच्यो विष्णुरेव । न जीवः । कुतः । दर्शनात्='विष्णुरेव ज्योतिरिति श्रुत्यन्तरे दर्शनादित्यर्थः ॥

इति सूत्रार्थचन्द्रिकायां ज्योतिरधिकरणम् ॥ ११ ॥

दिहाकाशः। अथवा जीवः, 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवा

तस्मिन्नामरूपवोढृत्वश्रवणोपपत्तेरित्याद्यः पूर्वपक्षः। नन्वाकाशशब्दस्य ब्रह्मण्यपि प्रसिद्धिरस्ति सर्वलोकगतिवाक्यादिषु। तत्र सर्वभूतकारणत्वादीनि बलवन्ति वाक्यशेषे ब्रह्मप्रकरणादीनि सन्ति चेदिहापि सन्त्येव वाक्यशेषे ब्रह्मात्मश्रुत्यमृतत्वलिङ्गानीत्याशङ्क्याह— इहेति। अयमाशयः। अन्यत्राकाशशब्दस्य ब्रह्मविषयत्वकल्पनेऽपि नेह तथा कल्पयितुं शक्यम्। 'वैनामे'ति निपातसमुदायद्योतितप्रसिद्धिरूपाकाशविशेषणस्याप्रसिद्धाकाशरूपब्रह्मव्यावृत्त्येकफलकत्वात्। न हि ब्रह्म वेदप्रतिपन्नत्वेऽपि क्वचिद्वेदभागे निरूढ्याकाशशब्दविषयत्वेऽपि भूताकाशवत् स्वरूपेणाकाशशब्दविषयत्वेन वा लोकवेदयोः प्रसिद्धम्। 'सर्वाणि ह वा इमानि भूतानी' त्यत्र तु 'ह वै' शब्दद्योतितप्रसिद्धे नाकाशे धर्मिण्यन्वयः। किं तु सर्वजगत्कारणत्वरूपे तद्धर्मे। तस्य धर्मस्य लोके प्रसिद्धिर्नास्तीति केवलं ब्रह्मविषया वैदिक्येव प्रसिद्धिर्ग्राह्या। सा सिद्धान्ते उपयुज्यते। इह प्रसिद्धेर्धर्मिण्यन्वयः। सा तु भूताकाशविषयिणी लोकवेदसिद्धा ग्राह्या। न तु ब्रह्मविषयिणी केवलवेदप्रसिद्धा। सार्वत्रिकप्रसिद्धिमपेक्ष्य क्वाचित्कप्रसिद्धेरप्रसिद्धिरूपत्वात्। तस्मादप्रसिद्धाकाशव्यावर्तनैकप्रयोजनकेन प्रसिद्धिविशेषणेन भूताकाश एवात्राकाशश्रुतिर्नियम्यते। यत्तु वाक्यशेषे ब्रह्मात्मश्रुत्यमृतत्वलिङ्गग्रहणं न तन्नामरूपयोर्निर्वोढर्याकाशेऽन्वेति। किं तु तयोर्मध्यस्थत्वेन लक्ष्यमाणे वस्तुनि। न च तयोरभेदः। नामरूपनिर्वोढृत्वेनाकाशमुक्त्वा तदनन्तरं नामरूपमध्यवर्तित्वेन किञ्चिद्वस्तु लक्षयित्वा तत्र तत् ब्रह्मेति शब्दान्तरप्रयोगेणाकाश इति यदिति च लिङ्गभेदनिर्देशेन च तयोर्भेदप्रतीतेः। 'देवदत्तः खलु महान् पोषकश्चैत्रमैत्रयोः। या तयोर्वर्तते मध्ये सा मैत्रीति प्रतीयता'मित्यत्र हि मैत्रदेवदत्तयोः स्पष्टं भेदः प्रतीयते। 'यस्तयोर्वर्तते मध्ये यज्ञदत्तस्स बुध्यता'मिति लिङ्गाभेदेन पाठेऽपि देवदत्तयज्ञदत्तयोर्भेदः प्रतीयत इति। वियत्त्विह नाकाशः। किं तु हिरण्यगर्भजीवः। नामरूपनिर्वोढृत्वश्रवणात्। निर्वोढृत्वं हि कर्तृत्वं न तु वोढृत्वम्। निरुपसृष्टस्य वहतेः कर्तरिप्रत्ययः। नामरूपव्याकर्तृत्वस्य परब्रह्महिरण्यगर्भसाधारणत्वेऽपि अत्र परब्रह्मणोऽन्यत्वेन निश्चिते श्रूयमाणस्य तस्य हिरण्यगर्भलिङ्गत्वपर्यवसानात् तदनुसारेणाकाशश्रुतेस्सर्वज्ञे तस्मिन्नसङ्कुचितप्रकाशत्वयोगेन वृत्त्युपपत्तेः। लिङ्गतश्श्रुतेस्स्वतो बलीयस्त्वेऽपि पूर्वत्र 'ब्रह्मलोकमभिसम्भवितास्मी'त्युत्तरत्र प्रजापतेस्सभां वेश्म प्रपद्ये इति हिरण्यगर्भसन्निधिना हिरण्यगर्भलोकप्राप्त्यभिसन्धिलिङ्गेन च सन्दष्टलिङ्गस्यात्र श्रुतितः प्रबलत्वात्। न च 'प्रजापतेस्सभा'मित्यत्र प्रजापतिशब्दस्य नारायणपरत्वं। 'न च कार्ये प्रत्यभिसन्धि'रिति (ब्र.४.३.१३) सूत्रेण वक्ष्यत इति शङ्कनीयम्। 'कार्यं बादरि' रित्यधिकरणस्य द्वितीयपूर्वपक्षे कल्पे सा वक्ष्यते। सिद्धान्ते तस्य हिरण्यगर्भपरत्वे को दोषः। अत्र नामरूपमध्यस्थब्रह्मोपासनायां नामरूपनिर्वोढृहिरण्यगर्भस्योपासनमङ्गमिति तदङ्गकब्रह्मोपासनायास्तल्लोकप्राप्तिरवान्तरफलमित्युपपत्तेः। तस्माद्धिरण्यगर्भजीव एवात्राकाश इति द्वितीयः पूर्वपक्षः। नन्वयं पूर्वपक्षो नोपपद्यते। आकाश इति हिरण्यगर्भस्य क्वचिदपि प्रसिद्धेरभावेन प्रसिद्धिविशेषणविरोधादित्याशङ्क्याह--अनेन जीवेनेति। अयमाशयः। 'वैनामे'ति निपातसमुदायो नाकाशशब्दस्य तेन रूपेण प्रसिद्धिद्योतकः।

**णि' इति तस्य नामरूपव्याकरणसंबन्धदर्शनात् ॥**

**इत्येवं प्राप्ते ब्रूमः--परमेश्वर एवात्राकाशशब्देन नामरूपनिर्वोढा श्रूयते, अमृ-**

---

किं तु नामरूपनिर्वोढृत्वरूपविधेयवत्त्वेन तथैव व्युत्पत्तेः । न हि 'देवदत्तः खलु विद्वा'नित्युक्ते यः प्रसिद्धो देवदत्तः स विद्वानिति प्रतीयते । किं तु विधेयस्य विद्वत्त्वस्यैव प्रसिद्धिः प्रतीयते । एवं च यत्र नामरूपव्याकर्तृत्वं प्रसिद्धं स एव परमेश्वरादन्यः आकाशशब्दविषय इति सिद्धावनेन जीवेनेत्यादिश्रुतौ हिरण्यगर्भस्य नामरूपव्याकर्तृत्वप्रसिद्धेस्स एवात्राकाशशब्दविषयः पर्यवस्यतीति । यद्यप्य'नेन जीवेने'ति श्रुतिः परमेश्वरस्य नामरूपव्याकरणकर्तृत्वं प्रतिपादयति न तु हिरण्यगर्भस्य । तथैव संज्ञामूर्तिक्लृप्त्यधिकरणे स्थापयिष्यमाणत्वात् । तथा च हिरण्यगर्भस्य व्याकर्तृत्वप्रतिपादकं 'वेदे नामरूपे व्याकरोत्' 'सर्वेषां च स नामानी' त्यादिश्रुतिस्मृतिवचनजातमत्रोदाहरणीयम् । तथापि तेन यन्नामरूपव्याकरणं हिरण्यगर्भकर्तृकं प्रतिपाद्यते तत्रैव परमेश्वरस्य कर्तृत्व 'मनेन जीवेने' त्यादिवाक्येन प्रतिपाद्यत इत्युभयत्रापि व्याकर्तृभेदेऽपि व्याकर्तव्यमभिन्नमिति ज्ञापनाय तस्मिन्नुदाहरणीयेऽप्यनेनेत्यादिवाक्यमुदाहृतम् । तथा हि—हिरण्यगर्भविषयेन वाक्यजातेन ब्रह्माण्डान्तर्वर्तिदेवादिनामरूपगोचरं व्याकर्तृत्वं हिरण्यगर्भस्य प्रतिपाद्यते । तद्गोचरमेव च तदनेन जीवेनेत्यादिवाक्येन परमेश्वरस्य प्रतिपाद्यते । अनेन हि वाक्येन परमेश्वरस्य सकलनामरूपव्याकर्तृत्वं न प्रतिपाद्यते किं तु आकाशादिषु भूतेषु सदाशिवादिभिरधिष्ठातृभिस्सह सृष्टेषु त्रिवृत्करणेन ब्रह्माण्डसृष्टिपूर्वकं तदन्तर्वर्तिदेवादिनामरूपव्याकर्तृत्वं प्रतिपाद्यते । तेजोऽबन्नानां सृष्टिमभिधाय 'हन्ताहमिमास्तिस्रो देवता' इत्यनुक्रमात् । एव 'मनेन जीवेने'ति वाक्योपात्तव्याकर्तव्यस्य हिरण्यगर्भव्याकर्तव्यैक्यज्ञापनस्य प्रयोजनं सिद्धान्ते स्पष्टीभविष्यति । एवं प्राप्ते पूर्वपक्षे सिद्धान्तप्रतिज्ञापूर्वकं सूत्रहेतुं व्याचष्टे--अमृतत्वादीति । इहाकाशः परमेश्वर इति साध्ये नामरूपनिर्वोढृत्वं न हेतुः । तस्य निपातद्योतितप्रसिद्धिविशेषणानुरोधा 'दनेन जीवेने'ति श्रुत्युक्तहिरण्यगर्भव्याकर्तव्यनामरूपमात्रगोचरव्याकर्तृत्वरूपतया हिरण्यगर्भसाधारणत्वात् । नापि 'ते यदन्तरे'त्युक्तं नामरूपमध्यवर्तित्वम् । तद्धि तटाकयोर्मध्ये वृक्षस्येव नामरूपयोर्मध्ये परमेश्वरस्य न वर्तनम् । तटाकयोरिव नामरूपयोर्व्यवस्थितदेशस्थितत्वाभावेन तन्मध्यावकाशस्याप्रसिद्धत्वात् । किं तु मध्यस्थस्येवान्यतरपक्षपाताभावेन तदुभयास्पृष्टत्वम् । तदपि न सकलनामरूपास्पृष्टत्वम् । शिवभवादिनामभिर्नीलकण्ठत्वादिविशिष्टविग्रहैश्च नित्ययुक्ते परमेश्वरे तदभावात् । किं तु व्याकर्तव्यत्वेन पूर्ववाक्यसन्निहितैतत्पदपरामृष्टैर्देवमनुष्यादिशब्दैस्तद्वाच्यरूपैर्ब्रह्माण्डान्तर्गतैस्तनुभुवनभोगस्थानभोगोपकरणैश्चासाधारणसम्बन्धराहित्यम् । इदं तावद्धिरण्यगर्भसाधारणम् । तदसाधारणस्य हिरण्यगर्भादिनाम्नस्तद्वाच्यस्य तदसाधारणरूपस्य च तद्व्याकर्तव्यनामरूपप्रपञ्चसृष्टेः प्रागेव सिद्धत्वात् ' आकाशसाधारणं च ततोऽपि प्रागेव भूतानां निष्पन्नत्वादिति शङ्काकलुषितमादिमलिङ्गद्वयं प्रथमं नोपन्यसनीयमित्यमृतत्वं प्रथममुपात्तम् । एवं चाग्रे स्फुटतरब्रह्मलिङ्गदर्शनात् पूर्वे अपि ब्रह्मलिङ्गभूते एव ग्राह्ये । नामरूपनिर्वोढृत्वमात्रस्य साधारणत्वेऽपि हि निरपेक्षं तत् ब्रह्मासाधारणम् । सापेक्षनिरपेक्षयोश्च निरपेक्षं ग्रही-

तत्वादितद्धर्मव्यपदेशात् । न ह्याकाशेऽमृतत्वादिकं संभवति जीवे वा । अतः परमेश्वर एवाकाशः ॥

---

तुमुचितम् । 'ते यदन्तरे' त्येतदपि यस्य मध्ये ते नामरूपे वर्तेते यदाधारकोऽयं नामरूपप्रपञ्च इति व्याख्याने तदसाधारणम् । न च यत्रावधिद्वयनिर्देशः अवधिद्वयानाक्रान्तश्च मध्यदेशोऽस्ति तत्रैवान्तरेति शब्दप्रयोग इति नियमः । सूत्रवार्तिकादिषु विशेषवचनाभावात् । तदभावेऽपि 'ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः । वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन्नि'ति भट्टिकाव्ये अन्तराशब्दप्रयोगदर्शनाच्च । तथा नियमसद्भावेऽपि यस्यान्तरे यदन्तर्गते ते नामरूपे इत्यस्मिन्नर्थे अन्तरशब्दादन्तस्स्थितवाचिनः प्रथमाद्विवचनस्य 'सुपां सुलुगि'त्यादिसूत्रत आकारादेशोपपत्तेरित्यभिप्रेत्य तयोरपि ग्रहणार्थमादिशब्दः कृतः। पूर्वपठितयोरपि वैवक्षिकं क्रममाश्रित्यादिशब्देन ग्रहणं युक्तम् । न हि 'दिवादिभ्यः श्य'न्नित्यादाविव पाठक्रम एवाश्रयणीय इत्यत्र निर्बन्धोऽस्ति । न चात्रामृतत्वानन्तरं पठितं लिङ्गमस्ति । क्रमश्रुतिर्हि तदनन्तरं श्रूयते । अथ वात्रापि पाठक्रममाश्रयिष्यामः । अमृतत्वरूपब्रह्मलिङ्गसन्निधिमनपेक्ष्यैव सापेक्षनिरपेक्षन्यायादिमात्रेण नामरूपनिर्वोढृत्वादेर्ब्रह्मलिङ्गतोन्मेषमभ्युपगमिष्यामः । अत्र पक्षे आत्मश्रुत्युपस्थापितमात्मत्वलिङ्गमादिपदेन ग्राह्यम्। यत्र ह्यभिधानश्रुतिः प्रमाणं तत्र तत्प्रवृत्तिनिमित्तभूतं लिङ्गमपि प्रमाणं भवत्येव । अत एव 'शब्दादेव प्रमित' इति ( ब्र० १. ३. २३ ) सूत्रे आस्तामीशानश्रुत्युपस्थापितमैश्वर्यलिङ्गमीशानशब्दरूपा श्रुतिरेव तावदङ्गुष्ठप्रमितस्य परमेश्वरत्वमवगमयितुं पर्याप्तमित्यभिप्राय एवकारः प्रयुक्तः। एवं चामृतत्वादिशब्देन तद्गुणसंविज्ञानबहुव्रीहिमाश्रित्यामृतत्वात्मत्वे ग्राह्ये। अमृतत्वस्यादय इति तत्पुरुषमाश्रित्य नामरूपनिर्वोढृत्वं तदाधारत्वं ब्रह्मश्रुत्युपस्थापितनिरतिशयबृहत्त्वलिङ्गं च ग्राह्यमिति बहुव्रीहितत्पुरुषयोरेकशेषः कार्यः । एवं विवक्षितेऽर्थे नामरूपनिर्वोढृत्वादिव्यपदेशादित्येवमृजुवाक्यप्रयोगसम्भवे किमर्थमित्थं क्लिष्टवाक्यप्रयोग इति चेत् । किमर्थमिति न विद्मः। स्वतन्त्रेच्छा महाग्रन्थकाराः क्वचित्क्वचिदेवमपि प्रयुञ्जते। यथा पाणिनिर्गाङ्कुटादिसूत्रे कुटादिभ्य इति पदं बहुव्रीहितत्पुरुषयोरेकशेषेण निष्पन्नं प्रायुङ्क्त । तत्र हि कुटादिपदं तद्गुणसंविज्ञानबहुव्रीहिणा कुटतिधातोस्तदनन्तरपठितधातूनां च यथा ग्राहकं तथा तस्मात्प्राक्पठितस्य लिखतिधातोरपि कुटस्यादिः कुटादिरिति तत्पुरुषाश्रयणेन ग्राहकम् । अन्यथा लिखतिधातोः परेषां ञ्णितां प्रत्ययानां ङिद्वद्भावविधानासिद्ध्या लिखितुमलिखदित्यादिरूपासिद्धिप्रसङ्गात् । एतेन 'देवदत्तः खलु महा'नित्यादिवाक्यछायापत्त्या ब्रह्माकाशयोर्भेदप्रतीतिशङ्का निरस्ता । ब्रह्माकाशशब्दयोर्द्वयोरपि ब्रह्मणि दृष्टप्रयोगत्वेन ब्रह्माकाशवाक्यद्वयेऽपि ब्रह्मलिङ्गसत्त्वेन च तदुभयाभेदप्रतीत्या वैषम्यात् । न हीति । यद्यप्याकाशे जीवे चामृतत्वासम्भवः स्पष्ट एव । तथाप्युक्तमर्थं सूत्रारूढं कर्तुं तदुक्तिः । अनेन सौत्रहेतोरित्थमर्थो दर्शितो भवति । अर्थान्तरत्वं जीवादाकाशाच्च भिन्नत्वं तस्यादिः कारणं भेदको धर्म इति यावत् । भेदज्ञापके भेदकारणत्वोपचारादेवमुक्तिः। अर्थान्तरत्वशब्दो वा तत्प्रतीतिं लक्षयति । तथा च जीवाकाशव्यावर्तकनामरूपनिर्वोढृत्वादिधर्मव्यपदेशादिति सौत्रस्य हेतोरर्थ इति । यद्यपि परमेश्वरे साध्ये तद्धर्मव्यपदेशादि-

ननु 'तत्त्वमसि' इत्यादिनैक्यव्यपदेशान्न प्रत्यगात्मनोऽर्थान्तरभूतः परमेश्वरोऽस्तीत्याशङ्क्याह—

॥ सू ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किं चन वेद नान्तरं' 'प्राज्ञेनात्मनाऽन्वारूढ उत्सृजन् याति' इति सुषुप्त्युत्क्रान्त्योः बाह्यान्तरविषयज्ञानशून्यात् जीवात् तदानीमेव प्राज्ञतया भेदेन व्यपदेशात् जीवादर्थान्तरभूतः परमेश्वरोऽस्ति । स एवात्राकाशशब्दवाच्यः ॥

॥ सू ॥ पत्यादिशब्देभ्यः ॥ ४४ ॥

परिष्वञ्जके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्च अयमन्य एव जीवादित्यवगम्यते।'स सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' इत्यादिकमुत्तरत्र हि श्रूयते ।'पशूनां पतये....वृक्षाणां पतये' इत्यादिभिश्च परमेश्वरस्य

---

त्वेव हेतूकरणीयम् । तथाप्यत्र नामरूपनिर्वोढृत्वादेर्हिरण्यगर्भादिसाधारण्यशङ्कावारणाय तद्भेदकत्वमुखेन सूत्रे तदुपन्यास इति भावः ॥ उत्तरसूत्रमवतारयितुं शङ्कते—नन्विति । जीवातिरिक्तपरमेश्वराभावे च जीवभेदकधर्मेण परमेश्वरत्वसाधनं विरुद्धम् । अचेतनैकान्तिकधर्मस्य जीवभेदकत्वं न सम्भवति । हेतोश्चासिद्धिरिति भावः । यद्यपि जीवातिरिक्तपरमेश्वराभावशङ्कानिराकरणं नास्मिन्नधिकरणे विशिष्योपयोगि । सर्वेष्वप्यधिकरणेषु तदुपयोगसत्त्वात् । तथापि प्रपञ्चेनैतच्छङ्कानिराकरणार्थमुत्तरः पादः प्रवर्तिष्यत इति तदुपोद्घातरूपमिदमुत्तरसूत्रद्वयं प्रवृत्तमित्याशयः ॥ सू० ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥ सुषुप्तिविषयं सम्परिष्वक्तवाक्यम्। उत्क्रान्तिविषयमन्वारूढवाक्यम्। उत्सृजन् शरीरमित्यर्थः। तदानीमेव प्राज्ञतयेति । यदा जीवस्य बाह्याभ्यन्तरविषयज्ञानशून्यत्वं तदानीमेव प्रकर्षेण ज्ञातृत्वलक्षणं सर्वज्ञत्वं तस्य न सम्भवति। जीवान्तरस्यापि सर्वज्ञत्वं न सम्भवत्येव । अत उभयोर्भेदसिद्धिरिति भावः। भेदेन व्यपदेशादिति। अनेन 'व्यपदेशा'दिति पूर्वसूत्रतोऽनुवर्तत इति दर्शितं भवति । जीवादर्थान्तरभूतः परमेश्वरोऽस्तीति । इदं साध्यं हेतुसामर्थ्याल्लभ्यते ॥ सर्वज्ञो मुक्तात्मा परिष्वञ्जकः स्यादित्याशङ्कानिराकरणार्थं सूत्रम्—सू० ॥ पत्यादिशब्देभ्यः ॥ ४४ ॥ परिष्वञ्जके प्राज्ञ एवोत्तरत्र पत्यादिशब्दाः श्रूयन्त इति मुक्तात्मनोऽपि व्यतिरेकसिद्धिः । तस्य जगद्व्यापाराभावादित्यर्थः । सर्वस्य वशीति सर्वस्य तादधीन्यमुक्तम्। सर्वस्येशान इति तन्नियम्यत्वम् । सर्वस्याधिपतिरिति तद्रक्षणीयत्वम्। सर्वेश्वरस्सर्वनियन्ता । भूताधिपतिर्भूतानां रक्षकः। भूतपालः भूतानां पालकः। रक्षणमिष्टप्रदानमुखं पालनमनिष्टनिवारणमुखमिति भेदः।विषयवाक्ये अधिपतिशब्दे श्रूयमाणे किमर्थं 'पत्यादिशब्देभ्य' इति सूत्रितमित्याशङ्क्य बहुधा पतिशब्दाभ्यासवद्भिः श्रीरुद्रादिप्रकरणैरस्य प्रकरणस्यैकार्थ्यं दर्शयितुमित्येतदुदाहरणेनाभिव्यनक्ति। पशूनां पतय इति । आदिशब्देन 'पतिं पतीनां परमं परस्ता'दित्यादीनि गृह्यन्ते । जीवाति-

**जगदाधिपत्यं प्रसिद्धं, न कुत्रापि जीवस्य । तस्मादयं जीवादन्यः परमेश्वर एवात्राकाशशब्दवाच्यः ॥ इत्यर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥**

**इति श्रीकण्ठाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः ॥**

---

**रिक्तपरमेश्वराभावशङ्कानिराकरणसिद्धमधिकरणार्थमुपसंहरति—तस्मादिति ॥ ॥**

**इत्यर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥**

**इतिश्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापक-श्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीमद्भरद्वाजकुलजलधिकौस्तुभविश्वजिद्याजिश्रीरङ्गराजाध्वरि-वरसूनोरप्पयदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचितब्रह्म-मीमांसाभाष्यव्याख्यायां शिवादित्यमणिदीपिका-ख्यायां प्रथमस्याध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥**

---

**नयमणिमालायाम्**

## अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥

**सू० । आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४२ ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥ पत्यादिशब्देभ्यः ॥ ४४ ॥**

निर्वोढा नामादेर्भूताकाशोऽवकाशतया । जीवो वा स्यात्सोऽपि हि विभर्ति नामानि रूपाणि ॥ ७० ॥

अमृतत्वमात्मत्वादिकमर्थान्तरता च नामरूपाभ्याम् । निर्वोढृत्वं च तयोः कार्त्स्न्येन न भूतजीवयोर्जगतः ॥ ७१ ॥

इत्यर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥

इति श्रीमदप्पयदीक्षितकृतौ **चतुर्मतसारसंग्रहेनयमणिमालिकाख्ये**तृतीयपरिच्छेदे **प्रथस्याध्यायस्य तृतीयः**पादः

---

## सूत्रार्थचन्द्रिकायाम् ।

**अथ अर्थान्तरत्वादिव्यपदेशाधिकरणसुषुप्त्युत्क्रान्त्यधिकरणे ॥ १२ ॥ १३ ॥**

**सू० ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥४२॥ पत्यादिशब्देभ्यः॥४३॥**

**भगवत्पादमते,** एषु त्रिषु सूत्रेष्वाद्यमेकमधिकरणमितरयोरधिकरणान्तरतया योजनमिति विशेषः । पूर्वमुपक्रमवशादर्थान्तरे प्रसिद्धोऽपि ज्योतिश्शब्दस्स्वार्थात्प्रच्यावितस्तथाकाशोपक्रमवशाद्ब्रह्मादिशब्दोऽपि स्वार्थात्प्रच्याव्यतामिति दृष्टान्तसंगत्येदमाह—**सू ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥** अस्य 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इत्यादिकं छान्दोग्यवाक्यं विषयः । तत्र किमाकाशशब्दितो भूताकाशः परमात्मेति संशयः। आकाशशब्दस्य भूताकाशे रूढत्वात्स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्गस्याश्रवणाच भूताकाश इति पूर्वः पक्षः । सिद्धान्तस्तु, परमात्मैवाकाशशब्दितः। कस्मात् । **अर्थान्तरत्वादिव्यपदेशात्**='ते यदन्तरे' ति आकाशस्य नामरूपाभ्यामर्थान्तरत्वेन व्यपदेशात् । आदिशब्देन 'तद्ब्रह्म तदमृतं स आत्मे'ति ब्रह्मत्वादिव्यपदेशो द्रष्टव्यः ॥ **इत्यर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥१२॥**

## अथ सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १३ ॥

पूर्वं नामरूपाभ्यां भेदोक्तेराकाशो ब्रह्मेत्युक्तम् । तन्न । 'प्राज्ञेनात्मना संपरिष्वक्त' इत्यत्राभिन्नेऽपि जीवे भेदोपचारादित्याक्षिप्य समाधानादाक्षेपसंगत्येदमाह—**सू० ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥** 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' इत्यादिकं बृहदारण्यकवाक्यं विषयः । तत्किं जीवानुवादकमुत तदनुवादेनासंसारिस्वरूपप्रतिपादकमिति संदेहः । उपक्रमोपसंहारानुगुण्येन जीवानुवादकमित्येव युक्तमिति पूर्वः पक्षः । सिद्धान्तस्तु, विज्ञानमयसुषुप्त्याद्यवस्थावज्जीवानुवादेन ब्रह्माभेदप्रतिपादकमिदं वाक्यम् । कस्मात् । 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरं प्राज्ञेनात्मनान्वारूढ उत्सृजन्याती'ति सुषुप्त्युत्क्रान्त्योरवस्थयोश्शारीराद्भेदेन परमात्मनः प्राज्ञशब्देन व्यपदेशादित्यर्थः ॥ इतश्च ब्रह्माभेदप्रतिपादकं

वाक्यमित्याह—सू० ॥ पत्यादिशब्देभ्यः ॥ ४३ ॥ 'सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपति' रिति पत्यादिशब्दा असंसारित्वप्रतिपादकाः 'स न साधुना कर्मणा भूया' नित्याद्यास्संसारित्वनिषेधका एतद्वाक्यगताः । तेभ्योऽसंसारिब्रह्मात्मकप्रतिपादकमिदं वाक्यमिति समंजसम् । अस्मिन्पादे त्रयोदशाधिकरणानि । सूत्राणि त्रिचत्वारिंशत् ॥

इति भगवत्पादमते सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १३ ॥

**श्रीकण्ठमते,** विषयवाक्यं पूर्ववत् । अत्र आकाशः भूताकाशो वा जीवो वा परमेश्वरो वेति त्रेधा संशयः । सर्वभूतावकाशप्रदानेन नामरूपनिर्वोढृत्वस्य भूताकाशे 'अनेन जीवेने'त्यादिना श्रुतस्य नामरूपव्याकरणसंबन्धस्य जीवे च दर्शनात् तयोरन्यतर आकाश इति पूर्वपक्षः । सिद्धान्तस्सूत्रार्थश्चाविशिष्टः ॥

ननु 'तत्त्वमस्या' दिनैक्यव्यपदेशान्नास्ति जीवादर्थान्तरभूतः परमेश्वर इत्याशंक्याह—सू० ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४४ ॥ 'प्राज्ञेनात्मना संपरिष्वक्त' इत्यादिना सुषुप्त्युत्क्रान्त्योर्बाह्यान्तरविषयज्ञानशून्याज्जीवात्तदानीमेव प्राज्ञतया भेदेन व्यपदेशात् अस्ति जीवादर्थान्तरभूतः परमेश्वरस्स एवात्राकाश इति ॥

इतश्चायमन्य एव जीवादित्याह—सू० ॥ पत्यादिशब्देभ्यः ॥ ४५ ॥ 'सर्वस्य वशी सर्वस्येशानः' 'पशूनां पतये' इत्यादिना परिष्वजके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्योऽप्ययमन्य एव जीवादित्यवगम्यते । न कुत्रापि जीवस्य तादृशं जगदाधिपत्यं श्रुतम् । तस्मादयं परमेश्वर एवाकाशः ॥ इति ॥ अस्मिन्मते पादेऽस्मिन् एकादशाधिकरणानि । सूत्राणि चतुश्चत्वारिंशत् ॥ इति श्रीकण्ठमते अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥

**रामानुजमते,** विषयवाक्यं पूर्ववत् । अत्राकाशशब्दनिर्दिष्टः किं मुक्तात्मा उत परमात्मेति संशयः । मुक्तस्यानन्तरप्रकृतत्वान्मुक्त इति पूर्वपक्षः । आकाशः परमात्मेति सिद्धान्तः । सूत्रार्थस्तु, आकाशः परमात्मा । कुतः । अर्थान्तरत्वादिव्यपदेशात्=तस्य नामरूपनिर्वोढृत्वतदस्पर्शलक्षणार्थान्तरत्वनिरुपाधिकब्रह्मत्वामृतत्वात्मत्वादीनां व्यपदेशात् । इति । शेषं श्रीकण्ठमतवदेवेति विरम्यते ॥ अस्मिन्मते अत्र पादे एकादशाधिकरणानि । सूत्राणि तु चतुश्चत्वारिंशत् । इति । इति रामानुजमते अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥

**आनन्दतीर्थमते, सू० आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥** विषयवाक्यं पूर्वमतसाधारणम् । अत्राकाशः अव्याकृताकाशं वा विष्णुर्वेति संशये अव्याकृताकाशमिति पूर्वपक्षः । विष्णुरिति सिद्धान्तः । शेषं पूर्ववत् ॥

इत्यर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ ११ ॥

**सू० ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥** अस्य 'स वा एष एतस्मिन्संप्रसादे' इत्यादिकं 'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुष' इत्यन्तं बृहदारण्यकवाक्यं विषयः । अत्र स्वप्नादिद्रष्टा जीवो वा परमात्मा वा इति संशयः । जीवस्यैव स्वप्नद्रष्टृत्वेन प्रसिद्धत्वाज्जीव इति पूर्वपक्षः । असंगत्वलिंगात् सुषुप्त्युत्क्रान्त्योः 'प्राज्ञेनात्मना संपरिष्वक्तः' इत्यादिना तयोर्भेदेन व्यपदिश्यमानत्वेन तयोरैक्यासिद्धावसंगत्वस्य जीवे ब्रह्माभेदेन योजयितुमशक्यत्वाच्च स्वप्नद्रष्टा परमात्मैवेति । सूत्रार्थस्तु, स्वप्नादिद्रष्टा परमात्मैव । कुतः । 'असंगो ह्ययं पुरुषः' इत्युक्तासंगत्वलिंगात् इति बहिरेवाध्याहारः । ननु ईश्वराभेदेन जीवेऽप्यसंगत्वोक्तिस्संभवतीत्यत उच्यते—सुषुप्तीत्यादि । सुषुप्त्युत्क्रान्तिप्रकरणयोस्तयोर्भेदेन व्यपदेशदर्शनान्न तयोरैक्यमित्यर्थः ॥ इति सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १२ ॥

**सू० ॥ पत्यादिशब्देभ्यः ॥ ४३ ॥** अस्याधिकरणस्य 'एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् । तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन' इति बृहदारण्यकवाक्यं विषयः । अत्र ब्राह्मणशब्दोक्तो विरिञ्चो वा विष्णुर्वा इति संशयः । 'विष्णोर्ब्राह्मणजातिस्सन् जज्ञे ब्रह्मा चतुर्मुखः' इति वचनेन तस्य ब्राह्मणत्वात् 'स वा एष महानज आत्मा' इत्यजश्रुतेश्च 'अगोत्रमवर्ण' मित्यादिना विष्णोर्ब्राह्मणत्वाभावाच्च विरिञ्च इति पूर्वपक्षः । निरवकाशैस्सर्वपतित्वादिलिंगैः अजब्राह्मणशब्दयोः 'न जायत इत्यजः' 'ब्रह्मणा वेदेन अन्यते गम्यते इति ब्राह्मणः' इति व्युत्पत्तिमतोः विष्णुपरत्वोपपत्त्या च विष्णुरिति सिद्धान्तः । सूत्रार्थस्तु, 'एष नित्यो महिमा ब्राह्मणस्ये'ति श्रुत्युक्तब्राह्मणो विष्णुरेव । न विरिञ्चः । कुतः । पत्यादिशब्देभ्यः='सर्वस्याधिपति' रित्यादिसर्वाधिपत्यादिवाचिश्रुतिभ्य इत्यर्थः । अस्मिन्मते अस्मिन्पादे त्रयोदशाधिकरणानि । सूत्राणि तु त्रिचत्वारिंशत् ॥ इत्यानन्दतीर्थमते पत्याद्यधिकरणम् ॥ १३ ॥

यं प्रासूत विशुद्धशीलमनघं वृद्धांबिकाख्या सती यं मृत्युंजयशर्मणो बुधमणेर्भाग्यं विदुस्साधवः ।
वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वयस्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥

सूत्रार्थचन्द्रिकायामाद्येऽध्याये समन्वयाभिख्ये । स्पष्टास्पष्टब्रह्मगलिंगः पादस्तृतीय इह पूर्णः ॥
श्रीकण्ठाचार्यमते भगवत्पादीयभाष्यरीत्या तु । अस्पष्टलिङ्गवाक्यज्ञेयब्रह्मावबोधकः प्रोक्तः ॥
विस्पष्टजीवलिङ्गक इति गदितो लक्ष्मणार्यमतरीत्या । मध्वमते ह्युभयत्र प्रसिद्धनामलिङ्गपाद इति ।

इति हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायां प्रथमस्याध्यायस्य तृतीयः पादः ॥

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

प्रथमस्याध्यायस्य

## अथ चतुर्थः पादः ।

### अथ आनुमानिकाधिकरणम् ॥ १ ॥

पूर्वपादे स्पष्टास्पष्टब्रह्मलिङ्गानि वाक्यानि विचारितानि । चतुर्थेऽस्मिन् पादेऽस्पष्टब्रह्मलिङ्गानि कानिचिद्वाक्यानि विचार्यन्ते–

**॥ सू० ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

एकेषां कठानां शाखायामाम्नायतेऽस्य विषयः–

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ॥' इति ॥

अत्र महतः परत्वेन उच्यमानं अव्यक्तशब्दवाच्यं प्रधानं कापिलमुत श-

---

## शिवार्कमणिदीपिकायाम् ।

### अथ प्रथमाध्यायस्य चतुर्थः पादः ।

### अथ आनुमानिकाधिकरणम् ।

पूर्वोत्तरपादार्थप्रदर्शनेन सङ्गतिं सूचयति––पूर्वपाद इति। प्रथमे पादे स्पष्टब्रह्मलिङ्गानि वाक्यानि विचारितानि । द्वितीयेऽनतिस्पष्टब्रह्मलिङ्गानि । तृतीये स्पष्टास्पष्टब्रह्मलिङ्गानि । चतुर्थे त्वस्मिन् अस्पष्टब्रह्मलिङ्गानि वाक्यानि विचार्यन्त इति ब्रह्मलिङ्गानां स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमत्वक्रमेण पादानामवतार इति भावः ॥ सू० ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ सौत्र'मेकेषा'मिति पदं व्याकुर्वाणस्तदपेक्षितं चाध्याहरन्नेव विषयवाक्यमुदाहरति–एकेषामिति । स्मार्तक्रमप्रत्यभिज्ञाव्यक्तशब्दरूढिभ्यां प्रकरणपरिशेषाभ्यां च संशयमाह–अत्रेति । इह 'महदव्यक्त'मिति साङ्ख्यस्मृतितत्त्वक्रमप्रत्यभिज्ञा 'महतः परत्वेनोच्यमान' मिति धर्मिविशेषणेन सूचिता । अव्यक्तशब्दस्य प्रधाने रूढत्वेन स्वारस्य'मव्यक्तशब्दवाच्य'मिति धर्मिनिर्देशेन सूचितम् । अव्यक्तशब्दवाच्यमिति । अव्यक्तशब्दोदितमित्यर्थः । सिद्धान्ते शरीरस्याव्यक्तशब्दलक्ष्यत्वाङ्गीकारेणातद्वाच्ये शरीरत्वसंशयायोगात् । पूर्वत्रा'त्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्' । इत्यात्मशरीरादीनां रथिरथादिभावकल्पनायां शरीरस्य प्रकृतत्वं शरीरातिरिक्ता-

**रीरं वेति संशयः ॥**

**प्रधानमिति पूर्वपक्षो युक्तः । कथम् । महदव्यक्तपुरुषाणां साङ्ख्यतन्त्र एव प्रसिद्धेः, तेषामिह श्रुतौ प्रत्यभिज्ञानाच वपुषो न कश्चिदिह प्रसङ्गः ।**

---

नामिहेन्द्रियादिशब्दैर्गृहीतत्वेन शरीरस्य परिशिष्टत्वं च 'शरीरं वे'ति रथिरथभावकल्पनायां श्रुतौ प्रयुक्तस्य शरीरपदस्य प्रयोगेण सूचितम् । ननु, 'प्रधानमिति पूर्वपक्षो युक्त' इति वचनमयुक्तम् । तस्य निरालम्बनत्वात् । 'महतः परमव्यक्त' मित्यत्र महच्छब्दस्य 'बुद्धेरात्मा महान्पर'इति पूर्वनिर्दिष्टात्मपरत्वेन साङ्ख्यस्मृतिप्रसिद्धतत्वविशेषपरत्त्वशङ्कानास्पदतया स्मार्तक्रमप्रत्यभिज्ञानासिद्धेः । साङ्ख्यपरिभाषासिद्धायाः अव्यक्तपदरूढेः नैयायिककल्पितायाः पक्षप्रतिपक्षादिपदरूढेरिवान्यत्र शब्दार्थनिर्णयानुपयोगित्वात् इत्यभिप्रायेण पृच्छति–कथमिति । महदव्यक्तपुरुषाणामिति । अयं भावः । महदव्यक्तं पुरुष इति क्रमेण उत्तरोत्तरं पराणि तत्त्वानि साङ्ख्यतन्त्र एव प्रसिद्धानि । अतस्तेषामिह प्रत्यभिज्ञा भवन्ती न निह्नोतुं शक्यते । तेनैव क्रमेणात्रापि निर्देशदर्शनात् । सा चोन्मिषन्ती प्रत्यभिज्ञा सर्वमिदं विषयवाक्यं व्याप्नोति । तथा हि–पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च भूतानि पञ्च तन्मात्राः अन्तःकरणमहङ्कारो महान्प्रकृतिः पुरुष इति पञ्चविंशतितत्त्वानि साङ्ख्यास्सञ्चक्षते । ततः परं च तत्त्वान्तरं निषेधन्ति । इहापि दश ज्ञानकर्मेन्द्रियाणि । दश भूततन्मात्राः अर्थशब्दोदिताः । मनोऽन्तःकरणबुद्ध्यहङ्काराः । आत्मा । महान् महत्तत्त्वम् । अव्यक्तं प्रकृतिः । पुरुषश्चेति पञ्चविंशतिस्तत्त्वानि निर्दिश्यन्ते । ततः परं च निवार्यते 'सा काष्ठा सा परा गति' रिति । यद्यपि साङ्ख्यैर्महत्तत्त्व एव बुद्धिशब्दः प्रयुज्यते नाहङ्कारे । आत्मशब्दश्च चेतनवाची न महत्तत्त्वे प्रयुज्यते । तथापि प्रत्यभिज्ञापकभूयस्त्वानुसारेण कार्ये कारणोपचारादहङ्कारे बुद्धिशब्दः महत्तत्त्वे व्यापकत्वाभिप्रायेणात्मशब्दः 'यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेज्ज्ञान आत्मनी'त्यत्रैव उपरितनमन्त्रे ज्ञानेऽप्यात्मशब्दप्रयोगदर्शनादिति समर्थयितुं शक्यम् । ततश्च स्मार्तक्रमप्रत्यभिज्ञायास्तावन्नासिद्धिः । नाप्यव्यक्तपदरूढेरनिर्णायकत्वम् । प्रत्यभिज्ञया साङ्ख्यतन्त्रसिद्धान्येव तत्त्वानि निर्दिश्यन्त इति निश्चये सति तदन्तर्गताव्यक्तपदे तद्रूढेरेवादरणीयत्वात् । 'न पक्षे न सपक्षे च विपक्षे केवलं स्थितः । चित्रं निस्त्रिंशधूमस्ते प्रतापाग्न्यनुमापकः ।' इतिकाव्यश्लोकेऽपि नैयायिकपरिभाषामाश्रित्य प्रवृत्ते पक्षादिशब्दे तदीयरूढेराश्रीयमाणत्वात् । तस्मात्स्मार्तक्रमप्रत्यभिज्ञाव्यक्तपदरूढिभ्यामव्यक्तं प्रधानमित्येतद्युक्तम् । न'न्वात्मानं रथिनं विद्धी'त्यादिना रथिरथहयाद्यात्मना निरूपितेष्वात्मादिषु प्रकृतेषु परिशिष्टं शरीरमिहाव्यक्तशब्देन ग्रहणसाकाङ्क्षमास्त इत्याशङ्क्याह–वपुषो न कश्चिदिह प्रसङ्ग इति । अयं भावः। प्रधानस्याकाङ्क्षावतः सन्निधावाम्नानं हि प्रकरणम्। तथा च किं तत् परमपदमिति निर्धारणाकाङ्क्षस्य विष्णोः परमपदस्य सन्निधानाम्नानरूपेण प्रकरणेनेन्द्रियादीनि तदीयपरत्वप्रमितावधितयोपयोगित्वेन तदङ्गानि भवन्तु नाम । तानि रथिरथादिकल्पनायां गृहीतान्येवान्यूनानतिरिक्तान्यत्रापि ग्राह्याणीति केन प्रकरणेन सिद्ध्यन्ति। न हीन्द्रियादिभिरसंयतैः जीवः पुनःपुनः संसारमेव प्राप्नुयात् संयतैस्तु मुक्तिमिति प्रदर्शनार्थं रथिरथादिरूपेणाङ्गभावमासाद्य निराकाङ्क्षाणीन्द्रियादीनि पुरुषशब्दोक्तपरमपदपरत्व-

**तस्मात् साङ्ख्यं प्रधानमेव न वपुरिति ॥**

**वपुरिति सिद्धान्तो युक्तः । पूर्वत्र–**

प्रतिपादनेऽङ्गभावमपेक्षन्ते । नापि प्रधानं परमपदं स्वकीयपरत्वप्रतिपादने तेषामवधितयाङ्गभावमपेक्षते । तद्धि 'सा काष्ठे'ति निरतिशयोत्कर्षप्रतिपादनानुसारेण कृत्स्नस्य जगतः परत्वावधितयाङ्गभावमपेक्षते । न च कृत्स्नं जगद्रूपकवाक्ये गृहीतम् । शरीरेन्द्रियतद्विषयमनोबुद्धिभोक्तॄणामेव तत्र ग्रहणात् । अतस्तदाकाङ्क्षानुसारेण साङ्ख्याभिमतपुरुषावरचतुर्विंशतितत्त्वात्मकसकलप्रपञ्चसमर्पकत्वमेवात्रेन्द्रियादिशब्दानां युक्तम् । एतेन प्रकृतत्वाभावेऽपि सन्निधानाद्रूपकवाक्यगतान्येवेन्द्रियादीनि ग्राह्याणीति निरस्तम् । आकाङ्क्षायाः सन्निधानाद्बलीयस्त्वात् । ननु वैदिकस्याङ्गापेक्षस्यान्यत्र निबद्धमपि वैदिकमेवाङ्गजातं ग्राह्यं न त्वनिबद्धमप्यवैदिकमिति पूर्वतन्त्रनिर्णीतत्वादिह परपदस्य परत्वावधिभूत(रूप)स्वप्रतियोग्यङ्गाकाङ्क्षायां मुक्तिसंसारप्राप्तिवर्णनोपयोगिरूपणार्थतया प्राङ्निबद्धमपि तदेवेन्द्रियादिकं ग्राह्यं न तु क्वचिदङ्गत्वेनानिबद्धमपि साङ्ख्यादितत्त्वजातमिति चेत् । स्यादप्येवं यदि सौर्यादिष्विवितिकर्तव्यताकलापस्येवात्र परत्वावधेरिन्द्रियादिकस्याम्नानम् । तस्मात् स्ववाक्याम्नानं निरतिशयपरत्वावध्याकाङ्क्षापूरणसमर्थं रूपितं साङ्ख्यस्मृतिप्रसिद्धचतुर्विंशतितत्त्वात्मकं कृत्स्नं जगदस्तीति सन्निधिमात्रलभ्यमाकाङ्क्षापूरणसमर्थं रूपितमिन्द्रियादिकमग्राह्यमतो नास्त्यत्र शरीरग्रहणप्रसक्तिरिति । उपसंहरति–तस्मादिति । साङ्ख्यं प्रधानमिति । सङ्ख्यया बुद्ध्या कल्पितं साङ्ख्यमिति आनुमानिकपदविवरणम् । सङ्ख्याशब्दात् शेषे 'प्राग्दीव्यतोऽण्' । सङ्ख्यानुमानकल्पितं परमेश्वरानधीनं स्वतन्त्रं प्रधानमिहाव्यक्तशब्दोदितमित्यर्थः । सिद्धान्तप्रतिज्ञां दर्शयति–वपुरिति सिद्धान्तोयुक्त इति । यद्यपि सूत्रे'ने'ति प्रतिज्ञापदेन नानुमानिकं प्रधानमव्यक्तपदोदितमिति प्रतिज्ञा लभ्यते । तस्यामेव च 'शरीररूपकविन्यस्तगृहीते'रिति सूत्रेण तद्विवरणरूपेण 'पूर्वत्रे'त्यादिभाष्येण च वर्ण्यमानो हेतुः समञ्जसो भवति । तत्त्वव्यक्तपदोदितं वपुरिति प्रतिज्ञायां साध्याविशेषात् । तथापि 'ने'ति सूत्रपदलभ्या हेत्वन्वयिनी प्रतिज्ञा स्पष्टेति मत्वा फलिता सिद्धान्तप्रतिज्ञा दर्शिता । तामेव खल्वाश्रित्य संशयवाक्येऽपि 'शरीरं वे'ति कोट्यन्तरं दर्शितम् । 'पूर्वत्रे'त्यादिहेतुवचनस्यायमर्थः । पूर्वत्रात्मा शरीरं बुद्धिर्मनः इन्द्रियाणि तद्विषया रूपरसगन्धस्पर्शशब्दाश्चेति षड् रथिरथसारथितदूह्यमानतुरगरज्जुतुरगतन्मार्गात्मना रूपिताः । ते च न काव्य इव शोभार्थं तथा रूपिताः । अध्यात्मप्रकरणत्वात् । किं तु मुक्त्यर्थोपासनोपकरणत्वाद्वशीकार्यत्वाय । वशीकृतान्येतानि तदुपकरणानि भवन्ति । अत एव हि तत्रैव श्रूयते 'यस्त्वविज्ञानवान् भवति अयुक्तेन मनसा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ यस्तु विज्ञानवान्भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ यस्त्वविज्ञानवान्भवति अमनस्कः सदा शुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यतो भूयो न जायत'इति । एवं वशीकार्यत्वाय रथिरथादिरूपकविन्यस्तानां मध्ये शरीरातिरिक्तानामिन्द्रियादिशब्दैर्ग-

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥'

इत्यात्मशरीरादिषूपासनोपायेषु वशीकार्यत्वाय रथिरथादिरूपकविन्यस्तेषु परिशिष्टस्य शरीराख्यरूपकविन्यस्तस्य अव्यक्तशब्देन गृहीतेः । 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यारभ्य 'सा काष्ठा सा परा गतिः' इत्यन्तेन वशीकार्यत्वाय ह्युक्त-

---

दितत्वेन शरीरस्यैव रूपकविन्यस्तस्याव्यक्तशब्देन ग्राह्यत्वादिति । ननु 'रूपकविन्यस्तशरीरगृहीते'रिति वक्तव्यम् । विशेषणस्य पूर्वनिपातित्वात् । अथोच्येत विवक्षानिबन्धनत्वाद्विशेषणविशेष्यभावस्यात्र रूपकविन्यस्तं विशेष्यं विवक्षितमिति । तथापि प्रसिद्धविपरीतविशेषणविशेष्यभावविवक्षायाः फलं वक्तव्यमित्याशङ्का भाष्ये रथिरथादिरूपकविन्यस्ते निर्धारणसप्तमीप्रयोगेण निवर्तिता । 'रूपकविन्यस्तशरीरगृहीते'रित्युक्ते शरीराणां मध्ये यद्रूपकविन्यस्तं शरीरं तदेव ग्राह्यं न तु तद्व्यतिरिक्तं शरीरमित्युक्तं स्यात् । तत्र यदि मुक्त्युपयोगि संसारोपयोगि च यद्यावच्छरीरं तत्सर्वं रथत्वेन रूपितं तदा रूपकविन्यस्तव्यतिरिक्तस्य शरीरस्याभावाद्रूपकविन्यस्तेत्येतदव्यावर्तकमिति 'विशेषणं विशेष्येण बहुल'(पा० २.१.५७सू०)मिति समासः विफलः स्यात् । यदि रूपकविन्यस्तव्यतिरिक्तमपि शरीरमिष्यते तदापि तद्विफलमेव । रूपकविन्यस्तव्यतिरिक्तस्य शरीरस्याव्यक्तपदग्राह्यत्वप्रसक्त्यभावात् । 'शरीररूपकविन्यस्तगृहीते'रित्युक्ते तु भाष्यदर्शितेन प्रकारेण रूपकविन्यस्तानामात्मादीनां मध्ये यच्छरीराख्यं रूपकविन्यस्तं तदेव ग्राह्यं न त्वात्मादिकमित्युक्तं स्यात् । तदा शरीरविशेषणं न विफलम् । आत्मादिरूपकविन्यस्तान्तरस्य व्यावर्त्यस्य सत्त्वाद्वक्ष्यमाणरीत्या प्राग्रूपकविन्यस्तानामेव 'इन्द्रियेभ्यः परा ह्यर्था'इति सन्दर्भः परापरभावविवेचनार्थं इत्यव्यक्तपदेन रूपकविन्यस्तान्तरस्य ग्रहणप्रसक्तौ तस्य व्यावर्तनीयत्वाच्च । तथा च परिशेषप्रदर्शनफलं 'शरीररूपकविन्यस्तगृहीते'रिति सूत्रग्रथनमिति भाष्ये निर्धारणसप्तमीप्रयोगेण दर्शितं भवति । स्यादेतत् । रूपकविन्यस्तानामेवे'न्द्रियेभ्य'इत्यादिसन्दर्भो वशीकार्यत्वपरापरभावविवेचनार्थ इत्यस्यार्थस्य सिद्धौ परिशेषादव्यक्तपदेन शरीरं ग्राह्यं स्यात् । सैव कुत इत्याशङ्कायामाह—इन्द्रियेभ्य इति । अयमाशयः । नायं सन्दर्भः पुरुषस्य कृत्स्नजगदपेक्षया परत्वप्रतिपादनार्थः । तथा सति 'विश्वस्मादिन्द्र उत्तर' इतिवत् 'सर्वस्मात्परः पुरुष' इत्येतावत एव वक्तव्यत्वेनेन्द्रियार्थादीनां परापरभाववर्णनवैयर्थ्यप्रसङ्गात् । किं तु तेषामेव परापरभावविवेचनार्थः । स च परापरभावस्तेषां रथिरथादिभावकल्पनाग्रन्थसिद्धायां वशीकर्तव्यतायां प्रधानाप्रधानत्वरूप एव वाच्यः । तथा सत्येव पूर्वग्रन्थेनैकवाक्यतालाभात् । पूर्वग्रन्थे प्राप्यव्यतिरिक्ता वशीकार्या रूपिताः । इहापि परापरभावेन विवेचिताः । सङ्ख्यासाम्येन तत्प्रत्यभिज्ञानाच्च साङ्ख्यतन्त्रसिद्धतत्त्वेष्वान्तर्गणिकभेदेन सङ्ख्यासाम्योपपादनसम्भवेऽपि श्रुतविभाजकोपाधिभिस्सङ्ख्यासाम्यासम्भवात् । किं च परापरभावविवेचनस्य प्रकृतां वशीकार्यतां विना विषयान्तरं न पश्यामः । ननु, तत्तदुपासनफलभूयस्त्वाल्पीयस्त्वं तद्विषयः स्यात् । 'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः । बौद्धा दशसहस्रं तु तिष्ठन्ति विगतज्वराः । पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः । पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यते ॥' इति हि वदन्ति । तत्र

त्तरं परा उच्यन्ते । तदेतत्-

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि॥' इति श्रुतिरेवाग्रे दर्शयति ।

नैवं मनसः इन्द्रियेभ्यः पृथक्परिगणनाभावेन भूततन्मात्रापेक्षया निकृष्टत्वेन तद्विषयत्वे 'अर्थेभ्यश्च परं मन' इत्यस्यानुपपत्तेः । एतेन कारणत्वनिबन्धनं भोक्तारं प्रत्यन्तरङ्गत्वनिबन्धनं वा परत्ववचनमित्यपि शङ्का निरस्ता । इन्द्रियाणामाहङ्कारिकत्वे 'इन्द्रियेभ्यः परा ह्यर्था'इत्यस्य भौतिकत्वे 'अर्थेभ्यश्च परं मन'इत्यस्य चानुपपत्तेः । इन्द्रियेभ्योऽर्थानामन्तरङ्गत्वे तदभावे च तयोरेवानुपपत्तेः । तस्मादिन्द्रियेभ्यः तद्विषया वशीकार्यत्वे पराः । वश्येन्द्रियस्यापि विषयसन्निधौ इन्द्रियविजृम्भणात् । तेभ्यो मनः परम् । मनसि विषयध्यानप्रवृत्तौ विषयासन्निधानेऽपि रागादिविजृम्भणात् । तस्मादपि बुद्धिः परा । अध्यवसायाभावे मनसोऽकिञ्चित्करत्वात् । ततोऽप्यात्मा परः । सर्वस्यापि विषयप्रवृत्तेरात्मेच्छायत्तत्वात् । तत एवात्मा अणुरपि महानिति विशेष्यते । तस्मादपि शरीरं परम् । तदायत्तत्वात्सर्वासामपि पुरुषप्रवृत्तीनाम् । तस्मादपि परः सर्वान्तर्यामी सर्वप्रेरकः परिपूर्णः शिव इति इन्द्रियादयो वशीकार्यतायामुत्तरोत्तरं परा उच्यन्त इत्येव युक्तमिति । 'दर्शयति चे'ति सूत्रशेषं व्याचष्टे-तदेतदिति । वशीकार्यत्वे यदुत्तरोत्तरं परत्वमुक्तं तदेतदियं कठवल्लीश्रुतिरेवाग्रे दर्शयति । 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि' इति मन्त्रेण दर्शयतीत्यर्थः । अस्य मन्त्रस्यायमर्थः । वागुपलक्षितसर्वज्ञानसाधनेन्द्रियजातं मनसि यच्छेत् । बाह्येन्द्रियव्यापकत्वमुत्सृज्य मनोमात्रेणावतिष्ठेत । विषयविकल्पाभिमुखं तन्मनः आत्मनि निश्चितायां बुद्धौ विषयदोषाध्यवसायरूपायां नियच्छेत्तां बुद्धिं महति प्रत्यगात्मनि नियच्छेत् तदुपादेयताविषयां तत्प्रवणां कुर्यात् । तं च प्रत्यगात्मानं निरुपप्लवे परमात्मनि यच्छेत् तच्छेषताप्रतिपत्तिं कुर्यादिति । कथमयमर्थो लभ्यत इति चेत् पूर्वापरपरामर्शेन वागादिशब्देषु छान्दसव्युत्पत्त्याश्रयणात् । क्वचित्किञ्चिन्नियच्छेदिति कर्माधिकरणयुक्तं हि नियमनं द्वितीयादिवाक्येषूच्यते । अतो वागित्यत्र द्वितीयार्थे प्रथमा । 'सुपांसु लु'गिति द्वितीयायास्सुलुग्वा । 'मनसी'इति छान्दसो दीर्घः।'इयाडियाजीकाराणामुपसङ्ख्यान'मिति सप्तम्या ईकारो वा । चतुर्थवाक्ये तदिति लिङ्गव्यत्ययः 'सुपां सुलु'गिति लुग्वा । पूर्ववाक्ये सप्तमीनिर्दिष्टस्यानन्तरवाक्ये द्वितीयया निर्देश इति पूर्ववाक्येषु दर्शनेनात्र तत्पदस्यात्मपरत्वात् । नन्वित्थमनेन मन्त्रेण इन्द्रियमनोबुद्ध्यात्मनां वशीकरणक्रम उक्त इत्यस्तु नाम । तावता कथमिन्द्रियार्थमनोबुद्ध्यात्मशरीरपरमात्मनां वशीकार्यतायामुत्तरोत्तरं प्राधान्यं दर्शितं स्यात् । अर्थशरीरयोस्तत्र ग्रहणमेव नास्ति । गृहीतस्यापि परमात्मनः वशीकार्यत्वं नोक्तम् । वशीकार्यत्वेनोक्तानामपि इन्द्रियादीनामुत्तरोत्तरं हेतुर्न....त इति चेदुच्यते । योगकालकर्तव्येन्द्रियादिनियमनरूपतद्वशीकरणक्रमप्रदर्शनपरोऽयं मन्त्रः । अतः विषयशरीरयोरिहाग्रहणम् । विषयसन्निधानपरिहरणरूपं विषयवशीकरणं हि व्युत्थानकालेऽपि कर्तव्यं हितमितमेध्याशनरूपं शरीरवशीकरणं व्युत्थानकाले तु कर्तव्यं न योगग्रहणेऽपि । अत्रेन्द्रियादीनां वशीकार्यतायां परत्वे 'दर्शयति चे'ति लिङ्गोपन्यासस्य

ततोऽव्यक्तशब्देन वपुरत्र प्रतिपाद्यम् ॥

ननु प्रधानमव्यक्तमिति प्रसिद्धम्, कथमिह शरीरमुच्यत इत्याशङ्कायामाह—

॥ सू ॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

सूक्ष्ममित्यव्यक्तमुच्यते । अव्यक्तमेव शरीरावस्थं कार्यार्हत्वात् अव्यक्तशब्देनोच्यते इति युक्तमेव ॥

---

न वैकल्यम् । स्थालीपुलाकन्यायेनापि लिङ्गोपन्यासदर्शनात् । पूर्वतन्त्रे सौर्यादिषु वैदिकीतिकर्तव्यता 'प्रयाजेप्रयाजे कृष्णलं जुहोती'ति लिङ्गदर्शनादिति समर्थनानन्तरं यत्र 'ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्सञ्जातायु'रित्यादौ वैदिक्या इतिकर्तव्यताया लिङ्गं न दृश्यते तत्र लौकिकमङ्गजातं स्यादिति शङ्कां 'लिङ्गहेतुत्वादलिङ्गे लौकिकं स्या'दिति(जै०)सूत्रेणोद्भाव्य 'लिङ्गस्य पूर्वत्वाच्चोदनाशब्दसामान्यादेकेनापि निरुध्येत यथा स्थालीपुलाकेने'ति(जै०)सूत्रेण तथैव वर्णितत्वात् । परमात्मनो वशीकार्यत्वमुपासनाफलं निवृत्तिपर्यन्तमिन्द्रियादिनियमनाविच्छेदसिद्ध्यर्थम् । इन्द्रियादिप्रेरकत्वेनोपास्यत्वं सर्वात्मना तन्नियम्यत्वरूपतच्छेषत्वानुसन्धानात्मकप्रत्यगात्मवशीकरणोक्त्यैवार्थसिद्धं लिङ्गमिन्द्रियादीनां वशीकार्यतायामुत्तरोत्तरपरत्वे लिङ्गं तन्नियमनक्रमवचनमेव । स्थूलसूक्ष्मसूक्ष्मतरक्रमेणैवोपायोपदेशस्य लक्ष्यवेधाभ्यासादिषु दृष्टत्वात् । तस्मा'दिन्द्रियेभ्यः परा ह्यर्था' इत्यादिसन्दर्भस्थरूपकवाक्यैकवाक्यतासामर्थ्यात् तत्पूर्वका'यच्छेद्वाङ्मनसी'इत्यादिलिङ्गदर्शनाच्च प्राग्रूपकवाक्ये वशीकार्यत्वेनोक्तानामिन्द्रियादीनामुत्तरोत्तरं परत्ववर्णनपरतया शरीरातिरिक्तेष्विन्द्रियादिशब्दैर्गृहीतेषु परिशिष्टं शरीरमव्यक्तपदेन ग्राह्यमिति युक्तमित्युपसंहरति—ततोऽव्यक्तेति ॥ उत्तरसूत्रव्यावर्त्यां शङ्कां दर्शयति—प्रधानमिति । यद्यपि साङ्ख्यतन्त्रसिद्धतत्त्वगणनप्रत्यभिज्ञानासिद्ध्याऽव्यक्तपदस्य प्रधाने तदीया प्रसिद्धिः श्रुताव्यक्तपदार्थनिर्णये न प्रयोजिका, तथापि न व्यक्तमिति यौगिकप्रसिद्धिः प्रधाने सम्भवति न तु शरीर इति शङ्काभिप्रायः ॥ सू ॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ सूक्ष्मपदं व्याचष्टे—सूक्ष्ममित्यव्यक्तमुच्यत इति । अव्यक्तमतीन्द्रियं प्रधानम् । साङ्ख्याभिमतप्रधाननिर्देशके पूर्वसूत्रादानुमानिकपदेऽनुवर्तयितुं शक्येऽप्यत्र पदान्तरेण प्रधाननिर्देशो न साङ्ख्याभिमतमनुमानकल्प्यं स्वतन्त्रं प्रधानमिह निर्दिदिक्षितं तदनुमानस्य द्वितीयाध्याये दूषयिष्यमाणत्वेन तस्याप्रामाणिकत्वात् किंत्वस्मदभिमतं 'क्षरं प्रधानममृताक्षरं हरः' 'क्षरात्मानावीशते देव एकः' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'संसारमोक्षस्थितिबन्धहेतु' रित्यादिश्रुतिप्रसिद्धं परमेश्वराधीनमिति ज्ञापनाय । तुशब्दमवधारणार्थमभिप्रेत्यापेक्षिताध्याहारेण सूत्रं योजयति—अव्यक्तमेवेति । सूक्ष्मस्य प्रधानस्य स्थूलावस्थाविशेषः शरीरमिति सूक्ष्मावस्थावाचकपदेन तदेव स्थूलावस्थं लक्ष्यते । परिशेषेण शरीराव्यक्तपदयोरैकार्थ्यावश्यंभावादिति भावः । ननु तयोरैकार्थ्यावश्यंभावे शरीरपदमव्यक्तलक्षकं किं न स्यादिति शङ्कां 'तदर्हत्वा'दिति सौत्रपदव्याख्यानेन निराकरोति—कार्यार्हत्वादिति । उपासननिरसनरूपकार्यार्हं खलु वशीकार्यप्रदर्शकवाक्ये तत्तारतम्यप्रदर्शकवाक्ये च ग्राह्यम् । तत्तु शरीरावस्थमेव न सूक्ष्मावस्थमिति न वैपरीत्यशङ्कावकाश इति भावः । अतः 'शरीररूपकविन्यस्तगृहीते'रित्युक्तं युक्तमित्युपसंहरति—युक्तमेवेति ॥ तत्रैव

युक्त्यन्तरमाह—

॥ सू ॥ तदधीनत्वादर्थवत् ॥ ३ ॥

आत्मशरीरादिकं परमेश्वराधीनतया अर्थवत् उपासनानिर्वृत्तये भवति। परमेश्वरोऽन्तर्यामी सर्वमात्मादिकं प्रेरयन्नेव चोपासनोपायत्वेन वशीकार्यकाष्ठेति प्राप्यत्वेन च 'सा परा गतिः' इति प्रोच्यते। ततोऽव्यक्तमिह शरीरमेव ॥

॥ सू ॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥

यदि सांख्यं प्रधानमत्राव्यक्तं तदाऽस्य ज्ञेयत्वमुच्येत। न च तदस्ति। ततो न कापिलमव्यक्तम् ॥

---

हेत्वन्तरपरत्वेनोत्तरसूत्रमवतारयति—युक्त्यन्तरमिति ॥ सू ॥ तदधीनत्वादर्थवत् ॥ ३ ॥ 'अर्थव'दित्यस्य विशेष्याध्याहारपूर्वकं सूत्रस्याक्षरार्थमुक्त्वा तस्य युक्त्यन्तरपर्यवसानप्रदर्शनाय तात्पर्यमाह—परमेश्वरोऽन्तर्यामीति। उपासनोपायत्वेन वशीकार्येपूत्तरावधितया परमेश्वरः श्रुतावुच्यते 'सा काष्ठे'ति। तस्य च तथात्वं सर्वान्तर्यामिण इति। तत्प्रेर्यमाणस्य तदधीनस्यैव सतः आत्मशरीरादेरुपासननिर्वर्तनरूपफलकत्वात्। अतो यानि वशीकार्याण्यपेक्ष्य परमेश्वरसर्वोत्तरावधित्वं प्रदर्शयिषितं तेषां सर्वेषामनुपस्थापनेन तदपेक्षं तत्प्रदर्शयितुं न शक्यमिति शरीरेऽपि केनचित्पदेन ग्राह्ये परिशेषादव्यक्तपदेन तद्ग्रहणमिति भावः। अतोऽव्यक्तपदेन शरीरग्रहणमिति सूत्रस्यावृत्त्या हेत्वन्तरपरत्वमित्यभिप्रेत्याह—प्राप्यत्वेन चेति। परमेश्वरः प्राप्यत्वेन चोच्यते 'सा परा गति'रिति। वशीकार्यपरापरभावनिरूपणप्रस्तावे प्राप्यत्ववचनं तदर्थतयैवार्थवद्भक्तुमुचितम्। भवति च शरीरपरमव्यक्तपदमित्यत्रोपपादकस्य परिशेषस्य प्रदर्शनेन तदर्थवत्तदधीनत्वात्परिशेषस्य। अन्यथा रूपकप्रस्तावे 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति पारत्वेन रूपितं परमपदमव्यक्तपदेन गृह्यतामिति शङ्कास्पदत्वेन परिशेषासिद्धेः। तस्मात्परिशेषोपपादनार्थप्राप्यत्ववचनपरामर्शादपि शरीरपरमव्यक्तपदमवसीयत इति भावः। एवं रूपकवाक्ये इन्द्रियादिवशीकरणवाक्यरूपपूर्वापरग्रन्थपर्यालोचनया 'सा काष्ठा सा परा गति' रिति विषयवाक्यान्तर्गतवाक्यद्वयपर्यालोचनया च न्यायविचारणायां नास्त्यत्र साङ्ख्यतन्त्रसिद्धतत्वग्रहणशङ्कावकाश इति समर्थितम् ॥ ये त्वत्र क्रमिकमहदव्यक्तपुरुषश्रवणमात्रसन्तुष्टाः श्रद्धाजडा मन्यन्ते इदमेव वाक्यं साङ्ख्यतन्त्रस्य मूलं भवितुमर्हति न ह्यवेदमूलमत्यन्ताप्ततमाः कपिलादयो महर्षयः प्रणयेयुरिति, तान्प्रत्याह— सू ॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥ यदीदमेव वाक्यं साङ्ख्यमतस्य मूलमभविष्यत्, तदा 'निर्गुणपुरुषान्तरज्ञानात्कैवल्य'मिति वदतां साङ्ख्यानामभिमतं प्रधानस्य मुमुक्षुज्ञेयत्वमपि अत्रावक्ष्यत्। तदत्र नोच्यते। विभूतिविशेषप्राप्तये प्रधानस्योपास्यत्वं तस्य च स्वतन्त्रकारणत्वमित्यादि च तेषामभिमतमत्र नोच्यते। अतो नैतन्मूलकं साङ्ख्यतन्त्रमिति श्रद्धेयम्। न हि यन्मूलमेव शास्त्रं प्रमाणयन्ति तत्र तच्छास्त्रवर्णितं नोक्तमिति युज्यते। नन्वसिद्धं ज्ञेयत्वावचनम्। 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते॥' इत्युत्तरमन्त्र एव हि तस्य ज्ञेयत्वं वदति शब्दादिहीनत्वोक्त्या

ज्ञेयत्वमप्यस्योक्तमस्तीत्याशङ्क्य परिहरति—

॥ सू ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' (कठ० ३-१५, १३) इत्यग्रेतनमन्त्रः अस्यापि ज्ञेयतां वदतीति चेत् न, 'यच्छेद्वाङ्मनसी प्राज्ञः' इति प्राज्ञस्यैव पूर्वं प्रकृतत्वात् । ततोऽव्यक्तं शरीरमेव ॥

प्रधानस्य प्रसङ्ग एव नास्तीत्याह—

॥ सू ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

त्रयाणामुपास्योपासनोपासकानामेवात्र प्रकरणे ज्ञेयतया प्रश्नोपन्यासः क्रियते, न प्रधानादेः । यथा–'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥' (कठ. २-१२)

---

महतः परत्वोक्त्या च निचाय्यस्य ज्ञेयस्य प्रधानत्वावगमादित्याशङ्कामुत्थाप्य परिहरतीत्याह–ज्ञेयत्वमपीति । श्रुत्योच्यमानमिति शेषः ॥ सू ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥५॥ "यच्छेद्वाङ्मनसी प्राज्ञ'इति प्राज्ञस्यैव प्राक्प्रकृतत्वा"दिति परिहारसूत्रांशव्याख्यानस्यायमर्थः । अत्र मन्त्रे'तद्यच्छेच्छान्त आत्मनी'ति यस्मिन् शान्त आत्मनि प्रत्यगात्मनो नियमनमुक्तं यद्विज्ञानायैव च बाह्येन्द्रियमनोबुद्धिप्रत्यगात्मनां संयमनमुक्तं स एव प्राज्ञपरमात्मा निचाय्यत्वेनोच्यते । तस्यैव पश्चात्प्रकृतत्वात् । तस्मान्मन्त्रादधस्तात् 'येषु सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रिति मन्त्रे प्रकृतत्वादिति । यद्वा'यच्छेद्वाङ्मनसी प्राज्ञ'इति मन्त्रे प्राज्ञशब्दः परमेश्वर इत्यभिप्रेत्य प्राज्ञस्य परमेश्वरस्य प्रकृतत्वमुक्तम् । सर्वान्तर्यामी परमेश्वर एवोपासकानुजिघृक्षया तस्य वागादिसंयमनं सम्पादयति 'यमेवैष वृणुते तेन लभ्यः'इति प्रागप्युक्तत्वात् इत्यस्मिन्नर्थे'यच्छेद्वाङ्मनसी'इति मन्त्रस्य तात्पर्यमिति तदभिप्रायः । शब्दादिहीनत्वमक्षरवाक्ययोः परमात्मनोऽपि प्रसिद्धम् । महतो भोक्तुरात्मनः परत्वं च तस्य प्रसिद्धमेव । नन्वस्तु नाम प्राज्ञस्य प्रकरणं तथापि यथात्रैव 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुत'मिति मन्त्रे जीवस्य गतिर्वर्णिता । एव'मशब्द'मिति मन्त्रे प्रधानस्य मुमुक्षुज्ञेयत्ववचनं स्यादित्याशङ्क्याह—सू ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ सौत्रस्यैवमितिपदस्य विवरणं—ज्ञेयतयेति । उपन्यासः प्रतिवचनम् । प्रश्नविहित उपन्यासः प्रश्नोपन्यासः । प्रतिवचनस्य उपास्योपासनोपासकत्रयविषयत्वदर्शनादेव प्रश्नस्य तत्त्रयविषयत्वं स्फुटमवगन्तव्यमिति प्राथमिकस्यापि प्रश्नस्य सूत्रे पश्चान्निर्देशः । तथैव प्रथमं प्रतिवचनमुदाहरति—यथाध्यात्मेति । आदिशब्देन 'मत्वा धीरो हर्षशोकौ जहाती'ति चतुर्थपादो गृह्यते । तावतैव प्रतिवचनस्य तत्त्रयविषयत्वमवगन्तुं शक्यमित्यभिसन्धाय 'तं

---

१ अत्रास्मदवलोकितेषु सर्वेषु मूलपुस्तकेषु 'यथा—तं दुर्दर्शं गूढमनुप्रविष्ट' मित्यादिः 'हर्षशोकौ जहाति ॥' इत्यन्तः संपूर्णो मन्त्र उदाहृतः । 'अध्यात्मयोगाधिगमेन देव'मिति तृतीयपादमात्रोदाहरणविशिष्टो मूलपाठ एव शिवार्कमणिदीपिकाकृदभिमत इति'यथाध्यात्मे'ति प्रतीकोद्धरणादिना स्पष्टमवगम्यते ।

**इत्यादिरुपन्यासः ॥ 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः' (कठ. १-२१) इति, 'अन्यत्र**

---

दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराण'मिति मन्त्रस्य पूर्वार्धं न लिखितम् । अत्र ह्युत्तरार्ध एव 'देवं मत्वे'त्युपास्योपासनयो'रध्यात्मयोगाधिगमेन धीर'इत्युपासकस्य च उपन्यासो दृश्यते । अध्यात्मयोगः उपासकात्मस्वरूपविषयो योगः । येयं प्रेत इति । 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः' इति प्रश्नः । एवमत्रोपाख्यायते—वाजश्रवसो महर्षिः सर्ववेदसदक्षिणेन यज्ञेनेष्ट्वा जरद्गवीर्दक्षिणाः प्रयच्छन् बालेन नचिकेतसा पुत्रेणानर्हदक्षिणादाननिमित्तक्रतुवैकल्यात् पितुरनिष्टमाशङ्कमानेन तदनिष्टं स्वात्मप्रतिपादनेनापि क्रतुसम्पत्तिं कारयित्वा निवारणीयमिति मन्यमानेन 'तत मां कस्मै दास्यसी'ति पुनःपुनः पृष्ट्वा बहुवारप्रश्ननिर्बन्धसञ्जातकोपस्य 'मृत्यवे त्वा ददामी'त्युक्तवतः वचनेन नचिकेतास्तथैव मृत्युलोकं गत्वा मृत्योर्द्वारि तिस्रो रात्रीरनश्नन्नुषित्वा प्रवासागतेन मृत्युना ब्राह्मणो यदनश्नन् द्वारि स्थित इति भीतेन त्रीन्वरान्वृणीष्वेति पृष्टः प्रथमेन वरेण पितुस्सौमनस्यं द्वितीयेनाग्निविद्यां च प्रतिलभ्य अथ 'येयं प्रेत' इति पप्रच्छेति । नायं प्रेतः प्रेतशब्दस्य लोकवेदप्रसिद्ध्या मृतविषयत्वमङ्गीकृत्य मरणानन्तरानुवर्तिजननान्तरानुबन्धिदेहातिरिक्तात्मसदसद्भावविषयो वर्णनीयः । यथाभूतात्मसद्भावे नचिकेतसः प्रागेव विश्वासवत्त्वात् । अन्यथा पितुः क्रतुवैकल्यदोषपरिहारार्थं 'तात कस्मै मां दास्यसी'ति वचनस्य 'मृत्यवे त्वा ददामी'त्युक्तवतः पितुरनृतदोषपरिहारार्थं स्वयं मृत्युलोकजिगमिषासमये 'सस्यमिव मर्त्यः पच्यते सस्यमिव जायते पुन'रिति वचनस्यानुपपत्तेः । नापि 'न प्रेत्य संज्ञास्ती'ति वाक्यमुखे प्रेत्यशब्दप्रयोगानुसारेण प्रेतशब्दस्य प्रकर्षेण इतः पुनरावृत्तिरहितां गतिं प्राप्त इति योगेन मुक्तविषयत्वमङ्गीकृत्य मुक्त्यनन्तरानुबन्धिमलमायादिसकलपाशक्षयपूर्वकं जन्ममृत्युभयशोकाद्यस्पृष्टपरमशिवलोकप्राप्तिमदात्मसदसद्भावविषयो वर्णनीयः । तत्रापि तस्य प्रागेव विश्वासवत्त्वादेव। अन्यथा 'स्वर्गे लोके न भयं किञ्चनास्ति न तत्र मृत्युः न जरया बिभेति । उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोक'इति स्वर्गलोकमहिमवर्णनपूर्वकं 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्ते एतद्द्वितीयेन वृणे वरेणे'ति स्वर्गसाधनाग्निविद्यावरणानुपपत्तेः । स्वर्गलोको ह्यत्र मुक्तप्राप्यः परमशिवलोक एव । 'देवा ह वै स्वर्गं लोकमगमन् । ते रुद्रमपृच्छ'न्नित्यथर्वशिरसि शिवलोके स्वर्गशब्दप्रयोगदर्शनात् इह स्वर्गलोकशब्दस्याशनायापिपासाजरामृत्युभयशोकास्पृष्टत्वेन विशेषितत्वाच्च तस्मै नाचिकेताद्युपदेशानन्तरं तच्चयनफलवर्णनप्रस्तावे 'स मृत्युपाशान्पुरतः प्रणुद्य शोकातिगो मोदते स्वर्गलोके'इति तत्फलस्वर्गप्राप्तेस्सकलसंसारपाशनिवृत्तिपूर्वकत्वेन विशेषितत्वाच्च । न च कर्मणो मुक्तिसाधनत्वं न सम्भवतीति वाच्यम् । उपासनानुग्राहकत्वेन तत्सम्भवात् । तस्मादनिर्णीतविषयस्यास्य प्रश्नस्य प्रतिवचनमालोच्याभिप्रायो वर्णनीयः । प्रतिवचने तु प्रथमं तावत् प्रश्नस्य दुरवगाहविषयत्वं प्रतिपाद्यते । 'देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयमणुरेष धर्म'इति । तदनन्तर'मन्यं वरं नचिकेतो वृणीष्वे'-

**धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' ॥ (कठ. २-१४) इति च प्रश्नः । तस्मात् प्रकृतत्वादपि शरीरमेवा-**

---

त्युपक्रम्य 'येये कामा दुर्लभा मर्त्यलोके सर्वान् कामान् छन्दतः प्रार्थयस्व । इमा रामास्सरथास्सतूर्या न हीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षी'रित्यन्तसन्दर्भे कृतेन ब्रह्मविद्योपदेशोपयोगिवैराग्यपरीक्षार्थेन प्रलोभनव्रातेन प्रलोभ्यमानस्यापि नचिकेतसः 'श्वो भावा मर्त्यस्य यदन्तकेन सर्वेन्द्रियाणां जरयन्ति तेज'इत्यादिना 'अभिध्यायन् वर्णरतिप्रमोदान् अनतिदीर्घे जीविते को रमेते'त्यन्तेन कृतया विषयनिन्दया विषयवैराग्यमुपलक्ष्य विद्याभीप्सिनं नचिकेतसं 'मन्ये न त्वा कामा बहवोऽलोलुपन्ते'ति मोक्षार्थविद्याभीप्सित्वेन तदुपयोगिदृढवैराग्यवत्त्वेन च प्रशंसा कृतोपलभ्यते । तत'स्तं दुर्दर्शं गूढ'मिति मन्त्रे उपास्योपासनोपासकानामतिसङ्क्षिप्तोपदेशः कृतो दृश्यते । ततस्तदनुसारेण तत्रितयं विविच्य वक्तव्यमिति प्रश्नार्थोऽ'न्यत्र धर्मा'दिति मन्त्रः श्रूयते । तत्रा'न्यत्र धर्मादन्यत्राधर्मा'दिति वैषयिकहर्षशोकहेतुधर्माधर्मविलक्षणस्य तदुभयप्रहाणहेतोरुपासनस्य प्रश्नः ।'अन्यत्रास्मात्कृताकृता'दिति कृतमपि कर्म यस्याकृतप्रायं क्षणभङ्गुरफलं तस्मादैहिकामुष्मिककर्मानुष्ठानव्यग्रादमुमुक्षोर्विलक्षणस्य ब्रह्मोपासकस्य प्रश्नः । 'अन्यत्र भूताच्च भव्याच्चे'ति भूतादुत्पन्नादतीतात् वर्तमानाच्च भव्यात् भविष्यतश्च अन्यस्य देवादीनामपि दुरवगाहत्वेन विलक्षणस्योपास्यस्य प्रश्नः । 'यत्तत्पश्यसि तद्वदे'त्यत्र यत्तत्पदयोस्तत्रितयविषयत्वसम्भवात्तदनन्तरं 'तत्ते पदं सङ्ग्रहेण ब्रवीमी'ति प्रतिवचनमुपक्रम्य 'ॐमित्येत'दित्यादिना उपासनसाधनप्रणवप्रशंसाद्वारा प्रणवेन ब्रह्मोपासने प्रदर्शिते 'न जायते म्रियते वा विपश्चि'दित्यादिना सामान्यत उपासकस्वरूपमुच्यते । विशेषतश्च 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' । 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।' इत्यादिमन्त्रैः फलपर्यन्तकर्तृस्वरूपं निरूप्यते । 'यमेवैष वृणुते तेन लभ्य' इति परमशिवानुग्रहकटाक्षविषय एव उपासनायां मुख्योऽधिकारी । तस्मा एव परमशिवः स्वात्मानं प्रकाशयतीत्युच्यते । तथाभूतश्चाधिकारी मन्दमध्यमोत्तमभावैरवगन्तव्यः । ते भावाः पुराणेषु प्रपञ्चिताः । 'प्रसन्ने सति देवेशे पशोस्तस्मिन्प्रवर्तते । अस्ति नाथो ममेत्यल्पा भक्तिर्मुक्तिपुरस्सरम् । कम्पः स्वेदोऽश्रुपातश्च कण्ठे च स्वरविक्रिया । आनन्दाद्युपलब्धिश्च भवेदाकस्मिकी तदा । एतैर्व्यस्तैस्समस्तैर्वा लिङ्गैरव्यभिचारिभिः । मन्दमध्योत्तमैर्भावैर्विज्ञेयास्ते नरोत्तमाः ॥' इति । उपास्यस्वरूपं तु 'अणोरणीया'नित्यादिना प्रपञ्चेन निरूप्यते । एवं च प्रतिवचनसन्दर्भपर्यालोचनया मुक्तिप्रवृत्तिवचनानन्तरविस्मृतप्रतिवचनार्थतया पुनः प्रकृतप्रश्नपर्यालोचनया च 'येयं प्रेत'इति प्रश्नस्त्वन्यविषयस्स्यादिति न शङ्क्यम् । त्रीन्वरान्दत्तवन्तं प्रति स्वतन्त्रचतुर्थप्रश्नायोगेन तस्य तृतीयप्रश्नविवरणत्वेनैव योजनीयत्वात् । तस्मादुपास्योपासनोपासकानां त्रयाणामेवात्र सपरिकराणां निरूपणीयत्वात् स्वातन्त्र्येण साङ्ख्यतन्त्रसिद्धतत्वप्रतिपादनस्य मुमुक्षुज्ञेयत्वेन स्वतन्त्रप्रधानवचनस्यात्र नावकाश इति भावः । सूत्रे प्रथमं चशब्दं हेतुसमुच्चयार्थं व्याकुर्वन् सूत्रार्थमुपसंहरति—तस्मादिति । लिङ्गान्तरमिति । अव्यक्तं न प्रधा-

व्यक्तं न प्रधानम् ॥

किंच लिङ्गान्तरमप्यस्तीत्याह—

॥ सू ॥ महद्वच्च ॥ ७ ॥

यथेह 'बुद्धेरात्मा महान् परः' (कठ. ३-१०) इत्यत्र न तान्त्रिको महान् भवति आत्मशब्दात्, तथा अव्यक्तशब्दादपि न प्रधानमिति निर्णयः ॥

इत्यानुमानिकाधिकरणम् ॥ १ ॥

---

नमिति साध्ये हेत्वन्तरमित्यर्थः ॥ सू ॥ महद्वच ॥ ७ ॥ तान्त्रिको महान्न भवतीत्यत्र सूत्राभिप्रेतं हेतुमाह—आत्मशब्दादिति । व्यापकत्वादियोगादात्मशब्दस्य चेतने रूढेर्वलवत्त्वात् अणावपि जीवे भोक्तृतया प्राधान्याभिप्रायेण महानित्यस्य विशेषणत्वोपपत्तेः। 'महतः परमव्यक्त'मित्यत्र 'महतः परं ध्रुव'मित्यत्र च विशेषणपदेन विशेष्यव्यवहार इत्युपपत्तेः । 'य एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्य'दित्यादौ विशेषणपदेनापि विशिष्टोपलक्षणदर्शनादिति भावः । अत्र 'महतः परमव्यक्त'मित्यादिमन्त्रे निरीश्वरसाङ्ख्यतन्त्रसिद्धस्य महदव्यक्तपञ्चविंशपुरुषक्रमस्य पञ्चविंशातिरिक्ततत्वान्तरनिषेधस्य च प्रत्यभिज्ञामुपन्यसतः पूर्ववादिनो मते जीवातिरिक्तस्य ब्रह्मणः शशशृङ्गकल्पतया तल्लिङ्गं शशशृङ्गतैक्ष्ण्यकल्पं सिद्धान्ते जीवातिरिक्तब्रह्मोपपादनेन सत्तां प्रापणीयमित्यस्पष्टब्रह्मलिङ्गता । एवमुत्तरेष्वपि वाक्यान्वयाधिकरणपर्यन्तेषु चतुर्ष्वधिकरणेष्वप्यस्पष्टब्रह्मलिङ्गता द्रष्टव्या । प्रकृत्यधिकरणस्य सेश्वरसाङ्ख्यमतनिराकरणार्थतया स्पष्टब्रह्मलिङ्गत्वेऽपि प्रासङ्गिकी सङ्गतिरन्त्याधिकरणस्यातीतकृत्स्नाधिकरणन्यायातिदेशरूपस्य विशिष्य नैतस्मिन्पादे सङ्गत्यपेक्षेति च वक्ष्यामः। ननु समनन्तर एव तृतीयपादान्त्याधिकरणे सुषुप्त्युत्क्रान्तिसूत्रेण पत्यादिसूत्रेण च सुषुप्तमुक्तोभयावस्थात् जीवात् भिन्नं शिवतत्वरूपं परं ब्रह्मास्तीति प्रसाधितम् । अत्राप्यधिकरणे सौत्रेण 'एकेषा'मिति पदेना 'नुमानिकमपी'त्यपिशब्देन च शाखान्तरप्राप्तस्य कठशाखायामपि प्रकरणान्तरप्राप्तस्य जीवातिरिक्तब्रह्मतत्वस्यानुमतिरेव सूचिता कथं तदपलापेन पूर्वपक्षः । कृत्वा चिन्तयेति भविष्यति । एवं कृत्वाचिन्तारूपमिदमधिकरणम् । अतः 'पुरुषान्नापरं किञ्चि'दिति वाक्यमवलम्ब्य पञ्चविंशातिरिक्तनिषेधोपन्यासमात्रेण शाखान्तरप्रकरणान्तरगत वाक्यानां जीवातिरिक्तब्रह्मपरत्वमाक्षिप्यैवात्र पूर्वपक्षोपपादनं कार्यमित्येवं न भ्रमितव्यमिति प्रदर्शयितुमे'वानुमानिकमप्येकेषा'मिति सूत्रकृता शाखान्तरप्रकरणान्तरसिद्धब्रह्मानुमतिः सूचिता । अग्रे 'वाक्यान्वया'दिति सूत्रेण तदधिकरणोपयुक्तार्थप्रतिपादनानन्तर- 'मन्यार्थं तु जैमिनि'रिति पूर्वसूत्रानुवृत्तचकारयुक्तेन शाखान्तरप्रकरणान्तरगतवाक्यानां बहूनां जीवातिरिक्ते ब्रह्मणि तत्तदधिकरणोक्तन्यायैरन्वितत्वादपि हेतौ तत्सत्तामपलप्य कृताः पूर्वपक्षाः कर्तुं न युज्यन्त इत्यर्थान्तरस्यापि प्रतिपादकतया पंचाधिकरणशेषेण कृत्वाचिन्तारूपत्वं स्पष्टीकरिष्यते । कृत्वाचिन्तास्तु न्यायव्युत्पादनार्थास्सिद्धान्तस्थैर्यार्थाश्चेति सर्वं समञ्जसम् ॥ १ ॥

इत्यानुमानिकाधिकरणम् ॥ १ ॥

---

१ 'महच्छब्दा'दिति पाठान्तरम् ।

## नयमणिमालायाम्

## अथ आनुमानिकाधिकरणम् ॥ १ ॥

**सू० ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ तदधीनत्वादर्थवत् ॥ ३ ॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ महद्वच्च ॥ ७ ॥**

महतः परमव्यक्तं पुरुषादवरं प्रधानं स्यात् । कपिलमते यदभिमतं तन्मन्त्रप्रत्यभिज्ञानात् ॥ ७२ ॥
प्रागात्मशरीरादि हि रथिरथभावादिकल्पने प्रकृतम् । तत्रात्मादिग्रहणाच्छरीरमवशिष्टमव्यक्तम् ॥ ७३ ॥

## इत्यानुमानिकाधिकरणम् ॥ १ ॥

---

### शिवाभ्यां नमः ।

## सूत्रार्थचन्द्रिकायाम्

### अथ प्रथमस्याध्यायस्य तुरीयः पादः । अथ आनुमानिकाधिकरणम् ॥ १ ॥

**सू० ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ तदधीनत्वादर्थवत् ॥ ३ ॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ महद्वच्च ॥ ७ ॥**

भगवत्पादमते, अस्मिन्पादे पदमात्रसमन्वयोऽभिधीयते । ईक्षत्यधिकरणे प्रतिज्ञातं प्रधानस्याशब्दत्वमसिद्धं कासुचिच्छाखासु प्रधानसमर्पणाभासानां शब्दानां श्रूयमाणत्वात् इत्याशंक्य तेषामन्यपरत्वप्रदर्शनार्थमिदमारभ्यते—**आनुमानिकमित्यादि** । अस्य 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परागतिः ॥' इति कठवल्लीवाक्यस्थमव्यक्तपदं विषयः । तत्किं प्रधानपरमुत शरीरपरमिति स्मृतिप्रकरणाभ्यां संशयः । स्मार्तक्रमरूढिभ्यां शब्दस्पर्शादिशून्यत्वेन योगसंभवाच्च अव्यक्तशब्दः प्रधानपर इति पूर्वपक्षः । प्रकरणबलात् स्मार्तक्रमाच्छ्रौतक्रमस्य प्रकरणाद्यनुग्रहेण बलवत्त्वात्, शरीरस्यैव रथसादृश्येन विन्यस्तस्य पूर्ववाक्ये आत्मबुद्ध्योर्मध्यस्थानपठितस्यात्रापि मध्यस्थेनाव्यक्तशब्देन ग्रहणात्, इतराणीन्द्रियादीनि प्रकृतान्येव परमपददिदर्शयिषया समनुक्रामन्त्या श्रुत्या परिशिष्यमाणेनेहान्त्येनाव्यक्तशब्देन परिशिष्यमाणस्य प्रकृतस्य शरीरस्य प्रदर्श्यमानत्वात् स्थूलशरीरस्याव्यक्तशब्दानर्हत्वेऽपि कार्यकारणयोरभेदन्यायेन स्थूलशरीरारम्भकभूतसूक्ष्मस्याव्यक्तशब्दार्हस्यात्राव्यक्तशब्देन विवक्षितत्वात्, सूक्ष्मशब्दितप्रागवस्थाभ्युपगमेऽपि कूटस्थब्रह्मणस्स्रष्टृत्वसिद्ध्यर्थं बन्धमुक्तिव्यवस्थार्थं च तस्या ईश्वराधीनाया अभ्युपगमस्यार्थवत्त्वेनावश्यकत्वेन च स्वतन्त्रप्रधानकारणवादाप्रसक्तेः, अस्याव्यक्तशब्दोदितस्य ज्ञेयत्वानुक्तेः, ज्ञेयत्वप्रतिपादकस्य 'शब्दमस्पर्श' मित्यादिवाक्यस्य प्रकरणबलात्प्राज्ञपरत्वनिश्चयात्, अत्र कठवल्लीश्रुतौ अग्निजीवपरमात्मनां त्रयाणामेव प्रश्नानुगुण्येनोपन्यसनीयत्वात् महच्छब्दवदव्यक्तशब्दस्यापि सांख्यासाधारणतत्त्वपरत्वानभ्युपगमस्य न्याय्यत्वाच्च, अव्यक्तशब्दः शरीरपर एवेति सिद्धान्तः । सूत्रार्थस्तु, **॥ सू० ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ आनुमानिकमपि**=अनुमाननिरूपितमपि प्रधानम् । **एकेषाम्**=केषां चित् शाखिनां शब्दवदुपलभ्यत इति **चेन्न शरीररूपकविन्यस्तगृहीतेः**=रूपकेण रथसादृश्येन विन्यस्तम् । शरीरमेव रूपकविन्यस्तं शरीररूपकविन्यस्तम् । तस्य **गृहीतेः**=पूर्ववाक्ये आत्मबुद्ध्योर्मध्यस्थानपठितस्यात्रापि मध्यस्थेनाव्यक्तशब्देन ग्रहणात् । **दर्शयति च**=श्रुतिरिति शेषः । इतराणि इन्द्रियादीनि प्रकृतान्येव समनुक्रामन्ती श्रुतिः अव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयतीत्यर्थः ।

स्थूलत्वात्स्पष्टतरस्य व्यक्तशब्दार्हस्यास्य शरीरस्य कथमव्यक्तशब्दार्हत्वमित्याशंक्याह—**सू० ॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ सूक्ष्मं तु**=कारणात्मना सूक्ष्मं शरीरं विवक्षितम् । कुतः । **तदर्हत्वात्**=सूक्ष्मस्याव्यक्तशब्दार्हत्वात् इत्यर्थः । 'तद्धेदं तर्ह्यव्याकृतमासी' दिति श्रुतिश्च व्याकृतमिदमेव जगत्प्रागवस्थायामव्याकृतनामरूपमव्यक्तशब्दयोग्यं दर्शयति ॥ २ ॥

तदेवं सूक्ष्मशब्दितप्रागवस्थाभ्युपगमे प्रधानकरणवादापत्तिमाशंक्य निराकरोति—**सू० ॥ तदधीनत्वादर्थवत् ॥ ३ ॥ तदधीनत्वात्**=अव्याकृतस्याव्यक्तशब्दार्हस्य, अविद्यामायाकाशाक्षरादिशब्दशब्दितस्य परमेश्वराधीनत्वात् । **अर्थवत्**=कूटस्थब्रह्मणस्स्रष्टृत्वसिद्ध्यर्थं बन्धमुक्तिव्यवस्थार्थं च तत्स्वीकारावश्यंभावात् तदव्यक्तं सार्थकं च भवति । अतः परकल्पितसत्यस्वतन्त्रप्रधानकारणवादस्य नात्र प्रसक्तिः ॥ ३ ॥

**सू ॥ ज्ञेयत्वावचनाच्च** ॥ ४ ॥ 'गुणपुरुषान्तरज्ञानात्कैवल्य'मिति वदद्भिः सांख्यैः प्रधानं ज्ञेयत्वेन स्मर्यते । तद्वदिहाव्यक्तस्य ज्ञेयत्वं नोच्यते । अतोऽपि नात्र प्रधानस्य प्रसक्तिः ॥ ४ ॥

ज्ञेयत्वमप्युक्तमस्तीत्याशंक्य परिहरति—**सू ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात्** ॥ ५ ॥ 'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥' इति वाक्यं प्रधानस्य निचाय्यत्वेन निर्दिष्टस्य ज्ञेयत्वं **वदतीति चेत्** । **न**=नेह प्रधानं ज्ञेयत्वेन निर्दिश्यते । किं तु । **प्राज्ञोहि**=इह प्रकरणे परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते । कुतः । **प्रकरणात्**='पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ।' इत्यादिनिर्देशात् । प्राज्ञस्य हीदं प्रकरणम् । अतः प्रधानस्य न ज्ञेयत्वमव्यक्तशब्दार्हत्वं वा ॥ इति ॥ ५ ॥

इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वेत्याह— **सू॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च** ॥ ६ ॥ अस्मिन्ग्रन्थे त्रयाणामेव पदार्थानामग्निजीवपरमात्मनां वक्तव्यतयोपन्यासो दृश्यते । प्रश्नश्च तद्विषय एव । नात्र प्रधानविषयः प्रश्नोऽस्ति । न वा तस्योपन्यसनीयत्वम् ॥ ६ ॥ इति ।

सांख्यप्रसिद्धेर्वेदप्रसिद्ध्या विरोधाच्च न सा वेदार्थनिर्णयहेतुरिति सदृष्टान्तमाह—**सू ॥ महद्वच्च** ॥ ७ ॥ यथा महच्छब्दस्सांख्यसाधारणतत्त्वगोचरो न भवति तथा अव्यक्तशब्दोऽपि न प्रधानपरो भवितुमर्हति ॥ अतश्च न प्रधानस्य शब्दत्वमिति भावः ॥ ७ ॥ इति ॥

**श्रीकण्ठमते,** इह पादे अस्पष्टब्रह्मलिंगानि कति चन वाक्यानि विचार्यन्ते । विषयवाक्यं समानम् । पूर्वपक्षसिद्धान्तादिकं सर्वं प्रायेणाविशिष्टम् । सूत्रार्थवर्णने परमस्ति कियद्वैलक्षण्यम् । '**आनुमानिक**'मिति सूत्रे '**दर्शयति च**' इत्यस्य 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥' इति श्रुतिरेवाग्रे दर्शयतीत्यर्थः ।

**सू ॥ सूक्ष्मं तु तदर्हत्वात्** ॥ २ ॥ अव्यक्तमेव शरीरावस्थं कार्यार्हत्वादव्यक्तशब्देनोच्यत इत्यर्थः ॥

**सू ॥ तदधीनत्वादर्थवत्** ॥ ३ ॥ आत्मशरीरादिकं **तदधीनत्वात्**=परमेश्वराधीनत्वात् । **अर्थवत्** । उपासननिर्वृत्तये भवति । अन्तर्यामिणः परमेश्वरस्यैवोपासनादिषु प्रेरकत्वादित्यर्थः । इतराणि सूत्राणि अविशिष्टानीति न पुनः प्रपञ्च्यन्ते ॥

**रामानुजमते,** विषयवाक्यपूर्वपक्षसिद्धान्तसूत्रार्थादिकं सर्वं श्रीकण्ठमतादविशिष्टम् । 'तदधीनत्वा'दिति सूत्रे परं परमपुरुषशरीरतया तदधीनत्वाद्भूतसूक्ष्ममव्याकृतमर्थवदिति प्रकारान्तरेणापि व्याख्यातमिति श्रीकण्ठमताद्विशेषः ॥

**आनन्दतीर्थमते वदतीति चेन्न प्राज्ञो हि । प्रकरणात् ।** इति योगविभागेन '**चमसवदविशेषात्**' इति सूत्रसंकलनेन च सूत्रनवकमेकमधिकरणम् । अस्य यद्यपि विषयवाक्यमविशिष्टम् । तथापि 'जीवा एव तु दुःखिनः' इति किंचिद्वाक्यान्तरमपि विषयतया संयोजितमित्यस्ति विशेषः । अत्र अव्यक्तजीवशब्दौ मुख्यार्थौ किं प्रधानपुरुषौ उत विष्णुरिति संशयः । अव्यक्तजीवशब्दयोस्तयोरेव प्रसिद्धेः पञ्चम्युक्तावरत्वजीवगतबहुत्वदुःखित्वादिधर्माणां विष्णावभावाच्च प्रधानपुरुषाविति पूर्वपक्षः । 'अव्यक्तमचलं शान्तम्' 'अनेन जीवेन' इत्यादि वचनबलात् सर्वान्तर्यामितया सर्वनियन्तृत्वात्, सर्वनामाश्रयत्वात्, स्वातन्त्र्यरूपप्रवृत्तिनिमित्ताश्रयत्वाच्च, अव्यक्तजीवशब्दाभ्यां विष्णुरेवाभिधीयत इति सिद्धान्तः ॥ **सूत्रार्थस्तु, सू । आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** ॥ १ ॥ अपिरेवार्थे । चः स्मृतिसमुच्चये । यतः **सांख्यानुमानकल्पितं** प्रधानाद्येव **एकेषां** शाखिनां शाखास्थिता'व्यक्तात्पुरुष'इत्यादिशब्दैरुच्यते । अतः विष्णोः सर्वशब्दवाच्यत्वं न युज्यत इति **चेन्न** । यतः विष्णुरेवाव्यक्तादिशब्दवाच्यः । न प्रधानादिः । कुतः । यतः 'अव्यक्त'मिति श्रुतिः 'अव्यक्तोऽक्षर' इति स्मृतिश्च=**दर्शयति**=विष्णोरेवाव्यक्तादिशब्दवाच्यत्वं प्रतिपादयति, अत इत्यर्थः । कथं तर्हि अन्यत्राव्यक्तादिशब्दव्यवहार इत्यत उक्तं **शरीररूपकेत्यादि** । कप्रत्ययः कुत्सने । तथा च **शरीररूपकविन्यस्तगृहीतेः**=यथा शरीरं पुरुषतन्त्रं तथा परमात्मतन्त्रत्वेन निमित्तेन कुत्सितत्वात् शरीरसमे अशरीरे प्रधानादौ विन्यस्तस्य परमात्मन एव अव्यक्तादिशब्दैर्गृहीतेः ग्रहणात् । तथा च परमात्मसंबन्धादेव अन्यत्र प्रकृत्यादावव्यक्तादिशब्दवाच्यत्वव्यवहार इत्यर्थः ।

**सू ॥ सूक्ष्मं तु तदर्हत्वात्** ॥ २ ॥ **सूक्ष्मं तु**=सूक्ष्ममेवाव्यक्तशब्दवाच्यम् । कुतः । **तदर्हत्वात्**=तस्य सूक्ष्मस्याव्यक्तशब्दप्रवृत्तिनिमित्तयोग्यत्वात् । तत्र सूक्ष्मत्वं विष्णोरेवातस्तस्यैवाव्यक्तशब्दवाच्यत्वमित्यर्थः ॥

**सू ॥ तदधीनत्वादर्थवत्** ॥ ३ ॥ 'दर्शयति चे'त्यतश्च शब्दोऽनुवर्तते । परमात्मन्येव परावरदुःखिबद्धत्वादिवाचि शब्दजातम् । **अर्थवत्**=प्रवृत्तिनिमित्तरूपार्थवत् । न व्यर्थम् । कुतः । **तदधीनत्वात्**=तेषां प्रधानादिगतपरावरत्वादिधर्माणां भगवदधीनत्वात् । तथा च अन्यगतप्रवृत्तिनिमित्तस्वामित्वरूपनिमित्तेनापि भगवति परावरादिशब्दप्रयोगो युक्त इति भावः ।

**सू ॥ ज्ञेयत्वावचनाच्च** ॥ ४ ॥ 'तमेवैकं जानथे'ति विष्णोरेव मोक्षार्थं ज्ञेयत्ववचनात् अन्येषां तदवचनात् प्रत्युत 'विमुञ्चथे'ति हेयत्ववचनात् अत्रत्याव्यक्तादिशब्दैर्विष्णुरेव वाच्य इत्यर्थः ॥

## अथ चमसवदधिकरणम् ॥ २ ॥

अप्रकृतत्वादिह न प्रधानप्रस्ताव इति भवतु। अन्यत्र प्रधानमेव कारणत्वेन श्रूयत इत्याशङ्क्याधिकरणमिदमारभ्यते–

### ॥ सू ॥ चमसवदविशेषात् ॥ ८ ॥

श्वेताश्वतरोपनिषदि श्रूयतेऽस्य विषयः–

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' ॥ ॥ इति ॥ इह सर्वप्रपञ्चकारणत्वेन जन्मरहितत्वादजेति श्रूयमाणा प्रकृतिः सांख्यसिद्धा परा वा ॥

इति संशये सांख्यसिद्धेति वक्तुं युक्तम्। 'अजाम्' इति जन्माभाववचनात्, सर्वप्रजाकारणत्वाच्च, 'लोहितशुक्लकृष्णाम्' इति वर्णोपलक्षितगुणत्रया-

---

### अथ चमसवदधिकरणम् ॥ २ ॥

पूर्वाधिकरणेन प्रत्युदाहरणसङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति–अप्रकृतत्वादिति। इह 'महतः परमव्यक्त'मित्यत्र प्रधाननिर्देशो मा भूत्। प्रकरणस्य प्रश्नोपन्यासाभ्यां त्रिष्वेव नियन्त्रितत्वात्। ततोऽन्यत्र श्रुत्यन्तरे स्वतन्त्रप्रधानं कारणत्वेन श्रूयत इत्याशङ्कानिराकरणार्थमिदमधिकरणमारभ्यत इत्यर्थः ॥ सू ॥ चमसवदविशेषात् ॥ ८ ॥ इत्यादीति। 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इत्युत्तरार्धमादिशब्देन गृहीतम्। अस्य मन्त्रस्य तावदयमर्थः प्रतीयते। काञ्चिच्छागां त्रिवर्णां सरूपबहुवर्करामेकः छागः प्रीयमाणोऽनुवर्तते। अन्यस्तामुपभुक्तां जहातीति लोके सम्भवन्नप्ययमर्थो वेदे विशिष्य चाध्यात्मप्रकरणे न सम्बन्धमर्हतीत्यजाशब्दं योगेन प्रकृतिपरं व्याचक्षाणः सा प्रकृतिः किं साङ्ख्याभिमता स्वतन्त्रा उत सिद्धान्ताभिमता परमेश्वराधीनेति जन्मरहितत्वं परमेश्वरकारणकत्वं च कोटिद्वयबीजमभिप्रेत्य संशयं दर्शयति–इहेति। ननु जन्माभाववचनं गौणं नीयतां लोहितादिवचनवदित्याशङ्क्याह–सर्वेति। 'बह्वीः प्रजास्सृजमाना'मिति सकलकार्यकारणत्वस्य श्रवणात्तन्निर्वाहाय जन्मरहितत्वं मुख्यमेवाङ्गीकर्तव्यम्।

---

सू ॥ वदतीति चेन्न प्राज्ञो हि ॥ ५ ॥ ननु 'अनाद्यनन्त'मिति काठकवाक्यं वदतीति चेत्=प्रधानं प्रतिपादयत इति तस्यापि ज्ञेयत्वमस्तीति चेत्। न। कुतः। हि=यतस्तत्र प्राज्ञः=प्राज्ञशब्दितः परमात्मैव प्रतिपाद्यते। न प्रधानम्। अतो न तस्य ज्ञेयत्वं मन्तव्यमित्यर्थः ॥

सू ॥ प्रकरणात् ॥ ६ ॥ वैष्णवरूपाणां त्रयाणां प्रकरणबलाच्च प्राज्ञ एवात्र प्रतिपाद्य इत्यर्थः ॥

सू ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ७ ॥ युक्तिसमुच्चये यत इत्यर्थे च चकारः। एवशब्दः प्रकारत्रैविध्यपरामर्शकः। तथा च यतः एवं त्रयाणामेव=पितृसौमनस्यस्वर्ग्याग्निपरमात्मरूपाणां त्रयाणामेव तद्विषयक एव प्रश्नः नचिकेतसा यमं प्रति कृतः तेषामेवोपन्यासः प्रतिवचनं चात्र प्रकरणे दृश्यते। अतो नात्र प्रधानं प्रतिपाद्यमित्यर्थः ॥

सू ॥ महद्वच्च ॥ ८ ॥ चः दार्ष्टान्तिकसमुच्चये। 'महान्तं विभुमात्मान' मित्यादिवाक्यगतमहच्छब्दस्य यथा विष्णुपरत्वमेव न महत्तत्त्वपरत्वं तद्वदव्यक्तादिशब्दस्यापीत्यर्थः ॥

सू ॥ चमसवदविशेषात् ॥ ९ ॥ चमसवत्=यथा यज्ञपात्रे प्रसिद्धस्यापि चमसशब्दस्य 'इदं तच्छिर' इति श्रुतिबलेन शिरोवाचकता तद्वदव्यक्तादिशब्दस्य प्रधानादौ प्रसिद्धत्वेऽपि विष्णुवाचकत्वमेव। कुतः। 'नामानि सर्वाणि' इति श्रुतेः। ननु तथापि कुतो विष्णुवाचकत्वमित्यत उक्तम् अविशेषादिति='नामानि सर्वाणि' इति श्रुतेः इदमिति श्रुत्या विशेषाभावादित्यर्थः ॥ इति आनन्दतीर्थमते आनुमानिकाधिकरणम् ॥ १ ॥

इति सूत्रार्थचन्द्रिकायामानुमानिकाधिकरणम् ॥ १ ॥

---

( १ ) 'इत्यादी'ति प्रतीकोद्धरणतद्व्याख्यानाभ्यां पूर्वार्धमात्रसहितः पाठष्टीकाभिमत इति प्रतीयते।

वगमाच्च । तदन्यस्याः कस्याश्चिदेवंविधत्वं न युक्तम् ॥

इति प्राप्ते सिद्धान्त उच्यते—न तन्त्रसिद्धा प्रकृतिरिह कारणत्वेनोच्यते । न हि जन्माभावमात्रेण तस्या एव प्रतीतिः । 'अर्वाग्बिलश्चमसः' इतिवत् प्रकरणे विशेषकाभावात् । यथा 'इदं तच्छिरः' इति चमसो विशेष्यते । यौगिकाद्विशेषप्रतीतिर्हि विशेषकापेक्षा । ततो न तान्त्रिकी प्रकृतिरिति ॥

तन्त्रसिद्धायाः प्रकृतेरन्या कीदृशीत्यत आह—

॥ सू ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

ज्योतिरिति परमेश्वर उच्यते । परमेश्वरकारणिकेयमजा प्रकृतिरुच्यते । तथा परमेश्वरकारणिकाया एव प्रतिपादकमेके तैत्तिरीयास्तत्स्वरूपमन्त्रमधीयते ।

---

लौहित्यादिवचने तथा मुख्यार्थतात्पर्यग्राहकप्रमाणाभावात्सिद्धान्ताभिमतप्रकृतावपि मुख्यस्य लौहित्यादेरसम्भवाच्च । कुसुम्भसलिलान्धकारगतरञ्जकत्वप्रसन्नत्वावारकत्वगुणयोगादनेकरजस्सत्वतमोगुणेषु लोहितादिशब्दा गौणा इति लोहितादिवचनस्य गुणत्रये तात्पर्यमनुमेयमिति भावः । ननु सिद्धान्तेऽपि प्रकृतेर्जन्मरहितत्वमभ्युपगम्यत इत्याशङ्क्याह—तदन्यस्या इति । 'प्रज्ञा च तस्मात्प्रसृता पुराणी'ति परमेश्वरकारणकत्वेन क्लृप्तायाः प्रकृतेर्मुख्यजन्मरहितत्वं न सम्भवतीति भावः । तस्मात्साङ्ख्याभिमतप्रकृतिरेवात्र ग्राह्येति पूर्वपक्षमुपसंहरति—इतीति । सौत्रेण हेतुवचनेनाभिप्रेतां प्रतिज्ञामध्याहरति—तन्त्रसिद्धेति । चमसे यथा विशेषकमस्ति एवमत्र विशेषकाभावादिति सौत्रस्य हेतोर्व्याकारिष्यमाणस्यासिद्धिमाशङ्क्य परिहरति—जन्मेति । जन्मराहित्येऽपि परमेश्वरकारणकत्वं वक्ष्यमाणरीत्या सिद्धान्ताभिमतप्रकृतेस्सम्भवति । अतो जन्माभावश्रवणमात्रान्न साङ्ख्याभिमतप्रकृतिग्रहणे नियामकमित्यभिप्रायः । 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न्य' इति मन्त्रे चमसशब्दस्य चम्यते अनेनेति योगेन भक्षणसाधनमात्रपरस्य शिरःपरत्वे यथा विशेषकमस्ति 'इदं तच्छिर' इति प्रकरणे वाक्यमेवमत्र न जायत इति योगेनाजन्ममात्रपरस्याजाशब्दस्य साङ्ख्याभिमतप्रकृतिपरत्वे विशेषकाभावादिति सौत्रं हेतुं व्याचष्टे—अर्वाग्बिलइति । ननु यौगिकात् पङ्कजोद्भिदादिशब्दादभिमतविशेषप्रतीतिः प्रकरणे विशेषकमनपेक्ष्यापि दृष्टं तद्वदिहापि स्यादित्याशङ्क्याह—यौगिकादिति । केवलयौगिको यश्शब्दः तस्मात् यौगिकार्थान्तरविशेषप्रतीतिर्विशेषकापेक्षेत्यर्थः । अतः पङ्कजशब्दस्य पद्मे रूढेरपि सत्त्वादुद्भिज्जत्वे यौगिकार्थस्यैव विशेषाकारत्वेन तदवान्तरविशेषप्रतीत्यपेक्षाभावाच्च तदुभयव्यावृत्तिः । अतो विशेषकाभावात् तान्त्रिकी प्रकृतिरिह न ग्राह्येत्युपसंहरति—तत इति । विशेषाभावस्सिद्धान्ताभिमतप्रकृतावपि तुल्य इत्याशङ्कामुद्भाव्य तदुत्तरत्वेनोत्तरसूत्रमवतारयति—तन्त्रसिद्धाया इति ॥ सू ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ 'तं देवा ज्योतिषां ज्योति'रित्यादिश्रुतिप्रसिद्धेर्ज्योतिश्शब्दो ब्रह्मपर इत्याह—ज्योतिरिति । उपक्रमशब्दं कारणपरमभिप्रेत्याह—परमेश्वर इति । हिशब्दं भिन्नक्रमयोजनेन हेतुपरं दर्शयन् अस्य मन्त्रस्य शाखान्तरे परमेश्वरकारणिकाया एव प्रकृतेः प्रतिपादकत्वेनाध्ययनादित्यर्थे सूत्रशेषं योजयति—तथेति । हेतोरसिद्धि-

'अणोरणीयान् महतो महीयान्' इति परमेश्वरमुपक्रम्य 'सप्त प्राणाः प्रभवन्ति तस्मात्' इत्यादिना प्रपञ्चस्य परमेश्वरादुत्पत्त्या तदात्मकत्वप्रतिपादनसमये हि 'अजाम्' इति पठन्ति । अतस्तत्प्रत्यभिज्ञानादियमजाऽपि परमेश्वरकारणिकेति निश्चीयते । अतो न तन्त्रसिद्धेति वादो युक्तः ॥

ननु परमेश्वरकारणिकेत्यस्याः परमेश्वरकार्यत्वमुच्यते । कथमस्यास्तादृश्या अजामिति वाद इत्याशङ्क्याह–

॥ सू ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

कल्पनेति सृष्टिरुच्यते–

'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' ॥ इति सृष्ट्युपदेशादजात्वमहेश्वरकार्यत्वयोरविरोधः ।

---

माशङ्क्य परिहरति–अणोरिति । 'अणोरणीया'निति मन्त्रे प्रस्तुतात् परमेश्वरात् प्राणादिरूपस्य सर्वस्य प्रपञ्चस्योत्पत्त्या तदात्मकत्वं प्रतिपाद्यते । 'सप्त प्राणाः प्रभवन्ति तस्मा' दित्यादिना 'यस्माज्ज्यायानपरो नैव कश्चनासे'त्यन्तेन तन्मध्ये'बह्वीः प्रजा जनयन्तीं सरूपा' इति द्वितीयपादे किञ्चित्पाठभेदेनामुं मन्त्रमधीयते । ततश्च यथा दर्शपूर्णमासप्रकरणपठितं 'ताभ्यामेवमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ' दिति वाक्यमिन्द्रवृत्तान्तमात्रविषयतया प्रतीयमानमपि प्रकरणानुरोधादिन्द्रेणाग्नीषोमाभ्यां दत्ततयोच्यमानस्यैकादशकपालपुरोडाशद्रव्यकयागस्यानुष्ठेयत्वेन प्रतिपादकमङ्गीक्रियते, तथा संसार्यसंसारिजीववृत्तान्तमात्रविषयतया प्रतीयमानोऽप्यजामन्त्रः पूर्वापरपरामर्शानुरोधात्तदीयभोगत्यागविषयतयोच्यमानायाः सकलकार्यजनयित्र्याः प्रकृतेः परमेश्वरसृज्यत्वेन प्रतिपादकोऽङ्गीकर्तव्य इत्यर्थः । सूत्रे तुशब्दोऽवधारणार्थः । एवमेवाङ्गीकर्तव्यम् । श्वेताश्वतरोपनिषद्यपि'यो योनिंयोनिमधितिष्ठत्येकः' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्यादिमन्त्रपर्यालोचनया परमेश्वराधीनाया एव प्रकृतेः प्रतिपादनमिति प्रतीतेः । अतः 'सृजमाना' मिति सृष्टौ स्वातन्त्र्यप्रतीतेः साङ्ख्याभिमतस्वतन्त्रप्रकृतेः प्रतिपादनमिहाङ्गीकर्तव्यमित्यपि शङ्का निरवकाशा । 'यो योनिं योनिमधितिष्ठत्येक' इति मन्त्रानुसारेण 'आधोरणाधिष्ठितो गजो गच्छती'त्यत्र गच्छतिपदस्येव प्रयोज्यकर्तृत्वलक्षणस्वातन्त्र्यमात्रपरत्वे परप्रेर्यत्वरूपस्वातन्त्र्यपरत्वाप्रतीतेरिति भावः ॥ जन्मराहित्यपरमेश्वरसृज्यत्वयोर्विरोधशङ्कायां उत्तरत्वेनोत्तरसूत्रमवतारयति–नन्विति ॥ सू ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ सृष्टिरुच्यत इति । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' 'सर्गादौ भगवान्धाता यथापूर्वमकल्पय'दित्यादिश्रुतिस्मृतिषु कल्पयतिधातोः सृष्टौ प्रयोगदर्शनादिति भावः । सृष्ट्युपदेशवाक्योदाहरणेन सौत्रं हेतुं विशदयन् चशब्दमवधारणार्थं कृत्वा तस्य 'अविरोध' इति प्रतिज्ञयान्वयं दर्शयति–मायां त्विति । 'अस्मान्मायी'ति विश्वसृष्ट्युपदेशवाक्यमिहोदाहरणीयम् । तत्र मायीति निर्दिश्यमानो मायावी सृष्टौ विश्वस्रष्टा महेश्वरशब्दवाच्यत्वेन लोकप्रसिद्धः परमशिव एवेति प्रदर्शनाय 'मायां त्वि'ति तदनन्तरमन्त्रोऽप्युदाहृतः। ननु'अस्मान्मायी'ति वाक्यात् जन्मराहित्य-

तथा हि—प्रलयकाले नामरूपे विहायाचिद्वस्तुरूपा मायाऽपि सूक्ष्मरूपेण महेश्वरस्य शरीरतया तिष्ठतीत्यजा सृष्टिसमये नामरूपोपेता तत्कारणिकेति । यथा आदित्यस्य सृष्टिसमये वस्वादिभोग्यरसाधारत्वेन मधुत्वं कार्यत्वं च, तस्य पुनः प्रलयकाले मध्वादिव्यपदेशानर्हात्यन्तसूक्ष्मरूपेणावस्थानात् अकार्यत्वं च मधुविद्यायां प्रतीयते । 'असौ वा आदित्यो देवमधु........नैवोदेता नास्तमेता एकल एव मध्ये स्थाता' इति श्रुतेः । एवं प्रकृतेरजात्वेश्वरकारणिकात्वयोरविरोधः । तस्मादजा न तन्त्रसिद्धा ॥ इति चमसवदधिकरणम् ॥ २ ॥

---

महेश्वरसृज्यत्वयोरविरोधो न लभ्यत इत्याशङ्क्य ततस्तल्लाभमुपपादयति—तथा हीति । 'मायी'ति विश्वस्रष्टुर्मायाविशिष्टत्ववर्णनेन तदानीमप्यविभक्तनामरूपा प्रकृतिः सूक्ष्मरूपेण महेश्वरस्य विशेषणतया तिष्ठतीति प्रदर्शनात् जन्मराहित्यम् 'अस्मा'दिति पञ्चम्यन्तेन सृष्टिसमये मायारूपात् स्वविशेषणात् विश्वं सृजतीति प्रकृतेर्विश्वोपादानत्ववर्णनेन उपादानोपादेयभावेन भेदप्रदर्शनं तस्या एव कार्यात्मना परमेश्वरकारणकत्वमित्युभयोर्विरोधः ततो लभ्यत इत्यर्थः । अचिद्वस्तुरूपेति । सर्गकाले जगत्प्रकृत्याद्यचिद्वस्तुपरिणामवती परप्रकृतिरूपा माया प्रलये परिणामरहिता सती सूक्ष्मरूपेण वर्तत इत्यर्थः । 'मध्वादिव'दिति दृष्टान्तभागं व्याचष्टे—यथेति । यथा सूर्यस्य सृष्टिसमये मधुत्वकार्यत्वोदयास्तमयवत्त्वं प्रलयसमये तदभावश्चेत्युभयोरविरोधः । मधुविद्यायां तथा श्रवणात् । एवं प्रकृतेऽप्यविरोध इत्यर्थः ॥ २ ॥ इति चमसवदधिकरणम् ॥ २ ॥

---

नयमणिमालायाम्

## अथ चमसवदधिकरणम् ॥ २ ॥

सू॰चमसवदविशेषात्॥८॥ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥९॥कल्पनोपदेशाच्च मध्वादिवदविरोधः॥

निर्विचिकित्सं ब्रूते प्रकृतिं साङ्ख्योदितामजामन्त्रः । त्रिगुणात्मकत्ववचनादिह लोहितशुक्लकृष्णेति ॥ ७४ ॥

अत्रेश्वरकारणिका प्रकृतिः प्रोक्ता न तु स्वतन्त्रा सा । अन्यत्र हि मन्त्रोऽयं तत्सृष्टिप्रकरणे पठितः ॥ ७५ ॥

इति चमसवदधिकरणम् ॥ २ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ चमसवदधिकरणम् ॥ २ ॥

सू ॥ चमसवदविशेषात् ॥ ८ ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥
कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

**भगवत्पादमते,** पुनरपि प्रधानस्याशब्दत्वमसिद्धमिति प्रत्यवतिष्ठमानं प्रधानवादिनं प्रत्याह—**सू ॥ चमसवदित्यादि ।** अस्य 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥' इति श्वेताश्वतरवाक्यस्थमजापदं विषयः । अत्राजापदं प्रधानपरं वा मायापरं वेति रूढ्यर्थासंभवात्संशयः । पूर्वत्राव्यक्तशब्दमात्रेण प्रधानस्याप्रत्यभिज्ञायामपि अत्र त्रिगुणत्वादिलिंगोपेतादजापदात्प्रधानप्रत्यभिज्ञास्ति । अतोऽजापदं प्रधानपरमिति पूर्वपक्षः । **सिद्धान्तस्तु,** नानेन मन्त्रेण प्रधानस्य शब्दवत्त्वमाश्रयितुं शक्यम् । सांख्यवाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात् । यथा 'अर्वाग्बिलश्चमस' इति वाक्ये स्वातन्त्र्येण चमसप्रतीतिकारणविशेषवचनाभावे असौ चमसोऽभिप्रेत इति न शक्यते निरूपयितुम् । एवमिहापि विशेषवचनाभावान्न प्रधानप्रतीतिः । किंतु तेजोऽबन्नात्मिकायास्त्रिगुणायाः परमेश्वरादुत्पन्नाया मायाया एव प्रतीतिश्शाखान्तरसंवादान्निश्चीयते । अमधुन आदित्यस्य मधुत्वकल्पनवत् तेजोऽबन्नेषु सादृश्यकल्पनयाजात्वोपदेशो गौण एव । अतः अजाशब्दः न प्रधानपरः किं तु मायापर इति ॥ **सूत्रार्थस्तु= चमसवदविशेषात् ॥ ८ ॥** अजाशब्दः न प्रधानपरः । **अविशेषात्**=विशेषावधारणकारणाभावात् । **चमसवत्**= यथा हि 'अर्वाग्बिलश्चमसः' इति मन्त्रे विशेषाभावे चमसो न निर्णीयते । तद्वदिहाविशेषात्प्रधानस्य न शब्दवत्त्वमिति ।

# अथ संख्योपसंग्रहाधिकरणम् ॥ ३ ॥

पुनरन्यत्र तन्त्रसिद्धानि पञ्चविंशतिसंख्यानि तत्त्वानि श्रूयन्त इत्याशङ्क्य तत्परिहर्तुमधिकरणान्तरमारभ्यते—

## ॥ सू ॥ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

### अथ संख्योपसंग्रहाधिकरणम् ॥ ३ ॥

प्रत्युदाहरणसङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति-अन्यत्रेति।अजामन्त्रे प्रकृतिमात्रश्रवणं परमेश्वराधीनप्रकृतिपरत्वेन नीयतां नाम।बृहदारण्यके पञ्चविंशतेस्तत्वानां श्रवणं साङ्ख्यतन्त्रसिद्धेभ्यस्तत्वेभ्योऽन्यत्र नेतुमशक्यम्। न च तत्र 'इन्द्रियेभ्यः परा ह्यर्था' इत्यत्रेवान्तर्गणिकभेदेन पञ्चविंशतिसङ्ख्यालाभः कथञ्चिदुपपादनीयः।किं तु साक्षादेव तत्प्रतिपादकः शब्दोऽस्तीत्यधिकशङ्कासद्भावात्तत्र पूर्वपक्षमुद्भाव्य परिहर्तुमधिकरणान्तरमारभ्यत इत्यर्थः ॥सू॥ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च॥ ११ ॥ 'यस्मिन्पञ्च पञ्चजना आकाशश्च

---

'अर्वाग्बिलश्चमस' इति मन्त्रे 'इदं तच्छिरः' इति वाक्यशेषाच्चमसविशेषप्रतिपत्तिर्भवति। इह पुनः केयमजा प्रतिपत्तव्येत्यत आह—सू॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ किं तु अजा ज्योतिरुपक्रमा तु=तेजःप्रमुखा तेजोऽबन्नादिलक्षणैव प्रतिपत्तव्या। कस्मात्। तथा ह्येके शाखिनः अधीयते—तेजोऽबन्नानां परमेश्वरादुत्पत्तिमभिधाय तेषामेव रोहितादिरूपतामामनन्ति। इत्यर्थः ॥

सू॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ कल्पनोपदेशात्=तेजोऽबन्नलक्षणायाश्चराचरयोनेर्मायाया अजासादृश्यकल्पनोपदेशाच्च। अविरोधः=तेजोऽबन्नेष्वजाशब्दप्रयोगस्य विरोधो नास्ति। तत्र दृष्टांतमाह—मध्वादिवत्=यथा आदित्यस्यामधुनो मधुत्वं, वाचश्चाधेनोर्धेनुत्वं द्युलोकादीनामनग्नीनां चाग्नित्वमित्येवंजातीयकं कल्प्यते तद्वत्। एवमनजाया मायाया अजात्वं कल्प्यते इत्यर्थः ॥

श्रीकण्ठमते, विषयवाक्यसंशयपूर्वपक्षादिकं प्रायः पूर्ववत्। सूत्रार्थवर्णनप्रकारस्तु क्वचिद्विशिष्टः। सू॥ चमसवदविशेषात्॥ ८ ॥ 'अर्वाग्बिलश्चमस' इति प्रकरणे 'इदं तच्छिर' इति विशेषोपदेशवदिह विशेषाश्रवणात् न तान्त्रिकी प्रकृतिरजाशब्देनोच्यत इत्यर्थः।

सू॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ ज्योतिरुपक्रमा तु=परमेश्वरकारणिकेयमजा प्रकृतिरुच्यते। तथाहि=परमेश्वरकारणिकाया एव प्रतिपादकम् एके=तैत्तिरीयाः तत्स्वरूपमन्त्रम् अधीयते=पठन्ति। 'अणोरणीया'निति परमेश्वरमुपक्रम्य 'सप्त प्राणाः प्रभवन्ति तस्मा'दित्यादिना प्रपञ्चस्य परमेश्वरादुत्पत्त्या तदात्मकत्वप्रतिपादनसमये ह्यजामिति पठन्ति। अतस्तत्प्रत्यभिज्ञया परमेश्वरकारणिकेति निश्चीयते।

ननु परमेश्वरकार्यायास्तस्याः कथमजेति वाद इत्याशंक्य परिहरति—सू॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ कल्पनोपदेशाच्च='छन्दांसि यज्ञाः क्रतव' इत्यादिना सृष्ट्युपदेशाच्च अजात्वमहेश्वरकार्यत्वयोरविरोधः। प्राकृतप्रलयकाले परित्यक्तनामरूपा अचिद्वस्तुरूपा मायापि सूक्ष्मरूपेण महेश्वरशरीरतया तिष्ठतीत्यजा। सृष्टिसमये नामरूपोपेता तत्कारणिकेति न तयोर्विरोध इति भावः। तत्र दृष्टान्तमाह—मध्वादिवत्=यथा आदित्यस्य सृष्टिसमये मधुत्वं कार्यत्वं च प्रलयकाले मध्वादिव्यपदेशानर्हसूक्ष्मरूपेणावस्थानादकार्यत्वं च मधुविद्यायां श्रूयते तद्वदत्रापि अजात्वेश्वरकारणिकात्वयोरविरोध इत्यर्थः ॥ रामानुजमते, श्रीकण्ठमतवदेव सर्वमिति न पृथक्प्रपञ्चनावकाशः ॥

आनन्दतीर्थमते, अस्य 'वसन्तेवसन्ते ज्योतिषा यजेत' इत्यादि कर्मविधायकं वाक्यं विषयः। सर्ववैदिकशब्दवाच्यत्वं विष्णोस्संभवति वा नवेति संशयः। न संभवति इति पूर्वपक्षः। संभवत्येवेति सिद्धान्तः। सूत्रार्थस्तु, सू॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥ १० ॥ तु शब्दएवार्थे। ज्योतिः='ज्योतिषा यजेते' त्यादिवाक्योक्तज्योतिरादिशब्दवाच्यं ब्रह्मैव। न ज्योतिष्टोमादि। कुतः। हि यस्मात् एके शाखिनः। उपक्रमात्—'एष इम' मित्युपक्रम्य तथा सर्वशब्दाभिधेयत्वेन हरिमेव 'तावाएता' इत्यत्र। अधीयते—पठन्ति। तस्मादित्यर्थः। सू॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ११ ॥ चः एवार्थे समुच्चये वा। तथाच मध्वादिवत्—यथा मधुविद्यादिगतमध्वादिशब्दानां विष्णुवाचित्वेऽप्यविरोधः न लौकिकक्षौद्रादिवाचकशब्दाभावेन तदभावाख्यविरोधः। तथा परमात्मनः सर्वशब्दवाच्यत्वेऽभ्युपगतेऽपि नकर्माद्यभावविरोधः। कुतः। शब्दानामन्यत्र योगरूढिवृत्ती अभ्युपगम्यैवेश्वरे महायोगवृत्त्यङ्गीकारादित्यध्याहारः। तदपि कुतः। कल्पनोपदेशात्—'प्राण ऋच' इति सर्वशब्दवाच्यस्य विष्णोः कल्पनाशब्दितोपासनार्थमुक्तत्वात् तस्य च सर्वशब्दार्थमुख्यगुणवत्त्वरूपमहायोगवृत्तिं विनायोगात् इत्यर्थः॥ इत्यानन्दतीर्थमते ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥

इति सूत्रार्थचन्द्रिकायां चमसवदधिकरणम् ॥ २ ॥

श्रूयतेऽस्य विषयः— 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ ' इत्यादिः ॥ अत्र ' पञ्च पञ्चजना ' इति पदार्थाः किं सांख्यसिद्धानि तत्त्वानि श्रुतिप्रसिद्धानि वेति संशयः ॥ पञ्चविंशतिसंख्यायाः सांख्यशास्त्रप्रसिद्धत्वादत्र तदवभासात्

---

प्रतिष्ठित' इति मन्त्रमात्रस्यात्र प्राधान्येन विचार्यत्वेऽपि 'प्राणस्य प्राण' मित्यादिवाक्यशेषस्य पञ्चजनशब्दापेक्षितार्थसमर्पकत्वं सम्भवति न वेत्येवं तादर्थ्येन विचार्यत्वमस्ति । तस्य तत्समर्पकत्वसम्भवे हि न तन्त्रसिद्धानि तत्वानि ग्राह्याणि । आनुमानिकाधिकरणे प्राकरणिकवाक्यान्तरसमर्पितार्थग्रहणसम्भवे तान्त्रिकार्थग्रहणायोगस्य पूर्वाधिकरणे शाखान्तरप्रतिपन्नार्थग्रहणसम्भवे तदयोगस्य च समर्थितत्वेन वाक्यशेषसमर्पितार्थग्रहणसम्भवे तदयोगस्य च कैमुतिकन्यायसिद्धत्वात् । तस्य तदयोगे तु 'पञ्च पञ्चजना' इत्यतः पञ्चविंशतिसङ्ख्याप्रतीतिमुपपाद्य तत्सङ्ख्येयानि तन्त्रसिद्धानि तत्वान्येव ग्राह्याणीत्यभिप्रेत्य वाक्यशेपस्यापि सङ्ग्रहार्थमादिपदम् । एवं च वाक्यशेषस्य पञ्चजनशब्दापेक्षितार्थसम्भवासम्भवाभ्यां संशय इत्यभिप्रेत्य संशयं दर्शयति—अत्रेति । स्यादेतत् । 'पञ्च पञ्चजना' इत्यतः पञ्चविंशतिसङ्ख्याप्रतीतिरसम्बद्धा । तथा हि—यदि 'पञ्चपञ्चे'ति पञ्चकद्वयमुच्यते तदाऽवयवद्वारेण समुदायलक्षणाश्रयणेऽपि दशसङ्ख्यैव निष्पद्यते । 'पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः।' इत्यत्र यथा द्वादशसङ्ख्या । यदि तु वीप्सा तदापि पञ्चविंशतिसङ्ख्या न निष्पद्यत एव । 'दशदशैकैकं चमसमनुप्रसर्पन्ती' त्यत्रानुप्रसर्पणीयानां चमसानां दशसङ्ख्यत्वादनुप्रसर्पकाणां पुरुषाणां शतसङ्ख्या निष्पद्यते । एवं जनानामधिकरणानि यदि पञ्च स्युः तदा प्रत्यधिकरणमाधेया जनाः पञ्चसङ्ख्यावीप्सया लभ्यन्त इति तेषां पञ्चविंशतिसङ्ख्या निष्पद्येत । न त्वत्राधिकरणपञ्चकश्रवणमस्ति । ननु पञ्चसङ्ख्यतया प्रतिपन्नेषु जनेषु पुनः पञ्चसङ्ख्यान्तरविशेषणोपादानमहिम्ना पञ्चविंशतिसङ्ख्या न तावत्पञ्चसङ्ख्या । विशेष्यं विहाय विशेषणयोरनन्वयात् । नापि तद्विशेषिताः । आकाङ्क्षाभावात् । श्रुतविशेषणसजातीयेन तद्विरोधिना च रक्तपदन्यायेनाकाङ्क्षोत्थापनस्याप्यसम्भवात् । न हि 'रक्तो रक्तः पटो भवती' त्यत्र मृण्मयो हिरण्मयो भवती' त्यत्र वा भवत्याकाङ्क्षा । ननु 'पञ्च पञ्चपूल्य' इत्यत्र पञ्चविंशतिपूलाः प्रतीयन्ते तथेहापि स्यात् । नेति ब्रूमः । तत्रापि समस्ता पञ्चसङ्ख्यैव पूलानां विशेषणम् । व्यस्ता तु तत्समाहाराणां समासार्थानाम् । न चात्र तथा समाहारार्थः समासोऽस्ति । पञ्चजन्य इति स्त्रीलिङ्गदर्शनाभावात् इत्याशङ्क्याह—अत्र तदवभासादिति । अयमाशयः । अनेनावान्तरसङ्ख्यया विशेषणे सति महासङ्ख्यालाभो यथावयवद्वारेण समुदायलक्षणया वीप्सया वा एवमेकया सङ्ख्यया विशेषितानां सङ्ख्यान्तरेण विशेषणात् संवर्धनेन महासङ्ख्यालाभोऽपि लौकिकवैदिकेषु प्रयोगेषु प्रसिद्धः । यथा 'वयसोवयसस्सप्तदशास्सप्तदशानि ददाति' 'पञ्च पञ्चाशतस्त्रिवृतस्संवत्सरा' इति प्रथमान्वितविशेषणसजातीयस्य तद्विरोधिनो वा यत्र विवक्षितमहासङ्ख्यालाभार्थत्वं नास्ति तत्रैव तदनाकाङ्क्षा । वस्तुतस्तु, 'पञ्चजना' इति समस्तमेकं पदमत्र श्रूयमाणस्यान्तानुदात्तस्वरस्य शतपथब्राह्मणस्वरविधायकभाषिकाख्यग्रन्थविहितब्राह्मणपठितमन्त्रत्वनिमित्तानुदात्तरूपतया 'तत्स्थानिना तत्समासस्ये'ति व्या-

सर्वथा पञ्च पञ्चजना इति तान्येव प्रतिपाद्यानि ॥इति प्राप्ते ब्रूमः—इह 'पञ्च पञ्च'

करणविहितेनान्तोदात्तस्वरेण 'पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामी'ति श्रुत्यन्तरे समासदर्शनेन चात्रापि समासनिश्चयात् । न च समासेनैकपद्ये ऽपि पञ्चभिर्भूतैर्जायमानेषु मनुष्येषु तस्य प्रसिद्धा रूढिरिहाश्रयितुं युक्ता । पञ्च मनुष्या यस्मिन्प्रतिष्ठिता इत्युक्त्या तदधिकरणे कस्यचिदतिशयस्यालाभेन वाक्यस्य निस्तात्पर्यत्वप्रसङ्गात् । न च पञ्च च ते जनाश्चेति 'दिक्संख्ये संज्ञाया' मिति ( पा० ) सूत्रविहितः समानाधिकरणसमासो युक्तः । पञ्चजनशब्दसंज्ञाविशेषाणां पञ्चसङ्ख्योपलक्षितानां केषाञ्चिज्जनानां क्वचिदपि प्रसिद्धेरभावात् । न च'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदु' रिति वाक्यशेषे श्रुताः प्राणादयः पञ्च तत्संज्ञिनः स्युरिति वाच्यम् । तेषु लोके पञ्चजनसंज्ञाप्रसिद्ध्यभावात् । इहैव तत्संज्ञात्वकल्पने कल्पकाभावात् । चक्षुश्श्रोत्रमनस्स्विन्द्रियेषु प्राणवायावन्ने चानुगतानतिप्रसक्तस्यैकस्य प्रवृत्तिनिमित्तस्याभावात् माध्यंन्दिनपाठ इव काण्वपाठे 'अन्नस्यान्न' मित्यस्यानाम्नानेन तत्र पञ्चजनानां लाभाच्च । तस्मात्समाहारविषयोऽत्र समासस्समाश्रयणीयः । पञ्चजनीति ङीप्रत्ययाभावस्तु गत्यन्तराभावाच्छान्दसत्वेनोपपादनीयः । एवं च यथा 'पञ्च पञ्चपूल्य' इत्यत्र समस्ता पञ्चसङ्ख्यैव पूलाविशेषणं व्यस्ता तत्समाहाराणामिति नास्ति नैराकाङ्क्ष्यदोष इत्यस्ति पञ्चविंशतेः पूलानां प्रतीतिः । एवमिहापि न नैराकाङ्क्ष्यदोषः पञ्चविंशतेस्तत्वानां प्रतीतिश्च । एवं छान्दसत्वेन संज्ञायां समानाधिकरणसमासमङ्गीकृत्यापि व्यस्तसमस्तपञ्चसङ्ख्याभ्यां संवर्धनेन पञ्चविंशतिसङ्ख्याप्रतीतिरुपपादयितुं शक्येति तस्मादुत्तरमुक्तम् । अत्र तदवभासादिति क्वचित्पाठः । तस्मिन्पाठे निवर्तनीयेयमाशङ्का । एवमपि साङ्ख्यतत्वग्रहणमिह न युज्यते । नाभूतेषु तेषु पञ्चशः क्रोडीकारकधर्माभावात् महदन्तानां त्रयोविंशतेस्तत्वानां प्रकृत्याश्रितत्वेन प्रकृतेरनाश्रितत्वेन च तदीयतत्वानामात्मनि प्रतिष्ठितत्वाभावात् अधिकरणेनात्मना पृथगुपात्तेनाकाशेन च पञ्चविंशतिसङ्ख्यातिरेकाच्चेति । तन्निवर्तनप्रकारस्तु—स्यादिदं दोषजातं साङ्ख्यतत्त्वग्रहणे । यद्यत्र तव सिद्धान्ते 'पञ्च पञ्चजना' इत्येतदर्थतया ग्रहीतुं योग्याः पञ्चविंशतिरर्थाः पञ्चशः पञ्चशः क्रोडीकारकधर्मशालिनः आकाशेन सहात्मनि प्रतिष्ठिताः केचन स्युः । न च ते सन्ति । तस्माद्यथाकथञ्चित्साङ्ख्यतत्वानामेवेह ग्रहणमुपपादनीयम् । तत्र 'तासां त्रीणि च शतानि षष्टिश्चाक्षराणी' त्यत्र सामिधेन्युदाहरणमेकैकस्मिन् शते षष्टौ च पृथक्पृथक् क्रोडीकारकधर्माभावेऽपि विभज्य वचनवत् 'पञ्चपञ्चे' ति विभज्य वचनं भूतानि पञ्च तन्मात्राणि पञ्च कर्मेन्द्रियाणि पञ्चावशिष्टानि पञ्चेति वा पञ्चशः क्रोडीकारकधर्मास्सन्तीति । अस्ति च चतुर्विंशतेस्तत्वानामात्मनि प्रतिष्ठितत्ववचनं तददृष्टाधीनव्यापारवत्त्वात्तद्भोगार्थत्वाद्वा भाक्तम् ।आत्मनस्तद्वचनं'स्वे महिम्नि प्रतिष्ठित'इतिवत् 'तं शङ्करं सर्वे सुरास्साक्षाच्च माधव' इत्यत्र माधवस्येवाकाशस्य पृथग्ग्रहणं मुख्यत्वाभिप्रायम्।विनैवमात्माकाशौ गुणसङ्घातरूपां प्रकृतिं सत्वादिगुणभेदेन त्रिधा परिगणय्य वा पञ्चविंशतिसङ्ख्यापादनीयेति । एवं यथाकथञ्चित्साङ्ख्यतत्वान्येव ग्राह्याणि गत्यन्तराभावादित्युपसंहरति—सर्वथेति । 'न सङ्ख्योपसङ्ग्रहादपी' ति सूत्रं सिद्धान्तप्रतिज्ञापरं व्याचष्टे—पञ्चेति । वस्तुतः पञ्चद्वयेनात्र पञ्चविंशतिस-

इति पञ्चविंशतिसंख्योपसंग्रहादपि न तान्त्रिकाणि तत्त्वानि। 'यस्मिन्' इति यच्छब्द-निर्दिष्टपरमेश्वराधारत्वममीषां प्रतीयते। तेभ्य एषां पृथग्भावात्, आकाशस्य पृथङ्निर्देशेन तत्त्वातिरेकाच्चातत्त्वातिरेकस्तत्त्वानामधिकसंख्यत्वम्। अतोऽत्र न पञ्चविंशतितत्त्वप्रसङ्गः॥ किंच, पञ्चविंशतिसंख्योपसंग्रहोऽपि न युक्तः। 'दिक्संख्ये संज्ञायाम्' इति संज्ञाविषयो ह्ययं समासः। तस्मात् पञ्चजना नाम केचिच्च ते हि पञ्च पञ्चजना इत्युच्यन्ते। सप्त सप्तर्षय इतिवत्। अतो न सांख्यतत्त्वप्रसक्तिः॥ के पुनरेत इत्यत आह—

## ॥ सू ॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥

---

ङ्ख्याप्रतीतिर्नास्त्येव। अभ्युपेत्योच्यते। पञ्चविंशतिसङ्ख्यया सङ्ख्येयानामुपसङ्ग्रहादपि तदुपसङ्गृहीतानि तान्त्रिकाणि तत्वानीति न सिध्यतीत्यर्थः। तत्र हेतुं नानाभावं विवृणोति—यस्मिन्निति। नानाभावः पृथत्क्वम्।'विना नाना हिरुक्पृथ' गिति हि नैखण्टुकाः। पृथक्त्वं चेहात्मप्रतिष्ठितत्वरूपं तान्त्रिकतत्त्वेभ्यो वैलक्षण्यम्। अतिरेकं स्वतन्त्रहेत्वन्तरतया च-शब्देनावगमितं व्याचष्टे—आकाशस्येति। आकाशग्रहणमधिकरणस्यात्मनोऽप्युपलक्षणम्। न च गत्यन्तराभावात् साङ्ख्यतत्त्वेष्वेवात्मनि प्रतिष्ठितत्ववचनमाकाशस्य पृथग्ग्रहणं च पूर्वपक्षिदर्शितया रीत्यैष्वगत्योपपादनीयमिति वाच्यम्। सप्तविंशतिषड्विंशतितत्त्ववादिनां मते तदन्तर्गतानि प्रकृत्यन्तानि पञ्चविंशतिस्तत्त्वानि परमाकाशरूपा चिच्छक्तिश्चास्तीति तेषां परमेश्वराश्रितानामक्लेशेन ग्रहणसम्भवात् कठवल्लीषु, 'इन्द्रियेभ्यः परा ह्यर्था' इत्यादिना पुरुषावरत्वेन वर्णितानां ग्रहणसम्भवाच्च। ज्ञानेन्द्रियकर्मेन्द्रियभूततन्मात्रामनोबुद्धिभोक्तृस्थूलसूक्ष्मशरीरद्वयपरत्वोपपत्तेः। एवमन्तरङ्गशाखान्तरदृष्टसङ्ख्येयोपसङ्ग्रह एव युक्तः। न तु वहिरङ्गाप्रामाणिकसाङ्ख्यकल्पिततत्वोपसङ्ग्रह इति भावः। एवं पञ्चविंशतिसङ्ख्याप्रतीतिसत्त्वेऽपि तत्सङ्ख्येयतया साङ्ख्यतत्त्वग्रहणं न सम्भवतीति समर्थितम्। इदानीं वस्तुतस्तत्प्रतीतिरपि नास्तीति सौत्रेणापिशब्देन ध्वनितं युक्त्यन्तरं विवृणोति—किं चेति। अवश्याभ्युपगन्तव्यतत्त्वपञ्चजनशब्दे समासे 'दिक्सङ्ख्ये संज्ञाया' मिति सूत्रविहितः संज्ञासमास एवेति तावदभ्युपगन्तव्यः। समाहारसमासे स्त्रीप्रत्ययाभावस्यासंज्ञायां संज्ञासमासस्य च छान्दसत्वेन समर्थितस्य श्लिष्टत्वात्। न च संज्ञासमासेऽपि व्यस्तसमस्तपञ्चसङ्ख्याभ्यां पञ्चविंशतिसङ्ख्यालाभशङ्कावकाशः। संज्ञासमासे हि समस्तपञ्चशब्दोक्ता सङ्ख्या शाखावदुपलक्षणभूतसंज्ञिप्रतिपत्त्यर्था न तु संज्ञिकज्ञाप्यविशेषणभूता। अतो यथा सप्तर्षय इति संज्ञासमासे समस्तपदोक्ता सप्तसङ्ख्या न तात्पर्यविषयतया प्रतीयत इति तस्या एव तात्पर्यविषयत्वप्रत्यायनार्थं पृथकृत्य पदप्रयोगः पुराणे एवमिहापीति पृथक्पदोक्ता एकैवात्र पञ्चसङ्ख्या। अतोऽपि न साङ्ख्यतत्वग्रहणप्रसक्तिरत्रेति॥ ननु पञ्चजनसंज्ञिकाः केचिदिह ग्राह्याः तर्हि के त इति निर्विचिकित्सं 'सन्दिग्धे तु वाक्यशेषा' दिति न्यायात् प्राणदय इति चेन्न। तेष्वनुगतैकसंज्ञाविषयत्वायोगादित्याशङ्कोत्तरत्वेनोत्तरसूत्रमवतारयति—के पुनरिति॥ सू॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥ पञ्चजनसंज्ञा तावत् पञ्चसङ्ख्यान् संज्ञिनोऽपेक्षमाणा वाक्यशेषगतान् पञ्चसङ्ख्यान् प्राणादीन् संज्ञित्वेन गृह्णातीति

'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इति वाक्यशेषात् पञ्चजनसंज्ञकाः प्राणादयः पञ्चेन्द्रियाणीति गम्यते। अतोऽपि न तान्त्रिकतत्त्वप्रसक्तिः ॥

पुनरुपपत्तिरुच्यते–

॥ सू ॥ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानाम्, 'अन्नस्यान्नम्' इति शब्दाभावे 'तद्देवा

---

संज्ञिषु तेषु प्रवृत्तिनिमित्तभूतैकधर्मापेक्षायां चक्षुश्श्रोत्रमनोबुद्धिषु क्लृप्तमिन्द्रियत्वं प्राणान्नशब्दयोरपि कल्प्यते। 'विप्रतिषिद्धधर्माणां भूयसां स्यात्सधर्मत्व' मिति न्यायात्। तत्र वायुसम्बन्धित्वात्प्राणशब्दोक्तं वागिन्द्रियमन्नशब्दार्थपृथिवीसम्बन्धित्वादन्नशब्दोदितं घ्राणमद्यतेऽनेनेत्यन्नमिति व्युत्पत्त्या तेन रसनेन्द्रियं ग्राह्यम्। एवं घ्राणरसनयोस्तन्त्रेणोपात्तयोरेकीकारात् पञ्चसङ्ख्या। यथा 'द्वादश मासाः पञ्चर्तव' इत्यत्र हेमन्तशिशिरयोरेकीकारात् 'हेमन्तशिशिरावृतूनां प्रीणामी'ति प्रयाजानुमन्त्रणमन्त्रे समासरूपेणैकपदेनोपात्तयोरेकीकरणादृतूनां पञ्चसङ्ख्या। अतः पञ्चजनसमाससंज्ञाः प्राणादयः पञ्चेन्द्रियाणीति गम्यत इत्येवं वाक्यशेषगताः पञ्चेन्द्रियरूपाः प्राणादयः पञ्च पञ्चजना निश्चीयन्ते। काण्वशाखायामन्नप्राणाभावेन पञ्चजनसङ्ख्या न लभ्यत इत्याशङ्क्य तत्रापि गुणोपसंहारन्यायेनान्नस्य सत्त्वात्तल्लाभोऽस्तीति वक्तुं शक्यत्वेऽपि तदलाभमङ्गीकृत्य तत्रासत्यप्यन्ने पूर्वमन्त्रानुसारेण पञ्चजना इन्द्रियाणीति निश्चेतुं शक्यत इत्युक्तिभङ्ग्योत्तरमन्त्रवत् पूर्वमन्त्रोऽपि विवक्षितार्थनिश्चायकोऽस्तीत्युपपत्त्यन्तरमुत्तरसूत्रेणोच्यत इत्यत आह–पुनरुपपत्तिरिति ॥ सू ॥ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥ काण्वशाखायां 'अन्नस्यान्न' मित्यस्य पाठाभावेऽपि शाखान्तरगुणोपसंहारेण लभ्यस्तदर्थोऽस्त्येव। न च काण्वशाखायां पाठाभावमात्रेण शाखान्तरेऽन्यार्थनिश्चयः। येन काण्वशाखायां शाखान्तरात्तदर्थग्रहणम्। दर्शितं हि पूर्वसूत्रे पञ्चसङ्ख्याविशेषितान् कांश्चिदप्रसिद्धान् पञ्चजनसंज्ञायास्संज्ञिनो निर्दिश्यानन्तरं प्राणादीनां पञ्चानां पाठात्त एव संज्ञिन इत्यवधारणे सति तेषु प्रवृत्तिनिमित्तैक्येन एकसंज्ञाविषयत्वनिर्वाहाय 'भूयसां स्यात्सधर्मत्व' मिति न्यायेन चक्षुःश्रोत्रमनस्सु त्रिष्ववगतमिन्द्रियत्वमेव प्रवृत्तिनिमित्तं ग्रहीतुं प्राणान्नशब्दयोरपि इन्द्रियपरत्वमन्नशब्दस्य तन्त्रेण घ्राणरसनग्राहकत्वं च कल्प्यत इति। एवं च निर्णीतार्थशाखान्तरवाक्यानुसारेण काण्वशाखायामपि प्राणादिशब्दानां वागिन्द्रियादिरर्थः शाखान्तरादुपसंहृतः। अन्नशब्दार्थत्वेन तेषां पञ्चसङ्ख्या चेति निश्चये न काचिदनुपपत्तिः। निर्णीतार्थशाखान्तरवाक्यानुसारेणार्थनिश्चयो हि न्यायविद्भिराख्यायते न त्वनिर्णीतार्थवाक्यानुसारेण निर्णीतवाक्यार्थत्यागः। एवं काण्वशाखायामपि शाखान्तर इवान्नस्य सत्त्वेऽपि तदभावमभ्युपेत्योच्यत इत्यभिप्रेत्य काण्वानां शाखायामन्नस्याभावे 'यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत' मिति पूर्वमन्त्रप्रकृतषष्ठ्यन्तज्योतिश्शब्देन पञ्चजना इन्द्रियाणीति निर्णीयते। तथा च काण्वशाखायां वाक्यशेषान्निर्णयालाभेऽपि उपक्रमात्तन्निर्णयो लभ्यत इत्येतदर्थपरतया सूत्रं व्याचष्टे–एकेषामिति। ननु 'ज्योतिषा' मित्याम्नानेन पञ्चजना इन्द्रियाणीति कथं निर्णी-

ज्योतिषां ज्योतिः' इत्युपक्रमगतेन ज्योतिश्शब्देन पञ्च पञ्चजना इन्द्रियाणीति ज्ञायन्ते । ज्योतिषां ज्योतिः प्रकाशकानामपि प्रकाशकं ब्रह्मेत्युक्त्वा ततः पञ्च पञ्चजना इत्युक्ते हि तानि प्रकाशकानि पञ्चेन्द्रियाणीति गम्यन्ते ॥

## ॥ सू ॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

यथाऽऽकाशादिषु कार्यवर्गेषु कारणत्वेन सर्वत्र वेदान्तवाक्येषु 'असद्वा इदमग्र आसीत्' 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादिषु अनिर्ज्ञातविशेषेषु च 'आत्मा वा इदमेक एवाग्र आसीत्' इति विशेषवाक्यनिर्दिष्टस्यैवोक्तेर्न तान्त्रिकाव्याकृतग्रहणं, तथाऽत्र विशेषवाक्यदृष्टानामिन्द्रियाणामेवोक्तेर्न तान्त्रिकतत्त्वग्रहणम् ॥

---

यते । तस्य द्वितीयान्तज्योतिश्शब्दोदितब्रह्माधीनस्वकार्याणां ज्योतिषां समर्पकस्य पञ्चेन्द्रियमात्रपरत्वेन सङ्कोचे स्वतो हि नास्याकाङ्क्षा । तस्याप्यसङ्कोचेन 'तस्य भासा सर्वमिदं विभाती' ति श्रुत्यन्तरे ब्रह्माधीनस्वकार्यकतयावगतेष्वादित्यादिषु सर्वेष्वपि ज्योतिष्षु वृत्त्युपपत्तेः तस्य पञ्चज्योतिर्मात्रपरत्वेऽपि गार्हपत्यादिपञ्चाग्निपरत्वोपपत्तेश्च । किं च । पञ्चजनशब्दस्य पूर्वमन्त्रे बहुवचननिर्दिष्टेषु पर्यवसाननियमेऽपि न ज्योतिश्शब्दनिर्दिष्टेषु पर्यवसाननियमः, अहश्शब्दनिर्दिष्टेष्वपि पर्यवसानोपपत्तेरित्याशङ्कानिरासेन उक्तमर्थमुपपादयति—ज्योतिषां ज्योतिरिति । अयमाशयः । ज्योतिश्शब्दस्याकाङ्क्षाविरहेऽपि पञ्चजनशब्दस्य स्वसंज्ञिविशेषाकाङ्क्षया सन्निधानात् ज्योतिषां संज्ञित्वमवसीयते । ज्योतिश्शब्दश्च प्रकाशकार्थः । 'आदित्येनैवायं ज्योतिषास्त' इत्यादिश्रुत्यन्तरे तस्य तदर्थत्वेनैव प्रयोगदर्शनात् । तेषां पञ्चजनशब्दविशेषणपञ्चसङ्ख्यावच्छेदश्चावश्यंभावी । ततो नादित्यादिज्योतिरन्तरग्रहणप्रसक्तिः । आदित्यादिषु । पञ्चसङ्ख्याप्रतीत्यभावात् गार्हपत्यादिषु हविर्ग्रहणादिवैदिककार्यविनियुक्तेषु प्रकाशकार्यप्रसिद्ध्यभावाच्च । अह्नि तु पञ्चजनशब्दसंज्ञित्वेन ग्रहणं न युज्यते । पञ्चानामह्नामधिकरणमित्युक्त्या कस्यचिदतिशयस्यालाभादिति ॥ एवं मन्त्रान्तरपर्यालोचनायां पञ्चजना इन्द्रियाणीति निर्णयान्न तान्त्रिकतत्वग्रहणमिति प्रसाधितमर्थं दृष्टान्तमुखेनोपपादयितुं सूत्रम् ॥ सू ॥ कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १४ ॥ 'असद्वा इदमग्र आसी' दिति वाक्ये तावदनभिव्यक्त्यभिप्रायेण सद्वस्तुपर एवासच्छब्दो वक्तव्यः । अत्यन्तासतः कारणत्वायोगात् । 'तद्धेदं तर्ह्यव्याकृतमासी' दिति वाक्येऽप्यव्याकृतशब्दस्तु साक्षादेवानभिव्यक्तपरः । व्यक्तीकृतं हि लोके व्याकृतमित्युच्यते इत्यभिप्रेत्य यथा तत्रासदव्याकृतशब्दाभ्यामनभिव्यक्तसामान्यवाचिभ्यामाकाशादिषु कारणत्वेन विशेषवाक्यनिर्दिष्टस्यात्मन एवोक्तेः न तान्त्रिकाव्यक्तग्रहणम् एवमिहापि पञ्चजना इत्यनेन सामान्यतः केषाञ्चित्संज्ञिनां समर्पकेण विशेषवाक्यदृष्टानामिन्द्रियाणामेवोक्तेर्न तान्त्रिकतत्वग्रहणमिति साध्याहारंसूत्रं व्याचष्टे—यथेति । स्यादेतत् । दृष्टान्तदार्ष्टान्तिकयोरुभयोरत्रापि तान्त्रिकतत्वग्रहणाभावोक्तिर्न युज्यते । तथा हि—तैत्तिरीयके तावदसत्पूर्विका सृष्टिराम्नायते । 'असद्वा इदमग्र आसीत् ततो वै सदजायते'ति । तथा बृहदारण्यकेऽपि 'असदेवेदमग्र आसीत्तत्सदासी' दिति । न चासतः कारणत्वायोगादुभयत्राप्यसच्छब्दः सत्येव योज्य इति वाच्यम् । सत

**तत्र तान्त्रिकतत्त्वग्रहणायोगः कथमित्यत आह—**

## ॥ सू ॥ समाकर्षात् ॥ १५ ॥

इवासतोऽपि कारणत्वसम्भवात् । सत्त्वस्य दण्डत्वादिवत्कारणतावच्छेदकत्वाभावेनानपेक्षितत्वात् । छान्दोग्ये त्वसत्कारणत्वपक्षप्रतिक्षेपेण सत्पूर्विका सृष्टिः प्रतिज्ञायते । 'तद्धैक आहुरसदेवेदमग्र आसीत् एकमेवाद्वितीयं तस्मादसतः सज्जायत इति कुतस्तु खलु सोम्यैवं स्यात् इति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसी' दिति । अव्याकृतवाक्ये तु स्वयंकर्तृका जगद्व्याक्रिया निगद्यते 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इति। अत्र हि कर्मकर्तरि लकारः न तु कर्मणि । कर्त्राक्षेपगौरवात् । ननु, कर्मकर्तरि लकारपक्षेऽप्यविशिष्टः कर्त्राक्षेपः । कर्त्रा क्रियमाणमेव यत् कर्म स्वगुणैस्सुकरं भवति तदेव हि सौकर्यमपेक्ष्य कर्तृत्वेन विवक्ष्यमाणं कर्मकर्त्रित्युच्यते । यथाहुः—'क्रियमाणं तु यत्कर्म स्वयमेव प्रसिद्ध्यति । सुकरैस्स्वगुणैर्युक्तं कर्मकर्त्रिति तद्विदु'रिति । मैवम् । 'प्रलूयते केदारस्स्वयमेवे' त्यादौ कर्त्रन्तरसद्भावेऽपि 'भिद्यते कुसूलेने' त्यादौ तदभावस्य महाभाष्ये समर्थितत्वेन कर्मकर्तरि लकारे कर्त्रन्तरनियमाभावात् । तन्नियमाभावे च ' व्याक्रियते ' त्यत्र ' भिद्यते कुसूलेने' ति उदाहरणानुरोध एव युक्तः । अन्यथा कर्त्राक्षेपगौरवप्रसङ्गात् । एवं तत्तत्कारणवाक्यस्वारस्यपर्यालोचनायामवर्जनीयो विरोध इति तत्परिहारेण प्रामाण्यसंरक्षणार्थं सर्वेषां कारणवाक्यानां सर्वज्ञकपिलादिमहर्षिपरिगृहीतजगत्कारणप्रधान एव पर्यवसानं कल्पयितुं युक्तम् । वरमध्ययनविधिपरिगृहीतानां वैदिकशब्दानामलौकिकत्वाश्रयेणापि 'सृण्येव जर्भरी'त्यादिमन्त्राणामिव प्रामाण्यसंरक्षणम् । तस्मात् दृष्टान्ते तान्त्रिकग्रहणाभावसिद्धिमत् कारणं तावदयुक्तम् । तथा दार्ष्टान्तिकेऽपि पञ्चजना इत्यस्योत्तरमन्त्रानुसारेणार्थनिर्णये हि मनस्साहित्येन घ्राणरसनयोरेकीकरणेन च पञ्चेन्द्रियाण्यर्थतया लभ्यन्ते । पूर्वमन्त्रानुसारेण तु बाह्यान्येव पञ्चेन्द्रियाणि तदर्थतया लभ्यन्ते । पञ्चसङ्ख्याप्रसिद्ध्यनुरोधेनैव ज्योतिश्शब्दस्येन्द्रियेषु पर्यवसानसमर्थनात् बाह्येन्द्रियेष्वेव पञ्चसङ्ख्याप्रसिद्धिसत्त्वात् । पूर्वोत्तरमन्त्रानादरेण 'यस्मिन्पञ्च पञ्चजना' इति मन्त्रस्वारस्यमात्रानुसारेण तु मनुष्यास्तदर्थतया लभ्यन्ते । लोकप्रसिद्धाया रूढेः प्रबलत्वात् पञ्चसङ्ख्यायाश्च चतुर्वर्णानुलोमप्रतिलोमरूपावान्तरप्रभवविषयत्वाङ्गीकारेण व्यक्तिमात्रविषयतया वाक्यस्य निस्तात्पर्यत्वशङ्कापरिहारसम्भवाच्च । ततश्चात्रापि पूर्वोत्तरमध्यमन्त्रस्वारस्यपर्यालोचनायामवर्जनीयो विरोध इति तत्परिहारेण प्रामाण्यसंरक्षणार्थं ' पञ्चजना' इत्यस्य छान्दसरूपाश्रयणेन सर्वज्ञकपिलादिपरिगृहीतपञ्चविंशतितत्वपरत्वकल्पनमेव युक्तम् । तस्मात् दृष्टान्ते दार्ष्टान्तिके च तान्त्रिकतत्वग्रहणाभाववर्णनं नोपपद्यत इत्याशङ्कोत्तरत्वेनोत्तरसूत्रमवतारयति–तान्त्रिकेति ॥ सू ॥ समाकर्षात् ॥ ॥१५॥ तैत्तिरीये 'सत्यं ज्ञानमनन्तं ब्रह्मे' ति सद्रूपं ब्रह्म प्रकृत्य तस्मादाकाशाद्युत्पत्तिमभिधाय 'असन्नेव स भवती'ति श्लोकेन तस्यासत्यत्वपक्षं निराकृत्य तस्य कामनापूर्वकसकलजगत्स्रष्टृत्वं चोक्त्वा 'तत्सत्यमित्याचक्षते' इति चोपसंहृत्य 'तदप्येष श्लोको भवती' त्यनया तस्मिन्नर्थे श्लोकोऽयमित्यवतारिकया तदेव सद्रूपं ब्रह्मानुकृष्य, 'असद्वा इदमग्र आसी' दिति पठ्यमानः श्लोकः कथमसत्कारणपरः स्यात् । अतस्सत्समाकर्षणानुरोधादसच्छब्दः सत्येवा-

'सोऽकामयत बहु स्याम्' इति पूर्वनिर्दिष्टस्य सर्वज्ञस्यैव 'असद्वा इदमग्र आसीत्' इति समाकर्षात् पूर्वनिर्दिष्टस्याव्याकृतस्यैव 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इति समाकर्षाच्च यथा स एवावगम्यते तथात्रापि समाकर्षात् पञ्चजनानामिन्द्रियत्वावगतिरिति न विरोधः ॥

---

नभिव्यक्त्यभिप्रायो लाक्षणिकः कल्पनीयः । 'असदेवेदमग्र आसी' दिति बृहदारण्यकश्रुतावपि 'तत्सदासीदिति' तत्पदेनासच्छब्दोक्तं समाकृष्य सद्भावविधानादत्यन्तासतश्च 'नासतो दृष्टत्वा'दिति न्यायेनासद्रूपतापत्त्ययोगादसच्छब्दः पूर्ववल्लाक्षणिकः कल्पनीयः । 'तद्धेदं तर्ह्यव्याकृतमासी' दित्यनन्तरं 'स एष इह प्रविष्ट आनखाग्रेभ्यः पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मन' इति वाक्ये 'स एष' इत्यव्यवहितप्रकृतमव्याकृतं समाकृष्य तस्यान्तःप्रविष्टसर्वान्तर्यामिपुरुषत्वाभिधानादव्याकृतशब्देनाव्यक्तं ब्रह्मोक्तम् । 'व्याक्रियते'ति कर्मणि लकारः सौकर्यविवक्षया । सत्येव कर्त्रन्तरे कर्मकर्तरि लकारः कल्पनीयः । तथा प्रकृतविषयवाक्येऽपि 'तदेवा ज्योतिषां ज्योति' रिति पूर्वं ब्रह्माधीनस्वकार्यतया षष्ठ्यन्तेनैकेन ज्योतिश्शब्देन सङ्क्षिप्य निर्दिष्टानामेव प्राणस्य चक्षुषः श्रोत्रस्य मनसोऽन्नस्येति षष्ठ्यन्तैः पदैस्समाकृष्य विशिष्य ब्रह्माधीनस्वकार्यत्वं प्रतिपाद्यत इत्यवगमात् । पञ्चजनशब्दविशेषणपञ्चसङ्ख्यावशात् पञ्चेन्द्रियरूपतया वाक्यशेषेण प्रतिपाद्यत इति कल्पनीयम् । एवं तर्हि, पूर्वमन्त्रमात्रपरामर्शेन बाह्यान्येवेन्द्रियाणि 'पञ्चजनाः' स्युरिति तावता 'पञ्च पञ्चजना' इत्यस्य विवक्षितार्थत्वलाभात् 'ज्योतिषैकेषामसत्यन्न' इति पूर्वमन्त्रमात्रपरामर्शस्य उपपत्त्यन्तरत्वोक्तिर्विरुद्ध्यते । नैष दोषः । यद्यप्युत्तरमन्त्रपर्यालोचनया 'पञ्च पञ्चजना' इत्यस्य मनस्साहित्येन घ्राणरसनयोरेकीकरणेन पञ्चेन्द्रियपरता न स्यात् । तथापि पूर्वमन्त्रमात्रपर्यालोचनया पञ्चेन्द्रियपरता स्यादेव । एवमपि न साङ्ख्यतत्वग्रहणप्रत्याशेति कृत्वाचिन्तया साङ्ख्यतत्वग्रहणशङ्कानिराकरणमात्रे तस्योपपत्त्यन्तरताया उक्तत्वात् । यच्चु पञ्चजनमन्त्रस्वारस्यानुरोधेन चत्वारो वर्णा वर्णान्तरप्रभवाश्चेति पञ्च मनुष्याः पञ्चजनाः प्रतीयन्त इत्युक्तम् । तन्न । मनुष्येषु पञ्चसङ्ख्यायाः पुरुषबुद्ध्युपस्थापनीयेन ब्राह्मणत्वाद्युपाधिना निर्वहणीयतया तेषु पञ्चशब्दस्वारस्याभावात् तत्स्वारस्यानुरोधेन पञ्चजनशब्दो 'दिक्सङ्ख्ये संज्ञाया' मिति ( पा० ) समानाधिकरणसमासेन कासाञ्चित्पञ्चसङ्ख्योपलक्षितव्यक्तीनां संज्ञेति कल्पनया चरमश्रुतपञ्चजनशब्दस्वारस्यबाधनस्यैवोचितत्वात् । एवमेव जैमिनिनापि 'प्राजापत्यो नैवारश्चरुः सप्तदशशरावो भवती'ति विहिते सप्तदशशरावपरिमाणव्रीह्यादिद्रव्यके चरौ 'चतुरो मुष्टीन्निर्वपती' त्यस्यातिदेशतः प्राप्तौ तत्र सङ्ख्यामुष्ट्यन्यतरबाधेऽवश्यंभाविनि प्रथमश्रुतसङ्ख्याबाधपरिहाराय मुष्टिबाधोऽङ्गीकृतः । तस्माद्दृष्टान्ते दार्ष्टान्तिके च विरोधाभावान्न साङ्ख्यतत्वग्रहणाशङ्कावकाश इत्यभिप्रेत्य पूर्वसूत्राद्यथाशब्दानुवृत्तिं कृत्वा दृष्टान्ते दार्ष्टान्तिके च 'समाकर्षा'दिति सूत्रपदं साध्याहारं व्याचष्टे—सोऽकामयतेति । इति न विरोध इति । दृष्टान्ते दार्ष्टान्तिके च नास्ति विरोध इत्यर्थः । समुच्चयेऽपि दृष्टान्तेऽपि विरोधाभावस्यात्रैवोपपादनीयत्वात् । न चैवं सत्यकृत्वा यथाशब्दानुवृत्तिं साक्षादेवोभयत्राप्यविरोधोपपादनार्थमिदं सूत्रं व्याख्यायतामिति वाच्यम् । पूर्वसूत्रमपि न केवलं दृष्टान्तेन प्रकृतार्थस्योपपादनार्थम् ।

## इति संख्योपसंग्रहाधिकरणम् ॥ ३ ॥

किं तु दृष्टान्तीकरणव्याजेन कारणवाक्यानां ब्रह्मपरत्वस्याप्युपपादनार्थमिति पूर्वसूत्रशैथिल्यानुवर्तनात् । अन्यथा तेषां परस्परविरोधेनार्थानिर्णयप्राप्तावाप्तपरिगृहीतं प्रधानमेवार्थ इति साङ्ख्यप्रत्याशानवकाशीकरणालाभात् । न चैवं सति कारणवाक्यानामुक्तरीत्या प्रधानमेवार्थ इति पूर्वपक्षनिरासार्थमधिकरणान्तरमेवानेन सूत्रद्वयेन क्रियतामिति वाच्यम् । तावता पञ्चजनमन्त्रे पूर्वापरमन्त्रयोस्तस्य च स्वारस्यानुरोधेन विरोधं प्रदर्श्य तत्र साङ्ख्यप्रसिद्धसङ्ख्याप्रवेशस्यानवकाशीकरणालाभेन उभयत्रापि तत्प्रवेशानवकाशीकरणार्थं 'मितराण्यपि रक्षांसि पेतुर्वानरकोटिषु । रजांसि समरोत्थानि तच्छोणितनदीष्विवे' ति समुच्चयोपमारीत्या लाघवेन युगपदुभयोपपादकतया व्याख्यातृसूचितत्वात् । एवं च दृष्टान्तेन कारणवाक्येषु तन्न्यायेन दार्ष्टान्तिके विरोधोत्थापनेन साङ्ख्यप्रत्यवस्थानार्थमाद्यसूत्रं तदूर्ध्वोत्थितशङ्कासमाधानार्थं द्वितीयमिति श्लिष्यते । न च प्रथमसूत्रे 'व्यपदिष्टोक्ते'रित्यनेन चेतनकारणवादिबहुकारणवाक्यानुरोधन्यायस्य सूचिततया तेनैव तदूर्ध्वशंकोत्थानानवकाश इति वाच्यम् । वाक्यानुरोधन्यायस्य 'वाक्यान्वया'दिति सूत्रेण स्फुटीकरिष्यमाणतया ततः प्राक् तत्तत्पूर्वपक्षविरोधिबहुवाक्यसद्भावमाच्छाद्य कृत्वाचिन्तया पञ्चाधिकरणप्रवृत्तिरिति प्राग्वर्णितत्वात् । तस्मात्पूर्वाधिकरणशेष एवेदं सूत्रद्वयमिति सर्वमवदातम् ॥ ३ ॥

॥ इतिसङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

---

### नयमणिमालायाम्

### अथ सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

सू० । न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥ ज्योतिषैकेषामसत्यन्ने ॥१३॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥१४॥ समाकर्षात् ॥ १५॥

तत्वानि पञ्चविंशतिरुच्यन्ते पञ्चपञ्चजनशब्दैः । श्रुत्यभिमतैव तस्मात्साङ्ख्योक्तप्रक्रिया निखिला ॥ ७६ ॥

प्रकृतस्य समाकर्षादसद्यथा ब्रह्म ते तथाक्षाणि । आकाशाधाराभ्यां सङ्ख्याभेदान्न साङ्ख्यतत्वानि ॥ ७७ ॥

इतिसङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥

### सूत्रार्थचन्द्रिकायाम् अथ सङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥

सू ॥ न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

**भगवत्पादमते,** अस्याधिकरणस्य ' यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥' इति बृहदारण्यकवाक्यं विषयः । अत्र ' पञ्च पञ्चजना ' इति पञ्चसंख्याद्वयसंपन्नया पञ्चविंशतिसंख्यया प्रधानादीनि सांख्यतत्त्वान्युच्यन्ते वा उत श्रुतिप्रसिद्धानि वेति संशयः । श्रुतिप्रसिद्धयानया पञ्चविंशतिसंख्यया सांख्यतत्त्वानामुपसंग्रहात्प्राप्तं शब्दवत्त्वं प्रधानादीनामिति पूर्वपक्षः । **सिद्धान्तस्तु,** एवं पञ्चविंशतिसंख्योपसंग्रहादपि प्रधानादीनां शब्दवत्त्वं न सिद्ध्येत् । यतस्सांख्यतत्त्वानां पञ्चशः पञ्चशः साधारणधर्मो नास्ति । ततो नानाभावात्सांख्यतत्त्वानां 'यस्मिन्न्' ति सप्तमीनिर्दिष्टस्याधारभूतस्यात्मनः आकाशस्य च संकलनेन संख्याधिक्यसंभवाच्च अत्र पञ्चविंशतिसंख्यया सांख्यतत्त्वातिरिक्ताः केचन पञ्चजनाः सप्तसप्तर्षय इतिवद्रूढिमाश्रित्य प्रतिपाद्यन्त इति ॥

तर्हि के पुनस्ते पञ्चजना नामेत्याह—**प्राणादयो वाक्यशेषात् ॥ १२ ॥ वाक्यशेषात्**='प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः ' इति वाक्यशेषात् । **प्राणादयः**=प्राणचक्षुःश्रोत्रान्नमनांसि पञ्च पञ्चजना उच्यन्त इत्यर्थः । केचित्तु देवाः पितरो गन्धर्वाः असुरा रक्षांसि च पञ्च पञ्चजना इति वदन्ति । अन्ये तु चत्वारो वर्णा निषादपञ्चमा इत्यभिप्रयन्ति । क्वचिच्च प्रजापरतया व्याख्यातम् । एषामन्यतमपक्षपरिग्रहेऽपि नास्ति विरोधः । पञ्चविंशतेस्तत्त्वानामिह प्रतीतिमभ्युपेत्य सूत्रकाराः ' प्राणादयो वाक्यशेषात् ' इति व्याचख्युः । इति ॥

संतु नाम प्राणादयः पञ्चजनाः प्राणादिष्वन्नमप्यामनतां माध्यन्दिनानां प्राणादिषु तदनामनतां काण्वानां तु कथं प्राणादयः पञ्चजनाः स्युरित्याशंक्य परिहरति—सू ॥ **ज्योतिषैकेषामसत्यन्ने** ॥ १३ ॥ **एकेषां**=काण्वानां पाठे । **अन्ने असति**=प्राणादिषु अन्नस्य पाठाभावे । **ज्योतिषा**=' तद्देवा ज्योतिषां ज्योति'रिति श्रुतेन ज्योतिषा संकलय्य परिगणनेन पञ्चसंख्या पूर्येतेत्यर्थः । तदेवं सर्वथा सांख्यतत्त्वानामत्राप्रसक्तिरिति सिद्धम् ॥

**इति भगवत्पादमते संख्योपसंग्रहाधिकरणम् ॥ ३ ॥**

## अथ कारणत्वाधिकरणम् ॥ ४ ॥

**सू ॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ समाकर्षात् ॥ १५ ॥**

अस्याधिकरणस्य अविशेषेण जगत्कारणप्रतिपादकानि जगत्सृष्टिबोधकानि च वेदान्तवाक्यानि विषयः । तानि ब्रह्मणि समन्वितानि वा न वा इति संशयः । सर्वत्र सृष्टिक्रमवैचित्र्यदर्शनात् परस्परविरुद्धसदसदादिकारणविकल्पश्रवणात् सिद्धवस्तुनि विकल्पायोगाच्च न ब्रह्मणि समन्वितानीति पूर्वपक्षः । यथाभूतो ह्येकस्मिन्वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मैकोऽद्वितीयः कारणत्वेन व्यपदिष्टस्तथाभूतस्यैव वेदान्तान्तरेष्वपि व्यपदिश्यमानत्वात् कार्यविषयविगानेन अविगीतकारणविगानाप्रसक्तेः कार्यविषयविगानस्याप्युत्तरत्र ' न वियदश्रुते ' रित्यादिना समाधास्यमानत्वाच्च सर्वेषां वेदान्तवाक्यानां ब्रह्मपरतावधारणमव्याहतमेवेति सिद्धान्तः ॥ **सूत्रार्थस्तु** ब्रह्मणः **आकाशादिषु**=कार्यवर्गेषु । **कारणत्वेन च यथाव्यपदिष्टोक्तेः**=अनिर्ज्ञातविशेषेषु वेदान्तवाक्येषु ' आत्मा वा इदमेक एवाग्र आसीत् ' इत्यादिविशेषवाचिवाक्यनिर्दिष्टस्यैव कारणतयोच्यमानत्वात् इत्यर्थः ॥

कारणविषयं विगानं परिहर्तुमाह—**समाकर्षात्** ॥ १५ ॥ ' असद्वा इदमग्र आसी'दित्यादिवाक्येषु नामरूपव्याकरणाभावापेक्षया प्रागुत्पत्तेस्सदेव ब्रह्मासदिवासीदित्युपचर्यमाणत्वात् सर्वत्र सतः सर्वज्ञस्य परमात्मनः समाकृष्यमाणत्वादित्यर्थः ॥ **इति भगवत्पादमते कारणत्वाधिकरणम् ॥ ४ ॥**

**श्रीकण्ठमते,** कारणत्वाधिकरणसूत्रद्वयमपि संख्योपसंग्रहाधिकरणशेषतयैव योजितम् । रामानुजमते तु भगवत्पादमतमेवानुसृत्य भिन्नाधिकरणतया योजितमिति विशेषः । सूत्रत्रयार्थस्तु भगवत्पादमतादविशिष्ट एव ।

**सू ॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः** ॥ १६ ॥ यथाकाशादिषु कार्यवर्गेषु कारणत्वेन विशेषवाक्यनिर्दिष्टस्यैवोक्तेः न तान्त्रिकाव्याकृतग्रहणं तथात्र विशेषवाक्यनिर्दिष्टानामिन्द्रियाणामेव ग्रहणं न्याय्यं न सांख्यतत्त्वानामिति दृष्टान्तप्रदर्शनपरतया व्याख्यातमिति न तत्राप्यर्थवर्णने वैशिष्ट्यम् ॥ ' समाकर्षा ' दिति सूत्रमपि दृष्टान्तपरतयैव व्याख्यातम् । यथा तत्र परमात्मनस्समाकर्षस्तथात्रापि पञ्चजनानामिन्द्रियत्वावगतिः इति भावः ॥

**इति श्रीकण्ठमते संख्योपसंग्रहाधिकरणम् ॥ ३ ॥**

**रामानुजमते,** अधिकरणयोजनाप्रकारो भगवत्पादीयमेव मतमनुकरोति । सूत्रार्थवर्णने नास्ति मतान्तराद्विशेषः । कारणत्वाधिकरणे विषयवाक्यसंशयादिकं सर्वं भगवत्पादीयमतादविशिष्टमिति न पृथक्प्रपञ्चनावकाशः ।

**इति रामानुजमते संख्योपसंग्रहाधिकरणकारणत्वाधिकरणे ॥ ३ ॥ ४ ॥**

**आनन्दतीर्थमते,** विषयवाक्यं समानम् । पूर्वाधिकरणेषु सर्ववैदिकशब्दवाच्यत्वं विष्णोस्सिद्धान्तितम् । एवमपि विष्णौ सकलवैदिकशब्दसमन्वयो न सिद्ध्यति 'यस्मिन्पञ्च पञ्चजना' इति वाक्ये पञ्चसंख्योपसंग्रहात् 'यस्मि'न्नित्याधाराधेयभावानुपपत्तेश्च विष्णौ पञ्चजनादिशब्दसमन्वयासंभवात् इत्याक्षिप्य तं समन्वयं समर्थयितुमस्याधिकरणस्यारम्भः । सू ॥ **न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च** ॥ १२ ॥ अनेकत्वसंख्याया भिन्नाश्रयत्वस्यौत्सर्गिकत्वात् पञ्चसंख्यालंबनस्य कस्यापि रूपपञ्चकस्याभावात् विष्णोरेकस्य तत्त्वासंभवात् वाक्यशेषबलेन यस्मिन्निति निर्दिष्टस्य ब्रह्मत्वावधारणात् तदाधेयानां पञ्चजनाकाशादीनां ब्रह्मत्वाप्रतीतेः आधाराधेयत्वानुपपत्तेश्च विष्णोः पञ्चजनादिशब्दवाच्यत्वाभावात्समन्वयो न सिद्ध्यति । इति पूर्वपक्षः । **सिद्धान्तस्तु,** स्वगतभेदशून्यस्यापि विष्णोः प्रतिशरीरं शरीरान्तर्गतप्राणादिपञ्चकाकाशनियामकबहुरूपवत्त्वेन नानाभावात्संख्योपपत्तेः तेभ्यो रूपेभ्यः शरीरनियामकरूपस्यातिरेकात् यस्मिन्निति निर्दिष्टे प्राणाकाशादीनां स्थित्या तदन्तर्गतरूपेष्वपि तदाधेयत्वकीर्तनोपपत्तेः अनेकत्वसंख्याया भिन्नाश्रितत्वस्यौत्सर्गिकत्वेऽपि वाक्यशेषबलेन रूपपञ्चकावलंबनत्वव्यवस्थापनाच्च पञ्चसंख्योपसंग्रहेऽप्याधाराधेयत्वकीर्तनेऽपि नास्ति विरोधः इति । **सूत्रार्थस्तु, सङ्ख्योपसंग्रहात्**=यस्मिन्पञ्च पञ्चजना इति बहुत्वसंख्यावचनात् । **अपि**=यस्मिन्नित्याधाराधेयभावनिर्देशादपि । विष्णोः पञ्चजनादिशब्दवाच्यत्वे विरोधो नास्ति । कुतः । **नानाभावात्**=भगवतो बहुरूपाणां सत्त्वात् । **अतिरेकाच्च**=यस्मिन्नित्युक्ताधाररूपस्य पञ्चजना इत्याधेयरूपस्य च सविशेषाभिन्नत्वाच्च इत्यर्थः ॥

**सू ॥ प्राणादयो वाक्यशेषात्** ॥ १३ ॥ भगवद्रूपत्वेनोक्ताः पञ्चजनास्तु प्राणादेः **प्राणादयः**=द्वितीयानिर्दिष्टप्राणचक्षुःश्रोत्रान्नमनोभिधाः ज्ञेयाः । कुतः । **वाक्यशेषात्**=ते च भगवद्रूपविशेषा एव । कुतः । विष्णोरन्यत्रासंभावितप्राणप्रा-

## अथ जगद्वाचित्वाधिकरणम् ॥ ४ ॥

गतः सांख्यतत्त्वाशङ्काप्रसङ्गः। पुनरपि जीवात् परमेश्वरस्यान्यभावमुपपादयति—

पेटिकासङ्गतिमाह—गत इति। अतीताधिकरणत्रये पूर्वपक्षतया शङ्काद्वयं प्रसक्तम्। 'महतः परमव्यक्तम्' 'अजामेकां' 'यस्मिन्पञ्चपञ्चजना' इति मन्त्राः तन्त्रसिद्धाव्यक्तादीनि प्रतिपादयन्तीत्येका शङ्का। तदनुबन्धिनी जीवादन्यः परमेश्वरो नाम नास्तीत्यपरा। आद्ये तावद्विषयवाक्ये प्रथमशङ्कोपयोगिनीं तान्त्रिकमहदव्यक्तपुरुषक्रमप्रत्यभिज्ञामुपन्यस्यतः पूर्वपक्षिणः 'पुरुषान्नापरं किञ्चि'दिति वाक्यं पञ्चविंशाज्जीवात्परस्य तत्वान्तरस्य निषेधकमिति स्पष्ट एव तत्र परमेश्वरप्रतिक्षेपः। द्वितीये विषयवाक्ये स्वतन्त्रप्रकृतिपरत्वशङ्का परमेश्वरप्रतिक्षेपपर्यन्ता। परमेश्वरसत्त्वे तदधीनत्वावश्यंभावेन स्वातन्त्र्यायोगात्। तृतीयेऽपि तथैव तत्र पूर्वपक्षे पञ्चविंशतेस्तत्वानां परमेश्वराधीनत्वात् परमेश्वरानङ्गीकाराच्च खलु 'नानाभावादतिरेकाच्चे'ति दूषणमुक्तम्। तत्राद्यशङ्काप्रसङ्गो निवृत्तः। इदानीमुत्तराधिकरणद्वयेन कयोश्चिद्विषयवाक्ययोर्मुक्त्यर्थं वेदितव्यतया मुक्तप्राप्यतया चोपदिश्यमानं ब्रह्म जीव इति पूर्वपक्षकरणेन पुनरपि जीवादन्यः परमेश्वरो नाम नास्तीति द्वितीयाशङ्कामुद्भाव्य जीवादन्यस्य परमेश्वरस्य सद्भाव उपपाद्यत इत्यर्थः। अन्यभावमिति। परमेश्वरविशेषणस्यान्यशब्दस्य सद्भाववाचिभावशब्दोपसर्जनत्वेन प्रयोगस्य'शिवस्य भागवत'इति शिवविशेषणस्य भगवच्छब्दस्य भक्तिमत्पुरुषार्थकतद्धितोपसर्जनत्वेन प्रयोगस्येव साधुत्वं द्रष्टव्यम्। यद्वा। पूर्वपादान्त्याधिकरणे परमेश्वर एव नास्तीति शङ्का स जीवाभिन्न इति शङ्का चेति शङ्काद्वयं 'पत्यादिशब्देभ्यः'(ब्र०१-३-४४-)'सुषुप्त्युत्क्रान्त्योर्भेदेने'ति(ब्र०१-३-४३-)सूत्रद्वयेन परमेश्वरे तस्य जीवाद्भेदे च साधकप्रदर्शनेन निराकृतं न तु तत्रोभयत्रापि बाधकं तत्र निराकृतमिति तन्निराकरणार्थमयं पाद आरब्धः। एतदेवास्य पादस्यास्पष्टब्रह्मलिङ्गत्वम्। परमेश्वरानङ्गीकारेण तस्य जीवाद्भेदानङ्गीकारेण च पूर्वपक्षाणां परमेश्वरप्रतिक्षेपपर्यन्तत्वं तत्र परमेश्वरसद्भावे 'पत्यादिशब्देभ्य' इत्यव्यवहितसूत्रप्रदर्शितसाधकबाधकत्वशङ्कास्पदानां 'महतः पर''मजामेकां' 'य-

णप्रदत्वादिप्रतिपादकात् 'प्राणस्य प्राण'मित्यादिवाक्यशेषादित्यर्थः ॥

सू ॥ ज्योतिषैकेषामसत्यन्ने ॥ १४ ॥ एकेषां=काण्वादीनाम्। अन्ने=अन्नाख्यभगवद्रूपे। असति=अनुक्तेऽपि। ज्योतिषा=तदाख्यभगवद्रूपेण पञ्चत्वसंख्यापूर्तिर्ज्ञातव्येत्यर्थः ॥

इत्यानन्दतीर्थमते सङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥

### अथ कारणत्वाधिकरणम् ॥ ४ ॥

सू ॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १५ ॥ अस्य 'आत्मन आकाशस्संभूतः, आकाशाद्वायुः' इत्यादिवाक्यं विषयः। एवं ब्रह्मणः स्वाधारत्वसंभवेऽपि स्वकार्यतत्कार्यत्वस्यासंभवात् ब्रह्मकार्यतत्कार्यादिपराणामाकाशवाय्वादिपदानां ब्रह्मवाचित्वायोगात्समन्वयो न सिद्ध्यति इति पूर्वपक्षः। यथा तत्रात्मशब्देन ब्रह्म मूलकारणत्वेनोच्यते एवमाकाशादिशब्दैः कार्यत्वसहितकारणत्वरूपेणावान्तरकारणत्वेनाप्युच्यते। यावन्ति नियम्यवस्तूनि तावन्ति तेषु नियामकानि ब्रह्मणो रूपाणि इति मूलकारणादाकाशगततद्रूपाभिव्यक्तिस्ततो वायुगततद्रूपाभिव्यक्तिरित्यादिक्रमेण व्यंग्यव्यंजकभावरूपकार्यकारणभावसंभवात् नात्र कश्चित्समन्वये विरोध इति सिद्धान्तः। सूत्रार्थस्तु, 'आत्मन आकाशस्संभूत'इत्यादौ कार्यत्वे सति कारणत्वरूपावान्तरकारणवाचकाकाशादिशब्दैराकाशादिषु स्थितो विष्णुरेव कारणत्वेन चशब्दात्कार्यत्वेन चोच्यते। न भूतम्। कुतः। यथाव्यपदिष्टोक्तेः='स योऽतोऽश्रुत'इत्यादौ विष्णुः यथा=यादृशेनाविदितत्वादिरूपेण व्यपदिष्टः उक्तः तद्रूपयुक्तस्यैवाकाशादिषु 'यमाकाशो न वेदे'त्यादिवाक्येनोक्तत्वादित्यर्थः। 'समाकर्षात्' इत्यादिकं 'प्रकृतिश्च प्रतिज्ञे'ति सूत्रावधिकं सूत्राष्टकमेकाधिकरणतया योजितमित्यस्मिन्मतेऽस्ति मतान्तराद्वैलक्षण्यम् ॥

इत्यानन्दतीर्थमते कारणत्वाधिकरणम् ॥ ४ ॥

## ॥ सू ॥ जगद्वाचित्वात् ॥ १६ ॥

श्रूयतेऽस्य विषयः कौषीतकिब्राह्मणोपनिषदि–'ब्रह्म ते ब्रवाणि' इत्युपक्रम्य 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य' इत्यादिकः ॥

इह वेद्यत्वेन श्रुतः परमेश्वरो जीवो वेति संशयः ॥

'य एवैष आदित्ये पुरुषस्तमेवाहमुपासे य एवैष चन्द्रमसि पुरुषो य एवैष

---

स्मिन्पक्षे' ति मन्त्राणां यथावदर्थवर्णनया तेषां निरीश्वरसाङ्ख्याभिमततत्त्वविषयत्वशङ्काप्रसङ्गोऽधिकरणत्रयेण निराकृतः। इदानीं तस्य जीवाद्भेदेऽव्यवहितसूत्रप्रदर्शितसाधके बाधकशङ्कास्पदस्य कौषीतकिब्राह्मणस्य यथावदर्थनिर्णयात् तस्य ततो भेद उपपाद्यत इत्यवतारिकाग्रन्थस्यार्थः । तत्र पुनरपीत्युक्तेरयं भावः। एतदधिकरणविषयवाक्यगते 'यथा सुप्तः स्वप्नं न कञ्चन पश्यती'त्यादावसाधारणाधेयत्वलक्षणभेदव्यपदेशो भेद उपपादयिष्यते । 'अन्यार्थं तु जैमिनि' ( ब्र० सू०) रिति सूत्रेण व्यपदेशेन पूर्वमपि भेद उपपादितः। 'सुषुप्त्युत्क्रान्त्योर्भेदेने'ति तस्य सूत्रस्य श्रुतिगतसर्वविधसौषुप्तिकभेदविषयत्वात् । तत्र 'ब्रह्म ते ब्रवाणी'त्युपक्रम्य 'यस्य वैतत्कर्म स वेदितव्य'इति कर्मसम्बन्धिनो जीवस्य वेदितव्यत्वोपदेशो जीवपरमेश्वरयोरभेद एवोपपद्यमानस्तयोर्भेदबाधकशङ्का तत्र निराकृतेति तन्निराकरणपूर्वकं तेनात्र भेदोपपादनमिति । एवं चेयमवतारिका एतदधिकरणमात्रविषया । न तु पूर्वव्याख्यान इवोत्तराधिकरणविषयापि । उत्तराधिकरणविषयवाक्यस्य सुषुप्त्युत्क्रान्तिसूत्रविषयत्वाभावेन तस्य 'पुनरपी'त्यस्यानन्वयात् । अत एव तत्र पृथगवतारिका करिष्यते । तस्मिन्पक्षेऽन्यभावोऽन्यत्वं भेद इति यावत् । एवं च पूर्वव्याख्याने मा भूत् प्रागुदाहरणविषयवाक्येषु द्वितीयाशङ्कावकाशः, इह तु स्यादिति पूर्वाधिकरणत्रयेण उत्तराधिकरणद्वयस्य प्रत्युदाहरणसङ्गतिः । द्वितीयव्याख्याने तु पूर्वाधिकरणत्रयस्य पत्यादिसूत्रेण उत्तराधिकरणद्वयस्य सुषुप्त्युत्क्रान्तिसूत्रेणाक्षेपिकी सङ्गतिः। पूर्वाधिकरणसङ्गतिस्तु पत्यादिसूत्राक्षेपसमाधानानन्तरं सन्निहितसुषुप्त्युत्क्रान्तिसूत्राक्षेपसमाधानमित्यवसरसंगतिलक्षणेति द्रष्टव्यम्॥सू॥ जगद्वाचित्वात् ॥ १६ ॥ अत्रेयं विषयशुद्धिः । अजातशत्रुर्नाम काशिराजः स्वसमीपमागत्य 'ब्रह्म ते ब्रवाणी'त्युक्तवन्तं बालाकिं गार्ग्यं 'सहस्रं दद्म एतस्यां वाचि जनको जनक इति जना धावन्ती'ति प्रशस्य बालाकिना 'य एवैष आदित्ये पुरुषस्तमेवाहमुपास' इत्यादिभिर्वाक्यैर्ब्रह्मत्वेनोपदिष्टानादित्यचन्द्रविद्युत्स्तनयित्न्वादिगतान्पुरुषानब्रह्मत्वेन तदुक्त्यनन्तरमेव प्रत्याख्याय ततस्तूष्णींभूते तस्मिन् 'किमेतावदेव तव ज्ञान'मिति पृष्ट्वा तेनैतावदेवेत्यभिहिते 'मृषा वै किल मा समावादयिष्ठाः ब्रह्म ते ब्रवाणी'त्युक्त्या तमपोद्य 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वेदितव्य'इति स्वयमुपदिदेश । अत्र यो वेदितव्य उपदिष्टः उपसंहारे च 'स पूर्वानात्मनोऽपहत्य स पूर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेदे'ति यद्वेदनस्य फलं वर्णितं स जीवः परमेश्वरो वेति कर्मशब्दरूढियोगाभ्यां संशयमाह–इहेति । नन्वेतेषां पुरुषाणां कर्तेति श्रुतं प्रकृतादित्यमण्डलादिगतपुरुषकर्तृत्वं जीवे न सम्भवतीति कथं पूर्वपक्ष इत्याशङ्क्य तत्र तत्सम्भावयति–य एवेति। अयमाशयः । आदित्यादिपुरुषास्तावदालोकदानादिना जीवस्योपका-

विद्युति' इत्यादिपूर्ववाक्यसंदर्भे प्रकृतादित्यादिसकलपुरुषकर्तृत्वस्य जीवेऽपि विद्यमानत्वात्, कर्मशब्दस्यापूर्ववाचित्वात् अपूर्वस्य तदर्थत्वात्

---

रकाः । 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मानः एतमात्मानं भुञ्जन्ती'ति वाक्यशेषे यथा प्रधानपुरुषः स्वकीयैर्भृत्यादिभिर्भोगसाधनान्युपहरद्भिः हेतुभिर्भोगान्भुङ्क्ते यथा च ते भोगसाधनान्युपहरन्तः प्रधानपुरुषं पालयन्ति तथा वेदितव्यत्वेनोपदिष्टः आत्मा प्रकृतैरादित्यादिपुरुषैर्भुङ्क्ते ते च तं पालयन्तीत्युक्तत्वात् । एवं च ये यस्य भोगोपकरणभूतास्ते तददृष्टजन्या इति आदित्यादिपुरुषोत्पत्त्यनुकूलादृष्टहेतुकृतिमान् जीवः कथं तेषां कर्तेति व्यपदेशं न लभेत । कार्यानुकूलकृतिमत्त्वं हि कर्तृत्वम् । न च कृतावदृष्टाद्वारकत्वं विशेषणम् । गौरवात् । न च तदुपादानगोचरापरोक्षज्ञानादिमत एव तत्कर्तृत्वमिति नियमः । तदभावेऽपि 'चैत्रशब्दं करोती'त्यादिव्यवहारदर्शनादिति । ननु, सकलपुरुषकर्तृत्वं जीवेऽपि सम्भवतु नाम, तथापि जीवगतं तद्ग्राह्यं न परमेश्वरगतमित्यत्र किं नियामकमित्याशङ्क्य मूलयुक्तिमाह—कर्मशब्दस्येति । स्यादेतत् । कर्मशब्दस्यापूर्वे यथा रूढिरस्ति तथा क्रियत इति व्युत्पत्त्या कार्यमात्रे योगोऽप्यस्ति । न च रूढिप्राबल्याद्योगो न ग्राह्य इति शङ्कनीयम् । कर्मशब्दस्य चलनेऽपि रूढिसत्त्वेन चलनापूर्वरूढ्योर्विनिगमनाविरहात्परस्परकलहायमानयोर्लब्धोन्मेषस्य योगस्येह प्रबलत्वात् । तथा च 'यस्य वैतत्कर्मे'त्यस्य प्रत्यक्षादिसन्निधापितं सकलं जगद्यस्य कार्यमित्यर्थः पर्यवस्यतीति ब्रह्मलिङ्गसमर्पकमिदं कर्मपदमित्याशङ्क्याह—अपूर्वस्येति । आदित्यादिपुरुषकर्तृत्वं वेदितव्यपुरुषस्य कीदृशं विवक्षितमित्याशङ्कायामपूर्वद्वारकं विवक्षितमित्याकाङ्क्षितार्थनिरूपणार्थतया कर्मशब्दस्यापूर्वरूढिरिहोपयुज्यते । स्वतस्तदाकाङ्क्षाविरहेऽप्यपूर्वद्वारकमिह कर्तृत्वं विवक्षितमिति ज्ञापनार्थतया वा सोपयुज्यते न तु चलनरूढिः । जीवस्याणुत्वेन चलत्वं सम्भवदपि तत्प्रतिपादनस्य प्रकृतोपयोगित्वाभावात् तदुपयोग्यर्थग्रहणे सम्भवत्यनर्थपरत्वकल्पनायोगात् जीवस्य चलनवत्त्वोपदेशेन कस्यचिदप्यतिशयस्यालाभाच्च । तथाच विनिगमनासिद्धेः कार्यसामान्ययोगादपूर्वरूढेः प्रबलत्वात् 'यस्य वैत'दिति वाक्यस्य सकलजगद्यस्य कार्यमित्यर्थकल्पने 'यो वै बालाक एतेषां पुरुषाणां कर्ते'ति पृथङ्निर्देशवैयर्थ्यप्रसङ्गेन योगपरिग्रहस्यायुक्तत्वात् कर्मशब्दस्यापूर्वार्थत्वेन व्यवस्थितजीवलिङ्गसमर्पकमेव कर्मपदं स्यादित्यभिप्रायः । ननु,तस्यापूर्वार्थत्वाङ्गीकारेऽपि नेष्टसिद्धिः । अपूर्वस्यापि पापपुण्यात्मकस्य परमेश्वरक्रोधप्रसादतया जीवधर्मत्वाभावादित्याशङ्कायाम 'पूर्वस्य तदर्थत्वा'दित्येतदेव उत्तरम् । पूर्वस्मिन्पक्षे अपूर्वस्याहूतादित्यादिपुरुषकर्त्रर्थत्वेनोक्तत्वादित्यर्थः । अस्मिन्पक्षे जीवार्थत्वात्तद्गतसुखदुःखभोगार्थत्वादित्यर्थः । अत्रायमभिप्रायः । यद्यप्यपूर्वं तत्स्वरूपपर्यालोचनायां परमेश्वरगतं, तथापि तदपूर्वहेतुकर्मानुष्ठातृजीवार्थं भवति एवं तदर्थसम्बन्धेनैव च पुण्यपापरूपस्य तस्य चैत्रीयत्वादिव्यवहारः 'अस्य पुण्यमस्य पाप'मिति । तेनैव च सम्बन्धेन चैत्रादीनां तद्वत्त्वव्यवहारः 'पुण्यवानयं पापवानय'मिति । न त्वाश्रयाश्रयिभावेन । यथा गोधनादीनां चैत्रीयत्वादिव्यवहारः । चैत्रादीनां गोधनादिमत्त्वव्यवहारश्च स्वस्वामिभावसम्बन्धेनैव । 'अस्य गावोऽस्य धनं' 'गोमान् धनवानि'ति । तस्मा'द्यस्य वैतत्कर्मे'ति व्यपदेशो

**निर्धूतसकलकर्मसंबन्धे परमेश्वरे तदयोगात् जीव एवायमिति पूर्वः पक्षः॥**

जीव एवोपपद्यते । ननु, परमेश्वरेऽप्युपपद्यते। परमेश्वरे पुराणादिषु तपश्चर्यादेः प्रसिद्धतया तज्जन्यापूर्वाङ्गीकारसम्भवात्। न च तस्य वैयर्थ्यम्। 'भोगमात्रसाम्यलिङ्गाच्चे'ति (ब्र०)सूत्रे परमेश्वरस्यापि भोगोऽस्तीत्यङ्गीकृतत्वेन तदर्थत्वोपपत्तेः। तद्भोगस्य सङ्कल्पमात्रोपनेयत्वेऽपि सङ्कल्पोपनेयसकलभोगानां राज्ञां स्वहस्तेन पुष्पिकैकादिकं निर्माय तदुपभोगवत् लीलया तपश्चर्याद्यपूर्वं तत्सम्पाद्य तत्फलभोग इति परमेश्वरतपश्चर्यादिवचनानुसारेण कल्पनोपपत्तेः अपूर्वजनककर्मानुष्ठानाय तत्तज्जीवशरीरेन्द्रियाणां तेन तेन जीवेनेव परमेश्वरेणापि प्रेर्यत्वेनापूर्वस्य तत्तज्जीवभोगार्थत्ववत् परमेश्वरभोगार्थत्वस्याप्यङ्गीकारोपपत्तेश्चेत्याशङ्क्याह-निर्धूतेति । सर्वथा निर्धूतसकलकर्मबन्ध एव परमेश्वरः । 'न कर्मणा वर्धते नो कनीया'निति श्रुतेः।अवतारविशेषैस्तस्य तपश्चर्यादिकं तत्र कर्मणि प्रवर्तनेन लोकानुग्रहार्थमिति पुराणादिष्वेव प्रसिद्धम्। कर्मानुष्ठानायत्ततत्तज्जीवशरीरेन्द्रियप्रवृत्तीनां यद्यपि तस्य तस्य जीवस्येव परमेश्वरस्यापि शरीरेन्द्रियप्रवृत्तीनां प्रेरकत्वं भवत्येव। तस्य सर्वशरीरकत्वात् सर्वस्वामित्वाच्च। तथापि जीव इव ममेदं कर्म फलाय भूयादित्यभिसन्धाय तन्न करोति । अवाप्तसमस्तकामत्वात्। किं तु तस्य तस्य जीवस्य फलाय भूयादित्यभिसन्धायेति तत्तदपूर्वस्य न जीवार्थत्ववत् परमेश्वरार्थत्वमपि प्रसज्यत इति भावः। स्यादेतत्। कर्मशब्दस्यापूर्व इव तत्साधनेष्वप्यस्ति प्रयोगः 'अयं सत्कर्माण्यनुतिष्ठति अयं निन्दितकर्माण्यभ्यस्यती'ति । एवं चेह कर्मशब्दः सत्कर्मपरः । यस्येति षष्ठ्याराध्याराधकसम्बन्धविषयेति परमेश्वरेऽपि 'यस्य वैत'दिति वाक्यं सुयोजम्। कर्मशब्दस्य सत्कर्मणि सङ्कुचिततायास्तवाप्यभिमतत्वात् । अवश्यं च वेदितव्यत्वोपदेशः परमेश्वर एव योजनीयः । 'ब्रह्म ते ब्रवाणी'त्युपक्रमानुरोधादित्याशङ्कामवधारणेन व्यावर्तयन् पूर्वपक्षमुपसंहरति—जीव एवायमिति । अयमाशयः। आदित्यादिपुरुषान् वाक्यशेषोपदिष्टयोगोपनायकतया परिपालकत्वेन वक्ष्यमाणान् प्रति श्रुतकर्तृत्वभावः सत्कर्मणि सङ्कोचस्समूलोऽस्मत्पक्षे । त्वत्पक्षे तु अमूलः । तस्माद्वाक्यशेषसमर्पितजीवलिङ्गानुरोधाच्च मुक्त्यर्थं वेदितव्यत्वेनोपदिष्टः पुरुषः जीव एवेति ततोऽन्यः परमेश्वरनामा मुक्त्यर्थं वेदितव्यो नास्ति। तत्सत्त्वे तस्यैव वेदितव्यतयोपदेशप्रसङ्गात्। ब्रह्मोपक्रमस्तु नानुरोद्धव्यः। येन हि बालाकिना 'ब्रह्म ते ब्रवाणी'ति प्रतिज्ञातं न तेन ब्रह्मोक्तम्। अन्यदन्यदेव हि तेनोक्तम्। येनाजातशत्रुणा वेदितव्यः पुरुष उपदिष्टः न तेन ब्रह्माभिधानं प्रतिज्ञातम्। किमर्थं तर्हि 'ब्रह्म ते ब्रवाणी'ति बालाकिवचनं शशशृङ्गं प्रदर्शयामीति वचनवन्निरर्थकमुपन्यस्तमुपक्रमे । असद्वादवत् पूर्वपक्ष इति तन्निराकरणार्थम्। तद्वदस्य निराकरणं न दृश्यत इति चेत् दृश्यत एव वाक्यच्छाया। 'ब्रह्म ते ब्रवाणी'ति प्रतिज्ञातवता बालाकिनोपदिष्टान्पुरुषान् तत्तत्स्वरूपप्रदर्शनेनाब्रह्मतया निराकृत्य ततः परं ब्रह्मत्वेन वक्तव्यस्याभावात्तूष्णींभूते तस्मिन् कर्मसम्बन्धिनमेव पुरुषं मोक्षाय वेदितव्यतयोपन्यस्यन् अजातशत्रुस्तदतिरेकेण मुमुक्षुभिर्ज्ञातव्यं ब्रह्म नाम किञ्चिन्नास्तीति मन्यत इत्येव हि स्पष्टतरं प्रतीयते। यथा 'रसवादिनं ब्रवाणी'ति प्रतिज्ञातवतोदाहृतान्पुरुषान् विप्रलम्भकत्वादितत्तद्दृष्टान्तप्रख्यापनेन प्रत्याख्याय ततः परमुदाहरणीयपुरुषाभावात्तूष्णींभूते तस्मिन् राजानमेव धनार्थिभिरुप-

सिद्धान्तस्तु—कर्मशब्दस्य एतच्छब्दसामानाधिकरण्येन क्रियत इति व्युत्पत्त्या च जगद्वाचित्वात् जगत्कार्यवान् परमेश्वर एवात्र प्रतिपाद्यः। न हि जीवे सकलजगत्कर्तृत्वसंभवः ॥

---

सर्पणीयमुपन्यस्यन् उत्तरवादी रसवादी नाम कोऽपि नास्तीत्येव मन्यत इति प्रतीयते। यदि हि वेदितव्यपुरुषोपदेशो ब्रह्मवदश्रोष्यत तदानीमादित्यादिपुरुषाः ब्रह्माणि न भवन्ति। किं तु 'एषां कर्ता पुरुषो ब्रह्मे' ति बालाकिवचनगतोपक्रमानुसारेण राजवचनात्प्रथमावतारानुसारेण पूर्वपक्षात् द्वितीयावतारिकानुसारेण ब्रह्मोपक्रमो जीवस्य वेति तस्य तत्त्वोपदेशेन जीवपरमेश्वरयोरभेदावसायाच्चरमश्रुतसौषुप्तिकभेदव्यपदेश औपाधिकभेदविषयः पर्यवस्यन् अतात्विकभेदे प्रमाणमिति पूर्वोक्त इति पूर्वपक्षे प्राप्ते सिद्धान्तयति—कर्मशब्दस्येति। 'यस्य वैतत्कर्मे'त्यत्रैतच्छब्दस्तावत्प्रत्यक्षादिसन्निधापितसकलजगद्वाची। न ह्यत्र किञ्चित्तेन परामर्ष्टुं योग्यम् आदित्यादिपुरुषकर्तृत्वसम्बन्धप्रतिपादनापेक्षं प्रकृतम्। अस्ति चे'दथ यदतः परो दिवो ज्योति'रित्यत्र यच्छब्दवत् प्रकृते व्यवस्थित एतच्छब्दः स्वसमानाधिकरणं कर्मपदमपि तत्परं नयेत्। पूर्ववाक्योक्तमादित्यादिपुरुषकर्तृत्वं प्रति द्वारतया निर्वाहकत्वेनापूर्वं बुद्धिस्थमिति चेत्। न। जगदेकदेशभूतादित्यादिकीर्तनेन तदेकदेशि जगत् बुद्धिस्थमित्यपि वक्तुं शक्यत्वात्। उभयोर्बुद्धिस्थत्वसम्भवे चैतत्पदस्यासङ्कुचितजगत्परामर्शकल्पनस्यैव युक्तत्वात् नापूर्वपरत्वकल्पनमादित्यादिपुरुषकर्तृत्वोपपादकतया। जगत्परामर्शस्यापि प्रकृतोपयोगित्वात्। तस्मादेतत्पदमसङ्कोचनेन प्रत्यक्षादिसन्निधापितसकलजगद्वाचीति तत्समानाधिकरणं कर्मपदमपि तद्वाचीत्येवाभ्युपगन्तव्यम्। किं च कर्मपदं क्रियत इति व्युत्पत्त्या यौगिकत्वादपि सकलजगद्वाचि न त्वपूर्वमात्रवाचि। अन्यत्रापि योगस्याविशेषात् क्वचित्सङ्कोचकल्पनायोगात्। न च वाच्यं रूढिप्राबल्यादपूर्वमात्रपरं कर्मपदं, तत्समानाधिकरणमेतत्पदमपि तत्समानविषयमेव, सर्वनाम्नां प्रकृतपरामर्शित्वेनेव प्रकरिष्यमाणपरामर्शित्वेनापि सङ्कुचितवृत्तित्वस्या'थैष ज्योति'रित्यादौ दृष्टत्वादिति। सर्वसाधारणयोगेनैवापूर्वेऽपि वृत्तिसम्भवे तस्यासाधारण्येन तत्र रूढिकल्पनायोगात्। 'बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः' इति बर्हिराज्याधिकरणे हि बर्हिश्शब्दस्य लवनादिसंस्कृतेषु दर्भेष्वाज्यशब्दस्य उत्पवनादिसंस्कृते घृते च सार्वभौमशिष्टप्रयोगे सत्यपि क्वाचित्कं तयोः दर्भघृतजातिमात्रे प्रयोगमवलम्ब्य तेनैव संस्कृतप्रयोगनिर्वाहात् तयोस्संस्काररूपप्रवृत्तिनिमित्तान्तरं न कल्पनीयमित्युक्तम्। 'एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः। तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पने'ति। इह कर्मशब्दस्य योगनिमित्तः कार्यमात्रे प्रयोगोऽपि सार्वभौमः शिष्टसम्मत इति तेनैवापूर्वेऽपि प्रयोगे निर्वहति कस्तत्र विशिष्य शक्तिकल्पनावकाशः। यद्यपि 'बर्हिर्लुनाति' 'आज्यमुत्पुनाती'त्यादिविधिषु बर्हिराज्यशब्दयोर्दर्भघृतवाचित्वमवश्यमाश्रयणीयम्। संस्कृतवाचित्वे लवनोत्पवनादिसंस्कारविधौ सति तत्संस्कृतेषु बर्हिराज्यप्रवृत्तिस्तत्प्रवृत्तौ च सत्यां बर्हिराज्योद्देशेन लवनाद्युत्पवनादिसंस्कारविधिरिति अन्योन्याश्रयप्रसङ्गात्। न च यथा च 'यूपं छिनत्ती'त्यादिवाक्येषु छेदनादिसंस्कारस्यैव यूपशब्दार्थतया यूपोद्देशेन छेदनादिविध्यसम्भवेऽपि

पुनराशङ्क्य परिहरति–

## ॥ सू ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् ॥ १७ ॥

छेदनादिभिर्यूपं कुर्यादिति विधिराश्रितः, तथात्रापि लवनादिभिर्बर्हिः कुर्यादुत्पवनादिभिराज्यं कुर्यादिति विधिराश्रयितुं शक्यः। तत्र 'पालाशे पशुं बध्नाति' 'पालाशो यूपो भवती'त्यादिवाक्यान्तरलब्धं पालाशादिकं यूपं कुर्यादित्यर्थवर्णनवदिह दर्भान् लवनादिभिर्बर्हिः कुर्यात् घृतमुत्पवनादिभिराज्यं कुर्यादित्यर्थवर्णनासम्भवात्। तत्र पालाशादीनामिवात्र दर्भाणां घृतस्य च प्राकरणिकवाक्यान्तरैरसमर्पितत्वात् इत्यादिका यद्यपि युक्तिरस्ति बर्हिराज्याधिकरणे। तथापि सामान्यशक्त्यापि विशेषप्रयोगनिर्वाहे विशेषेऽपि पृथक्शक्तिर्न कल्पनीयेत्येषापि युक्तिरविशिष्टैव। न हि पार्थशब्दः सामान्यशक्त्या पाण्डवेष्विव विशिष्यार्जुनेऽपि कविभिः प्रयुज्यते, कार्यशब्दः सामान्यशक्त्या सर्वेषु कार्येष्विव विशिष्य लिङर्थेऽपि प्राभाकरैः प्रयुज्यते, द्रव्यशब्दः सामान्यशक्त्या पृथिव्यादिषु सर्वेष्विव विशिष्य धनेऽपि लौकिकैः प्रयुज्यते इति पार्थादिशब्दानामर्जुनादिषु विशिष्यापि शक्तिराश्रयणीया। अस्तु वा कर्मशब्दस्य विशिष्यापूर्वे रूढिः। तथाप्यत्र क्रियत इति कर्मेति योग एवाश्रयणीयः। 'एतेषां पुरुषाणां कर्ते'ति प्रकृतं कर्तारं यस्येति परामृश्य तत्सम्बन्धिनः कर्मशब्देन निर्देशात्। न हि 'कर्तृकर्मभावः' 'कर्तृकर्मव्यपदेश' इत्यादिप्रयोगेषु कर्तृशब्दसमभिव्याहृतेऽपि कर्मशब्दे रूढ्युन्मेषोऽस्ति। अपि चात्र कर्मशब्दस्यापूर्वरूढ्यङ्गीकारे 'यस्य कर्म स वेदितव्य'इत्येतावदेव वक्तव्यं स्यात्। एतच्छब्दो वाशब्दश्चेत्युभयमनर्थकं स्यात्। योगाङ्गीकारे तु सार्थकं भवति। तदा हि वेदितव्यपुरुषस्य प्रागुक्तादित्यादिपुरुषकर्तृत्वदृढीकरणाय सकलजगत्कर्तृत्वपरं 'यस्य वैतत्कर्मे'ति वाक्यमिति तदैतच्छब्दः प्रत्यक्षादिसन्निधापितसकलजगदुपस्थापको वाशब्दः एकदेशावच्छिन्नकर्तृत्वव्यावृत्यर्थं च भवति। तस्मात्पदद्वयसार्थकत्वायैकस्य पदस्य रूढित्याग एव युक्तः। योगपक्षे 'यो वै बालाक एतेषां पुरुषाणां कर्ते'ति वाक्यमेव व्यर्थं स्यात्। ततो वरं पदद्वयवैयर्थ्यमिति चेन्न। बालाकिना ब्रह्मत्वेन कीर्तितानां पुरुषाणामब्रह्मत्वख्यापनेन तस्य सप्रयोजनत्वात्। अपि च 'यो वै बालाक' इत्यादिवाक्यद्वयमपि यच्छब्दोपबन्धादनुवादरूपं विज्ञायते। तत्र ब्रह्मपरत्वेन श्रुत्यन्तरेषु बुद्धिस्थानि 'चक्षोः सूर्यो अजायत, चन्द्रमा मनसो जातः''सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्'इत्यादीनि प्रथमवाक्यस्य पुरोवादकानि। 'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति। अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति यद्भूतं भविष्यद्वर्तमानरूपं कार्यं वेदवाक्यान्तरैरेवावगम्यते तत्सर्वमनितरसाधारणमहेश्वरशब्दवाच्येन परमेश्वरेण सृज्यमिति प्रतिपादयत् श्वेताश्वतरवाक्यद्वयमस्य पुरोवादः। पुरोवादानुसारेणापि कर्मशब्दस्य क्रियत इति योगेन जगद्वाचित्वं युक्तम्। एवं चासङ्कुचितसकलजगत्कर्तृत्वस्य जीवानां मध्ये क्वचिदप्यसम्भवात् परमेश्वर एवात्र प्रतिपाद्यत इति सिद्धम्। तन्निष्कर्ष एव वाक्यशेषे जीवलिङ्गं दृश्यत इत्याशङ्कानिराकरणार्थत्वेनोत्तरसूत्रमवतारयति–पुनरिति ॥ सू ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्या-

'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति' इति 'यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन् प्राण एवैकधा भवति' इति जीवमुख्यप्राणलिङ्गदर्शनान्नासौ परमेश्वर इति न वाच्यम्। पूर्वत्र प्रतर्दनविद्यायां व्याख्यातत्वात्।

ख्यातम् ॥ १७ ॥ 'एतैरात्मभिर्भुङ्क्त'इति । वाक्यशेषे श्रेष्ठिदृष्टान्तोपपादितमादित्यादिपुरुषहेतुकभोक्तृत्वमेकं जीवलिङ्गम् । 'अथास्मिन्प्राण एवैकधा भवती'ति वाक्यशेषे सप्तम्यन्तनिर्दिष्टे वेदितव्यपुरुषाश्रयत्वेनोक्तः प्राणोऽन्यज्जीवलिङ्गम् । अनयोराद्यं मुख्यम् । तद्धि निर्विचिकित्सं जीवासाधारणम् । द्वितीयं त्वमुख्यम् । यतः प्राणस्य ब्रह्माश्रितत्वमपि 'यस्मिन्द्यौः पृथिवी चान्तरिक्षं''पञ्चपञ्चजना'इति मन्त्रयोः प्रतिपन्नम् । ततश्चोपकरणोपकरणिभावसम्बन्धेनाश्रितः प्राणः जीवलिङ्गमिति तावत्पर्यन्तविवक्षा त्वत्र भोक्तृत्वरूपस्फुटतरजीवलिङ्गसमभिव्याहारेण निगमयितव्येति परमुखनिरीक्षणवत्त्वात् द्वितीयलिङ्गस्यामुख्यत्वम् । एवं च 'जीवमुख्यप्राणलिङ्गान्नेति चे'दिति सूत्रांशस्य भोक्तृत्वरूपान्मुख्यजीवलिङ्गात् प्राणरूपादुपपादनीयादमुख्यजीवलिङ्गाच्च जीव एवात्र प्रतिपाद्यो वाच्य इति न परमेश्वरः प्रतिपाद्य इत्यर्थमभिप्रेत्य तत्परतया व्याचष्टे–एतैरिति । जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च परमेश्वरो न प्रतिपाद्य इति सूत्रार्थमभिप्रेत्यैतद्भाष्यं प्रवृत्तमिति तु न व्याख्येयम् । यतः 'प्राण एवैकधा भवती'ति प्राणविषयिणी श्रुतिरिहोपन्यस्ता न तु तल्लिङ्गं किञ्चित् । तथा यदि वेदितव्यः पुरुषः जीवो मुख्यप्राणो वेति पूर्वपक्षद्वयमिहानुचितं भवेत्। तत् 'वेद्यत्वेन श्रुतः पुरुषः परमेश्वरो जीवो वे'ति द्विकोटिकसंशयप्रदर्शकभाष्यविरुद्धम् । अपि च विषयवाक्ये प्राणपूर्वपक्षस्य नास्त्यवकाशः । तत्र ह्यजातशत्रुणा वेदितव्यतयोपदिष्टस्यादित्यादिपुरुषाणां कर्तुर्वेदनायोद्युक्तं बालाकिं प्रतिबुबोधयिषुरजातशत्रुः सुप्तं पुरुषं प्राणनामभिरामन्त्र्य सुषुप्तिकाले सव्यापारस्यापि प्राणस्य भोक्तृत्वं प्रतिषिध्य यष्टिघातेनोत्थापनात् तद्व्यतिरिक्तं जीवं भोक्तारं प्रत्यबोधयदिति श्रूयते । तेन प्राणव्यतिरिक्तो यष्टिघातेनोत्थापितो जीवोऽत्र वेदितव्यपुरुषत्वेन प्रागुपदिष्ट इति सूचने श्रुत्यभिप्रायमवलम्ब्य जीवपूर्वपक्ष एक एव सम्भवतीति यथोक्त एव भाष्यार्थः । एवं च यद्यपि भोक्तृवत् प्राणवच्च यष्टिघातोत्थानमपि जीवलिङ्गं 'जीवमुख्यप्राणलिङ्गा'दित्यनेन सङ्गृहीततया व्याख्यातुमुचितं, तथाप्युत्तरसूत्रे तस्य लिङ्गस्य गत्यन्तरमपि वर्णयितुं प्रवृत्ते तद्विषयं भविष्यतीति तदत्र न गृहीतम् । अत्रापि सूत्रे परिहारांशव्याख्याने तदनुरूपतयान्यलिङ्गानि नेतव्यानीति बहुवचनेन तस्यापि गतिर्वर्णयिष्यत एवेति 'तद्व्याख्यात'मिति परिहारांशं व्याचष्टे–पूर्वत्रेति । 'प्राणस्तथानुगमा' दि(ब्र० सू०)त्यधिकरणे प्रतर्दनविद्याप्रकरणं पूर्वापरपर्यालोचनया ब्रह्मपरमवगम्यत इति तदनुरोधेन तदन्तर्गतान्यप्यन्यलिङ्गानि ब्रह्मणि नेतव्यानीत्युपपादितम् । 'उपासात्रैविध्यादाश्रितत्वादिह तद्योगात्'इदमपि प्रकरणं तेनैव व्याख्यातम् । इदमपि हि पूर्वापरपर्यालोचनया ब्रह्मपरमवसीयते । कथम् । 'ब्रह्म ते ब्रवाणी' त्युपक्रमस्तावत् ब्रह्मपरः । न चासद्वादवत् निराकरणार्थं तदुपक्रमः । 'ब्रह्म ते ब्रवाणी' त्युक्तवत्येव गार्ग्ये सर्वेष्वपि ब्रह्मज्ञेषु जनको वदान्य इति तस्मै ब्रह्मोपदेष्टुं तत्सकाशमेव धावत्सु

इहापि पूर्वापरपर्यालोचनया ब्रह्मपरत्वे स्थिते तदनुरूपतया अन्यानि लिङ्गानि नेतव्यानि । पूर्वत्र हि उपक्रमे ' ब्रह्म ते ब्रवाणि ' इति ब्रह्मोपक्षिप्तम् । मध्ये च ' यस्यवैतत्कर्म ' इति सकलजगत्कर्तृत्वमुक्तम् । परत्र चोपसंहारे ' सर्वान् पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति ब्रह्मोपासनैकान्तं सर्वपाप्मापहतिपूर्वकं स्वाराज्यफलमुक्तम् । एवमस्य प्रकरणस्य ब्रह्मपरत्वनिश्चये जीवमुख्यप्राणलिङ्गानि तत्परतयैव नेतव्यानि ॥

पक्षान्तरमुच्यते—

---

मह्यं ब्रह्मोपदेष्टुमयमागत इति हृष्टेनाजातशत्रुणा 'सहस्रं दद्म एतस्यां वाचि जनको जनक इति जना धावन्ती'ति कृतस्य सहस्रगोदानप्रतिज्ञानस्य श्रवणाद्गार्ग्येणोपदिष्टेषु आदित्यादिषु पुरुषेषु प्रत्याख्यातेषु ततः परमविज्ञानाचूष्णीं भूते च गार्ग्ये तं 'प्रत्येतावदेव तव ज्ञान'मिति पृष्ट्वा 'एतावद्धी'ति तस्य प्रतिवचनानन्तरमेव 'मृषा वै किल मा समवादयिष्ठाः ब्रह्म ते ब्रवाणी'ति अजातशत्रुणा तद्वचने मृषात्वस्य ख्यापितत्वाच्च । यदि हि जीवातिरिक्तं ब्रह्मनाम किञ्चिन्नास्तीत्यभिमन्यमानस्तन्निराकरणप्रवृत्तो राजाभविष्यत्तदा 'ब्रह्म ते ब्रवाणी'ति तद्वचनश्रवणेन हृष्टस्तस्मै सहस्रगोदानं न प्रत्यज्ञास्यत । बालाकेर्वक्तव्यपुरुषान्तरसद्भावेऽपि तत्प्रतिज्ञाया मृषात्वं राजा प्रतिज्ञाकालमारभ्यैव मन्येतेत्येतावदिति प्रश्नपूर्वकमेतावदेवेत्युत्तरमनपेक्ष्य ततः प्रागेव तन्मृषात्वमुदघाटयिष्यत् । तस्मात्स्वयं ब्रह्मज्ञः पुनरपि तदीयाधिकविशेषग्रहणे श्रद्धावानेव 'ब्रह्म ते ब्रवाणी'ति वचनश्रवणमात्रेण हृष्टस्तस्मै सहस्रगोदानं प्रतिजज्ञे । तेन चाब्रह्मस्वादित्यादिपुरुषेषु ब्रह्मत्वेनोपन्यस्यमानेषु किमयं गार्ग्यः स्थूलारुन्धतीन्यायेनाब्रह्माणि ब्रह्मत्वेनोपादिक्षत् किं वा भ्रान्त्येति निश्चेतुमशक्नुवन् उदाहृतब्रह्मप्रतिवचनेन तस्य भ्रान्तत्वं निश्चित्य तदनन्तरमेव प्रतिज्ञाया मृषात्वमुद्धाटयामासेति च युज्यते । एतेन रसवादिकथनप्रत्याख्यातृवचनदृष्टान्तमवलम्ब्य 'यो वै बालाक'इत्यादेस्साङ्ख्यप्रतिज्ञातब्रह्मनिराकरणपरत्वकल्पनमपि निरस्तम् । 'यो वै बालाक'इत्यादेर्गार्ग्यप्रतिज्ञातब्रह्मान्यविषयत्वावगमे हि स दृष्टान्तः क्रमते । तस्य तत्प्रतिज्ञातब्रह्मविषयत्वमेव समर्थितम् । एवं च यथा केनचिन्मणितत्वज्ञानाभिमानिना काचं प्रदर्श्य मणिरेष इत्युक्ते काचोऽयं न मणिरिति तं प्रत्याख्याय तत आत्मनो विशेषं जिज्ञापयिषतान्येन पारमार्थिको मणिः प्रदर्श्यते । एवं राज्ञा ब्रह्मोपदिश्यत इति मणितत्वविद्वचनदृष्टान्त एवात्र क्रमते । एवं तावदुपक्रमस्य मध्ये परामर्शस्य ब्रह्मविषयत्वं स्थितम् । तथा 'सर्वान्पाप्मनोऽपहत्येत्ये'तावत्युपसंहारोऽपि तद्विषय एव । जरामृत्युशोकादिसकलपापापहतिपूर्वकं शिवस्यात्मरूपं स्वाराज्यं हि शिवाख्यस्य परब्रह्मणः वेदनादेव श्रुत्यन्तरेषु प्रसिद्धम् । एवं च यथा प्रतर्दनविद्यायामन्यलिङ्गानि त्रिविधोपासनतात्पर्येण ब्रह्मणि नीतानि एवमिहापि तानि तथैव ब्रह्मणि नेतव्यानीति तात्पर्यार्थः ॥ उत्तरसूत्रमवतारयति—पक्षान्तरमुच्यत इति । पूर्वसूत्रे यष्टिघातोत्थापनेन जीवलिङ्गं भोक्तृत्वादिलिङ्गात् जीवशरीरब्रह्मोपासनार्थत्वेन नीतम् । इदानीं तत् जीवातिरिक्तपरमेश्वरप्रतिबोधनार्थमित्युत्तरग्रन्थपर्यालोचनावश्यंस्थायि पक्षा-

## ॥ सू ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

'तौ ह सुप्तं पुरुषमाजग्मतुस्तं हाजातशत्रुरामन्त्रयांचक्रे बृहन् पाण्डरवासः सोमराजन्निति स ह तूष्णीमेव शिश्ये तदुहैनं यष्ट्या व्याचिक्षेप स तत एव समुत्तस्थौ' इत्यत्र प्राणनामभिरामन्त्रणेऽपि तदश्रवणेन ततः परं यष्टिघाते सत्युत्थानेन च प्राणाद्यतिरिक्तजीवसद्भावप्रतिपादनं तदतिरिक्तपरमेश्वरप्राज्ञोपासनार्थमिति 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागात्' इति प्रश्नात् 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति' इति 'सता सोम्य तदा संपन्नो भवति' इत्यादिवाक्यान्तरसमानार्थात् तत्प्रतिवचन्तरमुच्यत इत्यर्थः ॥ सू ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ अन्यार्थमित्येतद्विशेष्याध्याहारपूर्वकं व्याचष्टे—तौ हेति । राज्ञा वेदितव्यतयोपदिष्टस्यादित्यादिपुरुषाणां कर्तुर्वेदनाय गार्ग्योपसत्तिप्रतिपादनानन्तरं श्रूयते 'तं ह-पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमीयतुस्तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोमराजन्निति स इह तूष्णीमेव शिश्ये तदुहैनं यष्ट्या व्याचिक्षेप स तत-एव समुत्तस्था'विति । अत्र बृहन्नित्यादिनामभिः प्राणस्यामन्त्रणम् । प्राणः खलु बृहन्महान् श्रेष्ठः असपत्नो वा । पाण्डरवर्णा आपोऽस्य वासस्त्वेनोपचरिताः । शरीरं वा । प्राणविद्यायां 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चे'ति तस्य श्रैष्ठ्यश्रवणात् 'किं मे वास' इति प्राणप्रश्ने 'आपो वास' इत्युत्तरश्रवणाच्च । सप्तान्नब्राह्मणे 'स एषोऽसपत्नः इत्यथैतस्य प्राणस्यापः शरीर'मित्यसपत्नत्वाप्शरीरकत्वश्रवणाद्वा । सोमश्चायमुपचारात् । सप्तान्नब्राह्मण एव 'ज्योतीरूपमसौ चन्द्र' इति श्रवणात् । राजा च । 'प्राणो वै सम्रा' डिति श्रवणात् । एवं प्राणनामभिरामन्त्रणेऽपि अनुत्थानप्रदर्शनं प्राणान्यत्वज्ञापनार्थम् । सुषुप्तिदशायामुपरतव्यापारेभ्यः शरीरेन्द्रियेभ्यः अन्यत्वं सुज्ञानमिति तस्यामपि दशायामनुपरतव्यापारात्प्राणादन्यत्वमेव हि ज्ञापनीयम् । एवं प्राणनामभिरामन्त्रणेऽपि अनुत्थानस्य यष्टिघातेनोत्थानस्य च प्रदर्शनेनान्वयव्यतिरेकाभ्यां यत् कैमुतिकन्यायेन स्थूलसूक्ष्मदेहातिरिक्तजीवसद्भावप्रतिपादनं तदन्यार्थं जीवातिरिक्तपरमेश्वरप्रतिपादनार्थमेवेति जैमिनिराचार्यो मन्यते इत्यर्थः । सूत्रे तुशब्दः अस्य जीवलिङ्गस्य पूर्वसूत्रदर्शितगतिव्यावृत्त्यर्थः । जैमिनिग्रहणमस्य पक्षस्य जैमिन्यभिमतत्वेन युक्ततरत्वज्ञापनार्थमित्येतद्भाष्ये स्पष्टत्वान्नोक्तम् । 'प्रश्नव्याख्यानाभ्या' मिति हेतुं व्याचष्टे—क्वैष एतदिति । यष्टिघातेनोत्थापनानन्तरं 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागा'दिति राज्ञा गार्ग्यं प्रति कृतः प्रश्नः । यद्यपि यत्राशयिष्ट तत्रैव यावत्प्रबोधमभूदिति प्रबोध्यमानस्तत एवागादिति चार्थात्सिद्ध्यन्नर्थो न पृथक्प्रश्नमर्हति, तथापि जीवस्य सुषुप्तेः प्राक् स्वपतोऽधिकरणतया सुषुप्तस्य यावत्प्रबोधमधिकरणतया यष्टिघातोत्थापनानन्तरं तदुत्थानापादानतया च जीवातिरिक्तपरमेश्वरसद्भावं दृढीकर्तुं त्रेधा प्रश्नः । गार्ग्ये पृष्टं सुषुप्तजीवाधिकरणमविजानति 'हिता नाम हृदयस्य नाड्य' इत्यादिना 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यती'त्यन्तेन 'तत्रैतत् सुप्तस्समस्तस्सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति ताभिः प्रत्यवसृप्य पुरीतति शेत' इत्यादिश्रुत्यन्तरानुसारात् जीवसुषुप्त्यधिकरणं हृदयावच्छिन्नं ब्रह्म प्राप्तुमार्गे तदधिग-

नाचावगम्यते । एके वाजसनेयिनः विस्पष्टमस्मिन् बालाक्यजातशत्रुसंवादे एतत्समानार्थमधीयते । तत्र हि 'यत्रैष एतत् सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागात्' इति प्रश्नः । 'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति प्रतिवचनम् । तस्मात् परमेश्वर एवायं सकलजगत्कर्तेति सिद्धम् ॥

इति जगद्वाचित्वाधिकरणम् ॥ ४ ॥

न्तव्यासु नाडीषूपसर्पणमुक्त्वा 'अथास्मिन्प्राण एवैकधा भवती'ति राज्ञैव कृतं स्वपृष्टार्थविवरणम् । तस्य व्याख्यानमिदं च सुषुप्तजीवस्य ब्रह्मणि लयप्रतिपादकम् । 'सता सोम्य तदा सम्पन्नो भवती'ति श्रुत्यन्तरसमानार्थत्वात् । तथा चास्मिन्वेदितव्यतयोपदिष्टे परब्रह्मणि जीवः सुषुप्तौ लीनो भवतीति तदर्थो ग्राह्यः । यदर्थके पूर्वसूत्रे सूत्रकृता प्रतर्दनविद्यावदिहापि त्रिविधमुपासनं विवक्षितमिति तन्निर्वाहकं प्राणे प्राणशरीरक इति ब्रह्मविशेषणम् । एताभ्यां प्रश्नव्याख्यानाभ्यां जीवातिरिक्तः परमेश्वरोऽत्र प्रतिपाद्योऽवसीयत इति भावः । 'अपि चैवमेक'इति सूत्रशेषं व्याचष्टे—एक इति । अपि च वाजसनेयिनोऽस्मिन्प्रकरणे स्पष्टमेतत् समानार्थवाक्यजातमधीयते । 'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागा'दिति अत्र प्रश्नः । 'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत' इति व्याख्यानम् । अत्र निर्दिष्टं जीवस्य सुषुप्त्यधिकरणं ब्रह्मेति स्पष्टम् । आकाशशब्देन तन्निर्देशात् तस्य ब्रह्मणि श्रुत्यन्तरेषु प्रसिद्धतरत्वात् अस्याकाशशब्दस्य एतत्स्थाने कौषीतकिब्राह्मणपठितस्य प्राणशब्दस्य एकार्थस्य वक्तव्यतया तयोर्ब्रह्मविषयत्वावश्यंभावाच्च । ब्रह्मविषयत्व एव हि तयोरैकार्थ्य'माकाशस्तल्लिङ्गात्''अत एव प्राण'इति सूत्रदर्शितन्यायतश्श्रुत्यन्तरेष्ववगतम् । अतोऽत्र जीवप्रतिपादनस्य जीवातिरिक्तपरमेश्वरप्रतिबोधनार्थत्वं युक्तमिति भावः । अतः परमेश्वरसद्भावे तस्य जीवाद्भेदे वा न विवदितव्यमित्यभिप्रेत्याधिकरणमुपसंहरति—तस्मादिति ॥४॥

इति जगद्वाचित्वाधिकरणम् ॥ ४ ॥

## नयमणिमालायाम्

### अथ जगद्वाचित्वाधिकरणम् ॥ ४ ॥

सू० । जगद्वाचित्वात् ॥ १६ ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

जीवः कर्मश्रवणादजातशत्रूदितः पुरुषः । कर्म च पुण्यापुण्यं न कथञ्चिदपीश्वरे भवति ॥ ७८ ॥

निखिलजगद्वाच्येतत्पदमिह सङ्कोचकाभावात् । तदस्य कर्म कार्यं न स भवति महेश्वरादन्यः ॥ ७९ ॥

इति जगद्वाचित्वाधिकरणम् ॥ ४ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ बालाक्यधिकरणम् ॥ ४ ॥ ५ ॥

सू ॥ जगद्वाचित्वात् ॥ १६ ॥ जीवमुख्यप्राणलिंगान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

भगवत्पादमते, अस्य 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः' इति कौषीतकिब्राह्मणगतं बालाक्यजातशत्रुसंवादवाक्यं विषयः । तत्र किं जीवो वेदितव्यत्वेनोपदिश्यते उत मुख्यप्राणः उत परमात्मेति जीव-

# अथ वाक्यान्वयाधिकरणम् ॥ ५ ॥

**सर्वत्र जीवेश्वरयोरेकशब्दविषयत्वे प्रतीयमाने तत्सामानाधिकरण्यं कथमिति तन्निरूपणायेदमधिकरणमारभ्यते—**

## ॥ सू ॥ वाक्यान्वयात् ॥ १९ ॥

## अथ वाक्यान्वयाधिकरणम् ॥ ५ ॥

उत्तराधिकरणमवतारयति—सर्वत्रेति। उदाहरिष्यमाणे मैत्रेयीब्राह्मणे सर्वत्र आदिमध्यावसानेषु जीवेश्वरयोरेकशब्दविषयत्वं प्रतीयते। जीवपरत्वेन सम्प्रतिपन्नानामीश्वरपरत्वमीश्वरपरत्वेन संप्रतिपन्नानां जीवपरत्वम्। एवमेकशब्दविषयत्वे प्रतीयमाने जीवेश्वरयोरन्यतर एव परिशिष्यत इत्यन्यतरः प्रत्याख्यातो भवति। तत्र प्रत्यक्षसिद्धजगत्प्रत्याख्यानायोगादीश्वरस्यैव प्रत्याख्यानं पर्यवस्यति, जीवेश्वरयोरभेदो वा पर्यवस्यति। एवमीश्वरस्य तत्र जीवाद्भेदस्य बाधकं तज्जीवेश्वरवाचित्वेन सम्प्रतिपन्नशब्दानां सामानाधिकरण्यमुपपादयितुं शक्यमित्याशङ्क्य तदुपपादनायाधिकरणमारभ्यत इत्यर्थः। अनेन माभूज्जीवाधिकरणवाक्यमीश्वरे तद्भेदे वा बाधकम्। इदं तु बाधकं स्यात्। सामानाधिकरण्यस्यान्यथा निर्देष्टुमशक्यत्वादित्याशङ्क्य प्रत्युदाहरणसङ्गतिर्दर्शिता भवति। तदुपपादनार्थमधिकरणमारभ्यत इत्यर्थः॥ सू ॥ वाक्यान्वयात् ॥ १९ ॥ बृहदारण्यके मैत्रेयीब्राह्मणे याज्ञवल्क्यः स्वयं प्रविव्रजिषया

---

मुख्यप्राणलिङ्गाभ्यां संशयः। परिस्पन्दलक्षणस्य प्राणाश्रयस्य कर्मणः 'यस्य वैतत्कर्मे' ति श्रवणात् वाक्यशेषे च प्राणशब्दश्रवणाच्च वेदितव्यः प्राण इति उत भोगोपकरणभूतानां पुरुषाणां कर्ता धर्माधर्मलक्षणकर्मशाली जीवो वा वेदितव्यत्वेनोपदिश्यते इति पूर्वपक्षः। 'ब्रह्म ते ब्रवाणि'इत्युपक्रमसामर्थ्यात् कृत्स्नजगत्कर्ता परमेश्वर एव वेदितव्यतयोपदिश्यते। कुतः। **जगद्वाचित्वात्**='यस्य वैतत्कर्मे' त्येतच्छब्दसमानाधिकरणस्य कर्मशब्दस्य कृत्स्नजगद्वाचकत्वात् इति सिद्धान्तः। अनेन सूत्रार्थोऽपि व्याख्यात इति वेद्यम्।

**सू॥जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्॥१७॥**वाक्यशेषगताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च तयोरेवान्यतरस्येह ग्रहणं न्याय्यं न परमेश्वरस्येति **चेत् तद्व्याख्यातम्**=परिहृतं चैतत **'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्'** इत्यत्र। उपक्रमोपसंहाराभ्यामस्य वाक्यस्य ब्रह्मविषयत्वावधारणात् 'प्राणबन्धनं हि सोम्य मनः' इत्यत्र प्राणशब्दस्यापि ब्रह्मपरत्वनिश्चयात् जीवब्रह्मणोरभेदन्यायेन जीवलिङ्गस्यापि ब्रह्मपरत्वेन नेतुं शक्यत्वाच्च परमेश्वर एवेह वेदितव्यतयोपदिश्यत इत्यर्थः। **सू ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥१८॥** इदं वाक्यं जीवप्रधानं वा ब्रह्मप्रधानं वेति नैव विवादावकाशः। यतः जैमिनिराचार्यस्तु जीवपरामर्शमन्यार्थं ब्रह्मप्रतिपत्त्यर्थं मन्यते। कस्मात्। **प्रश्नव्याख्यानाभ्याम्**= 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागात्' इति प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयः प्रश्नो दृश्यते। 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इति च प्रतिवचनमपि दृश्यते। तस्माद्यत्रास्य जीवस्य निःसंबोधतास्वच्छतारूपः स्वाप उपाधिजनितविशेषविज्ञानरहितं स्वरूपं यतस्तद्भ्रंशरूपमागमनं सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते। **अपिचैवमेके**=वाजसनेयिशाखिनः'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्' इति प्रश्ने 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति प्रतिवचने च स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति। तस्मादिदं वाक्यं ब्रह्मणि समन्वितमिति सिद्धम्॥

**श्रीकण्ठरामानुजमतयोः** विषयवाक्यपूर्वपक्षसिद्धान्तादिकं सर्वं प्रायः पूर्ववदिति न पृथग्विवरणावकाशः। 'जीवमुख्यप्राणलिङ्गा'दिति सूत्रे तु प्रतर्दनाधिकरणवदुपक्रमोपसंहारानुगुण्येन जीवप्राणलिङ्गान्यपि ब्रह्मपरतया नेतव्यानी'त्यैककण्ठ्यमेवाहतम्। 'उपासात्रैविध्या'दित्यस्यार्थवर्णनप्रक्रिया परमनयोर्मतयोः पूर्वमताद्विलक्षणा ॥ अधिकरणस्यास्य जगद्वाचित्वाधिकरणमिति व्यवहारः॥

**आनन्दतीर्थमते** 'समाकर्षा'दिति पूर्वाधिकरणान्तिमसूत्रमारभ्य 'प्रकृतिश्चे'ति सूत्रावधिकस्य सूत्राष्टकस्य ऐकाधिकरण्यकल्पनात्तस्याधिकरणस्योत्तरत्र व्याख्यास्यमानत्वाच्च नेह प्रपञ्चनम्॥

**इति सूत्रार्थचन्द्रिकायां बालाक्यधिकरणमथवा जगद्वाचित्वाधिकरणम् ॥ ४ ॥ ५ ॥**

**बृहदारण्यके श्रूयतेऽस्य विषयः–' न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति ' इत्यारभ्य ' आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य ' इत्यादि श्रूयते ॥**

---

मैत्रेयीकात्यायन्योस्स्वभार्ययोर्वित्तसंविभागं चिकीर्षन् वित्तेन किममृतत्वं प्राप्तुं शक्यमिति मैत्रेय्या पृष्टो 'यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यात् अमृतत्वस्य तु नाशास्ति वित्तेने'त्युक्त्वा 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूही'ति तया पुनरमृतत्वसाधनं पृष्टो 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवती'त्यादिभिः 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवती'त्यन्तैर्वाक्यैः पतिजायापुत्रमित्रपश्वादि सर्वं भोगार्थतयैव प्रियं भवति तं पत्यादिसर्वभोक्तारमात्मानमुपक्रम्य 'आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य'इत्यमृतत्वसाधनमात्मदर्शनं दर्शनसाधनानि श्रवणादीनि चोपदिश्य 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदित'मित्यात्मविज्ञानेन सर्वविज्ञानमुक्त्वा 'स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरे अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद अथर्वाङ्गिरसः पुराणं विद्या उपनिषदः श्लोकास्सूत्राणि अनुव्याख्यानानि इष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानी'ति तस्य नामरूपात्मकसकलप्रपञ्चकारणत्वं प्रदर्श्य 'यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघनः एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ती'ति स्वोत्पत्तिविनाशविशेषविज्ञानाभावानुक्त्वा 'एतावदरे खल्वमृतत्व' मिति वर्णितस्यैतस्यात्मनो वेदनममृतत्वसाधनमित्युपसञ्जहारेति श्रूयते । अत्र'आत्मा वा अरे द्रष्टव्य'इत्यादिना निर्दिष्टस्तावदात्मा परमेश्वरः प्रतीयते । अमृतत्वार्थिन्यै मैत्रेय्यै तद्दर्शनाद्युपदेशात्तद्विज्ञानेनामृतत्ववर्णनात्तस्य नामरूपात्मकसकलप्रपञ्चोपादानत्वप्रतिपादनाच्च । 'स यथा सैन्धवघन'इत्यादिनोक्तस्तु जीवः प्रतीयते । 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'ति देहाकारपरिणतभूतोपाधिकोत्पत्तिविनाशवत्त्ववचनात् 'न प्रेत्य संज्ञास्ती'ति मोक्षदशायां देहाकारपरिणामभूतसङ्घातेनैकीकृत्य देवोऽहं मनुष्योऽहमित्यादि ज्ञानं संसारदशायामिवास्य नास्तीत्युपन्यासाच्च । एवमिह प्रतीयमानजीवेश्वरसामानाधिकरण्यनिर्देशे 'आत्मा वा अरे द्रष्टव्य' इति प्रकृतस्यैवात्मनः 'एवं वा अरे अयमात्मे'ति इदमात्मशब्दाभ्यां परामर्शात् । चतुर्थे मैत्रेयीब्राह्मणे 'एवं वा इदं महद्भूतमनन्तमपार'मिति विज्ञानघनवाक्य एव च तैस्सामानाधिकरण्येन निर्दिश्येते । महद्भूतमनन्तमपार'मिति शब्दानां ब्रह्मपरत्वात् । सर्वविज्ञानवाक्यादिगतैरात्मादिशब्दैस्ततो भिन्नविभक्तिकानां जीवविषयशब्दानां सामानाधिकरण्याभावेऽप्येकविषयत्वमविचलमेव । प्रतीतौ सत्यामपि जीवेश्वरयोरन्यतर एवात्र प्रतिपाद्यः नोभावप्यभेदेनेति व्यवस्थापनीयम् । तयोर्भेदस्य प्रबलानेकश्रुत्यन्तरसिद्धत्वादिति स्थिते किं जीवोऽत्र प्रतिपाद्यः उत परमेश्वर इति संशयप्रकारः सूत्रावतारिकायां सूचितत्वात् इह भाष्ये न लिखितः । ननु नास्त्यत्र पूर्वपक्षावकाशः उपक्रमोपसंहारपरामर्शः ब्रह्मपरे महावाक्ये दृष्टानामन्यलिङ्गानां तत्तच्छरीरकब्रह्मोपासनार्थत्वस्य प्रतर्दना-

इह 'आत्मनस्तु कामाय' इत्यादिवाक्यैः भोगप्रीतियुक्ततया आत्मनः सं-

धिकरणवर्णितस्य पूर्वाधिकरणेऽपि स्थापितत्वात् इहापि अमृतत्वसाधनवेदनेनोपक्रमस्य तेनोपसंहारस्य मध्ये दुन्दुभ्यादिवाक्यानां च ब्रह्मपरत्वस्य स्पष्टत्वादित्याशङ्क्य पूर्वपक्षमुपपादयति-इहेति । अयमाशयः । 'न वा अरे पत्युः कामाये'त्यादिवाक्येषु स्वभोगार्थे पत्यादिप्रीतियुक्ततया प्रतिपाद्यमानस्तावदात्मा जीव एव । न च तत्रापि पूर्वाधिकरणोदाहृतस्य भोक्तृत्वादेरिव भोगार्थप्रीतेर्जीवद्वारा तच्छरीरकपरमेश्वरान्वयो वक्तुं शक्य इति वाच्यम् । तथा सति प्रसिद्धिद्योतकवैशब्दस्वारस्यभङ्गप्रसङ्गात् । जीवगतस्वभोगार्थप्रतिपत्त्या हि प्रीतिमात्रं हि लोके प्रसिद्धं न तु तस्य जीवद्वारा परमेश्वरान्वितत्वमपि। तदपि श्रौतव्युत्पत्तिमतां प्रसिद्धमिति चेन्न। अनधीतिनीमविचारितश्रुत्यर्थां केवलममृतार्थिना पत्या सह चिरसंवासेन लब्धान्तःकरणशुद्धिं स्वयमप्यमृतत्वार्थिनीं मैत्रेयीं प्रति तद्बुद्ध्युपारूढाया लोकप्रसिद्धेरेव द्योतनीयत्वात्। न च वैशब्दमात्रस्य स्वारस्यभङ्गोऽस्तु परमेश्वरविषयाणामुपक्रमोपसंहारपरामर्शानामनुरोध्यत्वादिति वाच्यम् । 'आत्मा वा अरे द्रष्टव्य' इत्यादिना वक्ष्यमाणस्यात्मैव द्रष्टव्य इत्यस्योपपादनार्थः खलु 'न वा अरे पत्युः कामाये'त्यादिसन्दर्भः । अतस्स यद्विषयत्वेन तदुपपादको भवति तद्विषयो वर्णनीयः। न च जीवधर्मस्य परमेश्वरपर्यन्तं च प्रतिपादकत्वेन तदुपपादको भवति । भवति तु स्वात्मन्यनुभूतस्य स्वभोगार्थत्वेनैव पत्यादीनां प्रियत्वस्योपोद्बलकत्वेन । 'प्रसिद्धं ह्येतत्तवापि मैत्रेयि यत्पत्यादयो जायादीनां पत्यादिप्रयोजनाय प्रिया न भवन्ति किं तु स्वप्रयोजनायैव। अतः पत्यादिकं परित्यज्य स्वात्मैव द्रष्टव्य' इति । अतोऽयं सन्दर्भो मैत्रेयीसम्मतियोग्यलोकप्रसिद्धार्थानुवादपर इत्येवं वर्णनीयम् । अत एव हि पतिजायादिवाक्येषु पतिवाक्यस्य प्राथम्यम् । मैत्रेयीं प्रति तदनुभवसाक्षिकमर्थे प्रथममुपन्यस्ते तद्दृष्टान्तेनार्थान्तराण्यपि तत्सम्मतियोग्यानि कर्तव्यानीति। ननु, स्वात्मभोगाय पत्यादीनां प्रियत्ववचनं पत्यादीन्परित्यज्य केवलमात्मस्वरूपमन्वेष्टव्यमित्यत्रोपपादकं न भवति । प्रियमेव ह्यन्वेष्टव्यं न तु प्रिययुक्तं स्वरूपमिति चेत् यथा प्रियवियुक्तमात्मस्वरूपमेवानेनोपपादितं भवति तथा निरूपयामः । सर्वेषामपि स्वात्मा प्रियः पतिजायादयोऽपि प्रियाः इत्यनुभवसाक्षिकमेतत् । तत्र पतिजायादीनां प्रियत्वं पतित्वादिप्रयुक्तं न भवति किं तु स्वात्मप्रयुक्तमित्यस्मिन्नर्थे तेषां स्वेष्टसम्पादकत्वदशायामिव स्वानिष्टसम्पादकत्वदशायां प्रियत्वादर्शनेन सर्वसम्प्रतिपत्तियोग्ये वर्ण्यमाने स्वात्मनः पतिजायादीन्प्रति इष्टसम्पादकत्वदशायां चाविशेषेण प्रियस्य पतिजायाद्यपेक्षयातिशयपुरुषार्थत्वं तावल्लभ्यते । तेन चात्मानात्मनोर्लोकप्रसिद्ध्यनुसारेण मुख्यगौणपुरुषार्थत्वरूपं तत्वमालोच्य गौणं परित्यज्य मुख्यमेवाश्रयेदित्ययमर्थो लभ्यत एव । तस्मात्पतिजायादिवाक्यसन्दर्भे अविचले जीवपरत्वे तदुपपाद्यमात्मनो द्रष्टव्यत्वादिवचनं तद्विषयमवतिष्ठत इत्युत्तरसन्दर्भस्यापि तद्विषयतावश्यंभावात् । तद्विज्ञानेन सर्वविज्ञानवचनं 'शिवे पूजिते सर्वे देवाः पूजिता भवन्ती'ति वचनं यथा सर्वेषां देवानां पूजया यादृशं फलमवाप्यते तत्सर्वं शिवपूजाफले महार्णवे शीकरनिकरवदन्तर्भवतीत्येवं फलतः सर्वदेवानां पूजितत्वपरं गौणमेवमन्येषां प्रकृतिमहदहङ्कारभूतेन्द्रियाणां प्रत्येकं

सारित्वावगमात् अत्र प्रतिमाद्यमानो जीवः ॥

इति सन्देहेन पूर्वपक्षे प्राप्ते—सिद्धान्तयामः परमेश्वर इति। कुतः 'अमृतत्वस्य तु नाशास्ति वित्तेन' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' 'इदं सर्वं यदयमात्मा' इत्यादेः, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' इत्यवसानस्य कृत्स्नस्य वाक्यस्य परमेश्वरेऽन्वयात् भोगप्रीतियुक्तस्य जीवस्यानु-

श्रवणमननाभ्यां जगत्तत्वनिश्चयपूर्वकमुपासनेन यावत्फलं भवति तत्सर्वं पुरुषोपासनफलेऽन्तर्भवतीत्यभिप्रायं गौणं वर्णनीयम् । अत एवाहुः'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः । बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः । पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः । पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यते ।' इति । 'स यथार्द्रैधोऽग्ने'रित्यादिनोक्तं सर्वोपादानत्वं तु जीवाधिकृतप्रधानविषयं योजनीयम् । तत्रार्द्रेन्धनविशिष्टस्याग्नेर्धूमोपादानत्ववद्दृष्ट्याङ्गीकृतम् । न च तत्राग्निर्धूमोपादानं किंत्वार्द्रेन्धनमेव । तदुत्कर्षेणैव धूमोत्कर्षदर्शनात् । एवं दार्ष्टान्तिकभागेनापि आर्द्रेन्धनकल्पप्रकृतिविशिष्टस्याग्निकल्पस्य चेतनस्य प्रपञ्चोपादानत्वं वर्ण्यमानदृष्टान्तानुसारात् 'दध्ना जुहोती'ति विधानमिव विशेषणे सङ्क्रामतीति । 'एतावदरे खल्वमृतत्व' मित्येतत्तु प्रकृतिविविक्तजीवज्ञानस्य मोक्षसाधनत्वाभिप्रायेण सुयोजम् । तस्मान्मैत्रेयीब्राह्मणे जगदुपादानप्रकृतिविशिष्टत्वेन मोक्षार्थं प्रकृतिविविक्ततया ज्ञातव्यत्वेन च जीव एव प्रतिपाद्य इति पूर्वपक्षं निष्कर्षति—जीव इति । 'सन्देहेन पूर्वपक्षे प्राप्ते' इत्यत्र जीव इति पूर्वपक्षे प्राप्त इत्यन्वयः । 'सन्देहेने'त्यवतारिकायां सूचिताकारस्याधिकरणाङ्गसन्देहस्यानुवादः । नन्ववधारणेन पूर्वपक्ष इति भाष्याभिप्रायः । 'भोगप्रीतियुक्ततयात्मनः संसारित्वावगमा'दिति प्राग्जीवत्वे निर्णीते पूर्वपक्षहेतोर्दर्शितत्वात् । 'वाक्यान्वया'दिति सूत्रस्य मैत्रेयीब्राह्मणे प्रतिपाद्यः परमेश्वर इत्यध्याहृतेन साध्येन तत्रादिमध्यावसानवाक्यानां परमेश्वरविषयत्वादिति सूत्रहेतोरन्वयमभिप्रेत्य सिद्धान्तयति—परमेश्वरइतीति । अत्र'इत्यारभ्ये'त्यन्तेनामृतत्वोपायप्रार्थनारूपं पुरस्तादुपदेष्टव्यत्वस्य ब्रह्मलिङ्गमुपक्रमगतं दर्शितम् । 'इत्यादे'रित्यन्तेन सर्वविज्ञानप्रतिज्ञानं जगदुपादानत्वमित्यादि मध्यावसानगतं ब्रह्मलिङ्गजातं दर्शितम् । 'इत्यवसानस्ये' त्यन्तेन 'येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानाती'त्यादि ह्युपसंहारगतं ब्रह्मलिङ्गं दर्शितम् । यद्यपि षष्ठे मैत्रेयीब्राह्मणे 'एतावदरेऽमृतत्व'मिति ब्रह्मलिङ्गान्तरश्रवणमस्ति तथापि तदुपक्रमस्थलिङ्गत्वेन प्राग्दर्शितमिति तद्विहाय चतुर्थे मैत्रेयीब्राह्मणे 'येनेदं सर्वं' मित्यादिना दर्शितम् । जीवः स्वान्तर्यामितया स्थितेन येन परमेश्वरेण आहृतज्ञानशक्तिकस्सन्निदं सर्वं विजानाति तं परमेश्वरं केनोपायेन विजानीयात् । सर्वस्य विज्ञातारं तं परमेश्वरं केनोपायेन विजानीयात् । तद्दर्शने तत्प्रसादहेतुं प्रागुक्तं श्रवणमननपूर्वकमुपासनमेकमुपायं विहाय न किञ्चिदप्युपायान्तरमस्तीत्यभ्यासेन प्रतिपाद्यमानं दुरधिगमत्वलिङ्गं दर्शितम् । नन्वस्तूपक्रमादीनां ब्रह्मणि स्वारस्यं तथापि पतिजायादिवाक्यस्य भोगप्रीतियुक्तजीवविषयतायाः अपाकर्तुमशक्यत्वात् अनन्यथासिद्धजीवलिङ्गानुसारेण जीव एव प्रकृतिविविक्तो मुमुक्षुभिर्द्रष्टव्यं परं ब्रह्म तदतिरेकेण तन्नास्तीति मैत्रेयीब्राह्मणस्य तात्पर्यं वर्णनीयमिति तत्रैव ब्रह्मलिङ्गत्वाभिमतं सर्वं योजनीयमित्याशङ्क्याह—भोगप्रीतियुक्त-

वादेन परमेश्वरप्रतिपादनादविरोधः ॥

कथमिह सर्वत्र जीवशब्देन परमेश्वराभिधानमिति चेत् तदिदं मतान्तरेणोपपादयति—

॥ सू ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

'आत्मनि खल्वरे दृष्टे' इत्यादिनोक्तस्यैकविज्ञानेन सर्वविज्ञानस्य सिद्धये जीवस्य तत्कार्यतया तदव्यतिरिक्ततां ज्ञापयितुं जीवशब्देन परमेश्वरस्याभिधानमित्याश्मरथ्यो मन्यते ॥

॥ सू ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

उत्क्रमिष्यतो मुक्तस्य परमेश्वरस्वरूपभावादात्मशब्देन परमेश्वराभिधानमित्यौडुलोमिर्मेने ॥

॥ सू ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

---

स्येति । पतिजायादिजीवविषयत्वावश्यंभावमात्रेण द्रष्टव्यादिवाक्यानामपि तद्विषयत्वावश्यंभावे हि सर्ववेदान्तप्रतिष्ठितं जीवातिरिक्तस्य परब्रह्मणः परमेश्वरस्य मुमुक्षुभिर्ज्ञातव्यत्वं जगदुपादानत्वाद्यनुकूलं वक्तव्यमिति शङ्क्येतापि न तु सोऽस्ति । पतिजायादिवाक्ये भोगप्रीतियुक्ततया जीवस्यानुवादः उत्तरवाक्येषु मुमुक्षुद्रष्टव्यत्वादिना परमेश्वरस्य प्रतिपादनमिति सिद्धिसङ्गत्युपपत्तेः । जीवानुवादस्य परमेश्वरप्रतिपादनस्य कथमेकवाक्यता घटत इति चेत् इत्थम् । यस्मात्पतिजायादयः पतिजायादिप्रयोजनाय प्रिया न भवन्ति किं तु स्वप्रयोजनायैव । तस्माद्यस्यामृतस्वरूपस्वप्रयोजनस्य पतिजायादिविषयो रागः प्रतिकूलस्तस्य सिद्धिमपेक्षमाणेन पतिजायादिभ्यो विरज्य परमेश्वर एव द्रष्टव्य इति । नन्वेवं सति एकस्यैवात्मशब्दस्य पतिजायादिवाक्यगतस्य जीवोऽर्थः, तदुत्तरवाक्यगतस्य परमेश्वर इत्यर्थभेदः स्यात् । नायं दोषः । पतिजायादिवाक्यस्य जीवपरत्वे द्रष्टव्यवाक्यस्य 'यदा चर्मवदाकाश'मित्यादिश्रुत्यन्तरानुसारेण परमेश्वरपरत्वे चावश्यवक्तव्ये 'स्याच्चैकस्य ब्रह्मशब्दव'दिति न्यायेन तदर्थभेदाङ्गीकारस्योचितत्वात् । एवं द्रष्टव्यवाक्यस्य परमेश्वरपरत्वे तदुत्तरवाक्यानां तत्परत्वं स्वत एवायाति । ननु सर्वविज्ञानप्रतिज्ञादिकं परमात्मविषयतां प्राप्नोतु नाम, 'तान्येवानुविनश्यती'त्यादिजीवपरामर्शः कथं तद्विषयतां प्राप्नुयादित्याकाङ्क्षायां तत्र स्वाभिमतं प्रकारं प्रदर्शयिष्यन्मतान्तरेण तावदुपपादयतीत्याह—कथमिहेति । सर्वत्रेति । 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मे'त्येतेषु वाक्येष्वित्यर्थः । यद्वा । प्रतर्दनाधिकरणविषयवाक्ये पूर्वाधिकरणविषयवाक्ये चेत्यर्थः ॥ सू ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ सर्वविज्ञानस्य प्रतिज्ञासिद्ध्यर्थस्य जीवपरमेश्वरयोः कार्यकारणभावकृतस्यैक्यस्य लिङ्गं तज्ज्ञापनार्थं जीववाचिशब्दैः परमेश्वराभिधानमिति पूर्वाधिकरणे विषयवाक्ययोः शास्त्रान्तरस्थप्रतिज्ञासिद्ध्यर्थमिति भावः । ॥ सू ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥ संसारदशायां जीवस्य परमेश्वराद्भेदेऽपि मोक्षदशायां तद्भावप्राप्तेः जीवशब्दैः परमेश्वराभिधानमिति औडुलोमिमतमिति सूत्रं व्याचष्टे—उत्क्रमिष्यत इति ॥ सू ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ जी-

'य आत्मनि तिष्ठन्' इत्यादिश्रुतेर्जीवात्मनि परमेश्वरस्यात्मतया अवस्थानाज्जीवशब्दवाच्यत्वं परमेश्वरस्येति काशकृत्स्नो मेने। इदमेव मतं सूत्रकारस्य। मतद्वयमुपन्यस्य तद्विरोधेनैतदभिधानात् अन्यस्यानभिधानाच्च निश्चीयते। प्रबलश्रुत्यानुगुण्यं चात्र संभवति। तथा हि—अथर्वशिरसि सर्वचिदचिदनुप्रवेशात् परमेश्वरस्य सर्वशब्दवाच्यत्वमिति श्रूयते। प्रथमखण्डे 'देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन् को भवानिति। सोऽब्रवीत्—अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तरं प्राविशद्दिशां चान्तरं स प्राविशत् सोऽहं नित्यानित्यो ब्रह्माहं ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्चोदञ्चोऽहमधश्चोर्ध्वं च दिशश्च विदिशश्चाहं पुमानहं स्त्री चाहं गायत्र्यहं सावित्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहं छन्दोऽहं गार्हपत्योऽहं दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्यहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहमृग्यजुःसामाथर्वाङ्गिरसोऽहं क्षरमहमक्षरमहं गुह्योऽहमरण्योऽहं पुष्करमहं पवित्रमहमग्रं च मध्यं च बहिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वं च मां यो वेद स सर्वान् देवान् वेद' इत्यन्तेन।

---

वेष्वन्तर्यामितया परमेश्वरस्यावस्थितेस्तन्नियम्यत्वेन तच्छरीरभूतानां जीवानां शब्दाश्शरीरिपरमेश्वरपर्यन्ताः, अतो जीवशब्दैः परमेश्वराभिधानमिति काशकृत्स्नमतमिति सूत्रार्थमभिप्रेत्य व्याचष्टे—य आत्मनीति। परस्परविरुद्धेषु त्रिष्वेतेषु मतेषु सूत्रकारस्य किमभिमतमित्याशङ्कायां तन्निर्धारयति—इदमेवेति। जीवानां कार्यत्वस्य 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः (ब्र० २-३-१७) इत्यधिकरणे निराकरिष्यमाणत्वान्मुक्तावागन्तुकरूपाभिनिष्पत्तेः 'संपद्याविर्भावः स्वेन शब्दात् (ब्र०४-४-१.) इत्यधिकरणे निराकरिष्यमाणत्वात्सर्वशब्दानां परमात्मपर्यन्तत्वस्य 'चराचरव्यपाश्रयस्तु स्या'दित्य(ब्र०२-३-१६सू०)धिकरणे प्रसाधयिष्यमाणत्वाच्च काशकृत्स्नमतमेव स्वाभिमतमिति पूर्वं मतद्वयोपन्यासपूर्वकं तदभिधानेन तदनन्तर*मन्यस्यानभिधानेन* च सूत्रकृत्सूचयामासेति भावः। नन्वेवं सतीदं सूत्रत्रयं व्यर्थम्। इदं हि न पूर्वमतद्वयस्यानभिमतत्वज्ञापनार्थम्। नापि काशकृत्स्नमतस्य स्वमतत्वज्ञापनार्थम्। उदाहृताधिकरणैरेव तदुभयसिद्धेरित्याशङ्क्य स्वाभिमतस्य काशकृत्स्नमतस्य प्रबलश्रुत्यन्तरानुगुण्येनापि प्राबल्यसूचनार्थमिति दर्शयितुमाह—प्रबलेति। अथर्वशिरसि 'सोन्तरादन्तरं प्राविश' दित्यनेन दिगन्तर्गतं सर्वासु दिक्षु स्थितं रुद्रः प्राणिनां शरीरान्तरात्प्राणादेरप्यन्तरं चेतनवर्गमन्तर्यामितया प्राविशदित्युक्तम्। 'दिशां चान्तरं स प्राविश'दित्यनेन दिगन्तर्गतं सर्वासु दिक्षु स्थितमचेतनवर्गमन्तर्यामितया प्राविशदित्युक्तम्। ततः 'सोऽहं नित्यानित्यः ब्रह्माहं ब्रह्माह' मित्यादिना प्रथमखण्डशेषेण 'यो वै रुद्रस्स भगवान् भूर्भुवस्स्वः यश्च ब्रह्मे' त्यादिना द्वितीयखण्डेन च शिवस्य सर्वान्तर्यामितया सर्वशरीरकत्वप्रयुक्तं सर्वशब्दवाच्यत्वं दर्शितम्। तथा 'यो योनिंयोनिमधितिष्ठत्येको यस्मिन्निदं सञ्चविचैति विश्वम्। एवं स देवो भगवान्वरेण्यो योनिस्वभावानधितिष्ठत्येकः। सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान्विनियोजयेद्यः। घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम्। एष देवो विश्वकर्मा महात्मा

द्वितीयखण्डे च सर्वानुप्रवेशादेव 'यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः' इत्यारभ्य ब्रह्मविष्णुमहेश्वरोमाविनायकादिसर्वप्रपञ्चवाच्यत्वं प्रतिपाद्यते। तथा सर्वश्रुतिसामरस्यविचारे सर्वेषां चिदचिद्वस्तूनामन्तर्यामितया अनुप्रविष्टः सर्वशरीरः सर्वशब्दवाच्यः परमेश्वरः शिव इति विज्ञायते। अतः काशकृत्स्नमतमेव श्रुतिसूत्रमहाभियुक्तसम्मतमिति समञ्जसम् ॥

इति वाक्यान्वयाधिकरणम् ॥ ५ ॥

---

सदा जनानां हृदये सन्निविष्टः। 'यो रुद्रो अग्नावप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश।' 'नमस्स्रोतस्याय च द्वीप्याय चे' त्यादिब्रह्मकर्मकाण्डगतसर्वश्रुतिसामरस्यविचारे सर्वेषां चेतनानामन्तर्यामितया तान्यनुप्रविष्टोऽन्तर्यामित्वादष्टमूर्तिरन्तर्यामिब्राह्मणादिषु पञ्चभूतचन्द्रसूर्यसकलचेतनरूपाष्टमूर्तित्वप्रसिद्धेश्च सर्वशरीरकः 'इमा रुद्राय स्थिरधन्विने गिर' इति श्रुतेश्च सर्वशब्दवाच्यश्च शिवोऽवधार्यत एव। यत एवं तस्मात काशकृत्स्नमतमेव समञ्जसमित्युपसंहरति—अत इति। श्रुतिसूत्रेति। श्रुतिसूत्राण्युदाहृतानि। महाभियुक्तसूक्तयः स्मृतिपुराणानि। तथा हि—मानवधर्मशास्त्रोपसंहारे तावत् 'प्रशासितारं सर्वेषामणीयांसमणोरपि। रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं पर'मिति सर्वेषां नियन्तारं पुरुषं प्रस्तुत्य 'एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम्। इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वत'मिति तेषुतेषु वेदभागेषु तस्याग्न्यादिशब्दैर्व्यवहारमुपन्यस्य सर्वेषां तेषामविरोधसिद्ध्यर्थं'मेष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः। जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रव'दिति श्लोकेन तस्य सर्वनियन्तृत्वं राज्ञः प्रजानियन्तृत्वमिव ताटस्थ्येन स्थितस्य न सम्भवति किं तु जीववर्गस्य स्वस्वशरीरनियन्तृत्वमिव नियम्यानि व्याप्य स्थितस्येति वर्णयांबभूवे। तेन सर्वेषां तच्छरीरत्वसूचनात् तस्य स्वशरीरभूताग्न्यादिशब्दवाच्यत्वमुपपादितं भवति। शिवस्याग्निशब्देन व्यवहारस्तावत् 'अग्निं पुरातनयित्नोरचित्तात्''रुद्रो वा एष यदग्नि'रित्यादिश्रुतिभागेषु 'किमेभिरमरैरन्यैः पूजितैरध्वरे फलम्। राजा चेदध्वरस्यास्य न रुद्रः पूज्यते त्वया। द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः। घोरा चान्या शिवा चान्या ते चैव शतधा पुन'रित्यादिशिवपुराणमहाभारतादिवचनोपनीतशिवतात्पर्येषु प्रसिद्धः। इन्द्रशब्देन व्यवहारः अथर्वशिरसि ईशाननामनिर्वचनानन्तरपठिते 'अभि त्वा शूर नोनुम'इति मन्त्रे प्रसिद्धः। एवं शब्दान्तरैर्व्यवहारोऽप्युदाहरणीयः। 'पञ्चभिर्व्याप्य मूर्तिभि'रित्यनेन वियदादिभूतरूपाः शिवस्याष्टमूर्त्यन्तर्गताः पञ्चब्रह्मरूपा वा मूर्तयो विवक्षिताः। मानवधर्मशास्त्रोपक्रमस्य शिवपरत्वमस्माभिः शिवतत्वविवेके निपुणतरमुपपादितमिति नोपसंहारस्य शिवपरत्वे तद्विरोधश्शङ्कनीयः। तथा कात्यायनगृह्ये 'नदीमुत्तरिष्यन्नभिमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा संपारयेति वनस्पतिमारोक्ष्यन्नभिमन्त्रयते नमो रुद्राय वनस्पतिषदे स्वस्ति मा सम्पारये'त्यादिना नदीतरुगिरिनदीचतुष्पथश्मशानगोष्ठाक्रमणेषु तदधिष्ठातृत्वेन तत्रतत्र सन्निहितस्य रुद्रस्य नमस्कारमन्त्रान्विधायैवमन्यत्रापि 'नमो रुद्रायेत्येव ब्रूया' दित्यन्याक्रमणेष्वपि सामान्यतस्तन्नमस्कारमन्त्रं विधाय 'रुद्रो ह्येवैतत्सर्व'मिति तदनन्तरवाक्येन रुद्रस्य सर्वाधिष्ठातृत्वे 'सर्वो वै रुद्र'इति श्रुतिः

प्रमाणत्वेन स्मारिता । तेन 'सर्वो वै रुद्रः सर्वं खल्विदं ब्रह्मे'त्यादिसर्वपदसामानाधिकरण्यं विशिष्य तत्तद्वाचकपदसामानाधिकरण्यं च सर्वाधिष्ठातृत्वप्रयुक्तसर्वशरीरकृतमिति दर्शितं भवति । आश्वलायनसूत्रे शिवं प्रस्तुत्य 'सर्वाणि ह वा एतस्य नामधेयानि भवन्ती'ति साक्षादेव सर्वेषां नाम्नां तत्र पर्यवसानं वर्णितम् । तथा शिवपुराणे 'विग्रहं देवदेवस्य विश्वमेतच्चराचरम् । तदेवं न विजानन्ति पशवः पाशगौरवा' दिति विश्वस्य शिवविग्रहत्वं लोकानां तदज्ञानं चोक्त्वा तदज्ञानादेव वेदेषु परब्रह्मणश्शिवस्य तत्रतत्र तत्तद्वस्तुरूपत्वोक्तिं तत्तद्वस्त्वधिपतित्वोक्तिं च दृष्ट्वा क्षुभितहृदयाश्शास्त्रकारा भिन्नभिन्नहृदया भिन्नप्रस्थानावलम्बिनो जाताः । वस्तुतश्शिवस्सर्वशरीरकः सर्वस्याप्यधिपतिरिति तत्तच्छब्दैरपि व्यपदेष्टुं शक्यः । तदधिपतित्वेनापि नात्र कश्चिद्विरोध इति प्रपञ्चितं 'तमेकमेव बहुधा वदन्ति यदनन्तकम् । अजानन्तः परं भावमविकल्पं महर्षय' इत्यादिना 'केचित्संसारिणं प्राहुस्तमसंसारिणं परे । स्वतन्त्रमपरे प्राहुरस्वतन्त्रं परे विदुः ॥ घोर इत्यपरे प्राहुस्सौम्यमेव परे विदुः । रागवन्तं परे प्राहुर्वीतरागमथापरे । निष्क्रियं तं परे प्राहुस्सक्रियं चेतरे जनाः । निरिन्द्रियं परे प्राहुस्सेन्द्रियं च तथापरे ।' इत्यादिविकल्पप्रदर्शनपूर्वकम् 'एवं विकल्प्यमानेषु याथार्थ्यं परमेष्ठिनः । नाध्यवस्यन्ति मुनयो नानाप्रत्ययकारणात् । ये पुनस्सर्वभावेन प्रपन्नाः परमेश्वरम् । ते विजानन्त्ययत्नेन शिवं परमकारण'मित्यन्तेन । एवमन्यत्राप्युदाहार्यम् । तस्मात्स्थितमिदं श्रुतिसूत्रस्मृतिपुराणानुग्रहार्थं काशकृत्स्नमतमेव साधीय इति । अथोदाहृतेष्वथर्वशिरोवाक्येषु व्याख्येयांशान्व्याकुर्मः । पुरा ब्रह्मादयो देवाः परब्रह्मणः परमशिवस्य तत्त्वं स्वयं निश्चेतुमशक्नुवन्तः तमेवादिगुरुं प्रक्ष्याम इति निश्चित्य निरतिशयसुखात्मकतया स्वर्गशब्दाभिधेयं तस्य लोकं गत्वा तमपृच्छन् कः कीदृक्स्वरूपो भवानिति स भगवानब्रवीत् सृष्टेः प्रागहमेक एवासं सृष्ट्यनन्तरमिदानीं सृष्टप्रपञ्चात्मना वर्ते संहारकाले च सृष्टेः प्रागिव भविष्यामि कल्पान्तरे स्रक्ष्यमाणपदार्थात्मना वा भविष्यामि मदतिरिक्तः कोऽपि नास्तीति 'नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्यन्तवाक्यार्थः स्पष्टः । तथा 'सोऽहं नित्यानित्य' इत्यादेरपि तत्र सामान्यतो नित्यानित्यस्वरूपत्वमुक्त्वा 'ब्रह्माह' मित्यनेन परब्रह्मतया नित्यरूपं विवृतम् । 'ब्रह्म ह'मिति केचित्पाठमङ्गीकृत्याहमित्यर्थे हमितिशब्दः, 'हंसस्सोऽह'मिति दर्शनात् शकन्ध्वादित्वाद्वा सन्धिरिति वदन्ति । तदनन्तरमनित्यरूपत्वविवरणम् । तत्र 'ब्रह्माह'मिति पुंलिङ्गेन, ब्रह्मशब्देन हिरण्यगर्भरूपत्वमुक्तम् । 'प्राञ्चोऽह'मित्यादिभि 'र्विदिशश्चाह' मित्यन्तैर्वाक्यैः प्रागाद्यूर्ध्वान्तसकलदिगन्तर्गतवस्तुजातरूपत्वं सकलदिग्रूपत्वं चोक्तम् । सावित्री देवता । गायत्र्यादयश्चत्वारश्छन्दोविशेषाः । छन्दस्सामान्यतश्छदोमात्रम् । गार्हपत्यादयस्त्रयोऽग्नयः । सत्यः सत्यवचनम् । अर्शादित्वादच्प्रत्ययेन सत्यवचनशीलो वा । गौः प्रसिद्धा । गौरी पार्वती कन्या वा । ज्येष्ठो वयोऽधिकः । श्रेष्ठो भूम्यैश्वर्यादिभिः प्रशस्तः । वरिष्ठः उरुतरः । अप्तेजोग्रहणं भूतमात्रोपलक्षणम् । ऋगादयश्चत्वारो वेदाः । क्षरं प्रधानम् । अक्षरं जीवसामान्यम् । गुह्यो गुप्तधर्मः । अरण्यं चम्पकारण्यादिकम् । पुष्करं तीर्थविशेषः । पवित्रं ततोऽन्यत् पावनवस्तुसामान्यं गङ्गादिकम् । अग्रं च मध्यं च चकारादादिश्च । सर्वस्य पदार्थजातस्य बहिश्च चकारादन्तश्च । पुरस्ताज्ज्योतिः प्राच्यामुद्यन्नादित्यः । एवमनेकात्मकोऽप्यहमेक एव । सर्वे च मां सर्वेऽपि पदार्थाः मामेवानुवर्तन्ते । मदेकवश्या इति यावत् । एवं मां यो वेद स सर्वान्देवान्वेद

वेदात्मकत्वात्सर्वेषां देवानामिति । एवं तावत्प्रथमखण्डेन तत्तदनुप्रवेशप्रयुक्तं तत्तच्छब्दवाच्यत्वं प्रदर्शितम् । तथा द्वितीयखण्डेऽपि 'यो वै रुद्रस्स भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः' इत्यादिभिर्मन्त्रैर्विशिष्य ब्रह्मविष्णुमहेश्वरोमाविनायकस्कन्देन्द्राग्निभूर्भुवस्सुवर्महर्जनस्तपस्सत्यपृथिव्यप्तेजोवाय्वाकाशसूर्यचन्द्रनक्षत्रग्रहप्राणकालयममृत्युभूतरूपतां सामान्यतो भूतभवद्भविष्यदात्मकतां च प्रदर्श्य 'यच्च विश्वं यच्च कृत्स्नं यच्च सर्व' मित्यभ्यासेन सर्वात्मकत्वं च प्रदर्श्य तेन सर्वशब्दवाच्यत्वमुपपाद्य 'यो वै रुद्रस्स भगवान् यच्च सत्यं तस्मै वै नमो नम' इति मन्त्रेण 'ब्रह्माह' मित्युपक्रान्तपरब्रह्मरूपतयोपसंहृतम् । तेन यथा शिवस्य परब्रह्मरूपतया ब्रह्मशब्दवाच्यत्वम् एवं सर्वान्तर्यामित्वेन हिरण्यगर्भादिशरीरकतया तत्तच्छब्दवाच्यत्वं चेति दृष्टान्तमुखेनोपपादनार्थमादावन्ते च ब्रह्मवाचिसत्यशब्दनिर्देशः । एवं तावत्सर्वान्तर्यामितया सर्वशब्दवाच्यत्वमनेन खण्डद्वयेनावगम्यत इति निर्विवादम् । सर्वान्तर्यामित्वं च 'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं स प्राविश' दित्यनेनोच्यत इत्यपि निर्विवादम् । तेन शिवस्य सर्वान्तर्यामित्वमुच्यत इति । अत्र केचन विवदन्ते । इदं खलु शिववाक्यम् । तेन स्वस्यान्तर्यामित्वमुच्यते चेदहं प्राविशमिति निर्देशापत्तिः । अतः स्वस्मादन्यस्यैव कस्यचित्सर्वान्तर्यामित्वमुपदिश्य वामदेववत् सर्वात्मोपदेश इति शिवेनैव स्वकीयसार्वात्म्योपदेशरूपखण्डद्वयस्यापि तात्पर्यं विवृतमिति तदन्य एवान्तर्यामीति निश्चीयते । न च 'सोऽन्तरा' दितिश्रुतिवाक्यमेव, प्रागितिकरणेन शिववाक्यस्य समाप्तत्वादिति शङ्कनीयम् । 'सोऽहं नित्यानित्य' इत्युत्तरत्रापि शिववाक्यानुवृत्त्या प्राक् तत्समाप्त्यसिद्धेः । अन्यथा 'सोऽहं नित्यानित्य' इत्यादौ 'पुनस्सोऽब्रवी' दिति वाक्याध्याहारप्रसङ्गात् । 'नान्यः कश्चिन्मत्तो व्यतिरिक्त' इतीत्येतदनन्तरं श्रूयमाण इतिशब्दस्तु 'दिशश्चान्तरं स प्राविश' दित्येतदनन्तरान्वयितया यस्मात्सोऽन्तर्यामी शरीरतोऽन्तरात् प्राणादेरप्यन्तरमभ्यन्तरं जीववर्गं सर्वा दिशः तदन्तर्गतं वस्तुजातं चान्तर्यामितया प्राविशत्तस्माद्धेतोः मम सार्वात्म्योपदेश उपपन्नः । मदीयाहंशब्दानां तत्पर्यन्तत्वादिति हेत्वर्थोऽस्तु । 'धर्मं धर्मेण तर्पयामि स्वेन तेजसे' त्यन्तं कृत्स्नशिववाक्यानन्तरान्वयी समाप्त्यर्थो वास्तु । अध्याहाराद्व्यवहितान्वयस्य ज्यायस्त्वादिति । तेषां विवादः 'को भवा' निति श्रुतिगतप्रश्नवाक्योपन्यासेनैव निरस्यते । न हि शिवं प्रति देवैस्तत्स्वरूपे पृष्टे तेन तदन्यस्य कस्यचित्सार्वात्म्यमुत्तरवाक्येनोपदिष्टमिति सङ्घटते । न च प्रश्नवाक्यस्यापि तद्विषयत्वं कल्प्यम् । 'को भवा' निति भवच्छब्देन तदन्तर्यामिणं पृच्छतां देवानामुत्तरवाक्यस्थाहंशब्दस्यापि तत्पर्यवसायित्वं स्पष्टमेवेति तत्र तान्प्रति उपपादनीयाभावादुक्तार्थोपपादकतया परोक्तरीत्या 'सोऽन्तरा' दित्यादेरन्वयासम्भवेन तदापि तदसङ्घटनतादवस्थ्यात् । तस्मात् प्रश्नतदुत्तरतदुपपादकसर्वानुप्रवेशवाक्यानां सङ्घटनाय 'को भवा' निति देवैश्शिवस्वरूपं पृष्टम् । शिवेनापि सर्वात्मकं स्वकीयं तत्वमुपदिष्टम् । कथं शिवस्य सार्वात्म्यं तद्व्यतिरिक्तजगदवभासनादिति देवानामसम्भवाशङ्काव्युदसनाय तदुपपादकं 'सोऽन्तरा' दित्यादिवाक्यमित्येव सङ्घटयितुमुचितम् । 'सोऽन्तरा' दित्यादि शिववाक्यं वास्तु । न च शिववाक्यत्वे पूर्व 'मह' मिति परामृष्टस्य स्वात्मनः 'स' इत्यनेन परामर्शानुपपत्तिः । 'अह' मित्यनेन स्वान्तर्यामी परामृष्ट इति परपक्षेऽपि तदनुपपत्तेस्तुल्यत्वात् । यत्र यस्यानुपचारिताहंपदप्रयोगः तत्र स्वान्तर्यामिणि तत्पदप्रयोगोपपत्तौ तथैव स्वस्मिन्नपि तत्प्रयोगोपपत्तेः । गीतासु 'तमेव

शरणं गच्छ माद्याजी मां नमस्कुरु' इत्यादेरेकविषयत्वे परस्यापि सम्प्रतिपत्तिसत्त्वाच्च । 'सोहं नित्यानित्य' इत्युत्तरवाक्ये तच्छब्दसमानाधिकरणाहंशब्दप्रयोगदर्शनेनात्राप्यहमित्यध्याहारोपपत्तेः । 'प्राविश'दिति तु छान्दसः पुरुषव्यत्यय इत्युपपद्यते । श्रुतिवाक्यत्वेऽपि 'सोऽन्तरा' दित्यादे 'स्सोऽहं नित्यानित्य' इत्यादौ पुनस्सोऽब्रवीदित्यध्याहारप्रसङ्गो नापतति । इतिशब्दवत् सोऽन्तरादित्यादेरपि कृत्स्नशिववाक्यसमाप्तौ तत्समाप्त्यर्थस्येतेरनन्तरं निवेशनसम्भवात् । 'न वा अजीविष्यमिमा न खादन्निति होवाच कामो म उदपान' मित्यादिश्रुतिषु किञ्चिद्वक्तृकवाक्यमध्यगतस्यापि'इति होवाचे'त्यादेस्तदन्ते श्रुतिवाक्यत्वेनान्वयस्य दृष्टत्वाच्च । ननु 'सोऽन्तरा' दित्यादेश्शिववाक्यान्ते निवेशने तस्य तदन्तर्धानप्रतिपादनपरत्वं कल्पयितुं युक्तम् । तदनन्तरं 'ततो देवा रुद्रं नापश्य' न्निति तददर्शनप्रतिपादनार्थं तदुपपादकस्य तदन्तर्धानप्रतिपादकस्यापेक्षितत्वात् । लिङ्गपुराणे 'सोऽब्रवीद्भगवान्रुद्रो ह्यहमेकः पुरातनः । आसं प्रथममेवाहं वर्तामि च सुरोत्तमाः । भविष्यामि च लोकेऽस्मिन्मत्तो नान्योऽस्ति कश्चन । नित्यानित्योऽहमनघ' इत्युपक्रम्य 'धर्मं धर्मेण सर्वं च तर्पयामि स्वतेजसा । इत्युक्त्वा भगवान्रुद्रस्तत्रैवान्तरधीयत । नापश्यंस्तु ततो देवा' इत्यादिना तथैवोपबृंहितत्वादिति चेत्सत्यम् । भाष्यकारस्य त्वयमभिप्रायः । यथैवादर्शनोपपादकं तदन्तर्धानप्रतिपादनमपेक्षितं तथा 'नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्युक्त्युपपादकं सर्वानुप्रवेशसर्वशरीरकत्वप्रतिपादनमपेक्षितमेव । ततश्च 'सोऽन्तरादन्तरं प्राविश' दिति वाक्येन 'तदस्य त्रिविधं रूपं स्थूलं सूक्ष्ममतः परम् । अस्मदाद्यमरैर्दृश्यं स्थूलं सूक्ष्मं तु योगिभिः । ततः परं तु यन्नित्यं ज्ञानमानन्दमद्वयम् । तन्निष्ठैस्तत्परैर्भक्तैर्दृश्यं तद्व्रतमास्थितैः ॥' इति शिवपुराणादिवर्णितरूपत्रयमध्ये देवदृश्यं स्थूलं रूपं विहाय ततोऽन्तरात्सूक्ष्मादप्यन्तरं तत्परं रूपं प्राविशदित्येवमन्तर्धानं प्रतिपाद्यते । 'दिशश्चान्तरं स प्राविश' दित्यनेन सर्वान्तर्यामित्वं प्रतिपाद्यत इत्यतो न कोऽपि विरोध इत्यलं विस्तरेण ॥

॥ इति वाक्यान्वयाधिकरणम् ॥ ५ ॥

---

## नयमणिमालायाम् ।

### अथ वाक्यान्वयाधिकरणम् ॥ ५ ॥

सू । वाक्यान्वयात् ॥ १९ ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

आत्मा द्रष्टव्य इति श्रुत्या प्रतिपाद्यते जीवः । पतिजायादिप्रिययुक् स एव पूर्वं यतः प्रकृतः ॥ ८० ॥

जीवे तद्विज्ञानान्न सर्वविज्ञानमुपपन्नम् । युक्ता जीवस्यात्मनि महेश्वरे जीववाचकाः शब्दाः ॥ ८१ ॥

इति वाक्यान्वयाधिकरणम् ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ वाक्यान्वयाधिकरणम् ॥

सू ॥ वाक्यान्वयात् ॥ १९ ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

**भगवत्पादमते,** अस्य 'न वा अरे पत्युः कामाय' इत्युपक्रान्तं ' न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञातेनेदं सर्वं विदितम् ।' इति बृहदारण्यकस्थं मैत्रेयीब्राह्मणवाक्यं विषयः । अत्र प्रियसंसूचितात्मोपक्रमसर्वविज्ञानोपदेशाभ्यां द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यमानो विज्ञानात्मा वा परमात्मा वेति संशयः । प्रियसंसूचितेनात्मना भोक्त्रोपक्रमात् मध्ये च भूतसमुत्थानेन प्रकृतस्यैव विज्ञानात्मभावोपन्यासात् तथा 'विज्ञातार'मिति कर्तृवचनेन शब्देनोपसं-

हाराच्च विज्ञानात्मेति पूर्वपक्षः । **सिद्धान्तस्तु**,परमात्मैव । कुतः । **वाक्यान्वयात्**=वाक्यस्यास्य पौर्वापर्येणावेक्ष्यमाणस्य परमात्मानं प्रत्यन्वितावयवत्वदर्शनात् । तथा हि—अमृतत्वप्रार्थिन्यै मैत्रेय्यै याज्ञवल्क्येनोपदिश्यमानं कथमन्यविषयं स्यात् । नामरूपप्रपञ्चकारणत्वोपदेशः एकायनप्रक्रिया च परमात्मेत्येव बोधयतः ॥ इति ॥ **सूत्रार्थश्च** व्याख्यातः ॥

यदुक्तं प्रियसंसूचितोपक्रमाद्विज्ञानात्मोपदेश इति तत्राह—

**सू ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥** एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदमभिसंधाय प्रियसंसूचितविज्ञानात्मोपक्रमणमित्याश्मरथ्यो मन्यत इत्यर्थः ॥

**सू ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥** ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य विज्ञानात्मनः देहादिसंघातादुत्क्रमिष्यतः परमात्मैक्योपपत्तेरभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यत इत्यर्थः ॥

**सू ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥** 'अनेन जीवेनात्मना' इत्यादिश्रुत्या परमात्मन एव विज्ञात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्नो मन्यते । 'तत्त्वमसि'इत्यादिमहावाक्यप्रतिपिपादयिषितार्थानुसारात्काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते । इति ॥

**श्रीकण्ठमते,** विषयवाक्यपूर्वपक्षसिद्धान्तादिकं सर्वं समानम् । सूत्रार्थवर्णने परं क्वचिदस्ति महद्वैलक्षण्यम् । **'वाक्यान्वयात्'** इति सूत्रमविशिष्टार्थं पूर्वस्मात् ॥

**सू ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥** एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये जीवस्य तत्कार्यतया तदव्यतिरिक्ततां ज्ञापयितुं जीवशब्देन परमेश्वराभिधानमित्याश्मरथ्यो मन्यते इत्यर्थः ॥

**सू ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥** मुक्तस्य परमेश्वररूपस्वभावादात्मशब्देन परमेश्वराभिधानमित्याश्मरथ्यो मन्यत इत्यर्थः ॥

**सू ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥** 'य आत्मनि तिष्ठन्' इत्यादिश्रुतेः जीवात्मनि परमेश्वरस्यान्तर्यामितयावस्थानाज्जीवशब्दवाच्यत्वं परमेश्वरस्येति काशकृत्स्नो मन्यत इत्यर्थः । इदमेव मतं सूत्रकाराभिमतमित्यवगम्यते । मतद्वयमुपन्यस्यैतदभिधानादन्यस्यावचनाच्च । इति ॥

**रामानुजमते,** विषयवाक्यपूर्वपक्षादिकं सर्वं श्रीकण्ठमतमेवानुसरति । श्रीकण्ठमते परमात्मशब्देन परमशिवोऽभिधीयते रामानुजमते तु श्रीमन्नारायण इति विशेषस्सर्वत्रावधेयः । अतः न पृथक्प्रपञ्चनमस्येति वेद्यम् ।

**आनन्दतीर्थमते तु 'समाकर्षात्'** इति सूत्रमारभ्य **'अवस्थितेरिति काशकृत्स्नः'** इत्यन्तं सूत्राष्टकमेकमधिकरणम् । अतः पूर्वमतेभ्योऽस्य विलक्षणतया पृथग्व्याख्यायते । अस्याधिकरणस्य कर्मप्रतिपादकास्सर्वे शब्दा विषयः । लोकवेदयोश्शब्दानामन्यत्रापि व्यवहारसिद्धवाचकत्वाभ्युपगमात् 'तत्तु समन्वया'दिति सूत्रे तुशब्देन सर्वेषां शब्दानां भगवति विष्णावेवैकस्मिन् प्रतिज्ञातस्समन्वयो नोपपद्यत इति पूर्वपक्षः । अन्यत्र प्रसिद्धा अपि शब्दाः तदधीनन्यायेन विद्वद्रूढ्या महायोगेन च प्रसिद्धतत्तदन्तर्यामिणि विष्णौ प्रवर्तमानाः परममुख्याः । ते प्रसिद्धेषु स्वस्ववाच्येषु समाकृष्य लोकव्यवहारसिद्ध्यर्थं प्रयुज्यन्ते । अतस्सर्वेषां शब्दानां विष्णावेव समन्वय उपपन्न इति सिद्धान्तः ॥

**सूत्रार्थस्तु, सू ॥ समाकर्षात् ॥ १६ ॥** स्वतो मुख्यवृत्त्या परमात्मवाचिनः शब्दान् ततस्समाकृष्यान्यत्र वाचकशक्त्यङ्गीकारात् नान्यत्र व्यवहारलोपप्रसङ्ग इत्यर्थः ॥

**सू ॥ जगद्वाचित्वात् ॥ १७ ॥** लोकव्यवहाराच्छब्दानां जगद्वाचित्वज्ञानात्तेषां तत्र प्रसिद्धिर्युक्तेत्यर्थः ॥

**सू ॥ जीवमुख्यप्राणलिङ्गादिति चेन्न तद्व्याख्यातम् ॥ १८ ॥** 'यदैकां शाखां जीवो जहाति' इति 'वायुना हि लोको नीयते' इति च जीवमुख्यप्राणलिङ्गयोः श्रवणात् तयोरपि तत्तच्छब्दमुख्यवाच्यता स्यादिति **चेन्न** । कुतः । यस्मात्तद्वाक्यजातं तदन्तर्यामिपरतया 'प्राणस्तथानुगमा'दित्यादिषु व्याकृतं तस्मादित्यर्थः ॥

**सू ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १९ ॥** तुशब्द एवार्थे । एतेन विष्णोरन्यत्र शब्दान्समाकृष्य कर्मादिप्रतिपादनमपि युक्तमेव । कुतः । **अन्यार्थं तु**=परमात्मज्ञानार्थमेव । तत्कुत इति चेत् । **प्रश्नव्याख्यानाभ्याम्**='कस्मि'न्निति शौनकप्रश्नात् 'द्वे विद्ये'इति अङ्गिरसो वचनात् तथा 'कथंन्वि'ति शौनकप्रश्नात् तथा 'कथंन्वि'ति श्वेतकेतुप्रश्नात् 'यथा सोम्ये'त्युद्दालकवचनाच्चेति जैमिनिराचार्यो मन्यते । किंच । **एके**=शाखिनः 'यस्तं न वेद किमृचा करिष्यति' इति अन्यज्ञानस्य परमात्मज्ञानार्थतां पठन्ति तस्मादपीत्यर्थः ॥

**सू ॥ वाक्यान्वयात् ॥ २ ॥** ब्रह्मणि वाक्यसमन्वयमवेक्ष्य वेदेन कर्मादिकमपि प्रतिपादनीयमित्यर्थः ॥

**सू ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २१ ॥** वेदेन कर्मादिप्रतिपादनं ज्ञानमेव मोक्षहेतुर्नान्यदित्येवंरूपायाः 'नान्यः पन्था'इति प्रतिज्ञातार्थसिद्धेः । **लिङ्गम्**=साधकम् । अतः ब्रह्मज्ञानोपयोगित्वेन कर्मप्रतिपादनं युक्तमित्याश्मरथ्याचार्यो मन्यत इत्यर्थः ॥

## अथ प्रकृत्यधिकरणम् ॥ ६ ॥

पूर्वं 'जन्माद्यस्य यतः' इति द्वितीयाधिकरणे 'यतो वा इमानि भूतानि' इति पञ्चमीश्रुत्युदाहरणेन परमेश्वरस्य जगदुपादानत्वं सामान्येन निरूपितम्। तद्विशेषतः समर्थयितुमिदमधिकरणमारभ्यते—

॥ सू ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' 'द्यावाभूमी जनयन् देव एकः' इत्यादिवाक्यान्यस्य विषयः ॥

एतेषु प्रसिद्धमुभयकारणत्वं ब्रह्मणो युक्तं न वेति संदेहः। संदेहश्च निमित्तस्य कुलालादेरुपादानमृत्पिण्डादिभावादर्शनात् उपादानस्य मृत्पिण्डादेर्निमित्तकुलालादिभावादर्शनात् कथमेतस्मिन्निमित्तत्वमुपादानत्वं च जगत्कार्यं प्रतीति।

॥ अथ प्रकृत्यधिकरणम् ॥ ६ ॥

सङ्गतिं सूचयन्नुत्तराधिकरणमवतारयति—पूर्वमिति। सामान्येन निरूपितमिति। सामान्येन श्रुतिगतपञ्चमीमात्रसमर्पितं मतान्तरनिराकरणपुरस्सरं विशिष्य व्यवस्थापितमुपादानत्वं जगज्जन्मादेर्लक्षणस्य निरूपकं घटकं कृतमित्यर्थः। अन्यनिष्ठस्य जन्मादेरुपादानोपादेयभावसम्बन्धेनोपलक्षणतया ब्रह्मलक्षणमुपादानत्वं लक्ष्ये लक्षणघटकमिति भावः। निरूप्यते अनेनेति करणार्थे व्युत्पन्नघञन्तान्निरूपशब्दात्तत्करोतिण्यन्तात् क्तप्रत्यये 'निष्ठायां सेटी' ति णिलोपे च सति निरूपितशब्दः उक्तार्थे साधुः। विशेषतः समर्थयितुमिति। कर्तैव केवलं परमेश्वरः। उपादानं तु प्रधानमिति सेश्वरसाङ्ख्यमतनिराकरणपूर्वकं ब्रह्मण उपादानत्वं समर्थयितुमित्यर्थः॥ एवं च यद्यप्येतदधिकरणविषयवाक्यानि ब्रह्मणो जगदुभयविधकारणत्वप्रतिपादकानि स्पष्टब्रह्मलिङ्गान्येव। पूर्वपक्षे ब्रह्मप्रतिक्षेपाभावात्। तथापि निरीश्वरसाङ्ख्यनिराकरणमिति प्रासङ्गिकी पादसङ्गतिरिति भावः। समनन्तराधिकरणसङ्गतिस्तु सर्वविज्ञानप्रतिज्ञायाः निखिलजगदुपादानत्वस्य चाक्षेपरूपा स्पष्टैव। प्रसक्तं सेश्वरसाङ्ख्यनिराकरणम्॥ सू॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्॥ २३॥ ननु ब्रह्मणः कर्तृत्वं पूर्ववादिनाप्यङ्गीकृतम्। उपादानत्वं श्रुत्यैव प्रतिज्ञादृष्टान्ताभ्यामुपपादितम्। अतो न युक्तत्वकोटिरुन्मिषतीत्याशङ्क्य दृष्टान्ताभ्यामुपपादयति—सन्देहश्चेति। लोकदृष्टिमुपपादयन्नेव पूर्वपक्षयति—

---

सू॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः॥ २२॥ उत्क्रमिष्यतः=ज्ञानान्मोक्षमिच्छतोऽधिकारिणः। एवम्=ज्ञानसाधनतया। भावात्=कर्मादेरप्यनुष्ठेयत्वात्। मोक्षार्थज्ञानसाधनत्वेन वेदेन कर्मादिप्रतिपादनं युक्तमेवेति औडुलोमिराचार्यो मन्यत इत्यर्थः॥

सू॥ अवस्थितेरिति काशकृत्स्नः॥ २३॥ सर्वाधारे भगवति कर्मादीनामवस्थितेः=अवस्थानात्। भगवतः कर्माद्याधारत्वज्ञानायाधेयभूतकर्मादिस्वरूपं वेदेन प्रतिपाद्यत इति काशकृत्स्नाचार्यो मन्यते इत्यर्थः। अनेकाधिकारिकत्वान्मतानां न विरोध इति भावः॥

इत्यानन्दतीर्थमते समाकर्षाधिकरणम्॥ ५॥

सूत्रार्थचन्द्रिकायां वाक्यान्वयाधिकरणम्॥ ५॥ ६॥

पूर्वपक्षस्तु जगत्सृष्टौ निमित्तमेव, नोपादानमिति। कुतः। असंभवात्। न हि घटं निर्मिमाणः कुलालः स्वयमेव मृत्पिण्डीभूय घटं करोति। पटं वा कुविन्दः। यदि कर्तुमीहते, तन्न संभवत्येव। अतो निमित्तभूतस्य ब्रह्मण उपादानत्वं न संभाव्यते। निष्प्रयोजनं च निमित्तस्यैवोपादानत्वकल्पनं, विनाऽपि तत्कल्पनं

---

पूर्वपक्षस्त्विति। ननु लोके कुलालादीनां घटादिकर्तॄणां तदुपादानत्वं मा स्म भूत्। तेषां तदुपादानत्वग्राहकप्रमाणाभावात्। इह तु जगत्कर्तुरेव सतः परब्रह्मणस्तदुपादानत्वमिति प्रतिज्ञादृष्टान्ताभ्यामुपपाद्यमानं किमिति त्यक्तव्यम्। यदि कर्तुरुपादानत्वं लोके न दृष्टमिति कर्तुरुपादानस्य च भेद एव दृष्ट इति च तद्व्यतिरिच्येत तदा लोके कतिपयकार्यकर्तुः कार्यान्तरकर्तृत्वं न दृष्टमिती'दं सर्वमसृजते'त्यादिश्रुतिप्रतिपन्नं ब्रह्मणस्सर्वकर्तृत्वमपि परित्यक्तव्यं स्यात्। अतः श्रुतिप्रतिपन्नत्वाविशेषादलोकदृष्टं ब्रह्मणस्सर्वकर्तृत्वमिव सर्वोपादानत्वमप्यङ्गीकरणीयमित्याशङ्क्याह—अत इति। कुलालस्येव कर्तुर्ब्रह्मणोऽप्युपादानत्वं न सम्भवत्येव। कर्तृकर्मभावविरोधस्याविशेषात् ततः प्रजापतेः स्ववपोत्खनन इव ब्रह्मणो जगन्निर्माणे कर्तृत्वमेव। उपादानश्रुतयः विरोधादौपचारिकतया नेया इति भावः। ननु कर्तुरुपादानत्वे नास्ति विरोधः। ऊर्णनाभौ दर्शनात्। न हि दृष्टेऽनुपपत्तिर्नाम। न च वाच्यमूर्णनाभेर्देह एव तदुपादानं स तु केवलं तन्तुष्विति। 'यथोर्णनाभिस्सृजते गृह्णते चे' ति श्रुतौ तन्तून्स्रष्टुरूर्णनाभेरेव तल्लयाधारत्वप्रतिपादनेन प्रत्यक्षसंवादिना तदुपादानत्वस्यापि सिद्धेः। तल्लयाधारस्य तदुपादानत्वनियमात्। एवं च श्रुतिसिद्धोर्णनाभिदृष्टान्तानुसारेण ब्रह्मणोऽपि जगत्कर्तुरुपादानत्वं कल्प्यते। ऊर्णनाभौ कर्तुरुपादानत्वं दृष्टमिति लौकिकव्याप्त्यापि तत्कल्प्यते। तथा सति छान्दोग्यादिश्रुतप्रतिज्ञाश्रुतीनामपि मुख्यार्थपरत्वं लभ्यत इत्याशङ्क्याह—निष्प्रयोजनं चेति। चेन निरालम्बनत्वं समुच्चीयते। अयं भावः। ब्रह्मण उपादानत्वमभ्युपगच्छताऽपि 'मायां तु प्रकृतिं विद्या' दिति श्रुत्यनुसारेण परिणामिन्या मायाया उपादानत्वमभ्युपगम्यते। अतो निष्प्रयोजनं ब्रह्मणोऽप्युपादानत्वकल्पनम्। जगदाकारेण परिणममानायां मायायां निर्विकारं ब्रह्माप्युपादानमिति वचो निरालम्बनं च। कार्याकारेण परिणामित्वं ह्युपादानत्वम्। अन्यथा मृदि घटाकारेण परिणममानायां तदाकारेणापरिणममानं भूतलमपि तदुपादानं कल्प्येत। एतेन तल्लयाधारस्य तदुपादानत्वं नियतमित्यपि प्रत्युक्तम्। घटलयाधारस्यापि भूतलस्य तदनुपादानत्वात् उक्तनियमभङ्गे च न तन्तुसृष्टौ कर्तुरूर्णनाभेश्चेतनस्योपादानत्वं, किं तु जडस्य तदीयलालाजलस्यैवेति कर्तुरुपादानत्वनियममाश्रित्य जगत्कर्तुस्तदुपादानत्वकल्पनमपि प्रत्युक्तम्। घटादिकर्तुस्तदुपादानत्वादर्शनेन व्यभिचाराच्च। यत्तु प्रतिज्ञादृष्टान्तादिमुख्यत्वानुसारेण परमेश्वरस्योपादानत्वमभ्युपगम्यत इति तदपि न सम्यक्। ब्रह्मज्ञाने सत्यपि वियदादीनां मृत्पिण्डादिज्ञाने सत्यपि घटशरावादीनां च संशयविषयत्वेनानुभूयमानानां मुख्यदृष्ट्या ज्ञातत्वासम्भवात्. प्रतिज्ञावाक्ये 'अश्रुतममतमविज्ञात'मिति ब्रह्मश्रवणादिषु सत्स्वप्यश्रुतत्वाद्युपन्यासेन दृष्टान्तवाक्ये घटशरावादिवन्मृत्पिण्डादेरपि मृदादेः कार्यविशेषतया तदुपादानस्य ज्ञानेन घटादीनां ज्ञातत्वोपन्यासेन च प्रतिज्ञादृष्टान्तयोरमुख्यत्वस्य श्रुत्यैव स्फुटीकरणाच्च। तदमुख्यत्वाभ्यु-

कार्यनिष्पत्तेः, कुलालस्य मृत्पिण्डादन्यत्वेऽपि घटनिष्पत्तिदर्शनात्, ततो ब्रह्म निमित्तमेव, न तूपादानमपीति ॥

अत्रोच्यते—जगतो निमित्तमुपादानं च ब्रह्मैव । 'स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति श्रुत्या येनादेष्ट्रा निमित्तभूतेन विज्ञातेन चिदचिद्रूपं सर्वं जगद्विज्ञातं भवतीत्यादेष्टृविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, 'यथैकेन मृत्पिण्डेन विज्ञातेन सर्वमिदं मृण्मयं विज्ञातं स्यात्' इति तदुपपादकमृत्पिण्डदृष्टान्तानुपरोधाच्च ब्रह्मणो निमित्तमात्रत्वे

---

पगमस्तावन्न दोषः । 'यतो वा इमानि भूतानी'त्यादिपञ्चमी तु कारणसामान्यविषया । 'जनिकर्तुः प्रकृति' रिति (पा० १.४. ३०.) सूत्रे 'पुत्रात्प्रमोदो जायते' इत्यपि वैयाकरणैरुदाहृतत्वेन प्रकृतिग्रहणस्य कारणसामान्यपरत्वात् । तस्योपादानपरत्वपक्षेऽपि सा हेतुपञ्चमीत्यङ्गीकारोपपत्तेः । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य'इति (पा० ४. ३. ८१.) सूत्रे हेतुसामान्येऽपि पञ्चम्यस्त्विति वैयाकरणैरेव ज्ञापकस्योपन्यस्तत्वात् । 'तदैक्षत बहु स्यां प्रजायेये'ति ब्रह्मणस्स्रक्ष्यमाणतेजःप्रभृतिरूपेण स्वस्य बहुभवनजननविषयः सङ्कल्पस्तु तेजःप्रभृत्यनुपादानत्वेन ततो भेदेऽपि स्वकीयत्वप्रयुक्ताभेदोपचारकृतः इत्यन्यत्र श्रुतिशैलीदर्शनेनावसीयते । 'प्रजायेमहि उग्रः प्रजाभिः अग्ने यन्मे तनुवा ऊनं तन्म आपृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आपूरयेति वावैतदाहे'त्यादिमन्त्रार्थवादा हि प्रजापशुरूपेण स्वस्यैव जनने स्वस्यैव प्रजापश्वात्मत्वं चावेदयन्ति । न हि तत्र शरीरावयवद्वारा कथञ्चित्प्रजोपादानत्वकल्पनेऽपि पशूपादानत्वं कल्पयितुं शक्यम् । तस्माद्यथा पुरुषस्य गवाश्वादयः पशव इति तेषां जननं तदीयजननत्वेन तेषां वैकल्यं तच्छरीरवैकल्यत्वेन च तत्रोपचरितमित्थं पशुपतेः परमेश्वरस्य स्रक्ष्यमाणतेजःप्रभृत्यभिमानिजीवाः पशव इति तेषां जननबहुभावौ तदीयत्वेनोपचरिताविल्येवावसीयते । 'सर्वो हि रुद्र'इत्यादिश्रुतिषु परमेश्वरस्य विश्वात्मत्वप्रतिपादनं तु व्यापकस्य तत्रतत्र स्थित्वा तत्तन्नियमयतः स्वनियम्यसर्वशरीरकतया सर्वशब्दवाच्यत्वादुपपद्यते । 'तदात्मानं स्वयमकुरुते' त्येत 'यदायदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यह' मितिवदुपपद्यते । 'ध्यात्वा मुनिर्गच्छति भूतयोनि'मिति योनिशब्दस्तु परमेश्वरस्य सर्वभूताधारत्वादुपपद्यते । न हि योनिशब्दः उपादाननियतः । 'योनिष्ट इन्द्र निषदे अकारी'ति स्थानेऽपि तत्प्रयोगदर्शनादिति । पूर्वपक्षमुपसंहरति—तत इति । सूत्रगतं प्रकृतिपदं चकारं च व्याचक्षाणः सिद्धान्तप्रतिज्ञां दर्शयति—उच्यते निमित्तमिति । 'प्रतिज्ञादृष्टान्तानुपरोधा'दिति हेतुं विवृणोति—तमादेशमित्यादिना । ननु प्राधान्याभिप्रायं सर्वविज्ञानप्रतिज्ञानमौपचारिकमित्याशङ्क्याह—ब्रह्मण इति । ब्रह्मणो निमित्तत्वमात्रेऽभ्युपगम्यमाने तद्विज्ञानेन सकलप्रपञ्चविज्ञानमुच्यमानमौपचारिकं स्यात् । न चेष्टापत्तिः । श्रुतिसन्दर्भविरोधापत्तेः । एवं हि तत्रोपाख्यायते । उद्दालको महर्षिः स्वपुत्रं श्वेतकेतुं स्वनियोगाद्द्वादशवर्षाणि गुरुकुले स्थित्वा सर्वान्वेदानधीत्य प्रतिनिवृत्तं वैदुष्यगर्वेण स्तब्धमविनीतोऽयमप्राप्तब्रह्मविद्य इति निश्चित्य तं विनीतं ब्रह्मविदं च कर्तुं 'यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं

**तद्विज्ञानेन सकलप्रपञ्चविज्ञानं न संभवति । तथा हि–कुलालज्ञानेन घटादि कार्यं न ज्ञायते, किंतु तदुपादानमृत्पिण्डज्ञानेन । अतो निमित्तस्य ब्रह्मण उपादानत्वे तत् संभवतीति ब्रह्मैवोपादानमपि ॥**

---

मतमविज्ञातं विज्ञात'मिति पृष्ट्वा कथमेकेन श्रुतेन सर्वं श्रुतं मतं विज्ञातं स्यात् कथमिदमाश्चर्यमुपपद्यते इत्याशयवता श्वेतकेतुना पुनः पृष्टो मृत्पिण्डादिदृष्टान्तैस्तदुपपाद्य 'नवै नूनं भगवन्तस्त एतदवेदिषुर्यद्येतदवेदिष्यन्कथं मे नावक्ष्य'न्निति 'भगवांस्त्वेव मे तद्ब्रवीत्वि' ति तेन पुनः पृष्टः तथा 'सोम्येति' प्रतिज्ञाय 'सदेव सोम्येदमग्र आसी'दित्याद्युपदिदेशेति । अत्र हि प्रतिज्ञाया गौणत्वे प्रधानज्ञानेन सर्वमन्यदप्रधानं फलतो विदितप्रायं भवतीत्यस्यार्थस्य लोकसिद्धत्वात्तदुपपत्तिं पश्यतः 'कथं नु भगवस्स आदेश' इति प्रश्नस्तदुत्तरवाक्ये मृद्घटादिदृष्टान्तैस्तदुपपादनं चासमञ्जसं स्यात् । तस्माद्यथा तन्मुख्यं भवति तथा समर्थनीयम् । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मित्यत्र सत्पदं सूक्ष्मचिदचिद्विशिष्टवस्तुपरम् । अन्यथा ब्रह्मातिरिक्तस्य जीववर्गस्यान्यस्य कस्यचन सत्त्वेनावधारणविरोधात् । तस्मात्पृथग्भूतवस्त्वन्तरव्यवच्छेदकत्वेन समर्थनीयत्वात् तज्ज्ञाने च तत्कार्यं सर्वमपि जगद्विषयो भवति । कार्यद्रव्यस्य कारणानन्यत्वात् । तत्र स्थौल्यापत्तिः परं न विषयीभवति । अतस्तेनाकारेण संशयविषयत्वमश्रुतत्वादिश्रवणं चोपपद्यत इति । इत्थं प्रतिज्ञामुख्यत्वोपपादनप्रकारमभिप्रेत्यैव भाष्ये हेतुविचारवाक्ये चिदचिद्विशिष्टं सर्वं जगदिति विशेषितम् । स्थूलचिदचित्प्रकारकब्रह्मात्मकं सर्वकार्यमिति तस्यार्थः। एवं प्रतिज्ञानुपरोधात् ब्रह्मोपादानमभ्युपगन्तव्यमित्युपपाद्य दृष्टान्तानुपरोधादपि तथाभ्युपगन्तव्यमित्यमुमंशं मृत्पिण्डस्य घटशरावादीनां च मृत्कार्यान्तरत्वेन तस्य तदुपादानत्वाभावात्तदुपादानत्वेऽप्युपादानादुपादेयस्य भिन्नद्रव्यत्वेन तज्ज्ञानिनो ज्ञातत्वासम्भवात्तत्सम्भवेऽपि एकपिण्डज्ञानेन सकलमृण्मयज्ञानासम्भवाच्चोपादानज्ञानेन तत्कार्याणां ज्ञातत्वविषयतया दृष्टान्तवचनं न मुख्यमुपपादयितुं शक्यम् । किंतु 'देवदत्त एवं भोजयितव्य' इति देवदत्तभोजनव्याख्यानानन्तरमेतेन यज्ञदत्तभोजनं व्याख्यातमिति अव्याख्याते व्याख्यातत्ववचनवदेकप्रकारकत्वविषयतया गौणं समर्थनीयम् । एवं च दार्ष्टान्तिकवचनमपि गौणं स्यादित्याशङ्कानिवर्तनेनोपपादयति–तथा हीति । अत्र ब्रह्मणि केवलनिमित्तत्वे तज्ज्ञानात्सकलज्ञानं न सम्भवति किं तूपादानत्वे सत्येवेति स्वप्रतिज्ञातार्थानुगुणतया कुलालज्ञानादिदृष्टान्तोपन्यासे श्रुतावप्येवमेव दृष्टान्तो दार्ष्टान्तिकानुगुणतया यथा तदुपपादको भवति तथा नेतव्यः । अतो दृष्टान्तस्य प्रकारैक्यविषयत्वे दार्ष्टान्तिकस्य प्राधान्यविषयत्वे चोक्तप्रकारेण तदुपपादकत्वायोगात् दृष्टान्तदार्ष्टान्तिकावप्युपादानविषयावेव योजनीयाविति सूच्यते । अत्रायमाशयः । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यस्य दृष्टान्तोपपादनार्थस्य मृद उपादानात्तद्विकाराणां घटादीनामनन्यत्वव्यवस्थापनार्थत्वेनारम्भणाधिकरणे व्याख्यास्यमानत्वात्तदन्वयानुरोधेन दृष्टान्तस्तावदुपादानज्ञानेनोपादेयानां ज्ञातत्वविषय एव वक्तव्यः । न च मृदेव घटादीनामुपादानं न तु मृत्पिण्डः घटादिषु मृदाकारस्येव पिण्डाकारस्यानुवृत्त्यभावादिति वाच्यम् । मृत्पिण्ड एव घटः कृत इति व्यव-

आदिश्यते अनेनेत्यादेशशब्दादादेष्टृभूतं ब्रह्मोच्यते। न तदर्थान्तरत्वमुपादानस्येति ज्ञापयितुं हेत्वन्तरमाह—

॥ सू ॥ अभिध्योपदेशाच्च ॥ २४ ॥

'तदैक्षत बहु स्यां प्रजायेय' इति निमित्तभूतस्येक्षितुः सर्वज्ञस्य ब्रह्मण एव विचित्रजगदाकारेण बहुभवनसंकल्प उपदिश्यते।अतो निमित्तादनन्यदुपादानम्।

ननु 'विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यत जायमानम्' इति विश्वोत्तीर्ण एव परमेश्वरो निमित्तभूतः स्वव्यतिरिक्तप्रकृतौ स्वसंकल्पेन जायमानं सकलदेवप्रथमं हिरण्यगर्भं सृष्टमनुग्रहदृष्ट्या पश्यतीति विज्ञायते, कथमस्य

---

हारानुसारेण घटाद्युपादानत्वात्। न चोपादानगतयावदाकारानुवृत्तिरुपादेये नियता दध्नि क्षीरस्य भेदवत् यावदाकारानुवृत्त्यभावेऽपि लौकिके 'ऋषभोपानहोर्ञ्य' इति व्याकरण (पा०५.१.१४.) सूत्रे च क्षीरस्य दध्नि वत्सस्य ऋषभे चोपादानत्वव्यवहारात् मृत्पिण्डगतमृत्स्वरूपकिञ्चिदाकारानुवृत्तिर्घटादिष्वस्त्येव। एवं च 'सर्वं मृण्मयं विज्ञातं स्या'दित्यत्र सर्वशब्द एकेन मृत्पिण्डेनेति प्राग्गृहीतैकमृत्पिण्डविकारघटशरावादिसामस्त्यपरो युक्तः। एवं दृष्टान्तस्य मुख्यत्वव्यवस्थितौ तद्गौणत्वमुखेनापतत् दार्ष्टान्तिकस्य गौणत्वमपि प्रत्याख्यातं भवतीति। ननूक्तरीत्या सौत्रहेतुना ब्रह्मण उपादानत्वसिद्धावपि न सूत्रे चकारसमुच्चितनिमित्तत्वसिद्धिरित्याशंक्य 'येनादेष्ट्रा निमित्तभूतेने' ति हेतुविवरणवाक्यगतयत्पदार्थविशेषणसूचितात्तमादेशमिति श्रुतिगतप्रतिज्ञावाक्यगतादेशशब्देन विशेष्यनिर्देशात्तत्सिद्धिमुपपादयन् तस्यार्थमाह—आदिश्यतेऽनेनेति।अयमादेशशब्दः प्रशासितृपरः।'त'मिति सर्वनाम्नो वस्तुविशेषसमर्पकविशेष्यपदसापेक्षत्वात्। यद्यपि कर्त्रर्थघञ्प्रत्ययो नास्ति।'अकर्तरि च कारके संज्ञाया' मिति (पा.३.३.१९.सू०)तद्विधानात्।तथाप्यादिश्यते प्रशिष्यतेऽनेनेति कर्तुस्साधकतमत्वविवक्षया करणार्थव्युत्पन्नघञन्तोऽयमादेशशब्द इति भावः॥ निमित्तोपादानाभेदे हेत्वन्तरपरेणोत्तरसूत्रेणापि निर्देश आदेशशब्दस्य निमित्तपर्यवसायित्वज्ञापक इत्यभिप्रेत्योत्तरसूत्रमवतारयति—इति ज्ञापयितुमाहेति ॥ सू ॥ अभिध्योपदेशाच्च ॥ २४ ॥ अतो निमित्तादनन्यदुपादानमिति। अत्रायं भावः। यद्यपि मन्त्रार्थवादेषु स्वामिनः स्वकीयैः पशुपुत्रादिभिरभेदोपचारो दृष्टः।तथाप्युपादानोपादेयभावो न तात्त्विकाभेदमभिप्रेत्य। यद्विज्ञानेन सर्वविज्ञानं प्रतिज्ञातं तस्य प्रपञ्चेन निरूपणार्थं प्रवृत्ते मानान्तरागोचरविषये 'तदैक्षत बहु स्यां प्रजायेये'ति श्रवणे नोपचारकल्पना युक्ता। अत ईक्षिता जगतो निमित्तं यः परमेश्वरः स एव जगदुपादानमिति 'तदैक्षते'ति बहुभवनसङ्कल्पोपदेशात्सिद्ध्यति। प्रतिज्ञातार्थप्रपञ्चनपरवाक्यस्य निमित्तोपादानाभेदपरत्वव्यवस्थितौ प्रतिज्ञावाक्येऽप्युपादानत्वेन वर्ण्यमानस्य निमित्तत्वमप्यपेक्षणीयमित्यादेशशब्दस्यादेष्टृपरत्वमपीत एव सिद्ध्यतीति॥उत्तरसूत्रव्यावर्त्यां शङ्कां दर्शयति—स्वव्यतिरिक्तेति। ननु, मन्त्रे 'जायमान'मित्येतावदेव श्रूयते। न तु स्वस्मिन्परस्मिन्वेति विशेषः श्रूयते। कथं स्वव्यतिरिक्तप्रकृतिस्थान इति व्याख्यातम्। उच्यते। तस्मिन्नेव मन्त्रे विश्वाधिकत्वेन वर्ण्यमानस्य विश्वाकारत्वं न सम्भवति। विश्वजीवसमष्टिरूपहिरण्यगर्भोपादानत्वे च विश्वाकारत्वमवर्जनीयम्। श्रूयते च श्रुत्यन्तरेषु माया

विश्वाकारत्वं प्रकृतिरूपत्वेन संभवति। 'मायां तु प्रकृतिं विद्यात्' इति मायायाः प्रकृतित्वं श्रूयते । 'तस्माद्विराडजायत। विराजो अधि पूरुषः' इति पुरुषस्य प्रकृतित्वमाम्नायते। अतस्तयोरेव प्रकृतित्वेन जगदाकारत्वमुचितमित्यत आह—

॥ सू ॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥

साक्षात् प्रत्यक्षमेव वेदान्तभागेषु परमेश्वरस्य प्रकृतित्वेन जगदाकारत्वं निमित्तत्वेन जगत्पतित्वं च श्रूयते। तथाहि—'विश्वाधिको रुद्रः' इत्यादिना यथा विश्वाधिकत्वमवगम्यते, तथा 'सर्वो वै रुद्रः' इत्यादिना प्रकृतित्वाद्विश्वरूपत्वमपि श्रूयते। शतरुद्रीये—'नमो हिरण्यबाहवे' इत्यारभ्य 'कुलुञ्चानां पतये' इत्यन्तेन विश्वाधिपत्यं ततश्च 'नमः पर्ण्याय च पर्णशद्याय च' इत्येत-

---

पुरुषश्चेत्युपादानान्तरम्। अतस्तस्मात् जायमानत्वमेव श्रुत्यर्थ इत्यभिप्रेत्य तथा व्याख्यातम्। अत एव मन्त्रार्थकथने विश्वोत्तीर्णत्वेन विशेषितः। उपादानान्तरसद्भावे च श्रुत्यन्तरोदाहरणं कृतम् ॥ सू ॥ साक्षाच्चोभयाम्नानात् ॥२५॥ प्रकृतित्वेनेति। नन्वन्तर्याम्यधिकरणे चान्तर्यामिभावेन जगदाकारत्वं तत एव 'सर्वो वै रुद्र'इत्यादिश्रुतिषु जगद्वाचिभिश्शब्दैः परमेश्वरस्य निर्देश इति चोक्तम्। इह कथं सर्वोपादानत्वेन जगदाकारत्वादिति। नैष दोषः । उभयथाप्युदाहृतश्रौतनिर्देशोपपत्तेः अनयोः प्रकारयोर्यं कञ्चित्प्रकारमादाय उदाहृताधिकरणेषूद्भावितशङ्कासमाधानसम्भवाच्च। पूर्वं तथोक्तमिदानीमित्थमुच्यते। तथा च सूक्ष्मचिदचिद्विशिष्टः परमेश्वर उपादानं स्थूलचिदचिद्विशिष्टः कार्यमिति कारणशरीरे च विशेष्यभावेन चेतनाचेतनात्मकप्रपञ्चानुप्रवेशोऽन्तर्यामिभावेन वेत्युभयथाप्यविशिष्टे परमेश्वरस्य तदनुप्रवेशे प्रपञ्चवाचिनां शब्दानां नीलादिशब्दवदप्रधानभूतविशेषणवाचितया वा देवमनुष्यादिशब्दवच्छरीरवाचितया वा परमेश्वरपर्यन्तत्वलाभादुभयथापि श्रुतिषु प्रपञ्चवाचिभिश्शब्दैः परमेश्वरस्य निर्देश उपपद्यते। यथा कथञ्चित्तदुपपत्तौ च कथं जीववाचिशब्दैः परमेश्वराभिधानमिति पूर्वाधिकरणशङ्कासमाधानं सम्भवति। विश्वोत्तीर्णस्य कथं विश्वाकारत्वमित्यन्तर्याम्यधिकरणे तदधिकरणकृतशङ्कासमाधानमपि विश्वान्तर्यामितया विश्वोपादानतया वा विश्ववाचकशब्दानां परमेश्वरे प्रयोगेण विश्वाकारत्वावसायाल्लभ्यते। विश्वोत्तीर्णत्वं च, विश्वाकारत्वस्याप्याम्नातस्य त्यागायोगादिति। न चोभयोर्विरोधः। जीवेषु देवमनुष्यत्वाद्याकारत्वस्य देवमनुष्यादिशरीरेभ्योऽधिकत्वस्य च समावेशात्। हेयवस्त्वनुप्रवेशप्रयुक्तदोषप्रसङ्गशङ्का तु 'न स्थानतोऽपी'त्यधिकरणे सूत्रकृतैव निराकरिष्यते। एवं यत्रोभयथा श्रुत्यर्थसम्भवः उभयथापि तत्रतत्र सङ्गतिश्च तत्र क्वचिदधिकरणे कस्यचित्प्रकारस्योक्तिः अन्यत्र प्रकारान्तरस्य इत्येषा शैली पूर्वमीमांसकानामपि दृश्यते। यथा 'दर्शपूर्णमासयोरुपस्तृणात्यभिघारयति द्विर्हविषोऽवद्यति चतुरवत्तं जुहोती'ति श्रूयते। तत्र चतुरवत्तवाक्ये अवत्तहोमविधिः ततोऽर्थप्राप्तमवदानमनूद्य द्व्यवदानवाक्ये हविषो द्विरवदातव्यमिति विधिः उपस्तरणाभिघारणद्व्यवदानगतप्रचयशब्दसङ्ख्यानुवादश्चतुरवत्तवाक्ये चतुश्शब्द इति द्व्यवदानवाक्ये द्वित्वविशिष्टहविरवदानविधिः उपस्तरणाभिघारणद्व्यवदानविधिप्राप्तं चतुरवत्तमनूद्य चतुरवत्तवाक्ये

त्पर्यन्तेन जगदाकारत्वं च परमेश्वरस्य श्रूयते । प्रदेशान्तरे च 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्' 'ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' इत्युभयश्रुतिः । अथर्वशिरसि च

---

होममात्रविधिरिति वा नात्र पक्षद्वयेऽपि कश्चिद्गौरवलाघवकृतो विशेषोऽस्ति । तत्राद्यः प्रकारः 'संयुक्ते तु प्रक्रमात्तदन्तं स्या'दिति पञ्चमाध्यायाधिकरणे दर्शितः । द्वितीयः प्रकारः 'उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्ये'ति दाशमिकाधिकरणे दर्शितः । तत्र परस्परविरोधमाशङ्क्योभयथापि श्रुत्यर्थसम्भवात् उभयथापि तत्तदधिकरणपूर्वपक्षप्राप्तशङ्कासमाधानसम्भवाच्च तत्र तथैवोक्तमिहैवमुक्तमिति प्रपञ्चितं दशमाध्यायतन्त्ररत्ने । सैव शैली भाष्यकृदनुसृतेति न कश्चिद्दोषः । एवमन्यत्रापि एकस्य श्रुतिवाक्यस्य तत्रतत्र भिन्नभिन्नार्थप्रदर्शने विरोधसमाधानप्रकारा उन्नेयाः । इह त्वेवमपि विरोधशङ्कासमाधानं सम्भवति । यथा बृहत्त्वमात्रेण प्रवृत्तिनिमित्तेन परमेश्वरे ब्रह्मशब्दस्य प्रवृत्तौ प्रकरणोपपदादिसङ्कोचकाभावात् स्वरूपतो गुणतश्च बृहत्वं तस्य लभ्यत इति क्वचित्परमेश्वरस्य स्वरूपबृहत्त्वे प्रमाणत्वेनोपन्यस्तमेव ब्रह्मपदमन्यत्र तस्य गुणबृहत्त्वेऽपि प्रमाणत्वेनोपन्यस्यते । तथा तस्मिन् पृथक् प्रसिद्ध्या विशेषणभूतचेतनाचेतनात्मकप्रपञ्चान्तर्गतस्वसाधारणाकारेण प्रवृत्तिनिमित्तेन तस्मिन्प्रवर्तमानस्य 'सर्वो वै रुद्रः' 'प्राञ्चोऽहं प्रत्यञ्चोऽह'मित्यादितत्तद्वस्तुवाचकशब्दजातस्य तस्मिन्प्रवृत्तौ सङ्कोचकाभावाद्वाक्यान्तरानुसाराच्च सर्वोपादानत्वेन सर्वान्तर्यामितया सर्वशरीरत्वेन च स्वापृथक्सिद्धप्रपञ्चाकारविशिष्टत्वं तस्य ततो लभ्यत इति प्रागन्तर्यामितया सर्वाकारतायां प्रमाणत्वेनोपन्यस्तमेवात्र सर्वोपादानतया सर्वाकारतायां प्रमाणत्वेनोपन्यस्यत इति न कश्चिद्विरोध इति 'साक्षाच्चोभयाम्नाना'दितीदं ( ब्र० १.४.२५) सूत्रं शङ्काद्वयपरिहारार्थत्वेनावतारितम् । तत्र विश्वाधिकस्य कथं विश्वाकारत्वमिति शङ्का विश्वाधिकत्ववद्विश्वाकारत्वस्याप्याम्नानादुभयोश्च विरोधाभावादिति परिहृता । ब्रह्म निमित्तमेव न तूपादानमपि, मायापुरुषयोरुपादानयोः श्रवणादिति शङ्कासमाधानबलादेव निमित्तत्ववदुपादानत्वमपि ब्रह्मणोऽङ्गीकरणीयम् । श्रुतिबलान्मायापुरुषयोरिव ब्रह्मणोऽप्युपादानत्वसम्भवादित्यभिप्रेत्य परिहरति—ब्रह्म वनमिति । निमित्तोपादानाभेदाङ्गीकरणाय 'कि ँ स्विद्वनं क उ स वृक्षआसीत्, यतो द्यावापृथिवी निष्टतक्षुः, मनीषिणो मनसा पृच्छतेदुतत्, यदध्यतिष्ठद्भुवनानि धारय' न्निति मन्त्रेण श्रुतिरेव परमेश्वरेण कर्त्रा जगति स्रष्टव्ये तक्ष्णा रथे निर्मातव्ये वनाध्यक्ष इव किमुपादानात् कुतः प्रदेशादानीतं, जगद्धारयित्रा च परमेश्वरेण नृत्यद्दारुपुत्रिकादिधारकेण सूत्रधारेण सूत्रमिव किं वाधिष्ठितमिति प्रश्नमवतारयामास । तत्र 'द्यावापृथिवी' इत्यनेन सर्वाणि भुवनान्युच्यन्ते । अग्रे 'भुवनानि धारय'न्निति श्रवणात् । भुवनग्रहणं च तनुभुवनभोगोपकरणभोक्तॄणां सर्वेषामप्युपलक्षणम् । एकस्मिन्नेव परमेश्वरे 'निष्टतक्षु'रिति छान्दसं बहुवचनम् । अनन्तरमन्त्रेण अस्य प्रश्नस्योत्तरमुच्यते 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत् । यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वः । ब्रह्माध्यतिष्ठद्भुवनानि धारय'न्निति । ब्रह्मैव जगत्कर्तृभूतमुपादानं तदधिकरणं च । जगद्धारणे च सूत्रवत्तदेवाधिष्ठेयमिति मन्त्रार्थः । अथर्वशिरसीति । ननु, प्रथमशङ्कासमाधानार्थेयं श्रुतिः प्रागेवोदाहर्तव्या । उच्यते । यथाथर्वशिरसि प्रथमद्वितीयखण्डयो'र्ब्रह्माह'मित्यारभ्य विश्वाकारत्वं, पञ्चमखण्डे 'एको रुद्रो न

द्वितीयाय तस्थे य इमं लोकमीशत ईशनीयु'रित्यादौ विश्वेश्वरत्वं चोक्तम्। तस्मादथर्वशिरसि विश्वाधिकत्वविश्वाकारत्वोभयाम्नानं चास्तीत्येतदुदाहरणेन शङ्काद्वयस्यापि समाधानं लभ्यत इत्यभिप्रेत्यात्रेयं श्रुतिरुदाहृता। अथर्वशिरःश्रुत्युदाहरणमानन्दवल्ल्यादीनामप्युपलक्षणम्। आनन्दवल्ल्यां हि 'इदं सर्वमसृजत यदिदं किंचे'ति कर्तृत्व 'मात्मन आकाशस्संभूत' इत्युपादानत्वं चाम्नातम्। एवमन्यत्राप्युदाहार्यम्। यत्तु 'आत्मन आकाश' इत्यादि पञ्चम्याः कारणसामान्यं विषयः, जनिकर्तृसूत्रे प्रकृतिपदमपि तद्विषयमिति मतं तदयुक्तम्। 'मायां तु प्रकृतिं विद्यात्' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा'दित्यादिवेदवैदिकव्यवहारेषु 'तदर्थं विकृतेः प्रकृता'विति व्याकरण(पा० ५.१.१२.) सूत्रे च प्रकृतिपदस्योपादान एव प्रयोगदर्शनात् कार्याभिन्ने 'मृत्स्वभावो घट' इति कार्यस्वभावतया व्यवह्रियमाणे चोपादाने स्वभावशक्त्येव कारणसामान्ये ततः प्रयोगनिर्वाहस्यासम्भवे तद्वाचित्वाङ्गीकारे तत्र शक्त्यन्तरकल्पनापत्तेः। क्लृप्तशक्त्या प्रयोगनिर्वाहसम्भवे च शक्त्यन्तरकल्पनायोगात्। न च निमित्तकारणमपि यस्य कस्यचित्स्वभाव इति शंक्यम्। कारणे स्वभाववाचिशब्दप्रयोगस्य कार्यं प्रति स्वभावत एव निर्वाह्यत्वात्। अन्यथा घटस्य मृत्पिण्डः प्रकृतिरित्यादिव्यवहारासामञ्जस्यप्रसङ्गात्। अत एव घटस्य समवायिकारणं मृत्पिण्ड इति नैयायिका अपि घटसमवायित्वेन स्वाभ्युपगतमृत्पिण्डमेव तस्य समवायिकारणं व्यवहरन्ति। न तु यत्किञ्चित्समवायि दण्डादिकमपि। ननु, तथापि जनिकर्तृसूत्रे प्रकृतिपदं कारणसामान्यलक्षकं स्यादिति चेन्न। अत्र प्रकृतिपदेन कारणसामान्यस्यैव विवक्षितत्वे 'ध्रुवमपायेऽपादान'मिति सूत्रादवधिपरस्य पदस्यानुवर्तमानतया तेनैव जायमानं प्रत्यवधिभूतस्य कारणसामान्यस्य लाभेनास्य वैयर्थ्यप्रसङ्गात् 'कारक' इत्यधिकृतस्य पदस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्यानन्वयप्रसङ्गाच्च। न हि 'कारणानां मध्ये यदुपादानकारण' मितिवत् 'कारणानां मध्ये यत्कारण'मित्येतदन्वितार्थं भवति। किं च 'तत आगत' इत्यधिकारे पठिते 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य' इति (पा० ४. ३.८१) सूत्रे हेतुवाचिभ्यो मनुष्यवाचिभ्यश्च शब्देभ्यः 'तत आगत' इत्यर्थे रूप्यप्रत्ययविधायके हेतुवाचिशब्देभ्यः पञ्चमी न सम्भवति। हेतोरागमनस्य हेतुहेतुमद्भावरूपतया तद्विवक्षायां 'हेता'विति (पा० २.३.२३) सूत्रेण तृतीयया भाव्यत्वात् कथं पञ्चमीति शङ्कायां यदयं 'तत आगत' इति प्रथमक्लृप्तपञ्चम्यन्तस्यार्थमागमहेतुत्वेन सूत्रे विशिनष्टि। तत एव हेतुहेतुमद्भावे पञ्चम्यपि भवतीति ज्ञापयतीति कारणसामान्ये पञ्चमीं ज्ञापकेन शाब्दिकास्समर्थयामासुः। अन्ये तु 'विभाषा गुणेऽस्त्रिया'मिति (पा० २.३.२५) सूत्रेण गुणवचनशब्देभ्यो हेतौ पञ्चम्या विहितत्वादिह सूत्रे हेतुश्रवणस्य तद्विषयतया जाड्यादागतं जाड्यरूप्यमित्येतत्सूत्रोदाहरणसम्भवात् नैतज्ज्ञापकं हेतौ पञ्चमीसम्भवे। किं तु 'विभाषा गुणेऽस्त्रिया'मिति (पा० १.३.२५.) सूत्रे विभाषेति योगविभागेन अगुणवचनेभ्यः तत्रतत्र पञ्चमी दृश्यत इत्येव तां समर्थयामासुः। नैवं समर्थनीयं स्यात्। यदि जनिकर्तृसूत्रे प्रकृतिपदं कारणसामान्यपरं स्यात्। ननु, महाभाष्ये 'गोलोमाविलोमभ्यो दूर्वा जायन्त' इति जनिकर्तृसूत्रस्योदाहरणं प्रदर्श्य 'अपक्रामन्ति तास्तेभ्यः' इत्यादिना दूर्वोद्गमावधिभूतेभ्यो गोलोमाविलोमभ्यः पञ्चमी 'ध्रुवमपायेऽपादान' मिति (पा० १.४.२४) सूत्रतः सिद्ध्यतीति तत्सूत्रं प्रत्याख्यातम्। तथा व्याख्यानं तदा घटते। यद्युदाहरणे गोलोमाविलोमशब्दौ दूर्वोद्गमनिमित्ततया तदधःस्थितेषु तदुद्गमावधिभूतेषु गो-

प्रथमं द्वितीयखण्डयोर्जगदाकारत्वं,तदुपरि जगदीश्वरत्वं च। ततः प्रत्यक्षमुभयाम्नानाज्जगच्च जगदीश्वरश्च प्रकृतिनिमित्तत्वेन परं ब्रह्म परमेश्वरः शिव इति युक्तमेव ॥

किंच प्रमाणान्तरमस्तीत्याह—

॥ सू ॥ आत्मकृतेः ॥ २६ ॥

'तदात्मानं स्वयमकुरुत' इति स्वस्यैव जगदाकारत्वेन कृतिरवगम्यते पर-

---

लोमाविलोमैकदेशेषु वर्तते। तस्य दूर्वाकारपरिणततदेकदेशपरत्वे हि तथाभूतैकदेशानां दूर्वापक्रमणावधित्वाभावेन सूत्रप्रत्याख्यानं न घटते। अतो महाभाष्यच्छायया प्रकृतिपदं कारणसामान्यपरमवसीयत इति चेत्। उच्यते। गोलोमाद्येकदेशस्य दूर्वाकारपरिणामे तदाकारपरिणततदधःस्थितैकदेशसाधारण्येन गोलोमादिमात्रं तदुपादानम्।व्यवहारानुरोधात्।न हि द्वित्रैस्तन्तुभिरारब्धे खण्डपटे पटाकारबहिर्देशस्य तन्तूनामेकदेशस्य सद्भावेऽपि तन्तवः पटोपादानमिति न व्यवह्रियन्ते। कैयटेन च लोमादीनां दूर्वाद्यवधित्वमभ्युपगम्य सूत्रप्रत्याख्यानं लोकदृष्ट्यैव न तु तान्त्रिकमर्यादयेति व्याचक्षाणेनास्य सूत्रस्य उपादानाविषयत्वमाविष्कृतम्। तद्यथा—'अपक्रामन्ति ता' इति प्रसिद्ध्याश्रयणेनैतदुच्यते।लोकेहि यद्यस्माज्जायते तत्तस्मान्निर्गच्छतीत्युच्यते। तन्त्राश्रयास्तु प्रक्रिया भिद्यन्ते। वैशेषिकदर्शने 'परमाण्वादिसमवेतं कारणेभ्योऽपृथग्देशं कार्यमुत्पद्यत इति नास्ति कार्यस्यापक्रम' इति। अत्र हि जायमानं कार्यं यस्मात्कारणान्निर्गच्छतीति लोकदृष्टिरस्ति तदेवास्य सूत्रस्य विषयः न तु दण्डचक्रादिसाधारणं सर्वं कारणमिति लोकदृष्टिप्रदर्शकवाक्येनाविष्कृतम्। वैशेषिकमर्यादाप्रदर्शकवाक्येन तु परमाण्वादिसमवेतकार्योदाहरणेन विशिष्योपादानविषयत्वमप्याविष्कृतम्। तेन यतो दूर्वाद्यधःस्थितात् गोलोमाद्येकदेशात् दूर्वादिकमपक्रामतीति लोकदृष्टिरस्ति सोऽपि तदुपादानमिति कैयटस्याप्याशय उन्नीयते। स्यादेतत्। 'आत्मन आकाशस्सम्भूत'इत्यादौ मा भूत् जनिकर्तृसूत्रतः पञ्चमी अन्यतो भविष्यतीति चेत्। कुतः, विवेचनीयम्। न तावत् 'ध्रुवमपायेऽपादान'मिति (पा०१.४.२४.) सूत्रतः। सर्वत्र परिपूर्णस्य ब्रह्मणः पर्णपतने वृक्षस्येव प्रपञ्चोत्पत्ताववधित्वासम्भवात्। 'भीत्रार्थाना'मित्यादिसूत्राणां तु नास्त्याशङ्कावकाशः। हेतुपञ्चमी भविष्यतीति चेन्न। हेतौ पञ्चमीविधानाभावात्। 'हेतुमनुष्येभ्य'इति ज्ञापकस्य शाब्दिकैरेव दूषितत्वात्। तस्मिन्सूत्रे 'समादागतं समरूप्य'मिति वृत्तिकारदर्शितोदाहरणगतपञ्चम्याः उपादानविषयत्वोपपत्तेः 'विभाषा गुणेऽस्त्रिया'मित्यादि (पा०२.३.२५) सूत्रे योगविभागेनापि हेतौ पञ्चमी न कल्पनीया।उपादानपञ्चम्यैव सर्वप्रयोगनिर्वाहोपपत्तेः। 'पुत्रात्प्रमोदो जायत'इति कश्चित्प्रयोगस्तु निमित्तकारणे उपादानत्वारोपात् भविष्यति समनन्तरापत्ये गोत्ररूपाध्यारोपादिव रामो जामदग्न्यः व्यासः पाराशर्य इति गोत्रापत्यविहितप्रत्ययान्तव्यवहारः। अस्तु वा यथाकथञ्चित् हेतौ पञ्चमी। तथाप्युपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात् उपादानविषयैवात्र पञ्चमी ग्राह्या। तस्माद्युक्तमुक्तं 'साक्षाच्चोभयाम्नाना'दिति॥ पूर्वसूत्रयोः विषयैः प्रतिज्ञादृष्टान्ताभिध्योपदेशैः शिवस्य निमित्तोपादानत्वोभयमाक्षेपतः सिध्यति। 'ब्रह्म वन'मित्यादिभिस्तु श्रुतित एवेत्यभिप्रेत्य साक्षादिति विशेषितम् ॥ सू ॥ आत्मकृतेः ॥२६॥ तदात्मानमिति। यद्यप्येषा श्रुतिः पूर्वसूत्र एवोदाहर्तुं शक्या, तथा-

मेश्वरस्य । अतः स एवोपादानं निमित्तं च ॥

नन्वज्ञानविकारास्पदहेयप्रपञ्चरूपेण प्रकृतिभावेन कथं वर्तते निरस्तसमस्तदोषलवकलङ्को निस्सीममङ्गलगुणरत्नाकरो निरङ्कुशनित्यसिद्धवैभवः प्रपञ्चातीतः परमशिव इत्यत आह—

॥ सू ॥ परिणामात् ॥ २७ ॥

नित्यशुद्धानन्दस्य निरतिशयमङ्गलस्वभावस्यापि निमित्तस्य परमशिवस्य। प्रकृतित्वेन जगदाकारत्वं युक्तमेव, चिदचिदाकारेण परिणामात् । हन्त कारणविकाररूपो हि परिणामः, पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणाम इति कथं परमेश्वरोऽनर्थधर्मात् परिभूयत इति चेत्—सत्यं, यथा निमित्तस्य प्रकृतित्वेऽपि न विकारादिस्पर्शः तथा परिणामः संभवति । कोऽयमपूर्वः परिणामः ? कुतुहलिनो वयं तच्छ्रवणे, विविच्यतामिति चेत्, शृणु, विवेचयामः—

---

व्यतिस्पष्टार्थतया निरपेक्षेति पृथक्सूत्रिता । अत एवात्र सूत्रे नैरपेक्ष्यद्योतनार्थमेव चशब्दाप्रयोगः । यत्तु 'तदात्मानं सृजाम्यह'मित्यादिवदियं श्रुतिरुपपद्यत इत्युक्तं तन्न । तत्रापि निमित्तोपादानभावसिद्ध्यविशेषात् । इयांस्तु विशेषः । तत्रावताररूपेण स्वात्मनः स्वेन सृष्टिरुच्यते, इह प्रपञ्चरूपेणेति ॥ सर्वज्ञस्य निर्विकारस्य निरतिशयपुरुषार्थरूपस्य परमस्वतन्त्रशिवस्य किञ्चिज्ज्ञसङ्कोचविकासादिविकारस्य दुःखद्वेषभयादिकलुषितपरतन्त्रैकस्वभावचित्प्रपञ्चरूपेण विविधविकारास्पददुःखस्वभावसंसारपाशात्मकाचित्प्रपञ्चरूपेण च परिणामरूपं जगदुपादानत्वं न सम्भवतीति शङ्कोत्तरत्वेनोत्तरसूत्रमवतारयति—नन्विति ॥ सू॥ परिणामात् ॥ २७ ॥ ननु परिणामासम्भवशङ्कायां परिणामादित्येतदेव कथमुत्तरं स्यादिति शङ्कते—हन्तेति । 'परिणामा'दिति सूत्रस्य निर्विकारत्वाद्यविरोधिपरिणामविशेषसम्भवादित्यर्थमभिप्रेत्य परिहरति—सत्यमिति । निर्विकारत्वविरोधि विकारवत्त्वरूपं परिणामित्वं न सम्भवतीति शङ्कते—कोऽयमिति । तत्सम्भवमुपपादयितुं प्रतिजानीते—विवेचयाम इति । अयमाशयः । 'निष्कलं निष्क्रियं शान्त'मित्यादिश्रुतिभिः शिवस्य निर्विकारत्वमिव प्रागुदाहृतश्रुतिभिः प्रपञ्चोपादानत्वमपि प्रतिपन्नम्।उभयमपि यथोपपद्यते तथोपपादनीयम्। शक्यं चोपपादयितुं स्वयं साक्षान्निर्विकारोऽपि शिवः किञ्चिद्द्वारा विकारवत्त्वेनोपादानमिति । ततश्च यथा'यदाग्नेयोऽष्टाकपाल'इत्युत्पत्तिवाक्यावगतपुरोडाशसाधनके यागे साक्षात्साधनभावानर्हाणां व्रीहीणां'व्रीहिभिर्यजेते'ति श्रुतं साधनत्वं पुरोडाशनिर्वर्तनद्वारोपपाद्यते, यथा वा गुणाभिधानरूपायां ऋक्साध्यायां स्तुतौ गीतिक्रियारूपतया साक्षात्साधनभावानर्हाणां साम्नां 'रथन्तरेण स्तुवीते'ति श्रुतिप्रतिपन्नं साधनत्वमृगक्षराभिव्यक्तिद्वारोपपाद्यते, यथा वा सङ्ख्यायाः क्रियायां द्रव्यवत्साक्षात्कारकभावानर्हाया'श्चतुरो मुष्टीन्निर्वपती'ति श्रुतं निर्वापकर्मत्वं मुष्टिद्रव्यावच्छेदद्वारोपपाद्यते, तथेहापि श्रुतं शिवस्य जगदुपादानत्वं श्रुत्यन्तरावगतजगदुपादानभावप्रकृतिपुरुषद्वारोपपादयितुं युक्तम् । न च वाच्यं, लक्षणमुखेन वेदान्ते ब्रह्मावधार्यते लक्षणं तस्योपादानत्वमित्युत्पत्तिशिष्टमुपादानत्वम्।उत्पत्तिशिष्टं तु नान्यद्वारोपपादनीयम्।सा-

'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः। तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥' इति। यस्मिन् काले विगतचन्द्रसूर्यादितेजस्कतया दिवारात्रिविभागशून्यं नामरूपविशेषराहित्येन स्थूलसूक्ष्मचेतनाचेतनसदसद्व्यक्तिव्यवस्थारहितं सर्वमिदं तमोभूतमवर्तत, तदा शिव एवाद्वितीयः केवलः स्वाविभागापन्नचिदचिच्छक्तिः स्वप्रकाशः परिशिष्टोऽभूत्। तदक्षरं तदेव तदानीं क्षररहितं नाशरहितं परं वस्तु, तत् सवितुर्वरेण्यं, तत् सवितुरादित्यस्य पूर्वं तेजःप्रदत्वेन वरेण्यमन्तर्वर्ति तेजस्तदपि तदेव। तस्मात् तादृशात् स्वविलीनस्वेतरनिखिलचिदचित्प्रपञ्चात् अद्वितीयात् पुराणी नित्यसिद्धा तत्कालतमोऽपनोदिनी महास्फुरणरूपा परमा प्रज्ञा ज्ञानशक्तिः प्रसृता प्रावर्तत।

---

क्षात्त्वस्यौत्सर्गिकत्वादिति।'पशुना यजेत''सोमेन यजेते'त्युत्पत्तिशिष्टयोरपि पशुसोमयोर्विशसनाभिषवादिवाक्यानुरोधेन हृदयादिद्वारा रसद्वारा च हविष्ट्वाङ्गीकारात्। ननु, भवत्वन्यद्वारा करणत्वादिनिर्वाहः। व्यापारव्यवधानेन कारणत्वाक्षतेः। उपादानत्वं त्वन्यद्वारा न निर्वहति तस्य साक्षादपृथक्सिद्धकार्यावस्थाश्रयत्वम्। न चान्यद्वारा कश्चिकस्यचिदाश्रयो भवति दण्डाश्रयाश्रयत्वे तद्वारा तदाश्रिताश्रयत्वाभावादिति चेन्न। 'प्रासादे शेते' 'पर्यङ्के शेते' इत्यादिलोकव्यवहारे 'अक्षरमम्बरान्तधृते'रिति ( ब्र०१.३.९ ) सूत्रकारव्यवहारे चान्यद्वारकाश्रयत्वानुमतावैकमत्यप्रदर्शनात्। न चान्यद्वारा कार्यावस्थाश्रयस्योपादानत्वे पटरूपं प्रति तन्तूनामुपादानत्वप्रसङ्गो दोषः। इष्टापत्तेः। एतेन यथैं'न्द्या गार्हपत्यमुपतिष्ठेत'इत्यत्रो'पान्मन्त्रकरणे'मन्त्रकरणकेऽर्थे वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदविधानात् प्रतीयमानस्य मन्त्रे धात्वर्थे समीपावस्थानं प्रति करणत्वस्य मुख्यस्य कथञ्चिदपि निर्वोढुमशक्यत्वादभिधानशिरस्कत्वविशेषितं समीपावस्थानं प्रति करणत्वमौपचारिकमात्मनेपदालम्बनमिति कल्प्यते। एवं परम्परया कार्यावस्थाश्रयस्य कार्यं प्रति मुख्यमुपादानत्वं सम्भवतीति उपादानभूतप्रकृत्यादिविशिष्टस्य मुख्यमुपादानत्वं ब्रह्मोपादानत्वप्रतिपादकश्रुतीनामालम्बनं स्यादित्यपि शङ्का निरस्ता। साक्षात्परम्परासाधारण्येनापृथक्सिद्धकार्यावस्थाश्रयत्वमात्रस्य लक्षणत्वसम्भवेन गौरवपराहतसाक्षात्त्वविशेषणस्याप्रवेशादिति। तदेवं स्वतो निर्विकारस्यापि शिवस्य प्रकृतिद्वारा विकाराश्रयत्वं सम्भवतीति तस्य जगदुपादानत्वोपपादनं मनसि निधाय शिवस्य प्रकृतिद्वारा विकाराश्रयत्वं प्रकृतित्वेनाभिमतायास्तदीयचिच्छक्तेः परिणामित्वे सम्भवेत्तदेवाप्रमाणकमित्याशङ्कानिरासाय तत्र श्वेताश्वतरोपनिषदि श्रुतो मन्त्रः प्रमाणमित्यभिप्रेत्य तन्मन्त्रं पठित्वा तदर्थमाह—यदा तम इति। यद्य'प्यत्ता चराचरग्रहणा'दित्यधिकरणे पूर्वार्धस्यार्थो वर्णितः, तथाप्युत्तरार्धस्यार्थं वर्णयितुं सोऽप्यनूदितः। अस्य मन्त्रस्याभिप्रायो भाष्यकाराभिमतोऽस्माभिर्जन्मादिसूत्रे प्रपञ्चितोऽनुसन्धेयः। महास्फुरत्तारूपा सकलप्रपञ्चानुगतस्फुरणरूपेत्यर्थः। अत एव तत्कालतमोऽपनोदिनी, तस्मिन्काले प्रलयारम्भादारभ्य सुषुप्ताविव जीवानां प्रपञ्चास्फुरणरूपं यत्तमोऽनुवृत्तं तस्यापनोदिनीत्यर्थः। ज्ञानशक्तिः प्रसृतेति। प्रलयदशायां शिवेनाविभागापन्नतया स्थिता पराशक्तिर्ज्ञानशक्ति-

ततः 'सोऽकामयत। बहु स्याम्' इति नामरूपादिविभागरहितसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थः परमेश्वरः संविभक्तनामरूपचिदचिद्वस्तुशरीरको भवेयमिति संकल्पमकरोत्। ततश्च 'इदं सर्वमसृजत। यदिदं किंच' इति स्वशरीरभूतं सूक्ष्मचिदचिद्वस्तु स्वस्माद्विभज्य, 'तत्सृष्ट्वा। तदेवानुप्राविशत्' इति स्वतो विभक्ते चिदचिद्वस्तुनी स्वयमात्मतया प्रविश्य 'सच त्यचाभवत्' इत्यादिना सदसत्प्रपञ्चरूपेण बहुधा परिणतोऽभवदिति पुरुषस्य बालत्वयुवत्वादिवत् ब्रह्मणो जगच्छरीरिणः कारणत्वं कार्यत्वं च ॥

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतेन व्याप्तं सर्वमिदं

---

रूपेण प्रवृत्तेत्यर्थः। अनेन मन्त्रे शक्तेः 'प्रसृतेत्यु' क्तिः तस्याः परिणामित्वे प्रमाणमिति दर्शितं भवति। एवं शक्तेः परिणामित्वे सम्भाविते सति शरीरस्य परिणामित्वात् शरीरविशिष्टस्य 'कृशोऽहं पुष्टः स्या'मिति सङ्कल्प इव सूक्ष्मचिदचित्प्रपञ्चरूपापन्नचिच्छक्तिविशिष्टस्य परमेश्वरस्य संविभक्तनामरूपचिदचित्प्रपञ्चापन्नचिच्छक्तिशरीरको भवेयमित्येवंभूतः 'सोऽकामयते'त्यादिश्रुत्युक्तः बहुभवनसङ्कल्पः 'इदं सर्वमसृजते'त्यादिश्रुत्युक्तस्संविभक्तनामरूपस्थूलप्रपञ्चसर्गः 'तस्माद्वे'त्यादिश्रुत्युक्तः सृष्टप्रपञ्चानुप्रवेशः 'तदनुप्रविश्ये'त्यादिश्रुत्युक्तः प्रविष्टचेतनाचेतनप्रपञ्चरूपापन्नचिच्छक्तिशरीरकतया प्राग्वर्णितरूपस्शिवस्य बहुधा परिणामः पुरुषस्य बालत्वयुवत्ववत्प्रपञ्चशरीरिणस्तस्य कारणत्वं कार्यत्वं च बालयुवपुरुषानन्यत्ववत् प्रतिज्ञादृष्टान्तसिद्धं कार्यकारणानन्यत्वं चेति सर्वमिदमुपपद्यत इत्याह—ततस्सोऽकामयतेत्यादिना। 'तत्सृष्ट्वा तदनुप्राविश'दित्यत्रानुप्रवेशे स्थूलसृष्ट्यनन्तरभावित्वं न विवक्षितम्। व्यापकस्य शिवस्य स्वापृथक्सिद्धे सूक्ष्मप्रपञ्चेऽपि अनुप्रवेशस्याविशिष्टत्वात्। किं तु 'मुखं व्यादाय स्वपिती'त्यत्र व्यादानोत्तरकालानुवर्तमानस्वापाभिप्रायेणेव सृष्ट्यनन्तरकालानुवर्तमानानुप्रवेशाभिप्रायेण क्त्वाप्रयोगः। तदनन्तरकालानुवर्तमानानुप्रवेशानुवादश्च 'तदनुप्रविश्ये'त्यादिवाक्यफलभूतकार्यकारणानन्यत्वोपपादनार्थः। ननु, सर्वमिदमुपपद्यते यदि 'प्रज्ञा च तस्मा'दिति श्रुतौ परिणामित्वेन प्रसिद्धा शैवी चिच्छक्तिः प्रपञ्चस्य प्रकृतिर्भवेत्। तत्र प्रमाणं वक्तव्यम्। 'यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपिवा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित'इति नारायणस्यान्तर्बहिश्च जगद्व्याप्तिश्रुत्या जगदुपादानत्वमवसीयते। 'तस्माद्विराडजायते'त्यादिमन्त्रेषु साक्षाच्च तस्य तदाम्नायते। तद्विरोधश्च परिहरणीयः। नारायणस्य शिवशक्त्यंशत्वात्तद्द्वारा तस्याः प्रपञ्चप्रकृतित्वमिति न विरोध इति चेत् तर्हि तत्र प्रमाणं वाच्यमित्युक्ताकाङ्क्षायां तत्रोभयप्रमाणत्वमभिप्रेत्य श्वेताश्वतरमन्त्रं पठित्वा तस्य तात्पर्यमाह—मायां त्विति। वैदिकनिखण्टौ ज्ञानपर्यायेषु पठितेन मायाशब्देनात्र शैवी चिच्छक्तिरभिप्रेयते। ननु 'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति। तस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः'॥ इति पूर्वस्मिन्मन्त्रे मायाया जीवं प्रति निरोधकत्वरूपं बन्धहेतुत्वमुक्तम्। सैव 'मायां तु प्रकृतिं विद्या'दित्यत्रापि परामृश्यते सा कथं सर्वानुग्राहकत्वेन प्रसिद्धा शैवी चिच्छक्तिः स्यात्। स्यादेव। जीवानां जीवत्वापादकस्य सकलसंसारनिदानस्य मलावरणस्याग्राहकतया रोधशक्त्याख्यस्य पाशत्व-

व्यपदेशस्य शिवागमेषु तस्यां प्रसिद्धत्वात् । यदाहुः 'तासां माहेश्वरी शक्तिस्सर्वानुग्राहिका परम् । परानुवर्तनादेव पाश इत्युपचर्यते ॥' इति । अत एवाजामन्त्रे भजनीयाया अपि तस्यास्स्वेन रूपेण हातव्यत्वमुक्तं 'जहात्येनां भुक्तभोगामजोऽन्य'इति । कूर्म पुराणे च-'कैषा भगवती देवी शङ्करार्धशरीरिणी । शिवा सती हैमवती यथावद्ब्रूहि पृच्छता'मिति प्रश्नोत्तरमध्ये 'तस्य सर्वजगत्सूतिः शक्तिर्मायेति विश्रुता । तयेदं भ्रामयेदीशो मायावी पुरुषोत्तमः । सैषा माहेश्वरी शक्तिस्सर्वाकारा सनातनी । सैव रूपं महेशस्य सर्वदा सम्प्रकाशयेत् । सर्वशक्त्यात्मिका माया दुर्निवारा दुरत्यया ।' इत्यादिवचनजातं दृश्यते । या 'मायया सन्निरुद्ध'इति पूर्वमन्त्रे प्रकृता तां मायामेव प्रकृतिं प्रपञ्चाकारेण परिणामिनीं विद्यात्। परमेश्वरं मायिनमेव तथातथा परिणममानमायाधिष्ठातारमेव विद्यात् । न तु साक्षात्स्वयं परिणामिनमिति पूर्वार्धस्यार्थः । 'तस्मान्मायी सृजते विश्वमेत'दिति पूर्वमन्त्रे पञ्चम्यन्तपदनिर्दिष्टमन्यदेव प्रकृतित्वेनोक्तम् । कथमस्मिन्मन्त्रे माया प्रकृतिरुच्यते । नैष दोषः । 'ऋचो अक्षरे परमे व्योमन्,यस्मिन्देवा अधिविश्वे निषेदुः यस्तन्न वेद किमृचा रिष्यति य इत्तद्विदुस्त इमे समासत'इति ततः पूर्वस्मिन्मन्त्रे 'यो वेद निहितं गुहायां परमे व्योम'न्निति श्रुत्यन्तरेषु ब्रह्मणो भिन्नत्वेन प्रसिद्धं परमव्योम प्रकृतं 'तस्मा' दितिपदेन निर्दिश्यते । ननु तस्य प्रकृतित्वे कथमजामन्त्रादिषु शिवशक्तेः प्रकृतित्वमित्याकाङ्क्षायां 'मायां तु प्रकृतिं विद्या' दित्युक्तम् । या पूर्वमुक्ता परमव्योमशब्दिता प्रकृतिः तां मायां शिवशक्तिमेव विद्यात् न तु ततोऽन्यत्परमव्योमेति न तद्विरोध इति भावः । मायायाः प्रकृतित्वेऽपि'आत्मन आकाशस्सम्भूत' इत्यादिश्रुतिषु ब्रह्मणः प्रकृतिव्यवहारेण विरोध इत्याकाङ्क्षायां तस्य प्रकृतित्वं माया-द्वारकं श्रुत्यन्तरेषूक्तं न तु साक्षादित्यभिप्रायेण 'मायिनं तु महेश्वर'मिति शिवस्य मायाधिष्ठातृत्वमुक्तम् । एवं शिवपरमव्योममायाप्रकृतित्वव्यवहाराविरोधेऽपि 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित'इत्यादिश्रुत्यन्तरे नारायणस्य प्रकृतित्वव्यवहारेण विरोधोऽस्तीत्याशङ्कायामुत्तरार्धम् । येन नारायणेन सर्वमिदं जगद्व्याप्तमिति श्रुत्यन्तरे प्रसिद्धं तेन मायाशब्दितपरमव्योमांशभूतेनैवैतद्व्याप्तं न तु स्वतन्त्रेणेति तस्यार्थः । एवमुत्तरार्धं 'येन नारायणेन व्याप्तं जग'दिति श्रुत्यन्तरे प्रसिद्धं तमनूद्य तस्य परमव्योमांशत्वविधायकं न तु परमव्योमांशमनूद्य तस्य जगत्प्रकृतित्वविधायकम् । तदंशस्य कस्यचित् जगदुपादानत्वे योग्यस्यानुवादार्हस्य कस्यचिदभावात् । नापि तदवयवस्य तदीयजगद्व्यापकत्वस्य च विधायकम्। वाक्यभेदप्रसङ्गात् । अतो मन्त्रोऽयमुभयत्राप्युक्तार्थे प्रमाणं भवत्येवेति भावः । एवं नारायणस्य शिवशक्त्यंशत्वे 'मम योनिरप्स्वन्तस्समुद्र'इत्याम्भ्रणीसूक्तवचनमपि प्रमाणम् । स्वांशभूतस्य नारायणस्य समुद्रः योनिः स्थानमित्येवंपरतायां हि मम योनिरिति वचनं समञ्जसं भवति । इदं च नारायणस्य शिवशक्त्यंशत्वं हरिवंशे पारिजातसंहितायां पारिजातप्रार्थनार्थं भगवता निसृष्टार्थदूततयेन्द्रं प्रति प्रेषितेन नारदेन नानाविधोपायैः प्रार्थित इन्द्रः यदा पारिजातं न दातुमैच्छत्तदा 'य एको विश्वमध्यास्ते प्रधानं जगतो हरः । प्रकृत्या यं परं सर्वे क्षेत्रज्ञं वै विदुर्बुधाः । तस्याव्यक्तस्य यो व्यक्तो भागः स च सवोद्भवः । तस्यात्मा प्रथमो देवो विष्णुस्सर्वत्र धीमतः । प्रकृत्याः प्रथमो भाग उमा

देवीह शाश्वती । व्यक्तस्सर्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः । रुक्मिण्याद्याः स्त्रियस्तस्य व्यक्तत्वे प्रथमो गुणः । अव्यक्ता प्रकृतिर्देवी गुणी देवो महेश्वरः । न विशेषोऽस्ति रुद्रस्य विष्णोश्चामरसत्तम । गुणिनश्चाव्यवायाच्च सादरः प्रभृतो गुणः । नारायणो महातेजाः सर्वकृ-ल्लोकभावनः । भोक्ता महेश्वरो देवः कर्ता विष्णुरधोक्षजः । ब्रह्मा देवगणाश्चान्ये पश्चात्सृष्टा महात्मना । महादेवेन देवेशाः प्रजापतिगणास्तथा । एवं पुराणपुरुषो विष्णुर्वेदेषु पठ्यते । अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा ॥' इति भगवद्वाक्यस्यावश्यपरिपालनीयत्वोपदेश-नार्थं तस्य महिमातिशयं दर्शयता नारदेनाविष्कृतम् । तत्र हि 'य एक'इति श्लोकेन शिवं प्रकृत्य 'तस्याव्यक्तस्ये'ति श्लोकार्धे 'प्रज्ञा च तस्मा'दिति श्रुतिसिद्धं ततश्चिच्छक्त्युन्मेषं पुर-स्कृत्य 'तस्यात्मे'ति तदुत्तरार्धेन विष्णोश्चिच्छक्त्यंशत्वमुक्तम् । एवं 'प्रकृत्याः प्रथमो भाग' इति श्लोकेनापि, श्रुतम् । तत्र 'स्त्रीसंज्ञ' इत्यस्य विष्णुरुमारूपतया स्त्रीत्वेन सम्यक्पु-राणादिभिर्ज्ञायत इत्यर्थः । 'घञर्थे कविधानं कर्तव्य' मिति घञर्थे कर्मणि प्रत्ययः । इदं विष्णोरुमांशतया तद्रूपत्वं श्रीकूर्मपुराणे 'कैषा भगवती देवी शङ्करार्धशरीरिणी । शिवा सती हैमवती यथावद्ब्रूहि पृच्छता'मिति ऋषीणां प्रश्नमवतार्य 'तेषां तद्वचनं श्रुत्वा ऋषीणां पुरुषोत्तमः । प्रत्युवाच महायोगी ध्यात्वा स्वं परमं पद'मिति श्लोके तदानी-मुपदेश्यत्वेनौचित्याद्ध्यानविषयतया प्राप्तायामुमायां 'स्वं परमं पद' मिति विशेषणेना-विष्कृतम् । तत्रैव कृष्णतपश्चर्यानन्तरं शिवेन सह प्रत्यक्षीभूताया उमायाः कृष्णं प्रति 'वत्स जाने तवानन्तां निश्चलां सर्वदाच्युत । अनन्यामीश्वरे भक्तिमात्मन्यपि च केशव । त्वं हि नारायणस्साक्षात्सर्वात्मा पुरुषोत्तमः । प्रार्थितो दैवतैः पूर्वं सञ्जातो देवकीसुतः । पश्य त्वमात्मनात्मानममलं परमं पदम् । नावयोर्विद्यते भेद ऐक्यं पश्यन्ति सूरयः ॥' इति वचनेनापि स्फुटीकृतम् । एवमादित्यपुराणादिष्वपि वचनान्युदाहर्तव्यानि । एवं स्त्रीत्वेन पुराणादिप्रसिद्धस्य कथं रुक्मिण्याद्याः स्त्रिय इत्याशङ्कापरिहाराय 'रुक्मिण्याद्या'इत्यर्धे शिवशक्तिरूपतया स्त्रीत्वेऽपि तस्य पुरुषरूपेण व्यक्तत्वे सति रुक्मिण्याद्याः स्त्रिय इत्येत-दुपपन्नमिति भावः । 'प्रथमो गुण' इति तासां प्रधानमहिषीत्वेन तदर्थं पारिजातप्रदानस्या-वश्यकत्वज्ञापनाय प्रकृतोपयोगितयोक्तम् । 'अव्यक्ता प्रकृति'रिति श्लोकेन शक्तिशिवयोर्गुण-गुणिभावेनाविशेषं प्रदर्श्य शक्त्यंशत्वाद्विष्णोरपि शिवान्नास्ति विशेष इति समर्थितम् । एतदभिप्रायेणैव श्रीकूर्मपुराणे देवकन्याः प्रति शिववचनम्—'मामेव केशवं देवमाहुर्देवी-मथाम्बिकाम् । एष धाता विधाता च कारणं कार्यमेव च । कर्ता कारयिता विष्णुर्भुक्तिमु-मुक्तिफलप्रदः । भोक्ता पुमानप्रमेयः संहर्ता कालरूपभृत् । स्रष्टा पाता वासुदेवो विश्वात्मा विश्वतोमुखः । कूटस्थो ह्यक्षरो व्यापी योगी नारायणाह्वयः । तारकः पुरुषो ह्यात्मा केवलं परमं पदम् । सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना । शान्ता सत्या सदानन्दा परं पदमिति श्रुतिः । अस्यास्सर्वमिदं जातमत्रैव लयमेष्यति । एषैव सर्वभूतानां गतीनामुत्तमा गतिः । तयाहं सङ्गतो देव्याः केवलो निष्कलः परः । पश्याम्यशेषमेवेदं यस्तद्वेद स मुच्यते । तस्मादनादिमध्यान्तं विष्णुमात्मानमीश्वरम् । एवमेकं विजानीध्वं ततो यास्यथ निर्वृति'मिति । एवं शिवशक्त्यं-शत्वेन नारायणस्य तदुभयगुणत्वं रुक्मिणीसत्यभामादिस्वशक्तिसहितस्यैव न तु केवलस्येति

जगत् ॥' इति श्रवणान्मायायाः सकलप्रकृतित्वं, तद्विशिष्टत्वं महेश्वरस्य तदवयवभूतेनांशभूतेन तदीयचिच्छक्तिशकलेन भोक्तृत्वदशायां पुरुषसंज्ञकेन सकलजगद्व्याप्तिश्चावगम्यते। यथा केवलाच्छरीराल्लोमनखाद्युत्पत्तिर्न संभवति आत्मनश्च तथा न केवलं मायाया जगदुत्पत्तिः महेश्वराच्च किंतु मर्त्याच्छरीरिणः केशनखाद्यु-

---

प्रकृतोपयोग्यर्थो 'गुणिनश्चे'ति श्लोकेन दर्शितः । 'भोक्ता महेश्वरो देव' इति श्लोकेन संहारपालनसृष्ट्यधिकृतानां गुणमूर्तीनामिन्द्रादीनां च सृष्टेः प्रागेव चिच्छक्त्यंशभूतादिनारायणोन्मेषप्रदर्शनेन तस्य सर्वोत्तरत्वमाविष्कृतम् । उक्तस्य सर्वस्याप्यर्थस्य वेदमूलतया श्रद्धेयत्वमेव 'पुराणपुरुष' इति श्लोकेन दर्शितम्। 'तदीयचिच्छक्तिशकलेने'त्यनेन 'विश्वोत्तरोत्तरविचित्रमनोरथस्य यस्यैकशक्तिशकले सकलः समाप्त' इति पुराणवचनार्थः स्मारितः। भोक्तृत्वदशायां पुरुषसंज्ञकेनेति। अयमर्थो भट्टभास्कराचार्यैरपि तैत्तिरीयारण्यकभाष्ये आनन्दवल्लीविवरणोपक्रमे दर्शितः। तत्र हि'अत्रेयमौपनिषदस्थिति'रित्युपक्रम्य 'ब्रह्मैकं नित्यं स्वप्रकाशं विचित्रानन्तशक्तिकं स्वतन्त्रैकस्वभावं स्वे महिम्नि सदा महीयमानं प्रकृतिश्चोपादानं च विश्वस्य भवति, निमित्तं च भूत्वा विश्वमधितिष्ठती'त्यादिना शिवं निरूप्य तत्रैव प्रकृतिश्चिदचिदात्मकप्रपञ्चत्वेन परिणमते सैषा परस्य ब्रह्मणः प्रभास्थानीयेति तदीयचिच्छक्तिस्वरूपनिरूपणमुपक्रम्य 'तत्र सर्वेऽप्यात्मानः प्रभवन्ती'ति सर्वेषां जीवानां प्रभाशालित्वस्य तादधीन्यमुक्तम् । अतस्स परमात्मा सर्वात्मप्रभासमष्टिरिति सर्वात्मप्रभासमष्टिरूपतया तस्याः परमात्मशब्दनिर्देश्यतामभिधाय तस्याश्शिवापृथग्भावे 'अग्नेरौष्ण्यं यथा यद्वदादित्यस्य प्रभा तथा। परमात्मा शिवादन्यो नास्तीति मुनयो विदु'रिति प्राचीनश्लोकमुदाहृत्य 'सैव भोक्तृत्वशरीरे'त्यभिधानात् पुरुषो भवतीत्युक्तम् । तत्र च तस्य भोक्तृत्वं स्वोपादानचतुर्मुखादिप्रपञ्चाधिष्ठातृत्वं विवक्षितम् । तस्मिन्नेव भाष्ये 'यस्मिन्निदं संचविचैकं स ओतः प्रोतश्च विभुः प्रजा'स्विति मन्त्रगतोतप्रोतशब्दयोः'ओतः कारणत्वेन सन्ततः, प्रोतोऽधिष्ठातृत्वेन भोक्तृत्वपर्यायेण तस्मिन्नविकारेण सन्तत' इति व्याख्यानसमये भोक्तृत्वमधिष्ठातृत्वमिति दर्शितत्वात् । ततश्च 'भोक्तृत्वदशायां पुरुषसंज्ञकेने'त्यनेन ब्रह्मादिसकलचिदचित्प्रपञ्चाधिष्ठातृत्वरूपस्वातन्त्र्यनिमित्ता नारायणस्य पुरुषसंज्ञेत्युक्तं भवति । एतदभिप्रायेणैवोक्तं नारसिंहपुराणे 'सदैव वासुदेवोऽयं साक्षात्पुरुष उच्यते । स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरस्सर'मिति । सकलजगद्व्याप्तिश्चेति । ननूदाहृतमन्त्रेण महेश्वरस्य मुक्तौ जीवस्य स्वप्रभाद्वारेव नारायणद्वारा सकलजगद्व्याप्तिर्नावगम्यते किं तु नारायणस्यैव। 'तदवयवभूते'नेति हि कर्तरि तृतीया । सत्यम् । तथापि नारायणस्य महेश्वरशक्त्यवयवत्वोक्तिसामर्थ्यात्तदीया व्याप्तिरवयवद्वारा शिवस्यैव । यथा देवदत्तावयवभूतहस्तकर्तृकः स्पर्शोऽवयवद्वारा देवदत्तस्यैव भवतीति श्रुतेस्तात्पर्यमवगम्यत इत्यभिप्रेत्य तथा व्याख्यातम् । इयांस्तु भेदः। जीवस्य मुक्तौ प्रभयैव जगद्व्याप्तिश्शिवस्य तु स्वरूपेण प्रभया तदंशभूतेन नारायणेन चेति। स्यादेतत् । चिच्छक्तेः परिणामित्वं 'प्रज्ञा च 'तस्मा'दिति श्रुत्या जगदुपादानत्वं 'मायां त्वि'ति श्रुत्या चावगम्यते । ततोऽस्या एवोपादानत्वमस्तु किमपरिणामिस्वभावस्य शिवस्यापि पारिभाषिकोपादानत्वाश्रयणेनेत्याशङ्क्याह—यथेति । शरीरात्मनोः परिणाम्यपरिणामिस्व-

त्पत्तिवत् मायिनः परमेश्वरात् सकलचेतनाचेतनप्रकृतिः पुरुषोऽभिव्यक्तो भवति। तद्रूपादीश्वरादव्यक्तचतुर्मुखाद्युत्पत्तिः। तथा च श्रुतिरीश्वरस्य पुरुषरूपत्वमभिधत्ते 'पुरुषो वै रुद्रः' इति। ततः समुचितं चिदचिद्विशिष्टः परमेश्वरः कारणं कार्यं च तत्तदवस्थाविशेषादिति ॥

## ॥ सू ॥ योनिश्च हि गीयते ॥ २८ ॥

साक्षात्परमेश्वर एव भूतयोनिरित्युच्यते। 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥' इति समस्तसाक्षिणः सर्वज्ञस्य तमसः परस्य विश्वोत्तीर्णस्य परम-

---

भावत्वेऽपि केवलस्य शरीरस्य लोमनखाद्युपादानत्वं नास्ति किं तु सात्मकस्यैव यथा, एवं परिणामिन्या अपि केवलायाश्चिच्छक्तेर्न जगदुपादानत्वं किं तु शिवाश्रिताया एव। अतश्शरीरविशिष्टस्यात्मनोऽपि केशनखादाविव मायाविशिष्टस्य शिवस्यापि जगदुपादानत्वं न पारिभाषिकं किं तु 'यथा सतः पुरुषात् केशलोमानि तथाक्षरात्सम्भवतीह विश्व'मिति सयुक्तिकश्रुतिसिद्धमिति भावः। दृष्टान्तदार्ष्टान्तिकवाक्ययोरात्मनः महेश्वराच्चेति केवलात्मनः केवलमहेश्वराच्च कार्योत्पत्त्यसम्भवप्रदर्शनं दृष्टान्तार्थम्। ननु शरीरविशिष्टादात्मनः केशनखादेरिव मायाविशिष्टान्महेश्वराज्जगत उत्पत्तिरित्यङ्गीकारे तत्रैवोपादानत्वविश्रान्तिः स्यात् कथं पुरुषस्याप्युपादानकोटिप्रवेश इत्याशङ्क्याह—मायिन इति। तथा च सर्गाद्यकाले प्रथमोन्मिषितायाश्चिच्छक्तेस्सकाशादभिव्यक्ते पुरुषे तच्छरीरात्परमेश्वरादव्यक्तचतुर्मुखाद्युत्पत्तिरिति युक्तमस्याप्युपादानकोटिप्रवेश इति भावः। यद्यप्यव्यक्तं सूक्ष्मरूपेण प्रलयेऽप्यस्ति तथापि यथा चतुर्मुखस्य ज्ञानविकासवत्त्वेन शरीरविशिष्टत्वेन च पुरुषादुत्पत्तिः एवमव्यक्तस्यापि 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यह'मित्यादिवचनोक्तरीत्या कार्योन्मुख्यविशिष्टरूपेण तत उत्पत्तिरस्तीत्यभिप्रेत्याव्यक्तग्रहणं कृतम्। परमेश्वरस्य पुरुषशरीरकत्वे श्रुतिमुदाहरति—तथेति। 'पुरुषो वै रुद्र' इति सामानाधिकरण्यं पुरुषशरीरकत्वाभिप्रायमिति भावः। तस्मान्निर्विकारस्यापि परमेश्वरस्य जगदुपादानत्वं सर्वविज्ञानोपपादकं स्वयमेवोपादानत्वं चोपपन्नमित्युपसंहरति—तत इति ॥ सू ॥ योनिश्च हि गीयते ॥ २८ ॥ स्यादेतत्। चिच्छक्त्यवस्थाविशेषरूपस्य पुरुषस्य जगदुपादानत्वाङ्गीकारे प्रतिज्ञादृष्टान्ताभिध्योपदेशसाक्षादुभयाम्नानात्मकृतयस्तद्विषयतया चिच्छक्तिविषयतया वा प्रामाण्यं लभन्ते। परिणामहेतुश्च सामञ्जस्यं लभते। निर्विकारसाक्षिरूपतया श्रुतिशतप्रतिपन्नस्य परमशिवस्य जगदुपादानतायां नैतानि प्रमाणानि भवितुमर्हन्तीत्याशङ्कां मनसि धारयन्निराकरणार्थत्वेनेदं सूत्रं व्याचष्टे—साक्षादिति। 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्।' इति कैवल्योपनिषदि समस्तसाक्षित्वतमःपरत्वलिङ्गाभ्यां 'स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमः स्वराट्' 'स एव विष्णुः स प्राणः स कालोऽग्निस्स चन्द्रमाः। स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्। ज्ञात्वा यं मृत्युमत्येति नान्यः पन्था विमुक्तये' इति तद्वाक्यशेषे सकलप्रपञ्चशेषित्वमोक्षोपायसाक्षात्करणीयत्वलिङ्गाभ्यां चावगमिते साक्षात्परब्रह्मणि परमशिव एव सकलकार्योपा-

शक्त्या उमया सहितस्य विशिष्टस्य परमेश्वरस्यैव भूतयोनित्वं भूतप्रकृतित्वं च गीयते । ततश्चोपादानमपि निमित्तं परं ब्रह्मैव ॥

## इति प्रकृत्यधिकरणम् ॥ ६ ॥

दानत्ववाचिभूतयोनिशब्दो दृश्यते । अतस्तस्योपादानत्वाभ्युपगम आवश्यक इति नोपादानत्वप्रापकाणां परब्रह्मपरश्रुत्यन्तराणामन्यत्र नयनक्लेशस्समाश्रयणीय इति भावः । अधिकरणमुपसंहरति—ततश्चेति । यन्निमित्तं परं ब्रह्म तदेवोपादानमपीत्यर्थः ॥

॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥

---

## नयमणिमालायाम्

### अथ प्रकृत्यधिकरणम् ॥ ६ ॥

**सू० । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥ अभिध्योपदेशाच्च ॥ २४ ॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥ आत्मकृतेः ॥ २६ ॥ परिणामात् ॥ २७ ॥ योनिश्च हि गीयते ॥ २८ ॥**

कर्ता हि जगत ईशो नोपादानमपि तत्तथादृष्टेः । मायायाः पुरुषस्य च जडचिदुपादानताश्रुतेश्चापि ॥ ८२ ॥
मैवं कर्ता शिवोऽस्य प्रकृतिरपि मितः किं तु मायाविशिष्टो देहाश्लिष्टो यथात्मा नखचिकुरततेस्तत्र सृष्टिक्रमोऽयम् ।
शक्तिस्तस्माद्विभक्ता भवति हि पुरुषो यस्सहस्राक्षिमूर्धा तादूप्येणैव शम्भुस्सकलजगदुपादानभावं बिभर्ति ॥ ८३ ॥
मायां त्वित्येष मन्त्रः खलु तदवयवव्याप्तमाख्याति विश्वं कं वा नारायणान्यं तदवयवमिह व्यापकं कल्पयामः ।
तस्य ह्यन्तर्बहिश्च स्थितिमिदमखिलं व्याप्य वस्त्वामनामस्तस्मात्तद्रूपमायाप्रकृति जगदिदं सर्ववाक्यानुरोधात् ॥ ८४ ॥

इति प्रकृत्यधिकरणम् ॥ ६ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ प्रकृत्यधिकरणम् ॥

**॥ सू ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥ अभिध्योपदेशाच्च ॥ २४ ॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥ आत्मकृतेः परिणामात् ॥ २६ ॥ योनिश्च हि गीयते ॥ २७ ॥**

**भगवत्पादमते,** पूर्वं द्वितीयाधिकरणे 'जन्माद्यस्य यतः' इति लक्षितं ब्रह्मणो लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत्प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानमित्यतस्तन्निर्णयायेदमारभ्यते—सू ॥ **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥** 'यतो वा इमानी' त्यादिकं जन्माद्यधिकरणविषयवाक्यमेवास्याधिकरणस्य विषयवाक्यमिति बोध्यम् । जगत्कारणत्वं ब्रह्मणः किं निमित्तत्वेनैव उत उपादानत्वनिमित्तत्वोभयरूपेणापि इति संशयः । ईक्षापूर्वककर्तृत्वश्रवणात् ईश्वरत्वप्रसिद्धेः लोके कार्यकारणयोस्सारूप्यदर्शनाच्च जगतो निमित्तकारणमेव स्याद्ब्रह्मेति पूर्वपक्षः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः मृत्पिण्डादिदृष्टान्तोपन्यासस्य च बाधाभावाय ब्रह्म उपादानकारणं निमित्तकारणं च भवतीत्यभ्युपगन्तव्यम् । अतः अधिष्ठात्रन्तराभावान्निमित्तकारणत्वं ब्रह्मण उपादानान्तराभावाच्च उपादानत्वमित्युभयकारणत्वं ब्रह्मणः सिद्धमिति सिद्धान्तः । **सूत्रार्थस्तु,** ब्रह्म **प्रकृतिश्च**=उपादानकारणं च । चकारान्निमित्तकारणं च । कुतः । **प्रतिज्ञादृष्टान्तानुपरोधात्**=प्रतिवेदान्तं श्रूयमाणायास्सर्वविज्ञानप्रतिज्ञायाः मृत्पिण्डादिदृष्टान्तवाक्यानां च ब्रह्मणः उपादानत्वानभ्युपगमे बाधसंभवादुपरोधस्तयोरापतेत् । तदभ्युपगमे तु 'प्रतिज्ञादृष्टान्तावुपपद्येते । अधिष्ठात्रन्तराभावोऽपि तयोरनुपरोधादेवाभिहितो भवति । अतः उपादानं निमित्तं च जगतो ब्रह्मेति सिद्धम् ॥

कुतश्च कर्तृत्वप्रकृतित्वे ब्रह्मण इत्याह—सू ॥ **अभिध्योपदेशाच्च ॥ २४ ॥** 'सोऽकामयत बहु स्या' मिति 'तदैक्षत बहु स्या' मिति च बहुभवनाभिध्यानपूर्विकायाः स्वातन्त्र्यप्रवृत्तेरुपदेशाच्च कर्तृत्वप्रकृतित्वे ब्रह्मणस्सिध्यतः ॥

प्रकृतित्वस्य हेत्वन्तरमाह—सू ॥ **साक्षाच्चोभयाम्नानात् ॥ २५ ॥** 'सर्वाणि हवा इमानि भूतन्याकाशादेव समुत्पद्यंते । आकाशं प्रत्यस्तं यन्ति' इति साक्षाद्ब्रह्मैव कारणम् 'आकाशादेव' इत्युपादाय प्रभवप्रलययोराम्नानात् ब्रह्मोपादानमित्यर्थः । लोके हि यद्यस्मात्प्रभवति यस्मिंश्च प्रलीयते तत्तस्योपादानमिति प्रसिद्धम् ॥

इतश्च प्रकृतिर्ब्रह्मेत्याह—सू ॥ **आत्मकृतेः परिणामात् ॥ २६ ॥ आत्मकृतेः**='तदात्मानं स्वयमकुरुत' इत्यत्र 'आत्मान' मिति कर्मत्वस्य 'स्वयमकुरुते'ति निमित्तान्तरानपेक्षस्वकर्तृत्वस्य च श्रवणात् । **परिणामात्**=पूर्वसिद्धस्यापि

कर्तृत्वेन व्यवस्थितस्य सत आत्मनः विकारात्मना परिणमनात् इत्यर्थः । 'परिणामा'दिति वा पृथक्सूत्रम् । ब्रह्मण एव विकारात्मना परिणामस्य श्रवणात् इति तस्यार्थः ॥

इतश्च प्रकृतिर्ब्रह्मेत्याह—**योनिश्च हि गीयते** ॥ २७ ॥ 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' 'यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यादिवाक्येषु प्रकृतिवचनतया लोके समधिगम्यमानेन योनिशब्देन ब्रह्मणोऽभिधीयमानत्वादित्यर्थः । ईक्षापूर्वककर्तृत्वस्य निमित्तकारणमात्राश्रयतानियमस्य लोकसिद्धत्वेऽपि लोकविलक्षणे शब्दगम्येऽर्थे तस्य नियमस्य नावकाश इति सिद्धम् ॥

**श्रीकण्ठमते,** पूर्वं जन्माद्यधिकरणे 'यतो वा इमानि भूतानी'ति पञ्चमीश्रुत्युदाहरणेन सामान्येन निरूपितं परमेश्वरस्य जगदुपादानत्वं विशेषतस्समर्थयितुमिदमधिकरणमारभ्यते—**सू ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** ॥ २३ ॥ 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' 'द्यावाभूमी जनयन्देव एकः' इत्यादिवाक्यान्यस्य विषयः । एतेषु प्रसिद्धमुभयकारणत्वं युक्तं न वेति संदेहः । ब्रह्म जगत्स्रष्टृ निमित्तमेव नोपादानमपि । कुतः । निमित्तस्य कुलालादेरुपादानत्वासंभवात् इति पूर्वपक्षः । एकविज्ञानप्रतिज्ञायाः तदुपपादकमृत्पिण्डदृष्टान्तस्य चानुरोधात् ब्रह्म जगतो निमित्तमुपादानं च भवतीत्युभयकारणत्वं युक्तमेवेति सिद्धान्तः ।

इतश्च निमित्तादनन्यदुपादानमित्याह—**अभिध्योपदेशाच्च** ॥ २४ ॥ 'तदैक्षत बहु स्यां प्रजायेय'इति निमित्तभूतस्येक्षितुस्सर्वज्ञस्य ब्रह्मण एव विचित्रजगदाकारेण बहुभवनसंकल्पस्योपदिश्यमानत्वाच्च निमित्तादनन्यदुपादानमित्यर्थः ॥

इतश्च ब्रह्मण उभयकारणत्वं सिध्यतीत्याह—**सू ॥ साक्षाच्चोभयाम्नानात्** ॥ २५ ॥ 'विश्वाधिको रुद्रः' 'सर्वो वै रुद्रः' 'नमो हिरण्यबाहवे' 'कुलुञ्चानां पतये नमः' 'नमः पर्ण्याय च पर्णशद्याय च' 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्, ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' इत्यादिषु वेदान्तभागेषु प्रत्यक्षमेव परमेश्वरस्य प्रकृतित्वेन जगदाकारत्वस्य निमित्तत्वेन जगदुत्पादकत्वस्य चाभिधानात् जगच्च जगदीश्वरश्च परमेश्वर एवेत्यर्थः ॥

प्रमाणान्तरमप्यस्तीत्याह—**सू ॥ आत्मकृतेः** ॥ २६ ॥ 'तदात्मानं स्वयमकुरुते'ति स्वस्यैव जगदाकारत्वेन करण स्यावगम्यमानत्वाद्ब्रह्मैवोपादानं निमित्तं च ॥

नित्यशुद्धानन्दस्य परमेश्वरस्य हेयप्रपञ्चरूपेण जगदाकारत्वं कथमुपपद्यत इत्याह—**सू ॥ परिणामात्** ॥ २७ ॥ चिदचिदाकारेण निर्विकारत्वाद्यविरोधिपरिणामविशेषसंभवात् इत्यर्थः । स्वयं साक्षान्निर्विकारोऽपि शिवः प्रकृतिद्वारा विकारवत्त्वेनोपादानमपि भवति । ततश्चिदचिद्विशिष्टः परमेश्वरः तत्तदवस्थाविशेषात् कारणं कार्यं च भवतीति नास्ति तदनुपपत्तिरिति भावः । विस्तरस्तु शिवार्कमणिदीपिकायां द्रष्टव्यः ॥

इतश्चोभयकारणत्वं युक्तमित्याह—**सू ॥ योनिश्च हि गीयते** ॥ २८ ॥ 'उमासहाय' मित्यारभ्य 'भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' इति समस्तसाक्षिणस्सर्वज्ञस्य तमसःपरस्य परशक्त्युमासहायस्य परमेश्वरस्यैव भूतयोनित्वं भूतप्रकृतित्वं च गीयते । तत उपादानमपि निमित्तं परं ब्रह्मैव ॥ इति ॥

**रामानुजमते,** एवमतीताधिकरणत्रयेण निरीश्वरसांख्ये निरस्ते सेश्वरसांख्यः प्रत्यवतिष्ठते तन्निराकरणार्थमाह—**सू ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** ॥ २३ ॥ 'ब्रह्म किं जगतो निमित्तकारणमात्रमुतोपादानमपीति संशयः । ब्रह्म निमित्तकारणमेव नोपादानम् उपादानं तु तदधिष्ठितं प्रधानमेवेति पूर्वपक्षः । सिद्धान्तनिरूपणादिकं प्रायः श्रीकण्ठमतवदेवेति न पृथक्प्रपञ्च्यते । सूत्रार्थश्च प्रायः श्रीकण्ठमतादविशिष्टः ॥

**सू ॥ साक्षाच्चोभयाम्नानात्** ॥ इति सूत्रार्थवर्णने 'ब्रह्म वनं ब्रह्म स वृक्ष'इत्यादिना उभयं ब्रह्मैवेति साक्षादाम्नायत इति प्रतिपादितम् ॥ नान्यानि वाक्यान्युदाहृतानि ॥

**सू ॥ योनिश्च हि गीयते** ॥ 'यद्भूतयोनिं परिपश्यन्ति धीराः' कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इत्यादिषु सर्वस्य भूतजातस्य परमपुरुषः उपादानपर्याययोनित्वेन गीयते । तस्माच्चोपादानं निमित्तं च ब्रह्मैवेति सिद्धम् ॥ अन्यदविशिष्टं पूर्वस्मात् ॥ इति ॥

**आनन्दतीर्थमते,** अस्य 'एषा ह्येव प्रकृतिरविकृतिर्मया प्राणेन संविशति । अदितिर्देवता मयि' इत्यादि वाक्यं विषयः । अत्र स्त्रीलिंगप्रकृत्यादिशब्दानां वाच्यः परमपुरुषो वा उत चित्प्रकृत्यादिर्वेति संशयः । तेषां चित्प्रकृत्यादिविषयत्वेन स्त्रीलिंगस्यार्थसाधुत्वसंभवात् परमपुरुषे प्रयोगमात्रसाधुत्वेन निर्वाहायोगाच्च सर्वेषां शब्दानां परमपुरुष एव समन्वयस्य समन्वयसूत्रप्रतिज्ञातस्यासिद्धिरेवेति पूर्वपक्षः । **सिद्धान्तस्तु,** प्रकृत्यादिस्त्रीलिंगशब्दवाच्यश्च परमपुरुष एवं । कुतः । 'हन्तैतमेव पुरुषं सर्वाणि नामान्यभियन्ति यथा नद्यस्स्यन्दमानास्समुद्रायणास्समुद्रमभिसंविशन्त्येवमेवैतानि नामानि पुरुषमभिसंविशन्तीति प्रतिज्ञादृष्टान्तानुपरोधात् । इति ॥ सूत्रार्थस्तु, **सू ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** ॥ २४ ॥ ईश्वरः न केवलं पुंलिंगाभिधेयः किं तु **प्रकृतिश्च**='सैषा प्रकृती' त्याद्युक्तप्रकृत्यादि-

## अथ सर्वव्याख्यानाधिकरणम् ॥ ७ ॥

## ॥ सू ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

'जन्माद्यस्य यतः' इत्यादिनैतदन्तेन वेदान्तवाक्यानां व्याख्यानेन ब्रह्मलिङ्गाभिधायिनो वेदान्तरूपाः कर्मकाण्डमध्यपातिनः पुरुषसूक्तशतरुद्रीयप्रभृतयो मन्त्रब्राह्मणभागाः स्मृतीतिहासपुराणागमाभियुक्तसूक्तिविशेषाश्च व्याख्याता इति । द्विरुक्तिरध्यायसमाप्त्यर्था ॥

अत्र कर्मप्रकरणपठितानां पुरुषसूक्तशतरुद्रीयादीनां स्मृतीतिहासपुराणादीनां च तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधकत्वमस्ति न वेति संशयः । संशयबीजं प्रकरणभेदादिकम् ॥

### अथ सर्वव्याख्यानाधिकरणम् ।

॥ सू ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥ 'एतेन योगः प्रत्युक्त'इत्यादाविवैतेनेत्यस्याव्यवहितपूर्वाधिकरणन्यायमात्रातिदेशार्थत्वशङ्कामपाकरोति—एतेनेति। पूर्वोत्तराधिकरणोदाहृतोदाहरिष्यमाणेभ्यो वेदान्तवाक्येभ्योऽन्यानि यानि ब्रह्मपराण्यनिर्णीतार्थानि वेदान्तवाक्यानि तेषामेव परामर्शार्थः सर्वशब्दो न भवति किं तु ये कर्मकाण्डे ब्रह्मप्रतिपादका मन्त्रब्राह्मणभागाः स्मृतिपुराणेतिहासाः सिद्धान्ततन्त्रादय आगमाः योगशास्त्रादयोऽभियुक्तसूक्तिविशेषाश्च तेषां सर्वेषामपि परामर्शार्थः । शास्त्रयोनिसूत्रे शास्त्रशब्दस्य ब्रह्मप्रतिपादकसकलशब्दज्ञानपरत्वादित्यभिप्रेत्याह—कर्मकाण्डेत्यादि । द्विरुक्तिरिति । यद्यपि द्विरुक्तेर्नित्यवीप्सादिरिव समाप्तिरर्थत्वेन नानुशिष्टा । तथापि 'न च पुनरावर्तते न च पुनरावर्तते'इत्यादिश्रुतिषु 'मातेत्येके मातेत्येके'इत्यादिस्मृतिषु च समाप्तेर्द्विरुक्तेरर्थत्वावगमादिहापि तदर्थत्वमवसीयत इति भावः । तत्र वा कथं तयोः समाप्त्यर्थत्वमवसीयते येन तद्वदिहापि समाप्त्यर्थत्वं स्यादिति चेत् उच्यते । इतः परमस्मिन्विषये वक्तव्यान्तरं नास्तीति श्रोतॄणामाकाङ्क्षाशान्तये स्वयमेव स्वसमाप्तिप्रतिपादनमथर्वशिखायां दृष्टं 'शिव एको ध्येयश्शिवंकरः सर्वमन्यत्परित्यज्य समाप्ताथर्वशिखे'ति । एवं श्रोतृबुद्धिसौकर्याय स्वयमेव स्वसमाप्तिप्रतिपादनस्य क्वचिद्दृष्टत्वात् अन्यत्र द्विरुक्तेरौचित्यात् स एवार्थोऽवसीयते । प्रकरणभेदादिकमिति । पुरुषसूक्तादीनां कर्मकाण्डमध्यपठितानां मन्त्र-

---

स्त्रीलिंगशब्दवाच्यश्च भवति । कुतः । प्रतिज्ञादृष्टान्तानुपरोधात् । एवं सत्येव 'हन्तेत'मिति प्रतिज्ञायाः 'यथे'ति नदीसमुद्रदृष्टान्तस्य च अविरोधः स्यात् । अन्यथा तद्विरोधः स्यादित्यर्थः ॥

सू ॥ अभिध्योपदेशाच्च ॥ २५ ॥ अभिध्यायाः=ईश्वरेच्छायाः । उपदेशाच्च='मायां त्वि'ति श्रुतौ प्रकृतिशब्दवाच्यत्वोक्तेश्च इच्छाभिन्नेश्वरस्यापि तच्छब्दवाच्यत्वाच्चेत्यर्थः ॥

सू ॥ साक्षाच्चोभयाम्नानात् ॥ २६ ॥ चः अवधारणे । साक्षात्=द्वारमन्तरेणैव । उभयाम्नानात्='एष ह्येष पुरुष'इति वाक्येन प्रकृतिपुरुषोभयशब्दवाच्यत्वाभिधानात् ईश्वरस्य प्रकृत्यादिशब्दवाच्यत्वमावश्यकमित्यर्थः ॥

सू ॥ आत्मकृतेः परिणामात् ॥ २७ ॥ प्रकृतिपरिणामं विधाय तत्प्रेरणायात्मकृतेः स्वस्य बहुधाकरणात् प्रकृतिशब्दवाच्यो विष्णुरेवेत्यर्थः ॥

सू ॥ योनिश्च हि गीयते ॥ २८ ॥ हि=यस्मात् । ईश्वरः 'यद्भूतयोनि'मिति श्रुत्या योनिश्च=स्वदेहादेवापत्योत्पादकश्च । गीयते=प्रतिपाद्यते । तस्मात्प्रकृत्यादिस्त्रीलिंगशब्दवाच्य इत्यर्थः ॥ अतस्सर्ववैदिकशब्दसमन्वयस्सिद्ध्यति इति भावः॥

इति सूत्रार्थचन्द्रिकायां प्रकृत्यधिकरणम् ॥ ६ ॥

कर्मप्रकरणगतानां पुरुषसूक्तादीनामनुष्ठातृजीवपरत्वमेव समीचीनम्, न

ब्राह्मणानां प्रकरणभेदः पूर्वपक्षकोटिबीजम् । तेषां स्मृतिपुराणादीनां च नानादेवताविषयं श्रुतिलिङ्गादिकमादिशब्दग्राह्यं कोटिद्वयस्यापि बीजम् । पुरुषसूक्तादीनामिति । अयं भावः । पुरुषसूक्तं तावत्सर्वेष्वपि वेदेषु कर्मकाण्डमध्य एवाग्निचयनादिप्रकरणेषु पठ्यते । ततश्च तस्य प्रकरणादवगम्यमानं कर्माङ्गत्वं तत्प्रतिपाद्यसमर्पकचेतनवाचिपुरुषशब्दसामर्थ्यरूपाल्लिङ्गात् कर्तृप्रकाशनद्वारकं पर्यवस्यति । अग्निचयनादिषु चेतनस्य हविरादिरूपेण विनियोगाभावात् तेषु पुरुषशब्दनिर्दिष्टदेवताविरहाच्च । न च कर्मानुष्ठाने तत्प्रत्युपयोगिदेहान्तरभोग्यस्वर्गकामनादिसिद्धये तत्प्रवृत्तेः पूर्वदेहातिरिक्तकर्तृभोक्तृरूपात्मनिश्चयापेक्षणेऽपि कर्मानुष्ठानमध्ये तत्प्रकाशनं नापेक्षितमिति वाच्यम् । तन्मध्येऽ'प्यगन्म सुवः सुवरगन्म' 'अपाम सोमममृता अभूम' इत्यादिमन्त्रप्रतिपाद्यभाविस्वर्गप्राप्त्याद्यनुसन्धानार्थं देहातिरिक्तजीवात्मप्रतिपत्त्यनुवृत्तेरपेक्षिततत्वात् । 'अगन्म सुव'रित्यादिमन्त्रेषु स्वर्गादिफलविवक्षायाः फलदेवताधिकरणे स्थापितत्वात् । सम्भवति च पुरुषसूक्ततः देहातिरिक्तजीवात्मप्रतिपत्तिः । तत्र हि प्रथममेव सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् सर्वभूमिव्यापकः तामतीत्योर्ध्वमवस्थाता च प्रतिपाद्यते । तत्रापरिमितसङ्ख्यापरः सहस्रशब्दः । ततश्चानादावस्मिन्संसारे पर्यायेणापरिमितशरीरपरिग्रहादपरिमितमूर्धाननो भवति । एवं प्रतिपादनेनाक्षिशिरःपर्यायेण तत्रतत्र देहे जन्मना सञ्चारेण सर्वभूतव्यापकः कदाचित् पक्षिजन्मना वायूद्धारणाभ्यासेन वा भूमिमतीत्यावस्थाता च यजमानो भवति । एवं प्रतिपादनेन चानादिकालप्रवृत्ततत्कर्मफलभूतापरिमितशरीरानुस्यूतः एकः कर्ता भोक्ता चात्मा सिद्ध्यति । यदि च 'सहस्रशीर्षे'त्यादिपदेषु व्यवस्थितसङ्ख्याविशेषपरः सहस्रशब्दः तथापि क्वचिज्जन्मनि शेषभावेन सहस्रशीर्षा क्वचन शक्रभावेन सहस्राक्षः कदाप्यादित्यभावेन सहस्रपादित्यधरोत्तरमध्यलोकप्रधानभूतशेषशक्रादित्यभावोपलक्षितत्रैलोक्यान्तर्गतसर्वप्राणिभावप्राप्त्युपयोगि 'वेदाहमेत'मिति मन्त्रेण वर्ण्यते । यजमानो ह्यनादिकालप्रवृत्तापरिमितशरीरानुस्यूततया कालानवच्छिन्नो महान्भवति । आदित्यवर्णश्च 'प्राणाधिपस्सञ्चरति स्वकर्मभिः अङ्गुष्ठमात्रो रवितुल्यरूप'इति श्रुत्यन्तरप्रसिद्धेः । तमसः पारे दिव्ये धाम्नि भविता 'दिव्यं धामाशास्ते दिवि ज्योतिरजरमारभेताम्'इत्यादिप्रस्तरप्रहरणपत्नीयाजहोमादिकरणमन्त्रप्रतिपन्नस्य दिव्यधामप्राप्त्यादिफलस्य विवक्षितत्वात् । अङ्गेष्वर्थवादगतैव फलश्रुतिरविवक्षिता,करणमन्त्रप्रतिपन्ना तु विवक्षितेति सूक्तवाकाधिकरणादिषु प्रसिद्धत्वात् । कर्मणामप्यन्तःकरणशुद्धिद्वारा ब्रह्मसाक्षात्कारोपयोगितया मुक्तिफलकत्वसम्भवात् । 'अपाम सोमममृता अभूमे'ति मन्त्रे अमृतत्वप्राप्तिद्वारतया ब्रह्मसाक्षात्कारस्य 'अदृश्म ज्योति'रिति वाक्येन दर्शितत्वाच्च । यजमानः पर्यायेण देवमनुष्यादिरूपाणि तत्तदुचितनामानि चादृष्टद्वारेण संप्राप्य तैस्सहाभिमुख्येन व्यवहरतीति 'सर्वाणि रूपाणी'त्यादि तदुत्तरार्धमप्युपपद्यते । 'धाता पुरस्ता'दिति मन्त्रेण यदेतत्सूक्तप्रतिपाद्यपुरुषस्य धात्रा शक्रेण वर्णितत्वमुक्त्वा तद्वर्णितरूपेण तद्विशिष्ट एवामृतत्वमित्युच्यते । तज्जीव एव सङ्गच्छते । न ब्रह्मणि । धात्रा शक्रं प्रति शक्रेण प्रतर्दनं प्रति च वर्णितेनापहतपाप्मत्वादिना शरीराद्यतिरिक्तेन च रूपेण स्वात्मानं जानत एवामृतत्व-

मिति युज्यते हि, 'एक आत्मन (ब्र०३.३.५१. सू)' इत्यधिकरणे तथा वक्ष्यमाणत्वात्, प्रजापतिविद्योक्तेन प्रतर्दनाख्यायिकोक्तेन च रूपेण ब्रह्म विदुषोऽप्यमृतत्वप्राप्तिसत्त्वात्। 'यज्ञेन यज्ञमयजन्ते'त्यादिमन्त्रे च यष्टृप्रतिपादनमपि देहातिरिक्तकर्तृभोक्तृरूपतया सूक्तस्य यजमानपरत्वेन सङ्गच्छते । यत्तु, यजमाने 'ब्राह्मणोऽस्य मुखमासी'दित्यादि नान्वेति तत्सर्वमदृष्टार्थं काल्पनिकविशेषणाभिधानमस्तु । असमवेतस्यापि समवेतविशेषणस्याभिधानं मन्त्रश्रुतविशेषणविशिष्टरूपप्रकाशनमभ्युदयकारि 'नियमाद्दृष्टार्थमिति वचनं तेषामितरार्थं प्रयुज्यत' इति नावमिकाधिकरणे व्यवस्थापितत्वात् । 'अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां निर्वपामी'ति मन्त्रान्तरेषु तथा दर्शनात् । इह 'कतिधा व्यकल्पय'न्निति पूर्वत्र तथा लोका ँ॥ अकल्पय'न्नित्युत्तरत्र च 'ब्राह्मणोऽस्य मुखमासी'दित्यादेः काल्पनिकार्थविषयत्वस्य स्पष्टीकरणाच्च । एवं पुरुषसूक्तस्य यजमानपरत्वादेव ब्रह्ममेधसंस्कारेऽप्यस्यानुवाकस्य 'अद्भ्यस्सम्भूत'इत्येतदेकविषयस्योत्तरानुवाकस्य च प्रमीतयजमानोपस्थाने विनियोगः कल्पसूत्रे दृश्यते । अथ 'नारायणाभ्यामुपस्थान'मिति । यत्तु शतपथब्राह्मणेन 'युक्तात् पुरुषात् ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिप्रैति सहस्रशीर्षा पुरुषः सहस्राक्षस्सहस्रपा'दित्येतेन षोडर्चेन "षोडशकलं वा इदं सर्वं सर्वस्याप्त्यै, सर्वस्यावरुद्ध्यै'इति"उपाकृतान्दक्षिणतोऽवस्थाप्य ब्रह्मा 'सहस्रशीर्षा पुरुष' इति पुरुषेण नारायणेन परा चानुशंसती" त्यापस्तम्बसूत्रेण च पुरुषमेधे पशुत्वेन नियुक्तानां पुरुषाणां स्तवने विनियोगविधानं तदप्यस्य सूक्तस्य जीवपरत्वादेवोपपद्यते । न हि यजमानासाधारणमिदं सूक्तमिष्यते । पर्यायेण 'सहस्रशीर्षे' त्यादेर्लिङ्गस्य सर्वजीवसाधारण्यात् उदाहृतब्राह्मणे 'षोडशर्चेने' त्यर्थवादे 'षोडशकलं वा इदं सर्व'मिति वाक्येन 'षोडशकलस्सोऽस्य पुरुषः षोडशकलाः पुरुषायणाः' इति श्रुत्यन्तरानुसारात् सर्वमिदं जीवजातं षोडशकलमित्येतदर्थकेनास्य सर्वजीवसाधारण्यस्फुटीकरणाच्च । एवं जीवसाधारण्यपरत्वे स्थिते 'यजेत्पुरुषसूक्तेन वरुणं विश्वरूपिणम् ।' 'यजेत्पुरुषसूक्तेन धनदं विश्वरूपिण'मित्यादीनि शातातपस्मृत्यादिदृष्टानि विनियोगान्तराण्युपपद्यन्ते । यत्त्वापस्तम्बसूत्रे 'पुरस्तात्प्रतीची पुरुषाकृति चिनोति पुरुषशिरोऽस्याः शिरो भवती'ति यदग्नौ पुरुषाकृत्युपधानं विधाय 'सहस्रशीर्षा पुरुष'इत्युपहितां 'पुरुषेण नारायणेन यजमान उपतिष्ठत' इति तदुपस्थाने विनियोगविधानं तत् पुरुषाकृतिसत्त्वात् पुरुषशिरस्संयोजनाच्च पुरुषत्वकल्पनयोपपद्यते । नन्वस्य सूक्तस्य श्रुतिस्मृतिपुराणपाञ्चरात्रागमेषु विष्णुपूजायां विनियोगः प्रसिद्धतरः । एतत्सूक्तप्रतिपाद्यसहस्रशीर्षत्वादिविशिष्टब्राह्मणाद्युत्पत्तिस्थानभूततत्तदवयवयुक्तं च रूपं विष्णोरुपदिष्टं विष्णुपरतयोपबृंहणं च पुराणेषु दृश्यते । सत्यम् । 'ब्राह्मणोऽस्य मुखमासी'दित्यादिनोक्तानि विशेषणानि सर्वोपादाने विष्णावन्वितान्येव सूक्तप्रतिपाद्ये पुरुषे समारोप्य वर्णितानि 'इयमेव सा या प्रथमा व्यौच्छत् । अन्तरस्यां चरति प्रविष्टा । वधूर्जजान नवगज्जनित्री । त्रय एनां महिमानस्सचन्ते' इति मन्त्रे चिच्छक्त्यन्वितविशेषणानीष्टकाविशेषे । चिच्छक्तिर्हि सर्गादौ प्रथममाविर्भूता सती वौच्छत् तमो विवासितवतीति 'प्रज्ञा च तस्मात्प्रसृता पुराणी'ति 'एषो उषा अपूर्वा व्युच्छती प्रिया दिव' इत्यादिश्रुतिप्रसिद्धा। सैवास्यां भूमौ सर्वो-

नित्यमुक्तब्रह्मविषयत्वं, प्रयोजनाभावात्। स्मृतिपुराणादीनामपि नैकार्थपरत्वमस्ति, यतस्तेषु कतिचित् ब्रह्माणं परं ब्रह्मेत्याहुः, कतिचित् विष्णुं, कतिचित् रुद्रं, कतिचित् शक्तिमेव, कतिचिदग्निं, कतिचित् सूर्यं, कतिचिद्वायुं, कतिचित् अन्यम्, एवमनवस्था भवतीत्यत एतेषां न ब्रह्मबोधकत्वम् ॥

इति प्राप्ते ब्रूमः—पुरुषसूक्तादीनां ब्रह्मबोधकत्वमस्ति, तल्लिङ्गदर्शनात् 'तस्माद्विराडजायत' 'आदित्यवर्णं तमसस्तु पारे' 'तमेवं विद्वानमृत इह भवति'

---

पादानभावेन सर्वस्यान्तःप्रविष्टा। सैव नवगत् नवं नित्ययुवानं पतिं शिवं गता प्राप्ता सती वधूर्नवोढेव स्थिता जनित्री जजान सर्वस्य लोकस्य जनयित्री जाता। तामेव त्रयो महिमानः इन्द्राद्यपेक्षया महिमवन्तः त्रयो देवाः ब्रह्मविष्णुरुद्राः। सचन्ते समवयन्ति सेवन्ते। तथापि—'इयमेव से' त्युपधेयेष्टकैव मन्त्रोक्तविशेषणविशिष्टतया वर्ण्यते। अत एव 'इयमेव सा या प्रथमा व्यौच्छ' दित्यादेः 'एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्य'दित्यन्तस्य पञ्चदशर्चस्यानुवाकस्य पञ्चदशेष्टकोपधाने विनियुक्तस्यापि वास्तवविशेषणान्वयानुसारेण देवीसूक्तत्वेनापि प्रसिद्धिः। एवमिहापि विष्णुपूजासु विनियोगा उपपद्यन्ते। एतेन उत्तरनारायणाख्यतदुत्तरानुवाकोऽपि व्याख्यातः। तस्यापि 'वेदाहमेत'मिति मन्त्राम्नानेन तदैकार्थ्यात्। किं चात्र प्रथमं 'अद्भ्यस्सम्भूतः पृथिव्यै रसाच्चे'ति अप्शब्दोपलक्षितेभ्यः भूतेभ्यः पृथिवीरसादन्नाच्च सम्भूततया विश्वकर्मशब्दोक्तस्य स्रष्टुरीशितव्यतया च सूक्तप्रतिपाद्यः पुरुषो वर्णितः। 'विश्वकर्मण' इत्यत्र सप्तम्याश्छान्दसेन व्यत्ययेन षष्ठी। ऐश्वर्यार्थस्याधेः कर्मप्रवचनीयस्य योगे 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी'ति सप्तम्या हि भाव्यम्। 'तस्य त्वष्टा विदधद्रूपमेती' त्यनेन तस्य पुरुषस्य रूपनिर्माण एव स्रष्टान्तः प्रविशतीति सृष्ट्वा तस्येशितव्यतया उपयुक्तं तेनान्तःप्रविष्टत्वमुक्तम्। तदेतदग्रे प्राक् सञ्जातं पुरुषस्य सर्ववृत्तान्तमाजानं ज्ञातवानस्मीति कर्मानुष्ठातुस्तद्विषयं ज्ञानमनूदितम्। 'आजान' मित्याङ्पूर्वाज्जानातेर्लङि ह्रस्वश्छान्दसः। 'वेदाहमेत'मिति मन्त्रेणोक्तरूपवेदनमनूद्य तथा विदुष एवामृतत्वप्राप्तिरुक्ता। 'प्रजापतिश्चरती'ति मन्त्रेण तस्य स्वतो नित्यस्यापि गर्भवासपूर्वकं नानाशरीरोपाधिकं बहुधा जननमुक्त्वा तज्जनने मरीचीनां पदं कारणमुक्तम्। मरीचिसमष्टिरूपा चिच्छक्तिः मरीचीनां पदम्। एतदनुसारेणोत्तरमन्त्रनयनमपि न्याय्यम्। एवमन्येषामपि कर्मप्रकरणगतानां मन्त्रब्राह्मणानां कर्मान्वयितत्तदर्थविषयत्वेन योजनं द्रष्टव्यमिति। कतिचिच्छक्तिमेवेति। सिद्धान्तेऽपि शक्तेर्जीवविशेषणतया ब्रह्मकोटिनिवेशादेवकारः। एवमनवस्थेति। अव्यवस्थेत्यर्थः। लिङ्गदर्शनादित्युक्तमर्थं विवृणोति—तस्मादिति। अयमाशयः। 'तस्माद्विराडजायत विराजो अधिपूरुष' इति अव्यक्तचतुर्मुखकारणत्वप्रतिपादनमुखेन सकलजगत्कारणत्वमिह प्रतिपाद्यते। न चेदमारोपितमिति युक्तम्। बाधकाभावात्। न हि प्रकरणं लिङ्गस्य बाधकम्। 'तमसस्तु पार'इत्यत्र तमःपारवर्तित्वं नित्यसिद्धमेवात्र ग्राह्यं न तु श्रवणमननादिहेतुसाध्यम्। हेत्वाक्षेपकल्पनागौरवात्। 'तमेवं विद्वानमृत इह भवती'त्यत्र यः श्रवणमननादिपूर्वकेण ज्ञानयोगेनाराधितः प्रसन्नस्सन्नमृतत्वं दातुमीष्टे तज्ज्ञानादिहामृतत्वमुच्यत इति वक्तव्यम्।

इति सकलकारणत्वतमःपरत्वामृतहेतुत्वादीनां परमेश्वरलिङ्गानामत्र संबन्धो दृश्यते। अत ईश्वर एवात्र पुरुषशब्देन प्रतिपाद्यते।

'उतामृतत्वस्येशान'इति प्रागुक्तत्वात्। तस्मादिह 'अमृतहेतुत्वादीनां परमेश्वरलिङ्गाना' मिति आदिशब्देनोत्तरनारायणादिगतानि श्रीपतित्वलिङ्गान्यपि सङ्गृहीतानि। तैत्तिरीयपाठे ह्रीशब्दोऽपि श्रीपर एव। वाजसनेयके समानप्रकरणे 'श्रीश्च ते लक्ष्मीश्च पत्न्या'विति पाठादिति। अत ईश्वर एवात्रेति। पूर्वपक्षोक्तरीत्या जीवपरत्वशङ्काया निरासार्थ एवकारः। अत्रायमाशयः। पुरुषशब्दस्य चेतनसामान्यवाचितया कर्मप्रकरणानुरोधेन यजमानपरत्ववर्णनं तावदयुक्तम्। 'पुरुषेण नारायणेन उपहितां चितिमुपतिष्ठमान इह जन्मनि पुरुषो भवे'दिति वाधूलसूत्रगतपुरुषसूक्तकरणकोपस्थानार्थवादविरोधात्। तेन ह्यर्थवादेन पुरुषसूक्तप्रतिपाद्यपुरुषभावप्राप्तिफलकतया पुरुषसूक्तेनोपस्थानं स्मर्यते। यदि तत्प्रतिपाद्यपुरुषभावः प्राक्सिद्धो यजमानभाव एव तदा कथं तत्प्राप्तिफलकतया स्मर्येत। पर्यायेणापरिमितशीर्षत्वादिविषयं 'सहस्रशीर्षा पुरुष'इत्यप्ययुक्तम्। 'सहस्रशीर्षा पुरुषः। सहस्राक्षस्सहस्रपाद्भूत्वोदतिष्ठ'दित्यारुणकेतुकाम्नानविरोधात्। तत्र हि कूर्माकृतिलिङ्गोपस्थापितस्य नारायणस्य युगपत्सहस्रशीर्षत्वादिविशिष्टपुरुषभावोत्थानं वर्णितम्। तदैकार्थ्यमेव पुरुषसूक्तमन्त्रस्यापि शब्दार्थैकरूप्यप्रत्यभिज्ञानेनावसीयते। 'सर्वाणि रूपाणी'त्यादि नामरूपव्याकर्तृपरम्। 'अभिवद'न्निति भर्तव्यैश्वर्यपरम्। 'नान्यः पन्था'इत्यत्रान्यशब्दो नोक्तरूपवेदनान्यपरः किं तु तद्विषयपुरुषान्यपरः। 'यज्ञेन यज्ञमयजन्ते'ति मन्त्रो न ब्रह्मप्रकाशनपरः। किं तु यज्ञाराधनीययज्ञशब्दोक्तपुरुषप्रधानः। 'ब्राह्मणोऽस्य मुखमासी'दित्यादिर्वस्तुतो मुखादिप्रभवानां ब्राह्मणादीनामुपासनाय मुख्यत्वादिकल्पनार्थम्। 'यत्पुरुषं व्यदधुः। कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू। कावूरू पादावुच्येते'इति प्रश्नोत्तरत्वेन 'ब्राह्मणोऽस्य मुखमासी'दित्याद्यवतारितत्वात्। सर्वत्र तत्तदङ्गत्वेन कल्प्यन्त इति ज्ञापनार्थं 'कौ पादा'विति प्रश्ने 'पद्भ्या ँ शूद्रो अजायते'त्युक्तिः। अत एवात्र मुखबाहूरुत्वेन कल्पितानां त्रैवर्णिकानां 'मुखबाहूरुपज्जास्स्युस्तस्य वर्णा यथाक्रम'मित्यादिस्मृतिपुराणागमेषु मुखबाहूरुजत्वप्रसिद्धिः। अत्र शिरश्चक्षुःप्राणनाभिपादप्रभवत्वेनोक्तानां द्युसूर्यवाय्वन्तरिक्षपृथिवीनां वैश्वानरविद्यायां शिरश्चक्षुःप्राणमध्यावयवपादत्वकल्पना च दृश्यते। 'अद्भ्यस्सम्भूत'इति मन्त्रे त्वष्टुरेव विश्वकर्मशब्दोक्तेः स्रष्टा नियन्ता चेश्वरः पुरुषशब्देन परामृश्यते। न तु स्रष्टा नियन्ता चाद्भ्यस्सम्भूतः। 'प्रजापतिश्चरती'त्यत्र गर्भवासरूपमवताररूपेण जननमुक्तम्। तत्र योनिशब्दो 'योनिष्ट इन्द्र' इत्यत्रेव स्थानवाची। तस्य पुरुषस्य मरीचीनां पदमादित्यमण्डलं परमव्योम वा स्थानमित्यर्थः। एवं प्रबललिङ्गानुरोध्यर्थवर्णने सम्भवति न दुर्बलप्रकरणानुरोध्यर्थवर्णनं न्याय्यमिति पुरुषशब्देन प्रतिपाद्यत इति पुरुषसूक्तोत्तरनारायणयोः 'सहस्रशीर्षा पुरुष' इत्यारुणकेतुकब्राह्मणे च पुरुषशब्देन पुरुषस्य नारायणस्यात्मभूतः परमेश्वरः प्रतिपाद्यत इत्यर्थः। एवं च नारायणपूजादिषु शिवपूजादिषु च विनियोगः। तत्तत्परत्वेन सर्वमुपपन्नं भवति। अस्ति हि शिवपूजायामपि विनियोगः। यथा—लैङ्गादिषु शिवाभिषेकमन्त्रपरिगणने 'ज्येष्ठसाम्नां त्रयेणैव तथा देवव्रतैरपि। रथन्तरेण पुण्येन सूक्तेन पुरुषस्य चे'ति पुरु-

**शतरुद्रीये च साक्षात् परमेश्वरस्य जगदाधिपत्यं जगदात्मकत्वं नीलग्रीव-**

---

षसूक्तमपि परिगणितम् । बोधायनसूत्रे रुद्राङ्गन्यासमन्त्रेषु पुरुषसूक्तोत्तरनारायणानुवाकौ शिरःशिखामन्त्रत्वेन निवेशितौ । लिङ्गपुराणे 'द्यौर्मूर्धा तु विभोस्तस्य खं नाभिः परमेष्ठिनः । सोमसूर्याग्नयो नेत्रं दिशश्श्रोत्रे महात्मनः । वक्त्राद्वै ब्राह्मणा जाताः ब्रह्मा च भगवान्प्रभुः । इन्द्राविष्णू भुजाभ्यां तु क्षत्रियाश्च महात्मनः । वैश्याश्चोरुप्रदेशात्तु शूद्राः पादात्पिनाकिनः ।' इति पुरुषसूक्तमुपबृंहितम् । तत्रैव ब्रह्मनारायणकृतशिवस्तोत्रे 'नमोऽस्तु लक्ष्मीपतये श्रीपते ह्रीपते नमः ।' इति उत्तरनारायणं च शिवपरतयोपबृंहितम् । एवं च तत्र यान्य'प्यत्यतिष्ठद्दशाङ्गुलं,पुरुष एवेदं सर्व'मित्यादिविशेषणानि 'पुरुषो ह नारायणोऽकामयत अतितिष्ठेयं सर्वाणि भूतानि अहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत् तदाहरत् तेनायजत तेनेष्ट्वा प्रत्यतिष्ठत्सर्वाणि भूतानि इदं सर्वमभव'दित्यादिशतपथदर्शितेन सर्वोपादानत्वादिना च नारायणे सम्भवन्ति । तेषां तदात्मभूते परमेश्वरे तद्द्वारान्वयः । या'न्युतामृतत्वस्येशान'इत्यादीशानश्रुत्यमृतप्रदत्वलिङ्गादीनि तेषां साक्षादन्वयः । ईशानशब्दस्य योगेनामृतत्वप्रतियोगिकैश्वर्यसमर्पकत्वेऽपि अङ्गुष्ठाधिकरणन्यायेन रुद्रशिवाभिधानत्वमप्यस्तीति समर्थितमस्माभिः शिवतत्वविवेके । यत्तु, धनदपूजादिषु पुरुषसूक्तस्य विनियोजनं तत्तदन्तर्यामिदृष्ट्यैव । अत एव 'धनदं शिवरूपिण'मित्यादिषु चैश्वर्यवर्णनं ब्रह्ममेधसंस्कारसंस्कृतयजमानोपस्थाने विनियोजनमपि ब्रह्ममेधसंस्कारस्य 'वेष्टितुं पुरुषोत्तम'मिति परब्रह्मप्राप्तिहेतुत्वस्मरणात्तेन संस्कृतः परब्रह्मकल्प इति तदात्मत्वदृष्ट्यैव पुरुषमेधे विनियुक्तपुरुषपरलिङ्गवत्त्वाच्चाग्निचयने कल्पितपुरुषाकृत्युपस्थाने विनियोजनं 'यत्पुरुषं व्यदधुः, कतिधा व्यकल्पय'न्निति कल्पितपुरुषप्रकाशकत्वादिति सर्वं समञ्जसम् ॥ यदन्यत्पुरुषसूक्तादिविषये विचारणीयं सर्वं 'तथान्यप्रतिषेधा'दित्यधिकरणे (ब्र०३-२.३६ सू) विचारयिष्यते ॥ शातरुद्रीयस्य प्रकरणेनाग्निपरत्वं यद्यपि कल्पयितुं न युक्तम् । प्रकरणात् श्रुतिलिङ्गानां प्रबलत्वात् । तथापि 'रुद्रो वा एष यदग्निस्स एतर्हि जातो यर्हि सर्वश्चित' इति प्रपञ्चप्रस्तारचयनानन्तरं निष्पन्नं स्थण्डिलरूपमग्निं रुद्रमुक्त्वा 'स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्याये'दित्यर्थवादपूर्वकं 'शातरुद्रीयं जुहोती'ति विधानात् शातरुद्रीये 'नमस्ते रुद्रे' त्यादिमन्त्रेषु श्रुत एव रुद्रशब्दो 'रुद्रो वा एष यदग्नि'रिति वाक्येनाग्निपरतया व्याख्यात इत्यवसीयते । तथा च शतरुद्रीयस्याग्निपरत्वमेवाङ्गीकर्तुं युक्तम् । 'गौणं लाक्षणिकं वापि वाक्यभेदेन वा पुनः । वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलये'दिति तन्त्रवार्तिकोक्तन्यायेन साक्षाद्वेदेन कृतं व्याख्यानमनादृत्य श्रुतिलिङ्गादिन्यायैरन्यपरत्वस्य कल्पयितुमशक्यत्वादित्याशङ्क्याह—शतरुद्रीये चेति । तत्र 'दिशां च पतय'इत्यादिषु सर्वाधिपतित्वं 'नमः स्रोतस्याय चे'त्यादिषु सर्वान्तर्यामित्वं 'नमो हिरण्यबाहव'इत्यादिषु नीलग्रीवत्वकपर्दित्वादिविशिष्टं शैवरूपमित्यादि लिङ्गजातं 'नमो भवाय चे'त्यादिषु भवरुद्रशर्वपशुपतिशिवशङ्करादिश्रुतिवृन्दं च शतरुद्रीयश्रवणकाल एव प्रथममवगम्यमानमनादृत्य शतरुद्रीयावगतिसापेक्षस्य तन्मन्त्रकहोमविधानस्यार्थवादे श्रुतं 'रुद्रोऽग्नि'रिति कीर्तनं प्रमाणीकृत्य शतरु-

त्वादिलक्षणं च श्रूयते। अतः परमेश्वरस्य तद्बोध्यत्वं युक्तम् ॥

ननु परमेश्वरस्य मङ्गलगुणैकनिधानस्य शतरुद्रीयप्रतिपाद्यत्वमयुक्तमिव प्रतिभाति। प्रथममेवात्र 'नमस्ते रुद्र मन्यवे' इति हेयगुणमन्युसंबन्धावगमात् इति चेत्–नैवं विचारणीयम्, मन्युशब्दस्यात्र यज्ञवाचकत्वात्। अथवा क्रोधपर्यायत्वेऽपि मन्युशब्दस्य न दोषः, दुष्टनिग्रहार्थं स्वेच्छागृहीतप्रकृतिगुणत्वेनास्य परमेश्वरे संबन्धाभावात् ॥ पुराणादीनां च तात्पर्यलिङ्गवशेन ब्रह्मविष्णवा-

---

द्रीयस्याग्निप्रतिपादकत्वकल्पनमयुक्तम्। तथाकीर्तनस्य 'इयमेव सा ये'ति मन्त्रे चिच्छत्त्यात्मना इष्टकाविशेषस्येव शिवात्मनाग्नेस्स्तुतिरिति कीर्तनं प्रमाणीकृत्य शतरुद्रीयस्तावकत्वेन नेतुं शक्यत्वात्। 'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्ये'त्यर्थवादे तनुद्वयवर्णनस्य 'द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः। घोरा चान्या शिवा चान्या ते चैव शतधा पुनः।' इति महाभारते शिवविषयतयोपबृंहिततया तत्र 'रुद्रो वा एष यदग्नि'रित्यस्य द्विविधतनुयुक्तशिवात्मनाग्नेस्स्तुतिरित्यवश्याङ्गीकर्तव्यत्वात् तथैवेदमपीति भावः। स्यादेतत्। अग्निपरत्वासम्भवेऽपि परमशिवपरत्वमप्यङ्गीकर्तुमयुक्तम्। क्रोधवत्त्वश्रवणात्। परमकारुण्यादिमङ्गलगुणैकनिधानस्य तस्य क्वचिदपि क्रोधासम्भवात्। अतोऽस्य संहाररुद्रादिरूपसम्भावितक्रोधरुद्रान्तरपरत्वकल्पनं युक्तम्। संहाररुद्रेऽपि ह्युदाहृतश्रुतिलिङ्गादीन्युपपद्यन्ते। 'तन्नामनामा तद्रूपस्तत्कार्यकरणक्षमः। तत्तुल्यव्यवहारश्च तदाज्ञापरिपालक'इति वायुसंहितायां संहाररुद्रं प्रकृत्य तस्य शिवनामरूपादिमत्त्वोक्तेरित्याशयेनाशङ्कते–नन्विति। नैवं विचारणीयमिति। 'या ते रुद्र शिवा तनूः।' 'यामिषुं गिरिशंत हस्ते'इति 'मानस्तोके तनये मान आयुषी'ति च श्वेताश्वतरोपनिषदि परमशिवप्रकरणे समाम्नातानां मन्त्राणामिहाम्नानेन जाबालोपनिषदि 'जप्येनामृतत्वं ब्रूही'ति प्रश्नस्य'शतरुद्रीयेणे' त्युत्तरानन्तर'मेतानि वा अमृतस्य नामधेयानि एतैर्ह वा अमृतो भवती'त्यस्मिन्नाम्नातानां नाम्नामनादिमुक्तपरमशिवनामत्वप्रतिपादनात् 'एकशतं च यजुश्शाखास्तासु सर्वासु रुद्रोपनिषदाम्नायत'इत्युपनिषच्छब्देनास्य ब्रह्मविद्यात्वप्रतिपादनाच्च परमशिवपरत्वमेवास्याङ्गीकर्तव्यमिति भावः। क्रोधश्रवणमसिद्धमित्याह–मन्युशब्दस्येति। नन्वेतदयुक्तम्। शतपथे शतरुद्रीयब्राह्मणे 'प्रजापतेर्विस्तदेवता उपाक्रामन् तमेक एव देवोनामन्युरेव सोऽस्मिन्नन्तर्विततोऽतिष्ठ'दिति मन्युदेवं प्रस्तुत्य 'शतशीर्षो रुद्रस्समभवत् सहस्राक्षश्शतेषुधी'रिति तस्य शतशीर्षत्वादिविशिष्टरुद्रात्मना सम्भूतिमुक्त्वा 'सोऽयं शतशीर्षो रुद्रस्सहस्राक्षश्शतेषुधिः। अधिज्यधनुः परंप्रतिहिता धीभींषयमाणोऽतिष्ठत्'इति तस्य भयङ्करत्वं चोक्त्वा 'नमस्ते रुद्र मन्यव'इति य एव सोऽन्तर्मन्युर्विततोऽतिष्ठत्तस्मा एवैतं नमस्करोती'ति 'नमस्ते रुद्र मन्यव' इत्यस्य तन्नमस्कारवर्णनात् तस्य च भीषयमाणत्वात् श्रुत्या क्रोधदेवतात्वावसायादित्यस्वरसादाह–अथवेति। यद्यपि सर्वानुग्राहकस्य शिवस्य स्वतः क्रोधो नास्ति तथापि दुष्टनिग्रहार्थं स्वेच्छया गृहीतः प्रकृतिगुणभूतः क्रोधस्सम्भवतीति तस्य च परिग्रहशक्तिभूतप्रकृतिगुणत्वेनास्मदादिक्रोधस्येव परमेश्वरे सम्बन्धो नास्तीति न कश्चिद्दोष इत्यर्थः। अथ पुराणादीनामविरोधेन शिवपरत्वमुपपादयति–पुराणादीनां चेति। केचिदाहुः–वैष्ण-

वपुराणविरोधीनि शैवादिपुराणवचनानि अप्रमाणानि । पुराणानां प्रणेतृगुणानुगुणबलाबल-विशेषवत्त्वात् । तथा सर्वेषां पुराणानां प्रणेता चतुर्मुखः स केषुचित्कल्पेषु सत्त्वोद्रिक्तो भवति केषुचिद्रजोऽभिभूतः केषुचित्तमश्छन्नः । येषु कल्पेषु स्वकीयसत्वोद्रेकादिना सात्विक-राजसतामसाभिधानेषु वैष्णवब्राह्मशैवादिपुराणानि प्रणिनाय, तेन पुराणान्यपि तानि वक्तृगुणानुसारेण सात्विकराजसतामसान्युच्यन्ते । अतस्तमोऽभिभूतान्तःकरणेन प्रणीतै-श्शैवपुराणैरुक्तं सात्विकपुराणविरुद्धं न ग्राह्यम् । तदेतत्सर्वं 'सङ्कीर्णास्सात्विकाश्चैव राजसाश्चैव तामसा'इति कल्पानां सात्विकादिविभागप्रतिपादनपूर्वकं 'यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते । 'अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः । सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते । सात्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गति'मिति मात्स्यपुराणे प्रतिपादितम् । अत्र हि 'यस्मिन्कल्प'इत्यादिश्लोकेन तत्तत्कल्पे ब्रह्मप्रोक्तानां पुराणानां तत्तत्कल्पविषयत्वमुक्त्वा 'अग्नेश्शिवस्य माहात्म्य'मित्यादिना शैवादिपुराणानां तामसादिकल्पविषयत्वप्रतिपादनात् तेषां तामसादिकल्पेष्वेव ब्रह्मणा प्रणीतत्वं सिद्ध्यतीति । ततः पुराणानां वक्तृगुणानुगुणबलाबलविभागो लभ्यते । यद्यपि कल्पानां तामसत्वादि ब्रह्मणस्तत्तद्गुणोद्रेकादिति स्पष्टं न प्रतिपादितम् । तथापि कल्पाना-मिह सात्विकादिविभागः तत्तत्कल्पे पुराणवक्तुः ब्रह्मणः तत्तद्गुणप्राचुर्याभिप्राय एव वर्णनीयः । तथा विभागस्य तत्तत्कल्पेषु तेन प्रणीतानां परस्परविरुद्धानां देवतोत्कर्षापकर्षप-राणां पुराणानां कार्त्स्न्येन प्रामाण्यायोगे सति तेषु हेयोपादेयविशेषपरिज्ञानाय वक्तृगुणा-नुगुणबलाबलसूचनेन सप्रयोजनत्वात् विधान्तरेण सात्विकादिविभागस्य निष्प्रयोजनत्वात् अनन्तरसन्दर्भानुरोधित्वाच्च । तत्रापि विष्णुपुराणं प्रबलं पुलस्त्यवरदानलब्धदेवतापरमा-र्थवेदनेन पराशरेण उपदिष्टत्वात् जगत्कारणवस्तुविषयसामान्यप्रश्ने 'विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थित'मित्याद्युत्तरक्रमेणावतीर्णतया देवताविशेषमहिमविषयप्रश्नोत्तरसन्दर्भ-रूपपुराणान्तरव'न्न बुद्धिभेदं जनये'दिति न्यायेन प्रष्टुरभिमतार्थो बहूकृत इति नेतुमशक्य-त्वेनानन्यथासिद्धत्वाच्चेति । तस्यैतस्य सर्वस्यापि निरास'स्तात्पर्यलिङ्गवशेने'त्यनेन सिद्धः । सर्वकारणत्वादिकं यद्ब्रह्मलिङ्गं तदेवात्र तात्पर्यलिङ्गेन विवक्षितम् । अत एवानुपदं वक्ष्यति 'यत्र यत्र चेतने अचेतने वा जगत्कारणत्वादिकं शिवतात्पर्यलिङ्गं श्रूयत' इति । एवं च ब्रह्मविष्णुरुद्रादिषु सर्वकारणत्वं सर्वसंहर्तृत्वं सर्वान्तर्यामित्वमित्यादि यद्ब्रह्मलिङ्गं श्रूयते साक्षात्परब्रह्मपदं वा श्रूयते तत्सर्वं तत्तदात्मभूते शिव एव परब्रह्मणि पर्यवस्यति । यथा 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वे'त्यादिकमिन्द्राद्यन्तर्यामिणि तस्मिन्ब्रह्मलिङ्गाद्य-नुगमाविशेषात् 'स्मृतयश्च पुराणानि भारतादीनि सत्तम । शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति ही'ति पराशरपुराणवचनाच्च । एवं पुराणादीनामविरोधनयनानङ्गीकारे प्राचीना-धिकरणोदाहृतेषु विषयवाक्येषु सर्वकारणत्वमुमुक्षूपास्यत्वादीनि ब्रह्मलिङ्गानि प्राणाकाशे-न्द्रादिषु श्रूयन्त इति तेषां विरोधं को वारयेत् । अवश्यं च श्रुतिवदेव पुराणादीनामप्य-विरोधेन प्रामाण्यमुपपादनीयम् । 'पुराणं मानवो धर्मस्साङ्गो वेदश्चिकित्सितम् । आज्ञासि-

द्धानि चत्वारि न हन्तव्यानि हेतुभि'रिति स्मरणात् । यत्तु मात्स्यवचनजातमुदाहृतं तत् ब्रह्मविष्ण्वादीनां परस्परस्मादुत्कर्षं प्रतिपादयन्ति पुराणानि कल्पभेदप्रवृत्ततत्तदुत्कर्षविषयतया प्रमाणत्वेनोपपादयितुं प्रवृत्तं न तु पुराणेषु केषांचित् तमश्छन्नतत्वावबोधभ्रान्तकल्पितत्वेनाप्रामाण्यं प्रतिपादयितुम् । 'त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात् । चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः । पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु । ब्रह्मा सर्गे हरिस्त्राणे रुद्रस्संहरणे पुनः । तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः । तपसा तोषयित्वा तं पितरं परमेश्वरम् । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवान्रुद्रं ब्रह्माणमसृजत्पुनः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानितानि प्रणीतानि विद्वांस्तत्र न मुह्यति ।' इति शिवपुराणे तथैव प्रामाण्यव्यवस्थापनात् । एवं च तत्तत्कल्पानां तामसत्वादिविभागः हेमन्तग्रीष्मवर्षासु हिमातपवृष्टिप्राचुर्यवत् कल्पभेदेषु तमस्सत्वरजःप्राचुर्यं भवतीति तत्तद्गुणप्राचुर्यनिबन्धनः तथा विभागश्चोपाध्युत्कर्षे सति तदुपाधिकोत्कर्षो युक्त इत्यौचित्यरूपेण वस्तुसामर्थ्येन तामसादिसंहाररुद्राद्युत्कर्षोपपादनेन सार्थकः । 'यस्मिन्कल्प'इत्यादिश्लोकः पुराणानामेककल्पविषयत्वे सति विरोधप्रतिभासतादवस्थ्यमिति शङ्कापरिहारार्थः । तत्र पुराणानां तत्तत्कल्पे ब्रह्मप्रोक्तत्ववादः तत्तत्कल्पोत्कृष्टदेवतामहिमवर्णनपरस्य पुराणस्य तत्तत्कल्पविशेषे प्रचारणं युक्तमिति औचित्येन कल्पविशेषे देवताविशेषोत्कर्षस्य उपोद्बलनार्थः । तस्मादुपपन्नमविरोधेन पुराणादीनां प्रामाण्यम् । यत्तु पराशरसंहितारूपस्य विष्णुपुराणस्य प्राबल्यकारणमुक्तं तद्विपरीतम् । तेन हि वायुसंहितारूपस्य शिवपुराणप्रभेदस्यैव बलवत्त्वं सिद्ध्यति । तस्य 'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टय'मिति सहजसार्वज्ञ्यवैराग्यादिमता पितामहेनोपदिष्टत्वात् । तत्र 'मुनीनां षट्कुलीनानां ब्रुवतामितरेतरम् । इदं परमिदं नेति विवादस्सुमहानभूत् । परस्य दुर्निरूपत्वात् जातस्तत्र न निर्णयः ।' इत्युपक्रम्य तेषां मुनीनामन्योन्यं विवदमानानां ब्रह्मसभोपसर्पणमुक्त्वा 'भगवन्नन्धकारेण महता वयमावृताः । खिन्ना विवदमानाश्च न पश्यामोऽत्र यत्पर'मित्यारभ्य 'केनेदं चित्रकृत्येन प्रथमं सृज्यते जगत् । अन्तकाले पुनश्चेदं कस्मिन् प्रलयमेष्यती'ति सामान्येन सकलकारणस्य तस्य परदैवतस्य प्रश्नमुत्थाप्य 'एवं पृष्टस्तदा ब्रह्मे'त्यारभ्य 'उत्थाय सुचिरं ध्यात्वा रुद्र इत्युच्चरन् गिरम् । आनन्दक्लिन्नसर्वाङ्गः कृताञ्जलिरभाषत । यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् । सह भूतेन्द्रियैस्सर्वैः प्रथमं सम्प्रसूयते । कारणानां च यो धाता ध्याता परमकारणम् । न सम्प्रसूयतेऽन्यस्मात् कुतश्चन कदाचन ।' इत्यारभ्य अनेकशाखाविप्रकीर्णं बहुविधं शिवस्य वैभवं प्रपञ्चेन प्रदर्श्य 'तेनेदं चित्रकृत्येन प्रथमं सृज्यते जगत् । अन्तकाले पुनश्चेदं तस्मिन्प्रलयमेष्यती'त्यादिना शिव एव सकलकारणभूतं परदैवतमिति व्यवस्थापितत्वेन विष्णुपुराणे प्रष्टुरेकस्य प्रागेव शिष्यभूतस्य मैत्रेयस्य हृदयाभिज्ञेन गुरुणा सामान्यप्रश्नेऽपि तथैव पूर्वसिद्धभक्तिविवर्धनाय तदनुकूलं विशेषविषयमुत्तरमुक्तमित्यन्यथासिद्धिवदिह परस्परं विवदमानानां बहूनामृषीणां प्रश्ने कस्यचिद्धृदयमनुसृत्योत्तरमुक्तमित्यत्र विनिगमनाविरहेण तथान्यथासिद्धेर्वक्तुमशक्यत्वाच्च । तस्माद्युक्तं पुरा-

दितत्तच्छब्दवाच्यं सर्वात्मकं सर्वज्ञं सर्वशक्तिकं सर्वाधिकमनन्यसामान्यवैभवं ब्रह्मशब्दार्थविश्रान्तिपदं निखिलवेदान्तवाक्यसामरस्यसमन्वयतात्पर्यपर्यवसानविषयं शिवमुमासहितं परमेश्वरं प्रति बोधकत्वं युक्तमेवायदुक्तंकर्मप्रकरणामिति, तत्र लिङ्गेन प्रकरणबाधो युक्तः। अनेनैव न्यायेन यत्रयत्र चेतनेऽचेतने वा जगत्का-

---

णादीनामपि तात्पर्येण शिवे समन्वय इति । उक्तन्यायमविचारितेषु वेदान्तवाक्येष्वप्यतिदिशति–अनेनेति । अयमर्थः स्कान्दे सूतसंहितायां दर्शितः–'कानि चिद्वेदवाक्यानि ब्राह्मणा वेदवित्तमाः । रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे । पर्यवस्यन्ति विप्रेन्द्रास्तथा वाक्यानि कानिचित् । विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानिचित् । आग्नेयमूर्तिमाश्रित्य श्रुतिवाक्यानि कानिचित् । सूर्यमूर्तिं मुनिश्रेष्ठास्तथैवान्यानि कानिचित् । एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः । प्रतिपाद्यो महादेवः स्थितस्सर्वासु मूर्तिष्विति । तत्र स्थालीपुलाकन्यायेन कानिचिद्वाक्यान्युदाह्रियन्ते । ऐतरेयके विश्वामित्रं प्रकृत्य श्रूयते–'इन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः वरं ते ददामीति स होवाच त्वामेव विजानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणस्सर्वाणि भूतानि प्राणो ह्येषः स एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मी'त्यादि । अत्रेन्द्रेणोपदेश्य'त्वामेव विजानीया'मित्युपक्रमादिन्द्र इति प्राणशब्दात्प्राणवायुरिति 'य एष तपती'त्याद्युक्त्या सूर्य इति च यद्यपि प्रतीयते । तथापि 'प्राणस्त्वं प्राणस्सर्वाणि भूतानी'ति सर्वात्मत्वलिङ्गादिन्द्रप्राणसूर्याणामन्येषां च भूतानामन्तर्यामी शिवो निश्चीयते । 'प्राणस्तथानुगमा'दि (ब्र० सू० ) त्यधिकरणव्युत्पादितप्रतर्दनाख्यायिकान्यायसाम्यात् । ननु, प्रतर्दनाख्यायिकायां सामान्येन हिततमप्रश्ने 'मामेव विजानीही'त्यादेरिन्द्रस्योत्तरप्रपञ्चस्य ब्रह्मलिङ्गाद्यनुगमाद्युक्तं ब्रह्मपरत्वमिह तु'त्वामेव विजानीया'मिति सावधारणस्य इन्द्रस्वरूपजिज्ञासया प्रश्नस्योत्तरं कथमन्यविषयं स्यात् । अथर्वशिरसि रुद्रं प्रति 'को भवा'निति प्रश्नोत्तरस्य हि तदन्यविषयत्वं कल्पयितुमयुक्तमित्युक्तम् । सत्यमत्रोत्तरस्य इन्द्रविषयत्वे बाधकमस्ति । तद्विषयत्वे हि 'प्राणो वा अहमस्मी'त्येतावदेव वक्तव्यं न तु 'प्राणस्त्वं प्राणस्सर्वाणि भूतानि प्राणो ह्येष तपती'ति सर्वात्मकत्वम् । न ह्यस्य प्राणस्येन्द्रत्वे सम्बोध्यस्य ऋषेस्सर्वभूतानां सूर्यस्य च तदात्मकत्वं सम्भवति । न वा 'स एतेन रूपेण सर्वा दिशो विष्टोऽस्मी'त्युक्तमादित्यात्मना सकलदिग्व्यापकत्वमिन्द्रस्योपपद्यते । अत'स्त्वामेव विजानीया'मिति प्रश्नस्तेजोबाहुल्यादिन्द्रे परब्रह्माविर्भूतमुन्नीयते न तद्विषय एव प्रवृत्त इति कल्प्यते । अथवा इन्द्रशब्दः परमेश्वरपर एवास्तु । ऐतरेय एव 'तद्वा इदं बृहती सहस्त्वं सम्पन्नं तद्यशः स इन्द्रः सर्वभूतानामधिपतिः स य एवमेतमिन्द्रं भूतानामधिपतिं वेदे'ति भूताधिपत्यलिङ्गेन 'तस्य नाम महद्यश' इति श्रुत्यन्तरप्रसिद्धयशोनाम्ना च समर्पिते परमेश्वर एवेन्द्रशब्दस्य प्रयुक्तत्वात् । तथा ऐतरेयारण्यक एव संवत्सरं प्रकृत्य श्रूयते–'तस्यैतस्यासावादित्यो रसः स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्यः एकमेव तदिति विद्यात्तस्मात्पुरुषं प्रत्यादित्यो भवतीति तदप्येतदृषिणोक्तं चित्रं देवानामुदगादनीक'मित्यादि । अत्र संवत्सरस्य स्वामित्वेनोक्तस्सू-

रणत्वादिकं शिवतात्पर्यलिङ्गं श्रूयते वेदादिषु प्रमाणवचनेषु तत्रतत्र तदात्मा शिव एव वाच्यः। यत्रयत्र अपुरुषार्थविकाराज्ञत्वादिको धर्मस्तत्रतत्र शिवस्य परब्रह्मणः र्यः। आदित्यश्रुतेः 'तस्मात्सर्व एव मन्यते मां प्रत्युदगा'दिति श्रुत्यन्तरतो लोकाच्च प्रतिपन्नस्य तल्लिङ्गस्य वर्णनात् एकार्थे तन्मन्त्रे दर्शनाच्चेति। तथाप्यादित्यान्तर्यामी शिव एवात्र प्रतिपाद्यत इति 'स यश्चायमशरीरः प्रज्ञात्मे'त्यादिना प्रतिपाद्यस्यार्थस्य 'स यश्चायं पुरुषे यश्चासावादित्ये स एक' इति श्रुत्यन्तरेऽस्य शिवविषयत्वदर्शनात् इहापि 'शक्तिपुरुष इति यमवोचाम स एवायं दैहिक आत्मे'ति जीवं प्रकृत्य तस्य 'योऽयमशरीरः प्रज्ञात्मा स रस' इति तदन्तर्यामित्वेनोक्तेन तदन्तर्यामिणा सहैक्यप्रतिपादनाच्च। अग्रे 'चैतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगा' इति 'एतमस्यामेतं दिवि एतमन्तरिक्षे एतं वायौ एतमेवाकाशे एतमप्सु एतमोषधिवनस्पतिषु एतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूते'ष्विति प्रकृतं देवं त्रयीविद्यासकलवस्तुनिष्ठत्वेन विचार्य निर्णीयत इति प्रतिपादनाच्च। 'एतमेव ब्रह्मेत्याचक्षत'इति सावधारणं ब्रह्मपदमुख्यार्थत्ववर्णनाच्च। यद्यप्यादित्यश्रुतिरुपक्रमगता तथाप्युपक्रमगतमेकं प्रमाणमौपसंहारिकानेकप्रमाणविरोधे दुर्बलं 'भूतादिपादव्यपदेशोपपत्तेश्चे'ति ( ब्र० १-१-२६ ) सूत्रव्युत्पादितगायत्रीवाक्यन्यायसाम्यात्। ननु 'महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतानि हापयन्नन्यानी'ति प्रकृतसंवत्सरस्वामित्वं सौरचान्द्रादिसंवत्सरविभागे सूर्यस्यैव प्रसिद्धम्। सत्यं तस्य संवत्सरस्वामित्वं 'येन सूर्यस्तपति तेजसेद्ध'इति मन्त्रवर्णात् सवितृवरेण्यत्वश्रवणाच्चान्तर्याम्यधीनमिति तदन्तर्याम्येव मुख्यसंवत्सरस्वामी। तथा चतुर्वेदारण्यके—'इन्द्रो राजा जगतो य ईशे'इति श्रूयते। तस्य इन्द्रश्रुतेः। इन्द्रो राजा जगतश्चर्षणीनामिन्द्रो यातोऽवसितस्य राजे'त्यत्रैन्द्रमन्त्रान्तरेष्विन्द्रस्य जगद्राजत्ववर्णनाच्च शक्र एव प्रतिपाद्य इति यद्यपि प्रतीयते। तथापि 'अन्तःप्रविष्टश्शास्ता जनानामन्तः प्रविष्टं कर्तारमेत'मित्यन्तर्यामित्वलिङ्गात् 'अन्तरादित्ये मनसा चरन्तमन्तश्चन्द्रमसि मनसा चरन्तं अन्तस्समुद्रे मनसा चरन्त'मिति चन्द्रादित्यादिसकलदेवतानियामकसङ्कल्परूपमानसव्यापारवत्त्वलिङ्गात् 'सहैव सन्तं न विजानन्ति देवा' इति देवाविज्ञेयत्वलिङ्गात् 'इन्द्रस्यात्मानं शतधा चरन्त'मिति शक्राद्भेदव्यपदेशात् 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पति'मिति अग्निसवितृबृहस्पत्यादिशब्दप्रयोगाच्च इन्द्रान्तर्यामी परं ब्रह्म परमशिव एवात्र प्रतिपाद्योऽवसीयते। य'स्त्विन्द्रो यातोऽवसितस्य राजा। ईशानमस्य जगतस्सुवर्दृशमीशानमिन्द्रतस्थुषः, 'विश्वस्मादिन्द्र उत्तरः' इत्यादिमन्त्रेषु इन्द्रस्य सर्वाधिपत्यसर्वोत्तरत्वश्रवणं तत्सर्वमन्तर्यामिदृष्ट्यैव। अत एव कर्मकाण्डे इन्द्रसूक्तेषु पठितस्य'अभित्वा शूर नोनुम' इति मन्त्रस्याथर्वशिरसि शिवपरत्वेनाम्नानं दृश्यते। एव 'मापो वा सर्व'मित्यादिष्वपि सर्वात्मकत्वादिलिङ्गादबाद्यन्तर्यामी प्रतिपाद्यत इत्यादि द्रष्टव्यम्। नन्वन्तर्यामिपरत्वं कारणत्वादिब्रह्मलिङ्गवत्सु वाक्येष्विति सङ्कोचः किमर्थं क्रियते। अन्येष्वपि भवत्वेव सर्वेषामपि शब्दानां तत्र मुख्यत्वादित्याशङ्क्याह-यत्रयत्रेति। अयमाशयः। यत्र शरीरादिषु वैराग्यसिद्ध्यर्थं तेषां जुगुप्सितविकाराश्रयत्वं प्रतिपाद्यते यथा मैत्रायणोपनिषदि 'भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्लशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तसङ्घाते दुर्गन्धे निस्सारेऽस्मिन् शरीरे किं कामोपभो-

शरीरं चिदचिद्वस्त्वेव बोध्यमिति निपुणतरं निरूप्यमिति सर्वं समञ्जसमेव ॥

इति सर्वव्याख्यानाधिकरणम् ॥ ७ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्च प्रथमोऽध्यायः.

---

गै'रिति तादृग्वाक्यजातस्य शरीरादिदूषण एव तात्पर्यं न तु ब्रह्मणस्तदन्तर्यामित्वप्रतिपादने। यत्र जीवस्य वैराग्यार्थजननमरणपरलोकगतागतक्लेशरूपविकारः प्रतिपाद्यते। यथा गर्भोपनिषदि छान्दोग्यबृहदारण्यकादिषु तादृग्वाक्यजातस्य संसारदूषण एव तात्पर्यं न तु जननमरणादिवज्जीवान्तर्यामित्वप्रतिपादने। तत्प्रतिपादनस्य दूषणानुपयोगित्वात्। यत्र जीवान्तर्यामिब्रह्मप्रतिपादनार्थं जीवस्य ब्रह्माश्रयत्वब्रह्मशरीरत्वादिकं प्रदर्श्यते यथा 'यं पृथिवी न वेद यस्य पृथिवी शरीर'मित्यादौ तत्र पृथिव्यादिपदस्य नियम्यपृथिव्यादिदेवतासमर्पण एव तात्पर्यं न तु तदन्तर्यामिसमर्पणे। पृथिव्याद्यविज्ञेयत्वं तच्छरीरत्वादिना तदनन्तरमेवोपदेश्यत्वादन्तर्यामिणः। तस्मादेतादृशेषु वाक्येषु 'देवदत्तो विद्वान्' 'घटः श्याम' इत्यादिलौकिकवाक्येष्विव चिदचिद्वस्त्वेव बोद्धव्यम्। न हि लौकिकवाक्यवत् वैदिकवाक्येषु शक्तिभ्रमात् पदप्रयोगः पदार्थप्रतिपत्तिर्वा वक्तुं शक्यते इत्याशङ्क्य शिवस्य ब्रह्मणश्शरीरमिति चेदस्तु चिदचिद्वस्तु विशेषितम्। लोके चिदचिद्वस्तुषु प्रयुज्यमानाश्शब्दाः केवलस्यान्तर्यामिणः वाचका नेष्यन्ते। किं तु तत्तद्वस्तुरूपशरीरविशिष्टस्य। तथापि विशिष्टवादिनां शब्दानामेकदेशैकदेशिसम्बन्धेन विशेषणेषु लक्षकत्वं युक्तमिति भावः ॥

॥ इति सर्वव्याख्यानाधिकरणम् ॥ ७ ॥

इति श्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालहृदयकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकाख्यायां प्रथमस्याध्यायस्य चतुर्थः पादः।

समाप्तश्च प्रथमोऽध्यायः।

---

नयमणिमालायाम्।

अथ सर्वव्याख्यानाधिकरणम् ॥ ७ ॥

॥ सू ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

श्रीरुद्रपुरुषसूक्तस्मरणपुराणेतिहासाद्याः। प्रकरणभेदान्नानादैवतकथनाच्च न शिवपराः ॥८५॥

श्रुतिलिंगाद्यैस्तेषामपि शिवपरता भवत्येव। देवान्तरशब्दा अपि तस्मिन्सर्वात्मनि प्रवर्तन्ते ॥ ८६ ॥

इति श्रीमदप्पयदीक्षितकृतौ चतुर्मतसारसंग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे प्रथमस्याध्यायस्य चतुर्थः पादः ॥

॥ अध्यायश्च प्रथमस्समाप्तः ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ सर्वव्याख्यानाधिकरणम् ॥ ७ ॥ ८ ॥

**सू ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥**

**भगवत्पादमते,** ननु माभूत्प्रधानं जगदुपादानं तथापि न ब्रह्मोपादानत्वं सिध्यति परमाण्वादीनामपि तदुपादानानां श्रुतिषूपलभ्यमानत्वादित्याशंक्य परिहरति—**सू ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥** अस्याधिकरणस्य 'अणोरणीयान्' 'अण्व्य एवेमा धानाः' 'असदेवेदम्' इत्यादिवाक्यानि विषयः। अण्वादिवादाः श्रौता वा न वेत्यण्वादिशब्दानां परमाणुविषयत्वाविषयत्वाभ्यां संशयः। अणुशब्दस्य परमाणुषु प्रसिद्धत्वात् 'असद्वा इदम्' असदेवेदम्' इत्यादिशून्यवादात् 'अण्व्य एवेमा धानाः' इति जगतो मृदृष्टान्तात् ब्रह्मणः प्रकृतित्वे वटधानादृष्टान्तात् अण्वादीनामपि तत्प्रकृतित्वयोगाच्च अण्वादिवादाः श्रौता एव, ततो न पूर्वोक्तसमन्वयसिद्धिरिति पूर्वपक्षः । **सिद्धान्तस्तु,** 'अणोरणीया' नित्यादावण्वादिशब्दानामात्मनः सूक्ष्मतया प्रत्यक्षाद्यगोचरत्वाभिधायित्वाभ्युपगमात् 'असदेवेद' मित्यादेः समाहितत्वात् मृदादिदृष्टान्तानां प्रतिज्ञानुरोधित्वात् धानादृष्टान्तस्यापि तदनुरोधेन गौणत्वात् 'अणुः पन्था' इति ज्ञानमार्गस्तुतेश्च अण्वादीनां प्रधानवदशब्दत्वादुक्तानि वाक्यानि ब्रह्मपराण्येव । ततस्सिद्धस्समन्वयो ब्रह्मणि सर्वेषां वेदान्तानामिति। **सूत्रार्थस्तु, एतेन**=प्रधानकारणवादन्यायकलापेन **सर्वे**=अण्वादिकारणवादा अपि । **व्याख्याताः**=प्रतिषिद्धतया व्याख्याता वेदितव्याः। तेषामपि प्रधानवदशब्दत्वाद्वेदविरुद्धत्वाच्चेत्यर्थः। पदद्विरुक्तिरध्यायसमाप्तिं द्योतयति । **अस्मिन्पादेऽष्टावधिकरणानि । सूत्राण्यष्टाविंशतिः ॥** इदमतरीत्यास्मिन्नध्याये **एकोनचत्वारिंशदधिकरणानि ॥ ३९ ॥ सूत्राणि तु चतुस्त्रिंशदधिकं शतम् ॥ १३४ ॥**

**श्रीकण्ठमते, ॥ सू ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥** अस्य कर्मप्रकरणपठितानि पुरुषसूक्तशतरुद्रीयादीनि स्मृतिपुराणादीनि च विषयः। एषां तात्पर्यलिंगसमन्वयेन ब्रह्मबोधकत्वमस्ति वा न वेति प्रकरणभेदादिना संशयः। कर्मप्रकरणपठितानामेषामनुष्ठातृजीवपरत्वमेव युक्तं न ब्रह्मबोधकत्वमिति पूर्वपक्षः। तेषु परमेश्वरलिंगानां सकलकारणत्वादीनां दर्शनात् लिंगेन प्रकरणबाधस्य युक्तत्वाच्च तेषां तात्पर्येण ब्रह्मबोधकत्वं सिद्धमिति सिद्धान्तः। **एतेन**='जन्माद्यस्य यत' इत्यादिना एतदन्तेन वेदान्तवाक्यव्याख्यानेन। **सर्वे**=कर्मकाण्डमध्यपातिनः पुरुषसूक्तशतरुद्रीयप्रभृतयः स्मृतीतिहासपुराणाभियुक्तसूक्तिविशेषाश्च **व्याख्याताः** वेदितव्या इति सूत्रार्थः। द्विरुक्तिरध्यायसमाप्तिद्योतिनी ॥ अस्मिन्पादे **सप्ताधिकरणानि ॥ ७ ॥ सूत्राण्येकोनत्रिंशत् ॥ २९ ॥** आहत्यास्मिन्नध्याये **एकोनचत्वारिंशदधिकरणानि ॥ ३९ ॥ सूत्राण्यष्टत्रिंशदधिकं शतम् ॥ १३८ ॥**

**रामानुजमते,** अस्य अनुदाहृतानि अन्यानि जगत्कारणवाक्यानि विषयः। किमेते वाक्यविशेषा उक्तलक्षणचिदचिद्विलक्षणब्रह्मपराः उतान्यपराः इति संशयः। अविचारितार्थत्वादेव तेषामुक्तलक्षणब्रह्मबोधकत्वं न युज्यत इति पूर्वपक्षः। अनेन पादचतुष्टयोक्तन्यायकलापेन जगत्कारणप्रतिपादनपरास्सर्वे वाक्यविशेषाः चेतनाचेतनविलक्षणसर्वज्ञसर्वशक्तिब्रह्मपरा एव नान्यपरा इति सिद्धान्तः ॥ अस्मिन्पादेऽष्टावधिकरणानि **॥ ८ ॥ सूत्राण्येकोनत्रिंशत् ॥ २९ ॥** आहत्यास्मिन्प्रथमाध्याये **पञ्चत्रिंशदधिकरणानि ॥ ३५ ॥ अष्टत्रिंशदधिकं शतं सूत्राणि ॥ १३८ ॥**

**[illegible]नन्दतीर्थमते, सू ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥ एतेन**=पूर्वोक्तहेतुनैव। **सर्वे**=शून्या- [illegible]**ख्याताः**=मुख्यतो भगवद्वाचिन एवेत्यर्थः । एतदध्यायादिमारभ्यान्तमुक्तस्यार्थस्यावधारणार्थमध्यायान्ते द्वि[illegible]। अस्य 'असद्वा इदमग्र आसी' दित्यादिषु श्रूयमाणा असच्छून्यादिशब्दा विषयः। सर्वदेशकालसंबन्धिनिषेधप्रति[illegible]गत्वरूपस्यासत्त्वस्य विष्णुगतत्वे तस्य निःस्वरूपतापातात् निःस्वरूपस्य नियमनाभावेन तस्य तथास्वातन्त्र्याभावाच्च असच्छून्यादिशब्दवाच्यो न विष्णुः। इति पूर्वपक्षः। शं स्वसुखादन्यसुखम् ऊनयति अल्पं करोतीत्यादिव्युत्पत्त्या शून्यादिशब्दवाच्यत्वस्य [illegible]र्वस्यापि तादधीन्येन तत्तच्छब्दवाच्यत्वस्य च भगवति विष्णावुपपत्तेश्च युक्तं भगवत्येव सर्ववैदिकशब्दसमन्वय इति सिद्धान्तः ॥ अस्मिन्पादे **सप्ताधिकरणानि ॥ ७ ॥ सूत्राण्येकोनत्रिंशत् ॥ २९ ॥** आहत्यास्मिन्नध्याये **एकोनचत्वारिंशदधिकरणानि ॥ ३९ ॥ सूत्राणि तु पंचत्रिंशदधिकं शतम् ॥ १३५ ॥**

**यं प्रासूत विशुद्धशीलमनघं वृद्धांबिकाख्या सती**
**यं मृत्युञ्जयशर्मणो बुधमणेर्भाग्यं विदुस्साधवः।**
**वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-**
**स्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥**

सूत्रार्थचन्द्रिकायामाद्येऽध्याये समन्वयाभिख्ये । संदिग्धपदसमन्वयबोधकपादस्समीरितोऽद्वैते ॥
अस्पष्टलिंगवाक्यः प्रोक्तः श्रीकण्ठयोगिनो दृष्ट्या । स्पष्टतरजीवलिंगक इति गदितो लक्ष्मणार्यमतरीत्या ॥
मध्वमतेऽन्यत्रैव प्रसिद्धनामलिंगपाद इति । कथितस्तुरीयपादः संपूर्णोऽभूत्तथादिमोऽध्यायः ॥
भारद्वाजकुलाब्धिकौस्तुभमणेरप्पय्ययज्वेशितुः वंश्यो विश्रुतकीर्तिराश्रितजनत्राताप्पुशास्त्री चिरम् ।
जीयाद्यस्य शिवावतारमखिराडप्पय्यवाङ्माधुरीसारास्वादनलंपटस्य परमोद्योगोऽत्र संप्रेरकः ॥

प्रकाशदोषबहुले मदीये वाङ्निगुंभने । घुणाक्षरनयप्राप्तान्गुणानदत्त नेतरान् ॥

नाहं त्रय्यन्तविद्यास्वितिषु चतसृषु प्राज्यपाण्डित्यशाली किंत्वाचार्यानुकंपासमधिगतशुभाद्वैतभाष्यार्थतत्वः ।
प्राचीनैर्भाष्यकृद्भिः पृथगिह कलिता ब्रह्मसूत्रार्थपद्याः एकत्रालिख्य भेदानवगमयितुमेवालिखं ग्रन्थमेतम् ॥

गुणैकलोलुपास्सन्तः कृतिमेनां विलोक्य मे । तुष्येयुरनुगृह्णीयुश्चेति सांजलिरर्थये ॥

---

इति ।

श्रीमद्वाधूलवंशमुक्ताफलपण्डितप्रकाण्डगङ्गाधरसुधीमणेः पौत्रेण संततसमाचरितगायत्रीसमुपास्तिसंधुक्षितब्रह्मवर्चससंसिद्धनिग्रहानुग्रहशक्तिकान्तर्मुखमृत्युञ्जयसंयमीन्द्रगार्हस्थ्यतपःस्तोमपरिपाकायितमूर्तिना **वृद्धांबिकागर्भशुक्तिमुक्ताफलेन** अग्निष्टोमसमाराधिताष्टमूर्तिश्रीमद्गङ्गाधरमखिवर्यचरमसोदरेण **पंचनदस्थला**भिजनसान्निचित्यसर्वतोमुखमहाव्रतविश्वजियाजि**श्रीबालकृष्णमखिराज**करुणापाङ्गसमासादितब्रह्मविद्यापरिचयेन **हालास्यनाथसूरिणा** विरचितायां **ब्रह्ममीमांसासूत्रार्थचन्द्रिकायां** चतुर्मतभाष्यार्थबोधिन्यां **प्रथमाध्यायस्य तुरीयः पादः ।**

॥ अध्यायश्च समाप्तः ॥



शिवाभ्यां नमः ॥

श्रीचिन्नबोम्मनरपालहृदब्जवासिसांबत्रिलोचननिदेशवशंवदस्य ।
अप्पय्यदीक्षितमणेर्वदनारविन्दमाध्व्या शिवार्कमणिदीपिकया समेते ॥
श्रीकण्ठयोगिरचिते तरुणेन्दुचूडनिर्दोषभव्यगुणसंहतिबोधदक्षे ।
भाष्ये पराशरतपःफलतापसेन्द्रश्रीबादरायणगभीरगिरां चिरत्ने ॥
युक्तेऽधिकृत्यवसितौ नयरत्नमालाभिख्याप्पयाध्वरिकृतिप्रवरान्तरेण ।
हालास्यनाथसुधिया कृतया च सूत्रवृत्त्या समं कृतधियामभिनन्दयित्र्या ॥
प्राचीनसन्मतचतुष्टयतारतम्यजिज्ञासुमोदनकृतेऽनतिदैर्घ्यभाजा ।
जीर्णप्रबन्धपुनरुद्धृत्तिरूपधर्मसाह्यैकतानमनसां सुहृदां निदेशम् ।
आलंब्य भूरियतनार्जितलुप्यमानद्वित्रातिदुर्लभखिलीकृतमातृकातः ।
तेनैव मुद्रणपरिष्कृतिमाप्यमाने अध्याय एष परिपूर्तिमगादिहाद्यः ॥

शुभं भूयादध्येतुरध्यापकस्य च ॥

Part VII & VIII
(7, 8).

॥ ॐ ॥

॥ शिवाभ्यां नमः ॥



॥ भारतीमन्दिरसंस्कृतग्रन्थावलिः ॥

THE

# BHARATEE MANDIRAM SANSKRIT SERIES

No. 1.

ग्रन्थाङ्कः १

THE

# BRAHMA SUTRA BHASHYA

OF

SRIKANTHACHARYA

WITH

SIVARKAMANI DIPIKA

BY

THE FAMOUS APPAYA DIKSHITA.

EDITED BY

R. HALASYANATHA SASTRI.

श्रीमच्छ्रीकण्ठाचार्यकृतं

# ब्रह्मसूत्रभाष्यम् ॥

श्रीमदप्पयदीक्षितकृतशिवार्कमणिदीपिकाख्यव्याख्यासहितम् ।

...र्थसंग्राहकपद्यरूपया नयमणिमालया सनाथीकृतं च

...व् हैस्कूल्नामक ) स्वदेशीयहूणवाणीमहापाठशाला-

...मधितिष्ठता भारतीमन्दिराख्यलुप्यमान-

...मुम्बानगरस्यप्रतिष्ठापकेन कुम्भघोणवासिना

...थशास्त्रिणा संशोधितम् ।

...सूत्रार्थचन्द्रिकया संयोजितं च

तेनैव

...सत्प्रभूणां साहाय्येन

श्रुतिर्णयसागरमुद्रणालये सम्मुद्र्य

...१९११.



...ष्टम्यौ संचिके ।

# TO THE SUBSCRIBERS.

GENTLEMEN,

The year 1908 saw the completion of the publication of the 1st Addhyaya in 6 parts pages ) of Sivarkamanidipika. When the 2nd Addhyaya was taken in hand I was confronte unforeseen difficulties of a nature which threatened to be unconquerable. The available M the 2nd, 3rd & 4th Addhyayams, disclosed on a close scrutiny many missing parts, the re deliberate omissions as well as ravages of moths. This temporarily paralysed me—in all con That was a time when I was going through a serious crisis in my domestic affairs. God g strength in my troubles.

On the suggestion of my friends, I resolved on a course of extensive tour through the p of Mysore in search of fresh MSS. My long and arduous tour was crowned with success— mighty helping me through the agency of two gentlemen to whom the thanks of the public as my eternal gratitude are due. Among the many useful collections of rare books in the Oriental library, I came upon a complete and reliable MS. in Telugu Characters of Addhyay & 4 which had been prepared from an old Cadjan MS. discovered in Kadur district. I was a to get access to another independent MS. preserved in the archives of the Mutt of His Parakala Swami, the spiritual Guru of His Highness. It was complete after the Sutra "अ in part. 5 of the 1st Addhyaya. Its importance and trustworthiness is evident from that it had been prepared by a famous pandit who flourished long ago. These two MS kindly placed at my disposal—The former by Mr. Mahadeva Sastri, of the Oriental Library o and the latter by His Holiness—and I once again thank these two reverend gentlemen. W help of these MSS. I was subsequently able to bring out the 2nd Addhyaya. I need not en on the amount of labour which the comparison of the various MSS. entailed upon my poor A comparison of even a single page of the print with the corresponding portion of th MSS. will make it evident. A descendant of the famous Appaya Dikshit, a gentleman habits and unobtrusive generosity, has placed his purse unreservedly within my r with that help 2nd Addhyaya has been published and the 3rd and 4th Addhyayams, ha prepared for the press, which are hoped, with the Grace of God, to be published in the the next three months. The 3rd and 4th Addhyayams are estimated to cover 300 pages. the other personages who have also generously helped me in the publication of the 2nd Ad would acknowledge with gratitude the assistance given by the following gentlemen and nati

HIS HOLINESS THE SWAMIGAL OF
SIVAGANGA MUTT.
H. H. THE MAHARAJAH OF
PATIALA.
The RAJAH OF DHAR STATE,
CENTRAL PROVINCES.
H. H. The THAKORE SAHIB,
LIMBDI.
H. H. The RAJAH OF BHUJ, KUTCH.
M. R. Ry. V. P. MADHAVA RAW AVL.,
C. I. E., Retired Dewan of MYSORE.
" PUTTANA CHETTYAR AVL
1st Counseller MYSORE.

M. R. Ry. B. KUMARASWAMI NAI
Depty Commissioner, BA
" SRIV
"
"
T
TE

The space left blank in page 461 of 1st Addhyay pages at the end of the publication.

I beg to close with a reverent appeal to the Pov the remaining portion to a successful close.—

R. HAL
Fou
SANSKRIT PUNDIT,

॥ ॐ ॥

॥ शिवाभ्यां नमः ॥

# श्रीमच्छ्रीकण्ठाचार्यकृतं

# ब्रह्मसूत्रभाष्यम् ॥





## द्वितीयतृतीयतुरीयाध्यायात्मकम् द्वितीयसंपुटम् ।

### श्रीमदप्पयदीक्षितकृतशिवार्कमणिदीपिकाख्यव्याख्यासहितम् ।

...वि प्रणीतया तत्तदधिकरणार्थसंग्राहकपद्यरूपया **नयमणिमालया** सनाथीकृतं च






मुम्बानगरस्थनिर्णयसागरमुद्रणालये सम्मुद्रितम् ।

शिवाभ्या नमः।

# श्रीकण्ठीयब्रह्ममीमांसाभाष्यविषयसूचिनी।

## अविरोधाख्ये द्वितीयाध्याये,

## प्रथमपादे साङ्ख्यादितर्कविरोधाशङ्कया स्वपक्षसाधनम्।



## द्वितीयपादे साङ्ख्यादिमतानां दुष्टत्वप्रदर्शनम्।



## तृतीयपादे श्रुतिवाक्यानां परस्परविरोधपरिहारः।

**चतुर्थपादे भौतिकोत्पत्तिश्रुतिविरोधपरिहारः।**



**साधनाख्ये तृतीयेऽध्याये,**

**प्रथमपादे उपासकस्य नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणम्।**



**द्वितीयपादे जीवावस्थानिरूपणपूर्वकं ईश्वरस्य स्वरूपलक्षणोक्तिः।**

## तृतीये पादे उपासनाविशेषाणां गुणोपसंहारः

## चतुर्थे पादे विद्यासहकार्याश्रमधर्मादिनिरूपणम् ।

## चतुर्थे पादे मुक्तिस्वरूपनिरूपणम् ।





शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये



## अथ द्वितीयस्याध्यायस्य

## प्रथमः पादः ।

### अथ स्मृत्यधिकरणम् ॥ १ ॥

॥सू०॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥१॥

अतीतेऽध्याये सच्चिदानन्दस्वरूपे सर्वज्ञत्वसर्वशक्तित्वादिस्वरूपलक्षणे सकलजगज्जन्माद्युपलक्षणे सर्वविलक्षणे सर्वात्मनि विरूपाक्षत्वकृष्णपिंगलत्वनीलकण्ठत्वादिविशिष्टलीलामंगलस्वरूपस्वभावे भवशिवशर्वमहादेवपरमेश्वरशब्दादिमुख्यवाचके परमकारुणिके परब्रह्मणि शिवे निखिलवेदांतवाक्यानां तदनुगुणानां स्मृत्यादीनां च तात्पर्येण समन्वयोऽभिहितः । इदानीमनेनाध्यायेन तस्य समन्वयस्य वेदांतविरुद्धस्मृतितर्कादिभिर्विरोधः परिह्रियते । प्रथमं सांख्यस्मृतिविरोधः परिह्रियते । अस्मिन् सर्वत्र पूर्वोक्तः समन्वयो विषयः । इह वैदिकसमन्व-

---

## अथ शिवार्कमणिदीपिकायां द्वितीयस्याध्यायस्य प्रथमः पादः ॥

### अथ स्मृत्यधिकरणम् ॥ १ ॥

वृत्तवर्तिष्यमाणयोरध्याययोः प्रतिपाद्यं संगतिसूचनार्थमुपन्यस्य उत्तराध्यायमवतारयति अतीतेऽध्याय इति । भगवता सूत्रकारेण 'अथातो ब्रह्मजिज्ञासे'ति ( ब्र०१.१.१.सू ) ब्रह्मविचारं प्रतिज्ञाय जगज्जन्मादिकं सच्चिदानन्दरूपत्वविग्रहविशेषविशिष्टत्वादिकं च ब्रह्मणो लक्षणं प्रदर्श्य प्रदर्शितलक्षणविशिष्टे तस्मिन्वेदांततदुपबृंहणस्मृत्यादीनां प्रामाण्यं प्रतिज्ञाय प्रतिज्ञातार्थोपपादनाय तेषां ब्रह्मण्येव तात्पर्येण समन्वयः प्रथमाध्यायेनाभिहितः न तु शिवे इत्याशङ्क्य 'परब्रह्मणि शिव' इति विशेषितम् । तस्य परब्रह्मत्वोपपादनाय ब्रह्मस्वरूपतटस्थलक्षणानां तत्रैव पर्यवसानं 'लीलामङ्गलस्वरूपस्वभाव' इत्यन्तैर्दर्शितम् । सर्वविधतदुपपादकोपलक्षणतया 'शिवभवे' त्यादि विशेषणं कृतम् । शिवस्य स्वोपासनानुगुणनिखिलफलप्रदानोन्मुखस्वभावत्वेन उपासनासिद्ध्यर्थमुपासकसौलभ्यं 'परमकारुणिक' इति विशेषणेन सूचितम् । तस्य समन्वयस्येति । तथा च समन्वये निरूपिते तस्य स्मृतितर्कादिभिः विरोधेनाक्षेपस्तत्समाधानं चावकाशं लभत इति समन्वयाध्यायानन्तर्यमस्याध्यायस्येति संगतिरिति भावः । 'स्मृतितर्कादिभि' रित्यादिशब्देन भूतभौतिकसृष्ट्यादिविषयस्मृतीनां परस्परविरोधः परिगृह्यते । समन्वयस्य संभावितसकलविरोधपरिहारोऽध्यायार्थ इत्यध्यायार्थैक्यमिति भावः । पादार्थभेदस्त्वग्रे प्रदर्शयिष्यते । प्रथमाधिकरणार्थमाह—प्रथममिति । अस्मिन्सर्वत्रेति । अस्मिन्नध्याये सर्वेष्वप्यधिकरणेषु प्रथमाध्यायव्यवस्थापितस्समन्वयो विषय इत्यर्थः । इहेति । इहाधिकरणे ब्रह्मविषयस्य वेदान्तसमन्वयस्य प्रधानविषयया कपिल-

यस्य सांख्यस्मृत्या संकोचोऽस्ति न वेति संदेहः। कथम्। ब्रह्मणो जगत्कारणत्वं वेदोऽभिधत्ते। कपिलस्मृतिः प्रधानस्य। कपिलो हि महातपस्वी। ततस्तद्वचनमपि प्रमाणमेव। वेदोऽपि भगवानखिलप्रमाणसार्वभौमः। स चाप्रामाण्यगंधमपि न सहते। तदनयोः कस्य केन बाध इति संशयप्राप्तिः। तत्र सांख्यस्मृतेरनवका-

---

स्मृत्या बाध्यत्वमन्यपरत्वेन नेयत्वलक्षणमस्ति न वेति संशय इत्यर्थः। ननु, नायं संशयः वेदान्तेष्वपि 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'अक्षरात्परतः परः' इत्यादौ प्रधानप्रसिद्धिसत्त्वेन सेश्वरसांख्यमते ब्रह्मप्रसिद्धिसत्त्वेन च विरोधाभावात् तत्सत्त्वेऽपि श्रुतिस्मृत्योर्विरोधे श्रुत्या स्मृतिर्बाध्येत्यौदुंबरीस्पर्शसर्ववेष्टनस्मृत्यादिषु सम्प्रतिपन्नत्वाच्चेत्याक्षिपति —कथमिति। प्रथमस्याक्षेपस्योत्तरं ब्रह्मण इति। कपिलस्मृतिर्वेदान्तवत् ब्रह्मणो जगत्कारणत्वं न प्रतिपादयति। वेदान्ताः कपिलस्मृतिवत् प्रधानस्य स्वतन्त्रकारणत्वं न प्रतिपादयन्ति इति अस्ति तावद्विरोध इति भावः। द्वितीयस्योत्तरमाह—कपिल इति। 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्ये' दिति कपिलस्य हिरण्यगर्भस्येव जायमानावस्था-प्रसृतपरमेश्वरकटाक्षलब्धाप्रतिघज्ञानातिशयत्वं प्रसिद्धम्। तथा तपोबलवशीकृतपरमेश्वर-प्रसादलब्धसार्वज्ञ्यस्य कपिलस्य वचनमप्रमाणमिति वक्तुमयुक्तमिति सर्ववेष्टनस्मृत्याद्यपेक्ष-यास्ति विशेष इति भावः। 'तत्र सांख्यस्मृते' रित्यादिपूर्वपक्षभाष्यस्यायमाशयः। श्रुति-स्मृत्योर्न श्रुतिस्मृतित्वकृतं नियतं प्राबल्यदौर्बल्यं किं तु बलाबलवैपरीत्यकारणान्तराभाव-सापेक्षमौत्सर्गिकम्। अत एव 'वेदं कृत्वा वेदिं' रिति पदार्थधर्मभूतक्रमविषयश्रुतितः 'क्षुत आचामे' दिति स्मृतेर्धर्मिभूतपदार्थविषयत्वं प्राबल्यकारणमस्तीति बलाबलवैपरीत्य-माश्रितम्। यथोक्तं वार्तिककारैः—'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा। तदापि विपरीतत्वं शिष्टाकोपे यथोदितम्। अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः। दुर्बलैरेव बाध्यन्ते पुरुषैः पार्थिवाश्रितै' रिति। इहाप्यस्त्यग्निहोत्रादिधर्मविषयत्वेन सावकाशायाः श्रुतितो निरवकाशत्वं कपिलस्मृतेः प्राबल्यकारणम्। क्लृप्तं च सावकाशात् 'यत्किंचित्प्रा-चीनमग्नीषोमीयात्तेनोपांशु चरंती'त्युपांशुस्वरविधाना'न्मन्द्रं प्रायणीयायामनुब्रूयात् मन्द्र-तरमातिथ्याया'मिति प्रायणीयादिगतस्वरान्तरविधानस्य निरवकाशत्वेन प्राबल्यम्। तस्माद्यद्यपि श्रुतिस्मृत्योर्बलाबलमौत्सर्गिकम्। किं बहुना। स्मार्तश्रुत्यपेक्षयापि वैदिकं लिंगमात्रं बलवदित्युत्सर्गः। अत एव वार्तिके यत्र पुनः श्रुतिरानुमानुकी लिंगं प्रत्यक्षं तत्र कथं यथाश्रुति वैदिकलिंगविरोध इति प्रश्नमुद्भाव्य तत्र स्मृतेर्मूलान्तरमपि संभाव्यते न तु वैदिकलिंगस्येति तदेव बलवदित्यनुसर्तव्यमित्युक्तम्। तथाप्यत्र निरवकाशत्वरूप-स्यापवादस्य सद्भावात् नात्रोत्सर्गः प्रवर्तते। सिद्धांतिनोऽपि हि 'अस्य लोकस्य का गति-रिति आकाश इति होवाचे' त्यादिषु वाक्येषु श्रुतिलिंगादिपारदौर्बल्योत्सर्गो न प्रवर्तते। आकाशादिश्रुतितोऽनन्तत्वादिलिंगप्राबल्यहेतोरपवादस्य सद्भावादित्यभ्युपगन्तव्यम्। अपि च। सावकाशनिरवकाशत्वेनेव अव्यवस्थितार्थत्वव्यवस्थितार्थत्वमपि बलाबलवैप-रीत्यकारणम्। अत एव 'यदृचास्तुवत तदसुरा अन्ववायन् यत्साम्नास्तुवत तदसुरा नान्ववायन् य एवं विद्वान् साम्ना स्तुवीते'त्यृक्सामस्तुतिविधिरूपयोरुपक्रमोपसंहारयोरश्व-

**शत्वेन प्रबलत्वात् वेदस्य धर्मेण सावकाशतया दुर्बलत्वादनवकाशया स्मृत्या वेदस्य संकोचो युक्त इति चेद्वदति पूर्वपक्षी वयमपि नेति वदामः । कथम् ?**

---

प्रतिग्रहेष्टिगतयोरिव प्राप्तस्य प्राबल्यदौर्बल्योत्सर्गस्य 'यद्वचास्तुवते' त्यादीनामसुरागमहेतुतया निन्द्यता उत वशीकर्तुमशक्यानामसुराणामऽपि वशीकरणहेतुतया स्तुत्यता इति संदेहावकाशसद्भावेन उपक्रमस्याव्यवस्थितार्थत्वं सामविधिपरत्वेनोपसंहारस्य व्यवस्थितार्थत्वं चापवादक्रमस्तीत्युपसंहारानुसारेण उपक्रमस्य निंदापरत्वमाश्रितम् । अस्त्यत्र तदपि बलाबलवैपरीत्यकारणम् । अतिगंभीरा हि वेदांताः स्वल्पमतीनामशक्यार्थनिश्चयाः। 'कश्छंदसां योगमावेद धीर' इति श्रुत्यैव च वेदानामशक्यार्थनिश्चयत्वमुक्तम् । विशिष्य च वेदांतवेद्यस्य जगत्कारणस्याशक्यनिर्णयत्वं 'को अद्धा वेद क इह प्रवोचदियं विसृष्टिर्यत आवभूवेति' प्रतिपादितम् । वादिनां च वेदांतार्थे भूयसी विप्रतिपत्तिर्दृश्यते । एवमव्यवस्थितार्था वेदान्ताः । कपिलस्मृतिस्तु प्रधानकारणत्वैकविषया व्यवस्थितार्था । तस्माद्व्यवस्थितार्थया कपिलस्मृत्या उपबृंहणीया वेदान्ता अपि तदेकविषया इत्येव युक्तम् । न च, ब्रह्मैककारणत्ववादिन्यो मनुस्मृत्यादयोऽपि व्यवस्थितार्थाः । 'यद्वै किंच मनुरवदत्तद्भेषज' मितिं मनोरप्याप्ततमत्वं श्रुतिप्रसिद्धम् । अतो मनुस्मृत्यादिभिरुपबृंहणं भवेदिति वाच्यम् । धर्मप्रतिपादनपराणां स्मृतीनां कर्मकांडोपबृंहणेन सावकाशत्वात् । अत एव मनोराप्ततमत्वं कर्मकांडादावेव वर्ण्यते न तु कपिलस्येव वेदांतभागे । तस्मादनवकाशकपिलस्मृत्यनुसारेण वेदांतानामर्थनयनं युक्तम् । सैन्यस्य प्रतिपक्षजेतृत्वं राज्ञीव प्रधानस्य जगद्रचयितृत्वं पुरुषे समारोप्य वेदांतेषु ब्रह्मकारणवादाः प्रवृत्ताः इति प्राप्ते सिद्धान्तमाह—वयमपीति । अयमाशयः । मन्वादयस्तावत् ब्रह्मण एव जगत्कारणतां स्मरन्ति । ते च बहवः । न तु कपिलतदाशयासुरिपंचशिखादिवत् कतिपये स्वस्वप्रतीयमानवेदान्तार्थानुवर्त्तिनः शाक्यादिवत् तद्विरुद्धार्थवादिनः । तत्र च मनो 'र्यद्वै किंच मनुरवदत्तद्भेषज' मिति श्रुतौ 'यत्किंचे' ति वीप्सासमानार्थेन शब्देन 'भेषज' मित्युक्त्या च स्वोक्ते सर्वस्मिन्नर्थे भ्रांतिविप्रलंभराहित्यं दर्शितम् । कपिले तु ज्ञानमात्रमुक्तम् । तत् कतिपयविषयज्ञानवत्त्वेनापि चरितार्थम् । न सर्वथा भ्रांतिप्रतिक्षेपकम् । न वा सांख्यवक्तैव कपिलः श्वेताश्वतरमन्त्रेणानूदित इत्यत्र प्रमाणमस्ति । 'यद्वै किंच मनुरवद' दित्यत्र स्मृतिवक्तैवानूदित इत्यत्र प्रमाणं वक्तृत्वेनानुवादः । न हि मानवधर्मशास्त्रव्यतिरेकेण मनुवक्तृकः कश्चित् ग्रन्थः प्रसिद्धोऽस्ति । मन्वनुवर्तिनश्च सर्वेऽपि स्मर्तारः । अत एव स्मृतिषु संगृहीतस्य सर्वस्याऽपि धर्मजातस्य 'मानवो धर्म' इति पुराणेषु प्रसिद्धिर्दृश्यते। 'मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यते।' इति च स्मर्यते । याज्ञवल्क्यादीनामपि वेदांतनिष्णातत्वं बृहदारण्यकादिषु प्रसिद्धम् । तस्मादाप्ततमबहुप्रणीताभिरुपबृंहणीयानुगुणाभिर्मन्वादिस्मृतिभिरेव वेदांतानामुपबृंहणं युक्तं न त्वतथाभूतया कपिलस्मृत्या । नन्वनवकाशा कपिलस्मृतिः किं 'मप एव ससर्जादा' वित्यादयो मन्वादयस्सावकाशाः । कर्मविधिभिस्सावकाशा इति चेन्न । कर्मणां ब्रह्माराधनरूपत्वेन तद्विधीनामपि ब्रह्मप्रधानत्वात् । कूर्मपुराणे व्यासगीतासु स्मृत्युक्तसकलाचारनिरूपणानंतर 'मित्येष मानवो धर्मो युष्माकं कथितो मया । महेश्वराराधनाय यज्ञयोगश्च शाश्वतः ।'

अन्यासां वेदाविरोधिनीनां मन्वादिस्मृत्यादीनामनवकाशदोषप्रसङ्गात्। 'अप एव ससर्जादौ तासु वीर्यमवासृजत्' इत्यादिना 'हिरण्यगर्भं पश्यत जायमानम्' इत्यादिप्रत्यक्षश्रुतिसिद्धब्रह्मकारणत्ववादिनीभिर्मन्वादिस्मृतिभिस्तद्विरुद्धाभिधायिन्या अनुमेयश्रुतिमूलायाः साङ्ख्यस्मृतेरेव बाधः प्रामाणिकजनपरिग्राह्य इति ॥

## ॥ सू ॥ इतरेषां चानुपलब्धेः ॥ २ ॥

इतरेषां च मन्वादीनां सर्वज्ञानां स्मृतिषु कपिलदृष्टस्य प्रधानकारणत्वादेरनुपलब्धेः प्रधानस्मृतिरनागममूलैवेति वक्तुं युक्तम् । अतः साङ्ख्यस्मृत्या समन्वयस्य न संकोचः ॥ इति स्मृत्यधिकरणम् ॥ १ ॥

---

इत्यन्त उपसंहारात्। न तु कर्मणां ब्रह्मानाराधनत्वेऽपि वेदान्तानामुपबृंहणं कर्तुमयुक्तम्। एतेन वेदान्तानां सावकाशत्वाव्यवस्थितार्थत्वशंकापि निरस्ता। कर्मविधिसमभिव्याहाराभावेन तत्स्तावकतया सावकाशत्वासिद्धेः उपासनाविधिसमभिव्याहारसत्त्वेऽपि तत्समभिव्याहाररहितस्मृत्यादिगतस्वतन्त्रब्रह्मकारणवादोपबृंहणीयानां तेषामुपासनाविधिविषयस्तावकतयाऽपि सावकाशत्वासिद्धेः निरपेक्षतया विभ्रमविप्रलंभमूलत्वेनापि सावकाशत्वासिद्धेः अनादिमीमांसासिद्धैर्न्यायैरासतमबहुमुनिप्रणीतानुगुणस्मृतीतिहासपुराणरूपैरुपबृंहणैश्चार्थाव्यवस्थित्यसिद्धेश्च । तस्मात्सांख्यस्मृत्यनुसारेण न वेदान्तानामन्यथानयनं कार्यं प्रत्युत स्मृत्यादितदुपबृंहणीयवेदान्तानुसारेण सांख्यस्मृतितदनुसारिणोरेव बाधः स्वीकार्य इति । 'अप एव ससर्जादा' वित्यादीनि मनुस्मृतिवचनानि 'संज्ञामूर्तिक्लृप्त्यधिकरणे ( २–४–१७ ) व्याकरिष्यन्ते । ननु, योगप्रभावसाक्षात्कृतसकलवेदार्थतत्वदर्शी कपिल एव न तु कर्मानुष्ठानव्यग्रा मन्वादयः । अतः कपिलस्मृत्यैव वेदान्तानामुपबृंहणं युक्तमित्याशंकानिराकरणार्थं सूत्रम्—सू० ॥ इतरेषां चानुपलब्धेः ॥ २ ॥ यदि प्रधानकारणवादो वेदान्तार्थोऽभविष्यत् तदा वेदार्थतत्वनिर्णयप्रकरणेषु मन्वादीनां स्मृतिष्वपि निबन्ध उपालप्स्यत । न चोपलभ्यते । कर्मानुष्ठानव्यग्राणां मन्वादीनां योगानुष्ठानं न सार्वज्ञ्यसंपादकमिति चेन्न। कपिलस्य योगांगकर्मानुष्ठानाभावात्तदीययोगस्यैव वैकल्यप्रसंगेन तस्याऽपि कर्मानुष्ठानपरत्वस्यावश्यवक्तव्यत्वादित्यभिप्रेत्य सूत्रं व्याचष्टे—इतरेषामिति । अधिकरणार्थमुपसंहरति—अत इति ॥ इति स्मृत्यधिकरणम् ॥ १ ॥

### नयमणिमालायाम्

# अथ द्वितीयस्याध्यायस्य प्रथमः पादः ॥

## अथ स्मृत्यधिकरणम् ॥

सू० ॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् । इतरेषा चानुपलब्धेः॥२॥

उक्तस्समन्वयोऽयं कपिलस्मृतिवैशसादुपेक्षार्हः । धर्मेण सावकाशाद्वेदात्प्रबला हि सा निरवकाशा ॥ ८७ ॥
सन्ति स्मृतयोऽन्याः खलु शिवकारणतैकतात्पर्याः । वेदानुरोधिनीभिर्बह्वीभिस्ताभिरेव सा बाध्या ॥ ८८ ॥

इति स्मृत्यधिकरणम् ॥ २ ॥

## अथ सूत्रार्थचन्द्रिकायां द्वितीयोऽध्यायः ।

### अथ स्मृत्यधिकरणम् ॥ १ ॥

**सर्वेशे यत्र सर्वात्मनि परमशिवे सर्वशक्ते सहांवे**
**सर्वासां वेदवाचामनुगुणबहलस्मृत्युपष्टंभभाजाम् ।**
**ऐदंपर्येण निष्ठा लसति सुघटिता तद्विरोधापनुत्त्या**
**निर्बाधा शाणलीढा मणिरिव स विभुश्शोधयेन्मे मनीषाम् ॥**

**सू ॥ स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥१॥ इतरेषां चानुपलब्धेः ॥२॥**

**भगवत्पादमते,** प्रथमाध्यायेऽभिहितस्य जगत्कारणे सर्वज्ञे जिज्ञास्येऽद्वितीये परस्मिन्ब्रह्मणि सर्वेषां वेदान्तानां समन्वयस्य स्मृत्यादिविरोधपरिहारोऽनेन क्रियत इत्यनयोरध्याययोर्विषयविषयिभावसंगतिः । पूर्वमतिदेशाधिकरणे प्रधानवदण्वादीनामप्यशब्दत्वमभ्यधायि । अधुना प्रधानस्य स्मृतिरूपशब्दवत्त्वमाक्षिप्य परिहरति-सू ॥ **स्मृत्यनवकाशदोषप्रसंग इत्यादि ।** उक्तसमन्वयः सांख्यस्मृत्या विरुध्यते उत नेति संदेहः । महर्षिप्रणीतप्रधानकारणवादिस्मृतीनामनवकाशरूपदोषप्रसंगात्समन्वयो विरुध्यत इति तदनुगुणतयैव श्रुतिसमन्वयो नेय इति **पूर्वपक्षः ।** चेतनकारणत्ववादिनीनामन्यासां स्मृतीनामनवकाशरूपदोषप्रसंगात्, स्मृतिद्वयविरोधे श्रुत्यविरुद्धस्मृतेरेव प्राबल्याच्च, श्रुतिविरुद्धाप्रमाणसांख्यस्मृत्या उक्तसमन्वयो न कदापि विरुध्येतेति **सिद्धान्तः ।** इतश्च सांख्यस्मृतेरनवकाशो न दोष इत्याह—सू ॥ **इतरेषां चानुपलब्धेः ॥ २ ॥ इतरेषाम्**=सांख्यस्मृतिप्रसिद्धानामन्येषां महदादितत्त्वानाम् । **अनुपलब्धेः**=लोके वेदे चानुपलभ्यमानत्वाच्च सांख्यस्मृतेरप्रामाण्यान्न तस्या अनवकाशो दोष इत्यतस्तदेकदेशप्रधानस्मृतेरप्रामाण्यमिति सिद्धम् ॥

**श्रीकण्ठमते,** संदेहपूर्वपक्षसिद्धान्तादिकं प्रायः समानमेव । द्वितीयसूत्रार्थवर्णनप्रक्रिया परं भिद्यते । तथा हि-पूर्वोक्तसमन्वयस्य सांख्यस्मृत्या संकोचोऽस्ति वा न वेति संदिह्य धर्मेण सावकाशाद्वेदादनवकाशायास्सांख्यस्मृतेः प्रबलतया तया वेदस्य संकोचो युक्त इति पूर्वपक्षं कृत्वा वेदाविरोधिनीनामन्यासां मन्वादिस्मृतीनामनवकाशदोषप्रसंगात्प्रत्यक्षश्रुतिसिद्धब्रह्मकारणवादिन्या स्मृत्या अनुमेयश्रुतिमूलायास्सांख्यस्मृतेरेव बाधो युक्त इति सिद्धान्तं चाभिधाय द्वितीयसूत्रार्थः परमन्यथा वर्णितः । इतरेषां मन्वादीनां स्मृतिषु कपिलदृष्टस्य प्रधानकारणत्वादेरनुपलब्धेः प्रधानस्मृतिरप्रामाणिकीत्यतः कपिलस्मृत्युक्तसमन्वयस्य नास्ति संकोच इति ॥

**रामानुजमते,** श्रीकण्ठमतान्न वैलक्षण्यमिति न पृथक्प्रतन्यते ।

**आनन्दतीर्थमते,** अस्मिन्नध्याये प्रथमाध्यायप्रतिपादितसमन्वयस्य युक्तिसमयश्रुतिसयुक्तिकश्रुत्यवलंबनं विरोधचतुष्टयं क्रमात्पादचतुष्टयेन परिहरिष्यते । तत्र जगदेककारणे निखिलगुणपरिपूर्णे नारायणे प्रतिपादितस्समन्वयो न सिध्यति । शैवकापिलहैरण्यगर्भादिस्मृतीनां शिवादिप्रणीतानां निरवकाशत्वेन तद्विरोधिनीनामपौरुषेयतया घुणाक्षरकल्पानां श्रुतीनामेवान्यथानेयत्वेन निरवकाशप्रबलतरस्मृतिविरोधेन श्रुत्यप्रामाण्यदोषप्रसंगात् । इति **पूर्वः पक्षः । सिद्धान्तस्तु,** प्रसिद्धतरसामर्थ्यविष्ण्वादिप्रणीतानां पाञ्चरात्रादिस्मृतीनां श्रुतिसंवादितयात्यन्ताप्तमूलत्वेन प्रबलत्वात्तत्सहकृतानां श्रुतिगिरामपि प्राबल्यात् पाशुपतादिभ्योऽन्यासां पाञ्चरात्रादिस्मृतीनां रुद्रादिजगत्कर्तृत्वादावनवकाशत्वात् तद्विरुद्धशैवादिस्मृतीनामेवाप्रामाण्याख्यदोषेण प्रकर्षेण संबन्धाभ्युपगमाच्च तद्विरोधस्याकिंचित्करत्वेन पूर्वोक्तस्समन्वयो निर्बाध इति । सूत्रमपि व्याख्यातम् ॥

**सू ॥ इतरेषां चानुपलब्धेः ॥ २ ॥** अनुपलब्धेरित्यावर्तते । चशब्दः किंचित्फलोपलब्ध्यङ्गीकारसूचकः । **अनुपलब्धेः ।** न विद्यते उपलब्धिर्यैस्तासावनुपलब्धिस्तस्मात्प्रत्यक्षायोग्यात्पदार्थात् । **इतरेषां**=भिन्नानां प्रत्यक्षयोग्यानां पाशुपताद्युक्तफलानामनिष्टानां च तदुक्तक्रियानुष्ठानपरित्यागयोः कृतयोरपि । **अनुपलब्धेः**=प्रत्यक्षतोऽदर्शनात् तासामेवाप्रामाण्यं युक्तमित्यर्थः ॥

**सू ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥ एतेन**—फलादर्शनलक्षणपूर्वोक्तहेतुनैव । **योगः**=योगशास्त्रम् । **प्रत्युक्तः**-निरस्तमित्यर्थः । अस्मिन्मते इदं सूत्रं नाधिकरणान्तरमिति विशेषः ॥

### इति सूत्रार्थचन्द्रिकायां स्मृत्यधिकरणम् ॥ १ ॥

## अथ योगप्रत्युक्त्यधिकरणम् ॥ ३ ॥

## ॥ सू ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥

योगाङ्गप्रतिपादिनी हिरण्यगर्भस्मृतिरपि प्रधानकारणत्वमेव वदति। तथा च यथा प्रधानकारणत्ववादिन्या साङ्ख्यस्मृत्या विरोधात् वैदिकसमन्वयस्य संकोचो नाभवत् तथाऽनयाऽपि श्रुत्या संकोचो न भवति भवति वा।

इति सन्देहे भवतीति वदामः। कथम्? श्वेताश्वतरोपनिषदि ब्रह्मसाक्षात्कारहेतुतया प्रपञ्चिता योगविद्या। तथा च सांख्यस्मृतेरनुमेयश्रुतिमूलत्वेऽपि प्रत्यक्षश्रुतिमूलया हिरण्यगर्भस्मृत्या प्रधानकारणवादिन्या ब्रह्मकारणवादिन्याः श्रुतेः समन्वयस्य संकोचो युक्तः॥

---

सू० ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥ अतिदेशाधिकरणस्यास्य पूर्वाधिकरणरीत्या पूर्वोत्तरपक्षौ दर्शयति—योगांगेत्यादिना। ननु, कास्मिन्नभ्यधिकाशंका? योगशास्त्रकर्ता हिरण्यगर्भः। स किल कर्ता हिरण्यगर्भस्सकलवेदप्रवर्तनाधिकृतः तदर्थतत्त्वाभिज्ञ इत्यधिकाशंकेति। न। 'हिरण्यगर्भं पश्यत जायमान' मिति श्रुतौ हिरण्यगर्भस्येव कपिलस्याऽपि 'ज्ञानैर्बिभर्ति जायमानं च पश्ये' दिति श्रुतौ सार्वज्ञ्योपयोगिजायमानावस्थालब्धपरमेश्वरकटाक्षेक्षितत्वश्रवणाविशेषात्। योगशास्त्रादरणीयत्वहेतुरीश्वरांगीकारोऽस्तीति चेन्न।काणादगौतममतयोरप्यपरिग्राह्यत्वस्य शिष्टापरिग्रहाधिकरणे प्रदर्शयिष्यमाणत्वेन तेन तस्यादरणीयताशंकानुत्थानात्, पूर्वाधिकरणनिरस्तसांख्यपक्षेऽपि तदंगीकारसत्त्वाच्च। न च निरीश्वरसांख्य एव तत्र निराकृतः। तत्पक्षे वेदान्तानां जीवपरत्वमाशंक्य 'अधिकोपदेशात्तु बादरायणस्य' (ब्र० ३-४-८) इति सूत्रेण जीवाधिकपरमेश्वरपरत्वं वेदान्तानां समर्थितम्। तस्मादधिकाशंकाभावान्नैतदधिकरणमारंभणीयमित्यभिप्रायेणाशंकते—कथमिति। योगांगप्रतिपादिनीति प्राग्विशेषणेन सूचितामधिकाशंकां दर्शयति—श्वेताश्वतरेति। श्वेताश्वतराणां मंत्रोपनिषदुपक्रममारभ्यासमाप्ति शिवमेव जगत्कारणत्वजगदन्तर्यामित्वादिधर्मवत्तया प्रपंचेन प्रतिपादयति। तत्र द्वितीयाध्याये शिवसाक्षात्कारोपयोगिनी शिवयोगविद्या निरूपिता। सैव योगशास्त्रे प्रपंचिता। योगशास्त्रे हि 'ईश्वरप्रणिधानाद्वा। (पा० १ सू २३) 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः। तत्र निरतिशयं सर्वज्ञबीजम्। स पूर्वेषामपि गुरुः कालेनानवच्छेदात्। तस्य वाचकः प्रणवः। तज्जपस्तदर्थभावनम्। ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च।' इत्येवमीश्वरविषयाणि सप्त सूत्राणि शिवपुराणे परमेश्वरप्रतिपादकानि वचनान्यनुसृत्यैव कृतानि। शिवपुराणे हि वायुसंहितायां वचनानि दृश्यंते—न शिवस्याणवो बन्धः कार्मो मायेय एव च। प्राकृतो वाथवा बन्धः अहंकारात्मकस्तथा। न रागो न च विद्वेषः शंभोरमिततेजसः। न वाप्यभिनिवेशोऽस्य कुशलाकुशलान्यपि। स पुंविशेषः कथितः भगवानन्तकांतकः। लोके सातिशयत्वेन ज्ञानैश्वर्ये विलोकिते। शिवेनातिशयत्वेन स्थितिं प्राहुर्मनीषिणः। प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम्। उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम्। कालावच्छे-

**इति प्राप्ते ब्रूमः—न योगस्मृत्या श्रुतिसमन्वयसंकोचः। तस्या 'योगश्चित्तवृत्तिनिरोधः' इत्यारभ्य वैदिकाष्टाङ्गयोगप्रतिपादनमात्रे हि तात्पर्यं नावैदिके प्रधानकारणवादेऽपि। यदि तत्रापि तात्पर्यं,साङ्ख्यस्मृतिवदस्या अपि प्रत्याख्यानमेव न्याय्यम्। ततो हिरण्यगर्भस्मृत्याऽपि प्रधानकारणवादिन्या ब्रह्मकारणवादिश्रुतिसमन्वयस्य न संकोच इति युक्तमेव॥ इति योगप्रत्युक्त्यधिकरणम् ॥२॥**

---

दयुक्तानां गुरूणामप्यसौ गुरुः। सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः। प्रणवो वाचकस्तस्य शिवस्य परमात्मनः। शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृतः। तज्जपादपि या सिद्धिः सा परैव न संशयः।' इति। अतो योगशास्त्रे उपबृंहिता योगविद्या श्वेताश्वतरनिरूपिता शिवयोगविद्यैव। एवं च यद्यपि प्रधानकारणवादिस्मृत्यनुसारेण वेदान्ता नेतव्या इति पूर्वपक्षे निराकरणमिह पूर्वाधिकरणे चाविशिष्टम्। तथापि प्रधानार्थे प्रत्यक्षश्रुतिमूलं योगशास्त्रं प्रधानं तु सांख्यशास्त्र इव तत्र न प्राधान्येन प्रतिपाद्यं किंत्वतिसूक्ष्मशिवयोगाभ्यासार्थं तत्पूर्वप्रवर्तनीयस्थूलयोगलक्ष्यतया। तथा च प्रधानार्थे प्रत्यक्षश्रुतिमूलं योगशास्त्रमतथाभूतात्सांख्यशास्त्रात् प्रबलमिति सांख्यशास्त्रानुसारेण वेदान्तानामन्यथानयनासिद्धावप्येतदनुरोधेन तत्सिध्यतीत्यधिकाशंकावकाशः। तन्निराकरणार्थमिदमधिकरणम्। निराकरणप्रकारस्तु—प्रत्यक्षश्रुतिमूलशिवयोगाभ्यासो यदि तदर्थं पूर्वं लक्षीकर्तव्यस्य प्रधानस्य तात्त्विकत्वमन्तरेण न संभवति तदा प्रत्यक्षश्रुत्याम्नातप्रधानप्रतिपादकं योगशास्त्रमिति तदनुसारेण वेदान्तानामन्यथानयनं कल्प्येतापि। न त्वेवम्। तन्त्रांतरसिद्धस्य स्वतंत्रप्रधानस्य कल्पितस्याकल्पितस्य वेदान्तसिद्धपरतन्त्रप्रधानस्य वा स्थूलयोगलक्ष्यत्वोपपत्तेः। यदि योगशास्त्रश्रद्धाजडः कश्चन प्रधानेऽपि तात्पर्यं कल्पयेत्तदा तस्य प्रत्याख्यानाय सिद्धान्तातिदेश इति भावः।

**इति योगप्रत्युक्त्यधिकरणम् ॥ २ ॥**

---

## नयमणिमालायाम्

## अथ योगप्रत्युक्त्यधिकरणम्।

**सू० ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥**

योगस्मृत्या तु भवेत्समन्वयस्यास्य वाध्यत्वम्। सा हि प्रमाणभूता श्रौतं योगं प्रपंचयति ॥ ८९ ॥
योगनिरूपणमात्रे तात्पर्यं निष्ठितं तस्याः। न तु तत्प्रकृतिप्रभृतौ तद्वारतयानुवादेऽपि ॥ ९० ॥

**इति योगप्रत्युक्त्यधिकरणम् ॥ २ ॥**

## सूत्रार्थचन्द्रिकायाम्

### अथ योगप्रत्युक्त्यधिकरणम् ॥ २ ॥

**सू ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥**

**भगवत्पादमते,** अस्यातिदेशाधिकरणत्वान्न पृथक्संगत्यपेक्षा। उक्तसमन्वयः योगस्मृत्या विरुध्यते वा न वेति संदेहे श्रुतिसिद्धयोगप्रतिपादकत्वेन प्रामाण्यात् प्रधानकारणवादिन्या तया समन्वयो विरुध्यत इति **पूर्वपक्षः। सिद्धान्तस्तु, एतेन**=सांख्यस्मृतिप्रत्याख्यानेन। **योगः**=योगस्मृतिरपि। **प्रत्युक्तः**=प्रत्याख्याता वेदितव्या। श्रुत्यविरुद्धाष्टाङ्गयोगे तात्पर्यवत्त्वेन प्रामाण्येऽपि तद्विरुद्धप्रधाने तात्पर्याभावादप्रामाण्यमिति भावः।

**श्रीकण्ठमते,** अनुमेयश्रुतिमूलया प्रधानकारणवादिन्या सांख्यस्मृत्या वैदिकसमन्वयस्य संकोचासिद्धावपि ब्रह्मसाक्षात्कारहेतुभूतयोगविद्याप्रतिपादकश्वेताश्वतराख्यप्रत्यक्षश्रुतिमूलया प्रधानकारणवादिन्या हिरण्यगर्भस्मृत्या संकोचो भवति

## अथ नविलक्षणत्वाधिकरणम् ॥ ३ ॥

**पुनरपि साङ्ख्यतर्कबाध्यतां समन्वयस्याशङ्क्य परिहरति--**

**॥ सू ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥**

**यथा साङ्ख्यस्मृत्या समन्वयस्य न बाधः तथा तत्तर्केणापि बाधोऽस्ति न वा-- इति संशये पूर्वपक्षः प्रवर्तते। सर्वथा तर्कबाध्योयं ब्रह्मकारणतावादः।**

## अथ नविलक्षणत्वाधिकरणम् ॥ ३ ॥

योगाधिकरणस्यातिदेशत्वात्तदपहाय सांख्यस्मृत्यधिकरणेन संगतिं दर्शयन्नुत्तराधिकरणमवतारयति--पुनरपीति । यद्यपि सांख्यस्मृतिः कर्तृगौरवाद्वेदान्तानामन्यथानयनं नापादयेत् तथापि तदुपन्यस्तब्रह्मकारणत्वासंभवोपपादकयुक्तिभिस्तदापादयेदेव । 'युक्तियुक्तं वचो ग्राह्यं न तु पौरुषगौरव ' मिति पुरुषगौरवमनाद्रियमाणानामपि युक्तिगौरवस्यादरणीयत्वादिति शंकानिराकरणार्थमुत्तराधिकरणारंभ इत्यर्थः ॥ सू० ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥ यत्तु सांख्यस्मृतेः श्रुतिविलक्षणत्वेन श्रुतिमूलत्वासंभवान्मूलांतराभावाच्च तदुक्तप्रधानकारणत्वमयुक्तमिति । तन्न । सांख्यस्मृतेः श्रुतिवैलक्षण्यान्न तन्मूलत्वमिति त्वदुक्तरीत्यैव प्रपंचस्य ब्रह्मवैलक्षण्यात्तदुपादानस्याप्यनुपपत्तेः स्मृतेः प्रत्यक्षानुमेयश्रुतिमूलत्वाभावेऽपि तदुक्तस्य सालक्षण्यहेतुकानुमानस्य व्याप्तिपक्षधर्मतारूपदृढमूलवत्त्वेन प्रपंचसालक्षण्यवतः प्रधानस्यैव तत्कारणत्वौचित्यात् अत एव स्मृतेरनुमानमूलत्वेन मूलांतराभावासिद्धेश्च इत्येवं 'न विलक्षणत्वादस्ये' ति सूत्रांशस्यार्थमभिप्रेत्य पूर्वपक्षमाह--सर्वथेति । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृत' मिति स्मृतेस्सकलप्रमाणसार्वभौमस्यागमस्य कथमप्रमाणेन तर्केण बाधनमुपपद्यत इत्याशंकानिराकरणार्थं सर्वथेति विशेषणम् । तर्केण बाधनं नाप्रामाण्यापादनं विवक्षितं किं तु तदनुसारेण ग्राह्यार्थत्वम् । तत्त्ववश्यमेवाभ्युपगंतव्यम् । 'यत्तलं दृश्यते व्योम्नि खद्योते हव्यवाडिव । न तलं विद्यते व्योम्नि न खद्योते हुताशनः । तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थं परीक्षितुम् । परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते' इति तर्कस्य सर्वप्रमाणानुग्राहकत्वस्मरणात् 'आर्षं धर्मोपदेशं च वेदशास्त्रानुरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' । इति विशिष्यागमानुग्राहकत्वस्मरणात् 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागमनुमा पूरयिष्यती' ति वार्तिकोक्तेश्च । अत एव 'त्रेधा तण्डुलान्विभजे'

---

न वेति संदेहे भवति पूर्वपक्षः। **सिद्धान्तस्तु,**'योगश्चित्तवृत्तिनिरोध'इत्यारभ्य वैदिकाष्टाङ्गयोगप्रतिपादने तात्पर्यशालिन्या प्रधानकारणवादिन्या तयापि ब्रह्मकारणवादिश्रुतिसमन्वयस्य न संकोचो युक्त इति ।

**रामानुजमते,** किं वेदान्तानां योगस्मृत्योपबृंहणं न्याय्यम् उत नेति संशये कृत्स्नवेदप्रवर्तनाधिकृतहिरण्यगर्भप्रणीतत्वाद्योगस्य ईश्वरसद्भावाभ्युपगमाच तया तदुपबृंहणं न्याय्यमिति **पूर्वपक्षः**।

**सिद्धान्तस्तु,** कपिलस्मृतिवदस्या अपि वेदविरुद्धत्वाविशेषाद्धिरण्यगर्भस्यापि क्षत्रज्ञत्वेन भ्रमप्रमादसंभवाच भ्रान्तिमूलया योगस्मृत्या न तेषामुपबृंहणं न्याय्यमिति ॥

**आनन्दतीर्थमते** अस्य सूत्रस्य पूर्वाधिकरणशेषत्वेन पूर्वस्मिन्नधिकरणे व्याख्यातत्वान्न पृथक्प्रपञ्चनावकाश इति विज्ञेयम् ॥

**इति सूत्रार्थचन्द्रिकायां योगप्रत्युक्त्यधिकरणम् ॥ २ ॥**

कथम्? । ब्रह्मणः प्रपञ्चस्यास्य विलक्षणत्वात् न तत्कार्यत्वं सम्भवति ।

---

दित्यादिवाक्यानां स्वरसप्रतीतार्थपरत्वे मध्यमादिवाक्यसिद्धार्थानुवादित्वं स्यात् इत्यादि-तर्कानुसारेणास्वारसिकोऽपि देवतापनयादिरर्थोऽभ्युपगम्यते । अतोऽत्रापि तर्कानुसारेण ब्रह्मकारणवादानामन्यथानयनं युक्तम् । अपि चात्र न केवलं ब्रह्मकारणतायामनिष्टापाद-नमेव तर्कशब्देन विवक्षितं किं तु ब्रह्मकारणत्वप्रतिक्षेपकं प्रधानकारणत्वव्यवस्थापकं च यदनुमानं तदपि विवक्षितम् । तदपि दृढव्याप्तिपक्षधर्मतामूलम् । अत्यन्तनिरवकाशत्वात् । न हि वेदांतानामिव यथाकथंचित् स्तावकत्वादिना तस्यावकाशः कल्पयितुं शक्यते । न च, स्वतः प्रबलेनागमेन विरोधादनुमानमप्रमाणं कल्पनीयं, तन्मूलव्याप्त्यादिग्राहकप्रमा-णानामपि तद्विरोधेनैवाभासीकरणसंभवात् इति वाच्यम् । 'श्रोतव्यो मंतव्य' इति वेदा-न्तावगतार्थप्रतिष्ठाहेतुत्वेन श्रुत्यैवानुमोदितस्य मननापरपर्यायानुमानस्य प्रतिक्षेपासंभवेन कार्यरूपेषु वेदार्थेषु अनुमानादागमस्य प्राबल्येऽपि सिद्धार्थरूपे ब्रह्मणि तस्य ततः प्राब-ल्याभावात् समबलत्वे च सति सावकाशनिरवकाशन्यायावकाशादिति भावः । एवं च 'सर्वथा तर्कबाध्योऽय' मित्यस्य ब्रह्मकारणतायामिष्टापादनरूपेण ब्रह्मकारणत्वप्रतिक्षेपका-नुमानरूपेण प्रधानकारणत्वव्यवस्थापकानुमानरूपेण वेत्येवं सर्वप्रकारेणाऽपि तर्केण बाध्योऽयं समन्वय इत्यर्थः । ननु, कथमत्र वैलक्षण्यावलंबनमनुमानमनिष्टापादनं वा प्रवर्तते । जगद्ब्रह्मप्रकृतिकं न भवति । तद्विलक्षणत्वात् । यदि जगत् ब्रह्मप्रकृतिकं स्यात् तद्विलक्षणं न स्यादित्येवमिति चेन्न । यद्ब्रह्मप्रकृतिकं तद्ब्रह्मविलक्षणमिति विशिष्य व्याप्ति-ग्रहे दृष्टान्ताभावात् यद्यत्प्रकृतिकं तन्न तद्विलक्षणमिति सामान्यव्याप्तेर्यत्तच्छ्याममननुग-मात् मृत्पिंडप्रकृतिकस्य घटादेर्घटत्वादिना मृत्पिंडविलक्षणत्वेन व्यभिचाराच्च । यद्ब्रह्मविल-क्षणं न तत् ब्रह्मप्रकृतिकमिति व्याप्तिग्रहे नित्यवस्तुदृष्टांतसंभवेऽपि मृत्पिंडविलक्षणस्य घटा-देर्मृत्पिंडप्रकृतिकत्ववत् ब्रह्मविलक्षणस्य गगनादेर्ब्रह्मप्रकृतिकत्वसंभवेनाप्रयोजकत्वात् तर्का-नुमानयोरप्रयोजकसहचारमात्रावलंबनत्वे ब्रह्मनिष्ठान्योन्याभावप्रतियोगधर्माश्रयत्वरूपब्र-ह्मवैलक्षण्यापेक्षया लघोर्धर्माश्रयत्वादेरेव हेतूकरणसंभवे सूत्रे वैलक्षण्यादिति गुरुधर्महेतू-करणवैयर्थ्यप्रसंगात् आश्रयत्वादिहेतोर्ब्रह्मोपादानकेषु तद्गुणेषु व्यभिचारः स्यादिति चेन्न । तस्य व्यभिचारस्य सर्वेष्वेतेषु पक्षेषु तुल्यत्वात् । तस्माद्वैलक्षण्यावलंबनस्तर्कोऽत्र न प्रवर्तत इत्यभिप्रेत्याशंकते--कथमिति । उत्तरमाह--ब्रह्मण इति । अयमाशयः । गगनादिकं ब्रह्म-प्रकृतिकद्रव्य न भवति । तद्विशेषगुणचैतन्यानुगतिशून्यत्वादित्यनुमानम् । यदि तत् ब्रह्मप्र-कृतिकद्रव्यं तदा तद्विशेषगुणानुगतिमत् स्यादिति अनिष्टापादनं च । सामान्यव्याप्तौ मृत्प्रकृतिकत्वादिरहितो जलादिर्मृत्प्रकृतिको घटादिश्चात्र दृष्टान्तः । यत्तच्छ्यां सामान्य-व्याप्तिः यो यस्य ग्रन्थस्य प्रणेता स तस्मादधिकविषयज्ञानवानित्येवमादिरूपा सिद्धांतिनो-ऽप्यभिमता न प्रत्याख्यातुं शक्या । प्रकृतिविकारगततद्विशेषगुणत्वावच्छेदेन निर्णीत-स्य हेतुहेतुमद्भावस्य भंगप्रसंगोऽनुकूलस्तर्क इति । ननु तर्हि प्रपंचेऽपि चैतन्यमभ्युपगम्यते घटः प्रकाशते स्फुरति भातीत्यनुभवसत्त्वात् । न च वाच्यं प्रकाशत इत्याद्यनुभवः चैत-न्यविषयत्वार्थकः न तु तदाश्रयत्वार्थकः अन्यथा ममेदानीं घटो न प्रकाशत इत्याद्यनुभ-

कुतो वैलक्षण्यमवगतमिति चेत्—शब्दादेव । 'विज्ञानं चाविज्ञानं च' इत्यादिशब्दो हि प्रपञ्चस्य विकारास्पदत्वाज्ञत्वाद्यपुरुषार्थरूपत्वमभिधत्ते । अतः सत्यज्ञानानन्दरूपात् ब्रह्मणोऽस्य वैलक्षण्यं सिद्धम् । कथमनयोर्गोमहिषयोरिव कार्यकारणभावः सम्भवति ?

## ॥ सू ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

यद्यचेतनत्वेन चेतनात् ब्रह्मणो विलक्षणमिदं जगत्, तत्कथमस्मिन् 'तं पृथिव्यब्रवीत्' 'आपो वा अकामयन्त' 'शृणोत ग्रावाणो विदुषः' इत्यादौ चेतनकार्यव्यपदेशः । तस्मादिदं चेतनमेव सर्वं जगत् । अतो न ब्रह्मप्रपञ्चयोश्चेतनाचेतनरूपतया न वैलक्षण्यमिति शङ्क्यम् । यतस्तथा सर्वत्र ज्ञानकार्यव्यपदेशस्तु

---

वाभावप्रसंगादिति । नीलति श्वेतते लोहितायते इत्याद्यनुभवानां नैल्याद्याश्रयत्वविषयत्ववत् प्रकाशत इत्याद्यनुभवानामपि चैतन्याद्याश्रयत्वविषयतौचित्यात् घटादौ चैतन्यस्य परत्वापरत्ववदवधिविशेषापेक्षगुणत्वेन मम प्रकाशते मम न प्रकाशत इति व्यवहारोपपत्तेश्च । यदि घटादिषु चैतन्यसद्भावप्रयुक्तव्यवहारादर्शनात् घटः प्रकाशते न प्रकाशत इत्यादिव्यवहारयोस्तत्तत्पुरुषगतघटादिज्ञानसामग्रीसत्त्वासत्त्वकालप्रभवत्वाच्च तत्तद्ज्ञानविषयत्वमेवार्थः यथा मह्यं रोचते मोदक इत्यनुभवस्य स्वतदिच्छाविषयत्वमर्थ इतीष्यते तथाऽपि घटादिषु वृक्षादिष्विवानुद्भूतं चैतन्यमस्तु, श्रुतब्रह्मप्रकृतिकत्वान्यथानुपपत्त्या तत्कल्पनसंभवात् । न च प्रपंचस्य चैतन्यवत्त्वे सिद्ध एव श्रुत्या ब्रह्मप्रकृतिकत्वमवधारणीयमित्यन्योन्याश्रय इति वाच्यम् । योग्यतासंशयेऽपि शाब्दज्ञानसंभवात् । अन्यथा ज्योतिष्टोमस्य स्वर्गसाधनत्वमपूर्वे कल्पित एवावगंतव्यमिति तत्राप्यन्योन्याश्रयप्रसंगात् काष्ठज्वालात् भांडतद्गतवारिस्थतेजसो दीपात्तुषाग्नेश्च उत्पत्तिदर्शनात् तत्रानुद्भूतरूपावयवान्तरकल्पनायां गौरवात् । न च पुरुषेष्विव घटादिष्वपि चैतन्यसत्त्वे चेतनव्यवहारानुपपत्तिः । चैतन्योपलंभानुपलंभाभ्यां तदुपपत्तेः । घटतृणादेः कर्त्रुपलंभानुपलंभाभ्यां कृताकृतव्यवहारदर्शनात् । तस्मादसिद्धं प्रपंचस्य ब्रह्मवैलक्षण्यमित्याशंकोत्तरत्वेन 'तथात्वं च शब्दा' दिति सूत्रशेषमवतारयति—कुत इति । यं वैदिकशब्दमनुसृत्य प्रपंचस्य ब्रह्मप्रकृतिकत्वं वेदश्रद्धाजडेन त्वयेष्यते तस्मादेव वैदिकशब्दात् 'विज्ञानं चाविज्ञानं च' 'क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः' इत्येवमादिरूपात्प्रपंचस्य विकारास्पदत्वादिकमिवाचेतनत्वमप्यवगम्यत इत्येवं सौत्रं चशब्दमेवकारार्थमङ्गीकृत्य शब्दादेवेत्युक्तम् । 'क्षरं त्वविद्ये'ति विशिष्य जडवर्गस्य विकारित्वोक्त्या चेतनवर्गस्य निर्विकारत्वात् जीववत् ब्रह्मणोऽपि प्रपंचप्रकृतिकत्वमनुपपन्नमिति दर्शयितुं वा विकारास्पदत्वविशेषणम् । अत'स्सत्यज्ञाने'ति सत्यशब्दोऽत्र निर्विकारपरः । सत्ताश्रयत्वादेर्घटादिसाधारण्यात् । ननु 'पृथिव्यब्रवीत्' इत्यादिश्रुतिषु पृथिव्यादीनां चैतन्यकार्यव्यवहारादिश्रवणादस्त्येव पिशाचादीनामिव तेषामस्मदाद्यनवगतं चैतन्यम् । अतस्तदनुसारेण 'विज्ञानं चाविज्ञानं चे' त्यादिश्रुतिः कृताकृतव्यवहारवन्नेतव्येत्याशंक्य श्रुतयः पृथिव्याद्यभिमानिदेवताविषया इत्युपपादनार्थं सूत्रम्—॥ सू ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तदभिमानिदेवताविषय एवेत्यवगम्यते, 'हन्ताहमिमास्तिस्रो देवताः' इति देवताशब्दविशेषात् 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिना अचिद्वस्त्वभिमानिदेवतानुगतेश्च । तस्मादचेतनत्वादिना विलक्षणमेव जगत् ब्रह्मणः । ततोऽस्य कार्यत्वं ब्रह्मणः कारणत्वं च युक्तिबाध्यमेव ॥

॥ सू ॥ दृश्यते तु ॥ ६ ॥

सिद्धान्त उच्यते—विलक्षणयोरपि ब्रह्मप्रपञ्चयोः कार्यकारणभावः सम्भवति, अचेतनाद्गोमयात् चेतनवृश्चिकोत्पत्तिदर्शनात्, चेतनात्पुरुषात् अचेतनकेशाद्युत्पत्तिदर्शनाच्च । अतः शुष्कतर्को न बाधकः श्रुतिसमन्वयस्येति निर्णयः ॥

---

देवताशब्दविशेषादिति । देवताशब्देन चेतनवाचिना पृथिव्यादीनां विशेषितत्वादित्यर्थः । अनुगतेरिति । अनुप्रवेशप्रतिपादनादित्यर्थः ॥ सू ॥ दृश्यते तु ॥ ६ ॥ तुशब्देन पूर्वपक्षो व्यावर्त्यते । न तु पूर्वसूत्र इव सिद्धांतिशंका । अतस्सिद्धांतसूत्रमिदमित्याह—सिद्धांत इति । 'दृश्यते' इति क्रियापदम् । ब्रह्मप्रपंचयोर्वैलक्षण्येऽपि उपादानोपादेयभावसंभवे हेतुसमर्पकत्वेन योजयति—विलक्षणयोरिति । अनेन गोमयपुरुषगुणानुगतिरहितानां वृश्चिककेशनखादीनां गोमयपुरुषप्रकृतिकत्वं दृष्टमिति तर्कानुमानयोर्व्यभिचार उद्घाटितः । ननु, गोमयाद्वृश्चिकशरीरस्यैवोत्पत्तिर्न चेतनस्य । शरीरादेव केशनखादीनामुत्पत्तिर्न तु चेतनात् । तथात्वेऽपि गोमयपुरुषयोः वृश्चिककेशनखादिषु निमित्ततैव नोपादानत्वमिति चेदुच्यते । गोमयात् वृश्चिकशरीरोत्पत्तौ वृश्चिकस्य ज्ञानविकासरूपावस्थान्तरापत्त्या तस्याऽपि गोमयादुत्पत्तिस्तावदस्ति । पूर्वावस्थाप्रहाणेनावस्थान्तरापत्तिरेव हि द्रव्यस्योत्पत्तिः । तत्र च गोमयस्योपादानत्वं पृथक्सिद्धकार्यावस्थाश्रयत्वरूपतल्लक्षणानुसारेण सिध्यति । गोमयाकारपरिणतगवाद्युपयुक्ततृणाद्यनुशयिजीवविशेषस्यैव वृश्चिकरूपेण प्रादुर्भावात् ।तथा पुरुषस्याऽपि केशनखादिषु कारणत्वमस्ति । मृतशरीरात्तदनुत्पत्तेः । ततश्च तस्य तदुपादानत्वमपि लक्षणमुखेनायाति । केशनखादिमतश्शरीरस्य शरीर्यपृथग्भावात् । उदाहरणद्वयेऽपि अचेतनांशयोरेव प्रकृतिविकारभावांगीकारेऽपि व्यभिचारो भवत्येव । वृश्चिकशरीरे केशादिषु च गोमयशरीरगतगन्धरूपाद्यनुवृत्त्यभावात् । न च प्रपंचस्य ब्रह्मवैलक्षण्यं तद्विशेषगुणानुगतिराहित्यं न विवक्षितं किं तु तद्गतद्रव्यत्वसाक्षाद्व्याप्यजात्यनुगतिराहित्यमिति वाच्यम् । प्रकृतिविकारयोर्गुणभेदवदवान्तरजातिभेदस्याऽपि संभवेन उक्तरूपस्य वैलक्षण्यस्य हेतोरप्रयोजकत्वात्, अरणिमणिवेण्वादिभ्यः पार्थिवेभ्यो वह्नेः समुद्रजलात् पार्थिवस्य मुक्ताफलस्य चोत्पत्त्या तथा विवक्षायामपि व्यभिचारतादवस्थ्याच्च । न च तयोरुत्पत्तौ पार्थिवतैजसावान्तरसन्निधानं कल्पनीयम् । गौरवात् । समुद्रजलाद्यवयवानामेव शुक्तिगर्भानुप्रवेशनिर्मथनादिसहकारिबलात् पूर्वावस्थाप्रहाणेनावस्थान्तरापत्तिसंभवात् । न च सजातीययोरेवोपादानोपादेयभावस्य क्लृप्तत्वात् तत्कल्पनम् । उपादानोपादेयभावग्रहणे साजात्यानुप्रवेशस्य वह्निमुक्ताफलादिषु सजातीयावयवांतरकल्पनासापेक्षत्वेनान्योन्याश्रयापत्तेः । तस्मादनुमानस्य व्यभिचारात् तर्कस्य मूलशैथिल्याच्च न श्रुतिबाधकतेत्युपसंहरति—अत इति । शुष्कतर्क इति । शुष्कविशेषणस्यायमाशयः । यत्तन्न्याम-

पुनः शङ्कित्वा परिहरति—

॥ सू ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

एवं कार्यकारणयोर्वैलक्षण्यात् कारणे कार्यमसदेव 'असद्वा इदमग्र आसीत्' इति श्रुतेरिति चेत्—नैवं वाच्यम् । सालक्षण्यनियमप्रतिषेधमात्रपरत्वाच्छ्रुतेः । अतः कार्यकारणयोः जगद्ब्रह्मणोः वस्त्वेकता न हीयत एव ॥ इति नविलक्षणत्वाधिकरणम् ॥ ३ ॥

---

नुगता सामान्यव्याप्तिरिह तर्कानुमानयोः स्वतंत्रत्वाभिमतयोरंगम् । यत्तु श्रुत्यवगतसार्वज्ञ्यादिदृढीकरणार्थमीश्वरो वैदिकद्रष्टेत्याद्यनुमानं तत्तु बुद्धिसंवादेन श्रुत्यवगतसार्वज्ञ्यदृढीकरणार्थं न स्वयमेव कस्यचिदर्थस्य साधनार्थमिति बुद्धिसंवादाय तत्राननुगतापि सामान्यव्याप्तिराद्रियते । तदभावेऽपि हि 'यथा सोम्यैकेन मृत्पिंडेने' त्यादौ दृष्टांतोपन्यासमात्रेण बुद्धिसंवादो जायत इति । एवं ब्रह्मकारणताप्रतिक्षेपके वैलक्षण्यावलंबने तर्कानुमाने दूषिते प्रधानकारणतोपपादकं सालक्षण्यावलंबनमनुमानं तु द्वितीयपादे निराकरिष्यते । यद्यपि सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं तदेव स्थूलचिदचिद्विशिष्टं कार्यमिति सिद्धांते कारणकोटावप्यस्त्यचेतनांशानुप्रवेशः कार्यकोटावपि चेतनांशानुप्रवेशः । तथाऽपि कारणकोटौ विशेष्यभूतस्य ब्रह्मणः कार्यकोटौ विशेषणेष्वचेतनेष्वप्युपादानत्वमुपपादनीयम् । अन्यथा तस्य सर्वोपादानत्वासिद्धेः । तेषु च वैलक्षण्यादुपादानत्वं न संभवतीत्येवमाक्षेपसमाधानार्थमिदमधिकरणम् । पुनश्शंकित्वेति । वैलक्षण्येऽप्युपादानोपादेयभावमुपपादयता तयोर्द्व्याकारत्वमभ्युपगतं स्यात् । विलक्षणयोरैक्यायोगात् । तथा च कारणात्मना सत एव कार्यस्य स्थूलरूपापत्तिरुत्पत्तिरिति सत्कार्यवादं परित्यज्य कारणात्मना प्रागसदेव कार्यमुत्पद्यत इत्यसत्कार्यवादोऽभ्युपगतः स्यात् । 'असद्वे' त्यादिश्रुतेरपि यथाश्रुतार्थ एवांगीकृतः स्यात् इत्याशंक्य परिह्रियत इत्यर्थः ॥ सू ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ कारणे कार्यमिति। कारणात्मना कार्यमसदेवेत्यर्थः । नेत्यादिपरिहारांशं व्याचष्टे—नैवं वाच्यमिति । 'दृश्यते'त्वि ति सूत्रमुपादानोपादेययोस्सालक्षण्यनियमप्रतिषेधमात्रपरं न त्वेकद्रव्यत्वप्रतिषेधपरमपि । वैलक्षण्येऽप्यारंभणाधिकरणे वक्ष्यमाणन्यायेन द्रव्यैक्योपपत्तेरिति भावः । अत एवारंभणाधिकरणप्रतिपादितन्यायानुवादमात्रपरमिदं सूत्रम् । श्रुतेरित्यनेन 'दृश्यते त्वि'ति सूत्रश्रवणं विवक्षितम् । अधिकरणार्थमुपसंहरति—अत इति ।

इति नविलक्षणत्वाधिकरणम् ॥ ३ ॥

---

नयमणिमालायाम्

अथ नविलक्षणत्वाधिकरणम् ॥ ३ ॥

सू० ॥ नविलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥ दृश्यते तु ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

जगतो विलक्षणत्वादचेतनस्यास्य सर्वज्ञात् । न परीक्षकाभिनंद्यं तदुपादानत्वमेतस्य ॥ ९१ ॥

दृष्टा वैलक्षण्येऽप्यलिनो गोमयत उत्पत्तिः । तद्वत्सर्वज्ञादप्युत्पत्तिस्संभवेज्जगतः ॥ ९२ ॥

इति नविलक्षणत्वाधिकरणम् ॥ ३ ॥

## अथ अपीतौ तद्वत्प्रसङ्गाधिकरणम् ॥ ४ ॥

## ॥ सू ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

**सत्कार्यवादेन कार्यकारणयोः जगद्ब्रह्मणोः वस्त्वेकत्वे समन्वयस्य तर्कबाध्यत्वमस्ति न वा ।**

**इति सन्देहेऽस्तीति पूर्वः पक्षः । कुतः ? यत एव जगद्ब्रह्मणोः वस्त्वेकत्वमुक्तम् । तथा सति हि जगत इव ब्रह्मणोऽपि विकाराज्ञानाद्यनिष्टप्रसङ्गः समुन्मिषति । ततो वेदान्तवाक्यानां सामरस्यमसमञ्जसं भवति । अतः तर्केण समन्वयबाध इति ॥**

## ॥ सू ॥ न तु दृष्टान्तभावात् ॥ ९ ॥

---

### अथ अपीतौ तद्वत्प्रसंगाधिकरणम् ॥ ४ ॥

सू ॥ अपीतौ तद्वत्प्रसंगादसमञ्जसम् ॥ ८ ॥ पूर्वसूत्रप्रसक्तकार्यकारणयोर्वस्त्वैक्यश्रुतिसमन्वयसिद्धं ब्रह्मणो निर्दोषकल्याणगुणाकरत्वमाक्षिप्य समाधीयत इति संगतिमभिप्रेत्य संशयं दर्शयति—सत्कार्यवादेनेति । वस्त्वैक्यस्य ब्रह्मणि प्रपञ्चदोषापादकत्वानापादकत्वाभ्यां संशय इति भावः । तस्य तदापादकत्वमुपपादयति—तथा सतीति । ब्रह्मप्रपंचयोरैक्ये चेतनाचेतनगतास्सर्वेऽपि दोषाः प्रपञ्च इव ब्रह्मण्यपि प्रसज्येरन् । ततश्च निर्दोषकल्याणगुणाकरे समाभ्यधिकरहिते ब्रह्मणि वेदांतानां समन्वय इति यद्व्यवस्थापितं तदसमञ्जसं भवेदित्यर्थः । ननु प्रपञ्चस्थितिकाले तद्दोषैर्दुष्टत्वेऽपि तस्य प्रलये सति निर्दोषकल्याणगुणयुक्तं ब्रह्मावतिष्ठत इति तद्विषयत्वं वेदांतवाक्यानामुपपद्यते । 'चैत्रस्सुखी जीवती' त्यादिवाक्यानामिव व्याध्यादिराहित्यकालविषयत्वमित्याशंकानिराकरणार्थमपीताविति प्रलयस्य सूत्रे विशिष्य ग्रहणम् । प्रलयेऽपि भाविकल्पभोग्यफलहेतूनां पाप्मनां सूक्ष्मरूपापन्नेषु जीवेषु सत्त्वावश्यंभावात् तैर्दुष्टत्वं स्थितिकाल इव प्रलयकालेऽपि ब्रह्मणः प्रसज्यत इत्यपहतपाप्मत्वादिश्रुतीनामसामञ्जस्यमनुद्धार्यमिति । ननु ब्रह्मप्रपंचयोर्वस्त्वेकत्वं नाभेदः किं तु घटपटयोरिव स्वातन्त्र्याभावेनापृथक्सत्त्वरूपमनन्यत्वमित्यारंभणाधिकरणे समर्थयिष्यते । तदभिप्रायेणैव पूर्वसूत्रे सालक्षण्यप्रतिषेधमात्रं न तत्कृतं कारणैक्यमित्युक्तम् । न त्वभेदाभिप्रायेण । तस्मान्न ब्रह्मणि दोषप्रसंग इत्याह—अत इति । एवमान्तर्गणिकभेदांगीकारेऽपि मसूरिकादिमहारोगपरवशबहुजनसमाक्रांतस्य रोगित्वमिव दुष्टप्रपंचावृतस्य दुष्टत्वमवर्जनीयम् । दुष्टसंसर्गमात्रमपि हि दोषाय कल्पते किमु वक्तव्यं तदपृथग्भावो दोषाय कल्पत इति । अथ स्यादपृथग्भावेऽपि शरीरगतधर्मा बालत्वयुवत्वादयश्शरीरिणं न स्पृशंतीति दृष्टं, शरीरं चेदं ब्रह्मणश्चेतनाचेतनात्मकं जगदिष्यते । अन्तर्यामिब्राह्मणे तथा प्रतिपादनात् । अतस्तद्दोषैः ब्रह्मणो न दुष्टत्वं भविष्यतीति । नैतदऽपि युक्तम् । हस्तपादादिसंस्थानविशेषशून्यस्य प्राणधार्यत्वरहितस्य इंद्रियानाश्रयस्य ब्रह्म प्रति भोगायतनत्वरहितस्य जगतस्तच्छरीरत्वायोगेन तत्र तच्छरीरत्वश्रवणस्य तन्नियम्यत्वमात्रेणौपचारिकत्वात् । तस्मात् प्रपञ्चब्रह्मणोरभेद इव सार्वदिकसंसर्गरूपापृथग्भावेऽपि प्रपंचदोषैः ब्रह्मणो दुष्टत्वमनिवार्यमिति भावः । सू । न तु दृष्टांतभावात् ॥ ९ ॥ तुशब्देन प्रपञ्चस्य

नेति पूर्वपक्षं व्यावर्तयति । 'यस्यात्मा शरीरम्' 'यस्याव्यक्तं शरीरम्' इत्यादिश्रुत्या, 'विग्रहं देवदेवस्य जगदेतच्चराचरम् । एतमर्थं न जानन्ति पशवः पाशगौरवात् ॥' इत्यादिपुराणोक्त्या च सिद्धचिदचिच्छरीरकस्य परब्रह्मणः शिवस्य कार्यतया कारणतया चावस्थाने गुणदोषव्यवस्थायां दृष्टान्तसद्भावात् तत्र वेदान्तवाक्यसमन्वयसामरस्यमसमञ्जसं न भवति । कथम् ? यथा शरीरस्य मनुष्याद्यात्मनो बालत्वयुवत्वस्थविरत्वादिभावेऽपि बालत्वादयः शरीर एव, सुखादयस्त्वात्मन्येव, तद्वदत्रापि शरीरभूतचिदचिद्वस्तुगताज्ञानविकाराद्यनिष्टानि शरीरभूते चिदचिद्वस्तुन्येव तिष्ठन्ति निरवद्यत्वाविकारत्वसार्वज्ञ्यसत्यसङ्कल्पत्वादय आत्मभूते परमेश्वर एव । तदेवं दृष्टान्तभावाच्छुत्यसामञ्जस्यं ब्रह्मणि नास्त्येव ॥

॥ सू ॥ स्वपक्षदोषाच्च ॥ १० ॥

केवलं तर्कावलम्बने स्वपक्ष एव प्रधानकारणवादिनः निर्विकारपुरुषसन्निधिवशात् प्रकृतिप्रवृत्तौ सत्यामन्योन्यधर्माध्यासा दुरुपपादा भवन्ति । अन्यत्रान्यधर्मानुसन्धानरूपोऽध्यासो निर्विकारस्य पुरुषस्य न सम्भवति । अचेतनायाः प्रकृतेश्चानुसन्धानरूपोऽध्यासो न सम्भवत्येव । अतः प्रधानकारणवाद एव तर्कबाध्यः ॥

॥ सू ॥ तर्काप्रतिष्ठानात् ॥ ११ ॥

तर्कस्याप्रतिष्ठितत्वात् प्रधानकारणवादस्य तन्मूलत्वात् तत्र प्रतितर्कसम्भवात् तस्यैव त्याज्यत्वं न ब्रह्मकारणवादस्येति ॥

॥ सू० ॥ अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ १२ ॥

---

ब्रह्मशरीरत्वासंभवशंकाव्यावृत्तिः । ततश्च दृष्टांतलाभादापादितमसामञ्जस्यं न भवतीत्येवं सूत्रार्थमभिप्रेत्य व्याचष्टे—नेतीति । प्रपञ्चस्य ब्रह्मशरीरत्वं 'सर्वत्र प्रसिद्धोपदेशा' (१.२.१.) दित्यधिकरणभाष्ये प्रतिपादितम् । तत्रैवास्माभिश्शरीरलक्षणप्रदर्शनपूर्वकं तस्य ब्रह्मशरीरत्वं प्रपंचेनोपपादितम् । तत्सर्वमेतदधिकरणन्यायसिद्धार्थानुवादरूपमित्यवधेयम् । सू॥ स्वपक्षदोषाच्च ॥ १० ॥ चकारमेवकारार्थं कृत्वा सांख्यानां स्वपक्ष एव दोषा भवंति न त्वस्मत्पक्षे तदापादिता दोषा इति सूत्रार्थमभिप्रेत्य तत्पक्षे दोषं दर्शयति—केवलमिति । पुरुषसन्निधानात् प्रकृतिर्महदहंकारादिप्रपंचसृष्टौ प्रवर्तते । ततः प्रपञ्चपुरुषधर्माणामध्यासरूपस्संसार इति हि सांख्यप्रक्रिया । तस्यामन्यत्रान्यधर्मानुसंधानरूपोऽध्यासो न तावत्पुरुषस्य संभवति । तस्य निर्विकारत्वात् । नापि प्रकृतेः । तस्या अचेतनत्वाभ्युपगमात् । अतः केवलतर्कावलंबने प्रधानकारणवाद एव तर्कबाध्यः स्यादिति द्वितीयपादे सांख्याधिकरणे वक्ष्यमाणो दोषसंग्रहार्थमत्र दर्शितः ॥ सू ॥ तर्काप्रतिष्ठानात् ॥ ११ ॥ केवलतर्कावलंबनैः प्रधानकारणवादिभिरुन्नीताः स्वपक्षोपपादकास्तर्काः परमाणुकारणवादिभिस्तथाभूतैर्दूष्यन्ते ते चान्यैरित्येवं शुष्कतर्काणामप्रतिष्ठितत्वात् तदवलंबनप्रधानकारणवादं परित्यज्य श्रुत्यनुसारिब्रह्मकारणवाद एव परिग्राह्य इत्येवं सूत्रार्थमभिप्रेत्य व्याचष्टे—तर्कस्येति ॥ सू ॥ अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंगः ॥ १२ ॥ यथेदानीं सांख्यैः

अन्यथा यथा प्रतितर्कपराहतिः न भवति तथा प्रकारान्तरेण प्रधानमनुमेयमिति वादोऽपि युक्तो न भवति । तत्राप्येवं प्रतितर्ककलहसम्भावनया प्रतिष्ठितत्वाभावदोषादनिर्मोक्ष एव प्रसज्यते । ततः शुष्कतर्कमूलः प्रधानकारण वाद एव त्याज्यः न तु प्रबलश्रुतिप्रमाणसिद्धो ब्रह्मकारणवाद इति युक्तम् ॥

इत्यपीतौ तद्वत्प्रसंगाधिकरणम् ॥ ४ ॥

---

प्रधानकारणत्वोपपादकतया उपन्यस्यमानानां तर्काणां नैयायिकादितर्कैः प्रतिहतिर्भवति तथा यस्मिन्प्रकारे प्रतिहतिर्न भवति तथाभूतेनान्यादृशेन प्रकारेण प्रधानमनुमास्यामह इत्येतदप्यभिमानमात्रम् । यतस्तादृशः पुरुषबुद्धिकल्पितः तर्क एव न संभवति । केन चित्कुशलेनोन्नीतस्य तर्कस्य कुशलतरान्योन्नीततर्केण प्रतिहतिसंभवात् पुरुषबुद्धिप्रभवकल्पनानाममर्यादत्वात् । अतस्तर्कांतरोन्नयनप्रयासेऽप्यप्रतिष्ठितत्वदोषादनिर्मोक्ष एव प्रसज्यत इत्येवं सूत्रार्थमभिप्रेत्य व्याचष्टे—अन्यथेति । अशुष्कतर्कावलंबनेन प्रधानकारणवादस्य व्यवस्थापनासंभवात् वेदांतसिद्धे ब्रह्मकारणवादे परोन्नीतकुतर्काप्रसराच्च स एव युक्त इत्यधिकरणार्थमुपसंहरति—तत इति ॥

इत्यपीतौ तद्वत्प्रसंगाधिकरणम् ॥ ४ ॥

---

## नयमणिमालायाम्

### अथ अपीतौ तद्वत्प्रसंगाधिकरणम् ॥ ४ ॥

सू ॥ अपीतौ तद्वत्प्रसंगादसमञ्जसम् ॥ ८ ॥ न तु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्षदोषाच्च ॥ १० ॥ तर्काप्रतिष्ठानात् ॥ ११ ॥ अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंगः ॥ १२ ॥

सत्कार्यवादिनस्ते मतमैक्यं कार्यकारणयोः । तस्माज्जगत इव स्याद्दोषगणश्शंकरस्यापि ॥ ९३ ॥

चिदचिच्छरीरकस्य हि कार्यत्वं कारणत्वमपि । न स्युश्शरीरदोषाश्शरीरिणो बाल्ययौवनादिनयात् ॥ ९४ ॥

इत्यपीतौ तद्वत्प्रसंगाधिकरणम् ॥ ४ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ न विलक्षणत्वाधिकरणम् ॥ ३ ॥

सू ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥ दृश्यते तु ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥ नतु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्षदोषाच्च ॥ १० ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

भगवत्पादमते, वेदविरुद्धसांख्यादिस्मृतीनां मूलाभावादप्रामाण्यसिद्धावपि व्याप्तिपक्षधर्मतामूलकलोकसिद्धतर्केण वैदिकसमन्वयो विरुध्येत वा नवेति संदेहे, **न** जगत् चेतनप्रकृतिकम् । **अस्या**चेतनस्य जगतः चेतना**द्विलक्षणत्वात्**। यत् यद्विलक्षणं न तत् तत्प्रकृतिकम् । यथा तन्तुविलक्षणो घटो न तन्तुप्रकृतिकः । अतस्तर्केण विरोधाद्वैदिकसमन्वयो न युक्त इति **पूर्वपक्षः**। ननु ब्रह्मजगतोर्वैलक्षण्यं कुतोऽवगतमिति चेत् **तथात्वं च**=वैलक्षण्यं च । **शब्दात्**='विज्ञानं चाविज्ञानं चाभवत्' इत्यादिश्रुतितोऽवगतमित्यर्थः ।

ननु 'तेहेमे प्राणा अहंश्रेयसे विवदमाना' इत्यादिश्रुतिभिर्ब्रह्मवज्जगतश्चेतनत्वावगमान्न तयोर्वैलक्षण्यमित्याशंक्याह—**सू** ॥ **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॥ ६ ॥ उक्तशङ्कानिरासार्थस्तुशब्दः । उक्तश्रुतिभिर्न जगतश्चेतनत्वं प्रत्येतव्यम् । 'ते हेमे प्राणा' इत्यादिषु प्राणाद्यभिमानिनीनां देवतानां व्यपदेशो भवति न प्राणादिमात्रस्य । कुतः । **विशेषानुगतिभ्याम्**='एता हवै देवता अहंश्रेयसे विवदमानाः' इति प्राणानां चेतनवाचिना देवताशब्देन विशेषितत्वात् 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिमन्त्रार्थवादादिषु सर्वत्र तदभिमानिदेवतानामनुगतिश्रवणाच्चेत्यर्थः। अतो न चेतनं जगत् । तस्मादचेतनस्य जगतो वैलक्षण्यान्न चेतनप्रकृतिकत्वम् ।

**सिद्धान्तस्तु- सू ॥ दृश्यते तु** ॥ ६ ॥ तुशब्दः पूर्वपक्षनिरासार्थः । यदुक्तं चेतनविलक्षणं जगन्न तत्प्रकृतिकमिति । तन्न । चेतनात्पुरुषात्तद्विलक्षणानां नखलोमादीनामचेतनानाम् अचेतनाच्च गोमयाच्चेतनवृश्चिकादीनामुत्पत्तिर्यतो दृश्यते अत इत्यर्थः ॥

असत्कार्यवादप्रसङ्गमाशङ्क्य निराचष्टे-**सू ॥ असदिति चेन्न प्रतिषेधमात्रत्वात्** ॥ ७ ॥ ननु तर्हि चेतनस्य नामरूपादिहीनस्य अचेतननामरूपादिमज्जगद्धेतुत्वे उत्पत्तेः पूर्वं जगदसदेव स्यादिति चेत् । न । कुतः । **प्रतिषेधमात्रत्वात्**='असत्स्या'दिति योऽयं प्रतिषेधः तन्मात्रत्वात् । न तु तस्य प्रतिषेध्यमस्तीत्यर्थः । कार्यसत्तायाः कारणाव्यतिरेकात् स्थितिदशायामिवोत्पत्तेः पूर्वमपि ब्रह्मात्मकमेवेदं जगदिति भावः ॥

जगद्ब्रह्मणोरुक्तं कार्यकारणत्वमसहमानश्चोदयति-**सू ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्** ॥ ८ ॥ शुद्धत्वादिगुणकं ब्रह्म जगदुपादानमित्यसमञ्जसम् । कुतः **अपीतौ**=प्रलयकाले । **तद्वत्प्रसङ्गात्**=कार्यवत् कारणस्यापि ब्रह्मणोऽशुद्धत्वादिप्रसङ्गादित्यर्थः । अतः जगद्ब्रह्मणोरुक्तं कार्यकारणत्वमसमञ्जसमित्यर्थः । एवमाक्षेपे परिहरति-**सू ॥ न तु दृष्टान्तभावात्** ॥ ९ ॥ तुशब्द एवकारार्थः । पूर्वोक्तमसामञ्जस्यं नास्त्येव । कुतः । **दृष्टान्तभावात्**=कार्यं कारणे लीयमानं स्वधर्मेण कारणं न दूषयतीत्यस्मिन्नर्थे शतशो मृद्घटादीनां दृष्टान्तानां सत्त्वादित्यर्थः ॥ इत्थं स्वपक्षे दोषान्परिहृत्य तानेव परपक्षे निरूपयति-**सू ॥ स्वपक्षदोषाच्च** ॥ १० ॥ जगद्ब्रह्मणोः विलक्षणत्वात्प्रकृतिविकारभावानुपपत्तिः उत्पत्तेः प्राक् जगतोऽसत्त्वप्रसङ्गः प्रलये कार्यवत्कारणस्यापि ब्रह्मणोऽशुद्धत्वादिप्रसङ्गः इति सांख्येनास्मत्पक्षे ये दोषा उद्भावितास्ते शब्दादिहीनात्प्रधानाच्छब्दादिमतो विलक्षणस्य जगत उत्पत्तिमङ्गीकुर्वतां सांख्यानामपि समानाः । वस्तुतः प्रपञ्चसत्यत्ववादिनां सांख्यानां मत एवैते दोषाः नानिर्वचनीयवादिनामस्माकं मते इति भावः ॥

इतश्च न केवलेन तर्केण वैदिकसमन्वयो विरुध्यत इत्याह-**सू॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः** ॥ ११ ॥ एकेन तार्किकेणानुमितोऽप्यर्थोऽन्येन श्रेष्ठतरेणान्यथा नीयत इति केवलस्य **तर्कस्य अप्रतिष्ठानादपि**=अप्रतिष्ठितत्वाच्च । न तेन समन्वयविरोधशङ्केत्यर्थः । कस्यचित्तर्कस्याप्रतिष्ठितत्वेऽपि कस्यचित्प्रतिष्ठितत्वसंभवात् **अन्यथानुमेयमिति चेत्**=अप्रतिष्ठिततर्कादन्येन प्रकारेण प्रतिष्ठिततर्केण समन्वयविरोधादिकमनुमेयमिति चेत् अत्र समाधत्ते-**एवमपि**=अन्यत्र तर्कस्य प्रतिष्ठितत्वेऽपि प्रकृते लिङ्गादिहीने ब्रह्मणि वेदनिरपेक्षस्य तर्कस्याप्रतिष्ठितत्वदोषादविमोक्षप्रसंगः । यद्वा । **एवमपि**=महतां कपिलकणादादीनां परस्परविप्रतिपन्नैरागमनिरपेक्षैस्तर्कैस्तत्त्वनिर्णयाभावादविमोक्षप्रसङ्गः । मोक्षाभावः प्रसज्येत । तस्मादागमविरोधी तर्कोऽप्रमाणमिति न तेन विरोध इति भावः ॥

## इति भगवत्पादमते नविलक्षणत्वाधिकरणम् ॥ ३ ॥

**श्रीकण्ठमते** 'न विलक्षणत्वा'दित्यादिचतुःसूत्रात्मकमिदं न विलक्षणत्वाधिकरणम् 'अपीतौ तद्वत्प्रसङ्गा'दित्यादिका तर्काप्रतिष्ठाना'दिति योगविभागवती अपिशब्दवर्जिता पञ्चसूत्री अधिकरणान्तरमित्यस्ति विशेषः । नविलक्षणत्वाधिकरणीयं संदेहपूर्वपक्षादिकं भगवत्पादीयमतादविशिष्टम् । सूत्रार्थश्चाविशिष्ट एव प्रायशः । 'असदिति' सूत्रार्थवर्णने परं **'प्रतिषेधमात्रत्वात्**=वैलक्षण्य(सालक्षण्य)नियमप्रतिषेधमात्रविषयत्वाच्छ्रुतेः' इति व्याख्याय 'कार्यकारणयोर्जगद्ब्रह्मणोर्वस्त्वेकता न हीयत एवे'त्युक्तम् ॥ ३ ॥

### अथापीतौ तद्वत्प्रसङ्गाधिकरणम् ॥ ४ ॥

**सू ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्** ॥ ८ ॥ सत्कार्यवादेन जगद्ब्रह्मणोर्वस्त्वेकत्वाभ्युपगमे वैदिकसमन्वयस्य 'तर्कबाध्यत्वमस्ति न वेति संदेहः । **अपीतौ**=प्रलये । **तद्वत्**=स्थितिकाल इव । **प्रसङ्गात्**=चेतनाचेतनरूपप्रपञ्चधर्माणां विकाराज्ञानादीनां दोषाणां ब्रह्मण्यपि प्रसक्तेः ब्रह्मकारणवादिमतमसमञ्जसमिति **पूर्वपक्षः** । सिद्धान्तमाह-**सू ॥ न तु-दृष्टान्तभावात्** ॥९॥ पूर्वोक्तमसामञ्जस्यं **न तु**=न सिद्ध्यति । कुतः । **दृष्टान्तभावात्**=सकलचेतनाचेतनप्रपञ्चशरीरकस्य परब्रह्मणः शिवस्य कारणतया कार्यतया चावस्थानस्य श्रुतिपुराणाभ्यामभ्युपगमे गुणदोषव्यवस्थायां दृष्टान्तसद्भावात् वैदिकसमन्वयस्य सामञ्जस्यमसमञ्जसं न भवतीत्यर्थः । यथा मनुष्यादीनां बालत्वयुवत्वस्थविरत्वादिभावेऽपि बालत्वादयः शरीर एव सुखादयस्त्वात्मन्येव तथा शरीरभूतचेतनाचेतनप्रपञ्चगता अज्ञानविकारादयो दोषाः शरीरभूते प्रपञ्च एव तिष्ठन्ति निरवद्यत्वसार्वज्ञ्यादयो गुणास्तु आत्मभूते परमेश्वर एव । तस्मादेवं दृष्टान्तसद्भावात्पूर्वोक्तं श्रुत्यसामञ्जस्यं नास्त्येवेति भावः । **सू ॥ स्वपक्षदोषाच्च** ॥ १० ॥ चकार एवकारार्थः । केवलतर्कावलंबने **स्वपक्ष एव**=प्रधानकारणवाद एव । **दोषात्**=निर्विकारपुरुषसान्निध्येन प्रकृतिप्रवृत्तौ सत्यामन्यत्रान्यधर्मानुसंधानरूपाध्यासस्य निर्विकारे पुरुषेऽनुपपन्नत्वात् अचेतनायां प्रकृतौ चानुसंधानरूपाध्यासस्यैवाप्रसक्तेश्च अन्योन्यधर्माध्यासरूपसंसारस्यैवासंभवेन दोषसंभवात्प्रधानकारणवाद एव

तर्कबाध्यः स्यादिति भावः । किंच । सू ॥ **तर्काप्रतिष्ठानात्** ॥ ११ ॥ प्रतितर्कसंभवेन तर्कस्याप्रतिष्ठितत्वसंभवच्चा तन्मूलकः प्रधानकारणवाद एव परित्याज्यः न तु ब्रह्मकारणवादः ॥

सू ॥ **अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंगः** ॥ १२ ॥ **अन्यथा**=प्रतितर्कैर्यथाभिभवो न संभवति तथा प्रकारान्तरेण । **अनुमेयमिति चेत्**=प्रधानमनुमेयमिति चेत् तदपि न युज्यते । कुतः । तत्राप्येवं प्रतितर्ककलहसंभावनया अप्रतिष्ठितत्वदोषादनिर्मोक्ष एव स्यात् । अतः शुष्कतर्कमूलः प्रधानकारणवाद एव त्याज्यः न तु ब्रह्मकारणवादः इति युक्तम् ॥ **इति अपीतौ तद्वत्प्रसंगाधिकरणम्** ॥ ६ ॥

**रामानुजमते,** 'तर्काप्रतिष्ठानादपि' इति योगविभागेन अपिशब्दानुषङ्गपाठयुतं सूत्रनवकात्मकमिदं नविलक्षणत्वाधिकरणम् । यद्यपि न श्रीकण्ठमतवदधिकरणान्तरमत्र । तथापि सूत्रार्थवर्णनप्रकारस्तु श्रीकण्ठमतमेवानुसरतीतीदमत्रीहांवधेयम् । संदेहपूर्वपक्षसिद्धान्तादिनिरूपणप्रकारस्त्वन्यादृश एव । वेदान्तानां किं जगत्कारणतया ब्रह्मपरत्वमुत प्रधानपरत्वमिति संशये अज्ञत्वादिना जगतो ब्रह्मविलक्षणत्वेन ब्रह्मकार्यत्वप्रतिपादनासंभवात् सालक्षण्येन प्रधानप्रतिपादनसंभवाच्च प्रधानपरत्वमिति **पूर्वपक्षः । सिद्धान्तस्तु,** माक्षिकादिभ्यः क्रिम्यादीनां विलक्षणानामुत्पत्तिदर्शनात् ब्रह्मविलक्षणस्य जगतः तत्कार्यत्वं संभवत्येवेति । इत्थं पूर्वपक्षसिद्धांतानुरोधेन श्रीकण्ठीयप्रक्रियानुसारेण च सूत्रार्थवर्णनमस्मिन्मते सूपपादमिति विरम्यते विस्तरतः ॥ **इति रामानुजमते नविलक्षणत्वाधिकरणम्** ॥ ४ ॥

**आनन्दतीर्थमते'** इदमधिकरणं **'न विलक्षणत्वादस्य तथात्वं च शब्दात्** ॥ ४ ॥ **दृश्यते तु** ॥ ५ ॥' इति सूत्रद्वयात्मकम् । 'दृश्यते तु' इति सूत्रपाठोऽधिकोऽत्रान्यमतेभ्यः । फलादर्शनरूपहेतुना पाशुपतादिस्मृतेर्यथाप्रामाण्यं स्यादेवं क्वचित्क्वचिद्वेदोदितकारीर्यादिफलस्य वृष्ट्यादेरसंभवाद्वेदस्याप्यप्रामाण्यं स्याद्वा नवेति संशये क्वाचित्कस्य फलविसंवादस्योभयत्र साधारण्याद्वेदस्याप्यप्रामाण्यं स्यात्ततो न समन्वयसिद्धिरिति **पूर्वपक्षः । सिद्धान्तस्तु,** वेदस्य तदनुसारिस्मृत्यादेश्च स्वतःप्रामाण्याख्येतरवैलक्षण्यसत्त्वात् क्वाचित्कस्य फलविसंवादस्योभयत्र साधारण्येऽपि स्वतः प्रमाणे वेदे तदनुसारिस्मृत्यादौ चाङ्गवैगुण्यकल्पनया तदुपपत्तेरन्यत्र पौरुषेयतया स्वतःप्रामाण्याभाववतीषु शैवादिस्मृतिषु तत्कल्पनाया अयुक्तत्वाच्च वेदस्य तथात्वासंभवान्न समन्वयासिद्धिरिति । **सूत्रार्थस्तु, अस्य**=श्रुतितदनुसारिस्मृत्यादेः । **तथात्वं न**=शैवादिस्मृतिवदप्रामाण्यं न भवति । कुतः । **विलक्षणत्वात्**=स्वतःप्रामाण्याख्येतरवैलक्षण्यात् । किंच । श्रुतेर्नित्यत्वाख्यवैलक्षण्यवत्त्वात्स्मृतेः श्रुत्यनुसारित्वाख्यवैलक्षण्यवत्त्वाच्च । तथात्वमित्यस्योभयत्रान्वयः । **तथात्वं च**= उक्तवैलक्षण्यवत्त्वं च । **शब्दात्**='वाचा विरूपनित्यये'त्यागमान्निश्चितमित्यर्थः ।

सू ॥ **दृश्यते तु** ॥ ५ ॥ तुशब्दो विशेषार्थे । यतः तत्फलयोग्याधिकारिविशेषाणां श्रुत्याद्युक्तं फलं **दृश्यते**=उपलभ्यते अतो नाप्रामाण्यमित्यर्थः ॥ **इत्यानन्दतीर्थमते नविलक्षणत्वाधिकरणम्** ॥ ४ ॥

## अथाभिमान्यधिकरणम् ॥ ३ ॥

सू ॥ **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॥ ६ ॥ **दृश्यते च** ॥ अत्राधिकरणे 'मृदब्रवीत्' 'आपोऽब्रुवन्' इत्यादियुक्तिविरुद्धार्थाभिधायकत्वाद्वेदवचसामप्रामाण्यं भवति वा नवेति संदेहः । मृन्न वक्री जडत्वादित्यादियुक्तिविरोधाद्वेदवचसामप्रामाण्यं स्यात् इति **पूर्वपक्षः** । तत्र मृदादिपदानां तत्तदभिमानिदेवतापरत्वेन विरोधाभावादप्रामाण्यं न भवतीति **सिद्धान्तः । सूत्रार्थस्तु,** तुशब्दोऽवधारणे । **अभिमानिव्यपदेशः**='मृदब्रवी'दित्यादौ अभिमानिनश्चेतनस्यैवोक्तिः न त्वचेतनस्य । कुतः । मृन्न वक्री जडत्वात् इति युक्तिविरोधात् । तथा च न वेदाप्रामाण्यम् । नन्वभिमानिनो विदेहत्वायोगेन सदेहत्वे तस्यादर्शनमन्यवस्त्वधिष्ठानेन वक्तृत्वमनेकाभिमन्यमानाधिष्ठातृत्वं चेत्यादिकं कथं युज्यते इत्यत आह-**विशेषानुगतिभ्याम्=विशेषः**=विशिष्टं सामर्थ्यम् **अनुगतिः**=सर्वाभिमन्यमानव्याप्तिः । ताभ्यां सर्वं युज्यत इत्यर्थः । सू ॥ **दृश्यते च**=अभिमानिदेवतायां सामर्थ्यं योगिभिरुपलभ्यते च । अतोऽपि नास्त्यदर्शनविरोध इत्यर्थः ॥ **इत्यभिमान्यधिकरणम्** ॥ ३ ॥

## अथासदधिकरणम् ॥ ४ ॥

अत्र **'असदिति चे'**दित्यादिः **'एतेन शिष्टापरिग्रहा अपि व्याख्याताः ।'** इत्यन्ता षट्सूत्री असदधिकरणत्वेन व्यपदिश्यते । पूर्वाधिकरणे केवलयुक्त्यविरोधाय हि मृदादिशब्दानामप्रसिद्धार्थपरत्वकल्पनेन वेदप्रामाण्यं व्यवस्थापितम् । तथापि प्रलये सर्वाभावाभ्युपगमस्य श्रुत्यनुमोदितयुक्तिसिद्धत्वाद्विश्वप्रागभावस्यैव जगत्कर्तृत्वमुपपद्यते न विष्णोरिति **पूर्वपक्षः** । प्रलये सर्वाभावानभ्युपगमात् 'सदेवेद' मित्यादिबहुश्रुतिविरोधात् प्रतिषेधस्य कर्तृत्वासंभवाच्च सर्वाभावपक्षे

## अथ शिष्टापरिग्रहाधिकरणम् ॥ ५ ॥

## ॥ सू ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १३ ॥

यथेदं सांख्यदर्शनं तर्कमूलत्वेनाप्रतिष्ठितत्वादिना प्रत्याख्यातं तथैव तेनैव हेतुना शिष्टानामपरिग्रहाः कणभक्षाक्षपादादीनां पक्षा अपरिग्राह्या इति व्याख्याताः। एतदुक्तं भवति–कणादादिमतसिद्धपरमाणुकारणवादोऽपि निराकृत इति ॥

इति शिष्टापरिग्रहाधिकरणम् ॥ ५ ॥

## अथ शिष्टापरिग्रहाधिकरणम् ॥ ५ ॥

सू ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१३॥ एतेन तर्काप्रतिष्ठितत्वदूषणेन शिष्टानां शुष्कतर्कावलंबिषु कपिलादिष्ववशिष्टानां कणभक्षादीनां येऽपरिग्रहाः वेदपरिग्रहरहिताः पक्षास्तेऽपि व्याख्याताः वैदिकैरपरिग्राह्यत्वेन उपपादितप्राया इति सूत्रयोजनामभिप्रेत्य व्याचष्टे–यथेति। एतेनेत्यतिदेशाधिकरणस्याधिकशंकां दर्शयति–एतदुक्तमिति। आदिशब्देनाक्षचरणक्षपणकसमन्तभद्रादयो गृह्यन्ते। अनेन प्रधानकारणवादापेक्षया बहुसंमतत्वमेकमधिकशंकाकारणं सूचितम्। परमाणुत्वकीर्तनेनाप्यन्यदधिकशंकाकारणं सूचितम्। अल्पाधिकपरिमाणयोर्हि तंतुपटादिषूपादानोपादेयभावो दृष्टः न तु वैपरीत्यं दृष्टम्। अतस्त्रिसरेणुप्रभृतिषु पृथिवीगोलकादिपर्यंतेषु कार्येषु परमाणूनामेव कारणत्वं युक्तं न तु कार्येभ्योऽधिकपरिमाणस्य प्रधानादेरिति। निराकृत इति। अप्रतिष्ठिततर्कमूलत्वाविशेषेण परमाणुकारणवादिनामेव परमाणुगतसत्यत्वासत्यत्वबाह्यत्वांतरत्वव्यवस्थापकतर्काणां

---

दृष्टान्ताभावाच्च वेदपरिग्रहशून्याः अवशिष्टा जीवकालस्वभावादिकर्तृत्वपक्षास्सर्वेऽपि निरस्ता इत्यतस्सिद्धं विष्णोर्जगत्कर्तृत्वमिति सिद्धान्तः। सूत्रार्थस्तु सू ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ८ ॥ असत्=विश्वप्रागभाव एव। जगत्कर्तृ, नेश्वर इति चेन्न। कुतः। प्रतिषेधमात्रत्वात्=अभावधर्मात्मतामन्तरेण स्वरूपत एव निषेधबुद्धिविषयत्वादित्यर्थः ॥

सू ॥ अपीतौ तद्वत्प्रसंगादसमञ्जसम् ॥ ९ ॥ अपीतौ=प्रलये। तद्वत्प्रसंगात्=असन्मात्रवस्त्वप्रसंगात् असत्कर्तृत्वमसमञ्जसमयुक्तमित्यर्थः।

सू ॥ न तु दृष्टान्तभावात् ॥ १० ॥ तुशब्दोऽवधारणे। प्रलये सर्वासत्त्वं न युज्यते। कुतः। तदा सर्वपदार्थसत्त्व एव दृष्टान्तस्य भावात् सद्भावादित्यर्थः।

सू ॥ स्वपक्षदोषाच्च ॥ ११ ॥ स्वपक्षे प्रलये सर्वासत्त्वपक्षे दोषात्=दृष्टान्ताभावाख्यदोषाच्च न तत्पक्षो युक्त इत्यर्थः ॥

सू ॥ तर्काप्रतिष्ठानादन्यथाप्यनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः॥ १२॥ तर्काप्रतिष्ठानात्=दृष्टान्ताभावादिरूपतर्कस्याप्रतिष्ठानात् अव्यवस्थितत्वात्। अन्यथापि=सिद्धान्त्युक्तप्रकारादन्यरूपेणापि प्रतितर्केण अनुमेयं=साधनीयमिति चेत्। नेति शेषः। कुतः। एवमपि=एवं सति तर्कमात्रस्याप्रामाण्ये सति। अनिर्मोक्षप्रसङ्गः=सर्वसिद्धान्तिभिः स्वस्वशास्त्रप्रयोजनत्वेनाङ्गीकृतस्यापि मोक्षस्यापि लोपप्रसंगः। कुतः। तस्य विप्रतिपन्नं प्रति अनुमानेनैव साधनीयतया तस्याप्येवमप्रामाण्योक्तिसंभवादित्यर्थः ॥

सू ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १३ ॥ एतेन–स्वपरपक्षयोः दृष्टान्तभावाभावाख्यहेतुना अपरिग्रहाः=वेदपरिग्रहशून्याः तद्विरुद्धाश्च। शिष्टाः=अवशिष्टाः जीवकालस्वभावकर्तृत्वपक्षा अपि। व्याख्याताः प्रत्याख्याताः दूषिता इत्यर्थः ॥

इति सूत्रार्थचन्द्रिकायामानन्दतीर्थमते असदधिकरणम् ॥ ४ ॥

## अथ भोक्त्रापत्त्यधिकरणम् ॥ ६ ॥

### ॥ सू ॥ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १४ ॥

यदुक्तं पूर्वत्र चिदचित्प्रपञ्चविशिष्टात्मा शिव एवाद्वितीयः कारणं कार्यं च भवतीति विशिष्टशिवाद्वैतम्, तस्य समन्वयसिद्धस्य युक्तिबाधापत्तिरस्ति न

---

परस्परप्रतिघातेन उपादानोपादेययोरल्पाधिकपरिमाणत्वनियमस्य प्रचितपरिमाणतूलपिंडाद्यारब्धेषु........प्रभृतिषु व्यभिचारेण च निरस्त इत्यर्थः ॥

इति शिष्टापरिग्रहाधिकरणम् ॥ ५ ॥

### अथ भोक्त्रापत्त्यधिकरणम् ॥ ६ ॥

॥ सू ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥ अतिदेशाधिकरणं परित्यज्य प्रधानेन तत्पूर्वाधिकरणेन संगतिं विभावयितुं तदर्थमनुवदति—यदुक्तमिति । तत्र सूक्ष्मचिदचिद्विशिष्टशिवः कारणं स्थूलचिदचिद्विशिष्टस्स एव कार्यमिति विशिष्टशिवाद्वैतमारंभणाधिकरणे समर्थयिष्यमाणं सिद्धं कृत्वा कार्यकारणावस्थयोर्विशेषणभूतस्य चिदचित्प्रपञ्चस्य तच्छरीरत्वमुपपादितं मनुष्यादिशरीरगतबालत्वयुवत्वादिन्यायेन तद्दोषाणां संस्पर्शः शिवे न भवतीति समर्थनार्थम् । ततश्च चिदचिच्छरीरके ब्रह्मणि वेदांतानां समन्वय इति पर्यवसितम् । इदं नोपपद्यते । शरीरशरीरिधर्माणामसंकरेण व्यवस्थादर्शनेऽपि शरीरिणां शरीरप्रयुक्तसुखदुःखभोक्तृत्वस्यापि दर्शनेन ब्रह्मणोऽपि शरीरित्वे तथात्वप्रसंगादित्याक्षेपिकी संगतिरिति भावः । चेदित्यंतं सूत्रं शिवस्य शरीरित्वे सुखदुःखभोक्तृत्वापत्तेर्जीवा-

---

नयमणिमालायाम् ।

### अथ शिष्टापरिग्रहाधिकरणम् ॥ ५ ॥

सू ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १३ ॥

माभूत्प्रधानवादस्समन्वयस्यास्य बाधको योऽसौ । अणुकारणवादस्तु स्यात्कणभक्षादिबहुमुनिप्रमितः ॥ ९५ ॥
शून्याशून्यक्षणिकाक्षणिकलाद्युन्मुखैः कुतर्कशतैः । व्याहतमितरेतरतस्तमपि श्रुतिरेव बाधेत ॥ ९६ ॥

### इति शिष्टापरिग्रहाधिकरणम् ॥ ५ ॥

सूत्रार्थचन्द्रिकायाम्

### अथ शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

सू ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

**भगवत्पादमते,** अण्वादिकारणवादितार्किकाभिमतन्यायेन ब्रह्मकारणवादिवैदिकसमन्वयो विरुध्यते वा न वेति संदेहे विरुध्यत इति **पूर्वपक्षः** । तार्किकन्यायस्य वेदबाधितत्वान्न तेन विरुध्यत इति **सिद्धान्तः** । इदमतिदेशाधिकरणम् । **सूत्रार्थस्तु, एतेन**=मन्वादिभिः शिष्टैः केनचित्सत्कार्यवादाद्यंशेन परिगृहीतस्य प्रधानकारणवादस्य निराकरणप्रकारेण । **शिष्टापरिग्रहा अपि**=शिष्टैः केनचिदप्यंशेनापरिगृहीताः अण्वादिकारणवादा अपि । **व्याख्याताः**=निरस्ता वेदितव्याः इत्यर्थः ॥

**श्रीकण्ठमते,** यथेदं सांख्यदर्शनं तर्कमूलत्वेनाप्रतिष्ठितत्वादिना निराकृतं तथा एतेन हेतुना कणादाक्षपादादिबहुसम्मतः परमाणुकारणवादोऽपि तर्कमूलत्वाविशेषात् शिष्टापरिग्रहाच्च निराकृतो वेदितव्यः इति । सूत्रमपि व्याख्यातम् ।

**रामानुजमते,** श्रीकण्ठमतान्नास्ति विशेष इति न पृथक्प्रपञ्चनावसरः ।

**आनन्दतीर्थमते,** इदं सूत्रं पूर्वस्मिन्नधिकरण एवान्तर्भूतमिति तत्रैव व्याख्यातम् ॥

**इति सूत्रार्थचन्द्रिकायां शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥**

वेति संशयः । एवं सति पूर्वपक्षः प्रवर्तते । यदि चिदचिच्छरीरकत्वमिष्यते परमेश्वरस्य तदा शरीरित्वमस्य सिद्धम् । तथा च जीववत् सशरीरत्वेन तस्यापि शरीरसम्बन्धप्रयुक्तसुखदुःखभोक्तृत्वापत्तेरस्मात् संसारिणो जीवात् तस्य परमेश्वरस्याविभागः प्राप्नोति । अतोऽयं जीवः अयमीश्वर इति विशेषानुपपत्त्या जगद्विशिष्टत्ववादे परमेश्वरस्य निर्दोषस्वरूपासिद्धिप्रसङ्ग इत्येवं पूर्वपक्षी मन्यते । नात्र विरोध इति सिद्धान्तः । स्यादेव विभागो जीवात् परमेश्वरस्य निष्कलङ्कनिखिलमङ्गलाकारत्वेन । न खलु शरीरित्वप्रयुक्तमनिष्टभोक्तृत्वं, किन्तु पराधीनत्वप्रयुक्तमेव, यथा लोके राज्ञः सशरीरत्वेऽप्यनन्यवश्यस्य न स्वाज्ञानानुवृत्तिकृतानिष्टप्रसङ्ग इति । भोक्तृत्वं नेतरसमानम् । 'ज्ञाज्ञौ द्वावजावीशानीशौ' इति जीवेश्वरयोः स्वातन्त्र्यमस्वातन्त्र्यं च स्वतः सिद्धमेव । अतः स्वतन्त्रस्य परमेश्वरस्य जीवादस्वतन्त्राच्छरीरसम्बन्धसामान्येन नाविभागप्राप्तिः । नातो विशिष्टाद्वैतहानिः ॥　　इति भोक्त्रापत्त्यधिकरणम् ॥ ६ ॥

---

विभागस्तदविशेष आपद्यते चेदित्यर्थमभिप्रेत्य पूर्वपक्षयति—यदीति । जगद्विशिष्टत्ववादे जगच्छरीरकत्ववादे । 'स्याल्लोकव'दिति सूत्रांशं सिद्धांतार्थं व्याचष्टे—स्यादेव विभाग इत्यादिना । अस्याधिकरणस्य गुहाधिकरणादिषु ब्रह्मणश्शरीरित्वप्रयुक्तशङ्कानिराकरणार्थैः पौनरुक्त्यं प्रथमाध्याय एवाविष्कृतं तत्र तत्र ॥

इति भोक्त्रापत्त्यधिकरणम् ॥ ६ ॥

---

नयमणिमालायाम् ।

अथ भोक्त्रापत्त्यधिकरणम् ॥ ६ ॥

सू ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥

चिदचिच्छरीरिता चेदीशस्येष्टा शरीरित्वात् । दुःखादिभोक्तृता स्यादित्यविशेषो भवेज्जीवात् ॥ ९७ ॥
नैवेदं जीवानां सशरीरत्वादनिष्टभोक्तृत्वम् । किं तु पराधीनत्वाल्लोके राज्ञ इव तच्च नास्ति विभोः ॥ ९६ ॥

इति भोक्त्रापत्त्यधिकरणम् ॥ ६ ॥

सूत्रार्थचन्द्रिकायाम्

अथ भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥

सू ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

**भगवत्पादमते,** ब्रह्मणि तर्कस्याप्रतिष्ठितत्वेऽपि जगद्भेदे तर्कसहितप्रत्यक्षस्य प्रतिष्ठितत्वात्तेनाद्वितीयब्रह्मकारणवादी वैदिकसमन्वयो विरुध्यते नवेति संदेहे प्रत्यक्षसिद्धस्यास्य भोक्तृभोग्यविभागस्याभावप्रसङ्गात्तर्कसहितप्रत्यक्षेण विरुध्यत एवेति **पूर्वपक्षः** । लोकदृष्टसमुद्रतरङ्गादिन्यायेनौपाधिको भोक्तृभोग्यलक्षणो विभाग उपपद्यत एवेति नास्ति तर्कसहितप्रत्यक्षेणाद्वितीयब्रह्मकारणवादिसमन्वयस्य विरोध इति **सिद्धान्तः** । **सूत्रार्थस्तु,** अद्वितीयब्रह्मणो जगदुपादानत्वे भोक्तृभोग्यप्रपञ्चस्य सर्वस्य ब्रह्मानन्यत्वेन **भोक्त्रापत्तेः**=भोक्तुर्भोग्यभावः भोग्यस्य भोक्तृभाव इति तयोरितरेतरभावापत्तेः । **अविभागश्चेत्**=भोक्ता देवदत्तो भोज्य ओदन इति विभागस्य प्रत्यक्षसिद्धस्याभावः प्रसज्येत चेत् । **स्याल्लोकवत्**= अद्वितीयब्रह्मोपादानकत्वेऽपि भोक्तृभोग्यरूपप्रपञ्चस्य परस्परं विभागः स्यादेव । कथम् । **लोकवत्**=यथा लोके मृदात्मनाऽभिन्नानां घटादीनां यथा वा समुद्रात्मनाऽभिन्नानां तद्विकाराणां फेनतरंगादीनां च परस्परं भेदः प्रत्यक्षसिद्ध औपाधिकोऽस्ति तद्वत् । अतो भेदस्य औपाधिकत्वान्न प्रत्यक्षविरोध इति सिद्धम् ॥

## अथ आरंभणाधिकरणम् ॥ ७ ॥

यद्यपि स्वातन्त्र्यास्वातन्त्र्यादिविरुद्धधर्मसम्बन्धेन जीवेश्वरयोर्विभाग उच्यते। तथाऽपि तयोः कार्यकारणयोरनन्यत्वमव्यतिरिक्तत्वं च सिद्ध्यत्येवेत्याह—

॥ सू ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥

इह कार्यकारणयोः प्रपञ्चब्रह्मणोः समन्वयसिद्धमनन्यत्वं सन्दिह्यते युक्तं न वेति। सन्देहस्य चेतनाचेतनत्वपरस्परविरुद्धधर्मसम्बन्धवैलक्षण्यं कारणम्। कथमनयोरनन्यत्वमुपपद्यते ? पूर्वाधिकरणे सर्वज्ञत्वादिमत्वेन परमेश्वरस्य

---

## अथ आरंभणाधिकरणम् ॥ ७ ॥

संगतिप्रदर्शनपूर्वकमुत्तराधिकरणमवतारयति–यद्यपीति। पूर्वाधिकरणे शरीरित्वकृतं न भवति सुखदुःखभोक्तृत्वं किं तु पारतंत्र्यकृतमिति परमस्वतंत्रस्य शिवस्य शरीरित्वेऽपि तन्न प्रसज्यत इत्युक्तम्। तर्हि मा भूत् ब्रह्मणः प्रपंचशरीरत्वांशे समन्वयस्य भंगः प्रपंचानन्यत्वांशे तु स्यात् प्रपञ्चशरीरकत्वोपपादकस्य स्वातंत्र्यास्वातंत्र्यतत्कृतभोक्तृत्वाभोक्तृत्वादिविभागरूपवैलक्षण्यस्यैवानन्यत्वप्रतिक्षेपकत्वादिति प्रत्युदाहरणसंगत्या पूर्वं तत्र तत्र सिद्धवत्कृत्य व्यवहृतस्य प्रपंचशिवयोः कार्यकारणभावेनानन्यत्वस्य वैलक्षण्यकृतान्तर्गणिकभेदाविरोधेन निरूपणार्थमुत्तराधिकरणारंभ इत्यर्थः ॥सू॥ तदनन्यत्वमारंभणशब्दादिभ्यः ॥ १३ ॥ वैलक्षण्यं कारणमिति। यदि तद्वैलक्षण्यमनन्यत्वविरोधि तदा तद्युक्तमित्येवमनन्यत्वविरोधित्वाविरोधित्वाभ्यां संदिह्यमानं वैलक्षण्यमुपन्यस्तसंदेहस्य कारणमित्यर्थः। भेदकस्वभावस्य वैलक्षण्यस्य अभेदविरोधित्वादनन्यत्वमयुक्तमिति पूर्वपक्षयति–कथमिति। यदि किंचिद्विलक्षणेनापि चेतनवर्गेणानन्यत्वमयुक्तं तदा किमु वक्तव्य-

---

**श्रीकण्ठमते,** परमेश्वरस्य चिदचिच्छरीरकत्वाभ्युपगमे तस्य सशरीरत्वसिद्धौ जीववत्तस्यापि शरीरसंबन्धप्रयुक्तसुखदुःखभोक्तृत्वापत्तेस्संसारिणो जीवात्तस्य परमेश्वरस्य अविभागः वैलक्षण्याभावः प्राप्नोति। अतो जीवेश्वरयोर्विशेषानुपपत्त्या परमेश्वरस्य निर्दोषस्वरूपासिद्धिप्रसंगात् समन्वयसिद्धस्य चिदचित्प्रपञ्चशरीरकाद्वितीयब्रह्मकारणवादस्य युक्तिबाधापत्तिरिति **पूर्वपक्षः।** यथा लोके राज्ञः सशरीरत्वेऽपि स्वतंत्रस्य तस्य स्वाज्ञानुवृत्तिकृतानिष्टाप्रसक्तेः तदीयभोक्तृत्वस्यास्ति वैलक्षण्यं तद्वत्परमेश्वरस्य स्वतंत्रस्य राजशासनवश्यानां शरीरिणामिव शरीरसंबन्धसामान्येन नास्ति स्वाज्ञानुवृत्तिकृतानिष्टप्रसक्तिरिति वैलक्षण्यस्य स्वतस्सिद्धत्वान्नात्र विरोध इति सिद्धांतः। अतो न विशिष्टाद्वैतहानिरिति भावः। इति॥

**रामानुजमते,** अत्राप्यधिकरणे नास्ति श्रीकण्ठमताद्विशेषः। **आनन्दतीर्थमते,** ननु 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इति भोक्तुर्जीवस्य मुक्तौ ब्रह्मभावापत्तिश्रवणात्तत्रैव संसारेऽपि तयोरभेदादविभागः प्राप्नोति। ततश्च जगत्कर्तृत्वरहिततया प्रत्यक्षसिद्धेन जीवेनात्यन्ताभेदाद्ब्रह्मणो जगत्कर्तृत्वं न संभवति इति **पूर्वपक्षः।** यथा लोके उदकद्वयभेदेऽपि स्थानैक्यनिबन्धनः उदके उदकान्तरस्यैकीभावव्यवहारः एवमयमपि मुक्तौ जीवेशयोरेकीभावव्यवहार उपचरितः स्यात्। अतो जीवेशयोरेकीभावस्य 'सायं गोष्ठे गाव एकीभवन्ती' तिवत् स्थानैक्यनिबन्धनत्वप्रतीत्या जीवेशयोर्भेदस्य सिद्धौ ब्रह्मणो जगत्कर्तृत्वं भवत्येवेति **सिद्धान्तः** ॥ **सूत्रार्थस्तु, भोक्त्रापत्तेः**=यस्माद्भोक्तुः जीवस्य 'परेऽव्यये सर्व एकीभवन्ती' ति वाक्ये ब्रह्मभावापत्तिश्रवणात् तयोरविभागः भेदाभावः तस्मादल्पजीवाभिन्नब्रह्मणः जगत्कारणत्वं न युक्तमिति चेन्नेति शेषः। कुतः। यतः **लोकवत्।** यथा लोके जले जलान्तरस्यैकीभावोक्तिस्तथात्रापि स्थानैक्याद्यालंबनेन जीवेशयोरेकीभवन्तीत्यैक्योक्तिः। **स्यात्**–उपचरिता भवेत्। अतो नोक्तदोष इत्यर्थः॥

इति सूत्रार्थचन्द्रिकायां भोक्त्रापत्त्यधिकरणम् ॥ ६ ॥

भोक्तृत्वाज्ञत्वादिना जीवस्य चोभयोर्विभागो निर्दिष्टः । चिदचिद्वस्तुनोरत्यन्तविलक्षणत्वादनन्यत्वकथा दूरत एव । न हि कार्यकारणत्वमनन्यत्वसाधकं, गोमयवृश्चिकादौ सत्यपि तस्मिन् वैलक्षण्यदर्शनात् । घटमृत्पिण्डादिष्वप्यर्थक्रियादिव्यवहारभेदाद्भेदो नास्त्येव । अथवा—कार्यकारणयोरत्यन्ताभेदे प्रपञ्चब्रह्मणोरखण्डतया सर्वत्र कर्तृकर्मक्रियादिव्यवहारलोपः स्यात् इत्येवं प्राप्ते ब्रूमः—कारणात् ब्रह्मणः कार्यं जगदनन्यदेव। कथमवगम्यते ? आरम्भणशब्दादिभ्यः । यथा 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेयेति' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रः' इत्यादिशब्देभ्यः ॥

यदुक्तं न हि कार्यकारणत्वमनन्यत्वसाधकमिति तत्राह—

॥ सू ॥ भावे चोपलब्धेः ॥ १६ ॥

घटादिकार्यभावे च तदेव मृद्द्रव्यं घट इत्युपलभ्यते । ततः कारणादनन्यदेव कार्यम् । तथा 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' । इति

---

मत्यंतविलक्षणेनाचेतनवर्गेणेत्याह—चिदचिद्वस्तुनोरिति । नन्वभेदव्याप्तेनोपादानोपादेयभावेन ब्रह्मप्रपञ्चयोरनन्यत्वसिद्धौ घटादिषु श्यामरक्तरूपादिवैलक्षण्यवद्देशकालाद्यवच्छेदभेदेन स्वातंत्र्यपारतंत्र्यादिना वैलक्षण्यमुपपादनीयमित्याशंक्य व्यभिचारात्तस्याभेदव्याप्तिरसिद्धेत्याह—न हीति । वस्तुतो विरुद्धोऽयं हेतुः न तु क्वचिदेव साध्यव्यभिचारीत्याह—घटमृत्पिण्डादिष्वपीति । घटेनोदकाहरणं क्रियते मृत्पिण्डेन घटशरावादिकमित्यर्थक्रियाभेदः । घटस्य मृत्पिण्डदण्डचक्रादि कारणं मृत्पिण्डस्य जलसंयोजनपूर्वकमर्दनादीति कारणभेदः । पृथुबुध्नोदराकारः पिण्डाकारश्चेत्याकारभेदः । तदुल्लेखी बुद्धिभेदः । तत्प्रवृत्तिनिमित्तकश्शब्दभेदः । इदानीं मृत्पिण्डोऽस्ति घटो नास्तीति सत्वासत्वभेदः । मृत्पिण्डो दृष्टः घटशरावादिकं न दृष्टमिति ज्ञातत्वाज्ञातत्वभेदः । बहवः तंतवः एकः पटः इति संख्याभेदः । एवमर्थक्रियादिभेदात् सर्वत्राप्युपादानोपादेयभावे भेद उन्नीयत इति विरुद्धो हेतुरित्यर्थः । अथवेति । किंचेत्यर्थः । अखण्डतयेति । अत्यंतैक्यापत्त्येत्यर्थः । कर्तृकर्मेति । कुलालो घटं करोतीत्यादिव्यवहारेषु कर्तृकर्मक्रियाणां भेदस्य दृष्टत्वेन सर्वत्र कर्तृकर्मभावादीनां भेदाक्षेपकत्वावगमादित्यर्थः । साध्याहारं सूत्रं योजयन् सिद्धांतमाह—कारणादिति । आरंभणश्रुतेः ब्रह्मप्रपंचानन्यत्वसाधकत्वमुत्तरसूत्रे भाष्यकार एव स्पष्टीकरिष्यति । आदिशब्दगृहीतश्रुतीनां तत्साधकत्वं तु सामानाधिकरण्यादिभिः स्पष्टम् । उदाहृतश्रुतिकलापानुग्राहकस्यानन्यत्वसाधकानुमानस्य दृष्टांतप्रसाधनार्थत्वेन उत्तरसूत्रमवतारयति—यदुक्तमिति । सू ॥ भावे चोपलब्धेः ॥ १६ ॥ ननु, घटाद्युत्पत्तौ सत्यां तदेवेदं मृद्द्रव्यमिति प्रत्यभिज्ञेयमर्थक्रियादिभेदयुक्तिबाधितत्वाद्भ्रांतेत्याशंक्य द्रव्यैक्येऽप्यवस्थाभेदकृतस्तद्भेद इति श्रुत्यैव दर्शितमिति विभावयितुमारंभणश्रुतेरर्थमाह—तथेति । एकवि-

श्रुत्याऽपि प्रतिपाद्यते। विकारो नामधेयं च वाचारम्भणं वाचाया: अभिलापार्थक्रियारूपव्यवहारस्य निष्पादकं भवति। मृद्द्रव्यस्यैव घटाद्यवस्था घटादिनामधेयं चार्थक्रियाभिलापरूपव्यवहारनिष्पत्तये भवतीति यावत्। वस्तुतो घटादिकमपि मृत्तिकेत्येव सत्यं प्रामाणिकं मृद्व्यतिरेकेण घटभावादर्शनात्। अथवा— 'वाचाऽऽरम्भणं विकारः' विकारो घटो वाचारम्भणं घटोऽयमिति वागारम्भविषयमात्रम्। मृद्द्रव्य एव व्यवहारसिद्ध्यर्थं जायमानमवस्थान्तरम्, न तु मृदो द्रव्यान्तरम्। 'मृत्तिकेत्येव नामधेयं सत्यं' घटादिकं मृत्तिकेति कृत्वैव तत्र सर्वं मृत्पिण्डादिनामधेयं सत्यं सति प्रामाणिकेऽर्थे साधु, न तु द्रव्यान्तरमिति कृत्वा।

---

ज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनार्थं 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'दिति दृष्टांत उपन्यस्तः।तत्र नायं दृष्टांत उपपद्यते।मृत्पिण्डस्य तद्विकाराणां घटशरावादीनां चाभिलापार्थक्रियादिभेदेनात्यंतभिन्नतया मृत्पिण्डज्ञानेन तद्विकाराणां ज्ञातत्वायोगादित्याशंकायां तदुपपादनार्थं वाचारंभणश्रुतिः प्रववृते। तत्र प्रतिज्ञादृष्टांतौ प्रकृत्यधिकरणे व्याख्यातौ। इह हेतूक्ता वाचारंभणश्रुतिर्व्याख्यायते। विकारो घटत्वपृथुबुध्नोदरत्वादिः। नामधेयं तत्प्रवृत्तिनिमित्तकं घटादिपदं चेत्येतत् वाचारंभणं वाचा वाक् घटमानयेत्याद्यभिलापः। तेन तज्जन्यार्थक्रियापि लक्ष्यते। आरभ्यते अनेनेत्यारंभणं कारणम्। वाचाया आरंभणमभिलाभार्थक्रिययोः कारणमिति यावत्। नपुंसकानपुंसकयोः नपुंसकशेषैकवद्भावश्च। अनेनैतदुक्तं भवति। मृत्पिण्डतद्विकाराणां द्रव्यैक्येऽपि पिण्डपृथुबुध्नोदराद्याकारभेदेन तत्प्रवृत्तिनिमित्तकनामधेयभेदेन चार्थक्रियाभिलापभेद इति। ननु द्रव्यभेदेनैव तद्भेदः किमिति नेष्यते इत्याशंक्योक्तं 'मृत्तिकेत्येव सत्य' मिति। घटशरावादिकमपि मृत्तिकेत्येव सत्यं प्रामाणिकं मृदेवायं घट इत्यादिप्रत्यभिज्ञाप्रत्यक्षसिद्धं गुरुत्वद्वैगुण्याभावादियुक्तिसिद्धं च। एवं प्रमाणसिद्धैक्यनिर्वाहायार्थक्रियाभिलापभेदस्य विकारनामधेयभेदोपाधिकत्वं कल्पयितुं युक्तमिति भावः। अथवैवं वाक्ययोजना— वाचारंभणं विकारः घटशरावादिविकारः घटोऽयमित्यादिव्यवहारविषयमात्रं न तु मृदो द्रव्यांतरम्। द्रव्यांतराभावे मृदः पिण्डतादशायामप्रवृत्तं घटशरावादि नामधेयं कथं पश्चात् प्रवर्तत इत्याशंकायामुच्यते —नामधेयं मृत्तिकेत्येव सत्यम्। मृन्नामधेयमिव घटशरावादिनामधेयमपि तद्द्रव्यं मृत्तिकेति कृत्वैव सति प्रामाणिकेऽर्थे साधु न तु द्रव्यांतरमिति कृत्वा। प्रत्यभिज्ञाविरोधादिना द्रव्यांतरस्याप्रामाणिकत्वादिति। अस्मिन्पक्षे 'सत्ये साधौ च सच्छब्दः' इति स्मृतेः प्रामाणिकार्थवाचिसत्यशब्दपर्यायात् सच्छब्दा'त्तत्र साधु'रित्यर्थे यत्प्रत्ययः। आरंभणशब्दो विषयभावेन निष्पादकं वदन्विषयत्वपर्यवसायी। तस्य पुल्लिंगविशेषणत्वेऽपि लिंगसामान्यविवक्षया नपुंसकलिंगनिर्देशः। द्विगुरेकवचनमितिवदिति विशेषः। भाष्ये द्वितीयव्याख्याने 'यतो घटो मृदेवे'ति वाक्येन मृद्घटयोर्द्रव्यैक्ये प्रत्यभिज्ञारूपं प्रमाणं दर्शितम्। प्रथमव्याख्याने 'मृद्व्यतिरेकेण घटभावादर्शना'दिति वाक्येन मृद्व्यतिरेकेण घटे गुरुत्वादिधर्माणामदर्शनरूपा तत्र युक्तिर्दर्शिता। एवं च यद्यपि मृत्पिंडघटशरावादीनामभिलापार्थक्रियादिभेदश्चैत्रमैत्रादीनामिव द्रव्यांतरत्वेनाप्युपपद्यते बालयुवस्थविराणामि-

**यतो घटो मृदेवेति। अतः कारणादनन्यदेव कार्यम्। अर्थक्रियादिव्यवहारभेदस्तु,**

वावस्थाभेदेनाऽपि। अथाप्यत्राभेदेनैव तदुपपादनं कार्यम्। कार्यकारणानन्यत्वस्य युक्त्यनुभवानुग्रहश्रुतिसिद्धत्वादित्युपसंहरति—अत इति। अर्थक्रियादीत्यादिशब्देन प्राङ्निर्दिष्टा बुद्ध्यभिलापादयस्सर्वेऽपि गृह्यंते। ननु कार्यस्य घटत्वाद्यवस्थाविशेषविशिष्टत्वेन बुद्ध्यभिलापविशेषविषयत्वाज्ञातत्वासत्त्वादिकमुपपद्यताम् एकत्वानेकत्वरूपसंख्याभेदः कथमुपपद्यते। कोऽत्र विशेषः। मृदः पिण्डत्वावस्थाप्रहाणेन कुड्यत्वावस्थाप्राप्तिवदनेकत्वावस्थाप्रहाणेन एकत्वावस्थापत्तिः। पुनश्च कुड्यत्वावस्थाप्रहाणेन पिण्डत्वावस्थाप्तिवदेकत्वावस्थाप्रहाणेनानेकत्वावस्थाप्तिश्चेत्यापद्यत एव। ननु, विरलतंत्वारब्धपटादिषु कारणगतानेकत्वसंख्या न प्रहीयते। तत्र कथं द्रव्यैक्ये तद्विरुद्धानेकत्वसंख्यापत्तिः। पटत्वरूपावस्थाभेदेनेति चेन्न। द्रव्यैक्ये घटकुड्यादिषु मृत्त्ववत् पटे तंतुत्वस्यानुवृत्तेरवश्यंभावेन तस्य पटव्यावृत्तधर्मवृत्त्यवच्छेदकत्वायोगात् कार्यगतपटत्वविरोधित्वात्तन्नानुवर्तते घटत्वविरोधित्वात् पिण्डत्वमिवेति चेत्तर्हि तद्वदेव प्रहीणं भवेत्। न तंतुष्वप्यनुवर्तेत। कार्यकारणयोरैक्ये प्रहीणकार्यानुवृत्तोभयविधावस्थाव्यतिरेकेण तदुभयव्यवस्थितावस्थांतरस्थित्यनुपपत्तेरिति चेन्मैवम्। तंतुष्वेव कुविंदकारितसंयोगविशेषावच्छेदेन पटत्वस्य तदुपाधिकैकत्वस्य तंतुत्वाभावस्य च वृत्त्युपपत्तेः कार्यकारणभेदवादेऽप्येकस्मिन्नेव घटे कालरूपावच्छेदभेदेन श्यामरक्तरूपयोः देशभेदेनैकस्मिन्नेव वृक्षे स्थूलतरतनुतरादिपरिमाणानामेकस्मिन्नेव कदलीदले श्यामलधवलरूपयोः कठिनसुकुमारस्पर्शयोश्च स्वस्वविरुद्धधर्माभावसाहित्येन वृत्तिदर्शनात्। तेषु विरुद्धधर्मावच्छेदककालदेशानां परस्परासंकीर्णत्वमस्ति। नात्र कुविंदकृतसंयोगास्तंतुत्वासंकीर्णा इति चेन्न। वह्नावार्द्रेंधनप्रभववह्नित्वावच्छेदेन व्याप्तिमत्त्वस्य तदसंकीर्णवह्नित्वावच्छेदेन व्याप्त्यभावस्य च आर्द्रेंधनप्रभववह्नित्वावच्छेदेन व्याप्यतावच्छेदकवद्वह्निके अविशेषितवह्निसत्त्वावच्छेदेन व्याप्यतावच्छेदकत्वाभावस्य च वृत्त्यभ्युपगमात्। एवं कार्यकारणानन्यत्ववादेऽप्येकस्मिन्नेव द्रव्ये तन्तुत्वं स्वप्रापकांशुसंयोगविशेषावच्छेदेन तदवच्छेदेनानेकत्वं च पटत्वावस्थाप्रापकतंतुसंयोगविशेषावच्छेदेन पटत्वं तदवच्छेदेनैकत्वं चेति पटत्वतंतुत्वयोरेकत्वानेकत्वयोश्च समावेशोपपत्तेर्न कश्चिद्विरोधः। एवमुपादानोपादेययोस्तृणच्छदिषोरिष्टकाप्राकारयोश्चानन्यत्वेऽपि तृणत्वच्छदिष्ट्वादिसमावेशाविरोध उन्नेयः। इयांस्तु विशेषः। छदिःषु तृणानां दीर्घतनुत्वाद्याकारस्य प्राकारे इष्टकानां चतुरश्रत्वाद्याकारस्य चाविरलतंत्वारब्धपटे तंतुत्वस्येवानुपलंभः विरलतंत्वारब्धपटे तंतुत्वतदाकृतिविशेषतदनेकत्वानामुपलंभ इति। तस्मादर्थक्रियादिभेदहेतोरवस्थाभेदस्याभ्युपगमान्न कश्चिद्विरोध इति भावः।

इदं तु चिंत्यते। कार्यकारणानन्यत्ववादिना कथमवस्थाभेद आगंतुकोऽभ्युपैतव्यः। आगंतुकस्य प्राक् सता कारणेनानन्यत्वायोगात् असत्कार्यवादपादप्रसारिकापत्तेश्च। न चावस्थाभेदोऽपि नित्यः। तथा सति मृत्पिण्डदशायामपि घटार्थक्रियादिप्रसंगात्, दण्डचक्रादिघटकारणकलापवैयर्थ्यप्रसङ्गाच्च। ननु, मृदः पिण्डतादशायामनभिव्यक्ता घटावस्था। अभिव्यक्तैव सार्थक्रियाद्युपयोगिनी। तदभिव्यक्त्यर्थश्च दंडचक्रादिः कारणक-

लापः । न च तथा सति मृत्पिण्डगतघटावस्थाभिव्यक्त्यर्थेन दण्डचक्रादिव्यापारेण तद्गतकरककपालमणिमल्लिकाद्यवस्थानामपवरकगतघटाभिव्यक्त्यर्थारोपितेन दीपेन तद्गतकरकादीनामिवाभिव्यक्तिप्रसंगः, मृत्पिंडिकादशायां प्रदीपारोपणेन घटाद्यभिव्यक्तिप्रसंगश्चेति वाच्यम् । उच्चारणविशेषेण वर्णविशेषाभिव्यक्तिः उच्चरितवर्णविशेषाभिव्यंजकेन श्रोत्रमनस्संयोजनानुकूलपवनादिनोच्चारणं विना न वर्णाभिव्यक्तिरिति व्यवस्थादर्शनेन तद्वदिहाप्युपपत्तेः । वर्णानित्यत्वपक्षेऽपि रविकिरणैर्युगपदभिव्यंग्ययोर्नैल्योत्पलत्वयोः प्रदीपप्रभयोत्पलत्वस्यैवाभिव्यक्तिः कूपजलस्य वियति विक्षेपे रविकिरणैः तत्र शौक्ल्यजलत्वयोस्सहाभिव्यक्तावपि तस्य कूपान्तरवस्थितिसमये (तैलत्वस्ये) जलत्वस्यैवाभिव्यक्तिरित्यादिव्यवस्थादर्शनेन तद्वदिहापि यथादर्शनमभिव्यंग्याभिव्यंजकभाववैचित्र्याभ्युपगमोपपत्तिश्चेति चेन्मैवमवस्थावत्तदभिव्यक्तावपि नित्यत्वानित्यत्वविकल्पे पूर्वोक्तदोषानतिपातात् । किंच केयमभिव्यक्तिः । ज्ञानं चेत्तदा दण्डचक्रादिमेलनस्य घटज्ञानकारणत्वापत्त्या तदपनयनानंतरं घटज्ञानोदयो न स्यात् । आवरणापनयश्चेत् घटसामग्र्या किमावरणमपनीयते । ननु मृदि पूर्वस्थिता पिण्डावस्था तस्यां नित्यमेव स्थिताया अपि घटावस्थाया आवरणम् । तदावृतत्वात्सा तदानीं न प्रतीयते । घटसामग्र्या पिण्डावस्थोपमर्दे सति तिलपीडनेन तैलमिवावघातेन तण्डुल इव दोहनेन पय इव खननेन कूपजलमिव क्षालनेन पटशौक्ल्यमिव प्रतीयते । न च तथा सति मुद्गरपातानंतरमपि घटावस्थाप्रतीतिप्रसंगः तदावरणभूतायाः पिण्डावस्थायास्तिरोधानादिति वाच्यम् । तदा मुद्गरपाताभिव्यंग्यकपालत्वाद्यवस्थायास्तदावरणत्वात् कारणे अभिव्यक्तायाः कस्याश्चित् कार्यावस्थायास्तद्गतसकलकार्यावस्थांतरावरणत्वाभ्युपगमात् । न च तथा सति कपालेषु कारणमेलने घटावस्थाभिव्यक्तिप्रसंगः। इष्टापत्तेः। कपालानि चूर्णीकृत्य जलमृदंतरसंयोजनमर्दनव्यापारैः मार्दवं प्रापय्य दण्डचक्रादिमेलने घटाभिव्यक्तिदर्शनात् । न च पटकारणानां पुनः पटभावो न दृश्यते इति शंकनीयम् । तद्भस्मनां क्षितितलपतितानां तत्क्षितिप्ररूढकार्पासतरुफलपरिणतौ क्रमेण तेषां पटभावोपपत्तेः । न च तंतुषु तंत्ववस्थायाः पटावस्थावरणत्वस्य वक्तव्यत्वात् विरलतंत्वारब्धपटे तत्तिरोधानशंकानास्पदे पटावस्थाभिव्यक्तिर्न स्यादिति वाच्यम् । फलबलेन कुविंदकृतसंयोगविशेषरहिततंत्ववस्थायाः तदावरकत्वकल्पनात् तस्मादविशेषिता वा पूर्वकार्यावस्थैव घटपटाद्यवस्थानामावरणमिति चेत् नैतद्युक्तम् । तथातथा परिणाहशालिनी पटावस्था कुविन्दव्यापारात् प्रागपि यथादृष्टेन स्थूलेनैव रूपेण सती तंतुत्वेनानुभूयते उत कूर्मांगवत् संकुचितेन रूपेण सती । नाद्यः । यथादृष्टरूपायाः पटावस्थायाः तंतुषु कुविंदव्यापारात् प्राक् व्यस्तेषु समस्तेषु वा विप्रकीर्णेषु संहतेषु वा पर्याप्तवृत्त्यसंभवात् । न द्वितीयः । यथादृष्टपटावस्थायाः आगंतुकत्वापरिहारात् । न च वाच्यमनादिरेव सा पटावस्था अद्यतनेषु तंतुषु न वर्तते किंतु मूलकारण इति । तथा सति यत्रेदानीं भविष्यत्पटप्रागभावदेशे तन्तवो न संति तत्रावरणाभावेन तदभिव्यक्तिप्रसंगात् । न च तत्र या काचन कार्यावस्थास्ति सैवावरणं स्यादिति वाच्यम् । तस्याः कुविंदव्यापारानंतरमपि सर्वत्रावर्जनीयत्वेन सर्वदा पटानभिव्यक्तिप्रसंगात् । कार्यावस्थास्तस्मादय एवाभ्युपैतव्या इति कथं कार्यकारणानन्यत्वसमर्थनं असत्कार्यवादापत्तिपरिहारश्चेति ।

मृद्घटयोः वस्त्वैक्येऽप्यवस्थाभेदात् भवत्येव। ततो मृद्घटयोरिव ब्रह्मप्रपञ्चयोरपि व्याप्यव्यापकभावादनन्यत्वम् । तथा पुराणवाणी–'शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् । तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ॥' इति ॥ 'मृदयं

---

अत्रेदमुत्तरं विवक्षितम्। अत्रागंतुका एवावस्थाभेदाः। असतो द्रव्यानुत्पत्तिः सत्कार्यवादः। न त्ववस्थानामप्यनागंतुकत्वम्। सत एव द्रव्यस्योत्तरोत्तरावस्थाप्राप्तिरुत्पत्तिः । पूर्वपूर्वावस्थाहानं विनाशः । एवमागमापायिनानावस्थाशालि द्रव्यमेकमिति। अतो न काचिदत्रानुपपत्तिः । नन्वेवं मृदेव घटमणिककपालचूर्णाद्यवस्थाशालिनीति मृद्घटाद्यैक्यसमर्थनस्य प्रकृते का संगतिः । न हि तद्दृष्टांतेन ब्रह्मैव भोक्तृत्वविकारित्वजडत्वाद्यवस्थाशालीति ब्रह्मप्रपञ्चैक्यं साधयितुं शक्यम् । पूर्वाधिकरणविरोधापत्तेः । न च स्थूलसूक्ष्मप्रपञ्चविशिष्टब्रह्मरूपकार्यकारणैक्यं साधनीयम् । विशेष्यांशस्य विशेष्यांशेन ऐक्यसाधने सिद्धसाधनात् विशेषणविशेष्ययोः कार्यकारणभावे सत्यप्यैक्याभावेन व्यभिचाराच्च। न च विशेष्यांशस्यैव विशेष्यांश उपादानं विशेषणांशस्य तु विशेषणांश इति शंकनीयम् । ब्रह्मणस्सर्वोपादानत्वाभावप्रसंगात् । न च विशेषणांशयोरैक्यं साध्यमिति वाच्यम्। सत्यप्युपादानोपादेयभावे ब्रह्मप्रपञ्चयोरैक्याभावेन तत्र व्यभिचारात् पूर्वपक्षोद्भावितगोमयवृश्चिकादिव्यभिचारतादवस्थ्याच्च । स्थूलसूक्ष्मप्रपञ्चैक्यसाधनस्य एतदधिकरणकृत्यब्रह्मप्रपञ्चानन्यत्वविषयश्रुतिसमन्वयसमर्थनानुपयोगित्वाच्च । न च ब्रह्मप्रपञ्चयोरपृथग्भावरूपानन्यत्वे श्रुतिसमन्वयो न त्वैक्यरूपानन्यत्व इति वाच्यम्। तत्र मृद्घटदृष्टांतेन स्थूलप्रपञ्चस्य तदुपादानब्रह्मापृथग्भूतपरापरशक्तिरूपसूक्ष्मप्रपञ्चैक्यसाधनमुपयोगीति वाच्यम् । तयोरैक्याभावेऽपि मृद्घटभेदवादिनैयायिकरीत्या केवलं पृथग्भावेनैव ब्रह्मापृथग्भावस्याऽपि लाभादित्याशंक्याह–ततो मृद्घटयोरिवेति। अत्रायमाशयः। यथैक एव मृत्पिण्डो घटशरावादिव्यापकः । तदनुस्यूतिमंतो घटशरावादयः परस्परव्यावृत्तरूपाः तद्व्याप्याः। एवं ब्रह्मैकमेव वियदादिसर्वविकारानुस्यूतं तेषां व्यापकं तदनुस्यूतिमंतो वियदादयस्सर्वे विकारास्तस्य व्याप्याः इत्येवं व्याप्यव्यापकभावेनापृथग्भावरूपं 'तेनैकेन तु तद्व्याप्तं मृदा कुंभादिकं यथे' त्यादिपुराणसिद्धं 'अन्यस्सन्व्याप्तितोऽनन्य' इत्याद्यागमप्रसिद्धं 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति भगवद्गीतासु च प्रतिपादितमनन्यत्वं मृद्घटदृष्टांतेनोपपादनीयम् । तत्र नायं दृष्टांत उपपद्यते । कौलालमृत्कूटात् घटशरावादिनिर्माणसमयेषु विभक्तानां परस्परव्यावृत्तरूपाणां तस्माद्भिन्नानां सूक्ष्ममृत्पिण्डानां घटशरावादिभावापत्त्या तेष्वेकस्या मृद्व्यक्तेरनुस्यूत्यसिद्धेरिति शंकायामित्थमुपपादनीयम् । महतः कुलालमृत्कूटाद्विभज्यविभज्य गृहीताः सूक्ष्ममृत्पिण्डास्ततो न भिद्यंते स एव मृत्कूटः एतावत्सूक्ष्ममृत्पिण्डात्मतां प्राप्त इत्यभेदप्रत्यभिज्ञानादिति वाचारंमणवाक्योपपादनीये 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या' दिति दृष्टांतेऽप्युक्तशङ्कावतारे सत्येवमेवोपपादनीयम् । तेन दृष्टांतेनोपपादनीयायां 'येनाश्रुत' मित्यादिप्रतिज्ञायां मृद्घटादिदृष्टांतेषु वाचारंभणश्रुत्युपपादितप्रकारेण द्रव्यैक्यान्मृदादिज्ञाने तदभिन्नस्य घटादेर्विषयत्वेऽपि ब्रह्मप्रपञ्चयोरैक्यानंगीकारात् ब्रह्मज्ञाने प्रपञ्चस्य विषयत्वं न संभवतीत्येवं दृष्टांतवैषम्यशंकायामित्थमुपपादनीयम् । न केवल-

**घट' इत्यत्र यथा मृद्व्याप्तिर्घटे दृश्यते तथा ब्रह्मेदं जगदिति ब्रह्मव्याप्तिर्न दृश्यत**

ब्रह्मज्ञानेन प्रपञ्चस्य ज्ञातत्वमिह प्रतिज्ञायते । किं तु सूक्ष्मप्रपञ्चविशिष्टज्ञानेन । 'सदेव सोम्येद' मित्युपक्रमे ब्रह्मणि प्रयुक्तस्य सच्छब्दस्य सकलप्रपञ्चोपादानशक्तिविशिष्टब्रह्मपरताया ईक्षत्यधिकरणे वर्णितत्वात् । उपादानोपादेयभूतौ च शक्तिप्रपञ्चौ न परस्परभिन्नौ। मृद्धटवत्। अत्र सामान्येनोपादानोपादेयभावमात्रं न हेतुः। ब्रह्मप्रपञ्चयोर्गोमयवृश्चिकादिषु च व्यभिचारात्। तथापि परिणामिपरिणामभावरूपस्तद्विशेषो हेतुः । एवं च सच्छब्दोक्तशक्तिविशिष्टब्रह्मज्ञाने प्रपञ्चस्य विषयत्वं संभवति परापरशक्त्युपादानकस्य तस्य मृद्धटन्यायेन तदभिन्नत्वादिति । एतदर्थं य एको मृत्कूटः स्थितस्स एवैतावद्धटशरावाद्यात्मतां प्राप्त इत्यभेदप्रत्यभिज्ञानेनानुमानदृष्टांतभूतमृद्धटाद्यैक्यमुपपादनीयम् । अतोऽस्मिन्सूत्रे श्रुतितदनुग्राहकानुमानापेक्षितं मृदादितद्विकारैक्यसमर्थनं संगतमेवेति । एवमस्य सूत्रस्यारंभणश्रुत्यनुग्राहकानुमानोपयोगित्ववदारम्भणवाक्यार्थवर्णनोपयोगित्वमस्तीत्याशयेनैव पूर्वसूत्रोदाहरणभूतस्याप्यारम्भणवाक्यस्य भाष्यकारैरेतत्सूत्रव्याख्यानावसरेऽर्थप्रतिपादनं कृतम् । भाष्ये परिणामिपरिणामभावलिंगेन शक्तिप्रपञ्चैक्यसाधकमेवानुमानम् । शक्तिशक्तिमतोरभेदोपचारात्। प्रपञ्चब्रह्मणोरुक्तरूपमनन्यत्वं न तेन हेतुना सिद्ध्यति । असिद्धेः। नाप्युपादानोपादेयभावसामान्येन । निर्विकारे ब्रह्मणि उपादानत्वस्य विकारवदुपादानापृथग्भूताधिष्ठानत्वस्य वक्तव्यतया तस्यैवात्र साध्यत्वपर्यवसानादित्याशङ्कायां तद्धर्मानुस्यूतिमत्तया ब्रह्मप्रपञ्चानन्यत्वसाधकानुमानमिति व्यवहृतम् । न केवलमिदं भाष्यमेव तदभेदोपचारात्प्रवृत्तम्। 'नविलक्षणत्वा ( २–१–४ ) धिकरणमपि तथैव प्रवृत्तम् । तथैव कृत्स्नप्रसक्त्य- ( ब्र० २–१—२६. ) धिकरणमपि प्रवर्तयिष्यते । परिणामपरिणामिभावरूपे ह्युपादानोपादेयभावे वैलक्षण्यानुपपत्तिः कृत्स्नप्रसक्त्यादिदोषश्चापादयितुं शक्यते । न तु स्वयं निर्विकारस्य सतः परिणाम्युपादानापृथग्भूताधिष्ठानभावमात्रालंबनोपादानोपादेयभावे । तदापादकस्यैक्यस्य परिणामपरिणामिभाव इव तत्राभावात् । ननु, ब्रह्मशक्तेः प्रपञ्चस्य च परिणामिपरिणामभावहेतुकैक्यसिद्धिरस्तु प्रपञ्चब्रह्मणोरुक्तरूपमनन्यत्वं न तेन हेतुना सिध्यति । असिद्धेः। नाप्युपादानोपादेयभावसामान्येन । निर्विकारे ब्रह्मण्युपादानत्वस्य विकारवदुपादानापृथग्भूताधिष्ठानत्वरूपस्य वक्तव्यतया तस्यैवात्र साध्यत्वपर्यवसानादित्याशंकायां तद्धर्मानुस्यूतिमत्तया प्रमीयमाणत्वं तत्र सामान्यव्याप्त्यपेक्षो हेतुरित्यभिप्रेत्य तदसिद्धिमाशंकते—यथा मृद्व्याप्तिरिति । 'सन् घटस्सन्पट' इत्यादिप्रमासु सत्तया तावदपृथग्भावसंबंधः प्रतीयते । सा च ब्रह्मशक्तिरूपा । 'सदेव सोम्येद'मित्यादिश्रुतिषु ब्रह्मणि सच्छब्दस्य प्रवृत्तौ निमित्तभूता ब्रह्मसत्तैव। 'मायां तु प्रकृतिं विद्या' दिति जगत्प्रकृतित्वेनावधारितायास्तस्या एव तथाभूतप्रमाविषयत्वोपपत्तौ तदतिरिक्तजातिरूपसत्ताकल्पने प्रमाणाभावात् । तां कल्पयतामपि जात्यादिषु तदभावेन तेष्वनुगतसद्व्यवहारस्य तया निर्वोढुमशक्यत्वात् सत्तैकार्थसमवायादिसंबंधांतरेण तन्निर्वाहे अननुगमात् रूपादिरहिताया अपि जातिसत्ताया इव ब्रह्मशक्तिरूपसत्तायाश्चाक्षुषत्वाद्युपपत्तेश्च । न च नीरूपद्रव्यत्ववत् ब्रह्मशक्तेश्चाक्षुषत्वाद्यनुपपत्तिः । अप्रयोजकत्वात्

इति चेत्, सन् घटः सन् पटः इति सर्वत्र दृश्यत एव सद्रूपस्य ब्रह्मणो व्याप्तिः। सच्चिद्रूपेण शिवेन यदि न व्याप्तं जगत् तदा सत्तास्फूर्तिभ्यां विनाकृतं कथमस्ति स्फुरतीति च दृश्येत? अवस्त्वेव भवेत्। अतो मृदा घटादिकमिव कारणेन शिवेन कार्यमिदं व्याप्तं तदनन्यभूतं चेति सिद्धम् ॥

॥ सू ॥ सत्त्वाच्चापरस्य ॥ १७ ॥

कार्यस्य कारणे सत्त्वाच्च कारणादनन्यदेव कार्यम्। घटशरावादिकं पूर्वं मृदेवासीदिति हि घटादिकं मृदात्मनोपलभ्यते ॥

॥सू॥असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च॥१८॥

'इदं वा अग्रे नैव किञ्चनासीत्' इति कार्यस्य पूर्वमसद्व्यपदेशात् कारणे कार्यमसदिति चेत्—न, स्थूलत्वविरोधिसूक्ष्मत्वरूपधर्मान्तरयोगादेवायमसद्व्यपदेशो नाभावात्। कुतः? 'तदसदेव सन्मनोऽकुरुत स्याम्' इति

---

तस्याः स्वाभिन्नघटादिरूपेण रूपवत्त्वाच्च। न च नीरूपस्य रूपवत्त्वासंभवः। दशाभेदेनाविरोधात्। कार्यकारणभेदवादिभिरपि प्रथमक्षणे नीरूपस्य घटादेरनंतरं रूपवत्त्वस्याभ्युपगमाच्च इत्याशयेन परिहरति—सन्घट इति। न केवलं प्रपञ्चे सत्तारूपेणैव ब्रह्मशक्त्यनुस्यूतिः अपि तु स्फूर्तिरूपेणापीत्याह—सच्चिद्रूपेणेति। 'सन्घट' इत्याद्यनुभवे सत्ताविशिष्टतयेव 'स्फुरति घट' इत्याद्यनुभवे स्फुरणविशिष्टतया प्रपञ्चो विषय इति तावत्सर्वानुभवसिद्धम्। तच्च स्फुरणमुपादानभूतब्रह्मशक्तिरूपमेव पर्यवस्यति। जडे स्फुरणांतरासंभवात्। न च 'स्फुरती'त्यस्य स्फुरणविषयत्वमर्थः। 'सविता स्फुरति भाति प्रकाशत' इत्यादिप्रयोगे स्फुरणवत्वार्थकस्य तस्य 'स्फुरती'त्यादिप्रयोगेऽर्थांतरकल्पनायोगात्। न च 'ममस्फुरति' 'मम न स्फुरती' ति व्यवहारदर्शनात् तथार्थकल्पनम्। विषयसम्पर्कजनितवृत्तिविशेषाभिव्यक्तस्य ब्रह्मानंदस्येव चाक्षुषज्ञानाद्यभिव्यक्तस्य ब्रह्मस्फुरणस्यापि प्रतिनियतव्यवहारविषयत्वोपपत्तेः 'तस्य भासा सर्वमिदं विभाती'ति श्रुत्यनुसार्यर्थविषयत्वकल्पनसंभवे 'स्फुरति भाति प्रकाशत' इत्याद्यनुभवानां विषयांतरकल्पनस्यायुक्तत्वाच्चेति भावः। अवस्त्वेव भवेदिति। यस्य न सत्त्वं न वा स्फुरणं न तद्वस्त्विवति भावः। सू॥ सत्वाच्चापरस्य ॥ १७॥ कारणे सत्त्वादिति। कारणे तादात्म्येनसत्त्वादित्यर्थः। पूर्वसूत्रे मृदः पाश्चात्यघटशरावादिरूपतापत्तिविषया प्रतिज्ञोदाहृता इह घटशरावादीना प्राचीनमृद्रूपतापत्तिविषयेति भावः॥ सू॥ असद्व्यपदेशान्नेति चेन्न धर्मांतरेण वाक्यशेषाद्युक्तेश्शब्दांतराच्च॥ १८॥ 'असदेवेदमग्र आसी' दित्यादेर्वैदिकस्यासद्व्यपदेशस्योदाहरणं 'य एते घटशरावादय इदानीमुत्पन्नाः प्रागिह नास'न्निति लौकिकस्याप्यसद्व्यपदेशस्योपलक्षणम्। सद्व्यवहारार्हस्थूलत्वविरोधि सूक्ष्मत्वं धर्मांतरमस्ति। तत एवासद्व्यवहारः। नतूत्पत्तेः प्रागभावादिति परिहरति—नेति। ननु 'वायोरूपं नास्ति' इत्यादेरिवास्याप्यसद्व्यपदेशस्याभावविषयत्वं युक्तं न तु सूक्ष्मावस्थाविषयत्वम्। क्लृप्तविषयं विहाय विषयांतरकल्पने मानाभावादित्याशंकते—कुत इति। वैदिकस्य लौकिकस्य चासद्व्यपदेशस्य विषयांतरकल्पने क्रमेण 'वाक्यशेषाद्युक्तेश्चे'ति सूत्रशेषोक्तं हेतुद्वयं दर्शयन् परिहरति—तदिति।

वाक्यशेषात् । मनस्कारो हि विद्यमानस्यैव भवति । युक्तिरपि तथा धर्मान्तरयोगनिमित्ततामसद्व्यपदेशस्यावगमयति । पिण्डत्वघटत्वकपालत्वरूपैः परस्परविरोधिभिः भावरूपैः धर्मैः, घटः प्राङ्नासीत्, इदानीमस्ति, तदानीं न भविष्यतीति सदा विद्यमानस्यैव मृद्द्रव्यस्य असदादिव्यपदेशोपपत्तौ न तद्व्यतिरिक्तः कश्चिदभावो नाम असद्व्यपदेशालम्बनं धर्मान्तरं कल्पनीयमिति । तथा शब्दान्तरं च 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इत्यादि ॥ अयमभिप्रायः—पूर्वं स्वाभिन्ननामरूपविभागानर्हसूक्ष्मचिदचिद्रूपपरशक्तिगर्भितो हि शिवः केवलो भवति । पुनः स्वात्मिकां तादृशीं शक्तिं पूर्वदशाविरोधिस्थूलत्वयुक्तनामरूपविभागार्हचिदचिद्रूपां बहिर्विस्तारयति । तत्र शक्तिमतः शिवस्य संकोचावस्था प्रलयः । विकासावस्था सृष्टिरिति । तथा आप्तवचनमपि—'चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद्बहिः । योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥' इति । निरुपादानमिति अनपेक्षितोपादानान्तरं स्वयमुपादानं भूत्वेत्यर्थः । ततः परमकारणात् परब्रह्मणः शिवादभिन्नमेव जगत् कार्यमिति ॥

निदर्शनान्तरमुच्यते—

॥ सू ॥ पटवच्च ॥ १९ ॥

यथा संकुचितः सूक्ष्मरूपः पटः प्रसारितो महापटकुटीरूपेण कार्यं भवति, तथा ब्रह्मापि संकुचितरूपं कारणं प्रसारितरूपं कार्यं भवति ॥

॥ सू ॥ यथा च प्राणादिः ॥ २० ॥

यथा वायुरेक एव वृत्तिविशेषेण प्राणादिभेदं भजते, तथा ब्रह्मापि शक्तिव्यापारभेदेन सदाशिवादिविश्वरूपभेदं भजते । ततो ब्रह्मणः कारणादनन्यदेव कार्यं जगदिति युक्तम् ॥

---

तत् असदेव । सत्स्यामिति मनोऽकुरुतेत्यन्वयः । मनस्कारो मानसः सङ्कल्पः । अभावो नामेति । अभावाभावस्येव भावाभावस्याऽपि तद्विरोधिभावधर्मरूपतोपपत्तेः क्वचिदप्यभावो नाम धर्मांतरं न कल्पनीयमित्यर्थः । शब्दांतरादिति सौत्रहेतुरुभयत्र साधारणः । लोकेऽपि ह्यस्ति शब्दांतरं घटशरावादिकं पूर्वं मृदेवासीदिति । तत्तु पूर्वसूत्रे प्रत्यभिज्ञोदाहरणेनैव उदाहृतप्रायमिति नेहोदाहृतम् । ननु, ब्रह्मकारणवादे ब्रह्मणः प्रलये किमव्याकृतत्वं किं च सृष्टौ व्याकृतत्वम् ? न हि निर्विकारस्य मृद्घटन्यायेनावस्थाभेदस्संभवतीत्याशंक्य स्थूलसूक्ष्मप्रपञ्चविशिष्टस्य ब्रह्मणः कार्यकारणभावांगीकाराद्विशेषणगतस्थूलसूक्ष्मावस्थाभ्यां विशिष्टे व्याकृतत्वाव्याकृतत्वव्यपदेशभेद इत्याह—अयमभिप्राय इति । उत्तरसूत्रद्वयमवतारयति—निदर्शनांतरमिति । स्थूलसूक्ष्मावस्थाभ्यामेकस्यैव द्रव्यस्य कार्यकारणभावे मृद्घटादिदृष्टांतः प्राक्प्रसाधितः । इदानीमेकद्रव्यत्वे कार्यकारणभेदवादिनामपि लोकसम्प्रतिपन्नः पटकुटिकादृष्टान्तः 'पंचधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' इति श्रुतेस्सम्प्रतिपन्नः प्राणवायुः दृष्टांततयोदाह्रियत इत्यर्थः ॥ सू ॥ पटवच्च ॥ १९ ॥ सू ॥ यथा च प्राणादिः ॥ २० ॥ 'सदाशिवादी', त्यादिशब्देन महेश्वरशुद्धविद्यादिपृथिव्यंतत्रयस्त्रिंशत्त-

उक्तमर्थमाक्षिप्य समाधत्ते—

॥ सू ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिना कार्यभूतस्य जीवस्य कारणभूतब्रह्मत्वव्यपदेशात् अनन्यत्वमुपपादितम् । एवं सति सर्वज्ञस्य परमेश्वरस्य सर्वगतस्य जगदकरणं स्वस्य हितरूपं, तत्करणमहितरूपं च प्रसज्यते । ततश्च सर्वज्ञः सत्यसंकल्प ईश्वरः स्वस्मादनन्यस्य जीवस्य तापः स्वस्येति जानन् कथं संसारनिमित्तमहितं जगत्करणमनुवर्तते, हितं जगदकरणं च नानुवर्तते । ततश्च जीवादनन्यत्वे सिद्धे परमेश्वरस्य सर्वज्ञस्यापि स्वहिताकरणे स्वाहितकरणे च विवेकशून्यत्वादिदोषप्रसक्तिः ॥

---

त्वजातं तत्प्रभवं तनुभुवनभोगस्थानभोगोपकरणनिकुरुंबं च गृह्यते । षट्त्रिंशत्तत्वमध्ये सदाशिवादिभूम्यंतचतुस्त्रिंशत्तत्वजातमेव सृज्यं शिवशक्तितत्वे तु तत्स्रष्टारौ परब्रह्मभूतौ शिवाविति मतमनुसृत्येदं भाष्यम् । वस्तुतश्शिवशक्तितत्वे अपि शिवाभ्यां सृज्ये जडे तत्वांतरे। 'शिवशक्त्यादि भूम्यंतं शरीरादि घटादि च । व्याप्याधितिष्ठति शिवस्तस्माद्विष्णुरुदाहृत' इति शिवपुराणवचनात् 'शिवाहन्ता शिवमयी विद्यानन्दशरीरिणी । षट्त्रिंशत्तत्वरूपत्वमवाप्य बहुरूपिणी' त्याश्वलायनस्मरणाच्च । इदं च मतं भाष्य एव प्रदेशांतरे तत्रतत्राविष्कृतम् । ननूत्तरसूत्रेण जीवब्रह्माभेदे दोष आशंक्यते तदनुपपन्नम् । अनन्यत्वं व्याप्यव्यापकभावेनापृथग्भावरूपं न त्वभेदरूपमिति प्राग्दर्शितत्वेन शंकानवकाशादित्याशङ्क्यावतारयति— उक्तमर्थमिति । अधिकं त्वित्युत्तरसूत्रकर्त्तव्येन एतच्छङ्कासमाधानेन स्थास्यन्तमर्थमालोच्य मृद्घटादिदृष्टांतोक्तिसङ्गतिसमर्थनसमये तदुपयोगितया भाष्ये परं व्याप्यव्यापकभावेनानन्यदित्युक्तम् । सूत्रकारस्त्वेतच्छंकासमाधानसमय एव तमर्थमाविष्करिष्यति इत्यस्ति शङ्कावकाश इति भावः ॥ सू ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ उपपादितमिति । आरंभणसूत्र इति शेषः । ननु, ब्रह्मणः स्वाभिन्नजीवसंसारहेतुप्रपञ्चसर्गाकरणं हितं तत्करणमहितं च भवतु नाम । तथापि प्रपञ्चं सृजतु दृश्यंते हि लोके स्वहितमकुर्वाणा स्वाहितं कुर्वाणाश्च तद्वद्ब्रह्मापि स्यादित्याशंक्याह—ततश्चेति । स्वस्य हिताहितमजानन्वा जानन्नपि पारतंत्र्यात् स्वसंकल्पानुसारेण कर्तुमशक्तो वा स्वस्य हितं न कुर्यादहितं च कुर्यात्, ब्रह्म तु न तथा सर्वज्ञत्वात्सत्यसंकल्पत्वाच्चेत्याशयः । ननु सर्वज्ञं सत्यसंकल्पमपि ब्रह्म स्वस्य हितं मा करोतु अहितं च करोतु को दोषः न हि तेन तस्य सर्वज्ञत्वं सत्यसंकल्पत्वं च हीयते येन स दोषः स्यादित्याशंक्याह—ततश्चेति । यथा स्त्रीपुत्रदारादिषु क्रोधेन स्वयं मर्त्तुं विषं भक्षयतः क्रोधान्धस्येव तस्य विवेकशून्यत्वापत्त्या सार्वज्ञ्यमेव हीयेतेति भावः । एवं चारंभणसूत्रादनन्यत्वमिति असद्व्यपदेशसूत्राच्चेदिति चानुवर्त्य एवं सूत्रार्थो वर्णनीयः । 'अयमात्मा ब्रह्मे'त्यादिषु जीवात्मनि ब्रह्मभावव्यपदेशादनन्यत्वं चेत् हिताकरणादिना यो दोषः विवेकशून्यत्वं तस्य प्रसक्तिरिति । जीवब्रह्मणोरनन्यत्वे संगतिभाष्योदाहृतस्वातंत्र्यास्वातंत्र्यादिव्यवस्थासिद्धस्य पूर्वपक्षभाष्योदाहृतस्रष्टृसृज्यभावादिरूप-

अतः कार्यकारणयोः जीवेश्वरयोरनन्यत्वमयुक्तमिति चेद्युक्तमित्युच्यते—

॥ सू ॥ अधिकं तु भेदनिर्देशात् ॥ २२ ॥

कार्यकारणयोरनन्यत्वेऽपि कार्यभूताचिदचित्प्रपञ्चात् कारणमत्राधिकमेव श्रूयते'विश्वाधिको रुद्रो महर्षिः'इति। तथा भेदनिर्देशात-तथाहि-जीवेश्वरयोर्भेदो निर्दिश्यते 'विद्याविद्ये ईशते यस्तु सोऽन्यः''क्षरात्मानावीशते देव एकः' 'पृथगात्मानं प्रेरितारं च मत्वा' 'द्वा सुपर्णा सयुजा सखाया' 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च''ज्ञाज्ञौ द्वावजावीशानीशौ' 'नित्यो नित्यानां चेतनश्चेतनानाम्' 'अन्तःप्रविष्टश्शास्ता जनानाम्' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' 'जुष्टं यदा पश्यत्यन्यमीशम्' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'येषामीशे पशुपतिः पशूनाम्' इत्यादिभिरनन्तश्रुतिभिः। अतो विश्वस्मादधिकमेव शिवापरनामधेयं ब्रह्म ॥ ननु 'तदनन्यत्वम्' इत्यभेदप्रतिपादनात् 'अधिकं तु' इति भेदप्रतिपादनात् प्रपञ्चब्रह्मणोः भेदाभेदः साधितो भवतीति चेत्-न,भेदाभेदकल्पनं विशिष्टाद्वैतं साधयामः।न वयं ब्रह्मप्रपञ्चयोरत्यन्तमेव भेदवादिनः घटपटयोरिव। तदनन्यत्वपरश्रुतिविरोधात्। न वाऽत्यन्ताभेदवादिनः शुक्तिरजतयोरिव।एकतरमिथ्यात्वेन तत्स्वाभाविकगुणभेदपरश्रुतिविरोधात्। न च भेदाभेदवादिनः, वस्तुविरोधात्। किं तु शरीरशरीरिणोरिव गुणगुणिनोरिव च विशिष्टाद्वैतवादिनः। प्रपञ्चब्रह्मणोरनन्यत्वं नाम मृद्घटयोरिव गुणगुणिनोरिव च कार्यकारणत्वेन विशेषणविशेष्यत्वेन च विनाभावरहितत्वम्। न हि मृदं विना घटो दृश्यते, नीलिमानं विना चोत्पलम्। तथा ब्रह्म विना न प्रपञ्चशक्तिस्थितिः शक्तिव्यतिरेकेण न कदाचिदपि ब्रह्म विज्ञायते, वह्निरिवौष्ण्यं विना। येन विना यन्न ज्ञायते तत् तेन विशिष्टमेव। तत्त्वं च तस्य स्वभाव एव। अतः सर्वथा प्रपञ्चाविनाभूतं ब्रह्म तस्मादनन्यदि-

---

कर्तृकर्मभावादिव्यवस्थासिद्धस्य च भेदस्य भङ्गप्रसंग इति दोषांतरं सौत्रेणेतरपदेनाविष्कृतम्। उक्तव्यवस्थाभिः वस्तुतो जीवादितरदेव ब्रह्मेति तयोरनन्यत्वमयुक्तमिति भावः।

सत्यं जीवादितरद्ब्रह्म ततोऽधिकं च। ईशित्रीशितव्यादिभेदविषयानेकश्रुत्यनुरोधात्। अतस्तदविरोध्येवानन्यत्वमभेदश्रुत्यर्थो न मुख्याभेद इति न कश्चिद्विरोध इति प्रदर्शनार्थं सूत्रम्॥सू॥अधिकं तु भेदनिर्देशात्॥२२॥नन्वभेदश्रुत्यनुसारेण'तदनन्यत्व'मितिभेदश्रुत्यनुसारेणा'धिकंत्वि'ति सूत्रितवतस्सूत्रकारस्य कोऽभिप्राय इत्याकांक्षायां भेदाभेदपक्षस्य पृथग्भावरूपात्यन्तभेदपक्षस्य मुख्याभेदरूपात्यंताभेदपक्षस्यान्यतरानिर्धार्यत्वपक्षस्य च प्रमाणविरुद्धत्वाल्लौकिकवैदिकसकलप्रमाणप्रसिद्धांतर्गणिकभेदाप्रतिक्षेपकमपृथग्भावेनानन्यत्वरूपं विशिष्टाद्वैतमभेदश्रुतीनामर्थ इत्येव सूत्रकारस्याभिप्राय इति प्रश्नोत्तराभ्यां प्रपञ्चयति—नन्वित्यादिना। एवमारंभणसूत्रप्रतिपादितानन्यत्वस्वरूपविशेषनिर्धारणार्थतया इद'मितरव्यपदेशा'दित्यादिसूत्रद्वयं व्याख्यातम्। एवं किमर्थम्। तन्निर्धारणमेतत्सूत्रद्वयमनपेक्ष्यारंभणसूत्रसामर्थ्येनैव सिद्ध्यति। इदं तु सूत्रद्वयं ब्रह्मणस्सदोषजीवसंसर्गप्रयुक्तदुष्टत्वशं-

त्युच्यते । भेदश्च स्वाभाविकः । ततश्च विश्वस्मादधिकमेव परं ब्रह्म । कारणत्वकार्यत्वव्यवस्था 'न तु दृष्टान्तभावात्'(ब्र०२-१-९-सू)इत्यत्र निरूपितैव। तस्माद्भेदाभेदश्रुतीनामविरुद्ध एवायं मार्गः ॥

॥ सू ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

सर्वथा जीवेश्वरयोरभेद एव अभेदश्रुतिभिरिति चेत्—न। अनुपपत्तेः। अश्मकाष्ठतृणादेरचेतनस्येव जीवस्याप्यज्ञत्वादिना सर्वज्ञत्वादियुक्तादीश्वरात् अत्यन्तविजातीयत्वश्रवणात् तयोरेकभावानुपपत्तेः। तस्मादीश्वरो जीवादर्थान्तरभूत एव । एवं चेतनस्याप्यधिकगुणवैषम्यादीश्वरभावानुपपत्तिः, किमुताचेतनस्य स्वरूपविलक्षणस्येति तात्पर्यम् । सर्वथा श्रुतिस्मृतिन्यायैः कार्यत्वेन स्वानन्यभूतादपि चेतनाचेतनप्रपञ्चात् विश्वस्मादधिक एव सर्वज्ञः सर्वशक्तिः परमेश्वरः॥

इत्यारंभणाधिकरणम् ॥ ७ ॥

---

कानिराकरणार्थमधिकरणांतरं व्याख्यायतामित्याशंक्याह—कारणत्वेति । 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' ( ब्र० २–१–८. ) न तु दृष्टांतभावा ( ब्र० २–१–९. ) दिति पूर्वोत्तरपक्षसूत्राभ्यां ब्रह्मणो जडजीवसंसर्गप्रयुक्तदुष्टत्वनिराकरणं स्पष्टमेव कृतं प्रागित्यतिस्पष्टं तादर्थ्यमस्य सूत्रद्वयस्य न युक्तं किं त्वारंभणसूत्रस्य भेदसाधकसूत्रासाहित्येन भेदाविरोध्यनन्यत्वपर्यवसायित्वं न स्पष्टमिति तद्विषयत्वेनारंभणाधिकरणशेषत्वमेवास्य युक्तमिति भावः ॥ सू ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ सूत्रव्यावर्त्यां शंकामाह—सर्वथेति । 'तदनन्यत्व'मित्यत्यंताभेद इत्येव युक्तमभेदश्रुतिबाहुल्याद्भेदश्रुतीनामौपाधिकभेदविषयत्वोपपत्तेरिति शंकार्थः । अनुपपत्तेरिति । अभेदश्रुतिरुपपत्तिविरुद्धेत्युपपत्तिसहकृता भेदश्रुतिः प्रबलेत्यर्थः। ननु 'अश्मादिव'दिति सिद्धवद्दृष्टांतीकरणमयुक्तम्। 'सर्वं खल्विदं ब्रह्म' 'इदं सर्वं यदयमात्मा'इत्यादिश्रुत्यनुसारेण ब्रह्मण्यचेतनाभेदस्यापि शंकितुं शक्यत्वात् चेतनाचेतनत्ववैलक्षण्येऽप्यभेदस्य शक्तिप्रपञ्चाभेदवादिनां सिद्धांतिनामवश्यमंगीकर्तव्यत्वात् इत्याशंक्य सूत्रतात्पर्यमाह—एवं चेतनस्यापीति । कैमुतिकन्यायेनाचेतनवर्गस्य भेदश्रुतितदनुग्राहकोपपत्तिभ्यां भेदं सिद्धं हृदि कृत्वा समुच्चयोपमयाश्मादिवदिति सूत्रितमिति भावः । अवांतरार्थोपसंहारमुखेनाधिकरणार्थमुपसंहरति—सर्वथेति ।

इत्यारंभणाधिकरणम् ।

---

नयमणिमालायाम्

अथ आरंभणाधिकरणम् ।

सू० ॥ तदनन्यत्वमारंभणशब्दादिभ्यः ॥ १५ ॥ भावे चोपलब्धेः ॥ १६ ॥ सत्त्वाच्चापरस्य ॥ १७ ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च ॥ १८ ॥ पटवच्च ॥ १९ ॥ यथा च प्राणादिः ॥ २० ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ अधिकं तु भेदनिर्देशात् ॥ २२ ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

नैव प्रपञ्चशिवयोरनन्यता कार्यकारणायत्ता। धर्मैर्विप्रतिषिद्धैः स्वहिताकृत्यादिदोषैश्च ॥ ९९ ॥

शंभुर्विश्वाधिको नस्तदपि च तदनन्यत्वमस्यानिवार्यं शब्दैरारंभणाद्यैः स्फुरति सदिति च स्फूर्तिसत्तानुवृत्त्या ।

तच्चेदं स्थूलसूक्ष्माकृतियुतचिदचिद्विग्रहश्शंभुरेव स्यात्कार्यं कारणं चेत्युभयमधिगतानन्यता चेति युक्तम् ॥ १०० ॥

इत्यारंभणाधिकरणम् ॥ ७ ॥

सूत्रार्थचन्द्रिकायाम्

अथ आरम्भणाधिकरणम् ॥ ६ ॥

**सू ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ भावे चोपलब्धेः ॥ १५ ॥ सत्त्वाच्चावरस्य ॥ १६ ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥ युक्तेश्शब्दान्तराच्च ॥ १८ ॥ पटवच्च ॥ १९ ॥ यथा च प्राणादि ॥ २० ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ अधिकं तु भेदनिर्देशात् ॥ २२ ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥**

**भगवत्पादमते**, 'तदनन्यत्व' मित्यारभ्य 'यथा च प्राणादिः' इत्यन्ता सप्तसूत्री आरम्भणाधिकरणत्वेन व्यपदिश्यते, 'इतरव्यपदेशा' दित्यादिकं सूत्रत्रयमधिकरणान्तरत्वेनेति श्रीकण्ठमतादस्ति विशेषोऽस्मिन्मते । इत्थमेवाधिकरणविभाग उरीकृतो रामानुजानन्दतीर्थमतयोरपि । श्रीकण्ठमते परमिदं सूत्रदशकमेकमधिकरणम् । आनन्दतीर्थमते त्वितरव्यपदेशाधिकरणे 'उपसंहारदर्शना' दित्यादिकमुपरितनं सूत्रत्रयमप्यन्तर्भवतीत्यस्ति विशेषान्तरमपि । पूर्वं परिणामवादमवलंब्यापाततः 'स्याल्लोकव' दिति समाहितम् । अत्रारंभणाधिकरणे विवर्तवादरीत्या परमं समाधानमुच्यते-**'तदनन्यत्व' मित्यादिना** । अद्वैतब्रह्मवादी वैदिकसमन्वयो भेदग्राहिप्रत्यक्षेण विरुध्यते न वेति संदेहे विरुध्यत इति **पूर्वपक्षः । सिद्धान्तस्तु, तत्**=तस्मात्कारणात् । **अनन्यत्वम्**=ब्रह्मणः कार्यस्य जगतः पृथक्सत्ताराहित्यं सिद्धम् । कुतः । **आरंभणशब्दादिभ्यः**='वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' 'ब्रह्मैवेदं सर्वम्' इत्यादिशब्देभ्यः ॥ इति ॥

ब्रह्मव्यतिरेकेण कार्यस्याभावमनुमानतो निरूपयति-**सू ॥ भावे चोपलब्धेः ॥ १५ ॥ भावे च**=कारणस्य ब्रह्मणस्सत्त्वे । **उपलब्धेः**=मृदि सत्यां घटस्येव कार्यस्योपलब्धेः । न हि मृद्व्यतिरेकेण घटो नाम कश्चिदुपलभ्यते । अतः कारणव्यतिरेकेण कार्यं नास्तीत्यर्थः ॥

कारणव्यतिरेकेण कार्यस्याभावे श्रुतार्थापत्तिं प्रमाणयति-**सू ॥ सत्त्वाच्चावरस्य ॥ १६ ॥ अवरस्य**=कार्यस्य । **सत्त्वाच्च**=उत्पत्तेः प्राक्कारणानन्यत्वेन सत्त्वाच्च । 'ब्रह्म वा इदमग्र आसी' दित्यादौ सत्त्वश्रवणादुत्पत्त्यनन्तरमपि अनन्यत्वं सिद्धमित्यर्थः ॥

प्रागुत्पत्तेः कारणरूपेण कार्यस्य सत्त्वमाक्षिप्य समाधत्ते-**सू ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥ असद्व्यपदेशात्**='असद्वा इदमग्र आसी' दित्यादिना प्रागुत्पत्तेरसद्व्यपदेशात् । **नेति चेत्**=न कारणरूपेण कार्यस्य सत्त्वमिति चेत् । **न**=न ह्यत्यन्तासत्त्वाभिप्रायेणायमसत्त्वव्यपदेशः । किं तु **धर्मान्तरेण**=अव्याकृतत्वरूपधर्मान्तरेण । कुतः । **वाक्यशेषात्**='तत्सदासीदि'ति वाक्यशेषात् । अतः कारणादनन्यत्वं कार्यस्य सिद्धमित्यर्थः ॥ किं च । **सू ॥ युक्तेश्शब्दान्तराच्च ॥१८॥ युक्तेः**=मृदात्मना पूर्वं घटस्याभावे घटार्थिना मृदेव नोपादीयेत, असत्त्वाविशेषाद्यत्किंचिदेवोपादीयेत, इत्येवमाद्याया युक्तेः । **शब्दान्तराच्च**='सदेव सोम्येदमग्र आसीत्' इत्येवमादौ विद्यमानसच्छब्दान्तराच्च प्रागुत्पत्तेः कार्यस्य कारणानन्यत्वं सत्त्वं चेति सिद्धम् ॥

ननु मृद्घटौ भिन्नौ विलक्षणप्रतीतिविषयत्वात् घटपटवत् इत्यनुमाने हेतोर्व्यभिचारं निरूपयति-**सू ॥ पटवच्च ॥ १९ ॥** यथा संवेष्टितप्रसारितपटयोः विलक्षणप्रतीतिविषयत्वेऽपि न भेदस्तथा मृद्घटयोरित्यर्थः ॥

ननु कार्यमुपादानाद्भिन्नम् , भिन्नकार्यकरत्वात्संमतवत् इत्युक्ते हेतोर्व्यभिचारमाह—**सू ॥ यथा च प्राणादि ॥ २० ॥** यथा च प्राणायामादिना निरुद्धः प्राणापानादिर्जीवनमात्रं कार्यं निष्पादयति अनिरुद्धस्त्वाकुंचनप्रसारणादिकं कार्यं निर्वर्तयति, नैतावता प्राणादेर्भेदोऽस्ति । तस्मात्कार्यकारणयोरनन्यत्वादद्वैतब्रह्मसमन्वये न कश्चिद्विरोध इति सिद्धम् ॥

इति भगवत्पादमते आरम्भणाधिकरणम् ॥ ६ ॥

अथ इतरव्यपदेशाधिकरणम् ॥ ७ ॥

पूर्वमेकविज्ञानप्रतिज्ञासिद्धये कार्यस्य कारणादनन्यत्वं समर्थितम् । तर्हि तेनैव न्यायेन जीवब्रह्मणोरप्यभेदाज्जीवधर्मा हिताकरणादयो दोषा ब्रह्मणि प्रसज्येरन्नित्याक्षेपसंगत्येदमाह—**सू ॥ इतरव्यपदेशादित्यादि ।** यदि ब्रह्म जगज्जनयेत् तर्हि न स्वानिष्टं जनयेदिति तर्केण जीवाभिन्नं ब्रह्म जगदुपादानमिति ब्रुवन् समन्वयो विरुध्यते वा न वेति संदेहे **इतरव्यपदेशात्**=इतरस्य जीवस्य 'तत्त्वमस्या'दिना ब्रह्मत्वव्यपदेशात्, इतरस्य ब्रह्मणः 'अनेन जीवेनात्मनानुप्रविश्ये' त्यादिना शारीरत्वव्यपदेशाद्वा । **हिताकरणादिदोषप्रसक्तिः**=ब्रह्मणः स्रष्टृत्वे जीवस्यैव स्रष्टृत्वात् नव्यत्यासेन अहितजरामरणादिबहुविधानर्थकरणरूपदोषस्य प्रसक्तिर्ब्रह्मणस्समापतति इत्यतस्तस्याभ्रान्तचेतनत्वेनानिष्टजगज्जनकत्वायोगादुक्तसमन्वयो विरुध्यत इति **पूर्वपक्षः ।**

**सिद्धान्तमाह—सू ॥ अधिकं तु भेदनिर्देशात् ॥ २२ ॥** तुशब्दः पूर्वपक्षं व्यावर्तयति । यतः शारीरादधिकं सर्वज्ञं सर्वशक्ति ब्रह्म जगदुपादानं स्रष्टृ चेति ब्रूमः अतो न हिताकरणादिदोषप्रसक्तिः । कुतः । **भेदनिर्देशात्**='आत्मा

वा अरे द्रष्टव्य' इत्यादिना कल्पितभेदस्य व्यपदेशात्। न हि ब्रह्मणो नित्यमुक्तस्य हितमहितं वास्ति । येन स दोषः प्रसज्येत । अतः कल्पितभेदमादायैव सर्वस्यासांकर्योपपत्तिरिति भावः ॥

नन्वेकरूपब्रह्मणो जगत्कारणत्वे कार्यवैचित्र्यं न स्यादिति दोषमाशंक्य दृष्टान्तेन परिहरति—**सू ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ अश्मादिवच्च**=एकपृथिवीजन्यानामश्मनां यथा वज्रवैडूर्यादिभेदेन वैचित्र्यं तथा ब्रह्मकार्याणां स्वरूपवैचित्र्यं युज्यते । अतः **तदनुपपत्तिः**=तस्योक्तदोषस्यानुपपत्तिः । तस्माज्जीवाभिन्नब्रह्मवादिसमन्वयो न विरुध्यत इति सिद्धम् ॥ **इति इतरव्यपदेशाधिकरणम् ॥ ७ ॥**

**श्रीकण्ठमते,** पूर्वं सिद्धवत्कृत्य व्यवहृतस्य प्रपञ्चशिवयोः कार्यकारणभावेनानन्यत्वस्य स्वातंत्र्यास्वातंत्र्यतत्कृतभोक्तृत्वाभोक्तृत्वादिरूपपरस्परविरुद्धधर्मवैलक्षण्यविरोधं निरूपयितुमाह—**तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १६ ॥** इह कार्यकारणयोः प्रपञ्चशिवयोरनन्यत्वमुपपद्यते वा न वेति संदेहे बुद्धिशब्दान्तरादिबलात् भेदकस्वभावस्य वैलक्षण्यस्याभेदविरोधित्वाच्चानन्यत्वमयुक्तमिति **पूर्वपक्षः । सिद्धान्तस्तु,** लौकिकवैदिकसकलप्रमाणप्रसिद्धान्तर्गणिकभेदाप्रतिक्षेपकमपृथग्भावेनानन्यत्वरूपं विशिष्टाद्वैतमभेदश्रुतीनामर्थं इत्येवं सूत्रकारस्याभिप्राय इत्यवगम्यमानतया वाचारंभणश्रुत्यादिबहुप्रमाणबलेन मृदा घटादिकमिव कारणेन शिवेन कार्यमिदं जगद्व्याप्तं तदनन्यभूतं चेति सिध्यति । अवस्थान्तरवशात् बुद्धिशब्दान्तराद्युपपत्तेः कार्यकारणयोः प्रपञ्चशिवयोरनन्यत्वं युक्तमेवेति । **सूत्रार्थस्तु, तदनन्यत्वम्**=तस्मात्कारणाद्ब्रह्मणः कार्यस्य जंगतोऽनन्यत्वं तदुपपादयद्भ्यो वाक्येभ्यः आरम्भणशब्दादिभ्योऽवगम्यत इत्यर्थः ।

**सू ॥ भावे चोपलब्धेः ॥ १६ ॥ भावे**=घटादिकार्यभावे । **उपलब्धेः**=तदेवेदं मृद्द्रव्यमित्थमवस्थितमिति कारणस्योपलब्धेश्च कारणादनन्यत्वं कार्यस्येत्यर्थः ॥

**सू ॥ सत्त्वाच्चापरस्य ॥ १७ ॥ अपरस्य**=कार्यस्य । **सत्त्वाच्च**=सत्कार्यवादे कारणे सत्त्वाच्च कारणादनन्यत्कार्यमित्यर्थः । घटशरावादिरूपेणावस्थितं मृद्द्रव्यं पूर्वं पिण्डाकारमुपलब्धमित्यर्थः ॥

**सू ॥ असद्व्यपदेशादित्यादि ॥ १८ ॥ असद्व्यपदेशात्**='इदं वाग्रे नैव किंचनासी'दिति कारणावस्थायां कार्यस्यासत्त्वव्यपदेशात् कारणे कार्यमसदिति **चेत् न ।** सदितिव्यपदेशार्हस्थूलत्वविरोधिसूक्ष्मत्वरूप**धर्मान्तरेण योगात्** असद्व्यपदेश इति 'तदसदेव सन्मनोऽकुरुत' इति **वाक्यशेषबलात्,** घटोऽस्ति घटो नास्तीति सदसद्व्यपदेशयोः घटत्वकपालत्वयोः परस्परविरोधिधर्मयोरेव हेतुत्वे सिद्धे तदतिरिक्ताभावरूपधर्मान्तरकल्पनानुपपत्तिरूप**युक्तेः,** तं'द्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' इत्यादिसमानप्रकरणस्था**च्छ्रुत्यंतराच्चा**वगम्यते इत्यर्थः । अतः कारणे कार्यं सदेवेति सिद्धम् । ततः परमकारणात्परब्रह्मणः शिवादभिन्नमेव जगत्कार्यमिति भावः ॥ 'असद्व्यपदेशादित्यादि 'युक्तेश्शब्दान्तराच्चे'त्यन्तमेकं सूत्रमिति पूर्वस्माद्विशेषः ॥ दृष्टान्तान्तरमाह—**सू ॥ पटवच्च ॥ १९ ॥** यथा संकुचितः पटः प्रसारितः महापटकुटीरूपेण कार्यं भवति तद्वद्ब्रह्मापि ॥ इति

**सू ॥ यथा च प्राणादिः ॥ २० ॥** यथा वायुरेक एव वृत्तिविशेषेण प्राणापानादिभेदं भजते तथा ब्रह्मापि शक्तिव्यापारभेदेन सदाशिवादिरूपभेदं भजते । ततः ब्रह्मणः कारणादनन्यदेव कार्यं जगदिति युक्तम् ॥

उक्तमर्थमाक्षिपति—**सू ॥ इतरव्यपदेशादित्यादि ॥ २१ ॥** 'तत्त्वमस्ययमात्मा ब्रह्मे' त्यादिना कार्यभूतस्य जीवस्य कारणभूतब्रह्मव्यपदेशात् जीवानन्यत्वे परमेश्वरस्य स्वहिताकरणे स्वाहितकरणे च विवेकशून्यत्वादिदोषप्रसंगः । अतः कार्यकारणयोर्जीवेश्वरयोरनन्यत्वमयुक्तमिति चेत् ।

युक्तमित्याह—**सू ॥ अधिकं तु भेदनिर्देशात् ॥ २२ ॥** कार्यकारणयोरनन्यत्वेऽपि कार्यभूताचिदचित्प्रपञ्चात्कारणं ब्रह्माधिकमिति 'विश्वाधिको रुद्रो महर्षिः' इति श्रुत्या प्रतिपाद्यते । तथा **भेदनिर्देशात्**='विद्याविद्ये ईशते यस्तु सोऽन्यः' इत्यादिभिरनन्तश्रुतिभिः जीवेश्वरयोर्भेदो निर्दिश्यते । तस्माद्विश्वस्मादधिकमेव शिवापरनामधेयं परं ब्रह्म । एवं च प्रपञ्चब्रह्मणोरनन्यत्वं नाम मृद्घटयोरिव गुणगुणिनोरिव च कार्यकारणत्वेन विशेषणविशेष्यत्वेन च विनाभावरहितत्वम् । अतः सर्वथा प्रपञ्चाविनाभूतं ब्रह्म तस्मादनन्यदित्युच्यते । भेदस्तु स्वाभाविकः । अभेदश्रुतीनां भेदाविरोध्यनन्यत्वरूपविशिष्टाद्वैतपर्यवसायित्वादभेदश्रुतीनामविरोध इति सिद्धम् ॥ **सू ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥** अश्मकाष्ठतृणादेरचेतनस्येव जीवस्याप्यज्ञत्वादिना सर्वज्ञत्वादियुक्तादीश्वराद्विजातीयत्वश्रवणात्तयोरेकभावानुपपत्तिरित्यर्थः ॥

**इति श्रीकण्ठमते आरंभणाधिकरणम् ॥ ७ ॥**

**रामानुजमते,** ब्रह्मशब्दाभिधेयवस्तुमात्रभेदेऽपि श्रुत्यर्थवर्णनादिप्रक्रियायां नास्ति वैलक्षण्यं श्रीकण्ठमतात् । अधिकरणरचनायां तु भगवत्पादमतमेवानुसृियतेऽस्मिन्नधिकरणे । 'इतरव्यपदेशा' दित्यादिसूत्रत्रयमस्मिन्मते भगवत्पादमतवदधिकरणान्तरमेव । सूत्रार्थवर्णनादिकं प्रायः श्रीकण्ठमतप्रक्रियामेवानुसरति विशिष्टाद्वैताविशेषात् । आरंभणाधिकरणसूत्रार्थवर्णनसंदेहपूर्वपक्षसिद्धान्तादिषु नास्ति श्रीकण्ठमताद्विशेषः प्रायशः । **'पटवच्च' 'यथा च प्राणादिः'** इति सूत्रयोरर्थवर्णने परमस्ति कियानिव भेदः—यथा—तन्तव एव व्यतिषंगविशेषभाजः पट इति नामरूपाभ्यां कार्यान्तरादिकं

भजन्ते तद्वद्ब्रह्मापि इति व्याख्यातमस्मिन्मते । **'यथा च प्राणादिः'** इति सूत्रे 'तथा' ब्रह्मापि शक्तिव्यापारभेदेन सदाशिवादिरूपभेदं भजते' इत्येतन्नास्ति । एवमेव क्वचित्क्वचित्प्रातिस्विकासाधारणमतसिद्धान्तवर्णनप्रक्रियायां परं श्रीकण्ठ-रामानुजमतयोर्दृश्यते परस्परं वैलक्षण्यम् । परमसिद्धान्ते परमाद्रियत एवानयोस्सालक्षण्यं सर्वेष्वधिकरणेषु ॥

**इति रामानुजमते आरम्भणाधिकरणम् ॥ ६ ॥**

**अथ इतरव्यपदेशाधिकरणम् ॥ ७ ॥**

अस्मिन्नधिकरणे ब्रह्मणो जगत्कारणत्वं संभवति वा न वेति संदिह्य 'अयमात्मा ब्रह्म' 'तत्त्वमसि' इत्यादिसामानाधिकरण्यनिर्देशेन जीवो ब्रह्मेत्यवगमात् हिताकरणादिदोषप्रसक्त्या ब्रह्मणो जगत्कारणत्वानुपपत्तेश्च जगत्कारणत्वं न संभवतीति पूर्वपक्षमुद्भाव्य 'अस्मान्मायी सृजते विश्वमेतत्' 'पृथगात्मानं प्रेरितारं च मत्वा' इत्यादिभिः प्रत्यगात्मनोऽर्थान्तरभूतं ब्रह्मेत्यवगमात् ब्रह्मणो जगत्सर्गस्य लीलाप्रयोजनत्वा 'त्तत्त्वमसी' त्यादिसामानाधिकरण्यनिर्देशस्य जीवब्रह्मणोश्शरीर-शरीरिभावघटिततया तच्छरीरतया जीवप्रकारब्रह्मप्रतिपादनपरत्वात् स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कारणावस्थं सूक्ष्मचि-दचिद्वस्तुशरीरं ब्रह्म कार्यावस्थमिति कार्यकारणयोस्तयोरनन्यत्वोपपत्तेश्च ब्रह्मणो जगत्कारणत्वं संभवत्येवेति सिद्धान्तितम् । **इतरव्यपदेशात्**=ब्रह्मणो जीवतया व्यपदेशादिति च व्याख्यातम् । इतरसूत्रार्थवर्णने नास्ति वैलक्षण्यं श्रीकण्ठमतात् । एतदधिकरणशरीरानुगुण्येन 'जीवादर्थान्तरभूतं ब्रह्मे' ति स्वसिद्धान्तानुगुण्येन च प्रायः श्रीकण्ठमतवदेव व्याख्यातमिति नास्ति पृथक्प्रपञ्चनावकाश इत्ति ॥ **इति रामानुजमते इतरव्यपदेशाधिकरणम् ॥ ७ ॥**

**आनन्दतीर्थमते'** यद्यपि रामानुजमतवदेवाधिकरणविभागः । तथापि इतरव्यपदेशाधिकरणे **'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २५ ॥ देवादिवदपि लोके ॥ २६ ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २७ ॥'** इत्येतानि त्रीण्यपि सूत्राण्यन्तर्भवन्तीति मतान्तरेभ्यो विशेषः । अत्र विष्णोः स्वतन्त्रकारणान्तरनिरपेक्षं जगत्कर्तृत्वं युक्तं न वेति संदेहः । जगत्सृष्टिः स्वतन्त्रकारणसापेक्षा स्वतंत्राधिष्ठानसापेक्षा कर्त्रतिरिक्तस्वतंत्रकारणापेक्षा सृष्टित्वात् तथा स्थित्यादिकमपि इत्यादिबहुयुक्तिविरोधान्न युक्तमिति **पूर्वपक्षः ।** जगत्सृष्ट्यादिषु स्वतंत्रसाधनस्य ब्रह्मानन्यत्वमेव । तद्व्यतिरेकेण तत्र स्वतंत्रसाधनं नास्तीति यावत् । कुतः । 'किं स्विदासीदधिष्ठानमारंभण' मिति करणाधिष्ठानाद्याक्षेपकश्रुतिवाक्ययुक्तिभ्यः । ब्रह्मातिरिक्तस्वतंत्रसाधनसद्भावे वेदेषु तदुपलब्धिप्रसंगाच्च । अतो विष्णोः साधनान्तरनिरपेक्षं कर्तृत्वं युक्तमेवेति **सिद्धान्तः । सूत्रार्थस्तु,** 'अवरस्ये' त्यग्रेऽभिधानात्स्वतंत्रसाधनस्येति शेषः । स्वतंत्रसाधनस्य **तदनन्यत्वम्**=ब्रह्माभिन्नत्वं वाच्यम् । कुतः । **आरंभणशब्दादिभ्यः**=आरंभणपदोपलक्षितकिंस्विदासीदित्यधिष्ठानाद्याक्षेपकवाक्यात् स्वातंत्र्यादियुक्तिभ्यश्चेत्यर्थः ॥ **सू ॥ भावे चोपलब्धेः ॥ १६ ॥ भावे च**=ईश्वरान्यस्वतंत्रसाधनस्य सत्त्वे च । **उपलब्धेः**=दर्शनस्य प्रसंगात् । अतोऽपि नास्त्यन्यत्स्वतंत्रसाधनमित्यर्थः ॥ **सू ॥ सत्त्वाच्चावरस्य ॥ १७ ॥** चोऽवधारणे । **अवरस्य**=अस्वतंत्रसाधनस्य । **सत्त्वाच्च**=सत्त्वादेव 'अद्भ्यः संभूत' इति वाक्यं तत्परं भवतीति न तद्विरोध इत्यर्थः ॥ **सू ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १८ ॥ असद्व्यपदेशात्**='नासदासी' दित्यन्यस्यासत्त्ववचनात् अन्यसत्त्वं **न** युक्तमिति **चेन्न** । कुतः । **धर्मान्तरेण**=स्वतंत्रत्वादिधर्मान्तरेणैवासत्त्वव्यपदेशो न स्वरूपेणेत्यर्थः । कुतो मुख्यार्थत्यागः । **वाक्यशेषात्**='तमआसी' दिति प्रकृत्यादिसत्त्वपरवाक्यशेषान्यथानुपपत्त्येत्यर्थः ॥ **सू ॥ युक्तेश्शब्दान्तराच्च ॥ १९ ॥ युक्तेः**=लीलया दण्डमवष्टभ्य गंतुः पंगुत्वाभाववत्, भगवतोऽपि लीलया स्वाधीनसाधनावलंबनस्य युक्तत्वात् । **शब्दान्तराच्च**='शक्तोऽपि भगवान्विष्णु' रित्यादिशब्दविशेषाच्च उक्तं युक्तमित्यर्थः ॥ **सू ॥ पटवच्च ॥ २० ॥** पटसृष्टिवच्च विश्वसृष्टिरपि कर्तृभिन्नसाधनान्तरसाध्येत्यर्थः ॥ **सू ॥ यथा च प्राणादिः ॥ २१ ॥** यथा प्राणदेहेन्द्रियादिकं न स्वतंत्रम् एवं प्रकृत्यादिसाधनान्तरमपीत्यर्थः ॥

**इत्यानन्दतीर्थमते आरंभणाधिकरणम् ॥ ६ ॥**

**अथानन्दतीर्थमते इतरव्यपदेशाधिकरणम् ॥ ७ ॥**

**सू ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २२ ॥** अत्राधिकरणे अस्य जगतः कर्ता जीवो वेश्वरो वेति संदेहे लोके घटादिकार्येषु जीवस्यैव कर्तृत्वेनानुभवसिद्धत्वाल्लाघवात्तस्यैव समस्तजगत्कर्तृत्वौचित्यात् 'जीवाद्भवन्ति भूतानि' इति श्रुत्यानुकूल्याच्च जीवस्यैव स्वतन्त्रकर्तृत्वान्न विष्णोर्जगत्कर्तृत्वमिति **पूर्वपक्षः ।** जीवस्य स्वतन्त्रकर्तृत्वाङ्गीकारे तस्य हिताकरणाहितकरणादिदोषप्रसक्त्या न जीवः स्वतन्त्रकर्ता किं तु परमेश्वर एवेति **सिद्धान्तः । सूत्रार्थस्तु, इतरव्यपदेशात्=इतरस्य**=जीवकर्तृत्वस्य । **व्यपदेशात्**='जीवाद्भवन्ति' इत्यादिश्रुतावुक्तत्वात् । 'यदि तर्हि' इति शेषः । जीवः स्वतन्त्रकर्तें' ति यद्युच्यते तर्हि तस्य हिताकरणमहितकरणं चेत्येतद्दोषद्वयं प्रसज्येत । अतो न जीवः स्वतंत्रकर्तेत्यर्थः ॥

**सू ॥ अधिकं तु भेदनिर्देशात् ॥ २३ ॥** तुशब्दो जीवसाम्यव्यावर्तकः । ब्रह्म तु जीवापेक्षया अधिकम् । कुतः । **भेदनिर्देशात्**=श्रोता मंते' त्यादौ श्रोतृत्वादिरूपविशेषस्योक्तत्वात् इत्यर्थः ॥ **सू ॥ अश्मादिवच्च तदनुपपत्तिः ॥**

## अथ उपसंहारदर्शनाधिकरणम् ॥ ८ ॥

### ॥ सू ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

'एकमेवाद्वितीयम्' 'द्यावापृथिवी जनयन् देव एकः' इत्यादिषु परमेश्वर एक एव जगतः कारणमवगम्यते । तस्यास्यैकस्य विचित्रजगत्कारणत्वं युक्तं न वा । इति संशये न युक्तमिति वदामः । तदसम्भवात् । कार्यमेतदाकाशवाय्वग्निसलिलादिरूपं विचित्रम् । कथमेतत् कारणवैचित्र्यमन्तरेण सम्भवति । दृश्यते हि रथादिकार्येषु बहुकारकोपसंहारः । तस्मादेककारणत्वं न सम्भवतीति चेत्—नैतद्युक्तम्—एकस्यापि कार्यरूपेण परिणामः सम्भवति, यथा क्षीरस्यैकस्यैव दधिभावेन । तस्माद्ब्रह्मैककारणकं जगत्कार्यम् ॥

यदुक्तं कार्यवैचित्र्यं कारणवैचित्र्यापेक्षमिति, तदसत्, चेतनादेकस्मात् पुरुषात् केशनखादिविचित्रकार्यनिष्पत्तिदर्शनात् । अतो विचित्रजगत्कार्यनिर्वाहे ब्रह्म न कारणान्तरापेक्षमिति ॥

शक्तिमतां सर्वं सम्भाव्यत एवेत्याह—

### ॥ सू ॥ देवादिवदपि लोके ॥ २५ ॥

---

## अथ उपसंहारदर्शनाधिकरणम् ॥ ८ ॥

सू ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥ देवादिवदपि लोके ॥ २५ ॥ इह ब्रह्मणो जगदुपादानत्वाधिष्ठातृत्ववादिनः समन्वयस्योपादानत्वाधिष्ठातृत्वयोस्सहकार्यन्तरापेक्षानियमसद्भावासद्भावाभ्यां युक्तिबाध्यत्वाबाध्यत्वसंशये ब्रह्मप्रपञ्चयोर्मुख्याभेदाभावेऽपि शरीरशरीरिभावेनापृथक्सिद्धप्रकारप्रकारिभावेन वा सामानाधिकरण्यनिर्देशस्येव उपादानत्वश्रवणस्याधिष्ठातृत्वश्रवणस्य च सहकार्यन्तराभावे कर्तुं न शक्यं प्रकारांतरेणोपपादनम् । मृत्पिण्डकुलालादिषु तयोस्सहकार्यपेक्षानियमदर्शनात् विचित्रकार्यजनने विचित्रसहकार्यपेक्षावश्यंभावाच्चेति पूर्वः पक्षः । क्षीरपुरुषदेवादीनां दधिकेशनखसंकल्पसृज्यकार्येषूपादानत्वाधिष्ठातृत्वयोस्सहकार्यंतरानपेक्षत्वदर्शनेन व्यभिचारात् नास्त्येव तन्नियम इति सिद्धांतः । अत्र चिंत्यते । प्रपञ्चसृष्टौ ब्रह्मणस्सहकारीणि सन्त्येव सिद्धांतसंमतानि । न हि लोकसिद्धानि मृत्पिण्डदण्डचक्रादीनि श्रुतिसिद्धानि मायाकालकर्मादीनि

---

२४ ॥ चशब्दोऽपिशब्दार्थः । अश्मादिवत्=पाषाणादेरिव । अपि=जीवस्य चेतनत्वेऽपि । तदनुपपत्तिः=अस्वातन्त्र्यात् स्वतःकर्तृत्वानुपपत्तिः ॥

सू ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २५ ॥ उपसंहारदर्शनात्=जीवेनारब्धकार्यस्य समापनदर्शनात् स एव कर्तेति उक्तब्रह्मकर्तृत्वं नेति चेन्न । कुतः । हि=यस्मात् । क्षीरवत्=गोषु दृश्यमानक्षीरस्य यथा मुख्यप्राणकृतत्वं तथा जीवकृतोपसंहारोऽपि परमात्मकृत एवेत्यर्थः ॥

सू ॥ देवादिवदपि लोके ॥ २६ ॥ एवंभूतेश्वरस्यापि । देवादिवत् अदर्शनं युज्यते । कथमेतदित्यत उक्तं लोक इति । जगति पिशाचादीनामपि अदृश्यत्वादिशक्तिर्दृष्टा सर्वेश्वरस्य तु किं वाच्यमित्यर्थः ॥

सू ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २७ ॥ वाशब्दः पक्षभेदेन दोषापादनसूचकः । जीवस्य स्वतः कर्तृत्वे सर्वकात्स्न्र्येन प्रवर्तने अङ्गीकृते कृत्स्नप्रसक्तिः=तृणादानादिसर्वकार्येष्वपि सर्वसामर्थ्यप्रवृत्तिप्रसंगः । तत्परिहाराय एकदेशेन प्रवृत्त्यभ्युपगमे च निरवयवत्वशब्दकोपः='नित्यो निरवयव' इति श्रुतिविरोधः स्यादित्यर्थः ॥ अतो न जीवः स्वतन्त्रकर्ता । किं त्वीश्वराधीनकर्ता इति ॥ इति आनन्दतीर्थमते इतरव्यपदेशाधिकरणम् ॥ ७ ॥

इति सूत्रार्थचन्द्रिकायामारंभणाधिकरणेतरव्यपदेशाधिकरणे ॥ ६ ॥ ७ ॥

देवादेः शास्त्रावगतशक्तेर्यथा स्वापेक्षितनानारूपादिभावः, एवं शास्त्रावगतशक्तेः परमेश्वरस्य सर्वमुपपद्यते । 'य इमान् लोकानीशत ईशनीभिः जननीभिः परमशक्तिभिः' इति परमेश्वरस्य अनन्तशक्तिमत्त्वं श्रूयते । तस्य किमसाध्यम् ॥ इत्युपसंहारदर्शनाधिकरणम् ॥ ८ ॥

च कारणान्तराणि सिद्धांते त्यज्यंते। प्रत्युतारंभणसूत्रादिपर्यालोचनया तथैव तान्यभ्युपगतान्यवगम्यंते । जगद्वैचित्र्यं कर्मवैचित्र्यमूलमिति च 'वैषम्यनैर्घृण्ये न सापेक्षत्वा' दिति (ब्र० २-१-३४) दर्शयिष्यते । एकमेवेत्यादि व्यक्तनामरूपस्थूलप्रपञ्चभावाभिप्रायमिति तत्रतत्रोक्तमेव । कथं ब्रह्मणः प्रपञ्चसृष्टौ सहकारिविरहं सिद्धवत्कृत्य पूर्वपक्षसिद्धान्तौ प्रवर्तितौ ?। कथं च क्षीरदृष्टांतेन सिद्धान्तोपपादनं कृतम् ? । 'पयोंऽबुवच्चे' दिति (ब्र० २-१-२.) सूत्रे हि क्षीरस्य दधिभावापत्त्यादिषु परमेश्वराधिष्ठानं कारणान्तरमस्तीति वक्ष्यते । कथं च 'देवादिवदपि लोके' (ब्र० २-१-२५.) इति सिद्धान्ते दृष्टान्तान्तरमुक्तम् । न हि परब्रह्मणोऽपि सहकार्यंतरं विना स्रष्टृत्वमनुपपन्नमिति विवदमानः पूर्वपक्षी देवादीनां तदनुमन्येत । किं च । भूतवशिनां तेषां स्रष्टृत्वमपि तत्सङ्कल्पानीतपार्थिवद्रव्यादिसहकार्यपेक्षमिति तत्राऽपि न सहकारिविरहसम्प्रतिपत्तिरिति । अत्रेदमुत्तरम् । मृत्पिण्डादीनामुपादानभावे तद्व्यतिरिक्तकुलालाद्यधिष्ठानापेक्षा दृष्टा । कुलालादीनां निमित्तभावे स्वसङ्कल्पमात्रानधीनसमवधानसहकार्यपेक्षा दृष्टा । तदभावाद्ब्रह्मणो नोपादानत्वं न वा निमित्तत्वं संभवतीति मन्यमानस्य पूर्वपक्षः । स्मृतयः कर्तृगौरवमात्रेणानादरणीयत्वेऽपि तदुपन्यस्तयुक्तिगौरवेणादरणीया इति कपिलादिस्मृत्युक्तब्रह्मवादनिराकरणार्थयुक्त्यवलम्बनपूर्वपक्षनिराकरणार्थानि खल्विह पादे 'नविलक्षणत्वा' धिकरणमारभ्याधिकरणानि । तत्र कपिलस्मृत्यनुसारिणां निरीश्वरवादिनां पयोंऽबुन्यायेन स्वत एव प्रकृतेः प्रपञ्चसृष्टौ प्रवृत्तिमवगच्छतां नैवं युक्तिरुपपद्यत इति क्षीरवदित्यनेनोक्तम् । उक्तार्थे अन्येषामपि नोप..........आत्मरूपोपादानाभिन्नकर्तृकेषु यागोपासनादिषु व्यभिचारस्य स्पष्टत्वादिति हिशब्देन द्योतितम् । कर्तुः स्वसङ्कल्पमात्रानधीनसमवधानसहकार्यपेक्षानियमव्यभिचारो 'देवादिव' दिति सूत्रेणोद्घाटित इति । भाष्ये 'चेतनादेकस्मात्पुरुषा' दिति पुरुषातिरिक्तपरिदृश्यमानकेशनखादिकारणाभावाभिप्रायः ॥

इत्युपसंहारदर्शनाधिकरणम् ॥ ८ ॥

---

## नयमणिमालायाम्

### अथ उपसंहारदर्शनाधिकरणम् ॥ ८ ॥

सू० ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥ देवादिवदपि लोके ॥ २५ ॥

कर्तुरुपादानस्याप्युपकरणापेक्षणं दृष्टम् । कथमीशोऽनुपकरणः कुर्यादेकः प्रपञ्चमिमम् ॥ १०१ ॥

दृष्टं हीनोपकरणं क्षीरं दधिभावमाप्नोति । देवादयोऽप्यभिमतं सृजन्ति सङ्कल्पमात्रेण ॥ १०२ ॥

इत्युपसंहारदर्शनाधिकरणम् ॥ ८ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ उपसंहारदर्शनाधिकरणम् ॥ ८ ॥

सू ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥ देवादिवदपि लोके ॥ २५ ॥ भगवत्पादमते, पूर्वमौपाधिकजीवभेदाद्धिताकरणादिदोषो नास्तीत्युक्तम् । संप्रत्युपाधितोऽपि ब्रह्मणो विभक्तं करणादिकं नास्ति ब्रह्मनानात्वाभावादिति प्रत्युदाहरणसंगत्येदमाह—सू ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥ न ब्रह्म उपादानं-

## अथ कृत्स्नप्रसक्त्यधिकरणम्. ॥ ९ ॥

### ॥ सू ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

अत्र ब्रह्मणो जगदाकारेण परिणामः पूर्वोक्तो युज्यते न वेति संदेहः। कथं युज्यते ! एकस्यैव जगदाकारेण परिणाम इत्युक्तम् । तस्य क्षीरस्येव दधिरूपेण सर्वात्मना जगदाकारेण परिणामे कृत्स्नस्यापि कार्यत्वप्रसक्तिः, ब्रह्म नावशिष्येत । केन चिदंशेन चेत्तस्य निरवयवत्वश्रुतिकोपो वा भवति।

## अथ कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

सू० ॥ कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा॥ २६ ॥ कृत्स्नप्रसक्त्यादिदोषप्रसंगाप्रसंगाभ्यां संशयं दर्शयति–अत्रेति। पूर्वत्राधिकरणे क्षीरस्येव दधिभावेन ब्रह्मणः प्रपञ्चभावेन परिणाम उक्तः। तर्हि तद्वदेव सर्वात्मना परिणामे ब्रह्मानवशेषप्रसंग इति प्रदर्शनपूर्वकं सूत्रोदितं पूर्वपक्षं दर्शयति–कथमिति। नावशिष्येतेति। तथा च प्रपञ्चातीतस्य ब्रह्मणस्सार्वदिकसत्ताबोधकानां तत्साक्षात्कारोपयुक्तविद्याविधायकानां च वाक्यानां वैयर्थ्यप्रसङ्ग इति भावः। तत्र फलादीनामंशेन पक्वतावदंशेन ब्रह्मणः परिणामः स्यादित्याशंक्याह–केनचिदिति। ब्रह्मणः परिणामाभावेऽपि चिच्छक्तेः परिणामोऽस्तीति तदृष्ट्या

कर्तृ वा असहायत्वात्संमतवत् इति न्यायेन असहायाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यते न वेति संदेहे **उपसंहारदर्शनात्**=लोके कुलालस्य कर्तुः दण्डचक्राद्युपकरणदर्शनात् मृदो वा उपादानस्य स्वभिन्नकुलालादिसहायदर्शनात्। **नेति चेत्**=तदुभयविलक्षणस्य ब्रह्मणो **न** जगत्कर्तृत्वमुपादानत्वं वा संभवति । अतस्समन्वयो विरुध्यत इति चेत् इति **पूर्वपक्षः। सिद्धान्तस्तु' क्षीरवद्धि**=हिशब्दो हेत्वर्थः। यथा लोके क्षीरं बाह्यसाधनान्यनपेक्ष्य दध्याकारेण परिणमते तद्वद्ब्रह्मापि। श्रुतिरपि ब्रह्मणोऽसहायस्य कार्यकारित्वं दर्शयति––'न तस्य कार्यं करणं च विद्यत' इति ॥

ननु, चेतनत्वे सत्यसहायत्वं हेतुः अतो न क्षीरे व्यभिचार इत्याशंक्य चेतनदृष्टान्तेन तस्य व्यभिचारमाह–सू॥ **देवादिवदपि लोके॥ २५॥** लोक्यतेऽनेनेति लोकः मन्त्रार्थवादेतिहासपुराणादिः शब्दः। तस्मिन् यथा देवाः पितरः ऋषयः इत्येवमादयश्चेतनाः स्वसिद्धिसामर्थ्यात्साधनान्तरं बाह्यमनपेक्ष्य संकल्पमात्रेणैव नानाविधकार्यकर्तार उपलभ्यंते तद्वद्ब्रह्माप्यसहायमेव जगदुपादानं कर्तृ चेति तद्वादिसमन्वयो न विरुध्यत इति सिद्धम् ।

**श्रीकण्ठमते,** 'एकमेवाद्वितीयम्' 'द्यावापृथिवी जनयन्देव एकः' इत्यादिश्रुतिषु जगतः कारणत्वेन असहायत्वेन च श्रूयमाणस्य परमेश्वरस्यैकस्य विचित्रजगत्कारणत्वं युक्तं न वेति संदेहः । आकाशवाय्वग्निसलिलरूपं विचित्रं कार्यं जगदिदं कारणवैचित्र्यमन्तरेण कथं संभवति। लोके रथादिकार्येषु बहुकारकोपसंहारदर्शनादेककारणत्वं न युक्तमिति **पूर्वपक्षः। सिद्धान्तस्तु,** एकस्यापि ब्रह्मणःविचित्रकार्यरूपेण क्षीरस्यैकस्य दधिभावेनेव परिणामः संभवति। तस्माद्ब्रह्मैककारणकं जगत्कार्यमेवेति युक्तमिति। चेतनादेकस्मात्पुरुषात्केशनखादिविचित्रकार्यनिष्पत्तिदर्शनात् विचित्रजगत्कार्यनिर्वाहे ब्रह्म न कारणान्तरापेक्षमिति च ॥ **सूत्रार्थस्तु, उपसंहारदर्शनात्**=लोके रथादिकार्येषु बहुकारकोपसंहारदर्शनात्। **नेति चेत्**=ब्रह्मणः एककारणत्वं न संभवति इति चेत्। **न**=नैतद्युक्तम्। **क्षीरवत्**=क्षीरस्यैकस्य दधिभावेनेव एकस्यापि ब्रह्मणः कार्यरूपेण परिणामः संभवति **हि**। इति ॥ शक्तिमतां सर्वं संभाव्यत एवेत्याह—सू॥ **देवादिवदपि लोके ॥ २५॥** शास्त्रावगतशक्तेर्देवादेर्यथा स्वापेक्षितनानारूपादिभावः एवं शास्त्रावगतशक्तेः परमेश्वरस्य 'य इमाँल्लोकानीशत ईशनीभिः जननीभिः परमशक्तिभिः' इति परमेश्वरस्यानन्तशक्तिमत्त्वश्रवणात्सर्वमुपपद्यत एवेति ॥

**रामानुजमते,** संदेहपूर्वपक्षादिकं प्रायः श्रीकण्ठमतवदेव। कार्यजननसमर्थस्यापि वस्तुनः तत्तत्कार्यजननेऽनेककारकोपसंहारदर्शनाद्ब्रह्मणोऽप्यसहायस्य जनयितृत्वानुपपत्तेस्तस्य जगत्कारणत्वं न संभवतीति पूर्वपक्षं कृत्वा क्षीरस्य दधिभावदृष्टान्तेनानेककारकोपसंहारनियमो न दृश्यत इति ब्रह्मणोऽनन्यापेक्षस्यैव कारणत्वं संभवतीति सिद्धान्तितमिति नास्ति वैलक्षण्यमिति ॥

**आनन्दतीर्थमते,** अनयोस्सूत्रयोः पूर्वाधिकरणशेषत्वेन पूर्वाधिकरण एव व्याख्याततया नात्र प्रपञ्चनावसर इति वेद्यम्॥ **इति सूत्रार्थचन्द्रिकायामुपसंहारदर्शनाधिकरणम्॥ ८॥**

तस्माद्ब्रह्मणः परिणामो न युक्तः ॥ इति प्राप्ते ब्रूमः

॥ सू ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

ब्रह्मणो जगत्परिणामो युक्त एव, तच्छ्रुतेः। श्रुतिरेवात्र प्रमाणम्, न प्रमाणान्तरम्। शब्दमूलत्वादेव तस्य सकलेतरप्रमाणावगतवस्तुविजातीयत्वेन तत्रादृष्टशक्तियोगेन विरोधाभावात्। अतः परिपूर्णस्य तस्यैव कार्यत्वं कारणत्वं च सम्भवति। यथा जातिवादिनां जातेः खण्डमुण्डाद्यत्यन्तविलक्षणेष्वनन्तेषु प्रत्येकमेकस्या एव परिसमाप्य वृत्तिः न तत्रेतरवस्तुदृष्टान्तेन शङ्का चोद्या। तस्मात् ब्रह्मणः स्वरूपनिरूपणे शब्द एव मूलमिति न कश्चिद्विरोधः॥

॥ सू ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

जीवात्मनि च अचिद्धर्मविरोधिचिद्धर्मयोगोऽपि विजातीयत्वादेव भवति। अग्निजलादयोऽप्यचिद्विशेषा अन्योन्यविलक्षणशक्तयो दृश्यन्ते विचित्रा एव। ततो ब्रह्मापि शब्दैकप्रमाणकं विचित्रानन्तशक्तिकमिति ततः सर्वाविरोधः॥

॥ सू ॥ स्वपक्षदोषाच्च ॥ २९ ॥

कृत्स्नप्रसक्त्यादिदोषा निरवयवेऽचित्सजातीये प्रधानादौ, न ब्रह्मणि

---

पूर्वपक्षः ॥ सू० ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥ नैवं शङ्कावकाशोऽस्ति । यतो निरवयवमेव ब्रह्म जगदाकारेण परिणमते च स्वयं च यथापूर्वं परिपूर्णमवतिष्ठते । तथा श्रुतेः। श्रुतिमूलेऽस्मिन्नर्थे न कश्चित्कुतर्कापादितो विरोधः प्रभवति। 'नैषा तर्केण मतिरापनीये'ति श्रुतेः । तर्कागोचरे ब्रह्मणि तर्कस्य रूपे श्रोत्रस्येव साधकत्ववद्बाधकत्वस्याप्यसंभवादिति सूत्रोदितं सिद्धातं दर्शयति–ब्रह्मण इति। श्रुतिमात्रेणाप्यपरितुष्टं तार्किकंमन्यं प्रत्याह–यथेति। जातिर्व्यक्तिषु नांशेन वर्तते निरवयवत्वव्याकोपादिति परिसमाप्य वर्तत इति वक्तव्यम्। तथा चैकत्र व्यक्तौ परिसमाप्य स्थिता जातिर्न परिशिष्येतेति व्यक्त्यंतरे तदनुपलम्भप्रसंगः। अतस्तत्र यथादर्शनं व्यक्तिषु परिसमाप्य स्थिताऽपि जातिः परिशिष्यते तेन व्यक्त्यंतरेष्वपि तदुपलंभः इत्युपपादनीयम्। एवं ब्रह्म यथाश्रुति जगदाकारेण परिणमते यथापूर्वं परिपूर्णमवतिष्ठते च, न च तत्र काचिदनुपपत्तिरुपपद्यत इत्यर्थः। सू ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥ आत्मनि चैवमित्यंशं व्याचष्टे– जीवात्मनीति। यथा ब्रह्मणि परिणामित्वेऽपि परिपूर्णत्वलक्षणश्चिदचित्प्रपञ्चधर्मविलक्षणो धर्म एवं जीवात्मन्यपि अचित्प्रपञ्चधर्मविलक्षणः कर्तृत्वभोक्तृत्वादिलक्षणो धर्मः। न तस्याचित्प्रपञ्चदृष्टांतेनापह्नवः कर्तुं शक्यत इति भावः । 'विचित्राश्च ही' ति सूत्रशेषं व्याचष्टे– अग्निजलादयोऽपीति। विचित्रा एवेति। न तु परस्परदृष्टान्तेन परस्परविलक्षणधर्ममूला इत्यर्थः। हिशब्दोऽवधारणार्थ इतिभावः। सू ॥ स्वपक्षदोषाच्च ॥ २९ ॥ निरवयवे इति। न च प्रधानस्य सत्वरजस्तमांस्येवावयवास्संतीति वाच्यम्। प्रत्येकमपि सत्वादीनां सांख्यैरुपादानतयाङ्गीकृतत्वात्। अचित्सजातीये इति। मृत्पिण्डादिजडदृष्टांतेन कल्प्ये तत्सजातीय एव तत्साधर्म्यापादनमवकाशं लभत इति भावः। 'प्रधानादावि' त्यादिशब्देन परमाणूनां ग्रहणम्। तार्किकैर्हि परमाणवः निष्प्रदेशाः संयो-

शास्त्रप्रमाणके ॥

सर्वशक्तिमत्त्वेन सर्वोपपत्तिमाह—

॥ सू ॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत् ॥' इत्यादिदर्शनात् सर्वाऽपि शक्तिर्ब्रह्माश्रितेति विज्ञायते । अतः सर्वशक्तिमतः तस्य किं न संभवति ॥

॥ सू ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

'न तस्य कार्यं करणं च विद्यते' इति ब्रह्मणो विकरणत्वमुच्यते ततोऽस्य न कारणत्वमिति चेत्—न, तस्योत्तरं 'शब्दमूलत्वा' दिति पूर्वमुक्तमेव । विचित्रानन्तशक्तिशबलमायापरमशक्तिविशिष्टः परमेश्वरः स्वशक्तिशकलेन प्रपञ्चाकारः स्वतः प्रपञ्चातीतश्च भवतीत्यत्र 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत् ॥' इति श्रुतिरेव भगवती प्रमाणम् । अत्र विषये पुराणं च—

'विश्वोत्तरोत्तरविचित्रमनोरथस्य यस्यैकशक्तिशकले सकलः समाप्तः । अध्वानमध्वपतिमध्वविदो वदन्ति तस्मै नमः सकललोकविलक्षणाय ॥' इति ।

---

गप्रदेशवर्त्तिनश्चाभ्युपगम्यंते । ततश्च परमाण्वोस्संयोगस्य कृत्स्नपरमाणुत्वव्यापित्वं वा निष्प्रदेशयोस्तयोः प्रदेशवत्त्वं वा तयोस्संयोगाभावेऽपि द्व्यणुकजननं वा दृष्टविरुद्धं तैरभ्युपगंतव्यमापद्यते । न हि शास्त्रप्रमाणके ब्रह्मणि शुष्कतर्काणां शास्त्रविरोधेनेव शुष्कतर्कप्रमाणके प्रधानादौ केनचिदुपायेन तेषां कुतर्कत्वमुपपादयितुं शक्यम् । प्रधानादिकल्पकतर्काणां तत्प्रतिक्षेपकतर्काणां च दृष्टसाधर्म्यमूलत्वस्याप्रयोजकत्वस्य च तुल्यत्वात् प्रत्युत तर्कप्रतिक्षेपकतर्काणामेव प्रयोजकत्वाच्चेति भावः । उत्तरसूत्रमवतारयति—सर्वशक्तिमत्त्वेनेति । श्रुतिबलेन प्राक्परिणामित्वेऽपि परिपूर्णत्वमुपपादितमिदानीं श्रुत्यवगतसर्वशक्तिमत्त्वेन तदुपपद्यत इति भावः । सू ॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ अतः सर्वशक्तिमत इति । अल्पशक्तिमतामपि हि प्रपञ्चान्तर्गतचिदचिद्वस्तूनामतर्कणीया बहुविधवैचित्री दृश्यते, किमुत सर्वशक्तिमत इति भावः । शक्तिमतामपि चेतनानां करणकलेवरवत्स्वेव शक्त्युन्मेषो दृष्टः । अतस्तद्रहितस्य सदपि सर्वशक्तिमत्त्वमध्ययनादिरहितस्य धीशक्तिमत्त्वमिवाप्रयोजकमित्याशङ्कानिराकरणार्थं सूत्रम्—विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ करणग्रहणं कलेबरस्याप्युपलक्षणम् । तदुक्तं तस्य चोद्यस्य 'श्रुतेस्त्वि'ति सूत्रेणोत्तरमुक्तमित्यर्थः । कल्प्येश्वरवाद एवायं दोषो भवेत् न तु श्रौतेश्वरवाद इति भावः । स्वशक्तिशकलेनेति । शक्त्यवस्थारूपस्य पुरुषस्य शकलशब्देन ग्रहणं पुरुषावस्थापरिणामेऽपि शक्तेरवैकल्यद्योतनार्थम् । विश्वोत्तरेति । मनोरथः सङ्कल्पः । सकलः षड्विधोऽप्यध्वा । समाप्तः विश्रांतः । अध्वविदः वैदिकं सन्मार्गं जानानाः त्रयीविद्याविदः । वदन्ति 'अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमशीये' त्यादिष्वामनंति । अधिकरणार्थमुपसं-

**एवं सकलदोषकलङ्करहितशब्दप्रमाणैकसिद्धसर्वशक्तिसंपद्विलासे परमेश्वरे शिवे परब्रह्मणि सम्भावनाऽसम्भावनाविचारः सर्वोऽपि निरवकाश एव ॥**

**इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥**

हरति-एवमिति । इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥



## नयमणिमालायाम्

### अथ कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

सू ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥ स्वपक्षदोषाच्च ॥ २९ ॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

कृत्स्नं यदि परिणमति ब्रह्म तदा नावशिष्येत । अंशेन चेत्तदानीं निरंशतोक्तिर्विरुध्येत ॥ १०३ ॥
एतादृशाः प्रधाने परमाण्वादौ च दोषाः स्युः । यत्नात्समर्थनं चेच्छ्रुतिमूलस्यैव तद्युक्तम् ॥ १०४ ॥

**इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥**

## सूत्रार्थचन्द्रिकायाम्

### अथ कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

**सू ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥ स्वपक्षदोषाच्च ॥ २९ ॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥**

**भगवत्पादमते,** पूर्वं क्षीरादिदृष्टान्तकथनेन ब्रह्मणः परिणामित्वभ्रमोत्पत्तेः तन्निरसनमनेन क्रियत इति कार्यकारणभावसंगत्येदमाह--**सू ॥ कृत्स्नप्रसक्तिरित्यादि** । सावयवस्यैव नानाकारेण परिणाम इति न्यायेन निरवयवाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते न वेति संदेहे **पूर्वः पक्षः** । ब्रह्मणो निरवयवस्य परिणामित्वाभ्युपगमे कृत्स्नस्य ब्रह्मणः कार्याकारेण परिणामप्रसक्त्या कार्यातिरिक्तं ब्रह्म न स्यात्, सावयवस्य तदभ्युपगमे एकांशपरिणामेऽप्यपरांशस्थितिसंभवात्कृत्स्नप्रसक्त्यभावेऽपि 'निष्कल'मित्यादिनिरवयत्वशब्दकोपः स्यात्, उभयपक्षेऽप्यनित्यत्वप्रसंगाद्ब्रह्मण उपादानत्ववादी समन्वयो विरुध्यत इति । **सिद्धान्तस्तु, सू ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥** तुशब्दः पूर्वपक्षं निरासयति । श्रुतौ ब्रह्मणो जगदुपादानत्वश्रवणात् 'तावानस्य महिमे' त्यादौ कार्यव्यतिरेकेण सत्ताश्रवणाच्च विवर्तवादस्य श्रुत्यैव स्फुटीकृतत्वान्न तावत्कृत्स्नप्रसक्तिः । परिणामवादे कार्यव्यतिरेकेण सत्ताभावात् नोक्तदोषावकाशः । ननु तर्हि उक्तयुक्तिबाधितत्वात् श्रुतिर्वा कथं कार्यव्यतिरेकेण ब्रह्मणः सत्तां बोधयेदित्यत आह--**शब्दमूलत्वात्**=ब्रह्मणः शब्दैकप्रमाणकत्वाद्यथाशब्दं कार्योपादानत्वं तदतिरेकेण सत्त्वं चाविरुद्धमिति । जगतो ब्रह्मविवर्तत्वेन स्वप्नप्रपञ्चवन्मायिकत्वाद्ब्रह्मणस्तदुपादानत्वेऽपि न कृत्स्नप्रसक्त्यादिदोषः स्वप्नसाक्षिण इवेत्याह--**सू ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥ हि**=यस्माद्धेतोः । एकस्मिन्नात्मनि स्वप्नदृशि निरवयवे 'न तत्र रथा रथयोगाः' इत्यादौ विचित्राः सृष्टयः श्रूयन्ते । यथा च लोके मायाविनि स्वरूपानुपमर्देनैव हस्त्यश्वादिविचित्रसृष्टयो दृश्यन्ते । एवमेकस्मिन्नपि ब्रह्मणि विचित्रसृष्टिरित्यर्थः ॥

किंच । सू ॥ **स्वपक्षदोषाच्च ॥ २९ ॥** निरवयवं प्रधानं जगत्परिणामि इत्यभ्युपगच्छतां सांख्यादीनां परमाणुद्वयसंयोगेन द्व्यणुकादिसृष्टिमुररीकुर्वतामणुवादिनामप्ययं दोषः समानः । ब्रह्मवादे स दोषो नास्ति । तस्मादुपपन्नो ब्रह्मकारणवाद इति ॥ **इति भगवत्पादमते कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥**

### अथ सर्वोपेताधिकरणम् ॥ १० ॥

पूर्वोक्तविचित्रकार्यशक्तिमत्त्वविषयशंकानिरासेन समर्थनात्मकत्वाद्विषयविषयिभावसंगत्येदमाह--**सू ॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥** अशरीरस्य न मायेति न्यायेन मायाशक्तिमतो ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यते न वेति संदेहे विरुध्यत इति **पूर्वपक्षः** । **सिद्धान्तस्तु** परादेवता **सर्वोपेता**=सर्वशक्तियुक्ता । कुतः । **तद्दर्शनात्**=तस्य सर्वशक्तियोगस्य 'सर्वकर्मा सर्वकाम' इत्यादिश्रुतौ दर्शनादित्यर्थः ॥

पूर्वपक्षमनुभाष्य दूषयति--**सू ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥** सर्वशक्तियुक्तानामपि देवादीनां चक्षुरादिकरणवतामेव विचित्रकार्यकर्तृत्वावगमात् ब्रह्मणः 'अचक्षुष्कमश्रोत्र' मित्यादिना **विकरणत्वावगमाच्च न**

कर्तृत्वमिति **चेत् तदुक्तम्**=अत्र यद्वक्तव्यमुत्तरं तत्पूर्वमेव 'नविलक्षणत्वा' दित्यादौ उक्तम् । अथवा । 'अपाणिपादो जवनो ग्रहीता' इत्यादिश्रुत्या उत्तरमुक्तमित्यर्थः । अतः श्रुत्येकसमधिगम्यत्वान्न तर्केण विरोध इति सिद्धम् ॥

**इति सर्वोपेताधिकरणम् ॥ १० ॥**

**श्रीकण्ठमते,** एकस्यैव ब्रह्मणो जगदाकारेण परिणामः पूर्वोक्तो युज्यते वा न वेति संदेहः । तस्य क्षीरस्येव दधिरूपेण सर्वात्मना जगदाकारेण परिणामे कृत्स्नस्यापि कार्यत्वप्रसक्तिः, न ब्रह्मपरिशिष्येत । केनचिदंशेन चेत्तस्य निरवयवत्वश्रुतिकोपो वा भवति । तस्माद्ब्रह्मणः परिणामो न युक्त इति **पूर्वपक्षः। सिद्धान्तस्तु,** ब्रह्मणः स्वरूपनिरूपणे शब्दस्यैव मूलत्वात्तत्प्रामाण्येन सकलेतरप्रमाणावर्गतवस्तुविजातीयत्वेन तत्राद्दष्टशक्तियोगेन विरोधाभावात् परिपूर्णस्य तस्यैव कार्यत्वं कारणत्वं च संभवतीति ॥

**सूत्रार्थस्तु,** ब्रह्मणः जगदाकारेण परिणामे **कृत्स्नप्रसक्तिः**=कृत्स्नस्य ब्रह्मणः कार्यत्वेनोपयोगप्रसंगः । निरवयवत्वात् । सावयवत्वाभ्युपगमे **निरवयवत्वशब्दकोपो वा** निरवयवत्वाभिधायकश्रुतिविरोधो वा भवति । इत्यर्थः ॥

**सू ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥ तु**शब्दः पूर्वपक्षं व्यावर्तयति । **श्रुतेः** प्रामाण्यान्नैवं वक्तुं युक्तम् । ब्रह्मणोजगदाकारेण परिणामो युक्त एवेत्यर्थः । कुतः । **शब्दमूलत्वात्**=शब्दैकमूलत्वेन सकलेतरविजातीयत्वादित्यर्थः ॥

**सू ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥ आत्मनि च**=जीवात्मनि च अचेतनधर्मविरोधिकर्तृत्वभोक्तृत्वादिचेतनधर्मयोगः भवति । अग्निजलादयो ह्यचेतनविशेषाः **विचित्राश्च**=अन्योन्यविलक्षणशक्तित्वेन विचित्रा एव दृश्यन्ते । अतः शब्दैकप्रमाणकं ब्रह्मापि विचित्रानन्तशक्तिकमिति सर्वमुपपद्यते । इत्यर्थः ॥

किंच । **सू ॥ स्वपक्षदोषाश्च ॥ २९ ॥** निरवयवे अचित्सजातीये प्रधानादावेव कृत्स्नप्रसक्त्यादयो दोषाः न ब्रह्मणि शास्त्रप्रमाणके इत्यर्थः ॥

सर्वशक्तित्वेन तस्य सर्वोपपत्तिमाह--

**सू ॥ सर्वोपेता च तद्दर्शनात् ॥३०॥** 'परास्य शक्तिः' 'मायां तु प्रकृतिं विद्यात्' इत्यादिदर्शनात् सर्वापि शक्तिर्ब्रह्माश्रितेति विज्ञायते । अतस्सर्वशक्तिमतस्तस्य किं न संभवति ॥ इत्यर्थः ॥

**सू ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ विकरणत्वात्**='न तस्य कार्यं करणं च विद्यते' इत्यादिना ब्रह्मणो विकरणत्वावगमात् **नेतिचेत्**=नास्य जगत्कारणत्वमिति चेत् । **तत्**=तस्योत्तरम् । **उक्तम्**='शब्दमूलत्वा'दिति पूर्वमुक्तमेवेत्यर्थः ॥ अतः शब्दप्रमाणैकसिद्धे सर्वशक्तिसंपन्ने परमेश्वरे संभावनासंभावनादिविचारस्सर्वोऽपि निरवकाश इति भावः ॥

**रामानुजमते,** ब्रह्मणो जगत्कारणत्वं संभवति वा न वेति संदिह्य न संभवतीति पूर्वपक्षमुद्भाव्य प्रायः श्रीकण्ठमतानुसारेणैव सूत्राणि व्याख्याय संभवतीति सिद्धान्तितम् ॥ प्रायः सूत्राणि समानार्थानि । **'आत्मनि चैवं विचित्राश्च हि'** इति सूत्रे परं **आत्मनि च**=जीवात्मनि च । **एवम्**=अचेतनधर्माप्रसक्तिश्चैवमचेतनविजातीयत्वादेवेति व्याख्यातम् । तत्रापि तात्पर्यवैलक्षण्यं नास्तीतीतरत्सर्वमविशिष्टमेव ॥

**आनन्दतीर्थमते, 'कृत्स्नप्रसक्ति'** रिति सूत्रमपि पूर्वस्मिन्नितरव्यपदेशाधिकरण एव तच्छेषतयान्तर्भावितत्वात्तत्रैव व्याख्यातम् । अतः 'श्रुतेस्तु शब्दमूलत्वा' दित्यारभ्याधिकरणान्तरत्वेन विभाग इति विशेषः ।

**आनन्दतीर्थमते.**

**अथ श्रुतेस्तु शब्दमूलत्वाधिकरणम् ॥ ८ ॥**

**सू ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २८ ॥** अत्र जीवस्य स्वतन्त्रकर्तृत्वाङ्गीकारे पूर्वमुक्ताः कृत्स्नप्रसक्त्यादयो दोषा ईश्वरकर्तृत्वपक्षेऽपि तुल्याः । तस्मादीश्वरस्य जगत्कर्तृत्वं युक्तं न वेति संदेहे न युक्तमिति **पूर्वपक्षः । सिद्धान्तस्तु,** 'योऽसौ विरुद्धोऽविरुद्धो मनुरमनु' रित्यादिश्रुत्या लोकदृष्ट्या विरुद्धानामपि धर्माणां परमात्मन्यविरोधेन समवायस्य प्रमितत्वात् नेमे दोषास्तत्र प्रसरन्ति । तस्मादचिन्त्यशक्तिः परमेश्वर एव विरुद्धे अप्यभेदांशित्वकृतबहुत्वे चेतनेषु विशेषनिमित्तेनैव समावेश्य अभेदेन निरवयवत्वश्रुतिविरोधं बहुत्वेन कृत्स्नप्रसक्तिं च निराकृत्य कार्यानुरूपजीवेन कारयतीत्यङ्गीकारात् 'अपाणिपाद' इत्यादिश्रुततत्करणराहित्यस्य प्राकृतेन्द्रियविषयत्वाच्च ईश्वरस्य स्वतन्त्रकर्तृत्वपक्षे न कोऽपि दोष इति ॥

**सूत्रार्थस्तु,** ईश्वरकर्तृत्वपक्षे जीवकर्तृत्वपक्षोक्तयुक्तिविरोधो नास्ति । कुतः । **श्रुतेस्तु**='योऽसौ विरुद्धोऽविरुद्धो मनुरमनु'रित्यादिश्रुतेरेव । नन्वेतावता कथं युक्तिविरोधपरिहार इत्यत आह--**शब्दमूलत्वात्**=ईश्वरतद्धर्माणां शब्दैकप्रमाणगम्यत्वेन युक्त्यविषयत्वात् न तत्र युक्तिविरोधः प्रवर्तते । जीवे तु न तथा । तस्य प्रमाणान्तरेणापि गम्यत्वादित्यर्थः ॥

**सू ॥ आत्मनि चैवं विचित्राश्च हि ॥ २९ ॥** आद्यश्चशब्दोऽवधारणे । द्वितीयस्समुच्चये । हिशब्दः प्रसिद्धौ । तथा च, **हि**=शब्दात् । **आत्मनि च**=ईश्वर एव । **एवम्**=सकलयुक्तिविरोधनिरासकाः । **विचित्राः**='विचित्रशक्ति' रितिश्रुतिप्रसिद्धाश्शक्तयः सन्ति । न जीवे । तस्माच्च जीवपक्ष एव युक्तिविरोधो नेश्वरपक्ष इत्यर्थः ॥

**सू ॥ स्वपक्षदोषाच्च ॥ ३० ॥** चोऽवधारणे । तथा च 'ये दोषा' इति श्रुतौ जीवपक्षे युक्तिविरोधस्य दोषत्वस्यैवोक्तेः नासावदोषतां नेतव्यः । किं तु ईश्वरपक्ष एवादोषतां नेतव्य इत्यर्थः ॥

## अथ लीलाकैवल्याधिकरणम् ॥ १० ॥

**पुनरन्यथाऽऽक्षिप्य समाधत्ते--**

**॥ सू ॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥**

**शास्त्रावगतसर्वशक्तेः ब्रह्मणः सर्वेषु कार्येषु कारणसामर्थ्यमस्तीति निर्णीतम्। तथाऽपि सर्वप्रवृत्तेः प्रयोजनवत्त्वात् अवाप्तसकलकामस्य परमेश्वरस्य जगत्स्रष्ट्यादिव्यापारः सम्भवति न वेति सन्दिह्यते ॥**

**अत्र कथं सम्भवति ? 'आनन्दो ब्रह्म' 'विभुं चिदानन्दमरूपमद्भुतम्'। 'उमासहायम्' इत्यादिभिः निरतिशयानन्दस्वरूपो नित्यतृप्तो हि शिवः श्रूयते। कथमसौ सृष्ट्यादिव्यापारेषु प्रयोजननिरपेक्षः प्रवर्तेत। यदि सप्रयोजनास्य प्रवृत्तिः नित्यतृप्तताहानिः स्यात्। अन्यथा जडादिवदनुचितकारिता स्यात् ॥**

## अथ लीलाकैवल्याधिकरणम् ॥ १० ॥

ननूत्तराधिकरणेनावाप्तसमस्तकामस्य प्रेक्षावतः परमेश्वरस्य निष्प्रयोजने जगत्सृष्ट्यादिव्यापारे प्रवृत्तिर्नोपपद्यत इत्याक्षिप्य समाधीयते नायमाक्षेपोऽवकाशं लभते परमेश्वरस्यावाप्तसमस्तकामत्ववत् सर्वज्ञत्ववत् जगत्सृष्ट्यादिप्रवृत्तेरपि श्रुतिसिद्धतया 'श्रुतेस्तु शब्दमूलत्वा'दिति सूत्रेण तदर्थस्मरणार्थेन पूर्वसूत्रेण च दत्तोत्तरत्वादित्याशंक्यावतारयति–पुनरन्यथेति। अयमाशयः। अलौकिकेषु वेदैकगम्येष्वर्थेषु तद्विरोधिशुष्कतर्को न प्रवर्तेत इति वैदिकमर्यादायामित्थमाक्षेपानवकाशेऽपि तदश्रद्दधानानां शुष्कतार्किकाणामाक्षेपाकांक्षा न तावता शाम्यति। अत एव 'श्रुतेस्त्वि'ति सूत्रे भाष्यदर्शिता जातिप्रतिवन्द्यऽपि शुष्कतार्किकशङ्काव्यावृत्त्यर्थैव न तु शब्देन विवक्षिता। पूर्वसूत्रे 'तदुक्त' मित्यनेन परमेश्वरस्य स्थूलसूक्ष्मप्रपञ्चरूपशरीरवत्त्वमंतर्याम्यधिकरणादिषूक्तं, ज्ञानकर्मेंद्रियवत्त्वं तु नित्यसिद्धसार्वज्ञ्यस्य देवान्सङ्कल्पमात्रेण स्रष्टुं शक्तस्य तस्य नापेक्षितमिति शास्त्रयोनित्वाधिकरणादिषूक्तप्रायमित्येदपि विवक्षितम्। इह तु तदाक्षेपाकांक्षाशांतिकारणं प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वनियमस्य व्यभिचारदर्शनं प्राङ्क् कृतमतस्तदर्थमधिकरणांतरारंभ इति। सू ॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥ संगतिपूर्वकं संशयं दर्शयति–शास्त्रावगतेति। सर्वशक्तिमत्त्वहेतुना कृत्स्नप्रसक्त्यादिदोषनिराकरणेऽपि प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वनियमनिराकरणं न संभवतीति प्रत्युदाहरणलक्षणा संगतिः निरुक्तनियमसद्भावासद्भावाभ्यां संशयश्चेत्यभिप्रायः। परमेश्वरस्य स्रष्टृत्वं न संभवति प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वनियमादिति सूत्रोक्तपूर्वपक्षं दर्शयति–कथमिति। अन्यथेति। निष्प्रयोजना चेदित्यर्थः। न च प्रेक्षावतामपि निष्प्र-

---

सू ॥ **सर्वोपेता च तद्दर्शनात्** ॥ ३१ ॥ यतः परमात्माख्यदेवता न केवलं सामान्यतो विचित्रशक्तिमती । किं तु **सर्वोपेता**=सर्वविषयसार्वकालिकशक्तिमती च । कुतः। **तद्दर्शनात्**='सर्वैर्युक्ता शक्तिभिर्देवता सा' इति श्रुतौ तथा दर्शनात्। अतो नेश्वरे युक्तिविरोधः शङ्कनीय इत्यर्थः ॥

सू ॥ **विकरणत्वान्नेति चेत्तदुक्तम्** ॥ ३२ ॥ नेत्यावर्तते। **विकरणत्वात्**='अपाणिपाद' इति श्रुत्या ईश्वरस्य हस्तादीन्द्रियशून्यत्वावगमात्। **नेति चेत्**=ईश्वरस्य कर्तृत्वं न युक्तमिति चेत्। **न**। कुतः। यस्मात् **तदुक्तम्**=' तस्मिन्नेतस्मे' त्याद्यागमेन तत्करणराहित्यस्य प्राकृतेन्द्रियविषयत्वमुक्तं तस्मादित्यर्थः ॥ **इति आनन्दतीर्थमते श्रुतेस्तुशब्दमूलत्वाधिकरणम् ॥ ८ ॥ इति सूत्रार्थचन्द्रिकायां कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥**

इति प्राप्ते ब्रूमः—

## ॥ सू ॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

यदुक्तं नित्यतृप्तस्य प्रयोजनाभावादप्रयोजना जगत्सृष्ट्यादिप्रवृत्तिर्न सम्भ-
योजना कंदुकक्रीडादिप्रवृत्तिर्दृष्टेति शंकनीयम् । ततोऽपि क्रीडापराणां तात्कालिकानं-
दादिप्रयोजनस्यानुभवसिद्धत्वात् । न च परमेश्वरस्य जगत्सृष्टावपि तादृशं प्रयोजनं
कल्प्यम् । अवाप्तसमस्तकामत्वश्रवणविरोधात् । ननु न क्रीडानंदार्था प्रवृत्तिराप्तकामत्व-
विरोधिनी, अवाप्तसमस्तकामानामपि राज्ञां कन्दुकक्रीडादिप्रवृत्तिदर्शनादिति चेन्न । अवा-
प्तभोगांतरप्रयुक्तसकलानंदानामपि राज्ञामनवाप्तक्रीडानंदानामेव तत्र प्रवृत्तेः । न चैवं
परमेश्वरे वक्तुं शक्यं, तस्य सर्वात्मनावाप्तसर्वकामत्वादिति भावः ॥ सू ॥ लोकवत्तु लीलाकै-
वल्यम् ॥ ३३ ॥ स्वार्थिकतद्धितांतः कैवल्यशब्दः । 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्'।
(ब्र० १-२-८.) इत्यादौ वैशेष्यशब्दवत् । तथा च जगत्सृष्टिः केवलं लीलेत्यन्वयः।
सुखितस्य सुखानुभवप्रयुक्तश्चेष्टादिर्लीला । सा द्विविधा तात्कालिकानन्दाद्यर्था प्रयोजन-
लीला तदप्यनुद्दिश्य प्रवृत्ता केवललीला च । न द्वितीयायामसम्प्रतिपत्तिः । दुःखोद्रेके
रोदनवत्सुखोद्रेके हासगानादेः प्रयोजनरहितस्य सर्वानुभवसिद्धत्वात् । अत एव हसित-
रुदितादिषु कारणमेव पृच्छंति न तु प्रयोजनम् । एवं लोके दृष्टत्वात्तद्वदेव पारमेश्वरी
जगत्सृष्टिर्नित्यनिरतिशयानंदानुभवप्रयुक्ता केवललीलेति सूत्रार्थः । अत एवात्र लीला-
शब्दः क्रियावाची न तु विलासरूपक्रियाविशेषवाची। 'लीला क्रिया विलासश्चे' त्युभयत्राऽपि
तस्य शक्तिस्मरणात् । कैवल्यशब्दः पूर्ववत्प्रयोजनोद्देश्यव्यवच्छेदेन स्वाभाविकत्वला-
भार्थः । तथा च यथा लोके प्राणिनां निमेषादिव्यापाराः स्वाभाविकाः यथा च केषांचि-
द्ज्ञानव्याख्यानादिषु शिरोऽङ्गुलिचालनादयः स्वाभाविकाः न तु प्रयोजनार्थाः, तथैव परमे-
श्वरस्य सृष्ट्यादिव्यापारा अपि स्वाभाविका एव। 'स्वाभाविकी ज्ञानबलक्रियाचे' ति ज्ञान-
बलयोरिव सृष्ट्यादिक्रियाया अपि स्वाभाविकत्वश्रवणात् । 'क्रीडार्थं सृष्टिरित्यन्ये भोगा-
र्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहे' ति श्रवणाच्चेति तात्पर्यम्।
'स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः । देवस्यैष महिमा तु लोके येनेदं
भ्राम्यते ब्रह्मचक्र' मिति श्वेताश्वतरमंत्रे संसाररूपः प्रपञ्चः स्वकीयादेव स्वभावात्प्रवर्तते
इति पक्षांतरस्य निरासः न तु पारमेश्वरात्स्वभावादिति पक्षस्येति न विरोधः । 'क्रीडार्थं
सृष्टि' रिति माण्डूक्यश्लोके क्रीडार्थमित्यनेन तात्कालिकानन्दप्रयोजनत्वं निरसितुमनू-
दितं न तु हासगानादिवल्लीलारूपत्वमिति न तत्राऽपि विरोधः । यद्वा । लीलाशब्दोऽत्रा-
नायासकर्मपरः । लीलामात्रमेतस्य भारत्रयधान्यवहनमिति तत्राऽपि प्रयोगदर्शनात् ।
कैवल्यशब्दः कियतोऽप्यायासस्यानपेक्षाद्योतनार्थः । तथा च यथांगुलिचालनादयः अना-
याससाध्याः क्रिया न प्रयोजनापेक्षाः। अत एव तत्र न प्रयोजनप्रश्नः । तत्प्रश्नेऽपि तूष्णीमि-
त्येवोत्तरम् । अत एव च 'वृथा चेष्टां न कुर्वीते' ति निषेधस्यार्थवत्त्वम् । एवं परमेश्वर-
स्याऽपि अनायाससाध्याः निस्वासितादिकल्पतया श्रुताः सृष्ट्यादिक्रिया न प्रयोजनापेक्षा
इति तात्पर्यम् । एवमर्थं मनसि निधाय सिद्धांतमाह–यदुक्तमित्यादिना । 'लीलामा-
त्रेणे' त्युपलक्षणतृतीया । लीलामात्ररूपेत्यर्थः । लीलाशब्दः प्रदर्शितेऽर्थत्रयेऽपि योज-

वतीति । तन्न । सम्भवत्येव निष्प्रयोजनाऽपि प्रवृत्तिः केवललीलामात्रेण परमेश्वरस्य । यथा लोके प्रयोजनमन्तरेणापि केवलं लीलया कन्दुकताडनादिषु प्रवृत्तिः, तथा परमेश्वरस्य अवाप्तसकलकामस्यापि लीलया सृष्ट्यादिप्रवृत्तेरविरोध एव ॥

इति लीलाकैवल्याधिकरणम् ॥ १० ॥

---

नीयः। 'कंदुकताडनादिषु' इत्यत्रादिशब्दश्चानन्दानुभवप्रयुक्तानां स्वाभाविकानामनायाससाध्यानाञ्च त्रिविधानामप्यनुद्दिष्टप्रयोजनानां व्यापाराणां संग्राहको द्रष्टव्यः । 'लीलामात्रेणे' तिशब्दः उक्तव्यापारत्रयहेत्वानंदानुभवादिपरतया हेतुतृतीयांतो वा योजनीयः ॥

इति लीलाकैवल्याधिकरणम् ॥ १० ॥

---

## नयमणिमालायाम्

## अथ लीलाकैवल्याधिकरणम् ॥ १० ॥

सू० ॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

सृष्टिस्सर्वस्यापि प्रयोजनापेक्षया दृष्टा । किमपेक्ष्य नित्यतृप्तः सृजति जगच्छंकरो विषमम् ॥ १०५ ॥

तृप्तस्यैव हि राज्ञः कन्दुकसृष्ट्यादिका लीला । दृष्टा लोके तद्वत्स्यादीशस्यापि सृष्टिरियम् ॥ १०६ ॥

इति लीलाकैवल्याधिकरणम् ॥ १० ॥

## सूत्रार्थचन्द्रिकायाम्

## अथ प्रयोजनवत्त्वाधिकरणमथवा लीलाकैवल्याधिकरणम् ॥ १० ॥

सू ॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

**भगवत्पादमते,** पूर्वं श्रुत्यवष्टंभेण साधितं सर्वशक्तिमतो ब्रह्मणः कर्तृत्वमाक्षिप्य समाधानादाक्षेपसंगत्येदमाह— सू ॥ **न प्रयोजनवत्त्वात्** ॥ ३२ ॥ ब्रह्म न फलेन विना सृजति अभ्रान्तचेतनत्वात्संमतवदिति न्यायेन अवाप्तसमस्तकामाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते न वेति संशये **न** ब्रह्मणो जगत्कर्तृत्वं संभवति नित्यतृप्तत्वेन प्रयोजनाभिसंधिरहितत्वात् । प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वाभ्युपगमात्समन्वयो विरुध्यत इति **पूर्वपक्षः** ।

**सिद्धान्तस्तु,** सू ॥ **लोकवत्तु लीलाकैवल्यम्** ॥ ३३ ॥ तुशब्दः पूर्वपक्षं निरासयति । यथा लोके राजामात्यादीनां फलं विनैव केवललीलारूपाः प्रवृत्तयो दृश्यंते यथा वोच्छ्वासादयः स्वभावादेवोत्पद्यंते तथा ब्रह्मणोऽपि विचित्रकार्यरचना लीलाकैवल्यं केवललीलामात्रम् । न फलसापेक्षम् । कथंचिद्राजादीनां फलसंभवेऽपि नित्यतृप्तस्य ब्रह्मणो लीलामात्रमेतदित्यभिप्रायः ॥

**श्रीकण्ठमते,** सर्वशक्तेर्ब्रह्मणः सर्वसामर्थ्याभ्युपगमेऽपि प्रवृत्तिसामान्यस्य प्रयोजनवत्त्वात् नित्यतृप्तस्य परमेश्वरस्य जगत्सृष्ट्यादिव्यापारस्संभवति न वेति संदेहे 'आनन्दो ब्रह्म' 'विभुं चिदानन्दमरूपमद्भुतम्' इत्यादिभिः निरतिशयानन्दत्वेन श्रुतस्य परमेश्वरस्य सृष्ट्यादिव्यापाराप्रसक्त्या स न संभवतीति **पूर्वपक्षः** । यथा लोके प्रयोजनमन्तरेणापि राजामात्यादीनां केवलं लीलया कंदुकताडनादिषु प्रवृत्तिः तथा परमेश्वरस्यावाप्तसमस्तकामस्यापि लीलया सृष्ट्यादिप्रवृत्त्युपपत्तेरविरोध इति। **सूत्रार्थस्तु,** सू॥**नप्रयोजनवत्त्वात्**॥३२॥ परमेश्वरस्य जगत्सृष्ट्यादिव्यापारो **न** संभवति । सर्वप्रवृत्तेः **प्रयोजनवत्त्वात् इति।**

सू ॥ **लोकवत्तु लीलाकैवल्यम्** ॥ ३३ ॥ कैवल्यशब्दः स्वार्थिकतद्धितान्तो वैशेष्यशब्दवत् । **लोकवत्**=यथा लोके राज्ञः कंतुकताडनाद्यारंभस्य प्रयोजनं लीलामात्रं तथा जगत्सृष्टिः **लीलाकैवल्यम्**=लीलामात्रमित्यर्थः । यद्वा । लीलाशब्दः अनायाससाध्यकर्मवाची । जगत्सृष्टिः अनायाससाध्यनिश्वसितादिस्वाभाविककर्मकल्पेत्यर्थः ॥

**रामानुजमते,** इदं प्रयोजनवत्त्वाधिकरणमापादसमाप्ति पञ्चसूत्रात्मकमेकमधिकरणमित्यत उत्तराधिकरणे प्रपञ्चनमर्हतीतीह न तत्प्रपञ्चितम् ।

**आनन्दतीर्थमते,** इदमधिकरणं नप्रयोजनाधिकरणमिति व्यपदिश्यते । पूर्णानन्दस्येश्वरस्य विफलं स्रष्टृत्वमुपपद्यते वा न वेति संदेहे प्राप्तप्राप्यत्वात्तस्य तादृशं स्रष्टृत्वं नोपपद्यत इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** लोके मत्तादिप्रवृत्तिवदीश्वरप्रवृत्तेः केवललीलारूपत्वादुपपद्यत एवेति ॥ **सूत्रार्थस्तु,** ईश्वरस्य सृष्ट्यादौ प्रवृत्तिः **न** स्वप्रयोजनोद्देशेन भवति । कुतः । **प्रयोजनवत्त्वात्**=पूर्णानन्दत्वेन प्राप्तप्राप्तव्यत्वादित्यर्थः ॥

सू ॥ **लोकवत्तु लीलाकैवल्यम्** ॥ ३४ ॥ तुशब्द एवार्थे । **लोकवत्**=लोके मत्तादिप्रवृत्तेरिवेश्वरप्रवृत्तेः **लीलाकैवल्यम्**=केवललीलारूपत्वमेव न स्वप्रयोजनोद्देश्यत्वमित्यर्थः ॥ **इत्यानन्दतीर्थमते नप्रयोजनाधिकरणम्** ॥ ९ ॥

इति सूत्रार्थचन्द्रिकायां प्रयोजनवत्त्वाधिकरणमुत लीलाकैवल्याधिकरणम् ॥ १० ॥

## अथ वैषम्यनैर्घृण्याधिकरणम् ॥ ११ ॥

### ॥ सू ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ ३४ ॥

प्रयोजनाभावेऽपि लीलया परमेश्वरस्य जगत्सृष्ट्यादिषु प्रवृत्तिरिति निरूपितम् । तत्र पुनः संदिह्यते सैषा सम्भवति न वेति ।

लीलयाऽपि परमेश्वरस्य सृष्टिर्न सम्भवति, परिपूर्णतया रागद्वेषादिहीनत्वात् । सकलसाम्येन मध्यस्थ एव हि परमेश्वरः । तस्य केषांचित् सुखमयं देवादिशरीरं केषांचिद्दुःखोत्तरं मनुष्यादिशरीरं सृजतो वैषम्यं दुर्वारम् । किञ्च–सृष्टेः संहारपूर्वकत्वात् सकलं युगपत् संहरतः परमेश्वरस्य नैर्घृण्यं च भवेत् । तदेवमपुरुषार्थसम्बन्धापादिन्या जगत्सृष्ट्या किं परमेश्वरस्य ? ॥

इति प्राप्ते ब्रूमः–सर्वथा जगत्सृजतः परमेश्वरस्य वैषम्यनैर्घण्ये न भवतः । कर्मसापेक्षत्वात् सृष्टिवैषम्यस्य । ( तथा हि दर्शयति श्रुतिः–'रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयाम्' इति ॥

### ॥ सू ॥ न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥

सृष्टेः प्राक् कर्म नास्ति क्षेत्रज्ञाभावात् । तदभावश्च 'सदेव सोम्येदम्' इत्य-

---

## अथ वैषम्यनैर्घृण्याधिकरणम् ॥ ११ ॥

सू ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥ पूर्वाधिकरणार्थानुवादेनाक्षेपिकीं संगतिं दर्शयति–प्रयोजनाभावेऽपीति । सृष्टिसंहारयोर्वैषम्यनैर्घृण्यापादकत्वानापादकत्वाभ्यां संशयं दर्शयति–तत्र पुनरिति । युज्येत लीलारूपः परमेश्वरस्य जगत्सृष्ट्यादिव्यापार इति यदि स तस्य सर्वानुग्राहकस्य वैषम्यनैर्घृण्यदोषापादको न स्यात् । तदापादकस्त्वयम् । तस्मादसमञ्जलीलासदृशोऽयं व्यापारः परमेश्वरस्य न युक्तः । न च वाच्यं 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने' ति श्रुतेः कर्मविशेषमूलं जगद्वैषम्यमीश्वरस्तदुत्पत्तौ साधारणकारणं यथा सस्योत्पत्तौ पर्जन्यः साधारणकारणम् । तद्भूयोऽल्पत्वव्रीहियत्वादिवैषम्यं क्षेत्रबीजादिवैषम्यकृतम् । एवञ्च नेश्वरस्य निरवद्यत्वहानिरिति । 'सदेव सोम्येदमग्र आसी' दिति सृष्टेः प्रागेकत्वावधारणेन कर्मणामभावावगत्या सर्गादिकाले कर्मानपेक्षयैव प्राथमिकदेवमनुष्यादिविषमसृष्टिं कुर्वतस्तस्य वैषम्यदोषापत्त्यपरिहारात्, कथंचिदऽपि नैर्घृण्यादिदोषापरिहाराच्च, क्रमिकविषमसृष्टिहेतुभिन्नकालभूयोऽल्पपुण्यपापरूपकर्मवैषम्यवतां प्राणिनां युगपदविषमसंसारहेतुकर्मसाम्यासम्भवेन तत्र कर्मापेक्षाया वक्तुमशक्यत्वाच्च कर्मसापेक्षत्वे तस्यानीश्वरत्वप्रसङ्गाच्च 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते स एवासाधु कर्म कारयति तं यमधो निनीषत' इत्यादिश्रुत्यनुसारेण कर्मणामपि तत्कारितत्वांगीकारे वैषम्यादिदोषतादवस्थ्याच्चेति पूर्वपक्षं दिङ्मात्रेण प्रदर्शयति–लीलयेत्यादिना । 'सापेक्षत्वा' दित्यंतसूत्रांशोक्तं वैषम्यनैर्घृण्यापत्तिदोषपरिहारं दर्शयन् सिद्धान्तयति–सर्वथेति । प्रथमसृष्टौ कर्मासंभवशंकापरिहारं

---

१. श्रीकण्ठभाष्ये ( ) एतद्रेखांकितो भागः अन्यमातृकासु न दृश्यते । शिवार्कमणिदीपिकापर्यालोचनायामप्ययं भागोऽधिकपाठ इत्यवगम्यते । मैसूरूसंस्थानमुद्रितपुस्तकपाठानुसारेणायं पाठोऽत्र निवेशित इति विज्ञेयम् ।

वधारणावगतादविभागात् इति चेत्—न,) 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यादिश्रुतेः। यथा जीवानामनादित्वं तथा तत्कर्मणामप्यनादित्वं दृश्यते हि। यतः कर्मप्रवाहसिद्धोऽयं संसारः। परमेश्वरो हि जीवानां विचित्रं कर्म सर्वज्ञतयावलोक्य स्वशक्त्या तत्तदनुगुणमेव भोगायतनं देवादिशरीरं सृजति। ततः कर्ममूलमेव सृष्टिवैषम्यम्। संहारश्च जीवानां संसारव्यापारखिन्नानां सुषुप्तिवद्विश्रान्तिहेतुतया परमेश्वरस्य न नैर्घृण्यापादकः॥

ननु जीवानां सुखदुःखादौ कर्मण एव प्रयोजकत्वात् किमप्रयोजकेन परमे-

---

'तथा हि दर्शयती' ति सूत्रांशोक्तं दर्शयति—ज्ञाज्ञाविति। 'ज्ञाज्ञौ द्वावजावीशानीशा' विति श्रुतिः यथा जीवानामनादित्वं दर्शयति तथा तत्कर्मणामप्यनादित्वं दर्शयति 'सूर्याचंद्रमसौ धाता यथापूर्वमकल्पय' दित्यादिश्रुतिरिति 'तथाहि दर्शयती' ति सूत्रांशस्यार्थः। उदाहृतश्रुतिः कर्मणामनादित्वं न प्रतिपादयतीति आशंकापरिहारार्थो हिशब्दः। यस्मादियं श्रुतिरिदानीन्तनकल्पतद्विषमसृष्टियुक्तपूर्वकल्पसद्भावं दर्शयति तत एवेदानींतनसृष्टिवैषम्यस्य पूर्वकल्पकृतकर्मवैषम्याधीनत्वं गमयति। अन्यथा तस्याकस्मिकत्वप्रसंगात् कृतहानाकृताभ्यागमप्रसंगाच्चेति हिशब्दस्यार्थः। एवं च 'सदेकमेवे' त्यवधारणं व्यक्तनामरूपाभावाभिप्रायमिति भावः। एवं सूत्रार्थं प्रदर्श्य कर्मसापेक्षत्वादिति हेतुना लब्धं वैषम्यपरिहारं दर्शयति—परमेश्वरो हीति। कर्ममूलमेवेति। एवं च यथा नरपतिः प्रजानां व्यवहारदर्शने तदीययुक्तायुक्तवचनानुसारेणानुग्रहनिग्रहविशेषं कुर्वन्पक्षपातित्वलक्षणं वैषम्यं न प्रतिपद्यते एवमीश्वरोऽपि तदीयकर्मविशेषानुसारेण विषमसृष्टिं कुर्वन् न तत्प्रतिपद्यते प्रत्युत विषमकर्मणामेकरूपसृष्टावेव युक्तायुक्तवादिनामेकरूपानुग्रहे व्यवहारद्रष्टुरिव परमेश्वरस्य वैषम्यमापद्येतेति भावः। एवं कर्मापेक्षया वैषम्यपरिहारेणैव नैर्घृण्यपरिहारोऽपि लब्धः। यद्यपि सृष्टिक्रमवैषम्यकारणं कर्मक्रमवैषम्यमिव संहारयौगपद्यसाम्यकारणं कर्मयौगपद्यसाम्यं न संभवति, तथापि प्राणिनां निशास्विव भोगविशेषप्रापणार्थं तत्तच्छरीरस्थापकानां कर्मणां कालविशेषे युगपत्स्वापस्संभवत्येव। कर्मणां स्वापो नाम प्राणिनां प्रवृत्त्यनाभिमुख्यमिव कार्यानाभिमुख्यम् तत्सर्वसम्प्रतिपन्नम्। अनादिभवसञ्चितानामनंतानां कर्मणां युगपत्कार्यारंभकत्वादर्शनात्। तत्र च कर्मणां स्वापे फलानामपाक इव कालविशेषः कारणमिति ऋतुविशेषे जंबूफलादिपाकयौगपद्यवत्कालविशेषे कर्मणां स्वापयौगपद्यं नानुपपन्नम्। अतो विशेषकर्मोद्बोधापेक्षया सृष्टिवैषम्येऽपि परमेश्वरस्य वैषम्यमिव सर्वकर्मस्वापापेक्षया संहारसाम्येऽपि तस्य नैर्घृण्यं न प्रसज्यते। अयं परिहारस्सापेक्षत्वादेव वैषम्यनैर्घृण्ये प्रतिक्षिपता सूत्रकारेण दर्शितः प्राक्संक्षिप्योपन्यस्तः 'परमेश्वरस्य वैषम्यनैर्घृण्ये न भवतः कर्मसापेक्षत्वा'दिति। स्वयं परिहारान्तरमाह—संहारश्चेति। न कर्मापेक्षायामीश्वरस्यानीश्वरत्वापत्तिर्दोषः। भंग्यंतरेणाशंकते—नन्विति। यदि कर्मवैचित्र्यमूलं जगद्वैचित्र्यं तदा कर्माधीन एवेश्वरो विचित्रं जगन्निर्मातीति तस्य कर्मपारतंत्र्येण व्यवहर्तृगतयुक्तायुक्तवचनपारतंत्र्यस्य व्यवहारद्रष्टुरिव नास्ति निरतिशयस्वातंत्र्यलक्षणमीश्वरत्वमिति प्राप्तम्। तथा सति किं तेन ईश्वर इति नाममात्रं बिभ्राणेन वस्तुतोऽनीश्वरेण। जगद्वैचित्र्यस्य कर्मवैचित्र्येणैव सिद्धतया तस्यानुपयुक्तत्वात्। न च तथापि श्रुतिसिद्धत्वादभ्युपगंतव्यः।

श्वरेणेति चेत्–न, कर्मणोऽपि तदधीनत्वात् तस्य न स्वातन्त्र्यहानिः। पुनरपि घट्टकुटीप्रभातन्यायेन कर्मणः स्वातन्त्र्याभावे परमेश्वरस्य वैषम्यादिदोषापत्तिरिति न वाच्यम्। कर्मशक्तीनामनन्तानां मायागतानां संस्थापकमात्रत्वात् परमेश्वरस्य। कर्मणामेव स्वशक्तिवशात् सृष्टिवैषम्यहेतुत्वे तद्व्यवस्थापकमात्रस्य तस्य न वैषम्यम्॥

ननु जीवानां शरीरसृष्टौ अचेतनस्य कर्मणश्चेतनानधिष्ठितस्यासामर्थ्याच्चेतनत्वेन परमेश्वर एव प्रयोजक इति वक्तव्यम्। कथमसौ सृष्टेः प्राक् संहृतभोगसाध-

निरतिशयस्वातंत्र्यविशिष्टो हि स श्रुतिसिद्धः। तत्र निरतिशयस्वातंत्र्यरूपधर्मांशे श्रुतेरर्थत्यागे को विशेषो धर्म्यंशस्य। येन तदंशे श्रुतिरत्यक्तव्यार्था स्यादिति शंकार्थः। कर्मापेक्षामात्रेण स्वातंत्र्यहानौ खल्वेवमाशंक्येत। तत्तु नास्ति 'एष ह्येवे' त्यादिश्रुत्या कर्मणां तदधीनत्वावगमादिति परिहरति–नेति। तर्हि तदेव वैषम्यमापतेत्कांश्चित्साधु कर्म कांश्चिदसाधु कर्म कारयतः परमेश्वरस्येति शंकामुद्भाव्य भंग्यन्तरेण समाधत्ते–पुनरपीति। अयमाशयः। परमेश्वरो न स्वयं साध्वसाधूनि कर्माणि कारयति, तैस्सुखदुःखादीनि च नोत्पादयति, येन तस्य वैषम्यमापतेत्। किंतु प्राणिन एव तथाभूतानि कर्माणि यानि स्वस्वरुच्यनुसारेण पूर्वसर्गेषु कुर्वंति तान्येव पुनस्सर्गेषु विषमसृष्टिहेतवो भवंति। परमेश्वरस्तु पूर्वसर्गकृतानां तत्तदंतःकरणधर्मरूपाणां साध्वसाधुकर्मणां प्रलये सर्वांतःकरणानां विलीनतया मायायामेव वासनारूपतया लग्नानां केवलमसंकरेण फलव्यवस्थापकः। अन्यथा मायायां संकीर्णेषु कर्मफलमन्यो गृह्णीयात्। अन्यदीयकृषिकर्मफलानि अन्यो हरतीति लोके दृष्टत्वेन कर्मणां कर्तृगतफलजनकत्वनियमाभावात्। वैदिककर्मसु आत्मनेपदबलात्तथा नियमोऽवगम्यत इति चेत्सत्यम्। श्रुतनियमान्यथानुपपत्त्यैव श्रुतयागस्वर्गकार्यकारणभावान्यथानुपपत्त्या पूर्ववद्व्यवस्थापकः कल्पयितव्यः। ननु, षट्त्रिंशत्तत्वमध्ये नियत्याख्यं तत्वं कर्मफलानामसंकरव्यवस्थापकमागमेषु प्रसिद्धम्। 'कालः स्वभावो नियतिर्यदृच्छे'ति श्वेताश्वतरमन्त्रेऽपि तत्परामृष्टम्। अतो न व्यवस्थापकान्तरापेक्षेति चेन्मैवम्। लोके कृष्यादिफलासंकरस्य राज्ञो व्यवस्थापकत्वदर्शने नियतितत्वस्याऽपि साध्वसाधुकर्मफलासङ्करव्यवस्थापकपरमेश्वराज्ञारूपत्वेनैवाभ्युपगमात्। एवंच 'एष ह्येव साधु कर्म कारयती' त्यादिश्रुतिरपि तत्कर्मफलासंकरव्यवस्थापकत्वमात्रविषया व्याख्येया। 'एष सेतुर्विधरण एषां लोकानामसंभेदाये' ति श्रुत्यंतरप्रसिद्ध्यनुसारात् परमेश्वरस्य वैषम्यनैर्घृण्यादिसकलदोषराहित्यश्रुत्यंतरानुसाराच्च। न चैवं सति तस्य राजादिसमानयोगक्षेमत्वान्निरतिशयैश्वर्यभंगप्रसंगः। राजादीनां कतिपयविषयसङ्करापादनमैश्वर्यं परमेश्वरस्य तु असंकुचितसर्वविषयमित्येव तदैश्वर्यस्य निरतिशयत्वविशेषाभ्युपगमादिति। एवं मतमनुपपन्नमित्याशंकते–नन्विति। जीवानां देवमनुष्यशरीरादिविषमसृष्टौ परमेश्वराधिष्ठानं विना केवलं कर्म न प्रभवति। अचेतनस्य चेतनाधिष्ठानभावे कार्याक्षमत्वस्य 'रचनानुपपत्ते' रित्यनंतराधिकरणे वक्ष्यमाणत्वात्। अतः प्रसुप्तानि कर्माणि परमेश्वरः स्वयमेवोद्बोध्य तदुत्पादितैश्शरीरैः प्रलयविश्रांतान् जीवान् संयोज्य पुनरपि तारतम्येन क्लेशयतीत्यंगीकर्तव्यत्वात् कथं वैषम्यनैर्घृण्ये न स्याताम्। न च कर्माणि कर्तृभिरवश्यं भोक्तव्यानीति तदनुसारेण

**नतया संसारक्लेशरहितान् सुखिनो जीवान् पुनरपि संसारहेतुना शरीरेण योजयति परमकारुणिकोऽपि सन्निति चेत्—**

**उच्यते—सर्वानुग्राहकः परमेश्वरो जीवानां कर्मपाकमन्तरेण ज्ञानानुदयात् ज्ञानमन्तरेण निरतिशयानन्दमोक्षाभावात्, कर्मपाकस्य च भोगमन्तरेणानुपपत्तेः, तत्कर्मफलभोगाय पुनरपि तेषां शरीरादिकं कल्पयति । एवं क्रमात् भोगेन पक्वे स्वकर्मणि शुद्धान्तःकरणानां जीवानां स्वविषयं ज्ञानमुत्पाद्य निरतिशयानन्दरूपां मोक्षलक्ष्मीं प्रकाशयति ।**

तान्यधिष्ठाय तदुत्पादितैश्शरीरैः सुखदुःखे भोजयतो न ते प्रसज्येयातां, वैवस्वतस्येव तस्य समवृत्तित्वं च न हीयत इति वाच्यम् । 'परात्तु तच्छ्रुते' रि ( ब्र० २-३-४० ) त्यधिकरणे कर्मणामपीश्वरेण कार्यमाणत्वस्य वक्ष्यमाणतया कैश्चित्पुण्यकर्माणि कैश्चिदपुण्यकर्माणि च कारयितुर्वैषम्यादिप्रसङ्गतादवस्थ्यात् । न च पूर्वपूर्वानादिकर्मप्रवाहापेक्षः कारयति, 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य' ( ब्र० २-३-४१. ) इति 'परात्तु तच्छ्रुते' रि ( ब्र० २-३-४०. ) त्यधिकरणे तथा प्रतिपादयिष्यमाणत्वात् अतो न तत्प्रसंग इति वाच्यम् । पूर्वपूर्वकर्मणामीश्वरकारितत्वे तत्प्रसङ्गापरिहारात् तदकारितत्वे 'परात्तु तच्छ्रुते' रित्यधिकरणविरोधात् । ननु, तर्ह्युभयाविरोधेन परमेश्वरः कल्पादौ करणकलेवराणि दत्वा स्वयमुदास्ते । तदा जीवः स्वेच्छया साधु वासाधु वा यत्कर्म करोति तदनुसारेण तदनंतरं कर्मांतराणि कारयतीति कल्प्यते । तथा च स्वेच्छाकृतकर्ममूलत्वादुत्तरोत्तरकर्मप्रवाहस्य न नैर्घृण्यवैषम्यदोषप्रसंगः, 'परात्तु तच्छ्रुते'रित्यधिकरणार्थश्च द्वितीयादिषु प्रवृत्तिषु चरितार्थ इति चेन्मैवम् । तथा कल्पनायामपि अयमसाधु कर्म कारयतीति जानतः परमेश्वरस्य कूपे बालकः पतिष्यतीति जानत इवौदासीन्ये नैर्घृण्यानिवारणात् स्वेच्छया कश्चित्साधु कर्म प्रथमं करोति कश्चिदसाध्विति वैषम्यस्य पूर्वकल्पकृतकर्मविशेषाधीनत्वस्यावश्यवक्तव्यत्वेन तत्कारयितुः परमेश्वरस्य वैषम्यादिप्रसंगापरिहाराच्च । नन्वेवं वैषम्यनैर्घृण्यमपरिहार्यं चेत्परमेश्वरस्य तन्न दोष इत्यस्तु । न हि विधिनिषेधपथातीतस्य तस्य प्रत्यवायकारणं तत् । नापि सर्वनियंतुः कुतश्चिदनिष्टकारणम् । किमर्थं तर्हि 'वैषम्यनैर्घृण्ये न सापेक्षत्वा'दिति सूत्रकारेण तत्परिहृतम् । द्विविधं वैषम्यनैर्घृण्यम् । एकं कर्मादिकमनपेक्ष्य स्वयमेव विषमसृष्टियुक्तमपरं तत्सापेक्षत्वेऽपि पूर्वपूर्वकर्मप्रवाहस्यापि परमेश्वराधीनत्वप्रयुक्तम् । तत्राद्यं पुण्यपापयोः सुखदुःखसाधकत्वावेदकस्य वेदस्याप्रामाण्यावहमिति तत्प्रामाण्यसंरक्षणार्थं परिहृतं न तु द्वितीयमिति चेत्कृतमिदं सामान्येन वैषम्यनैर्घृण्यमात्रदोष एवेति तत्परिहारार्थं प्रयत्य परिहारानिर्वाहे पुनस्तददोषत्ववचनमकौशलमेवाविष्कुर्यात् । परमकारुणिकत्वविरोधि च वैषम्यनैर्घृण्यं सर्वथा परिहरणीयमेव। तदैव च सूत्राञ्जस्यमपि लभ्यते । तस्माद्यथा परमकारुणिकं परमेश्वरं वैषम्यनैर्घृण्यं कलयापि न स्पृशेत् यथा च सूत्राञ्जस्यं भवेत् तथा परिहारो वर्णनीय इति शंकाभिप्रायः । उच्यत इत्यादेः परिहारग्रंथस्यायमर्थः । परमकारुणिकः परमेश्वरः सकलचेतनानुग्राहक इति 'व्याधीनां भेषजं यद्व' दित्यादिपौराणिकभणितिप्रसिद्धः । अनुग्रहः बन्धनिवर्तनेन स्वसाम्यप्रापणरूपः । बन्धश्च मुख्यः पुंसां दृक्क्रियाच्छादकः स्वयमेकोऽपि

एवंशक्तिमान् परमेश्वरः परमकारुणिकः कथं वा युगपदेव सर्वजीवानां कर्म पाचयित्वा सममेव मोक्षानन्दं न प्रकाशयतीति चेत्–सत्यम्, परमेश्वरेण सममेव सर्वेषामनुग्रहे क्रियमाणेऽपि ये पक्कमलास्ते मुच्यन्ते, अपक्कमलाः कालक्रमादेव। यथा सवितृकिरणसन्दोहे सममेव सन्ततेऽपि पक्कान्येव पद्मानि विकसन्ति, नापक्कानि। ततः पूर्णोऽपि परमेश्वरः परार्थामेव सर्वां प्रवृत्तिं करोति। तथा पौराणिकी भणितिः परमेश्वरस्य सर्वानुग्राहकत्वप्रतिपादनमुखेनोक्तं सकलमर्थं स्पष्टयति—

'आदित्येन यथा हीनं तमोभूतमिदं जगत्। शिवेनापि विना तद्वत् तमोभूतमिदं जगत्॥ वैद्यं विना निरानन्दाः क्लिश्यन्ते रोगिणो यथा। शिवं विना निरानंदं क्लिश्यते हि जगत्तथा॥ व्याधीनां भेषजं यद्वत् प्रतिपक्षं स्वभावतः। शिवस्संसारदोषाणां प्रतिपक्षः स्वभावतः॥ यथाऽनादिः प्रवृत्तोऽयं घोरः संसार-

विचित्रानंतशक्तिकः ताम्राश्रितकालिकावत्सहजसिद्धावरणरूपः। मलाख्यः परिणामिद्रव्यविशेषस्तु व्रणवत् पक्को निवर्तनीयः। पाकश्च तस्य व्रणस्यौषधेनेव नित्यनैमित्तिककर्मानुष्ठानेन सांसारिकक्लेशानुभवेन च संपादनीयः। 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इति नित्यनैमित्तिककर्माचरणेन तस्मिन्पक्के सत्येव वैराग्यशिवभक्तिशिवजिज्ञासादिप्रणाडिकया मोचकज्ञानोत्पत्तिस्मरणात् भोगेन तत्पाकस्यागमप्रसिद्धत्वाच्च। कर्मभोगश्च तनुकरणभुवनभोगसाधनद्रव्यदेवतादिकं विना न संभवति। तत्र च प्राणिनां विचित्राणि कर्माणि कारणमिति तदर्थं परमेश्वरः कर्माणि कारयित्वा कर्मवैचित्र्यानुसारेण विचित्राणि तनुकरणादीनि सृष्ट्वा क्लेशयुक्तानि कर्माण्यनुष्ठाय सुखदुःखानि च भोजयतीति सर्वमेतत्करुणयोपपद्यते। अतो न वैषम्यनैर्घृण्यप्रसक्तिः। न हि व्रणिनां व्रणपाकार्थं तत्तद्व्रणगुणानुसारेण क्षारं निवेश्य तारतम्येन क्षारनिवेशप्रयुक्तं क्लेशमनुभावयतः कारुणिकस्य वैद्यस्य वैषम्यनैर्घृण्यं प्रसज्यते। परमेश्वरस्य सर्वत्र करुणासाम्येऽपि विचित्रस्वभावानां तदावरणमलशक्तीनां व्रणानामिव पाकस्यानियतकालत्वात् सर्वेषां मुक्तेरयौगपद्यं चोपपद्यते इति। एवं च सूत्रे 'सापेक्षत्वा' दित्यस्य मलपाकसापेक्षत्वादिति वा तत्पाकोपयोगिस्वकारितकर्मसापेक्षत्वादिति वार्थो द्रष्टव्यः। भाष्ये 'कर्मपाकमन्तरेणे' त्यादिवाक्येषु कर्मशब्दः क्रियतेऽनेन संसार इति करणव्युत्पत्त्या वा परमेश्वरेण पक्कः क्रियत इति कर्मव्युत्पत्त्या वा मलावरणपरो द्रष्टव्यः। अत एवाग्रे भाष्ये 'ये पक्कमलास्ते मुच्यंते अपक्कमलाः कालक्रमादेवे' ति वक्ष्यते। 'कर्मपाकस्य च भोगमंतरेणानुपपत्ते' रित्येतत्कर्मानुष्ठानमंतरेणानुपपत्तेरित्यस्याप्युपलक्षणम्। 'कर्मफलभोगायेत्ये'तत् कर्मानुष्ठानायेत्यस्याप्युपलक्षणम्। परार्थामेवेति। परानुग्रहार्थमेव सकलमपि सृष्ट्यादिव्यापारं करोतीत्यर्थः। ननु संहारो नानुग्रहार्थः प्रलये पाककारणयोः कर्मभोगयोस्तदुपयोगिनो वा कस्यचिद्व्यापारस्याभावात्, पूर्वं भाष्ये संहारस्य विश्रांतिमात्रप्रयोजनत्वेनोक्तत्वाच्च। 'संसारखिन्नानामखिलानां प्राणिनां प्रभुः क्रियया कुरुते महार्थसंहृतिं तेषामेव विश्रांत्या' इति तस्य तन्मात्रप्रयोजनवत्त्वेनागमविद्भिरप्युक्तत्वाच्च। मैवम्। प्रलयेऽग्रिमसृष्ट्युपयोगिनो मायाकर्मादिपाकव्यापारस्य सत्त्वात्। उक्तं हि मृगेन्द्रसंहितायाम्–'स्वापेऽप्यास्ते बोधयन्बोधयोग्यान् रोध्यान्रुंधन्पाचयन्कर्मिकर्म। मायाशक्तीर्व्यक्ति-

मण्डलः । तथाऽनादिः प्रवृत्तोऽयं शिवस्संसारमोचकः ।' इत्यादिका । अतः परमेश्वरस्य सर्वानुग्रहप्रवृत्तेः जगत्सृष्ट्यादिव्यापारः सम्भवत्येव ॥

॥ सू ॥ सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

किं बहुना ? प्रधानपरमाणुकर्मकालादीनां ये धर्मा अनुपपन्नास्ते सर्वे ब्रह्मण्युपपद्यन्ते । अतो ब्रह्मैव सर्वातिशायि जगत्सृष्ट्यादिकारणमिति समञ्जसम् ॥

इति वैषम्यनैर्घृण्याधिकरणम् ॥ ११ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
द्वितीयस्याध्यायस्य प्रथमः पादः ॥

---

योग्याः प्रकुर्वन् पश्यन्सर्वं यद्यथावस्तुजात' मिति । अधिकरणार्थमुपसंहरति—अतः परमेश्वरस्येति । सू ॥ सर्वधर्मोपपत्तेश्च ॥ ३६ ॥ प्रधानपरमाण्वादीनां स्वातंत्र्येण जगत्कारणतायां तदुपयोगिनो ये धर्माः पूर्वं तत्रातत्रानुपपन्नत्वेन सूत्रिताः अग्रिमपादे च प्रपञ्चयिष्यंते, ते सर्वे ब्रह्मण्युपपद्यंत इति पादोपसंहारार्थमिदं सूत्रम् । तथैव पादार्थमुपसंहरति—अत इति । 'सर्वातिशायी' त्येतदपि ईक्षत्यधिकरणाद्युपपादितनिर्दोषत्वादिसंग्रहार्थम् । 'जगत्सृष्ट्यादिकारण' मित्येतन्नविलक्षणत्वाधिकरणाद्युपपादितोपादानत्वनिमित्तत्वसंग्रहणार्थम् ॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥ ११ ॥

इति श्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरंधरसकलदेवभूदेवप्रतिष्ठापक
श्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य
श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिरंगराजाध्वरिवर-
सूनोरप्पयदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचित-
ब्रह्ममीमांसाभाष्यव्याख्यायां शिवादित्यमणि-
दीपिकाख्यायां द्वितीयस्याध्यायस्य
प्रथमः पादः ॥ १ ॥

---

नयमणिमालायाम्

अथ वैषम्यनैर्घृण्याधिकरणम् ॥ ११ ॥

सू० ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥ ( न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥ ) सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

रागद्वेषविहीनः परकरुणासागरो हि शिवः । उच्चावचसुखदुःखा सृष्टिरियं कथममुष्य लीला स्यात् ॥ १०७ ॥
कर्माण्यपेक्ष्य भविनां तत्क्षपणायैव लीलया सृजतः । माध्यस्थ्यं करुणा वा न हीयते चन्द्रचूडस्य ॥ १०८ ॥

इति वैषम्यनैर्घृण्याधिकरणम् ॥ ११ ॥

इति श्रीमदप्पयदीक्षितकृतौ चतुर्मतसारसंग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे
द्वितीयस्याध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

सूत्रार्थचन्द्रिकायाम्
अथ वैषम्यनैर्घृण्याधिकरणम् ॥ ११ ॥

**सू ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥ न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥ उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥ सर्वधर्मोपपत्तेश्च ॥ ३७ ॥**

**भगवत्पादमते,** पूर्वमुक्तं ब्रह्मणो मायामय्या लीलया स्रष्टृत्वमाक्षिप्य समाधानादाक्षेपसंगत्येदमाह–**सू ॥ वैषम्यनैर्घृण्ये इत्यादि ।** यो यो विषमसृष्टिकर्ता स स सावद्य इति न्यायेन निरवद्याद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते न वेति संदेहे ब्रह्मणो विषमसृष्टिकर्तृत्वात्सर्वसंहारकत्वाच्च वैषम्यनैर्घृण्यदोषप्रसक्त्या सावद्यत्वप्रसंगान्निरवद्यस्य ब्रह्मणो न जगत्कर्तृत्वमिति **पूर्वःपक्षः । सिद्धान्तस्तु,** ब्रह्मणो **वैषम्यनैर्घृण्ये** न स्याताम् । कस्मात् । **सापेक्षत्वात्**=प्राणिकर्मसापेक्षत्वात् । ननु ब्रह्मणः कस्मात्कर्मसापेक्षत्वमित्यत आह–**तथा हि दर्शयति**–'एष ह्येव साधुकर्म कारयति' इत्याद्या श्रुतिरित्यर्थः । अतः कर्मसापेक्षत्वेन निरवद्यस्य ब्रह्मणो जगत्कर्तृत्वमुपपन्नमेवेति ॥

सापेक्षत्वमाक्षिप्य समाधत्ते–**सू ॥ न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥** 'सदेव सोम्येदमग्र आसीदेकमेवे' त्यादिना सृष्टेः प्रागविभागावधारणान्न तदानीं कर्मास्ति ततः कर्मापेक्षया विषमा सृष्टिरित्यसंगतमिति चेत् **न अनादित्वात्**=संसारस्य बीजांकुरवद्धेतुहेतुमद्भावोपपत्तेरित्यर्थः ॥

ननु कुतः संसारस्यानादित्वमित्याह–**सू ॥ उपपद्यते चाप्युपलभ्यते च ॥** अकस्मादेव सृष्ट्यंगीकारे मुक्तस्यापि पुनर्जन्मप्रसंगात् पूर्वपूर्वसृष्टिसादृश्यानुपपत्तेश्च संसारस्यानादित्व**मुपपद्यते च ।** 'धाता यथापूर्वमकल्पयत्' 'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा' इति श्रुतिस्मृत्यो**रुपलभ्यते च** संसारस्यानादित्वमित्यर्थः ॥

इति भगवत्पादमते वैषम्यनैर्घृण्याधिकरणम् ॥ १२ ॥
अथ सर्वधर्मोपपत्त्यधिकरणम् ॥ १३ ॥

पूर्वं विषमसृष्टिप्रयोजककर्मणस्सत्त्वाद्ब्रह्मणो विषमसृष्टिहेतुत्वमुक्तम् । तद्वदुपादानत्वप्रयोजकगुणवत्त्वस्याभावान्नोपादानत्वमिति प्रत्युदाहरणसंगत्येदमाह–**सू ॥ सर्वधर्मोपपत्तेश्च ॥ ३७ ॥** यन्निर्गुणं तन्नोपादानं यथा गन्ध इति न्यायेन निर्गुणाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते वा न वेति संदेहे विरुध्यत इति **पूर्वपक्षः । सिद्धान्तस्तु,** जगत्कारणत्वसर्वज्ञत्वादीनां सर्वेषां कारणधर्माणां ब्रह्मण्येवोपपत्तेर्ब्रह्मैव जगत्कारणमिति । निर्गुणत्वेऽपि ब्रह्मणो न विवर्तोपादानत्वं विरुद्धम् । तस्मान्न कथंचिदपि समन्वयस्य विरोध इति सिद्धम् ॥ १३ ॥ **अत्र पादे त्रयोदशाधिकरणानि ।** सूत्राणि **सप्तत्रिंशत् ॥ ३७ ॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥ १३ ॥**

**श्रीकण्ठमते,** परिपूर्णतया रागद्वेषादिहीनस्य परमेश्वरस्य प्रयोजनाभावेऽपि लीलया जगत्स्रष्टृत्वाभ्युपगमे वैषम्यादिदोषापत्त्या परमेश्वरस्य लीलया जगत्सृष्ट्यादिषु प्रवृत्तिर्न संभवतीति **पूर्वपक्षः ।** कर्मसापेक्षत्वात्सृष्टिवैषम्यस्य परमेश्वरस्य जगत्सृष्ट्यादिप्रवृत्तेस्सर्वानुग्रहार्थत्वेन श्रुतिपुराणादिषु स्पष्टीकृतत्वाच्च सर्वथा परमेश्वरस्य न वैषम्यनैर्घृण्यादिदोषप्रसक्तिरिति संभवत्येव सर्वानुग्रहप्रवृत्तेः परमेश्वरस्य जगत्सृष्ट्यादिव्यापार इति **सिद्धान्तः । सूत्रार्थः** स्पष्ट एव । अत्र मते न '**कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥ उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥**' इति सूत्रद्वयं नास्तीति प्रतिभाति । तथा चास्मिन्मते **वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति । सर्वधर्मोपपत्तेश्च**' इति सूत्रद्वयात्मकमेवेदमधिकरणम् । न शांकरमतवदत्राधिकरणपृथक्त्वम् । प्रधानपरमाणुकर्मकालादीनां ये धर्मा अनुपपन्नास्ते सर्वे ब्रह्मण्युपपद्यन्ते अतश्च ब्रह्म सर्वातिशायि जगत्सृष्ट्यादिकारणमिति चान्तिमसूत्रस्यार्थ इति । **अत्र मते** सूत्राणि **पंचत्रिंशत् ३५ ॥** अधिकरणान्येकादश **॥ ११ ॥**

रामानुजमते, अथ प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥

**सू ॥ 'न प्रयोजनवत्त्वात्'** इत्यारभ्य **'सर्वधर्मोपपत्तेश्च'** इत्यन्ता पञ्चसूत्री प्रयोजनवत्त्वाधिकरणत्वेन व्यपदिश्यते । अत्रापि पूर्वाधिकरणवत् ब्रह्मणो जगत्कारणत्वसंभवासंभवाभ्यां संदेहे बुद्धिपूर्वकारंभाणां सप्रयोजनत्वादीश्वरस्य स्वत एवावाप्तसमस्तकामस्य जगत्सृष्ट्यारंभे प्रयोजनाभावान्न संभवतीति **पूर्वपक्षः । सिद्धांतस्तु,** परिपूर्णस्यापीश्वरस्य केवललीलाप्रयोजनाय लोके महाराजस्य परिपूर्णस्यापि केवललीलैकफलाः कंतुकाद्यारंभा इव जगत्सृष्ट्यारंभस्संभवतीति । सूत्रार्थवर्णनादिकं प्रायः श्रीकण्ठमतादविशिष्टमेव । **'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयती'**त्यादिकं सूत्रत्रयमपीदमधिकरणशेषतया योजितमिति विशेषः । ईश्वरस्य प्रयोजनाभावेऽपि लीलया जगत्स्रष्टृत्वाभ्युपगमे वैषम्यादिदोषापत्तिशंकोत्तरत्वेनास्य सूत्रत्रयस्यावतारितत्वादैकाधिकरण्यम् । **सूत्रार्थस्तु, सू ॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥ प्रयोजनवत्त्वात्**सृष्टेः ईश्वरस्य स्वतः परिपूर्णस्य प्रयोजनाभावान्न स्रष्टृत्वम् ।

**सू ॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥ लोकवत्**=यथा लोके राज्ञः कन्तुकाद्यारंभे तद्वत् । **लीलाकैवल्यम्**=लीलायाः प्रयोजनत्वे कैवल्यं संभवति । केवलाया लीलायाः सृष्ट्यारंभप्रयोजनत्वं संभवतीत्यर्थः ॥

**वैषम्येत्यादि । वैषम्यनैर्घृण्ये**=ईश्वरस्य जगत्सृष्टौ देवादिवैषम्यप्रयुक्तपक्षपातो दुःखप्रदजगत्सर्गे नैर्घृण्यं च **न**=न संभवतः । कुतः । **सापेक्षत्वात्**=तस्य क्षेत्रज्ञकर्मसापेक्षत्वात् । **तथाहि दर्शयति**='साधुकारी साधुर्भवति पापकारी पापो भवती'ति श्रुतिः क्षेत्रज्ञानां देहादियोगं तत्तत्कर्मसापेक्षं दर्शयति हि । इति ॥ **सू ॥ न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च** ॥ इतीदमेकं सूत्रम् । कर्म सृष्टेः प्राक् **न** विद्यते । कुतः । क्षेत्रज्ञाभावात् । तदभावश्च **अविभागात्**='सदेव सोम्येद' मित्यवधारणावगतादविभागात् इति चेत् **न । अनादित्वात्**=क्षेत्रज्ञानां तत्तत्कर्मप्रवाहाणां च अनादित्वात् । **उपपद्यते च**=क्षेत्रज्ञस्वरूपानादित्वेऽपि नामरूपविभागाभावादविभागश्रुतिरित्यर्थः । **उपलभ्यते च**=श्रुतिस्मृत्योः क्षेत्रज्ञानामनादित्वमित्यर्थः ॥ अन्तिमसूत्रार्थस्तु श्रीकण्ठमतादविशिष्टः ॥ **अस्मिन्पादे** सूत्राणि **षट्त्रिंशत् ॥ ३६ ॥ अधिकरणानि दश ॥ १० ॥**

## इति रामानुजमते प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥

**आनन्दतीर्थमते,** अत्र शांकरमतवद्योगविभागेन सूत्रत्रयात्मकमिदं वैषम्यनैर्घृण्याधिकरणमन्तिमं सूत्रं त्वधिकरणान्तरमिति विज्ञेयम् ॥ संदेहपूर्वपक्षसिद्धांतादिकं प्रायः पूर्वस्मादविशिष्टम् । सूत्रार्थवर्णनप्रक्रियायां परमस्ति कियानिव भेदः । **वैषम्यनैर्घृण्ये न** स्तः । कुतः । **सापेक्षत्वात्**=ईश्वरस्य कर्मापेक्षावत्त्वाभ्युपगमात् । तत्कुतः । **हि**=यस्मात् 'पुण्येन पुण्य' मितिश्रुतिः **तथा दर्शयति**=प्रतिपादयति तस्मादित्यर्थः ॥

**सू ॥ न कर्माविभागादिति चेन्नानादित्वात्** ॥ ईशेनापेक्षणीयं यत्कर्म तदेव कर्म **नास्ति** । कुतः । **अविभागात्**=तस्य कर्मणः अस्वतंत्रवस्तुभ्योऽविभक्तत्वात् । अस्वतंत्रत्वादिति यावत् । तथा च स्वाधीनकर्मापेक्षया वैषम्यादेरपरिहार **इति चेन्न** । कुतः । **अनादित्वात्**=कर्मपरंपराया अनादित्वादित्यर्थः ॥ तथा चेश्वरः पूर्वपूर्वमपेक्ष्योत्तरोत्तरकर्म जीवेन कारयतीत्यङ्गीकारे कर्मणोऽपेक्षणीयत्वापत्तेर्नोक्तदोष इति भावः ॥

**सू ॥ उपपद्यते चाप्युपलभ्यते च** ॥ ईश्वरस्य कर्मापेक्षायामपि **उपपद्यते च**=स्वातंत्र्यं युज्यत एव । कर्मणः स्वाधीनत्वात् । ननु तर्हि स्वाधीनकर्मसापेक्षत्वकृतवैषम्यापात इत्यत आह—**उपलभ्यते च**='स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशितापि ।' इति श्रुत्या तादृशवैषम्यमदोषत्वेन ज्ञायते चेत्यर्थः ॥

## इत्यानन्दतीर्थमते वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥

## अथ सर्वधर्मोपपत्त्यधिकरणम् ॥ ११ ॥

**सू ॥ सर्वधर्मोपपत्तेश्च ॥ ३८ ॥** अत्र विष्णोस्सर्वगुणपूर्णत्वं युक्तं न वेति संदेहे न विष्णोः सर्वगुणपूर्णत्वं युक्तम् । चेतनत्वात् जीववत् इति **पूर्वपक्षः । सिद्धांतस्तु** गुणदोषाभाववत्त्वरूपाणां **सर्वेषां धर्माणाम् उपपत्तेः**=स्वातंत्र्यादिना ब्रह्मणि युक्तत्वात् । एवंरूपसर्वधर्मोपपादकश्रुतेश्चेति समुच्चयार्थकश्चशब्दः । न तस्य गुणपूर्णत्वे युक्तिविरोधश्शंकनीय इति ॥ अस्मिन्मते अत्र पादे **एकादशाधिकरणानि ॥ ११ ॥ सूत्राणि तु अष्टात्रिंशत् ॥**

## इत्यानन्दतीर्थमते सर्वधर्मोपपत्त्यधिकरणम् ॥ ११ ॥

**यं प्रासूत विशुद्धशीलमनघं वृद्धांतिकाख्या सती**
**यं मृत्युंजयशर्मणो बुधमणेर्भाग्यं विदुस्साधवः ।**
**वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-**
**स्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥**

**सूत्रार्थचन्द्रिकायामविरोधाख्ये द्वितीयकेऽध्याये** । स्मृत्यविरोधापादक **आद्यः** पादोऽयमभ्यगात्पूर्तिम् ॥
आद्ये मतत्रयेऽपि **स्मृत्यविरोधा**भिधानतः प्रथितः । **मध्वा**चार्यमते तु प्रोक्तो **युक्त्यविरोधपादशब्दे**न ॥

**इति हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥**

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

द्वितीयस्याध्यायस्य

## अथ द्वितीयः पादः ।

### अथ रचनानुपपत्त्यधिकरणम् ॥ १ ॥

॥ सू ॥ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥

पूर्वपादे साङ्ख्यादितर्कविरोधमाशङ्क्य स्वपक्षसाधनं कृतम् । पुनरिह तर्कावि-

---

## अथ शिवार्कमणिदीपिकायां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

### अथ रचनानुपपत्त्यधिकरणम् ॥ १ ॥

॥ सू ॥ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥

वृत्तवर्तिष्यमाणयोः पादयोरर्थभेदोपन्यासेन पादभेदं सङ्गतिं च दर्शयन्पादान्तरारंभं प्रतिजानीते—पूर्वपाद इति । जगदभिन्ननिमित्तोपादाने तदनन्ये निरस्तनिखिलावद्ये ब्रह्मणि वेदान्तानां समन्वयः प्रथमाध्यायेन प्रतिपादितः । तस्मिन् प्रधानपरमाणुकारणवादिभिस्सांख्यवैशेषिकादिभिः केवलतर्कमवष्टभ्यापादितानि दूषणानि अस्मिन्नध्याये प्रथमपादेन निराकृतानि । तत्रापि प्रणेतृगौरवेण तेषां तर्काणामुपादेयत्वशङ्का स्मृत्यधिकरणयोगाधिकरणाभ्यां निराकृता । तत्तत्तर्कस्वरूपपर्यालोचनया तेषामुपादेयत्वशङ्का नविलक्षणत्वाधिकरण ( ब्र० २–१–४. ) मारभ्य निराकृता । एवमाद्याधिकरणयोस्तृतीयादीनां नवानामधिकरणानां चावांतरार्थभेदेऽपि ब्रह्मवादप्रतिक्षेपकतर्कनिराकरणार्थत्वेनैकार्थ्यम् । अस्मिन्पादे तु शुष्कतर्कावलम्बनास्सांख्यादिपरपक्षास्तथाभूतैरेव तर्कैर्दूष्यन्ते । अन्यथा परपक्षाणामप्रतिष्ठिततर्काभासमूलतामजानतां मन्दधियां तेषु प्रामाणिकत्वशङ्कया ब्रह्मकारणवादश्रद्धाशिथिलीभावप्रसङ्गात् । एवं स्वपक्षस्थापनार्थः प्रथमपादः परपक्षप्रतिक्षेपार्थोऽयं पाद इति पादभेदः । स्वपक्षस्थापनमभ्यर्हितत्वात् प्रथमं कृतमिति तदानंतर्यमस्येति भावः । यद्यपि तृतीयचतुर्थयोरपि कार्यगोचरश्रुतिविरोधरूपपरापादितदूषणपरिहारेण स्वपक्षस्थापनं क्रियते । तथापि कारणविषयत्वेन प्रथमद्वितीयपादयोस्सङ्गतिरिति भावः । प्रथमाध्यायगतैरीक्षत्यधिकरणादिभिः पौनरुक्त्यशंका 'तर्कावलम्बनेने'ति विशेषणेन निरस्ता । सांख्यादयः स्वतन्त्रतर्कैः प्रधानादिकं प्रसाध्य तत्र बहुभवनसङ्कल्पादिवाक्यविरोधो मा भूदिति तानि वाक्यानि स्वपक्षानुगुण्येन व्याचक्षते 'ईक्षितृत्वं प्रधानस्य चिद्योगादुपपद्यते । अंतःकरणवत्तस्य करणत्वाददोषते' त्यादिप्रकारेण । तेषां तद्व्याख्यानन्यायानुसारिणा सम्यग्व्याख्यानेन पूर्वं निरस्तमिह तु ये स्वतन्त्रतर्कैः प्रधानादिकं कल्पयन्ति ते तथाभूतैरेव तर्कांतरैर्निरस्यन्त इति न पौनरुक्त्यमिति भावः । ब्रह्मपारतंत्र्येण प्रधानस्य कारणत्वं वेदान्तानुमतमिति वैदिकपक्षनेदिष्ठस्सांख्यानामानुमानिकस्वतंत्रप्रधानकारणवादः प्रथमाधिकरणेन निराकर्तव्य इति तत्प्रा-

लम्बेन सांख्यादिपरपक्षदूषणं क्रियते । प्रथमं सांख्यानां प्रधानकारणवादो युक्तो न वेति सन्देहः । सन्देहबीजं सर्वत्र प्रसिद्धमूहनीयम् ।

प्रधानकारणवाद एव युक्त इत्यवगम्यते । प्रधानं हि रजस्सत्त्वतमोरूपम् । तदेव जगतः कारणं भवितुमर्हति, सर्वत्र तत्कार्यसुखदुःखमोहान्वयदर्शनात् । पटादयो ह्युपलब्धाः प्रावरणादिहेतुतया सुखात्मका भवन्ति । अन्यापहृता

थम्यहेतुं सूचयन् संशयं दर्शयति–प्रथममिति । संशयबीजं तु क्वचिदपि विशिष्य नोपन्यसनीयम् । यदेव तत्र पूर्वपक्षसिद्धान्तयोर्युक्तिजातं प्रसेद्धुं प्रक्रान्तं तदेव बलाबलानवधारणदशायां तद्बीजमिति क्वचिदपि तद्विशेषयत्नो न कार्य इत्याह–सन्देहबीजमिति । नन्वनुमानेन मूलकारणकल्पनायां परमाणुकारणवादमपहाय प्रधानकारणवादाश्रयणे कः पक्षपातहेतुरित्याशङ्क्य प्रपञ्चस्य प्रधानैककारणमूलत्वकल्पनायां लाघवं परिच्छिन्नस्य परमाणोरेकस्य सर्वकारणत्वायोगेन तद्बहुत्वकल्पनावश्यंभावात् गौरवं परिच्छिन्नस्य कार्यत्वनियमेन परमाणोरपि परिच्छिन्नत्वेन कार्यत्वापत्त्या परिच्छिन्नतत्कारणपरम्पराकल्पनादनवस्था चेत्येवंरूपं प्रधानकारणवादे पक्षपातहेतुं 'परिच्छिन्नत्वान्न सर्वोपादान' मित्यादिकापिलसूत्रोक्तं सूचयन्पूर्वपक्षयति–प्रधानेति । ननु सैद्धांतिके ब्रह्मकारणवादेऽपि कारणैक्यलाघवादिकमविशिष्टमित्याशंक्य निर्गुणस्य ब्रह्मणः कार्यानुगुण्यं नास्तीति सूचयन्प्रधानस्यैव प्रपञ्चकारणत्वेन कल्पनं युक्तमित्याह–प्रधानं हीति । प्रधानस्य कार्यानुगुण्यमुपपादयति–पटादयो हीति । पटो येन प्राप्यते तं प्रति सत्त्वगुणोद्भवात्पटस्सुखात्मको भवति यदीयस्सोऽन्येनापह्रियते तं प्रति रजोगुणोद्भवाद्दुःखात्मको भवति, यस्य तस्मिन्नपेक्षया निरीक्षणाभावाद्दर्शनमेव नोदेति तं प्रति तमोगुणोद्भवान्मोहात्मको भवति । 'मुह वैचित्य' इति धात्वर्थानुगमात् । पटेनान्येऽपि तावद्भावा व्याख्याताः । एवं सुखदुःखमोहात्मकस्य प्रपञ्चस्य तथाभूतमेव कारणं कल्पयितुं युक्तम् । कार्यकारणयोर्द्रव्ययोरभेदेन कारणस्यातथात्वे कार्यस्य तथात्वायोगात् । अतस्त्रिगुणात्मकं प्रधानं तत्कारणं कल्पयितुं युक्तम् । सत्त्वरजस्तमोगुणरूपास्त्रयो गुणा हि सुखदुःखमोहात्मकाः । यथाहुः— 'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥' इति । अयमर्थः–गुणाः सत्वरजस्तमांसि प्रीत्यप्रीतिविषादात्मकाः क्रमात्सुखदुःखमोहात्मानः क्रमादेव प्रकाशप्रवृत्तिनियमप्रयोजनाः । पुंसश्च सत्वं प्रकाशयति । प्रकाशनकार्ये सत्त्वं प्रवर्त्तयति रजोगुणः । लघोः सत्वगुणस्य रजसा सर्वत्र प्रवर्त्तने प्रसक्ते गुरुतमोगुणो नियच्छति । ततश्च तमोनिरुद्धं रजः सकृदेव प्रवर्तत इति तेन क्वचिदेव प्रवर्त्तितं सत्वं किंचिदेव प्रकाशयति । अतो न सर्वं सर्वदा सर्वस्य प्रकाशत इति व्यवस्था । एवं गुणानां स्वरूपं प्रयोजनञ्चोक्तम् । तेषां व्यापार उच्यते–'अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च' । वृत्तिर्व्यापारः प्रत्येकमभिभवादिभिस्सम्बध्यते । 'अन्योन्याभिभववृत्तयश्च गुणाः' एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते । तथा हि–सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते । एवं रजः सत्वतमसी अभिभूय घोरां स्वप्रवृत्तिं तथा तमः सत्वरजसी अभिभूय मूढां स्वप्रवृत्तिमिति ।

दुःखात्मका भवन्ति। कार्याभावादुपेक्षिता मोहात्मकाः। तदेवं सुखाद्यन्वयात् त्रिगुणमेव प्रधानं जगत्कारणम् ॥

इति प्राप्तेऽभिधीयते—न प्रधानं जगत्कारणम्, अचेतनत्वात्।

'अन्योन्याश्रयवृत्तयश्च गुणाः'। यदपेक्षया यस्य व्यापारो भवति स तस्याश्रयो विवक्षितः। 'अन्योन्यजननवृत्तयश्च गुणाः'। अन्यतमेनान्यतमो जन्यते। जननमत्र परिणामविशेषः। 'अन्योन्यमिथुनवृत्तयश्च अन्योन्यसहचराः अविनाभूता इत्यर्थः। 'अन्योन्यमिथुनास्सर्वे सर्वे सर्वत्र गामिनः। नैषामादिस्सम्प्रयोगो वियोगो वोपलभ्यत'इति हि तदागमः। सत्वं लघु प्रकाशकमिष्टं सांख्याचार्याणाम्। तत्रानलपवनादीनामूर्ध्वज्वलनतिर्यक्पवनादिहेतुर्धर्मो लाघवम्। सत्त्वतमसी रजसा स्वकार्योन्मुखे कार्येते इत्येतद्रजस उपष्टम्भकत्वं तदुपपादकं च चलमिति। रजः सक्रियमक्रिययोः सत्त्वतमसोः कार्योन्मुखावस्थापादकमिति चलविशेषणेन दर्शितम्। तमस्तु गुरु। अत एव स्वयं चञ्चलतया लघुसत्वमपि चालयद्रजो गुरुणा तमसा तत्रतत्र प्रवृत्तिप्रतिबंधकेन क्वचिदेव प्रवृत्तिमत्क्रियत इति वरणकं नियामकं च तमः। परस्परविरोधिनामप्येषामेककार्यकरत्वमुच्यते। 'प्रदीपवच्चार्थतो वृत्तिः' यथा वर्त्तितैले पावकविरुद्धे अपि मिलिते सह पावकेन रूपप्रकाशनकार्यं कुरुतः एवं सत्वरजस्तमांसि परस्परविरुद्धान्यप्यर्थवशात् सह कार्यं कुर्वन्ति। 'पुरुषार्थ एव हेतुः न केनचित्कार्यते करण' मिति पुरुषार्थवशादेव प्रकृतिप्रवृत्तेरभ्युपगमादिति। एवं जगतस्त्रैगुण्योपपादनेनानुमानतस्त्रिगुणात्मकप्रधानसिद्धिं सूचयन्पूर्वपक्षमुपसंहरति—तदेवमिति। इदमिहानुमानमभिसंहितम्। कार्यं सुखदुःखमोहात्मकवस्तुप्रकृतिकं तत्समन्वितत्वात्, सामान्यव्याप्तौ मृद्द्रव्यसमन्वितघटशरावादिवदिति। यद्वा। सर्वं कार्यं समप्रकृतिकं कार्यत्वात् विशेषव्याप्तौ घटवत् इति। लाघवादेकप्रकृतिकत्वं सिध्यतीति न परमाणुद्व्यणुकादिप्रकृतिकत्वेनार्थांतरं नापि सिद्धांत्यभिमतब्रह्मप्रकृतिकत्वेनार्थांतरम्। जडं सुखदुःखमोहात्मकं कार्यं प्रत्यतथाभूतस्य प्रकृतित्वेन सिद्ध्यनवकाशात्। न चाचेतनस्य चेतनाधिष्ठानाभावे कार्यजनने स्वयमेव प्रवृत्त्यनुपपत्तेर्लाघवात् सर्वजगत्कर्तृत्वेन परमेश्वरसिद्ध्यवश्यंभावे तस्यैव सर्वशक्तिमत्त्वेन विलक्षणं प्रपञ्चं प्रत्युपादानत्वस्याप्युपपत्तेर्न तद्व्यतिरिक्तं प्रधानं तत्प्रकृतित्वेन सिद्ध्यतीति शंकनीयम्। अचेतनस्यापि चेतनानां भोगापवर्गहेतोर्विनाऽपि चेतनाधिष्ठानं स्वयमेव प्रवृत्त्युपपत्तेः। वत्सविवृद्धिहेतोः क्षीरस्य स्वयमेव प्रस्रवणदर्शनात् जलदमुक्तस्य जलस्य सस्यविवृद्धिहेतोः स्वयं निस्सरणदर्शनाच्च, क्षीरजलयोर्दधिमौक्तिककरकादिभावेन स्वयमेव परिणतिदर्शनाच्च, बन्धमोक्षवतः पुरुषस्यैव चेतनस्य निर्व्यापारस्याऽपि सन्निधानमात्रेणाचेतनप्रधानप्रवर्तकत्वोपपत्तेश्च, स्वयं प्रवृत्तिशक्तिरहितस्य दृक्शक्तिमतः पङ्गोः प्रवृत्तिशक्तिमंतं दृक्शक्तिरहितमन्धं प्रति प्रवर्तकत्वदर्शनात्, अयस्कान्तमणेः सन्निधानमात्रेणायःप्रवर्तकत्वदर्शनाच्च, इत्येवं पूर्वपक्षे प्राप्ते सौत्रमनुमानपदं कर्मणिव्युत्पत्तौ प्रधानरूपपक्षनिर्देशकं नेति पदं निषेध्याध्याहारेण साध्यनिर्देशकं च परिगृह्य हेत्वध्याहारेण स्वतन्त्रप्रधानकारणत्वसाधकानुमानस्य बाधकमनुमानं सूत्राभिप्रेतं दर्शयन् सिद्धांतयति—न प्रधानमिति। 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इति श्रुतिसिद्धस्य प्रधानस्य सिद्धांते अंगीकृतत्वान्नाश्रयासिद्धिः। न च तथाप्यानुमानिकं

तथा हि—दार्वादेरचेतनस्य रथप्रासादादिषु तज्ज्ञानधिष्ठितस्य रचनानुपपत्तिर्दृश्यते। तज्ज्ञाधिष्ठितस्य रचनाप्रवृत्तिश्च दृश्यते। अतश्चेतनानधिष्ठितं प्रधानं जगत्कारणं भवितुं नार्हति। यदुक्तं सुखाद्यन्वयादिति, तदसत्। सुखादीनामान्तरत्वात्, पटादीनां बाह्यत्वात्। अतः प्रधानकारणवादो न युक्तः॥

आशङ्क्य परिहरति—

॥ सू ॥ पयोऽम्बुवच्चेत्तत्रापि ॥ २ ॥

यथा पयोऽम्बु दध्यादिकरकादिभावेऽधिष्ठानानपेक्षं, तद्वत्प्रधानमपीति चेत्—न। तत्राप्युक्त एव हेतुः। तस्याप्यचेतनत्वेन पक्षीकृतत्वात्॥

किञ्च— ॥ सू ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

यदि प्राज्ञाधिष्ठानानपेक्षत्वमचेतनस्य प्रवृत्तौ तदा सर्वदा सृष्टिप्रसङ्गेन तद्व्य-

---

स्वतंत्रप्रधानं सिद्धांते नाभ्युपगतमिति सौत्रानुमानपदनिर्दिष्टपक्षासिद्धिश्शंकनीया। सांख्यानामनुमानं साधकं चेदपि प्रधानमात्रं साधयितुं क्षमते न तद्गतं स्वातंत्र्यमपि साध्यानुप्रवेशाभावादित्याशयेन पक्षस्यानुमानपदेन निर्देशात्। 'न जगत्कारण'मिति साध्यस्य चेतनाधिष्ठानमनपेक्ष्य स्वातंत्र्येण जगत्कारणं न भवतीत्यर्थः। तथैवाग्रिमग्रंथप्रवृत्तेः। 'रचनानुपपत्ते'रिति सूत्रपदगृहीतां व्याप्तिं सदृष्टांतं दर्शयति—तथा हीति। 'प्रवृत्ते' रिति सूत्रपदगृहीतं तदनुग्राहकं तर्कं दर्शयति—तज्ज्ञाधिष्ठितस्येति। अचेतनकारणत्वावच्छेदेन चेतनाधिष्ठानापेक्षा दृष्टेति कार्यकारणभावग्रहमूलानुकूलतर्कसहकृतत्वादिदमनुमानं प्रबलमिति भावः। चकारेण प्रधानानुमानस्य तत्स्वातंत्र्यपर्यंतसाधनेऽनुकूलतर्काभावस्समुच्चीयते। आद्यचकारेण समुच्चितां हेत्वसिद्धिमुपपादयितुं सांख्योक्तं हेतुसिद्धिप्रकारमनुवदति—यदुक्तमिति। सुखादीनामांतरत्वादिति। पटप्राप्तिहरणाभ्यां तत्स्वामिनस्सुखदुःखे जायेते। तदुपेक्षकस्य तदज्ञानमनुवर्तते। इत्येतावदनुभवसिद्धम्। न तु तद्विषयस्य सुखाद्यात्मत्वम्। पटस्सुखमित्यनुभवाभावात् 'अहं सुखी' त्यादिरूपस्यैवानुभवस्योदयाच्च। न च विषयस्य सुखादिरूपत्वाभावे तज्ज्ञानादान्तरसुखोदयो न स्यादिति वाच्यम्। विषयस्येच्छादिरूपत्वाभावेऽपि तज्ज्ञानादिच्छाद्वेषप्रयत्नोदयवत्तदुदयस्याप्युपपत्तेः सुखज्ञानादिकार्यवशात् सुखदुःखमोहात्मत्ववल्लाघवादिकार्यवशादन्यात्मत्वस्यापि कल्पनाप्रसङ्गेन त्रैगुण्यव्यवस्थाभंगप्रसंगाच्च। न च सुखलाघवप्रकाशानां दुःखोपष्टंभप्रवर्त्तनानां मोहगौरवावरणानां च एकैकगुणसंबंधित्वकल्पनायां प्रमाणमस्ति। येन त्रैगुण्यव्यवस्थाभंगो न स्यात्। तथा संति सुखदुःखमोहानामप्येकगुणसंबंधित्वकल्पनोपपत्तेः विरोधस्य च प्रतियोगिभेदेन कालभेदेन च सुपरिहरत्वात् परेणापि सुखादिरूपोद्भवे तद्भेदस्यैव शरणीकरणीयत्वाच्चेति भावः। एवं प्रबलानुमानबाधितस्य प्रधानानुमानस्यानुत्थानात् सांख्यपक्षो न युक्त इत्याह—अत इति। आशंक्येति। पयोंऽबुनोर्व्यभिचारमाशंक्येत्यर्थः॥ सू० ॥ पयोंऽबुवच्चेत्तत्रापि ॥ २ ॥ पक्षीकृतत्वादिति। अचेतनत्वहेतुना तत्रापि प्रधान इव चेतनाधिष्ठानसिद्धिसंभवेन पक्षसमत्वात् पक्षे पक्षतुल्ये वा व्यभिचाराभावादिति भावः॥ सू०॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात्॥ ३ ॥ 'प्रवृत्ते'रिति प्रथमसूत्रांशेन स्वतंत्रप्रधानानुमान-

**तिरेकस्य प्रलयस्यानवस्थितिः प्रसज्येत । ततो नाचेतनं जगत्कारणम् ॥**

बाधकानुमानस्य व्याप्तिग्राहकस्तर्कः प्रदर्शितः । विपयपरिशोधकस्तर्कस्तु अनेन प्रदर्श्यते। यदि परमेश्वराधिष्ठानानपेक्षं स्वतंत्रं प्रधानं स्वतंत्रमेव जगत्सृष्टौ प्रवर्तेत तदानीमपेक्षणीयान्तराभावात् सर्वदा सृष्टिप्रसंगेन तद्व्यतिरेकस्य सृष्टिविरामस्य प्रलयस्यानवस्थितिरसत्त्वं प्रसज्येतेत्यतो हेतोर्न स्वतन्त्रं प्रधानं कारणमिति ॥ ननु, परमेश्वराधिष्ठानापेक्षत्वपक्षेऽपि तुल्योऽयं दोषः । तदधिष्ठानस्यापि सदासत्त्वात् । धर्माधर्मसापेक्षं परमेश्वरस्य सृष्ट्यादिकर्तृत्वं तदभावादयं दोषो न भविष्यतीति चेत् तर्हि सांख्यपक्षेऽपि तदभावादेव प्रलये न सृष्टिरिति तुल्यः परिहारः । न तुल्यः । सांख्यपक्षे प्रधानमेव सृष्ट्यादिकारणं, धर्माधर्मौ केवलं परस्परप्रतिबंधापनयार्थौ । 'निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षैत्रिकव' दिति पातञ्जलसूत्रोक्तस्य तेषामप्यभिमतत्वात् । निमित्तं धर्माधर्मरूपं प्रकृतीनां मूलप्रकृतेर्महदाद्यवांतरप्रकृतीनां चाप्रयोजकं स्वस्वकार्यजनने सहकारि न भवति किंतु वरणस्य प्रतिबंधकस्य भेदो भङ्गस्ततो निमित्ताद्भवति क्षैत्रिकवत् । यथा हि क्षेत्रकारी केदारादपां पूर्णात् केदारांतरं समं निम्नं वा पिप्लावयिषुः केवलं वरणं तासां भिनत्ति भिन्ने तस्मिन्नापः स्वयमेव केदारांतरं प्लावयंतीति पातञ्जलसूत्रेणोक्तमिति चेत् , किं ततः । धर्माधर्मयोस्सहकारित्वं प्रतिबन्धकनिरासार्थत्वं वास्तु । तदपेक्षा पक्षद्वयेऽपि तुल्यैव । सांख्यपक्षे प्रलयेऽपि धर्माधर्मौ वर्तेते इति चेत्, किं सिद्धांतपक्षे तौ न वर्तेते ? तथा सति ह्यग्रे तत्सापेक्षा पारमेश्वरी सृष्टिर्न प्रवर्तेत । तथाऽपि पारमेश्वरस्य सृष्टिसङ्कल्पस्य कादाचित्कत्वेन तद्विरामो भविष्यतीति चेन्न । तत्सङ्कल्पस्य सृष्टिहेतुधर्माधर्मानुसारित्वे सतोस्तयोस्तदभावायोगात् तदननुसारेणैव कदाचित्सङ्कल्पः कदाचिन्नेत्यंगीकारे धर्माधर्मयोः सृष्ट्यौन्मुख्यदशायामपि कदाचित्तदसङ्कल्पः तदनौन्मुख्यदशायामपि तत्सङ्कल्प इति तत्सापेक्षत्वभंगप्रसंगात् केवललीलया सङ्कल्पस्यानियतकालत्वेन सृष्टिप्रलययोः कालव्यवस्थाभङ्गप्रसङ्गाच्च । एतेन यादृच्छिकतृणच्छेदादिप्रवृत्तिवन्निमित्तानपेक्षा तस्य सृष्ट्यादिप्रवृत्तिरित्यपि निरस्तम्।स्वभावविशेषात् कालव्यवस्थया परमेश्वरस्सृजति संहरति चेति चेत्तथैव प्रधानमपीत्यस्तु। यद्युच्येत निरंतरमनंतरमनंतशरीरादिजननेनापचितशक्तिकं प्रधानं काकवन्ध्यान्यायेन कदाचित्प्रसोतुमक्षममास्ते यथा निरंतरलेखनकुण्ठितलेखनसामर्थ्या लेखिनी कदाचिल्लिखितुमप्रभवन्त्यवतिष्ठते पुनः पाकाख्यं परिणतिविशेषं प्राप्तं तद्यथापूर्वं प्रसूते । धर्माधर्मयोरप्येषैव रीतिः । अवश्यं च धर्माधर्मयोरवस्थाविशेषः पाकाख्योऽभ्युपगन्तव्यः। यागहिंसादिभिर्धर्माधर्मोत्पत्त्यनन्तरमेव स्वर्गनरकानुभवादर्शनात्।न चानंतानां कर्मणां विरुद्धफलानां युगपत्स्वस्वफलानुभावकत्वासंभवेन यथादर्शनं परस्परप्रतिबद्धप्रतिबन्धकभावः कल्पनीय इति कस्माच्चित्प्रतिबन्धादेव तयोः कञ्चित्कालं फलजनकत्वाभावः न तु पाकाख्यपरिणतिविशेषाभावादिति वाच्यम् । धर्माधर्मयोरुत्पत्तिप्रभृति फलजननसामर्थ्याभिव्यक्तिसद्भावे स्वस्वफलभोगोचितानेकशरीरसंपादनेन स्वस्वफलभोजयितृत्वस्याविरुद्धतया प्रतिबद्धप्रतिबन्धकभावस्याकल्पनीयत्वादभिव्यक्तसामर्थ्ययोर्धर्माधर्मयोः स्वर्गनरकादिसुखदुःखवत्तदुचितशरीरविषयादावपि जनकत्वस्य सर्वसम्प्रतिपन्नत्वादिति । शक्यं वक्तुमिदं स्वतंत्रप्रधानपक्षेऽपि । न च पाकाख्यः परिणतिविशेषः चेतनाधिष्ठानं विना न

॥ सू ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥

क्षीरायमाणधेनूपयुक्ततृणादिवदचेतनमपि प्रधानं कारणमिति वक्तुं न युक्तम्। अनडुदाद्युपयुक्ते केनाप्यनुपयुक्ते च तृणादौ क्षीरपरिणामाभावात् तदपि प्राज्ञाधिष्ठितमेव ॥

॥ सू ॥ पुरुषाश्मवदिति चेत्तथापि ॥ ५ ॥

अचेतनमपि प्रधानं पुरुषसन्निधानात् प्रवर्तयति, यथा पङ्गुरन्धं यथा वायस्कान्तमणिरयः, ततो न प्राज्ञापेक्षेति चेत्—तथापि न प्रधानस्य प्रवृत्तिः संभवति। पुरुषस्याविकृतत्वात्। पंग्वश्मादेर्मार्गोपदेशायस्सन्निहितदेशान्तरप्राप्त्यादिः कश्चिद्विकारो भवत्येव। तस्मादविकृतपुरुषसन्निधिः प्रधानप्रवृत्तौ न हेतुः ॥

॥ सू ॥ अङ्गित्वानुपपत्तेश्च ॥ ६ ॥

संभवतीति शंक्यम्। धेनूपयुक्तस्य तृणादेस्तज्जाठराग्निसंपर्काधीने पाके चेतनाधिष्ठानाभावात्। न हि धेनुः क्षीरतापत्तिसङ्कल्पपूर्वकं भक्षितं तृणादिकं जाठराग्निना संयोज्य पाचयति। अतः स्वयमेव जाठराग्निकृततृणादिपाकवत्कालविशेषकृतः प्रधानस्य कर्मणां च पाको भविष्यति। तस्मादीश्वराधिष्ठितप्रधानपक्षे स्वतन्त्रप्रधानपक्षे च तुल्योऽस्य दोषस्य परिहार इत्याशंकानिराकरणार्थं सूत्रम्—अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥ अचेतनमपि प्रधानं कारणमिति। चेतनाधिष्ठानरहितमपि प्रधानं कालविशेषमासाद्य स्वयमेव पक्कं भवतीत्यर्थः। तृणादिदृष्टांतं नानुमन्यामहे यतस्तत्रापि प्राज्ञाधिष्ठानमंगीकुर्महे। त्वयापि न तृणादिमात्रस्य क्षीरतापत्तिहेतुपाकविशेषकारणत्वमभ्युपगन्तुं शक्यते। केनाप्यनुपयुक्ते तृणे तदभावात्। नापि जाठराग्निसंयुक्तस्य तदभ्युपगंतुं शक्यते। अनडुदाद्युपयुक्ते तदभावात्। न च धेनूनां जाठराग्नौ पाकविशेषहेतुः कश्चिद्विशेषोऽस्ति। कार्यानुसारेण कल्प्यते चेत् स विशेषश्चेतनाधिष्ठानरूप एव कल्पयितुं युक्तः, व्यंजनादिषु पाकवैचित्र्यस्य तदधीनत्वेनैव दृष्टत्वादित्यभिप्रेत्याह—अनडुदादीति ॥ ननु, तथापि कर्मप्रधानयोः पाके वा जगज्जनने वा परमेश्वराधिष्ठानं नापेक्ष्यते निर्व्यापारस्यापि जीवरूपस्य पुरुषस्यैव सन्निधानमात्रेण तत्प्रवर्तकत्वसंभवादिति सदृष्टांताशंकां दृष्टांतासम्प्रतिपत्त्या निराकर्तुं सूत्रम्—पुरुषाश्मवदिति चेत्तथापि ॥ ५ ॥ तथापीत्यस्य शेषमध्याहरति—न प्रधानस्येति ॥ व्यतिरेकानवस्थितिसूत्रेण स्वतंत्रप्रधानकारणवादे प्रलयानुपपत्तिदोष उक्तः। तदुपपादकत्वेन तदनंतरसूत्रद्वयं प्रवृत्तम्। तत्रेदमाशंक्यते। सांख्यमते सत्वरजस्तमसामन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन यदवस्थानं स प्रलयस्सैव प्रधानावस्था। तेषामुत्कर्षापकर्षात्मकवैषम्यरूपेणांगांगिभावेन यदवस्थानं सा सृष्टिस्सैव विकारावस्था। एवञ्च सति जगत्कारणत्वेन सृष्टिपूर्ववर्तितयानुमीयमानं त्रिगुणं गुणसाम्यावस्थात्मकप्रधानरूपेणानुमेयमिति धर्मिग्राहकमानसिद्धसाम्यावस्थारूपः प्रलयो न निरसितुं शक्यत इति तन्निराकरणार्थं सूत्रम्—अंगित्वानुपपत्तेश्च ॥ ६ ॥ तथा सति गुणसाम्यावस्थं प्रधानं क्षोभकचेतनव्यापाराभावात् स्वयमेव गुणवैषम्यावस्थां प्राप्तुं न क्षमते अतः सृष्ट्यनुपपत्तिरिति दूषणार्थः ॥ यदि सुखदुःखमोहात्मकवैषम्यावस्थं जगद्दृष्ट्वा तदवस्थापन्नमेव त्रिगुणमनुमीयते

गुणानामुत्कर्षापकर्षभावोऽङ्गाङ्गिभावः। ततो जगत्प्रवृत्तिरुच्यते सांख्यैः। प्रतिसर्गावस्थायां साम्यावस्थानां गुणानां वैषम्याभावात् तत्कृताङ्गाङ्गिभावानुपपत्तिः। अतश्च जगदारम्भो न युज्यते प्रधानकारणवादे ॥

॥ सू ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥

उक्तप्रकारादन्यप्रकारेण प्रधानेऽनुमीयमानेऽपि ज्ञातृत्वशक्तिवियोगाद्रचनानुपपत्तिस्तदवस्थैव ॥

॥ सू ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥

प्रधानस्याभ्युपगमे यदि प्रयोजनं, तदा यथाकथंचिदभ्युपगच्छामः। न किमपि प्रयोजनमस्ति। यतः पुरुषस्य निर्विकारत्वात् प्रधानदर्शनादिरूपविकारासंभवः। अत एव प्रकृतिधर्माध्यासनिमित्तो भोगः तद्विवेकानुसन्धानकृतं कैवल्यं च न संभवति। अतः प्रयोजनाभावात्प्रधानं न स्वीकार्यम् ॥

---

तदा धर्मिग्राहकमानसिद्धवैषम्यावस्थाया एव सदानुवृत्तिः। पूर्वोक्तदूषणावर्तनार्थश्चकारः। स्यादेतत्। त्रिगुणं न साम्यावस्थमनुमीयते। नापि वैषम्यावस्थम्। किंत्वनादिसृष्टिप्रलयप्रवाहमूलद्विविधसंस्कारानुवृत्तिसद्भावात्तत्तत्संस्कारोद्बोधानुसारतः पर्यायेण साम्यवैषम्यभागुभयस्वभावमनुमीयते। न चाव्यवहितसंस्कारस्यैव प्रबलस्य कार्यकरत्वात् साम्यवैषम्ययोः पर्यायभवनानुपपत्तिः। मनुष्यजन्मतस्तिर्यग्जन्मप्राप्तौ व्यवहितसंस्कारस्यैव कार्यकरत्वदर्शनात्, अतो न सृष्टेर्नापि प्रलयस्यानुपपत्तिरित्याशंकानिराकरणार्थं सूत्रम्—अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥ रचनानुपपत्तिरिति। सौत्रेण चकारेण ज्ञातृत्वशक्तिराहित्यात्प्रधानस्य जगद्रचयितृत्व इवादृष्टसंस्कारयोस्तत्साम्यवैषम्यापादकत्वेऽप्यनुपपत्तिस्तदवस्थेति समुच्चीयते ॥ एवं सांख्याभिमतस्वतन्त्रप्रधाने प्रमाणं निरस्तमथ तदभिमतं तत्प्रयोजनं निरसितुं सूत्रम्—अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥ पुरुषस्य भोगापवर्गौ प्रधानस्य प्रयोजनमिति सांख्याः। यदाहुः—'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पंग्वन्धवदुभयोरपि संयोगस्तत्कृतस्सर्गः ॥' इति। प्रधानकर्मकं सविकारप्रधानविषयं पुरुषस्य यद्दर्शनं भोगरूपं तदर्थं पुरुषस्य कैवल्यार्थञ्च परस्परापेक्षयोः प्रधानपुरुषयोः पंग्वंधवत्संयोगः तत्कृतो महदादिप्रपञ्चसर्ग इत्यर्थः। अपवर्गः प्रधानस्य प्रयोजनमित्येतत्प्रपंचेन वर्णयन्ति—'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य। औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः। पुरुषस्य विमोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम्। नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः। गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकञ्चरति' ॥ इति। इदं द्विविधमपि प्रयोजनं नोपपद्यते इत्याह—यतः पुरुषस्येति। इदमत्र सांख्यानां दर्शनम्—पुरुषः चैतन्यमात्रवपुः कूटस्थो निर्विकारो नित्यमुक्तः। अतः सांसारिकसुखदुःखानुभवरूपभोगो न तस्य धर्मः। किं तु परिणामिन्या बुद्धेर्धर्मः। पुरुषस्य तु बुद्धिच्छायापत्त्या तदैक्यमिवापन्नस्य तद्दर्शनं भोगः। तेन तस्य विवेकाग्रहादाध्यासिकं भोक्तृत्वं विवेकख्यात्या भोक्तृत्वाध्यासमात्रनिवृत्तिर्मोक्षः। वस्तुतः पुरुषो न बद्धो नापि मोक्ष्यते। मोक्षोपायविधयोऽपि न स्वाभाविकबन्धनिवृत्त्यर्थाः इति। तदेतत् 'न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगः' 'तद्योगादृते न स्वभा-

## ॥ सू ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

**पुरुषस्य द्रष्टृत्वभोक्तृत्वनिर्विकारत्वादिविरुद्धधर्मसहस्राभ्युपगमश्च दृश्यते । अतोऽप्यसमञ्जसमेव कापिलं मतम् ॥ इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥**

वतो बद्धस्य मोक्षसाधनोपदेशः' 'स्वभावनाशात् स्वरूपनाशप्रसंगात्' इत्यादिकापिलसूत्रैः'वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता। विकल्पघटितावेतावुभावपि न किञ्चन । आत्मनो न हि बन्धोऽस्ति वस्तुतो निर्गुणत्वतः । अविवेकाद्बन्ध इव तन्नाशः शाश्वतो भवेत्'॥ 'तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृति' रित्यादिभिस्तदागमवृद्धवचनैश्च प्रतिपन्नम्। तदेतन्नोपपद्यते। भोगाश्रयबुद्ध्यैक्यदर्शनरूपस्य भोगस्य तद्विवेकानुसंधानरूपस्य मोक्षजनकज्ञानस्य च पुरुषे निर्विकारचैतन्यात्मन्युदयासंभवात् । न च तदप्युभयं बुद्धिधर्म एवेति वाच्यम्। तावता तस्याध्यासिकस्यापि भोक्तृत्वस्यानिर्वाहात् मोक्षोपायत्वानिर्वाहाच्च । तस्मात्प्रयोजनाभावादपि स्वतंत्रं प्रधानं न स्वीकरणीयमिति भावः॥ स्यादेतत्। पुरुषस्य भोक्तृत्वं मोक्षोपायविवेकख्यात्यर्थश्रवणादिप्रवृत्तिमत्त्वञ्च सांख्यैरेव भोक्तृत्वमोक्षार्थप्रवृत्तिभ्यामचेतनेषु बुद्ध्यादिष्वसंभाविताभ्यां तदतिरिक्तं पुरुषं साधयद्भिरभ्युपगतम् । यदाहुः 'संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थप्रवृत्तेश्चे'ति । अतो न प्रयोजनं प्रधानाभ्युपगम इत्याशंकानिराकरणार्थं सूत्रम्—विप्रतिषेधाच्चासमञ्जसम्॥९॥ पुरुषस्येति । इत्थं पुरुषस्य द्रष्टृत्वभोक्तृत्वादिकमभ्युपगच्छंत एव तस्य निर्विकारत्वनित्यमुक्तत्वादिकमप्यभ्युपगच्छंतीति परस्परविरुद्धाभ्युपगमादसमञ्जसमेव सांख्यमतम् । न ह्यद्वैतवादिभिरिव तैराविद्यकं द्रष्टृत्वादिकं तात्विकनिर्विकारत्वाद्यविरोधीति समर्थयितुं शक्यमिति भावः॥ इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥

---

### नयमणिमालायाम्

### अथ द्वितीयस्याध्यायस्य द्वितीयः पादः ।

#### अथ रचनानुपपत्त्यधिकरणम् ॥ १ ॥

सू० ॥ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥ पयोऽम्बुवच्चेत्तत्रापि ॥ २ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥ पुरुषाश्मवदिति चेत्तथापि ॥ ५ ॥ अङ्गित्वानुपपत्तेश्च ॥ ६ ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

त्रिगुणं प्रधानमस्योपपद्यते कारणं जगतः । सर्वत्रान्वयदृष्टेः कार्ये सुखदुःखमोहानाम् ॥ १०९ ॥

इह चेतनानधिष्ठितमचेतनं क्वापि न कुरुते कार्यम् । अन्तरतया सुखादेरस्ति न कार्येषु तदनुगतिः ॥ ११० ॥

इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥

---

शिवाभ्यां नमः ।

### सूत्रार्थचन्द्रिकायाम्

#### अथ द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

### अथ रचनानुपपत्त्यधिकरणम् ॥ १ ॥

सू ॥ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥१॥ पयोऽम्बुवच्चेत्तत्रापि ॥ २ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात्॥३॥ अन्यत्राभावाच्च न तृणादिवत् ॥४॥ पुरुषाश्मवदिति चेत्तथापि ॥५॥ अङ्गित्वानुपपत्तेश्च ॥६॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥७॥ अभ्युपगमेऽप्यर्थाभावात्॥८॥विप्रतिषेधाच्चासमञ्जसम्॥९॥

**भगवत्पादमते,** इत्थं मुमुक्षोः सम्यग्ज्ञानोत्पादके वेदान्तसमन्वये परकल्पितदोषनिराकरणेन स्वपक्षं प्रतिष्ठाप्याधुना परपक्षदूषणाय पादान्तरमारभते। पूर्वपादान्ते 'सर्वधर्मोपपत्तेश्चे'त्यनेन ब्रह्मणि कारणधर्माणामुपपत्तिरुक्ता। तेषां प्रधान एवोपपत्तिः किं न स्यादित्याक्षेपसंगत्येदमधिकरणमारभ्यते—**रचनानुपपत्तेरित्यादि** । अस्मिन्मते आद्यं सूत्रं 'प्रवृत्तेश्चे'ति योगविभागेन सूत्रद्वयात्मकम्। अचेतनं प्रधानं जगदुपादानमिति सांख्यसिद्धान्तोऽत्र विषयः। स किं प्रमाणमूल उत भ्रान्तिमूल इति संदेहे जगत् सुखदुःखमोहात्मकवस्तूपादानकं तदन्वितत्वात् मृदन्वितघटादिवत् इत्यनुमानेन यत्सुखाद्यात्मकं सिद्धं तदेव त्रिगुणात्मकं प्रधानम्। अतः प्रामाणिकस्सांख्यसिद्धान्त इति **पूर्वपक्षः। सिद्धान्तस्तु, आनुमानम्**=अनुमानसिद्धं प्रधानम्। **न**=जगदुपादानं न भवति। कुतः। **रचनानुपपत्तेश्च**=लोके विचित्रप्रासादादिरचनाया बुद्धिकुशलशिल्प्यादिकार्यत्वदर्शनेन अचेतनात् स्रष्टव्यज्ञानशून्यात्प्रधानात् अनेकविधविचित्रजगद्रचनानुपपत्तेः, सुखादीनामांतरत्वप्रतिपत्तेर्जगतस्तदन्वितत्वासंभवेन स्वरूपासिद्धेश्च। तस्मान्न प्रामाणिकस्सांख्यसिद्धान्त इति।

**सू॥ प्रवृत्तेश्च ॥ २ ॥** अचेतनरथादिप्रवृत्तेर्लोके चेतनाधीनत्वदर्शनात् चेतनप्रेरणमन्तरेणानुपपन्नायाः प्रधानस्य साम्यावस्थाप्रच्युतिरूपप्रवृत्तेरभ्युपगमाच्च न प्रधानकारणवादः प्रामाणिकः। इति ॥

अन्यत्र व्यभिचारमाशंक्य परिहरति–**सू॥ पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥ पयोऽम्बुवत्**=यथा अचेतनं क्षीरं वत्सविवृद्धये स्वयमेव प्रवर्तते यथा वा जलं स्वयमेव स्यन्दते तद्वत् प्रधानमपि स्वयमेव प्रवर्तेत इति **चेत् तत्रापि** 'योऽप्सु तिष्ठ'न्नित्यादिना परमेश्वरः प्रेरकः श्रूयते। तथा च पयोऽम्बुनोः पक्षत्वान्न व्यभिचार इति भावः ॥

**सू॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥** साम्येनावस्थिता गुणाः प्रधानमिति सांख्यमते **व्यतिरेकानवस्थितेः**=प्रधानव्यतिरेकेण सहकार्यन्तरस्यानवस्थितेः । **अनपेक्षत्वाच्च**=पुरुषस्यासंगोदासीनत्वेन प्रवृत्तौ निवृत्तौ वा अनपेक्षत्वाभ्युपगमाच्चेत्यर्थः ॥

ननु सहकार्यभावेऽपि अचेतनस्य प्रवृत्तिरन्यत्र दृष्टेत्यत आह–**सू॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥** यथा **तृणादिकं** निमित्तान्तरनिरपेक्षमेव क्षीराकारेण परिणमते **तद्वत्** प्रधानमपीति चेत् **न** । कुतः । **अन्यत्र**=धेन्वादेरन्यत्र बलीवर्दादौ। **अभावाच्च**=तृणादेः क्षीरभावस्याभावाच्चेत्यर्थः। अतो नाचेतनस्य सहकार्यन्तरानपेक्षा प्रवृत्तिरिति सिद्धम्।

प्रधानस्य स्वतः प्रवृत्तिमभ्युपेत्यापि दूषयति–**सू॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥ अभ्युपगमेऽपि**=प्रधानस्य स्वतः प्रवृत्त्यभ्युपगमेऽपि। **अर्थाभावात्**=प्रधानमचेतनं चेतनस्य पुरुषार्थं साधयितुमेव प्रवर्तते इति स्वसिद्धांतविरोधेन पुरुषार्थस्यापेक्षाभावप्रसंगादित्यर्थः ॥

**सू॥ पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥ पुरुषाश्मवत्**=लोके यथा पंगुः पुरुषः स्वयमप्रवर्तमानोऽप्यंधं प्रवर्तयति यथा अयस्कांतशिला संनिधिमात्रेणायः प्रवर्तयति तद्वत् पुरुषः प्रधानस्य प्रवर्तक **इति चेत् तथापि** प्रधानस्य पुरुषप्रेर्यत्वे स्वातन्त्र्याभ्युपगमविरोधः पुरुषस्य प्रवर्तकत्वे कौटस्थ्यहानिरित्यादिदोषप्रसंगः। ब्रह्मणस्त्वविषयकं प्रवर्तकत्वमिति न कौटस्थ्यहानिः ॥

अपि च ॥ **सू॥ अङ्गित्वानुपपत्तेश्च ॥ ८ ॥** गुणत्रयसाम्यावस्था प्रधानमिति सांख्यमते प्रधानस्य कूटस्थत्वाभ्युपगमे गुणानां साम्यावस्थाप्रच्युत्यभावेन परस्परानपेक्षतया अङ्गाङ्गिभावानुपपत्तेः कार्यानुत्पत्तिप्रसंगः। विकारित्वाभ्युपगमे च स्वतो विकारित्वे सदाकार्यप्रसंगः, परतो विकारित्वे पुरुषस्यौदासीन्यभंगप्रसंगः इत्यतः प्रच्युत्यभावेन अङ्गाङ्गिभावानुपपत्तेः कार्याभावप्रसंग इत्यर्थः ॥

**सू॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥** गुणा अनपेक्षस्वभावाः कूटस्थाश्च नानुमीयंते अपि तु कार्योत्पत्त्यानुगुण्येनान्योन्यापेक्षा एव। एवमनुमितौ न प्रागुक्तदोषप्रसक्तिरिति चेत् न । **ज्ञशक्तिवियोगात्**=गुणानां ज्ञानशक्तिराहित्यादित्यर्थः। अतः स्वतःप्रच्युत्यभावेनाङ्गाङ्गिभावानुपपत्तेः कार्यानुदयप्रसंगस्तदवस्थ एवेत्यर्थः ॥

**सू॥ विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ विप्रतिषेधाच्च**=क्वचिन्महतस्तन्मात्रसृष्टिः क्वचिदहंकारात् क्वचिदेकादशेन्द्रियाणि क्वचित्सप्त क्वचित्त्रीण्यन्तःकरणानि क्वचिदेकमित्यादिपूर्वोत्तरविरोधवत्त्वाच्च सांख्यमतमसमंजसमित्यर्थः। तस्मात्सांख्यसिद्धान्तो भ्रान्तिमूल एवेति सिद्धम् ॥ '**अभ्युपगमेऽप्यर्थाभावा**'दिति सूत्रस्यास्मिन्मते '**अन्यत्राभावाच्च न तृणादिव**'दिति सूत्रस्यानन्तरतया पाठ इति विशेषः ॥

**श्रीकण्ठमते** तथा **रामानुजमते च** संदेहपूर्वपक्षसिद्धान्तादिकं प्रायः पूर्वस्मादविशिष्टम्। सूत्रार्थवर्णनप्रक्रिया तूभयोरनयोरविशिष्टापि केषुचित्सूत्रेषु पूर्वस्माद्वैलक्षण्यवतीत्यतस्तन्मात्रमिह प्रदर्श्यते–'**पयोऽम्बुव**' दित्यस्य अचेतनस्य पयसोऽम्बुनश्च यथा दध्यादिभावेन नारिकेलरसादिभावेन च परिणामो दृश्यते तद्वदिति व्याख्यानाद्विशेषः। तथा '**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्**' इत्यस्य अन्यानपेक्षत्वात्प्रधानस्य सर्वदा सृष्टिप्रसंगात्सर्गव्यतिरेकेण प्रलयावस्थयानवस्थितिप्रसंगाच्च केवलं प्रधानं न जगत्कारणमिति, '**पुरुषाश्मवदिति चेत्तथापि**' इत्यत्र '**तथापि**' इत्यस्य तथापि

प्रधानस्य प्रवृत्तिर्नोपपद्यते पंग्वश्मादेरिवात्राविकृतपुरुषसंनिधानातिरेकेण तादृशः कश्चिद्विशेषो नास्त्येवेति, **'अभ्युपगमेऽप्यर्थाभावात्'** इत्यस्य पुरुषस्य निर्विकारत्वात् प्रधानदर्शनादिरूपविकारासंभवेन भोगापवर्गासिद्धेः प्रधानाभ्युपगमे प्रयोजनस्याभावान्न प्रधानमनुमेयमिति, **'विप्रतिषेधा'** दित्यस्य पुरुषस्य द्रष्टृत्वभोक्तृत्वनिर्विकारत्वादिविरुद्धधर्मसहत्वाभ्युपगमादिति चार्थवर्णनात्पूर्वस्मादनयोरस्ति कियदिव वैलक्षण्यम् । अन्यच्च । **'प्रवृत्तेश्चे'**ति नानयोर्मतयोर्योगविभागः इत्यादिकं वैशिष्ट्यमिहावधेयम् । इति ॥

**आनन्दतीर्थमते,** योगविभागसूत्रपाठक्रमादिकं शांकरमतवदेव । पूर्वं सामान्यतस्समयानां निराकरणं कृतम् इदानीं विशेषेण तन्निराकरणार्थमस्मिन्पादे समयाविरोधः प्रातिस्विकतया निरूपयिष्यते । तत्राद्येऽस्मिन्नचनानुपपत्त्यधिकरणे ईश्वरनिरपेक्षाचेतनप्रधानस्यैव महदादिकार्यकरणे प्रवृत्तिरिति यन्निरीश्वरसांख्यमतं तन्निराक्रियते । इदं सूत्रदशकमस्मिन्मतेऽधिकरणपंचकात्मतया विभक्तमिति मतान्तरेभ्यो विशेषः । अचेतनस्य प्रधानस्य विनैव चेतनप्रेरणां पयसो दध्याकारपरिणामवदंबुनो गतिवच्च स्वत एव जगदाकारपरिणामसंभवात् किमीश्वरेण कर्त्रन्तरेणेति यन्निरीश्वरसांख्यमतं तद्युक्तं न वेति संदेहे युक्तमिति **पूर्वपक्षः । सिद्धान्तस्तु,** जडस्य स्वतः प्रवृत्त्यसंभवात् सर्वत्र कार्ये चेतनापेक्षानियमदर्शनात् पयोऽम्बुनोरपीश्वरप्रेरणयैव स्वस्वकार्यप्रवृत्तेः ईश्वरव्यतिरेकेण कस्यापि कर्मणोऽनवस्थितेरयस्कान्ताद्युदाहरणस्यापि कुण्ठनाच्च न युक्तमिति । **सूत्रार्थस्तु, सू ॥ रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥** अनुमीयत **इत्यनुमानं** सांख्यानुमानकल्पितं प्रधानं **न** जगत्कर्तृ । कुतः । **रचनानुपपत्तेः**=प्रधानस्य जडत्वेन स्वतःप्रवृत्त्यनुपपत्तेः । चशब्देन अचेतनस्य स्वतःप्रवृत्तौ प्रमाणाभावाच्चेत्यर्थः ॥ **सू ॥ प्रवृत्तेश्च ॥२॥** अहं करोमीति चेतनस्यैव प्रवृत्तेर्दर्शनाच्च न प्रधानं जगत्कर्तृ इत्यर्थः ॥ **सू ॥ पयोऽम्बुवच्चेत्तत्रापि ॥३॥** अविशिष्टार्थमिदम् । 'एतस्य ह्वा अक्षरस्ये'त्यादिश्रुतिवशात्तत्रापीश्वरनिमित्तकप्रवृत्तिसिद्धेरित्यर्थः ॥ **सू ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ व्यतिरेकानवस्थितेः**='न ऋते त्वत्क्रियते किंचनारे' इति श्रुत्या ईश्वरव्यतिरेकेण कस्यापि कर्मणोऽसत्त्वावगमात् न तत एवाचेतनस्यैव स्वतःप्रवृत्तिरिति निरीश्वरसांख्यमतस्याप्रामाणिकत्वात् अत एव **अनपेक्षत्वात्**=सद्भिरनादरणीयत्वान्न प्रधानं जगत्कर्तृ इत्यर्थः ॥ अतोऽनुपपन्नमचेतनकारणवादिनिरीश्वरसांख्यमतमिति सिद्धम् ॥ **इत्यानन्दतीर्थमते रचनानुपपत्त्यधिकरणम् ॥ १ ॥**

## अथान्यत्राभावाधिकरणम् ॥ २ ॥

अथ सेश्वरसांख्यमतं निराकरोति—**सू ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥** ईश्वरस्यास्तित्वाभ्युपगमेऽपि न तस्य स्वातंत्र्येण कर्तृत्वं किं तु प्रधानाज्जगदुत्पत्तौ पृथिव्यास्तृणाद्युत्पत्तौ पर्जन्यस्येव केवलमनुग्राहकत्वं तस्येति यत्सेश्वरसांख्यमतं तद्युक्तं न वेति संदेहे युक्तमिति **पूर्वपक्षः । सिद्धान्तस्तु,** 'यच्च किंचिज्जगत्सर्वं'मित्यादिश्रुतिस्मृतिभिः कार्यकारणात्मकसकलप्रपंचस्य तत्सत्तास्वभावशक्त्यादिनियन्तुरीश्वरादन्यत्राभावेन तस्य तृणादौ पर्जन्यवदनुग्राहकमात्रत्वायोगान् न युक्तमिति । **सूत्रार्थस्तु, तृणादिवत्**=यथा पृथिवीजन्यतृणादिकार्ये पर्जन्यस्सहकारिमात्रं तथा प्रकृतिजन्यमहदादिकार्येऽपीश्वरोऽनुग्राहको न स्वतंत्र इति सेश्वरसांख्यपक्षोऽपि न युक्तः । कुतः । **अन्यत्राभावात्**=ईश्वरादन्यत्र तत्प्रेरणां विना जगतोऽभावादीश्वरस्य प्रकृतिसत्तादिप्रदत्वाच्चेत्यर्थः ॥ **इत्यन्यत्राभावाधिकरणम् ॥ २ ॥**

## अथ अभ्युपगमाधिकरणम् ॥ ३ ॥

चार्वाकमतं निराकरोति—**सू ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥** धर्माद्यतींद्रियपदार्थानां तत्साधकश्रुत्यादिप्रामाण्यस्य चानभ्युपगमात्प्रमाणाभावेनेश्वरस्यैवाभावादन्तरेणापीश्वरं पूर्वपूर्वस्मादुत्तरोत्तरवस्तूत्पत्तिसंभवान्न तस्य जगत्कारणत्वं युक्तमिति **पूर्वपक्षः ।** तत्सिद्धान्तरीत्यापि विषयप्रयोजनयोरभावात्स्वव्याघातप्रसक्तेर्न तत्सिद्धान्तो युक्तः अतो नास्ति तद्विरोधो विष्णुजगत्कारणत्वस्येति सिद्धान्तः । **सूत्रार्थस्तु,** नेत्यनुवर्तते । चार्वाकैः स्वशास्त्रस्य सिद्धान्तत्वानभ्युपगमे सिद्धमसदिष्टम् । **अभ्युपगमेऽपि अर्थाभावात्**=सिद्धान्तत्वव्यापकयोरर्थशब्दितविषयप्रयोजनयोरसत्त्वाङ्गीकारात्स्वव्याघातः स्यादिति न तत्पक्षोऽपि युक्त इत्यर्थः ॥ इति ॥

**इत्यभ्युपगमाधिकरणम् ॥ ३ ॥**

## अथ पुरुषाश्माधिकरणम् ॥ ४ ॥

निरीश्वरसांख्यैकदेशिनां चेतनोपसर्जनकाचेतनप्रधानकर्तृत्ववादिनां मतं निराकरोति—**सू ॥ पुरुषाश्मवदिति चेत्तथापि ॥७॥** यद्यप्यचेतनस्य प्रधानस्य स्वतः प्रवृत्तिर्न संभवति तथापि तदनुग्राहकत्वेन स्वतंत्रत्वेन वा ईश्वरोऽङ्गीकरणीयः । पुरुषसंबन्धादेव तस्याः प्रवृत्त्युपपत्तेः । अचेतनस्यापि शरीरस्याश्मादाने प्रवृत्तिदर्शनादिति **पूर्वपक्षः । सिद्धान्तस्तु,** इदमप्ययुक्तम् । 'न ऋते त्वत्क्रियते किंचनारे' इति श्रुत्या शरीरप्रवृत्तेरपीश्वराधीनत्वेन दृष्टान्तासिद्धेः शरीरस्य पुरुषं प्रति प्रधानत्वानुपपत्तेश्चेति । **सूत्रार्थस्तु, पुरुषाश्मवत्**=यथा पुरुषसंबंधादचेतनं शरीरमश्मानयनादौ प्रवर्तते तथा अचेतनं प्रधानं चेतनसंबन्धात् प्रवर्तत इति चेन्न । कुतः । तत्रापि शरीरप्रवृत्तावपि चेतनस्येश्वरस्यैव कर्तृत्वे सिद्धेः दृष्टान्ताभावात् इति ।

## अथ वैशेषिकाधिकरणम् ॥ २ ॥

**एवं प्रधानकारणवादो निष्प्रमाणक इति निरूपितम् । अतः परं परमाणुकारणवादनिरसनायाधिकरणमारभ्यते—**

## ॥ सू ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥

**अत्र वैशेषिकमतसिद्धः परमाणुकारणवादो युक्तो न वेति सन्देहः ।**

**प्रधानमते अधिष्ठातृपरमेश्वरानङ्गीकारात् तत्कारणवादे विरुद्धेऽपि परमाणुकारणवादो युज्यते । तथा हि–प्रलीने जगति परमेश्वरस्य सिसृक्षायां सत्यां प्राणिकर्मवशान्निश्चलेषु परमाणुषु आद्यं कर्मोत्पद्यते । तस्मात् कर्मणः एकः परमाणुः परमाण्वन्तरेण संयुज्यते । तस्माच्च संयोगाद् द्व्यणुकमारभ्यते । तेभ्यस्त्रिभ्यो द्व्यणुकेभ्यस्त्र्यणुकम्, इत्यादिक्रमेण सर्वं जगदुत्पद्यते । अतः परमाणुकारणवादे न विरोधः ॥**

## अथ वैशेषिकाधिकरणम् ॥ २ ॥

प्रधानवादवत्परमाणुवादोऽपि विप्रतिषेधादसमंजस इति दृष्टांतसंगतिमभिप्रेत्यावतारयति–एवमिति ॥ सू ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥ संशयं प्रदर्श्य प्रत्युदाहरणरूपसङ्गत्यंतरमपि वर्णयन् पूर्वपक्षयति–अत्रेत्यादिना ॥ ननु, परमेश्वराङ्गीकाराद्यद्यपि रचनानुपपत्तिर्दूषणं न भवति । तथापि व्यतिरेकानवस्थितिदूषणं भवेदेव । प्रलयेऽपि सतां परमाणूनां सक्रियाणां क्रियाभिः परस्परसंयोगस्यावर्जनीयत्वेन द्व्यणुकोत्पत्तेर्द्व्यणुकादिभिस्त्र्यणुकाद्युत्पत्तेश्चानिवारणात् । न च तदानीं परमेश्वरस्य सिसृक्षाभावात्क्रियासंयोगद्व्यणुकाद्यनुत्पत्तिः । तदीयनित्यसर्वविषयेच्छायाः सर्वदा सिसृक्षारूपत्वादित्याशंक्य पूर्वपक्षमुपपादयति–तथा हीति ॥ 'प्राणिकर्मवशा' दित्येतत् काकाक्षिन्यायेनोभयत्रापि संबध्यते । ततश्च परमेश्वरेच्छायास्सिसृक्षात्वमपि सृष्ट्युन्मुखप्राण्यदृष्टोपहितत्वरूपमिति लभ्यते । एवं सांख्यमतापादितदूषणास्पर्शनात् परमाणुकारणवादो युक्त इति पूर्वपक्षमुपसंहरति–अत इति ॥ सूत्रे पूर्वसूत्रादसमञ्जसमित्यनुवर्तते । वाकारश्चार्थे वर्तमानोऽणु-

---

सू ॥ **अङ्गित्वानुपपत्तेश्च** ॥ ८ ॥ पुरुषस्याङ्गत्वेऽङ्गीकृते अङ्गमङ्गी समादाये'ति वाक्ये अङ्गित्वस्य प्राधान्यस्य उक्त्यनुपपत्तेश्च न पुरुषोपसर्जनकप्रकृतिकर्तृत्वपक्षे दृष्टान्तोऽस्तीत्यर्थः ॥ **इति पुरुषाश्माधिकरणम्** ॥ ४ ॥

**अथ अन्यथानुमित्यधिकरणम्** ॥ ५ ॥

अथ प्रधानोपसर्जनकचेतनकर्तृत्ववादिनां निरीश्वरसांख्यैकदेशिनां मतं निराकरोति—सू ॥ **अन्यथानुमितौ च ज्ञशक्तिवियोगात्** ॥ ९ ॥ एवं तर्ह्यचेतनोपसर्जनकपुरुषकर्तृकं जगदनुमीयते तत्राश्मानयनदृष्टान्तसंभवात्किमीश्वरेणेति प्रधानोपसर्जनकपुरुषकर्तृत्ववाद एव युक्त इति **पूर्वपक्षः। सिद्धान्तस्तु,** पुरुषस्य शरीरप्रेरणक्रियायां शरीरस्य सहकारित्वप्रकृतित्वाद्यनुपपत्तेः स्वतः पुरुषस्यासामर्थ्ये प्रकृतिशरीरव्यतिरिक्तस्यापि सहकार्यन्तरस्यापेक्षणीयत्वेनानवस्थापरिहाराय स्वतंत्र एव सहकारी कश्चिदंगीकरणीयस्स एव सकलश्रुतिस्मृतिसिद्ध ईश्वर इत्यंगीकर्तुं युक्तमिति । **सूत्रार्थस्तु,** चशब्देनाङ्गित्वानुपपत्तेरित्यस्य समाकर्षः । **अन्यथा**=पुरुषाश्मवदित्युक्तपक्षाद्वैपरीत्येन पुरुषाश्मवदचेतनसंबन्धाच्चेतनं प्रवर्तत इत्येवंरूपेण । **अनुमितौ**=अनुमानेऽपि तथा साध्यवैकल्यम् । कुतः । **अङ्गित्वानुपपत्तेः**=जीवस्याङ्गपदोक्तशरीरसंबन्धित्वायोगात् । सोऽपि कुतः । **ज्ञशक्तिवियोगात्**=अङ्गसंबन्धेन ज्ञस्य ज्ञातुर्जीवस्य सामर्थ्यायोगात् इति ।

सू ॥ **विप्रतिषेधाच्चासमञ्जसम्** ॥ १० ॥ **विप्रतिषेधात्**=एवं सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरमतमसमञ्जसमित्यर्थः ॥

**इत्यानन्दतीर्थमते अन्यथानुमित्यधिकरणम्** ॥ ५ ॥

**इति पूर्वपक्षे सिद्धान्त उच्यते—ह्रस्वपरिमण्डलाभ्यां महत्त्वदीर्घत्वयुक्तत्र्यणुकाणुत्वह्रस्वत्वयुक्तद्व्यणुकोत्पत्तिरुच्यते काणादमते। कथमेतत् संभवति ?। तथा हि—परमाणवः पारिमाण्डल्यपरिमाणयुक्ताः, न त्वणुपरिमाणयुक्ताः। द्वाभ्यां परमाणुभ्यां अणुपरिमाणरहिताभ्यामणुपरिमाणोपेतं द्व्यणुकमुत्पद्यत इत्यभ्युपगम्यते। तथा—ह्रस्वपरिमाणोपेतादीर्घपरिमाणरहितं द्व्यणुकम्। तादृशेभ्यस्त्रिभ्यो द्व्यणुकेभ्यो दीर्घपरिमाणोपेतमणुपरिमाणरहितं त्र्यणुकमुत्पद्यत इत्य-**

ह्रस्वद्व्यणुकवदिति दृष्टांतांतरसमुच्चयार्थः। एवं च ह्रस्वात्द्व्यणुकान्महतो दीर्घस्य त्र्यणुकस्योत्पत्तिवादवत् परिमण्डलात्परमाणोरणोर्ह्रस्वस्य द्व्यणुकस्योत्पत्तिवादवच्चान्यदपि वैशेषिकमतप्रक्रियासिद्धं सर्वमसमञ्जसमिति सूत्रार्थः।तत्र समुच्चयोपमया दृष्टान्तीकृतपरमाणुद्व्यणुकप्रक्रिययोरसामंजस्यमप्यत्रैवोपपादनीयं विवक्षितमित्यभिप्रेत्य तदुपपादयन्सिद्धान्तयति-ह्रस्वपरिमण्डलाभ्यामिति॥ महत्त्वदीर्घत्वयुक्तेति। नन्वेवं सति महद्दीर्घशब्दयोस्सामानाधिकरण्या'दान्महतस्समानाधिकरणजातीययो' रिति (पा०६.३.४६) सूत्रेण महादेव इत्यत्रेवात्वं स्यात्। न च वाच्यं महद्दीर्घशब्दौ'द्व्येकयो'रितिवत् भावप्रधानौ, तथैव ह्रस्वपरिमण्डलशब्दावपि तथा च ह्रस्वत्वगुणान्महत्वदीर्घत्ववत् पारिमण्डल्यादणुत्वह्रस्वत्ववच्चेति महद्दीर्घवद्वेत्यस्यार्थो विवक्षितः।अतोऽत्र द्वन्द्वसमास इति सामानाधिकरण्याभावान्नात्वप्रसङ्ग इति।ह्रस्वत्वपारिमाण्डल्याभ्यां महत्त्वाणुत्वोत्पत्तेर्वैशेषिकैरनंगीकृतत्वात् 'कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च मह'दिति कणादसूत्रे महत्वकारणानां परिगणितत्वात् समपरिमाणदृढसंयोगवत्तंत्वारब्धयोः पटयोर्मध्ये यदन्यतरस्मिन्महत्त्वमुत्कृष्टं तस्य कारणबहुत्वादुत्पत्तिः,समसंख्यदृढसंयोगवत्तन्त्वारब्धयोस्तु कारणमहत्त्वात्समपरिमाणसमसंख्यतन्त्वारब्धयोः प्रशिथिलावयवसंयोगरूपात्प्रचयादिति तैर्विभक्तत्वाच्च पारिमाण्डल्यस्य नित्यपरिमाणमात्रस्य चानारंभकताया मनःपरिमाणे गगनादिपरिमाणेषु च संप्रतिपन्नत्वेन क्वचित्पटादिपरिमाणे तंत्वादिसंख्याजन्यत्वस्य क्लृप्तत्वेन च द्व्यणुकपरिमाणे परमाणुद्वित्वं जनकं न तु पारिमाण्डल्यमिति तैर्व्यवस्थापितत्वाच्च। एवं तर्हि महत्वदीर्घत्वाधिकरणस्य त्र्यणुकस्यैकत्वेऽपि पदार्थतावच्छेदकभेदात् द्वन्द्वोऽस्त्विति चेन्न। पदार्थभेदं विना पदार्थतावच्छेदकमात्रभेदेन द्वंद्वस्य भाष्यकृता निराकृतत्वात्। 'चार्थे द्वन्द्वः'इति (पा०२.२.२९) सूत्रे हि भाष्यकृता 'याज्ञिकश्चायं वैयाकरणश्चे'त्यादिषु पदार्थतावच्छेदकभेदात् द्वंद्वमाशंक्य 'शेषो बहुव्रीहि'रिति (पा०२.२.२३) सूत्रतः शेष इत्यस्यानुवृत्तेः तस्य समानाधिकरणसमासविषयत्वेन शेषत्वाभावात्तदप्राप्तिरुपपादितेति चेदुच्यते।कानि चित् त्र्यणुकानि महांति कानिचिद्दीर्घाणीति त्र्यणुकव्यक्तिभेदविवक्षयेह द्वंद्वसमास आश्रीयते। यद्यपि सर्वाणि त्र्यणुकानि महान्ति दीर्घाणि च।महत्त्वदीर्घत्वयोः समनियतत्वात्। तथापि कानिचित्त्र्यणुकानि परितो द्व्यणुकसंयोगैरुत्पद्यन्ते कानिचित्तिर्यक्द्व्यणुकसंयोगैस्तत्राद्यानि द्वितीयापेक्षयामहान्ति द्वितीयान्याद्यापेक्षया दीर्घाणीति च प्रत्यययोग्यानि भवंतीति तथाभूतत्र्यणुकव्यक्तिद्वैविध्यापेक्षया द्वन्द्व उपपद्यते। यद्वा। महद्दीर्घशब्दौ महत्त्वदीर्घत्वपरौ। तदुपरि मतुप्प्रत्ययः न तु वतिप्रत्ययः। ततो 'महद्दीर्घव' दित्यनेन महत्वदीर्घत्वाधिकरणं त्र्यणुकमुच्यते। वाशब्देन चार्थेनाणुत्वह्रस्वत्वाधिकरणं द्व्यणुकमुच्यते।ततश्च ह्रस्वात्द्व्यणुकात् महद्दीर्घं त्र्यणुकमुत्पद्यते।

**भ्युपगम्यते । इदं सर्वमसमञ्जसमेव । तदभ्युपगतकारणगुणप्रक्रियाविरोधात् । अवयवाश्च स्वीयैः षड्भिः पार्श्वैः संयुज्यमानाः पृथुतरमवयविनमारभन्ते । परमाणूनां पार्श्वाभावात् पृथुतरद्रव्यारम्भकास्ते न भवेयुः । अतः परमाणुकारणवादो न युक्तः ॥**

परिमण्डलात्परमाणोः अणु ह्रस्वं द्व्यणुकमुत्पद्यत इत्येतदसमंजसमित्येतावदुच्यते न तु तद्दृष्टांतेन वैशेषिकमतसिद्धस्य कस्यचिदन्यस्यासामंजस्यम् । भाष्यमप्यस्मिन्नेवार्थे स्वारस्यवद्दृश्यते। 'अवयवाश्चे' त्यादिभाष्येण परमाणोर्द्व्यणुकोत्पत्तौ सूत्रकृता विवक्षितमसामंजस्यांतरमुच्यते न तु पूर्वप्रतिपादितस्यासामंजस्यस्य दार्ष्टान्तिकमसामंजस्यमुच्यत इति तत्रत्येन किंचेत्यर्थेन चकारेणैव स्पष्टम् । तदभ्युपगतेति । ननु, 'कारणगुणाः कार्ये गुणानारभन्त' इति वैशेषिकमर्यादा विशेषगुणविषयेति चेन्न । विशेषगुणत्वानिर्वचनात् । स्वाश्रयसमानाधिकरणद्रव्यविभाजकधर्मात्यंताभावसमानाधिकरणगुणावृत्तिगुणत्वव्याप्यजातिमत्त्वं तदिति चेत् । न । रूपरसस्पर्शाव्याप्तेः । तेषां नीलरूपत्वादिना विशेषगुणत्वमिति चेन्न । पृथिव्यादित्रयसाधारणस्य धवलरूपस्य विशेषगुणत्वाभावप्रसंगात् । तस्य च पाकजापाकजभास्वराभास्वरत्वेन पृथिव्यादिविशेषगुणत्वमिति चेन्न । किंचिद्धवले धवलतरे च पार्थिवद्रव्ये संयोज्य पेषणेनोत्पादितस्यातिधवलरूपस्य पृथिवीविशेषगुणत्वाभावप्रसंगात्तस्यापाकजाभास्वरस्य जलसाधारणत्वात् । न च किंचिद्धवलं धवलतरं च रूपद्वयमेव स्वाश्रयसंवलनदोषात्तदुभयविजातीयतया प्रतीयते न तु तत्र रूपांतरमुत्पद्यत इति वाच्यम् । अबाधितरूपांतरप्रतीत्यनुसारेण हरिद्राचूर्णयोरिव जलभूतलयोरिव च तयोरपि संयोजनेन रूपांतरोत्पत्तेरभ्युपगंतव्यत्वात् । न च तत्पाकजमिति वक्तुं शक्यम् । हिमजलेन पेषणे विरूपान्तरोत्पत्तिदर्शनात् उद्भूतोष्णस्पर्शतेजस्साध्यत्वात्पाकस्य । एवं दृढतरावर्त्तितमृदुतरस्पर्शतंतुसूत्रगतकठिनस्पर्शे च विशेषगुणत्वाभावप्रसंगो द्रष्टव्यः । तत्र पृथिवीविशेषगुणत्वप्रयोजकस्य पाकप्रयोज्यजातिविशेषवत्त्वस्याभावात् । न च बहिरिंद्रियव्यवस्थापकगुणत्वं विशेषगुणत्वमिह विवक्षितं तच्च चक्षुस्तैजसं गंधाव्यंजकत्वे सति रूपव्यंजकत्वात् सौरालोकवदित्यादिप्रकारेण यद्गुणव्यंजकतया बहिरिन्द्रियाणां भूतप्रकृतिकत्वमनुमेयं तत्त्वमिति वाच्यम् । अनुमानानामप्रयोजकत्वेन तैजसत्वाद्यसाधकत्वात् । न च सौरालोकादिषु रूपगुणमात्रव्यंजकत्वं तेजस्त्वावच्छेदेन गृहीतमिति कार्यकारणभावमूलस्तर्कोऽऽस्तीति वाच्यम् । सौरालोके तस्य उद्भूतरूपतेजस्त्वावच्छेदेन गृहीततया चक्षुषोऽप्युद्भूतरूपत्वसिद्धिप्रसंगात् । तस्मालोकसिद्धस्य विशेषगुणत्वस्याभावात् पारिभाषिकस्याप्यनुगतस्य निर्वक्तुमशक्यत्वात् कारणगुणप्रक्रिया गुणमात्रघटितेति भावः । षड्भिः पार्श्वैरिति । यथा दशदिक्संबंधिदशप्रदेशवन्तोऽङ्गुल्यादयः परस्परं संश्लेष्यमाणाः एकया महादिशा विदिक्द्वयेन चावच्छिन्नैः प्रत्येकं त्रिभिस्त्रिभिः प्रदेशैः संयुज्यन्ते एवं तन्तवोऽपि संश्लेष्यमाणाः प्रत्येकं संयुक्तसप्तपार्श्वयुक्ताः स्वाधिकपरिमाणं पटादि कार्यमारभंते । तथा निरवयवेषु परमाणुषु संयुज्यमानेष्वसंयुक्तप्रदेशासंभवात्तेषां स्वाधिकपरिमाणकार्यारंभकत्वं न स्यादित्यर्थः । ननु परमाणुभिर्द्व्यणुकानामारंभ इष्यते । तेष्विष्ट एव महत्त्वरूपस्य पृथुत्वस्याभावः । त्र्यणुकप्रभृतिषु तदुपपद्यत एव । तदारंभकेषु द्व्यणुकादिष्वव्याप्यवृत्तिसंयोगसंभवादिति चेन्न ।

तथापि द्व्यणुकपरमाण्वोरेवाणुत्वपारिमण्डल्यरूपपरिमाणविशेषाभावप्रसंगात् द्व्यणुकस्यापि परमाणुवदेव परिमण्डलत्वप्रसंगात् त्रिभिः परिमाणुभिरारब्धे त्र्यणुके महत्त्वाभावप्रसंगाच्च । न च द्व्यणुकैरेव त्र्यणुकमारभ्यते न परमाणुभिरिति नियन्तुं शक्यते । परमाणुषु द्वयोरिव त्रयाणामपि संयोगस्य संभवात्। नायं संभवति । तथा सत्येकैकस्मिन्परमाणावेकस्मिन्परमाणौ वा परमाणुद्वयसंयोगस्यांगीकर्त्तव्यत्वापत्तिः। निरंशपरमाणुसंयोगानां व्याप्यवृत्तितया मूर्त्तानां समानदेशताविरोधेन तदंगीकारायोगादिति चेन्न । द्व्यणुकत्रयेण त्र्यणुकोत्पत्त्यर्थमप्येकैकद्व्यणुकारंभकपरमाणुसंयोगवत्येव तदारंभकपरमाण्वंतरे तदनारंभकद्व्यणुकांतरांतर्गतपरमाण्वंतरसंयोगस्यांगीकर्त्तव्यत्वात् कारणाकारणसंयोगात् कार्याकार्यसंयोग इति त्वन्मते यदवयवावच्छेदेनावयविद्वयसंयोगस्तयोरवयवयोरपि संयोगावश्यंभावात्। ननु, त्रयाणां परमाणूनां संयोगसंभवेऽपि तेषां पुञ्जांतर्गततंतूनामिव संयोगमात्रं भवेत् न कार्यारंभक्षमसंयोगः। स तु तन्तूनां कुविंदव्यापारादिव परमेश्वरेच्छावशाद्द्वयोरेव भवति न त्रयाणामिति चेन्न । परमेश्वरेच्छा द्वयोर्भवति न त्रिष्वित्यत्र नियामकाभावात् । सन्तु तर्हि परमाण्वारब्धानि त्र्यणुकान्यणून्येवेति चेत्तथा सति कारणबहुत्वात्कार्ये महत्त्वमिति स्वाभ्युपगतप्रक्रियाविरोधापत्तेः । तर्हि परमाणुसंयोगानां व्याप्यवृत्तित्वेऽपि कारणबहुत्वादेव महत्त्वं स्यादिति चेन्न । कारणानां बहुत्वे समानेऽप्यसंयुक्तकारणप्रदेशपरिमाणतारतम्येन कार्येषु परिमाणतारतम्यस्य दृश्यमानतया तस्याप्यपेक्षितत्वात्। परस्परासंयुक्तकारणप्रदेशाभावे कार्ये कारणाधिकपरिमाणवत्त्वस्य दृष्टविरुद्धत्वात् । तस्मात् परमाणुजन्येषु त्र्यणुकेषु महत्त्वदीर्घत्वरूपः प्रथिमा नोपपद्यत इति दूषणं युक्तमेव। एवमेव द्व्यणुकजन्येष्वपि त्र्यणुकेषु प्रथिमा नोपपद्यते । द्व्यणुकानां परस्परसंयोगे तदवयवानामपि तदवश्यंभावेन षण्णामपि परमाणूनामेकपरमाणुमात्रत्वापत्तेः । तदाहुः—षट्केन युगपद्योगात्परमाणोष्षडंशता । षण्णां समानदेशत्वे पिण्डस्स्यादणुमात्रकः ॥ ' इति । परमाणुः प्रागाद्यूर्ध्वाधरदेशवर्त्तिभिः षड्भिः परमाणुभिस्संबध्यमानष्षडंशः प्राप्नोति । भिन्नदेशत्वात्संबंधानाम् । अथ समानदेशास्सर्वे संबंधाः, षण्णां परमाणूनां पिण्डः परमाणुमात्रः प्राप्नोतीत्यर्थः । समानमिदं दूषणं द्व्यणुकेभ्यः परमाणुभ्यश्च त्र्यणुकोत्पत्तौ । ननु, नानादिग्वर्तिनः परमाणवः मध्यगतेनैकेन परमाणुना कथं व्याप्यवृत्तिसंबंधं लभेरन् । न हि पूर्वापरपरमाण्वोस्तेन तदपरपूर्वभागावच्छेदेन संबंधः संभवतीति चेत् त्यज तर्हि परमाणोर्निरंशत्वाभिमानम् । सांशत्वमेवाभ्युपगम्य तत्संयोगस्याव्याप्यवृत्तित्वमुपपादय । तस्य सांशतायां तत्तदंशानामप्यारंभकत्वसिद्धये सांशत्वमित्यनवस्था प्रसज्येत । अतस्सांशत्वमपि तेषां स्वीकर्तुं न शक्यत इति चेत्तर्हि सांशत्वनिरंशत्वपक्षद्वयेऽपि समापतद्दोषं परमाणुकारणव्यसनमेव त्यक्त्वा सुखी भव । ननु, किमर्थं तत्त्यक्तव्यम् एकस्मिन्परमाणौ नानादिग्वर्त्तिपरमाणुसंयोगास्तत्तद्दिगवच्छेदेन उपपाद्यंत इति चेन्न । दिक्संयोगानामपि परमाणौ व्याप्यवृत्तित्वेन दिशां मूलाग्रवदव्याप्यवृत्तिसंयोगावच्छेदकत्वायोगात् । न च यथाकथंचिदवच्छेदकभेदसत्त्वमात्रेणाव्याप्यवृत्तित्वम् । तथा सति पृथिव्यां गन्धाधारत्वं पृथिवीत्वेनावच्छिद्यते स्पर्शाधारत्वमाकाशेतरभूतत्वेनेत्यवच्छेदकभेदसत्त्वेन गन्धादीनामप्यव्याप्यवृत्तितया संयोगाविशेषप्रसंगात् । ननु, तत्तत्परमाणुसंयोगावच्छेदेन दिक्संयोगा वर्त्तिष्यंत

पुनरनुपपत्तिमाह–

॥ सू ॥ उभयथाऽपि न कर्मातस्तदभावः ॥ ११ ॥

**अनुगताद्यकर्माभावादेव तत्कृताणुगतसंयोगाभावः। जीवादृष्टानां विपाकानपेक्षत्वे प्रागप्यणुगता कर्मोत्पत्तिः स्यात्। तदपेक्षत्वे न तत्कृतकादाचित्काणु-**

इति चेन्न। अन्योन्याश्रयापत्तेः। ननु, त्र्यणुकरूपकार्यलिंगेन द्व्यणुकपरमाण्वनुमानस्य प्रतिक्षेप्तुमशक्यतया त्र्यणुककारणत्वेन परमाणुद्व्यणुकेष्वव्याप्यवृत्तिषु तत्संयोगेषु चावश्यस्वीकर्त्तव्येषु कथंचिद्दिक्परमाणुसंयोगानामन्योन्यावच्छेदेनैव वृत्तिरभ्युपेयते इति चेत् यद्येवं किमित्यन्योन्याश्रयादबिभ्यदनवस्थाभयात् सांशत्वमत्याक्षीः। सांशत्वे हि वृक्षपक्षिसंयोगवदव्याप्यवृत्तित्वं दृष्टप्रकारेणैव सूपपादम्। निरंशत्वे त्वसंयुक्तप्रदेशावशेषसहिष्ण्वव्याप्यवृत्तित्वं कथंचिदप्युपपादयितुमशक्यमिति प्रथिमानुपपत्तिदूषणं तदवस्थमेव स्यात्। ननु, सांशत्वेऽप्यपर्यवसितानन्तावयवपरंपरया मेरुसिद्धार्थयोरनंतावयवारब्धत्वाविशेषात् समानपरिमाणत्वप्रसंग इति दूषणमस्तीति चेदुक्तमेवोत्तरम्। अत्र पक्षद्वयेऽपि दूषणसद्भावे परमाणुकारणवाद एव त्यक्तव्य इति। अपि च। सांशत्वे समापतद्दूषणमेवं परिहर्तुं शक्यम्। मेरुसिद्धार्थयोरनंतावयवारब्धत्वेऽप्यानंत्यविशेषात् परिमाणविशेष उपपद्यत इति। न हि पाद्मकल्पात्पूर्वं वाराहकल्पात्पूर्वं च कालानंत्ययोः पातालादूर्ध्वं ब्रह्मांडादूर्ध्वं च देशानंत्ययोश्च न तारतम्यम्। आनंत्ये विशेषसद्भावादेव चानंतक्षणघटितयोरवांतरकल्पमहाकल्पयोरनंतपरमाणुघटितयोरिक्षुक्षीरसमुद्रयोश्च तारतम्यम्। यदि तु परमाणोस्सावयवतायामनित्यत्वापत्त्या स्वाभ्युपगतमूलकारणत्वासिद्धिप्रसंगात् सांशत्वं नेष्यते तदा प्रथिमानुपपत्तिदूषणं वज्रलेपायत एवेति। अस्मिन्दूषणे सूत्रं चार्थेन वाकारेण कर्त्तव्यं ह्रस्वत्वाणुत्वद्व्यणुकसमुच्चयं नापेक्षते। किं तु ह्रस्वात् द्व्यणुकात् परिमण्डलात् परमाणोश्च द्व्यणुकपरमाण्वंतरासंयुक्तप्रदेशरहितान्महत्त्वेन दीर्घत्वेन च तदपेक्षयाधिकपरिमाणवत्त्र्यणुकमुत्पद्यत इत्येतद्यथैवासमञ्जसं तथान्यदपि वैशेषिककल्पितं सर्वमसमंजसमिति सूत्रार्थ इति तदर्थं वाकारः इवकारार्थो योजनीयः। किमन्यदसमञ्जसमित्याकांक्षायां तत्प्रपंचयितुमुत्तरसूत्राणि। पुनरनुपपत्तिमिति। दृष्टांतीकरणव्याजोद्घाटितानुपपत्तिव्यतिरेकेण दार्ष्टांतिकत्वेनापेक्षितामनुपपत्तिमाहेत्यर्थः॥ सू॥ उभयथापि न कर्मातस्तदभावः॥११॥ परमाणुषु संयोगोत्पत्तिसंभवमंगीकृत्य तत्संयोगस्याव्याप्यवृत्तित्वासंभवात् कार्ये प्रथिमासंभव उक्तः। इदानीं तस्या एवासंभव उच्यते। प्रलयकाले निश्चलाः परमाणवः संतिष्ठन्ते। सर्गाद्यकाले प्राणिनां भोजकादृष्टवशात् तेष्वाद्यं कर्म जायते। ततस्तेषां संयोगे सति द्व्यणुकादिक्रमेण जगदुत्पत्तिरिति हि वैशेषिकैरिष्यते। तददृष्टं विपाकानपेक्षमाद्यं कर्म जनयति तदपेक्षं वा। उभयथापि तत्ततो भवितुं नार्हति। ततः प्रलयकाल इव परमाणवस्सदा निश्चला एवावतिष्ठेरन्निति तेषां संयोगो न संभवतीति सूत्रार्थः। तत्रानपेक्षत्वपक्षे कर्मासंभवमुपपादयति–जीवादृष्टानामिति। यदि विपाकानपेक्षमदृष्टं कर्मोत्पादने समर्थं स्यात् तदा प्रलयेऽपि अदृष्टसत्वात् कर्मोत्पत्तिः स्यात्। न च तदा त्वया सेष्यते। अतो विपाकानपेक्षात्कर्मणः कालांतरेऽपि कर्म न स्यादिति भावः। द्वितीयपक्षे तदसंभवमुपपादयति— तदपेक्षत्व इति। हरीतक्यादेरौषधस्य धातुसाम्यादिकार्योपयोगिविपाक इवादृष्टस्य

गतकर्मसंभवः । विपाको नामादृष्टगतः कश्चिद्धर्मो न जायते । किंतु कर्मविधिना कालविशेषनियतफलदातृत्वं यस्य कर्मणश्चोदितं तस्य तत्कालागम एव विपाकः । अनियतकालविशेषाणां कर्मणां प्रबलकर्मान्तरप्रतिबन्धाभावो वा विपाकः । अदृष्टानि तत्तत्कर्मानुगुणफलदानस्वभावानि । अतोऽनन्तैरात्मभिर्विविधका-

शास्त्रीयफलोपयोगिविपाकः परिणतिविशेषरूपः बुद्ध्यवस्थाविशेषरूपमदृष्टद्रव्यमिति पक्ष इव परपक्षे न संभवतीति तत्पक्षे तस्यात्मगुणविशेषस्यापरिणामित्वादित्याह—विपाको नामेति। न जायत इति । परपक्ष इति शेषः।कस्तर्हि परपक्षे कर्मविपाकशब्दार्थो वक्तव्य इत्याकांक्षायामाह—किंत्विति ॥ यस्य कर्मण इति । यथा ब्रह्महननस्य तद्देहपातानन्तरं कल्पपर्यंतो यातनानुभवः ततः परं सहस्रसु जन्मसु क्षयरोगादिरूपतच्चिह्नानुवृत्तिरिति चोदितं तस्य तत्कालागमः विपाक इत्यर्थः । अदृष्टानीति। यान्यदृष्टानि नियतकालफलकर्मजन्यानि तानि स्वकारणकर्मानुगुण्येन तत्कालागमं प्रतीक्ष्यैव फलदायकानि न तु ततः पूर्वम्। यान्यदृष्टानि प्रबलकर्मांतरप्रतिबद्धयस्वभावकर्मजन्यानि तानि तदानुगुण्येन प्रतिबन्धकापायं प्रतीक्ष्यैव फलदायकानि न तु तत्सत्त्वेऽपीत्यर्थः। यद्यपि प्रतिबन्धकापायप्रतीक्षणं नियतकालफलकर्मजन्यादृष्टानामप्यविशिष्टं तद्विरोधिफलकप्रबलकर्मांतरप्रतिबन्धे सति फलकालागमे सत्यपि फलोदयासंभवात् अनियतकालफलानामेव प्रतिबंधककर्मांतरसंवलनमिति नियंतुमशक्यत्वात् । तथाप्यनियतकालफलानां प्रतिबन्धकापायमात्रस्य प्रतिक्षणं नियतकालफलानां तु फलकालागमस्यापीत्यभिप्रायेणेत्थं विभागः कृतः । अस्त्वेवं को दोष इत्याकांक्षायामाह—अतोऽनन्तैरिति । नानाकालानुष्ठितानां विचित्रप्रतिबन्धकप्रतिबद्धयानां चानंतप्राणिकर्मणां फलकालागमयौगपद्यं प्रतिबन्धकापाययौगपद्यं च कदापि न मिलतीत्यर्थः । न च प्रतिप्राण्यनादिभवसंचितानामनंतानां कर्मणां सत्त्वात् तेष्वेकैकस्य कर्मणः फलकालागमरूपोऽप्रतिबन्धत्वरूपश्च विपाकस्सर्गाद्यकाले युगपन्मिलेदिति वाच्यम् । तथा कर्मानंत्यस्य प्रलयकालेऽप्यविशिष्टत्वेन तदानीमपि तन्मेलनप्रसंगात् । सिद्धांते तु बुद्धिवृत्तिभेदस्यादृष्टस्य कार्यानुकूलपरिणतिविशेषो विपाकः । स चेतनाधिष्ठानसाध्यसंस्काररूपो न स्वयमेव भवति । न च तेनैव द्रव्येण कर्तुं शक्यते । यथोक्तम्—'पाकार्हमपि तत्पक्तुं नेशत्यात्मानमात्मना । धर्मस्सामान्य एवायं सर्वस्य परिणामिनः ॥' इति। स तु भिषग्व्यापारेणौषधानामिव परमेश्वरसंकल्पेनादृष्टानां क्रियते । यद्यपि प्रलयकालेऽपि प्रतिप्राणि कानिचिददृष्टानि प्राप्तफलकालानि भवेयुः तथापि सर्गकालरूपेऽहनि निरंतरगतागतखिन्नानां प्राणिनां तत्समानपरिमाणं कालं शर्वरीरूपं कृत्वा तस्मिन् तान् महासुषुप्तिं प्रापय्य विशिश्रमयिषोः परमेश्वरस्येच्छया तानि प्रतिबद्धशक्तिकानि अपक्वान्येव सन्ति । यथा सर्गाद्यकाले पक्वानि भवन्ति तथा परमेश्वरेण पाच्यमानान्यवतिष्ठंते । एवं च केषुचित् कर्मविधिषु नियतफलकालश्रवणमौत्सर्गिकं सर्गप्रलयकालमर्यादाश्रुत्यनुसारेण प्रतिबंधकरहितकालविषयमवतिष्ठते । प्रळयाव्यवहितपूर्वकाले कृताश्वमेधब्रह्महननादिकस्य प्रळयारंभे तद्देहपाते सत्यपि तदनंतरमेव तत्फलानुभवाभावेन सत्यपि किंचित्कर्मफलकालागमे तद्विरोधिफलकप्रबलकर्मान्तरप्रतिबन्धे सति तत्फलानुभवाभावेन च तथोत्सर्गापवादमर्यादाकल्पनस्यावश्यकत्वादिति सर्वमुपपद्यते । न चैवं परपक्षेऽप्युपपत्तिश्शंकनीया। तत्पक्षे हि प्रळये सूक्ष्मभावः

कस्य कारणस्य वैकल्येनोपपादनीयः।न तावददृष्टविपाकस्य।तत्पक्षे फलकालागमप्रतिबन्धककर्माभावसाहित्यस्य विपाकशब्दार्थत्वात् तस्य सर्गकाल इव प्रळयकालेऽपि अनंतप्राणिगतानंतकर्ममध्ये केषुचित्कर्मस्ववर्जनीयत्वात् । नापि परमेश्वरसिसृक्षायाः । नित्यसर्वविषयायाः तदिच्छायाः कदापि सिसृक्षारूपत्वानपायात् सृष्ट्युपयोग्यदृष्टविपाकोपधानरूपस्य पारिभाषिकसिसृक्षात्वस्यापि तस्यां प्रळयसाधारणत्वात् । न च प्रळयकालांतर्गतिरहितः फलकालागमः प्रतिबन्धकापायश्च विपाकः, अतोऽदृष्टविपाकस्य तदुपहितपरमेश्वरेच्छारूपसिसृक्षायाश्च वैकल्यं वक्तुं शक्यमिति वाच्यम् । केषांचित् कर्मणां फलकालागमप्रतिबन्धकाभावयोस्सदातनत्वेन परपक्षे सर्वदा सृष्टिप्रसक्त्या प्रलयस्यैवानवकाशात् । न च सिद्धान्त इव परपक्षे परमेश्वरेच्छया प्रलय इति वक्तुं शक्यते । वैषम्यात् । सिद्धान्ते पारमेश्वरी जगत्प्रविलिलापयिषारूपेच्छा चिच्छक्तिपरिणतिविशेषत्वात्कादाचित्की तदाविर्भावदशायां तद्विरोधिनी तदीया प्राण्यदृष्टविपाचयिषा न प्रवर्तत इति तदानीमदृष्टानां विपाकोऽपि न भवति । अतस्तदानीं प्रलयः प्रवर्तत इति युज्यते । न तु परपक्षे । तत्पक्षे हि नित्यसर्वविषया परमेश्वरेच्छा सर्वदा प्रविलिलापयिषैव । न च तया कर्मणां फलकालागमो वा भोगादिना कर्मरूपप्रतिबन्धकाभावो वा भवन्निरोद्धुं शक्यते । न च सिसृक्षायामदृष्टविपाकोपहितत्वं तत्प्रविलिलापयिषायां तदनुपहितत्वं विशेषणं वक्तुं शक्यते।केवलफलकालागमप्रतिबन्धकाभावरूपविपाकोपहितत्वस्य सर्वदा सत्त्वेन तदनुपहितस्य कदाप्यसंभवात् प्रलयकालांतर्गतिराहित्यविशेषिततदनुपहितत्वस्यान्योन्याश्रयेण निवेशयितुमशक्यत्वात् । न च यस्मिन्कालविशेषे वस्तुतः प्रळयोऽनुवर्तते तदंतर्गतिराहित्यं स्वरूपतो विशेषणम् । प्रळयाधिकरणत्वातिरेकेण तत्काले कालांतरव्यावृत्तविशेषाभावात् । न च सूर्यास्तमयादिस्तदुदयावसानः कालो रात्रिरिति मध्यगतां प्राणिनां सुषुप्तिमनपेक्ष्य तदाद्यंतगतधर्मद्वयावलंबनेन रात्रेरिव प्रलयमनपेक्ष्य तदाद्यन्तगतयत्किंचिद्धर्मद्वयावलम्बनेन तस्य कालस्य कालांतरव्यावृत्तं निर्वचनं संभवति । पारमेश्वरसकलसंजिहीर्षासिसृक्षावलंबनं तु निरस्तप्रायम् । एतेन यदक्षपादसूत्रेषु 'ईश्वरः कारणं पुरुषकर्माफल्यदर्शना' दिति ईश्वरस्य कारणत्वं प्रतिज्ञाय 'न पुरुषकर्माभावे फलानिष्पत्ते' रिति तत्र बाधकहेतुमाशंक्य 'तत्कारितत्वादहेतु' रिति सूत्रेण तस्य हेतुत्वं निरस्तम् । यच्च तन्न्यायवार्त्तिकादिषूपपादितं'न ब्रूमः कर्मानपेक्ष ईश्वरः कारणमिति अपि तु कर्म पुरुषस्येश्वरोऽनुगृह्णाति कोऽनुग्रहार्थः यद्यथाभूतं यस्य च यदा परिपाककालः तत्तथा च तदा च विनियुंक्ते'इत्यादिना तत्सर्वं प्रत्याख्यातम् । ईश्वरस्य फलकालागमादिरूपं कर्मपरिपाकं प्रतीक्ष्य कर्मविनियोक्तृत्वे प्रळयेऽपि केषांचित् कर्मणां परिपाकस्यावर्जनीत्वेन तदानीमपि सृष्टिप्रसंग इत्यादिपूर्वोक्तदूषणानतिवृत्तेः । स्यादेतत् । प्रळये सर्गव्यतिरेकः तदानीं सर्गोपयोगिन्यास्सिसृक्षाया व्यतिरेकादुपपद्यते । न हि कार्येच्छा स्वयं यदायदा वर्त्तते तदातदा कार्यं जनयितुमीष्टे । किं तु यत्कालावच्छिन्नकार्यविषया सा तस्मिन्नेव काले । अत एव यौवनकालमारभ्यानुवृत्तापि वार्धके तीर्थान्यटानीतीच्छा वार्धक एव तीर्थाटनं जनयति । ईश्वरेच्छा च कालविशेषावच्छिन्नसर्गविषया अस्मिन्काले सृजेयमिति । अतः प्रळयेऽनुवर्त्तमानापि सा न तदानीं सर्गं जनयतीति चेदुच्यते । ईश्वरस्य कस्मिन्काले सृजेयमितीच्छा।न खल्वखण्डकालस्तत्र विशेषणम्।प्रळयेऽपि

**लफलदायित्वेनानुष्ठितानामेकदैकरूपविपाको न संभवति । अतः परमाणुकारणवादो न युक्त एव ॥**

सर्गानुवृत्तिप्रसंगात् । न च नित्यकालपरिणतिभेदाः क्षणलवनिमेषादयः कालविशेषा इति सिद्धांतपक्ष इव परपक्षे स्वाभाविकः कालविशेषोऽस्ति । न च सर्गाद्यकाले सूर्यक्रियादयः सन्ति, यदुपाधिकस्तस्मिन्काले विशेषस्तदिच्छाविषयो भवेत् । ननु, पूर्वसर्गकालसमानपरिमाणत्वरूपः पुनस्सर्गकाले विशेषस्तदिच्छाविषयोऽस्तु । ततश्च पूर्वसर्गो यावत्कालमनुवृत्तः तावत्कालसमानपरिमाणं कालं प्राणिनो विश्रमय्य पुनस्तावत्कालसमानपरिमाणं कालं सृजेयमिति सिसृक्षाशरीरं भवति । न च सर्गेच्छाकर्मविपाकयोस्सर्वदा सत्त्वेन पूर्वसर्गानुवृत्त्यविराम एव प्रसज्यते, अतः पूर्वसर्गो यावत्पर्यंतमनुवृत्त इत्यवधिक्रोडीकारो न संभवतीति वाच्यम् । पूर्वसर्गप्रवाहस्यानादित्वेन तदानीमपि तत्पूर्वसर्गसमानपरिमाणं कालं सृजेयमिति तदिच्छावशादेव सर्गकालनियमोपपत्तेः । न च तत्तत्सर्गाद्यकाले तत्तत्पूर्वकल्पकालपरिमाणविषयत्वं क्रमिकं सदा सर्वविषयायामिच्छायां न संभवतीति वाच्यम् । सामान्यतः पूर्वकल्पसमानपरिमाणं कालं पुनस्सृजेयमित्येकरूपाया एव सिसृक्षायास्सर्वकल्पानुयायित्वसंभवात् इति चेन्मैवम् । किं पारमेश्वरी सिसृक्षा पूर्वकल्पसमानपरिमाणं कालं सृजेयमित्येकेनैव रूपेण द्विपरार्द्धात्मककल्पमध्यसृज्यसर्ववस्तुसृष्टौ कारणमुत प्रतिवस्त्विदमिदानीं सृजेयमिदमिदानीमिति व्यवस्थितेन रूपांतरेणापि तत्तद्वस्तुसृष्टौ कारणम् । आद्ये प्रतिकल्पमेक एव हिरण्यगर्भः एक एवेंद्रः अष्टावेव वसवः एकादशैव रुद्रा इत्यादिव्यवस्था न स्यात् । न ह्यसंख्येयु ब्रह्मेंद्रवसुरुद्रमरुत्साध्यादिपदप्रापकादृष्टवत्सु नियतसंख्यानामेव तत्तत्पदप्रापकादृष्टस्य फलकालागमरूपः प्रतिबन्धकाभावरूपो वा विपाको भवतीति नियंतुं शक्यते । द्वितीयकालोपाधीनां सृष्टिर्न सिध्येत् । अस्मिन्कालविशेषे इदं सृजेयमिति तत्र सिसृक्षाशरीरनिरूपणार्थस्य सृज्यव्यतिरिक्तस्य काले विशेषकान्तरस्याभावात् । न च कालोपाधिव्यतिरिक्तेष्वेव निरुक्तेन रूपांतरेणापि सिसृक्षा कारणम् । कालोपाधिषु तु पूर्वकल्पसमानपरिमाणं कालं सृजेयमिति सामान्यरूपेणैव सा कारणमिति वाच्यम् । सर्वेषामपि सृज्यानां स्वस्वकालपरिच्छेदकत्वेन कालोपाधिव्यतिरिक्तस्य सृज्यस्याप्रसिद्धेः । न हि तपनपरिस्पन्द एव स्वकालस्यावच्छेदको नान्य इति नियंतुं शक्यते । 'हिरण्यगर्भस्य कालो महाकल्पः मनोः कालो मन्वंतर'मित्यादिपौराणिकप्रसिद्ध्या च हिरण्यगर्भादीनां कालावच्छेदकत्वमवश्याभ्युपगंतव्यम् । तपनपरिस्पन्दमात्रस्य कालावच्छेदकत्वे च कस्मिन्काले तपनं सृजेयमिति तत्सिसृक्षा भवेत् । तत्रापि सिसृक्षायास्सामान्यरूपेणैव कारणत्वे तत्पदप्रापकानेकादृष्टविपाकयौगपद्ये च युगपदनेकतपनसृष्टिप्रसंगो दुर्वार इत्येषा दिक् ॥ तस्मात् सिसृक्षायां विशेषकल्पनया सृष्टिनियमोपपादनासंभवात् कर्मविपाकव्यवस्थयैव सृष्टिप्रळयव्यवस्था वक्तव्या। तत्र यदि प्रतिप्राणि कर्मानंत्यात् सर्गाद्यकाले सर्वप्राणिकर्मविपाकयौगपद्यं समर्थ्येत प्रळयेऽपि तत एव तत्प्रसज्येतेति तत्परिहाराय प्रलये तदसंभवस्य समर्थनीयत्वात् । तथैव सर्गाद्यकालेऽपि तदसंभवः स्यादिति सर्वप्राण्युपभोगार्थमहाभूतसृष्ट्युपयोगिपरमाणुष्वाद्यं कर्म न स्यादिति भावः । ननु, परमाणुकारणत्वानुपपत्तिप्रदर्शनप्रस्तावे समवायाभ्युपगमप्रयुक्तदोषवर्णनमसंगतमित्याशंक्य तदपि तदनुपपत्तिपर्यवसायीत्यवतारयति—

इयं चात्रानुपपत्तिरित्याह—

॥ सू ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥१२॥

**समवाय इति संबन्धोऽभ्युपगम्यते । अत एवासमञ्जसमेतत् । कथम् ? समवायस्यापि जातिगुणादेरिवापृथक्सिद्धहेत्वपेक्षासाम्यादनवस्थानात् । अतः काणादमतमसमञ्जसम् ॥**

---

**इयं चेति** ॥ अत्र पूर्ववाक्यनिर्दिष्टे परमाणुकारणवादे ॥ सू ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः॥१२॥एतत्परमाणुकारणत्वम् । ननु, समवायाभ्युपगमेन परमाणुकारणत्वे किं हीयते इति पृच्छति—**कथमिति** ॥ **समवायस्यापीति** । अयमाशयः। परमाणुद्व्यणुकादिसमवायिकारणत्वेन जगन्मूलकारणमभ्युपगम्यते । समवायिकारणस्य च यत्समवेतं कार्यमुत्पद्यते तत्त्वमिति लक्षणमुच्यते। तत्र समवायः कार्यस्य विशेषणम्। अयुतसिद्धविशेषणेषु जातिगुणादिष्वयुतसिद्ध्युपपादकस्समवायोऽभ्युपगम्यत इति सवमायस्याप्ययुतसिद्ध्युपपादकस्समवायोऽभ्युपगम्यत इति समवायस्याप्ययुतसिद्ध्युपपादकसंबधापेक्षा समाना । तत्साम्ये सत्यपि संबन्धान्तरं नाभ्युपगम्यते । अतः संबंधरहितस्य समवायस्य कार्येऽवस्थितिर्न संभवतीति परप्रक्रिययैव द्व्यणुकस्य परमाणुसमवायवत्त्वाभावात् न तस्य समवायिकारणमिति तन्मतमसमंजसमिति । ननु, कार्यस्वरूपमेव कारणसमवायस्य संबंधः स्यादिति चेत् किं संबंधिस्वरूपमपि संबन्धो भवितुमर्हति । अर्हत्येवाभावादिष्वभ्युपगम्यते चेति चेत् किमर्थं तर्ह्यवयवगुणक्रियाजातीनां तद्वत्सु समवायः कल्प्यते। तेषामपि हि संबंधस्तद्वतां स्वरूपमेवेति वक्तुं शक्यते । संबंधिस्वरूपाणामनंतत्वा लाघवेन सर्वानुगत एकः समवायः कल्प्यत इति चेन्न । एकस्य अनेकेषां वा कल्पनीयत्वे खलु लाघवादेकस्य कल्पनम्। इहानेकेषां क्लृप्तत्वात् तैरुपपन्ने प्रयोजने किमर्थमेकस्यापि कल्पनम्। नन्ववयव्यादीनां क्लृप्तत्वेऽपि तेषु संबधत्वं कल्पनीयम् । यद्यपि समवायेऽपि तत्कल्पनीयम् । तथापि समवायपक्षे समवायस्तद्वतं संबंधत्वं चेति द्वयमेव कल्पनीयम् । स्वरूपसंबंधपक्षे तु अवयव्यादिस्वरूपानुगतस्य एकस्य संबन्धत्वस्यासंभवादनन्तानि संबंधत्वानि कल्पनीयानीत्यस्ति समवायपक्षे लाघवमिति चेन्न। अवयव्यादिषु तत्तदभावं प्रति संबंधत्वस्यापि क्लृप्तत्वात्। तेष्ववयवादिनिरूपितसंबन्धत्वक्लृप्तिर्नास्तीति तान्यनंतानि कल्पनीयानीति चेत् किं निरूपकभेदेनापि संबधत्वं भिद्यते? भिद्यत इति चेत् एवं तर्हि समवायेऽपि तान्यनंतानि कल्पनीयानि समवायश्च कल्पनीय इति समवायपक्ष एव गौरवं स्यात् । ननु, अवयवगुणक्रियाजातीस्तद्वतश्चायुतसिद्धत्वेन क्रोडीकृत्यायुतसिद्धनिरूपितसंबंधत्वमेकमेव समवाये कल्प्यत इति चेत् तर्हि तेन ताः क्रोडीकृत्य तत्स्वरूपेष्वेव संबंधत्वमेकमंगीकुर्वन् समवायकल्पनागौरवं परिहृत्य सुखमास्व । पक्षद्वयेऽपि हि प्रतियोगिनामनुयोगिनां चायुतसिद्धत्वेन क्रोडीकारस्तुल्यः। समवायपक्षे तत्कल्पनागौरवमतिरिच्यते । एतेन स्वरूपसंबन्धस्थले संबन्धिनोर्मध्ये नैकस्य संबंधत्वम्। विनिगमनाविरहात्। नापि द्वयोरपि प्रत्येकम्। गौरवात्। किं तु तदुभयसमुदायस्य व्यासज्यवृत्ति परस्परप्रतियोगिकमेकमेव तत्। एवं चाभावाधिकरणादिस्वरूपद्वये संबन्धत्वस्य क्लृप्तत्वेऽप्यवयवावयव्यादिस्वरूपद्वये तन्न क्लृप्तमित्यपि शंका निरस्ता। अक्लृप्तत्वस्य क्लृप्तयोस्समवायतद्गतसंबन्धत्वयोः कल्पनादेकस्यावयवात्रयव्यादि-

स्वरूपद्वयगतस्य संबंधत्वस्य कल्पने लाघवस्य प्रतिष्ठितत्वात्। वस्तुतस्तु, स्वरूपद्वयगतमेकं संबंधत्वमिति न युज्यते आधाराधेयव्यवस्थित्यसिद्धिप्रसंगात्। किं तु भूतलादिष्वभावादिनिरूपितमाधारत्वरूपं संबधत्वमन्यदभावादिषु भूतलादिनिरूपितमाधेयत्वरूपं तदन्यदित्येवास्थेयम्। एवं तर्ह्यवयवावयव्यादिस्वरूपेषु संबन्धत्वकल्पने गतमयुतसिद्धतया क्रोडीकारेणावयवादिष्ववयव्यादिनिरूपितमाधारत्वरूपमवयव्यादिष्ववयवादिनिरूपितमाधेयत्वरूपमिति सर्वत्र निरूपकभेदेन भिन्नभिन्नस्यैव संबंधत्वस्य वक्तव्यत्वादिति चेत्सत्यम्। समवायपक्षेऽपि ते न गतमेव। समवायेऽपि हि अवयवादिनिरूपितमाधारत्वरूपं संबन्धत्वमन्यदन्यच्चावयव्यादिनिरूपिताधेयत्वरूपमित्यंगीकर्त्तव्यत्वात्। न ह्याधाराधेयव्यवस्थितिस्समवायपक्षेणोपपादनीया। यद्युच्येतायुतसिद्धमात्रनिरूपितं समवाये संबन्धत्वमेकमेव। आधाराधेयव्यवस्थितिस्तु भूतलाभावादिष्विव स्वरूपसंबधेनोपपाद्यते। एवं च वायो रूपसमवायसत्त्वेऽपि रूपाधारत्वलक्षणस्वरूपसंबंधाभावादेव तत्र रूपवत्त्वप्रतीत्यभावः न तु समवायस्य वायुवृत्तित्वावच्छेदेन रूपाधारत्वात्मकरूपसंबंधत्वानधिकरणत्वादिति तदा समवायसिद्धिप्रत्याशा समूलकाषं कषिता स्यात्। अवयवावयव्यादीनामाधाराधेयभावप्रत्ययनिर्वाहकत्वेन हि तत्सिद्धिरुक्ता काणादसूत्रे। 'इहेदमिति यतः कार्यकारणयोस्समवाय'इति। तस्य चेत् स्वरूपसंबंधेन निर्वाहः का तत्सिद्धिप्रत्याशा। स्यादेतत्। इह सूत्रे वर्णितप्रत्ययनिर्वाहकत्वेन समवायसिद्धिरुक्तेति सत्यम्। न तु तन्निर्वाहकत्वं विषयतया विवक्षितम्। तन्मते समवायस्याप्रत्यक्षत्वात्। किं तु कारणतया। अवयवगुणक्रियादिविशिष्टबुद्धीनामनुगतकारणापेक्षायामनुगतं किंचित्तत्कारणं सिध्यति स समवाय इति। मैवम्। अवयवादिविशिष्टबुद्धीनां स्वयमननुगतत्वेनानुगतकारणापेक्षत्वाभावात् विशिष्टबुद्धित्वेनानुगमोऽस्तीति चेत् न। दण्डी पुरुषः घटस्य ज्ञानं घटस्याभावः इत्यादिषु द्रव्यविषयप्रतियोग्यादिविशिष्टबुद्धिषु तस्यातिप्रसक्तत्वात्। ननु, स्फुटतरविवेकरहितसंबन्धिद्वयगोचरविशिष्टप्रत्यक्षत्वेन तासामनुगमोऽस्तीति चेत्। तर्हि स्फुटतरविवेकरतित्वेनानुगतीकृतानामवयवावयव्यादीनामेव तत्र कारणत्वमस्तु। कृतमतिरिक्तसमवायकल्पनया। अभावाधिकरणयोर्विशिष्टबुद्धावतिप्रसक्तश्चेदमवच्छेदकं तथा पीतं सुवर्णमिति सुवर्णतदुपष्टंभकविशिष्टबुद्धावपि। ननु, द्रव्यादिविषयविशिष्टबुद्धिसाधारण्येन प्रत्यक्षविशिष्टबुद्धित्वमात्रावच्छेदेनानुगतं कारणमन्विष्यते अनुगतकार्यस्यानुगतकारणनियम्यत्वात्। तच्च नित्यत्वादेकत्वाच्च सर्वत्र संभवन् समवाय एव कल्प्यते। विषयभावं विनापि सर्वासु तासु कारणत्वसंभवात्। न च प्रमेयत्वादयः सन्ति परश्शतं धर्माः तेषामन्यतमस्यात्रानुगतकारणत्वसंभवे कुतस्तदतिरिक्तस्य समवायस्य सिद्धिः स्यादिति वाच्यम्। प्रत्यक्षविशिष्टबुद्धित्वावच्छेदेन लाघवादेकस्य कारणस्यानुमानतस्सिद्धौ प्रमेयत्वादिषु विनिगमकाभावेन तदतिरिक्तस्य तस्य सिद्धेः फलमुखगौरवस्यादोषत्वादिति चेन्न। लाघवादैक्यसिद्धेरीश्वरानुमाननिरासे प्रतिक्षिप्तत्वादिह संयोगस्यानुगतकारणस्य संभवाच्च। सन्ति हि चाक्षुषादिविशिष्टप्रत्यक्षेषु ग्राह्यगुणाश्रयतत्तद्द्रव्येन्द्रियसंयोगाः कारणत्वेन क्लृप्ताः। शब्दप्रत्यक्षेऽप्यस्ति श्रोत्रमनस्संयोगः तथाभूतः। तेषामेव संयोगत्वेनास्तु तत्रानुगतकारणता। क्लृप्तकारणेष्वेवावच्छेदकांतरेणापेक्षितकारणत्वांतरकल्पने लाघवात्। अत एव विनिगमनाविरहोऽपि

निरस्तः । निर्विकल्पकसाधारणास्ते विशिष्टप्रत्यक्षत्वावच्छेदेन न कारणमिति चेत् तर्हि तत एव समवायोऽपि न भवेत् । यदि समवायनिष्ठकारणता निर्विकल्पकव्यावृत्ता कल्प्यते तदा तेषु संयोगत्वावच्छिन्नकारणतापि तथैव कल्प्यताम्। वस्तुतस्तु, विशिष्टज्ञानत्वं विशेषणज्ञानकार्यतावच्छेदकं जन्यप्रत्यक्षत्वमिन्द्रियकार्यतावच्छेदकमित्यवच्छेदकांतरोपपन्नकार्यताधिकरणवृत्तित्वान्नीलघटत्ववदर्थवशसम्पन्नं जन्यविशिष्टप्रत्यक्षत्वं न कार्यतावच्छेदकमिति न तदवच्छेदेनानुगतकारणापेक्षास्ति।एतेन तन्तुकपालादिनाशे तन्निष्ठावयविगुणक्रियादिकं यन्नश्यति तत्र तन्निष्ठावयव्यादिनाशत्वेन कार्यतावच्छेदेऽननुगमः तत्संबंधिनाशत्वेन तदवच्छेदे तत्संयुक्तस्य तृणादेरपि नाशप्रसंग इति तावदनुगमकसंबन्धविशेषापेक्षायां यस्य संबन्धविशेषस्य तत्र कार्यतावच्छेदके प्रवेशस्स समवाय इत्यपि निरस्तम् । समवायांगीकारेऽपि तन्तुनाशे तंतुसमवायवतामंशूनां नाशप्रसंगानिवारणात् । न च तंतुसमवायवत्त्वे सति तदाधेयत्वरूपं तन्तुसमवेतत्वमवच्छेदके निवेशनीयम् । तथापि तंत्वाश्रिततृणादिनाशप्रसंग इत्यतिप्रसंगतादवस्थ्यात् समवायस्यैकत्वेन तन्तुसमवायस्य तृणेऽपि सत्त्वात्समवायसंबन्धेनाधेयत्वं विवक्षितम् । तृणादिकं तु संयोगसंबंधेन तन्त्वाधेयमिति चेन्न । संयोगस्य समवायस्य वा तृणादिस्वरूपात्मकाधेयत्वसबंधाप्रयोजकत्वात् अयुतसिद्धाधेयत्वस्यैवाक्लिष्टस्य कार्यतावच्छेदके निवेशयितुं युक्तत्वाच्च । न च तथा सति तंतुनाशे तदयुतसिद्धाधेयस्य पटध्वंसादेर्नाशप्रसंगः । परपक्षेऽपि तन्तुसमवेतजात्यादिनाशप्रसंगतौल्यात् । तन्तुनाशे तत्समवेतस्य कार्यस्य नाश इति नियम इति चेत्तर्हि तन्नाशे तदयुतसिद्धाधेयस्यानित्यस्य नाश इति नियमोऽस्तु। न च ध्वंसनाशेनापि किंचिदनिष्टमापद्यते । प्रागभावध्वंसस्य घटस्येव तद्ध्वंसस्यापि ध्वंसोपपत्तेः । घटतद्ध्वंसयोरुभयोरपि प्रागभावध्वंसत्वांगीकारेण प्रागभावस्यानुन्मज्जनसमर्थने घटतद्ध्वंसतद्ध्वंसपरंपराया घटध्वंसत्वांगीकारेण घटानुन्मज्जनं समर्थयेमहि। तस्मात् स्वरूपसंबधांगीकारे समवायापलापप्रसंगात् समवायमभ्युपगच्छता स्वरूपसंबन्धस्त्यक्तव्य इति समवायस्य कार्ये वृत्त्यभावेन यत्समवेतं कार्यमुत्पद्यत इति लक्षणासंभवात्तदनुसारेण परमाणुद्व्यणुकादि कारणमित्येतदसमंजसम् । यदि चैवमपि लाघवलोभादेकस्समवायोऽवयवगुणक्रियादीनां संबंध इत्यभ्युपगम्यते तदा तत एव त्र्यणुकप्रभृतीनां कार्याणामेकमेव ब्रह्म प्रधानं वा कारणमभ्युपगन्तव्यं स्यात् । एकत्वलाघवस्योभयत्राप्यादरणीयत्वसाम्यात् । अन्यथा क्वचिल्लाघवादरोऽन्यत्र तदनादर इत्यव्यवस्थाप्रसंगात्। न हि क्लृप्तेषु स्वरूपसंबंधेषु सत्स्वपि लाघवलोभादधिकं समवायमभ्युपगच्छता त्र्यणुकादीनामेकस्मिन्ननेकस्मिन्नप्यक्लृप्ते कारणे लाघवलोभादेकमेव कारणमिति न कल्पनीयम्। यदि त्वल्पपरिमाणानेकद्रव्यमेलने सत्येव तदधिकपरिमाणद्रव्यारंभ इति लोके दृष्टत्वात् त्र्यणुकाद्यारंभार्थमनंतपरमाण्वभ्युपगमस्तदा बहूनां शिल्पिनां समवाये सत्येव रथगोपुरप्रासादादिनिर्माणमिति लोके दृष्टत्वात् कार्यद्रव्येषु अनेकारभ्यत्वनियमस्य दध्यादिष्विव महाकार्येष्वनेककर्तृकत्वनियमस्य क्वचिदपि भंगादर्शनेन सर्वाभ्युपगतत्वात् भूधरादेः महाकार्यत्वेन तत्साम्याच्चानन्तेश्वराभ्युपगमोऽपि कार्यः स्यात् । अन्यथा क्वचित् दृष्टनियमानुसरणमन्यत्र नेत्यव्यवस्थापत्तेः । न चानंतेश्वराभ्युपगमोऽस्ति । तस्माल्लाघवलोभेन दृष्टनियममप्रयोजकीकृत्य ईश्वरैक्यमभ्युपगच्छतस्तथैव जगदुपादानैक्यमप्यभ्युपगन्तव्यम्।

## ॥ सू ॥ नित्यमेव च भावात् ॥ १३ ॥

समवायस्य नित्यत्वाङ्गीकारात् संबन्धिनित्यत्वमन्तरेण तदनुपपत्तेरवयवाव-

तस्मादसमंजसः सर्वथा परमाणुकारणवादः।सर्वेष्वेतेषु दूषणप्रकारेषु सूत्रमावृत्त्या योजनीयम्। अनंतरप्रकारे समवायशब्दः एककार्यार्थबहुपुरुषमेलनपरः। 'समाजेषु समांशेषु समवायेषु चोच्यते' इत्यादिप्रयोगेषु तस्य तादर्थ्ये प्रसिद्धम्। यद्यन्यत्र लाघवलोभेन दृष्टनियममना-द्रियमाणोऽपि परः त्र्यणुककारणप्रक्रियायां तन्न परित्यजेत् तत्रेदमुपरितनं सूत्रम्—सू ॥ नित्यमेव च भावात् ॥ १३ ॥ यत्किंचित्संबंधिनाशेऽपि संबंधनाश इति नियमस्संयोगे दृष्टः। ततश्च त्र्यणुकादिनाशे समवायनाशप्रसंगेन तन्नित्यत्वमभ्युपगच्छता त्र्यणुकादीना-मपि नित्यत्वं स्वीकरणीयमिति त्र्यणुकादिकारणत्वेन परमाणुसाधनमप्यसमंजसमित्यर्थः। यदि चाश्रयनाशनाश्यत्वे संयोगत्वं प्रयोजकं लाघवान्न संबंधत्वमुपाधिरूपमित्युच्येत तदे-त्थमत्रैव लाघवमनुसरता जगन्मूलकारणानुमानेऽप्यैक्यलाघवमनुसरणीयमिति न तेन परमाणवस्सिद्ध्येयुः। न च कार्यद्रव्याणामवयवसंयोगारभ्यत्वनियमान्नैकस्माद्द्रव्योत्पत्तिः संभवतीत्यत्र लाघवमकिंचित्करमिति वाच्यम्। उक्तनियमासंप्रतिपत्तेः। न च पटादीनां तन्तुसंयोगाद्यारभ्यत्वदर्शनात् नियमोंऽगीकरणीय इति वाच्यम्। एकावयविरूपेण क्षीरेण दध्यारंभे नियमभंगात्क्षीरारंभकावयवाः परस्परं वियुज्य पुनस्संयोगांतरं लब्ध्वा दध्यारभन्ते न तु क्षीरं दध्यारभत इति कल्पनायां प्रमाणाभावात्।'क्षीरविनाशे कारणानुपलब्धिवद्दध्यु-त्पत्तिवच्च तदुपपत्तिः। 'न पयसः परिणामो गुणांतरप्रादुर्भावा' दित्यक्षपादसूत्रयोः प्रमा-णमूलकत्वाभावात्। न च 'व्यूहांतरात् द्रव्यांतरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमान'मिति तदनंतर (न्याय०अ-३-आ-२-सू०१७) सूत्रदर्शितमनुमानं तत्र प्रमाणम्। क्षीरमेव दध्यव-स्थामापद्यत इति परिणामवादाभ्युपगमे द्रव्यान्तरोत्पत्तेरसिद्धेः द्रव्यांतरस्यावयवसंयोगांत-ररूपव्यूहांतरजन्यत्वनियमस्यापि महापटध्वंसजन्ये खण्डपटे व्यभिचारेणासिद्धेश्च त-न्तुसंयोगपटयोस्समानसामग्रीकत्वेन तुलान्तनमनोन्नमनरीत्या समकालोत्पत्तिकतया पटस्य तन्तुसंयोगारभ्यत्वासंप्रतिपत्तेश्च। न च तंतुसंयोगनाशस्य पटनाशकारणतया तयोः कार्यकारणभावो वक्तव्यः अकारणनाशेनाकार्यनाशासंभवादिति वाच्यम्। नाशयोरपि समानसामग्रीकत्वेन समकालत्वोपपत्तेः। अपिच। पटस्य तंतुसंयोगार-भ्यत्वसंप्रतिपत्तावपि न त्र्यणुकस्यावयवसंयोगारभ्यत्वं सिद्ध्यति। यदि तत्र पटत्वेन तं-तुसंयोगत्वेन च कार्यकारणभावग्रहः न तेन प्रकृतार्थसिद्धिरिति स्पष्टम्। यदि कार्य-द्रव्यत्वेन संयोगत्वेन च तद्ग्रहः तदापि नास्ति प्रकृतार्थसिद्धिः। एकेन समवायिकारणेन यत्किंचिदाश्रितसंयोगेन च त्र्यणुकोत्पत्त्युपपत्तेः। कार्यद्रव्यत्वेन समवायिकारणसंयोगत्वेन च तद्ग्रहेऽपि स एव दोषः। स्वसमवायिकारणत्वप्रवेशने त्वननुगमः स्वसमवायिकारणस्यै-कस्यैव यत्किंचिद्द्रव्यांतरसंयोगेनापि त्र्यणुकोत्पत्तिरुपपद्यत इति प्रकृतार्थसिद्धिश्च। समवा-यिकारणमात्रगतत्वप्रवेशने त्वप्रयोजकत्वम्। भेर्याकाशसंयोगात् शब्दस्येव समवायिकारणत-दितरसंयोगादपि त्र्यणुकोत्पत्त्युपपत्तेः। तस्मात् त्र्यणुकसमवायिकारणसाधनप्रक्रियायां क्वचिल्लाघवमनुसरतान्यत्रापि तदनुसरणीयमित्यप्रतिबंधेनोक्तलाघवेन तदैक्यसिद्धिरप्र-त्यूहेति भावः। एवं त्र्यणुकादिकारणानुमानमनेकविषयत्वात्प्रच्यावितम्। अथ रूपादिम-

यविनोरपि नित्यत्वप्रसङ्गादसमञ्जसमेव तत् ॥

॥ सू ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥

द्विषयत्वात्प्रच्यावयितुं सूत्रम्—रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥ जालसूर्यमरीचिदृश्यात्यन्तसूक्ष्मभागरूपं त्र्यणुकं समवायिकारणारभ्यं महत्त्वे सति चाक्षुषत्वात्। तदपि त्र्यणुकसमवायिकारणं समवायिकारणारभ्यं महदारंभकत्वादित्यनुमानसिद्धतया परस्याभिमतं सिद्धांतिनोऽपि संप्रतिपन्नम्। सकलजगन्मूलकारणमिह पक्षः। तत्र रूपादिमत्त्वहेतुना नानित्यत्वसावयवत्वे प्रसाध्येते। सिद्धांतिनोऽप्यनिष्टत्वात्। किंतु तत्र रूपादिकांगीकारे परं प्रत्यनिष्टापादनार्थं तदभ्युपगमोपपादकं रूपादिमत्त्वमित्यनूद्यते। तथा च यदि जगन्मूलकारणं रूपादिमत्स्यात् तदा तस्मिन् सम्प्रतिपन्नयोर्नित्यत्वनिरवयवत्वयोर्विपर्ययस्स्यादिति तस्य रूपादिमत्त्वे बाधकस्तर्कोऽत्र विवक्षितः। न च तर्कमूलव्याप्तौ विपक्षबाधकाभावात् प्रशिथिलमूलत्वं शङ्कनीयम्। रूपादीनां जन्यत्वे हि रूपत्वादिकं प्रयोजकमेष्टव्यम्। अनुगतत्वाल्लघुत्वाच्च। तथा च परमाणुष्वपि रूपादिकांगीकारे अग्निसंयोगजन्या रूपादयः स्वोत्पत्तौ स्वाश्रयकारणगतरूपाद्यपेक्षा इति पराभ्युपगतरीत्यैव जलपरमाणुगतरूपादीनां पार्थिवपरमाणुगतश्यामरूपस्य चोत्पत्तावपेक्षितानां रूपादीनामाश्रयत्वेन परमाणूनां कारणीभूता अवयवास्सिध्यंतो न निवारयितुं शक्यन्ते। सावयवत्वे चानित्यत्वमप्यनिवार्यमेव। यदि चेदृग्विधं विपक्षबाधकमिह रूपादिमत्त्वसिद्धिलोभात् नाद्रियते तदा परमाणुसाधकानुमानं तेषु रूपादिसाधकानुमानञ्च विपक्षबाधकाभावान्न प्रवर्तेतेति वृद्धिमिच्छतो मूलमपि हीयेत। तथा हि—त्र्यणुककारणसाधकानुमाने तावद्विपक्षबाधकमित्थं परैरुच्यते—महत्त्वपरिमाणस्य जन्यत्वे महत्त्वावांतरजातिरूपापकर्षमात्रं प्रयोजकम्। न तु तदुत्कर्षापकर्षरूपतदवांतरजातिद्वयम्। गौरवात्। तथा च त्र्यणुकमहत्त्वस्यापकृष्टमहत्त्वरूपतया जन्यत्वेन कारणापेक्षायां तत्र स्वाश्रयसमवायिकारणगतसंख्यापरिमाणसंयोगविशेषाणामेव कारणत्वेन त्र्यणुकस्य समवायिकारणमवश्यमभ्युपगंतव्यमिति त्र्यणुककारणेषु रूपादिमत्समवायिकारणत्वेन रूपादिमत्त्वानुमाने च रूपादीनां कारणगुणपूर्वकत्वमेव विपक्षबाधकमुच्यते। तत्र यदि रूपस्य जन्यत्वे रूपत्वं प्रयोजकं नेष्यते तदा महत्त्वस्य जन्यत्वेऽपि किंचित्प्रयोजकं नान्विष्येत। तत्र प्रयोजकापेक्षायामत्रापि तदपेक्षा तुल्या। किञ्च। महत्त्वस्य जन्यत्वे प्रयोजकमुत्कर्षापकर्षरूपजातिद्वयरूपमन्यल्लभ्यतेऽपि। न च रूपस्य जन्यत्वे रूपत्वातिरेकेण गुर्वप्यवच्छेदकान्तरं लभ्यते। न च कार्यगतरूपत्वम्। तथा पार्थिवपरमाणुरूपाननुगतत्वात्। वस्तुतस्तु, महत्त्वस्य जन्यत्वे परिमाणापकर्षः प्रयोजको युक्तः न तु महत्त्वापकर्षः। विशेषरूपत्वात् दैर्घ्याननुगतत्वाच्च। ततश्च त्र्यणुकावयवकारणे यद्यपकृष्टपरिमाणमभ्युपगम्येत तदा तस्य जन्यत्वेन कारणपरिमाणापेक्षायां तस्य सावयवत्वं प्रसज्येतेति तत्परिहाराय तत्र परममहत्त्वस्याभ्युपगन्तव्यत्वात्। परिमाणगतजन्यताप्रयोजकरूपापेक्षया जगन्मूलकारणानुमाने प्रवृत्तौ तेन परममहद्द्रव्यमेव तथात्वेनानुमितं भवेत्। न च कार्यद्रव्यस्य स्वन्यूनपरिमाणद्रव्यारभ्यत्वनियमः। दीर्घैस्तंतुभिः दृढतरावर्त्तितैस्तन्न्यूनपरिमाणस्य विशालैः पटैरावर्तितैस्तन्न्यूनपरिमाणस्य च सूत्रस्यारंभदर्शनात्। एतेन त्र्यणुकद्व्यणुककारणमनुमीयमानं तद्गतपरिमाणहेतुबहुत्वद्वित्वसंख्याश्रयतयानेकमेव सिद्ध्येन्न तु लाघवादेकमित्यपि

परमाणूनामत्र रूपादिमत्त्वमङ्गीक्रियते । ततस्तन्नित्यत्वादिविपर्ययः । तथा घटादिषु दर्शनात् । तस्मादप्यसमञ्जसम् ॥

**॥ सू ॥ उभयथा च दोषात् ॥ १५ ॥**

अनित्यत्वादिपरिहाराय रूपादिशून्यत्वाङ्गीकारे कारणगुणपूर्वकत्वासिद्धिः । तत्सिद्ध्ये पुनरपि रूपादिमत्वाङ्गीकारे च अनित्यत्वाद्यनर्थापत्तिरित्युभयथाऽपि दोषादसमञ्जसमेव कणादमतम् ॥

**॥ सू ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥**

साङ्ख्यपक्षस्य श्रुतिन्यायविरुद्धस्यापि सत्कार्यवादादौ क्वचिदंशे वैदिकपरिग्रहोऽस्ति । कणादपक्षस्य तु केनाप्यंशेनापरिग्रहादत्यन्तमनपेक्षैव निश्श्रेयसार्थिभिः कार्या ॥

---

शङ्का निरस्ता । विपक्षबाधकानादरे तत्कारणानुमानस्यैवाप्रवृत्तेः तदादरे परममहतः परब्रह्मण एव तत्कारणत्वेन सिद्धेः । तथा रूपादीनां कारणगुणपूर्वकत्वनियमो यदि नेष्येत तदा परमाणूनां रूपादिमत्कारणत्वेन रूपादिमत्त्वानुमानं न प्रवर्तेत । न च कार्यगतरूपाणामेव कारणगुणपूर्वकत्वनियम आद्रियत इति वाच्यम् । कार्यगतत्वविशेषणानादरेण रूपमात्रस्य जन्यत्वसिद्धावग्निसंयोगाजन्यरूपादिमात्रस्य कारणगुणापेक्षत्वात् । तस्मात् पराभिमतरीत्यैव उपन्यस्ततर्कस्य दृढव्याप्तिमूलत्वात् प्रतिकूलतर्कपराहतं मूलकारणस्य रूपादिमत्त्वानुमानं न प्रवर्तत इति न तत्र रूपादिमत्वसिद्धिरिति भावः । अथ माभूद्रूपादिमत्वसिद्धिः परमाणुरूपधर्मिसिद्धिरविकलेति तावतापि सन्तोषो माभूदित्याह—सू॥उभयथा च दोषात्॥१५॥ कारणगुणपूर्वकत्वासिद्धिरिति । रूपादिमत्त्वाभावे कार्यपृथिव्यादिषु पराभिमतरूपकारणानुपपादनात् स्वरूपमात्रकारणोपपादनेन नाभिमतसिद्धिरिति भावः । तत्सिद्ध्य इति । एतद्दूषणं पूर्वसूत्रोक्तमेव । तृतीयप्रकारासंभवज्ञापनार्थं तु सूत्रभाष्ययोरुक्तदूषणावर्तनम् । यद्यपि सांख्याभिमतः प्रधानकारणवादः तार्किकाभिमतः परमाणुकारणवादश्च प्रत्याख्यातः तथाप्ययमेवात्यंतं पापीयानित्याह—सू॥ अपरिग्रहाचात्यंतमनपेक्षा ॥१६॥ प्रधानरूपकारणात्मना सदेवाकाशादि कार्यं सर्गादावभिव्यज्यत इति वैदिकानामप्यभ्युपगमोऽस्त्येव । तस्य स्वातन्त्र्यं परं नेष्यते । अतोऽस्ति प्रधानकारणवादस्य कथंचिद्वैदिकपरिग्रहः । अस्य तु न कथंचिदप्यस्ति परमाणूनां स्वरूपत एव वैदिकैरनभ्युपगतत्वात् । न च वैदिकप्रसिद्धपरमाणुशब्दार्थतया तदभ्युपगम आवश्यकः । त्र्यणुकेष्वेव तस्य शब्दस्य विश्रांतेः । '[१]जालांतरगते भानुभानौ यो दृश्यते रजः । परमं तत्परं सूक्ष्मं परमाणुं प्रचक्षते ॥' इति पौराणिकवचनात् । न च तथापि कथं न्यायशास्त्रस्यात्यन्तानादरणीयत्वं चतुर्दशविद्यास्थानांतर्गतत्वादिति शङ्कनीयम् । वैशेषिकशास्त्रस्य सर्वथैवानादरणीयत्वोपपत्तेर्न्यायशास्त्रस्यापि परमाणुकारणवादाभ्युपगमांशे योगशास्त्रस्य प्रधानस्वातंत्र्याभ्युपगमांश इव उपेक्षणीयत्वोपपत्तेः ॥

**इति वैशेषिकाधिकरणम् ॥ २ ॥**

---

(१) जालान्तरगते भानौ योऽणीयो दृश्यते रजः । परं तत्परमाणूनां परमाणुं प्रचक्षते ॥ इति पाठान्तरम् ।

## नयमणिमालायाम् ।

## अथ वैशेषिकाधिकरणम् ॥ २ ॥

**सू ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥ उभयथापि न कर्मातस्तदभावः ॥ ११ ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥ नित्यमेव च भावात् ॥ १३ ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥ उभयथा च दोषात् ॥ १५ ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥**

तर्ह्यस्तु कारणत्वं परमाणूनां परस्परं योगात् । परमेश्वरेण ते खल्वधिष्ठिताः कणभुजा कथिताः ॥ १११ ॥

मतमिदमप्यसमञ्जसमणुनः परिमण्डलादनुत्पत्तेः । आद्यस्य कर्मणोऽणुषु तत्संयोगस्य चायोगात् ॥ ११२ ॥

## इति वैशेषिकाधिकरणम् ॥ २ ॥

## सूत्रार्थचन्द्रिकायाम्

## अथ महद्दीर्घाधिकरणम् ॥ २ ॥

**सू ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥ उभयथापि न कर्मातस्तदभावः ॥ ११ ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥ नित्यमेव च भावात् ॥ १३ ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥ उभयथा च दोषात् ॥ १५ ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥**

**भगवत्पादमते,** पूर्वं प्रपञ्चस्य प्रधाननिष्ठाशब्दत्वादिगुणानन्वयात्प्रधानानुपादानकत्वं साधितं तद्वद्ब्रह्मगुणचेतनत्वानन्वयाद्ब्रह्मोपादानकत्वं न स्यादिति दृष्टांतसंगत्येदमारभ्यते । इदमधिकरणमेकसूत्रात्मक **'मुभयथापी'** त्यादिकं सूत्रषट्कमधिकरणान्तरम् । तच्च **परमाणुजगदकारणत्वाधिकरण**मुभयथाधिकरणमिति च व्यपदिश्यते । अस्याधिकरणस्य चेतनाद्ब्रह्मणो जगत्सर्गं ब्रुवन्वैदिकसमन्वयो विषयः । स किं 'कारणगुणाः कार्ये स्वसमानजातीयगुणारंभकाः' इति वैशेषिकाभिमतेन न्यायेन विरुध्यते न वेति संदेहः । विरुध्यत इति **पूर्वपक्षः । सिद्धान्तस्तु,** ह्रस्वत्वाणुत्वयुक्तात् द्व्यणुकान्महत्वदीर्घत्वयुक्तस्य त्र्यणुकस्योत्पत्तिं द्व्यणुकनिष्ठह्रस्वत्वाणुत्वयोस्त्र्यणुके स्वसमानजातीयह्रस्वत्वाणुत्वानारंभकत्वं द्व्यणुकगतत्रित्वसंख्यायास्तु त्र्यणुके महत्वदीर्घत्वारंभकत्वं तथा पारिमाण्डल्ययुक्तात्परमाणोः ह्रस्वत्वाणुत्वयुक्तस्य द्व्यणुकस्योत्पत्तिं परमाणुगतपारिमाण्डल्यपरिमाणस्य द्व्यणुके तादृशपारिमण्डल्यानारंभकत्वं परमाणुगतद्वित्वसंख्यायास्तु द्व्यणुके ह्रस्वत्वाणुत्वारंभकत्वं च स्वन्यायविरुद्धमभ्युपगच्छतां तेषां मते ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत् चशब्दार्थकवाशब्दात् ह्रस्वाणुवच्च चेतनाद्ब्रह्मणोऽचेतनं जगद्भवतीति योजनया तदुपपत्तेर्नायं समन्वयस्तेन विरुध्यत इति । सूत्रार्थोऽपि व्याख्यातः ॥

## इति भगवत्पादमते महद्दीर्घाधिकरणम् ॥ २ ॥

**अथ परमाणुजगदकारणत्वाधिकरणमुतोभयथाधिकरणम् ॥ ३ ॥** स्मृतिपादसंबन्धिनाऽप्यवान्तरदृष्टांतसंगत्या प्रासंगिकेनाव्यवहितेनाधिकरणेन नास्य संगत्यपेक्षा । व्यवहितेन तु चेतनानधिष्ठितत्वात्प्रधानस्य कारणत्वाभावे उक्ते तर्हि चेतनाधिष्ठिताः परमाणवः कारणं जगतः स्युरिति प्रत्युदाहरणसंगत्येदमारभ्यते-**उभयथापीत्यादि** । परमाणुप्रक्रियया जगदुत्पत्तिरिति वैशेषिकराद्धांतोऽत्र विषयः । स किं प्रमाणमूल उत भ्रान्तिमूलो वेति संदेहे प्रमाणमूल इति **पूर्वपक्षः । सिद्धान्तस्तु,** सृष्टेः प्राक् निश्चलयोः परमाण्वोः कर्मणा संयोगे द्व्यणुकाद्युत्पत्तिरिति हि वैशेषिकमतप्रक्रिया । तस्य कर्मणः किंचिन्निमित्तमभ्युपेयम् । तच्च किंरूपमिति विचारे जीवगतप्रयत्नाभिघातादिरूपं न भवति । सृष्ट्युत्तरकालिकस्य तस्य सृष्टेः प्रागसंभवात् । तस्य निर्निमित्तत्वाभ्युपगमे कर्मैव नोत्पद्येत । **अत उभयथापि न कर्म** अदृष्टस्याचेतनस्य स्वतः कर्माभिमुख्यायोगात् । **अतः**-कर्माभावात्त**दभावः**=द्व्यणुकादिक्रमेण सृष्ट्युत्पादस्याभावः । तस्माद्वैशेषिकसिद्धान्तो भ्रान्तिमूल इति ॥

किं च ॥ **सू ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥** तदभाव इत्यनुवर्तते । **तदभावः**=तस्य द्व्यणुकादिसृष्ट्युत्पादस्याभावः । कुतः । परमाणुद्व्यणुकानां समवायाभ्युपगमात् । अस्त्वभ्युपगमः किं तेन । **साम्यादनवस्थितेः**=यथैव हि अणुभ्यामत्यंतभिन्नं सत् द्व्यणुकं समवायेन ताभ्यां संबध्यते एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नस्सन् अत्यन्तभेदसाम्यात् अन्येन समवायेन समवायिभिस्संबध्येत । ततश्च तस्यान्योऽन्यस्समवायः कल्पनीय इत्यनवस्थादोषप्रसंगात् । एवं च समवायासिद्ध्या समवेतद्व्यणुकादिसृष्ट्यसिद्धिः स्यादित्यर्थः ॥

अपिच । **सू ॥ नित्यमेव च भावात् ॥ १३ ॥** परमाणूनां प्रवृत्तिस्वभावत्वाङ्गीकारे प्रवृत्तेर्नित्यमेव भावात्प्रलयाभावः प्रसज्येत । निवृत्तिस्वभावत्वाङ्गीकारे निवृत्तेर्नित्यमेव सत्त्वात्सृष्ट्यभावः प्रसज्येत । तस्मात्परमाणुकारणवादो भ्रान्तिमूल एवेति ॥

इत्थं परमाणूनां कारणत्वं निराकृत्य तेषां निरवयवत्वादिकं निराकरोति-**सू ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥ दर्शनात्**=लोके रूपादिमतः पटादेः सावयवत्वादिदर्शनात् । **रूपादिमत्त्वाच्च**=वैशेषिकमते जगत्कारणपरमाणूनां रूपादिमत्त्वांगीकाराच्च । **विपर्ययः**=निरवयवत्वाणुत्वनित्यत्वविपर्ययः सावयवत्वादिः प्रसज्येत ॥

किंच । सू ॥ **उभयथा च दोषात्** ॥ १५ ॥ **उभयथा च**= वैशेषिकमते परमाणूनामुपचितानुपचितगुणात्मकत्वकल्पने लोके उपचितानुपचितगुणात्मकपृथिव्यादेः स्वरूपोपचयदर्शनात् अणुत्वं व्याहन्येत । तदकल्पने तत्कार्यपृथिव्यादिषु रूपादिकं नोपलभ्येतेति उभयथापि **दोषात्** अनुपपन्नः परमाणुकारणवादः ॥

अपिच । सू ॥ **अपरिग्रहाच्चात्यंतमनपेक्षा** ॥ १६ ॥ परमाणुकारणवादस्य केनचिदप्यंशेन कैश्चिदपिशिष्टैरपरिग्रहाच्च तत्रात्यन्तमनपेक्षा श्रेयोऽर्थिभिः कार्या । तस्माद्वैशेषिकराद्धान्तो भ्रान्तिमूल एवेति सिद्धम् ॥

**इति भगवत्पादमते परमाणुजगदकारणत्वाधिकरणमुतोभयथाधिकरणम् ॥ ३ ॥**

**श्रीकण्ठरामानुजमतयोरिदं** सप्तसूत्र्यात्मकमधिकरणं **महद्दीर्घाधिकरणमथवा वैशेषिकाधिकरणमिति** व्यपदिश्यते । **पूर्वपक्षसिद्धान्तादिकं** पूर्वस्मादविशिष्टम् । सूत्रार्थनिरूपणप्रकारमात्रेऽस्ति कियदिव वैशिष्ट्यम् । परस्परमनयोर्नास्ति वैलक्षण्यकणिकापि । आद्यं सूत्रं पूर्वसूत्रादसमञ्जसशब्दानुवृत्त्या ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवदन्यच्च तदभ्युपगतं सर्वमसमञ्जसमित्यर्थपरतया व्याख्यातम् । अत्र परमाणुकारणवादिवैशेषिकमतं समञ्जसमसमञ्जसं वेति संदेहे समञ्जसमिति **पूर्वपक्ष**मापाद्य असमंजसमिति च राद्धान्तितम् ॥

सू ॥ **उभयथापि न कर्मातस्तदभावः** ॥ ११ ॥ परमाणुकारणवादे जगदुत्पत्तिकारणीभूतपरमाणुगतं किंचिदाद्यं कर्मादृष्टकारितमभ्युपगम्यते । तच्च कर्म परमाणुगतादृष्टकारितं वा जीवगतादृष्टकारितं वेति विचारे **उभयथापि** अदृष्टस्य सदोत्पादकत्वप्रसंगात्**कर्म न** संभवति । **अतो** जगदुत्पत्तेः **तदभावः**=अणुगतकर्मपूर्वकत्वाभावः ॥

सू ॥ **समवायाभ्युपगमाच्च साम्यादनवस्थितेः** ॥ १२ ॥ वैशेषिकमते समवायाख्यसंबन्धाभ्युपगमाच्च तन्मतमसमञ्जसम् । कुतः । **साम्यादनवस्थितेः**=समवायस्यापि अवयविजातिगुणवदपृथक्सिद्धत्वेनापेक्षासाम्यात्तस्यापि तथा संबन्धान्तरापेक्षत्वेनवस्थाप्रसंगादित्यर्थः ॥

सू ॥ **नित्यमेव च भावात्** ॥ १३ ॥ समवायसंबन्धस्य नित्यत्वाभ्युपगमात् संबन्धिनित्यत्वमन्तरेण तदनुपपत्तेरवयवावयविनोरुभयोरपि **नित्यमेव च भावात्**=नित्यत्वप्रसंगादसमञ्जसम् ॥

सू ॥ **रूपादिमत्त्वाच्चेत्यादि** ॥ १४ ॥ अविशिष्टार्थमिदम् । तस्मादप्यसमञ्जसमित्यर्थः ।

सू ॥ **उभयथाच दोषात्** ॥ १५ ॥ अनित्यत्वादिभयात्परमाणूनां रूपादिशून्यत्वाङ्गीकारे कार्यगुणस्य कारणगुणपूर्वकत्वासिद्धिः । तत्सिद्धये पुनरपि रूपादिमत्त्वाङ्गीकारे चानित्यत्वाद्यनर्थापत्तिरित्युभयथापि दोषसंभवादसमञ्जसं काणादमतमित्यर्थः ॥

सू ॥ **अपरिग्रहाच्चात्यन्तमनपेक्षा** ॥ १६ ॥ प्रधानकारणवादस्य श्रुतिन्यायविरुद्धस्यापि सत्कार्यवादादौ क्वचिदंशे वैदिकपरिग्रहोऽस्ति । परमाणुवादस्य तु केनाप्यंशेन कैश्चिदपि शिष्टैरपरिग्रहान्निश्रेयसार्थिभिरत्यन्तमनपेक्षा कार्या ॥

**इति श्रीण्ठरामानुजमतयोर्महद्दीर्घाधिकरणमथवा वैशेषिकाधिकरणम् ॥ २ ॥**

**अथानन्दतीर्थमते वैशेषिकाधिकरणम् ॥ २ ॥**

**आनन्दतीर्थमते** अस्यैव महद्दीर्घाधिकरणस्य वैशेषिकाधिकरणत्वेन व्यवहारः । ये तु जगत्कर्तारमीश्वरमभ्युपगच्छन्तोऽपि अनन्तगुणमष्टगुणं वदन्ति तेषां, वैशेषिकादीनां तत्कल्पना सर्वाप्यनुपपन्ना । अतो वैशेषिकप्रक्रियाया अनुपपन्नत्वात्तद्विरोध ईश्वरानन्तगुणत्वस्येति वैशेषिकमतनिराकरणमनेन क्रियते । आद्यसूत्रेण वैशेषिकाभिमता समवायिकारणप्रक्रिया दूष्यते । **'उभयथापी'** त्यादिसूत्रैस्तु तदभिमतनिमित्तकारणप्रक्रियादिदूषणमुपपाद्यते । सूत्रार्थवर्णनादिप्रकारस्तु प्रायोऽविशिष्टश्शांकरमतात् । अतो यत्रास्ति वैलक्षण्यं तन्मात्रमिह प्रदर्श्यते । सू ॥ **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्** ॥ १० ॥ **महद्दीर्घवत्**=वैशेषिकमते त्र्यणुकादिगतान्महत्त्वाद्दीर्घत्वाच्च यथा चतुरणुकादिगतपरिमाणमुत्पद्यते तथा **ह्रस्वपरिमण्डलाभ्यामपि**=द्व्यणुकपरमाणूभयगतह्रस्वत्वपारिमाण्डल्यपरिमाणाभ्यामपि त्र्यणुकद्व्यणुकगतपरिमाणोत्पत्तिः स्यात् । अन्यथा महत्त्वदीर्घत्वाभ्यामपि कार्योत्पत्तिर्न स्यादिति वाशब्दार्थः । तस्माद्वैशेषिकमतमनुपपन्नमित्यर्थः ॥

सू ॥ **उभयथापि न कर्मातस्तदभावः** ॥ १२ ॥ यतः **उभयथापि**=ईश्वरेच्छाया नित्यत्वानित्यत्वपक्षद्वयेऽपि । **न कर्म**=न परमाणुषु क्रियोत्पत्तिसंभवः । **अतः तदभावः**=तस्मिन्द्व्यणुकादिकार्याभावः स्यादित्यर्थः ॥

सू ॥ **समवायाभ्युपगमाच्च साम्यादनवस्थितेः** ॥ १३ ॥ इदमविशिष्टार्थं शांकरमतात् ॥

सू ॥ **नित्यमेव च भावात्** ॥ १४ ॥ ईशेच्छापरमाण्वादिकारणानां सदात्वात् वैशेषिकमते नित्यमेव सर्वदैवं कार्योत्पत्तिः स्यात् । न तु कदाचिदित्यर्थः ॥

सू ॥ **उभयथा च दोषात्** ॥ १५ ॥ वैशेषिकमते **उभयथा च**=परमाणुनित्यत्वानित्यत्वरूपपक्षद्वयेऽपि **दोषात्**=तद्गतसर्वनित्यत्वकारणाभावनिमित्तकतदुत्पत्त्यभावस्य दोषस्य सत्त्वात् न तत्पक्षो युक्त इत्यर्थः ॥

सू ॥ **अपरिग्रहाच्चात्यन्तमनपेक्षा** ॥ १६ ॥ **अपरिग्रहाच्च**=वैशेषिकमतस्य श्रुत्यादिपरिग्रहशून्यत्वात् तद्विरुद्धत्वाच्च तत्र **अत्यन्तमनपेक्षा**=अनादरः कार्य इत्यर्थः ॥ **इत्यानन्दतीर्थमते वैशेषिकाधिकरणम् ॥ २ ॥**

**इति सूत्रार्थचन्द्रिकायां महद्दीर्घाधिकरणम् ॥२॥**

## अथ समुदायाधिकरणम् ॥ ३ ॥

### ॥ सू ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥

वैदिकैकदेशिनां मतं निराकृतम् । इदानीं वेदबाह्यानां मतं निरस्यते ।

## अथ समुदायाधिकरणम् ॥ ३ ॥

**सू० ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥** माध्यमिकयोगाचारसौत्रांतिकवैभाषिकसंज्ञाश्चतुर्विधा बौद्धाः । ते सर्वेऽप्यादिबुद्धस्य शिष्याः क्रमेण सर्वशून्यत्वबाह्यार्थशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादिनः । तत्र 'बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते। अतो निरभिलप्यास्ते निःस्वभावाश्च देशिकाः। यथा यथा विचार्यंते विशीर्यन्ते तथा तथे' त्यादिन्यायैर्गुरुणा सर्वशून्यत्वं बोधितेषु शिष्येषु ये गुरूक्तं तथैवाङ्गीकृत्य पर्यनुयोगं नाकुर्वन् ते गुरूक्तस्य श्रद्धयाङ्गीकरणादुत्तमाः, तत उपरि पर्यनुयोगाकरणादधमाश्चेति उत्तमाधमत्वयोगान्मध्यमां स्थितिमास्थिता माध्यमिकाः। ये तु बाह्यार्थानां शून्यत्वमङ्गीकृत्य कथं विज्ञानस्यापि शून्यत्वं जगदान्ध्यप्रसङ्गादिति पर्यनुयोगमकुर्वन् ते गुरूक्ताङ्गीकरणस्याचारसंज्ञया बौद्धमते परिभाषितस्य तत उपरि पर्यनुयोगस्य योगसंज्ञया तन्मते परिभाषितस्य च सद्भावाद्योगाचाराः । गुरुणा तान्प्र 'त्यान्तरं विज्ञानमात्रमस्ति, तदेव नीलाद्याकारं न तु तद्व्यतिरेकेण बाह्यं नीलादिकमस्ति,सहोपलम्भनियमेन नीलादीनां तत्तद्विज्ञानानां चाभेदसिद्धेः, भेदे गवाश्ववत्तन्नियमाभावप्रसङ्गात्, तदेव विज्ञानाकारात्मकं नीलादिकमनादिवासनावशात् बहिर्वदवभासत, इति बोधिते कथं सर्वथैव बाह्यार्थस्य शून्यत्वं बाह्यस्य नीलादेरवभासात् अहमुल्लेखेन विज्ञानस्यान्तरतया इदमुल्लेखेन नीलादेर्बाह्यतया च भेदेऽवभासमाने सहोपलम्भनियममात्रस्याप्रयोजकस्याभेदसाधनाक्षमत्वात् 'सहत्वोक्त्यैव भेदानुमतेश्चे' ति यैः पर्यनुयुक्तं तान्प्रति 'सत्यमस्ति बाह्यं नीलादिकम् । न तु तत्प्रत्यक्षम्। अनुत्पन्नस्याविद्यमानस्य प्रत्यक्षत्वायोगात् उत्पन्नस्य क्षणिकस्य स्थित्यभावात्। किंतूत्पद्यमानं नीलादिकं विज्ञाने स्वाकारमर्पयित्वा नश्यति । ततो विज्ञानगतेनाकारेणातीतं नीलादिकमनुमीयत'इति बोधिते सति तै 'रित्थं शिष्यप्रश्नानुरोधेन कियत्पर्यन्तमुपदेशसूत्रं प्रवर्तिष्यत' इति सूत्रस्यांते पृष्टे गुरुणाभिहितं'भवन्तःसूत्रस्यान्तं पृष्टवन्तःसौत्रांतिका भवंत्विति।अतस्ते सौत्रांतिकाः।ततो'विज्ञानेनानुमेयं बाह्यमितीयं विरुद्धा भाषा,तस्यैव विज्ञानस्य तद्विषयप्रत्यक्षत्वात् प्रत्यक्षस्य कस्यचिदर्थस्याभावे व्याप्तिसंवेदनस्थानाभावेनानुमानाप्रवृत्तेश्चे' ति यैः पर्यनुयुक्तं ते वैभाषिकाः। तान्प्रति बाह्यप्रत्यक्षत्वमप्युपदिष्टम् । एवं विनेयबुद्ध्यनुसारेण चतुर्धोपदेशेऽपि क्षणिकत्वादिभावनया सर्वेऽपि क्रमेण सर्वशून्यत्वं प्रतिपत्स्यंत इति गुरोरभिप्रायः । तथाऽपि पर्यनुयोक्तारो यथाश्रुतं गुरोरुत्तरवाक्यस्यार्थं श्रद्धाना मतांतराण्यास्थिषत । तत्र वैभाषिकादिक्रमेण चतुर्विधानपि बौद्धान्निरसितुं चत्वार्यधिकरणानि । ततः क्षपणकान्निरसितुमेकमधिकरणम् । एतेषामधिकरणानां पूर्वाधिकरणाभ्यां पेटिकासंगतिमाह—वैदिकेति । वैदिकत्वेन सिद्धांतप्रत्यासन्नतया बुद्धिस्थाः कापिलकाणभुजाक्षचरणाः पूर्वं निराकृताः । इदानीमवैदिका निरस्यन्त इति पेटिकासङ्गतिः । अर्धवैनाशिकनिरासानंतरं सर्ववैनाशिका निरस्यंत इति अवांतरसङ्गतिः । केषाञ्चित्क्षणि-

**प्रथममिह बौद्धसिद्धान्तसिद्धः समुदायकारणवादो युक्तो न वेति संदेहः । युक्त इति पूर्वः पक्षः । तथा ह्यामनन्ति–द्वौ समुदायौ बाह्याभ्यन्तरौ । बाह्यः पृथिव्यादिः । आन्तरश्चित्तचैत्त्यात्मकः । समुदायद्वयमेव सर्वं जगत् । तथा हि–बाह्यसमुदायस्य परमाणवः कारणम् । ते च चतुर्विधाः । पार्थिवाप्यतैजसवायव्याः । तेभ्यो युगपत्पुञ्जीभूतेभ्यः समुदायो बाह्यो जायते । आन्तरस्य समुदायस्य स्कन्धपञ्चकं कारणम् । रूपवेदनाविज्ञानसंज्ञासंस्काररूपाः पञ्च स्कन्धाः । चित्तेन निरूप्यमाणाः शब्दस्पर्शरूपादयो रूपस्कन्धः । तदभिव्यक्ति-**

क्त्वमभ्युपगच्छन्तस्तार्किकाः अर्धवैनाशिकाः । ते हि जाठराग्निना पच्यमानानां भुक्तपीताहारौषधरसद्रव्यरूपेणावयवानां प्रतिक्षणमुपचयापचयवैषम्यादवयवि शरीरमपि प्रतिक्षणमुपचयापचयवदन्यदन्यद्भवति । यद्यपि शरीरस्य प्रतिकलमुपचयापचयदर्शनं नास्ति, तथाऽपि वर्षधारानिपातैस्तटाकजलस्येव घटीयन्त्रोत्क्षेपणैः कूपजलस्येव चान्ते दर्शनाद्यौक्तिकं प्रतिक्षणं किञ्चित्किञ्चिदुपचयापचयज्ञानमस्त्येव, चन्द्रतारकादीनां मुहूर्तादिकालव्यवधानेन बहुदेशान्तरप्राप्तिदर्शनात् प्रतिक्षणं स्वल्पदेशान्तरप्राप्तिज्ञानवदित्यभ्युपगच्छन्ति । एवं प्रतिक्षणमवश्यंभाविभिः खननपूरणादिभिः भूगोलकस्य नदीजलसंसर्गशीकरोत्पतनैः समुद्रस्य चोपचयापचयवतः क्षणिकत्वमभ्युपगच्छंति। अतस्तेऽर्धवैनाशिकाः। बौद्धास्तु सर्वस्य प्रपञ्चस्य क्षणिकत्वमभ्युपगच्छन्तस्सर्ववैनाशिकाः। बौद्धेष्वपि वैभाषिकसौत्रांतिकाः परमाणुकारणवादिन इति तत्प्रत्यासत्त्या तदुभयसाधारणदूषणोक्त्या तेषामुभयेषां प्रथमाधिकरणे निरासः । द्वितीयाधिकरणे बाह्यार्थानुमेयत्ववादेन किञ्चिद्वैषम्यवतां सौत्रांतिकानामसाधारणदूषणोक्त्या निरासः । ततः क्षणिकत्वाभ्युपगमसाम्यात् योगाचाराणां ततो बौद्धत्वसाम्यात् माध्यमिकानां तदनंतरमवैदिकत्वसाम्यात् क्षपणकानामिति विवेकः । यद्यपि क्षपणका अपि परमाणुवादिनः। तथा वैभाषिकसौत्रांतिकैः खरस्नेहोष्णेरणस्वभावाश्चतुर्विधाः परमाणव इति परमाणुचातुर्विध्यं तार्किकवदभ्युपगम्यते । परमाणूनां तार्किकैः स्थिरत्वैकान्त्यवत्तैः क्षणिकत्वैकांत्यमुच्यते । क्षपणकास्तु परमाण्वैकविध्यवादिनः स्थैर्यास्थैर्याद्यनैकान्त्यवादिनश्चेति वैभाषिकसौत्रांतिकानां तार्किकप्रत्यासत्त्यतिशयो द्रष्टव्यः । इत्थमवांतरसंगतिं सूचयन् संशयं दर्शयति–प्रथममिहेति। सूत्रोक्तदूषणं विशदयितुं परमते दूषणीयांशमनुवदति-तथा हीति । पृथिव्यादिरिति । भूभूधरसमुद्रादिर्विषय इत्यर्थः । चित्तेति । चित्तविज्ञानचैत्यानि स्कंधांतराणि । समुदायद्वयमेवेति । परमाणव एव द्व्यणुकादिभूतभौतिकपर्यंतं बाह्यसमुदायरूपेण संहन्यंते नावयविनमारभन्ते । एवं पञ्च स्कंधाः आंतरसमुदायरूपेण संहन्यंत इत्यनेन प्रकारेण सर्वं जगत्समुदायद्वयात्मकमित्यर्थः । तदेव प्रपञ्चयति–तथा हीति । चित्तेन निरूप्यमाणा इति । रूपादीनां बाह्यत्वेऽपि आन्तरेण चित्तेन निरूप्यमाणत्वात् आंतरसमुदायमध्ये परिगणनमित्यभिप्रायेणेदं विशेषणम् । यद्वा । अत्र शब्दस्पर्शादय इत्यनेनांतरसमुदायांतर्गतशरीरेंद्रियादिरूपेण संहन्यमानानि भूतानि विवक्षितानि । तेषु चैत्त्यशब्दप्रवृत्त्यर्थमिदं विशेषणम् । तदभिव्यक्तिरिति । रूपाद्युपलब्धिरित्यर्थः । केचित्तु 'तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् । तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखे'दिति बौद्धैर्विभक्तं द्विविधमपि ज्ञानं प्रवाहापन्नं विज्ञानस्कंध इत्याहुः । तज्जन्यं

विज्ञानस्कन्धः। तज्जन्यं दुःखं वेदनास्कन्धः। देवदत्तादिनाम संज्ञास्कन्धः। तेषां वासना संस्कारस्कन्धः। तेभ्यः पुञ्जीभूतेभ्य आन्तरः समुदायो जायते। अतः समुदायद्वयकारणवादे न कोऽपि विरोध इति ॥

एवं प्राप्ते निरूप्यते—न युक्तः समुदायद्वयकारणवाद इति। ते हि क्षणिकत्ववादिनः। कथमेतेषां समुदायः संभवति? कारणानां क्षणिकत्वेन तदानीमेव नष्टत्वात् कार्योत्पादनासमर्थत्वात् ॥

॥ सू ॥ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥१८॥

---

दुःखमिति। दुःखग्रहणं सुखोपेक्षावस्थयोरप्युपलक्षणम्। देवदत्तादिनामेति। केचित्तु देवदत्तादिनामोल्लेखी सविकल्पकप्रत्ययस्संज्ञास्कंध इत्याहुः। तन्मते निर्विकल्पकमेव विज्ञानस्कन्धः। तेभ्य इति। उक्तेभ्यः पञ्चभ्यः स्कंधेभ्य इत्यर्थः। केचित्तु रूपस्कंधो बाह्यः तद्व्यतिरिक्तमेव स्कन्धचतुष्टयं चित्तचैत्यात्मकमित्याहुः। सूत्रस्याणुस्कन्धहेतुके द्विविधेऽपि समुदाये समुदायभावाप्राप्तिरित्यर्थमाविष्कुर्वन्नस्मिन्साध्ये सूत्रकारस्याशयस्थितं हेतुमुत्तरसूत्रपर्यालोचनोन्नेयं दर्शयति—ते हीत्यादिना। समुदाययोरेकैकाणुस्कंधहेतुकत्वे मेलनार्थव्यापाररहिततद्धेतुकत्वे वा सदातनत्वापत्तेः मेलनहेतुव्यापाराविष्टानेकहेतुकत्वं वक्तव्यम्। न च तत्क्षणिकत्ववादिभिरुपपादयितुं शक्यम्। येषां व्यापारावेशस्तेषां मेलनक्षणे नष्टत्वात् येषां मेलनं तेषां व्यापारक्षणेऽनुत्पन्नत्वात् केषांचिन्मेलनहेतुव्यापारेणान्येषां मेलनाभ्युपगमेऽतिप्रसंगात्। न च व्यापारवतां मेलनवतां चैकसंतानवर्त्तित्वादनतिप्रसंगः। क्षणिकसंतानिव्यतिरिक्तस्य तावदनुयायिनः स्थिरस्य संतानस्य सर्वक्षणिकत्ववादिभिरनभ्युपगतत्वादिति भावः ॥ सू० ॥ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥ १९ ॥ अस्थिरेषु स्थिरत्वभ्रांतिरूपाविद्या रागादिहेतुः, रागादिपारवश्यं च तद्धेतुरित्यनुभवसिद्धम्। एवमितरेतरहेतुत्वेनानुभवसिद्धस्याविद्यारागादिरूपस्य संसारचक्रस्य शरीरेंद्रियविषयादिरूपसमुदायाभावेऽनुपपत्तेः तदाक्षिप्तस्समुदायः सिध्यन्प्रतिक्षेप्तुं न शक्यत इति शंकार्थः। सूत्रे प्रत्ययशब्दस्तन्मतपरिभाषया हेतुवाची। भाष्ये रागादिशब्दस्तन्मते अविद्याकार्यत्वेन परिगणितानां संस्कारादीनां संग्राहकः। ते हि परिगणयंति—अविद्या, संस्कारः, विज्ञानं, नामरूपं, षडायतनं, स्पर्शः, वेदना, तृष्णा, उपादानं, भवः, जातिः, जरा, मरणं, शोकः, परिदेवना, दुःखं, दुर्मनस्ता, इत्येवंजातीयकान्। तत्र क्षणिककार्यदुःखशून्येषु स्थायिनित्यसुखवस्तुबुद्धिरविद्या। ततो रागद्वेषमोहास्ततो धर्माधर्मसंस्कारा इत्येतत्सर्वं संस्कारः। संस्कारवशाज्जीवस्य गर्भाशयद्रव्ये वृत्तिलाभो विज्ञानम्। विज्ञानसंसर्गाद्गर्भद्रव्यस्य कललपेश्याद्याकारेणाभिव्यक्तिर्नामरूपम्। तदभिव्यक्तिक्रमेण षडिन्द्रियायतनशरीरनिर्वृत्तिष्षडायतनम्। निर्वृत्तशरीरेंद्रियस्य गर्भगतविषयेन्द्रियसंसर्गजं ज्ञानं स्पर्शः। तन्निमित्ते सुखदुःखे वेदना। सुखप्राप्तिदुःखपरिहारार्था विषयोपादानेच्छा तृष्णा। तया विषयेषु प्रवृत्तिरुपादानम्। ततः क्रमेण गर्भान्निष्क्रमणं भवः। निर्गतस्य मनुष्यत्वादिजात्यभिमानो जातिः। क्रमभाविनी जरामरणे प्रसिद्धे। म्रियमाणस्य पुत्रकलत्रा-

अस्थिरेषु स्थिरत्वबुद्धिरूपाया अविद्याया रागादीनां चान्योन्यकारणत्वात् संघातभावादिकमुपपन्नमिति चेत्—न, अविद्यायाः संघातभावानिमित्तत्वात् । न हि शुक्तिकादिषु रजतादिबुद्धिरूपाविद्यया शुक्तिकादिर्वस्तुतो रजतादिकार्यं करोति। विदुषस्तदानीमेव तत्र नष्टत्वात् तन्निमित्तरागादयोऽपि न संभवन्ति । तस्माद्युक्तः समुदायकारणवादः ॥

युक्त्यन्तरमाह—

## ॥ सू ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥

द्यभिषंगादन्तर्दाहः शोकः । तदुत्थः प्रलापः परिदेवना । मरणक्लेशो दुःखम् । मानसं दुःखं दौर्मनस्यमित्यादि व्याचक्षते । 'न सङ्घातभावानिमित्तत्वा' दिति परिहारसूत्रांशं व्याचष्टे—नेत्यादिना । कारणाभावेन समुदायभावानुपपत्तावुक्तायां कारणप्रदर्शनेन हि तदुपपत्तिस्समर्थनीया । तत्र किमविद्याकार्यरागादिमध्ये समुदायद्वयमप्यंतर्भूतमित्यविद्यैव कारणमिति शङ्क्यते । उताविद्यारागद्वेषादिप्रवाहस्यानुभवसिद्धस्य उपपादनार्थमवश्यांगीकरणीये शरीरेंद्रियविषयादिरूपबाह्याभ्यन्तरसमुदायभावे तत्कारणं किंचिदवश्यं कल्पनीयमिति । आद्य आह—अविद्याया इति । यद्यविद्यैव केवला परमाण्वादिव्यापारनिरपेक्षा समुदायहेतुः स्यात् तदा शुक्तिरजतभ्रांतिरूपयाप्यविद्यया शुक्तेश्शुक्तिरूपसमुदायताप्रहाणेन रजतरूपसमुदायतापत्तिः स्यादित्यर्थः । अविद्यादीनामितरेतरप्रत्ययत्वमनुपपन्नमित्याह—विदुष इति। अन्यस्याविद्ययान्यस्य रागादिजननेऽतिप्रसंग इति भावः। द्वितीये तु क्षणिकवादे परमाण्वादिव्यापाररूपकारणासंभव उक्त एवेति भावः ॥ स्यादेतत् । नायं कारणासंभवदोषः प्रसरति । विरलपरमाणुभ्यः सन्निकृष्टाः परमाणवो जायन्ते । परस्परसंनिकर्ष एव तेषां समुदायभाव इत्यभ्युपगमात्। न चैवमभ्युपगमेऽन्येषां कर्मणान्येषु संयोगजननेऽतिप्रसंग इति दोषः प्रसरति। न हि बौद्धमते क्षणिकेषु परमाण्वादिषु कर्मसंयोगो वा जायते। किं तु देशांतरस्थेन देशांतरस्थस्योत्पादः कर्मप्रत्ययस्यालम्बनं विप्रकृष्टदेशेन सन्निकृष्टदेशे तदुत्पादस्संयोगप्रत्ययस्य। ततश्च यथा न्यायमते नानादिक्प्रभवशब्दमूलकशब्दपरंपराजननक्रमेण बहूनां शब्दानां मेलने सति कोलाहलप्रत्ययः । एवं बहूनां परमाणूनां तथा तथा मेलने सति घटोऽयं पटोऽयमित्यादि प्रत्यक्षमुपपद्यते । दृष्टं हि एकैकस्य केशस्य दूरे दृश्यत्वाभावेऽपि बहूनां केशानां कबर्यादिरूपेण पुंजीभावे सति तत्समुदायस्य दृश्यत्वम् । न चादृश्यसमुदायस्यादृश्यत्वनियमः । अप्रयोजकत्वात् । एकैकस्य तंतोः स्यंदनाकर्षणशक्त्यभावेऽपि तत्समुदायस्य तदाकर्षणशक्तिवदेकैकस्य परमाणोरदृश्यत्वेऽपि तत्समुदायस्य दृश्यत्वोपपत्तेः। यदाहुः—'प्रत्येकं दृष्ट्ययोग्यत्वेऽप्यणूनां दृश्यता भवेत्। सामग्र्ये सति तंतूनां नौकाद्याकर्षशक्तिवत् ॥' इति । तस्मान्न कारणासंभवेन समुदायभावानुपपत्तिः इत्येवमाशङ्कानिराकरणार्थं युक्त्यंतरपरत्वेनोत्तरसूत्रमवतारयति—युक्त्यंतरमाहेति । सू० ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥१९॥ घट एव क्षणो घटक्षणः । बौद्धमते वस्तुतः कालो नास्ति । उद्यन्नेव स्वरसभंगुरो घटादिः क्षणपरिकल्पनामात्रनिमित्तं भवति । स च घटादिः स्वोदयविनाशपरिकल्पितक्षणवत्त्वात् क्षणिकोऽपि भवति । वपुष्मान् शिलापुत्रक इतिवत् । वस्तुतः स्वव्यतिरिक्तक्षणाभावात् स्वयमेव क्षणोऽपि भवतीति तेषां प्रक्रिया। ननु,

उत्तरघटक्षणोत्पत्तौ पूर्वघटक्षणस्य नष्टत्वात् अभावस्यैवोत्पादकत्वाविशेषात सर्वदा सर्वत्र सर्वोत्पत्तिरपि स्यात् ॥

॥ सू ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥

असति हेतावुत्पत्तौ अधिपतिसहकार्यादीनां ज्ञानहेतुत्वप्रतिज्ञाविरोधः स्यात् । तस्यापि स्थित्यभ्युपगमे युगपत् घटद्वयोपलब्धिप्रसक्तिः । अस्थितौ संप्रयोगज्ञानादेः यौगपद्यम् ॥

नष्टस्य न कारणत्वासंभवः । उक्तं हि तत्वसंग्रहे–'भावानां कारणत्वं नानष्टतया न स्थिततया वा अपि तु भूततया । भूतश्च स्थितो वा भवतु नष्टो वा कारणान्तरपौष्कल्ये सति स्वकार्यमविलंबेन करोति । न च नष्टस्यात्यंतासत्त्वम् । येन न ह्यसतः सतः कार्यक्रिया युज्यत इति चोद्येत । स्ववर्तमानक्षणे सत्त्वात् । सतश्चासद्रूपता नास्ति । तस्मात् स्वकीयेन सद्रूपेणेह वा जन्मांतरे वा फलदायको भवति । यथा बीजे कृतसंस्कारात् पुष्पफलादिषु वर्णरसविशेषा मध्यावस्थास्वदृष्टास्समुत्पद्यन्त' इति । तस्मान्नष्टत्वेन न कारणत्वे किञ्चिदपराध्यते इत्याशङ्क्याह–अभावस्येति । भावरहितस्य कार्यकाले असत इति यावत् । ततश्च यदि कार्यदशायामसदपि यदा कदाचित्पूर्वं सत्त्वमात्रेण कारणं स्यात् तदा सर्वदा सर्वत्र सर्वस्याप्युत्पत्तिः स्यात् । घटोत्पत्तिदशायामंकुरादेरप्युत्पत्तिः स्यात् । अनादौ कालप्रवाहे नष्टस्य बीजादेस्सत्त्वात् । न च क्षेत्रतत्कर्षणादिसहकारिपौष्कल्याभावश्शङ्कनीयः । तस्याऽपि नष्टस्य सत्त्वाविशेषादित्यर्थः । अतो नष्टस्य कारणत्वायोगात् दोहळद्रव्याणामपि यावत्कार्योत्पत्ति सूक्ष्मरूपेणानुवृत्तिरङ्गीकरणीयेति भावः ॥ स्यादेतत् । चिरनष्टस्य निर्व्यापारस्य माभूत्कारणत्वम् । स्वरूपेण स्वव्यापाररूपेण वा पूर्वक्षणवर्त्तिनस्तु स्यात् । अवश्यं च कारणस्य पूर्ववर्त्तित्वं वाच्यम् । तेनैव कारणत्वोपपत्तौ किं कार्यकालवर्त्तित्वेन । लोके च विनष्टस्यैव बीजस्याङ्कुरे क्षीरस्य दध्नि मृत्पिण्डस्य घटे च कारणत्वं सम्प्रतिपन्नं दृश्यते । यदि तु कारणस्य कार्यकालवर्तित्वमपेक्ष्यते तदा बीजादिविनाशोऽङ्कुरादिकारणं पूर्वघटक्षणादिविनाशः उत्तरघटक्षणादिकारणमित्यस्त्वित्याशंकानिराकरणार्थमग्रिमं सूत्रत्रयम् । तत्राद्यशंकानिराकरणार्थमिदं सूत्रम्–असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥ असतीति । कार्यदशायामिति शेषः । अधिपतीति । अधिपतिसहकार्यालम्बनसमनंतरप्रत्ययाः चत्वारः चित्तचैत्त्योत्पत्तिहेतव इति बौद्धानां प्रतिज्ञा । तथा हि–बुद्धसूत्रम्–'चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्त्या उत्पद्यंत' इति । अधिपतिरिंद्रियम् । तद्धि ज्ञानस्य रूपादिषु पंचस्वेकैकमात्रविषयत्वनियामकम् । नियामकश्च लोके अधिपतिरुच्यते । सहकारिआलोकादिकम् । आलंबनं घटादिर्विषयः । समनन्तरप्रत्ययः पूर्वज्ञानम् । एतांश्चतुर्विधान् हेतून्प्राप्य चित्तं ज्ञानं चैत्त्याः तदभिन्नाः सुखादयश्च जायन्त इति प्रतिज्ञार्थः । इयं प्रतिज्ञा हीयेत यदि पूर्वोत्तरक्षणवर्त्तित्वं विषयस्य न स्यात् । पूर्वक्षणवर्त्तित्वाभावे हि कारणत्वं भज्येत उत्तरक्षणवर्त्तित्वाभावे वर्त्तमानत्वग्राहिप्रत्यक्षविषयत्वम् । अन्यथा एतद्दोषसमाधानाय कारणस्य विषयतासिद्ध्यर्थं तस्याऽपि कार्योत्पत्तिक्षणे स्थित्यभ्युपगमे घटद्वययौगपद्यं प्रसज्येत । क्षणिकत्वहानिश्च स्यात् । अथैतद्दोषद्वयपरिजिहीर्षया कारणस्य कार्योत्पत्तिक्षणे स्थितिमनभ्युपगम्य कारणक्षण एव तस्य विषयत्वमभ्युपगम्येत तदा सम्प्रयोगज्ञानयोर्हेतुहेतुमतोर्यौगपद्यं स्यादित्यर्थः ।

**॥ सू ॥ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥**

**निरोधो निरन्वयविनाशः । स स्थूलः सूक्ष्मश्च न संभवति । कपालादिभावरूपावस्थाप्राप्तेरेव विनाशशब्दवाच्यत्वात् सतो द्रव्यस्याविच्छेदात् । ततो न क्षणिकत्वसिद्धिः ॥**

---

सू० ॥ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥ यद्यपि प्रतिज्ञोपरोधादेव विनाशकारणत्वशङ्कानिरासोऽपि सिद्ध्यति, तथापि तत्र हेत्वंतरप्रदर्शनार्थमिदं सूत्रम् । निरोध इति । असत्कार्यवादिनां बौद्धानां नानुवर्त्तमानस्य द्रव्यस्यावस्थांतरप्राप्तिर्विनाशः किंतु निरन्वयो निरनुवृत्तिको विनाशः । स तैर्निरोधशब्देन परिभाष्यते । स द्विविधः । स्थूलः सूक्ष्मश्च । मुद्गरपाताद्यनंतरं सर्वैरुपलभ्यमानो घटादीनां विनाशः स्थूलः प्रतिसंख्यानिरोध इत्युच्यते । प्रतिसंख्या विषयसत्त्वप्रतिकूला तदसत्त्वग्राहिणी लौकिकानां बुद्धिस्तद्विषयो निरोधः इत्यवयवार्थान्वयात् । तद्विपरीतो निरोधः अप्रतिसंख्यानिरोधः सूक्ष्मः लौकिकोपलब्ध्ययोग्यो बौद्धैर्युक्त्या साध्यमानः प्रतिक्षणविनाशः । तयोरुभयोरप्यप्राप्तिरसंभवः । कुतः । अविच्छेदात् । घटादिरूपेण स्थितस्य द्रव्यस्य स्वरूपतो विच्छेदाभावात् । न च द्रव्यानुवृत्तौ विनष्टो घट इत्यादिप्रतीतिव्यवहारयोर्निर्विषयत्वापत्तिः । अवस्थांतरापत्तेस्तद्विषयत्वादित्यर्थः । अत्रायमाशयः । तंतूनां वियोजने सति पटनाशः तंतुसमुदायात्मकस्य पटस्य तंतूनां विप्रकर्षेण नाश इति वा तन्तुसमुदायारब्धस्य पटस्य तंतुसंयोगरूपासमवायिकारणनाशे नाश इति वा यथाकथञ्चिदुत्प्रेक्ष्येत । नैवं घटनाशः कपालसमुदायनाश इति वा कपालसंयोगरूपासमवायिकारणनाशजन्यनाश इति वोत्प्रेक्षितुं शक्यते । घटोत्पत्तिसमये कपालानां मेलनाभावात् घटोत्पत्तेः पूर्वं मृत्पिण्डस्यैव घटनाशानंतरं कपालानामेव च व्यवस्थया दर्शनात् । तस्मादेकस्यैव मृद्द्रव्यस्य क्रमभाविपिण्डघटकपालचूर्णाद्यवस्थाशालित्वमित्येवाभ्युपगन्तव्यम् । एवञ्च स एव मृत्पिण्डो घटरूपापन्नो दृश्यते स एव घटः कपालरूपापन्न इति प्रत्यभिज्ञाप्यनुगृहीता भवति । अतः पटादिष्वप्यवस्थान्तरापत्तिरेव विनाशः न तु निरन्वयविनाशः । अयःपीतजलादिष्ववस्थान्तरापत्त्यदर्शनेऽपि सूक्ष्मावस्थान्तरापत्तिरनुमातव्या । एवं प्रतिसंख्यानिरोधस्याप्यसम्भावनायामप्रतिसङ्ख्यानिरोधो दूरापास्तः । एवं च वीजादिषु प्रतिसङ्ख्यानिरोधरूपस्य पूर्वघटक्षणादिष्वप्रतिसङ्ख्यानिरोधरूपस्य चानेकक्षणानुयायिनो विनाशस्याप्रामाणिकत्वात् वीजादिविनाशः कार्यसहभावेन कारणमित्येतदयुक्तमिति । इदं च निरोधाभावसाधनं कार्यसहभाविकारणनिरास इव क्षणिकत्वनिरासेऽप्युपयुज्यत इति तेन क्षणिकत्वाभावोऽपि सिद्ध्यतीत्याह—तत इति । प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधयोः अप्राप्तिः कारणत्वासम्भवः । 'आकाशं द्वौ निरोधौ च नित्यं त्रयमसंस्कृत' मिति बौद्धैर्नित्यत्वेनाङ्गीकृतयोः तयोः क्वचिदऽपि कदापि विच्छेदाभावेन सर्वदा सर्वत्र सर्वकार्योत्पत्तिप्रसङ्गात् । न च सहकारिसमवधानवशात् देशकालनियमः । समानन्यायतया सहकारिणामपि निरोधयोरेव कारणत्वप्राप्तेः । न चोपादानत्वाभिमतकारणत्वविषय एव विनाशकारणत्वनियमः । नियामकाभावात् । वस्तुतस्तु मृत्तन्तुसुवर्णाद्युपादानत्वाभिमतगतरूपस्पर्शादिस्वभावानां कार्येऽनुवृत्तिदर्शनात् स्वभाववन्तं विहाय स्वभावस्यानुवृत्त्यसंभवाच्च उपादानकारणत्वमेव विनाशकारणत्वप्रतिक्षेपकम् । उत्तरघटक्षणादिषु पूर्वघटक्षणादिसादृश्य-

## ॥ सू ॥ उभयथा च दोषात् ॥ २२ ॥

**उत्पन्नस्य तुच्छतापत्तौ तुच्छादुत्पत्तौ चाभावादुत्पत्यसंभवात् । अभावात्मककार्योत्पत्तिरूपाद्दोषादसमञ्जसमिदं दर्शनम् ॥**

## ॥ सू ॥ आकाशे चाविशेषात् ॥ २३ ॥

**आकाशे च न तुच्छत्वमुपपद्यते। अबाधितप्रतीतिसिद्धत्वादस्य श्येनादिपतनदेशत्वेन ॥**

मात्रं न तु तत्स्वभावानुवृत्तिरिति चेत् , अस्तु नामैवम्। तथाऽपि मृदादीनां घटरूपादत्यन्तसदृशरूपादिमत्त्वे लोकप्रसिद्ध्यनुसारिकार्यानुगतकारणत्वरूपं प्रयोजकं कल्पयितुं युक्तम्। कारणत्वमात्रस्य दण्डचक्रादावतिप्रसक्तत्वात् मृत्त्वादेरननुगतत्वात् उपादानत्वस्यायुतसिद्धिगर्भत्वेन उक्तरूपानतिरेकात् । तस्मादयुक्तं निरोधयोः कारणत्वमिति सूत्रस्यार्थान्तरमुपन्यस्तरीतिभिरुन्नेतुं शक्यमिति भाष्ये न प्रदर्शितम् । निरोधयोः कारणत्वनिरासे हेत्वंतरप्रदर्शनार्थं सूत्रम्—सू ॥ उभयथा च दोषात् ॥ २२॥ चकारो भिन्नक्रमः । प्रकारद्वयेन दोषप्रसंगाच्चेत्यर्थः । बौद्धाः किल कल्पयंति 'बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं चे' ति । संस्कृतमुत्पाद्यं किं तत्त्रयं यस्मादन्यद्बुद्धिबोध्यमुत्पाद्यं क्षणिकं चेत्याकांक्षायां तदपि त्रयं ते परिगणयन्ति, 'प्रतिसंख्याप्रतिसंख्यानिरोधात्राकाशं चे ' ति । तत्त्रयमवस्तु अभावात्मकं निरूपाख्यं तुच्छमिति मन्यंते । तत्र पूर्वोत्पन्नस्य घटक्षणस्य तदानीमेव निरुद्धत्वप्राप्त्या तुच्छान्निरोधादेव कार्यघटक्षणस्योत्पत्तिरिति यदप्यभ्युपगम्यते तत्र तुच्छादुत्पत्त्यसंभवस्तावदेको दोषः। तुच्छादुत्पत्त्यभ्युपगमे हि तुच्छस्य निर्विशेषत्वेन कारणविशेषकृतः कार्यविशेष इति व्यवस्थोपपादनासंभवात् घटक्षणानंतरं सर्वस्य जगत उत्पत्तिः स्यात् । तथा तुच्छादुत्पत्तावुत्पद्यमानं कार्यमपि तुच्छमेवोत्पद्येत न तु सद्रूपं कारणानुसारित्वात् कार्यस्येत्यपरो दोषः इति । सू ॥ आकाशे चाविशेषात् ॥२३॥ यद्यप्याकाशस्य तुच्छत्वनिरासः प्रकृते क्षणिकत्वप्रतिक्षेपे नोपयुज्यते तथाऽपि निरोधप्रसंगात् तत्सहपरिगणितस्याकाशस्य बुद्धिस्थतया प्रासंगिकस्तस्य तन्निरासः। 'अविशेषा' दित्यस्य तात्पर्यतो व्याख्यानमबाधितेति । अबाधितप्रतीतिसिद्धत्वेन पृथिव्याद्यविशेषादित्यर्थः । अन्यथा पृथिव्यादिकमप्यपह्नूयेतेति भावः। श्येनादीति । ननु 'इह श्येनः पतती'त्यादिप्रतीतिषु यः श्येनादिपतनदेशत्वेन विषयस्स आकाश इति प्रत्यक्षप्रमाणमनेनोपन्यस्यते? । उत श्येनादिपतनेनावकाशसाध्येन लिंगेनानुमीयमानोऽवकाश आकाश इति अनुमानप्रमाणमुपन्यस्यते?। नाद्यः । आलोकस्यैव श्येनपतनाधारतया प्रत्यक्षविषयत्वोपपत्तेः महान्धकारे तस्यैव खद्योतपतनाधारतया प्रत्यक्षविषयत्वोपपत्तेश्च । इह चन्द्र इह सूर्यः इत्यादिप्रत्यक्षे चंद्रसूर्याद्याश्रितस्यालोकस्य तदाधारतया विषयत्वं न संभवतीति चेन्न । 'वने तिलक' इत्यादि प्रतीतौ वृक्षसमुदायरूपस्य वनस्य तिलकाद्याधारत्वेनेव तदाश्रितस्यालोकस्य स्वरूपसंबधविशेषेणोक्तप्रतीतौ तदाधारतया विषयत्वोपपत्तेः । आकाशस्याऽपि हि श्येनाधारता स्वरूपसंबंधविशेषेणैवोपपादनीया । निविडमूर्त्तद्रव्यस्य भूतलादेरिव तस्य मुख्याधारत्वासंभवात् नीरूपद्रव्यस्याकाशस्य प्रत्यक्षविषयत्वं न संभवतीति तु विशेषः । न च पञ्चीकरणेनाकाशेऽपि रूपमस्तीति वाच्यम् । स्पर्शादेरपि सत्त्वप्रसंगात् त्रिवृत्करणस्यैव श्रुतिसूत्रसिद्ध-

त्वाच्च। आकाशादिवत् प्रदीपालोकोऽप्यप्रत्यक्षः। विनिगमनाविरहेण उद्भूतरूपवदुद्भूत-स्पर्शस्यापि बहिर्द्रव्यप्रत्यक्षताप्रयोजकत्वात् इति चेन्न। आत्मभिन्नद्रव्यप्रत्यक्षत्वरूपस्य बहि-र्द्रव्यप्रत्यक्षत्वस्य प्रत्यक्षसामान्यसामग्र्यां सत्यां तत्तदिंद्रिययोग्यविषयविशेषरूपविशेषका-रणयोगादर्थवशसम्पन्नस्य घटभिन्नद्रव्यप्रत्यक्षत्वस्येव बहिर्गुणप्रत्यक्षत्वस्येव च कार्यतानव-च्छेदकत्वात्। तस्य कार्यतावच्छेदकत्वेऽपि द्रव्यचाक्षुषप्रयोजकस्य उद्भूतरूपस्य तत्स्पार्श-नत्वप्रयोजकोद्भूतस्पर्शस्य च द्रव्यग्राहकबहिरिंद्रियव्यवस्थापकोद्भूतगुणत्वेनानुगतेन रूपेण तत्प्रयोजकत्वोपपत्तेः लोकसिद्धप्रभाप्रत्यक्षसंग्राहकत्वेनास्यैव तत्प्रयोजकत्वौचित्यात् प्रभा-प्रत्यक्षत्वानंगीकारेऽपि प्रत्यक्षस्य तदीयरूपस्यैव श्येनादिपतनाधारत्वप्रतीतिविषयत्वोपप-त्तेश्च। स्वरूपसंबंधविशेषमात्रेण द्रव्याद्याधारताया निरवयवद्रव्य इव गुणेऽप्यविरोधात्। यदि तु नीरूपद्रव्यस्याप्याधारतया प्रत्यक्षविषयत्वमुपपाद्यते तदा दिशामेव तथात्वो-पपादनं युक्तम्। इह प्राग्भागे श्येनः प्रत्यग्भागे कपोत इत्यादिप्रतीत्यनुसारात्। अपि च। आकाशस्य इह पक्षी नेह पक्षीति आधारत्वानाधारत्वप्रतीतिद्वयं न स्वावयवभेदावच्छेदेन उपपादयितुं शक्यम्। तस्य निरवयवत्वात्। किं तु तत्प्रसृतालोकान्धकारान्यतरावयवावच्छेदेन दिग्भेदावच्छेदेन वोपपादनीयम्। ततो वरमालोकांधकारयोरेव स्वस्वावयवविशेषावच्छेदेना-धारत्वानाधारत्वव्यवस्था दिग्विशेषाणामेव वा। न च तत्तदधःक्षितिभागभेद एवाव-च्छेदकभेदः स्यादिति वाच्यम्। ऊर्ध्वाधरदेशयोरिह पक्षी नेह पक्षीत्याधारत्वानाधारत्व-व्यवस्थायां तद्भेदाभावात्। तस्मान्नेदं भाष्यमाकाशसद्भावे प्रत्यक्षप्रमाणोपन्यासपरं नाप्य-नुमानोपन्यासपरमिति युक्तम्। आवश्यकस्य निबिडमूर्तद्रव्याभावस्यैवावकाशरूपत्वोपपत्तेः। आकाशांगीकारेऽपि हि तदभावोऽपेक्षितः। अन्यथा कुड्याद्यावरणेऽप्यप्रतिघातश्येनादिप-तनापत्तेः। न च यत्र कुड्याद्यावरणं तत्राकाश एव नास्तीति शंक्यम्। तस्यासर्वगतत्वप्रसं-गादावरणापाये तत्रावकाशदर्शनाच्च। न ह्याकाशस्तत्रासन्नावरणापाये समुत्पद्यते। अपि चावकाशः प्रत्यक्षः। चक्षुरुन्मीलनानंतरमिहावकाशोऽस्ति इह नास्तीत्यसंदिग्धाविपर्यस्ता-नुभवदर्शनात्। न च नीरूपद्रव्यस्याकाशस्य प्रत्यक्षत्वं युक्तम्। युक्तं तु निबिडमूर्त्तद्र-व्याभावस्य प्रत्यक्षघटकुड्यादिप्रतियोगिकस्य। मूर्त्तद्रव्यस्य अभावः प्रागभावः प्रध्वंसो वेत्या-दिविकल्पस्त्वत्र न प्रसरति। प्रत्यक्षयावन्निबिडमूर्तद्रव्यसंसर्गाभावकूटस्स इत्युपपत्तेः। आका-शांगीकारेऽपि श्येनादिपतनार्थमपेक्षितस्य मूर्त्तद्रव्याभावस्यैवंरूपस्यैव वक्तव्यत्वात्। ननु, भावांतरमभावो नातिरिक्त इत्यभ्युपगम्यते, ततश्च सर्वतः श्येनादिपतनार्थं मूर्तद्रव्या-भावात्मा व्यापको योऽभावोऽभ्युपगम्यते स एवाकाशः स्यादिति चेन्न। तत्र तत्र प्रसृत-स्यालोकस्यान्धकारस्य वा तथात्वोपपत्तावतिरिक्तभावकल्पनानपेक्षणात्। तस्मादनुपपन्न-मिवेदं भाष्यमाभाति। अत्रोच्यते। प्राग्भागे श्येनः पततीत्यादिप्रतीतिषु प्रागादिदेशरूपो यः श्येनाद्याधारो भासते स एवाकाशः। तद्व्यतिरेकेण दिशोऽनंगीकारात्। स च नीरूपद्रव्य-त्वेऽपि इदानीं श्येन इत्यादिप्रतीतिषु काल इव श्येनाद्यधिकरणतया प्रत्यक्षविषय इत्युपप-द्यते। न च आलोकादिरेव देशोऽस्तु यदुपाधिसंबन्धेनाकाशे प्रागादिविभागः कार्यः तदुपा-धिसम्बन्धस्य तत्राऽपि सम्भवादिति वाच्यम्। प्राग्भागे चंद्रालोकस्समुन्मिषति प्रत्यग्भागे तमोऽनुवर्तत इत्यादिप्रतीतिषु आलोकादेरप्याधारत्वेन प्रागादिदेशप्रतिभासात्। एतेना-

काशेऽप्याधारत्वानाधारत्वव्यवस्थार्थमवच्छेदकत्वेनालोकप्रदेशापेक्षणमावश्यकमित्यपि शङ्का निरस्ता । क्लृप्तैः प्रागाद्युपाधिभिस्तदवच्छेदोपपत्तेः । न च प्राग्भागेऽवकाशोऽस्तीत्यादिव्यवहारदर्शनेनावकाशात्मकादाकाशादप्यन्यस्तदाधारो देशः स्यादिति वाच्यम् । तत्रावकाशशब्दस्याभिमतमूर्त्तद्रव्यावस्थानविरोधिमूर्तद्रव्यांतरनिरोधाभावपरत्वात्।अत एव प्राग्भागेऽवकाशोऽस्ति न प्रत्यग्भागे भुञ्जानैर्ब्राह्मणैर्निबिड इति क्वचिद्देशभेदेऽवकाशनिषेधोऽपि दृश्यते । एवं च मूर्त्तद्रव्याभावरूप एवावकाशस्तत्तदुपाध्यवच्छिन्नः प्रागादिव्यवहारालम्बनं स्यादित्यपि शङ्का निरवकाशा । तस्य देशाधेयत्वेन प्रतीतेः प्राग्भागेऽवकाशो नास्ति तत्र 'नीरंध्रमासते द्विजा' इत्यावरणाभावरूपावकाशप्रतिषेधेऽपि प्रागादिदेशसत्त्वव्यवहाराच्च । न चैवमावरणाभावरूपावकाशस्येव प्राग्भागादिरूपदेशस्यापि देशाधेयत्वेन प्रतीतिरस्ति येन ततोऽपि व्यतिरिक्तो देशः सिद्ध्येत् । अयं प्राग्देशः अयं प्रत्यग्देशः इत्यादिरेव हि व्यवहारः न त्वस्मिन्देशे प्राग्देशः इत्यादिरूपः । इहाकाश इति प्रतीतेस्तद्व्यतिरिक्तो देशः स्यादिति चेन्न । लौकिकानामाकाशप्रतीतेरुपरितलवद्दृश्यमाने परितश्चावाङ्मुखेन्द्रनीलमहाकटाहवदवभासमाने मेरुशिखरप्रभाविशेषत्वेनागमसिद्धे नीलद्रव्य एव व्यवस्थितत्वात् तस्य देशविशेषाधेयत्वेन प्रतीतावपि विरोधाभावात् देशरूपस्याकाशस्य व्याप्तस्येदानीमिह घट इत्यादिप्रतीतिषु कालवत्पदार्थविशेषणत्वेन विषयत्वं विना क्वचिदपि लौकिकप्रतीतौ स्वातंत्र्येण विषयत्वाभावात् । तांत्रिकैः स्वस्वकल्पितमर्यादानुसारेण नियमितायाः प्रतीतेरर्थतत्वाव्यवस्थापकत्वात्।तस्मादिदं भाष्यमाकाशे श्येनादिपतनाद्याधारदेशावगाहिप्रत्यक्षप्रमाणोपन्यासपरमिति तावदुपपद्यते । अत एव भाष्ये 'श्येनादिपतनदेशत्वेने' ति देशग्रहणम्। एवमनुमानप्रमाणोपन्यासपरमिदं भाष्यमित्यप्युपपद्यते । न च निबिडमूर्त्तद्रव्याभावेनार्थांतरम् । तदतिरिक्तदेशानंगीकारे यत्रैकः श्येनः पतति तत्रैव श्येनांतरस्यापि पतनप्रसंगात् । समीपे मूर्त्तद्रव्याभावसत्त्वात् तत्र स नास्तीति चेत् सत्यम् । यत्र नास्तीत्युच्यते स एवाकाशाख्यो देशः सिद्ध्येत् । आलोकोऽन्धकारो वा स देशः स्यादिति चेन्न । तदुभयातिरिक्तस्यापि देशस्यानंगीकारे यत्र प्रदीपालोकमण्डलमवतिष्ठते तत्राऽपि तमःप्रसरणप्रसंगात्। आलोकाभावमपेक्ष्य तमः प्रसरति स नास्तीति चेद्यत्र नास्तीत्युच्यते स ताभ्यामप्यन्यो देशः सिद्ध्यन् आकाशः पर्यवस्येदित्येषा दिक् । तस्माद्युक्तमिदं भाष्य 'मबाधितप्रतीतिसिद्धत्वादस्य शेनादिपतनदेशत्वेने' ति । प्रसंगागतमाकाशस्यावस्तुत्वनिराकरणमवसितम् । प्रकृतं क्षणिकत्वनिराकरणमनुवर्तते । अत्रेयं शंका समुन्मिषति । प्रत्यक्षानुमानसिद्धं भावानां क्षणिकत्वं प्रतिक्षेप्तुमशक्यम् । प्रत्यक्षं तावद्वर्तमानवस्तुविषयमवर्तमानादतीतात् पूर्वक्षणवर्त्तिनोऽनागताच्चोत्तरक्षणवर्त्तिनः स्वविषयं व्यावृत्तमवगमयति यथा नीलो घट इति ज्ञानं स्वविषयमरुणादिव्यावृत्तम्।तथानुमानमपि घटादिः क्षणिकः अर्थक्रियाकारित्वात् शरीरादिवत् व्यतिरेकेण तुच्छवत् । न चान्वयदृष्टांतासिद्धिः । शीर्यते हि प्रतिक्षणं शरीरम्। तथाहि—जातमात्रस्य शिशोः शरीरं प्रतिदिवसमुपचितपरिमाणमनुभूयते। तदनुभवो वर्षधारापूर्यमाणतटाकस्येव सूक्ष्मतमसूक्ष्मतरादिप्रणाडिकया क्रमोपचितदर्शनयोग्यपूर्वपरिमाणवैलक्षण्यस्थूलपरिमाणविषयतयैव समर्थनीयः । न तु झटिति मृत्पिण्डद्वयसंयोजनेन जातस्य महामृत्पिण्डस्येव उक्तप्रणाडीनिरपेक्षोत्पत्तिकमहापरिमाणविषयतया ।

## ॥ सू ॥ अनुस्मृतेश्च ॥ २४ ॥

शरीरे तथा महापरिमाणोत्पत्तेरदर्शनात् । क्रमोपचीयमानपरिमाणभेदाश्च मुहूर्तनाडिकादिव्यवधानेन लवनिमेषादिव्यवधानेन वा विलंब्य विलंब्य जायंत इत्यत्र न किञ्चिद्विनिगमकमस्ति । ततः क्रमिकेषु क्षणेषु प्रतिक्षणं जायन्त इत्यभ्युपगन्तव्यम् । एकस्मिन्क्षणे परिमाणद्वयादर्शनेन क्षणभेदमात्रस्यापेक्षितत्वादिति देहपरिमाणस्य तावत्सिद्धं क्षणिकत्वम् । अयं न्यायः क्रमसंवर्धमानतृणतरुगुल्मलतादिपरिमाणेषु क्रमिकोच्छूनतापत्तिमन्नीरनिक्षिप्तव्रीहिवीजादिपरिमाणेषु च योजनीयः । परिमाणभेदश्च द्रव्यभेदनियतः तद्भेदमवगमयति । न चाप्रयोजकत्वम् । प्रागवस्थापेक्षयावयवसङ्ख्योत्कर्षे प्रशिथिलावयवसंयोगं वा विना तदसंभवात् । आगंतुकानामवयवांतराणां पूर्वसिद्धं प्रति कारणत्वायोगेन द्रव्यांतरोत्पत्तेः पूर्वद्रव्यनाशस्य चाप्यभ्युपगंतव्यत्वात् निविडतरसंयोगविनाशं विना प्रशिथिलावयवसंयोगोत्पत्त्यसंभवेन पूर्वसंयोगनाशे सत्यसमवायिकारणनाशेन पूर्वद्रव्यनाशस्य द्रव्यांतरोत्पत्तेश्चाभ्युपगन्तव्यत्वाच्च । एवञ्च परिमाणभेदादर्शनेऽपि समुद्रादीनां प्रतिक्षणसमापतन्नदीजलादिरूपावयवान्तरान्वयात् भेदः क्षयरोगग्रस्तशरीरादिषु प्रतिक्षणमवयवापचयात् भेदः । समवायिकारणनाशस्य द्रव्यनाशकत्वात् । तस्मान्नान्वयदृष्टांतासिद्धिः । न चापि व्यतिरेकदृष्टांतासिद्धिः । अर्थक्रियाकारित्वमेव सत्त्वमिति 'तुच्छमसन्नार्थक्रियाकारि, नापि क्षणिकम्, किं तु नित्य'मिति बौद्धसिद्धांतादित्येवमाशङ्कानिराकरणार्थं सूत्रम्–सू ॥ अनुस्मृतेश्च ॥ २४ ॥ यथा खल्वभिज्ञानं विषयस्य वर्तमानकालसम्बंधं विषयीकरोति तथा प्रत्यभिज्ञानं वर्तमानकालसम्बंधमपि विषयीकरोति । तथा च द्विविधज्ञानप्रामाण्यादेकस्य वर्तमानावर्तमानकालद्वयसम्बंधसिद्धौ द्वयोरपि क्रमिकत्वेनाविरोधावगमाद्वर्तमानकालसंबंधविषयं ज्ञानं तदयोगव्यवच्छेदमात्रमवगमयेत् । नान्ययोगव्यवच्छेदम् । स्वावच्छेदेन वान्ययोगव्यवच्छेदमवगमयेत् । न तु सर्वात्मना । अत एव चित्रपटे नीलोऽयमिति ज्ञानं नानीलव्यावृत्तिं गमयति प्रदेशविशेषावच्छेदेन वा तां गमयति इत्यभ्युपगम्यते । न हि धर्मयोर्विरोधो भिन्नत्वादेव कल्पनीयः । अपि तु सामानाधिकरण्यप्रमित्यनुदयेन । तदुदये तु स्वमनीषिकामात्रकल्पितो विरोधो न प्रमाणशरणानां हृदयंगमः । अनुमानमपि प्रत्यभिज्ञाप्रत्यक्षविरुद्धं कालात्ययापदिष्टं न क्षणिकत्वं साधयितुं क्षमते । ननु प्रत्यभिज्ञेति नैकं ज्ञानं संभवति । तद्धि न तावदैंद्रियकानुभवरूपमिंद्रियाणामतीततत्तांशे सामर्थ्याभावात् । नाऽपि स्मृतिरूपं संस्कारस्याननुभूतेदन्तांशे सामर्थ्याभावात् । न च संस्कारेंद्रिययोः परोक्षापरोक्षज्ञानजनकयोः प्रत्यक्षानुमितिसामग्र्योरिवैकज्ञानजनकत्वं संभवति । येन कालद्वयविशिष्टाभेदविषयं तदेकं ज्ञानं स्यात् । तस्मान्निरंतरोत्पन्नस्मृत्यनुभवरूपज्ञानद्वयात्मिका सा । ततस्सोऽयं देवदत्त इत्यादिव्यवहारमात्रमिति युक्तम् । अभेदज्ञानाभावेऽपि हि सामानाधिकरण्यव्यवहारमात्रमस्ति । यथा शैशवावस्थां परामृश्य वार्धकेऽपि स एवायं चैत्र इति व्यवहरंति । न खलु शिशुवृद्धदेहयोरत्यन्तविलक्षणयोरैक्यप्रत्यभिज्ञा कस्यापि भवितुमर्हति । तदाहुः–'स्मृतिः पूर्वानुभूतेऽर्थे दर्शनं वार्तमानिके । तयोरत्यन्तभेदे च कस्याभेदः प्रतीयताम् । रूपशक्त्यादिभेदेन बालाद्वृद्धोऽस्ति भेदवान् । दर्शनस्मरणे चापि यथास्वं समवस्थिते । परस्मिन्पूर्वरूपस्य न लेशोऽप्युपलभ्यते । पर-

प्रत्यभिज्ञानादपि न क्षणिकत्वसिद्धिः । तदेवेदमिति सामानाधिकारण्येनातीतवर्तमानकालविशिष्टं वस्त्वेकमिति हि विज्ञायते । सामग्री च तस्याः पूर्वा-

स्याऽपि न पूर्वत्र कथमेकं तु तद्भवेत् । सामानाधिकरण्यं च दृष्टं भेदेऽपि वस्तुनोः । तावन्मात्रादभेदे तु भेदः स्यान्नैव कस्यचित्॥' इति । अस्तु वा यथाकथंचित् एकज्ञानरूपा कालद्वयविशिष्टाभेदविषया प्रत्यभिज्ञा । भ्रांतिरूपैव सा दृश्यते । क्रमसंवर्धमानेषु शरीरतरुगुल्मादिषु संततसंतन्यमानावयवोपचयापचयवत्सु भूगोलकगिरिनदीसमुद्रादिषु च घटकुड्यादिषु कदाचिदवयवापचयं प्राप्तेष्वपि तथैव प्रत्यभिज्ञा दृश्यते । यत्रावयवापचयो न दृष्टः तत्रापि कियताप्यवयवेनान्ततः परमाणुमात्रेण कदाचिदपचयो भवन् नास्तीति न केनाऽपि निश्चेतुं शक्यते । अतः कूटसाक्षिणी प्रत्यभिज्ञा कुत्रापि न विश्वसनीयेति कथं तद्बलेन प्रत्यक्षस्य विषयव्यवस्थानुमानस्य बाधश्च सिद्ध्येत् इत्याशङ्क्याह—तदेवेदमिति । अयमाशयः । कालद्वयविशिष्टाभेदावगाहि सर्वानुभवसिद्धं तदिदमित्येकं ज्ञानं तावन्नापह्नवार्हम् । तदनंतरं तदर्थिन इदमर्थे पुरोवर्त्तिनि प्रवृत्तिदर्शनात् । तस्य ज्ञानद्वयरूपत्वेन पुरोवर्त्तिनि तत्तावैशिष्ट्यावगाहिनः कस्यापि ज्ञानस्याभावे तदर्थिनः पुरोवर्त्तिनि प्रवृत्त्यसंभवात् । लाघवेन विशिष्टज्ञानस्यैव प्रवर्तकतया भेदाग्रहात् प्रवृत्तेरनुपपत्तेः । तच्च ज्ञानं प्रत्यक्षम् । 'तमिमं साक्षात्करोमी' त्यनुभवात् । अतः कार्यबलात् तत्र संस्कारसहितमिंद्रियं कारणमिति कल्प्यते । यदि तत्तांशे नेंद्रियसन्निकर्षः, तदा तदंशे परोक्षत्वमस्तु । शुक्तिरजतज्ञानस्य धर्म्यंशे प्रमात्ववत् संयुक्तविशेषणतायाः सन्निकर्षत्वकल्पने तु नापरोक्षत्वस्याप्यनुपपत्तिः । तस्य च शरीरादिषु बाल्ययौवनाद्यवस्थाभेदेऽपि न भ्रमत्वम् । अवस्थावद्द्रव्यैक्यविषयत्वात् । न हि बाल्यवार्धकावस्थाद्वयैक्यं प्रत्यभिज्ञाविषयः । किंत्ववस्थावद्द्रव्यैक्यमेव । तदप्यंततः प्रदर्शितप्रत्यभिज्ञाबलादेव सिद्ध्यति । अवस्थानामागमापायित्वेनानुयाय्यवस्थावदनङ्गीकारे प्रत्यभिज्ञाया निर्विषयत्वापत्तेः । एतेनागमापाय्यवस्थातिरेकेणावस्थावदनुयायि द्रव्यं क्वचिदपि नास्ति । परमाणवोऽपि केवलं गन्धरसरूपस्पर्शात्मका इत्यङ्गीकृत्य यद्बौद्धाः प्रत्यभिज्ञायाः विषयाभावमुपपादयंति 'अवस्थानामयं भेदो नावस्थातुर्मतो यदि । अवस्था एव दृश्यंते न स्वप्नेऽपि ततोऽपरमि'ति तन्निरस्तम् । अनुयाय्यर्थविषये प्रमाणे जाग्रति तदनंगीकारायोगात् । ननु, अवस्थावद्द्रव्यांगीकारेऽपि तदभेदः प्रत्यभिज्ञाविषय इति न शक्यमुपपादयितुम् । परिमाणरूपावस्थाभेदे तन्निर्वाहकावयवोपचयापचयकृतद्रव्यभेदावश्यंभावादिति चेत्स्यादयं दोषस्तार्किकाणामारंभवादे नास्माकं परिणामवादे । अवयवोपचये पूर्वसिद्धमेव द्रव्यमनेकत्वावस्थामपहाय एकत्वावस्थामापद्यते तदपचये पुनरप्यनेकत्वावस्थामिति हि परिणामवादप्रक्रिया प्रागारंभणाधिकरणे प्रतिपादिता । तस्मादबाधितार्थविषयया प्रत्यभिज्ञया घटादिद्रव्यस्थैर्यसिद्धिरप्रत्यूहा । आत्मविषयया योऽहं बाल्य इत्यादिरूपया तयात्मस्थैर्यसिद्धिरतितरामप्रत्यूहा । किञ्च । 'तस्माद्भ्रांतिरियं भिन्नेष्वभेदाध्यवसायतः । प्रत्यभिज्ञा सदृक्षेषु ज्वालादिविषया यथे'ति ज्वालालूनपुनर्जातकेशनखादिप्रत्यभिज्ञादृष्टांतेन घटादिप्रत्यभिज्ञानामपि सादृश्यनिबन्धनभ्रांतित्वमुपपादयद्भिरप्यात्मप्रत्यभिज्ञायाः प्रमात्वमास्थेयमेव । पूर्वापरानुसंधातरि तदनुयायिसादृश्यानुसंधातरि च स्थिरात्मन्यसति भ्रमरूपाया अपि प्रत्यभिज्ञाया उत्प-

नुभवजनितसंस्कारवतः पुरुषस्येन्द्रियसंयोगः । ततः क्षणिकत्वाद्यनुपपन्नार्थाभिधानात् असंबद्ध एव समुदायकारणवादः ॥

इति समुदायाधिकरणम् ॥ ३ ॥

अथ दृष्टत्वाधिकरणम् ॥ ४ ॥

वाह्यार्थास्तित्ववादिषु गोघटादीनां प्रत्यक्षत्ववादिनो बौद्धा निरस्ताः । ज्ञानानुमेयत्ववादिनो निरस्यन्ते—

---

त्यसंभवात् । तथा क्षणिकत्वानुमानमुपपादयद्भिरपि तत्स्थैर्यमास्थेयम् । साध्यसाधनभूयस्सहचारदर्शनव्याप्तिग्रहपक्षगतलिंगदर्शनव्याप्तिस्मरणानुमितीनां व्यधिकरणानां हेतुहेतुमद्भावेऽतिप्रसंगात् । अतः प्रत्यभिज्ञाभ्रांतित्वानुमानस्यात्मप्रत्यभिज्ञायां घटादिक्षणिकत्वानुमानस्यात्मनि चापरिहार्यो व्यभिचारः । प्रतिकूलतर्कपराहतं च क्षणिकत्वानुमानम् । न हि क्षणिकत्वे ज्ञानेच्छाकृतिफलव्यवस्था, अनुभवस्मरणव्यवस्था, संशयनिर्णयव्यवस्था, किञ्चिदर्थनिधानतत्प्रत्यनुमार्गणव्यवस्था, किञ्चिदर्थदर्शनतत्कुतूहलविरमणव्यवस्था, कर्मफलभोगव्यवस्था, वंधमोक्षव्यवस्था चेति संभवति । अन्यस्य ज्ञानं ततोऽन्यस्येच्छेत्याद्यव्यवस्थाप्रसंगादिति ॥ इति समुदायाधिकरणम् ॥ ३ ॥

## अथ दृष्टत्वाधिकरणम् ॥ ४ ॥

एवं वैभाषिकमतं, निराकृत्य तत्संगत्या सौत्रांतिकमतनिराकरणार्थमधिकरणांतरमवतारयति—वाह्यार्थेति । यद्यपि समुदायभावनिराकरणं क्षणिकत्वनिराकरणञ्च सौत्रांतिकानामपि समानं तथापि प्रागुक्तः समुदायभावनिराकरणहेतुर्न सौत्रांतिकमते प्रवर्तते । तथाहि—कारणाभावेन तन्निराकरणं कृतम् । असिद्धः कारणाभावः । पूर्वपूर्वकारणक्षणानामुत्तरोत्तरकार्यक्षणान्प्रति पूर्ववर्तनमात्रेण कारणत्वसंभवात् । तत्र हि पक्षे वर्तमानत्वग्राहिप्रत्यक्षविषयस्य तत्कारणत्वं न स्यादिति प्रत्यभिज्ञाविरोधमात्रमुक्तम् । सा प्रत्यभिज्ञा वाह्यार्थप्रत्यक्षवादिनामेव न तदनुमेयत्ववादिनाम् । यत्तु कारणस्य कार्यात्यन्तसदृशरूपादिमत्त्वे तदनुगतकारणत्वमनुगतं प्रयोजकं कल्प्यमित्युक्तम् । तत्कल्पनापि न प्रवर्तते । क्षणिकत्वानुमानविरोधात् । वाधकाभावे ह्यनुगतप्रयोजककल्पनम् । तथा क्षणिकत्वानुमाने प्रत्यभिज्ञया वाध उक्तः सोऽपि न प्रवर्तते । बाह्यार्थेषु प्रत्यक्षप्रत्यभिज्ञाया असिद्धेः । अनुमितिरूपायाः विपक्षवाधकतर्कसहकृतप्रबलक्षणिकत्वानुमानविरोधेनानुत्थानात् । विपक्षे वाधकतर्कश्चात्र सत्त्वोच्छित्तिप्रसंगः । अर्थक्रियाकारित्वमेव हि सत्त्वम् । न ततोऽन्यज्जात्यादिरूपम् । प्रमाणाभावात् । तच्च स्थायित्वपक्षे

---

नयमणिमालायाम्

अथ समुदायाधिकरणम् ॥ ३ ॥

सू० ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥ १८ ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥ उभयथा च दोषात् ॥ २२ ॥ आकाशे चाविशेषात् ॥ २३ ॥ अनुस्मृतेश्च ॥ २४ ॥

स्कंधाणुहेतुकौ द्वावान्तरवाह्यौ वदन्ति समुदायौ । क्षणिकत्वतत्त्ववादिषु वैभाषिकसंज्ञकाः केचित् ॥ ११३ ॥

तत्र यदि कर्तुरिष्टिः सोऽपि क्षणिक इति कर्तृतास्य कथम् । तदनिष्टौ च न कार्यं न संप्रयुक्तस्य चेक्ष्यमाणत्वम् ॥ ११४ ॥

इति समुदायाधिकरणम् ॥ ३ ॥

## ॥ सू ॥ नासतोऽदृष्टत्वात् ॥ २५ ॥

**इह बौद्धैकदेशिनो ज्ञानानुमेयत्ववादो युक्तो न वा ॥**
**इति संशये पूर्वपक्षप्रसङ्गः–ज्ञाने स्वाकारं समर्प्य विनष्टमर्थं ज्ञानाकारवैचित्र्येणानुमिनोति ज्ञाता, ततो ज्ञानवैचित्र्येण बाह्यार्थवैचित्र्यमनुमीयत इति ॥**
**तदेतन्न संभवति, अर्थस्य क्षणिकत्वादसतो विनष्टस्य धर्मिणो धर्मसंक्रमणस्यादृष्टत्वात् ॥**

न संभवति । तथाहि स्थायी भावः स्वीयामर्थक्रियां किं क्रमेण कुर्यात् युगपद्वा । आद्ये कालान्तरभाविनीं प्रत्यपि इदानीं समर्थो न वा । प्रथमे तामपीदानीमेव कुर्यात् । समर्थस्य क्षेपायोगात् । द्वितीये कालान्तरेऽपि न कुर्यात् । इदानीमसमर्थः कालान्तरे समर्थ इत्येकस्मिन्विरुद्धधर्माध्यासस्तु न संभवति । द्वितीये त्विदानीमेव कर्तव्यस्य सर्वस्य कृतत्वात् कालांतरे तस्यासत्त्वं भवेदिति । ननु, क्षणिकत्वे बहवः प्रतिकूलतर्काः प्राग्दर्शिताः । किं बहुना । अयमपि विपक्षबाधकतर्कः क्षणिकत्वपक्षे न प्रवर्तते । तदुपयोग्यापाद्यापादकभूयस्सहचारदर्शनोपाध्यभावावधारणव्याप्तिग्रहणादीनामैकाधिकरण्यनियमात् । मैवम् । एवमादीनामैकाधिकरण्यनियमे क्षणिकत्ववादिनामसंप्रतिपत्तेः । अतिप्रसंगशंका तु कार्यकारणभावस्य नियामकत्वाभ्युपगमेन निवारणीया । चैत्रमैत्रादयो हि प्रत्येकं कार्यकारणभावापन्ननिरंतरसन्तन्यमानालय(विज्ञानाश्रितप्रवृत्ति)विज्ञानक्षणनिचयात्मकाः यथा चैत्रादिमासाः प्रत्येकं पूर्वापरभावापन्ननिरन्तरसन्तन्यमानदिवसनिचयात्मकाः । ततश्च यथा तत्तन्मासव्रतानामनेकदिवसाश्रयाणामपि तत्तन्मासान्तर्गतेष्वेव दिवसेषु व्यवस्थितिः नान्यमासांतर्गतदिवसाश्रयव्रतविशेषस्य मासान्तरदिवससंबंधः तथा चैत्रमैत्रादिगतज्ञानेच्छानुभवस्मरणादीनामनेकालयविज्ञानाश्रितानामपि चैत्रमैत्राद्यन्तर्गतेष्वेव तेषु व्यवस्थितिः । नान्यपुरुषांतर्गतालयविज्ञानाश्रितप्रवृत्तिविज्ञानादिकार्येच्छादीनां पुरुषान्तरान्तर्गतालयविज्ञानसंबंध इति युक्तैव व्यवस्था । तस्मान्न क्वाप्यतिप्रसंग इति । एवमधिकाशंकानिराकरणार्थमधिकरणांतरम्–सू ॥ **नासतोऽदृष्टत्वात्** । अत्रेदं सौत्रांतिकमतम् । ज्ञानगतैर्नीलाद्याकारैर्बाह्यार्थगतास्तेऽनुमीयंते । यद्यपि नीलादिज्ञानमपरोक्षतयानुभूयते इंद्रियव्यापारान्वयव्यतिरेकानुविधायि च भवति । तथापि इंद्रियसन्निकृष्टेन येनार्थेन यत् ज्ञानं जायते न तज्ज्ञानं तद्विषयकम् । किं तु स्वयमप्यर्थवन्नीलाद्याकारं भवति । तज्ज्ञानं स्वप्रकाशतया स्वात्मानं विषयीकुर्वत् स्वगतं नीलाद्याकारमपि विषयीकरोति । अतो नीलादिज्ञानस्य नापरोक्ष्यानुभवविरोधः । न वा इंद्रियव्यापारानुविधानविरोधः । नीलाद्यर्थिनो बहिःप्रवृत्तिस्तु नापरोक्षज्ञानात् किं तु तदनंतरभाविन अनुमानिकज्ञानात् । यथा वायुनिषेवणार्थिनः शाखाचलनं दृष्ट्वा वृक्षमूले प्रवृत्तिर्न चाक्षुषशाखाचलनज्ञानात् किं तु तल्लिंगकवायुसंचारविषयानुमानिकज्ञानादिति । अत्रेदं दूषणम् । इंद्रियसन्निकृष्टभावक्षणानंतरक्षणे हि ज्ञानं जायते । तत्र यथा वर्तमानत्वग्राहिण्यतीतस्य तस्य भावस्य विषयत्वं न युज्यते । एवं स्वधर्मसंक्रमणनिमित्तत्वमपि न युज्यते । विद्यमानस्यैव जपाकुसुमादेः स्फटिकादिषु स्वधर्मसंक्रमणस्य दृष्टत्वात् । तथापि नीलादिसंक्रमणाभ्युपगमे

(१) एतद्रेखांकितं ख. ग. पुस्तकयोर्नास्ति ।

## ॥ सू ॥ उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥

**क्षणिकत्वाभ्युपगमादन्य एवानुष्ठातान्य एव फलस्वामी । अतो निष्प्रयत्नानामपि सर्वार्थसिद्धिः स्यादिति दुरुपपादोऽयं वाद इति ॥**

**इति दृष्टत्वाधिकरणम् ॥ ४ ॥**

---

तद्गतं पुरोवर्त्तित्वनेदीयस्त्वदवीयस्त्वजडत्वादिकमपि संक्रामति । न वा संक्रामति चेदान्तरत्वज्ञानत्वादेस्तद्विरोधिनोऽवभासो न स्यात् स्फटिके लौहित्यसंक्रांतौ तद्विरोधिनश्शौक्ल्यस्येव । अथ न संक्रामति दर्पणे मुखगतप्राङ्मुखत्वनेदीयस्त्वादिवत्तदा लिंगाभावेन तदवभासो न स्यात् । अतः क्षणिकवादे बाह्यार्थप्रत्यक्षत्वस्येव तदनुमेयत्वस्याप्यसंभवात् बाह्यार्थव्यवहारसिद्ध्यर्थं तेषां स्थायित्वमेवांगीकरणीयमिति वैभाषिकसौत्रांतिकसाधारणं क्षणिकवादे दूषणमाह–सू ॥ उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥ ननूदासीनानां सिद्धिरापादयितुं न शक्यते तेषां तत्कारणकर्मतज्जन्यव्यापाररहितत्वात् । न च क्षणिकपक्षे यागाद्यनुष्ठानानंतरं स्वर्गादिफलभाजामपि तद्राहित्यं तुल्यमिति वाच्यम् । तेषां स्थायिव्यापाररहितत्वेऽपि यावत्फलप्राप्तिसन्तन्यमानक्षणिकव्यापारशालित्वादित्याशंक्य कर्मतद्व्यापारक्षणिकत्वप्रयुक्तं नेदमापादनं किंत्वनुष्ठातृभोक्तृभेदप्रयुक्तमिति सूत्रतात्पर्यमाह–क्षणिकत्वेति । ननु कार्यकारणभावेनैकप्रवाहान्तर्गतौ सत्यामिहान्यकृतकर्मफलमन्यो भुंक्ते इति नियमान्नातिप्रसंग इति चेत् । सत्यपि कार्यकारणभावेऽन्यस्य फलभोगार्थमन्यस्य बहुवित्तव्ययायाससाध्येषु कर्मसु प्रवृत्त्यनुपपत्तेः । ऐक्यभ्रमात्प्रवृत्तिः स्यादिति चेन्न । क्षणिकत्वनिश्चयवतः प्रवृत्त्यनुपपत्तेः । ननु सत्यपि भेदग्रहे पुत्रपौत्रादिपरंपरानुभाव्यफलेच्छया कर्मसु प्रवृत्तिर्दृष्टेति तद्वदिहापि स्यात् तत्र कार्यकारणभावनियामकस्य क्लृप्तेरिति चेत्तर्हि पितृकृतानामन्येषामपि कर्मणां फलं पित्रनुभवादिकार्यस्मरणादिकं च पुत्रपौत्रादिपरंपरायां भवेत् । कार्यकारणभावसंबन्धस्य स्वकीयविज्ञानसंतान इव पुत्रपौत्रादिसंतानेऽपि सत्त्वाविशेषात् । तस्मात् कार्यकारणभावस्यानियामकत्वात् कर्मतत्फलादिव्यवस्थासिद्धये प्रत्यभिज्ञाप्रामाण्यनिर्वाहाय चात्मनोऽन्येषां च स्थैर्यमेवांगीकरणीयम् । क्षणिकत्वानुमानस्य विपक्षबाधकतर्कस्तु न प्रवर्तते । समर्थस्यापि सहकारिसमवधानक्रमात् क्रमिककार्यजनकत्वोपपत्तेरित्यादिः क्षणिकवादिनिराकरणप्रपंचस्तत्रतत्र ग्रंथांतरे द्रष्टव्यः । ननु तथापि कथं सर्वात्मना क्षणिकत्वनिराकरणं शरीरभूगोलकगिरिनदीसमुद्रादिषु द्रव्यस्थैर्येऽपि तदीयपरिमाणादिरूपावस्थाविशेषाणां क्षणिकत्वस्यानिवार्यत्वादिति चेन्मैवम् । तद्भेदस्यावयवोपचयाद्यागन्तुकहेत्वधीनत्वांगीकारेण वैनाशिकमत इव हेत्वंतरनिरपेक्षप्रतिक्षणनियतस्वरसभंगवत्वरूपक्षणिकत्वाप्राप्तेः । तर्हि तार्किकैश्शरीरादिद्रव्यनाशोऽपि सहेतुक एवांगीकृत इति कथं तेऽर्धवैनाशिकपरिभाषया वैनाशिककोटौ निक्षिप्यन्ते ? । उच्यते । द्रव्यभेदांगीकारे अतिस्थिरत्वेन प्रसिद्धेष्वप्यर्थेषु व्यक्तयभेदप्रत्यभिज्ञा भ्रांता स्यादिति कूटसाक्षिण्याः प्रत्यभिज्ञायाः क्वचिदपि व्यक्तिस्थैर्ये प्रमाणयितुमशक्यत्वात् द्रव्यभेदवादिनः सर्ववैनाशिकपक्ष एव पतिताः स्युः । प्रत्यभिज्ञैव हि सारमवलम्बनं व्यक्तिस्थैर्यसिद्धौ । अनेन विशेषेणोच्यन्ते अर्धवैनाशिकास्तार्किका इति ॥

**इति दृष्टत्वाधिकरणम् ॥ ४ ॥**

## नयमणिमालायाम्

### अथ दृष्टत्वाधिकरणम् ॥ ४ ॥

**सू० ॥ नासतोऽदृष्टत्वात् ॥ २५ ॥ उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥**

स्वाकारमर्पयित्वा ज्ञाने विषये विनष्टेऽपि । ज्ञानाकृतिवैचित्र्याद्वदन्ति सौत्रांतिकास्तदनुमेयम् ॥
तदपि न युक्तं धर्मिणि नष्टे तद्धर्मसंक्रमणम् । प्रतिबिंबनानुवृत्तेः बिम्बे स्थित एव दृष्टत्वात् ॥

### इति दृष्टत्वाधिकरणम् ॥ ४ ॥

## सूत्रार्थचंद्रिकायाम्

### अथ समुदायाधिकरणम् ॥ ४ ॥

**सू ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥ इतरेतरप्रत्ययत्वादिति *चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १८ ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२०॥ प्रतिसंख्याप्रतिसंख्याप्राप्तिरविच्छेदात् ॥ २१ ॥ उभयथा च दोषात् ॥ २२ ॥ आकाशे चाविशेषात् ॥ २३ ॥ अनुस्मृतेश्च ॥ २४ ॥ नासतोऽदृष्टत्वात् ॥ २५ ॥ उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥**

**भगवत्पादमते** पूर्वमर्धवैनाशिकवैशेषिकमतनिराकरणानन्तरं पूर्णवैनाशिकमतं बुद्धिस्थं निराकरणीयमित्यवान्तरसंगत्येदमारभते–**सू ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥** वैभाषिकसौत्रान्तिकविज्ञानवादिसर्वशून्यवाबाह्याश्चत्वारो बुद्धमुनेश्शिष्याः । तत्रादौ वैभाषिकसौत्रान्तिकयोर्बाह्यार्थास्तित्वाविशेषात्तन्मतमेकीकृत्य निराक्रियतेऽस्मिन्नधिकरणे । अत्र वैभाषिकसौत्रान्तिकयोर्मतं प्रमाणमूलं वा भ्रान्तिमूलं वेति संदेहः । पृथिव्यादीनि चत्वारि भूतानि भौतिकानि विषयेन्द्रियाणि च परमाणुपुञ्जस्वरूपाणि । तत्र बाह्यः पृथिव्यादिसमुदायः परमाणुहेतुक एव । आध्यात्मिको रूपादिसमुदायो रूपविज्ञानवेदनासंज्ञासंस्कारलक्षणपञ्चस्कंधहेतुकः । इति तन्मतं प्रामाणिकमिति **पूर्वपक्षः । सिद्धान्तस्तु, उभयहेतुकेऽपि समुदाये**=परमाणुहेतुके बाह्यसमुदाये स्कंधहेतुके अध्यात्मिकसमुदाये च । **तदप्राप्तिः**=तस्य समुदायस्यासिद्धिः । अचेतनानां परमाणूनां स्कंधानां च स्वतः समुदायायोगात् अन्यस्य च स्थिरस्य समुदायकर्तुश्चेतनस्यानभ्युपगमात् । अतस्तयोर्मतं भ्रान्तिमूलमेवेति सिद्धम् । इति ॥

**सू ॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥ इतरेतरप्रत्ययत्वात्**=अविद्याहेतुका जन्मादयो जन्मादिहेतुकाश्चाविद्यादय इति मिथो हेतुहेतुमद्भावात् । **इति चेत्=अर्थात्संघातसिद्धिरिति चेत्** । न=तथा संघातो न सिद्ध्यति । कुतः । **उत्पत्तिमात्रनिमित्तत्वात्**=अविद्यादीनामितरेतरोत्पत्तिमात्रनिमित्तत्वात् क्षणिकत्वाभ्युपगमेन भोक्तुरभावाच्च न हि संघातः सिद्ध्येदिति भावः ॥

अविद्यादीनामितरेतरोत्पत्तिमात्रनिमित्तत्वान्न संघातसिद्धिरित्युक्तम् । तदपि न संभवतीत्याह–**सू ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥** कार्यकाले विद्यमानस्यैव मृदादेः कारणत्वं दृश्यते न तु नष्टस्य । भवन्मते तु उत्तरस्य कार्यक्षणस्य उत्पादे पूर्वस्य कारणक्षणस्य निरोधात् विनाशांगीकारात्तदितरेतरोत्पत्तिकारणत्वमपि अनुपपन्नमित्यर्थः ॥

ननु निर्हेतुक एव कार्योत्पादोऽस्तु तथा च नोक्तदोष इत्याशंक्याह—**सू ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥** असति हेतौ कार्योत्पत्तिरित्यङ्गीकारे **प्रतिज्ञोपरोधः**=पूर्वं ज्ञानचक्षुरालोकविषयेषु चतुर्षु हेतुषु सत्सु नीलादिज्ञानं जायते इत्यस्याः प्रतिज्ञाया उपरोधो विरोधः स्यात् । **अन्यथा**=कार्यस्य सहेतुकत्वाङ्गीकारेण कारणस्य कार्यपर्यन्तं स्थित्यंगीकारे । हेतुफलयोः **यौगपद्यम्**=एकस्मिन्काले स्थितिः प्रसज्येत । एवं च क्षणिकत्वप्रतिज्ञा विरुध्येतेति भावः ॥

इत्थं तन्मते समुदायकार्यकारणभावक्षणिकत्वानुपपत्तिमुपपाद्य अधुना तदभ्युपगतं द्विविधं विनाशं निराचष्टे—**सू ॥ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥** वैनाशिकाः किल कल्पयन्ति 'भावानां बुद्धिपूर्वकनाशः अबुद्धिपूर्वकनाशः आकाशश्चेति । त्रयमपि चैतदभावमात्रं निःस्वरूपमित्याचक्षते । आकाशं परस्तात्प्रत्याख्यास्यति । भावानां बुद्धिपूर्वको विनाशः प्रतिसंख्यानिरोधः अबुद्धिपूर्वकविनाशोऽप्रतिसंख्यानिरोधः आवरणाभावमात्रमाकाशमिति च परिभाष्यते । **प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिः**=भावानां बुद्धिपूर्वकाबुद्धिपूर्वकनाशयोः संतानसंतानिषु असंभवः । कुतः । **अविच्छेदात्**=न तावन्निरोधद्वयस्य संतानगोचरत्वं संतानस्याविच्छेदात् । नापि संतानिगोचरत्वं संतानिनां घटादीनां क्षणिकत्वेन बुद्धिपूर्वकनाशायोगात् । नाप्यबुद्धिपूर्वकसमूलनाशस्त्वदभ्युपगतस्संभवति । मूलस्य मृदादेः प्रत्यभिज्ञायमानत्वात् । तस्मान्निरोधद्वयस्यानुपपत्तिरित्यर्थः ॥

---

* 'न संघातभावानिमित्तत्वात्' इति श्रीकण्ठरामानुजभाष्यानुसारी पाठः ।

प्रतिसंख्यानिरोधान्तर्भूतमविद्यानाशं निराचष्टे–सू ॥ **उभयथा च दोषात्** ॥ २३ ॥ क्षणिकेषु स्थिरत्वादि-भ्रान्तिरविद्या । तस्याः किं सम्यग्ज्ञानान्नाशः स्वतो वा । पूर्वस्मिन्विकल्पे निर्हेतुकविनाशाभ्युपगमहानिप्रसंगः । द्वितीये तु सम्यग्ज्ञानोपदेशानर्थक्यमित्युभयथा च दोषप्रसंगादसमंजसमिदं सौगतमतमित्यर्थः ॥

इत्थं निरोधद्वयं निरस्याकाशस्य निरुपाख्यत्वं निरस्यति—सू ॥ **आकाशे चाविशेषात्** ॥ २४ ॥ ' आत्मन आकाशः संभूतः' इति श्रुत्या शब्दगुणत्वेन चाकाशेऽपि पृथिव्यादिवद्वस्तुत्वप्रतिपत्तेरविशेषान्न निरुपाख्यत्वमित्यर्थः ॥

अधुना आत्मनः क्षणिकत्वं निराचष्टे– सू ॥ **अनुस्मृतेश्च** ॥ २५ ॥ अनुभवमनु उत्पद्यमाना स्मृतिः अनुस्मृतिः । तद्बलादात्मनोऽनुभवितुः न क्षणिकत्वमित्यर्थः। अन्यानुभूते विषयेऽन्यस्य स्मरणायोगादित्यर्थः ॥ कारणाभावात्कार्योत्पत्तिरिति तन्मतं निराचष्टे—सू ॥ **नासतोऽदृष्टत्वात्** ॥ २६ ॥ **असतः**=अभावात्कार्योत्पत्तिर्न युक्ता । कुतः । **अदृष्टत्वात्**= निरुपाख्यान्नरविषाणादेः कार्योत्पत्तेरदृष्टत्वात् । दृष्टत्वादिति पदच्छेदे सत एव मृदादेः घटादिकार्योत्पत्तेर्दृष्टत्वादित्यर्थः ॥

अधुना प्रवृत्तिमात्रमपि न युक्तमित्याह–सू ॥ **उदासीनानामपि चैवं सिद्धिः** ॥ २७ ॥ **एवम्**=अभावाद्भावोत्पत्तिरित्यंगीकारे **उदासीनानां**=तत्तत्कार्यसाधनेष्वप्रवर्तमानानाम**पि च** पुंसाम् । **सिद्धिः**=स्वस्वाभिमतकार्यसिद्धिः स्यात् । अतो वैभाषिकसौत्रान्तिकयोर्मतं भ्रान्तिमूलमेवेति सिद्धम् ॥

## इति भगवत्पादमते समुदायाधिकरणम् ॥ ४ ॥

**श्रीकण्ठमते,** वैदिकैकदेशिमतनिराकरणानन्तरं प्रसक्ते वेदबाह्यमतनिराकरणे प्रथममिह बौद्धसिद्धान्तसिद्धं समुदायकारणवादं निराकरोति—**समुदाय इत्यादिना** ॥ बौद्धाभ्युपगतस्समुदायकारणवादो युक्तो न वेति संदेहे युक्त इति **पूर्वपक्षः** । क्षणिकत्ववादिनां तेषां मते कारणानां क्षणिकत्वेन कार्योत्पादनासमर्थत्वात् अविद्यायास्संघातभावानिमित्तत्वात् क्षणिकत्वाद्यनुपपन्नार्थाभिधानाच्च असंबद्ध एव समुदायकारणवाद इति **सिद्धान्तः** । **सूत्रार्थस्तु,** प्रायः पूर्वस्मादविशिष्टः ॥सू॥ **उभयथाच दोषात्** ॥ उत्पन्नस्य तुच्छतापत्तौ तुच्छादुत्पत्तौ च अभावादुत्पत्त्यसंभवादभावात्मककार्योत्पत्तिरूपाद्दोषाच्चासमञ्जसमिदं मतमित्यर्थः । इति विशेषः । अन्यत्समानम् ॥ **'अनुस्मृते'** श्चेत्यन्तमेवेदमधिकरणम् । **'नासत'** इत्यादिसूत्रद्वयमधिकरणान्तरमित्यप्यपरो विशेषः पूर्वस्मात् ॥ **इति श्रीकण्ठमते समुदायाधिकरणम्** ॥ ३ ॥

## अथ दृष्टत्वाधिकरणम् ॥ ४ ॥

एवं बाह्यार्थास्तित्ववादिषु वैभाषिकमतं निराकृत्य ज्ञानानुमेयत्ववादिसौत्रान्तिकमतं निराकरोति–सू ॥ **नासतोऽदृष्टत्वात्** ॥ २६ ॥ सौत्रान्तिकाभ्युपगतो ज्ञानानुमेयत्ववादो युक्तो न वेति संदेहे ज्ञाने स्वाकारं समर्प्य विनष्टोऽर्थो ज्ञानाकारवैचित्र्येणानुमीयते इति युक्तो ज्ञानानुमेयत्ववाद इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** अर्थस्य क्षणिकत्वादसतो विनष्टस्य धर्मिणो धर्मसंक्रमणस्यादृष्टत्वात् क्षणिकत्वाभ्युपगमान्निष्प्रयत्नानामपि सर्वार्थसिद्धिसंभवाच्चायुक्तो ज्ञानानुमेयत्ववाद इति ॥

## इति श्रीकण्ठमते दृष्टत्वाधिकरणम् ॥ ४ ॥

**रामानुजमते,** बाह्यार्थास्तित्ववादिनोर्वैभाषिकसौत्रान्तिकयोर्मते जगदुत्पत्त्यादिकं सूपपादं दुरुपपादं वेति संशयः । सूपपादमिति **पूर्वपक्षः** । दुरुपपादमिति सिद्धान्तः । सूत्रार्थवर्णनादिकं सर्वं श्रीकण्ठमतवदेव । अधिकरणरचना परं शांकरमतमेवानुकरोतीति विशेषः ॥ अन्यत्समानं श्रीकण्ठमतेन ॥ **इति समुदायाधिकरणम्** ॥ ३ ॥

**आनंदतीर्थमतं,** घटादीनामीश्वरनिरपेक्षकालकर्मनिमित्तक्षणिकपरमाणुसमुदायरूपत्ववादिनोर्वैभाषिकसौत्रान्तिकयोर्मतं युक्तं नवेति संदेहे युक्तमिति **पूर्वपक्षः** । न युक्तमिति **सिद्धान्तः** । **सूत्रार्थस्तु, सू** ॥ **समुदाय उभयहेतुकेऽपि तदप्राप्तिः** ॥ १८ ॥ **समुदाये**=परमाणुसमुदाये अनेकत्वसंख्यारूपे । **उभयहेतुकेऽपि**=मिलितानेकपरमाणुनिमित्तके अङ्गीकृते सत्यपि विरलानेकहेतुके वाङ्गीकृते सति । **तदप्राप्तिः**=तस्य समुदायस्य विरलानेकहेतुकस्य अप्राप्तिः अनुपपत्तिः । कुतः । अन्योन्याश्रयादिदोषादिति शेषः ॥ सू ॥ **इतरेतरप्रत्ययत्वादित्यादि** ॥ **इतरेतरप्रत्ययत्वात्**= परमाणुपरस्परापेक्षाबुद्धिनिमित्तकत्वात् । तथा च तादृशबुद्ध्यभावकाले समुदायव्यवहारादेरसत्त्वात्प्रलयोपपत्तिरिति चेन्न । **उत्पत्तिमात्रनिमित्तत्वात्**=परमाणूनां स्वसमुदायोत्पत्तिमात्रनिमित्तत्वात् । न तेभ्योऽपेक्षाबुद्ध्यादेरप्युत्पत्तिः संभवतीति मात्रशब्दार्थः । तथा च तन्निमित्तकव्यवहारादिः क्षणिकमते न कदापि संभवतीत्यर्थः ॥ सू ॥ **उत्तरोत्पादे च पूर्वनिरोधात्** ॥ २० ॥ चोऽवधारणे समुच्चये च । नेत्यनुवर्तते । सामर्थ्यादिति शेषः । तथा च न केवलं क्षणिकमते समुदायव्यवहारानुपपत्तिः । किं तु विशेषकार्योत्पत्तिश्च न युक्ता । कुतः **उत्तरोत्पादे च**=कारणस्य सदृशकार्यजननसामर्थ्यात् उत्तरस्य स्वसदृशकार्यस्योत्पादे उत्पत्तौ सत्यामेव । **पूर्वनिरोधात्**=पूर्वस्य कारणस्य नाशात् पुनर्विसदृशकार्यजनकत्वासंभव इत्यर्थः । सू ॥ **असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** ॥२१॥ **असति** असति कारणे कार्यमुत्पद्यते इत्यङ्गीकारे **प्रतिज्ञोपरोधः**=‘तत्तस्य कार्य’मिति सिद्धान्तव्यवहारस्य हानिः स्यात् । **अन्यथा**=कारणे सति कार्यमुत्पद्यत इत्यङ्गीकारे । **यौगपद्यम्**=कारणेन सह कार्याणामेकदावस्था प्रसज्येतेति भावः ॥

अथ उपलब्ध्यधिकरणम् ॥ ५ ॥

॥ सू ॥ नाभाव उपलब्धेः ॥ २७ ॥

इह बौद्धानां केवलविज्ञानवादो युक्तो न वा ॥

इति संशये युक्त इति पूर्वः पक्षः । तथा हि—साकारं विज्ञानमेव तत्त्वमान्त-

---

अथ उपलब्ध्यधिकरणम् ॥ ५ ॥

सू० ॥ नाभाव उपलब्धेः ॥ २७ ॥ क्षणिकत्वे नीलाद्यर्थानां प्रत्यक्षत्वमनुमेयत्वं वा नोपपद्यत इति बाह्यार्थव्यवहारार्थं तेषां स्थैर्यमास्थेयमिति वैभाषिकसौत्रांतिकमतयोः दूषणमुक्तम् । तदयुक्तम् । नीलाद्यर्थानामांतरविज्ञानरूपत्वेन स्वप्रकाशैस्तैरेव विज्ञानैस्तत्प्रत्यक्षीकरणसंभवात् विज्ञानरूपाणामेव तेषां बहिर्वदवभासो भ्रम इति तद्व्यतिरिक्तानां बाह्यार्थानामभावादिति योगाचारप्रत्यवस्थानेन संगतिमभिप्रेत्य संशयं दर्शयति—इहेति। नन्वहमिदं जानामीति ज्ञातृज्ञेयज्ञानरूपांशत्रये भासमाने कथञ्च विज्ञानमात्रमेव तत्त्वमिति वादः प्रवृत्त इत्याशंक्य तन्मतमुपपादयति—तथाहीति । विज्ञानमेव तत्त्वं नान्यत्परमाणुसमुदायरूपं तदारब्धावयविरूपं वा किंचिदस्ति । परमाणूनामप्रामाणिकत्वात् । तेषां क्षणिकानां समुदायभावासंभवात् परमाणुषु संयोगस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वविकल्पदुःस्थत्वेनावयवेष्ववयविनः कृत्स्नैकदेशवृत्तिविकल्पदुःस्थत्वेन च परस्परसंयुक्तावयवजन्यतदाश्रितावयव्यसंभवात् बाह्यार्थानामांतरविज्ञानसंबंधानिरूपणेन तद्विषयत्वासंभवाच्च। संबंधं विना विषयत्वे सर्वविषयाणामेकस्मिन्नेव ज्ञानेऽवभासप्रसंगात् । न च बाह्यार्थाभावे नीलपीतादिज्ञानानां निरालंबनत्वापातः । ज्ञानानामेव नीलपीताद्याकारत्वात् नीलपीतादिकं ज्ञानाभिन्नं भासमानत्वात् ज्ञानाज्ञानसहोपलंभनियतत्वात् ज्ञानवदित्यनुमानात् । न च सहत्वस्य भेदगर्भत्वात् द्वितीयहेतुर्विरुद्ध इति शंकनीयम् । ज्ञानोपलंभव्याप्योपलंभविषयत्वस्य तदर्थत्वात् तदविनाभावरूपस्य तद्व्याप्यत्वस्याभेदेऽपि संभवात् । न च नीलतद्विज्ञानयोरभेदे इदं जनामीति क्रियाकर्मभावरूपभेदावभासविरोधः । तस्य द्विचं-

---

सू ॥ **प्रतिसंख्येत्यादि**॥ इदमविशिष्टार्थं पूर्वस्मात् ॥ सू ॥ **उभयथा चदोषात्** ॥ २३ ॥ **उभयथा च**=कारणे सति कार्यं भवत्येवेति नियमपक्षे तदभावपक्षे च । **दोषात्**=कार्यकारणविशेषकार्यानुत्पत्त्याख्यदोषसत्त्वात् क्षणिकपक्षो न युक्त इत्यर्थः ।

सू ॥ **आकाशे चाविशेषात्** ॥ २४ ॥ **आकाशे अविशेषात्**=क्षणिकत्वसाधकत्वेन परोक्तपरिमाणविशेषादर्शनादित्यर्थः । तथा च सत्प्रतिपक्षोऽयं हेतुरिति न तेन क्षणिकत्वसिद्धिरिति भावः ॥ सू ॥ **अनुस्मृतेश्च** ॥ २५ ॥ **अनुस्मृतेश्च**='तदेवेद'मिति प्रत्यभिज्ञानाच्च क्षणिकत्वसाधनं न युक्तमित्यर्थः ॥ अस्मिन्मते अधिकरणरचना श्रीकण्ठमतवदिति विशेषः ॥ **इति समुदायाधिकरणम्** ॥ ७ ॥

**अथादृष्टत्वाधिकरणम्** ॥ ८ ॥

सू ॥ **नासतोऽदृष्टत्वात्** ॥ २६ ॥ जगतश्शून्यविवर्तत्ववादिनो माध्यमिकस्य मतं युक्तं न वेति संदेहे युक्तमिति **पूर्वपक्षः** । **असतः**=शून्यस्य जगत्कर्तृत्वं न युक्तम् । कुतः । प्रमाणाभावादिति शेषः । तत्कुतः । **अदृष्टत्वात्**=क्वाप्यसतः कारणत्वादर्शनात् अत एवानुमानागमयोरप्यभावादित्यर्थः । **उदासीनानामपि चैवं सिद्धिः** ॥२७॥ **एवं सति**=असतः कार्योत्पादकत्वेऽङ्गीकृते सति । **उदासीनानाम्**—हेयोपादेयत्वबुद्ध्यविषयाणां गगनकुसुमादीनां सकाशादपि । **सिद्धिः**=सौरभ्यादिकार्यसिद्धिः स्यादित्यर्थः । अतो माध्यमिकमतमयुक्तमित्यर्थः ॥

**इत्यानन्दतीर्थमते अदृष्टत्वाधिकरणम्** ॥ ८ ॥

रम्, न बाह्याः पदार्थाः, स्वप्ने बाह्यपदार्थाननपेक्ष्य केवलया बुद्ध्या व्यवहारदर्शनात्। तद्वत् जाग्रद्व्यवहारस्यापि व्यवस्था युज्यते। ततो विज्ञानमात्रं तत्त्वमिति ॥

एवं प्राप्तेऽभिधीयते–घटं जानामीति कर्तुः कर्मतयार्थस्योपलब्धेस्तदभावो न शक्यते वक्तुम्। पुरुषस्यार्थविशेषव्यवहारानुगुण्यापादनमेव हि ज्ञानस्याकारः ॥

यदुक्तम्, स्वप्नदृष्टान्तेन जाग्रद्व्यवहारस्यापि शून्यत्वं, तत्राह–

॥ सू ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥

कारणदोषबाधराहित्यरूपवैधर्म्याच्च न स्वप्नादिवज्जागरितज्ञानस्य मिथ्यात्वम्। अतो न विज्ञानमात्रं तत्त्वम् ॥

युक्त्यन्तरमाह–

॥ सू ॥ न भावोऽनुपलब्धेः ॥ २९ ॥

अर्थशून्यस्य ज्ञानस्य सद्भावो न संभवति, तस्य कुत्राप्यनुपलम्भात् । स्वप्न-

---

द्रज्ञानवत् भ्रांतत्वात् । तदाहुः–'सहोपलंभनियमादभेदो नीलतद्धियोः । भेदस्तु भ्रांतिविज्ञाने दृश्येतेन्दाविवाद्वये' ॥ इति । बाह्यस्य नीलादेः कथमान्तरज्ञानभेदावभासो भ्रम इति चेत् । बाह्यत्वावभासोऽपि भ्रम एव । उपरि स्थितानां नक्षत्रादीनामुद्यतां भूमिस्थत्वावभासवत् । एतेनाहं जानामीति क्रियाकर्तृभावेन भेदावभासोऽपि व्याख्यातः । तदप्याहुः–'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥' इति । इत्थं प्रवृत्तो विज्ञानवादः । ननु बाह्यार्थतदवभासयोरभावे कथं बाह्यार्थव्यवहारः इत्याशंक्य दृष्टांतेनोपपादयति–स्वप्न इति । ज्ञानातिरिक्तस्यार्थस्य नाभावः उपलब्धेः प्रत्यक्षोपलब्धिविरोधेन ज्ञानाभेदानुमानानुत्थानादिति सूत्रार्थं दर्शयन् सिद्धांतयति–घटं जानामीति । न च दृढविपक्षबाधकतर्कानुगृहीतानुमानविरोधात् प्रत्यक्षोपलब्धिरेव भ्रांतिरिति शंकनीयम् । विपक्षबाधकतर्काणां प्रशिथिलत्वात् समुदायारंभवादोक्तदोषाणां श्रुतिपरिगृहीते परिणामवादे प्रसराभावात् चिच्छक्तिपरिणामरूपस्य प्रदीपप्रभावद्द्रव्यस्य ज्ञानस्य चक्षुरादिगोलकद्वारा बहिर्दीर्घप्रभाकारेण निर्गतस्य विषयैः संयोगसंभवेन ज्ञानविषयसंबंधानिरूपणासिद्धेश्चेति भावः। स्यादेतत्। बाह्यं नीलादिकमभ्युपयद्भिरपि ज्ञानानां नीलाद्याकारत्वमनुभवसिद्धमवश्यमंगीकरणीयम्, तेनैव सर्वव्यवहारोपपत्तौ किं बाह्यार्थकल्पनया, न हि नीलाद्याकारद्वयमुपलभ्यत इत्याशंक्याह–पुरुषस्येति। पुरुषस्य नीलाद्यर्थविशेषेषु यो व्यवहार इच्छाप्रवृत्त्यादिरूपः तदानुगुण्यमेव ज्ञानस्य नीलाद्याकारः, न तु बाह्यार्थस्येव मुख्यं नीलाद्याकारत्वमस्ति। नीलपीतशीतोष्णादिसमूहालंबनानां परस्परविरुद्धानेकरूपत्वापत्तेरिति भावः। स्वप्नदृष्टांतेन नीलादिज्ञानानां बाह्यार्थशून्यत्वं यदुच्यते तत्स्वप्नमायादीनां बाह्यार्थशून्यत्वं परमतानुसारेणाभ्युपगम्यैव दृष्टांतवैधर्म्यप्रदर्शनार्थम्। उत्तरसूत्रमवतारयति–यदुक्तमिति। सू० ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ १८ ॥ स्वप्नादिषु हि निद्रादिदोषोपप्लुतानि करणानि अनंतरं बाधश्च दृश्यते नैतदुभयं नीलादिज्ञानेष्वस्तीति वैधर्म्यमुपपादयति–कारणेति। वस्तुतः क्वचिदपि ज्ञानानामर्थशून्यत्वं संप्रतिपन्नं नास्तीति स्वमतप्रदर्शनार्थं सूत्रम्–सू० ॥ न भावोऽनुपल-

**ज्ञानस्याप्यर्थवत्ता संभवत्येव ॥ ततो विज्ञानमात्रवादोऽनुपपन्न एव ॥**
**इत्युपलब्ध्यधिकरणम् ॥ ५ ॥**

**ब्धेः ॥ २९ ॥ संभवत्येवेति । सन्ध्याधिकरणे तथा समर्थयिष्यत इति भावः ॥**
**इत्युपलब्ध्यधिकरणम् ॥ ५ ॥**

---

## नयमणिमालायाम्
## अथोपलब्ध्यधिकरणम् ॥ ५ ॥

**सू० ॥ नाभाव उपलब्धेः ॥ २७ ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥ न भावोऽनुपलब्धेः ॥ २९ ॥**

बाह्यार्थ एव नास्ति प्रत्यक्षो वानुमानगम्यो वा । विज्ञानमेव तत्त्वं स्वप्नवदाकारवदिति योगाचारः ॥११७॥
बाह्यमुपलभ्यमानं कथमर्थमपह्नुवीत साहसिकः । कारणदोषो नास्ति स्वप्नेष्विव नापि दृश्यते बाधः ॥ ११८ ॥

## इति उपलब्ध्यधिकरणम् ॥ ५ ॥

## सूत्रार्थचन्द्रिकायाम्
### अथोपलब्ध्यधिकरणमथवा अभावाधिकरणम् ॥

**सू ॥ नाभाव उपलब्धेः ॥ २७ ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥ न भावोऽनुपलब्धेः ॥ २९ ॥ *क्षणिकत्वाच्च ॥ ३० ॥ सर्वथानुपपत्तेश्च ॥ ३१ ॥**

**भगवत्पादमते** अनेनाधिकरणेन, योगाचाराणां विज्ञानवादिनां तथा सर्वशून्यवादिनां माध्यमिकानां च मतं निराक्रियते। विज्ञानातिरिक्तबाह्यपदार्थस्याभाव इति विज्ञानवादिनां योगाचाराणां सिद्धान्तोऽत्र विषयः । स किं प्रमाणमूलः उत भ्रान्तिमूल इति संशयः । आन्तरं विज्ञानमात्रमस्ति । तदेव नीलाद्याकारं न तु तद्व्यतिरेकेण बाह्यं नीलादिकमस्ति । तदेव विज्ञानाकारात्मकं नीलादिकमनादिवासनावशाद्बहिर्वदवभासते। इतीदं मतं प्रामाणिकमिति **पूर्वपक्षः । सिद्धान्तस्तु,** विज्ञानातिरिक्तघटपटादिपदार्थानामुपलभ्यमानत्वात्तदभावे ज्ञानवैचित्र्यानुपपत्तेः आलयविज्ञानस्य क्षणिकत्वेन वासनानां निराश्रयतापत्त्या तद्बलादपि ज्ञानवैचित्र्यस्य दुरुपपादत्वात् 'पश्यना' 'तिष्ठने' त्याद्यपशब्दप्रयोगादन्यत उक्तक्रमेणार्थतश्च सर्वथास्य मतस्यानुपपत्तेश्च भ्रान्तिमूलमेवेति । सर्वशून्यवादिमाध्यमिकमतनिरासपरत्वेनैतान्येव सूत्राणि योजनीयानि । अतो न पृथक्सूत्रारंभः । सूत्रार्थवर्णनप्रकार इत्थम्—सू ॥ **नाभाव उपलब्धेः ॥ २७ ॥ अभावः**= विज्ञानातिरिक्तबाह्यपदार्थाभावः । **न**= न संभवति । कुतः । **उपलब्धेः**= घटपटादिपदार्थानामनुभवसिद्धत्वात् ॥ माध्यमिकनिराकरणपक्षे ज्ञानार्थयोरभावो न युक्तः । प्रमाणतस्तयोरुपलब्धेरित्यादिरीत्या तन्मतप्रक्रियानुसारेण व्याख्येयम् । सू ॥ **वैधर्म्याच्च न स्वप्नादिवत् ॥२८॥ वैधर्म्याच्च**= स्वप्नजागरितप्रत्यययोरन्योन्यं बाधितविषयत्वाबाधितविषयत्वरूपवैधर्म्यात् स्वप्ने प्रातिभासिकविषयसत्त्वेन साध्यवैकल्याच्च। **स्वप्नादिवत्**= स्वप्नादिदृष्टान्तेन । **न**= जागरितज्ञानस्य निरालंबनत्वं न युक्तम् । इति ॥ माध्यमिकपक्षे **स्वप्नादिवत्**= स्वप्न आदिर्यस्यास्सुषुप्तेस्तद्वत् । **वैधर्म्याच्च**= उपलब्ध्यनुपलब्धिवैधर्म्यलक्षणाबाधितज्ञानार्थोपलब्धिबाधात् तत्राप्यात्मज्ञानसत्त्वेन साध्यवैकल्याच्च जाग्रत्स्वप्नयोर्ज्ञानार्थशून्यत्वं नानुमेयमित्यर्थः ॥

अर्थानामभावेऽपि वासनावशात् ज्ञानवैचित्र्यं स्यादित्यत आह– सू ॥ **नभावोऽनुपलब्धेः ॥ २९ ॥ भावः**= वासनानां सद्भावः । **न**= न भवति । कस्मात् । **अनुपलब्धेः**= त्वत्पक्षे बाह्यार्थानामनुपलब्धेरित्यर्थः । तथा च बाह्यार्थानुभवस्य वासनां प्रति कारणत्वात् कारणाभावे कार्याभावात् आश्रयाभावाच्च वासनानुपपत्तिरिति भावः । माध्यमिकपक्षे निरधिष्ठाननिषेधायोगात्तन्मतेऽधिष्ठानभूतस्य तत्वस्य मानतोऽनुपलब्धेर्न सद्भाव इति ॥

तर्हि अहमित्यालयप्रत्यय एव वासनाश्रयोऽस्त्वित्यत आह– सू ॥ **क्षणिकत्वाच्च ॥ ३० ॥** आलयविज्ञानस्य क्षणिकत्वाङ्गीकारान्नाश्रयत्वमित्यर्थः । अन्यत्र पक्षे शून्यत्वविरोधिक्षणिकत्वोपदेशाच्चेत्यर्थः ॥

**सू ॥ सर्वथानुपपत्तेश्च ॥ ३१ ॥** 'पश्यना' 'तिष्ठने' त्याद्यपशब्दप्रयोगात् ग्रन्थत उक्तक्रमेणार्थतश्चानुपपत्तेर्नादरणीयं भ्रान्तिमूलं सौगतमतमित्यर्थः ॥ **श्रीकण्ठमते** तथा **रामानुजमते** च '**नाभाव उपलब्धे**' इत्यादीनि त्रीणि सूत्राणि विज्ञानवादि**योगाचार**मतनिरासक**मुपलब्ध्येधिकरणमिति** व्यपदिश्यंते । '**क्षणिकत्वाच्च**' इति सूत्रमनयोर्मतयोर्नास्ति । '**सर्वथानुपपत्तेश्च**' इति सूत्रं तु सर्वशून्यवादिमाध्यामिकमतनिरासकमधिकरणान्तरमिति च शांकरमताद्विशेषः। प्रतिपक्षिमतनिराकरणप्रक्रिया यद्यपि सर्वमतसाधारणा तथापि सूत्रार्थनिरूपणे परमनयोरन्योन्यसलक्षण-

---

* इदं सूत्रं शांकरानन्दतीर्थीयभाष्ययोरेव दृश्यते न श्रीकण्ठरामानुजभाष्ययोरिति वेद्यम् ॥

## अथ सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

## ॥ सू ॥ सर्वथानुपपत्तेश्च ॥ ३० ॥

**इहाधिकरणे सर्वशून्यवादो युक्तो न वेति संदेहः ॥**

युक्त इति पूर्वः पक्षः। तथा हि–सर्वं जगन्न सत्, बाधितत्वात्। नासत्, प्रतीयमानत्वात्। नोभयात्मकं, विरोधात्। नानुभयात्मकम्, असंभवात्। किंतु चतुष्कोटिविनिर्मुक्तं सर्वं शून्यमेव। प्रत्यक्षावभासस्तु संवृतिमूलः। तस्माच्छून्यवादः समीचीन इति ॥

एवं प्राप्ते सिद्धान्त उच्यते–न संभवति सर्वशून्यवादः। कुतः? सदिति प्रतिज्ञायामिव असदिति प्रतिज्ञायामन्यथा प्रतिज्ञायां च तुच्छत्वानुपपत्तेः सदसद्बुद्धितच्छब्दानां वस्तुगतान्योन्यविरुद्धभावाभावरूपावस्थाविशेषविषय-

## अथ सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

निराकृतो विज्ञानवादः। अथ बौद्धसिद्धांतरहस्यभूतशून्यवादनिराकरणार्थमधिकरणांतरम् सू॥ सर्वथानुपपत्तेश्च ॥३०॥ माध्यमिकाः किल कल्पयंति शून्यमेव तत्वं सुगतस्याभिमतम्। शिष्ययोग्यतानुसारेण तत्तदर्थास्तित्वोपदेशः। वस्तुतः विज्ञानमात्रमपि न निरूपयितुं शक्यम्। तथा हि–न तावद्विज्ञानं सत् नीलपीतशीतोष्णाद्येकानेकस्वभावत्वविकल्पदौःस्थ्यात्। असत्त्वादिपक्षाश्चापरोक्षावभासादिविरुद्धाः।ततः शून्यमेव तत्वमिति।तदाहुः'–नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम्। एकानेकस्वभावेन 'वियोगाद्वियदब्जवत्। न सन्नासन्न सदसत् न वाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्वं माध्यमिका विदु'रिति। शून्यस्य सत्त्वेन प्रत्यक्षावभासः सद्व्यवहारविषयत्वादिकं च संवृतिमहिम्ना। यया शून्यतत्वं संमीयते सा संवृतिः भ्रांतिवासनारूपेत्याद्यपि कल्पयन्ति। अत्र दूषणमुक्तं सूत्रकृता सर्वथानुपपत्तेश्चे' ति। चकारो भिन्नक्रमः। सर्वप्रकारेण च इत्यन्वयः। सत्त्वादिप्रकारचतुष्टयेन हि निषेधः शून्यवादिना प्रतिज्ञायते 'चतुष्कोटिविनिर्मुक्त'मिति। तेन सर्वेणापि प्रकारेण निषेधप्रतिज्ञायां सर्वशून्यत्वरूपं तुच्छत्वं नोपपद्यते किंत्ववश्यं सद्वस्तुपरिशेषस्संपद्यत इत्यतो न युक्तः शून्यवाद इति सूत्रार्थः। अमुं सूत्रार्थमाविष्कुर्वन् सिद्धांतमाह–न संभवतीति। सदिति प्रतिज्ञायामिति। दृष्टांतोक्तिः। असदिति प्रतिज्ञायामिति। सन्न भवतीति प्रतिज्ञायामित्यर्थः। अन्यथा प्रतिज्ञायामिति। असन्नभवति सन्न भवति सदसद्विलक्षणं न भवतीत्यवशिष्टत्रिविधप्रतिज्ञायामित्यर्थः। नन्वासु चतसृषु प्रतिज्ञासु तावद्विलक्षणत्वरूपं तुच्छत्वं संपद्यत एव कुतस्तुच्छत्वानुपपत्तिरुक्तेत्याकांक्षायां तत्र सूत्रकाराशयस्थं हेतुमाह–सदसदिति। यथा सद्बुद्धिशब्दौ देशकालवस्तुस्वरूपान्यतमवस्तुगतभावरूपावस्थाविशेषविषयौ। एवं सत्त्वनिषेधादि-

योरस्ति किंचिदिव वैलक्षण्यं शांकरमतात्।तच्च दिक्प्रदर्शनन्यायेनेह किंचिदिव प्रदर्श्यते। यथा–सू॥ **नाभाव उपलब्धेः** ॥ २७ ॥ विज्ञानातिरिक्तबाह्यपदार्थस्याभावो न शक्यते वक्तुम्। घटमहं जानामीति जानातेः कर्मतया कर्तृतया चार्थस्योपलब्धेरित्यथः॥ सू॥ **वैधर्म्याच्च न स्वप्नादिवत्** ॥ २८ ॥ करणदोषबाधराहित्यरूपवैधर्म्याच्च स्वप्नज्ञानादिवन्न जागरितज्ञानस्य मिथ्यात्वं भवतीत्यर्थः ॥ सू ॥ **न भावोऽनुपलब्धेः** ॥ २९ ॥ अर्थशून्यस्य ज्ञानस्य सद्भावो न संभवति। तस्य कुत्राप्यनुपलंभात्। इत्यर्थः ॥इति **श्रीकण्ठरामानुजयोर्मते उपलब्ध्यधिकरणम्** ॥ ५ ॥

(१) ' विरोधाद्वियदब्जवत् इति ' क पाठः।

त्वात् । यत्तु संवृतिमूलः प्रत्यक्षावभास इति, तदप्यपहास्यम् । सर्वस्य शून्यत्वे कः संवृतेराश्रयः ? यस्यैवमवभासः । ततः सर्वशून्यवादः सर्वविरुद्ध एव ॥

इति सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

बुद्धिशब्दावपि तद्गताभावरूपावस्थाविशेषविषयौ । तद्यथा–इदमिहास्ति इदमिदानीमस्ति, इदमेवंरूपं भवतीति सत्त्वबुद्धिशब्दौ देशकालवस्तुपरिच्छिन्नसत्त्वविषयौ । एवमिदमिह नास्ति इदमिदानीं नास्ति इदमेवंरूपं न भवतीत्यसत्त्वबुद्धिशब्दौ देशकालवस्तुपरिच्छिन्नासत्त्वविषयावेव लोके प्रसिद्धौ । निरुपाधिकस्तु सत्त्वनिषेधः क्वचिदपि न प्रसिद्धः । असत्त्वनिषेधादिष्वप्येषैव रीतिः । तस्मात्सर्वात्मना जगतस्सत्त्वासत्त्वादिनिषेधो नोपपद्यत इति भावः । सर्वस्य शून्यत्व इति । संवृतिर्हि संवरणीयमाश्रयति । सर्वस्य शून्यत्वे संवृतेः कश्चिदाश्रय एव नास्ति यन्निष्ठा सती तदाच्छाद्यासत्यं प्रपंचं सत्यतयावभासयेदित्यर्थः । यस्यैवमवभास इति । यस्य वस्तुतो निष्प्रपंचस्य सत्यस्यासत्यप्रपंचात्मनावभासो भवेत् तादृशं किंचित्संवृतिशब्दिताविद्याश्रयभूतमधिष्ठानं नास्तीत्यर्थः ।

इति सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

---

## नयमणिमालायाम्

### अथ सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

सू० ॥ सर्वथानुपपत्तेश्च ॥ ३० ॥

नो बाह्यमांतरं वा किमप्यतश्शून्यमेव परमार्थः । प्रत्यक्षाद्यवभासस्संवृतिमूल इति माध्यमिकः ॥ ११९ ॥

कस्संवृतिमान्पुरुषस्सर्वस्यैवास्य शून्यत्वे । यस्य प्रतिनियतमहाप्रपंचविषयोऽयमवभासः ॥ १२० ॥

इति सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

सू ॥ सर्वथानुपपत्तेश्च ॥ ३० ॥ इहाधिकरणे माध्यामिकोक्तस्सर्वशून्यवादो निराक्रियते । स युक्तो न वेति संदेहः । स युक्त इति पूर्वपक्षः । सदसद्भावयोर्विद्यमानवस्तुधर्मत्वोपपादनात् सदिति प्रतिज्ञायामिवासदिति प्रतिज्ञायामन्यथाप्रतिज्ञायांच सर्वथापि सर्वशून्यत्वानुपपत्तेर्न युक्त इति सिद्धान्तः । इदमप्यधिकरणमविशिष्टमन्योन्यं श्रीकण्ठरामानुजमतयोरिति वेद्यम् ॥

इति श्रीकण्ठरामानुजमतयोस्सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

आनन्दतीर्थमते, 'नाभाव उपलब्धेः' 'वैधर्म्याच्च न स्वप्नादिवत्' इतीदं, सूत्रद्वयं, पूर्वाधिकरणशेषतया व्याख्यातम् । जगतश्शून्यविवर्तत्ववादिमाध्यमिकमतनिरासके पूर्वस्मिन्नधिकरणे पूर्वसूत्राभ्यां जगतश्शून्यपरिणामत्वं निरस्तं तर्हि शून्यविवर्तत्वं जगतोऽस्त्वित्याशंक्य परिहरति– सू ॥ नाभाव उपलब्धेः ॥ २९ ॥ जगत् अभावः= असत् । न= न भवति । कुतः । उपलब्धेः= सदिति प्रतीयमानत्वादित्यर्थः ॥ सू ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥ जगत् स्वप्नादिवत्= स्वप्नवत् स्वाप्नवस्तुन्यारोपितजाग्रत्त्वादिवदपि असत् न भवति । कुतः । वैधर्म्यात्= स्वाप्नजाग्रत्त्वस्य बाध्यत्वाख्यविलक्षणधर्मवत्त्वात् जगति च तदभावादित्यर्थः । अतो माध्यमिकमतोक्तोजगतश्शून्यविवर्तत्ववादोऽयुक्त इति ॥ इत्यानन्दतीर्थमते अदृष्टत्वाधिकरणम् ॥ ८ ॥

### अथानुपलब्ध्यधिकरणम् ॥ ९ ॥

सू ॥ न भावोऽनुपलब्धेः ॥ ३० ॥ नित्यं निरंजनं विज्ञानमेकमेव तत्त्वं न तद्भिन्नः प्रपञ्चोऽस्तीति वादिनो योगाचारस्य मतं युक्तं न वेति संदिह्य युक्तमिति पूर्वपक्षे प्राप्ते न युक्तमिति सिद्धान्त उच्यते । यथा–जगत् भावः= ज्ञानात्मकमपि, न भवति । कुतः । अनुपलब्धेः= ज्ञानज्ञेययोरभेदाननुभवादित्यर्थः ॥

सू ॥ क्षणिकत्वाच्च ॥ ३१ ॥ ज्ञानस्यैकक्षणावस्थायित्वात् जगतः स्थायित्वात्तद्विरोधान्न तयोरैक्यमित्यर्थः ॥

सू ॥ सर्वथानुपपत्तेश्च ॥ ३२ ॥ सर्वथा= सर्वप्रकारेण अनुपपत्तेश्च= बौद्धराद्धान्तस्य युक्तिशून्यत्वात् युक्तिविरुद्धत्वाच्च न ग्राह्यत्वमित्यर्थः ॥

इत्यानन्दतीर्थमतेऽनुपलब्ध्यधिकरणम् ॥ ९ ॥

## अथ एकस्मिन्नसंभवाधिकरणम् ॥ ७ ॥

## ॥ सू ॥ नैकस्मिन्नसंभवात् ॥ ३१ ॥

गता हि बौद्धाः । जैनमतं निरस्यते—

जैना हि सप्तभङ्गीन्यायेनैकस्मिन्नपि वस्तुनि नानाभावमुपपादयन्ति । तदेतेषां मतं युक्तं न वेति विचारः ॥

एवं तेषां प्रक्रिया–जीवोऽजीवश्चेति द्वौ पदार्थौ । जीवश्चेतनः शरीरपरिमाणः सावयवः । अजीवः षड्विधः । वनमहीधरादिरेकः । आस्रवसंवरनिर्जरबन्धमोक्षाख्याः पञ्च । आस्रवत्यनेन जीवो विषयेष्वित्यास्रव इन्द्रियसंघातः । संवृणोति विवेकमित्यविवेकादिः संवरः । निश्शेषं जीर्यत्यनेन कामक्रोधादिरिति केशोल्लुञ्छनतप्तशिलारोहणादि तपो निर्जरः । कर्माष्टकेनापादिता जन्मपरंपरा बन्धः । चत्वारि घातिकर्माणि पापरूपाणि । चत्वार्यघातिकर्माणि पुण्यरूपाणि । तेभ्यो मुक्तस्य जीवस्य सततोर्ध्वगमनं मोक्षः । एते सप्त पदार्थाः

---

## अथ एकस्मिन्नसंभवाधिकरणम् ॥ ७ ॥

सू० ॥ नैकस्मिन्नसंभवात् ॥ ३१ ॥ बौद्धमतनिरासानंतरमवशिष्टावैदिकमतनिरास इति संगतिमाह–गता इति । 'स्यादस्ती' त्यादिना वक्ष्यमाणः सप्तभंगीन्यायः । तस्य प्रथमसूत्रेण दूषणं क्रियते । द्वितीयादिसूत्रैर्जीवानां जैनाभिमतस्य देहपरिमाणत्वस्य । तद्दूषणं जैनपरिगणितानां जीवादीनां सर्वेषामपि पदार्थानां तदभिमतप्रकारदूषणस्योपलक्षणम् । तत्तु शिष्यैरूहनीयमिति सूत्रकृता न प्रदर्शितम् । तत्स्वरूपावगतौ तत्र दूषणं शिष्यैः स्वयमेवोहितुं शक्यमिति तत्परिगणितान् जीवादिपदार्थान् संग्रहेण उपन्यस्यति–एवं तेषामिति । वनमहीधरादिरिति । जीवभोग्यस्य सर्वस्य वस्तुजातस्य उपलक्षणम् । आस्रवतीति । विषयेन्द्रियसंबंधवशात् जीवस्य रूपादिज्ञानपरिणामित्वमास्रवणम् । केचित्तु आस्रवति जीवे गच्छति स्वयमपि सर्वत्रानुगच्छतीति कर्मबन्ध आस्रव इत्याहुः । तदाह जिनदत्तः–'आस्रवः कर्मणा बन्धो निर्जरस्तद्विमोचनम्' । इति । संवृणोति विवेकमिति । अन्ये तु संवृणोतींद्रियप्रवृत्तिमिति गुप्तिसमित्यादिकं मोक्षकारणं संवर इत्याचक्षते । यदाहुः–'आस्रवः स्रोतसां द्वारं संवृणोतीति संवरः । आस्रवो भवहेतुः स्यात् संवरो मोक्षकारण' मिति कायवाङ्मनोनिग्रहो गुप्तिरिति जैनैः परिभाष्यते । भूमिगतजंतुहिंसापरिहाराय प्रहते मार्गे सम्यगादित्यरश्मिप्रकाशिते निरीक्ष्य संचरणं मितभाषणं नियताहारनिषेवणमित्यादिकं समितिरिति परिभाष्यते । कामक्रोधादिरिति । आदिशब्देन तन्मूलयोः पुण्यपापयोः ग्रहणम् । चत्वारीति । ज्ञानदर्शनसुखवीर्यगुणकस्य जीवस्य ज्ञानादीनां चतुर्णां गुणानां मोक्षदशायामाविर्भविष्यतां संसारदशायां प्रतिघातकानि प्रवाहानादीनि चत्वारि पापरूपाणि घातिकर्माणि शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखादिनिमित्तानि चत्वार्यघातिकर्माणि पुण्यमिश्रितत्वात्पुण्यरूपाणि । सततोर्ध्वगमनमिति । बन्धमुक्तस्य ह्यूर्ध्वगमनं स्वभावः । यथा पंजरमुक्तस्य शुकस्य । यथा वा निर्भिण्णस्य परिणतैरण्डबीजस्य । यथा वा दृढपंकलिप्तस्य जलनिमज्जनप्रक्षीणपंकलेपस्य शुष्कालाबुनः । इह त्वनादिकालप्रवृत्तबन्धवि-

सप्तभङ्गीन्यायेन व्यवस्थाप्याः । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यं, स्यान्नास्ति चावक्तव्यं, स्यादस्ति च नास्ति चावक्तव्यम्, इति सप्तभङ्गीन्यायः । स्याच्छब्द ईषदर्थः । अतः सप्तभङ्गीन्यायात् सप्तपदार्थसिद्धिरिति ॥

एतदयुक्तम् । कुतः ? एकस्मिन् वस्तुनि सत्त्वासत्त्वनित्यत्वानित्यत्वभेदाभेदादीनामसंभवात् । पर्यायभाविनश्च द्रव्यस्यास्तित्वनास्तित्वादिशब्दबुद्धिविषयाः परस्परविरुद्धाः पिण्डत्वघटत्वकपालत्वाद्यवस्थावत् युगपन्न संभवन्ति । अतो विरुद्ध एव जैनवादः ॥

---

गमात्सततोर्ध्वगमनम् । तन्मते लोकाकाशस्योपर्युपरि स्थितानां लोकानामंतर्वर्तित्वेऽपि तेषामुपरि स्थितो निरवधिः अलोकाकाशः सततोर्ध्वगमनस्यावकाशः । तथा पठन्ति-'गत्वा गत्वा निवर्तंते चंद्रसूर्यादयो ग्रहाः । अद्यापि न निवर्तंते त्वलोकाकाशमार्गगाः ।' इति । अन्ये तु विगतसमस्तक्लेशतद्वासनस्यानावरणज्ञानदर्शनसुखवीर्यस्यात्मन उपरिदेशावस्थानं मुक्तिरित्याहुः। सप्तभंगीन्यायेनेति । सप्तानां भंगानां प्रकाराणां सत्त्वादिनियमभंगानां वा समाहारः सप्तभंगी । के ते सप्त भंगाः तानाह-स्यादस्तीति । सत्त्वासत्त्वसदसत्त्वसदसद्विलक्षणत्वरूपानिर्वचनीयत्वविषयाश्चत्वारः पक्षाः । पुनश्चानिर्वचनीयत्वे सत्त्वासत्त्वसदसत्त्वमेलनैस्त्रयः पक्षा इत्येवं सप्त पक्षा वादिभिरुत्प्रेक्षितुं शक्याः । सर्वेऽपि ते पक्षाः जैनैरीषदीषत् स्वांगीकृतेषु सर्वेष्वपि पदार्थेषु अंगीक्रियन्ते । अत्र स्याच्छब्दस्यार्थमाह-स्यादिति।अनैकान्त्यार्थ इति केचित् । उभयथापि तिङन्तप्रतिरूपकोयमव्ययशब्दः फलतस्त्वेकार्थः । सत्त्वे प्रदर्शितस्य सप्तभंगीन्यायस्य नित्यत्वभिन्नत्वादिधर्मान्तरेष्वपि योजनमभिप्रेत्योपसंहरति-अत इति । सप्तभंगीन्यायो न युक्तः । एकस्मिन्वस्तुनि विरुद्धानेकधर्मसमावेशासंभवादिति सूत्रार्थमाविष्कुर्वन् सिद्धांतयति-एतदयुक्तमिति । नन्वेकस्मिन्नपि देशकालाद्युपाधिभेदेन यथा सत्त्वासत्त्वादिविरुद्धधर्मसमावेशः तथोपाधिभेदं विनाप्यस्तु । तत्र लोकसिद्धानि प्रमाणानि सन्तीति चेदिहापि सन्त्येव प्रपञ्चसत्यत्वासत्यत्वादिकं व्यवस्थापयद्भिस्तैस्तैर्वादिभिरुपपादितानि प्रमाणानीत्याशंक्याह-पर्यायभाविनश्चेति । सत्त्वासत्त्वादयः पिंडत्वघटत्वादिवत् पर्यायभाविन एव लोकानुभवसिद्धाः । यानि तु वादिभिरुपन्यस्तान्यपर्यायेण सत्त्वासत्त्वादिकमुपनयन्ति तानि सर्वाण्यपि प्रमाणानीत्येतन्न संभवति । परस्परविरोधेन केषांचिदाभासत्वावश्यंभावात् । अन्यथा प्रपञ्चसत्यत्वादिवादिभिस्तदसत्यत्वाभ्युपगमे दोषाणामप्युच्यमानत्वेन तेषामप्यनुरोध्यत्वापत्त्या अनेकान्तवादिनः तत्तद्वाद्युक्तदोषभाक्त्वस्यापि प्रसंगादिति भावः । एतेन यदुक्तं स्याद्वादमञ्जर्याम्-'अन्योन्यपक्षप्रतिपक्षभावाद्यथा परे मत्सरिणः प्रवादाः । नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथा नः ॥' इति तन्निरस्तम् । अपक्षपातेन समस्तसमयोक्तसत्त्वादिविशेषाभ्युपगमे तत्तदुद्भावितासत्त्वादिपक्षदोषाणामप्यभ्युपगन्तव्यत्वापत्तेः । अर्धजरतीये नियामकाभावात् । ननु तर्हि लोकाविरोधेनैव सप्तभंगीनयं समर्थयामहे । सर्वसंप्रतिपन्ने तावदेकस्य कालभेदेन सत्त्वासत्त्वे । अतस्तयोः स्वस्वकालविवक्षया अस्ति नास्तीति भंगद्वयमुपपद्यते । क्रमविवक्षया सदसदिदमिति तृतीयभंगो युज्यते ।

युगपत्सत्त्वासत्त्वविवक्षयाऽनिर्वचनीयमिति चतुर्थभंगो घटते । न हि युगपदेकस्य सत्त्वमसत्त्वं च निर्वक्तुं शक्यम् । युगपत्सत्त्वासत्त्वयोरनिर्वचनीयत्वेन सहसत्त्वस्यासत्त्वस्य क्रमिकोभयस्य च मेलने अवशिष्टं भंगत्रयं संपद्यते । तदाहानन्तवीर्यः—'तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् । स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥ क्रमेणोभयवांछायां प्रयोगस्समुदायभाक् । युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥ आद्यावाच्यविवक्षायां पञ्चमो भंग इष्यते । अंत्यावाच्यविवक्षायां षष्ठभंगसमुद्भवः ॥ समुच्चयेन युक्तश्च सप्तमो भंग उच्यते' । इति । यद्येवं पारिभाषिकोऽयं सप्तभंगीनयः स्वीक्रियत एव । घटादिः स्वदेशेऽस्ति अन्यदेशे नास्ति स्वकालेऽस्ति अन्यकाले नास्ति स्वात्मनास्ति अन्यात्मना नास्तीति देशकालप्रतियोगिरूपोपाधिभेदेन सत्त्वासत्त्वसमावेशे लौकिकपरीक्षकाणां विसंप्रतिपत्त्यभावात् । न चैतावता पराभिमतं वस्त्वनैकान्त्यमापद्यते । स्वकाले सदेव अन्यकाले असदेव इत्यादिनियमस्य भंगाभावात् । ननु, वस्तुतो देशकालाद्युपाधिभेदो नापेक्ष्यते । स देश इह नास्ति स काल इदानीं नास्तीत्यादिप्रतीतौ देशकालाद्युपाध्यंतराभावात् । तत्राप्युपाध्यंतरान्वेषणेऽनवस्थानात् । इतरानंगीकारयितुं परं गुडजिह्विकान्यायेन देशकालाद्युपाधिभेदमंतर्भाव्य सत्त्वासत्त्वप्रतीतिरुपन्यस्यते । वस्तुतो विमृश्यमाना सा निरुपाधिकैव सत्त्वासत्त्वादिसंकरे प्रमाणम् । अत एव स्याद्वादिनो 'घटोऽस्ति घटो नास्ति पटस्सन् पटोऽसन्' इत्यादिप्रत्यक्षप्रतीतिमेव सत्त्वासत्त्वाद्यनैकान्त्ये प्रमाणमुपगच्छंति । सर्वमनैकांतिकं वस्तुत्वात् चित्रपटवदित्यनुमानमपि प्रमाणयन्ति । न हि चित्रपटे नीलपीताद्यसंकरार्थं प्रदेशभेद आश्रयितव्यः । प्रदेशभेदासंकरार्थमुपाध्यंतरान्वेषणे अनवस्थानात् । एतेन संयोगतदभावाद्यसंकरोऽपि प्रत्याख्यातः । तस्मात्सर्वं वस्त्वनैकांतिकमेवेति स्याद्वादरहस्यमिति चेत् उच्यते । परस्परविरुद्धधर्मसमावेशे सर्वानुभवसिद्धस्तावदुपाधिभेदो नापह्नोतुं शक्यते । लोकमर्यादामनतिक्रममाणेन देशकालादिसत्त्वनिषेधेऽपि देशकालाद्युपाध्यवच्छेदः अनुभूयत एव । इहात्माश्रयः परस्पराश्रयः अनवस्था वा न दोषः । यथा प्रमेयत्वाभिधेयत्वादिवृत्तौ यथा च बीजांकुरादिकार्यकारणभावे विरुद्धधर्मसमावेशे। सर्वथोपाधिभेदं प्रत्याचक्षाणस्य चायमस्याः पुत्रः अस्याः पतिः अस्याः पिता अस्याश्श्वशुर इत्यादिव्यवस्थापि न सिद्ध्येदिति कथं तत्र तत्र स्याद्वादे मातृत्वाद्युचितव्यवहारान् व्यवस्थयानुतिष्ठेत् । तस्मात्सर्वबहिष्कार्योऽयमनेकान्तवाद इत्यलं विस्तरेण । इत्थं जैनाभिमतः स्याद्वादो दूषितः । अथ तदभिमतेषु पदार्थेषु प्रथमपरिगणितस्य जीवस्य देहपरिमाणत्वं तदुक्तमुत्तरसूत्रैर्दूष्यते । तद्धि सर्वांगीणसुखादियुक्त्याभासोपनीतम् । तस्मिन्दूषिते प्रक्रियामात्रसिद्धमन्यत्सर्वं स्वयमेव दूषितं भवतीति । न हि जीवधर्माधर्मपुद्गलकालाकाशादीनि षड्द्रव्याणि; एतेषु पुद्गलांतर्गतान् परमाणून् कालं चाणुमपहाय जीवो धर्माधर्मौ परमाणुव्यतिरिक्ता महाभूतचतुष्टयस्थिरत्रसरूपेण षड्विधाः पुद्गला आकाशश्चेत्येते पंचास्तिकायाः । जीवाजीवास्रवादयस्सप्त मोक्षोपायत्वेनाधिगन्तव्या' इत्यादिविभागे सिद्धांत्यभिमतपशुपाशादिविभागे श्वेताश्वतरोपनिषदादिवत् किमपि श्रद्धेयं प्रमाणमस्ति । सर्वज्ञप्रणीतागममूलकत्वकल्पनायाः 'कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा । तावुभौ यदि सर्वज्ञौ मतभेदः कथं भवे'

## ॥ सू ॥ एवं चात्माकात्स्न्र्यम् ॥ ३२ ॥

**एवं च आत्माकात्स्न्र्यं चानुपपन्नम् । आत्मनः शरीरपरिमाणत्वे हि बृहत्-शरीरादल्पीयसि प्रविशतो विकलत्वं प्रसज्येत । अत आत्मनः शरीरपरिमाणत्वमयुक्तमेव ॥**

## ॥ सू ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३३ ॥

**तथाविधाल्पत्वावस्थान्तरयोगादप्यविरोधो न संभवति; घटादिवद्विकारादिदोषप्रसङ्गात् ॥**

## ॥ सू ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३४ ॥

**अन्त्यस्य मोक्षदशापरिमाणस्यैकरूपावस्थितेस्तस्य स्वाभाविकत्वेनात्मतत्परिमाणयोरुभयोरपि नित्यतया पूर्वावस्थायामप्यविशेषः । विविधदेहपरिमा-**

दिति न्यायेनानादरणीयत्वात् । नाप्येवंभूता विभागाः तप्तशिलारोहणादिव्रतानि च कयाचन युक्त्योपनेतुं शक्यन्ते । तस्माद्युक्त्याभासावलंबनमात्मनो देहपरिमाणत्वमात्रमिह दूष्यते—सू ॥ एवं चात्माकात्स्न्र्यम् ॥ ३२ ॥ यथैकस्मिन्सत्त्वासत्त्वादिविरुद्धधर्मसंकरोऽनुपपन्नः एवमात्माकात्स्न्र्यमप्यनुपपन्नमिति सूत्रार्थं दर्शयति—एवमिति । एवंशब्देन सत्त्वासत्त्वादिसंकरवत्सूत्रकण्ठोक्तिगृहीतात्माकात्स्न्र्यव्यतिरिक्तमन्यदप्येवंप्रकारं जिनमतकल्पितमनुपपन्नमिति सूच्यते। किं तदकात्स्न्र्यं यदनुपपन्नमिति प्रतिज्ञायते कुतश्च तदनुपपन्नमित्याकांक्षायामाह—आत्मनश्शरीरपरिमाणत्वे हीति । अनेन शरीरपरिमाणत्वमकात्स्न्र्यं विवक्षितम् । तदनुपपत्तौ च मातंगदेहान्मशकदेहं प्रविशतस्तत्रामांतमंशं विहाय प्रवेशः स्यादिति जीवस्य पूर्वावस्थातो विकलत्वं प्रसज्येत । एवं मशकदेहान्मातंगदेहं प्रविशतस्तद्व्यापनसमर्थपरिमाणं नास्तीति तत्र तस्य सर्वांगीणसुखादिकं न स्यादित्येवंरूपो हेतुर्विवक्षित इति दर्शितं भवति । अकात्स्न्र्यशब्देन देहपरिमाणत्वमुपाददानेन दूषणांतरमपि विवक्षितम् । यदि तत्तद्देहपरिमाणो जीवस्तदा योगसिद्धस्य कायव्यूहपरिग्रहे कृत्स्नदेहव्यापित्वं नास्तीति तस्यानेककायाधिष्ठातृत्वं न स्यादिति घटमणिकगृहोदरादिगतप्रदीपप्रभावत् जीवस्य संकोचविकासरूपावस्थाविशेषशालित्वं स्यादित्याशंकापरिहारार्थं सूत्रम्—सू० ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३३ ॥ परमते पर्यायशब्दोऽवस्थासु पारिभाषिकः। अल्पत्वेति। गजशरीरान्मशकशरीरप्रवेशे इदमुक्तम्। वैपरीत्ये तु महत्त्वमवस्थांतरं द्रष्टव्यम् । विकारादीति। विकारो जन्म विनाशश्च। आदिशब्देन सावयवत्वादिकं गृह्यते। जीवस्य देहपरिमाणत्वाभावे युक्त्यंतरमुच्यते—सू० ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३४ ॥ मोक्षदशायां यज्जीवस्य परिमाणं तदन्त्यम् । तस्य तथैवावस्थानं भवति। तदनंतरं देहान्तराभावेन देहान्तरोचितपरिमाणान्तराप्रसक्तेः। अतो यथा मोक्षदशावस्थितमेव जीवस्वरूपं पूर्वमप्येवं तत्परिमाणमपि तदेव इत्यविशेषोंऽगीकर्त्तुं युक्तः । जीववत्तत्परिमाणस्यापि मोक्षदशापन्नस्यादेहोपाधिकस्य नित्यत्वादिति सूत्रार्थमाह—अन्त्यस्येति । सिद्धान्ते चिच्छक्तेस्संसारदशायां संकोचविकासशालित्वेऽपि न स्वरूपतो जन्मविनाशौ न वा सावयवत्वादिकम् । मोक्षदशायां

णत्वे हि वैकल्यं भवेदेव। अत एकस्मिन् सत्त्वासत्त्वादिवादात् आत्मनः शरीरपरिमाणवादाच्च जैनमतमपि विरुद्धमेव ॥ इत्येकस्मिन्नसंभवाधिकरणम् ॥ ७ ॥

व्यापित्वेऽपि न पूर्वं तत्परिमाणमिति व्यवस्थायां जैनाभिमतजीवोक्तदोषो न भविष्यति। 'श्रुतेस्तु शब्दमूलत्वा' दिति न्यायात्। जैनानां तु दृष्टानुसारेण कल्पयतां जीवस्य तथैव सावयवत्वादिकमपि स्यात्। तथाभूतानामेव प्रभादीनां संकोचविकासदर्शनात्। तथा मोक्षदशापन्नपरिमाणमेव प्रागपि स्वाभाविकं स्यात्। जीवस्वरूपे तथादर्शनात् इति दोषः प्रसज्यते। एवमेव ह्यग्रिमाधिकरणे स्वाभिमतस्यैव श्रुतिसिद्धस्य परमेश्वरस्यानुमानिकत्वांगीकारेऽधिष्ठातृत्वानुपपत्तिर्वक्ष्यते ॥ इत्येकस्मिन्नसंभवाधिकरणम् ॥ ७ ॥

## नयमणिमालायाम् अथैकस्मिन्नसंभवाधिकरणम् ॥ ७ ॥

सू ॥ नैकस्मिन्नसंभवात् ॥ ३१ ॥ एवं चात्माकार्त्स्न्यम् ॥ ३२ ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३३ ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३४ ॥

जीवाजीवास्रवमुखसप्तपदार्थात्मकं विश्वम्। स्यादस्तिप्रक्रियया सप्ताकारं वदंति जैनास्तु ॥ १२१ ॥
सदसत्त्वाद्येकस्मिन्वस्तुनि युगपत्कथं घटते। तनुमानता च जीवे नानातनुभेदभाजि कथम् ॥ १२२ ॥

इत्येकस्मिन्नसंभवाधिकरणम् ॥ ७ ॥

## सूत्रार्थचन्द्रिकायाम् अथ एकस्मिन्नसंभवाधिकरणम् ॥ ६ ॥

सू ॥ नैकस्मिन्नसंभवात् ॥ ३२ ॥ एवं चात्माकार्त्स्न्यम् ॥ ३३ ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३४ ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३५ ॥

**भगवत्पादमते,** पूर्वं मुक्तकच्छानां बौद्धानां मते निरस्ते मुक्ताम्बरजैनमतस्य बुद्धिस्थत्वेनानन्तरोपस्थितिकत्वात्तन्मतमिह निराक्रियते। दिगंबरमतं प्रमाणमूलमुत भ्रान्तिमूलमिति संशयः। 'स्यादस्ति स्यान्नास्ति' इत्यादिसप्तभंगीनयमस्तित्वनास्तित्वादिविरुद्धधर्मद्वयमादाय सर्वेषु पदार्थेषु योजयंतो दिगंबराः पदार्थमात्रस्यानेकरूपत्वमाचक्षत इति तन्मतं प्रामाणिकमिति **पूर्वपक्षः। सिद्धान्तस्तु,** एकस्मिन्वस्तुनि विरुद्धधर्माणामसंभवेन वस्तुनोऽनेकरूपत्वाभावात् जीवस्य देहपरिमाणत्वे परिच्छिन्नत्वविकारित्वादिदोषप्रसक्तेश्चार्हतं मतमपि सौगतमतवदप्रामाणिकमेवेति ॥ **सूत्रार्थस्तु, सू ॥ नैकस्मिन्नसंभवात् ॥ ३३ ॥ एकस्मिन्**= परमात्मरूपे वस्तुनि। **असंभवात्**= विरुद्धधर्माणामसंभवात्। **न**= अनेकरूपत्वं नास्तीत्यर्थः।

देहपरिमाण एवात्मेति यत्तेषां मतं तद्दूषयति– **एवं चात्माकार्त्स्न्यम्** ॥ ३४ ॥ यथा स्याद्वादे एकत्र विरुद्धधर्मासंभवो दोषः प्रसक्तः **एवम् आत्माकार्त्स्न्यं च**= आत्मनो जीवस्याकार्त्स्न्यं परिच्छिन्नत्वमपि प्रसज्येतेत्यर्थः। ततश्च परिच्छिन्नत्वादनित्यत्वं स्यात्। किं च जीवस्य देहपरिमाणत्वांगीकारे मनुष्यात्मनो गजशरीरे कृत्स्नस्यात्मनो मशकादिशरीरे च प्रवेशो न स्यादिति भावः।

आत्मनस्सावयवत्वांगीकारेणावयवानां वृद्धिह्रासवत्त्वाङ्गीकारात्क्रमेण प्रवेशोऽस्त्वित्यत आह– **सू ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः** ॥ ३६ ॥ पर्यायेणापि अवयववृद्धिह्रासाभ्यां तत्तच्छरीरपरिमाणत्वस्यात्मन्यविरोध इत्येतदपि। **न च**= न भवति। कुतः। **विकारादिभ्यः**= विकारादिदोषप्रसंगादित्यर्थः ॥

किं च **॥ सू ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः** ॥ ३६ ॥ **अंत्यावस्थितेः**= मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वेनावस्थितेः। **उभयनित्यत्वात्**= तत्पूर्वयोराद्यमध्यमपरिमाणयोर्नित्यत्वप्रसंगात्। **अविशेषः**= त्रयाणामपि परिमाणानां साम्यं प्रसज्येत। अतः सौगतमतवदार्हतमतमप्यप्रामाणिकमेवेति सिद्धम् ॥

**श्रीकण्ठमते, रामानुजमते,** तथा **नन्दतीर्थमते** चेदमधिकरणं जैनमतनिराकरणार्थमेव प्रवृत्तमिति यद्यपि संदेहपूर्वपक्षादिषु नास्ति विशेषः तथापि **आनन्दतीर्थमते 'अन्त्यावस्थिते'** रिति सूत्रे **'अविशेषात्'** इति पञ्चम्यन्ततया पाठ आदृतः। तस्मिन्नेव सूत्रे **श्रीकण्ठरामानुजमतयोः 'उभयनित्यत्वात्'** इत्यस्य आत्मतत्परिमाणयोरुभयोरपि नित्यत्वात्पूर्वावस्थायामपि न विशेष इत्यर्थः इति व्याख्यातम्। **आनन्दतीर्थमते तु** मुक्तिगतात्मपरिमाणस्यावस्थितेस्तदवच्छेदकतया नित्यदेहावश्यंभावेनोभयस्य मुक्तावात्मतद्देहयोर्नित्यत्वादद्यतनदेहानामपि नित्यत्वं स्याद्देहत्वाविशेषादिति सूत्रार्थौ विवृत इत्यपि विशेषः। अन्यदविशिष्टम् ॥ **इति सूत्रार्थचन्द्रिकायामेकस्मिन्नसंभवाधिकरणम्।**

## अथ पाशुपताधिकरणम् ॥ ८ ॥

## ॥ सू ॥ पत्युरसामञ्जस्यात् ॥ ३५ ॥

पत्युः परमेश्वरस्य श्रुतिसिद्धजगदुभयकारणत्वस्यापि तदागमनिष्ठास्तन्मताभिप्रायानभिज्ञा एकदेशिनस्तान्त्रिकाः केवलनिमित्तत्वं वदन्ति । तद्युक्तं न वेति संदेहः ॥

तत्रैवं पूर्वः पक्षः—कुलालादिरनुपादानभूत एव दण्डादिकं नियच्छन् कर्ता

## अथ पाशुपताधिकरणम् ॥ ८ ॥

सू० ॥ पत्युरसामञ्जस्यात् ॥ ३५ ॥ इहाधिकरणे परमेश्वरस्यानुमानात्सिद्धिस्तस्यानुमानतस्सिद्धं निमित्तत्वमेव केवलं नोपादानत्वमपीति मतं निराक्रियते । अत्रेऽयं शंका समुन्मिषति । शास्त्रयोनित्वाधिकरणे शास्त्रमेव परमेश्वरे प्रमाणं नानुमानमिति व्यवस्थापितम् । शास्त्रतश्च तस्योपादानत्वस्यापि सिद्धिः प्रकृत्यधिकरणे प्रतिपादिता। अनुमानिकेश्वरवादिनां काणभुजाक्षचरणानां मतं च पूर्वमेव तर्काप्रतिष्ठानवैदिकापरिग्रहाभ्यां निराकृतम् । किमत्र निराकरणीयमवशिष्यते यदर्थोऽयमधिकरणान्तरारंभ इतीमां शङ्कां निरसनीयमतविशेषोपन्यासेन परिहरति—पत्युरिति । अयमत्र परिहाराभिप्रायः । परमेश्वरस्यानुमानिकत्वं केवलं निमित्तत्वं च वैशेषिकादिशास्त्रेष्वेव नोच्यते सकलवेदसामरस्यरहस्यनिधानभूतेषु शिवागमेष्वपि प्रतिष्ठाप्यते । तत्कथं प्रत्याख्येयम् । न हि वेदसमानैः शिववाक्यैः पूर्वपूर्वशैवाचार्यप्रणीतैस्तद्व्याख्यानैश्च महता प्रबंधेन प्रतिष्ठापितं परमेश्वरसाधकानुमानं तस्य केवलनिमित्तत्वं च कतिपयवेदवाक्यविरोधेन पुरुषबुद्धिप्रभवतर्कविरोधेन च प्रत्याख्यातुं युक्तम् । बहुवाक्यानुरोधेन कतिपयवाक्यानामर्थांतरवर्णनस्योचितत्वात् वेदविरोधेनेव शिवागमविरोधेनापि किंपचानपुरुषबुद्धिप्रभवतर्काणामाभासीकरणस्योचितत्वाच्चेति शङ्कांतरनिराकरणार्थमिदमधिकरणम् । तन्निराकरणं त्वित्थम्—शिवागमानां परमेश्वरस्य स्वतंत्रानुमानतस्सिद्धौ तस्य केवलनिमित्तत्वे च न तात्पर्यम् । तथाप्युत्तानहृदयाः यथाश्रुतार्थग्राहिणस्तत्तात्पर्यसारानभिज्ञाः केचन तान्त्रिकास्तद्व्याख्यातारः तथा मतं प्रत्यतिष्ठिपन्। अनादिव्याख्यानपरंपराप्राप्तं तन्मतं शृण्वतां तत्रैव शिवागमानामपि तात्पर्यमिति भ्रांतिः स्यात्, तन्निराकरणार्थोऽयमधिकरणांतरारंभयत्न इति । यद्येवं शैवानामपि प्रधानकारणवादित्वात् सांख्याधिकरणानंतरमनेनाधिकरणेन भाव्यम् । सत्यम् । अवांतरसङ्गतिवशादिह कृतम् । पूर्वाधिकरणे हि सत्त्वासत्त्वयोर्विरोधादेकत्रासंभव उक्तः । एवमेवाधिष्ठातृत्वोपादानत्वयोरप्येकत्रासंभव इत्यत्र प्रत्यवस्थानमिति । तथैव पूर्वपक्षमुपपादयति—कुलालादिरिति । यद्यपि प्रकृत्यधिकरणेऽप्ययं पूर्वपक्ष उपन्यस्तः तथापि तत्रोपादानत्वविषयश्रुतीनां केवलनिमित्तविषयत्वे पूर्वपक्ष्युन्नीतन्यायाभासो निर्विकारत्वश्रुतिविरोधोत्प्रेक्षा च मुख्यं पूर्वपक्षावलंबनम् । अत एव श्रुत्यवष्टंभान्येव तत्र सिद्धांतसूत्राणि । तदुपष्टंभकतया परं भाष्यकृतात्रत्या कुलालमृत्पिंडादिदृष्टांतमूला युक्तिस्तत्रोपन्यस्ता । अत्र तु सैव मुख्यं पूर्वपक्षावलंबनमिति न पौनरुक्त्यम्। चिच्छक्तिरपि नोपादानं चेतनत्वात् परमेश्वरवत् । अतश्शक्तिर्जगत्कर्तुः परमेश्वरस्य

भवति। तथा तटस्थ ईश्वरोऽपि निमित्तमात्रम्। (माया उपादानम्।) शक्तिः करणम्। अन्यथा मृदादिवदीश्वरस्योपादानत्वे विकारादिप्रसक्तिः। अतो निमित्तमेव परमेश्वर इति॥

अत्रोच्यते—पत्युरीश्वरस्य केवलनिमित्तत्वमपि न युक्तम्, श्रुतिविरोधेनासामञ्जस्यात्॥

न्यायविरोधमाह—

॥ सू ॥ अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥

अशरीरस्य परमेश्वरस्य मायोपादानाधिष्ठानं नोपपन्नम्। लोके शरीरिण एव कुलालादेर्मृत्पिण्डाद्युपादानाधिष्ठानं दृष्टम्। अतः कुलालादिदृष्टान्तो विरुद्धः। अनधिष्ठाने मायायाः ईश्वरस्यानङ्गीकारात् सांख्यमतमेव युक्तम्, ईश्वरेण प्रयोजनाभावात्। अतः परमेश्वरस्य निमित्तत्वं न संभवति॥

---

करणापेक्षायां करणतयावतिष्ठते। उपादानं तु जडाश्शुद्धाशुद्धमायाप्रकृतय इत्यभिप्रेत्याह—शक्तिः करणमिति। शक्तय इति पाठश्चौपाधिकभेदाभिप्रायं बहुवचनम्। श्रुतिविरोधेनेति। प्रकृत्यधिकरणनिर्णीततात्पर्योपादानत्वप्रतिपादकश्रुतिनिकुरुंबविरोधेनेत्यर्थः। काणभुजादिरीत्या युक्तिप्राधान्यं मन्यमानः पूर्वपक्षयुक्तिभिर्व्यवस्थापितेऽर्थे श्रुतयस्तदनुसारेण नेतव्या इति श्रुतिविरोधं नाद्रियेत। अतस्तद्युक्तीनां प्रतियुक्तिपराहतिप्रदर्शनेन सोऽपि स्वमतव्यवस्थापनार्थं श्रुतिशरणतां प्रापणीय इत्यभिप्रेत्य तदभिमतेश्वरानुमानस्य प्रतियुक्तिपराहतिप्रदर्शकान्युत्तरसूत्राणि तान्यवतारयति—न्यायविरोधमाहेति। सू० ॥ अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥ मायोपादानेति। मायाशब्दोऽत्र शुद्धमायापरः। अशुद्धमायाप्रकृतिरूपोपादानाधिष्ठाने परमेश्वरस्यानंतेशश्रीकण्ठशरीराभ्यां शरीरवत्वस्य पूर्वपक्षिणाङ्गीकृतत्वात्। दृष्टमिति। कुलालमृत्पिण्डादिषु निमित्तोपादानभेदो दृष्ट इति दृष्टांतमात्रमवलंब्य हि पूर्वपक्षिणा परमेश्वरादन्यदेवोपादानमिति व्यवस्थाप्यते। तस्य शरीरवानेव कुलालादिरूपाधिष्ठाता दृष्ट इति पूर्वपक्ष्यभिमतानुमानात् जगत्कर्तृत्वेन सिध्यन् परमेश्वरस्तेनैव कुलालादिदृष्टांतेन शरीरी सिद्ध्येत्। अतः परमेश्वरः शरीररहितः शुद्धमायाधिष्ठातेति तथाभूतमीश्वरमनुमानेन सिसाधयिषतः कुलालादिदृष्टांतो विरुद्धः। तद्विपरीतशरीरवदधिष्ठात्रुपनायकत्वादित्यर्थः। तर्ह्युदासीन एवेश्वरस्साध्यत इति मन्दशङ्कां निराचष्टे—अनधिष्ठान इति। प्रयोजनाभावादिति। क्षित्यादिकार्यकर्तृत्वेन खल्वनुमानादीश्वरस्साधनीयः। तत्कर्तृत्वानंगीकारे स साधयितुं न शक्यते लिंगाभावादिति भावः। यदि त्वधिष्ठातृत्वे शरीरित्वमप्रयोजकं किंत्वपरोक्षज्ञानादिमात्रमतो जगत्कर्तृत्वेनानुमानादशरीरस्य परमेश्वरस्य सिद्धिरुपपद्यत इत्युच्येत तदा तथैव तत्र उपादानभिन्नत्वमप्यप्रयोजकमिति तस्य श्रुतिबलादुपादानत्वेनापि सिद्धिरुपपद्यत इति तुल्यम्। वस्तुतस्त्वपरोक्षज्ञानादिकमधिष्ठातृत्वे प्रयोजकमभ्युपगच्छता शरीरित्वमपि तत्प्रयोजकमिति पर्यायेणाभ्युपगतं भवत्येव। अपरोक्षज्ञानत्वाव-

---

(१)( ) इदं रेखान्तर्गतं वाक्यं केषुचित्पुस्तकेषु नास्ति। शिवार्कमणिदीपिकारीत्यापि इदं वाक्यमधिकपाठ इत्युन्नीयते।

आशङ्क्याह–

॥ सू ॥ करणवच्चेन्न भोगादिभ्यः ॥ ३७ ॥

अधिष्ठाने शरीरापेक्षा नास्ति। यथा करणमिन्द्रियं शरीरमपि अशरीरोऽधितिष्ठति तद्वत् प्रधानमपीश्वर इति चेत्—न, तद्गतानर्थभोगादिभ्यः। यथाऽऽत्मनोऽशरीरस्य शरीराधिष्ठाने शरीरगतसुखदुःखभोगादिः तथा परमेश्वरस्यापि तदधिष्ठाने तद्गतभोगादिप्रसक्तिः। अतो न निमित्तमात्रमीश्वरः॥

॥ सू ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ३८ ॥

वाशब्दश्चार्थे। सशरीर एव परमेश्वरः कुलाल इव मृत्पिण्डं पार्थक्येनोपादा-

---

च्छेदेनेंद्रियस्य कारणतया तदाश्रयत्वेन शरीरस्यापि प्राप्तेः। न च तत्र कार्यतावच्छेदके जन्यत्वं विशेषणम्। गौरवात्। न च लाघवादेकस्य नित्यस्येश्वरज्ञानस्यानुमानात्सिद्धौ तत्र जन्यत्वविशेषणगौरवं प्रामाणिकमिति वाच्यम्। ईश्वरानुमानस्य प्रथमप्रवृत्तौ (नियामका)प्रमाणाभावात्। किञ्च। कर्तृजन्यत्वे कार्यत्वमवच्छेदकं लाघवात्, न तु घटत्वपटत्वादिकमनंतं गौरवात्। इति विपक्षबाधकबलाद्धि कार्यत्वलिंगेन कर्तृजन्यत्वं क्षित्यादीनां साध्यते। एवं शरीरजन्यत्वेऽपि तदेव कार्यत्वमवच्छेदकं लाघवादिति नित्यज्ञानादिमत्त्वेनेव नित्यशरीरवत्त्वेनापि कर्तृसिद्धिः केन वार्यते। तस्मादशरीरस्याधिष्ठानानुपपत्तेः शरीरिण एव कर्तुरनुमानतस्सिद्धिः स्यात्। न तु पूर्वपक्ष्यभिमतस्याशरीरस्य कर्तुरित्याशयः। स्यादेतत्। अनुप्रविश्य नियम्यत्वं साक्षात्प्रयत्नाधिष्ठेयत्वं वा शरीरत्वम्। लौकिकवैदिकशरीरव्यवहारास्पदसकलानुगतस्य जातिरूपस्योपाधिरूपस्य वान्यादृशस्य तस्यासंभवात्। तच्च परमेश्वरं प्रति मायादीनां सर्वेषामप्यविशिष्टम्। तथा च यन्नियम्यं तेनैव शरीरवान् परमेश्वरस्तस्याधिष्ठातेत्युपपद्यत इति न तस्य करचरणादिमच्छरीरांतरसिद्धिः प्रसज्यते। न च नियम्यातिरिक्तशरीरेण शरीरवत एव तदधिष्ठातृत्वमिति नियमोस्ति। जीवानां स्वस्वशरीराधिष्ठाने तदभावादित्याशंकानिराकरणार्थमुत्तरसूत्रमित्यवतारयति–आशंक्याहेति। सू० ॥ करणवच्चेन्न भोगादिभ्यः ॥ ३७ ॥ करणग्रहणं शरीरस्याप्युपलक्षणमिति व्याचष्टे–शरीरमपीति। अशरीर इति। नियम्यातिरिक्तशरीररहित इत्यर्थः। तद्गतभोगादिप्रसक्तिरिति। अयमाशयः। अधिष्ठातृत्वशरीरित्वव्याप्तौ नोक्तलक्षणं शरीरत्वं निवेशयामः। किं तु भोगाश्रयत्वरूपम्। तत्रैव विपक्षबाधकसत्त्वात्। भोगार्थं शरीरमधितिष्ठतो हि सुखार्थं दुःखपरिहारार्थं वा क्वचित् कर्तृत्वं दृष्टम्। तथा च नियम्यमेव मायादिकं यदि परमेश्वरस्य भोगाश्रयरूपं शरीरं यदि वा तदतिरिक्तं करचरणादिमदन्यच्छशरीरमिष्यते उभयथापि तस्य सुखदुःखभोगस्तन्मूलपुण्यपापवत्वं च प्रसज्यत इति करचरणादिमच्छरीरांगीकारे दोषांतरसमुच्चयार्थं सूत्रम्–अंतवत्त्वमसर्वज्ञता वा ॥ ३८ ॥ अंतवत्त्वं करचरणादिमतश्शरीरस्यानित्यत्वनियमदृष्टेः असर्वज्ञता च जननमरणावृत्तिमतां किंचिज्ज्ञत्वदृष्टेः। योगाभ्यासात् सार्वज्ञ्यसमर्थनेऽपि ततः प्रागनिवार्यमसार्वज्ञ्यमिति सूत्रार्थमभिप्रेत्य व्याचष्टे–वाशब्द इत्या-

---

(१) अयं ख पाठः।

नमधितिष्ठतीति चेत्–न, तथा सति पत्युरीश्वरस्य संसारिण इवान्तवत्त्वमसर्वज्ञत्वं च भवति। अतो भोगादिप्रसक्तेः प्रधानाधिष्ठानमीश्वरस्य न संभवति। प्रधानाधिष्ठातृत्वेऽपि परमेश्वरस्य 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेस्तद्गतभोगादिप्रसक्तिर्न भवतीति चेत्–तथा सति तर्कबलमपहाय श्रुतिरेवावलम्बनीयेति 'तदात्मानं स्वयमकुरुत' 'बहु स्यां प्रजायेय' 'सर्वो वै रुद्रः' इत्यादिश्रुतिभिरुपादानमपि परमेश्वर इत्यभ्युपेयम्। जगदुपादाननिमित्तभूतस्यापि परमेश्वरस्य 'निष्कलं निष्क्रियम्' इत्यादिश्रुतिभिर्निर्विकारत्वमप्युपपद्यते ॥

'शक्तिः प्रथमसंभूता शान्त्यतीतपदोत्तरा।

---

दिना। एवमनुमानादीश्वरस्सिद्ध्यति चेत् कुलालादिरिव शरीरसुखदुःखभोक्ता पुण्यपापवश्यो जननमरणवानसर्वज्ञश्च सिद्ध्येत्, न तु यथाभिमतरूपविशिष्ट इति सूत्रैः प्रतिपादितं भवति। शास्त्रयोनित्वाधिकरणोपन्यस्तमीश्वरानेकत्वापत्त्यादिदूषणमप्यत्रत्यमेव। अत्रैव सूत्रकारस्यानुमानदूषणकण्ठोक्तिदर्शनात्। तत्र सूत्रकृता'तन्त्वौपनिषद' मित्यादिश्रुतितात्पर्यविचारेणैव परमेश्वरस्य शास्त्रयोनित्वं व्यवस्थापितम्। भाष्यकृता परं शिष्याकांक्षोपशांत्यर्थमत्रत्यमेव किंचिद्दूषणं तत्रोद्भावितम्। तद्व्याख्यानप्रसङ्गादस्माभिरपि तत्र प्रपंचितमतो न पौनरुक्त्यम्। 'रचनानुपपत्ते' श्चेति सांख्याधिकरणे मृद्घटादिषु दृष्टं कार्यानुसारिणा कारणेन भाव्यमिति नियममवलम्ब्य सुखदुःखमोहात्मकस्य जगतस्तथाभूतं कारणमनुमिमानं सांख्यं प्रति मृदादिदृष्टांतैरेवाचेतनस्य जगत्कारणस्य तादृशेन चेतनेनाधिष्ठानमपि सिद्ध्येत, स्वतंत्रं प्रधानं जगत्कारणमिति सांख्याभिमतं न सिद्ध्येत्। इत्येतावन्मात्रमुक्तं, न तु स्वतंत्रमीश्वरानुमानमनवद्यमिति। तेनेश्वरः प्रसाधितः। अतः क्वचिदीश्वरानुमानमनुमोदितं क्वचिद्दूषितमिति न विरोधः। तदेवं युक्त्या केवलनिमित्तमीश्वरं साधयन्तं प्रति स्वतंत्रयुक्त्याश्रयणे परमेश्वरस्यानभिमतमपि शारीरित्वभोक्तृत्वादिकं सिद्ध्येदिति दोषे सूत्रैरुद्भाविते तेषां सूत्राणां, स्वतन्त्रयुक्तिभिः श्रुतिविरुद्धोऽर्थो न सिद्ध्यति, पुरुषबुद्धिकल्पितयुक्तिभ्यः श्रुतीनां प्रबलत्वादित्यस्मिन्नर्थे तात्पर्यमाविष्कर्तुं परमुखेन शङ्कामुद्भावयति–प्रधानेति। तद्गतभोगादीति। आदिशब्देन पुण्यपापवत्त्वमनेकत्वमभवत्वमसर्वज्ञत्वमित्येतानि गृह्यंते। अधिष्ठानानुपपत्तिसूत्रापादितं शरीरित्वं तु नोपात्तम्। श्रुत्यवलम्बनेऽपि कैवल्योपनिषदादिसिद्धस्य तस्याप्रत्याख्येयत्वात्। तर्हि प्राप्तोऽसि पंथानमिति परिहरति–तथा सतीति। श्रुतिरेवेति। 'अनश्नन्नन्यः' 'न कर्मणा वर्धते नो कनीयान्' 'द्यावाभूमी जनयन्देव एकः' 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुतिरित्यर्थः। परमेश्वर इति। शक्तेरप्युपलक्षणम्। निर्विकारत्वमपीति। प्रकृत्यधिकरणे तथोप पादितत्वादिति भावः। एवमनेनाधिकरणेन निराकरणीयः शिवस्य केवलनिमित्तत्ववादो नागममूलः किं तु तदभिप्रायानभिज्ञव्याख्यातृपरंपरामूलः इत्येतदाविष्कर्तुं शिवस्योपादानत्वसंप्रतिपत्तौ सर्वज्ञानोत्तरागममूलं वायुसंहितावचनजातमुदाहरति–शक्तिरिति। सूक्ष्मचिदचिद्रूपापन्नचिच्छक्तिविशिष्टः सकलतत्वातीतशिव एक एव सर्गाद्यसमयेऽवतिष्ठते। सिसृक्षोस्ततः प्रथमं शिवतत्वपरबिंदुपरमायाशुद्धमायामहामायाकुटिलाकुण्डलिन्यादिशब्दालंबनत्वेन प्रसिद्धा शुद्धाध्वगतसकल-

ततो माया ततोऽव्यक्तं शिवाच्छक्तिमतः प्रभोः ॥
शान्त्यतीतपदं जज्ञे ततः शान्तिपदं क्रमात् ।'

इत्यादिना मायादिप्रपञ्चे शक्तिमतः शिवस्यैवोपादानत्वमवगम्यते वायुसंहितायाम् । पुनश्च—

' शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ।
तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ॥ '

इत्यादिना तत्रैव शिवेनोपादानभूतेन जगद्व्याप्तं मृद्धटादिन्यायेनावगम्यते ॥

तनुभुवनभोगस्थानभोगोपकरणानामुपादानभूता पराशक्तिरुत्पद्यते । ततश्शक्तिः सदाशिवो महेश्वरः शुद्धविद्येति चत्वारि तत्वान्युत्पद्यन्ते । तदनन्तरमपरमाया मिश्राध्वगतसकलतनुभुवनाद्युपादानभूता जायते । ततः कालो नियतिः कला विद्या रागः पुरुष इति षट्तत्त्वानि जायन्ते । तदनंतरमशुद्धाध्वगततनुभुवनाद्युपादानभूतमव्यक्तमाविर्भवति । ततो बुद्धिरहंकारो मनः पञ्च ज्ञानेंद्रियाणि पञ्च कर्मेंद्रियाणि पंच शब्दादीनि तन्मात्राणि पंच वियदादीनि भूतानीति त्रयोविंशतिस्तत्वान्याविर्भवंति । एवमेतानि परशक्त्यादीनि पृथिव्यंतानि जडानि षट्त्रिंशत्तत्वानि शिवशास्त्रेषु प्रसिद्धानि तत्र तत्र श्रुतिन्यायैर्व्यवस्थापितानि । एतेषां परशक्तिव्यतिरिक्तानां तत्वानां तत्तत्तत्वप्रतिष्ठितभुवनानां चाधारभूताः निवृत्तिः प्रतिष्ठा विद्या शांतिश्शांत्यतीतेति संज्ञाभिः प्रसिद्धाः उपर्युपरि अवस्थिताः पञ्च कलाः परशक्तिप्रभवाः । तत्र शतकोटियोजनमितब्रह्माण्डरूपं पृथिवीतत्वं निवृत्तिकलायामवतिष्ठते । जलाद्यव्यक्तांतानि त्रयोविंशतिस्तत्वानि प्रतिष्ठायाम् । पुरुषादीनि मायान्तानि सप्त तत्वानि विद्यायाम् । शुद्धविद्या महेश्वरश्च शांतिकलायाम् । सदाशिवश्शक्तिश्च शांत्यतीतायाम् । परशक्तिस्तु तत्वांतराणां तत्तत्प्रतिष्ठितभुवनानां च भेदोपभेदैर्विना षट्सिंख्यानां तैस्सह चतुर्विंशत्युत्तरद्विशतसंख्यानामाधारभूताः पञ्चापि कलाः कारणत्वेन व्याप्य तत उपर्युपरिस्थिता शांत्यतीतपदोत्तरा भवति । तदेतत्सर्वं संक्षिप्योच्यते—'शक्तिः प्रथमसंभूते'त्यादिभिः श्लोकैः । अत्र शक्तिशब्दश्शिवतत्वरूपपरशक्तिपरः । स तत्कार्याणां शक्त्यादीनां चतुर्णां तत्त्वानामप्युपलक्षकः । ततो मायेति । मायाशब्दस्त्वपरमायापरः । स तत्कार्याणां कालादीनां पुरुषांतानां मिश्रतत्वानामप्युपलक्षकः । अव्यक्तशब्दस्तु तत्कार्याणां बुद्ध्यादीनां पृथिव्यंतानां त्रयोविंशतिसंख्यानामशुद्धतत्वानामप्युपलक्षकः । एवमनेन श्लोकेन संक्षिप्य शिवात् षट्त्रिंशत्तत्वोत्पत्तिर्व्याख्याता । 'शांत्यतीतपदं शक्तेस्ततः शांतिपदं क्रमात् । ततो विद्यापदं तस्मात्प्रतिष्ठापदसंभवः । निवृत्तिपदमुद्भिन्नं प्रतिष्ठापदतः क्रमात् ' । इति गाथया परशक्तितः कलापञ्चकोत्पत्तिर्वर्णिता । अत्र 'शिवा'दिति पंचम्योपादानत्वप्रतिपादनं नातिस्फुटमिति तत्रत्यमेव श्लोकांतरमुदाहरति—पुनश्चेति । शक्त्यादीति । शक्तिशब्देन शिवतत्त्वरूपा परा शक्तिरुच्यते । शिवतत्वशब्देन तु शिव एवोच्यते । न त्वत्र शिवतत्त्वशब्दः परशक्तिपरः । शक्तिशब्दस्तत्कार्यद्वितीयतत्त्वरूपशक्तिपरः। 'शिवतत्वादि भूम्यन्तं शरीरादि घटादि च । व्याप्याधितिष्ठति शिवस्ततो विष्णुरुदाहृतः' इति तत्रत्यनामाष्टकनिर्वचनप्रस्तावपठितश्लोकैकार्थ्यात् । शिवतत्वशब्दस्तु वायुसंहितायामेव शिवेऽपि प्रयुक्तः।'आदिमध्यान्तरहितं भेषजं भवरोगिणाम् । शिवतत्त्वमिति

'चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद्बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्॥'

इत्याद्यागमप्रामाण्याच्च परमेश्वरस्य जगदुभयकारणत्वमित्यनवद्यमिति॥

शिवागमैकदेशे शिवस्य परब्रह्मणः केवलनिमित्तत्वमुपपादितम्। तत्परिहारार्थमिदमधिकरणमिति पूर्वाचार्याणां व्याख्या। वयं तु वेदशिवागमयोर्भेदं न पश्यामः। वेदेऽपि शिवागम इति व्यवहारो युक्तः, तस्य तत्कर्तृकत्वात्। अतः शिवागमो द्विविधः त्रैवर्णिकविषयस्सर्वविषयश्चेति। वेदः त्रैवर्णिकविषयः। सर्वविषयश्चान्यः। उभयोरेक एव शिवः कर्ता। 'ईशानः सर्वविद्यानाम्' 'अस्य महतो भूतस्य निःश्वसितम्' इत्यादिश्रुत्या

'अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्।
आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः॥'

इति स्मृत्या च वेदे तस्य कर्तृत्वमवगतम्। अन्यत्रापि तस्यैव परमेश्वरस्य। अतः कर्तृसामान्यादुभयमप्येकार्थपरं प्रमाणमेव। यद्वा—पञ्चब्रह्मप्रणवपञ्चाक्षरीप्रासादादिमन्त्राणां पशुपतिपाशादिवस्तुव्यवहाराणां भस्मोद्धूलनत्रिपुण्ड्रधारण-

ख्यातं शिवार्थं जगतः स्थितम्॥ पञ्चोपचारवद्भक्त्या पूजयेल्लिंगमूर्धनी'ति। आगमांतरश्लोके 'अंतःस्थित'मित्यस्य स्वात्मनि सूक्ष्मरूपेण स्थितमित्यर्थः। अतस्तस्योपादानत्वे प्रामाण्यसिद्धिः। एवमागमानां शिवस्योपादानत्वेऽपि तात्पर्यसद्भावात् तन्निराकरणार्थं नेदमधिकरणं किं तु तदभिप्रायानभिज्ञव्याख्यातृमतनिराकरणार्थमित्येकं मतं प्रदर्शितम्। मतांतरमाह—शिवागमैकदेश इति। यद्यपि वायुसंहितैकार्थे सर्वज्ञानोत्तराख्ये वैदिकशिवागमे ततोऽन्यत्रापि क्वचित्क्वचिदागमे शिवस्य उपादानत्वमपि प्रतिपादितम्। तथापि कामिककारणादिषु सिद्धांततंत्राख्येषु शिवागमेषु कण्ठोक्त्या तत्प्रत्याख्यातमतस्तद्विषयमिदमधिकरणमिति केषांचिदाचार्यदेशीयानां व्याख्यानमित्यर्थः। किमत्र तत्त्वमित्याकांक्षायामाचार्यः स्वयं निर्धारयति—वयंत्विति। ननु कर्त्रैक्येऽपि बृहस्पतिप्रणीतायाः स्मृतेर्लोकायतसूत्राणाञ्च प्रामाण्याप्रामाण्यवैषम्यं दृष्टमित्याशङ्क्याह—एकार्थपरमिति। ऐकार्थ्यमुपपादयति—पञ्चब्रह्मेति। 'ईशानस्सर्वविद्याना'मित्यादयो यजुर्वेदारण्यके समाम्नाताः पञ्चब्रह्ममन्त्राः। प्रणव 'ओमिति ब्रह्मे' त्यादिप्रदेशेष्वाम्नातः। पञ्चाक्षरी यजुस्संहितायामाम्नाता। एवं प्रासादस्याम्नानप्रदेशोऽन्वेष्यः। ह्रींकारादिसंग्रहार्थमादिपदम्। पशुपाशपतिव्यवहारः श्वेताश्वतराणां मन्त्रोपनिषदि प्रसिद्धः। आदिशब्देन 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिंत्य' मित्यादिप्रदेशगतो नियतिपुरुषतत्त्वादिव्यवहारस्संगृहीतः। भस्मोद्धूलनत्रिपुण्ड्ररुद्राक्षधारणान्यथर्वशिरःकालाग्निरुद्रबृहज्जाबालोपनिषत्सु प्रसिद्धानि। लिंगार्चनं 'तव श्रिये मरुतो मर्जयंते' त्यादिमंत्रे प्रसिद्धम्। उपबृंहितश्च स मन्त्रः पौराणिकैः 'रौद्रं लिंगं महाविष्णुर्भक्त्या शुद्धं शिलामयम्। चारु चित्रं समभ्यर्च्य लब्धवान्परमं पद'मिति।

(१) श्रुतिष्वन्वेष्टव्य इत्यर्थः। कालिकापुराणे तदाम्नानं दृश्यते—यथा 'क्रमातसम्मदसन्दोहमादगौरवसंज्ञकाः। प्रासादस्तु भवेच्छेषः पञ्च मन्त्राः प्रकीर्तिताः॥ एकैकेन तथैवैकं वक्त्रं मन्त्रेण पूजयेत्। एकं समुदितं कृत्वा पञ्चभिर्वा प्रपूजयेत्। प्रासादेनाथवा पञ्चवक्त्रं देवं प्रपूजयेत्। संमदादिषु मंत्रेषु प्रासादस्तु प्रशस्यते। शम्भोः प्रसादनेनैव यस्माद्वृत्तस्तु मंत्रकः। तेन प्रासादसंज्ञोऽयं कथ्यते मुनिपुंगवैः। तस्मात्सर्वेषु मंत्रेषु प्रासादः प्रीतिदः प्रभोः॥' इति वैतालभैरवौ प्रति वसिष्ठवचनम्।

**लिङ्गार्चनरुद्राक्षधारणादिपरधर्माणामन्येषां च सर्वेषां व्यवहाराणामुभयत्रापि सममेव दर्शनादुभावपि प्रमाणभूतौ वेदागमौ । कर्तृसामान्यादेकार्थपरत्वेन च**

अन्येषां च सर्वेषामिति । शिवागमेषु श्रुत्यवगतपरब्रह्मभावस्यैव हि शिवस्य भूयान्महिमा प्रतिपाद्यते तदवगतकर्तव्यताकस्यैव तत्पूजनस्य भूयानङ्गकलापः प्रतिपाद्यते । अतः प्रत्यक्षश्रुत्यवगतकतिपयेतिकर्तव्यताकक्रत्वनुष्ठानापेक्षितांगकलापप्रपञ्चनपराणां कल्पसूत्राणां प्रत्यक्षश्रुत्यदृष्टांगविशेषेष्विव तेषां प्रत्यक्षश्रुत्यनवगतशिवमहिमतत्पूजनप्रकारविशेषेष्वपि श्रुत्यनुसारित्वमवसीयते । अतो वेदशिवागमयोः प्रतिपाद्यानि सर्वाणि समानान्येव । इयांस्तु विशेषः । कल्पसूत्रेषु प्रत्यक्षश्रुतिविरुद्धांशे प्रणेतृभ्रांतिमूलत्वमाशंकास्पदं न तु शिवकर्तृकेष्वागमेष्विति । शिवस्य उपादानत्वनिराकरणं तेषु श्रूयत इति चेत् वेदेषु निर्विकारत्वं किं न श्रूयते । तस्यैव प्रपञ्चनपरं तत् । अत एव एतेषु निराकार्यस्य उपादानत्वस्य विकारित्वरूपतयैवानभिमतत्वं प्रदर्शितं 'परिणामो हि वस्तूनां पूर्वावस्थापरिच्युतिः । अवस्थांतरसम्प्राप्तिः क्षीरस्य दधिभावव'दित्यादिना । यत्तु 'नात्र शक्तिरुपादानं चिद्रूपत्वाद्यथा शिवः । परिणामोचितः प्रोक्तश्चेतनस्य न युज्यते'इत्यादिना शक्तेः परिणामित्वनिराकरणं तच्छक्तेश्चेतनत्वेऽपि परिणामित्वे तद्वच्छिवस्याऽपि तदस्त्विति शंकावकाशनैराश्यसिद्ध्यर्थं प्रौढिवादमात्रम् । तेष्वपि सिसृक्षासंजिहीर्षादिव्यवहारेण शिवचिच्छक्तेः 'चिच्छक्तिरर्थसंयोगोऽध्यक्षमिंद्रियमार्गत' इति चिच्छक्तिवृत्तिनिर्गमव्यवहारेण जीवचिच्छक्तेश्च परिणामित्वमाविष्कृतमेवेति भावः । नन्वस्तु वेदागमयोः कर्तृसामान्यं क्वचित्क्वचिदैकार्थ्यं च । तावन्मात्रेण सर्वात्मना न तयोरेकार्थ्यमुपपादयितुं युक्तम् । अवैदिकत्वमोहशास्त्रत्वादिप्रसिद्धिविरोधापत्तेः । तथाहि—महाभारते—'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै'इति शैवागमस्य सांख्ययोगादिवद्वैदिकप्रस्थानात्प्रस्थानांतरत्वं तावत्प्रतिपादितम् । तथाभूतस्य च तस्य मोहशास्त्रत्वं कूर्मपुराणे प्रतिपादितम् । 'एवं संचोदितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः । कापालं लागुडं शाक्तं भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः' ॥ इति । तन्निष्ठानां वैदिकापरिग्राह्यत्वञ्च तत्रैव प्रतिपादितम् । 'बुद्धश्रावकनिर्गन्धाः पाञ्चरात्रविदो जनाः । कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः । यस्याश्नंति हवींष्येते दुरात्मानस्तु तामसाः । न तस्य तद्भवेत् श्राद्धं प्रेत्येह च न तत्फल'मिति । प्रमाणभूतेनापि मोहशास्त्रं कृतमिति युज्यते । तत्र च विप्रलंभार्थं वैदिकार्थस्पर्शोऽपि संभवति । तस्मात्तावन्मात्रेण वेदैकार्थ्यमुपपादयितुमयुक्तमित्याशंक्याह—एकार्थपरत्वेन च विरोधाभावादिति । कल्पसूत्रादिवदेकार्थपरत्वकल्पनेन यो मोहशास्त्रत्वादिप्रसिद्धिविरोध आपादितः तस्याभावादित्यर्थः । मोहशास्त्रत्वादिप्रसिद्धिः वामपाशुपतादिविषयेति भावः । तथाहि—कूर्मपुराण एव 'निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम् । गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये' इत्यारभ्य 'एष पाशुपतो योगस्सेवनीयो मुमुक्षुभिः । भस्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुति' रित्यंतेन प्रमाणभूतं वैदिकं पाशुपतमुक्त्वा 'वामं पाशुपतं सोमं लागुडं चैव भैरवम् । न सेव्यमेतत्कथितं वेदबाह्यं तथेतर'दिति मोहशास्त्ररूपमवैदिकं पाशुपतमन्यत्संकीर्तितम् । नन्वेतावता कामिकाद्यष्टाविंशतिप्रभेदस्य सिद्धांतत-

विरोधाभावादिदमधिकरणं केवलेश्वरनिमित्तत्ववादिहिरण्यगर्भोक्तयोगस्मृतिविषयमिति वयं वदामः । अतो हिरण्यगर्भागमनिरसनपरमिदमधिकरणमिति युक्तम् ॥

अथवा वियदाद्युत्पत्तिशङ्कापरिहारवदवान्तरशङ्कापरिहारप्रवृत्तौ न दोष इति कश्चित् । सर्वथा न केवलमीश्वरो निमित्तमित्यस्माकं राद्धान्तः ॥

इति पाशुपताधिकरणम् ॥ ८ ॥

न्त्रस्य वैदिकत्वं नोपपादितं भवति । वायुसंहितायां–शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च स स्मृतः । श्रुतिसारमयः श्रौतः स्वतंत्र इतरो मतः । स्वतंत्रो दशधा पूर्वं तथाष्टादशधा पुनः । कामिकादिप्रभेदेन बहुधा स व्यवस्थितः । श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः । परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यत' इति शैवागमस्य वैदिकावैदिकविभागपूर्वकं कामिकादेरवैदिकत्वस्य वायुसंहितैकार्थसर्वज्ञानोत्तरादेर्वैदिकत्वस्य च विभज्य प्रतिपादनात् इति चेत् सत्यम् । तत्र कामिकादेरवैदिकत्वोक्तिस्सर्वथैवावैदिकत्वाभिप्रायेण न भवति किं तु वेदानुक्तमपि तत्र वेदोक्तपूजाद्यपेक्षितं कर्षणादिप्रतिष्ठांतप्रभृति प्रमेयरूपं प्रतिपादितमस्तीत्येतदभिप्रायेण । वराहपुराणे निश्वाससंहितायां हि–'लक्षमात्राप्रमाणतः । सैव पाशुपती दीक्षा योगः पाशुपतश्च सः । एतस्माद्वेदमार्गाद्धि यदन्यदिह जायते तच्छूद्रकर्म विज्ञेयं रौद्रं शौचविवर्जित' मिति निश्वासंहितोपलक्षितसकलसिद्धांततंत्रव्यतिरिक्तस्य वामाचारयुक्ततया शौचवर्जितस्य लागुडपाशुपतकापालिकालामुखादेरेव रौद्रागमस्यावैदिकत्वप्रतिपादनात् । न च तेषामपि सर्वथैवाप्रामाण्यम् । वैदिकाधिकारिप्रवर्तनाद्यंशेषु मोहशास्त्रत्वेऽप्यवैदिकाधिकारिविषये प्रामाण्यसद्भावादिति । तेषामधिकारिभेदमुत्तराधिकरणे विवेचयिष्यामः । एवमुपादानत्वनिराकरणस्याप्यभिप्रायांतरकल्पनेन सिद्धांततंत्रस्यापि प्रामाण्यव्यवस्थापने तद्व्याख्यानानामपि तथैव प्रामाण्यं भवेदिति किंविषयमिदमधिकरणं स्यात् इत्याकांक्षायामाह–इदमधिकरणमिति । आचार्यांतरोक्तमधिकरणस्य विषयमाह–अथवेति । तंत्रान्तरनिराकरणार्थं नेदमधिकरणं किं तु यथा वियदाद्युत्पत्तिशंकापरिहारार्थानि वियदधिकरणादीनि एवमिदं केवलनिमित्तत्वशंकापरिहारार्थमधिकरणम् । न चैवं सति तंत्रांतरनिराकरणार्थेऽस्मिन्पादे संगत्यभावो दोषः स्यादिति वाच्यम् । पादसंगत्यभावेऽपि पूर्वाधिकरणन्यायप्रसक्तावान्तरशंकापरिहारार्थत्वेन प्रासंगिकत्वोपपत्तेरित्यर्थः । किमत्र मतं ग्राह्यमित्याकांक्षायामाह—सर्वथेति । केवलनिमित्तेश्वरवादनिराकरणस्योभयथापि सिद्धेर्नैकत्राभिनिवेशे किंचित्फलमस्तीति भावः । पादसंगतेरपि लाभाद्धैरण्यगर्भविषयमिति मतं ज्याय इति स्पष्टमेव ॥

इति पाशुपताधिकरणम् ॥ ८ ॥

---

नयमणिमालायाम्

अथ पाशुपताधिकरणम् ॥ ८ ॥

सू ॥ पत्युरसामञ्जस्यात् ॥ ३५ ॥ अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥ करणवच्चेन्न भोगादिभ्यः ॥ ३७ ॥ अंतवत्त्वमसर्वज्ञता वा॥ ३८ ॥

कुलालादिर्लोके दृष्टः कर्ता यथानुपादानम् । दण्डादिकं नियच्छन् तथायमीशो निमित्तमात्रं स्यात् ॥ १२३ ॥
श्रुतिनयविरोधवशतोऽसामञ्जस्यान्निमित्तता न स्यात् । अशरीरस्य तथोपादानाधिष्ठानसाधनायोगात् ॥१२४॥

वैफल्ये युक्तिस्तेश्श्रुतिशरणेन त्वयापि भाव्यमिह।*(१) श्रुत्या तु समाधाने तस्य तथा प्रकृतितापि स्यात् ॥१२५॥

**इति पाशुपताधिकरणम् ॥ ८ ॥**

(१) अत्र नयमणिमालायाम्* इदमङ्कितमन्त्यमर्धमेव मातृकयोरुपलब्धम्। पूर्वतन इदमधिकरणीयो ग्रन्थोऽशेषस्त्रुटितः। मातृकान्तरालाभाद्दुर्लभश्च । तथापि मयाधिकरणपूर्वपक्षादिपर्यालोचनया यथामति स्वयं परिपूर्य संयोजितः॥ तदत्र सहृदयैर्गुणैकग्रहयालुभिर्मातृकान्तरलाभेन त्रुटितांशोपलब्धौ तत्प्रेषणेनाहमप्यनुग्राह्य इत्यर्थये सविनयम्॥

## सूत्रार्थचन्द्रिकायाम्

### अथ पत्यधिकरणमथवा पाशुपताधिकरणम् ॥ ७ ॥

**सू ॥ पत्युरसामञ्जस्यात् ॥ *संबन्धानुपपत्तेश्च ॥ ३७ ॥ अधिष्ठानानुपपत्तेश्च ॥ ३८ ॥ करणवच्चेन्न भोगादिभ्यः ॥ ३९ ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४० ॥**

**भगवत्पादमते,** पूर्वं सत्त्वासत्त्वयोरेकत्र विरोधादसंभव इत्युक्तम्। तद्वदुपादानत्वकर्तृत्वयोरेकत्र विरोधादसंभवः स्यादिति दृष्टान्तसंगत्येदमारभ्यते **सू ॥ पत्युरसामंजस्यात् ॥ ३७ ॥** अत्र केवलमधिष्ठाता ईश्वरो जगतो नोपादानमिति माहेश्वरसिद्धान्तः प्रमाणमूल उत भ्रान्तिमूल इति संशयः। प्रामाणिक इति **पूर्वपक्षः। सिद्धान्तस्तु,** ईश्वरस्य जगदुपादानप्रधानादिप्रेरकत्वेन जगत्सर्जने प्रवृत्तौ रागादिदोषप्रसक्तेरसामञ्जस्यापातात्, प्रेर्यप्रधानादिभिः प्रेरकेश्वरस्य निरवयवत्वेन संबन्धानुपपत्तेः अप्रत्यक्षप्रधानविषयकप्रेरणाया ईश्वरेऽनुपपत्तेः जीवेन्द्रिययोरिव प्रधानेश्वरयोः प्रेर्यप्रेरकत्वाभ्युपगमे ईश्वरस्य भोगादिप्रसक्तेः प्रधानजीवेश्वराणां विनाशित्वस्येश्वरस्यासार्वज्ञ्यस्य च प्रसक्तेश्च ईश्वरस्य जगन्निमित्तत्वमात्रवादी माहेश्वरराद्धान्तो भ्रान्तिमूल इति ॥ **सूत्रार्थस्तु, पत्युः**= ईश्वरस्य जगन्निमित्तमात्रत्वं न संभवति। कुतः। **असामञ्जस्यात्**= जगत्सर्जने प्रवृत्तौ प्रवृत्ते रागादिपूर्वकत्वेनेश्वरस्य रागादिदोषप्रसक्त्या असामञ्जस्यसंभवात्। इति ॥

अपिच ॥ **सू ॥ संबन्धानुपपत्तेश्च ॥ ३८ ॥** असंबद्धस्य प्रेरकत्वायोगात् प्रेर्यप्रधानादिभिः प्रेरकस्येश्वरस्य संबन्धानुपपत्तेश्च माहेश्वरसिद्धान्तो भ्रान्तिमूल इति ॥

किंच ॥ **सू ॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥** प्रधानस्य रूपादिहीनत्वेन तद्विषयकाधिष्ठानस्येश्वरेऽनुपपत्तेश्चेत्यर्थः ॥

प्रकारान्तरेणाक्षिप्य परिहरति– **सू ॥ करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥ करणवच्चेत्**= इंद्रियाण्यप्रत्यक्षाण्यपि यथा जीवेन प्रेर्यन्ते एवं प्रधानमप्रत्यक्षमपि ईश्वरेण प्रेर्यत इति चेत्। **न**। कुतः। **भोगादिभ्यः**= भोगादिभ्यो दोषेभ्यः इत्यर्थः ॥

किंच। **सू ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥** प्रधानजीवेश्वराणां परिच्छिन्नसंख्यापरिमाणवत्त्वात् त्रयाणां घटवदन्तवत्त्वं विनाशित्वं स्यात्। अपरिच्छिन्नत्वे ईश्वरस्यासर्वज्ञत्वं स्यात् इत्यर्थः ॥ अतो माहेश्वरसिद्धान्तो भ्रान्तिमूल इति ॥

**श्रीकण्ठमते,** श्रुतिसिद्धजगदुभयकारणत्वस्यापि परमेश्वरस्य शैवागमनिष्ठैस्तदभिप्रायानभिज्ञैस्तांत्रिकैरेकदेशिभिरुच्यमानं केवलनिमित्तत्वं युक्तं न वेति संदेहे कुलालादिदृष्टान्तेनेश्वरस्य केवलनिमित्तमात्रत्वं युक्तमिति पूर्वपक्षः। श्रुतिन्यायविरोधेनासामञ्जस्यात्परमेश्वरस्य केवलनिमित्तमात्रत्वमयुक्तमिति सिद्धान्तः। शिवागमैकदेशे परब्रह्मणश्शिवस्य केवलनिमित्तत्वमुपपादितं तत्परिहारार्थमिदमधिकरणमिति केषांचित्पूर्वाचार्याणामाशयः। वेदागमयोः कर्तृसामान्यादेकार्थपरत्वेन विरोधाभावादिदमधिकरणं केवलेश्वरनिमित्तत्ववादिहिरण्यगर्भोक्तयोगस्मृतिविषयम्। आगमेषु परमेश्वरस्य जगदुभयकारणत्वमेव प्रतिपादितम्। केवलनिमित्तमात्रत्वमागमेषूक्तमिति प्रतिपादनमागमार्थानभिज्ञतांत्रिकैकदेशिव्याख्यानमात्रमूलतया न प्रामाण्यमर्हतीति च श्रीकण्ठाचार्याणां स्वाभिप्रायः। **सूत्रार्थस्तु, पत्युरसामञ्जस्यात् ॥ ३५ ॥ पत्युः**=ईश्वरस्य केवलनिमित्तत्वं न युक्तम्। कुतः। **असामञ्जस्यात्**= श्रुतिन्यायविरोधेनासामञ्जस्यात्। इति। **सू ॥ अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥** अशरीरस्य परमेश्वरस्य मायोपादानाधिष्ठानानुपपत्तेः शरीरिण एव कुलालादेर्मृत्पिण्डाद्युपादानाधिष्ठानस्य लोके दर्शनाच्च परमेश्वरस्य केवलनिमित्तत्वं न संभवति इति ॥

**सू ॥ करणवच्चेन्न भोगादिभ्यः ॥ ३७ ॥** अत्र करणपदं शरीरोपलक्षकम्। यथा शरीरमशरीर आत्माधितिष्ठति तद्वत्प्रधानमपीश्वरोऽधितिष्ठतीति चेन्न। यथात्मनोऽशरीरस्य शरीराधिष्ठाने तद्गतसुखदुःखादिः प्राप्नोति तथा परमेश्वरस्यापि मायाधिष्ठाने तद्गतभोगादिः प्रसज्येत। अतो न निमित्तमात्रत्वमीश्वरस्येति भावः। **सू ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ३८ ॥** वाशब्दश्चार्थे। तथा सति पत्युरीश्वरस्य संसारिण इव नाशवत्त्वमसर्वज्ञत्वं च भवति। अतो न निमित्तमात्रत्वमीश्वरस्याभ्युपेयमिति सिद्धम् ॥

---

* इदं सूत्रं शांकरानन्दतीर्थीयभाष्यपाठयोरेव दृश्यते न श्रीकण्ठरामानुजभाष्यपाठयोरित्यवगन्तव्यम् ॥

## अथ पाञ्चरात्राधिकरणम् ॥ ९ ॥

### ॥ सू ॥ उत्पत्त्यसंभवात् ॥ ३९ ॥

पञ्चरात्रमतं वासुदेवोक्तम् । तत्र जीवोत्पत्त्यादिकमुच्यते । तत् संभवति न वेति संदेहः ॥

संभवतीति पूर्वः पक्षः । कुतः ? भगवता वासुदेवेन प्रोक्तस्य प्रमाणत्वात् । तथा ह्यत्र प्रक्रिया–भगवानेको वासुदेवः परमात्मा । तस्मात् संकर्षणाख्यो जीवो जायते । जीवाच्च प्रद्युम्नाख्यं मनः । मनसश्चानिरुद्धाख्योऽहंकारः । एते चत्वारो व्यूहा सर्वात्मान इति । अतो वासुदेवस्य हिरण्यगर्भादिभ्योऽपि परत्वेन तदुक्तस्य प्रामाण्यादिदं सर्वमुपपन्नम् ॥

इति प्राप्ते ब्रूमः । जीवोत्पत्त्यभिधायकमिदं शास्त्रमप्रमाणम् ; कृतनाशाकृता-

## अथ पाञ्चरात्राधिकरणम् ॥ ९ ॥

हैरण्यगर्भमतनिराकरणानंतरं वैष्णवमतनिराकरणार्थमधिकरणम्–सू ॥ उत्पत्त्यसंभवात् ॥ ३९ ॥ जीवोत्पत्त्यादिकमिति । आदिशब्देन जीवान्मनउत्पत्तिर्वासुदेवस्य परमकारणत्वमित्यादि गृह्यते । यद्यपि जीवविशेषे हिरण्यगर्भे भ्रांतिसंभवात्तदुक्तमीश्वरस्य केवलनिमित्तत्वं न ग्राह्यम् । तथाऽपि पारमेश्वरपरशक्त्यंशतया परमेश्वरस्यैवावस्थाविशेषरूपे भगवति वासुदेवे भ्रांतिलेशस्याप्यसंभवात् तदुक्तं जीवोत्पत्त्यादिकं तथैव ग्राह्यमिति पूर्वपक्षयति–संभवतीति । ननु शरीराद्युपाधिका जीवोत्पत्तिः सिद्धांतेऽपि संमता कथं पूर्वपक्षतया निवेश्यते इत्याशङ्क्य पाञ्चरात्रे जीवस्योच्यमानोत्पत्तिर्न शरीराद्युपाधिका । मनोहंकारयोरपि सृष्टेः प्रागुच्यमानत्वादिति दर्शयितुं तत्प्रक्रियामुपन्यस्यति–तथा हीति । एते चत्वार इति । भगवद्व्यूहचतुष्टयात्मकः सर्वः प्रपञ्च इत्यर्थः । जीवोत्पत्तिवादे 'न जायते म्रियते वा विपश्चि' दित्यादिश्रुतिविरोधो 'नात्माश्रुते' रि(ब्र-२-३-१४-सू ) त्यधिकरणे

---

**रामानुजमते,** पशुपतिमतमादरणीयं न वेति संदेहे परमपुरुषार्थसाधनाववोधित्वेन निखिलवस्तुसाक्षात्कारसमर्थपशुपतिप्रणीतत्वादादरणीयमिति पूर्वपक्षः । वेदविरुद्धार्थप्रतिपादनात् निमित्तोपादानभेदाभिधानात् सुराकुंभस्थापनतत्स्थदेवतार्चनमुद्रिकाषट्कविज्ञानतद्धारणादिवेदविरुद्धाचारप्रतिपादनपरत्वाच्चासामंजस्यात्पत्युः पशुपतेर्मतं नादरणीयमिति । सूत्रार्थवर्णने **श्रीकण्ठमता**न्नास्ति वैलक्षण्यमिति बोध्यम् ॥ अनयोर्मतयोः ' **संबन्धानुपपत्तेश्च** ' इति सूत्रस्य पाठ एव नास्तीति **शांकरमता**द्विशेषः ॥

**आनन्दतीर्थमते, सौरकौमारशाक्तादि**मतोपलक्षणत्वेन **शैवपाशुपतकालामुखमहाव्रतानां** मतं निरस्यते । शैवपाशुपतादिमतसिद्धं पशुपतेर्जगत्कर्तृत्वं युक्तं न वेति **संदेहे** युक्तमिति **पूर्वपक्षः** । ' एको नारायण आसीन्न ब्रह्मा न च शंकर ' इत्यादिश्रुतिभिः पशुपतेर्जननादिदोषवत्त्वात् न युक्तमिति **सिद्धान्तः** । **सूत्रार्थस्तु, ॥ सू ॥ पत्युरसामञ्जस्यात् ॥ ३७ ॥ पत्युः**=पशुपतेः जगत्कारणत्वं न युक्तम् । कुतः । **असामञ्जस्यात्**= पारतंत्र्योत्पत्त्यादिदोषवत्त्वादित्यर्थः ॥ **सू ॥ संबंधानुपपत्तेश्च ॥ ३८ ॥** शिवस्याशरीरत्वेन जगता संबन्धानुपपत्तेः न तस्य कर्तृत्वमित्यर्थः ॥ **सू ॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥** प्रलये सर्वेषां नष्टत्वात् पुनस्सृष्टिसमये पशुपतेः पृथिव्याद्याश्रयानुपपत्तेश्च न तस्य जगत्कर्तृत्वमित्यर्थः ॥ **सू ॥ करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥ करणवच्चेत्**= यतः साधनजातं पशुपतेः करणवत् शरीरेण तुल्यम् अधिष्ठानतुल्यं च अतो नोक्तदोष इति चेत् **न** । कुतः । **भोगादिभ्यः**= शरीरकृतसुखदुःखभोगोत्पत्तिमरणादिदोषेभ्य इत्यर्थः ॥ **सू ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥** वाशब्दो विकल्पार्थः । यतः शिवस्य देहित्वतदभावपक्षयोः क्रमेणान्तवत्त्वं नाशवत्त्वमसर्वज्ञता वा स्यात् अतो न युक्तं पशुपतेर्जगत्कारणत्वमित्यर्थः ॥

**इति सूत्रार्थचन्द्रिकायां पाशुपताधिकरणम् ॥ ७ ॥**

भ्यागमप्रसङ्गेन जीवोत्पत्त्यसंभवात् । एकस्मिन् किंचित् पुण्यापुण्यात्मकं कर्म कृत्वा प्रलये नष्टे तदन्यः कश्चिज्जीवः प्राप्नोतीत्यकृताभ्यागमः । पूर्वस्य कृतस्य नाश इत्यादिर्दोषः । ततो जीवोत्पत्त्यभिधायकं शास्त्रमप्रमाणम् ॥

इयं चान्यानुपपत्तिरित्याह–

॥ सू ॥ न च कर्तुः करणम् ॥ ४० ॥

संकर्षणाख्याज्जीवात् प्रद्युम्नाख्यं मनो जायत इत्युच्यते । कर्तुर्जीवाच्च करणोत्पत्तिर्न संभवति, तस्य प्रकृतिकार्यत्वेन चेतनकार्यत्वानुपपत्तेः ॥

॥ सू ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥

विज्ञानशब्दो जीववाचकः । अत्र जीवादीनामुत्पत्तिर्नाभिधीयते । किंतु संकर्षणादीनां जीवादिभाव उच्यते । जीवाद्यधिष्ठातृत्वं जीवादिभाव इति ततस्तच्छास्त्रप्रामाण्यप्रतिषेधो मा भूदिति शङ्कार्थः ॥

॥ सू ॥ विप्रतिषेधाच्च ॥ ४२ ॥

एवं जीवोत्पत्त्यभिधाने परिहृतेऽपि पाञ्चरात्रमतस्य नाभ्युपगमः, श्रुतिविरु-

---

द्धत्वात्तो भविष्यतीति युक्तिविरोधमाह–एकस्मिन्निति । जीवोत्पत्तिरिव जीवात्मन उत्पत्तिरपि नोपपद्यत इत्येतदर्थमुत्तरसूत्रमित्याह–इयञ्चेति । सू ॥ न च कर्तुः करणम् ॥४०॥ चेतनकार्यत्वानुपपत्तेरिति । पंचम्योच्यमानं जीवोपादानकत्वं नैवोपपद्यत इत्यर्थः । सू ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥ वाशब्दात् पक्षविपरिवृत्तेरिदं पूर्वपक्षसूत्रम्–जीववाचक इति । 'विज्ञानं यज्ञं तनुते' इत्यादिश्रुतिप्रयोगादित्यर्थः । परमकारणात् परब्रह्मभूतात् वासुदेवात्संकर्षणो नाम जीवो जायते । संकर्षणात् प्रद्युम्नसंज्ञं मनो जायते । तस्मादनिरुद्धसंज्ञोऽहंकारो जायत इति पाञ्चरात्रग्रंथे जीवाद्युत्पत्त्यभिधानमनभ्युपगम्य तेषु संकर्षणप्रद्युम्नानिरुद्धानां भावे अधिष्ठातृत्वेन सद्भावेऽभिधेयेऽभ्युपगम्यमाने तस्य ग्रंथस्याप्रतिषेधः प्रामाण्यनिषेधो न भवति । परिपूर्णषाड्गुण्यशालिनो वासुदेवस्य एकैकगुणयुगलाभिव्यक्तिमज्जीवाद्यधिष्ठातृसंकर्षणादिव्यूहरूपेण प्रादुर्भावे तात्पर्योपपत्तेरिति सूत्रस्यार्थं दर्शयति–अत्र जीवादीनामिति ॥ सू ॥ विप्रतिषेधाच्च ॥ ४२ ॥ परिहृतेऽपीत्यपिशब्देन परिहारस्याभासतां सौत्रचकारसमुच्चितयुक्तिसिद्धां द्योतयति । तत्रायमभिप्रायः । जीवादिशब्दानां प्रसिद्धार्थमपहायाप्रसिद्धजीवाद्यधिष्ठातृत्वरूपार्थांतरकल्पनायां किं प्रमाणम् । उदाहृतग्रंथे तेषां संकर्षणादिविशेषणत्वमिति चेत् भ्रांतोऽसि । संकर्षणादिशब्दाः खल्वत्र संज्ञात्वेन जीवादिविशेषणतया निर्दिष्टाः । तेन प्रसिद्धानामेव जीवमनोऽहंकाराणां पाञ्चरात्रपरिभाषया संकर्षणप्रद्युम्नानिरुद्धनामानि भवन्ति । संकर्षणादिनामभिरनूद्य तस्मिन् शास्त्रे विग्रहायुधादिविधानं तेषामेव ध्यानार्थं भवति । ककाराद्यक्षराणां वर्णविशेषविधानवत् संकर्षणाद्यर्चनविधानञ्च जीवादिविषयमेव भवति । यत्र शास्त्रे यश्शब्दो यत्रार्थे परिभाषितः, तत्र तस्य शब्दस्य स एव खल्वर्थो ग्राह्यः। शब्दशास्त्रगतनदीवृद्ध्यादिसंज्ञार्थवत् । ननु, पांचरात्र एव जीवं प्रकृत्य 'स ह्यनादिरनंतश्च परमार्थेन निश्चित' इत्युक्तम् । एवं तर्हि वक्ष्यमाणो वेदविरोध इव परस्परविरोधोऽपि कश्चन सूत्रार्थभूतो विप्रतिषेधो भविष्यति । ननु यत्र भ्रांतिलेशस्यापि शङ्का न प्रवर्तते स

कथं भगवान् वासुदेवः श्रुतियुक्तिस्ववचनविरुद्धां जीवोत्पत्तिं ब्रूयात् ? सत्यम् । भ्रांत्या न ब्रूयादिति। विप्रलिप्सया तु ब्रूयादेव। दृष्टो हि तस्यावतारविशेषे विप्रलंभः। क्लृप्तश्च पांचरात्रेऽपि सः । मोहशास्त्रत्वप्रसिद्धेः । ननु भारतादिषु पाञ्चरात्रस्य प्रामण्यमपि प्रतिपादितं तर्हि अयमपि कश्चन विप्रतिषेधः सूत्रोक्तो भविष्यति । वस्तुतस्तु नायं विप्रतिषेधोऽस्ति । अननुष्ठेयांशेषु कुण्डगोलकस्त्रीशूद्रादिवेदानधिकृतविषयतया प्रामाण्यं तत्र वैदिकाधिकारवर्णनविषये जीवोत्पत्त्यादिश्रुतियुक्तिस्ववचनविरुद्धविषये चाप्रामाण्यमिति व्यवस्थोपपत्तेः। इयं व्यवस्था कौर्मे दर्शिता । तत्र हि 'स तेषां मायया जातं गोवधं गौतमो मुनिः। केनापि हेतुना ज्ञात्वा शशापातीव कोपनः । भविष्यथ त्रयीबाह्या महापातकिभिः समाः'। इत्यादिना वेदबाह्यत्वेन गौतमशप्तान्प्रस्तुत्य 'सर्वे संप्राप्य देवेशं शंकरं विष्णुमव्ययम् । अस्तुवन् लौकिकैः स्तोत्रैरुच्छिष्टा इव सेवकाः ॥' इत्यादिना शिवकेशवसन्निधौ तेषां वैदिकमन्त्रैः स्तोत्रेऽनधिकारात् भाषाप्रबंधैः स्तुतिपूर्वकं गतिप्रार्थनामुपन्यस्य 'तस्माद्वै वेदबाह्यानां रक्षणार्थं तु पापिनाम् । संमोहनाय शास्त्राणि करिष्यावो वृषध्वज। एवं संचोदितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः।' इत्यादिना वेदबाह्यत्वेऽप्यन्तःकरणशुद्धिमतां रक्षणार्थं वैदिकत्वेऽपि मलिनचित्तानां विमोहनार्थं च शिवकेशवाभ्यां पाशुपतपाञ्चरात्रादीनि निर्मितानीति श्रुतम्। कुण्डगोलकादीनां पांचरात्रेऽधिकारोऽपि कौर्मे दर्शितः। अथांशोऽस्सात्वतो नाम विष्णुभक्तः प्रतापवान्। महात्मा दाननिरतो धनुर्वेदविदां वरः । स नारदस्य वचनात् वासुदेवार्चने रतः । शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम्। तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् । प्रवर्तते महाशास्त्रं कुण्डादीनां हितावह'मिति । पांचरात्रे स्त्रीशूद्राधिकारस्त्रिवक्रापुत्रमुपश्लोकं प्रस्तुत्य भागवते वर्णितः । 'तेनात्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् । यत्र स्त्रीशूद्रदासानामधिकारः परः स्मृतः। संस्कारो वैष्णवः' इति । पाञ्चरात्रप्रविष्टस्य च क्रमेण वैदिकमार्गावाप्तिद्वारा श्रेयःप्राप्तिरित्युक्तम्। वासिष्ठलैंगे तत्र हि शांडिल्यं प्रति भगवद्वचनम्—'मत्तंत्राश्रयणेनैव मत्पूजा च कृता त्वया । तया न प्रीतवानस्मि तव शाण्डिल्य दुर्मते । कुमार्गेणापि शांडिल्य कृता पूजा मम त्वया। अतः कालेन महता वेदमार्गं गमिष्यसि' । इति। ये तु पांचरात्रमार्गेण विष्णुं प्रपन्ना अपि प्राचीनदधीच्यादिशापदोषेण शिवनिंदादिषु प्रवर्तंते तेषामाकल्पं निरय एव न तु भवांतरेऽपि वेदमार्गप्राप्तिः। तदुक्तं कौर्मे—'एवमुक्त्वा तु विप्रर्षिश्शशापेश्वरविद्विषः। समागतान्ब्राह्मणांस्तान् दक्षसाहाय्यकारिणः । यस्माद्बहिष्कृता वेदा भवद्भिः परमेश्वरः । विनिंदितो महादेवः शंकरो लोकवंदितः । भविष्यथ त्रयीबाह्यास्सर्वेऽपीश्वरविद्विषः । निन्दन्तो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसाः । मिथ्याधीतसमाचारा मिथ्याज्ञानप्रलोभिनः । प्राप्य घोरं कलियुगं कलहैः कलिपीडिताः। त्यक्त्वा तपोवनं कृत्स्नान् गच्छध्वं नरकान्पुनः। भविष्यति हृषीकेशः स्वाश्रितोऽपि पराङ्मुखः।' इति। तानधिकृत्य सौरपुराणे पठ्यते—'पुरुषोत्तममाश्रित्य शिवनिंदापरा द्विजाः। कलौ युगे भविष्यंति त्राता तेषां न माधवः' । स्कान्दे शंकरसंहितायां शिवपूजाविधौ—'नेक्षेत पूजावेलायां नरं वत्स बहिष्कृतम्।' इत्युक्त्वा 'कोऽसौ बहिष्कृत' इति जिज्ञासायामुक्तं 'दधीचिना गौतमेन ये शप्ता ब्राह्मणाधमाः। कलाववतरिष्यन्ति निन्दकास्ते बहिष्कृताः ॥' इति । दुष्करप्रायश्चित्तपापापादितवैदिकमार्गबहि-

भावानामपि तंत्रेष्वधिकारस्सावपुराणे दर्शितः 'श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः। क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तंत्रमाश्रयेत्। धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणांतिकम्। प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम्। कलौ दुर्बलचित्तानां मरणे जायते भयम्। तेषामेव हि रक्षार्थं तान्त्रिकं मार्गमुक्तवा'निति। 'पांचरात्रं भागवतं तन्त्रं वैखानसाभिधम्। वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवा'निति च। तानेव कृतमहापातकान् धर्मशास्त्रोक्तप्रायश्चित्ताशक्ततया तंत्राण्याश्रितानधिकृत्योक्तमापस्तंबेन—'अथाभिशस्ताः समवसाय चरेयुर्धार्म्यमिति सांशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः' (प्र. १. प० १. ख० २८. सू. ९.) इति। अत्राभिशस्तशब्दोक्तानां पतितानामितरेतरयाजनाध्यापनोक्तिः तांत्रिकविषयैवेति लभ्यते। पतितानां वेदमार्गेऽनधिकारात् उदाहृतपुराणवचनैस्तेषां तंत्रमार्गेऽधिकारसद्भावावगमाच्च। न चात्राभिशस्तशब्दः पतितविषयो न भवतीति शंकनीयम्। 'पुत्रान्सन्निष्पाद्य ब्रूयुः विप्रव्रजतास्मदेवं ह्यस्मत्स्वार्यास्संप्रत्यपत्स्यतेति। (प्र० १. प० १. ख० २६. सू० १०) अथापि न सेंद्रियः पतति (सू ११.) तदेतेन वेदितव्यमंगहीनो हि सांगं जनयति। (सू० १२) मिथ्यैतदिति हारीतः। (सू० १३.) दधिधानीसधर्मा स्त्री भवति। (सू० १४.) यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियत एवमशुद्धि शुक्लं यन्निवर्तते न तेन सह संप्रयोगो विद्यते (सू० १५) इत्यग्रिमसूत्रैः अभिशस्तशब्दसंकीर्तनपूर्वकं पूर्वपक्षसिद्धांताभ्यां तत्पुत्राणामपि असंव्यवहार्यत्वप्रतिपादनात्। एवं चोदाहृतनानापुराणवचनानुसारेण भारतादिषु पांचरात्रप्राशस्त्यवचनान्यधिकारिविशेषविषयतया तत्प्रामाण्यव्यवस्थापनपराणीत्युपपादनीयम्। भारतेऽपि हि—'सांख्यं योगः पांचरात्रं वेदाः पाशुपतं तथा। किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने'। इति प्रश्ने 'ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै।' इति पांचरात्रादीनां वैदिकमार्गान्मार्गांतरत्वोक्त्यैवावैदिकत्वमाविष्कृतम्। अवैदिकेषु च न वैदिकानामधिकारः। 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रोक्ता निष्ठा तेषां हि तामसी' इति मनुस्मरणात्। वराहपुराणे च बहुधा पांचरात्रप्रशंसां प्रस्तुत्यापि अवैदिकाधिकारित्वमाविष्कृतम्। 'अभावे वेदमन्त्राणां पांचरात्रोदितेन च। मार्गेण मां प्रपद्यंते ते मां प्राप्स्यंति मानवाः' इति। अत्र हि नित्यानां वेदमंत्राणां स्वरूपेणाभावो न विवक्षितः। किं तु तेष्वधिकाराभाव एव। न च पाशुपत इव पांचरात्रे वैदिकावैदिकविभागः कृतो दृश्यते। येन 'ज्ञानान्येतानि राजर्षे' इत्यादिषु पाशुपतस्येव पांचरात्रस्याप्यवैदिकस्य ग्रहणमिति नीयेतेत्यलं प्रसक्तानुप्रसक्त्या। विस्तरोऽन्यत्रानुसन्धेयः। तस्मात्स्थितमेतत्पाञ्चरात्रस्यानुष्ठेयभागेष्वधिकारिविशेषविषयतया प्रामाण्यमस्तीति तत्प्ररोचनार्थं भारतादिषु बहुधा तत्प्रशंसनम्। जीवोत्पत्त्यादिवचनं त्वप्रमाणमेव। मोहशास्त्रत्वेन प्रसिद्धे प्रतीताप्रामाण्यनिरासहेत्वभावात्। तत्प्रसिद्धिरहितेष्वपि हि सर्ववेष्टनादिस्मरणेषु श्रुतिविरोधमात्रेणाप्रामाण्यमभ्युपगम्यते। यत्रापि श्रुतिविरोधो नास्ति तत्रापि हेतुदर्शनमात्रेणाप्रामाण्यमभ्युपगम्यते। उक्तं चापस्तंबेन—'ब्राह्मणोक्ता विधयः। तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते। यत्र तु प्रीत्युपलब्धितः प्रवृत्तिः न तत्र शास्त्रमस्ति। तदनुवर्तमानो नरकाय राध्यती'ति। किमु वक्तव्यं मोहशास्त्रे प्रतिपाद्यमानं श्रुतिन्यायस्ववचनविरुद्धमप्रमाणमिति। यत्तु भारते

**ऽश्वरकारणवादमुक्तिहेतुत्वतप्तमुद्राधारणादिधर्मपरत्वादिना विप्रतिषेधात् । अतः पाञ्चरात्रमतमसमञ्जसम् ॥**

**'पाञ्चरात्रे च बौद्धे च तथा कालामुखेऽपि च ।**
**श्रद्धया दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥'**

**इत्यादिषु च विशेषेणास्य प्रतिषेधो दृश्यते । अतो विप्रतिषेधात् अप्रमाणं पाञ्चरात्रं मतम् ॥**

**ननु 'पुरुषो वै रुद्रः' इत्यादिश्रुत्या परमेश्वर एव पुरुषो वासुदेवः, तज्ज्ञानाराधनादिकमपि क्रमेण परमेश्वरपदप्राप्तिसाधनमिति श्रूयते । तदाराधनप्रतिपादकस्य पाञ्चरात्रस्याप्रामाण्ये तस्यानाराध्यत्वप्रसङ्ग इति चेत्—न । श्रुतिविरोधात् पाञ्चरात्रस्याप्रामाण्येऽपि तस्य का हानिः। श्रुतिप्रसिद्धमार्गेण तदाराधनसंभवात्। अतो न विरोधः ॥        इति पाञ्चरात्राधिकरणम् ॥ ९ ॥**

---

'भविष्यति प्रमाणं वै एतदेवानुशासनम्' । इति पांचरात्रं प्रस्तुत्य वचनं तत्तु कूर्मपुराणादिगतकलिदोषकीर्तनप्रकरणेषु 'कुर्वंति चावताराणि ब्राह्मणानां कुलेषु वै । दधीचिशापनिर्दग्धा पुरा दक्षाध्वरे द्विजाः । निंदंति च महादेवं तमसाविष्टचेतसः' । इत्यादिवचनैः येषां कलौ प्राचुर्यमुक्तं ते सर्वेऽपि वैदिकान्प्रति वस्तुतोऽप्रमाणमपि प्रमाणत्वेन ग्रहीष्यंति । तस्मिन्युगे वैदिकमार्गप्रच्युतिप्राचुर्यात् तेऽपि तद्ग्रहीष्यंतीत्येतत्परं न तु बदरफलरक्तत्वादिवद्भाविप्रामाण्यपरम् । पूर्वमप्रमाणस्य पश्चात्प्रमाणत्वायोगात् इति न कश्चिद्विरोधः। श्रुतिविरुद्धेति । श्रुतिविरुद्धेश्वरकारणवादः शिवादन्यो वासुदेवः परमकारणमिति वादः । स तावत्समन्वयाध्यायोदाहृतसकलश्रुतिविप्रतिषिद्धः । तस्य मुक्तिहेतुत्वं 'यदा चर्मवदाकाश' मित्यादिश्रुतिविप्रतिषिद्धम् । तप्तमुद्राधारणस्य श्रुतिस्मृतिपुराणादिप्रतिषिद्धत्वमन्यत्र प्रपंचितमनुसंधेयम् । आदिशब्देन सकलवैदिकदेवतापरित्यागः सकलत्रयीधर्मपरित्यागः इत्यादि पांचरात्रोक्तं श्रुतिविप्रतिषिद्धं गृह्यते । 'किं भोस्त्रयीधर्मेणासंयुक्त इमं धर्मं जिज्ञासीत ओं भोः जिज्ञासीते' त्यादिप्रश्नप्रतिवचनरूपमेकायनशाखागतं श्रुतिवचनं पांचरात्रोक्तसकलवैदिककर्मपरित्यागे मूलमिति कल्पना त्वेकायनशाखां कल्पयतामेव शोभते । 'विप्रतिषेधादि'ति सूत्रस्य निषेधादित्यर्थमभिप्रेत्य पांचरात्रदीक्षानिषेधोन्नायकं स्कांदवचनमुदाहरति—पांचरात्रे चेति । नन्वित्याशंकापरिहारस्यायमभिप्रायः । सत्यं नारायणः परमेश्वरशक्त्यवस्थाविशेषत्वात् तदनन्यः तदाराधनादिकञ्च क्रमेण परमेश्वरप्राप्तिसाधनमिति । तथापि वैदिकानां तदाराधनार्थं पांचरात्रं नादरणीयम् । वैदिकेष्वेव बोधायनवैखानसादिसूत्रेषु तत्प्रतिष्ठोत्सवादिप्रपञ्चनादिति ॥ इति पांञ्चरात्राधिकरणम् ॥९॥

इति शिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापक-
श्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसांबशिवप्रेरितस्य
श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वविद्याजिश्रीरंगराजाध्व-
रिवरसूनोरप्पय्यदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचित-
ब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपि-

**इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य द्वितीयः पादः. ॥ २ ॥**

**काव्यायां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥**

## नयमणिमालायाम्

### अथ पांचरात्राधिकरणम् ॥ ९ ॥

**सू ॥ उत्पत्त्यसंभवात् ॥ ३९. ॥ न च कर्तुः करणम् ॥४०॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥ विप्रतिषेधाच्च ॥ ४२ ॥**

जीवस्य वासुदेवाज्जनिराचाराश्च तप्तमुद्रायाः । तन्त्रे सात्वतसंज्ञे कथिता नारायणेनैव ॥ १२६ ॥
मैवं न्यायाम्नायस्मरणविरुद्धार्थसंकलनात् । प्रतिषेधाच्च विशिष्य तदनपेक्ष्यं वक्तृगौरवेऽपि सति ॥ १२७ ॥

**इति पाञ्चरात्राधिकरणम् ॥ ९ ॥**

**इति श्रीमदप्पय्यदीक्षितकृतौ चतुर्मतसारसंग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥**

## सूत्रार्थचन्द्रिकायाम्

### अथ उत्पत्त्यसंभवाधिकरणमथवा पाञ्चरात्राधिकरणम् ॥ ८ ॥

**सू ॥ उत्पत्त्यसंभवात् ॥४१॥ न च कर्तुः करणम् ॥ ४२ ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४३ ॥ विप्रतिषेधाच्च ॥ ४४ ॥**

**भगवत्पादमते,** एवं केवलनिमित्तमेवेश्वर इति वेदासंगते मते निरस्ते निमित्तं प्रकृतिश्चेति भागवतमतस्य वेदसंगतत्वात् तदुक्ते जीवोत्पत्त्यंशेऽपि प्रामाण्यं स्यादिति प्रत्युदाहरणसंगत्येदमारभते–**सू ॥ उत्पत्त्यसंभवात् ॥ ४२ ॥** अत्र वासुदेवः खलु परमात्मा जगत उपादानं निमित्तं च भवति । तस्मात्संकर्षणाख्यो जीव उदेति । तस्मात्प्रद्युम्नाख्यं मनो जायते । तस्मादनिरुद्धाख्योऽहंकारो जायते । इति भागवतसिद्धान्तः किं प्रमाणमूलः उत भ्रान्तिमूलः इति संशये प्रमाणमूल इति **पूर्वपक्षः । सिद्धान्तस्तु** वेदाविरुद्धांशे प्रमाणमूलत्वेऽपि वेदविरुद्धजीवोत्पत्त्यंशे प्रामाण्यं न भवति वासुदेवाज्जीवोत्पत्त्यंगीकारे तस्य घटवदनित्यत्वापत्त्या भगवत्प्राप्तिरूपमोक्षः कस्य स्यात् । अत उत्पत्त्यसंभवात् भ्रान्तिमूलो भागवतसिद्धान्त इति । इत्थं जीवजन्म निरस्य ततो मनोजन्म निराचष्टे– **सू ॥ न च कर्तुः करणम् ॥४३॥** कर्तुर्देवदत्तादेस्सकाशात्करणस्य कुठारादेरुत्पत्त्यदर्शनात् जीवात्कर्तुः करणं मनो जायते इत्येतदसंगतमित्यर्थः ॥

**सू ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥ विज्ञानादिभावे वा=** संकर्षणादीनां त्रयाणां विज्ञानैश्वर्यादिरूपत्वेऽपि। **तदप्रतिषेधः=**तस्योत्पत्त्यसंभवरूपदोषस्य प्रकारान्तरेण प्राप्तिरित्यर्थः। वासुदेवादयश्चत्वारोऽपीश्वरा इति पक्षे भगवानेको वासुदेव इति स्वसिद्धान्तहानिः।संकर्षणादयस्त्रयो वासुदेवतुल्या इति पक्षे उत्पत्त्यसंभवदोषस्तदवस्थ एवेत्यर्थः ॥

अपिच ॥ **सू ॥ विप्रतिषेधाच्च ॥ ४५ ॥** क्वचित् ज्ञानैश्वर्यादीनि वासुदेवस्य गुणा इति क्वचिच्चोक्तगुणा एव वासुदेव इति च गुणगुणिनोर्भेदमभेदं च वर्णयन्ति । तस्मात्परस्परं विप्रतिषेधादप्रामाणिकमिदं भागवतमतमित्यर्थः ॥ तस्मादेवं **सांख्यवैशेषिकसौगतार्हतमाहेश्वरभागवतमतानां** भ्रान्तिमूलत्वेन तैर्मतैर्निरवद्यादद्वैताद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो न विरुध्यत इति सिद्धम् । अत्र पादे अस्मिन्मते**ऽष्टाधिकरणानि** । सूत्राणि **पंचचत्वारिंशत् ॥**

**श्रीकण्ठमते,** वासुदेवप्रोक्ते पाञ्चरात्रे जीवोत्पत्त्यादिकमुच्यते तत्संभवति न वेति **संदेहः ।** भगवता वासुदेवेन प्रोक्तस्य प्रमाणत्वात्संभवतीति **पूर्वपक्षः।**जीवोत्पत्त्यभिधायकमिदं पाञ्चरात्रं कृतनाशाकृताभ्यागमप्रसंगेन जीवोत्पत्त्यसंभवात् श्रुतिविरुद्धेश्वरकारणवादमुक्तिहेतुत्वतप्तमुद्राधारणादिधर्मपरत्वादिना विप्रतिषेधाच्चाप्रमाणमिति **सिद्धान्तः।** आद्यं सूत्रं व्याख्यातम् । **सू ॥ न च कर्तुः करणम् ॥ ४० ॥** कर्तुर्जीवाच्च करणोत्पत्तिर्न संभवति । तस्य प्रकृतिकार्यत्वेन चेतनकार्यत्वानुपपत्तेरित्यर्थः ॥ **सू ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥** वाशब्दस्य पक्षविपरिवृत्त्यर्थत्वादिदं पूर्वपक्षसूत्रम् । विज्ञानशब्दो जीववाचकः । अत्र जीवादीनामुत्पत्तिर्नाभिधीयते । किं तु संकर्षणादीनां जीवादिभाव उच्यते । जीवाद्यधिष्ठातृत्वं जीवादिभाव इति । ततः **तदप्रतिषेधः=** तस्य पाञ्चरात्रग्रंथस्य प्रामाण्यनिषेधो न भवतीत्यर्थः । **सू ॥ विप्रतिषेधाच्च ॥ ४२ ॥** एवं जीवोत्पत्त्यभिधानदोषपरिहारेऽपि पाञ्चरात्रमतस्य नाभ्युपगमः । कुतः । **विप्रतिषेधाच्च=**

श्रुतिविरुद्धेश्वरकारणवादमुक्तिहेतुत्वतप्तमुद्राधारणादिधर्मपरत्वादिना विप्रतिषेधात् ' पांचरात्रे च बौद्धे च ' इत्यादिनास्य मतस्य विशेषेण निषेधाच्चासमञ्जसमिदं पाञ्चरात्रमतमित्यर्थः॥ **अस्मिन्मते अस्मिन्पादे सूत्राणि द्विचत्वारिंशत्** । अधिकरणानि **नव** ॥

**रामानुजमते,** इदमुत्पत्त्यसंभवाधिकरणमिति व्यपदिश्यते । अस्मिन्मते आद्यं सूत्रद्वयं पूर्वपक्षप्रतिपादकमितरत्सूत्रद्वयं सिद्धान्तप्रतिपादकमित्यवधेयम् । सांख्यादितन्त्रवत्पाञ्चरात्रतंत्रमप्रमाणं वा उत प्रमाणं वेति **संदेहे** ' वासुदेवात्संकर्षणो नाम जीवो जायते ' इति श्रुतिविरुद्धजीवोत्पत्त्यादिप्रतिपादनात् ' चतुर्षु वेदेषु पुरुषार्थमलभमान ' इति वेदगणानादरवचनाच्चाप्रमाणमिति **पूर्वपक्षः । सिद्धान्तस्तु,** संकर्षणप्रद्युम्नानिरुद्धानां, परब्रह्मभावेन ' अजायमानो बहुधा विजायत ' इति श्रुतिप्रसिद्धस्वेच्छावतारप्रतिपादनात्, जीवाहंकारमनश्शब्दानां तत्तच्छरीरकसंकर्षणाद्यभिधायकत्वात् ' चतुर्षु वेदेषु पुरुषार्थमलभमान ' इति वेदगणानादरवचनस्यानुदितहोमनिन्दावद्वक्ष्यमाणप्रशंसार्थत्वात् वेदान्तोदितब्रह्मोपासनविधानाद्वेदाविरुद्धतदर्चनादिविधानाच्चेदं पाञ्चरात्रं प्रमाणमेवेति । **सूत्रार्थस्तु, सू ॥ उत्पत्त्यसंभवात्** ॥ ३९ ॥ ' न जायते म्रियते वे ' त्यादिश्रुतेर्जीवस्योत्पत्त्यसंभवात् जीवोत्पत्तिवचनाच्च न प्रमाणमित्यर्थः ॥ **सू ॥ न च कर्तुः करणम्** ॥ ४० ॥ ' एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे ' ति ब्रह्मण एव मनउत्पत्तिश्रवणात् ' संकर्षणात्प्रद्युम्नसंज्ञकं मन उत्पद्यत इति मनसः करणस्य कर्तुर्जीवादुत्पत्तिश्च श्रुतिविरुद्धत्वान्न संभवति । इत्यर्थः ॥ **सू ॥ विज्ञानादिभावे वा तदप्रतिषेधः** ॥ ४१ ॥ वाशब्दात्पक्षो विपरिवर्तते । विज्ञानं चादि च विज्ञानादि ब्रह्म । संकर्षणादीनां ब्रह्मभावे सति ' अजायमानो बहुधा विजायत ' इति श्रुतिसिद्धस्वेच्छावतारस्यैवात्राभिधानात् **तदप्रतिषेधः**= तस्य प्रामाण्यस्य निषेधो न भवतीति । संकर्षणादीनां जीवादिसमानाधिकरणतया निर्देशस्तेषामधिष्ठातृतयोपपद्यत इत्यर्थः ॥

**सू ॥ विप्रतिषेधाच्च ॥ ४२** ॥ अस्मिन्नपि तंत्रे ' व्याप्तिरूपेण संबंधः तस्याश्च पुरुषस्य हि । स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ॥' इति पुरुषस्योत्पत्तिप्रतिषेधाच्चाविरुद्धमिदं पाञ्चरात्रं तंत्रमिति ॥ **अस्मिन्मतेऽत्र पादे द्विचत्वारिंशत्सूत्राणि** अधिकरणान्यष्टौ ॥

**आनन्दतीर्थमते,** शाक्तमते तु दूषणान्तरमप्यस्तीति तन्निराकरणाय पृथगधिकरणमारभ्यते । अस्मिन्नधिकरणे शाक्तमतप्रभेदानां त्रयमपि निरस्यते । केवला शक्तिराद्या जगतः कारणं, शिवानुगृहीता शक्तिर्जगतः कारणं,ज्ञानदेहकरणादिसाधनवता शिवेनानुगृहीता शक्तिर्जगतः कारणमिति शाक्तमतस्य त्रिविधा प्रक्रिया। तत्त्रिविधमपि शाक्तं मतं युक्तं न वेति **संदेहे** युक्तमिति **पूर्वपक्षः । सिद्धान्तस्तु ' न युक्तमिति** । यथा—केवला शक्तिराद्या जगतः कारणं न संभवति । कुतः । **उत्पत्त्यसंभवात्**= ततोऽपत्योत्पत्त्यसंभवादित्यर्थः । पुरुषाननुगृहीतस्त्रीमात्रादपत्योत्पत्तेरदर्शनादिति भावः ॥ शिवानुगृहीता शक्तिर्जगतः कारणमिति मध्यमवामशाक्तं निराचष्टे—**सू ॥ न च कर्तुः करणम्** ॥ **४३** ॥ **कर्तुश्च**= अनुग्राहकस्य शिवस्य । **करणम्**= ज्ञानादिसाधनं नास्तीत्यर्थः। शिवस्य करणोत्पादने केवलशक्तेरशक्तेर्न तस्य शक्त्यनुग्राहकत्वं युक्तमिति भावः । अतो न सापि कारणं भवितुमर्हति ॥ ज्ञानदेहादिकरणवता शिवेनानुगृहीता शक्तिर्जगतः कारणमिति तृतीयं वामशाक्तं निराचष्टे— ॥ **सू ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४** ॥ कर्तुरित्यस्ति । तस्य शिवस्य विज्ञानादिभावेऽङ्गीकृते सति । **तदप्रतिषेधः**= तस्य प्रकृतशैवमतस्यानुमतिः स्यात् । तथा च तादृशशिवेनैव सर्वकार्योत्पत्तौ व्यर्थं शक्तिकर्तृत्वांगीकरणं शिवकर्तृत्वं तु प्राङ्निरस्तमिति भावः । एवं शाक्तमतत्रयं पृथङ्निरस्य सामान्येनापि निराचष्टे—**सू ॥ विप्रतिषेधाच्च ॥ ४५** ॥ सकलश्रुत्यादिविरुद्धत्वाच्चासमंजसं शक्तिमतमित्यर्थः । तस्मान्निरीश्वरवैशेषिकादिसमयानां दुष्टत्वाद्युक्तं जन्मादिसूत्रोक्तं विष्णोर्जगत्कर्तृत्वादिरूपं लक्षणमिति सिद्धम् ॥ **अस्मिन्मते** अत्र **पादे अधिकरणानि द्वादश । सूत्राणि तु पंचचत्वारिंशत्** ॥ **इति सूत्रार्थचन्द्रिकायामुत्पत्त्यसंभवाधिकरणम्** ॥

**यं प्रासूत विशुद्धशीलमनघं वृद्धांबिकाख्या सती**
**यं मृत्युञ्जयशर्मणो बुधमणेर्भाग्यं विदुस्साधवः ।**
**वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-**
**स्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥**

**सूत्रार्थचन्द्रिकायामविरोधाख्ये द्वितीयकेऽध्याये । तर्काविरोधपादो द्वितीयीकोऽयमभ्यगात्पूर्तिम् ॥**
**श्रीकण्ठलक्ष्मणानुजमतयोः परपक्षदूषकः प्रोक्तः । समयाविरोधनाम्ना मध्वमते तु प्रसिद्धिमुपयातः ॥**
**इति हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥**

॥ श्रीः ॥

शिवाभ्यां नमः

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## अथ द्वितीयस्याध्यायस्य तृतीयः पादः ॥

### अथ वियदधिकरणम् ॥ १ ॥

निरस्तस्समस्तो विरुद्धेतरदर्शनन्यायः । अध्यायशेषेण पुनरवांतरविरोधपरिहारः क्रियते—

### सू० ॥ न वियदश्रुतेः ॥ १ ॥

---

### शिवार्कमणिदीपिकायाम्

## अथ द्वितीयस्याध्यायस्य तृतीयः पादः॥ ३॥

नन्वविरोधाध्याये वियदादीनामुत्पत्त्यनुत्पत्तिचिन्ताप्रभृतिचिंता न संगता । सापि वियदुत्पत्त्यादिश्रुतीनां तदनुत्पत्त्यादिश्रुतिविरोधसमाधानार्थेति चेन्न । तावताध्यायसङ्गत्यसिद्धेः । न हि विरोधसमाधानमात्रमध्यायार्थः । किं तु पूर्वाध्यायनिरूपिते वेदान्तानां जगत्कारणब्रह्मसमन्वये परिपंथिनो विरोधस्य समाधानम् । अन्यथाध्याययोराक्षेप्याक्षेपकभावसङ्गतेरलाभात् । यथाकथञ्चिदध्यायसङ्गतिसंभवेऽपि न पादसंगतिः । प्रथमपादवत्स्वमतदूषणपरिहारार्थयोस्तृतीयचतुर्थपादयोः परमतदूषणार्थात् द्वितीयपादात् पूर्वभावस्यैवोचितत्वात् इत्याशङ्क्याध्यायपादसङ्गतिमाह—निरस्त इति । अयमाशयः । अध्यायसंगतिः प्रासंगिकी कारणविषयश्रुतिविरोधसमाधानप्रसङ्गात् कार्यविषयश्रुतिविरोधोऽपि समाधीयत इति । यद्वा । कारणविषयश्रुतीनां ब्रह्मणि समन्वयो वियदाद्युत्पत्तिश्रुतीनां स्वार्थसमन्वयमपेक्षते । अन्यथा वियन्नित्यत्वे पवनादीनां वियदादिजन्यत्वे च ब्रह्म कस्य जगतः कारणं भवेदिति वियदाद्युत्पत्तिश्रुतीनां तदनुत्पत्तिश्रुतिविरोधसमाधानचिंता तावत् सङ्गतैव । तदनुबंधेन जीवनित्यत्वज्ञातृत्वाणुत्वादिश्रुतीनां तज्जननादिश्रुतिविरोधचिन्ता । अथवा 'विप्रतिषेधाच्चासमञ्जस' मित्यादि ( ब्र-२-२-९ ) सूत्रैस्साङ्ख्यादिदर्शनानां परस्परविरोधादप्रामाण्यमुक्तम् । एवं वेदांतेष्वपि क्वचित् वियतो नित्यत्वं प्रतिपाद्यते क्वचिदनित्यत्वम् इत्यादिरूपेण परस्परविरोधेन पराहतत्वात् तेषां कारणविषयेऽपि प्रामाण्यं न संभवतीति प्रथमाध्यायनिरूपितकारणविषयश्रुतिसमन्वयाक्षेपकतयैव कृत्स्नस्याध्यायशेषस्याध्यायसंगतिः । यद्यपि परस्परविरोधेन वेदान्तानामप्रामाण्यशङ्का वक्ष्यमाणाधिकरणेषु पूर्वपक्षत्वेन नोद्भाव्यते तथापि वियदनुत्पत्त्यादिपूर्वपक्षोद्भावनपूर्वकं तदुत्पत्त्यादिश्रुतीनां स्वार्थसमन्वये स्थूणानिखननन्यायेन प्रसाधिते सति विप्रतिषेधेन निरस्तानां सांख्यादीनां हृदि विपरिवर्तमाना, वेदांतविप्रतिषेधप्रतिबंद्यपि निरस्ता भवतीति फलतः परस्परविरोधसमाधानार्थत्वमस्त्येव । बाह्यहेतूत्थसमन्वयविरोधनिरासानंतरमांतरहेतूत्थतन्निरास इति तृतीयचतुर्थपादयोर्द्वितीयपादानंतर्यमिति । अनयोः पौर्वापर्यहेतुश्चतुर्थपादारंभे दर्शयिष्यते । सू ॥ न वियदश्रुतेः ॥ १ ॥

निरवयवत्वेनाकार्यत्वभ्रमादाकाशस्योत्पत्तिस्संदिह्यते संभवति न वेति । वियन्नोत्पद्यत इति प्राप्तम् । कुतः । अश्रुतेः । तथा हि—छांदोग्ये 'सदेव सोम्येदमग्र आसी' दित्यारभ्य 'तत्तेजोऽसृजते' ति तेजःप्रभृतिभूतसृष्टिरभिधीयते । तत्र नाकाशस्योत्पत्तिः श्रूयते । या तु 'तस्माद्वा एतस्मादात्मन आकाशस्संभूत' इति तैत्तिरीये सा गौणी भवितुमर्हति, आकाशोत्पादकसमवाय्यादिनिरूपणासम्भवात् ।

अतो जीववदाकाशोऽपि नोत्पद्यत इति प्राप्ते ब्रूमः—

सू ॥ अस्ति तु ॥ २ ॥

वियत उत्पत्तिरस्त्येव, 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' इत्यादिश्रुतेः । आत्मनस्तु 'न जायते म्रियते वा विपश्चि'दि ति प्रतिषेधादनुत्पत्तिः । न वियदुत्पत्तिप्रतिषेधश्रुतिरस्ति । अतो वियदुत्पद्यत एव ॥

---

वियदुत्पद्यते न वेति तदुत्पत्तिप्रतिपादनक्षमश्रुतिसंभवासंभवाभ्यां संशये पूर्वपक्षः—वियन्नोत्पद्यते तदुत्पत्तिप्रतिपादनक्षमश्रुत्यभावात् । छांदोग्ये तावत् तद्विषया श्रुतिरेव नास्ति तैत्तिरीयाथर्वणादिषु सत्यपि तदुत्पत्तिप्रतिपादनाक्षमा । निरवयवत्वेन सर्वगतत्वेन च तस्य नित्यत्वावगमात् । न च द्वितीयहेतोरसिद्धिः । क्वचिदपि तदभावस्य बुद्ध्यारोहासम्भवात् । अत्र वियन्नास्तीति निषेधस्य व्याहतत्वात् । यत्र निषिध्यते तस्यैव देशस्य वियद्रूपत्वात् 'आकाशे चाविशेषा' दिति वैभाषिकाधिकरण ( ब्र-२-२-२३. ) सूत्रे इह प्रत्ययवेद्यो देश आकाश इति व्यवस्थापितत्वात् । न च हेत्वोरप्रयोजकत्वम् । निरवयवस्य सर्वगतस्योत्पादकसामग्र्यनिरूपणात् । तस्मादनुमानात् वियतो नित्यत्वावधारणेन तदुत्पत्तिं प्रतिपादयितुमक्षमा तैत्तिरीयादिश्रुतिर्गौणत्वमवलम्बते । न च, तैत्तिरीयश्रुतावेकस्य संभूतशब्दस्य 'एतस्माज्जायते प्राणो मनस्सर्वेंद्रियाणि च । खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी' त्याथर्वणश्रुतावेकस्य जायत इति शब्दस्य च क्वचिद्गौणत्वमन्यत्र मुख्यत्वं च न युक्तमिति वाच्यम् । आथर्वणश्रुतावेवैकस्य ब्रह्मशब्दस्य तथात्वदर्शनात् । तत्र श्रवणावृत्तिरस्तीति चेत् तदनुषंगेऽप्यभिधानावृत्तिरविशिष्टा । सकृच्छ्रुतस्यैव च ब्रह्मशब्दस्य गौणमुख्यत्वं दृष्टं 'द्वे ब्रह्मणी वेदितव्ये' इत्यत्र । तस्माद्वियन्नोत्पद्यत इत्येवं प्राप्ते सिद्धांतमाह– सू ॥ अस्ति तु ॥ २ ॥ वियदुत्पत्तिप्रतिपादनक्षमा श्रुतिरिति शेषः । भाष्ये 'वियत उत्पत्तिरस्त्ये' वेति श्रुतिसद्भावसूत्रणस्य फलितार्थ उक्तः । तुशब्दः पूर्वपक्षोपात्तजीवदृष्टांतवैषम्यार्थ इति व्याचष्टे–आत्मनस्त्विति । तथा च परमतानुसारेण प्रथमानुमाने निरवयवद्रव्यत्वरूपसाधनावच्छिन्नसाध्यव्यापकं स्वमतानुसारेण केवलसाध्यव्यापकोत्पत्तिप्रतिषेधश्रवणमुपाधिरिति भावः । सर्वगतत्वहेतुस्त्वसिद्धः । अव्यक्तप्रकृतिकस्याकाशस्य परिच्छिन्नत्वात् । न चोक्तव्याघातः । तन्निषेधे चिच्छक्तेस्तद्देशत्वसंभवात् । न च पतत्रिपतनादावपि सैव प्रत्यक्षविषयो देशः स्यात् । तस्या 'स्सन्घट' इत्यादिप्रत्यक्षविषयत्वसंप्रतिपत्तेः । तथा च 'आकाशे चाविशेषा' दिति सूत्रव्याख्यानभाष्यविरोध इति वाच्यम् । चिच्छक्तिमनंगीकुर्वतो बौद्धस्य तयान्यथासिद्धिशंकानवकाशात् । स्वमते तुशब्दाश्रयत्वयुक्त्यनुगृहीतश्रुतिबलादाकाशसिद्धिः । तस्यावकाशरूप-

यदुक्तमुत्पत्तिर्गौणीति तत्राह–

सू० ॥ गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥

'तत्तेजोऽसृजते' ति तेजसः प्रथमसृष्टिवचनात् 'आकाशस्संभूत' इति श्रुतिर्गौणी, तस्य निरवयवस्य उत्पत्त्यसंभवात् 'वायुश्चांतरिक्षं चैतदमृत'मिति नित्यत्वशब्दाच्च ॥

सू० ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

एकस्य संभूतशब्दस्याकाशे गौणत्वमन्यत्र मुख्यत्वमनुषङ्गेऽपि श्रवणादावृत्ताविव संभवत्येव । यथैकस्य ब्रह्मशब्दस्य 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत' इति प्रकृतौ गौणत्वं 'तपसा चीयते ब्रह्मे' ति मुख्यत्वमावृत्तौ तद्वदत्रापि । तस्मादाकाशोत्पत्तिरयुक्तेति ॥

अथ परिहार उच्यते–

सू ॥ प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥

'येनाश्रुतं श्रुतं भवती' त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अहानिर्वियदा-

वत्त्वश्रुतिबलादेव पतन्यादिपतनदेशत्वसिद्धिश्चेति द्रष्टव्यम् । पूर्वपक्षबीजोद्घाटनार्थमुत्तरसूत्रद्वयम्–सू ॥ गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥ 'असंभवा'दित्यनेन श्रुत्यर्थापत्त्यनुमानविरोधादुत्पत्त्यसंभव उक्त इति व्याचष्टे–तत्तेज इति । ( तेजसः प्राक्सृज्यसद्भावे तस्य प्रथमं सृष्टिश्रवणं नोपपद्यत इति अर्थापत्तिः । )[1] निरवयवस्येति । निरवयवस्योत्पादिका सामग्री न संभवतीत्यनुकूलतर्कसहकृते निरवयवत्वहेतौ नोपाधिसंभव इति भावः । सू ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥ 'तस्मादेतद्ब्रह्मे' त्यत्र ब्रह्मशब्दः कार्यब्रह्मरूपहिरण्यगर्भादिपरः इति ( के[2]चित् ) । वक्तव्यं च वियदुत्पत्तिवादिनापि 'आकाशवत्सर्वगतश्च नित्य' इति श्रुतौ सकृच्छ्रुतयोर्नित्यसर्वगतशब्दयोरेकत्र गौणत्वमन्यत्र मुख्यत्वं च । अतस्तन्न दोष इत्यापादयितुं शक्यत इत्यपि द्रष्टव्यम् । सू ॥ प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥ यत्र तेजसः प्रथमं सृष्टिः श्रुता तत्रैव छांदोग्ये मृत्पिण्डघटशरावादिदृष्टांतोदाहरणपूर्वकम् एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं तत आपतद्वियदादेः ब्रह्मकार्यत्वं तत्र वियत्सृष्ट्यश्रवणमात्रेण प्रत्याख्यातुं न शक्यते । अश्रुतस्यापि गुणोपसंहारन्यायतः प्राप्तिसंभवेनाश्रवणस्यान्यथोपपत्तेरनुमानमप्यप्रयोजकम् । निरवयवद्रव्यस्यापि कार्यत्वसंभवात् उदाहृतप्रतिज्ञया सर्वस्यापि प्रपञ्चस्य मृत्पिण्डघटशरावादिन्यायादेककार्यत्वावधारणेन द्रव्याणामवयवसंयोगारभ्यत्वासिद्धेः । दृष्टान्तरूपोपपत्त्युपन्यासपूर्विका प्रतिज्ञा च तात्पर्यलिङ्गवत्त्वात्तद्रहिताभ्यो 'वायुश्चान्तरिक्षं चे' त्यादिश्रुतितो बलवतीति प्रतिज्ञाबलादेव पूर्वपक्षावलंबनहेतुत्रयनिराकरणसिद्धिमभिप्रेत्य सूत्रं व्याचष्टे–येनाश्रुतमिति । ननु, ब्रह्मज्ञानेनाज्ञातस्यापि ज्ञानमात्रं प्रतिज्ञातं न सर्वस्य ज्ञानं तत्तु तेजःप्रभृतिविषयत्वेनाप्युपपन्नमित्याशङ्क्याह–सर्वविज्ञानेति । 'येनाश्रुत' मित्यादौ अश्रुतादिशब्दास्संकोचकाभावात् 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात' मिति

१ ( ) एतद्रेखांकितं वाक्यं ख पुस्तके नास्ति । २ 'केचित्' इत्येतत् ख पुस्तके नास्ति ।

देर्ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवति । अतो न संभूतशब्दस्य गौणत्वं, प्रतिज्ञाहान्याद्यापत्तेः । यथा प्रतिज्ञाहानिर्न भवति तथा योजनीयम् ॥

सू ॥ शब्देभ्यः ॥ ६ ॥

'आत्मन आकाशस्संभूत' इत्यादिशब्देभ्योऽवगतां वियदुत्पत्तिं 'तत्तेजोऽसृजत' इत्यत्राकाशावचनावगतं तेजःप्राथम्यं न विचालयितुं क्षमते ॥

सू ॥ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

श्रुत्यंतरैकार्थ्याच्च सर्वविषया इति भावः । ननु प्रतिज्ञाया अहानिरव्यतिरेकादनन्यत्वादेव भवतीति सत्यं, तदनन्यत्वमपृथक्सिद्धिरूपं शरीरशरीरिभावमात्रेणोपपद्यमानं वियदादेर्न कार्यत्वपर्यंतमपेक्षते इत्याशंक्याह—ब्रह्मकार्यत्वेनेति । ( अन्यथा सर्वविज्ञानप्रतिज्ञानानिर्वाहात् ) मृत्पिण्डघटशरावादिदृष्टांतानुरोधाच्चेति भावः । पूर्वपक्ष्यभिमतहेतुत्रयनिरासार्थं प्रतिज्ञापर्यंतं नान्वेषणीयम् । उक्तहेतुत्रयानुसारेण यस्यास्संभूतादिश्रुतेर्गौणत्वमापाद्यते सैव तन्निराकरणसमर्थेति प्रतिपादनार्थं सूत्रम्—सू ॥ शब्देभ्यः ॥ ६ ॥ छांदोग्ये वियदुत्पत्तिर्न निवारिता तेजस्सृष्टेः प्राथम्यं च न श्रुतं किं तु वियदुत्पत्तेरवचनमात्रम् । न च क्वचित्कस्यचिदवचनमन्यत्र वचनतस्तत्प्राप्तिं निवारयितुमीष्टे । तेजस्सृष्टिः प्रथमश्रुतेति स्थानप्रमाणात् तत्प्राथम्यमवगम्यते इति चेन्न । स्थानप्रमाणकल्प्यप्राथम्यान्यथानुपपत्त्या वियदनुत्पत्तिकल्पनतस्संभूतादिश्रुतेर्बलवत्वात् तेजस्सृष्टिप्राथम्ये वियत्सृष्टिस्तत्प्राथम्यं चोभयं बाध्यं वियत्सृष्टिप्राथम्ये तु तेजःसृष्टिप्राथम्यमात्रं बाध्यमिति बाधककल्पनालाघवेन तेजस्सृष्टिप्राथम्यबाधस्योचितत्वाच्च । तस्मादिह न श्रुत्यर्थापत्तिः प्रवर्तते । नाप्यनुमानम् । प्रमाणांतराप्राप्तामेकस्मादात्मनो वियदुत्पत्तिं ब्रुवाणया श्रुत्यैव द्रव्यस्यावयवसंयोगारभ्यत्वनियमरूपशुष्कतर्कबाधात् । उदाहृतशब्दोऽपि न प्रवर्तते । 'सत्यं ज्ञानमनंतं ब्रह्मे' त्युक्तलक्षणान्तर्गतानंतशब्दार्थभूतवस्तुपरिच्छेदराहित्योपपादनार्थं प्रवृत्तस्य 'आत्मन आकाश' इत्यादेः 'कस्मिन्नु भगव' इत्यादिसर्वविज्ञानप्रतिज्ञोपपादनार्थं प्रवृत्तस्य 'एतस्माज्जायत' इत्यादेश्च प्रबलतया तेनैव तस्य बाध्यत्वादिति पूर्वपक्ष्यभिमतहेतुत्रयनिराकरणमभिप्रेत्य व्याचष्टे—आत्मन आकाश इत्यादिना । छांदोग्ये वियदनुत्पत्तिवचनमंगीकृत्य तैत्तिरीयादिगतवचनांतरतस्तत्सिद्धिः पूर्वसूत्राभिप्रेता भाष्यकृतोपन्यस्ता । अथ छांदोग्येऽपि तद्वचनमस्ति तेजः प्रभृत्युत्पत्त्युक्तेरेवोपलक्षणतया वियदुत्पत्तिवचनरूपत्वस्यापि सद्भावादतो न श्रुत्यर्थापत्तेरवकाशः नाप्युपन्यस्तशब्दानुमानयोरिति प्रतिपादनार्थं सूत्रम्—सू ॥ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥ तुशब्दश्छांदोग्ये वियदुत्पत्तिवचनं नास्तीति शंकाव्यावृत्त्यर्थः । विक्रियत इति विकारं कार्यम् । कर्मणि घञ् प्रत्ययः । अत एव नपुंसकलिंगतोपपत्तिः । सामान्यवचनसंक्षिप्तं यावत्कार्यजातमस्ति तत्सर्वं कर्म । विभागो विभज्यैकदेशस्योदाहरणतया कथनं व्याप्नोति न तु यावद्विशिष्योदाहृतं तावन्मात्रनिष्ठं भवति । विभागवचनं लोकवत् । यथा लोके 'महता तपसा मयेमे पुत्रा लब्धाः' इत्युक्त्वा 'बहुकालमयं परमेश्वराराधनेन लब्ध' इत्येकस्य द्वयोस्त्रयाणां वा विभज्य कथनं सर्वेषामपि पुत्राणां तथा तपोविशेषलब्धत्वप्रदर्शनार्थं

१ ( ) एतद्रेखांकितं वाक्यं ख पुस्तके नास्ति । ( २ ) रोधादिति ख पाठः । ( ३ ) 'इत्यादिप्रतिज्ञातसर्वविज्ञानोपपादनार्थ' मिति ख पाठः । ( ४ ) 'वियदुत्पत्त्यवचन' मिति ख पाठः ।

'ऐतदात्म्यमिदं सर्व'मित्याकाशादेरपि विकारत्वावगमात्तेजःप्रभृतिविकारवचनं यावद्विकारजातं तस्य सर्वस्यापि प्रदर्शनार्थमिति विभाव्यते । यथा लोके 'दश मे पुत्रा' इत्युक्त्वा तेषु केषांचिदुत्पत्तिकथनं तथात्रापि । तस्मात् वियदुत्पद्यत इति युक्तमेव ॥ इति वियदधिकरणम् ॥ १ ॥

---

भवति । यथा वा 'अग्नये जुष्टं निर्वपामी' ति मन्त्रस्य 'विकृतिषु यथादेवतमूहः कर्तव्य' इत्युक्त्या यथा सौर्यचरौ 'सूर्याय जुष्टं निर्वपामीत्यूह' इति विशिष्य क्वचिद्विकृतौ तद्देवतावाचिपदोहकथनं सर्वासु विकृतिषु तथैव तत्तद्देवताविशेषवाचिपदोहकर्तव्यताप्रदर्शनार्थं भवतीति सूत्रार्थं दर्शयन् किमत्र सामान्यतस्संक्षिप्य वचनं किं वा विभागवचनमित्याकांक्षायां तदुभयं विवृणोति—ऐतदात्म्यमिति । इदमुपसंहारगतवाक्योदाहरणमुपक्रमगतस्य 'सदेव सोम्येद' मित्यादिवाक्यस्याप्युपलक्षणम् । तथा च सर्वस्यापि प्रपञ्चस्य सृष्टेः प्राक्सद्रूपकारणात्मत्वावधारणात् उपसंहारगतवाक्यं सृष्टयनंतरमपि सद्रूपकारणात्मत्वावधारणार्थमवसीयते । तदेतत् सामान्यतः सर्वस्यापि प्रपञ्चस्य ब्रह्मणश्च कार्यकारणभावप्रतिपादकं संक्षिप्य वचनं तत्रोदाहरणविशेषप्रतिपादनार्थं 'तत्तेजोऽसृजते'त्यादि विभागवचनम् । अतस्तस्य वियदादिसर्वकार्योपलक्षणार्थत्वं युक्तमिति भावः । एवं चार्थापत्तिरनवकाशेति स्पष्टम् । शब्दोऽपि कार्यकारणभावकृतप्रपञ्चब्रह्मानन्यत्वप्रतिपादकोपक्रमोपसंहारतद्विशदीकरणार्थमध्यपरामर्शयुक्तसन्दर्भात् दुर्बल इति स्पष्टमेव । अनुमानमपि वियदादिकं कार्यं वस्तुपरिच्छेदरूपविभागवत्त्वात् घटवदिति प्रत्यनुमानपराहतम् । साध्यमिह स्वरूपान्यथाभावज्ञानसंकोचरूपधर्मान्यथाभावान्यतरकार्यत्वाधिकरणत्वमिति न चिच्छक्तौ जीवात्मनि च व्यभिचारः । निरवयवे सामग्र्यनिरूपणं तु प्रत्युक्तम् । इदं प्रत्यनुमानमर्थान्तरपरेण सूत्रेण सूचितम् । तत्रायं सूत्रार्थः । विभागो यावद्विकारं विकारा यावन्तः तावत्स्वेव । घटादिवत् । न कार्यत्वमतिक्रम्य विभक्तत्वमस्तीति । अस्मिन्नर्थे 'यावद्विकार' मित्यव्ययीभावसमासेन एकं पदम् । अयमर्थो भाष्यांतरेषूक्तः ततोऽवगन्तुं शक्यत इति भाष्यकृता नोपन्यस्तः । अधिकरणार्थमुपसंहरति—तस्मादिति ॥ इति वियदधिकरणम् ॥ १ ॥

---

### नयमणिमालायाम्

## अथ द्वितीयस्याध्यायस्य तृतीयः पादः ।

### अथ वियदधिकरणम् ॥ १ ॥

सू ॥ न वियदश्रुतेः ॥ १ ॥ अस्ति तु ॥ २ ॥ गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥ प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥ शब्देभ्यः ॥ ६ ॥ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

तेजःप्रभृतिश्रवणात्स्रष्टेर्नोत्पद्यते गगनम् । गौणी तज्जननश्रुतिरनवयवत्वेन तदयोगात् ॥ १२८ ॥

सद्बोधेऽखिलबोधप्रतिज्ञया कार्यतावगतेः । गौणी न तज्जनिश्रुतिरनुमानं स्यात्तया बाध्यम् ॥ १२९ ॥

### इति वियदधिकरणम् ॥ १ ॥

### सूत्रार्थचन्द्रिकायाम् अथ द्वितीयस्याध्यायस्य तृतीयः पादः ।

### अथ वियदधिकरणम् ॥

सू ॥ न वियदश्रुतेः ॥ १ ॥ अस्ति तु ॥ २ ॥ गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥ प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥ शब्देभ्यः ॥ ६ ॥ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

**भगवत्पादमते,** पूर्वस्मिन्पादे श्रुतिविरुद्धत्वात्परपक्षाणामुपेक्ष्यत्वमभाणि । तर्हि श्रुतीनामप्यन्योन्यविरुद्धत्वाद्ब्रह्मकारणवादस्याप्युपेक्ष्यत्वापत्तिरित्याशंकानिराकरणार्थं परं पादद्वयमारभ्यते–**न वियदश्रुतेरित्यादि** । अत्रादौ सृष्टिवाक्यानामविरोधं प्रतिपादयितुमाकाशमाश्रित्य विचार्यते । अत्र आकाशस्योत्पत्तिरस्ति वा न वेति संदेहः । यद्यस्ति तर्हि छान्दोग्ये आकाशवायू विना 'तत्तेजोऽसृजते' ति तेजआदिका सृष्टिः श्रूयते । तैत्तिरीयके तु 'आत्मन आकाशस्संभूत' इत्याकाशादिका । तथा चानयोर्वाक्ययोर्विरोध इति **पूर्वपक्षः । सिद्धान्तस्तु,** एकदेशिमते छान्दोग्ये आकाशस्योत्पत्त्यभावेऽपि तैत्तिरीयके सा श्रुतिरस्त्येव । तथापि आकाशोत्पत्तौ समवायिकारणादिसामग्र्यभावात् विभुत्वेन नित्यत्वानुमानाच्चाकाशोत्पत्तेरसंभवात्सा आकाशस्योत्पत्तिर्न मुख्या भवितुमर्हति किं तु गौणी । किं च 'वायुश्चान्तरिक्षं चैतदमृतम्' इत्याकाशेऽमृतशब्दप्रयोगदर्शनाच्च नाकाशस्योत्पत्तिः । नन्वेकस्मिन्वाक्ये एकस्य संभूतशब्दस्य मुख्यत्वं गौणत्वं च कथमिति चेत् यथा एकस्मिन्नेव प्रकरणे विषयभेदात् 'अन्नं ब्रह्मे'त्यत्र ब्रह्मशब्दो गौणः 'आनन्दो ब्रह्मे' त्यत्र ब्रह्मशब्दो मुख्यः तथा प्रकृतेऽपि विषयभेदादेकस्य गौणत्वं मुख्यत्वं च स्यात् । एवमाकाशस्यानुत्पत्तौ छान्दोग्यश्रुतेस्तैत्तिरीयश्रुत्या न विरोध इति । एकदेशिमतं दूषयन् सूत्रकारः परमसिद्धान्तमाह–यद्याकाशस्योत्पत्तिर्न स्यात्तर्हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हीयेत । अतस्तत्सिद्धये आकाशस्योत्पत्तिरङ्गीकर्तव्या । किं च । 'सदेव सोम्येदमग्र आसीत्' 'ऐतदात्म्यमिदं सर्वं' मित्यादिशब्देभ्यः प्रतिज्ञासिद्धिरवगम्यते । सर्वस्य वस्तुजातस्य ब्रह्मणोऽव्यतिरेकाद्धि सर्वविज्ञानप्रतिज्ञोपपद्येत । छान्दोग्यश्रुतिस्तैत्तिरीयश्रुत्यनुसारेण आकाशं वायुं च सृष्ट्वा तत्तेजोऽसृजतेति विपरिणम्यत इति नानयोर्विरोधः । यत्तु सामग्र्यभावादाकाशस्यानुत्पत्तिरिति तन्न । ब्रह्मण एव वियत्सामग्रीत्वात् । नित्यत्वानुमानमपि न सिद्ध्यति । आकाशादिः पराधीनसत्ताकः । स्वसमानसत्ताकविभागवत्त्वात् । घटादिवत् । इत्यनुमातुं शक्यत्वात् नित्यत्वानुमाने हेतोरसिद्धेः । यतः यावद्विकारजातं विभागो दृश्यते न त्वविकारे ब्रह्मणि । लोके घटादेर्विकारस्यैव विभक्तत्वदर्शनात् । अत आकाशस्य ब्रह्मकार्यत्वं सिद्धमिति । सूत्रार्थोऽपि व्याख्यातप्रायः । अस्मिन्मते **'शब्दाच्च'** इति पृथक्सूत्रं **'अव्यतिरेकाच्छब्देभ्यः'** इत्येकं सूत्रमिति च मध्वमतसाधारणः श्रीकण्ठरामानुजमताभ्यां विशेषः ॥

**श्रीकण्ठमते,** सांख्यादिदर्शनविरोधपरिहारानन्तरमध्यायशेषेणावान्तरविरोधः परिह्रियते—**न वियदश्रुतेरित्यादिना ।** अत्राधिकरणे वियदुत्पद्यते न वेत्यादिसंदेहपूर्वपक्षादिकं प्रायः पूर्ववत् । सिद्धान्तनिरूपणे परं सूत्रार्थवर्णनं कियदिव भिद्यते इत्यतस्तन्मात्रमिह निरूप्यते—**सू ॥ न वियदश्रुतेः ॥ १ ॥ वियन्नो**त्पद्यते । कुतः । **अश्रुतेः**=तदुत्पत्तिप्रतिपादनक्षमश्रुत्यभावादित्यर्थः । अतो जीववदाकाशोऽपि नोत्पद्यते इति **पूर्वपक्षे** प्राप्ते **सिद्धान्त**माह–**सू ॥ अस्ति तु ॥ २ ॥** वियदुत्पत्तिप्रतिपादनपरा श्रुतिरिति शेषः । छान्दोग्ये तदुत्पत्तिप्रतिपादनाभावेऽपि तैत्तिरीये 'तस्माद्वा एतस्मादात्मन आकाशस्संभूत' इति तदुत्पत्तिपरा श्रुतिरस्त्येव । आत्मनस्तु 'न जायते म्रियते वे' त्यादिप्रतिषेधादनुत्पत्तिः न वियत उत्पत्तिप्रतिषेधश्रुतिरस्ति । तस्माद्वियदुत्पद्यत एवेति ॥ उत्तरसूत्रद्वयेन पूर्वपक्षबीजमुद्घाटयति–**सू ॥ गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥** निरवयवस्याकाशस्योत्पत्त्यसंभवात् 'वायुश्चान्तरिक्षं चैतदमृत' मिति नित्यत्वशब्दाच्च 'तत्तेजोऽसृजते' ति तेजसः प्रथमसृष्टिवचनात् 'आकाशस्संभूत' इति श्रुतिर्गौणी ॥ **सू ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥** यथा एकस्य ब्रह्मशब्दस्य 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत' इति प्रकृतौ गौणत्वं 'तपसा चीयते ब्रह्म' इति मुख्यत्वं तद्वदत्रापि एकस्य संभूतशब्दस्याकाशे गौणत्वमन्यत्र मुख्यत्वमावृत्ताविव संभवत्येव । तस्मादाकाशस्योत्पत्तिरयुक्तेति ॥ अथ परिहारमाह—**सू ॥ प्रतिज्ञाहानिरव्यतिरेकात् ॥ ६ ॥** वियदादेर्ब्रह्मकार्यत्वेन तदव्यतिरेकादेव 'येनाश्रुतं श्रुतं भवती' त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अहानिर्भवति । अतो न संभूतशब्दस्य गौणत्वम् । इत्यर्थः ॥ **सू ॥ शब्देभ्यः ॥ ६ ॥** 'आत्मन आकाशस्संभूत' इत्यादिशब्देभ्योऽवगतां वियदुत्पत्तिं 'तत्तेजोऽसृजते' त्याकाशवचनावगतं तेजःप्राथम्यं न निवारयितुमीष्टे ॥ **सू ॥ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥** 'ऐतदात्म्यमिदं सर्वं' मित्यादिनाकाशादेस्सर्वस्यापि विकारत्ववचनात् 'तत्तेजोऽसृजते'त्यादि विभज्य कथनं यावन्तो विकारास्तावत्स्वेव व्याप्नोति । यावद्विकारमित्यव्ययीभावादेकं पदम् । यथा लोके 'दश मे पुत्रा' इत्युक्त्वा तेषु केषांचिदुत्पत्तिकथनं तद्वदत्रापीत्यर्थः । तस्माद्वियदुत्पद्यत एवेति सिद्धम् । अमृतत्ववचनमापेक्षिकमित्यर्थः ॥

**रामानुजमते,** संगतिसंदेहपूर्वपक्षसिद्धान्तसूत्रार्थवर्णनादिकं प्रायः श्रीकण्ठमतसाधारणमेव । अधिकरणरचना परं भिद्यते । श्रीकण्ठमते पृथगधिकरणद्वयतया विभक्तं सूत्रद्वयमनन्तरमेतदधिकरणेऽन्तर्भावितमित्यस्ति विशेषः । तयोरपि सूत्रयोरर्थवर्णनप्रकारस्त्वविशिष्ट एव श्रीकण्ठमतात् । यथा–**सू ॥ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥** अनेन न्यायेन मातरिश्वनोऽप्युत्पत्तिरुक्ता । अधिकाशंकाभावात् न्यायातिदेशोऽयं न भवति । पृथग्योगकरणमुत्तरार्थम् । **सू ॥ असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥** तुशब्दोऽवधारणार्थः । **सतः**=परमकारणस्यैव ब्रह्मणः । **असंभवः**=उत्पत्त्यसंभवः । तद्व्यतिरिक्तस्य सर्वस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाद्यनुपपत्तेस्संभव उक्त इति भावः ।

## अथ मातरिश्वाधिकरणम् ॥ २ ॥

## सू ॥ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

'तेजोऽत' इति वक्ष्यति । तदर्थं पृथगुपादानम् । आकाशाद्वायोरुत्पत्तिरस्ति नवेति संशये वायुर्नोत्पद्यत इत्युच्यते । छांदोग्ये तेजःप्राथम्यात् वायोरुत्पत्तेरश्रुतेः बृहदारण्यके 'सैषानस्तमिता देवता यद्वायुरि' ति तज्जन्मनिषेधाच्च सर्वथा वायुर्नोत्पद्यत इति प्राप्ते सिद्धांत उच्यते–छांदोग्ये वायोर्जन्माश्रवणेऽपि गुणोपसंहारन्यायेन 'आकाशाद्वायुरि' ति तैत्तिरीयवाक्यस्योपसंहारे सति श्रुतमेव छांदोग्येऽपि वायोर्जन्म । 'सैषानस्तमिते' ति श्रुतिः स्तुतिपरा । उपासनाप्रकर-

### अथ मातरिश्वाधिकरणम् ॥ २ ॥

सू ॥ एतेन मातरिश्वा व्याख्यातः ॥ ९ ॥ ननु किमर्थमिदमतिदेशाधिकरणं 'सैषानस्तमिते' ति वाक्यावलंबनशङ्काव्यावर्तनार्थमिति चेन्न । 'वायुश्चान्तरिक्षं चे' ति पूर्वाधिकरणोदाहृतवाक्यावलंबनशङ्काव्यावर्तनेन तस्यापि सिद्धत्वात् इत्याशंक्याह–तेजोऽत इति । वियन्मातरिश्वनोरुभयोरप्येकसूत्रेणोत्पत्तौ समर्थयितुं शक्यायामप्युत्तरसूत्रे सर्वनाम्ना मातरिश्वन एव परामर्शार्थं पृथक्सूत्रकरणमित्यर्थः । ये तु मन्यंते 'वायुश्चान्तरिक्षं चैतदमृत' मित्युभयसाधारण्येनामृतत्वमुक्त्वा पुनर्वायोर्विशिष्योच्यते 'सैषानस्तमिता देवता यद्वायु' रिति ततोऽभ्यासाद्वायोरमृतत्वं विवक्षितमिति ज्ञायत इत्यधिकाशंकाव्यावृत्त्यर्थमातिदेशिकमधिकरणांतरमेवेदमिति तन्मतानुसारेणाधिकरणमुपन्यस्यति–आकाशाद्वायोरित्यादिना । एतदेव भाष्यकाराभिमतं मतम् । पृथग्योगकरणमुत्तरार्थमिति तु मतान्तरप्रदर्शनमात्रम् । न हि 'तेजोऽतस्तथा ह्याह' इत्युत्तरसूत्रे 'अत' इत्यनेन वायुरेव परामर्शनीयः । किं त्वाकाशोऽपि । तत्र सूत्रे वायोरेवाग्निरितिवदाकाशादेव वायुरित्यपि पूर्वपक्षस्य विवक्षितत्वेन तदर्थं वायुरिति पदेऽध्याहृते सत्यावृत्त्या तदन्वयिनोऽत इत्यस्याकाशपरत्वस्याप्यवश्यंभावादिति । उपासनाप्रकरणादिति।

---

**आनन्दतीर्थमते,** अत्र पादे विप्रतिषेधदोषपरिहाराय श्रुतिविरोधो निराक्रियते । अत्राधिकरणे संदेहपूर्वपक्षसिद्धान्ताधिकरणशरीरादिकमविशिष्टमेव शांकरमतात् । सूत्राक्षरार्थवर्णने परमस्ति वैलक्षण्यमिति तन्मात्रमिह निरूप्यते–सू ॥ **न वियदश्रुतेः** ॥ १ ॥ **वियत्**=आकाशमनुत्पत्तिमन्न । किं त्वीशादुत्पत्तिमदेव । कुतः । **अश्रुतेः**=वियदनुत्पत्तौ श्रुत्यभावादित्यर्थः । सू ॥ **अस्ति तु** ॥२॥ आकाशोत्पत्तौ 'आत्मन आकाशस्संभूत' इति श्रुतिरस्त्येवेत्यर्थः ॥ सू ॥ **गौण्यसंभवात्** ॥ ३ ॥ 'अनादिर्वायमाकाश' इति श्रुतिर्**गौणी**=अमुख्यानादित्वपरा । कुतः । **असंभवात्**=तस्या मुख्यार्थत्वे बहुलोत्पत्तिश्रुत्ययोगादित्यर्थः ॥ सू ॥ **शब्दाच्च** ॥ ४ ॥ 'अथ ह वाव नित्यानी' ति श्रुतिबलाच्चानादित्वश्रुतिर्गौणार्थेत्यर्थः ॥ सू ॥ **स्याच्चैकस्य ब्रह्मशब्दवत्** ॥ ५ ॥ चोऽवधारणे । **ब्रह्मशब्दवत्**=यथा एकस्यैव ब्रह्मशब्दस्य विष्णौ मुख्यत्वं जीवे त्वमुख्यत्वमस्ति तथा एकस्यैव नित्यत्वबोधकशब्दस्य ब्रह्मणि मुख्यार्थता स्यात् ॥ सू ॥ **प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः** ॥ ६ ॥ आकाशस्य मुख्यानुत्पत्त्युक्तौ **प्रतिज्ञाहानिः**='स इदं सर्वमसृजते' ति विष्णोः स्रष्टृत्वप्रतिज्ञाहानिः स्यात् । कुतः । **अव्यतिरेकात्**=आकाशस्य सर्वशब्दार्थानतिरिक्तत्वात् । किंच ॥ **शब्देभ्यः**='आत्मा वा इद' मित्यादिस्पष्टश्रुतिभ्यश्च ब्रह्मण एव मुख्यानुत्पत्तिः न त्वन्यस्येत्यवसीयते ॥ सू ॥ **यावद्विकारं तु विभागो लोकवत्** ॥ ७ ॥ यावच्छब्दोऽवधारणे । यावद्विकारमित्यव्ययम् । तुशब्दश्चार्थे । तथा च यतः **यावद्विकारं**=विक्रियमाणमेव वस्तु **विभागः**=विभागशब्दितात्पशक्तिमत् न त्वन्यदिति नियमः सिद्धः । अतो **लोकवत्**=लोक इव । यथा लोके घटादौ विभक्तत्वाद्विकारित्वमङ्गीकृतं तथा आकाशादेरपि विभक्तत्वहेतुना विकारित्वं सिद्ध्यति । तत एव सादित्वमपि सिद्ध्यतीत्यर्थः ॥ अत्र मते वियत्पदेन भूतावकाशौ तदभिमानिनौ चेति चतुष्टयमुच्यते ॥

इति सूत्रार्थचन्द्रिकायां वियदधिकरणम् ॥ १ ॥

णात्। तस्मात् वायुरपि जायत एव ॥ इति मातरिश्वाधिकरणम् ॥ २ ॥

अथ असंभवाधिकरणम् ॥ ३ ॥

सू ॥ असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

'सदेव सोम्येदमग्र आसी' दिति सद्रूपाद्ब्रह्मण आकाशादीनामुत्पत्तिरिति निरूपितम्। तदिह सर्वकारणस्य सतोऽपि ब्रह्मणः कुतश्चित्कारणादुत्पत्तिरस्ति न वेति संदेहे सति ब्रह्मणोऽप्युत्पत्तिरस्तीत्युच्यते । यथा कारणत्वेऽप्याका-

---

यद्यपि सर्वत्रापि ब्रह्मप्रकरणे संभृत्यधिकरणन्यायादुपासना विविक्षितास्त्येव । तथाप्यन्यपरत्वमात्रमनया भंग्योच्यते। बृहदारण्यके हि 'अनेन ह्येतत्सर्वं वेदे' त्यात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनार्थमात्मकार्यं वाय्वादिकं 'वायुश्चे' त्यादिना प्रदर्श्यते । अथ स्वर्गकामवाक्यानुसारेण 'को हि तद्वेद यद्यमुष्मिन् लोक' इत्यादिवाक्यवदिहापि प्रधानवाक्यानुसारेण गुणवाक्यस्य योजनीयत्वात् आत्मकार्यस्यैव वाय्वादेरमृतत्वकीर्तनं स्तुतिपरमवसीयते इति भावः ॥ इति मातरिश्वाधिकरणम् ॥ २ ॥

अथासंभवाधिकरणम् ॥ ३ ॥

तर्हि तद्वदेव 'स वाह्याभ्यंतरो ह्यजः' । 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इत्यादौ ब्रह्मणोऽप्यजत्वनित्यत्वादिकीर्तनं स्तुतिपरं स्यात् इत्याशंकानिराकरणार्थमधिकरणान्तरम्–सू ॥ असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ कारणत्वसामान्यादाकाशादिवत् ब्रह्मणोऽप्युत्पत्तिरस्तीति पूर्वः पक्षः। ननु 'अग्र आसीदि' ति सृष्टेः प्राक् ब्रह्मणोऽवस्थानं

---

नयमणिमालायाम् अथ मातरिश्वाधिकरणम् ॥ २ ॥

सू ॥ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

सैषानस्तमितेति श्रुत्यैवान्तस्य वारणाद्वायोः। वायुर्नोत्पद्यत इति शंकायामेवमतिदेशः ॥ १३० ॥
तात्पर्यवत्प्रतिज्ञानुरोधतः स्यात्तदुत्पत्तिः। सैषानस्तमितेति स्तुतिः परमुपासनाशेषः ॥ १३१ ॥

इति मातरिश्वाधिकरणम् ॥ २ ॥

सूत्रार्थचन्द्रिकायाम् अथ मातरिश्वाधिकरणम् ॥ २ ॥

सू ॥ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

**भगवत्पादमते,** अत्रापि वायोरुत्पत्तिरस्ति न वेति संदेहे छान्दोग्ये न श्रूयते तैत्तिरीयके तु 'आकाशाद्वायुः' इति श्रूयते। तथा च पूर्ववदनयोर्विरोधप्राप्तौ तत्परिहाराय वायोरुत्पत्तिर्गौणी वाच्या । 'सैषानस्तमिता देवता यद्वायु' रिति लयप्रतिषेधाच्च न वायोरुत्पत्तिरिति **पूर्वपक्षः । सिद्धान्तस्तु, एतेन**=आकाशस्योत्पत्तिमत्त्वव्याख्यानेन वायुरप्याकाशवच्छिन्नब्रह्मजन्यत्वेन व्याख्यातः । अन्यथा प्रतिज्ञाहान्यादिदोषापत्तेः। लयप्रतिषेधस्त्वापेक्षिकः स्तुतिपरः। पूर्वं वाय्वाकाशयोस्सामान्येनामृतत्वमभिधाय पुनश्च वायोः 'सैषानस्तमिते' ति लयप्रतिषेधाद्वायोरमृतत्वं विवक्षितमित्यधिकाशंकानिराकरणार्थमिदमातिदेशिकमधिकरणान्तरमिति भावः ॥

**श्रीकण्ठमते,** नात्राधिकरणे पूर्वस्माद्वैलक्षण्यमिति वेद्यम् ॥

**रामानुजमते,** अस्य सूत्रस्य पूर्वाधिकरणशेषतया पूर्वस्मिन्नधिकरण एव व्याख्याततया च नात्र पुनस्तत्प्रपञ्चनावकाशः॥

**आनन्दतीर्थमते,** अविशिष्टमिदं शांकरमतात् । **एतेन**=पूर्वोक्तविभक्तत्वादिहेतुना । **मातरिश्वा**=मुख्यवायुः । **व्याख्यातः**=उत्पत्तिमत्त्वेनोक्त इत्यर्थः ॥

इति मातरिश्वाधिकरणम् ॥ २ ॥

---

(१) 'दुपासनाविवक्षास्त्येव' इति ख पाठः।

**शस्य। किं तु 'अग्र आसी'दिति श्रवणात् सर्वविकारेभ्यः पूर्वमस्योत्पत्तिः। किमस्य कारणमिति चेदसदेव। 'असद्वा इदमग्र आसीत्ततो वै सदजायत' इति श्रवणात्। ततस्सद्रूपं ब्रह्मापि जायत इति पूर्वपक्षः। सिद्धांतस्तु—न जायते ब्रह्मेति। कुतः। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' इति शिवस्य ब्रह्मण एवावधारणात्। तस्यासंभव एव। निषेधात्। तदन्यस्य त्वनुपपत्तेस्संभव इति। यथा ब्रह्म कारणत्वेन श्रूयते सर्वेषां तथा तस्यापि किंचित्कारणांतरं श्रूयते। 'असद्वा इदमग्र आसीत्ततो वै सदजायते'ति सतः कारणमसदिति चेत्। तदसत्। 'कथमसतस्सज्जायेते'ति निषेधात् सत एव सदुत्पत्तावात्माश्रयापत्तेः। ततः सतो ब्रह्मण एवासंभवोऽनुत्पत्तिः। तदन्यस्य सर्वस्य सर्वविज्ञानप्रतिज्ञानुपपत्तेः संभव उत्पत्तिरिति॥ इति असंभवाधिकरणम्॥ ३॥**

**श्रूयते तत्कथमुत्पत्तिमत्स्यात्? नेति ब्रूमः। 'अग्र आसी' दिति वियदादिभ्यः प्रागुत्पत्तिरुच्यते। 'रोहितो लोहितादासीत् धुन्धुस्तस्य सुतोऽभव' दित्यादावस्तेः उत्पत्तावपि प्रयोगदर्शनात्। कुतस्तस्योत्पत्तिरिति चेद्वाक्यान्तरप्राप्तादसतो भविष्यति। 'कथमसतस्सज्जायेते'ति वाक्यमाश्चर्यार्थत्वेन कथञ्चिद्योजनीयम्। तस्यापि कारणत्वेन कार्यतया कारणाकाङ्क्षायामसदन्तरं कारणं भविष्यति। कारणानवस्था तु अनादित्वान्न दोष इति। अत्र सिद्धान्तः—सतो ब्रह्मणः असंभवस्तु अनुत्पत्तिरेव। एकत्वावधारणात्। न च सहोत्पन्नवस्त्वंतरनिषेधपरं तत्। 'एकमेवाद्वितीय' मिति पदत्रयेण सर्वनिषेधात् 'यदा तम' इति मन्त्रेण प्रपञ्चसृष्टिप्राक्काले ब्रह्मव्यतिरिक्तस्य सत इवासतोऽपि साक्षादेव निषेधाच्च। 'कथमसत' इति वाक्यं चासतस्सकाशात् सत उत्पत्तिं साक्षान्निषेधति। न च तदाश्चर्यपरं योजनीयम्। 'स त्वेव सोम्येदमग्र आसी' दित्यग्रिमवाक्ये तुशब्देन पूर्वमसतः प्रतिषेधस्पष्टीकरणात्। सत एव सदुत्पत्तावात्माश्रयः स्पष्टः। सत्परंपराभ्युपगमे त्वप्रामाणिक्यनवस्था। कारणत्वस्य कार्यत्वाप्रयोजकत्वादाकाशादिदृष्टांतोपन्यासमात्रेण कार्यत्वकल्पनस्यातिप्रसंगावहत्वादिति। यद्यपि सौत्र 'मनुपपत्ते' रिति पदमसंभवहेतुपरत्वेन योजयितुं शक्यं तथापि तत्र हेतोरेकत्वावधारणादेः स्पष्टत्वात् ब्रह्मातिरिक्तानां परापरमायाप्रकृतीनां ब्रह्मवज्जगदुपादानत्वेन प्रसक्ताया अनुत्पत्तिशङ्काया निरसनीयत्वाच्च तन्निरासार्थत्वेन भाष्यकृता तत्पदं योजितम्। तदन्यस्य त्वनुपपत्तेस्संभव इति। अनुपपत्तिरप्यग्रे स्पष्टीकृता। 'सर्वविज्ञानप्रतिज्ञानुपपत्तेरिति॥**

**इत्यसंभवाधिकरणम्॥ ३॥**

---

**नयमणिमालायाम्**

**अथासंभवाधिकरणम्॥ ३॥**

**सू॥ असंभवस्तु सतोऽनुपपत्तेः॥ ९॥**

एवं कारणभूतं सदपि व्योमादिवज्जननवत्स्यात्। भवति ततो वै सदजायतेति हि श्रवणमन्यत्र॥१३२॥

उत्पत्तिरेकमेवेत्यवधारणबाधिता तस्य। कथमसतस्सज्जायेतेति विरुद्धं तु तच्छ्रवणम्॥ १३३॥

**इत्यसंभवाधिकरणम्॥ ३॥**

---

( १ ) 'उत्पत्त्यादावपि' इति ख पाठः।

## अथ तेजोऽधिकरणम् ॥ ४ ॥

## सू ॥ तेजोऽतस्तथा ह्याह ॥ १० ॥

अत्र वाय्वादिकार्यं साक्षाद्ब्रह्मण उत्पद्यते स्वस्वपूर्वकारणाद्वेति संदेहे सति स्वस्वपूर्वकारणादिति पूर्वपक्षः । तथा हि 'आकाशाद्वायुरिति' श्रुतेर्वायुराकाशादेवोत्पद्यते न साक्षाद्ब्रह्मणः । तेजोऽपि तथा वायोरेव । तथा 'वायोरग्नि'-रित्याह श्रुतिः ॥

### अथ तेजोऽधिकरणम् ॥ ४ ॥

एवं ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य प्रपञ्चस्य ब्रह्मकार्यत्वमविरोधेनोपपादितम् । अथ तत्कार्यत्वं साक्षादेव न तु परंपरयेत्येतदविरोधेनोपपादयितुमधिकरणम् ॥ सू ॥ तेजोऽतस्तथा ह्याह ॥ १० ॥ 'आत्मन आकाश' इत्यादिसृष्टिवाक्यगतानां पंचम्यंतानामाकाशादिशब्दानां महाभूततदन्तर्याम्यन्यतरपरत्वानवधारणात्संशयं दर्शयति –अत्रेति । आकाशाद्वायुरिति । श्रुतेरिति । आकाशशब्दस्य वियति तदंतर्यामिणि ब्रह्मणि च शक्तेरविशिष्टत्वेऽपि वियत्परत्वमेव युक्तम् । लौकिकवैदिककारणप्रसिद्ध्यतिशयानुग्रहात् 'आत्मन आकाश' इति तत्रैव प्रथमांतस्याकाशशब्दस्य वियत्परतायाः क्लृप्तत्वाच्चांतर्यामिणः कार्यत्वासंभवादिति भावः । तेजोऽपि तथा वायोरेवेति । उक्तन्यायादेव 'तत्तेजोऽसृजते' ति छांदोग्यवाक्यं परंपराकारणत्वविषयमिति न तद्विरोध इति भावः । ननु छांदोग्यश्रुतौ 'तत्तेज ऐक्षते' त्यत्र तेजश्शब्दस्यांतर्यामिपरत्वं वाच्यम् । ईक्षणलिंगात् । अतस्तैत्तिरीयकगतानामपि कारणपराणामाकाशादिशब्दानामंतर्यामिपरत्वं स्यादिति शङ्का-

---

सूत्रार्थचन्द्रिकायाम्

अथ असंभवाधिकरणम् ॥ ३ ॥

सू ॥ असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

**भगवत्पादमते,** पूर्वमसंभावितोत्पत्तिकयोर्वाय्वाकाशयोरुत्पत्तिरस्तीति श्रुतिबलादुक्तम् । तद्वद्ब्रह्मान्तराद्ब्रह्मोत्पत्तिः श्रुतिबलादस्त्विति दृष्टान्तसंगत्येदमारभ्यते–**असंभवस्त्विति।** अत्र 'न चास्य कश्चिज्जनिता न चाधिपः' इत्यादीनां ब्रह्मणो नित्यत्वप्रतिपादकश्रुतीनां 'त्वं जातो भवसि विश्वतोमुखः' इति श्रुत्या विरोधोऽस्ति न वेति **संदेहः** । विरोधोऽस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु, सतस्तु** सदात्मकस्य ब्रह्मण एव । **असंभवः**=उत्पत्त्यसंभवः । कुतः । **अनुपपत्तेः**=सत्सामान्यात्सत्सामान्यस्योत्पत्त्यनुपपत्तेः । विशेषस्यैव हि घटादेर्मृत्सामान्यजन्यत्वदर्शनात् । जन्मश्रुतिश्चौपाधिकविषया । अतो नित्यं ब्रह्मेत्यविरोधः ॥

**श्रीकण्ठमते,** यद्यपि पूर्वपक्षसिद्धान्तादिकं पूर्वस्मादविशिष्टम् । तथापि तदुपपादनप्रकारः परं भिद्यते–यथा–'सदेव सोम्येदमग्र आसीत्' इति सद्रूपाद्ब्रह्मण आकाशादीनामुत्पत्तिरिति निरूपितम् । सर्वकारणस्य सतोऽपि ब्रह्मणः कुतश्चिदुत्पत्तिरस्ति वा न वेति **संदेहः** । 'असद्वा इदमग्र आसीत् । ततो वै सदजायते' ति श्रवणात्सर्वविकारेभ्यः पूर्वमसतः कारणात्सद्रूपं ब्रह्मापि जायत इति **पूर्वपक्षः । सिद्धान्तस्तु,** 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' इति शिवस्य ब्रह्मण एवावधारणात्तदा सर्वनिषेधादसतस्सजनिप्रतिषेधाच्च तस्यासंभव एव । तदन्यस्य तु अनुपपत्तेः संभवः इति । अत्र 'अनुपपत्ते' रित्येतत्तदन्यस्य संभवहेतुतया व्याख्यातमित्यपि पूर्वस्माद्विशेषः । ततो ब्रह्मण एवानुत्पत्तिस्तदन्यस्य सर्वविज्ञानप्रतिज्ञानुपपत्तेरुत्पत्तिरिति सूत्रार्थः फलितः ॥

**रामानुजमते,** अस्यापि सूत्रस्य पूर्वसूत्रवत्पूर्वाधिकरणशेषतयैव निवेशात्तत्रैव व्याख्याततया न पुनर्विवरणावकाशः । सूत्रार्थः परं श्रीकण्ठमतादविशिष्ट इति स्पष्टमेव ॥

**आनन्दतीर्थमते,** इदमप्यविशिष्टार्थमेव शांकरमतात् । तुशब्दोऽवधारणे । **सतः**=विष्णोः । **असंभवस्तु**=अनुत्पत्तिरेव । न 'ह्यसतः सदजायते' ति श्रुत्या असतस्सकाशादुत्पत्तिर्वाच्या । कुतः । **अनुपपत्तेः**=विष्णोरसदुत्पत्त्ययोगादित्यर्थः ॥

इत्यसंभवाधिकरणम् ॥ ३ ॥

सू० ॥ आपः ॥ ११ ॥

'अग्नेराप' इति श्रुतेरापोऽप्यग्नेरेवेति ॥

सू० ॥ पृथिवी ॥ १२ ॥

'अद्भ्यः पृथिवी' ति श्रुतेरद्भ्य एव पृथिवी । अतो ब्रह्मण एव साक्षान्नोत्पद्यंते भूतानि ॥

सू० ॥ अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥

छांदोग्येऽपि 'ता अन्नमसृजन्ते' त्यन्नशब्देन पृथिव्येवोच्यते । सर्वभूतसृष्ट्यधिकारात् 'यत्कृष्णं तदन्नस्ये' ति रूपविधानाच्च । 'अद्भ्यः पृथिवी' ति शब्दाच्च । अतः पृथिव्येवाद्भ्य उत्पद्यते । तदेवंन्यायेन ब्रह्म न सर्वेषां साक्षात्कारणं किंतु परंपरयेति ॥

सिद्धान्त उच्यते-

सू० ॥ तदभिध्यानादेव तु तल्लिंगात्सः ॥ १४ ॥

ब्रह्मण एव तु साक्षात्सर्वभूतोत्पत्तिः । तथा हि-

'तस्माद्वा एतस्मादात्मन आकाशस्संभूत' इत्यारभ्य वाय्वादीनां पृथिव्यंतानां न पूर्वपूर्वकारणादुत्पत्तिरुच्यते । किं तु पूर्वपूर्वकारणादाकाशादिविशिष्टात् ब्रह्मण एवोत्तरोत्तरवाय्वादिकार्योत्पत्तिरुच्यते इति परमात्मा शिव एव

निराकरणार्थं सूत्रम्-सू ॥ आपः ॥ ११ ॥ 'अतस्तथा ह्याहे' ति पूर्वसूत्रादनुषङ्गः । आपोऽप्यग्नेरेवेति । छांदोग्येऽपि कारणपरतेजश्शब्दस्य पूर्वोक्तयुक्तिभिः[1] भूतविशेषपरत्वमेव युक्तमीक्षणं तु प्रथमश्रुततेजश्शब्दानुसारेण 'तस्माद्यत्र क्वच शोचति स्वेदते वा पुरुषः तेजस एव तद्ध्यापो जायन्त' इति वाक्यशेषदर्शनाच्च गौणं भविष्यतीति भावः । सू ॥ पृथिवी ॥ १२ ॥ अत्रापि पूर्ववदनुषंगः । यद्यपि पूर्वसूत्रोक्तन्यायेनैवाद्भ्य एव पृथिवीत्येतत्सिद्धं[2] तथापि छांदोग्ये 'ता अन्नमसृजन्ते' ति श्रवणात् 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवती' ति तद्वाक्यशेषाच्च तद्विरोधशंकां प्रसज्यैतदविरोधोपपादनस्यावसरदानायेदं सूत्रम् । तामेव प्रसक्तां शङ्कां निराकर्तुमुत्तरसूत्रम्-सू ॥ अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥ यत्कृष्णं तदन्नस्येति रूपविधानाच्चेति । पृथिव्यामेव हि प्रायिकतया कृष्णं रूपं दृश्यते न व्रीहियवादिष्वदनीयेष्विति भावः । अतः पृथिव्येवाद्भ्य उत्पद्यत इति महाभूताधिकाररूपस्य प्रकरणस्य कृष्णरूपात्मकस्य लिंगस्य श्रुत्यंतरगतयथासंख्याम्नानरूपस्य स्थानप्रमाणस्य चेति प्रमाणत्रयस्यान्नश्रुतिवर्षणप्रयुक्तभूयिष्ठत्वलिंगरूपप्रमाणद्वयापेक्षया बलवत्त्वादिति भावः । सू ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥१४॥ आकाशादिविशिष्टादिति । इदमाकाशाद्यभिमानिसदाशिवादिशरीरकत्वस्यापि वक्ष्यमाणस्योपलक्षणम् । शिव एवेति । अनेन सौत्र एवकारो भिन्नक्रम इति दर्शितम् । तेन प्रथमान्ताकाशादिपदोक्तोऽपि तत्तद्विशिष्टशिव एव । 'तदैक्षत बहु स्या' मिति तदभिध्यानात् । तस्य स्वरूपान्यथाभावरूपकार्यत्वासंभवेऽपि स्वविशेषणभूतधर्मान्यथाभावरूपकार्यत्वसंभवादिति सूच्यते । 'तदैक्षत बहु स्यां प्रजायेये' तिवदिति दृष्टांतो-

(१) 'युक्तिभ्यां' इति ख पाठः (२) 'त्येतदपि सिद्ध्यति' इति ख पाठः ।

साक्षात्सर्वभूतोत्पादकः 'तदैक्षत बहु स्यां प्रजायेये' तिवत्, 'तत्तेज ऐक्षत बहु स्यां प्रजायेयेति' 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि' इति तदभिध्यानात्तल्लिंगात् ।

'सदाशिवश्शब्दमूर्तिः स्पर्शमूर्तिरथेश्वरः । रुद्रस्तेजोमयस्साक्षात् रसमूर्तिर्जनार्दनः । गंधमूर्तिश्चतुर्वक्त्रः इत्येताः पञ्च मूर्तयः' । इति वचनात् सदाशिवादिरूपात् शब्दाद्यात्मनो ब्रह्मणो वाय्वादिसंभवः । एते हि सदाशिवादयः पंचब्रह्मसंज्ञकाः पंचभूतात्मानः परब्रह्मणश्शरीरम् । पञ्चब्रह्मशरीरादेव परब्रह्मणः प्रपंचस्य सृष्ट्यादयः प्रवर्तन्ते । पंचभूततापन्नाश्चैते सदाशिवादयः परमात्मन उत्पद्यंते ।

ननु भूतानामेवात्रोत्पत्तिरुच्यते 'आकाशस्संभूत' इत्यादिना, सदाशिवादीनां न साक्षात्सृष्टिरुच्यत इति चेत्। उच्यत एव। श्रुत्यंतराध्याहारात् । तथाथर्वशिखायां 'ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयंते सर्वाणि चेंद्रियाणि सह भूतैर्न कारणं कारणानां ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च शंभुराकाशमध्यग' इति ब्रह्मादीनामिन्द्रियाणां च भूतैस्सहोत्पत्तिः श्रूयते। कारणानामपि कारणत्वेन स शंभुः परमाकाशमध्ये ध्येयः श्रूयते । ततस्साक्षादेव ब्रह्मणस्तत्तत्कारणरूपात्तत्तत्कार्योत्पत्तिरिति निर्णयः ॥

इति तेजोऽधिकरणम् ॥ ४ ॥

---

पादानस्यायमभिप्रायः । इदं वाक्यं ब्रह्मणो यथा[1] बहुभवनसंकल्पं ब्रवीति तथैव[2] 'तत्तेजऐक्षते' त्यादिवाक्यद्वयमपि ब्रवीति तेजस्सृष्टिमात्रेण तद्विषयबहुभवनानिवृत्तेरिति । अनेनैषा शंका व्यावर्त्यते । जडानामाकाशादीनामीक्षणासंभवेऽपि प्राथमिकतेजःश्रुत्यनुसारात् गौणमीक्षणमस्तु । तदभिमानिनां सदाशिवादीनां तत्संभवात् । आकाशादिपदानां तन्मात्रपर्यवसायित्वं वास्तु न[3] शिवपर्यंतत्वम्। न च सदाशिवादीनामीक्षणमात्रसंभवेऽपि महाभूतरूपेण बहुभवनसंकल्पो न संभवतीति वाच्यम् । तेषां योगसिद्धानामिव भूतवशित्वेन सर्वशरीरकत्वोपपत्तेरिति । एवमभिध्यानस्य प्राक्प्रदर्शितबहुभवनसंकल्परूपत्वतत्सिद्धब्रह्मसाधारण्यसूचनार्थं 'तदभिध्याना' दिति 'तल्लिङ्गा' दिति च सौत्रतत्पदम् । एवं[4] तत्पदद्वयं प्रयुञ्जानस्य सूत्रकारस्याशयस्थमेव सदाशिवादीनामाकाशाद्यभिमानित्वं 'सदाशिवश्शब्दमूर्त्ति' रित्यादिना दर्शितम् । एवं तेजःप्रभृतिसृष्टेर्बहुभवनसंकल्परूपत्वसिद्धौ तुल्यन्यायतया वाय्वादिसृष्टेरपि तत्पूर्वकत्वं सिद्ध्यतीति ब्रह्मलिंगस्य व्यापकत्वमनुसंधेयम् । 'ननु भूताना' मित्यादिशंकापरिहारौ स्पष्टौ । श्रुत्यंतराध्याहारादिति । श्रुत्यंतरश्रुतगुणोपसंहारादित्यर्थः । अथर्वशिखावचनानि प्रथमाध्याये व्याख्यातानि ॥

इति तेजोऽधिकरणम् ॥ ४ ॥

---

नयमणिमालायाम् अथ तेजोऽधिकरणम् ॥ ४ ॥

सू ॥ तेजोऽतस्तथा ह्याह ॥ १० ॥ आपः ॥ ११ ॥ पृथिवी ॥ १२ ॥ अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १४ ॥

---

(१) 'यं' इति (२) 'तमेव' इति च ख पाठः । (३)' न तु ब्रह्म' इति ख पाठः। (४) 'एवं तत्पदं' इति ख पाठः ।

वाय्वादिकार्यमाकाशादिभ्यो जायते तथा श्रवणात् । व्यवहितकार्यत्वपरं सर्वस्य ब्रह्मकार्यताश्रवणम् ॥१३४॥
तदभिध्यानाल्लिंगात्क्रमेण वाय्वादिकार्यमपि । आकाशादिशरीरात्सदाशिवाद्यात्मनश्शिवादेव ॥ १३५ ॥

## इति तेजोऽधिकरणम् ॥ ४ ॥

### सूत्रार्थचन्द्रिकायाम् अथ तेजोऽधिकरणम् ॥ ४ ॥

**सू ॥ तेजोऽतस्तथा ह्याह ॥ १० ॥ आपः ॥ ११ ॥ पृथिवी ॥ १२ ॥ अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १४ ॥**

**भगवत्पादमते,** पूर्वत्र सामान्यात्सामान्योत्पत्तिर्माभूत् । इह सामान्याद्ब्रह्मणो विशेषस्य तेजस उत्पत्तिरस्त्विति प्रत्युदाहरणसंगत्येदमाह—**तेजोऽत इत्यादि** । 'वायोरग्निः' इति तेजसो वायुजन्यत्वप्रतिपादकतैत्तिरीयश्रुतेः 'तत्तेजोऽसृजते'ति तेजसो ब्रह्मजन्यत्वप्रतिपादकच्छान्दोग्यश्रुत्या विरोधोऽस्ति न वेति **संदेहः** । विरोधोऽस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु,** वायोरपि ब्रह्मकार्यत्वेन तेजः प्रत्युपादानत्वासंभवाद्ब्रह्ममात्रजन्यत्वं तेजस इत्यविरोध इत्येकदेशिमतम् । स्वमते तु, **तेजः**=अग्निः । **अतः**=अस्माद्वायोर्जायते । **हि**=यतः । **तथा**=वायुजन्यत्वम् । 'वायोरग्नि' रिति श्रुतिराह । वायोर्ब्रह्मजन्यत्वेन वायुभावापन्नब्रह्मजन्यत्वस्य छान्दोग्यश्रुत्यर्थस्यैव 'वायोरग्नि' रिति श्रुत्यर्थत्वेनैकार्थत्वादविरोध इति ॥

### इति भगवत्पादमते तेजोऽधिकरणम् ॥ ४ ॥

### अथ अबधिकरणम् ॥ ५ ॥

**सू ॥ आपः ॥ ११ ॥** 'अतस्तथा ह्याहे' त्यनुवर्तते । 'अग्नेरापः' इति श्रुतेः 'तदपोऽसृजते' त्यपां ब्रह्मजन्यत्वश्रुत्या विरोधोऽस्ति न वेति **संदेहः** । विरोधोऽस्तीति **पूर्वपक्षः** । अपामग्निदाह्यत्वान्न तज्जन्यत्वमित्यविरोध इत्येकदेशिमतम् । **परमसिद्धान्तस्तु, आपः अत**स्तेजसो जायन्ते । **हि**=यस्मात् । **तथा**=तेजोजन्यत्वं 'अग्नेराप' इति श्रुति**राह** । अतः पूर्ववत्तेजोभावापन्नब्रह्मजन्यत्वेनानयोरैकार्थ्यान्न विरोध इति ॥ **इत्यबधिकरणम् ॥ ५ ॥**

### अथ पृथिव्यधिकरणम् ॥ ६ ॥

**सू ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥** अत्र 'अद्भ्यः पृथिवी' इति पृथिव्या अब्जन्यत्वश्रुतेः 'ता अन्नमसृजन्त' इत्यन्नस्याब्जन्यत्वश्रुत्या विरोधोऽस्ति न वेति **संदेहः** । अन्नशब्दस्योदनादौ प्रसिद्धत्वेन पृथिवीवाचकत्वाभावाद्विरोध इति **पूर्वपक्षः** । **सिद्धान्तस्तु, पृथिव्ये**वात्रान्नशब्देनोच्यते । न ओदनादि । कुतः । **अधिकाररूपशब्दान्तरेभ्यः**='तत्तेजोऽसृजते' ति महाभूतोत्पत्त्यधिकारात् 'यत्कृष्णं तदन्नस्य' इति पृथिवीत्वव्याप्यकृष्णरूपस्य श्रवणात् 'अद्भ्यः पृथिवी'इति पृथिव्या एव तज्जन्यत्वप्रतिपादकशब्दान्तरस्य सत्त्वाच्च । अतोऽनयोरैकार्थ्येनैकवाक्यत्वादविरोध इति सिद्धम् । **इति पृथिव्यधिकरणम् ॥ ६ ॥ अथ तदभिध्यानाधिकरणम् ॥ ७ ॥**

इत्थमुत्पत्तिक्रमेण महाभूतश्रुतीनामविरोधः प्रत्यपादि । अधुना तानि भूतान्याश्रित्यान्यद्विचार्यते—**सू ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥** अत्र ब्रह्मणस्सर्वस्रष्टिकर्तृत्वप्रतिपादकश्रुतेः भूतानां भौतिकस्रष्टृत्वप्रतिपादकश्रुत्या विरोधोऽस्ति न वेति **संदेहः** । 'आकाशाद्वायु' रित्यादिना भूतानां स्वस्वकार्योत्पत्तौ स्वातन्त्र्यश्रवणात्तत्प्रतिपादकश्रुत्या विरोधोऽस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु, स एव** परमेश्वरः **तत्त**त्कार्यगोचरेक्षणात्मका**भिध्याना**देवेक्षिता भूताधिष्ठाता तत्तत्कार्यं सृजति । कस्मात् । **तल्लिंगात्**=तस्य परमात्मनस्सर्वनियन्तृत्वरूपलिङ्गस्य 'यः पृथिव्यां तिष्ठन्,' इत्यादिषु श्रुतत्वात् । अतो भूतानां परमेश्वराधिष्ठितानामेव स्रष्टृत्वप्रतिपादकत्वेनानयोरेकवाक्यत्वादविरोध इति ॥

### इति भगवत्पादमते तदभिध्यानाधिकरणम् ॥ ७ ॥

**श्रीकण्ठमते,** 'पृथिवी' इति योगविभागो दृश्यते । 'तेजोऽत' इत्यादिसूत्रपञ्चकात्मकमिदमेकमधिकरणम् । 'तेजोऽत' इत्यादिकं सूत्रचतुष्टयं पूर्वपक्षतया व्याख्याय 'तदभिध्याना' दिति सूत्रं सिद्धान्ततया व्याख्यातम् । अत्राधिकरणे वाय्वादिकार्यं साक्षाद्ब्रह्मण उत्पद्यते वा उत स्वस्वपूर्वकारणाद्वा इति **संदेहे** स्वस्वपूर्वकारणादेवेति **पूर्वपक्ष**प्रतिपादकतया सूत्राणि त्रीणि व्याख्याय अन्नशब्दस्य पृथिवीपरत्वं 'अधिकाररूपे'ति सूत्रेण च व्यवस्थाप्य 'तदभिध्यानादेवे'ति सूत्रेण तत्तच्छरीरः परमात्मैव तेषां कारणमिति सिद्धान्तितम् । अत्र मते यद्यपि संदेहपूर्वपक्षादिकं पूर्वस्मादविशिष्टम् । तथापि एतानि सूत्राणि पृथक्पृथग्भिन्नाधिकरणतया व्याख्यातानि शांकरमते, अत्र तु एकीकृत्यैकाधिकरण्यमुपपादितमिति विशेषः ॥

अत्र 'तदभिध्यनादेवे'ति सूत्रस्य 'तत्तेज ऐक्षत'ता आप ऐक्षन्ते' त्यादिबहुभवनसंकल्परूपात्परमात्मलिङ्गात्परमात्मन एव तत्तच्छरीरकात्सर्वोत्पत्तिरित्यर्थः । सदाशिवादिपंचभूतात्मकपंचब्रह्मशरीरकात्परमशिवादेव तत्तत्कारणरूपात्तत्तत्कार्योत्पत्तिरित्यर्थाधिक्यमपि निरूपितमिति रामानुजभाष्याद्विशेषः ॥

## अथ पारंपर्याधिकरणम् ॥ ५ ॥

### सू० ॥ पारंपर्येण क्रमोऽत उपपद्यते च ॥ १५ ॥

**इह पूर्वाधिकरणे निरूपितः सृष्टिक्रम उपपद्यते न वेति संदेहः॥**

**नोपपद्यत इति पूर्वः पक्षः। तथा हि—मुण्डकोपनिषदि 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥' इति प्राणादीनां वियदादिभ्यः पूर्वमुत्पत्तिः श्रूयते। अथर्वशिखायां च 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः' इति सहोत्प-**

---

## अथ पारंपर्याधिकरणम् ॥ ५ ॥

**पारम्पर्येण क्रमोऽत उपपद्यते च ॥ १५ ॥ संगतिपूर्वकं संशयं दर्शयति—इहेति। आकाशशरीरकाद्ब्रह्मणो वाय्वाद्युत्पत्तिसमर्थनादाकाशादिक्रमेण सृष्टिरित्यपि पूर्वाधिकरणेन सिद्धम्। तदुपपद्यते न वेत्युक्तक्रमक्रमांतराक्रमश्रुतिविरोधसमाधानसंभवासंभवाभ्यां संशये सति न संभवति तत्समाधानमिति पूर्वः पक्षः। तथाहि—अविचलस्तावदाकाशादिक्रमः पूर्वाधिकरणसिद्धः। मुण्डकोपनिषन्मंत्रे प्राणान्तःकरणेंद्रियभूतानां क्रमो विवक्षित इति ज्ञायते। 'खं वायुर्ज्योति' रित्याद्युत्तरार्धे तत्क्रमप्रत्यभिज्ञारूपाल्लिंगादिति। सोऽप्यविचल एव। अक्रमस्तु अथर्वशिखायां तु सहश्रुत्यैव स्पष्टीकृतः। अतः**

---

**रामानुजमते तु** अत्रास्ति कश्चिद्विशेषश्श्रीकण्ठमतात्। यथा—श्रीकण्ठमते अधिकरणद्वयतया विभक्तमुपरितनं सूत्रत्रयमप्यत्र'तदभिध्यानादेवे'ति सिद्धान्तसूत्रोपष्टंभकतया तेजोऽधिकरणशेषत्वेनान्तर्भावितमिति तानि त्रीणि सूत्राण्यत्रैव व्याख्यायन्ते-यथा-सू ॥ **विपर्ययेण तु क्रमोऽत उपपद्यते च** ॥ १५ ॥ 'आकाशाद्वायुः'वायोरग्नि'रिति पारंपर्यक्रमाद्विपर्ययेण'एतस्माज्जायते प्राण' इति सर्वेषां ब्रह्मानन्तर्यरूपो यः **क्रमः** स च **अतः**=तत्तच्छरीरकाद्ब्रह्मणस्सृष्टे**रुपपद्यते** ॥

सू ॥ **अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात्** ॥ १६ ॥ **अन्तरा**=भूतप्राणयोरन्तराले **इन्द्रियग्राममनसी** क्रमेणोत्पद्येते। कुतः। **तल्लिंगात्**=‘खं वायुर्ज्योति’रिति श्रुतिक्रमप्रत्यभिज्ञानरूपात्तल्लिंगात्। **इति चेत्**=अत इदमपि पारंपर्यक्रमपरमिति चेत्। **न**। **अविशेषात्**=‘एतस्माज्जायते’ इत्यस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्येकमन्वयाविशेषात्। अतस्तेजःप्रभृतीनामपि साक्षात्परमात्मैव कारणम् ॥

'तत्तेज एक्षते'त्यादितेजःप्रभृतिशब्दाः लोके तत्तद्वस्तुवाचिनः ब्रह्मणि भाक्ता इत्यत्राह—सू ॥ **चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्॥१७॥ चराचरवस्तुसंबन्धी तत्तद्वाची शब्दो** ब्रह्मणि **अभाक्तः** मुख्य एव। 'अनेन जीवेने'ति सर्वस्य वस्तुनो नामरूपभाक्त्वस्यात्मतया **ब्रह्मानुप्रवेशभावभावित्वात्**। **इत्यर्थः** ॥

**इति रामानुजमते तेजोऽधिकरणम्** ॥

**आनन्दतीर्थमते,** अत्रापि शांकरमतवदेवाधिकरणविभागः। सूत्रार्थवर्णने परमस्ति किंचिदिव वैलक्षण्यम्। यथा—**तेजोऽतस्तथा ह्याह** ॥ १० ॥ **तेजः**=तेजोभूतम्। **अतः**=ब्रह्मण एवोत्पद्यते न वायोः। कुतः। **हि**=यस्मात्। **'तत्तेज'** इति श्रुतिः। **तथा**=उक्तप्रकारेण **आह**=वक्ति। तस्मादित्यर्थः॥ **इति तेजोऽधिकरणम्** ॥ ४ ॥

सू ॥ **आपः**॥ ११ ॥ अत्रापि 'अतस्तथा ह्याहे'त्यनुवर्तते। सूत्रार्थः पूर्वसूत्रवत्। अत्र **श्रुतिः**=ब्रह्मैवेदमिति श्रुतिरित्यर्थः॥

**इत्यबधिकरणम्** ॥ ५ ॥

सू ॥ **पृथिव्यधिकाररूपशब्दान्तरादिभ्यः** ॥ १२ ॥ अत्र मते 'शब्दान्तरादिभ्य' इति पाठः। इदमधिकरणमप्यविशिष्टं शांकरमतात्। **पृथिवी**=पृथिव्येव 'ता अन्नमसृजन्ते'तिश्रुतिस्थान्नशब्देनोच्यते न प्रसिद्धान्नम्। कुतः। **अधिकार**शब्दितभूतप्रकरणात् **रूप**शब्दोक्तकृष्णरूपस्य च श्रवणात् 'पृथिवी वा अन्न' मिति **श्रुतिविशेषा**च्चेत्यर्थः। अपौरुषेयत्वेनादोषस्य वाक्यस्य नाप्रामाण्यमित्यादिरादिशब्दार्थः॥ **इति पृथिव्यधिकरणम्** ॥ ६ ॥

सू ॥ **तदभिध्यानादेव तु तल्लिङ्गात्सः**॥ १३ ॥ अत्र जगत्स्रष्टुर्विष्णोस्संहर्तृत्वमस्ति वा न वेति **संदेहे** 'प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकः।' इति श्रुत्या रुद्रस्यैवान्तकत्वश्रवणात्पितुर्लोके संहारकत्वायोगाच्च न विष्णुस्संहर्ता किं तु रुद्र एवेति **पूर्वपक्षः**। **सिद्धान्तस्तु** विष्णुरेव संहर्ता न रुद्रः इति। तुशब्दोऽवधारणे। अभिध्यानशब्देनेच्छोच्यते। तच्छब्देन विष्णुर्गृह्यते। तथा च **स** विष्णुरेव संहारकर्ता न रुद्रः। कुतः। **तदभिध्यानात्**='तदभिध्याना'दिति श्रुत्यक्तादभिध्यानरूपशब्दज्ञापितसंजिहीर्षाविशेषितादनादिबन्धसंहारेच्छारूपा**त्तल्लिंगादेव**। एवकारस्तु भाष्यरीत्या किमु श्रुतिभ्य इति कैमुत्यसूचकः। निर्दोषे विष्णौ लौकिकपितृन्यायो नावतरतीति भावः॥ **इति तदभिध्यानाधिकरणम्** ॥ ७ ॥

त्तिर्ब्रह्मादीनां भूतेन्द्रियाणां चाम्नायते। अत आकाशादेः पूर्वोक्तसृष्टिक्रमो नोपपद्यत इत्युच्यते ॥

सिद्धान्तस्तु—उपपन्नः पूर्वोक्तसृष्टिक्रमः । 'अन्नमयं हि सोम्य मन आपोमयः प्राणः तेजोमयी वाक्' इति प्राणादीनां भौतिकत्वश्रवणात् भूतेष्वन्तर्भावान्न पृथक्क्रमापेक्षा । ब्रह्मादीनां सहोत्पत्तिस्तु भूतैस्तद्रूपत्वात् तेष्वन्तर्भावात्। ततः पूर्वोक्तक्रमे न विरोधः ॥

**॥ सू० ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥१६॥**

प्राणभूतानामिन्द्रियग्राममनसी क्रमेणान्तरा उत्पद्येते इति हीदं वाक्यं प्रतिपादयति। 'खं वायुर्ज्योतिः' इत्यादौ श्रुत्यन्तरसिद्धक्रमप्रत्यभिज्ञानरूपाल्लिङ्गात्। तत इदमपि पारंपर्यक्रमपरमिति चेत्—न, 'एतस्माज्जायते' इत्यस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्येकमन्वयाविशेषात्। अतः सर्वेषामीश्वर एव कारणम्। तथा। च पौराणिकी फणितिः—

'शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ।
तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ॥' इति ।

क्रमसद्भावोऽपि सर्वस्य शिवतत्त्वादुत्पत्तिमभिधत्ते। अतः सर्वकारणं ब्रह्मेति समीचीनम् ॥ इति पारंपर्याधिकरणम् ॥ ९ ॥

---

कथं विरोधसमाधानमित्येवं प्राप्ते सिद्धांतः—'आत्मन आकाश' इत्यादिसृज्यपारंपर्येण यः क्रमस्स उपपद्यते। अतः पूर्वसूत्रोदितात्तदभिध्यानात्। पारमेश्वरबहुभवनसंकल्परूपाभिध्यानानुवर्तनावगमितं हि पूर्वपूर्वभूतशरीरकस्यैव परमेश्वरस्योत्तरोत्तरभूतस्रष्टृत्वमित्येतन्न विचालयितुं शक्यम् । सति च प्रबलेन तेन विरोधे सहश्रुतिर्भूताद्युत्पत्तेस्तदभिमानिब्रह्माद्युत्पत्तिसाहित्यमात्रपरतया योजनीया । मुण्डकोपनिषन्मंत्रपाठक्रमश्चोपेक्षणीयः। किं च। पाठक्रमेणापेक्षितक्रमः कल्पनीयः । न चात्र क्रमापेक्षास्ति। भौतिकानां प्राणमनइंद्रियाणां भूतानन्तर्यरूपस्य क्रमान्तरस्यार्थानिर्ज्ञातत्वादर्थपाठयोरर्थस्य प्रबलत्वादिति। अनेन सूत्रं भाष्यं च व्याख्यातम् । विवक्षितभूतक्रमप्रत्यभिज्ञानलिंगात् तत्सहपठितप्राणादिक्रमो विवक्षितोऽवसीयत इति शंकानिराकरणार्थं सूत्रम्—सू॥ **अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात्** ॥ १६ ॥ क्रमेण मनइंद्रियक्रमेण। अन्तरा प्राणभूतमध्ये । ननु छांदोग्यतैत्तिरीययोः पूर्वपूर्वविशिष्टस्य ब्रह्मणः उत्तरोत्तरभूतकारणत्वं पाठक्रमावगतमाकाशाद्युत्पत्तिक्रममन्तरेण नोपपद्यत इति चेत् स तत्र विवक्षितोऽस्तु नाम। इह तु नास्ति तस्य विवक्षायां प्रमाणम् । पाठक्रमात्प्रतीयमानस्येव प्रत्यभिज्ञानलिंगात्प्रतीयमानस्यापि तस्याविवक्षैव युक्ता । अर्थतः क्रमांतरस्य निर्ज्ञातत्वादित्याशंक्याह—इदमपीति । छंदोगादिवाक्यवदिदमपि क्रमपरमेव। मनःप्रभृतीनां परिगणनस्य प्रयोजनांतराभावादिति भावः । अन्वयाविशेषादिति। तथा च प्राणस्येव मनःप्रभृतीनामपि कीर्तनं ब्रह्मकार्यत्वप्रतिपादनार्थमित्यसिद्धः प्रयोजनांतराभाव इति भावः। 'अतस्सर्वेषा' मित्यादिरेतत्सूत्रार्थोपसंहारार्थः । अधिकरणार्थोपसंहारस्त्वर्थसिद्धः। इति पारम्पर्याधिकरणम् ॥ ९ ॥

## नयमणिमालायाम् अथ पारम्पर्याधिकरणम् ॥ ५ ॥

सू ॥ पारंपर्येण क्रमोऽत उपपद्यते च ॥ १५ ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात् ॥ १६ ॥

प्राणस्यादावथान्तःकरणखगणयोरन्ततो भूतपंक्तेः संप्रज्ञातक्रमाया यजुषि समुदयो मुण्डके प्रत्यपादि।
आथर्वण्यां शिखायां युगपदभिदधे जन्म भूतेंद्रियाणामित्थं वैमत्यसत्वे कथमनुमनुषे सृष्टिमाकाशमुख्याम् ॥ १३६ ॥
प्राणाद्याः प्रागयन्ते न कथमपि जनिं भौतिका भूतवर्गात् तस्मादाकाशमुख्यः क्रम इति घटते न क्रमः प्राणमुख्यः।
सर्वेषां ब्रह्मजत्वं विदधति च मनौ न क्रमार्थत्वशंका ब्रह्मादीनां शिखायां सहजनिरुदिता क्ष्मादिभिर्नेन्द्रियाणाम् ॥१३७॥

### इति पारम्पर्याधिकरणम् ॥ ५ ॥

## सूत्रार्थचंद्रिकायाम् अथ पारंपर्याधिकरणम् ॥ ५ ॥

सू ॥ पारंपर्येण तु क्रमोऽत उपपद्यते च ॥ १५ ॥ अन्तराविज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात् ॥ १६ ॥

**भगवत्पादमते**, पूर्वाधिकरणैर्भूतानामुत्पत्तिक्रमे चिन्तिते लयक्रमस्य बुद्धिस्थत्वात्सोऽत्र प्रसंगाद्विचार्यत इत्याह–**विपर्ययेण क्रमोऽत उपपद्यते च** ॥१६॥ इह भूतानां श्रुतोत्पत्तिक्रमेणैव लयक्रमो वा, उत सोपानपरंपरारूढस्य व्युत्क्रमेणावरोहणवद्व्युत्क्रमेणैव लयक्रमो वेति **संदेहः**। कल्प्यापेक्षया क्लृप्तस्य लघुत्वात् श्रुतोत्पत्तिक्रमेणैवेति **पूर्वपक्षः**। **सिद्धान्तस्तु, अतः**=सृष्टिक्रमात्। **विपर्ययेण तु**=विपरीतक्रमेणैव । **क्रमः**=लयक्रमः। **उपपद्यते च**=युज्यते । स्वकारणे कार्याणां लयदर्शनादिति भावः। इतरथा सति कार्ये कारणनाशः स्यात्। तच्चानिष्टमित्यर्थः ॥

### इति भगवत्पादमते विपर्ययाधिकरणम् ॥ ८ ॥

### अथान्तराविज्ञानाधिकरणम् ॥ ९ ॥

सू ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात् ॥ १६ ॥ इह भूतोत्पत्तिलयक्रमविचारसमप्रयोजनत्वात्करणोत्पत्तिक्रमं विचारयति–पूर्वोक्तक्रमः करणोत्पत्तिक्रमेण विरुध्यते न वेति **संदेहः**।'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी' इति मुण्डकवाक्योक्तेन भूतानामात्मनश्चान्तराले इन्द्रियबुद्धिमनांसि तेभ्यश्च भूतानि जायन्ते इत्यनेन क्रमेण पूर्वोक्तक्रमो विरुध्यते। कुतः। तत्सृष्टिगमकाल्लिंगादिति चेत्। इति **पूर्वपक्षः**। **सिद्धान्तस्तु, नाविशेषात्**। इंद्रियबुद्धिमनसां भौतिकत्वेन भूतोत्पत्तिक्रमादिन्द्रियाद्युत्पत्तिक्रमस्याविशेषात् येन क्रमेण भूतोत्पत्तिस्तेनैव क्रमेण भौतिकोत्पत्तिरित्यतो न विरुद्धचत इति।'एतस्माज्जायते' इत्यादिश्रुतिश्च सर्वेषामात्मनस्सकाशादुत्पत्तिमात्रं ब्रूते न क्रममिति भावः।'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्यादिकं वाक्यं करणानां भौतिकत्वे लिंगमिति बोध्यम् ॥

### ॥ इति भगवत्पादमते अन्तराविज्ञानाधिकरणम् ॥ ९ ॥

**श्रीकण्ठमते**, इदं सूत्रद्वयमपि पारंपर्याधिकरणमिति व्यपदिश्यते। इह पूर्वाधिकरणे निरूपित आकाशादिसृष्टिक्रम उपपद्यते न वेति **संदेहः**। उक्तक्रमस्य क्रमान्तरश्रुत्यक्रमश्रुतिभ्यां विरोधान्नोपपद्यत इति **पूर्वपक्षः**। **सिद्धान्तस्तु** 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति प्राणादीनां भौतिकत्वश्रवणेन तेष्वन्तर्भावात् क्रमान्तरप्रतिपादिन्या मुण्डकोपनिषदुक्ताया'एतस्माज्जायते प्राण'इत्यादिश्रुतेरुपेक्षणीयत्वात् ब्रह्मादीनां च भूताभिमानित्वेन तेष्वन्तर्भावात्सहश्रुतेर्ब्रह्माद्युत्पत्तिसाहित्यमात्रपरतया योजनीयत्वाच्च। **अतः**=पूर्वसूत्रोदितात्तदभिध्यानाच्च ताभ्यां विरोधाभावात्पूर्वपूर्वभूतशरीरकस्यैव परमेश्वरस्योत्तरोत्तरभूतस्रष्टृत्वमित्युक्तक्रम उपपद्यत इति ॥

ननु, मुण्डकवाक्ये विवक्षितभूतक्रमप्रत्यभिज्ञानात्तत्सहपठितप्राणादिक्रमो विवक्षितोऽस्त्वित्याशंक्य परिहरति–**अन्तरा विज्ञानेत्यादिना**। **क्रमेण**=मनइंद्रियक्रमेण। **अन्तरा**=प्राणभूतमध्ये। **विज्ञानमनसी**=इन्द्रियमनसी उत्पद्येते । कुतः। **तल्लिंगात्**='खं वायुर्ज्योति'रित्यादौ श्रुत्यन्तरसिद्धक्रमप्रत्यभिज्ञानरूपाल्लिंगात्। **इति चेत्**=इदं मुण्डकवाक्यमपि क्रमपरमिति चेत्। **न**। **अविशेषात्**='एतस्माज्जायते' इत्यस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्येकमन्वयाविशेषात्। अतः सर्वकारणं ब्रह्मेति सिद्धम्। अस्मिन्मते'पारंपर्येण तु क्रम'इति सूत्रपाठे विशेषः॥

**रामानुजमते**, अनयोस्सूत्रयोरुपरितनसूत्रस्य च 'तदभिध्यानादेवे'ति पूर्वाधिकरणसिद्धान्तसूत्रशेषत्वेन पूर्वाधिकरणान्तर्भावितया पूर्वत्र तद्विवरणं कृतमित्यतो नात्र पुनर्विवरणावकाश इति वेद्यम्। सूत्रपाठस्तु शांकरमतवदेवात्र मते॥

**आनन्दतीर्थमते**, अधिकरणरचनासंदेहपूर्वपक्षसिद्धान्तानां शांकरमतसाधारण्येऽपि सूत्रार्थनिरूपणे परमस्ति कियदिव वैलक्षण्यमिति तन्मात्रं निरूप्यते–सू ॥ **विपर्ययेण तु क्रमोऽत उपपद्यते च** ॥ १५ ॥ तुशब्दोऽवधारणे। अत इत्यावर्तते। **अतः**=उत्पत्तिक्रमात् **विपर्ययेण**=वैपरीत्येन। **क्रमः**=लयक्रमः न तूत्पत्तिक्रमेण । कुतः। **अतस्तु**=व्युत्क्रमाद्विलयश्चैवे'तिभाल्लवेयश्रुतिविशेषादेव। किंच। **उपपद्यते च**=युज्यते चायं व्युत्क्रमः। कुतः। पूर्वोत्पन्नानामुत्तरोत्पन्नेभ्यो भगवत्सन्निधानकृताधिकसामर्थ्येन तेषामधिककालावस्थानस्य युक्तत्वादित्यर्थः॥

### इति विपर्ययाधिकरणम् ॥ ८ ॥

## अथ चराचरव्यपाश्रयाधिकरणम् ॥ ६ ॥

**॥सू०॥ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥१७॥**

पूर्वत्राकाशादिशब्दवाच्यत्वं ब्रह्मणः प्रतिपादितम् । तदिह विचार्यते—चेतनाचेतनचराचरवस्तुसंबन्धी तद्वाचिशब्दो ब्रह्मणि मुख्यो न वा ?

इति संदेहे न मुख्य इति वदामः—अन्यवाचकशब्दस्य मुख्यतयान्यत्र वृत्त्यभावात् । तथा हि—'आदित्यो यूपः' 'यजमानः प्रस्तरः' इत्यादिषु यूपादेरादित्यादिशब्दवाच्यत्वं सारूप्यादिगुणसंबन्धादेव दृश्यते, न मुख्यत्वेन । अत्रापि 'तत्तेज ऐक्षत' इत्यादिषु तेजःप्रभृतीनामचेतनानां चेतनधर्मेक्षितृत्वायोगात् तच्छब्दैस्तदाश्रितं चेतनं ब्रह्म लक्ष्यते, 'मञ्चाः क्रोशन्ती'त्यादिवत् । तस्मादाकाशादिशब्दवाच्यत्वं ब्रह्मणि तदाश्रये गौणमिति ॥

एवं प्राप्ते ब्रूमः—चराचरवस्तुसंबन्धी तद्व्यपदेशशब्दो ब्रह्मणि न भाक्तः, किंतु मुख्य एव । 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति । अण्डजं जीवजमुद्भिज्जमिति । सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि'इति सर्वस्य वस्तुनो नामरूपविभागाय तत्तदात्मतया ब्रह्मणोऽनुप्रवेशभावभावितत्वात् । यूपादीनामादित्यादिशब्दवाच्य-

---

## अथ चराचरव्यपाश्रयाधिकरणम् ॥ ६ ॥

**सू० ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥१७॥**

संगतिपूर्वकं संशयं दर्शयति—पूर्वत्रेति । 'तेजोऽत' इत्यधिकरणे सृष्टिवाक्यगताकाशादिशब्दप्रतिपाद्यत्वं ब्रह्मण उक्तम् । तन्मुख्यममुख्यं वेति व्युत्पत्तिसंभवासंभवाभ्यां संशयः । आकाशादिशब्दानां व्युत्पत्तिग्रहस्य भूतविशेषादिपर्यवसितत्वात्ततोऽन्यस्य ब्रह्मणस्तत्प्रतिपाद्यत्वममुख्यमिति पूर्वः पक्षः । सिद्धांतस्तु चराचरसंबन्धी तद्वाचकत्वेन लोकावधृतो यस्तद्व्यपदेशः ब्रह्मणि प्रवर्तमानश्शब्दस्स ब्रह्मणि अभाक्तः अमुख्यो न भवति । किं तु मुख्य एव । कुतः । तद्भावभावित्वात् तस्य ब्रह्मणो यो भावः चराचर-

---

अत्राधिकरणे उत्तरसूत्रमप्यन्तर्भाव्यैकाधिकरण्येनाधिकरणरचनास्मिन्मते । अत्र विज्ञानतत्त्वमनस्तत्त्वयोरपि पूर्वोक्तः सृष्टिक्रमाद्विपरीतक्रमेण लयक्रमो वा सृष्टिक्रमानुसारेण लयक्रमो वेति **संदेहः** । **विज्ञानमनसी**=विज्ञानतत्त्वमनस्तत्त्वे। **अन्तरा**=विना । **क्रमेण**=पूर्वोक्तक्रमेणान्येषां लय उपपद्यते । कुतः । **तल्लिंगात्**='मनसश्च विज्ञानम्''यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद्ज्ञान'इति श्रुत्युक्तात्क्रमादुत्पन्नयोः क्रमाल्लयाख्यलिंगा**दिति चेत्** इति **पूर्वपक्षः** । **सिद्धान्तस्तु, न** तथा। कुतः । **अविशेषात्**=विज्ञानमनस्तत्त्वयोर्यथोत्पत्ति लय इत्यत्र विशेषप्रमाणाभावात् । 'विज्ञानमनसोः क्रमेणे'ति वाच्ये 'अन्तरे'त्युक्तिस्तद्द्वयादन्येषां व्युत्क्रमेण लय इत्यर्थानुमतिं सूचयितुम् । उक्तं लिंगमेव तत्र मानमित्याह—सू ॥ **चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥ तद्व्यपदेशस्तु**='मनसश्च विज्ञान'मिति मनोविज्ञानशब्दरूपः श्रौतव्यवहारस्तु । **चराचरव्यपाश्रयः स्यात्**=इन्द्रियतद्वृत्तितत्त्वविषयस्संभावितः । तथापि सः **भाक्तः**=इन्द्रियमनस्तत्त्वरूपमनश्शब्दार्थे तद्वृत्तिविज्ञानतत्त्वरूपविज्ञानविषय एव न तु तत्त्वविषय इत्यर्थः । भागवाचिनो भक्तशब्दात्तस्येदमित्यणि भाक्तशब्दो निष्पन्नो भागविषय इत्यर्थक इति यावत् । कुतः । **तद्भावभावित्वात्**=तदिति पदस्यात्र तंत्रेण निर्देशः । तस्मिन् चराचरशब्दितचेतनाचेतनविषये तद्भावेन मनोभावेन आलोचनेनेति यावत् । **भावित्वात्**=वृत्तिरूपज्ञानस्योत्पद्यमानत्वादित्यर्थः । तथा च' मनसो विज्ञान'मित्युक्तिर्वस्तुनि मनोभावेन वृत्तेर्जायमानत्वान्मनोरूपेंद्रियतज्जन्यवृत्तिविषया न तत्त्वविषयेति न तल्लिंगमिति भावः ॥ **इत्यानन्दतीर्थमतेऽन्तराविज्ञानाधिकरणम् ॥ ९ ॥**

त्वमनुपपत्त्या न मुख्यम् । मश्चादिषु पुरुषाणामवस्थातृमात्रत्वात् तेषामपि तच्छब्दवाच्यत्वं न मुख्यम् । इहात्मतया प्रपञ्चानुप्रवेशाद्ब्रह्मणस्तच्छब्दवाच्यत्वं मुख्यमेव, यथाऽऽत्मनो ब्राह्मणादिशरीरानुप्रविष्टस्य ब्राह्मणादिशब्दवाच्यत्वं मुख्यम् । अन्यथा 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिषूपनयनसंस्कारादेः शरीरमात्रपर्यवसानादात्मनः संस्कार्यत्वाभावप्रसङ्गात् । ततो 'यस्यैते चत्वारिंशत्संस्कारा अष्टौ चात्मगुणाः स ब्रह्मणः सायुज्यम्' इत्यादिरात्मनः संस्कारवतः फलश्रुतिरपार्था भवेत् । 'ब्राह्मणो यजेत' इत्यादिविधिवैयर्थ्यं च भवेत् । तस्मात् सकलचराचरवस्तुशरीरप्रविष्टस्य ब्रह्मणस्तच्छब्दवाच्यत्वं मुख्यमेव ॥

इति चराचरव्यपाश्रयाधिकरणम् ॥ ६ ॥

---

वस्तुष्वात्मतया सद्भावस्तेनैव हि हेतुना भवति । न ह्यादित्यशब्दो यूप इव तदात्मतामनपेक्ष्य ब्रह्मणि चराचरवस्तुवाचिशब्दः प्रवर्तते । 'अनेन जीवेने' त्यादिश्रुत्या ब्रह्मणश्चराचरवस्त्वात्मतया तदनुप्रवेशहेतुकतयैव चराचरवस्तुसंबधिनामरूपव्याकरणस्य ब्रह्मपर्यततायाः प्रतिपादनात् । तद्वाचिशब्दस्य तदात्मतामपेक्ष्यान्यत्र प्रवृत्तौ तु मुख्यत्वमेव भवति । शरीरवाचिशब्दानां शरीरिपर्यंतत्वस्य व्युत्पत्तिसिद्धत्वात् । अत एव 'ब्राह्मणमुपनयीत' 'ब्राह्मणो यजेत' इत्यादिश्रुतिषु ब्राह्मणादिशब्दानामात्मपर्यंतत्वमिति । निगदव्याख्यानमस्य भाष्यम् ॥ इति चराचरव्यपाश्रयाधिकरणम् ॥ ६ ॥

---

## नयमणिमालायाम्

## अथ चराचरव्यपाश्रयाधिकरणम् ॥ ६ ॥

सू ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ १७ ॥

तेजःप्रभृतिपदैस्तद्व्यपदेशो भाक्त इत्युचितम् । यजमानः प्रस्तर इत्यादिनयाद्वाच्यभिन्नत्वात् ॥ १३८ ॥
भाक्तो न नामरूपव्याकरणं हि स्वपर्ययनम् । श्रुत्योदितं ततस्तद्वाच्यं तत्सर्वशब्दानाम् ॥ १३९ ॥

इति चराचरव्यपाश्रयाधिकरणम् ॥ ६ ॥

## सूत्रार्थचन्द्रिकायाम् ।

### अथ चराचरव्यपाश्रयाधिकरणम् ॥ ६ ॥

सू ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ १७ ॥

**भगवत्पादमते,** अत्र 'न जीवो म्रियते' इति जीवनित्यत्वशास्त्रस्य जीवोत्पत्तिनाशनिमित्तकजातेष्ट्यादिशास्त्रेण विरोधोऽस्ति न वेति **संदेहः** । देवदत्तो जातो मृतश्चेति लौकिकव्यपदेशानुगृहीतजातकर्मादिशास्त्रेण विरोधोऽस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु, तद्व्यपदेशः**=योऽयं लौकिकस्तयोर्जन्ममरणयोर्व्यपदेशः सः । **चराचरव्यपाश्रयः**=स्थावरजङ्गमदेहविषयो मुख्यः स्यात् जीवे तु भाक्तः । कुतः । जन्ममरणव्यपदेशस्य **तद्भावभावित्वात्**=देहोत्पत्तिविनाशान्वयव्यतिरेकानुविधायित्वादित्यर्थः । देहप्रादुर्भावाद्यपेक्षयैव जातकर्मादिविधानमिति न तेन शास्त्रेण जीवनित्यत्वशास्त्रस्य विरोध इति भावः ॥

**श्रीकण्ठमते,** पूर्वत्राकाशादिशब्दवाच्यत्वं ब्रह्मणः प्रतिपादितम् । तदिह विचार्यते—चेतनाचेतनचराचरवस्तुसंबन्धी तद्वाचिशब्दो ब्रह्मणि मुख्यो न वेति **संदेहः** । अन्यवाचकशब्दस्य मुख्यतयान्यत्र वृत्त्यभावाद्गौण इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** चराचरवस्तुसंबन्धी तद्व्यपदेशशब्दो ब्रह्मणि न भाक्तः किं तु मुख्य एव । 'अनेन जीवेने' त्यादिना सर्वस्य वस्तुनो नामरूपविभागाय तत्तदात्मतया ब्रह्मणोऽनुप्रवेशभावभावितत्वात् । तस्मात्सकलचराचरवस्तुशरीरप्रविष्टस्य ब्रह्मणस्तच्छब्दवाच्यत्वं मुख्यमेव ॥ इति ॥

**रामानुजमते,** अस्यापि सूत्रस्य पूर्वं तेजोऽधिकरणान्तर्भूततया तत्रैव व्याख्यातत्वेन नात्र तत्प्रपंचितमिति बोध्यम् ॥

**आनन्दतीर्थमते,** इदं सूत्रं पूर्वस्मिन्नन्तराविज्ञानाधिकरणेऽन्तर्भूतं तत्रैव व्याख्यातं चेत्यतो नात्र पुनः प्रपञ्चितमित्यवधेयम् ॥ इति चराचरव्यपाश्रयाधिकरणम् ॥ ६ ॥

## अथ आत्माधिकरणम् ॥ ७ ॥

### ॥ सू० ॥ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

पूर्वत्राकाशादीनां ब्रह्मणः साक्षादुत्पत्तिरभिहिता । जीवोऽपि तन्न्यायेन ब्रह्मणः समुत्पद्यते न वेति संदेहः ॥

समुत्पद्यत इति पूर्वः पक्षः । 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' 'एकमेवाद्वितीयम्' इत्यादिश्रुतेः प्राक्सृष्टेर्ब्रह्मैकत्वावधारणात्, सदसतोर्निषेधाच्च । अतः सृष्टिकाले ब्रह्मण उत्पद्यत एव जीवः । विस्फुलिङ्गदृष्टान्तोऽपि जीवोत्पत्त्यनुगुणः श्रूयते 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवैतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युच्चरन्ति' इति । तस्माद्यथाग्नेर्विस्फुलिङ्गा जायन्ते तथा ब्रह्मण आत्मानो जायन्ते ॥

इति प्राप्ते ब्रूमः—आत्मा न जायते । 'न जायते म्रियते वा विपश्चित्' इति श्रुतेः, 'नित्यो नित्यानां चेतनश्चेतनानाम्' 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यादिश्रुतिभ्यः नित्यत्वावगतेश्च । सृष्टेः प्राग्ब्रह्मणोऽवधारणं तदाकृतिभूतस्य तस्य चाचिद्वस्तुनश्च नामरूपव्यवहाराभावात्, न जीवादिस्वरूपासत्तया । विस्फुलिङ्गश्रुतिश्च तेषां नामरूपसमुन्मेषाभिप्राया, न जन्मपरा । अन्यथा कृतनाशादिदोषप्रसङ्गात् । तस्माद्ब्रह्मणो न जायत एव जीवः ॥

---

## अथ आत्माधिकरणम् ॥ ७ ॥

सू. ॥ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥१८॥ आकाशादीनां स्वरूपान्यथाभावरूपोत्पत्तौ प्रतिपादितायां तद्वज्जीवस्यापि तथाभूतोत्पत्तिरस्ति न वेति श्रुतिविप्रतिपत्त्या संशये सति पूर्वपक्षः—सृष्टेः प्रागेकत्वावधारणं सदसदात्मकसकलवस्तुनिषेधश्चेति लिंगाभ्यां 'सर्व एत आत्मानो व्युच्चरंती'ति श्रुतेश्च तस्यापि तथाभूतोत्पत्तिरस्ति । तदनुत्पत्त्यादिश्रुतिस्तु आकाशामृतत्वादिश्रुतिवदन्यथा नेयेति । अत्र सिद्धान्तः—जीवो नोत्पद्यते । 'न जायते म्रियते वे' त्यादिश्रुतेः ताभ्यः 'नित्यो नित्याना' मित्यादिश्रुतिभ्योऽवगतान्नित्यत्वलिंगाच्च । उत्पत्तिश्रुतिस्तु तत्तच्छरीरोपाधिकतत्तदवच्छिन्नभोक्तृत्वानुगुणज्ञानविकासोपाधिका । अनेकव्यापकत्वावधारणादिकं च नामरूपसमुन्मेषाभावाभिप्रायं योज्यम् । स्वरूपान्यथाभावरूपोत्पत्त्यंगीकारे तदनित्यत्वावश्यंभावेन 'ब्रह्मविदाप्नोति पर' मित्यादिप्रधानफलवाक्यविरोधापत्तेरिति । भाष्ये 'अचिद्वस्तुन' इति मायाकार्यत्वापन्नवस्त्वभिप्रायं मायाद्यचिदाकारपरिणामिचिच्छक्तिरूपवस्त्वभिप्रायं वा ॥ इत्यात्माधिकरणम् ॥७॥[1]

---

नयमणिमालायाम्

## अथ आत्माधिकरणम् ॥ ७ ॥

सू ॥ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

प्रागेकत्वश्रवणाद्ब्रह्मण उत्पद्यते जीवः । श्रवणादपि च यथाग्नेः क्षुद्रा इति जन्मनस्तेषाम् ॥१४०॥

नैवं तन्नित्यत्वाम्नानात्कृतको न दोषाच्च । श्रवणे तु नामरूपव्याकरणाभावभावाभ्याम् ॥ १४१ ॥

इति आत्माधिकरणम् ॥ ७ ॥

---

( १ ) ' मायाकालादिनित्यवस्त्वभिप्रायम् । इत्यात्माधिकरणम् ' इति-ख-पाठः ।

## अथ ज्ञाधिकरणम् ॥ ८ ॥

## ॥ सू० ॥ ज्ञोऽत एव ॥ १९ ॥

पूर्वत्र नित्यतया जीवः सिद्धः। पुनरत्रास्य स्वाभाविकं ज्ञानमस्ति न वेति सन्दिह्यते ॥

एवं सति पूर्वपक्षः–जीवस्य स्वाभाविकं ज्ञानधर्मित्वं नास्तीति। 'ज्ञाज्ञौ द्वौ' इति जीवस्याज्ञत्वमेव हि श्रूयते। तस्मादज्ञ एवासौ चैतन्यमात्ररूपः किंतु

## अथ ज्ञाधिकरणम् ॥ ८ ॥

सू० ॥ ज्ञोऽत एव ॥ १९ ॥ जीवस्यानुत्पत्तिः स्थापिता। तत्प्रसंगादन्यानपि जीवधर्मान्निरूपयितुमापादपरिसमाप्तेरधिकरणानि। इह तावदागंतुकज्ञानधर्मो जीवः उत स्वाभाविकज्ञानधर्म इति विचार्यते। तत्र श्रुतिविप्रतिपत्तेस्संशये सति पूर्वः पक्षः–परिणामिनित्यधर्मज्ञानान्यथाभावमाश्रित्य हि पूर्वाधिकरणे जीवोत्पत्तिश्रुतिविरोधसमाधानं विवक्षितम। तन्नोपपद्यते। धर्मज्ञानस्यागन्तुकत्वात् 'ज्ञाज्ञौ द्वा'वित्यादिश्रुत्या जीवस्याज्ञत्वमौत्सर्गिकधर्मं वदंत्या सुषुप्तौ ज्ञानाभावानुभवेन 'न प्रेत्य संज्ञास्ती' ति तदनुसारिश्रुत्यंतरेण चानुगृहीतया तस्यागंतुकत्वावधारणात् तेन 'यो विज्ञाने तिष्ठन्नि' त्यादिश्रुतेः जीवस्वरूपे संदेहविपर्यासयोरदर्शनाच्च। जीवस्य स्वप्रकाशचैतन्यस्वरूपत्वेऽपि असौ स्वमात्रप्रकाशरूप इत्यहमिदं जानामीति जीवाश्रयत्वेनानुभूयमानं ज्ञानमनित्यमेव।

---

## सूत्रार्थचन्द्रिकायाम्।

### अथ आत्माधिकरणम् ॥ ७ ॥

### सू ॥ नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

**भगवत्पादमते,** देहोत्पत्तिनाशयोस्सतोर्जीवस्य जन्मनाशाभावेऽपि कल्पाद्यन्तयोर्जीवस्य जन्मनाशौ किं न स्याता-मित्याशंक्याह—**नात्माश्रुतेरिति** ॥ अत्र अविकृतस्यैव ब्रह्मणो जीवभावेन प्रवेशवाक्यस्य 'सर्व एत आत्मनो व्युच्चरन्ति' इति परस्मादात्मनो जीवोत्पत्तिवाक्येन विरोधोऽस्ति न वेति संदेहः। विरोधोऽस्तीति **पूर्वःपक्षः**। **सिद्धान्तस्तु, आत्मा**=जीवः। **न**=नोत्पद्यते। कुतः। **अश्रुतेः**=उत्पत्तिप्रकरणेषु जीवोत्पत्तेरश्रुतेः। **ताभ्यः**='स वा एष महानज आत्मा' 'अजो नित्यः' इत्यादिश्रुतिभ्यः। **नित्यत्वाच्च**=जीवस्य नित्यत्वावगमाच्चेत्यर्थः ॥ **औपाधिकजन्मालंबनं** जीवजनिवाक्यमिति न तेन प्रवेशवाक्यस्य विरोध इति भावः ॥

**श्रीकण्ठमते,** पूर्वत्र ब्रह्मण आकाशादीनामुत्पत्तिरभिहिता। तन्न्यायेनात्र जीवो ब्रह्मणस्समुत्पद्यते न वेति **संदेहः**। **पूर्वपक्षसिद्धान्तौ** यद्यपि शांकरमतादविशिष्टौ। तथापि सूत्रार्थवर्णनं भिद्यते। तथा च 'यदा तमः' 'एकमेवाद्वितीयम्' इत्यादिश्रुतेस्सृष्टेः प्रागब्रह्मैकत्वावधारणात्सदसतोर्निषेधात् 'यथाग्ने' रित्यादिजीवोत्पत्त्यनुगुणविस्फुलिंगादिदृष्टान्तोपपादनाच्च ब्रह्मण आत्मानो जायन्त इति **पूर्वपक्षे प्राप्ते सिद्धान्तः**—**आत्मा न** जायते। कुतः। **श्रुतेः**='न जायते म्रियते वा विपश्चित्' इति श्रुतेः, **ताभ्यः**='नित्यो नित्यानां' 'ज्ञाज्ञौ द्वौ' इत्यादिश्रुतिभ्यः। **नित्यत्वाच्च**=नित्यत्वावगतेश्च। सृष्टेः प्रागेकत्वावधारणं तदाकृतिभूतस्य तस्याचिद्वस्तुनश्च नामरूपव्यवहाराभावाभिप्रायं न स्वरूपासत्तापरम्। विस्फुलिंगश्रुतिश्च नामरूपसमुन्मेषाभिप्राया न जन्मपरा। तस्माद्ब्रह्मणो न जायत एव जीव इति ॥

**रामानुजमते,संदेहपूर्वपक्षादिकं** श्रीकण्ठमतादविशिष्टमेव। पूर्वपक्षे परम् एकविज्ञानप्रतिज्ञादेः 'तोयेन जीवान्विससर्ज भूम्याम्' 'प्रजापतिः प्रजा असृजत' इत्यादिसृष्टिवचनाच्च' इति तदुपष्टंभकयुक्तिरधिकतयोपन्यस्तेति विशेषः। अन्यदविशिष्टम् ॥

**आनन्दतीर्थमते,** अत्र भूतदेवतावच्चेतनत्वादिसाम्यात्परमात्मा देहनाशाख्यलयवान्वा न वेति **संदेहः**। 'स इदं सर्वं विलाप्यान्तस्तमसि विलीन' इति श्रुतेर्लयवानेवेति **पूर्वपक्षः**। **सिद्धान्तस्तु,** परमात्मा न विलीयत एव। **कुतः**। **अश्रुतेः**=तल्लयस्याश्रवणात्। विलीनश्रुतिस्त्वपिहितपरेति भावः। किंच। **ताभ्यः**='स नित्यो निर्गुण' इत्यादिश्रुतिभ्यः। **नित्यत्वाच्च**=विष्णोर्नित्यत्वावगमाच्च न तस्य नाश इति ॥ **इति सूत्रार्थचन्द्रिकायामात्माधिकरणम् ॥ ७ ॥**

---

( १ ) 'निरूपिता' इति **ख.** पाठः।

मायाशक्त्यवच्छेदाद्देवासशरीरकरणादिरयं घटोऽयं पटोऽयं मनुष्योऽहं देवोऽहमिति कल्पिताहंकारबद्धः संसरतीति संसारदशायां ज्ञानात् जीवस्य स्वतो ज्ञातृत्वं नास्त्येव, अन्यथास्य कुतो मुक्तिरिति ॥

एवं प्राप्ते ब्रूमः—ज्ञातैवायमात्मा। 'अथ यो वेदेदं जिघ्राणीति स आत्मा....मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' 'मनोऽस्य दैवं चक्षुः' इत्यादिश्रुतेर्धर्मभूतं ज्ञानमेवास्य मनः। अतः स्वत एवायं ज्ञाता। यदुक्तं मायाशक्तिसंबन्धात् संसारदशायां ज्ञातृत्वमस्येति, तत्सत्यम्। मायाशक्तिकवलितस्वाभाविकज्ञानशक्तिविलासोऽयं प्राकृतमनःसंबन्धात् भोक्ता सुखदुःखयोर्ज्ञाता शरीराहंकारमात्रविश्रान्तः संसरति हि जीवः। यदा पुनरस्य ब्रह्मज्ञानोपासनाभ्यासात् मलत्रयसंबन्धोऽपैति, तदासौ ब्रह्मसदृशोऽभिव्यक्तनैजनिरतिशयज्ञानधर्मो मुक्त इत्युच्यते ॥

किंच—'प्राणारामं मनआनन्दम्' इति ब्रह्मणो निरतिशयात्मानन्दविषयं मनः स्वाभाविकं करणमवगम्यते। तत्सदृशगुणत्वादपगतसंसारस्य जीवस्य स्वरूपानन्दानुभवसाधनं मनोरूपमन्तःकरणमनपेक्षितबाह्यकरणमस्तीति गम्यते।

तेन चानित्यज्ञानेन ज्ञानवत्त्वमस्य मायादिसंबन्धात् संसरतः कार्यकरणवत एव। 'अथ यो वेदेदं जिघ्राणी' त्यादिश्रुतिराघ्राणादिवेदनाश्रयत्वस्य न विशेषणतया जीवलक्षणत्वपरा किं तु उपलक्षणतया। आघ्राणाद्यन्वयव्यतिरेकानुविधायिनस्तस्य वेदनस्य यावदात्मभावित्वाभावात्। 'मनसैतान्कामान्' इति श्रुतिस्तु मुक्तौ ज्ञानकरणानुवृत्तिपरा न ज्ञाननित्यत्वे प्रमाणमिति। सिद्धांतस्तु, आत्मा ज्ञः ज्ञातृस्वभावः। अत एव श्रुतेरेव। तथाहि—'अथ यो वेदेदं जिघ्राणीति स आत्मा' 'गन्धाय घ्राण' मित्यादि श्रूयते। प्रजापतिविद्यायां 'मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठान' मित्यादिना शरीरातिरिक्ततया तदधिष्ठातृतया च प्रतिज्ञातस्यात्मनः घ्राणजन्यगंधादिवेदनं लक्षणत्वेन प्रतिपादयदिदं वाक्यं विशेषणतयैव तत्तथात्वेन प्रतिपादयति नोपलक्षणतया। उपलक्ष्यतावच्छेदकस्य रूपान्तरस्यानिर्ज्ञातत्वात् वेदने घ्राणादिजन्यगन्धादिवृत्तिपरिणामरूपत्वस्य परमात्मातिव्याप्तिपरिहारार्थस्योपलक्षणत्वेऽपि तदुपलक्षितस्य वेदनस्य नित्यतया विशेषणत्वसंभवाच्च। तस्मादिदं वाक्यमात्मनो ज्ञातृस्वभावत्वे प्रमाणम्। तथा 'मनसैतान्कामान्पश्यन्रमत' इत्यादि श्रूयते। इदमपि तत्र प्रमाणम्। ब्राह्मलौकिकभोगवस्तुदर्शनरूपज्ञानपरिणामापेक्षिततयावश्यांगीकर्त्तव्यस्याविकारात्मव्यतिरिक्तस्य तत्परिणामिद्रव्यस्यैव करणत्वविवक्षया मनसेति निर्देशोपपत्तौ मुक्तावनुवर्तमानस्यान्यस्य करणस्य कल्पनायां गौरवात् 'ज्ञाज्ञा' वित्यादिश्रुतिः संसारदशायां जीवस्य सार्वज्ञ्यानभिव्यक्तिपरतयोपपद्यते। सुषुप्तिदशायां 'न किंचिदवेदिष' मिति ज्ञानाभावानुभवस्तु विषयविशेषावच्छिन्नज्ञानपरिणामाभावविषयः। 'न प्रेत्य संज्ञास्ती' ति वाक्यमपि तद्विषयम्। यतस्तदनंतरमत्रैव 'मा भगवानमूमुहन्न प्रेत्य संज्ञास्ती'ति मैत्रेयीप्रश्ने 'न वा अरे मोहं ब्रवीमि यद्वैतन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टु-

(१) "जिघ्राणीतिजन्य" इति ख. पाठः। (२) 'वश्यांगीकर्तव्यस्य तत्परिणामिद्रव्यस्यैव' इति ख. पाठः।

'ज्ञाज्ञौ' इति जीवस्याज्ञत्वं किंचिज्ज्ञत्वमेव । असंसारिणः परमेश्वरस्य तु सर्वज्ञत्वमुच्यते । अतः संसारे किंचिज्ज्ञत्वं मुक्तौ सर्वज्ञत्वमिति ज्ञातैवात्मा ॥

इति ज्ञाधिकरणम् ॥ ८ ॥

र्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वा' दिति याज्ञवल्क्यस्योत्तरेण तद्वाक्यं सत्ये धर्मज्ञाने कारणाधीनतत्परिणामाभावविषयतया व्याख्यातम् । यत्तु मायादिबद्धस्य ज्ञातृत्वमिति सत्यं मायादिबद्धस्य ज्ञातृत्वं तत्तु किञ्चिद्ज्ञत्वरूपं ज्ञातृत्वं, मुक्तस्य तु मलमायाकर्मबन्धापायात् ब्रह्मसादृश्यं प्राप्तस्याभिव्यक्तनिरतिशयज्ञानस्य सर्वज्ञत्वरूपं ज्ञातृत्वमिति विशेषः । इहेतरद्भाष्यमतिरोहितार्थम् ॥ इति ज्ञाधिकरणम् ॥ ८ ॥

## नयमणिमालायाम्

### अथ ज्ञाधिकरणम् ॥ ८ ॥

सू ॥ ज्ञोऽत एव ॥ १९ ॥

अज्ञः स्वभावतः स्यात् जीवो ज्ञाज्ञाविति श्रवणात् । संसारदशायां तु ज्ञातृत्वस्फूर्तिरध्यासात् ॥ १४२ ॥

मनसैतानिति मुक्तावप्यस्य ज्ञातृताश्रवणात् । ज्ञातृत्वं स्वाभाविकमज्ञत्वोक्तिस्त्वसार्वज्ञ्यात् ॥ १४३ ॥

इति ज्ञाधिकरणम् ॥ ८ ॥

## सूत्रार्थचन्द्रिकायाम् ।

### अथ ज्ञाधिकरणम् ॥ ८ ॥

सू ॥ ज्ञोऽत एव ॥ १९ ॥

**भगवत्पादमते,** अत्र 'आत्मैवास्य ज्योतिः' इत्यादिस्वयंज्योतिष्ट्वश्रुतेः 'पश्यंश्चक्षु' रित्याद्यागन्तुकज्ञानवत्त्वश्रुत्या विरोधोऽस्ति न वेति **संदेहः** । अस्तीति **पूर्वः पक्षः** । **सिद्धान्तस्तु,** जीवो **ज्ञः**=स्वयंज्योतिःस्वरूपः । कुतः । **अत एव**=अनुत्पत्तिमत्त्वादेवेत्यर्थः । 'पश्यंश्चक्षु' रित्यादिश्रुतिरागन्तुकवृत्त्यभिप्रायेति न तया स्वयंज्योतिष्ट्वश्रुतेर्विरोध इति भावः ॥

**श्रीकण्ठमते,** पूर्वं नित्यतया साधितस्य जीवस्यात्राधिकरणे स्वाभाविकं ज्ञानधर्मित्वमस्ति न वेति **संदेहः** । ज्ञाज्ञौ द्वा' वित्यादिषु जीवस्याज्ञत्वमौत्सर्गिकं श्रूयते । सुषुप्तिदशायां 'न किंचिदवेदिष' मिति ज्ञानाभावोऽनुभूयते । जीवस्य स्वप्रकाशचैतन्यस्वरूपत्वेऽपि असौ स्वमात्रप्रकाशरूप इत्यहमिदं जानामीति जीवाश्रयत्वेनानुभूयमानं ज्ञानमनित्यमिति गम्यते । मायादिसंबन्धात्संसरतोऽस्य तेन चानित्यज्ञानेन ज्ञानवत्त्वादस्यागन्तुकज्ञानधर्मित्वमेव न स्वाभाविकज्ञानधर्मित्वमिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** आत्मा **ज्ञः**=स्वाभाविकज्ञानधर्मी । कुतः । **अत एव**=श्रुतेरेव । तथाहि—'अथ यो वेदेदं जिघ्राणीति स आत्मा' मनसैतान्कामान्पश्यन्रमते' 'मनोऽस्य दैवं चक्षुः' 'इत्यादि श्रूयते । अतः धर्मभूतं ज्ञानमेवास्य मनः । अतः स्वत एवायं ज्ञाता । 'ज्ञाज्ञौ द्वा' विति श्रुतिस्संसारदशायां सार्वज्ञ्यानभिव्यक्तिपरा । सुषुप्तिदशायां ज्ञानाभावानुभवस्तु विषयविशेषावच्छिन्नज्ञानपरिणामाभावविषयः । मायादिबद्धस्य ज्ञातृत्वं किंचिज्ज्ञत्वरूपं मुक्तस्य तु मलमायाद्यपगमादभिव्यक्तनिरतिशयज्ञानस्य सर्वज्ञत्वरूपमिति च विशेषः । इति ॥

**रामानुजमते,** अस्य सूत्रस्योत्तराधिकरणसूत्रैस्सहैकीकृत्यात्माधिकरणत्वेन व्यपदिष्टत्वादुत्तराधिकरण एव व्याख्येयता समुचितेत्यतः नेह प्रपञ्च्यते ॥

**आनन्दतीर्थमते,** एवमधिभूताधिदैवब्रह्मविषयश्रुत्यविरोधमभिधायाधुनापादपरिसमाप्ति जीवविषयश्रुत्यविरोधमाह— **ज्ञोऽत एव ॥ १८ ॥** इदमधिकरणमनन्यमतसाधारणेन **युक्तेश्चे**त्यधिकसूत्रपाठेन युक्ततया सूत्रद्वयात्मकमिति विशेषः । अत्र जीवः परमेश्वरादुत्पद्यते न वेति **संदेहः** । 'नित्यो नित्याना' मिति श्रुत्या जीवस्य नित्यत्वावगमान्नोत्पद्यत इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** जानातीति **ज्ञः** जीवः उत्पद्यते । अत एवेत्यावर्तते । **अत एव**=प्रकृतात्मन एव । कुतः । **अत एव**='अविनष्टा एवोत्पद्यन्त' इति श्रुतेरेवेत्यर्थः ॥

सू ॥ **युक्तेश्च** ॥ १९ ॥ अविनशिनोऽनादेरपि जीवस्य पराधीनविशेषलाभरूपोत्पत्तिर्युज्यते । 'वृद्धो जातो युवा जात' इत्याद्यबाधितव्यवहारादिति भावः ॥ **इति सूत्रार्थचन्द्रिकायां ज्ञाधिकरणम् ॥ ८ ॥**

(१) सर्वज्ञत्वमेव न त्वज्ञत्वमिति इति **ख.** पाठः ।

## अथोत्क्रान्त्यधिकरणम् ॥ ९ ॥

### ॥ सू ॥ उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥

पूर्वत्र ज्ञातृत्वेन सिद्धस्यात्मन उत्क्रान्त्यादिदर्शनात् अणुत्वमवगम्यते। तद्यु-ज्यते न वेति संदेहः ॥

नास्याणुत्वमुपपद्यते। 'स वा एष महानज आत्मा' इति जीवस्य विभुत्वा-वगमात् 'अहं विश्वं भुवनमभ्यभवम्' इति तस्य व्याप्त्या सकलभुवनाभिभा-वित्वावगमाच्च सर्वथायमात्मा विभुः ॥

इति प्राप्ते निरूप्यते—अणुरेवायमात्मा, उत्क्रान्तिगत्यागतीनां श्रुतेः। 'तेन प्रद्योतेनैष आत्मा निष्क्रामति' इति ह्युत्क्रान्तिः श्रूयते। 'ये वै के चास्माल्लो-

---

## अथ उत्क्रान्त्यधिकरणम् ॥ ९ ॥

सू ॥ उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥ अणुरयमात्मा विभुर्वेति अणुविभुश्रुत्योः किमनुसारेण का श्रुतिर्नेतव्येति तयोर्बलाबलानवधारणात्संशयः। तदर्थोऽयं सन्देहः पूर्वाधिकरणप्रसाधितो जीवस्वरूपातिरिक्तधर्मज्ञानसद्भाव उपपद्यते न वेति। उपपद्यते चेत् तद्व्याप्त्या सर्वांगीणसुखानुभवस्य तद्व्याप्तिविषयतया विभुत्वश्रुतेश्चोपपन्नतयोत्क्रां-तिगत्यागतिलिंगानुगृहीताणुत्वश्रुतिबलादणुरात्मेति सिद्धान्तकोटिस्सिद्ध्येत्। नोपपद्यते चेत् सर्वांगीणसुखानुभवस्यात्मव्याप्तिमन्तरेणानुपपत्तेस्तदनुगृहीतया विभुत्वश्रुत्या विभु-रेवायमात्मा। तदणुत्वश्रुति 'स्त्वेष म आत्मान्तर्हृदयेऽणीया'निति पारमेश्वराणुत्वश्रु-तिवदौपाधिकाणुत्वपरा। उत्क्रांत्यादिश्रुतयोऽपि औपाधिकार्थविषया इति पूर्वपक्ष-कोटिः सिद्ध्येदिति संशययोः फलफलिभावः। तत्र पूर्वपक्षः 'स वा एष महानज आत्मे'ति श्रुतेर्विभुर्जीवः। न चेयं श्रुतिः परमेश्वरविषया। 'योऽयं विज्ञानमयः प्राणे' ष्विति जीवप्रस्तावात् 'अहं विश्वं भुवनमभ्यभवा'मिति मुक्तजीवस्य व्याप्त्या सकलभुव-नाभिभावित्वश्रवणाच्च। 'बुद्धेरात्मा महान्पर' इति मुक्तामुक्तसाधारण्येन जीवस्य महत्त्वश्रुतेश्च। अणुत्वे च तस्य सर्वांगीणसुखानुभवो न स्यात्। अतो देहपरिमाणत्व-स्यापि जैनाधिकरणे दूषितत्वात्परिशेषादपि विभुत्वसिद्धिः। न च जीवप्रभारूपधर्मज्ञान-व्याप्त्या सर्वांगीणसुखानुभवोपपत्तिः। जीवस्वरूपातिरिक्तस्य धर्मज्ञानस्यासिद्धेः 'यो वि-ज्ञाने तिष्ठ' न्नित्यादिश्रुतेः जीवस्य[1] स्वप्रकाशज्ञानरूपत्वस्यावश्याभ्युपगन्तव्यतया तस्यैव तत्तद्वस्त्ववच्छेदेन तत्तद्विषयज्ञानत्वोपपत्तावतिरिक्तधर्मज्ञानकल्पने प्रमाणाभावात्[2]। 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत' इत्यादिश्रुतिषु द्रष्टृदृष्ट्यादिशब्दानां सामानाधिकरण्येन जीवस्यैव ज्ञानरूपत्वप्रतिपादनपरतोपपत्तेरित्येवं प्राप्ते सिद्धान्तमाह सूत्रकारः—सू ॥ उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥ 'नात्मा श्रुते'रित्यतः श्रुतेरित्यनुवर्तते। 'नाणुरत-

---

(१) 'जीवः स्वप्रकाशज्ञानरूप इत्यभ्युपगन्तव्यतया' इति ख. पाठः। (२) 'गौरवात्' इति ख. पाठः।

कात्प्रयन्ति चन्द्रमसमेव ते गच्छन्ति' इति गतिः । 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इत्यागतिः। विभुत्वे जीवस्यैता उत्क्रान्तिगत्यागतयो नोपपद्येरन् ॥

यद्यपि शरीरवियोगरूपोत्क्रान्तिर्विभुत्वेऽप्यात्मनः स्यात् तथापि गत्यागती नैवमित्याह—

॥ सू ॥ स्वात्मना चोत्तरयोः ॥ २१ ॥

उत्तरयोर्गत्यागत्योः स्वात्मनैव संपाद्यत्वादणुरयमात्मा । यदुक्तं 'महानज आत्मा' इति तदीश्वरप्रकरणान्नैतद्विषयमिति वक्ष्यति । व्याप्त्या विश्वभुवनाभिभावित्वं यदुक्तं, तत्तु मलतिरोधानापगमप्रकटितशक्तिमरीचिव्याप्तमुक्तजीवविषयम् । तस्मादणुरेवात्मा ॥

आशङ्क्य परिहरति—

॥ सू ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥

'स वा एष महानज आत्मा' इति श्रुतेर्नाणुर्जीव इति चेत्—न, 'यस्यानुवित्तः प्रतिबुद्ध आत्मा' इति परमेश्वराधिकारात् ॥

॥ सू ॥ स्वशब्दोन्मानाभ्यां च ॥ २३ ॥

'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ॥' इति श्रुतावणुशब्दात्, 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इत्युन्मानाच्च अणुरात्मा । 'अणुसदृशं वस्तूदाहृत्य तन्मानत्वप्रदर्शनमुन्मानम् ॥

अणुत्वेऽस्य सकलदेहव्यापिवेदनानुभवः कुत इत्यत आह—

॥ सू ॥ अविरोधश्चन्दनवत् ॥ २४ ॥

---

श्रुते' रित्युत्तरसूत्रात्साध्यलाभः । उत्तरसूत्रशंकामाह—यद्यपीति । शरीरनाशरूपोत्क्रान्तिः स्थितस्यापि जीवस्य उपपद्यत इति भावः। सू ॥ स्वात्मना चोत्तरयोः ॥ २१ ॥ चशब्दमवधारणार्थं कृत्वा व्याचष्टे—उत्तरयोरिति । यद्यप्युत्क्रमणशब्दार्थस्यापि गतिविशेषरूपत्वादुत्क्रमणमपि स्वात्मनैव संपाद्यम् । मुख्यत्वे संभवत्यौपचारिकत्वकल्पनायोगस्य न्यायस्य तत्राप्यविशिष्टत्वात् । तथापि शरीरवियोगः उत्क्रांतिरिति परपरिभाषामभ्युपगम्यैतदुक्तम् । वक्ष्यतीति । उत्तरसूत्र इति शेषः । शक्तिमरीचिव्याप्तेति । मुक्तस्य धर्मज्ञानप्रभया सकलजगद्व्यापकत्वं 'प्रदीपवदादेश' इति ( ब्र. ४- ४- १५ ) सूत्रे वक्ष्यते । तद्विषयमित्यर्थः । 'बुद्धेरात्मा महान्पर' इति महच्छब्दः प्रकृतेंद्रियादिशेषित्वरूपप्राधान्यानुवादको न विभुत्वप्रतिपादकः । अन्यथोक्तवक्ष्यमाणानेकश्रुतिविरोधप्रसङ्गादिति भावः । सू ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥ यस्येति । प्रतिबुद्ध आत्मा प्राज्ञः परमेश्वरस्स यस्यानुवित्तः । अनुपूर्वा 'द्विदिर् लाभ' इति धातोर्निष्ठाप्रत्ययः । श्रवणमननाद्यनंतरं प्राप्त इत्यर्थः । तथा च सत्यपि जीवप्रस्तावे तत्र परमेश्वरप्रतिपादनमप्यस्तीति तद्विषयत्वं महत्त्वश्रुतेर्युक्तमिति भावः । महत्त्वश्रुत्यन्यथानयनबीजमणुत्वश्रुतिबाहुल्यं विभावयितुमुत्तरसूत्रम्—सू ॥ स्वशब्दोन्मानाभ्यां च ॥ २३ ॥ आराग्रं चर्मभेदिसूच्यग्रम् । अवरो जीवः । सू ॥ अविरोधश्चन्दन-

---

(१) 'सकलजगद्व्याप्तत्वं' इति ख. पाठः । (२) 'शस्त्यम्' इति ख. पाठः ।

यथा चन्दनबिन्दुरेकदेशस्थोऽपि सकलदेहव्यापि सुखं जनयति, तद्वदविरोधः॥

पुनराशङ्क्य परिहरति-

॥ सू ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥

देशविशेषस्थितिश्चन्दनस्यास्तीति चेत्-न, आत्मनोऽपि तदभ्युपगमात्, 'हृदि ह्येष आत्मा' 'योऽपि विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति श्रुतेः। इति मतान्तरम् ॥

स्वमतमाह-

॥ सू ॥ गुणाद्वाऽऽलोकवत् ॥ २६ ॥

आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यानुभवति। यथा मणिः स्वकीयेन तेजसा सन्निहितं व्याप्य प्रकाशयति। तस्मादविरोधः ॥

ज्ञानात्मनोर्व्यतिरेको नास्तीत्यत्राह-

॥ सू ॥ व्यतिरेको गन्धवत्तथा हि दर्शयति ॥ २७ ॥

गन्धवती पृथिवीतिवत् जानामीति गुणत्वेनोपलब्धेर्ज्ञानात्मनोः व्यतिरेकोऽस्ति। दर्शयति च श्रुतिर्व्यतिरेकं 'जानात्येवायं पुरुषः' इति ॥

॥ सू ॥ पृथगुपदेशात् ॥ २८ ॥

आत्मनः पृथगुपदिश्यते ज्ञानम्। 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति॥

एवं नित्यज्ञानगुणक आत्मा सिद्धः। एवं ज्ञानगुणकत्वेऽप्यात्मनः कथं ज्ञान-

---

वत् ॥ २४ ॥ तद्वदविरोध इति। एकदेशस्थस्यापि व्यापिकार्यजनकत्वं दृष्टम्। न च दृष्टे काचिदनुपपत्तिरस्तीति भावः। ननु शरीरैकदेशस्थस्यापि हरिचन्दनबिन्दोस्सर्वांगीणसुखानुभवहेतुत्वं दृष्टम्। सर्वशरीरव्यापिनस्त्वगिन्द्रियस्यापि तद्दृष्टम्। उभयविधदृष्टान्तदर्शने हरिचन्दनदृष्टान्तस्यैवानुरोधे किं नियामकमित्याशंकानिराकरणार्थत्वेनोत्तरसूत्रमवतारयति-पुनराशंक्येति। सू ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥ आत्मनोऽपीति। यथा हरिचन्दनबिन्दोरेकदेशस्थत्वं प्रत्यक्षसिद्धमित्यभ्युपगम्यते एवं जीवस्यापि तच्छ्रुतिसिद्धमित्यभ्युपगम्यत इति भावः। 'मतान्तर' मित्यनेन एतदस्वारस्यं द्योत्यते युक्तं चन्दनबिन्दोस्सावयवस्य सूक्ष्मावयवप्रसरणेन सकलदेहव्याप्त्या सर्वांगीणसुखानुभवजनकत्वं न त्वणोर्जीवस्यावयवास्सन्ति यैरयं सकलं शरीरं कायव्यूहे बहूनि शरीराणि च व्याप्नुयादिति। सू ॥ गुणाद्वाऽऽलोकवत् ॥ २६ ॥ भवेदेवं प्रदीपस्य प्रभया प्रासादोदरव्याप्तिवत् जीवस्य धर्मज्ञानेन शरीरव्याप्तिः, यदि जीवातिरिक्तं धर्मज्ञानं स्यात्, तदेव नास्तीति शंकानिराकरणार्थत्वेन उत्तरसूत्रमवतारयति-ज्ञानात्मनोरिति। सू ॥ व्यतिरेको गंधवत्तथा हि दर्शयति ॥ २७ ॥ गंधवत्त्वेन पृथिव्या इव ज्ञानवत्त्वेन पुरुषस्य व्यपदेशो नौपचारिकत्वाय व्यतिरेकमपेक्षते इति भावः। सू ॥ पृथगुपदेशात् ॥ २८ ॥ भिन्नशब्दाभ्यां कर्तृक्रियारूपभेदसमर्पकाभ्यामुपदेशः पृथगुपदेशः। तथा च षष्ठ्योर्व्यधिकरणतया मुख्यक्रियाकर्तृभावभेदे संभवति सामानाधिकरण्यमाश्रित्यौपचारिकत्वकल्पनं न युक्तमिति भावः।

मात्रत्वव्यपदेश इत्यत आह—

॥ सू ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२९॥

ज्ञानगुणसारत्वादात्मनो ज्ञानव्यपदेशः, न ज्ञानमात्रत्वात्। यथा प्राज्ञस्य विपश्चितोऽपि 'सत्यं ज्ञान'मिति। ततो ज्ञानमात्रत्वव्यपदेशे दोषो न भवत्यात्मन इति ॥

पुनरुपपत्तिमाह—

॥ सू ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

आत्मस्वरूपानुबन्धित्वात् ज्ञानस्य, तेन व्यपदेशे न दोषः। स्वरूपानुबन्धिधर्मत्वेन गोत्वादिना खण्डादेर्गौरित्यादिव्यपदेशो दृश्यते। अतः स्वरूपानुबंधित्वाज्ज्ञानधर्मस्य तद्व्यपदेशः ॥

सुषुप्त्यादिष्वसतो ज्ञानस्य यावदात्मभावित्वं कथमित्यत आह—

॥ सू ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

सुषुप्त्यादिषु सतो ज्ञानस्यानभिव्यक्तस्यापि जागरितादावभिव्यक्तिसंभवात् स्वरूपानुबन्ध्येव ज्ञानम्, यथा पुंस्त्वासाधारणसप्तमधातोर्बाल्येऽपि सतो युवत्वेऽभिव्यक्तिः। ततो ज्ञानस्यात्मस्वरूपानुबन्धित्वे न दोषः ॥

आत्मनो ज्ञातृत्वाणुत्वप्रतिपादनप्रयोजनमाह—

॥ सू ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ ३२ ॥

---

यद्यपि जीवस्य ज्ञानत्वव्यपदेशः स्वप्रकाशज्ञप्तिरूपत्वादुपपद्यते तथापि प्रकारान्तरेणापि तदुपपादनार्थमुत्तरसूत्रद्वयम्—सू ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ यतो ज्ञानगुणोऽस्य कर्तृत्वादिसर्वनिर्वाहकतया सारभूतः अतस्तेन गुणेन तस्य व्यपदेशः। दृष्टो हि ब्रह्मणोऽपि सारभूतेन गुणेन व्यपदेश इत्यर्थः। यद्यपि 'सत्यं ज्ञान' मित्यत्रान्तोदात्तेन चित्स्वरेण मत्वर्थीयाच्प्रत्ययान्ततया ज्ञानशब्दो ज्ञानवत्परः इत्युपपादयितुं शक्यते। तथापि तस्य ज्ञानमात्रपरत्वेऽपि न प्रकृते काचिदनुपपत्तिः इत्यभिप्रायेण तदुदाहृतम्। सू॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३०॥ लाक्षणिकत्वेन पूर्वनिर्वाहः अयं तु मुख्यत्वेनेति विशेषः। पूर्वसूत्रोक्तहेत्वाक्षेपकत्वेनोत्तरसूत्रमवतारयति—सुषुप्त्यादिष्विति। सू॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥ बाल्युवादिसाधारणो हि वीर्यरूपः पुंस्त्वधातुः। शरीरधारकान्धातून्विना शरीरस्थित्यसंभवात्। तथापि यथा तस्य बाल्ये नाभिव्यक्तिः 'न हि द्रष्टुर्दृष्टे' रिति जीवस्वरूपानुबंधित्वेन प्रतिपन्नस्य धर्मज्ञानस्य सुषुप्तौ बाह्यांतरसकलेंद्रियव्यापारोपरमेण विषयावभासाभावात् तथाभिव्यक्तिर्नास्तीति भावः। उत्तरसूत्रेण जीवस्य ज्ञानरूपतयागन्तुकज्ञानतया वा सर्वगतत्वाभ्युपगमे दूषणमुच्यते। तदुक्तिः स्वमते तद्दूषणाप्रसंगरूपं प्रयोजनमानयतीति पर्यवस्यदर्थमालोच्य स्वमतप्रयोजनपरतयोत्तरसूत्रमवतारयति—आत्मन इति। सू॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ ३२ ॥ आत्मा

---

(१) 'शक्त्यसंभवात्' इति ख पाठः। (२) 'विषयावच्छेदाभावात्' इति ख पाठः।

अन्यथा ज्ञप्तिमात्रसर्वगतात्मपक्षे तावन्नित्यवत् सर्वदोपलब्धिः स्यात्, संकोचाभावात् । विद्यमानाया अनुपलब्धेरपि स एव हेतुरिति सापि सर्वदा स्यात् । आगन्तुकज्ञानसर्वगतात्मपक्षेऽपि स एव दोषः, सर्वात्मनां सर्वगतत्वेन ज्ञानहेतूनां मनस्संयोगादीनां सर्वसाधारणत्वात् । अदृष्टहेतूनामपि तथात्वात् तेनापि न नियमः । अथोपलब्ध्यनुपलब्ध्योर्विरोधादुपलब्धेरेव हेतवः स्युः, अनुपलब्धेरेव वा । तथा सति अन्यतरनियमः स्यात् । अतः पूर्वोक्तमेव समीचीनम् ॥ इत्युत्क्रान्त्यधिकरणम् ॥ ९ ॥

---

शरीरस्यान्तरुपलभ्यते ततो बहिर्नोपलभ्यत इति तावदहमिहैवास्मि सदने जानान इति सार्वलौकिकानुभवसाक्षिकं नान्यथा कर्तुं शक्यम् । तदिदं पक्षद्वयेऽपि नोपपद्यते । तथा हि ज्ञानरूपः सर्वगत आत्मेति पक्षे स उपलभ्यानुपलभ्यस्वभावः उपलभ्यैकस्वभावोऽनुपलभ्यैकस्वभावो वा । आद्ये सर्वत्र तस्योपलब्ध्यनुपलब्धी स्याताम् । द्वितीये सर्वत्रोपलब्धिः स्यात् । तृतीये सर्वत्रानुपलब्धिर्भवेत् । देहस्यान्तरुपलभ्यस्वभावस्ततो बहिरनुपलभ्यस्वभाव इति तु व्यवस्था न संभवति । न ह्येकस्य क्वचिदंशे स्वप्रकाशत्वमन्यत्रास्वप्रकाशत्वं चेत्युपपद्यते । आगन्तुकज्ञानसर्वगतात्मपक्षेऽप्येवमेव विकल्पत्रयेऽपि दोषः । न च शरीरस्यान्तर्ज्ञानहेतूनां मनस्संयोगादीनां सत्त्वात्तत्रैवाहमित्युपलब्धिर्न बहिरिति व्यवस्थोपपद्यत इति वाच्यम् । स्वशरीराद्बहिरपि सर्वगते स्वात्मनि मनोऽन्तरसंयोगसत्त्वात् । न च स्वादृष्टाकृष्टमनस्संयोग एव स्वज्ञानहेतुरिति व्यवस्था कल्पयितुं शक्या । सर्वात्मसंनिधावुत्पद्यमानानामदृष्टानां सर्वसाधारण्यानिवारणादिति सूत्रस्यार्थं दर्शयति—अन्यथेति । पूर्वोक्तमिति । संकोचविकासवन्नित्यज्ञानवानणुर्जीव इति प्रागुक्तमित्यर्थः ॥ इति उत्क्रांत्यधिकरणम् ॥ ९ ॥

---

## नयमणिमालायाम्

### अथ उत्क्रांत्यधिकरणम् ॥ ९ ॥

सू ॥ उत्क्रांतिगत्यागतीनाम् ॥ २० ॥ स्वात्मना चोत्तरयोः ॥२१॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥ स्वशब्दोन्मानाभ्यां च ॥ २३ ॥ अविरोधश्चंदनवत् ॥ २४ ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥ गुणाद्वालोकवत् ॥ २६ ॥ व्यतिरेको गन्धवत्तथाच दर्शयति ॥ २७ ॥ पृथगुपदेशात् ॥ २८ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥ नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वान्यथा ॥ ३२ ॥

स विभुर्महानज इति श्रवणात्सर्वाङ्गवेदनावगतेः । न च सा ज्ञानगुणात्स्यात् जीवस्य ज्ञानमात्रत्वात् ॥ १४४ ॥
गत्युत्क्रांतिश्रवणादणुर्महानिति तु परविषयम् । व्याप्यस्य ज्ञानगुणः तत्सारत्वात्तथास्य निर्देशः ॥ १४५ ॥

इति उत्क्रांत्यधिकरणम् ॥ ९ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथोत्क्रान्त्यधिकरणम् ॥ ९ ॥

सू ॥ उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥ स्वात्मना चोत्तरयोः ॥ २१ ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥ स्वशब्दोन्मानाभ्यां च ॥ २३ ॥ अविरोधश्चन्दनवत् ॥ २४ ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥ गुणाद्वालोकवत् ॥ २६ ॥ व्यतिरेको गन्धवत्तथा हि दर्शयति ॥ २७ ॥ पृथगुपदेशात् ॥ २८ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ यावदात्मभावित्वाच्च

**न दोषस्तद्दर्शनात् ॥ ३० ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥ नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वान्यथा ॥ ३२ ॥**

**भगवत्पादमते,** पूर्वं जीवस्य नित्यत्वं स्वप्रकाशत्वं चाभिहितम्। अधुना जीवस्यापरिच्छिन्नत्वमणुत्वनिरासेन साधयति—**उत्क्रान्तिगतीत्यादिना**। अत्र 'सर्वव्यापि' इति सर्वगतत्वश्रुतेः 'एषोऽणुरात्मा' इत्यणुत्वश्रुत्या विरोधोऽस्ति न वेति **संदेहः**। 'अस्माच्छरीरादुत्क्रामति' 'चन्द्रमसमेव सर्वे गच्छन्ति' 'तस्माल्लोकात्पुनरेति' इत्युत्क्रान्तिगत्यागतीनां श्रवणादणुर्जीव इति प्राप्नोति। किंच। सू ॥ **स्वात्मना चोत्तरयोः** ॥ २१ ॥ यद्यप्युत्क्रान्तिर्देहस्वाम्यनिवृत्तिरूपा विभुत्वे संभवति। तथापि **उत्तरयोः**=गत्यागत्योः। **स्वात्मना**=जीवात्मना संबद्धत्वात्ते आत्मनोऽणुत्व एव संभवतः ॥

तर्हि सर्वगतत्वश्रुतिर्विरुद्ध्येतेत्याशंक्य समाधत्ते—सू ॥ **नाणुरतच्छ्रुतेरिति**। नायं जीवोऽणुः। कुतः। **अतच्छ्रुतेः**='सर्वव्यापि' इत्यादिना सर्वगतत्वश्रुतेः। **इति चेत्**। **न**। **इतराधिकारात्**=इतरस्य ब्रह्मणः सर्वेषु वेदान्तेषु प्रधानतया ज्ञेयत्वेन प्रकृतत्वात् तस्यैव सर्वगतत्वश्रुतिर्न जीवस्येत्यर्थः ॥

जीवस्याप्यणुत्वश्रुतिरस्तीत्याह—सू ॥ **स्वशब्दोन्मानाभ्यां च** ॥ २३ ॥ 'एषोऽणुरात्मे'त्यणुत्ववचनेन 'बालाग्रशतभागस्ये' त्युन्मानशब्दितात्यन्ताल्पपरिमाणश्रवणेन च जीवोऽणुरित्यर्थः ॥

नन्वात्मनोऽणुत्वे गंगाजलनिमग्नस्य देहव्यापिशैत्योपलब्धिविरोध इत्याह—सू ॥ **अविरोधश्चन्दनवत्** ॥ २४ ॥ यथा चन्दनबिंदुश्शरीरैकदेशस्थस्सशरीरव्यापि सुखं जनयति तथा जीवोऽपि देहव्यापिनं शैत्याद्युपलंभं करिष्यतीत्यविरोध इत्यर्थः। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशंक्य परिहरति—**अवस्थितिवैशेष्यादिति** ॥ **अवस्थितिवैशेष्यादिति चेत्**=प्रत्यक्षेण चन्दनबिन्दोरेकदेशेऽवस्थितिर्ज्ञायते जीवस्य तु नैवमित्यतुल्यत्वादत्र चन्दनदृष्टान्तो नोपपद्यत **इति चेत्**। **न**। कुतः। **अभ्युपगमात्**=जीवाणुत्वस्याङ्गीकारात्। तत्कस्मात्। **हृदि हि**=यस्मात् 'हृद्यन्तर्ज्योति' रित्यादौ अल्पपरिमाणे हृदि जीवः पठ्यते, तस्माज्जीवस्याणुत्वमभ्युपगम्यत इति न दृष्टान्तवैषम्यमित्यर्थः ॥

ननु सावयवस्य चन्दनबिन्दोस्सर्वशरीरव्यापकत्वेऽपि निरवयवस्याणोर्जीवस्य तथा शरीरव्यापकत्वं न स्यादित्यपरितुष्या पक्षान्तरमाह—सू ॥ **गुणाद्वा लोकवत्** ॥ २५ ॥ आत्मनोऽणुत्वेऽपि तन्निष्ठज्ञानगुणस्य व्यापकत्वाङ्गीकारात् व्यापकगुणाद्वापि कार्यं भविष्यति। **लोकवत्**=यथा लोके गृहनिष्ठप्रदीपस्याल्पत्वेऽपि प्रभात्मकगुणवशाद्गृहव्यापि प्रकाशादिकार्यं संभवति तद्वदित्यर्थः ॥

ननु गुणिव्यतिरेकेण गुणस्य वृत्तेरन्यत्रादर्शनात् तत्कथमित्याशंक्याह—सू ॥ **व्यतिरेको गन्धवत्** ॥ २६ ॥ यथा गुणस्यापि सतो गन्धस्य गुणिव्यतिरेकेण वृत्तिः तद्वत् गुणिव्यतिरेको ज्ञानस्येत्यर्थः ॥

ज्ञानेनैवात्मनो देहव्याप्तिरित्यत्र श्रुतिमाह—सू ॥ **तथा च दर्शयति** ॥ २७ ॥ हृदायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय 'आ लोमभ्य आनखाग्रेभ्य' इति श्रुतिः ज्ञानेन समस्तशरीरव्यापित्वं दर्शयतीत्यर्थः ॥

तत्रैव हेत्वन्तरमाह—सू ॥ **पृथगुपदेशात्** ॥ २८ ॥ 'प्रज्ञया शरीरं समारुह्य' इत्यात्मज्ञानयोः कर्तृकरणभावेन पृथगुपदेशात् गुणद्वारास्य शरीरव्यापित्वं गम्यते। तथा च व्यापकं ज्ञानं जीवस्त्वणुः इत्यणुत्वश्रुत्या सर्वगतत्वश्रुतेर्विरोधोऽस्तीति **पूर्वपक्षः** ॥

**सिद्धान्तस्तु—सू ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्** ॥ २९ ॥ तुशब्दः पूर्वपक्षं व्यावर्तयति। नैवाणुर्जीवः। सर्वगतस्यैव ब्रह्मणो जीवभावेन प्रवेशश्रवणात्तादात्म्योपदेशाच्च। **तद्व्यपदेशः**=जीवस्याणुत्वादिव्यपदेशः। **तद्गुणसारत्वात्**=तस्या बुद्धेर्गुणा अणुत्वोत्क्रान्तिगत्यागतिसुखदुःखादयः। ते गुणाः सारं प्रधानं यस्य जीवस्य स तथा। तस्य भावस्तत्त्वं तस्मात् भवति। न स्वाभाविकः। **प्राज्ञवत्**=यथा प्राज्ञस्य परमात्मनस्सगुणोपासनेषु दहराद्युपाधिवशादणुत्वादिकं व्यपदिश्यते तद्वदित्यर्थः ॥

नन्वात्मन्यणुत्वादिसंसारस्य बुद्ध्युपाधिकत्वे कदाचिद्बुद्ध्या वियोगे संसारो न स्यादित्यत आह—सू ॥ **यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** ॥ ३० ॥ बुद्धिसंयोगस्य **यावदात्मभावित्वाच्च**=यावदात्मनस्सम्यग्दर्शनेन संसारो न निवर्तते तावत्कालभावित्वात्। **न दोषः**=नोक्तदोष इत्यर्थः। तत्कस्मात्। **तद्दर्शनात्**=देहवियोगेऽपि तस्य बुद्धिसंयोगस्य 'स समानस्सन्नुभौ लोकावनुसंचरती'त्यादि श्रुतौ दर्शनादित्यर्थः ॥

ननु सुषुप्तौ ब्रह्मसंपत्तिकार्यनाशयोरभ्युपगमान्न बुद्धिसंयोगस्य यावदात्मभावित्वमित्यत आह—सू ॥ **पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्** ॥ ३१ ॥ **पुंस्त्वादिवत्**=यथा बाल्ये पुंस्त्वादेस्सत एव यौवनेऽभिव्यक्तिस्तद्वत्। **तस्य**=बुद्धिसंयोगादेः। **सतः**=सुषुप्तौ सूक्ष्मात्मना सत एव। **अभिव्यक्तियोगत्**=आविर्भावसंभवात् यावदात्मभावित्वं न विरुध्यत इत्यर्थः ॥

ननु बुद्ध्यपरपर्यायान्तःकरणे किं प्रमाणं यत्प्रयुक्तः संसारः स्यादित्यत आह—सू ॥ **नित्योपलब्ध्यनुपलब्धि-**

**प्रसंगोऽन्यतरनियमो वान्यथा ॥ ३२ ॥** इदमन्तःकरणमवश्यमभ्युपगन्तव्यम् । **अन्यथा**=अनभ्युपगमे । सर्वेषामिन्द्रियाणां स्वस्वविषयसंनिधानदशायां **नित्योपलब्धिप्रसंगः**= युगपत्सर्वविषयोपलब्धिप्रसंगः । मनोव्यतिरिक्तज्ञानसामग्र्यास्सत्त्वात् । यदि सत्यामपि सामग्र्यां ज्ञानाभावः तदा **नित्यानुपलब्धिप्रसंगः**=कस्याप्युपलब्धिर्न स्यात् । अथवा एकस्योपलब्धिमितरेषामनुपलब्धिमिच्छता ज्ञानसामग्रीमध्ये **अन्यतरनियमः=अन्यतरस्य**–आत्मनः इन्द्रियस्य वा **नियमः**=शक्तिप्रतिबन्धोऽङ्गीकर्तव्यः । निर्धर्मक आत्मनि शक्तेरभावात् शक्तेरान्तरत्वेनेन्द्रियधर्मत्वायोगाच्च स न संभवतीत्यतः इच्छैव नियामिका । तस्याश्च मनोधर्मत्वेन तदन्यथानुपपत्त्या 'कामः संकल्प' इत्यादिश्रुत्या च सिद्धमन्तःकरणम् । तत्प्रयुक्तश्चात्मन्यणुत्वादिसंसार इति । तस्मादौपाधिकाणुत्वश्रुत्या न वास्तवसर्वगतत्वश्रुतेर्विरोध इति सिद्धम् ॥

## इतिभगवत्पादमते उत्क्रान्तिगत्यधिकरणम् ॥ १३ ॥

**श्रीकण्ठमते,** पूर्वत्र ज्ञातृत्वेन सिद्धस्यात्मन उत्क्रान्त्यादिदर्शनादवगम्यमानमणुत्वं युज्यते न वेति **संदेहः** । 'स वा एष महानज आत्मा' 'अहं विश्वं भुवनमभ्यभवाम्' इत्यादिश्रुतिभिस्तस्य विभुत्वसकलभुवनाभिभावित्वयोरवगमाद्विभोर्जीवस्य नाणुत्वमुपपद्यत इति **पूर्वपक्षः** । उत्क्रान्तिगत्यागतिश्रुत्यादिप्रामाण्यादात्मनो नित्यज्ञानगुणकस्याणुत्वमुपपद्यत एवेति **सिद्धान्तः** । अत्र 'उत्क्रान्तिगती' त्यादीन्येतदधिकरणसूत्राणि सर्वाण्यपि सिद्धान्तोपष्टंभकतयैव व्याख्यातानि । अतः भगवत्पादमते 'जीवाणुत्वपरतया पूर्वपक्षप्रतिपादकानि । 'उत्क्रान्तिगती' त्यादीनि नव सूत्राणि प्रायोऽत्राविशिष्टार्थानि । 'अवस्थितिवैशेष्या'दिति सूत्रं मतान्तरनिरूपकं 'गुणाद्वालोकव' दिति स्वमतप्रतिपादकमिति विशेषोऽत्र मते । अस्मिन्मते पूर्वपक्षसिद्धान्तयोर्विनिमयेनास्ति वैलक्षण्यं पूर्वस्मात् । सूत्राणि च तदानुगुण्येन व्याख्यातानि । **'व्यतिरेको गन्धवत्तथाहि दर्शयति । पृथगुपदेशात् ।'** इतीदं सूत्रद्वयं **'गुणाद्वालोकवत् ।'** इति स्वमतार्थोपष्टंभकतया ज्ञानात्मनोर्व्यतिरेकप्रतिपादकमित्यविशेषः । भगवत्पादमते सिद्धान्तपरत्वेन व्याख्यातानि **'तद्गुणसारत्वा'** दित्यादीनि चत्वारि सूत्राण्यपि अत्र विलक्षणार्थपरतया भिन्नार्थान्येव । यथा—एवं नित्यज्ञानगुणकस्यात्मनः कथं ज्ञानमात्रत्वव्यपदेश इत्यत आह—**तद्गुणसारत्वादित्यादि । तद्व्यपदेशः**=आत्मनो ज्ञानव्यपदेशः । **तद्गुणसारत्वात्तु**=ज्ञानगुणसारत्वादेव भवति न ज्ञानमात्रत्वादित्यर्थः । **प्राज्ञवत्**=यथा प्राज्ञस्य विपश्चितोऽपि 'सत्यं ज्ञान' मिति व्यपदेशस्तद्वदिति । पुनरुपपत्तिमाह—**सू ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥ यावदात्मभावित्वाच्च**=ज्ञानस्यात्मस्वरूपानुबन्धित्वात् ज्ञानमात्रत्वव्यपदेशे न दोषः । कुतः । **तद्दर्शनात्**=स्वरूपानुबन्धिधर्मत्वेन गोत्वादिना खण्डादेर्गौरित्यादिव्यपदेशस्य लोके दर्शनात् । अतः स्वरूपानुबन्धित्वाज्ज्ञानधर्मस्य तद्व्यपदेशे न दोष इति भावः ॥

सुषुप्त्यादिष्वसतो ज्ञानस्य यावदात्मभावित्वं कथमित्यत आह—**सू ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥** सुषुप्त्यादिष्वनभिव्यक्तत्वेन सतोऽपि ज्ञानस्य बाल्येऽपि सतः पुंस्त्वासाधारणसप्तमधातोर्यौवनेऽभिव्यक्तिवत् जागरादावभिव्यक्तिसंभवात् ज्ञानस्य स्वरूपानुबन्धित्वमक्षतमिति भावः ॥

आत्मनो ज्ञातृत्वाणुत्वप्रतिपादनप्रयोजनमवगमयितुं पक्षान्तरे दोषमाह—**सू ॥ नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वान्यथा ॥ ३२ ॥ अन्यथा**=ज्ञानात्मवादे सर्वगतात्मवादे च । **नित्योपलब्ध्यनुपलब्धिप्रसंगः**= उपलब्ध्यनुपलब्धी नित्यवत्प्रसज्येयाताम् । तयोरन्यतरनियमो वा भवति । तस्मादात्मनो ज्ञातृत्वाणुत्ववादः पूर्वोक्त एव समीचीन इति सिद्धम् ॥ अत्र **व्यतिरेको गन्धवत्तथाहि दर्शयति'** इत्येकसूत्रतया पाठः ॥

**रामानुजमते, 'ज्ञोऽत एव'** इत्यादीनि चतुर्दश सूत्राण्यपि ज्ञाधिकरणत्वेन व्यपदिश्यंते । अत्र किं जीवश्चैतन्यमात्रवपुः उत पाषाणकल्प एवागन्तुकचैतन्यगुणः अथवा ज्ञातृत्वैकस्वरूप इति त्रेधा **संशयः** । चैतन्यमात्रवपुरथवा पाषाणकल्प आगन्तुकचैतन्यगुणः स्यादिति **पूर्वपक्षः** ॥ बद्धमुक्तोभयावस्थो ज्ञातैवायमात्मा अणुरेवेति **सिद्धान्तः** ॥ सूत्रार्थवर्णनादिकं सर्वमन्यदविशिष्टमेव श्रीकण्ठमतादिति विरम्यते पुनरुक्तप्रपञ्चनतः । इति ॥

## इति रामानुजमते आत्माधिकरणम् ॥

**आनन्दतीर्थमते,** 'उत्क्रान्ती' त्यादिसूत्रसप्तकमात्रमिदमधिकरणं **'व्यतिरेको गन्धव'** दिति सूत्रमधिकरणान्तरं **'पृथगुपदेशा'** दित्यादिसूत्रद्वयमन्यदधिकरणं **'यावदात्मभावित्वाच्चे'**ति सूत्रमन्यत् **'पुंस्त्वादिव'** दित्यादिसूत्रद्वयमधिकरणान्तरमिति चाधिकरणपंचकात्मतया पंचधा विभक्तानीमानि त्रयोदश सूत्राणीति विशेषः । इतः परमापादपरिसमाप्तेः पूर्वाधिकरणप्रस्तुतजीवविषय एवाणुत्वमहत्त्वादिश्रुतिविरोधः समाधास्यते । अस्मिन्नधिकरणे 'व्याप्ता ह्यात्मानः' अणुर्ह्येष आत्मा'इति जीवपरिमाणश्रुत्यविरोध उच्यते । अत्र जीवोऽणुर्वा विभुर्वेति **संशयः** । 'व्याप्ता ह्यात्मान' इति युक्त्यनुगृहीतत्वेन प्रबलया श्रुत्या 'अणुर्ह्येष आत्मा' इति जीवाणुत्वश्रुतेर्विरोधवत्त्वेनाप्रामाण्याद्विभुर्जीव इति **पूर्वपक्षः** ॥ 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छंत्यमुष्मादिमं लोकमागच्छन्ती'त्युत्क्रान्तिगत्यागतिश्रवणात् 'व्याप्ता ह्यात्मान' इति श्रुतेरीश्वरविषयत्वाच्च अणव एव ते जीवा इति **सिद्धान्तः**॥**सूत्रार्थस्तु, सू ॥ उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥** 'सोऽस्मादित्यादिवाक्योक्तदेहोत्क्रमणलोकान्तरगमनैतल्लोकागमनहेतूनां सकाशादणुरेव जीवो न विभुरित्यर्थः ॥

सू॥ **स्वात्मना चोत्तरयोः** ॥ २१ ॥ चशब्द एवार्थः । जीवः, **स्वात्मना**=स्वतन्त्रपरमात्मनैव तत्प्रेरणयैवोत्क्रान्त्यादिमान् । न स्वतः । कुतः । **उत्तरयोः** सकाशात् 'स एतेनैव स्वात्मना' 'एष ह्येनं जीवम्' इत्युत्तरवाक्यद्वयबलादित्यर्थः । सू॥ **नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्** ॥ २२ ॥ ननु न जीवोऽणुः । कुतः । **अतच्छ्रुतेः**—'व्याप्ता ह्यात्मान' इत्यणुत्वविरुद्धव्याप्तत्वश्रुतेः श्रवणादिति चेन्न । कुतः । **इतराधिकारात्**=परमात्मप्रकरणात् । तथाच व्याप्तत्वश्रुतेः परमात्मविषयत्वान्नाणुत्वबाधकत्वमित्यर्थः ॥

सू॥ **स्वशब्दोन्मानाभ्यां च** ॥ २३ ॥ चः समुच्चये । न केवलं प्रकरणबलाद्व्याप्तत्वश्रुतिर्विष्णुपरा । किं तर्हि 'एष ह्यात्माध्युद्दतो मानशक्के' रिति वाक्यस्थस्वशब्दगृहीतब्रह्मवाचकात्मशब्दादुन्मानशब्दितापरिमितत्वालिंगाच्च व्याप्तत्वश्रुतिर्विष्णुपरैव न जीवपरेत्यर्थः । अन्यानि 'अविरोध' इत्यादीनि त्रीणि सूत्राणि शांकरमतादविशिष्टार्थानीति न तानि व्याख्यातानि ॥ **अविरोध**सूत्रोक्तांशतोव्याप्तिर्देवानां **'गुणाद्वे'** ति सूत्रोक्ता गुणतो व्याप्तिर्मनुष्याणामिति व्यवस्था द्रष्टव्या ॥ **इत्युत्क्रान्त्यधिकरणम्** ॥ १२ ॥

सू॥ **व्यतिरेको गन्धवत्तथा च दर्शयति** ॥ २६ ॥ अत्र ज्ञातुर्जीवस्यैकरूपत्वानेकरूपत्वश्रुत्यविरोध उच्यते । चशब्दो 'ऽचिन्त्यये' ति स्मृतिसमुच्चायकः । 'स नित्यो निरवयव' इत्यादिगौपवनश्रुतौ जीवस्यैकरूपत्वमुच्यते 'स पञ्चधा सप्तधे'त्यादिपाराशर्यायणश्रुतौ बहुरूपत्वमभिधीयते । एवं विरोधे सत्येकरूपत्वश्रुतेस्सयुक्तिकत्वेन प्रबलत्वात्सयुक्तिकश्रुतिविरोधादनेकरूपत्वश्रुतिरप्रमाणमिति **पूर्वपक्षः** । जीवानामणुत्वेऽपि अंशव्यतिरेकेण बहुरूपत्वमुपपद्यते । अंशिनं विहायाप्यंशस्यान्यत्र गमनस्य गन्धादौ दृष्टत्वात् एकरूपत्वश्रुतेः स्वरूपैक्यपरतयोपपत्तेश्चेति **सिद्धान्तः** ॥ **सूत्रार्थस्तु, गन्धवत्**=गन्धस्येव । यथा पुष्पगंधस्य स्वांशैर्व्यतिरेको विभागस्तथाणोरपि जीवस्य स्वांशैरीशशक्त्या व्यतिरेको युज्यते । कुतः । 'अथैक एव सन्' इत्यादिश्रुतिः 'अचिन्त्ययेशशक्त्येह' इत्यादिस्मृतिश्च यतस्तथा दर्शयति अत एवेत्यर्थः ॥

**इति व्यतिरेकाधिकरणम्** ॥ १३ ॥

सू॥ **पृथगुपदेशात्** ॥ २८ ॥ **तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्** ॥ २९ ॥ अत्र जीवेशभेदाभेदश्रुत्यविरोध उच्यते । 'तत्त्वमस्यहं ब्रह्मास्मी' ति षड्विधतात्पर्यलिंगोपेतजीवब्रह्माभेदश्रुतिविरोधात्तद्भेदश्रुतिरप्रमाणमिति न तस्याः परमार्थतो ब्रह्मणि समन्वयो युक्त इति **पूर्वपक्षः** । 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्' इति सयुक्तिककौशिकश्रुत्या तद्भेदोपदेशात् जीवस्य 'तत्त्वमसी' त्यादिव्यपदेशस्य ब्रह्मसदृशज्ञानानन्दादिगुणसारत्वेनोपपद्यमानत्वाच्च भिन्न एव ब्रह्मणो जीव इति **सिद्धान्तः** । **सूत्रार्थस्तु, पृथक्**=जीवः परमात्मनो भिन्नः । कुतः । **उपदेशात्**='भिन्नोऽचिन्त्य' इतिश्रुतेरित्यर्थः ॥ **प्राज्ञवत्**-ब्रह्मणीव । यथा प्राज्ञे ब्रह्मणि 'सर्वं खल्विदं ब्रह्मे'ति जगदभेदोक्तिः, तथा जीवे **तद्व्यपदेशः**='तत्त्वमसी' ति ब्रह्मैक्योक्तिर्युज्यते । कुतः । **तद्गुणसारत्वात्**=जीवस्य ब्रह्मगुणसदृशचिदानन्दादिगुणस्वरूपत्वान्निमित्तादित्यर्थः ॥

**इति पृथगधिकरणम्** ॥ १४ ॥

सू॥ **यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** ॥ ३० ॥ पूर्वत्र जीवस्याप्युत्पत्तिरुक्ता । अतस्तस्यानादित्वादिप्रतिपादिका श्रुतिरप्रमाणम् । उत्पत्तिश्रुतेरुपाधिविषयत्वेऽपि उपाधेरुत्पत्तिमत्त्वे तत्र ब्रह्मप्रतिबिंबरूपस्य जीवस्याप्यभूत्वाभवनरूपोत्पत्त्यवश्यंभावेनानादित्वाद्ययोगादिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** यावत्परमात्मा तिष्ठत्यनाद्यनन्तत्वेन तावत्कालभावित्वेन जीवोऽपि नित्यः । सर्वगतस्य परमात्मनो बिंबस्य सदा सन्निधानसत्त्वात् । न चोपाध्युत्पत्त्या तदनादित्वानुपपत्तिः । बाह्योपाधेरुत्पत्तिमत्त्वेऽपि स्वरूपोपाधेस्तदभावात् । इति । **सूत्रार्थस्तु,** चस्समुच्चये । दर्शनाच्चेत्यन्वेति । **यावदात्मभावित्वात्**=जीवस्य यावत्परमात्मसत्त्वरूपनित्यत्वादिति यावत् । **न दोषः**—'सोऽनादिने' ति पुण्यपापसंबन्धबोधकश्रुत्यप्रामाण्यदोषो नास्ति । कुतः । **तद्दर्शनाच्च**—'नित्यः परो नित्यो जीव' इति श्रुतेः 'आत्मा नित्यः सुखदुःखे त्वनित्ये' इति स्मृतेश्चेति ॥

**इति यावदधिकरणम्** ॥ १५ ॥

सू॥ **पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्** ॥ ३१ ॥ अत्र जीवस्य सुखादिरूपत्वतदभावश्रुत्योरविरोध उच्यते । तुशब्द एवार्थकः । अत्र 'विज्ञानात्मा सह देवैश्च सर्वै' रिति जीवस्य ज्ञानानन्दादिरूपत्वं वदन्ती श्रुतिरप्रमाणम् । जीवस्य सर्वदा प्रकाशमानत्वेन तदभिन्नानां ज्ञानानन्दादीनां सदोपलब्धिप्रसंगात् प्रकाशमानजीवस्वरूपाभिन्नेषु तेष्वावरणकल्पनायोगात् 'दुःखाद्विमुक्त आनन्दी भवति सोऽज्ञानाद्विमुक्तो ज्ञानी भवती'ति मुक्तिसमयागन्तुकसुखादिश्रवणाच्च । ततश्चैवं 'सम्यग्ज्ञानानन्दादिरूपत्वं देवानामेव । असुरास्तु विपरीतज्ञानदुःखात्मकाः । मनुष्याः पुनर्मिश्रज्ञानसुखदुःखोभयात्मकाः' इत्यपि श्रुतिरप्रमाणम् । असुरमनुष्याणामपि सुखदुःखकादाचित्कत्वानुभवात् । अन्यथा असुराणां सर्वदा दुःखोपलब्धेः मनुष्याणां सर्वदा सुखदुःखोपलब्धिसाम्यस्य च प्रसंगादिति **पूर्वपक्षः** । यथाश्रुति देवासुरमनुष्याणां सुखदुःखोभयात्मकत्वेऽपि सत एव पुंस्त्वादेर्बाल्य इवेदानीमावृतत्वेन मुक्त्यादिसमये यौवन इवाभिव्यक्त्या च तथातथेदानीमननुभवो मुक्त्यादिसमयागन्तुकसुखादिश्रवणं चोपपद्यत इति **सिद्धान्तः** **सूत्रार्थस्तु, पुंस्त्वादिवत्**= पुंस्त्वादेरिव । पुरुषयोषिदादीनामपत्यो-

## अथ कर्त्रधिकरणम्. ॥ १० ॥

## ॥ सू ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

पूर्वत्र ज्ञातृत्वमणुत्वं च निरूपितमात्मनः । कर्तृत्वमस्ति न वेति संदेहः। कूटस्थस्यात्मनः कर्तृत्वं न संभवति । बुद्धेर्वा कर्तृत्वमुचितं, प्रकृतेर्वा । तदध्यासात् स्वस्मिन्नारोप्य कर्तेव प्रतिभाति । तस्मादात्मनः कर्तृत्वमनुपपन्नमिति पूर्वः पक्षः ॥

सिद्धान्तस्तु–आत्मा कर्तैव, शास्त्रार्थवत्त्वात् । अन्यथा कुर्यान्न कुर्यादिति शास्त्रस्य वैयर्थ्यं स्यात् ॥

---

### अथ कर्त्रधिकरणम् ॥ १० ॥

सू ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ आगंतुकज्ञानसर्वगतात्मपक्षे सर्वात्मसन्निधावुत्पद्यमानानामदृष्टादीनां सर्वसाधारण्यादुपलब्ध्यनियम उक्तः पूर्वाधिकरणे । तथैव प्रकृतेः कर्तृत्वे तस्यास्सर्वसाधारणत्वात् कर्तृत्वस्याप्यनियमः स्यादित्युच्यत इति दृष्टांतसंगतिप्रदर्शनाय वृत्तमनुकीर्तयति–पूर्वमिति । श्रुतिविप्रतिपत्त्या संशयं दर्शयति–कर्तृत्वमिति । कूटस्थस्येति । आत्मनः कौटस्थ्य 'मसंगो ह्ययं पुरुष' इति श्रुत्या सामान्यतः प्रतिपन्नम् । विशिष्य च 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते' । इति मन्त्रेण हननक्रियायामकर्तृत्वं प्रतिपन्नम् । तदपि न्यायसाम्यात् क्रियामात्र एवाकर्तृत्वपरं पर्यवस्यति । तत्र हन्तुमित्यौणादिकस्तुमुन्प्रत्ययः । हन्तारमात्मानं मन्यत इत्यर्थः । 'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते' । इति गीतावचनात् । नन्वात्मनः कौटस्थ्ये कथमहं कर्तेति प्रतिभासः इत्याशंक्य सांख्यमर्यादया प्रकृतिकार्यबुद्धिधर्मस्य प्रकृतिधर्मस्य वा कर्तृत्वस्याध्यासरूपतया तदुपपादयति–बुद्धेर्वेति । शास्त्रमपि भोक्तुरात्मनस्तथाभूतमेव कर्तृत्वमपेक्ष्य प्रवर्तते । उपादानविहारोपदेशादिकमपि तदवलंबनमिति भावः । अन्यथेति । बुद्धेः प्रकृतेर्वा कर्तृत्वे कुर्यान्न कुर्यादिति नियुज्ञानयोर्विधिनिषेधशास्त्रयोर्वैयर्थ्यं स्यात् । कर्ता हि नियुज्यते भोक्तैव च कर्ता भवति । 'शास्त्रफलं प्रयोक्तरी'ति न्यायात् । न चाचेतनाया बुद्धेः प्रकृतेर्वा भोक्तृत्वमस्ति । अपि च । शास्त्रेण कर्ता बोधजननद्वारा नियुज्यते । न चाचेतनयोर्बोधनीयत्वमस्ति । अतो भोक्तृत्वात् बोधनी-

---

व्यक्तिशक्तिस्वरूपत्वेऽपि यथा कालविशेषे तदभिव्यक्तिस्तथा **सतः**=जीवस्वरूपत्वेन मुक्तेः पूर्वमपि विद्यमानस्यैव । **अस्य**=ज्ञानानन्दादेः । **अभिव्यक्तियोगात्**=मुक्तावभिव्यक्त्या निमित्तभूतया योगात् 'आनन्दी भवती'ति श्रुत्युपपत्तेर्न जीवस्यानन्दादिरूपत्वे तच्छ्रुतिविरोध इति जीव आनन्दादिरूप एवेत्यर्थः ॥

सू ॥ **नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वान्यथा** ॥ ३२ ॥ वाशब्दो व्यवस्थितविकल्पार्थः। उपलब्धिरनुभवः । **अन्यथा**=जीवस्यानन्दादिरूपत्वमङ्गीकृत्यावरणानङ्गीकारे । **नित्योपलब्ध्यनुपलब्धिप्रसंगः**–यथायोग्यमन्वयः । मुक्तियोग्यानां नित्यमानन्दानुभवः स्यात् । तमोयोग्यानां न कदाप्यानन्दानुभवः स्यात् किं तु स्वरूपदुःखानुभव एव स्यात् । एवं मध्यममनुष्याणाम**न्यतरनियमः**– अन्यतरयोस्सुखदुःखानुभवयोर्नियमः साम्यमेव स्यात् । प्रतिबन्धकीभूतावरणानभ्युपगमादित्यर्थः । तस्माज्जीवस्यावरणमवश्यमङ्गीकार्यमिति भावः ॥

**इत्यानन्दतीर्थमते पुंस्त्वाधिकरणम् ॥ १६ ॥**

॥ सू ॥ उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥

'एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इत्युपादानविहारोपदेशाभ्यां चायं कर्तैव ॥

यदुक्तं बुद्धिप्रकृत्योरेव कर्तृत्वमिति तत्र बुद्धेः कर्तृत्वपक्षं दूषयति–

॥ सू ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥

'विज्ञानं यज्ञं तनुते' इत्यादिना यज्ञादौ कर्तृत्वव्यपदेशाच्चात्मैव कर्ता । विज्ञानशब्देन बुद्धेः व्यपदेशः, नात्मन इति चेत् न, तथा सति 'विज्ञानेन' इति निर्देशविपर्ययः स्यात् । अन्यत्र हि बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति । अतो बुद्धेः करणत्वात् कर्तृत्वं नास्तीति ॥

प्रकृतेः कर्तृत्वपक्षं दूषयति–

॥ सू ॥ उपलब्धिवदनियमः ॥ ३६ ॥

प्रकृतेः कर्तृत्वे तस्याः सर्वसाधारणत्वेन पूर्वोक्तोपलब्ध्यनियमवत् फलानियमः स्यात् ॥

---

यत्वाच्चात्मैव शास्त्रैर्नियुज्यत इति स एव कर्तेति युक्तम् । ननु कौटस्थ्यश्रुत्यनुरोधादकर्तासावन्यगतं कर्तृत्वमध्यस्यतीत्याध्यासिककर्तृत्वापेक्षा विधिनिषेधशास्त्रप्रवृत्तिर्वर्णनीयेति चेन्न । कूटस्थे अहं कर्तेत्यारोपरूपस्याध्यासस्यापि निष्पत्त्यसंभवात् । तस्मादध्यासोऽप्यात्मप्रभास्थानीयधर्मज्ञानपरिणामरूपतया तद्धर्मतां नेतव्य इति तथैव कृतिरपि तद्धर्मतां नीयतां किमर्थं बाधानुपलंभेऽप्यहं कर्तेति प्रतिभासस्य भ्रांतिरूपत्वं शास्त्रस्य भ्रांतिकृतकर्तृत्वावलम्बनत्वं च कल्प्यते । असंगत्वश्रुतिरात्मनः स्वयमेव ज्ञानकृत्यादिपरिणामित्वाभावविषया भविष्यति । 'हन्ता चेन्मन्यते हन्तु' मिति मन्त्रस्तु 'न जायते म्रियते वा विपश्चि' दिति पूर्वमन्त्रे 'न हन्यते हन्यमाने पि देहे' इति शरीरातिरिक्तस्यात्मनो हननायोग्यत्वेन प्रकृतत्वात् भ्रमरूपस्तद्धन्तृत्वाभिमान इत्येतद्विषयतयोपपद्यत इति भावः । सू ॥ उपादानाद्विहारोपदेशाच ॥ ३४ ॥ 'एवमेवैष' इत्यस्य दृष्टान्तः 'स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तत' इति पूर्ववाक्यनिर्दिष्टः । अत्र गृहीत्वेत्युक्तमिन्द्रियाणां ग्रहणमुपादानम् । ' यथाकामं परिवर्तत' इत्युक्तः स्वाप्नसञ्चारो विहारः । दूषयतीति । आत्मनः कर्तृत्वे किञ्चित्प्रमाणमुपन्यस्य तस्य बुद्धिविषयत्वशङ्कोद्भावनेन तस्याः कर्तृत्वं दूषयतीत्यर्थः । सू ॥ व्यपदेशाच क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥ अन्यत्र हीति । यत्र बुद्धिकार्यमुच्यते तत्र बुद्धेः करणतयैव निर्देशो दृश्यत इत्यर्थः । तत्स्वप्नदशायामेतेषां प्राणानां चक्षुरादीनां विज्ञानं ग्रहणशक्तिं विज्ञानेन बुद्ध्या गृहीत्वेति श्रुत्यर्थः । सू ॥ उपलब्धिवदनियमः ॥ ३६ ॥ अदृष्टमनस्संयोगादीनां सर्वसाधरणत्वात् तत्कृतोपलब्ध्यनियमप्रसङ्गः पूर्वाधिकरणापादितः इह सर्वसाधारणायाः प्रकृतेः कर्तृतायामापाद्यमाने फलानियमे दृष्टान्तः । सू ॥

**॥ सू ॥ शक्तिविपर्ययात् ॥ ३७ ॥**

**प्रकृतेः कर्तृत्वे कर्तुरेव भोक्तृत्वमिति सैव भोक्त्री स्यात् । ततश्चात्मनो भोक्तृत्वशक्तेर्विपर्ययो हानिः स्यात् ॥**

**॥ सू ॥ समाध्यभावाच्च ॥ ३८ ॥**

**किंच । प्रकृतेरेव कर्तृत्वे प्रकृतेरन्योऽस्मीति समाध्यभावप्रसङ्गाच्च कर्ताऽऽत्मा ॥**

**॥ सू ॥ यथा च तक्षोभयथा ॥ ३९ ॥**

**आत्मनः कर्तृत्वे इच्छायां करोति अन्यदा न करोत्यात्मेति व्यवस्था, यथा तक्षा स्वकार्ये तथेति । बुद्धेरेवेच्छासंभवान्नाव्यवस्थेति चेत्—न । चेतनधर्मत्वादिच्छायाः । तस्मादात्मनः कर्तृत्वं, न बुद्धेर्नापि प्रकृतेरिति निर्णयः ॥**

**इति कर्त्रधिकरणम् ॥ १० ॥**

---

**शक्तिविपर्ययात् ॥ ३७ ॥ ततश्चेति । बुद्धेरेव भोक्तृत्वे तदतिरिक्तात्मसिद्धिश्च न स्यादिति भावः । सू ॥ समाध्यभावाच्च ॥ ३८ ॥ प्रकृतेः कर्तृत्वे समाधावपि सैव कर्त्री वाच्या । सा च स्वात्मानं प्रकृतेरन्यत्वेन ध्यातुं न शक्नोतीति समाधिरेव लुप्येतेत्यर्थः ॥ आत्मनः कर्तृत्व इव बुद्धेः प्रकृतेर्वा कर्तृत्वे कर्तृत्वस्य कालनियमो न स्यादित्यापादनार्थं सूत्रम्—सू ॥ यथा च तक्षोभयथा ॥ ३९ ॥ स्वकार्ये इति विषयसप्तमी । इच्छायां करोति अन्यदा न करोतीति पूर्ववाक्यादनुषंगः । तथा च यथा वास्यादिकरणसंपन्नोऽपि तक्षणेच्छायां तत्करोति अन्यदा न करोतीति व्यवस्था । एवं वागादिकरणसंपन्नोऽप्यात्मा भोगेच्छायां करोति अन्यदा न करोतीति व्यवस्था युज्यते । बुद्धिप्रकृत्योस्तदभावात्सा न सिद्ध्येत् । बुद्धेः प्रकृतेर्वा भोगतदिच्छयोरंगीकारे च तदतिरिक्तात्मा न सिद्ध्येदिति भावः । इति कर्त्रधिकरणम् ॥ १० ॥**

---

**नयमणिमालायाम् अथ कर्त्रधिकरणम् ॥ १० ॥**

**सू ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥३५॥ उपलब्धिवदनियमः ॥३६॥ शक्तिविपर्ययात् ॥३७॥ समाध्यभावाच्च ॥३८॥ यथा च तक्षोभयथा ॥ ३९ ॥**

नायं हन्तीत्यादेः श्रवणादेतस्य कर्तृता नास्ति । बुद्धेरेव तु सा स्यात् विज्ञानं यज्ञमित्यादेः ॥ १४६ ॥
शास्त्रार्थवत्त्वमुख्यैर्हेतुभिरेतस्य कर्तृतास्त्येव । अयमेव च विज्ञानं श्रवणं तु तदस्य हन्त्ययोग्यत्वात् ॥ १४७ ॥

**इति कर्त्रधिकरणम् ॥ १० ॥**

**सूत्रार्थचन्द्रिकायाम् अथ कर्त्रधिकरणम् ॥ १० ॥**

**सू ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥ उपलब्धिवदनियमः ॥ ३६ ॥ शक्तिविपर्ययात् ॥ ३७ ॥ समाध्यभावाच्च ॥ ३८ ॥ यथा च तक्षोभयथा ॥ ३९ ॥**

**भगवत्पादमते,** पूर्वं जीवस्याणुत्वं पराणुद्य स्वयंज्योतिष्ट्वादिवत्सर्वगतत्वं प्रतिष्ठापितम् । अधुना बुद्धेः कर्तृत्वनिषेधपूर्वकं तस्य कर्तृत्वं साधयति—सू ॥ **कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥** अत्र किं बुद्धिः कर्त्री उत जीव इति **संदेहः** । परिणामित्वाद्बुद्धिरिति **पूर्वपक्षः । सिद्धान्तस्तु,** आत्मैव कर्ता न बुद्धिः । कर्तुरपेक्षितोपायबोधकविधिशास्त्रस्य अर्थवत्त्वात् । यदि बुद्धिः कर्त्री फलभोक्ता चात्मेत्युच्येत तर्हि तादृशविधिशास्त्रमनर्थकं स्यात् । अतो न केवलबुद्धेः कर्तृत्वमपि त्वात्मन इति ॥

किंच ॥ **सू ॥ विहारोपदेशात् ॥ ३४ ॥** 'स्वे शरीरे यथाकामं परिवर्तते' इति जीवप्रकरणे स्वप्नावस्थायां **विहारस्य**=संचरणस्योपदेशात् । अकर्तुस्संचरणायोगादात्मनः कर्तृत्वमित्यर्थः ॥

किंच ॥ सू ॥ **उपादानात्** ॥ ३५ ॥ 'प्राणानां विज्ञानेन विज्ञानमादाय' इत्यात्मनो ग्रहणशक्त्युपादानश्रवणात् अकर्तुरुपादानायोगादात्मनः कर्तृत्वमित्यर्थः ॥

अपिच ॥ सू ॥ **व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः** ॥ ३६ ॥ **क्रियायाम्**='विज्ञानं यज्ञं तनुते' इत्यादौ लौकिकवैदिकक्रियायाम् । **व्यपदेशाच्च**=विज्ञानशब्दवाच्यस्यात्मनः कर्तृत्वव्यपदेशात् । **न चेत्**=यदि विज्ञान-शब्दो बुद्धिपरः जीवपरो नचेत् तर्हि **निर्देशविपर्ययः**=बुद्धेः करणत्वेन विज्ञानमिति कर्तृत्वनिर्देशस्य विज्ञानेनेति करणत्व-विपर्ययः स्यादित्यर्थः ॥

ननु स्वतंत्रस्यात्मनः कर्तृत्वे अनिष्टं न कुर्यादिष्टमेव कुर्यादित्यत आह–सू ॥ **उपलब्धिवदनियमः** ॥ ३७ ॥ यद्व-दुपलब्धौ स्वतन्त्रोऽप्यात्मा इष्टमनिष्टं चोपलभते तद्वदिष्टमनिष्टं च साधयतीत्यनियम इत्यर्थः ॥

इतश्चात्मन एव कर्तृत्वं न बुद्धेरित्याह–सू ॥ **शक्तिविपर्ययात्** ॥ ३८ ॥ बुद्धेः कर्तृत्वे करणशक्तिर्हीयेतेति भावः ॥

ज्ञानसाधनविध्यन्यथानुपपत्त्यापि आत्मनः कर्तृत्वं स्वीकार्यमित्याह–सू ॥ **समाध्यभावाच्च** ॥ ३९ ॥ आत्मनोऽक-र्तृत्वे 'आत्मा वा अरे द्रष्टव्य' इत्यादौ विहितस्य ब्रह्मसाक्षात्कारसाधनस्य समाधेरभावप्रसंगादात्मनः कर्तृत्वसिद्धिः ॥ अस्मिन्मते आनन्दतीर्थमते च 'विहारोपदेशात्' 'उपादानात्' इति विपर्ययेण चकारमन्तरा पृथग्योगविभागः ॥

## इति भगवत्पादमते कर्त्रधिकरणम् ॥ १४ ॥

## अथ तक्षाधिकरणम् ॥ १५ ॥

तच्च कर्तृत्वमध्यस्तमात्मनीत्याह–सू ॥ **यथा च तक्षोभयथा** ॥ ४० ॥ अत्र 'असंगो ह्ययं पुरुषः' इत्यसंगत्वश्रुतेः कर्तुरिष्टसाधनबोधकविधिवाक्येन विरोधोऽस्ति नवेति **संदेहः** । पूर्वोक्तशास्त्रार्थवत्त्वादिहेतुभिः कर्तृत्वस्य स्वाभाविकतया तत्प्रतिपादकविधिशास्त्रेण विरोधोऽस्तीति **पूर्वपक्षः । सिद्धान्तस्तु,** न स्वाभाविकमात्मनः कर्तृत्वम् अपि त्वौपाधिकम् । यथा लोके उभयथा तक्षा वास्यादीनि करणान्यपेक्ष्य कर्ता सन् दुःखी भवति अनपेक्ष्य तु स्वरूपेणाकर्ता सुखी भवति तथात्मापि बुद्ध्यादिकरणान्यपेक्ष्य कर्ता संसरति अनपेक्ष्य तु स्वभावतोऽकर्ता परमानन्दघन एव भवति । विधिशास्त्रं तु कर्तृत्वं विनानुपपन्नं तत्साधयति न तु तस्य स्वाभाविकत्वमपीति न तेनासंगत्वश्रुतेर्विरोध इति सिद्धम् ॥

## इति भगवत्पादमते तक्षाधिकरणम् ॥ १५ ॥

**श्रीकण्ठमते,** ज्ञातृत्ववदात्मनः कर्तृत्वमस्ति न वेति **संदेहः** । कूटस्थस्यात्मनः कर्तृत्वासंभवात् बुद्धेर्वा प्रकृतेर्वा समु-चितं तत्कर्तृत्वम् । आत्मा तदध्यासात्स्वस्मिन्नारोप्य कर्तेव प्रतिभातीत्यतस्तस्य कर्तृत्वमनुपपन्नमिति **पूर्वपक्षः । सिद्धा-न्तस्तु,** विधिनिषेधशास्त्रयोर्वैयर्थ्यप्रसङ्गात्, 'एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इत्युपादान-विहारोपदेशाभ्यां, 'विज्ञानं यज्ञं तनुते' इत्यादिना यज्ञादौ कर्तृत्वव्यपदेशात्, बुद्धिविवक्षायां 'विज्ञानेन' इति करणवि-भक्तिनिर्देशस्य विपर्ययप्रसंगाच्च प्रकृतेः कर्तृत्वे उपलब्ध्यनियमवत्फलानियमप्रसंगात्, भोक्तृत्वशक्तिविपर्ययप्रसक्तेः प्रकृते-रन्योऽस्मीति समाध्यभावप्रसङ्गाच्च, आत्मा कर्तैव । तस्मादात्मन एव कर्तृत्वं न बुद्धेर्नापि प्रकृतेरिति निर्णयः ॥ इति ॥ यद्यपि संदेहपूर्वपक्षादिकमविशिष्टमेव शांकरमतादिति वक्तुमुचितं तथापि केषांचित्सूत्राणामर्थवर्णनप्रकारः परं किंचिदिव भिद्यते । तच्च स्वयं सुबोधमिति नात्र प्रपञ्च्यते ॥ **रामानुजमते,** अत्रापि 'यथा च तक्षोभयथा' इत्यन्तं श्रीकण्ठमत-वदेकमधिकरणम् । प्रधानस्यैव कर्तृत्वादात्मनो न कर्तृत्वमिति **पूर्वपक्षः । सिद्धान्तसूत्रार्थवर्णना**दिकमन्यत्सर्वमवि-शिष्टमेव श्रीकण्ठमतादिति विरम्यते विवरणतः । अन्तिमसूत्रस्य यथा तक्षा इच्छायां करोति अन्यदा न करोतीति व्यवस्था एवमात्मनः कर्तृत्व एव सा व्यवस्था युज्येत । बुद्ध्यादीनामचेतनत्वाच्चेतनधर्मत्वाच्चेच्छाया इत्यर्थः ॥ इति ॥

**आनन्दतीर्थमते, 'परात्तु तच्छ्रुतेः'** इत्याद्युत्तराधिकरणसूत्रयोरप्यत्रैवाधिकरणेऽन्तर्भावः । सूत्रयोगविभागादिकं शांकरमतवदेव । संदेहपूर्वपक्षादिकमप्यविशिष्टं पूर्वस्मात्प्रायशः । अत्राधिकरणे जीवकर्तृत्वाकर्तृत्वविषयश्रुतिविरोधः परिह्रियते । सूत्रार्थवर्णने परमस्ति किंचिदिव वैलक्षण्यमिति तन्मात्रं निरूप्यते–सू ॥ **कर्ता शास्त्रार्थवत्त्वात्** ॥ ३३ ॥ जीवोऽपि **कर्ता** । कुतः । तथासत्येव **शास्त्रार्थवत्त्वात्**=विधिनिषेधरूपशास्त्रस्य प्रयोजनवत्त्वात् अन्यथा वैयर्थ्यप्रसंगादित्यर्थः ॥

सू ॥ **विहारोपदेशात्** ॥ ३४ ॥ मुक्तावपि 'जक्षन्क्रीड' न्निति विहारकर्तृत्वोक्तेः जीवः परमार्थत एव कर्ता न काल्पनिककर्तेत्यर्थः ॥

सू ॥ **उपादानात्** ॥ ३५ ॥ जीवस्य मोक्षार्थे साधनाद्यनुष्ठानदर्शनात्ततः फलदर्शनाच्च न जीवः संसारेऽपि काल्प-निककर्तेत्यर्थः ॥

सू ॥ **व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः** ॥ ३६ ॥ **क्रियायाम्**='आत्मानमेव लोकमुपासीते' त्युक्तो-पासनक्रियायाम् । **व्यपदेशाच्च**=जीवस्य कर्तृत्वोक्तेश्च । **न चेत्**=जीवः कर्ता न चेत् । **निर्देशविपर्ययः**=**निर्दे-शस्य**=जीवस्य कर्तृत्वेनेश्वरस्य कर्मत्वेन वचनस्य । **विपर्ययः**='आत्मैवोपासीते'त्येवंरूपवैपरीत्यं स्यादित्यर्थः ॥

## अथ परायत्ताधिकरणम् ॥ ११ ॥

### ॥ सू ॥ परात्तु तच्छ्रुतेः ॥ ४० ॥

ज्ञातृत्वं कर्तृत्वं च प्रतिपादितमात्मनः । तत् कर्तृत्वं स्वायत्तमीश्वरायत्तं वेति संदेहः ॥

स्वायत्तमिति प्राप्तम् । अन्यथा कर्मस्विष्टानिष्टरूपेषु व्यापारयन् जीवमीश्वरो वैषम्यादिदोषभाजनं स्यात् । किंच–जीवस्य प्रवृत्तेरीश्वरायत्तत्वे तस्य कर्तृत्वाभावाद्विधिप्रतिषेधवैयर्थ्यं च स्यात् । तस्माज्जीवस्य स्वायत्ता प्रवृत्तिः ॥

इति प्राप्ते ब्रूमः–परमेश्वरायत्तमेव जीवस्य कर्तृत्वं, न स्वायत्तम् । 'य आत्मानमन्तरो यमयति' इति श्रुतेः ॥

यदुक्तमीश्वरस्य जीवं प्रवर्तयतो वैषम्यादिकम्, अस्य च विधिप्रतिषेधवैयर्थ्यमिति, तत्राह–

### ॥ सू ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥

जीवः स्वेच्छया प्रवृत्तिनिवृत्तिहेतुं करोति स्वकर्मपाकवशेन, जीवकृतप्रयत्नं

---

## अथ परायत्ताधिकरणम् ॥ ११ ॥

सू ॥ परात्तु तच्छ्रुतेः ॥ ४० ॥ कर्तृत्वे चिंतिते तद्विशेषश्चिन्त्यत इति संगतिमभिप्रेत्य वृत्तानुकीर्त्तनम् । कर्तृत्वोपपादकतया तु ज्ञातृत्वमनूदितम् । तत्कर्तृत्वमिति । विधिनिषेधशास्त्राणामन्तर्यामित्वश्रवणानाञ्च विप्रतिपत्तिः सन्देहबीजम् । वैयर्थ्यं च स्यादिति । विधिनिषेधशास्त्रावैयर्थ्याय हि प्रागात्मनः कर्तृत्वं समर्थितम् । तस्य कर्तृत्वस्य परायत्तत्वे तद्वैयर्थ्यं तदवस्थमेव स्यादिति तत्समर्थनमपि शिथिलीभवेदिति भावः । सू ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥४१॥ ननु यदि जीवः स्वेच्छया कञ्चिद्यत्नं करोति तर्हि तत्रैव तस्य स्वातन्त्र्यमभ्युपगतं स्यादित्याशंक्याह–स्वकर्मेति । स्वकर्मपाकवशेन या स्वेच्छा तयेति योजना । तथा च परमेश्वरकारितपूर्वकर्ममूलस्वेच्छाधीने यत्ने परमेश्वराधीनत्वं न हीयत इति भावः । पूर्वकर्मापि परमेश्वरकारिततत्पूर्वकर्ममूलस्वे-

---

सू ॥ उपलब्धिवदनियमः ॥ ३७ ॥ उपलब्धिवत्=उपलब्धाविव । यथा जीतस्य ज्ञाने स्वेच्छानुसारेण ज्ञानालाभः तथा क्रियायामपि अनियमो युक्त इत्यर्थः ॥

सू ॥ शक्तिविपर्ययात् ॥ ३८ ॥ ईशजीवयोः । शक्तिविपर्ययात् पूर्णापूर्णरूपशक्तिभेदमपेक्ष्य कर्तृत्वमपि स्वतन्त्रपरतन्त्रभेदभिन्नमित्यर्थः ॥

सू ॥ समाध्यभावाच्च ॥ ३९ ॥ समाधिरलंबुद्धिस्तदभावान्न जीवस्य स्वतन्त्रकर्तृत्वं किं तु परतन्त्रकर्तृत्वमेवेत्यर्थः ॥

सू ॥ यथा च तक्षोभयथा ॥ ४० ॥ दार्ष्टान्तिकसमुच्चये चशब्दः । यथा तक्षा=वर्धकिः । उभयथा=प्रासादादिकारयितृप्रेरितत्वेन तत्कर्तृत्वेन च व्यपदिश्यते तथा ईश्वरनियतोऽपि जीवः कर्तेति वक्तुं शक्यत इत्यर्थः ॥

सू ॥ परात्तु तच्छ्रुतेः ॥ ४१ ॥ जीवस्य कर्तृत्वशक्तिः परात्तु=परमात्मानमनुसृत्यैव तदधीनैवास्ति । कुतः । तच्छ्रुतेः='कर्तृत्वं कारणत्वं चे'ति जीवकर्तृत्वस्येशाधीनत्वश्रवणादित्यर्थः ॥

सू ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥ तुरवधारणे । यतः परमात्मा विहितप्रतिषिद्धावैयर्थ्यादिभ्यः=तादर्थ्ये चतुर्थी । विधिनिषेधशास्त्रावैयर्थ्याय स्वस्य वैषम्यनैर्घृण्यपरिहाराय च । कृतप्रयत्नापेक्षस्तु=जीवकर्मप्रयत्नयोग्यतामपेक्षमाण एव । जीवं प्रेरयति । अतो जीवशक्तेरीशाधीनत्वेऽपि तस्यापेक्षितकृतिमत्वमस्त्येवेत्यर्थः ॥ इति सूत्रार्थचन्द्रिकायां कर्त्रधिकरणम् ॥ १० ॥

प्रवृत्तिनिवृत्तिहेतुमवेक्ष्य तदनुमतिदानेन परः प्रवर्तयतीति विधिनिषेधावैयर्थ्यं निग्रहानुग्रहादिभ्योऽवगम्यते। यथा गुरुतरदार्वादिहरणं बालः प्रबलसहायः कुर्वन्नपि स्वप्रयत्ने विधिनिषेधयोग्यो भवति, एवं जीवः परमेश्वरसहायः प्रवर्तमानोऽपि स्वयं विधिनिषेधयोग्यो भवति। अतो जीवकृतप्रयत्नापेक्षत्वात् कर्मसु जीवस्य प्रवर्तक ईश्वरो न वैषम्यभाक्। तस्यापि स्वाधीनप्रवृत्तिसद्भावात् विधिनिषेधादिवैयर्थ्यं च न संभवतीति सिद्धम् ॥ इति परा यत्ताधिकरणम् ॥ ११ ॥

च्छाधीनम् इत्यनादिः कर्मप्रवाह इत्यतो नानवस्था दोषः । तदनुमतिदानेनेति । ननु, प्रयत्नकारणेच्छाजनककर्मकारयितृत्वेन प्रयत्ने मूलकारणभूत ईश्वरो नानुमन्तेति व्यपदेशार्हः। प्रवृत्तप्रवर्त्तकोऽनुमन्तेति प्रसिद्धेः। किन्तु प्रयोजयितेति व्यपदेशार्ह इति चेदुच्यते। यस्येच्छां विज्ञाय यस्तदिष्टं निर्वर्तयितुं प्रवर्तते स तस्य प्रयोजयितेति व्यपदिश्यते। यथा राजा भृत्यस्य। न चेश्वरः[1] पुरुषेच्छां विज्ञाय तदिष्टो याग इति तं निर्वर्तयितुं प्रवर्तते किं तु विधितः स्वेष्टसाधनमिति विज्ञाय पुरुषः प्रवर्तते। अतोऽत्र न प्रयोजयितृव्यपदेशः कृतः। स्वरसोदितया स्वेच्छया प्रवर्तमानं प्रति प्रवर्तकत्वात्त्वनुमन्तृव्यपदेशः कृतः। विधिनिषेधेति । एवं स्वरसोदितस्वेच्छाधीनामेव जीवप्रवृत्तिं प्रति परमेश्वरस्यापि कालादृष्टादिवत्कारणत्वाभ्युपगमे विधिनिषेधयोर्न वैयर्थ्यम् । स्वेच्छाधीनप्रवृत्तिमतो नियोगार्हत्वात् । नापि कोपप्रसादादिकृतलौकिकप्रवृत्तिनिवृत्त्यनुभवविरोध इति भावः। ननु, चेतनप्रवृत्तावचेतनस्य कालादृष्टादेः कारणत्वमस्तु नाम। तत्र चेतनांतरापेक्षायां राजाधीनभृत्यप्रवृत्तिन्यायेन पारतन्त्र्यं स्यादिति विधिनिषेधायोग्यत्वादिप्रसंगस्तदवस्थ इत्याशंक्याह—यथेति। एवं च वैषम्यदोषोऽपि न प्रसज्यत इति दर्शयन्नधिकरणार्थमुपसंहरति—अत इति। इति परायत्ताधिकरणम् ॥ ११ ॥

## नयमणिमालायाम्

### अथ परायत्ताधिकरणम् ॥ ११ ॥

सू॰ ॥ परात्तु तच्छ्रुतेः ॥ ४० ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥

सा तु स्वाधीना स्यादस्य न परमेश्वराधीना। अस्य हि परतन्त्रत्वे विधिवैयर्थ्यादिदोषः स्यात् ॥ १४८ ॥
पुरुषोद्योगमपेक्ष्य क्रियतेऽन्तर्यामिणानुमतिः। तत्र विधेर्वैयर्थ्यं नान्तर्यामित्वबाधोऽपि ॥ १४९ ॥

### इति परायत्ताधिकरणम् ॥ ११ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ परायत्ताधिकरणम् ॥ ११ ॥

सू॰ ॥ परात्तु तच्छ्रुतेः ॥ ४० ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥

भगवत्पादमते, जीवस्यौपाधिकं तत्कर्तृत्वमपीश्वरायत्तमित्याह—सू॰ ॥ परात्तु तच्छ्रुतेः ॥ ४१ ॥ अत्र 'एष ह्येव साधुकर्म कारयती' त्यादिश्रुतेर्विध्यादिशास्त्रेण विरोधोऽस्ति न वेति **संदेहः**। रागद्वेषादिवशात्स्वत एवात्मनः कर्तृत्वसंभवात् तत्प्रतिपादकविध्यादिशास्त्रेण विरोधोऽस्तीति **पूर्वपक्षः। सिद्धान्तस्तु,** सौत्रतुशब्दः पूर्वपक्षव्यावर्तकः । न स्वतो जीवस्य कर्तृत्वादिसिद्धिः। किं तु **तत्**=औपाधिकं कर्तृत्वम्। **परात्**=परस्मादीश्वरात्कर्माध्यक्षात् । अविद्यातिमिरान्धस्य जीवस्य कर्तृत्वादिसंसारसिद्धिः। ईश्वरानुग्रहे तु विज्ञानेन मोक्षसिद्धिर्भविष्यति । कुतः। **तच्छ्रुतेः**='एष ह्येव साधुकर्म कारयती' त्यादिकायाः श्रुतेः तस्येश्वरस्य हेतुकर्तृत्वमवसीयत इत्यर्थः ॥

[1] 'न चेश्वरेच्छां विज्ञाय तदिष्टो याग इति तं निर्वर्तयितुं पुरुषः प्रवर्तते किंतु विधितः स्वेष्टसाधनमिति विज्ञाय ।' इति क ग पाठः। ख पाठ एव समीचीन इति सोऽत्रादृत इति विज्ञेयम्।

## अथांशाधिकरणम् ॥ १२ ॥

## ॥ सू ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥

नित्यो ज्ञाताणुः कर्ता परमेश्वरसाहाय्यापेक्षप्रवृत्तिर्जीव इति पूर्वत्र निरूपितम् । स इह परमेश्वर एव ? किं वा तदंशभूतः ? ॥

इति संशये परमेश्वर इति पूर्वः पक्षः । परमेश्वर एव बहुविधोपाधिवशाज्जीवभावमुपगतो दृश्यते, यथैकमाकाशं घटाद्युपाधिवशान्नानाकारं दृश्यते परिच्छिन्नं च । तथा हि श्रुतिः–'अयमात्मा ब्रह्म' इति वदति । तस्मादीश्वर एवाज्ञानाज्जीवभावमुपगत इति ॥

सिद्धान्तस्तु–जीवात्मा परमेश्वरस्यांशो सूर्य्येकदेश एव । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'य आत्मनि तिष्ठन्' पृथगात्मानं प्रेरितारं च मत्वा' ॥ 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्' ॥ इत्यादिषु नानाव्यपदेशात् । यदुक्तं 'अयमात्मा ब्रह्म' इत्यादिना ब्रह्मण एव जीवत्वमिति, तत्राह–अन्यथा 'तत्त्वमसि' 'अयमात्मा ब्रह्म'

---

### अथांशाधिकरणम् ॥ १२ ॥

सू ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥

प्रतिपत्तिसौकर्याय जीवपेटिकायां वृत्तमर्थमनुवदन् सङ्गतिं सूचयति–नित्य इति । यत्साहाय्यापेक्षया जीवः प्रवर्तत इति निरूपितं स एव परमेश्वरः सत्योपाध्यवच्छेदेन मिथ्योपाध्यवच्छेदेन वा कल्पितभेदस्सन् जीव इति व्यवह्रियते उतान्तर्गणिकभेदे पारमार्थिके सत्येव विशेषणत्वेन विशिष्टैकदेशतया परमेश्वरांशो जीव इति अभेदश्रुतेर्भेदश्रुतेश्च विप्रतिपत्तितस्संशये सति पूर्वपक्षः । भेदाभेदश्रुत्योरन्यतरस्यावश्यममुख्यार्थत्वे कल्पनीये लाघवादभेदश्रुतिर्मुख्यार्थेति भेदश्रुतेर्घटाकाशादिभेदव्यपदेशवदमुख्यार्थत्वं कल्प्यत इत्येवं प्राप्ते सिद्धान्तः–जीवः परमेश्वरस्यांशः शरीरत्वेन विशिष्टैकदेश इत्यर्थः । नानाव्यपदेशात् 'य आत्मनि तिष्ठन्नि' त्यादिश्रुतिषु भेदव्यपदेशात् । अन्यथा च व्यपदेशात् 'तत्त्वम' स्यादिश्रुतिष्वभेदेनापि व्यपदेशात् । अपि चैके शाखिनः आथर्वणिकाः परमेश्वरस्यैव दाशकितवादिरूपत्वमधीयते 'ब्रह्म दाशा' इत्यादिना । एवं जीवपरयोश्शरीरशरीरिभावकृतविशि-

---

नन्वीश्वरस्य कारयितृत्वे वैषम्यनैर्घृण्ये स्यातामित्यत आह–**कृतप्रयत्नापेक्ष इत्यादि** । तुशब्द उक्तशंकानिरासकः । जीवेन कृतो यः प्रयत्नो धर्माधर्मलक्षणस्तदपेक्ष एवेश्वरोऽन्यस्मिन्नपि जन्मनि धर्मादिकं कारयति तदपेक्षश्च सुखादिफलं प्रयच्छतीति न वैषम्यनैर्घृण्यप्रसक्तिः । अनादित्वात्संसारस्य प्राक्तनधर्माद्यपेक्षा युक्तैव । ननु कस्मात्तदपेक्षत्वमत आह–**विहितप्रतिषिद्धावैयर्थ्यादिभ्यः**=ईश्वरस्य कर्मापेक्षत्वे 'ज्योतिष्टोमेन यजेत' 'ब्राह्मणो न हन्तव्यः' इति विधिनिषेधयोरवैयर्थ्यं भवति । अन्यथा विधिनिषेधशास्त्रमनर्थकमेव स्यात् । एवं चेश्वरकर्तृत्वप्रतिपादकविध्यादिशास्त्रेण 'एष ह्येव साधुकर्म कारयती' त्यादिशास्त्रस्य न विरोध इति सिद्धम् ॥

**श्रीकण्ठमते** तथा **रामानुजमते** च सूत्रार्थनिरूपणप्रकारवैषम्येऽपि संदेहपूर्वपक्षादिषु नास्ति वैषम्यं शांकरमतादिति विरम्यते पृथक्तत्प्रपञ्चनतः ॥ इति ॥

**आनन्दतीर्थमते,** अनयोः सूत्रयोः पूर्वाधिकरणशेषतया तत्रैव तद्विवरणं कृतमिति वेद्यम् ॥

**इति सूत्रार्थचन्द्रिकायां परायत्ताधिकरणम् ॥ ११ ॥**

इत्यादिकाद्व्यपदेशात् तयोर्जीवब्रह्मणोर्व्याप्यव्यापकभावेनानन्यत्वम् । अपि च तथैवानन्यत्वमधीयत एके–'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत' इत्यादिना ब्रह्मणोंऽशत्वेऽपि जीवस्य तद्व्याप्ततया तद्व्यपदेशो युक्तः, यथा वह्निना व्याप्तस्य काष्ठादेर्वह्निव्यपदेशः । तथापि हि तयोर्वह्निकाष्ठयोर्नाभेदः । तस्माज्जीवो ब्रह्मणोंऽशभूत एव तत्स्वरूपं प्रतिपद्यते । ब्रह्मण एवाज्ञानाज्जीवभावकल्पने बहुश्रुतिविरोधादिदोषप्रसक्तिर्दुर्वारा ॥

## ॥ सू ॥ मन्त्रवर्णात् ॥ ४३ ॥

'पादोस्य विश्वा भूतानि' इति मन्त्रवर्णाच्च ब्रह्मणोंऽश एव जीवः ।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्' ॥ इति श्रुतिः प्रकृतित्वं मायायास्तद्विशिष्टत्वं महेश्वरस्य तदवयवभूतत्वं सर्वस्य जगतः प्रकटयति । ततो मायिनः परमेश्वरस्यावयवलेशः पुरुषः ॥

## ॥ सू ॥ अपि च स्मर्यते ॥ ४४ ॥

'आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः । व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् ॥' इति स्मरणाच्च शिवस्य मूर्त्येकदेश आत्मा ॥

## ॥ सू ॥ प्रकाशादिवत्तु नैवं परः ॥ ४५ ॥

ब्रह्मणोंऽशत्वेऽपि जीवस्य जीवो यत्स्वरूपो यत्स्वभावश्च नैवं परमेश्वरः, किंतु सर्वज्ञत्वादियुक्त एव । कथम् ? प्रकाशादिवत् । प्रकाशविशिष्टानां मणिप्रभृतीनां प्रकाशो विशिष्टैकदेशो यथांशः, तद्वज्जीवशरीरतया जीवविशिष्टस्य ब्रह्मणोंऽशो जीवः । आदिशब्दाद्विशेषणतैकस्वभावा जातिगुणादयो गृह्यन्ते ।

---

द्रूपत्वाभ्युपगमेन भेदाभेदश्रुत्योरुभयोरपि मुख्यत्वसमर्थनसंभवे क्वचिदपि नामुख्यत्वमाश्रयणीयम् । अभेदश्रुतिमुख्यत्वाश्रयणे च न केवलं भेदश्रुतिविरोधमात्रं किं तु नाहं सर्वज्ञ इत्यादिप्रमाणान्तरविरोधोऽपि दुर्वार इति । भाष्ये 'व्याप्यव्यापकभावेने' त्यस्यायमर्थः । कायव्यूहवतः काया इव परमेश्वरस्य जीवाश्शरीरत्वेन व्याप्याः व्यापनीयाः, परमेश्वरस्तान्सर्वान्व्याप्नुवन्व्यापकः इत्येवं रूपेण व्याप्यव्यापकभावेनेति । यथा वह्निना व्याप्तस्येति भाष्यस्यायमर्थः । शरीरशरीरिभावाभावेऽपि वह्निव्याप्तं काष्ठं निर्दिश्यायं वह्निरिति निरूढव्यवहारो दृश्यते । इह शरीरशरीरिभावस्यापि सत्त्वादयं ब्राह्मण इत्यादिव्यपदेशव 'दयमात्मा ब्रह्मे' ति व्यवहारस्सुतरामुपपद्यत इति । सू ॥ मन्त्रवर्णात् ॥ ४३ ॥ उदाहृतपुरुषसूक्तमन्त्रस्य मन्त्रांतरैकार्थ्येन परमेश्वरपरत्वं स्पष्टयितुं मन्त्रांतरमुदाहरति–मायां त्विति । सू ॥ अपि च स्मर्यते ॥ ४४ ॥ इतरमूर्तयः वियदाद्यचेतनमूर्तयः तासामभिमानित्वेन जीवरूपा मूर्तिर्व्यापिकेत्यर्थः ॥ सू ॥ प्रकाशादिवत्तु नैवं परः ॥ ४५ ॥ यथा विशेषणं विशिष्टैकदेशतया तदंशस्तथा विशेष्यमपि । तथा चांशत्वाविशेषाज्जीवब्रह्मणोस्साम्यमेव भवेत् किञ्चिद्ज्ञत्वसर्वज्ञत्वनियम्यनियामकत्वादिवैषम्यं न स्यादिति शङ्कां दृष्टान्तमुखेन निराकर्तुमिदं सूत्रमित्यभिप्रेत्य व्याचष्टे–ब्रह्मण इति । स्वरूपभेदो जीवब्रह्मणोर्वैलक्षण्यं लौकिकानामन्यविशेषणतैकस्वभावानां प्रकाश-

विशेषणानां विशिष्टैकदेशतया तदंशत्वेऽपि स्वरूपभेदो न विरुद्धः, 'य आत्मनि तिष्ठन्' इत्यादिश्रुतेः ॥

॥ सू ॥ स्मरन्ति च ॥ ४६ ॥

'विग्रहं देवदेवस्य जगदेतच्चराचरम् । एतमर्थं न जानन्ति पशवः पाशगौरवात् ॥' इत्यादि । ततो ब्रह्मणोंऽश एव जीवः । तद्विशिष्टतया स्वरूपभेदश्च सिद्धः ॥

॥ सू ॥ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४७ ॥

सर्वेषां जीवानां ब्रह्मांशत्वेऽपि कथं कस्यचिद्वेदादिष्वनुज्ञा, कस्यचित् परिहार इति चेत्—ब्राह्मणदेहादिसंबन्धात् तदुपपत्तिः, यथाग्न्यादेः श्रोत्रियागारश्मशानादिसंबन्धात्तद्वत् ॥

॥ सू ॥ असंततेश्चाव्यतिरेकः ॥ ४८ ॥

असंततिरव्याप्तिः । प्रतिशरीरं भिन्नत्वात् तत्रतत्राणुत्वेनावच्छिन्नत्वादसंततेरव्याप्त्या च स्थूलोऽहं कृशोऽहं सुख्यहं दुःख्यहं ब्राह्मणोऽहं क्षत्रियोऽहमिति देहाभिमानिनां ज्ञानसुखाद्यव्यतिरेको भवति । किमुक्तं भवति ? देहाभिमानिनां व्याप्त्यभावस्य समानत्वात् परिच्छिन्नज्ञानसुखादिकं सांसारिकमेक-

---

जातिगुणानां विशेष्यमपि लौकिकमिति नियमदर्शनादलौकिकमीश्वरं प्रति लौकिकस्य विशेषणत्वं न युक्तमित्याशङ्कानिराकरणार्थमुत्तरसूत्रम्—सू. ॥ स्मरन्ति च ॥ ४६ ॥ येषां विशेषणतैकस्वभावत्वमपि लोकसिद्धं तेषामेव विशेष्यस्य लोकसिद्धत्वनियम इत्यभिप्रेत्य तथा नियमसंकोचापादिनीं स्मृतिमुदाहरति—विग्रहमिति । ननु, सर्वेषामात्मनामीश्वरविग्रहत्वाविशेषे कथं ब्राह्मणादीनां वेदाध्ययनादिष्वनुज्ञा शूद्रादीनां तत्परिहार इत्याशङ्कानिराकरणार्थं सूत्रम्—सू. ॥ अनुज्ञापरिहारौ देहसंबंधाज्ज्योतिरादिवत् ॥ ४७ ॥ यथाग्न्यादेरिति । अग्न्युदकादीनां येषां श्रोत्रियागारस्थितिदशायां कर्मार्हत्वं तेषामेव हि श्मशानादिदेशं प्राप्तानां कर्मानर्हत्वं दृष्टमेवमात्मनां ब्राह्मणादिदेहेषु स्थितिदशायामनुज्ञा, शूद्रादिदेहस्थितिदशायां परिहारश्चेत्युपपद्यत इत्यर्थः । सू. ॥ असन्ततेश्चाव्यतिरेकः ॥ ४८ ॥ नन्वीश्वरविग्रहत्वाविशेषेऽपि ब्राह्मणादीनां शूद्राद्यलभ्यवेदाध्ययनाद्यनुज्ञावत्तदलभ्यनिरतिशयज्ञानसुखादिप्राप्तिरपि किं न स्यात्तेषां तत्प्राप्त्यभावे मुक्तानां वा तत्प्राप्तिः कथं स्यादविशिष्टाः खल्वीश्वरविग्रहत्वेन बद्धा मुक्ताश्चेति शंकाद्वयस्य श्रुत्यर्थाभ्यां निराकरणार्थमिदं सूत्रम् । तत्र प्रथमशङ्कानिराकरणप्रकारं दर्शयन् सूत्रं व्याचष्टे । असन्ततिरिति । चकारसमुच्चेयं हेतुद्वयं दर्शयति—प्रतिशरीरमिति । अत्रायमाशयः । प्रतिप्राणिव्यवस्थितानां ज्ञानादिगुणानां सर्वेषामप्युपलब्ध्यनुपलब्धिसूत्रोक्तरीत्या ब्राह्मणादिगतज्ञानसुखादिजनकत्वापादनेन तेषां सर्वविधज्ञानसुखादिप्राप्तिराशंक्यते उत मुक्तानां यादृशी निरतिशयज्ञानसुखादिप्राप्तिः तादृशी तेषामाशंक्यते । आद्ये प्रतिप्राणिव्यवस्थितज्ञानसुखादिकारणसाधारण्यापादनं सर्वशरीरेष्वात्मैकत्वे जीवानां विभुत्वे तदीयचिच्छक्तिव्याप्तौ वांगीक्रियमाणायां शक्यं कर्तुम् । न चैतत्त्रयमंगीक्रियते । अतः प्रतिशरीरं भिन्नानां तत्र तत्रैव शरीरे व्यवस्थितानां तत्तच्छरीरानति-

---

१ 'कारकाणां' इति ख पाठः ।

प्रकारकमेवासंकीर्णं भवतीति । अनेन परब्रह्मज्ञानविशेषेण विगलितदेहाभिमानानां महाव्याहृया पराहंभावमुपगतानां मुक्तात्मनां निरतिशयत्वेन नित्यत्वेन च ज्ञानादीनां स्वाभाविकानां सांसारिकज्ञानादितो व्यतिरेक इति सिद्धम् ॥

अज्ञानोपाधिभ्यां ब्रह्मैव संबध्यत इति यदुक्तं, तत्र न व्यवस्थेत्याह–

॥ सू ॥ आभासा एव च ॥ ४९ ॥

सत्यमिथ्योपाधिभ्यां बद्धस्य ब्रह्मण एव जीवभाव इति पक्षद्वयेऽपि युक्तय आभासा एव ॥

तथा हि–

॥ सू ॥ अदृष्टानियमात् ॥ ५० ॥

सत्यमिथ्योपाधिकृतत्वे ह्यात्मनां ब्रह्मण एवाज्ञानमुपाधिश्चेति तत्कृतेनादृष्टेनापि न नियमः ॥

किं च–

॥ सू ॥ अभिसंध्यादिष्वपि चैवम् ॥ ५१ ॥

अदृष्टहेतुभूताभिसंध्यादिषु चैवमेव नियमाभावः ॥

---

लंघिचिच्छक्तिव्यासिकानां ब्राह्मणादीनां ज्ञानसुखादेः शूद्रादिगतज्ञानसुखाद्यव्यतिरेकस्तद्वैरूप्यमेव भवति। यथा शूद्रादीनां ज्ञानसुखादिकं यथाकारणलाभं परिमितं भवति तथैव ब्राह्मणादीनामपि भवतीति यावत् । अतः प्रथमकल्पो न संभवति । द्वितीयकल्पस्तु बद्धानां मलावृतचिच्छक्तिकत्वान्न संभवति । अत एव बद्धमुक्तसाम्यापादनरूपा द्वितीयशंकापि न प्रवर्तते । परमेश्वरसाक्षात्कारसंपन्नां चिच्छक्तिव्याप्तिमुपगतानां हि मुक्तानां ज्ञानसुखादिकमभिव्यक्तं परिमितात्सांसारिकज्ञानसुखैश्वर्यादितो निरतिशयत्वेन विलक्षणमेव भवतीति । एवं बद्धानां ज्ञानसुखादिकं यथाकारणलाभं व्यवस्थितमेकप्रकारं भवति । मुक्तानां तु तत्स्वाभाविकमावरणापायादभिव्यक्तं निरतिशयत्वेन तद्विलक्षणं भवतीति व्यवस्थोपपादिता । एवं व्यवस्था मिथ्योपाध्यवच्छिन्नब्रह्मजीववादे सत्योपाध्यवच्छिन्नब्रह्मजीववादे च पूर्वपक्षिते न संभवतीति प्रतिपादनार्थत्वेन उत्तरसूत्राण्यवतारयति–अज्ञानेति । सू ॥ आभासा एव च ॥ ४९ ॥ असत्यमज्ञानं सत्यं शरीरान्तःकरणादिकं वोपाधिर्भवतु स्वयं भिन्नभिन्नमप्येकस्यैव ब्रह्मण उपाधिर्भवेत् । न तावता तदुपहितं ब्रह्म भिद्यते । न खलु दारुखण्डे निपतन्कुठारः दारुखण्डमिव ब्रह्मणि समवयन्नुपाधिर्ब्रह्म भिनत्ति । तथा च भोगानाश्रयाणामुपाधीनां भेदेऽपि विचित्रभोगाश्रयस्यैकत्वेन भोगसांकर्यमपरिहार्यमिति । इत्येवं तदसांकर्योपपादकयुक्तय आभासा इति भावः । अदृष्टादेर्भोगव्यवस्था भविष्यतीत्याशंकानिराकरणार्थान्युत्तरसूत्राणीति दर्शयति–तथा हीति । सू ॥ अदृष्टानियमात् ॥ ५० ॥ अदृष्टमप्यज्ञानाद्युपाधिभिरुपहितस्यैकस्यैव ब्रह्मणो धर्मो भवन्न व्यवस्थापकमित्यर्थः । सू ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ ५१ ॥ अदृष्टहेतुसंकल्पानुष्ठानशरीरादिप्रतिनियमाद्व्यवस्था भविष्यतीति शंकानिराकरणायादृष्टे दर्शितस्यानियमापादकन्यायस्य संकल्पादिष्वतिदेशार्थमिदं सूत्रम् । नन्वात्मप्रदेशव्यवस्थया

## ॥ सू ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५२ ॥

उपाधिसंबन्धिब्रह्मप्रदेशभेदात् व्यवस्थेति चेत्—न, उपाधिषु गच्छत्सु सर्वप्रदेशानां तदन्तर्भावात् । तस्मात् सत्यमिथ्योपाधिपरिच्छिन्नब्रह्मजीवत्वपक्षद्वयेऽपि न व्यवस्था संभवति । ततो ब्रह्मणोंऽशभूतो जीवस्तद्विशेषणैकस्वभाव इति युक्तमेव ॥

इत्यंशाधिकरणम् ॥ १२ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
द्वितीयस्याध्यायस्य तृतीयः पादः ॥

---

भोगव्यवस्था भविष्यतीति शङ्कानिराकरणार्थमुत्तरसूत्रम्—सू ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५२ ॥ ब्रह्मणः प्रदेशाश्शरीरान्तर्भूता एव भोगाश्रया वाच्याः । तदन्तर्भूतप्रदेशास्तु न व्यवस्थिताः । प्रायः सर्वेषामपि प्रदेशानां संचरत्सु तेषु तेषु शरीरेष्वन्तर्भावात् । तथा च ब्रह्मप्रदेशव्यवस्थया भोगव्यवस्थोपपादनमपि विवक्षितम् । विवेकेन शरीरव्यवस्थयैव तदुपपादनं पर्यवस्यति । शरीरव्यवस्था च पूर्वसूत्रेण निराकृता । ब्रह्मोपाधिभूतानि सर्वाण्यपि शरीराणि ब्रह्मात्मकसर्वजीवसाधारण्यात् न कस्यचित्किंचिदिति व्यवस्थितानि भवेयुरिति । तस्मात्सर्वगतात्मपक्ष इवैकात्म्यपक्षेऽपि भोगव्यवस्था दुरुपपादेति भावः ॥

इति श्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापक-
श्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य
श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरंगराजाध्व-
रिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीकण्ठाचार्यवि-
रचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवा-
र्कमणिदीपिकाख्यायां द्वितीयस्या-
ध्यायस्य तृतीयः पादः ॥ ३ ॥

### नयमणिमालायाम् अथ अंशाधिकरणम् ॥ १२ ॥

सू ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥ मन्त्रवर्णाच्च ॥४३॥ अपिच स्मर्यते ॥ ४४ ॥ प्रकाशादिवत्तु नैवं परः ॥ ४५ ॥ स्मरन्ति च ॥ ४६ ॥ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४७ ॥ असंततेश्चाव्यतिरेकः ॥ ४८ ॥ आभासा एव च ॥ ४९ ॥ अदृष्टानियमात् ॥ ५० ॥ अभिसंध्यादिष्वपि चैवम् ॥ ५१ ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५२ ॥

जीवो ब्रह्माभिन्नस्तत्त्वमसीत्यादिवचनतात्पर्यात् । जलचंद्रवदेकत्राप्युपाधिभेदेन कल्पितो भेदः ॥ १५० ॥
आत्मनि तिष्ठन्नित्याद्याम्नानाद्भिन्न एव तस्यांशः । वह्निव्याप्तेंधनवत्तद्व्याप्तत्वादभेदगीरस्मिन् ॥ १५१ ॥

इत्यंशाधिकरणम् ॥ १२ ॥

इति श्रीमदप्पयदीक्षितकृतौ चतुर्मतसारसंग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे द्वितीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ अंशाधिकरणम् ॥ १२ ॥

**सू ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥ मंत्रवर्णाच्च ॥ ४३ ॥ अपिच स्मर्यते ॥ ४४ ॥ प्रकाशादिवन्नैवं परः॥ ४५ ॥ स्मरंति च ॥ ४६ ॥ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४७ ॥ असन्ततेश्चाव्यतिरेकः ॥ ४८ ॥ आभास एव च ॥ ४९ ॥ अदृष्टानियमात् ॥ ५० ॥ अभिसंध्यादिष्वपि चैवम् ॥ ५१ ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५२ ॥**

**भगवत्पादमते,** इत्थं नित्यत्वं स्वप्रकाशत्वं व्यापित्वमकर्तृत्वं चात्मनोऽभिधाय अत्र तस्य ब्रह्मैक्यं साधयति–**अंशो नानेत्यादिना ।** अत्र 'तत्त्वमसी' त्याद्यभेदश्रुतिजातस्य 'य आत्मनि तिष्ठ'न्नित्यादिभेदश्रुतिजातेन विरोधोऽस्ति न वेति **संदेहः।** जीवेश्वरयोः पूर्वोक्तोपकार्योपकारकभावस्य स्वामिभृत्यवद्भेदाधीनसंबन्धसापेक्षत्वात्तदभेदश्रुतिजातेन विरोधोऽस्तीति **पूर्वपक्षः । सिद्धान्तस्तु,** अविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयतस्तत्त्वमस्यादिश्रुतिजातस्य आविद्यकभेदानुवादिश्रुतिजातेन न विरोध इति । **सूत्रार्थस्तु,** जीवः ईश्वरस्यांश **इवांशः** न तु स्वाभाविकोंऽशः । तस्य 'निष्कल' मित्यादिना निरंशत्वश्रवणात् । अतः कल्पितांशो जीवः । कुतः । **नानाव्यपदेशात्**='य आत्मनि तिष्ठ'-न्नित्यादिना तयोर्नानात्वस्य च व्यपदेशात् । **अन्यथा चापि**=अनानात्वस्यापि व्यपदेशात् । तथा **हि–एके**=शाखिन आथर्वणिकाः 'ब्रह्म दाशा ब्रह्म दासा ब्रह्म कितवा' इति **दाशकितवादित्वमधीयते**=आमनन्तीत्यतोऽनानात्वस्य च व्यपदेशः । अतः भेदवादिश्रुतिजातस्य प्रत्यक्षसिद्धभेदानुवादेनाभेदपरत्वात्कल्पितभेदवानंशो जीव इत्यर्थः ॥ किं च ।

**सू ॥ मन्त्रवर्णाच्च ॥ ४३ ॥** 'पादोऽस्य विश्वा भूतानि' इति मंत्रवर्णात्परमेश्वरस्याविद्याकल्पितपादोंऽशो भूतशब्दवाच्यो जीव इति गम्यते ॥ किं च ॥ **सू ॥ अपि च स्मर्यते ॥ ४४ ॥** 'ममैवांशो जीवलोके जीवभूतस्सनातनः ।' इति भगवद्गीतासु चेश्वरस्याविद्याकल्पितोंऽशो जीव इति स्मर्यते ॥

ननु जीवस्येश्वरांशत्वे तद्दुःखेनेश्वरस्य दुःखित्वं स्यादित्यत आह–**सू ॥ प्रकाशादिवन्नैवं परः ॥ ४५ ॥** यथा जीवोऽविद्यावशाद्देहाद्यात्मभावमिव गतोऽहं दुःखीत्यभिमन्यते **नैवं परः**=ईश्वरो नैवं भवति । किंवत् । **प्रकाशादिवत्**=यथा सौरश्चांद्रो वा प्रकाशो नभो व्याप्य वर्तमानो वक्रकाष्ठाद्युपाधिकृतवक्रभावमिवापन्नोऽपि न वस्तुतो वक्रभावमापद्यते तद्वत् । जीवोऽपि न परमार्थतो दुःखित्वमभिमन्यत इत्यर्थः ॥

**सू ॥ स्मरन्ति च ॥ ४७ ॥** 'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवांभसा ॥' इत्यादिभिर्व्यासादय ईश्वरस्य सांसारिकदुःखासंस्पर्शित्वं स्मरन्तीत्यर्थः ॥

ननु, 'नान्योऽतोऽस्ति द्रष्टे' त्यादिना आत्मभेदमात्रनिषेधात् 'मित्रं सेव्यं' 'शत्रवः परिहर्तव्याः' इत्याद्यनुज्ञापरिहारौ कथं स्यातामित्यत आह–**सू ॥ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥** सर्वत्रात्मनोऽखण्डैकरसत्वेऽपि उक्तावनुज्ञापरिहारौ । **देहसंबन्धात्**=देहतादात्म्यसंबन्धात्संगच्छेते । कथम् । **ज्योतिरादिवत्**=यथा ज्योतिषोऽग्नेरेकत्वेऽपि श्मशानाग्निः परिहार्यो नेतरस्तद्वदात्मापीत्यर्थः ॥

नन्वेवमपि स्वाम्यैकत्वात्कर्मफलसंकरः स्यादित्याह–**सू॥ असंततेश्चाव्यतिकरः ॥ ४९ ॥ अव्यतिकरः**=कर्मफलसंबन्धस्यासंकरः । कुतः । **असंततेः**=उपाधिपरिच्छिन्नस्यात्मनः सर्वैः शरीरैरसंबन्धादित्यर्थः ॥

किं च ॥ **सू ॥ आभास एव च ॥ ५० ॥** आभास एवैष जीवः परस्यात्मनः सूर्यप्रतिबिंबवत् । ततश्च यथैकस्मिन्प्रतिबिंबे कम्पमाने प्रतिबिंबांतरं न कम्पते तथा एकस्मिञ्जीवे कर्मफलसंबन्धिनि न जीवान्तरस्य तत्संबन्ध इति भावः । स्वाभाविकात्मनानात्ववादे तु तत्संकरो दुर्वार इति दिक् ॥

ननु नानात्ववादे अदृष्टनियमात्कर्मफलनियम इति चेत् तत्राह–**सू ॥ अदृष्टानियमात् ॥ ५१ ॥** सांख्यमते प्रधानसमवेतस्यादृष्टस्य सर्वात्मसाधारण्यात् न्यायमतेऽप्यदृष्टहेतुमनस्संयोगस्य सर्वाविशेषाच्च अदृष्टनियमाभावात्फलानियम इत्यर्थः ॥

नन्वहमिदं फलं प्राप्नवानीत्यभिसंध्यादयः प्रत्यात्मनियताः अदृष्टनियमहेतवो भविष्यंतीत्यत आह–**सू ॥ अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥** साधारणमनस्संयोगसाध्येष्वभिसंध्यादिष्वपि च । **एवम्**=अदृष्टनियमहेतुत्वाभावात्स दोषस्तदवस्थ एव ॥

**सू ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥ प्रदेशादिति चेत्**=आत्मनां विभुत्वेऽपि स्वस्वशरीरावच्छिन्न एवात्मप्रदेशे मनस्संयोग इति भवत्यभिसंध्यादिनियम इति चेत् । **न । अन्तर्भावात्**=सर्वात्मनां सर्वशरीरेष्वन्तर्भावात् । नियामकाभावेन प्रदेशकल्पना न संभवतीत्युक्तसंकरस्तदवस्थ एव । अस्मत्पक्षे जीवभेदस्याविद्यकत्वे न संकरः ॥ तथा च 'तत्त्वम'-स्याद्यभेदश्रुतिजातस्य आविद्यकभेदानुवादिश्रुतिजातेन न विरोध इति सिद्धम् । तदेवं भूतभोक्तृविषयश्रुतीनां मिथो विरोधाभावेन प्रामाण्याद्ब्रह्मणि समन्वयस्सिद्ध इत्यनवद्यम् ॥ अस्मिन्मते अत्र पादे त्रिपंचाशत्सूत्राणि । अधिकरणानि तु **सप्तदश ।**

**श्रीकण्ठमते,** पूर्वत्र नित्यो ज्ञाताणुः कर्ता परमेश्वरायत्तप्रवृत्तिर्जीव इति निरूपितम् । अधुना स किं परमेश्वर एव । किं वा तदंशभूतः इति **संशयः** । परमेश्वर एव बहुविधोपाधिवशाज्जीवभावमुपगतः 'अयमात्मा ब्रह्म' इति श्रुतेः इति **पूर्वपक्षः** । **सिद्धान्तस्तु** 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' य आत्मनि तिष्ठन्' 'पृथगात्मानं प्रेरितारं च मत्वा' इत्यादिषु नानाव्यपदेशात् जीवात्मा परमेश्वरस्यांशो मूर्त्येकदेश एवेति । **सूत्रार्थस्तु** जीवः **अंशः**=परमेश्वरस्यांशः । कुतः । **नानाव्यपदेशात्** । **अन्यथा चापि**='तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिकाद्व्यपदेशाज्जीवब्रह्मणोर्व्याप्यव्यापकभावेनानन्यत्वमपि युक्तम् । तथैवानन्यत्वं 'ब्रह्म दाशा ब्रह्म दासा' इत्यादिना एके शाखिनोऽधीयते । इति ।

सू ॥ **मंत्रवर्णात्** ॥ ५४ ॥ 'पादोऽस्य विश्वा भूतानि' इति मंत्रवर्णाच्च ब्रह्मणोंऽश एव जीवः । इति ॥

किं च ॥ सू ॥ **अपि च स्मर्यते** ॥ ४४ ॥ 'आत्मा तस्याष्टमी मूर्तिश्शिवस्य परमात्मनः । व्यापिकेतरमूर्तीनां विद्धं तस्माच्छिवात्मकम् ॥' इति स्मरणाच्च शिवस्य मूर्त्येकदेश एव जीव इति ॥

सू ॥ **प्रकाशादिवत्तु नैवं परः** ॥ ४५ ॥ जीवस्य ब्रह्मणोंऽशत्वेऽपि जीवो यत्स्वरूपो यत्स्वभावश्च **नैवं परः**=परमेश्वरो नैवंरूपो भवति किं तु सर्वज्ञत्वादियुक्त एव । कथम् । **प्रकाशादिवत्**=प्रकाशवतां मणिप्रभृतीनां प्रकाशजातिगुणादयो यथांशाः तद्वत् जीवशरीरतया जीवविशिष्टस्य ब्रह्मणोंऽशो जीव इत्यर्थः ॥

सू ॥ **स्मरन्ति च** ॥ ४६ ॥ 'विग्रहं देवदेवस्य जगदेतच्चराचरम्' इत्यादिना जीवस्य ब्रह्मांशत्वं मुनयोऽपि स्मरंतीत्यर्थः॥

सू ॥ **अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्** ॥ ४७ ॥ **अनुज्ञापरिहारौ**=वेदादिष्वधिकारविधिनिषेधौ । **देहसंबन्धात्**=ब्राह्मणादिदेहसंबंधादुपपद्येते । इतरत्समानं शांकरमतेन ॥

सू ॥ **असंततेश्चाव्यतिरेकः** ॥ ४८ ॥ जीवानां प्रतिशरीरं भिन्नत्वादणुत्वेन तत्रतत्रावच्छिन्नत्वात् अव्याप्तेश्च । **अव्यतिरेकः**=ज्ञानसुखाद्यवैरूप्यमेव स्यादित्यर्थः ।

सू ॥ **आभासा एव च** ॥ ४९ ॥ अज्ञब्रह्मवादे उपहितब्रह्मवादे च युक्तय आभासा एवेत्यर्थः । बहुवचनान्ततया पाठो विशिष्टोऽत्र शांकरमतात् ॥

तथा हि–सू ॥ **अदृष्टानियमात्** ॥ ५० ॥ आत्मनां सत्यमिथ्योपाधिकृतत्वे अदृष्टमप्यज्ञानाद्युपाधिभिरुपहितस्यैव ब्रह्मणो धर्मो भवन्न व्यवस्थापकं स्यादित्यर्थः ॥

किंच । **अभिसंध्यादिष्वपि चैवम्** ॥ ५१ ॥ अदृष्टहेतुभूताभिसंध्यादिषु चैवमेव नियमाभावः ॥

सू ॥ **प्रदेशादिति चेन्नान्तर्भावात्** ॥५२॥ **प्रदेशादिति चेत्**=उपाधिसंबन्धिब्रह्मप्रदेशानुपहितब्रह्मप्रदेशस्य भिन्नतया सा व्यवस्थोपपद्येतेति चेत् । न । कुतः । **अन्तर्भावात्**=उपाधिषु गच्छत्सु सर्वप्रदेशानां तदन्तर्भावात् । तस्मात्सत्यमिथ्योपाधिपरिच्छिन्नब्रह्मजीवत्वपक्षद्वयेऽपि व्यवस्था न संभवति । ततो ब्रह्मणोंऽशभूतो जीवस्तद्विशेषणैकस्वभाव इति युक्तमेव ॥ अस्मिन्मते द्विपञ्चाशत्सूत्राणि अधिकरणानि **द्वादश** ॥

**रामानुजमते, संदेहपूर्वपक्षादिकं** सर्वं प्रायोऽविशिष्टमेव श्रीकण्ठमतात् । **'स्मरन्ति च' 'अपिच स्मर्यते'** इत्यादिसूत्रेषु विष्णुपराणि वचनान्युदाहृतानीति पूर्वस्माद्विशेषः । **'असंततेश्चाव्यतिकरः'** इति शांकरमतवदेवात्र सूत्रपाठः । **अव्यतिकरः**=असांकर्यमिति च तदर्थः ॥ अधिकरणानि **सप्ते**ति च विशेषः पूर्वस्मात् ॥

**आनन्दतीर्थमते, 'अंशो नानाव्यपदेशा'** दित्यादिक **'माभास एव चे'** त्यन्तं सूत्राष्टकमंशाधिकरण **'मदृष्टानियमा'** दित्यादिकमधिकरणान्तरमिति च विशेषः पूर्वस्मात् । अत्र जीवस्य परमेश्वरांशत्वानंशत्वविचारेण तद्विषय श्रुतिविरोधः परिह्रियते । **संदेहपूर्वपक्षा**दिकस्य जीवस्येश्वरांशत्वानंशत्वविषयतया नास्ति विशेष इति **सूत्रार्थः** परमत्र निरूप्यते–सू ॥ **अंशो नानाव्यपदेशादिति** ॥ ४३ ॥ **अंशः**=जीवः परमात्मनोंऽश एव पितापुत्रत्वादिसंबन्धेन केवलं तदुपजीवकत्वेन तच्छेषभूत इत्यर्थः । कुतः । **नानाव्यपदेशात्**='मां रक्षत्वि' त्यादौ पितृत्वभ्रातृत्वादिनानाप्रकारेण जीवस्येशसंबन्धित्वोक्तेः । किंच । यतः **एके**=शाखिनः 'अन्यः परोऽन्यो जीव' इत्यादिना एनं जीवं परा**दन्यथा चापि**=भिन्नत्वेनाधी**यते**=पठन्ति । यतः अन्ये च शाखिनः । **दाशकितवादित्वम्**='ब्रह्म दाशा' इत्यादिना ब्रह्मणस्तत्तज्जातिविशेषरूपत्वेन तदभेदं चाधीयते । अतो जीवस्तदंशभूत इत्यर्थः ॥

**किंच ॥ मंत्रवर्णात्** ॥ ४४ ॥ 'पादोऽस्ये' ति श्रुतेश्च जीवः परमात्मांश इत्यर्थः ॥

सू ॥ **अपि च स्मर्यते** ॥ ४५ ॥ जीवस्यांशत्वं कृष्णादिभिः 'ममैवांश' इत्यादिना कथ्यते चेत्यर्थः ॥

सू ॥ **प्रकाशादिवन्नैवं परः** ॥ ४६ ॥ जीवः **प्रकाशादिवत्**=खद्योताद्यभिमानितेजोंऽशवत् परमात्मनो भिन्नांशः । **परः**=मत्स्यरूपी विष्णुस्तु । **नैवम्**=जीववद्भिन्नांशो न । किं तु **प्रकाशादिवत्**=कालाग्न्याद्यभिमानितेजोंऽशवत् ईशाभिन्नांश एवेत्यर्थः ॥

सू ॥ **स्मरंति च** ॥४७॥ स्मर्तारो जीवेशयोर्भिन्नांशत्वाभिन्नांशत्वे 'एते स्वांशकला' इत्यादिस्मृत्या कथयन्ति चेत्यर्थः ॥

सू ॥ **अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्** ॥ ४८ ॥ यतो **ज्योतिरादिवत्**=चक्षुर्गोलकादिस्थितापभ्रष्टदेवतादेस्तत्तद्देहसंबन्धात्सूर्यवरुणाद्यनुज्ञया तत्प्रवृत्त्यादेरिव जीवस्यापि **देहसंबन्धात्**=तत्तद्देहसंबन्धाद्धेतोः परमात्मन एव **अनुज्ञापरिहारौ**=प्रवृत्तिर्बन्धनिवृत्तिश्च प्रतीयते । न तथा मत्स्यादेः । अतोऽपि जीवः परमात्मनो भिन्नांशः मत्स्यादिस्त्वभिन्नांश इति व्यवस्था सिद्धेत्यर्थः ॥

सू ॥ **असन्ततेश्चाव्यतिकरः** ॥ ४९ ॥ **असंततेश्च**=जीवस्य सम्यक्शक्त्यभावात् मत्स्यादीनां तु तद्भावात् । **अव्यतिकरः**=जीवेशयोर्भिन्नाभिन्नांशत्वमित्युक्तार्थस्य व्यत्यासाभाव इत्यर्थः ॥

सू ॥ **आभास एव च** ॥ ५० ॥ चस्समुच्चये । यतो जीवः परस्याभास एव प्रतिबिंब एव मत्स्यादिस्तु न तथा । अतोऽप्युक्तस्य न व्यत्यास इत्यर्थः ॥ **इत्यंशाधिकरणम्** ॥ १८ ॥

**अथादृष्टाधिकरणम्** ॥ १९ ॥

सू ॥ **अदृष्टानियमात्** ॥ ५१ ॥ अत्राधिकरणे जीवानामीश्वरप्रतिबिंबत्वतदभावश्रुत्योर्विरोधः परिह्रियते । जीवानामीश्वरप्रतिबिंबत्वं वा तदभावो वेति **संदेहः** । तेषामीश्वरैकप्रतिबिंबत्वे परस्परवैचित्र्यानुपपत्तेर्न प्रतिबिंबत्वमिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** अभेदेऽपि विशेषबलाद्गुणगुणिभावादिवदुपाधिप्रतिबिंबभावोऽप्युपपद्यते । प्रतिबिंबत्वाभावश्रुतेस्तु स्वरूपातिरिक्तोपाधिमत्प्रतिषेधपरत्वात् जीवानां स्वरूपोपाधिकप्रतिबिंबत्वेन विचित्रादृष्टशालितत्तत्स्वरूपोपाधिवैचित्र्यात्तेषां वैचित्र्योपपत्तेश्चेति । **सूत्रार्थस्तु, अदृष्टानियमात्**=अदृष्टपदोपलक्षितविद्याकर्मसंस्काराणामनियमात् वैचित्र्यात् प्रतिबिंबभूतजीवानामपि देवदानवमानवादिवैचित्र्यं युज्यत इत्यर्थः ॥

सू ॥ **अभिसंध्यादिष्वपि चैवम्** ॥५२॥ यतोऽभिसंध्यादिषु कामक्रोधादिदोषेष्वपि च एवमदृष्टादिवैचित्र्यादेव वैचित्र्यं वाच्यम् । अत आवश्यकत्वाददृष्टादिवैचित्र्यमेव जीववैचित्र्यकारणम् । न दोषादिवैचित्र्यमित्यर्थः ॥

सू ॥ **प्रदेशादिति चेन्नान्तर्भावात्** ॥ ५३ ॥ ननु **प्रदेशात्**=स्वर्गभूम्यादिस्थानवैचित्र्यादेव सुरनरादिजनवैचित्र्यमस्तु नादृष्टवैचित्र्यात् **इति चेत् न** । कुतः । **अन्तर्भावात्**=स्थानवैचित्र्ये किं कारणमिति कारणान्वेषणे तत्कारणस्यादृष्टवैचित्र्य एवान्तर्भावात् । तद्रूपत्वादत आवश्यकत्वाददृष्टवैचित्र्यमेव सुरनरादिवैचित्र्यनियामकमित्यर्थः ॥ अत्र **पादे** अस्मिन्मते **त्रिपंचाशत्सूत्राणि** अधिकरणान्येकोनविंशतिः ॥ **इत्यानन्दतीर्थमतेऽदृष्टाधिकरणम्** ॥ १९ ॥

**यं प्रासूत विशुद्धशीलमनघं वृद्धांबिकाख्या सती-**
**यं मृत्युञ्जयशर्मणो बुधमणेर्भाग्यं विदुस्साधवः ।**
**वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-**
**स्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥**

**सूत्रार्थचन्द्रिकायामविरोधाख्ये द्वितीयकेऽध्याये** । **सृष्टिश्रुत्यविरोधापादक** आद्ये मतत्रये कथितः ॥
वियदादिभूतभोक्तृनधिकुर्वन्पूर्तिमभ्यगात्पादः । **तार्तीयीको माध्वैः** प्रोक्तः **श्रुत्यविरोधपादशब्देन** ॥

**इति हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायां द्वितीयस्याध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥**

---

श्रीः

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## अथ द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

### अथ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

### ॥ सू ॥ तथा प्राणाः ॥ १ ॥

पूर्वत्र भूतानि ब्रह्मण उत्पद्यन्त इति निरूपितम्, जीवो नित्य इति । इह भूतानामिवेन्द्रियाणां ब्रह्मण उत्पत्तिः, उत जीववन्नित्यत्वमिति विचार्यते । यथा नित्यत्वान्न जीवः समुत्पद्यते तथेन्द्रियाण्यपि । जीववदमीषामपि नित्यत्वे श्रुतिसंभवात् । तथा हि, 'असद्वा इदमग्र आसीत्' 'ऋषयो वाव ते अग्रे सदासन् । तदाहुः । के ते ऋषय इति । प्राणा वा ऋषयः' इति प्रलयकाले प्राणानां

## शिवार्कमणिदीपिकायाम्

## अथ द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

### अथ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

कारणविषयश्रुतिविरोधसमाधानानन्तरं कार्यविषयश्रुतिविरोधसमाधित्सया तृतीयचतुर्थपादावारब्धौ । तत्र पारंपर्यक्रमाधिकरणोक्तरीत्या भूतसृष्टेः प्राथमिकत्वादाकाशादिभूतोत्पत्त्यनुत्पत्तिविषयश्रुतिविरोधसमाधानं तृतीयपादेन कृतम् । तत्र ब्रह्मव्यतिरिक्तस्याकाशादेः कृत्स्नस्य कार्यत्वे समर्थिते जीवस्य कार्यत्वेऽपि स्वरूपान्यथाभावलक्षणं कार्यत्वं नास्तीति विशेषो दर्शितः । तत्प्रसंगाज्जीवस्य ज्ञातृत्वादिविषयश्रुतीनामपि विरोधसमाधानं तृतीयपाद एव कृतम् । इदानीं जीवोपकरणभूतेन्द्रियमुख्यप्राणोत्पत्त्यनुत्पत्त्यादिविषयश्रुतिविरोधसमाधानार्थं चतुर्थः पाद आरभ्यते—सू ॥ तथा प्राणाः ॥ १ ॥ नन्विन्द्रियाणामुत्पत्त्यनुत्पत्तिविचारो नोपपद्यते । 'प्रतिज्ञाहानिरव्यतिरेका'दिति वियदधिकरणसिद्धांतसूत्रोक्तरीत्या ब्रह्मव्यतिरिक्तस्य सर्वस्याप्युत्पत्तिनियमादित्याशंक्योत्पत्तिसामान्ये नियमेऽपि स्वरूपान्यथाभावोत्पत्तिनियमो नास्ति । तथाभूतोत्पत्तितदभावविषय एव विचारः करिष्यत इति दर्शयन्वृत्तमनुवदति—पूर्वत्रेति । श्रुतिविप्रतिपत्त्या संशयं दर्शयति—इहेति । सौत्रं तथाशब्दं विवृण्वन् पूर्वपक्षमाह—यथेति । ननु जीवेऽस्ति कृतहानाकृताभ्यागमादितर्कानुगृहीतत्वेनानन्यथासिद्धा नित्यत्वश्रुतिर्न तथेंद्रियेष्वस्ति । तन्नित्यत्वश्रुतिसद्भावे तस्या वाय्वाकाशामृतत्वश्रुतिवच्चिरकालावस्थायित्वपरतया योजयितुं शक्यत्वादित्याशङ्क्यानन्यथासिद्धां श्रुतिमुदाहरति—तथा हीति । इयं हि श्रुतिर्महाप्रलये प्राणानां स्थितिं वर्णयति । सा च ब्रह्मण इव प्राणानां नित्यत्वमन्तरेण नोपपद्यते । प्राणाश्चेंद्रियाण्येव । प्राणशब्दस्य 'प्राणमेवाभिसंविशंती'त्यादिश्रुत्यन्तरे ब्रह्मणि दृष्टप्रयोगत्वेऽपि तस्मिन्बहुवचनस्यानन्वयात् ऋषिशब्दस्य 'तस्यासते ऋषयस्सप्त तीरे' इती-




स्थितिराम्नायते । प्राणास्ततो ब्रह्मणो नोत्पद्यन्ते ॥

इति प्राप्ते ब्रूमः–

॥ सू ॥ गौण्यसंभवात्तत्प्राक्छ्रुतेश्च ॥ २ ॥

न प्राणानां सृष्टेः प्रागवस्थितिः, किंतु परमेश्वरस्यैव, 'सदेव सौम्येदमग्र आसीत्' इति श्रुतेः । ऋषिशब्दः प्राणशब्दश्च परमेश्वर एव वर्तते । तस्य बहुत्वासंभवात् बहुवचनश्रुतिस्तत्र गौणी । ततो ब्रह्मण एव प्रागवस्थितिर्नेन्द्रियाणाम् ॥

युक्त्यन्तरमाह–

॥ सू ॥ तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

परमेश्वरसृष्टिपूर्वकत्वादितरेषां नामरूपयोगस्य । तदानीं प्राणशब्दो नेन्द्रियविषयः । ततो ब्रह्मैव पूर्वभावि ॥ इति प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

---

न्द्रियेष्वपि दृष्टप्रयोगत्वेन तेषु तदन्वयसंभवात् । 'एतस्माज्जायते प्राणो मनस्सर्वेंद्रियाणि च' इति इन्द्रियोत्पत्तिश्रुतिस्तु जीवोत्पत्तिश्रुतिवन्नेतव्येति भावः । पूर्वपक्षमुपसंहरति–प्राणा इति । सू ॥ गौण्यसंभवात्तत्प्राक्श्रुतेश्च ॥ २ ॥ साध्यनिर्देशपूर्वकं द्वितीयहेतुयोजनक्रमेण सूत्रं व्याचष्टे–न प्राणानामिति । बह्वीषु श्रुतिषु ब्रह्मण एव एकत्वावधारणसहितसृष्टिप्राग्भावश्रवणात् सृष्टिप्राग्भावरूपादनुत्पत्तिलिंगा 'देतस्माज्जायत' इत्याद्युत्पत्तिश्रुतेः प्रबलत्वात् इहापि सृष्टिप्राग्भावश्रुतौ प्रथमश्रुतस्य ऋषिशब्दस्य द्रष्टरि ब्रह्मण्येव स्वारस्यात् दर्शनकरणेषु ज्ञानेंद्रियेषु स्वारस्याभावात् कर्मेंद्रियेषु कथमप्यप्रवृत्तेश्च । बहुवचनस्य ब्रह्मण्यसंभवतः 'पाशा'निति बहुवचनस्य पाशावयवबहुत्वविषयतयेव ब्रह्मविशेषणबहुत्वविषयतयौपचारिकत्वोपपत्तेश्च 'प्राणा वा ऋषय' इति श्रुतिर्ब्रह्मविषयेति भावः । सू ॥ तत्पूर्वकत्वाद्वाचः ॥ ३ ॥ तच्छब्दार्थमाह–परमेश्वरसृष्टीति । 'वाच' इत्यस्यार्थमाह–नामरूपयोगस्येति । सौत्रहेतुं साध्ये संगमयति–तदानीमिति । जीवानां प्रलयेऽपि स्थितिरभ्युपगता । अन्यथा कृतहानादिदोषप्रसंगात् । प्राणानां स्थित्यनभ्युपगमे तु न किंचिद्बाधकमस्ति । अतस्तदंशे व्याकरणस्य सृष्टिपूर्वकत्वनियमो न बाधनीय इति भावः । इति प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

---

नयमणिमालायाम्

## अथ द्वितीयस्याध्यायस्य तुरीयः पादः ॥

### अथ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

सू ॥ तथा प्राणाः ॥ १ ॥ गौण्यसंभवात्तत्प्राक्छ्रुतेश्च ॥ २ ॥ तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

प्राणा नोत्पद्यन्ते नित्यास्ते जीववद्ज्ञेयाः । प्राणा वा ऋषय इति प्रलये तेषामवस्थितिश्रवणात् ॥ १५२ ॥

प्रागेकत्वावधृतेः प्राणानां सृष्टिदार्ढ्याच्च । ब्रह्मपरमुक्तवाक्यं बहुवचनं पाशनीत्या स्यात् ॥ १५३ ॥

इति प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ द्वितीयस्याध्यायस्य तुरीयः पादः ॥

### अथ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

सू ॥ तथा प्राणाः ॥ १ ॥ गौण्यसंभवात्तत्प्राक्छ्रुतेश्च ॥ २ ॥ तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

**भगवत्पादमते,** पूर्वस्मिन्पादे भूतभोक्तृश्रुतिविरोधः परिहृतः। अधुना भौतिकेन्द्रियादिश्रुतिविरोधं परिहर्तुं पादान्तरमारभ्यते। पूर्वाधिकरणे कर्तृस्वरूपावधारणेन बुद्धिस्थानां तदुपकरणानामिन्द्रियाणामुत्पत्तिं साधयति–सू॥ **तथा प्राणाः** ॥ १ ॥ अत्र 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्यादीन्द्रियोत्पत्तिश्रुतेः 'ऋषयो वाव तेऽग्रेऽसदासीत्' इत्यादिप्रागुत्पत्तेरिन्द्रियसद्भावश्रुत्या विरोधोऽस्ति न वेति **संदेहः**। विरोधोऽस्तीति **पूर्वपक्षः। सिद्धान्तस्तु,** सृष्टेः प्रागिन्द्रियसद्भावश्रुतेर्हिरण्यगर्भात्मकावान्तरप्रकृतिविषयतया एकविज्ञानप्रतिज्ञानिर्वाहायोत्पत्तिश्रुतेर्मुख्यत्वाभ्युपगमावश्यंभावेन 'एतस्माज्जायते' इत्यादिवाक्ये खवाय्वादिषु मुख्यस्य जन्मवाचिपदस्यैव तदपेक्षया प्राचीनेषु प्राणादिष्वपि श्रवणेन च इन्द्रियोत्पत्तिश्रुतेर्गौणत्वासंभवात् 'तत्तेजोऽसृजते' ति श्रुतौ भूतमात्रोत्पत्तिश्रवणेऽपि 'अन्नमयं हि सोम्ये' त्यादिना मनःप्राणसहिताया वाचः ब्रह्मप्रकृतिकतेजोऽवन्नपूर्वकत्वाभिधानाच्च प्राक्सृष्टेरिन्द्रियसद्भावश्रुत्योत्पत्तिश्रुतेर्नास्ति विरोध इति। **सूत्रार्थस्तु, तथा**='एतस्माज्जायते' इत्युदाहृतवाक्यस्थाकाशादिवत्। **प्राणाः**=इन्द्रियाण्यपि जायन्ते। उत्पत्तिश्रुतेरविशेषादित्यर्थः॥

सृष्टेः प्रागिन्द्रियसद्भावश्रवणादुत्पत्तिश्रुतिर्गौणी इति चेत्तत्राह–सू॥ **गौण्यसंभवात्** ॥ २ ॥ गौण्या उत्पत्तिश्रुतेरसंभवादित्यर्थः। अन्यथा एकविज्ञानप्रतिज्ञा हीयेतेत्यर्थः। सद्भावश्रुतिस्तु हिरण्यगर्भात्मकावान्तरप्रकृतिविषयेति न तयोत्पत्तिश्रुतेर्विरोध इति भावः॥

इन्द्रियोत्पत्तिर्मुख्येत्यत्र हेत्वन्तरमाह–सू॥ **तत्प्राक्श्रुतेश्च** ॥ ३ ॥ 'एतस्माज्जायते' इत्यादिवाक्ये जन्मवाचिपदस्य खवाय्वादिषु मुख्यस्य तदपेक्षया प्राचीनेषु प्राणादिषु श्रवणाच्चेत्यर्थः॥

ननु 'तत्तेजोऽसृजते' ति भूतमात्रोत्पत्तिश्रवणात्तत्कथमित्याशंक्याह–सू॥ **तत्पूर्वकत्वाद्वाचः** ॥ ४ ॥ यद्यपि भूतमात्रोत्पत्तिः पठ्यते। तथापि 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति मनःप्राणसहिताया वाचो ब्रह्मप्रकृतिकतेजोऽवन्नपूर्वकत्वाभिधानादस्त्युत्पत्तिश्रुतिरित्यतो न विरोध इति सिद्धम्॥

**श्रीकण्ठमते,** अत्रापि इन्द्रियाणामुत्पत्त्यनुत्पत्तिविचार एव विषयः। यद्यपि संदेहपूर्वपक्षसिद्धान्तादिकं प्रायस्समानमेव। तथापि तन्निरूपणप्रकारवैलक्षण्येन सूत्रार्थवर्णनं भिद्यते। इह किं भूतानामिवेन्द्रियाणां ब्रह्मण उत्पत्तिः उत जीववन्नित्यत्वमिति **संदेहे** यथा नित्यत्वान्न जीवस्समुत्पद्यते तथेन्द्रियाण्यपि, जीववदमीषामपि नित्यत्वे श्रुतिसंभवादिति पूर्वपक्षनिरूपकतयायं सूत्रं व्याख्यातमिति पूर्वस्माद्विशेषः। **तथा**=यथा नित्यत्वान्न जीवस्समुत्पद्यते तथा। **प्राणाः**=इन्द्रियाण्यपि नोत्पद्यन्त इति सूत्रार्थः। तथाहि–'असद्वा इदमग्र आसीत्' ऋषयो वाव ते अग्रे सदासन्। तदाहुः। के ते ऋषय इति। प्राणा वा ऋषयः' इति प्रलयकाले प्राणानां स्थितिराम्नायते। प्राणास्ततो ब्रह्मणो नोत्पद्यंत इति **पूर्वपक्षः। सिद्धान्तस्तु,** 'सदेव सोम्येदमग्र आसीत्' इति श्रुतेः प्राणानां सृष्टेः प्रागवस्थितिर्नास्ति। किं तु परमेश्वरस्यैव। ऋषिशब्दः प्राणशब्दश्च परमेश्वर एव वर्तते। तत्र बहुवचनश्रुतिः **गौणी**। कुतः। **असंभवात्**=तस्य बहुत्वासंभवात्। **तत्प्राक्श्रुतेश्च**=तस्य परमात्मनः प्रागवस्थानश्रुतेश्च। ततो ब्रह्मण एव प्रागवस्थितिर्नेन्द्रियाणामिति॥ अत्र **'गौण्यसंभवात्तत्प्राक्श्रुतेश्च'** त्येकं सूत्रम्। युक्त्यन्तरमाह–सू॥ **तत्पूर्वकत्वाद्वाचः** ॥ ३ ॥ **वाचः**=परमेश्वरव्यतिरिक्तनामरूपयोगस्य। **तत्पूर्वकत्वात्**=परमेश्वरकर्तृकवियदादिसृष्टिपूर्वकत्वादित्यर्थः। तदानीं प्राणशब्दो नेन्द्रियविषयः। अतः परमात्मैव प्राणशब्दनिर्दिष्टः॥ **इति प्राणोत्पत्त्यधिकरणम्** ॥ १ ॥

**रामानुजमते** संदेहपूर्वपक्षसिद्धान्तसूत्रार्थवर्णनादिकं सर्वमविशिष्टमेव श्रीकण्ठमतादिति न पृथक्प्रपञ्चनमर्हति॥

**आनन्दतीर्थमते,** अस्मिन्पादे सृष्टिश्रुतीनां युक्तिसहितश्रुतिविरोधः परिह्रियते। अत्रापि इन्द्रियाण्युत्पद्यन्ते वा न वेति **संदेहः**। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इतीन्द्रियाणामुत्पत्तिश्रुतेः 'नोपादानं हीन्द्रियाणामतोऽनुत्पत्तिरिष्यते' इति स्मृत्युक्तयुक्तिसाहित्येन प्रबलया 'प्राणा एवानादयः प्राणा नित्या' इति कौषायणश्रुत्या बाधान्नोत्पद्यन्त इन्द्रियाणीति **पूर्वपक्षः। सिद्धान्तस्तु, सू॥ तथा प्राणाः** ॥ १ ॥ यथा वियदादय उत्पद्यंते तथा तन्न्यायेनैव इन्द्रियाण्यप्युत्पद्यंत इत्यर्थः॥

**सू॥ गौण्यसंभवात्** ॥ २ ॥ अनादित्वश्रुतिर्गौणानादित्वपरा। इन्द्रियाणां मुख्यानादित्वायोगात् इत्यर्थः॥

**सू॥ प्रतिज्ञानुपरोधाच्च** ॥ ३ ॥ इदं सूत्रमस्मिन्मत एव पठ्यते नान्यमतेषु॥ 'स इदं सर्वमसृजते' ति प्रतिज्ञानुसाराच्चोत्पत्तिरिन्द्रियाणामङ्गीकर्तव्येत्यर्थः॥ **इत्यानन्दतीर्थमते प्राणोत्पत्त्यधिकरणम्** ॥ १ ॥

**अथ तत्प्रागधिकरणम्** ॥ २ ॥

**सू॥ तत्प्राक्श्रुतेश्च** ॥ ४ ॥ अत्र मनउत्पत्तिमद्वा न वेति **संदेहः**। 'द्विधा हैवेन्द्रियाणि नित्यान्यनित्यानि च। तत्र नित्यं मनोऽनादित्वात्। न ह्यमनाः पुमांस्तिष्ठत्यनित्यान्यन्यानि' इति गौपवनश्रुत्या सयुक्तिकया मनसोऽनुत्पत्तिरिति **पूर्वपक्षः। सिद्धान्तस्तु,** 'मनस्सर्वेन्द्रियाणि च' इति तस्य मनसस्तेभ्य इन्द्रियेभ्यः पूर्वमुत्पन्नत्वेन श्रवणात् 'तदनुत्पत्ति-

## अथ सप्तगत्यधिकरणम् ॥ २ ॥

### ॥ सू ॥ सप्तगतेर्विशेषितत्वाच्च ॥ ४ ॥

पूर्वत्र ब्रह्मकार्यतया सिद्धानीन्द्रियाणि कियत्संख्यानीति संदेहे सप्तेति पूर्वः पक्षः। कुतः ? 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥' इति सप्तानामेवावगतेः, 'सप्त प्राणाः प्रभवन्ति' इत्यादिश्रुतौ सप्तेति विशेषितत्वाच्च ॥

इत्येवं प्राप्तेऽभिधीयते–

### ॥ सू ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ५ ॥

न सप्तैवेन्द्रियाणि । हस्तादयोऽपीन्द्रियाणि, जीवे देहान्तःस्थिते उपकरण-

---

## अथ सप्तगत्यधिकरणम् ॥ २ ॥

सू ॥ सप्तगतेर्विशेषितत्वाच्च ॥ ४ ॥ प्रासंगिकसंगतिं सूचयति–पूर्वत्रेति । कियत्संख्यानीति । सप्तसंख्यानि वा एकादशसंख्यानि वेत्यर्थः । श्रुतिविप्रतिपत्तेस्सन्देहः । सौत्रं गतिशब्दमवगतिपरमभिप्रेत्य सप्तसंख्यावगमिकां स्मृतिमुदाहरति–यदेति । ज्ञानानीति । करणव्युत्पत्त्या ज्ञानशब्द इन्द्रियपरः । मनोबुद्धिसहपाठात् । परमां गतिमिति । परमगतिरूपमोक्षसाधनं योगमाहुरित्यर्थः । 'विशेषितत्वा'दिति सौत्रपदं सप्तसंख्यां स्वशब्देनोपादाय तया विशेषितत्वादित्यर्थपरतया व्याचष्टे–सप्तेति । न्यूनाधिकसंख्याश्रवणे न्यूनसंख्याग्रहणं न्याय्यं लाघवादिति युक्त्यन्तरसमुच्चयार्थश्चकारः । न च वाच्यमधिकसंख्याग्रहणे न्यूनसंख्यायास्तत्रान्तर्भावादुभयान्वयो भवति अतस्तदर्थमधिकसंख्याग्रहणमेव न्याय्यमिति । तथा सति क्वचिद्ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पंच मनो हृदयमिति द्वादशेंद्रियाणि श्रूयन्ते । क्वचित्तान्येव प्राणाधिकानि त्रयोदश श्रूयन्ते इति सर्वाधिकसंख्याग्रहणे एकादशसंख्याव्यवस्थित्यसिद्धेरिति । सू ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ५ ॥ 'अतो नैव' मिति व्याख्यास्यमानसूत्रांशलभ्यं साध्यं दर्शयति–न सप्तैवेति । तुशब्दमप्यर्थं कृत्वा व्याचष्टे–हस्तादयोऽपीति । 'स्थितेऽत' इति सूत्रांशेन विवक्षितं हेतुमपेक्षिताध्याहारपूर्वकं विवृणोति–जीव इति ॥ हस्तादिसत्वोपन्यासलभ्यायामिन्द्रिय-

---

वचनमल्पोपचयकारणात्' इति वायुप्रोक्तवचनाच्च मन उत्पत्तिमदेव न त्वनुत्पत्तिमदित्यर्थः ॥ इति ॥

इति तत्प्रागधिकरणम् ॥ २ ॥

अथ तत्पूर्वकत्वाधिकरणम् ॥ ३ ॥

सू ॥ तत्पूर्वकत्वाद्वाचः ॥ अत्र वागिन्द्रियमुत्पत्तिमद्वा अनुत्पत्तिमद्वेति संदेहः । 'नित्ययानित्यया स्तौमि परमात्मानमच्युतम् । वाग्वाव नित्या न ह्येषोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठते' इति श्रवणादनुत्पत्तिमदिति पूर्वपक्षः । सिद्धान्तस्तु, 'तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्' इति श्रवणात् 'वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता । उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चने' ति वायुप्रोक्तवचनाच्च वागिन्द्रियमुत्पत्तिमदेवेति ॥

इति तत्पूर्वकाधिकरणम् ॥ ३ ॥

इति सूत्रार्थचन्द्रिकायां प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

---

(१) 'दुभयाबाधो' इति ख पाठः ।

**त्वाविशेषात्। अपि त्वेकादश । 'दशेमे पुरुषे प्राणा आत्मैकादशः' 'इन्द्रियाणि दशैकं च' इति श्रुतिस्मृतिभ्याम्। बुद्ध्यादीनां न पृथगिन्द्रियत्वम्, किं तु ते मनोवृत्तिभेदा एव। सप्तानां गतिश्रवणं विशेषणं च तेषां प्राधान्यात्। अतो न सप्तेन्द्रियाणि, किं त्वेकादश॥ इति सप्तगत्यधिकरणम्॥ २॥**

संख्यायां श्रुतिं दर्शयति–'दशेमे' इति । आत्मा मनः। श्रुतिस्मृतिभ्यामिति। अयमपि हेतुरतश्शब्देनावृत्तेन विवक्षितः । बुद्ध्यहंकारचित्तानां मनस्यन्तर्भावात् नाधिकसंख्या प्रसज्यत इत्याह–बुद्ध्यादीनामिति । नानाविधसंख्याश्रवणे कार्यानुसारेण संख्यानियमनं युक्तं नानाविधावदानसाधनश्रवणे सामर्थ्यानुसारेणावदेयनियमनवत् । कार्यं च गन्धाद्युपलब्धिपञ्चकमादानादिक्रियापञ्चकमान्तरज्ञानजातं चेत्येकादशविधं घ्राणादिसत्त्वे चक्षुरादिष्वसत्स्वजायमानमेकादशविधमिंद्रियगणं व्यवस्थापयति । यानि तु बुद्ध्यहंकारचित्तवृत्तित्वेन प्रसिद्धानि अध्यवसायाभिमानचिंतारूपाणि कार्याणि तानि मनोव्यतिरेके जायमानत्वानवगमान्न करणांतरव्यवस्थापनशक्तानीति बुद्ध्यादयो मनोऽवस्थाभेदा इत्येव युक्तमिति भावः। पूर्वपक्षयुक्तिं निरस्यति–सप्तानामिति । योगदशायां कर्मेंद्रियेभ्यो ज्ञानेंद्रियाणि यत्नेन वशीकरणीयानीति तेषां वशीकर्तव्यत्वेऽस्ति प्राधान्यम्। तदभिप्रायेण 'यदा पंचावतिष्ठन्ते' इत्यादिस्मृतिः प्रवृत्ता। 'सप्त वै शीर्षण्याः प्राणा द्वाववांचौ' इत्यादिश्रुतिषु सप्तानां शीर्षण्यत्वरूपं प्राधान्यं प्रसिद्धम् । तदभिप्रायेण 'सप्त प्राणा' इति श्रुतिः प्रवृत्ता। न च 'सप्तेमे लोका येषु चरन्ति प्राणा' इति तदुत्तरार्धे सप्तानामिह परत्र च संचारश्रवणात् सर्वत्र जीवानुगन्तृत्वलक्षणं प्राधान्यं विवक्षितमस्त्विति शंकनीयम्। 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्ती'ति श्रुतावेमपि जीवानुगन्तृत्वश्रवणात्। 'अतो नैव'मिति सूत्रांशं व्याकुर्वन्नधिकरणार्थमुपसंतो न सप्तेति। पुनरावृत्तस्यातश्शब्दस्य हस्तादीनां सत्त्वादित्यर्थः॥

इति सप्तगत्यधिकरणम्॥ २॥

## नयमणिमालायाम् अथ सप्तगत्यधिकरणम्॥ २॥

सू॥ सप्तगतेर्विशेषितत्वाच्च॥ ४॥ हस्तादयस्तु स्थितोऽतो नैवम्॥ ५॥

प्राणास्सप्तैव यदा पञ्चेत्यादौ तथावगतेः। सप्त प्राणा इत्यपि विशेषितत्वाच्च मन्त्रेण॥ १५४॥

वाक्पाण्यादीनामपि सत्तावगमाद्दशेम इति वाक्यात्। एकादशसप्तत्वश्रवणं प्राधान्यतो नेयम्॥ १५५॥

इति सप्तगत्यधिकरणम्॥ २॥

## सूत्रार्थचन्द्रिकायाम्

### अथ सप्तगत्यधिकरणम्॥ २॥

**सू॥ सप्त गतेर्विशेषितत्वाच्च॥ ४॥ हस्तादयस्तु स्थितेऽतो नैवम्॥ ५॥**

**भगवत्पादमते,** इत्थमिन्द्रियाणामुत्पत्तिं प्रसाध्य तेभ्यो जीवस्य विवेकार्थं तदाश्रितसंख्यां निर्धारयति—**सप्तगते-रित्यादि।** अत्र 'सप्त प्राणाः प्रभवन्ति तस्मात्' इति इन्द्रियाणि सप्त संकीर्त्यन्ते। क्वचिदष्टौ । क्वचिन्नव। क्वचिद्दश। क्वचिदेकादश। इत्येवं सप्तत्वाष्टत्वादिश्रुतीनां परस्परविरोधोऽस्ति न वेति **संदेहः।** अस्तीति **पूर्वपक्षे** प्राप्ते **एकदेशिसिद्धान्तः।** **सप्तेन्द्रियाणि।** कुतः। **गतेः**=श्रुत्या सप्तत्वावगतेः 'सप्त वै शीर्षण्याः प्राणाः' इति शीर्षण्यत्वेन विशेषितत्वाच्च। अष्टत्वादिसंख्याश्रवणं तु एकस्यैवान्तःकरणस्य वृत्तिभेदाभिप्रायमिति न श्रुतीनां विरोध इति॥

एकदेशिमतं दूषयति—**सू॥ हस्तादयस्तु स्थितेऽतो नैवम्॥ ५॥** तुरेकदेशिमतनिरासकः । 'हस्तौ वै ग्रहः' इत्यादिना हस्तादयो व्यतिरिक्ताः प्राणाः श्रूयन्ते। सप्तत्वातिरेके स्थिते सप्तत्वसंख्या एकादशत्वसंख्यायामन्तर्भावयितुं शक्यते। **अतो नैवम्**='सप्तैव प्राणा' इति न मन्तव्यम्। 'दशेमे पुरुषे प्राणा आत्मैकादश' इति श्रवणादेकादशैव। तस्मान्न श्रुतीनां विरोध इति सिद्धम्॥

## अथ प्राणाणुत्वाधिकरणम् ॥ ३ ॥

## ॥ सू ॥ अणवश्च ॥ ६ ॥

तानीन्द्रियाणि विभूनि किमणूनीति संदेहे चक्षुरादीनां दूरगतवस्तुग्रहणसामर्थ्याद्विभूनीति प्राप्तेऽणूनीत्युच्यन्ते—कथम् ? 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रवणात् । न विभूनि । विभुत्वे हि तेषां न गतिः संभवति । चक्षुरादेर्दूरगतवस्तुग्रहणसामर्थ्यं न विभुत्वेन, किंतु तेजोरूपत्वादणुत्वाच्च शीघ्रगतिमत्वात् । तस्मादिन्द्रियाण्यणून्येव ॥ इति प्राणाणुत्वाधिकरणम् ॥ ३ ॥

---

## अथ प्राणाणुत्वाधिकरणम् ॥ ३ ॥

सू ॥ अणवश्च ॥ ६ ॥ 'अत एते सर्व एव समाः सर्वेऽनंता' इति श्रुतेः 'सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतेश्च विप्रतिपत्त्या संशयं दर्शयति—तानींद्रियाणीति । अणुत्वमिह परिच्छिन्नत्वम् । दूरगतेति । तथा चोक्तयुक्तिसहकृतत्वादानन्त्यश्रुतिः प्रबला यथा कार्यदर्शनयुक्तिसाहित्यादेकादशसंख्याश्रुतिरेवेति भावः । आनन्त्यश्रुतिः 'स यो हैताननन्तानुपास्ते अनन्तं वै स लोकं जयतीति' वाक्यशेषदर्शनादुपासनार्थत्वेनान्यथा सिद्धेति । ततः प्रबलया उत्क्रमणश्रुत्या परिच्छिन्नत्वमुपपादयति—प्राणमिति । शीघ्रगतिमत्त्वादिति । दूरगतवस्तुग्रहणसामर्थ्यमिन्द्रियाणां विषयपर्यन्तप्रसृमरप्रवृत्त्यात्मना विषयसंबंधेन युज्यत इति तदप्यन्यथासिद्धमित्यर्थः । इति प्राणाणुत्वाधिकरणम् ॥ ३ ॥

---

**श्रीकण्ठमते,** अत्रापि संदेहपूर्वपक्षादिकं प्रायः पूर्वस्मादविशिष्टम् । इन्द्रियाणि कियत्संख्यानि सप्तसंख्यानि वा अधिकसंख्यानि वेति **संदेहः** । 'यदा पञ्चावतिष्ठंते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तमाहुः परमां गतिम् ॥' इति सप्तानामेवावगतेः 'सप्त प्राणाः प्रभवन्ति तस्मा' दिति श्रुतौ सप्तेति विशेषितत्वाच्च सप्तैवेन्द्रियाणीति **पूर्वपक्षः** । **सूत्रार्थो**ऽपि व्याख्यातः । **सिद्धान्तस्तु,** न सप्तैवेन्द्रियाणि । किं तु जीवे देहान्तः स्थिते उपकरणत्वाविशेषाद्धस्तादयोऽपीन्द्रियाणि । अत इन्द्रियाण्येकादश । **अतो नैवम्**='दशेमे पुरुषे प्राणा आत्मैकादश' इति श्रवणात् 'इन्द्रियाणि दशैकं च' ति स्मृतेश्चैवमिन्द्रियाणि सप्तैवेति न वक्तव्यम् । किं तु ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, मन इत्येकादशेन्द्रियाणीति । **सूत्रार्थश्च** व्याख्यातः ॥ **रामानुजमते,** सर्वमविशिष्टं श्रीकण्ठमतादित्यवधेयम् ॥

**आनन्दतीर्थमते,** 'सप्त प्राणाः प्रभवन्ति तस्मात्' तस्माद्द्वादश वा एते प्राणाः' इति श्रुत्योः परस्परविरोधादन्यतरबलवत्त्वकारणाभावाच्च द्वयोरप्रामाण्ये श्रुतिवाक्यान्तरेष्वनाश्वासान्न ब्रह्मणि श्रुतीनां समन्वयः सिद्ध्यतीति **पूर्वपक्षः** । ज्ञानेन्द्रियाणि चक्षुरादीनि मनोबुद्धिसहितानि सप्त । तदभिप्रायेण 'सप्त प्राणा' इति श्रुतिः कर्मेन्द्रियाणि हस्तादयः पञ्च तैस्सह द्वादशसंख्याश्रुतिरिति न विरोध इति **सिद्धान्तः** । **सूत्रार्थस्तु, गतेः**=ज्ञानस्य जनकानीन्द्रियाणि **सप्त**=सप्तसंख्यानि । इति निर्णय एव । कुतः । **विशेषितत्वाच्च**='गुहाशयां निहितास्सप्तसप्त' इति विशेषणयुक्ततया निर्दिष्टत्वात् चकारात् 'सप्त प्राणास्त्ववगतेः' इति भविष्यत्पर्ववचनाच्चेत्यर्थः ॥

**सू ॥ हस्तादयस्तु स्थितेऽतो नैवम्** ॥ ७ ॥ तुशब्दो वैलक्षण्यद्योतकः । यतो **हस्तादयस्तु**=हस्तादीन्द्रियाणि तु । **स्थिते**=स्थितं कर्म । तादर्थ्ये सप्तमी । कर्मार्थानीत्यर्थः । अतः=अस्माद्वैलक्षण्यात् । तानि **एवम्**=ज्ञानेन्द्रियसहभावेन न पठितानि । अतस्तेषां सप्तता सिद्धैवेत्यर्थः ॥ **इति सप्तगत्यधिकरणम्** ॥ २ ॥

## नयमणिमालायाम् अथ प्राणाणुत्वाधिकरणम् ॥ ३ ॥

**सू ॥ अणवश्च ॥ ६ ॥**

प्राणानामानन्त्यश्रवणाद्दूरस्थितग्रहणात् । हस्त्यादितनुव्याप्तेर्विभुता स्यादन्यथाप्यनाम्नानात् ॥ १५६ ॥

गत्यागत्यनुरोधात्सूक्ष्मास्तेऽनन्ततोक्तिराध्यानार्था । वृत्त्या दूरस्थगतिर्विकासभजनाद्गजादिदेहाप्तिः ॥ १५७ ॥

**इति प्राणाणुत्वाधिकरणम् ॥ ३ ॥**

## अथ श्रैष्ठ्याधिकरणम् ॥ ४ ॥

## ॥ सू ॥ श्रेष्ठश्च ॥ ७ ॥

'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति सर्वप्राणश्रेष्ठतया श्रूयमाणः पञ्चवृत्त्यात्मा प्राणवायुर्ब्रह्मण उत्पद्यते ? न वा ? ॥

इति संशये न जायते प्राणवायुः नासदासीये सूक्ते 'आनीदवातम्' इति सृष्टेः प्रागपि प्राणचेष्टाश्रवणात् ॥

इति प्राप्ते वदामः—प्राणवायुरपि जायत एव । आनीच्छब्दो न प्राणव्यापारं वक्ति । अवातमिति तन्निषेधात् । किंतु ब्रह्मसत्त्वमेव ब्रूते । अतो न प्राणानादित्वं संभवति ॥

भवति त्वयं प्राणवायुरुत्पत्तिमान् । स तु 'सामान्यकरणवृत्तिः प्राणाद्या

## अथ श्रैष्ठ्याधिकरणम् ॥ ४ ॥

सू ॥ श्रेष्ठश्च ॥ ७ ॥ प्राणस्य भूतवायोरिंद्रियवृत्तिभ्यश्चान्यत्वं श्रुतिविरोधसमाधानेनोपपादनीयम् । तदन्यत्वानन्यत्वविचारस्तदुभयस्वरूपस्य निर्ज्ञातत्वात्सुकरो भवतीति तद्विचारचिकीर्षया तस्य कार्यत्वविचारमुखेन प्रासंगिकत्वसंपादनायेंद्रियकार्यत्वोपपादकन्यायं प्राणकार्यत्वेऽतिदेष्टुमिदं सूत्रम् । अस्य पूर्वाधिकरणेन संगतिं प्राणवायौ सौत्रश्रेष्ठपदप्रवृत्तिनिमित्तं च विवृण्वन्नेव श्रुतिविप्रतिपत्त्या संशयं दर्शयति—प्राणमिति । यदनूत्क्रमणेनें[illegible] परिच्छिन्नत्वं समर्थितं तस्य कार्यत्वं समर्थ्यत इति पूर्वाधिकरणसंगतिः । तत्र च श्रेष्ठपदमिंद्रियेभ्यः श्रैष्ठ्यपरमिति द्वयमप्यनेन विवृतम् । किंतु ब्रह्मसत्वमेवेति । अनन्यापारो हि वाताश्रयः स तु वातनिषेधेन प्रतिपाद्यमानस्सत्तारूप एव पर्यवस्यति । सत्ता च वस्तुविशेषानवच्छिन्ना-निरुपाधिकब्रह्मसत्तैव भवेदिति भावः । एवं प्रसङ्गं संपाद्य प्रासंगिकमर्थं पूर्वपक्षमुखेनावतारयति—भवति त्वयमिति । सामान्येति । यथा पञ्जरस्थानां

---

## सूत्रार्थचन्द्रिकायाम्

### अथ प्राणाणुत्वाधिकरणम् ॥ ३ ॥

सू ॥ अणवश्च ॥ ६ ॥

**भगवत्पादमते,** नन्विन्द्रियाणामपरिच्छिन्नाहंकारजन्यत्वेन विभुत्वादिन्द्रियाणामुत्पत्तिर्न संभवतीत्याक्षेपसंगत्येदमाह—**सू ॥ अणवश्च ॥ ७ ॥** अत्रोत्क्रान्त्यादिश्रुतेः 'प्राणास्सर्वेऽनन्ता' इतीन्द्रियविभुत्वश्रुत्या विरोधोऽस्ति न वेति **संदेहः** । विरोधोऽस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु,** इमे प्राणा **अणवः**=परिच्छिन्नाः । इन्द्रियाग्राह्यत्वेन सूक्ष्मत्वात् । विभुत्वश्रुतेरुपासनापरत्वान्न तयोत्क्रान्त्यादिश्रुतेर्विरोध इति सिद्धम् ॥ इति ॥

**श्रीकण्ठमते, तथा रामानुजमते च** तानीन्द्रियाणि विभूनि किमणूनीति **संदेहे** चक्षुरादीनां दूरगतवस्तुग्रहणसामर्थ्याद्विभूनीति **पूर्वपक्षः** । 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति श्रवणात् विभुत्वे गत्यसंभवाच्च न विभूनीति **सिद्धान्तः** । चक्षुरादेर्दूरगतवस्तुग्रहणसामर्थ्यं च तेजोरूपत्वादणुत्वाच्च शीघ्रगामित्वादुपपद्यते । तस्मादिन्द्रियाण्यणून्येवेति भावः । विभुत्वश्रवणमुपासनार्थम् ॥

**आनन्दतीर्थमते,** 'प्राणा वा अणवः' इति प्राणाणुत्वश्रुतेः 'दिवीव चक्षुराततम्' इति दूरश्रवणदर्शनादियुक्तिसहितया इन्द्रियव्याप्तिश्रुत्या विरोधादणुत्वश्रुतेरप्रामाण्यान्न समन्वयसिद्धिरिति **पूर्वपक्षः** । 'तद्यथा ह्यणुनश्चक्षुसः प्रकाश' इति विशेषश्रुतिसद्भावाद्व्याप्तश्रुतेश्चक्षुःप्रकाशव्याप्तिगोचरत्वाच्चाणुत्वश्रुतेर्न बाध इति **सिद्धान्तः** । **सूत्रार्थस्तु, प्राणाः**=इन्द्रियाणि । **अणवः**=स्वतोऽणूनीत्यर्थः । न केवलमणूनि किं तु तेजसा व्याप्तानि चेति चशब्दार्थः ॥

इतिप्राणाणुत्वाधिकरणम् ॥ ३ ॥

वायवः पञ्च' इति तन्त्रान्तरोक्तरीत्येन्द्रियवृत्तिभ्यः 'योऽयं प्राणः स वायुः' इति श्रुत्या भूतवायोर्वा न पृथग्भूत इत्यत आह—

॥ सू ॥ न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥

पञ्चवृत्तिः प्राणोऽयं न वायुः। न चेन्द्रियवृत्तिः,—

'एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥' इति श्रुत्या पृथगुपदेशात्। ततो वायोरिन्द्रियवृत्तिभ्यश्चान्य एव प्राणः॥

वायोरन्यत्वेऽपि न तस्य भूतान्तरत्वमित्याह—

॥ सू ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥

वायोः पृथग्भूतोऽप्ययं नाग्न्यादिवत् भूतान्तरम्, किंतु वायुरेव देहधारणयोग्यतामापद्यते स्वयं परमेश्वराधारः। 'भर्ता सन् भ्रियमाणो बिभर्ति। एको

---

सर्वेषां शुकानां साधारणो व्यापारः पञ्जरचालनं यथा वा सर्वासां खलकपोतिकानामुपरिपतितवागुरोत्क्षेपणं साधारणव्यापारः तथा शरीरस्थानां सर्वेषामिंद्रियाणां साधारणव्यापारः प्राणादिवायुपञ्चकमिति सांख्या वदंति। तथैवोपपत्तौ प्राणादिपञ्चवृत्तिर्मुख्यप्राणोऽन्यो न स्वीकरणीयः। यदींद्रियकार्येभ्यो गन्धोपलब्ध्यादिभ्योऽन्यस्य श्वसनकार्यस्य दर्शनान्मुख्यप्राण इन्द्रियवृत्तिभ्योऽन्यः स्यात् तदा प्राणापानादयोऽपि कार्यभेदाद् भिन्नाः स्युरिति पञ्चवृत्तिर्मुख्यप्राण इति न सिद्ध्येदिति पूर्वपक्षः। एवं वादिविप्रतिपत्तिनिरासः श्रुतिविप्रतिपत्तिनिरासार्थेऽस्मिन्पादे संगतिरहितत्वादन्वाचयशिष्टः। पूर्वपक्षांतरार्था त्वधिकरणप्रवृत्तिः। तत्पूर्वपक्षांतरमित्थम्—'यः प्राणस्स वायु' रिति श्रुतेः प्राणो भूतवायोर्न भिद्यते। पृथगुपदेशाद्भूतवायोरवस्थान्तरं प्राणः न वायुरेवेति चेत् तर्हि तदवस्थान्तररूपस्य तेजस इव प्राणस्यापि पूर्वावस्थारूपवायुत्वपरित्यागः स्यादिति। सू ॥ न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥ अन्य एवेति। 'यः प्राण स्स वायुरिति' श्रुतिः प्राणस्य वाय्ववस्थांतरत्वेन वायुविशेषत्वादुपपद्यते इति भावः। तदवस्थान्तरत्वे तेजस इव वायुत्वपरित्यागेन भूतान्तरत्वप्रसङ्ग इति शंकोत्तरत्वेनोत्तरसूत्रमवतारयति—वायोरन्यत्व इति। सू॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥९॥ नन्वनेन सूत्रेण प्राणस्य वायुत्वपरित्यागप्रसंगस्य तेजोदृष्टांतोपपादितस्य न कश्चित्परिहार उच्यते। वायुत्वपरित्यागेऽपि चक्षुरादिवज्जीवोपकरणत्वसंभवादित्याशंक्य सूत्रेण विवक्षितं परिहारमाह—वायोरिति। सत्येव तंतूनां तन्तुत्वे परस्परसंयोगेन शकटाकर्षणयोग्यतापत्तिरिव सत्येव प्राणस्य वायुत्वे देहधारणयोग्यतापत्तिरस्यावस्थान्तरापत्तिरिति न भूतान्तरत्वप्रसंग इति भावः। एकैकतन्तुष्वदृष्टा शकटाकर्षणयोग्यता मिलितेषु तन्तुषु संयोगविशेषेणेव वाय्वन्तरेष्वदृष्टा देहधारणयोग्यतास्य केन विशेषेणेत्याशंकायामाह—स्वयमिति। यथायं देहधारणयोग्यो भवति तथैनं परमेश्वर उत्तम्भातीत्यर्थः। भर्ता सन्निति। परमेश्वरेण स्वयं भ्रियमाण एव भर्ता भरणशक्तस्सन्बिभर्ति कार्यकारणसंघातम्। एको देवो मुख्यप्राणः बहुधा प्राणा-

(१) 'न स एव' इति ख. पाठः।

देवो बहुधा निविष्टः' 'त्वमेकोऽसि बहूननुप्रविष्टः' 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः' इत्यादिश्रुतेः। किंच। अयं चक्षुरादिवज्जीवोपकरणम्। प्राणसंवादादिषु चक्षुरादिभिः सहोपदेशात् तत्तुल्योपकारमुख्यत्वादिभ्यश्च॥

॥ सू॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥

अकरणमक्रिया। न जीवोपकारक्रियारहितत्वात् दोषः। यतः श्रुतिरेव देहेन्द्रियाद्यशैथिल्यकारणं वायुरिति दर्शयति। प्राणसंवादे 'यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' इति प्रजापतिवचनानन्तरं, वागाद्युत्क्रमणेऽपि देहस्येन्द्रियाणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे देहेन्द्रियशैथिल्याभिधानात्॥

॥ सू॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥

प्राण एक एव स्ववृत्तिभिः पञ्चभिः प्राणापानादिसंज्ञाभेदभाग्भवति, यथा

---

पानादिबहुप्रकारेण निविष्ट इत्यर्थः। प्राणानां प्राणापानादिवृत्तीनां ग्रन्थिः ग्रथयिता तत्र तत्र स्थापक इत्यर्थः। आदिशब्दो 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ'। इत्यादिश्रुत्यंतरसंग्राहकः। प्राणस्य देहधारकत्वे युक्त्युपन्यासपरत्वेन सूत्रं योजयति—किं चायमिति। चक्षुरादिवदेव प्राणोऽपि जीवस्योपकरणविशेष इति मन्तव्यम्। प्राणसंवादादिप्रदेशेषु तस्य चक्षुरादिभिस्सह पाठात्। 'अथ ह प्राणा अहं श्रेयसे व्यूदिरे अहं श्रेयानस्म्यहं श्रेयानस्मी'ति चक्षुरादिभिस्सह कलहेन तत्तुल्योपकारकत्वसन्देहसूचनात् तदनंतरं त्वं नः श्रेष्ठोऽसीति चक्षुरादिवचनेन प्राणस्य मुख्यत्वनिर्धारणाच्च। समानजातीयानां हि सहपाठस्तुल्योपकारत्वसंशयेन च परस्परोत्कर्षकलहः। तन्निर्धारणार्थं 'ते ह प्राणाः प्रजापतिं पितरमेत्योचुः भगवन् को नः श्रेष्ठ' इति प्रश्नः। कस्यचिदुपकारातिशयदर्शनेन मुख्यत्वनिर्धारणञ्च भवति। जीवोपकरणत्वेन प्रसिद्धेः। समानजातीयत्वं च जीवोपकरणस्य भवति। प्राणस्य तदुपकरणत्वं च देहधारणादृते नान्येनोपकारेणोपपद्यत इति भावः। नन्वप्राणस्य पाषाणादेरिव देहस्यापि प्राणेन धारणं नापेक्षितम्। अतो न देहधारणं जीवोपकारः इत्याशंक्य प्राणस्य देहनियतधारकत्वमन्वयव्यतिरेकाभ्यां तत्प्रदर्शनपरां श्रुतिमुदाहृत्य व्यवस्थापयितुं सूत्रम् सू॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति॥ १०॥ करणमुपकारक्रिया तद्रहितत्वाद्यो दोषः जीवोपकरणत्वासंभवदोषः स न प्रवर्तते। श्रुतिरेव हि तथा देहधारकतया जीवोपकरणत्वेन प्राणं दर्शयतीति सूत्रार्थं विवृण्वन्नुक्तशङ्कां निरस्यति—अकरणमिति। इंद्रियवृत्तित्वपूर्वपक्षबीजशंकानिराकरणार्थं सूत्रम्—सू॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते॥ ११॥ मुख्यप्राणस्य कार्यभेदादिंद्रियवृत्तिभ्यो भेदाभ्युपगमे प्राणापानादयोऽपि मुख्यप्राणवृत्तिभ्यो भिन्नाः स्युः कार्यभेदादेव इति हि शंका। नेयमुपपद्यते। प्राणस्य इंद्रियवृत्तित्वकल्पने हि न तावन्मिलितानामिंद्रियाणां स वृत्तिः। चक्षुराद्येकद्विचतुरभावे प्राणनाभावप्रसङ्गात्। नाप्येकस्यैव त्वगिन्द्रियस्य वृत्तिः। सामान्यकरणवृत्तित्वाभ्युपगमभंगप्रसंगात्

---

( १ ) 'जीवस्य देहे धार्यमाणत्वं' इति. ख. पाठः।

कामादिभिर्मन एकमेव । अतः प्राण एक एव भूतवायविन्द्रियवृत्तिव्यतिरिक्तो जीवोपकारक इति सिद्धम् ॥ इति श्रैष्ठ्याधिकरणम् ॥ ४ ॥

---

शरीरैकदेशे त्वगिन्द्रियोपहतौ तत्र प्राणनव्यापाराभावप्रसंगाच्च । तस्मात् 'पृथगुपदेशात्' सामान्यकरणवृत्तित्वानुपपत्तेश्च प्राणः करणवृत्तिभ्यो भिन्न इति युक्तम् । न तथा प्राणापानादीनां मुख्यप्राणतः पृथगुपदेशोऽस्ति । नाप्यनन्यथासिद्धः कार्यभेदोऽस्ति । एकस्यैव वायोर्हृदयादिस्थानविशेषावच्छेदेन तत्तत्कार्यकरत्वोपपत्तेः तत एव प्राणापानादीनां भेदोपपत्तेश्च । तस्मात् 'पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य धारयामी' ति श्रुतेर्मुख्यप्राण एक एव प्राणापानादिभेदेन पंचवृत्तिरिति युक्तम् । यथा 'कामस्सङ्कल्पो विचिकित्से'त्यादिश्रुतेरेकमेव मनः कामसंकल्पाद्यनेकवृत्तीति । अधिकरणार्थमुपसंहरति—अत इति । 'श्रेष्ठश्चे'ति सूत्रं पादाद्याधिकरणन्यायसिद्धार्थस्मरणार्थमिति तदर्थो नोपसंहृतः ॥

इति श्रैष्ठ्याधिकरणम् ॥ ४ ॥

---

## नयमणिमालायाम् अथ श्रैष्ठ्याधिकरणम् ॥ ४ ॥

सू ॥ श्रेष्ठश्च ॥ ७ ॥ न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥

नित्यो मुख्यप्राणः प्रलये तद्व्यापृतेरसत्त्वात् । आनीदिति यत्सूक्ते परिपठितं नासदासीये ॥ १५८ ॥

आनीदिति शिवसत्ताविषयं प्राणो ह्यवातमित्यस्तः । सोऽपि च न वातमात्रं न तत्क्रिया वा पृथग्जनिश्रवणात् ॥१५९॥

इति श्रैष्ठ्याधिकरणम् ॥ ४ ॥

## सूत्रार्थचन्द्रिकायाम् अथ प्राणश्रैष्ठ्याधिकरणम् ॥ ४ ॥

सू ॥ श्रेष्ठश्च ॥ ७ ॥ न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥ अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ १० ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥

**भगवत्पादमते,** अत्र 'एतस्माज्जायते प्राणः' इति मुख्यप्राणोत्पत्तिश्रुतेः 'आनीदवात' मिति सृष्टेः प्राङ्महाप्रलये प्राणसद्भावश्रुत्या विरोधोऽस्ति न वेति **संदेहः** । अस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु** इन्द्रियवत् श्रेष्ठोऽपि प्राणो ब्रह्मणो जायते । अतः 'आनीदवात' मिति श्रुतौ आनीच्छब्दः कारणसद्भावं दर्शयति । अवातं प्राणरहितमिति विशेषणात् । न तया श्रुत्या प्राणोत्पत्तिश्रुतेर्विरोध इति सिद्धम् ॥ इति प्राणश्रैष्ठ्याधिकरणम् ॥ ४ ॥

## अथ वायुक्रियाधिकरणम् ॥ ५ ॥

उत्पत्तिचिन्तानन्तरं तस्य स्वरूपं विचार्यते—सू ॥ **न वायुक्रिये पृथगुपदेशात्** ॥ ९ ॥ अत्र मुख्यः प्राणः किं वायुरेव उत इन्द्रियव्यापारः आहोस्विद्वायुविशेष इति त्रेधा **संशयः** । 'यः प्राणस्स वायु' रिति 'एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च । खं वायु' रिति भेदाभेदश्रुत्योरुभयोर्विरोधे भेदश्रुतेर्गौणत्वाङ्गीकारे वायुरेव प्राण इति भेदश्रुत्यवष्टंभे सर्वेन्द्रियव्यापार एव प्राण इति च द्वेधा **पूर्वपक्षः** प्राप्तः । **सिद्धान्तस्तु,** मुख्यप्राणो **न वायुक्रिये**=न वायुर्नापीन्द्रियव्यापारः किं तु वायुविशेष एव । कुतः । **पृथगुपदेशात्**='स वायुना ज्योतिषा' इति वायोः तथा 'एतस्माज्जायते प्राणः' इत्यादिना करणेभ्यश्च पृथगुपदेशात् । तस्माद्वायुविशेषोऽयमध्यात्मभावापन्नः पंचवृत्तिः प्राणः इति ॥ ततश्च न श्रुत्योर्विरोध इति सिद्धम् ॥

इन्द्रियव्यापारस्य प्राणत्वाभावे प्राणस्य जीववत्स्वातन्त्र्यं स्यादित्यत आह—सू ॥ **चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः** ॥ १० ॥ तुरुक्तशंकाव्यावर्तकः । प्राणो न जीववत्स्वतंत्रः । किं तु चक्षुरादिवत् जीवं प्रति करणभूतः । कुतः ॥ **तत्सहशिष्ट्यादिभ्यः**=तैश्चक्षुरादिभिस्सह प्राणसंवादादिषु प्राणस्य **शिष्टेः**=शासनात् । अचेतनत्वादिरादिशब्दार्थः ॥

ननु प्राणस्य जीवोपकरणत्वे तस्य विषयान्तरं प्रसज्येतेत्यत आह—सू ॥ **अकरणत्वाच्च न दोषस्तथा हि दर्शयति** ॥ ११ ॥ अकरणत्वान्न प्राणस्य विषयान्तरापेक्षा दोषः । कस्मात् । तथाहि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्यासाधारणं कार्यं 'तान्वरिष्ठः प्राण उवाचे' त्यादिना दर्शयतीत्यर्थः ॥

किंच ॥ सू ॥ **पञ्चवृत्तिर्मनोवद्व्यपदिश्यते** ॥ १२ ॥ **मनोवत्**=यथा मनः वृत्त्याख्यानेकव्यापारापेक्षया अनेकधा व्यपदिश्यते तद्वत् । उच्छ्वासनिश्वासादिव्यापारानपेक्ष्य पञ्चवृत्तिः प्राणः प्राणापानादिसंज्ञया व्यपदिश्यते ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च '**श्रेष्ठश्चे**' त्यादिकं '**पञ्चवृत्तिर्मनोवद्व्यपदिश्यते**' इत्यन्तमेकमेवाधिकरणम्। अधिकरणैकत्वरूपवैलक्षण्येऽपि संदेहपूर्वपक्षादिकं प्रायोऽविशिष्टमेव शांकरमतात्। अनयोर्मतयोः प्रथमसूत्रेण मुख्यप्राणस्यापि ब्रह्मण उत्पत्तिं प्रसाध्य तस्यैवेन्द्रियवृत्तेर्वा भूतवायोर्वा अपृथग्भावमाशंक्य '**न वायुक्रिये पृथगुपदेशा**'दिति सूत्रेण ताभ्यां पृथग्भावः प्रसाधितः । **रामानुजमते** परं '**न वायुक्रिये पृथगुपदेशा**' दिति सूत्रे क्रियाशब्दं वायुक्रियापरतया व्याख्याय तदानुगुण्येन मुख्यप्राणस्य वायुक्रियायाः पृथग्भावस्साधित इति विशेषः। आद्यं सूत्रद्वयमविशिष्टार्थमेव शांकरमतात् ॥

मुख्यप्राणस्य वायोरन्यत्वेऽपि नाग्न्यादिवत्तस्य भूतान्तरत्वमित्याह—**सू ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥** प्राणो नाकाशादिवद्भूतान्तरमपि तु वायुरेवावस्थान्तरमापन्नश्च**क्षुरादिव**ज्जीवोपकरणम् । कुतः । **तत्सहशिष्ट्यादिभ्यः**=प्राणसंवादादिषु चक्षुरादिभिस्सहोपदेशात् तत्तुल्योपकारमुख्यत्वादिभिश्चेत्यर्थः ॥

**सू ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥१०॥ अकरणत्वाच्च**=प्राणस्य जीवं प्रत्युपकारविशेषरहितत्वाच्च **दोषो नास्ति । तथाहि दर्शयति**=यतः श्रुतिरेव देहेन्द्रियाद्यशैथिल्यकारणं वायुरिति दर्शयति इत्यर्थः ॥

**सू ॥ पंचवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥** अस्यार्थश्शांकरमतवदेव । अतः प्राण एव भूतवाय्विन्द्रियव्यतिरिक्तो जीवोपकारक इति सिद्धम् ॥

**आनन्दतीर्थमते,** इदं सूत्रपञ्चकमपि श्रेष्ठाधिकरणं चक्षुराद्यधिकरणं पञ्चवृत्त्यधिकरणमिति चाधिकरणत्रयतया विभक्तम्। आद्ये 'नैष प्राण उदेति नास्तमेती'ति श्रुत्या 'यत्प्राप्तिर्यत्परित्यागः उत्पत्तिर्मरणं तथा । तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते ॥' इति स्मृत्युक्तयुक्तिसाहित्येन प्रबलया विरोधात् 'आत्मन एष प्राणो जायते' इति तदुत्पत्तिश्रुतिरप्रमाणमिति **पूर्वपक्षः । श्रेष्ठश्च**=यथेतरे प्राणा उत्पद्यन्ते एवं मुख्यप्राणोऽपि विष्णोरुत्पद्यत एव । न त्वनुत्पत्तिमान्। 'सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनेति सूक्ष्मश्चाथो स्थूलश्च प्रकृतितस्सूक्ष्मोऽन्यतस्स्थूलोऽथैनमाहुस्सादिरनादि'रिति श्रुतेरनुत्पत्तिश्रुतेस्स्वाभाविकसूक्ष्मरूपविषयत्वादिति **सिद्धान्तः ।** आद्यं सूत्रं व्याख्यातम् ॥

यद्यपि प्राणशब्दो बाह्यवायौ चेष्टारूपक्रियायां मुख्यप्राणे च वर्तते तथापि प्राणोत्पत्तिश्रुतेर्न वायुक्रिये विषय इत्याह—**सू ॥ न वायुक्रिये पृथगुपदेशात् ॥ १० ॥ वायुक्रिये**=बाह्यवायुचेष्टाख्यकर्मणी । **न**='एतस्मा' दिति प्राणोत्पत्तिश्रुतिप्रतिपाद्ये न भवतः। किं तु मुख्यवायुरेव तत्प्रतिपाद्यः। कुतः। **पृथगुपदेशात्**='स प्राणमसृजते' त्यादिश्रुतौ मुख्यवायूत्पत्तिश्रुतेः वायुक्रियोत्पत्तिभ्यां सकाशात्पृथक्छ्रवणात् ॥ इत्यर्थः ॥ **इति श्रेष्ठाधिकरणम् ॥ ६ ॥**

**अथ चक्षुराद्यधिकरणम् ॥ ७ ॥**

अत्र 'न प्राणः किं चिदाश्रितः' इति मुख्यप्राणस्य स्वातन्त्र्यं प्रतिपादयन्त्याः आग्निवेश्यश्रुतेः 'यदाश्रया अस्य चेष्टा-कथमुपाश्रयेत्' इति स्मृत्युक्तसकलजगच्चेष्टकत्वयुक्तिसाहित्येन प्रबलत्वात् तया 'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः।' इति तस्येश्वरपारतन्त्र्यं वदन्त्याः पैङ्गश्रुतेर्बाधादप्रामाण्यमिति **पूर्वपक्षः । सिद्धान्तस्तु** मुख्यप्राणोऽपि चक्षुरादिवदीश्वरपरतन्त्र एव । न तु स्वतन्त्रः । कुतः । **तत्सहशिष्ट्यादिभ्यः**=तैश्चक्षुरादिभिस्सह मुख्यवायोरपि 'सर्वं ह्येवैत' दिति श्रुतौ पराधीनत्वोक्तेः। तस्य कर्तृत्वादियुक्तत्वयुक्तिभ्यश्चेति आदिशब्दार्थः ॥ ईश्वरद्वयानुपपत्तिरूपयुक्तिविरोधात् सर्वेश्वरत्वानन्येश्वरत्वश्रुतिर्बाध्यत इति भावः । मुख्यस्यानन्येश्वरत्ववचनानि विशेषश्रुत्यनुसारेणानेकेश्वरत्वप्रसंगयुक्तिविरोधेन च भगवदतिरिक्तनियन्तृनिषेधपराणीत्यविरोध इति यावत् ॥

ननु चक्षुरादितुल्यतया तस्य कथं भगवदतिरिक्तनियन्तृराहित्यमित्याशंक्याह—**सू ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥** इतरेषां प्राणानां करणत्वान्मुख्यप्राणस्याकरणत्वाच्च तस्यान्येभ्य उत्तमत्वं युज्यते । अतो **न दोषः**=मुख्यप्राणस्वातन्त्र्यवाचिश्रुतेरवान्तरेश्वरपरत्वाभावदोषो नास्ति । कस्मादेवं कल्प्यत इति चेत् **हि**=यस्मात् 'तानि ह वा' इति श्रुतिः। **तथा**=उक्तप्रकारेण । **दर्शयति**=ज्ञापयति तस्मादित्यर्थः ॥ **इति चक्षुराद्यधिकरणम् ॥ ७ ॥**

**अथ पञ्चवृत्त्यधिकरणम् ॥ ८ ॥**

**सू ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥** अत्र ये प्राणापानादयः पञ्च वायवस्ते मुख्यप्राणस्य दासा वा उत तस्य स्वरूपाणि वेति **संदेहे** 'सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानस्समान' इति 'मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च वायवः। स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम् ॥' इति च युक्तिसाहित्येन समप्राधान्ये उभे श्रुती श्रूयेते। उभयोः परस्परविरोधादुभयोरप्रामाण्येन समन्वयासिद्धिरिति **पूर्वपक्षः । सिद्धान्तस्तु, मनोवत्**=यथा मनो द्विविधैर्मनःप्रभृतिभिः पञ्चवृत्ति पञ्चदासं च तथा मुख्यप्राणोऽपि द्विविधैः प्राणादिभिः तथा व्यपदिश्यते। 'प्राणो वाव पञ्चवृत्तिः प्राणोऽपानो व्यान उदानस्समान इति तेभ्यो वा एतेभ्यः पंच दासाः प्रजायन्ते प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्व्यान उदानादुदानस्समानादेव समानो यथा हवै मनः पञ्चधा व्यपदिश्यते मनो बुद्धिरहङ्कारश्चित्तं चेतनेति तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते मनसो वाव मनो बुद्धेश्च बुद्धिरहङ्कारादहङ्कारश्चित्ताच्चित्तं चेतनाया एव चेतनैव' मिति। अतो विषयभेदेन श्रुत्योरविरोध इति । स्वरूपभूताः प्राणादयो मुख्यगुणपरिपूर्णाः दासास्तु किंचित्तदीयगुणशालिनः इति भेदः ॥ **इति पंचवृत्त्यधिकरणम् ॥ ८ ॥ इति सूत्रार्थचन्द्रिकायां प्राणश्रैष्ठ्याधिकरणम् ॥ ४ ॥**

## अथ मुख्यप्राणाणुत्वाधिकरणम् ॥ ५ ॥

### ॥ सू ॥ अणुश्च ॥ १२ ॥

पञ्चवृत्तिरयं प्राणवायुरिन्द्रियवदणुर्विभुर्वेति संदेहे सति, नाणुरयम्, 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' 'प्राणे सर्वं प्रतिष्ठितम्' 'सर्वं हीदं प्राणेनावृतम्' इति श्रुतेः सर्वावारकतया व्यापी प्राणः ॥

इति प्राप्ते ब्रूमः–अणुरेव प्राणवायुः, 'प्राणमनूत्क्रामन्तम्' इति तस्य गतिश्रवणात् । आधिदैविकस्य हिरण्यगर्भप्राणस्य विभुत्वं न व्यष्टिरूपस्येति न विरोधः। तस्मादणुरेव प्राणः पञ्चवृत्तिरिति ॥ इति मुख्यप्राणाणुत्वाधिकरणम्॥५॥

---

## अथ मुख्यप्राणाणुत्वाधिकरणम् ॥ ५ ॥

सू ॥ अणुश्च ॥ १२॥ ननु 'सर्वेऽनन्ता' इति इन्द्रियाणामानन्त्यश्रुतौ सत्यामप्युत्क्रमणलिंगेन तेषां परिच्छिन्नत्वं प्रसाधितम् । एवं 'समोऽनेन सर्वेणे'ति व्यापित्वश्रुतौ सत्यामपि तेनैव लिंगेन प्राणस्यापि परिच्छिन्नत्वं सिद्ध्येत् किमनेनाधिकरणेन । न च वाच्यमुपास्तिविधानान्तर्गतत्वाद्दुर्बलमिति । सर्वसाम्यश्रवणेऽपि तुल्यत्वात् । तत्रापि 'साम प्राण'इत्युक्त्वा 'य एवमेतत्साम वेद' इत्युपास्तिविधानात् इत्याशंक्याधिकरणारंभहेतुभूतामधिकाशंकां दर्शयति–सर्वावारकतयेति । उदाहृतश्रुतौ हि प्राणस्य सर्वसाम्यमुक्त्वा तत्रोपपत्तितया 'सर्वं हीदं प्राणेनावृत'मित्युक्तम् । अतस्सोपपत्तिकतयोत्क्रमणलिंगतः प्रबलेन सर्वसाम्यलिंगेन प्राणस्य विभुत्वसिद्धावुत्क्रमणलिंगमौपाधिकोत्क्रमणतया नेतव्यम् । 'सम एभिस्त्रिभिर्लोकै'रित्यतः प्राक्'समः प्लुषिणा समो मशकेन समो नागेने'ति वाक्यान्यपि घटकरकाद्याकाशन्यायेन औपाधिकपरिच्छेदपरतया योजनीयानीति भावः । आधिदैविकस्येति । सर्वसाम्यवचनं समष्टिप्राणविषयमित्यविरोधे संभवति न सर्वविषयत्वं कल्पनीयमिति भावः ॥ इति मुख्यप्राणाणुत्वाधिकरणम् ॥ ५ ॥

---

### नयमणिमालायाम् अथ मुख्यप्राणाणुत्वाधिकरणम् ॥ ५ ॥

सू ॥ अणुश्च ॥ १२ ॥

लोकैस्त्रिभिस्समानस्सर्वेण यतश्च सम उक्तः । सर्वस्य च प्रतिष्ठा तस्माद्विभुरेव इत्युदितम् ॥ १६० ॥

उत्क्रान्त्याद्यनुरोधादयमप्यणुरक्षवद्युक्तः । लोकत्रयसाम्यादेराम्नानं स्यात्समष्टिपरम् ॥ १६१ ॥

इति मुख्यप्राणाणुत्वाधिकरणम् ॥ ५ ॥

### सूत्रार्थचन्द्रिकायाम्

### अथ मुख्यप्राणाणुत्वाधिकरणम् ॥ ५ ॥

सू ॥ अणुश्च ॥ १२ ॥

भगवत्पादमते, पंचवृत्तेः प्राणस्यान्तरंगस्वरूपकथनानन्तरं बहिरंगपरिमाणमतिदिशति—सू ॥ अणुश्च ॥ १३ ॥ अत्रोत्क्रान्त्यादिश्रुतेः 'सम एभिस्त्रिभिर्लोकैः' इत्यादिप्राणविभुत्वश्रुतेश्च मिथो विरोधोऽस्ति न वेति संदेहः । अस्तीति पूर्वपक्षः । सिद्धान्तस्तु, चक्षुरादिवत्प्राणोऽप्यणुः परिच्छिन्नः सूक्ष्मश्च । 'सम एभिः' इति श्रुतिः सकलवायुपरा, नाध्यात्मिकप्राणमात्रपरेत्यनयोर्न विरोध इति सिद्धमिति ॥

श्रीकण्ठमते, तथा रामानुजमते च अत्राधिकरणे संदेहादिषु नास्ति वैशिष्ट्यं पूर्वस्मादिति वेद्यम् ॥

आनन्दतीर्थमते, मुख्यप्राणोऽणुर्वा व्याप्तो वेति संदेहः । 'प्राण एवाधस्तात्प्राण उपरिष्टात्प्राणो मध्यतः प्राणस्सर्वत'

## अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

**॥ सू ॥ ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ॥ १३ ॥**

इह 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्' इत्यादिश्रुत्या चक्षुरादीनामादित्याद्यधिष्ठानं श्रूयते। जीवस्य च रूपादिग्रहणाय तदधिष्ठानमुपदिश्यते 'एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इति। तदिदं जीवेन सहेन्द्रियाधिष्ठानमादित्यादीनां परमेश्वरायत्तमुत स्वतन्त्रम् ॥

इति संशये 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्' इत्यादिषु स्वातन्त्र्यश्रवणादादित्याद्यधिष्ठानं न परमेश्वरायत्तमिति पूर्वः पक्षः ॥

सिद्धान्तस्तु—परमेश्वरायत्तमिन्द्रियाद्यधिष्ठानमादित्यादीनाम्। कुतः? 'य आदित्यमन्तरो यमयति' 'य आत्मानमन्तरो यमयति' इत्यादिश्रवणात्, परमेश्वरसंकल्पपूर्वकत्वाच्च सर्वप्रवृत्तीनाम्। तस्मादिन्द्रियाद्यधिष्ठानं जीवस्यादित्यादीनां च परमेश्वरायत्तमेव ॥

**॥ सू ॥ तस्य च नित्यत्वात् ॥ १४ ॥**

सर्वस्य च परमेश्वरनियम्यत्वं नित्यमेव। अतोऽपि परमेश्वरसंकल्पायत्तमेवै-

---

## अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

सू ॥ ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ १३ ॥ आदित्यादीनामभिमानिदेवतानां जीवस्य च श्रुतिसिद्धं प्राणाधिष्ठातृत्वम्। तत्राभिमानिदेवतानां [illegible]ातृत्वमीश्वरायत्तं स्वतन्त्रं वेति संशये यद्यऽपि 'परात्तु तच्छ्रुते' रि (ब्र—२. ३—४०) त्यधिकरणे जीवानां कर्तृत्वमीश्वरायत्तमित्यविशेषेणोपपादितं तथाप्यादित्यादीनामीश्वरदत्तैश्वर्याणामीश्वरवदाराध्यत्वफलप्रदत्वादिसत्त्वेन स्वातन्त्र्यमप्यस्तु कर्तृत्वस्य परायत्तताश्रुतेः मनुष्यादिविषयत्वेन 'समोऽनेन सर्वेणे'ति श्रुतेस्समष्टिप्राणविषयत्वेनेव संकोचसंभवे तत्तदैश्वर्यश्रवणानुगृहीतस्य स्वातंत्र्यश्रवणस्य बाधनायोगादिति पूर्वः पक्षः। अत्र सौत्रं सिद्धांतमाह—सिद्धांन्तस्त्विति। ज्योतिरादीनामादित्यादीनां यदधिष्ठानं चक्षुराद्यधिष्ठातृत्वं तत् तदामननात्तस्य परमेश्वरस्य सङ्कल्पात्। कुतः। तस्यान्तर्यामित्वश्रुतेरिति सूत्रार्थः। प्राणवता जीवेन सहेति दृष्टान्तार्थमुपादानम्। यथा जीवस्य स्वातन्त्र्यश्रवणेऽपि तस्येंद्रियाधिष्ठातृत्वं परायत्तम् एवमिंद्रियाभिमानिदेवतानामपीति भावः। ननु परमेश्वरदत्तैश्वर्येण देवतानां मनुष्यादिजीवाद्विशेषोऽस्तीति शंकानिराकरणार्थं सूत्रम्—तस्य च नित्यत्वात् ॥ १४ ॥ 'स ईशोऽस्य जगतो नित्यमेवे'ति श्रुतेर्नित्यं संसारिणां परमेश्वरनियम्यत्वम्। अतः प्रागधिकारप्राप्तेः परमेश्वरनियम्यानां तदनन्तरमपि नियम्य-

---

इति प्राणव्याप्तिश्रुत्या 'एतत्सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु। अतो धृतं जगत्सर्वमन्यथा केन धार्यते' इति स्मृत्युक्तयुक्तिसहितया बाधात् 'अणुनैतत्सृज्यते अणुनैतद्धार्यते अणौ लयमभ्युपैति प्राणोऽणु' रिति श्रुतिरप्रमाणमिति पूर्वपक्षः। 'अणुरेव मुख्यप्राणोऽयमुत्क्रामति नाडीभि' रिति सयुक्तिकश्रुतेरणुरेवायम्। व्याप्तिश्रुतिस्तु सप्तस्कंधगतलोकधारकमुख्यवायुरूपस्य तस्य व्याप्तिमाह—'स वा एष प्राणोऽणुर्महा' नित्यादिश्रुतेरिति सिद्धान्तः। सूत्रार्थः स्पष्टः ॥

इति मुख्यप्राणाणुत्वाधिकरणम् ॥ ५ ॥

पामधिष्ठातृत्वम् ॥ इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

## अथ त इन्द्रियाधिकरणम् ॥ ७ ॥

## ॥ सू ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

इह पूर्वोक्तानि वागादीनीन्द्रियाणि प्राणवृत्तिभ्यो भिन्नानि न वा ?. इति संशये तानि मुख्यप्राणवृत्तय एव, 'एतस्यैव सर्वे रूपमभवन्' इत्या-

---

त्वमवर्जनीयमिति भावः । इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

## अथ त इंद्रियाधिकरणम् ॥ ७ ॥

सू ॥ इंद्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥ इंद्रियवृत्तिः प्राण इति शङ्का 'न वायुक्रिये' इत्यधिकरणे निरस्ता । इह 'प्राणवृत्तय इन्द्रियाणीति' शङ्का निरस्यते । नन्विन्द्रियाणामादित्यादीनधिष्ठातॄन्सिद्धवत्कृत्य तेषामधिष्ठातृत्वं परमेश्वरायत्तमिति पूर्वाधिकरणे प्रसाधितम् । तन्न सिद्ध्येत् यदि प्राणवृत्तय इंद्रियाणि स्युः । न हि वृत्तिमदधिष्ठातृव्यतिरेकेण वृत्तीनामधिष्ठात्रपेक्षास्ति । वृत्तिप्रसरणार्थत्वाद्वृत्तिमदधिष्ठानस्य । सत्यम् । इह तदेवाक्षिप्यते । अत एवाक्षेपिकी सङ्गतिरस्याधिकरणस्य । न च श्रुतिसिद्धमादित्यादीनां चक्षुराद्यधिष्ठातृत्वमाक्षेप्तुमशक्यमिति वाच्यम् । चक्षुरादीनामादित्यादिरूपत्वेनादित्यादिदैवत्यत्वेन वोपासनार्थानि 'आदित्यश्चक्षुर्भूत्वेत्यादि' वाक्यानीत्युपपत्तेः । यथाश्रुतार्थस्य वाधितत्वात् । अस्मदादीन्द्रियाणामादित्याद्यधिष्ठानेन ज्ञानकर्मार्जकत्वे हि तत्प्रयुक्तपुण्यपापफलभोक्तृत्वमपि तेषां प्रसज्यते । कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यनियमात् । जीवाधिष्ठितानामिन्द्रियाणामादित्यादिभिरप्यधिष्ठितत्वे जीवस्यादित्यादीनाञ्च कदाचिद्वैमत्येन कार्यानिष्पत्तिप्रसङ्गाच्च । न च जीवो नेन्द्रियाणामधिष्ठाता तद्गोचरापरोक्षज्ञानरहितत्वात् किं

---

### नयमणिमालायाम्

### अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

सू ॥ ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवताशब्दात् ॥ १३ ॥ तस्य च नित्यत्वात् ॥ १४ ॥

अक्षाधिष्ठातृत्वं जीवस्याग्न्यादिदेवतानां च । न परस्मिन्नायतते तदधिकृतेः पूर्वमेव दत्तत्वात् ॥ १६२ ॥

जीवाग्निप्रभृतीनामन्तर्याम्यादिशास्त्रतोऽवगतम् । नित्यं हि पारतन्त्र्यं तस्मात्तत्स्यात्परायत्तम् ॥ १६३ ॥

इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

### सूत्रार्थचन्द्रिकायाम्

### अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

सू ॥ ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवताशब्दात् ॥ १३ ॥ तस्य च नित्यत्वात् ॥ १४ ॥

भगवत्पादमते अत्र आधिदैविकाद्यधिष्ठितानामाध्यात्मिकानामिन्द्रियाणां चेष्टामाचष्टे—ज्योतिरादीत्यादिना । 'आदित्यश्चक्षुर्भूत्वे' त्यादिनेन्द्रियाणां देवताधीनचेष्टावत्त्वश्रुतेः 'चक्षुषा हि रूपाणि पश्यती' ति श्रुत्या विरोधोऽस्ति न वेति संदेहः । अस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु, ज्योतिराद्यधिष्ठानं तु**=ज्योतिरादिभिरादित्यादिभिरधिष्ठीयते प्रेर्यते इत्यधिष्ठानम् अधिष्ठितं वागादिकं चेष्टते । कुतः । **तदामननात्**=तस्य देवताधिष्ठितत्वस्य 'आदित्यश्चक्षु' रित्यादिश्रुत्याभिधानात् । 'चक्षुषा ही' ति श्रुतौ तु देवताधिष्ठितत्वानिषेधात् न तयैतस्या विरोध इति सिद्धम् ॥

देवतानामधिष्ठातृत्वे तासां भोक्तृत्वं प्रसज्येतेत्यत आह—सू ॥ **प्राणवता शब्दात्** ॥ १५ ॥ **प्राणवता**=जीवेनैवेन्द्रियाणां स्वस्वामिभावः संवन्धः । ततश्चेन्द्रियसाध्यभोगभाक्त्वं जीवस्यैव न देवतानाम् । कुतः । **शब्दात्**='स चाक्षुषः पुरुषो दर्शनाय चक्षु' रित्यादिश्रुतेरित्यर्थः ॥

दिना तेषां प्राणरूपत्वश्रवणात्, वागादीनामुपरमरूपे मरणे प्राणो गत इति व्यवहारसामान्याच्च । तस्मात् प्राणादनन्यानीन्द्रियाणि ॥

इति प्राप्ते ब्रूमः–मुख्यप्राणादन्यान्येवेन्द्रियाणि, श्रेष्ठादन्ये ये प्राणास्त इन्द्रि-

त्वादित्यादय एव तेषामतीन्द्रियार्थदर्शित्वादिति वाच्यम् । जीवस्याप्यभिमतार्थग्राहके-न्द्रियमनस्संयोजनादिव्यापारेण ज्ञानेन्द्रियकर्मेन्द्रियाधिष्ठातृत्वस्यानुभवसिद्धत्वात् । 'अथ यो वेदेदं जिघ्राणीति स आत्मे'त्यादिश्रुतिषु सङ्कल्पपूर्वकं जीवे गन्धाघ्राणादिसंपादकत्वस्य प्रतिपादनाच्च । इन्द्रियाणामतीन्द्रियत्वेऽपि तेषामभिमतार्थग्रहणाय नोदनकारिणीषु नाडीषु त्वगिन्द्रियजन्यापरोक्षज्ञानस्य तन्मूलप्रयत्नस्य च संभवाच्च । अत एव नाडीगो-चरप्रयत्नेनैव तन्नोदनीयानां श्वासमलमूत्रादीनामिच्छया मोचनं धारणं च दृश्यते । 'प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत'इति श्रुतिरपि चक्षुरादीनां जीवाधिष्ठानेन वृत्तिसंकोचं स्वापे सुषुप्साधीनत्वदर्शनेन लोकानुभवसिद्धमनुवदति । तदित्थं पूर्वाधिकरण-सिद्धार्थाक्षेपेणास्याधिकरणस्य प्रवृत्तिरिति श्लिष्यते । अत्रायं पूर्वपक्षः–इंद्रियाणि प्राण-वृत्तयः । तादधीन्यताद्रूप्यतत्कृततन्नामभाक्त्वश्रवणात् । प्राणाधीनस्थितिकत्वं हीन्द्रियाणां श्रूयते । 'प्राण उच्चिक्रमिषन् स यथा सुहयः षड्विंशशंकून् सङ्खिदेदेवमितरान्प्राणान्समखिद' दिति । तथा ताद्रूप्यं तत्कृततन्नामभाक्त्वं च श्रूयते । 'त एतस्यैव सर्वे रूपमभवन् तस्मा-देत एतेनाख्यायन्ते' इति । अत इंद्रियाणि प्राणवृत्तय इति सूत्रं योजयन् सिद्धांतमाह–मुख्यप्राणादिति । 'इंद्रियाणी'ति सूत्रे पक्षनिर्देशः । 'श्रेष्ठादन्यत्रे'ति साध्यनिर्देशः । श्रेष्ठा-त्यर्थः । एतैः पदैरावृत्तैरन्यैश्च सूत्रपदैर्हेतुनिर्देशः । इतिशब्दश्चाध्याहर्तव्यः । तथा च श्रेष्ठादन्यत्र ते श्रेष्ठादन्ये चक्षुरादयः प्राणा इंद्रियाणीति तेष्वेव तद्व्यपदेशात्

किंच ॥ तस्य च नित्यत्वात् ॥ १६ ॥ तस्य च=जीवस्य । स्वकर्मार्जिते कार्ये कर्तृत्वेन भोक्तृत्वेन नित्यत्वात् न देवतानां भोक्तृत्वमस्मिन्शरीरे इति सिद्धम् ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च अत्र संदेहपूर्वपक्षादीनामविशिष्टत्वेऽपि सूत्रार्थवर्णनमात्रेऽस्ति किंचिदिव वैल-क्षण्यम् । जीवेन सहेन्द्रियाधिष्ठानमादित्यादीनां किं परमेश्वरायत्तमुत स्वतन्त्रमिति **पूर्वपक्षे** प्राप्ते **प्राणवता**=जीवेन सह । **ज्योतिराद्यधिष्ठानं** तु=आदित्यादेश्चक्षुराद्यधिष्ठानं तु । **तदामननात्**=तस्येश्वरस्याभिमुख्येन मननात् तत्संक-ल्पादित्यर्थः । कुतः । **शब्दात्**=*'य आदित्यमन्तरो यमयती'* त्यादिश्रुतेरित्यर्थः । **रामानुजमते** ज्योतिरादिपदमग्न्या-दीत्यर्थकतया व्याख्याय तदानुगुण्येन 'शब्दा'दिति पदस्य 'योऽग्नौ तिष्ठन् योऽग्निमन्तरो यमयती' त्यादिश्रुतेरित्यर्थकतयां च व्याख्यानाद्विशेषः श्रीकण्ठमतात् ॥

**सू ॥ तस्य च नित्यत्वात् ॥ १४ ॥ तस्य च**=सर्वेषामात्मतयानुप्रविश्य सर्वनियमनस्य । **नित्यत्वात्**=परमा-त्मनोऽवर्जनीयत्वादित्यर्थः ॥

**आनन्दतीर्थमते,** अत्र 'ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वा' गिति इन्द्रियाणां ब्रह्मकरणत्वप्रतिपादिनी कापायणश्रुतिः 'जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः । यस्मात्तु तद्वशा एते दृश्यन्ते सर्वदेहिषु ॥' इति सयुक्तिक-सौकरायणश्रुत्या बाध्यते इति **पूर्वपक्षः। सिद्धान्तस्तु,** ज्योतिरादीनामधिष्ठानं ब्रह्मैव तदंशभूतानां चक्षुरादीनामपि प्रेरकम् । 'यश्चक्षुषि तिष्ठ' न्नित्याद्याम्नानात् ब्रह्मकरणत्वश्रुतिर्न बाध्यते इति । सूत्रमपि व्याख्यातम् ॥

**सू ॥ प्राणवता शब्दात् ॥ १६ ॥** अत्र मते शांकरमतवदेव सर्वत्र सूत्रविभागः । परमात्मा स्वप्रयोज्यैरेव चक्षु रादिभिः करणैः **प्राणवता**=जीवेन कर्त्रा दर्शनादि कारयति न जीवप्रयोज्यैः । कुतः । **शब्दात्**=‘एष ह्यनेनात्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मनयति’ इत्यादिश्रवणादित्यर्थः ॥

**सू ॥ तस्य च नित्यत्वात् ॥ १७ ॥** चक्षुरादीनां ब्रह्मकरणत्वेऽपि **तस्य च**=तस्य जीवस्य करणस्य तयोः संबन्धस्य च । **नित्यत्वात्**=नित्यत्वश्रवणात् । तद्विवक्षया जीवकरणश्रुतिरुपपद्यत इति भावः ॥

**सूत्रार्थचन्द्रिकायां ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥**

इंद्रियत्वव्यपदेशादित्यर्थः । ननु प्राणव्यावृत्तव्यानादिनामभाजां यथा न प्राणादन्यत्वं तथा इंद्रियाणामप्यस्तु । मैवम् । न हि इंद्रियनामात्र हेतूक्रियते किं तु तच्छब्दोक्त इन्द्रियत्वधर्मः । व्यपदेशादिति हेत्वसिद्धिपरिहाराय तत्र श्रुतिस्मृतिरूपं प्रमाणमुक्तम् । 'श्रेष्ठादन्ये प्राणास्त इंद्रियाणी'ति व्यपदेशानुकरणं मुख्यप्राणे व्यभिचारपरिहारार्थम् । अतश्चक्षुरादीनां प्राणान्यत्वे साध्ये इंद्रियत्वमात्रं हेतुत्वेन विवक्षितमिति न कश्चिद्दोषः । किमिदमिन्द्रियत्वं यद् ज्ञानेंद्रियकर्मेन्द्रियान्तःकरणेष्वनुगतं मुख्यप्राणाच्च व्यावृत्तम्। पञ्चीकरणपक्षे तावदेकैकभूततन्मात्रप्रभवत्वं तत् । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि क्रमेण शब्दतन्मात्रादिप्रभवाणि पादपाणिवागुपस्थपायवश्च । तथान्तःकरणं तु पार्थिवम् । एतेषामुक्तरीत्या शब्दतन्मात्रादिप्रभवत्वमुदाहृतक्रमेण ज्ञानेन्द्रियकर्मेन्द्रियाणामीशानादिदेवत्यत्वमन्तःकरणस्य सद्योजातदेवत्यत्वं च प्रदर्शयद्भिः[1] पुराणवचनैः प्रकटितम् । अतो न लक्षणस्यासंभवाव्याप्ती । नाप्यतिव्याप्तिः । ब्रह्माण्डनभोगोलक[2]गिरिनदीसमुद्रचन्द्रसूर्यवडवानलप्राणप्रवहानिलादीनां देशरूपाकाशस्य च पञ्चीकरणोक्तप्रक्रियया पञ्चभूतप्रभवत्वेनैकैकभूततन्मात्रप्रभवत्वाभावात् । त्रिवृत्करणपक्षे त्वतीन्द्रियत्वविशेषितमुक्तलक्षणं द्रष्टव्यम् । देशरूपस्याकाशस्य प्रत्यक्षत्वं प्रागुपपादितम् । वायुरपि प्रत्यक्षः । त्वगिंद्रियव्यापारानंतरं वायुर्वातीति प्रतीतेस्त्वक्करणकत्वोपपत्तौ चलदनोकहशाखायां चक्षुर्व्यापारानंतरमुक्तप्रतीतेरिवान्तरालिकानुमानकरणकत्वकल्पनाया गौरवेणायुक्तत्वात् । बहिर्द्रव्यप्रत्यक्षे द्रव्यप्रत्यक्ष इव गुणप्रत्यक्ष इव च नीलघटवदार्थसमाजवशादुपपन्ने विषयगतस्योद्भूतस्पर्शस्यैव विशेषप्रयोजकस्योद्भूतरूपस्याप्रयोजकत्वात् । अन्यथा विनिगमनाविरहेण स्पर्शस्तत्र प्रयोजक इत्यपि कल्पनाप्रसङ्गात् चन्द्रप्रभादीनां प्रत्यक्षत्वेऽपि चन्द्रतारादिगत्यनुमानस्य जैनाधिकरणे समर्थितत्वात् लाघवादुद्भूतरूपं द्रव्यप्रत्यक्षमात्रे प्रयोजकमिति कल्पनेनात्मनोऽपि प्रत्यक्षतापलापापत्तेश्च ।आत्मनोऽप्रत्यक्षत्वे योऽहमद्राक्षं सोऽहं स्पृशामीत्यभेदप्रत्यभिज्ञा दुरुपपादा चेत् वायोरप्रत्यक्षत्वेऽपि शीतो वायुरिति प्रत्ययो दुरुपपाद इति तुल्यम् । शीतद्रव्योपनायकत्वेनानुमिते वायौ तदभेदारोपासंभवात् ।वायोः प्रत्यक्षत्वे तद्गतसंख्यायाः प्रत्यक्षत्वं स्यादाश्रयप्रत्यक्षस्य तत्प्रयोजकत्वादिति चेत् । इष्टापत्तेः । अहं वक्तेति प्रतीतावात्मैकत्ववद्वायुर्वातीति प्रतीतौ तदेकत्वस्य विषयत्वात् । बहुषु वायुषु संघीभूय वीजत्सु सत्यपि प्रणिधाने तद्बहुत्वं न प्रतीयत इति चेन्न । बहूनां वायूनां मेलने तेषां संसर्गिद्रव्यतया जलवदेकद्रव्यतापत्त्या तेषु बहुत्वासिद्धेः । अत एव पशावद्भिगुप्रैषगते 'सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजता' दिति मन्त्रे बहुपशुकेषु विकृतिपशुष्वतिदेशतः प्राप्ते चक्षुरादिपदानां पशुसंख्यानुरोधेन द्विवचनबहुवचनाभ्यामूहमाशंक्य जलवत्तेजोवाय्वोस्संसर्गिद्रव्यतया सर्वपशुसंबधिनां चक्षुषां प्राणानां च बहिर्निर्गतानामेकीभावो भवतीति यथाप्रकृत्येव मन्त्र इति सिद्धांतितं नवमेऽध्याये । एवमपि वायाववयवबहुत्वग्रहणमाशंक्येत यदि विरलतंत्ववयवसंयोगारब्धे वस्त्र इवावयवबहुत्वानुपमर्दनेन वायावैक्यमाविर्भवेत् । न त्वेवम् । संसर्गिद्रव्याणामैक्यापत्तेरवयवबहुत्वोपमर्दकत्वनियमात् । न हि जलबिन्दूनां मेलनेनैक्यापत्तौ सत्यां तेषां विरलसंयोगेन बहुत्वमनुवर्तते । एवं प्रदी-

(१) 'प्रतिपादयद्भिः' इति ख-पाठः ।  (२) 'भूगोलक' इति ख—पाठ : ।

याणीति चक्षुरादिष्वेव 'इन्द्रियाणि दशैकं च' इत्यादिष्विन्द्रियव्यपदेशात् ॥

॥ सू ॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

पकिरणानां मेलनेऽपि न विरलसंयोगः । मध्येऽन्धकारादर्शनात् । तथा च वायोरपि संसर्गिद्रव्यत्वाविशेषाद्बहूनां वायूनां मेलनेनैक्यापत्तौ बहुत्वाननुवृत्तेर्न तद्ग्रहणप्रसङ्गः । यत्र तु बहुत्वमनुवर्तते तद्ग्रहणे बहुत्वग्रहणमप्यस्त्येव । यथा क्रमिकानेकफूत्कारवायुग्रहणे यथा वा भिन्नभिन्नशरीरावयवसंसृष्टानेकफूत्कारवायुग्रहणे । तथा चाकाशस्य वायोश्च प्रत्यक्षत्वात् न तयोर्लक्षणस्यातिव्याप्तिः । न चैवमपि वायूपनीतचम्पकादिसौरभाश्रयद्रव्यभागेष्वतिव्याप्तिः । तेषामतींद्रियत्वासिद्धेः । जालसूर्यमरीच्याद्यभिव्यंजकाभावे तेषामप्रतीत्युपपत्तेः । ये तु मन्यंते वह्निसहचरितानुद्भूतरूपोद्भूतस्पर्शा ऊष्मादिरूपास्तेजोभागा इव चम्पकादिगन्धद्रव्यसहचरितास्तत्तत्सामान्योद्भूतगन्धा अनुद्भूतरूपस्पर्शाः पार्थिवभागास्सन्ति त एव विसृमराः परितस्तथातथा वासयन्तीति तन्मतानुसरणेऽपि न तेष्वतिव्याप्तिः । तेषां पञ्चीकृतपृथिव्यवस्थाविशेषत्वसंभवेन तदुत्पादनार्थं सर्गाद्यकाले प्राक्पंचीकरणादपञ्चीकृतगन्धतन्मात्रावशेषणकल्पनायां प्रमाणाभावात् । इदमिन्द्रियाणां भौतिकत्वपक्षे पारंपर्यक्रमाधिकरणभाष्यस्वारस्यानुरोधेन लक्षणमुक्तम् । शिवागमादिप्रसिद्धे तेषामाहङ्कारिकत्वपक्षे तु रजस्तमोऽनभिभूताहङ्कारप्रभवत्वादिकं लक्षणमुन्नेयम् । उक्तलक्षणस्येंद्रियत्वस्य हेतूकरणे च न हेतोरप्रयोजकत्वम् । अपञ्चीकृतपृथिव्याद्यवस्थाविशेषरूपाणामिन्द्रियाणां पञ्चीकृतवाय्ववस्थाविशेषरूपप्राणवृत्तित्वं न संभवतीत्यनुकूलतर्कस्[illegible] । अत एव प्राणाधीनशरीरावस्थितिकत्वादिकमिन्द्रियाणां लक्षणांतरं संभवदपि न तदिह हेतुत्वेन विवक्षितम् । तस्य व्यानादिदृष्टान्तेन प्राणवृत्तित्वसाध्यानुकूलतया प्रकृतसाध्यविरुद्धत्वादित्यलं प्रपञ्चेन । यत्तु प्राणाधीनस्थितिकत्वतद्रूपत्वतन्नामत्वश्रवणादिन्द्रियाणां प्राणवृत्तित्वमवसीयत इति पूर्वपक्षशङ्कावीजं तन्निराकरणार्थं सूत्रम्—सू ॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥ प्राणसंवादे खल्विन्द्रियाणां प्राणाधीनस्थितिकत्वादिकं त्रयमपि श्रूयते । तत्र प्राणेन सह तेषां कलहोपक्रमेणैव ततो भेदः स्पष्टीकृतः । चक्षुरादीनामेकैकस्य प्रवासेऽप्यन्येषां यथापूर्वमवस्थानं प्राणस्य प्रवासोद्योग एवान्येषां शैथिल्यापत्तिरिति प्राणस्य चक्षुरादिभ्यो वैलक्षण्यं च तत्रानंतरमेव प्रतिपादितम् । इदमुभयमिन्द्रियाणां प्राणस्य च वृत्तिवृत्तिमद्भावेन संघटते । न हि वृत्तीनां वृत्तिमता सह समस्वातन्त्र्याभिमानेन कलहाभिधानं युज्यते । न वा वृत्तयो वृत्तिमन्तमपहाय प्रवसन्ति । वृत्तिमत्प्रवासे परं नावतिष्ठंत इत्युपपद्यते । तस्मात्प्राणसंवादोपक्रमादिपर्यालोचनयैवेंद्रियाणां प्राणव्यतिरेके स्पष्टे सति तदधीनत्वादिकं न प्राणाभेदसाधनक्षमम् । प्राणाधीनस्थितिकत्वं च शरीरे प्राणादत्यन्तभिन्ने व्यभिचारि । प्राणनामभाक्त्वं च तथाभूते नाभिरन्ध्रे व्यभिचारि । श्रूयते हि—'नव वै पुरुषे प्राणा नाभिर्दशमी'ति । तस्मादिन्द्रियाणां प्राणरूपत्वश्रवणं प्राणश्रैष्ठ्यप्रतिपादनार्थं प्राणनामभाक्त्वश्रवणं च प्राणप्राधान्यात् अच्छात्राणां छत्रिपदेनेव प्राणनाम्ना लक्षणीयत्वप्रतिपादनपरं योज्यमित्येवं सूत्रतात्पर्यं 'चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्य' इति ( ब्र०२-४-९ ) सूत्रगतहेत्वर्थकथनेनैव स्पष्टमिति मत्वा सूत्रस्यार्थांतरमाह—

'एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च' इति प्राणेन्द्रियाणां भेदेनोत्पत्तिः श्रूयते । इन्द्रियाद्युपरमेऽपि प्राणवृत्त्यनुपरमरूपं वैलक्षण्यं च दृश्यते । अतोऽपि प्राणवृत्तिभ्यो भिन्नानीन्द्रियाणीति ॥ इति त इन्द्रियाधिकरणम् ॥ ७ ॥

## अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

## ॥ सू ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥

एतस्मादिति । भेदेनोत्पत्तिरिति । ननु मनस इंद्रियाणां च भेदेनोत्पत्तिः श्रूयते, अथापि नेंद्रियेभ्यो मनसो भेदः । तथा प्राणादपींद्रियाणां स्यात् । नैष दोषः । मन इति न भिन्नं पदं किंतु मनःप्रधानानींद्रियाणीति शाकपार्थिवादिवत् समासेनैकं पदम् । 'तत्सहशिष्ट्यादिभ्य'इति सौत्रहेतुपर्यालोचनयैवावगन्तुं शक्यमपीन्द्रियाणां प्राणवृत्तिव्यतिरेकं हेत्वंतरैरपि स्पष्टीकर्तुमिदमधिकरणमारब्धमतोऽस्य न वैयर्थ्यम् ॥ इति त इंद्रियाधिकरणम् ॥ ७ ॥

## अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

सू ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥ 'आकाशो ह वै नाम नामरूपयोर्निर्वहिते'ति वाक्ये नामरूपव्याकर्तृत्वं परमेश्वरस्य प्रतीयते । 'सर्वाणि रूपाणि

---

### नयमणिमालायाम् अथ त इंद्रियाधिकरणम् ॥ ७ ॥

सू ॥ त इंद्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

अक्षाणि वृत्तयः स्युः मुख्यप्राणस्य यत्तेषाम् । प्राणपदेन व्यवहृतिराम्नातं चैतदीयरूपत्वम् ॥ १६४ ॥

उपरतिमत्स्वक्षेष्वप्यनुपरमात्प्राणवृत्तीनाम् । प्राणाद्भेदेन जनिश्रुतेश्च भिन्नानि तानि स्युः ॥ १६५ ॥

इति त इन्द्रियाधिकरणम् ॥ ७ ॥

### सूत्रार्थचन्द्रिकायाम्

अथ त इन्द्रियाधिकरणम् ॥ ७ ॥

सू ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

भगवत्पादमते, सत्स्विन्द्रियेषु तदधिष्ठातृविचारः । प्राणव्यापारव्यतिरेकेण तान्येव न सन्तीत्याह—**त इन्द्रियाणीत्यादिना** । अत्र 'एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च' इति मुख्यप्राणादिन्द्रियाणां तत्वान्तरत्वश्रुतेः 'त एतस्यैव सर्वे रूपमभवन्' इति प्राणात्मकत्वश्रुत्या विरोधोऽस्ति न वेति **संदेहः** । अस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु, श्रेष्ठात्**=मुख्यप्राणात् । **अन्यत्र**=अन्ये ते प्रकृता वागादय इन्द्रियाणीत्युच्यन्ते न प्राणाः । कुतः । **तद्व्यपदेशात्**='एतस्माज्जायते' इत्यादौ तस्य भेदस्य व्यपदेशात् इन्द्रियाणां प्राणात्मकत्वश्रुतेर्गौणत्वेन न तया विरोधः ॥

किंच । सू ॥ **भेदश्रुतेः** ॥ १८ ॥ वागादीन्द्रियप्रकरणमुपसंहृत्य 'अथ हेममासन्यं प्राणमूचु' रिति भिन्नप्रकरणे प्राणस्येन्द्रियेभ्यो भेदेन श्रवणात् न प्राणव्यापारत्वमिन्द्रियाणां किं तु तत्त्वान्तरत्वमेवेत्यर्थः ॥

किं च ॥ सू ॥ **वैलक्षण्याच्च** ॥१९॥ सुषुप्त्यवस्थायां प्राणस्य स्थितिर्नेन्द्रियाणामित्यादिवैलक्षण्यात्तत्त्वान्तरत्वम् । तस्मान्नानयोर्विरोध इति सिद्धम् ॥

**श्रीकण्ठमते,** तथा **रामानुजमते,** च सर्वमविशिष्टं पूर्वस्मात् । **भेदश्रुतेर्वैलक्षण्याच्चे**त्येकमेव सूत्रमनयोर्मतयोरिति विशेषः ॥ '**तद्व्यपदेशा**'दिति पदं तेष्वेवेन्द्रियशब्दनिर्देशादित्यर्थकतया च व्याख्यातमन्यदविशिष्टम् ॥

**आनन्दतीर्थमते,** 'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि हीदं द्रवन्ती'ति सर्वेषां प्राणशब्दवाच्यनामविशेषेणेन्द्रियत्वमिदंद्रावकत्वयुक्तिपूर्वकं प्रतिपादयन्त्या पौत्रायणश्रुत्या विरोधात्, 'द्वादशैवेन्द्रियाण्याहु' रिति काषायणश्रुतेरप्रामाण्यात्कस्येन्द्रियत्वं निवार्यमिति **पूर्वपक्षः** । **सिद्धान्तस्तु, अन्यत्र श्रेष्ठात्**=मुख्यप्राणादन्ये ये प्राणास्ते **द्वादशैवेन्द्रियाणि** । न तु मुख्यप्राणोऽपि । कुतः । **तद्व्यपदेशात्**='द्वादशैवेन्द्रियाणि' इति श्रुतौ तथोक्तत्वादिति ॥

सू ॥ **भेदश्रुतेः** ॥ १९ ॥ शांकरमतवदिदं पृथक्सूत्रम् । मुख्यप्राणस्य सर्वकर्तृकारयितृत्वरूपभेदकधर्मस्यान्येषां तदभावस्य च 'स्थित एव ही'ति श्रुतौ श्रुतत्वान्न तस्य चक्षुराद्यविशेष इत्यर्थः ॥

सू ॥ **वैलक्षण्याच्च** ॥ २० ॥ मुख्यप्राणस्य तदितरप्राणानां च केवलेश्वराधीनत्वेश्वरजीवोभयाधीनत्वरूपवैलक्षण्यसत्वाच्च न तस्येन्द्रियत्वं किं तु चक्षुरादीनामेवेत्यर्थः ॥

इति सूत्रार्थचन्द्रिकायां त इन्द्रियाधिकरणम् ॥ ७ ॥

पूर्वमाकाशादीनां भूतानां सह सदाशिवादिभिरधिष्ठातृभिः परमेश्वरादुत्पत्तिरभिहिता । तदेवं तेषु जातेषु ततो देवानां नामरूपादिक्लृप्तिस्तस्मादेव मूलकारणात् उतान्यस्मादिति संदेहः ॥

एवं सति 'तत् तेज ऐक्षत बहु स्यां प्रजायेयेति, तदपोऽसृजत' इति श्रुतेस्तेजोऽभिमानी रुद्रोऽपः सृजति, तासु च स्ववीर्यं क्षिपति, तासु सत्त्वसहितो विष्णुरभिवर्तते इति । 'आपो नारा नरो रुद्रः' इति श्रुतिदर्शनाद्रुद्रसंभूतासु त्वायतनत्वेन विष्णोर्नारायणसंज्ञता । 'ता आप ऐक्षन्त' 'ता अन्नमसृजन्त' इति श्रुतेस्तदभिमानी नारायणोऽन्नशब्दवाच्यां पृथिवीमुत्पादयति । तत्र पृथिवीतत्त्वरूपे अण्डे हिरण्यगर्भः संवर्तते । तथा हि श्रूयते–'अण्डं हिरण्मयं मध्ये समुद्रं रुद्रस्य वीर्यात् प्रथमं संबभूव । तस्मिन् ब्रह्मा विष्णुर्जातो जातवेदाः' इति॥

---

विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इति मन्त्रे पुरुषस्य नारायणस्य । वेदेन रूपे व्याकरोत् सतासती प्रजापति'रिति वाक्ये हिरण्यगर्भस्य । अत्र हि रूपग्रहणं नाम्नोऽप्युपलक्षणम् । नामरूपव्याकरणयोस्समानकर्तृकत्वनियमात्, 'नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार स' इति तदुपबृंहणाच्चेत्येवं जीवोपकरणसृष्ट्यात्मकनामरूपव्याकरणकर्तृत्वविषयश्रुतिविरोधसमाधानमिह क्रियते । अतोऽध्यायपेटिकापादसंगतयः । पूर्वाधिकरणे प्राणनामरूपभाक्त्वमिंद्रियाणां पूर्वपक्षबीजतया बुद्धिस्थमासीदिति नामरूपप्रसंगात्तद्व्याकर्ता निरूप्यत इत्यनंतरसङ्गतिः । एवं सतीत्यादि । 'तेजोऽतस्तथा ह्याहे' त्यधिकरणसिद्धां साधिष्ठातृकारणां सर्वेषां भूतानां साक्षादेव परमेश्वरादुत्पत्तिमंगीकृत्य तदनन्तरमण्डान्तर्वर्तिनामिन्द्रादिदेवानां नामरूपादिक्लृप्तिकरणविषयत्वेन निर्दिश्य सा मूलकारणात्परब्रह्मण उतान्यस्माद्धिरण्यगर्भादेरिति श्रुतिविप्रतिपत्तिबीजसन्देहः प्राक्प्रदर्शितः । कथं 'तत्तेज ऐक्षते'त्यादिश्रुतिमपि तद्भूताधिष्ठातृदेवताविषयामापाद्य पूर्वपूर्वभूताधिष्ठातुरुत्तरोत्तरभूतानां साधिष्ठातृकाणामुत्पत्तिराशंक्यते ? उच्यते । तदधिकरणस्थितिरप्यनेनाक्षिप्यत इत्यभिप्रेत्यैवमाशंक्यते । अन्यथा हि तत्राकाशाद्यधिष्ठातृसदाशिवादिशरीरकात्परमेश्वरात्साधिष्ठातृकपवनाद्युत्पत्तिरिति निरूपितत्वात्तेनैव न्यायेन नारायणहिरण्यगर्भशरीरकात्ततस्तत्तद्देवादिनामरूपक्लृप्तिरित्युदाहृतत्रिविधवाक्यविरोधसमाधानसिद्धेरिदमधिकरणमनारंभणीयं स्यादिति । 'ननु तत्तेज ऐक्षते' त्यादिकमीक्षणं परमेश्वरस्यैव न तु तत्तद्भूताभिमानिनः, परमेश्वरबहुभवनसङ्कल्पप्रपञ्चनरूपत्वादिति तदभिध्यानसूत्रेणोक्तं कथं तदेवेक्षणं भूताभिमानिन इत्याशंक्यते । परमेश्वरस्य स्वयं प्रथमकार्यंतदधिष्ठातृमात्रस्रष्टृत्वेऽपि तत्सृष्टकार्यपरंपरया तस्य बहुभवनमुपपद्यते कूटस्थस्येव पुत्रपौत्रप्रपौत्रपरंपरयेति । एवं पारमेश्वरबहुभवनसंकल्पाविरोधमभिप्रेत्यैवमाशंक्यते । अत्रायं पूर्वपक्षाभिप्रायः । 'तत्तेज ऐक्षते'त्यादिश्रुतेरुपबृंहणानुसारेण वीर्यक्षेपादिद्वारा पृथिव्यादिसृष्टिपरत्वमङ्गीकरणीयम् । वीर्यक्षेपकत्वं च मूर्त्यात्मनस्तेजोऽभिमानिनो रुद्रस्यैवेत्युदाहृतपुराणवचनादवगम्यते । 'तेन क्षिप्तं रसे वीर्यं वरमूर्त्यभिमानिने'ति॥ अतो यस्य जले पृथिव्युत्पादनसामर्थ्याधायकवीर्यक्षेपकत्वं तस्यैव जलस्रष्टृत्वं तत्सृष्टिसङ्कल्परूपेक्षणवत्त्वं च वक्तुं युक्तमिति 'तत्तेज ऐक्षते'ति वाक्यं तावद्रुद्रविषयम् । एवं ता

'अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः । आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ता यस्मात् ततो नारायणः स्मृतः । नारायणः परोऽव्यक्तोऽव्यक्तादण्डसमुद्भवः ॥ अण्डस्यान्तस्त्विमे लोकास्सप्तद्वीपा च मेदिनी।' इति मनुस्मृतिः । पुराणं च—

'रुद्रसंज्ञस्य देवस्य रूपे मूर्तिः प्रजायते । तेन क्षिप्तं रसे वीर्यं परं मूर्त्यभिमा-

---

आप ऐक्षन्ते'ति वाक्यमपि जलाभिमानिनारायणविषयं 'यतो विष्णुस्तत्प्राविश'दित्याद्युपबृंहणश्लोकेन । तद्वीर्यं कथं ब्रह्माण्डमभवदित्याकांक्षायां परमेश्वरदत्तसामर्थ्यस्य विष्णोस्तदेव वीर्यमण्डरूपेण परिणामयितुं तन्मध्ये हिरण्यगर्भं स्रष्टुं च तद्वीर्याहितसामर्थ्यजलप्रवेशं तमेव निमित्तं कृत्वा । परमेश्वरनियोगान्नारायणसंज्ञाभाक्त्वं च प्रतिपाद्यते । एवं च तदनंतरमण्डमध्ये देवादिनामरूपव्याकर्तृत्वं च यथार्हं तेषामेव रुद्रनारायणहिरण्यगर्भाणामिति युक्तम् । अत एव श्रुतावपि 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति तेजोऽबन्नाभिमानिरुद्रनारायणहिरण्यगर्भात्मकजीवरूपेणैव नामरूपव्याकर्तृत्वं परमेश्वरस्य प्रतिपाद्यते । न च 'व्याकरवाणी'ति उत्तमपुरुषप्रयोगतः परमेश्वरस्य साक्षादेव तत्प्रतिपाद्यते इति वाच्यम्[1] । चारेण[2] परसेनां प्रविश्य संकलयामीति लौकिकवाक्ये चारेणेति विशेषणवशेनेव जीवेनेति विशेषणवलेनोत्तमपुरुस्य गौणत्वावसायात् । एवं[3] च यथासंकल्पं सृष्टिरिति 'नामरूपे व्याकरो' दिति तदनंतरवाक्यमपि गौणमेव । न च जीवेनेत्यस्यानुप्रवशेनैव सम्बंधः सन्निधानादिति वाच्यम् । अभ्यर्हितप्रधानान्वयाकांक्षालक्षणप्रकरणस्य सन्निधानतः स्थानप्रमाणात्प्रवलत्वात् । न च देवादीनां गिरिनदीसमुद्रादीनां च नामरूपव्याकरणे जीवस्य नास्ति योग्यत्वमतः परमेश्वरस्यैव तत्र योग्यत्वात् योग्यतारूपेण लिंगेनाकांक्षालक्षणप्रकरणवाधात् सन्निधानतः प्रवेशेनैवान्वयः स्यादिति वाच्यम् । चैत्रमैत्रघटपटादिनामरूपव्याकरणे अर्वाचीनानामपि सामर्थ्यदर्शनेन परमेश्वरदत्तमहासामर्थ्यानामीश्वराणां तत्रापि सामर्थ्योन्नयनात् प्रवेशान्वये तत्समानकर्तृकव्याकरणान्वयस्याप्यवर्जनीयत्वाच्च । अन्यथा क्त्वाश्रुतिविरोधापत्तेः । न चेयं सहार्थे तृतीया । येन प्रवेशमात्रान्वयेऽपि क्त्वाश्रुतिरुपपाद्येत । किं तु कर्तर्येव । कारकविभक्तेर्वलीयस्त्वादुपपदविभक्तेः पदान्तरसापेक्षत्वेन दुर्बलत्वात् । एतेन 'जीवेनात्मने'त्यस्य जीवशरीरकेण मयेत्यर्थकल्पनं निरस्तम् । तेजःप्रभृत्यमानिनो जीवस्यापि देवादिनामरूपव्याकरणसामर्थ्यसंभवे जीवशब्दस्य प्रसिद्धार्थातिक्रमेणान्तर्यामिपर्यन्तत्वकल्पनायोगात् । न चात्मपदसामानाधिकरण्यात्तस्य तत्पर्यंतत्वं कल्पनीयं परमेश्वराद्भिन्नस्य जीवस्य तदात्मत्वानुपपत्तेरिति शंकनीयम् । प्रथमश्रुतजीवशब्दस्वारस्यानुरोधेनात्मशब्दस्य शरीरपरत्वोपपत्तेः । न च 'नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति समभिव्याहारेण त्रिवृत्करणनामरूपव्याकरणयोरेककर्तृ-

---

(१) 'शंकनीयम्' इति ख-पाठः । (२) चारेणानुप्रविश्य परसैन्यं संकलयामीति' इति ख-पाठः । (३) 'तथाच' इति क-ग पाठः ।

निना ॥ तदण्डमभवद्वीर्यं सहस्रकिरणप्रभम् । विष्णुस्तत्प्राविशत्साक्षान्मम शक्तेस्तु वैभवात् ॥ पुनर्नारायणाख्यां मे नियोगात्प्राप्तवानसौ । इमं चोदाहरत्यत्र श्लोकं नारायणं प्रति ॥ आपः सूक्ष्मो रसो ज्ञेयो रसो नारः प्रकीर्तितः। नरजातस्ततो ब्रह्मा नरः साक्षाच्छिवः स्मृतः ॥ नारमस्यायनं प्रोक्तं तेन नारायणः स्मृतः ॥ ब्रह्मापि नरशार्दूल गन्धमूर्तिं समाविशत् ॥' इत्यादि। एवं च 'वेदेन रूपे व्याकरोत् । सतासती प्रजापतिः' इत्यादिश्रुतेः अण्डान्तर्वर्ती हिरण्यगर्भो वा । 'अद्भ्यः संभूतः पृथिव्यै रसाच्च' इत्यादिश्रुतेर्नारायणो वा देवादीनामण्डान्तर्वर्तिनां नामरूपकर्ता भवितुमर्हति, न ब्रह्माण्डादेरुत्तीर्णः परमेश्वर इति

---

कत्वावगमात्रिवृत्करणस्य परमेश्वरकर्तृकतया नामरूपव्याकरणस्यापि तत्कर्तृकत्वप्रतीतेस्तदुपपत्तये जीवशब्दस्यान्तर्यामिपरत्वं कल्पनीयमिति वाच्यम् । त्रिवृत्करणस्य परमेश्वरकर्तृकत्वासिद्धेः अण्डसृष्ट्यनंतरभाविष्वग्न्यादिषु छांदोग्ये प्रदर्श्यमानस्य त्रिवृत्करणस्याण्डोत्पत्तिकहिरण्यगर्भकर्तृकत्वसंभवात् । तथापि पूर्वकल्पवृत्तांतानभिज्ञस्यैतत्कल्पादावुत्पन्नस्य हिरण्यगर्भादेः पूर्वकल्पगतदेवादिसदृशनामरूपतया देवादिस्रष्टृत्वं न संभवतीति जीवशब्दस्य तत्पर्यंतत्वं कल्पनीयमिति चेत् न । वेदशब्देभ्यस्तदवगत्या तत्सदृशनामरूपस्रष्टृत्वोपपत्तेः 'वेदेन रूपे व्याकरो'दितिश्रुतौ तदुपबृंहणेषु च तथैव प्रतिपादनाच्च । अपि चोदाहृतश्रुतितदुपबृंहणेषु नामरूपव्याकर्तृपरप्रजापत्यादिशब्दानामंतर्यामिपरत्वं कल्पयितुं न युक्तम् । स्वतस्सिद्धसार्वज्ञ्यस्य परमेश्वरस्य पूर्वकल्पवृत्तांतज्ञानाय वेदानपेक्षणात् तस्य प्रजापतिमात्रपरत्वेन प्रसिद्धस्य प्रजापतेर्नामरूपव्याकरणकर्तृत्वसिद्धौ व्यर्थमन्यत्र तद्वाच्यांतर्यामिपर्यन्तत्वकल्पनम् । एवञ्च 'प्रजापतिरकामयत प्रजास्सृजेयेति' 'प्रजापतिः प्रजा असृजत' इत्यादिश्रुतीनामपि हिरण्यगर्भस्य देवमनुष्यादिनामरूपस्रष्टृत्वे प्रामाण्यमव्याहतम् । अपि च । बृहदारण्यकेऽपि 'आत्मैवेदमग्र आसीत्पुरुषविध' इति हिरण्यगर्भं प्रस्तुत्य 'ततो मनुष्या अजायंते' त्यादिना 'यदिदं किं च मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजते' त्यन्तेन तस्य मनुष्यादिस्रष्टृत्वमुक्त्वा तदनंतरमग्न्यादिस्रष्टृत्वमप्युक्तम् । न च तत्र परब्रह्मणः प्रस्ताव इति शङ्कनीयम् । 'स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष' इत्यतः पाप्मसंसर्गप्रतीत्या 'सोऽबिभेन्नैव रेम' इति भयारतिश्रवणेन च तस्य संसारित्वावगमात् । एवं कूर्मपुराणादिषु परमेश्वरनियोगाद्धिरण्यगर्भादीनां स्रष्टृत्वादि प्रतिपादितम् । तदप्यनन्यथासिद्धमत्र प्रमाणं वेदितव्यम् । न हि तस्यांतर्यामिपर्यवसायित्वे तन्नियोगाधीनत्ववचनमन्वेतीति । 'अण्डं हिरण्मय'मिति भाष्योदाहृतश्रुतौ विष्णुरुपेन्द्रः । तोयाभिमानिनो नारायणस्योत्पत्तेरण्डसृष्टितः[1] प्राचीनत्वात् । 'अप एव ससर्जादा' वित्यादिमानववचनानां 'ततः स्वयंभूर्भगवानव्यक्तो व्यंजयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः । योऽसावतींद्रियग्राह्यः सूक्ष्मोऽव्यक्तस्सनातनः । सर्वभूतमयोऽचिंत्यस्स एव स्वयमुद्बभौ । सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजा' इति पूर्वभागः। तत्र 'तमोनुद' इति पंचम्यंतं पदं परमेश्वरात्सदाशिवमहेश्वरक्रमेणोत्पन्नं तेजोऽभिमानिनं रुद्रमाचष्टे । ततः स्वयंभूर्भगवान्नारायणस्तोयाभिमानी प्रादुर्भूत इत्यर्थः । 'सोऽभिध्याये'

---

(१) 'नारायणस्याण्डसृष्टितः प्रागुत्पन्नत्वात्' इति-क—ग—पाठः ।

पूर्वः पक्षः ॥

सिद्धान्तस्तु—न युक्तः प्रतिपादितसृष्टिक्रमः । किंतु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इत्यादिश्रुतेः सच्छब्दवाच्यं ब्रह्मैव पञ्चभूतकारणम् । तेजःप्राथम्यं परिहृतम् । ततश्चाकाशादि पृथिव्यन्तं सदाशिवादिसंज्ञया पूर्वपूर्वकारणरूपं ब्रह्म उत्तरोत्तरं कार्यं सृजतीति, 'तदैक्षत तत्तेज ऐक्षत ता आप ऐक्षन्त' इति श्रुत्यावगम्यते । 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति त्रिवृत्कुर्वत एव परमेश्वरस्य

ति तच्छब्दस्तमोनुदं रुद्रं परामृशति । न तु ततः प्रादुर्भूतं नारायणम् । 'रुद्रस्य वीर्या'दिति श्रुतेरुदाहृतत्वात्तदनुसारिपुराणवचनस्योदाहरिष्यमाणत्वाच्च । 'आपो नारा इति प्रोक्ता' इति नारायणनामनिर्वचनं 'ततः स्वयंभूर्भगवा'नित्युक्तप्रादुर्भवितृविषयं न तु वीर्यक्षेप्तृविषयम् । 'विष्णुस्तत्प्राविशत्साक्षा'दित्युदाहरिष्यमाणपुराणवचने यौगिकार्थस्य तत्रैव प्रतिपादनात् । अत उदाहृतश्रुतिस्मृतिपुराणवचनानामैकार्थ्यमिति भाष्याभिप्रायः । सिद्धान्तस्त्विति । अयमाशयः । 'तदैक्षत बहु स्यां प्रजायेये'ति प्रतिपाद्यमानः परमेश्वरस्य बहुभवनसंकल्पस्साक्षात्तस्यैव बहुभवनविषयः स्वरसतः प्रतीयते । न तस्यासति बाधके तत्कार्यतत्कार्यपरंपराप्राप्यगौणबहुभवनविषयतया योजनं कर्तुं युक्तम् । न चात्र किञ्चिद्बाधकमस्ति । पुराणेषु पूर्वपूर्वकार्याधिष्ठातॄणामुत्तरोत्तरकार्यस्रष्टृत्वं प्रतिपाद्यत इति चेत् किं ततः । न तेन बहुभवनसंकल्पादिप्राप्तं परमेश्वरस्य सर्वत्र कार्ये साक्षात्कर्तृत्वं बाध्यते । उभयकर्तृकत्वाविरोधात् । अत एव प्रत्यक्षतः कुलालादिकर्तृकत्वेनावगतस्य घटादेः श्रुतिप्राप्तं परमेश्वरकर्तृकत्वमभ्युपगम्यते । ननु तेषां पुराणवचनानां 'तत्तेज ऐक्षते'त्यादिनैव मूलेन भाव्यमिति तस्य परमेश्वरविषयत्वं न संभवतीति चेत्तन्मूलाना 'मण्डं हिरण्मय'मित्यादिवचनांतराणां सत्वात् 'तेन क्षिप्तं रसे वीर्य'मित्यादिपुराणवचनार्थानां 'तत्तेज ऐक्षते'त्यादिष्वप्रतिपादनेन तेषा 'मण्डं हिरण्मय'मित्यादिश्रुत्यन्तरमूलत्वस्यावश्यवक्तव्यत्वाच्च । ततः 'तेजोऽतस्तथा ह्याहे'त्यधिकरणोक्तरीत्या 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्ते'ति वाक्ययोः पारमेश्वरबहुभवनसंकल्पप्रपंचनपरतया तस्यैव सर्वेषु भूतेषु साक्षात्कर्तृत्वप्रतिपादने पर्यवसानमभ्युपगन्तव्यम् । ततश्च तदनंतरं प्रतिपाद्यमाने नामरूपव्याकरणेऽपि तस्य साक्षादेव कर्तृत्वप्रतिपादनं पर्यवस्यति । प्राचीनसंदर्भैकरूप्यात् त्रिवृत्कुर्वत एव नामरूपव्याकरणकर्तृत्वोपदेशाच्च । एवं च व्याकरवाणीत्युत्तमपुरुषस्यापि मुख्यत्वं लभ्यते । 'जीवेनात्मनेति' तु तेजोऽबन्नाभिमानिरुद्रनारायणहिरण्यगर्भजीवरूपशरीरेणोपलक्षित इत्येतदर्थकतयोपपादनीयम् । पूर्वोत्तरसंदर्भानुसारेण व्याकरणस्य परमेश्वरकर्तृकत्वावगमात्तथाभूतेन शरीरेण सहेत्येतदर्थकतया वोपपादनीयम् । देवादिनामरूपसृष्टौ हिरण्यगर्भादीनामप्यप्राधान्येन कर्तृत्वस्य पुराणादिषु प्रतिपन्नत्वात् । न तु जीवशरीरकेण मया कर्त्रेत्येतदर्थकतयोपपादनीयम् । व्याकरणकर्तरि तिङाभिहितेऽनभिहिताधिकारविहिततृतीयानुपपत्तेः । अथ व्याकरणकर्तुरभिधानेऽपि प्रवेशकर्त्तुरनभिधानात् तृतीयोपपद्यते । न च सोऽपि क्त्वाप्रत्ययेनाभिहित इति शङ्कनीयम् । प्रत्ययान्तरप्रतिपन्ने क्रियाद्वयकर्तरि

वाय्वादिरूपस्य तिस्रो देवतास्तेजोऽबन्नात्मिकाः ब्रह्मविष्णुरुद्ररूपजीवात्मनानुप्रविश्य नामरूपक्लृप्तिरवगम्यते। अतस्त्रिवृत्कुर्वत एव चतुर्मुखाद्यात्मनः सकलनामरूपक्लृप्तिरिति युक्तम्। त्रिवृत्करणं तु केवलं चतुर्मुखस्य न संभवति। त्रिवृत्कृतैर्हि तेजोऽबन्नैरण्डमुत्पद्यते। तत्र पश्चाच्चतुर्मुखसृष्टिः, 'अण्डं हिरण्मयं मध्ये समुद्रं रुद्रस्य वीर्यात्प्रथमं संबभूव, तत्र ब्रह्मा विष्णुर्जातो जातवेदाः' इति श्रुतेः॥

---

तदैक्यमात्रमेव हि क्त्वार्थः। यथा प्रातिपदिकद्वयप्रतिपन्ने विशेषणद्वयविशिष्टे तदैक्यमात्रं दण्डी कुण्डलीति समानविभक्त्यर्थ इति चेत् एवं तर्हि 'अहं भुक्त्वा व्रजामी'त्यादिप्रयोगविषये सर्वत्र 'मया भुक्त्वा व्रजामी'त्यादिप्रयोगः प्रसज्येत। न ह्यत्र भोजनक्रियाकर्तुस्तृतीयां विना प्रत्ययान्तरेणाभिधानमस्ति। ननु व्याकरणमर्यादया प्रसज्यमानोऽयं दोषस्तवापि तुल्यः। 'अहं भुक्त्वा व्रजामी'ति प्रयोगे हि यथाहमर्थोऽभिहितव्रजनक्रियाकर्तृशक्त्याश्रयः एवमनभिहितभोजनक्रियाकर्तृशक्त्याश्रयोऽपि। अनभिहितसूत्रेण चानभिहितकारकशक्त्याश्रये यथायथं विभक्तयो विधीयन्ते न त्वभिहिताश्रये प्रतिषिध्यन्ते। पर्युदासपक्षाश्रयणात्। अत एवानभिहितसूत्रे द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्त्यभावप्रसंग इति वार्त्तिकेन 'प्रासाद आस्त'इत्यत्र प्रसीदंत्यस्मिन्नित्यधिकरणार्थे निष्पन्नेन सदेर्घञ्प्रत्ययेन प्रासादगताधिकरणकारकशक्तेरभिधानात्सप्तमी न स्यादिति प्रतिषेधपक्षाश्रयणेनाशङ्क्यमुद्भाव्य 'न वान्यतरेणाभिधाना'दिति वार्त्तिकेनापि क्रियाधिकरणशक्तेरासेरुपरितनाख्यातप्रत्ययेनानभिधानान्नायं दोषः प्रसज्यते इति [१]पर्युदासपक्षाश्रयणेन सप्तम्युपपादिता। इति चेत्। उच्यते। वैयाकरणमर्यादया नायं दोषः प्रसरति। एवं हि वैयाकरणानां मर्यादा। 'अहं भुत्का व्रजामी' [illegible]र्थस्य भोजनव्रजनक्रियाभ्यामुभाभ्यामपि न शाब्दोऽन्वयः किं तु व्रजनक्रिययैव। प्राधान्यात्। आर्थस्तु भोजनक्रिययान्वयः। अतः शब्दव्यापारापेक्षायामभिधानमेव। [२]अनभिधानं न त्वार्थमपीति नाहमर्थे तृतीया प्रसज्यते। अत एव 'पक्त्वा भुज्यत ओदन' इत्यत्र पाककर्मत्वानभिधानमाश्रित्य ओदनमिति द्वितीया न प्रवर्तते। पाके कर्मान्वयस्यार्थत्वात्। 'प्रासाद आस्त' इत्यत्र तु प्रासादस्य प्रसदनासनक्रियाभ्यां शाब्द एवान्वयः। पदार्थदशायां घञन्तप्रातिपदिकेन प्रसदनाधिकरणतयान्वितस्यैव प्रासादद्रव्यस्य वाक्यार्थदशायामासनक्रियाधिकरणत्वेनाप्यन्वयः। अतस्तत्र शब्दव्यापारापेक्षयैवानभिहितासनक्रियाधिकरणकारकशक्त्याश्रयत्वमपि प्रासादस्यास्तीति तत्र सप्तम्युपपद्यते। एवमसंकीर्णा वैयाकरणमर्यादेति तदाश्रयणे 'भुक्त्वा व्रजामी'त्यत्र न मयेति प्रयोगः प्रसज्यते। इतोऽपि तदाश्रयणे तन्न प्रसज्यते। यतो 'मया भुक्त्वा व्रज्यत' इति कर्तृशक्तियुक्तप्रातिपदिकार्थाभिधित्सायां नीलमुत्पलमित्याकारकप्रयोगे च सावकाशयोस्तृतीयाप्रथमयोः 'भुक्त्वा व्रजामी'त्यादिप्रयोगेष्वहमर्थे प्राप्तयोः 'विप्रतिषेधे परं कार्य'मिति परत्वात्प्रथमैव भवति। यदि परत्वात्प्रथमा तर्हि ततोऽपि परत्वात् षष्ठी किमिति न प्राप्नोति। न तावच्छेषषष्ठी प्राप्नोति। प्रातिपदिकार्थस्य प्रथमाविधावुपयुक्तत्वेनाशेषत्वात्। कृद्योगलक्षणापि न प्राप्नोति। क्त्वाप्रत्ययस्याव्ययत्वेन 'न लोकाव्ययनिष्ठाखलर्थतृना' मिति प्रतिषेधात्। एवं वैयाकरण-

(१) 'पर्युदासपक्षेऽपि' इति ख-पाठः। (२) 'न त्वनभिधानमपी' ति-क-ग—पाठः।

ननु त्रिवृत्करणस्य केवलं चतुर्मुखकर्तृत्वं संभवति अण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते 'यथा खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽ-

मर्यादायामप्रसज्यमानापि 'भुक्त्वा व्रजामी' त्यत्राहमर्थे तृतीया 'प्रत्ययान्तराभिहितयोः कर्त्रोरैक्यं क्त्वाप्रत्ययार्थ' इति परिभाषामाश्रित्य कर्तुः क्त्वान्तधातुवाच्योपसर्जनक्रियान्वयमपि शाब्दमभ्युपगच्छतः प्रकृतश्रुतौ 'जीवेने'ति तृतीयां तदर्थां समर्थयमानस्य प्रसज्यमाना न शक्यते निवारयितुम् । न हि क्त्वाप्रयोगे कर्तुरुपसर्जनक्रियान्वयमपि शाब्दमातिष्ठमानेन शब्दव्यापारविषयाश्रयमनभिहितसूत्रं तत्र न प्रवर्तत इति वक्तुं शक्यम् । नापि प्रथमायाः परत्वमिहोदाहर्तुं शक्यम् । 'मया भुक्त्वा व्रज्यत' इति प्रयोग इव भुक्त्वा व्रजामीति प्रयोगेऽप्यहमर्थे कर्तृशक्तियुक्ताभिधित्सासत्वात् । इयांस्तु विशेषः । प्रथमोदाहरणे प्रधानक्रियाकर्तृशक्तियुक्ताभिधित्सा द्वितीयोदाहरणे तूपसर्जनक्रियाकर्तृशक्तियुक्ताभिधित्सेति । स्यादेतत् । यत्र क्त्वाप्रयोगस्थले कस्यचित्कारकस्योपसर्जनक्रिययैवान्वयो न प्रधानक्रियया तत्रोपसर्जनक्रियान्वयः शब्दव्यापारविषय इत्यङ्गीकर्तव्यम् । तस्य प्रधानक्रियान्वयाभावेनार्थात्सिद्ध्यसंभवात् । ततश्च तत्र शब्दव्यापारविषयाश्रयमनभिहितसूत्रं प्रवर्तत इति भाव्यं तत्र कारकविभक्त्या । दृश्यते च तथैव प्रयोगः । 'इष्टकाः पक्त्वा भुंक्त' इति । तत्र खल्विष्टकानां पाकक्रियामात्रेणान्वय इति तदन्वयस्य शब्दव्यापारविषयत्वादनभिहिताधिकारविहिता कर्मणि द्वितीया दृश्यते । एवमिहापि जीवशरीरकस्य कर्तुः प्रवेशमात्रेणान्वयो विवक्षित इति तदन्वयस्य शब्दव्यापारविषयत्वात् कर्तरि तृतीयोपपद्यते । नैतदपि युक्तम् । समानकर्तृकत्ववाचिनः क्त्वाप्रत्ययस्य प्रयोगे कारकान्तराणामुपसर्जनमात्रान्वयेऽपि कर्तुस्तन्मात्रान्वयासंभवात् विशिष्टरूपेण कर्तुरुपसर्जनक्रियामात्रान्वयेऽपि विशेष्यांशेन प्रधानक्रियान्वयस्यापि सत्त्वात् समानकर्तृकत्वस्य न क्षतिरिति चेत् यद्येवं तर्हि विशेष्यसमर्पकं कर्तृवाचिपदम् । प्रधानक्रिययैवान्वयात् । अतस्तत्र प्रथमा प्राप्ता । तस्मिन्नुपसर्जनक्रियामात्रान्वयपरिचायकविशिष्टरूपकारकविशेषणपदेऽपि प्रथमैव भवेत् । 'न हि द्वारपालानभिज्ञातोऽहं सत्रशालां प्रविश्य भोक्ष्य' इति प्रयोगेऽहमर्थस्य प्रधानभोजनक्रियाकर्तृत्वेनान्वये सत्युपसर्जनप्रवेशक्रियामात्रान्वयविशिष्टरूपसमर्पकेऽपि तद्विशेषणपदे तृतीया दृश्यते । किं च जीवशरीरकत्वस्य उपसर्जनक्रियामात्रान्वयोऽप्यसिद्धः । यथा हि परमेश्वरस्य मूर्त्यात्मकशरीरकस्य तेजोऽवन्नानुप्रवेशः तथा देवादिनामरूपस्रष्टृत्वमपि तच्छरीरकस्यैव । न खलु हिरण्यगर्भादिषु देवादीन्सृजत्सु परमेश्वरः स्वतंत्रं रूपान्तरमधिष्ठाय तान्सृजतीति सिद्धान्तः । तस्माज्जीवेनेति कर्तरि तृतीयेत्येतदनुपपन्नमित्यलमतिप्रपञ्चेन । उत्तरसूत्रमवतारयितुमाशंकते—नन्विति । 'त्रिवृत्कुर्वत उपदेशा'दिति सूत्रेण नामरूपव्याकरणं त्रिवृत्करणैककर्तृकत्वात्परमेश्वरकर्तृकमित्युक्तम् । तन्न युक्तम् । त्रिवृत्करणस्यापि केवलहिरण्यगर्भकर्तृकत्वसंभवात् । न च त्रिवृत्कृतैस्तेजोऽवन्नैरुत्पादितेऽण्डे हिरण्यगर्भसृष्टिरतस्त्रिवृत्करणे तस्य कर्तृत्वं न संभवतीति वाच्यम् ।

(१) 'समर्पक' इति ख—पाठः ।

णिष्ठस्तन्मनः' इत्यादिना इत्याशङ्क्य परिहरति–

**॥ सू ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥**

'अन्नमशितं त्रेधा विधीयते' इत्यादौ प्राङ्निरूपितात् त्रिवृत्करणादर्थान्तरभूत एवाण्डान्तर्वर्तिपुरुषोपभुक्तान्नादीनां परिणामप्रकार उच्यते, न तु त्रिवृत्करणम्। अन्यथा हि मांसमनसोः पुरीषादणीयस्त्वेनाप्यतैजसत्वप्रसङ्गः। तथा सति 'अन्नमशितं त्रेधा' इति भूमेरेव त्रैविध्योपक्रमः 'अन्नमयं हि सोम्य मनः' इति मनसो भौमत्वं च विरुध्येत। तथेतरयोरप्तेजसोस्त्रैविध्यं विरुध्येत। तदिदमाह– 'मांसादि भौमं यथाशब्दमितरयोश्चे'ति। पुरीषवन्मांसमनसी अपि भौमे इष्येते। तथा मूत्रवल्लोहितप्राणावाप्यौ, तथास्थिवत् मज्जावाचौ तैजस्ये॥

त्रिवृत्करणस्याऽण्डसिद्धिपूर्वभावासिद्धेः[1]। अण्डसृष्ट्युत्तरकालं तदन्तर्वर्त्तिदेवमनुष्यादिनामरूपव्याकरणे च निर्वृत्ते प्राणिभिर्भुज्यमानेषु तेजोऽबन्नेषु हि त्रिवृत्करणप्रकार उपदिश्यते। 'यथा खलु सोम्येमा' इत्यादिना अण्डान्तर्वर्तिषु चाग्न्यादित्यादिषु त्रिवृत्करणप्रकारः प्रदर्श्यते 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये'त्यादिना। नामरूपव्याकरणानंतरं च त्रिवृत्करणं पठ्यते। 'सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति। अत'स्त्रिवृत्कुर्वत उपदेशा'दिति सौत्रहेतुरयुक्त इत्याशङ्कार्थः। सू ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥ उपन्यस्तशंकानिराकरणोपयोगि साध्यं तदनंगीकारेऽनिष्टप्रसंगञ्च मनसि निधाय प्रसंगस्य विपर्ययपर्यवसानमात्रं सूत्रे निबद्धं तदवतारयितुं साध्यमनिष्टप्रसंगञ्च -अन्नमिति। अन्यथेति। अत्रिवृत्कृतानि पृथिव्यप्तेजांसि कार्यकारणभावापन्नानि स्थूलान्यणून्यणीयांसि। अतस्त्रिवृत्कृतेष्वपि तत्तद्भूतांशानां स्वकारणानुगुण्येन स्थूलत्वाणुत्वाणीयस्त्वानि स्युः। तस्मा'दन्नमशित'मित्यादि वाक्यं त्रिवृत्करणप्रदर्शनपरं चेत् स्थविष्ठं पुरीषं पार्थिवमणु मांसमाप्यमणीयो मनश्च तैजसमित्यापद्येत। तथा द्वितीयपर्याये मूत्रं पार्थिवं लोहितमाप्यं प्राणस्तैजस इति भवेत्। तृतीयपर्याये अस्थि पार्थिवमाप्या मज्जा तैजसी वागिति स्यादित्यर्थः। अस्तु को दोष इत्याशंक्य सूत्रलब्धमर्थमाह– तथा सतीति। 'अन्नमशितं त्रेधा विधीयत' इति पुरीषमांसमनसां पार्थिवत्वमुक्तम्। 'आपः पीतास्त्रेधा विधीयन्त' इति मूत्रलोहितप्राणानामाप्यत्वमुक्तम्। 'तेजोऽशितं त्रेधा विधीयत' इति अस्थिमज्जावाचां तैजसत्वमुक्तम्। पुनश्चा'न्नमयं हि सोम्य मन आपोमयः प्राण' इति मनःप्राणयोः पार्थिवाप्यत्वमुक्तम्। तत्सर्वं विरुध्येतेत्यर्थः। उपन्यस्तविपर्ययपर्यवसानं सूत्रारूढं करोति–तदिदमाहेति। पुरीषस्य पार्थिवत्वं शङ्कावादिनापि समर्थयितुं शक्यमित्याशंक्य सूत्रे मांसादीत्युक्तम्। आदिशब्देन मनो गृह्यते। यथाशब्दमुदाहृतश्रुत्यनुसारेणेतरयोरपि पर्याययोर्विकरा बोद्धव्या इति सूत्रशेषार्थः। लोहितवन्मूत्रप्राणाविति वाग्वदस्थिमज्जानाविति च वक्तव्ये भाष्ये मूत्रवदस्थिवदित्युक्तिराद्यत्रिकस्याप्यत्वेन द्वितीयत्रिकस्य तैजसत्वेन च साम्यमात्रे तात्पर्येण। यत्त्वण्डान्तर्वर्तिष्वग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं तद्बोद्धव्यस्य श्वेतकेतोर्बुद्धिसंवादार्थं न तु तत्रैव त्रिवृत्करणमिदं-

(१) सृष्टिप्रागभावासिद्धेः' इति ख–पाठः।

ननु पूर्वमेव त्रिवृत्कृतं चेत् त्र्यात्मकं वस्तु कथमन्नमापस्तेज इत्युच्यत इत्यत आह—

॥ सू ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥

अन्नादिभूयस्त्वेन वैशेष्यादन्नवाद इति । तस्मात्त्रिवृत्कुर्वतः परमेश्वरस्य चतुर्मुखाद्यात्मना सकलनामरूपसृष्टिरिति युक्तमेव ॥ इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ८

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य चतुर्थः पादः॥ ॥ समाप्तश्च द्वितीयोऽध्यायः ॥

---

प्रथमतया प्रवृत्तमिति बोधनार्थम् । नामरूपव्याकरणत्रिवृत्करणयोः पाठक्रमश्चार्थक्रमेण बाध्यते । सर्वोऽपि संकल्पकाले साध्यलाभसंकल्पपूर्वकं तत्साधनानुष्ठानं संकल्पयतीति लोके दृष्टम् । अत्रापि प्रकरणे 'बहु स्या'मिति साध्यलाभसंकल्पपूर्वकं 'प्रजायेये' ति तत्साधनप्रवृत्तिसंकल्पवचनं दृष्टम् । अतस्तदनुसारेण 'हन्ताहमिमा' इति संकल्पवचने फलभूतं नामरूपव्याकरणं प्रथमं पठितमिति तथैवोत्तरवाक्येऽपि नामरूपव्याकरणस्य प्रथमं पाठ आसीदित्येवमन्यानुरोधेन प्रवृत्तत्वादपि पाठक्रमोऽर्थक्रमेण बाध्यते । त्रिवृत्कृतैरेव हि तेजोऽबन्नैरण्डमुत्पादनीयमत्रिवृत्कृतानां तेषां कार्यारंभासामर्थ्यात् । यथाहुः पौराणिकाः— 'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥' इति । एवञ्च यद्यप्यण्डसृष्ट्युत्तरभाविनो हिरण्यगर्भस्य त्रिवृत्करणकर्तृत्वायोगेऽपि तत्पूर्वभाविनो नारायणस्य रुद्रस्य वा तत्कर्तृत्वमाशङ्कितुं शक्यम् । तथापि 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्ये' त्यत्र जीवशब्दस्य तेजोऽबन्नाभिमानिरुद्रनारायणहिरण्यगर्भपरत्वात् तन्मध्ये हिरण्यगर्भस्य त्रिवृत्करणकर्तृत्वासंभवेन नामरूपव्याकरणकर्तृत्वासंभवे स्थिते त्रयसाधारणं जीवशब्दमवलंब्य रुद्रस्य नारायणस्य वा त्रिवृत्करणकर्तृत्वाशङ्कामूलं नामरूपव्याकरणकर्तृत्वचोद्यं न प्रवर्तत इति व्यर्था तयोस्त्रिवृत्करणकर्तृकत्वशङ्का निरालंबना चेति तात्पर्यम् । 'अन्नमशित' मित्यादिना प्रागेव त्रिवृत्कृतानां तेजोऽबन्नानां प्राणिभिर्भुक्तानां परिणामप्रकारमात्रमुच्यते न तु त्रिवृत्करणमिति यदुक्तं तन्न युक्तम् । प्रागेव त्रिवृत्कृतत्वे त्र्यात्मकेषु वस्तुष्वेकैकवाचिशब्दप्रयोगायोगात् इत्याशंकोत्तरत्वेनोत्तरसूत्रमवतारयति—नन्विति । सू ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥ अन्नादिति । अर्धमन्नमर्धमितरद्भूतद्वयमित्येवमादिरूपेण भूयस्त्वेन प्रकारेण यद्वैशेष्यं विशेषस्ततो हेतोरित्यर्थः ॥

इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

इति श्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरंधरसकलदेवभूदेवप्रतिष्ठापक-
श्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसांबशिवप्रेरितस्य
श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरंगराजाध्व-
रिवरसूनोरप्पय्यदीक्षितस्य कृतौ श्रीकण्ठाचार्यवि-
रचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवा-
र्कमणिदीपिकाख्यायां द्वितीयस्याध्या-
यस्य चतुर्थः पादः ॥ ४ ॥

## नयमणिमालायाम् अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

**सू ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥१८॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥**

द्रुहिणो देवादीनां व्याकरणे नामरूपयोः कर्ता । भूम्यभिमानयतोऽस्य हि सृष्टेस्तदनंतरं भवति ॥ १६६ ॥
व्याकरणकर्तुरेव त्रिवृत्क्लृतावप्यभाणि कर्तृत्वम् । तच्च त्रिवृत्कृतभ्वाद्यण्डाज्जातस्य नो घटते ॥ १६७ ॥

## इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

## इति श्रीमदप्पयदीक्षितकृतौ चतुर्मतसारसंग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे द्वितीयस्याध्यायस्य तुरीयः पादः ॥ २ ॥ ४ ॥ अध्यायश्च समाप्तः ॥ २ ॥

## सूत्रार्थचन्द्रिकायाम् अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

**सू ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥१८॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥**

**भगवत्पादमते,** पूर्वं नामरूपभेदेन प्राणेन्द्रिययोर्भेद इत्युक्तम् । तत्प्रसङ्गेन नामरूपव्याकरणं किंकर्तृकमिति विचार्यते—**संज्ञामूर्तीत्यादिना ।** अत्र 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति जीवकर्तृकत्वश्रुतेः 'आकाशो ह वै नामरूपयोर्निर्वहिता' इति परमेश्वरकर्तृकत्वश्रुतेश्च मिथो विरोधोऽस्ति न वेति **संदेहः** । अस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु,** तुशब्दः पूर्वपक्षनिरासकः । अल्पमेधसो जीवस्य महीमहीधरमहोदधिव्याकरणे सामर्थ्याभावात् 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति त्रिवृत्कुर्वतः परमेश्वरस्यैव नामरूपव्याक्रिया भवितुमर्हति । 'सेयं देवते'त्युपक्रम्य 'व्याकरवाणि' इति व्याकरणस्य परदेवताकर्तृकत्वोपदेशात् 'अनेन जीवेने' त्यस्य संनिहितानुप्रविश्येत्यनेन संबन्धाच्च नानयोर्विरोध इति ॥ सूत्रार्थोऽपि व्याख्यातः ॥

इत्थं बाह्यं त्रिवृत्करणमभिधायाध्यात्मिकमाह—सू ॥ **मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥** भूमेरन्नात्मिकायाः कार्यं भौमं मांसादि । आदिशब्देन पुरीषमनसी गृह्येते । **इतरयोः**=अप्तेजसोः । यथाशब्दं कार्यमवगन्तव्यम् । मूत्रं लोहितं प्राणश्चापां कार्यम्, अस्थि मज्जा वाक् तेजस इति । तदाह श्रुतिः—अन्नमशितं त्रेधा विधीयते तस्य यः धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मासं योऽणिष्ठस्तन्मनः' इत्यादिना ॥

ननु सर्वेषां त्रिवृत्करणाविशेषात् कथं पृथिव्यादिव्यवहारः संगच्छते इति तत्राह—सू ॥ **वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥** तुशब्दश्शंकानिरासार्थः । सर्वेषां पृथिव्यादीनां त्रिवृत्करणाविशेषेऽपि **वैशेष्यात्**=स्वभागाधिक्यात् । **तद्वादः**= पृथिव्यादिव्यवहारः संगच्छते । तद्वाद इति पदाभ्यासोऽध्यायपरिसमाप्त्यर्थः । तदेवं सर्वासां श्रुतीनामविरोधे प्रामाण्यान्निरवद्याद्वितीये ब्रह्मणि समन्वयस्सिद्ध इति ॥ अस्मिन्पादे **द्वाविंशतिस्सूत्राणि** अधिकरणानि **नव** ॥

**श्रीकण्ठमते,** तथा **रामानुजमते च** अत्राधिकरणे संदेहपूर्वपक्षादिषु नास्ति विशेषः पूर्वस्मात् । अत्रापि नामरूपव्याकरणं किं परमेश्वरकर्तृकमुत चतुर्मुखादिजीवकर्तृकमिति संदिह्य त्रिवृत्कुर्वतः परमेश्वरस्यैव चतुर्मुखाद्यात्मना सकलनामरूपसृष्टिरिति तत्तन्मतप्रक्रियानुगुण्येन सिद्धान्तितमिति न पृथक्प्रपञ्चितम् ॥ अत्र **पादे** अनयोर्मतयोरे**कोनविंशतिस्सूत्राणि** अधिकरणानि **अष्टौ** ॥

**आनन्दतीर्थमते,** अत्र आद्यं सूत्रं संज्ञाधिकरणमितरत्सूत्रद्वयं मांसाधिकरणमिति च व्यपदिश्यते । अत्र 'विरिञ्चो वा इदं सर्वं विरेचयति ब्रह्मा वाव विरिञ्च एतस्माद्धीमे रूपनामनी' इति गौपवनश्रुत्या विरिञ्चनामनिर्वचनयुक्त्योपष्टम्भयया द्रुहिणस्य नामरूपकर्तृत्वं प्रतिपादयन्त्या विरोधात् 'परमाख्येते नामरूपे व्याक्रियेते' इति विष्णोर्नामरूपकर्तृत्वं प्रतिपादयन्त्याश्निवेश्यश्रुतिरप्रमाणमिति **पूर्वपक्षः** । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इति श्रुत्या त्रिवृत्क्रियाकर्तुरेव तत्सापेक्षशरीरकर्तृत्वं तदनन्तरं तत्तन्नामकर्तृत्वं च विरिञ्चादिवाक्यानां तदवान्तराधिकारविषयत्वादिति **सिद्धान्तः** । सूत्रमपि व्याख्यातम् ॥ **इति संज्ञाधिकरणम् ॥ १२ ॥**

## अथ मांसाधिकरणम् ॥ १३ ॥

अत्राधिकरणे शरीरकारणश्रुतिविरोधः परिह्रियते । 'आपो वाव मांसमस्थि च भवन्त्यापश्शरीरम्' इति श्रुत्या 'अम्मयं च यतो मांसं मनस्तृप्तिश्च मांसत' इति स्मृत्युक्ततृप्तिजनकत्वयुक्तिसहितया शरीरस्य केवलाप्यत्वस्य 'पृथिवी शरीर' मिति पृथिव्यां लयश्रुत्या काठिन्यादिना च केवलपार्थिवत्वस्य 'सोऽग्नेर्देवताया आहुतीभ्यस्संभूय हिरण्यशरीर ऊर्ध्वं स्वर्गलोकमेती' ति श्रुत्यौष्ण्यदर्शनेन च केवलतैजसत्वस्य चाङ्गीकर्तव्यत्वेन तस्य त्रिवृत्कृतभूतत्रयप्रकृतिकत्वं वदन्त्या 'इमास्तिस्रो देवताः

पुरुषं प्राप्ये'त्यादिश्रुतेरप्रमाणत्वाद्भूतत्रयप्रकृतिकत्वे विशेषोक्तेरयोगाच्च शरीरस्य त्रिवृत्कृतभूतत्रयप्रकृतित्वं न संभवतीति **पूर्वपक्षः । सिद्धान्तस्तु,** मांसादिकं पार्थिवमप्तेजसोरपि कार्यमङ्गीकर्तव्यम् । श्रुत्यनुसारात् । पार्थिवत्वादिविशेषव्यवहारस्तु तत्तद्भूतप्रचुरसंयोगविशेषेण तत्तच्छरीरविषयः ॥ इति । **सूत्रार्थस्तु,** भौममित्युपलक्षणम् । यच्छरीरे कठिनं मांसादि तदेव भौमं पार्थिवम् । न सर्वशरीरम् । किं तर्हि **यथाशब्दम्**='यत्कठिनं सा पृथिवी'ति श्रुतिमनुसृत्य शरीरे **इतरयोश्च**=अप्तेजसोश्च कार्यं शोणितमज्जादिरूपमङ्गीकार्यम् । यथा मांसादिकं भौमं पृथिवीकार्यम् । न केवलं पृथिवीकार्यं किं तर्हि इतरयोरप्तेजसोश्च कार्यं यथाश्रुत्यङ्गीकार्यमित्यर्थः ॥

सू ॥ **वैशेष्यात्तु तद्वादस्तद्वादः ॥ २३ ॥** पार्थिवमाप्यं तैजसमिति विशेषोक्तिस्तु **वैशेष्यात्**=पृथिव्यादिभूतानां तत्तच्छरीरविशेषसंयोगमपेक्ष्य युज्यते । अतो न तद्विरोध इत्यर्थः ॥ एतदध्यायोक्तार्थस्यावधारणार्थाध्यायान्ते द्विरुक्तिः ॥ अस्मिन्पादे अत्र **मते त्रयोविंशतिस्सूत्राणि** अधिकरणानि **त्रयोदश । इत्यानन्दतीर्थमते मांसाधिकरणम् ॥१३॥**

**यं प्रसूत विशुद्धशीलमनघं वृद्धांबिकाख्या सती**
**यं मृत्युञ्जयशर्मणो बुधमणेर्भाग्यं विदुस्साधवः ।**
**वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-**
**स्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥**

**सूत्रार्थचन्द्रिकायामविरोधाख्ये द्वितीयकेऽध्याये । भौतिकसृष्टिश्रुतिगतमविरोधं** स्थापयंस्तथा प्रथितः ॥
आद्ये मतत्रयेऽपि प्राप्तसंपूर्तिमेष खलु तुर्यः । पादस्स**युक्तिकश्रुत्यविरोधाख्यश्च मध्वमत**रीत्या ॥

**इति सूत्रार्थचन्द्रिकायां संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥**

**श्रीमद्वाधूलवंश**मुक्ताफलपण्डितप्रकाण्ड**गंगाधरसुधीमणेः** पौत्रेण संततसमाचरितगायत्रीसमुपास्तिसंधुक्षितब्रह्मवर्चससंसिद्धनिग्रहानुग्रहशक्तिकान्तर्मुख**मृत्युञ्जयसंयमीन्द्र**गार्हस्थ्यतपःस्तोमपरिपाकायितमूर्तिना **वृद्धांबिकागर्भ**शुक्तिमुक्ताफलेन अग्निष्टोमसमाराधिताष्टमूर्तिक**श्रीमद्गङ्गाधरमखिवर्य**चरमसोदरेण **गर्गान्वय**महांभोधिकौस्तुभायितभगिनीपति **पिब्रुशास्त्रि**शब्दिते**श्वरशर्म**तपोधनशिष्टाग्रगण्यब्रह्मनिष्ठाधुरंधरान्तर्मुखनिरुपधिकरुणाशालि**देशिकेन्द्र**परमानुग्रहसंपत्संधुक्षितकाव्यालंकारसाहितीपरिचयेन तदसाधारणपरमानुग्रहपात्रेण **पञ्चनदस्थला**भिजनसान्निचित्यसर्वतोमुखमहाव्रतविश्वजियाजि(ब्रह्मीभूत)**श्रीबालकृष्णमखिराज**करुणापाङ्गसमासादितब्रह्मविद्यापरिचयेन **श्रीहालास्यनाथसूरिणा** विरचितायां **ब्रह्ममीमांसासूत्रार्थचन्द्रिकायां** चतुर्मतभाष्यार्थबोधिन्यां **द्वितीयस्याध्यायस्य तुरीयः पादः ॥**

**॥ द्वितीयाध्यायश्च समाप्तः ॥**



॥ शिवाभ्यां नमः ॥

**श्रीचिन्नबोम्मनरपाल**हृदब्जवासि**सांबत्रिलोचन**निदेशवशंवदस्य ।
**अप्पय्यदीक्षितमणे**र्वदनारविन्दमाध्व्या **शिवार्कमणिदीपिकया** समेते ॥
**श्रीकण्ठयोगि**रचिते तरुणेन्दुचूडनिर्दोषभव्यगुणसंहतिबोधदक्षे ।
**भाष्ये** पराशरतपःफलतापसेन्द्र**श्रीबादरायण**गभीरगिरां चिरत्ने ॥
युक्तेऽधिकृत्यवसितौ **नयरत्नमाला**भिख्या**प्पयाध्वरिकृति**प्रवरान्तरेण ।
**हालास्यनाथसुधिया** कृतया च **सूत्रवृत्त्या** समं कृतधियामभिनन्दयित्र्या ॥
प्राचीनसन्मतचतुष्टयतारतम्यजिज्ञासुमोदनकृतेऽनतिदैर्घ्यभाजा ।
जीर्णप्रबन्धपुनरुद्धृतिरूपधर्मसाह्यैकतानमनसां सुहृदां निदेशम् ॥
आलंब्य भूरियतनार्जितलुप्यमानद्वित्रातिदुर्लभखिलीकृतमातृकातः ।
**मैसूरुवासिपरकालमठाधिपेन्द्र**दत्तातिरम्यसुपरिष्कृतमातृकायाः ।
साहाय्यतश्च शिथिलाः परिपूर्य पङ्क्तीरुज्जीविते विधृतभूरिपरिश्रमेण ।
**तेनैव** मुद्रणपरिष्कृतिमाप्यमाने ह्यध्याय एष परिपूर्तिमगा**द्द्वितीयः** ॥

॥ शुभं भूयादध्येतुरध्यापकस्य च ॥

Part IX (9).

॥ ॐ ॥

॥ शिवाभ्यां नमः ॥

॥ भारतीमन्दिरसंस्कृतग्रन्थावलिः ॥

THE

# BHARATEE MANDIRAM SANSKRIT SERIES

No. 1.

ग्रन्थाङ्कः १

THE

# BRAHMA SUTRA BHASHYA

OF

SRIKANTHACHARYA

WITH

SIVARKAMANI DIPIKA

BY

The Famous APPAYA DIKSITA.

EDITED BY

R. HALASYANATHA SASTRI.

# श्रीमच्छ्रीकण्ठाचार्यकृतं

# ब्रह्मसूत्रभाष्यम् ॥

श्रीमदप्पयदीक्षितकृतशिवार्कमणिदीपिकाख्यव्याख्यासहितम् ।

तैरेवं प्रणीतया तत्तदधिकरणार्थसंग्राहकपद्यरूपया नयमणिमालया सनाथीकृतं च

कुम्भघोणनगरविराजमान ( नेटिव् हैस्कूलनामक ) स्वदेशीयहूणवाणीमहापाठशाला-
गीर्वाणवाण्युपाध्यायपदमधितिष्ठता भारतीमन्दिराख्यलुप्यमान-
प्राचीनग्रन्थप्रथनालयप्रतिष्ठापकेन कुम्भघोणवासिना

रा० हालास्यनाथशास्त्रिणा संशोधितम् ।

स्वप्रणीतया सूत्रार्थचन्द्रिकया संयोजितं च

तेनैव

सहृदयानां सत्प्रभूणां साहाय्येन

मुम्बानगरस्थनिर्णयसागरमुद्रणालये सम्मुद्य
खण्डशः प्राचार्यमाणं विजयते ।

१९१४.

नवमी संचिका ।

# To The Subscribers

GENTLEMEN,

The Ninth Part is herewith issued. I had intended to issue the Ninth and Tenth Parts simultaneously. Owing to some financial difficulties, the publication of the Tenth Part is likely to be delayed by some weeks. Hence I decided to issue the Ninth Part separately and have issued accordingly, as will be seen, the Ninth Part contains a few more pages than the parts hitherto issued. I can however assure you that the remaining parts will be issued very early.

My sincerest apologies are due to you for the long delay in the issue of the Ninth Part. The support hitherto received from the Public, though liberal, has not been commensurate with the arduous nature of my undertaking. With a view to enlist further support to my cause, I have started on an extensive tour to Bombay and Northern India, and I trust that my labour will meet with success. The work which was expected to be completed in seven parts now extends to 12 parts or so. Another cause for the delay lies in the fact that I have to attend to the publication work single-handed, in addition to my duties as Sanskrit Pundit of a large High School. I humbly beg that you will kindly excuse the long delay on my part in consideration of the following circumstances:—The minute examination and deciphering of moth-eaten manuscripts; the composition of an original glossary on the Brahma Sutras, containing an exposition of the doctrines of the four different Schools of the Vedanta; the distance from here to Bombay where the work is printed; the delay caused in the transmission of proofs, etc. Added to all this there are the various difficulties and troubles to which human flesh is heir. Undeterred by all these difficulties, I am working hard for the completion of the undertaking, and I hope that my arduous labour will be appreciated, and that success will crown my labour.

I take this opportunity of inviting your attention to the fact that I have also published "Anandalahari" of Sri Appaya Dikshita—an invaluable work summarising the teaching of Srikantahcharya, and containing a successful reconciliation of Srikantah's doctrine with the teaching of Sri Sankaracharya, the renowned expounder of the Advaita Vedanta. I request that you will encourage me by subscribing for copies of this work.

Letters and other correspondence intended for me may be forwarded to my Kumbakonam address. I have made arrangements for their due transmission to me.

Again, I request to be excused for the long delay.

Yours Sincerely,

**R. Halasyanath Sastry,**
SANSKRIT PANDIT, NATIVE HIGH SCHOOL,
AND
Editor, Bharati Mandiram Sanskrit Series,
Kumbakonam,
Madras Presidency.

BHARATI MANDIRAM,
Kumbakonam,
*Sept. 1914.*

॥ श्रीः ॥

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## अथ तृतीयस्याध्यायस्य प्रथमः पादः ॥

### अथ तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

॥ सू ॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

अतीतेऽध्याये प्रथमाध्यायसिद्धस्य ब्रह्मकारणवादसमन्वयस्य विरोधः परिहृतः। तथा हि—प्रथमे पादे सांख्यादितर्कविरोधः परिहृतः । द्वितीये प्रधानकारणवादादिषु तर्कविरोधः प्रदर्शितः । तृतीये भूतसृष्ट्यवान्तरविरोधपरिहारपूर्वकं जीवश्च नित्यत्वादिधर्मैर्निरूपितः। चतुर्थे प्राणेन्द्रियाणां स्वरूपं ब्रह्मणः सकाशात् तेषामुत्पत्तिमप्यभिधाय सर्वेषां नामरूपव्याकरणं च निरूपितम् । अत्र तृतीये प्रथमपादे नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणं क्रियते । द्वितीये तदवस्थानिरूपणपूर्वकमीश्वरस्य स्वरूपलक्षणमुच्यते ।

---

## अथ शिवार्कमणिदीपिकायां

### तृतीयस्याध्यायस्य प्रथमःपादः

### अथ तदंतरप्रतिपत्त्यधिकरणम् ॥ १ ॥

॥ सू ॥ तदंतरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

प्रतिपत्तिसौकर्यायं वृत्तवर्तिष्यमाणाध्यायपादार्थाननुकीर्तयन् [१]संगतिं दर्शयति—अतीतेऽध्याय इति । प्रथमेनाध्यायद्वयेन वेदान्तवेद्यं सिद्धरूपं परं ब्रह्म संभावितसकलविरोधपरिहारेण निरूपितम् । इतः परमध्यायद्वयेन तत्प्राप्तिसाधनतत्प्राप्तिप्रकारात्मकं साध्यरूपं वस्तु निरूप्यते । ब्रह्मप्राप्तिसाधननिरूपणस्य ब्रह्मप्राप्तिनिरूपणस्य च ब्रह्मस्वरूपावधारणाधीनत्वादस्याध्यायद्वयस्य पूर्वाध्यायद्वयानंतर्यमिति [२]पूर्वोत्तराध्यायद्विकयोर्हेतुहेतुमद्भावसंगतिः। तत्र साधनाधीनत्वात्साध्यलाभस्य साधननिरूपणार्थस्य तृतीयाध्यायस्य फलाध्यायात्पूर्वभाव इत्यनयोरध्याययोरवान्तरसंगतिः । ब्रह्मप्राप्तिसाधनं संसाराद्वैराग्यं ब्रह्मप्रेप्सा तदुपासना[३]तदंगाश्रमादिधर्मकलापश्चेति चतुर्विधम् । तत्राधिकारिणो वैराग्यदृढीकरणाय क्षयिष्णुत्वसातिशयित्वादिना संसारस्य दुःखरूपतां ख्यापयितुमिह परत्र [४]तृतीये स्थाने च परिभ्रमणेन तस्य दोषवत्त्वं प्रथमपादे निरूप्यते । तस्य परब्रह्मप्रेप्सादृढीकरणाय परब्रह्मणश्शिवस्य महिमा द्वितीयपादे निरूप्यते। तत्रोभयलिंगाधिकरणमारभ्य निर्दोषकल्याणगुणाकरत्वसमाभ्यधिकरहितत्वसकलकर्मफलप्रदत्वरूपस्तस्य महिमा निरूप्यते इति स्पष्टमेव । स्वप्नाधिकरणेऽपि तस्यैव महिमा निरूप्यते ।

---

(१) संगतिमाविष्करोति' इति ख. पाठः । (२) 'पूर्वोत्तरद्विकयोस्संगतिः' इति ख. पाठः । (३) तदुपासनानुष्ठानमुपासनांगाश्रमादि' इति ख. पाठः । (४) 'तृतीयस्थाने च परिभ्रमणरूपत्वं तस्य' इति ख. पाठः ।

तृतीये तदुपासनाविशेषाणां गुणोपसंहारः। चतुर्थे त्वाश्रमादिधर्म इति विवेकः॥

अत्र प्रथमाधिकरणे जीवः परलोकगतागतेषु देहान्तरप्राप्तये भूतसूक्ष्मैर्वेष्टितो याति उतावेष्टित इति संशयः॥

जीवो देहान्निर्गच्छन् भूतसूक्ष्मैर्भाविशरीरबीजैरपरिष्वक्त एव यातीत्युच्यते, भूतानां सर्वत्र सुलभत्वेनापार्थकत्वादायासस्य॥

इति प्राप्ते ब्रूमः—जीवो देहान्तरप्राप्तये भूतसूक्ष्मैः परिष्वक्तो यातीति पश्ना-

---

न हि तत्र जीवस्य स्वप्नावस्था कीदृशीति चिंत्यते किं तु तस्याः परमेश्वरकर्तृकत्वं व्यवस्थाप्यते। तद्व्यवस्थापनं चानंतप्राणिगतपरस्परविरुद्धात्याश्चर्यतत्तत्पुरुषमात्रानुभाव्यतत्कालमात्रावसायिस्वाप्नपदार्थजातस्रष्टृत्वादिरूपतन्महिमनिरूपणं पर्यवस्यति। यद्यप्येतेनाधिकरणेन स्वप्नावस्थायाः प्रजापतिविद्योक्तरीत्या भयादिदर्शनकलुषितत्वेन हेयत्वसंसूचनात् पूर्वपादेनैव वैराग्यदृढीकरणमपि लभ्यते। तथापि तदानुषंगिकं प्रयोजनं न त्वनुगतपादार्थरूपम्। तथा सुषुप्तिचिंतापि परमेश्वरस्य सुषुप्तिस्थानत्वेन पापास्पर्शप्रयोजकत्वरूपमहिमनिरूपणात्मिकैव। तत्रत्यातःप्रबोधसूत्राक्षेपसंगत्या प्रवृत्तं स एव तु कर्मानुस्मृत्यधिकरणं तच्छेषभूतमानुषंगिकप्रयोजनार्थसुषुप्त्यवस्थाहेयत्वसंसूचनपर्यवसायि। मूर्छाधिकरणमेकं जीवावस्थानिरूपणप्रसंगागतम्। तदप्यानुषंगिकप्रयोजनार्थं [illegible]स्थायाः यदर्धसम्पत्तिर्मूर्छा तस्या मरणावस्थायाश्च हेयत्वसंसूचने पर्यवसायि। तृतीयपादे संजातशिवप्राप्ति¹कुतूहलस्योपासकस्य गुणोपसंहारानुपसंहारादिर्निरूपितः। चतुर्थपादे तदंगकर्मकलापो निरूपित इति विवेकः। अत्र प्रथमाधिकरणे इति॥ वेत्थ यथेत्यादि। पञ्चाग्निविद्यागतप्रश्नप्रतिवचनयोर्भूतवेष्टनगमकत्वसंभवासंभवाभ्यामयं संशयः। 'अपरिष्वक्त एवे' त्यवधारणेन प्रश्नप्रतिवचनयोर्भूतवेष्टनगमकत्वसंभावना व्यवच्छिद्यते। तथाहि—श्वेतकेतुमारुणेयं पाञ्चालराजः प्रवाहणो 'वेत्थयथे' त्यादि पप्रच्छ। तस्मिन्निमं प्रश्नं प्रतिवक्तुमजानति तस्य पितरि चाजानति तत्पित्रा समागत्य पृष्टः प्रवाहणः स्वयमेव प्रश्नविषयं निरूपयन् कास्ताः पञ्चाहुतयो यासामुत्तमायामाहुतावापः पुरुषशब्दाभिलपनीयतां भजंत इत्याकांक्षायाम् 'असौ वाव लोको गौतमाग्नि' रित्यादिना द्युपर्जन्यपृथिवीपुरुषयोषितः पञ्चाग्नित्वेन रूपयित्वा तेषु श्रद्धासोमवृष्ट्यन्नरेतोद्रव्यकाः पंचाहुतीरुपदिश्य तदनंतर 'मिति तु पंचम्यामाहुता' वित्यादिस्वपृष्टार्थनिरूपणोपसंहारः कृतः। नात्र प्रश्ने प्रतिवचने वा भूतानां श्रवणमस्ति। दूरे तत्संपरिष्वक्तस्य जीवस्य। भूतेष्वपां श्रवणमात्रमस्ति। न तु तासां द्युलोकपर्यंतं गमनस्य ततो योषित्पर्यन्तं प्रत्यागमनस्य वा श्रवणमस्ति। यदि त्वापः पञ्चस्वप्यग्निषु होमद्रव्यतया श्रूयेरन् तदा केवलानामपां वा परत्रेह च गतप्रत्यागते प्रश्नप्रतिवचनाभ्यां विवक्षिते इति कल्पनीये। न तु तास्तथा श्रूयंते। श्रद्धादीनि भिन्नभिन्नान्येव ह्याहुतिद्रव्याणि श्रूयन्ते। त²स्मान्न भूतसूक्ष्मवेष्टितस्य जीवस्य गमनसिद्धिः। ननु तथापि देहान्तरोत्पत्त्यर्थं तदारंभकभूतसूक्ष्मयुक्तस्य जीवस्य गत्यागती वक्तव्ये इत्याशंक्याह—भूतानामिति। भोग्यभोगोपकरणभोगस्थानवत् भोगायतनानामपि तत्रत्यैरेव भूतैरदृष्टाकृष्टैरारंभस्संभवतीति तदर्थमितो भूतसूक्ष्मनयनापेक्षा नास्तीत्यर्थः। देहान्तरप्राप्तय इति। तच्छब्दस्संज्ञामूर्तिसूत्रगतमूर्तिशब्दोक्तदेहपरामर्शी।

---

(१) कुतूहलोस्योपासनानुष्ठानाय तद्भेदाभेदगुणोपसंहारा' इति ख. पाठः। (२) 'तस्मान्न प्रश्नप्रतिवचनपर्यालोचनया

ग्निविद्यायां प्रश्नप्रतिवचनाभ्यामवगम्यते । कथम् ? 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नः 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रतिवचनम् । तत्र चायमर्थः संपिण्डितः–ब्राह्मणादिदेहस्थो जीवः स्वाहादानादि कर्म कृत्वा तत्फलभोगायास्माद्देहादुत्थाय गच्छन्नेतद्देहस्थाभिरद्भिर्भूतान्तरसंसृष्टाभिः सूक्ष्माभिः परिष्वक्तः अग्नित्वेन निरूपितं द्युलोकं प्राप्य ताभिरेवामृतमयदेहाकारेण परिणताभिरद्भिः परिष्वक्तो देवानां शेषभावमुपगम्य तैः सह तत्र भोगविशेषाननुभूय भुक्तावशिष्टेन ब्राह्मणादिदेहप्रापकेन कर्मणा सह पुनरिमं लोकमागत्य कर्म कर्तुं ताभिरेव परिष्वक्तोऽग्नित्वेन निरूपितं पर्जन्यं प्राप्य वर्षधाराभिः सह अग्नित्वेन निरूपितां पृथिवीमुपगम्य व्रीह्यादिसस्येन अन्नाकारपरिणतेन सह अग्नित्वेन निरूपितं पुरुषं प्राप्य तत्र शुक्लाकारपरिणताभिस्ताभिरद्भिः परिष्वक्तोऽग्नित्वेन निरूपितां योषितं प्राप्य तत्र देहाकारपरिणताभिः पुरुषशब्दाभिलापनीयाभिरद्भिः परिष्वक्तः कर्मानुरूपब्राह्मणादिदेहेन जायत इति । तदेतत्सर्वमुत्तरत्राभिव्यज्यते । तस्मात् पुरुषो भूतसूक्ष्मैर्वेष्टित एव देहान्तरं प्राप्नोतीति ॥

## ॥ सू ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

सर्वस्य त्रिवृत्करणेन त्र्यात्मकत्वाद्भूतान्तरसंसृष्टा एवापो भूयस्त्वादप्छब्देनोच्यन्ते। अतः 'पञ्चम्यामाहुतावापः' इति केवलाप्छब्दग्रहणेऽपि न विरोधः॥

## ॥ सू ॥ प्राणगतेश्च ॥ ३ ॥

'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति जीवेन सहेन्द्रियगतेस्तदा-

---

प्रतिपत्तिशब्दः प्राप्तिवाची । सप्तम्युद्देश्यरूपविषयार्थेति भावः । प्रश्नप्रतिवचनयोः भूतवेष्टितो जीवो यातीत्येतदर्थपर्यवसायित्वं सूत्रकार एवोत्तरसूत्रैः प्रपंचयिष्यति[1] । अत्र श्रोतॄणामाकाङ्क्षाशान्तये तमर्थं सर्वं निष्कृष्य दर्शयति–तत्र चायमर्थ इति । प्रश्नप्रतिवचनयोराप एव केवलाः श्रूयन्ते न भूतान्तरश्रवणमस्तीति शंकानिराकरणार्थं तावदिदं सूत्रम्–सू ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ सर्वस्येति ॥ प्रश्नप्रतिवचनयोरपां पुरुषशब्दाभिलपनीयत्वं श्रूयमाणं पुरुषाधिष्ठानदेहारंभकत्वेनैवोपपादनीयम् । तदारंभश्च[2] न केवलाभिरद्भिरुपपद्यते । अशितपीतादिपरिपाकस्नेहगंधादिकार्यदर्शनेन देहस्य त्र्यात्मकत्वात् देहाद्यारंभार्थं सर्वस्यापि तेजोऽबन्नस्य सर्गाद्यकाल एव त्रिवृत्कृतत्वेन त्र्यात्मकत्वाच्च । अतस्त्रयाणां देहारंभकत्वेऽपि देहस्य रसलोहितादिभूयस्तया कार्यानुसारेण भूतेष्वपां भूयस्त्वात् अप्शब्देनाभिधानं न तु भूतान्तराभावादिति भावः । न केवलं प्रश्नप्रतिवचनयोः श्रूयमाणानामपां देहारंभकत्वात्त्र्यात्मकतया तयोरप्शब्दस्य त्र्यात्मकभूतसूक्ष्मपरता किं तु तासां सूक्ष्मदेहरूपत्वादपीति पूर्वसूत्रसाध्ये हेत्वन्तरकथनार्थं सूत्रम्–सू ॥ प्राणगतेश्च ॥ ३ ॥ अस्ति तावदिदमिह परत्र च जीवस्य गतागतयोरिंद्रियाणामपि तेन सह गतागते । न चेंद्रियाणां शरीराश्रयणं विना गतागते संभवतः । नापि तेषामवस्था-

---

भूतवेष्टितस्य' इति ख. पाठः । (१) प्रतिपादयिष्यति' इति ख. पाठः ॥ (२) देहारंभश्च इति ख. पाठः ।

**श्रयत्वेन देहगमनमपि प्रतीयते। अतोऽपि भूतसूक्ष्मदेहवेष्टित एव यातीति॥**
**आशङ्क्य परिहरति—**

**॥ सू ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥**

**'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्' इत्यादाविन्द्रियाणामग्न्याद्यभिगमः श्रूयते। ततो जीवेनेन्द्रियाणां न सहगमनमिति चेत्—न, वागाद्यभिमानिदेवतासु वागादिशब्दानां भाक्तत्वात्, ओषधीर्लोमानि वनस्पतीन् केशाः' इत्यनपियद्भिर्लोमादिभिः सह पाठात्॥**

**॥ सू ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥**

**प्रथमे द्युलोकाग्नावपामश्रवणात् नापो गच्छन्ति 'एतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रद्धैव श्रूयते इति चेत्—न। आप एव श्रद्धाशब्देनोच्यन्ते। कथम्?**

---

नमात्रं संभवति। जीवद्दशायामेव दर्शनात्। न च तेषां स्वस्वकार्येषु प्रवृत्त्यर्थमेव देहाश्रयणं केवलमवस्थानं गतागतं च स्वस्वोपादानाश्रयाणामेव तेषां संभवतीति वाच्यम्। मार्गे चंद्रसंवादादिश्रवणेन तेषां गतागतयोः स्वस्वकार्येषु प्रवृत्तेरपि सत्त्वात्। अतो मार्गे [illegible]देहाभावादिंद्रियाश्रयत्वोपपत्त्यर्थमेतासामपामेव त्र्यात्मकतया सूक्ष्मदेहत्वमाश्रयणीयभावः॥ नन्वेवमिंद्रियाणां जीवानुगत्यभ्युपगमे तेषामग्न्याद्यप्ययश्रवणस्य कथं निर्वाह इत्याकांक्षायां तन्निर्वाहप्रदर्शनार्थं सूत्रम्—सू॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्॥ ४॥ भाक्तत्वादिति। ननु वागिंद्रियाद्यभिमानिष्वग्न्यादिषु तत्तच्छरीरकेषु वागादिशब्दानां मुख्यत्वं संभवति कथं भाक्तत्वं वर्ण्यते? वागादिशब्दानामग्न्यादिपरत्वे च कथं वाक्यार्थनिष्पत्तिः। न ह्यग्न्यादयोऽग्न्यादीनपियन्तीत्युपपद्यते। उत्क्रान्तौ वागादीन्विहाय तदभिमानिदेवतानामन्यत्र गमने च देवतानधिष्ठितानां तेषां कथं मार्गे चन्द्रसंवादादिकार्यनिष्पादकत्वम्?। उच्यते। वागादिशब्दा वागाद्यभिमानिदेवतासु मुख्या एव। यत्तासामग्न्यादिदेवतास्वप्ययवर्णनं तद्भाक्तम्। उत्क्रांतिसमये निर्व्यापारेषु वागादिषु तदभिमानिदेवतानां तद्व्यापारयितृत्वं विहाय केवलमग्न्यादिरूपेणावस्थानं तासामग्न्याद्यप्ययत्वेनोपचरितमिति भाष्याभिप्रायः। स्यादेतत्। प्रश्नप्रतिवचनयोः योषिदग्न्याहुतावपां देहाकारपरिणतिमात्रं श्रूयते। तेन तासां त्र्यात्मकत्वं सिध्यतु नाम। तावता तासामिह परत्र च जीवपरिष्वंजकत्वेन गतागते न सिध्यतः। न च तासां होमपञ्चकेऽप्यनुवृत्तिश्रवणमस्ति। न चाहुतिद्रव्यत्वादनुवृत्तिकल्पनम्। तदश्रवणात्तत्तदाहुतिषु द्रव्यान्तरश्रवणाच्च। सोमादीनामाहुतिद्रव्याणामब्विकारतया प्रश्नप्रतिवचनश्रुतावब्रूपत्वकल्पना संभवतीति चेन्न। प्रथमपर्याये मनोवृत्तिविशेषरूपश्रद्धाद्रव्यके अब्विकारद्रव्याश्रुत्या प्रणव एव वैस्वर्येण तथाकल्पनस्याप्रवृत्तेः। न च तथापि चन्द्रसंवादोपपत्तये सूक्ष्मदेहरूपतयैतासामपां जीवानुगतिः कल्पनीयेति वाच्यम्। पञ्चमाहुतौ श्रुतानामपां तावन्मात्रसम्बन्धेऽपि चन्द्रसंवादोपपत्तये चंद्रलोक एव धूमादिमार्गगतानामिवार्चिरादिमार्गगतानामप्यमृतमयदेहोत्पत्तिकल्पनोपपत्तेः स्थूलदेहकल्पनया चंद्रसंवादार्थापत्तेरक्लिष्टोपपादनसंभवे अन्यत्रान्यार्थश्रुतानामपां सूक्ष्मदेहत्वकल्पनेन क्लिष्टोपपादनायोगादित्याशङ्कानिराकरणार्थं सूत्रम्—सू॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः॥ ५॥

अप्सु पृष्टासु तदुत्तरोपपत्तेः । श्रद्धाशब्दश्चाप्सु युज्यते, 'श्रद्धा वा आपः' इति श्रुतेः ॥

पुनराशङ्क्य परिहरति—

॥ सू ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

अत्र प्रश्नप्रतिवचनयोराप एव प्रतीयन्ते, न तत्परिष्वक्तो जीव इति चेत्—न, उत्तरत्र 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादादित्यमादित्याचन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वाथैतमेवाध्वानं

अप्सु पृष्टास्विति । अयमाशयः । प्रश्नवाक्ये पञ्चस्वप्याहुतिष्वपां संवन्धमभ्यनुज्ञाय पंचमाहुतौ देहाकारपरिणतिप्रकारमात्रं पृष्टम् । न हि तत्र पंचम्यामाहुतावपां सत्त्वं देहाकारपरिणतिप्रकारश्चेत्युभयं पृष्टमिति वक्तुं शक्यम् । वाक्यभेदापत्तेः । एवं च विशिष्य पंचम्यामाहुतावपां देहाकारपरिणतिप्रश्नादाहुत्यन्तरेष्वपि तासां संवंधमात्रमभ्यनुज्ञातमवसीयते । यद्यप्यपां पुरुषवचस्त्वविशेषितभवनक्रियासंवंधमात्रं शाब्दं तथाप्याहुतीनां द्रव्याकांक्षायां सन्निधानात्तद्द्रव्यतयापि तास्सम्वध्यन्ते । तथा च पंचस्वाहुतिषु हूयमानानामपां पञ्चम्यामाहुतौ पुरुषाकारेण परिणामं वेत्थ किमिति प्रश्नवाक्यार्थः पर्यवस्यति । ततश्च कास्ता अब्द्रव्यकाः पंचाहुतयः इत्याकांक्षायां तन्निरूपणार्थं प्रवृत्तेषु पंचसु पर्यायेषु ये होमद्रव्यपराः श्रद्धादिशब्दास्ते तासामपामेवावस्थाविशेषवाचका इति व्याख्यातुं युक्तम् । एवं सत्येव 'इति तु पञ्चम्यामाहुता' विति प्रतिवचनोपसंहारवाक्यमपि संगच्छते । यदि ह्यपां पंचमपर्याये हूयमानानां 'तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भस्संभवती'ति पुरुषाकारपरिणामं वक्तुं 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेस्सोमो राजा संभवती' त्यादिषु प्रथमादिपर्यायेष्वपि तासामेव हूयमानानामपां सोमराजादिपरिणाम उक्तः स्यात् । तदानीमितिशब्देन प्रकारवाचिना च पूर्वोक्तसर्वप्रकारपरामर्शस्संगच्छते । प्रथमादिपर्यायेषु एवमेवं भूत्वा पञ्चमपर्याये पुरुषाकारा भवन्त्याप इत्यन्वयात् । यदि तु श्रद्धादिशब्दोक्तानामन्येषामेव होमद्रव्याणां सोमराजादिपरिणाम उक्तो भवेत् तदा पूर्वोक्तः सर्वोऽपि प्रकारोऽपां परिणामक्रमविषयो न भवतीति स न संगच्छते । तस्मादप्स्वेव श्रद्धाशब्दः । वैदिकप्रयोगान्तरदर्शनेन तस्य तासु वृत्त्युपपत्तेः पञ्चस्वप्याहुतिषु अपामेव होमद्रव्यत्वेन संम्बन्धे सिद्धे पंचमाहुतौ तासां पुरुषवचस्त्वमात्रस्य विधेयत्वेनावाक्यभेदोपपत्तेश्चेति ॥ नन्वस्त्वपां त्र्यात्मकानां पञ्चस्वप्याहुतिषु होमद्रव्यत्वेन सोमराजाद्युत्तरोत्तरावस्थाविशेषपरिणामित्वेन चानुवृत्त्या गतागतसिद्धिः । तथापि भूतान्तरसंसृष्टाभिस्ताभिरद्भिस्संपरिष्वक्तो जीवो गच्छतीत्येतन्न सिध्यति । जीवस्याश्रुतत्वादित्येतच्छङ्कानिराकरणार्थं सूत्रम्— अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ पितृयाणवाक्ये तावत्सोमराजशब्दनिर्दिष्टा इष्टापूर्तादिकर्मफलं भोक्तुं द्युलोके चन्द्रमसं प्राप्ता इष्टादिकारिण एव । 'अथ य इमे ग्रामे इष्टापूर्ते' इत्यादिनोपन्यस्तानां तेषामेव कर्मफलभोगपर्यन्तं तत्र स्थित्वा तदवसाने पुनराकाशादिक्रमेण भूमाव-

पुनर्निवर्तन्ते, यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते अतो वै खलु दुर्निष्प्रपततरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इति वाक्ये द्युलोके सोमराजशब्दोक्तामृतमयदेहवैशिष्ट्येन पुण्यफलमनुभूय पुण्यकर्मावसाने पुनरिहागत्य गर्भं प्राप्तवतामिष्टादिकारिणां प्रतीतेस्तेषामेव 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति' इत्यत्र सोमराजशब्देन प्रत्यभिज्ञानात्। तस्मात् प्रश्नप्रतिवचनयोरप्यद्भिः परिष्वक्तस्तच्छरीरको जीव एवाप इत्युच्यन्त इति गम्यते। अतो न विरोधः॥

## ॥ सू ॥ भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥

वतीर्य ब्राह्मणादिजन्मने गर्भप्राप्तेः प्रदिपादनात् । त एवात्रापि सोमराजशब्दनिर्दिष्टा भवितुमर्हन्ति सोमराजश्रुतिसाम्यात् द्युलोकस्थितिसाम्याच्चेत्येवमिष्टादिकारिणां प्रतीतः तदश्रवणमसिद्धमिति भावः । श्रुता 'वेष सोमो राजे' त्येकवचनश्रवणेऽपि 'इष्टादिकारिणा'मिति सूत्रे बहुवचनं शंकान्तरवारणार्थम् । एवमिह शङ्का स्यात् । 'आकाशाच्चंद्रमस' मिति प्रकृतश्चन्द्रमाः 'एष' इति परामृश्यते । एकवचनानुगुण्यात् । सोमराजशब्दयोस्तत्र प्रसिद्धत्वात् तस्य देवभक्ष्यत्वप्रसिद्धेश्च । अतस्तं प्रकृता इष्टादिकारिणो देवा भूत्वा भक्षयन्तीत्येव तेषां द्युलोके भोगप्रकार उच्यते । तस्मात्सोमराजशब्देनेष्टादिकारिणां प्रतीतिरसिद्धेति । तत्रायं परिहारो विवक्षितः । चन्द्रस्य 'एष सोमो राजे' ति सोमराजत्वं न विधातव्यम् । सोमराजशब्दयोश्चंद्रपर्यायत्वस्य प्रसिद्धत्वात् । अत 'एष' इति प्रथमांतनिर्दिष्टानामिष्टादिकारिणामेव परामर्शः । विभक्त्यैकरूप्यात् । एकवचनं तु वाक्यस्य प्रातिपदिकस्य च गुणभूतम् । बहुपत्नीकप्रयोगे 'पत्नीं सन्नह्ये' त्येकवचनवदत्रैव प्रकरणे 'वायुर्भूत्वाभ्रं भवती' त्यादीष्टादिकारिविषयैकवचनवच्च प्रत्येकगतैकत्वाभिप्रायं योजनीयम् । ततश्च 'सोमो राजे' त्यनेन गौणेन प्रसिद्धचन्द्रसादृश्यं दिव्यभोगयोग्यामृतमयदेहत्वं विधीयते । अथवा भोग्यत्वरूपमग्रिमसूत्रेण स्पष्टीकरिष्यमाणं प्रसिद्धचंद्रसादृश्यं विधीयते । तस्यैव विवरणं 'तद्देवानामन्नं तद्देवा भक्षयन्ती' ति । तस्मात्पितृयाणवाक्यगतं 'एष सोमो राजे' त्येतत् बहूनामिष्टादिकारिणामेव परामर्शकं न त्वेकस्य चन्द्रमस इति । अपि च । पितृयाणवाक्ये पर्जन्यावरोहणमिष्टादिकारिणामेव श्रुतं न तु चन्द्रमस इति निर्विवादम् । तच्च पञ्चाग्निविद्यायां सोमराजशब्दनिर्दिष्टस्य 'पर्जन्यो वाव गौतमाग्नि' रित्यारभ्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वती' ति श्रूयते। अतोऽप्यस्त्यत्रेष्टादिकारिणां सोमराजशब्देन प्रतीतिरिति । 'अपरपक्षाद्यानी' त्यादिश्रुतिवाक्यस्यायमर्थः । अपरपक्षात्तान्मासानभिसंभवंति प्राप्नुवंति यान्षण्मासान् दक्षिणां दिशमेति सविता दक्षिणायनमासषट्काभिमानिनीर्देवताः प्राप्नुवन्तीति यावत् । एते इष्टादिकारिणोऽर्चिरादिमार्गगामिनो विद्वांस इव मासेभ्यः संवत्सरं न प्राप्नुवन्तीति ॥ ननु पितृयाणवाक्येऽपि सोमराजशब्दनिर्दिष्टा इष्टादिकारिणो न भवंति देवैर्भक्ष्यमाणत्वश्रवणादिति शंकानिराकरणार्थं सूत्रम्—सू. ॥ भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति।

'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इति सोमराजभावापन्नस्यैव देवैर्भक्ष्यमाणत्वश्रवणान्नासौ जीव इति चेत्-तत् भाक्तमेव भक्ष्यमाणत्वं अनात्मवित्त्वेन देवोपकरणभावाभिप्रायम्। तथा हि 'यथा पशुरेवं स देवानाम्' इति श्रुतिरनात्मविदां पशुवद्देवोपकरणत्वं दर्शयति । तस्मादात्मविदां परमेश्वरोपकरणत्ववत् अनात्मविदां देवोपकरणत्वमिति मन्तव्यम् । अतः सर्वथा जीवो देहान्तरप्राप्तौ भूतसूक्ष्मवेष्टित एव यातीति सिद्धम् ॥

इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

॥ ७ ॥ इष्टादिकारिणः प्रकृत्य श्रुत्यन्तरे 'ते चन्द्रं प्राप्यान्नं भवंति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ती'ति तेषामेव देवान्नभावश्रवणात् । इहापि पूर्वापरपर्यालोचनालब्धानामिष्टादिकारिणामेव देवैर्भक्ष्यमाणत्वश्रवणात् तेषां व्याघ्रादिभिरिव देवैर्मुख्यतया भक्ष्यमाणत्वे स्वर्गकामादिश्रुतिविरोधप्रसंगात् तेषामिह कर्मभिर्देवाराधकत्वेन परत्र तत्परिचारकत्वेन च देवोपभोग्यत्वाभिप्रायं भाक्तं तददनीयत्वश्रवणं व्याख्येयमिति भावः ॥ इति तदंतरप्रतिपत्त्यधिकरणम् ॥ १ ॥

## नयमणिमालायाम्

## अथ तृतीयस्याध्यायस्य प्रथमः पादः ॥

### अथ तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

सू० ॥ तदंतरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ प्राणगतेश्च ॥ ३ ॥ अग्न्यादिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥

जीवो याति त्रिदिवं न भूतसूक्ष्मैः परिष्वक्तः । देहान्तरहेतूनां तेषां सर्वत्र सुलभत्वात् ॥ १६८ ॥

वेत्थ यथेति श्रुत्या गमनं तद्वेष्टितस्यैव । प्राणानां सहगतिरप्यनाश्रयाणां न संभवति ॥ १६९ ॥

इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

## सूत्रार्थचन्द्रिकायाम्

## अथ तृतीयस्याध्यायस्य प्रथमः पादः ॥

### अथ तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

सू ॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ त्र्यात्मकात्तु भूयस्त्वात् ॥ २ ॥ प्राणगतेश्च ॥ ३ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥

भगवत्पादमते, पूर्वं जीवोपकरणभूतभौतिकजन्म निरूपितम् । तदुपजीव्य तदुपहितस्य जीवस्य संसारप्रकारं वैराग्यार्थं निरूपयितुं देहान्तरारंभे भूतसूक्ष्मसंपरिष्वक्तस्यैव परलोकगमनमित्याह—सू ॥ **तदन्तरप्रतिपत्तावित्यादिना** । अत्र स जीवः किं देहान्तरारंभकैरपञ्चीकृतभूतभागैरसंपरिष्वक्तो गच्छति उत संपरिष्वक्त इति **सन्देहः** । मानाभावादसंपरिष्वक्त एव गच्छतीति **पूर्वपक्षः** । **तदन्तरप्रतिपत्तौ**=देहान्तरप्रतिपत्तौ तदारंभकभूतैः **संपरिष्वक्तः** । **रंहति**=गच्छति । कुतः । **प्रश्ननिरूपणाभ्याम्**='वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति **प्रश्नः** । द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा 'इति तु पंचम्यामाहुतावापः पुरुषवचसो भवन्ती' ति **निरूपणं**=प्रतिवचनं **ताभ्या**मित्यर्थः । अतस्संपरिष्वक्तो गच्छतीति **सिद्धान्तः** ॥

नन्वेवमद्भिस्संपरिष्वक्तो गच्छतीति गम्यते कथं तदितरभूतपरिष्वङ्गसिद्धिरित्यत आह—सू ॥ **त्र्यात्मकत्वात्तु भूयस्त्वात्** ॥ २ ॥ त्रिवृत्करणश्रुत्या अपामितरभूतद्वयमेलनेन त्र्यात्मकत्वात् । कथं तर्हि श्रुतावप्शब्दः । **भूयस्त्वात्**=तेजआद्यपेक्षया अपां देहे भूयस्त्वादित्यर्थः ॥

**सू ॥ प्राणगतेश्च ॥ ३ ॥** प्राणानां भूताश्रितानामेव 'तमुत्क्रामन्त' मित्यादिना गतेः श्रवणाच्च तत्परिष्वङ्गसिद्धिः ॥

**सू ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न**='मृतस्याग्निं वागप्येति वातं प्राणः'इत्यादिना अग्न्यादिषु **गतिश्रुते**र्लयश्रवणात् न जीवेन वागादयो गच्छन्तीति चेत् न । वागादिलयश्रुतेः 'ओषधीर्लोमानि' इतिवद्भाक्तत्वादित्यर्थः ॥

**सू ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ प्रथमे**=द्युलोकादिषु पञ्चस्वग्निषु प्रथमे द्युलोकाग्नौ । **अश्रवणादिति चेत्**='तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती' ति श्रद्धाया आहुतित्वश्रवणादपामश्रवणात्कथं पुरुषवचस्त्वमिति चेत् । **न । हि**=यतः । **ता एव**='आपो हास्मै श्रद्धां संनमन्ते' इति श्रद्धाशब्देन तद्वेतवस्ता एवापो लक्ष्यन्ते । **उपपत्तेः**=प्रश्ननिरूपणयोरुपपत्तेरित्यर्थः ॥

**सू ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ अश्रुतत्वादिति चेत्**=अपां श्रवणेऽपि अबादिवज्जीवस्याश्रुतत्वादिति चेत् । **न** । कुतः । **इष्टादिकारिणां प्रतीतेः**='अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ती' त्यादिवाक्यशेषेण इष्टापूर्तकारिणां प्रतीतेरित्यर्थः ॥

ननु तेषां धूमादिमार्गेण चन्द्रलोकं गतानां 'तद्देवानामन्नं तं देवा भक्षयन्ती' ति देवैर्भक्ष्यत्वश्रवणात्कथं तेषां स्वकर्मफलोपभोगस्सिद्ध्येदित्यत आह—**सू ॥ भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥** वाशब्दश्शंकानिरासार्थः । तेषामिष्टादिकारिणामन्नत्वं **भाक्तमेव** न मुख्यम् । कुतः **अनात्मवित्त्वात्**=आत्मज्ञानशून्यत्वात्तेषां देवोपभोग्यत्वमेवान्नत्वम् । **तथाहि दर्शयति**='अथ योऽन्यां देवतामुपास्ते' इत्यादिश्रुतिर्देवपरिचारकत्वमेव तदन्नत्वमिति दर्शयतीत्यर्थः । तस्मात्परलोकभोगार्थं भूतसूक्ष्मसंपरिष्वक्तस्यैव जीवस्य परलोकगमनमिति सिद्धम् ॥

**श्रीकण्ठमते** तथा **रामानुजमते** च अस्मिन्पादे षट्स्वप्यधिकरणेषु प्रायस्सन्देह**पूर्वपक्षसिद्धान्तादिषु** विशेषाभावान्न पृथक्प्रपञ्चनावकाश इति वेद्यम् ॥

**आनन्दतीर्थमते** इदमधिकरणीया सप्तसूत्री प्रतिसूत्रं भिन्नाधिकरणतया सप्तधा संविभज्य व्याख्याता । अत्र तृतीयाध्याये साधननिरूपणं प्रस्तूयते । तत्रास्मिन्प्रथमे पादे साधनेषु प्रथमापेक्षितस्य वैराग्यस्य सिद्धये जीवस्य गत्यागतिनिरूपणं क्रियते—**सू । तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥** बन्धनिवृत्त्यर्थं हि वैराग्यादिसाधनापेक्षा । बन्धश्च भूतबन्ध एव । तद्विमोक्ष एव च मोक्षः । स च स्वमरणे भवति । मरणं च स्वत एव नियमेन भवति किं वैराग्यादिसाधनापेक्षयेति **पूर्वपक्षः । सिद्धान्तस्तु** सत्यं भूतबन्धनिवृत्तिरेव मोक्षः । सा तु मृतौ न संभवति । पूर्वशरीरं परित्यज्य शरीरान्तरप्राप्तौ तदारंभाय भूतसंपरिष्वक्तस्यैव जीवस्य गतेः 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती' ति प्रश्नप्रतिवचाभ्यामवगमादिति । सूत्रार्थोऽपि व्याख्यातः ॥ **इति तदन्तराधिकरणम् ॥ १ ॥**

## अथ त्र्यात्मकाधिकरणम् ॥ २ ॥

**सू ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥** प्रश्नप्रतिवचनयोरपामेव गतेः श्रूयमाणत्वात्केवलाभिरद्भिश्शरीरान्तरारंभान्मरण एव भूतबन्धनिवृत्तिरूपमोक्षसंभवान्न वैराग्यापेक्षेति **पूर्वपक्षः । सिद्धान्तस्तु,** प्रागेव भूतानां त्रिवृत्कृततयापां ग्रहणेन भूतेजसोरपि प्राप्तेः सर्वशरीरेषु त्रिचतुर्भागिनीनामपां भूयस्त्वेन त्रिवृत्कृतत्वेऽप्यप्शब्दप्रयोगोपपत्तेश्च भूतसंपरिष्वक्तस्यैव गतिः सिद्धा । तस्मान्न मरणे मोक्षसिद्धिः । इति ॥ **इति त्र्यात्मकाधिकरणम् ॥ २ ॥**

## अथ प्राणगत्यधिकरणम् ॥ ३ ॥

**सू ॥ प्राणगतेश्च ॥ ३ ॥** ननु प्रश्नोत्तरयोः श्रुता'वापः पुरुषवचस' इति श्रवणाद्भूतानां सहगमनं कण्ठतो नोक्तमतो न भूतसंपरिष्वक्तस्य गतिस्सिद्ध्येत् । तस्मान्मरण एव मोक्षसिद्धेर्वैराग्याद्यनपेक्षा युक्ता इति **पूर्वपक्षः । सिद्धान्तस्तु** **'प्राणैर्वाव न वियुज्यन्त '** इति श्रुतेः 'यत्र वाव भूतानि तत्र करणानि नित्यानि ह्वा एतानि भूतानि करणानि न चैतानि कदाचिद्वियुज्यन्ते न च विलीयन्त' इति भाल्लवेयश्रुतेश्च प्राणानां भूतानां चाविनाभावावगमाद्भूतान्यपि जीवेन सह गच्छन्तीति सिद्धम् । तस्मान्मरणे मोक्षासिद्धेरस्ति वैराग्यादिसाधनापेक्षा जीवस्येति ॥ **इति प्राणगत्यधिकरणम् ॥ ३ ॥**

**सू ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥** ननु यत्रास्य 'मृतस्याग्निं वागप्येती' त्यादिश्रवणादिन्द्रियाणामेव जीवेन सहगतिरसिद्धेति **पूर्वपक्षः । सिद्धान्तस्तु** 'पुरुषस्य मृतौ ब्रह्मन्प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् ॥ पुनश्शरीरसंप्राप्तौ तमेवानुविशन्ति च ॥' 'मृतिकाले जहत्येनं प्राणा भूतानि पंच च । भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः ॥' इति ब्रह्मब्रह्माण्डवचनाभ्यां प्राणानां भागतोऽग्न्यादिप्राप्तेर्भागतो जीवानुव्रजनस्य पुनश्शरीरप्राप्तौ भूताविनाभूतानामग्न्यादिगतभागानामपि तदनुप्रवेशस्य च प्रतिपादितत्वात्प्राणानां जीवेन सहगतिस्सिध्यत्येवेति ॥ **भाक्तत्वात्**=भागविषयत्वादित्यर्थः ॥ **इति अग्न्याद्यधिकरणम् ॥ ४ ॥**

## अथ कृतात्ययाधिकरणम् ॥ २ ॥

**॥ सू ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥**

पूर्वत्र भूतसूक्ष्मशरीरयुक्त एव जीवः स्वर्गादिकमुपेत्य देवादिशरीरे निजकर्मानुगुणं भोगं प्राप्नोतीति सिद्धम्। तदिह भोगानन्तरं स जीवः पुनरिमं लोकं सकर्मशेषोऽवतरति, निःशेषभुक्तकर्मा वेति संशयः ॥

तथा सति पुरुषो निरनुशय एव स्वर्गादिमं लोकमवरोहतीति युक्तम्। अनुशयो नाम कर्मशेषो जीवमनुशेत इति। न स्वर्गादवरोहतोऽनुशयः संभवति। अनुशयफलस्य तत्र भुक्तत्वात्। 'यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति श्रुतिस्तद्विषया। अत्र संपातः कर्मसमूहः। संपातमनतिक्रम्येति यावत्संपातमित्युच्यते। ततो निःशेषं कर्मफलं भुक्त्वा कर्मरहित एव स्वर्गा-

## अथ कृतात्ययाधिकरणम् ॥ २ ॥

एवं सकलसांसारिकदुःखहेतुर्देहारंभकभूतबन्धो मरणेऽपि न मुञ्चतीत्याब्रह्मज्ञानं तेषामनुवृत्तिरुक्ता। अथ 'भाक्तं वानात्मवित्त्वा' दित्यव्यवहितसूत्रे क्षयिष्णुसातिशयफलकतया दुःखप्रायफलकत्वेन प्रदर्शितस्य कर्मबन्धस्याप्येवमाब्रह्मज्ञानमनुवृत्तिप्रतिपादनार्थमधिकरणम्—सू ॥ कृतात्ययेऽनुशयबान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ 'यावत्संपातमुषित्वे'ति श्रवणात् 'रमणीयचरणा' इत्यादिश्रवणाच्च संशयमाह—स जीव इति। संपातः कर्मसमूह इति। संपतत्यनेन परलोकमिति करणार्थे घञ्प्रत्ययः। अतो निश्शेषमिति। उपक्रमगतत्वा 'द्यावत्संपात' मिति श्रवणं प्रबलमिति तदनुसारेण चरणशब्दः स्वर्गार्थेष्टापूर्त्तदानादिरूपकर्मव्यतिरिक्तसन्ध्यावन्दनाद्याचारपरो नेतव्य इति

### अथ प्रथमाधिकरणम् ॥ ५ ॥

सू ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ 'तस्मिन्नेतस्मिन्नग्नौ देवाश्श्रद्धां जुह्वतीति शरीरादुत्क्रान्तस्य श्रद्धयेष्टवतः पुंसश्श्रद्धासहितस्यैव द्युशब्दोक्ते प्रथमाग्नौ होमश्रवणाद्भूतसहितस्य तदश्रवणाच्च नास्ति भूतानां सहगतिस्तत्सत्त्वे प्रथमं तदुक्त्यवश्यंभावाच्चेति **पूर्वपक्षः**। **सिद्धान्तस्तु** तदश्रवणासिद्धेः। ता एव ह्यापस्त्रिवृत्कृताः श्रद्धाशब्देनात्रोच्यन्ते। यतः श्रद्धाशब्दो लक्षणया अद्भिस्सहितं पुरुषमाह। तथा सत्येव 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती' त्युपसंहारोपपत्तेर्भूतानां जीवेन सहगतिरुपपन्नैवेति ॥ **इति प्रथमाधिकरणम् ॥ ५ ॥**

### अथ अश्रुतत्वाधिकरणम् ॥ ६ ॥

सू ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ अग्न्यादिगतिश्रुतिवद्भूतानां जीवेन सहगमनस्य प्रत्यक्षश्रुतावश्रवणाद्भूतानां जीवेन सहगमनं न सिद्ध्यतीति **पूर्वपक्षः**। **सिद्धान्तस्तु**, 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुंक्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरति' इति कौडिन्यश्रुतौ प्रत्यक्षत एव यागहोमकर्तां भूतवियोगसहयोगयोरवगमादस्ति भूतानां जीवेन सहगतिरिति ॥ ॥ **इत्यश्रुतत्वाधिकरणम् ॥ ६ ॥**

### अथ भाक्ताधिकरणम् ॥ ७ ॥

सू ॥ भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥ एवमधिकरणषट्कोक्तरीत्या मरणमात्रेण मोक्षाभावात्तदर्थं मुमुक्षुणा यद्यवश्यमनुष्ठेयं वैराग्यादिसाधनं तर्हि इष्टशेषश्रुतसोमपानान्मुक्ता अभूमेति विना वैराग्यादिकं कर्मादिनैव मोक्षं ब्रुवाणा श्रुतिर्विरुद्ध्येतेति **पूर्वपक्षः**। **सिद्धान्तस्तु** तदमृतत्वं भाक्तममुख्यम्। कुतः। **अनात्मवित्त्वात्**। 'नान्यः पन्था' इत्यादिश्रुत्या आत्मविद एव मुख्यममृतत्वम्। अतो न श्रुतिविरोधः। **तथाहि दर्शयति**= 'अमृतो वावे'ति 'स एन'मिति 'कर्मणे' ति 'आत्मान' मिति च श्रुतिस्तथोक्तार्थान्दर्शयति प्रतिपादयतीत्यर्थः ॥

**इति भाक्ताधिकरणम् ॥ ७ ॥**

**इति सूत्रार्थचन्द्रिकायां तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥**

दवरोहति जीव इति पूर्वः पक्षः ॥

सिद्धान्तस्तु—स्वर्गात् सुकृतक्षये पुनरिमं लोकमवरोहन् सकर्मशेष एवागच्छति । कथमवगम्यते ? श्रुतिस्मृतिभ्यामेव । यथा 'रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणाः अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं सूकरयोनिं वा चण्डालयोनिं वा' इति श्रुतिः। 'जायन्ते पुण्यकर्मणा' इत्यादिका स्मृतिः । अन्यथा सद्यः समुत्पन्नस्य बालस्य धर्माधर्माद्यभावात् सुखदुःखभोगो न स्यात् । तस्मादनुशयवानेव यथेतमनेवं च समागच्छति । आकाशावरोहणादारोहप्रकारेण वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्च प्रकारान्तरेण च पुनर्निवर्तन्त इत्यर्थः ॥

पुनराशङ्क्य मतान्तरेण परिहरति—

## ॥ सू ॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

रमणीयचरणाः, कपूयचरणाः इति चरणशब्दान्नानुशयसिद्धिः । चरणशब्दस्य

---

भावः । श्रुतिस्मृतिभ्यामिति । यावानस्य कर्मसमूहस्स सर्वोऽपि कदाचिच्चंद्रमसमारूढेन भोक्तुं न शक्यते । अनादिजन्ममरणप्रवाहे केषाञ्चित्कर्मणां ततः प्रागेव भुक्तत्वान्नानाविधदेवमनुष्यपशुपक्षिसरीसृपादिदेहभोग्यत्वेन श्रुतानां कर्मणामेकेन स्वर्गशरीरेण भोक्तुमशक्यत्वाच्च । तस्मादुपक्रमगतस्यापि यावच्छब्दस्य स्वत एव संकोचाकांक्षायां स्मृत्यनुगृहीतोपसंहारगतरमणीयचरणादिश्रवणानुसारेण तदानींतनस्वर्गशरीरभोग्यकर्मसाकल्यविषयत्वेन सङ्कोचः कर्तुं युक्त इति भावः। 'तद्य इहे' त्यादिश्रुतेरयमर्थः । ये रमणीयचरणाश्शुभकर्माणस्ते रमणीयां योनिमापद्येरन्निति यत्तदभ्याशो ह सविध एव नातिचिरेण भवतीति । 'यथेतमनेवं' चेति सूत्रशेषस्यारोहणप्रकारेण प्रकारांतरेण चावरोहन्तीत्यर्थः । तदेव प्रकारद्वयं विशदयति—आकाशावरोहणादिति । चन्द्रारोहणं धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशक्रमेण ततोऽवरोहणं त्वाकाशवायुधूमाभ्रमेघक्रमेणेत्येवमारोहणक्रमेण प्रकारान्तरेण चावरोहन्तीत्यर्थः । ननु यथेतमनेवं चावरोहणमिति श्रुतिवाक्यतः स्पष्टं प्रतीयते । न च तत्र निवर्तनीया काचन शङ्कास्ति । किमर्थं न्यायसूत्रे तन्निबंधनम् । दृष्टान्तार्थम् । 'अथैतमेवाध्वानं पुनर्निवर्तंते यथेतमाकाश'मित्युपक्रमश्रुताद्यथेतमिति शब्दादारोहपर्वणामेवावरोहेऽपि वैपरीत्येन क्रम इति प्रतीतावपि 'आकाशाद्वायु' रित्याद्यौपसंहारिकबहुवाक्यानुरोधाद्यथेतमनेवं चावरोहणमित्यभ्युपगम्यते । तथैवोपक्रमश्रुतया यावदिति श्रुत्या निरवशेषकर्मभोगप्रतीतावपि 'रमणीयचरणा रमणीयां ब्राह्मणादियोनिं कपूयचरणाः कपूयां श्वादियोनिमापद्यन्त'इत्यौपसंहारिकबहुवाक्यानुरोधात्सावशेष एव तत्कर्मभोगोऽभ्युपगन्तव्य इति । ननूदाहृतदृष्टान्तावष्टंभेनौपसंहारिकबहुवाक्यानुरोधादुपक्रमगतैका यावच्छ्रुतिस्सङ्कोचनीयेत्येतदयुक्तम् । उपसंहारे चरणशब्दयोः स्मार्ताचारपरत्वेनोपक्रमावगतस्य कर्मणां निरवशेषभोगस्याभ्युपगमे विरोधाभावादिति शङ्कानिराकरणार्थत्वेनोत्तरसूत्रमवतारयति— पुनराशंक्येति । सू ॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ तस्यैव सुखादिसाधन-

स्मार्ताचरणविषयत्वादिति चेत्—न, अनुशयोपलक्षणार्था हि चरणश्रुतिः। तस्यैव सुखादिसाधनत्वात् ॥

## ॥ सू ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

एवं सति स्मार्ताचरणस्यानुपयोगादानर्थक्यं स्यादिति चेत्—न। तदपेक्षत्वादेव सर्वस्य पुण्यकर्मणः, 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥' इत्यादिवचनात्। इति कार्ष्णाजिनिमतम् ॥

## ॥ सू ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्तु 'रमणीयचरणाः, कपूयचरणाः' इति चरणशब्देन सुकृतदुष्कृते एवोच्येते, पुण्यं कर्माचरतीति प्रसिद्धेः इति मन्यते। एतदेव सूत्रकारस्य मतम्। यदा चरणशब्दः सुकृतदुष्कृतयोर्वाचकः, न तु लक्षकः, इति बादरेर्मतम्, स्मार्ताचारापेक्षं कर्मेति तु स्वीकृतमेव। अतः सुकृतदुष्कृतानुशयवानेव स्वर्गादवरोहति जीव इति सिद्धम् ॥ इति कृतात्ययाधिकरणम् ॥ २ ॥

---

त्वादिति। इष्टापूर्तादिरूपस्य कर्मण एव स्वर्गादिसाधनत्वेन विहितस्य सुखादिजनकत्वात् स्मार्ताचारस्यातथात्वादित्यर्थः। एवं तर्हि संध्यावन्दनादेर्वैयर्थ्यं प्राप्तमिति शङ्कानिराकरणार्थं सूत्रम्—सू ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ स्मार्ताचारवतैवानुष्ठितानि यागादिकर्माणि स्वर्गादिफलजनकानि यतो दिवा रात्रौ च कर्माधिकारविरोध्यशुचित्वापादकानि यानि पापान्यवर्जनीयानि तानि स्नानसंध्यावन्दनादिभिर्निरस्यंते। 'आपः शुंधन्तु मैनसः' 'यदुच्छिष्टमभोज्यं' 'यदह्ना पापमकार्षम्' इत्यादिमन्त्रलिंगात्। अतो न तेषां वैयर्थ्यमित्यर्थः। सू ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥ चरणशब्देनेति। 'यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। यान्यस्माकं सुचरितानि। तानि त्वयोपास्यानि।' इति वेदे कर्मचरणयोर्भेदव्यपदेशस्तु प्रत्यक्षाचारानुमितश्रुतिसिद्धविषयत्वेनोपपादनीय इति भावः। कार्ष्णाजिनिमताद्बादरिमते सूत्रकाराभिमते चरणशब्दस्य कर्मवाचकत्वमेव विशेषः। आनर्थक्यसूत्रोक्तार्थस्तु समान एवेत्याह—स्मार्तेति। सुकृतदुष्कृतानुशयवानेवेति। एषां कर्मणां स्वर्गनरकमात्रफलकत्वं श्रुतं तत्फलान्यनुभूयावरोहतां कर्मान्तरबृन्दमेवानुशयः। येषां तु कर्मणां स्वर्गनरकभोगानंतरमिह योनिविशेषप्राप्त्यादिकमपि फलान्तरं श्रुतं तत्फलान्यनुभूयावरोहतामैहिकफलप्रदायी तत्कर्मशक्त्यवशेषोऽप्यनुशयः। एवञ्च स्वर्गादवरोहत्सु केषाञ्चित्कपूयचरणत्वेन श्वसूकरादियोनिप्राप्तिमपि प्रतिपादयन्त्याः श्रुतेः 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता विनश्यंति ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते तच्च क्रमादुभयोर्लोकयोः सुख एव वर्त्तन्ते'। 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इत्यादिस्मृतिवचनजातस्य च न विरोधः। विषयभेदात्।

इति कृतात्ययाधिकरणम् ॥ २ ॥

## नयमणिमालायाम्

### अथ कृतात्ययाधिकरणम् ॥ २ ॥

**सू० ॥ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥**

पुनरागच्छति जीवः स्मृतिमान्निश्शेषभुक्तकर्मासौ । यत्किंचेति श्रुत्या समस्तकर्मक्षयाम्नानात् ॥ १७० ॥

इह रमणीयचरणश्रवणात्कर्मशेषयुत एव । चरणं चरित्रमिति तु न तस्य तदधिकारमात्रहेतुत्वात् ॥ १७१ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ कृतात्ययाधिकरणम् ॥ २ ॥

**सू ॥ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ सुकृतदुष्कृते एवेति तु बादरिः॥ ११ ॥**

**भगवत्पादमते,** स्वर्गिणामवरोहणमधिकृत्य श्रूयते–'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' इत्यादि। अत्र किं स्वर्गादवरोहन्तस्सानुशयाः उत निरनुशया इति **संदेहः**। निरनुशया इति **पूर्वपक्षः** । **सिद्धान्तस्तु, कृतात्यये**=स्वर्गप्रापककर्मजातस्य भोगेन नाशे । **अनुशयवान्**=आमुष्मिकफलप्रापककर्मातिरिक्तकर्मवानेवावरोहति । कुतः । **दृष्टस्मृतिभ्याम्**='तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्' इत्याद्या दृष्टा प्रत्यक्षा श्रुतिः, 'प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशकालकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति स्मृतिः ताभ्यामनुशयवन्त एवावरोहन्तीति गम्यते । इति ॥ ते च येन मार्गेण चन्द्रलोकमारूढास्तेनैव मार्गेणावरोहन्ति किमुत तद्विपरीतेनेत्याकांक्षायामाह–**यथेतमनेवं च**=यथेतं यथागतं धूमादिमार्गेण । **अनेवं च**=वक्ष्यमाणाभ्रादिमार्गेण चावरोहन्तीत्यर्थः ॥ सूत्रमपि व्याख्यातम् ॥

**सू ॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ चरणादिति चेत्**=ननु 'रमणीयचरणाः' इति श्रुतिः चरणाद्योन्यापत्तिं दर्शयति नानुशयात् । अतो नानुशयवत्त्वसिद्धिरिति चेत् । **न** । यतः कार्ष्णाजिनिराचार्यः इयं चरणश्रुतिरनुशयोपलक्षणार्थेति मन्यते ॥

**सू ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥** ननु चरणश्रुतेर्मुख्याचारार्थपरित्यागेनानुशयार्थकत्वे आनर्थक्यमिति चेत् **न** । इष्टादिकर्मणामाचारनिर्वर्त्यत्वेन चरणापेक्षत्वाच्चरणश्रुतेरर्थवत्त्वमित्यर्थः ॥

वस्तुतः कर्मचरणयोर्न भेद इत्याह—**सू ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥** बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देनोच्येते इति मन्यते । लोके इष्टादिकारिणि 'धर्मं चरती' ति कर्मचरणयोरभेदेन प्रयोगदर्शनात् । अत इष्टादिकारिणां चन्द्रलोकं गतानां पुनरवरोहार्थमनुशयोऽस्तीति सिद्धम् ॥

**श्रीकण्ठमते, तथा रामानुजमते** च पूर्वाधिकरणवत्संदेहपूर्वपक्षादिषु नास्ति वैलक्षण्यं शांकरमतादिति विरम्यते तद्विवरणतः ॥

**आनन्दतीर्थमते,** तु इदमधिकरणं त्रेधा विभक्तम् । तत्र 'यथेतमनेवं च' इति योगविभागश्च विशिष्टः । **कृतात्ययाधिकरणं यथेताधिकरणं चरणाधिकरणमिति** चाधिकरणानि त्रीणि विभक्तानि । **सू ॥ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॥ ८ ॥** कृतस्य कर्मणः स्वर्गादिषु भोगेन निःशेषक्षयात्तत्र च कर्मान्तरानार्जनात् शरीरान्तरानारंभेण कर्मबन्धमूलः संसारः स्वत एवोच्छिद्येत किं वैराग्यादिनेति **पूर्वपक्षः** । **सिद्धान्तस्तु,** न तथा 'तच्छेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति ।' 'भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः । कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यशः ॥' इत्यादिश्रुतिस्मृतिभ्यां कर्मानुशयवानेवावरुह्य शरीरं लब्ध्वा पुनरपि कर्म कुर्वन्परिवर्तत इत्यवगमेन कर्मबन्धस्य तन्मूलसंसारस्य च स्वत एवोच्छित्त्यसंभवाद्वैराग्याद्यपेक्षावश्यकी इति ॥ ॥ **इति कृतात्ययाधिकरणम् ॥ ८ ॥**

### अथ यथेताधिकरणम् ॥ ९ ॥

**सू ॥ यथैतमनेवं च ॥ ९ ॥** अत्र जीवस्य स्वर्गादागतिप्रकारो विचार्यते । जीवस्य गतिप्रकारेणैवागतिर्युक्तेति 'यथेतमेव गच्छति यथेतमागच्छती' त्यादिश्रुत्या प्रतीयत इति **पूर्वपक्षः** । 'धूमादभ्रमभ्रादाकाश' मित्यादिकाषायणश्रुत्या गतिप्रकारेणान्यथा चागतिःसिद्धेति **सिद्धान्तः** । **यथेतम्**=जीवेन यथा येन मार्गेण स्वर्गादिकमितं प्राप्तं तथा तेन । **अनेवं च**=अन्येन मार्गेण च जीव इमं लोकमागच्छतीत्यर्थः ॥ **इति यथेताधिकरणम् ॥ ९ ॥**

## अथ अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

## ॥ सू ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इह यथेष्टापूर्तादिकारिणां चन्द्रगमनम्, तथान्येषामप्यस्ति न वेति संशयः । तथा सतीष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनमस्त्येव, 'य एवैके चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इत्यविशेषेण सर्वेषां चन्द्रगमनश्रवणात् । यद्यपि तत्र पापिनां भोगो नास्ति, तथापि पुनरागत्य शरीरग्रहणार्थं पञ्चमाहुतिलाभाय स्वर्गगतिरपेक्ष्या । तस्मादिष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनं युक्तम् ॥

---

## अथानिष्टादिकार्यधिकरणम् ॥ ३ ॥

सू ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ संगतिसूचनपूर्वकं संशयं दर्शयति–इहेति । 'अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीते' (ब्र० ३-१-६) रिति सूत्रे 'इष्टादिकारिणा' मिति विशेषग्रहणं कृतं तद्व्यर्थम् । 'ये के चास्मा' दितिश्रुता-विष्टानिष्टादिकारिसाधारण्येन सर्वेषामपि चन्द्रप्राप्तिश्रवणादित्याक्षेपिकी व्यवहिता-धिकरणसंगतिः । यावच्छ्रुतेरिव 'ये केचे' त्यविशेषश्रुते 'श्चंद्रमसमेव ते सर्वे गच्छंती' ति सर्वश्रुतेश्च न स्वयं संकोचापेक्षेति प्रत्युदाहरणरूपा समनंतराधिकरणसंगतिश्चात्र विवक्षिता । 'ये केचे' त्यादिश्रवण 'मथैतयोः पथो' रित्यादिश्रवणञ्च संशयबीजम् । ननु ये विहितमिष्टादिकं न कुर्वंति ये[1] निषिद्धमपि कुर्वन्ति ते खल्वनिष्टादिकारिणः । तेषामपि चन्द्रप्राप्तौ पुण्यकर्मणां पापिनाञ्च गतिरविशिष्टा स्यादित्याशंक्याह–यद्य-पीति । चन्द्रलोके स्वर्गभोगाभावः पुण्यकृद्भ्यः पापिनां विशेषः । भोगाभावेऽपि चन्द्र-लोकगमनं न व्यर्थं शरीरकारणपञ्चमाहुतिलाभार्थत्वात् । न च 'अथैतयोः पथोर्न कतरेण चे' ति श्रुतिविरोधः । न हि सा पापिनां पथिद्वयमपि निषेधति । स्वयंपथ्य-न्तरानुपदेशात् । तेषां संयमनप्राप्तेरप्यभावप्रसङ्गेन[2] पथिशब्दयोः प्रकृतविद्याकर्मपर-त्वस्य वक्तव्यत्वात् 'एतत्तृतीयं स्थान' मिति तृतीयस्थानांतरमात्रोपदेशात् । न च पापिनामपि चन्द्रलोकप्राप्तौ 'तेनासौ लोको न संपूर्यत' इत्युक्तस्यासंपूरणस्यानुपपत्तिः ।

---

अथ चरणाधिकरणम् ॥ १० ॥

सू ॥ **चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ १० ॥** अत्र जीवस्य गमनागमनं चरणफलं वा यज्ञादिकर्मफलं वेति **संदेहः** । 'तद्य इह रमणीयचरणा' इत्यादिश्रुत्या जीवस्य गमनागमनं चरणफलमेवेति **पूर्वपक्षः** । चरणादिश्रुतेरजहल्लक्षणया यज्ञादिकर्मप्रतिपादकतया कर्मफलमेव तदीयं गमनागमनमिति **सिद्धान्तः** । **चरणादिति चेत्**=गतागतं न यज्ञादेर्भवति किं तु **चरणात्**=यज्ञाङ्गभूताचारादेव । **इतिचेन्न** । कुतः । यतः श्रुतिः तदुपलक्षणार्था अजहत्स्वार्थलक्षणया यज्ञाचारोभयप्रतिपादिकेति कार्ष्णाजिनिराचार्यो मन्यतेऽत इत्यर्थः ॥

सू ॥ **आनर्थक्यमितिचेन्न तदपेक्षत्वात् ॥ ११ ॥** उपलक्षणार्थत्वे रमणीयकपूयपदाभ्यामेव कर्मोपलक्षणसंभवाच्चरणशब्दस्यानर्थक्यमिति **चेन्न** । कुतः । **तदपेक्षत्वात्**=तस्य साध्वसाधुयज्ञादिमत्त्वस्य आचारादिसापेक्षत्वात् । तथा च तद्बोधार्थं तत्पदसार्थक्यं भवतीत्यर्थः ॥

सू ॥ **सुकृतदुष्कृते एवेति तु बादरिः ॥ १२ ॥ सुकृतदुष्कृते**=साध्वसाधुकर्मणी एव श्रुतिस्थचरणशब्दवाच्ये न तु तदंगाचरणमिति बादरिराचार्यो मन्यत इत्यर्थः । तुशब्दस्यापिशब्दार्थकतया बादरिरपीत्यन्वयेन सूत्रकारस्य सिद्धान्तोऽपि स एवेति सूच्यते ॥ ॥ इति **चरणाधिकरणम्** ॥ १० ॥

**इति सूत्रार्थचन्द्रिकायां कृतात्ययाधिकरणम् ॥ २ ॥**

---

(१) 'निषिद्धं वा कुर्वन्ति' इति ख. पाठः । (२) 'संभवप्रसंगेन' इति ख. पाठः ।

इति प्राप्तेऽभिधीयते—

॥ सू ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

इष्टापूर्ताद्यकुर्वतां चन्द्रगमनं नास्ति, किंतु यमसदने कर्मफलमनुभूय प्रत्यवरोहणम्। एवंभूतावेव तेषामारोहावरोहौ, 'वैवस्वतं संगमनं जनानाम्' इति तद्गतिदर्शनात्। भोगार्थमेव हि स्वर्गगमनम्, न पञ्चमाहुतिलाभाय, द्रोणादीनां योषिदाहुतेरभावेन व्यभिचारात्। अतो यमलोकप्राप्तिरेव पापिनामिति युक्तम् ॥

॥ सू ॥ स्मरन्ति च ॥ १४ ॥

अस्मिन्नर्थे स्मरन्ति च, 'सर्वे चैते वशं यान्ति यमस्य भगवन् किल' इत्यादि॥१४॥

॥ सू ॥ अपि च सप्त ॥ १५ ॥

सप्त रौरवादीनपि पापिनो महानरकान् स्मरन्ति ॥

॥ सू ॥ तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

---

तेषां यमसदनप्राप्तौ चन्द्रलोकस्य मार्गमात्रत्वेन तत्र तेषां संघीभूयावस्थानाभावादसंपत्तेः। अतस्सा श्रुतिर्देवयानपितृयाणमार्गप्राप्ययोर्ब्रह्मचन्द्रलोकयोर्भोगाभावमात्रपरा न पापिनां मार्गद्वयस्यापि निषेधपरेति भावः ॥ सू ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ अनुभूयेत्यस्य शेषमध्याहरति—प्रत्यवरोहणमिति। एवंभूताविति। संयमनारोहस्ततोऽवरोहश्चेत्येवंभूतावेवेत्यर्थः। वैवस्वतमिति। यदि 'ये केचे' त्यविशेषणश्रवणात्सर्वेषां चन्द्रप्राप्तिः कल्प्येत तदा 'वैवस्वतं संगमनं जनाना' मित्यविशेषश्रवणात्सर्वेषां यमप्राप्तिरपि कल्प्येत। अतो यथा 'अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' इत्यादिविशेषवचनाद्यथा यमप्राप्तिवचनमनिष्टादिकारिविषयम् एवं 'अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते' इत्यादिविशेषवचनात् चन्द्रप्राप्तिवचनमपीष्टादिकारिविषयमित्याशयः। पञ्चमाहुतिलाभार्थं चन्द्रप्राप्तिगमनं सर्वेषां वाच्यमित्याशंकापरिहारं सूत्रकारेण वक्ष्यमाणमाकांक्षाशान्तये स्मारयति–भोगार्थमिति। सू० ॥ स्मरन्ति च ॥१४॥ सर्वे चेति। पापिन इत्यर्थः। अत उपबृंहणस्मृत्यनुसारेणापि सामान्यवचनस्य विशेषविषयतेत्यर्थः॥सू०॥ अपि च सप्त ॥ १५ ॥ स्मरन्तीत्यनुवर्तते। पापिनामेव हि पापफलानुभवार्थान् सप्त नरकानपि स्मरन्ति। अतोऽपि हेतोर्यमप्राप्तिवचनानां विशेषविषयत्वात्तद्वत् चन्द्रप्राप्तिवचनमपि विशेषवचनानुसारेण विशेषविषयमिति भावः। यमसदन एव केषांचिद्यातनानुभवः। तदभिप्रायं 'संयमने त्वनुभूये' ति सूत्रम्। केषाञ्चिद्यमसदनप्राप्त्यनंतरं यमाज्ञया पातालानामधोभागं प्राप्य तत्रत्येषु रौरवादिषु यातनानुभवः। तदभिप्राय' मपि च सप्ते' ति सूत्रम्। संयमनसप्तनरकरूपयातनानुभवस्थानद्वैविध्यसूचनार्थमेव 'अपि च सप्ते' त्येतस्मिन्सूत्रे समुच्चयार्थोऽपिशब्दः। ननु रौरवादयश्चित्रगुप्ताद्यधिष्ठिताः श्रूयन्ते। अतो यमप्राप्तिवचनस्य पापिविषयत्वकल्पनायां रौरवादिस्मरणस्य प्रमाणत्वेनोपन्यासो विरुद्ध इत्याशंकानिराकरणार्थं सूत्रम्–तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

---

(१) 'सर्वे चैते पापिन इत्यर्थः' इति ख. पाठः।

तत्रापि चित्रगुप्ताद्यधिष्ठितेषु नरकेष्वपि तेषां प्रेरकस्य यमस्य तदधिष्ठातृत्वव्यापारसत्त्वात् यमवश्यताया विरोधाभावः ॥

॥ सू ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

विद्याकर्मणोः फलभोगाद्यर्थं ब्रह्मगमनं चन्द्रगमनं च कथम्? 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इति ब्रह्मगमने चन्द्रगमने च विद्याकर्मणोरेव प्रकृतत्वात् । अतो न पापिनां तद्गतिप्रसङ्गः ॥

॥ सू ॥ न तृतीये तथोपलब्धेः ॥ १८ ॥

न च पापिनामपि पञ्चमाहुतिप्राप्तिमूलत्वाद्देहारम्भस्य तदर्थं द्युलोकापेक्षा, तेषां द्युलोकगमनाभावोपलब्धेः 'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ

---

चित्रगुप्तादीनामप्यधिष्ठातुर्यमस्य समीपं प्राप्य तदाज्ञया तद्भृत्याधिष्ठितान्नरकान्पापिनः पश्चात्प्राप्नुवन्तीति न विरोध इति भावः । पञ्चमाहुतिलाभार्थं पापिनामपि चन्द्रप्राप्तिर्वक्तव्येति शङ्कां निराकर्तुं चन्द्रप्राप्तिस्तदर्था न भवति किं तु कर्मफलभोगार्था यथा ब्रह्मप्राप्तिर्विद्याफलभोगार्थेति प्रतिपादनार्थं सूत्रम्—विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ देवयानपितृयाणे इति शेषः । 'विद्याकर्मणो' रिति सबन्धसामान्ये षष्ठी तादर्थ्यपर्यवसायिनी । तादर्थ्यं च तत्फलप्राप्त्युपायतया । इतिर्हेतौ । तथा च देवयानपितृयाणेविद्याकर्मफलप्राप्त्यर्थे इति हेतोरित्यर्थः । तुशब्दः पञ्चमाहुत्यर्थत्वव्यवच्छेदार्थः । कथं तयोस्तादर्थ्यमित्याकांक्षायां तत्साधको हेतुरुक्तः प्रकृतत्वादिति । चन्द्रप्राप्तेः फलभोगार्थत्ववद्देहारंभार्थपंचमाहुतिलाभार्थत्वमपि स्यादिति शङ्कानिराकरणार्थं सूत्रम्—न तृतीये तथोपलब्धेः ॥ १८ ॥ 'अथैतयो' रिति 'वेत्थ यथासौ लोको न संपूर्यते' इत्यपि श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नः । अयं लोक इव स्वर्गलोकोऽपि बहुषु प्रयत्सु येन कारणेन सम्पूर्णो न भवति तत्कारणं वेत्थ किमिति प्रश्नः । श्वेतकेतौ प्रतिवचनाशक्ते प्रवाहणस्यैवेदं प्रतिवचन 'मथैतयो' रित्यादि । एतयोर्देवयानपितृयाणयोर्मध्ये येषामन्यतरेण मार्गेण गमनं नास्ति तानीमानि क्षुद्राणि यूकालिक्षमशकादीनि भूतान्यसकृदावृत्तीनि भवंति । असकृदावृत्तिर्जननमरणपौनःपुन्यरूपेति 'जायस्व म्रियस्वे' त्यनेनोच्यते । 'क्रियासमभिहारे लोड्लोटो हि स्वौ वा च तध्वमो' रिति पाणिनि ( ३-४-२ ) सूत्रे क्रियापौनःपुन्यविवक्षायां सर्वलकारापवादो लोण्मध्यमपुरुषो विहितः । तत्र द्विर्भावस्तस्यैव धातोरनुप्रयोगश्च नियतः । यथा लुनीहि लुनीहीति लुनाति पुनः पुनर्लुनातीत्यर्थः । तदनंतरं 'समुच्चयेऽन्यतरस्या' मिति ( पा०३-४-३) सूत्रेण अनेकक्रियासमभिहारे विकल्पेन लोण्मध्यमपुरुषो विहितः । तत्र न द्विर्भावः । तावत्क्रियासामान्यवचनस्य तु धातोरनुप्रयोगो नियतः । यथा 'ओदनं भुङ्क्ष्व सक्तून्पिब धानाः खादे त्ययमभ्यवहरती' ति । अत्र जननमरणक्रिययोः प्रत्येकं पौनःपुन्यं तयोस्समुच्चयश्चेत्युभयं विवक्षितम् । उभयविवक्षायां 'विप्रतिषेधे परं कार्य' मिति समुच्चयविवक्षाप्रयुक्तो वैकल्पिको लोण्मध्यमपुरुषः । असकृदावर्तीनि भवंतीति जननमरणक्रि-

लोको न संपूर्यत' इति । तृतीयं स्थानमिति पापकर्माण उच्यन्ते । अतः पापिनां न स्वर्गगमनम् ॥

## ॥ सू ॥ स्मर्यतेऽपि च लोके ॥ १९ ॥

लोके द्रौपद्यादीनां पुण्यकर्मणामपि पञ्चमाहुत्यनपेक्षा देहारम्भाय स्मर्यते ॥

## ॥ सू ॥ दर्शनाच्च ॥ २० ॥

किंच श्रुतिदर्शनं च भवति 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जमिति' । तत्र स्वेदजोद्भिज्जयोस्तदनपेक्षत्वं दृश्यते ॥

यासामान्यवाचिनो भवतेरनुप्रयोगश्च । एतदसकृदावृत्तिरूपं तृतीयं स्थानं प्रकृतदेवयानपितृयाणमार्गद्वयापेक्षया । क्षुद्रजंतूनामयं तृतीयो मार्गः । तेन क्षुद्रजंतूनामनंतानां मार्गांतरसत्त्वात् देवयानपितृयाणप्राप्यचन्द्रप्राप्त्यभावेन हेतुना क्षुद्रजंतुभिरप्याक्रान्तोऽयं लोक इवासौ लोको न सम्पूर्यते इति प्रतिवचनार्थः । एवञ्च 'तृतीयं स्थानमिति पापकर्माण उच्यन्त' इति भाष्ये पापकर्मशब्दस्तन्मार्गोपलक्षकत्वेन योजनीयः । न चैतत्प्रकृतं क्षुद्रप्राणिजातं विद्वदिष्टादिकार्यपेक्षया तृतीयं कर्मफलानुभवस्थानमिति श्रुत्यर्थप्रदर्शकतया यथाश्रुतार्थमेव भाष्यमस्त्विति शङ्कनीयम् । 'अथैतयोः पथोरिति' प्रकृतमार्गया तृतीयस्य मार्गान्तर एवान्वयात् 'अस्य गोर्द्वितीयोऽन्वेष्टव्य' इत्यादाविव संख्यायाः सजातीयनिवेशित्वात् स्थानशब्दस्य कर्मफलानुभवाश्रयपरत्वे विद्येष्टादिफलानुभवाश्रयब्रह्मचन्द्रप्राप्तापेक्षया ब्राह्मणादियोनिप्राप्तानामपि तृतीयराशित्वेन भेदनिर्देशापत्तेश्च । अत एव 'अथैतयोः पथोरि' त्यस्य विद्याकर्मपरत्वमपि प्रत्युक्तम् । विद्याकर्मापेक्षयापि स्थानस्य तृतीयत्वासंभवेन पथोरिति मुख्यार्थमार्गद्वयपरं तृतीयं स्थानमिति मार्गांतरपरमित्येव व्याख्यातुमुचितत्वात् । अनिष्टादिकारिणां मार्गान्तरविवक्षायां च मार्गद्वयनिषेधेऽनुपपत्त्यभावात् । 'पंचम्यामाहुता' विति वचनं तु पञ्चमाहुतौ सत्यां शरीरसंभवमात्रं प्रतिपादयति न तु पंचमाहुत्यभावे तदसंभवमपि प्रतिपादयति । वाक्यभेदापत्तेः । न चार्थात्तत्कल्पनम् । ' एतत्तृतीयं स्थान ' मिति विशेषवचनविरोधादिति भावः । तर्हि पंचमाहुतिमन्तरेणाऽपि शरीरोत्पत्त्यंगीकारे तस्यास्तत्कारणत्वं न स्यात् व्यतिरेकव्यभिचारादिति शङ्कानिराकरणार्थं सूत्रम्—स्मर्यतेऽपि च लोके॥१९॥ **पंचमाहुत्यनपेक्षेति** । तथा च शरीरविशेष एव पंचमाहुतेः कारणत्वमिति कल्पनमावश्यकमिति भावः ॥ ननु तपोविशेषप्रभवेषु शरीरेषु कायव्यूहरीत्या पंचमाहुत्यनपेक्षायामप्यन्यत्र सर्वत्रापि तदपेक्षा स्यात् । न च पञ्चमाहुतिवाक्ये 'पुरुषवचस'इति श्रवणात्पुरुषशब्दस्य ' पुरुषावात्ममानवा ' विति नानार्थकोशानुसारेण मनुष्यमात्रविषयत्वोपपत्तेः क्षुद्रजन्तुषु पंचमाहुत्यपेक्षा न प्राप्नोतीति शंकनीयम् । कपूयचरणानां श्वसूकरयोनिप्राप्तावपि तदपेक्षाप्रतिपादनादिति शंकानिराकरणार्थं सूत्रम्–दर्शनाच्च ॥ २० ॥ **स्वेदजोद्भिज्जयोरिति** । स्वेदजस्य पंचमाहुत्यनपेक्षायाः लौकिकप्रमाणेन दर्शनात् उद्भिज्जानां तदपेक्षायाः श्रुत्यापि दर्शनादित्युभयसंग्राहकं ' दर्शनाच्चे ' ति सूत्रमिति भावः ॥ ननु स्वेदजस्यापि कस्यचित्प्राणिजातस्य सत्त्वे कथं ' त्रीण्येव बीजानी'ति

(१) ' राशित्वेन तेषामपि तृतीयस्थानतया निर्देशापत्तेश्च ' इति ख. पाठः ।

ननु 'जीवजमुद्भिज्जमिति' श्रुतौ स्वेदजग्रहणं नास्तीत्यत आह—

॥ सू ॥ तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

संशोकजस्य स्वेदजस्यापि तृतीयेनोद्भिज्जशब्देन संग्रहोऽस्तीत्यर्थः । ततः पापिनां न स्वर्गगमनमिति निर्णयः ॥

इत्यनिष्टादिकार्यधिकरणम् ॥ ३ ॥

---

श्रुतावधारणमिति शंकानिराकरणार्थं सूत्रम्—सू० ॥ तृतीयशब्दावरोधस्संशोकजस्य ॥ २१ ॥ उद्भिज्जशब्देनेति । स्वेदजमपि प्राणिजातं लौकिकप्रमाणसिद्धमवश्यं क्वचिदिहान्तर्भावनीयम् । अन्यथावधारणश्रुत्यप्रामाण्यापत्तेः । अतः पार्थिवत्वोष्मप्रभवत्वायोनिजत्वाविशेषादुद्भिज्जमध्ये तदन्तर्भावोऽपि विवक्षितः कल्प्यत इति भावः ॥

इत्यनिष्टादिकार्यधिकरणम् ॥ ३ ॥

---

नयमणिमालायाम्

अथ अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

सू० ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ स्मरन्ति च ॥ १४ ॥ अपि च सप्त ॥ १५ ॥ तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ न तृतीये तथोपलब्धेः ॥ १८ ॥ स्मर्यतेऽपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥ तृतीयशब्दावरोधस्संशोकजस्य ॥ २१ ॥

ये वै के चेत्यविशेषश्रवणात्पञ्चमाहुतेर्लब्धये । पापाचारवतामपि वक्तव्या चन्द्रमःप्राप्तिः ॥ १७२ ॥

गन्तव्यान्तरमुक्तं तेषां धूमादिमार्गस्तु । पुण्यफलत्वेनोक्तो नाहुतिसंख्याप्यपेक्ष्यते लोके ॥ १७३ ॥

इति अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

सूत्रार्थचन्द्रिकायाम्

अथ अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

सू ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ स्मरन्ति च ॥ १४ ॥ अपि च सप्त ॥ १५ ॥ तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ न तृतीये तथोपलब्धेः ॥ १८ ॥ स्मर्यतेऽपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥ तृतीयशब्दावरोधस्संशोकजस्य ॥ २१ ॥

**भगवत्पादमते,** अत्र पापिनां चन्द्रलोकगतिरस्ति वा न वेति **संदेहः । अनिष्टादिकारिणामपि**=पापिनामपि । **श्रुतम्**='ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति श्रुतम् । अतः धर्मिण एव चन्द्रलोकं गच्छन्तीत्येतदसंगतम् । पापिनामप्यस्ति चन्द्रलोकगतिरिति **पूर्वपक्षः । सिद्धान्तस्तु, सू ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥** तुशब्दः पूर्वपक्षनिरासार्थः । **संयमने**=यमालये । **अनुभूय**=स्वपापानुरूपा यामीर्यातना अनुभूय प्रत्यवरोहन्ति पापिनः । अतः **इतरेषां**=पापिनाम् । एवंभूतावेव आरोहावरोहौ भवतः । कुतः । **तद्गतिदर्शनात्**='अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' इति श्रुतौ यमवशत्वलक्षणायास्तेषां पापिनां गतेर्दर्शनात् ॥ इति ॥ द्वे सूत्रे अपि व्याख्याते ॥

**सू ॥ स्मरन्ति च ॥ १४ ॥** मन्वादयः शिष्टाः पापिनां नरकभोगं स्मरन्ति । अतश्च धर्मिणामेव चन्द्रलोकगमनं नान्येषामित्यर्थः ॥

**सू ॥ अपि च सप्त ॥ १५ ॥** अपि च सप्त रौरवादयो नरकाः पापिनां पापफलभूमित्वेन स्मर्यन्ते पौराणिकैः । पापिनस्तान्प्राप्नुवन्ति न चन्द्रलोकमित्यर्थः ॥

ननु पापिनो यमयातना अनुभवन्तीत्येतन्न युक्तं रौरवादौ चित्रगुप्तादीनामधिष्ठातृत्वस्मरणादित्यत आह—**सू ॥ तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ तत्रापि च**=रौरवादिनरकेषु च । **तद्व्यापारात्**=तस्यैव यमस्याधिष्ठातृत्वव्यापारात् । **अविरोधः**=विरोधो नास्ति । चित्रगुप्तादीनां यमप्रयुक्तत्वादिति भावः ॥

उपासकानामर्चिरादिमार्गः केवलकर्मिणां धूमादिमार्ग इति श्रुतिस्मृत्यादिषु व्यवस्थापितत्वादेतन्मार्गद्वयभ्रष्टानां पापिनां

तृतीयमार्गोक्तेश्च न तेषां चन्द्रलोकप्राप्तिरित्याह—सू ॥ **विद्याकर्मणोरिति तु प्रकृतत्वात्** ॥ १७ ॥ 'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ती' त्यादौ 'एतयो' रिति पदस्य विद्याकर्मणोरित्यर्थोऽभ्युपेयः । कुतः । **प्रकृतत्वात्**=विद्याकर्मणोरेव देवयानपितृयानात्मकमार्गद्वयसाधनत्वेन प्रकृतत्वात्प्रकृतवाचकत्वमेतच्छब्दस्य युक्तमित्यर्थः । सूत्रे तुशब्देन 'चन्द्रमसमेव ते सर्वे गच्छन्ती' ति श्रुतिप्रयुक्तशंका व्यावर्त्यते । कुतः । सर्वशब्दस्य पुण्यपुरुषमात्रपरत्वात् इति भावः ॥

ननु 'पञ्चम्यामाहुतौ' इत्यादिना संख्यानियमेन देहप्राप्त्यभिधानात्तदर्थं पापिनामपि चन्द्रलोकप्राप्तिरङ्गीकार्येत्यत आह—सू ॥ **न तृतीये तथोपलब्धेः** ॥ १८ ॥ तृतीये मार्गे प्रविष्टानां पापिनाम् । **न**=देहप्राप्त्यर्थमाहुतिसंख्यानियमो नादर्तव्यः । कुतः । **तथोपलब्धेः**=संख्यानियमं विनैव 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थान' मिति श्रुतौ तृतीये मार्गे देहप्राप्तेरुपलब्धेरित्यर्थः ॥

सू ॥ **स्मर्यतेऽपि च लोके** ॥ १९ ॥ अपि च लोके भारतादौ द्रोणधृष्टद्युम्नादीनामयोनिजत्वं स्मर्यते । आहुतिसंख्यायां नियमाभावः सिद्धः ॥

सू ॥ **दर्शनाच्च** ॥ २० ॥ किं च । लोके जरायुजाण्डजस्वेदजोद्भिज्जादिषु चतुर्विधदेहेषु स्वेदजोद्भिज्जयोः स्त्रीपुंव्यक्तिसंयोगं विनैवोत्पत्तिदर्शनान्नाहुतिसंख्यानियम इत्यर्थः ॥

ननु 'त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्ज' मिति शरीरत्रैविध्यश्रवणात्कथं चातुर्विध्यमित्यत आह-सू ॥ **तृतीयशब्दावरोधस्संशोकजस्य** ॥ २१ ॥ श्रुतौ **संशोकजस्य**=स्वेदजस्य । **तृतीयशब्दावरोधः**=तृतीयेनोद्भिज्जशब्देन संग्रहोऽभिप्रेतः । अतोऽनिष्टादिकारिणां न चन्द्रलोकप्राप्तिरपि तु इष्टादिकारिणामेवेति सिद्धम् ॥

**श्रीकण्ठमते, रामानुजमते** च संदेहपूर्वपक्षादिषु यद्यपि नास्ति वैशिष्ट्यं पूर्वमतात् । **रामानुजमते** पर, माद्यस्य सूत्रपञ्चकस्य पूर्वपक्षोपपादकतारूपविशेषसत्त्वेऽपि अनिष्टादिकारिणामपि यमलोके यातनाद्यनुभवानन्तरं चन्द्रलोकप्रा· पूर्वपक्षशरीरप्रतिपादनानुगुण्येन पूर्वपक्षसूत्राणां व्याख्यानान्नास्त्यतिवैलक्षण्यं तेषामर्थवर्णन इतीयानेव विशेषोऽत्र श्रीकण्ठमतादित्यवधेयम् । अन्यदविशिष्टं पूर्वस्माच्छ्रीकण्ठमतवत् ॥

**आनन्दतीर्थमते,** इदमधिकरणम् 'अनिष्टाधिकरणम्' 'अपिसप्ताधिकरणम्' 'तत्राप्यधिकरणम्' 'विद्याधिकरणं' 'न तृतीयाधिकरण' मिति पञ्चधा विभक्तम् । तत्राद्ये अनिष्टाधिकरणे पूर्वोक्तो गमनागमनक्लेशः इष्टादिपुण्यकृतामेव वा उत पापकर्मकारिणामपीति **संदेहे** इष्टादिकारिणां पुण्यकृतामेव गमनागमनक्लेशो नान्येषां तेषां प्रत्यवायभयरहितत्वात्फलकामनाराहित्याच्चेति **पूर्वपक्षः** । **सिद्धान्तस्तु,** यागादिकर्म अकुर्वतां तद्विरुद्धपापकर्मकारिणां चास्त्येवायं गतागतक्लेश इति । कुतः । 'तय इहे' त्यादिभाल्लवेयश्रुतौ तथाश्रुतत्वादित्यर्थः ॥

**संयमने त्वनुभूयेतरेषामित्यादि** । तुशब्दोऽवधारणे । सप्तमी द्वितीयार्थे । **संयमने** नरके सम्यग्यमशासन**मनुभूयैव** स्थितानाम**ितरेषा**मिष्टादिकारिभ्योऽन्येषां मध्ये । **आरोहावरोहौ**=केषां चिदारोहो नरकादुत्थानं केषां चिदवरोहः ततोऽपि नीचस्थाने नित्यनरके पातो भवति । कुतः । **तद्गतिदर्शनात्**=तेषामनिष्टादिकारिणामेवंविधगतेर्दर्शनात् । 'सर्वे वा एते' इत्यादिश्रुतौ दर्शनादित्यर्थः ॥

सू ॥ **स्मरन्ति च** ॥ १६ ॥ स्मृतिकर्तारः उक्तमर्थं 'गच्छन्ति पापिनस्सर्वे' इत्यादिना प्रतिपादयन्तीत्यर्थः ॥

**इत्यनिष्टाधिकरणम् ॥ ११ ॥**

**अथ अपि सप्ताधिकरणम् ॥ १२ ॥**

सू ॥ **अपिसप्त** ॥ १६ ॥ अत्र 'चकार नरकं शून्य' मित्यादिस्मृतिवचनान्नित्यनरको नोपपद्यत इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** 'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा । कुंभीपाक इति प्रोक्तान्यनित्यनरकाणि च । तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ संप्रकीर्तितौ ॥'' इत्यादिना सप्तानां नरकाणां स्मरणात् 'चकार नरकं शून्य' मिति वचनस्य रौरवादिपञ्चनरकीविषयत्वाच्च नित्यनरकोऽभ्युपगन्तव्य एवेति ॥ **इत्यपिसप्ताधिकरणम् ॥ १२ ॥**

**अथ तत्राप्यधिकरणम् ॥ १३ ॥**

सू ॥ **तत्रापि च तद्व्यापारादविरोधः** ॥ १७ ॥ अत्र ईश्वरस्य नारकिजनप्रेरकत्वाङ्गीकारे तस्यापि दुःखभावत्वं स्यादिति **पूर्वपक्षः** । **सिद्धान्तस्तु, तत्रापि च**=नरकेऽपि च । **तद्व्यापारात्**=दुःखानुभवं विनैव तस्येश्वरस्य प्रेरणाख्यव्यापारसत्वात् । **अविरोधः**=ईश्वरस्य नरके स्थित्वा तन्नियन्तृत्वे दुःखाभोक्तृत्वप्रतिपादनाच्च न श्रुतिविरोधः इत्यर्थः ॥ **॥ इति तत्राप्यधिकरणम् ॥ १३ ॥**

**अथ विद्याधिकरणम् ॥ १४ ॥**

सू ॥ **विद्याकर्मणोरिति तु प्रकृतत्वात्** ॥ १८ ॥ अत्र 'अथैतयोः पथो' रित्यादिना देवयानपितृयाणमार्गयोर्भूतैः स्वातन्त्र्येण गन्तुं शक्यत्वावगमात्किं वैराग्यादिसाधनकलापानुष्ठानक्लेशेनेति **पूर्वपक्षः** । **सिद्धान्तस्तु,** 'एतयोः

## अथ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

## ॥ सू ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

पूर्वत्र फलभोगानन्तरं स्वर्गात् सानुशय एव जीवोऽवतरतीति निरूपितम्। तस्यावरोहत आकाशादिभावः श्रूयते 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति । तत्र जीवस्याकाशादिरूपताऽऽपत्तिः तत्सादृश्यापत्तिर्वेति संशयः ॥

## अथ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

सू० तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥ आपादपरिसमाप्तेरवरोहप्रकारविषयां चिंतां प्रवर्तयितुं प्राक्सिद्धमर्थमनुवदति—पूर्वत्रेति । 'वायुर्भूत्वा धूमो भवती' त्यादिसामानाधिकरण्यस्य मुख्यत्वापवादकाभावसद्भावाभ्यां संशयमाह—तत्र जीवस्येति । भूत्वेति शब्दादिति । वायोः कर्मत्वनिर्देशेऽपि तद्भावापत्तिपरामर्शात्तथैव कर्मत्वे निर्दिष्टेऽपि आकाशेऽवरोहतां तद्भावापत्तिरवसीयते । आकाशवाय्वोः कर्मत्वनिर्देशश्शरीरभूतयोस्तयोरनुप्रवेशार्थत्वेन मुख्यतयोपपद्यते । 'वायुर्भूत्वा धूमो भवती' त्यादिसामानाधिकरण्यं तु शरीरशरीरिभावाभावे मुख्यतया नोपपद्यते। न चास्य मुख्यत्वे स्थानशब्दस्य मुख्यत्वे तृतीयशब्दसमभिव्याहारवत् किञ्चिद्बाधकमस्ति । अतः प्रथमचरमाहुत्योर्देवमनुष्यादिभाववदध्वन्याकाशादिभावस्यापि शरीरशरीरिभावत्वं युक्तम् । भूस्वर्गयोरिवाध्वनि भोगाभावात् शरीरग्रहणस्य निष्प्रयोजनत्वं सामानाधिकरण्यस्य मुख्यत्वे बाधकमिति चेत् । न । प्रयोजनाभावेन श्रुतपरित्यागायोगात् । न हि भूतानां सर्वत्र सुलभतया शरीरारंभकभूतसूक्ष्मसहितस्य गमनं निष्प्रयोजनमिति श्रुतं तत्परि-

---

पथो' रित्यनेन मार्गद्वयप्राप्तिसाधनभूतयोर्विद्याकर्मणोः परामर्शात् तयोरपि 'तद्य इत्थं विदुः' 'अथ य इमे ग्रामे' इति प्रकृतत्वात् । अतो नास्ति स्वातन्त्र्येण गतिर्भूतानामिति युज्यत एव तत्साधनकलापानुष्ठानप्रवृत्तिरिति ॥

इति विद्याधिकरणम् ॥ १४ ॥

सू ॥ **न तृतीये तथोपलब्धेः** ॥ १९ ॥ अत्र तिर्यग्यातनातमोभेदेन त्रिविधायामधोगतौ तृतीयेऽपि तमःस्थाने पूर्वयोरिव कदाचित्सुखं स्यादिति **पूर्वपक्षः** । 'नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चने' त्यादिस्मृत्या स्वतन्त्रः परमेश्वरः स्वद्वेषिणां सुखं नेच्छेत्तदिच्छां विना च किमपि न भवेदिति युक्त्या च तत्रेतरस्थानदृष्टान्तेन सुखोन्नयनस्य बाधितत्वात्तृतीये तमःस्थाने सुखलेशोऽपि नास्तीत्यर्थः ॥ इति **सिद्धान्तः** ॥ **सूत्रार्थस्तु तृतीये**=तमःस्थाने । **न**=न सुखमस्ति । कुतः । **तथोपलब्धेः**=तथाप्रतीतेरित्यर्थः ॥ **सू** ॥ **स्मर्यतेऽपि च लोके** ॥ २० ॥ अंधे तमसि सुखराहित्यं 'नान्धे तमसी' तिस्मृतिकर्त्रा **स्मर्यते च**=स्मृत्या च प्रतिपाद्यते । किंचैतत् लोकेऽपि लोकदृष्टव्याप्तिकानुमानेनापि सिद्धमित्यर्थः ॥

**सू** ॥ **दर्शनाच्च** ॥ २१ ॥'अपश्यत्त्रिविधान्ब्रह्मा साक्षादेव चतुर्मुखः' इति पाद्मे त्रिविधप्राणिवर्गस्य हिरण्यगर्भकर्तृकदर्शनविषयत्वप्रतिपादनाच्चेत्यर्थः । इदं सूत्रं न भाष्यान्तरेषु दृश्यते ॥

**सू** ॥ **तृतीये शब्दावरोधस्संशोकजस्य** ॥ २२ ॥ 'तृतीये' इत्यावर्तते । तृतीये तमसि स्थाने तत्रापि तृतीयेऽन्धे तमसि तद्विषये यः शब्दः तृतीयतमःस्वरूपप्रतिपादकशब्दः तेन अवरोधः प्राप्तिः । कस्य । **संशोकजस्य**=सम्यक्शोकजस्य मोहस्येति यावत् ॥ अतश्च तृतीये न सुखमित्यर्थः ॥

**सू** ॥ **स्मरणाच्च** ॥ २३ ॥ 'महातमस्त्रिधा प्रोक्त' मित्यादिना कौर्मे श्रवणादेव मूर्च्छादिप्रदत्वस्मरणाच्चेत्यर्थः । अतो न तृतीये तमसि स्थाने सुखलेशप्रसक्तिरिति सिद्धम् ॥ ॥ **इति न तृतीयाधिकरणम्** ॥ १५ ॥

**इति सूत्रार्थचन्द्रिकायामनिष्टादिकार्यधिकरणम्** ॥ ३ ॥

तत्र भूत्वेति शब्दादाकाशादिरूपत्वं जीवस्य ॥

इति प्राप्ते ब्रूमः–नावरोहतो जीवस्याकाशादिरूपताऽऽपत्तिः, किंतु तत्सादृश्यापत्तिः, तत्र सुखदुःखानुभवाभावात् । तदनुभवार्थं हि तत्तच्छरीरसंबन्धः । अन्यस्यान्यत्वानुपपत्तेश्च । तस्मात् तत्सादृश्यापत्तिरवरोहत इत्येवोपपद्यत इति निर्णयः ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

---

त्यज्यते । भोगाभावोऽप्यसिद्धः । भूस्वर्गयोरिवाऽध्वन्यऽपि भोगोपपत्तेः । न च वृक्षाग्रादिव स्वर्गात्पततां संमूर्छितकरणानां भोगो न संभवतीति वाच्यम् । न हीष्टापूर्तादिकारिणः स्वर्गे कर्मफलं भुक्त्वा पुनर्भूलोके ब्राह्मणादियोनिं प्राप्य कर्मार्जनाय प्राचीनकर्मशेषेणावरोहन्तो वृक्षाग्रादिव स्वर्गान्मूर्छिताः पतन्तीति कल्पयितुं युक्तम् । तथा सति यागादीनामनर्थफलत्वापत्तेः । 'सविज्ञानो भवति स विज्ञानमेवान्ववक्रामती' ति श्रुत्यन्तरे गतागतयोर्ज्ञानवत्त्वप्रतिपादनेन मूर्छितत्वकल्पनानुपपत्तेश्च । न च तत्तदभिमानिशरीरत्वेन स्थितानामाकाशादीनामवरोहतः प्रत्यपि शरीरत्वमनुपपन्नमिति वाच्यम् । परमेश्वरं प्रति शरीरभूतानामेव तेषामभिमानिदेवताः प्रतीव एतान्प्रत्यपि शरी-
त्तेरिति भावः । तत्र सुखदुःखेति । अभिमानिदेवताः प्रति भोगाश्रयाणामनुशयिनः प्रत्यपि भोगाश्रयत्वमनुपपन्नम् । युगपद्भोक्तृद्वयसमावेशे तयोः परस्परविरुद्धभोगार्थितायां शरीरोन्मथनप्रसंगादिति भावः । ननु भोगाभावेऽपि परमेश्वरं प्रतीव शरीरत्वं स्यादित्याशंक्याह–तदनुभवार्थं हीति । न तावदन्यभोगाश्रयनियमनार्थं तान्प्रति शरीरत्वम् । परमेश्वरस्येव तेषामन्तर्यामित्वाभावात् । तद्भोगार्थमपि न भवति चेत् स्वार्थतया परार्थतया वा तन्नियम्यत्वरहितानां तच्छरीरत्वं न संभवति । शरीरलक्षणाभावादिति भावः । नन्ववरोहतामाकाशादिशरीरत्वं तत्तदभिमानिदेवताभावेनैवास्त्वित्याशंक्याह–अन्यस्येति । सर्गाद्यकालमारभ्य आप्रलयमाकाशाभिमानिदेवताः तत्तत्कालविशेषेषु अवरोहद्भ्योऽन्या एव क्लृप्तास्सन्ति । ततोऽन्येषामवरोहतां तत्तादात्म्यं नोपपद्यत इति भावः । चकारेण बहूनामवरोहतामाकाशाद्यभिमानिदेवताभावानुपपत्तिस्समुच्चीयते । तत्सादृश्यापत्तिरिति । स्वर्गार्थकर्मक्षयानंतरममृतमयदेहे विलीने सूक्ष्मदेहमात्रदेहवेष्टितत्वेनावरोहतामाकाशादिभ्यः पृथगभिधानानर्हत्वं तत्सादृश्यमिति भावः । तस्मात्पितृमातृप्रवेशे पितृमातृभ्यामिवाकाशादिभिरप्यवरोहतां देहान्तरप्राप्तिनिमित्तकर्मोद्बोधितवासनामूलस्वाप्नज्ञानसदृशानभिव्यक्तज्ञानमात्रवतां स्वयं भोगरहितानां संश्लेषमात्रमिति स्थितम् ॥ इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

---

नयमणिमालायाम्

अथ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

सू० ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

व्योमादिरूपतास्य श्रवणादवरोहतो ग्राह्या । दिवि भुवि च रूपमयतो रूपौचित्याच्च मध्येऽपि ॥ १७४ ॥

मध्ये भोगाभावाद्रूपापेक्षा च नास्त्यस्य । अन्यस्य नान्यरूप्यं न युज्यते सदृशतास्य तद्भावः ॥ १७५ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

## अथ नातिचिराधिकरणम् ॥ ५ ॥

### ॥ सू ॥ नातिचिरेण विशेषात् ॥ २३ ॥

**अत्रावरोहन् जीवो विलम्बते न वेत्यनियमः, उत न विलम्बत एव इति संशयः ॥**

**तत्र प्रवर्षणानन्तरं व्रीह्यादिभावः श्रूयते 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' इति । प्रागेतस्मात् व्रीहियवादिभावादाकाशादौ विलम्बत्वरयोर्न नियमः ॥**

## अथ नातिचिराधिकरणम् ॥ ५ ॥

सू० ॥ नातिचिरेण विशेषात् ॥ २३ ॥ अनतिचिरावस्थाननियामकसत्त्वासत्त्वाभ्यां संशयमाह—अत्रेति । प्रागेतस्मादिति । यथा व्रीहियवादिष्ववस्थानमतिचिरमित्य 'तो वै खलु दुर्निष्प्रपतर' मिति वाक्यादवगम्यते एवमाकाशादिषु मेघान्तेषु नातिचिरमवस्थानमिति कुतश्चिन्नावगम्यते । अतस्तेषु चिरमचिरं वेत्यनियमः । न च व्रीह्यादिषु चिरावस्थानप्रतिपादनादेवाकाशादिष्वचिरावस्थानमवगम्यत इति वाच्यम् । व्रीह्यादिषु हि चिरावस्थाननियमो विधित्सितः । न तत्सत्तामात्रम् । चिरमचिरं वेत्यनियतस्यावस्थानस्य व्रीह्यादि[1]भावोक्त्यैव लब्धस्याविधेयत्वात् । तथा च विशिष्य व्रीह्यादिषु चिरावस्थाननियमप्रतिपादनसामर्थ्यादाकाशादिभ्यश्चिरावस्थाननियम एव व्यावर्तते । न त्वनियतं चिरावस्थानमपि । यथा 'वैखानसं पूर्वेऽहन्साम भवति षोडश्युत्तर' इति विशिष्यांगिरसां द्विरात्रस्योत्तरेऽहनि षोडशिग्रहनियमविधानसामर्थ्या 'दुत्तरेऽहन्द्विरात्रस्य गृह्यत' इति सामान्यवचनप्राप्तः षोडशिग्रहनियम एव द्विरात्रान्तरेभ्यो व्यावर्तते । न तु प्रकृतेरतिरात्रादनियतप्राप्तः षोडशिग्रहोऽपि । अत एव 'अर्धमन्तर्वेद्यर्धं बहिर्वेदी' ति

---

## सूत्रार्थचन्द्रिकायाम्

### अथ तत्साभाव्यापत्त्यधिकरणम् ॥ ४ ॥

सू ॥ तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

**भगवत्पादमते,** पूर्वमिष्टादिकारिणोऽवरोहन्तीत्युक्तम् । अत्र तेषामवरोहप्रकारश्चिन्त्यते । श्रूयते ह्यवरोहश्रुतिः—'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति । तत्र किं स्वर्गादवरोहन्तो जीवा आकाशादिस्वरूपं प्रतिपद्यन्ते उत तत्साम्यमिति **संदेहः** । आकाशादिस्वरूपमिति **पूर्वपक्षः** । **सिद्धान्तस्तु, तत्साभाव्यापत्तिः**=जीवानां तैराकाशादिभिस्साम्यप्राप्तिः । समानो भावो रूपं येषां तेषां भावस्साभाव्यं सादृश्यमिति विग्रहः । कुतः । **उपपत्तेः**=चन्द्रलोकं गतानामनुशयिनां प्रवृत्तफलकर्मक्षयदर्शनजनितशोकाग्निना दह्यमानमिदं शरीरं करकादिवद्विलीयमानमाकाशसमं भवतीत्येतदुपपद्यते । न ह्यन्यस्यान्यभावो मुख्य उपपद्यते । तस्मात्सादृश्यमेव प्रतिपद्यन्त इति सिद्धम् ॥ इति ॥ सूत्रमपि व्याख्यातम् ॥

**श्रीकण्ठमते** तथा **रामानुजमते** च नास्ति विशेषः पूर्वस्मात् ॥

**आनन्दतीर्थमते,** अत्र धूमादिभावः कर्मिणो धूमादिदेवतैक्यं वा तत्पदप्राप्तिर्वेति **संदेहः** । 'धूमो भूत्वाभ्रं भवती' त्यादिश्रुत्या धूमादिदेवतैक्यं धूमादिभाव इति **पूर्वपक्षः** । धूमादिषु प्रविश्य तद्गतौ गतिस्तत्स्थितौ स्थितिरित्यादिरेव तद्भावापत्तिः । अन्यस्यान्यभावायोगादिति **सिद्धान्तः** । **सूत्रार्थस्तु,** । कर्मिणः **तत्स्वाभाव्यापत्तिः**=तस्य धूमादिदेवस्य स्वाभाव्यस्य स्वभावसदृशस्वभावस्य प्राप्तिरेव । न तदैक्यं तत्पदप्राप्तिर्वा । कुतः । **उपपत्तेः**=अन्यस्यान्यैक्यादृष्टयास्यैवार्थस्य युक्तत्वादित्यर्थः ॥ १६ ॥ ॥ **इति तत्स्वाभाव्यापत्त्यधिकरणम्** ॥ ४ ॥

---

(१) 'दिष्ववस्थानोक्त्यैव लब्धत्वेन तस्याविधेयत्वात्' इति ख. पाठः ।

इति प्राप्ते ब्रूमः—व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति जीवः। कथम्? व्रीह्यादिभावानन्तरं 'अतो वै खलु दुर्निष्प्रपतरम्' इति व्रीह्यादिभावान्निर्गमनं दुश्शकमिति हि श्रूयते। अतो व्रीह्यादौ विलम्बात् अन्यत्र त्वरेत्य-

यूपावटमानदेशविधाने अन्तराळलक्षणां परित्यज्या 'धर्मन्तर्वेदी' त्येतावन्मात्रमन्तर्वेद्येकदेशं यूपार्धांगत्वेन विधत्ते। अर्धे तत्र मीयमाने अर्धांतरं बहिरिति लभ्यते। अतो'ऽर्धं बहिर्वेदी' त्यनुवाद इति न वाक्यभेद इति पूर्वपक्षे 'अर्धमन्तर्वेदी' ति नियमविधानादर्धान्तरादन्तर्वेदिनियम एव व्यावर्तते न त्वनियतोऽप्यन्तर्वेदिदेशः। अतोऽर्धान्तरस्यान्तर्बहिर्वा मानं स्यादिति तत्परिहाराय 'अर्धं बहिर्वेदी' त्यस्यापि विधायकत्वं स्यादिति वाक्यभेदः 'तथा यूपस्य वेदि' रित्यधिकरणे प्रसंजितः। न च 'अतो दुर्निष्प्रपतरमेवे' ति माभून्नियमः, अत एव 'दुर्निष्प्रपतर' मिति परिसंख्यास्तु, तथा चाकाशादिभ्यश्चिरावस्थानं व्यावर्तत इति वाच्यम्। आकाशादिषु व्रीह्यादिषु चिरावस्थानस्य नियतप्राप्तौ हि परिसंख्या युज्यते। न तस्य कुतश्चित्प्रसक्तिरस्ति। चिरमचिरं वेति नियमाभावस्यावस्थानोक्त्या प्रसक्तिरस्तीत्यनियमप्राप्तौ नियम एवायम्। न च तथापि ष्प्रपतर' मिति तरप्प्रत्ययार्थस्यातिशयस्य प्रतियोग्याकांक्षायां प्रागनुक्रांतानामाकाशादीनां बुद्धिसन्निधानात्तत्प्रतियोगित्वेनान्वयः स्यात्। तथा च व्रीह्यादिष्वाकाशापेक्षया चिरमवस्थानोक्तावाकाशादिष्ववस्थानस्य तदपेक्षयाल्पकालत्वं पर्यवस्यतीति वाच्यम्। यतो दुर्निष्प्रपतशब्दात्तरप्प्रत्ययो न दृश्यते। छांदसेनैकस्य तकारस्य लोपेन तत्र तरप्प्रत्ययसमर्थने छांदसेन रेफोपजननेन तदभावोऽपि समर्थयितुं शक्यते। 'छंदसि गत्यर्थेभ्य' इति (पा० ३-३-१२९) सूत्रेण खलर्थे छांदसे युचि प्रत्यये सति दुर्निष्प्रपतनमिति रूपसिद्धौ नकारस्य छांदसेन वर्णव्यत्ययेनापि तदभावः समर्थयितुं शक्यते। तस्माद्यथा योषायामनुशयिनां गर्भरूपेणावस्थानमनियतकालं चिरमचिरं वेति विशेषाम्नानाभावात्स्रावपातावप्रसवकालप्रसवभेददर्शनाच्च एवमाकाशादिष्वप्यवस्थानमनियतकालम्। नियमकारिणश्शास्त्रस्याभावादित्यभिप्रायः। अन्यत्र त्वरेत्यवगमादिति। अयमाशयः। दुरुपपदादुपसृष्टात्पत्लृधातोः खलर्थे डप्रत्यये सति दुर्निष्प्रपमिति रूपसिद्धौ तस्मात्तरप्प्रत्यये दुर्निष्प्रपतरमिति रूपसिद्धिः। 'अन्येष्वपि दृश्यत' इति जनेरुपपदान्तरेषु डप्रत्ययविधायकसूत्रे 'अन्येभ्योऽपि दृश्यत इति वक्तव्य' मिति वार्तिककृता धात्वन्तरेभ्योऽपि डप्रत्ययस्यानुशिष्टत्वात्। तत्र दृशिग्रहणं सर्वोपाधिव्यभिचारार्थमिति वृत्तिकारेणोक्ततया 'कृत्यल्युटो बहुल' मिति (पा० ३-३-११३.) सूत्रे बहुलग्रहणादन्येऽपि कृतः प्राप्तमभिधेयं व्यभिचरन्तीति तेनैवोक्ततया च तस्य डप्रत्ययस्य खलर्थवृत्तित्वोपपत्तेश्च। एवं वर्ण[2]व्यत्ययवर्णलोपवर्णोपजनवर्णविकारानन्तरेण शब्दस्वरूपनिष्पत्तिसंभवे तेषामन्यतमो न कल्पनीयः। तथा चातिशायनिकप्रत्ययसामर्थ्यादाकाशादिष्ववस्थानमतिचिरमित्यवगम्यत इति। एतेन 'अतो वै खलु दुर्निष्प्रपतर' मित्यत्रातश्शब्देन सर्वनाम्ना संकोचाभावादाकाशादिसर्वपरामर्शादाकाशादिष्वप्यतिचिरमवस्थानमित्यपि शंका निरस्ता। आतिशयिनिकप्रत्ययार्थप्रतियोगितयाकाशादीनामन्वयितयातश्शब्दस्याव्यवहितैकवाक्योपात्तव्रीह्यादिमात्रपरामर्शित्वस्य वक्तव्यत्वात् व्रीह्यादिभ्यो दुर्निष्प्रपतरत्वोक्तिसाम-

(१) 'तत उपरि तरप्प्रत्ययेन दुर्निष्प्रपतरमिति शब्दनिष्पत्तिः' इति ख० पाठः। (२) 'वर्णव्यत्यये' ति पदं ख० पुस्तके न दृश्यते।

वगमादाकाशादौ न विलम्बते जीव इति ॥

## इति नातिचिराधिकरणम् ॥ ५ ॥

## अथ अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

## ॥ सू ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

इह व्रीह्यादावपि जीवस्य संश्लेषमात्रम्, उत जन्म ! इति संशये व्रीह्यादिरूपेण 'जायन्ते' इति श्रवणात् तस्य व्रीह्यादिजन्म ॥

---

ध्यादाकाशादिभ्योऽपि दुर्निष्प्रपतरत्वमस्तीति तेष्वपि चिरावस्थानावगमात् सूत्रे 'नातिचिरेणे' त्युक्तम् । व्रीह्यादिषु यावान्विलंबस्तावानाकाशादिषु नास्तीत्येतावन्मात्रमिह सूत्रकृतोक्तम् । उभयत्राऽपि कालेयत्तायां व्यवस्थापकानि श्रुतिस्मृत्यादिवचनानि सन्ति चेत्तेभ्य एव सावगन्तव्या ॥ इति नातिचिराधिकरणम् ॥ ५ ॥

## अथ अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

सू । अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥ अवरोहतामाकाशादिभावस्तत्संश्लेषमात्रं न तु ताद्रूप्यं तच्च नातिचिरमित्याकाशादिमेघांतेषूभयं सिद्धम् । तदनन्तरपठितव्रीह्यादिभावस्त्वतिचिरमित्यपि विशेषस्सिद्धः । तर्हि तथैव व्रीह्यादिभावस्ताद्रूप्यमित्यपि विशेषोऽस्त्विति दृष्टान्तसंगतया प्रत्यवस्थानमभिप्रेत्य जायंत इति जन्मसंकीर्तनात् जन्मनिमित्तकर्मासंकीर्तनाच्च संशयमाह—इहेति । जायन्त इति श्रवणादिति । ननु 'मेघो भूत्वा प्रवर्षती'ति प्रवर्षणकर्तृत्वश्रवणेऽपि यथा न मेघताद्रूप्यं तद्वदिहापि व्रीह्यादयो जायंत इति श्रवणेऽपि व्रीह्यादिताद्रूप्यमिति किं न स्यात् । मैवम् । प्रवर्षतीत्येतदाचारार्थक्विबन्ततया योजयितुं शक्यम् । अस्ति च वृष्टितः पृथगभिधानान-

---

## नयमणिमालायाम् अथ नातिचिराधिकरणम् ॥ ५ ॥

सू० ॥ नातिचिरेण विशेषात् ॥ २३ ॥

आकाशादावस्य स्थितिरनियतकालभाक्तु स्यात् । आम्नायते हि कश्चिच्चिरमचिरं वेति न विशेषः ॥ १७६ ॥
व्रीह्यादिभ्यो दुर्निष्प्रपततरत्वोक्तिसामर्थ्यात् । अवसीयते ततः प्रागचिरं व्योमाद्यवस्थानम् ॥ १७७ ॥

## इति नातिचिराधिकरणम् ॥ ५ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ नातिचिराधिकरणम् ॥ ५ ॥

सू ॥ नातिचिरेण विशेषात् ॥ २३ ॥

**भगवत्पादमते,** पूर्वमाकाशादिषु वर्षान्तेषु पूर्वपूर्वसादृश्यानन्तरमुत्तरोत्तरसादृश्यमित्युक्तम् । तत्र किं जीवः चिरकालमेव सादृश्येनावस्थाय अपरसादृश्यं गच्छति उताल्पमल्पमिति **संदेहः** । नियामकाभावादनियम इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** जीवो **नातिचिरेण**=अल्पमल्पं कालमेवाकाशादिवर्षान्तैः सादृश्येनावस्थाय वर्षधाराद्वारा पृथिवीं प्रविशति । कुतः । व्रीह्यादिभावापत्त्यनन्तरं 'अतो वै खलु दुर्निष्प्रपतरम्' इति विशेषात् ततः पूर्वं सुनिष्प्रतरत्वं प्रतीयते। जीवस्य व्रीह्याकाशभावे विना स्थूलशरीरं लिंगशरीरमात्रेण सुखदुःखोपभोगासंभवात्तदानीं प्रतीयमाने सुखे चिरकालावस्थानरूपे एव भवतः । न मुख्ये । अतो व्रीह्यादिप्रवेशात्पूर्वमल्पमल्पमेव कालं तत्सादृश्येनावस्थानमिति सिद्धमिति ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च अत्रापि नास्ति वैलक्षण्यं शांकरमतादिति वेद्यम् ॥

**आनन्दतीर्थमते,** अत्र स्वर्गान्निर्गतस्य कर्मिणः चिरेण देहप्राप्तिर्वा उताचिरेणेति **संदेहे** चिरेणैव देहं प्राप्नोतीतिपूर्वपक्षः ॥ 'तद्य इह रमणीयचरणा' इति विशेषवचनादचिरेणैव कर्मी स्वर्गादवरूढो देहं प्राप्नोतीति **सिद्धान्तः** ॥ सूत्रार्थोऽपि व्याख्यातः ॥ १७ ॥ ॥ इति नातिचिराधिकरणम् ॥ ५ ॥

इति प्राप्ते ब्रूमः—अन्यजीवाधिष्ठिते व्रीह्यादौ जीवस्य संश्लेषमात्रम् । आकाशादाविवावरोहतस्तत्र जननहेतुसंकीर्तनविरहिताभिलापात् 'जायन्ते' इति श्रुतिर्गौणी । यत्र ब्राह्मणादिजन्मास्ति तत्र 'रमणीयचरणाः कपूयचरणाः' इति हेतुरभिलप्यते । अतो ब्राह्मणादावेवास्य जन्माभिलापादन्यत्रास्य संबन्धमात्रमिति निर्णयः ॥

## ॥ सू ॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

अवरोहतः पुरुषस्य पूर्वानुष्ठितयागादिष्वग्नीषोमीयादिर्हिंसामिश्रत्वादशुद्धं कर्मेति तत्फलभोगाय व्रीह्यादिष्वप्युत्पत्तिरस्त्विति चेत्—न,

हि वृष्टिसंश्लिष्टे भूतसूक्ष्मवेष्टितेऽनुशयिनि वृष्टिशब्दप्रयोगः । 'तस्या आहुतेर्वर्षं संभवति' इति । जायन्त इति शब्दस्तु व्रीह्याद्यात्मना जननमेवाभिधत्ते इति वैषम्यात् । न च स्वर्गादवरोहतां पापफलस्थावरजन्मानुपपत्तिः । श्वसूकरादिजन्मवत् स्थावरजन्मनोऽप्युपपत्तेः । न च स्थावरजन्मनिमित्तकर्मश्रवणात्तज्जन्मश्रवणमन्यथा नेयमिति वाच्यम् । ...पपत्त्यर्थमश्रुतकर्मकल्पनौचित्येन तदश्रवणमात्रेण श्रुतपरित्यागायोगात् । एतेन व्रीह्यादिभावो न ताद्रूप्येण जन्म जन्मनिमित्तकर्मसंकीर्तनरहितत्वान्मेघादिभाववदिति सामान्यतो दृष्टानुमानमपि निरस्तम् । जननहेतुसंकीर्तनेति । कपूयचरणाभिव्यक्तेरग्रे संकीर्तनात् श्वादियोनिप्राप्तिवत् व्रीह्यादिजन्मप्राप्तेस्तन्निमित्तत्वं वक्तुं न शक्यते । न च प्राक्संकीर्तितस्येष्टादिकर्मणोऽभिव्यक्तस्य स्वर्गे दत्तफलस्य शेषानुवृत्तिसद्भावेऽपि तस्योत्तमजन्मप्राप्तिहेतोः पापफलस्थावरजन्मनिमित्तत्वमस्ति । न चात्र स्थावरजन्मनिमित्तस्य कस्यचित्कर्मणस्संकीर्तनमस्ति । तस्मात्स्थावरजन्मनिमित्तकर्माभिव्यक्तिव्यतिरेकावगमादाकाशादिष्विव व्रीह्यादिष्वपि संश्लेषमात्रमिति भावः । ननु यागादिकर्मशेषफलमेवास्तु स्थावरजन्म यागादिकर्मणो हिंसादियुक्तत्वेन पापमिश्रितत्वादिति शंकानिराकरणार्थं सूत्रम्—अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥ हिंसामिश्रत्वादिति । नात्र पदाहवनीयादिवदुत्सर्गापवादन्यायः प्रवर्तते । अविरोधात् । पशुहिंसाविधिर्हि तस्याः क्रतूपकारकत्वं बोधयति । 'न हिंस्या'दिति निषेधस्तु प्रत्यवायफलकत्वम् । न चैकस्येष्टानिष्टफलकत्वं नोपपद्यते । येन यागीयहिंसाशास्त्रस्य हिंसानिषेधशास्त्रस्य चाविरोधाय विषयव्यवस्था कल्प्येत । दृश्यते हि घृतपानादेः पुष्ट्यादिरूपेष्टहेतुत्वं मेहादिरूपानिष्टहेतुत्वं च । किमन्यत्रोदाहरणगवेषणया । यागादावेव श्रुतिप्राप्तस्वर्गादीष्टहेतुत्वं प्रत्यक्षादिप्राप्ततात्कालिकक्लेशरूपानिष्टहेतुत्वं च सर्वसम्प्रतिपन्नम् । तद्वद्यागीयहिंसादिषु श्रुतिद्वयप्राप्तेष्टानिष्टहेतुत्वसमावेशः स्यात् । को विरोधः । अथोच्येत यागीयहिंसायां विधितः प्रवृत्तेर्न सा निषेधशास्त्रस्य विषयः । तस्य रागप्राप्तविषयत्वादिति । नैतद्युक्तम् । यागीयहिंसायामपि रागत एव प्रवृत्तेः । न हि विधिसहस्रमपीष्टसाधनताबोधजननद्वारा रागमनुत्पाद्य पुरुषं प्रवर्तयितुमीष्टे । जैमिनिना च तृतीयाध्याये 'षट्त्रिंशत्प्रक्रमा प्राचि चतुर्विंशतिरग्रेण त्रिंशज्जघनेने' ति विहिता सौमिकी महावेदिः केवलप्रधानार्था । 'इयति शक्ष्यामहे' इति तद्वाक्यशेषे इयति एतावति भागे कर्तुं शक्ष्याम इत्यर्थके तुमुन्प्रत्ययार्थचिकीर्षासंयोगात् न[1] चिकीर्षांगप्रधानार्था अंगानामीप्सितफलसाधनत्वाभावेनाचिकीर्षितत्वादिति

(१) 'न लङ्गप्रधानार्था' इति. ख. पाठः ।

श्रूयते हि 'हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति' 'न वा उ वेतन्म्रियसे न रिष्यसि' इति पशुहिंसाया अहिंसात्वम् । ततो न तत्प्राप्तिरस्ति ॥

पूर्वपक्षं कृत्वा 'तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्या' दिति सूत्रेण सकलांगयुक्ते फलश्रुतेः सर्वत्र प्रधानेऽङ्गकलापे च चिकीर्षास्तीत्यंगानामपि चिकीर्षितत्वाविशेषादंगप्रधानार्थी महावेदिरिति सिद्धांतयता अङ्गेष्वपि रागत एव प्रवृत्तिरिति स्थापिता । तस्माद्धिंसादिपापमिश्रयागादिकर्मशेषतः स्थावरजन्म संभवतीत्याशयः । 'हिरण्यशरीर' इत्यादिः क्रतौ संज्ञप्तस्य पशोः स्वर्गप्राप्तिप्रतिपादकोऽर्थवादः । 'न वा उ वेत' दित्यादिः तस्य मृतिहिंसाभाववबोधको मंत्रः । तत्र वै इति प्रसिद्धौ । उ इत्यवधारणे । एतदिदानीमित्यर्थः । हे पशो त्वं खलु इदानीं नैव म्रियसे नापि हिंस्यसे इत्यर्थः । अहिंसात्वमिति ।[1] क्रतौ पशुसंज्ञपनस्य पापयोनिविमोचनपूर्वकं स्वर्गप्रापकत्वेन तद्रक्षणरूपत्वाच्चिकित्सककृतव्रणदाहच्छेदादिवन्न हिंसात्वमिति न तत्र 'न हिंस्या' दिति निषेधस्पर्शः । अतो न यागस्य पापमिश्रत्वमिति भावः । इदमत्र चिंत्यते । 'हिरण्यशरीर' इत्याद्यर्थवादार्थे बाधकाभावात् क्रतौ संज्ञप्तस्य पशोः स्वर्गप्राप्तिरस्तु नाम । संज्ञपनस्य स्वर्गप्राप्तिसाधनत्वात्तदहिंसात्वेन मंत्रोऽपि स्तौतु नाम । तावता कथं पशुप्राणवियोजनरूपं तन्मरणोद्देश्यकमरणानुकूलव्यापारत्वे हिंसालक्षणे सत्यपि अहिंसा स्यात् । न च तद्रक्षणरूपत्वादहिंसा । व्रणदाहच्छेदयोर्दाहच्छेदरूपत्वेऽपि व्रणिरक्षणत्ववत्पशुप्राणविमोचनरूपस्य संज्ञपनस्य हिंसात्वेऽपि तद्रक्षणत्वोपपत्तेः 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्य' इतिश्रुतौ तीर्थशब्दोक्तयज्ञाद्यर्थसंज्ञपनेऽपि हिंसात्वमभ्युपगम्यैव तत्पर्युदासाच्च । असार्वत्रिकश्चायं परिहारः । न खलु सौत्रामण्यां वर्णत्रयेऽपि निषिद्धस्पर्शाघ्राणादिकायाः पैष्ट्यास्सुरायाः ग्रहणं न ग्रहणमिति वा पानं न पानमिति वा वक्तुं शक्यम् । नाप्यश्वमेधे राजानुज्ञयाश्वसंरक्षकैः क्रियमाणमश्वमेधविषयमन्त्रब्राह्मणकल्पादिवेदिनां ब्राह्मणानामब्राह्मणानाञ्चाभ्यवहार्यस्याच्छिद्यहरणं परस्वहरणं न भवतीति वक्तुं शक्यम् । नापि वामदेव्योपासकस्य प्रार्थयमानसर्वयोषिदपरिहरणं तत्संगतिर्न भवतीति वक्तुं शक्यम् । नापि संस्थिते पडहे 'मध्वाशयेद्घृतं वे' ति द्वादशाहांगत्वेन विहितं 'मधु न दीक्षितो ब्रह्मचारित्वात् ।' ( जै० १०-६-३२ ) 'प्राश्येत वा यज्ञार्थत्वात्' ( जै० १०-६-३३ ) इति दाशमिकाधिकरणे यजमानतया ब्रह्मचर्ये सत्यपि सत्रात्मकद्वादशाहे ऋत्विक्कर्तव्यत्वेन स्थापितं मध्वशनं ब्रह्मचारिणां निषिद्धं मध्वशनं न भवतीति वक्तुं शक्यम् । अतो 'न शब्दा' दिति सूत्रांशेनान्य एव शंकायाः परिहारो विवक्षितः । स इत्थम् । 'न हिंस्या' दिति निषेधवाक्ये पुरुषार्थैव हिंसा धातुनानूद्यते न क्रत्वर्थापि । कर्तुराख्यातवाच्यत्वपक्षे समानपदश्रुत्या ( समान[2]पदोपात्त ) हिंसायास्तच्छेषत्वप्रतीतेः तस्याख्यातार्थभावनाक्षेप्यत्वपक्षेऽपि तदाक्षिप्तकर्तृशेषत्वप्रतीतेः । नात्र क्रतोर्वाचकं किञ्चिदस्ति । येन 'अथातोऽग्निमग्निष्टोमेनानुयजन्ती'त्यनारभ्याधीते वाक्ये चित्याग्नेर्यजिशब्दोक्तयागशेषत्ववदस्याः क्रतुशेषत्वमवगम्येत । नापि क्रतोराक्षेपकं किंचिदस्ति । येन पर्णताया जुह्वाक्षिप्तक्रतुशेषत्ववदस्याः क्रतुशेषत्वमवगम्येत । न च प्रकरणे पाठो[3]ऽस्ति । येन 'नानृतं-

(१) 'भाक्तप्रतिषेधको' इति ख० पाठः । (२) 'एतद्रेखांकितं वाक्यं ख० पुस्तके नास्ति । (३) प्रकरणेन क्रतोर्विपरिवृत्तिरस्ति । येन इति ख० पाठः ।

वदे' दिति दर्शपूर्णमासप्रकरणाम्नातवाक्येऽनूद्यमानस्यानृतवदनस्येव क्रत्वर्थप्रतीतिर्भवेत् । तस्मादिह हिंसिधातुनानुवादः पुरुषार्थहिंसाया इति तस्या एव निषेधो न क्रत्वर्थायाः । ननु तथापि हिंसिधातोः क्रत्वर्थपुरुषार्थहिंसाद्वयसाधारण्येन शब्दशक्तिबलादुपस्थितं हिंसाद्वयमप्यनूद्य निषिद्ध्यतामिति चेन्नैतन्न्याय्यम् । आख्यातवाच्यत्वेन वा तद्वाच्यभावनाक्षेप्यत्वेन वोपस्थितस्य पुरुषस्य शेषभूताया हिंसायाश्शीघ्रोपस्थितिकतया तन्निषेधेन चरितार्थस्याहिंसावाक्यस्य कल्पनीयविलंबोपस्थितिकक्रतुशेषहिंसानिषेधकत्वस्यापि कल्पनायोगात् । ननु शब्दशक्तिसाम्येऽपि शीघ्रोपस्थितिकस्यैव शक्यस्य वाक्यार्थान्वयो न विलंबितोपस्थितिकस्येति वैषम्याभ्युपगमे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' त्यत्र पूर्णमासपदेनोत्पत्तिवाक्यश्रुतपौर्णमासीकालिकत्वयोराग्नेयाग्नीषोमीययागयोरेव झटिति प्रवृत्तिनिमित्तावगत्या शीघ्रोपस्थितिकयोः फलसम्बन्धः स्यात् । उपांशुयाजस्य तु पौर्णमासीकर्तव्याग्नेयाग्नीषोमीययागद्वयान्तराले विधानादर्थसिद्धपौर्णमासी कालस्य झटिति प्रवृत्तिनिमित्तानवगत्या विलंबितोपस्थितिकस्य फलान्वयो न स्यादिति चेत्सत्यम् । आग्नेयाग्नीषोमीयवदुपांशुयाजस्यापि श्रुतपौर्णमासीकालत्वेन झटिति प्रवृत्तिनिमित्तावगत्या शीघ्रोपस्थितिकत्वाविशेषेण फलान्वयसिद्ध्यर्थमेव 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यज' न्नित्याहत्य पौर्णमासीकालविधानमन्यदाद्रियते । एतदेवास्य विधानस्य प्रयोजनमुपांशुयाजाधिकरणे 'प्रायेवचनाच्चे' ति सूत्रेण वार्तिकेन च स्पष्टीकृतम् । तत्र ह्यधिकरणे विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाये' ति त्रयाणां यागानां विधयः । अन्तराळवाक्यं तु तत्समुदायानुवादः विद्वद्वाक्यवदिति पूर्वपक्षनिराकरणार्थं गुणसूत्रं 'प्रायेवचनादि' ति । 'शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीया' वित्युपांशुयाजस्य प्रधानप्रायपाठात्प्राधान्यावगतेः विष्ण्वादिवाक्यैस्त्रयाणां यागानामुपांशुयाजशब्दपरामृष्टानां विधावुपांशुयाजमात्रप्राधान्यावगतिबाधप्रसंगात् अन्तरावाक्यविधेय एक एवोपांशुयाजः तत्तदर्थवादा विष्ण्वादिवाक्यानीति सूत्रस्यास्य भाष्ये तात्पर्यमुक्तम् । कथं यागत्रयविधिपक्षे तत्प्राधान्यबाधः स्यादित्याशंक्योपपादितं वार्तिके—'विष्णुप्रजापत्यग्नीषोमदेवत्ययागत्रयविधिपक्षे 'तावब्रूतामग्नीषोमा' वित्यादिनाग्नीषोमदैवत्यस्यैव यागस्य पौर्णमासीविधिरिति स्यात् । तथा च तस्यैव विद्वद्वाक्यफलवाक्यस्थपौर्णमासीपदगृहीतस्य फलसंबंधेन प्राधान्यं सिद्ध्येत् । न तु तदगृहीतयोः विष्णुप्रजापतिदेवत्ययागयोरन्तरावाक्येनैकस्यैव यागस्य विधिः तत्रैव शाखाभेदेनाम्नातैर्याज्यानुवाक्यायुगलैः प्रापिता विष्ण्वादिदेवता विकल्प्यन्त' इति । सिद्धान्तपक्षे तु 'विष्णुप्रजापतिदेवत्यस्याप्येकत्वेनाग्नीषोमोपलक्षितत्वानपायात् उपांशुयाजसामान्यस्य पौर्णमासीकालसम्बन्धलाभेन सिद्ध्यति प्राधान्य' मिति । अनेन पौर्णमासीविधिनैव लभ्यः फलसंबंधो नान्तरालविधिलभ्य इत्याशयः स्पष्ट एव । अन्यथा विष्णुप्रजापतिदेवत्ययोराहत्य पौर्णमासीविध्यभावेऽपि अन्तरालकालतयार्थप्राप्तपौर्णमासीसंबंधेनैव फलविधिगृहीतयोः प्राधान्यं सिद्ध्येदिति तत्प्राधान्यावगतिबाधप्रसंगदूषणमसमञ्जसं स्यात् । न त्वन्तरावाक्यं यत्रयागसमुदायानुवादकमिति पूर्वपक्षे अन्तराले यागविधायकं किञ्चि-

---

(१) ' फलान्वयात् ' इति. ख. पाठः ।

द्वाक्यं नास्तीति विष्णुप्रजापतिदेवत्ययागयोः फलसंवन्धार्थं पौर्णमासीविधिरेव शरणीकरणीयः। अतो यागभेदे तस्याग्नीषोमीयमात्रविषयत्वेन तयोः फलसंवन्धो न सिध्येदिति तद्दूषणसामञ्जस्यमिति चेन्न। अन्तरावाक्यमनुवाद इति पक्षेऽपि जामितादोषनिराकरणार्थमन्तराश्रुतेरनालंवनत्वपरिहारार्थं च त्रिष्वऽपि यागेष्वन्तरालप्राप्तेरवश्यवक्तव्यत्वात्। अत एव भवदेवेन उपांशुयाजाधिकरणपूर्वपक्षे 'कथमन्तरालवाक्यस्य सर्वात्मनानुवादकत्वमन्तरालस्यैवाप्राप्तस्य विधेयत्वा'दित्याशंक्य जामितादोषोपक्रमेण विष्ण्वादिवाक्येषु प्रत्येकमजामित्वानुवादेन च तेष्वन्तरालप्राप्तिमुक्त्वैव भवति चानुवादतोऽपि स्थाननियमः यथा 'न गिरा गिरेति ब्रूया' दिति गिरापदनिषेधानुवादवलादिरापदस्य गिरापदस्थाननिवेशित्व' मिति सदृष्टान्तमुपपादितम्। केचित्तु 'विष्ण्वादिवाक्यानि यागविधय' इति पक्षे प्राधान्यबाधमन्यथा समर्थयन्ते। विष्ण्वादिवाक्येषु तव्यप्रत्ययात्प्रथमं गुणकर्मत्वधीर्भवति कर्मान्तरानुपयोगानुसंधानेन त्वर्थकर्मतावगन्तव्या। अतश्शीघ्रावगतार्थकर्मणामेवाधिकारानुप्रवेशादुपांशुयाजस्य तदनुप्रवेशेन प्राधान्यावगतिर्विहन्येत। अन्तरावाक्यं यागविधायकमिति पक्षे तु तत्र तव्यप्रत्ययाभावेन गुणकर्मत्वधीकृतविलंबाप्रसक्तेराग्नेयादिवदेवाधिकारानुप्रवेशात्प्राधान्यावगतिर्न विहन्यत इति तेषामपि पदार्थप्रतीतिशैघ्र्यमान्द्यकृतवाक्यार्थानुप्रवेशतदननुप्रवेशन्याय एवोपजीव्यः इति प्रकृतोपयुक्ते तस्मिन्न्याये न विवादः। अपि च। यदर्थतया यत्प्रसक्तं तस्य निषेधोऽपि तदर्थः इति न्यायमर्यादा। अन्यथाप्रसक्तप्रतिषेधत्वानांजस्यात्। अत एव दर्शपूर्णमासप्रकरणाम्नातो 'नानृतं वदे' दिति निषेधः प्रकरणात्क्रत्वर्थो भवन् क्रत्वर्थस्यैवानृतवदनस्य निषेधः। तेन क्रतूपयोगिद्रव्यादिसंपादनार्थानृतवदने क्रत्वर्थनिषेधातिक्रमणात् क्रतोर्वैगुण्यं क्रतुमध्येऽपि पुरुषार्थानृतवदने न क्रतोर्वैगुण्यम्। 'यो नाम क्रतुमध्यस्थः कलंजादीनि भक्षयेत्। न क्रतोस्तस्य वैगुण्यं यथा चोदितसिद्धित' इति न्यायात्। किं तु पुरुषस्य प्रत्यवायमात्रम्। क्रतुप्रकरणाम्नातोऽपि यो निषेधः क्रत्वर्थस्य निषेधो भवितुं नार्हति नासौ क्रत्वर्थः। यथा दर्शपूर्णमासप्रकरणाम्नातो 'मलवद्वाससा न संवदेत न सहासीत नास्या अन्नमद्या' दिति निषेधः। यद्यपि पत्न्या सह संवादस्सहासनश्चेत्युभयं क्रत्वर्थतया अर्थतः प्राप्नोति तथाऽपि मलवद्वाससा तया न प्राप्नोति। 'यस्य व्रत्येहन्पत्न्यनालंभुका स्यात्तामवरुध्य यजेते' ति मलवद्वाससः क्रतौ सर्वात्मना दासीकरणरूपस्यावरोधस्य विहितत्वात्। तदन्नादनं तु 'अथो खल्वाहुरभ्यंजनं वाव स्त्रिया अन्नमभ्यंजनमेव न प्रतिगृह्य' मित्यभ्यंजनशब्दोक्ततत्संगतिरूपतया व्याख्यातं क्रत्वर्थत्वेन कथमपि न प्राप्नोति। एवं सति 'न हिंस्या' दिति निषेधः क्रत्वर्थपुरुषार्थोभयविधाहिंसानिषेधरूपत्वे स्वयमपि क्रत्वर्थपुरुषार्थोभयरूपो भवन् स्वस्य क्रतुपुरुषसंवन्धबोधनार्थं वाक्यं भिन्द्यात्। एवं 'लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषते' ति क्रतुपुरुषोभयसम्बन्धबोधने वाक्यभेदः स्यादिति तत्परिहारार्थमेवाश्वप्रतिग्रहेष्टिसोमवमनेष्ट्यादिवाक्येषु 'योऽश्वं प्रतिगृह्णाति' 'यस्सोमं वमती' ति निमित्तसमर्पकशब्दानां लौकिकवैदिकसाधारण्येनाश्वप्रतिग्रहसोमवमनादिसामान्यपरत्वं त्यक्तम्। एवं हिंसानिषेधरीत्यैव सुरादिनिषेधानामपि पुरुषार्थनिषेधरूपत्वेन क्रत्वर्थसुराग्रहणाद्यस्पर्शित्वं व्याख्यातम्। इत्थमहिंसादिवाक्यानां वैधहिंसाद्यस्पर्शित्वं मीमांसान्यायपरिशीलनशालिनामतिस्पष्टमिति तदप्रदर्श्य वैधहिंसामात्रे नेयं हिंसेति भाष्य-

उपपत्त्यन्तरमाह—

॥ सू ॥ रेतस्सिग्योगोऽथ ॥ २६ ॥

'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इत्यनेन रेतस्सिचा योगमात्रमस्यानन्तरमुच्यते। अतः पूर्वमपि व्रीह्यादिषु योगमात्रमेव ॥

॥ सू ॥ योनेः शरीरम् ॥ २७ ॥

यदा योनिप्राप्तिस्तस्य तदैव शरीरमुत्पद्यते । अतः पूर्वं तु संश्लेषमात्रमिति भावः ॥

इत्यन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमः पादः ॥

---

कृता काचिदभ्युच्चययुक्तिः प्रदर्शिता-श्रूयते हीत्यादिना । अभ्युच्चययुक्तित्वं च 'पशुहिंसाया अहिंसात्व'मित्यनेन सूचितम् । तत्र हि हिंसाया इति हिंसात्वमभ्युपगम्यैवाहिंसात्वमौपचारिकमुपन्यस्तम् । तस्माद्यागादिकर्मणां पापमिश्रितत्वाभावेन तत्फलं व्रीह्यानेति स्थितम् । कथं तर्हि जायन्त इत्युक्तिरित्याकांक्षायां तदुपपत्तिप्रदर्शनपरं सूत्रमवतारयति—उपपत्त्यन्तरमिति । सू॥ रेतस्सिग्योगोऽथ ॥२६॥ 'तद्भूय एव भवती' ति रेतस्सिग्भाव आम्नायते। न च पूर्वसिद्धपितृभावः पुत्रस्य संभवति । अतस्तत्रावश्यं तद्योग एव तद्भाव उपचरित इत्युपपादनीयम् । एवमत्रापि जायमानव्रीह्यादिसंश्लेष एवानुशयिनां जननमित्युपचरित इति भावः। सू० ॥ योनेश्शरीरम् ॥ २७ ॥ योनेः प्राप्त्यनन्तरमेव शरीरमुत्पद्यते । तदनंतरमेव सुखदुःखादिभोगसत्वात् श्रुतौ ब्राह्मणादिशरीरप्रतिपादनाच्च। अतो योनिप्राप्तेः प्रागाकाशादिपितृवीर्यान्तेषु संश्लेषमात्रमिति भावः।

इति श्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरंधरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसांबशिवप्रेरितस्य श्रीमद्भरद्वाजकुलजलधिकौस्तुभविश्वजिद्याजिश्रीरंगराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकाख्यायां तृतीयस्याध्यायस्य प्रथमः पादः ॥ ३ ॥

---

नयमणिमालायाम्

अथ अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

सू ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥ रेतस्सिग्योगोऽथ ॥ २६ ॥ योनेश्शरीरम् ॥ २७ ॥

जायत इति श्रुतेः स्याद्व्रीहियवाद्यात्मनास्य जन्मैव । कर्म हि हिंसायुक्तं स्थावरताप्यस्य फलमुचितम् ॥ १७८ ॥

व्योमादाविव रेतस्सिचि व च संश्लेषमात्रमत्रापि । पशुहिततया श्रुतस्य हि तत्संज्ञपनस्य नास्ति हिंसात्वम् ॥ १७९ ॥

इत्यन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीमदप्पय्यदीक्षितकृतौ चतुर्मतसारसंग्रहे नयमणिमालिकाख्ये तृतीयपरिच्छेदे तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

## सूत्रार्थचन्द्रिकायामथ अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

**सू ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥ रेतस्सिग्योगोऽथ ॥ २६ ॥ योनेश्शरीरम् ॥ २७ ॥**

**भगवत्पादमते,** तस्मिन्नेवावरोहे 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति श्रूयते । तत्र किं व्रीह्यादिभावेन जीवानां जनिश्रुतिर्मुख्या उत जीवान्तरेणाधिष्ठिते व्रीह्यादौ संसर्गमात्रमिति **संशयः** । मुख्येति **पूर्वपक्षः** । **सिद्धान्तस्तु, अन्याधिष्ठिते** अन्यैर्जीवैरधिष्ठिते व्रीह्यादौ संसर्गमात्रमनुशयिनां भवति । कुतः । **पूर्ववदभिलापात्**= यथाकाशादिवर्षान्तेषु कर्मपरामर्शमन्तरेणैव प्रवेश उक्तः एवं व्रीह्यादिष्वपि कर्मपरामर्शं विनैव प्रवेशाभिलापात् । तस्माज्जनिश्रुतिस्संसर्गमात्राभिप्राया न मुख्येति सिद्धम् ॥ इति ॥

**सू ॥ अशुद्धमिति चेन्न शब्दात् ॥२५॥ अशुद्धमिति चेत्**=ननु ज्योतिष्टोमादिकं कर्म पशुहिंसादियोगादशुद्धम् । तत्कारिणामनुशयिनां व्रीह्यादिस्थावरेषु दुःखानुभवार्थं मुख्यमेव जन्मास्त्विति चेत् **न** । **शब्दात्**=विधिशास्त्रादग्निष्टोमादेर्धर्मत्वेनावगतत्वान्न दुःखहेतुत्वमित्यर्थः ॥

**सू ॥ रेतस्सिग्योगोऽथ ॥ २६ ॥ अथ**=व्रीह्यादिभावानन्तरम् । अनुशयिनां **रेतस्सिग्योगः**=रेतस्सिञ्चतीति रेतस्सिक् तद्योगः तद्भावः । 'यो रेतस्सिञ्चति तद्भूय एव भवति' इति श्रुतावाम्नायते । रेतस्सिग्भावो मुख्यो न संभवति । अतस्तद्भावः तत्संसर्गो वाच्यः । तथा व्रीह्यादावपि संसर्ग एव ॥

ननु अनुशयिनां सर्वत्र संसर्गस्यैवाङ्गीकारे मुख्यं जन्म क्वापि न स्यादित्याह—**सू ॥ योनेश्शरीरम् ॥२७॥** योनौ रेतसि निषिक्ते ततस्सुखदुःखोपभोगयोग्यं शरीरं कर्मोपार्जितमनुशयिनां जायत इति 'रमणीयचरणाः' इत्यादि शास्त्रमाह । तस्माद्ब्राह्मणादियोनावेवानुशयिनां मुख्यं जन्म न व्रीह्यादाविति गत्यागतिविवेककृतं वैराग्यं ज्ञानसाधनमिति सिद्धम् ॥ अत्र **पादे** अस्मिन्मते **षडधिकरणानि** । सूत्राणि **सप्तविंशतिः** ॥

**श्रीकण्ठमते,** तथा **रामानुजमते,** च अत्राप्यधिकरणे नास्ति वैलक्षण्यं पूर्वस्मात् । अत्र पादे अनयोर्मतयोः सूत्रसंख्याधिकरणसंख्यादिष्वपि नास्ति वैलक्षण्यं पूर्वस्मादित्यवधेयम् ॥

**आनन्दतीर्थमते,** अत्राधिकरणे कर्मिणां व्रीह्यादिभावनिमित्तकं दुःखं भवति वा न वेति **संदेहे** दुःखं भवत्येवेति **पूर्वपक्षः** । **सिद्धान्तस्तु,** अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशमात्रमभिप्रेतम् । न तु भोगः । अतो न तत्कृतं दुःखमिति । **सूत्रार्थस्तु,** कर्मिणः **अन्याधिष्ठिते**=अन्यजीवाभिमन्यमानव्रीह्यादिशरीरे प्रवेश एव । न तु तदभिमानित्वम् । येन दुःखं स्यात् । तर्हि व्रीहियवा इत्यभेदोक्तिः कथमित्यत उक्तम्– । यथा **पूर्ववदिति** 'धूमो भूत्वे' त्यादौ धूमादिभावोक्तिस्तथा । कुत एतत् । **अभिलापात्**='सोऽवागत' इति श्रुतौ तथाभिधानादित्यर्थः ॥

**सू ॥ अशुद्धमिति चेन्न शब्दात् ॥ २७ ॥** हिंसारूपत्वाद्यज्ञस्य कर्माशुद्धं दुःखसाधनमिति **चेन्न** । कुतः । **शब्दात्**= श्रुतिवाक्यविहितत्वादित्यर्थः ॥ ॥ इत्यन्याधिकरणम् ॥ १८ ॥

## अथ रेतोऽधिकरणम् ॥ १९ ॥

**सू ॥ रेतस्सिग्योगोऽथ ॥२८॥** अत्र 'स्वर्गादवागतश्चापि मातुरेवोदरं व्रजे' दिति श्रवणात् स्वर्गादवतीर्णस्य जीवस्य साक्षान्मातृप्रवेश एव युक्तः । 'य एव गृही भवती' त्यादिना श्रुतः पितृप्रवेशः प्रयोजनाभावान्नादर्तव्य इति **पूर्वपक्षः** । 'रेतस्सिचमेवानुप्रविशत्यथ मातर' मिति कौण्डरव्यश्रुतेः अस्त्येव पितृप्रवेशः । पितृवीर्यस्याप्यपेक्षितत्वेन मातुरेवोदरमित्येवकारस्यायोगव्यवच्छेदकत्वात् पितरं प्रविश्य शरीरोत्पादकवीर्येण सह मातृप्रवेशस्येश्वरकल्पितत्वाच्च । इति **सिद्धान्तः** । **सूत्रार्थस्तु,** कर्मिणः प्रथमं रेतस्सिचा पित्रा योगः संबन्धः । तत्प्रवेश इति यावत् । **अथ=अनन्तरं** मातृप्रवेशः न तु प्रथममेवेत्यर्थः ॥ **॥ इति रेतोऽधिकरणम् ॥ १९ ॥**

## अथ योन्यधिकरणम् ॥ २० ॥

**सू ॥ योनेश्शरीरम् ॥ २९ ॥** अत्राधिकरणे कर्मी रेतोरक्तसंयोगात्पश्चाद्देहाकारेण परिणामानन्तरमेव मातृगर्भस्थं देहमन्नादिद्वारेण प्रविशतीति **पूर्वपक्षः** । **सिद्धान्तस्तु,** पितृशरीरान्मातृशरीरमनुप्रविश्य तत एव शरीरमाप्नोतीति ॥ **सूत्रार्थस्तु, योनेः** ल्यब्लोपे पञ्चमी । कर्मी पितृद्वारा मातृयोनिं प्रविश्य । अथ तत्र **शरीरं** लभते न तु तद्भिन्नेत्यर्थः ॥ **॥ इति योन्यधिकरणम् ॥ २० ॥**

अत्र मते 'कृतात्यय' इति सूत्रे 'यथेतमनेवं चे' ति योगविभागतः 'तत्स्वाभाव्यापत्तिरुपपत्ते' रिति सूत्रतः पूर्वं 'सरणाच्चे' त्यधिकसूत्रपाठाच्चात्र पादे **एकोनत्रिंशत्**सूत्राण्यधिकरणानि तु **विंशतिरिति** वेद्यम् ॥

**यं प्रासूत विशुद्धशीलमनघं वृद्धांबिकाख्या सती**
**यं मृत्युञ्जयशर्मणो बुधमणेर्भाग्यं विदुस्साधवः ॥**
**वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-**
**स्येयं सत्कृतिरेधतामिह** चतुर्भाष्यानुगा **चन्द्रिका** ॥

**सूत्रार्थचन्द्रिकायां तार्तीयीके**ऽत्र साधनाध्याये । **वैराग्यपाद**नाम्ना प्रथितस्संपूर्ण **आदिमः पादः ॥**

इति **हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायां तृतीयस्याध्यायस्य प्रथमः पादः ॥**

॥ श्रीः ॥

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

अथ तृतीयस्याध्ययस्य

## द्वितीयः पादः ॥

### अथ सन्ध्याधिकरणम् ॥ १ ॥

### ॥ सू ॥ संध्ये सृष्टिराह हि ॥ १ ॥

पूर्वत्र जीवस्य गत्यागतिनिरूपणं कृतम् । इह तदवस्था विचार्यते । सन्ध्ये

---

## शिवार्कमणिदीपिकायाम्

## अथ तृतीयस्याध्यायस्य द्वितीयः पादः ॥

### अथ संध्याधिकरणम् ॥ १ ॥

**सू–संध्ये सृष्टिराह हि** ॥ १ ॥ पादयोस्संगतिमाह–पूर्वत्रेति । पूर्वस्मिन्पादेऽधिकारिणां वैराग्यदृढीकरणाय जीवस्य गत्यागतिनिरूपणं कृतम् । तथा हि–प्रथमे तावदधिसंसारदुःखायतनस्य भूतेन्द्रियसंघातरूपस्य सूक्ष्मदेहस्य विरक्ताधिकारिकश्रवणमननोपासनासाध्यब्रह्मसाक्षात्काररूपतन्निवृत्तिसाधनलाभपर्यन्तमिह परत्र च गतागतयोरप्यनुवृत्तिरस्तीति निरूपितम् । तत्रैव 'भाक्तं वानात्मवित्वा' दिति ( ब्र०३–१–७. ) सूत्रेण देवभृत्यभावमवलंब्य तत्प्रयुक्तक्लेशकरंवितस्य स्वर्गभोगानुभवस्य प्रहीणत्वं सातिशयत्वं चाविष्कृतम् । द्वितीये सूक्ष्मदेहस्यापि कारणतया सकलसंसारक्लेशनिदानस्य कर्मबन्धस्य तावत्पर्यंतमनुवृत्तिर्निरूपिता । तत्रैव स्वर्गभोगस्य क्षयिष्णुत्वदोषोऽपि 'कृतात्यय' इति सूत्रभागेन दर्शितः । एवमनेकदोषदुष्टस्यापि स्वर्गभोगस्य जनकं यागादिकमपि प्रतिजन्म यावज्जीवकर्तव्यस्नानसंध्यावंदनादिविहितानुष्ठाननिषिद्धपरिहाररूपवहुविधक्लेशसाध्यस्मार्ताचारसापेक्षत्वादतिदुष्करमिति 'चरणादिति चे'दित्यादिसूत्रैः प्रकटितम् । अनिष्टादिकारिणां तु 'ग्रामं गच्छन्वृक्षमूलमुपसर्पती'तिन्यायेनापि स्वर्गप्राप्तिर्नास्ति । यमसदने रौरवादिषु च भूयान्यातनानुभवः कीटादिजन्मप्राप्तिश्चेति तृतीये वर्णितम् । चतुर्थे तु स्वर्गादवरोहतामाकाशादिभावश्रवणात्तदभिमानिदेवतानामिवाकाशादिशरीरकत्वप्रयुक्तः कियान्दिव्यभोगानुभवोऽस्तीति शङ्कावारणायाकाशादिषु संश्लेषमात्रमिति वर्णितम् । पञ्चमे तेषु चिरमचिरं वावस्थानमित्यनियमनिरासव्याजेन व्रीह्यादिषु सुखभोगरहितमचिरावस्थानं दृढीकृतम् । षष्ठे तेष्ववस्थानं सुखलेशरहितं तदभिमानिजीवात्मना चेत्तल्लवनपर्यन्तमेव भवेदित्यनतिहेयत्वशङ्कानिरासाय तेषु संश्लेषमात्रमिति प्रदर्श्य स संश्लेषस्तेषां शोषणकुसूलावस्थापनावहननफलीकरणपाकभक्षणादिदशास्वनुवर्तमानः पितृवीर्यात्मना परिणामपर्यन्तः । पुरुषभक्षणविषयत्वमनापन्नेषु व्रीह्यादिषु संश्लिष्टानामनुशयिनां तेषु संश्लेषः तत्तद्व्रीह्यादिपरिणामान्तरपरंपराक्रमेण यथाकथञ्चित्पुरुषभक्षणविषयत्वप्राप्त्यनंतरं तेषां तद्वीर्यात्मना परिणामपर्यन्त इति रेतस्सिक्सूत्रेण संसूच्य पुरुषवीर्यानुप्रवेशेऽपि योषितमप्राप्य तेषां न शरीरलाभः । तद्यदि वीर्यमपरिग्रहाणां वन्ध्यादिषु प्रवृत्तानां वा स्यात् तदा तद्वीर्यपरिणामान्तरक्रमेण पुनरपि पुरुषभक्षणविषयत्वं प्राप्य तद्वीर्यसंसक्त-

**स्वप्ने 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान्रथयोगान्पथः सृजते' इत्यादिना सृष्टिरभिधीयते । सैषा जीवकृता परमेश्वरकृता वेति संशयः ॥**
**एवं सति जीवकृतेत्यवगम्यते । 'अथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता' इति स्वप्नदृशं जीवमेव कर्तारमाह हि श्रुतिः ॥**

---

तया ऋतुमतीनां योषितां गर्भगोलकप्रवेशानंतरमेव क्वचिज्जन्मनि भोगाश्रयस्य भोगमोक्षसाधनोपयोगिनश्च शरीरस्य लाभ इति 'योनेश्शरीर'मिति ( ब्र० ३-१-२७ ) सूत्रेण संसूचितम् । एवं वैराग्यदृढीकरणाय गतागतनिरूपणेन जीवस्य जागरावस्थाविचारो निष्पन्नः । इह पादे तदवस्थान्तरविचारः क्रियत इत्यर्थः । यद्यपि सांसारिकविषयवैराग्यदृढीकरणानंतरं तद्विलक्षणब्रह्मप्रेप्सादृढीकरणाय ब्रह्मणो महिमात्र पादे वर्ण्यते । तथापि जीवावस्थाविशेषाश्रयणोपक्रमसिह तन्महिमनिरूपणं स्वप्नाद्यवस्थास्वपि प्रजापतिविद्योक्तदोषाविष्करणेन ततोऽपि वैराग्यस्यातिदृढीकरणमानुषंगिकं प्रयोजनान्तरं लंभयितुमिति पूर्वपादसंगतिप्रदर्शनार्थमेवमुक्तिः । सूत्रगतं संध्यशब्दं विषयवाक्यगततत्रशब्दं च विवृण्वन्नेव विषयवाक्यमुदाहृत्य संशयं दर्शयति–संध्ये स्वप्न इति ॥ जागरसुषुप्त्योः सन्धौ भवनं सन्ध्यशब्दप्रवृत्तिनिमित्तम् । तेन जागरावस्थाविचारानंतरं प्रथमं स्वप्नावस्थाविचारेऽपि संगतिर्लब्धा 'स हि कर्त्ते'त्यस्य प्रकृतजीवपरामर्शकत्वसंभवासंभवाभ्यां संशयः । पुष्करिण्यः स्रवन्त्य इति द्वितीयार्थे प्रथमा । स्वप्नदृशं जीवमेवेति । अत्रायमाशयः । सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन्संध्ये स्थाने तिष्ठन्निति जीवं प्रकृत्य 'उभयान्पाप्मन आनंदांश्च पश्यती'ति स स्वप्नद्रष्टृत्वेन निरूपितः । स एव 'स हि कर्त्ते'त्य'त्र तच्छब्देन परामृश्यते । स प्रकृतो जीवो यस्मात्कर्ता भवितुमर्हति प्रजापतिवाक्योदितसत्यसंकल्पादिमत्त्वात् अतस्स सृजतीति युक्तमिति वाक्यार्थः । अन्यथा 'सृजत' इत्यस्य 'कर्ते' त्यस्य चैकार्थ्ये हेतुहेतुमद्भावानुपपत्तेः । न च सत्यसंकल्पत्वादिसद्भावे जागरेऽपि तस्य रथादिस्रष्टृत्वं स्यादिति वाच्यम् । जागरदशायां तिरोभूतस्य तस्य मुक्ताविव स्वप्नेऽप्याविर्भावसंभवात् । न चैतदयुक्तम् । पूर्वं पश्चाच्चासतां रथानां रथान्युंजानानामश्वानां रथगमनोचितानां राजपथानां च स्वप्नकालमात्रे भवनवत्सत्यसंकल्पत्वस्यापि तत्कालवृत्तित्वोपपत्तेः । एवं जीवस्य स्वप्नस्रष्टृत्वोपपादनाय स्वप्नकालमात्रे सत्यसंकल्पत्वाद्याविर्भावं 'स हि कर्त्ते' त्यनेन विवक्षितं दृष्टान्तमुखेन युक्ततां नेतुमेव 'न तत्र रथा'इत्यादिकमुक्तम् । तेन हि रथाद्यभावो न स्वप्ने प्रतिपाद्यते । 'सृजत' इति स्वोक्तिविरोधात् । न हि यस्मिन्काले यस्य सृष्टिः प्रति पादयिषिता तस्मिन्नेव काले तदभावोऽपि प्रतिपादयितुं शक्यते । अतः पूर्वं पश्चाच्च तदभावस्यायमुपन्यास इति वक्तव्यम् । स्वप्नरथादिदर्शनदेशे पूर्वापरकालयोस्तदभावश्च लोकानुभवसिद्धत्वान्न शास्त्रेण प्रतिपादनीयः । अतस्तद्वैयर्थ्यपरिहाराय पूर्वापरकालयोरसतां रथादीनां स्वप्नकालमात्रे भवनवत्स्वप्नदृशस्तत्सृष्टावुपयुक्तस्य सत्यसंकल्पत्वस्य तत्कालमात्र एवाविर्भवनमपि युक्तमिति दृष्टान्तप्रदर्शनार्थत्वमेव तस्य वक्तव्यम् । अपि च । प्राक्तदेहयोगादिर्जीवस्य सत्यसंकल्पत्वादेस्तिरोधायकः न तु परमेश्वरः । मुक्तावपि तत्तिरोधानप्रसंगात् । न च स्वप्नदशायां तद्योगोऽस्ति । तस्मिन्मृतकल्पे शयाने स्वप्नव्यवहारात्तस्य

---

( १ ) 'तत्कालमात्र एवाविर्भवनोपपत्तेः' इति ख पाठः ।

## ॥ सू ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

**'य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः' इति जीवमेव स्वप्ने कामानां निर्मातारमेके शाखिनोऽधीयते । तत्र कामशब्दनिर्दिष्टाः काम्यमानाः पुत्रादयः, पूर्वत्र 'सर्वान् कामान् छन्दतः प्रार्थयस्व' इत्युक्त्वा 'शतायुषः पुत्रपौत्रान् वृणीष्व' इति विवृतत्वात् । ततश्च जीवकृतैव स्वप्नसृष्टिः ॥**

**इति प्राप्तेऽभिधीयते—**

---

व्यवहारानुपयोगित्वमभावश्चेत्युभयं समानम् । अत एव सूत्रकारो वक्ष्यति 'तन्वभावे संध्यवदुपपत्ते'रिति ( ब्र० ४–४–१३ ) न चैवं सति प्रवुद्धस्य रथादीनद्राक्षमिति परामर्शवद्रथादीनस्राक्षमित्यपि परामर्शः स्यादिति वाच्यम् । स्वप्नेऽपि चिरातीतपितृपितामहादीन्पश्यतां प्राक्तदतीतत्वनिश्चयवतामपि तदानीं तदतीतत्वाननुसंधानवत् स्वप्ने स्वगतस्वाप्नरथादिस्रष्टृत्वनिश्चयवतामपि प्रबोधानंतरं तदननुसंधानोपपत्तेः । इयांस्तु विशेषः। पित्राद्यतीतत्वानुभवजन्मदृढसंस्कारानुवृत्तौ[1] प्रबोधानंतरानुसंधानोपयोगिन्यां सत्यामेव स्वप्नकाले तदनुद्बोधेनावस्थाविशेषमहिमप्रयुक्तेन तदननुसंधानमुपपादनीयम्। स्वप्नदशायां जातस्य स्वकीयस्वप्नार्थस्रष्टृत्वानुभवस्य शैशवावस्थोत्पन्नानुभवबृंदस्येव संस्कारानाधायकत्वादन-नुसंधानमुपपादयितुं शक्यम् । न च तथा सति शैशवकृतस्येव स्वाप्नस्यापि व्यवहारस्य कात्स्न्र्येनाननुसंधानं स्यादिति वाच्यम् । पूर्वजन्मव्यवहारान्तराननुसन्धानेऽपि गोमर्कटमार्जारादिजन्मसु तत्तज्जात्युचितप्राचीनतत्तज्जन्माभ्यस्तव्यवहारानुसंधानवद्व्यवस्थोपपत्तेः । न च जीवस्य स्वाप्नार्थस्रष्टृत्वे शुभसूचकानेव सृष्ट्वा स पश्येत् न त्वशुभसूचकानिति वाच्यम् । तदानीं स्वप्नत्वस्याशुभसूचकत्वस्य चाननुसंधानेन तत्सृष्ट्युपपत्तेः । स्वप्ने स्वयं क्रियमाणतैलपानतैलकटाहावगाहनविसवक्षणमध्वशनैकपुण्डरीकधारणकृष्णधेनुकालनादिष्वेवमेव सिद्धान्तेऽप्युपपादनीयत्वात् । तस्माद्यथाश्रुति जीव एव स्वाप्नपदार्थानां स्रष्टा । श्रुतनिर्वाहार्थमश्रुतसत्यसंकल्पाविर्भावकल्पनोपपत्तेः॥ ननु 'य एष सुप्तेष्वि'ति कठवल्लीमन्त्रे परमेश्वरस्तेषां स्रष्टा प्रतिपाद्यते । तस्यैव हि तत्र प्रकरण'मन्यत्र धर्मा'दिति । अतस्तदैकार्थ्यात् 'स हि कर्त्ते'त्येतदपि तद्विषयं स्यात् । तस्य प्रकृतत्वाभावेऽपि 'तदेते श्लोका भवन्ती'ति प्रक्रान्ते तदनन्तरश्लोके स्वप्नेन शारीरमभिप्रहत्यासुप्तस्सुप्तानभिचाकशीती'ति वर्णयिष्यमाणत्वात् । तत्र हि शारीरस्य जीवस्य स्वप्नावस्थाप्रदानेनाभिप्रहन्ता परमेश्वर एवेति शङ्कानिराकरणार्थं सूत्रम्—सू ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ चकारोऽवधारणार्थ इत्यभिप्रेत्य व्याचष्टे—जीवमेवेति । ननु कामशब्द इच्छार्थः परमेश्वरेऽपि सङ्गच्छते इत्याशङ्कानिराकरणाय 'पुत्रादयश्चे'ति सूत्रशेषं व्याचष्टे—तत्रेति । द्वितीयचकारोऽप्यवधारणार्थः इच्छार्थत्वव्यवच्छेदार्थः । अत्र प्रकरणे कामशब्दस्य पुत्रादिषु प्रयुक्तत्वादिहापि मन्त्रे तस्य तादर्थ्यमवसीयते । अतः पुत्रादिसंबंधलिङ्गं परमेश्वरप्रकरणाद्बलवत् । नचात्यंतं जीवस्याप्रस्तुतत्वम् । 'हन्त तदिदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा च मरणं प्राप्य आत्मा भवति गौतम । योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयंति यथाकर्म यथाश्रुत' मित्यव्यवहितमन्त्रप्रस्तुतत्वा-

---

( १ ) ' जन्यसंस्कारानुवृत्तौ' इति ख—पाठः ।

## ॥ सू ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

**स्वप्ने यद्रथादि सृष्टमर्थजातं तदिदं मायामात्रमीश्वरकृतं, न जीवकृतम्। स्वप्नदर्शकेनानुभाव्यं तत्कालमात्रावसायीति आश्चर्यरूपतया मायामात्रमित्युक्तम्। जीवस्य सत्यसंकल्पत्वादिकं तिरोहितमिति तस्य रथादिसृष्टिसामर्थ्यं न संभवति। अतः 'पुरुषो निर्मिमाणः' इति न जीवविषयम्। किं तु,**

---

दिति भावः ॥ सू० ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ मायामात्रमित्यनेन विवक्षितं साध्यं दर्शयति—ईश्वरकृतमिति। तुशब्दार्थमाह—न जीवकृतमिति। ईश्वरकृतत्वे साध्ये पर्यवसानमुपपादयितुं मायामात्रमित्यस्य साक्षादर्थमाह—आश्चर्यरूपेति। माया इन्द्रजालादिकं तत्सादृश्यादिह मायाशब्दः। आश्चर्यरूपत्वं तत्सादृश्यम्। मात्रशब्दोऽवधारणार्थः। तथा च स्वाप्नमर्थजातं सर्वमाश्चर्यरूपमेव। न तत्रानाश्चर्यरूपं किमप्यस्तीति भावः। आश्चर्यरूपत्वमुपपादयति—स्वप्नदर्शेति। स्वप्नदृक् यस्मिन्देशे रथं यदा पश्यति तदानीं तत्र स्थितोऽन्यस्तन्न पश्यतीति स्वप्नदृगपि प्रबोधानन्तरं तत्र गतस्तन्न पश्यति न वा तस्यान्यत्र नयनचिह्नानि नेमिपदानि तत्रैव नाशचिह्नानि तदवयवविशरणादीनि वा पश्यति। केवलमैंद्रजालिकेन यो मोहितस्स एव यथा समुद्रादिकं पश्यति सोऽपि मोहापाये तन्न पश्यति न वान्यत्र जलनिस्सरणचिह्नं तत्रैव शोषचिह्नं वार्द्रतादिकं पश्यति। ततश्च यथैवमाश्चर्यभूतसमुद्रादिद्रष्टुरन्यस्तथाभूतसमुद्रादिसंपादयितैंद्रजालिकस्तथैवाश्चर्यस्वाप्नपदार्थद्रष्टुस्तथाभूतस्य तस्य स्रष्टान्यः स्वीकरणीयः। स च परमेश्वरादन्यो न संभवतीत्येवं मायामात्रशब्दस्य परमेश्वरकर्तृकत्वे साध्ये पर्यवसानमित्यर्थः। ननु यथैंद्रजालिको मन्त्रौषधादिबलात्तथाभूतमर्थजातं सृजति दर्शयति वा एवं स्वप्नदृगेव प्रजापतिवाक्यप्रतिपन्नसत्यसङ्कल्पत्वबलात्स्वाप्नपदार्थजातं सृजत्वित्याशङ्कानिराकरणाय प्रवृत्त 'मनभिव्यक्तस्वरूपत्वा'दिति सौत्रं हेतुं व्याचष्टे—जीवस्येति। 'उत्तराच्चेदाविर्भूतस्वरूपस्त्वि'त्यत्र तत्तिरोधानं समर्थितमिति भावः। ननु स्वप्नदशामात्रे सत्यसङ्कल्पत्वाभिव्यक्तिर्भवत्विति शङ्कानिराकरणाय 'कार्त्स्न्येने'ति विशेषणम्। संसारकालत्वावच्छेदेनैव तत्तिरोहितम्। तिरोधायकसत्त्वाविशेषादिति भावः। ननु 'स हि कर्ते'ति श्रवणात्तन्निर्वाहाय स्वप्नावस्थामात्रे सत्यसङ्कल्पत्वाभिव्यक्तिः कल्प्येत्याशंक्य तस्याः परमेश्वरविषयत्वमुपपादयितुमाह—अत इति। 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण'-इत्येतदनंतरं 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रितास्सर्वे तदु नात्येति कश्चने'ति श्रूयते। अत्र यच्छब्दप्रतिनिर्देशकस्य तच्छब्दस्य ब्रह्मशब्दसामानाधिकरण्यरूपाद्वाक्यप्रमाणात् यच्छब्दप्रतिनिर्दिष्टे सर्वलोकाश्रयत्वसर्वोत्तरत्वरूपलिङ्गदर्शनाच्च कठवल्युक्तस्वप्नस्रष्टा परमेश्वर इत्यवसीयते। उदाहृतलिंगवाक्यापेक्षया कामशब्दस्य पुत्रादिपरत्वं कल्पयित्वा क्लिष्टगत्या समर्थनीयस्य पुत्रादिसंबंधलिंगस्य दुर्बलत्वात्। अतः 'कामंकाममि'ति शब्दो णमुलन्ततया संकल्प्यसंकल्प्येत्येवमर्थतया योजनीयः। ततश्च 'स हि कर्ते' त्येतदपि परमेश्वरविषयम्। तदैकार्थ्यात् 'स्वप्ने न शारीर'मित्यनंतरमन्त्रे तत्सङ्कीर्तनाच्च। तस्यापि मन्त्रस्य 'असुप्तस्सुप्तानभिचाकशीती'त्युदाहृतकठवल्लीमन्त्रैकार्थ्यादिति भावः। एवञ्च यद्यपि परमेश्वरस्य स्वाप्नरथादिस्रष्टृत्वप्रतिपादने तदुपपादकहेत्वपेक्षा नास्ति, तस्य सर्व-

'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥'

इति वाक्यशेषादीश्वरविषयम् । तदैकार्थ्यात् 'स हि कर्ता' इत्यपि तद्विषयमेव । अतः परमेश्वरकृता स्वप्नसृष्टिरिति ॥

जीवस्वरूपानभिव्यक्तिहेतुमाह—

॥सू॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ४ ॥

जीवस्यानाद्यपचारप्रवाहेण पराभिध्यानात् परमेश्वरसंकल्पात् तस्य सत्यसंकल्पत्वादिकं तिरोहितम् । तदपचारतदनुवृत्तिकृतात् तस्मादेव परमेश्वरसंकल्पादस्य बन्धमोक्षौ भवतः । तथाहि श्रुतिः—'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' इति ॥

शक्तिमत्त्वेन सर्वस्रष्टृत्वेन च प्रसिद्धत्वात् । तथापि तस्यैव प्रसिद्धस्य हेतोरयमनुवादरूपो हेतुवन्निगदार्थवादः । यतः स्वप्नकालमात्रे भवन्तः स्वाप्नरथादयोऽत्याश्चर्यभूताः । आश्चर्याणाञ्च कर्ता परमेश्वरः प्रसिद्धः । अतः स तान्सृजतीत्येतदुचितमिति । स्यादेतत् । 'स हि कर्ते'त्येतदनंतरश्लोको न परमेश्वरविषयः । 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयते अमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः' इति तदनन्तरश्लोकस्य 'स' इति तेन श्लोकेनोक्तं परामृशतो जीवविषयत्वात् । तस्यापि श्लोकस्य 'शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः' इत्युत्तरार्धे शुक्रं प्रकाशकं चक्षुरादीन्द्रियजातं गृहीत्वा पुनर्जागरस्थानप्राप्तिरूपस्य जीवलिंगस्य दर्शनात् जीवपरतदनंतरश्लोकचतुर्थपादप्रत्यभिज्ञानाच्च । तत्र ह्येकहंसशब्दः एक एव हंति गच्छति इह परत्र च संचरतीति व्युत्पत्त्या जीवपरः । एवं च 'स हि कर्ते' त्यस्य कथञ्चिदपि प्रस्तावरहिते परमेश्वरे योजयितुमशक्यत्वात्पूर्वापरमन्त्रसन्दर्भगोचरजीवविषयत्वमेव वक्तव्यम् । श्रुतनिर्वाहार्थं जीवस्य स्वप्नावस्थायां सत्यसङ्कल्पत्वाभिव्यक्तिरपि कल्पनीया । न च तिरोधायकानुवृत्तावभिव्यक्तिकल्पना बाधितेति वाच्यम् । प्राकृतस्थूलदेह एव तिरोधायक इति कल्पनोपपत्तेः । तस्य च स्वप्नदशायां व्यवहारानुपयोगिनोऽसत्कल्पत्वादिति शङ्कानिराकरणार्थं सूत्रम्—पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ४ ॥ यदेति । यदा खल्वेष जीव एतस्मिन्प्रकृते आनन्दमयरूपे ब्रह्मणि अरं छिद्रमपचारं तदाज्ञारूपविधिनिषेधातिक्रमम् । अन्तरं सत्यसङ्कल्पत्वादिस्वरूपतिरोधानकरम् । अन्तरशब्दादन्तर्धानवाचिनस्तत्करोतिण्यन्तात्पचाद्यच्यन्तरमिति रूपम् । एवंभूतमपचारं उत्कुरुते अथ तस्य संसारभयं भवति । यदा त्वेष एतस्मिन्नदृश्ये प्रत्यक्षागम्ये अनात्म्ये आत्मसंबंधिलिंगरहिते अनुमानागम्ये अनिरुक्ते शब्देनापि ईदृक्तया परिच्छेत्तुमशक्ये अनिलयने स्वयमाश्रयरहिते अभयं सकललौकिकभयपरित्यागपूर्वकं प्रतिष्ठां शरणागतिं विंदते अथ सोऽभयं संसारभयनिवृत्तिं प्राप्नोतीत्यर्थः । एवं चानाद्यपचारप्रवाहे स्वरूपतिरोधायकेऽनुवर्तमाने स्वप्नदशायां तदभिव्यक्तिकल्पनमयुक्तमिति 'स हि कर्ते'त्येतदपि यथाकथञ्चित्परमेश्वरविषयतया योजनीयम् । अथ तथा योजयितुं न शक्यते । पूर्वापरसंदर्भयोः

॥ सू ॥ देहयोगाद्वा सोऽपि ॥ ५ ॥

जीवस्य स्वरूपतिरोधानभावोऽपि देवमनुष्यादिदेहाकाराचिद्योगाद्भवति सृष्टिसमये, प्रलये पुनर्नामरूपविभागानर्हसूक्ष्माकाराचिद्योगादित्येवं तस्य तिरोहितसत्यसंकल्पत्वादिकस्य तात्कालिकविचित्रसृष्टिसामर्थ्यं स्वप्ने न संभवति॥

उपपत्त्यन्तरमाह—

॥ सू ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥'

'अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिश्रुतेः

परमेश्वरप्रस्तावाभावात् 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती'ति पूर्वसंदर्भे 'स्वप्नांत उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिस्सह मोदमानो जक्षदुतेवापि भयानि पश्य'न्नित्युत्तरसन्दर्भे च जीवस्य स्वाप्नपदार्थजातस्रष्टृत्वप्रतिपादनाच्चेत्युच्येत तदा 'सृजत' इत्येतदपि तस्यैव स्वाप्नरथादिस्रष्टृत्वप्रतिपादनपरम् । तस्य तिरोहितसत्यसङ्कल्पत्वादिकस्य तत्स्रष्टृत्वं कथमित्याकांक्षायामदृष्टद्वारेति तदुपपादयितुं स ह्यदृष्टजनककर्मणां कर्तेत्येवमर्थपरं 'स हि कर्ते'ति वाक्यमिति योजनीयम् । सर्वथा तद्वाक्यं तिरोहितशक्तिकस्य जीवस्य सङ्कल्पपूर्वकं स्वाप्नरथादिस्रष्टृत्वप्रतिपादकं न भवतीति भावः । ननु मुक्तौ प्राकृतदेहवियोगे सति स्वरूपाभिव्यक्तिरिष्यते, अतस्तद्योगस्तस्य तिरोधायक एष्टव्य इति तदभावात्स्वप्ने स्वरूपाभिव्यक्तिः स्यादित्याशंक्य स परमेश्वरसङ्कल्पद्वारतया तिरोधायको न साक्षादिति प्रतिपादनार्थं सूत्रम्—देहयोगाद्वा सोऽपि ॥ ५ ॥ सोऽपि परमेश्वरसङ्कल्पकृतस्तिरोभावो देहयोगात् देहयोगं द्वारमपेक्ष्येति सूत्रार्थः । तर्हि द्वाराभावात्परमेश्वरसङ्कल्पो न स्वरूपतिरोधायक इत्याशङ्कानिराकरणाय वाशब्दश्चार्थः अचित्प्रकृतेरपि तिरोधायकत्वसंग्राहकः । सा प्रलय इव स्वप्नेऽपि तिरोधायिका भविष्यतीति दर्शयितुं प्रलये तस्याः स्थूलदेहनिरपेक्षायास्तिरोधायकत्वं सम्प्रतिपन्नमित्युदाहरति—प्रलये पुनरिति । आणवमलशक्तेस्सांसारिकत्वरूपपुरुषत्वापादकतया 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्य'मिति श्रुतौ पुरुषशब्देन प्रसिद्धायास्तिरोधायकत्वं भाष्ये तत्र तत्र प्रागाविष्कृतम् । तस्या अपि संग्राहकोऽयं वाशब्दो द्रष्टव्यः । ननु 'सृजत'इति स्वातन्त्र्यप्रतिपादकाख्यातस्वारस्यात् जीवस्य संकल्पपूर्वकमेव स्वाप्नरथादिस्रष्टृत्वमस्तु तदर्थं द्वारभूतेषु तिरोधायकेषु सत्स्वपि परमेश्वरस्यैव संकल्पविशेषवशात् स्वप्नदशामात्रे सत्यसंकल्पत्वाभिव्यक्तिः कल्प्यतां यथा निधितिरोधायकेषु भूतलादिषु सत्स्वपि 'दिशां व्रतं दशानुगानाम् एतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जीत निधयोऽस्य प्रकाशन्ते'इत्यादिश्रुतिविहितमन्त्राद्यनुष्ठानप्रसादितपरमेश्वरसंकल्पविशेषबलान्निध्यभिव्यक्तिरिति शङ्कानिराकरणार्थं सूत्रम्—सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥ चकारेण स्वप्नस्य तात्कालिकशुभाशुभकारकत्वं समुच्चीयते । तदपि भाष्योदाहृतश्रुतावेवाम्नातम् । स एनं हन्तीति । आदिशब्देन 'वराह एनं हंति, 'मर्कट एनमास्कंदयति' इत्यादिवाक्यान्तराणि गृह्यन्ते । स्वप्ने वराहवानर-

चोराग्निसर्पपिशाचराक्षसादयः स्वात्मानमभिभवन्तो महद्भयं दुःखं च जनयन्तो दृश्यन्ते। तेषामशुभसूचकत्वस्याननुसंधानेऽपि तत्कारकत्वस्यानुसंधानसत्त्वात् जीवकर्तृत्वे तेषां सृष्टिर्न स्यादिति भावः । अत्रेदं विचारणीयम् । यत्र देशे स्वप्नद्रष्टा रथादीन्पश्यति तत्र स्वयं गत्वा पश्यति उतापवरके शयान एवेति । यांश्च पश्यति ते सत्या मिथ्याभूता वेति च । केचिदाहुः—तत्तद्देशं गत्वा सत्यानेव रथादीन्पश्यतीति । अत्रेयं शङ्कावतरति । काश्यां रात्रावर्गलितेऽपवरके शयितः स्वप्ने स्वशरीरेणैवोत्तरां दिशं प्रस्थितं मुहूर्तमात्रेण कांचीं प्राप्य तंत्र वस्तुतो रथादिमत्सु प्रदेशेषु रथादीन्पश्यंतमन्यत्र गजादिमत्सु प्रदेशेषु तान्पश्यंतं तस्यामेव बहुतिथं कालमतिवाहयन्तमात्मानमनुभवन्नेव यथापूर्वमर्गलितापवरकशयितेन स्वशरीरेण शयनानंतरं मुहूर्तमात्रेण प्रतिबुध्यत इति तावत्सर्वलोकसिद्धम् । कथमस्य देशांतरगमनोपपत्तिः कथञ्च देशकालवस्तुविपर्यासे सत्यपि स्वाप्नरथादीनां सत्यत्वोपपत्तिरिति । अत्रेत्थं परिहारमाहुः—शयितेन शरीरेण न स्वप्नानुभवः किं तु यथानुभवं तत्सदृशेन विसदृशेन वा शरीरान्तरेण काश्यादितो निर्गत्य कांच्यादिकं गत्वा तदनुभवः। 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादवरश्चरित्वे'तिश्रुतेः । तथा च तपोबलसृष्टैश्शरीरांतरैस्सौभरेरिव परमेश्वरसृष्टेन शरीरान्तरेण स्वप्नदृशो बहिर्व्यापार उपपद्यते । न च तस्य निर्गमने कवाटोद्घाटनापेक्षा । नापि तस्य योजनशतप्राप्यदेशप्राप्तौ बहुकालापेक्षा। तस्याश्चर्यरूपस्य प्रसिद्धशरीरविलक्षणत्वात् देशकालविपर्यासश्च घटते । स्वप्न ईश्वरसृष्टैस्तदेकानुभाव्यैरादित्यगत्याद्युपाधिविशेषैरवच्छिन्नानां दिक्कालानां तत्तत्स्वप्नद्रष्टृपुरुषापेक्षया व्यवस्थोपपत्तेः । मार्गगतानां प्राप्यदेशगतानां च जागरावस्थानुभाव्यानां वस्तुविशेषाणामुपलंभाभावश्च युज्यते । स्वप्नसृष्टशरीरगतानां चक्षुरादीनां स्वप्नार्थमात्रग्रहणयोग्यत्वात् । गजादिमत्सु देशेषु रथाद्युपलंभश्चोपपद्यते । स्वप्नार्थानां जागरितार्थानां च जलालोकपवनन्यायेन मूर्तत्वेऽपि मिथः प्रतिघातकत्वाभावकल्पनोपपत्तेः । आलोको ह्यगाधस्वच्छजलपरिपूर्णे सरसि जलेनाप्रतिहन्यमान एवान्तः प्रविश्य तलस्थितानुपलादीन्प्रकाशयति । आलोकपूर्णे च नभसि पवनो वाति । मुहूर्ताभ्यन्तरेण बहुरात्रातिवाहनं च संगच्छते । देवादिकालोपाधिभ्यो मनुष्यादिकालोपाधीनामिव जाग्रत्कालोपाधिभ्यः स्वाप्नकालोपाधीनां सूक्ष्मत्वतारतम्यकल्पनोपपत्तेरिति । अन्ये त्वाहुः—स्वप्नदृष्टा घटादयः परमेश्वरसृष्टाः पदार्थास्सत्या एव न तु बाह्या मृदाद्युपादाना वा । बहिर्देशे प्रागूर्ध्वंच मृत्पिण्डकपालादिपूर्वोत्तरावस्थयोरनुपलंभात् । किंत्वान्तरा वासनामयाश्च । वासनानामतींद्रियत्वादन्तरपि प्रागूर्ध्वावस्थयोरनुपलम्भः । ते च मनसैव ग्राह्याः । चक्षुरादीनामुपरतत्वात् । तेषु बाह्यत्वमृण्मयत्वचाक्षुषत्वाद्यभिमानस्तु भ्रमरूप इति । अपरे त्वाहुः—प्रतिभासमात्रशरीरास्ते न तु पारमार्थिकाः । प्रबोधानंतरं बाध्यमानत्वात् । 'आरुक्षमिव शैलाग्रमाविक्षमिव कानन'मित्यादिरूपेण तन्मिथ्यात्वव्यवहाराच्च, 'उतेव स्त्रीभिस्सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' इति श्रुतावपि लोकानुभवसिद्धतन्मिथ्यात्वानुवादाच्च । 'अथ रथा'नित्यादौ तत्सृष्ट्युक्तिस्तु भाक्ततया व्याख्येया । अन्यथा प्रधानप्रकरणार्थविरोधापत्तेः । आत्मनः स्वयं ज्योतिष्ट्वं प्रतिपादयितुं प्रवृत्ते हि प्रकरणे जाग्रदवस्थायामादित्यादिज्योतिर्व्यतिकरात्तद्दुर्विवेचमिति तद्विवेचनार्थं स्वप्नावस्थावतारिता ।

तत्र यदि सृष्टिः प्रतिपाद्येत तदा तत्रापि तद्दुर्विवेचं स्यात् । आदित्यचंद्राग्निवाक्प्रतिभासस्य तदानीमपि सत्त्वात् । अतः प्रधानप्रतिपाद्यविरोधात् स्वर्गार्थं ज्योतिष्टोमप्रकरण तदंगविध्यर्थवादस्य 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेती'ति वाक्यस्येव स्वाप्नसृष्टिवचनस्य न स्वार्थे तात्पर्यम् । किंत्वर्थप्रतिभाससत्त्वमात्रेण तदौपचारिकं यथा 'चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मंजिष्ठे'ति द्युलौहित्यभवनवचनम् । न हि दिवो लौहित्यं सत्वेनासन्नारिष्टेन दृश्यमानं तात्विकं किंतु भ्रांतिकल्पितमेव । अत एव तत्र प्रकरणे 'यत्र छिद्र इवादित्यो दृश्यते यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवां महामेघं वा मरिचिमिव पश्येत् यत्र भूमिं ज्वलंतीमिव पश्ये'दिति तत्रतत्रापारमार्थिकत्वद्योतका इवशव्दाः। इहापि 'न तत्र रथा न रथयोगा न पंथानो भवंती'त्युपक्रमेणैव सृष्टिवचनस्यापारमार्थिकविषयत्वं द्योतितम् । 'न तत्र रथा' इत्यादेः स्वाप्नरथाद्यपारमार्थिकत्वे न तात्पर्यं तस्य लोकसिद्धत्वादिति चेन्न । लोकसिद्धस्यैव स्वाप्नरथादिमिथ्यात्वस्य स्वयं ज्योतिष्ट्वविवेचनोपयोगित्वेनानुवादोपपत्तेः । तस्मान्मनोराज्यविषयार्थजातवत् पैत्यप्रकोपासन्नारिष्टादिदशोद्भूतचित्तविभ्रमविषयवच्च स्वप्नार्थजातमपि प्रातिभासिकमवाह्यमचक्षुरादिवेद्यञ्च । न हि मनोराज्यादिदशायामपि जीवस्य शरीरं हित्वा वहिर्निर्गमनं तद्विषयार्थजातसृष्टिश्चांगीक्रियते । न वा तत्र वस्तुतश्चक्षुरादिप्रवृत्तिरस्ति । आद्यन्तयोर्व्यभिचारदर्शनञ्च मनोराज्याद्यपेक्षया विशेषः । स्वप्ने हि रथोऽयमित्यनुभूयमान एव मनुष्यः सम्पद्यते । मनुष्योऽयमित्यनुभूयमान एव वृक्षस्संपद्यते । एवं च वहिष्कुलायश्रुतिरपि वहिरिव कुलायादित्येवं भाक्ततया व्याख्येया । अत एव 'स यत्रैतत्स्वप्नयाचरति' इत्युपक्रम्य स्वे शरीरे यथाकामं परिवर्तत इति श्रुत्यंतरं 'नेत्रस्थं जाग्रतं विद्यात् कण्ठे स्वप्नं समादिशेत् । सुषुप्तं हृदयस्थं तु तुरीयं मूर्धनि स्थित' मित्यादीनि श्रुत्यंतराणि च एकस्मिन्नेव शरीरेऽवस्थाभेदेन जीवस्य स्थानभेदं दर्शयन्ति । तस्माद्यथापूर्वं स्वशरीरे स्थितस्यैव मनोराज्यादिविभ्रमवत् स्वप्नविभ्रम इति । आचार्याणां तु नैतेषु पक्षेषु क्वचित्पक्षविशेषेऽभिनिवेशः । किं तु मनोराज्यादिव्यवहार इव स्वप्नव्यवहारो न जीवसङ्कल्पकृतः, किं तु परमेश्वरसङ्कल्पमात्राधीनः इत्येतावन्मात्रेऽभिनिवेशः।तस्यैव सूत्रार्थत्वात्। अतोऽत्र पक्षविशेषो न चिन्तितः । ननु 'स्वप्नदृशैकेनानुभाव्यं तत्कालमात्रावसायीत्याश्चर्यतया मायामात्र'मित्युक्तं भाष्ये । तेन प्रथमपक्षोऽभिमत इत्युन्नीयते।स्वप्नरथादीनां वाह्यत्वे खल्वन्येषामपि दर्शनप्रसक्तौ स्वप्नदृशैकेनानुभाव्यत्वमाश्चर्यं भवेदिति चेदुच्यते । स्वाप्नरथादीनां सत्यत्वे तेषां स्वप्नदृगेकानुभाव्यत्वमेव तावदसिद्धम् । स्वप्नदृशेव स्वप्नदृष्टमनुष्यादिभिरपि तेषां निरीक्ष्यमाणत्वात् । न च स्वप्नदृष्टाश्चेतना असत्या रथादय एव तु सत्या इत्यर्धजरतीयेऽस्ति प्रमाणम् । तेषामाश्चर्यरूपत्वमप्यसिद्धम् । जाग्रत्पदार्थानामपि स्वप्नदृगननुभाव्यत्वेनाविशेषात् । न हि यत्र देशे स्वप्नदृग्रथादीन्पश्यति तत्र तदा जाग्रद्भिस्ते नानुभूयन्ते । न च स्वप्नार्थानां जाग्रत्स्वस्वकार्याजनकत्वमाश्चर्यरूपत्वम् । जाग्रदर्थानामपि स्वप्नदृक्षु तज्जनकत्वाभावस्याविशेषात् । यथा हि क्वचिद्देशे स्वप्नदृशा दृश्यमानाः दावदहनचण्डवायुनदीप्रवाहादयः तत्र तेषु जाग्रत्सु दाहादिकार्यं न जनयन्ति तथा ततोऽन्यस्मिन्देशे वस्तुतो दावदहनादिमत्येव सौधवनितादिभिर्मोदमानेषु स्वप्नदृक्षु तन्न जनयन्त्येव । न च यथा-

**शुभाशुभसूचकश्च हि स्वप्नः। स्वप्नाध्यायविदश्च शुभाशुभसूचकान् स्वप्नविशेषानाचक्षते। अतो न जीवस्रष्टाः स्वप्नार्थाः, जीवस्रष्टत्वे तदशुभसूचकानां**

न्यजाग्रद्दर्शनयोग्या जाग्रदर्था न तथान्यस्वप्नदृग्दर्शनयोग्याः स्वप्नार्था इतीदं तद्वैलक्षण्यमाश्चर्यरूपत्वं स्यादिति शंक्यम्। बहूनां स्वप्नसंवादे तथाभावस्यापि संभवात्। न चैकस्मिन्देशे कश्चिद्रथं पश्यत्यन्यो गजमपरोऽश्वमित्येवं पुरुषभेदेन व्यवस्थिततया दृश्यमानत्वमाश्चर्यरूपत्वम्। जाग्रद्दशायामप्येकत्र चैत्रे सति संततानां तद्देशकालावच्छेदानुभवितृभिरेव पुरुषैर्व्यवस्थया दृश्यमानत्वात्। न च वस्तुतो रथादिमति प्रदेशे तदप्रतिघातेन स्वाप्नगजादीनामवस्थानमाश्चर्यरूपत्वम्। तेषामपि रथादीनां स्वाप्नगजाद्यविरोधेनावस्थानस्याविशिष्टत्वात्। न च मनुष्यत्वेनानुभूयमानस्य तदानीमेव मर्कटमार्जारादिरूपेण दृश्यमानत्वमाश्चर्यरूपत्वम्।एकस्मिन्नेव वस्तुनि क्रमेण सत्यस्य मनुष्यत्वमर्कटत्वादेरन्योन्यबाध्यबाधकभावं विना समावेशांगीकारे जाग्रद्दशायामपि नन्दिकेश्वरे क्रमेण मनुष्यत्वदेवत्वयोर्नहुषे देवत्वसर्पत्वयोश्च समावेशस्य सम्प्रतिपन्नत्वेन तदविशेषात्।एकस्य वस्तुनः परस्परविसदृशानेकभ्रमविषयत्वसमावेशास्पदत्वमाश्चर्यरूपत्वमित्यङ्गीकारे स्वप्नार्थानामसत्यत्वेनैवाश्चर्यपादनापत्तेः। नापि स्वप्नानुभवकालावसायित्वमाश्चर्यरूपत्वम्। एकत्र स्वप्ने दृष्टस्य गजादेर्दिनांतरेऽपि स्वप्ने दर्शनस्य लोकसिद्धत्वेन तत्र तदसिद्धेः। तत्र स्वाप्नार्थभेदे प्रमाणाभावाद्दिनांतरेऽपि तं दिदर्शयिषोः परमेश्वरस्येच्छया पुनर्दर्शनपर्यन्तमवस्थानकल्पनस्यैव लघुत्वात् स्थायिन एव स्वप्नप्रपञ्चस्य स्वप्नदशामात्रेऽनुभवः जाग्रत्प्रपञ्चस्येव जाग्रद्दशामात्र इत्यपि कल्पनसम्भवेन क्वचिदपि तदसिद्धेश्च। न च 'पथस्सृजत'इत्यादिश्रुतिबलात् प्रतिस्वप्नं स्वप्नप्रपञ्चभेदकल्पनम्। तथा सति 'यत्रैतत्पुरुषः सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदेनं वाक्सर्वैर्नामभिस्सहाप्येति चक्षुः सर्वैरूपैस्सहाप्येति श्रोत्रं सर्वैश्शब्दैस्सहाप्येति मनस्सर्वैर्भूतैस्सहाप्येति स यदा प्रबुध्यते यथाग्नेर्विष्फुलिंगा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका' इत्यादिश्रुतिबलेन जाग्रत्प्रपञ्चस्यापि प्रतिप्रबोधं भेदकल्पनापत्त्या स्वप्नजागरप्रपञ्चयोरुभयोरपि तत्तदवस्थामात्रावसायित्वस्याविशेषापत्तेः। तस्मादुदाहृतभाष्यं शांबरिकदर्शितप्रपञ्चस्य शाम्बरिकमोहितैकानुभाव्यत्वेन शाम्बरीप्रसरणमात्रकालावसायित्वेन च यथाश्चर्यरूपत्वं तथा स्वप्नप्रपञ्चस्य परमेश्वरमोहितस्वप्नदृगेकानुभाव्यत्वेन तत्प्रसारितस्वप्नावस्थामात्रानुभाव्यत्वेन चाश्चर्यरूपत्वमिति प्रातिभासिकत्वाश्रयेऽप्यर्थे योजयितुं शक्यमिति न तदनुसारेण भाष्यस्य प्रथमपक्षे तात्पर्यसिद्धिः। न च स्वप्नप्रपञ्चस्य पारमार्थिकत्व एव परमेश्वरस्य तत्स्रष्टृत्वेन महामहिमसिद्धिरिति पादसङ्गत्यर्थं भाष्यस्य प्रथमपक्षे तात्पर्यं कल्पनीयमिति वाच्यम्। अनंतप्राणिदृश्यमानपरस्परविरुद्धानंतस्वप्नप्रपञ्चप्रदर्शकत्वेनापि तस्य महामहिमसिद्धेः। मायिकपंचषवस्तुप्रदर्शकत्वेनापि हि शांबरिकस्य लोके महामहिमा गण्यते। अवश्यं चैवमेवाभ्युपेयम्। अन्यथा स्वप्नसत्यत्वपक्षे स्वसंकल्पात्क्षणेनैवातिविपुलप्राकारगोपुरादिकं गिरिनदीसमुद्रादिकं वा निर्मिमाणमाकाशगमनमेरुमंदरादिदेशसञ्चारं कृत्स्नभूगोलभ्रमणादिकं कुर्वन्तं वा यत्र स्वप्नदृगात्मानमीक्षते

(१) 'दिनान्तरस्वप्नेऽपि इति ख० पाठः।

स्रष्टृभावप्रसङ्गात् । तस्मात् परमेश्वरकृता स्वप्नसृष्टिरिति युक्तमेव ॥

इति सन्ध्याधिकरणम् ॥ १ ॥

तत्र स्वप्नसत्यत्ववादे यथानुभवं तथैवाभ्युपगन्तव्यमिति जीवस्याप्यत्याश्चर्यस्वप्नप्रपञ्चस्रष्टृत्वे समाने परमेश्वरस्य ततः कोऽतिशयस्सिद्ध्येत् । तस्मात्तत्र तथा तथात्मनः स्रष्टृत्वादिभ्रममापादयतः स्वप्नावस्थां प्रापय्य मोहयतः परमेश्वरस्यैव तेन महामहिमा सिध्यतीत्येव तत्रोपपादनीयमिति तस्मादाचार्याणामिह यथोपपत्त्यंगीकरणीयमित्यभिप्रायः ॥

इति संध्याधिकरणम् ॥ १ ॥

---

## नयमणिमालायाम्

### अथ तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

### अथ संध्याधिकरणम् ॥ १ ॥

सू० ॥ संध्ये सृष्टिराह हि ॥ १ ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ४ ॥ देहयोगाद्वा सोऽपि ॥ ५ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥

स्वप्नस्रष्टा जीवोऽथ रथानिति तं प्रकृत्य सृष्ट्यभिधानात् । तस्यापि हि प्रजापतिवाक्योदितमस्ति सत्यसंकल्पत्वम् ॥ १८० ॥

मुक्तौ तस्य तदुक्तेः स्वप्नार्थेष्वहितसृष्टिदृष्टेश्च । स्रष्टा तत्र न जीवः किं त्वीशः श्रुतिवचोऽपि तद्विषयम् ॥ १८१ ॥

इति संध्याधिकरणम् ॥ १ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ तृतीयस्याध्यायस्य द्वितीयःपादः ।

### अथ सन्ध्याधिकरणम् ॥ १ ॥

सू ॥ संध्ये सृष्टिराह हि ॥ १ ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ४ ॥ देहयोगाद्वा सोऽपि ॥ ५ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥

**भगवत्पादमते,** पूर्वं जीवस्य गत्यागतिचिन्तया जाग्रदवस्था निरूपिता । अथ त्वंपदार्थस्य स्वयंज्योतिष्ट्वसिद्धये स्वप्नावस्थां निरूपयति–सू ॥ **सन्ध्ये सृष्टिराह हि** ॥ १ ॥ स्वप्नमधिकृत्य श्रूयते–'अथ रथान्रथयोगान्पथःसृजते' इति । तत्र किं स्वप्नसृष्टिर्व्यावहारिकी, उत मायामात्रमिति **संदेहः** । **सन्ध्ये**=जाग्रत्सुषुप्त्योस्सन्धौ भवे स्वप्ने **सृष्टिः** व्यावहारिक्येव । **हि**=यस्मात् 'अथ रथा' नित्यादिका श्रुतिरेवमाह ।

किंच । सू । **निर्मातारं चैके पुत्रादयश्च** ॥ २ ॥ एके शाखिनः जीववत्तथा अस्मिन्नेव स्वप्ने कामानां निर्मातारमीश्वरमामनन्ति 'य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः' इति । पुत्रादयश्च तत्र कामा अभिधीयन्ते काम्यन्त इति । एवं च 'स्वप्नसृष्टिः व्यावहारिकी, ईश्वरकर्तृकत्वात् क्षित्यादिवत्' इत्यनुमानमनेन सूत्रेण सूचितम् । तस्मात्पूर्वोदाहृतश्रुत्या एतदनुमानेन च स्वप्नसृष्टिर्व्यावहारिकीति सिद्धमिति **पूर्वपक्षः । सिद्धान्तस्तु, सू ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** ॥ ३ ॥ तुशब्दः पूर्वपक्षनिरासार्थः । स्वप्नसृष्टिः शुक्तिरूप्यवन्**मायामात्रम्** । कुतः । **कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** । न हि कार्त्स्न्येन देशकालादिसंपत्त्यबाधरूपपरमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपः स्वप्नः । यदुक्तम् 'अथ रथान्रथयोगान्पथःसृजते' इति तच्च 'न तत्र रथा रथयोगा न पन्थानो भवन्ति' इत्येवमादिकया श्रुत्यैव परिहृतम् । यच्चानुमानमुक्तं तत्रोचितदेशकालादिजन्यत्वमुपाधिः । हेत्वसिद्धिश्च 'स्वयं विहत्य स्वयं निर्माय'त्यादिना श्रुत्यन्तरेण स्वप्नसृष्टेर्जीवकर्तृकत्वश्रवणात् । अतः स्वप्नसृष्टिर्मिथ्येति युक्तम् । ननु स्वप्नस्य मिथ्यात्वे तत्सूचितोऽप्यर्थः सत्यो न स्यादित्याशंक्याह–सू ॥ **सूचकश्च हि श्रुतेराचक्षते च तद्विदः** ॥ ४ ॥ 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्' इत्यादिश्रुतेः स्वप्ने जायमानः स्त्रीदर्शनादिः सत्य एव । स च सत्यस्य साध्वसाधुवस्तुनः सूचको हेतुः । इत्यवगम्यते । **आचक्षते च स्वप्नाध्यायविदः** शुभाशुभसूचकत्वं स्वप्नदर्शनस्य । वस्तुतस्तु दर्शनस्य व्यावहारिकत्वेन सत्यत्वेऽपि शुक्तिरूप्यज्ञानस्य सत्यहर्षादिजनकत्ववत्सत्यशुभादिसूचकत्वमविरुद्धमिति भावः । अस्यसूत्रस्याधिकरणान्तिमसूत्रतया पाठः श्रीकण्ठरामानुजमतयोरिति पाठक्रमेऽस्ति विशेषः । आनन्दतीर्थमते शांकरमतानुसार्येव सूत्रपाठक्रमः ॥

ननु पूर्वमुचितदेशादिनिमित्ताभावात्स्वप्नो मायेत्युक्तमयुक्तम् । ऐश्वर्ययोगात्संकल्पमात्रेणापि सत्यसृष्टेः संभवादित्याशंक्याह–सू ॥ **पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ** ॥ ५ ॥

अस्य जीवस्य **तिरोहितमैश्वर्यं परस्य**=परमेश्वरस्य **अभिध्यानात्**=आभिमुख्येन ध्यानादभिव्यक्तं भवति । कुतः । **ततः**=तस्मादज्ञातादीश्वराद्**बन्धः** ज्ञाता**द्विपर्ययः**=मोक्षः इति 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः, तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' इति श्रुतिर्दर्शयति । एवं च जीवेश्वरयोरभेदेऽप्यैश्वर्यस्य तिरोहितत्वान्न जीवस्य संकल्पमात्रेण स्रष्टृत्वमिति भावः ।

ननु जीवस्यैश्वर्यतिरोभावे को हेतुरित्याशंक्याह–सू ॥ **देहयोगाद्वा सोऽपि** ॥ ६ ॥ सोऽपि जीवस्यैश्वर्यतिरोभावः । **देहयोगात्**=देहादावात्मत्वाभिमानलक्षणाविद्यावशात् । यथा भस्मयोगाद्वह्नेः प्रकाशनशक्तितिरोभावस्तद्वदित्यर्थः । वाशब्दः ईश्वरत्वासंभवशंकानिरासार्थः । अभेदस्याम्नायसहस्रप्रसिद्धत्वात् । अतः स्वप्नप्रपञ्चस्य मायामात्रत्वेन ततो विनिर्मुक्तस्य जीवस्य स्वयं ज्योतिष्ट्वसिद्धिरिति ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च स्वप्नमधिकृत्य श्रूयते 'न तत्र रथा रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथस्सृजते' इत्यारभ्य 'अथ वेशान्ताः पुष्करिण्यस्स्रवन्त्यस्स हि कर्ते' ति । अत्र किं स्वाप्नपदार्थस्रष्टा जीव एव उत परमात्मेति **संशयः** । स्वप्नदृशो जीवस्य सन्निधानात् 'स हि कर्ते'ति जीव एव परामृश्यते । जीवस्यापि सत्यसंकल्पत्वं प्रजापतिवाक्योदितमस्ति । अतस्स एव स्रष्टेति **पूर्वपक्षः । सिद्धान्तस्तु** जीवस्य सत्यसंकल्पत्वं स्वाभाविकमपि संसारदशायां परमपुरुषसंकल्पात्तिरोहितमिति न जीवस्य संकल्पमात्रेण स्रष्टृत्वमुपपद्यते । अतः परमात्मैव सकलेतरपुरुषानुभवाविषयांस्तत्तत्पुरुषमात्रानुभाव्यांस्तत्तत्कालावसानान्स्वाप्नान्पदार्थान्सृजतीति ॥ **सूत्रार्थस्तु सन्ध्ये**=स्वप्ने श्रूयमाणा । **सृष्टिः**=रथादिसृष्टिः स्वप्नदृशा जीवेन कृता । कुतः । **आह हि**=‘स हि कर्ते' ति प्रकृतस्य तस्यैव परामर्शादित्यर्थः ।

सू ॥ **निर्मातारं चैके पुत्रादयश्च** ॥ २ ॥ एनमेव जीवं निर्मातारं स्वाप्नार्थानामेके शाखिनोऽधीयते 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' इति । अत्र कामशब्दनिर्दिष्टाः काम्यमानतया पुत्रादय एव । चशब्दोऽवधारणे । पूर्वत्र 'सर्वान्कामान्छन्दतः प्रार्थयस्व' इत्युक्त्वा 'शतायुषः पुत्रपौत्रान्वृणीष्वे' ति विवृतत्वात् ।

अथ सिद्धान्तसूत्राणि व्याख्यायन्ते–सू ॥ **मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** ॥ ३ ॥ तुशब्दात्पक्षो व्यावर्तते । न जीवेन सृष्टं स्वाप्नमर्थजातम् । अपि त्वीश्वर**मायामात्रम्** । सकलेतरपुरुषानुभवाविषयं स्वप्नदृगेकानुभाव्यं तत्कालावसानमाश्चर्यरूपमर्थजातमीश्वरस्सृजतीत्यर्थः । जीवस्य सत्यसंकल्पत्वादेः **कृत्स्नस्य** संसारदशाया**मनभिव्यक्तस्वरूपत्वात्**तस्य संकल्पमात्रेण स्रष्टृत्वं नोपपद्यते । अतः 'पुरुषो निर्मिमाणः' इति न जीवविषयम् । किं तु 'तदेव शुक्र' मित्यादिवाक्यशेषादीश्वरविषयम् । तदैकार्थ्यात् 'स हि कर्ते' त्यपि तद्विषयमेव । अतः परमात्मकृता स्वप्नसृष्टिरिति ॥

जीवस्वरूपानभिव्यक्तिहेतुमाह–सू ॥ **पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ** ॥ ४ ॥ तुशब्दश्शंकानिवृत्त्यर्थः । **पराभिध्यानात्**=परमेश्वरसंकल्पात् अस्य स्वाभाविकं रूपमनादिकर्मप्रवाहेण कृतापराधतया **तिरोहितम् । ततः**=परमात्मनस्संकल्पादेव **ह्यस्य**=जीवस्य । **बन्धविपर्ययौ**=संसारमोक्षौ श्रूयेते । **श्रीकण्ठभाष्ये** 'यदा ह्येवैष एतस्मिन्' इत्युपक्रान्तं जीवस्य भयाभयप्राप्तिबोधकं श्रुतिद्वयमुपन्यस्तम् । **रामानुजभाष्ये** तु 'को ह्येवान्यात्कः प्राण्यात्' परंज्योतिरुपसंपद्य' इत्युपक्रान्तं श्रुतिद्वयं तत्प्रमाणतयोपन्यस्तमित्यनयोर्मतयोर्विशेषः ।

तिरोधानप्रकारमाह–सू ॥ **देहयोगाद्वा सोऽपि** ॥ ५ ॥ **सोऽपि**=तिरोभावः । **देहयोगाद्वा** भवति । वाशब्दो विकल्पार्थः । व्यवस्थितश्च विकल्पः । देवमनुष्यादिदेहाकारपरिणताचिद्योगात्सृष्टिवेलायां नामरूपविभागानर्हसूक्ष्मदशापन्नाचिद्योगेन प्रलयकाले ॥

उपपत्त्यन्तरमाह–**सूचकश्च हि श्रुतेराचक्षते च तद्विदः** ॥ ६ ॥ इतश्च स्वाप्ना रथादयो न जीवसंकल्पकृताः । यतः स्वप्नश्शुभाशुभयोस्**सूचक** इति **श्रुते**रवगम्यते । **तद्विदः**=स्वप्नाध्यायविदः 'यदा कर्मसु काम्येषु' 'अथ स्वप्ने पुरुषं कृष्ण' मित्यादिषु स्वप्नविशेषान्शुभाशुभसूचकाना**चक्षते** । स्वप्नानां जीवसृष्टत्वे तदशुभसूचकानां सृष्ट्यभावप्रसंगात् । अतः स्वाप्नानामर्थानां परमात्मैव स्रष्टेति ॥

**आनन्दतीर्थमते,** यद्वाद्ध्याय पूर्वस्मिन्पादे वैराग्यं निरूपितं या चोपासनांगं तां माहात्म्यज्ञानपूर्वकस्नेहरूपां भक्तिं निरूपयत्यस्मिन्पादे–सू ॥ **संध्ये सृष्टिराह हि** ॥ १ ॥ अत्राधिकरणे स्वाप्नप्रपञ्चस्य भगवदधीनत्वमहिमा वर्ण्यते । अत्र स्वाप्नप्रपञ्चस्य भगवदधीनत्वेन पारमार्थिकत्वं वा मरुमरीचिकाजलादिवत्प्रातीतिकत्वेनासत्यत्वं वेति **संदेहः** । स्वाप्नप्रत्ययानां विभ्रमत्वात्तद्विषयाश्शुक्तिरजतादिवदसत्या इति न तेषां सृष्टिवादो युक्त इति **पूर्वपक्षः । सिद्धान्तस्तु** 'अथ रथा' नित्याद्यनेकश्रुतिसिद्धा स्वाप्नपदार्थसृष्टिर्नापह्नवार्हा । तत्तत्कर्मानुसारिपरमेश्वरेच्छामात्रप्रभवाः स्वाप्नार्थास्सत्या एवेति तेषां सृष्टिर्भगवदधीनेत्यतस्तत्सृष्टिवादो युक्त एवेति । **सूत्रार्थस्तु, हि** यस्मात्='अथ रथा' निति **श्रुतिः सन्ध्ये**=जाग्रत्सुषुप्तिसंधौ भवे भगवतस्**सृष्टिमाह । अतः सृष्टिः** स्वाप्नपदार्थसृष्टिर्भगवतैव जायत इत्यर्थः ।

## अथ तदभावाधिकरणम्. ॥ २ ॥

### ॥ सू ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

स्वप्नाभावः सुषुप्तिः । 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवति' इति 'अथ यदा सुषुप्तो भवति यदा न कस्य चन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' इति 'यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति' इति च श्रुतिभिर्जीवस्य सुषुप्तौ नाडीषु पुरीतति ब्रह्मणि च शयनमवगम्यते । तेष्वस्य विकल्पः समुच्चयो वेति संशयः ॥

नाड्यादीनि स्थानानि विकल्पितानि भवितुमर्हन्ति, एकप्रयोजनत्वात् । यथा 'व्रीहिभिर्यजेत, यवैर्यजेत' इत्यत्र पुरोडाशनिष्पादनप्रयोजनस्यैकत्वेन विकल्पः स्वीक्रियते, तथा सुषुप्तिप्रयोजनस्यैकत्वात् कदाचित् पुरीतति शेते कदा-

## अथ तदभावाधिकरणम् ॥ २ ॥

सू० ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ सौत्रतदभावपदव्याख्यानेन स्वप्नावस्थाश्रयविचारानंतरं स्वप्नानंतरभाविसुषुप्त्याश्रयविचारः क्रियत इति संगतिं दर्शयति–स्वप्नाभाव इति । तेष्वस्येति । कार्यैक्यतद्भेदाभ्यां संशयः । एकप्रयोजनत्वादिति । नाडीपुरीतद्ब्रह्मणां हि सुषुप्तौ जीवं प्रत्यधिकरणभावेनोपयोगः । अधिकरणभावश्च प्रत्येकं सप्तमीभिर्निरपेक्षाणामवगम्यते । ततश्च यथा व्रीहीणां यवानाञ्च पुरोडाशसाधनत्वेन कृतावुपयुक्तानां प्रत्येकं तृतीयाभ्यां निरपेक्षसाधनत्वावगतेर्विकल्पः तथात्रापि विकल्प एव न्याय्य इत्यर्थः । ननु 'सता सोम्ये' त्यत्र सप्तमी न श्रूयत इति

---

सू ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ च=यतः । एके=शाखिनः एनं भगवन्तं 'य एष सुप्ते' ष्विति स्वाप्नपदार्थनिर्मातारमामनन्ति । अपरे च पुत्रादयस्तस्माद्विष्णोरेव जायन्त इति वदन्ति । तस्माद्विष्णोरेव स्वाप्नसृष्टिरित्यर्थः ।

सू ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ तुरेवार्थे । संध्यं मायामात्रं निमित्तोपादानभूताभ्यां मायाशब्दितेच्छावासनाभ्यामेव निर्मितम् । न बाह्यकारणकम् । कुतः । कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्=बाह्यवत्सम्यगनभिव्यक्तस्वरूपत्वादित्यर्थः ।

सू ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ च=यतः स्वाप्नपदार्थः । सूचकः=शुभाशुभज्ञापकः । अतोऽपि नासत्यः । तत्कुतः । 'यदे' ति श्रुतेः प्रत्यक्षतः फलदर्शनाच्चेति हिशब्दार्थः । किंच । तद्विदः=स्वप्नविदः व्यासादयः । आचक्षते च='यदे' ति श्रुतौ स्वाप्नानामर्थक्रियाकारित्वं वदन्त्यतोऽपीत्यर्थः ॥

इत्यानन्दतीर्थमते सन्ध्याधिकरणम् ॥ १ ॥

अथ पराभिध्यानाधिकरणम् ॥ २ ॥

सू ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥ अत्र स्वप्नतिरोधानं भगवदधीनं वा न वेति संदेहः । बाह्याज्ञानकृतस्य स्वप्नस्य बाह्यज्ञानेनैव विलयोपपत्तेर्न तत्तिरोधानं भगवदधीनमिति पूर्वपक्षः । अज्ञानमूलस्य बन्धस्य ज्ञानमूलस्य मोक्षस्य च तादधीन्यदर्शनात् न ह्यज्ञानमूलस्य ज्ञानेन लये न भगवदपेक्षेत्यस्ति नियमः । अतः स्वप्नतिरोधानमपि भगवदधीनमेवेति सिद्धान्तः ॥ इति पराभिध्यानाधिकरणम् ॥ २ ॥

अथ देहयोगाधिकरणम् ॥ ३ ॥

सू ॥ देहयोगाद्वासोऽपि ॥ ६ ॥ अत्र जाग्रदवस्था भगवधीना न वेति संदेहः । तस्याः कालाधीनत्वदर्शनान्न सा भगवदधीनेति पूर्वपक्षः । सिद्धान्तस्तु, कालस्याचेतनस्यास्वातंत्र्येण कालाधीनत्वप्रत्यक्षस्य निमित्ततामात्रविषयत्वात् 'स एव जागरिते स्थापयती' त्यादिश्रुतेश्च जागरावस्थापि भगवदधीनैवेति । सूत्रार्थस्तु, देहयोगाद्वासः=देहाभिमानेनावस्थितिरूपा जाग्रदवस्थापि पराभिध्यानादेव भवति नान्यत इत्यर्थः ॥ इति देहयोगाधिकरणम् ॥ ३ ॥

चिन्नाडीषु कदाचित् ब्रह्मणीति विकल्प एवात्र समुचित इति पूर्वः पक्षः ॥

चेत्सत्यम् । तद्वाक्यशेषे श्रूयते 'सति सम्पद्य न विदुस्सति सम्पत्स्यामह इती'ति। 'ननु सन्मूलास्सोम्येमाः सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा' इति श्रवणान्नियमेन ब्रह्माश्रितस्य जीवस्य कथं तदनपेक्ष्य कदाचिन्नाड्यां पुरीतति वा सुषुप्तिराशंक्यते ? उच्यते। न केवलस्य ब्रह्मणोऽत्र विकल्पकोटित्वं किं तु दहराकाशरूपस्य । छांदोग्य एव हि दहरविद्यायां दहराकाशरूपं ब्रह्म प्रकृत्य तस्य सुषुप्तिस्थानत्वं श्रूयते । 'एवमेवेमास्सर्वाः प्रजा अहरहर्ब्रह्म गच्छंत्यः एतं ब्रह्मलोकं न विंदती'ति । तदेतद्दहराधिकरण एव 'गतिशब्दाभ्या' मिति ( ब्र० १-३-१४ ) सूत्रे निरूपितमिति नात्राविष्कृतं भाष्ये । अपि च सद्विद्यावाक्यशेषेऽपि 'सत आगत्य न विदुस्सत आगच्छामह' इति श्रूयते । तेन किञ्चित्प्रदेशावच्छिन्नमेव सच्छब्दोक्तं ब्रह्म सुषुप्तिस्थानमिति गम्यते । न हि ग्रामादिवापरिच्छिन्नाद्ब्रह्मण आगमनं संभवति । तत्रैव जीवब्रह्मणोस्सूत्रप्रबद्धशकुनितदाधारयष्टिदृष्टान्तश्रवणेन चैतत्सिध्यति । नहि किञ्चित्प्रदेशावच्छिन्नब्रह्माविवक्षायां शकुनेराधारयष्टित इव जीवस्य ब्रह्मणो निष्क्रम्य प्रतिदिशं पतनं वक्तुं शक्यम् । स चावच्छेदको हृदयपुण्डरीकरूप इति एव प्रदेशान्तरपर्यालोचनया निश्चीयते । स्पष्टं चैवमेव श्रुत्यंतरे समाम्नायते- 'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदय आकाशस्तस्मिन्छेत' इति । तस्मादुपपन्नात्र ब्रह्मणोऽपि वैकल्पिकाधिकरणत्वशङ्का। ननु 'तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथाऽस्मिन्प्राण एवैकधा भवती'ति नाडीनां प्राणशब्दोक्तस्य ब्रह्मणश्च समुच्चयः श्रूयते । तथा 'ताभिः प्रत्यवसृप्य पुरीतति शेत' इति नाडीनां पुरीततश्च समुच्चयः श्रूयते ।, एककार्याणामपि समुच्चयश्रवणे सति न विकल्पः प्रवर्तते । अत एवानुष्ठेयार्थप्रकाशनैककार्याणामप्यभ्यादानमंत्राणां 'चतुर्भिरभ्रिमादत्त' इति समुच्चयश्रुतिसत्त्वात् व्रीहियववदैन्द्राबार्हस्पत्ययाज्यानुवाक्यायुगलत्रयवच्च न विकल्प इष्यते । न चाणोर्जीवस्यानेकाधिकरणसमुच्चयानुपपत्तिः । नाडीनां पुरीतत्प्राप्तौ ब्रह्मप्राप्तौ च मार्गत्वेन समुच्चयोपपत्तेः । पुरीतद्ब्रह्मणोरपि प्राकारपर्यंकन्यायेन समुच्चयोपपत्तेः । पुरीतदिति हि हृदयपुण्डरीकपरिवेष्टनमुच्यते । तथा च यथा प्राकारपरिवेष्टितप्रासादमध्यगते पर्यंके शयानः प्राकारे शेत इत्यपि व्यपदिश्यते, तथा च पुरीतद्वेष्टितहृदयपुण्डरीकमध्यगते ब्रह्मणि शयानः पुरीतति शेत इत्यपि व्यपदेष्टुं शक्यते नात्र कश्चिद्विरोध इति चेदुच्यते । 'यदा सुषुप्तो भवती' त्यादिश्रुतौ हृदयाकाशं प्राप्तस्य जीवस्य पुनर्हृदयान्नाडीभिर्निष्क्रम्य पुरीतति शयनं श्रूयते 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति । एतद्वाक्यं हृदयाकाशं विहाय केवले पुरीतति शयनेनोपपादनीयम् । 'न हि प्रासादान्निर्गत्य प्राकारे शेते नृपति' रिति वाक्यं प्राकारवेष्टितप्रासादमध्यगतपर्यंकशयनेनोपपादयितुं शक्यम् । अतो हृदयाकाशे पुरीतति च शयनस्य वैकल्पिकत्वं तावदवश्यमेष्टव्यम् । एवमेव नाडीनामपि वैकल्पिकत्वं भविष्यति । 'आसु तदा नाडीष्वि'ति निरपेक्षसप्तमीश्रुतिबाधनायोगात् प्राकारवेष्टितप्रासादमार्गभूतमध्यगतकक्ष्याविशेषे कदाचिद्राज्ञ इव जीवस्य नाड्यामपि कदाचिच्छयनोपपत्तेश्च । तस्मादेषां विकल्प एव । एवं

(१) 'छांदोग्य एव' इति ख. पाठः ।

**समुच्चय इति सिद्धान्तः। कुतः ? नैकप्रयोजनत्वात्। तथा हि–जीवस्य हृदयनिष्ठब्रह्मगमनमार्गतया नाडीनां साधनत्वं पुरीतति ब्रह्मणि च प्रासादपर्यङ्कवदविरोधः। अतो नाडीभिरुपसृप्य पुरीतति ब्रह्मणि जीवः शेत इत्युपकारभेदात् समुच्चय एव ॥**

---

प्राप्ते सिद्धान्तमाह–समुच्चय इति। सूत्रे चकारात्पुरीतद्ग्रहणमिति त्रयाणां समुच्चय इत्यर्थः। 'तच्छ्रुते' रित्यस्य समुच्चयश्रुतेरिति नार्थः। त्रयाणां समुच्चयश्रुतेरभावात्। किं तु त्रयाणां स्थानत्वश्रवणादित्यर्थः। तच्च व्रीहियववन्नाडीनां नाडीमार्गगम्यस्य पुरीततस्तथाभूतस्य दहराकाशरूपब्रह्मणश्च निरपेक्षकारकत्वश्रवणरूपं विकल्पस्यैव साधकं न समुच्चयस्येत्याशंक्य हेतोराशयमाविष्करोति–नैकप्रयोजनत्वादिति। नैकेति नसमासः। भिन्नप्रयोजनत्वादित्यर्थः । ननु फलभूमाल्पत्वरूपप्रयोजनभेदेऽपि षोडशिग्रहाग्रहयोर्विकल्प इष्यते। विरुद्धयोस्तयोरेकत्र समुच्चयायोगात्। तथेहापि विकल्पो युक्तः। अणुं जीवं प्रति परस्परविप्रकृष्टानां बहूनामधिकरणत्वसमुच्चयायोगादित्याशंक्य द्वारद्वारिभावेन भिन्नप्रयोजनतया समुच्चयमुपपादयति–तथाहीति । प्राकारस्थानीयस्यापि पुरीततः प्रासादस्थानीयत्वोक्तिः प्राकारस्य प्रासादपरिवृत्तिरूपतया तदेकदेशत्वाभिप्रायेण। अत्रायमाशयः। 'ताभिः प्रत्यवसृप्येति' हृदयात्प्रत्यागमनं नोच्यते किं तु स्वप्नवहनाडीभ्यः। पूर्वं हि 'स यत्रैतत्स्वप्नयाचरति ते हास्य लोका तदुतेव महाराजो भवति उतेव महाब्राह्मणः उतेवोच्चावचं निर्गच्छती' त्यादिना स्वप्नावस्थां निरूप्य 'अथ यदा सुषुप्तो भवती' त्यादिना सुषुप्त्यवस्था निरूपयितुमुपक्रान्ता। स्वप्नावस्थायाञ्च स्वप्नवहनाडीष्ववस्थानमन्यत्र प्रसिद्धम् । तथा हि–हृदयस्य सुषुम्नां परितो दश नाड्यो दशेन्द्रियव्यापारहेतवो दशप्राणाधिष्ठिताः। तासां च वृक्षाणामिव प्रत्येकं दश दश शाखारूपा नाड्यः। तासां शतस्य शाखानाडीनामेकैकस्या द्वासप्ततिर्द्वासप्ततिरित्येवं द्विशतोत्तराणि सप्तसहस्राण्युपशाखानाड्यः। तासामवान्तरशाखानाड्यो द्वासप्ततिसहस्रसंख्याः सहस्रधा भिन्नकेशांशवदतिसूक्ष्माः यासामुदाहृतबृहदारण्यवाक्ये हिता इति नामोपन्यस्तम्। तत्र प्रधानभूतासु दशसु नाडीषु यदा प्राणेन संयुज्यते जीवः तदा स्वप्ने नदीनगरहर्म्यप्राकारादीनां दर्शनं भवति। यदा व्यानेन तदा देवर्षीणां यदापानेन तदा यक्षराक्षसगन्धर्वाणां यदोदानेन देवलोकानां देवानां स्कन्दजयन्तयोश्च यदा समानेन तदा देवानां लोकानां धनानां च यदा वैरम्भेण तदा जागरदृष्टादृष्टश्रुताश्रुतभुक्ताभुक्तादीनां यदा स्थूलनाडीभ्यः प्रत्यवसृप्योपशाखानाडीषु प्रत्यवसर्पति तदैहलौकिकपारलौकिकव्यापाराणां दर्शनं भवति। एतत्सुबालोपनिषद्यपि 'हृदयस्य दश छिद्राणि भवन्ति। तेषु प्राणाः प्रतिष्ठिताः। स यदा प्राणेन सह संयुज्यते तदा पश्यति नद्यो नगराणि बहूनि विविधानि चे' त्यादिना 'प्राणश्शरीरं परिरक्षती' त्यंतेन प्रतिपादितम्। एवञ्चात्र 'ताभिः प्रत्यवसृप्ये' त्यस्य स्वप्नवहनाडीभ्यः अतिसूक्ष्महितनाडीमार्गेण प्रतिनिवृत्त्येत्येवार्थो ग्राह्यः। न तु हृदयादिति । हृदयस्य स्वप्नस्थानत्वाभावात्। 'अतो हृदयात्पुरीततमभिप्रतिष्ठन्त' इति वचनं द्वासप्ततिसहस्रसंख्यावचनवत्स्वरूपकथनार्थं न तु हृदयात्पुरीततमभिप्रविशतो मार्गख्यापनार्थम्। 'प्रत्यवसृप्ये' त्यत्र प्रत्युप-

---

(१) 'प्रत्यवसर्गश्च' इति. ख. पाठः.

## ॥ सू ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥

'सत आगम्य न विदुः सत आगच्छामहे' इति ब्रह्मणः सकाशादस्य प्रबोधं श्रुतिराह । अतः समुच्चयः । विकल्पेऽङ्गीकृते ह्यष्टदोषप्रसङ्गः । यदा जीवो नाडीषु शेते तदा पुरीतद्ब्रह्मवाक्ययोः प्रामाण्यं प्राप्तं परित्यज्येत । अप्राप्तं चाप्रामाण्यं स्वीक्रियेत । यदा पुरीतद्ब्रह्मणोः शेते तदा पुरीतद्ब्रह्मवाक्ययोः पूर्वं त्यक्तं प्रामाण्यं स्वीक्रियेत । पूर्वं स्वीकृतं चाप्रामाण्यं परित्यज्येत । इति प्राप्तपरित्यागोऽप्राप्तस्वीकारः परित्यक्तस्वीकारः स्वीकृतपरित्यागश्चेति दोषचतुष्टयं पुरीतद्ब्रह्मवाक्यकोटौ । तथा नाडीवाक्यकोटौ च दोषचतुष्टये योजिते सत्यष्टौ दोषा भवन्ति । ततो न विकल्पः समुच्चयोपपत्ताविति समाधिः ॥

इति तदभावाधिकरणम् ॥ २ ॥

---

सर्गश्च प्रतिसुषुप्ति हितनाडीमार्गेण निवृत्तिरस्तीत्यभिप्रायकः । न तु पुरीततो नाडीमार्गेण हृदयं प्रविष्टस्य पुनर्हृदयात्पुरीतत्प्रवेशार्थं प्रतिनिवृत्त्यभिप्रायकः । अतः 'प्रासादे शेत' इति वचनस्य प्रासादान्तर्वर्त्तिपर्यङ्के शयान इव हृदयान्तर्वर्त्तिनि ब्रह्मणि शयाने पुरीतति शेत इति वचनस्य न काचिदनुपपत्तिः । नाडीषु सुप्तो भवतीत्यस्यापि नानुपपत्तिः । हृदयाकाशरूपे ब्रह्मणि स्वप्तुं यो नाडीः प्रविशति स तु नाडीषु सुप्त एव भवति । श्रावयति च तत्र वाक्यशेष एव ब्रह्मसम्पत्तिं 'तन्न कञ्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवती'ति । एवं तार्प्यदर्भमयाहतवासोन्यायात्प्रयोजनभेदेन नाडीपुरीतद्ब्रह्मणां समुच्चये समर्थयितुं शक्ये वक्ष्यमाणाष्टदोषदुष्टो विकल्पो नाङ्गीकर्तव्यः । व्रीहियवयोस्तु प्रयोजनभेदाद्युपायान्तरादर्शनात् 'एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यत' इत्युक्तरीत्या गत्यन्तराभावेन विकल्पाङ्गीकार इति । एवमुपपादितायां सुषुप्तेर्ब्रह्माधिकरणत्वस्य नियततायामुपपत्त्यन्तरप्रदर्शनार्थं सूत्रम्—सू ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥ अतस्समुच्चय इति । अन्यथा 'सत आगत्येति' नित्यवच्छ्रवणविरोध इति भावः । इत्यष्टौ दोषा इति । इदं पुरीतद्ब्रह्मवाक्ययोरेकीकृत्य प्रदर्शनादुक्तम् । वस्तुतस्तु नाडीवाक्य इव तयोरपि प्रत्येकं चत्वारश्चत्वारो दोषा इति द्वादश दोषा द्रष्टव्याः । अष्टदोषदुष्टो विकल्प इति प्रसिद्धिस्तु प्रसिद्धोदाहारणयोः व्रीहियवशास्त्रयोर्द्वित्वात् । इहैकस्यां सुप्तौ नाड्यां शयने पुरीतद्वाक्ये ब्रह्मवाक्ये च प्रत्येकं प्राथमिकौ द्वौ द्वौ दोषौ सुषुप्त्यन्तरे पुरीतति शयने नाडीब्रह्मवाक्ययोः प्रत्येकं प्राथमिकौ द्वौ दोषौ पुरीतद्वाक्ये तूपरितनमपि दोषद्वयमिति पुनस्सुषुप्त्यन्तरे ब्रह्मणि शयने ब्रह्मवाक्येऽप्युपरितनं दोषद्वयं ततस्सुषुप्त्यंतरे नाड्यां शयने नाडीवाक्येऽप्युपरितनं दोषद्वयमिति स्वापचतुष्टयेन द्वादश दोषाः प्रादुःष्युः । व्रीहियवशास्त्रयोस्तु प्रयोगत्रयेणाष्टौ दोषा इति विशेषः । नन्वनेनाधिकरणेन कः परब्रह्मणो महिमविशेषः सिध्यति । सुप्तजीवविश्रांतिस्थानत्वगुणनियम इति चेन्न । तस्य पूर्वपक्षेऽप्यनपायात् । मुक्तिसंसारयोरविशेषेण ब्रह्माश्रितस्य जीवस्य नाड्यां पुरीतति वा कदाचित्सुप्तिरिति पूर्वपक्षेऽप्यस्त्येव हि तत्तदवच्छिन्नब्रह्माश्रितत्वं दहराकाशरूपेण ब्रह्मणस्सुषुप्तिस्थानत्वगुणनियम इति चेन्न । ततस्तस्य महिम्नि कस्यचिद्विशेषस्यालाभादिति चेदुच्यते । सुप्तौ तावज्जीवस्य सकलपापास्पर्शः श्रुतिषु च

प्रसिद्धः । नाडीवाक्येऽपि श्रूयते स तु नित्यवदाम्नातः । पूर्वपक्षे सुषुप्त्यवस्थाविशेषप्रयुक्तो भवति स तु पाक्षिकब्रह्मसम्पत्तिप्रयुक्तः 'तेजसा हि तदा सम्पन्नो भवती'ति नाडीवाक्यशेषोऽपि पूर्वपक्षे नाडीनामेव तेजस्त्वेन कथञ्चित्स्तुतिपरतया योजनीयो भवति । सिद्धान्ते तु दहराकाशरूपब्रह्मसम्पत्तिप्रयुक्त एव स सिध्यति । प्रसिद्धो हि दहरविद्यायां तत्सम्पन्नस्य सर्वपाप्मास्पर्शः 'सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोक' इति । एवं सुषुप्तौ यस्य दहराकाशरूपस्य सम्पत्त्या जीवस्य सकलपाप्मास्पर्शः तद्ब्रह्म महामहिमेत्यनेनाधिकरणेन ख्याप्यत इत्युक्तरूपमहिमसिद्धिरस्याधिकरणस्य फलम् । एतत्फलावलम्बनेनोत्तराधिकरणपूर्वपक्षप्रवृत्तिरिति ॥ इति तदभावाधिकरणम् ॥ २ ॥

## नयमणिमालायाम्

### अथ तदभावाधिकरणम् ॥ २ ॥

सू ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥

नाड्यादीनां सुप्तौ निरपेक्षत्वाद्विकल्पः स्यात् । मैवं समुच्चयोऽर्हति मार्गप्रासादमञ्चनयात् ॥ १८२ ॥

इति तदभावाधिकरणम् ॥२॥

## सूत्रार्थचन्द्रिकायाम्

### अथ तदभावाधिकरणम् ॥ २ ॥

सू ॥ तदभावोनाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥

**भगवत्पादमते,** अत्र परस्परं विप्रतिपन्नानि सुषुप्तिवाक्यानि विचार्यन्ते । क्वचित् 'आसु तदा नाडीषु सृप्तो भवति' इति सुषुप्तिकाले नाडीप्रवेशः श्रूयते, क्वचि 'त्ताभिः प्रत्यवसृप्य पुरीतति शेते' इति क्वचित् 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति । तत्र किं जीवस्य नाडीपुरीततत्परमात्मनां मध्ये यत्र क्वचित्सुषुप्तिरिति विकल्पः । उत नाडीपुरीतत्प्रवेशानन्तरं परमात्मन्येवेति समुच्चयः । इति **संदेहे** एकफलत्वाद्व्रीहियवादिवद्विकल्प इति **पूर्वपक्षः । सिद्धान्तस्तु,** नाडीपुरीतत्प्रवेशानन्तरं परमात्मन्येवेति समुच्चय एव न्याय्य इति । **सूत्रार्थस्तु, तदभावः**=स्वप्नाभावः सुषुप्तिः । नाडीषु आत्मनि च इति नाड्यादीनां समुच्चय एव न विकल्पः । स च समुच्चयः नाडीपुरीतत्प्रवेशं विना सत्संपत्तेरभावान्नाडीपुरीततोर्गुणभूततया परमात्मनः प्राधान्येनावगन्तव्यः । कुतः । **तच्छ्रुतेः**=तस्य नाड्यादीनां सुषुप्तिस्थानत्वस्य श्रुतत्वात् । उक्तसमुच्चयानङ्गीकारे श्रुतीनां संग्रहो न स्यादिति भावः ।

किं च । सू ॥ **अतः प्रबोधोऽस्मात्** ॥ ८ ॥ यतः परमात्मैव सुषुप्तिस्थानम् अत एव हेतोः अस्मात्परमात्मनो जीवस्य प्रबोध उपदिश्यते । 'सत आगम्य न विदुस्सत आगच्छामह' इति सद्रूपात्परमात्मनस्सकाशाज्जीवा आगच्छन्ति' इति श्रवणादन्यस्य सुषुप्तिस्थानत्वे इदं श्रवणं बाध्येत । अन्यत्र सुप्तस्यान्यस्मात्समुत्थानायोगादिति भावः । तस्मात्सुषुप्तौ मिथ्याज्ञानाभावमात्रेण ब्रह्मसंपत्तेः सत्वान्मूलाज्ञाननिवृत्तौ साकल्येन ब्रह्मसंपत्तिरविरुद्धेति । अतो जीवस्य ब्रह्मैक्यमिति सिद्धम् ॥

**श्रीकण्ठमते, तथा रामानुजमते,** च **संदेहपूर्वपक्षादिषु** नास्ति वैलक्षण्यं पूर्वस्मात् । **श्रीकण्ठमते** तु विकल्पपक्षाङ्गीकारे प्राप्तपरित्यागोऽप्राप्तस्वीकारः परित्यक्तस्वीकारः स्वीकृतपरित्यागश्चेति प्रतिपक्षं दोषचतुष्टयापादनेनाष्टदोषोपपादनमधिकमुपन्यस्तमिति विशेषः । **आनन्दतीर्थमते,** अधिकरणद्वितयात्मतया विभक्ते इमे सूत्रे । स्वप्नजागरन्यायेन सुषुप्तेरपि भगवदधीनत्वे सिद्धे तस्याः स्थानविचारः प्रस्तूयते—'सता सोम्य तदा संपन्नो भवती' ति श्रुत्या भगवत्येव सुषुप्तिर्वाच्या । 'आसु तदा नाडीषु सुप्तो भवती' ति श्रुतिरप्रमाणमिति **पूर्वपक्षः** । सुषुप्तौ नाडीष्ववस्थाने दुःखित्वप्रसंगादुभयविधश्रुतिदर्शनाच्च नाडीस्थे भगवति सुषुप्त्युपपत्तेरुभयविधश्रुतिप्रामाण्यसंभवे कस्याश्चिदप्रामाण्यकल्पनायोगात् ॥ इति **सिद्धान्तः** । अस्मिन्मते 'तच्छ्रुतेरात्मनि ह' इति पाठः । हेत्ययं शब्दः श्रुतिप्रसिद्धिवाचकः । सूत्रार्थः स्पष्टः ॥

इति तदभावाधिकरणम् ॥ ४ ॥

### अथ प्रबोधाधिकरणम् ॥ ५ ॥

सू ॥ अतः **प्रबोधोऽस्मात्** ॥ ८ ॥ अत्र सुप्तस्य प्रबोधो भगवदधीनो वा उत भेरीताडनाद्यधीनो वेति **संदेहे** भेरीताडनाद्यधीनत्वं लोकदृष्टमेव युक्तमिति **पूर्वपक्षः** । 'एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठती' ति सावधारणकौण्डिन्यश्रुत्यनुरोधेन भेरीताडनाद्यधीनत्वदर्शनस्य निमित्तमात्रत्वविषयत्वादिति **सिद्धान्तः** ॥ इति प्रबोधाधिकरणम् ॥ ५ ॥

इति सूत्रार्थचन्द्रिकायां तदभावाधिकरणम् ॥ २ ॥

## अथ कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

## ॥ सू ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

अत्र 'सता सोम्य तदा संपन्नो भवति' इति विषयः ॥

पूर्वत्र जीवस्य सुषुप्त्यवस्था निरूपिता। तत्र ब्रह्मणि सुप्त एव प्रतिबुध्यते, उतान्य इति संशयः ॥

इहान्य इति प्राप्तम्, ब्रह्मप्राप्तस्यावृत्तेरनुचितत्वात्। निरतिशयानन्दे ब्रह्मणि साम्यं प्राप्तस्य जीवस्य पुनर्न दुःखमयसंसारावृत्तिरुपपद्यते। सता संपन्नः कथमुत्तिष्ठेत्, को वात्र विभागः ॥

## अथ कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

सू० ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ इति संशय इति। पूर्वाधिकरणफलत्वेन विवक्षितस्य सुषुप्तौ सर्वपाप्मास्पर्शस्य मुक्ताविव सर्वोपाधिविनिर्मोक्षादिप्रयोजकत्वाप्रयोजकत्वाभ्यामयं संशयः। ब्रह्म प्राप्तस्येति । मुक्तस्येव सुषुप्तस्यापि ब्रह्मप्राप्त्या सकलपाप्मोत्तीर्णत्वं तेन सर्वदुःखोत्तरणं च बृहदारण्यके श्रूयते 'अनन्वागतं अनन्वागतं पापेन तीर्णो हि तदा सर्वान्पाप्मनः शोकान्हृदयस्य भवती'ति। सर्वपाप्मोत्तरणपूर्वकं निरतिशयानंदरूपब्रह्मसम्पत्त्या स्वरूपानंदाभिव्यक्तिरपि जीवस्य तत्रैव श्रूयते। 'स यथा कुमारो वा महाराजो वा महाब्राह्मणो वातिघ्नीमानन्दस्य गत्वा शयीत एवमेवैष एतच्छेत इति तद्वा अस्यैतदतिच्छन्दाः अपहतपाप्माभयं रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नांतरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तर'मिति । अतिघ्नीमतिशयेन दुःखहन्त्रीं दशाम्। अतिछन्दा अतिछन्दमिच्छावर्जितमकामं काम्यविषयरहितं शोकान्तरं शोकतिरोधायकमित्यर्थः। एवञ्च सुषुप्तिमुक्ताद्विभागस्य पुनरावृत्तिहेतोर्वैलक्षण्यस्याभावादन्य एवोत्तिष्ठतीति[1] वक्तव्यम्। उपायसहस्रेणापि मुक्तवद्ब्रह्मप्राप्तस्य पुनरावृत्तेरुपपादयितुमशक्यत्वात् । अतः कर्मानुस्मृतिशब्दविधयो यथाकथञ्चिदुपपादनीयाः। कथं कर्मफलभोगनियमः। अतः पुण्यं फलभोगार्थिना संकीर्त्तनादिभ्य इव सुषुप्तितोऽपि रक्षणीयम्। पापबृन्दस्य सुषुप्त्या शुद्धिः स्त्रीणां मानसव्यभिचारादेः[2] रजसेव । स्वविषया परविषया वा प्रत्यभिज्ञा स्वप्न इव भ्रान्तिरूपा। स्वप्ने हि स्वात्मानं राजचोरव्याघ्रादिरूपमनुभवन्प्रागप्यहमेवंरूप इति मन्यते प्रागदृष्टमेव कंचित्पुरुषं पश्यन् प्रागप्ययं दृष्टो मयेति मन्यते। अत इह 'व्याघ्रो वे'त्यादिशब्दो यच्छरीरकः प्राचीनस्तच्छरीरक एवान्य उत्तिष्ठतीत्येवंपरः। मोक्षार्थविधयश्च ब्रह्मानन्दानुभवार्थिविषयतया चरितार्थाः। सुषुप्तस्य हि स्वरूपानन्दानुभव एव केवलं न तु ब्रह्मानन्दानुभवोऽपि। ब्रह्मसाक्षात्काराभावात्। एवञ्च यस्य केवलस्वरूपानन्दानुभूतौ न पर्याप्ता बुद्धिः तेन प्रयत्नतः सुषुप्तिं वर्जयित्वा भोगमोक्षार्थं विहितानुष्ठाननिषिद्धपरिहारश्रवणमननादिषु यतितव्यमिति अतः सुषुप्तविषयश्रुत्यनुरोधादन्य एवोत्तिष्ठतीत्यभ्युपगन्तव्यमिति पूर्वपक्षाभिप्रायः। एवञ्च 'अतः प्रबोधोऽस्मादिति' पूर्वाधिकरणसूत्रे सुषुप्तस्य ब्रह्मणस्सका-

(१) 'तीत्यङ्गीकर्तव्यम्' इति ख. पाठः। (२) 'व्यभिचारदोषस्य' इति ख. पाठः।

इति प्राप्ते ब्रूमः—सता संपन्नोऽपि सुप्त एव प्रतिबुद्ध उत्तिष्ठति, ज्ञानवैधुर्येण कृतस्य कर्मणस्तेनानुभाव्यत्वात्, पूर्वानुभूतप्रत्यभिज्ञानाच्च, 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति' इति तद्भावश्रुतेश्च, मोक्षोपायविधिवाक्यानर्थक्यप्रसङ्गाच्च। 'सत आगम्य न विदुः' इति संपन्नस्य ब्रह्मानन्दज्ञानाभावोक्तेर्मुक्ताविव न तल्लयः। अतः सुप्त एव पुनः समुत्तिष्ठतीति युक्तम् ॥

इति कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

---

शास्त्रबोध इति यदुक्तं तन्नोपपद्यत इति तदाक्षेपेणास्याधिकरणस्य प्रवृत्तिः। सुप्त एवेति। अयमाशयः। सुप्तविषयपाप्मास्पर्शाद्यर्थवादमनुरुध्य न कर्मानुस्मृत्यादीनामेतावद्व्याकुलीकरणं न्याय्यम्। 'नो ह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि नाहमत्र भोग्यं पश्यामी'ति सुषुप्तौ निन्दार्थवादोऽपि श्रूयते। अतो यद्यपि जीवस्य दहराकाशरूपब्रह्मसम्पत्त्यर्थे हृदयानुप्रवेशे मनुष्यस्य दिव्यक्षेत्रानुप्रवेशे तं गृहीतवतः पिशाचस्येव पुण्यपापाधिकरणस्यान्तःकरणस्य बहिरेवावस्थानमिति तदानीं न जीवस्य पुण्यपापस्पर्शः ब्रह्मसम्पन्नस्योपसंहृतसकलबाह्येन्द्रियकरणत्वान्न शोकोदयः, जागरस्वप्नदशापन्नस्येव तस्य व्याक्षेपाभावादीषत्स्वरूपानन्दाभिव्यक्तिश्च। तथाप्यग्रिमसंसारनिमित्तयोः पुण्यपापयोः स्वरूपतो नाशाभावात्तस्यैवोत्थाने न काचिदनुपपत्तिः। अतः कर्मानुस्मृत्याद्यनुसारेण स एवोत्तिष्ठतीत्यङ्गीकरणीयम्। एवं सति 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' इत्यादिश्रुतयोऽप्याञ्जस्यं लभेरन्निति ॥

इति कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

---

## नयमणिमालायाम्

### अथ कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

सू० ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

मुक्ताविवास्य सुप्तावाम्नानाद्ब्रह्मसम्पत्तेः। सुप्तो नोत्तिष्ठति पुनरुत्तिष्ठत्यन्य एवात्मा ॥ १८३ ॥
भोक्तव्यकर्मसत्त्वात्स्मरणात्त इहेति च श्रवणात्। मोक्षोपायविधानादुत्तिष्ठति सुप्त एवात्मा ॥ १८४ ॥

इति कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

सू ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

भगवत्पादमते, अत्र यस्सुप्तो जीवस्स एव प्रतिबुध्यते वा उत स एव अन्यो वेत्यनियमो वेति **संशये** अनियम इति **पूर्वपक्षः**। **सिद्धान्तस्तु** यस्सुप्तो जीवस्स एव प्रतिबुध्यते नान्यः। कुतः। **कर्मानुस्मृतिशब्दविधिभ्यः** पञ्चभ्यो हेतुभ्यः=दिनद्वयसाध्यस्य कर्मणोऽर्धं कृत्वा सुप्तः पुनरुत्थायावशिष्टमर्धं करोति। अनुशब्देन प्रत्यभिज्ञा सूच्यते। योऽहमतीतेऽप्यहनि घटमद्राक्षं स एवैतं घटं स्पृशामीत्याद्याकारा। पश्चात्स घट इत्यादिस्मरणं स्मृतिशब्देनोच्यते। पुनः 'प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' इत्यादिश्रुतिसमूहः शब्देनोच्यते। कर्मविद्याविधयो विधिशब्देनोच्यन्ते। यदि सुप्तस्य पुनर्नोत्थानं तर्हि उक्तहेतवो बाध्येरन्। अतः सुप्त एवोत्तिष्ठतीति सिद्धम्। **श्रीकण्ठमते** तथा **रामानुजमते** च यद्यपि सन्देहपूर्वपक्षादिकमविशिष्टम्। तथापि 'कर्मानुस्मृतिशब्दविधिभ्य' इत्यस्यार्थवर्णनमात्रेऽस्ति कियती भिदा पूर्वस्मात्। ज्ञानवैधुर्येण कृतस्य कर्मणस्तेनानुभाव्यत्वात् पूर्वानुभूतप्रत्यभिज्ञानात् 'त इह व्याघ्रो वे' त्यादितद्भावश्रुतेः मोक्षोपायविधिवाक्यानर्थक्यप्रसङ्गाच्चेति तदर्थः। इति ॥

## अथ मुग्धाधिकरणम् ॥ ४ ॥

### ॥ सू ॥ मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

मूर्छितः पुरुष इति व्यवहारान्मूर्छेति काचिदवस्थानुभूयते । सैषा सुषुप्त्यादिभ्यो भिन्ना न वेति संदेहः॥

जागरस्वप्नसुषुप्तिभ्यो भिन्नाया अवस्थाया अप्रसिद्धत्वान्मूर्छा जागरादिष्वन्तर्भूता ॥

इति पूर्वपक्षे प्राप्त उच्यते—मूर्छिते पुरुषे यावस्था सा मरणार्धसंपत्तिः इति परिशेषात् भिन्ना सुषुप्त्यादेः । प्रपञ्चप्रतीतेरभावान्न जागरस्वप्नयोरन्तर्भावः । सुषुप्तेः प्रसन्नवदनादिलक्षणाया विकृतमुखादिलक्षणाया अस्याश्च विशेषात् ततोऽप्यन्यावस्था मूर्छेति सिद्धम् ॥ इति मुग्धाधिकरणम् ॥ ४ ॥

---

## अथ मुग्धाधिकरणम् ॥ ४ ॥

सू० ॥ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥ जीवावस्थाविचारप्रसंगादिदमधि- [illegible] । मूर्छावस्था उक्तावस्थाभ्यो भिन्ना न वेति तद्भेदकसद्भावासद्भावाभ्यां संशये विशेषविज्ञानाभावसाम्यात् सा सुषुप्तिः करालवदनत्वादिसाम्यात्क्रोधदशेव जागरावस्था भीषणस्वप्नदर्शनदशेव वा स्वप्नावस्था वृक्षाग्रपतनादिकारणकत्वाद्वा मरणावस्था न तु सुषुप्त्यादिभ्यो भिन्ना अवस्थान्तरश्रुत्यभावादिति पूर्वः पक्षः । विशेषविज्ञानाभावान्न जागरः स्वप्नो वेयं प्रसन्नवदनत्वश्वासपूर्णत्वाद्यभावान्न सुषुप्तिः सूक्ष्मश्वासवत्वान्न मरणं किं तु वृक्षाग्रपतनाद्यभिघातनिमित्तसौक्ष्म्यापन्नप्राणयुक्ता तच्चिकित्साद्यभावे मरणपर्यवसायिनी मरणावस्थार्धसम्पत्तिरूपा सुषुप्त्यादिभ्यो विलक्षणेति सिद्धान्तः ।

इति मुग्धाधिकरणम् ॥ ४ ॥

---

### नयमणिमालायाम् अथ मुग्धाधिकरणम् ॥ ४ ॥

जाग्रत्स्वप्नसुषुप्तिष्वन्तर्भूतैव मूर्छा स्यात् । तदवस्थात्रयभिन्नावस्था न कुत्रचिद्विदिता ॥ १८५ ॥
ज्ञानोपरमाद्विषमश्वासत्वादेश्च तत्त्रयादन्या । मर्त्यं प्रकृत्य ततो................षे वयम् ॥ १८६ ॥
* ( परिशेषान्मूर्छाख्या ज्ञेया मरणार्धसम्पत्तिः । )

इति मुग्धाधिकरणम् ॥ ४ ॥

* नयमणिमालायामंतिममर्धं त्रुटितत्वान्न लभ्यते । अतस्तदन्यथा विरच्य (        ) एतद्रेखामध्यपातितया संयोजितमिति वेद्यम् ।

---

**आनन्दतीर्थमते** अत्राधिकरणे सर्वपुरुषीयसार्वकालिकसर्वावस्थानां भगवदधीनत्वमहिमा वर्ण्यते। अत्र न सर्वेषां सार्वकालिकसर्वावस्था भगवदधीनाः । किं तु केषांचित्किंचित्कालिकावस्था एवेति **पूर्वपक्षः । सिद्धान्तस्तु, स एवेश्वर** एव सर्वेषां सर्वावस्थाप्रेरकः । न देशकालान्तरेऽन्यः । कुतः । **कर्मानुस्मृतिशब्दविधिभ्यः**=‘एष ह्येव साधुकर्म कारयती’ त्यादिना कर्मणामीशाधीनत्वश्रुतेः, ‘प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु । परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन ॥’ इत्यादितदनुसारिस्मृतेश्च ‘एष स्वप्नान्प्रदर्शयत्येष प्रबोधयत्येष एव परम आनन्दः’ इत्यादिश्रुतेः ‘आत्मानमेव लोकमुपासीत’ इति विधिवाक्याच्च । इति । सूत्रार्थोऽपि व्याख्यातः । परमात्मनोऽन्यस्य प्रेरकत्वे तस्याप्युपास्यत्वप्राप्त्या श्रुतौ परमात्मन एवोपास्यत्वावधारणानुपपत्तिरिति भावः ॥ **इति कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥**

---

( १ ) ‘मूर्छा सुषुप्त्यादिभ्यो’ इति ख. पाठः ।

## अथोभयलिङ्गाधिकरणम् ॥ ५ ॥

## ॥ सू ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

**पूर्वेष्वधिकरणेषु त्वंपदार्थस्य जीवस्य स्वरूपधर्मगत्यागत्यवस्थाविशेषनिरूपणं कृतम्। अतः परं तत्पदार्थस्य परमेश्वरस्य स्वरूपधर्मादिकं निरूप्यते। 'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं स प्राविशत्' 'यः पृथिव्यां तिष्ठन्' इत्यादिषु**

## अथ उभयलिंगाधिकरणम् ॥ ५ ॥

सू० ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ पेटिकासंगतिं दर्शयितुं वृत्तानुकीर्तनपूर्वकमापादसमाप्तेरुत्तराधिकरणानामर्थमाह–पूर्वेष्विति। प्रथमाधिकरणे स्वप्नावस्थाविषयश्रुतिवाक्यार्थविचारेण जीवस्य स्वप्रकाशज्ञानात्मकं स्वरूपं निरूपितम्। तत्रैव संसारदशायां गुणाष्टकतिरोधानरूपो धर्मो निरूपितः। तदनंतराधिकरणे सुषुप्तौ ब्रह्मगतिः प्रबोधे तत आगमश्चेत्युभयं निरूपितम्। तृतीयाधिकरणे तत आगतिराक्षेपसमाधानाभ्यां व्यवस्थापिता। चतुर्थाधिकरणे मूर्छाया मरणार्धसम्पत्तिरूपो विशेषो निरूपित इत्यर्थः। स्वरूपधर्मादिकमिति। 'प्रकाशवच्चे'ति सूत्रे परमेश्वरस्य ज्ञानात्मकं स्वरूपमुभयलिंगादिसूत्रैर्दोषाभावकल्याणगुणात्मका धर्माः तत उपरि समाभ्यधिकप्रतिषेधः फलदातृत्वं चेत्येतत्सर्वं निरूप्यत इत्यर्थः। तथा च जीवस्वरूपादिनिरूपणपर्यवसायिभिर्विचारैः पूर्वपादसंगत्या प्रथमप्रवृत्तैः परमेश्वरमहिमाविष्करणानन्तरं साक्षात्तत्स्वरूपधर्मादिविचारैस्तन्महिमाविष्करणं क्रियत इति पेटिकासंगतिरिति भावः। यद्यपि पूर्वेष्वधिकरणेष्वितिवृत्तसंकीर्तनस्य 'नात्माश्रुते' रित्यादिषु वियत्पादाधिकरणेषु यज्जीवस्य स्वरूपधर्मनिरूपणं पूर्वपादाधिकरणेषु यद्गत्यागतिनिरूपणम् एतत्पादाधिकरणेषु यत्स्वप्नाद्यवस्थानिरूपणं कृतं तस्य सर्वस्यापि प्रतिपत्तिसौकर्यार्थोऽनुवाद इति तात्पर्यं वक्तुं

---

### सूत्रार्थचन्द्रिकायाम् अथ मुग्धाधिकरणम् ॥ ४ ॥

सू ॥ मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

**भगवत्पादमते,** पूर्वं सोऽहमिति प्रत्यभिज्ञानात्सुषुप्तप्रतिबुद्धैक्यमुक्तम्। तद्वद्विशेषाभावप्रत्यभिज्ञानात्सुषुप्तिरेव मूर्च्छेति दृष्टान्तसंगत्येदमाह–**मुग्धेऽर्धसंपत्तिरित्यादि**। अत्र किं मूर्छावस्था सुषुप्त्यन्तर्गता उतातिरिक्ता इति **संदेहे** सुषुप्त्यन्तर्गतेति **पूर्वपक्षः। सिद्धान्तस्तु,** न तावत्स्वप्नजागरिते मूर्छावस्था। अत्र ज्ञानाभावात्। नापि मरणावस्था। प्राणोष्मणोस्सत्त्वात्। नापि सुषुप्तिः। भयानकवदनत्वादिलक्षणभेदात्। किं तु **परिशेषात्**=प्रसक्तस्य प्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे वस्तुनि यः संप्रत्ययः स परिशेषः। तस्मात्। **मुग्धे**=मुग्धिर्मूर्छावस्था तदवस्थापन्ने विशेषज्ञानराहित्यादिना अर्धेन धर्मजातेन मूर्छावस्थायास्संपन्नत्वात् अर्धेन कम्पनादिना मरणावस्थाधर्मजातेन च युक्तत्वादर्धसंपत्तिर्मूर्छावस्था सुषुप्तिव्यतिरिक्तैवेति ॥

**श्रीकण्ठमते,** मूर्छावस्था सुषुप्त्याद्यन्तर्गता वा भिन्ना वेति **संदेहे** सुषुप्त्यादिष्वन्तर्भूतेति **पूर्वपक्षे** प्राप्ते परिशेषात् मरणार्धसंपत्तिरूपा मूर्छावस्था सुषुप्त्यादेर्भिन्नैवेति **सिद्धान्तः**। सूत्रार्थः पूर्ववत्।

**रामानुजमते,** किं मूर्छावस्था मरणादर्थान्तरमुत मरणमेवेति **संदेहे** सर्वेन्द्रियप्राणव्यापारोपरतेर्मरणमेवेति **पूर्वपक्षे** प्राप्ते आकारवैरूप्येण सूक्ष्मप्राणास्तित्ववत्त्वान्मरणार्धसंपत्तिर्मूर्छावस्थेति **सिद्धान्तः**। सूत्रार्थः पूर्ववत् ॥

**आनन्दतीर्थमते,** मूर्छावस्थापि स्वप्नजागरादिन्यायेन भगवदधीनेति सिद्धमेव। तस्याः स्थानमिह विचार्यते। जागरस्वप्नयोरिव स्थूलसूक्ष्मप्रपञ्चदर्शनाभावेन सुषुप्तिसाम्यात्तस्यामप्यस्ति ब्रह्मसंपत्तिरिति **पूर्वपक्षे** प्राप्ते तस्यां ब्रह्मण्यर्धसंपत्तिरेव। कुतः। दुःखमात्रानुसंधानसत्त्वादिति **सिद्धान्तः**। सूत्रार्थस्तु, **मुग्धे**=मूर्छावस्थायां। जीवस्यार्ध**संपत्तिः**=परमात्मन्यर्धप्रवेशः। कुतः। **परिशेषात्**=प्रसक्तप्रतिषेधपूर्वकानुमानादित्यर्थः ॥ **इतिसंपत्त्यधिकरणम्** ॥ ७ ॥

**सूत्रार्थचन्द्रिकायां मुग्धाधिकरणम्** ॥ ४ ॥

**परमेश्वरस्य सर्वात्मकतयानुप्रवेशः श्रूयते। तस्य सर्वावस्थासु सर्वान्तर्यामितयावस्थितौ तत्तद्दोषकलङ्कः प्रसज्यते न वा ॥**

**इति संशये प्रसज्यत इति पूर्वः पक्षः । तथा हि–'अस्थूलमनण्वह्रस्वम्' 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इत्यादिना च परमेश्वरस्य रूपादिकं निषिध्यते। तद्दोषस्पर्शभयादेव 'सत्यं ज्ञानमनन्तं ब्रह्म' इति च तस्यापरिच्छिन्नसत्यज्ञानमात्ररूपत्वमुच्यते । यदि प्रकृतिविकारसंबन्धोऽप्यस्याभ्युपगम्येत, जीववदसावपि सकलविकारदोषास्पदं भवेदिति ॥**

---

शक्यते तथापि तेनात्र वक्तव्यत्वेनापेक्षिता पेटिकासंगतिर्न लभ्यते । न चात्रार्थौचित्यमस्ति। पूर्वाध्याययोर्ब्रह्मस्वरूपतद्धर्माणामपि कियतांशेन निरूपिततया तेषां निरूपयिष्यमाणतया परिशेषायोगात् परब्रह्मज्ञानमात्रस्वरूपं निर्विशेषं तस्य 'सोऽन्तरा'दित्यादिश्रुतिभिः प्रतीयमानं सर्वानुप्रवेशसर्वनियन्तृत्वसर्वशरीरत्वादिकमतात्त्विकम् उत यथा परं ब्रह्म ज्ञानस्वरूपम् एवं सर्वानुप्रवेशादिधर्मवदपीति संशये तदर्थसंशयं दर्शयति–तस्य सर्वावस्थास्विति । 'सर्वावस्था' स्वित्यनेन यथा लोकद्वयगतागतव्रीहियवादिपितृवीर्यान्तसंश्लेषमात्रगर्भस्थितिजननजातव्यापाररूपायां जागरावस्थायां स्वप्नसुषुप्तिमूर्छामरणावस्थासु च सूक्ष्मस्थूलशरीरावस्थितिनिबन्धना जीवस्य दोषास्तथा ब्रह्मणोऽपि स्युः। ःथतेरविशेषात् । 'देहयोगाद्वा सोऽपी'ति सूत्रे संसारदोषाणां शरीरसंबंधनिबंधनत्वस्योक्तत्वात् मलमूत्रपूयमांसशोणितादिकर्दमितेषु शरीरेषु रौरवादिष्विवावस्थानस्यातिहेयतायास्सर्वसम्प्रतिपत्त्यर्हत्वाच्चेति पूर्वपक्षबीजमधिकरणसंगतिश्चेत्युभयं सूचितम्। 'अन्तर्यामितये' त्यनेन सैद्धान्तिकं तत्प्रत्याख्यानबीजं सूचितम्। ननु, यथैवास्थूलादिवाक्यजातं श्रुतिस्तथा सर्वशरीरत्वप्रतिपादकवचनजातमपि श्रुतिरेव । तथा च तदविरोधाय कर्माधीनशरीरनिषेधपरमस्थूलादिवचनमित्युपपादनीयम्। न तु शरीरित्वे तत्प्रयुक्तदोषभाक्त्वं स्यादिति भिया शरीरमात्रनिषेधपरमित्युपपादनीयम्। तथात्वे श्रुत्यन्तरस्य निर्विषयत्वापातात् कर्माधीनशरीरयोगस्यैव दोषावहत्वेन स्वेच्छाधीनया नियन्तृतया तत्रावस्थानस्य दोषावहत्वाभावाच्च। न हि राज्ञो विषये वसतां राजाज्ञया सुखदुःखभाक्त्वमस्तीति तत्र वासाविशेषात् राज्ञोऽपि तद्भवति । श्रुतिरपि शरीरस्थित्यविशेषेऽपि पारतन्त्र्यमेव शरीरप्रयुक्तसुखदुःखभाक्त्वे निमित्तं दर्शयति 'समाने वृक्षे पुरुषो निमग्न' इत्यादिकेत्याशंक्याह–यदि **प्रकृतिविकारसंबंध** इति। अयमाशयः । राजविषयवासमात्रं न राजाज्ञाननुवृत्तिप्रयुक्तसुखदुःखभाक्त्वे निमित्तं किं तु राजाज्ञाविषयत्वविशेषितम्। राजा न हि राजाज्ञा विषयः। अतो युक्तं राज्ञः स्वविषयवासित्वेऽपि स्वाज्ञाननुवृत्तिप्रयुक्तदुःखास्पृष्टत्वम् । शरीरप्रयुक्तदुःखभाक्त्वे तु शरीरित्वमात्रं निमित्तम्। अतो यथा पूतिगन्धादियुक्तकारागृहप्रयुक्तदुःखभाक्त्वे कारागृहावस्थितिमात्रं निमित्तमिति तत्कारागृहनिक्षिप्तस्येव स्वेच्छया तन्नियंतृत्वेन तत्रावस्थितस्यापि भवति । एवं देहप्रयुक्तं दुःखं देहबद्धस्येव तत्र तन्नियन्तृतया स्थितस्यापि भवेदेव। तस्माद्धोक्त्रापत्त्यधिकरणगतं लोकवदित्युदाहरणमयुक्तम्। गुहाधिकरणगतं 'समाने वृक्ष' इति श्रुत्युदाहरणमप्ययुक्तम्। श्रुतिरपि हि न दृष्टविरुद्धमर्थं बोधयितुमीष्टे । ईश्वरो जीववद्देहकारागृहेऽतिजुगुप्सितेऽवतिष्ठते जीववत्तत्प्रयुक्तदुःखेन न स्पृश्यते इति । तस्मादस्थूलत्वादि-

नेति सिद्धान्तः। सर्वावस्थासु सर्वान्तर्यामितया स्थितिमतोऽपि परमेश्वरस्य न कश्चिद्दोषकलङ्कप्रसङ्गः। कुतः? सर्वत्र श्रुतिषु चास्य निरस्तदोषकलङ्कत्वं निरतिशयमङ्गलाकरत्वं चेत्युभयं लिङ्गं हि प्रसिद्धम् 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः'

'अस्ति कश्चिदपर्यन्तरमणीयगुणाश्रयः।
सर्वलोकविनिर्माता पशुपाशविलक्षणः॥'

इत्यादिषु। अतः पृथिव्यादिष्वन्तर्यामितयावस्थानतोऽपि न दोषः॥

## ॥ सू ॥ भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

यथा जीवस्य स्वतोऽपहतपाप्मत्वादिगुणस्यापि देवादिशरीरसंबन्धित्वावस्थाभेदादुक्तदोषवत्त्वं तथा परमेश्वरस्यापि 'यस्य पृथिवी शरीरम्' इति शरीरसंबन्धित्वावस्थाभेदात्तद्दोषाः स्युः इति चेत्—न, प्रत्येकं प्रतिपर्यायमतद्वचनात् दोषासंबंधित्ववचनात्। 'यस्य पृथिवी शरीरम्' इत्यादिषु 'एष त आत्मान्तर्याम्यमृतः' इत्यन्तर्यामिणो हि निर्दोषत्वमुच्यते। जीवस्य तु पराभिध्यानात् तत्स्वरूपं तिरोहितमित्युक्तम्॥

## ॥ सू ॥ अपि चैवमेके ॥ १३ ॥

---

वचनानि जुगुप्सितशरीरप्रयुक्तदोषभियैव परमेश्वरस्य तथाभूतं शरीरं प्रतिषेधन्ति। तस्य पृथिव्यादिशरीरकत्वतन्नियन्तृत्वादिवचनानि त्वतात्विकं तत्तच्छरीरकत्वादिकमर्थवादविधया कल्पयन्तीत्येव व्यवस्थोपपादनीयेति 'न स्थानतोऽपी'ति सूत्रभागं प्रतिषेध्याध्याहारेण योजयति—न कश्चिद्दोषकलंकप्रसंग इति। उभयलिङ्गं हि प्रसिद्धमिति। दोषाभावश्रवणमिव दोषविरोधिगुणश्रवणमपि दोषप्रतिक्षेपकमित्युभयलिंगोपन्यासः। ननु दहरविद्यादिष्वीश्वरस्येव जीवस्यापि प्रजापतिविद्यायामुपन्यस्तमस्त्युभयलिङ्गत्वं कोऽत्र विशेषः येन देहावस्थितत्वेऽपि जीवो दुःखमनुभवेन्नेश्वरः। तस्मादीश्वरोऽपि शरीरसंबंधावस्थाविशेषप्रयुक्तं दुःखमनुभवेदेव यदि सर्वशरीरकः स्यादित्याशङ्कामुद्भाव्य तन्निराकरणार्थं सूत्रम्—भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ अतद्वचनादित्यस्य दोषाभाववचनादित्यर्थमभिप्रेत्य व्याचष्टे—निर्दोषत्वमुच्यत इति। ननु प्रतिपर्यायमुच्यतां शरीरप्रयुक्तदोषास्पर्शित्वं प्रयत्नेन कथं तच्छरीरित्वस्य पारमार्थिकतायामुपपादनीयम्। दोषास्पर्शवचनादेव तस्यापारमार्थिकता विवक्षितेत्युन्नीयत इत्याशंक्याह—जीवस्य त्विति। जीवस्यापहतपाप्मत्वादिकं तिरोहितमिति पराभिध्यान ( ब्र० ३-२-४ ) सूत्रे दर्शितमीश्वरस्य तन्नित्याविर्भूत 'मित्युत्तराच्चेदाविर्भूतस्वरूपस्त्विति' ( ब्र० १-३-१९ ) सूत्रे दर्शितम्। अस्मादेवोभयलिंगत्वानाविर्भावाविर्भावविशेषात् जीवेश्वरयोश्शरीरप्रयुक्तदुःखस्पर्शास्पर्शविशेषोपपत्तौ श्रुतिप्रतिपन्नमीश्वरस्य सर्वशरीरत्वादिकमविवक्षितमिति कल्पयितुं न युक्तमिति भावः। अमुमेव विशेषमभिप्रेत्य जीवेश्वरयोरेकशरीरस्थितावपि भोक्तृत्वाभोक्तृत्वविशेषं प्रतिपादयन्मंत्रो दृश्यत इति प्रतिपादनार्थं सूत्रम् अपि चैवमेके ॥ १३ ॥ ननु, जीवेश्वरयोरुभयलिंगतिरोधानातिरोधानाविशेष उक्त इति 'द्वा सुपर्णेति' मन्त्रे तयोर्भोक्तृत्वाभोक्तृत्वविशेष उक्तः। सोऽपि 'स्थित्यदनाभ्यां चे-

अपि च–एकस्मिन् शरीरे शरीरित्वेनावस्थितयोरपि जीवेश्वरयोर्दोषसंबन्धित्वतद्विपरीतत्वलक्षणो विशेषो यथा प्रसिद्ध्यत्येवमेके स्वशब्देनाधीयते—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥'

अतो न जीववदीश्वरे दोषप्रसङ्गः॥

जीवेश्वरयोः शरीरस्थितिसाम्येऽपि स्थितिवैषम्यमाह—

॥ सू ॥ अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥

तद्ब्रह्म परमेश्वरो देवादिशरीरेषु शरीरितया स्थितावपि रूपरहितवस्तुवदेव वर्तते। कुतः? नामरूपनिर्वोढृत्वप्रधानत्वात्। तथा हि श्रुतिः 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति। नामरूपयोरन्तराले तत्कार्यस्पर्शरहित एव वर्तते। मध्य इति स्वातन्त्र्यमुक्तम्। कर्मफलभोगार्थं हि जीवस्य

---

ति सूत्रेण दर्शित इत्येतत्सर्वमस्तीति सत्यम्। इदमप्यस्त्येव यच्छरीराभिघातादिप्रयुक्तैश्शरीरगतधातुवैषम्यादिकृतरोगप्रयुक्तैस्तद्गतमलमूत्राद्यनुभवप्रयुक्तैश्च दुःखैर्यज्जीवोऽभिभूयते तत्र शरीरित्वमेव प्रयोजकमिति। न च सत्यपि शरीरित्वे नित्याविर्भूतापहतपाप्मत्वादिशालितया कर्मरहितस्य परमेश्वरस्य शरीरित्वप्रयुक्तदुःखं न भवेदिति वाच्यम्। हि दुःखविशेषानुगुणदेवमनुष्यपशुपक्षिसरीसृपादिशरीरसंबंधमापाद्य तदनुप्रविष्टं जीवं दुःखं भोजयन्ति। ईश्वरस्य विनापि चेत्कर्मभिस्तेन तेन शरीरेण शरीरित्वं स्यात् तदा कर्माभावोपन्यासेन किं समाहितं भवेत्। न खलु राजापराधेन कारागृहे निबद्धस्य तद्गतदुर्गंधादिप्रयुक्तं दुःखं तन्नियन्तृतया कारागृहमनुप्रविष्टस्याधिकारिपुरुषस्य राजापराधाभावमात्रेण न भवतीत्याशंक्य जीवेश्वरयोरेकशरीरस्थितावपि तत्प्रयुक्तदुःखभोगाभोगवैषम्योपपादनार्थत्वेनोत्तरसूत्रमवतारयति–जीवेश्वरयोरिति। सू॥ अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥ अरूपवदिति वतिप्रत्ययान्तम्। इदं शरीररहितं वस्तु यथा शरीरित्वप्रयुक्तदुःखभाजनं न भवत्येवं ब्रह्मापीत्यर्थः। ननु, नामरूपनिर्वोढृत्वेन तत्र स्वातन्त्र्यलक्षणं नामरूपकार्यापेक्षया प्राधान्यं ब्रह्मणो भवतु नाम। तथापि तदनुप्रवेशे पूतिगन्धकारागृहनिर्वोढुस्तत्प्रवेश इव तदवस्थितिप्रयुक्तं कार्यं केन वार्यते इत्याशङ्क्य नामरूपनिर्वोढृत्वलक्षणप्रधानहेतूक्तिसूचितां श्रुतिमुदाहरति–तथा हीति। उदाहृतश्रुतौ नामनिर्वोढुस्तत्संबंधाभाव उक्तः। स च बाधितः। निर्वाह्यनिर्वाहकभावरूपस्यैव संबंधस्य सत्त्वात्। अतस्तत्कार्यदुःखेर्ष्यादिसंबंधाभावपरा तदुक्तिरिति भावः। ननु 'ते यदन्तरा तद्ब्रह्मे'ति श्रूयत इति सत्यं, तत्तु नामरूपनिर्वोढृत्वस्याताविकत्वेनैवोपपादनीयं गत्यंतराभावादित्याशङ्क्य नामरूपनिर्वोढृत्वादिश्रुत्यबाधेनैव तदुपपादयति–कर्मफलभोगार्थमिति। कर्माधीनमेवार्थानां दुःखकरत्वं न वस्तुस्वभावप्रयुक्तम्। पुत्रदारादीनां शीतोष्णादिविषयाणाञ्च समयभेदेन दुःखकरत्वतदभावदर्शनात्। स्मरन्ति च–'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते। तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मक'मिति। तस्मान्नित्याविर्भूतापहतपाप्मादिगुणकत्वेन श्रुतस्य परमेश्वरस्य कर्मलेशोऽपि नास्तीति तस्यास्मदादिशरीरेषु स्थितस्यापि

शरीरे स्थितिः। अत उभयोर्वैषम्यम् ॥

॥ सू ॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्यावैयर्थ्यात् स्वप्रकाशरूपतया ज्ञानरूपं ब्रह्म तथा 'निष्कलं निष्क्रियं शान्तम्' 'अपहतपाप्मा' 'सत्यात्म प्राणारामं मनआनन्दम्' 'यः सर्वज्ञः सर्ववित्' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः 'परास्य शक्तिर्विविधैव श्रूयते' 'अथ कस्मादुच्यते महादेवो यः सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः' इत्यादीनां परश्शतानां वाक्यानामवैयर्थ्यात् निरवद्यं कल्याणगुणास्पदं च ब्रह्म इत्युभयलिङ्गमेव ॥

॥ सू ॥ आह च तन्मात्रम् ॥ १६ ॥

'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिरनवच्छिन्नज्ञानरूपतामात्रं ब्रह्मण आह। नान्यं निवारयति, विशेषाभावादविरोधाच्च। यथा स्वर्णरूपं किरीटमित्येतत् स्वर्णरूपतामात्रकथनपरं, न तत्खचितरत्नादिनिषेधपरं, तद्वदिति। अत्र हि

---

न कारागृहप्रविष्टाधिकारिपुरुषन्यायेन दुःखादिकं प्रसज्यत इति भावः। यत्तु परमेश्वरस्य सर्वशरीरकत्वे विधिनिषेधवाक्यगतब्राह्मणादिशब्दानां तत्पर्यंतत्वेन तस्यापि विधिनिषेधोल्लंघनप्रयुक्तपापावश्यंभावेन तत्प्रयुक्तदुःखादिभाक्त्वं स्यादिति तत्तुच्छम्। तेषु ब्राह्मणादिशब्दानां 'त्रिः प्रथमामन्वाह त्रिरुत्तमा' मित्यत्र प्रथमोत्तमशब्दयोः प्रथमोपस्थितस्थानातिक्रमेण प्रवोवाजीयादिऋक्पर्यन्तत्ववत्प्रथमोपस्थितजीवपरित्यागेन परमेश्वरपर्यंतत्वस्य कल्पनायोगात् तथा कल्पने जीवानां विधिनिषेधविषयत्वं कुतोऽपि प्रमाणान्न सिध्येदिति तेषां कर्माधीनैहिकामुष्मिकदेहविशेषसम्बन्धबन्धमोक्षादिप्रतिपादकसकलशास्त्रार्थविप्लवप्रसंगाच्च। तस्मादस्थूलादिवाक्यानां सर्वशरीरत्ववाक्यानां च श्रुतित्वाविशेषेण प्रामाण्यस्याभ्युपगन्तव्यत्वात् पदाहवनीयशास्त्रन्यायेन व्यवस्था कल्पयितुमुचितेति अस्थूलादिवाक्यानि कर्माधीनशरीरनिषेधपराणि 'यस्य पृथिवी शरीर'मित्यादीनि नियन्तृत्वेन सर्वशरीरकत्वप्रतिपादकानीति व्यवस्थापनान्न परस्परविरोध इति भावः। सत्यज्ञानादिवाक्यैरपि ब्रह्मणो न ज्ञानमात्रत्वसिद्धिरिति प्रतिपादनार्थं सूत्रम्—प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ प्रकाशः स्वप्रकाशं ज्ञानम्। सत्यज्ञानादिश्रुतिप्राप्तं ज्ञानरूपत्वमिव 'यस्सर्वज्ञः सर्ववित्सर्वेश्वर' इत्यादिश्रुतिप्राप्तं सार्वज्ञ्यैश्वर्यादिकमप्यंगीकरणीयम्। उभयोः प्रामाण्याविशेषात्। 'तुल्यं च साम्प्रदायिक'मिति न्यायात् विरोधाभावेनात्र व्यवस्थापकन्यायस्याप्यनपेक्षितत्वादिति भावः। यदि ब्रूयात्सत्यज्ञानादिश्रुतेर्ज्ञानमात्रे तात्पर्यमित्यस्ति विरोध इति तत्परिहारार्थं सूत्रम्—आह च तन्मात्रम् ॥ १६ ॥ न हीयं श्रुतिर्ज्ञानमात्रं ब्रह्मेत्याह किं तु ज्ञानं ब्रह्मेत्येतावन्मात्रमाह। तत्तु गुणवत्त्वेऽपि न विरुध्यत इति भावः। ननु ज्ञानस्य सतो ज्ञातृत्वादिकं विरुद्धमस्मदादीनां घटादिज्ञानेष्वदर्शनादित्यर्थात् ज्ञानस्वरूपत्वोक्त्या ज्ञातृत्वादिधर्मव्यतिरेकोऽवसीयत इत्याशंक्याह—अत्र हीति। परमेश्वरस्य प्रकाशतया ज्ञानरूपत्वं न तु घटादिज्ञानवदृश्यविषयतया। न च तद्ज्ञातृत्वा-

(१) 'स्थानातिक्रमे कारणाभावेन प्रवोवाजीयादि' इति ख. ग. पाठः। (२) 'स्यावश्यसमर्थनीयत्वात्' इति ख. पाठः।

'सत्यं ज्ञानमनन्तम्' इति स्वत एव महाप्रकाशरूपतया परब्रह्मणः परमज्ञानाकारमात्रमभिदधती श्रुतिरनन्तरमुच्यमानं ब्रह्मणो विपश्चित्त्वं सर्वज्ञत्वं निवारयितुं कथं क्षमते। विविधं वस्तुजातं पश्यन्ती विमृशन्ती चिद्यस्य स विपश्चित्। अतो न विरोधः ॥

॥ सू ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

हेयगुणराहित्येन कल्याणगुणसाहित्येन चोभयलिङ्गं ब्रह्म दर्शयति सर्वत्र श्रुतिरेव भगवती। 'आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्। इति प्राचीनयोग्योपास्स्व' इति। आ काशत इत्याकाशः प्रकाशस्तद्रूपं चिदम्बररूपम्। सत्यात्म सत्तारूपम्। प्राणारामं प्राणे आत्मन्येवारामो न बहिरस्येति। मनस्येवानन्दोऽस्य न बाह्यकरणेष्विति मनआनन्दम्। मन इति ज्ञानमन्तःकरणमुच्यते, येनानपेक्षितबाह्यकरणेनापरोक्षितसकलबाह्यवस्तुविलासेन नित्यनिष्कलङ्केन प्रमाविशेषेण सर्वज्ञं ब्रह्मोच्यते। तेनापरिरूपानन्दमनुभवतीति मनआनन्दम्। शान्तिसमृद्धं रागद्वेषादीनां हेयगुणानामत्यन्तराहित्यं शान्तिः तत्समृद्धं निरवशेषनिर्धूतनिखिलदोषकलङ्कम्। अमृतमनादिमुक्तमिति सत्यज्ञानरूपं सर्वज्ञं निरतिशयात्मानन्दशक्तिविलासं निरस्तसमस्तदोषं परं ब्रह्मेत्युभयलिङ्गमिति दर्शयति। तथा 'निष्कलं निष्क्रियं शान्तम्' 'धर्मावहं पापनुदं भगेशम्' 'तमीश्वराणां परमं महेश्वरम्' इत्यादिश्रुतिश्चोभयलिङ्गं ब्रह्माह—

'अनादिमलसंश्लेषप्रागभावाद्विशेषतः।
अत्यन्तपरिशुद्धात्मा शिव इत्युच्यते विभुः॥

---

दिविरुद्धम्। तथाभूतस्यैव जीवस्य ज्ञातृत्वादिदर्शनात्। किं च ज्ञानत्वोक्तिसामर्थ्यात्पुरुषबुद्ध्या हि ज्ञातृत्वाद्यभावः कल्पनीयः। तत्कल्पनां शीघ्रप्रवृत्तिकं श्रुत्यंतरं वारयतीत्येतदास्ताम्। 'विपश्चिते'ति तदनन्तरश्रवणमपि वारयति। शर्कराञ्जनविधिसामर्थ्यात् पुरुषबुद्ध्या तत्साधनत्वेन द्रव्यसामान्यकल्पनामिव वाक्यशेषे घृतश्रवणमिति भावः। विपश्चित्पदं भाष्यदर्शितेऽर्थे पृषोदरादित्वात्साधुः। एवं सत्यज्ञानादिश्रुत्यवलम्बनेन निर्विशेषज्ञानरूपं ब्रह्मेत्यभ्युपगम्य परमेश्वरस्य सर्वशरीरत्वश्रवणस्य तदुपपादकत्वेनोपन्यस्तस्य सर्वेषु वेदान्तेषूभयलिंगत्वश्रवणस्य चान्यथासिद्धिः कर्तुं न शक्यत इत्युपपादितम्। अथ सर्वोऽपि वेदान्तगणः तदीयोभयलिंगत्वपर्यवसायीत्यतोऽपि हेतोस्तदन्यथासिद्धिः कर्तुं न शक्यत इति प्रतिपादनार्थं सूत्रम्—दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥ अथो इति निपातो वेदान्तवाक्यकार्त्स्न्यपरः। 'मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथो अथ' इति तस्य कार्त्स्न्यार्थानुशासनात्। 'ओ'दिति सूत्रेण प्रगृह्यसंज्ञया प्रकृतिभावः। न तादृशः कश्चिद्वेदान्तेषु ब्रह्मणि प्रवृत्तः शब्दोऽस्ति यः प्रवृत्तिनिमित्ततया कस्यचिद्दोषस्याभावं कंचन कल्याणगुणं वा नापेक्षेत। अतस्सर्वोऽपि वेदान्ततदुपबृंहणगणगतब्रह्मपरशब्दराशिस्तस्योभयलिंगत्वं समर्पयतीत्यर्थः। अत्रोदाहृतानि श्रुतितदुपबृंहणान्यधस्तात्तत्रतत्र व्याख्यातानि।

अनन्तानन्दकल्याणगुणैकघन ईश्वरः ।
शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥'

इति स्मर्यते च शिवशब्दवाच्यं ब्रह्मोभयलिङ्गमिति । परमविशुद्धिमङ्गलगुणवाचकेन शिवशब्देन निरस्तनिखिलदोषकलङ्कं निरतिशयपुरुषार्थं गुणपरिपूर्णं ब्रह्माभिधीयत इति ब्रह्मणः शिवशब्दवाच्यतया चोभयलिङ्गसिद्धिः ॥

## ॥ सू ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यतः पृथिव्यादिषु सर्वत्र स्थितस्यापि परमेश्वरस्य निर्दोषत्वं कल्याणगुणाकरत्वं च अत एव शास्त्रेषु जलसूर्यादिवदित्यस्योपमा क्रियते ।

'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥'

इति । अत्र वस्तुतः स्थितमाकाशं वस्तुतोऽनवस्थितं च सूर्यमुपमानमुपादत्ते अनेनाभिप्रायेण—यथैकमेवाकाशं घटादिषु पृथक्पृथगेव वस्तुतः स्थितं, तथैक एव परमेश्वरः पृथिव्यादिषु पृथक्पृथगात्मतया वस्तुत एव तिष्ठतीति परमेश्वरस्यैकस्यापि बहुषु वस्तुतः स्थितिरुपपद्यते इत्याकाशोपमानम् । जलाधारेषु वस्तुतोऽनवस्थितस्य सूर्यस्य यथा न तद्विकारादिदोषस्पर्शः तथा पृथिव्यादिषु वस्तुतः स्थितस्यापि परमेश्वरस्य न तद्विकारादिदोषस्पर्श इति सर्वान्तर्यामिणः परमेश्वरस्य निर्दोषत्वं स्वरूपगुणाहानिश्चेति सूर्योपमानम् । अत आकाशाद्यु-

---

एवमुभयलिंगत्वसमर्थनपूर्वकं पृथिव्यादिस्थितावपि तत्प्रयुक्तदोषाप्रसंगस्समर्थितः । अथ श्रुत्युदाहृतदृष्टान्तसामर्थ्येन तं समर्थयितुं सूत्रम्—अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥ 'आकाशमेकं हि यथे' त्यादिश्रुतौ प्रथमदृष्टान्तेन 'यः पृथिव्यां तिष्ठ'न्नित्यादिश्रुतिसिद्धा 'न स्थानतोऽपी'ति ( ब्र० ३-२-११ ) सूत्रेऽनूदिता सर्वत्र स्थितिरुपपादिता । तेन कथमेकस्यामूर्तस्य बहुषु स्थितिः कृत्स्नैकदेशविकल्पपराहतत्वादिति शंका निरवकाशीकृता । द्वितीयदृष्टान्तेन तेषु स्थितस्यापि तेषु वस्तुतो स्थितस्येव तत्प्रयुक्तदोषास्पर्शः 'ते यदन्तरे' त्यादिश्रुतिसिद्धः सूत्रेऽ'प्यरूपवदेव ही' त्यनूदित उपपादितः । तेन तच्छरीरकः कथं तत्प्रयुक्तदोषभाक् न भवेदिति शंका निरवकाशीकृता । कर्मवश्यत्वतदभावाभ्यां जीवेश्वरयोर्विशेष इति श्रुतेरभिप्रायः । सू ॥ अंबुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ अत्रेयमाशंका—अंबुवत् अंबुनीवाग्रहणाद्यथाम्बुनि सूर्यः तत्रानवस्थित एव भ्रान्त्या तत्र स्थित इव गृह्यते तथा परमात्मा पृथिव्यादावस्थित एव तत्र स्थित इव गृह्यत इत्यनभ्युपगमात् तत्र वस्तुतः स्थित एव गृह्यत इत्युपगमान्न तथात्वं न सूर्यस्येवोपाधिप्रयुक्तदोषाप्रसंगः । अतः श्रुतिरित्थं व्याख्येया । पृथिव्यादिषु स्थितौ कथं तत्प्रयुक्तदोषाप्रसङ्ग इत्याशंकायामाकाशदृष्टान्तः । प्रसिद्धो ह्याकाशस्य तत्र तत्र स्थितस्यापि दोषाप्रसंगः । 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाश इव पंकेन न स पापेन लिप्यते' ॥ इत्यादौ निर्विशेषज्ञानमात्ररूपस्य ब्रह्मणः पृथिव्यादिनियन्तृतया तत्र तत्रावस्थितिरयुक्तेत्याशंकायां द्वितीयदृष्टान्तः । तेन वस्तुतो न तिष्ठत्येव पृथिव्यादिषु ब्रह्म जल इव सूर्यः । 'सन्घट' इत्यादिप्रतिभासमात्रावलम्बनेन तत्र तत्र स्थितिरुपन्यस्ता ।

पमयापि सर्वात्मनः परमेश्वरस्य सिद्धमुभयलिङ्गत्वम् ॥

अत्राशङ्कते—

॥ सू ॥ अम्बुवद्ग्रहणात्तु न तथात्वम् ॥ १९ ॥

अम्बुनि यथा सूर्योऽपरमर्थो गृह्यते, न तथा परमेश्वरः पृथिव्यादौ । किंतु परमार्थतस्तत्र स्थित एव गृह्यते । अतः कथमस्य निर्दोषत्वम् ? ॥

इति शङ्कायाः परिहार उच्यते—

॥ सू ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ २० ॥

नेत्यनुवर्तते । वस्तुतः पृथिव्यादिष्वन्तर्भावादपि परमेश्वरस्य तद्गतवृद्धिह्रासभाक्त्वं न संभवति । पूर्वोक्तोभयदृष्टान्तग्रहणसामञ्जस्यादेवमवगम्यते । उक्तं हि वस्तुतोऽनवस्थितस्य सूर्यस्य स्थितस्य चाकाशस्योपमानत्वेन ग्रहणं सर्वत्रावस्थितस्यापि परमेश्वरस्यानवस्थितस्येव न तद्दोषस्पर्श इति ज्ञापयितुमिति । तथा हि दृश्यते विवक्षितधर्मसाम्यज्ञापनमात्रेण चन्द्रवन्मुखमिति दृष्टान्तः । तस्मादुभयलिङ्गसिद्धिरीश्वरस्य पारमार्थ्यात् पृथिव्यादिषु स्थितस्यापि । अथवा—श्रुतावपि दृश्यते विवक्षितधर्मसाम्येन दृष्टान्तः 'अश्व इव रोमाणि विधूय पापम्' । अतो विवक्षितधर्मसाम्येनोभयदृष्टान्तसामञ्जस्यादुभयलिङ्गमेव ब्रह्मेति सिद्धम् ॥ इत्युभयलिङ्गाधिकरणम् ॥ ५ ॥

अतः प्रतिसूर्यस्य चलनादिकमिव तत्स्थित्यवभासप्रयुक्तं दोषवत्त्वं गुणवत्त्वं वा भासतां नाम न तत्पारमार्थिकमिति । तस्मादस्याः श्रुतेर्विवक्षितार्थविरुद्धाया उदाहरणमयुक्तमिति । सू ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ २० ॥ अयं हि परिहाराभिप्रायः । यथा जलसूर्यस्य जलोपाधिप्रयुक्तवृद्धिह्रासादिभाक्त्वं वस्तुतो न भवति एवं ब्रह्मणः पृथिव्याद्यन्तरवस्थितिप्रयुक्तं गुणदोषभाक्त्वं न भवतीति तत्प्रयुक्तगुणदोषभाक्त्वाभावमात्रे द्वितीयदृष्टान्तः । तथा सत्येव दृष्टान्तद्वयीसामञ्जस्यात् । प्रतिसूर्यवदुपाध्यनवस्थितिपर्यन्तविवक्षायां प्रथमश्रुतदृष्टान्तोपमर्दापत्तेः । तथा सत्येव सत्यज्ञानादिश्रुत्युभयलिङ्गत्वश्रुतिरूपोभयसामञ्जस्याच्च । अन्यथा सर्वशरीरत्वसर्वनियंतृत्वादिप्रतिपादकानेकश्रुतिविरोधापत्तेः । न हि सर्वात्मना दृष्टान्तदार्ष्टान्तिकयोस्साम्येन भाव्यमित्यस्ति नियमः । लोकवेदयोर्विवक्षितांशसाम्यमात्रेण दृष्टान्तोपादानदर्शनादिति ।

इत्युभयलिङ्गाधिकरणम् ॥ ५ ॥

---

नयमणिमालायाम्

अथोभयलिंगाधिकरणम् ॥ ५ ॥

सू ॥ न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि ॥ ११ ॥ भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ अपि चैवमेके ॥ १३ ॥ अरूपवदेव तत्प्रधानत्वात् ॥ १४ ॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ आह च तन्मात्रम् ॥ १६ ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥ अंबुवद्ग्रहणात्तु न तथात्वम् ॥ १९ ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामंजस्यादेवं दर्शनाच्च ॥ २० ॥

यद्यपि निर्दोषत्वं स्वतस्समाम्नातमंविकारमणे । दोषवति वस्तुनि स्थितिरथापि दोषं समावहेदेव ॥ १८७ ॥

नैवमतिरोहितोभयलिंगस्य विभोर्मृगांकचूडस्य । दुष्टे स्थित्या न भवेत्परतंत्रस्येव तदनिष्टम् ॥ १८८ ॥

इति उभयलिंगाधिकरणम् ॥ ५ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथोभयलिंगाधिकरणम् ॥ ५ ॥

**सू॥ न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि ॥ ११ ॥ न भेदादितिचेन्न प्रत्येकमतद्वचनात् ॥१२॥ अपि चैवमेके ॥ १३ ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥ आह च तन्मात्रम् ॥ १६ ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥ दर्शनाच्च ॥ २१ ॥**

**भगवत्पादमते,** अत्र 'सर्वकामः सर्वगन्धः सर्वरसः' इत्यादिना, ब्रह्मणः सविशेषत्वं श्रूयते 'अस्थूलमनणु' इत्यादिना निर्विशेषत्वम् । तत्र किमुभयश्रुत्यनुरोधादुभयरूपं ब्रह्म, उतैकरूपम् । एकरूपमित्यत्रापि, सविशेषं, निर्विशेषं वेति **संदेहः** । द्विरूपमिति **पूर्वपक्षः । सिद्धान्तस्तु,** न तावत्परस्य ब्रह्मण उभयलिंगमुभयरूपत्वं संभवति । सत्यस्य वस्तुनो द्वैरूप्यायोगात् । न ह्येकमेव वस्तु एकदा तद्वत्तदभाववच्च दृष्टम् । नापि स्थानत उपाधित उभयरूपत्वं तात्विकं युक्तम् । अग्निसंयोगमात्रेण जलस्यौष्ण्यस्य तत्स्वभावत्वादर्शनात् । अत एकरूपत्वमेव ब्रह्मणः । **हि**=यस्मात् । **सर्वत्र**=सर्वेषु वेदान्तेषु 'अशब्दमस्पर्शमरूप' मित्यादिब्रह्मपरेषु सविशेषत्वनिरासेन निर्विशेषमेवैकरूपं ब्रह्मोपदिश्यत इत्यर्थः ॥

**सू ॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥** ननु न निर्विशेषमेव ब्रह्म । कुतः । **भेदात्**=प्रतिविद्यं ब्रह्मण आकारभेदेन भेदात् । कस्यां चिद्विद्यायां चतुष्पाद्ब्रह्मोपदिश्यते । कस्यांचित् षोडशकलम् । कस्यांचित्त्रैलोक्यशरीरं वैश्वानराख्यम् । तस्मात्सविशेषमपि श्रुतिसामर्थ्यादङ्गीकर्तव्यमिति चेत् । **न । प्रत्येकं**=प्रत्युपाधि । **अतद्वचनात्** अभेदवचनात् । 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुष' इत्यादिश्रुतौ ब्रह्मणः सर्वोपाधिषु पृथिव्यादिषु अभेदश्रवणादित्यर्थः ॥ **सू ॥ अपि चैवमेके ॥ १३ ॥** अपिचैके शाखिनः 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' 'नेह नानास्ति किंचन' इत्येवं भेदनिन्दापूर्वकमभेदमेव ब्रह्मणः समामनन्ति इत्यर्थः ॥

ननु सगुणनिर्गुणपरे श्रुतिद्वये सति कथं निर्गुणे ब्रह्मणि पक्षपातः तत्राह—**सू ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ अरूपवदेव**=रूपादिहीनं निर्विशेषमेव ब्रह्मावधारयितव्यम् । न सविशेषम् । कुतः । **तत्प्रधानत्वात्**='अस्थूल' मित्यादिनिषेधशास्त्रस्य निर्गुणब्रह्मप्रधानत्वादित्यर्थः । उपासनावाक्यानां सविशेषत्वे तात्पर्याभावात्तत्तात्पर्याङ्गीकारे वाक्यभेदापत्तेः इतरेषां सविशेषवाक्यानां प्रत्यक्षादिसिद्धप्रपञ्चानुवादकत्वेन निर्विशेषपरत्वात् 'तदनन्यत्वम्' इत्यादिना प्रपञ्चमिथ्यात्वसाधनाच्च न सविशेषत्वं ब्रह्मणः प्रामाणिकमिति भावः ॥

ननु तर्हि सविशेषश्रुतीनां का गतिरित्यत आह—**सू ॥ प्रकाशवच्चावैयर्थ्यम् ॥ १६ ॥** यथा सूर्यादिप्रकाशो वक्रवंशाद्युपाधिना वक्र इव ऋजुरिव भवति तद्वत् ब्रह्मापि पृथिव्याद्युपाधिवशात्तत्तदाकारमिव भवति । तादृशौपाधिकाकारः सविशेषश्रुतीनां गतिरिति तासाम**वैयर्थ्यम्**=निरर्थकत्वाभाव इत्यर्थः ॥

ननु कीदृशं निर्विशेषं ब्रह्मेत्यत आह—**सू ॥ आह च तन्मात्रम् ॥ १६ ॥** 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति श्रुतिः **तन्मात्रम्**=चैतन्यमात्रं स्वप्रकाशं चिदेकरसं निर्विशेषमाहेत्यर्थः ॥

किंच । प्रपञ्चप्रत्याख्यानमुखेन ब्रह्मण उपदेशादपि ब्रह्म निर्विशेषमेव । सविशेषत्वे तद्वाक्यैरेव तत्सिद्धेः प्रत्याख्यानोपदेशानर्थक्यं स्यादित्याह—**सू ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥** 'अथात आदेशो नेति नेति' इत्यादिश्रुतिः प्रपञ्चनिषेधमुखेनैव ब्रह्म **दर्शयति** । सौत्राथोशब्दस्तथार्थः । तथा **स्मर्यते च** भगवद्गीतासु निषेधमुखेनैव ब्रह्म 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' इति ।

किंच । विशिष्टदृष्टान्तोक्तिरपि निर्विशेषत्वमस्य गमयतीत्याह—**सू ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥** यत एवायमात्मा चैतन्यैकरसः परप्रतिषेधोपदेश्यो निर्विशेषः अत एवौपाधिकत्वं सविशेषमादाय सूर्यकादिवत् जलगतसूर्यप्रतिबिंबादिवत् इत्युपमोपादीयते मोक्षशास्त्रेषु 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इत्यादिषु । एवं चैतद्दृष्टान्तबलादपि ब्रह्मणो निर्विशेषत्वमिति सूत्राभिप्रायः ॥

दृष्टान्तवैषम्यं शंकते—**सू ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥** यथा अंबु सूर्यान्मूर्तांद्भिन्नं दूरस्थं मूर्तं गृह्यते तद्वदमूर्तात्सर्वात्मकादात्मनो भिन्नदूरस्थोपाधेरग्रहणान्न तथात्वं न सूर्यतुल्यत्वमिति शंकार्थः ।

अत्रोत्तरमाह—**सू ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥** यथा सूर्यप्रतिबिंबस्य जलान्तर्भूतस्य जलगतवृद्धिह्रासभाक्त्वं न वास्तवम् एवं निर्विशेषस्य परमात्मनो देहाद्युपाध्यन्तर्भावाद्देहादिगतवृद्धिह्रासभाक्त्वं न स्वाभाविकम् इत्येतावतांशेनोभयोर्दृष्टान्तदार्ष्टान्तिकयोस्सामञ्जस्याद्भवति सूर्यादिदृष्टान्तः । न हि दृष्टांतदार्ष्टान्ति-

कयोस्सर्वांशेन समत्वं शक्यते शक्रेणापि वक्तुम् । तत्वे तदुच्छेदादिति भावः ।

किंच । आगमैकसमधिगम्येऽर्थे न पर्यनुयोग इत्याह—सू ॥ **दर्शनाच्च** ॥ २१ ॥ परस्य ब्रह्मणो देहान्तरानुप्रवेशस्य प्रतिबिंबभावरूपस्य 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' इत्यादिश्रुतौ दर्शनात्। अतो निर्विशेषमेव चैतन्यैकरसं ब्रह्मेति सिद्धम् ॥

**श्रीकण्ठमते** तथा **रामानुजमते** च पूर्वेष्वधिकरणेषु त्वंपदार्थस्य जीवस्य स्वरूपधर्मगत्यागत्यवस्थाविशेषनिरूपणं कृतम्। अतः परं तत्पदार्थस्य परमेश्वरस्य स्वरूपधर्मादिकं निरूप्यते—सू ॥ **न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि** ॥ ११ ॥ अत्र किं जीवस्येव तदन्तर्यामिणः परस्य ब्रह्मणोऽपि जागरादिप्रयुक्तदोषास्संभवन्ति उत नेति **संशयः** । 'यः पृथिव्यां तिष्ठन्' इत्यादिना सर्वास्ववस्थास्ववस्थितिविवचनात्तत्तद्दोषकलङ्काः प्रसज्यन्त एवेति **पूर्वपक्षः** । **सिद्धान्तस्तु, न स्थानतोऽपि परस्य**=पृथिव्यादिष्वन्तर्यामितयावस्थितस्यापि परस्य ब्रह्मणस्तत्रतत्रावस्थानेन जीवस्येव ये दोषा उक्तास्ते न संभवन्तीत्यर्थः । कुतः । **उभयलिंगं सर्वत्र हि**=हिर्हेतौ । यतस्सर्वत्र श्रुतिस्मृतिषु निरस्तनिखिलदोषत्व-समस्तकल्याणगुणात्मकत्वरूपोभयलिंगमुभयलक्षणं परं ब्रह्मावगतम् ॥ **सू०** ॥ **भेदादिति चेन्न प्रत्येकमतद्वचनात्** ॥ १२ ॥ यथा जीवस्य स्वतोऽपहतपाप्मत्वादिगुणकस्यापि देवादिशरीरसंबन्धितयावस्थानभेदादुक्तदोषसंबन्धित्वमेवं परस्यापि 'यस्य पृथिवी शरीर' मिति शरीरसंबन्धित्वावस्थाभेदात्ते दोषाः स्युरिति चेन्न । **प्रत्येकं**=प्रतिपर्यायम् । **अतद्वचनात्**=दोषासंबन्धित्ववचनात् । 'यस्य पृथिवी शरीर' मित्यादिषु 'स त आत्मान्तर्याम्यमृत' इत्यन्तर्यामिणो निर्दोषत्वमुच्यते । जीवस्य तु पराभिध्यानात्स्वरूपं तिरोहितमित्युक्तम् । अतश्शरीरसंबन्धित्वेऽपि परस्यैते न दोषाः ॥

**सू०** ॥ **अपि चैवमेके** ॥ १३ ॥ अपिच यदिदं जीवपरयोरेकस्मिन्शरीरे शरीरित्वेनावस्थितयोर्दोषसंबन्धित्वं तद्विपरीतत्वं चोक्तमेवमेके शाखिनः 'द्वा सुपर्णा सयुजा सखाया' वित्यादिना स्वशब्देनाधीयते । अतो न जीववदीश्वरे दोषप्रसंगः ॥

जीवेश्वरयोश्शरीरस्थितिसाम्येऽपि स्थितिवैषम्यमाह—**सू०** ॥ **अरूपवदेव हि तत्प्रधानत्वात्** ॥ १४ ॥ मनुष्यु शरीरित्वेऽप्यरूपवदेव हि तत्परं ब्रह्म वर्तते । कुतः । **प्रधानत्वात्**=नामरूपनिर्वाहकत्वात् । जीवस्य नामरूपभाक्त्वेन कर्मफलाशनं निर्वोढुं परस्य तत्तच्छरीरे शरीरित्वेनावस्थानम् । जीवस्य तु कर्मफलभोगार्थं हि शरीरे स्थितिः । अत उभयोर्वैषम्यं सिद्धम् ॥

ननु 'सत्यं ज्ञानमनन्तं ब्रह्मे' ति प्रकाशैकस्वरूपता ब्रह्मण उच्यते कथमुभयलिंगमित्यत आह—**सू०** ॥ **प्रकाशवच्चावैयर्थ्यात्** ॥ १५ ॥ यथा 'सत्यं ज्ञान' मिति वाक्यावैयर्थ्यात्प्रकाशो ब्रह्मणः स्वरूपमित्यवगम्यते तथा 'यस्सर्वज्ञस्सर्ववित्' 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिवाक्यावैयर्थ्यात्कल्याणगुणाकरत्वं च ब्रह्मणः स्वरूपमित्यवगम्यते । अत उभयलिंगमेव ॥

**सू०** ॥ **आह च तन्मात्रम्** ॥ १६ ॥ 'सत्यं ज्ञान' मिति वाक्यं ब्रह्मज्ञानस्वरूपमित्येतावन्मात्रमाह न पुनः कल्याणगुणाकरत्वं निषेधति ॥

**सू०** ॥ **दर्शयति चाथो अपि स्मर्यते** ॥ १७ ॥ **दर्शयति च** श्रुतिर्भगवती हेयगुणराहित्येन कल्याणगुणसाहित्येन चोभयलिंगं ब्रह्मेति इत्येवं रीत्या ब्रह्मण उभयलिंगत्वे श्रुतिस्मृतिप्रमाणोपन्यासकत्वेन सूत्रार्थवर्णनमविशिष्टमेवानयोर्मतयोः । श्रुतिस्मृत्युदाहरणप्रक्रिया परं भिद्यते । **श्रीकण्ठमते** 'आकाशशरीरं ब्रह्म सत्यात्म प्राणारामं मनआनन्दम्' इत्यादिकं श्रुतिवाक्यं 'अनादिमलसंश्लेषप्रागभावाद्विशेषतः' इत्यादिस्मृतिवाक्यं चोदाहृत्य शिवशब्दवाच्यं ब्रह्मोभयलिंगमिति निरूपितम् । **रामानुजमते** तु 'निष्कलं निष्क्रियं शान्त' मित्यादिश्रुतिवाक्यं 'यो मामजमनादिं च वेत्ति लोकमहेश्वर' मितिस्मृतिवचनं चोदाहृतमिति च परस्परं विशेषः ॥ **सू०** ॥ **अत एव चोपमा सूर्यकादिवत्** ॥ १८ ॥ **अत एव च**=यतो ब्रह्मणो निरस्तनिखिलदोषत्वेन कल्याणगुणाकरत्वेन चोभयलिंगत्वात्पृथिव्यादिस्थानतोऽपि नास्ति तत्प्रयुक्तदोषगन्धः । अत एव शास्त्रेषु जलसूर्यकाद्युपमा स्वीक्रियते 'आकाशमेकं हि यदा घटादिषु पृथग्भवेत्। तथात्मैकोऽप्यनेकस्थो जलाधारेष्विवांशुमा' नित्यादिषु ॥

अत्राशंकते—**सू०** ॥ **अंबुवदग्रहणात्तु न तथात्वम्** ॥१९॥ तुशब्दश्चोद्यं द्योतयति । **अंबुवदग्रहणात्**=अंबुनीवाग्रहणादित्यर्थः । यथा अंबुनि सूर्यस्तत्रानवस्थित एव भ्रान्त्या तत्र स्थित इव गृह्यते न तथा परमात्मा पृथिव्यादौ गृह्यते । 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तर' इति परमार्थतः स्थितो गृह्यते । अतो **न तथात्वम्**=न सूर्यस्येव तत्प्रयुक्तदोषगन्धाभावः परमात्मनः परमार्थतः स्थितत्वादिति ॥

परिहरति—**सू०** ॥ **वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च** ॥ २० ॥ पृथिव्यादिषु विषमेषु स्थानेषु स्थितस्यापि परमात्मनस्त**दन्तर्भावात्**=तत्रावस्थानतः तत्प्रयुक्तवृद्धिह्रासभाक्त्वं 'जलाधारेष्विवांशुमा' निति दृष्टान्तेन निवर्त्यते । कुतोऽवगतमिति चेत् **उभयसामञ्जस्यादेवम्**=उभयदृष्टान्तोपादानसामर्थ्यादेवमवगम्यत इत्यर्थः । 'आकाशमेकं हि यथा घटादिषु पृथग्भवे' दिति घटादिषु विषमेष्ववस्थितमाकाशं 'जलाधारेष्विवांशुमा' निति

चांशुमतं परमार्थतोऽनवस्थितं चोभयं दृष्टान्ततयोपादाय 'तथात्मैकोऽप्यनेकस्थ' इति निगमनात्तत्तत्स्थानप्रयुक्तवृद्धिहास-भाक्त्वनिवर्तनमात्रं विवक्षितमित्यवगम्यते । अन्यत्रापि दृष्टान्तदार्ष्टान्तिकयोस्सर्वसाम्याभावेऽपि 'सिंह इव माणवक' इत्यादिषु दृष्टान्तोपादानदर्शनाच्चैवमवगम्यते ॥

**श्रीकण्ठमते** नेत्यनुवर्त्य वृद्धिह्रासभाक्त्वं न भवतीति व्याख्यातम् । अथवेत्युपक्रम्य दर्शनाच्चेत्यस्य 'अश्व इव रोमाणि विधूय पाप' मिति श्रुतौ विवक्षितधर्मसाम्येन दृष्टान्तदर्शनाच्चेत्यर्थपरत्वमप्युपन्यस्तमिति च विशेषः । अतो विवक्षितध-र्मसाम्येनोभयदृष्टान्तसामञ्जस्यादुभयलिंगं ब्रह्मेति सिद्धम् ॥

**आनन्दतीर्थमते,** इयमेकादशसूत्री अधिकरणपञ्चकात्मतया विभक्ता । तत्राद्ये **न स्थानतोऽप्यधिकरणे** सर्वशरीरेषु प्रतिशरीरं दक्षिणाक्ष्यादिस्थानेषु च जाग्रदाद्यवस्थाप्रेरकतया स्थितस्य विश्वतैजसप्राज्ञादिरूपस्य परमेश्वरस्य भिन्नस्थानत्वे बहुकुंभसंभृतांभोवद्भेदावश्यंभावात् सर्वावस्थाप्रेरकः परमेश्वर एक एवेति यदुक्तं तदयुक्तम् । एवं च भिन्नानां गुणा-दितारतम्यानुग्राह्यानुग्राहकभावदर्शनात्तस्यापि तत्प्रसक्तौ न परमेश्वरस्य निर्दोषाशेषगुणत्वसिद्धिरिति **पूर्वपक्षः । सिद्धा-न्तस्तु,** स्थानभेदेऽपि न परस्य भिन्नं रूपम् । 'सर्वेषु भूतेष्वेकमेव ब्रह्मेत्याचक्षते' इति सर्वभूतेष्वेकस्यैव निर्दोषपरिपूर्णगुण-त्वश्रवणात् 'अयं वै हरय' इत्यादिना भगवद्रूपाणां प्रत्येकं मूलरूपेण चाभेदवचनात् ब्रह्मतर्कोक्तरीत्या वक्ष्यमाणयुक्तेर्नेतव्यत्वाच्च । तस्मात्स्थानभेदेऽप्यभेदान्नानात्वास्ति ब्रह्मणो रूपभेद इति । **सूत्रार्थस्तु सू० ॥ न स्थानतोऽपि परस्योभयलिंगं सर्व-त्र हि ॥ ११ ॥ परस्य**=परमात्मनः । **स्थानतोऽपि**=अक्ष्यादिस्थानभेदादपि । **उभयलिंगं**=भिन्नरूपं नास्ति । किं तु **सर्वत्र**=सर्वस्थानेषु स्थितं रूपमेकमेव । **हि**=यस्मात् । 'सर्वेष्वि' ति श्रुतिरत्रास्ति अत इत्यर्थः ॥

**सू० ॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ भेदात्**='कार्यकारणवद्धा' विति स्वप्नजाग्रदनुभव-जनकत्वरूपभेदकत्वश्रवणात् । विश्वादिरूपाणां नाभेद इति चेन्न । कुतः । **प्रत्येकं**=परस्परं तेषां रूपाणाम् । **अतद्वच-नात्**='एष त आत्मे' त्यभेदश्रुतेरित्यर्थः ॥

**सू० ॥ अपिचैवमेके ॥ १३ ॥** यतः एवमभेदं चशब्दार्थानन्तरूपत्वं चैके शाखिनः 'अमात्र' इति श्रुतौ पठन्ति । **अपि**=अभेदेऽपि भेदव्यपदेशः स्थानभेदाद्युज्यत इत्यर्थः ॥ **इति नस्थानतोऽप्यधिकरणम् ॥ ८ ॥**

## अथारूपाधिकरणम् ॥ ९ ॥

**सू० ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥** अत्र पूर्वाधिकरणोक्तरीत्या वर्णितमहिम्नः परमेश्वरस्य रूपवत्त्व-मस्ति वा न वेति **संदेहः ।** रूपवत्त्वाभ्युपगमे शरीरस्यानित्यत्वनियमान्नीरूपत्वश्रुतिविरोधाच्च अरूपित्वे रुक्मवर्णवत्त्वादि-श्रुतिविरोधात्सौन्दर्यादिशून्यत्वे भक्तेर्निरालंबनतापाताच्च तदेवमुभयथापि तत्र भक्तेरयोगाद्व्यर्थं तस्य स्वप्नप्रवर्तकत्वादिम-हिमवर्णनमिति **पूर्वपक्षः । सिद्धान्तस्तु,** तस्य प्रकृत्यादिप्रवर्तकत्वेन तत्प्रधानत्वात् ज्ञानानन्दस्वभावविलक्षणनित्यरूप-वत्त्वेऽपि प्रसिद्धप्राकृतरूपाभावाभिप्रायेण नीरूपत्वश्रुत्युपपत्तेः प्रसिद्धप्राकृतरूपरहित एव परमेश्वर इति । **सूत्रार्थस्तु,** ब्रह्म **अरूपवदेव**=प्राकृतरूपरहितमेव । कुतः । **तत्प्रधानत्वात्**=प्रकृत्याद्युत्तमत्वात् हिशब्दसूचितास्थूलमितिश्रुतेश्चेत्यर्थः ॥

**सू० ॥ प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥** चो हेतुसूचकः । **प्रकाशवत्**=लोकविलक्षणचक्षुरादिप्रकाशो नास्ति प्रकाश इति व्यवहारस्येव । **अवैयर्थ्यम्**=न ब्रह्मणो रूपित्वश्रुतीनामप्रामाण्यम् । कुतः । तस्यारूपित्वेऽपि विलक्षणरूपित्वा-भ्युपगमादित्यर्थः ॥

**सू ॥ आह च तन्मात्रम् ॥ १६ ॥** यतः 'ऐकात्म्य' मिति श्रुतिः ब्रह्मणस्**तन्मात्रम्**=विज्ञानानन्दैकस्वरूपं रूप-माह=वक्तीत्यर्थः । अतो न वैलक्षण्यानिरुक्तिरिति चशब्दार्थः ॥

**सू ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥** चो यतः । अपिस्समुच्चये । न केवलं ब्रह्मणः आनन्दात्मकत्वं दर्शयति किं तु 'तद्विज्ञानेने' तिश्रुतिर्ज्ञानस्य ब्रह्मात्मकत्वमपि **दर्शयति**=प्रतिपादयति । 'अथो' इति पदं ज्ञानरूपार्था-न्तरवाचि । **अथो**=विज्ञानस्यापि ब्रह्मरूपत्वम् । **स्मर्यते**=व्यासादिभिः 'शुद्धस्फटिकसंकाश' मित्यादिना । अतो न ज्ञानानन्दयोर्ब्रह्मस्वरूपत्वमप्रामाणिकमित्यर्थः ॥ **इत्यरूपाधिकरणम् ॥ ९ ॥**

## अथोपमाधिकरणम् ॥ १० ॥

**सू ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥** अत्र जीवः परमात्माभिन्नश्चेतनत्वाद्विश्वादिवदित्यनुमानेन जीवस्य ब्रह्माभेदसिद्धेर्न तावदात्यन्तिकी भक्तिः परमात्मनि युक्तेति **पूर्वपक्षः । सिद्धान्तस्तु,** जीवः परमात्माभिन्नो न भवति तत्प्रतिबिंबत्वात् यथा सूर्यप्रतिबिंबो न सूर्याभिन्न इत्यत्यन्तभेदप्रतिपादकप्रबलानेकश्रुतिसहकृतानुमानविरोधात् । अतो जीवस्य परमात्मप्रतिबिंबत्वेन तदभेदायोगाद्भक्तिरुपपन्नैवेति । **सूत्रार्थस्तु, अत एवच**=भिन्नत्वतदधीनत्वतत्सा-दृश्यैरेव सूर्यकाद्युपमानोपाध्यधीनत्वादिनेति भावः ॥ **इत्युपमाधिकरणम् ॥ १० ॥**

## अथांबुवदधिकरणम् ॥ ११ ॥

**सू ॥ अंबुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥** नित्यानन्दज्ञानादेस्सादृश्यस्य नित्यसिद्धत्वान्न भक्तिज्ञानादिना प्रयोजनमित्यतो भक्तिः कर्तव्येति **पूर्वपक्षः । सिद्धान्तस्तु,** अंबुवत् स्नेहेन ग्रहणं ज्ञानं हि भक्तिः । तां विना भगवत्सादृश्यरूपं स्वरूपज्ञानादिकं न सम्यगभिव्यज्यते । अतस्तत्सम्यगभिव्यक्तये भक्त्याद्यपेक्षावश्यिकीति । **सूत्रार्थस्तु,**

## अथ प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

उभयलिङ्गासंभवमाशंक्याह—

सू ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥

पूर्वत्र ब्रह्मण उभयलिङ्गत्वं साधितम् । तद्बाधोऽस्ति न वेति संदिह्यते ॥

'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' इति पृथिव्यप्तेजोवाय्वाकाशात्मकमूर्तामूर्तप्रपञ्चरूपत्वं ब्रह्मण उक्त्वा, 'अथात आदेशो नेतिनेति' इति श्रूयते । अत्रेतिशब्दस्य पूर्वप्रकृतपरामर्शित्वात् ब्रह्मणः पूर्वप्रतिपादितं मूर्तामूर्तप्रपञ्चरूपत्वं निषिध्यते ॥

## अथ प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

एतदधिकरणसिद्धार्थविषयाक्षेपसमाधानत्वेनोत्तराधिकरणमवतारयति—उभयलिंगेति। सू ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥ पूर्वत्रेति। 'अथात आदेशो नेति नेती' ति निषेधस्य पूर्वप्रकृतमूर्तामूर्तप्रपञ्चात्मकब्रह्मरूपविषयतायामुभयलिंगत्वबाधः प्रकृतेयत्ताविषयतायां न तद्बाध इति तद्विषयानवधारणात्संशयः। । 'नेति नेती' त्यत्रेतिशब्दपरामृष्टस्य नञा निषेध इति तावन्निर्विवादम् । इतिशब्दः प्रकारवाची पूर्वप्रकृतं प्रकारं परामृशेत् । पूर्वञ्च 'द्वे वाव ब्रह्मणो रूपे' इत्यादौ मूर्तामूर्तप्रपंचात्मकं ब्रह्मणः प्रकारद्वयं प्रकृतम् । अतस्तन्निषिध्यत इति युक्तम्। 'नेति नेती' ति वीप्सायां द्विरुक्तिः पूर्वप्रकृतस्य रूपद्वयस्य साकल्येन निषेधप्रत्यायनार्था । अथवैकेन मूर्तप्रपञ्चस्य निषेधोऽपरेणामूर्तप्रपंचस्येति द्विर्वचनसाफल्यम् । प्रकृतेयत्ता निषिध्यत इति तु न युक्तम् । रूपद्वयवत्तस्याः प्रकृतत्वाभावाद्रूपद्वयनिषेध इव तन्निषेधे द्विर्वचनस्य साफल्याभावाच्च । न च वाक्यशेषे अधिकगुणजातविधानं प्रकृतेयत्तानिषेधानुगुणं दृश्यत इति वाच्यम् । तदसिद्धेः । 'न ह्येतस्मा' दितिवाक्ये प्रकृतब्रह्मापेक्षयोत्कृष्टं निषिध्यत इति ब्रह्मणस्सर्वोत्तरत्वगुणप्रतिपादकवाक्यशेष इति चेन्न । तस्य पूर्ववाक्यार्थानुगुण्येन ब्रह्मान्यसर्वनिषेधकत्वोपपत्तेः । तथा स 'त्यन्यत्पर' मिति च पद-

---

सादृश्यार्थो वतिः । सादृश्यं स्नेहाख्यविशेषणेन विवक्षितम् । तथा च यतः अंबुवदग्रहणात्=स्नेहसहितमाहात्म्यज्ञानाभावात् । भक्तिं विनेति यावत् । तथात्वम्=सुखाद्यात्मकलरूपेश्वरसादृश्यं न तु सम्यग्व्यज्यते । अतो भक्तिरेव सम्यक्स्वरूपाभिव्यक्तिजनिकेति तदर्थं सा कर्तव्येत्यर्थः ॥ इत्यंबुवदधिकरणम् ॥ ११ ॥

अथ वृद्धिह्रासाधिकरणम् ॥ १२ ॥

सू ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥ अत्र सा भक्तिः पुरुषेषु किं तारतम्येन वर्तते उतैकप्रकारेति संशये एकप्रकारेति पूर्वपक्षः । सिद्धान्तस्तु अस्याश्च भक्तेरधिकारिषु तारतम्यमस्ति । ब्रह्मादीनामुत्तमफलानामसदादीनामल्पफलानां चाधिकारान्तर्भावात् । एवं सत्येवोभयान्प्रति विषमफलदातुरीश्वरस्य सामञ्जस्यं स्यादिति । सूत्रार्थस्तु, वृद्धिह्रासभाक्त्वम्=भक्त्यादेस्साधकेष्वाधिक्यन्यूनता । नेत्यनुवर्तते । न तावदत्राङ्गीकर्तव्यम्। कुतः । अन्तर्भावात्=महदल्पफलवतां ब्रह्मादीनामन्येषां च भक्तत्वेऽन्तर्भावात् । तथा पि कुतो वृद्धिह्रासभाक्त्वम् । एवं भक्तितारतम्ये सत्येवोभयसामञ्जस्यात्=उभयान्महदल्पफलान्ब्रह्मादिजीवान्प्रतिफलदातुरीश्वरस्य सामञ्जस्याद्वैषम्येण फलदानस्य भक्तितारतम्येन युक्तत्वात् अन्यथा अयुक्तत्वात् । अतस्तदङ्गीकार्यमित्यर्थः ॥

सू ॥ दर्शनाच्च ॥ २१ ॥ 'अथात' इति श्रुतौ 'यथे' ति स्मृतौ च फलतारतम्यदर्शनादुक्तत्वाच्चोक्तं युक्तमित्यर्थः ॥ इति वृद्धिह्रासाधिकरणम् ॥ १२ ॥

इति सूत्रार्थचन्द्रिकायामुभयलिंगाधिकरणम् ॥ ६ ॥

इति प्राप्ते ब्रूमः—'नेति नेति' इति पूर्वसिद्धं ब्रह्मणः प्रपञ्चरूपत्वं न निषिध्यते, अप्रज्ञातत्वेन विहितस्यास्य प्रतिषेधायोगात्। किंतु, प्रकृतैतावन्मात्रं ब्रह्म न भवतीति प्रकृतेयत्तामेव 'नेति नेति' इति प्रतिषेधतीति युक्तम्। यतश्च पश्चात् पूर्वमनुक्तं भूयो गुणजातं ब्रवीति। 'न ह्येतस्मादिति नेत्यन्यत् परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' इत्यादिना। अत्र 'न ह्येतस्मात्' इति वाक्येन 'नेति नेति' इति निर्दिष्टात् ब्रह्मणोऽन्यन्नास्त्युत्कृष्टमित्युच्यते। अथ नामधेयमुच्यते—सत्यस्य सत्यमिति। तदर्थनिर्वचनं तु—"प्राणा वै सत्यं तेषामेष सत्यम्" इति। प्राणा जीवात्मानः सत्यं वियदादिवदुत्पत्त्यभावात्। तेभ्यः सत्येभ्यो ह्येष सत्यम्; तद्वत् ज्ञानसंकोचाद्यभावात्। अतः प्रकृतधर्मेयत्ताप्रतिषेधपरत्वात् 'नेति नेति' इति वाक्यस्य ब्रह्मणः पूर्वसिद्धमुभयलिङ्गत्वं न हीयत एव ॥

---

द्वयं व्यर्थं स्यादिति चेन्न। तवापि तुल्यत्वात्। ब्रह्मापेक्षयोत्कृष्टं नास्तीत्युत्कृष्टनिषेधविविक्षायामपि ह्यन्यदिति व्यर्थमेव। ततोऽन्यस्यैव तदपेक्षयोत्कृष्टत्वप्रसक्त्या तन्निषेधस्यार्थवत्त्वात्। अतः परशब्दस्यापि व्यतिरिक्तार्थत्वमंगीकृत्य प्रतिभासतः केवलं ब्रह्मणः परमस्ति वस्तुतस्तु ततोऽन्यत्तु परं नास्तीत्येवमर्थतया तत्पदद्वयं संगमयितव्यम्। अत एव 'प्राणा वै सत्यं तेषामेष सत्य' मिति तदनन्तरं श्रूयते। तत्र प्राणशब्देनेन्द्रियवाचिना तद्विषया लक्ष्यंते। ते तावत् 'सन्घट' इत्याद्यनुभवदर्शनात्केवलं प्रतिभासतः सत्यभूताः। ब्रह्म तु वस्तुतोऽपि सत्यम्। तदपेक्षयोत्कृष्टं सत्यमिति। अथवा। सन्मृत्पिण्डः सन्घटः सत्कपालं सच्चूर्णमित्यादिप्रत्ययविषया मृत्पिण्डघटकपालादयो व्यावर्तमानसत्याः। ब्रह्म तु सर्वेष्वप्येतेषु प्रत्ययेषु सत्सदिति प्रत्ययवेद्यमनुगतं सत्यम्। व्यावर्तमानाश्चानुवर्तमाने कल्पिता दृष्टाः यथा रज्ज्वदमंशे स्रक्सर्पभूदलनादयः। अतो व्यावर्तमाना घटादयः केवलं प्रतिभासतस्सत्या इति तेषामुत्कृष्टं सत्यं पारमार्थिकं ब्रह्मेति। अतः प्रपञ्चनिषेधान्निर्विशेषं ब्रह्म नोभयलिंगमिति पूर्वः पक्षः। सिद्धान्तस्तु प्रमाणान्तराप्रतिपन्नतया पूर्ववाक्ये श्रुत्यैव विहितं ब्रह्मणो मूर्तामूर्तप्रपञ्चवैशिष्ट्यं तदनन्तरवाक्येन निषेद्धुं न शक्यते। पूर्वापरग्रन्थव्याहतिप्रसंगात्। षोडशिग्रहाग्रहवद्वस्तुनि विकल्पासम्भवात्। अतः पूर्वं मूर्तामूर्तप्रपञ्चवैशिष्ट्योक्त्या बुद्धिस्थः प्रकृतेयत्तारूपः प्रकारो निषिध्यत इति युक्तम्। मूर्तामूर्तप्रपञ्चविशिष्टं ब्रह्मेत्येतावन्मात्रं न भवति। किन्तु अधिकमपि गुणान्तरवत्त्वमस्तीति। वीप्सा त्वादरार्थत्वेन योजनीया। तदेव गुणान्तरं 'न ह्येतस्मा' दिति वाक्यशेषेण प्रतिपाद्यते। रूपतया विशेषणभूतान्मूर्तामूर्तादचेतनप्रपंचात्परमुत्कृष्टं ब्रह्मेव ततोऽन्यदस्मात्प्रपंचादुत्कृष्टं नास्तीति तस्यार्थः। तेन समनिषेधः फलितः। अतो नान्यपदवैयर्थ्यम्। ननु कथमयं समनिषेधः अस्त्येव हि भूतवशिनां योगसिद्धानां मुक्तानाञ्च ब्रह्मवदेव मूर्तामूर्तप्रपञ्चरूपत्वेन प्रपञ्चादुत्कृष्टत्वमित्याशंकानिराकरणार्थं नामधेयोक्तिपुरस्सरं तन्निर्वचनम्। तत्र प्राणशब्देन प्राणाधिष्ठातारो जीवा लक्ष्यन्ते। ते तावत्सत्यभूता अविकाराः। वियदादिवत्स्वरूपान्यथाभावरूपोत्पत्त्यभावात्। तेषामप्युत्कृष्टं सत्यमविकारात्मकं ब्रह्म। जीववज्ज्ञानसंकोचविकासात्मिकाया धर्मान्यथाभावरूपाया

ननु सन् घटः सन् पट इत्यादिष्वनुवृत्तं सद्रूपं ब्रह्म सत्यम् । अन्यत् व्यावर्तमानं घटादिकं 'नेति नेति' इति प्रतिषेधति श्रुतिरित्यत आह—

सू ॥ तदव्यक्तमाह हि ॥ २२ ॥

ब्रह्मस्वरूपं प्रत्यक्षादिना प्रमाणान्तरेण नाभिव्यज्यते । 'न संदृशे तिष्ठति रूपमस्य । न चक्षुषा पश्यति कश्चनैनम् । हृदा' इत्यादिना यतः श्रुतिराह अतः प्रत्यक्षादिना सिद्धा सत्ता न ब्रह्मेति ॥

ब्रह्मस्वरूपग्रहणे हेतुमाह–

सू ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥

अपि तु ध्यानरूपज्ञानेन सम्यगाराधने ब्रह्मस्वरूपं गृह्यते । ये ब्रह्मभाविता ब्रह्मोपासते, तेषां ब्रह्मस्वरूपं ग्रहणयोग्यं भवतीति श्रुतिस्मृतिभ्यामवगम्यते–

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥' इति ।
'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इत्यादिका श्रुतिः ।
स्मृतिरपि–'नासौ प्रत्यक्षविषयः' इत्यादिका ॥

सू ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥

अप्युत्पत्तेरभावात् । ततो योगिनां मुक्तानां च ज्ञानविकासानन्तरं मूर्तामूर्तप्रपञ्चरूपत्वसद्भावेऽपि प्राक् ज्ञानसंकोचकाले तन्नास्तीति सार्वदिकमूर्तामूर्तरूपत्वशालि ब्रह्म यथा प्रपञ्चादुत्कृष्टं न तथा जीवा इत्यभिप्रायः । एवमर्थवर्णन एव 'द्वे वाव ब्रह्मणो रूपे' इत्याद्युपक्रमानुगुण्यं 'नित्यो नित्यानां चेतनश्चेतनाना' मित्यादिश्रुत्यन्तरानुगुण्यं च लभ्यत इति । 'अथ प्राणा वै सत्य' मित्यादिवाक्यशेषस्य पूर्वपक्ष्यभिमतार्थनिराकरणार्थत्वेनोत्तरसूत्रमवतारयति–नन्विति । तदव्यक्तमाह हि ॥२२॥ न ब्रह्मेति । किंतु ब्रह्मशक्तिरूपा प्रपञ्चोपादानत्वेन तत्तादात्म्यापन्ना सत्तेत्यर्थः । सू० ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥ 'अपित्वि'ति शब्दो न चक्षुषा पश्यतीति व्यावर्तितात्साधनान्तरात्संराधनस्य विशेषप्रदर्शनार्थः । ध्यानयज्ञेनाराधनस्य सम्यक्त्वं परमेश्वरप्रसादलभ्यतद्विषयदृढभक्तिपूर्वकत्वम् । ब्रह्मभाविताः ब्रह्मणैव भाववन्तः स्वविषयदृढभक्तिमन्तः कृताः । ब्रह्मभाववच्छब्दा'त्तत्करोती'ति णिचि णाविष्ठवद्भावात् 'विन्मतोर्लुगि'ति मतुब्लोपे ण्यंतात्कर्मणि क्तप्रत्यये 'निष्ठायां सेटी' ति णिलोपे च सति ब्रह्मभाविता इति रूपम् । नायमात्मेति । प्रवचनं बहुवेदपरिश्रमः । मेधा बहुविद्याधारणसमर्था धीः । बहुश्रुतं तर्कमीमांसादिपरिश्रमः । एषः परमात्मा यं नित्यनैमित्तिकाद्यनुष्ठानेन मलपाकवशेन च शुद्धान्तःकरणं वृणुते स्वकीयत्वेन परिगृह्णाति मद्भक्त्या कृतार्थोऽयं भवत्विति कटाक्षयति । तेनैव लभ्यः दृढभक्तिविषयत्वेन प्राप्यः तस्यैव पुरुषधौरेयस्य स्वां तनुं सच्चिदानंदलक्षणां विवृणुते प्रकाशयतीत्यर्थः । ध्यायमान इति हेतौ शानच्प्रत्ययः । ध्यानेन पश्यतीत्यर्थः । सू ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥

(१) 'सर्वप्रपञ्चरूपत्व' इति ख० पाठः ।

अविच्छिन्नानुध्यानसंराधनेन येषां ब्रह्म प्रकाशते तेषां तेन ब्रह्मदर्शनेन विषयीकरणे तज्ज्ञानानन्दादेर्जगदैश्वर्यस्य च वैशेष्यं नास्ति। तथा हि दृश्यते। 'अहं मनुरभवं सूर्यश्च' 'तं मामायुरमृतमित्युपास्स्व' इत्यादिषु ब्रह्मोपासकानां तेन भावनैक्येन तदसाधारणगुणप्राप्तिः। 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इत्यादिषु हि कृष्णादीनां तदैक्यभावनया तदैश्वर्यप्रकाशनं दृश्यते, ब्रह्मभावनाभ्यासेन च विश्वामित्रागस्त्यादीनां स्वर्गान्तरकरणजलधिकवलनादिसामर्थ्यम्। लोके च मन्त्रिणां गरुडभावनया गरुडासाधारणधर्मप्राप्तिः। तस्मात् ब्रह्माहन्तायाः प्रौढभावे सति ब्रह्मासाधारणधर्मांशवैशिष्ट्यमुपासकानामसाधारणमित्यनवद्यम्। अतो घाटदिष्वनुवृत्तं सन्मात्रं प्रत्यक्षं ब्रह्मेति विरुद्धमेव। तस्मात् साक्षात्कारहेतूनां निदिध्यासनादीनां वैयर्थ्यप्रसङ्गात् अप्रत्यक्षेऽपि तादृशि तल्लिङ्गादर्शनाच्च, अतः सन्मात्रं प्रत्यक्षं ब्रह्म तद-

---

प्रकाशादिवत् ब्रह्मोपासनया साक्षात्कृतब्रह्मणां ज्ञानानन्दादेरिव जगदैश्वर्यस्याप्यवैशेष्यं भवति। यथा तेषां ज्ञानानन्दादेर्ब्रह्मज्ञानानन्दादादितो विशेषाभावः तथा तेषां जगदैश्वर्यस्यापि ब्रह्मणो जगदैश्वर्यात् विशेषाभावो भवति। अत एव भगवतः कृष्णस्योपासनाकर्मण्यभ्यासात् चिरनिरन्तरैकाग्र्यात् ब्रह्मसाक्षात्कारेण तद्वज्जगदैश्वर्यप्राप्त्यार्जुनाय तत्प्रकाशनं गीतासु दृश्यते। अगस्त्यविश्वामित्रादीनां च जलधिपानस्वर्गान्तरकरणादिसामर्थ्यप्रकाशनं पुराणेषु दृश्यते। न चैतदसंभावितम्। लोकेऽपि गारुडमन्त्रोपासकानां गरुडभावनया तदसाधारणधर्मस्य दर्शनमात्रेण विषसंहरणसामर्थ्यस्य प्राप्तिदर्शनात्। तस्माद्गरुडाहंभावनया गरुडासाधारणकियदर्थप्राप्तिवद्ब्रह्माहंभावेन ब्रह्मासाधारणकियद्धर्मप्राप्तिर्युक्तैवेति सूत्राभिप्रायमाह—अविच्छिन्नेत्यादिना। ननु पूर्वसूत्रे ब्रह्मसाक्षात्कारस्य कारणमुक्तमस्मिन्सूत्रे कार्यमुक्तं नानयोरुपयोगः प्रकृते दृश्यत इत्याशंक्याव्यक्तत्वहेतुना ब्रह्मणः 'सन्घट' इत्यादिप्रत्यक्षविषयत्वे निराकृते तत्र हेत्वंतरप्रदर्शनपरत्वेनोपयोगं दर्शयन्सूत्रद्वयार्थमुपसंहरति—अत इति। यतः पामराणामपि भवतः। 'सन्घट' इत्यादिप्रत्यक्षस्य ब्रह्मसाक्षात्कारे क्लृप्तमुपासनारूपं कारणं नास्ति। यतश्च सर्वज्ञानानन्दैश्वर्यविशेषाविर्भावरूपं तत्कार्यं नास्ति। अतोऽपि हेतोर्न ब्रह्मणस्तद्विषयत्वमित्यर्थः। नन्वस्य सूत्रस्य ब्रह्मसाक्षात्कारकार्योपन्यासमुखेनोक्तसाध्ये हेत्वन्तरप्रदर्शनपरत्वे ज्ञानानंदैश्वर्यविशेषाविर्भावस्य तत्कार्यत्वमात्रमुपन्यसनीयम्। किमर्थमाविर्भवतां तेषां ज्ञानादीनां ब्रह्मज्ञानाद्यवैशेष्यमप्युपन्यस्तम्? उच्यते। 'नेतिनेती' त्यत्र प्रकृतैतावत्त्वस्य निषेधो न रूपवत्त्वस्येति प्रधानसाध्येऽप्यानुषंगिकहेत्वन्तरलाभार्थं ब्रह्मसाक्षात्कारवतां यदैश्वर्यमाविर्भवति तद्ब्रह्मसाम्यरूपमिति वक्तव्यम्। 'निरञ्जनः परमं साम्यमुपैती' ति श्रुतेः। अतो यथा तेषामाविर्भवज्ज्ञानानन्दरूपत्वं ब्रह्मणः स्वीक्रियते एवं जगदैश्वर्यमपि तस्य स्वीकार्यमिति हेत्वन्तरं तेन प्रदर्श्यते। तदर्थमेव ज्ञानानन्दयोरप्यैश्वर्यवत् ब्रह्मसाक्षात्कारकार्यत्वे तुल्यवदुपन्यसनीयेऽपि प्रकाशादिवदिति तयोर्दृष्टान्ततयोपादानं साम्यमित्येतावति वक्तव्ये अवैशेष्यमित्यनृजुवचनमपि तदर्थमेव। अन्यथा ज्ञानानंदाभ्यामेव साम्यमस्तु माभूदैश्वर्यतोऽपि साम्यमिति शंका स्यात्। अनृजूक्तौ तु परमं साम्यमिति श्रुत्यर्थसूच-

न्यत् सर्वं निषेधति नेति नेतीति न युक्तमेव ॥

सू ॥ अतोऽनन्तेन तथा हि लिङ्गम् ॥ २५ ॥

यतो ब्रह्मोपासीनानामपि तदसाधारणज्ञानानन्दपरमैश्वर्यादिकं प्रकाशते, अतो 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनाभिहितेनानन्तेन कल्याणगुणेन योगो ब्रह्मणः सिद्ध एव । तस्मादुभयलिङ्गं ब्रह्मेति ॥

ननु 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनोक्तं प्रपञ्चस्य ब्रह्मरूपत्वं ब्रह्मप्रपञ्चयोराध्यासिकसंबन्धेनैव निर्वाह्यम्, विधान्तरेण तन्निर्वाहासंभवात् । ततश्च 'अथात आदेशो नेति नेति' इत्यस्य अध्यस्तप्रपञ्चनिषेधपरत्वमेव युक्तमित्याशङ्क्य विनाप्यध्यासंबन्धं स्वाभिमतेन प्रकारेण तन्निर्वाहं वक्ष्यन् प्रथमं पक्षान्तरमाह

सू ॥ उभयव्यपदेशात् त्वहिकुण्डलवत् ॥ २६ ॥

'सर्वो वै रुद्रः' 'द्यावापृथिवी जनयन् देव एकः' इत्येकत्वबहुत्वव्यपदेशादहेः कुण्डलभावर्जुभाववत् परमेश्वरस्यैव 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनोक्तः पृथि-

---

नात्सा शङ्का निवर्तते । सर्वैरपि गुणैः किंचित्किञ्चित्साम्यं हि परमं साम्यं न तु येन केनचिद्गुणेन किञ्चित्साम्यम् । प्रकाशादिवच्चेति चकारोऽपि तदर्थः । न केवलं ज्ञानानन्दसाम्यमात्रेण परमसाम्यनिर्वाहः । अपि त्वैश्वर्यसाम्येनापीति समुच्चयस्तदर्थः । द्वितीयश्चकारस्त्वर्थः तदुपासनया तद्धर्मप्राप्त्यसंभवशंकानिराकरणार्थः । अमुमेवानुषंगिकं हेतुं परामृशन् अनेन प्रकृतसाध्यसिद्धिं दर्शयति सूत्रकारः—सू० ॥ अतोऽनन्तेन तथा हि लिंगम् ॥ २५ ॥ उपासीनानामपीत्यपिशब्देन उपास्यस्यापि परमसाम्यं श्रुतिप्राप्तं तत्क्रतुन्यायप्राप्तं च ज्ञानानन्दरूपत्वस्यैवैश्वर्यस्याप्यभ्युपगन्तव्यत्वं द्योत्यते । 'इत्यादिने' त्यादिशब्देन ब्रह्मणः कल्याणगुणजातप्रतिपादकं सर्वं वचनजातं गृह्यते । 'अनन्तेने'त्यस्य कल्याणगुणेनेति विशेष्योपादानेन 'अथवानन्तकल्याणगुणैकघन ईश्वरः । शिव इत्युच्यते सद्भिश्शिवतत्वार्थवेदिभिः' । इति वचनार्थं मनसि निधाय सूत्रकृतानन्तशब्दः प्रयुक्त इति द्योतितम् । 'तथा हि लिंग' मिति सूत्रशेषं व्याचष्टे—तस्मादिति । अनेन 'तथा ही' त्यस्य तथासति हीत्यर्थो लिंगमित्यस्य 'पीता गावो भुक्ता ब्राह्मणा' इतिवदर्शआद्यच्प्रत्ययान्तत्वेनोभयलिंगमित्यर्थश्च दर्शितो भवति । निर्विशेषब्रह्मवादेऽपि निर्दोषत्वांशस्सम्प्रतिपन्न इति गुणवत्त्वप्रसाधनमुखेनोभयलिंगत्वोपसंहारः कृतः । उत्तरसूत्रमवतारयितुमाशङ्कते—नन्विति । यद्यपि 'अंशो नानाव्यपदेशा' दित्यधिकरणे चित्प्रपञ्चस्य ब्रह्मापृथक्सिद्धविशेषणतारूपांशत्वसमर्थनादचित्प्रपञ्चस्यापि तथात्वं तुल्यन्यायतया सिध्यति । 'सर्वो वै रुद्रः' 'सर्वं खल्विदं ब्रह्मे' त्यादिश्रुत्यन्तरेषु तुल्यवदुभयोरपि ब्रह्मविशेषणत्वेनोपादानात् । विशिष्यैवाचित्प्रपञ्चस्य ब्रह्मशक्तिपरिणामित्वेन तदपृथक्सिद्धविशेषणतालक्षणतासंबंधः प्रकृत्यधिकरणादिषु सिद्धः, तथापि मतान्तरोपन्यासपूर्वकं स्वमते विशेषप्रदर्शनेन स्वमतपरिशुद्धिसिद्ध्यर्थोऽयमारंभ इत्याशयः । सू० ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥ अहेरिति । यथा ह्यहेरहित्वेनाभेदेऽपि कुण्डलभावऋजुभावरूपसंस्थानविशेषापत्त्या भेदः एवं ब्रह्मणः स्वरूपेणाभेदेपि कार्यप्रपञ्चरूपापत्त्या भेद इत्यर्थः । न चाहेर्विश्रान्तिसंचारादिप्रयुक्तभोगविशेषार्थं कुण्डलभावऋ-

व्यादिभावसंस्थानविशेषः ॥

## सू ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

प्रकाशतदाश्रययोर्यथा स्वरूपभेदेऽपि तेजस्त्वयोगेनैक्यम्, एवमचिद्ब्रह्मणोरेकजातियोगेनेति वा तस्य पृथिव्यादिभावः ॥

## सू ॥ पूर्ववद्वा ॥ २८ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः । यथा पूर्वत्र प्रकाशजातिगुणशरीरवद्विशेषणतैकस्वभावतया विशिष्टैकदेशत्वेनांशत्वमुक्तं चिद्वस्तुनः, एवमचिद्वस्तुनोऽपि । 'सर्वो वै रुद्रः' इति चिदचिद्वस्तुनोरेकेन शब्देनाभिधानं हि शक्यमेकरूपभूतयोः पूर्वोक्तसंबन्धे सत्येव । इतरपक्षद्वये ब्रह्मणः सदोषत्वं दुर्वारम् । 'यस्य पृथिवी शरीरं, यस्यात्मा शरीरम्' इत्यादिश्रुतेः,

'विद्येति चेतनां प्राहुस्तथाऽविद्यामचेतनाम् ।
विद्याविद्यात्मकं सर्वं विश्वं विश्वगुरोर्विभोः ।
रूपमेव न संदेहो विश्वं तस्य वशे यतः ॥'

इत्यादिपुराणवचनप्रामाण्याच्च चिदचिद्वस्तुनोरष्टमूर्तेर्ब्रह्मणः शरीरता च सिद्धा ।

## सू ॥ प्रतिषेधाच्च ॥ २९ ॥

'नास्य जरयैतज्जीर्यति' 'अस्थूलमनण्वह्रस्वम्' इत्यादिषु चिदचिदात्मत्वेऽपि ब्रह्मणस्तद्धर्मप्रतिषेधाच्च चिदचिद्विशिष्टमपि ब्रह्म निर्दोषं निखिलमङ्गलगुणास्पदं च । एतदुक्तं भवति—चिदचितोः कारणत्वेऽपि तद्विशिष्टत्वेऽपि ब्रह्मणः शिवस्य विकाराज्ञत्वाद्यपुरुषार्थधर्मरहितत्वं सर्वज्ञत्वनित्यतृप्तत्वानादिबोधत्वस्वतन्त्रत्वा-

---

नुभावापत्तिर्भवतीति युक्तं, ब्रह्मणस्तु सर्वज्ञस्य सर्वशक्तेर्ज्ञानानन्दरहिताचित्प्रपञ्चतापत्तिर्न युक्तेति वाच्यम् । न ह्यहितवत् ब्रह्म स्वप्रयोजनार्थं प्रवर्तते किन्तु प्राणिनामनुग्रहार्थम् । तदनुग्रहश्च भोगानुष्ठानाद्युपयुक्ताचित्प्रपञ्चात्मतापत्तावेव भवतीत्यभिसन्धाय तदात्मतामापद्यत इति भावः । सू० ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥ यथा प्रभाप्रभावतोर्भेदेऽपि एकजातियोगात् सर्वमिदं तेज इति व्यवहारः तथा सर्वं खल्विदं ब्रह्मेत्यादिव्यवहार इत्यर्थः । यद्यपि धान्यराशौ सर्वोऽयं व्रीहिरित्यादिव्यवहारोऽप्युदाहर्तुं शक्यते तथापि ब्रह्मप्रपञ्चयोराश्रयाश्रयिभावरूपविशेषसत्वात्तदनुगुणदृष्टान्तोपादानम् । सू ॥ पूर्ववद्वा ॥ २८ ॥ इतरपक्षद्वय इति । आद्यपक्षे ब्रह्मणः परिणामित्वं जडत्वं चेति दोषद्वयं द्वितीयपक्षे ब्रह्मत्वजात्याश्रयत्वेन प्रपञ्चोऽपि ब्रह्मेति तत्रापि तद्दोषद्वयं प्रादुःष्यात् । तथा च ब्रह्मनिर्दोषत्वप्रतिपादकसकलश्रुतिविरोध इत्यर्थः । शरीरशरीरिभावस्तु ब्रह्मप्रपञ्चयोस्सकलश्रुतिपुराणाद्यनुगुण इत्याह—यस्य पृथिवीति। सू०॥प्रतिषेधाच्च ॥ २९ ॥ प्रपञ्चशरीरकत्वे सत्येव हि ब्रह्मणस्तत्प्रयुक्तदोषप्रसक्तौ तत्प्रतिषेधश्रवणमुपपद्यते । अतस्तत्प्रतिषेधश्रवणात् सर्वप्रपञ्चशरीरकं ब्रह्म तत्प्रयुक्तदोषरहितञ्च गुणविरोधिदोषराहित्यात् सकलमंगलगुणास्पदं चेति सूत्राभिप्रायमाह—नास्येति ॥ इति प्रकृतै-

---

(१) 'द्युपयुक्तप्रपञ्चात्मता' इति. ख० पाठ.० ।

लुप्तशक्तित्वानन्तशक्तित्वादिपरमपुरुषार्थधर्मवत्त्वं च नित्यसिद्धमेवेति ॥
इति प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

तावत्त्वाधिकरणम् ॥ ६ ॥

## नयमणिमालायाम्

### अथ प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

सू० ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥ तदव्यक्तमाह हि ॥ २२ ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥ अतोऽनन्तेन तथाहि लिंगम् ॥ २५ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥ पूर्ववद्वा ॥ २८ ॥ प्रतिषेधाच्च ॥ २९ ॥

न ब्रह्मोभयलिंगं तद्धि मितं निर्विशेषसन्मात्रम् । तद्रूपस्य निषेधात्सर्वस्य च नेति नेतीति ॥ १८९ ॥
न च तच्छ्रुत्या ब्रह्मणि विहितं येनानिषेध्यं स्यात् । सन्घट इत्यादिधिया सति तस्य ब्रह्मणि प्रसक्तत्वात् ॥ १९० ॥
एवमनुवर्तमाने सद्रूपे ब्रह्मणि प्रतीतमिदम् । व्यावर्तमानमखिलं कल्पितमिति तस्य सद्रूपम् ॥ १९१ ॥
आध्यासिकसंबन्धं विना च तद्रूपतास्तु किं तस्य । अहिकुण्डलतादिनये परिणामित्वादयो हि दोषाः स्युः ॥ १९२ ॥
मैवं प्रकृतेयत्ताप्रतिषेधो नेतिपदबोध्यः । प्रायो गुणोपदेशात् विहितप्रतिषेधनस्य चायोगात् ॥ १९३ ॥
अव्यक्तं ब्रह्म तन्नः स्फुरति विषयधीष्वस्य संराधने स्यात् प्रत्यक्षं गाहते तत्त्वखिलमपि गुणं सच्चिदानन्दतुल्यम् ।
किंचैश्वर्यांशमस्य स्वयमपि दधते योगिनः कौशिकाद्याः प्रौढ्या तद्भावनायास्तदपि युततयैवास्य रूपं प्रपञ्चः॥१९४॥

इति प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

सू ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥ तदव्यक्तमाह हि ॥ २२ ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥ अतोऽनन्तेन तथाहि लिंगम् ॥ २५ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥ पूर्ववद्वा ॥ २८॥ प्रतिषेधाच्च ॥ २९ ॥

**भगवत्पादमते,** पूर्वं निषेधश्रुतिभिर्ब्रह्म निर्विशेषं सिध्यतीत्युक्तमयुक्तं ताभिर्ब्रह्मणोऽपि निषिद्धत्वादित्याक्षेपसंगत्येदमाह—**सू ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥** 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इत्युपक्रम्य 'अथात आदेशो नेति नेति' इति श्रूयते । तत्र किं प्रपञ्चो ब्रह्म चेत्युभयमपि निषिध्यते उत एकम् । एकमित्यत्रापि प्रपञ्चो ब्रह्म वेति **संदेहः** । नियामकाभावादुभयमपीति **पूर्वपक्षः** । अथवा प्रपञ्चस्य प्रत्यक्षत्वेन निषेधासंभवान्निरवधिकनिषेधायोगादेकं ब्रह्मैव निषिध्यत इति **पूर्वपक्षः । सिद्धान्तस्तु,** प्रकृतं प्रधानम् एतावत्त्वंमियत्तापरिच्छिन्नं यद्ब्रह्मणो रूपद्वयं तत्प्रकृतैतावत्त्वम् । तदेव प्रतिषेधति 'नेति नेति' इत्यादिश्रुतिः । इतिशब्दस्य प्रधानत्वेन प्रकृतरूपद्वयपरामर्शित्वात् । ब्रह्म तु न प्रधानत्वेन प्रकृतम् । 'द्वे वाव ब्रह्मणो रूपे' इति रूपद्वयात्मकजगदुपसर्जनत्वेनैवाभिहितत्वात् । इतश्च ब्रह्मणो न निषेधः । **हि**=यस्मात् । **ततः**=प्रपञ्चनिषेधानन्तरं **भूयः** 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति एतस्मात्=नेतिनेतीत्यादिष्टाद्ब्रह्मणः अन्यत् व्यतिरिक्तं नास्ति ब्रह्मैव तु परमस्तीत्येतन्निर्वचनवाक्यं ब्रवीति । यद्वा । ततः प्रपञ्चनिषेधस्य परस्तात् 'अथ नामधेयम्' इत्यादिवाक्यं ब्रह्म ब्रवीतीत्यर्थः । न च प्रपञ्चनिषेधे प्रत्यक्षविरोधः । तस्य व्यावहारिकप्रामाण्यादित्यर्थः ॥

ननु यदि ब्रह्मास्ति तर्ह्युपलभ्येत तत्राह—**सू ॥ तदव्यक्तमाह हि ॥ २२ ॥ तत्**=ब्रह्म । अव्यक्तं न व्यज्यते इत्यव्यक्तं प्रत्यक्षाद्यगोचरम् । **हि**=यतः 'न चक्षुषा गृह्यते नापि वाचा' इत्यादिश्रुतिराहेत्यर्थः ।

तर्हि सर्वदा ब्रह्मग्रहणाभावे मोक्षो न स्यादित्याह—**सू ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥ अपिचैनं** परमात्मानम् । **संराधने**=समाध्यवस्थायाम् । कृतार्थाः पश्यन्ति इति **प्रत्यक्षानुमानाभ्याम्**=श्रुतिस्मृतिभ्याम् । 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इत्यादिका श्रुतिः 'यं विनिद्रा जितश्वासाः संतुष्टास्संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥' इति स्मृतिः ताभ्यामवगम्यत इत्यर्थः ।

ननु जीवब्रह्मणोर्ध्यातृध्येयभावाङ्गीकारे भेदः स्यादित्याशंक्याह—**सू ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥** यथा सौरः प्रकाशोऽङ्गुल्याद्युपाधौ कर्मणि भिन्न इव प्रतिभाति वस्तुतस्त्वेकरूपः तद्वत्प्र-

काशः परमात्मापि ध्यानाद्युपाधौ कर्मणि भिन्न इव भाति । वस्तुतस्तु **अवैशेष्यम्**=एकरूपत्वमात्मनः । कुतः । **अभ्यासात्**='तत्त्वमसि' इत्याद्यभेदश्रुत्यभ्यासादित्यर्थः ।

किंच । सू ॥ **अतोऽनन्तेन तथा हि लिंगम्** ॥ २५ ॥ अतश्च भेदस्यौपाधिकत्वाद्विद्यया भेदं विधूय जीवोऽनन्तेन परमात्मना एकतां गच्छति । **तथा हि लिंगम्**='स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्याद्यपूर्वार्थज्ञापकमित्यर्थः ॥

इत्थं जीवब्रह्मणोः पारमार्थिकाभेदमभिधाय स्वमतपरिशुद्धये भेदाभेदवादमुपन्यस्यति-सू ॥ **उभयव्यपदेशात्त्वहिकुण्डलवत्** ॥ २६ ॥ ध्यातृध्येयभावादिना भेदस्याभेदस्य च श्रुतौ व्यपदेशाज्जीवेश्वरयोर्भेदाभेदौ भवतः । तुशब्दस्सिद्धान्तवैषम्यद्योतनार्थः । **अहिकुण्डलवत्**=अहेः संस्थानविशेषोऽहिकुण्डलम् । तयोरहित्वेनाभेदः कुण्डलत्वेन भेदो यथा तद्वदित्यर्थः ।

धर्मभेदेन भेदाभेदाविति पक्षमभिधाय एकधर्मावच्छेदेनैव भेदाभेदाविति पक्षान्तरमाह-सू ॥ **प्रकाशाश्रयवद्वा तेजस्त्वात्** ॥ २७ ॥ यथा सावित्रः प्रकाशः तदाश्रयश्च सविता तयोर्नात्यन्तभेदः, तेजस्त्वाविशेषात्, तथापि भेदश्च प्रतीयते । एवं च एकतेजस्त्वावच्छेदेनैव प्रमाणबलाद्भेदाभेदौ । तद्वज्जीवेश्वरयोर्भेदाभेदावित्यर्थः ।

ननु भेदस्य पारमार्थिकत्वे ज्ञाननिवर्त्यत्वासंभवान्मोक्षो न स्यात् । एकधर्मावच्छेदेन भेदाभेदयोरेकत्राङ्गीकारे लोके विरोधकथैव न स्यादित्यादिदोषजातं परमते मत्वा निरवद्यं स्वसिद्धान्तमाह-सू ॥ **पूर्ववद्वा** ॥ २८ ॥ 'प्रकाशादिवच्चावैशेष्यम्' इत्यत्र पूर्वं भेदः काल्पनिकः अभेदः पारमार्थिक इति यदुक्तं स एव सिद्धान्तोऽभ्युपेयः ।

किंच सू ॥ **प्रतिषेधाच्च** ॥ २९ ॥ 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना शास्त्रेण परमात्मव्यतिरिक्तस्य चेतनस्य 'नेति नेती' त्यादिना शास्त्रेण प्रपञ्चस्य च प्रतिषेधात् ब्रह्माद्वितीयमित्ययमेव **सिद्धान्तः** । तस्माच्छ्रुतिबलान्निर्विशेषमेकमेव ब्रह्मेती सिद्धम् ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च 'अथात आदेशो नेति नेति' इत्यादिना पूर्वप्रकृतस्य मूर्तामूर्तप्रपञ्चस्य ब्रह्मणो रूपत्वप्रतिषेधान्निष्प्रपञ्चं सन्मात्रमेव ब्रह्म न पुनरुक्तस्वरूपमुभयलिंगमित्याशंक्याह—सू ॥ **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** ॥ २१ ॥ अत्र 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' इति पृथिव्यप्तेजोवाय्वाकाशात्मकमूर्तामूर्तप्रपञ्चरूपत्वं ब्रह्मण उक्त्वा 'अथात आदेशो नेति नेति' इति श्रूयते । अनेन ब्रह्मण उभयलिंगत्वं निषिध्यते न वेति **संदेहः** । अत्रेतिशब्दस्य पूर्वप्रकृतपरामर्शित्वाद्ब्रह्मणः पूर्वप्रतिपादितं मूर्तामूर्तप्रपंचरूपत्वं निषिध्यत इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** मूर्तामूर्तप्रपंचस्य ब्रह्मणो रूपतया प्रमाणान्तराप्रज्ञातस्यात्रैव रूपतयोपदिष्टस्य निषेधासंभवात्प्रकृतैतावत्त्वं हि ब्रह्मणः प्रतिषेधति 'अथात आदेशो नेतिनेती' ति श्रुतिः । पूर्वप्रकृतैतावन्मात्रं ब्रह्म न भवति इति तदर्थः । **ततो ब्रवीति च भूयः**'=ततः पूर्वोक्ताद्भूयस्त्वं ब्रवीति च वाक्यशेषः 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्य' मिति । अतः प्रकृतधर्मैयत्ताप्रतिषेधपरत्वा 'न्नेति नेती' ति वाक्यस्य ब्रह्मणः पूर्वसिद्धमुभयलिंगत्वं न हीयत एव ॥

ननु 'सन्घटस्सन्पट' इत्यादिष्वनुवृत्तं ब्रह्म सत्यं तदतिरिक्तं व्यावर्तमानं घटादिकं 'नेतिनेती' ति श्रुतिः प्रतिषेधतीत्यत आह-सू ॥ **तदव्यक्तमाह हि** ॥ २२ ॥ तद्ब्रह्म न केनापि प्रमाणेन व्यक्तम् । 'न संदृशे तिष्ठति रूपमस्ये' त्यादिका श्रुतिस्तथा प्रतिपादयति हि । अतः प्रत्यक्षादिना सिद्धा सत्ता न ब्रह्मेति ।

ब्रह्मस्वरूपग्रहणे हेतुमाह—सू ॥ **अपि संराधने प्रत्यक्षानुमानाभ्याम्** ॥२३॥ अपि तु ध्यानरूपज्ञानेन सम्यगाराधने ब्रह्मस्वरूपं गृह्यते । इति 'नायमात्मा प्रवचनेन लभ्यः' 'नाहं वेदैर्न तपसा' 'नासौ प्रत्यक्षविषयः' इत्यादिश्रुतिस्मृतिवाक्याभ्यामवगम्यते ॥

ज्ञानानन्दवज्जगदैश्वर्यमपि ब्रह्मणो रूपमित्याह—सू ॥ **प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्** ॥ २४ ॥ अविच्छिन्नानुध्यानसंराधनेन येषां ब्रह्म प्रकाशते तेषां तेन ब्रह्मदर्शनेन विषयीकरणे तज्ज्ञानानन्दादेर्जगदैश्वर्यस्य च वैशेष्यं नास्ति । तथा हि श्रूयते 'अहं मनुरभवं सूर्यश्चे' त्यादिः । तस्माद्ब्रह्माहन्तायाः प्रौढभावे सति ब्रह्मासाधारणधर्माणामवैशिष्ट्यमुपासकानामसाधारणमित्यनवद्यम् ॥

सू ॥ **अतोऽनन्तेन तथाहि लिंगम्** ॥ २५ ॥ अतो द्वे वाव ब्रह्मणो रूपे' इत्यादिनोपदिष्टेनानन्तेन कल्याणगुणगणेन योगो ब्रह्मणस्सिद्धः । तथा सत्युभयलिंगमेव ब्रह्म ॥ **इति रामानुजमते प्रकृतैतावत्त्वाधिकरणम्** ॥

**श्रीकण्ठमते,** त्विदमधिकरणमनुवर्तते । अतस्तत्समाप्त्यानन्तरं रामानुजमतक्रियामनुसृत्य अहिकुण्डलाधिकरणं निरूपयिष्यते ।

ननु द्वे वाव ब्रह्मणो रूपे' इत्यादिनोक्तं प्रपञ्चस्य ब्रह्मरूपत्वं ब्रह्मप्रपञ्चयोराध्यासिकसंबन्धेनैव निर्वाह्यम् । विधान्तरेण तन्निर्वाहासंभवात् । ततश्च 'अथात आदेशो नेति नेती' त्यस्य अध्यस्तप्रपञ्चनिषेधपरत्वमेव युक्तमित्याशंक्य विनाप्यध्यास-

संबन्धं स्वाभिमतेन प्रकारेण तन्निर्वाहं वक्ष्यन्पक्षान्तरं प्रथममाह—**सू ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥** 'सर्वो वै रुद्रः' 'द्यावापृथिवी जनयन्देव एकः' इत्येकत्वबहुत्वव्यपदेशादहेः कुण्डलभावर्जुभाववत् परमेश्वरस्यैव 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनोक्तः पृथिव्यादिभावसंस्थानविशेषः ।

**सू ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥** प्रकाशतदाश्रययोर्यथा स्वरूपभेदेऽपि तेजस्त्वयोगेनैक्यम् एवमचिद्ब्रह्मणोरेकजातियोगेनेति वा तस्य पृथिव्यादिभावः ॥

**सू ॥ पूर्ववद्वा ॥ २८ ॥** वाशब्दः पक्षद्वयव्यावृत्त्यर्थः । यथा पूर्वत्र प्रकाशजातिगुणशरीरवद्विशेषणतैकस्वभावतया विशिष्टैकदेशत्वेनांशत्वमुक्तं चिद्वस्तुनः एवमचिद्वस्तुनोऽपि । 'सर्वो वै रुद्रः' इति चिदचिद्वस्तुनोरेकेन शब्देनाभिधानं हि शक्यमेकरूपभूतयोः पूर्वोक्तसंबन्धे सत्येव । इतरपक्षद्वये ब्रह्मणस्सदोषत्वं दुर्निवारम् । 'यस्य पृथिवी शरीरम्' 'यस्यात्मा शरीरम्' इत्यादिश्रुतेः । 'विद्येति चेतनां प्राहुस्तथाविद्यामचेतनाम्' इत्यादिपुराणवचनप्रामाण्याच्च चिदचिद्वस्तुनोरष्टमूर्तेर्ब्रह्मणश्शरीरता च सिद्धा ॥

**सू ॥ प्रतिषेधाच्च ॥ २९ ॥** 'नास्य जरयैतज्जीर्यति' 'अस्थूलमनण्वह्रस्वम्' इत्यादिषु चिदचिदात्मत्वेऽपि ब्रह्मणस्तद्धर्मप्रतिषेधाच्च चिदचिद्विशिष्टमपि ब्रह्म निर्दोषनिखिलमंगलगुणास्पदं च । एवं चिदचिद्विशिष्टस्यापि ब्रह्मणो विकाराज्ञत्वाद्यपुरुषार्थधर्मरहितत्वं सर्वज्ञत्वादिपरमपुरुषार्थधर्मवत्त्वं च नित्यसिद्धमेवेति ॥ **इति श्रीकण्ठमते प्रकृतैतावत्त्वाधिकरणम् ॥**

**रामानुजमते, 'उभयव्यपदेशात्त्वहिकुण्डलवत्'** इत्यादिकमहिकुण्डलाधिकरणमिति व्यपदिश्यते । अत्राधिकरणे त्रेधा संशयमापाद्य श्रीकण्ठमतवदेव पक्षद्वये ब्रह्मणस्सदोषत्वापत्त्या जीवस्येव ब्रह्मशरीरतया ब्रह्मविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वमिति **सिद्धान्तश्च** निरूपितः । सूत्रार्थवर्णनादिकमविशिष्टमेव प्रायः श्रीकण्ठमतादिति न तत्प्रतन्यते ।

**आनन्दतीर्थमते,** इदमधिकरणत्रितयात्मतया विभक्तम् । तत्राद्यं सूत्रं **प्रकृताधिकरणमिति** व्यपदिश्यते । **सू ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥** परमेश्वरभक्तिसिद्धये तस्य पालकत्वमहिमात्र वर्ण्यते । सृष्टिसंहारकर्तुः परमेश्वरस्य पालकत्वं नाम व्यापारान्तरमस्ति वा न वेति **संदेहः** । प्रयोजनाभावात्पालनं नाम व्यापारान्तरं नाङ्गीकरणीयमिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** 'नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' इति श्रुतिसिद्धं पालनं नाम व्यापारान्तरमङ्गीकरणीयमिति । **सूत्रार्थस्तु, हि**=यतः । 'नैताव'दिति श्रुतिः **प्रकृतैतावत्त्वम्**=प्रकृतस्य सृष्ट्यादिकर्तृत्वस्यैतावत्त्वं सृष्टिसंहारकर्तृत्वमात्रपर्यवसितत्वम् । **प्रतिषेधति**=निराचष्टे । **ततः**=सृष्ट्यादिकर्तृत्वात् । **भूयः**=अधिकं पालकत्वं च । **ब्रवीति**=अतः 'सृष्टिं चे' ति शब्दसूचितं पालकत्वं च महिमान्तरमस्तीति ज्ञापयतीत्यर्थः ॥ **इति प्रकृताधिकरणम् ॥ १३ ॥**

**अथाव्यक्ताधिकरणम् ॥ १४ ॥**

**सू ॥ तदव्यक्तमाह हि ॥ २३ ॥** अत्र परमेश्वरस्योपलब्धियोग्यत्वं वा तदयोग्यत्वं वेति **संदेहः** । ईश्वरस्योपलब्धियोग्यत्वे स्तंभादेरिव तदापरोक्ष्यं पुरुषप्रयत्नसाध्यं भवेत् । अव्यक्तत्वे साधनसहस्रैरपि न तत्संभवेददृष्टादेरिव । अतः उभयथापि ईश्वरापरोक्ष्याय भक्त्याद्यनपेक्षैवेति **पूर्वपक्षः** । **सिद्धान्तस्तु** अव्यक्तस्यैव परमेश्वरस्य भक्तिश्रद्धाश्रवणमननाद्यभ्यासात्प्रकाशो भवतीति । **सूत्रार्थस्तु, तत्**=ब्रह्म । **अव्यक्तम्**=पुरुषप्रयत्नेन द्रष्टुमशक्यस्वभावम् । कुतः । **हि**=यस्मात् । 'अव्यक्तं च निष्कल' मिति श्रुतिस्तथा**ह** तस्मादित्यर्थः ॥

**सू ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥ अपि**=भक्तिरहिताराधनेनापि न ब्रह्म व्यक्तीकर्तुं शक्यम् । कुतः **संराधनेऽपि**=संपूजनेऽपि । अव्यक्तत्वस्य **प्रत्यक्षानुमानाभ्यां**=ज्ञानिप्रत्यक्षत्वसूक्ष्मत्वहेतुकानुमानाभ्यां सिद्धत्वादित्यर्थः ॥

**सू ॥ प्रकाशवच्चावैशेष्यम् ॥ २५ ॥** चो नञर्थः । **प्रकाशवत्**=यथाग्नेः स्थूलसूक्ष्माभ्यां व्यक्ताव्यक्तत्वे तथा ब्रह्म न । किं तु स्वतो व्यक्तमेव । कुतः । यतो**ऽवैशेष्यम्**=ब्रह्मणि स्थूलसूक्ष्मत्वविशेषो नास्ति अत इत्यर्थः ॥

**सू ॥ प्रकाशश्च कर्मण्यभ्यासात् ॥ २६ ॥** प्रकाशश्चापरोक्षज्ञानं च कर्मणि विषयभूते ब्रह्मणि । **अभ्यासात्**=श्रवणादेरावर्तनाद्भवतीत्यर्थः ॥

**सू ॥ अतोऽनन्तेन तथा हि लिंगम् ॥ २७ ॥ अतः**=अव्यक्तत्वे प्रत्यक्षत्वे च प्रमाणसद्भावात्तदन्यथानुपपत्त्या । **अनन्तेन**=अपरिच्छिन्नेन ब्रह्मणा तत्प्रसादेनाव्यक्तस्यापरोक्ष्यं भवतीति ज्ञायते । न केवलमनुपपत्तिमात्रात् । किं तर्हि । **हि**=यस्मात् **तथा लिंगं**='तस्याभिध्याना' दित्युक्तमीशप्रसादस्य बन्धनिवृत्तिहेतुत्वरूपं प्रसादस्य दर्शनहेतुत्वज्ञापकमस्ति तस्मादित्यर्थः ॥ **॥ इत्यव्यक्ताधिकरणम् ॥ १४ ॥**

**अथाहिकुण्डलाधिकरणम् ॥ १५ ॥**

**सू ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २८ ॥** अत्र परमेश्वरस्य गुणक्रियादयो यदि भिन्नास्तदा समवायस

## अथ पराधिकरणम् ॥ ७ ॥

तदिह सकलचिदचिदाकारपरमशक्तिविलाससमरसात्मनः सर्वदोषवासनाकलंकरहितात् सर्वज्ञतादिसकलमङ्गलगुणरत्नाकरात् परब्रह्मणो विरूपाक्षाच्छिवादेतस्मात् परं किंचिदपि वस्त्वन्तरं नास्तीति वक्तुं प्रथममाशङ्कते–

**सू ॥ परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३० ॥**

'जन्माद्यस्य यतः' इत्यादिना 'प्रतिषेधाच्च' इत्यन्तेन यः परमकारणतया प्रतिपादितः परमेश्वरः इतः परमपि वस्त्वस्ति न वा

---

## अथ पराधिकरणम् ॥ ७ ॥

उत्तराधिकरणं तत्प्रतिपाद्यप्रदर्शनपूर्वकमवतारयति–तदिहेति। 'न स्थानतोऽपी' ति सूत्रे परशब्देन ब्रह्म सर्वोत्कृष्टत्वेनानूदितं तदधिकरणप्रतिपाद्योभयलिंगत्वबाधाबाधविचारार्थत्वेनान्तरंगत्वात्तदनन्तरं प्रकृतैतावत्त्वाधिकरणं प्रवृत्तम्। तत्सूत्रेऽपि परस्येत्यनुवृत्तेस्तस्य सर्वोत्कृष्टत्वप्रसंगोऽनुवृत्तः। तेन समराहित्यमप्यर्थसिद्धम्। अन्यथा तस्य स्वव्यतिरिक्तसर्वोत्कृष्टत्वासिद्धेः। तद्विषयवाक्ये 'न ह्येतस्मा' दिति 'नेत्यन्यत्परमस्ती' ति तस्य समराहित्यं प्रतिपादितम्। ततः कैमुतिकन्यायादधिकराहित्यमर्थसिद्धम्। एवं प्रसक्तमुभयमपि संभावितसकलशंकापरिहारेण न्यायतः स्थिरीकर्तुमुत्तराधिकरणद्वयं तत्राप्यधिकराहित्ये निर्णीते माभूदधिकः समः कश्चिदस्त्विवति शंका प्रवर्तितुमुचितेति प्रथममधिकराहित्यं निर्णीयत इति संगतिरिह विवक्षिता। सू० ॥ **परमतस्सेतून्मानसंबंधभेदव्यपदेशेभ्यः ॥ ३० ॥** नन्वेतावत्पर्यंतेन सूत्रसंदर्भेण सकलजगत्कारणतया तदुपपादकसकलकल्याणगुणवत्तया मुक्तोपास्यतया मुक्तोपसृप्यतया(१) च प्रतिपादितात्परमेश्वरात्परोऽस्तीति शंका नावकाशं लभत इत्याशंक्य सम्यगालोचयतां तथैव तथापि सेत्वादिव्यपदेशान्निरीक्षमाणानां मन्दधियां तथा शंका भवेदिति तदपाकरणाय तेषां गतिप्रदर्शनार्थोऽयमारंभः इत्यभिप्रेत्याह–जन्माद्यस्येति। सेत्वादिव्यपदेशानां गत्यन्तरासंभवसंभवाभ्यां संशये पूर्वपक्षः। भवतु जगत्कारणत्वादियुक्तं परं ब्रह्म मुक्तप्राप्यं तु

---

निराकृतत्वात्तद्धत्त्वमनुपपन्नम्। यद्यभिन्नास्तदा ज्ञानादिमत्त्वं स्रष्टृत्वसंहर्तृत्वादिकं चानुपपन्नमित्युभयथापि महिमरहिते तस्मिन्ननुपपन्ना भक्तिः इति **पूर्वपक्षः**। पारमेश्वरा गुणक्रियादयस्सर्वेऽपि तेनाभिन्ना एव तस्य धर्माश्च भवन्ति। अभेदेऽपि भेदप्रतिनिधेर्विशेषस्य बलाद्धर्मधर्मित्वगोचरा व्यवहाराः प्रवर्तन्ते। अतः श्रुतिषु धर्मधर्मिभावरूपोभयव्यपदेशसत्त्वादुपपन्नमहिमशालिनि तस्मिन्नुपपन्ना भक्तिरिति। **सूत्रार्थस्तु,** ब्रह्म आनन्दगुणं तद्रूपं च भवति। कुतः **उभयव्यपदेशात्**= 'आनन्दो ब्रह्म' 'आनन्दं ब्रह्मण' इत्यादिश्रुतिषु गुणात्मकत्वेन गुणित्वेन च ब्रह्मण उक्तत्वात्। तदपि कथम्। **अहिकुण्डलवत्**=यथा अहेस्सर्पस्य कुण्डलत्वं कुण्डलित्वं च विशेषात्तथेत्यर्थः ॥

**सू ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २९ ॥** यथा प्रकाशाश्रयस्यादित्यस्य प्रकाशरूपत्वं तदाश्रयत्वं च तद्वद्ब्रह्मणोऽपि। अन्यपरित्यागेन आदित्यदृष्टान्ते को हेतुरित्यत उक्तं **तेजस्त्वादिति**। ब्रह्मादित्ययोरुभयोरपि तेजोरूपत्वात्तदभिप्रायेण तद्दृष्टान्तीकरणमित्यर्थः ॥

**सू ॥ पूर्ववद्वा ॥ ३० ॥** यथा कालः पूर्वेणाभिन्नोऽपि पूर्वकाल इति पूर्वपदेन विशेष्यते तथा ब्रह्म आनन्देन विशेष्यत इत्यर्थः। आदरार्थं स्थूलसूक्ष्मबुद्धिविवक्षया वा दृष्टान्तत्रयोक्तिः।

**सू ॥ प्रतिषेधाच्च ॥ ३१ ॥** ब्रह्म गुणानां ब्रह्मणश्च 'नेह नाने' ति भेदस्य प्रतिषेधाच्च ब्रह्म गुणात्मकमित्यर्थः ॥

इत्यहिकुण्डलाधिकरणम् ॥ १५ ॥

इति सूत्रार्थचन्द्रिकायां प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

---

(१) 'मुक्तप्राप्यतया' इति. ख० पाठः।

इति संशयेऽस्तीति पूर्वः पक्षः। तथा हि–'अथ य आत्मा स सेतुर्विधृतिः' 'एतं सेतुं तीर्त्वा अन्धः सन्ननन्धो भवति' इति 'चतुष्पाद्ब्रह्म' 'अमृतस्यैष सेतुः' इत्यादिभिरस्य परब्रह्मणः सेतुत्वतरितव्यत्वपरिमितत्वप्रापकत्वादीनि व्यपदिश्यन्ते। अतोऽस्मादपि परं किंचिद्वस्त्वस्तीति॥

सिद्धान्त उच्यते–

## सू॥ सामान्यात्तु ॥ ३१ ॥

वस्तु ततोऽन्यदेव तस्मादपि परमिति सेत्वादिव्यपदेशतोऽवगम्यते। तथा हि–सेतुव्यपदेशस्तावद्ब्रह्मणि सर्वेषु वेदान्तेषु दृश्यते। प्रसिद्धसेतुः [1]परपारप्रापकत्वेन प्रसिद्धः। अतस्सेतुव्यपदेशाद्ब्रह्मणोऽपि प्राप्तव्यान्तरप्रापकत्वमवसीयते। नन्वियं शंका द्युभ्वाद्यधिकरणे निराकृता। सत्यम्। तत्र 'यस्मिन्द्यौ' रिति मन्त्रगतं सेतुशब्दमवलम्ब्योत्थिता शंका तस्य 'तमेवैकं जानथे' ति प्रकृतज्ञानपरत्वसमर्थनेन निराकृता। इह तु 'अथ य आत्मा स सेतुर्विधृति' रित्यादौ ब्रह्मण्येव प्रयुज्यमानस्सेतुशब्दस्तथा योजयितुं न शक्यते। ननु प्रसिद्धसेतुवदसंकरकारित्वमात्रेणायं सेतुशब्दोऽस्तु, 'एषां लोकानामसंभेदाये' ति वाक्यशेषात्। मैवम्। 'एतं सेतुं तीर्त्वेति' वाक्यान्तरे प्रसिद्धसेतुवत्तरितव्यत्वस्यापि श्रवणात्। तथेयत्तापरिच्छेदरूपोन्मानस्यापि व्यपदेशो दृश्यते। 'तदेतद्ब्रह्म चतुष्पा' दिति चत्वारश्च पादा निरूपिताः। प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम पृथिवी कलान्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनंतवान्नाम अग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नामे' ति गवां पादेषु पुरतो द्वौ खुरौ पश्चात् द्वौ पार्ष्णी इत्येकैकस्मिन्पादे चत्वारश्चत्वारः शफास्सन्ति। ते कलाशब्देनोच्यन्ते। एवं परिमितं ब्रह्मेत्यपरिमितं यत्प्राप्यं मोक्षशास्त्रेषु प्रसिद्धं तद्ब्रह्मणोऽन्यत्तत्प्राप्यमित्यवसीयते। साक्षादेव मुक्तप्राप्यस्य ब्रह्मणश्च प्राप्यप्रापकभावसंबंधस्यापि व्यपदेशो दृश्यते। 'तस्यैष सोमः अमृतस्य परं सेतु' मिति। तथाच 'अमृतस्यैष सेतु' रित्यस्यापि तदैकार्थ्यं युक्तम्। साक्षाच्च वेदान्तेषु परशब्देन प्रसिद्धाद्ब्रह्मणः परं प्राप्तव्यमिति भेदस्यापि व्यपदेशो दृश्यते 'परात्परं पुरुषमुपैति दिव्य' मिति। न च ब्रह्मसाक्षात्काररूपसाधनाद्ब्रह्मण एव प्राप्तव्यत्वं युक्तमिति शंकनीयम्। मोक्षहेतुसाक्षात्कारस्यापि ब्रह्मान्यप्राप्तव्यविषयत्वव्यपदेशदर्शनात्। आथर्वणे हि 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीते' त्युपक्रम्य स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत' इति परब्रह्मध्यानपुण्येन ततोऽपि परस्येक्षणीयत्वं व्यपदिष्टम्। तस्मात्परं ब्रह्माप्यातिवाहिकविशेष इति। एवं प्राप्ते सिद्धान्तमाह–सू० ॥ सामान्यात्तु ॥ ३१ ॥ अत्रोक्तं परं ब्रह्म परमशिव एव सर्वोत्कृष्टं वस्तु न ततः परं वस्त्वस्ति स एव च मुक्तप्राप्य इति च सर्ववेदान्तानामुद्घोषस्सेत्वादिव्यपदेशमात्रेणान्यथाकर्तुं न शक्यते। अतः सेत्वादिव्यपदेशानां गतिमात्रं वक्तव्यमित्यभिप्रेत्य सेतुव्यपदेशस्य गतिरनेन सूत्रे-

(१) 'परपारप्राप्तिहेतुत्वेन प्रथितः' इति ख. पाठः।

तुशब्दः पूर्वपक्षनिवर्तकः । अतस्तस्मात् सर्वोत्तराच्छिवात् परमस्तीति वादो न युक्तः, 'विश्वाधिको रुद्रो महर्षिः' इत्यादिश्रुतिभिस्तस्य विश्वाधिकत्वसिद्धेः । अत्र च सेतुत्वादिव्यपदेशस्तत्सामान्यादेव सर्वलोकासंकरकरत्वेन 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' इति श्रूयते । 'सर्वं खल्विदं ब्रह्म' इति प्रतिपादितजगन्निमित्तोपादानभावस्य ब्रह्मण एव 'एतमितः प्रेत्याभिसंभवितास्मि' इति प्राप्यत्वमवगम्यते । अन्यत्र च—

'त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥'

इति तमसः परस्य सकलकारणस्य सर्वज्ञस्य त्रिलोचनत्वादिलक्षणस्य ब्रह्मण एव सर्वोत्तरतः प्राप्यत्वमुच्यते । तस्मादत्र तरतिः प्राप्तिवचनः । अन्यथा परमप्राप्याद्विश्वाधिकात् परमकारणादुपरि वस्तुसद्भावे तदुपर्यपि वस्तुसद्भावप्रसङ्गेनानवस्था वेदान्तवाक्यानां भवेत् । अतः सर्वातीतः परमशिव इति सर्वोत्कृष्टत्वं ब्रह्मण एव ॥

यदुक्तं परिमितत्वमपि तत्राह—

सू ॥ बुद्ध्यर्थः पादवत् ॥ ३२ ॥

'चतुष्पात्' इत्युन्मानव्यपदेशो 'वाक्पादश्चतुष्पादः' इतिवदुपासनार्थः ॥

सू ॥ स्थानविशेषात् प्रकाशादिवत् ॥ ३३ ॥

अपरिमित एव यद्यपि परमेश्वरः । तथाप्यस्य स्थानविशेषादवच्छिद्यानुसंधानं युज्यते, यथा वातायनादिस्थानसंबन्धात् प्रकाशादेः ॥

प्राप्यस्यापि प्रापकत्वं चास्तीत्याह—

सू ॥ उपपत्तेश्च ॥ ३४ ॥

प्राप्यस्यैव परमेश्वरस्य प्रापकत्वं चोपपद्यते, यथाह 'यमेवैष वृणुते तेन

---

णोक्ता । सेतुशब्दो वाक्यशेषावगतासंकरकारित्वसामान्यनिबन्धनः । तरतिश्च प्राप्त्यर्थः । तरणस्य तरितव्यदेशप्राप्तिपूर्वकत्वेन देशान्तरप्राप्तिफलकत्वेन च तस्य तल्लक्षणत्वोपपत्तेरिति । यद्वा । पूर्वपक्षसूत्रात् 'परमत' इति 'अंबुवदग्रहणा'दिति पूर्वाधिकरणसूत्रान्नेति चानुवर्तनेन परमेश्वरात्परं नास्तीति प्रतिज्ञापूर्वकं सेतुव्यपदेशस्यानेन सूत्रेण गतिरुक्ता । सू ॥बुद्ध्यर्थः पादवत् ॥ ३२ ॥ उन्मानव्यपदेशः उपासनार्थः । 'य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण उपास्त' इत्यादिवाक्यशेषात् अन्यत्रापि 'मनो ब्रह्मेत्युपासीते' त्युपक्रम्य 'तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राणः पादः चक्षुः पादः श्रोत्रं पादः' इत्युपासनार्थं पादकल्पनादर्शनाच्च । सू० ॥ स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥ ननु परिमितस्य मनसश्चतुष्पात्त्वानुसंधानं युज्यतां कथं तदपरिमितस्य ब्रह्मण इत्याशंकानिराकरणार्थमिदं सूत्रम् । प्रापकत्वं चास्तीति । प्रापकत्वं चास्य श्रुतमस्तीत्यर्थः । सू ॥ उपपत्तेश्च ॥३४॥ चकारेण 'परात्पर' मिति निर्देशोऽपि देवमनुष्यादिभ्यः पराच्चतुर्मुखादेः परत्वपरतया

---

(१) 'ब्रह्मणोऽनन्तवानित्युपास्त' इति—ख० पाठः ।

लभ्यः' इति । अतः परमेश्वरान्नास्ति परमिति सिद्धम् ॥ इति पराधिकरणम् ॥७॥

## अथ अन्यप्रतिषेधाधिकरणम् ॥ ८ ॥

### सू ॥ तथान्यप्रतिषेधात् ॥ ३५ ॥

पूर्वत्र विरूपाक्षात् परब्रह्मणः शिवान्नास्ति परमिति निरूपितम् । पुनरिह तत्सदृशोऽस्ति न वा ।

इति संशये पूर्वः पक्षः । परमेश्वरादुत्कृष्टवस्त्वभावेऽपि जगत्कारणत्वेनेश्वरत्वादिना तत्सदृशोऽस्त्येव । तथा हि श्रूयते–'सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात्' इत्यत्र कश्चित् पुरुषः । तस्य हि 'सहस्रशीर्षा पुरुषः' इत्यादिना बहुमुखपादादित्वं, 'पादोस्य विश्वा भूतानि' इति जगद्विशिष्टत्वं, 'त्रिपादस्यामृतं दिवि' इति परमाकाशवर्तित्वं, 'तस्माद्विराडजायत विराजो अधिपूरुषः' इत्यव्यक्तहिरण्यगर्भोपादानत्वम् 'आदित्यवर्णं तमसस्तु पारे' इति तमः

---

ब्रह्मण्युपपद्यत इति समुच्चीयते । ॥ इति पराधिकरणम् ॥ ७ ॥

## अथ अन्यप्रतिषेधाधिकरणम् ॥ ८ ॥

सू ॥ तथान्यप्रतिषेधात् ॥ ३५ ॥ ननु, पुरुषसूक्तनारायणानुवाकादीनामविरोधेन गति 'एतेन सर्वे व्याख्याताः' 'अनुपपत्तेस्तु न शारीर' इत्याद्यधिकरणेषु प्रपञ्चिता कथं तदवलंबनोऽत्र पूर्वपक्षः, उच्यते । पुरुषसूक्ते नारायणस्य सर्वकारणत्वप्रतिपादनं पारमेश्वरचिच्छक्त्यंशत्वेन जगदुपादानत्वाभिप्रायमित्युपपादितम् । तन्नोपपद्यते । तस्य तदंशत्वे प्रमाणाभावात् । नारायणानुवाके तस्य सर्वैश्वर्यपरब्रह्मभावादिप्रतिपादनं दहरोपासकस्य परमेश्वरैक्यभावनादार्ढ्याभिप्रायमित्युपपादितम् । तदपि नोपपद्यते । दहरविद्यायां स्वयमुपास्यस्य तस्यान्योपासकत्वासंभवात्[1] । श्रूयते हि आत्मप्रबोधोपनिषदि 'यदिदं ब्रह्म पुरमिदं पुण्डरीकं तस्य य आत्मा हृत्पुण्डरीकमध्ये' इत्युपक्रम्य 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदन' इति ततः 'प्राक् ओं नमो नारायणाये' ति मन्त्रोपासनं 'वैकुण्ठं भगवल्लोकं गमिष्यती' ति तदीयदहरविद्यांगमंत्रस्तत्फलं चेत्युभयं दर्शितम् । नारायणोपासनया तल्लोके तत्सायुज्यप्राप्तिश्च शिवसायुज्यप्राप्तिवदेवानावृत्तिफला । अत एव महाभारते शिववचनम्–'सायुज्यानां विशिष्टे द्वे मामकं वैष्णवं तथा । मां प्राप्य न निवर्तंते विष्णुं वा शुभलोचने' ॥ इति । एतदभिप्रायेणैव बोधायनादिभिः 'महादेवं महापुरुषं वार्चयेद्देवयोर्यथाकामी स्यात्' इत्यादिवचनैः शिवविष्णुभजनयोर्विकल्प उक्तः ।

---

नयमणिमालायाम्

## अथ पराधिकरणम् ॥ ७ ॥

सू ॥ परमतस्सेतून्मानसंबंधभेदव्यपदेशेभ्यः ॥ ३० ॥ सामान्यात्तु ॥३१॥ बुद्ध्यर्थः पादवत् ॥ ३२॥ स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥ उपपत्तेश्च ॥ ३४ ॥

सेतुं तीर्त्वेत्यादौ तरितव्यत्वादिकश्रवणात् । ब्रह्मादिलंध्यमुक्तौ ततःपरं प्राप्यमिति भाति ॥ १९५ ॥

ब्रह्मैव परममुक्तौ प्राप्यमिति श्रुतिशतावगतम् । तत्सेतुत्वमसंकरकारित्वं तरतिराप्त्यर्थः ॥ १९६ ॥

इति पराधिकरणम् ॥ ७ ॥

---

[1] 'पासकत्वकल्पनायोगात्' इति ख० पाठः ।

परत्वं 'तमेवं विद्वानमृत इह भवति' इति मोक्षहेतुत्वं चावगम्यते। तस्य पुनः 'सहस्रशीर्षं देवम्' इत्यारभ्य 'पतिं विश्वस्य' इति विश्वपतित्वं 'नारायणपरं ब्रह्म' इति नारायणशब्दवाच्यत्वं परब्रह्मत्वं 'परमात्मा व्यवस्थितः' इति दहराकाशोपास्यत्वं चावगम्यते। अतो नारायणोऽसौ परमेश्वरसमानधर्मा। एत एव हि परमेश्वरस्य धर्माः—

'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः।
सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः ॥'

इति मन्त्रोपनिषदि। 'विश्वतश्चक्षुरुत विश्वतोमुखः' इति महोपनिषदि। शिवसंकल्पे च 'सर्वतोमुखः' इति। अथर्वशिरसि बहुमुखपादादिमत्त्वं परमेश्वरस्य श्रूयते।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत् ॥'

इति जगदंशविशिष्टत्वं, 'हिरण्यगर्भं पश्यत' इत्यादिषु हिरण्यगर्भकारणत्वं 'समस्तसाक्षिं तमसः परस्तात्' इत्यादिषु तमःपरत्वं 'दहरं विपाप्मम्' इत्यादिषु दहरोपास्यत्वं 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिषु मोक्षहेतुत्वं 'सर्वैश्वर्यसंपन्नः' इत्यादिषु जगदीश्वरत्वं चावगम्यते। एवं विश्वरूपत्वादिधर्मसाम्यमनयोर्नारायणपरमेश्वरयोः। स्मृत्यादिषु पूजाविधाने 'शिवं वा विष्णुमेव वा' इति समानतया विकल्पः श्रूयते। समानमेव च तयोर्लोके पूजास्थानादिकं तत्प्रतिपादकपुराणागमादिकं च। तस्मात् परमेश्वरसदृशः पुरुषो नारायणः।

---

न चैतेषां वचनानां विष्णुप्रजापत्यग्नीषोमानां तारतम्ये सत्यप्युपांशुयाजदेवतात्वे विकल्पवन्नित्यार्चने शिवनारायणयोस्सत्यपि तारतम्ये देवतात्वे विकल्प इत्येतावन्मात्रे तात्पर्यमिति वाच्यम्। उदाहृतभारतवचनानुसारेण मोक्षार्थभजन एव विकल्पपरत्वात्। [1]( अत एव कूर्मपुराणे 'न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम्। तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरि' मित्यादिना विष्णुपूजां विधाय तदवसाने ) 'निवेदयीत स्वात्मानं विष्णावमिततेजसि। तदात्मा तन्मनाः शान्तः तद्विष्णोरिति मंत्रतः ॥' इति तदीयप्रपदनप्रकाशकेन मन्त्रेण मोक्षार्थमेवात्मसमर्पणमुक्तम्। तदनन्तरम् 'अथवा देवमीशानं भगवन्तमनामयम्। आराधयेन्महापूतो भावयन्वै महेश्वर'मित्यादिना शिवपूजां विधाय तदवसानेऽपि 'नमस्कुर्यान्महादेवमृतं सत्यमितीश्वरम्। निवेदयीत चात्मानं यो ब्रह्माणमितीश्वरे ॥' इति मोक्षफलकप्रपदनार्थतया प्रसिद्धेनैव मन्त्रेणात्मसमर्पणं विहितम्। एवमुभयोर्भजनस्य मुक्तिफलकत्वाविशेषादेव शैवानि वैष्णवानि च मुक्तिक्षेत्राणि पुराणेषु प्रसिद्धानि। तेषु तयोरद्याप्यविशेषेण पूजाविशेषाः प्रवर्तन्ते। तयोर्जगत्कारणत्वजगदीश्वरत्वमुक्तोपास्यत्वमुक्तप्राप्यत्वादिप्रतिपादकाश्च श्रुतिस्मृतिपुराणागमास्समममेवोपलभ्यन्ते। एवञ्च यद्यपि तत्तत्पुराणागमेष्वितरापकर्षवचनं गार्हस्थ्यसंन्यासाद्यन्योन्यनिन्दावचनवन्नहिनिन्दान्यायेनोपपद्यते इति शिवादाधिक्यं कस्यचिदपि न संभवति,

(१) एतद्रेखांकितो भागः ख पुस्तके न दृश्यते।

इति प्राप्ते ब्रूमः—परमेश्वरादुत्कृष्टं नास्ति यथा, तथा सदृगपि नास्त्येव, जगत्कारणत्वेश्वरत्वादौ तदन्यप्रतिषेधात्। तथा हि—

'एक एव रुद्रो न द्वितीयाय तस्थुः य इमाँल्लोकानीशत ईशनीयुः जननीयुः' 'द्यावापृथिवी जनयन् देव एकः' 'य एको रुद्र उच्यते' 'हरः क्षरात्मानावीशते देव एकः'

'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥'
'शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य'
'यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः॥'

इत्यादिभिः परमेश्वरादन्यस्य जगत्कारणत्वादौ निषेधः क्रियते। अतः परमेश्वरेण सदृशः कश्चिन्नास्ति। परमशक्तिमत्त्वान्निमित्तभूतः परमेश्वर एव। [उ]पादानमिति पुरुषस्य हिरण्यगर्भकारणत्वम्। तस्य उपादानत्वात्। [परमेश्व]रस्य निमित्तत्वादुच्यते उभयोरपि जगत्कारणत्वम्। अत एव प्रतीयते 'तस्माद्विराट्' इति हि पुरुषस्योपादानत्वं 'हिरण्यगर्भं पश्यत जायमानम्' 'द्यावाभूमी जनयन् देव एकः' इति परमेश्वरस्य निमित्तत्वं च प्रतिपाद्यते। सर्वज्ञात् सर्वशक्तिमतः परब्रह्मणः शिवाद्विश्वाधिकात् प्रथमं परप्रकृतिभूता परा शक्तिः प्रादुर्भवति। सा प्रथमभोक्तृत्वदशायां पुरुषः उच्यते, यः 'सहस्रशीर्षा पुरुषः' इति श्रूयते। तदात्मन एव शिवात् सकलचेतनप्रपञ्चपरिणामः। अत एव 'सर्वो वै रुद्रः' इति परमेश्वरस्य सर्वात्मताभिधानमुपक्रम्य 'पुरुषस्य नारायणस्य सर्वात्मत्वमुपादानत्वात्।' कथमस्य सर्वात्मत्वमित्याशङ्कायां 'पुरुषो वै रुद्रः' इति 'पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि' इति च पुरुषोऽपि परमेश्वरस्य महाविभूत्यात्मा जगदाकार इति निरूपितम्। सर्वज्ञं सर्वशक्तिकं नित्यतृप्तं स्वतन्त्रं विश्वाधिकं निमित्तभूतमेव परं ब्रह्म सर्गसमये बहु स्यामिति संकल्प्य स्वात्मनोऽमुं पुरुषं विभजति। स्वविभक्तस्वांशभूतेन सकलं जगद्भवतीति 'तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनु प्रविश्य। सच्च त्यच्चाभवत्।' इत्यादिना,

---

तथाप्यपक्षपातेन श्रुतिस्मृतिपुराणागमान्विमृशतां शिवेन नारायणस्य साम्यं न प्रत्याख्यातुं शक्यम्। जगत्स्रष्टृत्वादिकं चोभयोरपि कल्पभेदेनोपपादनीयमित्येवमधिकाशंकावलम्बनोऽत्र पूर्वपक्षः। तन्निराकरणाय प्रवर्तते सूत्रकारः—तथान्यप्रतिषेधादिति। तत्र तथाशब्दसूचितस्य प्रतिज्ञांशस्यानुवृत्त्यध्याहाराभ्यामपेक्षितं पूरयन्सूत्रं व्याचष्टे—यथेति। नन्वैश्वर्यकारणत्वादिविषये अन्यप्रतिषेधो दृश्यतां नाम, किमतः, नारायणस्यापि तत्प्रतिपादनमपि दृश्यत एवेत्याशंक्य तस्य गतिं वक्तुमुपक्रमते—परमशक्तिमत्वादित्यादिना। नन्विदं सर्वं स्वकल्पितप्रक्रियामात्रं 'तत्सृष्ट्वा तदेवानुप्राविश' दित्यादिश्रुतिवाक्यादपि सद्वारकाद्वारकसाधारणप्रवेशमात्रप्रतिपादकात्स्पष्टमिदं न प्रतीयत इत्याशंक्य नारायणस्य चिच्छक्त्यंशत्वे जगदुपादानभूततद्द्वारा परमेश्वरस्य जगदात्मत्वे च श्वेताश्वतर-

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत् ॥'

इत्यादिना च श्रुतिवाक्येनावगम्यते । निमित्तसंकल्पमूलत्वादुपादानभावस्य निमित्तस्योपादानाधिक्यम्, उपादानस्य निमित्तसंक्रमाविभागान्निमित्तधर्माणामुपादाने श्रवणम् । अतः परमेश्वरेण सदृशमुत्कृष्टं वा वस्तु नास्त्येव ॥

अतोऽपि परमेश्वरेण सदृशं तदुत्कृष्टं च किंचिदपि वस्तु नास्तीत्याह—

## सू ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥

आयामो महाव्याप्तिः । 'सर्वाननशिरोग्रीवः' 'विश्वतश्चक्षुरुत विश्वतोमुखः' इत्यादिभिः, 'अणोरणीयान्' इत्यारभ्य 'सर्वो ह्येष रुद्रः' इत्येतत्पर्यन्तैर्महोपनिषद्वाक्यैः 'यो वै रुद्रः स भगवान्' इत्यारभ्य 'यच्च सत्यम्' इत्यन्तैराथर्ववाक्यैश्च सकलजगद्व्याप्तिप्रतिपादनपरैः । अनेन स्वधर्मांशभूतेनोपादानपुरुषेण

---

मन्त्रमुदाहरति—मायां त्विति । अस्य मन्त्रस्योक्तार्थपरत्वं प्रकृत्यधिकरणभाष्यव्याख्यानसमयेऽस्माभिः प्रपञ्चेन प्रतिपादितम् । यद्यपि प्रकृत्यधिकरणे शिवस्योपादानत्वे निर्विकारश्रुतिविरोधपरिहाराय परिणामिप्रकृतिद्वारकं तस्योपादानत्वमित्येतावत्प्रदर्शयितुं 'परिणामा'दिति सूत्रं प्रवृत्तम् । तथापि प्रकृतेरुपादानत्वे कथं नारायणस्योपादानत्वश्रवणमिति बुद्धिस्थशंकानिराकरणाय तत्र भाष्यकृता 'मायां त्वि' ति मन्त्रमुदाहृत्य तत्र तात्पर्यमुक्तमित्यस्माभिरपि तद्विषयेऽत्र वक्तव्यं सर्वं तत्र प्रपञ्चितम् । [1]( नारायणस्य मायाशब्दोक्तचिच्छक्तिरूपत्वमाश्वलायनस्मृतावपि यज्ञोपवीतप्रशंसाप्रकरणे वर्णितम् । 'सिसृक्षुरेक एवाग्रे समासीनश्शिवः स्वयम् । सृष्ट्वा गुणमयीं मायां सूत्ररूपामुपाकरोत् ॥ तया तदात्मकं विष्णुं सृष्ट्वा पालं दिवौकसाम् । स्वयं ब्रह्माभवद्रुद्रो रुद्रश्चास्य क्षयाय सः ॥' इति ।) ननु निमित्तस्य स्वातन्त्र्यात्तस्य तत्परतन्त्रादुपादानादाधिक्येन भाव्यं चेत् का तर्ह्युपादानस्य नारायणस्य परमैश्वर्यपरब्रह्मभावादिश्रवणस्य गतिरित्याशंक्य तस्यौपचारिकत्वमाह—उपादानस्येति । परमेश्वरैक्यभावनानिमित्तत्वमपि तत्र तत्रोक्तमनुसन्धेयम् । यत्तु दहरविद्योपास्यत्वं नारायणस्यापि श्रुतमिति भवतु तदस्मदाद्युपास्यस्यापि तस्य परमेश्वरमहिमप्रख्यापनार्थं तदुपासकत्वमविरुद्धम् । नारायणोपासना तु साक्षान्ज्ञानावृत्तिफला किन्तु तत्पदप्राप्तिद्वारा शिवपदप्रापकत्वेन । यतश्शिवसायुज्यमेव मोक्षः । अत एव महाभारतेऽपि 'धर्मान्वेषी तपः कर्तुं यतेत सततं प्रिये । अमरत्वं शिवत्वं च तपसा प्रापयेत्सदे' ति तपसः स्वर्गमोक्षहेतुत्वकथने मोक्षश्शिवत्वमित्यनेन व्यपदिष्टः । शिवनारायणयोर्जगत्कारणत्वादिप्रतिपादकवचनबलाबलविभागे तदाराधनयोः फलविशेषविभागे च यदत्र वक्तव्यमपेक्षितं तत्सर्वमस्माभिश्शिवतत्वविवेके प्रपञ्चितमनुसन्धेयम् । उत्तरसूत्रमवतारयति—अतोऽपीति । सू ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥ आयामस्त्रिविधव्याप्तिरूपा महाव्याप्तिः । तत्प्रतिपादकश्शब्दः 'सर्वाननशिरोग्रीव' इत्यादिमन्त्रः । तत्र हि 'सर्वव्यापी' त्यनेनाकाशवत्केवलं विभुत्वरूपा व्याप्तिर्गृह्यते । 'सर्वभूतगुहाशय' इत्यनेन नियमनार्थसर्वप्राणिहृदयगुहासन्निधानरूपा । ततः

---

(१) एतद्रेखांकितो भागः ख. पुस्तके नास्ति ।

**सर्वगतत्वमवगम्यते निमित्तस्य परब्रह्मणः। तस्मात् परमेश्वरस्य विभूतिमयं विश्वमिति तत्सदृशस्तदुत्कृष्टश्च नास्त्येव ॥ इत्यन्यप्रतिषेधाधिकरणम् ॥ ८ ॥**

'सर्वाननशिरोग्रीव' इत्यनेन उपादानभावप्रयुक्तसर्वकार्यानुस्यूतिरूपा व्याप्तिरुच्यते । पारिशेष्यात् 'सहस्रशीर्ष देव' मित्यादेर्नारायणविषयस्यैतदैकार्थ्यस्य तत्परत्वदर्शनाच्च । न निर्विकारस्य परब्रह्मणश्शिवस्य साक्षादुपादानत्वं संभवतीत्यन्यद्द्वारकं तदाश्रयणीयम् । तत्र द्वारापेक्षायां यत्र 'सर्वाननशिरोग्रीव' इत्यादिश्रुतितौल्यं तस्य नारायणस्य 'मायां तु प्रकृतिं विद्या' दिति श्रुतायाश्शिवशक्तेश्च द्वारत्वं प्राप्तम् । न च तयोरन्यतरपरित्यागे कारणमस्तीति तयोरपि द्वारद्वारिभावाश्रयणे मायाशक्तेस्साक्षाच्छिवधर्मत्वस्य प्रतिपन्नत्वात्परिशेषेण नारायणस्य तदंशत्वं सिद्ध्यतीति यच्छिवस्योपादानभावप्रयुक्तं सर्वानुस्यूतत्वं श्रुतं तदनेन तच्छक्त्यंशभूतेन नारायणेन द्वारेणेति सिद्ध्यतीत्येवमायामशब्दा'त्तदनेन सर्वगतत्व' मिति निर्दिष्टस्य साध्यस्य सिद्धिः। तथा 'सर्वो वै रुद्र' इत्यत्रोपादानभावेन सार्वात्म्यं विवक्षितम् । 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमान' मित्यग्रे सर्वस्य कार्यरूपतोक्तेः तत्कथं रुद्रस्योपपद्यते । पुरुषस्य हि तथा सार्वात्म्यं 'पुरुष सर्व' मित्यादिश्रुत्यन्तरे प्रसिद्धमिति शंकावारणाय 'पुरुषो वै रुद्र' इति तदनंतरवाक्यं प्रवृत्तम् । तेना 'प्यनेन सर्वगतत्व' मिति निर्दिष्टस्य साध्यस्य सिद्धिः। 'तस्यावयवभूतेने' त्यनेन च सकलवैपरीत्यशंकानिवर्तनक्षमेण तस्य सिद्धिः । एवमायामशब्दादिभ्यो हेतुभ्यः प्राप्तं यत्परमेश्वरस्य स्वधर्मांशभूतनारायणद्वारेणोपादानतया सर्वगतत्वमस्मादपि हेतोः परमेश्वरेण समः कोऽपि नास्ति । संभावितसाम्यस्य नारायणस्य तद्धर्मांशभावेन तदुपादानत्वघटकतया तदुपसर्जनत्वात् अन्यस्य च तत्साम्यसंभावनास्पदस्याभावादिति पूर्वसूत्रोक्तेना 'न्यप्रतिषेधा' दिति समनिषेधहेतुनास्य हेतोस्समुच्चयः प्राक् 'अतोऽपी' ति सूत्रावतारिकाभाष्येण दर्शितः । एतत्सूत्रविवरणभाष्ये 'सर्वाननशिरोग्रीव' इति मन्त्रः प्राधान्येनायामशब्दरूपहेतुतयोपात्तः । तदुपोद्बलकतया 'विश्वतश्चक्षु' रित्यादय उपात्ताः । 'अणोरणीया' नित्यादेरणुतोऽप्यणीयान्पदार्थः परमेश्वरः एवं महतो महीयान्पदार्थोऽपि स एवेति सार्वात्म्यमर्थमभिप्रेत्य तदुदाहरणम् 'सर्वो वै रुद्र' इत्याद्यंशस्य त्वादिशब्दोपात्तद्वितीयहेतुसमर्पकतया । तृतीयहेतुसमर्पक 'स्तस्यावयवभूतेने'त्यादिः पूर्वसूत्र एवोदाहृत इति पुनरिह नोदाहृतः । एवञ्चान्यप्रतिषेधमात्रं पूर्वसूत्रे विवक्षितो हेतुः तर्हि श्रुत्यन्तरदर्शनतः समापतन्त्याः नारायणस्य तत्साम्यप्रतीतेः कः प्रतीकार इति शंकाया निराकरणमेतत्सूत्रोक्तहेतुप्रसादलभ्यमप्याकांक्षाशांतये भाष्यकृता पूर्वसूत्रे कृतमिति सर्वमनवद्यम् ॥ ॥ इति अन्यप्रतिषेधाधिकरणम् ॥ ८ ॥

---

## नयमणिमालायाम्

## अथ अन्यप्रतिषेधाधिकरणम् ॥ ८ ॥

**सू० ॥ तथान्यप्रतिषेधात् ॥ ३५ ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥**

माभूत्परो महेशात् समस्तु नारायणोऽस्त्येव । श्रूयन्ते परधर्मास्तस्यापि हि कारणत्वाद्याः ॥ १९७ ॥

नास्ति समस्तस्यान्यप्रतिषेधात्कारणत्वमुख्येषु । नारायणे श्रुता अपि तदवस्थं प्राप्नुयुश्शिवं धर्माः ॥ १९८ ॥

मायांत्वित्यादिमंत्रप्रथितजगदुपादानभावस्य पुंसो नैव स्वप्रेरकत्वं समुपगतवता विश्वकर्त्रास्ति साम्यम् । तस्माद्यद्धर्मजातं पिशुनयति परब्रह्मभावं मुकुन्दे तत्सर्वं पर्यवस्येद्विषमशरहरे तादवस्थ्यं दधाने ॥ १९९ ॥

**इत्यन्यप्रतिषेधाधिकरणम् ॥ ८ ॥**

## सूत्रार्थचन्द्रिकायाम्

### अथ पराधिकरणम् ॥ ७ ॥

**सू ॥ परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३० ॥ सामान्यात्तु ॥ ३१ ॥ बुद्ध्यर्थः पादवत् ॥ ३२ ॥ स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥ उपपत्तेश्च ॥ ३४ ॥ तथान्यप्रतिषेधात् ॥ ३५ ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥**

**भगवत्पादमते,** पूर्वं 'नेतिनेती'ति ब्रह्मातिरिक्तं वस्तु निषेध्यमित्युक्तमयुक्तम् । ब्रह्मणस्सेतुत्वोन्मानादिव्यपदेशेन वस्त्वन्तरसत्त्वावगमाद्द्युभ्वाद्यधिकरणे सेतुत्वस्य गौणत्वेन नीतत्वेऽपि उन्मानादीनां गत्वेदर्शनादित्याक्षेपसंगत्येदमाह—**सू ॥ परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३० ॥** अत्र ब्रह्मातिरिक्तं वस्त्वस्ति वा न वेति **संदेहः । अतः=** अस्माद्ब्रह्मणस्सकाशात् । परं वस्त्वस्ति । 'अथ य आत्मा स सेतुः' इति ब्रह्मणस्सेतुत्वव्यपदेशात्, तथा 'ब्रह्म चतुष्पात्' इति श्रुतौ उन्मानव्यपदेशात्, एतावदिदमिति परिच्छिन्नत्वव्यपदेशात्, सुषुप्तौ 'प्राज्ञेनात्मना संपरिष्वक्तः' 'शारीर आत्मा' इत्यादिना ब्रह्मणस्संबन्धव्यपदेशात्, आदित्ये हिरण्मयं पुरुषमीश्वरं व्यपदिश्य ततो भेदेन अक्षिस्थपुरुषस्य व्यपदेशात् । तस्मात्सद्वितीयं ब्रह्मेति सिद्धम् ॥ इति **पूर्वपक्षः ॥ सिद्धान्तस्तु,**

**सू ॥ सामान्यात्तु ॥ ३१ ॥** तुशब्दः पूर्वपक्षनिरासार्थः । मृद्दार्वादिमये हि सेतुशब्दो रूढो लोके । न हि ब्रह्मणस्तादृशं सेतुत्वमस्ति किं तु यथा सेतोर्जलव्यवस्थापकत्वम् एवं ब्रह्मणोऽपि जगन्मर्यादाव्यवस्थापकत्वेन प्रसिद्धसेतुसामान्यात्सामान्यात्सेतुत्वव्यपदेश इत्यर्थः ॥

उन्मानव्यपदेशोऽपि न मुख्य इत्याह–**सू ॥ बुद्ध्यर्थः पादवत् ॥ ३२ ॥** 'ब्रह्म चतुष्पात्' इति श्रुतौ उन्मानव्यपदेशो **बुद्ध्यर्थः**=उपासनार्थः । निर्विशेषस्य बुद्धिस्थत्वायोगात् । उपासनाद्वारा बुद्धिस्थस्योन्मानव्यपदेशो न मुख्यः । **पादवत्**=यथा ब्रह्मप्रतीकस्य मनसो वाग्प्राणचक्षुःश्रोत्राणामुपासनार्थं पादत्वेन व्यपदेशस्तद्वदित्यर्थः ।

संबन्धभेदव्यपदेशावपि न मुख्यावित्याह–**सू ॥ स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥ स्थानविशेषात्=** स्थानमुपाधिर्बुद्ध्यादिस्तद्विशेषात्प्राप्तस्य भेदस्योपाध्युपशमाय उपशमस्स एव प्राज्ञेनात्मना जीवस्य सुषुप्तौ संबन्ध इत्युपाध्यपेक्षयोपचर्यते । अक्ष्यादित्यपुरुषयोर्भेदव्यपदेशोऽप्यक्ष्यादित्यरूपस्थानविशेषापेक्षयोपचर्यते । **प्रकाशादिवत्**=यथा सौरालोकादेरंगुल्याद्युपाधियोगादुपजातभेदस्योपाध्युपशमात्संबन्धव्यपदेशः, उपाधिभेदाच्च भेदव्यपदेशस्तद्वदित्यर्थः ॥

ननु मुख्यावेव संबन्धभेदौ किं न स्यातामित्यत आह–**सू ॥ उपपत्तेश्च ॥ ३४ ॥** न मुख्यसंबन्धो जीवपरयोः सुषुप्तौ भवति । 'स्वमपीतो भवति' इति श्रुतौ स्वरूपस्यैव संबन्धत्वव्यपदेशोपपत्तेः । तथा भेदोऽपि मुख्यः । श्रुतिसहस्रविरोधात् । इत्युपपत्तेश्चेत्यर्थः ॥

इत्थं सेतुत्वादीन्भेदहेतून्निराकृत्य ब्रह्मणोऽद्वितीयत्वं हेत्वन्तरेणाह–**सू ॥ तथान्यप्रतिषेधात् ॥ ३५ ॥** यथा सेतुत्वादिहेतुभ्यो न वस्त्वन्तरप्रतिपत्तिः तथा 'आत्मैवाधस्तात्' इत्यादिवाक्यैरन्यस्य वस्तुनः प्रतिषेधादद्वितीयमेव ब्रह्मेत्यर्थः ॥

ननु ब्रह्मणोऽद्वितीयत्वे कथं सर्वगतत्वमत आह—**सू ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥ अनेन=** सेतुत्वादिव्यपदेशमुख्यत्वस्य वस्त्वन्तरस्य च प्रतिषेधेन ब्रह्मणस्सर्वगतत्वं सिद्धम् । अप्रतिषेधे प्रसिद्धसेतुवद्ब्रह्मणस्सर्वगतत्वं प्रसज्येत । कस्मात्पुनस्सर्वगतत्वम् ? । **आयामशब्दादिभ्यः**=आयामशब्दो व्यापकत्ववाचकः । 'आकाशवत्सर्वगतश्च नित्यः' इत्यादिशब्दात् आदिशब्देन 'नित्यस्सर्वगतः स्थाणुः' इत्यादिरुक्तः । तस्माद्द्वितीयस्य ब्रह्मण आविद्यकं सर्वमादाय श्रुतिस्मृतिभ्यां सर्वगतत्वं सिद्धम् ॥

**श्रीकण्ठमते,** इदमधिकरणद्वितयात्मकतया विभज्य **पराधिकरणमन्यप्रतिषेधाधिकरणमिति** व्यपदिश्यते । तत्राद्ये पराधिकरणे सर्वज्ञतादिनिखिलमंगलगुणरत्नाकरात्परब्रह्मणः परमशिवात्परं किंचिदपि वस्त्वन्तरं नास्तीति वक्तुमाशंकते–**सू ॥ परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३० ॥** 'जन्माद्यस्य यतः' इत्यादिना परमकारणतया प्रतिपादितात्परमेश्वरात्परमपि वस्त्वस्ति वा न वेति **संदेहः ।** 'अथ य आत्मा स सेतुर्विधृतिः' 'एतं सेतुं तीर्त्वा अन्धस्सन्ननन्धो भवति' 'चतुष्पाद्ब्रह्म' 'अमृतस्यैष सेतुः इत्या'दिभिरस्य परब्रह्मणः सेतुत्वतरितव्यत्वपरिमितत्वप्रापकत्वादीनां व्यपदेशादस्मादपि परं किञ्चिद्वस्त्वस्तीति **पूर्वपक्षः ॥ सिद्धान्तस्तु, सू ॥ सामान्यात्तु ॥ ३१ ॥** तुशब्दः पूर्वपक्षं व्यावर्तयति । 'विश्वाधिको रुद्रो महर्षिः' इत्यादिश्रुतिभिः परब्रह्मणश्शिवस्य विश्वाधिकत्वसिद्धेः, 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाये' ति सर्वलोकासंकरकरत्वेन साम्यादेव सेतुव्यपदेशोपपत्तेः, 'सर्वं खल्विदं ब्रह्मे'ति प्रतिपादितजगदुभयकारणभावस्य परमेश्वरस्यैव 'एतमितः प्रेत्याभिसंभवितास्मि' 'त्रिलोचनं नीलकण्ठं प्रशान्त' मित्यादिकया च श्रुत्या सर्वोत्तरतः प्राप्यत्वावगमाच्च तरितव्यत्वस्य प्राप्यत्वपरत्वात्, अन्यथानवस्थाप्रसंगाच्च परिमितत्वव्यपदेशस्य 'वाक्पादश्चक्षुः पादः' इतिवदुपासनार्थत्वात् अपरिमितस्यापि परमेश्वरस्य स्थानविशेषाद्वातायनादिस्थानसंबन्धात्प्रकाशादेरिवावच्छिन्नया-

नुसंधानोपपत्तेः, 'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुत्या प्राप्यस्यैव परमेश्वरस्य प्रापकत्वोपपत्तेश्च सर्वोत्तरात्परमशिवात्परं वस्तु किञ्चिदस्तीति वादो न युक्तः । अतः परमेश्वरान्नास्ति परमिति सिद्धम् इति । अनेन 'बुद्ध्यर्थः पादवत्' इत्यादीनि त्रीणि सूत्राण्यपि व्याख्यातानि ॥ **इति श्रीकण्ठमते पराधिकरणम्** ॥ ७ ॥

**अथ अन्यप्रतिषेधाधिकरणम्** ॥ ८ ॥

**सू ॥ तथान्यप्रतिषेधात्** ॥ ३५ ॥ अत्राधिकरणे पूर्वाधिकरणोक्तरीत्या परमेश्वरादुत्कृष्टवस्त्वभावेऽपि जगत्कारणत्वेनेश्वरत्वादिना तत्सदृशोऽस्ति वा न वेति **संदेहः** । 'सहस्रशीर्षा पुरुषः' इत्यादिश्रुतिभिः बहुमुखपादादिमान् जगद्विशिष्टः परमाकाशवर्ती अव्यक्तहिरण्यगर्भोपादानः तमःपरः पुरुषनारायणशब्दवाच्यो मोक्षहेतुः कश्चित्तत्सदृशोऽस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु,** यथा परमेश्वरादुत्कृष्टं वस्तु नास्ति **तथा** तत्सदृशोऽपि नास्त्येव । जगत्कारणत्वेश्वरत्वादौ 'एक एव रुद्रो न द्वितीयाय तस्थुः' 'शिव एव केवलः' इत्यादिभिः परमेश्वरादन्यस्य प्रतिषेधात् । सर्वस्यास्य प्रपञ्चस्य परेमेश्वरविभूतिमयत्वात्परमेश्वरेण सदृशमुत्कृष्टं वा वस्तु नास्त्येवेति । आयामो महाव्याप्तिः । जगद्व्याप्तिप्रतिपादनपरैरुपनिषद्वचनजातैः स्वधर्मांशभूतेनोपादानपुरुषेण निमित्तस्य परब्रह्मणः सर्वगतत्वप्रतिपादनात् सर्वस्यास्य परमेश्वरविभूतिमयत्वाच्च न काप्यनुपपत्तिः ॥ इति च ॥

**रामानुजमते** तु शांकरमतवदिदमेकमेवाधिकरणम् । सूत्रार्थवर्णनादिकं प्रायः श्रीकण्ठमतवदेव । श्रीकण्ठमते भिन्नाधिकरणतया व्याख्यातस्य **'तथान्यप्रतिषेधात्'** इति सूत्रस्य तु 'न तस्येशे कश्चने' त्यादिश्रुतिषु पुरुषादन्यस्य परत्वप्रतिषेधादित्यर्थः । **सू ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः** ॥ 'नित्यं विभुं सर्वगतं सुसूक्ष्म'मित्यादिसर्वव्याप्तिवाचिशब्देभ्योऽवगम्यमानम् अनेन ब्रह्मणा सर्वस्य व्याप्तत्वमेतस्मात्परं वारयतीत्यर्थः । अन्यत्सर्वं श्रीकण्ठभाष्यप्रतिपादितपराधिकरणवत् । परब्रह्मणोऽन्यत्तदुत्कृष्टं वस्तु नास्त्येवेति सिद्धान्तितम् । सर्वत्र श्रीकण्ठरामानुजमतयोः प्रायस्समानप्रक्रियत्वेऽपि परब्रह्मशब्दवाच्यं जगत्कारणं वस्तु परं नामतो रूपतश्च भिन्नमिति वेद्यम् । **इति रामानुजमते पराधिकरणम्** ॥ ७ ॥

**आनन्दतीर्थमते,** इदमधिकरणचतुष्टयात्मकतया व्याख्यातम् । तत्राद्ये पराधिकरणे परमात्मनि अतिनिरतिशयभक्तिसिद्धये तदीयगुणानां लौकिकगुणवैलक्षण्यं समर्थ्यते—**सू ॥ परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः** ॥ ३२ ॥ अत्र ब्रह्मगुणजातं लोकविलक्षणं न वेति **संदेहः** । लोकविलक्षणं न भवतीति **पूर्वपक्षः**। लोकविलक्षणमेवेति **सिद्धान्तः**। **सूत्रार्थस्तु,** ब्रह्मगुणजातं **परमतः**=लोकविलक्षणम् । कुतः । **सेतून्मानसंबन्धभेदव्यपदेशेभ्यः**='एष सेतु'रिति सेतुत्वोक्तेः 'यतो वाच' इत्युन्मानशब्दितपूर्णत्वोक्तेः 'एतस्यैवानन्दस्ये'ति बिंबप्रतिबिंबभावसंबन्धोक्तेः 'अन्यज्ज्ञानं त्वि'ति लौकिकानन्दाद्भेदोक्तेश्चेत्यर्थः ॥

**सू ॥ दर्शनात्** ॥ ३३ ॥ अन्यमतेषु **'सामान्यात्तु'** इति अन्यथा सूत्रपाठो दृश्यते । अत्र मत एव **'दर्शना'दिति** पाठभेदः । अन्यानन्दादीनां प्रत्यक्षसिद्धत्वान्मनोवागविषयत्वाच्च ब्रह्मानन्दस्यातथात्वादेव लोकविलक्षणत्वमित्यर्थः ॥

**सू ॥ बुद्ध्यर्थः पादवत्** ॥ ३४ ॥ यथा लोकपादविलक्षणेषु जीवाख्यभूतेषु 'पादोऽस्य विश्वा भूतानी'ति पादपदप्रयोगः **बुद्ध्यर्थः**=भूतानामीशांशत्वज्ञापनार्थः । तथा लौकिकेऽपि ब्रह्मानन्दादावानन्दपदप्रयोगः बुद्ध्यर्थः अनुकूलतया वेदनीयत्वादिधर्मज्ञापनार्थ इत्यर्थः ॥ **इति पराधिकरणम्** ॥ १६ ॥

**अथ स्थानविशेषाधिकरणम्** ॥ १७ ॥

**सू ॥ स्थानविशेषात्प्रकाशादिवत्** ॥ ३५ ॥ 'एतस्यैवानन्दस्ये'ति श्रुत्या हिरण्यगर्भादिजीवगतलौकिकानन्दानां ब्रह्मानन्दप्रतिबिंबत्वमुक्तम् । तथा सति बिंबावैचित्र्येण लौकिकानन्दानां वैचित्र्याभावप्रसंगात् बिंबप्रतिबिंबभावोक्तिरनुपपन्नेति **पूर्वपक्षः** । **सिद्धान्तस्तु, प्रकाशादिवत्**=यथा सूर्यकान्तादिगतसूर्यादिप्रतिबिंबेऽग्निजनकत्वादिवैचित्र्यं **स्थानविशेषात्**सूर्यकान्तादिस्थानगुणवैचित्र्यादुपपद्यते तथा ब्रह्मादिस्थानगतभक्त्यादिगुणवैचित्र्याद्भगवदानन्दप्रतिबिंबेषु ब्रह्माद्यानन्देष्वपि वैचित्र्यमुपपद्यत इत्यर्थः ॥

**सू० ॥ उपपत्तेश्च** ॥ ३६ ॥ बिंबभूतभगवदैश्वर्यवशादेव प्रतिबिंबभूतब्रह्माद्यानन्दवैचित्र्योपपत्तेश्च तत्प्रतिबिंबत्वमितरेषां युक्तमेवेत्यर्थः ॥ **इति स्थानविशेषाधिकरणम्** ॥ १७ ॥

**अथ तथान्यप्रतिषेधाधिकरणम्** ॥ १८ ॥

**सू ॥ तथान्यप्रतिषेधात्** ॥ ३७ ॥ अत्र ब्रह्मणः प्राङ्निरूपितमव्यक्तत्वं पुनराक्षिप्य समर्थ्यते । ध्यातॄणां हृदि ध्यानकाले स्फुरणात् ब्रह्माव्यक्तं न भवतीति **पूर्वपक्षः** । **सिद्धान्तस्तु,** यथा जीवानन्दादि ब्रह्मानन्दादेर्विलक्षणं तथा ध्यानकाले प्रतीतं वासनामयं वस्तु ब्रह्मणोऽन्यत्तत्प्रतिबिंबभूतमेव । कुतः । 'यन्मनसे'ति तदन्यस्य ब्रह्मत्वप्रतिषेधादित्यर्थः। तस्माद्ध्याननिमित्तं रूपं ब्रह्मणः प्रतिबिंबविशेष इति तदुपासनयैव प्रतिमोपासनयेव तद्गतं ब्रह्म प्रसन्नं सदव्यक्तमपि स्वसामर्थ्यादपरोक्षीभवतीति युक्तम् ॥ इति ॥ **इति तथान्यप्रतिषेधाधिकरणम्** ॥ १८ ॥

## अथ फलाधिकरणम्. ॥ ९ ॥

**एवं सर्वेश्वरतया सर्वात्मकतया स एव परमेश्वरः सर्वकर्मणां तत्तद्देवतारूपेण स्वरूपेण च फलदाता भवतीति निरूपयितुमाह—**

## सू ॥ फलमत उपपत्तेः ॥ ३७ ॥

**इह पूर्वत्र सर्वेश्वरतया प्रतिपादितस्य परब्रह्मण एव सर्वानुष्ठातॄणामनुष्ठानफलदातृत्वमुतान्यस्येति संशयः ॥**

**अनुक्षणविनाशिनोऽपि कर्मणोऽपूर्वव्यवधानेन कालान्तरभाविफलदाने सामर्थ्यमस्त्येव । ततः कर्मणः फलदातृत्वे सिद्धे तदतिरिक्ताप्रसिद्धपरमेश्वरकल्पने गौरवप्रसङ्गात् तस्य न फलदातृत्वमिति पूर्वः पक्षः ॥**

## अथ फलाधिकरणम् ॥ ९ ॥

संगतिं सूचयन्नुत्तराधिकरणमवतारयति—एवमिति । यथा निरस्तसमस्तदोषस्सकलमंगलगुणरत्नाकरस्सर्वकारणत्वसर्वेश्वरत्वादिविषये समाभ्यधिकरहितश्च परमेश्वरः एवं सकलकर्मजातानां स्वर्गापवर्गादिफलप्रदोऽपि स एवेति तस्य महिमान्तरं निरूपयितुमधिकरणमारभ्यत इत्यर्थः । अनेन महाप्रभुर्महावदान्यश्च फलेप्सुभिस्सर्वैस्सेव्यो नान्यः । 'एकाहाद्वा तेषां समत्वात्स्या' दिति न्यायात् । तत्रोत्तरपादप्रतिपादनीयाभिरुपासनाभिराराधनीयत्वसिद्ध्यर्थं परमेश्वरस्यानन्यसामान्यं महाप्रभुत्वं निरूपितम् । इदानीं कर्मभिरुपासनैश्च प्रीतो महाफलं प्रयच्छतीति तस्य महावदान्यत्वं प्रतिपाद्यत इति संगतिः सूचिता । सू ॥ फलमत उपपत्तेः ॥ ३७ ॥ विधिश्रुते 'र्यमेभ्यो लोकेभ्य उन्निनीषत' इत्यादिश्रुतेश्च संशयमाह—पूर्वत्रेति । अन्यस्येति । कर्मण इत्यर्थः । ननु तत्कालविनाशिनः कर्मणः कथं फलजनकत्वम् । अपूर्वव्यापारकल्पने तु 'धर्मिकल्पनातो वरं धर्मकल्पने'ति न्यायादीश्वरस्यैव फलदातृत्वकल्पना युक्तेति पूर्वपक्षस्य नावकाश इत्याशंक्याह—अनुक्षणेति । केवलः परमेश्वरः कर्मफलदातेति वक्तुं न शक्यते । अदृष्टवत्तस्य विपाकापेक्षत्वाभावेन स्वर्गादेः कालान्तरभावित्वभङ्गप्रसंगात् । कर्मोपासनाभिराराधितस्य प्रसन्नस्य परमेश्वरस्य फलदातृत्वपक्षेऽपि कर्मानुष्ठानानंतरमेव प्रसादो वक्तुं शक्यते । परमस्वतन्त्रस्य प्रसादे सति फले विलंबायोगात् प्रयाजादिभिरंगैस्तदनुष्ठानानंतरमेव प्रसादे सति प्रधानानुष्ठानेऽपि अंगान्तरकैवल्येऽपि फलनिष्पत्तिप्रसंगाच्च । तस्मात्कर्मभिरपूर्वे निष्पादिते तस्य परिपक्वतया फलजननौन्मुख्यदशायां परमेश्वरस्य प्रसादो वक्तव्यः । तथा चावश्याभ्युपगन्तव्यापूर्व-

---

अथ सर्वगतत्वाधिकरणम् ॥ १९ ॥

सू ॥ अनेन **सर्वगतत्वमायामयशब्दादिभ्यः** ॥ ३८ ॥ अत्र देशकालान्तरेषु सृष्ट्यादिकमन्येनापि परमेश्वरदत्तस्वातन्त्र्येण क्रियत इति वक्तुं युज्यते वा न वेति **संदेहः** । यथा लोके स्वतन्त्रोऽपि राजा स्वयमेक एव राज्यधुरां निर्वहतीति नियमो नास्ति किं तु तद्दत्तस्वातन्त्र्यस्तत्रतत्रान्योऽपि निर्वहति तथा सृष्ट्यादिकमन्येनापि परमेश्वरदत्तस्वातन्त्र्येण देशकालान्तरेषु क्रियत एवेति युक्तमेवेति **पूर्वपक्षः । सिद्धान्तस्तु, अनेन** भगवतैव सर्वदेशकालयोः सृष्ट्यादिर्भवति । न तु देशकालान्तरयोरन्येन । कुतः । **सर्वगतत्वमायामयशब्दादिभ्यः** 'एष सर्वगत' इति सर्वगतत्वश्रुतेः तस्य च सृष्ट्याद्यर्थत्वात् विष्णौ प्रयुक्तमायामयशब्दव्याख्यानरूपसर्वत्रेत्यादिश्रुतेश्चेत्यर्थः । अन्यत्र प्रमाणाभावाच्चेत्यादिशब्दार्थः ॥ अत्रमते **'मायामयशब्दादिभ्यः'** इति पाठो विशिष्टः । **इत्यानन्दतीर्थमते सर्वगतत्वाधिकरणम्** ॥ १९ ॥

**इति सूत्रार्थचन्द्रिकायां पराधिकरणम्** ॥ ७ ॥

---

(१) 'सर्वेषां कर्मोपासनानाम्' इति ख. पाठः ।

सिद्धान्तस्तु—परमेश्वरादेवाराधितात् सर्वेषां कर्मफलसिद्धिः । उपपत्तेः, सेवितराजादिवदुपासितात् परमेश्वरादुपासकानां फलसिद्ध्युपपत्तेः । न हि अचेतनस्य कर्मणोऽपूर्वस्य वा तारतम्येन प्रतिनियतं फलं ज्ञातुं दातुं सामर्थ्यमस्ति, सेवाक्रियायामचेतनायां तथा दर्शनात् । इह शास्त्रसिद्धस्य परमेश्वरस्याकल्प्यत्वान्न कल्पनागौरवम् । तथा हि—'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति यमधो निनीषति' इति श्रुतिरीश्वरस्यैव धर्माधर्मफलदातृत्वं तत्कारयितृत्वं च वदति । प्रत्युत अपूर्वस्यैवाश्रुतस्य कल्पने गौरवम् । तस्मात् कर्मभिराराधितः परमेश्वरः फलदाता न कर्मेति निर्णयः ॥

सू ॥ श्रुतत्वाच्च ॥ ३८ ॥

श्रूयते हि सर्वकर्मणामधिपतिः परमेश्वरः, तदाराध्यत्वात् तत्फलदातृत्वाच्च-'गाथपतिं मेधपतिं रुद्रं जलाषभेषजम्'।'आ वो राजानमध्वरस्य रुद्रम्' इत्यादिषु॥

---

व्यापारेण कर्मण एव फलजनकत्वोपपत्तौ किमीश्वरस्यापि तत्फलदातृत्वकल्पनया तत्प्रसादकल्पनया वा । न च पुरुषस्य यागदानहोमादिकर्मभिः परमेश्वरस्य प्रसादोत्पत्तौ किञ्चित्कारणमस्ति । न च तेषां तत्प्रसादजनकत्वोपपत्तये तदाराधनरूपत्वं कल्पनीयम् । कल्पकाभावात् । तत्प्रसादे हेतुत्वेन तदाराधनत्वकल्पनेऽन्योन्याश्रयादिति भावः । उपपत्तेरिति । राजसेवान्यायप्रदर्शनेन केवलस्य कर्मणः फलदातृत्वं नोपपद्यत इत्यपि सूचितम् । तदुपपादयति—न हीति । ननु, तत्तत्कर्मणः स्वाभाव्यात्प्रतिनियतविचित्रफलविशेषजनकत्वं भवेत् । किमत्र ज्ञानापेक्षया । अतः क्लृप्तस्य कर्मण एव फलजनकत्वोपपत्तौ परमेश्वरस्यापि फलदातृत्वमक्लृप्तं कल्पनीयमित्याशंक्य न कल्प्यते तत्, किं तु श्रूयत इति गौरवमकिञ्चित्करमित्याह—इहेति । एवं च श्रुतेन फलदातृत्वेनैव कर्मणां परमेश्वरप्रसादहेतुत्वं तदुपपादकं तदाराधनरूपत्वं च कल्प्यत इति नान्योन्याश्रय इति भावः। विपरीतं गौरवमित्याह—प्रत्युतेति । ननु, श्रुतं कर्म परित्यज्याश्रुतमपूर्वं फलजनकमिति न कल्प्यते किं तु श्रुतमेव कर्मणां फलजनकत्वमुपपादयितुं तत्कल्प्यते । श्रुताभ्युपगम इव श्रुतनिर्वाहार्थकल्पनेऽपि गौरवं न दोष इति चेदेवं तर्हि कर्मण ईश्वरस्य च श्रुतं फलकारणत्वमुपपादयितुं कर्मणामीश्वरप्रसादस्य च मध्यवर्तित्वेनैव तत्कल्पनमुचितं न तु साक्षात्फलजनकत्वेन । कर्मण इव ईश्वरस्यापि फलकारणतायाः श्रुतत्वाविशेषेण तदनपेक्षानौचित्यादिति भावः । एवं कर्मणामीश्वराराधनत्वकल्पनामाश्रित्य तस्य कर्मफलदातृत्वमुपपादितम् । अथ कर्मणामीश्वराराधनत्वमपि श्रुतमेवेति प्रतिपादनार्थं सूत्रम्—श्रुतत्वाच्च ॥ ३८ ॥ गाथाः स्तोत्राणि । मेधा यज्ञाः । जलाषशब्दस्सुखवाची वैदिकनिघण्टुषु प्रसिद्धः। जायन्त इति जाः प्राणिनः तैर्लष्यतेऽभिलष्यत इति व्युत्पत्तेः । तदर्थं भेषजं तद्रूपं वा भेषजम् । ननु मेधपतिमित्येतद्यद्यपि परमेश्वरे यजमानत्वेन नोपपद्यते तथापि परमेश्वरविषयसेतुशब्दोक्तेन कर्मणामसंकरकारित्वेनोपपद्यते । अतस्तदाराधनरूपतायां नेदं प्रमाणमित्याशंक्य तत्र प्रामाण्यमुपपादयितुमुपबृंहणान्युदाहरति—स्मृतिरपीति । तथा चोपबृंहणानुरोधेन 'मेधपति' मित्यादेः 'आशासाना मेधपतिभ्यां मेध' मित्यादिवत्तत्तत्कर्माराध्यपरतयैवोपपादनं कार्यमिति भावः । 'आवो राजान' मिति मंत्रस्याप्येवमेवोपबृंहणं शिव-

एतन्मूला स्मृतिरपि परमेश्वरस्य सर्वयज्ञाधिपत्यं वदति—'सोमेनाराधयेद्देवं सोमं सोमविभूषणम् ।' इति ॥ 'नाश्वमेधात्परो यज्ञो रुद्रस्याराधनं प्रति ॥' इति च रामायणम् ।

चमकेषु 'वाजश्च मे प्रसवश्च मे धाता च मे विष्णुश्च मे' इत्यादिषु च वाजादीनां वस्तूनां विष्णवादीनां देवतानां देयत्वप्रतीतेः परिशेषादीश्वरस्य सर्वकर्मफलदातृत्वसिद्धिः । अतः परमेश्वर एव सर्वयज्ञाराध्यः सर्वफलदाता ॥'

पक्षान्तरमाह—

## सू ॥ धर्मं जैमिनिरत एव ॥ ३९ ॥

धर्ममेवोपपत्तेः श्रुतत्वाच्च फलदायिनं जैमिनिर्मेने । उपपत्तिः कृष्यादेर्मर्दनादेश्च कर्मणः साक्षात् परंपरया वा फलसिद्धिनिदर्शनम् । श्रुतं च कामिनः कर्तव्यतया कर्मविधानान्यथानुपपत्त्या कर्मैवापूर्वरूपेण तत्तत्फलसाधनमिति ॥

---

पुराणे दृश्यते 'किमेभिरमरैरन्यैरध्वरे पूजितैः फलम् । राजा चेदध्वरस्यास्य न रुद्रः पूज्यते त्वये'ति । एवं सर्वकर्मणामाराध्यं तत्फलप्रदानधुरन्धरं च परं ब्रह्मेति व्यवस्थापितम् । तत्र 'मेधपतिं रुद्र'मित्यादिश्रुत्युदाहरणेन ब्रह्मा नारायणो वा कर्मणामाराध्यः फलप्रदाता चेति कल्पयतां निरवकाशत्वमपि प्रसंगात्सिद्धम् । तस्मिन्प्रसंगसिद्धेऽर्थे हेत्वन्तरमाह—चमकेष्विति । वाजादीनामिति दृष्टान्तार्थम् । वाजमन्नम् । विष्णवादीनां देयत्वं 'सर्वेऽस्मै देवा बलिमावहन्तीति' श्रुत्युक्तरीत्या तद्वश्यतापादनम् । निरूपितोऽयमर्थः सुदर्शनाचार्यैः 'विष्णुप्रजापतिपुरन्दरपूर्वकेषु वाजादितुल्यमखिलेष्वपि दैवतेषु । आशंसितेषु चमकाः परिशिष्यमाणं दातारमीश्वर भवन्तमशाब्दमाहु' रिति प्रपञ्चेन च तैश्शिवस्य सर्वकर्माराध्यत्वं श्रुतिसूक्तिमुक्तावल्यां व्यवस्थापितं तत्रैवानुसंधेयम् । एवं दृढीकृतेऽपि सिद्धान्ते सिद्धान्तसिद्धमर्थं पूर्वपक्षिणं तद्रीत्यैवांगीकारयितुं पूर्वपक्षमुद्भावयति । सू ॥ धर्मं जैमिनिरत एव ॥ ३९ ॥ 'अत' एवे त्येतदुपपत्तिश्रुतत्वरूपोभयहेतुपरामर्शि । तत्र मर्दनादीनां यथा सान्दृष्टिकफलसाधनत्वं दृष्टम् एवं कृष्यादीनामुदर्कफलसाधनत्वमपि दृष्टमेव । न च कृष्यादिभिराराधितः कश्चिच्चेतनस्तत्फलं प्रयच्छति । तथैव यागादिकर्मणामपि स्वयमेव फलसाधनत्वमुपपद्यते इत्युपपत्तिः । 'यजेत स्वर्गकाम' इत्यादिश्रवणम् । तत्र हि यागादिकं कामिनः कर्त्तव्यतया बोध्यते न तु यागादिभिः कस्यचित्प्रसादनीयत्वम् । ननु, 'वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्समर्द्धयती' त्यादिवाक्यशेषेण बोध्यत इति चेत् । न । तस्य बाधितार्थत्वात् । एतत्कल्पवर्त्तिनामिन्द्रादीनां कल्पान्तरभोग्यफलदातृत्वासंभवात् अचेतनदेवतानां कदापि फलदातृत्वासंभवाच्च । तस्मात्तत्तद्दैवत्यकर्मफलमेव तत्तद्देवतादेयत्वेनारोप्य देवतास्तुतिपरो वाक्यशेषः । यथा कारीरीष्ट्यनन्तरं वृष्ट्या शुष्यत्सस्यफलनिष्पत्तौ जातायामेतैरिदं फलं दत्तमिति ऋत्विजः प्रति प्रशंसावाक्यम् । 'यमेभ्यो लोकेभ्य उन्निनीषते' 'अन्नादो वसुदान' इत्यादिवेदान्तगतार्थवादजातमुपपादनीयञ्चेत्तदप्यसंकरेण सकललोकपालकस्य परमेश्वरस्य प्रशंसापरम् । दृश्यते ह्यसंकरेण राज्यं परिपालयतो राज्ञः प्रशंसावचन 'मयमत्र राज्ये कृष्यादिकर्मणां

## सू ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

**पूर्वोक्तं परमेश्वरस्यैव कर्मफलदातृत्वं भगवान् बादरायणो मन्यते, 'वायव्यं श्वेतमालभेत भूतिकामः' 'स एवैनं भूतिं गमयति' इत्यादिषु परमेश्वरात्मकतया वाय्वादीनां कर्मविधिष्वेव फलहेतुत्वव्यपदेशात् । तदभावे हि क्षणिकस्य कर्मणः फलसाधनत्वनिर्वाहार्थमपूर्वत्वं कल्प्येत । वाक्यशेषोपपादितविध्यपेक्षितफलसाधनत्वप्रकारसद्भावे तु स एव स्वीकर्तव्यः । यथा वाक्यशेषस्थं विध्यपेक्षितं 'प्रतितिष्ठन्ति ह वा एता रात्रीरुपयन्ति' इत्यादिषु फलं स्वीक्रियते । 'यो वै रुद्रः स भगवान्' इत्यादिना वाय्वादिसर्वदेवतारूपत्वमीश्वरस्यावगम्यते अथर्वशिरसि । तत्रैव परमेश्वरेण 'यो मां वेद स सर्वान् देवान् वेद' इति स्वज्ञानात् स्वात्मकसकलदेवताज्ञानमुपपादितम् । अतः सकलदेवतारूपः सर्वकर्माराध्यः सर्वफलदाता परमेश्वरः परं ब्रह्म शिवः साक्षादुमापतिरिति सिद्धम्।**

**इति फलाधिकरणम् ॥ ९ ॥**

**इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥**

---

फलदाता स्वामी चे'ति । तस्मात्कर्मैव स्वर्गादिसाधनमिति जैमिनेर्मतम् । सू ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥ रात्रिसत्रादेर्विध्यवगतेष्टसाधनत्वनिर्वाहायेष्टविशेषाकांक्षायां यद्वाक्यशेषप्रतीत इष्टविशेषो गृह्यते न तद्वाक्यशेषस्वारस्येन । 'प्रतितिष्ठन्ति हवा एते य एता रात्रीरुपयन्ती'ति वर्तमानोपदेशेनोभयोर्यौगपद्यप्रतीतेः कार्यकारणभावविरोधित्वात् । किं तु यदेतदोर्व्यत्यस्तयोजनया 'प्रतितिष्ठन्ती'त्यत्र सन्नर्थान्तर्भावेन 'उपयन्ती' त्यत्र विधिविभक्तित्वाश्रयणेन च 'ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयु' रिति व्यवधारणकल्पनया । न तावान्वायुक्षेपिष्ठादिवाक्येषु क्लेशोऽस्ति अन्तर्यामिपरत्वकल्पने । अतो रात्रिसत्रन्यायतः श्रुतपरमेश्वरप्रसादद्वारकत्वसिद्धौ पश्चात्तन्निर्वाहार्थमपूर्वकल्पना न गौरवदोषमावहति । न हि दर्शपूर्णमासयोरन्तःप्रयोगं श्रपणीयस्य पुरोडाशस्य प्रकृतिद्रव्योपादानाकांक्षायां पश्चादावश्यकतया प्राप्स्यन्तमपि पिष्टमतिलंघ्य श्रुतव्रीहिद्रव्यपरिग्रहेण समापततोस्तण्डुलपिष्टावस्थयोरपेक्षणं गौरवदोषेण परित्यज्यते । तस्माज्जैमिन्यभिमतन्यायेनैवात्र सिद्धान्तः सिध्यतीति सूत्रभाष्ययोराशयः । अपूर्वं कल्प्येतेति । परमेश्वरप्रसादानपेक्षमिति शेषः । तस्मादविकलं कर्मानुष्ठाय तत्सूक्ष्मावस्थारूपमपूर्वं सम्पाद्य तस्य यावद्विपाकं संकीर्तनादिभ्यो नाशकेभ्यस्संरक्षणे सति प्रसन्नः परमेश्वरस्तत्फलं प्रयच्छतीति निरवद्यम् ॥ इति फलाधिकरणम् ॥ ९ ॥

इति श्रीशिवातिवादिमूर्धन्यशिवदर्शनस्थापनधुरंधरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसांबशिवप्रेरितस्य श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकाख्यायां तृतीयस्याध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

## नयमणिमालायाम्

## अथ फलाधिकरणम् ॥ ९ ॥

सू॥ फलमत उपपत्तेः ॥ ३७ ॥ श्रुतत्वाच्च ॥ ३८ ॥ धर्मं जैमिनिरत एव ॥ ३९ ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

कर्मण एवास्तु फलं किंचिद्द्वारा कृषिन्यायात् । मैवं कर्माराध्यः श्रुतः शिवस्तत्फलप्रदाता नः ॥ २०० ॥

## इति फलाधिकरणम् ॥ ९ ॥

## इति श्रीमदप्पय्यदीक्षितकृतौ चतुर्मतसारसंग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे तृतीयस्याध्यायस्य द्वितीयः पादः ॥ ३॥२॥

## सूत्रार्थचन्द्रिकायाम्

## अथ फलाधिकरणम् ॥ ८ ॥

सू॥ फलमत उपपत्तेः ॥ ३८ ॥ श्रुतत्वाच्च ॥ ३९ ॥ धर्मं जैमिनिरत एव ॥ ४० ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

**भगवत्पादमते,** ननु ब्रह्मातिरिक्तस्य वस्तुनो निषेधे ब्रह्मणो निर्विशेषत्वेन फलदातृत्वं न स्यादित्याक्षेपसंगत्येदमाह— सू॥ **फलमत उपपत्तेः** ॥ ३८ ॥ अत्र किं सर्वस्य जन्तोः कर्मण एव फलं भवति उतेश्वरादिति **संदेहः** । कर्मण इति **पूर्वपक्षः** । **सिद्धान्तस्तु, अतः**=अस्मात्परमेश्वरात् फलं सर्वस्य जन्तोर्भवितुमर्हति । कुतः । **उपपत्तेः**=क्षणिकात्कर्मणः फलासंभवेनेश्वरस्यैव फलदातृत्वोपपत्तेरित्यर्थः ॥

सू॥ **श्रुतत्वाच्च** ॥ ३९ ॥ 'स वा एष महानज आत्मान्नादो वसुदान' इति ईश्वरे फलहेतुत्वस्य श्रुतत्वाच्चेश्वरः फलदातेत्यर्थः ॥

शङ्कते-सू॥ **धर्मं जैमिनिरत एव** ॥ ४० ॥ यतः श्रुत्युपपत्तिभ्यामीश्वरं फलदातारं मन्यते सिद्धान्ती, **अत एव**= श्रुत्युपपत्तिभ्याम् । धर्मं फलदातारं जैमिनिराचार्यो मन्यते । तथा हि–'स्वर्गकामो यजेत' इति विधिविषयस्य यागस्य स्वर्गसाधनत्वं श्रुतम् । तन्निर्वाहाय श्रुतिप्रामाण्यादपूर्वाख्यो व्यापारो यागस्योत्तरावस्थारूपः कल्पनीय इति यागादिधर्म एव फलदाता, ईश्वरस्य सर्वसाधारणस्य विचित्रफलदातृत्वानुपपत्तेरिति ॥

समाधत्ते सू**पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॥ ४१ ॥ तुरुक्तशंकानिरासार्थः । **पूर्वं**=पूर्वोक्तमीश्वरं फलदातारं बादरायणस्त्वाचार्यो मन्यते । कर्म अपूर्वं वा स्वस्वरूपस्वविनियोगसाक्षात्कारवदधिष्ठितं भवितुमर्हति अचेतनत्वान्मृदादिवदित्यनुमानेन संभाविते ऽर्थे श्रुतिस्मृती प्रमाणयति **हेतुव्यपदेशात्**—'एष ह्येव साधु कर्म कारयति' अन्नादो वसुदान' इति श्रुत्यां 'लभते च ततः कामान्मयैव विहितान्हितान्' इत्यादिस्मृत्या च ईश्वरस्य धर्माधर्मयोस्तत्फले च हेतुत्वेन व्यपदेशादित्यतस्तत्तत्कर्मसापेक्षादीश्वरादेव सर्वेषां फलसिद्धिः । तदेवमधिकरणचतुष्टयेन निर्विशेषः स्वप्रकाशो निषेधाविषयोऽद्वितीयः शाखाचन्द्रन्यायेन कर्मफलदातृत्वेनोपलक्षितस्तत्पदार्थः परमात्मा शोधित इति तत्त्वंपदार्थौ शोधिताविति स्थितम् ॥ अस्मिन्मते अत्र **पादे अधिकरणान्यष्टौ** । सूत्राणि तु **एकचत्वारिंशत्** ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च **पूर्वपक्षसिद्धान्तादिकं** प्रमेयजातमविशिष्टम् । उपपादनप्रकारवैलक्षण्यात्सूत्रार्थवर्णने परमस्ति वैलक्षण्यमिति तदेवात्र निरूप्यते । **श्रीकण्ठमते–सू॥ फलमत उपपत्तेः** ॥ ३७ ॥ **अतः**=परमेश्वरादेवाराधितात् । **फलम्**=सर्वेषां कर्मफलसिद्धिः । **उपपत्तेः**=सेवितराजादिवदुपासितात्परमेश्वरादुपासकानां फलसिद्ध्युपपत्तेः ॥ **रामानुजमते च** क्षणविध्वंसिनः कर्मणः कालान्तरभाविफलप्रदानाशक्तत्वात्सर्वज्ञस्य सर्वशक्तेश्च परमेश्वरस्य तदुपपत्तेश्चेत्यर्थः ॥

सू॥ **श्रुतत्वाच्च** ॥ ३८ ॥ 'गाथपतिं मेधपतिं' मित्यादिश्रुतिषु परमेश्वरस्य सर्वकर्माधिपत्यस्य तत्फलदातृत्वस्य च श्रुतत्वाच्चेत्यर्थः । **रामानुजमते तु,** 'स वा एष महानज आत्मान्नादो वसुदानः' 'एष ह्येवानन्दयाति' इति भोगापवर्गरूपं फलमयमेव ददातीति श्रुतत्वाच्चेत्यर्थः ॥

सू॥ **धर्मं जैमिनिरत एव** ॥ ३९ ॥ उभयत्राप्यविशिष्टम् ।

सू॥ **पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॥ ४० ॥ पूर्वोक्तं परमेश्वरस्यैव फलदातृत्वं भगवान्बादरायणो मन्यते । 'स एवैनं भूतिं गमयती' त्यादिश्रुतिषु वाय्वाद्यात्मनावस्थितस्यैव परमेश्वरस्य कर्मविधिष्वेव फलहेतुत्वव्यपदेशात् । **रामानुजमते**ऽप्यविशिष्टम् ॥ अनयोर्मतयोर्नवाधिकरणानि सूत्राणि **चत्वारिंशत्** ॥

## इति श्रीकण्ठरामानुजमतयोः फलाधिकरणम् ॥ ९ ॥

**आनन्दतीर्थमते,** अत्रेश्वरस्य स्वर्गनरकादिफलप्रदत्वमहिमा समर्थ्यते–**सू ॥ फलमत उपपत्तेः ॥ ३९ ॥** ईश्वरस्य फलप्रदत्वमभ्युपगच्छतापि कर्मणः फलकारणत्वमवश्यमभ्युपगन्तव्यम् । अन्यथा वैषम्यनैर्घृण्यकर्मवैयर्थ्यतद्बोधकवेदाप्रामाण्यदोषापत्तेः। ततश्च कर्मण एव फलोपपत्तेः किमीश्वरेण। तस्य फलप्रदत्वश्रुतीनां साध्वसाधुकर्मणोस्तत्कारितत्वेनौपचारिकत्वोपपत्तेरिति **पूर्वपक्षः । सिद्धान्तस्तु,** सत्यं कर्म फलकारणं तत्तु न चेतनाप्रेरितं फलोपयोगीति यथाश्रुति परमेश्वर एव कर्मापेक्षफलदाता । अतः प्रतिपादितनिरतिशयमहिमशालिनि परमेश्वरे भक्तिः कार्येति सिद्धमिति । **सूत्रार्थस्तु, फलं**=स्वर्गादि । **अतः**=ईश्वरादेव भवति । न कर्मतः । कुतः । **उपपत्तेः**=ईश्वरस्य चेतनत्वेन फलदातृत्वस्य युक्तत्वादित्यर्थः ॥

**सू ॥ श्रुतत्वाच्च ॥ ४० ॥** श्रुतत्वात्=श्रुत्युक्तत्वाच्चेश्वरस्यैव फलदातृत्वमित्यर्थः ॥

**सू ॥ धर्मं जैमिनिरत एव ॥ ४१ ॥** जैमिनिराचार्यः धर्मं फलप्रदमाह । तं च धर्मं अत एव ईश्वरादेव जन्यं मन्यते । कुतः । **अत एव**='एष ह्येवे'ति श्रुतेरेवेत्यर्थः ॥

**सू ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४२ ॥** बादरायणाचार्यस्तु **पूर्वं**=पूर्वोक्तं ब्रह्म धर्मं चोभयं फलहेतुं मन्यते । अत्र ब्रह्म कर्तृत्वेन कर्म करणत्वेन हेतुरिति विशेषस्तुशब्दार्थः । कुतः । **हेतुव्यपदेशात्**='पुण्येने' ति श्रुतौ ब्रह्मकर्मणोः कर्तृत्वकरणत्वरूपहेतुत्वस्योक्तत्वादित्यर्थः ॥

**अत्र पादे अस्मिन्मते विंशतिरधिकरणानि सूत्राणि तु द्विचत्वारिंशत् ॥**

**इत्यानन्दतीर्थमेत फलाधिकरणम् ॥ २० ॥**

**सूत्रार्थचन्द्रिकायां फलाधिकरणम् ॥ ८ ॥**

**यं प्रासूत विशुद्धशीलमनघं वृद्धांबिकाख्या सती**<br>
यं **मृत्युञ्जयशर्मणो** बुधमणेर्भाग्यं विदुस्साधवः ।<br>
**वाधूलान्वयजन्मनोऽस्य सुधियो हालास्यनाथाह्वय-**<br>
**स्येयं सत्कृतिरेधतामिह चतुर्भाष्यानुगा चन्द्रिका ॥**

**सूत्रार्थचन्द्रिकायां तार्तीयीकेऽत्र साधनाध्याये ।**<br>
**द्वैतीयीकः** पादः प्रथितः पूर्णश्च **भक्तिपाद इति ॥**

**इति हालास्यनाथकृतौ सूत्रार्थचन्द्रिकायां तृतीयस्याध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥**



॥ श्रीः ॥
शिवाभ्यां नमः ।
श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## अथ तृतीयस्याध्यायस्य तृतीयः पादः ॥

### अथ सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

पूर्वत्र निरूपितो नित्यत्वादिगुणकस्त्वंपदार्थः पशुरुपासकः, सर्वज्ञत्वादिगुणकस्तत्पदार्थः पतिरुपास्यः शिवश्च । तदिह कथमुपासनमित्याकाङ्क्षायां तन्निरूपणमुत्तरत्राभिवर्तते–

सू ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

सर्वेषु वेदान्तेषु दहराद्युपासनं श्रूयते । तदेकम् उत शाखाभेदादिना भिन्नमेव इति संदेहः ॥

शाखाभेदेन प्रकरणभेदात् प्रतिशाखमुपासनं भिद्यते ।

---

## शिवार्कमणिदीपिकायां

### तृतीयस्याध्यायस्य

## तृतीयपादप्रारंभः ॥

### अथ सर्ववेदान्तप्रत्ययाधिकरणम् ॥

सङ्गतिसूचनार्थं पूर्वदशपादीसिद्धार्थेष्वपेक्षितार्थानुवादपूर्वकमुत्तरपादप्रतिपाद्यार्थं दर्शयति–पूर्वत्रेति । जीवस्य नित्यत्वे ह्युपासनासाध्यशाश्वतफलप्राप्तौ वांछा भवेत् । स्वयमनित्यस्य किं तेन । अतो 'नात्माश्रुते'रित्यधिकरणसिद्धं नित्यत्वं स्मारितम् । आदिशब्देन संसारे जिहासोत्पत्त्यर्थमवस्थात्रयेऽपि हेयास्पदत्वं पूर्वपादद्वयोक्तं संगृहीतम् । चिरमुपासितस्यापि शिवस्य कदाचिदुपासकप्रयासाननुसंधानेन तदनुगुणफलादातृत्वे किमतिदुष्करानेकनियमघटितेनोपासनाप्रयत्नेन । अतश्शास्त्रयोनित्वाधिकरणसिद्धं सर्वज्ञत्वं स्मारितम् । आदिशब्देन सर्वशक्तिमत्त्वनिरतिशयदयाशालित्वमहावदान्यत्वादिकं पूर्वाधिकरणपर्यन्ततत्तदधिकरणोदाहृतविषयवाक्यैः शब्दतोऽर्थतश्च सिद्धमुपास्यत्वोपयुक्तकल्याणगुणजातं गृह्यते । कथमुपासनमिति । किमेकस्योपासनस्य कस्यांचिच्छाखायां यावन्तो गुणा आम्नातास्तावदुपसंहारेणैव तदुपासनं कार्यमुत शाखांतरगततदुपासनाप्रकरणाम्नातगुणांतरोपसंहारेणेत्याकांक्षायां तन्निरूपणं, प्रवर्तते । तदर्थं शाखाभेदेऽपि चोदनाद्यविशेषे सति नोपासनं भिद्यत इति तदभेदनिरूपणं तद्भेदनिरूपणं तु तदपवादत्वेनेति भावः । सू० ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ चोदनाद्यविशेषेणाभेदप्रत्यभिज्ञानात् नामरूपादिभेदेन भेदप्रतीतेश्च संशयं दर्शयति–प्रकरणभेदादिति । प्रकरणांतरोक्तिरभ्यासस्याप्युपलक्षणम् । अस्ति हि मासाग्निहोत्रनित्याग्निहोत्रन्यायेन दहरविद्यादीनां छांदोग्यतैत्तिरीयादिषु प्रकरणभेदव 'द्विद्यादुपासीते' त्यादिरविशेषिततत्तद्विधिश्रवणरूपोऽभ्यासोऽपि । ननु नात्राभ्यासन्यायः प्रवर्तते । विधिश्रुत्या विशेषणसंक्रांतिरहितया कर्मविधिसिद्धौ विहितस्य विधानमनर्थकमित्यानर्थक्यन्यायमूलको ह्यभ्यासेन कर्मभेदः । न

तथा छान्दोग्ये तैत्तिरीयके च दहरोपासनमाम्नायते । एकत्र 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' इत्यारभ्य अपहतपाप्मत्वादयो गुणा आम्नाताः । अन्यत्र 'ऋतं सत्यम्' इत्यारभ्य कृष्णपिङ्गलत्वादयो गुणाः । तत्र गुणभेदेनोपासनं भिद्यते । छान्दोग्ये पञ्चाग्निविद्यायां कौथुममिति नाम, बृहदारण्यके वाजसनेयमिति नाम । तत्र नामभेदादुपासनं भिद्यते । मुण्डकशाखायां शिरोव्रताख्यो धर्मः श्रूयते 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति । शिरोव्रतं नाम वेदव्रतविशेषः आथर्वणिकान्प्रति विहितो नेतरान्प्रति ।

चेहानर्थक्यमस्ति । यो यच्छाखाध्यायी तं प्रति तद्वाक्यं तत्कर्मप्रमित्यर्थमिति सार्थकत्वसंभवात् 'स्वाध्यायोऽध्येतव्य' इति पितृपितामहादिपरंपराप्राप्तस्वशाखाध्ययनस्यैव विहितत्वेनानधीताच्छाखान्तरतस्तत्प्रमित्यसंभवात् । एवमिह प्रकरणान्तरन्यायोऽपि न प्रवर्तते । असन्निहितस्य कर्मणो बुद्धिविपरिवृत्त्यभावेनानुवादायोगात् । कर्मविधिसिद्धौ विहितस्य विधानमनर्थकमिति प्रकरणांतरतः कर्मभेदसिद्धेरप्यानर्थक्यमूलकत्वादिति [१] । कृतस्वशाखाध्ययनस्य मतिपाटवकौतुकादिना शाखान्तराध्ययनस्य तत्तच्छाखाध्यायिभ्यस्तत्तद्वाक्यग्रहणस्य च सम्भवेन तं प्रति तस्य तस्य वाक्यस्यानुवादकत्वं स्वशाखाध्यायिनं प्रति ज्ञापकत्वमिति वैरूप्यं स्यादिति सर्वशाखावाक्यानामेवंविधानर्थक्यपरिहाराय सर्वेषामपि वाक्यानां भिन्नभिन्नकर्मविधायकत्वस्यावश्यवक्तव्यत्वेनात्राप्यानर्थक्यन्यायप्रवृत्तेः । तथा छांदोग्य इति । यथा 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन' मित्यत्रोत्पत्तिविशिष्टामिक्षाद्रव्यावरुद्धे वैश्वदेवयागे द्रव्यतया निवेशितत्वेनामिक्षाविरोधात्तत्र निवेशमलभमानेन वाजिनगुणेन वाजिनयागस्य ततो भेदः । उत्पत्तिवाक्यसंसिद्धं कर्म सर्वमनूद्यते । 'न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तर'मिति न्यायात् । एवमपहतपाप्मत्वादिगुणनिरूपणानंतर 'मथ य इहात्मान' मित्यादिना प्रकृतापहतपाप्मत्वादिगुणकात्मविषयतया विधीयमानायां छांदोग्याम्नातदहरविद्यायां देहसद्भावे पाप्मादिस्पर्शावश्यंभावेनापहतपाप्मत्वादिविरोधात्तस्यां निवेशमलभमानेन कृष्णपिंगलत्वादिगुणेन तैत्तिरीयाम्नाताया दहरविद्यायास्ततो भेद इत्यर्थः । छांदोग्य इति । यथा 'अथैष ज्योतिरेतेन सहस्रदक्षिणेन यजेते' त्यत्र ज्योतिर्नामकस्य यागस्य ज्योतिरिति नामभेदेन प्रकृताज्ज्योतिष्टोमनाम्नो यागाद्भेदः । एवं छांदोग्यबृहदारण्यकाम्नातपंचाग्निविद्ययोः कौथुमवाजसनेयकनामभेदाद्भेदः । शाखास्विव तत्तदाम्नातविद्यास्वपि कौथुमादिनाम्नां कौथुमी पंचाग्निविद्येत्यादिरूपेण व्यवह्रियमाणतया तानि शाखानामेव नामानि न विद्यानामिति नियंतुमशक्यत्वादिति भावः । पञ्चाग्निविद्योदाहरणेन संख्यालक्षणगुणभेदादपि भेदस्सूचितः । छांदोग्ये हि पञ्चैवाग्नयः समाम्नाता 'अथ ह य एतानेवं पंचाग्नीन्वेदे'ति । बृहदारण्यके तु षष्ठोऽप्यग्निराम्नातः 'तस्याग्निरेवाग्निर्भवति समित्समि'दित्यादिना । मुण्डक इति । आथर्वणिकान्प्रत्येव विहितस्य शिरोव्रतस्य मुण्डकाम्नातप्रकृताक्षरब्रह्मविद्यांगत्वेन तद्गुणरहितशाखान्तराम्नाताक्षरब्रह्मविद्या ततो भिन्नैव वाच्या । एकस्यां विद्यायां तद्गुणत्वातद्गुणत्वसमावेशासंभवात् । न च 'नैतदचीर्णव्रतोऽधीत' इत्यग्रे शिरोव्रतस्य प्रकृतमुण्डकोपनिषदध्ययनांगत्वश्रवणात् गुरुमुखोच्चारणानूच्चारणरूपाध्ययनशरीरानुपकारकं तच्छिरोव्र-

---

( १ ) 'प्रमापकत्वमिति' इति॰ ख. पाठः । ( १ ) 'गुणविशिष्टात्म' इति ख. पाठः ।

**अतो धर्मभेदादुपासनाभेदः । ततः शाखादिभेदादुपासनाभेद इति पूर्वः पक्षः ॥**

तमध्ययनसंस्कार्यायास्तस्या उपनिषद एवांगं भवेत् । तथा च सैवोपनिषदेतत्प्रतिपाद्याक्षरब्रह्मविद्याप्रतिपादकोपनिषदन्तराद्भिद्येत नाक्षरब्रह्मविद्येति वाच्यम् । अध्ययनजन्यसंस्कारस्याक्षरावाप्तिरूपत्वेन शिरोव्रतमंतरेणाध्ययनेनैवावाप्तुं शक्यायामुपनिषदि तज्जन्ये विद्यानुष्ठानोपयोगिन्यर्थज्ञाने चानुपकारकस्य शिरोव्रतस्य विद्यायामेव फलोपकार्यंगत्वस्य वक्तव्यत्वात् । न च तस्यां शिरोव्रतस्य विनियोजकं प्रमाणं नास्ति किंत्वध्ययन एव अचीर्णव्रतस्याध्ययननिषेधसामर्थ्यात् शिरोव्रताचरणमध्ययनांगमिति सिद्धेरिति वाच्यम् । उक्तसामर्थ्यादध्ययनांगत्वकल्पनायां प्रसक्तायामध्ययने तदवाप्यायामुपनिषदि चानुपकारिणश्शिरोव्रतस्योपनिषत्प्रतिपाद्यत्वेन तदुपस्थाप्यायां विद्यायां जुह्वाकृत्यनुपकारकस्य पर्णत्वस्य जुहूपस्थाप्यायामिष्टाविव विनियोजकस्य वाक्यप्रमाणस्य वोपनिषदुपस्थाप्याया विद्याया बुद्धिसन्निधानसत्त्वात्सन्निधिलक्षणस्थानप्रमाणस्य वा सत्त्वात् शिरोव्रतस्याध्ययनांगत्वविधिव्यतिरेकेण 'तेषामेवैतां ब्रह्मविद्या' मिति प्रकृतब्रह्मविद्यांगत्वविधेरपि सत्त्वाच्च । न च 'नैतदचीर्णव्रत' इत्यग्रिमवाक्यानुसारेण ब्रह्मविद्याशब्दस्तत्प्रतिपादकप्रकृतोपनिषद्ग्रंथपरो व्याख्येय इति वाच्यम् । उपसंहारानुरोधेनोपक्रमस्यान्यथाकरणायोगाद्विरोधाभावाच्च । अध्ययनांगस्य सतस्संयोगपृथक्त्वेन विद्यांगत्वस्यापि संभवात् । 'तेषामेवैता'मित्यनेनाप्यध्ययनांगत्वस्यैव बोधनेऽग्रिमवाक्येन पौनरुक्त्यापत्तेश्च । न 'चेतामि'ति प्रकृतपरामर्शिना सर्वनाम्ना मुण्डकोपनिषदध्ययनावाप्यत्वेन रूपेण विद्यापरामर्शादुपनिषदंतरेण यैरेषा विद्यावाप्यते तेषां तदनुष्ठाने शिरोव्रतमंगं न सिध्यतीति नास्ति विद्यैक्ये कश्चिद्विरोधः इति वाच्यम् । मुण्डकोपनिषदध्ययनावाप्यत्वेन रूपेण विद्यायाः शब्दतः प्रकृतत्वाभावेन ताद्रूप्येण परामर्शे हेत्वभावात् । अन्यथा 'य एतेनानिष्ट्वाथान्येन यजत' इत्यत्राप्येतच्छब्दस्य तच्छाखाध्ययनावाप्तत्रिवृदादिस्तोमयुक्तज्योतिष्टोमपरत्वापत्त्या क्रत्वंतराणां तथाभूतज्योतिष्टोमपूर्वकत्वनियमप्रसंगादेवमपि पौनरुक्त्यापरिहाराच्च । अग्रिमवाक्येन मुण्डकोपनिषदुपस्थितौ तस्यामनुपकारकस्य शिरोव्रतस्य तदवाप्यविद्यांगत्व एव पर्यवसानात् । न च, तर्हि शाखान्तरेष्वप्याम्नाताक्षरब्रह्मविद्याथर्वणिकमात्राधिकारिकशिरोव्रतांगकत्वानुरोधेन तन्मात्राधिकारिकेत्यधिकारसंकोचोऽस्तु । 'ऋद्धिकामास्सत्रमासीर' न्नित्यविशेषश्रवणेऽपि सत्रे ये यजमानास्त ऋत्विज इति ब्राह्मणकर्तृकेषु ऋत्विक्कर्मसु यजमानानां कर्तृत्वविध्यनुरोधेन ब्राह्मणानामेवाधिकारः । तत्रापि राजन्यवसिष्ठानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामिति प्रयोजकेषु कल्पभेदश्रवणात्सर्वेषां यजमानानां तदवैगुण्याय तुल्यकल्पानामेवाधिकारः । तत्रापि वैश्वामित्रो होतेति नियमात् वैश्वामित्रतत्तुल्यकल्पानामेवाधिकार इत्यंगानुरोधेनाधिकारसंकोचदर्शनात् । तथा च मुण्डके शाखान्तरेषु चाक्षरब्रह्मविद्यैक्येऽपि न कश्चिद्विरोधः । आथर्वणिकव्यतिरिक्तानां तु दहरवैश्वानरादिविद्यान्तरोपासनेन मुक्तिर्भविष्यतीति वाच्यम् । शाखान्तरोक्ताक्षरविद्यायां मुण्डकोक्तांगानुरोधेन संकोचानुपपत्तौ तत्संकोचनायोगात् । न च चोदनाद्यविशेषादभेदसिद्धेस्तत्सङ्कोचनं, तद्भेदस्याभ्यासादिभिस्साधितत्वादिति भावः । **अतो धर्मभेदादिति ।**

---

(१) 'मुण्डकोपनिषदङ्गत्वप्रतीतौ' इति ख. पाठः । (२) 'तदवैगुण्यानुरोधेन तुल्यकल्पानामिहाधिकार' इति ख. पाठः । (३) 'विद्याया मुण्डकोक्ताक्षरविद्यातो भेदेनाधिकारासंकोचोपपत्तौ' इति ख. पाठः ।

सिद्धान्तस्तु—सर्ववेदान्तप्रत्ययं दहराद्युपासनमेकमेव, कर्मविधिष्विव चोद-

यद्यपि शिरोव्रतरूपधर्मविशेषाद्भेदोऽपि गुणविशेषादेव भेदः तथाप्ययमुत्पन्नशिष्टगुणाद्भेद इत्येतावता पृथगुक्तिः। सू० ॥ **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ १ ॥ प्रतीयत इति प्रत्ययम्। सर्ववेदान्तप्रतिपाद्यमेकमेवेति साध्यं हेतुसामर्थ्यादध्याहृतम्। 'कर्मविधिष्विवेति' शाखान्तराधिकरणन्यायस्सूचितः। शाखांतराधिकरणे हि 'नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदः स्या'दिति सूत्रे पूर्वपक्षमुपन्यस्य 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इति सूत्रेण सिद्धान्तः कृतः। तत्र पूर्वपक्षसूत्रस्यायमर्थः—काठकमाशककालापकादीनि तत्तच्छाखागताग्निहोत्रादीनां नामानीति नामभेदः। क्वचिच्छाखाया 'मग्नीषोमीयमेकादशकपाल'मिति श्रूयते। अन्यत्र द्वादशकपालमिति रूपभेदः। 'मारुतमसि मरुतामोज' इत्यादीनि कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमिभोजनमाचरन्ति नान्ये। अग्निवाक्यान्यधीयानाः केचिदुपाध्यायस्योदकुंभमाहरन्ति नापरे। अश्वमेधवाक्यान्यधीयानाः केऽप्यश्वस्य घासमानयन्ति नेतर इत्येवमिर्भेदः। पुनरुक्तिरभ्यासः। 'प्रातः प्रातरनृतं ते वदंती'ति। 'पुरोदयाज्जुह्वति येऽग्निहोत्रं दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषा'मिति 'यथातिथये प्रद्रुतायान्नं हरेयुस्तादृगेव तद्यदुदिते जुह्वती'ति च शाखाभेदेनोदितानुदितहोमयोः परस्परनिंदा। अशक्तिः सर्वशाखोदितांगानामेकत्रोपसंहारः। मैत्रायणीयानामन्वारोहसंज्ञकेषु स्थलारोहणमन्त्रेष्वग्निस्समाप्यतेऽन्यत्रान्येषामिति समाप्तिभेदः। केषांचिच्छाखायामुदितहोमव्यतिक्रमे प्रायश्चित्तं केषांचिदनुदितहोमव्यतिक्रमे इति प्रायश्चित्तभेदः। उदितानुदितहोमविधानं वैकल्पिकत्वेनोपपन्नमित्युभयथाप्यवैगुण्यं भवति। प्रायश्चित्तविधानमुभयथापि कर्मैक्ये वैगुण्यलिङ्गम्। एवं नामभेदादिभिश्शाखाभेदे कर्मभेदः। अन्यार्थदर्शनाच्च। तथा हि द्वादशाहे श्रूयते—'यदि पुरा दिदीक्षाणाः स्युर्बृहत्सामानमतिरात्रमुपेयुरुपेतं ह्येषां रथन्तरमथ यद्यदिदीक्षाणाः रथंतरसामानमतिरात्रमुपेयु' रिति। पुरा दिदीक्षाणा पूर्वमेव दीक्षावन्तः। लिटः कानचि द्विर्वचनम्। अत्रानिष्टप्रथमयज्ञानां द्वादशाहदर्शनं शाखाभेदेन द्वादशाहभेदे लिंगम्। कथम्। ताण्डिशाखायां 'य एतेनानिष्ट्वे'त्यादिना सर्वक्रतूनां ज्योतिष्टोमपाश्चात्यत्वमंगं विहितम्। यदि प्रतिशाखं द्वादशाहादयः क्रतवो भिन्ना न स्युः तदैक एव द्वादशाहो नानाशाखासु विहित इति तस्य ज्योतिष्टोमपूर्वकत्वनियमादनिष्टप्रथमयज्ञस्य द्वादशाहदर्शनं नोपपद्यते। यदि प्रतिशाखं ते भिन्नाः स्युस्तदा ताण्डिशाखाया 'मथान्येन यजते' इत्यन्यशब्दस्य ताण्डिशाखागतद्वादशाहादिक्रत्वंतरविषयत्वोपपत्तेः। शाखान्तरगतद्वादशाहादीनां ज्योतिष्टोमपाश्चात्यत्वस्याविधानात् यस्यां शाखायामनिष्टप्रथमयज्ञस्य द्वादशाहदर्शनं तच्छाखागतद्वादशाहविषयत्वेन तदुपपद्यत इति। एवं नामभेदादिहेतुभिः प्रतिशाखमग्निहोत्रादिकं भिद्यत इति पूर्वपक्षे सति तदैक्यसाधकस्य सिद्धान्तसूत्रस्यायमर्थः—सर्वासु शाखास्वेकमग्निहोत्रादिकर्म स्वर्गादिफलसंयोगस्य रूपाख्यस्य द्रव्यदेवतस्य जुहोत्यादिचोदनाया अग्निहोत्राद्याख्यायाश्चेत्येतेषामभेदप्रत्यभिज्ञापकानामविशेषादिति। एत एव शाखान्तराधिकरणसिद्धान्त-

नाफलसंयोगरूपाख्यानामविशेषात्। 'विद्यात्' 'उपासीत' इति चोदना तावत् शाखाभेदेऽप्यविशिष्टा। फलसंयोगो ब्रह्मप्राप्तिरूपोऽविशिष्टः। वेद्यमपि वैश्वानरादिरूपं ब्रह्माविशिष्टम्। आख्यापि वैश्वानरविद्येत्येवमादिरविशिष्टैवेत्येकमेवोपासनम्। विद्यादिभेदेऽप्युपासनं न भिद्यते। 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इति छान्दोग्ये दहरविद्याविधिः। 'तस्मिन्यदन्तस्तदुपासितव्यम्' इति तैत्तिरीयके च। तत्र स्थानाद्यभेदादुपास्यस्य ब्रह्मणोऽप्यभेदात् उभयत्रोक्तानां धर्माणामविरोधाद्विद्यैक्यमेव। छान्दोग्यबृहदारण्यकशाखयोर्द्युपर्जन्यपृथिवीपुरुषयोषिदाख्यस्याग्निपञ्चकस्य वेद्यतया यत्स्वरूपमाम्नातं तदुभयत्रापि समानम्। अतो न विद्याभेदः।

हेतवोऽत्रापि चोदनाद्यविशेषादित्यनेनोपन्यस्ता इति व्याचष्टे—चोदनाफलसंयोगेत्यादिना। गुणभेदाद्भेदमाशंकितं निराकरोति—तस्मिन्यदन्तरिति। यद्यपि 'अथ य इहात्मानमनुविद्य व्रजन्ती'ति वाक्ये दहरविद्याविधिः तथापि नोत्पत्तिशिष्टगुणावरोधो दोषः, विरोधाभावादित्यभिप्रेत्याह—उभयत्रोक्तानामिति। विरोधाभावो 'दर्शयति चे'ति सूत्रे प्रदर्शयिष्यते। विरोधाभावे च नोत्पत्तिशिष्टगुणावरोधो दोषः। अन्यथा पुरोडाशाद्यवरुद्धेषु यागेषु व्रीह्यादीनामनन्वयापत्तेः। कौथुमादीनि शाखानां नामानि न तु विद्यानाम्। अतो नामभेदाच्छाखाभेदेऽपि न विद्याभेदः। कौथुमादिशब्दानामेकैकशाखानामत्वेन तदाम्नातासु सर्वास्वपि विद्यासु लाक्षणिकत्वोपपत्तौ तावतीषु विद्यासु प्रत्येकं शक्तिं कल्पयित्वा तत्र तत्र लक्षणाकल्पनस्य गौरवपराहतत्वात्। यथाहुः—शाखया ह्येकया योगाद्बहुकर्मावबोधनम्। युज्यते कर्मनानात्वान्नैकशाखोपलक्षण' मिति। किञ्च। कौथुमशब्दः कुथुमिना प्रोक्तमित्यस्मिन्नर्थे प्रोक्तप्रत्ययान्तः प्रवचननिमित्तः। न च प्रवचनं विद्यायास्संभवति। तस्य शब्दविषयत्वात्। वाजसनेयकशब्दोऽप्याम्नायविशेषपरः 'शौनकादिभ्यश्छन्दसी'ति सूत्रेण शौनकादिगणपठिताद्वाजसनेयशब्दाद्वाजसनेयेन प्रोक्तं छन्द इत्यर्थे णिनिप्रत्यये तदन्तस्य 'छंदोब्राह्मणानि च तद्विषयाणी'ति सूत्रेण 'तदधीते तद्वेद' त्येतदर्थविहितप्रत्ययविषयत्वे तदर्थविहितस्य च प्राग्दीव्यतीयप्रत्ययस्य 'प्रोक्ताल्लुगिति' सूत्रेण लुकि वाजसनेयेन प्रोक्तं छंदोऽधीयत इति वाजसनेयिन इति रूपे स्थिते तेषामाम्नाय इत्यर्थे 'चरणाद्धर्माम्नाययोरिति वक्तव्य'मिति वार्त्तिकेन वाजसनेयिनामाम्नाय इत्यर्थे विहिते वाजसनेयिशब्दाद्वुञ्प्रत्यये 'नस्तद्धित' इति टिलोपे च सति वाजसनेयकशब्दस्य निष्पत्तेः। एवं कौथुमादिशब्दानां शाखानामत्वव्युत्पादनं 'न नाम्ना स्याच्चोदनाभिधानत्वा'दिति शाखान्तराधिकरणगुणसूत्रसिद्धं प्रसिद्धमेवेति तद्विहाय शाखाद्वयाम्नातायां पञ्चाग्निविद्यायामग्निसंख्यारूपगुणभेदाद्भेदशंकां निराचष्टे—छांदोग्येति। वेद्यतयेति। उपासनीयतयेत्यर्थः। तथा च बृहदारण्यकेऽपि सांपादिकाः पञ्चैवाग्नय उपास्याः। अत एव षष्ठस्याप्यग्नेस्समिद्धूमादिकल्पनयोपासनाप्रसक्तौ तन्निवृत्तये 'तस्याग्निरेवाग्निर्भवति' 'समित्समित्' इत्यादि समाम्नायते। षष्ठस्याप्यग्नेरुपास्यत्वे तु सांपादिकाद्यभिप्राया पञ्चसंख्येति न विरोधः।

(१) 'विरोध एवोत्पत्तिशिष्टगुणावरोधो दोषः' इति क. ग. पाठः। (२) "नामभेदाच्छाखा एव भिद्येरन्न विद्याः। न चात्र विनिगमनाविरहः' इति ख. पाठः। (३) 'तत्संबन्धाच्छाखायां लक्षणाकल्पनस्य' इति ख. पाठः।

सू ॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

अविशेषपुनःश्रुतिः प्रकरणान्तरसहिता भेदापादिका । अतो न विद्यैक्यमिति चेत्–विद्यैक्येऽपि शाखान्तरेऽपि प्रतिपत्तृभेदादुपपन्ना सा न भेदावहा ॥

सू ॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३॥

अथर्ववेदे 'तेषामेवैतां ब्रह्मविद्यां वदेत' इति शिरोव्रतनियमः स्वाध्यायाङ्गत्वेन न तु विद्याङ्गत्वेन ।'नैतदचीर्णव्रतोऽधीते' इति तस्याध्ययनसंबन्धावगमात्, समाचारग्रन्थे 'इदमपि वेदव्रतेन व्याख्यातम्' इति तस्य वेदव्रतत्वप्रतिपादनाच्च । 'ब्रह्मविद्याम्' इत्यत्र ब्रह्मशब्दो वेदविषयः ।

---

अभ्यासप्रकरणान्तराभ्यां विद्याभेदशङ्कानिराकरणार्थं सूत्रम्–भेदादिति चेन्नैकस्यामपि ॥ २ ॥ सर्ववेदान्तप्रत्ययं दहराद्युपासनं नैकं विधिश्रुतेः प्रकरणस्य च भेदादिति शंकाभागं तात्पर्यतो व्याचष्टे–अविशेषेति । प्रतिपत्तृभेदादिति । सर्वस्यापि स्वशाखाध्ययनं प्रथममावश्यकमिति तं प्रति तावत्प्रमितिजनकत्वेनार्थवत्त्वमस्ति । अतो नानर्थक्यमू-[1]ासन्यायः प्रकरणान्तरन्यायो वात्र प्रवर्तते । न च परशाखाध्यायिनं प्रत्यनुवादकत्वाद्वैरूप्यमिति वाच्यम् । वाक्यान्तरेण प्राप्तिमपेक्ष्यार्थज्ञानजनकत्वं ह्यनुवादकत्वं न ज्ञातज्ञापकत्वमात्रम् । स्वशाखागतवाक्यस्यापि पुनःश्रवणेऽनुवादकत्वेन वैरूप्यापत्तेः । न च नानाशाखागतेष्वग्निहोत्रादिवाक्येषु किञ्चिदपि वाक्यं शाखान्तरवाक्यतः प्राप्तिमपेक्ष्य स्वार्थं बोधयति । अतो नानुवादकत्वकृतं वैरूप्यमपीति भावः । सू० ॥ स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥ स्वाध्यायस्य तथात्वेन स्वाध्यायं प्रत्यङ्गत्वेन शिरोव्रतविधिः न तु विद्यां प्रत्यङ्गत्वेन । कुतः । समाचारेऽधिकारात् आथर्वणिकानां वेदव्रतोपदेशार्थे समाचाराख्ये ग्रन्थे तथा प्रतिपादनात् । चकारेण 'नैतदचीर्णव्रतोऽधीत' इत्यग्रिमवाक्ये तथैव स्पष्टत्वाच्चेति सूत्रार्थं दर्शयन्धर्मविशेषाद्विद्याभेद इति शङ्कां निराचष्टे–अथर्वेति । एवञ्च धर्मविशेषान्मुण्डकोपनिषद्रूपस्वाध्यायस्यैव शाखान्तररूपात्स्वाध्यायाद्भेदो भवति । तस्यैव चाथर्वणिकमात्राधिकारिकशिरोव्रताङ्गत्वानुरोधेन तन्मात्राध्येयत्वं सिध्यति । न तु शाखान्तरगताक्षरविद्याया मुण्डकप्रतिपाद्याक्षरविद्यातो भेदो भवति । नाप्यक्षरविद्यामात्रस्याथर्वणिकैकाधिकारिकत्वं सिध्यति । तस्मादाथर्वणिकैरेतद्ग्रन्थोपायाक्षरविद्या वेदितव्येति तेषामेव शिरोव्रतपूर्वकाध्ययनप्राप्तैतद्ग्रन्थबोधितैषा विद्या फलं प्रयच्छति । शाखान्तराध्यायिनां त्वेषैव विद्या शाखान्तराध्ययनप्राप्तैतद्ग्रन्थाध्यायिभ्यो लब्धा वा फलं प्रयच्छतीति न कश्चिद्दोषः । ननु स्वाध्यायाङ्गस्य शिरोव्रतस्य संयोगपृथक्त्वन्यायेन विद्याङ्गत्वमप्यस्तु को विरोध इत्याशङ्कानिराकरणार्थमाह–ब्रह्मविद्यामित्यत्रेति । मुण्डकोपनिषदुपक्रमे 'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदश्शिक्षा कल्पो व्याकरणं निरुक्तं छंदो ज्योतिषमितिहासः पुराणं न्यायो मीमांसा धर्मशास्त्राणीत्यथ परा यया तदक्षरमधिगम्यते' इत्यत्र प्रकरणे विद्याशब्दो विद्यास्थानपरोऽवगतः । तदनुसारेणोपसंहारेऽपि तस्य तादर्थ्ये स्थिते निषादस्थपतिन्यायेन समानाधिकरण-

( १ ) 'प्रथमप्रक्रममिति' इति क. ग. पाठः ।

तस्माद्यथा सवहोमस्तेषामेव, तथा शिरोव्रतमपि । अतस्तन्न विद्याभेदे लिङ्गम् ॥

समासस्याभ्यर्हितत्वाद्ब्रह्मशब्दः प्रकृतमुण्डकोपनिषद्रूपवेदपरो व्याख्येयः । षष्ठीसमासेन मुख्यार्थो वास्तु । न चाग्रिमवाक्येन पौनरुक्त्यम् । अग्रिमवाक्यमचीर्णव्रतस्याध्ययननिषेधपरं पूर्ववाक्यमचीर्णव्रतं प्रत्युपदेशनिषेधपरमित्यनयोश्शूद्रविषयाध्ययनाध्यापननिषेधवाक्ययोरिव विषयभेदसत्त्वादिति भावः । 'सववच्च तन्नियम' इति दृष्टान्तभागं व्याचष्टे— तस्माद्यथेति । यथा सप्तसूर्याख्यहोमप्रभृतिशतोदनाख्यहोमपर्यन्तस्सवहोमगणस्तेषामेवाथर्वणिकानाम् । तदीयैकाग्निसम्बंधात् । एवं शिरोव्रतमपि स्वाध्यायस्यैव । तदीयाध्ययनसम्बन्धादित्यर्थः । एवमिह शिरोव्रतं नामाथर्वणिकानां वेदव्रतत्वेन प्रसिद्धं शिरस्यंगारपात्रधारणरूपं व्रतम् । तस्य च स्वाध्यायांगत्वमेव प्रतिपाद्यते न तु विद्यांगत्वमित्युपपादितम् । पुराणेषु तु सौरसंहितादिष्विह शिरोव्रतमथर्वशिरसि प्रसिद्धं पाशुपतव्रतं, तस्य च विद्यापेक्षितत्वमेव प्रतिपाद्यते । तदपि न प्रकृताक्षरब्रह्मविद्यामात्रापेक्षितत्वं किं तु वैश्वानरविद्यासाधारण्येन सकलब्रह्मविद्यापेक्षितत्वमित्यंगीकृत्य तथैवोपबृंहितम् । सौरसंहितायाम्–'ब्रह्मविद्योपदेशस्य योग्यं वक्ष्यामि सुव्रते' इत्युपक्रम्य 'विधिवच्छ्रद्धया सार्द्धं न चीर्णं यैश्शिरोव्रतम् । ब्रह्मविद्यामिमां तेषां न वदेत कदाचन ॥ इदं शिरोव्रतं चीर्णं विधिवच्छ्रद्धया यदि । तेषामेव परां विद्यां वदेदज्ञानबाधिकाम् ॥ शिरोव्रतमिदं नाम शिरस्याथर्वणश्रुतेः । यदुक्तं तद्धि नैवान्यत्तत्पाशुपतसंज्ञितम् ॥ शाखाभेदेषु नामानि व्रतस्यास्य विभेदतः । पठ्यन्ते मुनिशार्दूल शाखास्वेकं व्रतं हि तत् ॥ अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना । सर्वाङ्गोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयम् ॥' इति । ब्रह्मोत्तरखण्डेऽपि 'अयमत्याश्रमो धर्मो यैस्समाचरितो मुदा । प्राप्तं तैः परमं ज्ञानं संसारच्छेदकारणम् ॥ उद्धूलनं त्रिपुण्ड्रञ्च मायापाशनिवृत्तये । आमनंति मुनिश्रेष्ठाः अथर्वशिरसि स्थितम् ॥ अतोऽपि पापविच्छेदलाभाय ज्ञानसिद्धये । उद्धूलनं त्रिपुण्ड्रं च मुमुक्षुस्सम्यगाचरे' दित्यादि । न्याय्यं चैतत् । मुण्डके हि "ब्रह्मा देवानां प्रथमस्संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहे'ति परमोपक्रमोपक्षिप्ता ब्रह्मविद्या ब्रह्मोपासनारूपैव न तु तत्प्रतिपादकोपनिषद्रूपा । तदनंतरमथर्वप्रभृत्यंगिरःपर्यन्तां गुरुपरंपरामुक्त्वा 'शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः प्रप्रच्छ, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति शौनकस्य ब्रह्मोपासनाविषयं प्रश्नमुपन्यस्य 'तस्मै स होवाचे' त्यादिना तदुत्तरत्वेनैव मुण्डकोपनिषत्परिसमाप्तेः । तत्परिसमाप्तौ च 'शिरोव्रतं विधिवद्यैस्तु चीर्णं 'मित्येतदनंतरं 'तदेतत्सत्यमृषिरंगिराः पुरोवाचे'ति ब्रह्मोपासनाविषयशौनकांगिरस्संवादरूपाख्यायिकात्मत्वेनैव समापनात् । तदनन्तरं 'नैतदचीर्णव्रतोऽधीते नमः परमऋषिभ्यो नमः परमऋषिभ्य' इति श्रुतिवाक्यमध्य एवाचीर्णव्रतस्यैतदुपनिषदध्ययननिषेधश्रवणात् । यद्यपि 'कस्मिन्नु भगवो विज्ञाते' इत्यत्र ब्रह्मविषयज्ञानमात्रसाधारणो विज्ञानशब्दः, तथापि 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'त्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते वा इदं सर्वं विदितमात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित'मिति श्रुत्यन्तरगतसर्वविज्ञानप्रतिज्ञावाक्येषु विज्ञा-

(१) 'विधिवद्यैर्द्विजातिभिः' इति ख. पाठः । (२) 'तेषामेव परं ज्ञानं' इति ख. पाठः ।

नशब्दस्य स्थानप्रमाणेनोपासनापरत्वनिर्णयादत्रापि तस्य तथात्वमवसीयते । एवं चोपक्रमे ब्रह्मविद्याशब्दस्योपासनापरत्वात्समाप्तावपि 'स यो ह वैतत्परं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तो भवती'ति मुक्तिफलामुपासनारूपामेव ब्रह्मविद्यां प्रस्तुत्य[1] 'तदेतदृचाभ्युक्तं, क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठा स्वयं जुह्वत एकऋषिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्ण' मिति प्रकृतोपासनारूपब्रह्मविद्याविषयत्वेनैवास्य[2] श्लोकस्यावतरणाच्च । न चात्र ब्रह्मविद्याशब्दस्याकस्मादुपासनारूपार्थपरित्यागो युक्तः । एकर्षिर्मुख्यर्षिश्शिवः । 'विश्वाधिको रुद्रो महर्षि'रिति श्रवणात् । ईशावास्यबृहदारण्यकयोः 'पूषन्नेकर्षे यमसूर्यप्राजापत्यव्यूह परस्मिन्समूहते हि । यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मी'ति सूर्यान्तर्वर्त्तिनि शिवे साक्षादेकर्षिशब्दस्यैव श्रवणाच्च । तं श्रद्धयन्तः श्रद्दधानाः स एवास्मान्रक्षिष्यतीति दृढनिश्चयवन्त इत्यर्थः । 'द्वे विद्ये वेदितव्ये' इत्यादौ विद्याशब्दो शानाधिकरण्याद्वेदपरोऽस्तु । वेदादिशब्दा वा विद्यासामानाधिकरण्यात्तत्तज्जन्यविद्याविषयास्सन्तु । इह तु ब्रह्मविद्याशब्दस्योपासनापरत्वमुक्तन्यायैस्सुदृढम् । एवं च शिरोव्रतशब्दस्यापि नाथर्वणिकमात्राधिकारिकव्रतविशेषपरत्वं युक्तम् । कथं हि बह्वृचत्वेन प्रसिद्धाय शौनकायांगिराः स्वयमिमां विद्यामुपदिश्यानाथर्वणिकायैतदुपदेशं निषेधेत् । 'नैतदचीर्णव्रतोऽधीत' इत्यत्र स्वाध्यायांगत्वेन वर्ण्यमानं व्रतमिदं वा व्रतं भवत्वाथर्वणिकप्रसिद्धं व्रतान्तरं वा भवत्वित्यन्यदेतत् । समाचारग्रंथस्याप्याथर्वणिकप्रसिद्धं[3] व्रतान्तरं वेदव्रतत्वेन कीर्तयतो नात्र कश्चिद्विरोधोऽनुरोधो वा । तस्मात्सर्वसाधारणं पाशुपतव्रतमेवेह शिरोव्रतम् । तस्य 'चैता'मिति प्रकृताक्षरविद्यापरामर्शेऽपि हेतुसाधारण्यात्सकलब्रह्मविद्यासाधारण्यं सिद्ध्यति । 'एता'मिति प्रकृतपरामर्शेनैव ब्रह्मविषयत्वे विद्यायास्सिद्धेऽपि ब्रह्मविशेषणं हि हेतुसूचनार्थं हेतुगर्भविशेषणम् । यस्मादेषा ब्रह्मविषया विद्या तस्मादचीर्णशिरोव्रताय न प्रदेयेति हेतुसाधारण्ये च हेतुमति सर्वत्र विधेयं सिद्ध्यति । यथा 'न ह्यत्रानूयाजा इज्यन्त' इति हेतुसाधारण्यादातिथ्याव्यतिरिक्तास्वप्यनूयाजरहितास्विष्टिष्वौपभृताष्टगृहीताभावः, एवं ब्रह्मविद्याप्रदानस्य शिरोव्रतापेक्षत्वादेव श्वेताश्वतरोपनिषदि 'तपःप्रभावाद्देवप्रसादाच्च ब्रह्मविच्छ्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्ट' मिति पाशुपतव्रतवद्भ्योऽत्याश्रिभ्य एव ब्रह्मविद्याप्रदानमुक्तम् । तेभ्यो ब्रह्मविद्यामुपदिष्टवतः श्वेताश्वतरस्यापि महर्षेः पाशुपतव्रतानुष्ठातृत्वमुक्तं कूर्मपुराणे–'अथास्मिन्नंतरेऽपश्यत्समायान्तं महामुनिम् । श्वेताश्वतरनामानं महापाशुपतोत्तम'मिति । एवं दहरविद्यानुष्ठानेऽपि पाशुपतव्रतस्याधिकारिविशेषणत्वमुक्तं कैवल्योपनिषदि 'अत्याश्रमस्थस्सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्ये'ति । कैवल्योपनिषदि ब्रह्मविद्याधिगमार्थं परमेष्ठिनमुपसन्नस्याश्वलायनस्य पाशुपतव्रतवत्त्वं तु तदीयधर्मशास्त्रपर्यालोचनयैव स्पष्टम् । एवं न्यायोपबृंहणाभ्यां सुप्रतिष्ठितं 'शिरोव्रतं विधिवद्यैस्तु चीर्ण' मित्यस्यार्थमपहाय सूत्रकारभाष्यकाराभ्यामर्थांतरं परिगृह्य किमर्थं परिहृतमिति चेत्

( १ ) 'मुपासनां प्रकृतां प्रस्तुत्य' इति क. ग. पाठः । ( २ ) 'प्रस्तुतोपासनाविषयत्वेनैव' इति क. ग. पाठः
( ३ ) 'प्रसिद्धस्याप्या' इति ख. पाठः ।

## सू ॥ दर्शयति च ॥ ४ ॥

**श्रुतिरेव विद्यैक्यं दर्शयति महोपनिषत्कैवल्योपनिषदोर्दहरविद्यायाम्—**

**'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षम्' 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।'**

**इत्यादिना निर्दिष्टमीश्वरस्य रूपमपेक्ष्य रूपवत्त्वात् पाप्मजरामरणादिप्रसक्तौ**

कृत्वाचिंतयेति ब्रूमः । यदि शिरोव्रतमित्यस्याथर्वणिकवेदप्रसिद्धवेदव्रतातिरेकेणार्थांतरं न स्यात्तदा यथाकथंचिच्छिरोव्रतस्य स्वाध्यायधर्मत्वप्रतिपादन एव 'शिरोव्रतं विधिवद्यैस्तु चीर्ण'मित्यस्य तात्पर्यं वक्तव्यम् । अन्यथा चोदनाद्यविशेषप्राप्ताभेदप्रत्यभिज्ञानविरोधात्तद्भेदकल्पने गौरवाच्चेति । एवमर्थांतरपरस्यापि वाक्यस्य न्यायव्युत्पादनार्थं कृत्वाचिन्तयार्थान्तराश्रयणेन सिद्धांतवर्णनमन्यत्रापि दृश्यते । तदत्र शास्त्रे यथा 'प्राणादयो वाक्यशेषा'दिति । न हि 'यस्मिन्पञ्च पंचजना' इति मन्त्रे पञ्चजनशब्दः क्लिष्टगत्या वाक्यशेषगतप्राणादिपरः । तस्य मंत्रान्तरानुसारेण चेतनविशेषणपरत्वात् । अथर्ववेदे हि तृतीयकाण्डे पञ्चमानुवाके समाम्नायते मन्त्रः—'यं त्वा होतारं मनसाभिसंविदुस्त्रयोदश भौवनाः पञ्च मानवाः । वर्चोधसे यशसे सूनृतावते तेभ्यो अग्निभ्यो हुतमस्त्वेत' दिति । अस्यार्थो वेदभाष्ये दर्शितः—हे अग्ने त्वा त्वां होतारं देवानामाह्वातारं मनसाभिसंविदुस्सम्यग्जानन्ति । ये जानंति ते प्रदर्श्यंते । त्रयोदश भौवनाः 'विश्वकर्मा भौवनः स्वात्मनि सर्वाणि भूतानि जुहवांचकारे'त्यादिश्रुत्यन्तरप्रसिद्धाः विश्वकर्मप्रभृतयो भुवनस्य महर्षेः पुत्राः त्रयोदशसंख्याकाः। पञ्च मानवाः निषादपञ्चमाश्चत्वारो वर्णाः। गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । तस्मै वर्चोधसे तेजो धारयते यशसे यशस्विने सूनृतावते प्रियहितवचनयुक्ताय तुभ्यं तेभ्यः प्रागुक्तेभ्यः त्वद्विभूतिरूपेभ्यः अग्निभ्यश्च हुतमेतद्धविरस्त्विति । यथा 'यमाय हर्म्यमवपन् पञ्च मानवा वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यम'इत्यादिरिह वेदान्तरावगतमन्त्रभागोऽप्युदाहरणम् । तत्रापि 'निषादपञ्चमाश्चत्वारो वर्णाः पञ्च मानवा' इति भट्टभास्करादिभिर्व्याख्यातम् । वर्णानां पञ्चमत्वेन निषादस्य ग्रहणमग्निसम्बंधसाम्यात् । अत एव मन्त्रवर्णः 'जना यदग्निमयजन्त पञ्चे' ति । एवं मन्त्रान्तरानुरोधेन पञ्चजनशब्दस्यार्थान्तरपरत्वादेव शारीरकभाष्ये तस्य यथासूत्रं प्राणादिपरत्वं वर्णितवद्भिरपि शङ्कराचार्यैर्बृहदारण्यकभाष्ये 'पञ्च पञ्चजनाः गंधर्वाः पितरो देवा असुरा रक्षांसि, निषादपंचमा वा वर्णा' इति व्याख्यातम् । एवमेवार्थांतरपरस्यापि वाक्यस्य न्यायव्युत्पादनार्थमर्थान्तराश्रयणेन सिद्धान्तवर्णनं पूर्वतंत्रेऽपि दृश्यते । हानोपायनाधिकरणे तदुदाहरिष्यते । तस्मान्न्यायोपबृंहणानुगृहीतवाक्यार्थनिर्णयानुरोधात्सूत्रकारभाष्यकाराभिप्रायाविरोधाच्चाथर्वशिरः प्रसिद्धात्याश्रमसंज्ञकपाशुपतव्रतानुष्ठानवद्भिरेव ब्रह्मविद्यानुष्ठेया ग्राह्या च तेभ्य एव च प्रदेयेति निर्णयः । अंगावबद्धाधिकरणे चाधिकमत्र व्युत्पादयिष्यते। शरीरित्वापहतपाप्मत्वादिगुणभेदो विद्याभेदकत्वेन यः पूर्वपक्षिणश्शंकाविषयः स न तद्भेदकः प्रत्युत तदभेदस्यैवोपपादक इति प्रतिपादनार्थं सूत्रम्—दर्शयति च ॥ ४ ॥ शरीरित्वेन पाप्मादिप्रसक्तौ हि तन्निषेधोऽर्थवान् । अतः कैवल्योपनिषदादिप्रतिपादितशरीरित्वप्राप्तिमपेक्षमाणश्छांदोग्ये पाप्मादिनिषेधो विद्यैक्यस्यैव गमकः इति भावः । दहरविद्या-

छान्दोग्ये 'अथ यदिदमस्मिन्' इत्यारभ्य तस्य गुणाष्टकविशिष्टत्वं केवलमुच्यते। तत्र तत्र धर्मविशेषापादिका पुनःश्रुतिः विद्याभेदिकेति शङ्काया अपि नावकाशः। ततश्चोदनाद्यविशेषात् सकलवेदान्तप्रत्ययमेकमेवोपासनम्, तद्भेदकशब्दान्तराद्यदर्शनात् इति सिद्धम् ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

याश्शाखाभेदेन पुनःश्रुतिर्विरुद्धधर्माणामपि प्रापयित्रीति ततो विद्याभेदो न शङ्कनीयः। शक्तिमत्तु तद्विरोधासिद्धेरित्याशयेनाह–तत्र धर्मविशेषेति । शब्दान्तराद्यदर्शनादिति । शब्दांतराभ्याससंख्यागुणप्रक्रियानामधेयानि कर्मभेदप्रमाणानि पूर्वतंत्रे प्रसिद्धानि । इहापि 'नानाशब्दादिभेदा'दित्यादिषु विभावयिष्यन्ते । तेषामिहादर्शनमभेदसाधकमित्यर्थः । इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

## नयमणिमालायाम्

### अथ सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

सू ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥ दर्शयति च ॥ ४ ॥

पुनःश्रवणात्प्रकरणगुणानामभेदाच्च । धर्माणामपि भेदात्प्रतिशाखं भिद्यते विद्या ॥ २०१ ॥

विधिफलरूपाख्यैक्यात्कैवल्यगुणोपजीवनाच्छांदोग्ये । नास्ति भिदा सुपरिहरा बोध्यविभेदादिभिः पुनःश्रवणाद्याः ॥ २०२ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ तृतीयस्याध्यायस्य तृतीयः पादः ॥

### अथ सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

सू ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥ स्वाध्यायस्य तथात्वेन हि समाचारोऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥ दर्शयति च ॥ ४ ॥

**भगवत्पादमते,** पूर्वपादे वाक्यार्थज्ञानकरणभूततत्त्वंपदार्थनिरूपणमकारि । सगुणविद्यायाश्चित्तैकाग्र्यद्वारा निर्गुणवाक्यार्थज्ञानोपयोगित्वात्तद्वाक्यार्थविचारः प्रस्तूयतेऽस्मिन्पादे—तत्र तावत्पंचाग्निप्राणदहरशाण्डिल्यवैश्वानरोपासनस्वरूपमाह–सू। **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥** अत्र उक्तोपासनानि किं प्रतिशाखं भिद्यन्ते उत नेति **संदेहः** । नामरूपादिभेदाद्भिद्यन्त इति **पूर्वपक्षः । सिद्धान्तस्तु,** सर्वैर्वेदान्तैः प्रत्ययं प्रतीयमानान्युपासनानि न भिद्यन्ते । कुतः। **चोदनाद्यविशेषात्**—चोदनासंयोगरूपसमाख्यानामविशेषात् । यथा–सर्वशाखासु 'अग्निहोत्रं जुहुया'दिति चोदनाया अविशेषात् नित्याग्निहोत्रमेकमेव, यः प्राणोपासकः सः 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' इति फलसंयोगस्य सर्वत्राविशिष्टत्वाच्च ज्येष्ठत्वादिगुणकप्राणस्योपास्यस्य सर्वत्राविशिष्टत्वाच्च न विद्याभेदः, तथा प्राणविद्येति समाख्यायास्सर्वत्राविशिष्टत्वाच्च न विद्याभेद इति सिद्धम् ॥

**सू ॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥** ननु वाजसनेयिनः पञ्चाग्निविद्यायां 'तस्याग्निरेवाग्निर्भवति' इति षष्ठं प्रसिद्धाग्निमुपास्यत्वेनामनन्ति, छन्दोगास्तु 'पञ्चाग्नीन्वेदे'ति। तथा च रूपभेदादामिक्षावाजिनयागयोरिव शाखाद्वये पञ्चाग्निविद्याया भेदो नैक्यमिति चेत् **न** । यतः । एकस्यामपि विद्यायामयं रूपभेद उपपद्यते । यथा—वाजसनेयिभिर्द्युलोकादयो ये पञ्चाग्नय उक्तास्त एव प्रत्यभिज्ञायन्ते छान्दोग्ये । तथा च न विद्याभेदो युक्तः । अग्निषु पञ्चत्वसंख्याश्रवणस्य सांपादिकाग्निपरत्वेन एकस्मिन्नेवातिरात्रे षोडशिग्रहणतदभावयोरिव षष्ठाग्नितदभावयोरुपपन्नत्वेन च विरोधाभावान्न ततोऽपि विद्याभेदो युक्त इति सिद्धम् ॥

ननु ब्रह्मविद्याप्रतिपादकमुण्डकाध्ययने शिरोव्रताख्यधर्मो विहितो नान्यत्र । अतो धर्मभेदाद्विद्याभेद इत्याशंकायामाह—**सू ॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥** स्वाध्यायस्यैव शिरोव्रताख्यधर्मोऽङ्गं न विद्यायाः । कुतः । **तथात्वेन हि**—यतः स्वाध्यायांगत्वेन समाचाराख्यवेदव्रतोपदेशपरग्रन्थे शिरोव्रतमपि वेदव्रतत्वेनाथर्वणिकास्समामनन्ति । **अधिकाराच्च**—'नैतदचीर्णव्रतोऽधीत' इत्यत्रत्यादधिकृतविषयादेतच्छब्दात् चकारा-

---

( १ ) 'तेषामिहादर्शनादित्यर्थः' ॥ इति क. पाठः ।

'दर्शिते' इत्यध्ययनशब्दाच्च शिरोव्रतमध्ययनस्यैवाङ्गम् । तत्र दृष्टान्तः—**सववच्च**=यथा सवाः सप्त होमास्सौर्यादयश्शतौदनान्ताः शाखान्तरोक्तत्रेताग्न्यनभिसंबन्धादाथर्वणिकोक्तैकाग्निसंबन्धाच्चैकाग्नीनामाथर्वणिकानामेव नियम्यन्ते तद्वत् । **तन्नियमः**=मुण्डकाध्ययन एव तस्य शिरोव्रतस्य नियमः । तस्मात्सर्वत्र विद्यैक्यमनवद्यम् ॥

किं च ॥ **सू ॥ दर्शयति च ॥ ४ ॥** 'सर्वे वेदा यत्पदमामनन्ति' इति वाक्यं वेद्यस्यैकत्वेन सर्वत्र तद्विद्याया एकत्वं दर्शयति 'यस्त्वेतमेवं प्रादेशमात्र' मित्यादि वाक्यं च वैश्वानरविद्याया एकत्वं दर्शयति । तथा च तदुपासनानामप्यैक्यमवगम्यते । तत्समभिव्याहारादितरेषामप्युपासनानामभेद इति सिद्धम् ॥

**श्रीकण्ठमते, रामानुजमते च संदेहपूर्वपक्षादिकं** शांकरमतादविशिष्टम् । सूत्रार्थवर्णनप्रकारः परं शांकरमतात्किंचिदिव भिद्यते । उपपादनप्रकारेऽप्यनयोर्मतयोः परस्परमवैशिष्ट्यमेवेत्यनुसंधेयम् । सर्वेषु वेदान्तेषु श्रूयमाणं दहराद्युपासनं किमेकमेव उत भिन्नमिति **संशयः** । अविशेषपुनःश्रवणस्य प्रकरणान्तरस्य च भेदहेतुत्वात् उपासनान्तरमिति **पूर्वपक्षः** । प्रतिपत्तृभेदेन पुनःश्रवणोपपत्तेः तत एव प्रकरणान्तरत्वाभावाच्च चोदनाफलसंयोगरूपाख्यानामविशेषादुपासनैक्यमेवेति **सिद्धान्तः** । सूत्रार्थोऽप्यविशिष्टः ।

**सू ॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥** अविशेषपुनःश्रुत्या विद्याभेदावगमान्न विद्यैक्यमिति चेत् एकस्यामपि विद्यायां शाखान्तरे प्रतिपत्तृभेदात्पुनःश्रवणमर्थवदिति न विद्याभेदः ॥

**'स्वाध्यायस्ये'**त्यादिसूत्रस्यार्थः पूर्वस्मादविशिष्टः ॥

**सू ॥ दर्शयति च ॥ ४ ॥ श्रीकण्ठमते,** श्रुतिरेव विद्यैक्यं दर्शयति । महोपनिषत्कैवल्योपनिषदोर्दहरविद्यायां 'ऋतं सत्यम्' 'उमासहायम्' इत्यादिना निर्दिष्टमीश्वरस्य रूपमपेक्ष्य रूपवत्त्वात्पाप्मजरामरणादिप्रसक्तौ छान्दोग्ये 'अथ यदिदमस्मिन्' इत्यारभ्य तस्य गुणाष्टकविशिष्टत्वं केवलमुच्यते । ततश्चोदनाद्यविशेषादेकमेवोपासनमिति सिद्धम् ॥ इत्यर्थः ॥

**रामानुजमते तु दर्शयति च** श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम् । छान्दोग्ये दहरविद्यायां 'तस्मिन्यदन्त'रिति विहितमपहतपाप्मत्वादिगुणाष्टकं तैत्तिरीयके केवलं 'तस्मिन्यदन्तस्तदुपासितव्य'मित्येवोक्तम् । तदुभयत्र विद्यैकत्व एव संभवतीत्यर्थः ॥ **॥ इति श्रीकण्ठरामानुजमतयोस्सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥**

**आनन्दतीर्थमते,** भक्तिनिरूपणानन्तरं तत्साधनोपासना निरूप्यते । सा चोपासना समस्तशास्त्राभ्यासरूपा श्रवणमननात्मिकैका, श्रवणमननोत्सारिताज्ञानसंशयविपर्ययस्य पुरुषस्य ध्यानात्मिकान्या चेति द्विविधा । तत्र श्रवणमननात्मिकोपासना प्रथमाधिकरणे निरूप्यते—**सू ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥** सर्ववेदोदितं ब्रह्म किमधिकारिणा स्वशाखोक्तरूपेणैव श्रवणमननाभ्यां ज्ञातव्यम् उत समस्तशाखोक्तरूपेण वेति **संशयः** । क्वचिच्छाखायां सत्यज्ञानादिरूपं वेद्यमन्यत्रापहतपाप्मत्वादिरूपमित्येवं वेद्यभेदात्सर्वशाखाध्ययनश्रवणमननेषु मन्दानां शक्त्यभावात्स्वस्वशाखोक्तरूपेणैव ज्ञातव्यम् । अत एव शाखाभेदव्यवस्थापि युज्यत इति **पूर्वपक्षः । सिद्धान्तस्तु,** यस्सर्वेषां वेदानामन्तो निर्णयः श्रवणमननसाध्यः तेन ज्ञातव्यं ब्रह्म न तु स्वशाखानिर्णयमात्रेण ज्ञातव्यम् । कुतः । **चोदनाद्यविशेषात्**='आत्मे'त्यादिविधीनामादिपदोदिताना 'मन्त्र ह्येत' इत्यादिवाक्योक्तयुक्तीनां **चाविशेषात्**सर्वाधिकारिसाधारणत्वादिति ॥

**सू ॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥** 'चे'ति 'ने'ति 'भेदा'दिति 'अपी'ति चावर्तते । तर्हीति शाखायामिति च लभ्यते । तथा च वेद्यादिसर्वशाखोक्तार्थानां **भेदात्**=पृथक्त्वात् । अथ एकैकेन सर्वशाखोक्तं ज्ञेयं **न** भवति किं तु स्वशाखोक्तमेवेत्युच्यते तर्ह्यपि स्वस्वशाखोक्तमपि **न** ज्ञेयं स्यात् । कुतः । **एकस्यां शाखायामपि भेदात्**=अर्थभेददर्शनात् । अथ यदि तत्र धर्मभेदादेकस्मिन्धर्मिणि भिन्नधर्मविधानात्प्रसंगभेदाच्चेति परिहार उच्यते तस्य सर्वशाखोक्तज्ञानेऽपि सम इत्यर्थः ॥

**सू ॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॥ ३ ॥** पृथक्सूत्रमिदम् । **स्वाध्यायस्य**='स्वाध्यायोऽध्येतव्य' इति विधेः । **तथात्वेन**=सर्वसाधारण्येनाध्ययनविधायकत्वेन । **समाचारे**=सर्ववैदिककर्मकरणे । **अधिकाराच्च**=सर्वेषामधिकारसद्भावाच्च 'हि' इतिसूचितायाः 'वेदः कृत्स्नोऽधिगन्तव्य'इति स्मृतेश्च एकैकेनापि सर्वशाखाध्ययनेन ब्रह्म ज्ञातव्यमित्यर्थः ॥

**सू ॥ सलिलवच्च तन्नियमः ॥ ४ ॥** सूत्रपाठभेदः स्पष्टः । चोऽवधारणे । 'तन्नियम' इत्यत्र पञ्चमीतत्पुरुषकर्मधारयौ । **सलिलवत्**=सलिलमिव । **तन्नियमः**=यथा सर्वेषां सलिलानां प्रतिबन्धकाभावमपेक्ष्यैव समुद्रैकाश्रयत्वनियमः तथात्रापि **तस्याः**=पुरुषशक्तिमपेक्ष्यैव **नियमः**=सर्ववेदोक्तप्रकारेण ध्यानेन ब्रह्म ज्ञातव्यमिति नियम इत्यर्थः ॥

**सू ॥ दर्शयति च ॥ ५ ॥** श्रुतिः स्मृतिश्च सर्वशाखोक्तमार्गेण ब्रह्म ज्ञातव्यमित्यर्थं ज्ञापयतीत्यर्थः ॥

**इति सूत्रार्थचन्द्रिकायां सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥**

## अथोपसंहाराधिकरणम् ॥ २ ॥

सर्ववेदान्तचोदितानां विद्यानामैक्यप्रतिपादनफलमाह—

सू ॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

इह विद्यैक्ये सत्यपि शाखान्तरसिद्धानां गुणानां शाखान्तर उपसंहारो न कर्तव्यः कर्तव्यो वा ।

इति संशये न कर्तव्य इति पूर्वः पक्षः । तथा हि—छान्दोग्ये दहरविद्याया-मपहतपाप्मत्वादयो गुणा आम्नाताः । न तैत्तिरीये । न तत्र तेषामुपसंहारः कर्तव्यः, तत्रानुक्तत्वात् । विद्योपकारस्तत्रोक्तैरेव कृष्णपिङ्गलत्वादिगुणैर्भवि-ष्यति, किमुपसंहारेणाचोदितेन ॥

## अथोपसंहाराधिकरणम् ॥ २ ॥

सू० ॥ उपसंहारोऽर्थाभेदाद्विशेषवत्समाने च ॥ ५ ॥ पूर्वाधिकरणप्रयोजनसम-र्थनार्थत्वेन संगतिं सूचयन्नेकैकस्यां शाखायां सर्वगुणानामनाम्नानाद्विद्यैक्याच्च संशयं दर्शयति—इहेति । ननु विद्यैक्ये तद्गुणत्वाविशेषात्तत्तच्छाखागतगुणानामिवान्यशाखा-गतगुणानामपि ग्रहणं सिध्येदेव । अतः कथं पूर्वपक्ष इत्याशंक्याह-तथा हीति । यद्य-न्यशाखागतगुणा अपि ग्राह्या विवक्षिताः तदा तेषामप्याम्नानं स्यादित्यनाम्नानादेव तेषा-मविवक्षावगमादग्रहणमित्यर्थः । न च शाखान्तरगुणा अभेदात्स्वत एव प्राप्नुवन्तीत्य-न्यथासिद्ध्या तदनाम्नानं न त्वविवक्षयेति वाच्यम् । शाखान्तरगतानामपि केषाञ्चिदा-म्नानेन तदतिरिक्तानामनभिमतत्वोन्नयनादिति भावः । ननु तद्गुणानामेव सतामग्रहणे कथमखण्डोपकारसिद्धिः । तस्य तत्प्रधानान्वयसकलांगकलापसाध्यत्वादित्याशंक्याह-विद्योपकार इति । अनेकशाखाविप्रकीर्णसकलगुणोपसंहारस्य कर्तुमशक्यत्वात्सर्वशक्त्य-धिकरणन्यायेन शक्यगुणमात्रोपसंहारः कार्यः । तथा च केषांचिद्गुणानामशक्त्या हाना-वश्यंभावे यो यच्छाखागतविधिनोपासनामवगत्य तामनुतिष्ठासति तस्य तच्छाखागतगुणा-नामवगतानां हाने हेत्वभावात्तदनाम्नातगुणास्तेन हातव्या इति व्यवस्थाभ्युपगन्तव्या । ननु सर्वशक्त्यधिकरणे नित्यानामेव शक्यांगोपसंहारेणानुष्ठानमुक्तम् । जीवनादिनिमित्त-कप्रधानावश्यकर्तव्यतानुरोधात्काम्येषु तु सकलांगोपसंहारनियमः 'काम्येषु चैवमर्थत्वा' दिति तदनंतराधिकरणे स्थापितः । काम्यानि चोपासनानि, अतस्तेष्वशक्यांगहानं न युक्तमिति चेन्नैवम् । जीवनादिरूपानुपादेयनिमित्तरहिततया कदाप्यवश्यकर्तव्यत्वेना-प्राप्नुवंति काम्यकर्माणि यदाकदाचिदुपादेयसकलांगसंपादनेन कर्तुं शक्नोति पुरुष इति तत्र युक्तस्सकलांगोपसंहारनियमः । अनवगतनानाशाखाविप्रकीर्णसकलगुणोपसंहारं तु कश्चिदपि कदाचिदपि कर्तुं न शक्नोतीति उपासनानां काम्यत्वेऽपि सर्वशक्त्यधिकरण-न्यायविषयत्वात् कर्मस्वपि नानाशाखागतसकलांगोपसंहाराशक्तितौल्ये तत्रापि समा-नोऽयमाक्षेपः । देवर्षयस्सर्वशाखाभिज्ञास्सकलगुणांगोपसंहारशक्तास्सन्तीति चेत् । न । तेषामपि प्राचीनेषु जन्मसु देवर्षिपदप्रापककर्मानुष्ठानस्यापेक्षितत्वादिति भावः । अनेना-भिप्रायेण तत्रोक्तेरित्युक्तम् । अपठितगुणोपसंहारे पठितगुणानां पाठक्रमप्राप्तस्यानुसंधान-

(१) 'शाखान्तराम्नाता वस्तुतो विद्यैक्यात्स्वत एव' इति ख. पाठः ।

इति प्राप्तेऽभिधीयते—सर्वत्र विद्यैक्ये छान्दोग्यादिषूक्तानां दहराद्युपासनधर्माणामपहतपाप्मत्वादीनामन्यत्र तैत्तिरीयकदहरादिषूपसंहारः कार्यः, विद्योपकाररूपस्यार्थस्यैकत्वात् । यथैकविधिशेषतया विहितानामङ्गानामग्निहोत्रा-

---

क्रमस्य बाधः स्यात् सोऽपि न युक्त इत्युक्तेरित्यनेन सूचितम् । 'उक्तेरेवे' त्येवकारेण गृहमेधीयन्यायस्सूचितः । ननु गृहमेधीयेष्टौ प्रकृतितस्संभवत्प्राप्तिकयोराज्यभागयोः पुनःश्रवणमपूर्वतापरमित्यर्थादप्राप्तप्राकृतांगनिवृत्तिः फलति । न चेह तथा किंचित्प्राकृतमंगं, तस्य पुनःश्रवणं वास्ति, अतो नात्र गृहमेधीयन्यायः प्रवर्तत इति चेन्मैवम् । इहापि शाखांतरतस्संभवत्प्राप्तिकानां केषांचिद्गुणानां पुनःश्रवणस्य सत्त्वेन प्रकृतिविकृतिभावाभावेऽप्यन्यतस्संभवत्प्राप्तिकगुणश्रवणं तत्रत्यगुणांतरनिवृत्तिफलकमिति न्यायावतारसंभवादित्याशयः । विद्योपकाररूपस्येति । एकविद्याकर्मान्वयिगुणांगानामखण्डोपकाररूपप्रयोजनैक्यात्सर्वेषामपि तेषां ग्रहणं तावत्स्वरसतः प्राप्नोति । तस्य न तावदशक्त्यापवादः । अशक्तिर्हि तावच्छाखाध्ययनाशक्तिः । उत अनंतशाखाविहितानन्तगुणानुसंधानांगानुष्ठानाशक्तिः अथवा अनधीतशाखाम्नाताङ्गावगत्यशक्तिः । नाद्यः । 'अध्ययनेनैव स्वाध्यायार्थज्ञानं भावये'दिति नियमस्य स्वस्वशाखामात्रविषयत्वेनानधीतपरशाखाम्नातगुण[1]संग्रहणसंभवात् । न द्वितीयः । सर्वज्ञैर्महर्षिभिः प्रणीतेषु कल्पसूत्रेषु कर्मणामंगेयत्तायाः ब्राह्मवासिष्ठादिविद्याकल्पेषूपासनानां गुणेयत्तायाश्च परिछिन्नत्वेनानन्तशाखाविहितानामपि तेषामानन्त्यासिद्धेः । न तृतीयः । कल्पसूत्रैर्विद्याकल्पैस्तत्तत्कालाभियुक्तशाखान्तराध्ययनवद्दुपद्रष्टृवचनैश्चैतदवगतिसंभवात् । नापि गृहमेधीयन्यायेन शाखान्तराम्नातकतिपयांगपुनःश्रवणादपवादः । गृहमेधीयप्रयोगविधिरंगजन्योपकारमपेक्षमाणः प्रकृतौ क्लृप्तोपकारयोराज्यभागयोः सन्निधानाम्नातयोर्ग्रहणेनोपकाराकांक्षाशांत्या प्रकृतितोऽगांतराणां प्राप्तिं नापेक्षत इति तत्प्रापकचोदकलोपात् न दर्शपूर्णमासप्रकृतिको गृहमेधीयः किन्त्वपूर्व इति सिद्ध्यति । एवमंगान्तरनिरपेक्षोऽपि सन्निध्याम्नातान्यप्राकृतानि वैशेशिषिकांगानि तद्वैयर्थ्यपरिहारार्थं गृह्णातीति गृहमेधीयन्यायः । न चात्र शाखान्तराम्नातपुनःश्रूयमाणगुणांगानां क्वचित्प्राक्क्लृप्तोपकारत्वमस्ति । येन तद्ग्रहणनिराकांक्षा विद्याकर्मप्रयोगविधयो गुणांगान्तराणि नापेक्षेरन् । तथापि यदि तेषां पुनःश्रवणस्य वैयर्थ्यं प्रसज्यते तदा तत्परिहाराय शाखान्तराम्नातगुणांगान्तरपरिसंख्यार्थत्वं कल्प्येतापि । न तु वैयर्थ्यप्रसक्तिरस्ति । तस्य शाखान्तराम्नातविद्याकर्मैक्यप्रत्यभिज्ञानार्थत्वात् । सिद्धे हि तदैक्ये ततस्संभवत्प्राप्तिकानां पुनःश्रवणं व्यर्थमिति शंकनीयम् । तदैक्यसिद्धावेवोपयुक्तस्य न वैयर्थ्यशंकावकाशः[2] । नापि तत्तच्छाखापठितगुणांगक्रमबलादपवादः । एकस्यां शाखायां विहितानि विद्याकर्मगुणांगानि गुणिद्वारा वाक्यप्रमाणेन हि शाखान्तरे गच्छंति । यथा जुह्वादिद्वारा वाक्यप्रमाणेन क्रतौ पर्णतादयः । न च वाक्यस्य स्थानरूपपाठक्रम ईष्टे । तत्प्रमेयश्च पदार्थधर्मरूपः क्रमश्शिष्टाकोपाधिकरणन्यायाद्वाक्यप्रमेयेभ्यः पदार्थरूपेभ्यो गुणांगांतरेभ्यो दुर्बलः । तस्मादखण्डोपकाररूपप्रयोजनैक्याद्विद्यैक्ये गुणोपसंहारः कर्मैक्येऽगोपसंहारश्च युक्त एव । सूत्रे 'विधिशेषव'दिति समुच्चयो-

---

(१) 'गुणांगग्रहण' इति ख. पाठः । (२) 'सिद्धावेव पुनःश्रवणस्यावैयर्थ्यशंका' इति क. पाठः ।

दिषु, तथैव चोदनादिभिः समाने दहराद्युपासने गुणानां प्राप्तिरिति गुणोपसंहारो युक्त एव ॥ इत्युपसंहाराधिकरणम् ॥ २ ॥

## अथान्यथात्वाधिकरणम् ॥ ३ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

वाजिनां छन्दोगानां चोद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं विधीयते। तत्र विद्यैक्यमस्ति न वा।

---

पमा। तेन कर्मणामंगोपसंहारोऽप्यत्र प्रसंगात्प्रसाधनीयः। चकारोऽवधारणार्थः ॥

इत्युपसंहाराधिकरणम् ॥ २ ॥

### अथ अन्यथात्वाधिकरणम् ॥ ३ ॥

सू ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥६॥ चोदनाद्यविशेषाद्विद्यैक्यं विद्यैक्ये गुणोपसंहारश्चेत्युभयं निरूपितम्। तदपवादः क्रियते इति संगतिः। देवासुरसंग्रामोपक्रमाद्यैकरूप्यात् क्वचिदुद्गातरि प्राणदृष्टिरन्यत्रोद्गात्रा गातव्यस्य स्तोत्रसामद्वितीयभक्तिरूपस्योद्गीथस्यावयवे प्रणवे प्राणदृष्टिरिति रूपविशेषभेदाच्च विद्यैक्यभेदसंशये पूर्वपक्षः। एकैव विद्या चोदनाद्यविशेषात्। उभयत्रापि ह्युपासनाविषया चोदना। 'भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेदे' त्येकत्र 'यथाऽश्मानमाखणमृत्वा विध्वंसते एवं हैव स विध्वंसते य एवंविदि पापं कामयत' इत्यन्यत्र चोच्यमानं शत्रुपराभवरूपं फलम्। उपास्यं रूपं प्राणः। उद्गीथविद्येत्याख्या। आखन्यतेऽनेनेत्याखणः। 'खनो घ चे'ति करणाधिकरणयोर्विहितो घप्रत्ययः। तमाखणमित्यश्मविशेषणम्। णत्वं छांदसम्। कालायसवत्खननसाधनत्वेन दृढमित्यर्थः। अर्थाल्लोष्टादिकमिति कर्तृलाभः। 'यथाऽश्मानमृत्वा लोष्टो विध्वंसेते'ति

---

### नयमणिमालायाम्

#### अथोपसंहाराधिकरणम् ॥ २ ॥

सू० ॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

तत्तच्छाखोक्तगुणैर्विद्यानामुपकृतेर्लाभात्। विद्यैक्येऽपि न कार्यश्शाखान्तरगतगुणोपसंहारः ॥ २०३ ॥

तेषामपि तद्विद्यात्संबंधस्याविशेषेण। ... ... ... ... ... पसंहारः ॥ २०४ ॥

इत्युपसंहाराधिकरणम् ॥ २ ॥

### सूत्रार्थचन्द्रिकायाम्

#### अथोपसंहाराधिकरणम् ॥ २ ॥

सू ॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

**भगवत्पादमते,** सर्वत्रोपासनानामेकत्वेऽपि एकशाखास्थविद्यानां शाखान्तरस्थाधिकगुणानामुपसंहारोऽस्ति न वेति **संदेहः**। यत्र यावन्तो गुणाः श्रुतास्तैरेवाकांक्षाशान्तेर्नोपसंहार इति **पूर्वपक्षः**। **सिद्धान्तस्तु,** समाने उपासने गुणोपसंहारो युक्तः। कुतः। **अर्थाभेदात्**=उपास्यगुणैर्निर्वर्त्यस्य उपासनारूपार्थस्य सर्वशाखास्वभिन्नत्वात्। तत्र दृष्टान्तः— **विधिशेषवत्**=यथाग्निहोत्रस्य सर्वत्रैक्यात् तच्छेषाणामुपसंहारस्तद्वदित्यर्थः ॥

**श्रीकण्ठमते** तथा **रामानुजमते च संदेहपूर्वपक्षादिक**मविशिष्टम्। **अर्थाभेदात्**=विद्योपकाररूपस्यार्थस्यैकत्वादित्यर्थः। **'विधिशेषवत्'** इत्यत्र **रामानुजमते** परं वैश्वानरविद्यादिविधिशेषतया विहितस्य गुणस्य यथा तदुपकारायोपसंहारस्तथा वेदन्तान्तरेष्वपि तद्विद्याङ्गत्वाविशेषादुपसंहारो न्याय्य इति दृष्टान्तस्वरूपमन्यथा विवृतमिति विशेषः। अन्यदविशिष्टम्।

**आनन्दतीर्थमते,** अस्याधिकरणस्य उत्तराधिकरणसूत्रैस्सहैकाधिकरण्यसद्भावादुत्तरस्मिन्नधिकरण एव तस्य निरूपणीयत्वान्नात्र तन्निरूपणावकाश इति वेद्यम् ॥ **इति सूत्रार्थचन्द्रिकायामुपसंहाराधिकरणम्** ॥ २ ॥

---

(१) 'कर्माङ्गानामुपसंहारोऽप्यत्र' इति ख.पाठः। (२) 'तस्य क्वचिदपवादः' इति ख. पाठः।

इति संदेहे चोदनाद्यविशेषाद्विद्यैक्यमस्तीति पूर्वः पक्षः ॥

ननु वाजिनां प्राणदृष्ट्योपासनमुद्गानकर्तृविषयमिति 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' । इति शब्दात् प्रतीयते । छन्दोगानां तु तदुद्गानकर्मविषयमिति 'य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे' इति शब्दात् प्रतीयते । तस्मादन्यथात्वं विद्ययोर्नैक्यमिति चेत्—न, उपक्रमाविशेषात् । 'द्वया ह प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इत्येकत्र 'देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः' इत्याद्यन्यत्र । तस्मादुपक्रमाविशेषादुभयत्र विद्यैक्यमिति ॥

सिद्धान्तमाह—

समानप्रकरण श्रवणात् । यद्यप्याखन्यते भिद्यत इति कर्मणि घञ्प्रत्ययेन भिदुरं लोष्टमेवाखणशब्देन वक्तुं शक्यते, तथापि 'स एषो ऽश्माखण' इत्यग्रिमवाक्यदर्शनादिहाप्यश्मविशेषणमेवेदम् । 'ननु अथ हेममासन्यं प्राणमूचु'रित्यादिना एकत्रोद्गानकर्तरि प्राणदृष्टिर्विधीयते । अन्यत्र 'तमुद्गीथ' मित्यादिनोद्गीथावयवे । आसन्यमास्ये भवम् । 'य एवायं मुख्यः प्राण' इति समानप्रकरणे श्रवणात् । 'पद्दन्नोमा' सित्यादिसूत्रेणास्यशब्दस्यासन्नादेशः । यद्यपि बृहदारण्यकेऽप्युद्गीथेनात्ययामे' त्युद्गीथोपक्रमाविशेषात्तदनुरोधेन प्राणउदगायत्ते विदुरनेन वैन उद्गात्रात्येष्यंती'ति प्राणसमानाधिकरणोद्गानकर्तृवाचिशब्दप्रयोग उद्गानकर्मण्युद्गीथ एव सौकर्यातिशयविवक्षया लाक्षणिक इत्युपपाद्येत । तथाप्युत्तराधिकरणन्यायेन छांदोग्यगत उद्गीथशब्दः उद्गीथावयवपरः । बृहदारण्यकगतस्तु न्यायाविषयत्वात्कृत्स्नोद्गीथभक्तिपर इत्यस्ति विशेषः । तस्माद्विद्याभेदो युक्त इति चेन्मैवम् । उपक्रमादिसारूप्यबाहुल्येनाल्पवैलक्षण्यस्य भेदकत्वाभावात् देवासुरसंग्रामप्रवृत्तिर्देवानामुद्गीथेनासुरपराभवाभिप्राया । असुरपराभवार्थं देवानां वाग्घ्राणचक्षुःश्रोत्रमनसामाश्रयणं वागादीनामसुरैरभिभवः ततो मुख्यप्राणसमाश्रयणं तद्वीर्यादश्मलोष्टनिदर्शनेनासुरविध्वंसनमित्येतत्सर्वमुभयत्रापि समानम् । अतोऽल्पवैलक्षण्यमुदितानुदितहोमवद्विकल्पेन समाधेयम् । न चोद्गात्रुद्गीथयोरुत्पत्तिशिष्टतया कश्चिद्विशेषः । अग्नीषोमीययागांगकपालैकादशद्वादशसंख्ययोरुत्पत्तिशिष्टत्वेऽपि तुल्यबलतया विकल्पस्य शाखान्तराधिकरणवार्तिके वर्णितत्वात् । नन्विह प्राणविद्यायां प्राणः प्राधान्येन नोपास्यः किंत्वेकत्राध्यस्तप्राणभाव उद्गातोद्गीथो वा उपास्यः । अन्यत्र तथाभूत उद्गीथावयवः प्रणवः । ततश्च प्रधा(१)नोपास्यात्मकरूपभेदे भाव्यमुपासनभेदेनेति चेन्मैवम् । यथा यागे देवता एवमुपासनायामुपास्यः । उपांशुयाजे स(२)त्यप्यग्निप्रजापत्यग्नीषोमलक्षणदेवताभेदे भेदो नाश्रितः । किंत्वेकस्मिन्नेवोपांशुयाजे देवतानां विकल्प आश्रितः । तथैंद्रवाय्वादिदेवताभेदेऽपि सोमयागे भेदो नाश्रितः । किंत्वेकस्यैव सोमयागस्य देवताभेदेनाभ्यासस्समाश्रितः । एवमिहाप्युपास्यविकल्पस्तद्भेदेनोपासनाभ्यासो वा भविष्यति । तस्माद्विद्यैक्यमेव न्याय्यमिति । अत्र सिद्धा-

(१) 'प्रधानोपसर्जनभावादेव भाव्य' मिति क. पाठः । (२) 'सत्यपि विष्णुप्रजापति' इति क. पाठः ।

## सू ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

**नोभयत्र विद्यैक्यम्, प्रकरणभेदात्। तथा हि—'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथावयवभूतप्रणवविषयं प्रकरणं छन्दोगानाम्। वाजिनां तु कृत्स्नोद्गीथविषयमिति प्रक्रमभेदेन रूपभेदाद्विद्याभेदः। यथैकस्यामपि शाखायामुद्गीथोपासनेषु हिरण्मयदृष्टेः परोवरीयस्त्वादिदृष्टिर्भिद्यते, तथात्रापीति ॥**

न्त उच्यते। सू० ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥ न वेति निपातसमुदायः पूर्वपक्षव्यावृत्त्यर्थः । प्रकरणभेदात् प्रकरणवैलक्षण्यादित्यर्थः । अयमाशयः। युक्तं शाखाद्वयेऽपि अग्नीषोमीययागैक्यं द्रव्यदेवताकालरूपप्रधानबहुगुणसारूप्ये सति द्रव्योपसर्जनकपालविशेषणसंख्यावैषम्यमात्रस्य प्रत्यभिज्ञाविच्छेदकत्वाभावात्। प्रत्यभिज्ञैक्यसिद्धौ संख्याद्वयस्याप्युत्पत्तिशिष्टत्वेन तुल्यबलत्वाद्विकल्पोऽपि न्याय्यः। इह तूपसर्जनप्राणगुणमात्रसारूप्येऽपि प्रधानोपास्यवैरूप्यं प्रत्यभिज्ञाविच्छेदकमिति प्रत्यभिज्ञानुदयान्न विद्यैक्यसिद्धिः। एवं विधिवाक्ययोरैक्यप्रत्यभिज्ञाविच्छेदके जाग्रति बहिरंगार्थत्रसारूप्यमप्रयोजकम्। इत्थमेव न्यायमर्यादासारूप्येण साधनीयेऽर्थे प्रधानगुणसारूप्ये सत्यप्रधानगुणवैरूप्यं नार्थसिद्धिविघातकं प्रधानगुणवैरूप्ये सत्यप्रधानगुणसारूप्यं नार्थसिद्ध्युपयोगीति। अत्रेदमुदाहरणम्—कर्मणां प्रकृतिविकृतिभावस्सारूप्येण कल्पनीयः जनकसप्तरात्रे श्रूयते—'चत्वारि त्रिवृन्त्यहानी'ति। तेषां सारूप्येण प्रकृतौ कल्पनीयायां यदि त्रिवृत्त्वसारूप्यं प्रयोजकमाद्रियेत तदा द्वादशाहे पार्ष्ठिकेष्वहःसु प्रथममेवाहश्चतुर्णामपि प्रकृतिः स्यात्। तदेव हि त्रिवृत्स्तोमकं सरूपम् । द्वितीयतृतीयचतुर्थानि त्वहानि पञ्चदशसप्तदशैकविंशस्तोमकानि विरूपाणि। यदि संघातसामान्यं प्रयोजकमाद्रियेत तदा प्रथमस्य प्रथममहः द्वितीयस्य द्वितीयं तृतीयस्य तृतीयं चतुर्थस्य चतुर्थं प्रकृतिस्सिद्ध्येत्। तत्राहर्धर्मस्य संघातस्य प्रधानगुणसारूप्यरूपत्वादहरंगभूतस्तोत्रोपसर्जनऋक्संख्यारूपत्रिवृत्त्वादिवैषम्ये सत्यपि संघातसारूप्येण चतुर्णामह्नां क्रमेण चत्वार्यहानि प्रकृतय इति गुणचोदनायां यस्य लिंगं तदावृत्तिः प्रतीयेताग्नेयवदित्याष्टमिकाधिकरणे निर्णीतम्। तत्र प्रकृतिविकृतिभावकल्पनायां प्रधानाप्रधानगुणसमवाये प्रधानगुणसारूप्येणैव सारूप्यनिबंधनार्थसिद्धिः न तु प्रधानगुणाननुगुणाङ्गगुणसारूप्येणार्थसिद्धिरस्तीत्युभयमाविष्कृतम्। तथा एकानेकगुणसमवायेऽनेकगुणसारूप्येण सारूप्यनिबंधनार्थसिद्धिः न त्वेकगुणवैरूप्येण तद्विघात इत्यपि न्यायमर्यादा। अत्र त्विदमुदाहरणम्—चित्रेष्टौ मधूदके द्रव्ये श्रूयेते। तयोर्द्रवत्ववर्णरूपाभ्यामाज्येन सारूप्यं(१) द्रवत्वगतसांसिद्धिकत्वविशेषेण तु पयसा। तत्र सत्यपि द्रवत्वगुणभूतसांसिद्धिकत्वनैमित्तिकत्ववैरूप्ये द्रवत्ववर्णरूपानेकरूपगुणसारूप्येण मधूदकयोराज्यं प्रकृतिरिति मधूदके द्रवत्वसामान्यात्पयोविकारः स्यादित्याष्टमिकाधिकरणे निर्णीतम्। तस्मान्नात्राग्नीषोमीयन्यायः प्रवर्तते । नाप्युपांशुयाजन्यायः प्रवर्तते। 'उपांशुयाजमंतरा यजती' त्येकेन वाक्येनोत्पन्ने तस्मिन्भेदस्यासंभवित्वेनैक्ये सिद्धे पश्चाद्याज्यानुवाक्यामुखेनापतंतीनां देवतानां विकल्पं विना गत्यन्तराभावात्। अत एव सोमयागन्यायोऽपि न प्रवर्तते। 'सोमेन यजेते' त्येकेन वाक्येनोत्पन्नस्य सोमयागस्यैक्ये सिद्धे तद्द्रव्यसंस्काररूपग्रहणमुखेनापतंतीनां देवतानां ग्रहणसमुच्चयेन समुच्चये सत्यपि ततः

(१) 'द्रवत्वरूपाभ्या' मिति ख० पाठः।

आशङ्क्य परिहरति—

**सू ॥ संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥**

उद्गीथविद्येति संज्ञैक्यादुभयत्राभेद इति न वाच्यम् । अस्ति हि विधेयभेदेऽपि संज्ञैक्यम् । यथा नैयमिकाग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च नामैक्येऽपि कर्मभेदः । तद्वदत्रापि न विरोधः ॥ इत्यन्यथात्वाधिकरणम् ॥ ३ ॥

प्राक्सिद्धसोमयागैक्यविघातायोगात् । इह तूपासनोत्पत्तिदशायामेवानुसंधीयमानं प्रधानोपास्यवैरूप्यं भिन्नयोरेवोपासनयोरुत्पत्तिं गमयेत् । तस्माच्छांदोग्यबृहदारण्यकयोर्भिन्नैवैषा प्राणविद्येति । सू० ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ९ ॥ 'तदुक्त' मित्यस्य परोवरीयस्त्वादिगुणकविद्याभेदेऽपि छांदोग्यप्रथमप्रपाठकाम्नातानां सर्वासां विद्यानामुद्गीथविद्येति संज्ञैक्यसत्त्वान्न तद्विद्यैक्यप्रयोजकमित्येतत्पूर्वसूत्र एव परोवरीयस्त्वादिवदिति दृष्टान्तोपन्यासेनोक्तप्रायमित्यर्थः ॥ इति अन्यथात्वाधिकरणम् ॥ ३ ॥

## नयमणिमालायाम्

### अथ अन्यथात्वाधिकरणम् ॥ ३ ॥

सू० ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

छांदोग्यकाण्वपठिता विद्यैकोद्गीथरूपरूपैक्यात् । उद्गीथ एव रूपं काण्वानामप्युपक्रमात्कर्ता ॥ २०५ ॥

उद्गीथस्यावयवश्छांदोग्ये रूपमधिकारात् । काण्वे सकलोऽसाविति रूपविभेदेन भिन्ना सा ॥ २०६ ॥

इत्यन्यथात्वाधिकरणम् ॥ ३ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथान्यथात्वाधिकरणम् ॥ ३ ॥

**सू ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥**

**भगवत्पादमते,** अत्र 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' । इति वाजसनेयवाक्यं तथा 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' इति छान्दोग्यवाक्यं च विषयः । अत्रोभयत्रापि प्राणविद्याविधिरवसीयते । पूर्वत्र समाख्याया अविशेषाद्विद्यैक्यमुक्तम् । तर्हि अत्राप्युद्गीथविद्येति समाख्याया अविशेषाद्विद्यैक्यमेवेति दृष्टान्तसंगत्येदमारब्धम् । किमत्र विद्यैक्यम् उत विद्याभेद इति **संशयः** । विद्यैक्यमेवेति **पूर्वपक्षः** । **अन्यथात्वं**=न विद्यैक्यं भवितुमर्हति । कुतः । **शब्दात्**='त्वं न उद्गाये' त्युद्गीथकर्तृत्वेनैकत्र अन्यत्र 'तमुद्गीथमुपासां चक्रिरे' इति उद्गीथत्वेन च प्राणस्योपास्यत्वप्रतिपादकात् शब्दात् इति चेत् । नैतावता विद्याभेदः । कुतः । **अविशेषात्**=देवासुरसंग्रामोपक्रमासुरात्ययाभिप्रायप्रभृतीनामुभयत्राविशेषात् । अतो विद्यैक्यमिति सिद्धम् ॥ एवं पूर्वपक्षे प्राप्ते **सिद्धान्तमाह**=**सू ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥** नैव विद्यैक्यं युक्तम् । कुतः । **प्रकरणभेदात्**=एकत्र 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथावयव ओंकारे प्राणदृष्टिरुपदिश्यते, अन्यत्र तु 'त्वं न उद्गाये' ति या सकलैव सामभक्तिः तस्याः कर्तोद्गाता प्राणत्वेनावेद्यत इत्युपक्रमभेदात् । तत्र दृष्टान्तः=**परोवरीयस्त्वादिवत्**=यथा परमात्मदृष्ट्यध्याससाम्येऽपि 'स एष परोवरीयानुद्गीथ' इति परोवरीयस्त्वादिविशिष्टमुद्गीथोपासनमक्ष्यादित्यगतहिरण्यश्मश्रुत्वादिविशिष्टोद्गीथोपासनाद्भिन्नं तद्वत् ॥

**सू ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥** ननु उद्गीथविद्येत्युभयत्र **संज्ञातः**=संज्ञाया एकत्वाद्विद्यैक्यमिति **चेत् तदुक्तम्**='न वा प्रकरणभेदात्' इति सूत्रे । **अस्ति तु** तत्संज्ञैकत्वं प्रसिद्धभेदानामप्यग्निहोत्रप्रभृतीनां काठकैकग्रन्थपठितानां काठकत्वसंज्ञैकत्वम् ॥

**श्रीकण्ठमते** तथा **रामानुजमते च संदेहपूर्वपक्षादिषु** नास्ति वैलक्षण्यमतो नास्ति तद्विवरणावकाशः ॥

**आनन्दतीर्थमते,** अत्र 'उपसंहारोऽर्थाभेदा' दित्यादिकमेकमधिकरणम् । अत्र उपसंहारपक्षानुपसंहारपक्षावुभावपि सोपपत्तिकमुपपादितौ । पक्षद्वयमपि वैकल्पिकत्वेन सिद्धान्तितम् । तच्च सूत्रार्थवर्णनतः विशदीभवेत् । **सू ॥ उपसं-**

## अथ व्याप्त्यधिकरणम् ॥ ४ ॥

## सू ॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥

छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति श्रूयते । इह प्रणवोद्गीथयोस्तन्त्रमुपासनमुतैकविषयम् ।

इति संशये पूर्वः पक्षः—यद्यपि प्रणवोद्गीथयोरिह सामानाधिकरण्यमवगम्यते । तच्च विशेषणविशेष्यतया संभवति । तथाप्युद्गीथेन प्रणवो विशेष्यते प्रणवेन चोद्गीथ इत्यत्र नियामकाभावात् तन्त्रमुपासनमिति ॥

एवं प्राप्ते ब्रूमः—न तन्त्रमुद्गीथप्रणवयोरुपासनम् । छान्दोग्ये प्रथमप्रपाठके

---

## अथ व्याप्त्यधिकरणम् ॥ ४ ॥

**सू० ॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥** छांदोग्यगत उद्गीथशब्दः उद्गीथावयवप्रणवपर इति सिद्धवत्कृत्य तन्निबंधनो विद्याभेदः पूर्वाधिकरणे निरूपितः । तदिदानीं साध्यत इति संगतिः । प्रणवोद्गीथोभयविषयमुपासनमुतोद्गीथविशिष्टप्रणवविषयमि 'त्योमित्येतदक्षरमुमिति श्रुतयोरक्षरोद्गीथशब्दयोस्सामानाधिकरण्यसंभवासंभवाभ्यां संशये पूर्वपक्षः । भिन्नार्थवाचिनोरनयोः स्वस्वार्थपरतया सामानाधिकरण्यं न संभवति । अन्यतरलक्षणया विशेषणविशेष्यभावकल्पनायां च किमुद्गीथशब्देनोद्गीथावयव ॐकारो लक्षणीयः 'ओमित्येतदक्षर' मित्यनेन वा तद्वानुद्गीथो लक्षणीय इत्यत्र विनिगमकं नास्ति । अन्यतरलक्षणया विशिष्टोद्देशे चैकत्वविशिष्टग्रहोद्देश इव वाक्यभेदः प्रसज्यते । तस्माद्यथा 'त्वाष्ट्रं पात्नीवतमालभेते' त्यत्र प्रत्येकं तद्धितश्रवणात् त्वष्टा पत्नीवांश्च पृथक्पृथग्देवतेति तदुभयोद्देश्यको यागः, तथात्रापि प्रत्येकं द्वितीयाविभक्तिश्रवणादोंकार उद्गीथश्च पृथक्पृथगुपास्य इति तदुभयोद्देश्यकमुपासनमिति युक्तम् । एवञ्चान्यतरत्र द्वितीयाविभक्तेर्विशेषणविभक्तितया व्यर्थप्रायता च न भविष्यतीति । अत्र सिद्धान्तः—विशेषणविशेष्यभावे विनिगमकाभावस्तावदसिद्धः'ॐमिति ह्युद्गायती'त्यनंतरवाक्य ए'वो'मित्यक्षरे उद्गीथशब्दस्य

---

**हार इत्यादि ॥ ६ ॥ विधिशेषवत्**=विधिविहितत्वेव । यथा विधिविहितत्वात्सन्ध्यावन्दनादिकमवश्यं कर्तव्यं **तथार्थाभेदात्**=सर्ववेदार्थभूतानामानन्दादिगुणानामपहतपाप्मत्वादिदोषाभावानां चाविभागात् । तानविभज्येति यावत् । **उपसंहारः**=सर्वगुणानामप्येकबुद्ध्यारोहणरूपोपसंहारः 'उपास्य एक' इति श्रुतौ विहितत्वात्कर्तव्यः । सोऽपि **समाने च**=समानविषय एव । ये ब्रह्मणि योग्याः पूर्णत्वाविरोधिनो गुणाः तद्विषय एव । न त्वयोग्यरोदनादौ । तथा सत्यनर्थप्राप्तेरित्यर्थः ॥

**सू ॥ अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ॥ ७ ॥ अन्यथात्वं**=सर्वगुणोपसंहारः कार्य इत्युक्तस्यान्यथाभावः तस्याकर्तव्यत्वमेवावश्यमंगीकार्यम् । कुतः । **शब्दात्**='आत्मेत्येवोपासीते'ति अनुपसंहारश्रुतेरिति **चेन्न** । **अविशेषात्**='एते गुणा नोपसंहार्या' इति विशेषप्रमाणाभावात् 'सर्वैर्गुणै' रित्यविशेषेणोपसंहारे तु विशेषप्रमाणसद्भावाच्चेत्यर्थः । 'आत्मेत्येवे' त्येवकारस्त्वयोगव्यवच्छेदक इति भावः ॥

**सू ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ८ ॥ परोवरीयस्त्वादिवत्**=यथा स एष इत्युक्तानां निरवधिकसर्वोत्तमत्वरूपपरोवरीयस्त्वादिगुणानामेवोपासनार्थमुपसंहारो न सर्वगुणानाम् । तद्वत्सर्वगुणोपसंहारो न कर्तव्यो वा । कुतः । **प्रकरणभेदात्**=परोवरीयोवैश्वानरादिप्रकरणभेदात् । अन्यथा तन्न स्यादित्यर्थः ॥ **सू ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ९ ॥ संज्ञातः**=सर्वविद्यानां भगवन्नामत्वेन तद्गुणोक्तिरूपत्वात् सर्वविद्योक्तगुणोपसंहारः कार्य इति **चेत्** । **तदुक्तम्**=तत्र चोद्ये तदिष्टमेवेति समाधानं तेनोपसंहारसूत्रेणोक्तमित्यर्थः । न केवलं युक्तिसिद्धमेतत् । किंतु **तदपि**=तस्मिन्नर्थे 'नाम वा एता' इति प्रमाणमपि **अस्ति तु**=अस्त्येवेत्यर्थः ॥

**इत्यानन्दतीर्थमते उपसंहाराधिकरणम् ॥ २ ॥**

'ओमित्येतदक्षरमुद्गीथमुपासीत ओमित्युद्गायति' इति तस्योपक्रमवदुत्तरत्रापि 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इति प्रणवस्योपास्यत्वव्यासेरुद्गीथेन

लक्षणया प्रवृत्तौ निमित्तस्य सम्बंधस्योच्यमानत्वात्तस्योपव्याख्यानमिति प्रकृतस्योंकारस्यैव गुणोपासनफलप्रपञ्चनार्थ उत्तरः प्रपञ्च इत्युक्तत्वात् प्रथम 'मेषां भूतानां पृथिवी रस' इति गुणप्रपञ्चनमुपक्रम्य पृथिव्योषधिपुरुषवागृक्सामोद्गीथा उत्तरोत्तरं रसा इत्युद्गीथस्य रसतमत्वगुणप्रतिपादनानंतरं कतम उद्गीथ इति विमृष्टं भवतीत्युद्गीथविमर्शं कृत्वा 'ओमित्येतदक्षरमुद्गीथ' इति व्याख्यातत्वाच्च। रसतमत्वादिविशिष्टगुणोपासनात्फलप्रपञ्चनानंतरं द्वितीयखण्डमारभ्य प्रपञ्चयिष्यमाणानामुद्गीथविद्यानामप्योंकारविषयतायाः 'खल्वेतस्यैवाक्षरस्ये' त्यादिप्रथमखण्डान्तवाक्येन दर्शितत्वाच्च। एतेन विभक्तिद्वयसाफल्यायोपास्यद्वयकल्पनमपि निरस्तम्। अग्रिमव्याख्यानप्रपञ्चेन विशेषणविशेष्यभावावधारणात्। न च विशिष्टोद्देशेन वाक्यभेदः। विशिष्टस्योद्देश्यत्वानंगीकारात् उद्गीथा[1]वयवत्वविशिष्टप्रणवोपासनाविधेरंगीकारात् तस्य चा'ग्नये पावकाय पुरोडाशमष्टाकपालं निर्वपे' दित्यत्र पावकत्वविशेषिताग्निदेवताविशिष्टयागविधिवदुपपत्तेः। वस्तुतस्तु 'ओमित्येतदक्षरमुद्गीथमुपासीते' त्यत्र नोपासनाविधिः। 'आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते' इत्यत्र रसतमत्वादिगुणकोपासनाविधिः, अग्रिमखण्डे प्राणदृष्टिविशेषोपासनाविधिरित्येवमादिक्रमेण प्रत्येकमुपासनाविधीनां सद्भावात्। न च ते सर्वेऽप्यधिकारविधयः सर्वसाधारणोऽयमुत्पत्तिविधिः स्यादिति वाच्यम्। तथा सत्युत्पत्तिविध्यैक्येन एकस्या एवोद्गीथविद्यायाः फलभेदेन गुणभेदेन च ज्योतिष्टोमरीत्या प्रयोगावृत्तिमात्रमित्यापत्तेः। न चेष्टापत्तिः। 'परोवरीयस्त्वादिव' दिति पूर्वाधिकरणसूत्रांशेन परोवरीयस्त्वहिरण्मयत्वादिदृष्टिविशिष्टोद्गीथविद्यानां परस्परभेदस्य दर्शितत्वात्। किं तु तत्र वक्ष्यमाणोपासनानिकुरुंबविषयमोंकारमनूद्य तस्योद्गीथावयवत्वविधानपरम्। ओंकारो हि सर्ववेदव्यापी क्रतुषु चाध्वर्यवहौत्रादिमन्त्रव्यापी। उद्गीथावयवस्यैवोंकारस्योपास्यत्वं यथा स्यादित्येवमर्थं तत्प्रतिपादनम्। एतत्सिद्धस्यैवोद्गीथावयवत्वस्याग्रिमसमानाधिकरणनिर्देशैरनुवादः। न च वक्ष्यमाणोपासनाविषयत्वेनाक्षरानुवादे विशिष्टोद्देशप्रयुक्तवाक्यभेदापत्तिः। अक्षरमात्रानुवादेऽपि तस्य प्रकरणप्राप्तोपासनासंबंधानुवादार्थं 'उपासीते'ति निर्देशः 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त' इत्यत्र यथाश्वरशनाग्रहणोद्देशेन मंत्रविधौ विशिष्टोद्देशदोषापत्तेः केवलमश्वोद्देशेन मन्त्रविधौ सति रशनाग्रहणप्रकाशकस्य मन्त्रस्य साक्षादश्वार्थत्वासंभवात्तदीयरशनाग्रहणद्वारकत्वं पर्यवस्यतीति 'अभिधानीमादत्त' इत्यंशस्सामर्थ्यसिद्धानुवादार्थ इत्युपपत्तेः। एतेनैव 'य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिर' इत्यग्रिमखण्डे यथोद्गीथे प्राणदृष्टिविधिः एवमिहाप्युद्गीथे प्रणवदृष्टिविधिरस्तु। न च फलनिर्देशाभावादुपासनाविध्यंतरं न संभवतीति शंकनीयम्। विशिष्य फलनिर्देशरहितानामंगावबद्धोपासनानां क्रतुवीर्यवत्तरत्वरूपसाधारणफलेनैव फलाकांक्षाशान्तेरिति निरस्तम्। दृष्टिविधौ सारूप्यस्यैवापेक्षितत्वेन 'ओमिति ह्युद्गायतीति' संबंधप्रतिपादकवाक्यशेषानुपपत्तेः 'खल्वेतस्यैवाक्षरस्योपव्याख्यान' मित्यस्यासामञ्जस्यप्रसंगाच्च। तस्मा 'दोमित्ये-

(१) 'उद्गीथावयवत्वविशेषितप्रणवविशिष्टोपासनाविधे'रिति. क. गु. पाठः।

प्रणवो विशेष्यत इति प्राणविषयत्वमेव समञ्जसम् । अतः प्रणव एवोपास्यः ॥

इति व्याप्त्यधिकरणम् ॥ ४ ॥

## अथ सर्वाभेदाधिकरणम् ॥ ५ ॥

## सू ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥

'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति छन्दोगा वाजिनश्च प्राणविद्यायां ज्येष्ठत्वादिकमधीयते

---

तदक्षरमुद्गीथ' मिति वाक्यमग्रिमविद्यासूपास्यस्य प्रणवस्योद्गीथावयवत्वविशेषणसमर्पणार्थमिति न्याय्यः पन्थाः । सूत्रे 'व्याप्ते' रित्यनेन प्रणवस्योत्तरग्रन्थे विशेषणविशेष्यभावनियामिका व्याप्तिर्यथोच्यते तथा प्रणवस्य विशेषनिर्धारणाय विशेषणापेक्षापादिन्याध्वर्यवादिमन्त्रव्याप्तिरपि हेत्वंतरत्वेनोच्यत इति तत्समुच्चयार्थश्चकारः । इति व्याप्त्यधिकरणम् ॥४॥

## अथ सर्वाभेदाधिकरणम् ॥ ५ ॥

सू ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥ प्राणविद्यायां विचारं प्रवर्त्तयिष्यन् विषयशुद्ध्यर्थं विषयवाक्यमुपन्यस्य तत्प्रतिपाद्यं दर्शयति—यो हवा इति ॥ ज्यैष्ठ्य वयःकृतम् । मुख्य-

---

### नयमणिमालायाम्

### अथ व्याप्त्यधिकरणम् ॥ ४ ॥

सू० ॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥

ओमित्यत्रोपासनमुद्गीथप्रणवयोर्भवेत्तन्त्रम् । न तयोः किमपि नियामकमस्ति विशेषणविशेष्यत्वे ॥ २०७ ॥

प्रणवस्योपास्यतया यदुत्तरत्रापि लक्ष्यते व्याप्तिः । तस्मादुद्गीथं प्रति विषयता समुचिता तस्य ॥ २०८ ॥

इति व्याप्त्यधिकरणम् ॥ ४ ॥

### सूत्रार्थचन्द्रिकायाम्

### अथ व्याप्त्यधिकरणम् ॥ ४ ॥

सू ॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥

**भगवत्पादमते,** पूर्वम् 'ओमित्येतदक्षरमुद्गीथम्' इत्यत्रोंकारोद्गीथयोर्विशेष्यभावं सिद्धवत्कृत्य प्रक्रमभेदाद्विद्याभेदस्सिद्धान्तितः । स न युक्त इत्याक्षेपसंगत्येदमाह—**व्याप्तेश्चेति** । अत्र 'ओमित्येतदक्षरमुद्गीथम्' इत्योंकारोद्गीथयोस्सामानाधिकरण्यं श्रूयते । तत्किं नामब्रह्मेतिवदध्यासार्थम्, उत यद्रजतं सा शुक्तिरितिवदपवादार्थम् आहोस्वित्सिन्धुरः करीतिवदैक्यप्रमित्यर्थम्, उताहो नीलोत्पलमितिवद्विशेषणविशेष्यभावनिबन्धनम् । इति **संशयः** । निर्धारणे कारणाभावादनिर्धारितार्थकमिदमिति **पूर्वः पक्षः** । **सिद्धान्तस्तु,** ओंकारस्य ऋग्यजुःसामसु त्रिषु **व्याप्तेः** व्याप्तत्वात् क ओंकार उपास्य इत्यपेक्षायामुद्गीथावयवत्वेन ओंकारो विशेष्यते 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति । एवं च उद्गीथमित्योंकारस्य विशेषणमित्येव **समञ्जसं**=निरवद्यम् । तुशब्दार्थकेन सौत्रचशब्देनाध्यासापवादादिपक्षाणां निरासः । अतः विशेषणपक्ष एव श्रेयान् इति ॥

**श्रीकण्ठमते, रामानुजमते च** 'ओमित्येतदक्षरमुद्गीथमुपासीते' त्यत्र प्रणवोद्गीथयोस्तन्त्रमुपासनमुतैकविषयमिति **संशयः** । अत्र प्रणवोद्गीथयोस्सामानाधिकरण्ये सत्यपि उद्गीथेन प्रणवो विशेष्यते वा प्रणवेन चोद्गीथो वेत्यत्र नियामकाभावात्तन्त्रमुपासनमिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** न तन्त्रमुद्गीथप्रणवयोरुपासनम् । छान्दोग्ये 'ओमित्यक्षर' मित्युपक्रमवदुत्तरत्रापि 'एतस्यैवाक्षरस्योपव्याख्यानं भवति' इति प्रणवस्योपास्यत्वव्याप्तेरुद्गीथेन प्रणवो विशेष्यत इति प्रणवविषयत्वमेव समञ्जसम् । अतः प्रणव एवोपास्यः । इति ॥

**आनन्दतीर्थमते,** पूर्वोक्तमुपसंहारानुपसंहारयोरुभयोरपि कर्तव्यत्वं समञ्जसं न वेति **संदेहः** । परस्परविरोधादधिकारिभेदाभावाच्च न समञ्जसमिति **पूर्वपक्षः** । **'प्राप्तेश्च'** सूत्रपाठे विशेषः । **सिद्धान्तस्तु,** सर्वगुणोपसंहारे विरिञ्चस्य शक्तत्वेनाधिकारिभेदसद्भावात् पक्षद्वयस्य कर्तव्यत्वे विरोधाभावाच्च समञ्जसमिति । **सूत्रार्थस्तु, सू॥ प्राप्तेश्च समञ्जसम् ॥ १० ॥** उपसंहारानुपसंहारयोः कर्तव्यत्वं समञ्जसं युक्तम् । कुतः । **प्राप्तेश्च**=तत्तद्योग्यपुरुषभेदेन तयोर्व्यवस्थितत्वाद्विरोधप्राप्तेश्चेत्यर्थः ॥ इति सूत्रार्थचन्द्रिकायां व्याप्त्यधिकरणम् ॥ ४ ॥

**कौषीतकिनश्च । त्रिभिरपि वागादिकरणग्रामस्थितेस्तत्कार्यस्य च प्राणहेतुत्वेनैकरूपेण प्राणस्य ज्यैष्ठ्यमुपपादितम् । वागादिगतवसिष्ठत्वादिसंबन्धित्वं प्राणस्योभयेषामुक्तम् 'अथ हैनं वागुवाच यदहं वसिष्ठास्मि त्वं तत् वसिष्ठोऽसीति अथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत् प्रतिष्ठासीति अथ हैनं श्रोत्रमुवाच यदहं सम्पदस्मि त्वं तत् सम्पदसीति अथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति' । कौषीतकिनां तु अनुक्तमपि वसिष्ठत्वादिकमुपसंहार्यं न वा ।**

---

प्राणो हि सर्वेषां प्राणानां मध्ये वयसाधिकः । गर्भस्थे पुरुषे प्राणस्य वृत्तिश्चक्षुरादिभ्यः पूर्वं लब्धात्मिका भवति । यया गर्भो वर्धते । चक्षुरादीनां तु गोळकनिष्पत्तौ सत्यां वृत्तिलाभ इति श्रेष्ठो गुणैरधिकः । चक्षुरादिभ्यो गुणैराधिक्यं श्रुत्युक्तं भाष्यकार एवानुपदमुपपादयति—'ज्येष्ठश्च हवै श्रेष्ठश्च स्वानां भवती'ति वाजसनेयकपाठ इति विशेषः । स्वाः ज्ञातयः । कौषीतकिनश्चाधीयत इत्यनुषंगः । वसिष्ठत्वादिसंबंधित्वमिति । वागादिभिर्वसिष्ठत्वादिगुणानां यत्प्राणे समर्पणमुक्तं तेन प्राणस्य तद्गुणसंबंधित्वमुक्तं भवतीति भावः । उभयेषां छन्दोगवाजसनेयिनां शाखायामिति शेषः । यैर्वाक्यैरुक्तं तानि वाक्यानि दर्शयति—अथ हैनमित्यादिना । कौषीतकिनां त्विति । कौषीतकिनां शाखायां वागादीनां वसिष्ठत्वादिकं तस्य प्राणे समर्पणञ्चेत्युभयमपि नोक्तमित्यर्थः । अनुक्तमपीति । कौषीतकिशाखागतैवंशब्दाद्विद्यैक्याच्च संशयः । स्यादेतत् । चोदनाद्यविशेषेण शाखात्रयेऽपि विद्यैक्यादुपसंहाराधिकरणन्यायेन वसिष्ठत्वाद्युपसंहार्यं प्राप्नोति । कोऽत्रानुपसंहार्यत्वशंकावकाशः । न च क्वचिद्वसिष्ठत्वाद्यनाम्नानाद्विद्याभेदश्शंकनीयः । विद्यैक्ये सत्यनाम्नातगुणानामुपसंहारन्यायतः प्राप्तेः । अनाम्नातगुणोपसंहारार्थमेव हि सर्वत्र विद्यैक्यसाधनम् । ननु फलभेदाद्विद्याभेदः स्यात् । छंदोगवाजसनेयिशाखयोर्ज्यैष्ठ्यादिकं फलमुक्तम् । कौषीतिकिशाखायां तु 'अथो एवैवं विद्वान्सर्वेषां भूतानां प्राणमेव प्रज्ञात्मानमभिसंभूय सहैतैस्सर्वैरस्माच्छरीरादुत्क्रामति स वायुप्रतिष्ठ आकाश आत्मा स्वरेति यत्रैते देवास्तत्प्राप्य तदमृतो भवति यदमृता देवा' इति प्राणदेवतासायुज्यं फलमुक्तम् । न चामृतत्वं चिरकालावस्थायित्वरूपं ज्यैष्ठ्यान्तर्गतं प्राणदेवतासमानैश्वर्यं श्रैष्ठ्यान्तर्गतमिति नास्ति फलभेद इति वाच्यम् । वाजसनेयिशाखायां स्वानामिति विशेषणेन ज्यैष्ठ्यश्रैष्ठ्ययोरैहिकफलत्वावसायात् । छांदोग्ये तद्विशेषणभावेऽपि समानप्रकरणगतवाक्यानुसारेण छांदोग्य एव 'वसिष्ठो ह स्वानां भवती'त्यग्रिमवाक्यगतविशेषणानुसारेण च तादर्थ्यप्राप्तेरिति चेन्मैवम् । वाजसनेयिशाखायां 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवती' त्येतदनन्तरमपि च 'य एषां बुभूषति य एवं वेदेति' वाक्येनान्येषामपि येषां ज्येष्ठश्च भवितुमिच्छति तेषामपि ज्येष्ठः श्रेष्ठश्च भवती' त्युक्तत्वेन फलतः फलैक्यपर्यवसानात् । तदनंतरं यो ह वै प्रतिष्ठां वेद प्रतितिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च यो हवै संपदं वेद सं ह वास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्चे'ति छांदोग्ये साक्षादेवैहिकफलवदामुष्मिकफलस्याप्युक्तत्वाच्च । यद्यपि तत्र चक्षुःश्रोत्रगतप्रतिष्ठात्वसंपत्त्वानुसंधानफलमुक्तं, तथापि प्राणश्रैष्ठ्यनिर्धारणानंतरं चक्षुःश्रोत्राभ्या स्वगुणयोस्तयोः प्राणे समर्पितस्योक्तत्वेन तत्साफल्याय प्राणगतप्रतिष्ठात्वाद्यनुसंधानफ-

**इति संशये 'य एवं विद्वान्' इत्येवंशब्देन तच्छाखोक्तगुणानामेवावधारणान्नोपसंहार्यम् ॥**

लतया विपरिणममानं तत्प्राणविद्याफलमेव पर्यवस्यतीत्याशंक्य पूर्वपक्षमुपपादयति–य एवं विद्वानिति । अयमाशयः । एवंशब्दस्सन्निहितं परामृशति । शाब्दश्च सन्निधिश्शाब्दानुभवेऽपेक्ष्यते । तेन यथा मधुरायामध्यापकत्वेन दृष्टस्य चैत्रस्य माहिष्मत्यां दर्शने सोऽयमिति प्रत्यभिज्ञाप्रत्यक्षेण प्रागनुभूतमध्यापकत्वमपि सहानुसंधीयते न तथा ज्येष्ठत्वादिगुणकप्राणस्य शाखान्तरे वसिष्ठत्वादिनावगतस्य कौषीतकिशाखायां दर्शने तज्जन्येन शब्दानुभवेन वसिष्ठत्वादिकमपि विषयीक्रियत इति वक्तुं शक्यम् । प्रत्यभिज्ञाप्रत्यक्ष इव शाब्दानुभवे शब्दसमर्पितैकविषये संस्कारेण स्मृत्या वोपनीतस्याविषयत्वात् । न हि वस्तुतः प्रागध्यापकत्वेनानुभूतेऽपि चैत्रे चैत्र इहागत इति केनचिदुक्ते तज्जन्यं शाब्दज्ञानमप्यध्यापकत्वं विषयीकरोति । ननु तथापि कौषीतकिशाखायां शब्दावगम्यमाने ज्येष्ठत्वादिगुणके प्राणे 'विमतमिदं कौषीतकिवाक्यं वसिष्ठत्वादिगुणकप्राणोपासनाविषयम् । ज्येष्ठत्वाकप्राणोपासनाविषयत्वात् । छांदोग्यादिवाक्यव' दित्यनुमानतः प्राप्तिर्भवेदिति चेत् सत्यम् । एवमनुमानतो गुणांतरयुक्तस्यापि प्राणस्येहोपास्यत्वप्रसक्तौ तद्वारणार्थमेवैवमिति विशेषणम् । यथा आध्वर्यवादिमंत्रगतप्रणवस्याप्युपास्यत्वप्रसक्तौ तद्वारणार्थमुद्गीथविशेषणम् । अतस्सत्यपि विद्यैक्ये वसिष्ठत्वादिकमेवंशब्देन निरुद्धं नोपसंहर्तव्यम् । नन्वव्यभिचरितजुहूपस्थापितस्य क्रतोरशाब्दस्यापि पर्णमयीवाक्यार्थान्वयो दृष्टः । एवमव्यभिचरितप्राणविद्यारूपप्रधानोपस्थापितस्य शाखान्तराम्नातांगजातस्याशाब्दस्याप्येवंशब्देन परामर्शः स्यात् । किमिति तस्य तन्निवारकत्वं कल्पनीयमिति चेत् विषमो दृष्टान्तः । पर्णताया लौकिकजुह्वाकृत्यर्थत्वे वैयर्थ्यं स्यादिति जुहूपदस्य जुहूसंबंधिनि क्रतौ लक्षणा कल्प्यत इति तत्र नाशाब्दस्य वाक्यार्थान्वयः । इह कस्य वैयर्थ्यपरिहाराय कस्य पदस्य शाखान्तराम्नातगुणजाते लक्षणा कल्पनीया येन तस्य शाब्दत्वं समर्थ्येत । स्यादेतत् । कौषीतकिशाखायामपि प्राणस्य वसिष्ठत्वादिकं प्रतिपादितमेव । तदेव हि तस्य वसिष्ठत्वादिकं यद्वागादिगतवसिष्ठत्वादिहेतुत्वम् । वागादिगतं च वसिष्ठत्वादिकं तत्तत्कार्यकरणसामर्थ्यमेव । अतो यदहं वसिष्ठास्मि स्वकार्यकरणसमर्थास्मि त्वं तद्वद्वसिष्ठोऽसि मत्सामर्थ्यस्य त्वदधीनत्वात् तवैव तत्सामर्थ्यमित्यर्थः । इदं च वागादिगतकार्यकरणसामर्थ्यनिमित्तत्वं प्राणस्य वागादीनां प्राणाधीनकार्यत्वोपपादनेनैव कोषीतकिशाखायामपि सिद्धमिति चेत् मैवम् । तस्यां वागादीनां प्राणाधीनकार्यत्वमेव न प्रतिपादितं यदंतर्गततया वसिष्ठत्वादिप्रतिपादनसिद्धिराशंक्येत प्रत्युत छांदोग्यबृहदारण्यकवैपरीत्येन तेषां प्राणादिनिरपेक्षकार्यत्वमेव तस्यां प्रतिपादितं दृश्यते । तत्र ह्येवं प्राणविद्यायामुपाख्यायते–'अथातो निःश्रेयसादानं सर्वा वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुस्तद्दारुभूतं शिश्ये, अथैनद्वाक्प्रविवेश तद्वाचावदच्छिश्य एव, अथैनच्चक्षुः प्रविवेश तद्वाचावदच्चक्षुषा पश्यच्छिश्य एव, अथैनच्छ्रोत्रं प्रविवेश तद्वाचावदच्चक्षुषा पश्यच्छ्रोत्रेण श्रृण्वच्छिश्य एव, अथैनन्मनः प्रविवेश तद्वाचावदच्चक्षुषा पश्यच्छ्रोत्रेण श्रृण्वन्मनसा

( १ ) 'शाब्दानुभवमपेक्षते' इति. क. पाठः ।

इति प्राप्ते ब्रूमः—अनुक्तमपि वसिष्ठत्वादिकमुपसंहार्यमेव, एवंशब्देनानुक्तगुणानामप्युक्तगुणवत् परामर्शात्, प्राणस्य गुणिन एकत्वेन गुणानामपि बुद्धिस्थत्वात् । यथा देवदत्तो मधुरायामध्यापयन् दृष्टः पुनर्माहिष्मत्यामनध्यापय-

ध्यायच्छिश्य एव अथैनत्प्राणः प्रविवेश तत्तत एव समुत्तस्था' विति । अत्र सह शरीरादुत्क्रांतेषु सर्वेषु प्राणेषु मुख्यप्राणप्रवेशात्प्रागेव शरीरं प्रविष्टानां वागादीनां मुख्यप्राणनिरपेक्षमभिवदनादिकार्यकारित्वं स्पष्टमेवोक्तम् । भाष्ये तु 'त्रिभिरपि वागादिकरणग्रामस्थिते'रित्यादिकमुपाख्यानगतार्थो यथा तथा वा भवत्वित्यनादरेणोक्तम् । अस्तु वा कौषीतकिशाखायामपि वागादीनां प्राणाधीनस्वकार्यत्वं कथंचित्सूचितमित्येतत् । तावता प्राणे वागादिगतकार्यकरणसामर्थ्याधायकत्वमात्रं श्रैष्ठ्योपपादकत्वेनानुसंधेयं सिध्यति न तु विशिष्य तद्गतवसिष्ठत्वादिनिमित्तत्वमपि । न च वागादिषु तत्तत्कार्यकरणसामर्थ्यसामान्यमेव वसिष्ठत्वादिकमिति वाच्यम् । वाचो वसिष्ठत्वं वाग्मिनः सद्व्यवहारजननेन वसुमत्तमत्वसंपादकत्वं चक्षुषः प्रतिष्ठात्वं चक्षुष्मतस्समविषमभूतलादिप्रदर्शनेन प्रतिष्ठासंपादकत्वं श्रोत्रस्य सम्पत्त्वं वेदशास्त्रतदर्थश्रवणादिसंपादनेन सम्पत्करत्वं मनस आयतनत्वं सन्निहितस्रक्चंदनादिविषयज्ञानरूपभोगायतनत्वमिति छांदोग्यवाजसनेयकयोर्वसिष्ठत्वादिवेदनफलकीर्तनानुगुण्येन 'चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति श्रोत्रेण हीमे सर्वे वेदा अभिसम्पन्ना' इति वाजसनेयगतवाक्यशेषानुसारेण चावगमात् । न च सामान्यानुसंधाने तदंतर्गतयावद्विशेषानुसंधाननियमोऽस्ति । तन्नियमसत्त्वे च वागादिदोषेणैव पापिष्ठत्वादेरपि प्राप्तेस्तस्याप्यत्रानुसंधेयत्वप्रसंगः । अशक्यं चानन्तकार्यव्यक्तीकरणसामर्थ्यानुसंधानम् । अपि च ज्येष्ठत्वं कौषीतकिशाखायां प्राणस्य सर्वथैव नाम्नातम् । तस्यां तत्संग्रहे का गतिः । तस्मादेवंशब्देन निवारितं ज्येष्ठत्ववसिष्ठत्वादिकं नोपसंहार्यमिति । ननु छांदोग्ये तावदुद्गीथविद्यास्तोभाक्षरविद्यासमस्तसामविद्याप्रपञ्चेषु मधुविद्यागायत्रीविद्याज्योतिर्विद्यापुरुषविद्यासु मनोब्रह्मेत्यादिविद्यासु संवर्गविद्याषोडशकलविद्योपकोसलविद्याप्राणविद्यापञ्चाग्निविद्यावैश्वानरविद्यादिषु प्रायेण फलवाक्येषु एवंशब्दः श्रूयते । एवं बृहदारण्यकगतविद्यास्वपि तासु सर्वास्वपि शाखान्तरगतगुणोपसंहारो न स्यात् । किं बहुना । कर्मकाण्डेऽपि 'य एवं विद्वान्पौर्णमासीं यजते' 'य एवं विद्वांसः पंचदशरात्रमासत' इत्यादिवाक्येष्वेवंशब्दः कर्मैक्यात् शाखान्तरतः प्राप्तानां गुणानां वेदनविचारणद्वारा तदुपसंहारनिराकरणार्थः स्यादिति कर्मस्वपि सकलांगोपसंहारो न स्यादिति चेदस्तु नाम । पूर्वपक्षिणः किं हीयते । न हि प्राणविद्यामेवाधिकृत्येदमधिकरणं प्रवृत्तं किं तु ब्रह्मविद्यासूपसंहार्यानुपसंहार्यविभागे न्यायं दर्शयितुं प्राणविद्या केवलं लक्षीकृता । तथा च न्यायसाम्यात् ब्रह्मविद्यास्वेवंशब्दे सत्यपि एतदधिकरणसिद्धांतन्यायेनोपसंहारस्सिध्यन्प्रसंगात्कर्मस्वप्युपकरोतु । तस्मात्पूर्वपक्षिणो विषयान्तराणामप्यास्कन्दनं न दोषः । एवं प्राप्त इति । अत्रायमाशयः । फलपरवाक्याम्नातस्यैवंशब्दस्य शाखान्तराम्नातगुणनिवारणपरत्वमपि कल्पयितुं न युक्तम् । भिद्येत हि तदा वाक्यम् । न च फलसंयोगच्छांदोग्यादिशाखान्तरप्राप्तोऽनूद्यतां, वाक्यस्य गुणान्तरनिराकरण एव तात्पर्यमस्त्विति वाच्यम् ।

(१) 'निराकरणपरत्वमेवास्त्विति' इति. ख. पाठः ।

न्प्यध्यापकत्वेन प्रत्यभिज्ञायते, तथा छान्दोग्यादिषु वसिष्ठत्वादिनोक्तः पुनरन्यत्र केवल उच्यमानोऽपि तद्गुणविशिष्टतया बुद्धिस्थो भवति । तत एवंशब्देन छांदोग्यवाजसनेयकगतफलवाक्ययोरप्येवंशब्दार्थवशीकृततात्पर्ययोः फलविधिपरत्वासंभवात् । अतः सर्वास्वपि शाखास्वेवंशब्दोऽनुवाद इति तस्य स्वशाखाप्राप्तगुणमात्रानुवादकत्वेऽपि गुणान्तरनिवारकत्वाभावान्न विद्यैक्यप्रयुक्ते सर्वशाखाम्नातगुणोपसंहारे काचिदनुपपत्तिः । यथा प्राप्त्यनुवाद इति प्राणविद्यायां स्वशाखापरशाखाम्नातं यावद्गुणजातं प्राप्तं तस्य सर्वस्यानुवादक एवंशब्द इति कल्पनायामपि न काचिदनुपपत्तिः । न हि स्वशाखाम्नातमेव शाब्दं परशाखागतमशाब्दमिति वैषम्यमस्ति । शाब्दत्वेऽपि कौषीतकिशाखागतैवंशब्दार्थावगतिसमये शाखान्तराम्नातं गुणजातं शब्देन नोपस्थितमिति चेत् किं स्वशाखाम्नातं तत्पूर्वापरानेकवाक्यविहितं तथाशब्देनोपस्थितं तदानीमशाब्दमिति शब्दमूलप्रतिपत्त्यास्पदमेतत्प्रकरणाम्नातप्राणगुणत्वेन क्रोडीकृतमेवंशब्दगोचरः स्यादिति चेत् एवं तर्हि शाखान्तराम्नातमपि गुणजातमेतद्विद्यासंबन्धिप्राणगुणत्वेन क्रोडीकृतं तद्गोचरोऽस्तु । तदपेक्षयास्य क्रोडीकारस्य लघुत्वात् प्रकरणस्य प्रधानभूतविद्या-गात् यथा प्राप्त्यनुवादन्यायस्यासंकुचितविषयलाभाच्च । न हि स्वशाखाम्नातमेवानुवदितव्यं न त्वन्यशाखाम्नातमिति कुलधर्मः । मैत्रायणीयशाखायां प्रयाजाम्नानरहिताया 'मृतवो वै प्रयाजाः समानत्र होतव्या' इति तैत्तिरीयादिशाखाम्नातप्रयाजानुवाददर्शनात् । सन्निहितमात्रानुवादसंभवे दूरस्थितस्याप्यनुवादो न कल्पनीय इति चेत् दूरस्थितस्य स्वत एव बुद्धावपरिवर्तमानस्य कल्पनीयोपस्थितिकत्वे तथैव । इह तु विद्यैक्यात्तदीयत्वेन तत्तच्छाखाम्नातगुणवत्स्वत एव बुद्धौ विपरिवर्तमानस्य योग्यस्य परित्यागेन संकोच एव दोष इति भाष्ये 'यथा देवदत्त' इत्यादिना यथा देश[1]कालव्यवहितस्याध्यापनस्य तद्धर्मिदर्शनेन बुद्धिस्थता तथेह शाखान्तरव्यवहितस्यापीत्येतावन्मात्रे दृष्टान्त उक्तः। न त्वशब्दोपस्थितस्य विषयत्वे इति न[2] विरोधः । सूत्रस्य त्वयमर्थः । इमे वसिष्ठत्वादयः अन्यत्र कौषीतकिशाखायामप्युपसंहर्तव्याः । कुतः । सर्वासु शाखासु प्राणविद्याया अभेदात् । अभेदे च तया बुद्धिसन्निधापितस्य तस्याप्येवंशब्देन परामृष्टुं योग्यस्य प्रहाणे कारणाभावादिति । नन्विदमधिकरणं कौषीतकिनामुपनिषदि चतुर्थाध्याये य 'दथातो निःश्रेयसादान' मित्यारभ्य प्राणविद्याश्रवणं तत्र वसिष्ठत्वादिगुणोपसंहारनिर्णयार्थत्वेन किमित्यतिक्लेशेन योजितम् । तस्यां दशमाध्याये, यो ह वै ज्येष्ठश्च श्रेष्ठश्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवती' त्यारभ्य यत्प्राणविद्याश्रवणं तत्र वसिष्ठत्वादिकगुणोपसंहारनिर्णयार्थत्वेन व्याख्यातुमुचितम् । तत्र हि छांदोग्यबृहदारण्यकरीत्यैव प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यगुणकत्वं वागादीनां वसिष्ठत्वादिगुणकत्वं मुख्यप्राणस्य वागादीनां च श्रैष्ठ्यविषयपरस्परविवादेन ब्रह्मसभोपसर्पणं 'यस्मिन्नुत्क्रान्ते शरीरेंद्रियानवस्थितिः स श्रेष्ठ' इति ब्रह्मवचनं तत्परिचिक्षिषया वागादीनामेकैकस्य शरीरादुत्क्रम्य पर्यटनं तस्मिन्समये शरीरस्थेंद्रियान्तराणाञ्च यथापूर्वमवस्थानं प्राणस्योत्क्रमणप्रवृत्तौ तेषां विशरणं ततो भीतानां वागादीनां 'मोत्क्रमीस्त्वं नः श्रेष्ठ' इति मुख्यं[3]प्राणं प्रति प्रार्थनमित्येतत्सर्वं क्रमेण वर्णितम् । प्राणे वागादिगतव-

( १ ) 'चिरकालव्यवहितस्य' इति. ख. पाठः । ( २ ) 'सर्वं समञ्जसम्' इति. ख. पाठः । ( ३ ) 'प्राणस्य श्रैष्ठ्यावधारणमित्येतत्सर्वं' इति. क. पाठः ।

परामर्शाद्वसिष्ठत्वादिकमुपसंहार्यमिति ॥ इति सर्वाभेदाधिकरणम् ॥ ९ ॥

सिष्ठत्वादिगुणसमर्पणमात्रं नोक्तं तद्विषयत्व एव भाष्यवाक्यानामाञ्जस्यमुच्यते । तत्रैवं-वेदनशब्दयुक्तफलवचनाश्रवणाद्भाष्ये पूर्वपक्षवीजत्वेनोक्ता युक्तिर्न प्रवर्तते । न च वाच्य-मेकशाखान्तर्गतप्रदेशद्वयाम्नातशाण्डिल्यविद्यान्यायेनात्र प्रदेशद्वयाम्नातप्राणविद्यैक्यसिद्धौ 'यो ह वै ज्येष्ठं चे' त्यादेर्विषयवाक्यत्वेऽपि 'अथातो निःश्रेयसादान' मित्यादिप्रदेशगतैवं-शब्दान्वयस्तत्र वक्तुं शक्यत इति । तथा सत्युपसंहाराधिकरणन्यायेन छांदोग्यवृहदारण्य-काम्नाततयापि प्राणविद्यैक्यसिद्धौ तदुभयाम्नातवासिष्ठ्यादिगुणानामप्येवंशब्दान्वयस्तथै-वोपपद्यत इति पूर्वपक्षयुक्तेरनवतारप्रसंगात् । न ह्येकशाखान्तर्गतप्रदेशान्तराम्नातगुणानां शाखान्तराम्नातगुणानां चासन्निधानाविशेषे विद्यैक्येन निमित्तेन एवंशब्दः पूर्वान्परा-मृशति नोत्तरानिति नियन्तुं शक्यते । तस्मा 'दथातो निःश्रेयसादान' मिति सन्दर्भा-म्नातैवंशब्दादन्यत्र प्राणविद्याम्नाताञ्ज्यैष्ठ्यवासिष्ठ्यादिगुणान्न परामृशतीत्येव पूर्वः पक्षः कर्तुं युक्तः । एवमेव शाङ्करभाष्ये पूर्वपक्षो दृश्यत इति तथैवात्रापि भाष्यवाक्यानि नेत-व्यानि । सूत्रे 'समान एवञ्चाभेदा' दिति वक्तव्ये 'सर्वाभेदा' दिति वचनं यदेकशाखायां प्रदेशान्तरे शाखान्तरे वा समाम्नातं श्रेष्ठत्वादिगुणके प्राणोपासनं तेन सर्वेणा 'प्यथातो निः-श्रेयसादान' मित्यादिसन्दर्भाम्नातप्राणोपासनस्याभेदादित्यर्थपर्यवसितं न तु शाखान्तरा-म्नानतः प्रदेशान्तराम्नाने विशेषाभावं सूचयति । तेनेयं शङ्का व्यावर्तते । 'यो ह वै ज्येष्ठं च श्रेष्ठं चे' त्यारभ्य शाखाभेदेनाम्नातं सर्वमपि प्राणोपासनमेकमेव वैरूप्याभावादिति युक्तस्तत्र परस्पराम्नातगुणोपसंहारः । 'अथातो निःश्रेयसादान'मित्यादिसंदर्भाम्नातं तु ततो भिन्न-मेव । तत्र सर्वत्रापि वागादीनामेकैकस्योत्क्रमणे सत्यपि शरीरस्येंद्रियाणां च यथापूर्व-मवस्थानेन प्राणस्योत्क्रमणप्रसक्तौ तेषां शैथिल्यापत्त्या च प्राणस्य श्रैष्ठ्यनिर्द्धारणम् । इह प्राणसहितेषु वागादिषु सहोत्क्रांतेषु मृतकल्पतया शयितस्य शरीरस्य वागादिप्रवेशे तस्या-प्यनुत्थानतः प्राणप्रवेशमात्रेणोत्थानतश्च श्रैष्ठ्यनिर्धारणमित्युपाख्यानभेदादिति । शङ्का-व्यावर्तनप्रकारस्तु श्रैष्ठ्यं श्वशकुनिपर्यन्तसर्वप्राण्यन्नत्वमाचमनीयसलिलवासस्त्वमित्युपा-स्यगुणसारूप्ये सत्यनुपास्यगुणवैरूप्यं न भेदावहम् । सादृश्यनिर्णयार्थेषु मुख्यसादृश्यमेव स्वकार्यकरं न त्वमुख्यवैसादृश्यमिति । अयं न्यायोऽधिकरणान्तरे विवक्षितत्वादिह भाष्य-कृता नोद्घाटित इत्यलमतिविस्तरेण ॥ इति सर्वाभेदाधिकरणम् ॥ ९ ॥

नयमणिमालायाम्

## अथ सर्वाभेदाधिकरणम् ॥ ५ ॥

सू० ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥

वासिष्ठ्यादि न कौषीतकिनां प्राणस्य वेदनेऽपेक्ष्यम् । तत्परिपठितगुणानामेवैवंशब्दविषयत्वात् ॥ २०९ ॥
शाखान्तरगतमपि तद्गुणिना प्राणेन बुद्धिमानीतम् । एवंशब्दार्थत्वं यातीत्युपहार्यमेवमत्रापि ॥ २१० ॥

इति सर्वाभेदाधिकरणम् ॥ ५ ॥

## सूत्रार्थचन्द्रिकायाम्

अथ सर्वाभेदाधिकरणम् ॥ ५ ॥

सू ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥

भगवत्पादमते, पूर्वमोंकारस्य उद्गीथत्वविशेषणात्सर्ववेदव्याप्तिव्यावृत्तिवत् 'एवं विद्वा' निति प्रकृतगुणमात्रग्राहकैवं-शब्दाच्छाखान्तरगुणव्यावृत्तिरिति दृष्टान्तसंगत्येदमाह-सर्वाभेदादिति । अत्र वाजसनेयके छान्दोग्ये च प्राणविद्यायां

## अथानन्दाद्यधिकरणम् ॥ ६ ॥

## आनन्दादयः प्रधानस्य ॥ ११ ॥

अभेदादिति शेषः। 'सत्यं ज्ञानमनन्तं ब्रह्म' आनन्दो ब्रह्म' 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' "आकाशशरीरं ब्रह्म, सत्यात्म प्राणारामं मनआनन्दम्, शान्तिसमृद्धम्' इत्यादिष्वानन्दादयो गुणाः परविद्यासु प्रधानस्य ब्रह्मणः श्रूयन्ते। ते सर्वासु परविद्यासूपसंहार्या न वा ॥

इति संशये नोपसंहार्याः, ब्रह्मण एकस्यानन्दाद्यनेकगुणविशिष्टत्वेऽनेकत्वप्रसङ्गात्, विशेष्यभेदकत्वात्, अथवा-तत्रतत्रोक्तगुणमात्रेणापि तदुपासनसंभवात् इत्येवं प्राप्तेऽभिधीयते। गुणिनो ब्रह्मण एकत्वात् सर्वासु परविद्यासूपसं-

## अथ आनन्दाद्यधिकरणम् ॥ ६ ॥

सू॥ आनन्दादयः प्रधानस्य ॥ ११ ॥ पूर्वसूत्रादपेक्षितांशानुवृत्तिं दर्शयति—अभेदादिति। सिद्धान्तसूत्रेऽस्मिन्नपेक्षितांशपूरणस्य सिद्धान्तोपक्रमस्य व्याख्यानसमये कर्तव्यत्र तत्कारणं कार्याख्यानाधिकरणे करिष्यमाणस्य प्राणविद्याविषयविचारान्तरस्य पूर्वाधिकरणसंगतत्वात्ततः प्राङ्मध्ये विचारान्तरकरणमयुक्तमित्याशङ्कानिराकरणाय सौत्रपदानुवृत्तिलिप्सया मध्ये कृतमिति संगतिसूचनार्थम्। एवमेव हि जैमिनिना 'चिकीर्षया च संयोगा'दित्युपक्रान्तमहावेद्यधिकरणपूर्वपक्षसिद्धान्तमध्ये संयोगादित्यस्यानुवृत्तिलिप्सया 'तथा प्रधानेने'त्यैष्टिकिवेद्यधिकरणपूर्वपक्षसूत्रं कृतम्। आनंदादीनां ब्रह्मगुणानां सकलेतरविलक्षणत्वेन प्रतीतावुपयोगानुपयोगाभ्यां संशये पूर्वः पक्षः। आनन्दादयः सर्वासु विद्यासु किमर्थमुपसंहार्याः किमेते सकलेतरविलक्षणब्रह्मस्वरूपप्रतीत्यनुबंधिन इति तत्प्रतीत्यर्थमुपसंहार्याः उत विद्योपकारार्थम्। नाद्यः। घटत्वादिवदेकस्यैव स्वरूपनिरूपकधर्मस्य सकलेतरविलक्षणधर्मिस्वरूपप्रतीतिसाधनत्वेन तावद्गुणोपसंहारवैयर्थ्यात्। न च ब्रह्मणस्तावन्तोऽपि गुणाः स्वरूपनिरूपकाः। स्वरूपनिरूपकधर्मानेकत्वे घटपटादिरीत्या ब्रह्मणोऽप्यनेकत्वप्रसंगात्। लोकवेदयोरेकस्मिन्धर्मिण्यनेकधर्मसमावेशस्य बहुलमुपलंभेऽपि स्वरूपनिरूपकासाधारणधर्मभेदे धर्मिभेदस्य नियतत्वात्। न द्वितीयः। तत्तद्विद्याप्रकरणाम्नातगुणैरेव विद्योपकारसिद्धेः। अन्यथा विद्याभेदेऽपि केषाञ्चिद्गुणानामुपसंहारे विनिगमनाविरहात्सर्वगुणानामपि पारिप्लवत्वप्रसंगात्। इति। सिद्धान्तस्तु—नित्यानपायिज्ञानानन्दादि-

णागादयो वसिष्ठत्वादिगुणाः श्रूयन्ते न कौषीतक्यादिशाखासु। तत्र किं वसिष्ठत्वादिगुणाः अन्यत्रोक्ता अन्यत्र नोपसंहर्तव्या उतोपसंहर्तव्या इति **संदेहः**। नोपसंहर्तव्या इति **पूर्वपक्षः**। **सिद्धान्तस्तु, अन्यत्र**=वसिष्ठत्वादिगुणानामश्रवणस्थले। **इमे**=वसिष्ठत्वादयो गुणा उपसंहर्तव्याः। कस्मात्। **सर्वाभेदात्**=सर्वासु शाखासु प्राणसंवादस्थायाः प्राणविद्यायाः अभिन्नत्वात्। अत एव प्रकृतगुणानामिवाप्रकृतगुणानामपि बुद्धिस्थतयैवंशब्दग्राह्यत्वात्सर्वे सर्वत्रोपसंहर्तव्या इति सिद्धम्॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च सर्वं संदेहपूर्वपक्षादिकमविशिष्टं पूर्वस्मादिति न तत्प्रतन्यते।

**आनन्दतीर्थमते,** उभयोः कर्तव्यत्वस्याधिकारिभेदेन व्यवस्थितौ अल्पगुणोपासकानामपि मुक्तिसत्त्वे सर्वगुणोपासनं केषांचिद्व्यर्थं न वेति **संदेहः**। व्यर्थमिति **पूर्वपक्षः**। **सिद्धान्तस्तु,** सर्वगुणोपसंहारेणोपासकानां ब्रह्मादीनामुत्तमफलभाक्त्वेन फलतारतम्यसंभवान्न व्यर्थमिति। **सूत्रार्थस्तु, सू॥ सर्वाभेदादन्यत्रेमे ॥ ११ ॥ इमे**=सर्वगुणोपसंहर्तृब्रह्मादयः **अन्यत्र**=तदनुपसंहर्तृभ्योऽन्यत्र तत्फलविलक्षणमहाफले भवन्ति। तद्भाजो भवन्ति। कुतः। **सर्वाभेदात्**=सर्ववेदोक्तगुणानामविभागेनोपसंहर्तृत्वेनोपासनादित्यर्थः। **इति सूत्रार्थचन्द्रिकायां सर्वाभेदाधिकरणम्॥५॥**

हार्या आनन्दादयः । नीलो धवळो रक्तः खण्डः पूर्णशृङ्ग इत्यादीनां विरुद्धधर्माणामेव धर्मिभेदावहत्वम्, न तु नीलं सुगन्धि महदुत्पलमित्यत्र नीलिमादीनाम् । अतो ब्रह्मणो गुणानामविरोधान्न भेदावहत्वम् । तस्माद्गुणिनो ब्रह्मणः सर्वत्राभेदादुपसंहार्या आनन्दादय इति ॥ इत्यानन्दाद्यधिकरणम् ॥ ६ ॥

## अथ प्रियशिरस्त्वाधिकरणम् ॥ ७ ॥

## सू ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

'तस्य प्रियमेव शिरः' इत्यादौ प्रियशिरस्त्वादयो ब्रह्मधर्मत्वेन श्रूयन्ते ।

---

गुणविग्रहविशेषवत्त्वं ब्रह्मणः स्वरूपलक्षणमित्युक्तं जन्मादिसूत्रे । न हि ब्रह्मविष्ण्वादिसकलेतरविलक्षणं ब्रह्म शृंगग्राहिकयानुभवारूढं भवति । यथा प्रकृष्टप्रकाशेन सकलग्रहनक्षत्रतारकादिविलक्षणश्चंद्रः तथाभूतस्वरूपलक्षणशालि ब्रह्मैकमेव सर्वासु विद्यासूपास्यमिति । चन्द्रदर्शने सर्वत्र प्रकृष्टप्रकाशानुवृत्तिवत् ज्ञानानंदादिगुणविग्रहविशेषानुवृत्तिस्सर्वास्वपि ब्रह्मविद्यासु भवेदेव । न च स्वरूपनिरूपकतद्धर्मभेदाद्धर्मिभेदश्शङ्कनीयः। न हि स्वरूपनिरूपकत्वं धर्माणां भेदकत्वे प्रयोजकं किं तु विरुद्धधर्मत्वं नीलत्वधवलत्वादिषु तथा क्लृप्तेः । अत एव 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान्गृह्णीयात्' इति वाक्ये रथन्तरसामत्वरूपस्य सोमविशेषणस्य तद्विरुद्धबृहत्सामत्वरूपज्योतिष्टोमप्रयोगान्तरादेव भेदकत्वं न तु तदविरुद्धगायत्रमहायवादिसामयुक्तज्योतिष्टोमक्रतुसामान्याद्भेदकत्वमिति व्यवस्थापितं रथन्तराधिकरणे । इह श्रुतिप्रतिपन्नसमावेशानामुदाहृतगुणविशेषविग्रहविशेषाणां नास्ति विरोधशङ्का । अतस्सर्वास्वपि विद्यास्वेतेषामुपसंहारः कार्य इति ॥

॥ इति आनन्दाद्यधिकरणम् ॥ ६ ॥

## अथ प्रियशिरस्त्वाधिकरणम् ॥ ७ ॥

सू ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ प्रियादीनामानंदविशेषत्वात्तेषां शिरःप्रभृतिरूपत्वस्योपचापचयाद्यापादकत्वाच्च संशयपूर्वपक्षज्ञानावान्तरविशेषसत्यसंकल्पत्वादिवदानंदावांतरविशेषाः प्रियशिरस्त्वादयोऽप्युपसंहर्तव्याः । न च प्रियादीनामानंदभेदत्वेऽपि तेषां शिरस्त्वात्मत्वादिकं विद्याविशेषे ब्रह्मणो निरतिशयानंदरूपत्व-

---

### नयमणिमालायाम्

### अथ आनन्दाद्यधिकरणम् ॥ ६ ॥

सू ॥ आनन्दादयः प्रधानस्य ॥ ११ ॥

आनन्दाद्या न गुणा स्समस्तविद्योपसंहार्याः । इतरगुणेभ्यस्तेषां व्यवस्थितेभ्यो विशेषः कः ॥ २११ ॥

धर्मिस्वरूप एते निरूपकाः खण्डमुण्डतादिवत् । इति चेत्तर्हि ब्रह्मानेकं प्रसज्यते खण्डमुण्डवदेव ॥ २१२ ॥

धर्मिनिरूपकभेदे निरूप्यभेदस्य नियतत्वात् । धर्मिणि धियमारूढे चैकेनान्यगुणवैफल्यम् ॥ २१३ ॥

मैवं ब्रह्मालौकिकमेकेन गुणेन न धियमारोहेत् । न च खण्डतादिवदिमे विरोधिनो येन धर्मिभेदः स्यात् ॥ २१४ ॥

तत्सच्चिदादिधर्मास्समस्तविद्योपसंहार्याः । एवं निखिलनरामरविलक्षणं ब्रह्म धीपदं भवति ॥ २१५ ॥

सदिति सकलप्रपञ्चाकारजुषा संगतं शक्त्या । चिदिति सकलावभासकमनस्समाख्यातबोधघनम् ॥ २१६ ॥

नित्यविभुसर्वभावात्त्रिविधपरिच्छेदलंघ्यनंतमिति । आनन्द इति तथायुतमनतिशयानन्दरूपया शक्त्या ॥ २१७ ॥

दिव्याद्भुततरविग्रहशोभि विरूपाक्षमित्युदितम् । तत्कृष्णपिंगलमिति प्रोक्तं शक्त्या तया शबलदेहम् ॥ २१८ ॥

आकाशशरीरमिति प्रथितं तच्छक्त्यभिन्नमित्येतत् । तस्यामेव तु रक्तिमत्प्राणाराममिति संकथितम् ॥ २१९ ॥

तामपि न वाह्यकरणैरुपभुंक्ते किं तु मनसैव । लीलैव तनुपरिग्रह इति मन आनन्दमित्युदितम् ॥ २२० ॥

## इति आनन्दाद्यधिकरणम् ॥ ६ ॥

तेऽप्यानन्दादय इव परविद्यासूपसंहार्या न वा ॥

इति संशये तेषामपि सत्यसंकल्पत्वादिवदुपसंहारे को विरोधः ॥

इति प्राप्ते ब्रूमः—नास्ति प्रियशिरस्त्वादीनामुपसंहारः परविद्यासु, सत्यसंकल्पत्वादिवत् तेषां ब्रह्मगुणत्वाभावात् । उपसंहारे तेषां ब्रह्मणः सावयवत्वेनोपचयापचयप्रसक्तिः । भेदो हि प्रियशिरस्त्वादीनां स्वाभाविकत्वे ब्रह्मणो भवति । अतस्तेषां नोपसंहारः ॥

आनन्दादीनामिव सर्वज्ञत्वादीनां ब्रह्मस्वरूपान्तर्भूतगुणत्वादविरोध इत्याह—

सू ॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे सर्वज्ञत्वनित्यतृप्तत्वादयो ब्रह्मस्वरूपान्तर्गततया अर्थसामान्यात् सर्वत्रोपसंहार्याः । प्रियशिरस्त्वादीनामनन्तर्भावान्नोपसंहार इति ॥

इति प्रियशिरस्त्वाधिकरणम् ॥ ७ ॥

---

त्तिसौकर्यार्थं कल्पितं न तु तात्विकं ब्रह्मानंदस्य तत्वतः शिरःप्रभृतिरूपत्वे क्वचित्स्थौल्यं क्वचित्कार्श्यमिति तस्योपचयापचयप्रसंगादिति वाच्यम् । ब्रह्मानन्दरूपायाः परिणामिन्याश्चिच्छक्तेरुपचयापचययोः परिणामविशेषवृत्त्योरदोषावहत्वादिति । सिद्धांतस्तु, उपचयापचयौ शिरःपक्षपुच्छादिरूपतया स्थूलत्वकृशत्वरूपौ प्रसज्येयाताम् । तौ हि जडपरिणामेष्वेव संभवतो नानंदभेदेषु प्रियादिषु । आनंदमयस्य पुच्छत्वेन निरूपिताद्ब्रह्मणो भेदश्च प्रसज्यते । अतोऽन्नमयादीनामिवानन्दस्यापि शिरःप्रभृतिकल्पनामात्रमिति न तेषामुपसंहार इति । सूत्रे हेतुवाची हिशब्दः काकाक्षिन्यायेनोभयत्र संबध्यते । तथा चोपचयापचयप्रसंगात् भेदप्रसंगाच्चेत्यर्थः । सर्वज्ञत्वनित्यतृप्तत्वादिकं ज्ञानानन्दविशेषत्वेऽपि यदुपसंहार्यमभिमतं तत्र हेतुं प्रियशिरस्त्वादिवैषम्यं दर्शयितुमुत्तरसूत्रमवतारयति—आनंदादीनामिवेति । सू ॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥ स्वरूपान्तर्गततया यथा ब्रह्मस्वरूपलक्षणतया तथा अर्थसामान्यात् अनपायित्वेन ब्रह्मरूपधर्मिसादृश्यात् । ननु किं यावदनपायि ब्रह्मणि धर्मजातं तत्सर्वं सर्वविद्यासूपसंहार्यम् ? नेति ब्रूमः । यद्ब्रह्मस्वरूपप्रतीत्यनुबंधि ज्ञानानंदादिकं यच्च मुक्तावुपासकेन प्राप्यं सर्वज्ञत्वसत्यकामत्वसत्यसंकल्पत्वाप्तकामत्वादिकं तत्सर्वमुपसंहार्यम् । तत्र प्रतीत्यनुबन्धिगुणजातस्योपसंहार्यत्वं पूर्वाधिकरणे वर्णितमिह मुक्तप्राप्यगुणजातस्योपसंहार्यत्वं वर्णितं तदेतदर्थसामान्यादित्यस्य मुक्तानां ब्रह्मणा सह गुणाष्टकाविर्भावादिफलसाम्यादित्यर्थान्तरगर्भाकारेण विवक्षितम् । इदञ्चाग्रिमाधिकरणे 'तदनुसंधाननैरंतर्याद्धि तत्सारूप्यापत्तिर्मुक्तिः अतो यथोपासनं फल'मिति भाष्यकृदेव स्पष्टयिष्यति ॥ इति प्रियशिरस्त्वाधिकरणम् ॥ ७ ॥

नयमणिमालायाम्

अथ प्रियशिरस्त्वाधिकरणम् ॥ ७ ॥

सू० ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥

जीवस्यानंदभिदाः किं न स्युः प्रियशिरस्त्वाद्याः । नैव ब्रह्मगुणास्ते सावयवं ब्रह्म हि तथा स्यात् ॥ २२१ ॥

ज्ञानानन्दविशेषा ये त्वितरे स्युः शिवागमेऽपि मिताः । सार्वज्ञ्यतृप्तिमुख्यास्संग्राह्यास्तासु तेऽर्थैक्यात् ॥ २२२ ॥

इति प्रियशिरस्त्वाधिकरणम् ॥ ७ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ आनन्दाद्यधिकरणम् ॥ ६ ॥ ७ ॥

**सू॥ आनन्दादयः प्रधानस्य ॥ ११ ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ इतरेत्वर्थसामान्यात् ॥ १३ ॥**

**भगवत्पादमते,** अत्र निर्गुणश्रुतिषु आनन्दस्वरूपत्वादयो धर्माः क्वचित्क्वचिच्छ्रूयन्ते, ते किं सर्वत्रोपसंहार्या उत नेति **संदेहः**। नोपसंहर्तव्या इति **पूर्वपक्षः**। **सिद्धान्तस्तु,** सर्वशाखासु वेद्यस्य ब्रह्मण एकत्वेन विद्याया एकत्वात् आनन्दस्वरूपत्वादयो धर्माः सर्वत्रोपसंहर्तव्या इति।

ननु यदि ब्रह्मण एकत्वादानन्दाद्युपसंहारस्तर्हि प्रियशिरस्त्वाद्युपसंहारोऽपि स्यादित्याशंक्याह—**सू॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२॥ प्रियशिरस्त्वादिधर्माणां न सर्वत्र प्राप्तिः**। **हि**=यस्मात् प्रियमोदप्रमोदानन्दानां परस्परापेक्षया **उपचयापचयौ**=वृद्धिह्रासावनुभूयेते। तौ च धर्मिभेदे सत्येव स्वाभाविकौ भवतः। ब्रह्मणस्तु, निर्भेदत्वात्।

ज्ञानोपयोगित्वादानन्दादीनां संयद्वामत्वादिधर्मेभ्यो वैषम्यमाह—**सू॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥ इतरे तु**=उपास्यधर्मापेक्षया इतरे त्वानन्दादयो धर्माः ज्ञानैकफलास्सर्वत्रोपसंह्रियन्ते। कुतः। **अर्थसामान्यात्**=प्रतिपाद्यस्य ब्रह्मण एकत्वादित्यर्थः। अन्तरेण गुणोपसंहारं यावद्ब्रह्मस्वरूपविषयकमहावाक्यार्थज्ञानसाध्याया अविद्यानिवृत्तेरसंभवात्सर्वत्रानन्दादय उपसंहर्तव्या इति सिद्धम् ॥ **इत्यानन्दाद्यधिकरणम् ॥ ६ ॥**

**श्रीकण्ठमते,** "आनन्दादयः प्रधानस्य" इतीदमेकं सूत्रमानन्दाद्यधिकरणमितरत्सूत्रद्वयमधिकरणान्तरमिति भेदः। आनन्दाद्यधिकरणे परविद्यासु, प्रधानस्य ब्रह्मणः श्रूयमाणा, आनन्दादयो गुणाः सर्वासु परविद्यासूपसंहार्या न वेति **संशयः**। एकस्य ब्रह्मण आनन्दाद्यनेकगुणविशिष्टत्वे विशेषणानां विशेष्यभेदकत्वेनानेकत्वप्रसंगात्, तत्रतत्रोक्तगुणमात्रेणापि तदुपासनसंभवाच्च नोपसंहार्या इति **पूर्वपक्षः**। गुणिनो ब्रह्मण एकत्वात् 'नीलो धवल' इत्यादिविरुद्धधर्माणामेव धर्मिभेदावहत्वात् आनन्दादीनां ब्रह्मगुणानामविरोधेन 'नीलं सुगन्धि महदुत्पल' मित्यादौ नीलिमादीनामिव भेदानावहत्वाच्च सर्वासु परविद्यासूपसंहार्या आनन्दादय इति ॥ **श्रीकण्ठमते आनन्दाद्यधिकरणम् ॥ ६ ॥**

### अथ प्रियशिरस्त्वाद्यधिकरणम् ॥ ७ ॥

**सू॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥** 'तस्य प्रियमेव शिरः' इत्यादयो ब्रह्मधर्मत्वेन श्रूयन्ते तेऽप्यानन्दादय इव परविद्यासूपसंहार्या न वेति **संदेहे** सत्यसंकल्पत्वादिवदुपसंहार्या एवेति **पूर्वपक्षः**। **सिद्धान्तस्तु,** प्रियशिरस्त्वादीनामुपसंहारो नास्त्येव परविद्यासु। सत्यसंकल्पत्वादिवत्तेषां ब्रह्मगुणत्वाभावात्। तेषामुपसंहारे ब्रह्मणस्सावयवत्वेनोपचयापचयप्रसक्तिः। प्रियशिरस्त्वादीनां स्वाभाविकत्वे भेदो हि ब्रह्मणो भवेत्। अतस्तेषां नोपसंहारः। आनन्दादीनामिव सर्वज्ञत्वादीनां ब्रह्मस्वरूपान्तर्भूतगुणत्वात्तेषामुपसंहारे न विरोध इत्याह—**सू॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥ इतरे**=सर्वज्ञत्वनित्यतृप्तत्वादयो गुणास्तु अर्थसामान्यात्सर्वत्रोपसंहार्याः। प्रियशिरस्त्वादीनां तदनन्तर्भावान्नोपसंहारः इति ॥ **इति प्रियशिरस्त्वाद्यधिकरणम् ॥ ७ ॥**

**रामानुजमते तु,** 'आनन्दादय' इत्यादीनि सप्त सूत्राण्यप्येकमधिकरणम्। तत्र ज्ञानानन्दामलत्वादयो ब्रह्मस्वरूपनिरूपकधर्माः सर्वासु परविद्यासूपसंहर्तव्या न वेति **संशयः**। अप्रकरणाधीतानामुपसंहारे प्रमाणाभावाद्ब्रह्मगुणानामसंख्येयत्वेनोपसंहाराशक्तेश्च नोपसंहर्तव्या इति **पूर्वपक्षः**। **सिद्धान्तस्तु,** आनन्दादयस्सर्वासु परविद्यासूपसंहर्तव्याः। प्रधानस्य गुणिनो ब्रह्मणस्सर्वासु विद्यास्वभेदात्। 'सर्वाभेदा' दिति पूर्वसूत्रा'दभेदा'दित्येकदेशानुवृत्त्या लभ्यते ॥

**सू॥ प्रियशिरस्त्वादीत्यादि ॥१२॥** आनन्दादीनां प्राप्तावपि प्रियशिरस्त्वादीनां ब्रह्मस्वरूपगुणत्वाभावादप्राप्तिरेव। ब्रह्मणः शिरःपक्षादिभेदे स्वरूपे सति ब्रह्मण उपचयापचयौ प्रसज्येयाताम् ॥

**सू॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥ इतरे तु**=आनन्दादयः। **अर्थसामान्यात्**=ब्रह्मस्वरूपसामान्यात्सर्वास्वनुवर्तन्ते ॥

ननु प्रियशिरस्त्वादीनां ब्रह्मस्वरूपधर्मत्वाभावे किमर्थं तदभिधानमित्यत आह—**सू॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥** प्रयोजनान्तराभावादनुचिन्तनार्थं तदभिधानम्। वेदितव्यतयोपदिष्टमानन्दमयं ब्रह्म ध्यानार्थं तथा बुद्धावारोप्यत इत्यर्थः ॥

**सू॥ आत्मशब्दाच्च ॥ १५ ॥** 'अन्योऽन्तर आत्मानन्दमय' इत्यात्मशब्दाच्च प्रियशिरस्त्वादयो न ब्रह्मस्वरूपधर्माः। शिरःपक्षादीनामात्मधर्मत्वाभावादित्यर्थः ॥

**सू॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥** 'अन्योऽन्तर आत्मे' त्यात्मशब्देन परमात्मन एव ग्रहणम्

## अथाध्यानाधिकरणम् ॥ ८ ॥

## सू ॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

इह पूर्वोक्तानन्दमयात्मानुसन्धानवदन्नमयादीनामप्यनुसन्धानं नियतमस्ति न वेति संशयः ॥

अन्नमयादिसर्वान्तरस्यानन्दमयस्यान्नमयाद्यनुसंधानक्रममन्तरेण तदन्तरत्वेनानुसंधानायोगात् तेषामनुसंधानं नियतम् ॥

## अथ आध्यानाधिकरणम् ॥ ८ ॥

**आध्यानाय प्रयोजनाभावात् ॥ १४ ॥** संगतिसूचनपूर्वकं संशयं दर्शयति—इहेति। 'स एको ब्रह्मण आनन्द' इत्यानंदवल्ल्यां श्रुतस्य निरतिशयानन्दस्य सर्वविद्यास्वनुसन्धेयत्वव्यवस्थापनादानंदमय आत्मा सर्वविद्यास्वनुसंधेय इति फलितम् । तदनुसंधाने तदीयं प्रियशिरस्त्वादिकमपि सर्वत्रानुसंधातव्यमिति शङ्का पूर्वाधिकरणे निराकृता । माभूदानंदमयसम्बन्धि शिरःपक्षादिकमनुसंधेयम् । आनन्दमयस्य यस्मिन्नन्नमयादिकोशचतुष्टये निगूढत्वमुक्तं तदनुसंधेयमेव तस्याकल्पितत्वादिति शङ्कानिराकरणार्थमेतदधिकरणमिति संगतिः । अन्नमयादिकीर्तनस्यानंदमयगतान्नमयादिसर्वांतरत्वरूपगुणानुसंधानार्थत्वानंदमयप्रतिपत्तिसौकर्यार्थत्वान्यतरानवधारणात्संशय इति भावः । अन्नमयादीति । अयमाशयः । अन्नमयादिषूत्तरोत्तरस्य पूर्वपूर्वांतरत्वप्रतिपादनमानंदमयस्य सर्वांतरत्वरूपानुसं-

---

कुतः । 'आत्मावा इदमेक एवे' त्यत्र यथा परमात्मनो ग्रहणं तद्वत् । कथमिदमवगम्यते इति चेत् **उत्तरात्**='सोऽकामयत बहु स्या' मिति तदेकार्थादुत्तरवाक्यादित्यर्थः ॥

**सू ॥ अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥** 'अन्योऽन्तर आत्मा प्राणमय' इत्यादिपूर्ववाक्येषु अनात्मस्वात्मशब्दान्वयात्कथमुत्तरवाक्यान्निर्णय इति चेत् 'तस्माद्वा एतस्मादात्मन आकाश' इति प्रकृतस्यात्मन एव आनन्दमयपर्यन्तेष्ववधारणात् स्यादेव निर्णयः । अतः प्रियशिरस्त्वादीनामनात्मधर्मत्वात् ज्ञानानन्दादीनामात्मस्वरूपनिरूपकधर्मत्वाच्च तेषामेव सर्वत्रोपसंहार इति ॥ **इति रामानुजमते आनन्दाद्यधिकरणम् ॥ ६ ॥**

**आनन्दतीर्थमते,** इमानि त्रीणि सूत्राणि त्रीण्यधिकरणानीति वेद्यम् । **सू ॥ आनन्दादयःप्रधानस्य ॥ १२ ॥** अत्र सर्वमुमुक्षूणां कियन्तो गुणाः नियमेनोपास्या इति यः कोऽपि गुणो नियन्तुं शक्यते वा न वेति **संदेहे** प्रमाणाभावान्न शक्यते इति **पूर्वपक्षः । सिद्धान्तस्तु, आनन्दादयः**=आनन्दो ज्ञानं सच्छब्दोदितं निर्दोषत्वं आत्मशब्दोदितं स्वामित्वं चेति चत्वारो गुणाः । **प्रधानस्य**=प्रधानफलस्य मोक्षस्यार्थे सर्वमुमुक्षूपास्याः। मोक्षस्य निर्दोषज्ञानानन्दरूपत्वात् । 'तं यथा यथोपास्ते' इति श्रुतेरित्यर्थः । आत्मत्वमपि तुरीये वक्ष्यमाणं संगृह्यते इति यावत् ॥ **इत्यानन्दाद्यधिकरणम् ॥६॥**

**सू ॥ प्रियशिरस्त्वादीत्यादि ॥१३॥** 'तस्य प्रियमेव शिरः'इत्यादिना श्रुताः प्रियशिरस्त्वादयोऽपि गुणाः किं सर्वमुमुक्षूपास्या वाच्याः उत नेति **संदेहः** । तेषामानन्दभेदत्वात्सर्वमुमुक्षूपास्या वाच्या एवेति **पूर्वपक्षः । सिद्धान्तस्तु,** सर्वेषां प्रियशिरस्त्वादिगुणोपासनयोग्यता नास्ति किं तु केषांचिदेव । कुतः । **हि**=यस्मात् । **भेदे**=निमित्तसप्तमी । फलभेदसिद्ध्यर्थम् । **उपचयापचयौ**=उपासने वृद्धिह्रासौ । तारतम्यमिति यावत् । अपेक्षितौ । तस्मादित्यर्थः ॥ **इति प्रियशिरस्त्वाद्यधिकरणम् ॥ ७ ॥**

**सू ॥ इतरे त्वर्थसामान्यात् ॥ १४ ॥** इह उक्तेभ्यश्चतुर्भ्य इतरे मध्यमगुणाः देवादिभिरुपासकैरुपसंहार्या वा न वेति **संदेहे** अनर्हगुणोपासनस्यानर्थफलत्वान्नोपसंहार्या इति **पूर्वपक्षः । सिद्धान्तस्तु, इतरे**=उक्तेभ्य आनन्दादिभ्यश्चतुर्भ्यः अन्ये मध्यमगुणाः । **अर्थसामान्यात्**=स्वस्वप्राप्यमोक्षरूपफलसाम्यात् । तुशब्द एवार्थे । ल्यब्लोपे पञ्चमी । स्वगुरोरन्यस्माद्वा कुतश्चित्सर्वज्ञात् भाविस्वस्वमुक्तिफलस्वरूपज्ञानसंभवेन फलतारतम्यमपेक्ष्य इतरेऽपि मध्यमगुणा अप्युपसंहार्या एवेति ॥ **इति इतरगुणाधिकरणम् ॥ ८ ॥ सूत्रार्थचन्द्रिकायामानन्दाद्यधिकरणम् ॥ ६ ॥**

इति प्राप्तेऽभिधीयते—अन्नमयादीनामनुसंधानं न नियतम्, प्रयोजनाभावात्। तस्यानन्दमयब्रह्मसिद्धिर्हि प्रयोजनम् । अतस्तत्सिद्धिपर्यन्तमेवान्नमयादीनामनुसंधानमिति तेषामनियतमनुसंधानम् ॥

## सू ॥ आत्मशब्दाच्च ॥ १५ ॥

'एतमन्नमयमात्मानमुपसंक्रम्य' इत्यादिषु प्रत्येकमात्मशब्दादन्नमयादीनामन्नाद्यधिष्ठातृचेतनत्वमवगम्यते। ब्रह्मव्यतिरिक्तानां चेतनानां मुमुक्षुध्येयत्वनिषेधात् ध्यानकाले तेषां नानुसंधानम् । तथाऽथर्वशिखायाम् 'शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य' इति शिवव्यतिरिक्तानां मुमुक्षुध्येयत्वं निषिध्यते। ततोऽन्नमयादीनामनुसंधानानियमः ॥

## सू ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

इह 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यात्मगृहीतिः परमात्मविषया, न प्रत्यगात्मविषया, 'आत्मन आकाशः संभूतः' इत्यत्रात्मशब्दवत् । तदिदमुत्तरात् 'आनन्दमयमात्मानमुपसंक्रम्य' इत्येतस्मादवगम्यते । तस्मादानन्दमया-

---

ध्येयगुणप्रतिपादनार्थम्। तथा सत्येवैकवाक्यतालाभात् । आन्यपर्येण प्रवृत्तेऽपि वाक्ये अन्नमयादिवेदनफलवर्णनं भूमविद्यायां नामादिवेदनफलवर्णनमिव युक्तम्। अन्नमयाद्यान्तरत्ववेदनं च नान्नमयाद्यनुसंधानं विना शक्यते कर्तुम्। अतो यथा दहरविद्यायां ब्रह्मपुरमध्यवर्त्तिदहरपुण्डरीकाभ्यन्तरत्वेन ब्रह्मानुसंधानार्थं ब्रह्मपुरदहरपुण्डरीकानुसंधानं नियतं तथान्नमयाद्यनुसंधानमपि नियतमेव। न चान्नमयादयो देवताविशेषा येन देवतान्तराणां मुमुक्षुध्येयत्वनिषेधाच्छिवस्य सर्वोत्तरत्वप्रतिपत्तिसौकर्यार्थमेवान्नमयाद्यनुकीर्तनं न तु तदांतरत्वानुसंधानार्थमिति कल्प्येत। शरीरप्राणमनोविज्ञानात्मानो हि ते तत्तद्वाक्यतः प्रतीयंते। एवञ्चानंदमयस्य सर्वविद्यास्वनुसंधेयत्वे अन्नमयाद्यांतरत्वमपि सर्वत्रानुसंधेयम्। प्रधानानुसारित्वाद्गुणानाम्। यद्यपि विद्यान्तरेषु ब्रह्मप्रतिपत्त्यनुबंधित्वेनानंदमयत्वमात्रमनुसंधातव्यं स्यात्तथाप्यानंदमयविद्यायां प्रकरणपठितगुणत्यागायोगादन्नमयाद्यान्तरत्वानुसंधानार्थमन्नमयाद्यनुसंधानं नियतमिति। आनंदमयब्रह्मसिद्धिरिति। अन्नमयादिभ्य उत्कृष्टत्वेनानंदमयब्रह्मसिद्धिरित्यर्थः। तदेत 'दाध्यानाये'ति सौत्रपदसामर्थ्याल्लभ्यते। आभिमुख्येन ध्यानं ह्याध्यानम्। सर्वोत्कृष्टत्वसिद्धावेवात्यंतादरकृतेनाभिमुख्येन ध्यानं भवति। ननु किमिति प्रतिपत्तिसौकर्यमात्रार्थत्वमुच्यते, गुणानुसंधानार्थत्वमपि किमिति न स्यादिति शङ्कानिराकरणार्थं सूत्रम्—आत्मशब्दाच्च ॥ १५ ॥ अस्मिन्सूत्रे वक्तव्यं सर्वमानन्दमयाधिकरणतृतीयपक्षे भाष्ये व्यक्तं प्रतिपादितम्। ध्यानकाल इति। ध्यानात्पूर्वं शिवस्य ब्रह्मादिपरत्वदृढीकरणार्थमन्नमयाद्यनुसंधानमस्तु नाम । निरंतरशिवैकविषयचिन्तासन्ततिरूपध्यानकाले तु तन्न युक्तमित्यर्थः । नन्वात्मशब्दयोगेऽपि 'येऽन्नं ब्रह्मोपासत' इत्यादिषु ब्रह्मशब्दश्रवणेऽपि उपासनाप्राप्यदेवताविशेषत्वेऽपि यथान्नमयादीनामब्रह्मत्वं तथानंदमयस्यापि स्यादिति मन्दशङ्कानिराकरणार्थं सूत्रम्—आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ आनन्दमयमात्मानमिति । तदनंतरमुपसंक्रमणीयान्तरानिर्देशान्मुक्तिफलस्य तत्प्राप्तावेव पर्यवसानात्तस्य परब्रह्मतावसीयत इति भावः।

त्मानुसन्धानं मुख्यं ब्रह्मानुसंधानमिति ॥

सू ॥ अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

अन्नमयादीनामप्यात्मशब्दान्वयात्परमात्मत्वेन तेषामप्यनुसंधानमविरुद्धमिति चेत्—न, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यानन्दमयस्य परमात्मनः शिवस्यान्नमयादिभ्यो भिन्नत्वावगमात् 'शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य' इति सकलेतरपरित्यागपूर्वकं शिवस्यैकस्यैव ध्येयत्वावधारणात् । अत्र हि निरस्तसमस्तकलङ्कतया निखिलमङ्गलभाजनतया च शिवशब्देन परं ब्रह्मोच्यते । यद्विरूपाक्षं कृष्णपिङ्गलं तदनुसंधाननैरन्तर्याद्धि तत्सारूप्यापत्तिर्मुक्तिः । अतो यथोपासनं फलमिति तद्व्यतिरिक्तानां शिवताशून्यानामनुसंधानं न शिवत्वापादकम् । अत आनन्दमयः शिव एक एवानुसंधेय इति ॥

इत्याध्यानाधिकरणम् ॥ ८ ॥

---

अभ्यासादिकं त्वानंदमयाधिकरणे प्रपञ्चितत्वान्नोपात्तम् । तर्ह्यात्मब्रह्मशब्दादिश्रवणादन्नमयादीनामपि ब्रह्मतास्तु । 'अन्योऽन्तर' इति भेदनिर्देशस्य 'ब्रह्म पुच्छं प्रतिष्ठे'ति पुच्छपुच्छवद्भावनिर्देशवदौपाधिकभेदविषयत्वोपपत्तेः । अन्नमयाद्युपासनाभिः क्रमप्राप्यस्थानभेदश्रवणस्य च परमशिवलोकान्तर्गतस्थानभेदविषयत्वोपपत्तेः इत्याशङ्कानिराकरणार्थं सूत्रम्–अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥ आत्मशब्दान्वयादित्येतत् ब्रह्मशब्दान्वयस्याप्युपलक्षणम् । 'अवधारणा'दित्येतद्भिन्नत्वनिश्चयपरमिति व्याचष्टे–भिन्नत्वावगमादिति । आनन्दमयस्य ब्रह्मणश्च परब्रह्मत्वमानन्दमयाधिकरणोक्तन्यायैरविचलमिति पुच्छपुच्छवद्भावनिर्देशः कथंचिदौपाधिकविषयत्वेन योज्यते । नात्र तथा 'अन्योंऽतरआत्मे'त्यस्य मुख्यार्थापरिग्रहे प्रमाणमस्ति । आत्मशब्दस्य देवताविशेषत्वादुपपत्तेः । ब्रह्मशब्दस्य पञ्चब्रह्ममन्त्रप्रसिद्धेषु ब्रह्मविष्णुरुद्रेन्द्रमहेश्वरेषूपपत्तेरिति भावः।'प्रयोजनाभावा' दिति प्रथमसूत्रोक्तमर्थं प्रपञ्चयति–'शिव एको ध्येय' इत्यादिना 'न शिवत्वापादक'मित्यन्तेन । इति आध्यानाधिकरणम् ॥ ८ ॥

---

नयमणिमालायाम् अथ आध्यानाधिकरणम् ॥ ८ ॥

सू ॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥, आत्मशब्दाच्च ॥ १५ ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

आनन्दमयोपास्तावन्नमयाद्या अपि ध्येयाः । स्वातन्त्र्येण क्रमशः स्वस्वगुणैर्योजितास्समाम्नातैः ॥ २२३ ॥
एवं हि तत्तदान्तरविज्ञानमयान्तकोशानाम् । आन्तरतया प्रसिद्ध्येदानन्दमयस्य निध्यानम् ॥ २२४ ॥
मैवं तस्योपास्तौ न ध्येयास्ते (प्रयोजनाभावात् ।) तस्य ध्यानाय हि ते बुद्ध्यवतारार्थमेवोक्ताः ॥ २२५ ॥
किं चात्मशब्दतस्ते शिखयोक्ता ब्रह्मविष्णुरुद्रेंद्राः । आनन्दमयस्त्वात्मा साक्षाच्छिव एव सृष्टिवाक्योक्ताः ॥ २२६ ॥
एवं पञ्चस्वपि तेष्विहात्मशब्दे समानेऽपि । शिव एको ध्येयः स्यादन्यान्ब्रह्मादिकान्परित्यज्य ॥ २२७ ॥
एवमथर्वशिखायामन्यत्सर्वं परित्यज्य । शिव एको ध्येय इति स्फुटमेवान्यव्यवच्छेदात् ॥ २२८ ॥

इत्याध्यानाधिकरणम् ॥ ८ ॥

---

( १ ) एतद्रेखांकितं पदं मातृकापुस्तके त्रुटिततया अर्थानुसारेण मया संपूर्य संयोजितमिति वेद्यम् । अनन्तराधिकरणेऽपि ( तद्दृ ) इत्ययमंशो मयैव पूरितः । मदीयपूरणसामञ्जस्यासामञ्जस्यनिर्धारणे पण्डिताः प्रमाणम् ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ आध्यानाधिकरणम् ॥ ७ ॥ ८ ॥

**सू ॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ आत्मशब्दाच्च ॥ १५ ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥**

**भगवत्पादमते,** अत्र आद्यं सूत्रद्वयमाध्यानाधिकरणमितरत्सूत्रद्वयमात्मगृहीत्यधिकरणमिति विज्ञेयम् । अस्य 'इन्द्रियेभ्यः परा ह्यर्था' इत्यारभ्य 'पुरुषान्नापरं किंचित्सा काष्ठा सा परा गतिः' इत्यन्तं कठवल्लीवाक्यं विषयः । तत्र किमिमानि वाक्यानि भिन्नानि, उत आत्मपरमेकमेव वाक्यमिति **संदेहः** । प्रतिपाद्यभेदाद्भिन्नानीति **पूर्वपक्षः । सिद्धान्तस्तु, आध्यानाय**=ध्यानसाध्यसाक्षात्काराय पुरुष एवार्थादिभ्यः परत्वेन प्रतिपाद्य इत्येकमेव वाक्यम् । न त्विन्द्रियपरत्वेनार्थादयः प्रतिपाद्याः । कुतः । **प्रयोजनाभावात्** । न हीन्द्रियपरत्वेनार्थज्ञानं किंचित्प्रयोजनं जनयति । अतः प्रतिपाद्यभेदाभावान्न वाक्यभेदः ॥

अपूर्वत्वमपि लिङ्गान्तरमस्तीत्याह—**सू ॥ आत्मशब्दाच्च ॥ १५ ॥** 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' इति प्रकृतपुरुषे आत्मशब्दश्रवणाच्चात्मपरमेवेदं वाक्यम् । तस्यात्मनः श्रुत्या मानान्तरावेद्यत्वरूपापूर्वत्वप्रतिपादनादिति भावः ॥ **इति भगवत्पादमते आध्यानाधिकरणम् ॥ ७ ॥**

### अथ आत्मगृहीत्यधिकरणम् ॥ ८ ॥

अत्राधिकरणे वर्णकद्वयं वर्णितम् । तयोराद्यं वर्णकमिदम्—यथा पूर्वं वाक्यभेदभिया अर्थादीनां पृथक्प्रतिपाद्यत्वं नास्तीत्यभिहितम् । तद्वदैतरेयवाक्ये 'प्रजापते रेतो देवाः' इति पूर्ववाक्ये हिरण्यगर्भस्य प्रकृतत्वाद्वाक्यभेदभिया स एवात्मशब्देनाभिधीयतामिति दृष्टान्तसंगत्येदमारभ्यते—**आत्मगृहीतिरित्यादि** । अस्य वर्णकस्य 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' इत्याद्यैतरेयकवाक्यं विषयः । तत्र किमात्मशब्देन हिरण्यगर्भ उच्यते उत परमात्मेति **संदेहः** । हिरण्यगर्भ इति **पूर्वपक्षः । सिद्धान्तस्तु,** अस्मिन्सृष्टिवाक्ये **आत्मगृहीतिः**=आत्मशब्देन परमात्मन एव ग्रहणं नान्यस्य । किंवत् । **इतरवत्**=यथा इतरेषु सृष्टिवाक्येषु 'आत्मन आकाशः संभूतः' इत्यादिषु आत्मशब्देन परमात्मन एव ग्रहणं तद्वदत्रापि । कुतः । **उत्तरात्**='स ईक्षत लोकान्नु सृजा इति' 'स इमाँल्लोकानसृजते' ति ईक्षणपूर्वकस्रष्टृत्वरूपोत्तरविशेषणादित्यर्थः । तच्च विशेषणं परमात्मन्येव मुख्यत्वेनावगतमिति भावः ॥

पूर्वपक्षबीजमनूद्य दूषयति—**अन्वयादिति चेदित्यादि । अन्वयादिति चेत्**=लोकसृष्टिवाक्यपर्यालोचनया हिरण्यगर्भ एव वाक्यान्वयान्न परमात्मग्रहणं युक्तमिति चेत् । **स्यात्**=परमात्मन एव ग्रहणं युक्तं स्यात् । कुतः । **अवधारणात्**='आत्मा वा इदमेक एवाग्र आसीत्' इति सृष्टेः प्रागेकत्वावधारणस्य परमात्मन्येव सामञ्जस्यात् । ततश्चात्र शाखान्तरोक्तभूतसृष्टिरुपसंहर्तव्येत्यदोषः ॥ **इत्यात्मगृहीत्यधिकरणे प्रथमं वर्णकम् ॥**

अथ द्वितीयं प्रस्तूयते—पूर्वत्र वाक्यैक्यबलादर्थादिपरत्वं परित्यज्य विद्यैक्यमुक्तम् इह तूपक्रमभेदेन वाक्यभेदाद्विद्यैक्यं न स्यादिति प्रत्युदाहरणसंगत्येदमारभ्यते—**आत्मगृहीतिरितरवदित्यादि** । बृहदारण्यके 'कतम आत्मा' इत्यात्मशब्देनोपक्रम्य 'स वा एष महानज आत्मा' इत्यात्मशब्देनोपसंहृतम् । छान्दोग्ये तु 'सदेव सोम्येदमग्र आसी' दिति विनैवात्मशब्दं सन्मात्रत्वेनोपक्रम्य 'स आत्मा तत्त्वमसि' इत्युपसंहृतम् । तत्र किमनयोर्वाक्ययोस्तुल्यार्थत्वमुत भिन्नार्थत्वमिति **संशयः** । भिन्नार्थत्वमिति **पूर्वः पक्षः । सिद्धान्तस्तु, आत्मगृहीतिः**=छान्दोग्ये सत्पदेनात्मन एव ग्रहणम् । **इतरवत्**=बृहदारण्यके आत्मपदेनात्मग्रहणवत् । कुतः । **उत्तरात्**='स आत्मा' इत्युपसंहारबलात् । अत उभयत्र तुल्यार्थत्वमित्यर्थः ॥

**सू ॥ अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥ अन्वयादितिचेत्**=उपसंहारस्योपक्रमान्वयेनोपक्रमपरतन्त्रत्वात् उपसंहारबलात्सत्पदेनात्मगृहीतिरित्यसंगतमिति चेत् तत्राह—**स्यात्**=सत्पदेनात्मगृहीतिर्युक्ता स्यात् । कुतः । **अवधारणात्**='सदेवे' त्यद्वितीयत्वावधारणादित्यर्थः ॥ **इति द्वितीयं वर्णकम् ।**

### इति भगवत्पादमते आत्मगृहीत्यधिकरणम् ॥ ८ ॥

**श्रीकण्ठमते,** 'आध्यानाये' त्यादीनि चत्वार्यपि सूत्राण्याध्यानाधिकरणमिति विशेषः ॥ अत्र पूर्वोक्तानन्दमयात्मानुसंधानवदन्नमयादीनामप्यनुसंधानं नियतमस्ति वा न वेति **संशयः** । अन्नमयादिसर्वान्तरस्यानन्दमयस्यान्नमयाद्यनुसंधानक्रममन्तरेण तदान्तरत्वेनानुसंधानायोगात्तेषामनुसन्धानं नियतमिति **पूर्वपक्षः । सिद्धान्तस्तु,** अन्नमयादीनामनुसंधानं न नियतम् । **प्रयोजनाभावात् ।** आभिमुख्येन ध्यानं ह्याध्यानम् । आनन्दमयस्य सर्वोत्कृष्टत्वसिद्धावेवात्यन्तादरकृतेनाभिमुख्येन ध्यानं भवति । अन्नमयाद्यनुसंधानस्य आनन्दमयब्रह्मसिद्धपर्यन्तत्वात्तेषामनियतमनुसंधानमिति ॥

**सू ॥ आत्मशब्दाच्च ॥ १५ ॥** 'एतमन्नमय' मित्यादिषु प्रत्येकमात्मशब्दश्रवणेन चेतनत्वानवगमात् ब्रह्मव्यतिरिक्तानां मुमुक्षुध्येयत्वनिषेधात् तथाथर्वशिखायां 'शिव एको ध्येयः शिवंकरस्सर्वमन्यत्परित्यज्ये'ति शिवव्यतिरिक्तानां मुमुक्षुध्येय-

## अथ कार्याख्यानाधिकरणम्. ॥ ९ ॥

## सू ॥ कार्याख्यानादपूर्वम् ॥ १८ ॥



## अथ कार्याख्यानाधिकरणम् ॥ ९ ॥



**सू० ॥ कार्याख्यानादपूर्वम् ॥ १८ ॥** छांदोग्ये वाजसनेयकशाखयोश्च काण्वमाध्यं-

लनिषेधाच्च अन्नमयादीनामनुसंधानमनियतमिति ॥

**सू ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥** 'अन्योऽन्तर आत्मानन्दमयः' इत्यात्मगृहीतिः परमात्मविषया न प्रत्यगात्मविषया । किंवत् । 'आत्मन आकाशस्संभूत' इत्यत्रात्मशब्दवत् । कथमिदमवगम्यते इति चेत् **उत्तरात्**='आनन्दमयमात्मानमुपसंक्रम्ये' त्युत्तरवाक्यादवगम्यते । तस्मादानन्दमयात्मानुसंधानं मुख्यं ब्रह्मानुसंधानमिति ॥

**सू ॥ अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥** **अन्वयादितिचेत्**=अन्नमयादीनामप्यात्मशब्दान्वयात्परमात्मत्वेन तेषामप्यनुसंधानमविरुद्धमिति चेन्न । **स्यात्**=विरुद्धमेव स्यात् । कुतः । **अवधारणात्**='अन्योऽन्तरआत्मानन्दमय' इत्यानन्दमयस्य परमात्मनः शिवस्यान्नमयादिभ्यो भिन्नत्वावगमात् 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य' इति सकलेतरपरित्यागपूर्वकं शिवस्यैकस्यैव ध्येयत्वावधारणाच्च । अत आनन्दमयः शिव एक एव ध्येय इति ॥

### इत्याध्यानाधिकरणम् ॥ ८ ॥

**रामानुजमते,** 'आध्यानाये'त्यादीनि चत्वार्यपि सूत्राणि पूर्वाधिकरणशेषत्वेन आनन्दाद्यधिकरण एव व्याख्यातानीत्यतो नात्र पुनःप्रपञ्चनीयतामर्हन्ति ॥

**आनन्दतीर्थमते,** अत्राधिकरणे उपसंहाराधिकरणोक्तमुपसंहारानुपसंहारप्रमाणद्वयमाक्षिप्य समर्थ्यते—**आध्यानायेत्यादिना** । पूर्वमुपसंहाराधिकरणे सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वमुपसंहारे प्रमाणं प्रकरणभेदोऽनुपसंहारे प्रमाणमित्युभयं वैकल्पिकत्वेन सिद्धान्तितम् । गुणाभिधानस्य तत्तद्गुणश्रवणद्वारा जनलोकादिफलत्वसंभवेनोपासनार्थत्वाभावात् तदर्थत्वे सर्वगुणानामेकत्रैवोक्तिप्रसंगाच्च प्रकरणेष्वेतावन्त एवोपास्या इत्युक्त्यभावाच्च तदुभयमयुक्तमिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** गुणाभिधानस्याध्यानार्थत्वान्निःश्रेयसोपयोगितया महाफलत्वेनाभिहितस्य तस्य जनलोकादिक्षुद्रफलार्थत्वायोगात् 'आत्मेत्येवोपासीते' ति गुणान्तरव्यवच्छेदपूर्वकमात्मत्वस्योपासनाविधानाच्चोभयमपि अधिकारिव्यवस्थया युक्तमेवेति । **सूत्रार्थस्तु,** वेदेषु सर्वगुणोक्तिरुपसंहारश्च **आध्यानाय**=सम्यग्ज्ञानार्थं क्लृप्तो भवेत् । कुतः । **प्रयोजनाभावात्**=गुणोक्तेस्तदुपसंहारस्य च सम्यग्ज्ञानं विना प्रयोजनाभावादित्यर्थः ॥

**सू ॥ आत्मशब्दाच्च ॥ १५ ॥** 'आत्मेत्येवोपासीते' त्यात्मशब्दघटितश्रुतिसद्भावादधिकारिभेदेन सर्वगुणोपसंहारश्चाकर्तव्य इत्यर्थः ॥ अतस्तदुभयं युक्तमिति । **इत्यानन्दतीर्थमते आध्यानाधिकरणम् ॥ ८ ॥**

### अथात्मगृहीत्यधिकरणम् ॥ ९ ॥

**सू ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १७ ॥** अत्र यद्येव 'मात्मेत्येवे'त्यवधारणेनानन्दादीनामपि व्यवच्छेदा-'दानन्दादयः प्रधानस्ये' त्युक्तमयुक्तं स्यादिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** आनन्दादीनां चतुर्णामपि स्वामित्ववाचिनात्मशब्देनैव 'विज्ञानमानन्दं ब्रह्मे' त्यादिवाक्येनेव परिगृहीतत्वात् उत्तरवाक्याच्च युक्तमेवेति । **सूत्रार्थस्तु, इतरवत्**=सत्यज्ञानादिवाक्ये सत्यादिपदैरन्येषां गुणानामिव । **आत्मगृहीतिः**='आत्मैवे' ति वाक्येऽपि आत्मशब्देन चतुर्णां गुणानां ग्रहणं संभवति । कुतः । **उत्तरात्**='अत्र ह्येते' इत्युत्तरवाक्याच्च । अतश्चतुर्गुणोपास्त्युक्तेर्नास्ति विरोध इति ॥

### इत्यात्मगृहीत्यधिकरणम् ॥ ९ ॥

### अथान्वयाधिकरणम् ॥ १० ॥

**सू ॥ अन्वयादिति चेत्स्यादवधारणात् ॥ १८ ॥** अत्र 'आपूर्त्याप्तेरात्मशब्दः परमस्य प्रयुज्यते' इत्यात्मशब्दस्य सर्वगुणाभिधायकत्वश्रवणा 'दात्मेत्येवे' ति वाक्यस्यानुपसंहारप्रमाणत्वं युक्तं न वेति **संदेहः** । न युक्तमिति **पूर्वः पक्षः** । **सिद्धान्तस्तु,** तस्यानुपसंहारप्रमाणत्वं युक्तमेवेति । **सूत्रार्थस्तु, अन्वयादिति चेत्**=आत्मशब्दे सर्वगुणानामन्वयादिति चेत् । **स्यात्**=यत्परोक्तं तत्तथा स्यादेव । तथापि नानुपपत्तिः । कुतः । **अवधारणात्**='आत्मेत्येवे' त्यवधारणात् । आत्मशब्दो हि ब्रह्मादीन्प्रत्येव सर्वगुणान्वदति नान्यान्प्रतीति निर्णयोपपत्तेरित्यर्थः । ततस्सर्वेषामुपासनसिद्धिः । अतस्तस्यानुपसंहारप्रमाणतोपपन्नेति सिद्धम् ॥ **इति आनन्दतीर्थमते अन्वयाधिकरणम् ॥ १० ॥**

### इति सूत्रार्थचन्द्रिकायामाध्यानाधिकरणम् ॥ ७ ॥ ८ ॥

'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इत्यारभ्य 'किं मे वासः' इति वागादीन् प्रति प्राणप्रश्नस्योत्तरमपां प्राणवासस्त्वमुक्त्वा 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते' इति श्रूयते । अत्राचमनं प्राणवासस्त्वं चेत्युभयं विधीयते उत प्राणवासस्त्वमेव ॥

इति संशये विशेषाभावादुभयमपीति प्राप्ते—आचमनस्य स्मृत्याचारेण प्राप्तत्वादप्राप्तं प्राणवासस्त्वमेवापूर्वं विधीयते । अप्राप्तस्यैव विधेयत्वाख्यानादनुवादसरूपे विधिकल्पना । तस्मादपूर्वं प्राणवासस्त्वानुसंधानमेव विधेयमिति

---

दिनसंज्ञयोः प्राणविद्यायामन्नं वासश्च पृष्टवते प्राणाय वागादीनामुत्तरे श्वपक्ष्यादिपर्यन्तं प्राणिजातमन्नमुक्तम् । तत्र तावद्दृष्टिविधिरसंदिग्धः । सर्वप्राण्योदनत्वस्याशाब्दत्वादशक्यत्वाच्च । 'न हवा एवंविदि किंचनानन्नं भवति न हवा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदन्नस्यान्नं वेदे'ति तद्वेदनफलार्थवादश्रवणाच्च । तदनन्तरमाचमनीयानामपां प्राणवासस्त्वमुक्तम् । तत्रापि दृष्टिविधिरेव । दृष्टिविधिसाहचर्यात् । छांदोग्ये 'लंभुको हवा भवत्यनग्नो भवती'ति तद्वेदनफलार्थवादश्रवणाच्च । तदनन्तरं 'यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिन्शाखाः प्ररोहेयुः पलाशानी'ति फलार्थवादान्तरश्रवणाच्च । एवं काण्वशाखायामप्याचमनीयानामपां प्राणवासस्त्वमात्रमुक्तम् । माध्यंदिनशाखायां तु 'तस्मादेवंविदशिष्यन्नाचामे'दित्याद्यधिकं श्रूयते । तत्राचमनमपि विधीयते न वेति तत्र श्रुतस्याचमनस्याप्राप्तिप्राप्तिभ्यां संशये पूर्वपक्षः—'आचामे' दित्यसंदिग्धविधिविभक्तिश्रवणादाचमनेऽपि विधिः । न च सर्वकर्मांगत्वेनाचमनस्य स्मृत्याचारप्राप्तत्वादेवंविदिति विशेषणे विधिसंक्रमो वाच्यः । स्मार्ताचारव्यतिरेकेणाचमनान्तरस्याप्राप्तस्य विधिसंभवात् । चातुर्मास्ये 'द्वयोः प्रणयती' त्यत्र प्रकृतिप्राप्तप्रणयनव्यतिरेकेण प्रणयनान्तरविधिरिति विधिसार्थकत्वायाभ्युपगतत्वाच्च । अप्राप्तविधौ च लब्धे दृष्टिविधिराचमनविधिश्चेति वाक्यभेदो न दोषः । 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती'त्यत्रेव स्पष्टे विधिद्वये वाक्यभेदस्य न्याय्यत्वात् । न च तर्ह्याचमन एव विधिरस्तु अपां वासस्त्वश्रवणमर्थवादोऽस्त्विति शङ्कनीयम् । अन्नदृष्टिविधिसाहचर्येण फलार्थवादश्रवणेन छांदोग्ये काण्वशाखायाञ्चाचमनदृष्टिश्रवणेन दृष्टिविधेरप्यावश्यकत्वादिति । सिद्धांतस्तु प्रसिद्धानुवादेनाप्रसिद्धविधिनैकवाक्यत्वे संभवति न वाक्यभेदो न्याय्यः । 'द्वयोः प्रणयति तस्माद्द्वाभ्यामेती'ति सार्थवादो विधिः । न च तस्यान्यत्र संक्रमणं संभवतीति प्रणयनान्तरे विधिराश्रितः । उपरि धारणेऽप्यप्राप्तत्वादनुवादानर्हो विधिराश्रितः । इह तु सर्वकर्मांगत्वेन स्मृतितः प्राप्तमाचमनमनुवादार्हमस्तीति तदनुवादेन दृष्टिमात्रविध्युपपत्तेः न तत्रापि वाक्यभेदावहो विधिराश्रयणीयः । न चाचमनविधिप्रापको दृष्टिविध्यननुगुणः कश्चिदर्थवादः श्रूयते प्रत्युत वासस्त्वदृष्ट्यर्थवाद एव तत्रापि श्रूयते 'एतमेव तदनमनग्नं कुरुत' इति । तस्मादपां वासस्त्वानुचिंतनमात्रे विधिरिति । सूत्रे कार्यशब्दः कार्यत्वपरः । अपूर्वं वासस्त्वचिंतनं विधेयमपूर्वस्यैव कार्यत्वाख्यानात् विधेयत्वप्रतिपादना'दप्राप्ते शास्त्रमर्थव'दित्यादिषु । अतो यद्यपि 'य एवं विद्वान्साम्ना स्तुवीते'त्या-

युक्तम् ॥ इति कार्याख्यानाधिकरणम् ॥ ९ ॥

## अथ समानाधिकरणम् ॥ १० ॥

## सू ॥ समान एवं चाभेदात् ॥ १९ ॥

अग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्याऽऽम्नायते । एकत्र 'आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसंकल्पमाकाशात्मानम्' इति । इतरत्र

---

दिष्विव विद्यांशेऽनुवादरूपत्वं प्रतीयते तथापि प्राप्ताप्राप्तविवेकेन तत्रैव विधिसंक्रमो वाच्य इति भावः ॥ इति कार्याख्यानाधिकरणम् ॥ ९ ॥

## अथ समानाधिकरणम् ॥ १० ॥

**समान एवञ्चाभेदात्** ॥ १९ ॥ वाजसनेयिनां शतपथब्राह्मणे प्रथममग्निरहस्ये 'स- आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनुदिशः प्रभूतं सर्वमिदमभ्यात्तमवाक्यमनादर' मिति शाण्डिल्यविद्या श्रूयते । तदनन्तरं बृहदारण्यकेऽपि श्रूयते 'मनोमनोऽयं पुरुषो

---

### नयमणिमालायाम्

## अथ कार्याख्यानाधिकरणम् ॥ ९ ॥

**सू ॥ कार्याख्यानादपूर्वम् ॥ १८ ॥**

आचमने विधिदृष्टे स्मार्तादन्यद्विधेयं तत् । वासस्त्वमपूर्वं चे (त्तद्दृ) ष्टा वपि विधिर्भवतु ॥ २२९ ॥

प्राप्तमनूद्याचमनं तस्याप्सु प्राणवासस्त्वम् । एकं विधेयमुचितं तदेव चोपक्रमेऽवगतम् ॥ २३० ॥

## इति कार्याख्यानाधिकरणम् ॥ ९ ॥

---

### सूत्रार्थचन्द्रिकायाम्

#### अथ कार्याख्यानाधिकरणम् ॥ ९ ॥

**सू ॥ कार्याख्यानादपूर्वम् ॥ १८ ॥ भगवत्पादमते,** अत्र बृहदारण्यकच्छान्दोग्ययोरुभयत्र 'एवंविदशिष्यन्नाचामेदशित्वाचाचामेदेतमेव तदनमनग्नं कुरुते' इति वाक्यं विषयः । तत्राचमनमनग्नताचिन्तनं च प्रतीयते । उभयविधाने वाक्यभेदभयादेकमेव विधेयम् । तदेकं किमाचमनम् । उतानग्नताचिंतनमिति **संशयः** । प्राणविद्याङ्गत्वेनापूर्वमाचमनमेवात्र विधेयमिति **पूर्वपक्षः । सिद्धान्तस्तु,** अपूर्वमनग्नताचिन्तनमेवात्र विधेयं नाचमनम् । कुतः । **कार्याख्यानात्**=स्मार्तविधिना सकलकर्मानुष्ठानांगत्वेन शुद्ध्यर्थं **कार्यस्या**चमनस्य प्राणविद्यायामपि विधिप्राप्तस्या**ख्याना**दनग्नताचिन्तनार्थानुवादादित्यर्थः ॥

**श्रीकण्ठमते** तथा **रामानुजमते च** विषयवाक्यादिकं प्रायस्समानमेव । तत्र आचमनं प्राणवासस्त्वमित्युभयं विधेयं वा उत प्राणवासस्त्वमिति **संदेहः । विशेषाभावादुभयमिति पूर्वपक्षः । रामानुजमते** तु भगवत्पादमतवदाचमनं विधेयं वा उत प्राणवासस्त्वानुसंधानमिति संशयस्वरूपनिरूपणे विशेषः । **सिद्धान्तस्तु,** आचमनस्य स्मृत्याचारप्राप्तत्वादप्राप्तं प्राणवासस्त्वानुचिन्तनमेव विधेयम् । कुतः । **कार्याख्यानात्**=अप्राप्तस्यैव विधेयत्वाख्यानादित्यर्थः ॥

**आनन्दतीर्थमते, 'परमतस्सेतून्माने'** त्यधिकरणे भगवद्गुणानामलौकिकत्वमभिहितम् । तद्युक्तं न वेति **संदेहः ।** अलौकिकस्याननुभूतत्वेन ध्यानकाले बुद्ध्यनारोहात् तेषां लौकिकत्वमेव ध्यानान्यथानुपपत्त्या कल्पनीयम् । अतो भगवद्गुणानामलौकिकत्वनिर्णयो न युक्त इति **पूर्वपक्षः । सिद्धान्तस्तु, अपूर्वम्**=अलौकिकमेव भगवद्गुणजातं ध्यातव्यम् । कुतः । **कार्याख्यानात्**=कार्यस्य ध्यानकार्यस्य मोक्षस्यालौकिकत्वात् फलानुसारिध्यानकर्तव्यतानियमात् इन्द्रादेरिव गुरूपदेशादिभिरलौकिकानामपि तेषां बुद्ध्यारोहोपपत्तेश्च । अतस्तेषामलौकिकत्वनिर्णयो युक्त एवेति ॥

## इति सूत्रार्थचन्द्रिकायां कार्याख्यानाधिकरणम् ॥ ९ ॥

'मनोमयोऽयं पुरुषो भास्सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' इति । उभयत्र विद्या भिन्ना न वेति संशयः ॥

एकत्राकाशात्मकत्वेन महत्त्वम्, इतरत्र यवसादृश्येनाल्पत्वम्, एकत्र सत्यसंकल्पत्वम्, इतरत्र वशित्वादिकम्, इति धर्मभेदाद्भिन्ना ॥

भास्सत्यस्तस्मिन्नंतर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति यदिदं किञ्चे'ति । तत्र किमुभयत्र विद्या भिद्यते न वेति महत्त्वाणीयस्त्वादिरूपभेदाभेदात्संशये पूर्वः पक्षः—एकत्राकाशसाम्यरूपं महत्त्वमीशानत्वादिकं च श्रूयते । अन्यत्राणीयस्त्वं सत्यसंकल्पत्वादिकं च श्रूयते । अतो रूपभेदाद्विद्याभेदः । ननु मनोमयत्वभारूपत्वगुणप्रत्यभिज्ञानाद्विद्यैक्ये स्थिते सत्युभयत्रापि परस्परानाम्नातसत्यसङ्कल्पत्वेशानत्वादिगुणानामुपसंहारो भविष्यति । तत्र परस्परविरोधशंकानवकाशात् । महत्त्वाणीयस्त्वयोस्तूदितानुदितहोमवदेकादशकपालद्वादशकपालवच्च विकल्पो भविष्यति । न च महत्त्वमिहाहत्याम्नातम् । 'आकाशात्मान'मित्येतदाकाशवत्स्वच्छतापरत्वेनाप्युपपन्नं ध्येयगुणत्वाभिप्रायं विना स्वाभाविकमहत्त्ववर्णनेन स्तुत्यर्थतया वोपपन्नम् । यथा छांदोग्ये शाण्डिल्यविद्यायामेवाणीयस्त्ववर्णनानन्तरं ज्यायस्त्वकीर्तनम् । तस्मादिह न विद्याभेदशंकावकाशः इति चेदुच्यते । उभयत्रा 'प्युपासीतेति' विधिः श्रूयते । न चैकस्यां शाखायां प्रतिपत्तृभेदेन विधिद्वयं सार्थक्यमश्नुते । न चा 'ग्निहोत्रं जुहोति' 'दध्ना जुहोती'ति वाक्ययोरिवैकत्र धात्वर्थविधिरन्यत्र तदनुवादेन गुणमात्रविधिरित्यत्र विनिगमकमस्ति । एकत्र सत्यसंकल्पत्वकामरूपत्वमनोजवसत्वादिकमन्यत्रेशानत्वादिकमित्युभयत्राप्यपुनरुक्तगुणश्रवणात् । न चेशानत्वादिकं सत्यसंकल्पत्वांतर्गतमेव । अतस्सत्यसंकल्पत्वस्याग्निरहस्ये संक्षेपेणोक्तस्य समासोक्तस्य विग्रहवाक्येनेव प्रतिपत्तिसौकर्याय 'सर्वस्येशान'इत्यादिना विवरणार्थं बृहदारण्यकेऽनुवादः स्यादिति वाच्यम् । विकल्पासहत्वात् । किमीशानत्वादिकं सत्यसंकल्पविशेष इत्युच्यते उत तद्व्याप्यमिति । नाद्यः । ईशानत्वं हि ईशानशक्तिमत्त्वमीशनशीलत्वं वा । ताच्छील्यवयोवचनशक्तिषु चानशो विधानात् । प्रशासितृत्वमधिपतित्वं रक्षितृत्वम् । पातेर्डतिप्रत्ययविधानात् । रूढ्या स्वामित्वरूपं शेषित्वं वा । न चैते सत्यसंकल्पत्वावान्तरविशेषाः । न च सामान्याकारस्य ध्येयत्वविधानेन विशेषाकाराणामपि ध्येयत्वमुक्तं भवति । येनात्र तद्विवरणमात्रं स्यात् । एतेन द्वितीयपक्षोऽपि निरस्तः । तद्व्याप्यत्वमात्रेण तस्य ध्येयत्वाविधानात् । ध्येयत्वसिद्धौ कामरूपत्वादीनामत एव तत्सिद्ध्या पुनर्ग्रहणवैयर्थ्यापत्तेश्च । न चेशानत्वादीनां सत्यसंकल्पत्वशब्दार्थत्वाभावेऽपि 'सर्वस्येशान' इत्यादेस्तद्विवरणरूपत्वात्सत्यसंकल्पत्वशब्दस्य तदनुसारादीशानत्वादिषु पर्यवसानं स्यात् 'अभ्यंजनं वाव स्त्रिया अन्न'मिति विवरणानुसारादिवान्नशब्दस्याभ्यंजन इति वाच्यम् । अन्योन्याश्रयापत्तेः । न ह्यभ्यञ्जनवाक्यस्यान्नशब्दविवरणरूपत्वमिव ईशानादिवाक्यस्य संकल्पविवरणरूपत्वं सम्प्रतिपन्नं किं तु समासव्यासवाक्यवदर्थैक्यात्कल्पनीयं, तत्त्वसिद्धमेव । तस्माद्विनिगमनाविरहेणोभयत्र विधानादभ्यासन्यायतो विद्याभेदो युक्तः । अविशेषपुनःश्रव-

**इति प्राप्ते ब्रूमः—सर्वत्र मनोमयत्वादिके समाने आकाशात्मेत्यस्याकाशवत् स्वच्छतापरत्वेन माहात्म्यपरतया स्तावकत्वेन वोपपत्तेः वशित्वादेः सत्यसंकल्पत्वविशेषरूपत्वेन तदभेदाच्च विद्यैक्यम् ॥ इति समानाधिकरणम् ॥ १० ॥**

---

णाभावेऽप्यभ्यासन्यायमूलस्यानर्थक्यस्य तुल्यत्वात् । एवं चावर्जनीये सति विद्याभेदे ना 'काशात्मान' मित्यस्या 'काशवत्सर्वगतश्च नित्य' इति श्रुत्यंतरप्रसिद्ध्यनुसारिमहत्त्वपरत्वं त्यक्तव्यमिति । ततोऽपि विद्याभेद ईशानत्वादितश्चेत्यभ्युच्चय इति । सिद्धान्तस्तु नोभयत्र विद्याविधिः । विनिगमनाविरहासिद्धेः । यत्र भूयांसो गुणास्तत्राग्निरहस्ये विद्याविधिः अन्यत्र गुणविधिरिति व्यवस्थायां गुणभूयस्त्वस्य विनिगमकस्य सत्त्वात् । लोकेऽपि हि यत्र छत्रचामरध्वजगजतुरगादिबाहुल्यं तत्र राजा अन्यत्रामात्यादिस्तद्गुण इत्यवधार्यते। पूर्वतन्त्रेऽपि 'भूयस्त्वेनोभयश्रुति' रित्यधिकरणे दर्शितोऽयं न्यायः । एवञ्चाग्निरहस्यविहित-विद्यानुवादेनानेकगुणविधाने वाक्यभेदः स्यादतस्तत्रापि विधिराश्रयणीय इति शङ्का तु 'सर्वत्र प्रसिद्धोपदेशा'दि(ब्र० १-२-१ )त्यधिकरणे प्रपञ्चितेनावाक्यभेदोपपादनप्रकारेण समाधेया । 'एवमपि विद्याभेदः स्यात् यदि विरुद्धगुणश्रवणं किंचित्स्यात् न चैतदस्ती'ति सूत्रभाष्ययोर्दर्शितम् । अभेदादित्यत्र हेतोरैक्यादिति नार्थः । 'आकाशात्मान'मित्यस्य केनचिदैक्यं वक्तुं प्रतियोग्यभावात् तत्रैव च विरोधशंकोन्मेषेण समाधानापेक्षणात्। किंत्वविरोधादित्यर्थः । 'राज्ञामंतर्भेदो वर्तत'इत्यादिव्यवहारे भेदशब्दस्य विरोधार्थप्रसिद्धेः। भाष्ये 'सत्यसंकल्पत्वविशेषरूपत्वेने'त्यत्र विशेषशब्दो न तदवान्तरभेदत्वपरः । ईशानत्वादीनां सत्यसंकल्पविशेषत्वाभावात् । तद्विशेषत्वेऽपि तस्य ध्येयत्वोक्त्या तेषां ध्येयत्वसिद्ध्यभावाच्च । किं तु विशेषकत्वपरः । ततश्च सत्यसंकल्पोपपादकत्वपरतया तदनुगुणत्वादित्यर्थः । भाष्ये बृहदारण्यकवाक्योदाहरणे 'सर्वस्य वशी'ति पाठोऽस्तीति चेत् न शाखान्तरपाठः । काण्वशाखायां तु षष्ठाध्यायगतविद्यान्तर एव 'सर्वस्य वशी सर्वस्येशान' इति पाठः । सप्तमाध्याये शाण्डिल्यविद्यायां नास्ति 'सर्वस्य वशी'ति विशेषणम् । यद्यपि छांन्दोग्येऽपि शाण्डिल्यविद्या श्रूयते । तथाप्येकशाखागतयोरेव वाक्ययोरुदाहरणमभ्यास-न्यायमूलोऽत्र पूर्वपक्ष इति विभावयितुमिति सर्वमनवद्यम् । सूत्रकृता चैवं शाब्देनाभ्यासन्यायपरिहारो दर्शितः । यथा शाखाभेदे विद्यैक्यं गुणोपसंहारश्च । एवं शाखैक्येऽपि भूयस्त्वस्य विनिगमकस्य सत्त्वेनाभ्यासन्यायाप्रवृत्तेरिति तस्य तात्पर्यम् । चकारस्त्वभेदाच्चेत्येवंसंबंधेनाकाशात्मत्वादिविरोधपरिहारसमुच्चयार्थ इति सर्वमनवद्यम् ।

**इति समानाधिकरणम् ॥ १० ॥**

---

**नयमणिमालायाम् अथ समानाधिकरणम् ॥ १० ॥**

**सू० ॥ समान एवञ्चाभेदात् ॥ १९ ॥**

साम्येऽपि बहुगुणानां वशितादेर्भेदकत्वविरहेऽपि । महदणुतयोर्विरोधाद्भिन्ना शाण्डिल्यविद्या स्यात् ॥ २३१ ॥
स्वगतोपाधिगताभ्यामविरुद्धे ते ततो न विद्याभेदः । शाखैक्येऽपि विधिद्वयभेदविधौ नियामकस्याभावात् ॥ २३२ ॥

**इति समानाधिकरणम् ॥ १० ॥**

## अथ संबंधाधिकरणम् ॥ ११ ॥

### सू ॥ संबन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके 'य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इत्युपक्रम्य सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनादित्यमण्डलेऽक्षणि चोपास्यत्वमुक्त्वा 'तस्योपनिषदहः इत्यधिदैवतं' 'तस्योपनिषदहम् इत्यध्यात्मम्' इति द्वे रहस्यनामनी आम्नायेते। ते उभयत्रोपसंहार्ये न वा ॥

इति संशये सत्युपास्यैक्याद्विद्यैक्यम्। अत उभयत्रापि द्वे नामनी इति पूर्वः पक्षः ॥

## अथ संबंधाधिकरणम् ॥ ११ ॥

**सू० ॥ संबन्धादेवमन्यत्रापि ॥ २० ॥** अहरहमित्युपनिषदौ रहस्यनामनी उभयत्राप्यनियतविकल्पेन समुच्चयेन वोपसंहार्ये उत यथानिर्देशं व्यवस्थिते इति नामविधानवाक्यश्रुतयोस्तस्येतिशब्दयोः केवलपुरुषपरामर्शित्वस्थानविशेषविशिष्टपुरुषपरामर्शित्वान्यतरानवधारणात्संशये व्याहृतिशरीरत्वविशिष्टब्रह्मरूपोपास्यैक्याद्विद्यैक्ये सति विद्यैक्यादुभयत्रोपसंहार्ये इति पूर्वपक्षः। ननु 'तस्योपनिषदह'रिति 'तस्योपनिषदह'मिति च

## सूत्रार्थचन्द्रिकायाम्

### अथ समानाधिकरणम् ॥ १० ॥

**सू ॥ समान एवं चाभेदात् ॥ १९ ॥**

**भगवत्पादमते,** वाजसनेयकशाखायामग्निरहस्ये शाण्डिल्यविद्यायां 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूप' मित्यादि श्रूयते। तत्रैव बृहदारण्यके पुनः सैव श्रूयते—मनोमयोऽयं पुरुषो भास्सत्य' मिति। तत्र किमनयोर्विद्ययोर्भेदः उतैक्यमिति **संशयः**। भेद इति **पूर्वपक्षः**। **सिद्धान्तस्तु, एवं च**=यथा भिन्नासु विद्यैक्यं गुणोपसंहारश्च भवति एवं **समाने**=समानायामपि शाखायां भवितुं युक्तम्। कुतः। **अभेदात्**=उपास्यस्य मनोमयादिगुणकस्योभयत्राप्यभेदेन प्रत्यभिज्ञानात्। एवं च उभयत्र शाण्डिल्यविद्यैक्यमिति सिद्धम् ॥

**श्रीकण्ठमते, तथा रामानुजमते** च, विषयवाक्यपूर्वपक्षादिकं सर्वं प्रायस्समानमेव। सूत्रार्थवर्णने परमस्ति कियान्भेदः पूर्वस्मात्। इतरदविशिष्टम्। सूत्रार्थं एवम्—**समाने**=मनोमयत्वादिके समाने सति विद्यैक्यं सिद्धम्। **एवं चाभेदात्**=वशित्वादिगुणेनाप्यभेदात्। वशित्वादेस्सत्यसंकल्पत्वविशेषरूपत्वेनाभेदाद्विद्यैक्यं सिद्धमिति भावः ॥

**आनन्दतीर्थमते,** उत्तरसूत्रेण सह सूत्रद्वयात्मकमिदमधिकरणम्। फलानुसारि ध्यानमित्येतद्युक्तं न वेति **संदेहः**। वाणीब्रह्मणोर्हि मुक्तौ स्थानैक्यस्य फलतारतम्यस्य च सत्त्वेन फलं समविषमम्। विरुद्धत्वात्तयोरुपासनं तु समविषमं न संभवति। तस्मा 'दितरे त्वर्थसामर्थ्यादि' त्यत्र कृतः फलानुसारिगुणोपासननिर्णयोऽप्ययुक्त इति **पूर्वपक्षः। सिद्धान्तस्तु,** वाणीब्रह्मणोः फलं समविषममुपासनमपि समविषममेव। तथा हि—सरसिजासनस्तावदसंकोचेन वेदोक्तसमस्तगुणक्रियोपेततयानन्तरूपं हरिमुपास्ते। सरस्वत्यपि सकलगुणोपेततयानन्तरूपं हरिमुपास्त एव। क्रियास्तु संकोचयति यतस्सामान्यक्रियोपसंहारमेव करोति न तु सरसिजासनवत्रिविक्रमत्वादिकदाचिदभिव्यक्तिमत्क्रियोपसंहारमपि करोति। किं तु तासां नित्यविक्रान्त्यादिसामान्यक्रियास्वन्तर्भावमेव। सरस्वत्या नित्यं पृथक्त्रिविक्रमत्वाद्युपासनयोग्यत्वाभावात्। ननु ब्रह्मणो वा कथं नित्यं तदुपासनयोग्यता। उपासनकाले तदभावात्। अविद्यमानोपासनस्यायोगादिति चेत् न, त्रिविक्रमत्वादीनामपि तादात्म्येन परमात्मसंबन्धितया नित्यत्वात् नित्यं तस्य तदुपासनोपपत्तेरिति। **सूत्रार्थस्तु,** एवं च एवमपि ब्रह्मगुणानामलौकिकत्वेऽपि वाण्याः समाने योग्यगुणविषय एवोपसंहारः न त्वयोग्यक्रियासु। तत्र तु **अभेदात्**=अभेदमपेक्ष्य त्रिविक्रमत्वादिकादाचित्कक्रियास्तत्सजातीयनित्यविक्रान्त्यादिष्वन्तर्भाव्योपसंहारो भवेदित्यर्थः। अतो वाणीब्रह्मणोः फलतुल्यमुपासनमित्यतः फलानुसारिगुणोपासननिर्णयो युक्त इति ॥

**सू ॥ संवन्धादेवमन्यत्रापि ॥ २१ ॥ हिरण्यगर्भस्य तु अन्यत्रापि**=त्रिविक्रमत्वादिक्रियाविशेषेऽपि एवं सर्वेदोपसंहारो युज्यते। कुतः। **संवन्धात्**=क्रियाणां ब्रह्मणा तादात्म्यरूपसंबन्धेन नित्यत्वादित्यर्थः ॥

इति सूत्रार्थचन्द्रिकायां समानाधिकरणम् ॥ १० ॥

सिद्धान्त उच्यते–

## सू ॥ न वा विशेषात् ॥ २१ ॥

**नात्र विद्यैक्यम्, आदित्याक्षिस्थानविशेषसंबन्धित्वेनोपास्यभेदात् । अतस्तत्र नियते नामनी ॥ इति संबन्धाधिकरणम् ॥ ११ ॥**

निर्देशभेदान्नामव्यवस्था स्यात् । यथा 'रथन्तरे प्रस्तूयमाने संमीलयेत्' 'बृहति प्रस्तूयमाने समुद्रं मनसा ध्याये'दिति निर्देशभेदाद्धर्मव्यवस्था । न हि तत्रापूर्वीयत्वलक्षणया व्रीहिधर्माणां यव इव बृहद्रथंतरधर्मयोः परस्परसांकर्यमस्ति । विषमो दृष्टान्तः । तत्र रथन्तरबृहच्छब्दोपात्ते सामनी भिन्ने इति युक्ता तत्र निर्देशभेदाद्धर्मव्यवस्था । इह तु तस्येति पदद्वयेनाप्येक एव पुरुष उपात्त इति कथं तस्यैव नामद्वयं तत्र संकीर्णं न भवेत् । ननु 'अग्निर्ज्योतिर्ज्योतिस्सूर्यः स्वाहे'ति सायं जुहोति 'सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातर्जुहोती'ति निर्देशभेदान्मंत्रव्यवस्था दृष्टा । तथेहापि नामव्यवस्था स्यात् । अयमपि विषमो दृष्टान्तः । तत्रैकस्यापि होमस्य कालभेदेनाभ्यस्यमानस्य तत्तत्कालविशेषे मंत्रविधिरिति व्यवस्था युज्यते । नात्र किञ्चिद्विशेषणमस्ति । नन्वत्रापि स्थानभेदो विशेषणं, नैतद्युज्यते, वस्तुतः स्थानभेदसत्त्वेऽपि नामनिर्देशकयोस्तस्येतिपदयोः प्रधानसत्यब्रह्मरूपपुरुषमात्रपरत्वेन तन्मात्रनामत्वावगमात् । तमिमं पूर्वपक्षमाह सूत्रकारः–'संबंधादेवमन्यत्रापी'ति । यथा शांडिल्यविद्यायां शाखैक्येऽप्येकविद्यासंबंधात्परस्परगुणोपसंहारः एवं सत्यविद्यायामपीत्यर्थः । अनेनास्याधिकरणस्य पूर्वाधिकरणेन प्रत्युदाहरणसंगतिरपि दर्शिता । सू ॥ न वा विशेषात् ॥ २१ ॥ यद्यपि 'सत्यं ब्रह्मे'त्युपक्रांतमेकमेव सत्यं ब्रह्म आदित्यमण्डले अक्षणि चोपास्यं 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्ष'न्नित्युपक्रमात्तस्यैवादित्यमण्डलस्थस्य 'य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर'इत्यादिना 'भूरिति शिरोऽक्षरं भुव इत्यक्षरे बाहू सुवरित्यक्षरे पादा'विति व्याहृतिशरीरत्वमुपदिश्या'ह'रिति नामोपदिष्टम् । तस्यैवाक्षिस्थस्य 'योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर' इत्यादिना तथैव व्याहृतिशरीरत्वमुपदिश्याहमिति नामोपदिष्टं, तथापि स्थानात्मकरूपभेदादादित्येऽक्षणि च नैका सत्यविद्या यथोद्गीथविद्या अध्यसनीयहिरण्मयपुरुषप्राणाकाशाद्यात्मकरूपभेदात् । अतो विद्याभेदान्नोपसंहारः । अथाप्युपसंहारः शंक्येत यदि तस्येतिशब्दः केवलस्य ब्रह्मणः परामर्शकः स्यात् । स तु स्थानविशेषविशिष्टस्य परामर्शकः । तस्मादेकस्योक्तं नामान्यस्य न भवति । एवमत्र तस्येतिशब्दस्य स्थानविशेषविशिष्टपरामर्शकत्वादेव हि मण्डलस्थस्योपदिष्टं व्याहृतिशरीरत्वमक्षिस्थस्य न भवेदिति तस्यापि तत्पृथगुपदिष्टम् । लोके चा'सीन आचार्ये तमित्थमुपासीत' 'मार्गे गच्छत्याचार्ये तमित्थमुपासीते'ति वाक्यगततत्पदयोः प्रकृतासनगमनविशिष्टाचार्यपरामर्शकत्वादेवोपासनविशेषव्यवस्था दृश्यते । तस्मादिह नास्त्युपसंहार इति ॥ इति संबंधाधिकरणम् ॥ ११ ॥

---

नयमणिमालायाम्

### अथ संबंधाधिकरणम् ॥ ११ ॥

सू ॥ संबंधादेवमन्यत्रापि ॥ २० ॥ न वा विशेषात् ॥ २१ ॥

सत्यं व्याहृतिरूपं ब्रह्मोपास्यं विकर्तनेऽक्षणि च । तदभेदात्तन्नाम्नोरहरहमोर्न व्यवस्था स्यात् ॥ २३३ ॥

ब्रह्मण एकत्वेऽपि स्थानकृतो रूपभेदोऽस्ति । तस्माद्विद्याभेदाद्व्यवस्थिते नामनी भवतः ॥ २३४ ॥

इति संबंधाधिकरणम् ॥ ११ ॥

## अथ मण्डलविद्याधिकरणम् ॥ १२ ॥

### सू ॥ दर्शयति च ॥ २२ ॥

छान्दोग्ये तैत्तिरीये च मण्डलविद्याऽऽम्नाता । सैका भिन्ना वा ॥
इति संशये पूर्वः पक्षः । एकत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः' इत्यादि श्रूयते । अन्यत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति त्रयीमयमण्डलान्तर्वर्तिपुरुषान्तर्वर्तितया हिरण्मयं पुरुषं प्रस्तुत्य तस्योपसंहारे 'सर्वो वै रुद्रः' इत्यारभ्य 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः' इत्यन्तेन सर्वात्मत्वं हिरण्यबाहुत्वमुमापतित्वं चाम्नायते । तत्रैकत्र सर्वाङ्गसुवर्णत्वमन्यत्र बाहुमात्रसुवर्णत्वमिति रूपभेदः । एकत्र 'सर्वो वै रुद्रः' इति सर्वात्मत्वं अन्यत्र 'सर्वेषां लोकानामीष्टे' इति सर्वाधिपत्यमिति धर्मभेदः, तस्मान्न विद्यैक्यम् ॥

---

## अथ मण्डलविद्याधिकरणम् ॥ १२ ॥

एकस्यापि वेद्यस्य स्थानभेदाद्विद्याभेद उक्तः स्थानैक्ये तु न विद्याभेदः इति प्रत्युदाहरणसंगत्याधिकरणान्तरम्—सू० ॥ दर्शयति च ॥ २२ ॥ रूपभेदाभेदाभ्यां विद्याभेदाभेदसंशये पूर्वपक्षः—एकत्र सर्वावयवसुवर्णत्वं सर्वेश्वरत्वञ्चान्यत्र वाहुमात्रसुवर्णत्वं सर्वात्मत्वं चेति रूपभेदाद्विद्याभेदो युक्तः । रूपभेदे सति स्थानैक्यमात्रस्य दहरशाण्डिल्यविद्ययोरिवैक्याप्रयोजकत्वादिति । सिद्धान्तस्तु इह स्थानैक्यं विद्यैक्ये गमकमेव । तदपवादकस्य रूपभेदस्याभावात् । तैत्तिरीयकेऽपि 'हिरण्मयः पुरुष' इत्युपक्रमानुसारेणोपसंहारे वाहुग्रहणस्योपलक्षणत्वात्सर्वात्मत्वस्य सर्वशरीरकत्वात्मकत्वे तदेव सर्वेश्वरत्वमित्यभेदात्सर्वोपादानत्वात्मकत्वे तस्य सर्वेश्वरत्वनियतत्वेन तदनुगुणतया विरोधशंकाभावेनोपसंहार्यत्वादिति । ननु छांदोग्ये मण्डलविद्या उद्गीथे हिरण्मयदृष्टिरूपा क्रत्वंतर्गता तैत्तिरीये सा स्वातंत्र्येण हिरण्मयपुरुषानुसंधानरूपा तदनन्तर्गता कथमनयोरैक्यं प्रतिपाद्यते । यदि छांदोग्येऽप्येषा स्वतन्त्रा स्यात्तदा विद्यैक्यं भवेदेव रूपैक्यादिति कृत्वाचिन्तया प्रतिपाद्यते । क्रतुपारतन्त्र्यस्वातन्त्र्याभ्यां विद्याभेदेऽपि मण्डलान्तर्वर्त्तिपरमेश्वरे तद्गुणविग्रहाणामभेदप्रत्यभिज्ञानाद्विद्याद्वयेऽपि परस्परानाम्नातगुणविशेषोपसंहारं विभावयितुम् । कथं विद्याभेदे गुणोपसंहारः । विद्याभेदेऽप्युपासनास्थानस्य स्थानिनस्तद्गुणविग्रहाणाञ्चैक्यप्रत्यभिज्ञानात् । न हि दहरशांडिल्यविद्ययोरिव गुणभेदेन प्रत्यभिज्ञाविच्छेदोऽस्ति । सूत्रकारोऽपि स्वातन्त्र्यपारतन्त्र्यकृतविद्याभेदो न गुणानुपसंहारप्रयोजक इति विभावयितुमेव छांदोग्यतैत्तिरीयाम्नातपुरुषविद्ययोः स्वातन्त्र्यपारतन्त्र्यकृतभेदे स्पष्टे सत्यपि गुणाभेदादैक्यमाशंक्य गुणभेदाच्चेदं साधयिष्यति । सूतसंहितायां चादित्यमण्डलान्तर्वर्तिनः परमेश्वरस्य ध्यानविधाने छांदोग्याम्नातगुणोपसंहारोऽपि दर्शितः—'अथवाकाशमध्यस्थे

इति प्राप्ते ब्रूमः—न भिन्ना विद्या । 'अन्तरादित्ये' इति स्थानैक्यमेव विद्यैक्यं दर्शयति । तैत्तिरीये 'हिरण्मयः पुरुषः' इत्युपक्रमेण बाहुग्रहणस्योपलक्षणत्वादुपसंहारेऽपि सर्वाङ्गसुवर्णत्वमेव विवक्षितम् । जगदीश्वरस्यापि तनुप्रवेशात तदात्मत्वं युक्तमिति निरूपितम् । तस्मादुभयत्रैकस्य प्रतिपाद्यत्वादुभयत्राप्युमापतित्वादिकमुपसंहार्यम् ॥　　इति मण्डलविद्याधिकरणम् ॥ १२ ॥

भ्राजमाने सुशोभने । आदित्यमण्डले पूर्णे लक्ष्ययोजनविस्तृते । सर्वलोकविधातारमीश्वरं हिमरूपिणम् । हिरण्यश्मश्रुकेशं च हिरण्मयनखं तथा । कप्यासांबुजवन्नेत्रं नीलग्रीवं विलोहितम् । आगोपालप्रसिद्ध्यर्थमंबिकार्धशरीरिणम् । सोऽहमित्यनिशं ध्यायेत्संध्याकालेषु वा नरः ।' इति । अत्र 'नेत्र' मित्यन्तेन छांदोग्यगतगुणोपसंहारस्सूचितः । तदुपरिपादद्वयेन 'असौ योऽवसर्पती'ति मन्त्रार्थोपसंहारः । अन्तिमपादेन तैत्तिरीयोपनिषदर्थोपसंहारः । वायुसंहितायामपि—'सर्वो रुद्रो नमस्तस्मै पुरुषस्सत्परो महान् । हिरण्यबाहुर्भगवान् हिरण्यपतिरीश्वरः । अंबिकापतिरीशानः पिनाकी वृषवाहनः ।' इत्यारभ्य 'हिरण्यकेशः पद्माक्षो ह्यरुणस्ताम्र एव च । योऽयं सर्पत्यसौ देवो नीलग्रीवो विलोहित' इत्यंतेनादित्यमण्डलान्तर्वर्तिनि परमेश्वरे प्रागुदाहृतश्रुतित्रयार्थोपसंहारो दर्शितः । तस्माद्युक्तमेतद्गुणोपसंहारसिद्ध्यर्थं कृत्वाचिन्तया विद्यैक्यप्रसाधनमिति सूत्रे चकारः स्थानैक्यं विद्याभिन्नां दर्शयति परस्परानाम्नातगुणजातं चोपसंहार्यं दर्शयतीति समुच्चयार्थः । विद्यैक्ये सति तत्फलस्योपसंहारस्य ततस्सिद्धिसंभवेऽपि विद्यैक्यसाधकात्स्थानाद्यैक्यादेव तत्सिद्धिप्रदर्शनं कृत्वाचिन्तयापि सिसाधयिषितस्य विद्यैक्यस्य वस्तुतस्सिद्ध्यभावेऽपि गुणोपसंहारसिद्धिरप्रत्यूहेति सूचनार्थमिति सर्वं समञ्जसम् । इति मण्डलविद्याधिकरणम् ॥ १२ ॥

## नयमणिमालायाम् अथ मण्डलविद्याधिकरणम् ॥ १२ ॥

**सू० ॥ दर्शयति च ॥ २२ ॥**

सर्वांगबाहुमात्रगसुवर्णता रूपभेदेन । छांदोग्यतैत्तरीयगमण्डलविद्याविभेदः स्यात् ॥ २३५ ॥

दर्शयति स्थानैक्यं सर्वात्मकत्वं च विद्यैक्यम् । बाहुग्रहणं त्वेकं सर्वावयवोपलक्षणं युक्तम् ॥ २३६ ॥

ऐक्यमिह विद्ययोः कथमेका ह्यंगाश्रिता स्वतंत्रान्या । सत्यं तत्र विवक्षितमुभयो रूपैक्यमात्रमिह साध्यम् ॥ २३७ ॥

यः खलु सवितरि शंभोश्छंदोगैर्दिव्यविग्रहोऽधीतः । याजुषिकैरपि सैव स्थानैक्यादेर्न तत्र भेद इति ॥ २३८ ॥

**इति मण्डलविद्याधिकरणम् ॥ १२ ॥**

## सूत्रार्थचन्द्रिकायाम्

### अथ संबन्धाधिकरणम् ॥ ११ ॥

**सू ॥ संबन्धादेवमन्यत्रापि ॥ २० ॥ न वा विशेषात् ॥ २१ ॥ दर्शयति च ॥ २२ ॥**

**भगवत्पादमते,** बृहदारण्यके सत्यविद्यायामाधिदैविकपुरुषस्यादित्यस्य 'अह' रित्येतन्नाम ध्यानायोपदिष्टम् आध्यात्मिकस्य त्वक्षिपुरुषस्य 'अह' मित्येतन्नामेति । तत्र किमस्यां सत्यविद्यायां नाम्नोर्व्यवस्थया ध्यानं कर्तव्यमुत नामद्वयस्य प्रतिस्थानं ध्यानमिति **संशयः** । यथा शाण्डिल्यविद्यायामेकशाखायां विभागेनाधीतायामेकविद्यात्वसंबन्धादन्योन्यं गुणोपसंहारः पूर्वमुक्तः एवमन्यत्रापि सत्यविद्यायां भवितुं युक्तम् एकविद्यात्वसंबन्धादिति **पूर्वपक्षः** । **सिद्धान्तस्तु, सू ॥ न वा विशेषात् ॥ २१ ॥ न वा**=नैवोभयोरुभयत्रोपसंहारः । कुतः । **विशेषात्**=तस्याहरिति तस्याहमिति चायतनव्यपाश्रयेणैवोपनिषदोर्विशेषोपदेशात् ॥

किं च **सू ॥ दर्शयति च ॥ २२ ॥** विद्यान्तरे 'हिरण्यश्मश्रु' रित्यादिना आदित्यपुरुषस्य रूपमुक्त्वा तद्रूपमक्षिपुरुषेऽतिदिशति—'तस्यैतस्य तदेव रूपं यदमुष्य रूपमिति' । सोऽयमतिदेशो विद्यास्थले स्थानभेदान्नोपसंहार इति दर्शयति । इतरथायमतिदेशो निरर्थक एव स्यात् अतो नाम्नोर्व्यवस्थेति सिद्धम् ॥

**श्रीकण्ठमते,** इदमधिकरणं सूत्रद्वयात्मकं 'दर्शयतिचे'ति सूत्रं त्वधिकरणान्तरमिति भेदः । अत्र संबन्धाधिकरणे विषयवाक्यपूर्वपक्षादिकमविशिष्टं पूर्वस्मात् । उभयत्रोभे नामनी विद्यैक्यादनियते इति **पूर्वपक्षः** । स्थानभेदाश्रयेणोपास्यभेदाद्विद्यैक्याभावान्नियते नामनी इति **सिद्धान्तः** । अतोऽविशिष्टमेव पूर्वस्मात् ॥

**इति श्रीकण्ठमते संबन्धाधिकरणम् ॥ ११ ॥**

## अथ संभृत्यधिकरणम् ॥ १३ ॥

## संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

राणायणीयानां खिलेषु श्रूयते । 'ब्रह्म ज्येष्ठा वीर्या संभृतानि । ब्रह्माग्रे ज्येष्ठं दिवमाततान । ऋतस्य ब्रह्म प्रथमोत जज्ञे । तेनार्हति ब्रह्मणा स्पर्धितुं कः' इति । यानि लोके त्रिपुरदहनकालकूटकबलनादीनि, तानि निरतिशयानि ज्येष्ठान्यनन्यसुकराणि श्रीकण्ठमूर्त्यादिभिः संभृतानि परं ब्रह्म आततान संपादितवत्, ज्येष्ठं हरिहरहिरण्यगर्भादिभ्योऽप्युत्कृष्टं ब्रह्मेति । अग्रे तेषामपि सृष्टेः प्राग्दिवं परमाकाशपदमाततान व्याप्याध्यास्तेति । तेषां महतां वीर्याणां संभृतिर्द्युव्याप्तिश्च सर्वासु परविद्यास्पूपसंहार्या न वा ॥

इति संशये ब्रह्मगुणत्वाविशेषादनारभ्याधीतत्वाच सर्वासु परविद्यासूपसंहार्या ॥

---

## अथ संभृत्यधिकरणम् ॥ १३ ॥

विद्यैक्यभेदौ चानपेक्ष्य स्वतंत्रोपसंहारानुपसंहारनिरूपणप्रसंगादिदमधिकरणान्तरम्— सू० ॥ संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ वेदान्तेष्वक्रियाशेषस्य ब्रह्मगुणविभूतिवर्णनस्य तदुपासनैकफलत्वादनारभ्य तदाम्नानस्यापि तत्तत्प्रकरणश्रुतोपासनार्थत्वे संभवति तत्र तत्रोपासनान्तरविधिकल्पनागौरवायोगाच्च तत्तत्प्रकरणश्रुतोपासनासु संभृत्यादेरुपसंहारे कर्तव्ये किं सर्वासूपासनासूपसंहारः उत कासुचिदेवेति संशये विशेषाभावात्सर्वासूपसं-

---

### अथ मण्डलविद्याधिकरणम् ॥ १२ ॥

सू ॥ **दर्शयति च** ॥ २२ ॥ छान्दोग्ये तैत्तिरीयके च मण्डलविद्याम्नाता । सैका भिन्ना वेति **संशयः** । एकत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' इत्यादि श्रूयते । अन्यत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति त्रयीमयमण्डलान्तर्वर्तितया हिरण्मयं पुरुषं प्रस्तुत्य तस्योपसंहारे 'सर्वो वै रुद्र' इत्यारभ्य- 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः' इति सर्वात्मत्वं हिरण्यबाहुत्वमुमापतित्वं चाम्नायते । तत्र सर्वांगसुवर्णत्वबाहुमात्रसुवर्णत्वादिरूपभेदात् सर्वात्मत्वसर्वाधिपतित्वादिधर्मभेदाच्च न विद्यैक्यमिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** न भिन्ना विद्या । 'अन्तरादित्ये' इति स्थानैक्यमेव विद्यैक्यं दर्शयति । 'हिरण्यबाहवे' इत्यत्र बाहुग्रहणस्योपलक्षणत्वेन तत्रापि सर्वाङ्गसुवर्णत्वस्यैव विवक्षितत्वात् जगदीश्वरस्यापि तदनुप्रवेशेन सर्वात्मत्वस्य युक्तत्वाच्च उभयत्रैकस्यैव प्रतिपाद्यत्वेनोभयत्राप्युमापतित्वादिकमुपसंहार्यमिति ॥ **इति श्रीकण्ठमते मण्डलविद्याधिकरणम्** ॥ १२ ॥

**रामानुजमते** तु इदमधिकरणं सूत्रत्रयात्मकमेव । विषयवाक्यपूर्वपक्षादिकं सर्वमविशिष्टमेव शांकरमतात् । अस्मिन्मते प्रायः श्रीकण्ठमतानुयायित्वेऽपि अस्मिन्नधिकरणे परमधिकरणरचनादिकं सर्वमनुकरोति शांकरमतमेवेति विशेषोऽवधेयः । श्रीकण्ठमते' दर्शयतिचे' त्यधिकरणान्तररचनायाः शिवपरत्वेनास्य मतस्यातिदवीयस्त्वात् शांकरमतप्रक्रियैवात्रानुसृतेति वेद्यम्॥

**आनन्दतीर्थमते,** आद्यसूत्रस्य पूर्वाधिकरणेऽन्तर्भावात्तत्रैव तद्व्याख्यातम् । सू ॥ **न वाविशेषात्** ॥ पूर्वं 'आत्मेत्येवोपासीते' त्यत्रात्मशब्दस्य ब्रह्माणं प्रति सकलगुणाभिधायकत्वमन्यान्प्रति कतिपयगुणाभिधायकत्वं चोक्तम् । तन्न युज्यते । प्रमाणाभावात् । किं तु ब्रह्माणं प्रति सकलगुणाभिधायकत्वमेव युज्यते अन्यन्न युज्यते इति **पूर्वपक्षः** । **सिद्धान्तस्तु** नास्त्यविशेषेण सर्वान्प्रति सर्वगुणाभिधायकत्वम् । नाप्यनियतगुणाभिधायकत्वम् । किंत्वधिकारिविशेषेण तत्तद्योग्यगुणाभिधायकत्वमेव । अतो यस्य यावन्तो गुणा आत्मशब्देन युगपत्प्रतीयन्ते तस्य तावन्त उपास्या इति निर्णयोपपत्तिः । **सूत्रार्थस्तु, नवा**='आत्मे'ति वाक्यस्यात्मशब्देन सर्वगुणानां ग्रहणं न वाभ्युपगम्यते । कुतः । **विशेषात्**=अधिकारियोग्यताविशेषमपेक्ष्य तस्य तद्योग्यगुणाभिधायकत्वात् इत्यर्थः ॥

सू ॥ **दर्शयति च** ॥ २३ ॥ 'सर्वान्गुणानात्मशब्द' इति भाल्लवेयश्रुतिः स्वोक्तार्थं प्रतिपादयतीत्यर्थः ॥

**इति सूत्रार्थचन्द्रिकायां संबन्धाधिकरणम्** ॥ ११ ॥

इति प्राप्तेऽभिधीयते—न सर्वासूपसंहार्या व्याप्तिः। सामर्थ्यादल्पस्थानव्यतिरिक्तेषूपसंहार्या। 'देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन् को भवानिति' इति निरतिशयसुखास्पदतया स्वर्गशब्दवाच्यं ब्रह्मादिपदेभ्योऽपि महत्तरं महास्थानं हि श्रूयते। ततः स्वल्पस्थानव्यतिरिक्तेषु वैश्वानराद्युपासनेषु द्युव्याप्तिरुपसंहार्येति। तत्सहचारान्महावीर्यसंभृतिरपि तत्रैवोपसंहार्या॥

इति संभृत्यधिकरणम्॥ १३॥

हारः। न चाल्पस्थानासु दहरशाण्डिल्यादिविद्यासु द्युव्याप्तिरुपसंहर्तुमशक्येति तत्साहचर्यात्संभृत्यादिकमपि तासु नोपसंहार्यमिति वाच्यम्। दहरादिविद्यास्वपि 'यावान्वा अयमाकाशो ज्यायान्दिव' इत्यादिश्रवणेन तद्वद्द्युव्याप्तेरप्युपसंहारसंभवादिति पूर्वपक्षः। वस्तुसामर्थ्यरूपाद्विशेषादल्पस्थानव्यतिरिक्तास्विव वैश्वानरोपासनादिषूपसंहार्या। 'यावान्वा' इत्यादिकमुपास्यमहिमख्यापनार्थं नोपास्यगुणसमर्पणार्थमिति न विरोधः। 'सत्यं ज्ञानमनन्त' मित्यत्र सत्ताज्ञानयोरेव ब्रह्मस्वरूपप्रतीत्यनुसंबंधित्वेन सर्वविद्यासूपसंहारः न तु त्रिविधपरिच्छेदराहित्यरूपस्यानन्तत्वस्यापीति न विरोध इति सिद्धान्तः। भाष्यकृतव्याख्यानानुसारेण विषयवाक्ये 'संभृतानी'त्यस्य श्रीकण्ठादिभिरिति कर्त्रध्याहारो 'ब्रह्मे' त्यस्या 'ततान' त्यग्रिमक्रियापेक्षणं च द्रष्टव्यम्। सूत्रे 'संभृतिद्युव्याप्ति' इति समाहारद्वंद्वः। अल्पस्थानव्यतिरिक्तोपासनेष्वित्यध्याहारः। उपसंहार्यमिति पूर्वाधिकरणसूत्रे चशब्दसामर्थ्यलब्धस्यानुषंगः। अत इत्यनेन व्यवहितसूत्रोपात्तस्य 'विशेषा'दित्यस्य परामर्शः। वस्तुसामर्थ्यरूपाद्विशेषादित्यर्थः। इति संभृत्यधिकरणम्॥ १३॥

## नयमणिमालायाम् अथ संभृत्यधिकरणम्॥ १३॥

सू०॥ संभृतिद्युव्याप्त्यपि चातः॥ २३॥

संभृत्यादिगुणौघः प्रकरणपाठस्य वैधुर्यात्। अविशेषात्सर्वास्वपि परविद्यासूपसंहार्यः॥ २३९॥
द्युव्याप्तेरघटनमस्त्यल्पस्थानासु विद्यासु। तत्सहपठनात्संभृत्याद्या अपि तासु नोपसंहार्याः॥ २४०॥

इति संभृत्यधिकरणम्॥ १३॥

## सूत्रार्थचन्द्रिकायाम्

अथ संभृत्यधिकरणम्॥ १२॥

सू॥ संभृतिद्युव्याप्त्यपि चातः॥ २३॥

**भगवत्पादमते,** राणायणीयानां खिलेषु पठ्यते—'ब्रह्म ज्येष्ठा वीर्या संभृतानि। ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति। तत्र श्रूयमाणं संभृतिद्युव्याप्त्यादिकं तदीयोपनिषद्विहितशाण्डिल्यादिब्रह्मविद्यासूपसंहर्तव्यं न वेति **संदेहः।** उपसंहर्तव्यमिति **पूर्वपक्षः। सिद्धान्तस्तु,** वीर्यसमृद्धिद्युलोकव्याप्त्यादिकं नोपसंहर्तव्यम्। कुतः। **अतश्च**=नाम्नोरिव व्यवस्थापकस्थानविशेषादेव। अतस्संभृत्यादिगुणविशिष्टमुपासनान्तरं तत्र विधेयमिति सिद्धम्॥

**श्रीकण्ठमते** तथा **रामानुजमते** च प्रायो नास्ति विशेषः पूर्वस्माद्विषयवाक्यादिषु। तत्रापि संभृतिद्युव्याप्त्यादीनां किं सर्वासु विद्यासूपसंहारः उत स्थानविशेषोपासनेषु नियम इति **संशये** अनारभ्याधीतत्वात्तेषां सर्वासूपसंहार इति पूर्वपक्षमुद्राव्य द्युव्याप्तिसामर्थ्यात्तस्य हृदयाद्यल्पस्थानेषूपसंहारायोगात्तत्साहचर्याच्चेतरेषामल्पस्थानविहितासु विद्यासु नोपसंहार इति सिद्धान्तितत्वादस्ति किंचिदिव वैलक्षण्यं सिद्धान्तस्वरूपे। **सूत्रार्थस्तु, संभृतिद्युव्याप्त्यपि**=समाहारद्वन्द्वैकवद्भावः। संभृतिप्रभृति गुणजातमपि **अत एव**=स्थानविशेषसंबन्धनियमान्नियतं न सर्वत्रोपसंहर्तव्यमिति भावः॥

**आनन्दतीर्थमते** पूर्वमानन्दादिगुणचतुष्टयमेव सर्वमुमुक्षूपास्यमित्युक्तं युक्तं न वेति **संदेहः।** संभृतिद्युव्याप्त्योः 'उक्षा स द्यावापृथिवी'ति श्रुतयोस्सकलमुमुक्षूपास्यत्वात्सर्वापेक्षिततत्वेन फलानुसार्युपासनस्य कर्तव्यत्वान्मोक्षे तयोस्सत्वाच्च न युक्तं गुणचतुष्टयोपासनं मुमुक्षूणामिति **पूर्वपक्षः। सिद्धान्तस्तु,** न संभृतिद्युव्याप्ती सर्वोपास्ये किं तु देवाद्युपास्ये एव। योग्यतायां विशेषसद्भावात्। योग्यत्वाभावे च फलापेक्षा नोपासनप्रयोजिका, अनर्थप्राप्तिप्रसंगात्। इति। **सूत्रार्थस्तु,** अपिपदेन नञः समाकर्षः। चशब्द एवार्थे। **संभृतिद्युव्याप्ति**=सम्यग्भरणप्रकाशव्याप्ती न सर्वोपास्ये। किं तु देवाद्युपास्ये एव। कुतः। **अत एव**=अधिकारियोग्यतायां विशेषसद्भावत एव। इति॥

इति सूत्रार्थचन्द्रिकायां संभृत्यधिकरणम्॥ १२॥

## अथ पुरुषविद्याधिकरणम् ॥ १४ ॥

### सू ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

छान्दोग्यतैत्तिरीयकयोः पुरुषविद्याऽऽम्नाता । 'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातःसवनम्' इत्यादिरेकत्र । 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिः' इत्यादिरन्यत्र । सोभयत्राभिन्ना भिन्ना वेति संशयः ॥

उभयत्र पुरुषविद्येति नामाभेदाद्यज्ञावयवकल्पनासाम्याच्च अभिन्ना ॥

इति प्राप्तेऽभिधीयते—तैत्तिरीये समाम्नातानां यजमानपत्न्यादीनां यज्ञावयवानां सवनत्रयादीनां च छान्दोग्येऽनाम्नानात्, तत्रान्यथैव सवनत्रयादिकल्पनाच्च भिन्नैवोभयत्र पुरुषविद्या । तैत्तिरीयके हि 'यत् सायं प्रातर्मध्यन्दिनं च तानि सवनानि' इति सवनत्रयकल्पनम् । छान्दोग्ये पुरुषायुषं त्रेधा विभज्य

---

## अथ पुरुषविद्याधिकरणम् ॥ १४ ॥

देशभेदसंबन्धिविद्यासु गुणानुपसंहारनिरूपणप्रसङ्गेन चतुर्विंशतिवर्षादिकालभेदसंबन्धिविद्यायां गुणानुपसंहारं दर्शयतुमधिकरणान्तरम्—सू ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥२४॥ छान्दोग्ये पुरुषस्य यज्ञत्वकल्पनामुपक्रम्य यज्ञावयवास्सम्पादिताः षोडशोत्तरवर्षशतमिते पुरुषायुषे चतुर्विंशतिवर्षाणि प्रातस्सवनं चतुश्चत्वारिंशद्वर्षाणि माध्यन्दिनं सवनमष्टाचत्वारिंशद्वर्षाणि तृतीयसवनं यदशिशिषति पिपासति न रमते ता दीक्षाः यदश्नाति पिबति रमते ता उपसदः यद्धसति भक्षयति मिथुनीभवति तानि स्तुतशस्त्राणि यत्तपो दानमार्जवमहिंसा सत्यवचनं ता दक्षिणाः यन्मरणं तदवभृथ इति तत्तत्सवनतया विभक्ते वयसि रोगादिप्रादुर्भावे सति स ब्रूयात् 'प्राणा वसव इदं मे प्रातस्सवनं माध्यन्दिनं सवनमनुसंतनुते'त्यादयस्तन्निवृत्तये जप्तव्या मन्त्रा विहिताः । 'प्र ह षोडशं वर्षशतं जीवती'त्यायुःप्राप्तिरस्याः पुरुषविद्यायाः फलमुक्तम् । इमां विद्यामाङ्गिरसोऽघोरनामा ऋषिः कृष्णाय देवकीपुत्रायोपदिदेश स इमां विद्यां लब्ध्वा विद्यान्तरवितृष्ण एवैतद्विद्यानिष्ठो बभूवेति विद्याप्रशंसा च कृता । तैत्तिरीयके तु विद्वत्संबन्धियज्ञानुवादेन यज्ञावयवास्सम्पादिताः न तु विदुषो यज्ञत्वकल्पनमुपक्रान्तम् । विद्वान्यज्ञ आत्मा यजमान इति तादर्थ्येन पृथग्वाक्यान्तराभावात् । विद्वत्सम्बन्धिनः कस्यचिद्यज्ञस्य प्रागनुक्तत्वेऽपि वक्ष्यमाणामात्मादिषु यजमानादिकल्पनामालोच्य तदर्थसमूहस्य यज्ञत्वेन प्रकरणलब्धेन विद्वत्संबन्धित्वेन चानुवादतः प्रतीतैकवाक्यतानिर्वाहोपपत्तेश्च । यज्ञावयवाः—स्वात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदश्शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमश्शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधो यत्प्रातर्मध्यन्दिनं सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मा-

सवनत्रयकल्पनम् । तैत्तिरीये फलाश्रवणात् 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति ब्रह्मविद्यामभिधाय 'ब्रह्मणो महिमानमाप्नोति' इति तत्फलं चाभिधाय 'तस्यैवं विदुषः' इत्यादिनाऽऽम्नाता पुरुषविद्या प्रस्तुतब्रह्मविद्याङ्गमिति तत्फलं ब्रह्मप्राप्तिरेव । छान्दोग्ये 'प्र ह षोडशं वर्षशतं जीवति' इति फलं श्रुतम्। ततः फलभेदादवयवभेदाच्च न विद्यैक्यमिति ॥

इति पुरुषविद्याधिकरणम् ॥ १४ ॥

---

स्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणास्सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ' इति । इदं तु 'ब्रह्मणो महिमानमाप्नोती'ति पूर्वप्रस्तुतब्रह्मविद्यासंबन्ध्येवानूदीतम् । शमयिता भोज्यानां संस्कर्ता । सर्ववेदसं दक्षिणेति भट्टभास्करेण व्याख्यातम् । इत्थं पुरुषविद्याद्वये सवनत्रयादिकल्पनं फलं चेत्येतत्सर्वमपि परस्परविलक्षणमिति स्पष्टमेव । एवमाम्नायपाठादेव स्पष्टभेदे यथैकस्यां पुरुषविद्यायां सवनत्रयादिकल्पनं फलं चाम्नायते न तथान्यत्राम्नायत इत्येवं सूत्रकृता व्युत्पादनीयम् । नात्र किंचिदस्ति । यथाकथंचित्सवनत्रयादिकल्पनं यत्किंचित्फलश्रवणं चास्तीत्येतावता विद्यैक्यशङ्का तु सर्वत्रातिप्रसक्ता । सर्वास्वपि हि विद्यासु यत्किंचिद्रूपविशिष्टं यत्किंचिदुपास्यं यत्किंचित्फलं चास्त्येव । निराकृता च यथाकथंचित्साम्यावलम्बनानामैक्यावलम्बना च विद्यैक्यशङ्का 'अन्यथात्वं च शब्दादिति चे'दित्यधिकरणे । तत्र बहुसाम्ये सत्यप्येकत्रोद्गीथावयवत्वे प्राणदृष्टिरन्यत्र कृत्स्नोद्गीथे तदुद्गानकर्तरि वेत्येतावन्मात्रवैषम्येण विद्याभेद उक्तः । इह सवनत्रयकल्पनादेस्सर्वस्यापि वैषम्ये कथं तत एव विद्याभेदो न सिद्ध्येत् । न च सर्वस्यापि वैलक्षण्ये मरणावभृथत्वमात्रमभेदसाधकं तस्मान्निष्प्रयोजनमिदमधिकरणमिति चेत् उक्तमस्य प्रयोजनं मण्डलविद्याधिकरणे 'पुरुषविद्ययोः फलवैलक्षण्यं रूपवैलक्षण्यं च परस्परगुणानुपसंहारप्रयोजकं न स्वातन्त्र्यपारतन्त्र्यवैलक्षण्यमिति विभावनमस्य प्रयोजन'मिति तदेवानुसंधेयम् । 'तैत्तिरीयके फलाश्रवणा'दिति भाष्यस्याग्रिमसाध्ये हेतुनिर्देशकस्य प्रधानभूतब्रह्मविद्याफलव्यतिरेकेण फलान्तराश्रवणादित्यर्थः । अन्यथा पूर्वानुवाकान्ते ब्रह्मविद्याफलत्वेन श्रुताया ब्रह्ममहिमावाप्तेः 'स्तस्यैवं विदुष' इत्याद्यनुवाकान्तेऽपि श्रुतत्वेन फलाश्रवणहेतोरसिद्धिप्रसङ्गात् । न चोभयत्रापि 'ब्रह्मणो महिमानमाप्नोती'ति फलश्रवणेन पूर्वोत्तरानुवाकविहितयोर्ब्रह्मविद्यापुरुषविद्ययोस्समप्राधान्यं शङ्कनीयम् । 'तस्यैवं विदुष' इत्यादिना प्रागुक्तब्रह्मविद्यावतः पुरुषविद्याविधानेनोपक्रम एव तस्यास्तदङ्गत्वावगमात् । 'सोमापौष्णं त्रैतमालभेत पशुकाम' इति श्रुतस्य प्रधानफलस्य तदङ्गे यूपोदुम्बरत्वइवात्रापि प्रधानफलस्याङ्गेऽनुवादोपपत्तेश्च । सूर्याचन्द्रमःप्राप्तिपूर्वकत्वविशेषप्रतिपादनार्थत्वेनानुवादसाफल्योपपत्तेश्च ॥ इति पुरुषविद्याधिकरणम् ॥ १४ ॥

---

नयमणिमालायाम् अथ पुरुषविद्याधिकरणम् ॥ १४ ॥

सू ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

एकत्वात्संज्ञाया यज्ञावयवप्रकल्पनासत्त्वात् । फलभेदानाम्नानाच्चैकत्वं पुरुषविद्ययोर्युक्तम् ॥ २४१ ॥

संज्ञैकत्वे सत्यपि यज्ञावयवप्रकल्पनावैरूप्यात् । परविद्याशेषत्वस्वातन्त्र्याभ्यां च भिन्नतैव तयोः ॥ २४२ ॥

इति पुरुषविद्याधिकरणम् ॥ १४ ॥

## अथ वेधाद्यधिकरणम् ॥ १५ ॥

## सू ॥ वेधाद्यर्थभेदात् ॥ २५ ॥

तैत्तिरीयाणामुपनिषदुपक्रमे श्रुतौ 'शं नो मित्रः शं वरुणः' 'सह नाववतु' इति मन्त्रौ विद्याङ्गभूतौ न वा ॥

इति संशये विद्यासन्निधिवशाद्विद्याङ्गभूताविति प्राप्ते उच्यते—यथा आथ-

## अथ वेधाद्यधिकरणम् ॥ १५ ॥

अथ तैत्तिरीयके ब्रह्मविद्याप्रकरणपाठात् 'तस्यैवं तिदुषो यजमानस्ये'ति विद्यासमभिव्याहाररूपाद्वाक्याच्च पुरुषविद्याया इव 'शं नो मित्र' इत्यादिमन्त्रयोर्ब्रह्मविद्यासन्निधिपाठाद्विद्याविषयब्रह्मप्रकाशनसामर्थ्यरूपलिङ्गाच्च ब्रह्मविद्याङ्गत्वं स्यादिति शङ्कानिराकरणार्थमधिकरणान्तरम्—सू० ॥ वेधाद्यर्थभेदात् ॥ २५ ॥ अयमत्र पूर्वपक्षाभिप्रायः । 'वदिष्यामि अधीतमस्त्वि'त्यध्ययनप्रकाशनसामर्थ्यरूपाल्लिङ्गादध्ययन इव विद्यासन्निधिपाठरूपात्स्थानप्रमाणादग्रे विधास्यमानासु विद्यास्वपि विनियोगः स्यात् । क्वचिद्विनियुक्तानां मन्त्राणामन्यत्रापि विनियोगस्य बहुलमुपलम्भेन विरोधाभावात् । विरोधाभावे च प्रबलविनियुक्तस्य दुर्बलेनापि विनियोगसंभवात् । विद्यासु विनियोगाभावे तत्सन्निध्याम्नानस्यानर्थक्यप्रसङ्गेनात्र स्थानस्य लिङ्गेन समानबलत्वाच्च । अतएव 'अथातोऽग्निमग्निष्टोमेनानुयजन्ती'ति वाक्यविनियुक्ताङ्ग्यवरुद्धेऽपि क्रतावुत्तरवेद्याः क्रतुप्रकरणाम्नानवैयर्थ्यपरिहाराय तस्या अपि क्रत्वङ्गत्वमाश्रितम् । अस्ति च सन्निध्यनुगुणं लिङ्गमपि विद्यासंबन्धिब्रह्मप्रकाशनसामर्थ्यरूपम् । तस्मादुदाहृतमन्त्रयोर्विद्यास्वपि विनियोग इति । सिद्धान्ताभिप्रायस्त्वयम्—साक्षादध्ययनप्रकाशनसामर्थ्यरूपाल्लिङ्गाद्विनियोजकश्रुतिमात्रकल्पनया शीघ्रमध्ययनविनियोगे सति तत एव मन्त्रयोर्नैराकाङ्क्ष्यात्सन्निधानेन स्वस्वप्रकरणाम्नाताङ्गैर्निराकाङ्क्षाणामपि विद्यानामाकाङ्क्षामुत्थाप्य तया मन्त्रयोर्विद्याभिरेकवाक्यतां परिक-

---

## सूत्रार्थचन्द्रिकायाम्

### अथ पुरुषविद्याधिकरणम् ॥ १४ ॥

सू ॥ पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

**भगवत्पादमते,** अत्र पैङ्गिरहस्ये 'पुरुषो वाव यज्ञ' इति पुरुषविद्या श्रूयते । तत्राशीर्मन्त्रप्रयोगादयो धर्माश्च श्रूयन्ते । तैत्तिरीयेऽपि 'तस्यैवं विदुषो यज्ञस्यात्मा' इत्यादि । तत्र पैङ्गिरहस्योक्ताः पुरुषयज्ञधर्मास्तैत्तिरीयकेऽप्युपसंहार्या वा न वेति **संदेहः** । उपसंहार्या इति **पूर्वः पक्षः** । **सिद्धान्तस्तु, पुरुषविद्यायामिव**=यथा पैङ्गिनां पुरुषविद्यायां पुरुषो यज्ञत्वेन कल्पितः तदीयमायुस्त्रेधा विभज्य सवनत्वेन कल्पितम्, अशिशिषादीनि च दीक्षादिभावेन कल्पितानि, तथा **इतरेषां**=तैत्तिरीयकाणां पुरुषविद्यायां सवनत्वादीनामनाम्नानात् । तेषां हि पुरुषविद्यायां पुरुषसंबन्धियज्ञोऽनुक्रान्तः । अतो विद्यैक्याभावान्नोपसंहर्तव्या इति सिद्धम् ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च पूर्ववदेव संदेहपूर्वपक्षादिकं प्रायस्सर्वमविशिष्टमेवेति नात्र पृथग्विस्तरः ॥

**आनन्दतीर्थमते,** पूर्वोक्तो गुणोपसंहारः कर्तव्यो वा उत न कर्तव्यः । इति **संशये** बहल्पगुणोपासनयोग्याधिकारिणां बहल्पगुणविधायकविद्याविशेषपरिग्रहेणाभिमतार्थसिद्धेर्निरर्थको गुणोपसंहार इति **पूर्वपक्षः । सिद्धान्तस्तु,** क्वचिदपि विद्यायां सर्वगुणानामनुक्तत्वात्सर्वविद्योत्तमायां पुरुषसूक्तविद्यायामपि केषांचिदेवोक्तत्वादन्येषां च गुणानामनाम्नानाच्च सर्वगुणोपासकैर्ब्रह्मादिभिरवश्यं कर्तव्य एव सर्वविद्यागुणोपसंहारः । अन्यैरपि स्वस्वापेक्षितफललाभाय एकस्यामेव विद्यायां स्वापेक्षितसर्वगुणोक्तिनियमाभावाद्गुणोपसंहारः कर्तव्य एवेति ॥

**इति सूत्रार्थचन्द्रिकायां पुरुषविद्याधिकरणम् ॥ १४ ॥**

र्वणिकानामुपनिषदारम्भे पठितः 'शुक्रं प्रविध्य हृदयं प्रविध्य' इत्यादिमन्त्रो हृदयवेधादिप्रकाशनसामर्थ्यरूपाल्लिङ्गादभिचारशेषः । यथा वा ऐतरेयिणां वाजसनेयिनां चोपनिषदारम्भे पठितं महाव्रतं प्रवर्ग्यरूपं च कर्म श्रुत्यादिविनियोगात् क्रतुशेषः । तथेमावपि मन्त्रौ 'ऋतं वदिष्यामि···तेजस्विनावधीतमस्तु' इत्यादिलिङ्गादध्ययनशेषभूतावेव न विद्याङ्गभूतौ, प्रयोजनभेदात्, श्रुतिलिङ्गवाक्येभ्यः सन्निधेर्दुर्बलत्वात् ॥

इति वेधाद्यधिकरणम् ॥ १९ ॥

---

ल्प्यैकवाक्यतानिर्वाहाय मन्त्रयोर्ब्रह्मप्रकाशनद्वारा तद्विद्याप्रकाशनसामर्थ्यमपि कल्पयित्वा तद्विनियोजकश्रुतिकल्पनापूर्वकं विद्यासु विनियोगः कार्य इत्येवं विलम्बितप्रतीतिकेन विनियोगान्तरं न कर्तव्यम् । आकाङ्क्षामूलत्वादेवंविधकल्पनायाः । मन्त्रयोर्विद्यासन्निध्याम्नानं तु विद्याभागवदरण्येऽनुवाक्यत्वलाभार्थं भविष्यतीति । सूत्रे वेधाद्युपादानं दृष्टान्तार्थमिति भाष्य एव व्याख्यातम् । यद्यपि वेधमन्त्रादीनामप्यविशिष्टस्तत्तदुपनिषदारम्भे समाम्नायः । तथापि 'हृदयं प्रविध्य धमनीः प्रविध्ये'त्याद्यर्थपर्यालोचनायामाथर्वणिकमन्त्रसमाम्नायस्याभिचारिककर्मस्वेव लिङ्गाद्विनियोग इति स्पष्टम् । तथा प्रवर्ग्यस्य ज्योतिष्टोमादिषु महाव्रताख्यस्य कर्मणो गवामयनादिषु च यथायथं श्रुत्यादिभिर्विनियोग इति स्पष्टमिति तदंशो दृष्टान्ततया योजितः । प्रयोजनभेदादिति ॥ अध्ययनप्रकाशनरूपप्रयोजनभेदादित्यर्थः । श्रुतिलिङ्गादीत्यत्र वाक्येभ्य इति प्रवर्ग्यमहाव्रतादिसर्वाभिप्रायम् ॥

इति वेधाद्यधिकरणम् ॥ १९ ॥

---

## नयमणिमालायाम् अथ वेधाद्यधिकरणम् ॥ १९ ॥

सू ॥ वेधाद्यर्थभेदात् ॥ २५ ॥

शं नो मित्रस्सहनाविति मन्त्रौ तैत्तिरीयकाम्नातौ । विद्यासंनिधिपठनाद्विद्याङ्गत्वेन गम्येते ॥ २४३ ॥
अध्ययनलिङ्गवत्त्वात्तदङ्गभूताविमौ मन्त्रौ । वेधादिवत्तु विद्यासंनिधिरारण्यकत्वकृतः ॥ २४४ ॥

इति वेधाद्यधिकरणम् ॥ १९ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ वेधाद्यधिकरणम् ॥ १४ ॥

सू ॥ वेधाद्यर्थभेदात् ॥ २५ ॥

**भगवत्पादमते,** अत्र आथर्वणिकानामुपनिषदारम्भे 'सर्वं प्रविध्य हृदयं प्रविध्ये'त्यादयो मन्त्राः पठिताः । काण्वानामुपनिषदादौ 'देवा ह वै सत्रं निषेदु'रित्यादि प्रवर्ग्यब्राह्मणं पठितम् । तत्र किमेते 'सर्वं प्रविध्ये'त्यादयो मन्त्राः प्रवर्ग्यादीनि कर्माणि च विद्यासूपसंह्रियेरन्न वेति **संशयः** । उपसंह्रियेरन्निति **पूर्वः पक्षः** । **सिद्धान्तस्तु, वेधाद्यर्थभेदात्**='सर्वं प्रविध्ये'त्यादिमन्त्रप्रकाशितानां वेधादीनामर्थानामाभिचारिककर्मादिसमवेतानां भेदात् विद्यास्वसमवेतत्वादित्यर्थः । एवं मन्त्राणां विद्याङ्गत्वाभावात्प्रवर्ग्यादिकर्मणां विद्याशेषत्वाभावाच्च नोपसंह्रियेरन्निति ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च प्रायोऽविशिष्टमेव पूर्ववत्संदेहपूर्वपक्षादिकम् । विषयवाक्यनिरूपणे परं 'शं नो मित्रः शं वरुणः' इत्यादयो मन्त्रा अप्युदाहृता इत्यतो नास्ति विशेषः पृथक्प्रपञ्चनार्ह इति वेद्यम् ॥

**आनन्दतीर्थमते,** अत्र 'अग्ने त्वचं यातुधानस्य भिन्धि, तं प्रत्यञ्चमर्चिषा विध्य मर्मन्' इत्यादि वाक्यं विषयः । अत्रोक्ता दुष्टनिग्रहफला वेधादयो गुणास्सर्वमुमुक्षूपास्या न वेति **संशये** दुष्टनिग्रहस्य सर्वापेक्षितत्वात्सर्वमुमुक्षूपास्या एव । अत आनन्दादिगुणचतुष्टयमेव सर्वमुमुक्षूपास्यमित्युक्तमयुक्तमिति **पूर्वपक्षः** । **सिद्धान्तस्तु, वेधादि**=भिन्धिविध्यतृणीहीत्यादिकं न सर्वोपास्यम् । कुतः । **अर्थभेदात्**=वेधादीनां यत्याद्युपास्यत्वाभावात् वेधाद्युपासनफलस्य हिंसादेर्यत्यादियोग्यफलाद्विलक्षणत्वात् । अतो वेधादिकं न सर्वोपास्यमानन्दादि चतुष्टयमेव सर्वमुमुक्षूपास्यमिति सुस्थमिति सिद्धमिति ॥

इति सूत्रार्थचन्द्रिकायां वेधाद्यधिकरणम् ॥ १४ ॥

## अथ हानोपायनाधिकरणम् ॥ १६ ॥

**सू॥ हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६॥**

**विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचनमेकस्यां शाखायामाम्नातम् । विमुक्तयोः पुण्यस्य प्रवेशस्थानं सुहृदः, पापस्य प्रवेशस्थानं शत्रव इति एकस्यां शाखायामाम्नातम् । अन्यस्यां विमोचनं प्रवेशस्थानं चेत्युभयमाम्नातम् । सर्वं चिन्तनार्थमेव । इह विमोचनं प्रवेशस्थानं चेत्यनयोः समुच्चयेन सर्वत्र चिन्तनम्? उत विकल्पेनेति संशयः ॥**

---

## अथ हानोपायनाधिकरणम् ॥ १६ ॥

सू० ॥ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

ताण्डिशाखायामथर्वणिकशाखायां च पुण्यपापयोः केवलं हानं श्रुतम् । शाट्यायनिशाखायां केवलमुपायनं श्रुतम् । कौषीतिकशाखायामुभयमपि श्रुतम् । सर्वमिदमनुचिन्तनार्थं न केवलं विद्यामहिमप्रख्यापनार्थम् । विद्याप्रकरणपाठस्य स्थानगुणादिपाठवदनुचिन्तनार्थत्वस्यैवोचितत्वात् 'ज्यायान्दिव' इत्यादाविव विरोधाभावाच्च । न च स्थानगुणादिपाठ एवानुचिन्तनार्थः फलपाठस्तु तद्वत्तावोधनैकप्रयोजन इति वाच्यम् । शाण्डिल्यविद्यायां 'एतमितः प्रेत्याभिसंभवितास्मी'ति फलभूताया एव ब्रह्मप्राप्तेरनुचिन्तनीयत्वोक्तिदर्शनात् । किंचा'श्व इव रोमाणी'ति ताण्डिशाखायामन्ते ब्रह्मप्राप्त्या सह हानस्यानुचिन्तनीयत्वमुच्यते । तत्समानार्थतया कौषीतकिशाखायामपि हानस्यानुचिन्तनीयत्वसिद्धौ तत्साहचर्यादुपायनस्याऽपि तत्सिध्यति । तदेवोपासनासु शाट्यायनशाखायां श्रूयत इति तत्राऽपि तत्सिध्यति । एवं हानोपायनयोरनुचिन्तनीयत्वसिद्धौ किं तयोरेकैकमुभयं च विकल्पेनानुचिन्तनीयमुतोभयमपि सर्वत्रोपसंहरणीयमित्युपायनस्य हानं प्रत्यशेषत्वशेषत्वाभ्यां संशये पूर्वपक्षः । यथा विद्यासन्निधौ श्रुतं वेधमन्त्रादिकं विद्यासु नोपसंहार्यं तथा क्वचिच्छाखायां हानसन्निधौ श्रुतमुपायनमन्यत्र केवलहानश्रुतौ नोपसंहार्यम् । एवं केवलोपायनश्रुतौ हानमपि नोपसंहार्यम् । उपसंहारप्रयोजकस्य विद्यैक्यस्याभावात् । ननु हानोपायनयोः परस्परापेक्षतयोपसंहारः स्यात् । उपायनं हि हानमन्तरेणानुपपन्नं हानमपेक्षते । हानमप्युपायनमपेक्षत एव । अवश्यं हि कुतश्चित्प्रहीणं किंचिदुपैति यथाश्वात्प्रहीणं रोमवृन्दं भूभागमिति चेत् । सत्यम् । अर्थस्वभावपर्यालोचनया तथैवानुचिन्तनं त्वेकैकस्योभयस्य च विकल्पेनैव कर्तव्यम् । न समुच्चयेन । समुच्चयस्य सर्वत्र कौषीतकिवाक्येनैव प्राप्तिसंभवे शाखान्तरेष्वेकैकाम्नानस्य विकल्पार्थत्वाभाववैयर्थ्यप्रसङ्गात् । न च शाखान्तराधिकरणोक्तरीत्याध्येतृभेदेन सार्थकत्वमुपपादयितुं शक्यम् । अविशेषपुनःश्रवणे हि तथा वक्तुं युक्तमिह तु शाखाभेदेनैकैकस्योभयस्य च श्रवणमुदितानुदितहोमश्रवणवद्विकल्पार्थमित्येव न्याय्यमिति भाष्ये हानश्रुतावुपायनस्यानुपसंहार्यत्वोक्तिरुपायनश्रुतौ हानानुपसंहार्यत्वस्याप्युपलक्षणम् । सिद्धान्तस्तु एकैकश्रुतावप्यन्यदप्युपसंहार्यम् । शाट्यायनिशाखायां दायसंक्रमणदृष्टान्तेन ह्येवमवगम्यते । यथा मुच्यमानस्य धने तं प्रति यथेष्टविनियोगार्हता हीयते पुत्रान्प्रति च सा सम्पद्यते । एवं तस्य पुण्यपापयोस्तं

किं तावत् प्राप्तम्? 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति शाट्यायनके श्रूयते। ताण्डिशाखायाम् 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य' इति श्रूयते 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति चाथर्वणे। अत्र विदुषः पापपरित्यागप्रतिपादकश्रुतौ परित्यक्तयोः पुण्यपापयोः प्रवेशस्थानं नोपसंहार्यम्, परित्यागश्रुतावश्रुतत्वात्॥

---

प्रति फलजननार्हता हीयते, प्रियाप्रियान्प्रति च सम्पद्यत इति श्रुतिषु हानोपायनशब्दाभ्यां विवक्षितमिति तत्र हानं ब्रह्मप्रेप्सोर्मुच्यमानस्य फलरूपत्वाद्यथोपासनं फलमिति तत्क्रतुन्यायतस्सर्वासु विद्यास्वनुचिन्तनीयतयोपसंहर्तव्यम्। एवञ्च तस्य फलस्योपपादकतया तच्छेषत्वेन फलभूतमुपायनमपि सर्वत्रोपसंहार्यम्। पुण्यपापयोः फलजननार्हत्वस्यान्यविषयसंक्रान्तौ हि हानमुपपन्नं भवति। संकीर्तनप्रायश्चित्तादिभिरनष्टतया विद्यमानयोस्तयोः फलजनकत्वावश्यंभावादिति सूत्रे हानावुपायनमुपसंहर्तव्यम्। तस्य हानोपपादकतया फलरूपं हानं प्रति शेषत्वेन फलकोटिनिविष्टत्वादित्युक्तेरुपायनेऽपि हानमुपसंहर्तव्यम्। हानस्य तदुपपादनीयफलरूपत्वादिति सहेतुकसाध्यान्तरस्याप्युपलक्षणम्। शाखान्तरोक्तार्थापेक्षितस्य शाखान्तराद्ग्रहणे दृष्टान्ताः कुशाच्छन्द इत्यादिसौत्रपदेनोक्ताः कुशाः। उद्गातॄणां प्रस्तावकर्मणि विनियुक्ता उदुम्बरदारुशलाकाः। छन्दांसि देवप्रकाशका असुरप्रकाशकाश्च कर्मविशेषे क्रमेण प्रयोक्तव्या मन्त्राः। स्तुतिरुक्थ्यस्तोत्रानन्तरं सूर्यास्तमयसन्निहिते काले समारम्भणीयं स्तोत्रम्। उपगानमुद्गातृषु स्तुवत्सु अध्वर्युव्यतिरिक्तैः कैश्चन ऋत्विग्भिः कर्तव्यं हो इति शब्दोच्चारणम्। एतेषामुक्तो विशेषः शाखान्तरवाक्यैकवाक्यतया लब्ध इति दृष्टान्तीकरणम्। ननु हानोपायनयोः क्वचिदेकं क्वचिदन्यत्क्वचिदुभयमित्याम्नानभेदवैयर्थ्यपरिहाराय विकल्पस्समाश्रयणीयो न समुच्चय इति शङ्कानिराकरणार्थं तदुक्तमिति सूत्रशेषः। शाखान्तराम्नातोपसंहारे सर्वास्वपि शाखासु हानोपादानशब्दवत्त्वाविशेषो लभ्यत इत्यविशेषपुनःश्रवणमध्येतृभेदेन परिहर्तुं शक्यम्। अतोऽष्टदोषदुष्टो विकल्पो न समाश्रयणीयः। एवं शाखान्तरगतशब्दोपसंहारेणाऽपि परिहर्तुं शक्ये विकल्पेन विकल्पस्समाश्रयणीय इत्येतज्जैमिनिनापि 'अपि तु वाक्यशेषः स्या'दित्यादि सूत्रेणोक्तमिति सूत्रशेषस्याभिप्रायः। 'यज्ञेषु येयजामहं करोति नानूयाजे'ष्वित्यनारभ्य श्रूयते। तत्र सामान्यतस्सर्वयज्ञेषु येयजामहस्य विधिश्रुतौ विशिष्यानूयाजेषु तन्निषेध इति पर्युदासाधिकरणे पूर्वपक्षः कृतः। तथा सत्यनूयाजेषु येयजामहतन्निषेधयोरुभयोरपि श्रुतितः प्राप्तत्वेनातिरात्रे षोडशिग्रहणाग्रहणयोरिव विकल्पो भवेत्। न चात्र पदाहवनीयशास्त्रन्यायः प्रवर्तते। पदशास्त्रं ह्याहत्य होमविशेषविषयत्वाद्धोमसामान्यद्वारा तद्विषयेऽपि होमे प्राप्तव्यपर्यवसानादाहवनीयशास्त्रात्प्रागेव प्रवर्तत इति शीघ्रप्रवृत्तिकेन पदशास्त्रेणापहृतविषयविशेषमाहवनीयशास्त्रं तदितरविशेषविषयतया व्यवतिष्ठत इति युक्तम्। युक्तञ्च विशेषशास्त्रतया शीघ्रप्रवृत्तेन 'शरमयं बर्हिरि'ति शास्त्रेणापहृतबर्हिरङ्गं कल्पनीयचोदकशास्त्रं तदितराङ्गविषयतया व्यवतिष्ठत इति। इह तु सामान्यविषयमपि विधिशास्त्रमेवानूयाजानपि क्रोडीकृत्य प्रथमं प्रवर्तत इति वक्तव्यम्। अ-

इति प्राप्ते ब्रूमः—हानिर्विमोचनं, उपायनं प्रवेशः। केवलहानावाम्नातायां केवलोपायने चाम्नाते इतरेतरसमुच्चय एव न्याय्यो न विकल्पः । उपायनशब्दस्य हानिवाक्यशेषत्वात् तच्छेषत्वम्, त्यक्तयोः प्रवेशस्थानवाचित्वेन तदपेक्षत्वात्। प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तरवाक्यं कथं शेषभूतमिति चेत्—यथा 'वानस्पत्याः कुशाः' इत्येतद्वाक्यशेषभूतं 'औदुम्बर्यः कुशाः' इत्येतत् तद्विशेषकं प्रदेशान्तरस्थम्। यथा 'देवासुराणां छन्दोभिः' इत्येतच्छेषभूतं 'देवच्छन्दांसि पूर्वम्' इति प्रदेशान्तरस्थम्। यथा 'षोडशिनः स्तोत्रमुपाकरोति' इत्येतच्छेषभूतं 'समयाविषिते सूर्ये षोडशिनः स्तोत्रम्' इति। यथा 'ऋत्विज उपगायन्ति' इत्येतच्छे-

---

न्यथा प्रसक्त्यभावेन निषेधायोगात्। अतः पदशास्त्रस्याहवनीयशास्त्रादिव न निषेधशास्त्रस्य विधिशास्त्राद्बलवत्ता शक्या वक्तुम्। नापि लिङ्गाच्छ्रुतेरिव निषेधशास्त्राद्विधिशास्त्रस्य बलवत्ता वक्तुं शक्या। निषेधशास्त्रस्यात्यन्तबाधप्रसङ्गात्। तस्मादुभयोरपि विरुद्धयोस्तुल्यबलत्वाद्विकल्पः प्रसज्येतैव। एवं विकल्पः प्रसज्यमानोऽष्टदोषदुष्टत्वादन्याय्य इति तत्परिहाराय नञः पर्युदासवृत्तिमाश्रित्यानूयाजव्यतिरिक्तेषु यज्ञेषु येयजामहं करोतीत्येवमर्थसमर्पकतया 'नानूयाजे'ष्वित्यस्य पूर्ववाक्यशेषतैवाङ्गीकरणीयेति सिद्धान्तव्यवस्थापनार्थमिदं सूत्र'मपि तु वाक्यशेषः स्या'दित्यादि प्रदेशान्तरस्थवाक्यशेषताप्रतिपादनपरम्। अपित्विति पूर्वपक्षव्यावृत्त्यर्थम्। ननु नेदं सूत्रं प्रदेशान्तरस्थशब्दस्य प्रदेशान्तरस्थवाक्यशेषताप्रतिपादकतायामुदाहरणं किंतु 'दीक्षितो न जुहोती'ति ज्योतिष्टोमप्रकरणाम्नातं वाक्यं क्रत्वर्थपुरुषार्थसाधारण्येन सर्वेषामपि होमानां प्रतिषेधकमथवा क्रत्वर्थेषु प्रत्यक्षशिष्टान्विहायातिदेशप्राप्तानां बहूनां पुरुषार्थानां च होमानां प्रतिषेधकमिति पूर्वपक्षनिराकरणार्थं प्रवृत्त'मपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्या'दिति सूत्रमिहोदाहरणम्। तेन हि सूत्रेणाग्निहोत्रादिहोमानां स्वस्वविधितः क्रतुमध्ये कर्तव्यत्वेन नदीक्षितवचनेन अकर्तव्यत्वेन पर्युदासाधिकरणपूर्वपक्षन्यायाद्विकल्पप्राप्तौ तत्परिहाराय नदीक्षितवाक्यस्याग्निहोत्रादिवाक्यशेषत्वमभ्युपगम्य नञः पर्युदासवृत्तिराश्रयणीया। तेनादीक्षितो यावज्जीवमग्निहोत्रं जुहोतीत्यग्निहोत्रादिवाक्यानामर्थस्सम्पद्यत इति प्रतिपादितमतस्तदेवेहोदाहर्तव्यमिति चेत्सत्यमेतत्। तथा हि—तत्र प्रतिषेधाश्रयणे वस्तुतो विकल्पो न प्रसज्यते। होमनिषेधः क्रत्वर्थः होमः पुरुषार्थ इति विधिनिषेधयोर्विषयभेदादुभयोरपि क्रत्वर्थत्वेन विषयैक्ये हि षोडशिग्रहणाग्रहणरीत्या तयोरन्यतरस्य यस्य कस्यचित्परिग्रहेऽपि क्रतोस्साद्गुण्याद्विकल्पो भवेत्। इह तु होमनिषेधएव क्रत्वर्थ इति होमपक्षे क्रतोर्वैगुण्याद्वस्तुतो विकल्पस्य न प्रसक्तिः। कृत्वाचिन्तया तु तत्सूत्रं प्रवृत्तम्। यदि प्रतिषेधाश्रयणे पर्युदासाधिकरणपूर्वपक्षरीत्या विकल्पः प्रसज्यते तदा तत्परिहाराय न दीक्षित इत्यस्याग्निहोत्रादिवाक्यशेषत्वमङ्गीकृत्यापि विकल्पः परिहरणीयः किंचित्प्रकरणाम्नातस्यैकस्य शब्दस्य प्रदेशान्तराम्नातानेकवाक्यशेषभावादपि पापीयान्विकल्प इति न्यायं व्युत्पादयितुम्। अतः प्रदेशान्तराम्नातशब्दस्य प्रदेशान्तराम्नातवाक्यशेषत्वं कुशादिषूदाहृतमेव। 'तदुक्त'मिति सूत्रांशस्तु वस्तुतः प्राप्नुवन्विकल्पस्सति संभवे सर्वथा परिहरणीय इत्येतावन्मात्रे पूर्वमीमांसकसंमतिप्रदर्शनार्थं इत्यभिप्रेत्य 'नानूयाजे'ष्वित्यत्र विधिप्रतिषेधयोरुभयोरपि क्रत्वर्थत्वेन व-

षभूतं 'नाध्वर्युरुपगायेत्' इति पर्युदासवाक्यम् । एवमुपायनवाक्यस्य हानिवाक्यशेषतया संभवन्त्यां गतौ न विकल्पो न्याय्यः । तदुक्तं प्रथमतन्त्रे 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य' इति स्तुत्यर्थं प्रकर्षार्थं वेति । नन्वर्थवादः कथं देशान्तरस्थार्थवादसापेक्ष इति चेत्—'न, साम्नोपास्तिस्तावकत्वेन श्रुतस्य 'एकविंशो वा इतोऽसावादित्यः' इत्यर्थवादस्यैकविंशत्वनिर्णयाय तैत्तिरीयकगतसत्रप्रकरणस्थार्थवादापेक्षत्वदर्शनात् । 'द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इति हि तत्र संख्यानिर्वाह उक्तः । ततोऽर्थवादत्वेऽप्युपायनमुपसंहार्यम् । हानोपायनयोरेकत्राप्यवगतिरस्ति कौषीतकिश्रुतौ 'तत् सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्' इति । अतस्तयोः समुच्चयः ॥

इति हानोपायनाधिकरणम् ॥ १६ ॥

---

स्तुतो विकल्पप्राप्तिरस्तीति तत्प्रदर्शनाय पर्युदासाधिकरणसिद्धान्तसूत्रमुदाहृतम् । सूत्रे हानं प्रत्युपायनस्य शेषत्वोक्त्यैव केवलोपायनश्रुतौ हानोपसंहारसिद्ध्यर्थं हानस्योपायनं प्रति शेषित्वहेतुरपि सिद्ध एवेति न पृथगुक्तिः । उपायनस्य शेषत्वादित्येतावति वक्तव्ये शब्दग्रहणमविशेषपुनःश्रवणाभावाद्विकल्प एव न्याय्य इति पूर्वपक्षशङ्कानिराकरणाय सर्वत्र हानोपायनशब्दवत्त्वाविशेषं दर्शयितुम् । एवमनुचिन्तनार्थं हानोपायनयोः परस्परोपसंहार इति प्रतिपादनार्थत्वेन सूत्रं योजितम् । अथ स्तुत्यर्थत्वेनोपसंहार इति प्रतिपादनार्थमिदं सूत्रमिति मतान्तरमुपन्यस्यति—स्तुतिप्रकर्षेति । ननु तत्रादित्यस्यैकविंशत्वनिर्धारणार्थमर्थवादान्तरापेक्षा नात्रोपायनापेक्षया निर्णेयं किंचिदस्तीत्याशङ्क्यार्थनिर्णयार्थमपेक्षाभावेऽपि स्तुतिप्रकर्षार्थं तदपेक्षेत्येतावता साम्यमस्तीत्यभिप्रेत्योपसंहरति—ततोऽर्थवादत्वेऽपीति । स्तुत्यर्थत्वपक्षेऽपि हानोपादाने पारमार्थिके एव । वैश्वानरेष्टिफलन्यायेन वचनबलात् । 'यदेनश्चकृमा वयं, यद्वान्यकृत मारिम, ता मामुञ्चतांहसः, यदन्यकृत मारिमे'त्यादिष्वन्यकर्मफलस्यान्यत्र संभवात् 'क्षीयन्ते चास्य कर्माणी'त्यादिकं परमात्मदृष्ट्यनन्तरं तद्द्रष्टारं प्रति कर्मणां फलजननशक्तिक्षयपरं प्रियाप्रियगतफलार्पणानन्तरं तत्क्षयपरं वेति न कश्चिद्विरोधः ॥

इति हानोपायनाधिकरणम् ॥ १६ ॥

---

## नयमणिमालायाम्

### अथ हानोपायनाधिकरणम् ॥ १६ ॥

सू० ॥ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

हानोपायनतद्द्वयमनुसंधेयं विकल्पेन । परविद्यासु यथारुचि पृथगाम्नानार्थवत्त्वाय ॥ २४५ ॥

हानोपायनवाक्ये ह्यपेक्षया शेषशेषितापन्ने । तस्मात्समुच्चयः स्यात् पृथगाम्नानस्य वैधुर्यात् ॥ २४६ ॥

इति हानोपायनाधिकरणम् ॥ १६ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ हान्यधिकरणम् ॥ १५ ॥

सू ॥ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

भागवत्पादमते, अस्याधिकरणस्य 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' 'अश्व इव

रोमाणि विधूय पापम्' 'तथा विद्वान्पुण्यपापे विधूय' इत्यादीनि क्रमेण शाट्यायनिताण्ड्याथर्वणवाक्यानि **विषयः।** अत्र वर्णकद्वयमुपन्यस्तम् । आद्ये वर्णके शाट्यायनिश्रुतौ पुण्यपापयोरुपादानमात्रश्रवणेऽपि त्यागं विनोपादानस्यासंभवात्पुण्यपापत्याग आक्षिप्यते । ताण्ड्याथर्वणवाक्ययोः पुण्यपापत्यागमात्रमुच्यते, त्यक्तयोरुपादानमन्यत्र श्रुतमत्रोपसंहार्यं न वेति **संदेहः।** नोपसंहर्तव्यमिति **पूर्वः पक्षः। सिद्धान्तस्तु,** सूत्रे तुशब्दः कैवल्यवाची। **हानौ तु**=केवलहानौ श्रुतायामुपादानमुपसंहर्तव्यम् । कुतः । **उपायनशब्दशेषत्वात्**='तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम् ।' इत्यग्निरहस्ये हानसन्निधौ श्रूयमाणस्य हानशब्देनापेक्षितस्य उपादानात्मकोपायनशब्दस्य हानं प्रति शेषत्वावगमादित्यर्थः । तत्र दृष्टान्तमाह—**कुशाच्छन्दस्तुत्युपगानवत्**=कुशावत् छन्दोवत् स्तुतिवत् उपगानवदित्यर्थः । यथा कुशादिषु श्रुत्यन्तरगतविशेषान्वयः तथा हानावुपायनान्वय इति सिद्धम् । श्रुत्यन्तरगतो विशेषः श्रुत्यन्तरेऽभ्युपेय एव । अन्यथा अष्टदोषदुष्टो विकल्पः स्यात् । **तदुक्तम्**=द्वादशलक्षण्यां जैमिनिना 'विप्रतिषेधे विकल्पः स्या'दित्युक्तमिति ॥

**वर्णकान्तरं** निरूप्यते—उदाहृतश्रुतिष्वेव किं पुण्यपापयोर्विधूननं=हानमभिप्रेतमुत तयोश्चालनमिति **संशयः।** चालनमेवेति **पूर्वः पक्षः। सिद्धान्तस्तु,** हानावेवायं विधूननशब्दो भवितुमर्हति । कुतः । उपायनशब्दसन्निधौ श्रूयमाणस्य विधूननशब्दस्योपायनं प्रति शेषत्वादित्यर्थः । हानं विनोपादानात्मकोपायनस्यासंभवाच्चालनवाचकेनापि विधूननशब्देन हानमेव लक्ष्यमिति भावः । यथा कुशादिस्थले शाखान्तरीयविशेषश्रवणं निर्णायकं तथेहापि क्वचिद्विधूननसंनिधौ श्रूयमाणमुपायनं सर्वत्र हानलक्षकत्वे निश्चायकमिति यावत् । 'तदुक्त'मिति पूर्ववद्व्याख्येयम् ॥ **इति हान्यधिकरणम् ॥**

**श्रीकण्ठमते,** तथा **रामानुजमते** च विषयवाक्यमविशिष्टमेव पूर्वस्मात् । पूर्वपक्षसिद्धान्तनिरूपणेतु कियानस्ति विशेषः पूर्वस्मात् । नानयोः परस्परं वैरूप्यम् । अनयोर्मतयोः **संशय** एवम्—किं पुण्यपापयोः केवलहानिचिन्तनं केवलोपायनचिन्तनमुभयचिन्तनं च, सर्वासु विद्यासु विकल्पेनानुष्ठेयमुत समुच्चयेनेति । तथातथाम्नातस्यार्थवत्त्वाय विकल्प एव न्याय्य इति **पूर्वपक्षः। सिद्धान्तस्तु,** केवलहाने केवलोपायने चाम्नाते इतरेतरसमुच्चयो न्याय्यो न विकल्पः । एकस्यां शाखायामुभयविधानं प्रतिपत्तृभेदेन परिहार्यम् । **सूत्रार्थस्तु, हानौत्विति ।** तुशब्दः पक्षव्यावर्तकः । हानाविति प्रदर्शनार्थम् । केवलविमोचने केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽवश्यम्भावी । कुतः । **उपायनशब्दशेषत्वात्**=उपायनशब्दस्य हानिवाक्यशेषत्वादित्यर्थः । प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्तमाह—**कुशाच्छन्दस्तुत्युपगानवदिति।** स्पष्टम् । एवमुपायनवाक्यस्य हानिवाक्यशेषतया संभवन्त्यां गतौ न विकल्पो युक्तः । तदुक्तं पूर्वकाण्डे—'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्ये'त्यादिना । इति ॥

**आनन्दतीर्थमते,** सूत्रद्वयात्मकमिदमधिकरणम् । मुक्तावप्युपासनमस्ति वा न वेति **संदेहः।** मुक्तस्य विधिवश्यत्वे मुक्तेस्संसाराविशेषप्रसङ्गान्मुक्तानामुपासनं नास्तीति **पूर्वपक्षः। सिद्धान्तस्तु,** यद्यपि मुक्तानां विधिनिबन्धनमुपासनं नास्ति तथापि नियतब्रह्मयज्ञानामपि कुशैः स्वेच्छया मन्त्रवत्सामाध्ययनादिदर्शनात् ऐच्छिकमुपासनं मुक्तानामप्यस्त्येवेति । **सूत्रार्थस्तु,** तुरवधारणे । यतः **हानौ**=बन्धहानिरूपमुक्तौ । तदुक्तम् 'मुक्तानामेतत्समे'तिश्रुतावुपासनमुक्तम् । अतो मोक्षेऽपि तेषामुपासनमस्त्येव । तदपि **कुशाच्छन्दस्तुत्युपगानवदेव**=यथा नियतब्रह्मयज्ञानां द्विजानां नियतसंध्योपासनानन्तरमपि कुशग्रहणपूर्वकमाच्छन्देन स्वेच्छया स्तुत्युपगानं तद्वत् स्वेच्छया मुक्तानामुपासनमस्ति । तदपि न विधितः । तदप्युपासन'मेतत्साम गायन्नास्ते'इत्यादावुक्तमित्यर्थः । विधिनिबन्धनत्वमुपासनस्य कथं न स्यादिति चेत् उपासनविधीनामुपायनशब्दशेषत्वात्=मोक्षवाक्यशेषत्वात् । तथा च मोक्षार्था उपासनाविधयः कथं मुक्तिविषयाः स्युरिति भावः ॥

**सू॥ सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २८ ॥ सांपराये**=मोक्षे उपासनं स्वेच्छयैवेत्यङ्गीकार्यम् । नत्वनिष्टनिवृत्त्यर्थम् । कुतः । **तर्तव्याभावात्**=मुक्तैः परिहर्तव्यानिष्टस्यैवाभावात् । तदपि कुतः । **हि**=यस्मादन्ये **शाखिनः** तथा 'तीर्णो हि तदा सर्वांन्शोकान्हृदयस्य भवती'ति परिहर्तव्यानिष्टाभावं पठन्ति तस्मादित्यर्थः ॥

**इति सूत्रार्थचन्द्रिकायां हान्यधिकरणम् ॥ १५ ॥**

## अथ सांपरायाधिकरणम् ॥ १७ ॥

### सू ॥ सांपराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥

पूर्वोक्तं पुण्यपापविमोचनं देहवियोगकाल एव चिन्तनीयं उत मार्गे वा ॥ इति संदिह्य पूर्वपक्षं प्रवर्तयति । तथा हि—'अश्व इव रोमाणि विधूय पापम्'''धूत्वा शरीरम्' इति कुत्रचिद्देहवियोगकाल एव श्रुता सुकृतदुष्कृतहानिः। कुत्रचित् 'स आगच्छति विरजां नदीं तां मनसाऽत्येति तत् सुकृतदुष्कृते विधूनुते' इत्यध्वनि श्रुता । एवमुभयश्रुतिसद्भावेऽपि सांपराये देहवियोगकाल एव चिन्तनीया, तदूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेण प्राप्तव्यस्य कर्मसाध्यस्य सुखदुःखभोगस्याभावात् । तथा ह्यधीयतेऽन्ये 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति देहवियोगादूर्ध्वं ब्रह्म प्राप्तमेव ॥

### सू ॥ छन्दत उभयाविरोधात् ॥ २८ ॥

देहवियोगकाले पुण्यपापविमोचनश्रुतेस्तदूर्ध्वं ब्रह्मप्राप्तिश्रुतेः उभयत्र श्रुत्यविरोधाद्धेतोः 'तत् सुकृतदुष्कृते विधूनुते' इति श्रुतिखण्डश्छन्दतो नेतव्यः, 'एतं देवयानं पन्थानमापद्य' इति वाक्यखण्डात् प्रागुपनेतव्यः ॥

### सू ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ २९ ॥

देहवियोगकाले सर्वकर्मक्षयेऽपि गतिविधिरुपपन्न एव ब्रह्मोपासकानाम्, तत्र

---

## अथ सांपरायाधिकरणम् ॥ १७ ॥

सू० ॥ सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥ प्रासङ्गिकीं संगतिं सूचयितुं विशेषयति—पूर्वोक्तमिति । देहवियोगानन्तरं कर्मसाध्यफलाभावाद्विविधश्रुतिदर्शनाच्च संशयः । प्राप्तव्यस्येत्यनेन सौत्रं तर्तव्यपदं व्याख्यातम् । तरतिरिह प्राप्त्यर्थः । आगमशासनस्यानित्यत्वादिडागमाभावः । नन्वेवं सति 'तत्सुकृते'त्यादिश्रुतेः का गतिः । न च पाठक्रमादर्थक्रमस्य बलवत्त्वात्तद्वाक्यं प्रागेव नेतव्यमिति वाच्यम् । 'तत्सुकृते'त्यत्र तच्छब्देन तस्मादर्थेन संनिहितस्य विरजानद्यतिक्रमणस्य सुकृतदुष्कृतविधूनने हेतुत्वस्य प्रतिपाद्यमानतयार्थतः प्राङ्नयनासंभवादित्याशङ्कानिराकरणार्थं सूत्रम्—सू० ॥ छन्दत उभयाविरोधात् ॥ २८ ॥ 'पापं विधूय धूत्वा शरीर'मिति 'यावन्न विमोक्ष्ये अथ संपत्स्ये' इति च श्रुतिद्वयस्याविरोधमपेक्ष्य 'तत्सुकृते'त्यत्र तत्पदं सन्निहितस्य विरजानद्यतिक्रमणस्य हेतुत्वं न ब्रवीति किंतु पर्यङ्कविद्याप्रकरणाद्विद्यासामर्थ्यादेव पुण्यपापविधूननस्य श्रुत्यन्तरेषु प्रसिद्धत्वाच्च प्रकृताया विद्यायाः कारणत्वं ब्रवीतीत्यङ्गीकर्तव्यम् । एवञ्च सर्वनामश्रुतिप्राप्तहेतुहेतुमद्भावविरोधाभावा'त्तत्सुकृते'त्यादिवाक्यं यथेष्टं योजयितुं शक्यमिति देवयानपथप्राप्तिवचनात्प्रागेवोचितस्थले तद्वचनं योजनीयमिति भावः । ननु देहवियोगकाल एव सर्वकर्मक्षये कर्ममूलसूक्ष्मशरीरानुवृत्त्यसंभवादर्चिरादिगतिविधिरनुपपन्नः । जीवस्याणुत्वेन स्वतो गतिमात्रसंभवेऽपि शरीरेन्द्रियराहित्ये चन्द्रसंवादाद्यसंभवादित्याशङ्कानिराकरणार्थं सूत्रम्—सू० ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ २९ ॥ मार्गे यथा चन्द्रसंवादश्शरीरेन्द्रियसाध्यः तथा ब्रह्मप्राप्त्यनन्तरमपि शरीरेन्द्रियसाध्या एव विहा-

तत्र विहाररूपार्थोपलब्धेः । 'स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इति दृश्यते । लोकवत्, यथा लोके राजाश्रितानां पुरुषाणामनितरपुरुषसाधारणसर्वार्थसिद्धिः । अतो मार्गश्रुतिरपि न बाध्यते, देहवियोगकाले सकलकर्मक्षयेऽपि विद्यामाहात्म्याल्लिङ्गशरीरावस्थानेन मार्गगतिः, तत्तद्देशविहारचन्द्रसंवादादिसर्वार्थसिद्धिसंभवादिति ॥

एवं प्राप्ते सिद्धान्त उच्यते—

सू ॥ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ ३० ॥

देहवियोगकाले विरजानद्यतिक्रमणकाले च इत्युभयथा कर्मक्षये सत्येव देवयानगतेः प्रयोजनवत्त्वम् । अन्यथा देहवियोगकाल एव सर्वकर्मक्षये तदनन्तरमेवासौ मुक्त इति देवयानगतेर्निष्प्रयोजनत्वात् देवयानगतिश्रवणस्य 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति देवयानेन ब्रह्मप्राप्त्यनन्तरमेव धीविकासादिरूपस्वरूपाविर्भावश्रवणस्य च विरोधः स्यात् । एवं च यद्यपि विद्यासामर्थ्याद्देवयानेन गतिस्तत्तद्देशविहारचन्द्रसंवादादिकमग्रिमविहारादिवदुपपद्यते । तथाऽपि यावद्ब्रह्मप्राप्ति धीसंकोचरूपसंसारानुवृत्तिः विद्यासामर्थ्यान्नोपपद्यत इति तन्मूलभूतकर्मलेशानुवृत्तिरवश्यमेष्टव्या । न च परमेश्वरसंकल्पविशेषादेव तदनुवृत्तिः स्यादिति वाच्यम्, तस्यैवास्माभिः कर्म(मूल)तयोच्यमानत्वात्, न ह्यस्मन्मते विहितनिषिद्धाचरणप्रयुक्तपरमेश्वरसंकल्पव्यतिरेकेण पुण्यपापे स्तः ॥

ननु ब्रह्मप्राप्त्यनन्तरधीविकासादिस्वरूपाविर्भावश्चेत् तावत्पर्यन्तं धीसंकोचहेतुकर्मानुवृत्त्या भाव्यम् । कथं विरजानद्यतिक्रमणानन्तरमेव कर्मक्षयः ॥

उच्यते—प्राकृतप्रपञ्चसीमावध्यतिक्रमणमेव परमाकाशरूपपरमशिवपदप्राप्तिरिति सैव 'परं ज्योतिरुपसंपद्य' इत्यनेन ब्रह्मप्राप्तिर्विवक्षिता । विष्णुपदसंबन्धिनी विरजानदी प्राकृतप्रपञ्चसीमावधिः । तदनुप्रवेशतः प्रक्षीणसर्वकर्मलेपा

---

रादय आम्नायन्ते । ते ब्रह्मविद्यासामर्थ्यलब्धैरप्राकृतैश्शरीरेन्द्रियैरुपपादनीयाः । एवं सर्वकर्मक्षयेऽपि ब्रह्मविद्यासामर्थ्यादेव मार्गगतिपर्यन्तं सूक्ष्मशरीरस्यानुवृत्त्या चन्द्रसंवादादिरुपपन्नः । लोके राजाश्रितपुरुषाणामपि ह्यभिमतार्थसिद्धिसंपादकसकलसाधनसंपत्तिर्दृश्यते । किमुत परंब्रह्मैव शरणं प्राप्तानामिति भावः । सू० ॥ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ ३० ॥ धीसंकोचानुप्रवृत्त्यर्थं तन्मूलकर्मलेशानुवृत्तिरवश्यमभ्युपगन्तव्येति विद्यासामर्थ्याद्भवदपि कर्मणो हानं कस्यचिद्देहवियोगकाले कस्यचिद्विरजानद्यतिक्रमणानन्तरमिति व्यवस्थापनीयम् । अत'स्तत्सुकृते'त्यादि श्रुतिरपि न पाठक्रमात्प्रच्यावनीया । न हि देहवियोगकाल एव सर्वकर्महानमिति पूर्वपक्षिणापि वक्तुं शक्यम् । केषांचित्कर्मणां विद्योदये सत्येव हानस्य 'तदधिगम उत्तरपूर्वाघयो'रित्यधिकरणे वक्ष्यमाणत्वादिति भावः । प्राकृतप्रपञ्चसीमावधिरिति । प्राकृतग्रहणमुपलक्षणम् । प्रकृतिमायाबिन्दूपादानकस्य मलिनमिश्रशुद्धात्मकस्य सांसारिकभोगस्थानविशेषभूतलोकसंघातात्मकस्य प्रपञ्चस्य सीमाया अवधिः समाप्तिभूमिः । ततः परं परमानन्दमयो मुक्तप्राप्यः परमशिवलोकः । ननु

**योगिनो विष्णुपदादूर्ध्वमप्राकृतशिवपदं परमानन्दमयमनुविशन्ति । तथा हि**

परमशिवलोकेऽपि किंचिद्दूरं गत्वा 'विरजां प्राप्ये'ति श्रुतिपर्यालोचनया प्रतीयते। कौषीतकिनामुपनिषदि हि पर्यङ्कविद्याम्नाता । तत्रैवं श्रूयते—'तस्य ह वा एतस्य ब्रह्मलोकस्यारोहदो मुहूर्तान्येष्टिहा विरजानदीकल्पो वृक्ष' इत्यादिकं 'तं पञ्चशतान्यप्सरसः प्रतियन्ति शतं फलहस्ताश्शतमाञ्जनहस्ताश्शतं वासोहस्ताश्शतं चूर्णहस्तास्तं ब्रह्मालंकारेणालंकुर्वन्ति स ब्रह्मालंकारेणालंकृतो ब्रह्मविद्वान्ब्रह्माभिप्रयाति स आगच्छत्यारं हृदन्तमनसात्येति स आगच्छति मुहूर्तान् न्येष्टिहास्तस्मादपद्रवन्ति स आगच्छति विरजानदीं तां मनसैवात्येती'ति परब्रह्मणा प्रेषिताभिरप्सरोभिर्ब्रह्मालंकारैरलंकृतस्यैव ब्रह्मविदो हृदविशेषस्य यष्टिभिर्हन्तॄणां च प्राप्तिपूर्वकमेव विरजानदीप्राप्तिर्वर्ण्यते। कथं प्राकृतप्रपञ्चसीमावधिरित्युक्तम्? । उच्यते । हृदयष्टिहास्सीमासंधिस्थिताः न तु परमानन्दमयशिवलोकान्तर्गताः। विरजानद्यतिक्रमणानन्तरभाविकर्मलेशनिवृत्तेः प्राकृतप्रदेशासंभवात् अप्सरसां नियोगार्थे परब्रह्मवचनेऽभिधावतममयशसा विरजां वा अयं नदीं प्रापन्नवा अयं जरिष्यती'ति विरजाप्राप्तिकीर्तनेन तस्यास्सीमासंधित्वावगमाच्चेति भाष्याभिप्रायः । अत्र 'न वा अयं जरिष्यती'ति वचनानुसारेण 'विजरे'त्येव नामेति प्रतीयते । उपनिषद्ग्रन्थेषु साम्प्रदायिकतदध्येतृषु च विरजामित्येव पाठो दृश्यते । विरजेति लोकैर्व्यवह्रियमाणं नाम प्रसिद्धम् । **विष्णुपदादूर्ध्वमिति** । विष्णुलोकः परमशिवलोकादव्यवहिताधरलोक इति भावः । ननु कर्मयोगेन शिवमुपासीनानां प्राप्यादपरशिवलोकादव्यवहिताधरलोको विष्णुलोकः। न तु मुक्तप्राप्यात्परमशिवलोकात् । शिवधर्मोत्तरे—'ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपदं महत् । भोगसंस्थानमतुलं कर्मयोगरतात्मनाम् ॥ अप्रमेयगुणैर्दिव्यैर्विमानैस्सार्वकामिकैः । असंख्यैस्तत्पुरं व्याप्तं सर्वप्राण्युपकारकैः । सहस्रभूमिविस्तीर्णैस्सूर्यकोटिसमप्रभैः॥ रुद्रलोक इति प्रोक्तमशेषगुणसंयुतम् । सर्वेषां शिवभक्तानां तत्पुरं परिकीर्तितम् ॥ रुद्रक्षेत्रमृतानां च जंगमस्थावरात्मना'मित्यादिवचनैरपरशिवलोकं वर्णयित्वा 'इत्येतदपरं प्रोक्तं[2] श्रीमच्छिवपुरं महत्। देहिनां कर्मनिष्ठानां पुनरावर्तनं स्मृत'मिति तद्वर्णनं समाप्य—'ऊर्ध्वं शिवपुराज्ज्ञेयं स्थानत्रयमनुत्तमम् । नित्यं परमशुद्धं च स्कन्दोमाशङ्करात्मकमि'ति तदनन्तरं स्कन्दलोकादुमालोकाच्च परस्य परमशिवलोकस्य वर्णनमुपक्रम्य 'ये संप्राप्ताः परं स्थानं ध्यानयोगरता नराः । न तेषां पुनरावृत्तिर्घोरे संसारमण्डले' इत्यादिना तं प्राप्तानामेवानावृत्तिप्रतिपादनात् । तत्रोक्त उमालोक एव वायुसंहितायामुन्मनालोक इत्युक्तः । 'तदूर्ध्वमुन्मनालोकात्सोमलोकमलौकिकम् । सोमस्सहोमया यत्र नित्यं निवसतीश्वरः' इति । उच्यते । उमालोकसन्निधौ शिवधर्मोत्तरादिप्रतिपादितोऽस्ति गोमातृलोकः । स तावदु[3]मालोकान्तर्गत एव । तत्रैवोमाया अंशभूतस्य परनारायणस्य स्थानम्। तदेतन्मन्त्रवर्णेनावगम्यते । 'ता वां वास्तून्युश्मसि गमध्यै गावो यत्र भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरी'ति । अस्यार्थः—हे विष्णो ते तानि स्थानानि तच्छब्दाद्बहुवचनस्य 'सुपां सुलुगि'त्यादिना शे आदेशः । ते तव धामानि स्था-

(१) 'मालाहस्ताः' इति पाठान्तरम् । (२) 'इत्येतदुत्तरं प्रोक्तं' इति पाठान्तरम् । (३) 'दुमालोकैकदेश एव' इति ख पाठः ।

श्रूयते 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति। अतो न विरोधः ॥

इति सांपरायाधिकरणम् ॥ १७ ॥

नानि गमध्यै गन्तुमुश्मसि इच्छामः । गमेर्धातो'स्तुमर्थे सेसे'त्यादिसूत्रेण तुमुन्प्रत्ययार्थे अध्यै इति प्रत्ययः। 'उश्मसी'ति 'वश कान्तौ' इति धातोरुत्तमपुरुषबहुवचने 'इदंतो-मसी'रिति सूत्रेणान्तिम इकारादेशः। सांहितो दीर्घः । तान्येव धामानि विशेष्यन्ते । यत्र येषु स्थानेषु अयासः अनपायिन्यः यातेरसुन्प्रत्यये नञ्समासः । भूरिशृङ्गा गावः नन्द्यादयो गोमातरः सन्ति अत्राह अस्मिन्नेव स्थाने । 'अहे'ति निपात एवकारार्थः । तत्प्रसिद्धम्। उरुगायस्य उरुभिर्महद्भिर्गीयमानस्य भूरेः महतो वृष्णः विष्णोस्तव परमम-धस्तनविष्णुलोकापेक्षयोत्कृष्टमवभाति अवमे भाति परमशिवलोकस्याधस्ताद्भातीति । तस्मादुमालोकान्तर्गतवैष्णवपरमपदाभिप्रायं 'विष्णुपदसंबन्धिनी'ति 'विष्णुपदादूर्ध्वमिति चे'ति युज्यत एव ॥

इति साम्परायाधिकरणम् ॥ १७ ॥

---

नयमणिमालायाम्

अथ साम्परायाधिकरणम् ॥ १७ ॥

सू० ॥ साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥ छन्दत उभयाविरोधात् ॥ २८ ॥ उपपन्नस्तल्ल-क्षणार्थोपलब्धेर्लोकवत् ॥ २९ ॥ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३० ॥

देहवियोगे विदुषां कर्मलयस्तदनु न खलु तत्क्लृप्तम्। गतये सूक्ष्मतनुस्थितिरस्तु क्रीडाग्निमेपि विद्यातः ॥ २४७ ॥

देहवियोगेऽध्वनि च द्विधाघविलयश्रुतिद्वयाञ्जस्यात्। न हि विद्यया तनुस्थितिमुपपाद्य श्रुतमुपेक्षितुं युक्तम्॥२४८॥

यावत्सूक्ष्मशरीरस्थायी बन्धश्च बुद्धिसंकोचादिः। स च न पराभिध्यानं विनावतिष्ठेत कर्म किमतोन्यन्न ॥ २४९ ॥

इति साम्परायाधिकरणम् ॥ १७ ॥

सूत्रार्थचन्द्रिकायाम्

अथ साम्परायाधिकरणम् ॥ १६ ॥

सू ॥ साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥ छन्दत उभयाविरोधात् ॥ २८ ॥ उपपन्नस्तल्लक्ष-णार्थोपपत्तेर्लोकवत् ॥ २९ ॥ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३० ॥

**भगवत्पादमते,** पूर्वं विद्यायाः कर्महानिहेतुत्वं सिद्धवत्कृत्य केवलहानश्रवणे उपायनोपसंहारोऽभिहितः । संप्रति विद्यायाः कर्महानिहेतुत्वं नास्तीत्याक्षेपसंगत्याह—**सांपराये इत्यादि** । अत्र 'विरजां नदीं तां मनसैवात्येति तत्सुकृ-तदुष्कृते विधूनुते' इति पर्यङ्कस्थब्रह्मोपासकस्य कर्महानिप्रतिपादकं कौषीतकिवाक्यं विषयः । तत्र किं विरजानदीतरणा-नन्तरं कर्महानिः उत देहत्यागात्प्राक्काले इति **संशयः**। श्रुतिबलान्नदीतरणानन्तरमेवेति **पूर्वपक्षः । सिद्धान्तस्तु, सांपराये**=देहत्यागात्प्राक्परलोकसाधनीभूतविद्याकाल एव कर्महानिर्युक्ता । कुतः । **तर्तव्याभावात्**=नदीतरणानन्तरं तर्तव्यस्य प्राप्तव्यस्य पुण्यपापकर्मणः फलान्तरस्याभावात् । कर्महानिहेतोर्विद्यायाः प्राक्सत्त्वात्कर्महानिं विना नदीतरणा-नुपपत्तेश्च । अतो जीवत एव विद्यासामर्थ्यात्कर्महानिः । **तथा ह्यन्ये**=तथा ताण्ड्यादयोऽन्ये शाखिनश्च 'अश्व इव रो-माणी'त्यादौ जीवद्दशायामेव कर्महानिमधीयते इत्यर्थः ।

ननु कर्महानेर्विद्याफलत्वे ब्रह्मप्राप्तेरिव देहत्यागोत्तरकालिकत्वमेव स्यादित्याशंक्याह—**सू ॥ छन्दत उभयाविरो-धात् ॥ २८ ॥ छन्दतः**=स्वेच्छातो विद्यानुष्ठानं जीवत एवेति तद्धेतुककर्मक्षयो जीवत एव युक्तः सति हेतौ कार्यवि-लंबायोगात्। **उभयाविरोधात्**=एवं सति ताण्ड्यादिश्रुत्योरुभयोरविरोधोऽपि भवतीत्यर्थः । ब्रह्मप्राप्तेर्देहत्यागं विना-नुपपत्तेः प्रकृते चानुपपत्त्यभावाच्च जीवत एव कर्मक्षय इति भावः ॥ इदमधिकरणं सूत्रद्वयात्मकमेव । अन्यत्सूत्रद्वयम-धिकरणान्तरम्। तत्रापि तयोः पाठे पौर्वापर्यविपर्ययश्चात्र मते विशिष्टः श्रीकण्ठरामानुजमताभ्यामिति विवेकः ॥

इति भगवत्पादमते साम्परायाधिकरणम् ॥ १६ ॥

---

(१) 'एतेष्वेव स्थानेषु'—इति ख पाठः।

## अथ गतेरर्थवत्त्वाधिकरणम् ॥ १७ ॥

**सू ॥ गतेरर्थवत्त्वमुभयथाऽन्यथाहि विरोधः ॥ २९ ॥** क्वचिच्छ्रूयमाणस्यान्यत्रोपसंहाराभ्युपगमे हानसन्निधौ क्वचिच्छ्रूयमाणस्य देवयानस्य पथोऽन्यत्र सर्वत्रोपसंहारोऽस्त्विति दृष्टान्तसंगत्येदमारब्धम् । कर्महानसंनिधौ क्वचिद्देवयानः पन्थाः श्रुतः निर्गुणविद्यास्थले क्वचिन्न श्रुतः । तत्र किं देवयानोपसंहारोऽस्ति न वेति **संदेहः** । अस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु,** नास्तीति । स च सूत्रार्थवर्णनतः स्पष्टीभविष्यति । यथा—**गतेः**=देवयानस्य पथः अर्थवत्त्वमुभयथा-विभागेन भवितुमर्हति क्वचित्सगुणविद्यायां देवयानमार्गोऽस्ति क्वचिन्निर्गुणविद्यायां नास्तीति । **अन्यथा**=सर्वत्र देवयान-मार्गोपसंहाराभ्युपगमे 'विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुतिविरोधः स्यात् । अतो निर्गुणवि-द्यायां मार्गोपसंहारो व्यर्थ इत्यर्थः ।

ननु तर्हि सगुणविद्यायामपि मार्गो व्यर्थः स्यादित्यत आह—**उपपन्न** इत्यादि ॥ गतेरुभयथाभाव उपपन्नः । **तल्ल-क्षणार्थोपलब्धेः**=सा गतिर्लक्षणं कारणं यस्य सगुणविद्याफलस्य स तल्लक्षणार्थः । तस्य श्रुतिषूपलब्धेः । अतः सगुण-विद्यायां मार्गोऽर्थवान् न निर्गुणविद्यायाम् । **लोकवत्**=यथा लोके सेतुवासिनां गङ्गाप्राप्त्यर्थं मार्गोपेक्षितो न गङ्गावा-सिनां तद्वदित्यर्थः ॥

## इति गतेरर्थवत्त्वाधिकरणम् ॥ १७ ॥

**श्रीकण्ठमते,** इदं सूत्रचतुष्टयं सांपरायाधिकरणम् । **रामानुजमते तु** पञ्चसूत्रात्मकमिदमधिकरणमिति विशेषः । भगवत्पादमते अधिकरणद्वयात्मकयोः अनियमः सर्वेषाम्—यावदधिकारम्—इति सूत्रयोरुत्तरयोः श्रीकण्ठरामानुजमतानु-सारेण पाठक्रमे पौर्वापर्यविपर्ययवतोस्सूत्रयोरुत्तरयोराद्यस्य 'यावदधिकार'मिति सूत्रस्य रामानुजमते सांपरायाधिकरणेऽ-न्तर्भावादस्य पञ्चसूत्रात्मकतेति वेद्यम् । यद्यपि विषयवाक्यपूर्वपक्षादिकं प्रायोऽविशिष्टमेव । तथापि संशयादिस्वरूपे पर-मनयोर्मतयोः परस्परं वैलक्षण्याभावेऽपि कियदस्ति वैलक्षण्यं शाङ्करमतादिति विशेषः । अतः प्रथमं श्रीकण्ठमतानुसारे-णेदं निरूप्यते—विषयवाक्यं पूर्ववत् । पूर्वोक्तं पुण्यपापविमोचनं किं देहवियोगकाल एकदेशः क्षीयते अध्वनि शिष्टमि-त्युभयत्र चिन्तनीयं वा उत देहवियोगकाल एव सर्वं क्षीयत इति चिन्तनीयं वेति **संशयः** । देहवियोगकाल एव सर्वं क्षीयते इति चिन्तनीयमिति **पूर्वपक्षः** । तदुपपादकानि त्रीणि सूत्राणि । **सिद्धान्तस्तु,** देहवियोगकाले विरजानद्य-तिक्रमणे चेत्युभयत्रैवेत्येव चिन्तनीयमिति । **सूत्रार्थस्तु,** उभयश्रुतिसद्भावेऽपि सुकृतदुष्कृतहानिः सांपराये देहवियोग-काल एवेति चिन्तनीया । कुतः । **तर्तव्याभावात्**=तदनन्तरं ब्रह्मप्राप्तिव्यतिरेकेण प्राप्तव्यस्य कर्मसाध्यस्य सुखदुःख-भोगस्याभावात् । **तथा ह्यन्ये**='तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति देहवियोगादूर्ध्वं ब्रह्म प्राप्तमेव अन्ये शाखिनोऽधीयते हि ॥

**सू ॥ छन्दत उभयाविरोधात् ॥ २८ ॥** एवं देहवियोगकाल एव सर्वकर्मक्षयेऽवधृते **उभयाविरोधात्**='अश्व इव रोमाणि विधूय पापम्' 'तस्य तावदेव चिर'मित्युभयश्रुत्यविरोधात् चरमश्रुतोऽपि 'तत्सुकृतदुष्कृते विधूनुते' इति वाक्यखण्डः 'एतं देवयानं पन्थानमापद्ये'ति वाक्यखण्डात्प्राक् **छन्दतः**=इच्छानुसारेण नेतव्य इत्यर्थः ॥

**सू ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ २९ ॥** देहवियोगकाले सर्वकर्मक्षयेऽपि गतिविधिः उपपन्न एव ब्रह्मोपासकानाम् । कुतः । **तल्लक्षणार्थोपलब्धेः**='स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इत्यादिना त-त्तद्देशविहारचन्द्रसंवादादिसर्वार्थसिद्धिसंभवात् । यथा—**लोकवत्**=यथा लोके राजाश्रितानां पुरुषाणामनितरपुरुषसा-धारणसर्वार्थसिद्धिः तद्वत् देवयानादिमार्गश्रुतिरपि न बाध्यते विद्यामाहात्म्याल्लिङ्गशरीरावस्थानेन मार्गगत्यादिकमुपपन्नमे-वेति भावः ॥

एवं प्राप्ते **सिद्धान्तमाह—सू ॥ गतेरर्थवत्त्वमुभयथाऽन्यथाहि विरोधः ॥ ३० ॥** देहवियोगकाले विरजा-नद्यतिक्रमणकाले चेत्युभयथा कर्मक्षये सत्येव **गतेः**=देवयानगतेः **अर्थवत्त्वं**=प्रयोजनवत्त्वं सिद्ध्यति । **अन्यथा**=देहवि-योगकाल एव सर्वकर्मक्षये तदनन्तरमेवासौ मुक्त इति देवयानगतेर्निष्प्रयोजनत्वात् देवयानगतिश्रवणस्य 'परं ज्योतिरुप-संपद्ये'ति देवयानेन पथा ब्रह्मप्राप्त्यनन्तरमेव धीविकासादिरूपस्वरूपाविर्भावश्रवणस्य च विरोधः स्यात् । अतः देहवियो-गकाले विरजानद्यतिक्रमे चेत्युभयत्र सुकृतदुष्कृतहानिश्चिन्तनीयेति सिद्धम् ॥

**रामानुजमते,** तु पञ्चसूत्रात्मकेऽत्राधिकरणे विषयवाक्यसंशयपूर्वपक्षादीनां प्रायः श्रीकण्ठमतसाम्येऽपि सूत्रार्थनि-रूपणे सिद्धान्तोपन्यासे च कियानस्ति भेदः । **'गतेरर्थवत्त्वम्' 'उपपन्नस्तल्लक्षणार्थः' 'यावदधिकारमवस्थितिः'** इत्यादिक्रमेण सूत्रपाठे मतद्वयमप्यनुसृतमुभयमतविलक्षणतया 'यावदधिकारसूत्रं सांपरायाधिकरणेऽन्तर्भाव्य तच्छेषतया व्याख्यातम् । अत्राधिकरणे आद्ययोस्सूत्रयोरर्थवर्णनमपि श्रीकण्ठीयामेव प्रक्रियामनुकरोतीत्यतोऽवशिष्टसूत्रत्रयार्थ एव निरूप्यते—यथा । **सू ॥ गतेरर्थवत्त्वमुभयथाऽन्यथाहि विरोधः ॥ ३० ॥ गतेः**=देवयानेन गतिश्रुतेरर्थवत्त्वं

## अथ आधिकारिकाधिकरणम् ॥ १८ ॥

## सू ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥

पूर्वत्राभिहितमुपासकानां पुण्यपापविमोचनं, ब्रह्मप्राप्तिश्च । तदिहाधिकारिकाणामधिकारभोगमन्तरेण मुक्तिरस्ति न वेति संशयः ॥

किं तावत् प्राप्तम्? वसिष्ठादीनामधिकारिणां तत्र तत्र पुराणादिषु जन्मान्तरश्रवणात् तेषां मुक्तिर्नास्त्येव । अतस्तत्त्वविदां पाक्षिकी मोक्षप्राप्तिरिति ॥

---

## अथ आधिकारिकाधिकरणम् ॥ १८ ॥

सू ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥ संगतिसूचनार्थं वृत्तमनुवदति—पूर्वत्रेति । विदुषो देहवियोगकाले विद्यया सर्वकर्मक्षयः यावद्विरजानदीतरणं धीसंकोचादिव्यवस्थापककर्मलेशमात्रस्यानुवृत्तिरित्युक्तम् । तदिदमनुपपन्नम् । विदुषामपि पुनर्जन्मान्तरश्रवणेन विद्यया मुक्तेः सर्वकर्मक्षयस्य चानियतत्वादित्याक्षेपिकी संगतिरिति भावः। विद्यया मुक्तिर्नियता न वेति संशये तदर्थसंशयो भाष्ये दर्शितः । पाक्षिकीति । यद्यपि शुकादीनां देहावसाने मुक्तिः स्मर्यते तथापि वसिष्ठादीनां देहान्तरश्रवणाद्विद्यया मुक्तिः कर्मक्षयश्चेत्युभयं न नियतम् । न च वसिष्ठादीनां प्रारब्धानुवृत्तिरस्ति ।

---

देहवियोगकालेऽध्वनि चेत्युभयथा कर्मक्षये सत्येव । अन्यथा=देहवियोगकाल एव सर्वकर्मक्षये सति सूक्ष्मशरीरस्याप्यारम्भकनाशेन स्थित्यनुपपत्तेर्देवयानगतिश्रुतिर्हि विरुध्यते ॥

परिहरति—सू ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३१ ॥ भगवन्तमुपासीनानां देहवियोगकाले सर्वकर्मक्षयेऽप्युपपन्नो देवयानः पन्थाः । कुतः । तल्लक्षणार्थोपलब्धेः=अकर्मलभ्यार्थोपलब्धेरित्यर्थः । 'स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवती'त्यादिषु उपलभ्यते ह्यकर्मलभ्यार्थो ब्रह्मोपासीनानाम् । लोकवत्=यथा लोके राजानमुपासीनानां प्राकृतपुरुषासाधारणातिरमणीयानेकार्थसिद्धिः तद्वत्सर्वज्ञं सत्यसंकल्पं महोदारं परं ब्रह्मोपासीनानां सर्वमुपपन्नमित्यर्थः ॥

देहपातसमय एव सर्वकर्मक्षये तदूर्ध्वं कर्मफलभोगाभावात्कथं वसिष्ठादीनां ज्ञानिनामपि देहान्तरसंयोगः पुत्रविपत्त्यादिषु दुःखाद्यनुभवश्चोपपद्येतेत्याशङ्क्याह—यावदधिकारमित्यादि । येषां ज्ञानिनां देहपातादनन्तरमर्चिरादिका गतिः प्राप्ता तेषां तदूर्ध्वं तरितव्यकर्मफलभोगाभावाद्देहपातसमय एव सर्वकर्मक्षय उक्तः । वसिष्ठादीनामाधिकारिकाणां तु यावदधिकारसमाप्ति नार्चिरादिका गतिरस्ति । अपि त्वधिकारेऽवस्थितिरेव । अधिकारहेतुभूतकर्मणः फलदानायारब्धत्वात् । ज्ञानिनोऽप्यारब्धं हि कर्म फलानुभवेनैव क्षीयते ॥ इति ॥

### इति रामानुजमते सांपरायाधिकरणम् ॥ १७ ॥

आनन्दतीर्थमते, आद्यसूत्रस्य पूर्वाधिकरणेऽन्तर्भावात् 'छन्दत' इत्याद्येवेदमधिकरणम् । एवं तर्हि मुक्तस्योपासनवत्कर्मापि नियतमस्ति वा न वेति संदेहः । विध्यभावस्य भगवत्पूजात्मकत्वेन तदिच्छाविषयत्वसंभवस्य चाविशेषात् 'कृष्णो मुक्तैरिज्यते वीतमोहै'रिति भारतवचनाच्च कर्माप्युपासनवन्नियतमस्त्विति पूर्वपक्षः । सिद्धान्तस्तु, सू ॥ छन्दत उभयाविरोधात् ॥ २९ ॥ मुक्ताः छन्दतः स्वेच्छामनुसृत्यैव कर्म कुर्वन्ति न विधितः । कुतः । उभयाविरोधात्=कर्मकरणाकरणयोर्विधिबन्धप्रत्यवाययोरभावादित्यर्थः ॥ तस्मान्मुक्तानां कर्मानियतमेवेति ॥ सू ॥ गतेरर्थवत्त्वमुभयथान्यथाहि विरोधः ॥ ३० ॥ हिर्हेतौ । उभयथाहि=बन्धप्रत्यवाययोरभावादेव । गतेः=मुक्तेः । अर्थवत्त्वम्=पुरुषार्थत्वम् । अन्यथा मुक्तौ बन्धप्रत्यवाययोर्भावे । विरोधः=मुक्तेस्संसारसमत्वेन पुरुषार्थत्वरूपविरोधः स्यादित्यर्थः ॥ सू ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३१ ॥ यथा लोके यागाङ्गविष्णुक्रमणस्य क्रियानुष्ठाननियमः न यागाङ्गसंपूर्त्यनन्तरमप्यस्ति किंतु कदाचिदेव तथा मुक्तानां कदाचित्कर्म कुर्वन्ति न वेत्येवं तावदुपपन्नः=युक्तः । कुत एतत् । तल्लक्षणार्थोपलब्धेः=तल्लक्षणस्य परंपरया कर्मसाध्यस्यार्थस्य मोक्षस्य उपलब्धेः प्राप्तत्वादित्यर्थः ॥ इति ॥

### इति सूत्रार्थचन्द्रिकायां सांपरायाधिकरणम् ॥ १७ ॥

**अत्रोच्यते—अधिकारिपुरुषाणां देहपातादूर्ध्वमपि फलान्तरानुभव एव आ प्रारब्धाधिकारहेतुकर्मविनाशात् । एवं च यावदधिकारसमाप्तिस्तावत् तद्धेतुकर्मानुभवाय तत्रैव तेषामवस्थितिर्नार्चिरादिप्राप्तिः । ज्ञानिनामपि प्रारब्धं कर्मानुभवादेव नश्यति । अतोऽधिकारिणामधिकारनिवृत्तेरनन्तरं मुक्तिरिति तत्त्वविदां न पाक्षिकी मोक्षप्राप्तिरिति ॥**

**इत्याधिकारिकाधिकरणम् ॥ १८ ॥**

---

अप्रारब्धस्यैव विद्यानाश्यत्वनियम इति न नियमभङ्ग इति वाच्यम् । प्रतिशरीरमारम्भककर्मणां भिन्नत्वेन यस्मिन्देहे विद्योत्पन्ना तदारंभकातिरिक्तानां सर्वेषां कर्मणां विद्यानाश्यत्वनियमस्य वक्तव्यत्वेन नियमभङ्गस्यापरिहार्यत्वादिति भावः । आ प्रारब्धेति । अनेकदेहारंभकमप्येकं कर्मास्ति । श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् । चण्डालपुल्कसानाञ्च ब्रह्महा योनिमृच्छति' ॥ इत्यादिस्मरणात् । अतो वसिष्ठादीनामाधिकारिकपदप्रापकं कर्मानेकदेहानुभाव्यमिति तेषां चरमदेहे विद्यया सर्वकर्मक्षयपूर्विका मुक्तिः । अतो नास्ति नियमभङ्ग इति भावः ॥

**इत्याधिकारिकाधिकरणम् ॥ १८ ॥**

---

## नयमणिमालायाम्

## अथ आधिकारिकाधिकरणम् ॥ १८ ॥

**सू ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥**

जन्म वसिष्ठादीनां विदुषामवगम्यते पुराणेषु । तस्मान्मोक्षप्राप्तिस्तेषामपि पाक्षिकी भाति ॥ २५० ॥

........................................................................ ॥ २५१ ॥

**इत्याधिकारिकाधिकरणम् ॥ १८ ॥**

## सूत्रार्थचन्द्रिकायाम्

### अथ आधिकारिकाधिकरणम् ॥ १८ ॥

**सू ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥**

**भगवत्पादमते,** पूर्वं मुक्तिफलत्वान्निर्गुणविद्यायां मार्गो निरर्थकः । ब्रह्मलोकप्राप्तिफलत्वात्सगुणविद्यायां मार्गस्सर्वत्रार्थवानिति व्यवस्था कृता । सा न युक्ता । निर्गुणोपासकानामपीतिहासादौ पुनर्जन्मदर्शनेन निर्गुणविद्याया मुक्तिसाधनत्वासंभवादित्याक्षेपसङ्गत्येदमारभ्यते—**यावदधिकारमिति** । अपान्तरतमा नाम कलिद्वापरयोस्सन्धौ विष्णुनियोगात्कृष्णद्वैपायनस्संबभूवे'त्यादिना अपान्तरतमोवसिष्ठादीनां निर्गुणब्रह्मविदां पुनर्जन्म स्मर्यते । तत्र किं विदुषो वर्तमानदेहपातानन्तरं देहान्तरप्राप्तिरस्ति उत नास्ति इति **संदेहः** । अस्तीति **पूर्वपक्षः** । **सिद्धान्तस्तु,** अपान्तरतमःप्रभृतीनामाधिकारिकाणां लोकव्यवस्थाहेतुष्वधिकारेषु परमेश्वरेण नियुक्तानां सम्यग्दर्शनतः प्रक्षीणकर्मणां **यावदधिकारमवस्थितिः**=यावत्प्रारब्धकर्मावस्थितिः, तस्य प्रारब्धकर्मणो भोगेन क्षये प्रतिबन्धकान्तराभावादप्रतिबन्धसाक्षात्कारो वर्तमानदेहपातानन्तरं कैवल्यं संपादयतीति न देहान्तरप्राप्तिरिति सिद्धम् ॥

**श्रीकण्ठमते,** विषयवाक्यपूर्वपक्षादिकं सर्वमविशिष्टम् । वसिष्ठादीनामाधिकारिकाणां मुक्तिरस्ति न वेति संदिह्य तेषां पाक्षिकी मोक्षप्राप्तिरिति **पूर्वपक्षे** प्राप्ते तेषामधिकारनिवृत्तेरनन्तरं मुक्तिरस्ति न पाक्षिकी मोक्षप्राप्तिर्ज्ञानिनामाधिकारिकाणामिति **सिद्धान्तितम्** । सूत्रार्थो रामानुजमतवदेव ॥

**रामानुजमते,** अस्य सूत्रस्य पूर्वाधिकरणशेषतया तत्रैव व्याख्याततया नात्र पुनः प्रपञ्चनमिति वेद्यम् ॥

**आनन्दतीर्थमते,** अस्य सूत्रस्य 'अक्षरधिया'मित्युत्तरसूत्रेणैकाधिकरण्यादुत्तराधिकरणे तद्व्याख्यास्यते इति नात्र तत्प्रसक्तिरिति बोध्यम् ॥

**इति सूत्रार्थचन्द्रिकायामाधिकारिकाधिकरणम् ॥ १८ ॥**

## अथ अनियमाधिकरणम् ॥ १९ ॥

### सू ॥ अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ ३२ ॥

उपकोसलाद्युपासनेष्वर्चिरादिगतिराम्नायते । सा किं तन्निष्ठानामेव, उत सर्वोपासकानामिति संशयः ॥

छान्दोग्ये पञ्चाग्निविद्यायामुपकोसलविद्यायां चार्चिरादिगतिः पठिता, पाशुपतविद्यायामथर्वशिरसि सूचिता, शाण्डिल्यविद्यादिषु न पठिता । प्रकरणवशात् यासु श्रुता तास्वेव नियता नापरासु ॥

इति पूर्वपक्षे प्राप्ते ब्रूमः—यासु श्रुता तास्वेवेति न नियमः, अपि तु सर्वासूपासनासु भवति । तथा सत्येव श्रुतिस्मृतिभ्यामविरोधः । पञ्चाग्निविद्यायां 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' इत्यविशेषेण श्रुतिः । स्मृतिरपि 'अग्निर्ज्योतिरहः शुक्लः' इत्यविशेषका । ततः सर्वेषामुपासकानाम-

---

## अथ अनियमाधिकरणम् ॥ १९ ॥

सू० ॥ अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ ३२ ॥ विदुषो मुक्तिरिवार्चिरादिगतिरपि नियतेति समर्थ्यत इति संगतिः । उपकोसलविद्यापञ्चाग्निविद्यापर्यंकविद्यादिषु सा समाम्नाता कासुचित्सूचिता । यथा पाशुपतविद्यायामथर्वशिरसि 'अयं पंथा वितत उत्तरेण येन देवा येन ऋषयो येन पितरः प्राप्नुवंति परमपरं परायणं चे'ति शाण्डिल्यविद्यादिषु न स्पृष्टा सा सर्वासु विद्यासु भवति न वेति सर्वविद्या संबंधप्रतिपादकवाक्याभावाभावाभ्यां संशये पूर्वपक्षः—यथाप्रकरणं व्यवतिष्ठते । अन्यथा कर्मकाण्डेऽपि धर्माणां पारिप्लवता स्यात् । न च 'येचामी अरण्य'इत्यादिबृहदारण्यकवाक्यात् 'ये च मेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिष'मित्यादि छांदोग्यवाक्याच्च तस्यास्सर्वविद्यास्वन्वयश्शङ्कनीयः तयोर्हि सत्यतपश्शब्दौ सत्यवचननियमलक्षणतपोविशेषवाचिनौ न तु ब्रह्मवाचिनौ । तपश्शब्दस्य ब्रह्मण्यप्रसिद्धत्वेन तयोस्सत्यवचन एव पर्यवसानौचित्यात्तयोर्ब्रह्मविषयतायामेकस्मिन्नेव छांदोग्ये पञ्चाग्निविद्यायामुपकोसलविद्यायाञ्च द्विःपाठस्य वैयर्थ्यप्रसंगाच्च । शाखैक्ये प्रतिपत्तृभेदेन साफल्यासंभवात् । न च वाजिसनेयशाखागतशाण्डिल्यविद्यान्यायेन एकत्र विधिरन्यत्रानुवाद इति नियन्तुं शक्यते । विनिगमकाभावात् । 'आचार्यस्तु ते गतिं वक्ते'ति गत्युक्तिपरिशेषेण 'वेत्थ यदितोऽधि प्रजाः प्रजायंते' इत्यादिप्रश्नप्रतिवचनाभ्याञ्चोभयत्रापि तस्याः प्रतिपिपादयिषितत्वावगमाच्चेति । सिद्धान्तस्तु 'विद्यया तदारोहन्ति यत्र कामाः प्रतिष्ठिता न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विन' इति श्रुतेर्विद्यां विना सत्यवचनरूपेण तपसार्चिरादिप्राप्त्यसंभवाद्भूमविद्यायामिव सत्यशब्दस्य रूढ्या ब्रह्मविषयत्वात् । तत्समानार्थस्य तपश्शब्दस्याऽपि 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेती'ति श्रुतौ तपःप्राप्यत्वेन श्रुते ब्रह्मणि लक्षणोपपत्तेः । 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना' इति ब्रह्मविन्मात्रस्यार्चिरादिगतिप्रतिपादकतदुपबृंहणस्मृतिसद्भावाच्च । स्मृत्यनुगृहीतवाक्यप्रमाणबलात्प्रकरणमुलंघ्य सर्वासु विद्यासु भवत्यर्चिरादिगतिः । छांदोग्ये प्रथमपठितायामुपको-

र्चिरादिगतिर्नियतैव । केचिदाहुः—अनियमः, सर्वेषामुपासकानामर्चिरादिगतौ नियमाभावः; तथा सति श्रुतिस्मृतिभ्यामविरोध इति । तत्रापि न दोषः । निरन्वयोपासकानां तद्पेक्षाऽभावादिति ॥

इत्यनियमाधिकरणम् ॥ १९ ॥

---

सलविद्यायां तस्या विधिः पञ्चाग्निविद्यायां 'ये चेमेऽरण्य'इत्यादिना सर्वविद्यासंबन्धप्रतिपादनार्थं 'वेत्थ पथोर्देवयानस्य पितृयाणस्य व्यावर्तना' इति पृष्टे देवयानपितृयाणव्यावर्तकप्रतिपादनार्थं च तदनुवादः । अतएव देवयानपितृयाणोभयविषययोः प्रश्नप्रतिवचनयोरप्युपपत्तिः । देवयानस्य स्वरूपेणानुवाद्यत्वेऽपि पितृयाणव्यावर्तकधर्मवत्त्वेन प्रतिपिपादयिषितत्वात्पितृयाणस्य स्वरूपेणाऽपि प्रतिपिपादयिषितत्वाच्चेति । न 'त्वर्चिरादिना तत्प्रथिते'रित्यधिकरणे विदुषामर्चिरादिमार्गव्यतिरेकेण मार्गांतरं नास्तीति स्थापयिष्यन्ते । भाव्यं चावश्यं देशान्तरस्थितब्रह्मप्राप्त्यर्थासु सर्वास्वपि विद्यासु मार्गेण । अतो वाक्यासमर्थनेऽप्यशक्यव्यवस्थानाल्लिङ्गादेरर्चिरादिगतेर्देशान्तरस्थितब्रह्मप्राप्त्यर्थसर्वविद्यान्वयस्सिध्यति किमनेनाधिकरणेन । न च लिङ्गाद्ब्रह्मप्राप्त्यर्थमर्चिरादिगतेरन्वयसिद्धावपि सर्वासु विद्यास्वनुचिंतनीयत्त्वं न सिध्यति । यासु पठ्यते तास्वेवानुचिंतनीयेति शङ्का स्यात्तन्निवृत्त्यर्थमिदमधिकरणमिति वाच्यम् । ब्रह्मप्राप्त्युपायतया सर्वविद्यान्वयसिद्धौ हानोपायनन्यायेन फलकोटिनिविष्टतयैव सर्वत्रानुचिंतनीयत्वस्यापि सिद्धिसंभवात् । न च छांदोग्ये द्विःपाठो लिङ्गात्सर्वत्रान्वये व्यर्थः स्यादित्यधिकशङ्कानिराकरणार्थमिदमधिकरणमिति वाच्यम् । पञ्चाग्निविद्यायां सर्वविद्यान्वयवाक्यस्य व्यावर्तकधर्मवचनस्य प्रागप्रतिपन्नस्य सत्त्वेन तदर्थं प्राक्प्रतिपन्नगत्यनुवाद इति शाण्डिल्यविद्याव्युत्पादितन्यायसंचारेणावगंतुं शक्यत्वादिति मन्यमानानां केषांचिदभिमतां प्रकारान्तरेण सूत्रयोजनां दर्शयति—केचिदाहुरिति । ननु यदि सर्वेषामुपासकानां नार्चिरादिगतिः, तर्हि एषां न सा ते कथं ब्रह्म प्राप्नुयुरित्याशंक्य तन्मतमुपपादयति—तत्रापि न दोष इति । निरन्वयोपासकाः गुणान्वयरहितनिर्विशेषब्रह्मोपासकाः तेषां न देशांतरस्थं सगुणं ब्रह्म प्राप्तव्यं यानधिकृत्य 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते' इत्यादिश्रुतयस्तदनुसारिण्यः स्मृतयश्चेति तेषामाशयः ॥

इति अनियमाधिकरणम् ॥ १९ ॥

---

## नयमणिमालायाम्

### अथ अनियमाधिकरणम् ॥ १९ ॥

सू ॥ अनियमस्सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥

उपकोसलविद्यादिः श्रुतो न सर्वासु विद्यासु । प्रकरणनियंत्रितत्वात्प्रसारयत्यर्चिरादिको मार्गः ॥ २५२ ॥

ये चेमेऽरण्य इति श्रुतिवाक्यात्सर्वविद्यासु । लब्धान्वयस्य तस्य प्रक्रियया नास्त्यवच्छेदः ॥ २५३ ॥

इत्यनियमाधिकरणम् ॥ १९ ॥

## सूत्रार्थचन्द्रिकायाम्

### अथ अनियमाधिकरणम् ॥ १९ ॥

सू ॥ अनियमस्सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥

भगवत्पादमते, पूर्वं सगुणनिर्गुणविद्यासु मार्गस्य भावाभावव्यवस्था यथोक्ता तथा सगुणविद्यास्वपि व्यवस्थास्त्विति

## अथ अक्षरध्यधिकणरम् ॥ २० ॥

सू॥ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

गार्गिब्राह्मणे—'अस्थूलमनण्वह्रस्वम्' इत्यादौ ब्रह्मबोधाय केचन निषेधाः श्रुताः। आथर्वणे च 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्' इत्यादौ श्रुताः । तेषामानन्दादिवदुपसंहारोऽस्ति न वेति संशयः।

किं प्राप्नोति? तेषां निषेधानामानन्दादिवत् गुणत्वाभावान्न सर्वासु परविद्यासूपसंहारः ॥

---

## अथ अक्षरध्यधिकरणम् ॥ २० ॥

सू० ॥ अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

अर्चिरादिगतिवदस्थूलत्वादीनामपि सर्वविद्यासाधारण्यं प्रतिपाद्यत इति दृष्टान्तसंगतिः। द्वितीययोजनायां प्रत्युदाहरणसंगतिः। अस्थूलत्वादीनां सर्वासु विद्यासूपसंहारोऽस्ति न वेति तदपेक्षानपेक्षाभ्यां संशये पूर्वपक्षः। प्रकरणविशेषाम्नातानामेषां नोपसंहारः। आनन्दादिवत्स्वरूपप्रतिपत्त्यर्थत्वाभावात् 'लब्धरूपे क्वचित्किंचि'दिति न्यायेनावगतस्वरूप एव धर्मिणि निषेधरूपाणां तेषां बोध्यत्वात्सर्वज्ञत्वसत्यसंकल्पत्वादिवत्प्राप्तव्यफलत्वा'दितरे त्वर्थसामान्या'दिति न्यायेन तेषामुपसंहारेण भाव्यमिति चेन्न । 'निरवद्यं निरञ्जन'मित्यादौ सामान्यतः श्रुतस्य निर्दोषत्वमात्रस्योपसंहारेणापि चारितार्थ्याद्दोषविशेषाणां प्रातिस्विकाभावोपसंहारापेक्षायाञ्च नानाशाखाम्नातानां तेषामानन्त्योपसंहारस्याशक्यत्वात्। गार्गिब्राह्मणमुण्डकाम्नातानामस्थूलत्वादीनामेव सकलदोषाभावोपलक्षणत्वाङ्गीकारे तत्तद्विद्याम्नातानां यत्किंचिद्दोषाभावानामेव तथात्वसंभवेनास्थूलत्वाद्यपेक्षणस्य वैयर्थ्यादिति।

---

दृष्टान्तसंगत्येदमारभ्यते सगुणोपासने क्वचित्पञ्चाग्न्युपासनादिषु मार्गः श्रूयते क्वचित्तु वैश्वानरादिषु न श्रूयते । तत्र किं येषु मार्गः श्रुतः तेषामेव तस्य नियमः किं वा सर्वेषामनियम इति **संशयः**। विद्याविशेषप्रकरणान्नियम इति **पूर्वपक्षः**। **सिद्धान्तस्तु** सर्वेषां सगुणोपासनानां मार्गस्यानियमः। अनियमाभ्युपगमे प्रकरणविरोधः स्यादिति चेन्न । **अविरोधः**=नैषोऽस्ति विरोधः। कुतः। **शब्दानुमानाभ्याम्**='तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति'इत्याद्याः श्रुतयः, 'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः॥' इत्याद्याः स्मृतयः, ताभ्यामित्यर्थः। एवं च पञ्चाग्निविदामिव विद्यान्तरशीलिनामप्यविशेषेण अर्चिरादिमार्गप्रतिपादकवाक्येन प्रकरणं बाध्यमिति बोध्यम् ॥

**श्रीकण्ठमते,** तथा **रामानुजमते** च विषयवाक्यसंदेहादिकं पूर्ववदेव । **श्रीकण्ठभाष्ये** परं **'केचिदाहुः'** इत्यारभ्य **अनियमः**=सर्वेषामुपासकानामर्चिरादिगतौ नियमाभावः। तथा सति श्रुतिस्मृतिभ्यामविरोध इति । तत्रापि न दोषः। निरन्वयोपासकानां तदपेक्षाभावादिति सूत्रार्थोऽन्यथापि वर्णितः॥

**इति श्रीकण्ठरामानुजमतयोरनियमाधिकरणम् ॥ १९ ॥**

**आनन्दतीर्थमते,** 'यावदधिकार'मिति सूत्रस्य भगवत्पादमतवद् **'अनियम'** इति सूत्रानन्तरमेव पाठः। उपसंहृतिवद्योग्यायोग्यविभागेन ज्ञानिषु मोक्षः केषांचिदस्ति केषांचिन्नास्तीति नियमोऽस्ति वा न वेति **संदेहः** । ज्ञानिनां मध्ये केषांचिन्मोक्षोऽस्ति केषांचिन्नेति नियमोऽस्तीति **पूर्वपक्षे** प्राप्ते नास्तीति **सिद्धान्तः** । **सूत्रार्थस्तु, अनियमः**=अपरोक्षज्ञानिनां मध्ये केषांचिन्मोक्षः केषांचिन्नेत्येवंरूपव्यवस्थाभावो ज्ञायते। कुतः। सर्वेषामपि मोक्षेऽविरोधात् निषेधकाभावात्। किंच। **शब्दानुमानाभ्याम्**='नकश्चि'दिति श्रुतेः तन्मूलकानुमानाच्चेत्यर्थः ॥

**इति सूत्रार्थचन्द्रिकायामनियमाधिकरणम् ॥ १९ ॥**

इति प्राप्ते ब्रूमः—अक्षरसम्बन्धिनीनां निषेधधियां सर्वासु परविद्यासूपसंहारो युक्तः, गुणिनो ब्रह्मणः सर्वत्रैकत्वात् । एतैर्हि गुणैः सकलेतरव्यावृत्तब्रह्मानुसन्धानोपपत्तिर्नान्यथा, हेयगुणसंबन्धानर्हा आनन्दादयो हि प्रत्यगात्मनः सकाशात् ब्रह्मणो व्यावर्तकाः, प्रधानानुवृत्तित्वं गुणस्य स्वभावः । यथा जामदग्न्य–चतूरा–त्रपुरोडाशाद्युपसद्गुणभूतस्य 'अग्निर्होत्रं वेत्वध्वरम्' इत्यादिमन्त्रस्य सामवेदपठितत्वेन सामवेदस्वरस्योच्चैस्त्वस्य प्राप्तावपि याजुर्वेदिकप्रधानोपसदनुवृत्तित्वादुपांशुगुणत्वम् । तदुक्तं प्रथमे काण्डे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इति ॥

---

सिद्धान्तस्तु ज्ञानानन्दादीनां जीवेष्वपि सत्त्वेन तद्वैलक्षण्यदृढीकरणार्थं दोषाभावरूपाणां तेषामप्युपसंहारः कार्यः । सामान्यतो दोषाभावानुसंधानादपि जीवेषु संभावितानां दोषविशेषाणां विशिष्याभावानुसंधाने तद्वैलक्षण्यदार्ढ्यलाभात् । न च निर्दोषत्वमात्रं विद्यानुष्ठानकालेऽनुसन्धेयं तद्दार्ढ्यार्थमस्थूलत्वादयोऽन्नमयाद्युक्तरीत्या विद्यानुष्ठानात्प्रागेव श्रवणमननकालयोरनुसंधातव्या इत्यस्त्विति वाच्यम् । 'सर्वमन्यत्परित्यज्ये'ति वचनबलाद्देवताविशेषरूपाणामन्नमयादीनां विद्यानुष्ठानकालेऽनुसंधानायोगात्त्यागेऽपि चिरनिरन्तराभ्यासेन दार्ढ्यातिशयहेतूनामस्थूलत्वादीनां त्यागे हेत्वभावात् । न चानन्त्यादुपसंहारासंभवः । 'अस्थूल'मित्या'द्यदीर्घ'मित्यन्ते'नास्त्राय्वनाकाश'मित्यन्तेन च दोषावहशरीरनिषेधः, 'अतम' इत्यविद्या निषेधः, 'अचक्षुरि'त्यादिना इन्द्रियनिषेधः, इत्यादिरूपेण दोषाभावानामवच्छिद्य ग्रहणसंभवादिति । यद्यपि 'निष्कलं निष्क्रियं शान्त'मित्यादिशाखान्तरश्रुता अपि दोषाभावा उपसंहार्याः । तथाप्यस्थूलादिवाक्ये मुण्डकवाक्ये च परिपूर्णः शरीरेन्द्रियादिदोषनिषेधः श्रूयत इति, तदुपसंहारे सति नान्यापेक्षास्तीत्यानन्त्यदोषपरिजिहीर्षया सूत्रेऽक्षरग्रहणं कृतम् । अन्नमयादिवद्दोषविशेषाभावाः प्रागेवानुसन्धेयाः । विद्याकाले माभूत्तदनुसंधानोपसंहृतिरिति शङ्कावारणार्थं धियामित्युक्तम् । तुशब्दस्सामान्यतः पूर्वपक्षनिराकरणार्थः । अवरोधः संग्रहः । सामान्यतद्भावाभ्यां सर्वासु विद्यासूपास्यस्य ब्रह्मणस्समानत्वात्तेषामस्थूलत्वादीनामितरवैलक्षण्यार्थं ब्रह्मस्वरूपप्रतीतिदार्ढ्यसम्पादनोपयोगसद्भावाच्चेत्यर्थः । औपसदः उपसत्संबद्धस्सामवेदोत्पन्नस्तद्गुणभूतो मन्त्रः । तदुक्तं सामवेदोत्पन्नस्य मन्त्रस्यो'च्चैस्साम्ने'ति विहितस्ववेदस्वरमपहाय 'उपांशु यजुषे'ति याजुर्वैदिकस्वरपरिग्रहेण यद्याजुर्वैदिकप्रधानोपसदनुवर्तित्वं तद्गुणमुख्यादिसूत्रेणोक्तमित्यर्थः । गुणमुख्ययोः मन्त्रोपसदोः व्यतिक्रमे स्वस्ववेदविहितस्वरप्राप्त्या विरोधे सति मुख्येन प्रधानानुसारेण वेदसंयोगः स्वरविधायकवेदसंबन्धः प्रधानविधिविधेयत्वादङ्गानामित्यर्थः । सामगानां पञ्चविंशतिब्राह्मणे जामदग्न्यचतूरात्रस्योपसत्सु एककपालादिद्वादशकपालान्तपुरोडाशद्रव्यका द्वादशयागा विहिताः । तेषां च 'अग्नये वेर्होत्रमवेरध्वरमावित्करं वैश्वानरं वैश्वानरमवसे करीन्द्राय देवेभ्यो जुहुता हविः स्वाहे'त्याद्या द्वादशहोममन्त्राः समाम्नाताः । त इहोदाहरणम् । शबरस्वामिना तु न्यायसाम्यादस्मिन्नधिकरणेऽन्यदुदाहृतमिति न विरोधः । एवं यथाकथंचिदुपयोगवर्णनेनास्थूल-

---

(१) 'जीवेऽपि सद्भावेन' इति ख. पाठः । (२) 'कालेऽनुचिन्तनीयं' इति ख. पाठः ।

नैतावता सर्वेषामुपसंहार्यत्वप्रसक्तिरित्याह—

**सू ॥ इयदामननात् ॥ ३४ ॥**

आमननमाभिमुख्येन मननम्, इयदेव गुणजातं सर्वत्रोपसंहार्यम्, येन गुणजातेन सकलेतरव्यावृत्तब्रह्ममननं भवति। अतोऽक्षरब्रह्मसंबन्धिनीनामस्थूलत्वादिनिषेधधियामेव सकलेतरव्यावर्तकधर्मरूपत्वादुपसंहारः परविद्यासु, न तु 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्यादीनामपीति ॥

इति अक्षरध्यधिकरणम् ॥ २० ॥

---

त्वाद्युपसंहारसमर्थने सर्वविद्याम्नातानां सर्वेषामपि ब्रह्मगुणानां सर्वत्रोपसंहारकल्पना प्रसज्येतेत्यतिप्रसक्तिशङ्कापरिहारार्थत्वेनोत्तरसूत्रमवतारयति—नैतावतेति । सू० ॥ इयदामननात् ॥ ३४ ॥ आभिमुख्येन मननमिति । आदरेण चिंतनमित्यर्थः। आदरो निर्दोषत्वे स्वप्राप्यफलरूपत्वप्रयुक्तः। एवं च फलरूपतयावश्यानुसन्धेयस्य दोषाभावस्यैव प्रपञ्चेनानुसन्धानतः परब्रह्मणस्सर्वेतरवैलक्षण्येनार्थसिद्धादानन्त्यादवश्योपसंहाराणां सर्वेषां गुणानां सर्वत्रोपसंहारो न प्रसज्यत इति भावः ॥

इति अक्षरध्यधिकरणम् ॥ २० ॥

---

**नयमणिमालायाम्**

**अथ अक्षरध्यधिकरणम् ॥ २० ॥**

सू ॥ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ इयदामननात् ॥ ३४ ॥

आनन्दाद्यैर्गुणोघैरितरविसदृशे लब्धबुद्धिप्रतिष्ठे ब्रह्मण्यस्थूलवादीन्किमिति कलयसे सर्वविद्यानुरोध्यान् ।
विश्वोपादानतान्तःस्थिति··· मथनाकृष्टदोषापतुल्या ताद्रूप्यस्योपलब्ध्यै तदितरसदृशं दोषवश्यं ह्यवश्यम् ॥ २५४ ॥

इति अक्षरध्यधिकरणम् ॥ २० ॥

**सूत्रार्थचन्द्रिकायाम्**

**अथ अक्षरध्यधिकरणम् ॥ २० ॥**

सू ॥ अक्षरधियां त्ववरोधः सामान्यवद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ इयदामननात् ॥३४॥

**भगवत्पादमते,** इदं सूत्रद्वयमधिकरणद्वयात्मतया विभक्तम् । अस्य 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु'इत्यादिकं बृहदारण्यकवाक्यं अक्षरमुपक्रम्य श्रूयमाणं 'यत्तदद्रेश्यमग्राह्य'मित्यादिकमाथर्वणवाक्यं च विषयः । तत्र किं क्वचिन्निषेधश्रुतौ अश्रुतनिषेधानां श्रुत्यन्तरादुपसंहारोऽस्ति न वेति **संदेहः** । नास्तीति **पूर्वपक्षः** । अस्तीति **सिद्धान्तः। सूत्रार्थस्तु, अक्षरधियां**=अक्षरे ब्रह्मणि द्वैतनिषेधधियः तासां सर्वत्र निषेधश्रुतिष्ववरोधः उपसंहारो न्याय्यः । कुतः । **सामान्यतद्भावाभ्याम्**=द्वैतनिरासेन ब्रह्मप्रतिपादनस्य सामान्यं समानत्वं, तस्य ब्रह्मणः प्रतिपाद्यस्य सर्वत्रभावः एकत्वेन प्रत्यभिज्ञायमानत्वं ताभ्यां हेतुभ्यामित्यर्थः । तत्र दृष्टान्तः—**औपसदवत्**=यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितानामौपसदानामध्वर्युकर्तृकपुरोडाशशेषाणां मन्त्राणां यत्र क्वचिच्छ्रुतानामपि अध्वर्युणा संबन्धः तथा अक्षरप्रमितिशेषाणां निषेधानां यत्र क्वचिच्छ्रुतानामपि अक्षरेण सर्वत्र संबन्ध इत्यर्थः । **तदुक्तं**="गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इति जैमिनिना प्रथमे काण्डे उक्तमित्यर्थः ॥

इति भगवत्पादमते अक्षरध्यधिकरणम् ॥ २० ॥

**अथ इयदधिकरणम् ॥ २१ ॥**

सू ॥ **इयदामननात्** ॥ ३४ ॥ अस्य 'द्वा सुपर्णा सयुजा'इत्याद्याथर्वणमन्त्रः 'ऋतं पिबन्ता'विति काठकवाक्यं च विषयः । तत्र किमनयोर्विद्याभेदः उताभेद इति **संशयः** । विद्याभेद इति **पूर्वपक्षः । सिद्धान्तस्तु,** मन्त्रद्वये विद्याया अभेद एव । कुतः । **इयदामननात्**=इयतः इयत्तावच्छिन्नस्य द्वित्वावच्छिन्नस्योभयत्राप्यभिन्नत्वेन आमननात् अभिधानादित्यर्थः । अत्र हि मन्त्रद्वये भोक्तृत्वानुवादेन परमात्मा रुद्रः प्रतिपाद्यः । पिबन्ताविति प्रयोगस्तु 'छत्रिणो गच्छन्ती'तिवदुपपद्यत इत्यविरोधः ॥

इति भगवत्पादमते इयदधिकरणम् ॥ २१ ॥

## अथ अन्तराभूतग्रामाधिकरणम् ॥ २१ ॥

**सू ॥ अन्तरा भूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नो-पदेशवत् ॥ ३५ ॥**

बृहदारण्यके 'यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्व' इत्युषस्तिप्रश्ने प्रतिवचनमेवमाम्नायते 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरः' इत्यादि 'अतोऽन्यदार्तम्' इत्यन्तम् । तदनन्तरं 'यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व' इति कहोलप्रश्ने तु प्रतिवचनमेवमाम्नायते 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा' इत्यादि 'अतोऽन्यदार्तम्' इत्यन्तम् । इहोभयत्र विद्यैक्यं न वेति संशयः ॥

तथा सति 'य आत्मा' इत्युषस्तिप्रश्नः भूतग्रामवत्प्रत्यगात्मविषयः । अन्यथा

## अथ सर्वान्तराधिकरणम् ॥ २१ ॥

**सू० ॥ अन्तराभूतवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५॥**

दोषाभावरूपमस्थूलत्वादिकं जीवव्यावर्तकमित्युक्तं पूर्वाधिकरणे । तर्ह्यशनायाद्यतीतमेव जीवव्यावर्तकान्निर्दोषत्वाद्ब्रह्म स्यात् । प्राणितृत्वादिविशिष्टस्तु जीव एवेत्युत्थानात्संगतिः। उषस्तिकहोळयोर्याज्ञवल्क्यस्य च प्रश्नप्रतिवचनसन्दर्भयोर्विद्या भिद्यते न वेत्युपस्ति-

---

**श्रीकण्ठमते** तथा **रामानुजमते** च इदमेकमेवाधिकरणम् । तयोरपि मतयोः पूर्ववदेव विषयवाक्यपूर्वपक्षादिकम् । आनन्दादिवत्सर्वासु परविद्यासु अस्थूलत्वादयोऽप्युपसंहार्या न वेति **संदेहे** नोपसंहार्या इति **पूर्वपक्षे** प्राप्ते उपसंहार्या एवेति **सिद्धान्तः** । **सूत्रार्थस्तु, अक्षरधियाम्**=अक्षरसंबन्धिनीनामस्थूलत्वादिधियां सर्वविद्यास्व**वरोधः** संग्रहणम् । कुतः । **सामान्यतद्भावाभ्याम्**=ब्रह्मणस्सर्वत्रसमानत्वात् ब्रह्मानुसंधानान्तर्भावाच्च तासाम् । शेषं पूर्ववत् ॥

नैतावता सर्वेषामुपसंहार्यत्वप्रसक्तिरित्याह—**सू ॥ इयदामननात् ॥ ३४ ॥** आमननमाभिमुख्येन मननम् । **इयत्**=अस्थूलत्वादिविशेषितमानन्दाद्येव गुणजातं सर्वत्रोपसंहार्यम् । येन गुणजातेन सकलेतरव्यावृत्तब्रह्ममननं भवति तदेव सर्वत्रानुसंधेयं भवति । अन्यत् 'सर्वकर्मा सर्वकाम'इत्यादिकं तु तत्र तत्र व्यवस्थितमित्यर्थः ॥

**इति श्रीकण्ठरामानुजमतयोरक्षरध्यधिकरणम् ॥ २० ॥**

**आनन्दतीर्थमते,** 'यावदधिकार'मिति सूत्र'मक्षरधिया'मिति सूत्रंचेति सूत्रद्वयं **यावदधिकाराधिकरण**मिति व्यपदिश्यते 'इयदामननात्'इत्यादिकं सूत्रत्रयमधिकरणान्तरमिति बोध्यम् । अत्राधिकारिकाधिकरणे 'प्राप्तेश्च समञ्जस'मित्याद्यधिकरणेप्रूक्तः उपासकानामधिकारनियमो युक्तो वा न वेति **संदेहः** । प्रमाणाभावान्मुक्तानामधिकारनियमो न युक्त इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** आनन्दवल्ल्यादिसिद्धस्य मुक्तावानन्दतारतम्यस्यापह्नोतुमशक्यतया तस्यैवाधिकारनियमे प्रमाणत्वात् यस्य यावद्गुणोपासने योग्यतारूपोऽधिकारस्तस्य तदधिकप्रयत्नकृतेर्दोषावहत्वात् मुक्तानामानन्दतारतम्येनासमत्वेऽपि गुरुषु शिष्याणामिव परस्परं विरोधादर्शनात्परस्परमुपकार्योपकारकभावसंभवाच्च मुक्तानामुपासनायामधिकारनियमो युक्त एवेति । **सूत्रार्थस्तु, आधिकारिकाणाम्**=योग्यतानुसार्युपासनशीलानां ब्रह्मादीनां स्वस्वाधिकारानुसारेणैव मुक्ताववस्थितिरवस्थितानामुपायनावत्तारतम्येनैव मुक्तौ तेषां फलमित्यर्थः ॥ **सू ॥ अक्षरधियामिति** ॥ तुशब्दोऽप्यर्थः । **अक्षरधियां**=ब्रह्मज्ञानिनाम् असमत्वेऽपि **अविरोधः**=विरोधो नास्ति । कुतः । **सामान्यतद्भावाभ्याम्**=ब्रह्मवित्त्वात् यन्मत्सरादिदोषाभावसाम्यं मात्सर्यादिदोषाभावप्रसञ्जित उक्तमेभ्यो योऽधमानामुपकारस्ताभ्यां चेत्यर्थः । कथम् । **औपसदवत्**=यथा गुरुष्वौपसदानां सच्छिष्याणां विरोधाभावो दृश्यते तद्वत् । **तदुक्तम्**—चतुश्श्रुतौ 'नानाविधा देवसंघा'इत्यादिना असमत्वेऽपि विरोधो नास्तीत्युक्तमतोऽप्यविरोध इत्यर्थः ॥ 'इयदामननात्' इति सूत्रमुत्तराधिकरणेऽन्तर्भावितम् ॥

**सूत्रार्थचन्द्रिकायामक्षरध्यधिकरणम् ॥ २० ॥**

---

१ देशान्तरवदिति. शां. भा. पाठः.

'यः प्राणेन प्राणिति स त आत्मा' इति तत्प्रतिवचनविषयस्य कहोलप्रश्नप्रतिवचनविषयस्याशनायाद्यतीतत्वादेश्च भेदानुपपत्तिरितिचेत् ॥

सिद्धान्तयति—नोपदेशवदिति । 'य आत्मा सर्वान्तरः' इत्युभयत्र प्रश्नैकरूप्यात् परमेश्वर एवोभयत्र प्रश्नविषयः । प्रतिवचनगतं निरुपाधिकं प्राणनादिहेतुत्वमशनायाद्यतीतत्वं च तत्रैव सम्नुपपद्यते । सद्विद्योपदेशवत् प्रश्नप्रतिवचनावृत्तिरेकविषया । प्रष्टृभेदो रूपभेदश्च न विद्याभेदावहः ॥

तथा ह्याह—

## सू ॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

अथैक्ये निश्चिते सति प्रष्ट्रोर्बुद्धिव्यतिहारः कर्तव्यः । उषस्तिनाऽप्यशनायाद्यतीतत्वधीः, कहोलेनापि प्राणनादिहेतुत्वधीः कार्या । उभयप्रकरणगतानि हि वाक्यानि परमेश्वरं विशिंषन्ति, यथेतरत्र सद्विद्यायाम् । तस्मादेकस्यैव प्रश्नप्रति-

---

प्रश्नतत्प्रतिवचनयोर्जीवविषयत्वब्रह्मविषयत्वान्यतरानवधारणात्संशये पूर्वपक्षः । प्रश्नप्रतिवचनावृत्तेरुषस्तिप्रश्नप्रतिवचनं प्राणितृत्वादिलिंगाज्जीवविषयं । कहोळप्रश्नप्रतिवचनमशनायाद्यतीतत्वलिंगाद्ब्रह्मविषयमित्युपास्यभेदाच्च विद्या भिद्यते । यद्यप्युषस्तिप्रश्नोऽपि परब्रह्मविषयः 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति साक्षात्त्वविशेषणात् । उषस्तिप्रश्नप्रतिवचनानन्तरं प्रवृत्तस्य कहोलप्रश्नस्य परब्रह्मविषयत्वेन संप्रतिपन्नस्य यदेव साक्षाद्ब्रह्मेत्यवधारणेन उषस्तिप्रश्नसमानविषयत्वावगमाच्च । न च तस्योपक्रमगतस्य प्रतिवचनानुसारेण जीवविषयत्वं कल्पयितुं युक्तम् । तदनुसारेण प्रतिवचनस्यैव ब्रह्मविषयत्ववर्णनौचित्यात् । सुषुप्तिसमयादिसाधारणनिरुपाधिकप्राणनव्यापारादिकर्तृत्वस्य ब्रह्मण्येव स्वारस्यादित्युच्यते, तथापि प्रष्टृभेदात्प्राणितृत्वाद्यशनायातीतत्वादिरूपभेदाच्चानिवार्यो विद्याभेद इति तत्र प्रथमपूर्वपक्ष उद्भाव्य प्रथमसूत्रेण निराकृतः । तत्र भूतग्रामवत्त्वं स्वात्ममनश्शरीरेंद्रियप्राणादिमत्त्वं तद्विशेषणं प्राणितृत्वादेर्जीवलिंगत्वोपपादनार्थं शरीराद्यंतरत्वविषयतया सर्वांतरत्वोपपादनार्थं च अन्तरा अंतरे प्राथमिके सर्वांतरवाक्ये । अंतरशब्दात्सप्तम्या-'स्सुपांसुलु'गित्यादिना पूर्वसवर्णादेशः । तस्मिन्भूतग्रामवतः स्वात्मनो निर्देश इति शेषः । द्वितीयपूर्वपक्षोत्तरत्वेन द्वितीयसूत्रमवतारयति—प्रष्टृभेदो रूपभेदश्चेति । तथाह्याहेति । यथा न विद्याभेदावहस्तथैवोपपादयतीत्यर्थः । सू० ॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥ ननु प्रकरणद्वयगतान्यपि वाक्यान्येकमेव ब्रह्म विशिंषन्तु न तावता रूपभेदप्रयुक्तविद्याभेदशङ्का निवारिता भवति । न हि खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवतीत्येकमेवोद्गीथावयवं प्रस्तुत्य तं विशिंषत्सु प्राणाकाशहिरण्मयपुरुषादिवाक्येष्वध्यसनीयात्मकरूपभेदप्रयुक्तो विद्याभेदो नास्तीत्याशङ्क्येतरवदिति सूत्रांशं व्याचष्टे—यथेतरत्रेति । उद्गीथप्रकरणे 'देवासुरा ह वै यत्र [1]संयेतिरे'इत्यारभ्य मुख्यप्राणादयः परस्परभिन्नाः परस्परविलक्षणगुणयुक्ताश्चाध्यसनीयत्वेन वक्तुं प्रक्रांता इति युक्तस्तत्र रूपभेदाद्विद्याभेदः । इह तु सर्वांतरत्वं प्रकरणद्वयेऽपि समम् । 'अतोन्यदार्त्त'मित्युपसंहारोऽपि

---

१ संयत्ता इति—मू—पाठः ।

**वचनगतत्वान्न विद्याभेदः पुनरुक्तिस्तु शङ्कानिरासाय 'तत्त्वमसि' इतिवत् ॥**

**इत्यन्तराभूतग्रामाधिकरणम् ॥ २१ ॥**

**समानः । अशनायाद्यतीतत्वमपि निर्दोषत्वरूपत्वेन सकलविद्योपसंहरणीयं न गुणान्तरवद्भेदकम् । विद्याविधिश्चैकत्रैव कहोळप्रश्नप्रतिवचने श्रूयते । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासे'दिति । अतो यथा सदुपदेशे 'भगवांस्त्वेवमेतद्ब्रवीतु भूय एव मा भगवान्विज्ञापयत्वि'ति प्रश्नभेदेऽपि 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति प्रतिप्रश्नोत्तरमुपसंहारैक्यात्प्रतिप्रश्नं भूयश्शब्दश्रवणान्मध्ये विरोधिगुणाश्रवणाच्च । एकैवोपक्रान्तसद्विषया विद्या । एवमिहापि सर्वांतरात्मब्रह्मविषयैकैव विद्येति युक्तम् । न चैवं विद्यैक्यप्रमाणेषु सत्सु प्रष्टृभेदमात्रं विद्याभेदावहम् । '(१)शिलकश्शलाकावत्यः प्राचीनशाल औपमन्यवः' इत्यादिषु विद्यैक्येऽपि बहुलं प्रष्टृभेदोपलंभादिति भावः । ननूद्गीथविद्या वैश्वानरविद्यादिषु प्रष्टृभेदमात्रं न तु प्रश्नस्यैकरूप्यमस्ति । इह तूषस्तिप्रश्ने याज्ञवल्क्यस्योत्तरं श्रुतवतोऽपि कहोळस्य तथैव सर्वांतरे ब्रह्मणि प्रश्नः श्रूयते । अतो विद्यांतरपरिचिक्षिषयैवायं प्रश्न इति वक्तव्यमित्याशङ्क्याह—पुनरुक्तिरिति । यथा शङ्काविशेषनिराकरणाय सद्विद्यायां पुनः पुनः प्रश्नः यथा वात्रैवोषस्तिब्राह्मणे प्राणितृत्वादिना सर्वांतरत्वे प्रतिपादितेऽपि जीवव्यावृत्ततया स्फुटं सर्वान्तरत्वोपपादकं नोक्तमित्युषस्तस्यैव 'यदेव साक्षा'दित्यादिः कहोळप्रश्नः । एवं द्वितीयोषस्तिप्रश्नोत्तरेणापि 'न दृष्टेर्द्रष्टारं पश्ये'दित्यादिना जीवव्यावृत्ततया स्फुटतरं सर्वान्तरत्वोपपादकं नोक्तमित्यपरितुष्यतः कहोळस्य प्रश्नः । अशनायाद्यतीतत्वोपन्यासेन च तस्य परितोष इत्येवं विद्यैक्येऽपि पुनरुक्तिरुपपद्यते । अतः सर्वांतरत्वदार्ढ्यार्थमुभयमुभयत्रोपसंहर्तव्यमिति भावः ॥**

**इति सर्वान्तराधिकरणम् ॥ २१ ॥**

## नयमणिमालायाम्

### अथ सर्वान्तराधिकरणम् ॥ २१ ॥

**सू ॥ अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥**

यत्साक्षादसि जीवो यदेव साक्षादिति तु परः । प्रतिपाद्यः प्राणिभृताद्यशनायारहितितादिलिङ्गगणात् ॥ २५५ ॥

सर्वान्तरादिसाम्यात्साक्षाद्ब्रह्मैव रूप्यमुभयत्र । ········प्यैकैव ततो व्यतिहर···तद्गुणानां स्यात् ॥ २५६ ॥

**इति सर्वान्तराधिकरणम् ॥ २१ ॥**

## सूत्रार्थचन्द्रिकायाम्

### अथ सर्वान्तराधिकरणम् ॥ २१ ॥

**सू ॥ अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥ व्यतिहारो विशिंषति हीतरवत् ॥ ३६ ॥**

**भगवत्पादमते,** आद्यस्य सूत्रस्य 'अन्तराभूतग्रामवत्स्वात्मनः' इत्यन्तं योगविभागात्सूत्रद्वयात्मकमिदमधिकरणम् । 'व्यतिहार'इत्यादिकं सूत्रमधिकरणान्तरम् । आद्यस्याधिकरणस्य 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इति द्विराम्नायमानं बृहदारण्यकवाक्यं विषयः । तत्र किमनयोर्ब्राह्मणयोर्विद्याभेदः । उत विद्यैक्यमिति विशयः । विद्याभेद इति **पूर्वपक्षः । सिद्धान्तस्तु—सू ॥ अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥ आमननादिति** पदस्यानुषंगः । ब्राह्मणद्वयेऽपि स्वात्मनः सर्वान्तरत्वामननाद्विद्यैक्यं विज्ञेयम् । एकस्मिन्देहे द्वयोर्मुख्यतः सर्वान्तरत्वायोगात् । किंवत् । भू-

(१) 'उद्दालकश्शालावत्यः' इति खपाठः ॥

तग्रामवत्=यथा भूतसमूहात्मकस्थूलदेहे पृथिव्यपेक्षया जलमान्तरं जलापेक्षया तेज इत्यादिक्रमेणापेक्षिकं भूतानामान्तरत्वं न मुख्यं तद्वत्। अथवा, 'एको देवस्सर्वभूतेषु गूढ'इत्यादिश्रुत्यन्तरे सर्वेषु भूतग्रामेषु सर्वान्तर एक एवात्माऽऽम्नायते तद्वदनयोर्ब्राह्मणयोरित्यर्थः। एवंच वेद्यैक्याद्विद्यैक्यमिति सिद्धम्। इति।

पूर्वपक्षमनूद्य दूषयति—सू॥ **अन्यथा भेदानुपपत्तिरितिचेन्नोपदेशान्तरवत्** ॥ ३६ ॥ **अन्यथा**=विद्याभेदानङ्गीकारे। **भेदानुपपत्तिः**=आम्नानभेदस्याभ्यासस्यानुपपत्तिः प्रयोजनाभावादिति चेत्। **न**। उपदेशान्तरवदभ्यासोपपत्तिः। तथा हि—यथा छान्दोग्ये 'तत्त्वमसी'त्युपदेशे नवकृत्वोऽभ्यस्यमानेऽपि, न विद्या भिद्यते उपक्रमोपसंहारयोरविशेषात्तद्वत् ब्राह्मणद्वयेऽपि प्रश्नरूपोपक्रमस्य 'अतोऽन्यदार्त'मित्युपसंहारस्य चाविशेषान्न विद्याभेद इति सिद्धम्॥

इति भगवत्पादमते सर्वान्तराधिकरणम् ॥ २२ ॥

अथ व्यतिहाराधिकरणम् ॥ २३ ॥

सू॥ **व्यतिहारो विंशिषन्ति हीतरवत्** ॥ ३७ ॥ अस्य 'तद्योऽहं सोऽसौ योऽसौ सोऽह'मित्यैतरेयकवाक्यं **विषयः**। तत्र किं व्यतिहारेण मतिरेकरूपा विधीयते उत द्विरूपेति **संशयः**। एकरूपेति **पूर्वःपक्षः**। **सिद्धान्तस्तु**, व्यतिहारोऽत्रोपासनार्थमुपदिश्यते। **इतरवत्**=यथा इतरे सर्वात्मत्वादयो गुणा उपासनार्थमुपदिश्यन्ते तद्वत्। तथाहि विंशिषन्ति समाम्नातारः 'त्वमहमस्म्यहं च त्वमसि'इत्युभयोच्चारणेन। तच्च विशेषणं द्विरूपायां मतौ कर्तव्यायामर्थवद्भवति। अन्यथा हीदं विशेषणोभयाम्नानमनर्थकं स्यात्। अतो मतिर्द्विरूपैवेति सिद्धम्॥

इति भगवत्पादमते व्यतिहाराधिकरणम् ॥ २३ ॥

**श्रीकण्ठमते,** अस्य विषयवाक्यपूर्वपक्षादिकं पूर्वस्मादविशिष्टम्। 'अन्तरा भूतग्रामव'दिति सूत्रे योगविभागाभावात् व्यतिहारसूत्रेण सहास्य सर्वान्तराधिकरणस्य सूत्रद्वयात्मता। विद्याभेदोऽस्ति वा नास्ति वेति **संदेहे**, विद्याभेद इति **पूर्वपक्षे** प्राप्ते, 'य आत्मा सर्वान्तर'इत्युभयत्र प्रश्नैकरूप्यात् परमेश्वर एवोभयत्र प्रश्नविषयः। यतः प्रतिवचनगतं निरुपाधिकं गुणजातं तत्रैव समुपपद्यते। सद्विद्योपदेशवत्प्रश्नप्रतिवचनावृत्तिरेकविषया। प्रष्टृभेदो रूपभेदश्च न विद्याभेदावहः। अर्थैक्ये निश्चिते सति प्रष्ट्रोर्बुद्धिव्यतिहारः कर्तव्यः। इतरत्र सद्विद्यायामिव उभयप्रकरणगतानि वाक्यानि परमेश्वरं विंशिषन्ति हि। तस्मादेकस्यैव प्रश्नप्रतिवचनगतत्वान्न विद्याभेद इति **सिद्धान्तितः**। पुनरुक्तिस्तु शङ्कानिरासाय 'तत्त्वमसी'तिवत्॥

**रामानुजमते,** सर्वं श्रीकण्ठमतवदेव प्रायशः। किं तु 'सैव हि सत्यादय' इत्युत्तराधिकरणसूत्रमपीदमधिकरणशेषतया व्याख्यातमिति विशेषः। सद्विद्यायामपि 'सेयं देवतैक्षते'त्यादिषु सैव परा देवतैकानुवर्तते। 'ऐतदात्म्यमिदं सर्व'मित्यादिषु त एव सत्यादयः सर्वेषु प्रतिवचनेषूपसंह्रियन्त इत्यर्थः॥

**आनन्दतीर्थमते,** 'अन्तरा भूतग्रामवदितिचेत्तदुक्तम्' इति भगवत्पादानुसारेण योगविभागतः पृथक्पाठः। 'इयदामननात्'इत्यादिकं सूत्रत्रयात्मकमिदमधिकरणं। व्यतिहारसूत्रमधिकरणान्तरमिति विवेकः। तत्राद्ये इयदधिकरणे पूर्वोक्तमधिकारितारतम्यं प्राणावधिकं वा, ततोऽप्यधिकं वेति **संदेहः**। प्राणादीनां सोत्तमत्वदर्शनेन प्राणादधिकस्य श्रुतावनुक्तत्वेऽपि अनुमानतस्तत्साधनस्य शक्यत्वसंभवेन च प्राणादप्यधिकः कश्चिदधिकारी भवितुमर्हति। अतोऽधिकारिणां प्राणावसानत्वाभावात्प्राणात्मकस्य हिरण्यगर्भस्यैव सर्वगुणोपासनयोग्यत्वमित्युक्तमयुक्तमिति **पूर्वपक्षः**। **सिद्धान्तस्तु**, 'प्राणो वाव सर्वेभ्यो भूयान्नहि प्राणाद्भूयान्' इति कौषीतकिश्रुतावाम्नानात्। **इयत्** प्राणावसानमेवाधिकारिणां तारतम्यम्। इति। इदं सूत्रं स्पष्टार्थम्। सू॥ **अन्तराभूतग्रामवदिति चेत्तदुक्तम्** ॥ ३६ ॥ **भूतग्रामवत्**=यथा नामादिप्राणसमूहे एकस्मादेक उत्तमो दृष्टः तथा। **अन्तरा**=परमात्मानं श्रियं च विना प्राणादप्युत्तमोऽस्त्विति चेत्। **नेति** शेषः। यतः **तदुक्तम्**=तत्र प्राणादुत्तमाभावे 'न हि प्राणाद्भूयान्' इति प्रमाणमुक्तम् अत इत्यर्थः॥

सू॥ **अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशवत्** ॥ ३७ ॥ **अन्यथा**=प्राणादप्युत्तमाभावे। **भेदानुपपत्तिरिति चेन्न**=प्राणपरमात्मनोर्भेदानुपपत्तिरिति चेन्न। कथम्। **उपदेशवत्**=यथाश्रुतावुक्तं तथाङ्गीकर्तव्यम्। अनुक्तार्थस्यानुमानं तु प्रत्यक्षश्रुत्या बाधितमिति भावः॥

इति इयदधिकरणम् ॥ २१ ॥

अथ व्यतिहाराधिकरणम् ॥ २२ ॥

सू॥ **व्यतिहारो विंशिषन्ति हीतरवत्** ॥ ३८ ॥ प्राणादीश्वरस्योत्तमत्वोपदेशोऽस्ति वा न वेति **संदेहः**। छन्दोगश्रुतौ प्राणस्यैव सर्वोत्तमत्वोपदेशात् 'एष तु वा अतिवदती'त्यादि सत्यातिवादस्य वागादिषु सत्यान्तेष्विव सत्ये उत्तमत्वविषयप्रश्नप्रतिवचनयोरभावेन विष्णुपरत्वाभावात्। प्रत्युत प्राणात्मकहिरण्यगर्भविषयतया एव प्रतीतेश्च। प्राणात्मकहिरण्यगर्भस्यैव सर्वोत्तमत्वेनोपासनं कार्यमिति **पूर्वपक्षः**। सत्यादिवादे तथा प्रश्नप्रतिवचनयोरध्याहारेण यतः छन्दोगाः 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नि'त्यादिना प्रकृतात्प्राणातिवादिनस्सत्यातिवादिनो व्यावर्तयन्ति। ततः प्राणाद-

## अथ सत्याधिकरणम् ॥ २२ ॥

## सू ॥ सैव हि सत्यादयः ॥ ३७ ॥

यद्दृष्टान्तेन पूर्वाधिकरणनिर्णयः तत्रापि सद्विद्यायां संशयः भिन्नेयमभिन्ना वेति ॥

प्रश्नावृत्तिदर्शनात् प्रतिवचनभेददर्शनाच्च प्रत्यावृत्तिभिन्ना ॥

## अथ सत्याधिकरणम् ॥ २२ ॥

**सू० ॥ सैव हि सत्यादयः ॥ ३७ ॥** पूर्वाधिकरणसूत्रोदाहृतदृष्टांताक्षेपेण संगतिसूचनपूर्वकमेकरूपप्रश्नस्याभ्यासन्यायेन विद्याभेदकत्वाऽभेदकत्वाभ्यां संशयं दर्शयति— यद्दृष्टान्तेनेति पृष्टार्थस्योत्तरे निवृत्ते तथैव पुनः प्रश्नो न युक्तः । शङ्कान्तरनिराकरणार्थश्चेत्, प्रश्न एव शङ्कान्तरोत्कीर्तनेन भाव्यम् । अतएवोषस्तिब्राह्मणे 'यत्साक्षादपरोक्षा'दित्यादिना सर्वान्तरप्रश्नानन्तरम्, 'एष त आत्मा सर्वान्तर' इति याज्ञवल्क्यस्योत्तरे सति नानेन स्पष्टं सर्वांतरो दर्शितो भवतीति निधार्य श्रृङ्गग्राहिकया दर्शनीय इत्यभिप्रायेण 'कतमो याज्ञवल्क्य सर्वान्तरः' इति पुनः पृष्टे 'यः प्राणेन प्राणिति स त आत्मा सर्वांतरः' इत्यादौ च याज्ञवल्क्येनोपन्यस्तेन सहोवाचोषस्तिश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवतीति शङ्कोद्भावनपूर्वकमेव 'यदेव साक्षादपरोक्षाद्ब्रह्म तन्मे ब्रूही'त्यादिना प्रश्नावृत्तिः कृता । अत्र हि विशिष्य सर्वांतरो वक्तव्य इति द्वितीयप्रश्नानंतरं तद्वचनार्थं प्रवृत्तेन त्वया प्राणितृत्वलिङ्गेन सर्वांतरत्वप्रदर्शनं गामश्वं वा श्रृङ्गग्राहिकया प्रदर्शयिष्यामीति प्रतिज्ञाय सास्नादिमान्गौः केसरादिमानश्व इति वचनेन तुल्यं ज्ञातमिति शङ्कोद्भावनं कृतम् । न तयाऽत्रशङ्कोद्भावनं दृश्यते । तस्मादेकरूपप्रश्नभेदादविशेषपुनःश्रवणरूपाभ्यासन्यायेन प्रष्टव्यभेदोवसीयते। अतोऽत्र 'भूय एव मा भगवान्विज्ञापयत्वि'त्यस्य सद्विषय एव पुनर्विद्यान्तरमुपदिशेत्यर्थः । न चोक्तार्थग्रहणाशक्त्यापि लोके पुनः प्रश्नो दृश्यते तद्वदिह किं न स्यादिति वाच्यम् । तथा सत्युक्तार्थस्यैव पुनः कथनापत्तेः । इहतु प्रतिप्रश्नं गुणान्तरप्रतिपादनं दृश्यते । तस्मादिह विद्याभेदो युक्त इति पूर्वपक्षमाह— प्रश्नावृत्तीति । नात्र विद्याभेदः । सर्वेष्वपि प्रतिवचनेषु सत्यत्वात्मत्वादिगुणावृत्त्या विद्यैक्यप्रत्यभिज्ञानात् । प्रश्नावृत्तिस्तु तत्र तत्र प्रसक्तानां शङ्काविशेषाणामुपाकरणार्थेति प्रश्नेषु शङ्कोद्भावनाभावेऽपि तत्तच्छंकाविशेषोपाकरणार्थं दृष्टांतविशेषोपन्यासपूर्वकप्रतिवचनपर्यालोचनयैवावगम्यते । तथाहि—सुषुप्तौ जीवा यत्रापि यन्ति तत्सदिति नवखण्डमध्ये प्रथमखण्डेन बोधिते सति 'सुषुप्तौ सत्सम्पन्ना जीवाः किमिति सत्सम्पत्तिं न विदु'रिति शङ्काभिप्रायेण प्रश्न इत्येतत् 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ती'त्यादि द्वितीयखण्डे नानावृक्षाणां रसान्मधुमक्षिकाभिर्मधुत्वेन समाहृतात्प्रस्तुत्य 'यथा तत्र न वि-

---

प्यधिकत्वेन विष्णोरुपदेशस्सिद्ध एवेति सर्वोत्तमत्वेन विष्णोरेवोपासनं कार्यमिति सिद्धान्तः । सूत्रार्थस्तु, व्यतिहारः= प्राणप्रकरणादनन्तरं विष्णोः प्रकरणात्प्राक्प्रश्नप्रतिवचनयोरध्याहारः कार्यः । कुतः । हि=यस्मात् । इतरवत्=नामादितो वागादिकमिव प्राणवादिनस्सकाशात्सत्याख्यविष्णुवादिनः छन्दोगाः 'एष तु वे'ति तुशब्देन विशिंषन्ति व्यावर्तयन्ति तस्मादित्यर्थः ॥

इति सूत्रार्थचन्द्रिकायां सर्वान्तराधिकरणम् ॥ २१ ॥

इति प्राप्ते ब्रूमः । न भिन्नेयं सद्विद्या । 'सेयं देवता' इति प्रस्तुताया एव महादेवतायाः प्रश्नप्रतिवचनेष्वनुवृत्तेः । यतः 'तत्सत्यं स आत्मा तत्त्वमसि' इति पुनःपुनः सत्यादीनामावृत्तिर्गम्यते, अतो वस्त्वैक्यादभिन्नेयं विद्येति ॥

इति सत्याधिकरणम् ॥ २२ ॥

वेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमास्सर्वाः प्रजास्सति संपद्य न विदुस्सति संपत्स्यामह' इति प्रतिवचनभंग्यावसीयते । ननु युक्तं सुषुप्तौ सर्वेंद्रियोपरमात्सत्संपत्तेरावेदनम् उत्थितास्सतोऽहमागत इति किमिति न विदुः । स्वगृहे सुप्तोत्थिता हि स्वगृहाद्वयमागता इति जानन्तीत्यभिप्रायेण द्वितीयः प्रश्न इत्येतत् 'इमास्सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते' इत्यादि तदनंतरखण्डे समुद्रादाकृष्य जलधरमुक्तैर्जलैः संभूताः प्रवहन्तीर्नदीः प्रस्तुत्य 'ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीत्येवमेव खलु सोम्येमास्सर्वाः प्रजास्सत आगत्य न विदुस्सत आगच्छामह इतीति' प्रतिवचनभंग्याऽवसीयते । एवं तृतीयादिप्रश्नानामपि शङ्काभिप्रायः । तदनन्तरखण्डगतदृष्टान्तविशेषोपयुक्तप्रतिवचनभंग्यैवोन्नेयः । एवं प्रतिवचनभंग्योन्नेतुं शक्यश्शङ्काभिप्राय इति न प्रश्नवाक्येषु श्रुत्या निर्दिष्टः । तस्माद्युक्तं सदुपदेशे विद्यैक्यमिति सिद्धान्तयति—न भिन्नेयमिति । सूत्रे सैव सेयं देवतेति प्रत्युतासच्छब्दोक्ता परदेवतैव सर्वेषु प्रश्नप्रतिवचनेष्वनुवर्तते इति साध्याध्याहारः । सत्यादयो हीति । हि शब्दो भिन्नक्रमः । सत्यत्वात्मत्वाद्यनुवृत्तेरित्यर्थः । ततश्च रूपैक्यान्न विद्याभेदशंकावकाश इति भावः ॥

इति सत्याद्यधिकरणम् ॥ २२ ॥

---

नयमणिमालायाम्

अथ सत्याद्यधिकरणम् ॥ २२ ॥

सू० ॥ सैव हि सत्यादयः ॥ ३७ ॥

सद्विद्या भिन्नैव प्रश्नप्रतिवचनभेदेन । एकस्यामावृत्तिर्व्यर्था तत्सत्यमित्यादेः ॥ २५७ ॥

एकत्वमेव तस्यास्सत्यादिप्रत्यभिज्ञया युक्तम् । उपपादकभेदात्स्यादावृत्तिर्बोधदार्ढ्यहेतोश्च ॥ २५८ ॥

इति सत्याधिकरणम् ॥ २२ ॥

सूत्रार्थचन्द्रिकायाम्

अथ सत्याद्यधिकरणम् ॥ २२ ॥

सू ॥ सैव हि सत्यादयः ॥ ३७ ॥

**भगवत्पादमते,** अस्य 'महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' इति सत्यविद्यां विधाय तदनन्तरं 'तद्यत्तत्सत्यमसौ स आदित्यः'इत्यादि श्रूयमाणं बृहदारण्यकवाक्यं विषयः । तत्र सत्यविद्यातस्तदनन्तरविद्या भिद्यते न वेति **संदेहः** । भिद्यत इति **पूर्वपक्षः** । **सिद्धान्तस्तु,** इयमनन्तरविद्या **सैव**=सत्यविद्यैव न ततो भिद्यते । कुतः । हि शब्दो हेतौ । 'तद्यत्तत्सत्य'मिति प्रकृतस्यैवोपास्यस्य हिरण्यगर्भस्याकर्षणाद्धेतोः । नह्युपास्याभेदे विद्याभेदो युक्तः । अतो विद्यैक्यात्पूर्वापरवाक्यस्थास्सर्वे सत्यादयो गुणा उपसंहर्तव्या इति सिद्धम् । इति ॥

**श्रीकण्ठमते,** सत्यविद्यायां प्रश्नावृत्तिदर्शनात्प्रत्यावृत्ति विद्या भिन्ना वा अभिन्ना वेति **संशयः** । भिन्नेति **पूर्वपक्षः** । **सिद्धान्तस्तु,** न भिन्नेयं सद्विद्या । सेयं देवतेति प्रस्तुताया एव महादेवतायाः प्रश्नप्रतिवचनेष्वनुवृत्तेः । 'तत्सत्यं स आत्मा' इति पुनः पुनः सत्यादीनामावृत्तिर्गम्यते । अतो वस्त्वैक्यादभिन्नेयं विद्येति ॥

**रामानुजमते,** अस्य सूत्रस्य पूर्वाधिकरणेऽन्तर्भावात्तत्रैव तद्व्याख्यातम् ॥

**आनन्दतीर्थमते,** पूर्वत्र प्राणाद्विष्णुरेवाधिक इति यदुक्तं तद्युक्तं न वेति **संदेहः** । प्राणाधिकत्वेनोपदिष्टात्सत्यप-

## अथ कामाधिकरणम् ॥ २३ ॥

### सू ॥ कामादयस्तत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

छान्दोग्ये तैत्तिरीयके वाजिशाखायां कैवल्योपनिषदि च दहरविद्या श्रुता। सेयमभिन्ना भिन्ना वा। इति संशये पूर्वः पक्षः—'यदिदमस्मिन् पुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः' इत्यारभ्य दहराकाशशब्दोक्तस्य दहरपुण्डरीकवर्तिनोऽपहतपाप्मत्वादिगुणाष्टकं मुख्यमाम्नातम्। तैत्तिरीयके 'दहरं विपाप्मम्' इत्यारभ्य दहरपुण्डरीकवर्तिनः प्रणवप्रकृत्यात्मनादवाच्यत्व-महेश्वरशब्दवाच्यत्व, कृष्णपिङ्गलत्व-विरूपाक्षत्वादयो धर्माः प्रदर्शिताः। वाजिशाखायां 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इति वशित्वादयः। कैवल्योपनिषदि—'हृत्पुण्डरीकं विरजम्' इत्यारभ्य 'विभुं चिदानन्दमरूपमद्भुतम्। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्' इत्यन्तेन हृदयपुण्डरीकवर्तिनः परस्य त्रिलोचनत्व-नीलकण्ठत्व-चिदानन्दरूपत्वो-मासहायत्वादयो धर्माः। तत्र नीलकण्ठत्वादीनां शरीरधर्मत्वेन सत्यत्वादीनामात्मधर्मत्वेन विरोधादुपसंहारो न न्याय्यः। तस्माद्विद्या भिन्नेति ॥

---

## अथ कामाद्यधिकरणम् ॥ २३ ॥

सू० ॥ कामादयस्तत्र तत्र चायतनादिभ्यः ॥ ३८ ॥ प्राणितृत्वाशनायातीतत्वादीनामविरोधेन धर्मिभेदावहत्वाभावाद्विद्यैक्यं समर्थितम्। इह विग्रहधर्माणामतथात्वाद्विद्याभेद इत्युत्थानात्संगतिः। ननु विग्रहधर्माणामात्मधर्माणां च नास्ति परस्परं विरोधः। उभयेषामप्यात्मनि व्यवहिताव्यवहितसंबंधसत्त्वात्। अन्यथैकस्यामेव कैवल्यशाखायां विग्रहधर्माणामात्मधर्माणाञ्च समुच्चित्य श्रवणस्य का गतिः। विशिष्य च विरूपाक्षत्वनीलकण्ठत्वादीनामपहतपाप्मत्वादीनाञ्च विद्याभेदकत्वाभाव'स्सर्ववेदान्तप्रत्ययाधिकरणे' समर्थितः। अतोऽत्र पूर्वपक्षो न संभवतीत्याशङ्क्य तमुपपादयति—तत्र नीलकण्ठत्वादीनामिति। 'नीलकण्ठ'मित्यनेन कण्ठमात्रनैल्यं प्रतीयते 'कृष्णपिंगल'मित्यनेनार्धनैल्यं प्रतीयते। 'समं स्यादश्रुतत्वादि'तिन्यायात्। तथा 'त्रिलोचन'मित्यनेन लोचनानां त्रित्वसंख्यैवोच्यते, न तु वैरूप्यम्। कैवल्यशाखायां 'शिवं प्रशान्तममृतं ब्रह्मयोनि'मिति शिवशब्देन निरस्तनिखिलदोषसमस्तमंगलगुणाकरत्ववाचिना वैरूप्यस्यापि प्रतिक्षेपात्। 'विरूपाक्ष'मित्यनेन तु तद्वैरूप्यमुच्यते। एवं विग्रहधर्माणां तावत्परस्परं विरोधः। तथा आत्मधर्माणामपि क्वचित्सत्यकामत्वमुच्यते। 'क्वचित्प्रशान्त'मिति निष्कामत्वमुच्यते इत्यादि। एवं धर्मवैलक्षण्यात्प्रतिशाखं भिन्ना दहरविद्येत्युपसंहरति—तस्मादिति। 'तत्र तत्रे'ति

---

दोदिताद्विष्णोरपि विज्ञान-मति-श्रद्धा-निष्ठा-कृति-सुख-भूमा-हंकारा-त्मनामुपदिष्टत्वान्न युक्तमिति **पूर्वपक्षः**। सिद्धान्तस्तु, **सैवहि**=परदेवता विष्ण्वाख्या सत्यविज्ञानमत्यात्मिका। 'सत्यं भगवो जिज्ञासे' इति सत्याख्यस्य विष्णोर्गुणजिज्ञासायां तद्गुणत्वेन विज्ञानादीनामुक्तत्वात् अन्यथा सत्यजिज्ञासायां विज्ञानादिकथनस्यासांगत्याच्च। अतः प्राणादधिका बहवो न भवन्ति। किंतु श्रीतदीशावेवेत्यर्थः। अतः प्राणाद्विष्णोराधिक्यवर्णनं युक्तमेवेति ॥

इति सूत्रार्थचन्द्रिकायां सत्याद्यधिकरणम् ॥ २२ ॥

एवं प्राप्त उच्यते—तत्र तत्र हृदयपुण्डरीकायतनादिभ्यो विद्यैक्यमेव। अतः सत्यकामादयः सर्वत्रोपसंहार्याः। छान्दोग्यगता अपहतपाप्मत्वादयो वाजिशाखागताः वशित्वादयः तैत्तिरीयगताः प्रणववाच्यत्वादयः कैवल्यगताश्चिदानन्दरूपत्वादयश्च सर्वे एते गुणा दहर-विद्यायां ब्रह्मणोऽनुसन्धेयाः। कैवल्योपनिषद्गतमुमासहायत्वं त्रिलोचनत्वं अन्यत्र कृष्णपिङ्गलत्वं विरूपाक्षत्वं चैकार्थम्। आवृत्तिरादरार्था। सर्वत्र गुणानामावृत्तौ तथा द्रष्टव्यम्। अत्र गुणित्वेन ब्रह्मण एकस्यैवोपास्यत्वादपहतपाप्मत्वादियोगि सर्वेश्वरमोङ्कारवाच्यमुमासहायं त्रिलोचनं नीलकण्ठं चिदानन्दरूपमनन्तममृतमद्भुतं परं ब्रह्म दहरपुण्डरीकमध्येऽनुसन्धेयमिति परविद्यास्वियमेव प्रधानभूता। छान्दोग्ये कैवल्योपनिषदि चैतद्विद्यानिष्ठस्य। "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते"

---

वीप्सायां द्विर्भावः। चस्त्वर्थः पूर्वपक्षनिराकरणार्थः। हृदयेति। हृदयपुण्डरीकायतनत्वं तावत्सर्वास्वपि शाखासु तुल्यम्। विशोकत्वं छांदोग्यकैवल्यतैत्तरीयकेषु तुल्यं। मुक्तिफलश्रवणमपि तेषु तुल्यं। सेतुत्वं छांदोग्यवाजसनेयकयोस्तुल्यं। इदं सर्वमादिशब्देन गृह्यते। शरीरधर्माणां परस्परविरोधं परिहरति। कैवल्येति। उमासहायत्वं कृष्णपिंगलशब्देनोच्यते। त्रिलोचनत्वं विरूपाक्षशब्देनोच्यते। संख्यावैषम्यमेव तत्र वैरूप्यं विवक्षितम्। कण्ठमात्रे नैल्यं वामेतरभागे विवक्षितम्। 'प्रशान्त' मिति नित्यतृप्तत्वेन स्वयं भोगतृष्णाराहित्यमुच्यते। 'सत्यकाम' मिति तत्सृष्टानामस्मदादिभोग्यपदार्थानामवितथत्वमुच्यते। बहुगुणप्रत्यभिज्ञानुरोधेन विद्यैक्यसिद्धावेवमविरोधेन व्याख्यानमुचितमिति भावः। नन्वेवं शाखाभेदेन गुणावृत्तिः किमर्थं विद्यैक्यसिद्धये गुणप्रत्यभिज्ञानार्थमिति चेन्न। गुणान्तरप्रत्यभिज्ञया विद्यैक्ये सिद्धे हि त्रिलोचनविरूपाक्षादिशब्दानामविरोधेन व्याख्यानं क्रियते। न तु तदभेदप्रत्यभिज्ञानाद्विद्यैक्यसिद्धिरस्तीत्यत्राह—आवृत्तिरिति। सर्वत्र गुणानामावृत्ताविति। यथैकस्यां शाखायामंबिकापतय उमापतय इत्याद्यावृत्तिरादरार्था तथेहापीत्यर्थः। एवं विद्यैक्ये सिद्धे तत्फलं नानाशाखाम्नातगुणोपसंहारं दर्शयति। अत्र गुणित्वेनेति। 'अपहतपाप्मत्वादियोगीति' विशेषणं छांदोग्याम्नातानां सर्वेषां गुणानामुपलक्षणम्। 'सर्वेश्वर'मिति बृहदारण्यकाम्नातानाम्। 'ओंकारवाच्यमिति' तैत्तरीयकाम्नाताना 'मुमासहाय'मिति कैवल्यशाखाम्नातानामिति विवेकः। तत्रानंतरूपमित्यस्य व्याख्यानमनंतमिति। अनंतं अविनाशि नित्यं स्वरूपमस्येति श्रुत्यर्थः। एवं व्याख्यान एव दहरपुण्डरीकस्यांतरुपासनं भवतीति भावः। परविद्यास्विति। यद्यपि सर्वासामपि परब्रह्मविषयाणामहंग्रहोपासनानां चाविशिष्टं मुक्तिफलत्वं वक्ष्यति च सूत्रकारः 'विकल्पो विशिष्टफलत्वा'दिति। तथाप्याचार्यस्य दहरविद्याप्रियत्वादेवमुक्तिः। अथवा दहरविद्यासु उमासहायत्वादिविशिष्टपरब्रह्मपरमशिवविषयैव दहरविद्याप्रधानभूतेत्यर्थः। तेनेयं शंका व्यावर्त्यते। आत्मबोधोपनिषदि नारायणोपास्या दहरविद्या श्रूयते सा परमेश्वरोपास्यायाः कैवल्यतैत्तरीयकोपनिषदाम्नाताया दहरविद्याया भिन्नैव। उपास्यभेदात्। एवं द्विविधदहरविद्यासत्त्वे सति यद्यपि बृहदारण्यकाम्नाता गुणाश्शैवीं दहरविद्यां प्रतिपद्यन्ते। तत्र 'सर्वस्येशान' इति 'एष भूताधिपतिरि-

'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' इति साक्षात् तस्यैवोपास्यस्य परब्रह्मणः प्रकृतिमण्डलातीतस्य प्राप्तिर्हि फलमवगम्यते। अत एव नीलकण्ठत्वादिधर्मस्यापहतपाप्मत्वादिगुणानां च ब्रह्मणि नित्यत्वादन्योन्यसापेक्षत्वाच्चोपसंहारे न विरोधः, अप्रसक्तस्य प्रतिषेधायोगात्। त्रिलोचनत्वादिलक्षणशरीरविशिष्टे परब्रह्मणि प्रसक्तानां शरीरधर्माणां पापजरामरणक्षुत्तृडसत्यकामासत्यसंकल्पानां निषेधाय हि अपहतपाप्मत्वादयः प्रतिपादिताः। त्रिलोचनत्वादिलक्षणशरीरकमपि परं ब्रह्मापहतपाप्मकं जरारहितमशोकमविजिघत्समपिपासं सत्यकामं सत्यसंकल्पं चिदानन्दरूपं भवतीति न विरोधः॥

इति कामाद्यधिकरणम्॥ २३॥

---

त्येष सर्वेश्वर' इति च लोकवेदप्रसिद्धशिवरूढिभावानामीशानभूताधिपतिसर्वेश्वरनाम्नां श्रवणात्। तथापि छांदोग्याम्नातानामपहतपाप्मत्वादीनां कस्यां दहरविद्यायामन्वय इत्यत्र नास्ति विनिगमकमिति शंका भवति। तत्समाधानप्रकारस्त्वयम्[1]। शैवी दहरविद्या तावत्प्रधानभूता कैवल्यशाखायां मुक्तिफलश्रवणात्। तत्र हि 'तमसः परस्ता'दिति विशेषितम्। अतः छांदोग्येऽपि मुक्तिफलश्रवणात्तदाम्नाता गुणाश्शैवीं दहरविद्यां प्राप्नुवंतीति ॥। वैष्णवी तदुपसर्जनभूता। 'वैकुण्ठं भगवल्लोकं गमिष्यती'ति श्रवणेन तस्या उप्राप्तिद्वारा मुक्तिहेतुत्वात्। मुक्तिस्थानस्य वैकुण्ठस्य चोर्ध्वाधरभावः परापरभावश्च प्राग्व्यवस्थापितः। वैकुण्ठप्राप्तानां क्रममुक्तिं च भाष्यकारो वक्ष्यति। एवञ्च यद्यपि त्रिलोचनत्वविरूपाक्षत्वादीनामविरोधः स्पष्ट इति विरोधनिरासेन नैतदधिकरणं सप्रयोजनं भवेत्। तथाप्युक्तशंकानिरासेन प्रयोजनमिति भाष्यकारस्याशयः। विग्रहधर्माणामात्मधर्माणाञ्च परस्परविरोधेनाऽपि विद्याभेदप्रसक्तिर्नास्तीति सर्ववेदान्तप्रत्ययाधिकरणसिद्धमर्थं स्मारयति—नीलकण्ठत्वेत्यादिना। चिदानन्दरूपे शिवस्य दिव्यविग्रहे वस्तुस्वाभाव्यात्पाप्मजरादिप्रसक्तिर्नास्तीत्यर्थः॥

इति कामाद्यधिकरणम्॥ २३॥

---

## नयमणिमालायाम्।

### अथ कामाद्यधिकरणम्॥

सू०॥ कामादयस्तत्र तत्र चायतनादिभ्यः॥ ३८॥

भिन्नैव दहरविद्या युक्ता कैवल्यताण्डिशाखादिगता। एकगतत्वायोगान्नीलग्रीवत्वसत्यकामादीनाम्॥ २५९॥

हृत्कमलस्थित्यादेर्गुणस्य साम्यान्न भिन्नैषा। नीलग्रीवत्वादिवपुर्विशिष्टात्मपर्यन्ता॥ २६०॥

एवं सत्यप्यवार्यस्सति वपुषि विभोस्सत्यकामाद्ययोग स्तत्संबन्धस्य सर्वेष्वपि दुरितजरामृत्युकोशातिगत्वात्।

मैवं तेषु प्रसक्तेष्वपहतदुरितत्वादयस्साऽप्यधीता इत्यन्योन्यव्यपेक्षा नियमितमुपसंहारमंगी कुरुष्व॥ २६१॥

इति कामाद्यधिकरणम्॥ २३॥

## सूत्रार्थचन्द्रिकायाम्

### अथ कामाद्यधिकरणम्॥ २३॥

सू॥ कामादीतरत्र तत्र चायतनादिभ्यः॥ ३८॥

भगवत्पादमते, छान्दोग्ये 'दहरोऽस्मिन्नन्तर आकाश' इति श्रुतस्य दहराकाशस्य सत्यकामत्वादयो गुणा आम्नाताः।

---

(१) 'तद्व्यवच्छेदप्रकारस्त्वयम्' इति ख. पाठः।

## अथ अलोपाधिकरणम् ॥ २४ ॥

ननु प्रियशिरस्त्वादीनामिव नीलकण्ठत्वादीनामवयवानां ब्रह्मस्वरूपान्तर्भावे तस्योपचयापचयप्रसक्तिरित्यतो नीलकण्ठत्वादिकं लुप्यत इत्यत आह—

### सू ॥ आदरादलोपः ॥ ३९ ॥

पूर्वत्र नीलकण्ठत्वादिविशिष्टं रूपमुमाभिधानपरमशक्तिसाहित्यं सत्यसंकल्प-

---

## अथ अलोपाधिकरणम् ॥ २४ ॥

पूर्वाधिकरणेन प्रसंगसंगत्योत्तराधिकरणमवतारयति—नन्विति । सू० ॥ आदरादलोपः ॥ ३९ ॥ नीलकण्ठत्वादिविशिष्टो विशिष्टविग्रहस्सत्यसंकल्पत्वादिगुणगणश्च

बृहदारण्यके तु 'य एषोऽन्तर्हृदय आकाश'इत्यभिहितस्याकाशाश्रयस्य सर्ववशित्वादयो गुणाः ।· ते परस्परमुपसंहर्तव्या न वेति **संदेहः** । नोपसंहर्तव्या इति **पूर्वपक्षः** । **सिद्धान्तस्तु, कामादि**=सत्यकामत्वादिगुणजातम् । **इतरत्र**=बृहदारण्यके उपसंहर्तव्यम् । यच्च सर्ववशित्वादिकं तदपि **तत्र** च=छान्दोग्ये उपसंहर्तव्यम् । कुतः । **आयतनादिभ्यः**= उभयत्राविशिष्टेभ्यो हृदयायतनसेतुत्वव्यपदेशादिभ्यो हेतुभ्यः । एवं वेद्याभेदेऽपि सगुणनिर्गुणत्वेन विद्ययोर्भेदात्कथमुपसंहार उपपद्येतेति चेत् न उपसंहारस्य विद्यास्तुत्यर्थत्वेनोपासनार्थत्वाभावान्न काचिदनुपपत्तिरिति ॥ अत्र मते **रामानुजमते** च 'कामादीतरत्रे'ति पाठः । **श्रीकण्ठमते** 'कामाद्यस्तत्र तत्रे'ति सूत्रपाठे विशेषः ॥

**श्रीकण्ठमते**, तथा **रामानुजमते**, च यद्यपि **विषयवाक्यपूर्वपक्षसंदेहसिद्धान्तादिकमविशिष्टमेव** पूर्वंस्यादिति वक्तव्यम् । तथाप्यनयोर्मतयोः पूर्वपक्षसिद्धान्तोपपादनं तु स्वस्वसिद्धान्तप्रक्रियानुसारेण दहरप्रतिपादकबहुश्रुतिवचनोपन्यासपूर्वकं विवृतमिति विशेषः । **श्रीकण्ठमते** इदमधिकरणं शांकरमतवदेकसूत्रात्मकमेव । **रामानुजमते** तूत्तरसूत्रद्वयस्याप्यत्रान्तर्भावेन सूत्रत्रयात्मकमिदमधिकरणमित्यस्ति विशेषः पूर्वमताभ्याम् । अतस्तत्प्रक्रियानुसारेण उत्तरसूत्रयोरर्थोऽत्र वर्ण्यते—'मनसैवानुद्रष्टव्यं नेह नानास्ति किंचने'त्यादेः पूर्वप्रकृतत्वात् 'स एव नेति नेत्यात्मे'ति च वक्ष्यमाणत्वात्सर्ववशित्वादिविशेषाणां ब्रह्मस्वरूपत्वासंभवात् कथं सत्यकामत्वादेर्मोक्षसाधनोपासनरूपत्वमित्यत आह—**सू** ॥ **आदरादलोपः** ॥ ३९ ॥ **आदरात्**=वशित्वादेः प्रमाणान्तराविदितरूपस्य श्रुत्येकसमधिगम्यस्यादरेण प्रतिपादनात् । **अलोपः**=अप्रतिषेधस्तस्यापि ब्रह्मगुणत्वमवश्याश्रयणीयम् । अविशेषनिषेधास्तु सकलेतरप्राकृतविशेषविषयाः । सर्वस्य ब्रह्मकार्यतया नानात्वनिषेधो ब्रह्मात्मकत्वाभिप्रायः ॥

सगुणोपासनस्य पितृलोकादिसांसारिकफलत्वेन मुक्तिफलत्वाभावमाशंक्य परिहरति—**सू** ॥ **उपस्थितेऽतस्तद्वचनात्** ॥ ४० ॥ **उपस्थिते**=ब्रह्मोपसंपन्ने । **अतः**=ब्रह्मोपसंपत्तेरेव हेतोः । **तद्वचनात्**=पितृलोकादिप्राप्तिवचनात् न तत्सांसारिकं फलम् । अपि तु साक्षान्मुक्तस्यैव । 'अस्माच्छरीरात्समुत्थाय'—'स्वस्वराड्भवति'—इति च निवृत्ताविद्यस्य हि स्वेन रूपेणाभिनिष्पन्नस्यैवोच्यते । अतो ब्रह्मसंपत्तिहेतुकत्वं क्रीडादेरवगम्यते ॥

**इति श्रीकण्ठरामानुजमतयोः कामाद्यधिकरणम् ॥**

**आनन्दतीर्थमते** 'कामादितरत्र इति 'उपस्थितेस्तद्वचनात्' इति च सूत्रयोरस्ति पाठभेदः । अत्र उपासनाधिकारिणां प्राणावसानत्वमुक्तं युक्तं वा न वेति **संदेहः** । तत उत्तमायाः श्रियोऽपि साधुत्वे सति बद्धत्वेन तदधिकारित्वान्न युक्तमिति **पूर्वपक्षः** । **सिद्धान्तस्तु,** नित्यमुक्तैव श्रीस्सदा भगवत्समीपे मूलरूपेण स्थितैवान्यत्र भगवदिच्छानुसारिण्या स्वेच्छयैव रुक्मिण्याद्यवतारान्करोति । 'सर्वकामायतना सर्वकाला सर्वेच्छानुबद्धा बन्धिका सैषा प्रकृतिरविकृतिः' इत्यादिश्रुतेः । सा हि नामादिवन्न बद्धा नापि परमेश्वरवत्तन्मोक्त्री । किं तु सर्वेषां बन्धिका । अतः नामादि बद्धमोक्तृप्रस्तावे न पठिता । अतः युक्तमेव प्राणावसानत्वमुपासनाधिकारिणामिति । **सूत्रार्थस्तु,** लक्ष्मीस्तत्र भगवत्समीपे स्थिता सती **इतरत्र च**=भूम्यादावपि कामादीशेच्छयैवावतारान्करोति । कुतः । **आयतनादिभ्यः**=सर्वगतत्वप्रतिपादक 'सर्वायतने'त्यादिश्रुत्यादिभ्य इत्यर्थः । उत्तराधिकरणसूत्रद्वयेन सहेदमधिकरणं सूत्रत्रयात्मकं वेदितव्यम् ॥

**सू** ॥ **आदरादलोपः** ॥ ४१ ॥ **आदरात्**=भगवति निरुपाधिकभक्त्यतिशयात् **अलोपः**=श्रियो भगवदुपासनाभावो नेत्यर्थः ॥ **सू** ॥ **उपस्थितेस्तद्वचनात्** ॥ ४२ ॥ श्रियो नित्यमुक्तत्वं युज्यते । कुतः । **उपस्थितेः**=हरिसमीपे सदास्थितेः । श्रियो नित्यसमीपस्थत्वं च **तद्वचनात्**='द्वावेता'विति नित्यसंबन्धित्ववचनाद् ज्ञायत इत्यर्थः ॥

**इति सूत्रार्थचन्द्रिकायां कामाद्यधिकरणम् ॥ २३ ॥**

त्वादिगुणजातं च निरूपितम्। इह तेषां परब्रह्मणि लोपोऽस्ति कदाचित्, अथ वा कदाचिदपि न लोप इति संशयः। किं तावत् प्राप्तम्? उपासनार्थं परब्रह्मणि कल्पितत्वात् तेषां कदाचिल्लोप इति प्राप्ते ब्रूमः—परब्रह्मण उमासहितत्वादीनां सर्वत्र श्रुतिष्वभ्यासादादरादलोप एव। अत एवालुप्तशक्तिकमुच्यते परं ब्रह्म। कुत्रादराद्भ्यास इति चेत्—सर्वत्रैव। कृष्णपिङ्गलं विरूपाक्षं इति शक्तिसाहित्ये त्रिलोचनत्वे च सिद्धेऽपि पुनरादरार्थं हि 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनम्' इत्यभ्यस्तम्। सवितृमण्डलविद्यायां च 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये' इति ह्यादरार्थमुमापतित्वमभ्यस्तम्। अन्यत्र 'नीलग्रीवो विलोहितः....नीलग्रीवाय च शितिकण्ठाय च' इत्यादिषु नीलग्रीवत्वमीश्वरस्यादराद्भ्यस्तम्। सत्यसंकल्पत्वादीनामेकत्र सिद्धानामन्यत्र पुनर्वचनमादरार्थमेव। तस्मादुमापतित्वादीनामभ्यासादादरादलोप एव परब्रह्मण इति। धर्मब्रह्मणोः प्रमाणान्तरागम्ययोर्यादृशं स्वरूपमभिधत्ते भगवती श्रुतिस्तादृशमेवाभ्युपेयं श्रुतिप्रामाण्यावलम्बिनाम्। अन्यथा तद्विरुद्धतर्कावलम्बने जगदुपादानत्वादिकं न सिद्ध्येत्। अतः श्रुतिरेव च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति सत्यज्ञानाकारमपरिच्छिन्नं ब्रह्मे त्युक्त्वा,

> ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
> ऊर्ध्वरेतं विरूपाक्षम्.................. ॥

इत्यादिना तस्यैव त्रिलोचनत्वपरमशक्त्युमाशबलितत्वरूपं विशिष्टमभिधत्ते। पुनश्च तस्य 'स एको ब्रह्मण आनन्दः' इति निरतिशयानन्दवत्त्वमाह। तस्यैव च 'आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्' इत्यादिना चित्प्रकाशरूपत्वमात्मारामत्वं, बाह्यकरणनिरपेक्षान्तःकरणैकानुभूयमानपरमानन्दविलासत्वं, उपशान्तसकलोपद्रवकलङ्कत्व, मनादिमुक्तत्वं, च प्रकाशयति। अस्य हि विरूपाक्षत्वादिलक्षणशरीरसंबन्धेन जीववत् प्रसक्तान् दोषांश्च 'अपहतपाप्मा' इत्यादिना निराकरोति। 'यः सर्वज्ञः सर्ववित्' 'पराऽस्य शक्तिः' 'पशूनां पतये' इत्यादिभिरस्य सर्वज्ञत्वसर्वशक्तित्वस्वतन्त्रत्वादिकं च निरूप-

---

लुप्यते न वेति कल्पितत्वाकल्पितत्वाभ्यां विशये पूर्वपक्षः। आनन्दरूपश्शिवस्य विग्रह इति 'आकाशशरीरं ब्रह्म' 'आनन्दरूपममृतं यद्विभाती'त्यादि श्रुत्यनुसारादिष्यते। न चानन्दस्य वक्षःकंठहस्तांगुल्यादिरूपेण स्थौल्यकार्श्ये संभवतः। ततश्च तत्संभवे प्रियशिरस्त्वादिकमपि तात्विकं स्यात्। अतो विग्रहस्तावत्कल्पितः तत्सहपाठाद्गुणगणश्च कल्पित इति। सिद्धान्तस्तु, अभ्यस्तत्वेनादरातिशयविषयतया तयोस्तात्विकत्वमवसीयते। श्रुतिशरणैः खलु यथा श्रुत्येवाभ्युपगन्तव्यम्। श्रुतिप्रामाण्यादानन्दात्मनैव परमाकाशस्योपचयापचयवान्परिणामो युज्यते। प्रियशिरस्त्वादिकं तु तथा(प?) तात्पर्यग्राहकप्रमाणाभावादन्नमयादिषु कल्पितैः पक्षपुच्छादिभिस्सहपाठाच्च कल्पितमित्यभ्युपगम्यत इति। 'सत्यसंकल्पत्वादीनामेकत्र सिद्धानामन्यत्र पुनर्वचनमादरार्थमेवे'ति भाष्यस्यायमर्थः। एकस्या-

यति । एवं श्रुतिरेव सकलप्रमाणशेखरस्थानीया, सत्यज्ञानानन्दमपरिच्छिन्नस्वरूपं सर्वज्ञं नित्यतृप्तं स्वतन्त्रं अनादिप्रकाशं अनन्तालुप्तशक्तिकं आत्मारामं अन्तरनुभवैकविषयपरमानन्दं उपशान्तं अमृतं नीलकण्ठं विरूपाक्षं उमासहितं परं ब्रह्म सर्वात्मकं मुक्तिसाधकमिति सर्वत्र घोषयन्ती केन निवार्यते । ततः परब्रह्मण उक्तस्वरूपधर्माणामलोप एव ॥

## इति अलोपाधिकरणम् ॥ २४ ॥

---

मेवशाखायां दहरशाण्डिल्यादिविद्याभेदेन सत्यसंकल्पत्वादयोऽभ्यस्यन्ते । न चायमभ्यासस्तत्तद्विद्यासु सत्यसंकल्पत्वादिप्राप्त्यर्थः । क्वचिदाम्नातानामप्युपास्यप्राप्यफलरूपत्वेन 'इतरे त्वर्थसामान्या'दिति न्यायत एव सर्वासु विद्यासु प्राप्तेः । किंत्वादरार्थ एवेति । अतश्शाखाभेदे पुनर्वचनं विद्यैक्यसिद्धिहेतुगुणप्रत्यभिज्ञानार्थं स्यात्, विद्याभेदेऽपि प्रतिपत्तृभेदेन सार्थकं स्यादिति, नादरार्थं भवेदिति, शंका नावकाशं लभते ॥

## इत्यलोपाधिकरणम् ॥ २४ ॥

---

## नयमणिमालायाम् ॥

## अथाऽलोपाधिकरणम् ॥ २४ ॥

सू० ॥ आदरादलोपः ॥ ३९ ॥

कल्पितमुपासनार्थं नीलग्रीवत्वसांवताप्रमुखम् । लुप्यत एव ब्रह्मणि यथैव तत् ............॥ २६२ ॥
आनन्दविशेषाश्वेत्प्रियमोदाद्याः शिरःप्रभृतयः स्युः । ब्रह्मानन्दः क्वचिदपि पीनः क्वचिदपि कृशः प्रसज्येत ॥२६३॥
इत्यापद्येत दोषप्रसर इति शिरःपक्षपुच्छादिक्लृप्तिः ब्रह्मानन्देत्वयोक्तास्तु सहजवपुःस्वीकृतावप्यवार्यः ।
याते रुद्रेति मंत्रे खलु निरतिशयानन्दरूपत्वमस्याप्याम्नातं तत्पुराणागमवचनशतैस्सादरं चान्वमोदि ॥ २६४ ॥
मैवं तात्पर्यलिङ्गैः मुहुरभिलपने यामिके जागरूके नीलग्रीवं न शक्यं वपुरपलपितुं ब्रह्मणोर्ध्वाविकेशम् ।
ब्रह्मानन्दो विभुस्सन्नपि निरवयवोप्यंघ्रिजंघादिभेदैरंगप्रत्यंगभावं दधदनिशमपि ब्रह्म संकल्पतः स्यात् ॥ २६५ ॥
नैवं तात्पर्यलिङ्गं खगवपुषि ततो लौकिकानन्दजाताद्ब्रह्मानन्दस्य कृत्स्नादधिकतमतया ख्यातये रूपकं तत् ।
कीर्त्योघावोधिसत्वप्रमुखभि......जां वीचिफेनप्रपञ्चाः कीर्त्यंबोधेः स्तवे तु स्तुतिततिषु यथा वेंकटक्षोणिभर्तुः ॥२६६॥
इंद्रोमायाभिरुक्त्या परशिववपुषां शुद्धमायामयत्वं तस्योक्तं शंतमत्वं निरतिशयदशावन्धुगन्धादिमत्त्वम् ।
मन्यन्ते केचिदेषां मत इह न शिरःपक्षतुल्यत्वशङ्का किंतूक्तिस्सा सदेशप्रभृतिततनुपरेत्येव सत्संप्रदायः ॥ २६७ ॥

## इत्यलोपाधिकरणम् ॥ २४ ॥

## सूत्रार्थचन्द्रिकायाम्

## अथ अलोपाधिकरणम् ॥ २४ ॥ २५ ॥

सू ॥ आदरादलोपः ॥ ३९ ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

**भगवत्पादमते,** अस्य छान्दोग्ये वैश्वानरविद्यायां श्रूयमाणं 'स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहे'ति प्राणाग्निहोत्रप्रतिपादकं वाक्यं **विषयः** । तत्र किं भोजनलोपे प्राणाग्निहोत्रस्य लोपः उतालोप इति **संदेहः** । भोजनलोपेऽग्निहोत्रस्यालोपः । कुतः । "पूर्वोऽतिथिभ्योऽश्नीया'दिति जावालश्रुत्या पूर्वभोजनस्य प्राथम्यरूपधर्मलोपमसहमानया प्राणाग्निहोत्रे आदरकरणात् । न हि धर्मलोपमसहमाना श्रुतिः धर्मिणः प्राणाग्निहोत्रस्य लोपं सहते अतोऽलोप इति **पूर्वपक्षः** । **सिद्धान्तस्तु** । सू ॥ **उपस्थितेऽतस्तद्वचनात्** ॥ ४० ॥ भोजने चोपस्थिते अतः अस्मादेव भोजनद्रव्यात्प्राणाग्निहोत्रं कर्तव्यम् । अनुपस्थिते त्वग्निहोत्रस्य लोप एव । कुतः । तद्वचनात्="तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीय'मिति वचनात् । आदरवचनं तु भोजनप्रसक्तिदशायां द्रष्टव्यम् ॥

## अथ तद्वचनाधिकरणम् ॥ २५ ॥

### सू ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

इह पूर्वाधिकरणोक्तं ब्रह्मस्वरूपमेव मुक्तप्राप्यमुतान्यदिति संशयः ॥ किं तावत्प्राप्तं? 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इत्यादिषु ब्रह्म निर्विशेषमेव श्रूयते। 'ब्रह्म वेद ब्रह्मैव भवति' इति मुक्तस्य तत्स्वरूपापत्तिरेव मुक्तिः। अतो निर्विशेषमेव ब्रह्म मुक्तप्राप्यं नान्यदिति प्राप्ते, ब्रूमः—पूर्वोक्तं सविशेषमेव ब्रह्मस्वरूपं मुक्तप्राप्यं, दहरकमलान्तर्भावनीयतया प्रतिपादिते विरूपाक्षे परब्रह्मणि 'परं ज्योतिरुपसंपद्य' इति मुक्तेन प्राप्ते 'स्वेन रूपेणाभिनिष्पद्यते' इति स्वरूपाभिनिष्पत्तेरेव हेतोः, 'जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा ज्ञातिभिर्वा' इत्यादिना स्वच्छन्दतो ज्ञात्यादिप्राप्त्यभिधानात्, 'परमं साम्यमुपैति' इति श्रुत्या, 'मुक्तः शिवसमो भवेत्' इति स्मृत्या च, मुक्तस्य परब्रह्मसादृश्यप्राप्त्यभिधानाच्च। अतः साक्षान्मुक्तप्राप्यमेव पूर्वोक्तं नीलकण्ठत्वादिलक्षणं परब्रह्मस्वरूपं, न सांसारिकम्। तस्य 'अपहतपाप्मा' इत्यादिना सांसारिकधर्मनिषेधात्। सगुणैवातः परविद्या। 'निष्कलं निष्क्रियम्' इत्यादिषु हेयगुणनिषेधः क्रियते न कल्याणगुणनिषेधः। तथा हि—

---

## अथ तद्वचनाधिकरणम् ॥ २५ ॥

सू ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥ यदि शिवस्य रूपं गुणजातं च तात्त्विकं तदा मुक्तप्राप्यं ब्रह्म ततोऽन्यत्स्यादित्युत्थानात्संगतिः। मुक्तप्राप्यं ब्रह्म शिवादन्यदुत शिव एवेति मुक्तिर्निर्विशेषब्रह्मभावापत्तिस्सविशेषब्रह्मसादृश्यापत्तिर्वेत्यनवधारणात्संशये तत्र पूर्वः पक्षः। नीरूपं निर्विशेषं च परं ब्रह्मेति परश्शताः श्रुतयः प्रतिपादयन्ति। तद्भावापत्तिर्मुक्तिरिति च 'ब्रह्म वेद ब्रह्मैव भवती'ति सावधारणश्रुतिः प्रतिपादयति। अतो रूपवान्सगुणश्शिवो न परं ब्रह्म नापि तत्सादृश्यापत्तिः परममुक्तिरिति। सिद्धांतस्तु, उक्तरूपश्शिव एव परं ब्रह्म तत्सादृश्यापत्तिरेव च परममुक्तिः। दहरपुण्डरीकादिषु तदुपासनेन लब्धया तत्प्राप्त्यैव स्वरूपाभिनिष्पत्त्यादिप्रतिपादनात्। 'निरञ्जनः परमं साम्यमुपैती'ति श्रुत्या 'मुक्तश्शिवसमो भवेदि'ति स्मृत्यनुगृहीतया निरञ्जन इति शब्दोदितस्य संसारान्मुक्तस्यैव तत्साम्यापत्तिप्रतिपादनाच्च। परब्रह्मणः रूपगुणनिषेधश्रुतयः प्राकृतरूपहेयगुणनिषेधपराः। मुक्तप्राप्ये 'सह ब्रह्मणा विपश्चिते'ति सार्वज्ञ्यगुणश्रवणेन मुक्त-

---

**श्रीकण्ठमते,** इदं सूत्रद्वयं प्रत्येकमेकैकमधिकरणमिति वेद्यम्। तत्राद्येऽलोपाधिकरणे पूर्वत्र नीलकण्ठत्वादिविशिष्टं रूपमुमाभिधानपरशक्तिसाहित्यं सत्यसंकल्पत्वादिगुणजातं च निरूपितम्। इह तेषां परब्रह्मणि किं लोपोऽस्ति कदाचिदथवा कदाचिदपि न लोप इति **संशयः**। उपासनार्थं तेषां परब्रह्मणि कल्पितत्वात्कदाचिल्लोप इति **पूर्वपक्षः**। **सिद्धान्तस्तु,** परब्रह्मण उमासहितत्वादीनां सर्वत्र श्रुतिष्वभ्यासादादरादलोप एव। अतएवालुप्तशक्तिकमुच्यते परंब्रह्मेति। अतः परब्रह्मणः बहुषु श्रुतिषूक्तस्वरूपधर्माणामलोप एवेति ॥

**इति श्रीकण्ठमते अलोपाधिकरणम् ॥ २४ ॥**

'निष्कलं निष्क्रियम्' इत्यादिना 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्यादिना च निर्गुणत्वे सगुणत्वे च सामान्येन प्राप्ते 'अपहतपाप्मा' 'यः सर्वज्ञः सर्ववित्' इत्यादिभिर्विशेषश्रुतिभिर्निर्गुणश्रुतेर्हेयगुणराहित्यमर्थः, सगुणश्रुतेः कल्याणगुणसाहित्यं इति विज्ञायते। किंच वचनमेव सगुणं मोक्षफलं प्रकाशयति, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति। विपश्चिता सर्वज्ञेन ब्रह्मणा सर्वानपि कामान् मुक्तः सह प्राप्नोतीति। सहशब्दो ब्रह्मणाऽऽनन्दभोगस्य च यौगपद्याभिप्रायः। अतः सगुणमेव ब्रह्मस्वरूपं मुक्तप्राप्यं फलमिति ॥

इति तद्वचनाधिकरणम् ॥ २५ ॥

---

प्राप्यं परं ब्रह्म निर्गुणमिति कल्पनायोगात्। 'ब्रह्म वेद ब्रह्मैव भवती'त्येवकारश्च साम्यश्रुत्यनुसारादिवार्थः। 'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभिजयति' 'विनाशमेवापीतो भवति' 'नाहमत्र भोग्यं पश्यामी' त्यादिश्रुतिष्वेवकारस्य इवार्थत्वदर्शनादिति। सूत्रस्यायमर्थः। उपस्थिते उपासकेन ब्रह्मणि शिवे प्राप्ते सति अतः ब्रह्मप्राप्त्यधीनज्ञानविकासादिस्वरूपाविर्भावाद्धेतोः जक्षणक्रीडनरमणादिस्वाच्छन्द्यतत्सास्यापत्तिवचनात्स एव परं ब्रह्म तत्साम्यापत्तिरेव मुक्तिरिति ॥

इति तद्वचनाधिकरणम् ॥ २५ ॥

---

नयमणिमालायाम्

अथ तद्वचनाधिकरणम् ॥ २५ ॥

सू० ॥ उपस्थितेऽतद्वचनात् ॥ ४० ॥

उक्तस्वरूपमेतन्मुक्तप्राप्यं न गुणयुतं ब्रह्म। किं तु परं निर्गुणमाम्नातं यत्सर्ववेदेषु ॥ २६८ ॥

मुक्तानामेतदेव श्रुतिशिखरशतां शीर्षितं ब्रह्मगम्यं प्राप्ते ह्येतद्विहारं कथयति निजरूपाभिनिष्पत्तिलाभात्।
नैर्गुण्योक्तिस्तु हेयानपनयति गुणान्विग्रहादिप्रसक्तानस्मिन्नेवेंदुमौलावपवदननयछागनीत्यादिनीत्या ॥ २६९ ॥

इति तद्वचनाधिकरणम् ॥ २५ ॥

सूत्रार्थचन्द्रिकायाम्

अथ तद्वचनाधिकरणम् ॥ २५ ॥

सू ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥ इह पूर्वाधिकरणोक्तं ब्रह्मस्वरूपमेव मुक्तप्राप्यमुतान्यदिति **संशयः**। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जन'मित्यादिषु ब्रह्म निर्विशेषमेव श्रूयते। 'ब्रह्म वेद ब्रह्मैव भवति' इति मुक्तस्य तत्स्वरूपापत्तिरेव मुक्तिः। अतो निर्विशेषमेव ब्रह्म मुक्तप्राप्यं नान्यदिति **पूर्वः पक्षः**। **सिद्धान्तस्तु**, पूर्वोक्तं सविशेषमेव ब्रह्मस्वरूपं मुक्तप्राप्यम्। **उपस्थिते**=दहरकमलान्तर्भावनीयतया प्रतिपादिते विरूपाक्षे परब्रह्मणि 'परंज्योतिरुपसंपद्ये'ति मुक्तेन प्राप्ते। **अतः**='स्वेन रूपेणाभिनिष्पद्यते' इति स्वरूपाभिनिष्पत्तेरेव हेतोः 'जक्षन्क्रीडन्रममाण'इत्यादिना स्वच्छन्दतो ज्ञात्यादिप्राप्त्यभिधानात् 'मुक्तश्शिवसमो भवेत्' इति स्मृत्यनुगृहीतया 'परमं साम्यमुपैती'ति श्रुत्या मुक्तस्य परब्रह्मसादृश्यप्राप्त्यभिधानाच्च। सगुणश्रुतीनां कल्याणगुणसाहित्यपरतया निर्गुणश्रुतीनां हेयगुणराहित्यपरतया च मुक्तप्राप्यं ब्रह्मस्वरूपं सविशेषमिति सिद्धम् ॥ इति ॥

इति श्रीकण्ठमते तद्वचनाधिकरणम् ॥ २५ ॥

**रामानुजमते**, अनयोस्सूत्रयोः कामाद्यधिकरणशेषतया तत्रैव व्याख्याततया नात्र पुनर्विवरणावकाश इति बोध्यम् ॥

**आनन्दतीर्थमते**, अनयोस्सूत्रयोः पूर्वाधिकरणशेषतया तत्रैव तयोर्व्याख्यानान्नात्र पुनस्तद्विवरणावकाश इति बोध्यम् ॥

इति सूत्रार्थचन्द्रिकायामलोपाधिकरणम् ॥ २५ ॥

इतःपरं नोपलभ्यते। अतः अत्रैव समापिता। अन्यत्सपष्टमुपोद्धाते—

## अथ तन्निर्धारणानियमाधिकरणम् ॥ २६ ॥

### सू ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥

उद्गीथादिकर्माङ्गावबद्धा उपास्तयः कर्मसु नियता उतानियता इति संशयः। किं तावत् प्राप्नोति ? कर्मानुष्ठाने कर्माङ्गत्वात् नियमेनानुष्ठेयाः । कर्मप्रकरणमनारभ्याधीतत्वेऽपि वाक्यादेव क्रतुसंबन्धोपपत्तिः । यथा 'यस्य पर्णमयी जुहूर्भवति' इत्यनारभ्याधीतस्य पर्णमयत्वस्याव्यभिचरितक्रतुसंबन्धिजुहूद्वारा वाक्यतः क्रतुसंबन्धः, तथा 'य एवं विद्वानुद्गायति' 'य एवं विद्वान् साम गायति'

---

## अथ तन्निर्धारणाधिकरणम् ॥ २६ ॥

सू ॥ तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥ यथा शिवोपासनाफलमेव मुक्तिफलमेवं क्रतुफलमेवोद्गीथविद्यादिफलं नान्यदस्तीति शंकया संगतिः। नियता उतानियता वा इति अंगत्वानंगत्वाभ्यां संशयः। ननु कर्मांगत्वादिति हेतुरसिद्धः, कर्मप्रकरणानाम्नातानामुपासनानां तदंगत्वे प्रमाणाभावादित्याशंक्य प्रकरणाभावेप्यभिचरितक्रतुसंबंधिसद्भावात्पर्णतादीनामिव वाक्यप्रमाणं विनियोजकमस्तीत्याह—कर्मप्रकरणमिति। एवं क्रतुसंबंधेन नैराकांक्ष्ये सति रात्रिसत्रन्यायाप्रवृत्तेः कामावाप्त्यादिश्रवणमपापश्लोकादिश्रवणवदर्थवादमात्रमिति भावः। ननु 'तेनोभौ कुरुत' इति वाक्येन क्रत्वंगाश्रितोपासनानामनियम उच्यते तेनानंगत्वसिद्धौ फलापेक्षायां रात्रिसत्रन्यायेन 'आपयिता हवै कामानां भवति तदेव वीर्यवत्तरं भवती'त्याद्यर्थवादश्रुतकामावाप्तिक्रतुवीर्यवत्तरत्वादिकं फलत्वेन परिणमनीयमिति चेत् नैतद्वचनं न्यायविदोऽनुमन्यंते। नह्यनियममात्रेणांगत्वमपैति। अनियमोक्ते ग्रहणाग्रहणरीत्या विकल्पार्थत्वोपपत्तेः। 'नाना तु विद्या चाविद्या च यदेव तु विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति समनंतरवाक्येन तथैव स्पष्टीकरणाच्च। अत्र हि 'विद्यये'ति तृतीयाश्रुत्या विद्यायाः करोतिशब्दोक्तकर्मांगत्वमुच्यते। 'तदेव वीर्यवत्तरं भवती' त्यनेन विद्यानुष्ठानपक्षे क्रतुफलस्य भूयस्त्वमुच्यते। न तु क्रतुफलापृथक्फलमुच्यते। तरप्प्रत्ययस्य प्रकृत्युपात्तगुणांश एवातिशयप्रतिपादकत्वस्य 'ज्ञानवत्तरश्शरतर' इत्यादिव्यवहारेषु प्रसिद्धत्वात्। विधिनिषेधयोरेकांगत्वेन विधिपक्षे फलभूयस्त्वं 'कर्मभूयस्त्वात्फलभूयस्त्व'मिति न्यायत एव प्राप्तम्। जैमिनिनापि 'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्या'दिति सूत्रेण प्रदर्शितम्। तदेवात्र वीर्यवत्तरशब्देनानूद्यत इति युक्तम्। अपि च। 'तेनोभौ कुरुत' इति वाक्येनानियतांगत्वमपि पूर्वप्रस्तुताप्त्यादिगुणकोद्गीथविद्यामात्रस्योच्यते न तु तदनन्तरं वक्ष्यमाणानां मुख्यप्राणदृष्ट्यादिविशिष्टोद्गीथोपासनानाम्। 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यवः एतं महाव्रते छंदोगा' इत्यादि श्रुत्यंतरप्रतिपन्नब्रह्मदृष्ट्यादिविशिष्टक्रत्वंगांतरोपासनानां च । 'यश्चैवं वेद यश्च न वेदे'त्यत्रैवंशब्दस्य प्रकृताप्त्यादिगुणकवैशिष्ट्यपरत्वात्। अत एव पुरुषार्थाधिकरणे 'यदेव विद्यया करोती'ति श्रुतेरौपनिषदी सर्वाप्यात्मविद्या कर्माङ्गं न तु स्वातंत्र्येण मुक्तिसाधनमिति 'तच्छ्रुते'रिति सूत्रेण पूर्वपक्षमुद्भाव्य 'सार्वत्रिकी'ति सूत्रेण विद्ययेति तृतीयाश्रुतिस्सर्वविद्याविषया न भवति, किंत्वेवंशब्दयोगा 'द्यदेव विद्ययेति' प्रसिद्धवन्निर्देशाच्च प्रकृतोद्गीथविद्यामात्रवि-

**इत्यव्यभिचरितक्रतुसंबन्धिसामोद्गीथादिद्वारा तदुपासनानां क्रतुसंबन्धः। अतः कर्मसु नियता उद्गीथाद्युपास्तय इति॥**

**एवं प्राप्ते ब्रूमः—गोदोहनादिवदनियता उपास्तयः। यथा—'चमसेनापः प्रण-**

यति सिद्धांतयिष्यते। यदि तत्र विद्ययेति श्रुतिः प्रकरणमुल्लंघ्य क्रत्वंगभूतमुपासनान्तरमपि विषयीकुर्यात्, तदा सर्वामप्यौपनिषदमात्मविद्यामाक्रामन्ती केन निवारयितुं शक्या। अतस्तत्र यदेव विद्ययेति वाक्यस्य प्रकृतोद्गीथविद्यामात्रविषयत्वस्यैव सूत्रार्थत्वात्तत एव कैमुतिकन्यायात् 'यश्चैवं वेदे'ति पूर्ववाक्यस्यापि तन्मात्रविषयत्वं सिद्ध्यतीत्याप्त्यादिगुणकामविशिष्टविषयकैवोद्गीथविद्या क्रतुष्वनियता। अनियतत्वेऽपि साप्यंगमेवान्यास्त्वंगावबद्धोपासनाः क्रतुषु नियतांगानीत्येतत्सर्वमभिप्रेत्योपसंहरति—अतः कर्मस्विति। एवं प्राप्ते सिद्धान्तः। अंगावबद्धोपासनानां क्रतुषु न नियमः। तेषां तदंगत्वाभावात्। तदभावश्च विनियोजकप्रमाणाभावात्। न च वाक्यं विनियोजकम्। 'उद्गीथमुपासीते'त्यादिषु क्रतूपासनासमभिव्याहाराश्रवणात्। न चाव्यभिचरितक्रतुसंबंधेनोपस्थिते क्रतौ पर्णतान्यायेन तदन्वयप्रतिपादकशब्दः कल्पनीयः। उक्तं यत्पर्णताया जुहूसंबन्धेऽप्यव्यापाररूपतया फलनिष्पादकत्वं न स्यादिति। तत्सिद्ध्यै क्रतूपरागेण व्यापाररूपतां सम्पादयितुं जुहूलिङ्गेन क्रतुमुपस्थाप्य तत्संबंधबोधकशब्दः कल्प्यते जुहूशब्दस्यैव वा जुहूसम्बंधिनि क्रतौ लक्षणा कल्प्यत इति। इहोपासनायाः स्वयं व्यापाररूपायाः स्वतएव फलपर्यवसाने संभवति किमुद्गीथाद्युपस्थापितक्रतुसंबंधबोधकशब्दकल्पनादिव्यसनेन। यदिचाप्यभिचरितक्रतुसंबन्धसद्भावमात्रेण तदुपस्थापितक्रतुसंबन्धबोधकशब्दकल्पनादिनियमः। तदानीमाधानस्यापि आहवनीयाद्युपस्थापितक्रतुसंन्बधबोधकशब्दकल्पनादिना तस्यापि क्रत्वंगत्वमंगीक्रियेत। न चाधानस्याग्निभिः फलत्त्वमस्ति न तूपासनानां केनचित्फलवत्त्वम्। अतस्तेषां क्रतुफलेन फलवत्त्वसिद्ध्यर्थं क्रतुसंबंधबोधकवाक्यकल्पनापेक्षास्तीति वाच्यम्। उपासनावाक्यशेषस्यैव फलसमर्पकतया विपरिणामसंभवे फलवत्कर्मांतरान्वयबोधकवाक्यकल्पनाद्यनपेक्षणात्। तस्माद्वाक्यशेषश्रुताय तस्मै फलायोद्गीथाद्याश्रयत्वविशिष्टोपासनाविधिरित्येव युक्तम्। एवमुद्गीथादिश्रवणस्योपासनार्थतायामेव दृष्टार्थता लभ्यते। निरालंबनध्यानासंभवेनोद्गीथादेरालंबनस्योपासनेनापेक्षितत्वात्। उपासनाश्रवणस्योद्गीथाद्यर्थत्वे त्वदृष्टार्थता स्यात्। उपासनेनोद्गीथादिषूत्पत्तिप्राप्तविकृतिनामसंभवेनादृष्टसंस्कारस्यैव वक्तव्यत्वात्। दृष्टादृष्टप्रयोजनपर्यवसाय्यन्वयद्वयसंभवे च दृष्टप्रयोजनपर्यवसाय्येवान्वयो ग्राह्यः। अत एव खलेवाली यूपो भवतीत्यस्य यः खादिरादिः प्रकृतिप्राप्तो यूपस्तस्य खलेवाल्याकृतिविधानपरतायामदृष्टार्थता स्यादिति विधेर्दृष्टार्थत्वलिप्सया खलेवाल्या यूपकार्ये विधिराश्रितः। तस्माद्गोदोहनविधिवदाश्रित्यविधानरूपा अङ्गावबद्धोपासनाविधयः। न तु पर्णतादिविधिवत्क्रत्वंगत्वविधिरूपाः। तमिमं न्यायं 'तन्निर्धारणानियम' इति सूत्रांशेन विवक्षितं हृदि निधायाह—

**गोदोहनादिवदनियता इति।** एवं च 'तेनोभौ कुरुत' इति वाक्यं गोदोहनन्यायप्राप्तानियमानुवादकं न तु 'षोडशिनं गृह्णाती'ति विधितषोडशिग्रहणे नियमतः प्राप्ते तद-

१ 'क्रत्वंगाश्रित' इति, ख. पाठः।

येत् गोदोहनेन पशुकामस्य' इत्यपां प्रणयनमाश्रित्य विधीयमानं गोदोहनमक्रत्वर्थत्वादैच्छिकमेव, न त्वप्प्रणयनादिवन्नियतम् । तथा कर्माण्याश्रित्य विधीयमाना उपास्तयः क्रत्वर्था न भवन्ति, 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्युद्गीथाद्युपासनरहितस्यापि क्रत्वनुष्ठानदर्शनात्। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति वर्तमाननिर्देशोऽपि क्रतुवीर्यवत्तरत्वसाधनतयोपासनाविधिः कल्प्यते। वीर्यवत्तरत्वं नाम प्रबलकर्मान्तराप्रतिबन्धेनाविलम्बितफलत्वमेव। तथा कामवृष्ट्यादिपृथक्फलश्रवणाच्च न नियता उपास्तयः॥

इति तन्निर्धारणानियमाधिकरणम् ॥ २६ ॥

ग्रहणवाक्यमिव 'उद्गीथमुपासीते'त्यादिविधिनोपासने नियमतः प्राप्ते सत्यनियमविधायकमिति न्यायसाम्यात्सर्वेषामप्यङ्गावबद्धोपासनानामनियमस्योपलक्षणं तत् न तु प्रकृतोद्गीथविद्यामात्रस्यानियमविषयमित्येवं सर्वेषामप्यङ्गावबद्धोपासनानामनियमानुवादलिङ्गादप्येवमवसीयते इति 'तद्दृष्टे'रिति सूत्रांशेन विवक्षितमर्थमाह—तेनोभाविति । एवं सति 'यदेव विद्यये'त्यादिकं विद्यानुष्ठानपक्षे न्यायप्राप्तस्य फलभूयस्त्वस्यानुवादकं न भवति । किंतु 'तेनोभौ कुरुत' इत्यत्रानियतानुष्ठानत्वेनानूदितानामंगावबद्धोपासनानां क्रतुवीर्यातिशयाधानरूपफलविधिपरमित्यमुमर्थं फलमिति सूत्रांशेन विवक्षितमाह—यदेवेति । पृथक्फलत्वोपपादनार्थम'प्रतिबंधोही'ति सूत्रांशेन विवक्षितं वीर्यवत्तरशब्दार्थं दर्शयति । वीर्यवत्तरेति । वीर्यं हि लोके कार्यानुकूलं बलमिति प्रसिद्धं । न तु कार्यमेवेति । बलवत्तरत्वञ्च कर्मणः स्वफलजननप्रतिबन्धकापेक्षया वक्तव्यम् । अन्यस्य प्रकृतानुपयोगात् । अतः स्वफलदानोन्मुखेन विरोधिकर्मांतरेणाप्रतिबन्ध एव वीर्यवत्तरत्वमित्यौचित्यादवसीयत इति भावः । एवं च 'यदेव विद्यये'ति तृतीयाश्रुतिरंगावबद्धोपासनानां न मुख्यकर्मशेषत्वप्रतिपादनपरा किंतु कर्मभिर्विलंबेन फले जननीये तेषामुपकारकत्वमस्तीत्युपचरितशेषत्वपरा । 'असार्वत्रिकी'ति पुरुषार्थाधिकरणसूत्रे तु पूर्वपक्ष्युक्तं 'विद्यये'ति तृतीयाश्रुतेर्मुख्यशेषपरत्वमभ्युपेत्य । तथापि प्रकृतोद्गीथविद्याया एव कर्मशेषत्वमायाति नात्मविद्याया इत्युक्तम् । इहापि यदि तथाभ्युपेत्य सिद्धान्तयितव्यं तदा 'तेनोभौ कुरुत' इत्यादेः पूर्वपक्षोक्तरीत्याऽर्थोग्राह्यः इत्याप्त्यादिगुणकप्रकृतोद्गीथविद्याया एवानियतमङ्गत्वमायाति । न सर्वेषामङ्गावबद्धोपासनानामिति तन्निर्द्धारणानियम इति सिद्धान्तस्य न कोऽपि विरोधः । कामवृष्ट्यादीति । 'आपयिता हवै कामानां भवति वर्षति हास्मै वर्षयति ह कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्चे'त्यादिफलांतरश्रवणाच्चेत्यर्थः आर्थवादिकत्वाविशेषाद्वीर्यवत्तरत्ववदसाधारणफलान्यपि ग्राह्याणीति भावः ॥

इति तन्निर्धारणाधिकरणम् ॥ २६ ॥

## नयमणिमालायाम्

### अथ तन्निर्धारणाधिकरणम् ॥ २६ ॥

सू० ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥

उद्गीथाद्यवबद्धा उपासना पर्णतादिवन्नियताः । तासु फलश्रवणस्याप्यंगत्वादर्थवादत्वाप्राप्तेः ॥ २७० ॥

तेनोभौ कुरुत इति श्रुत्यैव निवारितो नियमः । गोदोहनादिवत्स्यात्तस्मात्तासां पृथक्फलता ॥ २७१ ॥

इति तन्निर्धारणाधिकरणम् ॥ २६ ॥

## अथ प्रदानाधिकरणम् ॥ २७ ॥

### सू ॥ प्रदानवदेव तदुक्तम् ॥ ४२ ॥

एकस्यैव शिवस्य परब्रह्मणः परविद्यासु सर्वासु तत्तद्गुणविशिष्टतया पृथक्चिन्तनीयत्वमुक्तम् । तदिह संभवति न वेति संशयः । किं तावत् प्राप्तम्? गुणभेदेऽपि गुणिनो ब्रह्मण एकत्वादुपासनं न भिद्यते। यथैकस्य राज्ञस्तत्तद्भूषणादिविशेषणभेदेन युक्तस्यापि कार्यदर्शनव्यायामभोजनासनमृगयासमरादिव्यापारेषु सिंहासनादिस्थानभेदेऽपि भेदो न दृश्यते । तथा दहरादिस्थानभेदेऽपि तत्तद्गुणभेदविशिष्टस्यापि ब्रह्मण एकत्वात् तदनुसन्धानमेकमेवेत्येवं प्राप्ते ब्रूमः—एकस्यैव परब्रह्मणः शिवस्य स्वरूपाभेदेऽपि तत्तद्गुणविशिष्टस्वरूपतया गुणविशेषणभेदेन भेदाद्विशिष्टगुण्यावृत्त्या पृथक्कृतदुपासनप्रयोगः, इन्द्रप्रदानवत् । यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इति गुणभेदात् पृथक्पुरोडाशप्रदानं 'नाना देवतापृथक्त्वात्' इति संकर्षे तथोक्तत्वात्, तथैकस्यापि परब्रह्मणो गुणभेदादुपासनपृथक्त्वमिति । यदुक्तमेकस्य राज्ञ इति, तत्रापि राजस्वरूपाभेदेऽपि स्थानगुणादिभेदादुपासनप्रकारो भिन्न एव सेवकानामिति ॥

इति प्रदानाधिकरणम् ॥ २७ ॥

---

## अथ प्रदानाधिकरणम् ॥ २७ ॥

सू ॥ प्रदानवदेव तदुक्तम् ॥ ४२ ॥ कर्मणां तदङ्गाश्रितोपासनानां च फलभेदनिरूपणप्रसंगाद्विद्याभेदनिरूपणमिति संगतिः । धर्मैक्यात्स्थानगुणभेदाच्च संशयः । ननु स्थानगुणभेदाद्धर्मिणोऽपि भेदः स्यादित्याशंक्य तद्भेदेऽपि धर्म्यभेदं दृष्टान्तेनोपपादयति—यथैकस्येति । सत्यं स्थानगुणभेदेन वस्तुतो धर्मी न भिद्यत इति । तथापि तद्भेदे सत्यौपाधिको भेदोऽस्ति। तावन्मात्रमपि विद्याभेदे प्रयोजकं। यथेंद्रस्य राजादिगुणभेदोपाधिको भेदो हविःप्रदानाख्ययागभेद इति । सिद्धांतयति—एकस्यैवेति । उपासनाप्रकारो भिन्न इति । राज्ञो यानासनव्यायामादिषु छत्रचामरव्यजनादिप्रधानस्सेवकानां सेवाप्रकारो भिन्न एवेत्यर्थः ॥

इति प्रदानाधिकरणम् ॥ २७ ॥

---

नयमणिमालायाम् ।

## अथ प्रदानाधिकरणम् ॥ २७ ॥

सू० ॥ प्रदानवदेव तदुक्तम् ॥ ४२ ॥

विद्या भिद्येत नानाश्रुतिविहितगुणस्थानभेदैर्न शंभोः पत्युस्सेवैव तत्तत्समयसमुचिता नैव पीठादिभेदैः ।
दृष्टं राजाधिराजादिमगुणभिदथेंद्रस्य भिन्नं प्रदानं दृष्टं वैतानवह्नेरपि हवनमुखं स्थानभेदेन भिन्नम् ॥ २७२ ॥

इति प्रदानाधिकरणम् ॥ २७ ॥

## अथ लिंगभूयस्त्वाधिकरणम् ॥ २८ ॥

## सू ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

पूर्वं सर्वासूपविद्यासु ब्रह्मोपास्यमिति स्थितम् । तस्योपास्यस्य ब्रह्मणो विशिष्य निर्धारणार्थमिदमधिकरणम् । तैत्तिरीये—

'सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु नमो अस्तु ।
पुरुषो वै रुद्रः सन्महो वै रुद्रः सन्महो नमो नमः ॥
विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥
कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥
नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः' ॥

इति । अत्र सर्वात्मत्वादिभिरुमापतित्वेन च श्रूयमाणं परं ब्रह्म प्रकृते सवितृमण्डलविद्यामात्र उपास्यमुत सर्वासु परविद्यास्विति संशयः । किं तावत् प्राप्तम् ? प्रकरणबाधायोगात् प्रकृतसवितृमण्डलविद्यायामेवोपास्यम् ॥

---

## सू ॥ अथ लिंगभूयस्त्वाधिकरणम् ॥ २८ ॥

सू० ॥ लिंगभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥ संगतिमाह—पूर्वमिति । पूर्वाधिकरणे सर्वासु साक्षान्मुक्तिफलासु विद्यासु शिवरूपं परं ब्रह्म एकमेवोपास्यमिति सिद्धं कृत्वोपास्यैक्येऽपि न विद्यैक्यमिति समर्थितं । इदानीं तदेवोपास्यैक्यं समर्थ्यत इति संगतिः । प्रकृते सवितृमण्डले विद्यामात्रे इति । 'सर्वो वै रुद्र' इत्यनुवाके रुद्रस्य सर्वासु परविद्यासूपास्यत्वे विनियोजकस्य वाक्यस्य सद्भावे वाक्येन प्रकरणस्य बाधात्सर्वासु परविद्यासु रुद्राख्यं परं ब्रह्मोपास्यं भवेत् । तदसद्भावे प्रकरणेन सवितृमण्डलविद्यायामेवैतदुपास्यं भवेत् । विद्यान्तरेषु तूपास्यं तत्तत्प्रकरणालोचनया निर्धारणीयं स्यादिति तथा भूतवाक्यसदसद्भावाभ्यामयं संशयः । प्रकरणबाधायोगादिति । अयमाशयः । रुद्रनमस्कारार्था इमे मन्त्राः । न तु तत्तद्विद्योपास्यलिंगवद्भिरशब्दैस्तत्तद्विद्योपास्यं प्रत्यभिज्ञाप्य तस्य रुद्रत्वप्रतिपादनार्थाः । तथा सति नमस्कारानन्वयप्रसंगात् । यद्यपि 'सर्वो वैरुद्रस्तस्मैरुद्रायनमो अस्त्वि' त्यत्र वाक्यभेदप्रतीतेरेकं वाक्यं शाण्डिल्यविद्योपास्यस्य रुद्रत्वनिर्द्धारणार्थमन्यद्वाक्यं नमस्कारार्थमिति योजयितुं शक्यं । तथाऽपि 'पुरुषो वै रुद्र' इत्यादौ वाक्यभेदाप्रतीतेस्तथा योजना न संभवति । अतस्तस्य पुरुषसूक्तसद्विद्याव्याहृतिविद्योपास्यत्वनिर्धारणार्थत्वासंभवात्सकलपरविद्योपास्यनिर्द्धारणार्थत्वमस्यानुवाकस्य न लभ्यत इति 'सर्वो वै रुद्र' इत्यस्यापि विद्यांतरोपास्यनिर्द्धारणार्थत्वं वक्तुं न शक्यते । कृत्स्नस्यानुवाकस्य सकलपरविद्योपास्यनिर्द्धारणार्थत्वोपपादनसंभवे ह्यस्य वाक्यस्याऽपि यत्किञ्चिद्विद्योपास्यनिर्द्धारणार्थत्वं भवेत् । तदसंभवे तु 'सर्वो वै रुद्र'' इति नमस्कार्यस्य

इति प्राप्ते ब्रूमः। इदमुमासहितं परं ब्रह्म सर्वास्वपि परविद्यासूपास्यम्। तत्तल्लिङ्गसंबन्धिवाक्यभूयस्त्वात्। तथा हि 'सर्वो वै रुद्र' इत्यादिवाक्ये 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'ति शाण्डिल्यविद्योपास्यलिङ्गम्। 'पुरुषो वै रुद्र' इति वाक्ये पुरुषसूक्तोपकोसलविद्याद्युपास्यलिङ्गम्। 'सत्' इत्यत्र 'सदेव सोम्येदमग्र आसीत्' इति सद्विद्योपास्यलिङ्गम्। 'महः' इत्यत्र 'मह इति तद्ब्रह्म स आत्मा अङ्गान्यन्या देवता' इति व्याहृतिविद्योपास्यलिङ्गम्। 'शन्तमं हृदे' इति हृदयद्योतनात् दहरविद्योपास्यलिङ्गम्। 'हिरण्यबाहवे' इति हिरण्यरूपत्वं सवितृमण्डलोपास्यलिङ्गम्। 'उमापतये' इति सर्वपरविद्योपास्यलिङ्गम्। संसाररुग्द्रावकत्वात् रुद्र इत्युच्यते परमात्मा शिवः। एवमुमापतेः परब्रह्मणः शिवस्य सर्वपरविद्योपास्यत्वं वाक्यैरवसीयते। वाक्यं हि प्रकरणाद्-

---

सर्वात्मकत्वेन स्तुतिमात्रं कृतं स्यात्। यदि च 'पुरुषो वै रुद्र' इत्यादेरन्यार्थत्वेपि विद्यान्तरोपास्यसमर्पकपदसामानाधिकरण्यमात्रेण तत्तद्विद्योपास्यविशेषनिर्द्धारणार्थत्वं कल्प्येत। यदिवा तत्रान्यार्थत्वप्रतीतिरहितस्य कस्यचिद्वाक्यस्य किंचिद्विद्योपास्यनिर्द्धारणार्थत्वं कल्प्येत। तदा नारायणानुवाकस्यापि सहस्रशीर्षाक्षरशिवशंभ्वादिशब्दप्रत्यभिज्ञापितसकलपरविद्योपास्यनिर्द्धारणार्थत्वं भवेत्। 'तद्विश्वमुपजीवती'त्याख्यातसत्वेन द्वितीयान्तानां सामानाधिकरण्यस्यान्यार्थत्वेऽपि 'नारायणपरं ब्रह्मे'त्यादिप्रथमान्तनिर्देशेष्वाख्याताभावेन तद्वैलक्षण्यात्। तन्मात्रस्य कतिपयपरविद्योपास्यनिर्द्धारणार्थत्वं भवेत्। तथा च सर्वपरविद्योपास्यश्शिव इत्यभिमतं तन्न सिद्ध्येदिति। तत्तल्लिङ्गसंबन्धीति सूत्रे 'लिङ्गभूयस्त्वादि'ति पदं तत्तलिङ्गोपास्यलिङ्गसमर्पकपदघटितवाक्यभूयस्त्वपरमिति भावः। तेन क्वचिदेव वाक्ये किंचिद्विद्योपास्यलिङ्गसमर्पकपदसामानाधिकरण्यमात्रं तद्विद्योपास्यनिर्धारणार्थत्वकल्पनायां प्रयोजकं न भवति। बह्वतिप्रसङ्गापत्तेरिति शङ्का निराकृता वेदितव्या। शाण्डिल्यविद्याग्रहणमन्यत्राऽपि यत्र यत्र 'इदं सर्वं यदयमात्मा' इत्यादौ ब्रह्मणस्सर्वात्मत्वमुक्तं तस्यास्य सर्वस्यापि विद्याया उपलक्षणम्। एवमुत्तरत्रापि द्रष्टव्यम्। सर्वपरविद्येति। 'तस्मात्सह तया शक्त्येति' श्रुतेः परशक्तिवैशिष्ट्यस्य सर्वविद्यासाधारण्येति भावः। वाक्यैरवसीयत इति। अयमाशयः। 'सर्वो वै रुद्र' इत्यत्र वाक्यभेदेनोपास्यविशेषनिर्द्धारणार्थत्वं सुवचम्। 'पुरुषो वै रुद्र' इत्यादिकमपि वैशब्दयोगान्नमश्शब्दान्वयापादकचतुर्थ्यभावाच्च पुरुषसूक्ताद्युपास्यानुवादेन तस्य रुद्रत्वनिर्द्धारणार्थमेव। नमश्शब्दयोगस्तु, 'सर्वं रुद्रेति वै प्राहुर्मुनयस्तत्वदर्शिनः। नमस्कारेण सहितं गौरवात्परमेशितुः' ॥ १ ॥ इति लिङ्गपुराणोक्तरीत्या नमश्शेषित्वरूपगौरवप्रख्यापनार्थः। यथा 'श्रीरुद्राः पावनाः श्रीशैलो मुक्तिद' इत्यादिप्रयोगेषु श्रीशब्दः पूज्यत्वप्रख्यापनार्थः। 'कद्रुद्राये'ति मंत्रस्यायमर्थः। मीढुष्टमाय सेक्तृतमाय सर्वेषामपि पित्रे। तव्यसे तवो वृद्धिः तदस्यास्तीति विनिः। तवस्वि तदतिशायने ईयसुन्प्रत्यये सति 'विन्मतोर्लुगि'ति विनो लुकि 'टे'रिति टिलोपे च सति छान्दसे इकारलोपे च सति तव्यसइतिरूपसिद्धिः वृद्धिमत्तमायेत्यर्थः। हृदे हृदयस्थाय। एवंभूताय रुद्राय। शंतमं सुखावहतमं। सर्वदुःखानां शमयितृतमं। कत् वाक्-

लीयः । तदप्युक्तम्—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति । तस्मादुमासहितं संसाररुग्द्रावकं परं वस्तु सकलपरविद्योपास्यमिति सिद्धम् ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ २८ ॥

## अथ पूर्वविकल्पाधिकरणम् ॥ २९ ॥

### सू ॥ पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४४ ॥

अग्निरहस्यब्राह्मणे श्रूयते 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मयोमयान् मनश्चितः' इति । तथा 'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्म-

---

श्लाघनं स्तोत्रं 'कत्थ श्लाघाया'मिति धातोर्भावेष्विति संयोगान्तलोपः । एवंभूतं स्तोत्रं वोचेम 'लिङ्याऽऽशिष्यङ्'इत्यङि 'वचउ'मित्युमागमे च सत्याशिषि लिङि वहुवचनम् । अत्र यद्यपि हृदयस्थत्वमन्यार्थत्वेनोपात्तं । तथापि दहरविद्योपास्यसूचनार्थं भवत्येव । कैवनिषदि विशिष्य शिवस्य दहरविद्योपास्यत्वेन प्रसिद्धत्वात् । एवमन्यार्थत्वेनापि 'नमो हिरण्यबाहव' इत्यादिना सवितृमण्डलोपास्यविशेषनिर्धारणं लभ्यते प्रकरणाविरोधादिति । तद्धि बलीय इति सूत्रांशं व्याचष्टे—वाक्यं हीति । 'तदपीति' सूत्रांशं पूर्वसूत्रादुक्तमित्यस्यानुषङ्गेण व्याचष्टे—तदप्युक्तमिति । 'सर्वो वै रुद्र' इत्यादिवाक्येषु नारायणानुवाकवैषम्योद्घाटनेन न्यायव्युत्पादनार्थमिदमधिकरणम् । सर्वासु परविद्यासु शिवस्य ध्येयत्वमथर्वशिखायामाहत्यैव निर्धारितं न न्यायव्युत्पादनापेक्षम् । तत्र हि विद्याविशेषमनुपक्रम्य सर्वपरविद्यासाधारण्ये ध्यानसाधनध्यानध्यातृध्येयविषयप्रश्नानुपन्यस्य, तत्प्रतिवचनसन्दर्भे प्रश्नत्रयप्रतिवचनानन्तरं सर्वासु परविद्यासु ब्रह्मविष्ण्वादिसकलप्रपञ्चकारणभूतः परमाकाशवर्त्ती निरतिशयैश्वर्यशाली निरतिशयानन्दघनः शिव एव ध्यातव्य इति ध्येयनिर्धारणं कृत्वोपनिषत्समापिता ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ २८ ॥

## अथ पूर्वविकल्पाधिकरणम् ॥ २९ ॥

सू० ॥ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ४४ ॥ यथा सवितृमण्डलविद्याप्रकरणस्य बलीयसा प्रमाणेन बाधः एवं क्रियामयक्रतुप्रकरणस्यापीति दृष्टान्तसंगतिः । शतपथब्राह्मणे अग्निरहस्ये क्रियामयक्रत्वङ्गभूत इष्टकचितोग्निः प्रकृतः 'तद्ध तन्मन एवासी'दिति प्रथमोत्पन्नं मनः प्रस्तुत्य 'तत्षट्त्रिंशत्सहस्राण्यपश्य'दित्यादिना मन-

---

नयमणिमालायाम्

## अथ लिंगभूयस्त्वाधिकरणम् ॥ २८ ॥

सू० ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

सर्वो वै रुद्र इति प्रकरणनिर्दिष्टमहिमवान्रुद्रः । मण्डलविद्यामात्रे समुपास्यः प्रकरणात्तस्याः ॥ २७३ ॥
तत्तद्विद्यापठितपदैरुपस्थाप्य सर्वविद्योपास्यम् । वाक्यानि तस्य विदधति रुद्रत्वं तत्समस्तविद्योपास्यम् ॥ २७४ ॥
एवं चात्रोपदिष्टं वपुरखिलपते सामगाम्नातमेवेत्युक्तत्वात्प्राग्विशेषैस्सह तदभिमतं सर्वविद्यासु चिन्त्यम् ।
कृष्णार्धं पिंगलार्धं शिववपुरखिलोपासनाखि(ष्टदत्वा)धखा?दुक्तत्वात्तत्सुवर्णं सकलमितितदौज्ज्वल्यतस्साम्नि गौणम् ॥ २७५ ॥

इति लिंगभूयस्त्वाधिकरणम् ॥ २८ ॥

चितोऽग्निचित' इति पुरुषस्य शतसंवत्सरमिते आयुषि षट्त्रिंशत्सहस्राणि दिनानि । तत्रैकस्मिन् दिने यावती मनोवृत्तिः तस्यैकैकाग्नित्वे सत्यग्नयः षट्त्रिंशत्सहस्राणि सम्पद्यन्ते । ते च प्रत्यगात्मस्वरूपेण ध्यातव्याः । एवं वाक्चितादयोऽपि । ते विद्यामयक्रत्वङ्गभूता उत क्रियामयक्रत्वङ्गभूता इति संशये पूर्वपक्षः प्रवर्तते । 'मनश्चितो वाक्चित' इत्यादीनां सांपादिकाग्नीनाम् 'असद्वा इदमग्र आसीत्' इत्यादिना पूर्वप्रकृतेष्टकचिताग्निशेषिभूतक्रियामयक्रत्वनुप्रवेशः स्यात् । ततश्च तेषामग्नीनां इष्टकचिताग्निना विकल्पो मानसवत् । यथा द्वादशाहे दशमेऽहन्यविवाक्ये पृथिवीपात्रस्य प्रजापतिदेवताकस्य समुद्रद्रव्यस्य मानसग्रहस्य मनःसंपाद्यग्रहणसादनस्तोत्रशस्त्रहवनप्रत्याहरणभक्षणत्वेन मानसस्यापि क्रियामयक्रत्वङ्गत्वम्, एवमेषां मानसानामपि क्रियामयक्रत्वङ्गत्वम् ॥

## सू ॥ अतिदेशाच्च ॥ ४५ ॥

'तेषामेकैक एव तावान् यावानसौ पूर्व' इति तेष्विष्टकचिताग्निकार्यातिदेशाच्च तदङ्गत्वमिति ॥ एवं प्राप्ते सिद्धान्त उच्यते—

---

श्चिदादयोऽग्नयस्समाम्नाताः । पुरुषायुषान्तर्गतैकैकदिनप्रभवमानसवृत्तिसंघाता अग्नित्वदृष्ट्योपास्यमाना मनश्चितः । एवमेव वाक्चिदादयोऽपि प्रत्येकं षट्त्रिंशत्सहस्रसंख्याकाः । तत्र कर्मचितो वागिन्द्रियातिरिक्तकर्मेन्द्रियव्यापाराः देहव्यापारा वा । अग्निचितो जाठराग्निव्यापाराः । ते चाग्नित्वदृष्टिविशिष्टा मनोवृत्त्यादयः प्रत्यगात्मरूपेण ध्यातव्याः । आत्मनोऽग्नीनर्कानिति प्रतिपर्यायं श्रवणात् । अर्कानर्चनीयानित्यर्थः । ते मनश्चिदादयो विद्यामयक्रत्वङ्गभूता उत क्रियामयक्रत्वङ्गभूता इति संशयः । यदि तत्र विद्यामयः क्रतुरपि विहितः स्यात् तदा तदङ्गभूताः स्युः । यदि न स्यात्तदा प्रकृतेनाव्यभिचरितक्रतुसंबन्धिनेष्टकचिताग्निनोपस्थापितस्य क्रियामयस्य क्रतोरंगभूताः स्युरिति भेदः । 'इष्टकेषीकामालानां चिततूलभारिषु' इति सूत्रेण इष्टकाशब्दस्य ह्रस्वः । क्रियामयः क्रत्वनुप्रवेशः स्यादिति । 'मनसैषुग्रहा अगृह्यन्त' इत्यादिष्वग्निवद्विद्यामयानि क्रत्वङ्गान्येव श्रूयन्ते न तु विद्यामयः क्रतुरिति भावः । ननु इष्टकचिताग्निना निराकाङ्क्षे क्रियामये क्रतौ कथं विद्यामयाग्नीनामन्वय इत्याशङ्क्याह—ततश्चेति । अग्नित्वसारूप्यादिष्टकचिताग्निस्थाने निविशमानानां तेषां तेन सह विकल्पो युक्त इति भावः । विद्यामयस्य क्रियामयक्रत्वनुप्रवेशे अन्वयदृष्टान्तार्थं 'मानसवदिति' सूत्रांशं व्याचष्टे—यथेति । द्वादशाहस्य दशमहरविवाक्यं स्तोत्रशस्त्रादिषु विस्पष्टवाक्यरहितम् । तस्मिन्नहनि मानसग्रहो विहितः । तस्य पृथिव्यादिकं पात्रादित्वेन ध्यातव्यम् । 'अनया पृथिव्या पात्रेण समुद्रं रसया प्राजापत्यं मनो गृह्णाती'ति मंत्रवर्णात् तस्य मानसग्रहणयागस्य ग्रहणासादनादिकं सर्वमपि मनोनिवृत्यम् । एवं मानसग्रहणयागवदेव मनश्चिदादीनामपि क्रियामयक्रत्वङ्गत्वं युक्तमिति भावः । ननु मानसग्रहः कस्यचिद्दृष्टकार्यस्याङ्गस्य स्थाने न निवेशनीय इति युक्तम् । तस्यादृष्टद्वारा क्रियामयक्रत्वङ्गत्वमिह मनश्चिदादयोऽग्निधारणं कुर्वत इष्टकचितस्याग्नेः स्थाने निवेशनीया इति कथं तेषामग्निधारणासमर्थानां तदङ्गत्वमित्याशङ्कानिराकरणार्थं सूत्रम् । सू ॥ अतिदेशाच्च ॥ ४५ ॥ इष्टकचिताग्निकार्येति । नन्विष्टकचितस्याग्नेः कार्यमाहवनीयधा-

रणं विद्यामयाग्निभिः कथमपि सम्पादयितुं न शक्यते । कथमेतेषु तत्कार्यातिदेशः। न ह्यशकनीयमर्थं शास्त्रसहस्रमपि संभूय विधातुं शक्नोति । न हि 'हिरण्यगर्भस्समवर्तताग्र' इति मन्त्रस्य वृत्त्यंतराश्रयणेनेंद्राघारप्रकाशन इव उत्करस्य पृथ्वग्रताश्रयणेन वाजिनः पात्रधारणइव परिधेः प्रथिमापेक्षणेन पशुनियोजनइव रथघोषस्य सूचकत्वकल्पनेनोद्गातृप्रेरणइव च विद्यामयाग्नीनां केनाप्युपायेनाहवनीयधारणसामर्थ्यं संपादयितुं शक्यते । उच्यते । इष्टकचितोऽग्निरुत्तरवेदिवदाहवनीयधारणप्रयोजनं क्रत्वङ्गं न भवति। किंतु गोदोहनादिवत्क्रत्वङ्गाश्रितः फलार्थगुणः । 'पशुकामश्चिन्वीते'ति श्रवणात् अभागिप्रतिषेधवार्तिके तथैवोक्तत्वाच्च । अतोऽत्र पूर्वाग्निकार्यादिदेशः पशुफलातिदेश इति नास्ति कश्चिद्विरोधः । एवञ्च विद्यामयाग्निभिः सिद्धस्वफलस्येष्टकचितस्याग्नेर्निवृत्तावन्यतः स्वकर्तव्योपकारलाघवमपश्यन्ती क्रत्वर्थोत्तरवेदिः प्राप्नोतीति तयाग्निधारणसिद्धिः। यदि चोत्तरवेदिवदग्निधारणार्थं क्रत्वंगमग्निः, तथापि तस्यैतद्वदग्निधारणमेव न प्रयोजनं । किंतु क्रतुफलभूयस्त्वमपि । उत्तरवेद्यपेक्षया तस्यानेकद्दष्टाद्दष्टाङ्गकपालयुक्तस्यातिक्लेशसाध्यत्वात् । उत्तरवेद्यां ह्यग्निश्चीयत इति विधानादग्निपक्षे उत्तरवेद्या अपि सत्वाच्च संकर्षकापि तथैव प्रतिपादनाच्च। तत्र हि मध्यमायामुपसद्यग्निश्चीयते प्रकृत्युपबन्धादिति द्वितीयाध्यायाधिकरणे किमग्नावुत्तरवेदिधर्मा भवन्ति न भवन्ति वेति सन्दिह्याग्न्युत्तरवेद्यासमुच्चयेन भिन्नकार्यत्वावगत्या प्रकृतिविकृतिभावाभावान्न भवन्तीति पूर्वपक्षप्राप्तावुत्तरवेद्याः प्रकृतावग्निधारणार्थत्वावगमात् 'इष्टकाभिरग्निं चिनुत' इत्याहवनीयाग्नेश्चयनसंस्कार्यत्वश्रवणस्य साक्षादुपपादयितुमशक्यत्वेन योग्यतया चयननिवृत्त्यर्थस्थण्डिलसाध्याग्निधारणद्वारकत्वावगमेन स्थाण्डिलरूपस्याप्यग्नेराहवनीयधारणार्थत्वादेवमुभयोरेककार्यत्वेऽपि 'वेद्यां हवींष्यासादयति बर्हिषि हवींष्यासादयती'ति वचनबलाद्वेदिबर्हिषोरिव 'उत्तरवेद्यां ह्यग्निश्चीयत' इति वचनबलात्समुच्चयोपपत्तेरेककार्यत्वस्य न्यायतः प्राप्तेः प्रकृतिविकृतिभावाभावेऽपि बाधकाभावात् । तस्मादुत्तरवेदिधर्मास्तत्र भवन्त्येव । अतस्तस्य चयनमपि। यथा प्रकृतिमध्यमायामुपसदि कार्यमिति सिद्धान्तं कृत्वा 'अनुपसदमग्निश्चीयत' इत्येकेषां 'सोस्य नित्यविधि'रिति गुणसूत्रेण केषांचिदनुपसदमग्निचयनमित्याहत्य विधानादिति प्रतिपादितम् । ततश्च पूर्वाग्निकार्यातिदेशः क्रतुफलभूयस्त्वातिदेश इत्यस्मिन्नपि पक्षे नास्ति कश्चिद्विरोधः। एवं विद्यामयाग्निषु पूर्वाग्निकार्यातिदेशसद्भावात्तदुपपादनसंभवाच्च तत्रैव विधिः न तु विद्यामयेषु ग्रहादिष्विति। 'मनसैषुग्रहा अगृह्यन्ते'त्यादि श्रवणेऽपि तत्र क्रियामयग्रहादिकार्यातिदेशभावात्तत्कल्पनेऽपि तदुपपादनस्याशक्यत्वाच्च तत्र विधिमङ्गीकृत्य पूर्वपक्षो न प्रवर्तितः। एवञ्च 'मनसैषुग्रहा अगृह्यन्त मनसास्तुवत मनसाशंसन्वाचैषुग्रहा अगृह्यन्त वाचास्तुवत वाचाशंसन्प्राणेनैषुग्रहा अगृह्यन्त प्राणेनास्तुवत प्राणेनाशंसन्नि'त्यादिषु न मनोवाक्प्राणचक्षुरादिवृत्त्यात्मकग्रहग्रहणादिविधिः। पुरुषायुषान्तर्गताना सर्वासामपि मनोवागादिवृत्तीनामग्निद्दष्ट्या क्रोडीकृतत्वात् । किंतु क्रियारूपाणां ग्रहग्रहणादीनां साक्षात्परंपरया वा मनोवृत्त्यादिसाध्यानां मनोवृत्तित्वाद्युपचारेण मनोवृत्त्यादिरूपाग्नीनां क्रियारूपक्रत्वनुप्रवेशिनाञ्च तथाभूतसकलयज्ञपरिकरयुक्तत्वेन स्तुतिरिति पूर्वप-

## सू ॥ विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥

विद्यैव विद्यामयक्रत्वङ्गभूता इत्यर्थः। सांपादिकाग्नित्वेन विद्यामयत्वे सिद्धेऽपि 'ते हैते विद्याचित एव' इति निर्धारणं हि विद्यामयक्रत्वङ्गत्वख्यापनाय। दृश्यते च विद्यामयक्रतुः अत्रैव 'मनसाऽचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन् मनसाऽशंसन् यत् किंच यज्ञे कर्म क्रियते यत् किंच यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत' इति। अतस्तेषां विद्यामयक्रत्वङ्गत्वमेव ॥

## सू ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

'ते हैते विद्याचित एव तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते विद्यया हैवैत एवंविदश्चिता भवन्ति' इति श्रुत्या वाक्येन लिङ्गेन चावगतस्य

---

क्षाभिप्रायः। सू ॥ विद्यैव तु निर्द्धारणाद्दर्शनाच्च ॥ ४६ ॥ पूर्वपक्षसूत्रे क्रियाशब्द इवात्र विद्याशब्दोऽपि लाक्षणिक इति व्याचष्टे—विद्यैवेति। ते हैत इति। सर्वनामभ्यां सप्तविधानामग्नीनां परामर्शः। तेषां विद्याचितत्वे सिद्धेऽपि य'द्विद्याचितएवे'ति निर्धारणं यच्च तदनंतरं 'विद्यया हैवत एवंविदश्चिता भवन्ती'ति तद्विवरणवाक्ये निर्धारणं तद्विद्यामयक्रत्वनुप्रवेशिनः एवैते न तु क्रियामयक्रत्वनुप्रवेशिन इति ज्ञापनायेत्यर्थः। ननु विद्यामयः क्रतुरेव न दृश्यते यदनुप्रवेशो निर्धारणेन ज्ञाप्येतेति शङ्कानिराकरणार्थं 'दर्शनाच्चेति' सूत्रशेषं व्याचष्टे—दृश्यते चेति। अयमाशयः। अग्नीनामिव ग्रहग्रहणादीनामपि श्रवणमविशिष्टम्। न च सर्वासां मनोवागादिवृत्तीनामग्निदृष्टिक्रोडीकृतत्वाद्ग्रहग्रहणादिदृष्टिविषयत्वाभावात्ते न सन्तीति वाच्यम्। न हि प्रतिदिनं यावत्यो मनोवागादिवृत्तयस्तासां सर्वासां संयातेष्वग्निदृष्टिः कर्तव्येति विधानमस्ति। षट्त्रिंशत्सहस्रसंख्या तु प्रतिदिनप्रभवासु कतिपयमनोवागादिवृत्तिष्वग्निदृष्ट्यापि चरितार्था। कासुचिद्ग्रहग्रहणादिदृष्टिर्न विरुध्यते। न च विद्यामयं ग्रहग्रहणादिकं मनोवृत्त्यधिष्ठानकमिति नियमोऽस्ति। तदधिष्ठानत्वेऽपि मानसग्रहाणां ग्रहणासादनादीनामिदमिदमिति मनोमात्रनिर्वर्त्यस्वरूपं तदुपपद्यते। तथापि विद्यामयस्य क्रतोर्विधिर्नोपलभ्यत इति चेदनुपलभ्यमानोऽपि ग्रहणादिसंस्कारविधिभिरुन्नीयते। यत्किंचन यज्ञे कर्म क्रियते यत्किंचन यज्ञियं कर्मेति द्विवारं वीप्सया यज्ञानुबन्धि यत्फलार्थं गुणजातमङ्गजातं च तत्सर्वं गृह्यते। तेनाभिषवादीनामपि ग्रहणमसंदिग्धम्। एवं च 'सोमाभावे पूतिकानभिषुणुया'दिति पूतिकानामभिषवमात्रश्रवणेन तद्द्रव्यकयागान्वयः कल्प्यते। यदि राजन्यं वैश्यं वा याजयेत्सयदि सोमं विभक्षयिषन्न्यग्रोधस्तिभिनीराहृत्य तास्संपिष्य दध्युन्मृज्य तस्मै भक्षं प्रयच्छेन्न सोममिति फलचमसस्य भक्षणमात्रश्रवणेन तद्द्रव्यकयागाभ्यासः कल्प्यते। इह ग्रहणाभिषवहोमभक्षणादिसकलसंस्कारश्रवणे कथं यागकल्पनं न स्यात्। तस्मादस्त्यत्र विद्यामयः क्रतुरिति। नन्वैन्द्रवायवं गृह्णातीत्यादिवाक्येषु श्रुतानामिंद्रवाय्वाद्युद्देशेन सोमरसग्रहणानां यागान्वयापेक्षाणां श्रुतसोमयागान्वयेन चारितार्थ्ये संभवति न यागान्तरकल्पनेति पशुसोमाधिकरणे व्यवस्थापितम्। एवमिहापि ग्रहणादिसंस्काराणामिष्टकचिताग्न्युपस्थापितक्रियामयक्रत्वन्वये संभवति न विद्यामयः क्रतुः कल्पनीय इति शङ्कानिराकरणार्थं सूत्रम्। सू ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥ ननु श्रुतिलिङ्गवाक्येभ्यः मनश्चिदादीनां वि-

विद्यामयक्रत्वन्वयस्य दुर्बलेन प्रकरणेन न बाधः॥ ननु 'मनसैषु ग्रहा अगृह्यन्त' इत्यादिषु विधिप्रत्ययाश्रवणात् क्रियामयात् क्रतोरन्यो विद्यामयः क्रतुर्नास्तीत्यत आह—

सू ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥

'ग्रहा अगृह्यन्त' इत्यादिक्रत्वनुबन्धैः 'ते हैते विद्याचित एव' इति श्रुत्यादिभिश्च विद्यामयक्रतुविधिः कल्पनीयः। दहरविद्यादीनां क्रियामयात् पृथक्त्ववदस्यापि विद्यामयक्रतोः सानुबन्धैः श्रुत्यादिभिः पृथक्त्वमवगम्यते। दृष्टश्चानुवादसरूपे विधिः 'यदेव विद्यया करोति' इत्यादौ। तदुक्तम् 'वचनानि त्वपूर्वत्वात्' इति। अतो विद्यामयक्रत्वङ्गत्वमेव युक्तम्॥ आशङ्क्य परिहरति—

द्यामयक्रत्वन्वयो नावगम्यते। तथाहि नतावदिह तेषां तत्र विनियोजिका विभक्त्यादिश्रुतिरस्ति। तत्सत्वेऽपि 'षड्विंशतिरित्येव ब्रूयात्' इत्यादिवदेवकारोपहतविधिशक्तिकतया न विनियोजकत्वं संभवति। एवकारश्रुतिस्तु क्रियारूपक्रत्वंगत्वमेव व्यावर्त्तयेन्न तु विद्यारूत्वं बोधयेत्। तथा सार्वदिकसर्वभूतकर्तृकत्वं चयनस्य व्यवस्थितकालकर्तृकक्रियारूपक्रत्वङ्गत्व एव लिंगं न तु विद्यारूपक्रत्वंगत्वे। एवंविदे चिन्वंति एवंविदश्चिता भवंति इति वाक्यं तु अग्नीनां पुरुषसंबन्धमात्रं बोधयेत् न तु विद्यारूपे क्रियारूपे वा क्रतावङ्गत्वम्। अतः श्रुत्यादिभिर्विद्यामयक्रत्वन्वयोक्तिर्न युक्तेति चेदुच्यते। उदाहृतश्रुतिलिङ्गाभ्यां क्रियारूपक्रत्वन्वये निराकृते ग्रहणादिसंस्कारविधिभिस्तदन्वययोग्यो विद्यामयः क्रतुः कल्पनीयो भवति। क्रत्वङ्गस्याग्निचयनस्य पुरुषसंबन्धं बोधयद्वाक्यं क्रतुसंबन्धद्वारा निर्वाह्यमिति क्रियारूपक्रतुसंबन्धस्य श्रुतिलिङ्गाभ्यां बोधे सति विद्यावत्वरूपपुरुषविशेषणसामर्थ्याद्विद्यारूपक्रतुसंबन्धद्वारकस्यैव तस्य बोधकं पर्यवस्यतीत्येवं श्रुतिलिङ्गवाक्याना विद्यामयक्रत्वन्वये पर्यवसानमस्तीति भाष्याभिप्रायः। तद्विरोधिनः प्रकरणस्यापि हि क्रियामयक्रत्वङ्गत्वबोधकत्वं पर्यवसानवृत्त्यैव। नह्यग्निरहस्यब्राह्मणे क्रियामयस्य क्रतोः प्रकरणमस्ति किं तु तदङ्गस्य क्रियानिर्वर्त्यस्याग्नेरेव। अतस्तदीयस्यैव प्रकरणस्य तदुपस्थाप्यक्रत्वन्वये पर्यवसानं वक्तव्यमिति सूत्रे चकारेण विद्यामयाग्नीनामिव विद्यामयग्रहग्रहणादीनां क्रियामयक्रतौ वैकल्पिताङ्गत्वासंभवः पूर्वपक्षिप्रदर्शितः समुच्चीयते। नन्विति। ग्रहग्रहणादिषु विधिसद्भावे हि विहितैर्विद्यामयैस्संस्कारैरुचितो विद्यामयः क्रतुः कल्प्येत नतु तच्छ्रवणमस्तीति भावः। सू ॥ अनुबंधादिभ्यः प्रज्ञांतरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥ ग्रहा अगृह्यन्तेत्यादीनामनुवादस्वरूपत्वेऽपि वचनानि त्वपूर्वादितिन्यायेन मनश्चिदादीनामिव ग्रहग्रहणादीनामपि विधिकल्पनं भवन्न निवारयितुं शक्यम्। 'सोमे वचनाद्भक्षो न विद्यत' इति अधिकरणे हि सोमे शेषभक्षो नास्ति वचनाभावात्। 'सर्वतः परिहारमाशिनं भक्षयती'त्यादिवचनानां गुणविधानार्थत्वात्। न च गुणविधानस्य विहितभक्षणविधिमन्तरेणानुपपत्तिः। तस्यैच्छिकपक्षप्राप्तभक्षणविषयत्वोपपत्तेरिति पूर्वपक्षं कृत्वा विशिष्टविधिरूपाण्येव तानि वाक्यानि भक्षणस्यापूर्वत्वेन विध्यर्हत्वादिति सिद्धांतितम्। तथा च ग्रहग्रहणादिभिः क्रत्वनुबन्धैः पूर्वसूत्रोदाहृतश्रुत्यादिभिस्सहितैः क्रतुविधिः कल्पनीय इति न विद्यामयक्रतुविध्यभावः शङ्कनीय इति भावः। आशङ्क्येति। मनश्चिदादीनामतिदेशेनेष्टकचिताग्निभिस्तुल्यकार्यत्वावगमात्तेषां क्रियामयक्रत्वनुप्रवेशो-

सू ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥

'तेषामेकैक एव तावान् यावानसौ पूर्वः' इतीष्टकचिताग्निचितफलसामान्येनातिदेशः, इष्टकचिताग्नेः स्वक्रतुद्वारेण यत् फलं तदेषां विद्यामयक्रतुप्रवेशेन फलमिति। न पुनरिष्टकचिताग्नितुल्यदेशत्वमेषामिति। केनापि सामान्येनातिदेशोपलब्धेः 'स वा एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुष' इति संहर्तृत्वमात्रेण। न हि तत्र मण्डलपुरुषस्य मृत्युतुल्यदेशत्वम्। अतः केनचित् सामान्येनातिदेशे न विरोधः॥ हेत्वन्तरमाह

सू ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥

परेण च ब्राह्मणेनास्य मनश्चिदादिवाचिनः शब्दस्य विद्यामयत्वप्रतिपादकत्वमवगम्यते। तथा हि 'अयं वाव लोक एषोऽग्निश्चितस्तस्याप' इत्यादिना पृथक्फला विद्या विधीयते। क्रियाप्रकरणे मनश्चिदादीनामनुबन्धस्तु संपादनीयानामग्न्यङ्गानां भूयस्त्वात्। तत एतेषां विद्यामयक्रत्वङ्गत्वम्॥

इति पूर्वविकल्पाधिकरणम् ॥ २९ ॥

---

ऽवगम्यत इति पूर्वपक्षोक्तमाशङ्क्येत्यर्थः। सू ॥ न सामान्यादप्युपपत्तेर्मृत्युवन्नहि लोकापत्तिः ॥ ४९ ॥ इष्टकचिताग्नेरिव स्वप्रधानद्वारा फलवत्त्वमस्तीत्येतावता सादृश्येनातिदेशः न तुल्यदेशत्वपर्यन्तेन। यथा मनश्चिदादिब्राह्मणात्पूर्वब्राह्मणावसानश्रुतेः'स एष मृत्यु'रित्यादौ मण्डलपुरुषे संहर्तृत्वमस्तीत्येतावता सादृश्येन मृत्युरिति व्यपदेशः न तु मृत्युलोकावस्थितिलक्षणतुल्यदेशत्वपर्यन्तेनेत्यर्थः। हेत्वंतरमिति। मनश्चिदादिब्राह्मणस्य विद्याप्राधान्यइति शेषः॥ सू ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥ 'अयं वावलोक'इति चितेऽग्नौ पृथिवीदृष्टिर्विधीयते। 'तस्याप एव परिश्रुता' इति 'अश्मन्नूर्जमिति परिषिञ्चती'ति विहिताग्निपरिषेचनजले समुद्रजलदृष्टिर्विधीयते। एवं 'मनुष्याय जुष्मत्य इष्टका'इत्यादिनाप्यग्न्यनुबन्धिषु भूलोकादितत्तद्वस्तुविशेषदृष्टयो विधीयन्ते। अवसाने च तद्विदः फलमुच्यते 'एतत्सर्वमभिसम्पद्यत' इति। चकारात्पूर्वेणाऽपि ब्राह्मणेन मनश्चिदादिब्राह्मणस्य विद्याप्राधान्यमवगम्यते इति समुच्चीयते। पूर्वत्र हि स एष मृत्युर्य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः स एष एवंविद आत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसंभवति सोमृतो भवती'ति विद्याविशेषमुपदिश्य तद्विदः फलमुच्यते। न तु स्वतन्त्रविद्यानां क्रियामयप्रकरणसमाम्नानं किमर्थमित्याकाङ्क्षायां 'भूयस्त्वानुवन्ध'इति सूत्रशेषं व्याचष्टे—क्रियामयप्रकरण इति। अनुवन्धः क्रियानिर्वर्त्योऽग्निः प्रकरणमनुसमाम्नानमित्यर्थः॥

इति पूर्वविकल्पाधिकरणम् ॥ २९ ॥

---

नयमणिमालायाम्

अथ पूर्वविकल्पाधिकरणम् ॥ २९ ॥

सू ॥ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ४४ ॥ अतिदेशाच्च ॥ ४५ ॥ विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबंधः ॥ ५० ॥

प्रकृताग्निनेष्टकेन प्राप्तविकल्पो मनश्चिदादिगणः। शेषः क्रियामयस्य क्रतोर्भवेन्मानसग्रहवत् ॥ २७६ ॥
विद्याचितएवेति श्रुत्या निर्धारणाद्बलीयसाः। यज्ञक्रतोरयं स्याच्छेषो विद्यामयस्यैव ॥ २७७ ॥

इति पूर्वविकल्पाधिकरणम् ॥ २९ ॥

## अथ शरीरे भावाधिकरणम् ॥ ३० ॥

### सू ॥ एक आत्मनः शरीरे भावात् ॥ ५१ ॥

इह पूर्वोक्तब्रह्मस्वरूपानुसन्धानं सर्वासु परविद्यासु युज्यते न वेति संशयः। तत्रैके मन्यन्ते । शरीरे वर्तमानत्वादुपासितुः कर्तृत्वभोक्तृत्वरूपापन्नत्वात् तथाऽवस्थितस्यात्मतया परविद्यासु परमेश्वरस्य त्रिलोचनत्वादिलक्षणस्वरूपानुसन्धानं न युज्यत इति ॥ सिद्धान्त उच्यते ।

### सू ॥ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

नैवं यत्कर्तृत्वभोक्तृत्वादिरूपापन्नस्योपासितुरात्मतया परमात्माऽनुसन्धेय इति । अपितु सांसारिकस्वभावान्मुक्ते यो व्यतिरेक अपहतपाप्मत्वादिगुणरूपः सोऽनुसन्धेयः । तथाऽनुसन्धानसद्भावभावित्वात् स्वरूपोपलब्धेः । यथा यथाऽव-

## अथ शरीरे भावाधिकरणम् ॥ ३० ॥

सू ॥ एक आत्मनश्शरीरे भावात् ॥ ५१ ॥ पूर्वाधिकरणविषयवाक्ये मनश्चिदादयः प्रत्यगात्मत्वेन ध्यातव्या इत्युक्तम् । एवं शिवोऽपि प्रत्यगात्मतया ध्यातव्यः । 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसी'ति शिवजीवयोः परस्परैक्यभावनयाविहितत्वात् 'आत्मेति तूपगच्छंति'इत्यधिकरणे तथा वक्ष्यमाणत्वाच्चेत्येतदनुस्मृत्य लिङ्गभूयस्त्वाधिकरणोक्तमाक्षिप्यत इति संगतिं सूचयति—पूर्वोक्तमिति । युज्यते न वेति संशय इति। किं प्रत्यगात्मा तदानींतनैः कर्माधीनशरीरबन्धककर्तृत्वभोक्तृत्वधर्मैर्विशिष्टः परविद्यासु शिवधर्मिकैक्यप्रतियोगित्वेनानुसंधेयः । किं वा मुक्तिदशायामाविर्भविष्यद्भिरपहतपाप्मत्वादिभिर्विशिष्ट इत्यनवधारणात्संशय इति भावः । यथा शुक्तिरजतैक्यानुभवस्तदानीं दृश्यमानैश्चाकचक्यादिभिर्धर्मैर्विशिष्टतया शुक्त्यैक्यविषयः। न तु तदानीमदृश्यमानैर्नीलभागादिभिर्विशिष्टतया । एवं शिवजीवैक्यभावनमपि तदानीमनुभूयमानैर्द्धर्मैर्विशिष्टेन जीवेनैक्यविषयं । न तु तदानीं तिरोहितैरिति युक्तम् । न च तत्क्रतुन्यायानुसारादनेवंभावश्शङ्कनीयः। 'तं यथा यथोपासत' इति श्रुत्यन्तरानुसारेण तस्य प्राप्यपरब्रह्मविषयत्वात् । एवञ्च यदुक्तं लिङ्गभूयस्त्वाधिकरणे निरस्तसमस्तदोषस्य निखिलमङ्गलगुणाकरस्य चिदानन्दरूपकर्माधीनदिव्यविग्रहविशिष्टस्य शिवस्य सर्वासु परविद्यासु ध्येयत्वं तन्नोपपद्यते । कर्माधीनशरीरबन्धतदधीनविहितनिषिद्धकर्तृत्वतत्फलसुखदुःखभोक्तृत्वविशिष्टप्रत्यगात्मरूपतयानुसंधीयमाने तस्मिन् तद्विरोधिगुणानुसंधानायोगात् । अहमनुभवरूपप्रत्यगात्मगुणेभ्यः श्रुत्युपस्थापितगुणानां दुर्बलत्वादिति पूर्वः पक्षः ॥ सू ॥ व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥ ५२ ॥ नत्विति सूत्रांशं व्याचष्टे—नैवमिति । अपहतपाप्मत्वादिगुणरूपइति व्यतिरेकपदव्याख्यानेन प्रजापतिविद्यावाक्यं व्यतिरेकस्यानुसन्धेयत्वे प्रमाणं सूचितम् । तत्र ह्यपहतपाप्मत्वादिरूपविशिष्टं प्रत्यगात्मानं प्रस्तुत्य 'सोन्वेष्टव्य' इति प्रकृतरूपविशिष्टमेव तच्छब्देन परामृश्य तस्यानुसन्धेयत्वमुक्तम् । एवं च यथाविधिविहितविद्यानुष्ठानं। न तु लौकिकप्रमाणोपस्थित्यनुगुणमिति । तदानीं प्रत्यक्षोपस्थितैरपि सांसारि-

(१) 'अधुनातनैः' इति. ख० पाठः ।

स्थितस्वरूपब्रह्मानुसन्धानभाविनी ब्रह्मोपलब्धिः तद्वत्, 'यथाक्रतुरस्मिंल्लोके पुरुषः' इत्यादिश्रुतेः । अतः सांसारिकस्वभावनिर्मुक्तापहतपाप्मत्वादिस्वरूपतयोपासितुरनुसन्धेयत्वात् तदात्मतयाऽनुसन्धेयस्य परमेश्वरस्य त्रिलोचनत्वादिलक्षणस्वरूपानुसन्धाने नास्ति विरोधः ॥

इति शरीरे भावाधिकरणम् ॥ ३० ॥

अथ अङ्गावबद्धाधिकरणम् ॥ ३१ ॥

सू ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

कासु चिच्छाखासु श्रूयमाणा उपासनाङ्गावबद्धाः सर्वासूपासनास्वङ्गत्वेनोपसंहार्या न वेति संशयः ॥ तथा हि—"आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनादेव पाशं दहति पण्डितः ॥" इति कैवल्योपनिषदि दहरोपासनायां प्रणवाभ्यासः श्रूयते । 'अग्नि'रित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् । तस्माद्व्रतमेतत् पाशुपतं पशुपाशविमोक्षाय' इति अथर्वशिरसि पाशुपतविद्यायां भस्मोद्धूलनं श्रूयते । अन्यत्र 'तिस्रो रेखाः प्रकुर्वीत' इति

---

कैर्धर्मैः प्रत्यगात्मनोऽनुसंधानं न कार्यं किंतु तदानीं तिरोहितैरप्यपहतपाप्मत्वादिभिरेवेति भावः । ननु ब्रह्मोपलब्धिर्यथावस्थितब्रह्मविषया कार्येति नियमो 'यथाक्रतु'रिति श्रुतेरित्याशङ्क्य सा श्रुतिर्जीवयाथात्म्यसाधारणी तस्यापि प्राप्यकोटिनिविष्टत्वात् 'तं यथा यथोपासत' इति श्रुतेरपि जीवात्मभूतपरमात्मत्वादित्यभिप्रेत्याह—यथाक्रतुरिति ॥

इति शरीरे भावाधिकरणम् ॥ ३० ॥

अथाङ्गावबद्धाधिकरणम् ॥ ३१ ॥

सू ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥ एवं परब्रह्मणः शिवस्योपास्यस्य सकलपरविद्यासु साधारण्यं लिङ्गभूयस्त्वाधिकरणोक्तमाक्षिप्य समाहितं । तत्प्रसङ्गात्तदसाधारणमन्त्रभूतप्रणवाभ्यासस्य तद्भक्तासाधारणचिह्नभस्मोद्धूलनत्रिपुण्ड्रधारणयोश्चासाधारण्यमुच्यत इति संगतिः । उपासनांगावबद्धा इति । उपासनाङ्गत्वेन निबद्धा इत्यर्थः । ननु प्रणवाभ्यासभस्मोद्धूलनयोरुपासनाङ्गत्वेन निबंधनं दहरपाशुपतविद्याप्रकरणाम्नानादवगम्यते । कालाग्निरुद्रोपनिषदि विद्याविशेषमनारभ्याम्नातस्य त्रिपु-

---

नयमणिमालायाम्

अथ शरीरे भावाधिकरणम् ॥ ३० ॥

सू ॥ एक आत्मनः शरीरे भावात् ॥ ५१ ॥ व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥ ५२ ॥

वपुषि स्थितेरनाकाशात्कर्तृत्वस्यातिवेलमलिनेऽस्मिन् । शिवसामरस्यविषया शिवोऽहमिति भावना कथं जीवे ॥२७८॥

नायं विद्यासु चिंत्यस्त्वनुभृदशिवतापादकैः कर्तृताद्यैः किं तु ब्रह्मोपदिष्टैरपहतदुरितत्वादिभिस्तद्विरुद्धैः ।

एवं ध्याते हि जीवः प्रलयवति यथावस्थिते स्वस्य रूपे मुक्तौ चिच्छक्तितः स्यात्परशिवसमता तत्क्रतुन्यायगत्या ॥२७९॥

इति शरीरे भावाधिकरणम् ॥ ३० ॥

त्रिपुण्ड्रधारणविधिः श्रूयते । तस्य 'शिवसायुज्यम्' इति फलश्रवणात् परविद्याङ्गत्वम् । तदेवं विद्याङ्गावबद्धाः यासु शाखासु श्रुतास्तासु विहितेषूपासने-

---

ण्ड्रधारणस्य तत्कुतोऽवगम्यते इत्याकाङ्क्षायामाह—तस्येति । 'तिर्यक् तिस्रो रेखाः प्रकुर्वीत व्रतमेतच्छांभवं सर्ववेदेषु देवादिभिरुक्तं तत्समाचरेन्मुमुक्षुरपुनर्भवाये'ति त्रिपुण्ड्रधारणस्य मुक्तिफलकत्वमुक्तम् । उपनिषदन्ते च 'एतत्त्रिपुण्ड्रं भस्मना करोति यो विद्वान्ब्रह्मचारी गृही वानप्रस्थो यतिर्वा समस्तमहापातकोपपातकेभ्यः पूतो भवती'त्युपक्रम्य देहं त्यक्त्वा शिवसायुज्यमाप्नोति न स पुनरावर्तत इत्युपसंहृतम् । न च विद्याङ्गभावं विना तस्य साक्षान्मुक्तिफलकत्वं सम्भवतीति तस्य मुक्तिफलकविद्याङ्गत्वमवसीयत इति भावः। इत्थं विषयं संशोध्य पूर्वपक्षमाह—एवमिति । विद्याविशेषप्रकरणाम्नातयोः प्रणवाभ्यासभस्मोद्धूलनयोः प्रकरणान्नियमः स्पष्टः । त्रिपुण्ड्रधारणस्य तु विद्याविशेषमत्र शाखायां विधानं तच्छाखाम्नातविद्यासु सन्निधानान्नियमः । यथा वेदाद्यधिकरणपूर्वपक्षे 'शन्नो मित्रा'दि मन्त्रस्येति भावः । 'श्रुत्या सन्निधेर्बाध' इति सन्निधिग्रहणं प्रकरणस्याप्युपलक्षणम्। श्रुतिग्रहणमपेक्षारूपवस्तुसामर्थ्यात्मकलिङ्गस्याप्युपलक्षणम् । तथाचा'त्मानमरणिं कृत्वे'ति मन्त्रे 'क्त्वा'श्रुत्या प्रणवस्य ध्यानमात्राङ्गत्वेन विधानात्तया दहरविद्याप्रकरणस्य बाधः। न हि ध्यानसामान्यवाचिन्या प्रकरणानुसारेण दहरविद्यायाः सङ्कोचो युज्यते । भस्मोद्धूलनत्रिपुण्ड्रधारणयोस्तु जाबालश्रुतौ 'नीलकण्ठाय शिरसि निक्षिपेत्सर्वात्मने नम' इत्यन्तेन तदुभयविधानानन्तरं 'पापं नाशयते कृत्स्नमपि जन्मशतार्जित'मित्यादिना पापक्षयहेतुत्वावगमात् । कालाग्निरुद्रोपनिषदि त्रिपुण्ड्रधारणस्य पापक्षयद्वारा मुक्तिहेतुत्वश्रवणात् । 'मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः' इति शातातपस्मृतौ भस्मोद्धूलनस्य सर्वपापक्षयहेतुत्वश्रवणाच्च । तयोर्मुक्तिहेतुत्वश्रवणस्य श्रवणमनननिदिध्यासनादिप्रतिबन्धकदुरितनिवृत्तिद्वारकत्वावगमात् । तस्मादपेक्षालक्षणवस्तुसामर्थ्यरूपेण लिङ्गेन पाशुपतविद्याप्रकरणस्य तत्तच्छाखाम्नातविद्यासन्निधेश्च बाधः । विद्याविशेषाम्नातानामपि हि विशेषाणामपेक्षाबलात्प्रकरणमनादृत्य सर्वविद्यासाधारण्यापादन 'मानंदादयः प्रधानस्य' 'अक्षधियां त्वविरोधः' इत्यधिकरणेषु सिद्धम् । अग्रे च 'तमेतं वेदानुवचनेन'इत्यादि प्रकृतदहराकाशविषयकविद्याविशेषग्रहणे सत्यपि 'धर्मेण पापमपनुदती'ति श्रुतिप्रतिपन्नस्य कर्मजन्यस्य पापक्षयरूपद्वारस्य सर्वविद्यापेक्षितत्वात्कर्मणां सर्वविद्यासाधारण्यं वक्ष्यते । तथा 'तस्मादेवंविच्छान्तो दान्त' इत्यादि श्रुतौ प्रकृतविद्यापरामर्शकैवंविच्छब्दे सत्यपि शमो दमो वक्ष्यते । तस्मादिह वक्तव्यमधिकं नास्तीति संक्षिप्योक्तं भाष्ये 'श्रुत्या सन्निधेर्बाध' इति । यद्यपि श्रुत्यादिभिः प्रकरणाबाधस्य पूर्वविकल्पाधिकरणे निरूपितत्वादपेक्षावशात्सर्वविद्यासाधारण्यस्य बहुष्वधिकरणेषु प्रतिपन्नत्वाच्च नात्र व्युत्पादनीयमस्ति । तथापि भस्मोद्धूलनादिकं यथाप्रकरणं व्यवतिष्ठत इति केषाञ्चिद्भ्रान्तानां वचनैर्मन्दानां माभूद्भ्रम इत्येतदधिकरणारंभः। शाखैक्यकृतस्य वेदैक्यकृतस्य च द्विविधस्यापि सन्निधेर्बाधप्रतिपादनार्थं सूत्रे 'शाखासु प्रतिवेद'मिति विशेषणद्वयम् । हिशब्दोऽस्यार्थस्य न्यायसाम्यादधिकरणांतरेभ्यः प्रसिद्धिद्योतनार्थः । एवं ब्रह्ममीमांसकमर्यादया प्रणवानुसन्धानादीनां सर्वविद्यासाधारण्यमुपपादितम् । कर्ममीमांस-

यूपासकैः कार्याः सन्निधानात् न सर्वत्र ॥ इति प्राप्ते ब्रूमः । भस्मोद्धूलनाद्य उपासनाङ्गावबद्धा यासु शाखासु श्रुतास्तास्वेवेति न नियमः । किंतु प्रतिवेदं सर्वासु शाखासु सर्वैरपि ब्रह्मोपासकैः कार्या एवेति श्रुत्या सन्निधेर्बाधः ॥

सू ॥ मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥

यथा क्रत्वङ्गभूतानां मन्त्राणामेकैकशाखागतानामपि सर्वशाखागतक्रत्वन्वये न

---

कास्त्वनुवादस्सतिसंभवे प्रकृतगामी प्रकृतसत्वे तदन्वयासंभवेऽप्यानर्थक्यतदङ्गन्यायेन तदङ्गगामी । श्रुतिसङ्कोचस्तु प्रकरणानुग्रहलाभार्थत्वान्न दोषः । यदा प्रकरणानुग्रहाय श्रुतेरपि सङ्कोचः, तदा किमु वक्तव्यमपेक्षालक्षणलिङ्गमकिञ्चित्करमित्यनुवादस्य । प्रकृतगामित्वमौत्सर्गिकमाद्रियन्ते । अत एव वारणादिपात्राणामाधानप्रकरणे 'वारणो यज्ञावचरो वैकंकतो यज्ञावचर' इत्यादिवाक्येषु यज्ञसामान्यसाधनत्वेन श्रुतानामपि सर्वासामिष्टीनां पात्रापेक्षायां सत्यामपि तेषामयज्ञरूपाधानसंबन्धासंभवेऽपि पावमानेष्टीनामाधानाङ्गतायामङ्गावतारन्यायेन पावमानेष्टिमात्राङ्गता स्यादिति । तस्य न्यायस्यानवकाशीकरणेन पात्राणां सर्वेष्टिसाधारण्यार्थं पावमानेष्टीनामाधानाङ्गत्वं तैर्यत्नेन निराकृतम् । अतः कर्ममीमांसकमर्यादया प्रणवानुसन्धानत्रिपुण्ड्रधारणादीनां[1] सर्वविद्यासाधारण्यं न सिद्ध्येदिति शङ्कानिराकरणार्थं क्वचिच्छाखायां किञ्चित्कर्मप्रकरणाम्नातानां शाखान्तराम्नातकर्मान्तराङ्गत्वमपि विनियोजकप्रमाणबलाद्भवतीत्यत्र कर्ममीमांसकमतदृष्टान्तप्रदर्शनार्थं च सूत्रम् ॥ सू ॥ मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥ यथा क्रत्वंगभूतानामिति । अत्रायमाशयः । कर्ममीमांसकैर्गुणमुख्यव्यतिक्रमाधिकरणे सामवेदोत्पन्नानि सामवेदे क्रतुषु विनियुक्तानि 'य एवंविद्वान्वारवन्तीयं साम गायति यज्ञायज्ञियं साम गायति वामदेव्यं साम गायती'त्यादिभिर्याजुर्वेदिकैराधाने विनियुक्तानि वारवन्तीयादीनि सामान्युदाहृत्य तेषा'मुच्चैस्साम्ने'त्युत्पत्तिवेदविहितस्वरप्राप्तौ प्रधानभूतविनियोगविध्यनुसारेण 'उपांशुयजुषे'ति विहितः याजुर्वेदिक एव स्वर इति सिद्धान्तितम् । अत्र शाखान्तरे किञ्चित्कर्मप्रकरणाम्नातानां विनियोजकप्रमाणबलात् शाखान्तराम्नातकर्मान्तराङ्गत्वमप्यस्तीत्यत्र दृष्टान्तः स्पष्टः । अतएवोपन्यस्तशङ्कानिराकरणमपि लभ्यते । तथाहि 'उपांशुयजुषा क्रियत' इति ज्योतिष्टोमप्रकरणाम्नातं यजुर्वेदविहितकर्मोद्देशेनोपांशुस्वरविधायकं विधिमवलम्ब्य गुणमुख्यव्यतिक्रमाधिकरणे सिद्धान्तः कृतः । यद्यनुवादः प्रकृतगामीति प्रकरणानुसारेण यजुर्वेदविहितकर्मानुवादस्य यजुर्वेदविहितज्योतिष्टोमैकविषयता स्यात्तदानीमाधानतदङ्गानां याजुर्वेदिकत्वेऽप्युपांशुस्वरो न प्राप्नुयादिति सिद्धान्तो भज्येत । अतस्तत्र प्रकरणेन श्रुतिसंचारायोगाद्यजुर्वेदविहितकर्मसामान्योद्देशेनोपांशुस्वरविधिरित्यभ्युपगम्यैव तस्य सिद्धान्तस्य प्रवृत्तिर्वक्तव्या । न च सन्निध्याम्नातयो'रुच्चै ऋचा क्रियते उच्चैस्साम्ने'ति विध्योस्तत्तद्वेदविहितकर्ममात्रोद्देशदर्शनादिहापि तथात्वेन भाव्यमिति प्रकरणानादरः । श्रुतिमपि सङ्कोचयतः प्रकरणस्य सन्निध्यनुवर्तनायोगात् । तस्मात्केवलं प्रकरणानुग्रहाय नास्ति श्रुति-

---

(१) 'प्रणवानुसंधानादीनां' इति ख. पाठः ।

सङ्कोच इत्येव तस्मिन्नधिकरणे तेषामपि मर्यादा व्यवस्थापनीया । अत एव वार्तिककृता 'गुणानां च परार्थत्वादसंबद्धस्समत्वात्स्या'दिति सूत्रं पात्राणामङ्गावतारन्यायेन पावमानेष्टिमात्राङ्गत्वनिवारणाय पावमानेष्टीनामाधानाङ्गत्वनिराकरणार्थं न भवति । तासामाधानाङ्गत्वेऽपि पात्राणां वाक्यबलेन सर्वयज्ञार्थतासिद्धेः । यज्ञशब्दस्य प्रकरणानुसारेण संकोचकल्पनायोगादिति भाष्यभङ्गं कृत्वा तत्सूत्रं निविदधिकरणगुणसूत्रत्वेन योजितम् । अतो मीमांसकमर्यादयापि 'आत्मानमरणिं कृत्वे'ति मन्त्रे ध्यानशब्दस्य प्रकरणानुसारेण सङ्कोचः प्रसज्यत इति भाष्ये 'सर्वशाखागतकत्वन्वय' इत्यस्य शाखान्तरगतकर्मान्वय इत्यर्थः । आधानस्य क्रतुत्वाभावात् । अथवा प्राक्सूत्रकृता गुणमुख्यव्यतिक्रमाधिकरणन्याय'स्यौपसदव'दित्युदाहरणान्तरमुपन्यस्तमिति तदभिप्रायं क्रतुग्रहणम् । अपिचाऽऽथर्वशाखारंभे विद्याविशेषमनुपक्रम्य 'भगवन्किमादौ प्रयुक्तध्यानं ध्यायितव्यं किं तद्ध्यानं को वा ध्याता कश्च ध्येय' इत्यङ्गिरससनत्कुमारयोः प्रश्ने 'स एभ्योऽथर्वा प्रत्युवाचे'ति तत्प्रतिवचनमुपक्रम्य प्रश्नचतुष्टयप्रतिवचनत्वेनैवाग्रिमस्संदर्भस्सर्वोऽपि प्रवर्तितः । तत्र ब्रह्मध्यानस्यादौ किमक्षरं प्रयुक्तं सद्ब्रह्मस्वरूपतद्गुणवाचकतया तद्ध्यानसाधनमिति कृत्वा ध्यातव्यमित्यादि । अत्र स्पष्टं प्रणवस्य सर्वविद्यासाधारण्यमाहवनीयस्येव सर्वहोण्यम् । अतः कैवल्योपनिषदादिष्वपि 'आत्मानमरणिं कृत्वे'ति मन्त्रः सर्वविद्यासाधारणः । तस्यायमर्थः । यथा ह्यरणौ प्रागपि स्थितस्य वह्नेरभिव्यक्त्यर्थमधरोत्तरारणी संयोज्य मथनेन वह्निरभिव्यक्तो भवति । स चाभिव्यक्तेन वह्निना मथिता स्वाभिमतं दाह्यदाहं लभते । एवं पण्डितः कृतश्रवणमननादिकं, स्वात्मनि प्रागपि स्थितस्य शिवस्याभिव्यक्त्यर्थं स्वात्मानं प्रणवं च ध्यानक्रियायां कर्तृकरणभूतौ संयोज्य ध्यानाभ्यासं करोति चेत्तेन स्वात्मनि शिवो ऽभिव्यक्तो भवति । तदनुग्रहेण स पाशदाहं लभते । इति 'ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढव'दिति श्वेताश्वतरोपनिषदि पाठात्तदर्थोपसंहारेणारणिमथनपाशदहनोक्तिसामर्थ्येन चायमर्थः स्पष्टः । एवं तावत्प्रणवाभ्यासस्य सर्वविद्यासाधारण्यं यदुक्तं तत्तत्कर्ममीमांसकमर्यादामप्यनुवर्तत इत्युपपादितम् । यथैव भस्मोद्धूलनत्रिपुण्ड्रयोरपेक्षावशात्सर्वविद्यासाधारण्यं यदुक्तं तदपि तन्मर्यादानुवर्त्यैव । तैरपि व्रीह्याद्युद्देशेन विहितस्यावहननादेर्यवादिसाधारण्यमपेक्षावशादेव समर्थनीयम् । तदेत'दावृत्तिरसकृदुपदेशा'दित्यधिकरणे सप्रपञ्चमुपपादयिष्यते । तत्रैवात्रत्यानां शङ्काशूकानामपि सविशेषं निराकरणं भविष्यति । सूत्रे वाकारो बोधनीयभेदेन व्यवस्थितविकल्पार्थः । प्रणवादिचिन्तनादीनां विद्याविशेषसन्निध्याम्नातानामपि सकलविद्यासाधारण्ये यो वक्तव्यो न्यायस्स ब्रह्ममीमांसकानां विद्याविशेषसन्निध्याम्नातस्य आनन्दादिगुणजातस्य अस्थूलत्वादिनिषेधवृन्दस्य अर्चिरादिमार्गस्य सन्न्यासस्य यज्ञादिकर्मनिकरस्य शमदमादिपरिकरस्य च सर्वविद्यासाधारण्यमभ्युपगच्छतां प्रसिद्ध एवेति वर्णितम् पूर्वसूत्रे कर्ममीमांसकान्प्रति त्विदमुच्यते । तेषामपि नास्ति विरोधः मन्त्रादिषु दर्शनात् । क्वचिच्छाखायां विद्याविशेषसन्निध्याम्नातानामपि प्रणवचिन्तनादीनां शाखान्तरपठितविद्यांतराङ्गत्वं सामशाखायां क्रतुप्रकरणाम्नातानां तदङ्गानां स्तोत्रीयसाधारणमन्त्राणां याजुर्वेदिकाधानाङ्गत्वमिव विनियोजकप्रमाणबलान्न विरुध्यते । ध्यानानुवादस्य प्रकरणानुरोधेन सङ्कोचाभावः स्वरविधौ यजुर्वेदविहितकर्मा-

विरोधः तथाऽत्रापीति ॥

इत्यङ्गावबद्धाधिकरणम् ॥ ३१ ॥

## अथ क्रतुज्यायस्त्वाधिकरणम् ॥ ३२ ॥

### सू ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

इह वैश्वानरविद्यायामुपासनमंशेन समस्तेन वेति संदिह्यते । तथा हि—तत्र द्युलोकसूर्यवाय्वाकाशोदकपृथिव्यो वैश्वानरस्य मूर्धचक्षुःप्राणमध्यशरीरमूत्रस्थानपादरूपा ध्यातव्या इति निरूपितम् । तेषामङ्गानामपि प्रत्येकमुपासनमभिहितम् 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते' इति पृथक्पृथग्दिवादिपर्यायगतैर्वाक्यैः । एवं सत्युपास्तिशब्दस्य फलवचनस्य च प्रत्येकमुपलभ्यमानत्वादंशोपासनमुचितमिति पूर्वः पक्षः ॥

---

तुवादस्येव श्रुतिप्राबल्यान्न विरुध्यते । विद्याविशेषानुबन्धिनोरप्युद्धूलनत्रिपुण्ड्रयोस्सर्वविद्यासाधारण्यं, व्रीह्यनुबन्धिनोऽवहननस्य यवसाधारण्यमिवापेक्षाबलान्न विरुध्यत इति ॥

इत्यङ्गावबद्धाधिकरणम् ॥ ३१ ॥

## अथ क्रतुज्यायस्त्वाधिकरणम् ॥ ३२ ॥

सू० ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥ किंचिद्विद्यान्वितानामेव प्रणवचिन्तनादीनां विद्यांतरेष्वप्यन्वयवत्समस्तोपासनान्वितानामेव द्युसूर्यादीनां व्यस्तोपासनास्वप्यन्वय इति शङ्कया पूर्वपक्षोत्थानात्सङ्गतिः । व्यस्तोपासनेषु प्रत्येकमाख्यातं फलं च द्युसूर्यादिषु प्रत्येकं वैश्वानरत्वं च श्रूयते । व्यस्तोपासननिन्दापूर्वकं समस्तोपासनं च श्रूयते । तयोः समबलत्वे व्यस्तोपासनं च कार्यम् । न्यूनाधिकबलत्वे समस्तोपासनमेव कार्यमिति तदनवधारणात्संशयः । समस्तोपासनं सिद्धान्तिनोऽप्यभिमतं नोपपादनीयमिति, प्रत्येकमाख्यातश्रवणादिभिर्व्यस्तोपासनमुपपादयन्पूर्वपक्षयति—तथाहीति । अत्त्यन्नमिति । अन्नमत्तीत्यन्वयः । एवमुत्तरत्रापि । फलवचनस्य चेति चकारेण प्रत्येकं वैश्वानरत्वश्रवणं समुच्चीयते । अंशोपासनमिति । यथा समस्तस्य वैश्वानरत्वश्रवणात्तदुपासनतत्फलश्रवणाच्च समस्तोपासनमुचितम् । एवमवयवोपासनमपि[1] । उभयत्रापि वर्तमानापदेशे विधिकल्पनस्यार्थवादिकफलकल्पनस्य चाविशिष्टत्वेन यत्र विधिभक्तिरेवं कामशब्दो वा तत्र विधिरन्यत्रावयुत्यानुवादः समुदायानुवादो वेति कल्पनायां नियामकाभावात् । न च वैश्वानरात्मबुभुत्स्वौपमन्यवादिप्रश्नभूते स्वर्लोकादिपृथिव्यन्त-

---

नयमणिमालायाम्

## अथ अङ्गावबद्धाधिकरणम् ॥ ३१ ॥

सू० ॥ अङ्गावबद्धस्तु न शाखासु प्रतिवेदम् ॥ ५३ ॥ मन्त्रादिवद्वाविरोधः ॥ ५४ ॥

भस्मोद्धूलत्रिपुण्ड्रप्रणवजपशिखारुद्रपाठादिमुक्तेर्व्यावर्त्यांगावतारप्रकरणपठिता एव विद्याः श्रयेत ।
मैवं मुक्त्यान्वयित्वं स्तुतिभिरधिगतं क्वापि सामायितस्येत्यंगीकार्योप…यप्रकृतनियमनं सर्वविद्याङ्गभावः ॥२८०॥

इत्यङ्गावबद्धाधिकरणम् ॥ ३१ ॥

---

(१) 'एवं व्यस्तोपासनमपि' इति ख. पाठः ।

सिद्धान्ते तु—समस्तोपासनमेव मुख्यमित्युच्यते। तथा हि—तत्र त्रैलोक्यशरीरतयोपास्यस्य वैश्वानरात्मनः स्वर्लोकादिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वमभिधाय 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति ब्रह्मानुभवः फलं चाभिहितम्। तत्र मूर्धाद्यवयवोपासनात् भूम्नः समस्तोपासनस्य ज्यायस्त्वं प्रामाणिकत्वम्, तत्रैव ब्रह्मानुभवफलाभिधानात्। तत्रावयवोपासनं फलकीर्तनं च क्रतुवदविवक्षितम्। 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्युक्त्वा 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' इत्यादिनोच्यमानमष्टाकपालादिकं तत्फलं च यथा न विवक्षितं तद्वत्। तथा हि समस्तोपासनस्यैव ज्यैष्ठ्यं

---

त्रिशरीरकवैश्वानरात्मनिरूपणपूर्वकसर्वलोकसर्वभूतसर्वात्मभोग्यब्रह्मानन्दानुभवरूपतदुपासनाफलप्रतिपादनपर्यन्तस्य कृत्स्नस्य सन्दर्भस्यैकवाक्यत्वावगमात्तत्संरक्षणीयव्यस्तोपासनतत्फलवचनानां पुत्रेष्टिविषयमहावाक्यान्तर्गताष्टाकपालतत्फलादिवचनवदर्थवादरूपत्वं कल्पनीयमिति वाच्यम्। भूमविद्यायां सत्यशब्दोक्तस्य ब्रह्मणः सर्वतोभूमत्वप्रतिपादनार्थं तदवधित्वेनोपन्यस्यमानेषु नामादिप्राणान्तेष्विव सर्वशरीरकस्य वैश्वानरस्य प्रतिपादनार्थं तदवयवत्वेनोपन्यस्यमानेषु स्वर्लोकादिषु प्रातिस्विकोपासनातत्फलविधानस्य महावाक्यैक्याविरोधित्वात्। न च भूमविद्यायां नामाद्युपासनानामश्रुता निन्दात्र व्यस्तोपासनानां श्रूयते। साचोदितानुदितहोमनिन्दान्यायेन प्रक्रान्तपरित्यागविषयतया योजयितुं न शक्यते। समस्तोपासनामविज्ञाय व्यस्तोपासनामेव कृतवतः प्राचीनशालादिति तन्निन्दाश्रवणादिति वाच्यम्। तथापि न हि निन्दान्यायेन योजयितुं शक्यत्वात्। न ह्यत्रोदितानुदितहोमयोरिव व्यस्तोपासनेषु प्रायश्चित्तश्रवणमस्ति येन प्रक्रान्तपरित्यागविषयतया योजनपर्यंतमपश्येत। निन्दया व्यस्तोपासनां निषेधोन्नयनबलेन 'नचतुस्त्रिंश'दिति ब्रूयादिति निषेधेनेव विध्युन्नयनमवर्जनीयम्। निषेधस्य रागप्राप्तविषयत्वाभवात्। तस्मात्समस्तोपासनवद्व्यस्तोपासनान्यपि नामाद्युपासनवद्विधेयान्येवेति भावः। ननु ज्यायस्त्वं प्रशस्यतरत्वं न तद्व्यस्तोपासनविधिप्रतिक्षेपकं किंतु तत्साधकमेव। तत्सद्भावे हि ब्रह्मदृष्टिविशिष्टैकैकावयवोपासनारूपादभ्युदयफलात्तस्मात्सर्वावयवविशिष्टब्रह्मोपासनस्य मोक्षफलस्य विषयविशेषेण फलविशेषेण च प्राशस्त्यमुपपद्यत इत्याशङ्क्य व्याचष्टे—प्रामाणिकत्वमिति। ज्यायस्त्वं प्राचीनत्वं। 'वृद्धस्य चे'ति सूत्रेण वृद्धशब्दस्यापि ज्यादेशविधानात्। तत्प्रामाणिकत्वपर्यवसायी। प्रामाणिकं हि स्वाभाविकत्वेन प्रायोऽनादिसिद्धं भवति। भ्रान्तिकल्पितं तु पूर्वपक्षिणोत्प्रेक्षितमद्यतनं भवेत्। क्रतुवदविवक्षितमिति। अत्र ब्रह्मानुभवफलाभिधानादिति हेतोरन्वयः। तथा च यस्मिञ्जात एतामिष्टिं निर्वपतीति वाक्येन वर्ण्यमाने द्वादशकपालद्रव्यकेष्टिफले पूतत्वादिसमुदाये पूतत्वादिरेकैक इव सकलविषयभोगकणिकामहासुधासमुदायमाणब्रह्मानन्दानुभवे 'अत्त्यन्नमित्यादिनोक्तोऽभ्युदयफलविशेषोन्तर्भवतीत्यवयुत्यानुवादसंभवान्न वाक्यभेदावहं व्यस्तोपासनानामपि विधानमाश्रयणीयमिति भावः। ननु महावाक्यैकत्वेऽपि नामाद्युपासनादिवद्व्यस्तोपासनानां विधानमुपपद्यते इत्याशङ्कानिराकरणार्थं 'तथाहि दर्शयति' इति सूत्रशेषं व्याचष्टे—तथा हीति। ज्यैष्ठ्यमिति। व्यस्तोपासनाभिरनर्थस्योद्घाटनेन तासां भ्रान्तिमूलत्वं दर्शयन्ती श्रुतिः समस्तो-

दर्शयति श्रुतिः—तत्र हि 'औपमन्यव कं त्वमात्मानमुपास्से' .... 'प्राचीनयोग्य-कं त्वमात्मानमुपास्से' इत्यादिप्रश्नानन्तरं 'दिवमेव भगवो राजन्' .... 'आदि-त्यमेव भगवो राजन्' इत्यादिप्रतिवचनैरवयवोपासनेऽभिहिते 'अत्त्यन्नं पश्यति प्रियम्' इत्यादिना तत्रतत्र फलनिर्देशं कृत्वाऽपि 'मूर्धा त्वेष आत्मन इति हो-वाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' इत्यादिराजवचनैरनर्थं ब्रवीति। अतः समस्तोपासनमेव मुख्यम् ॥

इति क्रतुज्यायस्त्वाधिकरणम् ॥ ३२ ॥

पासनस्यैव प्रामाणिकत्वं दर्शयतीत्यर्थः। नन्वनर्थवचनं न हि निंदान्यायेन समस्तोपा-सनास्तुत्यर्थतयोपपन्नं न निषेधानुमापकम् । तथात्वेऽपि लोकतः प्राप्तानां व्यस्तोपास-नानां निषेधः तेषु विधेस्साधक एव न बाधक इत्याशङ्कानिराकरणमभिप्रेत्योपसंहरति—अत इति। मुख्यमिति। मुखे अग्रे भवं प्राचीनं प्रामाणिकमिति यावत्। अयमाशयः। अग्निहोत्रं प्रकृत्य श्रुतेन 'जर्तिलयवाग्वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नारण्यान्' इति वाक्येन जर्त्तिलगवीधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोर्वि-कल्पेनाग्निहोत्राहुतौ द्रव्यत्वविधाने लिङ्विभक्तिबलेन ग्राम्यारण्यपशुहिंसारहिततया तयोः स्तवनेन च प्रतीयमानेऽपि 'अथो खल्वाहुरनाहुतिर्वै जर्त्तिलाश्च गवीधुकाश्च पयसाग्निहोत्रं जुहुया'दिति तदनंतरं जर्त्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात् तदेकवाक्यतया 'जर्त्तिलय-वाग्वा वा जुहुया'दित्यादेः ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हा अपि जर्त्ति-ला गवीधुकाश्च यदपेक्षया दुष्टाः तत्पयोऽत्यन्तं प्रशस्तमिति पयःस्तुत्यर्थत्वमेकवाक्यानु-रोधादिति। न चेदन्यं प्रकल्पयेत्प्राक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्चेति, पूर्वत-न्त्राधिकरणे किञ्चिद्विधिपूर्वकं निन्दायास्सह विधिना विध्यंतरश्रवणे सति तदर्थवादत्वं तदेकवाक्यत्वानुरोधात्समर्थितम् । एवमिहाप्यङ्गीकर्त्तुं युक्तम् । ननु जर्त्तिलगवीधुकयोः पयसा सह संबन्धाभावाज्जर्तिलगवीधुकयवागूविधानयोः पयोविध्येकवाक्यतार्थवादतयैव समर्थनीयेति। तत्र तथास्तुनाम इह तु भूमविद्यायां नामादीनां सत्वेन ब्रह्मणा सह भू-यस्त्वावधित एव दिवादीनां समस्तोपासनाविषयेण वैश्वानरात्मना सहावयवत्वेन संबं-धोऽस्तीति प्रासंगिकतदुपासनाविधानैकवाक्यत्वभंगो नास्ति । अतो भूमविद्यान्याय ए-वात्र प्रवर्तते न तु जर्त्तिलयवागून्याय इति चेत् मैवम् । व्यस्तोपासनानां निन्दनेन 'मू-र्द्धात्वेष आत्मन इति होवाचे'त्यादि वाक्येषु तु शब्दकृतेन दिवादीनां स्वतन्त्रोपास्य-त्वव्यवच्छेदनेन 'तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नम-त्थे'ति व्यस्तोपासनानां भ्रममूलत्वोद्घाटनेन भूमविद्यावैषम्यस्य बहुविधस्य सत्वेन ज-र्त्तिलयवागून्यायस्यैवात्र प्रवृत्त्यौचित्यादिति ॥ इति क्रतुज्यायस्त्वाधिकरणम् ॥ ३२ ॥

नयमणिमालायाम्

अथ क्रतुज्यायस्त्वाधिकरणम् ॥ ३२ ॥

सू० ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

वैश्वानरलिङ्गानामप्युपासना भिन्ना । प्रत्येकमुपास्तिपदान्प्रति नियतत्वात्फलानां च ॥ २८१ ॥

तत्र समस्तोपास्तेर्वाक्यैकत्वाद्विधिरिस्तैकैव । अङ्गेषु दोषकथनादुपासनानां विधिर्नास्ति ॥ २८२ ॥

इति क्रतुज्यायस्त्वाधिकरणम् ॥ ३२ ॥

## अथ नानाशब्दाद्यधिकरणम् ॥ ३३ ॥

### सू ॥ नाना शब्दादिभेदात् ॥ ५६ ॥

इह परविद्यायामेकीकरणेनोपासनमुत भेदेनेति संशये नानाशाखाश्रुतानामपि विद्यानां वेद्यस्य ब्रह्मण एकत्वादेकीकरणेनोपासनम् । इति प्राप्ते उच्यते—अनन्तश्रुतिबोध्यानामनन्तानां विद्यानामेकीकृत्यानुष्ठानायोगात् स्वरूपैक्येऽपि ब्रह्मणो गुणभेदात् विद्याभेदः । यत्र गुणभेदो नास्ति तत्र स्थानादिभेदाद्विद्याभेदः । राजादिगुणभेदादिन्द्रस्य पुरोडाशदानभेदवत् गार्हपत्यस्थानादिभेदादग्नेरुपचारभेदवच्च विद्याभेद उपपन्न इति निरूपितम् । अतो

---

## अथ नानाशब्दाद्यधिकरणम् ॥ ३३ ॥

सू० ॥ नानाशब्दादिभेदात् ॥ ५६ ॥ यत्र गुणभेद इति । सत्यविद्यायां हि 'सयो हवैतन्महद्यक्षं प्रथमजं वेदे'त्यत्र वेद्यस्य सत्यस्य ब्रह्मणो गुणभेदो नाम्नातः । तत्राक्षादित्यस्थानभेदात् विद्याभेद इत्यर्थः । ननु दहरवैश्वानरादिविद्यासु प्रत्ययावृत्तिरूपोपासनस्यैकरूपत्वाद्वेद्यस्य ब्रह्मणस्सर्वत्रैकरूपत्वाच्च विद्यैक्यमाशङ्क्य 'यथें द्राय राज्ञ'इत्यत्र हविःप्रदानरूपस्य यागस्य सर्वत्रैकरूपत्वेऽपि यष्टव्यस्येंद्रस्यैकत्वेऽपि राजादिगुणभेदाद्यागभेदः तथा वेद्यगुणभेदाद्विद्याभेदः इति 'प्रदानवदेव तदुक्त'मित्यधिकरणे निरूपितम् । स्थानभेदाद्विद्याभेद इत्यपि आयतनभेदादग्नीनामुपचारभेदवदिति तत्रैव निरूपितप्रायं । किमर्थमिदमधिकरणमित्याशङ्क्य तत्राधिकरणे निरूपितत्वं तावदंगीकरोति । राजादिवदिति। तेनैव न्यायेनात्रापि निर्णय इत्यत आह—अत इति । न च शब्दाद्यनुबन्धभेदस्तत्र नोक्त इति तदर्थमिदमधिकरणं स्यादिति शङ्कनीयम् । 'यजति जुहोति ददाती'त्यादिपदपर्यायधातुभेदे हि शब्दान्तरन्यायः प्रवर्त्तते । विद्याप्रकरणेषु 'ध्यायेदुपासीत क्रतुं कुर्वीते'ति धातुभेदेऽपि नापर्यायतास्ति । न चोपकोसलविद्यादिषु केवलं विदिधातुप्रयोगोऽपि दृश्यते । तस्य ज्ञानसामान्यवाचित्वं नोपास्तिपर्यायतास्तीति वाच्यम् । ध्यानस्यैव साक्षात्कारजनकताया लोकदृष्टत्वेन 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इति श्रुतिप्रतिपन्नत्वेन च मोक्षापेक्षितसाक्षात्कारसिद्धये तेषु विधिश्रवणस्य विद्यान्तरश्रुतोपासनार्थत्वस्यावश्याङ्गीकर्तव्यतया फलतः पर्यायत्वप्राप्तेः । न चावृत्त्यनपेक्षा सकृदेवानुष्ठेया साक्षात्कारद्वारिका, काचन मुक्तिहेतुर्विद्यास्ति । येनावृत्त्यनावृत्तिगुणविधावाचकधात्वोरपर्यायत्वेन तत्र शब्दान्तरन्यायस्समर्थेति तथाभूतविद्यायां प्रमाणाभावात् । तत्सत्वे च किमुपकोसलविद्यादयोऽपि तथैवावृत्तिनिरपेक्षाः मोक्षहेतव इति शङ्काया अशक्यनिरसनत्वेन तेषामुपासनाविशेषत्वाभ्युपगमस्य निर्मूलत्वापत्तेः । न च क्वचिद्विद्यायां विद्योपास्त्यौ व्यतिकरितप्रयोगसत्वात् तत्र विदे छागविदेन्यायेनोपासनापर्यवसानमस्तीत्येतावतान्यत्रापि तथा कल्पनं युक्तम् । कर्मकाण्डेऽपि 'योऽश्वमेधेन यजते य उ चैनमेवं वेदे'त्यादेरुपासनार्थत्वकल्पनाप्रसङ्गा'च्चित्रया यजेत पशुकाम' इत्यादावपि पशुशब्दस्य छागार्थत्वकल्पनाप्रसंगाच्च । तस्माद्विद्याविधिषु मुख्यस्य शब्दांतरस्यासंभवात् तत्तद्विद्याप्रकरणाम्नाता साधारणगुणकलापविशेषितविद्याविधय एव शब्दांतराणीव भवंति । 'अर्थेनैव विशेषो हि निराकार-

नानाप्रकारा विद्या शब्दाद्यनुबन्धभेदात् इति निर्णयः । पुनरधिकरणारम्भोऽयं ज्ञानस्याविधेयतानिरासार्थः ॥

इति नानाशब्दाद्यधिकरणम् ॥ ३३ ॥

## अथ विकल्पाधिकरणम् ॥ ३४ ॥

### सू ॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

एवं नानाप्रकाराः परविद्या निरूपिताः । तासूपासकस्य विकल्पः समुच्चयो

---

तया धिया' मिति न्यायेन 'विद्यादुपासीत ध्यायेदि'त्याद्याख्यातैर्विधेयत्वेन समर्प्यमाणानां विद्यानां प्रायस्तत्तद्गुणरूपविषयविशेषविशिष्टतया परस्परविलक्षणत्वेनैव समर्प्यमाणत्वादित्येवमौपचारिकीहशब्दान्तरोक्तिरित्येव समर्थनीयम् । एवं गुणभेदोपाधिकशब्दान्तरोक्तिर्विवक्षितविवेकेन गुणभेदोक्तिरित्येव पर्यवस्यति । गुणभेदाद्भेदस्तु प्रागेव समर्थितः । प्रकरणभेदादिकं च विद्याभेदे संभवत्प्रमाणं 'न वा प्रकरणभेदात्परोवरीयस्त्वादिव'दित्यादिसूत्रैस्तत्र तत्राविष्कृतम् । ब्रह्मगुणादिभेदेऽपि वेद्यब्रह्मैक्याद्विद्यैक्यशङ्कामात्रमवशिष्टं तदपि 'प्रदानवदेव तदुक्त'मित्यधिकरणे निराकृतम् । नात्र निराकरणीयं किञ्चिदस्ति । किमर्थं तर्ह्येतदधिकरणमित्याकाङ्क्षायामाह—पुनरिति । अविधेयज्ञानवादासंमतिसूचनार्थं ज्ञाने शब्दान्तररूपचोदनाभेदसद्भावप्रदर्शनं द्युसूर्यादिसमस्तावयवविशेषतया वैश्वानरविद्यैक्यवन्नानाशाखाम्नातनानाप्रकरणपठितसकलगुणविशेषतया ब्रह्मविद्यामात्रस्यैक्यमस्त्विति पूर्वाधिकरणसङ्गतशङ्कानिराकरणव्याजेन ज्ञानस्याविधेयतां निराकर्तुमिदमधिकरणमारब्धमित्यर्थः । यद्यपि 'सर्ववेदान्तप्रत्ययचोदनाद्यविशेषा'दिति सूत्रेण चोदनाग्रहणेनाविधेयज्ञानासङ्गतिसूचनं लब्धं तथापि तद्दृढीकरणमस्य फलमिति भावः ॥

इति नानाशब्दाद्यधिकरणम् ॥ ३३ ॥

## अथ विकल्पाधिकरणम् ॥ ३४ ॥

सू० ॥ विकल्पोऽविशिष्टत्वात् ॥ ५७ ॥ विद्यानां विकल्पसमुच्चयचिन्ताविद्याभेदसिद्ध्यपेक्षत्वात्तदनन्तरं प्रवर्तत इति सङ्गतिं दर्शयन् किमासां विकल्प एव उत समुच्चयोऽपि संभवतीति समुच्चये फलभूयस्त्वसंभवाऽसंभवाभ्यां संशयं दर्शयति । एवमिति । फल-

---

नयमणिमालायाम्

## अथ नानाशब्दाद्यधिकरणम् ॥ ३३ ॥

सू० ॥ नाना शब्दादिभेदात् ॥ ५६ ॥

सर्वास्वपि विद्यासु ब्रह्मैकं वेद्यमेकमेव फलम् । तस्माद्विद्यैक्यं स्यान्नानाशाखागुणौघसंकलनात् ॥ २८३ ॥
तावद्गुणसंकलनं कर्तुं शक्यं न केनापि । सच्छब्दान्तरमुख्यैरुपासनास्तत्र तत्र भिन्नाः स्युः ॥ २८४ ॥
ननु शब्दान्तरकथनं गुणभेदोपाधिकं हि विद्यासु । गुणभेदात्तद्भेदः प्रदानवदिति प्रसाधितः पूर्वम् ॥ २८५ ॥
सत्यं पुनरित्युक्तिरसावविधेयज्ञानमपनेतुम् । अपि च प्रकटीकर्तुं फलसंज्ञाभेदतोऽपि तद्भेदम् ॥ २८६ ॥

इति नानाशब्दाद्यधिकरणम् ॥ ३३ ॥

वेति संशयः॥ किं प्राप्नोति? दहरविद्यासद्विद्यादीनां समुच्चयेनानुष्ठानमुचितम्, कर्मभूयस्त्वेन फलभूयस्त्वसंभवात्। विकल्पे तु किञ्चिन्नियामकं नास्ति॥ इति प्राप्ते ब्रूमः—एकस्मिन्नुपासके सर्वासां परविद्यानां विकल्प एव। कुतः? निरतिशयब्रह्मानन्दानुभवस्य ब्रह्मसाक्षात्कारफलस्याविशिष्टत्वात्। प्रयोजनमेकेनोपासनेन यदि सिद्ध्यति किमन्यैरप्रयोजनैः। किंच, एकेनोपासनेन ब्रह्मस्वरूपापरोक्षं निरतिशयभावनया सिध्यति। ध्येयतादात्म्याभिमानात्। तदेकं परित्यज्यान्यत्र गमने चित्तविक्षेपः स्यात्। अतो विकल्प एव॥

इति विकल्पाधिकरणम्॥ ३४॥

## अथ यथाकामाधिकरणम्॥ ३५॥

### सू॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्॥ ५८॥

इह ब्रह्मसाक्षात्कारव्यतिरिक्तफलानामपि विद्यानां पूर्वाधिकरणन्याय इति सन्देहे प्राप्तेऽभिधीयते—न पूर्वाधिकरणन्याय इह संभवति, वैषम्यात्। 'देवो

---

भूयस्त्वसंभवादिति। यद्यपि निरतिशयब्रह्मानन्दानुभवरूपे मोक्षे भूयस्त्वाल्पत्वविशेषो न संभवति। तथापि कासुचिद्विद्यासु लोकशेषप्राप्तिपूर्विका ब्रह्मप्राप्तिः। यथा मधुविद्यायां वस्वादिलोकप्राप्तिपूर्विका उपकोसलविद्यायामग्निलोकप्राप्तिपूर्विका इत्येवमन्तरालप्राप्यफलविशेषसत्वात्तल्लिप्सायाः समुच्चयोप्युपपद्यते। न च ब्रह्मप्राप्तिफलानां विद्यानामाप्रायणमहरहरनुष्ठेयत्वादनेकविद्यासमुच्चयानवकाशः आप्रायणमहरहस्सन्ध्योपासनाग्निहोत्रावसथ्यहोमादीनामिव समयभेदेन समुच्चयसंभवादिति भावः। अविशिष्टत्वादिति। सकलविषयभोगविरक्तानां मुमुक्षूणां ब्रह्मानुभव एक एवोद्देश्यं फलं। न त्वन्तराले भवदपि वसुभावादिकम्। अत उद्देश्यफलस्यैकत्वाद्विद्यानां विकल्प एवेत्यर्थः। यदि कश्चिन्नानालोकावाप्तिद्वारिकां क्रममुक्तिमपेक्षेत तस्य तल्लोकावाप्तिद्वारा मुक्तिफलानां विद्यानां समुच्चयस्स्यादित्याशङ्क्याह—किंचेति। चित्तविक्षेपः स्यादिति। एकस्यां विद्यायामभिरतस्य तत्रैकाग्र्यसिद्धये चित्तविक्षेपसमाधानार्थमुपासनानुष्ठानकालव्यतिरिक्तकालेष्वनुष्ठेयं मौनं 'सहकार्यन्तरविधि'रित्यधिकरणे प्रदर्शयिष्यते। अतो नास्ति विद्यान्तरावकाश इति भावः॥

इति विकल्पाधिकरणम्॥ ३४॥

अथ यथाकामाधिकरणम्॥ ३५॥

सू०॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्॥ ५८॥ प्रत्युदाहरणसङ्गत्येदमधिकरणम्। पूर्वाधिकरणन्याय इति। अभ्युदयफलानामप्युपासनानां मोक्षफ-

---

नयमणिमालायाम्

अथ विकल्पाधिकरणम्॥ ३४॥

सू०॥ विकल्पोऽविशिष्टफलत्वात्॥ ५७॥

तासां समुच्चयोपि स्याद्याव(त्सन्ध्यादिवद्य)नुष्ठातुः। फलभूयस्त्वमपेक्ष्य ज्योतिष्टोमाग्निहोत्रयोर्दृष्टेः॥ २८७॥

तासां विकल्प एव ब्रह्मानन्दे फले विशेषाभावात्। साक्षात्कारायोगात्समुच्चये चित्तवृत्तिविक्षेपे॥ २८८॥

इति विकल्पाधिकरणम्॥ ३४॥

भूत्वा देवानप्येति' इति जीवत एव भावनाप्रकर्षवशाद्देवभावसाक्षात्कारप्राप्तिर-वगम्यते परविद्यास्वहंग्रहवतीषु । न तथा नामब्रह्माद्युपासनासु काम्यासु साक्षात्कारफलत्वे किंचिन्मानमस्ति । तत्फलत्वाभावे च तत्र तत्र भोगभूयस्त्वापेक्षया समुच्चय एव युक्तः, ब्रह्मफलवदेकत्वाभावात् । तत एकं वा बहु वा समाश्रित्यानुष्ठेयमिति निर्णयः ॥

इति यथाकामाधिकरणम् ॥ ३५ ॥

## अथ यथाश्रयाधिकरणम् ॥ ३६ ॥

## सू ॥ अङ्गेषु यथाश्रयभावः ॥ ५९ ॥

इह पुनरुद्गीथाद्यङ्गावबद्धानां क्रत्वङ्गभावः स्वातन्त्र्यं वा ॥ इति संशये पूर्वपक्षन्यायः प्रवर्तते । उद्गीथादिष्वङ्गेषु श्रुतानामुपासनानामुद्गीथादिवत् क्रत्वङ्गभाव एव । गोदोहनादिवत् स्ववाक्ये फलाश्रवणात् ॥

---

लकोपासनानां मोक्षफलकोपासनावदुपासनात्वादुपास्यसाक्षात्कारापेक्षत्वमविशिष्टमिति भावः । न तथा नामब्रह्माद्युपासनास्विति । 'देवो भूत्वा देवानप्येती'ति जीवत एवोपास्यतादात्म्यभावनाप्रकर्षवशात्तथाभूतसाक्षात्कारकृतोपास्यदेवभावापत्तिर्ब्रह्मविषयास्वहंग्रहोपासनासूच्यते न काम्यासु । अतः काम्यविद्यानां यथाकालमनुष्ठितानां कालान्तरे चित्तविक्षेपेऽप्यपूर्वद्वारा फलजनकत्वाविरोधात्समुच्चयोपपत्तिरिति भावः ॥

इति यथाकामाधिकरणम् ॥ ३५ ॥

## अथ यथाश्रयाधिकरणम् ॥ ३६ ॥

सू० ॥ अङ्गेषु यथाश्रयभावः ॥ ५९ ॥ अभ्युदयार्थोपासनवत्त्वङ्गाश्रितोपासनानामपि यथाकाम्यं प्रतिपाद्यत इति सङ्गतिमभिप्रेत्य संशयं दर्शयति—इह पुनरिति । पुनश्शब्दस्तन्निर्धारणानियम इत्यधिकरणे निर्णीत एवार्थे कैश्चन हेतुभिः पुनश्शङ्कोत्थानमित्यगतार्थतां सूचयति । यथाश्रयभाव इत्येतद्व्याचष्टे—उद्गीथवदिति । यथोद्गीथादीनामुपासनाश्रयाणां क्रत्वङ्गस्तोत्रसंबन्धेन क्रत्वङ्गभावस्तथोपासनानामपि क्रत्वङ्गोद्गीथादिसंबन्धेनेत्यर्थः । ननु गोदोहनादीनां प्रणयनाद्याश्रितानामपि प्रणयनादिवत्क्रत्वङ्गभावो नास्ति तथा किं न स्यादित्याशङ्क्य यथाश्रयभावइत्यनेन विवक्षितं तद्वैषम्यमाह—स्ववाक्य इति ।

---

### नयमणिमालायाम्

### अथ यथाकामाधिकरणम् ॥ ३५ ॥

सू० ॥ काम्यास्तु यथा कामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥

एवं सति काम्यानामपि विद्यानां विकल्पनं न्याय्यम् । चित्ताविक्षेपेण ध्येयाविर्भावलाभाय ॥ २८९ ॥

तासां भवति विकल्पः समुच्चयो वा फलेऽभेदात् । ध्यानास्पदादसाक्षात्कृतिरहंग्रहोपासनास्वेव ॥ २९० ॥

इति यथाकामाधिकरणम् ॥ ३५ ॥

## सू ॥ शिष्टेश्च ॥ ६० ॥

'उद्गीथमुपासीत' इति विधेः 'यदेव विद्यया करोति' इत्यत्र विध्यभावाच्चाङ्गभाव एव ॥

## सू ॥ समाहारात् ॥ ६१ ॥

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरन्ति' इत्युपासनस्य समाहारे नियमो दृश्यते। अतोऽपि क्रत्वङ्गभावः। दुरुद्गीथो वेदनहीन उद्गीथः। वेदनहानौ अन्येन समाधानं ब्रुवद्वाक्यं हि तस्य नियमेनोपादानं दर्शयति। नियमाच्चाङ्गभावः ॥

## सू ॥ गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

'तेनेयं त्रयीविद्या वर्तते ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति' इति सर्वतः सञ्चरतः प्रणवस्य गुणत्वेनोपासनस्य सञ्चाराद्प्युपासनोपादाननियमोऽवगम्यते। तेनेति हि प्रकृतपरामर्शशब्दः, प्रकृतं सोपासनमेव प्रणवं परामृशति। अतः पूर्वोक्त उद्गीथाद्युपासनानामनियमो न संभवति ॥ इति प्राप्ते सिद्धान्त उच्यते—

## सू ॥ न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

अङ्गभावो हि सहभावः। तदश्रवणादेषां न तद्भावः। 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इति फलान्तरसाधनतयाऽवगतानामुपासनानामङ्गभावाभावात्। 'उद्गीथमुपासीत' इत्युद्गीथाश्रयतामात्रप्रतिपादनान्न तेषामङ्गावबद्धानां क्रत्वङ्गभावः ॥

## सू ॥ दर्शनाच्च ॥ ६४ ॥

'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' इति ब्रह्मणो वेद-

---

गोदोहनवाक्ये पशुकामपदसमभिव्याहाराच्चतृतीयया फले गोदोहनं विनियुङ्क्त इति युक्तं। तस्य फलार्थत्वात्। इह तु स्ववाक्ये फलश्रवणेन तादर्थ्याप्रतीतेः। प्रत्युत द्वितीयया क्रत्वङ्गसंस्कारस्यैव च प्रतीतेरुत्पत्तिवाक्येन क्रत्वङ्गत्वावधारणे सति विद्ययेति वाक्यान्तरे फलश्रवणमकिञ्चित्करमिति भावः ॥ सू० ॥ शिष्टेश्च ॥ ६० ॥ उद्गीथाङ्गत्वे विधिश्रवणमस्ति न फलार्थत्व इति वैषम्यान्तरम्। यदि तु विधिश्रवणाभावेऽपि 'यदेव विद्यये'ति तृतीयाश्रवणमस्तीति तत्फलार्थत्वे विधिः कल्प्येत, तथापि न तत्प्रथमप्रतीतक्रत्वङ्गत्वबाधकम्। यथा प्रस्तरप्रहरणस्य सूक्तवाक्येन 'प्रस्तरं प्रहरती'ति विहितस्य दर्शपूर्णमासप्रकरणावगते

नेन सर्वरक्षणं वदन्ती श्रुतिरुद्गातृप्रभृतीनां वेदनस्यानियमेनानङ्गतां दर्शयति । अतः पूर्वोक्त उपासनानामनियमो युक्त एव ॥

इति यथाश्रयाधिकरणम् ॥ ३६ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

---

तदङ्गत्वे सत्येव मान्त्रवर्णिकेन फलेनाप्यन्वयः तथात्राप्युपपत्तिरिति भावः ॥

इति शिवातिवादिमूर्द्धन्यशिवदर्शनस्थापनधुरंधरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीभरद्वाजकुलजलधिकौस्तुभविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ श्रीकण्ठशिवाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकाख्यायां तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

---

नयमणिमालायाम्

अथ यथाश्रयभावाधिकरणम् ॥ ३६ ॥

सू० ॥ अङ्गेषु यथाश्रयभावः ॥ ५९ ॥ शिष्टेश्च ॥ ६० ॥ समाहारात् ॥ ६१ ॥ गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥ न वा तत्सहभावाश्रुतेः ॥ ६३ ॥ दर्शनाच्च ॥ ६४ ॥

अङ्गाश्रितविद्यानामङ्गत्वं पर्णतादिवद्युक्तम् । तेनोभाविति वचसो हेतोरुद्गीथवचनेन ॥ २९१ ॥

न नयोऽत्र पर्णतायास्तृतीयया फलकारणतावगता । स्यात्तु दुरुद्गीथवचः फलार्थिनः प्रतिविधानपरम् ॥ २९२ ॥

इति यथाश्रयभावाधिकरणम् ॥ ३६ ॥

इति श्रीमदप्पय्यदीक्षितकृतौ अधिकरणसारसङ्ग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥



॥ श्रीः ॥

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## अथ तृतीयाध्यायस्य चतुर्थः पादः

### अथ पुरुषार्थाधिकरणम् ॥ १ ॥

पूर्वत्रोपपादितः परविद्याप्रकारः । इह तु विद्यासहकारिण आश्रमधर्मादीन् निरूपयितुं विद्यात एव पुरुषार्थ इति दर्शयति—

**सू ॥ पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥**

अतो विद्यात एव पुरुषार्थः 'ब्रह्मविदाप्नोति परम्' 'ज्ञात्वा शिवं शान्तिम-त्य' इत्यादिशब्दादिति भगवान् बादरायणो मन्यते ॥ तत् संभवति न वेत्युभयश्रुतिदर्शनात् संशये सति पूर्वपक्षः प्रवर्तते—

**सू ॥ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥**

न विद्यातः पुरुषार्थः कुतः? 'तत्त्वमसि' इत्यादिसामानाधिकरण्येन कर्मसु

---

## शिवार्कमणिदीपिकायाम्

## तृतीयाध्यायस्य चतुर्थः पादः ॥

### अथ पुरुषार्थाधिकरणम् ॥ १ ॥

सू० ॥ पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ १ ॥ प्रधानभूतविद्याप्रकारनिरूपणानन्तरं तदङ्गभूताश्रमधर्मादिनिरूपणमिति पूर्वपादसङ्गतपादार्थप्रदर्शनपूर्वकं[1] विद्यायाः स्वातन्त्र्येण फलसाधनत्वे सिद्ध एव तदङ्गकर्मविशेषचिन्तनं युक्तमिति, विद्यायाः कर्माङ्गत्वशङ्कानिराकरणार्थं प्रथमाधिकरणं तदुपोद्घातत्वेनावतारयति—पूर्वत्रेति । सिद्धान्तोपक्रममिदमधिकरणमिति सिद्धान्तप्रतिज्ञापरतया सूत्रं व्याचष्टे—अत इति । 'नाना शब्दादिभेदादित्याद्य'( ब्र० अ० ३ पा० ३ सू० ५६ )धिकरणेषु प्रस्तुता विद्या सर्वनाम्ना परामृश्यत इति भावः । तदिति । विद्यातः पुरुषार्थ इत्येतत्संभवति न वेति विद्यास्वातन्त्र्यतत्कर्माङ्गभावपर्यवसाय्युभयविधश्रुतिदर्शनात्संशय इत्यर्थः ॥ सू० ॥ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥ शेषत्वादिति हेतुमुपपादयन्व्याचष्टे[2]—तत्त्वमसीति । 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्या'दिति जैमिनिसूत्रे

---

(१) 'पूर्वकमुद्देश्यफलसाधनत्वे सिद्ध एव' इति ख. पाठः । (२) 'व्याचष्टे—न विद्यातएवेति । द्रव्यसंस्कार' इति. ख. पाठः ।

कर्तुरेव ब्रह्मत्वावगमात्। तद्वेदनस्य तत्संस्कारतया कर्मशेषत्वात्। फलश्रुतिस्तु 'द्रव्यसंस्कारकर्मसु' इति न्यायेनार्थवाद एव। अतो न विद्यातः पुरुषार्थ इति जैमिनिराचार्यो मन्यते ॥

## सू ॥ आचारदर्शनात् ॥ ३ ॥

आचारोऽपि दृश्यते। अश्वपतिः केकयो ब्रह्मवित् 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्याह। एवं केकयप्रभृतीनां ब्रह्मविदामपि कर्म प्राधान्येनावगम्यते। अतोऽपि विद्या कर्माङ्गमेव ॥

## सू ॥ तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोति' इति श्रुत्यैव विद्यायाः कर्मसु विनियोगादपि कर्माङ्गत्वम्। यत् करोति तद्विद्यया इति हि श्रुतेरर्थः ॥

---

'यस्य पर्णमयी जुहूर्भवति न स पापꣳश्लोकं शृणोति यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्या' इत्यादिविधिविधेयेषु वाक्यप्रकरणावगतक्रत्वङ्गभावेषु पर्णादिद्रव्येष्वञ्जनादिसंस्कारेषु प्रयाजादिकर्मसु च फलश्रवणमर्थवाद इति निर्णीतम्। तन्न्यायेनेत्यर्थः। तत्र ह्यव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा वाक्येन पर्णतायाः क्रतुशेषत्वमुक्तम्। स न्याय इहापि समानः। जीव एव हि ब्रह्म। 'तत्त्वमसी'त्यादिसामानाधिकरण्यात्। स यद्यपि लौकिकेष्वपि कर्मसु कर्ता भवति। तथापि तत्कर्तृत्वस्य देहादिव्यतिरेकेऽप्युपपत्तेः देहातिरिक्त आत्मा पारलौकिकफलैः क्रतुभिरेवापेक्ष्यत इति स तावत्क्रत्वव्यभिचारी। अत'आत्मानमुपासीते'त्यादिषु द्वितीयाश्रुत्या तत्संस्कारतयावगता विद्या तद्द्वारा क्रतुशेषभूतैवेत्यर्थः ॥ ननु 'तत्त्वमसी'त्यादिसामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमित्यसकृदुपपादितं कथमिह तदपह्नवेन पूर्वपक्ष इत्याशङ्क्य विद्यायाः क्रतुशेषत्वप्रत्यायकं श्रुतिलिङ्गादिकं तदुपोद्बलकमस्तीति दर्शयितुमुत्तरसूत्राणि ॥ सू० ॥ आचारदर्शनात् ॥ ३ ॥ यद्यपि विद्यानिष्ठानां केकयप्रभृतीनां कर्मानुष्ठानं कर्मणो विद्याङ्गत्वेऽपि संभवति। तथाप्युभयथोपपन्नं 'तदात्मानमुपासीत' 'आत्मा द्रष्टव्य' इति द्वितीयाश्रुतिप्रत्ययावगतविद्यासंस्कार्यभावपारलौकिकात्मरूपकर्त्रुपस्थापितक्रतुशेषत्वावगतिस्वारस्यानुरोधात्कर्मप्राधान्ये तल्लिङ्गं भवतीति भावः ॥ विद्ययेति तृतीयाश्रुतेश्चैवमित्याह—सू० ॥ तच्छ्रुतेः ॥ ४ ॥ ननु 'यदेव विद्यया करोती'ति विद्यया क्रियमाणमनूद्यते। तच्च प्रागुद्गीथविद्यया क्रियमाणत्वेन प्रस्तुतं कर्मैव पर्यवस्यति। अतो नात्र विद्यामात्रस्य कर्मसु विनियोगावगतिरित्याशङ्क्याह —यत्करोतीति। सर्वनामावधारणाभ्यां व्याप्तिरधिगम्यते। 'य एव धूमवान्देशस्स एव वह्निमानि'तिवत्। ततश्च कर्ममात्रमनूद्य विद्यासाधनत्वेन विधीयते। न च सोमाङ्गोद्गीथसंस्काररूपा विद्या सर्वकर्मान्वयिनी भवितुमर्हतीत्यतः कर्तृभूतात्मसंस्कारद्वारि-

---

(१) 'रूपाया' इति ग. पाठः।

## सू ॥ समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते' इति विद्याकर्मणोरेकस्मिन् पुरुषे साहित्यं दृश्यते । अतश्च तदङ्गत्वमेव विद्यायाः ॥

## सू ॥ तद्वतो विधानात् ॥ ६ ॥

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्त्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इत्यादावर्थज्ञानपर्यन्ताध्ययनवतः कर्म विधीयते । अतश्च ज्ञानस्य कर्माङ्गत्वम् ॥

## सू ॥ नियमात् ॥ ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः' इत्यात्मविदो जीवनस्य कर्मसु विनियोगो नियम्यते । अतश्च विद्या कर्माङ्गमिति । नातः पुरुषार्थ इति ॥ अथ सिद्धान्त उच्यते—

## सू ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

न विद्यायाः कर्मशेषत्वम् । अपितु विद्ययैव पुरुषार्थ इति बादरायणस्य मतमेव युक्तम् । कर्तुः प्रत्यगात्मनोऽर्थान्तरभूतस्यैव वेद्यतयोपदेशात् । तथा हि 'बहु स्यां प्रजायेयेति' 'स कारणं करणाधिपाधिपः' 'विश्वाधिको रुद्रो महर्षिः'

---

काया आत्मविद्याया अपि कर्माङ्गत्वमवसीयत इति भावः ॥ सू० ॥ समन्वारम्भणात् ॥ ५ ॥ तं परलोकं प्रयान्तं पुरुषं विद्याकर्मणी अनुवर्तेते इति द्वन्द्वावगतसाहित्ययोर्विद्याकर्मणोः फलदानायानुवृत्तिवचनमपि प्रागुक्तन्यायादुक्तरूपाङ्गप्रधानभावाभिप्रायमेवेति भावः ॥—सू० ॥ तद्वतो विधानात् ॥ ६ ॥ आचार्यकुलादिति । आचार्यकुलवासी सन्वेदमधीत्य यथाविधानं श्रुत्युक्तनियमैर्युक्तस्सन्नित्यर्थः । स्मृत्युक्तनियमेष्वपि गुरुशुश्रूषायाः प्राधान्यमुच्यते।गुरोः कर्मातिशेषेण गुरुशुश्रूषावशिष्टकालेनाधीत्येत्यन्वयः । अभिसमावृत्त्य गुरुकुलान्निवृत्त्य दारपरिग्रहपूर्वकं कुटुम्बे गार्हस्थ्याश्रमे स्थित्वा गार्हस्थ्येप्यविस्मरणार्थं वेदाभ्यासं कुर्वाण एव धार्मिकान्विदधत् पुत्रशिष्यादीन् धर्मनिरतान् कुर्वन् धर्मोपयुक्तार्थान् सम्पादयन्निति वा । एवमर्थज्ञानपर्यन्ताध्ययनवतः कर्मसु निरतेर्विधानं कर्मणां तदपेक्षत्व एवोपपद्यत इति तस्य कर्माङ्गत्वसिद्धिरिति भावः ॥ सू० ॥ नियमात् ॥ ७ ॥ 'ईशावास्यमिदꣳसर्व'मित्यात्मोपदेशपूर्वकं कुर्वन्नेवेति श्रवणमात्मविदो जीवनस्य कर्मसु विनियोगपरमिति विद्यायाः कर्मांगत्वसिद्धिरिति भावः । एवमौपनिषदस्यात्मज्ञानस्य कर्मसु विनियोगसिद्धौ तदुपोद्बलितं तत्त्वमस्यादिवाक्यं जीवस्वरूपमेव ब्रह्म नान्यदिति प्रतिपादनपरम् । तत्र च जगत्कारणत्वापहतपाप्मत्वादिवर्णनं स्तुत्यर्थमिति पूर्वपक्षाभिप्रायः ॥ सू० ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ 'अधिकन्तु भेदनिर्देशा'दित्यादि (ब्र० अ० २ पा० ९ सू० २२) सूत्रैः प्राग्व्यवस्थापित एव जीवाधिकब्रह्मोपदेशोऽनेन सूत्रेण स्मार्यते । 'तत्त्वम'स्यादिसामानाधिकरण्यस्य शरीरात्मभाव-

---

(१) 'तदपेक्षत्वादङ्गभाव इति' ग. पाठः । (२) 'विद्यायां विनियोजकमिति' इति. ग. पाठः ।

इत्यादिवाक्येषु वेद्यस्य ब्रह्मण आधिक्यं दृश्यते। अतो न विद्यायाः कर्मशेषत्वम् ॥ यदुक्तमाचारदर्शनं तत्राह—

सू ॥ तुल्यं तु दर्शनम् ॥ ९ ॥

विद्यायाः प्राधान्येऽपि तुल्यमाचारदर्शनम्, न केवलं कर्मण एव । 'एतद्ध स्म वै तद्विद्वांस आहु ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे किं प्रजया करिष्याम' इत्यादौ ब्रह्मविदां कर्मत्यागो हि दृश्यते । अनुष्ठानं तु फलाभिसन्धानरहितस्य कर्मणो विद्याङ्गत्वेन । त्यागस्तु फलाभिसन्धानयुक्तस्येति विरोधाभावात् कर्मण एव विद्याङ्गत्वमिति विद्यायाः प्राधान्यमेव ॥ 'यदेव विद्यया' इति यदुक्तं तत्राह—

सू ॥ असार्वत्रिकी ॥ १० ॥

'यदेव विद्यया करोति' इति न सार्वत्रिकी विद्योच्यते, यदेव विद्ययेति प्रसिद्धवन्निर्देशात् । प्रसिद्धिरप्युद्गीथविद्याया एव । 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इति प्रकृतोद्गीथविद्यायास्तद्युक्तस्य कर्मणो वीर्यवत्तरत्वसाधनभावो विधीयत इति न विद्या कर्माङ्गम् ॥ यदुक्तं 'तं विद्याकर्मणी' इति तत्राह—

सू ॥ विभागः शतवत् ॥ ११ ॥

'तं विद्याकर्मणी समन्वारभेते' इत्यत्र विद्याकर्मणोर्भिन्नफलत्वेन विद्या च स्वस्मै फलायान्वेति, कर्म च स्वस्मै फलायान्वेति इति विभागः, यथा क्षेत्ररत्नविक्रयणेन शतद्वयमित्यत्र क्षेत्रार्थं शतं रत्नार्थं शतमिति विभागः ॥

सू ॥ अध्ययनमात्रवतः ॥ १२ ॥

'वेदमधीत्य' इत्यध्ययनमात्रवत एव कर्माविधानान्न विद्या कर्माङ्गम् । अध्यय-

---

निबन्धनत्वं प्राक्सिद्धमाचारदर्शनादिभिर्विद्यायाः कर्माङ्गत्वहेतुभिश्चालनीयं । न तु तद्युज्यते तेषामनन्तरसूत्रैर्निराकरिष्यमाणत्वादिति तत्स्मरणस्याभिप्रायः ॥ सू० ॥ तुल्यं तु दर्शनम् ॥ ९ ॥ ब्रह्मविदां कर्मानुष्ठानतत्त्यागदर्शनयोः कथं विरोधसमाधानमित्याकाङ्क्षायामाह—अनुष्ठानमिति ॥ सू० ॥ असार्वत्रिकी ॥ १० ॥ 'प्रसिद्धवन्निर्देशा'दित्युपलक्षणं 'यश्चैतदेवं वेदे'त्येवंशब्देन प्रकृतोद्गीथविद्याया एव परामर्शादित्यपि द्रष्टव्यम् । ततश्च विद्ययेत्यस्य प्रकृतोद्गीथविद्यामात्रपरत्वावश्यंभावात् 'यदेवेति' क्रतुप्रयोगपरमङ्गीकृत्य यं यं सोमयागप्रयोगं प्रकृतोद्गीथविद्यया करोति स सर्वोऽपि वीर्यवत्तरो भवतीत्यर्थो वर्णनीय इति भावः। अतो नौपनिषदात्मज्ञानस्य कर्माङ्गत्वशङ्कानवकाशः । 'यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते अन्तवदेवास्य तद्भवती'ति कर्मनिन्दाप्रदेशेप्यौपनिषदात्मज्ञानरहितेन कृतानामपि कर्मणामन्तवत्स्वफलजनकत्वस्योक्तत्वादिति भावः ॥ सू० ॥ विभागः शतवत् ॥ ११ ॥ 'विद्याकर्मणी' इत्युद्देश्यगतं साहित्यमविवक्षितं तद्विवक्षायामपि कर्मणां विद्याङ्गत्वेऽपि तदुपपद्यत इति भावः ॥ सू० ॥ अध्ययनमात्रवतः ॥ १२ ॥ अध्ययनस्याक्षरावाप्तिफलकत्वमर्थज्ञानपर्यन्तत्वं चेति पक्षद्वयं प्रागुपपादितम् । पक्षद्वयेऽपि मीमांसापाठाधीनाद्वेदार्थनिर्णयादन्यस्याः कर्मवत्त-

नविधिर्ह्यक्षरग्रहणमात्रे पर्यवस्यति । अर्थावबोधपर्यन्तत्वेऽप्यर्थज्ञानादर्थान्तरभूता विद्या । उपासीतेति विहिता विद्या प्रत्ययावृत्तिरूपा । अतोऽस्याः क्वापि न विशेषणभावः ॥

सू ॥ नाविशेषात् ॥ १३ ॥

'कुर्वन्नेवेह कर्माणि' इत्यत्र स्वतन्त्रे कर्मणि विद्वदायुषो विनियोग इति विशेषहेतुर्न दृश्यते । 'ईशावास्यमिदꣳसर्वम्' इति विद्याप्रकरणाच्च विद्याङ्गभूतमेतत् कर्मेति विज्ञायते । अतो न विद्यायाः कर्माङ्गत्वम् ॥

सू ॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥

विद्यामाहात्म्यात् सर्वदा कर्माणि कुर्वन्नपि तैर्न लिप्यते इति हि वाक्यशेषः । अतश्च विद्याया एव प्राधान्यम् ॥

सू ॥ कामकारेण चैके ॥ १५ ॥

'किं प्रजया करिष्याम' इत्यादिना कामकारेण विदुषो गार्हस्थ्यस्य त्यागमधीयत एके । अतोऽपि विद्या प्रधानभूता लक्ष्यते ॥

सू ॥ उपमर्दं च ॥ १६ ॥

विद्यया सर्वकर्मोपमर्दं चाधीयत एके—'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति । अतो न कर्मप्राधान्यम् ॥

---

दनन्तरमनुष्ठेयायाः प्रत्ययावृत्तिरूपाया विद्यायाः कर्माङ्गत्वं न प्रसज्यत इत्यर्थः । न च कृत्स्नवेदार्थनिर्णयवतः कर्मविधाने कृत्स्नस्यापि वेदार्थनिर्णयस्य सर्वापेक्षितत्वपर्यवसानात् । कर्मार्थ एव कृत्स्नो वेद इति स्वतन्त्रा विद्या प्रतिक्षिप्ता भवेदिति वाच्यम् । तद्वतो विधानेन हि वेदार्थनिर्णयः कर्मापेक्षित इत्येतावन्मात्रं सिध्यति । नत्वेकस्य कर्मानुष्ठाने कृत्स्नवेदार्थनिर्णयोऽप्यपेक्षित इति राजसूयादिवाक्यार्थनिर्णयस्य ब्राह्मणादिकर्मानुष्ठानानुपयोगित्वेन तथा तात्पर्यकल्पनायोगादिति भावः ॥ सू० ॥ नाविशेषात् ॥ १३ ॥ विद्या कर्माङ्गं न भवतीति सिद्धान्ते विदुषां सर्वथा कर्म नापेक्षितमिति नाभ्युपगमः । किन्तु विद्याङ्गं कर्मेति विदुषोऽपि कर्मापेक्षाभ्युपगम्यत एव । अत एव 'यो वा एतदक्षरं गार्ग्यविदित्वे'त्यादिवाक्येनाविद्वत्कर्मणामन्तवत्फलोक्त्या विद्यासाध्यम(१)नन्तवत्फलमेव विद्वत्कर्मणां फलमिति तेषां विद्याङ्गत्वं सूच्यते । अतः 'कुर्वन्नेवे'त्यादिकं विद्याङ्गकर्मविषयतयोपपन्नमिति भावः ॥ सू० ॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥ 'विद्यामाहात्म्या'दित्यादिना वाक्यशेषोऽर्थतः पठितः । एवं त्वयि नान्यथेतोऽस्ति । न कर्म लिप्यते नर इति मन्त्रशेषः । विदुषा यावज्जीवं यत्किञ्चित्कर्म क्रियतां नाम । एवं कर्म कुर्वत्यपि त्वयि नरे कर्मश्लेषयोग्ये मनुष्येऽपि तत्कर्म न श्लिष्यते इतोऽन्यथा नास्ति इदं तत्त्वमिति विद्यामाहात्म्यस्तुतिः ॥ सू० ॥ कामकारेण चैके ॥ १५ ॥ अतोऽपि विद्येति । न हि कर्मप्राधान्ये बुद्धिपूर्वं प्रधानं त्यक्त्वाङ्गानुष्ठानमुपपद्यत इति भावः ॥ सू० ॥ उपमर्दं च ॥ १६ ॥ सर्वकर्मेति । विद्योदयात्(२)प्राचीनं विद्याफलविरोधिफलं यत्कर्म तस्य सर्वस्याप्युपमर्दमि-

---

(१) 'मनन्तफलमेव' इति ग. पाठः । (२) 'प्राग्विरोधिफलं' इति ग. पाठः ।

## सू ॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतस्सु चाश्रमेषु विद्यादर्शनात् तेष्वग्निहोत्राद्यसंभवाच न विद्या कर्माङ्गम्। तथाहि—'त्रयो धर्मस्कन्धाः' इति वैदिके दृश्यन्ते त्रय आश्रमधर्माश्रयाः। अतो विद्यैव प्रधानभूता पुरुषार्थहेतुः। तस्यास्त्वङ्गतया प्रधानफलाभिसन्धिरहितस्य विहितकर्मणोऽनुवृत्तिरिति सिद्धम् ॥

इति पुरुषार्थाधिकरणम् ॥ १ ॥

### अथ परामर्शाधिकरणम् ॥ २ ॥

## सू ॥ परामर्शं जैमिनिरचोदनाचापवदति हि ॥ १८ ॥

पूर्वत्र 'त्रयो धर्मस्कन्धाः' इति त्रयाणामेवाश्रमाणां धर्माधारत्वमुक्तम्। अत

---

त्यर्थः। एवमेव हि चतुर्थाध्याये भाष्यकारो वक्ष्यति—'एतेन शङ्काप्येषा निरस्ता। सत्यपि निवर्त्यनिवर्तकभावविरोधे यथा कर्मणां विद्याङ्गत्वमभ्युपगम्यते तथा विद्यायाः कर्माङ्गत्वमभ्युपगम्यता'मिति। सिद्धान्ते हि येषां कर्मणां विद्यानिवर्त्यत्वं न तेषां विद्याङ्गत्वमिष्यते। उपनिषदां जीवातिरिक्तब्रह्मपरत्वमपहृत्य देहातिरिक्तात्ममात्रपरत्वमुपगम्य तद्वेदनं पारलौकिकसर्वकर्माङ्गमिति समर्थयमानस्य जैमिनेर्मते विद्यानिर्वर्त्यकर्मणामपि पारलौकिकात्मवेदनसाध्यत्वाविशेषेण विद्यां प्रति प्राधान्यमेष्टव्यमिति वैषम्यात् ॥ सू० ॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ 'स्तुतयेनुमतिर्वे'त्येतदन्तैस्सूत्रैर्विद्यायाः कर्माङ्गत्वे पराभिमतानि साधकानि दूषितानि ॥

इति पुरुषार्थाधिकरणम् ॥ १ ॥

### अथ परामर्शाधिकरणम् ॥ २ ॥

उपमर्दं चेति सूत्रेणानेन सूत्रेण च तत्र वाधकमुक्तम्। तत्रैतत्सूत्रोक्तं वाधकमाक्षिप्य समर्थयितुमधिकरणान्तरमारभ्यते—सू० ॥ परामर्शं जैमिनिरचोदनाचापवदति हि ॥ १८ ॥ अत्रायमाक्षेपप्रकारः। ऊर्ध्वरेतस्सु विद्यासद्भावो न विद्यायाः कर्माङ्गत्वबाधकः।

---

नयमणिमालायाम्

### अथ तृतीयस्याध्यायस्य तुरीयः पादः ॥ ३ ॥ ४ ॥

### अथ पुरुषार्थाधिकरणम् ॥ १ ॥

सू० ॥ पुरुषार्थोऽतश्शब्दादिति वादरायणः ॥ १ ॥ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥ आचारदर्शनात् ॥ ३ ॥ तच्छ्रुतेः ॥ ४ समन्वारम्भणात् ॥ ५ ॥ तद्वतो विधानात् ॥ ६ ॥ नियमात् ॥ ७ ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ तुल्यं तु दर्शनम् ॥ ९ ॥ असार्वत्रिकी ॥ १० ॥ विभागः शतवत् ॥ ११ ॥ अध्ययनमात्रवतः ॥ १२ ॥ नाविशेषात् ॥ १३ ॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥ कामकारेण चैके ॥ १५ ॥ उपमर्दं च ॥ १६ ॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ज्ञानं न मोक्षहेतुः कर्मसु तत्कर्तृसंस्मृतित्वेन। शेषत्वात्कर्तैव हि तत्त्वमसीत्युच्यते ब्रह्म ॥ २९३ ॥

अधिकोपदेशतस्तु ज्ञानं तद्विषयमत्र विधिविषयः। तस्य फलाकाङ्क्षायां मोक्षः स्याद्रात्रिसत्रनयात् ॥ २९४ ॥

इति नयमणिमालायां पुरुषार्थाधिकरणम् ॥ १ ॥

एवात्र चतुर्थाश्रमधर्मसद्भावे सन्देहे सति पूर्वः पक्षः—'त्रयो धर्मस्कन्धाः' इत्यादौ चतुर्थाश्रमाचोदनात् 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादि चतुर्थाश्रमवचनमुपासनस्तुत्यर्थवादमेव जैमिनिर्मन्यते । अपवदति हि 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति श्रुतिः चतुर्थाश्रमम् । अतोऽग्निहोत्रपरित्यागे महान् दोष इति नास्ति तत्परित्यागेनाश्रमान्तरमिति ॥ अथ सिद्धान्तः—

सू ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

गृहस्थाश्रमादिवदाश्रमान्तरमप्यनुष्ठेयमिति भगवतो बादरायणस्य मतम् । तत्र 'त्रयो धर्मस्कन्धाः' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति सर्वाश्रमसाम्यश्रुतेः। अग्न्युद्वासनदोषो गृहस्थविषय एव। अतश्चतुर्थाश्रमधर्मसद्भावः॥

---

पत्नीसन्निहिते वानप्रस्थे अग्निहोत्रादीनां सत्त्वान्नैष्ठिके पत्नीसापेक्षकर्मणामभावेऽपि जपतपोदानप्रभृतीनां स्वातन्त्र्येण पुण्यलोकसाधनानां सत्त्वात् । अत इत्थं पूर्वोक्तं बाधकनीयम् । सन्न्यासिनि न विद्यायाः कर्माङ्गत्वं संभवति । मुमुक्ष्वेकाधिकारे सन्न्यासे अभ्युदयफलानां कर्मणामप्रसक्तेः । नित्यानामपि पत्नीसाध्यानामग्निहोत्रादीनामभावात् । स्नानशौचाद्याचाराणा'मानर्थक्यमिति चेन्न तदपेक्षत्वा'दिति (ब्र० ३–१–१०) सूत्रोक्तन्यायेन वैदिककर्माधिकारमात्रापादकानां स्वतन्त्रफलरहितानां कर्मवत्स्वाश्रमान्तरेषु कर्माधिकारार्थत्वस्येव मोक्षार्थविद्यावति सन्न्यासिनि विद्याधिकारार्थत्वस्यैव प्राप्तेरिति। नैतदुपपद्यते । सन्न्यासस्यैव शशशृङ्गायमाणत्वात् । 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति । प्रथमस्तप एव, द्वितीयो ब्रह्मचार्याचार्यकुलवासी, तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेती'ति श्रुतौ गृहस्थवानप्रस्थनैष्ठिकानां त्रयाणामेवाश्रमाणां विधानेन सन्न्यासस्याचोदितत्वात् । न च 'ब्रह्मसंस्थोऽमृतत्वमेती'त्येषा सन्न्यासचोदनेति शङ्कनीयम् । 'त्रयो धर्मस्कन्धा'इत्युपक्रान्तसंख्याविरोधापत्तेः । 'ब्रह्मसंस्थोऽमृतत्वमेती'त्यस्य त्रिष्वेवाश्रमेषु कर्माङ्गभूतविद्याप्रशंसार्थत्वोपपत्तेः । न 'चैतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति श्रुत्यन्तरं सन्न्यासविधायकं स्यादिति वाच्यम् । अग्न्युद्वासननिन्दाविरोधेन तस्यापि विद्याप्रशंसामात्रपरत्वादिति ॥ सू० ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ आश्रमान्तरं गार्हस्थ्यातिरिक्तमाश्रमत्रयम् । यद्यपि पूर्वपक्षिणस्सन्न्यासमात्रे विप्रतिपत्तिः । तथापि यथा 'त्रयो धर्मस्कन्धा' इत्यत्र विधिविभक्तिराहित्येऽपि ब्रह्मचर्यवानप्रस्थाश्रमयोर्गृहस्थाश्रमवदविगीतमनुष्ठेयत्वं एवं सन्न्यासस्यापि युक्तम् । 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'त्यत्रापि विधिविभक्तिराहित्यस्यानुष्ठेयत्वाविघातकत्वादिति दृष्टान्तदार्ष्टान्तिकतास्वर्येण त्रयमप्युपात्तम् ॥ नन्वग्न्युद्वासने दोषश्रवणं सन्न्यासस्यानुष्ठेयत्वकल्पनाविरोधीत्याशङ्क्याह—अग्न्युद्वासनदोष इति । गृहस्थस्यापि हि निमित्ते सति विधित उत्सर्गेष्टिपूर्वके त्यागे न दोषः । तस्मादवैधत्यागविषया दोषश्रुतिरिति प्रविव्रजिषोः त्यागविधिसद्भावात्। तस्यापि विधितस्त्यागो न दोषावह इति भावः । न चाश्रमत्रित्वसङ्ख्याविरोधः मो-

(१) 'पत्नीसाहित्यवानप्रस्थे' इति ग. पाठः । (२) 'वैराग्ये सति' इति ग. पाठः ।

## सू ॥ विधिर्वा धारणवत् ॥ २० ॥

'उपरि हि देवेभ्यो धारयति' इत्यत्राप्राप्तत्वेन यथा विधिः। तद्वदत्रापि विधिरेव। अथवा। जाबालश्रुतौ प्रत्यक्षविधिरप्यस्ति 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही वा

---

क्षाश्रमस्य चतुर्थस्य सद्भावेऽप्यभ्युदयसाधनधर्मप्रधानानामाश्रमाणां त्रित्वोपपत्तेः । अत एव 'सर्व एते पुण्यलोका भवन्ती'ति तेषां धर्मफलभूता पुण्यलोकावाप्तिरुच्यते। न हि सन्न्यासस्य पुण्यलोकावाप्तिः फलम्। 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'त्यवधारणेन परब्रह्मातिरिक्तलोकेषणाव्यवच्छेदात्। तदनन्तरं 'ते ह स्म पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थाय अथ भिक्षाचर्यं चरन्ती'ति स्फुटमेव लोकेषणाव्यावर्तनात्। 'सन्न्यासाद्ब्रह्मणः स्थानं ब्राह्मं सन्न्यासिनां स्मृत'मित्यादिवचनानि त्विहापरिपूर्णविद्यानां सन्न्यासिनां 'प्राप्य पुण्यकृतां लोका'निति स्मृतिवदान्तरालिकफलाभिप्रायाणि। अन्यथा श्रुतिविरोधापत्तेः। 'ब्रह्मसंस्थोमृतत्त्वमेती'त्येतत्तु ब्रह्मसंस्थशब्दस्य आग्नेयीन्यायेन यौगिकतया प्रकृतपरत्वेन त्रयाणामेतेषामाश्रमिणां मध्ये भाग्यवशाद्यस्य ब्रह्मसंस्था जाता तस्य मुक्तिरित्येतत्परम्। यथा 'राजगृहे ब्राह्मणा दशदश स्वर्णान् लभन्त' इति वचनानन्तरं 'ब्रह्मनिष्ठः शतं सुवर्णा'निति वचनं तेषां ब्राह्मणानां मध्य एव यो ब्रह्मनिष्ठस्तस्याधिकफलप्राप्तिप्रतिपादनपरम्। परिव्राजकस्य तु मुक्ति'रेतमेव प्रव्राजिन' इति। वचनान्तरेणैव प्रतिपाद्यत इति ॥ ननु त्रयो धर्मस्कन्धा इत्य'त्रैतमेव प्रव्राजिन' इत्यत्र च विधिविभक्त्यभावे कथमाश्रमाणामनुष्ठेयत्वसिद्धिरित्याशङ्क्य सार्वत्रिकीं गतिमाह—

सू० ॥ विधिर्वा धारणवत् ॥ २० ॥ 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती'ति मृताग्निहोत्रप्रकरणगतश्रुतौ लिङ्विभक्तियोगादधोधारण इवाप्राप्तत्वादुपरिधारणेऽपि विधिराश्रीयते। 'विधिस्तु धारणेऽपूर्वत्वा'दिति पूर्वतन्त्राधिकरणे। स इह दृष्टान्तीकृतः। अवधारणार्थो वाकारः। एवं जाबालोपनिषदि श्रुतानाश्रमविधीन्करेण पिधाय प्रत्यक्षविध्यभावेऽपि गार्हस्थ्यादिवत्सन्न्यासस्यापि विधिकल्पनेनानुष्ठेयत्वसिद्धिरप्रत्यूहेति समर्थितम्। इदानीं विधिं सिद्धं कृत्वा चिन्तामुद्धाटयति—अथवेति। अस्मिन्पक्षे 'त्रयो धर्मस्कन्धा'इत्यादौ गार्हस्थ्यादिषु विधिर्न कल्पनीयः। अन्यतः प्राप्तिसंभवात्। अत्रापि तेषु विधिकल्पने विध्यनेकत्वेन वाक्यभेदापत्तेश्चेत्यनुवादत्वसूचनार्थस्सौत्रो हि वाकारः। यद्वा—गार्हस्थ्यादीनां क्षुद्रं फलमिति तत उत्कृष्टफलत्वेन स्तुत्या सन्न्यासमात्रे विधिः कल्पनीयः। ब्रह्मसंस्थशब्दस्य यौगिकत्वेऽपि संपूर्वस्य तिष्ठतेः समाप्तिवाचकतया कर्मव्यवच्छेदेन ब्रह्मैकनिष्ठत्वार्थकस्य सन्न्यासिन्येव व्यवस्थितत्वात्। तथा सत्येव गार्हस्थ्याद्यसाधारणधर्मोपन्यासपूर्वकतत्तदाश्रमसंकीर्तनप्रायपाठानुग्रहलाभाच्च। न चैवं सति सन्न्यासिनामेव मुक्तिः स्यान्न गृहस्थादीनामिति वाच्यम्। इतरनिन्दायाः स्तोतव्यस्तुत्यर्थतया स्वार्थे तात्पर्याभावेन 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' इत्यादिश्रुतिप्राप्तस्यार्थस्य तदप्रतिक्षे-

वनी भूत्वा प्रव्रजेत्' इति । नात्र क्रमे नियमः । 'उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रुतेः । जन्मान्तरसुकृतपरिपाकेन विशुद्धान्तःकरणस्य ब्रह्मचर्यादेव पारिव्राज्यं भवति ॥ "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु भजमानो व्रजत्यधः ॥" इत्यादिनिषेधस्त्वविरक्तविषयः । 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्यग्न्युद्वासननिषेधात् ब्रह्मचर्यादेव पारिव्राज्यं न गार्हस्थ्यात्परमिति केचित् । तथा सति 'वनी भूत्वा प्रव्रजेत्...उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इत्यादिविधिवैयर्थ्यं स्यात् । अतो ब्रह्मचर्यादेव प्रव्रजेदिति वा, वनी भूत्वा प्रव्रजेदिति वा न निर्बन्धः कार्यः । ब्रह्मचर्यादेव प्रव्रजेदिति वदतामयमभिप्रायः—साग्निरनग्निकश्चेति द्वावेवाश्रमौ । तत्र ब्रह्मचारी परिव्राट् च अनग्निः, गृहस्थो वानप्रस्थश्च साग्निः । अग्निमाधायोद्वास्य पारिव्राज्यात् ब्रह्मचर्यात् पारिव्राज्यमेवातीव मुख्यमिति । अन्यथा श्रुतिविरोधापत्तेः । अतः सर्वाश्रमधर्मसिद्धिः ॥

इति परामर्शाधिकरणम् ॥ २ ॥

---

प्यत्वात् । नात्रेति । अत्र सन्न्यासे उक्तक्रमो नियतो न भवतीत्यर्थः । इतरेषु त्रिष्वप्युक्तक्रमो नियत एव । अविरक्तविषय इति । अनत्यन्तविरक्तो यः क्रमसंपादनीयवैराग्यस्तद्विषय इत्यर्थः । तथा सतीति । तथा चोदाहृतवाक्यजाते दृढवैराग्यस्यैवाधिकारिविशेषणत्वश्रवणात् । सति तस्मिन् यदाकदाचित् सन्न्यस्तव्यमित्यर्थः । 'अथ यदि व्रती वाव्रती वा स्नातको वास्नातको वा उत्सन्नाग्निरनग्निको वे'ति विशिष्य केषाञ्चित्कीर्तनस्यायमभिप्रायः । उपक्रान्तमासोपवासादिव्रतेनान्तरा वैराग्ये सति व्रतसमाप्तिपर्यन्तं न विलम्बनीयम् । अनुपक्रान्तव्रतेनेव तदानीमेव सन्न्यस्तव्यम् । तथाध्ययनार्थमुपक्रान्तगुरुकुलवासेन समावर्तनपर्यन्तं न विलम्बनीयम् । समावृत्तेनेव तदानीमेव सन्न्यस्तव्यम् । विच्छिन्नाग्निना 'तथैके प्राजापत्यामेवेष्टिं कुर्वन्ति तदु तथा न कुर्यात् । आग्नेयीमेव कुर्या'दित्यादिना वक्ष्यमाणेष्टिपूर्वकाग्निसमारोपणाय अग्न्याधानपर्यन्तं न विलम्बनीयम् । अनग्निकेनेव अकृताग्निसमारोपणेनैव सन्न्यस्तव्यमिति ॥ ननु कथं प्रत्यक्षश्रुतौ विद्यमानायामेव तामविगणय्य केचिद्ब्रह्मचर्यादेव पारिव्राज्यं वदन्तीत्याशङ्क्य मुख्यत्वाभिप्रायेणेत्याह—ब्रह्मचर्यादेवेति । मुख्यत्वमपि सर्वत्र समानम् । अधिकारिविशेषणस्य वैराग्यस्यैकरूपत्वादिति केचिदित्यनेनैव ध्वनितम् ॥

इति परामर्शाधिकरणम् ॥ २ ॥

---

नयमणिमालायाम्

अथ परामर्शाधिकरणम् ॥ २ ॥

सू० ॥ परामर्शं जैमिनिरचोदनाचापवदति हि ॥ १८ ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ विधिर्वा धारणवत् ॥ २० ॥

संन्यासे नास्ति विधिर्न कल्पनं वीरहेति दोषगतेः । तस्माद्विद्यास्तुतये श्रुतिषु परामर्शमेवास्य ॥ २९५ ॥

धारण इव विधिकल्पनमुचितं तस्मिन्नपूर्वत्वात् । दोषस्य श्रवणं तु तदुत्सन्नाग्निकगृहस्थपरम् ॥ २९६ ॥

इति परामर्शाधिकरणम् ॥ २ ॥

## अथ स्तुतिमात्राधिकरणम् ॥ ३ ॥

### सू ॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युपक्रम्य 'स एष रसानां रसतमः परमः पराध्र्योऽष्टमो य उद्गीथः' इत्येवंजातीयकोदाहरणे उद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते न वेति संशयः ॥ किं तावत् प्राप्तम्? नोद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते, किंतु, 'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इतिवत् कर्माङ्गभूतोद्गीथाद्युपादाय तस्य रसतमत्वादिवचनं स्तुतिमात्रमिति चेदिति पूर्वपक्षसमाप्तिः॥ सिद्धान्त उच्यते—नापूर्वत्वादिति । न स्तुतिमात्रं किंतूद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयत एव, अपूर्वत्वात् । न चैवं जुहूरित्यादिन्यायावतारः, जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात् । अतो रसतमत्वादिदृष्टिविधिरेव ॥

### सू ॥ भावशब्दाच्च ॥ २२ ॥

'उद्गीथमुपासीत' इति विधिप्रत्ययश्चात्र श्रूयते । अतोऽपि रसतमत्वादिदृष्टि-

---

## अथ स्तुतिमात्राधिकरणम् ॥ ३ ॥

सू० ॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ स्तुतिविधिप्रसङ्गादिदमधिकरणम् । इत्युपक्रम्येति । श्रूयत इति शेषः । स एष इति । 'एषां भूतानां पृथिवी रसः पृथिव्या आपो रसो अपामोषधयो रसः ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसः वाच ऋग्रसः ऋचस्साम रसः साम्न उद्गीथो रस' इत्यनुक्रान्तानां पृथिव्यादीनां रसानां रसतमः अतिशयितो रसः परमः उत्कृष्टः । उत्कृष्टत्वे हेतुः परार्ध्यः परस्य ब्रह्मणोऽर्धं स्थानमर्हति परमात्मोपासनास्थानभूत इत्यर्थः । अष्टमः पृथिव्यादिरसापेक्षया । कोऽसावेवंभूतः यदुद्गीथः उद्गीथावयवप्रणव एवंभूत इत्यर्थः । 'एवंजातीयक'मित्यनेन 'इयमेवग्गग्निस्सामे'त्यादिकं गृह्यते 'इयमेव जुहू'रित्यादिनिर्देशसाम्यादुद्गीथादिविधिसमभिव्याहाराभावाच्च संशयं दर्शयति—किमिति । यद्यपि कर्माङ्गविषयगुणप्रतिपादनमात्रे स्तुत्यर्थत्वनियमो नास्ति । वर्णमय्यादिवाक्येषु व्यभिचारात् । उत्कृष्टत्वेन गुणविशेषणेऽपि नास्ति नियमः । 'हिरण्मय्यः स्रुचो भवन्ती'त्यादिषु व्यभिचारात् । तथाप्यननुष्ठेयत्वेनापि गुणविशेषणेऽस्ति नियमः । रसतमादिवाक्यानामुद्गीथादिसमभिव्याहाराभावेऽप्यव्यभिचरितविधिसम्बन्धिनोद्गीथादिनोपस्थापितेषु तत्तद्विधिषु स्तावकत्वेनान्वयस्संभवति । न च स्तावकवाक्यानां स्तुत्यविधिसमभिव्याहारनियमोऽस्ति । 'एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणी'त्यतिदिष्टेषु पञ्चसञ्चरार्थवादेषु व्यभिचारात् तस्मादुद्गीथादिषु न रसतमत्वादिदृष्टिविधिरिति पूर्वपक्षमाह—नोद्गीथादिष्विति । असन्निधानादिति । प्रकरणे संभवदन्वयस्योत्कर्षो न युक्तः । पञ्चसञ्चरार्थवादानां तु वचनबलादन्यत्राप्यन्वय इति भावः ॥ सू० ॥ भावशब्दाच्च ॥ २२ ॥ न केवलं स्तुत्यर्थत्वप्रतिक्षेपकमुद्गीथादिविध्यसंनिधानमात्रं । किन्तु दृष्ट्यर्थत्वोपपादकमुपासनाविधिसन्निधानं चास्तीत्यनेन सूत्रेणोच्यते।

---

१ 'दृष्टिविधित्वोपपादक'मिति ग. पाठः ।

विधिरिति ॥

इति स्तुतिमात्राधिकरणम् ॥ ३ ॥

अथ पारिप्लवाधिकरणम् ॥ ४ ॥

सू ॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

वेदान्तेषु विद्यारम्भे—'प्रतर्दनो ह वै दैवोदासिः' इत्याद्याख्यायिका आम्नाताः। ताः पारिप्लवार्था उत विद्यास्तुत्यर्था इति संशयः ॥ किं तावत्प्राप्तम्? पारिप्लवार्था इति। अश्वमेधयागे राजानं सकुटुम्बमुपवेश्य तत्पुरतो वैदिकान्याख्यानान्यध्वर्युणा वक्तव्यानि। तदिदं पारिप्लवाख्यं कर्म 'पारिप्लवमाचक्षीत' इति वाक्येन विहितम्। तत्र 'सर्वाण्याख्यानानि पारिप्लवे शंसन्ति' इति विनियोगादुपनिषदारम्भगता अप्याख्यायिकास्तदर्था इति चेदिति पूर्वः पक्षः ॥ तत्रो-

---

न चोपासनविधिनान्वयेऽपि स्तुत्यर्थता किं न स्यादिति शङ्कनीयम्। विधिविषयसमर्पकतया प्रवृत्तिविशेषकरत्वे संभवति व्यर्थप्रायस्तुत्यर्थत्वकल्पनायोगादिति भावः। विधिप्रत्यययुक्तक्रियाशब्दोऽत्र भावशब्दो विवक्षितः ॥

इति स्तुतिमात्राधिकरणम् ॥ ३ ॥

अथ पारिप्लवाधिकरणम् ॥ ४ ॥

सू० ॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ रसतमत्वादीनामुपास्यविषयसमर्पकत्ववदाख्यानानां पारिप्लवप्रयोगविधिशेषत्वं स्तुत्यर्थत्वापेक्षया ज्यायः। प्रवृत्तिविशेषकरत्वादिति पूर्वपक्षोत्थानात्सङ्गतिः। 'सर्वाण्याख्यानानी'त्यविशेषश्रवणाद्वाक्यशेषे विशेषसंकीर्तनाच संशयः। उपक्रमश्रुतस्य 'सर्वाण्याख्यानानी'त्यस्य वाक्यशेषगतेनाख्यानविशेषसंकीर्तनेन सङ्कोचो न युक्तः। उपक्रमस्योपसंहारतः सर्वाख्यानश्रुतेराख्यानविशेषसन्निधानतश्च प्रबलत्वात्। अन्यथा 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनेमानिष्ट्वाथान्येन यजते' इत्यत्रान्यशब्दस्य ज्योतिष्टोमेतरसर्वक्रतुपरामर्शिनो 'यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशस्स तं यस्सप्तदशस्स तं य एकविंशस्स त'मिति वाक्यशेषगतत्रिवृदादिस्तोमकक्रतुसंकीर्तनानुसारेण तावन्मात्रे सङ्कुचितवृत्तित्वापत्तेरिति पूर्वपक्षयति—तत्रेति। तदर्था इति। न्यायतौल्यात् कर्मकाण्डगताख्यानेष्वपि समानोऽयमाक्षेपः। न च यथा जपपारायणादिविनियुक्तानां विधिवाक्यानां विधायकत्वमपि। एवं पारिप्लवे विनियुक्तानामाख्यानानां स्तुत्यर्थत्वमप्यस्त्विति वाच्यम्। व्यर्थप्रायं हि स्तुत्यर्थत्वं सर्वथा प्रयोजनान्तराभावे कल्पनीयम्। पारिप्लवार्थत्वेन सार्थकत्वसंभवे च न व्यर्थं तल्लक्षणाक्लेशाश्रयणेन कल्पनी-

---

नयमणिमालायाम्

अथ स्तुतिमात्राधिकरणम् ॥ ३ ॥

सू० ॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ भावशब्दाच ॥ २२ ॥

दृष्टिर्नोद्गीथादिषु रसतमतादेर्विधीयते श्रुत्या। कर्माङ्गगोचरतया यूपादित्यादिवत्स्तुतिपरत्वात् ॥ २९७ ॥

कर्माङ्गप्रकरणवैधुर्यान्नात्र तत्स्तवनम्। स्याद्विधिरुपासनाविधिसन्निहितत्वादपूर्वत्वात् ॥ २९८ ॥

इति स्तुतिमात्राधिकरणम् ॥ ३ ॥

त्तरम्—न विशेषितत्वादिति । न पारिप्लवार्थास्ताः । 'प्रथमेऽहनि मनुर्वैवस्वतो राजा...द्वितीयेऽहनि यमो वैवस्वतो राजा' इत्यादिना पारिप्लवार्थानामाख्यायिकानां विशेषितत्वात् ॥ औपनिषदाख्यायिकाः संनिहितविद्याविधिभिरेकवाक्यत्वात् विद्यार्था इत्याह—

सू ॥ तथाचैकवाक्यतोपबन्धात् ॥ २४ ॥

यथा 'सोऽरोदीत्' इत्याद्याख्यानानां कर्मविधिभिरेकवाक्यता, तथा विद्याविधिभिरेकवाक्यतोपसंबन्धाच्च विद्यास्तुत्यर्था एवेति ॥

इति पारिप्लवाधिकरणम् ॥ ४ ॥

---

यमिति भावः । विशेषितत्वादिति । युक्त 'मेष वाव प्रथम' इत्यादिवाक्यगतान्यशब्दस्य ज्योतिष्टोमेतरसर्वक्रतुपरत्वं । तस्य स्वतस्संकोचाकाङ्क्षाविरहात् । तदभिप्रायेणैव पूर्वतन्त्रे 'एकस्तोमे वा क्रतुसंयोगात्' 'सर्वेषां वा चोदनाविशेषात्प्रशंसास्तोमाना'मिति पूर्वोत्तरपक्षसूत्राभ्यां वाक्यशेषानुसारेण सङ्कोचो निरस्तः । इह त्वस्ति 'सर्वाण्याख्यानानी'त्यस्य 'अथैतस्यैव ही'ति योजनस्य 'सर्व एव लिप्सन्त' इत्यत्र सर्वशब्दस्येव सङ्कोचाकाङ्क्षा । अनन्तशाखागतसर्वाख्यानशंसनस्याशक्यत्वात् । सत्यां च तदाकाङ्क्षायां वाक्यशेषश्रुतेष्वेवाख्यानविशेषेषु सङ्कोचो युक्त इति भावः ॥ एवं 'सर्वाण्याख्यानानी'त्यस्य सङ्कोचे सत्यौपनिषदानामाख्यानानां विद्याविधिसमभिव्याहारात् स्तुत्यर्थतया तदन्वय एव स्यादित्युत्तरसूत्राभिप्रायं दर्शयन्नवतारयति—औपनिषदेति ॥ सू० ॥ तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥ एकवाक्यतयान्वयः एकवाक्यतोपबन्धः । यथा सोऽरोदीदिति । तत्रापि समानोऽयं सिद्धान्तन्याय इति भावः । न चाख्यायिकानां स्तुतिमात्रप्रयोजनत्वेन व्यर्थप्रायता । विद्याप्रतिपत्तिसौकर्यस्यापि तत्प्रयोजनत्वात् । आख्यायिकाश्रवणे ह्यवहिता अव्यवधानं लभन्ते । यथा—उपायेन तु यच्छक्यं न तच्छक्यं पराक्रमै'रिति नीतिशास्त्रार्थोपदेशे 'काकः कनकसूत्रेण कृष्णसर्पममारय'दित्याख्यायिकया आर्थवादिकलिङ्गदर्शनैश्च बहवो विध्यर्थाः पूर्वतन्त्रे निर्णीयन्ते । इहापि 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शना' (ब्र० ३–४–२८) दित्यादौ आर्थवादिकानि च फलादीनि विध्यपेक्षितानि शास्त्रद्वयेऽपि गृह्यन्ते । तत्सर्वमर्थवादानां प्रयोजनमिति साक्षात्प्रवृत्तिविशेषकरत्वाभावेऽपि नात्यन्तवैयर्थ्यमिति समभिव्याहृतविध्येकवाक्यत्वमाख्यानानां युक्तमिति भावः ॥

इति पारिप्लवाधिकरणम् ॥ ४ ॥

---

नयमणिमालायाम्

अथ पारिप्लवाधिकरणम् ॥ ४ ॥

सू० ॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

उपनिषदाम्नातान्यपि सर्वोपाख्यानशंसनस्थानात् । आख्यानानि भजेयुः पारिप्लवकर्मशेषत्वम् ॥ २९९ ॥

विद्याविध्युपयुक्तान्येतानि तदेकवाक्यतादृष्टेः । सर्वाख्यानविधिस्स तु मन्वाद्याख्यानमात्रपरः ॥ ३०० ॥

इति पारिप्लवाधिकरणम् ॥ ४ ॥

## अथ अग्नीन्धनाधिकरणम् ॥ ५ ॥

### सू ॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

पूर्वत्रोपपादितोऽन्त्याश्रमसद्भावः । तस्य विद्यार्थमाधानाद्यपेक्षाऽस्ति न वेति संशयः ॥ किं तावत् प्राप्तम्? विद्याङ्गत्वेन कर्मणो विधानात् विद्यावतामूर्ध्वरेतसां विद्याङ्गत्वेनाधानाद्यनुष्ठेयम् । इति प्राप्ते ब्रूमः । न तेषामाधानाद्यपेक्षा विद्या। 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादिश्रुतेस्तेषां कर्मत्यागेनैव

---

## अथ अग्नीन्धनाधिकरणम् ॥ ५ ॥

सू० ॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ स्तुतिविधिप्रसङ्गागतमधिकरणद्वयमपहाय 'परामर्शं जैमिनि'रित्यधिकरणेन (ब्र० ३–४–१८ सू०) सङ्गतिं दर्शयति—१। यज्ञादिश्रुतेः कर्मत्यागश्रुतेश्च संशयः । आधानाद्यपेक्षाया'मूर्ध्वरेतस्सु चे'ति पुरुषार्थाधिकरणगुण (ब्र० ३–४–१७) सूत्रोक्तार्थाक्षेपात्तेनापि मूलभूताधिकरणेनास्य सङ्गतिरनुसन्धेया। ऊर्ध्वरेतसामपीति । यद्यपि सन्न्यासिनो विधिबलात् त्यक्तपूर्वदाराग्निहोत्रादयः । तथापि निरङ्गेन विद्यामात्रेण फलानिष्पत्तेरङ्गभूतयज्ञाद्यनुष्ठानस्यावश्यकत्वात् । तदर्थं दारान्तरं परिगृह्याग्न्याधानं कार्यम् । न च दारपरिग्रहे सत्यूर्ध्वरेतस्त्वविरोधापत्तिः । विद्याङ्गकर्मार्थं दारपरिग्रहेऽपि भीष्मवदूर्ध्वरेतस्त्वोपपत्तेरिति चशब्देन द्योत्यते। सोऽय'मुपायनादधीत होमसंयोगा'दिति पूर्वतन्त्राधिकरणपूर्वपक्षरीत्या पूर्वपक्षः। तत्र ह्युपनयनाङ्गहोमः आहवनीये कर्तव्यः । 'यदाहवनिये जुह्वती'त्यविशेषश्रवणात् । आहवनीयसिद्ध्यर्थं चाग्नय आधातव्याः । अग्न्याधानसिद्ध्यर्थं दारसङ्ग्रहश्च कार्यः। अस्मिन् दारसङ्ग्रहे कर्मार्थे सत्यप्युपनयनपूर्वकविद्याग्रहणोत्तरकालविहितो दारसङ्ग्रहः प्रजार्थो भविष्यतीति पूर्वपक्षः कृतः । नचाश्रमधर्मैरेव विद्यायास्साङ्गत्वसिद्धेर्यज्ञाद्यनुष्ठानार्थमाधानदारसङ्ग्रहयोराक्षेपो न प्राप्नोतीति वाच्यम् । 'यज्ञेने'त्यादितृतीयाश्रुत्या विशिष्य यज्ञादीनामपि विद्याङ्गत्वविधानात् । कर्मत्यागश्रुतिस्तु विद्यानङ्गकर्मविषया स्यादिति भावः । कर्मत्यागेनैवेति । तथा च विशेषविध्यनुसारेण यज्ञादिश्रुतिर्गृहस्थविषया भविष्यति । न च यज्ञादिश्रुत्यनुसारेण कर्मत्यागश्रुतिरेव यज्ञाङ्गकर्मातिरिक्तकर्मविषयास्त्विति वाच्यम् । गृहस्थैरपि संसाराद्विरज्य मुक्त्यर्थां विद्यामनुतिष्ठद्भिरैहिकामुष्मिकफलसाधनानां काम्यकर्मणां त्यक्तत्वेन विशिष्य सन्न्यासिनां कर्मत्यागविधेर्विद्याङ्गयज्ञादिपर्यन्तत्वस्यावश्यवक्तव्यत्वात् । 'सर्वार्थत्वाच्च पुत्रार्थे न प्रयोजये'दिति पूर्वोदाहृतपूर्वतन्त्राधिकरणसिद्धान्तसूत्रोक्तन्यायेन 'धर्मे चार्थे च कामे च नातिचरितव्ये'ति स्मृतेः केवलं पुत्रार्थमिव केवलं धर्मार्थमपि दारसङ्ग्रहायोगाच्च । भीष्मस्य तु धर्मप्रजोभयार्थे दारसङ्ग्रहे निर्वृत्त एव पितृप्रीत्यर्थमूर्ध्वरेतस्त्वप्रतिज्ञया पुत्रोत्पादनान्निवृत्तौ सत्यां दाराणां धर्मार्थ-

विद्यावत्त्वावगमात् । किंतु स्वाश्रमधर्मापेक्षा सा । तेषामाधानाद्यनुपपत्तेरिति ॥

इति अग्नीन्धनाधिकरणम् ॥ ५ ॥

## अथ सर्वापेक्षाधिकरणम् ॥ ६ ॥

### सू ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

पूर्वाधिकरणे निरूपितमन्याश्रमिणामनुपपत्तेराधानाद्यनपेक्षा विद्येति । तदिह गृहिणां विद्या तदपेक्षा न वेति संशयः ॥ एवं सति गृहस्थानामपि विद्याऽग्नीन्धनादिकर्मानपेक्षिणीति ब्रूमः । तस्य व्यभिचारेण विद्याङ्गत्वानुपपत्तेः । यत्तु विमता विद्या स्वाङ्गभूतकर्मापेक्षा अङ्गित्वात् प्रयाजाद्यपेक्षदर्शपूर्णमासवत्, इत्यनुमानम् । तत्राधानादेः कीदृशमङ्गत्वं साध्यम् ? प्रयाजादिवत् फलोपकारित्वं वा, अवघातादिवत् स्वरूपोपकारित्वं वा । नाद्यः । तज्जन्यत्वे मुक्तेरनित्यत्वं स्यात् । द्वितीये साध्यविकलो दृष्टान्तः । अतो न विद्याङ्गत्वं कर्मणः । तस्मात् गृहिणा-

---

त्वमात्रमवशिष्टमिति, तेन यज्ञाद्यनुष्ठानं । न तूर्ध्वरेतस्त्वप्रतिज्ञानन्तरं केवलं धर्मार्थदारसङ्ग्रहेण श्रुतिस्मृतिसिद्धानिकेतत्वादिसन्न्यासिधर्मपर्यालोचनयापि न सन्न्यासिनो दारसङ्ग्रहादिकमुपपद्यत इति भावः । सन्न्यासिनः स्वाश्रमधर्मास्त्रिषवणस्नानसमधिकशौचाष्टग्रासादयः ॥

इति अग्नीन्धनाधिकरणम् ॥ ५ ॥

## अथ सर्वापेक्षाधिकरणम् ॥ ६ ॥

सू० ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ सन्न्यासिनामिव गृहस्थानामपि विद्या कर्मानपेक्षेति पूर्वपक्षोत्थानात्सङ्गतिः । यज्ञाद्यभावेऽपि विद्यादर्शनात् यज्ञादिश्रुतेश्च संशयः । व्यभिचारेणेति । न च षोडशिग्रहरहितक्रत्वपूर्वात्तत्सहितक्रत्वपूर्वस्यैव कर्मरहितविद्यातः कर्मवद्विद्याया उत्कर्षः कल्पनीयः मुक्तेरेकरूपत्वेन । तथेह फलोत्कर्षप्रयोजकस्य साधनोत्कर्षस्य समर्थयितुमशक्यत्वात् तदप्रयोजकस्य विद्योत्कर्षस्य संभवतोऽप्यनुद्देश्यत्वात् मुक्तिफलजननक्षमस्य विद्यामात्रस्य सन्न्यासिनामिव कर्मभिर्विनापि संभवे कर्मानुष्ठानक्लेशायोगादिति भावः । उक्तभङ्ग्या दूषितमप्यनुमानं प्रातिस्विकदोषेण दूषयितुमुद्भावयति—यत्त्विति । साध्यविकल इति । 'नन्ववघाताद्यपेक्षदर्शपूर्णमासव'दिति दृष्टान्तोपादाने साध्यवैकल्यं न भविष्यति । सत्यम् । तथाप्यासनबन्धप्राणायामादिभिश्चित्तैकाग्र्यसंपादनद्वारा विद्यास्वरूपनिर्वर्तकैरर्थान्तरं स्यात् । तस्माद्यज्ञादीनां

---

नयमणिमालायाम्

## अथ अग्नीन्धनाधिकरणम् ॥ ५ ॥

सू० अतएवचाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

अत्याश्रमिणापि सता विद्यार्थत्वेन कार्यमाधानम् । यज्ञादिकर्मणां यद्विद्याङ्गत्वं समाम्नातम् ॥ ३०१ ॥

नोकार्यमेतमेव प्रव्राजिन इति विधानबलात् । विद्यार्थमेव कर्म त्यक्तवतस्सा हि न तदपेक्षेत ॥ ३०२ ॥

इति अग्नीन्धनाधिकरणम् ॥ ५ ॥

मपि विद्या कर्मानपेक्षेति पूर्वः पक्षः ॥ सिद्धान्तस्तु—कर्मवत्सु गृहस्थेषु विद्याऽग्निहोत्रादिसर्वकर्मापेक्षा । 'यज्ञेन दानेन' इति श्रुतेः, यज्ञादीनां पारमेश्वरनियोगसिद्धत्वाच्च । यथाऽश्वो गमनसाधनभूतोऽपि स्वपरिकरबन्धापेक्षो गमने, तथा विद्याऽपीति । कर्मणः फलाभिसन्धिरहितत्वेन विद्यास्वरूपोपकार्यङ्गत्वान्न तज्जन्यत्वं मोक्षफलस्य । किंतु साक्षात् ज्ञानफलमेव मोक्षः । अतो गृहस्थानां यज्ञादिसापेक्षा विद्या । सर्वेषामाश्रमिणां स्वाश्रमविहितकर्मापेक्षेति युक्तं विद्यायाः कर्मापेक्षत्वम् ॥

इति सर्वापेक्षाधिकरणम् ॥

---

विद्याङ्गत्वायोगा'द्यज्ञेने'त्यादिश्रुतिर्विद्यास्तुत्यर्था । वर्तमानापदेशत्वात् । दृश्यते ह्यतदर्थस्यापि तादर्थ्यवर्णनं स्तुत्यर्थं । 'यज्ञार्थं पशवस्सृष्टा'इत्यादौ । अतस्सन्न्यासिभिरिव गृहस्थैरपि विद्यार्थं कर्म नानुष्ठेयमिति भावः । पारमेश्वरनियोगसिद्धत्वाच्चेति । तथा च परः स्वनियोगानुवर्तनेन प्रसन्नस्सन्नाप्रायणमहरहरविच्छेदेनानुष्ठेयां विद्यां चित्तैकाग्र्यादिप्रदानद्वारा निर्वर्तयेदिति विद्यास्वरूपोपकारकाणि यज्ञादीनीत्येवं यज्ञादिश्रुतेरर्थवत्त्वसंभवे नानर्थकमर्थवादत्वमाश्रयणीयमिति भावः । यज्ञादीनां विद्याव्यभिचारं परिहरति—सर्वेषामाश्रमिणामिति । यस्मिन्नाश्रमे स्थित्वा यो विद्यामनुतिष्ठति तस्य तदाश्रमधर्मैर्विद्यास्वरूपोपकार इति नियमे नास्ति व्यभिचारः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेने'त्यादिश्रुतेरप्यत्रैव तात्पर्यम् । तत्र 'वेदानुवचनेने'ति ब्रह्मचारिधर्मजातं लक्ष्यते । अध्ययनार्थमुपक्रान्तमेव हि गुरुकुलवासमाप्रायणमनुवर्तयेन्नैष्ठिकब्रह्मचारी । 'यज्ञेन दानेने'त्यनेन यज्ञदानप्रधानं गृहस्थधर्मजातं लक्ष्यते । 'तपसे'त्यनेन कृच्छ्रचान्द्रायणपञ्चाग्निमध्यतपश्चर्यादिप्रधानं वैखानसधर्मजातम् । 'अनाशकेने'त्यनेन अनशनप्रायाष्टग्रासनियमप्रधानं यतिधर्मजातं लक्ष्यते । एवमाश्रमधर्मभेदेऽपि तदुपकार्यविद्याभेदो न प्रसज्यते । 'यस्य यावत्स्वगृह्योक्तं बहु वा स्वल्पमेव वा । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवे'दिति स्मृत्युक्तरीत्या वर्णाश्रमकुलविशेषादिप्रयुक्तपारमेश्वरनियोगानुवर्तनस्यैकरूपफलत्वोपपत्तेरिति भावः ॥

इति सर्वापेक्षाधिकरणम् ॥ ६ ॥

---

नयमणिमालायाम्

अथ सर्वापेक्षाधिकरणम् ॥ ६ ॥

सू० ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

तर्ह्येव सेति विद्या गृहिणामपि न तदपेक्षेत । एकस्यास्तदपेक्षानपेक्षताया विरुद्धत्वात् ॥ ३०३ ॥

यज्ञेनेति श्रवणात्तस्याः कर्म ह्यपेक्षास्ति । आश्रमभिदया सा स्याद्गमनस्याश्व इव पुंभिदया ॥ ३०४ ॥

इति सर्वापेक्षाधिकरणम् ॥ ६ ॥

## अथ शमदमाद्यधिकरणम् ॥ ७ ॥

सू ॥ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्' 'श्रद्धाभक्तिध्यानयोगादवेहि' इत्यादिना विद्यायाः शमादिसंपत्त्यपेक्षा श्रूयते। सा शमादिसंपत्तिर्गृहिणां संभवति न वेति संशयः ॥ यज्ञादिमत्तया बहुव्यापारव्याकुलानां तेषां तदुपरतिरूपा शमदमादिसंपत्तिर्न संभवति इति प्राप्ते उच्यते—गृहस्थो विहितकर्मव्यापृतोऽपि निषिद्धकाम्यादिकर्मसु व्यापाररहितः शमाद्युपेतः स्यात् 'शान्तो दान्तः' इत्यादिना 'श्रद्धाभक्तिध्यानयोगादवेहि'-इत्यादिना च शमादेर्विहितत्वात्, विद्यानिष्पत्तये तदङ्गत्वेन तेषामवश्यानुष्ठेयत्वात्। आन्तराणां रागद्वेषादीनामनाविर्भूतिः शमः। सर्वेषामिन्द्रियाणामविहितव्यापारेभ्यो निवर्तनं दमः। निषिद्धकाम्यकर्मव्यापारोपरम उपरतिः। द्वन्द्वसहिष्णुत्वं तितिक्षा। विसृष्टतन्द्रादिव्याक्षेपस्य चित्तस्य परतत्त्वाभिमुख्यं समाधानम्। अपुरुषार्थसकलेतरशास्त्रपराङ्मुखी परविद्यामयपरमात्मतन्त्रोपनिषद्गोष्ठीसमुत्कण्ठारूपा सत्त्वकला श्रद्धा। विनिर्मुक्तसकलेतरदेवताराधना त्रिविधकरणसंपाद्या विशिष्टाष्टाङ्गयोगिनी परमशिवपरिचर्यामयी वैदिकी क्रिया भक्तिः। परमानन्दावेशमयमहामोक्षलक्ष्मीदर्शनत्वरा मुमुक्षा। ऐहिकामुष्मिकसकलभोगपराङ्मुखत्वरूपेण वैराग्येण नित्यानित्यवस्तुनिर्धारणाकारेण विवेकेन

---

## अथ शमदमाद्यधिकरणम् ॥ ७ ॥

सू० ॥ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥ पूर्वाधिकरणे विद्याङ्गत्वेन गृहस्थानुष्ठेयतया व्यवस्थापितैर्यज्ञादिभिः शमादीनां विरोधाविरोधाभ्यां संशयः। शमादीनां सर्वव्यापारोपरतिरूपतया यज्ञादिभिर्विरोधोऽस्तीति पूर्वः पक्षः। तेषां तत्तदाश्रमविहितदेहयात्रोपयुक्तेतरोपरतिरूपतया नास्ति विरोध इति सिद्धान्तः। विद्याविरोधिनामन्तरिन्द्रियव्यापाराणामुपरमः शमः। ज्ञानेन्द्रियव्यापाराणामुपरमो दमः। कर्मेन्द्रियव्यापाराणामुपरम उपरतिः। परमात्मतन्त्रं परमाप्तेन शिवेन प्रणीतं सर्वज्ञानोत्तरादिशिवशास्त्रम्। तत्र विशिष्टानि भक्तेरष्टाङ्गानि—'मद्भक्तजनवात्सल्यं पूजायाञ्चानुमोदनम्। स्वयमभ्यर्चनं चैव मदर्थे चाङ्गचेष्टनम् ॥ मत्कथाश्रवणे प्रीतिः स्वरनेत्राङ्गविक्रिया। मन्नामकीर्तनं नित्यं मयि कैतववर्जन'मिति शिवेनैव निरूपितानि। वैदिकी क्रियेति। न तु तन्त्रोक्तप्रकारेति भावः। 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यादि श्रुत्युक्ताधिकारिविशेषणरूपां मुमुक्षामुपायमुखेन संभावयति—ऐहिकेति। नित्यानित्यवस्तुनिर्धारणादनित्येषु विषयेषु वैराग्यं ततः शमादिसम्पत्त्या मुमुक्षेति क्रमः ॥ ननु 'यज्ञेने'त्यादिश्रुतिविहितविद्यासाधनकर्मानुष्ठानं विद्यानुष्ठानारंभात्प्रागिति 'विहितत्वाच्चाश्रमकर्मापी' त्यधिकरणे भाष्यकारो वक्ष्यति। शमादिकं तु चित्तैकाग्र्यद्वारा विद्यास्वरूपोपकारकं विद्यानुष्ठानारंभप्रभृत्यनुष्ठेयम्। अतो यज्ञादेः

च विशिष्टस्य शमादिसंपत्तिक्रमेण संभवति मुमुक्षा । एते विवेकादयो मुमुक्षापर्यन्ताः परमधर्माः सर्वेषामाश्रमिणां विद्यार्थमविशेषेणानुष्ठेया इति ॥

इति शमदमाद्यधिकरणम् ॥ ७ ॥

## अथ सर्वान्नानुमत्यधिकरणम् ॥ ८ ॥

### सू ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

प्राणविद्यायां पठ्यते 'न ह वा एवंविदि किंचनानन्नं भवति' इति । इह प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः प्रतीयते । तदेषा युक्ता न वेति संशयः ॥ किं तावत् प्राप्तम्? मानान्तरप्राप्तस्य भोजनस्याविधेयत्वादिह सर्वान्नानुमतिरप्राप्ता विधीयते । इति प्राप्ते समाधीयते । प्राणविद्यानिष्ठस्यापि सर्वान्नानुमतिर्न स-

---

शमादेश्च विरोधशङ्कैव नास्तीति नेदमधिकरणमारंभणीयमिति चेन्मैवम् । विद्यासाधनं कर्मसञ्जातमुमुक्षेणा हि विद्योपायसम्पत्तिद्वारा विद्यालाभार्थमनुष्ठेयं । तदानीमपि निषिद्धकाम्यरुचिवासनानां समूलोन्मूलनार्थं शमादिकमनुष्ठेयमिति विरोधशङ्कावतरणात् विद्यारंभप्रभृत्यपि 'विद्याञ्चाविद्याञ्चे'ति श्रुतिविहितविद्यासहकारिकर्मानुष्ठानस्य वक्ष्यमाणतया तेन सह शमादेर्विरोधशङ्कावतरणाच्च ॥

इति शमदमाद्यधिकरणम् ॥ ७ ॥

## अथ सर्वान्नानुमत्यधिकरणम् ॥ ८ ॥

सू० ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥ यज्ञादीनां शमादीनाञ्च ब्रह्मविद्याशेषत्वमुक्तम् । तत्प्रसङ्गात्सर्वान्नानुमतेः प्राणविद्याशेषत्वमस्ति न वेति विचार्यते । 'न हवा' इत्यादिविधिस्तुत्यर्थत्वानवधारणात्संशयः । तत्र पूर्वः पक्षः । अदनस्य रागप्राप्तत्वेऽपि तदाश्रिता सर्वान्नानुमतिरप्राप्ताप्राणविद्याङ्गत्वेन विधीयते । अभक्ष्यभक्षणनिषेधस्तु पुरुषार्थत्वान्न तां क्रत्वर्थामास्कन्दति । उषस्तिचरितदर्शनमपि न तस्या बाधकम् । उषस्तेर्ब्रह्मविदः प्राणविद्यानिष्ठत्वाभावात् । ब्रह्मविदश्च 'नाविरतो दुश्चरिता'दिति श्रुत्या सकलनिषिद्धव्यावृत्तेरुक्तत्वादिति । सिद्धान्तस्तु, प्राणविद्यानिष्ठस्यापि सर्वान्नानुमतिरितरसाधारण्येन प्राणात्यय एव । 'न हवा एवंवि'दित्यादिकं, तु 'यत्किञ्चिदिदमा श्वभ्य आशकुनिभ्य' इति विहितस्याश्वादिकं सर्वमिदं प्राणस्यान्नमित्यनुचिन्तनस्य फलार्थवादमात्रम् ॥ न चापूर्वत्वात्प्रवृत्तिविशेषकरत्वाच्च तत्र विधिरिति युक्तम् । विधिविभक्तेरश्रवणात् तत्कल्पने च प्रत्यक्षस्य सामान्यनिषेधशास्त्रस्यपरिपन्थित्वादिति अव-

---

नयमणिमालायाम्

## अथ शमदमाद्यधिकरणम् ॥ ७ ॥

सू० ॥ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

एवं तर्हि शमादेर्विधानमस्त्याश्रमिष्वेव । स्याद्विद्यार्थं गृहिणां यज्ञादिव्याप्तेतेसत्त्वात् ॥ ३०५ ॥

तेषामपि स विधातुर्निषिद्धकार्यादिविषयेषु । शक्यस्ततश्चसकलो विद्यार्थीशमदमाद्युपेतः स्यात् ॥ ३०६ ॥

इति शमदमाद्यधिकरणम् ॥ ७ ॥

वेदा, किंतु प्राणात्यय एव । अधिकशक्तेरुषस्तेर्ब्रह्मविदोऽपि हि प्राणात्यय एवोच्छिष्टभक्षणादौ श्रुतिर्दृश्यते—"मटचीहतेषु कुरुष्वाटक्या सह जायया उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास । स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे । स होवाच, नेतोऽन्ये विद्यन्ते यच्च ये म इमा उपनिहिता इति । एतेषां मे देहीति होवाच । तानस्मै प्रददौ । हन्तानुपानमिति । उच्छिष्टं मे पीतं स्यादिति होवाच । न स्विदेतेऽप्युच्छिष्टा इति ? न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम् ॥" इत्यादिरूपा । अतः प्राणात्यय एव सर्वान्नानुमतिः परविद्यावतोऽपीति ॥

## सू ॥ अबाधाच्च ॥ २९ ॥

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥" इत्याहारशुद्धेरबाधाच्च प्राणसंशय एव सर्वान्नानुमतिः ॥

## सू ॥ अपि च स्मर्यते ॥ ३० ॥

प्राणसंशय एव सर्वान्नानुमतिः स्मर्यतेऽपि—"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥"

---

धारणार्थेन सौत्रचकारेण सूचितोऽयं विधिकल्पनाबाधको हेतुः । 'प्राणविदोऽपि सर्वान्नानुमतिरितरवत्प्राणात्यय' एवेति प्रतिज्ञायां ब्रह्मविदोऽप्येवं किमुत प्राणविद इति कैमुतिकन्यायहेत्वन्तरप्रदर्शनार्थं 'तद्दर्शना'दिति सूत्रशेषं व्याचष्टे—अधिकशक्तेरित्यादिना । मटच्यः शकुनिविशेषाः । ताभिर्हतेषु कुरुषु कुरुदेशसस्येषु आटक्या अनुपजातस्तनादिव्यञ्जनया जायया सह उषस्तिर्ह उषस्तिरिति नाम्ना प्रसिद्धः च चाक्रायणः चक्रस्यापत्यम् । इभ्यग्रामे इभमर्हतः हस्त्यारोहस्य ग्रामे प्रद्राणकः अन्नालाभात्कुत्सितां गतिं गतः अत्यन्तकष्टावस्थां प्राप्तस्सन्नुवास मार्गवशात्कस्मिंश्चिद्दिवसे उषितवान् । स ह स किल कुल्माषान् कुत्सितान् माषान् जलपक्वकुलुत्थादिकान् वा खादन्तं इभ्यं बिभिक्षे । स ह इभ्यः किल उवाच । इतोऽस्मान्मया भक्ष्यमाणादुच्छिष्टकुल्माषराशेरन्ये कुल्माषा न विद्यन्ते यच्च ये यस्मिन् राशौ मे मदर्थमुपनिहिताः भक्षणार्थं प्रक्षिप्ता इमे कुल्माषा इतोऽन्ये न विद्यन्त इति पूर्वेण सम्बन्धः । इत्युक्त उषस्तिरुवाच । एतेषां मे देहि एतान्मह्यं देहीति । तानस्मा ऋषये प्रददौ । पानाय समीपस्थमुदकं गृहीत्वोवाच । हन्तेति हर्षे । अनुपानं इदमनुपानमपि गृहाण इत्युक्त ऋषिः प्रत्युवाच उच्छिष्टं वै मे मया पीतं स्यात् यदीदमुदकं पिबेयमित्युक्त इभ्यः प्रत्युवाच न स्विदेतेऽप्युच्छिष्टाः किमेते कुल्माषा अपि नोच्छिष्टा इति । एवमुक्त उषस्तिरुवाच । नवा अजीविष्यं नैव जीविष्यामीमानखादन् कामो म उदपानम् इच्छातो ममोदकपानं लभ्यत इति । एवं ब्रह्मविद्येऽप्यत्यन्तकष्टावस्थायामप्यनन्यलभ्यस्य कुल्माषमात्रस्योच्छिष्टस्य ग्रहणम् अन्यलभ्यस्योदकस्य परिहरणं च दृष्टमित्यन्येषां च सर्वान्नानुमतिरत्यन्तकष्टावस्थायामेवेति कैमुतिकन्यायसिद्धमित्युपसंहरति—अत इति ॥ ब्रह्मविदनुष्ठानेनैव ब्रह्मविद्विषयवचनेनापि कैमुतिकन्यायः सिद्ध्यतीत्याह—सू० ॥ अबाधाच्च ॥२९॥ सत्त्वशुद्धिरन्तःकरणशुद्धिः । ध्रुवास्मृतिः निरन्तरस्मृतिसन्तानरूपध्यानलाभः ॥ सू० ॥ अपि च स्मर्यते ॥ ३० ॥ सर्वसाधारण-

## सू ॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥

तस्मात् 'ब्राह्मणः सुरां न पिबेत्' इति कामकारनिवृत्तौ शब्दश्च भवति। अतश्च प्राणसंशय एव विदुषोऽपि सर्वान्नानुमतिः। अन्यथा निषिद्धाचरणेन परमेश्वरस्याद्रोही स्यादिति भावः ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ८ ॥

### अथ आश्रमकर्माधिकरणम् ॥ ९ ॥

## सू ॥ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

विद्याहीनस्य गृहस्थस्याश्रमकर्म यज्ञादिकं 'यावज्जीवमग्निहोत्रं जुहोति' इति विहिततया च 'यज्ञेन दानेन' इति श्रुतेर्विद्यासाधनतया चानुष्ठेयमवगम्यते ॥

## सू ॥ सहकारित्वेन च ॥ ३३ ॥

विद्यावतोऽपि 'विद्यां चाविद्यां च' इति श्रुतेर्विद्याङ्गतया विहिततया चानुष्ठेयमवगम्यते। तदिह विद्याहीनेन विद्यावता च यज्ञादिकं विद्यायास्साधनत्वेन

---

स्मृतिबलादप्येवमिति भावः ॥ सू० ॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥ सर्वान्नानुमतिबाधनक्षमप्रत्यक्षश्रुतिप्रदर्शनार्थमिदं सूत्रम्। तस्मा 'द्ब्राह्मणः सुरां न पिबे'दिति शब्दः कठशाखायां श्रूयते। कामकारनिवृत्ताविति प्रयोजनस्य निमित्तत्वविवक्षया सप्तमी। अतश्चेति। सौत्रश्चकारो भिन्नक्रमतया योजितः ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ८ ॥

### अथ आश्रमकर्माधिकरणम् ॥ ९ ॥

सू० ॥ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ विद्यानुष्ठानारंभात्प्राक्तदारंभप्रभृति च यज्ञादीनां द्विरनुष्ठानं सकृद्वेति विचारं प्रवर्तयिष्यन् विचारप्रसञ्जकं 'विहितत्वा'दित्यादिसूत्रद्वयेन दर्शयति। यज्ञादिकर्माश्रमकर्मापि भवति। अपिशब्दाद्विद्यासाधनं च। 'यावज्जीवमग्निहोत्रं जुहोती'त्यादि श्रुत्याश्रमधर्मत्वेन विहितत्वात् चकारा 'द्यज्ञेन दानेने'त्यादिश्रुत्या विद्यासाधनत्वेन बोधितत्वाच्चेत्यस्य सूत्रस्यार्थः ॥ सू० ॥ सहकारित्वेन च ॥ ३३ ॥ 'विहितत्वाच्चे'त्यनुवर्तते। विद्यारंभप्रभृति यज्ञादिकं विद्यासहकारित्वेनानुष्ठेयम् चकारादाश्रमधर्मत्वेनाप्यनुष्ठेयम्। 'विद्याञ्चाविद्याञ्चे'ति श्रुत्या विद्यासहकारित्वेन बोधितत्वात् यावज्जीवादिश्रुत्याश्रमधर्मत्वेन विहितत्वाच्चेत्यर्थः। एवं मुमुक्षोर्विद्यारंभात्प्राक् विद्यारंभप्रभृति च यज्ञादिष्वधिकारद्वित्वे सिद्धे संशयं प्रवर्तयति—तदिहेति।

---

नयमणिमालायाम्

### अथ सर्वान्नानुमत्यधिकरणम् ॥ ८ ॥

सू० ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥ अबाधाच्च ॥ २९ ॥ अपि च स्मर्यते ॥ ३० ॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥

प्राणविदस्सर्वान्नानुमतौ विधिरस्त्यपूर्वत्वात्। सामान्यनिषेधः खलु संकुचितः स्याद्विशेषविधेः ॥ ३०७ ॥

क्लृप्तस्सामान्यविधिर्विरुद्धविधिकल्पनां विशेषेऽपि। बाधेत ततस्सा स्यात् प्राणात्ययगोचरा यथोक्तस्तैः ॥ ३०८ ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ८ ॥

अङ्गत्वेन विहितत्वेन च द्विरनुष्ठेयं सकृदनुष्ठेयं वेति संशये सत्युभयविधिबलात् द्विरनुष्ठेयमिति प्राप्ते सिद्धान्त उच्यते—

## सू ॥ सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

**उभयत्र विनियोगेनोभयाकारत्वेऽपि त एव यज्ञादयः, सर्वत्र प्रत्यभिज्ञानात्।**

किं विद्याहीनेन विद्यायास्साधनत्वेन विहितत्वेन च द्विरनुष्ठेयम् । विद्यावता च विद्याङ्गत्वेन विहितत्वेन च द्विरनुष्ठेयम् उत विद्याहीनेन विद्यावता च सकृत्सकृदनुष्ठेयमिति संशयप्रकारः । यद्याश्रमधर्मरूपाद्यज्ञादेर्विद्यासाधनं यज्ञादिकं नित्याग्निहोत्रात्कौण्डपायिनामयनाग्निहोत्रमिव भिद्येत तदानीमाश्रमधर्मरूपान्मुख्याद्यज्ञादेर्विद्यासाधनं गौणं यज्ञादिकं पृथगनुष्ठेयमिति मुख्यगौणात्मकस्य यज्ञादेर्द्विरनुष्ठेयत्वं सिध्यति । यदि 'यावज्जीवमग्निहोत्रं जुहोती'ति श्रुतान्नित्याग्निहोत्रात् 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इति श्रुतं काम्याग्निहोत्रमिव न भिद्येत तदा काम्यप्रयोगान्नित्यानुष्ठानसिद्धिरिति प्रसङ्गन्यायेन यज्ञादिकं सकृदेवानुष्ठेयं सिध्यति । अतोऽत्र किं नित्याग्निहोत्रमासाग्निहोत्रन्यायेन भेदः उत नित्याग्निहोत्रकाम्याग्निहोत्रन्यायेनाभेदः इति कर्मभेदाभ्यामयं संशयः । तत्र पूर्वपक्षमाह —उभयविधिबलादिति । अयमाशयः—युक्तमेकस्यैवाग्निहोत्रस्य नित्यत्वेन काम्यत्वेन च प्रयोगभेदमात्रमिति यावज्जीवस्वर्गकामवाक्ययोरेकत्रैव प्रकरणे श्रवणात् । 'यज्ञेने'त्यादिवाक्यस्य 'विद्याश्चाविद्याश्चे'ति वाक्यस्य च प्रकरणान्तरे श्रवणात् मासाग्निहोत्रन्याय एव प्रवर्तते । न च तत्र 'जुहोती'ति होमे विधिः श्रूयते । अतो विहितस्य विधानायोगेन विहितात्प्रसिद्धाग्निहोत्रहोमादस्य होमस्यान्यत्वसिद्धौ तत्र वर्तमानं नाम तत्परतन्त्रं सत्प्रसिद्धाग्निहोत्रप्रत्यभिज्ञापकं न भवतीति तत्र प्रकरणभेदात्कर्मान्तरत्वमस्तु । इह तथा यज्ञादिषु विधिर्न श्रूयते । किन्तु विविदिषायामिति वाच्यम् । अत्रापीष्यमाणविद्योद्देशेन यज्ञादिकं विधेयमिति यज्ञादिनाम्नो विधेयपरत्वेनाग्निहोत्रनामतुल्यत्वात् । एतेन 'मासमग्निहोत्रं जुहोती'त्यनुपादेये काले विधिसंक्रमायोगेन होमस्यैव विधेयत्वं वाच्यमिति विहितस्य विधानायोगात्तत्र कर्मभेद इति निरस्तम् । कालवत्फलस्याप्यनुपादेयत्वेनात्रापि यज्ञादेरेव विधेयत्वस्य वाच्यत्वात्प्रसिद्धस्य यज्ञादेः प्राप्तत्वेन तस्याप्राप्तो विद्याफलसंबन्धो बोधयितुं शक्य इत्येतत्तु तत्रापि तुल्यम्, प्रसिद्धस्यैवाग्निहोत्रस्य मासगुणसम्बन्धो बोधयितुं शक्यत इति । तस्मादनुपादेयसम्बन्धे कर्मण एव विधेयत्वमिति मासाग्निहोत्रन्यायस्येहापि तुल्यत्वात्प्रकरणान्तरात्कर्मभेदः स्यादेवेति ॥ सू० ॥ **सर्वथापि त एवोभयलिङ्गात्** ॥ ३४ ॥ उभयलिङ्गादित्यस्योभयत्र कर्मैक्ये प्रत्यभिज्ञानरूपालिङ्गादित्यर्थमाह —सर्वत्र प्रत्यभिज्ञानादिति । अयमाशयः—'मासमग्निहोत्रं जुहोती'त्यत्र विधेयं कर्माग्निहोत्रादन्यदपि होमरूपतयावगम्यत इति युक्तम् । तत्राग्निहोत्रशब्दस्य साध्यसादृश्यावलम्बनया गौण्या वृत्त्या वर्तनम् । इह तु यज्ञादिशब्दोपात्तं कर्म यज्ञादेरन्यच्चेत्तत्किंरूपमित्यवगन्तुं न शक्यते । इष्टिपशुसोमादिरूपाणां यज्ञादीनां मध्ये केन यज्ञादिना सादृश्यमवलम्ब्य प्रवृत्तया गौण्या वृत्त्या यज्ञादिशब्दवृत्तिरित्यप्यवगन्तुं न शक्यते । यज्ञादिनाम्ना द्रव्यदेवताद्यतिदेशे सति देवतोद्देश्यकद्रव्यत्यागत्वादिरूपयज्ञादिशब्दप्रवृत्तिनिमित्तप्राप्तेरनिवार्यत्वेन यज्ञादिभिन्नत्वमपि विधेयस्य कर्मणस्समर्थयितुं न शक्यते । तस्मादिह यज्ञादिशब्दानां 'यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः ।' 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वर'मित्यादिश्रुतिस्मृतिष्विव प्रसिद्धयज्ञादिपरत्वमेव युक्तमिति ॥

**एवं च कर्मस्वरूपैक्ये सति संयोगपृथक्त्वन्यायेन न विरोधः । सकृत्प्रयोगेऽपि वचनद्वयबलेन कर्मण एकस्याप्याकारद्वयोपपत्तेः । यथा 'खादिरो यूपो भवति— खादिरं वीर्यकामस्य यूपं कुर्वन्ति' इत्यत्र वचनद्वयबलेन नित्यत्वं काम्यत्वं चैकस्य खादिरत्वस्य, तद्वत् । ततो विदुषोऽप्यविदुषोऽपि विद्याङ्गतया विद्याहेतुतया विहिततया च सकृदेवानुष्ठेयं यज्ञादिकमिति ॥**

**सू ॥ अनभिभवं च दर्शयति ॥ ३५ ॥**

**'धर्मेण पापमपनुदति' इति श्रुतिर्विद्योत्पत्तिप्रतिबन्धकदुरितनिवर्तनेन विद्याया अनभिभवं कर्मानुष्ठानकार्यं च दर्शयति । अतो न पूर्वोक्तविरोधः ॥**

**इत्याश्रमकर्माधिकरणम् ॥ ९ ॥**

---

नन्वेवमैक्यप्रत्यभिज्ञया नित्यस्यैव यज्ञादेः काम्यत्वेनानित्यत्वाङ्गीकारे विरोधः स्यादित्याशङ्क्याह—**संयोगेति** । 'एकस्य तूभयत्वे संयोगपृथक्त्व'मिति जैमिनिसूत्रोक्तन्यायस्संयोगपृथक्त्वन्यायः । एकस्यानुष्ठेयस्य नित्यानित्योभयरूपत्वे संयोगपृथक्त्वं कारणमिति तस्य सूत्रस्यार्थः । सिद्धरूप इवानुष्ठेये वस्तुनि नित्यत्वानित्यत्वयोर्न वस्तुकृतो विरोधोऽस्ति षोडशिग्रहकर्तव्यत्वाकर्तव्यत्वयोरिव । विनियोजकप्रमाणैक्ये शब्दकृतो विरोधः स्यात् । एकस्य वाक्यस्योभयसम्बन्धबोधकत्वासंभवात् । सोऽपि नास्ति । 'खादिरो यूपः' 'खादिरं वीर्यकामस्ये'त्यादिविनियोजकप्रमाणभेदसद्भावादिति तस्य सूत्रस्याभिप्रायः ॥ ननु कर्मैक्ये नित्यत्वानित्यत्वविरोधाभावेऽपि नित्यार्थं फलार्थं च द्विःप्रयोगः स्यादित्याशङ्क्याह—**सकृत्प्रयोगेऽपीति** । कर्मैक्यवत्प्रयोगैक्येऽपि सति न विरोधः काम्यानुष्ठानतः प्रसङ्गान्नित्यार्थसिद्धेरिति भावः । कर्मैक्ये प्रमाणान्तरसमुच्चयार्थं सूत्रम्—**सू० ॥ अनभिभवं च दर्शयति ॥ ३५ ॥** 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते'इत्यादिभिः कर्मणां विद्यासाधनत्वे विद्योत्पत्तिप्रतिबन्धकदुरितनिवृत्तिर्द्वारमितीत्यवगतम् । तदेव चाश्रमधर्माणां कार्यमिति 'धर्मेण पापमपनुदती'ति श्रुतिर्दर्शयति—अतो विद्यापेक्षितद्वारजनकत्वेन क्लृप्तस्यैव कर्मणो विद्यासाधनत्वं युक्तमित्यपीतोऽपि कर्मैक्यमवसीयत इति भावः । **अतो न पूर्वोक्तेति** । एवं दृढे कर्मैक्ये नित्यत्वानित्यत्वविरोधः संयोगपृथक्त्वन्यायेनैव परिहरणीय इति भावः । 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयंँसह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत' इति मन्त्रस्यायमर्थः—विद्यां ब्रह्मोपासनां अविद्यां तत्सहकारिकर्मवृन्दं चेति तदुभयं यः सह वेद सहकारिसहकार्यभावेन युगपदनुष्ठेयं वेद स विद्वानहरहरनुष्ठीयमानेन तेन कर्मणा मृत्युं तीर्त्वा विद्यानुवृत्तितद्वैशद्यादिप्रतिबन्धकदुरितजातमभिभूय विद्यया साक्षात्कारपर्यन्तया मुक्तिं प्राप्नोतीति ॥

**इत्याश्रमकर्माधिकरणम् ॥ ९ ॥**

---

**नयमणिमालायाम्**

**अथ आश्रमकर्माधिकरणम् ॥ ९ ॥**

**सू० ॥ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ सहकारित्वेन च ॥ ३३ ॥ सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥ अनभिभवं च दर्शयति ॥ ३५ ॥**

प्राङ्ज्ञानानुष्ठानात्तदिच्छता तदनुतिष्ठता वापि । कर्म द्विरनुष्ठेयं साधनसहकारिनित्यभावेन ॥ ३०९ ॥

कर्मैकमेव तावद्यज्ञादिप्रत्यभिज्ञानात् । कर्मैक्ये सति काम्यानुष्ठानान्नित्यसिद्धिः स्यात् ॥ ३१० ॥

**इति आश्रमकर्माधिकरणम् ॥ ९ ॥**

## अथ अन्तराधिकरणम् ॥ १० ॥

### सू ॥ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

उक्तमाश्रमिणां विद्या संपद्यत इति । इहानाश्रमिणां विद्या संपद्यते न वेति संदेहः॥अनाश्रमिणः स्नातका विधुराश्च, तेषां ब्रह्मविद्या न संभवति, विद्यासाधनभूतानामाश्रमधर्माणामभावात् ॥ इति प्राप्ते वदामः—रैक्कादिषु विद्यादर्शनादनाश्रमिणामपि विद्या संभवत्येव ॥ यदुक्तं विद्यासाधनाश्रमधर्माभावादिति, तत्राह—

### सू ॥ अपि च स्मर्यते ॥ ३७ ॥

अनाश्रमिणामपि जपादिना विद्यानुग्रहः स्मर्यते 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' इति ॥

### सू ॥ विशेषानुग्रहश्च ॥ ३८ ॥

आश्रमनियतधर्मविशेषेणापि विद्याऽनुग्रहः श्रूयते । 'तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विष्य' इति ॥

### सू ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अनाश्रमित्वादितरदाश्रमित्वं ज्यायः, धर्मभूयस्त्वात्, 'अनाश्रमी न तिष्ठेत्तु

---

## अन्तराधिकरणम् ॥ १० ॥

सू० ॥ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥ 'विहितत्वाच्चाश्रमकर्मापी'त्याश्रमकर्मणां विद्यासाधनत्वं विद्यासहकारित्वं चोक्तम् । तर्ह्यनाश्रमिणामाश्रमकर्माभावाद्विद्या न सम्पद्यत इति पूर्वपक्षोत्थानात्सङ्गतिः । अनाश्रमिणां विद्यासाधनसहकारिकर्मासंभवसंभवाभ्यां संशयः । ये गुरुकुलात्समावृत्तौ सत्यामकृतदारसङ्ग्रहाः स्नातकाः ये च मृतपत्नीका विधुराः तेषां विद्या न सम्पद्यते 'विविदिषन्ति यज्ञेने'त्यादिश्रुतावाश्रमधर्माणामेव विद्यासाधनत्वेन वर्णितत्वात् 'विद्याञ्चाविद्याञ्चे'ति श्रुतावविद्याशब्दस्यापि तत्समानन्यायत्वेनाश्रमधर्मपरत्वात् आश्रमानियतजपादिमात्रेण तेषां विद्यानुग्रहाङ्गीकारे भूयसामाश्रमधर्माणामेव विद्यासाधनत्वेन विधानस्य वैयर्थ्यप्रसङ्गादिति पूर्वः पक्षः । आश्रमान् अन्तरा वर्तमानानामपि स्नातकविधुराणां विद्या सम्पद्यत एव । रैक्कादिषु संवर्गविद्यादिदृष्टेरिति सिद्धान्तः ॥ नन्वन्यार्थदर्शनरूपलिङ्गमात्रं न साधकमिति प्रतिपादकप्रमाणप्रदर्शनार्थं सूत्रम्—सू० ॥ अपि च स्मर्यते ॥ ३७ ॥ संसिध्येत् ब्रह्मविद्यां लभत इत्यर्थः । निरपेक्षप्रापकप्रमाणदर्शनार्थं सूत्रम्—सू० ॥ विशेषानुग्रहश्च ॥ ३८ ॥ विद्यार्थाश्रमधर्मविधिवैयर्थ्यपरिहारार्थं सूत्रम्—सू० ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३९॥ धर्मभूयस्त्वादिति । तेनाविलम्बिता विद्योत्कर्षप्राप्तिर्लभ्यत इति भावः । लिङ्गादित्येतद्व्याचष्टे—

दिनमेकमपि द्विजः' इति स्मृतेश्च । एवमनाश्रमित्वादाश्रमित्वं वरमेव; तथाऽप्यापद्विषयेऽनाश्रमिणामपि जप्यादिसाधनेन विद्या संपद्यत एवेति ॥

इति अन्तराधिकरणम् ॥ १० ॥

अथ तद्भूताधिकरणम् ॥ ११ ॥

## सू ॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥

इहोर्ध्वरेतसां पूर्वाश्रमावरोहोऽस्ति न वेति संदेहः । 'ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वा वनी भूत्वा प्रव्रजेत्' इत्याश्रमारोहो यथा स्वेच्छाधीनस्तथाऽवरोहोऽपि ॥ इति प्राप्ते सिद्धान्तयामः—नैष्ठिकादिभूतस्यातद्भावः ततः प्रच्युतिर्न संभवति । कुतः? नियमात् तद्रूपाभावेभ्यः । नियच्छन्ति हि 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इति । 'अरण्यमियात् ततो न पुनरेयात्' इति 'संन्यस्याग्नीन् न पुनरावर्तयेत्' इति च शास्त्राणि नियच्छन्ति । न चारोहरूपशास्त्रवदवरोहशास्त्राणि सन्ति । अतस्तेषामप्रच्युतिनियमश्रुतेः प्रच्युतौ श्रुत्याद्यभावाच्च न तेषां विद्याऽधिकारः । जैमिनेरप्येवमेव मतम् ॥ आरूढपतितस्य प्रायश्चित्तादिना विद्याऽधिकारो नास्तीत्याह—

अनाश्रमीति । आपद्विषय इति । आश्रमान्तरप्राप्त्युपायासंपत्तिविषय इत्यर्थः ॥

इति अन्तराधिकरणम् ॥ १० ॥

अथ तद्भूताधिकरणम् ॥ ११ ॥

सू० ॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ ऊर्ध्वरेतसामाश्रमं प्राप्य पुनर्दारपरिग्रहं कृतवतां विद्याधिकारोऽस्ति न वेति विद्याधिकारविशेषणभूतशास्त्रापर्युदाससम्पत्त्यसंपत्तिभ्यां संशये पूर्वपक्षः । आश्रमाणामारोहवदवरोहोऽप्यस्तु नाम वृक्षाणामिव । ततश्च दारपरिग्रहेण गार्हस्थ्ये सति विद्याङ्गकर्मभूयस्त्वमपि लभ्यत इति 'अतस्त्वितरज्ज्यायो लिङ्गाच्चे'ति न्यायः प्रवर्तेत । यदि तु 'ब्रह्मचर्यं समाप्य गृही भवे'दिति क्रमस्योक्तत्वात् व्युत्क्रमे गृहस्थाश्रमप्राप्तिर्न स्यात् तदानीं तेषां स्वाश्रमप्रच्युतानामनाश्रमित्वेऽ'प्यन्तरा चापि तु तद्दृष्टेरिति' न्यायः प्रवर्तेत । तस्मादुभयथापि तेषां विद्याधिकारोऽस्तीति । नेति सिद्धान्तः । यतस्तद्भूतस्य ऊर्ध्वरेतसामाश्रमं प्राप्तस्य नातद्भावः तदाश्रमपरित्यागो नास्ति । 'अत्यन्तमात्मान'मित्यादिशास्त्रैस्तथा नियमनात् अतद्रूपापत्तौ शास्त्राभावाच्च । तथा च नियमोल्लङ्घनेन शास्त्रपर्युदस्तानां नास्ति विद्याधिकार इति ॥ ननु तर्ह्यवरुह्य कृतप्रायश्चित्तानां तत्राधिकारोऽस्त्वित्याशङ्कानिराकरणार्थं

---

नयमणिमालायाम्

अथ अन्तराधिकरणम् ॥ १० ॥

सू० ॥ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥ अपि च स्मर्यते ॥ ३७ ॥ विशेषानुग्रहश्च ॥ ३८ ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

विद्यायामधिकारो विदुरादेर्नास्त्यनाश्रमिणः । विद्यार्थस्याभावादाश्रमधर्मस्य कस्यापि ॥ ३११ ॥
रैक्वादिषु तद्दृष्टेरस्ति तु तस्यापि तदधिकृतिः । तदनुग्रहश्च युक्तो जपैश्च सामान्यधर्मैश्च ॥ ३१२ ॥

इति अन्तराधिकरणम् ॥ १० ॥

सू ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

यदवकीर्णिनो गर्दभपश्वालम्भनम् 'अवकीर्णिपशुश्च तद्वत्' इत्यधिकारिलक्षणोक्तं प्रायश्चित्तं, तदप्यारूढपतितस्य न संभवति—'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते नरः। प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा ॥' इति तस्य प्रायश्चित्तानधिकारस्मृतेस्तदसंभवात् ॥

सू ॥ उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥

उपपातकत्वात् प्रायश्चित्तमप्येके मन्यन्ते, मध्वशनप्रायश्चित्तवत्। तदुक्तम्—'उत्तरेषां चैतदविरोधि' इति। उपकुर्वाणस्य यदुक्तं तत् स्वाश्रमाविरोध्यन्येषामप्याश्रमिणां भवतीत्यर्थः ॥

सू ॥ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥

उपपातकत्वे महापातकत्वेऽपि कर्माधिकारादिबहिष्कृता एते, 'प्रायश्चित्तं न

---

सूत्रम् ॥ सू० ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ अवकीर्णिपशुश्च तद्वदिति। पूर्वतन्त्रे अधिकाराध्याये यदधिकरणं तत्रावकीर्णिप्रायश्चित्तरूपपशुबन्धप्रकारश्चिन्तितः। अवकीर्णिपशुः स्थपतीष्टिवल्लौकिकाग्नौ कर्तव्यः निषादस्थपतेरिव ब्रह्मचारिणोऽप्याधानासंभवादिति। एवंभूतं प्रायश्चित्तमपि तेषां नास्ति। 'आरूढो नैष्ठिकं धर्म'मिति व्रतभ्रष्टानां पतितत्वस्मरणेन प्रायश्चित्तानर्हत्वादित्यर्थः। अतोऽवकीर्णिप्रायश्चित्तस्मरणमुपकुर्वाणब्रह्मचारिविषयमिति भावः ॥ सू० ॥ उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥ एके आचार्याः नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनमुपपातकं न तु महापातकं तेष्वपरिगणनादिति मन्यमाना मध्वशनस्येव प्रायश्चित्तसद्भावं मन्यन्ते। तथैव स्मृतावुक्तमित्यर्थः। गौतमस्मृतौ उपनयनादिर्नियम इत्यारभ्योपकुर्वाणस्य नियमान्विधायातिदिष्टम् 'उत्तरेषां चैतदविरोधी'ति। उपकुर्वाणस्य यावन्नियमजातमुक्तं तत्र यदुत्तरेषामाश्रमाणां विरोधि यथा गृहस्थस्य भैक्षचरणं सन्न्यासिनोऽग्नीन्धनमित्यादि तत्परित्यज्यान्यत्सर्वं भवतीत्यर्थः। एवञ्चोपकुर्वाणस्योक्तं गर्दभपश्वालम्भनं नैष्ठिकस्यापि भवति। वानप्रस्थसन्न्यासिनोस्तु कृच्छ्रचान्द्रायणादिकं विशिष्य विहितं प्रायश्चित्तं भवति। यत्तु 'प्रायश्चित्तं न पश्यामी'ति स्मरणं तद्दुर्बलम्। विलम्बितत्वात्। अदर्शनेन हि प्रायश्चित्ताभावोऽनुमेयः। तेन निषेधश्रुतिः कल्पनीयेति। अतस्तत्स्मरणं प्रायश्चित्तगौरवख्यापनार्थमिति न तद्विरोध इति भावः ॥ एवं च कृतप्रायश्चित्तानां तेषां विद्याधिकारोऽस्त्विति शङ्कासूत्रमेतत्—सू० ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ पापानां द्वे शक्ती। इह कर्माधिकारशिष्टसंसर्गविरोधिनी परत्र नरकापादिनी च। नैष्ठिकानां प्रायश्चित्तसद्भावेऽपि तेन परत्र नरकापादिन्येव पापशक्तिर्हीयते न त्विह प्रत्यापत्त्यापा-

पश्यामि येन शुद्ध्येत् स आत्महा' इति स्मृतेः, शिष्टबहिष्काराच्च । अतः सर्वथैवारूढपतितानां न विद्याऽधिकारः ॥

इति तद्भूताधिकरणम् ॥ ११ ॥

## अथ स्वाम्यधिकरणम् ॥ १२ ॥

### सू ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

उक्तमुद्गीथाद्युपासनम् । तदनुष्ठानं यजमानस्य, उत ऋत्विजामिति संशयः ॥ किं प्राप्तम्? उद्गीथाद्युपासनं यजमानस्यैवानुष्ठेयम्, तस्यैव वीर्यवत्तरत्वफलश्रवणात्, नर्त्विजामित्यात्रेयमतम् ॥ सिद्धान्त उच्यते—

### सू ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

'एवंविदुद्गाता ब्रूयात्' इति वाक्यशेषे उद्गातुरुपासकत्वं स्फुटं श्रूयते । आ-

---

दिनी । 'नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते' 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायत'इत्यादिस्मरणात् । अतः 'प्रायश्चित्तं न पश्यामी'त्यादिस्मरणमप्यैहिकप्रत्यापत्त्यापादकप्रायश्चित्ताभिप्रायमिति भावः ॥

इति तद्भूताधिकरणम् ॥ ११ ॥

## अथ स्वाम्यधिकरणम् ॥ १२ ॥

सू० ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ उपासनानुष्ठातृविचारप्रसङ्गागतमिदमधिकरणम् । फलस्य कर्तृगामित्वात् ऋत्विक्परिक्रयाच्च संशयः । तस्यैवेति । ऋत्विक्परिक्रयस्याङ्गानुष्ठानार्थत्वात् पृथक्फलवदुपासनं प्रधानमिति फलार्थिना यजमानेनैवोपासनं कार्यं गोदोहनादेः पृथक्फलत्वेऽपि ऋत्विक्कर्तृकप्रणयनादित्याश्रितस्य पृथक्कृत्य यजमानेनोपादातुमशक्यत्वात् न याजमानत्वम् । उपासनानां तु क्रियारूपाणामुद्गीथादिभ्यः पृथक्कृत्य यजमानेन कर्तुं शक्यत्वात् प्रधानत्वाच्च याजमानत्वमेव युक्तम् । औद्गात्रसमाख्यादिकं तु 'शास्त्रफलं प्रयोक्तरी'ति न्यायविरोधान्नादरणीयमिति भावः ॥ सू० ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥ 'एवंविदुद्गाता ब्रूयात् । कं ते काममागायानीत्येष ह्येव कामागानस्येष्टे य एवंविद्वान्त्साम गायती'ति । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इत्याद्युद्गीथविद्याप्रकरणे श्रूयते । एवंविदन्तरादित्येऽन्तर-

---

नयमणिमालायाम्

## अथ तद्भूताधिकरणम् ॥ ११ ॥

सू० ॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ नचाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

आरोहवदवरोहानुमत्यभावेऽपि चाश्रमिणाम् । अवरुह्य कृतनिष्कृतिरधिकारी भवतु विद्यायाम् ॥ ३१३ ॥
पतितस्यास्य न निष्कृतिरस्ति तु यदि चोपपातकत्वेन । विद्याधिकारबाह्यस्मृत्याचारात्तथाप्येषः ॥ ३१४ ॥

इति तद्भूताधिकरणम् ॥ ११ ॥

र्त्विज्यमेव तदनुष्ठानमित्यौडुलोमिमतम् । कथमन्यकर्तृकमन्यगामिफलं स्यादिति चेत्, ऋत्विजां कर्मस्वरूपवदशेषाङ्गानुष्ठानाय यजमानेन क्रीतत्वात् । साङ्गकर्मानुष्ठानाय हि ऋत्विजो यजमानेन परिक्रियन्ते । तस्मादृत्विक्कृतं यजमानकृतमेवेति, फलं च तस्य स्वामिन एवेति न विरोधः ॥

इति स्वाम्यधिकरणम् ॥ १२ ॥

---

क्षिणि चोपदिष्टं परमेश्वरस्वरूपं सर्वपापोदितत्वादिधर्मैः देवलोककामावाप्तिमनुष्यलोककामावाप्तिरूपफलाभ्यां च सह विद्वानुद्गाता यजमानं प्रति ब्रूयात् । कं ते काममैहिकमामुष्मिकं वा किं फलमुद्दिश्य आगायानि तत्फलानुकूलोपासनासहितं गानं करवाणीति । हि यस्मादेष एवोद्गाता कामागानस्याभिमतफलसाधनोपासनासहितगानस्येष्टे । कः । य एवंविद्वान् अधिदैवताध्यात्मोपदिष्टपरमेश्वरस्वरूपं विद्वान् साम गायतीत्यर्थः । अत्रोद्गातृकर्तृकमेव वेदनमिति स्पष्टम् । एवं 'यदेव विद्यया करोति' 'य एतदेवंविद्वान् साम गायत्युभौ स गायती'त्यादिकमप्युदाहरणम् । न च यागदानादीनां फलवतां यजमानकर्तृकत्वे प्राधान्यं प्रयोजकम् । किं तु यजमानस्य द्रव्ये स्वत्वत्यागो नान्येन कर्तुं शक्य इत्येतत्प्रयोजकम् । अत एवाङ्गत्वेऽपि दक्षिणादानं याजमानम् । एवं च यदृत्विग्भिः कारयितुं शक्यं तस्य सर्वस्याप्यर्थे ऋत्विजां परिक्रीतत्वादौद्गात्रादिसमाख्यानुसाराच्च उद्गीथाद्युपासनमुद्गात्रादिभिरेव कर्तव्यम् । तदिदं हेत्वन्तरं 'तस्मै हि परिक्रियत' इति सूत्रशेषेण कण्ठोक्तम् । तत्सूत्रशेषं शंकोत्तरत्वेनापि योजयति—कथमन्यकर्तृकमिति । 'साङ्गकर्मानुष्ठानायेत्यनेन प्राधान्यं यजमानकर्तृकत्वे प्रयोजकं न भवति । परिक्रयस्य दृष्टार्थत्वाय सर्वमपि ऋत्विग्भिरेव कर्तव्यमित्युत्सर्गो दर्शितः । अत एव 'निर्देशाच्छेषभक्षोऽन्यैः प्रधानव'दिति पूर्वतन्त्राधिकरणे शंयुवाककालकर्तव्यं हविश्शेषभक्षणं ऋत्विग्भ्योऽन्यैः कर्तव्यम् । सर्वेष्वपि भक्षणेषु ऋत्विग्यजमानकर्तव्यत्वेन प्राप्तेषु 'यजमानपञ्चमा इडां भक्षयन्ती'ति तैरिडाभक्षणमेव कार्यमिति परिसंख्यातत्वादिति पूर्वपक्षं कृत्वा तद्वचनमृत्विजां भक्षणान्तरनिवृत्त्यर्थं न भवति । किं तु सर्वत्रापि प्रयोगे कर्तृत्वेन प्राप्तानामृत्विजामेवेडाभक्षणमिति यजमानस्याप्राप्तौ तत्प्राप्त्यर्थम् । अतः शंयुवाककालभक्षणमृत्विग्भिः कर्तव्यमिति सिद्धान्तितम् । एवं यत्र वचनेन याजमानसमाख्यया न्यायेन वा यजमानस्य कर्तृत्वं प्राप्नोति तत्रैवोत्सर्गस्यापवादः । अन्यत्र सर्वत्र ऋत्विजामेव कर्तृत्वमित्युद्गीथाद्युपासनास्वपि तथैवेति भावः ॥

इति स्वाम्यधिकरणम् ॥ १२ ॥

---

नयमणिमालायाम्

अथ स्वाम्यधिकरणम् ॥ ३० ॥

सू० ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

यजमानेनैव भवेदुद्गीथादावुपासनं कार्यम् । फलकृत्येकाश्रयतोत्सर्गाद्ध्याने विशिष्यनियमाच्च ॥ ३१५ ॥

ऋत्विक्कर्तृकमेतद्गोदोहनवत्तदीयकर्माश्रयणात् । उद्गातैवंविदिति स्फुटमक्ष्यादित्यवाक्यशेषाम्नानात् ॥ ३१६ ॥

इति स्वाम्यधिकरणम् ॥ १२ ॥

## अथ सहकार्यन्तरविध्यधिकरणम् ॥ १३ ॥

**सू ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥**

कहोलब्राह्मणे श्रूयते—'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' इति बहूपनिषत्तात्पर्यनिर्णयरूपं पाण्डित्यं निश्शेषेण संपाद्य बाल्येन रागद्वेषादिरहितत्वात् बाल्यसदृशेनावस्थान्तरेणावतिष्ठेत । ततः पाण्डित्यबाल्ये निश्शेषं संपाद्याथ मुनिः इति । अत्र पाण्डित्यबाल्यवन्मौनमपि विधीयते न वा । इति संशये मुनिरित्यत्र भवेदित्यादिविधिप्रयोगाभावान्न विधीयते ॥ इति प्राप्तेऽभिधीयते—विद्यावतो यज्ञादिवत् पाण्डित्यबाल्ययोस्तृतीयं सहकार्यन्तरं मौनं विधीयत एव, प्रकृष्टमननशीले मुनिशब्दस्य प्रसिद्धेः । विद्यानिष्पत्त्यर्थमुपास्यविषयाभ्यासरूपमिदं प्रकृष्टमननं

---

## अथ सहकार्यन्तरविध्यधिकरणम् ॥ १३ ॥

**सू० ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥** यज्ञाशमादीनां च विद्यासहकारिणां निरूपणानन्तरं संगतिविशेषप्राप्तां सर्वान्नानुमत्यादिचिन्तां कृत्वा पुनरपि विद्यायामेव सहकार्यन्तरं निरूप्यत इति संगतिः । रागप्राप्तत्वेन श्रवणमननयोरविधेयत्वस्य प्रथमाधिकरणभाष्ये निरूपितत्वादिह तयोर्विधिश्रवणं तेन विरुध्येतेत्याशङ्क्य पाण्डित्यबाल्यशब्दयोरर्थान्तरमाह—बहूपनिषदिति । ऊहापोहक्षमादिः पण्डा सास्य सञ्जातेति पण्डितः तस्य कर्म पाण्डित्यं श्रवणमननानन्तरं तदभ्यासपाटववशाल्लब्धया ऊहापोहक्षमया नवनवोन्मेषशालिन्या प्रतिभया श्रुतमतार्थानुकूल्येन सकलोपनिषत्तात्पर्यप्रतिष्ठापनं पाण्डित्यं तदनुकूलप्रतिभाशक्तौ सत्यामपि बालवद्रागद्वेषस्वमाहात्म्यप्रख्यापनाहंकारादिराहित्यं बाल्यं तदुभयं श्रवणमननानन्तरभाविविद्यासहकारित्वेन विधेयमिति सम्प्रतिपन्नमेव । इह पुनरथ मुनिरित्युक्तं तृतीयमपि सहकार्यन्तरं विधीयते न वेति विध्यर्हत्वानर्हत्वाभ्यां संशये श्रवणमननबाल्यपाण्डित्येभ्योऽन्यस्य विध्यर्हस्य कस्यचिददर्शनाद्विधिशब्दाश्रवणाच्च न विधीयते किं तु मननमेवानूद्यत इति प्राप्ते सौत्रपदानि व्याचक्षाण एव सिद्धान्तयति—विद्यावत इति । तद्वत इत्यस्य व्याख्यानमिदम् । 'विध्यादिव'दित्यस्य व्याख्यानं—यज्ञादिवदिति । विधीयत इति । विधिर्यज्ञादिः शमादिश्च । आदिशब्देन विधिसरूपवाक्याभ्यामनूदितं श्रवणं मननं च गृह्यते । तृतीयशब्दस्यावध्यपेक्षापूरणं पाण्डित्यबाल्ययोरिति । तृतीयशब्दसामानाधिकरण्येन सहकार्यन्तरविधिपदव्याख्यानम्—सहकार्यन्तरमिति । विधीयत इति विधिः । सहकार्यन्तरं चासौ विधिश्चेति समानाधिकरणसमास इति भावः । 'पक्षेणे'ति पदं साध्याहारं व्याचष्टे—प्रकृष्टेति । मननमात्रं न मुनिशब्दस्य प्रवृत्तिनिमित्तं किं तु प्रकृष्टं मननम् । प्रकर्षश्च मननस्य स्नेहपूर्वकतया चिरविरहिताया नायिकायाः नायकविषयस्येव निरन्तरमनुवर्तमानत्वरूप इह पक्षेणेत्यनेनाध्याहार्यपदयुक्तेन विवक्षित इति भावः । तमेवं प्रकर्षं दर्शयति—विद्यानिष्पत्त्यर्थमिति । यस्योपासनानुष्ठानकालव्यतिरिक्तकालेष्वपि गच्छतस्तिष्ठतः शयानस्य वा उपास्यविषया चिन्तानुवर्तते । तस्यैवोपा-

तिष्ठासेदिति पदानुवृत्त्या विधीयते । ततो मौनविधिः संभवति विद्यावत इति ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १३ ॥

## अथ कृत्स्नभावाधिकरणम् ॥ १४ ॥

### सू ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

इह सर्वेषामाश्रमाणां विद्या साधारणी, उत विशेषोऽस्तीति संशयः ॥ ब्रह्मचारिणो वेदाभ्यासे आचार्यपरवशत्वात् गृहस्थस्य कुटुम्बभरणायासित्वात् वनस्थस्य वैखानसधर्मव्यापृतत्वान्न तेषां ज्ञानध्याने संभवतः । 'वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः' इति वेदान्तार्थज्ञानवतां सन्न्यासयोगश्रवणात् 'अन्त्याश्रमस्थः' इति ध्यानविधौ दर्शनाचान्त्याश्रमिणामेव ज्ञान-

---

सनाकालेऽपि तद्विषयचित्तैकाग्र्याद्विद्या दृढीभवति । यस्य तूपासनाकाले यथाकथंचिद्विद्यानुष्ठानेऽपि समयान्तरेषु चिन्तान्तरावेशः तस्योपासनानुष्ठानकालेऽपि चेतसि समयान्तरचिन्तितविषयान्तरानुप्रवेशाद्विद्या न दृढीभवेदित्युपास्यविषयाभ्यासोऽपि विद्यासहकारीत्येवंरूपं प्रकृष्टं मननमेव 'अथ मुनि'रित्यत्र विधीयते । श्रवणप्रतिष्ठार्थस्य मननमात्रस्य प्रागेव निर्वृत्तत्वेन तत्राथशब्दानन्वया'त्तिष्ठासे'दिति पदानुवृत्त्या मननस्य विधेयत्वसंभवाच्चेति भावः ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १३ ॥

## अथ कृत्स्नभावाधिकरणम् ॥ १४ ॥

सू० ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥ यदि विद्यादार्ढ्यार्थमुपासकानां चेतसस्सर्वदोपास्यप्रावण्येन भाव्यं तर्हि सन्न्यासिनामेव विद्यास्वधिकारः स्यात् नेतरेषामिति पूर्वपक्षोत्थानात्सङ्गतिः । इतरेषां सार्वदिकोपास्यप्रावण्यसंभवासंभवाभ्यां संशयः । इतरेषां तत्तदाश्रमविहितकर्मानुष्ठानवैयग्र्यमावश्यकमिति तदसंभवेन पूर्वपक्षः । सन्न्यासयोगादित्यादिश्रवणं च तदुपोद्बलकम् । 'अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्ये'ति कैवल्योपनिषत्पाठः प्रसिद्धः । न 'त्वन्त्याश्रमस्थ' इति । अत्याश्रमस्थस्तु 'अग्निरित्यादिभिर्मन्त्रैर्भस्मनोद्धूलनं तथा । त्रिपुण्ड्रधारणं चैव वदन्त्यत्याश्रमं बुधा' इति पुराणोक्तलक्षणस्सर्वाश्रमसाधारणः । तस्मा'दन्त्याश्रमस्थ' इति ध्यानविधौ 'दर्शनाच्चे'ति

---

नयमणिमालायाम्

### अथ सहकार्यन्तरविध्यधिकरणम् ॥ १३ ॥

सू० ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

अथ मुनिरित्यत्र विधेरश्रवणाद् ज्ञानमविधेयम् । पाण्डित्यशब्दितं यज्ज्ञानं विहितं तदनुवाक्यम् ॥ ३१७ ॥

पाण्डित्याद्यनुविदितं प्रकृष्टमननात्मकं मौनम् । ध्याने तदकालेष्वपि सहशीलनमम्बिकासहायस्य ॥ ३१८ ॥

पाण्डित्यबाल्ययोस्तु तृतीयमधिकारिणो···षः । विद्यासहकारितया यज्ञादिकवद्विधेयमिह मौनम् ॥ ३१९ ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १३ ॥

ध्याने, नापरेषामिति पूर्वः पक्षः ॥ सर्वेष्वाश्रमेषु विद्या संभवत्येव । छान्दोग्ये 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' इत्यारभ्य 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति कृत्स्नाश्रमेषु विद्यासद्भावप्रदर्शनात्। तत्र गृहिणोपसंहारः सर्वेषां प्रदर्शनार्थः । एवमन्त्याश्रमवचनमपि सर्वेषामाश्रमाणां प्रदर्शनार्थम्। अतः सर्वेषामाश्रमिणां विद्याऽस्त्येव । फलत्यागः सन्न्यासः। यतित्वं जितेन्द्रियत्वम्। सर्वमिदं सर्वेषां संभवत्येव ॥

इति कृत्स्नभावाधिकरणम् ॥ १४ ॥

## अथ मौनवदधिकरणम् ॥ १५ ॥

## सू ॥ मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

अथर्वशिरसि श्रूयते—'तृष्णां छित्त्वा हेतुजालस्य मूलं बुद्ध्या संचिन्त्य स्था-

---

भाष्यं शाखान्तरपाठाभिप्रायं द्रष्टव्यम् । एवञ्चाश्रमधर्माणां विद्यासाधनत्ववचनानि विद्यारम्भप्राक्कालानुष्ठेयकर्मविषयाणि न तु विद्यारम्भप्रभृत्यनुष्ठेयकर्मविषयाण्यपीति पूर्वपक्षाभिप्रायः ॥ ननु छान्दोग्ये गृहिणामेव फलद्वारा विद्यासद्भावः प्रदर्शितो न तु नैष्ठिकवैखानसयोरित्याशङ्क्याह—तत्र हीति । यज्ञादिबहुव्यापारव्यग्रेण गृहिणोपसंहारः कैमुतिकन्यायेन सर्वेषां प्रदर्शनार्थः । सर्वेष्वाश्रमेषु मुमुक्षादिविद्याधिकारिविशेषणसंभवेन विद्याधिकारसद्भावात् सर्वेषामाश्रमिणां स्वस्वाश्रमविहितकर्मानुष्ठानार्थवैयग्र्यग्रस्तकालव्यतिरिक्तकालेषूपास्यविषयचेतस्समाधानसंभवाच्च कर्मानुष्ठानवैयग्र्यस्य चेतस्समाधानविरोधिदुरितनिवृत्त्यर्थत्वेन तस्योपासनाकालापेक्षितचेतस्समाधानविरोधित्वाप्रसङ्गाच्चेति भावः । एवमन्त्याश्रमवचनमपीति। यथा 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते। तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादिषु ब्राह्मणग्रहणमधिकारिविशेषवत्त्वाविशेषात् क्षत्रियवैश्ययोरप्युपलक्षणम्। एवमिहापीति भावः। 'सन्न्यासयोगाद्यतय' इत्यत्र तु नाश्रमान्तरव्यवच्छेदशङ्केत्याह—फलत्याग इति। 'काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदु'रिति गीतावचनात् । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च त' इति कोशकारवचनाच्चेति भावः ॥

इति कृत्स्नभावाधिकरणम् ॥ १४ ॥

## अथ मौनवदधिकरणम् ॥ १५ ॥

सू० ॥ मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥ द्विविधमत्याश्रमाख्यं पाशुपतव्रतम् एकमथर्वशिरःकालाग्निरुद्रोपनिषदादिषु श्रुतं भस्मोद्धूलनत्रिपुण्ड्रधारणमात्ररूपम्। तत्स-

---

नयमणिमालायाम्

## अथ कृत्स्नभावाधिकरणम् ॥ १४ ॥

सू० ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

न गृही विद्याधिकृतः कर्मकुटुंबभृतिवैयग्र्यात्। नाचार्यकुलनिवासी परतन्त्रत्वादमुष्यापि ॥ ३२० ॥

कृत्स्नेष्वप्याश्रमेषु स्याद्विद्याकर्मणां छिद्रे। अत एव हि छान्दोग्ये दृष्टो गृहिणोपसंहारः ॥ ३२१ ॥

इति कृत्स्नभावाधिकरणम् ॥ १४ ॥

पयित्वा च रुद्रे । रुद्र एकत्वमाहुः । रुद्रं शाश्वतं वै पुराणमिषमूर्जं तपसा नियच्छत व्रतमेतत् पाशुपतम्' इति । तत् पाशुपतव्रतमथर्वशिरसि श्रुतं पुराणेषु च प्रसिद्धमेव । तन्निष्ठानां विद्याप्राप्तिर्मुक्तिश्च संभवति न वेति संशयः ॥ किं प्राप्तम्? आश्रमेष्वनन्तर्भावात्, अवसानदर्शनात्, पुत्राद्यर्थं कृष्णादिभिरनुष्ठितत्वात् अवान्तरफलसिद्धिमन्तरेण तेषां न मोक्षसिद्धिरस्ति ॥ इति प्राप्ते ब्रूमः—तेषामत्यन्तव्रतधारिणां मुक्तिरेव फलं संभवति । विद्यासंपत्तिश्च परब्रह्मणो रुद्र-

---

वेविद्याङ्गत्वेन सर्वाश्रमसाधारणमिति 'प्रागङ्गावबद्धास्त्वि'त्य ( ब्र० ३–३–५३ )धिकरणे व्यवस्थापितम् । द्वितीयं द्वादशाब्दाद्यवधिसंकल्पविरजाहोमादिपूर्वकं यावत्सङ्कल्पितावधि भस्मोद्धूलनत्रिपुण्ड्रधारणं ब्रह्मचर्यजपधारणादियुक्तं वायुसंहितादिषु पुराणेषु प्रसिद्धम् । तदधिकृत्य चिन्ता प्रवर्तते । सर्वेषामाश्रमाणां ब्रह्मविद्या तत्फलं मुक्तिश्च संभवतीति वर्णितम् । इहाश्रमानन्तर्गतत्वेन प्रतीयमानेऽत्याश्रमे स्थितानां तदुभयं संभवति न वेति मुक्त्यर्थभस्मोद्धूलनत्रि[1]पुण्ड्रादिविद्याङ्गयोगात् पुत्रादिफलश्रवणाच्च संशये पूर्वपक्षः । किमेतत्पाशुपतव्रतं यावज्जीविकं मुक्तिफलम् उत द्वादशाब्दाद्यवधिकम् । नाद्यः—तस्याश्रमेष्वनन्तर्भावात् । तद्धि न तावद्ब्रह्मचर्यं कैश्चित्पारमहंस्यधर्मैरपि योगात् । नापि सन्न्यासः । अग्नीन्धनादियोगात् । नापि गार्हस्थ्यम् । दाराग्निहोत्रादिराहित्यात् । नापि वानप्रस्थम् । गार्हस्थ्यपूर्वकत्वाभावात् अग्निहोत्राद्यभावाच्च । आश्र[2]मानन्तर्भावे च नाश्रमधर्मा विद्यासहकारिणस्संभवन्ति । आश्रमानियतधर्मैर्जपादिभिर्विद्योपकाराच्चापद्विषयो न बुद्धिपूर्वं परिग्राह्य 'इत्यतस्त्वितरज्ज्यायो लिङ्गाच्चे'ति ( ब्र० ३–४–३९ ) सू[3]त्रे दर्शितम् । अतो न यावज्जीविकस्य मुक्तिफलत्वं संभवति । नापि द्वादशाब्दाद्यवधियुक्तस्य । तस्याप्रायणानुष्ठेयविद्याङ्गत्वायोगात् तस्य पुत्राद्यर्थं कृष्णादिभिरनुष्ठितत्वस्यानुशासनिकवायुसंहितादिषु प्रतिपादितत्वाच्च । किंचास्य पाशुपतव्रतस्य मुक्तिफलत्वं साक्षाद्वा विद्याङ्गत्वेन वा । नाद्यः—विद्यासाध्याया मुक्तेः व्रतमात्रेणासंभवात् । द्वितीये सकलविद्याङ्गत्वेन मुक्तिफलत्वम् उत विद्याविशेषाङ्गत्वेन । नाद्यः—गृहस्थादीनां विद्यामात्रेऽनधिकारप्रसङ्गात् । न द्वितीयः । तथाभूतविद्याविशेषादर्शनादिति । एवं प्राप्ते सिद्धान्तः—यावज्जीविकस्यास्य विद्याङ्गत्वेन यु[4]क्तं मुक्तिफलत्वं मौनवदितरेषामपि विद्याङ्गानामिहोपदेशात् । अत्र हि 'सहकार्यन्तरविधिरि'त्य( ब्र० ३–४–४६ सू )धिकरणे विद्याङ्गत्वेन निर्णीतं प्रकृष्टमननाख्यं मौनमुपदिष्टम् । यथा वायुसंहितायाम्—'यः कृत्वात्यन्तिकीं दीक्षामादेहान्तमनाकुलः । सुव्रतं तत्प्रकुर्वीत स तु वै नैष्ठिकः स्मृतः ॥ सोऽत्याश्रमी च विज्ञेयो महापाशुपतस्तथा । स एव तपतां श्रेष्ठः स एव तु महाव्रती । न तेन सदृशः कश्चित् कृतकृत्यो मुमुक्षुष्वि'त्युपक्रम्य 'शिवार्पितात्मा सततं न तेन सदृशः क्वचि'दित्युक्तम् । अत्र 'ह्यनाकुल' इति व्यापारान्तरवैयर्थ्यं निषिध्य 'शिवार्पितात्मा सतत'मिति प्रकृष्टमननाख्यं मौनमेवोक्तम् । तथा मौनवदन्येषामपि विद्याङ्गानामुपदेशो दृश्यते । 'पयोव्रती वा भिक्षाशी भवेदेकाशनस्तथा । नक्तयुक्ताशनो नित्यं भूशय्याभिरतः शुचिः ।

---

(१) 'त्रिपुण्ड्रधारणादियोगात्' इति ग. पाठः । (२) 'आश्रमत्वाभावे च' इति ग. पाठः । (३) 'सूत्रोक्तरीत्या न यावज्जीविकस्य' इति ग. पाठः । (४) 'युक्तमुक्तं फलत्वमितरेषामपि विद्याङ्गानां' इति ग. पाठः ।

स्यानुसन्धानरूपा। मुनिधर्मवदितरेषामपि भिक्षाचर्यशमदमादीनां परधर्माणां पाशुपताख्ये व्रतेऽप्युपदेशात् तन्निष्ठानामपि 'रुद्र एकत्वमाहुः। रुद्रं शाश्वतं वै पुराणमिषमूर्जं तपसा नियच्छत व्रतमेतत् पाशुपतम्......अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् तस्माद्व्रतमेतत् पाशुपतं पशुपाशविमोक्षाय' इति रुद्रध्यानस्य पाशविच्छेदरूपस्य मोक्षफलस्य संबन्धावगमाच्च। अतो यावदायुषं पाशुपतव्रतधारिणां मुक्तिरेव फलम् ॥ यदुक्तमाश्रमेष्वनन्तर्भाव इति तत्राह—

---

भस्मशायी तृणशायी चीराजिनशयोऽथवा। ब्रह्मचर्यरतो नित्यं व्रतमेतत्समाचरेत्। क्षमादानदयासत्याहिंसाशीलस्सदा भवेत्। सन्तुष्टश्च प्रशान्तश्च जपध्यानरतस्तथा॥' इति॥ ननु यावज्जीविकस्यापि पाशुपतव्रतस्याभ्युदयफलत्वमुत्तररामायणे प्रतिपादितम्। तत्र[1] हि कुबेरवचनम्—"अहं तु हिमवत्पृष्ठं गतो धर्ममुपासितुम्। रौद्रं व्रतं समास्थाय नियतो नियतेन्द्रियः॥" इति॥ "ततोऽहमन्यद्विस्तीर्णं गत्वा तस्य गिरेस्तटम्। पूर्णं वर्षशतान्यष्टौ समवापं महाव्रतम्॥" इति च॥ तदनन्तरञ्च कुबेरं प्रति शिववचनम्—"प्रीतोऽस्मि तव धर्मज्ञ तपसानेन सुव्रत। मया चैतद्व्रतं चीर्णं त्वया चैव धनाधिप। तृतीयः पुरुषो नास्ति यश्चरेद्व्रतमीदृशम्। व्रतं हि दुस्तरं ह्येतन्मयैवोत्पादितं पुरा। तत्सखित्वं मया सौम्य रोचयस्व धनेश्वर॥" इति॥ अत्र पशुपतेः शिवस्य परितोषणेन तत्सख्यप्राप्तिफलं रौद्रव्रताचरणमुपक्रान्तमित्युक्तम्। तत्र महाव्रतशब्दः प्रयुक्तः। स च यावज्जीविकस्य पाशुपतव्रतस्य वाचक इति 'स एव स्यान्महाव्रती'ति वायुसंहितावचनेनावगतम्। सत्यम्। इह महाव्रतशब्दो योगेन कतिपयकालावधावेव पाशुपतव्रते नेतव्यः। 'पूर्णं वर्षशतान्यष्टा'वित्यत्रैवावधेरुक्तत्वात्। पाशुपतव्रतस्याङ्गभूता विद्याप्यथर्वशिरस्येव श्रुतेत्याह—तन्निष्ठानामिति। "वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषा'मिति दहरपुण्डरीकान्तस्थपरमशिवसाक्षात्कारान्मुक्तिमुक्त्वा तत्साक्षात्कारसाधनं ध्यानमुच्यते। 'तृष्णां छित्त्वे'त्यादिना तृष्णां विषयरागं निरस्य हेतुजालस्य रागद्वेषमदमात्सर्यादिसंसारकारणजातस्य तामेव निरसनीयां तृष्णां मूलं कारणं बुद्ध्या संचिन्त्य बुद्धिं रुद्रे स्थापयित्वा रुद्रे एकत्वं तादात्म्यमाहुः। शिवोऽहमिति भावनामभ्यसनीयामाहुरित्यर्थः। शाश्वतं नित्यम्। पुराणमनादिम्। इषमूर्जम्। 'सर्वो वै रुद्र' इति श्रुतेः प्राणिनामन्नम्। तत्प्रयुक्तबलात्मकं भोग्यानन्दतदनुभवरूपं वा रुद्रं तपसा सततमालोचनरूपेण ध्यानेन नियच्छत नियतं कुरुत। एतत्पाशुपतं नाम व्रतम्। 'अग्निरिति भस्मे'त्यादिना महामन्त्रजातेन भस्म गृहीत्वा अङ्गानि शिरोवदनादीनि निमृज्य संस्पृशेत्। तस्माद्भस्मोद्धूलनरूपाङ्गयोगादेतत्पाशुपतव्रतं यथोक्तं ध्यानरूपं पशूनां संसारिणां पाशस्य मलमायादिबन्धस्य मोक्षाय

---

(१) 'तत्र हि कुबेरवचन'मित्यारभ्य इदमधिकरणसमाप्तिपर्यन्तो ग्रन्थभागः ग. पुस्तके नोपलभ्यते। अन्यमातृकासु इदमध्यायसमाप्तिपर्यन्तो ग्रन्थ एव नास्ति। दिष्ट्या इदमध्यायसमाप्तिपर्यन्तस्य ग्रन्थस्य लाभः महीशूरमहाराजसंस्थानप्राचीनपुस्तकालयासादितमातृकामात्रादिति महद्भाग्यमतिविस्मयनीयमेतत्सङ्ग्राहकस्य ममेति सानन्दमावेदये सुहृदः।

## सू ॥ अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

आश्रमान्तररूपेणात्मानमनाविष्कुर्वन् अव्यक्तीभवन्नपि पाशुपताश्रमो विद्यासाधनब्रह्मचर्यादियतिधर्मसमन्वयादत्याश्रमसंज्ञकोऽयमाश्रमभेदः स्वतन्त्रः परमशिवप्राप्तिहेतुः । 'यावच्छरीरपातं वा द्वादशाब्दमथापि वा' इत्युक्तेरात्यन्तिकसावधित्वेन पाशुपतव्रतस्य विकल्पः । तत्रात्यन्तिकमत्याश्रमसंज्ञकमपवर्गहेतुः,

---

भवति इत्यर्थः ॥ सू० ॥ अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥ आत्मानमित्यध्याहृतपदयुक्तस्या'नाविष्कुर्व'न्निति सौत्रपदस्यार्थतो विवरणम्—अव्यक्तीभवन्नपीति। स्वतन्त्रः परमशिवप्राप्तिहेतुरिति । अयमाश्रमविशेषस्संवर्तादिषु महायोगिषु प्रसिद्धः । तथा ह्याश्वमेधिके पर्वणि संवर्तचरितं तावदेवंरूपं प्रसिद्धम् । तत्र हि—बृहस्पतिस्तु संवर्तं बाधते स पुनः पुनः । स बाध्यमानस्संवर्तो भ्रात्रा ज्येष्ठेन भारत । अर्थानुत्सृज्य दिग्वासा वनवासमरोचय'दिति । दिग्वासस्त्वलिङ्गेन संवर्तस्य पाशुपताश्रमपरिग्रहस्सूचितः । यतस्तत्र दिग्वासस्त्वमुक्तं शिवपुराणे—"ततस्तु जटिलो मुण्डः शिखैकजट एव वा । भूत्वा स्नातः पुनर्वीतलज्जश्चेत्स्याद्दिगम्बरः ॥" इति ॥ तथा—"उन्मत्तवेषं बिभ्रत्स चंक्रमीति यथासुखम् । वाराणसीं तु नगरीमभिक्षमुपसेवते ॥" इत्युक्तम् । शिवक्षेत्रसमाश्रयणमपि तत्र लिङ्गम्—"यस्य नित्यं विदुः स्थानं मोक्षमध्यात्मचिन्तकाः । योगिनस्तत्त्वमार्गस्थाः कैवल्यं परमं पदम् । यं विदुस्सङ्गनिर्मुक्तास्सामान्यं समदर्शिनः । तं प्रपद्ये जगद्योनिमयोनिं निर्गुणात्मकम् । असृजद्यस्तु भूतादीन् सप्तलोकान् सनातनान् । स्थितस्सत्योपरि स्थाणुस्तं प्रपद्ये सनातनम् । भक्तानां सुलभं तं हि दुर्लभं दूरपातिनाम् । अदूरस्थमजं देवं प्रकृतेः परतः स्थित"मिति । संवर्तेन मरुत्तायोपदिष्टे शिवस्तोत्रे शिवस्याद्यस्थानमेव मोक्षस्थानं परमपदमित्यादिप्रतिपादनं च संवर्तस्य शिवपदार्थितया पाशुपताश्रमपरिग्रहे लिङ्गम्। तथा 'मास्मैवं त्वं पुनरागाः कथञ्चिद्बृहस्पतिं परिधातुं मरुत्ता मा त्वाधक्षे चक्षुषा दारुणेन संक्रुद्धोऽहं पावकं तं निबोधे'ति मरुत्तस्य यज्ञे वितते तदीयं यज्ञं प्रवर्तयता संवर्तेन सक्रोधमुक्तस्य बृहस्पतिमरुत्तयोस्सन्धानार्थमिन्द्रेण प्रेषितस्याग्नेः 'ततो नाकमगमद्धूमकेतुर्दाहाद्भीतो व्यथितोऽश्वत्थपर्णव'दिति संवर्तकोपभीत्या प्रत्यावृत्तिमुक्त्वा—'गन्धर्वराड्व्यात्वयं तत्र दूतो बिभेम्यहं वासव तत्र गन्तुम्। संरम्भान्मामुक्तवांस्तत्र तीक्ष्णं संवर्तो वाक्यं चरितब्रह्मचर्य' इत्यग्निवाक्ये यत्संवर्तस्य ब्रह्मचर्यानुष्ठानप्रयुक्तमहामहिमवर्णनं कृतं तदपि तत्र लिङ्गम् । न ह्यखिलानाश्रमान्परित्यज्य दिगम्बरतयोत्थं प्रतिपन्नस्यैवंविधो महिमा संभावयितुमपि शक्यते। तथा जैगिषव्यचरितमप्येवंरूपं मोक्षधर्मे प्रसिद्धम् । तत्र हि 'अर्थः को वार्थशक्तिः का भगवन्ब्रूहि मेऽर्थितः ॥' इत्युमायाः प्रश्नम् 'अर्थोऽहमर्थशक्तिस्त्वं भोक्ताहं भोज्यमेव ते । रूपं विद्धि महाभागे प्रकृतिस्त्वं परो ह्यहम् । अहं विष्णुरहं ब्रह्मा ह्यहं यज्ञस्तथैव च । आवयोर्न च भेदोऽस्ति परमार्थस्ततोऽबले। तथापि विद्यते भेदः किं मां त्वं परिपृच्छसी'ति परमेश्वरस्योत्तरं च वर्णयित्वा—'एवमुक्ता ततः प्राह ह्यधिकं हि तयोर्वद' इति पुनरुमायाः प्रश्ने—'तदन्तरे स्थितो विद्वानस्थिरूपो महामुनिः । जैगिषव्यः स्मयन्प्राह ह्यर्थ इत्येव नादयन् । श्रेष्ठोऽर्थस्त्वहमाप्रोक्तस्तल्लीना

तदन्यद्भोगहेतुरिति व्यवस्था । एवं भुक्तिमुक्तिहेतुतयोभयात्मकमिदं व्रतं शिवप्रसादकरं श्रुतिरेव विदधाति । यथा नाप्रामाण्यापातोऽस्या भवति तथा योजनीयम् ॥

इति मौनवदधिकरणम् ॥ १५ ॥

अथ ऐहिकाधिकरणम् ॥ १६ ॥

## सू ॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

उक्तक्रमोपासननिष्ठानामैहिकं मुक्तिफलम्, उत जन्मान्तरे वा भवति ॥ इति

---

शक्तिकाऽवरा । मुद्रिकादिविशेषेण विस्मृता संहृतेति चे'ति जैगिषव्येण तस्योत्तरमुक्तमित्युक्तम् । ततः परमेश्वरं प्रति पृष्टे जैगीषव्येणोत्तरमुक्तमिति हेतुनार्थरूपस्य परमेश्वरस्य श्रैष्ठ्यम् अर्थशक्तिरूपाया उमायास्तद्धर्मत्वेन सर्गप्रलययोर्विकाससङ्कोचपरिणामित्वेन चावरत्वमुक्तमिति हेतुना चोमायास्तस्मिन्कोपे सति—'ततः प्रहस्य भगवान् सर्वपापहरो हरः । प्राह देवीं महादेवो जैगिषव्यो महामुनिः । भक्तो मम सखा चैव शिष्यश्चात्र महाति । 'निरपेक्षो मुनिर्योगी मामुपाश्रित्य संस्थितः । निर्द्वन्द्वस्सततं धीरो ममरूपस्वभावधृक् । तस्मात्क्षमस्व तं देवि रक्षितव्यस्त्वया हि स' इति च देव्याः कोपशान्त्यर्थं परमेश्वरेण तस्य चरितं वर्णितम् । तत्र 'मम रूपस्वभावधृ'गित्यनेन जैगिषव्यस्य भस्मोद्धूलनादिरूपपाशुपताश्रमनिषेवणमाविष्कृतम् । काशीखण्डेऽपि तथैव तच्चरितप्रपञ्चनं दृश्यते । एवमन्येषामपि महायोगिनां पाशुपताश्रमनिषेवणं पुराणेषु [1]प्रपञ्चितमुदाहर्तव्यम् ॥

इति मौनवदधिकरणम् ॥ १५ ॥

## अथ ऐहिकाधिकरणम् ॥ १६ ॥

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥ विद्याया मुक्तिः फलमित्येतदुपपद्यते वा न वेति तस्यास्तत्फलकत्वे विद्योदयदेहावसान एव मुक्त्यवश्यंभावतदनवश्यंभावाभ्यां संशये पूर्वपक्षः । विद्याया मुक्तिः फलमित्येतन्नोपपद्यते । तथा सति इहैव जन्मनि मुक्तः स्यामित्युपासककामनानुरोधाद्विद्योदयदेहावसान एव मुक्त्यवश्यंभावेन विदुषां जन्मान्तरश्रवणविरोधापत्तेः । जन्मप्रवाहोद्विग्नानां विरक्तानामिहैव जन्मनि मुक्तः स्यामित्येव

---

नयमणिमालायाम्

अथ मौनवदधिकरणम् ॥ १५ ॥

सू० ॥ मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥ अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

पाशुपतं सावधिकं व्रतमुदितं तन्न मुक्तिफलम् । पुत्राद्यर्थं हि पुरा कृष्णप्रभृतिभिरनुष्ठितं शृणुमः ॥ ३२२ ॥

आत्यन्तिकं तु तद्व्रतमाश्रमवर्गाद्बहिर्भूतम् । विद्याङ्गमेव न स्याद्दूरे मुक्त्यर्थता तस्य ॥ ३२३ ॥

मैवं मुक्त्यर्थमेव श्रुतिमुनिवचनादित्थमात्यन्तिकं तद्ध्यानं रुद्रस्य भिक्षाचरणशमदमाद्या हि यत्रोपदिष्टा ।
अस्त्येवात्याश्रमान्तर्गतिगतिविरहेऽप्याश्रमत्वं स्वतन्त्रं तस्यापि ब्रह्मचर्यप्रभृतिगुणसमायुक्तमत्याश्रमाख्यम् ॥ ३२४ ॥

इति मौनवदधिकरणम् ॥ १५ ॥

---

(१) 'प्रपञ्चितमुदाहर्तव्यम्' इत्यस्यानन्तरः पादशेषस्त्रुटितः क. ख. ग. मातृकासु । महीशूरमहाराजपुस्तकालयकोशमेकमेव शरणमवशिष्टाधिकरणद्वयसंपादने' इति वेद्यम् ।

संशये विचार्यते—इहैव मे जन्मनि मुक्तिर्जायतामित्यभिसंधाय पुरुष उपासने प्रवर्तते, न तु जन्मान्तर इति। कः प्रयोजनस्य विलम्बनमीहते। तस्मादैहिकमेव मुक्तिफलं यदि भवति। न चेत्, कदाचिदपि न भवति ॥ इति प्राप्ते वदामः —प्रबलकर्मान्तरप्रतिबन्धाभावे परोपासनफलमिह जन्मनि भवति; तत्सद्भावे तु जन्मान्तरे। यथाऽभ्युदयफलं स्वसाधनभूतपुण्यकर्मानन्तरमेव संपद्यत इति न नियमः, किंतु प्रतिबन्धकसद्भावे जन्मान्तरे भवति, तद्वत्, वामदेवादिषु जन्मा-

---

हि कामना नत्विह जन्मनि जन्मसहस्रानन्तरं वेति। न च वाच्यं श्रुतिषु मुक्तिमात्रं फलत्वेन श्रुतम्। न त्वैहिकी मुक्तिः। अतः स्वतन्त्रा पुरुषकामनानुरोध्येति स्वतः प्रवृत्तां पुरुषकामनामेव खल्वनुवदन्त्यधिकारवाक्यस्थाः कमिश्रुतयः। अतो यथाप्राप्त्यनुवाद इति। तासां श्रुतीनामपि तादर्थ्यमेव युक्तम्। न च 'मनोरथानामगतिर्न विद्यत' इति न्यायादनेनैव देहेन मुक्तः स्यां स्वर्गी स्यामित्यपि केचन कामयेरन्निति तदनुरोधोऽपि कार्यः स्यादिति वाच्यम्। स्वर्गमोक्षयोरर्थस्वाभाव्येन देहान्तरदेशान्तरप्राप्त्यवगत्या बाधितविषयायास्तथा कामनाया अननुरोद्धव्यत्वात् ॥ ननु तथाप्येतद्देहावसान एव स्वर्गी स्यामिति पुरुषकामनानुरोधे प्रबलकर्मान्तराप्रतिबन्धरूपयागादिवीर्यवत्तरत्वफलकोद्गीथविद्याविधानवैयर्थ्यं स्यादिति चेत्तर्हि कर्मफलश्रुतिषु तथा पुरुषकामनानुरोधो माभूत्तथापि विद्याफलश्रुतौ तदनुरोधः स्यादेव। बाधकाभावात्। ननु अत्रापि 'यावदधिकाराधिकरणो'(ब्र० ३-३-३१ सू०)क्तन्यायेनानेकदेहभोग्यप्रारब्धकर्मरूपविद्याफलप्रतिबन्धकसद्भावो बाधकोऽस्तीति चेन्न। कर्मफलाप्रतिबन्धफलकोद्गीथविद्याविधानसामर्थ्येन[1] यागादिफलोत्पत्तिप्रतिबन्धकप्रबलकर्मान्तरकल्पनेऽपि विद्याफलोक्तिप्रतिबन्धककर्मकल्पनायां प्रमाणाभावात्। न च 'भोगेन त्वितरे' (ब्र० ४-१-१९ सू) इत्यधिकरणन्यायेन यावत्प्रारब्धप्रतिबन्धककर्मक्षयं विद्याफलविलम्बं प्रतिपादयन्ती 'तस्य तावदेव चिर'मिति श्रुतिः प्रारब्धस्य विद्याफलप्रतिबन्धकत्वकल्पनायां प्रमाणं स्यादिति वाच्यम्। उद्गीथविद्यादिसहकृतत्वमात्रेण यागादीनां प्रबलकर्मान्तरप्रतिबध्यत्वश्रुतिसामर्थ्याद्विद्याजातेः कर्मजात्यपेक्षया प्राबल्यनिर्धारणेन कर्मणो विद्याप्रतिबन्धकत्वकल्पनस्यायुक्तत्वात्। 'तस्य तावदेवे'ति श्रुतेः शरीरावसाने मुक्तिफलकतया विद्यास्तावकत्वोपपत्तेः। तस्माद्विद्याया मुक्तिफलकत्वे विद्योदयदेहावसाने मुक्त्यवश्यंभावेन विदुषां जन्मान्तरश्रवणविरोधापत्तेः। मुक्तिफलश्रवणानि रात्रिसत्रन्यायेन फलविधिपरतया न विपरिणमयितव्यानि। किंतु विद्यास्तावकतयैव नेतव्यानि। ब्रह्मविद्यानां फलाकाङ्क्षायां तु उद्गीथविद्यानामिव 'यदेव विद्यये'ति श्रुत्युक्तं फलं ग्राह्यम्। तथा सति तत्र विद्याश्रुतेः प्रकरणेन सङ्कोचोऽपि न भविष्यतीति। सिद्धान्तस्तु—सर्वेषु वेदान्तेषु क्षयिष्णुत्वसातिशयत्वाभ्यां सकलकर्मफलनिन्दापुरस्सरं ब्रह्मविद्यानां मुक्तिफलश्रवणानि तावत् तासामप्रतिबन्धेन कर्मफलोत्पत्त्यर्थे तत्स्तावकतया नेतुमयुक्तानि। विरोधात्। अतस्तानि फलविधिपराण्येव। विदुषां जन्मान्तरश्रवणं तु प्रारब्धस्य विद्याफलप्रतिबन्धकतयोपपादनीयम्। विद्यायाः कर्मा-

---

(१) 'विद्यानुष्ठानसामर्थ्येन' इति मातृकान्तरपाठश्शिथिलमातृकान्तरपरिशीलनादवगम्यते।

न्तरश्रवणादिबलेन तत्फलदर्शनात्। ततोऽनैहिकत्वे मुक्तिफलस्य नियम इति॥

इति ऐहिकाधिकरणम् ॥ १६ ॥

## अथ मुक्तिफलाधिकरणम् ॥ १७ ॥

### सू ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

केवलकर्मफलाभ्युदयवन्मुक्तिफलमपि प्रबलकर्मान्तरप्रतिबन्धाभावे भवतीति निरूपितम्। तन्न्यायेन कर्मफलवत् ज्ञानफलस्यापि सातिशयत्वनियमोऽस्ति न वेति संशयः॥ किं तावत् प्राप्तम्? कर्मफलवन्मुक्तिफलमपि सातिशयम्—'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यादिभिः

---

न्तरापेक्षया प्राबल्येऽपि प्रारब्धप्रतिबध्यत्वकल्पनायां न कश्चिद्विरोधः। प्राबल्यदौर्बल्ययोः फलबलकल्प्यत्वेन जातिभेदव्यवस्थितत्वाभावात्। जलविजातीयस्यापि वाडवाग्नेक्षकत्वदर्शनात्। एवं च प्रारब्धावसाने मुक्तः स्यामित्येव कामना ब्रह्मविद्याधिकारविधिषु कमिश्रुतीनामर्थ इति कल्पनीयमिति॥

इति ऐहिकाधिकरणम् ॥ १६ ॥

## अथ मुक्तिफलाधिकरणम् ॥ १७ ॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ ब्रह्मविद्यायाः कर्मप्रतिबध्यत्वेन कर्मविशेषात्तद्वदेव सातिशयफलत्वमप्यस्त्विति प्रत्यवस्थानात्सङ्गतिः। न्यूनाधिकगुणानामव्यवस्थितकालप्रायणपर्यन्तानुष्ठेयानां च विद्यानां वैषम्यात् फलवैषम्यमवश्यं कल्पनीयम्। न च वैषयिकानन्देभ्यो विरक्तस्य ब्रह्मविद्यास्वधिकारात् ब्रह्मानन्दे विशेषाभावाच्च फलवैषम्यकल्पनं बाधितमिति वाच्यम्। जीवन्मुक्तिदशायां योगभूमिकाभेदेनेव मुक्तिदशायां पुरुषभेदेन ब्रह्मानन्देऽभिव्यक्तितारतम्यकल्पनोपपत्तेः। आनन्दमीमांसायां मनुष्यगन्धर्वादिपरब्रह्मान्तपर्यायेषु 'श्रोत्रियस्य चाकामहतस्ये'ति श्रुतीनां विशेषे ब्रह्मोपासनलब्धमुक्तिकजीवविषयत्वसंभवेनासामपि श्रुतीनां मुक्तौ फलवैषम्ये प्रमाणतोपपत्तेश्च। मुक्तानां ब्रह्मणा परमसाम्यश्रुतिस्तु—यथा जगद्व्यापाराद्व्यावर्तिता तथा सर्वात्मना ब्रह्मानन्दभोगादपि व्यावर्तनीया। यथार्हं ब्रह्मानन्दभोगमात्रेण ब्रह्मसाम्यावलम्बना योजनीयेति पूर्वपक्षः। एवं प्राप्ते सिद्धान्तः—उपासनावैषम्येण फलवैषम्यकल्पने फलवैषम्यमनन्तविधं कल्पनीयम्। उपास्यगुणतारतम्येनाहरहरुपासना-

---

नयमणिमालायाम्

## अथ ऐहिकाधिकरणम् ॥ १६ ॥

सू० ॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ६० ॥

ब्रह्मोपासीनानां जन्मनि तत्रैव मुक्तिफलम्। अभिसंधाय तथैव ह्युपासनायां प्रवर्तते पुरुषः ॥ ३२५ ॥
प्रबलेन कर्मणा यदि नास्ति प्रतिबध्यमेवैतत्। तत्सत्त्वे जन्मान्तर एव स्यात्कर्मफलरीत्या ॥ ३२६ ॥

इति ऐहिकाधिकरणम् ॥ १६ ॥

कर्मफलस्य सातिशयत्वमवगम्यते । तद्वदुपासनज्ञानफलस्यापि । इति प्राप्तेऽभिधीयते—कर्मफलस्येव ज्ञानोपासनफलस्य न सातिशयत्वनियमः । ब्रह्मस्वरूपावस्थाया एव फलत्वावधृतेः । सर्वेषामपि विद्यावतां ब्रह्मस्वरूपस्यैकत्वान्न वैषम्यकथाऽत्र संभवति । न चोपासनतारतम्यान्मुक्तिरूपस्य तत्फलस्य तारतम्यं स्यादिति वाच्यम् । उपासनकर्मणां मुक्तिफलव्यतिरेकेण फलान्तराभावात् । ब्रह्मण एकत्वेन तद्रूपस्य मुक्तिफलस्याप्येकत्वात् । अतो न मोक्षफलवैषम्यमिति ॥

इति मुक्तिफलाधिकरणम् ॥ १७ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

---

कालतारतम्येन तदुपासकजीवनकालतारतम्येन च उपासनावैषम्यस्यानन्तविषयत्वात् । 'श्रोत्रियस्य चाकामहतस्ये'ति तु दशैकादश वा पर्यायाः । अतस्ते मुक्तविषये उपासनावैषम्यप्रयुक्तानन्दाभिव्यक्तिवैषम्यविषयतया योजयितुं न शक्यन्ते । अपर्याप्तत्वात् । दिक्प्रदर्शनार्थश्रवणाभावाच्च । शक्यन्ते तु योगभूमिकाभेदाभिव्यक्तानन्दतारतम्यविषयतया । योगभूमिकाभेदानां कतिपयत्वेन योगशास्त्रेषु प्रसिद्धत्वात् । तेष्वानन्दविशेषाभिव्यक्तिभेदहेतवो योगभूमिकाभेदा एतावन्त एवेति श्रुतिप्रामाण्येनाभ्युपगन्तुं शक्यत्वात् । तस्मादुत्तमपर्यायगतं 'श्रोत्रियस्य चाकामहतस्ये'ति वाक्यं मुक्तविषयमिति वक्तव्यम् । तथा च तस्य सर्वमुक्तसाधारण्यात्परब्रह्मणो यावान्प्राजापत्यानन्दापेक्षया शतगुणत्वेन श्रुत आनन्दभोगः तावान्सर्वेषामिति सिद्धौ परमसाम्यश्रुतिरपि तदेकार्था स्यादिति, श्रुतिबाधितमिह फलवैषम्यं न्यायसहस्रेणापि कल्पयितुं न शक्यम् । न हि 'सप्तदश प्राजापत्यान्पशूनालभत'इत्यत्र सप्तदशश्रुतिबाधितं बहुवचनस्य त्रित्वे पर्यवसानं न्यायावलम्बनेन कल्पयितुं शक्यम् । अतः 'कर्मभूयस्त्वात्फलभूयस्त्व'मिति पूर्वतन्त्रोक्तन्यायो यत्र सत्यपि कर्मतारतम्ये फलावैशेष्यं प्रमाणसिद्धं तद्व्यतिरिक्तविषय इति कल्पयितुं युक्तम् । अत एव दूरात्समीपाच्चागत्य तटाके तृष्णया पानीयं पिबतामविशिष्टा तृप्तिः, धीशक्तिपाटवात्तन्मान्द्याद्वा चिरेण वेदमभ्यस्यतां वेदाक्षरावाप्तिरविशिष्टेति नैतादृशेषु स्थलेषु कर्मभूयस्त्वात्फलभूयस्त्वमिति सर्वमनवद्यम् ॥ इति मुक्तिफलाधिकरणम् ॥ १७ ॥

इति शिवातिवादिमूर्द्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीभरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकाख्यायां तृतीयस्याध्यायस्य तुरीयः पादः ॥ ३ ॥ ४ ॥

---

नयमणिमालायाम्

अथ मुक्तिफलाधिकरणम् ॥ १७ ॥

सू० ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

तद्वेवं कर्मफलन्यायेनैवास्तु सातिशयः । अपवर्गेऽपि समत्वाद्विहितफलत्वस्य तत्रापि ॥ ३२७ ॥

ब्रह्मण एव फलत्वावधृतेरपवर्गमाप्तानाम् । तस्यैकरूप्यतोऽस्मिन्नातिशयः शक्यते प्रकल्पयितुम् ॥ ३२८ ॥

इति मुक्तिफलाधिकरणम् ॥ १७ ॥

इति श्रीमदप्पय्यदीक्षितकृतौ अधिकरणनयमणिमालाख्यतृतीयपरिच्छेदे तृतीयस्याध्यायस्य तुरीयः पादः ॥ ३ ॥ ४ ॥

॥ श्रीः ॥

शिवाभ्यां नमः।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## चतुर्थाध्यायस्य प्रथमः पादः ॥

### अथ आवृत्त्यधिकरणम् ॥ १ ॥

### सू ॥ आवृत्तिरसकृदुपदेशात् ॥ १ ॥

विचारिताः खलूपासकोपास्योपासनभेदाश्रमधर्मादयस्तृतीयाध्याये। इह पुनश्चतुर्थाध्याये प्रथमे पादे उपासनाप्रकारः, द्वितीये जीवस्योपासकस्योत्क्रान्तिदशा, तृतीयेऽर्चिरादिगतिः, चतुर्थे ब्रह्मप्राप्तस्यावस्था च निरूप्यते। प्रथमाधिकरणेऽत्र 'ब्रह्मविदाप्नोति परम्' 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिषु मोक्षसाधनतया र्ं वेदनं सकृदनुष्ठेयम्? उतावर्तनीयम्? इति संशयः॥ किं तावत् प्राप्तम्?

---

## शिवार्कमणिदीपिकायाम्

### तुरीयस्याध्यायस्य प्रथमः पादः ॥

### अथ आवृत्त्यधिकरणम् ॥ १ ॥

सू० आवृत्तिरसकृदुपदेशात् ॥ १ ॥ श्रोतृबुद्धिसौकर्याय वृत्तवर्तिष्यमाणपादार्थाननुकीर्तयन्सङ्गतिमाविष्करोति—विचारिता इति। साधननिरूपणानन्तरं तदधीनं फलं निरूप्यत इत्यध्याययोः सङ्गतिर्विवक्षिता। तत्र तृतीयाध्यायस्य प्रथमे पादे संसारवैतृष्ण्यजननायेह परत्र च परिभ्रमणरूपमुपासकस्य स्वरूपं निरूपितम्। द्वितीयपादे परब्रह्मप्राप्तितृष्णाजननाय निर्दोषासङ्ख्यमङ्गलगुणाकरत्वादिस्तन्महिमा निरूपितः। तृतीयपादे मुमुक्षुकर्तव्योपासनाभेदा निरूपिताः। चतुर्थे पादे उपासनाङ्गान्याश्रमधर्मशमदमादीनि निरूपितानि। इह चतुर्थाध्यायस्य प्रथमपादे आवृत्त्यादिरूप उपासनाप्रकारो निरूपितः। तस्य साधनान्तर्गतत्वेऽपि फलार्थापत्त्युपज्ञत्वादुपासनायाः प्रीतिपूर्वकचिन्तानुवृत्तिरूपत्वेन फलान्तर्भावस्यापि सत्त्वाच्च फलाध्याये निरूपणम्। द्वितीयपादादिषूत्क्रान्त्यादयो निरूप्यन्ते। विदुषो मूर्धन्यनाड्योत्क्रान्तिरर्चिरादिगतिः ब्रह्मप्राप्त्यनन्तरभाविगुणाविर्भावश्चेत्येते क्रमभाविनो विद्याफलविशेषा इति फलक्रमात्तादक्रमः। यद्यपि प्रथमपादे "तदधिगम उत्तरपूर्वाघयो"रि( ब्र० अ० ४ पा० १ सू० १३ )त्यधिकरणमारभ्य पापक्षयस्य निरूप्यमाणत्वात्सर्वपूर्वभाविकर्मक्षयरूपं फलं प्रथमे पादे निरूप्यते। विद्यायाः कर्मक्षयहेतुसाक्षात्कारपर्यन्तत्वोपयोगिदार्ढ्यसिद्ध्यर्थमावृत्त्यादिनिरूपणमित्यपि वक्तुं शक्यं। तथापि कर्मक्षयापेक्षयाप्युपासना चिरविरहोत्कण्ठितनायिकाया नायकविषयचिन्तानुवृत्तिवत्तात्कालिकानन्दाविर्भावपर्यवसायित्वेनातिशयितफलरूपेत्यभिप्रेत्योपासनाप्रकार एव भाष्ये प्रथमपादार्थत्वेन वर्णितः। अत एव शिवभाववतामानन्दविशेषोप-

सकृदनुष्ठेयम्, 'सकृत्कृते कृतः शास्त्रार्थः' इति न्यायात्। प्रयाजादिवत् सकृदनुष्ठानेऽपि वेदनज्ञानशब्दार्थसिद्धेः ॥ इति प्राप्ते ब्रूमः। 'ब्रह्मविदाप्नोति परम्' इत्यादिषु मोक्षसाधनतया विहितं वेदनमसकृदावर्तनीयम्। 'मनो ब्रह्मेत्युपासीत ...भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद यत्स वेद स मयैतदुक्तः' 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इत्यादिश्रुतिषूप-

---

लब्धिः शिवपुराणे शिवेनैव वर्णिता। "कम्पः स्वेदोऽश्रुपातश्च कण्ठे च स्वरविक्रिया। आनन्दाद्युपलब्धिश्च भवेदाकस्मिकी मुहुः॥ एतैर्व्यस्तैः समस्तैर्वा लिङ्गैरव्यभिचारिभिः। मन्दमध्योत्तमैर्भावैर्विज्ञेयास्ते नरोत्तमाः॥ यथाऽयोऽग्निसमावेशान्नायो भवति केवलम्। तथैव मम सान्निध्यान्न ते केवलमानुषाः॥" इति। एवं साक्षात्कारपर्यन्तोपासनाप्रकारनिरूपणेनैव प्रथमपादस्य फलाध्यायान्तर्भावः इत्यभिप्रेत्याग्रेऽपि भाष्यकारः पापक्षयप्रतिपादकाधिकरणानां सङ्गत्यन्तरं वक्ष्यति। विदेर्ज्ञानमात्रपरत्वोपासनापरत्वानवधारणात्संशये पूर्वपक्षमाह—सकृदिति। न च काम्यकर्मणामिव फलभूयस्त्वार्थमावृत्तिरिति वक्तुं शक्यम्। तद्वद्वेदनफले ब्रह्मानन्दानुभवे भूयस्त्वाल्पत्वविशेषाभावात्। "तस्मात्कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्यु"रिति न्यायस्य नायं विषयः। किंतु यथा प्रधानस्य साङ्गत्वोपपादनाय क्रियमाणं प्रयाजादिकमङ्गं सकृदेव क्रियते एवं वेदनमपि सकृदेव कर्तव्यमिति क्रतुवद्वानुमानेनाभ्यासिफलभूमा स्यादिति पूर्वपक्षनिराकरणार्थस्य सकृद्वा कारणैकत्वादिति न्यायस्यैवायं विषयः इत्यभिप्रेत्य दृष्टान्तमाह—प्रयाजादिवदिति। ननु मनो ब्रह्मेत्यादौ विद्युपास्त्योर्व्यतिकरेण प्रयोगात् ज्ञानसामान्यवाचिनश्शब्दस्यावृत्तिगुणविशिष्टज्ञानविशेषे पर्यवसानं स्यादित्याशङ्क्याह—वेदनज्ञानेति। छागपशुन्यायेन 'मनो ब्रह्मे'त्यादिवेदनानामुपासनारूपत्वपर्यवसानमस्तु नाम। न तावन्मात्रेणानन्दवल्ल्याद्युक्तब्रह्मवेदनानामावृत्तिस्सिध्यति। विद्याभेदात्। न हि प्रतिवसन्तं ज्योतिष्टोमस्यावृत्तिविधानात् द्वादशाहादीनामपि प्रतिवसन्तमावृत्तिस्सिध्यति। न च 'निदिध्यासितव्य' इत्यादिश्रुतेः कासांचिद्विद्यानां मुक्तिफलानामावृत्त्यपेक्षा संप्रतिपन्नेत्यन्यासामप्यावृत्तिरपेक्षणीया। अन्यथा फलभूयस्त्वासंभवेन क्लेशसाध्यानां तासामननुष्ठानप्रसङ्गादिति वाच्यम्। देवतान्तरनाम्नामनेकावृत्तिविशिष्टसंकीर्तने यत्फलं तस्य सकृदेव शिवादिनामसङ्कीर्तनेन लाभे संभवत्यपि देवतान्तरनामसङ्कीर्तनेष्विव पुरुषरुचिवैचित्र्येण विद्यान्तरेषु प्रवृत्त्युपपत्तेः। न च विद्यानामुपास्यसाक्षात्कारार्थत्वेन दृष्टफलत्वात्क्रियाणामर्थशेषत्वात्प्रत्यक्षे तन्निवृत्त्यापवर्गः स्यादिति न्यायेन यावत्फलोदयमवघातवदावृत्तिः स्यादिति वाच्यम्। यासां विद्यानां 'ततस्तु तं पश्यति निष्कलं ध्यायमान' इत्यादिवचनैस्साक्षात्कारपर्यन्तत्वमवगतं तासामावृत्तिसिद्धावप्यन्यासामावृत्त्यसिद्धेः। न च साक्षात्कारफलकविद्यानामावृत्त्यपेक्षामात्रेण विद्यात्वसामान्यादतत्फलानामप्यावृत्तिः सिध्यति। अग्निचयने औदुंबरमुलूखलं सर्वौषधस्य पूरयित्वावहन्त्यथैतदुपदधातीत्युपधेयोलूखलसंस्कारार्थत्वेन विहितस्याप्यवघातस्यावघातत्वसामान्यादावृत्त्यपेक्षाप्रसङ्गेन 'धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्या'दिति न्यायविरोधापत्तेरिति भावः। ननु मनोब्रह्मेत्यादिब्रह्म-

क्रमोपसंहारयोर्विद्युपास्त्योर्व्यतिकरोपदेशेन मोक्षसाधनरूपस्य वेदनस्योपासना-रूपत्वावगमात् । उपासनशब्दस्य च स्मृतिसन्तानवाचित्वात् । यदुक्तं 'प्रया-

---

दृष्टिप्रकरणे प्रक्रान्तोपासना 'य एवं वेदे'ति विदिनोपसंहृता । संवर्गविद्याप्रकरणे 'यत्स-वेदे'ति हंसवचने श्रुतं रैक्वस्य वेदनं रैक्वं प्रति जानश्रुतिवचने उपासिनोपसंहृतमित्यस्तु नाम । एवं विद्युपास्त्योर्व्यतिकरेणोपदेशस्य सर्वविद्यासाधारण्याभावाद्विद्यान्तरेषु प्रया-जवत्सकृदेवानुष्ठानं स्यादित्याशङ्कामनूद्य निराकरोति—यदुक्तमिति । अयमाशयः। यासां विद्यानां साक्षात्कारपर्यन्तत्वं श्रुतं तासामावर्तमानतयोपासनरूपत्वमवघातन्यायेन सिध्यतीति तावन्निर्विवादम् । तस्यावर्तमानत्वात्मकस्योपासनारूपत्वस्य विद्यान्तरसाधार-ण्यमप्यवघातन्यायेनैव सिध्यति । व्रीह्युद्देशेन विहितस्याप्यवहननस्य यवसाधारण्यमपेक्षा-सामर्थ्यादुपपादनीयं नोपायान्तरेण । न च द्वितीयाश्रुत्यवगतमवहननादिसाध्यत्वं प्रा-क्सिद्धव्रीहित्वाद्याकारेण न संभवतीति तदवच्छेदकापूर्वीयत्वलक्षणावश्यंभावेन व्रीहित्व-स्यापि विवक्षायां विशिष्टानुवाददोषापत्तेः प्रवृत्तिनिमित्तैक्याद्यवसाधारण्यसिद्धिरिति वा-च्यम् । साध्यतावच्छेदकानुपस्थितावपि स्वर्गज्योतिष्टोमयोरिव व्रीह्यवहननयोः शब्देन साध्यसाधनबोधनसंभवात् । न चावहननवाक्ये व्रीहिपदस्य लौकिकापूर्वीयसाधारण्येन व्रीहिमात्रपरत्वे भूतभाविविनियोगरहितेषु लौकिकव्रीहिष्ववहननस्यार्थकर्मत्वमपूर्वीयव्रीहिषु विनियुक्तसंस्कारतया गुणकर्मत्वमिति विधिवैरूप्यापत्तिः। लौकिकव्रीहिमात्रपरत्वे द्वितीया-श्रुत्यवगतद्रव्यप्राधान्यभङ्गापत्तिरित्यपूर्वीयपरत्वावश्यंभावाद्यवसाधारण्यसिद्धिरिति वा-च्यम् । अवहननादिवाक्यजन्यशाब्दबोधस्य व्रीहित्वप्रकारकत्वेऽपि द्वितीयाश्रुतिनिर्दि-ष्टव्रीहिगुणतया विधीयमानमवहननं भूतभाव्युपयोगरहितलौकिकव्रीहिविषयं भवितुं न योग्यमिति विधेयसामर्थ्याच्छाब्दबोधानन्तरमपूर्वीयव्रीहीणां विषयत्वावगतिसंभवात्। 'य-स्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रित्यत्र हविरा-र्त्यधिकरणन्यायेनाग्न्युभयत्वस्याविवक्षयाग्न्यनुगममात्रस्य शाब्दबोधवेलायां निमित्तत्वाव-गतावपि निमित्ते विधीयमानमाधानं सहितयोरेवाग्न्योरुत्पादनक्षमं नत्वेकस्याग्नेरिति विधे-यसामर्थ्यादुभयानुगम एव निमित्तत्वपर्यवसानाङ्गीकारात् । 'तप्ते पयसि दध्यानयती'त्यत्र शाब्दबोधस्य पयस्त्वमात्रप्रकारकत्वेऽपि सा वैश्वदेव्यामिक्षेति तदनन्तरवाक्ये तस्य प-यसो यागान्वयविधाने सति तत्सामर्थ्याच्छाब्दबोधानन्तरं तदपूर्वसंबन्धिनः पयसो विषयत्वावगतिरित्यवश्यवक्तव्यत्वाच्च । अवहननादिवाक्येष्वपूर्वीयत्वलक्षणया तज्जन्य-शाब्दबोधस्यापूर्वीयत्वप्रकारत्वेऽपि जुह्वादिव्यावर्तकस्य तण्डुलद्वारकत्वस्य व्रीहित्वस्येव विशिष्टानुवाददोषापत्त्या विवक्षितुमशक्यत्वेन शाब्दबोधानन्तरं विधेयदृष्टप्रयोजनकाव-हननसामर्थ्यादेव तण्डुलद्वारकापूर्वीयद्रव्यविषयत्वावगतेर्वक्तव्यत्वाच्च । तस्मादनुपपत्त्य-भावेनापूर्वीयत्वलक्षणानुत्थितेस्तत्प्रयुक्तयवसाधारण्याभावात् । यवानां पुरोडाशप्रकृतिद्र-व्यत्वाविशेषेण व्रीहिवत्तण्डुलभावादिसाधनापेक्षासत्त्वेन तदपेक्षासामर्थ्यादेवावहननवि-धेर्यवसाधारण्यमुपपादनीयम् । अपूर्वीयत्वलक्षणायामपि ह्यवहननविधेर्दृष्टार्थत्वायावहन-नापेक्षानपेक्षापूर्वीयद्रव्यालोचनमावश्यकम् । अन्यथा तस्य जुह्वादिसाधारण्यप्रसङ्गात् ।

अपि च व्रीहिषु विहितमवहननादिकमपूर्वीयत्वलक्षणया यवेष्वपि यदि स्यात्तदा सोमे विहितं क्रयादि संस्कारजातं फलचमसेऽप्युपदेशत एव प्राप्नुयात् । हविःप्रकृतित्वेन सोमयागापूर्वसाधनत्वस्य तत्रापि सत्त्वात् । तथा च 'नैमित्तिकमतुल्यत्वादसमानविधानं स्या'दिति तृतीयाध्यायाधिकरणविरोधापत्तेः । ननु नित्यस्य क्रयादिसंस्कारजातस्याधिकारान्वये नैमित्तिकः फलचमसो द्वारं भवितुं नार्हति । स्वयं च विशेष्यतया तेनान्वेतुं नार्हति । न खल्वभिषवेण नित्यं ज्योतिष्टोमस्योपकुर्यादनित्यफलचमसद्वारेणेति युज्यते । न वा नित्याभिषवविशिष्टेन फलचमसेन निमित्तवान्यजेतेति युज्यते । तस्मान्नित्यानित्यसंयोगविरोधान्न फलचमसस्य सोमसामानविध्यमिति चेत् । स्यादेतदेवं यदि फलचमसत्वाकारेण स वाक्यार्थान्वयी स्यात् । 'सोमं क्रीणाती'त्यादिसंस्कारवाक्येषु सोमपदलक्षितापूर्वसाधनत्वाकारेण स वाक्यार्थान्वयी चेत्कः प्रसङ्गो नित्यानित्यसंयोगविरोधस्य । सर्वत्रापि हि ज्योतिष्टोमप्रयोगे हविःप्रकृतित्वे तदपूर्वसाधनभूतो होमः फलचमसो वास्त्येव । एवमेव हि 'यदाहवनीये जुहोती'त्यादिष्वपि नित्यानित्यसंयोगविरोधः परिहरणीयः । अन्यथा तत्राप्याहवनीयस्यैष्टिकसौमिकाद्यपूर्वार्थत्वं नित्यवदाम्नातं नारिष्टहोमादिद्वारैव स्यादिति भेदनादिनिमित्तकहोमानामाहवनीयाधारत्वं न सिध्येत् । क्व तर्हि नित्यानित्यसंयोगविरोधः । यत्रानित्यमेव नित्यवदाम्नातस्य द्वारं भवति तत्रैव यथा 'भिन्ने जुहोती'ति । अत्र हि होमो भिन्नाधिकरणकस्तत्संस्कार इति पूर्वपक्षे 'भिन्न' इत्यस्य संस्कार्यपरतया निमित्तपरत्वाभावेन होमो नित्यः स्यात् । तद्द्वारं तु भिन्नमनित्यमिति नित्यानित्यसंयोगविरोधः । एतेनेदमपि निरस्तम् । नैमित्तिकस्य नित्यसामानविध्याभावो नित्यानित्यसंयोगविरोधान्नेष्यते । किंतु संस्कारः । वाक्यानामावृत्तिप्रसङ्गात् । तथा हि नित्यं नैमित्तिकं च न युगपद्विधेयं । किंतु नित्यं सोमादिद्रव्यं सामान्येन विधाय सर्वत्र तस्यैव प्राप्तौ राजन्यादिनिमित्ते सति विशेषरूपेण नैमित्तिकं फलचमसादि विधेयं । तद्यस्यां वेलायां स्वाभाविकं नित्याङ्गं विधेयं तस्यामेव संस्कारविधयस्तन्मात्रविशेषणत्वेन स्वार्थं विधाय निवृत्तव्यापारा न भूयः शक्नुवन्ति नैमित्तिकविशेषणत्वेनापि स्वार्थं विधातुमावृत्तिप्रसङ्गात् । न चैवं यवसाधारण्यसंस्कारवाक्यानामावृत्तिः प्रसज्यते । यवशास्त्रस्याप्यनैमित्तिकत्वेन व्रीहिशास्त्रसमकालप्रवृत्तिकतया व्रीहिवदेव यवानामप्यपूर्वीयत्वेन क्रोडीकारसंभवादिति । आहवनीयशास्त्रस्यापि नित्यहोमविधिसमानकालप्रवृत्तिकस्य नैमित्तिकहोमसाधारण्याभावप्रसङ्गात् । यस्यां वेलायां 'व्रीहिभिर्यजेते'ति शास्त्रं प्रवर्तते तस्यामेव वेलायां व्रीह्यादिविशेषणत्वेन संस्कारवाक्यैरवहननादीनि समर्प्यन्त इत्यभ्युपगमे तदानीं व्रीहिगतापूर्वीयत्वस्यानवगत्या व्रीहित्वेनैवावहननाद्यन्वयस्य वक्तव्यतया यवसाधारण्याभावप्रसङ्गाच्च । ननु अनुवाद्यसमर्पकशास्त्रप्रवृत्त्यनन्तरं विधेयसमर्पकशास्त्रप्रवृत्तिरिष्यते । तथा च 'यदाहवनीये जुहोती'त्यनारभ्याधीतवाक्ये नित्यनैमित्तिकात्मकस्य कृत्स्नस्यापि होमस्यानुवाद्यत्वात् नैमित्तिकहोमशास्त्राणामपि प्रवृत्त्यनन्तरमेवाहवनीयशास्त्रप्रवृत्तिरित्याहवनीयस्य नैमित्तिकहोमसाधारण्यसिद्धिः । एवं व्रीहिशास्त्रप्रवृत्त्यनन्तरमेवाहवनीयादिशास्त्रप्रवृत्तिः । ततश्च व्रीहीणामपूर्वीयत्वस्यावगतत्वादपूर्वीयत्वेनावहननान्वये व्रीहिशास्त्रसमकालप्रवृत्तिकयवशास्त्रावगतापूर्वसंबन्धानां यवानामपि क्रोडीकारादवहननादेर्यवसाधारण्यसिद्धिश्चेति

न कश्चिद्दोष इति चेत्। एवं तर्हि संस्कारवाक्येष्वपूर्वीयत्वेन व्रीहिहोमाद्यनुवादे नैमित्तिकफलचमसाद्यपूर्वीयं नैमित्तिकहोमन्यायेनानुवाद्यमिति फलचमसशास्त्रस्यापि प्रवृत्त्यनन्तरमेव क्रयादिवाक्यानां प्रवृत्तेर्वक्तव्यतया कथं क्रयादीनां फलचमससाधारण्यं न प्रसज्यते। तस्मात्संस्कारवाक्येष्वपूर्वीयत्वेन संस्कार्यानुवादे संस्काराणां फलचमससाधारण्येन विधानस्यापरिहार्यत्वात् तत्परिहाराय व्रीहित्वहोमत्वादिरूपेणैवानुवादो वक्तव्य इति नावहननस्य यवसाधारण्यमपूर्वीयत्वेनानुवादमभ्युपेत्य समर्थयितुं शक्यते। किंत्वित्थं समर्थनीयम्। पुरोडाशप्रकृतिद्रव्यत्वेन विहितानां यवानां वितुषीभावोपायापेक्षायां यथाभूतेषु व्रीहिषु तदुपायत्वेन विहितस्यावहननस्यैव ग्रहणं युक्तम्। वैदिकेषु यवेषु वैदिकस्यैव तदुपायस्य प्रत्यासन्नतया शीघ्रं बुद्ध्यावारोहात्तद्ग्रहणेन नियमसंभवे लौकिकस्यावहननस्य नखविदलनादेरनियततदुपायस्य ग्रहणायोगाच्च। अतएवाश्वदाननिमित्तकस्य वारुणचतुष्कपालयागस्य पौण्डरीकादिषु श्रुतं वैदिकमेवाश्वदानं निमित्तं। न तु सुहृदादिभ्यः स्नेहाद्युपाधिना कृतं लौकिकमश्वदानमिति 'दोषात्त्विष्टिर्लौकिके स्याद्वैदिके न दोषः स्या'दिति पूर्वतन्त्राधिकरणनिर्णीतम्। अत एव 'पशुना यजेत' 'अक्ताश्शर्करा' इत्यागनाय विशेषापेक्षायां मन्त्रार्थवादसमर्पितनियतविशेषग्रहणे संभवत्याक्षेपलभ्यानियतविशेषग्रहणं न कार्यमिति छागपश्वधिकरणादिषु निर्णीतम्। एवं चावहननपेषणादेर्यवसाधारण्यपर्यवसाने भविष्यत्यपि व्रीहिमात्रे तद्विधानं लाघवार्थम्। एकत्रैव तद्विधानेऽपि ह्यपेक्षासामर्थ्यादन्यत्रापि तदुपतिष्ठत इति। यत्र त्वेकत्र विहितमन्यत्र न जिघृक्षितं तत्र निर्देशभेदेन धर्मव्यवस्था क्रियते। यथा रथंतरे प्रस्तूयमाने संमीलयेद्बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेदिति। व्यवस्थापितं च तथैव जैमिनिना—'निर्देशाद्वा व्यवतिष्ठेर'न्निति। यदि व्रीहिषु विहितमवहननं यवेषु वितुषीभावोपायतां न प्रतिपद्येत तदा वैदिकत्वेन प्रत्यासन्नमपि नियतमपि तदपहाय लौकिकमनियतमुपायान्तरं गृह्येत। यथा 'तस्मिंत्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति व्रीहिमयपुरोडाशप्रतिष्ठापने विनियुक्तो मन्त्रो यवमयपुरोडाशप्रतिष्ठापनोपायतां न प्रतिपद्यत इति तत्प्रकाशनार्थं लौकिक एव कल्पसूत्रादिरनियतस्तदुपायो गृह्यते। प्रतिपद्यते त्ववहननं व्रीहिष्विव यवेष्वपि वितुषीभावोपायताम्। न च व्रीहिप्रतिनिधित्वेन नीवारोपादाने नीवारपुरोडाशप्रतिष्ठापनेऽप्येवमनियतोपायान्वेषणप्रसङ्गः। न हि व्रीह्यलाभे नीवारास्साधनत्वेनोपादीयन्ते। किं तु व्रीहिसदृशेषु नीवारेष्वनुप्रविष्टा ये व्रीह्यारंभयोग्यावयवास्त एव कथंचिद्व्रीहिशास्त्रार्थसंपिपादयिषयोपादीयन्ते। ततश्च व्रीह्यभावे यवबुद्ध्योपादीयमानास्ते 'व्रीहीणां मेधे'ति मन्त्रभागेन प्रकाशयितुं योग्या एव। अत एव 'व्रीहीनवहन्ती'त्यादिसंस्कारविधीनामपि प्रतिनिधिसाधारण्यमङ्गीक्रियते। न च प्रतिनिधीनामिव यवानां व्रीहिसमानविधानत्वाभावे केवलमपेक्षामात्रेण व्रीहिधर्माणां यवेषु प्राप्त्यङ्गीकारे यवानां व्रीहिविकारत्वं स्यादिति व्रीहिमन्त्रस्य यवेषूहेन प्राप्तिप्रसङ्गः। अवहननादिवाक्यजन्यव्रीहित्वप्रकारकशाब्दबोधानन्तरं द्वितीयाश्रुतिनिर्दिष्टव्रीहिप्राधान्यनिर्वाहाय तण्डुलद्वारा दर्शपूर्णमासापूर्वोपयोगिनां व्रीहीणामवहननादिसंस्कार्यत्वमित्यवगतिकाले व्रीहिशास्त्रसमकालप्रवृत्तिकेन 'यवैर्यजेते'ति शास्त्रेणावगतं यागीयपुरोडाशसाधनभूतानां यवानामपि वि-

जादिवत्' इति, तस्यादृष्टफलत्वाद्युक्तं सकृदनुष्ठानम् । वेदनफलस्य साक्षात्कारस्य दृष्टत्वात् तस्याफलोदयमावृत्तिः, अवघातादिवदिति ॥

---

तुषीभावाद्युपायापेक्षामालोच्य संस्कारान्वये व्रीहित्वं प्रयोजककोटौ न निविष्टं । किंतूक्तरूपापूर्वोपयोगित्वमात्रमित्यवगत्युदयेन तद्वशादवहननादिसंस्काराणां यवसाधारण्यप्राप्त्या यवानां व्रीहिविकारत्वाप्रसङ्गात् । नन्वेवमुक्तरूपापूर्वोपयोगित्वमात्रं संस्कारान्वये प्रयोजकमित्येतल्लाघवादेवावगन्तुं शक्येत । व्रीहित्वस्यापि प्रवेशे गौरवं स्यात् । अतो धर्माणामपेक्षासामर्थ्यात्साधारणतायां नेदमुदाहरणमिति चेत् न । गौरवमात्रेण श्रुतव्रीहित्वपरित्यागायोगेन यवापेक्षालोचनस्यावश्यकत्वात् । एतेन तण्डुलद्वारा हविःप्रकृतित्वेन यागापूर्वोपयोगित्वस्यावहननान्वयप्रयोजकत्वे दृष्टार्थत्वमवहननस्य सिध्यति । व्रीहित्वस्य प्रयोजकत्वे त्वदृष्टार्थत्वं स्यादिति दृष्टार्थत्वलोभेनाद्यमेव प्रयोजकमभ्युपगन्तव्यं । न तु द्वितीयमपि प्रयोजककोटौ निवेशनीयमिति निरस्तम् । श्रुतानुसारेण हि दृष्टमदृष्टं वा कल्पनीयं न । त्वदृष्टार्थत्वापत्त्या श्रुतं परित्यक्तुं युक्तम् । तस्मादुक्तरीत्या यवानामवहननाद्यपेक्षयैव श्रुतस्यापि व्रीहित्वस्य संस्कारान्वयप्रयोजककोटिवहिर्भावः कल्पनीयः । एकत्र विहितमवहननादिकमपेक्षासामर्थ्यादन्यत्रापि भविष्यतीति प्रयोजककोट्यनिविष्टमपि व्रीहित्वं पुरस्कृत्यावहननादिशास्त्रं प्रवृत्तमिति कल्पनीयम् । यदित्वदृष्टार्थत्वापत्त्यैव व्रीहित्वस्य प्रयोजककोटिवहिर्भावः कल्पनीयः । तदा व्रीहिमात्रेऽपि तस्य तत एव प्रकाश्यकोटिवहिर्भावापत्त्या व्रीहिमात्रस्यापि यवसाधारण्यापत्तिरपरिहार्या स्यात् । मन्त्रेषु व्रीह्यादीनि द्रव्याण्यग्न्यादयो देवताश्चापूर्वीयाणीति हि तेनतेन पदेन प्रकाश्यंते । अत एव वैकृतेषु सूर्यादिषु नीवारादिषु चोहसिद्धिः । तस्माद्यवानामवघातेन वितुषीभावसंभवाद्वितुषीभावार्थं वैदिकेतस्मिन्नपेक्षेति तस्य यवसाधारण्यं यवप्रकाशनस्य व्रीहिमन्त्रेण व्रीहिप्रकाशनस्य वा संभवाद्वैदिकेऽपि तस्मिन्ननपेक्षेत्यपेक्षानपेक्षाभ्यामेवावघातव्रीहिमन्त्रयोर्वैषम्यं कल्पनीयम् । नचापेक्षालोचनेन साधारण्यनिर्वाहे तद्वशात्प्रोक्षणस्य यवसाधारण्यं न सिध्येदिति वाच्यम् । निर्वापावघातयोरपेक्षावशादपूर्वविशेषो पयुक्तत्वप्रयुक्ततावगमे तदुभयमध्यगतस्य प्रोक्षणस्यापि साहचर्यबलात्तत्प्रयुक्ततावगतिस्सिद्ध्यतीत्येषा दिक् । तस्मात्स्थितमेतदपेक्षावशादवहननस्य यवसाधारण्यमिति । एवमेवोपासनारूपत्वस्य विद्यान्तरसाधारण्यम् । तथा हि । विद्या साक्षात्कारद्वारा मुक्तिफलेति कासुचिद्विद्यासु क्लृप्तत्वादितरासामपि विद्यानां तथैव दृष्टद्वारत्वे संभवति नादृष्टद्वारत्वं कल्पयितुं युक्तम् । एवं च दृष्टार्थत्वलोभादवघातस्य वितुषीभावद्वारकत्वसिद्धेव विद्यान्तराणां साक्षात्कारद्वारत्वसिद्ध्या तन्निर्वाहार्थमावृत्तिः कल्पनीयेति तासामावृत्तिविशिष्टत्वरूपोपासनात्मकत्वसिद्धिरिति । एवमपेक्षावशादेव यज्ञादीनां शमादीनामुद्धूलनत्रिपुण्ड्रयोराप्रायणं विद्यानुष्ठानस्य पापाशेषविनाशयोरन्येषां चैवंविधानां सर्वविद्यासाधारण्यमित्यलं विस्तरेण । अत्रावृत्तिरित्यनेनैव साध्यार्थसिद्धावसकृदिति विशेषणं यावत्फलोदयमावृत्तिर्दृष्टफलत्वादिति प्रधानहेतुसूचनार्थमुक्तम् । उपदेशादिति तदुपोद्बलकं कासुचिद्विद्यासूपासना-

## सू ॥ लिङ्गाच्च ॥ २ ॥

अस्मिन् विषये लिङ्गं चास्ति । 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता । महापातकयुक्तो वा युक्तो वाऽप्युपपातकैः ॥ प्रविश्य रजनीपादं ब्रह्मध्यानं समभ्यसेत् । अध्यात्मिकान् योगाननुतिष्ठेत् ॥ रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ॥' इत्यादि । अतश्च ब्रह्मवेदनस्यावृत्तिरिति ॥

इति आवृत्त्यधिकरणम् ॥ १ ॥

### अथ आत्मत्वोपासनाधिकरणम् ॥ २ ॥

## सू ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

पूर्वत्र ब्रह्मण उपासनमावृत्तिमदभिहितम् । तदात्मनस्तद्भावेनोपासनमुत तदर्थान्तरत्वेनेति विचारः ॥ एवं सति 'विश्वाधिको रुद्रो महर्षिः' 'अधिकं तु भेदनिर्देशात्' इत्यादिश्रुतिसूत्रेषु प्रत्यगात्मनः पशोर्जीवात् पत्युः परब्रह्मणोऽर्थान्तरत्वेन निरूपितत्वात् सर्वज्ञत्वादिना जीवस्य ब्रह्मभावाघटनाच्च ब्रह्मोपासनं

---

रूपत्वप्रतिपादनं लिङ्गमुक्तम् ॥ सू० ॥ लिङ्गाच्च ॥ २ ॥ लिङ्गं स्मृतिः । श्रुत्यनुरूपकत्वात् । 'क्षेत्रज्ञस्ये'ति स्मृतावीश्वरज्ञानं सकलपापप्रायश्चित्तमुक्तम् । स्मृत्यन्तरे तस्य यामपर्यन्तानुवर्तनीयध्यानरूपत्वमुक्तम् । तथैव स्मृत्यन्तरे तस्य ज्ञानस्य योगशब्दवाच्यसमाधिरूपत्वमुक्तम् । स्मृत्यन्तरे स्वप्नधीगम्यमिति शिवस्य समाधिप्राप्यत्वमुक्तम् । सकलबाह्येन्द्रियव्यापारोपरमपूर्वकत्वसाम्यात्समाधिरेव हि स्वप्नधीशब्देन निर्दिष्टः । अध्यात्मिकानिति वृद्ध्यभावश्छान्दसः ॥

इति आवृत्त्यधिकरणम् ॥ १ ॥

### अथ आत्मत्वोपासनाधिकरणम् ॥ २ ॥

सू० ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ विद्यायास्साक्षात्कारफलार्थापत्तिप्रसूतमावृत्तिगुणकत्वमुपपादितम् । इदानीं पशुत्वनिवृत्तिरूपफलार्थापत्तिरूपं शिवोऽहमिति भावनारूपत्वमुपपाद्यत इति सङ्गतिं दर्शयति—पूर्वत्रेति । तदात्मन इति । तदुक्तं ब्रह्मकर्मकोपासनमात्मनो जीवस्य कर्तुस्तद्भावेन जीवभावेन उत तदर्थान्तरत्वेन जीवभिन्नत्वेनेति ब्रह्मणो जीवाधिकत्वोपपत्त्यनुपपत्तिभ्यां संशय इत्यर्थः । भेदनिर्देशादित्यादिशब्देन 'अधिकोपदेशात्तु बादरायणस्यैवम्' । (ब्र० ३–४–८) सुषुप्त्युत्क-

---

नयमणिमालायाम्

### अथ आवृत्त्यधिकरणम् ॥ १ ॥

सू० ॥ आवृत्तिरसकृदुपदेशात् ॥ १ ॥ लिङ्गाच्च ॥ २ ॥

मुक्त्यर्थतया विहितं ब्रह्मज्ञानं सकृत्कार्यम् । भवति हि विधिशास्त्रार्थः कृत एव सकृत्कृतेऽप्यस्मिन् ॥ ३२९ ॥

आवर्तनीयमसकृत्साक्षात्कृतिरूपफलकत्वात् । अन्तर्नीतावृत्तिकतदुपास्ति······उपदेशाच्च ॥ ३३० ॥

इति आवृत्त्यधिकरणम् ॥ १ ॥

---

(१) 'अज्ञत्वसर्वज्ञत्वादिगुणैर्न्यूनाधिकभावस्य संप्रतिपन्नत्वाच्च' इति पाठान्तरम् ।

जीवस्य तद्भि(स्वभि)न्नत्वेनैव युज्यत इति पूर्वः पक्षः॥ सिद्धान्तस्तु। यद्यपि जीवाद्धिकमेव शिवाख्यं परं ब्रह्म, तथाऽप्युपासिताऽहं ब्रह्मास्मीति तदुपासीत। यतः पूर्वेऽप्युपासितारः 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यात्मेत्येवावगच्छन्ति। उपासितुरर्थान्तरत्वेऽपि तानुपासितॄननुगृह्णाति स्वस्वरूपतया परं ब्रह्म। ते च पुनः स्वात्मतया ग्राहयन्ति परानपि शिष्यान् 'तत्त्वमसि' इत्यादिना।

---

न्योर्भेदेन' (ब्र० १-३-४२) इत्यादिसूत्राणि गृह्यन्ते। तद्भिन्नत्वेनैवेति। एवकारेण 'त्वं वा अहमस्मि' 'तत्त्वमसि' इत्यादिसामानाधिकरण्यनिबन्धनं पशुत्वनिवृत्तिफलार्थापत्तिनिबन्धनं चाभेदेनोपासनं व्यावर्त्यते। सामानाधिकरण्यं शरीरशरीरिभावेनोपपद्यते। पशुत्वनिवृत्तिफलकत्वं स्वशरीरकशिवोपासनायास्तादर्थ्यविधिबलेनोपपद्यत इति भावः। त्वं वा अहमस्मीति। यदि शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यं तदानीमहं वै त्वमसीति निर्देश एवोपपद्यते। त्वंशब्दनिर्दिष्टे परमेश्वरे स्वशरीरकत्वपर्यन्तस्याहंशब्दस्य वृत्त्युपपत्तेः। 'त्वं वा अहमस्मी'ति निर्देशस्तु नोपपद्यते। अहंशब्दनिर्दिष्टे परमेश्वरशरीररूपे स्वस्मिन्परमेश्वरवाचिनस्त्वंशब्दस्य प्रवृत्त्यनुपपत्तेः। शरीरवाचिनां हि शरीरिपर्यन्तत्वं व्युत्पत्तिसिद्धं न तु शरीरिवाचिनां शरीरपर्यन्तत्वम्। अतः कर्मव्यतिहारेण स्वस्मिन्परमेश्वरदृष्टिः परमेश्वरे स्वदृष्टिश्च विधित्सितात्रेत्यवसीयते। ननु तथा सत्युत्कृष्टे निकृष्टदृष्टिरप्यत्र विधेया स्यात्। न चेष्टापत्तिः। 'ब्रह्मदृष्टिरुत्कर्षा'दिति न्यायविरोधात्। तस्माद्वाक्यद्वयेऽपि त्वंशब्दौ प्रस्तुतगुणविशिष्टपरमेश्वरविषयौ। अहंशब्दौ स्वशरीरकत्वविशिष्टपरमेश्वरविषयौ। अस्म्यसिशब्दौ तूद्देश्यसमर्पकाहंत्वंशब्दमात्रप्रयुक्तौ न त्वहंत्वंशब्दयोः स्वात्मपरमेश्वरत्वप्रयुक्ताविति व्याख्यातुमुचितमिति चेत् मैवम्। तथा सत्येकेन वाक्येन स्वान्तर्यामिणः परमेश्वरस्य चाभेदस्य सिद्ध्या वाक्यान्तरवैयर्थ्यापत्तेः। न चाभेदप्रतिपत्तिदार्ढ्यार्थं वाक्यद्वयं तदुभयभेदभ्रान्तिवासनानुवृत्त्यभावेन तद्दार्ढ्यापादनस्य निष्प्रयोजनत्वात्। तस्मा'द्यद्वाव कं तदेव खं यदेव खं तदेव क'मित्यत्रेवात्रापि वाक्यद्वयस्य कर्मव्यतिहारेणावगतिविधानार्थत्वमेव युक्तम्। 'ब्रह्मदृष्टिरुत्कर्षा'दिति सामान्यन्यायस्तु विशेषवचनेनापोद्यते। एवं जाबालवाक्यद्वयव'त्तद्योऽहं सोऽसौ योऽसौ सोऽह' मित्यैतरेयवाक्यद्वयमप्यन्योन्याभेददृष्टिविधानपरतयैव महावाक्यविधयैवैकवाक्यत्वं नेतव्यम्। उपासितुरिति। यद्यप्युपासितुर्भिन्न एव परमेश्वरस्तथापि मान्त्रिकाद्भिन्नो गरुड इव चिरनिरंतरासेविताभेदभावनादार्ढ्यसंबन्धेन प्रातीतिकेन स्वस्वरूपत्वेनानुगृह्णाति। यथा गरुडः विषसंहरणसामर्थ्यविशेषप्रदानेन मन्त्रिणोऽनुगृह्णाति तथा परमेश्वरः पशुत्वनिवृत्तिरूपफलप्रदानेनोपासकाननुगृह्णातीत्यर्थः। तत्त्वमसीत्यादिनेति। 'तत्त्वमसी'त्यत्र त्वंशब्दनिर्दिष्टप्राग्वर्णितजगत्कारणत्वादिविशिष्टपरमेश्वराभेदो बोध्यत इत्यसिशब्दयोगादवसीयते। अतस्तत्र त्वंशब्दः संबोध्यजीवमात्रपरः न तु तदन्तर्यामिपर इत्यभ्युपगन्तव्यम्। संबोध्यं प्रति स्वात्मन इव स्वान्तर्यामिणः स्वानुभवेन वा प्राचीनोपदेशेन वा प्रसिद्धत्वाभावेन तस्य तं प्रत्युद्देश्यतानर्हत्वात् प्रकृतस्य सद्रूपस्य परमेश्वरस्य कथंचित्स्वान्तर्यामितया प्रागुपदिष्टत्वसमर्थने तत्र तद्भेदशङ्कानुदयेन तद-

निरवधिकपरमानन्दमयनिष्कलङ्कशिवत्वप्राप्तिर्हि मुक्तिः। शिवत्वप्राप्तिरात्मनः पशुत्वनिवृत्तिमन्तरेण न संभवति। पशुत्वनिवृत्तिश्च न तद्भावनां विना। अतो निरन्तरं शिवोऽहमिति भावनाप्रवाहेण शिथिलितपाशतयाऽपगतपशुभाव उपासकः शिव एव भवति। निरस्तसमस्तदोषकलङ्कशङ्कानिरतिशयमङ्गलास्पदं हि शिवत्वम्। परं ब्रह्म च तादृगेव। तद्भावनयोपासकश्च तथैव भवति। अत एव तदन्यस्य मुमुक्षुध्येयत्वं निषिध्यते। 'शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य' इत्यादिश्रुतिषु। निवृत्तब्राह्मणादिदेहाभिमानमयपशुभावस्य निरतिशयस्वरूपानन्दसाक्षिस्वप्रकाशशिवरूपपराहंभावापत्तिर्मुक्तिरिति सर्वश्रुतितात्पर्यात्। ब्रह्मभावेनोपासनमुपासकस्य मुक्तिकरम्, अन्यथा संसारानिवृत्तिरिति॥

इति आत्मत्वोपासनाधिकरणम्॥ २॥

---

भेदबोधनानपेक्षणात्। अतस्तत्त्वमसीतिवाक्यं स्वात्मनि ब्रह्मदृष्टिविधिपरमित्येवाभ्युपग- । न च तस्य विद्याविधिपरत्वे प्रतिखण्डमभ्यासेन विद्याभेदः स्यादिति शङ्कनीयम्। प्रथमखण्ड एव स्वात्मनि ब्रह्मदृष्टौ विहितायां द्वितीयादिखण्डेषु शङ्काविशेषनिराकरणपूर्वकं तदनुवाद इति 'सैव हि सत्यादय' इ( ब्र० ३-३-३८ )त्यधिकरणे समर्थितत्वात्। अनुवादश्च सद्रूपं ब्रह्मास्मीति भावनया तत्रापि ब्रह्मात्मता स्फुटः भविष्यतीत्येतद्दार्ढ्यार्थः। वर्तमानसामीप्ये वर्तमानार्थप्रत्ययः। तत्त्वमसीत्यादिनेत्यादिशब्देन 'स त आत्मा सर्वान्तरः' 'एष त आत्मा सर्वान्तरः' इत्यादयो गृह्यन्ते। तत्राप्यभ्यासो भावनासाध्याभेददार्ढ्यार्थः। ननु जीवब्रह्मणोर्भेदा 'दहं ब्रह्मास्मि' 'शिवोऽहमस्मि' इत्यादि भावना भ्रमरूपा स्यात्। सा कथं मुक्तिहेतुरित्याशङ्कानिराकरणायाह—निरवधिकेति। यथा कीटस्य कीटत्वनिवृत्तिपूर्वकभ्रमरत्वप्राप्तिर्भ्रमराहंभावसाध्या एवं पशोः पशुत्वनिवृत्तिपूर्वकनिरस्तसमस्तदोषकल्याणगुणाविर्भावरूपशिवत्वप्राप्तिश्शिवाहंभावसाध्येति 'देवो भूत्वा देवानप्येती'ति श्रुतेरवसीयते। न च श्रुतिप्रतिपन्नेऽर्थे काचिदनुपपत्तिरिति भावः। तथैव भवतीति। अनादिशिववत्तदभेदभावनया तद्वत्स्वयमपि शिव एव भवतीत्यर्थः। अत एवेति। यतश्शिवाभेदभावनयैव शिवत्वप्राप्तिः न तु शिवेतरभावनया अत एवेत्यर्थः॥

इति आत्मत्वोपासनाधिकरणम्॥ २॥

---

नयमणिमालायाम्

अथ आत्मत्वोपासनाधिकरणम्॥ २॥

सू० ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३॥

विदुषां ब्रह्मोपास्यं स्वस्मादर्थान्तरत्वेन। भिन्नं हि जीववर्गाद्विश्वाधिकमीश्वराख्यं तत्॥ ३३१॥

भिन्नमपि ह्यात्मतया तिष्ठति जीवेषु भिन्नमेवोपास्यम्। ग्रहणाग्रहणरीतिरुदिता पूर्वेषामपि सदेव मुदिता श्रुतिषु॥ ३३२॥

इति आत्मत्वोपासनाधिकरणम्॥ २॥

## अथ प्रतीकाधिकरणम् ॥ ३ ॥

विशेषमाह—

### सू ॥ न प्रतीके न हि सः ॥ ४ ॥

'मनो ब्रह्मेत्युपासीत' इत्यादिश्रुतिषु मनःप्रभृतिषु ब्रह्मोपासनमवगम्यते । तेष्वप्यात्मत्वेनोपासनमुत भिन्नत्वेन, इति संशये पूर्वपक्षः । 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्युपासीत' इत्यादिना सिद्धेषु प्रतीकोपासनेषु ब्रह्मदृष्ट्या संस्कृतं मनःप्रभृतिकमुपास्यमवगम्यते । अतः प्रतीकमुपासकेन ब्रह्मतया भावितमित्यात्मतया तदुपासने को विरोध इति प्राप्त उच्यते । नात्मग्रहणं प्रतीकेषु हि न परं ब्रह्मोपास्यम्, किंतु ब्रह्मदृष्ट्या मनःप्रभृतिकमुपास्यम् । तत्र मनआदिविशिष्टस्य ब्रह्मण एवोपास्यत्वेपि मनआदेर्ब्रह्मगुणत्वाभावात् विकारत्वेन

---

## अथ प्रतीकाधिकरणम् ॥ ३ ॥

उत्तराधिकरणमवतारयति—विशेषमाहेति । कासुचिद्विद्यासु शिवाभेदभावनाया अपवादमाहेत्यर्थः । सू० ॥ न प्रतीके न हि सः ॥ ४ ॥ 'मनो ब्रह्मे'त्यादिवाक्यैर्मनआदिषु ब्रह्मदृष्टिर्विधीयते न तु ब्रह्मणि मनआदिदृष्टिरित्युत्तराधिकरणे वक्ष्यते । तत्र किं मनआदिषु प्रतीकेषु ब्रह्मबुद्धिविषयत्वाद्ब्रह्मणीव स्वात्मदृष्ट्याप्युपासनं कार्यमुत यथाविधि ब्रह्मदृष्टिमात्रेणेति संशये पूर्वपक्षः । पूर्वाधिकरणे हि ब्रह्मदृष्ट्योपास्यमानः स्वात्मा उपासकं प्रति ब्रह्मत्वेनावभासत इत्युक्तम् । एवं ब्रह्मदृष्ट्योपास्यमाना मनआदयोऽपि ब्रह्मत्वेनावभासेरन् । तथावभासमानेषु च स्वात्मदृष्टिः कर्तुमुचिता । यथा ब्रह्मणि । तस्मात्प्रतीकोपासनेष्वपि स्वात्मदृष्टिः प्रवर्तत इति । सिद्धान्तस्तु ब्रह्माहमितिवत् मनआदिकमहमित्याहत्य न श्रूयते । अर्थान्मनआदौ ब्रह्मत्वेनावभानात्स्वात्मदृष्टिरापतति चेदापततु नाम । नैतावता तेषु ब्रह्मदृष्टिविधिः स्पृष्टो भवति । न हि तपस्यतोऽर्थात्क्लेशो भवतीति, सोऽपि विधेयः । किंतु यदर्थादापतद्विध्यन्तराकांक्षितं तदेव विधेयम् । यथेष्टकाकरणकस्थण्डिलनिर्वृत्तिविध्याद्याकांक्षितमिष्टकोपधानादिकम् । न चेह श्रुताया ब्रह्मदृष्टेः स्वात्मदृष्ट्यभावेऽनुपपत्त्या तदाकांक्षास्ति येन स्वात्मदृष्टिरपि विधिस्पृष्टा भवेत् । तस्माद्यथाविधि ब्रह्मदृष्टिमात्रेण मनआदिप्रतीकोपासना कार्या । यदि 'मनो ब्रह्मे' त्याद्युपासनासु मनआदिदृष्ट्या ब्रह्मैवोपास्यं तथापि न स्वात्मदृष्टिविधिः सिध्यति । तदा हि ब्रह्म मनआदिविकारात्मनैवावभासेत । न च विकारतयावभासमानं स्वात्मतयोपासितुमर्हम् । स्वात्मनोऽपि विकारित्वावभासप्रसङ्गात् । अत उभयथापि प्रतीकोपासनेषु न स्वात्मदृष्टिः प्रवर्तते । वस्तुतस्तु वक्ष्यमाणाधिकरणरीत्या मनआदिष्वेव ब्रह्मदृष्टिर्विधेया । सा च, मनआदीनां ब्रह्मणश्च न भेदावभासविरोधिनी । काम्याना प्रतीकोपासनानां साक्षात्कारपर्यन्तत्वाभावेन भावनाप्रकर्षकृताभेददार्ढ्यानपेक्षणात् । अत एव तासां यथाकामं समुच्चयोऽपि प्राक्प्रतिपादितः । तस्मादवभासतोऽपि मनआदीनां ब्रह्मभावाभावादर्थादपि तेषु न स्वात्मदृष्टिरापततीति तत्त्वम् । सूत्रस्य मनआदौ

तद्विशिष्टे ब्रह्मणि नात्मग्रहणम् । किंतु सत्यसंकल्पत्वादिविशिष्टे । अन्यथा ह्यात्मनोऽपि विकारास्पदत्वं स्यात् । अतः प्रतीके नात्मग्रहणमुपासकानाम् । न हि तत्र परमेश्वरः साक्षादुपास्य इति ॥

इति प्रतीकाधिकरणम् ॥ ३ ॥

## अथ ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

## सू ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

प्रतीकोपासने मनआदित्यादिप्रतीके ब्रह्मदृष्टिरुपासकेन कर्तव्या, उत ब्रह्मणि

प्रतीके स्वात्मदृष्टिर्न कार्या । न हि प्रतीको वस्तुतः परमेश्वरः । परमेश्वरत्वाभावे च परमेश्वरत्वभावनाप्रकर्षवशादर्थादापतन्त्यपि स्वात्मदृष्टिर्विध्यनाकाङ्क्षितत्वान्न विधिविषय इति सैद्धान्तिके प्रथमप्रकारेऽर्थः । द्वितीयप्रकारे तु प्रतीकोपासनेषु परमेश्वरस्यैव मनआदिदृष्ट्योपास्यत्वेऽपि स्वात्मदृष्टिस्तस्मिन्न कार्या । न हि तथोपासितुरुपास्यः परमेश्वरतयावभासेत । किंतु भावनाप्रकर्षवशात्स मनआदिविकाररूपतयैवेति न स्वात्मदृष्टिः वर्ततेत्यर्थः । वस्तुगतिमवलंब्य प्रकारद्वयोपमर्देन प्रवृत्ते तृतीये तु प्रकारे प्रतीके मनआदौ स्वात्मदृष्टिर्न कार्या । न हि तत्रोपास्यः प्रतीकोऽवभासतोऽपि परमेश्वरप्रतीकोपासनेषु साक्षात्कारपर्यन्तभावनाप्रकर्षाभावेन भेदावभासानुवृत्तेः विधिबलादाहार्यारोपरूपस्य परमेश्वरदृष्टिमात्रस्य भेदावभासाविरोधित्वादिति प्रथमप्रकारोपमर्दोपयोग्यर्थः प्रतीकोपासनेषु स्वात्मदृष्टिर्न कार्या । न हि तत्र परमेश्वरः साक्षादुपास्यः परमेश्वरदृष्टिसंस्कृतस्य मनआदेरेव साक्षादुपास्यत्वात् । यत्र विशेषणतयान्योपसर्जनत्वं विना परमेश्वरस्य साक्षादुपास्यत्वं तत्रैव व्यतिहारेणोपासनचोदनादित्यर्थः । भाष्ये संशयवाक्यगतस्य तद्भिन्नत्वेनेत्यस्य स्वात्माभेददृष्टिमन्तरेणेत्यर्थः । न हि प्रतीकेषु स्वात्मभिन्नत्वमप्युपास्यमविधानात् ॥

इति प्रतीकाधिकरणम् ॥ ३ ॥

## अथ ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

ननु मनआदेस्साक्षादुपास्यत्वमसिद्धं । 'मनो ब्रह्मे'त्यादिसामानाधिकरण्यस्योभयथापि संभवात् । उभयथा संभवे च फलप्रदानसमर्थस्य ब्रह्मण एवोपासनाभिराराधनीयत्वे विधितात्पर्यकल्पनं युक्तं न तु तदसमर्थस्य मनआदेः । तथा च 'मनो ब्रह्मे'त्यादिषु ब्रह्मण एव साक्षादुपास्यत्वात्तत्र मनआद्यभेदभावनाप्रकर्षाभावेन विकारत्वाप्रसक्तेश्च स्वात्मदृष्टिः कार्यैवेति पूर्वाधिकरणाक्षेपसमाधानार्थमधिकरणान्तरं प्रवर्तते । सू० ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ स्पष्टोऽधिकरणार्थः । ननु प्रतीकोपासनं मनआदिविषयमिव

---

नयमणिमालायाम्

अथ प्रतीकाधिकरणम् ॥ ३ ॥

सू० ॥ न प्रतीके न हि सः ॥ ४ ॥

एवं स्वात्मत्वमतिः कार्या मनसि प्रतीकेऽपि । तत्र·······द्वारापि कलयितुं युक्तम् ॥ ३३३ ॥

तत्र मनो यद्युपास्यं ब्रह्मेति ब्रह्म मन इति वा । द्वेधापि स्वात्मतया नोपास्यं तद्विकारत्वात् ॥ ३३४ ॥

इति प्रतीकाधिकरणम् ॥ ३ ॥

तद्दृष्टिः। इति सन्देहे पूर्वः पक्षः। मनआदिदृष्टिं ब्रह्मणि कृत्वा ब्रह्मोपासनीयम्, तस्यैव फलदातृत्वात् ॥ इत्येवं प्राप्त उच्यते। 'विश्वाधिको रुद्र' इत्यादिषु ब्रह्मण उत्कृष्टत्वावगमात् तद्दृष्टिरेव निकृष्टेषु मनआदिषु कर्तव्या । लोके हि निकृष्टे भृत्यादौ राजदृष्टिं कृत्वा राजवत् तमुपासते। न तु भृत्यदृष्टिं कृत्वा राजानमुपासते केचिदपि। इदमेव च परमौचित्यं यदुत्कृष्टं वस्तु तदेव सर्वे नमन्ति । अतः परं ब्रह्म सर्वोत्कृष्टतयैव सर्वनमस्कारविषयोऽवगम्यते । 'ऋतं सत्यम्' इति मन्त्रे उक्तविशेषणविशिष्टं यत् परं ब्रह्म, 'विश्वरूपाय तस्मा एव नमः' सर्वोऽपि नमस्कारः, नान्यस्मै कचिदपीति ॥ किंचास्य परब्रह्मण उत्कृष्टतयैव नमस्कारविषयत्वं लक्षणमुक्तम्। तथा हि तैत्तिरीयश्रुतौ 'यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तरा हनुर्यज्ञोऽधरा विष्णुर्हृदयं संवत्सरः प्रजननम्' इत्यादिना शिंशुमारात्मनिरूपणे हृदयादिरूपेभ्यो विष्णवादिभ्यः पार्थक्येन सर्वोत्कृष्टत्वादेवास्य परब्रह्मणः शिवस्य प्रधानशिरोरूपत्वं 'यस्मै नमस्तच्छिरः' इति नमस्कारविषयत्वेन लक्षणेनैवानूद्याभिहितम्। अवसाने च 'त्वं भूतानामधिपतिरसि त्वं भूतानां

---

विरिञ्चनारायणादिविषयमपि श्रुतिस्मृतीतिहासादिषु प्रसिद्धम् । तत्र किं विरिञ्चादय उत्कृष्टाः किंवा परब्रह्मत्वाभिमतः परमशिव इत्यनवधारणादुपास्यानिर्धारणं प्राप्नुयादित्याशंक्य स्थापितेऽपि बहुभिः प्रकारैः शिवस्य सर्वोत्कृष्टत्वे प्रकारान्तरेणापि तस्य तद्व्यवस्थापयितुमुपक्रमते—इदमेव च परमौचित्यमिति। नान्यस्मै कचिदपीति। यथाख- 'त्विमा रुद्राय स्थिरधन्वने गिर' इति मन्त्रः शिवस्य सकलश्रुतिस्मृतीतिहासपुराणादिपरतत्त्वविषयशब्दजालतात्पर्यपर्यवसानभूमित्वं 'स्मृतयश्च पुराणानि भारतादीनि सत्तम। शिवमेव सदा सांबं हृदि कृत्वा ब्रुवन्ति ही'ति पुराणोपबृंहितं प्रतिपादयति। एवं 'विश्वरूरूपाय वै नम' इति मन्त्रः तस्य सर्वनमस्कारपर्यवसानभूमित्वं प्रतिपादयतीत्यन्यत्रैव पर्यवसितः कोऽपि नमस्कारो नास्तीत्यर्थः। किंचेति। तैत्तिरीयारण्यके ध्यानार्थं शिंशुमारशरीरकतया परमात्मप्रतिपादने कासांचिद्देवतानां तदीयशिरोमूर्धहनुद्वयहृदयमध्यचरणचतुष्टयपुच्छरूपसप्तावयवतया निरूपणं कृतम्। तत्र विष्णवादयः स्वस्वनामभिर्निर्दिष्टाः शिवस्तु नमस्कारविषयत्वेन धर्मेण निर्दिष्टः । तेन नमस्कारविषयत्वं शिवस्यासाधारणं लक्षणं विवक्षितमित्युन्नीयत इति भावः। ननु नमस्कारविषयत्वेन निर्दिश्य शिरोरूपप्रधानावयवत्वेन रूपितः शिव इति कथं ज्ञायते येन तस्य तल्लक्षणं विवक्षितमित्युन्नीयेतेत्याशङ्कायामाह—अवसाने चेति। उपसंहारे भूतपतित्वेन 'श्रेष्ठो जातस्य रुद्र श्रियासी' दित्यादिमन्त्रप्रतिपन्नेन श्रेष्ठत्वेन च लिङ्गेन शिवं प्रस्तुत्य 'नमस्त' इति नमस्कारसामान्यस्य तदीयत्वमुक्त्वा तद्विवरणेनोक्तार्थदृढीकरणाय 'नमस्सर्वत' इति सर्वस्यापि नमस्कारस्य तदीयत्वमुक्तम्। तेन प्रागपि नमस्कारविषयत्वेन निर्दिष्टः शिव एवेति निश्चीयते। 'नमस्सर्वत' इत्युपसंहारे यस्य सर्वनमस्कारपर्यवसानभूमित्वं वक्ष्यते 'तच्छिर' इति। एतदर्थपरत्वादुपक्रमवाक्यस्य संभावितशिवसमानोत्कर्षयोर्विष्णुप्रजापत्योः 'विष्णुर्हृदयमग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्रस्ततः प्रजापतिरिति पृथग्ग्रहणेन च तथा निश्चीयत इति भावः। शिंशुमाराकृतिस्तु सर्वोपादानभूता शैवी चिच्छक्तिः । तदाधारत्वेन प्रधा-

श्रेष्ठोऽसि' इत्यस्यैव सर्वभूतविषयमाधिपत्यं श्रेष्ठत्वं चोक्त्वा 'नमस्ते नमः सर्वं ते नमः' इति सकलभूतोत्कृष्टत्वात् सिद्धमखिलनमस्कारपर्यवसानभूमित्वमुक्तम्। सर्वत्र च 'नमस्ते रुद्र मन्यवे' इत्यादिषु सर्वोत्कृष्टतयैव पुनः पुनरस्मै नमः प्रयुज्यते। ऐश्वर्यादिना हि लोकेऽधिकं नमन्ति। ततः सर्वनमस्कारविषयतया सर्वोत्कृष्टमुमासहितं विरूपाक्षमीश्वरशब्दैकविषयभूतं परं ब्रह्म। अस्य सर्वोत्कृष्टस्य सर्वनमस्कार्यस्य व्याप्तिदृष्ट्या सर्वेषां मनआदित्यादीनां प्रतीकानामुपास्यत्वम्। अत एव 'श्वभ्यः श्वपतिभ्यश्च वो नमः' इत्यादिषु श्वादिष्वत्यन्तनिकृष्टेष्वपि सर्वोत्कृष्टब्रह्मव्याप्तिदृष्ट्या श्रुतिर्नमः प्रयुङ्क्ते। तस्मादुत्कृष्टसंबन्धान्निकृष्टेषूपचारदर्शनात् विश्वाधिकब्रह्मदृष्ट्या मनः प्रभृतीनामुपास्यत्वं सिद्धम्॥

इति ब्रह्मदृष्ट्यधिकरणम्॥ ४॥

---

नतया शिवस्य शिरस्त्वेन निरूपणमग्रे नमस्कारश्च। वैदिकेषु शिवमन्त्रेषु नमस्कारभूयस्त्वमपि तस्य सर्वोत्कर्षे लिङ्गमित्याह—सर्वत्र चेति। ननूत्कर्षादिव भयादपि लोके नमस्कारो दृश्यते श्रुतावपि दृश्यते 'नमस्ते अस्तु मा मा हिंसी'रिति। अतश्शिवे नमस्त्वं तस्योग्रत्वेन भयभूयस्त्वादुपपन्नमित्याशङ्क्याह—ऐश्वर्यादिनेति। भयादपि नमस्कारः श्रुतौ नोत्कर्षं विना प्रवर्तते 'नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। अन्यं ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भवे'ति मन्त्रे 'नमस्ते अस्तु मा मा हिंसी'रित्येतत्समानविषय एव श्रुतस्य नमस्कारस्य 'नमस्ते हरसे शोचिषे' इत्यूहे 'नमस्कृत्य हि वसीयांसमुपचरन्ती'ति तन्मन्त्रब्राह्मणेनौत्सर्गिकस्वविषयोत्कर्षप्रयुक्तत्वाख्यागोक्तेः श्रुतौ केवलं भयप्रयुक्तस्य नमस्कारस्य संभवेऽपि नमस्कारभूयस्त्वस्य भयभूयस्त्वोन्नायकतयैव सर्वोत्कर्षज्ञापकत्वस्यापरिहार्यत्वाच्च। महाभयहेतुत्वं हि परब्रह्मलिङ्गं 'भीषास्माद्वातः पवते, महद्भयं वज्रमुद्यत' मित्यादिश्रवणादिति भावः। यदुक्तं ब्रह्मण एव फलदातृत्वादुपास्यत्वं युक्तमिति तत्राह—अस्य सर्वोत्कृष्टस्येति। मनआदीनामपि परमेश्वररूपत्वप्रयुक्तस्योपास्यत्वप्रयोजकस्योत्कर्षस्य सत्त्वात्तेषां ब्रह्मदृष्ट्योपास्यत्वं युक्तम्। तद्रूपत्वप्रयुक्तोत्कर्षादेव हि हीनजातीनामपि नमस्कार्यत्वम्। अतः प्रतिमार्चनयैव प्रीतः परमेश्वर एव फलं ददातीति भावः। अस्मिन्पूर्वपक्षयुक्तिनिराकरणेऽपि सूत्रमावृत्त्या योजनीयम्। मनआदिषु ब्रह्मदृष्टिः कर्तव्या। तेष्वपि ब्रह्मरूपप्रयुक्तस्य प्रतिमादिष्विवोपास्यत्वप्रयोजकस्योत्कर्षस्य सत्त्वादिति॥

इति ब्रह्मदृष्ट्यधिकरणम्॥ ४॥

---

नयमणिमालायाम्

अथ ब्रह्मदृष्ट्यधिकरणम्॥ ४॥

सू० ॥ ब्रह्मदृष्टिरुत्कर्षात्॥ ५॥

तत्र मनो दृष्ट्या स्याद्ब्रह्मोपास्यं फलप्रदायित्वात्। फलदातुरुपास्यत्वे युक्तास्य तद्विशेषणता॥ ३३५॥

उत्कृष्टधीर्निकृष्टे लोकन्यायात्फलाय स्यात्। सर्वोत्कृष्टब्रह्ममतिर्मनसि कर्तव्या॥ ३३६॥

इति ब्रह्मदृष्ट्यधिकरणम्॥ ४॥

## अथ आदित्यादिमत्यधिकरणम् ॥ ५ ॥

### सू ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

पूर्वत्र ब्रह्मण उत्कृष्टत्वादादित्यादिषु तद्दृष्टिरुपासनेऽभिहिता 'य एवासौ तपति तमुद्गीथमुपासीत' इत्यादिषु कर्माङ्गोपासनेषूद्गीथादिदृष्टिरादित्यादिषु कार्या, उत विपर्यासेनैव इति संशयः ॥ किं तावत् प्राप्तम्? उद्गीथादीनामादित्यादीनां च कर्माङ्गत्वब्रह्मरूपत्वाविशेषादनियम इति । एवं प्राप्ते ब्रूमः । आदित्यादेः कर्माराध्यत्वेनोत्कृष्टत्वात् कर्माङ्गे उद्गीथादौ तद्दृष्टिः कार्या तद्दृष्टिसंस्कृतस्योद्गीथादिकर्मणः फलातिशयसंभवात् । यत् खलु स्वतो वीर्यवत् क्रियमाणं च, तस्यैव विद्यया संस्कृतस्य वीर्यवत्तरत्वरूपफलातिशयः 'यदेव विद्यया करोति

---

## अथ आदित्यादिमत्यधिकरणम् ॥ ५ ॥

सू० ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ सङ्गतिं दर्शयति—पूर्वत्रेति । उत्कृष्टदृष्ट्यापकृष्टमुपासनीयमित्युक्तम् । एवं सति 'य एवासौ तपती'त्यादौ उत्कर्षप्रयोजकमेकरूपमिति तत्रानवधारणं स्यात् । तत्र यद्वृत्तयोगप्राथम्यानुसरणे त्वादित्यादिदृष्टिरेवोद्गीथादिषु कार्येति विपर्यासेनोपासना स्यादित्याक्षिप्यत इति सङ्गतिरिति भावः । अनियम इति । यद्वृत्तयोगप्राथम्यानुसरणे तु विपर्यासेनोपासना स्यादिति शेषः । एवं पूर्वपक्षपर्यवसानमभिप्रेत्यैव संशयवाक्ये कोटिद्वयमवधारणेन दर्शितम् । कर्माराध्यत्वेनेति । तथा च कर्माङ्गत्वे समानेऽपि देवताधिकरणन्यायादाराध्यत्वेनोत्कर्षोऽस्तीत्यर्थः । 'नन्वभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनमुपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्रि सह शेते स प्रतिहारः कालं गच्छति तन्निधन' मित्येतदादिषु रथन्तरवामदेव्यादिगतहिङ्काराद्यनुबन्धिनीषूपासनासु देवतात्वप्रसिद्धिरहितानामभिमन्थनादीनां न कर्माराध्यत्वेनोत्कर्ष उपपादयितुं शक्यते । आदित्यादीनामप्युद्गीथादिवत्सर्वसोमयागसाधारण्येन कर्माङ्गत्वं न वक्तुं शक्यते दूरे तत्तत्कर्माराध्यत्वं तथाप्यादित्यादिपदप्राप्तेः कर्मफलत्वात्कर्मफलरूपतयादित्यादीनामुत्कर्षः स्यादिति न वाच्यम् । यज्ञादिसिद्धेरपि पुण्यफलत्वेन तस्योद्गीथादिसाधारण्यादित्यनुशयादुत्कर्षहेतुमपहा'योपपत्ते'रिति सौत्रहेतुमुपादत्ते—तद्दृष्टिसंस्कृतस्येति । ननूद्गीथादिकं कर्माङ्गत्वेन वीर्यवत्साध्यरूपतया क्रियमाणं चावगतमिति तस्य विद्यया क्रियमाणत्वनिर्देशस्तया क्रियमाणस्य वीर्यवत्तरोक्तिश्च युज्यत इति तत्रोद्गीथ उपास्य इति सिध्यतु नाम न तावता 'य एवासौ तपती'-त्यादिष्वादित्यादिदृष्ट्योद्गीथ उपास्य इत्येतदपि सिध्यति । 'यदेव विद्यये'त्यस्य प्रकृताक्ष्यादिगुणकोद्गीथविद्यामात्रविषयत्वस्य, 'असार्वत्रिकी'ति सूत्रवर्णितत्वात् । तस्यामादित्यादिसामानाधिकरण्याश्रवणेनाक्ष्यादिगुणक उद्गीथ एवोपास्य इत्यर्थस्यासन्दिग्धत्वेन तदर्थमधिकरणानपेक्षणात् 'यदेव विद्यये'त्यस्य प्रकृतमुद्गीथमाश्रित्य विधीयमानासु सर्वास्वपि विद्यासु साधारण्येऽपि 'समस्तस्य खलु साम्न उपासनं साध्वि'त्यादिना विधीयमानासु

तदेव वीर्यवत्तरं भवति' इति वाक्यादवगम्यते । एवं च ब्रह्मात्मत्वादिसाम्येऽप्युद्गीथादिक्रियाचोदनादुद्गीथादेः क्रियमाणत्वेन फलसाधनत्वात् तद्विपरीतसिद्धस्वभावादादित्यादेस्तथा फलसाधनत्वाभावादादित्यादिदृष्टिरुद्गीथादिष्वङ्गेष्विति निर्णयः ॥

इति आदित्यादिमत्यधिकरणम् ॥ ५ ॥

अथ आसीनाधिकरणम् ॥ ६ ॥

## सू ॥ आसीनः संभवात् ॥ ७ ॥

उपपादितमुपासनाव्यवस्थापनम् । तदिहोपासनस्यासननियमोऽस्ति न वेति संशयः ॥ क्वचिदपि 'आसीन उपासीत' इति नियमाश्रवणान्मानसव्यापाररू-

---

पञ्चविधसामाद्युपासनासु साधारण्याभावेन न तास्वनेन न्यायेन सामावयवा लोकावयवदृष्ट्योपास्या इति निर्णयस्सिध्यति । एवमुद्गीथादेस्साध्यस्य फलसाधनत्वं युक्तं न सिद्धस्वभावस्यादित्यादेरिति न्यायेनापि निर्णयस्सिध्यति । 'अभिमन्थति स हिङ्कारः उपमन्त्रयते स हिङ्कारः अभ्राणि संप्लवन्ते स हिङ्कारः' इत्यादिषु कर्माङ्गसमानाधिकरणस्यापि पत्वात्सर्वत्राप्युपासनायाः क्रियारूपत्वाच्च । अक्रियारूपत्वेऽपि गोदोहनादिवत्क्रियानुरागेण फलसाधनत्वसंभवाच्चेत्यनुशयादङ्गपदसमभिव्याहृतेन 'उपपत्ते'रिति सौत्रपदेन दर्शितं हेतुतयाविष्करोति—अङ्गेष्विति । अङ्गानङ्गसमभिव्याहारवतीनां विद्यानामङ्गेष्वनङ्गदृष्टिरूपत्वे प्रधानकर्मप्रयुक्ताङ्गाश्रयत्वात्स्वतन्त्रफलानामपि तासां पृथक्प्रयुक्तिर्न कल्प्येति प्रयुक्तिलाघवं लभ्यते । वैपरीत्ये तु प्रयुक्त्यन्तरकल्पनागौरवं भवेदिति लाघवन्यायोऽत्र विवक्षितः । 'य एवासौ तपति पृथिवी हिङ्कार' इत्यादिषु यद्वृत्तप्राथम्यादिकं त्वप्रयोजकम् । उद्गीथमुपासीत समस्तस्य खलु साम्न उपासनं साध्विति ततः प्रागेव कर्माङ्गविषयत्वेनोपासनोपक्रमादित्याशयः ॥

इति आदित्यादिमत्यधिकरणम् ॥ ५ ॥

अथ आसीनाधिकरणम् ॥ ६ ॥

सू० ॥ आसीनः संभवात् ॥ ७ ॥ अवसितमहंग्रहप्रसक्तानुप्रसक्तम् । परविद्याविषय एव विचारोऽनुवर्तते । परविद्यानां प्रधानफलार्थापत्तिमूलावावृत्त्यहंग्रहगुणौ विचारितौ । इदानीमङ्गफलरूपप्रधानोपकारार्थापत्तिमूलोऽङ्गविशेषश्चिन्त्यते । यद्यपि शमादीनामपि सर्वविद्यासाधरण्यं प्रधानोपकारार्थापत्तिमूलम् । तथापि तेषां चिन्तनं सङ्गति-

---

नयमणिमालायाम्

अथ आदित्यादिमत्यधिकरणम् ॥ ५ ॥

सू० ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

आदित्ये वोद्गीथस्समुपास्यस्तत्र वादिनः । स्यादुभयोरपि कर्माङ्गब्रह्मरूपतादिगुणैः ॥ ३३७ ॥
प्राप्यत्वेनादित्यः फलरूपत्वाद्धि देवतात्वाच्च । उद्गीथादुत्कृष्टस्तस्मात्तदृष्टिरुद्गीथे ॥ ३३८ ॥

इति आदित्यादिमत्यधिकरणम् ॥ ५ ॥

पस्योपासनस्य सर्वावस्थायामपि संभवान्नास्त्यासननियम उपासकस्येति पूर्वः पक्षः ॥ सिद्धान्तस्तु । आसीन एव ब्रह्मोपासीत, तस्यैवैकाग्र्यसंभवात् । अस्ति चासननियमश्रुतिरपि—'विविक्तदेशे तु सुखासनस्थः शुचिः समग्रीवशिरःशरीरः । अन्त्याश्रमस्थस्सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य । हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् । अनन्तमव्यक्तमचिन्त्यरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् । तथाऽदिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ।' इति कैवल्योपनिषदि । अत आसीन एव ब्रह्मोपासीतेति ॥

## सू ॥ ध्यानाच्च ॥ ८ ॥

'ध्यात्वा मुनिर्गच्छति भूतयोनिम्' 'कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्ये' 'ध्याननिर्मथनादेव' इत्यादिश्रुतौ पाशविच्छेदकारणस्योपास-

---

विशेषेण तृतीयाध्याये निर्वृत्तमिति परिशिष्ट आसननियमोऽत्र विचार्यते । परविद्यास्वासननियमोऽस्ति नवेति नियामकसदसद्भावाभ्यां संशये नियमकारिणः शास्त्रस्याभावान्नास्तीति पूर्वः पक्षः । न च 'विविक्तदेशे तु सुखासनस्थ' इति शास्त्रं नियामकम् । दहरविद्याप्रकरणाम्नाते तेन सर्वविद्यासाधारणस्यासननियमस्यासिद्धेः । न 'चोपविश्यासने युञ्ज्या'दिति स्मरणं नियामकम् । तस्यापि मूलश्रुत्यनुसारेण दहरविद्यामात्रतौचित्यात् । अन्यथा साधारणमूलश्रुतिकल्पनागौरवापत्तेः । न चैकाग्र्यरूपोपकारापेक्षया श्रुतिस्मृत्योस्सर्वविद्यासाधारण्यं कल्पनीयम् । विनाप्यासनं ब्रह्मनिष्ठतोपयोगिचित्तैकाग्र्यसंभवात् । अन्यथा मौनाख्यं सहकार्यन्तरं गच्छतस्तिष्ठतो निविष्टस्य शयानस्य च कथमुपपद्येत । न चोपासना निरन्तरानुस्मृतिरूपा अधिकं चित्तैकाग्र्यमपेक्षत इति वाच्यम् । अङ्गावबद्धोपासनावदासननियमाभावेप्युपासनोपयोगिचित्तैकाग्र्योपपत्तेः । नह्यङ्गावबद्धोपासनासु ऋत्विक्कर्मस्वासननियमः कर्तुं शक्यते । तथैव परविद्यास्वपि नास्त्यासननियम इति । सिद्धान्तस्तु । अस्ति परविद्यास्वासननियमः । आसीनस्यैव चित्तैकाग्र्यसंभवात् । केषांचिदनासीनानामपि कथंचिच्चित्तैकाग्र्यसंपादनसंभवेऽपि दहरविद्यायामासननियमस्य चित्तैकाग्र्यरूपदृष्टार्थत्वेन विद्यान्तराणामपि चित्तैकग्र्यापेक्षायां 'विविक्तदेशे तु सुखासनस्थ' इति तत्र क्वचिद्वेदविहितस्यैव तदुपायस्य ग्रहीतुमुचितत्वात् । येषामुपासकानां रोगवार्धकादिभिरासने न शक्तिस्तेषामपि भित्त्याद्याश्रयणेनासननियमनिर्वाहोपपत्तेः । अङ्गावबद्धोपासनास्वार्त्विज्यानुसारेणासननियमाभावेऽपि परविद्यासु क्वचिद्वैदिकोपायत्वेन क्लृप्तस्यासननियमस्य त्यागायोगात् । अत्यन्ताशक्तावारब्धकाम्यवदाप्रायणमारब्धाया विद्याया यथा कथंचिन्निर्वहणीयत्वेन तत्र तत्त्यागे सत्यन्यत्र तत्त्यागायोगादिति । अथ मौनवदुपासनाप्यासननियममन्तरेण स्यादित्याशङ्कानिराकरणार्थं सूत्रम् सू० ॥ ध्यानाच्च ॥ ८ ॥ ध्यानरूपोपासना विजातीयप्रत्ययान्तराव्यवहिताविच्छिन्नस्मृतिसन्तानरूपा साक्षात्कारफलोत्पत्त्यर्थं तेनानुष्ठेया यावदवसरमुपास्यप्राव-

नस्य ध्यानरूपत्वावगमात् । ध्यायतेश्च 'ध्यायति बको ध्यायति प्रोषितं बन्धुः' इत्यादौ च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषु व्यवहारात् । विजातीयप्रत्ययान्तराव्यवहिते तैलधारावदविच्छिन्नस्मृतिसंतानरूपध्याने चित्तैकाग्र्यावश्यंभावाच्च ध्यानसिद्धयेऽवश्यमासननियम आदर्तव्यः ॥

सू ॥ अचलत्वं चापेक्ष्य ॥ ९ ॥

पृथिव्यादीनामचलत्वमपेक्ष्य 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षम्' इत्यादिप्रयोगाच्चासीन एवोपासीत । ध्यानसन्ततिर्हि पृथिव्यादिवदचलत्वेनासीनस्यैव संभवति ॥

सू ॥ स्मरन्ति च ॥ १० ॥

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥ तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये ॥' इत्युपासकानामासननियमादिस्मरणाच्चासीन एव ब्रह्मोपासीतेति सिद्धम् ॥ इति आसीनाधिकरणम् ॥ ६ ॥

अथ यत्रैकाग्रताधिकरणम् ॥ ७ ॥

सू ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

उक्त उपासकस्यासननियमः । तद्वद्धि देशकालनियमोऽस्ति न वा इति सन्देहे सत्यस्तीति युज्यते । यथा चोदिते कर्मणि 'ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि' इति दिङ्नियमः, 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति देशनियमः 'अपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति कालनियमः, तथाऽत्रापि चोदितत्वाविशेषादुपा-

---

ण्यरूपान्मौनाद्विलक्षणेति तस्यामत्यन्तचित्तैकाग्र्यमपेक्षितमिति भावः । ध्यानस्यात्यन्तचित्तैकाग्र्यापेक्षायां लिङ्गप्रदर्शनार्थं सूत्रम् । सू० ॥ अचलत्वं चापेक्ष्य ॥ ९ ॥ आसननियमश्रुतेः सर्वविद्यासाधारण्येन प्रवृत्तिरपि प्रमाणमिति प्रदर्शनार्थं सूत्रम् । सू० ॥ स्मरन्ति च ॥ १० ॥ 'चेलाजिनकुशोत्तर' मित्यस्य चेलं सर्वोत्तरं अजिनं कुशेभ्य उत्तरं कुशा भूतलमात्रादुत्तरा इति तात्पर्यम् । एवं हि 'तत्रैकाग्रं मनः कृत्वे'ति वाक्यशेषानुसरणं 'मृद्वासने समासीन' इति स्मृत्यन्तरानुसरणं च लभ्यते ॥

इति आसीनाधिकरणम् ॥ ६ ॥

अथ यत्रैकाग्रताधिकरणम् ॥ ७ ॥

सू० ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ प्रत्युदाहरणसङ्गतिमाह—उक्त इति ।

---

नयमणिमालायाम्

अथ आसीनाधिकरणम् ॥ ६ ॥

सू० ॥ आसीनः संभवात् ॥ ७ ॥ ध्यानाच्च ॥ ८ ॥ अचलत्वं चापेक्ष्य ॥ ९ ॥ स्मरन्ति च ॥ १० ॥

आसीनस्तिष्ठन्यावद्गच्छन्शयानो वा । कुर्वीत परोपास्तिं तत्राश्रवणाद्विशेषस्य ॥ ३३९ ॥

आसीन उपासीत ध्यानं······वासः भवति । शयने निद्राभङ्गादन्येषु च चित्तविक्षेपात् ॥ ३४० ॥

इति आसीनाधिकरणम् ॥ ६ ॥

सने दिगादिनियमो युक्त इति पूर्वः पक्षः ॥ सिद्धान्तस्तु उपासने नास्ति दिगादिनियमः । ऐकाग्र्यं हि ध्यानस्य प्रधानसाधनम् । न हि तत्र दिगाद्यपेक्षा । यत्र रागद्वेषादिकालुष्यहेतुर्नास्ति, तत्र हि मनस ऐकाग्र्यं भवति । तावदेवापेक्षणीयम् । 'विविक्तदेशे तु सुखासनस्थः' इति श्रवणात् । 'अनन्तं शिवसन्निधौ' इत्यादिकं जपादिविषयम्, न ध्यानविषयम् । तत्राप्यैकाग्र्यं यदि मुख्यतमं भवति । तस्मादैकाग्र्यमात्रसाधनकस्य ध्यानरूपोपासनस्य न दिग्देशकालनियमः ॥

इति यत्रैकाग्रताधिकरणम् ॥ ७ ॥

## अथ आप्रायणाधिकरणम् ॥ ८ ॥

## सू ॥ आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

पूर्वत्र ब्रह्मोपासनायां दिगादिनियमाभाव उक्तः । इह पुनस्तस्योपसंहारोऽस्ति न वेति विचारे यावदिच्छा तावदुपासना कर्तव्या । अन्यथा तदुपसंहार इति पूर्वपक्षे प्राप्ते सिद्धान्तः । आप्रायणादहरहरुपासना कार्या । न कदाचिदपि तदुपसंहारः, 'अहरहर्वा एवंवित् स्वर्गं लोकमेति' 'स खल्वेवं वर्तयन् यावदायुषं

---

विहितत्वान्मानसत्वाच्च संशयः । दिगादिनियमो युक्त इति । दिङ्नियमः प्राङ्मुखत्वादिनियमः देशनियमः शिवालयाद्याश्रयणनियमः कालनियमः पूर्वाह्णादिनियमः ऐकाग्र्यं ध्यानस्यान्तरङ्गसाधनं तदविरोधेन सति संभवे सामान्यशास्त्रसिद्धो दिगादिनियमोऽपि ग्राह्यः । असंभवे तु न ग्राह्यः । व्रीहिशास्त्रविरोधेऽश्वशफशास्त्रस्येवान्तरङ्गसाधनविरोधे बहिरङ्गसाधनस्य त्याज्यत्वादिति सिद्धान्तः ॥

इति यत्रैकाग्रताधिकरणम् ॥ ७ ॥

## अथ आप्रायणाधिकरणम् ॥ ८ ॥

कालानियमस्य क्वचिदपवादप्रदर्शनार्थमधिकरणान्तरम् । सू० ॥ आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥ यथा पूर्वाह्णादिकालेषु मनोऽनुकूले काले कर्तव्योपासना तथा मनोऽनुकूलकालावधि कर्तव्या न तु यावदायुः अहरहर्वा । 'एवंवि'दित्यादि तु दहरविद्यामात्रविषयम् । न च सर्वासां परविद्यानां साक्षात्कारपर्यन्तत्वाद्यावज्जीवमनुष्ठेयता । अन्तिमदशायामेव साक्षात्कारो भवति, न ततः पूर्वमित्यत्र प्रमाणाभावादिति पूर्वपक्षः । देहवियोगकाले मूर्धन्यनाड्योत्क्रान्तिरर्चिरादिगतिः ब्रह्मप्राप्तिः स्वरूपाविर्भावश्चेत्येवंरूपविद्याफलपरंपरारम्भः । स यद्यपि विद्यानुवृत्त्यभावेऽपि तद्व्यापारानुवृत्तिमात्रेण निर्वहति । तत्रापि व्यापारो विद्यानां साक्षात्काररूपः । स तु भावनाप्रकर्षानुवृत्तिलभ्य इति तदर्थमपेक्षानुसारेण यावज्जीवमनुवृत्तिस्सर्वविद्यासाधारणीति सिद्धान्तः । 'स खल्वेवं वर्तयन्नि'ति

---

### अथ नयमणिमालायाम्

### अथ यत्रैकाग्रताधिकरणम् ॥ ७ ॥

सू० ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

दिग्देशकालनियमोऽप्युपासने कोऽपि वक्तव्यः । विहितं हि कर्म सर्वं प्रायस्तन्नियमसापेक्षम् ॥ ३४१ ॥
चित्तैकाग्र्यं त्वस्य ध्यानस्य प्रथमकारणं नान्यत् । तद्यत्र भवति पुंसस्स एव दिग्देशकालः स्यात् ॥ ३४२ ॥

इति यत्रैकाग्रताधिकरणम् ॥ ७ ॥

ब्रह्मलोकमभिसंपद्यते' इत्यादावाप्रायणादुपासनश्रवणात् । ब्रह्मस्वरूपत्वापादिन्या ब्रह्मभावनाया मध्ये विच्छेदो न कार्यः । स्वात्मतया नैरन्तर्येण ब्रह्मणि भाविते हि तद्रूपमुपासकेषु प्रकाशते । अतः सर्वज्ञं नित्यतृप्तं स्वयंप्रकाशं स्वतन्त्रमलुप्तशक्तिकमनन्तशक्तिकं परं ब्रह्म नैरन्तर्येण भावनीयं तत्स्वरूपप्रकाशायेति । तथा श्रूयते ब्रह्मस्वरूपमुपासकेषु प्रकाशत इति । 'या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि ॥' इति । अनादिमलकर्मवासनारूढदेवादिशरीराभिमानप्रवाहसिद्धामध्यात्मादिभेदभिन्नामसह्यां संसाररुजं द्रावयत्युपासकानामिति रुद्र इत्युच्यते परं ब्रह्म शिवः । तस्यामन्त्रणं रुद्रेति । हे रुद्र ! परमेश्वर ! या ते तनूः मूर्तिः शिवा नित्यसिद्धापहतपाप्मादित्वेन परमविशुद्धा परममङ्गलमयी परममङ्गलप्रदा अघोरा शिवत्वयोगेनैव सर्वहृदयङ्गमा अपापकाशिनी पापग्रहणस्योपलक्षणत्वात् ज्ञानाग्निदग्धनिखिलपुण्यपापा इहापापा इत्युच्यन्ते मुक्तात्मानः तेषु प्रकाशमानत्वादपापकाशिनी ईदृशी या ते तनूः तया शन्तमया 'स एको ब्रह्मण आनन्दः' इत्यादिश्रुतिसिद्धनिरतिशयानन्दलक्षणया तन्वा नोऽस्माकमपि संसारनिमित्तं [पापो]पसंचयमपनीय स्वरूपतया साक्षादतीव प्रकाशस्वेति प्रार्थनेयमुपासकानाम् । अत उपासकानामात्मनि ब्रह्मस्वरूपस्य प्रकाशनात् तत्प्रकाशकारणभूता ब्रह्मभावना यावदायुषं कर्तव्या । न कदाचिदपि विच्छेद्येति ॥

इति आप्रायणाधिकरणम् ॥ ८ ॥

---

श्रुतौ यद्यपि कर्मणामेव यावज्जीवानुष्ठेयत्वं श्रुतं न तु विद्यायाः । तथापि तत्र यावज्जीवं कर्मानुष्ठानस्यापुनरावृत्तिफलकत्वमुच्यमानं विद्यां प्रति स्वरूपोपकारकत्वेनैवोपपादनीयं नान्यथेति तदुक्तिसामर्थ्याद्विद्याया अपि यावज्जीवानुष्ठेयत्वं तत्र विवक्षितमुन्नीयत इति भावः । प्रायणदशायां परमेश्वरसाक्षात्कारोदये तत्प्रार्थनामन्त्रः प्रमाणमित्याह—तथा श्रूयत इति । शिवेत्यस्य निर्दोषत्वं कल्याणगुणाकरत्वं शिवंकरत्वं वार्थ इत्यभिप्रेत्याह—नित्यसिद्धेति । गिरिशन्तेत्यपि संबोधनम् । गिरौ 'कैलासशिखरे रम्ये शङ्करस्य शिवालये । देवतास्तत्र मोदन्ती'ति शिवसङ्कल्पमन्त्रप्रतिपादिते दिव्यस्थानमध्यनिविष्टे महाकैलासे पर्वते शं स्वोपासकानां निरतिशयमानन्दं तनोतीति तदर्थः । स्वरूपतयेत्यनेन शिवाहंभावनाजन्यत्वं साक्षात्कारस्याविष्कृतम् । अभीत्युपसर्गस्य व्याख्यानं साक्षादिति । प्रार्थनेयमुपासकानामिति । अस्य मन्त्रस्य श्वेताश्वतरोपनिषदि परविद्याप्रकरणे पाठा 'द्रुद्रं' 'गिरिशन्ते'ति सकलसांसारिकानर्थनिवृत्तिनिरतिशयमहानन्दानुभवप्रदत्वेन संबोधनसामर्थ्याच्च मूर्धन्यनाड्युत्क्रमणादिपरंपरया तदुभयकारणभूतान्तिमप्रत्ययप्रार्थनानेन मन्त्रेण क्रियत इत्युन्नीयत इत्याशयः ॥ इति आप्रायणाधिकरणम् ॥ ८ ॥

---

नयमणिमालायाम्

अथ आप्रायणाधिकरणम् ॥ ८ ॥

सू० ॥ आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

विहितमुपासनमेतत्कार्यं कालं कियन्तं चित् । आवृत्तिविशिष्टस्य ह्युपासनार्थस्य तावता सिद्धिः ॥ ३४३ ॥

कार्यं तु यावदायुषमहरहरेवंविदित्यादेः । अन्त्यदशायां भाविनि साक्षात्कारे हि तदकरणम् ॥ ३४४ ॥

इति आप्रायणाधिकरणम् ॥ ८ ॥

## अथ तदधिगमाधिकरणम् ॥ ९ ॥

सू ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

पूर्वत्र प्रकर्षेणापापानामुपासकानां ब्रह्मस्वरूपं प्रकाशत इति सोपपत्तिकमुपपादितम्। तदिहोपासकस्य पापक्षयोऽस्ति न वेति संशयः। किं तावत् प्राप्तम्? उपासकानामपि भोगमन्तरेण पापक्षयो न भवति, 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति वचनात्। भोगाय शरीरापत्तौ पुनरपि कर्मोपत्तिरिति न मोक्षावसरः। इत्येवं प्राप्ते ब्रूमः—क्षीयते पापं कर्मोपासकानामिति। कथम्? उपासने प्रारब्धे तत्सामर्थ्यादेव पूर्वाघनाशः उत्तराघाश्लेषश्च भवति। तथा हि व्यपदिश्यते। 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदू-

---

## अथ तदधिगमाधिकरणम् ॥ ९ ॥

सू० ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ सङ्गतिमाह—पूर्वत्रेति। पूर्वाधिकरणोपात्ते 'याते रुद्रे'ति मन्त्रे 'अपापकाशिनी'त्यनेनोपासकानां पापक्षय उक्तः। स न संभवतीत्याक्षिप्य समाधीयत इत्यर्थः। ननु पूर्वाधिकरणे परं 'याते रुद्रे'ति मन्त्रोऽन्तिमप्रत्ययसद्भावे प्रमाणत्वेनोदाहृतः। सूत्रोपात्ते 'त्वहरहर्वा एवं वि'दित्यादिविषयवाक्ये पापक्षयोक्तिर्नास्तीति नेयं सूत्रकाराभिप्रेता सङ्गतिरिति चेत् उच्यते। पूर्वाधिकरणसूत्रे प्रायणपर्यन्तं विद्यानुष्ठेयेत्युक्त्यैव 'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत अहरहर्वा एवं वित्स खल्वेवं वर्तय'न्नित्यादिवाक्यानि तत्र प्रमाणत्वेन सूचितानि। विद्याविशेषाम्नातानामेतेषां वाक्यानामाप्रायणमनुष्ठानस्य सर्वविद्यासाधारण्ये कथमर्थादपि पर्यवसानमित्याकाङ्क्षायां तदुपपादको हेतुस्तत्रापि हि दृष्टमिति सूत्रशेषेणोक्तः। हि यस्मात्तत्रापि प्रायणदशायामपि दृष्टं दृष्टिः ब्रह्मसाक्षात्कारोऽस्ति। तस्मात्तत्सिद्ध्यर्थं विद्यानुवृत्तिरपेक्षितेत्यपेक्षानुसारेण तेषां वाक्यानामर्थतः सर्वविद्याविषयत्वपर्यवसानमिति तस्यार्थः। तेन सूत्रशेषेण प्रायणदशायां साक्षात्कारसद्भावप्रतिपादनात्तत्र 'या ते रुद्रे'त्यन्तिमप्रत्ययप्रार्थनामन्त्रः प्रमाणमिति सूचितम्। तदेव भाष्ये विशदीकृतमिति सूत्रकाराशयस्थैवेयं सङ्गतिः। ननु भोगमन्तरेण यदि कर्मक्षयो न स्यात्तदा भोगार्थं शरीरग्रहणे तत्रापि कर्मान्तरार्जनावश्यंभावादनिर्मोक्षः स्यादित्याशङ्क्य मोक्षस्यापि विद्याफलत्वमाक्षेप्यमस्मिन्पूर्वपक्ष इत्याह—भोगायेति। उपासने प्रारब्ध इति। ननूपासना यस्मिन्दिने प्रारब्धा ततःप्रभृत्युत्तराघाश्लेषः तस्मिन्नेव दिने प्राचीनसकलाघनाश इति नेष्यते। ततः प्रभृत्येव जीवन्मुक्तत्वप्रसङ्गात्। कालान्तरे चेत्किंतत्कालान्तरमिति नावसीयते। साक्षात्कारोदयानन्तरकाल इति चे'दपापकाशिनी'ति प्रागुदाहृतमन्त्रविरोध इत्याशङ्क्याह—तत्सामर्थ्यादेवेति। तस्य सामर्थ्यं दार्ढ्यं यत्साक्षात्कारजननोपयोगि तत एवाश्लेषविनाशौ न तु विद्याप्रारम्भमात्रान्नापि साक्षात्कारादित्यर्थः। सूत्रे 'तदधिगम' इत्यधिगमग्रहणेनायमर्थः सूचितः। तत्र 'ह्यावृत्तिरसकृदुपदेशा'दित्यधिकरणमारभ्य प्रस्तुता विद्या तत्पदेन परामृश्यत इति तस्याः प्राप्तिर्दार्ढ्यमेव पर्यवस्यति। न खलु विद्या गवादिवत्तटस्था विद्यते येन तस्याः स्वसंबन्धरूपा प्राप्तिः पृथग्वक्तव्या स्यात्। उद्यत्येव हि विद्या स्वसंबन्धिन्युदेति। एवं च पापाश्लेषविनाशयोः

यन्ते' 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत' इति। तस्मादुपासकानां पूर्वोत्तराघयोरश्लेषविनाशौ भवत एव। यदुक्तम् 'नाभुक्तं क्षीयते' इति, तस्याज्ञानिविषयत्वादविरोधः॥ इति तदधिगमाधिकरणम्॥ ९॥

साक्षात्कारजननोन्मुखविद्यादार्ढ्यसाध्यत्वे सति साक्षात्कारोदयकाल एव पूर्वाघविनाशः ततःप्रभृत्येवोत्तराघाश्लेषश्चेति। अत एव साक्षात्कारोदयस्य पुण्यपापविधूननस्य च समकालत्वं प्रतिपादयति 'यदा पश्यः पश्यते रुक्मवर्ण'मित्यादिर्मन्त्रः। तदनुसारेण 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति मन्त्रे 'तस्मिन्दृष्टे' इति व्यधिकरणे सप्तम्यौ। तथा च तस्मिन्परब्रह्मणि यद्दृष्टं दर्शनं तस्मिन् जायमाने कर्माणि क्षीयन्ते यथा सवितुर्युदयत्येव तमांसीति तस्यार्थः। एवं च साक्षात्कारोदयकाले तत्समानकालोत्पत्तिकः पापक्षयोऽप्यस्ती'त्यपापकाशिनी'त्यस्य न विरोधः। यद्यपि तदानीमप्रारब्धक्षयेऽपि प्रारब्धानुवृत्तिरस्ति तथाप्यनुवर्तमानं पुण्यपापमल्पम्। अनादिभवसञ्चितः क्षीणः पुण्यपापराशिरत्यन्तमधिक इति तदभिप्रायेणा'पापकाशिनी'त्युक्तिरुपपद्यते। अत एव किञ्चित्पुण्यपापानुवृत्त्या जीवद्दशायां नातीव प्रकाशः। देहवियोगकाले तु प्रारब्धस्यापि नाशादतितरां प्रकाश इत्यभिप्रायेणाभिचाकशीतीति मन्त्रे यङ्लुङन्तप्रयोगः। भृशार्थरूपः भिहारस्तत्र यङोऽर्थः तदभिप्रायेणैव प्रागतीव प्रकाशस्येति भाष्ये तद्व्याख्यानं कृतम्। तस्याज्ञानिविषयत्वादिति। अयमाशयः। विधीयमानानां विद्यानां फलापेक्षायां रात्रिसत्रन्यायेनार्थवादिको मोक्षः फलमिति तावदवश्यमभ्युपगन्तव्यम्। तद्वदेव पापाश्लेषविनाशयोरपि तत्फलत्वं भवन्ननिवार्यते। आर्थवादिकत्वाविशेषात्। अनादिभवसञ्चितानामनन्तानामनियतकालविपाकानां विविधशरीरभोग्यानां कर्मणां क्रमेण बहुदेहैर्योगप्रभावाद्युगपत्कायव्यूहेन वा भोगे तत्काल एव पुनरपि कर्मान्तरार्जनेन तस्याप्यवश्यभोक्तव्यतया कर्मतत्फलप्रवाहयोः कदाप्युपरत्यभावेनानिर्मोक्षापत्त्या मोक्षफलेनापेक्षितत्वाच्च। पापाश्लेषविनाशवाक्यानां फलसमर्पकत्वं परित्यज्य विद्यावैभवख्यापनमात्रार्थत्वाङ्गीकारे 'न हि कर्म क्षीयते'। 'नाभुक्तं क्षीयते' इत्यादिवचनानामेव कर्मवैभवख्यापनार्थत्वमिति वैपरीत्यस्यापि सुवचत्वाच्च। तस्मात्तेषां वचनानामविद्वद्विषयत्वेन सङ्कोचः कल्पयितुं युक्तः। अवश्यं च सङ्कोचनीयानि तानि वचनानि। अन्यथा प्रायश्चित्ते विधिवैयर्थ्यापत्तेः। अकृतप्रायश्चित्तविषयाणि तानि वचनानीति चेत्तर्हि ब्रह्मविद्यापि प्रायश्चित्तरूपेति न विरोधशङ्कावकाशः। 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मते'त्यादिस्मृतिषु ब्रह्मविद्यायाः प्रायश्चित्तरूपतयाप्युपदेशात् प्रायश्चित्तरूपत्वे पापनिवृत्तिरेव फलं स्यात् न तु मोक्षोऽपीत्येतत्प्रयोजकमिति॥ इति तदधिगमाधिकरणम्॥ ९॥

## नयमणिमालायाम्

## अथ तदधिगमाधिकरणम्॥ ९॥

सू०॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥ १३॥

विदुषोऽपि ऋते भोगं कथमपि न क्षीयते पापम्। वपुरन्तरे तदर्थं जाते पुनरपि तदित्यनिर्मोक्षः॥ ३४५॥

विद्यायास्सामर्थ्यात्पापं प्रारब्धवियस्य। नश्यति पूर्वमपरं न संश्लिष्यत्येवमाम्नानात्॥ ३४६॥

## इति तदधिगमाधिकरणम्॥ ९॥

## अथ इतरासंश्लेषाधिकरणम् ॥ १० ॥

### सू ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

विदुषः पापलेपो न भवतीति निरूपितम्। इह तद्विरोधिपुण्यलेपोऽस्ति न वेति विचारः। किं प्राप्तम्? विद्याविरोधिनः पापस्य क्षयो युक्तः, न तु पुण्यस्य, तस्य विद्याङ्गत्वेनानुवृत्त्यौचित्यात् ॥ इत्येवं प्राप्ते निरूप्यते। विदुषः पुण्यस्यापि मोक्षविरोधित्वेनानिष्टफलत्वसाम्यादश्लेषविनाशौ । विद्यानुगुणस्यारोग्यादिफलस्य

---

## अथ इतरासंश्लेषाधिकरणम् ॥ १० ॥

सू० ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ आतिदेशिकीं सङ्गतिमाह—विदुष इति। अतिदेशव्यावर्तनीयामधिकाशङ्कां दर्शयति—विद्याविरोधिन इति । विद्याङ्गत्वेनेति। ननु विद्यानङ्गस्य पुण्यकर्मणो विद्यया नाशाश्लेषौ स्यातामिति चेन्न। प्रमाणाभावात्। 'तद्यथेषीकातूलमग्नौ' 'तद्यथा पुष्करपलाश' इति पूर्वाधिकरणोदाहृतश्रुत्योर्विशिष्य पापस्यैव ग्रहणात्तत्र पापशब्दो मुमुक्षुं प्रत्यनिष्टफलत्वाविशेषात्पुण्यमप्युपलक्षयतीति चेत् अश्लेषवाक्ये तावत्तदुपलक्षणता नोपपद्यते विषयाभावात् कस्य पुण्यस्योपलक्षणीयता वाच्या। न तावद्विद्याङ्गस्य नित्यस्य। तस्य विद्यार्थमाश्रमपरिपालनार्थं चावश्यानुष्ठेयत्वात्। नापि शरीरधारणाद्युपयुक्तस्य दृष्टारोग्यादि मुमुक्ष्वपेक्षितफलकस्य काम्यस्य विद्यानुष्ठानसिद्ध्यर्थं विद्याङ्गकर्मवदेव तेनाप्यनुष्ठेयत्वात् । नापि तदनपेक्षितफलकस्य काम्यस्य ऐहिकामुष्मिकफलविरक्तस्य मुमुक्षोर्बुद्धिपूर्वं तत्र प्रवृत्त्यसंभवात्। वासनाबलादबुद्धिपूर्वं तत्र प्रवृत्तिस्संभवतीति चेन्न। फलकामनयानुष्ठितस्यैव काम्यस्य फलपर्यवसायित्वेनाबुद्धिपूर्वानुष्ठानतः श्लेषाप्रसक्तेः । तस्मादश्लेषवाक्ये पापशब्दस्य पापमात्रपरत्वात् विनाशवाक्येऽपि तथात्वमेव युक्तम्। ननु 'तत्सुकृतदुष्कृते विधूनुते न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति विदुषः पापवत्पुण्यस्यापि विनाशः श्रूयते इति चेत् तयोर्वाक्ययोर्देहवियोगानन्तरभाविपुण्यपापविनाशविषयत्वेन जीवतस्तत्साक्षात्कारोदयसमये पापविनाशवत्पुण्यविनाशे प्रमाणाभावादिति भावः । अनिष्टफलत्वसाम्यादित्युपलक्षणम् । पापवत्पुण्यस्यापि पाशान्तर्गततया जीवज्ञानशक्त्याच्छादकत्वेन ब्रह्मसाक्षात्कारकाले पुण्याभावस्याप्यपेक्षितत्वादित्यपि द्रष्टव्यम् । अत एवा'पापकाशिनी'त्यत्र पापग्रहणं पुण्यस्याप्युपलक्षणमित्युक्तं भाष्ये। न चाश्लेषवचनस्य विषयाभावः। यस्य विद्याप्रतिबन्धकानि दुरितान्यल्पानि तन्निवृत्त्यर्थत्वेनानुष्ठितानि कर्माण्यधिकानि तस्य प्रारब्धसमाप्तिप्रतिबन्धकविघ्नाधिकसङ्ख्यानि मङ्गलानीव कानिचिदनुपयुक्तान्यवशिष्यन्ते। उपासकस्य वीतरागत्वेऽपि भ्रमात्तदभ्युदयेच्छया पुत्रादिभिरनुष्ठितानि तटाकप्रतिष्ठादीनि संभाव्यन्ते । एवंभूतानि कर्माण्यश्लेषवचनस्य विषया भविष्यन्तीति भावः । एवमश्लेषविषयासंभवशङ्कामूलपूर्वपक्षनिराकरणार्थत्वमधिकरणस्य द्योतयितुमेव विशिष्याश्लेषग्रहणं कृतम्। 'पातेत्वि'ति सूत्रांशं व्याचष्टे—विद्यानुगुणस्येति। आरोग्यबलादिफलानां विद्यार्थं यावच्छरीरधारणमपेक्षितत्वेन विद्याविनाश्यत्वाभावादिति भावः। तुरवधारणे। शरीरपात एव लय इत्यर्थः । नन्वारोग्याद्यर्थतया विद्याप्रतिबन्धकदुरितनिवर्तकतया चानुष्ठितं विद्यापेक्षितं यत्पुण्यं कर्म तस्य श्लेषोऽस्त्येवेति पुण्या-

पुण्यस्य शरीरपाते लयः। विद्याङ्गकर्मणस्तु काम्यफलादिसंबन्धाभावान्न श्लेषः। अतो विदुषः पुण्यलेपोऽपि नास्तीति निर्णयः॥ इति इतरासंश्लेषाधिकरणम्॥१०॥

## अथ अनारब्धकार्याधिकरणम् ॥ ११ ॥

## सू ॥ अनारब्धकार्य एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वत्र विदुषः पुण्यपापयोरुत्तरपूर्वयोरश्लेषविनाशौ निरूपितौ । इह प्रारब्धकार्ययोस्तयोः स्थितिरस्ति न वेति संशयः। 'सर्वे पाप्मानः प्रदूयन्ते' इत्यविशेषश्रवणात् विद्याऽधिकृतेः पूर्वत्वाविशेषेण तयोरपि विनाश इति प्राप्त उच्यते विद्याऽधिकृतेः पूर्वकृते पुण्यपापे फलदानायाप्रवृत्ते एव विनश्यतः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति शरीरपातावधिः श्रूयते। अतः प्रारब्धयोर्न विलयः॥ इति अनारब्धाधिकरणम्॥ ११॥

---

श्लेषवचनमेवमप्यनुपपन्नमित्याशङ्क्याह—विद्याङ्गकर्मणस्त्विति । विद्याविरोधिकाम्य-न्धरूप एव श्लेषो निषिद्ध इति भावः॥

इति इतरासंश्लेषाधिकरणम्॥ १०॥

## अथ अनारब्धकार्याधिकरणम् ॥ ११ ॥

सू० ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ विद्यया विनाशस्य केषुचित्पुण्यपापेष्वपवादप्रदर्शनार्थत्वेन सङ्गतिमाह—पूर्वत्रेति। 'सर्वे पाप्मान' इत्यविशेषश्रवणा'त्तस्य तावदेव चिर'मिति विलंबश्रवणाच्च संशयः। तयोरपि विनाश इति। देहधारणं तु विद्यानुगुणकर्मभिरेव भविष्यतीति देहधारणं विना विद्यानुष्ठानानुपत्तेरिति भावः। फलदानायाप्रवृत्ते एवेति । प्रवृत्तयोरपि विनाशे दुःखाद्यनुभवो न स्यात्। तस्य विद्यानपेक्षितत्वादिति भावः। यावन्न विमोक्ष्ये इति। यावत्प्रारब्धकर्मणा न विमोक्ष्यत इत्यर्थः॥

इति अनारब्धकार्याधिकरणम्॥ ११॥

---

### नयमणिमालायाम्

## अथ इतराश्लेषाधिकरणम् ॥ १० ॥

सू० ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

वृष्ट्यारोग्येन्द्रियगुणचित्तविशुद्ध्यादिजननेन । पुण्यं विद्यानुगुणौ नाशाश्लेषौ सततं ॥ ३४७॥

सत्तापि स्वर्गसुताद्युपासकानिष्टफलदस्य । श्लेषे नाशश्च स्यात्तनुपाते तत्तदनुगुणस्य ॥ ३४८॥

इति इतराश्लेषाधिकरणम् ॥ १० ॥

### नयमणिमालायाम्

## अथ अनारब्धकार्याधिकरणम् ॥ ११ ॥

सू० ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

प्रारब्धयोरपि यावन्नाशः स्यात्सुकृतदुष्कृतयोः। सर्वे पाप्मान इति ह्यविशेषेण श्रुतो नाशः॥ ३४९॥

न तदा तयोर्विनाशः शरीरपातावधिश्रवणात्। न हि कर्म विनाशे स्यात् तस्य क्षणमप्यवस्थानम्॥ ३५०॥

इति अनारब्धकार्याधिकरणम् ॥ ११ ॥

## अथ अग्निहोत्राद्यधिकरणम् ॥ १२ ॥

### सू ॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

**पूर्वत्र विदुषः पुण्यपापाश्लेषविनाशौ निरूपितौ । यावदायुषमुपासनावृत्तिरप्युपपादिता । इह पुनरग्निहोत्राद्यनुष्ठानमपि यावच्छरीरपातमनुवर्तते उत मध्ये**

## अथ अग्निहोत्राद्यधिकरणम् ॥ १२ ॥

**सू० अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥** अग्निहोत्रादिकं विद्यासहकारित्वेन साक्षात्कारोदयपर्यन्तमेवानुष्ठेयमुत विद्यावदाप्रायणमिति, साक्षात्कारोदयानन्तरमनुपयोगाश्लेषापत्तिभ्यामुपयोगाश्लेषानापत्तिभ्यां च संशयः । कर्मणां विद्यास्वरूपोपकारित्वेन हि तदङ्गत्वमिष्यते न त्वनूयाजादिवदारादुपकारकत्वेन येन प्रधानस्वरूपनिष्पत्त्यनन्तरमपि तदनुष्ठानं शक्येत । अतो दृढविद्यायास्साक्षात्कारपर्यन्ताया निष्पत्तौ न तदनुष्ठेयमनपेक्षितफलत्वात्कृतस्याप्यश्लेषापत्तेः । न चाप्रायणमहरहरविच्छेदेन विद्यानुवृत्तिसिद्धये अग्निहोत्रादिकमनुष्ठेयमिति वाच्यम् । कर्मण इव विद्याया अप्यनुतिष्ठासामात्रेणाविच्छिन्नानुवृत्तिसिद्धेः । न च विद्यानुवृत्तिप्रतिबन्धकदुरितनिवृत्त्यर्थं तदनुष्ठानम् । साक्षात्कारोदयप्राचीनदुरितानां विद्यया विनष्टत्वात्तदनन्तरं प्रामादिकदुरितसंभवेऽपि तदश्लेषात् विरक्तस्य बुद्धिपूर्वकपापाचरणाप्रसक्तेः कथंचित्संभवे तन्निवृत्त्यर्थं वैशेषिकस्य प्रायश्चित्तस्यानुष्ठेयत्वात् । प्रारब्धकर्मविशेषस्यैव कस्यचिद्विद्यानुवृत्तिप्रतिबन्धकत्वे पूर्वाधिकरणन्यायेन विद्ययाप्यनिवर्तनीयस्य तस्याग्निहोत्रादिना निवृत्त्यसंभवात् । न च नित्यस्याग्निहोत्रादेर्बुद्धिपूर्वकं परित्यागे प्रत्यवायः स्यात् । प्रत्यवायदूषितान्तःकरणस्य च विद्यानुवृत्तिर्न सिद्ध्येदिति वाच्यम् । तावता नित्यत्वेनाश्रमधर्मानुष्ठानसिद्धावपि विद्याङ्गत्वेन तदनुष्ठानासिद्धेः । तथापि श्रुतिबलाद्विद्याङ्गत्वेनाप्रायणं कर्मानुष्ठानमिति चेत्का श्रुतिः। नताव'द्विविदिषन्ति यज्ञेने'त्यादिका । तस्याः विद्याप्रारंभात्प्राग्विद्याङ्गत्वेनाश्रमधर्मानुष्ठानविषयत्वस्य 'विहितत्वाच्चाश्रमकर्मापी' ( ब्र० ३-४-८-३२) त्यधिकरणे दर्शितत्वात् नापि 'विद्याञ्चाविद्याञ्चे'ति श्रुतिः । तस्याः फलपर्यालोचनया साक्षात्कारोदयात्प्राग्विद्यासहकारित्वेन कर्मानुष्ठानविषयत्वात् । विद्यानुवृत्तिप्रतिबन्धकदुरितनिवृत्त्यर्थं हि तदनुष्ठानम् । 'अविद्यया मृत्युं तीर्त्वे'ति वाक्यशेषात् । तत्प्रतिबन्धकं चाग्निहोत्रादिना निवर्तयितुं शक्यं दुरितं साक्षात्कारोदयात्प्रागेव संभवति न तु तदनन्तरमपीत्युक्तम् । नापि 'स खल्वेवं वर्तयन्नि'ति श्रुतिः । तस्यास्साक्षात्कारोदयानन्तरमपि नित्यत्वेन कर्मानुष्ठेयं न त्वनुपयोगधिया त्यक्तव्यम् । तत्त्यागे प्रत्यवायदूषितचित्तस्य विद्यानुवृत्त्यसंभवादित्येव फलपर्यालोचनया तात्पर्यकल्पनौचित्यात् । एतेन 'क्रियावानेष ब्रह्मविदां वरिष्ठ' इत्यादिश्रुतयोऽपि व्याख्याताः । तस्मात्साक्षात्कारोदयानन्तरं विद्यासहकारित्वेन कर्म नानुष्ठेयम् । अनुष्ठानेऽपि पूर्वाधिकरणे काम्यसुकृतानामश्लेषस्य समर्थितत्वेन तद्वदग्निहोत्रादिसुकृतस्याप्यश्लेषापत्तेश्चेति पूर्वः पक्षः । सिद्धान्तस्तु साक्षात्कारोदयानन्तरमप्यग्निहोत्रादिकं तावदनुष्ठेयमेव । नित्यत्वात्तदनुष्ठानं च विद्याख्यकार्यायैव भवति । अन्यथा प्रत्यवायदूषितान्तःकरणस्य विद्यानिष्ठायाः प्रच्युतिप्रसङ्गादिति पूर्वपक्षिणोऽपि संमतमेतत् । तथा

विच्छिद्यत इति विचारः । किं प्राप्तम्? अग्निहोत्रादिकमाप्रायणं नानुष्ठेयम् । क्रियमाणेऽपि विनाशाभ्युपगमात् । अप्रयोजने कस्य मनः प्रवर्तेत इति ॥ एवं प्राप्ते ब्रूमः । अग्निहोत्रादिकमाप्रायणमनुष्ठेयं विद्याकार्यायैव । तथा हि दृश्यते 'त-

---

विद्यासहकारित्वेनाप्याप्रायणं तदनुष्ठेयम् । 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳ सहे'ति विद्यातत्सहकारिकर्मणोः साहित्यनियमश्रुतेः कालविशेषे सङ्कोचकल्पनानौचित्यात् । न च कर्मजन्योपकारपर्यालोचनया संकोचकल्पनम् । उपदेशे हि श्रुतपदार्थविध्यनुसारेणोपकारकल्पनमुचितं न त्वतिदेशइवोपकारानुसारेण पदार्थव्यवस्थापनम् । तद्यदि 'धर्मेण पापमपनुदती' तिश्रुत्यवगतकारणान्तरप्रभवदुरितनिवृत्तिरूप उपकारः साक्षात्कारोदयानन्तरमग्निहोत्रादेर्न संभवति तथापि यावद्विद्यानुवृत्त्यनुष्ठेयत्वेन विहितस्य विद्यासहकारिणस्तस्य मध्ये बुद्धिपूर्वं विच्छेदे सत्ययथाशास्त्रमनुष्ठानतः प्रत्यवायेन चित्तदूषणे सति विद्यानुवृत्तिर्न स्यादिति तदर्थमेवाप्रायणं तदिति कल्प्यते । प्रारब्धकाम्यकर्मणः पुरुषस्य मध्ये फललाभेन वीतायामपि हि फलेच्छायां न केवलं प्रत्यवायपरिहाराय समापनमावश्यकमिति व्यवस्थापितं 'प्रक्रमात्तु नियम्येते'ति पूर्वतन्त्राधिकरणे । इहार्थावशिष्टे फले यावद्वृत्त्यनुष्ठेयत्वेन चोदितं विद्यासहकारिकर्म कथं मध्ये त्यक्तव्यम् । न हि जीवद्दशायामुपास्य साक्षात्कारोदयमात्रेण चारितार्थ्यं किन्त्वन्तिमप्रत्ययोऽप्यपेक्षितः । ततश्च प्रारब्धकर्माधीनेन प्रबलव्याध्यादिकृतचित्तक्षोभेण शिवभावनानुवृत्त्यभावेऽन्तिमप्रत्ययो न सिध्येदिति तदनुवृत्तिसिद्ध्यर्थमाप्रायणं विद्यासहकारि कर्मेति कल्प्यते । फलबलाच्च तस्य प्रारब्धादपि प्राबल्यं कल्प्यते । सन्ति हि प्रारब्धादपि प्रबलानि कर्माणि यथा कर्मविपाकशास्त्रचोदितानि, तथोत्पन्नसाक्षात्कारस्यापि प्रारब्धकर्मोपनीतेन तात्कालिकमोहेन कदाचिद्बुद्धिपूर्वकं निषिद्धकर्मानुष्ठानं प्रसज्यते । अन्यथा प्रसक्त्यभावेन 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसं वापि प्रज्ञानेनैनमाप्नुया'दिति शास्त्राप्रवृत्तिप्रसङ्गात् । ततश्च, विद्यासहकारित्वेनानुष्ठीयमानमग्निहोत्रादिकं प्रारब्धकर्मणोऽपि प्रबलं सत्तदधीनां निषिद्धकर्मानुष्ठानरुचिं प्रतिबध्नातीति कल्प्यते । यत्र विद्यासहकारिकर्मापेक्षयापि निषिद्धानुष्ठानप्रवर्तकं प्रारब्धं प्रबलं तत्र तदधीने बुद्धिपूर्वकं कदाचित्प्रमादिके निषिद्धानुष्ठाने सत्यबुद्धिपूर्वकस्येव तस्याश्लेषासंभवात्तद्विषयम् । 'अपि चेत्पातकं किंचिद्योगी कुर्यात्प्रमादतः । योगमेव निषेवेत नान्यं यज्ञं समाचरे'दिति तन्निवृत्त्युद्देशेन योगानुष्ठानमुपपद्यते । अपि च विद्याधीनेऽस्त्युपास्यसाक्षात्कारे रविचन्द्रारुणकिरणादिप्रकाशितघटादिसाक्षात्कारइव स्पष्टास्पष्टत्वतारतम्यम् । तत्र जीवद्दशायां प्रथमोत्पन्न उपास्यसाक्षात्कारोऽस्पष्टः । तदनन्तरं विद्यासहकार्यग्निहोत्रादिबलतारतम्येन स्पष्टः । अन्तिमप्रत्ययस्त्वतिस्पष्टः प्रलयप्रदानसमर्थो जायत इति कल्प्यते । तदेतत्सर्वमभिप्रेत्याह भाष्यकारः । 'अग्निहोत्रादिकमाप्रायणमनुष्ठेयं विद्याकार्यायैवेति । आद्यपक्षे विद्यारूपाय कार्यायेत्यर्थः । तृतीयपक्षे विद्यायाः कार्यायेति । एवं समासद्वयेनाग्निहोत्रादेर्विद्यातत्फलोपकारकत्वमभिप्रेत्यैव सूत्रे 'तत्कार्याये'ति निर्देशः । केवलविद्यार्थत्वविवक्षायां तु कार्यपदं न प्रायोक्ष्येत । न चैवं सति विद्यासहकारिकर्मणां विद्यायाः फलोपकार्यङ्गत्वं स्वरूपोपकार्यङ्गत्वं च । स्वरूपोपकार्यङ्गत्वमपि कारणान्तरप्रभवदुरितनिवृत्तिद्वारकं स्याननुष्ठानप्रयुक्तप्रत्यवा-

मेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'त्यादि।

यकार्यचित्तदोषप्रतिबन्धद्वारकं व्याध्यादिकृतचित्तक्षोभप्रतिबन्धद्वारकं निषिद्धरुचिप्रतिब-न्धद्वारकं चेति वैरूप्यं स्यादितिवाच्यम्।पदार्थशक्त्यनुसारेणोपकारभेदकल्पनस्यादोषत्वात्। अस्ति हि स्विष्टकृतस्त्यागांशेन दर्शपूर्णमासयोरारादुपकारकत्वं मन्त्रद्वारेष्टदेवतास्मरणेन सन्निपत्योपकारकत्वं प्रक्षेपांशेन द्रव्यप्रतिपत्त्यर्थतया च सन्निपत्योपकारकत्वमिति वैरू-प्यम्। तस्माद्युक्तं विद्यासहकारिकर्मणामाप्रायणमनुष्ठानम् । 'तद्दर्शना'दिति सूत्रावयवं व्याचष्टे—तथाहीति । यद्यप्यत्र 'विद्याञ्चाविद्याञ्चे'ति श्रुतिरुदाहर्तव्या । यज्ञादीनां विद्यासहकारितायां 'विहितत्वा'दित्यधिकरणे तस्याः प्रमाणीकृतत्वात् 'यज्ञेने'त्यादिश्रुते-र्विद्यारंभात्प्राग्विद्यासिद्ध्यर्थतया यज्ञादीनामनुष्ठेयत्वे प्रमाणीकृतत्वात् । तथापि यज्ञा-दिश्रुतिस्सामान्यतो वेदनोद्देशेन यज्ञादीन्विदधती विद्यारंभात्प्राग्विद्यारंभप्रभृति साक्षा-त्कारोदयानन्तरं चानुष्ठानेष्वविशेषेण प्रमाणं भवितुमर्हति । सर्वत्राप्युपासनरूपस्य साक्षा-त्काररूपस्य वा वेदनस्य फलत्वाविशेषात् न तु सहश्रुतिरिव क्वचिद्व्यवतिष्ठते इत्यभि-प्रेत्य यज्ञादिश्रुतिरिहोदाहृता । अत एव सूत्रकृतापि सर्वापेक्षाधिकरणे सोदाहृता । न च विद्यारंभप्राचीनानुष्ठानविषयं तदधिकरणम्। 'शमदमाद्युपेतः स्यात्तथापि त्वि'त्युत्तरसूत्रा-लोचनया शमाद्यनुष्ठानसमानकालत्वावगमात् शमादीनां च चित्तैकाग्र्यार्थं विद्यारंभ-प्रभृत्येवावश्यानुष्ठेयत्वात् । अत्र वेदानुवचनमिति यद्यपि यज्ञादिवाक्ये वेदानुवचन-ग्रहणं ब्रह्मचर्याश्रमधर्मोपलक्षणमभिप्रेत्य 'विहितत्वाच्चाश्रमकर्मापी'त्याश्रमधर्मरूपत्वं सर्वा-पेक्षाधिकरणे प्रकृतस्य यज्ञादिवाक्यनिर्दिष्टकर्मजातस्योक्तम् । तथाप्येवमपि व्याख्यातुं शक्यत इत्यभिप्रायेण वा 'वेदानुवचनेन तपसा ब्रह्मचर्येणात्मानमन्विष्ये'ति वाक्यान्तर-गतवेदानुवचनशब्दव्याख्यानफलतया कृत्वाचिन्तयावेत्थं व्याख्यातम् । उत्तरसूत्रमव-तारयितुमाशङ्कते—नन्विति । द्विविधा साधुकृत्या विद्यारंभात्प्राचीना तदन्तरभाविनी च। प्राचीनापि द्विविधा भुक्तफला अभुक्तफला च । अभुक्तफलापि द्विविधा सङ्कीर्त-नादिना विनष्टा चाविनष्टा च। अविनष्टापि द्विविधा प्रारब्धफला चाप्रारब्धफला च। तत्र प्राचीनासु न काचिदपि 'सुहृदस्साधुकृत्या'मित्यस्य विषयः । भुक्तफलायास्सङ्कीर्तना-दिहतायाश्चासत्त्वात्प्रारब्धफलाया विदुषैव भोग्यत्वात् । अप्रारब्धफलाया विद्याया विना-शात् विद्यारंभानन्तरभाविनी त्वग्निहोत्रादिरूपैव । सा चेद्विद्योत्पत्त्यर्थत्वेन विद्वदुपयुक्ता तदा 'सुहृदस्साधुकृत्या'मित्यस्य विषय एव नास्तीति शङ्कार्थः । ननु 'द्विषन्तः पापकृ-त्या'मित्यस्य कं विषयं दृष्ट्वा 'सुहृदस्साधुकृत्या'मित्येतावन्मात्रस्य निर्विषयत्वमाशंक्यते । विद्योत्पत्त्यनन्तरभाविनी पापकृत्या तस्य विषयः स्यादितिचेत् । न । तस्या अप्यश्लेषव-चनेनासत्त्वावगमात् । नहि देहवियोगकाले विरजानद्यतिक्रमणकालानन्तरकाले वा द्विष-द्गामिनी भवित्री सा तावत्पर्यन्तं निराधारा स्थास्यति । अश्लेषवचनस्य विदुषि फलाजन-कत्वमात्रमर्थ इति चेत् तर्हि पूर्वसाधुकृत्याया विनाशवचनमपि तस्मिन्फलाजनकत्वमा-त्रपरमिति सैव 'सुहृदस्साधुकृत्या'मित्यस्य विषयो भवेत् । किंचैवंसति विद्योत्पत्त्यनन्तरं यस्यास्साधुकृत्याया अश्लेषः सापि विषयो भवेत् । विदुषानुष्ठीयमानानामग्निहोत्रादीनां विद्यार्थत्वाभ्युपगमे कस्याश्चिदप्यसाधुकृत्याया अश्लेषो न संभवतीति चेत् न । 'इतरस्या-

अत्र वेदानुवचनं वेदाभ्यासः। परमेश्वरप्राप्तिसाधनपरमज्ञानहेतूनामध्यात्मवादिनां वेदमन्त्राणां जपावृत्तिः। तथा जाबालोपनिषदि। 'अथ हैवं ब्रह्मचारिण ऊचुः, भगवन् किंजप्येनामृतत्वं ब्रूहीति। स होवाच याज्ञवल्क्यः शतरुद्रीयेणेति। एतानि ह वा अमृतस्य नामधेयानि एतैर्हवा अमृतो भवति' इति। कैवल्योपनिषदि। 'यः शतरुद्रीयं ब्राह्मणो नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति सुरापानात् पूतो भवति ब्रह्महत्यायाः पूतो भवति अत्याश्रमी सर्वदा सकृद्वा जपेत् परमं ज्ञानमाप्नोति संसारार्णवनाशनम्' इति। इह शतरुद्रीयसंज्ञानां ब्रह्मबोधकानां मन्त्राणामभ्यासात् संसारनाशनस्य परमज्ञानस्य प्राप्तिः, तद्विरोधिपापक्षयश्चावगम्यते। 'एतानि ह वा अमृतस्य नामधेयानि' इत्यमृतस्यानादिमुक्तस्य शिवस्य नामधेयत्वाद्धेतोः शतरुद्रीयजपात् सकलपापक्षयादिप्रतिपादनात् परमेश्वरस्य शिवादिनामधेयानामभ्यासोऽपि विद्याविरोधिसकलपापक्षयहेतुरवगम्यते। तथैव मुण्डकोपनिषदि श्रूयते। 'अपि वा यश्चाण्डालः शिव इति वाचं वदेत् तेन सह संवदेत् तेन सह संवसेत् तेन सह ' इति। अत्र हि शिवशब्दस्य ब्रह्मबोधकस्य समुच्चारणमात्रेणात्यन्ताविशुद्धस्य पातकिनः परमविशुद्धिप्राप्तिरवगम्यत इति। अन्यत्र च 'योऽथर्वशिरसं ब्राह्मणो नित्यमधीत' इत्यारभ्य तदभ्यासिनः सकलपापक्षयमुक्त्वा 'सकृज्जप्त्वा शुचिः पूतः कर्मण्यो भवति द्वितीयं जप्त्वा गाणपत्यमाप्नोति तृतीयं जप्त्वा देवमेवानुप्रविशति' इति मोक्षफलं प्रतिपाद्यते। 'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्' इत्यादिषु च प्रणवाद्यभ्यासस्य पाशविच्छेदहेतुत्वमुच्यते। एवमन्यत्रापि द्रष्टव्यम्। अतः परमेश्वरपराणां वेदमन्त्राणां पापक्षयद्वारा परमज्ञानहेतुत्वेन मोक्षसाधनत्वावगमात् तदभ्यासः कर्तव्यो विद्यावताऽपि यावज्जीवम्। एवमग्निहोत्रादीनामपि यज्ञानां परमेश्वरसमर्पितफलानां तदाज्ञासिद्धत्वात् तदाराधनरूपत्वाच्चाभ्यासः कार्यः। एवं दानादीनामपि। तस्माद्विदुषाऽपि विद्यानिष्पत्तिकार्यायाग्निहोत्रादिकमनुष्ठेयमिति। कर्मतपोजपध्यानज्ञानरूपमीश्वरोपासनम्। कर्माग्निहोत्रादिकम्, तपो नियमः, कायशोषणं वा, जपः पूर्वोक्तप्रणवाद्यभ्यासः, एतेषां पापशोषणद्वारा मोक्षहेतुत्वम्। ज्ञानध्यानयोस्तु साक्षात्,

---

प्येवमश्लेष' इत्यधि (ब्र० ४ पा० १ सू० १४) करणे तद्विषयस्य समर्थितत्वात्। यदि साधुकृत्याया अश्लेषविनशावुपासकंप्रति तस्यां फलजननार्हतानुत्पत्तिनिवृत्तिरूपावित्यभ्युपगम्य विद्योत्पत्त्यनन्तरभाविन्यास्तत्प्राचीनायाश्च साधुकृत्यायास्सुहृद्गामित्ववचनविषयता समर्थयितुं न शक्यते। 'तस्य पुत्रा दायमुपयन्ती'ति दृष्टान्तानुसारेण यावद्देहधारणमुपासकं प्रति फलजननार्हतयैव स्थितायां साधुकृत्यायां देहवियोगकाले तन्निवृत्तिपूर्वकं सुहृदः प्रतिफलजननार्हताविर्भावप्रतीतेरिति। एवं तद्युक्तरूपेण द्विविधायाः पापकृत्याया अपि द्विषद्गामित्ववचनविषयता समर्थयितुं न शक्यते। तादात्विकपितृसंबन्धनिवृत्तिपूर्वकदायसङ्क्रमणदृष्टान्तस्य तत्राप्यन्वयादिति तुल्यम्। यदितु पापकृत्यायामशेषविनाशशब्दयोरन्यथार्थौ वर्ण्येत विदुषि जायमानायां पापकृत्यायामाविर्भवन्तीं तं प्रति फलजननार्ह-

ब्रह्मस्वरूपापत्तिहेतुत्वात् । अतः सर्वेषामेषामनुष्ठानं कार्यम् । ननु यद्यग्निहोत्रादि-साधुकृत्या विद्योत्पत्त्यर्था । तदन्या च पूर्वकृता साधुकृत्या विद्याप्रारम्भे सति विनष्टा । तर्हि 'सुहृदः साधुकृत्याम्' इत्यस्य को विषय इत्याशङ्क्याह—

सू ॥ अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥

'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्येकेषां शाट्यायनशाखिनां वचनस्य विद्यानिष्पत्त्यर्थाग्निहोत्रादिसाधुकृत्याया अन्या प्रबलकर्मान्तरप्रतिबद्धफला विद्याऽनुगुणान्नारोग्यचित्तशुद्ध्यादिजननयोग्यतया

तामस्य देहवियोगकले निवर्तयिष्यामीति परमेश्वरस्सङ्कल्पयति स तस्या अश्लेषः । एवं साक्षात्कारोदयकाले तत्प्राचीनपापकृत्यायाः प्रागारभ्यसतीं तत्प्रतिफलजननार्हतामप्यस्य निवर्तयिष्यामीति सङ्कल्पयति स तस्याविनाश इति । एवं तर्हि साधुकृत्यायामप्यश्लेषवि-नाशशब्दयोरेवमेवार्थौ भवेदिति द्विषद्भामित्ववचनवत्सुहृद्भामित्ववचनस्यापि विषयलाभ-स्तुल्यः । तस्माद्वक्तव्यमिदं सुहृद्भामित्ववचनस्यैव विशिष्य विषयप्रश्नस्य कोऽभिप्राय इति । अपि च द्विषद्भामित्ववचनस्यैवात्र विषयः प्रष्टुं युक्तः । सुहृद्भामित्ववचनस्य तु विषयः प्रागे-वोक्तः पातेत्विति । स एव विषयोऽनेनापि सूत्रेण प्रदर्शयिष्यते । उच्यते अयमभिप्रायो भा-ष्यकारस्य । दुष्कृतं द्विविधं विद्यारंभात्प्राचीनं तदनन्तरभावि च । तत्राद्यं दत्तफलकृतप्राय-श्चित्तप्रारब्धव्यतिरिक्तं सर्वं विद्यया विनाश्यम् द्वितीयं द्विविधं बुद्धिपूर्वमबुद्धिपूर्वं च । बुद्धि-पूर्वमपि द्विविधम् । 'अथ ये मानुषा लोके स्वेच्छाविधृतविग्रहाः । भावातिशयसंपन्नाः पूर्व-संस्कारसंयुताः । विरक्ता वानुरक्ता वा स्त्रियादिविषयेष्वपि । पापैर्न ते विलिप्यन्ते पद्मप-त्रमिवांभसा । तेषां मदात्मविज्ञानविशुद्धानां विवेकिनाम् । मत्प्रसादाद्विशुद्धानां दुःखमा-श्रमरक्षणम् । नास्ति कृत्यमकृत्यं च समाधिर्वा परायणम् । न विधिर्न निषेधश्च तेषां मम यथा-तथे'त्यादिशिवभूतप्राशस्त्यवादप्रतीतार्थपरिग्रहेण वैराग्यात्प्रच्युतैर्यथाकाममिह भोगान्भु-क्त्वान्ते शाश्वतं शिवपदमपि प्राप्स्याम इति धिया, विद्यायामपि निष्ठावद्भिः शश्वदासेव्य-मानमेकं कदाचिदनादिदृढवासनाशेषोन्मेषाज्जायमानं प्रामादिकमपरम् । तत्राद्यमशेषवच-नस्य विषयः । द्वितीयं नाविरतो दुश्चरितादिति वचनस्य । तृतीयस्य महाफलार्थमाप्रायणं सर्वविषयवैमुख्येन विद्यानुष्ठाने प्रवृत्तः परमास्तिको योगी यथोक्तं प्रायश्चित्तं कुर्यादेव । यद्य-नुशयानस्यापि तस्य प्रारब्धसमाप्तिकालोपनिपातात्प्रायश्चित्तावसरो न भवेत्तदा, तद्दुष्कृ-तमवशिष्यत इति तद्द्विषद्भामित्ववचनस्य विषयः । नैवं सुहृद्भामित्ववचनस्य विषयत्वयोग्यं प्रारब्धसमाप्तिकालेऽवशिष्यमाणं किंचित्सुकृतं संभवति । न च 'पाते त्वि'ति सूत्रोक्तमा-रोग्यादिफलकतया विद्यानुगुणं सुकृतमस्य विषयः स्यादिति वाच्यम् । अग्निहोत्रादिक-र्मणां विद्यासंपादनेनेवारोग्यादिफलककर्मणामपि विद्योपयोग्यारोग्यसंपादनेन चरितार्थत-यावशेषायोगादिति । एवं प्रागुक्ताक्षेपेण प्रवृत्तायां शङ्कायामिदं सूत्रम् । सू० ॥ अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ विद्यारंभात्प्राक्पश्चाच्चान्नारोग्यचित्तशुद्ध्यादिजननयोग्यतया वि-द्यानुगुणफलानि यानि कर्माणि तानि न विद्यामाहात्म्याद्विनश्यन्ति न श्लिष्यन्ति वा । तानि द्विविधानि प्रबलकर्मान्तरप्रतिबद्धानि तदप्रतिबद्धानि च । तत्राप्रतिबद्धानि स्वस्व-फलं दत्त्वा नश्यन्तीति नावशिष्यन्ते । यानि तु प्रतिबद्धफलानि तानि सुहृद्भामित्वव-

विद्याऽनुगुणफलत्वात् विद्ययाऽप्यविनष्टा । पूर्वोत्तरयोरुभयोरपि कर्मराश्योरस्स विषयः ॥

सू ॥ यदेव विद्ययेति हि ॥ १८ ॥

'यदेव विद्यया करोति' इत्यत्र कर्मफलाप्रतिबन्धस्योद्गीथविद्याफलत्वोक्त्या प्रबलकर्मान्तरेणान्यकर्मणां फलप्रतिबन्धसद्भावोऽवगम्यते । अतो विद्यानुगुणकर्मणां फलप्रतिबन्धोच्छेदायाप्यग्निहोत्रादिकमनुष्ठेयमिति भावः ॥

इति अग्निहोत्राद्यधिकरणम् ॥ १२ ॥

अथ इतरक्षपणाधिकरणम् ॥ १३ ॥

सू ॥ भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥

इह विद्यावतामधिकारपदे स्थितानां तद्व्यतिरेकेण मुक्तिफलमस्ति न वेति चिन्तायां प्रारब्धभोगाय बहुजन्मस्वीकारे पूर्वविद्यायां लुप्तायां यत् कर्म क्रियते, तदपि फलभोगहेतुर्भवति । अतो जन्मपरम्परायाः संभवान्न तेषां

---

चनस्य विषय इति भावः । प्रबलकर्मान्तरप्रतिबन्धसंभवे प्रमाणप्रदर्शनार्थं । सूत्रम् । सू० ॥ यदेव विद्ययेति हि ॥ १८ ॥ प्रतिबन्धसद्भावोऽवगम्यत इति । ननु संभवतु प्रतिबन्धकं कर्म तद्विद्याननुगुणत्वात्प्राचीनं नश्यत्युत्तरं न श्लिष्यतीति न । तेन प्रतिबन्धसंभव इति चेत् न । प्रारब्धस्यैव कस्यचित्प्रतिबन्धकत्वसंभवादिति भावः । अतो विद्यानुगुणकर्मणामिति । विद्यासहकारितया यदग्निहोत्रादिकमनुष्ठीयते तस्य शक्यप्रतिबन्धोच्छेदोऽपि फलमित्याशयः ॥

इति अग्निहोत्राद्यधिकरणम् ॥ १२ ॥

अथ इतरक्षपणाधिकरणम् ॥ १३ ॥

सू० ॥ भोगेन त्वितरे क्षपयित्वाथ संपद्यते ॥ १९ ॥ एवं विदुषामाप्रायणं निरन्तरं परमप्रियशिवचिन्तारूपं तदानुषङ्गिकं पापक्षयरूपं चैहिकं फलं चिन्तितम् । अथ तदुपरितनीं फलपरंपरामुत्तरपादैश्चिन्तयितुं विदुषां तत्प्राप्तिनियमोऽनेनाधिकरणेन व्यवस्थाप्यते । विद्यायोनिशरीरावसानं येषां प्रारब्धं तेषां विद्याफलप्राप्तिरस्तु नाम । येषामाधिकारिकाणामन्येषां वानेकशरीरानुयायिप्रारब्धं न तेषां तत्प्राप्तिस्संभवति । जन्मान्तरस्य पूर्वसंस्कारप्रमोषापादकतया विद्याविहीनैस्तैश्शरीरान्तरे क्रियमाणकर्मणां बन्धहेतुत्वेन ततो जन्मपरंपराया एव प्राप्तिः । न च तेषां जन्मान्तरसंस्कारप्रमोषहेतुर्न भवतीति कल्पनीयम् । दृष्टनियमसङ्कोचकल्पनाकारणाभावात् । न च यावन्न विमोक्ष्य इति

---

नयमणिमालायाम्

अथ अग्निहोत्राद्यधिकरणम् ॥ १२ ॥

सू० ॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥ यदेव विद्ययेति हि ॥ १८ ॥

विद्यानुष्ठानवता कर्तव्यं चाग्निहोत्रादि । सुकृतत्वेन कृतस्याप्यश्लेषस्यापि शिष्टत्वात् ॥ ३५१ ॥
कर्तव्य एव सर्वोऽप्याश्रमधर्मोऽग्निहोत्रादि । तस्याश्लेषाभावाद्यः खलु विद्याफलायैव ॥ ३५२ ॥

इति अग्निहोत्राद्यधिकरणम् ॥ १२ ॥

मुक्तिः। इति प्राप्ते ब्रूमः। प्रारब्धकर्म स्वफलं भोजयितृ केवलम्। न तु तेषां पूर्वार्जितविद्यालोपहेतुः, अतस्तेषां मुक्तिरेव। न जन्मपरम्परा, कारणाभावात् सुषुप्तिव्यवधानवत् जन्ममरणव्यवधानं न तेषां विद्यालोपहेतुरिति ॥

इति इतरक्षपणाधिकरणम् ॥ १३ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

---

प्रारब्धकर्मविमोक्षावधिश्रवणात्तथा कल्पनं तस्य शरीरविमोक्षावधिपरत्वात् 'धूत्वा शरीर'मिति श्रुत्यन्तरदर्शनात्। न च तत्र शरीरग्रहणं प्रारब्धकार्ययावच्छरीरपरमेकवचनश्रवणात्। तदविवक्षाकल्पने प्रमाणाभावात्। 'अस्माच्छरीरात्समुत्थाये'ति श्रुत्यन्तरेऽस्मादिति विशेषणेन विद्यायोनिशरीरस्यैव विवक्षितत्वाच्च। अन्यथा तद्वैयर्थ्यात्। तथा च येषामनेकशरीरानुयायिप्रारब्धानां विद्यायोनिशरीरावसाने मुक्तिर्न भवति तेषां तया विद्यया मुक्तिर्न संभवत्येव। तथाच प्रारब्धस्यानेकशरीरानुयायित्वशङ्कया कस्यापि विद्यानुष्ठाने प्रवृत्तिश्च न संभवतीति पूर्वः पक्षः। सिद्धान्तस्तु मुक्त्यर्थविद्यानुष्ठानप्रतिपादकबहुशास्त्रप्रामाण्यात् 'तस्य तावदेवे'ति विवक्षितावध्यवसाने मुक्त्यवश्यंभावप्रतिपादनावधारणप्रामाण्याच्च 'यावन्न विमोक्ष्ये'इत्यस्य प्रारब्धकर्मावधिपरत्वं 'धूत्वा शरीर'मित्यत्र 'अस्माच्छरीरा'दित्यत्रच शरीरवदस्य प्रारब्धकार्यशरीरसामान्यपरत्वम्। अस्मादिति विशेषणस्य 'अस्थिस्थूणं स्नायुबन्धं मांसशोणितलेपनम्। चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः। जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यं च भूतावासमिमं त्यजे'दिति स्मृतिप्रसिद्धत्याज्यत्वहेत्वनुभवसिद्धहेयत्वप्रदर्शनार्थत्वं च विदुषां जन्मान्तरस्य स्मृतिप्रमोषानापादकत्वं च कल्पनीयम्। अतो विद्यया फलप्राप्तिर्नियतैवेति ॥

इति इतरक्षपणाधिकरणम् ॥ १३ ॥

इति श्रीशिवातिवादिमूर्द्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालकहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीभरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ श्रीकण्ठशिवाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकाख्यायां व्याख्यायां चतुर्थस्याध्यायस्य
प्रथमः पादः ॥ ४ ॥ १ ॥

---

नयमणिमालायाम्

अथ इतरक्षपणाधिकरणम् ॥ १३ ॥

सू० ॥ भोगेन त्वितरे क्षपयित्वाथ संपद्यते ॥ १९ ॥

विदुषामधिकारपदे स्थित्वा बहुजन्मभोगजुषाम्। बहुजन्मपरंपरया विद्यालोपान्न मुक्तिः स्यात् ॥ ३५३ ॥
मरणेन व्यवधानं न भवति तेषां सुषुप्त्येव। विद्याप्रमोषहेतुस्तस्मान्मुक्तिर्भवेन्नियता ॥ ३५४ ॥

इति इतरक्षपणाधिकरणम् ॥ १३ ॥

इति श्रीमदप्पय्यदीक्षितकृतौ अधिकरणसारसङ्ग्रहे नयमणिमालायां
तृतीयपरिच्छेदे चतुर्थस्याध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

॥ श्रीः ॥

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

### अथ वाक्सम्पत्त्यधिकरणम् ॥ १ ॥

### सू ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

### सू ॥ अत एव च सर्वाण्यनु ॥ २ ॥

पूर्वमुपासकस्योपासनव्यवस्थानादिकमुक्तम् । इह पादेऽस्य शरीरादुत्क्रान्तिर्निरूप्यते । 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणः तेजः परस्यां देवतायाम्' इति श्रुतौ प्रयतो वागादीनां मनसि लयोऽवगम्यते । अयमुपपन्नो न वेति संशयः । किं प्राप्तम् ? कार्यस्य ह्युपादाने लयः । मृद्धटादौ व्याप्तिदर्शनात् । वागादीनां ब्रह्मोपादानं न मनः, अतोऽस्मिन्नेव

## शिवार्कमणिदीपिकायाम्

## अथ तुरीयस्याध्यायस्य द्वितीयः पादः ॥

### अथ वाक्सम्पत्त्यधिकरणम् ॥ १ ॥

अध्यायादौ पादचतुष्टयार्थानुक्रमणेन सूचितां वृत्तवर्त्तिष्यमाणयोः पादयोः सङ्गतिं स्मारयति—पूर्वत्रेति । उपासनाव्यवस्था आवृत्त्यादिरूपा । आदिशब्देनासननियमादिकं गृह्यते । अस्य शरीरादुत्क्रान्तिरिति । उपासकेन हि स्वोत्क्रान्तिप्रकारोऽपि चिन्तनीयः । उत्क्रान्तेर्गत्युपक्रमत्वात् 'नैते सृती पार्थ जानन्योगी मुह्यति कश्चने'ति स्मृत्यां 'तच्छेषगत्यनुस्मृतियोगाच्चे'ति सूत्रेण च उपासनाकाले गतेरप्यनुस्मरणीयत्वप्रतिपादनात् । अतस्तदर्थमुत्क्रान्तिप्रकारो निरूप्यत इति भावः । सू० ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अत एव च सर्वाण्यनु ॥ २ ॥ वागादीनामिति । 'इन्द्रियैर्मनसि सम्पद्यमानै'रिति द्वितीयसूत्रोदाहरणवाक्यनिर्दिष्टानि चक्षुरादीन्यपि संयोज्यादिग्रहणं कृतम् । लयोवगम्यत इति । 'सता सोम्य तदा सम्पन्नो भवती'त्युक्तायास्सम्पत्तेः 'स्वमपीतो भवती'ति लयार्थेनापीतिना निर्देशादिहापि सम्पत्तिर्लयोऽवगम्यत इति भावः । अप्रकृतित्वात्संपत्तिश्रुतेश्च संशयः । अतस्तस्मिन्नेवेति । न च वचनबलादप्रकृतौ गवादीनां लयोऽस्त्विति शङ्कनीयम् । 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति वागादीनामुपक्रमणश्रवणविरोधेन मरणकाले लयाभ्युपगमायोगात् । न च तर्हि वागादिशब्दानां वागादिवृत्तिलक्षकत्वमस्त्विति वाच्यम् । तत्राप्यनुपपत्तेस्तुल्यत्वात् । वागादिप्रकृतिकानां वृत्तीनामप्रकृतौ मनसि लयासंभवात् । तस्मादिह सम्पत्तिशब्देन संयोगमात्रं कथंचिद्वा-

तेषां लयो युक्तः ॥ इति प्राप्तेऽभिधीयते । 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते' इति 'इन्द्रियैर्मनसि संपद्यमानैरि'ति च वचनादुत्क्रान्तौ मनसः प्रागेव वागादीनामुपरमदर्शनाच्च वाक् मनसि प्रथमं संपद्यते । ततः सर्वाणीन्द्रियाणि मनसि संपद्यन्ते । यदुक्तमुपादान एव लय इति तन्न । स्वरूपलयस्यैवोपादानापेक्षा । वागादीनां मनसि न स्वरूपलय उच्यते, किंतु वृत्तिलय एव । यथा जलमध्ये क्षिप्तस्याङ्गारस्य प्रकाशादिवृत्तिलयः, तथा अनुपादानेऽपि मनसि वागादीनां वृत्तिलयो युक्त एव । वृत्तिमतो वागादेर्लयश्रुत्या वृत्तिलयो लक्ष्यते । वृत्तिवृत्तिमतोरभेदोपचारादिति ॥

इति वाक्संपत्त्यधिकरणम् ॥ १ ॥

## अथ मनःसंपत्त्यधिकरणम् ॥ २ ॥

### सू ॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥

'मनः प्राणे' इति वागादिसर्वेन्द्रिययुक्तस्य मनसः प्राणे लयः श्रूयमाणः की-

---

च्यमिति भावः । 'शब्दा'दिति हेतुं सूत्रद्वयनिर्दिष्टं सकलबाह्येन्द्रियसाधारण्येन व्याचष्टे—अस्य सोम्येति । 'दर्शना'दिति हेतुमपि व्याचष्टे—उत्क्रान्ताविति । हेतुद्वयस्यापि साधारण्ये वाच इन्द्रियान्तराणां च सूत्रद्वयेन पृथङ्निर्देशः किमर्थमित्याकाङ्क्षायां तत्प्रयोजनमाह—प्रथममिति । सर्वेन्द्रियसाधारणे मनस्सम्पत्तिवचने सत्यपि विशिष्यवाक्यान्तरप्रवृत्तिस्तत्सम्पत्तिप्राथम्यविवक्षयेति भावः । किन्तु वृत्तिलय इति । सम्पत्तिशब्दस्य संयोगार्थत्वपक्षेऽपि तस्यात्र न संयोगमात्रमर्थः किन्तु वागादिवृत्तिहेतुसंयोगभिन्नस्तद्वृत्तिलयहेतुस्संयोग इति वक्तव्यम् । मनसि वृत्तिमत्त्वेव वागादिवृत्तीनामुपरमदर्शनात् । तदनुवादित्वाच्चास्य वाङ्मनसीत्यादिशब्दस्य । तथा च वाग्वृत्तिपरामर्शस्य तल्लयपरामर्शस्य चावश्यं भावाद्यथादृष्टानुवादिनि वाक्ये 'वाक्संपद्यत' इत्यादेर्दर्शनयोग्यवागादिवृत्तिलयपरत्वमेवाङ्गीकर्त्तुं युक्तं । न तु तदयोग्यवागादीन्द्रियमनस्संयोगपरत्वं तस्य चेद्वृत्तिलयस्य वागाद्यधिकरणस्य मनोऽधिकरणकत्वं न संभवति । 'कामं मनसी'ति निर्देशस्तत्संयोगाधीनत्वमात्रेणौपचारिकोऽस्तु । यथाग्निज्वाला जले शाम्यतीत्यत्र जल इति निर्देश इति भावः । अत एव 'दर्शनाच्छब्दाच्चे'ति पूर्वोक्तहेत्वोरेव चक्षुरादीनीन्द्रियाणि वाचमनु वाक्सम्पत्त्यनन्तरं मनसि सम्पद्यत इति द्वितीयसूत्रस्यार्थः ॥

इति वाक्सम्पत्त्यधिकरणम् ॥ १ ॥

## अथ मनस्सम्पत्त्यधिकरणम् ॥ २ ॥

सू० ॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥ अतिदेशाधिकरणमिदमुत्तरवाक्यार्थनिरूप-

---

नयमणिमालायाम्

अथ वाक्सम्पत्त्यधिकरणम् ॥ १ ॥

सू० ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अत एव च सर्वाण्यनु ॥ २ ॥

वाक्शब्दलक्षितानां बहिरक्षाणां न मनसि लयः । ब्रह्मोपादानानामनुपादानात्मके घटते ॥ ३५५ ॥

वृत्तिलयस्त्वेतेषामङ्गाराणामिवोदके तस्मिन् । दृष्टत्वात्संघटते श्रुत्यापि विवक्षितं तावत् ॥ ३५६ ॥

इति वाक्सम्पत्त्यधिकरणम् ॥ १ ॥

इश इति संशयः। वागादीनामनुपादाने मनसि वृत्तिलयोऽस्तु। मनसस्तु प्राणे स्वरूपलय एव, मनसः प्राणोपादानकत्वात्। 'अन्नमयं हि सोम्य मन आपोमयः प्राण' इति श्रुतेरन्नमयत्वेन पार्थिवस्य मनस आपोमयत्वेनोपादाने प्राणे स्वरूपलयस्याविरोधादिति पूर्वपक्षः। सिद्धान्तस्तु। पूर्ववन्मनसोऽपि प्राणे वृत्तिलय एव, 'मनः प्राण' इत्युत्तराद्वाक्यात् न स्वरूपलयः, प्राणस्य मुख्योपादानत्वाभावान्मनसस्तत्रानुत्पत्तेः। अतः प्राणे मनसो वृत्तिलय एव न्याय्यः॥

इति मनःसंपत्त्यधिकरणम्॥ २॥

## अथ प्राणसंपत्त्यधिकरणम्॥ ३॥

## सू॥ सोऽध्यक्षेण तदुपगमादिभ्यः॥ ४॥

पूर्वत्र सर्वेन्द्रिययुक्तस्य मनसः प्राणे लयः प्रतिपादितः। इह तस्य प्राणस्य कुत्र लय इति संशयः॥ किं तावत् प्राप्तम्? 'प्राणस्तेजसि' इति श्रुतेः प्राणस्य तेजसि

---

णार्थम्। अबन्नयोः प्रकृतिविकृतिभावश्रवणात् प्राणमनसोरबन्नप्रकृतिकत्वश्रवणाच्च। प्राणाकारपरिणतास्वप्सु स्वरूपलयस्संभवतीति अधिकाशङ्का। अदनीयस्योदनादेः साक्षात्पृथिवीप्रकृतिकत्वेन परम्परया प्रकृतिभूतास्वप्सु लयाभावात् प्राणरूपविकृत्यन्तरावष्टब्धानामपां कथंचिदपि मनःप्रकृतिकत्वासंभवाच्च मनसोऽपि वृत्तिलय एव। मनःप्राण इत्युत्तरवाक्यस्य पूर्ववाक्यसमानार्थत्वस्योचितत्वादिति तत्परिहारः॥

इति मनस्सम्पत्त्यधिकरणम्॥ २॥

## अथ प्राणसम्पत्त्यधिकरणम्॥ ३॥

सू०॥ सोऽध्यक्षेण तदुपगमादिभ्यः॥४॥ उदाहरणवाक्यक्रमेणाधिकरणक्रम इति सङ्गतिः [1] 'प्राणस्तेजसी'त्यत्र प्राणस्यापि वृत्तिलय एव न स्वरूपलय इति पूर्वन्यायेनैव सिद्धम्। तस्य जीवलीनस्य तेजसि लय उत प्रथममेव तेजसि लय इति श्रुतिद्वैविध्यात्संशये पूर्वपक्षः। 'प्राणस्तेजसी'ति श्रवणात् मध्ये जीवोपगमो न निवेशनीयः। नचै'वमेवेममात्मान'मिति श्रुतावन्तकाले जीवोपगमश्रवणात्तन्निवेश इति वाच्यम्। तेजसि लीनस्य प्राणस्य तेजसा सह जीवोपगमेऽपि तदुपपत्तेः। न हि सर्वेषां प्राणानां द्वारविशेषमनन्तर्भाव्य साक्षादेव युगपज्जीवोपगमस्समर्थयितुं शक्यते। 'वाङ्मनसि सम्पद्यते मनः प्राण' इति पूर्ववाक्यानुरोधेन वागादीनां मनसश्च जीवोपगमस्य मनःप्राणलयद्वारकत्वस्यावश्यवक्तव्यत्वात्। एवं प्राणस्याऽपि जीवोपगमस्तेजोलयद्वारकोऽस्तु। एतेन 'सहै-

---

नयमणिमालायाम्

अथ मनस्सम्पत्त्यधिकरणम्॥ २॥

सू०॥ तन्मनः प्राण उत्तरात्॥ ३॥

मनसस्तु प्राणे स्यात्स्वरूपविलयो यथाश्रवणम्। अन्नमयस्य हि तस्य प्राणोपादानमंबुमयः॥ ३५७॥

वृत्त्युपरम एवात्राप्यनुपादानत्वसाम्येन। नह्यंबुविकारत्वेऽप्यस्योपादानतास्ति मुख्यायाः॥ ३५८॥

इति मनस्सम्पत्त्यधिकरणम्॥ २॥

---

(१) 'विषयवाक्यक्रमादधिकरण' इति ख. पाठः।

लय इति प्राप्तेः ब्रूम । स प्राणस्ततो जीवेनाध्यक्षेण संयुज्यते, न तस्य तेजसि लयः। 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इत्यादिश्रुतिषु तस्य जीवोपगमनादिश्रवणात् 'प्राणस्तेजसि' इति श्रुतिक्रमविरोधं परिहरति—

सू ॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥

'प्राणास्तेजसि' इति भूतान्तरसंसृष्टं तेजोऽभिधीयते । ततः प्राणो जीवेन सह भूतेषु संयुज्यत इति न विरोधः ॥

सू ॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥

न तेजोमात्रे प्राणलयः, त्रिवृत्करणश्रुतिर्हि भूतान्तरसंसृष्टिं दर्शयति । अतो

---

तावस्मिन्शरीरे वसतस्सहोत्क्रामत' इति जीवप्राणयोस्सहवासोत्क्रमणश्रवणाज्जीवमुपगतस्य प्राणस्य तेजसि लयः कल्पनीय इति शङ्कापि निरस्ता । तेजसि लीनस्य जीवोपगमेऽपि प्राणस्य स्थितिकाले जीवेन सह वासस्य उत्क्रमणकाले तेन सहोत्क्रमणस्य चोपपत्तेः । एतेनैव यमुनाया गङ्गया सह संयुज्य सागरगमनेऽपि यथा यमुना सागरं गच्छत्येव तथा प्राणस्य जीवेन संयुज्य तेजसि लयेऽपि प्राणस्तेजसि लीयत एवेति न 'प्राणस्तेजसी'ति श्रुतिविरोध इत्यपि शङ्का निरस्ता । उक्तदृष्टान्तेनैव वैपरीत्यस्यापि समर्थयितुं शक्यत्वादिति । सिद्धान्तस्तु प्राणः प्रकरणगणाध्यक्षेण जीवेन संयुज्यैव तेजसि लीयते । जीवोपगमतत्सहवासतत्सहोत्क्रमणश्रवणात् । ननु 'प्राणस्तेजसी'ति श्रुत्यनुसारेण वैपरीत्यं वा किमिति न कल्प्यत इत्याशङ्कायामिदं सूत्रम् ॥ सू० ॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥ तेजसीति न तृतीयभूतमात्रं निर्दिश्यते किन्तु भाविदेहारम्भार्थं जीवपरिष्वङ्गकानि सूक्ष्मदेहरूपाणि 'तदनन्तरप्रतिपत्तौ रंहति संपरिष्वक्त' इत्यत्र निरूपितानि सर्वाणि भूतान्युच्यन्ते । तत्सम्पत्तिः प्राणस्य जीवेन सहेति युक्तम् । 'सहैतावस्मिन्शरीरे वसत' इत्यादि श्रुत्यनुरोधादिति भावः । ननु बाह्येन्द्रियव्यापारोपरमानन्तरमपि मनोव्यापारदर्शनात् 'वाङ्मनसि सम्पद्यते, इन्द्रियैर्मनसि संपद्यमानै'रिति श्रुतिः यथा च बाह्याभ्यन्तरज्ञानोपरमानन्तरमपि श्वासव्यापारदर्शनात् 'मनः प्राण' इति श्रुतिः तथा श्वासरूपप्राणव्यापारोपरमानन्तरमपि देहे क्वचिदौष्ण्यदर्शनात् 'प्राणस्तेजसी'ति श्रुतिस्तदनुवादिन्यस्तु । अतस्तेजश्शब्दस्य सूक्ष्मदेहापन्नसर्वभूतलक्षकत्वं न वक्तव्यमित्याशङ्कानिराकरणार्थं सूत्रम् ॥ सू० ॥ नैकस्मिन्दर्शयतो हि ॥ ६ ॥ 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति त्रिवृत्करणश्रुतिः 'समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता अण्डमुत्पादयन्ति त' इति स्मृतिश्च सर्वेषामपि भूतानां प्रागेव त्रिवृत्कृतत्वं दर्शयत इति तेजसीत्यस्य तावत्केवलतेजःपरत्वं वक्तुं न शक्यते । 'जीवस्य सञ्चरतः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमय' इति श्रुतिः 'अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु या स्मृताः । ताभिस्सर्वमिदं सर्वं संभवत्यनुपूर्वश' इत्याद्या स्मृतिश्च सर्वभूतपरिष्वङ्गं दर्शयतः । इहापि जीवस्य गत्युपपादनाय सर्वभूतपरिष्वङ्गोऽपि प्रदर्शनीयः । अतस्तेजःपदं सूक्ष्मदेहापन्नसर्वभूतपरमिति तेजस्येकस्मिन्नेव लयोऽत्र न विवक्षितः । 'प्राणस्तेजसी'त्यस्य दृष्टानुवा-

भूतेषु जीवेन सह प्राणः संपद्यत इति न श्रुतिविरोधः ॥

इति प्राणसंपत्त्यधिकरणम् ॥ ३ ॥

## अथ सृत्युपक्रमाधिकरणम् ॥ ४ ॥

### सू ॥ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

इह निरूप्यमाणोत्क्रान्तिरर्चिरादिगत्युपक्रमात् प्राग्विद्वदविदुषोः समाना उत भिन्नेति संशयः। किं तावत् प्राप्तम्? संसारफलस्य मोक्षफलस्य चातिवैषम्यादज्ञानिनोर्विसदृश्यैवोत्क्रान्तिरिति। एवं प्राप्ते ब्रूमः—अर्चिरादिमार्गोपक्रमात् प्राग्विद्वदविदुषोः समानैवोत्क्रान्तिः। ज्ञानिनस्तु मूर्धन्यनाड्या निष्क्रान्तिरमृतत्वं च, नेतरस्य इति वैषम्यम् ॥ "शतं चैका च हृदयस्य नाड्यस्तासां

---

दित्वं तु प्राणव्यापारोपरमानन्तरमप्यनुपरतव्यापारस्य व्यापारोपरमसन्निकर्षात्सङ्कुचितक्ष्मदेहस्य तेजस्संवलनप्रयुक्तं क्वाचित्कौष्ण्यदर्शनमनुवदतीत्येवमपि समर्थयितुं शक्यते इति भावः ॥

इति प्राणसम्पत्त्यधिकरणम् ॥ ३ ॥

## अथ सृत्युपक्रमाधिकरणम् ॥ ४ ॥

सू० ॥ समाना चासृत्युपक्रमादमृतत्वं च ॥ ७ ॥ एवं विदुषामुपासनाकाले चिन्तनीय उत्क्रान्तिप्रकारो निरूपितः। अस्याप्यविद्वत्साधारण्यात् विद्वदुत्क्रान्तौ विशेषेण भाव्यमित्याक्षेपात्सङ्गतिः। फलविशेषसिद्ध्यर्थं कारणविशेषाक्षेपणात् विशेषाश्रवणाच्च संशयः। उत्क्रान्तिर्हि विद्वदविदुषोः फलविशेषावाप्तौ कारणम्। तथा च सम्प्रतिपन्नात्कार्यविशेषादश्रुतोऽपि कारणे विशेषः कल्पनीयः। यथाग्निहोत्रज्योतिष्टोमरूपकारणविशेषात्तत्तत्कार्ये स्वर्गे विशेषः एवमविदुषामपि तत्तल्लोकावाप्तिरूपफलविशेषादुत्क्रान्तौ विशेषः स्यादिति चेत् सोप्यस्तुनामेति पूर्वःपक्षः। गत्युपक्रमपर्यन्तं विशेषाभावेऽपि ततः प्रभृति श्रुताद्विशेषादेव फलविशेषोपपत्तेर्न ततः प्रागुत्क्रान्तावश्रुतो विशेषः कल्पनीय इति सिद्धान्तः। 'समानाचेति' चकारोऽवधारणार्थः। गत्युपक्रमप्रभृतिकारणे विशेषं तत्फलविशेषञ्च दर्शयितुममृतत्वञ्चेति सूत्रशेषः। मूर्धन्यनाड्या गतिश्चकारेण समुच्चीयते। तथा च मूर्धन्यनाड्या गतिः कारणविशेषः तस्यामृतत्वं फलविशेष इत्यर्थः। एवमविदु-

---

नयमणिमालायाम्

## अथ प्राणसम्पत्त्यधिकरणम् ॥ ३ ॥

सू० ॥ सोध्यक्षेण तदुपगमादिभ्यः ॥ ४ ॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥ नैकस्मिन्दर्शयतो हि ॥ ६ ॥

प्राणस्य तेजसि लयो यथा श्रुतिस्यात्तद्वृष्यदृष्टेश्च। मध्ये जीवनिवेशे न मानमीक्षामहे किंचित् ॥ ३५९ ॥

तेजःपदोपलक्षितदेहात्मकभूतसूक्ष्मयुते। जीवे श्रुत्यन्तरतः सेन्द्रियमनसोऽस्य वृत्तिलयः ॥ ३६० ॥

इति प्राणसम्पत्त्यधिकरणम् ॥ ३ ॥

मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति॥" इति श्रुतेः। अतः प्रागुत्क्रान्तिः समानैव ॥

इति स्मृत्युपक्रमाधिकरणम् ॥ ४ ॥

## अथ तदपीत्यधिकरणम् ॥ ५ ॥

### सू ॥ तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

पूर्वमुपपादिता मूर्धन्यनाड्या विदुष उत्क्रान्तिः, ततोऽर्चिरादिगतिरिति। इह देहादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरुपपद्यते न वेति सन्देहः। "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत ॥"

---

पामपि नाडीविशेषेण तद्गतिरेव तत्फलविशेषावाप्तौ कारणम्। अत एव महाभारते मोक्षधर्मे फलभेदानुसारेण उत्क्रमणे नाडीभेदाः प्रपञ्चिताः ॥

इतिस्मृत्युपक्रमाधिकरणम् ॥ ४ ॥

## अथ तदपीत्यधिकरणम् ॥ ५ ॥

सू० तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ एवं विदुषामुत्क्रान्तिमङ्गीकृत्य तत्र[1] कारणविशेषेण भाव्यमित्याक्षेपः समाहितः। इह तेषां नोत्क्रान्तिर्नवा तत्पूर्विका गतिरित्याक्षिप्य समाधीयत इति सङ्गतिः। श्रुतिद्वैविध्यात्संशये पूर्वपक्षः। वागादीनां मनःप्रभृतिष्वप्रकृतित्वाद्वृत्तिलयमात्रमित्यस्त्वेतत्। तेजः परस्यां देवतायामित्युक्तिस्तु स्वरूपलयो भवितुमर्हति। न च वाच्यं विद्वदविद्वत्साधारण्येनोत्क्रान्तिप्रकार उच्यते अविद्वत्संबन्धिनां वागादीनां स्वरूपलयो वक्तुं न शक्यते अतो विद्वत्संबन्धिनामपि तदानीं वृत्तिलय एव वाच्यः एकशब्दोपात्तत्वादिति। 'वाङ्मनसि संपद्यत' इत्यादेर्विद्याप्रकरणाम्नातत्वेन विद्वद्विषयत्वात्। अतो विदुषो वागादिमनःप्राणभूतसूक्ष्माणां प्रविलीनत्वेन तदपेक्षार्चिरादिगतिर्न संभवतीत्युपपत्तिसहिता 'अत्र ब्रह्मस्वमश्नुत' इति श्रुतिः प्रबलेत्यर्चिरादिगतिश्रवणं मुक्तिफलकेतरविद्याविषयं योजनीयम्। न चात्र परं ब्रह्म नास्ति येन तत्प्राप्त्यर्थं गत्यपेक्षा स्यादिति। सिद्धान्तस्तु सर्वत्र परविद्यासु परब्रह्मणःसत्वेऽपि देशविशेषस्थितस्य तस्य प्राप्तौ सत्यामेव देहबन्धापगमः। तत्प्राप्तिपर्यन्तं देहबन्धोऽनुवर्तत एव। विरजानदीमतिक्रम्य परब्रह्मलोकप्राप्तौ सत्यामेव कर्मबन्धक्षयोक्त्या तावत्पर्यन्तं तन्मूलसूक्ष्मदेहानुवृत्त्यवगमात्। अतस्तत्र विद्यायामर्चिरादिश्रवणं मुक्तिफलप्राप्त्यर्थमेव। मुक्तिफलकविद्याप्रकरणाम्नानात्तदपेक्षितत्वाच्च 'अथ मर्त्योऽमृतो भवती'ति वचनं वर्तमानसामी-

---

नयमणिमालायाम्

## अथ स्मृत्युपक्रमाधिकरणम् ॥ ४ ॥

सू० ॥ समाना चासृत्युपक्रमादमृतत्वं च ॥ ७ ॥

उपपादितस्वरूपा नोत्क्रान्तिर्विद्वदविदुषोस्तुलया। अतिविसदृशफलभाजोस्साप्येवं विसदृशी युक्ता ॥ ३६१ ॥
गमनोपक्रमतः प्राक्तुल्यैवोत्क्रान्त्यवस्थैषा। विदुषस्तु सुषुम्नातो मूर्ध्नो निष्क्रान्तिरमृतभाक्त्वं च ॥ ३६२ ॥

इति स्मृत्युपक्रमाधिकरणम् ॥ ४ ॥

---

(१) 'तत्र विशेषेण भाव्यमित्याक्षिप्य समाहितम्' इति ख. पाठः।

इति देहपातानन्तरमेवामृतत्वं श्रूयते । 'तेऽर्चिषमभिसंभवन्ति' इत्यर्चिरादिगतिश्च श्रूयते । एवमुभयश्रवणादयं सन्देहः । तत्र ब्रह्मणि लीनानां वागादीनां पुनरुत्पादासंभवान्मुक्तस्य गत्यनुपपत्तेरर्चिरादिगतिर्न मुक्तात्मनामिति प्राप्ते सिद्धान्त उच्यते । अर्चिरादिना ब्रह्मप्राप्तेः प्राक् शरीरसंबन्धव्यपदेशान्न संसारापगमः । अमृतत्ववचनमासन्नामृतत्वाभिप्रायम् । अत उत्क्रान्तस्यार्चिरादिगतिरुपपन्ना । यदुक्तं वागादिविलयात् तस्य गत्यनुपपत्तिरिति तत्राह—

सू ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते । अन्यथा गत्यनुपपत्त्या चन्द्रसंवादाद्यनुपपत्तेः । श्रूयते हि पर्यङ्कविद्यायां देवयाने पथि विदुषश्चन्द्रमसा संवादः । 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इत्युपक्रम्य 'एतद्वै स्वर्गस्य द्वारं यश्चन्द्रमाः तं यः प्रत्याह तमतिसृजते । अथ य एनं न प्र-

---

प्याभिप्रायमिति । पूर्वाधिकरणार्थानुवादभाष्ये अर्चिरादिगतेरुपपादितत्वोक्तिर्मूर्धन्यनाड्या निष्क्रान्तस्यामृतत्वफलोक्त्यर्थसिद्धस्यानुवादः । सन्देहभाष्ये देहादुत्क्रान्तस्येत्येःकोटिमध्ये निवेशनीयम् । विदुषो देहादुत्क्रान्तस्य सतोऽर्चिरादिगतिरित्येतदुपपद्यते नवेत्यर्थः । पूर्वपक्षे देहमध्ये वाङ्मनस्सम्पत्त्याद्युत्क्रान्त्युपक्रमसत्त्वेऽपि देहाद्युत्क्रान्तेरभावात् । उपसंहारभाष्यस्याऽपि देहादुत्क्रान्तस्य सतोऽर्चिरादिगतिरुपपन्ना । देहादुत्क्रान्तिस्तत्पूर्विकार्चिरादिगतिश्चेत्युभयमुपपन्नमित्यर्थः । सूत्रे तदमृतत्वं देहादुत्क्रान्तस्य सतोऽर्चिरादिगतिपूर्वकमित्यध्याहारः । अपीतिः अप्ययो ब्रह्मणि लयः आपीतेः विरजानद्यतिक्रमणानन्तरभाविब्रह्मसायुज्यप्राप्त्युपक्रमपर्यन्तमित्यर्थः । संसारो देहमूलकर्मबन्धः तस्य व्यपदेशात् 'तत्सुकृतदुष्कृते विधूनुत' इति विधूननप्रतियोगित्वेन निर्देशादित्यर्थः । यद्वा । 'तेजः परस्यां देवताया'मित्यत्र तेजश्शब्दोक्तं वागादिकरणजातमनःप्राणभूतान्तसहितं सूक्ष्मदेहरूपं तेज आपीतेरनुवर्तत इत्यध्याहारः । तस्योक्त एवार्थः । तस्य च काकाक्षिन्यायेन हेतुनिर्देशोऽप्यन्वयः । आपीतेः सूक्ष्मदेहमूलकर्मव्यपदेशादित्यर्थः । पूर्वपक्षशङ्काबीजोत्तरत्वेनोत्तरसूत्रमवतारयति ॥ सू० ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥ सूक्ष्मं शरीरं देहादुत्क्रान्तमनुवर्तत इत्यध्याहारः । प्रमाणतश्चन्द्रसंवादादिवाक्यरूपात्तथोपलब्धेः विदुष उत्क्रान्तस्य चन्द्रसंवादाद्युपयोगिदेहसंबन्धत्वेनोपलब्धेरित्यर्थः । चकारेणेदं समुच्चीयते । 'वाङ्मनसि सम्पद्यत' इत्यादिवाक्यं विद्याप्रकरणगतत्वेऽपि न विदुष एव 'वाङ्मनस्सम्पत्त्यादिप्रतिपादनपरं प्रतीयत' इत्यविशेषश्रवणात् विद्वदविद्वत्साधारण्येऽपि प्रयतो वाङ्मनसादिकं यस्यां परदेवतायां सम्पद्यते 'तत्त्वमसी'ति विद्योपयोगसत्वात् अन्यथा 'सता सोम्य तदा सम्पन्नो भवती'त्यादेः स्वापादिवाक्यजातस्यापि विद्वन्मात्रविषयत्वप्रसङ्गात् । किञ्च । 'तेजः परस्यां देवताया' मित्यत्र तेजश्शब्दार्थे पूर्ववाक्यनिर्दिष्टवाङ्मनःप्रभृतिसाहित्यमिव 'एवमेवेममात्मन'मित्यादिश्रुत्यन्तरप्राप्तजीवसाहित्यमपि विवक्षणीयम् । न च जीवस्य स्वरूपलयोऽस्ति । अतस्तं देशे व्यापारोपरममात्रपरत्वावश्यंभावादन्यत्रापि तथैव एकेन सम्पद्यत इति शब्देनोपात्तत्वादिति । तं यः प्रत्याहेति । चन्द्रप्रश्नस्य य उत्तरं वदति विद्वान् तं ब्रह्मलोकप्राप्त्यर्थमूर्ध्वदेशगमनाय

त्याह तमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान् वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रेत्याजायते यथाकर्म यथाविद्यं तमागतं पृच्छति कोऽसीति तं प्रति ब्रूयात्' इत्यादि। अतः शरीरादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरुपपन्ना ॥

सू ॥ नोपमर्देनातः ॥ १० ॥

अत उक्तन्यायात् 'अथ मर्त्योऽमृतो भवति' इत्यमृतत्ववचनं न देहसंबन्धोपमर्देन तदानीमेवामृतत्वं वदति ॥

सू ॥ अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

अस्य सूक्ष्मशरीरस्य कचिद्विद्यमानत्वोपपत्तेश्च न तदुपमर्देन। उपलभ्यते ह्युत्क्रामतो विदुषोऽपि कचित् सूक्ष्मदेहगुण ऊष्मा, न स स्थूलदेहगुणः, अन्यत्रानुपलम्भात्। अतश्च गत्युपपत्तिः ॥

सू ॥ प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥

बृहदारण्यके 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिवाक्यैरविदुषोऽप्युत्क्रान्त्यादिप्रकारमभिधाय 'इति तु कामयमानः' इत्यविद्वद्विषयं परिसमाप्य

---

विमुञ्चति यस्त्वविद्वांश्चोत्तरं वदति तं यावत्संपातमुषितं तदत्यये मेघो भूत्वा वर्षजलेन सह मुञ्चतीत्यर्थः। 'वृष्टिर्भूत्वे'त्युक्ते वर्षणकालेऽपि चन्द्रस्य मेघानुप्रवेशन व्यापारोऽस्तीत्यवगम्यते। अथवा नात्र चन्द्रोऽनुवर्तते। वृष्टिः भूत्वा मेघः प्रादुर्भूय वर्षतीत्यर्थः। परस्वानारण्यो मृगविशेषः। सू० ॥ नोपमर्देनातः ॥ १० ॥ तदानीमेवेति। किन्तु पूर्वोक्तप्रकारेणासन्नामृतत्वं वदतीत्यर्थः। सू० ॥ अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥ एवचकारौ भिन्नक्रमं योजयन्हेतोः पूर्वसूत्रनिर्दिष्टसाध्येनान्वयं दर्शयित्वा हेत्वसिद्धिपरिहारार्थत्वेनोष्मेतिपदं साध्याहारं व्याचष्टे—अस्येति। उत्क्रमणकाले काचित्कोष्मदर्शनेन हेतुनोत्क्रममाणसूक्ष्मदेहसद्भावप्रतिपादनपरं सूत्रञ्चेत् 'सूक्ष्मं प्रमाणतश्चे'ति तत्सद्भावप्रतिपादकसूत्रसङ्गतत्वात् 'नोपमर्देने'ति सूत्रतः प्रागेवेदमकरिष्यत्। सू० ॥ प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥ अयमाशयः। 'तस्य ह्येतस्ये'त्यादिसन्दर्भेणाविरक्तस्योत्क्रान्तिमुक्त्वा विरक्तस्य प्राणानामुत्क्रान्तिः प्रतिषिध्यते। न च 'न तस्मात्प्राणा उत्क्रामन्ती'ति शाखान्तरपाठा'त्तस्येतिसम्बन्धसामान्येविहिताषष्ठ्यपि 'नटस्य शृणोती'तिवदपानार्थेति मुच्यमानान्न विशिश्लिष्यन्त इति तदर्थः इति वाच्यम्। उभयत्रापि तच्छब्दस्य शरीरपरामर्शित्वात्। बृहदारण्यक एव 'यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो ने'त्यार्तभागप्रश्नेने'ति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मातो मृतश्शेते' इत्यादि प्राणोत्क्रान्त्यपादानस्याध्मानेन वायुपूरणेन दृतिवदुच्छ्वयनस्य शरीरधर्मस्य कीर्तनात् जीवात्प्राणानामुत्क्रान्तेरप्रसक्तत्वेन तत्प्रतिषेधानुपपत्तेश्च। अतोऽर्चिरादिगतिश्चन्द्रसंवादसुकृतदुष्कृतविधूननमित्येतत्सर्वं सत्यलोकप्राप्त्य-

'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति विदुष उत्क्रान्तिप्रतिषेधादत्रैव साक्षात् ब्रह्मप्राप्तिरिति चेन्न । विदुष उत्क्रममाणस्यार्चिरादिगमनाय प्रस्थितस्य प्राणास्तस्मान्न विश्लिष्यन्त इति ह्युच्यते 'न तस्य प्राणा उत्क्रामन्ति' इति । अयमर्थो माध्यन्दिनानां शाखायां स्पष्टोऽभिधीयते । 'योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात् प्राणा उत्क्रामन्ति' इति ॥

---

र्थविद्याविशेषफलं न तु मुक्त्यर्थब्रह्मविद्याफलमिति नेतव्यम् । ब्रह्मविदो मरणकाले क्वाचित्कोष्मदर्शनं तु तेजश्शब्दोक्तस्य सूक्ष्मदेहस्य परदेवतासम्पत्तेः प्राचीनत्वेनोपपद्यत इति । विदुष उत्क्रममाणस्येति । अयं भावः । आर्तभागप्रश्ने शारीरादुत्क्रान्तिर्न प्रतिषिध्यते किन्तु शरीरादेवोत्क्रान्तिप्रतिषेधस्याविद्वद्विषयत्वेनाविदुषः प्राणानां शरीरादुत्क्रान्तेः प्रतिषेद्धुमशक्यत्वात् । अविद्वद्विषयत्वं कथमवसीयत इति चेत् उत्तरसन्दर्भात् । उत्तरसन्दर्भेहि 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितञ्च रेतश्च निधीयते क्वायं तदा पुरुषो भवती'त्यार्तभागप्रश्ने याज्ञवल्क्येनार्तभागेन च रहसि मन्त्रयित्वा पुण्यपापरूपकर्म तदाश्रयत्वेन निश्चितमिति तदनन्तरसन्दर्भे श्रुत्यैव प्रतिपादनात् । तत्र हि श्रूयते । तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ ह यदूचतुः कर्म हैव तदूचतुः अथ यत्प्रशशंसतुः कर्महैव तत्प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने'ति । न चा'पपुनर्मृत्युञ्जयती'ति पूर्ववाक्ये संसारतरणरूपं फलमुच्यते । तेन प्रकृतविद्वद्विषयत्वमुत्क्रान्तिप्रतिषेधस्यावसीयत इति वाच्यम् । अग्निर्वै मृत्युस्सोपामग्निमित्यपामग्नित्वेनोपासनमुक्त्वाहि तस्य फलमपपुनर्मृत्युं जयतीत्युच्यते तस्मादग्निजय एवात्र मृत्युजयो न संसारतरणम् । इतश्चात्र शरीरादेवोत्क्रान्तिः प्रतिषिध्यते । यतो यत्राऽयं पुरुषो म्रियत इति पूर्ववाक्ये पुरुषशब्देन प्रकृतस्सएव तस्मात्प्राणाउत्क्रामन्तीत्यत्र सर्वनाम्नापरामर्शनीयः । न च तत्र पुरुषशब्दस्य शरीरपरत्वं शङ्कनीयम् । 'यत्रास्य पुरुषस्याग्निं वागप्येती'त्युत्तरसन्दर्भे 'पृथिवीं शरीर'मिति प्रकृतपुरुषसंबधित्वेन शरीरस्य पृथक्कीर्तनात् । 'न चाकाशमात्मे'त्यात्मापि पृथक्कीर्त्यत इति वाच्यम् । तत्रात्मशब्दस्य मध्यमावयववाचित्वेन हृदयात्रकाशपरत्वात् । प्रसिद्धो हि मध्यमावयवेप्यात्मशब्द आनन्दमयवाक्यादिषु । 'तस्मात्स उच्छ्वयन्नाध्मात' इति निर्देशः शरीरशरीरिणोरभेदोपचारादिति नेतव्यः । शारीरात्प्राणानामुत्क्रान्तिरप्रसक्ता न प्रतिषिध्येतेति चेन्न । विद्वद्विषये 'तस्य तावदेव चिर'मिति शरीरनाशकाले ब्रह्मसम्पत्तिवचनेन विदुषः प्राणानामपि स्थूलशरीरवियोगकाल एव विश्लेष इति शङ्कारूपप्रसक्तिसत्वात् । एवं प्रसक्त्या विशिष्य विदुषश्शरीरात्प्राणानामुत्क्रान्तिप्रतिषेधेनाविदुषस्तर्हि शरीरात्प्राणानामुत्क्रान्तिरस्तिकिमित्यविद्वद्विषयेऽपि इति शङ्कारूपप्रसक्तिसत्वाच्च । तस्मादर्चिरादिगतिश्रुतेरेवानुकूलोऽयं मार्ग इति विदुषः शरीरात्प्राणानां विश्लेषप्रतिषेध इति । ननु मूर्धन्यनाड्या निष्क्रम्यार्चिरादिमार्गेण ब्रह्मलोकप्राप्तिरूपममृतत्व'माभूतसंप्लवं स्थानममृतत्वं हि भाष्यत' इति स्मृतिप्रसिद्धं मुक्तिफलादन्यदेवामृतत्वमिति वक्तव्यं । चक्षुष्टो वा मूर्ध्नो वेत्यविद्वद्विषयवाक्यसन्दर्भमध्य एव मूर्धन्यनाड्या निष्क्रमणस्यापि पाठादि-

## सू ॥ स्मर्यते च ॥ १३ ॥

विदुषो मूर्धन्यनाड्या गमनं स्मर्यते । "ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥" इति । अतोऽर्चिरादिगतिरुपपद्यते विदुष उत्क्रान्तस्य । केचिन्निरन्वयोपासकानामिह शरीरपात एव मुक्तिरित्यर्चिरादिगतिमनियतामाहुः ॥

इति तदपीत्यधिकरणम् ॥ ५ ॥

## अथ परसंपत्त्यधिकरणम् ॥ ६ ॥

## सू ॥ तानि परे तथा ह्याह ॥ १४ ॥

पूर्वत्र प्राणसहितस्य जीवस्य तेजउपलक्षितेषु भूतेषु लय उपपादितः । 'तेजः

---

त्याशङ्कानिराकरणार्थं सूत्रम् ॥ सू० ॥ स्मर्यते च ॥ १३ ॥ यस्सूर्यमण्डलं भित्त्वोर्ध्वं स्थित इति योजना । तेन मूर्धसंबन्धिनाडीविशेषणान्मध्येऽपि सूर्यमण्डलपर्यन्तप्रसृतनाड्या निष्क्रमणस्य ब्रह्मलोकातीतदिव्यस्थानप्राप्तिहेतुत्वकीर्तनात् । चक्षुष्टो वा मूर्ध्नो वेत्यविद्वद्विषये मूर्धग्रहणं मूर्धसंबन्धिनाड्यन्तरविषयमवसीयत इति भावः । केचिदिति । तेषामयमाशयः । 'न तस्य प्राणा उत्क्रामन्ती'त्येतदनन्तर 'मत्रैव समवनीयन्त' इति प्राणानामिहैव लयः श्रूयते । 'ब्रह्मैव सन्ब्रह्माप्येती'ति प्राक्सिद्धब्रह्मभावाभिव्यक्तिरूपैव ब्रह्मप्राप्तिर्ब्रह्मविद्याफलतया श्रूयते । अतो गुणान्वयरहितं निर्विशेषं ब्रह्म श्रवणमननानन्तरं ध्यायतां तत्साक्षात्कारादिहैव ब्रह्मभावाविर्भावरूपा मुक्तिरनेन संदर्भेणोच्यते । तस्मादर्चिरादिगतिस्सगुणविद्याफलप्राप्त्यर्थेत्येवं गतिरनियतेति । तदेत'दनियमस्सर्वेषामि'त्यधिकरणेऽप्युक्तम् ॥

इति तदापीत्यधिकरणम् ॥ ५ ॥

## अथ परसम्पत्त्यधिकरणम् ॥ ६ ॥

सू० ॥ तानि परे तथा ह्याह ॥ १४ ॥ सङ्गतिं दर्शयितुं वृत्तमनुवदति—पूर्वत्रेति । ननु 'सोऽध्यक्षे'त्यधिकरणसिद्धस्य 'प्राणस्तेजसी'ति वाक्यार्थस्यानुवादोऽयम् । तथा च तेनैव सङ्गतिरुक्ता स्यान्न पूर्वाधिकरणेन । उक्तसङ्गत्या च तदधिकरणानन्तरमेवैतदधिकरणं युक्तं कर्तुम् । 'वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसी'ति वाक्यत्रयार्थो हि क्रमिकेणाधिकरणत्रयेण चिन्तितः । अतश्चतुर्थवाक्यार्थोऽपि तदनन्तरमेव चिन्तनीयः । न तु विद्वदविद्वत्सामान्योत्क्रान्तिप्रकारचिन्तां सावशेषां स्थापयित्वा विशिष्य विद्वद्वि-

---

### नयमणिमालायाम्

### अथ तदापीत्यधिकरणम् ॥ ५ ॥

सू० ॥ तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ नोपमर्देनातः ॥ १० ॥ अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥ प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥ स्मर्यते च ॥ १३ ॥

विदुषो नोत्क्रान्तिः स्यादत्रैव ब्रह्मसम्पत्तेः । उत्क्रमणाभावस्य च तत्प्राणानां समामननात् ॥ ३६३ ॥

तस्यार्चि···ब्रह्मप्राप्त्यवधिदेहयोगश्रवणात् । सास्त्येव तन्निषेधो जीवाद्ब्रह्मास्तिवचन······ ॥ ३६४ ॥

इति तदापीत्यधिकरणम् ॥ ५ ॥

परस्यां देवतायाम्' इति। तस्य भूतान्तरसंसृष्टस्य जीवयुक्तस्य तेजसः परस्यां देवतायां लयोऽवगम्यते। स परब्रह्मणि स्वरूपलय उताविभागापत्तिमात्रमिति संशयः। स्वरूपलय इति युक्तम्। तथाहि 'देवात्तल्' इति देव एव देवतेत्युच्यते। परशब्दो महत्त्ववाची। अतः परो देवो महादेवः। 'सेयं देवतैक्षत' 'द्यावाभूमी जनयन् देव एक' इति स महादेव एव सकलभूतकारणं परब्रह्म श्रूयते। अतस्तस्मिन्नुपादाने सजीवानां भूतानां स्वरूपलय इत्येव युक्त इति पूर्वः पक्षः॥

षयोत्क्रान्तिप्रकारचिन्तामारभ्य तन्मध्ये पुनरपि विद्वदविद्वत्सामान्यविषयोऽयं चिन्तयितुं युक्तः। किञ्च विशिष्य विद्वद्विषयोत्क्रान्तिचिन्ता 'समाना चासृत्युपक्रमा'दित्यारभ्य प्रवृत्ता। तत्र गत्युपक्रमात्प्राचीनत्वं चतुर्थवाक्यस्यापि तुल्यम्। अतस्तस्मिन्नपि निर्णीत एव। तत्पर्यन्तं विदुषोऽपि समानमिति बोधयितुं शक्यम्। एवं स्वोचितस्थाने विद्यमाने तमपहाय किमयमत्र चिन्त्यते। उच्यते। उक्तभङ्ग्या प्राक्सङ्गतस्यास्याधिकरणस्यात्राप्यस्त्येवाक्षेपिकी सङ्गतिः। ब्रह्मविदामुत्क्रान्तिस्तत्पूर्विका गतिश्चास्तीति पूर्वाधिकरणोक्तमयुक्तम्। 'तेजः परस्यां देवताया'मिति वागादिमनःप्राणसहितस्य सूक्ष्मदेहस्य सर्वप्र-

परब्रह्मणि स्वरूपेणैव लयप्रतिपादनात्। विद्याप्रकरणपठितस्य 'वाङ्मनसि सम्पद्यत' इत्यादेः विद्वद्विषयत्वेन स्वरूपलयप्रतिपादनोपपत्तेश्च। देहेन्द्रियादिरहितस्य चन्द्रसंवादाद्यसंभवेन तदुक्ताया अर्चिरादिगतेरन्यविषयत्वस्यावश्यवक्तव्यत्वादिति। एवमुभयत्र सङ्गतं सदिदमधिकरणमिह कृतश्चेत् कोऽत्र दोषः। किञ्च। वस्तुतोऽस्य वाक्यस्य सामान्यविषयत्वेऽपि विद्वन्मात्रविषयत्वेन पूर्वपक्षः कार्यः। अन्यथा 'तमुत्क्रान्तम'मित्यादिश्रुतेर्निर्विषयत्वापत्तेः। अतोऽपि विद्वदुत्क्रान्तिप्रकारविशेषचिन्तामध्ये सङ्गततरमिदमधिकरणम्। सङ्गतिभाष्यं त्वेवं नेतव्यम्। तृतीयवाक्यार्थपर्यन्तं प्राङ्निर्णीतम्। चतुर्थवाक्यार्थस्तु विशेषेणात्र निर्णेतुमवशेषित इदानीं निर्णीयते। भाविनमेतद्वाक्यार्थनिर्णयमपेक्ष्य मनसि निधायैतत्पर्यन्तोत्क्रान्तिर्विदुषामविदुषां च समानेति प्रागुक्तमिति प्रसङ्गात्परस्यां देवतायामित्यस्य महादेवशब्दार्थविषयतया शिवे पर्यवसानं दर्शयन् पूर्वपक्षमुपपादयति—तथा हीति। जीवस्यापि स्वरूपतः कार्यत्वमङ्गीकृत्यैव पूर्वपक्षो निर्वोढव्यः। अन्यथा परस्यां देवतायामिति वाक्यगतस्यैकस्यैव सम्पद्यत इति शब्दस्य तेजश्शब्दोपलक्षितविशिष्टार्थमध्ये जीवांशे व्यापारोपरमपरत्वं तदतिरिक्तेषु स्वरूपलयपरत्वमिति वैरूप्यदोषस्यापरिहार्यत्वादित्यभिप्रायेण 'सजीवाना'मित्युक्तम्। वागादिवाक्येषु सम्पद्यत इति शब्दस्य वृत्तिलयपरत्वं तेजोवाक्ये स्वरूपलयपरत्वमिति वैरूप्यन्तु न दोषः। सूत्रेष्वनुवृत्तपदानां तत्तत्सूत्रगतपदान्तरसमभिव्याहारानुसारेणार्थभेदस्य दृष्टत्वादिति भावः। 'इत्येव युक्त'मित्यवधारणस्यायमभिप्रायः। 'तेजः परस्यां देवताया'मित्यस्य व्यापारोपरमपरत्वे तद्वाक्यमनन्वितार्थं स्यात्। वागादिमनःप्राणजीवसहितसूक्ष्मदेहव्यापारोपरमस्य नित्यसिद्धब्रह्मसम्बन्धाधीनत्वाभावात्। न च स्थानविशेषावच्छिन्नब्रह्मसंबन्धः प्रागसिद्धोऽत्राभिधीयते। स्थानविशेषानुवादनात्। राज्ञः प्रस्थानोपयुक्तपरिवारमेलने सति प्रस्थानस्येव जीवस्योत्क्रमणोपयुक्तसूक्ष्मदेहेन्द्रियमनःप्राणमेलने सत्युत्क्रमणस्यैव वक्तव्यत्वेन मध्ये स्थानविशेषावच्छिन्नब्रह्मसम्पत्त्यधीनकियत्कालपर्यन्तव्यापारोपरमोक्तिवैय-

सिद्धान्तस्तु । ब्रह्मण्युपादानेऽपि न स्वरूपलयः । किंतु अविभागमात्रम्, 'वाङ्मनसि संपद्यत' इति सम्पत्तिवचनस्यैकस्यार्थान्तरपरत्वे प्रमाणाभावात् । अतो मनःप्रभृतिवत् वृत्तिलय एवेति वदति ॥

सू ॥ अविभागो वचनात् ॥ १५ ॥

संपत्तिवचनादविभागमात्रं ब्रह्मणि भूतानामिति युक्तमेव ॥

इति परसंपत्त्यधिकरणम् ॥ ६ ॥

---

र्थ्याच्चेति । अविभागमात्रमिति । सुप्तिप्रलययोरिव व्यापारोपरमेण सूक्ष्मरूपतयावस्थानमविभागः । प्रमाणाभावादिति । एकस्य पदस्य श्रवणेऽनुषङ्गेऽप्यैकार्थ्यमौत्सर्गिकम् । सूत्रेषु पदान्तरसमभिव्याहाराद्यवगमितवत्क्रमविवक्षारूपेण बलवता प्रमाणेनापोद्यते । न चेह तथा किञ्चित्प्रमाणमस्ति । न चोपादानलयः स्वरूपलय एवेति नियमस्तत्र प्रमाणम् । सुषुप्तिप्रलययोर्जीवस्य ब्रह्मणि लये व्यभिचारेणानियमासिद्धेः । न च 'तेजः परस्यां देवताया'मिति वाक्यवैयर्थ्यप्रसङ्गोऽत्र प्रमाणम् । वागाद्युत्क्रमणक्लेशापनयाय कञ्चित्कालं सुषुप्ताविव ब्रह्मसम्पत्तेर्विश्रान्त्यर्थत्वेन तस्य सफलत्वात् विश्रान्तेश्चोत्क्रमणक्लेशप्रयुक्तहृदयक्षोभशमनेन निष्क्रमणार्थनाडीविशेषविवेचनोपयुक्तत्वेन सफलत्वाद्ब्रह्मणि हृदयाकाशरूपे सम्पत्तिरिह विवक्षिता । 'स एतास्तेजोमात्रास्समभ्याददानो हृदयमेवान्ववक्रामती'ति श्रुत्यन्तरात् प्रत्युत बाधकमेव प्रमाणमस्ति जीवांशे सम्पद्यत इति क्रियायाः वैरूप्यापत्तिरूपम् । न च जीवस्य स्वरूपतः कार्यत्वमभ्युपगन्तुं युक्तम् । तथा सति मोक्षस्यात्मनाशत्वेनापुरुषार्थत्वापत्तेः । तथा मुक्तिफलकपरब्रह्मविद्याप्रकरणेष्वर्चिरादिगतिश्रवणमपि बाधकं प्रमाणमिति । एवमाचार्यः स्वयमेव सिद्धान्तं प्रदर्श्य तस्मिन्नर्थे सूत्रमवतारयति सू० ॥ अविभागो वचनात् ॥ १५ ॥ भूतानामिति । भूतग्रहणं वागादिमनःप्राणजीवानामप्युपलक्षणम् ॥

इति परसम्पत्त्यधिकरणम् ॥ ६ ॥

---

नयमणिमालायाम्

अथ परसम्पत्त्यधिकरणम् ॥ ६ ॥

सू० ॥ तानि परे तथा ह्याह ॥ १४ ॥ अविभागो वचनात् ॥ १५ ॥

भूतानां ब्रह्मणि यो लयस्सतु स्यात्स्वरूपलयः । सर्वोपादानेऽस्मिन्नुक्तानुपपत्त्यभावेन ॥ ३६५ ॥
नैवं प्राकृतलयवत्पुनश्च दृष्टेरनुक्तत्वात् । वृत्तिलयस्तु तदर्थकसम्पद्यनुषङ्गतो भवेदेषः ॥ ३६६ ॥

इति परसम्पत्त्यधिकरणम् ॥ ६ ॥

## अथ तदोकोऽग्राधिकरणम् ॥ ७ ॥

**सू ॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६ ॥**

पूर्वत्र विद्वदविदुषोरर्चिरादिगत्युपक्रमपर्यन्तमुत्क्रान्तिः समानेत्युक्तम् । निष्क्रमणवेलायामुभयोर्विशेषोऽस्ति न वेति विचार्यते । 'तेजः परस्यां देवतायाम्' इति भूतैः सह परमकारणे परदेवे परे ब्रह्मणि परमाकाशरूपे विद्वानविद्वांश्च विलीयाविभागेन क्षणं विश्रम्य तिष्ठतीति समभिहितम् । अतः समानैवोत्क्रान्तिः, तयोर्हृदग्रप्रद्योतनादेः समत्वश्रवणात् । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य' इति श्रूयते, अतः समानत्वादुत्क्रान्तेस्तयोरविशेष इति पूर्वपक्षे प्राप्ते

---

## अथ तदोकोऽग्राधिकरणम् ॥ ७ ॥

सू० ॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ॥ १६ ॥ सङ्गतिं दर्शयति—पूर्वत्रेति । गत्युपक्रमात्प्राक् ब्रह्मसम्पत्तिपर्यन्तोत्क्रान्तिर्विद्वदविदुषोस्समानेति 'समाना चासृत्युपक्रमात्' इत्यधिकरणे वर्णितम् । ततः परमुत्क्रान्तिस्तत्पूर्विका गतिश्च स्वरूपत एव नास्ति यस्यां विशेषमभिप्रेत्यासृत्युपक्रमादित्यवधिक्रियेतेत्याशङ्क्य तदुभयसद्भावस्समर्थितः । इहत्वस्तु स्वरूपतस्तदनन्तरमप्युत्क्रान्तिव्यापारः नाडीभिर्निष्क्रमणरूपः तत्र विदुषां विशेषो नास्तीत्याशङ्क्य समाधीयत इति सङ्गतिरित्यर्थः । विशेषसद्भावासद्भावाभ्यां[1] संशयः । विशेषोऽपि 'तेजः परस्यां देवताया'मित्येतत्पर्यन्तं मध्ये वा भवेत्पश्चाद्वा । नाद्यः । तावत्पर्यन्तं साम्याङ्गीकारात् । न द्वितीयः । तदनन्तरमपि हृदयाग्रप्रज्वलनं ययाकयाचिन्नाड्या निष्क्रमणमित्यविशेषात्[2] । न च विदुषां मूर्धन्यनाड्यैव निष्क्रमणमिति विशेषो वक्तुं शक्यते । नाडीनामतिसूक्ष्माणां दुर्विवेचत्वेन तदीयानां मूर्धन्यनाड्याः विदुषोऽपि विविच्यावगन्तुमशक्यत्वात् । न च विद्यानुष्ठानदशायां स्वयमीदृशप्रदेशस्थितयैतादृश्या नाड्या निष्क्रम्य ब्रह्म प्राप्नुवानीत्यनुसन्धानाभ्यासपाटवात्तदानीं स्वनिष्क्रमनाडीपरिज्ञानं भवेत् उत्क्रमणक्लेशप्रयुक्तस्य क्षोभस्य ब्रह्मणि विश्रान्तोपशान्तत्वेन तदानीं विवेचनकौशलसत्वादिति वाच्यम् । तथापि घनसंतमसावृतहृदयावरणगतस्य विदुषो निरन्तरानेकसूक्ष्मतमनाडीमध्ये स्वनिष्क्रमणनाडीविशेषस्यावगन्तुमशक्यत्वात्[3] । न च हृदयाग्रप्रकाशेन विवेचनं स्यादिति वाच्यम् । अधोमुखहृदयाग्रप्रकाशस्य मूर्धाभिगतोर्ध्वगतावनुपयोगात् । न च 'तयोर्ध्वमायन्निति' श्रुतिर्विदुषां मूर्धन्यनाड्यैव निष्क्रमणमिति नियच्छति किन्तु यो मूर्धन्यनाड्या निष्क्रामति सोऽमृतत्वं प्राप्नोतीत्येतावन्मात्रं वदति । तत्तु नाडीस्तुत्यर्थत्वेनाप्युपपद्यत इति पूर्वः पक्षः । सिद्धान्तस्तु 'तयोर्ध्वमायन्नि'ति श्रुतिर्मूर्धन्य-

---

(१) 'विशेषसंभवासंभवाभ्यां' इति ख. पाठः । (२) 'मित्यस्य तुल्यत्वात्' इति ख. पाठः । (३) 'नाड्या विविच्यावगन्तु' इति ख. पाठः ।

विशेषोऽस्तीति सिद्धान्त उच्यते । तथा हि । हार्दस्य हृदयगतस्य परमेश्वरस्याराधनरूपविद्यासामर्थ्यात् तदङ्गगत्यनुसंधानाच्च प्रीतेन तेन सर्वानुग्राहकेण स्वस्वरूपावरणमलध्वंसनाविदग्धया ऽनुग्रहदृष्ट्या निरीक्षितस्तदनुग्रहप्रकाशितद्वारः शताधिकया मूर्धन्यनाड्या विद्वानुत्क्रामति। न तथा परः। किं तु इतरनाडीभिरेव। तथा श्रुतिः । "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥" इति । स एष विदुष उत्क्रमणे विशेषः । एतदुक्तं भवति । "रुद्रो जनानां हृदये सन्निविष्टः । हृत्पुण्डरीकं विरजं विशुद्धम् ॥" इत्यादिश्रुतिषु 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यादिस्मृतिषु च सर्वजनहृदयगतो हि परमेश्वरोऽवगम्यते। यत्र सुषुप्तो जीवः स्वेन्द्रियवृत्तिभिः सह विलीय तदेकरसो भवति, यश्च 'विश्वाधिको रुद्रो महर्षिः' 'सर्वो वै रुद्रः' इत्यादिश्रुतिषु निमित्तत्वाद्विश्वाधिकत्वेनोपादानत्वाद्विश्वात्मकत्वेन चावगम्यते, 'एको हि रुद्रो न द्वितीयाय तस्थुः' इत्यादिश्रुतिषु यस्य विश्वाधिपत्यं श्रूयते, 'शिव एको ध्येयः' 'यदा चर्मवदाकाशम्' इति यमन्तरेण मुमुक्षूणां ज्ञेयं वस्तु नास्तीति विज्ञायते, 'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा' इति य उत्क्रान्तिसमये विदुषां स्वरूपप्रकाशकतारकब्रह्मोपदेष्टृत्वेनाम्नायते, 'आ वो राजानम्' इत्यादिषु यस्याराध्यत्वेन सर्वयज्ञाधिपत्यं वर्ण्यते, 'उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं

---

नाड्या निष्क्रान्तानामेवामृतत्वं नान्येषामिति नियच्छन्त्यर्थाद्विदुषां मूर्धन्यनाड्यैव निष्क्रमणमित्यपि नियच्छत्येव । अन्यथा नाड्यन्तरनिष्क्रान्तानां विदुषामपि मुक्त्यभावप्रसङ्गेन मुक्त्यर्थविद्याविधायिशास्त्राऽप्रामाण्यप्रसङ्गात् । न च नाडीनां दुर्दर्शत्वम् । विद्याराधितपरमेश्वरप्रसादात्तद्दर्शनोपपत्तेः । न चैवं श्रुत्यर्थोपपादने संभवत्यसदर्थावलम्बनत्वेन पाक्षिकार्थावलम्बनत्वेन वा ब्रह्मनाडीस्तुत्यर्थत्वकल्पनं युक्तमिति तमिमं सिद्धान्तं सूत्राऽरूढं कुर्वन्नुपपादयति—तथाहीति । सूत्रेण ब्रह्मनाडीदर्शनोपायमात्रं दर्श्यते । तेन तदपेक्षस्य सिद्धान्तस्यार्थात्सिद्धिः । विद्यासामर्थ्यात् विद्याविशेषभूतगत्यनुसन्धानपरिशीलनाच्च विद्वान्हृदयगतेन परमेश्वरेणानुगृहीतो भवतीति । ततश्च तस्य परमेश्वरस्योकः स्थानं हृदयं तदग्रे ज्वलनं प्रकाशो भवति । तेन प्रकाशेन ब्रह्मनाडीद्वारं प्रकाशितं भवति । ब्रह्मनाड्याः खलु द्वारं नाभिचक्रे प्रसिद्धं न तु हृदयादूर्ध्वप्रदेशे हृदि । नाभ्यादिमूर्धपर्यन्तव्यापित्वात्तस्याः । अतो विद्वान्प्रकाशमानेन हृदयाग्रप्रकाशेन तावद्देशव्यापिना प्रकाशितं ब्रह्मनाडीद्वारं प्रविष्टस्तया शताधिकया नाड्या नलीकमुखनिवेशितशीसगुलिकावत् झटिति निष्क्रामतीति सूत्रस्यार्थः । ननु यस्यैवमुत्क्रान्तिसमये परमेश्वरानुग्रहैकलभ्यो हृदयाग्रप्रकाशो नास्ति तस्य कथं मूर्धन्यनाड्या निष्क्रमणनियमस्सिद्ध्येदित्याशङ्क्य नियमेन परमेश्वरस्य तदानीमाविर्भूयानुग्राहकत्वं तदीयवैभवप्रख्यापनेन समर्थ्यते । एतदुक्तमित्यादिना । उन्नो वीरानिति । वीरा देवव्रतादिषु प्रसिद्धास्सदा पर-

---

(१) 'जीवस्य यदोकः' इति ख. पाठः ।

त्वा भिषजां शृणोमि' इति यः संसाररोगस्य भिषक्तम इति निरूप्यते। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति सकलप्रपञ्चविचित्रकलिकानिकुरुम्बावलम्बिनी मायालक्षणा परमशक्तिर्यस्य रूपैकदेशस्वभावतया प्रतिपाद्यते। स खलु हृदयगतो हार्दः परं ब्रह्म परमेश्वरः परममङ्गलस्वरूप उमापतिः परमात्मा स्वाज्ञारूपश्रुतिचोदितेषु कर्मस्वग्निहोत्रादिषु स्वाराधनरूपेषु नियतं निर्मुक्तसकलाविहितकर्मलवं स्वार्पितसकलकर्मफलं स्वायत्तचित्तं स्वज्ञानामृतपरिपूर्णं निरस्तसमस्तकाम्यफलं विवेकादिसंपन्नं स्वभक्तिमात्रैकनिरतं स्वप्रसादाकाङ्क्षिणं विद्यावन्तं साधकमवलोक्य शरीरपरित्यागसमये तद्विषयसंपन्नप्रसादः तस्मिन् संसारमलकलङ्कापकर्षिणीमनुग्रहदृष्टिं निदधाति। तदनुग्रहविशेषेणासौ विगलितसांसारिकमलः प्रकाशितात्मद्योतितमूर्धन्यनाड्या निर्गत्यार्चिरादिना तदीयं परं पदमप्राकृतं निरतिशयानन्दस्वभावं प्राप्य तदाकारो भूत्वा नित्यनिरतिशयानन्दस्वरूपो भवति। तस्मादविदुषो विदुषश्च गतिवैषम्यमस्तीति युक्तमेव॥

इति तदोकोऽग्राधिकरणम्॥ ७॥

---

मेश्वरसन्निधावन्तरङ्गसेवां कुर्वन्तः गणनाथाः। तेषु हि वीरशब्दः प्रसिद्धः। 'क्षयद्वीराय प्रभरामहे मतिं' 'क्षयद्वीराय नमसा विधेम ते' 'दिव्या गणा बहुरूपाः पुराणाः' 'आयुश्छिदो नः प्रथमं तु वीरा' इत्यादिमन्त्रेषु प्रसिद्धः। क्षयन्तो वसन्तो वीरा यस्मिन् तस्मै क्षयद्वीरायेति परमेश्वरस्य विशेषणम्। एवंभूतान् वीरान् सर्वेष्वपि पारमेश्वरेषु सर्वेष्वपि दिव्यस्थानेषु सन्निहितान्प्राप्य कर्मभूतान्नः अस्मान् उदर्पय ऊर्ध्वदेशे सर्वस्यापि प्रपञ्चोपरिस्थिते परमपदरूपे दिव्यस्थाने प्रापय परमपदे मां तैस्सह संयोजयेत्यर्थः। प्रकाशितात्मद्योतितमूर्धन्यनाड्येति। मलविगलनोपक्रमाद्धृदयाग्रे खद्योतवत्संजातप्रकाशो य आत्मा स्वापृथग्भूतधर्मज्ञानप्रभारूपतः तेन द्योतितया मूर्धन्यनाड्येत्यर्थः। सर्वमिदं प्रस्तुतविद्वदुत्क्रान्त्यनुसारेण वर्णितम्। एवमविद्वदुत्क्रान्तावपि वर्णाश्रमधर्माराधितपरमेश्वरानुग्रहवशात्प्राप्यलोकानुगुणनाडीप्रवेशार्थः तत्तन्नाडीद्वारकप्रकाशोऽनुसन्धेयः॥

इति तदोकोऽग्राधिकरणम्॥ ७॥

---

नयमणिमालायाम्

## अथ तदोकोग्राधिकरणम्॥ ७॥

सू०॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया॥ १६॥

विद्वानपि निष्क्रामति देहान्नाड्या यया कयाचिदपि। ननु नियमेन कथञ्चिन्नाडीनां दुर्विवेचत्वात्॥ ३६७॥

विद्याराधितशंभुप्रकाशितद्वारको जीवः। निष्क्रामति मूर्धगया नाड्या श्रवणात्तयोर्ध्वमिति॥ ३६८॥

इति तदोकोऽग्राधिकरणम्॥ ७॥

## अथ रश्म्यनुसार्यधिकरणम् ॥ ८ ॥

### सू ॥ रश्म्यनुसारी ॥ १७ ॥

पूर्वत्र साधकस्य हृदयगतपरमेश्वरानुगृहीतस्य मूर्धन्यनाड्या निर्गम उक्तः। निर्गतस्य तदूर्द्ध्वगमनं निशि दिवा च संभवति न वेति संशयः। किं तावत् प्राप्तम्? 'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमत' इति समुत्क्रान्तस्य रश्मिसंबन्धेनोर्द्ध्वदेशाक्रमणमवगम्यते। रश्मिसंबन्धस्तु दिवैव संभवति, न तु रात्राविति प्राप्ते ब्रूमः। उत्क्रान्तो विद्वान् रश्मिसंबन्धादेवोर्द्ध्वं गच्छतीति सत्यम्। स तु दिवा च रात्रौ च संभवति। निदाघेषूष्मदर्शनेन निश्यपि रश्मिसत्त्वात्। तस्माद्दिवा च रात्रौ च रश्म्यनुसारी गच्छत्यूर्द्ध्वमिति निर्णयः॥ आशङ्क्य परिहरति—

### सू ॥ निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥

निशि मृतस्यापि रश्मिसंबन्धेन ब्रह्मप्राप्तिरभिहिता। सा न संभवति, "दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्॥" इति निशामरणनिन्दनात्। इति चेन्न। संसारबन्धस्य यावद्विद्याभावित्वात्। विद्यया अनारब्धकार्येषु बन्धहेतुषु कर्मसु नाशितेषु अनुवर्तमानस्य प्रारब्धस्यापि यावच्चरमदेहावसानभावित्वाच्चरमदेहावसाने प्रारब्धेऽपि नष्टे सति पुनर्ब्रह्मप्राप्तिविघ्नहेत्वभावात्। तथा दर्शयति श्रुतिः 'तस्य तावदेव चिरं यावन्न

---

## अथ रश्म्यनुसार्यधिकरणम् ॥ ८ ॥

सू० ॥ रश्म्यनुसारी ॥ १७ ॥ मूर्धन्यनाड्या निष्क्रमणे विचारिते तदनन्तरभाविरश्मिभिरूर्द्ध्वाक्रमणमधिकृत्य विचार्यत इति सङ्गतिः। विदुष ऊर्द्ध्वदेशाक्रमणकारणानां सूर्यरश्मीनां रात्रौ सत्त्वाऽसत्त्वाभ्यां तस्य निशामरणनिन्दाविषयत्वाऽविषयत्वाभ्याञ्च संशयः। विदुषो निशि मृतस्य ऊर्द्ध्वगतिर्न संभवति। तत्कारणानां सूर्यरश्मीनामभावात् निशास्वनुभूयमानस्योष्मण आग्नेयत्वेनाप्युपपत्तेः। ज्योतिश्शास्त्रप्रक्रियया चन्द्रमण्डलमनुप्रविष्टाः सूर्यरश्मय एव चन्द्ररश्मय इत्यङ्गीकारेऽपि दर्शादिरात्रिषु तेषामप्यभावात्। न च निशि मृतस्य विदुषो विनापि सूर्यरश्मीनूर्द्ध्वगतिः शङ्कनीया। एतैरेव रश्मिभिरित्यवधारणविरोधात्। न च निशि मृतस्य विदुषो मूर्धन्यनाड्या निष्क्रान्तस्य यावदुदयं सूर्यरश्मिप्रतीक्षणेनोर्द्ध्वगतिर्वाच्या। 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छे'दिति शैघ्र्यवचनविरोधात्। तथा निशामरणनिन्दनस्य विद्वदविद्वत्साधारण्येन प्रवृत्तत्वादपि निशि मृतस्य विदुषो न संभवत्यूर्द्ध्वगतिरिति पूर्वः पक्षः। सिद्धान्तस्तु निश्यपि विद्वान्सूर्यरश्म्यनुसारी ऊर्द्ध्वं गच्छति ग्रीष्मे दिवा सौरातपोष्मप्रकर्षे सत्येव रात्रावूष्मदर्शनेन तस्य सूर्यसंबन्धित्वावगत्या रात्रावपि सूर्यरश्मीनामनुवृत्त्यवधारणादिति। अथ निशामरणनिन्दारूपपूर्वपक्षहेत्वन्तरनिराकरणार्थं सूत्रम् ॥ सू० ॥ निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥ यावद्विद्याभावित्वादिति। विद्याशब्देन विद्यादेहो विव-

विमोक्ष्येऽथ संपत्स्य' इति । निशानिन्दा त्वितरपुरुषविषया । अतो निश्यपि मृतस्य ब्रह्मप्राप्तौ न विरोधः ॥

इति रश्म्यनुसार्यधिकरणम् ॥ ८ ॥

## अथ दक्षिणायनाधिकरणम् ॥ ९ ॥

### सू ॥ अतश्चायनेऽपि दक्षिणे ॥ १९ ॥

अत एव बन्धहेत्वभावादेव। दक्षिणायनमृतस्यापि विदुषो ब्रह्मप्राप्तिरस्त्येव ॥

### सू ॥ योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २० ॥

ननु विदुष एव मुमूर्षून् प्रति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषः स-

---

क्षितः । अत एव 'यावच्चरमदेहावसानभावित्वादि'त्युक्तम् । निशानिन्दात्विति । मुक्त्यर्थविद्याविधायिशास्त्रप्रामाण्यादविद्वद्विषयत्वं कल्पनीयम् । अविद्वत्स्वपि येषामिष्टापूर्तादिकारिणामतिशिष्टानां निशामरणं दृश्यते, तेषां ततोऽपि प्रबलस्य प्राचीनस्य दुष्कर्मणः फलोन्मुखता फलबलात्कल्पनीयेति भावः ॥

इति रश्म्यनुसार्यधिकरणम् ॥ ८ ॥

## अथ दक्षिणायनाधिकरणम् ॥ ९ ॥

सू० ॥ अतश्चायनेऽपि दक्षिणे ॥ १९ ॥ अतिदेशाधिकरणस्यास्येयमधिकाशङ्का । 'य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोती'ति तैत्तिरीयोपनिषदि पुरुषविद्यावसाने पूर्वानुवाकविहितब्रह्मविद्यावत उत्तरायणमृतस्यादित्यप्राप्तिमुक्त्वा दक्षिणायनमृतस्य चन्द्रप्राप्तिरुक्ता । न चेयमर्चिरादिमार्गपर्वभूतचन्द्रप्राप्तिः । तस्योत्तरायणमृतविद्वत्साधारण्येन दक्षिणायनमृताविद्वन्मात्रविषयत्वायोगात् 'पितॄणामेव महिमानं गत्वे'ति पित्र्यभोगानुभवोक्तिविरोधाच्च । अतो विदुषोऽपि दक्षिणायनमृतस्य धूमादिमार्गेण चन्द्रं प्राप्य पुनरावृत्तिर्विवक्षितेत्यवसीयते । चन्द्रलोके पित्र्यभोगानुभवस्य पुनरावृत्तिपर्यन्ततायाः 'यावत्सम्पातमुषित्वे'त्यादिवाक्यावगतत्वादिति। अत्राऽयं परिहारः । उदगयनदक्षिणायनमृतयोरुभयोरपि विदुषोरत्र ब्रह्मप्राप्तिरेव प्रतिपिपादयिषिता । 'ब्रह्मणो महिमानमाप्नोती'ति वाक्यविशेषात् । उत्तरायणमृतस्यादित्यलोके दिव्यलोकानुभवः दक्षिणायनमृतस्य चन्द्रलोके पित्र्यभोगानुभवश्च मार्गे विश्रान्तिहेतुत्वेन विवक्षित इत्यधिकरणद्वयाक्षेपसमाधानार्थत्वेनोभयशेषभूतमिदं सूत्रम् ॥ सू० ॥ योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २० ॥ 'यत्र काले त्वनावृत्ति'मिति स्मृतौ काल-

---

नयमणिमालायाम्

अथ रश्म्यनुसार्यधिकरणम् ॥ ८ ॥

सू० ॥ रश्म्यनुसारी ॥ १७ ॥ निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥

रश्मिभिरूर्द्ध्वाक्रमणं निष्क्रान्तस्य श्रुतं विदुषः । तन्निशि मृतस्य नास्ति ब्रह्माप्तिर्गर्हिताऽपि निशा ॥ ३६९ ॥

मैवं निश्यपि सत्ता रश्मीनामूष्मणावगता । तद्गर्हा चाविदुषां नोचेत्पाक्षिकफला भवेद्विद्या ॥ ३७० ॥

इति रश्म्यनुसार्यधिकरणम् ॥ ८ ॥

र्यते। "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥" "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥" इति । तस्मादविद्वद्विषया निशादक्षिणायननिन्देत्ययुक्तमिति शङ्कोत्तरमिदं सूत्रम् । विदुषामर्चिरादिगतिः, तद्विपरीताऽन्येषामिति योगिनो योगयुक्तान्प्रति योगाङ्गतया प्रतिदिनमनुस्मर्तव्ये देवयानपितृयानाख्ये एते गती इति स्मर्यते 'यत्र काले त्वनावृत्तिम्' इत्यादिना। न तु विदुषः प्रति मरणकालविशेषः स्मर्यते। "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन। तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन॥" इत्युपसंहारात्, 'अग्निर्ज्योतिः' 'धूमो रात्रिः' इति श्लोकयोर्देवयानपितृयानगतिप्रत्यभिज्ञानाच्च। 'यत्र काले तु' इति कालशब्दस्त्वातिवाहिकगणस्य कालाभिमानिदेवताभूयस्त्वात्। अतः सर्वथा विदुषां ब्रह्मप्राप्तौ निशादक्षिणायनकृष्णपक्षनिषेधो नास्त्येव। यदा देहापगमस्तदानीमेव तत्प्राप्तिरिति ॥

इति दक्षिणायनाधिकरणम् ॥ ९ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

---

शब्दो योगिनां मुमुक्षूणामेवावृत्त्यनावृत्तिहेतुनिशादिपदं दक्षिणायनोत्तरायणरूपमरणकालरूपविशेषपरमित्यभिप्रायेणाक्षेपः । तं कालं वक्ष्यामीति प्रतिज्ञाय मार्गद्वयपर्वणामुपदेशात् कालशब्दः कालाभिमानिदेवताबहुलातिवाहिकगणपरः । 'आवृत्तिं चैव योगिना' मिति योगिशब्दो न मुमुक्षुमात्रविषयः किन्त्वावृत्त्यनावृत्तिभाजामैश्वर्यार्थिनां मुमुक्षूणां च योगिनां साधारण इति परिहारः॥ इति दक्षिणायनाधिकरणम्॥ ९ ॥

इति श्रीशिवातिवादिमूर्द्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ श्रीकण्ठशिवाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकाख्यायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

---

## नयमणिमालायाम्

### अथ दक्षिणायनाधिकरणम् ॥ ८ ॥

सू० ॥ अतश्चायनेऽपि दक्षिणे ॥ १९ ॥ योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २० ॥

एवमपि दक्षिणायनमृतस्य न ब्रह्मलोकगतिः । कथमन्यथोत्तरायणकालं भीष्मः प्रतीक्षेत ॥ ३७१ ॥

विद्याफलनैयत्यात्तदा मृतस्यापि सास्त्येव । भीष्मस्य तु प्रतीक्षा कर्तुं स्वच्छन्दमृत्युताप्रथनम् ॥ ३७२ ॥

इति दक्षिणायनाधिकरणम् ॥ ९ ॥

इति श्रीमदप्पय्यदीक्षितकृतौ अधिकरणसारसङ्ग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे तुरीयाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

॥ श्रीः ॥

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

### अथ अर्चिराद्यधिकरणम् ॥ १ ॥

### सू ॥ अर्चिरादिना तत्प्रथितेः ॥ १ ॥

पूर्वत्रोपासकस्य हृदयगतपरमेश्वरानुग्रहेण प्रकाशितद्वारस्य मूर्धन्यनाड्या देहान्निष्क्रान्तिरभिहिता । एवंविधस्य ब्रह्मप्राप्तिरर्चिरादिना मार्गेणैव, उतान्यथाऽपि संभवतीति प्रथममिह विचार्यते । तथा हि । एकत्र 'यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सु-

## शिवार्कमणिदीपिकायाम्

## अथ तुरीयाध्यायस्य तृतीयः पादः ॥

### अथ अर्चिराद्यधिकरणम् ॥ १ ॥

पूर्ववृत्तार्थानुवादेन सङ्गतिसूचनपूर्वकमाद्याधिकरणस्य विचार्यं दर्शयति—पूर्वत्रेति । मार्गैक्योपपादकप्रत्यभिज्ञानसत्वाऽसत्वाभ्यां संशयः । ननु यथा बह्वीषु शाखासु श्रुतापि दहरविद्यैका एवं मार्गोऽप्येकः स्यादिति पूर्वपक्ष इत्याशङ्क्य पूर्वपक्षमुपपादयति—तथा हीति । स्थानगुणादिप्रत्यभिज्ञानाद्युक्तं विद्यैक्यम् । इह तथा मार्गैक्योपपादिनी प्रत्यभिज्ञा न दृश्यते । न ख'ल्वन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते व्यपोह्य शीर्षकपाले ।' इति श्रुतानि तालुकान्तरवलम्बमानावयवकेशान्तशीर्षकपालानि व्याहृतिविद्यायामिव विद्यान्तरेषु मार्गपर्वत्वेन श्रुतानि । तत्राग्न्यादीनां तु ब्रह्मण इव प्राप्यत्वेनैव श्रवणं मार्गपर्वत्वेन । शैब्यप्रश्ने च 'स सामभिरुन्नीयते ब्रह्मलोक'मिति सामवेदपठितानां साम्नामेव ब्रह्मलोकपर्यन्तप्रापकत्वं श्रूयते । न त्वर्चिरादिपर्वमध्ये किञ्चिदप्याम्नायते । तथा छान्दोग्ये दहरविद्यायां 'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वं आक्रमत' इति । सूर्यरश्मीनामेवेतरव्यवच्छेदेन प्रापकत्वं श्रूयते 'सूर्यद्वारेण ते विरजाः प्रयन्ती'ति । यत्रार्चिरादिमार्गान्तर्गतस्यादित्यस्य श्रवणं तत्रापि 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छे'दिति श्रुत्यन्तरे त्वरावचनादादित्यप्राप्तेरर्चिरादिपूर्वपर्वानपेक्षत्वं प्रतीयते । कौषीतकिशाखायां 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छती'ति प्रथममाद्यपर्वभूताग्निश्रवणेऽपि तदनन्तरं 'स वायुलोकं स वरुणलोकं स आदित्यलोकं स चन्द्रलोकं स प्रजापतिलोक'मित्यन्यान्येव मार्गपर्वाणि श्रूयन्ते । तत्र वैरूप्यभूयस्त्वात्किञ्चित्प्रत्यभिज्ञानं सदप्यसत्कल्पं, तथा बृहदारण्यके क्वचित् 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छती'ति वायुः प्रथमप्राप्यः श्रूयते । एवं मार्गपर्वभेदा-

वरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम्' इति ब्रह्मप्राप्तेरर्चिरादिगतिमन्तरेणाप्युपपत्तिरवगम्यते । तस्मात् ब्रह्मप्राप्तौ नार्चिरादिनियम इति प्राप्तेऽभिधीयते । विद्वानर्चिरादिनैव ब्रह्म प्राप्नोति पञ्चाग्निविद्यादिषु 'तेऽर्चिषमभिसंभवन्ति' इत्यादिनाऽर्चिरादेर्ब्रह्मप्रापकत्वेन प्रसिद्धत्वात् । 'भूरित्यग्नौ' इत्यादिषु न ब्रह्मप्राप्तिमार्ग उच्यते, किंतु तत्तद्विभूतिप्राप्तिरेव । ततः परप्राप्तिरर्चिरादिनैव । निरन्वयोपासकानां नार्चिरादिरिति केचित् ॥

इति अर्चिराद्यधिकरणम् ॥ १ ॥

तत्क्रमभेदाच्च यथाम्नानं प्रकरणभेदेन विद्याभेदेन च मार्गभेद इत्येव युक्तम् । अन्यथा स्थानगुणभेदेऽप्युपास्यं ब्रह्म सर्वत्रैकमिति सर्वासामपि दहरवैश्वानरादिविद्यानामैक्यं प्रसज्येतेति । एवं प्राप्ते सिद्धान्तः । सू० ॥ अर्चिरादिना तत्प्रथितेः ॥ १ ॥ प्रसिद्धस्तावदर्चिरादिमार्गः सर्वविद्यासाधरण इति । छान्दोग्ये पञ्चाग्निविद्यायां 'तद्य इत्थं विदु'रिति प्रकृतान्पञ्चाग्निविदः संकीर्त्य 'ये चेमेऽरण्ये श्रद्धां तप इत्युपासत' इति विद्यान्तरवतामप्यनुकीर्तनाद्बृहदारण्यकेऽपि तथैव 'ये चामी अरण्ये श्रद्धां सत्यमित्युपासत' इति विद्यान्तरवतामप्यनुकीर्तनात् । ननु यासु विद्यासु न कश्चिदपि मार्गः श्रूयते तद्विषयमिदं विद्यान्तरवदनुकीर्तनं भविष्यति । स्यादेतदेवं यदि मार्गैक्यमशक्योपपादनं स्यात् । शक्यते तु तदुपपादयितुं नानाशाखागतनानाविद्यासु श्रुतानां पर्वणामुपसंहारेण लाघवाद्बाधकाभावात्तत्र तत्रैकदेशप्रत्यभिज्ञानसत्वाच्च । तथाहि व्याहृतिविद्यायां स्तनाकृतिनेन्द्रस्य जीवस्य परमेश्वरस्य वा स्थानभूतावयवेन निर्गत्य केशान्तस्थानस्य शिरःकपालस्यातिलङ्घनं यदुक्तं तन्मूर्धन्यनाड्या निष्क्रमणमेव । अग्न्यादीनाञ्च मार्गपर्वभूतानामेव कीर्तनं । तत्र यद्ब्रह्मणीवाग्न्यादिष्वपि प्रतिष्ठितत्वश्रवणं तु तेषु कियत्कालं विश्रान्तिरस्तीत्यभिप्रायेण । व्याहृतिविद्यायां हि चतुर्थव्याहृतिरूपस्य ब्रह्मण इव व्याहृतित्रयरूपाणामग्न्यादीनामस्त्युपास्यत्वं तद्बलात्तेषां लोकेषु विश्रान्तिवचनं युक्तम् । 'स सामभिरुन्नीयते ब्रह्मलोक' मित्यत्र 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण पुरुषमभिध्यायीते'त्येकमात्रद्विमात्रप्रणवसाधनकोपासनानुकीर्तनानन्तरं त्रिमात्रप्रणवसाधनकोपासनाविधानात् तत्र प्रणवमात्राणामृग्यजुस्सामरूपतया प्रतिपादितत्वाच्च । विद्यासाधनप्रणवतृतीयमात्रारूपाण्येव सामानि विद्यासाधनत्वाद्ब्रह्मप्रापकत्वेनानुकीर्तितानि न तु मार्गतया । 'अथैतैरेव रश्मिभि'रित्यत्रावधारणं रश्मिविधानार्थप्राप्ततदयोगव्यवच्छेदानुवादकं न त्वितरेषामर्चिरादीनां व्यवच्छेदकम् । एकस्य वाक्यस्य रश्मिप्रापणे तदितरव्यवच्छेदे च तात्पर्यायोगात् त्वरावचनं पितृयाणमार्गापेक्षयोपपन्नं न पूर्वपर्वाणि व्यवच्छिनत्ति । नापि विदुषामेव मार्गान्तरमवधित्वेनापेक्षते । तत्र वायुवरुणादिश्रवणं तु विद्यासु गुणोपसंहारवन्मार्गपर्वोपसंहारेणोपपद्यत इति न मार्गैक्यविरोधि । तत्पाठक्रमोऽपि न तद्विरोधी । श्रुत्यादिबलेनैकरूपक्रमोपपादनसम्भवात् । तस्माल्लाघवाद्बाधकाभावाच्चैक एव मार्गः । न चैवं दहरवैश्वानरादिविद्यानामैक्यमभ्युपगन्तुं शक्यं गुणानामानन्त्येनाशक्यानुष्ठानत्वात् । मार्गपर्वणां तु नानाशाखासु श्रुतानामुपसंहारेऽपि न द्वादशसंख्यातिलङ्घनमस्तीति वैषम्यम् । केचिदिति । तेषां मते 'अर्चिरादिना तत्प्रथिते'रितीदं सूत्रं प्रथितिग्रहणात्प्रायोऽ-

## अथ वाय्वधिकरणम् ॥ २ ॥

### सू ॥ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

अत्र श्रुतस्यार्चिरादिक्रमस्य मध्ये श्रुत्यन्तरसिद्धक्रमोऽत्र निवेशनीयः अथवा अयमेव क्रम इति संदिह्यते। 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याचन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इत्यर्चिरादिक्रमश्छान्दोग्यसिद्धः । बृहदारण्यके 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छति' इति संवत्सरादित्ययोर्मध्ये वायुः श्रुतः।

भिप्रायं नेतव्यम्। अवश्यं च प्रायोऽभिप्रायमिदमिति सर्वैरपि वक्तव्यम्। हिरण्यगर्भपर्यन्तानां देवानां स्वस्वलोकेषु स्थित्वैव मुच्यमानानामर्चिरादिमार्गासंभवात्। न च भुवि विद्यामनुष्ठाय मुच्यमानानां मनुष्याणामयमेक एव मार्ग इति नियमो विवक्षित इति वाच्यम्। मधुविद्योपासकानां वसुरुद्रादित्यमरुत्साध्यगणपदप्राप्तिपूर्विकायां मुक्तौ वस्वादिपदपर्वकमार्गान्तरावश्यंभावादिति ॥

इति अर्चिराद्यधिकरणम् ॥ १ ॥

## अथ वाय्वधिकरणम् ॥ २ ॥

सू० ॥ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ यदुक्तं नानाशाखाश्रुतसर्वपर्वयुक्त एको मार्ग इति तन्न युक्तम्। मार्गैक्ये वायोः क्वचिदपि निवेशासंभवेन कासुचिच्छाखासु तदाम्नानस्याप्रामाण्यप्रसङ्गादिति पूर्वाधिकरणसिद्धार्थाक्षेपेण प्रत्यवस्थानात्सङ्गतिः। अर्चिरादिक्रमस्य मध्य इति । अर्चिरादिरूपस्य क्रमिकस्यातिवाहिकगणस्य मध्य इत्यर्थः। श्रुत्यन्तरसिद्धोऽपि क्रम इति। क्रमिकः, पर्वविशेष इत्यर्थः। ननु श्रुतोऽर्चिरादिरातिवाहिकगणस्तन्मध्ये निवेशनीयत्वेन विचारविषयः पर्वविशेषः क इत्याकाङ्क्षायां तदुभयं विवेचयति—तेऽर्चिषमिति। 'स आदित्यमागच्छती'त्यनेन 'वायुः श्रुत' इत्यस्यान्वयः। ततस्संवत्सरादित्ययोर्मध्ये स निवेश्यो न वा इति संशयवाक्यं द्रष्टव्यम्। वायोस्संवत्सरादित्यमध्यनिवेशनीयदेवलोकरूपत्वतदभावाभ्यां संशयः । अत्रेयं विषयशुद्धिः। पञ्चाग्निविद्यायामर्चिरादिमार्गमामनन्तश्च छन्दोगाः मासादित्ययोर्मध्ये संवत्सरं पठन्ति। वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्य'मिति तयोर्मध्ये देवलोकं

---

### नयमणिमालायाम्

### अथ अर्चिराद्यधिकरणम् ॥ १ ॥

सू० ॥ अर्चिरादिना तत्प्रथितेः ॥ १ ॥

यत्रासौ केशान्तश्रुतौ विनाप्यर्चिरादिकं मार्गम्। ब्रह्मप्राप्तिश्रवणान्नासौ विदुषां गतौ नियमः ॥ ३७३ ॥

येचेमेऽरण्य इति श्रवणात्सर्वत्र नियत एवासौ। ······दिति विभूत्याप्तिं ब्रह्मप्राप्तौ नेतरं मार्गम् ॥ ३७४ ॥

इति अर्चिराद्यधिकरणम् ॥ १ ॥

---

१ क्रमप्राप्तस्येति. ख. पा.

स निवेश्यो न वेति संशये न निवेश्योऽश्रवणादिति प्राप्ते ब्रूमः । गुणोपसंहारन्यायेन संवत्सरादूर्द्ध्वमादित्यात् पूर्वं वायुर्निवेश्यः । बृहदारण्यक एवा-

पठन्ति । मार्गैक्यपक्षे तावुभावुभयत्रोपसंहार्यौ । तयोश्च संवत्सरो मासादनन्तरमेव निवेशनीयः । अहश्शुक्लपक्षोत्तरायणमासानामुत्तरोत्तरमधिकपरिमाणानां कालानामुपर्युपरि निवेशनदर्शनात् परिशेषाद्देवलोकस्तदनन्तरं निवेशनीयः । ततश्च यदि देवलोक एव वायुः स्यात्तदा संवत्सरादित्ययोर्मध्ये वायोर्निवेशो लभ्यते । तल्लाभे सत्येक एव मार्ग इति पूर्वोक्तमुपपद्यते । यदि देवलोकादन्यो वायुस्स्यात्तदा तस्य न निवेशो लभ्यते । तदलाभे च मार्गैक्ये तस्यान्यत्रापि निवेशासंभवात् । शाखाविशेषेषु तदाम्नानप्रामाण्योपपादनार्थं मार्गभेदमभ्युपगम्य 'यदा वै पुरुषोऽस्माल्लोका'दित्यादिवाजसनेयकवाक्यश्रुते मार्गे वायुः प्रथमपर्व 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोक'मिति कौषीतकिवाक्यश्रुते मार्गे द्वितीयं पर्वेत्युपपादनीयमित्येक एव मार्ग इत्येतत्पूर्वोक्तं नोपपद्यत इति । तत्र पूर्वपक्षमाह—न निवेश्योऽश्रवणादिति । अत्रायमाशयः । न तद्वाजसनेयकवाक्यानुसारेण वायुः प्रथमपर्वतया निवेशनीयः । कौषीतकिवाक्यपाठक्रमविरोधात् । न च कौषीतकिवाक्याम्नाताग्न्युपसंहारेण वाक्यद्वयाविरोधं संपाद्य द्वितीयपर्वतया निवेशनीयः । 'अर्चिषोऽहरि'ति पञ्चाग्निविद्याम्नातपञ्चमीविभक्तिश्रुत्याग्न्यनन्तरमह्नः प्राप्तेः । न चादित्यात्पूर्वं निवेशनीयः । 'देवलोकादादित्य'मिति श्रौतक्रमविरोधात् । ननु 'स वायुमागच्छती'त्यादिवाजसनेयकवाक्ये नीरन्ध्रतया मार्गमावृत्य स्थितो वायुः स्वावयवप्रहाणेन रथचक्रप्रमाणच्छिद्ररूपं मार्गं ददाति तेनादित्यमागच्छतीति वायुदत्तमार्गस्यादित्यप्राप्तौ करणत्वं श्रूयते । न चोर्ध्वदेशोत्क्रमणमात्रे वायुदत्तमार्गस्य करणत्वं श्रुतं नत्वादित्यमण्डलोत्क्रमण इति वाच्यम् । ऊर्ध्वदेशस्य विशेषाकाङ्क्षायां वाक्यशेषश्रुतादित्यमण्डलरूपतया पर्यवसानादिति चेत् । किं ततः । 'देवलोकादादित्य'मित्यपि हि श्रुतिरेव । 'संवत्सरादादित्यं देवलोकादादित्य'मिति पञ्चम्योः श्रुतित्वाविशेषेऽपि संवत्सरस्य पूर्वनिवेशे माससमभिव्याहारवद्वायुदेवलोकयोर्मध्ये देवलोकस्य पूर्वनिवेशे किञ्चिद्विनिगमकमस्ति। न च 'संवत्सरादादित्य'मिति व्यवहिते पञ्चमी श्रूयते 'तेन स ऊर्ध्वं आक्रमत'इति साधकतमत्ववाचिनि तृतीयात्वव्यवधान एवोपपद्यत इति वाच्यम् । 'स आदित्यमागच्छती'त्येतदनन्तरं हि 'तस्मै स तत्र विजिहीते यथाडम्बरस्य खं तेन स ऊर्ध्वं आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्वं आक्रमते स ब्रह्मलोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीस्समा' इति श्रूयते । तत्रादित्यदत्तस्याडम्बराख्यवाद्यविशेषप्रमाणस्य मार्गस्य चन्द्रप्राप्तावव्यवधानेन कारणत्वं यद्यपि संभवति तथापि चन्द्रदत्तस्य मार्गस्य शोकमहिमशब्दोक्तदुःखज्ञानरहितपरब्रह्मलोकप्राप्तावव्यधानेन कारणत्वं न संभवति । विद्युदादिप्राप्तिव्यवधानात् । तथा च तृतीयापि व्यवहिते श्रूयत इति नैतद्विनिगमकम् । प्रसिद्धं च ज्योतिष्टोमादिवाक्येषु व्यवहितकरणे तृतीयाश्रवणम् । तर्हि विनिगमकाभावे वायुदेवलोकयोः पौर्वापर्ये विकल्पोऽस्त्विवति चेत् । मार्गभेदपर्याय एवायं विकल्पशब्दः । न हि विद्यानुष्ठानमात्रार्थो मार्गोपदेशः किं तु ब्रह्मलोकप्राप्त्यर्थोऽपि । तथापि केचिद्देवलोकपूर्वकेण मार्गेण ब्रह्मलोकं प्राप्नुवन्ति

न्यत्र 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति पठितेऽर्चिरादिक्रमे छान्दोग्यश्रुतित उपसंहार्यात् मासाधिककालरूपत्वेन मासेभ्य उपरि निवेशनीयात् संवत्सरादुपरि देवलोकः श्रुतः, सोऽपि वायुरेव। देवलोकशब्दो देवानां लोक इति व्युत्पत्तेरविशेषेण वायुवाचकः। वायुशब्दस्तस्यैव विशेषेण वाचक इत्यविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायुरेक एवाभिहित इत्यब्दादूर्ध्वमादित्यात् पूर्वं वायुर्निवेश्यः। 'वायुर्देवानामासनभूत:' इति श्रूयते । 'योऽयं पवत एष देवानां ग्रह' इति॥

इति वाय्वधिकरणम् ॥ २ ॥

## अथ तटिदधिकरणम् ॥ ३ ॥

### सू ॥ तटितोऽधिवरुणः संबन्धात् ॥ ३ ॥

कौषीतकिनामुपनिषदि श्रूयते। 'स एतं देवयानं पन्थानमापद्याग्निलोकमाग-

---

केचिद्वायुपूर्वकेणेति मार्गभेद एवाऽश्रितो भवति । तदाश्रयणावश्यंभावे च व्यर्थमाम्नानस्थानाद्वायोर्देवलोकस्य वा प्रच्यावनम् । यथापाठक्रमं स्वस्वस्थानादप्रच्युतैरेव पर्वता बहवो मार्गास्सन्तु। न च 'योऽयं पवते एष देवानां ग्रह' इति श्रवणान्नानयोः पौर्वापर्यं व्यवस्थापनीयमिति वाच्यम्। 'संवत्सरः सुवर्गो लोक' इत्यनुवादान्तरश्रवणात्संवत्सर एव देवलोक इत्यपि कल्पनासंभवेन सोमादित्ययोर्मध्ये संवत्सरदेवलोकौ निवेशनीयौ। न तु देवलोकवायू इत्यत्र विनिगमकाभावप्रसङ्गात्। तस्मात्स्वस्वस्थानादप्रच्युतैर्यावदाम्नातपर्वविशेषैर्युक्ता बहवो मार्गा इत्येव युक्तमिति । सिद्धान्तस्तु कासुचिच्छाखासु श्रवणं देवलोकपरं 'योऽयं पवत' इत्यादिश्रवणात्। न च 'संवत्सरस्सुवर्गो लोक' इति यत्तदर्थवादमात्रम्। दिव्यानां विभावानां वायुपाशधृतत्वेन वायोः स्तंभवद्देवगृहान्तर्भावोपपत्त्या स्वार्थपरत्वसंभवात्। तस्मा'द्देवलोकादादित्यं' 'तेन स ऊर्ध्वमाक्रमत' इति श्रुत्योरेकविषयत्वात्तदुभयविरोधेन पाठक्रमोऽनादरणीय इति संवत्सरादित्यमध्यनिविष्टेन देवलोकरूपेण वायुना युक्त एव मार्ग इति॥

इति वाय्वधिकरणम् ॥ २ ॥

## अथ तटिदधिकरणम् ॥ ३ ॥

सू० ॥ तटितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ एवं वायुपठनप्रयुक्ता मार्गभेदशङ्का निराकृता । अथ तदनन्तरश्रुतवरुणेन्द्रप्रजापतिपठनप्रयुक्ता सा निराक्रियते इति स-

---

नयमणिमालायाम्

## अथ वाय्वधिकरणम् ॥ २ ॥

सू० ॥ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

श्रुत्यन्तरप्रसिद्धो ह्यनिलो नात्रोपसंहार्यः। क्वचिदग्न्यनन्तरं क्वचिदादित्यात्पूर्वमाम्नानात् ॥ ३७५ ॥

तेनेति देवलोकादिति च श्रौतमस्य बलवत्त्वात्। मध्येऽब्दादित्यं स्याद्वायुस्स हि देवलोकोऽपि ॥ ३७६ ॥

इति वाय्वधिकरणम् ॥ २ ॥

---

(१) 'विशेषित' इति ख. पाठः।

च्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' इति। तत्राग्निलोकशब्दोक्तस्यार्चिषः प्राथम्यमविरुद्धम्, वायोरादित्यस्य च श्रुत्यन्तरसिद्धश्रौतक्रमेणात्रत्यपाठक्रमबाधात् संवत्सरादूर्ध्वं क्रमेण विनिवेशः। अत्र वरुणादयोऽपि श्रुताः। तेऽर्चिरादिमार्गे निवेशयितुं शक्या उत न शक्या इति संशये नियामकाभावादशक्यसंनिवेशा इति प्राप्ते ब्रूमः। वरुणादीनामपि संनिवेशः कार्यः। तत्र विद्युल्लोकस्योपरि वरुणलोकस्य संबन्धवशात् व्यवस्था

---

ङ्गतिः। अत्रापि किमेक एव मार्गः उत भिन्नमार्ग इति प्रथमं संशयः। मार्गैक्ये वरुणादयो निवेशयितुं शक्या न वेति भाष्योक्तस्तदर्थसंशयः। यथापाठमादित्यात्पूर्वं वरुणस्यादित्यानन्तरमिन्द्रप्रजापत्योश्च निवेशो न संभवति। देवलोकादित्यचन्द्राणां श्रौतक्रमेण तेषां पाठक्रमस्य बाधात्। अन्यत्रापि निवेशो न संभवति। अर्चिरादिविद्युत्पर्यन्तानां सर्वेषामपि श्रौतक्रमसत्वात्। तदनन्तरममानवपुरुषस्यैव ब्रह्मपर्यन्तं गमयितृत्वश्रवणात्। विद्युदनन्तरं वरुणादिसविद्युतमारभ्य तस्य ब्रह्मगमयितृत्वाभावप्रसङ्गात्। एवं वरुणेन्द्रप्रजापतिसहितस्य मार्गस्य प्रसिद्धार्चिरादिमार्गाद्भेदावश्यंभावेनाशक्योपपादने मार्गैक्ये 'देवलोकादादित्य'मिति पञ्चम्या इव 'संवत्सरादादित्य'मिति पञ्चम्या अप्यव्यवहितविषयत्वं न भञ्जनीयम्। नापि यया कया चार्थवादमात्रावलम्बनेन वायुदेवलोकयोरैक्यं समाश्रयणीयमिति संवत्सरसहितो देवयानमार्ग एकः देवलोकसहितोऽपरः वायुप्रथमपर्वान्यः तद्द्वितीयपर्वेतर इति चत्वारो देवयानमार्गा इति युक्तम्। तथा स'त्यारोहथो बहुदेवयानान्ये पन्थानो बहवो देवयाना' इति बहुवचनानुगृहीता 'ये चत्वारः पथयो देवयाना' इति देवयानचतुष्ट्वश्रुतिरप्युपपद्यत इति पूर्वः पक्षः। नियामकाभावादिति। प्रमाणाभावादित्यर्थः। सर्वत्रापि साधकसत्त्वादिति भावः। विद्युत्पूर्वकेति। श्रुतिक्रमविरोधात्स्वस्थानतः प्रच्युतेषु विद्युतोऽनन्तरं वरुणस्य निवेशः विद्युद्वरुणयोर्वृष्टिगतनीरसम्बन्धित्वाद्विद्युत उपरि स नीररसितदर्शनेन नीराधिपतेर्वरुणस्य तत उपरिभावौचित्याच्च। तदनन्तरमिन्द्रप्रजापत्योर्निवेशः। परिशेषा'दागन्तुकानामन्ते निवेश' इति न्यायाच्च अत्रामानवपुरुषस्य ब्रह्मप्रापकत्वं वरुणादिव्यवधानेन तत्साहित्येन वोपपद्यत इति न विरोधः। एवं वरुणादिनिवेशासम्भवप्रयुक्तमार्गभेदशङ्कानिरासे सति मार्गैक्यनियमे संभवति अनियमाश्रयणस्य विकल्पाश्रयणस्य चायुक्तत्वात्। पूर्वोक्तरीत्या संवत्सरदेवलोकयोः क्रमिकपर्वत्वेन वायुदेवलोकयोरैक्येन च मार्गैक्यसमर्थनमेव युक्तम्। देवयानबहुत्वश्रवणं तु 'तृप्ता यात पथिभिर्देवयानै'रिति पितृयाणेऽपि देवयानत्वव्यवहारदर्शनात्। तत्र प्राप्यलोकसंस्थानविशेषप्राप्यावान्तरमार्गभेदसद्भावाच्च पितृयाणसाहित्येन बहुत्वमुपपादनीयम्। अत एव 'ये चत्वार' इति मन्त्रे 'तेषां यो अज्यानिमजीतिमावहा'दिति तेषां मार्गाणां मध्ये एकस्यैव मार्गस्याजरामरत्वप्रापकत्वमुक्तम्। अत एवोपकोसलविद्याया 'मेष देवपथो ब्रह्मपथ' इति वर्णितस्यार्चिरादिरूपस्य देवयानमार्गस्य ब्रह्ममार्गत्वरूपो विशेषो दर्शितः। तेन हि विशेषणेन ब्रह्ममार्गव्यतिरिक्तोऽपि देवमार्गोऽस्तीत्यवसीयते। तस्मादर्चिरहश्शुक्लपक्षोत्तरायणसंवत्सरदेवलोकादित्य-

युक्ता। विद्युत्पूर्वकवृष्टिगतनीरस्य वरुणोऽधिपतिः प्रसिद्ध इति विद्युद्वरुणयोः संबन्धः। तदनन्तरमिन्द्रप्रजापतिलोकौ, परिशेषात्, इत्यविरोधः॥

इति तटिदधिकरणम्॥ ३॥

## अथ आतिवाहिकाधिकरणम्॥ ४॥

### सू॥ आतिवाहिकास्तल्लिङ्गात्॥ ४॥

किमर्चिरादयो मार्गचिह्नभूताः स्थानभेदा, उत विदुषां गमयितारो देवताविशेषा इति संदेहः॥ किं तावत् प्राप्तम्? स्थानभेदाः, तल्लाञ्छनसत्त्वात्। लोके हि ग्रामान्निर्गत्य नदीं गत्वा ततो घोषः प्राप्तव्य इति व्यवहरन्ति। तद्वदर्चिरादयोऽपीति प्राप्तेऽभिधीयते। अर्चिरादयो मार्गाभिमानिनो विदुषां गमयितारो देवताविशेषा एव। 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति

---

चन्द्रविद्युद्वरुणेन्द्रप्रजापतिरूपद्वादशपर्वशाल्येक एव ब्रह्मपथरूपो देवयानमार्गः। 'ये चत्वार' इति मन्त्रे देवयानचतुष्ककीर्तनं तु 'सर्व एते पुण्यलोका भवन्ती'ति श्रुत्युक्तामुमुक्ष्वाश्रमत्रयप्राप्यपुण्यलोकप्राप्तिहेतुमार्गाणामाश्रमत्रित्वोपाधिकया त्रित्वसंख्यया क्रोडीकारेण ब्रह्मपथसंयोजनेन च लब्धस्य चतुष्कस्यानुवादरूपमित्युपपादनीयमिति नव इति भावः॥

इति तटिदधिकरणम्॥ ३॥

## अथ आतिवाहिकाधिकरणम्॥ ४॥

सू०॥ आतिवाहिकास्तल्लिङ्गात्॥ ४॥ अर्चिरादीनां क्रमो निरूपितः तत्स्वरूपमिह चिन्त्यत इति सङ्गतिः। अर्चिरादिशब्दानां लोकसंस्थानविशेषदेवताविशेषान्यतरपरत्वानवधारणात्संशयः। तेऽर्चिषमित्यादिस्थाने 'अग्निलोकमागच्छती'त्यादिकौषीतकिशाखावाक्यदर्शनादर्चिरादिशब्दास्सर्वे लोकसंस्थानविशेषपराः। तथा च मार्गोपदेशवाक्यसारूप्यान्मार्गचिह्नप्रदर्शकान्यर्चिरादिवाक्यानीत्यर्चिरादयो मार्गचिह्नभूता एव न तु मुच्यमानानामतिवहने परमेश्वरेण नियुक्ता देवताविशेषाः। न चामानवपुरुषस्यातिवाहिकत्वं देवताविशेषत्वञ्च सम्प्रतिपन्नमित्यन्यैरपि तथा भाव्यमित्यस्ति नियमः। यावद्वचनं वाचनिकार्थप्रवृत्तेः। अन्यथा विद्युतमारभ्य ब्रह्मलोकपर्यन्तममानवपुरुषस्य वोढृत्वोक्तिर्विरुध्येत। विद्युद्वरुणेन्द्रप्रजापतीनां वोढॄणां सत्वादिति पूर्वपक्षः। 'तेऽर्चिषमभिसंभवन्ती'त्यादिवाक्येषु विदुषामर्चिरादीनां च सामान्येन निर्दिष्टसम्बन्ध'स्स एना'नित्यग्रिमवाक्यनिर्दिष्टगम्यगमकभावरूप इति युक्तम्। सामान्यतो निर्दिष्टस्य विशेषपर्यव-

---

नयमणिमालायाम्

अथ तटिदधिकरणम्॥ १०॥

सू०॥ तटितोऽधिवरुणस्संबन्धात्॥ ३॥

वरुणादीनां वायोरुपरि निवेशः श्रुतिविरुद्धः। नान्यत्र च संबन्धग्राहकमस्तीति न निवेशः॥ ३७७॥

विद्युत उपरि निवेशो वरुणस्य घटेत संबन्धात्। तत्संबन्धादिन्द्रप्रजापती तदुपरि स्याताम्॥ ३७८॥

इति तटिदधिकरणम्॥ ३॥

विद्युत्पुरुषस्य गमयितृत्वलिङ्गेनार्चिरादीनामविशेषनिर्दिष्टानामपि गमयितृत्वमेव संबन्ध इति निश्चय उपपन्नः ॥ विद्युत्पुरुषस्य ब्रह्मगमयितृत्वे वरुणादिभिः किं फलमित्यत आह—

सू ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

वैद्युतपुरुषात् परस्तात् स एव ब्रह्म गमयति 'तत् पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति श्रुतेः । वरुणादीनां तदनुग्राहकत्वेन गमयितृत्वमिति न विरोधः ॥

इति आतिवाहिकाधिकरणम् ॥ ४ ॥

अथ कार्याधिकरणम् ॥ ५ ॥

सू ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥

किममानवः पुरुषः उपासकान् साक्षादेव ब्रह्म गमयति, उतान्यमिति संशये पूर्वपक्षः । कार्यं हिरण्यगर्भमेव गमयति, अस्य हि गतिरुपपद्यते । न व्यापिनः परब्रह्मणः ॥ पुनरुपपत्तिमाह—

---

सानाकाङ्क्षासत्वात् 'स एनानिति वाक्यस्य पुरुषत्वं गमयितृत्वं च सिद्धवत्कृत्यामानवत्वरूपविशेषमात्रप्रतिपादकत्वेन पूर्वेषामर्चिरादीनामपि आतिवाहिकपुरुषत्वावगतेश्च लोकशब्दोऽप्यर्चिरादिशब्दवदभिमानिदेवतायां वर्त्तितुमर्हतीति नास्ति तद्विरोध इति सिद्धान्तः । पूर्वपक्षशङ्कोत्तरत्वेनोत्तरसूत्रमवतारयति—सू० ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥ विद्युति भवो वैद्युतः अमानवः पुरुषः । विद्युल्लोकप्रभृतिंश्रुतिबलादमानवपुरुषस्य गमयितृत्वेऽपि वरुणादीनां तदनुग्राहकत्वेन गमयितृकोटिनिवेशस्संभवतीति न तद्वैफल्यमिति भावः ॥

इत्यातिवाहिकाधिकरणम् ॥ ४ ॥

अथ कार्याधिकरणम् ॥ ५ ॥

सू० ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥ गमयितृनिरूपणानन्तरं गन्तव्यं निरूप्यत इति सङ्गतिः । उतान्यमिति । हिरण्यगर्भं नारायणं वेत्यर्थः । गत्युपपत्त्यादिकं मुख्यत्वादिकं च संशयबीजम् । व्यापिन इति । नचाव्यापित्वेऽपि देशविशेषे तदनुभव एव पुरुषार्थ इति वाच्यम् । निरतिशयानन्दरूपस्य सर्वत्र तुल्यत्वादिति भावः ।

---

नयमणिमालायाम्

अथ आतिवाहिकाधिकरणम् ॥ ६ ॥

सू० ॥ आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

गच्छामुं न्यग्रोधं ततो नदीपर्वतं ततो ग्रामम् । इति निर्देशौपम्यात्स्मृतिचिह्नान्यर्चिराद्याः स्युः ॥ ३७९ ॥

ते देवताविशेषा नेतारो गतिजुषां विदुषाम् । उपसंहारे वैद्युतपुरुषे नेतृत्ववर्णनतः ॥ ३८० ॥

इति आतिवाहिकाधिकरणम् ॥ ४ ॥

---

(१) 'गमयितृत्व'

## सू ॥ विशेषितत्वाच्च ॥ ७ ॥

'प्रजापतेः सभां वेश्म प्रपद्य' इति विशेषितत्वाच हिरण्यगर्भपदमेव गमयति॥

## सू ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥

'ब्रह्म गमयति' इति ब्रह्मव्यपदेशस्तु हिरण्यगर्भस्य तत्सामीप्यात् । 'हिरण्यगर्भं पश्यत जायमानम्' इति प्रथमकार्यत्वश्रवणादस्य सामीप्यम् ॥

## सू ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥

प्रथमं हिरण्यगर्भपदप्राप्तावपि तदनावृत्तिश्रुतिर्न विरुध्यते । हिरण्यगर्भलोकात्यये तदध्यक्षेण सह अतःपरं कार्यब्रह्मलोकात् परं परमपदं गच्छन्तीति। तथाऽभिधीयते । "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥" इति श्रुत्या । अतो न विरोधः ॥

## सू ॥ स्मृतेश्च ॥ १० ॥

णा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" इति स्मृतेरप्येवमवगम्यते । अतो हिरण्यगर्भपदमर्चिरादिगणो नयति प्रथमम् । ततः प्रलये परं ब्रह्म प्राप्यते तेन सहेति ॥

## सू ॥ परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥

हिरण्यगर्भात् परमुत्कृष्टं नारायणमेव अर्चिरादिर्गमयति । परब्रह्मण एवोपादानावस्थान्तरत्वेन तत्र ब्रह्मव्यपदेशस्य मुख्यत्वादिति जैमिनिः ॥ तत्रोपपत्तिमाह—

---

सू० ॥ विशेषितत्वाच ॥ ७॥ प्रजापतेः सभामिति । 'आकाशो ह वै नाम नामरूपयोर्निर्वहिते'ति ब्रह्मविद्यां प्रस्तुत्येदमाम्नायते । तस्मादिह ब्रह्मविद एव ब्रह्मप्राप्त्यभिसन्धिः । प्रजापतेरिति च हिरण्यगर्भ एवोच्यते । 'प्रजापतिर्वै हिरण्यगर्भ' इति श्रुतेरिति भावः । सू० ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥ हिरण्यगर्भस्य प्रथमापत्यत्वेन परब्रह्मसन्निकृष्टत्वात्तत्र तद्वाचिशब्द औपचारिकः। "तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायत" इति मन्त्र इवेति भावः । सू० ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥ परान्तकाल इति । परं हि हिरण्यगर्भस्य तन्मानेन शतवर्षपरिमितमायुः तदवसानकाल इत्यर्थः । परामृतादिति ल्यब्लोपे पञ्चमी । परं ब्रह्म प्राप्येत्यर्थः ॥ सू० ॥ स्मृतेश्च ॥१०॥ प्रतिसञ्चरः प्रलयः । अस्मिन्पक्षे फलितार्थमाह—अत इति ॥ सू० ॥ परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥ 'कार्यं बादरि'रिति प्रकृतहिरण्यगर्भापेक्षमुत्कृष्टत्वं परशब्दार्थ इति व्याचष्टे—हिरण्यगर्भादिति । हिरण्यगर्भापेक्षया प्रत्यासत्त्यतिशयसत्वेन मुख्यकल्पत्वादित्यर्थः । तत्रोपपत्तिमिति । पदस्य शिवपरत्वे परममुख्यत्वसंभवेऽपि । तदनादरेण

## सू ॥ दर्शनाच्च ॥ १२ ॥

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति तत्पदस्य प्राप्यत्वं दृश्यते। अतश्च तमेव गमयतीति ॥

## सू ॥ न च कार्ये प्रत्यभिसन्धिः ॥ १३ ॥

'प्रजापतेः सभां वेश्म प्रपद्य' इति यदुक्तम्, न तत्र कार्ये हिरण्यगर्भे प्रत्यभिसन्धिः, प्रजापतिशब्दस्य प्रजापालनत्वेन नारायणवाचकत्वसंभवात्। यदुक्तम् 'ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इति तत्रापि ब्रह्मशब्दो नारायणपरः। तस्य लोके पदे स्थित्वा योगिनः परान्तकाले पश्चिमदेहसमाप्तौ परामृतं विश्वाधिकं ब्रह्म प्राप्य मुक्ता भवन्तीति न विरोधः। 'एतानि ह वा अमृतस्य नामधेयानि' इत्यादौ शिवस्य परब्रह्मणोऽमृतशब्दाभिधेयत्वमनादिमुक्तत्वं चावगतम्। अतो विष्णुपदे प्रारब्धकार्यदेहावसाने प्रारब्धभोगपर्यन्तं स्थित्वा योगिनः परामृतं विश्वाधिकं ब्रह्म प्राप्य मुक्ता भवन्तीति। अथ सिद्धान्त उच्यते—

## सू ॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥

प्रतीकालम्बना हि ते, ये चेतनमचेतनं वा ब्रह्मदृष्ट्या केवलमुपासते। अप्रती-

---

नारायणपरत्वाभ्युपगतावुपपत्तिमाहेत्यर्थः ॥ सू० ॥ दर्शनाच्च ॥ १२ ॥ न चात्र विष्णुशब्दश्शिवपरः इति शङ्कनीयम्। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति प्रसिद्धवैष्णवमन्त्रैकदेशत्वेन तदर्थप्रत्यभिज्ञाविरोधादिति भावः ॥ सू० ॥ न च कार्ये प्रत्यभिसन्धिः ॥ १३ ॥ प्रपद्यत इति प्रत्यभिसन्धिः प्रत्यभिसन्धिशब्देन विवक्षितः। प्रजापालकत्वेनेति। पतिशब्दो हि पातेर्धातोर्डतिप्रत्ययेन निष्पन्नः पालके स्वरसः। 'अतस्तद्विष्णोः परमं पद'मिति मन्त्रदर्शनात्प्रजापतिशब्दस्य पालके नारायणे योगस्समाश्रयणीय इति भावः। परान्तकाल इत्यत्र परशब्देन हिरण्यगर्भस्यायुर्नोच्यते किंतु विष्णुपदे स्थितस्य विदुषश्चरमदेह इति व्याचष्टे। पश्चिमदेहेति। प्रारब्धकार्येति। विरजानद्युत्तरणपर्यन्तं प्रारब्धशेषानुवृत्तेः प्राक्समर्थितत्वाद्विष्णुपदे स्थितस्यापि प्रारब्धानुवृत्तिरस्तीति भावः ॥ सू० ॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥ अन्यत्रान्यदृष्टिरेव प्रतीकोपासनेति प्रसिद्धार्थग्रहणवारणाय व्याचष्टे—प्रतीकालम्बना इति। सकलचिदचित्प्रपञ्चविशिष्टरूपस्य ब्रह्मणः एकदेशश्चिद्रूपोऽचिद्रूपश्च प्रतीकः। "अङ्गं प्रतीकोऽवयव' इति प्रतीकशब्दस्यावयववाचित्वस्मरणात्। तस्य यदुपासनसामान्यं तत्सर्वं प्रतीकोपासनमुच्यत इति भावः। अप्रती-

(१) 'प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्यय'मिति प्रतीकशब्दस्यैकदेशवाचित्वस्मरणादिति ख. पाठः।

कालम्बनास्तु ते, ये विश्वाधिकं ब्रह्म साक्षादुपासते । साक्षाद्ब्रह्मोपासकान् पुरुषः साक्षाद्ब्रह्मैव गमयति, यद्विश्वाधिकं कृष्णपिङ्गलं विरूपाक्षं श्रूयते । साक्षाद्ब्रह्मोपासकस्य 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥" इत्यादिषु साक्षात् ब्रह्मप्राप्त्यवगमात् । पूर्वोक्तपक्षद्वयेऽपि दोषः श्रुतिविरोधाद्भवति । तत्क्रतुः ब्रह्मोपासको ब्रह्मैव गच्छति, न मध्ये विलम्बते, प्रयोजनाभावात् । सकलकार्यसमष्टिरूपाद्धिरण्यगर्भात् परो नारायणस्तदुपादानत्वात्, ततोऽपि परं शिवाख्यं निमित्तं विरूपाक्षं परं ब्रह्म सर्वज्ञं सर्वशक्तिकं नित्यतृप्तं स्वतन्त्रं स्वप्रकाशमिति । तथा शिवसंकल्पोपनिषदि । "परात् परतरो ब्रह्मा तत्परात् परतो हरिः । तत्परात् परतोरीशः" इति । रेफश्छान्दसः । अन्यत्र च—'नारायणपरं ब्रह्म' इति नारायणात् परत्वेन ब्रह्माभिधाय तत् कीदृशमित्याकाङ्क्षायाम् 'ऋतं सत्यम्' इति मन्त्रेण सर्वज्ञतया मनो- ...सरहितं स्वशक्तिमरीचिभिः सकलजगत्पूरकं स्वाविभक्तया परप्रकृतिरूपया परमानन्दचिदेकरसपरमाकाशलक्षणया स्वावस्थाभेदपरमचेतननारायणारब्धहिरण्यगर्भादिसकलकार्यप्रपञ्चया परशक्त्योमया शबलितरूपं निर्विकारं

---

कालम्बनास्त्विति । अप्रतीकशब्देन प्रतीकरूपप्रपञ्चविलक्षणं विश्वाधिकं ब्रह्माभिधीयत इति भावः । नयतीत्यस्य प्राप्यकर्माकाङ्क्षायामप्रतीकशब्दोक्तं तदेव विश्वाधिकं ब्रह्मोपतिष्ठत इति व्याचष्टे—साक्षाद्ब्रह्मैवेति । श्रुतिविरोधादिति । उदाहृतया कैवल्यश्रुत्या तत्र तत्रोदाहृताभिः श्वेताश्वतरादिश्रुतिभिश्च विरोधादित्यर्थः । ननु विलम्बेन परब्रह्मप्राप्त्या तद्विरोधः परिहृतः स्यादित्याशङ्कोत्तरत्वेन सूत्रशेषं व्याचष्टे—तत्क्रतुरिति । यथाक्रतुवाक्यानन्तरं हि 'स क्रतुं कुर्वीते'त्यारभ्य 'एतमितः प्रेत्याभिसंभवितास्मी'त्यन्तेन मनोमयत्वादिगुणकः परमेश्वरः 'तमहं प्राप्नवानी'त्येवंरूपक्रतोस्संकल्पस्य विषय उपन्यस्तः । तदनुसारेण यथाक्रतुवाक्यस्यैवमर्थो लभ्यते । इह यद्गुणविशिष्टब्रह्मप्राप्तिसङ्कल्पवानुपासको भवति इतः प्रेत्य तद्गुणविशिष्टब्रह्मप्राप्तिमान्भवतीति । अतस्तत्क्रतुन्यायेनोपास्यब्रह्मतादवस्थ्यं प्राप्तव्यम् । तत्प्राप्तावेव तदनुभवरूपो भोग इति न मध्ये फलप्राप्तिविरोधिविलम्बः कल्पनीयः । कल्पकाभावादिति भावः । व्यापिनः परब्रह्मणः प्राप्तौ नास्ति गत्यपेक्षेति शङ्काव्यावृत्त्यर्थश्चकारः । देशविशेषावच्छिन्नब्रह्मप्राप्तौ सत्यामेव ब्रह्मानन्दानुभवप्रयोजकः साकल्येन स्वरूपाविर्भावो भवतीति श्रुतिबलादवसीयत इति भावः । ननु ब्रह्मोपासको ब्रह्मैव प्राप्नोतीत्येतदस्तु तत्प्राप्यं हिरण्यगर्भो नारायणो वा किं न स्यादित्याशङ्क्याह—सकलकार्यसमष्टिरूपादिति । स्वशक्तिमरीचिभिरिति । स्वशक्तेर्मरीचयः तत्कार्याणि जगद्भासकाः वैषयिकवृत्त्यवच्छिन्नास्तदंशा वा । निर्विकारमिति । पूर्वमूर्ध्वरेतस्कबहिरेतस्कपरतया व्याख्यातम् । इदानीमेवमपि संभवतीति तस्यार्थान्तरं

---

(१) 'तत्क्रतुवाक्यस्य' इति ख. पाठः ।

त्रिलोचनं परं ब्रह्म सर्वोत्तरमिति निरूपितम्। 'विश्वाधिको रुद्र' इति च विश्वस्मादधिकत्वेन चावगतम्। तस्माद्बैदिकानामतः परं कल्पयितुमन्याय्यमेव ॥

सू ॥ विशेषं च दर्शयति ॥ १५ ॥

ब्रह्मणो विश्वाधिकस्य तदवस्थाभेदस्योपादानस्य विष्णोस्तत्कार्यभूतस्य हिरण्यगर्भस्य च विशेषं दर्शयति श्रुतिरेव 'परात् परतरो ब्रह्मा' 'हिरण्यगर्भं पश्यत जायमानम्' 'पुरुषो वै रुद्रः' इत्यादिका। ततश्च ब्रह्मविष्णवोः परं परब्रह्मणः शिवस्य पदं परमाकाशरूपं परमानन्दमयममानवः पुरुषो गमयतीत्येव युक्तम्। यच्छङ्कितम् 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति। तत्र विष्णुशब्दः परब्रह्मवाचकः। षड्विधस्याध्वनः पारं तदतीतं पदं हि विश्वाधिकस्य शिवस्यैवोपपन्नम्। यद्वा विष्णोः प्रपञ्चावस्थितस्य परमुत्कृष्टं पदं स्वरूपं परमाकाशरूपं परमानन्दलक्षणं शिवस्य परब्रह्मणः पदमेव। यत्रासौ निहितात्मा प्रपञ्चाकारोऽपि न संसरति। अतो न कश्चन विरोधः ॥ अत्र केचित् 'परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इति श्रुतेः परब्रह्मणः शिवस्य परमविभूतित्वेन ये विष्णुमुपासते, ते तदवस्थत्वात् ब्रह्मशब्दवाच्यस्य तस्य लोकं प्राप्य प्रादुर्भूततद्विभूतयः परान्तकाले चरमदेहावसाने परामृतं शिवं प्राप्य मुक्ता भवन्तीति विष्णूपासकानामर्चिरादिना विष्णुपदप्राप्तिपूर्वकं विलम्बेन शिवपदप्राप्तिरिति वचनादत्र न विरोध इति ॥

इति कार्याधिकरणम् ॥ ५ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

---

दर्शितम्। अतः परं कल्पयितुमन्याय्यमेवेति 'सकलकार्यसमष्टिरूपा'दित्यारभ्यैतावत्पर्यन्तमुत्तरसूत्रार्थानुवादत्वादर्थतस्तदवतारिकाभाष्यरूपमिति द्रष्टव्यम् ॥ सू० ॥ विशेषं च दर्शयति ॥ १५ ॥ वैष्णवमन्त्रैकदेशत्वेन तदर्थप्रत्यभिज्ञानमनुसरन्नाह—यद्वेति। परमाकाशरूपा पराशक्तिरेव हि शिवस्य दिव्यस्थानरूपतयावतिष्ठते। अतस्तदवस्थाविशेषरूपस्य विष्णोः स्वरूपं भवितुमर्हति दिव्यस्थानमिति भावः। यत्रासौ निहितात्मा यत्पदं प्राप्तो विद्वान् प्रपञ्चाकारोऽपि प्रपञ्चशरीरकोऽपि न संसरति परमेश्वरवन्नियन्तृमात्ररूपत्वात्। अतो न कश्चन विरोध इति। शिवस्यैव मुक्तप्राप्यत्व इति शेषः। 'ते ब्रह्मलोके त्वि'त्यादिकं वैष्णवोपासनाविशेषफलप्रतिपादकत्वेन योजयति—अत्र केचिदिति। हैरण्यगर्भोपासनाविशेषफलप्रतिपादकत्वेनान्ये योजयन्तीति मतान्तरसूचनार्थं केचिद्ग्रहणम्। वचनादत्र न विरोध इति। अवश्यं हि तत्र ब्रह्मलोकशब्दः शिवलोकातिरिक्तलोकपरो

वाच्यः। तत्र स्थितस्य कालान्तरे मुक्त्यभिधानात्। अतस्तेषां मतविरुद्धत्वाद्वैष्णवोपासनाफलपरत्वे प्रत्यासत्त्यतिशयलाभाच्च ग्राह्यमित्यर्थः॥

इति कार्याधिकरणम्॥ ५॥

इति श्रीशिवातिवादिमूर्द्धन्यशिवदर्शनस्थापनधुरन्धरसकलदेवभूदेवप्रतिष्ठापकश्रीमच्चिन्नबोम्मभूपालहृद्यकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितस्य श्रीभरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ श्रीकण्ठशिवाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकाख्यायां चतुर्थस्याध्यायस्य तृतीयः पादः॥ ४॥ ३॥

---

नयमणिमालायाम्

अथ कार्याधिकरणम्॥ ५॥

सू०॥ कार्यं बादरिरस्य गत्युपपत्तेः॥ ६॥ विशेषितत्वाच्च॥ ७॥ सामीप्यात्तु तद्व्यपदेशः॥ ८॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्॥ ९॥ स्मृतेश्च॥ १०॥ परं जैमिनिर्मुख्यत्वात्॥ ११॥ दर्शनाच्च॥ १२॥ न च कार्ये प्रत्यभिसन्धिः॥ १३॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च॥ १४॥ विशेषं च दर्शयति॥ १५॥

गत्युपपत्तेर्द्रुहिणं नयति हरिं वा परं तस्मात्। यत्र शिवस्यावस्थाभेदे ब्रह्मपदमुख्यत्वात्॥ ३८१॥

शिवमेव ततोऽपि परं नयति स पुरुषं प्रतीकरहितधियः। शिवभावनया हि शिवप्राप्तिस्तत्क्रतुतया विहिता॥३८२॥

इति कार्याधिकरणम्॥ ५॥

इति श्रीमदप्पय्यदीक्षितकृतौ अधिकरणसारसङ्ग्रहे नयमणिमालायां तृतीयपरिच्छेदे चतुर्थस्याध्यायस्य तृतीयः पादः॥ ४॥ ३॥



॥ श्रीः ॥

शिवाभ्यां नमः ।

श्रीकण्ठाचार्यकृतौ

# ब्रह्ममीमांसाभाष्ये

## अथ चतुर्थाध्यायस्य चतुर्थः पादः ॥

### अथ संपद्याविर्भावाधिकरणम् ॥ १ ॥

सू ॥ संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

पूर्वत्रार्चिरादिना मार्गेण विद्यावतां हिरण्यगर्भनारायणपदातीतं परब्रह्मणः शिवस्य परमसुखरूपतया स्वर्गशब्दवाच्यं पदं प्राप्यमिति निरूपितम् । इह तत्प्राप्तानां स्वरूपाविर्भावादिप्रकारो निरूप्यते । 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति परंज्योतीरूपं महाप्रकाशं परब्रह्म प्राप्तस्य स्वरूपाविर्भाव उच्यते। तत् स्वरूपं तस्य तात्कालिकमुत पूर्वसिद्धं वेति संशयः ॥ न पूर्वसिद्धम् । किं त्वभिनिष्पत्तिश्रवणात् स्वर्गवदागन्तुकमेव। पूर्वसिद्धत्वे च कुतोऽस्य संसारः । अतस्तदुपासनाजन्यं मुक्तिफलरूपमागन्तुकम् ॥ इति प्राप्तेऽभिधीयते—ब्रह्मप्राप्तजीवस्य मलतिरोहितं ब्रह्म-

---

## शिवार्कमणिदीपिकायाम्

## अथ चतुर्थस्याध्यायस्य तुरीयः पादः ॥

### अथ संपद्याविर्भावाधिकरणम् ॥ १ ॥

सू० ॥ संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ सङ्गतिं दर्शयति—पूर्वत्रेति। पूर्वपादे दिव्यस्थानस्थितपरब्रह्मप्राप्तिपर्यन्तं निरूपितम्। इह तत्प्राप्तस्य स्वरूपाविर्भावसदेहत्वादिप्रकारो निरूप्यत इति सङ्गतिः। अभिनिष्पत्तिश्रवणं 'स्वेने' ति विशेषणं च संशयबीजम्। अभिनिष्पत्तिश्रवणस्य स्वेनेति विशेषणापेक्षया प्राबल्यमुपपत्तिसाहित्येन दर्शयति—पूर्वसिद्धत्वे चेति। मोक्षदशायां यत्फलरूपतया प्राप्तव्यं रूपं तत्पूर्वमप्यस्ति चेत् पूर्वमप्ययं मुक्त एव स्यात्। न च पूर्वसिद्धमप्यस्य पुरुषार्थात्मकं रूपं संसारदशायां तिरोहितं परंज्योतिरुपसन्नस्याविर्भवतीति वाच्यम्। स्वप्रकाशचैतन्यरूपस्याहमिति सर्वदा भासमानस्य तिरोधानायोगात्। एतेनाणवमलाख्येनाविद्यावरणेन तिरोहितं जीवस्वरूपमिति निरस्तम्। तिरोहितत्वे संसारदशायां जीवस्वरूपस्यानवभासप्रसङ्गात्। अणुरूपे तस्मिन् किंचिदवच्छेदेन, तिरोधानं किंचिदवच्छेदेन प्रकाश इति कल्पयितुमशक्यत्वात्। एतेनापहतपाप्मत्वादिगुणाष्टकं संसारदशायां तिरोहितं मोक्षदशायामभिव्यज्यत इत्यपि निरस्तम्। तिरोधानासंभवाद्योगदशायामपि, तदभिव्यक्त्यनङ्गीकाराच्च। तस्मात्कर्मफलवद्विद्याफलमपि लोकविशेषप्राप्त्यानन्तरमुत्पद्यमानं किंचिदङ्गीकरणीयमित्युपपत्तिसाहित्येनाभिनिष्पत्ति-

सदृशगुणं स्वरूपं पूर्वं सदेव मलावरणापगमादाविर्भवति । 'स्वेन रूपेण' इति शब्दात् तथाऽवगम्यते । अन्यथा ह्यागन्तुकस्यापि रूपस्य स्वासाधारणत्वात् 'स्वेन' इति विशेषणमनर्थकं स्यात् । तत्र सर्वानुग्राहकस्य शिवस्य परब्रह्मणः प्रसादेन स्वावरणे मले विगलिते तत्सदृशगुणमात्मस्वरूपं प्रादुर्भवति, न कर्मफलवदुत्पद्यते । मलस्यानादित्वात् संसारोपपत्तिः । अतः स्वाभाविकमेव मुक्तस्य स्वरूपं चिदानन्दघनं सर्वज्ञत्वादिविशिष्टमाविर्भवति ॥

## सू ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥

आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि मलविनिर्मुक्तस्यापरिच्छिन्नानन्दाद्या-

---

श्रवणस्य प्रबलत्वात्तदनुसारेण 'स्वेने'ति विशेषणमर्थसिद्धस्वकीयत्वानुवादकमित्युपपादनीयमिति भावः । मुक्तस्य स्वरूपं चिदानन्दघनं सर्वज्ञत्वादिविशिष्टमाविर्भवतीति । अत्रेदं विवक्षितम् । वस्तुतो निरतिशयानन्द एव जीवः स्वभावतः । तस्मिन्निरतिशयेस्वरूपानन्दे प्रतियोगिविशेषापेक्षतारतम्यापन्नोत्कर्षरूपा बहवस्सन्ति विशेषाः । ते सर्वे कर्मदेहेन्द्रियावरणैस्तिरोहिताः । तेषामावरणानि तेष्वस्तित्वप्रकाशमानत्वव्यवहारं निरुन्धाना मलमायादीनां शक्तिविशेषाः । तत्रानन्दत्वसामान्यं कदापि न तिरोहितमिति संसारदशायामपि सर्वदैवात्मनि प्रेमानुवर्तते । सुषुप्तिप्रलययोर्देहेन्द्रियव्यापारोपरमेण तदावरणीयः कियान्विशेषः प्रकाशते । कृतश्रवणमननादिकस्य निदिध्यासनं कुर्वत उपर्युपरि योगभूमिकासु मलमायादिगतानामसंख्यानामावरणशक्तीनां मध्ये काचित्काचित्क्षीयत इति तत्तदावरणीया विशेषाः क्रमेण प्रकाशन्ते । मुक्तौ सर्वासामावरणशक्तीनामवगमान्निरतिशयस्वरूपानन्दः प्रकाशते । यथा खल्वरोचकव्याधिपरिपूर्णस्य चिकित्साविशेषैः किंचित्किंचिद्व्याधिशक्त्यपचये जायमाने भोज्यवस्तुरसे तत्तदावरणीया विशेषाः क्रमेण प्रकाशन्ते । सर्वात्मना व्याध्यपगमे च रसोऽपि सर्वात्मना प्रकाशते । एवमेव योगसिद्ध्यारम्भदशाप्रभृतिमुक्तिदशापर्यन्तेषु दशाविशेषेषु सार्वज्ञ्यापहतपाप्मत्वाद्याविर्भावेऽपि विशेषोऽवगन्तव्यः । इयांस्तु विशेषः । स्वरूपानन्दस्याविर्भावः प्रकाशः घनतिरोहितस्येव चन्द्रस्य घनापगमे सार्वज्ञ्यापहतपाप्मत्वादीनां तु शक्तिविशेषरूपाणां स्वस्वकार्यप्रयोजकत्वमाविर्भावः । मणिमन्त्रादिप्रतिबद्धानां वह्निगतदाहस्फोटादिशक्तीनामिव प्रतिबन्धकमण्याद्यपाये । एवं प्राक्सिद्धयोरपि स्वरूपानन्दसार्वज्ञ्यादिगुणबृन्दयोराविर्भावस्य समर्थयितुं शक्यत्वेनाप्यभिनिष्पद्यत इत्यस्य तत्परतयार्थवत्त्वसंभवान्न तत्स्वारस्यानुसारेण स्वेनेति विशेषणं सर्वथा वैयर्थ्यमापादनीयमिति । ननु स्वेनेति विशेषणावैयर्थ्यायाभिनिष्पत्तिरौपचारिकी नेतव्येत्यस्तुनाम । सा स्वरूपानन्दाविर्भावरूपापहतपाप्मत्वाद्याविर्भावरूपा चेति कुतोऽवगम्यत इत्याकाङ्क्षायां तत्रोभयथापि गमकं क्रमेण सूत्रद्वयेनोच्यते—सू० ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मविविदिषयोपसन्नायेन्द्राय प्रजापतिना जागराद्यवस्थापन्नात्मस्वरूप उपदिष्टे तेन च 'नाहमत्र भोग्यं पश्यामी'त्यक्षिपुरुषादिषु विनाशभयदर्शनादिदोषादात्मनो न पुरुषार्थरूपतेति पृष्टे 'चैतं त्वेव ते भूयोऽनुव्याख्यास्यामी'ति प्रतिज्ञाय 'भगवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृ-

विर्भाव उच्यते, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इति मलप्रयुक्तजागरितायवस्थाविनिर्मुक्तस्यैव वक्तव्यतया प्रतिज्ञानात् ॥ किंच—

सू ॥ आत्मा प्रकरणात् ॥ ३ ॥

तत्र 'भूयोऽनुव्याख्यास्यामि' इति प्रकृतापहतपाप्मत्वादिगुणक आत्मा वक्तव्यः प्रकरणाद्वगम्यते। 'य आत्माऽपहतपाप्मा' इत्यादि प्रकृत्यैव 'भूयोऽनुव्याख्यास्यामि' इत्युक्तत्वात् । अतः प्रादुर्भूतस्वाभाविकापहतपाप्मत्वादिको मुक्त आत्मा ब्रह्मसदृशगुणस्वरूप इति सिद्धम् ॥

इति संपद्याविर्भावाधिकरणम् ॥ १ ॥

अथ अविभागाधिकरणम् ॥ २ ॥

सू ॥ अविभागेन दृष्टत्वात् ॥ ४ ॥

पूर्वाधिकरणे ब्रह्मगुणस्वरूपसदृशं मुक्तस्य गुणस्वरूपमिति प्रतिज्ञातम् । तत्सादृश्यं मुक्तस्योपपद्यते न वेति विचारः। किं प्राप्तम्? 'एको रुद्रो न द्वितीयाय

तस्यात्मनोऽधिष्ठान'मित्यादिना यदात्मस्वरूपमुपदिष्टं तन्मलमायाकर्मादिसकलबन्धप्रहाणादाविर्भूतस्वरूपानन्दमात्मतत्त्वं भवितुमर्हति । अन्यथा पुरुषार्थरूपस्यात्मतत्त्वस्योपदेष्टव्यत्वेन प्रतिज्ञातस्योपदेशालाभात् । न च दुःखाविशिष्टत्वेनैव पुरुषार्थता भवेदिति वाच्यम्। सुषुप्तिदशायां दुःखाभाववैशिष्ट्ये सत्यप्यानन्दोत्कर्षस्फुरणाभावेनापुरुषार्थतया विनाशमेवापीतो भवति। नाहमत्र भोग्यं पश्यामीति निन्दितवन्तमिन्द्रं प्रति ततो विलक्षणं पुरुषार्थरूपमात्मतत्त्वं व्याख्यास्यामीति प्रतिज्ञाय पुनरपि प्राङ्निन्दितस्यैव दुःखाभावमात्रविशिष्टस्योपदेशायोगात्। तस्मान्मलमायादिबन्धविनिर्मुक्त आविर्भूतस्वरूपानन्द आत्मा प्रजापतिविद्यायामुपदिष्ट इति प्रतिज्ञाबलादवसीयत इति भावः ॥ सू० ॥ आत्मा प्रकरणात् ॥ ३ ॥ अपहतपाप्मत्वादिगुणक आत्मा परमः प्रकृतः। स एव भूयोऽनुव्याख्यास्यामीति व्याख्येयत्वेन पुनः प्रतिज्ञातः । अतस्सएवाविर्भूतापहतपाप्मत्वादिगुणक आत्मोपदिष्ट इति प्रकरणादवसीयत इति भावः ॥

इति संपद्याविर्भावाधिकरणम् ॥ १ ॥

अथ अविभागाधिकरणम् ॥ २ ॥

सू० ॥ अविभागेन दृष्टत्वात् ॥ ४ ॥ सङ्गतिपूर्वकं संशयं दर्शयति—पूर्वाधिकरण इति। चिदानन्दघनं सर्वज्ञत्वादिविशिष्टं मुक्तस्य यत्स्वरूपमभिहितं पूर्वाधिकरणे तद्ब्रह्मसाम्यरूपमेव। ब्रह्मणोऽपि हि तथाभूतमेव रूपमतस्तन्नोपपद्यत इत्याक्षेपात्पूर्वाधिकरणसङ्गतिः। तदुपपद्यते न वेति ब्रह्मसाम्यविधिनिषेधश्रुतिभ्यां संशयः। तत्र पूर्वः

---

नयमणिमालायाम्

अथ संपद्याविर्भावाधिकरणम् ॥ १ ॥

सू० ॥ संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥ ३ ॥

निष्पद्यते विमुक्तः केनचिदागन्तुकेन रूपेण । आगन्तुकताभावे निष्पत्त्यर्थो न संघटते ॥ ३८३ ॥

स्वेनेति विशेषणतः स्वरूपमात्रं प्रपद्यते सहजम् । तच्चान्यशिवसमत्वं निष्पत्तिर्मलतिरोधिमुक्तिः स्यात् ॥ ३८४ ॥

इति संपद्याविर्भावाधिकरणम् ॥ १ ॥

तस्थौ' इत्यादिषु ब्रह्मणः सदृशस्य द्वितीयस्य निषेधात् कस्यचिदपि बद्धस्य मुक्तस्य वा तत्सादृश्यमनुपपन्नमिति ॥ एवं प्राप्ते सिद्धान्त उच्यते । मुक्तस्य ब्रह्मणा सादृश्यमस्ति । कुतः ? 'निरञ्जनः परमं साम्यमुपैति' 'मुक्तः शिवसमो भवेत्' इति मुक्तस्य ब्रह्मगुणस्वरूपाविभागेन ब्रह्मसदृशतया दृष्टत्वात् । अतः 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मसादृश्यमेवोच्यते । मुक्त आत्मा सादृश्याद्ब्रह्मस्वरूपाविभागेन स्वस्वरूपमनुभवति । यदुक्तम् 'एको रुद्रो न द्वितीयाय' इत्यादिना सादृश्यनिषेधः क्रियत इति, तत् जीवस्य जगद्व्यापाराद्यभावात् । वक्ष्यति 'भोगमात्रसाम्यलिङ्गाच्च' इति । अतो ब्रह्मण इव सकलकामावाप्तिरस्य तत्साम्यमुच्यते । तथा श्रूयते—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । अतो मुक्तस्य ब्रह्मसादृश्यमुपपद्यते ॥

इति अविभागाधिकरणम् ॥ २ ॥

---

पक्षः । 'एक एव रुद्रः' 'एकमेवाद्वितीयं' 'न तत्समश्चाभ्यधिकश्चे'त्यादिश्रुतिविरोधात् । बद्ध इव मुक्तेऽपि ब्रह्मसादृश्यमङ्गीकर्तुमयुक्तम् । तस्मा'त्परमं साम्यमुपैती'त्यादिश्रुतिरर्थवादरूपैवाङ्गीकरणीया । अवश्यं च 'सोऽश्नुते सर्वान्कामान्' 'मनसैतान्कामान्पश्यन् रमते जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वे'त्यादिवाक्यानामर्थवादरूपत्वमङ्गीकरणीयम् । सकलवैषयिकसुखवितृष्णं ब्रह्मानन्दानुभवैकप्रेप्सुं मुमुक्षुं प्रति कामावाप्त्यादीनां पुरुषार्थत्वासंभवात् अपहतपाप्मत्वविजरत्वादीनामपि कामभोगोपयोगिनां तत एव पुरुषार्थत्वासंभवाच्चेति । सिद्धान्तस्तु मुक्तस्य ब्रह्मणा साम्यमस्त्येव । 'साम्यमुपैती'-त्यादिश्रुतिस्मृतिभ्यां तस्य तदवैलक्षण्येन दृष्टत्वात् । 'ब्रह्मवेद ब्रह्मैव भवती'ति श्रुतिरपि मुक्तस्य ब्रह्मसादृश्यमुपनयति । तत्र ह्येवकार इवार्थे । यथा'विनाशमेवापीतो भवती'-त्यत्र, नत्वभेदार्थे । 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यादि ( ब्र० १-३-४३-१२ ) सूत्रैर्जीवब्रह्मणोर्भेदस्य प्रसाधितत्वात् । सादृश्यनिषेधश्रुतयस्तु जगद्व्यापारांशे द्रष्टव्याः । अत एव सूत्रकारस्तस्य भोगमात्रे साम्यं वक्ष्यति । नचैकेनाप्यंशेन सादृश्याभावे परमसाम्यश्रवणविरोधः । तस्य विवक्षितगुणांशे अत्यन्तसाम्यविषयत्वात् । न हि तुलाधृतयोः स्वर्णशिलाशकलयोः परमसाम्योक्तौ वर्णसाम्यमपि सिद्ध्यति । यद्यपि तस्य भोगः स्वतः पुरुषार्थो न भवति । अथापि सविभूतिकब्रह्मानन्दानुभवस्य पुरुषार्थत्वादितरप्रपञ्चवत्स्वात्मानन्दस्वभोग्यजातादिकं सर्वं ब्रह्मविभूतितयानुभूयमानं भवत्येव तं प्रति पुरुषार्थः । 'सोऽश्नुते सर्वान्कामा'नित्यादिश्रुतयोऽपि तदभिप्राया इति ॥

इति अविभागाधिकरणम् ॥ २ ॥

---

## नयमणिमालायाम्

## अथ अविभागाधिकरणम् ॥ २ ॥

सू० ॥ अविभागेन दृष्टत्वात् ॥ ४ ॥

मुक्तस्यापि कथं स्यात् जीवस्य ब्रह्मणा साम्यम् । विश्वाधिकं हि विश्वप्रपञ्चरचनाधुरीणं तत् ॥ ३८५ ॥

एवमपि सोऽश्नुत इति श्रवणादस्त्येव भोगतस्साम्यम् । तेन ब्रह्मस्वात्मा विभक्तमनुभवति मुक्तिमितः ॥ ३८६ ॥

इति अविभागाधिकरणम् ॥ २ ॥

## अथ ब्राह्माधिकरणम् ॥ ३ ॥

### सू ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

पूर्वत्र स्वयंप्रकाशमपहतपाप्मत्वादिगुणविशिष्टं ब्रह्मसदृशं मुक्तस्य स्वरूपमाविर्भवतीत्युक्तम् । तदुभयरूपत्वं संभवति न वेति संशयः ॥ एवं सति मतान्तरेण पूर्वपक्षः प्रवर्तते । 'स्वेन रूपेण' इति स्वरूपाविर्भावो ब्राह्मेणापहतपाप्मत्वादिकेन । ते हि ब्रह्मगुणाः प्रत्यगात्मनोऽपि स्वाभाविकाः 'य आत्माऽपहतपाप्मा' इत्याद्युपन्यासात् 'जक्षन् क्रीडन् रममाण' इत्यादिश्रवणाच्चावगम्यते । अतो गुणसाम्यमिति जैमिनिः ॥

### सू ॥ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' 'विज्ञानघन एव' इत्यवधारणात् विज्ञानस्वरूपमात्रेण साम्यमित्यौडुलोमिः । एवमुभयदर्शनात् सविशेषनिर्विशेषत्वे सिद्धे युगपदुभयासंभवात् कालभेदादिना व्यवस्थेति ॥ अथ सिद्धान्त उच्यते—

### सू ॥ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

बादरायणस्तु परस्परविरोधाभावादुभयश्रुत्यवगतोभयस्वरूपमस्य प्रतिपादयति । तथा हि 'विज्ञानघन एव' इत्यादिना स्वप्रकाश इत्यवगतेऽपि 'य आत्माऽपहतपाप्मा' इत्युपन्यासात् पूर्वेषामपहतपाप्मत्वादीनामपि सद्भावोऽवगम्यते । अत उभयप्रमाणसिद्धं रूपद्वयं परस्पराविरोधीत्युभयरूपसमुच्चयः समुचितः ।

---

## अथ ब्राह्माधिकरणम् ॥ ३ ॥

सू० ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ यदिदं स्वप्रकाशानन्दस्वरूपं गुणबृन्दं चाविर्भवतीत्युक्तम् । तस्योभयस्य युगपदाविर्भावो न संभवति संभवति वेति विरोधाविरोधाभ्यां संशये पूर्वः पक्षः । अपहतपाप्मत्वादिगुणबृन्देनाविर्भावः स्वप्रकाशचिन्मात्ररूपेणाविर्भावश्चेति जीवस्य द्विविधमपि रूपं द्विविधश्रुतिप्रतिपन्नं प्रत्याख्यातुं न शक्यम् । नचोभयं यौगपद्येन संभवति । अतः कंचित्कालं सगुणविद्याफलेनापहतपाप्मत्वादिगुणबृन्देनावस्थानं ततश्चिन्मात्रतयेत्येवं कालभेदेन वा सगुणनिर्गुणविद्याधिकारिभेदेन वा तदुभयं व्यवस्थापनीयमिति एकस्मिन्नेव पूर्वपक्षे ऋषिद्वयसंकीर्तनपूर्वकं सूत्रद्वयप्रणयनं परस्परविरुद्धमपि श्रुतिषु श्रूयमाणत्वादृषिसंप्रतिपन्नत्वाच्चावश्यमङ्गीकरणीयम् । न च तदुभयं युगपदेकस्मिन्नङ्गीकर्तुं युक्तम् । अतः कालभेदादिना व्यवस्थापनीयमिति पूर्वपक्षदृढीकरणार्थम् ॥ सू० ॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ प्रज्ञानघनत्वं हि कार्त्स्न्येन स्वप्रकाशत्वं यथा सैन्धवखिल्यस्य रसघनत्वं कार्त्स्न्येन लवणरसत्वं तन्न गुणान्तरव्यव-

विरोधे हि कालभेदाद्यपेक्षा । अतो ज्ञानरूपत्वेन स्वयंप्रकाशमपहतपाप्मत्वादि-योगात् कल्याणगुणविशिष्टं च ब्रह्मसदृशं मुक्तस्वरूपमिति युक्तम् ॥

इति ब्राह्माधिकरणम् ॥ ३ ॥

अथ सङ्कल्पाधिकरणम् ॥ ४ ॥

सू ॥ सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

पूर्वत्र मुक्तस्य स्वयंप्रकाशस्य सत्यसङ्कल्पत्वाद्युक्तम् । तदुपपन्नं न वेति विचिकित्सा ॥ किं प्राप्तम्? मुक्तस्य भोग्यवस्तुविषये न सङ्कल्पमात्रं हेतुः बाह्यहेतुनैरपेक्ष्येण तावता तदसंभवादिति ॥ एवं प्राप्ते ब्रूमः । सङ्कल्पमात्रेण सकलभो-

---

च्छेदकम् । अतो विरोधाभावाद्युगपदुभयं संभवतीति न व्यवस्थापेक्षेति सिद्धान्तः । 'आह च तन्मात्र'मिति ( ब्र० ३-२-१६ ) सूत्रसिद्धस्यैवार्थस्यायं प्रपञ्चस्तद्दृढीकरणार्थः॥

इति ब्राह्माधिकरणम् ॥ ३ ॥

अथ सङ्कल्पाधिकरणम् ॥ ४ ॥

सू० ॥ सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ एवं त्रिभिरधिकरणैर्मुक्तानां स्वरूपानन्दस्य गुणबृन्दस्य चाविर्भाव उक्तः । तत्र गुणबृन्दे सत्यसङ्कल्पत्वं न संभवति । तद्धि 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ती'त्यादिश्रुत्युक्तसङ्कल्पमात्रेण पित्रादिस्वभोगोपकरणस्रष्टृत्वं । तन्न सङ्गच्छते । विमतं भोगोपकरणं सङ्कल्पाधीनसङ्कल्पयितृव्यापारान्तरापेक्षसंपादनं सङ्कल्पसाध्यत्वादिति प्रमाणविरोधात् । ततश्च यथा विज्ञानघन एवेत्यवधारणं श्रुत्यन्तरसिद्धस्य गुणान्तरस्य न व्यवच्छेदकमेवं 'सङ्कल्पादेवे'त्यवधारणमप्यनुमानसिद्धस्य व्यापारान्तरस्य न व्यवच्छेदकम् । नचेश्वरसङ्कल्पसाध्ये व्यभिचारः । पक्षसमत्वात् । 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' ( ब्र० अ २ पा १ सू १४ ) इत्यधिकरणे परमेश्वरस्य सङ्कल्पमात्रेण कारणान्तरोपसंहारनिरपेक्षेण स्रष्टृत्वं देवादिदृष्टान्तेनोपपादितं 'देवादिवदपि लोके' इति । यदा मुक्तानामपि सत्यसङ्कल्पत्वं न संभवतीत्याक्षिप्यते तदा कुतो देवानां तत्सिद्ध्येत् कुतस्तरां च तद्दृष्टान्तेन परमेश्वरस्येति पूर्वः पक्षः । सिद्धान्तस्तु युक्तं 'विज्ञानघन एवे'त्येवकारस्य गुणान्तराव्यवच्छेदकत्वं 'पटोऽयं शुक्ल एवे'तिवद्विशेषणसङ्गतत्वेनायोगव्यवच्छेदपरत्वात् । इह तु 'सङ्कल्पादेवे'त्येवकारस्सङ्कल्पयितृव्यापारान्तरव्यवच्छेदक एव 'पार्थ एव धनुर्धर' इतिवद्विशेष्यसङ्गतत्वेनान्ययोगव्यवच्छेदकत्वात् श्रुति-

---

नयमणिमालायाम्

अथ ब्राह्माधिकरणम् ॥ ३ ॥

सू० ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

ब्राह्मेणाविर्भावं गुणबृन्देन ब्रवीत्येका । चिन्मात्रेणान्या श्रुतिरुभयमिदं कालभेदतो योग्यम् ॥ ३८७ ॥

मैवं विरोधहानेर्न कालभेदव्यवस्थितिः कामी । विज्ञानमात्रतास्य हि कात्स्न्येन स्वप्रकाशत्वम् ॥ ३८८ ॥

सा मुक्तस्याम्नाता निवर्तिका नेतरगुणानाम् । सैन्धवखिल्यस्य यथा रसघनता धवलादीनाम् ॥ ३८९ ॥

इति ब्राह्माधिकरणम् ॥ ३ ॥

ग्यवस्तुसिद्धिरस्ति । तथाहि श्रूयते । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादि । अतोऽस्य सङ्कल्पमात्रमेव सकलभोग्यवस्तुसंपादने हेतुः । न बाह्यहेत्वपेक्षा ॥

## सू ॥ अत एव चानन्याधिपतिः ॥ ९ ॥

यत एव ब्रह्मस्वरूपापन्नोऽयं अपहतपाप्मत्वादिगुणकः अत एवानन्याधिपतिः स्वतन्त्रः । कदाचिदपि न कर्माधीनः । कर्मणो विनष्टत्वात् । नास्य परमेश्वरो नियामकः । प्रवाहसिद्धतदाज्ञारूपविधिनिषेधशास्त्रपथातीतत्वात् । कुतः? पशुत्वव्यावृत्तेः । मलापगमेन हि शिवत्वमेवास्य सिद्धम् । शिवत्वं नाम निखिलमलसंपर्करहितनिरतिशयमङ्गलास्पदत्वरूपं शिवसदृशस्वभावत्वम् । सर्वज्ञत्वादिरिह शिवस्य स्वभावः । अतोऽस्य मुक्तस्य शिवसदृशस्य सर्वज्ञत्वमनादिबोधत्वं नित्यतृप्तत्वं स्वतन्त्रत्वं सर्वशक्तिमत्त्वमलुप्तशक्तिकत्वमनन्तशक्तित्वं चेति । आत्मज्ञानसङ्कोचरूपो हि संसारः । सङ्कोचकारणमलापगमेऽस्य सर्वज्ञत्वम् । अत ए-

---

विरोधे च सामान्यतो दृष्टानुमानस्याप्रमाणत्वात् । अतो युक्तं मुक्तानां सत्यसङ्कल्पत्वमिति । 'संपद्याविर्भाव' इति (ब्र० अ ४ पा ४ सू १) सूत्रे स्वरूपानन्दस्य सर्वज्ञत्वादिषट्कस्यापहतपाप्मत्वाद्यष्टकस्य चाविर्भावो विवक्षितः । अत एव तत्सूत्रभाष्ये चिदानन्दघनं सर्वज्ञत्वादिविशिष्टमाविर्भवतीत्युक्तम् । तत्रापहतपाप्मत्वाद्याविर्भावः प्रागुदाहृतेन प्रजापतिविद्यावाक्येनावगम्यते । सर्वज्ञत्वाद्याविर्भावः कुतोऽवगम्यत इत्याकाङ्क्षायामपहतपाप्मत्वादित एवेति प्रतिपादयितुं सूत्रम् । सू० ॥ अत एव चानन्याधिपतिः ॥ ९ ॥ अनन्याधिपतिशब्दोक्तं स्वातन्त्र्यमङ्गान्तराणामप्युपलक्षणमित्यभिप्रेत्य मलाद्यावरणनिवृत्तिपूर्वकापहतपाप्मत्वाद्याविर्भावोक्त्यैव सार्वज्ञ्यादिषडङ्गान्तराणामप्युपलक्षणमित्यभिप्रेत्य मलाद्यावरणनिवृत्तिपूर्वकापहतपाप्मत्वाद्याविर्भावोक्त्यैव सार्वज्ञ्यादिषडङ्गाविर्भावसिद्धिमुपपादयन्प्रथममपहतपाप्मत्वोक्त्या स्वातन्त्र्यसिद्धिमुपपादयति—अत एवेति । नन्वन्तर्यामिपारतन्त्र्यं मुक्तिदशायामप्यस्तीति 'तस्य च नित्यत्वा'दिति द्वितीयाध्यायसूत्रेणाविष्कृतं कथं स्वातन्त्र्यमित्याशङ्क्याह—कदाचिदपीति । कर्माधीनत्वरूपं पारतन्त्र्यमत्र व्यावर्त्यते न त्वन्तर्यामिप्रेरणाधीनव्यापारत्वरूपमिति भावः । ननु प्राचीनकर्मणां विनष्टत्वेऽपि परमेश्वराज्ञारूपविधिनिषेधोल्लङ्घनात्पुण्यपापे स्यातामित्याशङ्क्याह—नास्य परमेश्वर इति ॥ श्रुतिस्मृतिरूपस्वाज्ञाविषयत्वापादनेन नियामको भवतीत्यर्थः । अत एवाह—प्रवाहसिद्धेति । हेत्वसिद्धिमाशङ्क्याह—पशुत्वव्यावृत्तेरिति । मलमायादिपाशबन्धविषयत्वं पशुत्वं । पशुत्वव्यावृत्तौ सत्यां शिवभावाविर्भावे तदन्तर्गततया सार्वज्ञ्यादिसिद्धिमाह—मलापगमेन हीति । मुक्तिश्शिवत्वरूपेति भारतेप्याविष्कृतम्—'धर्मान्वेषी तपः कर्तुं यतेत सततं प्रिये । अमरत्वं शिवत्वं च तपसैवाप्नुयान्नर' इति । संप्रतिपन्नमुक्तधर्मान्तरसिद्धिहेतुनैव तदीयसर्वज्ञत्वादिसिद्धिमुपपादयति—आत्मज्ञानेत्यादिना । अस्य सर्वज्ञत्वमिति । अनादिबोधत्वस्यापि तदुपलक्षणम् । अत एव ज्ञानस्येति । तत्त-

वाज्ञानस्य संसारनिदानस्य समूलनिवृत्तेः परिच्छिन्नापरिच्छिन्नदेहाद्यभिमानरूपभ्रमनिवृत्तिः। यतो ह्यस्य जरामरणशोकराहित्यं। अत एव कर्मवश्यत्वाभावात् स्वतन्त्रत्वं। निरतिशयस्वरूपानन्दानुभवैकरसिकतया स्वात्मारामत्वेन नित्यतृप्तत्वं। अत एवास्य जिघत्सापिपासादिराहित्यम्। अलुप्तसर्वशक्तिकत्वादस्य सत्यकामसत्यसङ्कल्पत्वम्। तस्मादसौ परमेश्वरश्च अपहतपाप्मत्वादिगुणाष्टकयुक्तः श्रूयते। अतो मुक्तस्य शिवसदृशस्य स्वातन्त्र्यं युक्तमेव॥

इति सङ्कल्पाधिकरणम् ॥ ४ ॥

---

द्विषयावरणभूतानामाणवमलस्य शक्तिविशेषाणां समुदायस्संसारकारणमज्ञानं तस्य सर्वस्यापि मूलम्। सार्वज्ञ्यत्वादिकपरमेश्वरशेषत्वादियुक्तनिजस्वरूपावरणभूता तच्छक्तिः तस्य सर्वस्याप्यावरणशक्तिसमुदायस्य निवृत्त्यैव हि 'शोकं मोहं जरां मृत्युमत्येती'त्यस्य ...स्य परिच्छिन्नदेहाद्यभिमानरूपस्य भ्रमस्य निवृत्तिरभ्युपेयते। तत एवास्य सर्वज्ञत्वं सङ्कुचितस्यावृतस्य ज्ञानस्य प्रागपि सत्त्वाङ्गीकारादनादिबोधत्वं च सिद्ध्यतीति भावः। यतो ह्यस्य जरामरणेति। यतः कर्मवश्यत्वाभावादस्य जरामरणशोकराहित्यम्। अत एव स्वतन्त्रत्वं सिद्ध्यतीत्यर्थः। अत एवास्य जिघत्सेति। स्वरूपानन्दानुभवादेव ह्यस्य जिघत्सापिपासाराहित्यमुपपादनीयम्। तत एव नित्यतृप्तत्वं सिद्ध्यतीति भावः। अलुप्तेति। अलुप्तशक्तिकत्वमनन्तशक्तिकत्वं च विना सत्यकामत्वं सत्यसङ्कल्पत्वं च न सिद्ध्यतीति तत एव तदुभयं सिद्ध्यतीत्यर्थः। परमेश्वरश्चेति दृष्टान्तार्थम्। स्वातन्त्र्यमिति। स्वातन्त्र्योपलक्षितं सर्वज्ञत्वादिषट्कं युक्तमेवेत्यर्थः। केषुचिन्मूलकोशे'ष्वत एव चात्मन्यधिपति'रिति सूत्रपाठो दृष्टः। तत्राप्यात्मन्यधिपतिरात्मेश्वर इत्यनन्याधिपतिरित्यनेन समानार्थः॥

इति सङ्कल्पाधिकरणम् ॥ ४ ॥

---

नयमणिमालायाम्

## अथ सङ्कल्पाधिकरणम् ॥ ४ ॥

सू० ॥ सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ अत एव चानन्याधिपतिः ॥ ९ ॥

मुक्तः पित्रादीनां स्रष्टा सङ्कल्पमात्रेण। इत्येतदनुपपन्नं लोके सङ्कल्पमोघतादृष्टेः ॥ ३९० ॥

अस्य हि याथाकाम्यं शास्त्रनिषिद्धमपि संभवात्किञ्चित्। सङ्कल्पहतिं कुर्यान्माहेश्वराज्ञातिलङ्घनत्वेन ॥ ३९१ ॥

मैवं यन्नापेक्षा तत्सृष्टिर्ब्रह्मसृष्टिरिव। सङ्कल्पादेवेति श्रुतिफणितेरनतिशङ्क्यत्वात् ॥ ३९२ ॥

अत एवात्मन्यधिपतिरसौ स्वतन्त्रो विमुक्तपशुभावः। नैतस्य बन्धकृदघं न नियन्ता तन्महेश्वरस्सोऽपि ॥ ३९३ ॥

इति सङ्कल्पाधिकरणम् ॥ ४ ॥

## अथ अभावाधिकरणम् ॥ ५ ॥

### सू ॥ अभावं बादरिराह ह्येवम् ॥ १० ॥

पूर्वं मुक्तस्य स्वयंप्रकाशत्वं सत्यसङ्कल्पत्वादिवैशिष्ट्यं चोपपादितम् । इह तस्य सशरीरत्वमशरीरत्वमुभयं वेति विचारः प्रवर्तते । बादरिस्तावत् मुक्तस्य देहेन्द्रियाद्युपकरणाभावं मेने । 'निष्कलं निष्क्रियम्' इत्यादिकं ब्रह्मणस्तदभावमाह हि तत्स्वरूपस्य मुक्तस्यापि तथात्वमिति ।

### सू ॥ भावं जैमिनिर्विकल्पाम्नानात् ॥ ११ ॥

जैमिनिस्तु 'स एकधा भवति त्रिधा भवति' इत्यादौ देहेन्द्रियादिभिः विविधत्वश्रुतेस्तद्भावमेव मेने । तदेवं सदेहत्वश्रुतेर्विदेहत्वश्रुतेश्च किमस्य तात्त्विकमिति संशये विदेहत्वमेव तात्त्विकम् । 'मनसैतान् पश्यन् रमते य एते ब्रह्मलोक' इति बाह्येन्द्रियाद्यभावो हि मुक्तस्य श्रूयते । ब्रह्म च बाह्येन्द्रियादिरहितं श्रूयते 'सत्यात्म प्राणारामं मनआनन्दम्' इति । आत्मन्येवारामो न बाह्ये, मनस्येवानन्दो न बाह्ये करण इति हि तत्र निरुक्तिः । अतो मुक्तस्य विदेहत्वमेव । सदेहत्वस्य तु पुरुषभेदाद्व्यवस्थेति । एवं प्राप्ते सिद्धान्त उच्यते—

### सू ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

उभयश्रुतेः सशरीरत्वमशरीरत्वं च स्वेच्छया मुक्तस्येति भगवान् बादरायणो

---

## अथ अभावाधिकरणम् ॥ ५ ॥

सू० अभावं बादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनिर्विकल्पाम्नानात् ॥ ११ ॥ मुक्तस्य स्वरूपगुणविचारानन्तरं देहेन्द्रियविचार इति सङ्गतिः । मुक्तस्य सशरीरत्वमशरीरत्वं च श्रूयमाणं विद्याविशेषानुष्ठातृपुरुषभेदेनोपपादनीयमुतैकस्मिन्नेव पुरुषे सङ्कल्पभेदेनेत्युभयथा संभवात्संशयः । तत्र पूर्वः पक्षः । मुक्तस्य शरीरं भोगार्थं नापेक्षितं ब्रह्मसादृश्यं प्राप्तस्य तस्य ब्रह्मण इव भोगस्य मानसत्वौचित्या'न्मन आनन्द'मिति ब्रह्मण इव 'मनसैतान्कामान्पश्यन्रमते' इति तस्यापि भोगस्य मानसत्वश्रवणाच्च 'निष्कलं निष्क्रिय'मिति मन्त्रे ब्रह्मणो भोगार्थशरीरनिषेधेन तस्यापि तथाभूतशरीराभावस्याङ्गीकर्तव्यत्वाच्च । तत्र हि मन्त्रे शरीरावयवतत्क्रिययोर्निषेधः शरीरनिषेधः पर्यवस्यन्भोगोपकरणशरीरनिषेधो भवेत् । साधकानुग्रहार्थस्योमासहायत्वादिविशिष्टदिव्यविग्रहस्याङ्गीकारात् । न च तद्वन्मुक्तस्य साधकानुग्रहार्थं शरीरमङ्गीकर्तव्यम् । तेन कर्तव्यस्य साधकानुग्रहस्याभावात् । तस्मादशरीर एव परममुक्तः । 'स एकधा भवति त्रिधा भवती'त्यादेरच्छेद्ये जीवे स्वतोऽसंभवतः शरीरभेदोपाधिकत्वं वक्तव्यमिति यत्सशरीरत्वमापतति तद्विद्याविशेषानुष्ठानादवरमुक्तिं प्राप्तस्य कल्पनीयमिति 'ब्राह्मेण जैमिनि'रित्यधिकरण ( ब्र० ४-४-६-३ ) इव अत्रापि ऋषिद्वयसङ्कीर्तनं युक्तम् । सूत्रद्वयं पूर्वपक्षदृढीकरणार्थम् । द्वितीयसूत्रे विकल्पो विविधप्रकारः बहुदेहत्वमित्यर्थः । एवं प्राप्ते सिद्धान्तः—सू० ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ 'यत्र नान्यत्पश्यती'त्यादिवाक्यप्रति-

मन्यते। यथा द्वादशाहः उभयश्रुतेः सत्रमहीनं च तद्वदिति । अत्र पौराणिकी फणितिः "सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णाः स्वभावतः । शिवतुल्यबलोपेताः परमैश्वर्यसंयुताः ॥ सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः ॥" इत्यादिका शिवपदारूढविषया । अत उभयविधत्वं युज्यते । एकस्यैव कालभेदादुभयव्यवस्थामाह—

सू ॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

मुक्तः स्वेच्छया कदाचित् बहूनि शरीराणि सृष्ट्वा तदनुप्रवेशेन विहरति । कदाचिदुपसंहृतशरीरश्च वर्तते । शरीराद्यभावावस्थायां मुक्तः स्वप्ने परमेश्वरसृष्टं रसादिकं मनसा बद्धपुरुष इव परमेश्वरसृष्टमेव रसं भुङ्क्ते । किमुक्तं भवति स्वप्ने पुरुषो यथा शरीरेन्द्रियादिनैरपेक्ष्येण केवलेन मनसैवेश्वरसंपादितान् विषयान् भुङ्क्ते, तथा मुक्तोऽपि स्वभूतेन मनसैव ब्रह्मस्वरूपरसमनुभुङ्क्त इति ॥

सू ॥ भावे जाग्रद्वत् ॥ १४ ॥

स्वेच्छासृष्टशरीराद्युपकरणभावे जाग्रत्पुरुष इव सर्वकामं भुङ्क्ते । ननु यदि मुक्तस्य प्राकृतवस्तुदर्शित्वरूपं भोक्तृत्वं, तर्हि अपुरुषार्थप्रपञ्चदर्शिनो मुक्तस्य न

---

पन्ननिरतिशयात्मकपरब्रह्मविषयायां भूमविद्यायां श्रुतस्य 'स एकधा भवती'त्यादेरवरमुक्तिविषयत्वं न युक्तम् । अतो यथा 'द्वादशाहमृद्धिकामाः अपि यद्वादशाहेन प्रजाकामं याजये'दिति श्रुतिद्वयानुसारेण द्वादशाहस्य सत्राहीनोभयरूपत्वम् । एवं मुक्तस्य सदेहविदेहश्रुत्यनुसारेण तदुभयरूपत्वमङ्गीकरणीयम् । तच्च स्वसङ्कल्पात् 'सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः' इत्युपबृंहणादिति । ननु विदेहावस्थायां मनोमात्रेण कथं कामभोगः । यदि स तन्मात्रेणापि मुक्तस्य संभवति तर्हि कदाचिद्देहापेक्षा किमर्थेत्याशङ्कां निराकर्तुं विदेहसदेहावस्थयोर्भोगविशेषप्रतिपादनार्थमुपरितनसूत्रद्वयम् । सू० ॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ सन्ध्यवत्सूक्ष्मविषयोपभोग इति विशेषोपपत्तेरित्यर्थः । शरीरस्यान्तः परमेश्वरसृष्टेषु वासनामयेषु सूक्ष्मेष्वर्थेषु मानसप्रत्यय एव चाक्षुषत्वाद्यभिमानरूपः स्वप्न इत्यङ्गीकृत्य सन्ध्यवदिति दृष्टान्तः कृतः । तत्र सूक्ष्मत्वांश इव परमेश्वरसृष्टत्वांशेऽपि सन्ध्यदृष्टान्त इति तत्स्वारस्यमनुसरन्नाह—परमेश्वरसृष्टमिति । ब्रह्मस्वरूपरसमिति । सविभूतिकब्रह्मानन्दमित्यर्थः । 'मनसैतान्कामान्पश्यन्रमत' इति श्रुतौ परमेश्वरसृष्टमिति प्राचीनभाष्यवाक्ये च केवलमानसानुभवेऽपि विभूत्यनुप्रवेशवर्णनात् । सू० ॥ भावे जाग्रद्वत् ॥ १४ ॥ उपपत्तेरित्यनुवर्तते । तथा च मुक्तस्य शरीरादिसद्भावे जाग्रत इव स्थूलविषयभोगोपपत्तेरित्यर्थः । ननु यदा कश्चिन्मुक्तः सदेहः अन्यश्च विदेहः तदा तया स्पष्टास्पष्टविषयौ भोगाविति मुक्तिफलेऽप्युत्कर्षापकर्षौ प्रसज्येयाताम् । नैव दोषः । सविभूतिकब्रह्मानुभवस्य सर्वान्प्रत्येकरूपत्वात् । तथाहि यदा कश्चिद्विदेहः तदा तस्य स्वप्नदृश इव वासनाभिः सूक्ष्मान्कांश्चन विषयानीश्वरः सृजति । ते च स्थूलप्रपञ्चान्तर्गतविषयाश्चेति द्विविधैरपि विभूतिभेदैर्विशिष्टं ब्रह्म सदेहानां विदेहानां च सर्वेषामपि मुक्तानामास्वाद्यम् । अतो न तस्यापि सविभूतिकब्रह्मानुभवे विशेषः । कथं तर्हि 'तन्वभाव

संसारदुःखानुषङ्गाभावसिद्धिरिति चेन्न । मुक्तस्यापुरुषार्थरूपेण प्रपञ्चदर्शनाभावात् । मुक्तेन ब्रह्माकारं हि दृश्यते विश्वमेतत् । तथा हि श्रूयते । 'एतत्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम्' इति । पूर्वत्र 'आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम्' इति स्वाराज्यसुखैकरसं शिवस्य परब्रह्मणः पदं मनसस्पतिं ज्ञानशक्त्यधिष्ठातृभूतमाप्नोति योगीत्युक्तम् । तदा स किंविशिष्ट इत्याकाङ्क्षायां 'वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिरि'ति वागादीनां स्वेच्छाधीनत्वेन तदाधिपत्यमुक्तम् । तदेवंविधस्य मुक्तस्य परमाकाशरूपशिवपदाधिरूढस्य स्वेच्छाधीनविशुद्धवागादिकरणस्य ततः तत्पदप्राप्त्यनन्तरं एतत् विश्वजालं भवति । किं भवति? आकाश-

---

इत्यादिसूत्राभ्यां विदेहत्वावस्थायां सूक्ष्मभोगः सदेहत्वावस्थायां स्थूलभोग इति विशेष उक्तः । कथंचिद्विदेहत्वावस्थायां तदीयवासनामयसूक्ष्मविषयसृष्टिरप्यस्ति न तु सदेहत्वावस्थायामित्येव विशेषस्सूत्राभ्यामुक्त इति गृहाण । एतेन कश्चिन्मुक्तः सङ्कल्पेन बहूनि भोगोपकरणानि सृजेत्कश्चिदल्पानीति तयोर्भोगतारतम्यं स्यादित्यपि शङ्का निरस्ता । सर्वान्मुक्तान्प्रति स्वसृष्टपरसृष्टसर्वविधविभूतिविशिष्टब्रह्मानन्दानुभवस्यैकरूपत्वात् । नन्विति । यदि मुक्तस्य सविभूतिकब्रह्मानुभवः तदा मुक्तानुभववासनासृष्टभोगोपकरणानां मुक्तमात्रभोग्यानां सुखैकरूपत्वेऽप्यमुक्तसाधारणस्य स्थूलप्रपञ्चस्य सुखदुःखकरंवितत्वात्तदनुभवितुर्मुक्तस्यामुक्तवद्दुःखानुभवोऽपि स्यात् । इयांस्तु विशेषो भवेत् । अमुक्तस्य दुःखहेतुकतिपयविषयानुभव इत्यल्पं दुःखं । मुक्तस्य तु यद्यावद्दुःखानुभवहेतुभूतं दुर्गन्धादिविषयजातं तस्य सर्वस्याप्यनुभवोऽस्तीत्यधिकं दुःखमिति । तस्मादयुक्तस्सविभूतिकब्रह्मानुभव इति शङ्कार्थः । संसारनिदानपुण्यपापरूपदोषाक्रान्तेनामुक्तेन स्वतन्त्रतयानुभूयमाने प्रपञ्चे कतिपयस्य यथाकर्म दुःखरूपत्वेऽपि तद्दोषरहितेन ब्रह्मविभूतितयानुभूयमानस्य तस्य सुखरूपत्वमेव भवति । यथा पित्तोपहतरसनेनास्वाद्यमानस्य शर्करादेर्दुःखरूपत्वेऽपि तद्रहितेनास्वाद्यमानस्य सुखरूपत्वं यथा च राजकुमारेण पुरतः स्वतन्त्रतयानुभूयमानस्य महासैन्यस्य दुःखरूपत्वेऽपि ततस्तस्यैव स्वपितृविभूतितयावगम्यमानस्य सुखरूपत्वमिति परिहारार्थः । मुक्तस्य ब्रह्मविभूतितया प्रपञ्चदर्शने श्रुतिमुदाहरति— तथाहि श्रूयत इति । एतद्विश्वजालमाकाशशरीरं ब्रह्मैव भवतीत्येतन्मुक्तं प्रत्युच्यत इति दर्शयितुं मुक्तस्य प्रकृतत्वमाह—पूर्वत्रेति । स्वः स्वर्गः 'देवा ह वै स्वर्गं लोकमगमन्नि'ति श्रुतिप्रसिद्धनिरतिशयसुखात्मकं परब्रह्मणः पदं तत्र राजतीति स्वराट् तस्य भावः स्वाराज्यं तदाप्नोतीत्यस्य ब्रह्मणः पदं प्राप्नोतीत्यर्थे पर्यवसानमभिप्रेत्य व्याचष्टे—स्वाराज्यमिति । मनः ज्ञानशक्तिरूपा पारमेश्वरी तदधिष्ठाता शिवो मनसः पतिरित्यभिप्रेत्य व्याचष्टे—मनसस्पतिमिति । ब्रह्मभिन्नं विश्वजालं कथं मुक्तस्य ब्रह्म भवेदित्याकाङ्क्षायां चिच्छक्त्युपादानकस्य विश्वजालस्य चिच्छक्तिद्वारा ब्रह्मापृथग्भावात्तस्य च मुक्तेन साक्षात्कृतत्वादिति दर्शयितुं 'आकाशशरीर'मिति श्रुतौ विशेषणं कृतम् । तत्राकाशशब्दस्य

शरीरं ब्रह्मैव परमानन्दलक्षणपरमाकाशशरीरं ब्रह्मैव भवति । परप्रकृतिरूपा परमसत्ता प्रकाशानन्दसमरसा । परशक्तिर्हि ब्रह्मणः स्वरूपतया परमाकाश उच्यते या मुक्तानां परमेश्वरस्य च साक्षादर्थक्रियाहेतुः, परम्परयाऽन्येषाम् । तथा हि 'को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति' 'रसो वै सः । रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवति' इति सर्वानुभवविषयत्वमस्याः श्रूयते । तथा च 'स एको मानुष आनन्द' इत्यारभ्य 'स एको ब्रह्मण आनन्द' इति ब्रह्मपर्यन्तमुपाधितिरोधानादानन्दाविर्भावस्तारतम्येन श्रूयते । निरुपाधिकतया ब्रह्मणि मुक्ते च परिपूर्णो वर्तते स आनन्दः 'स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्ये'ति श्रवणात् । ब्रह्मार्पणबुद्ध्या निष्कामानुष्ठिताग्निहोत्रादिकर्मा परविद्वानकामहतः श्रोत्रियः । तस्य जीवत एव मुक्तस्य ब्रह्मणश्च तुल्य एवानन्दः । तस्य योगातिशयेन तत्तद्भूमिमधिरूढस्य पूर्वत्र पूर्वत्र भूमावभ्यासः स्वल्प इति तदनुसारेण तत्तद्भूमौ तदीयानन्दस्य मानुषाद्यानन्दसाम्यकृतिरिति न विरोधः । अतोऽयमेव परमानन्दः परप्रकृतिः परमाकाशः पराभेदात् 'आनन्दो ब्रह्मेति व्यजानादि'ति

---

चिच्छक्तिरर्थ इत्येतद्दर्शयति—परप्रकृतिरूपेति । परमसत्तेति । ब्रह्मवत्प्रपञ्चस्यापि सैव सत्तेति पारम्यम् । प्रकाशानन्दसमरसा चिदानन्दघना परशक्तिर्हि परमाकाशः । सा परब्रह्मणः स्वरूपतयोच्यत इत्यन्वयः । शरीरपदव्याख्यानं स्वरूपतयेति । तस्यास्सर्वदा सर्वोपजीव्यत्वमाह—येति । साक्षाद्वृत्त्युपधानमनपेक्ष्यार्थक्रियाहेतुरखण्डानन्दतयास्वादहेतुः आस्वादनीयेति यावत् । परम्परयेति । पुण्यविशेषानुसार्यभिव्यक्तिविशेषहेतुवृत्त्युपधानद्वारेत्यर्थः । एतदेवोपपादयति—तथाहीत्यादिना । अननं प्राणवायुव्यापारः प्राणनं चक्षुरादिव्यापारः । अनेन लौकिकव्यापारहेतुत्वमप्यस्तीति दर्शितम् । 'एष ह्येवे'ति वाक्याभिप्रायः तद्धेतुव्यपदेशाच्चेत्यानन्दमयाधिकरणे ( ब्र० १ पा० १ सू० १) वर्णितः । ब्रह्मपर्यन्तमिति । ब्रह्मणः प्रागित्यर्थः । ब्रह्मणि मुक्ते चेति । अनुभाव्यत्वसंबन्धो विवक्षितः नाधाराधेयभावः । तस्य मुक्तसाधारण्याभावात् 'स एको ब्रह्मण' इति श्रुतावनुभाव्यत्वसंबन्ध एव षष्ठ्यर्थः । तस्य जीवत एव मुक्तस्येति । तथाभूतः श्रोत्रियो यदा चरमदेहावसाने मुक्तो भवति तदा तस्य परब्रह्मणश्च तुल्य एव निरतिशयानन्दः । स यदा जीवद्दशायां योगमभ्यस्यति तदतस्या योगभूतिकाभेदानुसार्यभिव्यञ्जकतारतम्यात्क्रमेण मानुषानन्दादितुल्यानन्दाविर्भावः । एवं सत्यकामहतश्रोत्रियशब्दोक्तानां मुक्तानामेवानन्दतारतम्यमुच्यत इति विरोधो नाशङ्कनीयः । 'स एको ब्रह्मण आनन्द' इति पर्याय एवाकामहतश्रोत्रियशब्दस्य मुक्तिदशाविषयत्वात् प्राचीनपर्यायेषु तस्य तस्य जीवन्मुक्तिदशाविषयत्वादित्यर्थः । अस्त्वेवंभूतमहिमा परमाकाशः । तथापि कथं ब्रह्मणस्तत्स्वरूपत्वं धर्मिधर्मभावेन भेदसत्त्वादित्याशङ्क्य 'अभेदव्यपदेशोऽयमौपचारिकः' 'आनन्दो ब्रह्मे'ति श्रुत्यन्तर इवेत्यभिप्रेत्याह—अतोऽयमेवेति । 'यद्यप्याकाशशरीर'मित्यत्रायुतसिद्धप्रकारपरः शरीरशब्द इति वक्तुं शक्यम् । तथापि तदुपादा-

ब्रह्मत्वेन जगत्कारणत्वेन श्रूयते । तस्याभिव्यक्तिः 'सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता' इति । अतो मुक्तानां परमानन्दरूपपरमाकाशशरीरकं ब्रह्म जगद्भवतीति परमानन्दानुप्रविष्टानामेषां ब्रह्मण इव दुःखानुषङ्गाभावः ॥

इति अभावाधिकरणम् ॥ ५ ॥

## अथ प्रदीपवदावेशाधिकरणम् ॥ ६ ॥

## सू ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

सूचितं हि पूर्वत्र मुक्तात्मनोऽपि स्वेच्छयाऽनन्तशरीरपरिग्रहणसामर्थ्येन विभुत्वम् । तदिह युज्यते न वेति विचार्यते । 'सर्वेषु लोकेषु कामचारो भवति' 'इमांल्लोकान् कामान्नीकामरूप्यनुसञ्चरन्' इत्यादिषु मुक्तस्य परिच्छिन्नतया सञ्चारावगमान्न व्यापकत्वमुचितम् । अतो बहुशरीरपरिग्रहणं क्रमेणैव, न युगपदिति पूर्वः पक्षः ॥ सिद्धान्तस्तु । घटादिपरिच्छिन्नस्य प्रदीपस्य परिच्छेदापाये स्वप्रभया यथा गृहादिव्याप्तिः, तथा मुक्तस्य स्वशक्तितिरोधायकमलापाये स्वश-

---

नकत्वेन तदभिन्नस्य विश्वजालस्य ब्रह्मसामानाधिकरण्यमभेदेनोपपादयितुं तस्य स्वरूपपरतया व्याख्यानं कृत्वा तदौपचारिकत्वेनोपपादितम् । वस्तुतस्तस्यायुतसिद्धप्रकारपरत्वेऽपि न दोषः । विश्वजालस्याप्ययुतसिद्धप्रकारत्वादेव सामानाधिकरण्योपपत्तेः । तस्येति । तस्य परमाकाशस्य । अभिव्यक्तिः महिमप्रकाशनम् । भृगुवल्ल्यामत एव 'सैषा भार्गवी'त्यादिना तस्यास्तत्परत्वमुक्तमित्यर्थः । अवान्तरप्रमेयोपसंहारेणाधिकरणार्थं निगमयति— अतो मुक्तानामिति ।

इति अभावाधिकरणम् ॥ ५ ॥

## अथ प्रदीपवदावेशाधिकरणम् ॥ ६ ॥

सू० ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ सूचितं हीति । पूर्वाधिकरणे 'स एकधा भवती'त्यादि श्रुत्युदाहरणेन मुक्तस्य विभुत्वं सूचितम् । अणुत्वे युगपदनेकशरीरपरिग्रहानुपपत्तिरित्यर्थः । अनेकशरीरपरिग्रहश्रवणादणुत्वश्रवणाच्च संशयः । संचरणादिलिङ्गेनाणुत्वस्य प्रतिष्ठितत्वादनेकशरीरपरिग्रहः क्रमिको व्याख्येय इति पूर्वः पक्षः । क्रमिकतायामेकधा त्रिधा पञ्चधेत्यादिपक्षभेदोपन्यासानुपपत्तेर्युगपदेव कदाचित्कदाचिदनेकशरीरपरिग्रहो वाच्यः । स च धर्मज्ञानविकासेनोपपद्यते । अवश्यं हि संसारदशायामपि हस्तिपुत्तिकादिशरीरेषु परिभ्रमतो जीवस्य तत्तद्देहव्याप्त्यनुगुणसङ्कोचविकासशा-

---

नयमणिमालायाम्

### अथ अभावाधिकरणम् ॥ ५ ॥

सू० ॥ अभावं बादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥ भावे जाग्रद्वत् ॥ १४ ॥

क्वचिदस्य देहभावस्तदभावो वाऽवगम्यते क्वचन । अत्र श्रुतिद्वयस्य व्यवस्थितिः पुरुषभेदेन ॥ ३९४ ॥

मैवं श्रुतेरयं स्यान्निजेच्छया सतनुरतनुश्च । तदभावे स्वप्नदृगिव तद्भावे जाग्रदिव भोगी ॥ ३९५ ॥

इत्यभावाधिकरणम् ॥ ५ ॥

क्त्या विश्वव्याप्तिः आवेशः भवति । तथा हि दर्शयति श्रुतिः । "स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा । यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त ॥" "परि द्यावापृथिवी यन्ति सद्यः परि लोकान् परि दिशः परि स्वः । ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्प्रजासु ॥" इति । तत्र हि प्रकरणं 'एष हि देवः' इति जगत्कर्तुः विश्वरूपस्य महादेवस्य । स महादेवो नः अस्माकं बन्धुः, जनिता पिता, स विधाता सकलश्रेयसां कर्ता, धामानि तेजोरूपाण्यप्राकृतानि भुवनानि विश्वान्यपि जानाति । अत्र बन्धुत्वादियोग्यस्य धामवेत्तृत्वस्य च प्रयोजनमुच्यते । यत्र यस्मिन् महादेवे अमृतं कैवल्यलक्ष्मीं आनशानाः प्राप्यानुभवन्तो देवाः तद्भावा देवनशीलाः तृतीये द्युसंज्ञके तत्पदे मायातीते धामानि तेजःप्रधानानि स्वाभिमतानि स्थानानि अभ्यैरयन्त स्वीकृतवन्तः । किमुक्तं भवति । बन्धुवज्जनकवत् सकलहितकारिणा परब्रह्मणा महादेवेन प्रसन्नेन दलितपाशबन्धा अमृतभावं गताः मुक्ताः तृतीये परमव्योमलक्षणे स्वपदे कल्पितानि धामानि प्रकाशमयानि पदानि प्राप्ता वर्तन्त इति ॥ अतः परमेषां व्याप्तिरुच्यते । परि द्यावापृथिवी यन्तीति । मुक्तात्मानः स्वशक्तिभिः द्यावापृथिवी परियन्ति व्याप्नुवन्ति । परि लोकान् हिरण्यगर्भादिलोकानपि व्याप्नुवन्ति । दिशश्चतस्रश्च परियन्ति व्याप्नुवन्ति । एवं सकलजगद्व्यापिनो वर्तन्ते । तथाहि ते सर्वज्ञा ऋतस्य कर्मणो विस्तीर्णं भोगतन्तुं विचृत्य छित्त्वा पुण्यपापविनिर्मुक्ताः सन्तः सर्वप्राणिषु तदेव महादेवाख्यं वस्तु अपश्यन् सर्वात्मतया तदभवत् तत्स्वभावाश्चाभवन् । यत्रेति संबन्धः । अतो मुक्तानां शिवैकरसानां व्यापकत्वमस्त्येव । एतेन महादेवसधर्माणो मुक्तस्वभावा जीवा देवशब्दवाच्याः । द्युप्रभृतिव्यापिनो देवव्रताख्ये सामनि श्रूयन्ते 'ये देवा दिविषद' इत्यादिना । पुराणे च—"ते हि साक्षाद्दिविषदस्त्वन्तरिक्षसदस्तथा । पृथिवीषद इत्येते देवा देवव्रते स्थिताः ॥" इति । इह पृथिवीति ब्रह्माण्डरूपं, अन्तरिक्षमिति द्वितीयं मायापदं, द्यौरिति तृतीयं परमाकाशपर्यायं शुद्धशक्तिरूपं शिवपदमुच्यते । अतो मुक्तानां विभुत्वमिति ॥

---

लित्वं धर्मज्ञानस्य वाच्यम् । तथा च मुक्तिदशायामनेकशरीरव्याप्त्यनुगुणो विकासो नानुपपन्नः । सङ्कोचकापाये च सङ्कुचितस्य प्रभामण्डलस्य व्यापनं दृष्टम् । श्रुतिर्मुक्तौ तद्व्याप्तिं दर्शयति—परिद्यावापृथिवीत्यादिना । सा श्रुतिः पूर्वापरमन्त्रोदाहरणपूर्वकं भाष्ये स्पष्टं व्याख्याता । तत्र धामानि स्थानानि । भाष्ये तेजोरूपत्वेन स्थानविशेषणं वस्तुवृत्तमभिप्रेत्य न तु धामशब्दार्थत्वमभिप्रेत्य । स्थानवाचिनो धामशब्दस्य तेजोरूपवाचित्वायोगात्तदावृत्तिमभिप्रेत्य वा तथा व्याख्यानम् । तदपश्यत्तदभवदिति बहुष्वेकवचनं छान्दसतया नेयम् । द्वितीयं मायापदमिति । अनेन परावरमायाकार्यं शुद्धमि-

## सू ॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

ननु ब्रह्मप्राप्तस्यान्तरबाह्यज्ञानलोपमाह श्रुतिः 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमि' ति । कथं तस्य शक्तिरूपज्ञानव्याप्तिरुच्यत इति नाशङ्कनीयम् । इदं जीवस्य वेदनाभाववचनं सुषुप्तिमरणयोरन्यतरापेक्षं 'नाहं खल्वयमेवं संप्रत्यात्मानं जानातीत्ययमहमस्मीति नो एवेमानि भूतानि' इति सुषुप्तौ, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ती'ति मरणे च श्रुत्या तथैवाविष्कृतं हि । तद्विलक्षणतया मुक्तेस्तत्र नाज्ञत्वादि । किन्तु मलतिरोधानापायात् सर्वज्ञत्वं च सर्वशक्तिकत्वं चेति न मुक्तौ ज्ञानादिनिषेधसंभवः ॥

इति प्रदीपवदावेशाधिकरणम् ॥ ६ ॥

## अथ जगद्व्यापाराधिकरणम् ॥ ७ ॥

## सू ॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

उक्तमीश्वरेण साम्यं मुक्तानां स्वप्रकाशत्वव्यापकत्वसर्वज्ञत्वादिभिः । तथा

---

श्रपदद्वयमपि ग्राह्यम् । अन्यथा परमशिवपदस्य तृतीयत्वायोगात् । सू० ॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ ज्ञानाभावश्रुतीनां मुक्तिदशाविषयत्वे तदानीं ज्ञानविकासोक्तिरनुपपन्ना स्यादिति तासां यथाप्रकरणं सुषुप्तिविषयत्वं मरणविषयत्वं वेति प्रतिपादयितुमिदं सूत्रमिति शङ्कोत्तराभ्यां व्याचष्टे—नन्वित्यादिना । 'वाङ्मनसि संपद्यत' इत्यादिश्रुतिप्रसिद्ध्यनुसारेण संपत्तिशब्दो मरणे प्रयुक्तः । यथा सुषुप्तिमरणयोः श्रुत्यन्तरेषु ज्ञानाभावप्रसिद्धिः नैवं मुक्तावस्तीत्याह—तद्विलक्षणतयेति । न केवलं मुक्तौ वेदनाभावप्रसिद्ध्यभावमात्रमपि तु 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश' इत्यादिश्रुतिषु सर्वज्ञत्वादिप्रसिद्धिरप्यस्तीत्याह—किंत्विति ।

इति प्रदीपवदावेशाधिकरणम् ॥ ६ ॥

## अथ जगद्व्यापाराधिकरणम् ॥ ७ ॥

सू० ॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ सङ्गतिपूर्वकं परमसाम्यश्रवणात्सदृशद्वितीयश्रवणाच्च संशयं दर्शयति—उक्तमिति । मलतिरोधानापगमात्स्वप्रकाशनिरतिशयानन्दस्वरूपाविर्भावेन धीसङ्कोचापगमात्तद्विकासाविर्भावेन सार्वज्ञ्यादेरपहतपाप्मत्वादेश्चाविर्भावेन च मुक्तस्य शिवसाम्यं प्राक्समर्थितम् । तद्वज्जगद्व्यापारे-

---

### नयमणिमालायाम्

### अथ प्रदीपवदावेशाधिकरणम् ॥ ६ ॥

सू० ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

कायव्यूहस्य युगपत्कथमधितिष्ठेदसौ मुक्तः । आश्रित्य कालभेदं योज्यस्तस्मादनेकधाभावः ॥ ३९६ ॥

दीपो घटादिरोधापाये प्रभया-यथाविशति गेहान्तम् । मुक्तस्तथा मलस्यापाये जगदिदमतोऽस्ति कायव्यूहः ॥ ३९७ ॥

इति प्रदीपवदावेशाधिकरणम् ॥ ६ ॥

**जगत्सृष्ट्यादावपि साम्यं दुर्वारं, 'परमं साम्यमुपैती'ति निर्विशेषश्रवणात्। जगत्सृष्ट्यादिसाम्याभ्युपगमे च बह्वीश्वरत्वादीश्वरस्याद्वितीयत्वभङ्गप्रसङ्गः । अतः कीदृशं साम्यमीश्वरेण मुक्तानां विवक्षितम् । जगत्सृष्ट्यादियुक्तं तद्वर्जं वेति संशयः ॥ किं प्राप्तम्? 'स यदि पितृलोककामो भवती'त्यादिषु संकल्पमात्रात्पितृलोकादिसृष्टिसामर्थ्यश्रवणात् 'इमांल्लोकान् कामान्नीकामरूप्यनुसंचरन्' इति सर्वत्र व्यापारश्रवणात् परमेश्वरसाम्ये सङ्कोचायोगाच्च मुक्तस्य जगत्सृष्ट्यादिव्यापृतिरप्यस्तीति प्राप्ते ब्रूमः । मुक्तस्य परमेश्वरसाम्येऽपि जगत्सृष्ट्यादिव्यापारवर्जमेव स्वातन्त्र्यमस्य भोगवस्तुषु । 'यतो वा इमानि भूतानि जायन्ते' 'द्यावापृथिवी जनयन् देव एक' इत्यादिषु श्रुतं जगत्सृष्ट्यादिकं परमेश्वरस्य प्रकरणादवगम्यते । सृष्ट्यादिप्रकरणेष्वसन्निहित एव जीवः । अतो न मुक्तस्य जगत्सृष्ट्यादिकमस्ति ॥**

---

णापि साम्यं प्राप्तमपोद्यत इति सङ्गतिः । तत्रैवं पूर्वपक्षः । परमसाम्यश्रुतेर्मुक्तस्य जगत्स्रष्टृत्वादिकमङ्गीकरणीयम् । न च समनिषेधश्रुतिविरोधात्साम्यं केनचिदेव रूपेणेति
ति वाच्यम् । साम्यश्रुतिविरोधात्तन्निषेधश्रुतिरेव संसारिषु ब्रह्मसाम्यनिषे-
सङ्कोचोपपत्तेः। अधिकारवाक्यावगतफलविरोधेन 'को हि तद्वेद यद्यमुष्मिँल्लोक' इत्यादेरिव साम्यनिषेधश्रुतेरेव स्तावकत्वकल्पनौचित्याच्च । अपि च साक्षादेवोपास्यगुणप्राप्तिः फलमवगम्यते यथाक्रतुरित्यादिश्रुतौ । न च परब्रह्मण्यैश्वर्यमात्रमुपास्यं न तु निरङ्कुशं सर्वजगदैश्वर्यमतो मुक्तस्य स्वसङ्कल्पसृष्टकतिपयवस्त्वैश्वर्यसिद्धावपि यथाक्रतुवाक्यमुपपद्यत इति वाच्यम् । 'सर्वस्य वशी सर्वस्येशानः एष सर्वेश्वरः कारणं तु ध्येयः सर्वैश्वर्यसंपन्न' इत्यादिश्रुतिषु निरङ्कुशस्य सर्वैश्वर्यस्योपास्यत्वावगमात्। किंच मुक्तस्य सर्वेषु लोकेषु कामचारः श्रूयते। न तस्य तत्तल्लोकगतफलभोगार्थत्वकल्पनं युक्तम्। ब्रह्मानन्दमनुभवतोऽपि विषयान्तरलिप्सया सञ्चाराभ्युपगमे तस्य निरतिशयत्वभङ्गापत्तेः । अतो मुक्तस्य नियमनादिलीलार्थ एव लोकसञ्चारः । तस्मात्परमसाम्यतत्क्रतुन्यायसर्वलोकसञ्चारादिप्रतिपादनदर्शनान्मुक्तस्यापि परमेश्वरवज्जगत्स्रष्टृतादिकमङ्गीकरणीयम् । न च यस्य यद्गुणप्राप्तिर्यदधीना तस्य स गुणस्ततो न्यून इति नियमोऽस्ति । गुरोर्विद्यामधिगतवतां शिष्याणां तद्वदेव व्याख्यातृत्वप्रबन्धनिर्मातृत्वादिदर्शनात् । न च सृष्ट्यादिप्रकरणेषु परमेश्वरस्यैव प्रकृतत्वान्मुक्तानामसन्निहितत्वाच्च परमेश्वरस्यैव सृष्ट्यादिव्यापारो न मुक्तानामिति वाच्यम्। श्येनप्रकरणे श्येनवदिषोरसंनिहितत्वेऽपि 'समानमितरच्छ्येनेने'ति साम्यवचनात्तदीयवैशेषिकाङ्गानामिषाविव मुक्तानां परमेश्वरसाम्यवचनात्तदीयसृष्ट्यादिव्यापाराणां तेषु सिद्ध्युपपत्तेः । गावामयनिकस्वरसामादिप्रकरणाम्नातानामपि प्रकरणान्तराम्नातस्वरसामैककपालामिक्षाणां साप्तदश्यादिलिङ्गबलात्तदीयधर्मान्तरप्राप्तिवत् सर्वलोकसञ्चारादिलिङ्गबलान्मुक्तानां पारमेश्वरजगद्व्यापारप्राप्त्युपपत्तेश्चेति । सिद्धान्तस्तु मुक्तानां ब्रह्मणा साम्यश्रवणेऽपि जगत्सृष्ट्यादिव्यापारवर्जमेव साम्यमास्थेयम् । अन्यथा जगत्कारणत्वस्य ब्रह्मलक्षणत्वोक्त्या जगत्स्रष्टुरेकत्वश्रुत्या च विरोधोपपत्तेः । तस्माद्यथाप्रकरणं परमेश्वरसाधारण एव जगद्व्यापारः नत्वसन्निहितमुक्तसाधारण इति । अथ लो-

सू ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

'इमांल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिषु मुक्ते जगद्व्यापारस्य प्रत्यक्षोपदेशात् । अस्य तत्संबन्धोऽस्तीति चेन्न, 'कामान्नी' इति कामभोगसंबन्धादधिकारिणां ब्रह्मादीनां मण्डलेषु स्थितभोगानुषङ्ग एवोच्यते । अतोऽस्य न जगद्व्यापारः । तथा सति तस्य भोगानुषङ्गाद्विकारित्वमित्यत आह—

सू ॥ विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

तस्यानुभाव्यं सुखं विकारभावासंस्पृष्टं विशुद्धं परिपूर्णब्रह्मस्वरूपम् । तथा हि खल्वस्य स्थितिमाह श्रुतिः । 'रसो वै सः । रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवती' ति । ब्रह्मस्वरूपं हि 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्म' इत्यादिष्वविकृतमेव श्रूयते । अतो न विकारि पशुसुखवन्मोक्षसुखम् । किमुक्तं भवति । सदाशि-

---

कसञ्चारलिङ्गावलम्बनां शङ्कामुद्भाव्य निराकरोति—सू० ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ नियमनार्थो न भवति लोकसञ्चारः किन्तु तत्तल्लोकगतभोगप्राप्त्यर्थ इति 'कामान्नी' 'कामरूपी'ति विशेषणाभ्यामवसीयत इति भावः । एवं जन्मवृद्ध्यादिविकारवत्क्षुद्रभोगलिप्सया मुक्तस्य लोकपरिभ्रमणाङ्गीकारे तस्य निरतिशयब्रह्मानन्दानुभवनितान्ततृप्तत्वं न स्यात्, अमुक्तसाम्यमेव स्यादित्याशङ्कामुद्भाव्य तन्निराकरणार्थत्वेनोत्तरसूत्रमवतारयति—तथासतीति । विकारित्वमिति । मुक्तेष्यमाणभोगस्येति शेषः । यद्वा मुक्तस्यैव सुखाभिलाषरूपविकारवत्त्वं स्यादित्यर्थः ॥ सू० ॥ विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥ विकारेषु जन्मवृद्ध्यादिषु न वर्तत इति विकारावर्ति परिपूर्णं ब्रह्मसुखम् । चकार एवकारार्थः । तदेवानुभवति मुक्त इति शेषः । रसो वै स इति । यद्यप्येषा श्रुतिर्मुक्तामुक्तसाधारणत्वेन 'भावे जाग्रद्व'दिति सूत्रे व्याख्याता तथापि मुक्तासाधारणत्वेनापि व्याख्यातुं शक्यत इत्यभिप्रेत्यैतदुदाहरणम् । यद्वा तत्प्रकरणाम्नातस्य 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवती'ति वाक्यान्तरस्योपलक्षणमेतत् । अविकृतमेवेति । ब्रह्मानन्तशब्दयोरपरिच्छिन्नवाचित्वादिति भावः । ननु तत्तल्लोकगतभोगलिप्सया परिभ्रमति परिपूर्णं ब्रह्मसुखमेवानुभवतीति च परस्परविरुद्धम् । न च मुक्तौ सविभूतिकब्रह्मानुभवस्य पुरुषार्थताभ्युपगमाद्ब्रह्मसुखरूपतयैव मुक्तस्य तत्तल्लोकगतकामभोगानुभवो न संसारिवल्लौकिकसुखतयेति वाच्यम् । 'अहमन्नमहमन्नाद'इत्यादिमुक्तगीते भोग्यवर्गस्यात्मीयत्वादौपचारिकेणात्मत्वेन तद्भोक्तृत्वे चानुभूयमानस्यानुवाददर्शनेन प्रपञ्चस्य ब्रह्माकारतयानुभवासिद्धेरित्याशङ्क्य परिहरति—किमुक्तं भवतीति । अयमाशयः । भोग्यभोक्तृरूपं प्रपञ्चं ब्रह्माकारतया पश्यन्नपि मुक्तः स्वयमपि विगलितमनुष्यादिदेहाभिमानतया पराहंभावमुपगत इति स्वविशेषणतयाप्यनुभवति । अत एव 'तदपश्यत्तदभवत्तदासी'ति मन्त्रे सर्वत्र शिवात्मकं वस्त्वपश्यन्स्वयमपि सर्वात्मतया तत्सदृशोऽभवदिति ब्रह्मविभूतितयानुभूयमानस्यैव प्रपञ्चस्य स्वविशेषणतयाप्यनुभव उक्तः । एवं च स्वविशे-

वादीनामधिकारिणां ब्रह्मान्तानां मण्डलेषु स्वेच्छया सञ्चरमाणः कामान्नी कामरूपी विगलितमनुष्यादिदेहाभिमानः असङ्कुचितशक्तित्रयव्यापारः परमानन्दप्रकाशविभूतिमयशक्तिशिवसामरस्यपरब्रह्मस्वरूपैकरसप्रपञ्चावगाहिनं परिपूर्णमहंभावं प्रकटमनुभवति। तथा हि 'अहमन्नमहमन्नमहमन्नम्। अहमन्नादोऽहमन्नादोऽहमन्नादः' इत्यादिना भोज्यभोक्त्रादिसकलप्रपञ्चात्मभावपरिपूर्णाहंभावनाऽस्यावगम्यते। अत्राहङ्कारो न सांसारिकः, सकलप्रपञ्चावगाहित्वेन परिपूर्णत्वात्, किन्तु मुक्तस्वभाव एव। कल्पितात् देवोऽहं मनुष्योऽहमिति देवादिदेहमात्रावगाहितया परिच्छिन्नात्सांसारिकाहङ्कारादयं विलक्षण एव। अतोऽत्र न प्राकृताहङ्कारसंबन्धः॥ यद्वा—अहमिति शक्तिशिवाद्वयं ब्रह्मोच्यते। तदेवान्नादिकं प्रपञ्चजालमिति भावना। तथाऽऽसवचनम्। "अनुत्तरविसर्गान्ता शिवशक्त्यद्वयात्मनः। परामर्शो निर्गुणत्वादहमित्युच्यते विभोः॥ हृद्यकारो द्वादशान्ते हकारस्तदिदं विदुः। अहमात्मकमद्वैतं यत्प्रकाशात्मविश्रमः॥" इति। अत्रानुत्तरब्रह्मानन्दपदानुप्रविष्टस्य मुक्तस्य सकलप्रपञ्चाकारशिवाभिधायकप्रासादाक्षरानुसंधानपूर्वकं गानं कर्तव्यतया न विधीयते। किंत्वानन्दास्वादपरमोल्लासद्योतनाय स्तुतिरिति। अतो मुक्तानां ब्रह्मानन्दानुभवव्यापारमन्तरेण सृष्ट्यादिव्यापारः स्वेच्छया न संभवति॥

---

षणतया कामभोगमनुभवन्नपि ब्रह्माकारमेव सुखमनुभवतीत्येतन्नानुपपन्नमिति। स्वेच्छया सञ्चरमाण इति। 'समस्तृतीयायुक्ता'दित्यात्मनेपदम्। शक्तयः इच्छाज्ञानक्रियाख्याः। परमानन्देति। परमानन्दात्मको यस्तत्प्रकाशः तद्विभूतिमयं तत्प्राचुर्यात्मकं यच्छिवशक्त्योस्सामरस्यं मेलनं तदात्मकं यत्परं ब्रह्म तद्रूपैकरसः तद्विशेषणैकस्वभावो यः प्रपञ्चः तदवगाहिनं तं स्वविशेषणत्वेनाप्यवगाहमानमित्यर्थः। अन्नशब्देन भोग्यवर्ग उच्यते अन्नादशब्देन भोक्तृवर्गः तदुभयग्रहणं भोगस्थानादेरप्युपलक्षणमित्यभिप्रेत्य व्याचष्टे—भोज्यभोक्त्रादीति। एवं च प्राकृताहङ्कारबन्धरूपोऽयमहंभावः कथं मुक्ताविल्यपि न शङ्कनीयमित्याह—अत इति। एव'महमन्नमहमन्नाद'-इत्यत्राहंशब्दः स्वात्मपर इत्यङ्गीकृत्य तथापि प्रपञ्चस्य ब्रह्माकारतानुभवोऽप्यस्ति इत्युपपादितम्। इदानीं तस्य शिवशक्तिसामरस्यरूपपरब्रह्मपरत्वान्न विरोधशङ्कावकाश इति पक्षान्तरमाह—यद्वेति। अनुत्तरस्सर्वादिरकारः विसर्गान्तोहङ्कार इत्याहुः। शिवशक्त्योरद्वयमपृथग्भावः। तस्य योनिगुणत्वात्सत्त्वरजस्तमोगुणाभावमपेक्ष्य तुरीयात्मना परामर्शः तत्राहमिति प्रयुज्यत इत्यर्थः। अहमिति द्वंद्वैकवद्भावः। हृदीति हृदयपुण्डरीके अकारः हृदयादिद्वादशस्थानावसाने ब्रह्मरन्ध्रस्योपरि हकार इति तयोर्भावनास्थाने इमे। यत्प्रकाशात्मविश्रम इति। प्रकाशात्मनः शिवशक्तिमेलनस्य वाचकतया विश्रान्तिस्थानं यदहंपदमित्यर्थः। ननु किं मुक्तस्याप्ये 'तत्सामगायन्नास्त' इति सामगानं विधीयते किन्तु निरतिशयानन्दास्वादप्रयुक्तं गानमनूद्यत इत्याह—अत्रानुत्तरेति। अनुत्तरं सर्वोत्तरं ब्रह्मणश्शिवस्यानन्दरूपं यत्सदं दिव्यस्थानं तदनुप्रविष्टस्येति विधिवश्यत्वाभावे हेतुगर्भं विशेषणम्। सकलेति। सकलप्रपञ्चाकारशक्तिविशिष्टतया तदाकारस्य शिवस्याभिधायकं वैदिकप्रासादाक्षरमहमिति पदं तदनुसन्धानपूर्वकमित्यर्थः। स्तुतिरिति।

## सू ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

एवमुक्तमर्थं प्रत्यक्षानुमाने श्रुतिस्मृती दर्शयतः । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिका श्रुतिः । 'अप एव ससर्जादा'वित्यादिका स्मृतिश्च । अतो ब्रह्मण एव जगत्कारणत्वादिकमिति ॥ तथा सति । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥" 'मुक्तः शिवसमो भवेत्' इत्यादिषु मुक्तस्य च ब्रह्मणा शिवेन परमसादृश्यप्रतिपादनात् तस्य जगत्सृष्ट्यादिकं यद्यदस्ति तत्सर्वमसङ्कुचितमस्यापि स्यात् । अन्यथा परमसादृश्यहानिरित्यत आह—

## सू ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

मुक्तस्य ब्रह्मणा साम्यं सकलकामभोगमात्रादेव, न जगत्सृष्ट्यादिना । तथा सति बह्वीश्वरत्वप्रसङ्गात् । तथा हि श्रूयते 'सोऽश्नुते सर्वान् कामान् सह

---

'आनन्दोद्रेकादित्थं गायन्नास्त' इति तदानन्दातिशयस्तुतिरित्यर्थः ॥ सू० ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ तस्माद्वेति । नैवं काचन श्रुतिः स्मृतिर्वा मुक्तस्य जगद्व्यापारं प्रतिपादयन्ती दृश्यत इत्याशयः । उत्तरसूत्रव्यावर्त्याशङ्कामाह—तथाहीति । यद्यपि मुक्तस्य साक्षाज्जगद्व्यापारं प्रतिपादयन्ती श्रुतिः स्मृतिर्वा नास्ति । तथापि तस्य ब्रह्मसाम्यं प्रतिपादयन्ती श्रुतिः स्मृतिश्चास्तीति तत एव तस्य जगद्व्यापारः सिध्येत् । न च ब्रह्मलक्षणस्य सृष्टिकर्तृत्वश्रुतेश्च विरोधः । अनाद्यनन्तकल्पानुवृत्तसर्वप्रपञ्चजन्मादिकारणत्वं ब्रह्मलक्षणं तथाभूतसर्वप्रपञ्चस्रष्टैक इति तदभिप्रायोपपत्तेः । सर्वोऽपि मुक्तः स्वमुक्तिप्राचीनप्रपञ्चकर्ता न भवतीति मुक्तानां स्वस्वमुक्त्यनन्तरभाविप्रपञ्चसृष्टौ कुलालादीनां कल्पाद्यकालसृष्ट्यनन्तरभाविघटादिसृष्टाविव कारणत्वेऽपि विरोधाभावादित्याशयः ॥ सू० ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ मुक्तस्य ब्रह्मणा साम्यं यद्यनन्याधीनत्वादिनापि तदा परमेश्वरानधीनया स्वस्वेच्छयैव जगत्सृष्ट्यादिषु प्रवर्तमानानां मुक्तानामैकमत्यनियमाभावात्कस्यचित्सिसृक्षायामन्यस्य संजिहीर्षापि कदाचिद्भवेदिति किमपि कार्यं न निर्वर्त्येत । अथानन्याधीनत्वं सर्वशेषित्वं सर्वैश्वर्यं सर्वप्रपञ्चस्रष्टृत्वं तदुपादानत्वमित्यादिगुणेभ्यो व्यावर्त्य परमसाम्यं तदितरगुणेषु सङ्कोच्येत तदा जगद्व्यापारसाम्यादपि व्यावर्त्य 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणे'ति श्रुतिसिद्धसविभूतिकब्रह्मानुभवरूपे भोगे तत्सङ्कोचयितुं युक्तम् । एवं क्लृप्तसङ्कोचायामेव साम्यश्रुतौ सङ्कोचकल्पने श्रुत्यन्तरसिद्धब्रह्मानन्दभोगाद्यतिरिक्तैस्सर्वैरपि गुणैस्साम्यनिषेधविषयतया 'तत्समश्चे'त्यादिश्रुतेरांजस्यं लभ्यते । नित्यमुक्तस्य तस्यैव शिवस्य वियदादिप्रपञ्चस्रष्टृतया लाघवंच लभ्यते । एतेन तत्क्रतुन्यायादपि मुक्तस्य जगद्व्यापारप्राप्तिर्निरस्ता । अनन्याधीनत्वादिष्विव जगद्व्यापारांशेऽपि सङ्कोचस्य न्याय्यत्वात् । अप्रतीकालम्बनसूत्रोक्तरीत्या यथाक्रतुरित्यस्य तद्गुणकब्रह्मप्राप्त्यर्थकत्वेन स्वयं तद्गुणप्राप्त्यर्थकत्वाभावाच्च । न च तथा सति श्रुतौ तत्क्रतुन्यायोपन्यासवैयर्थ्यम् । स्वर्गार्थोपासनया हि स्वर्गस्यैव प्राप्तिः नोपास्यगुणविशिष्टस्य ब्रह्मणः । मुक्त्यर्थोपासनायां तु न तथेति तद्वैषम्यप्रदर्शनार्थत्वोपपत्तेरित्यभिप्रायं सूत्रं

ब्रह्मणा विपश्चिता' इति । विविधं पश्यन्त्या चिता ज्ञानशक्त्या युक्तं हि ब्रह्म विपश्चिदित्युच्यते । यया स्वाभाविक्या हृदयभूतया परमसत्तास्फुरद्रूपया देशकालविशेषशून्यस्य ब्रह्मणः शिवस्य सर्वज्ञत्वं सर्वकारणत्वं सर्वात्मत्वं सर्वशक्तिमत्त्वमलुप्तशक्तित्वं स्वतन्त्रत्वं नित्यतृप्तत्वं निरतिशयैश्वर्यत्वं सर्वानुग्राहकत्वं सर्वमुक्तयोग्यरसरूपत्वं च संभवति, तादृश्या युक्तं परं ब्रह्मापि विपश्चित् । तेन सह समरसात्मा मुक्तोऽपि सर्वान् कामान् अन्तःकरणेन स्वाभाविकेन मनसा ज्ञानविशेषेण समश्नुते पश्यन् रमते । तथा हि 'मनसैवैतान् कामान् पश्यन् रमते' 'मनोऽस्य दैवं चक्षु'रिति श्रूयते । 'सत्यात्म प्राणारामं मनआनन्दम्' इति ब्रह्मणोऽपि मनस्यानन्दभोगः, न बाह्यकरणापेक्षा । ब्रह्मणो मुक्तस्य च शरीरेन्द्रियादिग्रहणमैच्छिकं विहारार्थमित्यदोषः । अतो यथा ब्रह्म सकलान् कामान् भुङ्क्ते, तथा मुक्तोऽपीति भोगमात्रसाम्यं मुक्तस्य ब्रह्मणेति समीचीनम् । लोके कतिपयधर्मसंबन्धादपि सिंहो देवदत्त इत्यादिषु सादृश्यव्यवहारदर्शनान्न तत्सादृश्यवचनहानिः ॥

इति जगद्व्यापाराधिकरणम् ॥ ७ ॥

---

व्याचष्टे—ब्रह्मणा सहेति । विविधं पश्यन्त्येत्यादि । भाष्यसंदर्भः प्राक्तत्र तत्र कृतेन व्याख्यानेन व्याख्यातप्रायः । लोके कतिपयेति । नच कतिपयधर्मसंबन्धमात्रेण परमसाम्यव्यवहारो न संभवतीति शङ्कनीयम् । परिमाणरूपैकधर्मसाम्येनापि तुलाधृतयोः सुवर्णशिलाशकलयोरत्यन्तसाम्यव्यवहारदर्शनादित्यभिप्रायः । अनेनैवाभिप्रायेण सूत्रे मात्रशब्दः । स हि साकल्यार्थो नत्ववधारणार्थः । यथा ब्रह्म सकलान्कामान्भुङ्क्ते तथा मुक्तोऽपीति भाष्यदर्शनात् । भोगमात्र एव साम्यं नान्यत्रेति श्रुतेरदर्शनात्सत्यसङ्कल्पत्वादिनापि साम्यस्याभिमतत्वाच्च । स च साकल्यार्थः सर्वविभूतिविशिष्टब्रह्मानुभवरूपब्रह्मभोगसाम्यविषयतया परमसाम्यश्रुत्युपपादनार्थ इति ॥

इति जगद्व्यापाराधिकरणम् ॥ ७ ॥

---

नयमणिमालायाम्

अथ जगद्व्यापाराधिकरणम् ॥ ७ ॥

सू० ॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥२०॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

ऐश्वर्यं मुक्तिभाजामिदमखिलजगद्व्यापृतिव्यापकः स्यादाम्नाता ब्रह्मणा यत्परमसदृशता सत्यसङ्कल्पता च ।
कामान्नी कामरूपी सकलभुवनसंचारशाली स्वराडित्यादिष्टं यत्ततोऽपि स्फुटमिह जगतां तादधीन्यं प्रतीमः ॥ ३९८ ॥
मैवं ब्रह्मप्रकरणगतास्सृष्टिसंहारमुख्याः संबध्यन्ते कथमपि न तैस्सन्निधावप्रसक्तेः ।
तत्तल्लोकप्रथितविषया भोगभोग्यैकभावा नैवाचष्टे नियमयितृतां लोकसंचारसूक्तिम् ॥ ३९९ ॥
हेया अपि मुक्तानां विकारलोकस्थिता भोगाः । ब्रह्माकारतया स्युर्भोग्यास्तच्छक्त्या सहैतदनुभवताम् ॥ ४०० ॥
सृष्टौ पित्रादिनानाविधनिजवपुषां कामचारादिके च स्वातन्त्र्योक्तेर्जिता सा परमशिवदृशा सत्यसङ्कल्पतैषाम् ।
नत्वाकाशादिसृष्टिप्रविलयकरणे शासने वा खिलानां तत्त्वांशस्यैव चिह्नं धवलमिव महीनायकस्यातपत्रम् ॥ ४०१ ॥

इति जगद्व्यापाराधिकरणम् ॥ ७ ॥

## अथ अनावृत्त्यधिकरणम् ॥ ८ ॥

### सू ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

उक्तं ब्रह्मणा सादृश्यं सायुज्यं मुक्तानाम्, भोगादिसाधर्म्यात् । इह तेषां पुनरपि कदाचित् संसारापत्तिरस्ति न वेति संशयः । कर्मविशेषेणेन्द्रादिपदारूढानामावृत्तिदर्शनं संशयकारणम् ॥ किं तावत् प्राप्तम्? 'कामान्नी कामरूप्यनुसंचरन्' इत्यादिषु बहुशरीरसंबन्धोऽवगम्यते मुक्तानाम् । तत्संबन्धे सति पुनरपि पुण्यपापकर्तृत्वं संभाव्यते । पूर्वकृतस्योपासनातिशयस्य बहुधा भोगेन क्षये तात्कालिककर्मवशात् पुनरपि हीनसुखसंसारप्राप्तिः । तथा हि इन्द्रपदाद्यारूढानां पुण्यातिशयक्षये पुनरावृत्तिः, ब्राह्मणादिशरीरप्राप्तिश्च । अतश्च ब्रह्मपदं प्राप्तानां भोग्यद्रष्टृत्वादिसंबन्धेन भोगस्य पुण्यातिशयक्षयहेतुत्वेन पुनरावृत्तिः संसार इति प्राप्ते ब्रूमः । साक्षात्कृतब्रह्मज्योतिषां तत्पदानुप्रविष्टानां मुक्तानां न पुनरावृत्तिः संसारे । कुतः? 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलो-

---

## अथ अनावृत्त्यधिकरणम् ॥ ८ ॥

सू० ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ सङ्गतिं दर्शयति—उक्तमिति । यदिब्रह्मसादृश्यं मुक्तानां भोगादिमात्रेण न सर्वात्मना जगद्व्यापाराभावेन तु संसारितुल्यतैव तर्हि स्वर्गादिप्राप्तसंसारिवदेव पुनरावृत्तिरस्त्विति प्रत्यवस्थानात्सङ्गतिः । सायुज्यमिति । सादृश्यं विवक्षितम् । नन्वनावृत्तिश्रुतौ जाग्रत्यां कथमित्थं संशय इत्याशङ्क्य पूर्वपक्षकोटेर्बीजमाह—कर्मविशेषेणेति । अत्र पूर्वः पक्षः । पुण्यस्य तावद्बहुकालभोगेन क्षयो दृष्टः । उपासनापि पुण्यविशेषः । अलौकिकश्रेयस्साधनत्वादनुष्ठेयत्वाच्च । अतो बहुकालभोगेन विद्यार्जितपुण्यक्षये सति तात्कालिककर्मतस्संसारहेतुभूतपुण्यपापे भवत एव । 'एवंविदि पापं कर्म न श्लिष्यत' इति विद्यासामर्थ्यात्खलु पुण्यपापाश्लेष उक्तः । तस्मिन्भोगेन क्षीणे कुतस्तदश्लेषो भवेत् । अतस्तात्कालिकपुण्यपापवशान्मुक्तानामपि स्वर्गिणामिव पुनरावृत्तिरनिवार्या । इयांस्तु विशेषः । स्वर्गिणां स्वर्गार्थपुण्यक्षये प्राचीनपुण्यपापवशात्पुनरावृत्तिः । मुक्तानां तु तात्कालिकपुण्यपापवशादिति । किंचानुवर्तमानेऽप्युपासनापुण्ये केषांचिदपचारदोषान्नहुषवत्प्रच्युतिस्संभाव्यते । यदि कश्चिन्मुक्तस्सत्यसङ्कल्पत्वाभिमानात्परब्रह्मासाधारणं जगन्नियमनादिकं स्वस्वातन्त्र्येण सङ्कल्पयेद्राजासाधारणं राज्यपरिपालनमिव दुष्टामात्यः तस्य परब्रह्मणश्शिवस्य कोपेन मुक्तिपथात्प्रच्युतिः स्यादेव । तस्मादपुनरावृत्तिश्रुति 'रक्षय्यं हवा' इत्यादिश्रुतिवदर्थवादरूपा बहुकालभोग्यफलत्वाभिप्राया । अत एव ख'ल्विमं मानवमावर्तं नावर्तन्त' इति श्रुताविममिति विशेषणं मन्वन्तरान्तरे पुनरावृत्तेरनुमोदकं दृश्यत इति । सिद्धान्तस्तु । ब्रह्मसाक्षात्कारोदयकाले केषांचिद्विरजामुत्तीर्य शिवपदप्राप्तिकाले केषांचिच्च पुण्यपापानां हानं प्रियाप्रियेषु व्ययीकरणं चाग्रे तदपेक्षाविरहप्रयुक्तमित्यपुनरावृत्तिफलदृढीकरणार्थं तदाम्नानम् । अन्यथा विद्याप्रकरणे तदाम्नानवैयर्थ्यापत्तेः । तेनानावृत्तिश्रुतेर्विवक्षितार्थत्वावगत्या तद्विरोधात्स्वर्गिदृष्टान्तेन पुनरावृत्त्यनुमानं न प्रवर्तते । कारणाभावबाधितं च

**कमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तत' इत्यादिशब्दात् । ब्रह्मविष्ण्वादिपदमुक्त्वा तद्विलक्षणत्वेन शिवस्य परब्रह्मणः पदं पुराणं चाभिव्यनक्ति "दिनकृत्कोटिसंकाशं स्थानमाद्यमुमापतेः । सर्वकामसमायुक्तं विशुद्धं नित्यमक्षयम् ॥ संप्राप्य तत्पदं दिव्यं समस्तक्लेशवर्जिताः । सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णा भवन्ति च ॥ विशुद्धकार्यकरणाः परमैश्वर्यसंयुताः । सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः ॥ ये संप्राप्ताः परं स्थानं ज्ञानयोगरता नराः । न तेषां पुनरावृत्तिर्घोरे संसारमण्डले ॥" इत्यादिभिः ॥ अस्य तात्पर्यमुच्यते । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति परं ज्योतिःस्वरूपं हि मुक्तप्राप्य-**

---

तदनुमानम् । न च प्राचीनपुण्यपापानां क्षयेऽपि तात्कालिककर्मणा पुनरावृत्तिकारणे पुण्यपापे स्यातामिति वाच्यम् । तत्काले पुण्यपापहेतुकर्मोत्पत्तावपि कारणाभावात् । न तावद्विद्यासामर्थ्यं तत्र कारणम् । तस्य चिरकालब्रह्मानन्दभोगेन क्षयोक्तेः तस्मिन्ननुवर्तमाने जक्षणक्रीडादिकर्मणा पुण्यपापशेषासंभवाच्च । नापि प्राचीनपुण्यपापवृन्दम् । तस्य शिवपदप्राप्तिकाल एव कार्त्स्न्येन प्रहीणत्वात्सत्यसङ्कल्पत्वाभिमानकृतादपचारात्प्रच्युतिरपि न संभाव्यते । मुक्तसङ्कल्पानामपि परमेश्वरप्रेरणाधीनत्वेन सर्वज्ञानां मुक्तानां स्वलोकादिसृष्टिमात्रे सत्यसङ्कल्पत्वं न जगद्व्यापारेऽपीति स्वकीयसत्यसङ्कल्पत्वमर्यादावगतिसत्त्वेन निरतिशयब्रह्मानन्दास्वादनितान्ततृप्तानां तेषां क्षुद्रविषयभोगाभिलाषराहित्येन च स्वाधीनप्रवृत्तिकस्वशक्तिमर्यादानभिज्ञविषयभोगाभिलाषुकदुष्टामात्यन्यायाप्रसरात् । विषयभोगाभिलाषाभावे किमर्था पितृलोकादिसृष्टिः । नात्र कैमर्थ्यशङ्कावकाशं लभते । पारमेश्वरी जगत्सृष्टिरिव निरतिशयब्रह्मानन्दानुभवप्रयुक्ता लीलैव तदीया पित्रादिसृष्टिः ब्रह्मविभूत्युपबृंहणार्था वा । ते हि सविभूतिकब्रह्मानन्दमनुभावमनुभावं तृप्यन्ति । यत्त्विमं मानवमिति श्रुताविममिति विशेषणं तदनुभूयमानबहुदुःखकरम्बितत्वेन हेयत्वप्रकटनार्थं न तु ब्रह्मानन्दभोगस्य कालविशेषावच्छेदार्थमिति सर्वं समञ्जसम् । ब्रह्मोपेन्द्रादिपदविलक्षणे सर्वोत्तरे परब्रह्मणः परमशिवस्य पदे तत्संप्राप्तानां पुनरावृत्त्यभावे च शिवधर्मोत्तरादिपुराणवचनमपि प्रमाणमित्याह—ब्रह्मविष्ण्वादीति । पुराणं चाभिव्यनक्तीति यदुक्तं तत् 'इत्यादिभिः श्लोकै'रभिव्यनक्तीति पुनः क्रियोपादानेन स्पष्टीकृतम् । अस्य तात्पर्यमिति । दिनकृत्कोटिसङ्काशमित्यादिविशेषणानां यथा स्तुतिमात्रपरत्वशङ्का न भवति तथा तात्पर्यमुच्यत इत्यर्थः । तत्राद्यविशेषणं तावन्नित्यसन्निहितस्य शिवस्य विसृमराभिर्निरतिशयप्रभाभिर्व्याप्तत्वेनोपपादयति 'परं ज्योति'रित्यादिना 'किमु वक्तव्य'मित्यन्तेन । एतदुपलक्षणम् । शिवप्रभारूपपरमाकाशात्मकत्वादपि स्थानस्य दिनकृत्कोटिसङ्काशत्वं द्रष्टव्यम् । अत एव निरतिशयतेजोमात्रेत्यादिविशेषणं वक्ष्यति । अत्रोदाहृताः श्रुतयः प्रथमाध्याय एव तत्र तत्र व्याख्याताः पुरस्ताज्ज्योतिरित्येतदर्थमथर्वशिरःश्रुत्युदाहरणं निरतिशयतेजोमात्रस्फुरत्तामयं निरतिशयतेजोरूपेणैव स्फुरत्स्वप्रकाशपरमाकाशरूपमिति यावत् । अत एव तन्निरतिशयसुखास्पदम् । भावप्रधानो निर्देशः । निरतिशयसुखत्वास्पदम् । यद्वा मुक्तानां निरतिशयसुखानुभवस्थानमत एव स्वर्गाभिधम् । स्वर्गशब्दो हि निरतिशयसुखे तदनुभवस्थाने च प्रसिद्धः । एवं 'दिनकृ-

